श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली

विदुरःश्रुतदत्ताद्याचतारविशेषजिज्ञासया पृच्छतीत्याहअत्रेरिति गृहे भार्यायां स्थित्यंतोत्पत्तिहेतवः पालनसंहारसृष्टीनां कारणभूताः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अत्रेरिति आत्मशब्देन विष्णोः स्वातन्त्र्यमन्ययोस्तत्पारतन्त्र्यंश्च दर्शितं । तदुक्तं । सृजामि तन्नियुक्तोऽहमित्यादि । अतएव च तत्र तत्रात्मशब्देन हरिरेव व्याख्यातः तदेव मंत्रैस्तथा संकल्पानातिज्ञानादेव भावीति बोधितं । तथैव शरणमित्यादिकस्तदृष्टो मन्त्रः ॥ १५—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

ययोर्वंशेन ॥ १३ ॥

कश्यपस्य वंशं षष्ठे वक्ष्यति । देवकुल्यां नाम कन्यांश्च । हरेः पादक्षालनात् सुकृताद्या दिवः सरिद्गङ्गा जन्मान्तरेऽभूत् ॥१४॥

आत्मा विष्णुस्तदांशभूतान् ॥ १५ ॥

किञ्चित् किञ्चित् ॥ १६ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

कलानाम्नी कर्दमात्मजा मरीचेः पत्नी कश्यपं पूर्णिमानं च सुपुत्रे अजनयत् ययोः कश्यपपूर्णिम्नोः जगदापूरितं व्याप्तमभूत् ॥ १३ ॥

तत्र कश्यपवंशं षष्ठे वक्ष्यति पूर्णिम्नोवंशमाह पूर्णिमेति हे परंतप! पूर्णिमाविरजं विश्वगं च पुत्रं देवकुल्यां कन्यां चामुत्र अजनयत् याहरेः पादशौचात् दिवः सरित् गंगा अभूत् ॥ १४ ॥

सुयशसः.शोभनकीर्तिधरान् आत्मेशब्रह्मसंभवान् हरिहरविरंच्यंशोद्भूतान् त्रीन् अजनयत् ॥ १५ ॥

अत्रेर्गृहे किंचिच्चिकीर्षवः किंचित् अन्येष्वसंभावितं कार्यं कर्तुं मिच्छवः जाता एतत् आख्याहि यद ॥ १६ ॥

---

भाषाटीका ।

कर्दमकी पुत्री मरीचि की भार्या कला कश्यप तथा पूर्णिमा दो पुत्रों को पैदा करती हुई जिन दोनो से जगत् पूर्ण होगया ॥१३॥

हे परंतप विदुर ! पूर्णिमाने विरज विश्वग तथा देवकुल्या को पैदा किया जो देव कुल्या श्रीहरि के पाद प्रक्षालन से स्वर्ग की गंगा होगई ॥ १४ ॥

अत्रि मुनि की भार्या अनुसूया ने ब्रह्मा विष्णु महेश के अंशों से सुंदरयश वाले सोमदत्तात्रेय दुर्वासा इन तीन पुत्रों को पैदा किया ॥ १५ ॥

विदुरजी बोले सब देवों के देव तीनों देवता सृष्टि पालन संहार के कारण जो हैं सो अत्रि मुनि के भार्या में किस कार्य करने ... ॥ १६ ॥

---

...या अनुसूयया सह ...
...ष्यतः ॥ ७ ॥

... स च मुनिस्तस्मिन्कुलाद्रौ ... कर्मोप्रत... सां कानने निर्विन्ध्याख्याय... कृतस्ने... इति ॥ १८ ॥

प्राणायामेन मनो नियम्य शीतो... शतमेकपादेन भुवमवष्टभ्य तप आतिष्ठत् ॥ १९ ॥

तस्यात्रेरभिसंधिविशेषमाह शरणमिति य एव "यतो ... नि भूतानि जायंते, इत्यादिश्रुतिप्रसिद्ध एव जगदीश्वरः जगत्सृ... स्थितिप्रलयप्रवर्त्तकः तं शरणमहं प्रपद्ये मह्यमात्मसमां स्वतुल्यां ...जां प्रयच्छत्विति चिंतयन् अतिष्ठदिति पूर्वेणान्वयः॥ २० ॥

...नादिते ॥

पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मज
कश्यपं पूर्णिमानं च ययोरापूरितं जगत्
पूर्णिमाऽसूत विरजं विश्वगं१ च परन्त
देवकुल्यां हरेः पादशौचाद्याऽभूत्सरि
अत्रेःपत्न्यनसूया त्रीन् जज्ञे सुयश
दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभव

॥ विदुरउवाच

अत्रेर्गृहे सुरश्रेष्ठाः स्थित्युत्पत्त्यन्तहे
किञ्चिच्चिकीर्षवोजाता एतदाख्या

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

या प्रसूतिसंततेर्वैपुल्यमनेन कथितम् ॥ ११ ॥

अथ देवहूतिदुहितृसंततिरुच्यते इत्याह यादति हे क्षत्तः कर्दमस्य सुताः कलादयो मरीच्यादीनां पत्नयः पत्न्यः याः उक्ताः तृतीये तासां कर्दमसुतानां प्रसूतेः प्रभवं पुत्रपौत्रादिसंतानविस्तरं मे मया प्रोच्यमानं कथ्यमानं निबोध ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

स्वायंभुवमन्वंतरं केरनुवृत्तमिति तत्राह प्रियव्रतेति नप्तारः पौत्र पुत्राः ॥ ९ ॥

देवहूतिकथामनुवदति देवहूतिमिति तत्संबंधिचरितं श्रुतप्रायं प्राचुर्येण श्रुतं किंचिदवशिष्टमस्तीत्यर्थः ॥ १० ॥

प्रसूतिं कस्मा आदादिति तत्राह दक्षायेति ॥ ११ ॥

एवमनूद्य वक्तव्यांशमाह याः कर्दमेति पत्नयः पत्न्यः प्रसूतिप्रसरं प्रसूतिप्रपंचम् ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

नवब्रह्मर्षि इत्यत्र ब्रह्मर्षीति पाठद्वयम् । प्रसूतिप्रसवं पुत्रपौत्रादि विस्तारम् ॥ १२ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

प्रियव्रतोत्तानपादौ मनुपुत्रौ पृथ्वीपालकौ तदेवं यज्ञ एव विष्णव धतारः इन्द्रश्चेति पञ्चविधयं बोध्यम् तयोः पुत्रपौत्रनप्तृणां वंशैः तदंतरं तन्मन्वंतरमनुवृत्तं व्याप्तं पालितमित्यर्थः ॥ ९ ॥

हेतात विदुर! तत्संबंधि देवहूत्याः संबंधि विवाहापत्योदयादि मम गदतः कथयतः श्रुतप्रायं बाहुल्येन श्रुतम् तत्कन्यावंशो न श्रुत इति प्रायग्रहणाभिप्रायः ॥ १० ॥

यत् याभ्यां दंपतीभ्यां महान् विपुलः सर्गः कृतः त्रिलोक्यां वितत्तोऽभूत् ॥ ११ ॥

याः कलाद्याः ब्रह्मर्षीणां मरीच्यादीनां पत्नयः पत्न्यः तृतीये प्रोक्तास्तासां प्रसूतिप्रसवं पुत्रपौत्रादिविस्तारं मे मया प्रोच्य निबोध शृणु ॥ ॥ १२ ॥

म
भये दक्ष
म
प्रायः
म
जिनकी
जो
के विस्त

ययोर्वि
कश्यप
ययांनामक
आरमे
किंचि

क
त्वमा
गौणा

॥ मैत्रेयउवाच ॥

ब्रह्मणा नोदितः सृष्टावत्रिर्ब्रह्मविदांवरः ।
सहपत्न्या ययावृक्षं कुलाद्रिं तपसि स्थितः ॥ १७ ॥
तस्मिन्प्रसूनस्तबकपलाशाशोककानने ।
वार्भिःस्रवद्भिरुद्घुष्टे निर्विन्ध्यायाः समंततः ॥ १८ ॥
प्राणायामेन संयम्य मनोवर्षशतं मुनिः ।
अतिष्ठदेकपादेन निर्द्वन्द्वोऽनिलभोजनः ॥ १९ ॥
शरणं तं प्रपद्येऽहं य एव जगदीश्वरः ।
प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन् ॥ २० ॥

श्रीधरस्वामि कृत भावार्थदीपिका ।

ऋक्षंनामकुलाद्रिम् तपसिस्थितः सन् १७

तस्मिन्कुलाद्रौ प्रसूनानांस्तबकायेषुपलाशाशोकेषुतेषांकानने निर्विंध्यानामनदीतस्याःस्रवद्भिर्वार्भिरुद्घुष्टेनादितं १८ १९ २०

श्रीराधारमणदास गोस्वामिविरचित ।

दीपन्याख्या दीपिकाटिप्पणी ।

स्थित उद्यतःसन्निति उद्यमयानयोस्सम कालीनत्वं विद्यमाना र्थत्वे तु मार्ग एव तपः प्रसक्तिःस्यात् आंद्रयात्राद्वैफल्यम् क्रियमाण तपोऽसंगतिश्चेत्यवधेयम् ॥ १७ ॥

तस्मिन्निति त्रिकम् कुलाद्रौ यत्काननमिति व्यधिकरणेसप्त म्यौ [illegible]थसंगतिः प्राणायामस्तूपविश्य पूर्वमेव कृतः पश्चादुपासना विशेषस्य सामान्यतो जगदीश धारणा रूपस्य कृत एक पादेनोर्ध्वस्थितिः क्त्वाप्रत्ययस्य पूर्व कालाश्रयत्वं हि सार्वजनीनम् भणा रक्तत्यपततीत्याद्युदाहरणं समान कालाश्रयत्व बोधकन्तु मुख्यार्थोऽसंभव एव अंगीकृतंभाषा वृत्तौ तिष्ठतःप्राणायामाऽभिधानात् ॥ १८ ॥ १९ ॥ २० ॥

श्रीमद्वीरराघवाचार्य कृत भागवतचंद्रचंद्रिका ।

तत्र निमित्तं कथयन्नाह ब्रह्मणेति ब्रह्मणा चतुर्मुखेन सृष्टौ नि[मि]त्तभूतायां सृष्ट्यर्थमित्यर्थः चोदित आदिष्टः ब्रह्मविदग्रेसरोऽत्रिः [पत्न्]या अनुसूयया सह ऋक्षाख्यंकुलाचलं तपसेतपश्चर्तुं स्थित [स्थि]तः ॥ ७ ॥

[तत्र] स च मुनिस्तस्मिन्कुलाद्रौ प्रसूनानां स्तवका येषु पलाशाशोके[षु तेषां] कानने निर्विंध्याख्याया नद्याः स्रवद्भिर्वार्भिः समंतादुद्घुष्टे [नादि]ते ॥ १८ ॥

प्राणायामेन मनो नियम्य शीतोष्णादिसहः वायुभक्षःसंवत्सर शतमेकपादेन भुवमवष्टभ्य तप आतिष्ठत् ॥ १९ ॥

तस्यात्रेरभिसंधिविशेषमाह शरणमिति य एव "यतो वा इमानि भूतानि जायंते, इत्यादिश्रुतिप्रसिद्ध एव जगदीश्वरः जगत्सृष्टि स्थितिप्रलयप्रवर्त्तकः तं शरणमहं प्रपद्ये मह्यमात्मसमां स्वतुल्यां [प्र]जां प्रयच्छत्वित्ति चिंतयन् अतिष्ठदिति पूर्वेणान्वयः॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृत

परमभागवतस्यात्रेः प्रियचिकीर्षे गप्रवर्तनायावतार इतिभावेन मैत्रेयः च ऋक्षनामानं किमर्थं यातइति तत्राह तोऽभूदित्यन्वयः॥ १७ ॥

तस्मिन् ऋक्षनाम्नि प्रसूनानां स्तव[का]स्तेषां पलाशाशोकानां काननं यस्मिन्[निर्विं]ध्याया नद्याः स्रवद्भिः स्यंदमानै वार्भि[रुद्]गर्जिते ॥ १८ ॥

वर्षशतमिति द्वितीयैकस्मिन्नपेयोऽपि [अ]त्यंतयाति * ॥ १९ ॥

तपोविषयमाह शरणमिति किं मनोग[त]मिति ॥ २० ॥

[दी]पिका

श्रीमज्जीवगोस्वामिकृत

तस्मिन्निति त्रिकम् प्राणायामेनेत्याद[ि] [उपवि]विश्य प्राणायामः पश्चादुपासनाविशेष[स्य] क्त्वाप्रत्ययस्य पूर्वकालाश्रयत्वात् ऊर्ध्व[स्थितिः] शतृप्रत्ययस्य समानकालाश्रयत्वात् तथा [ध्या]नेन स्वदेहत्यागाय साग्निधारणा प्राणाय[ामो] ज्ञेयः औचित्यात् ततस्तस्य विश्वस्य च [प्र]ाकट्य ततश्च ते वहिः प्रकटा इति मन[स्था]दिकमिति ॥ १८ ॥ १९ ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्ति[कृत]

ऋक्षं ऋक्षनामानम् ॥ ...
प्रसूनानां स्तव[का]...
नादिते ॥ १८

तप्यमानं त्रिभुवनं प्राणायामैधसाग्निना ।
निर्गतेन मुनेर्मूर्ध्नः समीक्ष्य प्रभवस्त्रयः ॥ २१ ॥
अप्सरोमुनिगन्धर्वसिद्धविद्याधरोरगैः ।
वितायमानयशसस्तदाऽऽश्रमपदं ययुः ॥ २२ ॥
तत्प्रादुर्भावसंयोगविद्योतितमना मुनिः ।
उत्तिष्ठन्नेकपादेन ददर्श विबुधर्षभान् ॥ २३ ॥
प्रणम्य दण्डवद्भूमावुपतस्थेऽर्हणाञ्जलिः ।
वृषहंससुपर्णस्थान् स्वैः स्वैश्चिह्नैश्च चिह्नितान् ॥ २४ ॥

...त सिद्धान्तप्रदीपः ॥
चोदितः प्रेरितः ऋक्षनाम कुलाद्रिं ययौऽभूत् ॥ १७ ॥
...स्तबकाः गुच्छा येषु पलाशाशोकेषु ...ताजलैः समंततः उद्घुष्टे उत्कृष्टघोष ...त्यान्वयः ॥ १८ ॥
...माधारो यस्य ॥ १९ ॥
...यदात्मकस्य जगतः ईश्वरो नियंता तं ...र्मां प्रजां प्रयच्छत्विति चिंतयन् एकपादे ॥ २० ॥

भाषाटीका ॥
...जी ने जब सृष्टि करने के वास्ते अत्रि मुनि ...जी भार्या के सहित तपस्या करने के ...चल पर्वत को चले गये ॥ १७ ॥
...नदी के तटपर जहां कि फूलोंकेगुच्छा ...लगे हैं तथा झिरनाओं में से जल के ...रों ओर से तहांगये ॥ १८ ॥
...णायामोंसे सौ वर्ष पर्यंत मनको रोक ...पवन मात्र के भोजन करके एकपाद ॥
...कि इस जगत् में जो जगदीश्वर हो ...ह जगदीश्वर मेरे को अपनेही समान

...
...कृत भावार्थदीपिका
...दिकाः यस्यतेनमुनेर्मूर्ध्नोनिर्गतेनाग्निना ...तित...त्रयः ॥ २१ ॥
...याः कल... यशो येषांते ॥ २२ ॥
...योकास्तासां प्रसादे... तेनविद्योतितंमनो ...निर्बोध शृणु ॥ ॥ १२ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।
अर्हणं पुष्पादिकमंजलौ यस्य उपतस्थे पूजयामास वृषाद्यारूढान् स्वैःस्वैश्चिह्नैस्त्रिशूलकमंडलुचक्रादिभिः ॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचित
दीपन्याख्यादीपिकाटिप्पणी

तप्यमानमिति युग्मकम् अग्नेर्मूर्द्धतो निर्गतत्वं भगवतः प्राकट्याभावे निर्वेदेन देह त्यागार्थं सान्निधारणा प्रायामत्वात् किन्त्वौचित्येन तद्दर्श पुनरुपवेशो ज्ञेयः ॥ २१ ॥ २२ ॥ २३ ॥
प्रणम्येति सार्द्धकम् ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका ।
प्राणायाम एव एधः दारुनिचयो यस्य तेन मुनेरत्रेर्मूर्ध्नः शीर्षे कपालान्निर्गतेनाग्निनातपोऽग्निना संतप्यमानं त्रैलोक्यं समीक्ष्य त्रयः प्रभवः आत्मेशब्रह्माणः ॥ २१ ॥
अप्सरो मुनिप्रभृतिभिः प्रस्तूयमानकीर्तयस्तदाश्रमस्थानं ययुः अत्र य एव जगदीश्वरस्तं शरणं प्रपद्य इतिसृष्टिस्थितिप्रलयप्रवर्त्तकत्वेनाकारेण परमात्मन उपासितत्वात्तस्य ब्रह्मरुद्रांतर्यामि... तया ताद्रूप्येण सृष्टिसंहारकारणत्वात्तयोर्ब्रह्मरुद्रयोरपि तत्रागममुपपन्नमिति वेदितव्यम् ॥ २२ ॥
तेषामात्मेशब्रह्मणामाविर्भावः प्राकट्यं तस्य संयोगः सान्नि... तेन विद्योतितं मनो यस्य स मुनिरत्रिरेकपादेनोत्तिष्ठन् विबुधश्रे... नात्मेशब्रह्मणो ददर्श ॥ २३ ॥
ततो भूमौ दंडवत्प्रणम्य अर्हते पूज्यते अनेनेत्यर्हणं पुष्पादिकं मंजलौ यस्यसः उपतस्थे समीपे स्थित्वा तुष्टाव एतदेव प्रपंचयति गरुडवृषाद्यारूढान्स्वैः स्वैश्चिह्नैः शंखचक्रत्रिशूलकमंडलवादिभिर्श्चिह्नितान् ॥ २४ ॥

कृपावलोकेन हसद्वदने नोपलम्भितान् ॥
तद्रोचिषा प्रतिहते निमील्य पुनरक्षिणी २५
चेतस्तत्प्रवणंयुंजन्नस्तावीत्संहताञ्जलिः ॥
श्लक्ष्णायासूक्तयावाचासर्वलोकगरीयसः ॥ २६ ॥

अत्रिरुवाच ।

विश्वोद्भवस्थितिलयेषु विभज्यमानैर्मायागुणैरनुयुगं विगृहीतदेहाः ।
ते ब्रह्मविष्णुगिरिशाः प्रणतो स्म्यहं वस्तेभ्यः क एव भवतांमइहोपहूतः।२७।
एकोमयेह भगवान्विविधप्रधानैश्चित्तीकृतः प्रजननाय कथं नु यूयम् ।
अत्रागतास्तनुभृतां मनसोऽपि दूरा ब्रूत प्रसीदत महानिहविस्मयोमे । २८ ।

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

... प्रत्रेस्तपोमाहात्म्यं तेन प्रसन्नानां त्रयाणां देवानां तदाश्रमग-... वक्ति तप्यमानमिति ॥ २१ ॥

... अप्सरआदिभिर्धितार्यमानं प्रपंचीक्रियमाणं यशो येषां ते तथा ... २ ॥

तत्प्रादुर्भावस्तेषां प्रकाशस्तस्य संबंधस्तेन विद्योतितमतिप्रका... तं मनो यस्य स तथा ॥ २३ ॥

... अर्घ्यादिसाधनमंजलिश्च यस्य स तथा शूलकमंडलुचक्रादि-... चिह्नितानंकितान् ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

तप्यमानमितियुग्मकम् । प्राणायामेनेति चित्तस्थः ॥२१-२३॥ प्रणम्येति सार्द्धकम् ॥ २४ ।

विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी

मुनेर्मूर्द्ध्नः सकाशान्निर्गतेनाग्निना तपोमयेन तप्यमानं वीक्ष्य प्राणायाम एधः काष्ठं यस्य तेन । अत्र तिष्ठन्नेव प्राणायामांश्चका-रेति ज्ञेयम् प्राणायामेन संयम्य मनोऽतिष्ठदिति क्वापि त्वयो भ्रमात्-कृत्य पतति संनिमील्य हसतीत्यादिवत्तुल्यकाल एव ज्ञेयः ॥ २१ ॥ तेषां प्रादुर्भावेन हेतुना यः संयोगो मिलनं तेन विद्योतितमना-स्तान् प्रत्यभ्युत्थानार्थं तिष्ठन्नेव उत्कर्षेण तिष्ठन् ॥ २३ ॥ अर्हणं पुष्पादिकमञ्जलौ यस्य सः ॥ २४ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

मुनेर्मूर्द्ध्नः सकाशान्निर्गतेन प्राणायाम एव एधः इंधनं यस्य ते नाग्निना त्रिभुवनं तप्यमानं समीक्ष्य तदाश्रमपदं त्रयः प्रभवो ययु रित्यन्वयः य एव जगदीश्वरस्तं शरणं प्रपद्ये इत्यनेन जगदीश्वरः श्रीवासुदेवः शरणत्वेन वांछितः स एव परमः प्रभुः स्वस्य जगदी श्वरत्वविज्ञापनाय " सृजामितन्नियुक्तोऽहंहरोहरतितद्वशः" इत्येवं पूर्वोकाभ्यां प्रभुभ्यां सहितः । तदाश्रमपदं प्राप्तोभूदित्यर्थः ॥ २१ ॥ अप्सरःप्रमुखैर्गीयमानं विस्तीर्यमाणं यशो येषां ते तदाश्रमप-दं तस्य आश्रमस्थानम् ॥ २२ ॥

तेषां प्रादुर्भावस्य संयोगेन संसर्गेण विद्योदितं मनो यस्य सः

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः ।

एकपादेनोत्तिष्ठन्नेव ददर्श ॥ २३ ॥ तदा भूमौ दंडवत्प्रणम्य अर्हते पूज्यते अनेनेत्यर्हणं पुष्पादि कमंजलौ यस्य सः खैः खेश्चिह्नैः कपठगतनीलिमा भृगुलता चतु-र्मुखादिरूपैश्चिह्नितान् उपतस्थे पूजयामास ॥ २४ ॥

भाषाटीका

अत्रीजीके मस्तक से निकले हुये प्राणायाम रूपी काष्ठों के अग्नि से जलते हुये तीनों भुवनों को तीनों देवताओं ने देखा ॥ २१ ॥

तब तो अप्सरा मुनि गंधर्व सिद्ध विद्याधर उरग इनों को साथ लेकर बडे विस्तीर्ण यशवाले मुनी के उस आश्रम कुंतीनों गये ॥ २२ ॥

तब एकही पाद से खडे हुये मुनि ने तीनों देवों के प्रगट होने के सन्निधान से मन में अत्यन्त शोभित होकर आगे में तीनों देवों का दर्शन किया ॥ २३ ॥

फिर वृषभ हंस गरुड इनों पर बैठे डमरू कुश चक्रादि चिन्हों से युक्त तीनों देवों को पृथिवी में दंडवत्प्रणाम करके हाथ जोड कर स्तुति करने लगे ॥ २४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका

कृपयाऽवलोकोयस्मिन् हसच्चतद्वदनंचतेनोपलंभितान्प्रसन्नत्वेन ज्ञापितान् तेषांरोचिषादीप्त्या ॥ २५ ॥

श्लक्ष्णायामधुरया सूक्तयागंभीरार्थया ॥ २६ ॥

मायागुणैरनुयुगंकल्पेकल्पेविभज्यगृहीतोदेहोयैस्तेप्रसिद्धाब्रह्मविष्णुगि-रिशायूयम् योयुष्मान्प्रणतोऽस्मि तेभ्यः सकाशादेकएवमेमयोपहूतः शरणंप्रपद्यइत्येकस्यैवनिर्दिष्टत्वात् सचयुष्मासुकइतियुष्मा कथ्यतामित्यर्थः ॥ २७ ॥

अस्यप्रपंचःएकइति विविधैःप्रधानैरुपचारैः विबुधप्रधान पाठः प्रजननायपुत्रोत्पत्त्यैचित्तीकृतश्चित्तेनैकयंनीतः मनसोऽपि अगोचराः संतः कथंनुत्रयोऽप्यत्राऽऽगताः ॥ २८ । २६ ॥

तेत्वयायथाकृतः संकल्पस्तेतत्थैवभाव्यंनान्यथा । यतः कल्पस्यतेसंकल्पःतर्हिकस्मिनेकस्मिन्ध्यायमानेत्रयःप्रतीतास्यतत्रा यदेकंजगदीश्वराख्यंतत्त्वंभवान्ध्यायतितत्पतेषयम् त्रयोऽपितदेवैकं तत्त्वंनास्माकंभेदोऽस्तीत्यर्थः ॥ ३० ॥

मैत्रेयउवाच ॥
इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः ॥
प्रत्याहुः श्लक्ष्णया वाचा प्रहस्य तमृषिं प्रभो ॥ २९ ॥
देवाऊचुः ॥
यथा कृतस्ते संकल्पोभाव्यं तेनैव नान्यथा ॥
सत्संकल्पस्य तेब्रह्मन् ! यद्वैध्यायति ते वयम् ॥ ३० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्यादीपि काटिप्पणी ॥

तच्छोचिषेति सार्द्धकम् ॥ २५ ॥ २६ ॥

तेभ्यः सकाशाद्य एक एवोपहूतः सचेति यत्तदोर्गम्यमानत्वम् युष्मांभिरेवेत्यादेरार्थिकार्थत्वादित्यर्थोक्तिः ॥ २७ ॥

पुनरुक्ति धारणार्थमाहास्यैवपद्यस्य प्रपंचइति तथाच पूर्वं संग्रहवाक्यमिदंच विवरण वाक्यमिति नपौनरुक्त्यमेवमन्यत्रापि उपचारैः पाद्यादि षोडशभिः चित्तेनैक्यंनीतः ध्रुवानुस्मृति विषयी कृतः मया भजनं त्रयाणां न कृतम् तथापि अत्र मदाश्रमे यूयमागता इति स्पष्टस्य निमित्तस्याभावात्तत्रनिमित्तं ब्रूतेत्यर्थः ॥ २८ ॥

सरलोयं ब्राह्मणः अस्मत्तत्त्वाऽज्ञानादितिप्रहस्य ॥ २९ ॥

यथा सृष्ट्याद्युपयुक्त गुणशक्त्युपाधि मत्ताप्रकारेण तेन संकल्पेन तथैव भाव्यमिति गाथसाधनम् यद्यपि सर्वकर्तृत्वेन महत्स्रष्टाऽऽविर्भवेत्तथापि तस्य कारणतत्त्वोत्पादकत्वाद्त्रिगुणा च जगदीश्वर इतिविसर्गोत्पादकत्वमात्रोपाधिकस्यालम्बनीकृतत्वाद्विशेषतत्त्वद्व्यक्तिज्ञानाभावात् सामान्यरूपस्यच विशेषमंतराज्ञाभावाद्व्रयोऽपि प्रतीताः किन्तुत स्वेन तु त्रयाणामप्यैक्यान्नविस्मयो विधेय इत्यर्थः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रिका

कृपया अवलोको यस्मिन् हसद्य तद्वदनं च तेन उपलं भितान् प्रसन्नत्वेन ज्ञापितान् तेषां शोचिषा दीप्त्या प्रतिहते अक्षिणी नेत्रेनिमील्य ॥ २५ ॥

चेतश्चित्तं तत्प्रवणं विबुधर्षभासक्तं कृत्वाबद्धांजलिः सन् मुनिरत्रिर्मधुरया वाचा सर्व लोकेभ्यः श्रेष्ठान् विबुधर्षभान्नस्तावीरस्तुतवान् ॥ २६ ॥

स्तुतिमेवाह विश्वेति द्वाभ्यां विश्वस्योद्भवादिषु निमित्तभूतेषु विश्वसर्गाद्यर्थमित्यर्थः अनुयुगं प्रतिकल्पं विभज्यमानैर्मायागुणैरजस्सत्वतमोभिरुपलक्षिता गृहीता देहा यैस्ते यूयं ब्रह्मविष्णुगिरीशाः अतस्तेभ्योवः युष्मभ्यं प्रणतोऽस्मि युष्माकं मध्ये एक एवभगवान् जगदीश्वर उपहूतः शरणं तं प्रपद्य इत्येकस्यै निर्दिष्टत्वात्स एव युष्मासुकतम इति युष्माभिरेव कथनीयमित्यर्थः ॥ २७ ॥

[illegible]तदेव प्रपंचयतिएक इति प्रधानः सर्वोत्कृष्टएकएवभगवान् [illegible]रः विविधैरुपचारैर्मयाप्रजननायसर्वेश्वरतुल्यपुत्रलाभाय [illegible]कृतः चित्तविषयीकृतः उपासित इति यावत्अतस्तनुभृतां [illegible]ं मनसोऽपि दूराः मनसापि ग्रहीतुमशक्या यूयं त्रयोऽपि [illegible]आगताः तत्रकारणं ब्रूतकथयत। प्रसीदत मह्यं प्रसन्ना भवत त्रयाणामागमने मम महान् विस्मयो वर्त्तते ॥ २८ ॥

इत्येवं तस्यात्रेर्वचः श्रुत्वा त्रयो ब्रह्मविष्णुशिवाः प्रहस्य

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रिका।

श्लक्ष्णया गंभीरया वाचा हे प्रभो ! वश्येंद्रिय ! विदुर ! [illegible]
प्रत्याहुः ॥ २९ ॥

उक्तिमेवाह ते त्वया यथाकृतः संकल्पस्तेनैव त[illegible] नान्यथा सत्यः सत्संकल्पस्य ते संकल्पः कथमेकास्मिन् ध्य[illegible] आगतास्तत्राहुः हे ब्रह्मन् ! त्वं यदेकं जगदीश्वराख्यं तत्त्वं ध्य[illegible] तद्वयं तदेव तत्त्वं सद्वारकमद्वाकं च त्रिमूर्त्तिरूपेणावस्थिताम् [illegible] मूर्तिविशेषनिर्धारणमतरेण जगत्सृष्टिस्थितिलयहेतुरीश्वर इ[illegible] त्वत्संकल्पः अतो वयमागता इत्यभिप्रायः ननु यद्वै ध्यायां[illegible] वयमित्यनेनं त्रिमूर्त्यैक्यं प्रतीयते सत्यमैक्यमस्त्येव ततः किं [illegible] शिवयोर्भगवत्पारतंत्र्यमस्मिन्पुराणे पूर्वापरग्रंथेषु श्रूयमाणं [illegible]ध्यत इति चेत्तन्न "सर्वगत्वादनंतस्य सएवाहमवस्थितः म[illegible] सर्वमहं सर्वं मयि सर्वं सनातन„ इति वद्ब्रह्मात्मकत्वबुद्ध्या चतु[illegible] शिवयोरभेदव्यवहारोपपत्तेः तथा हि तयोर्ब्रह्मात्मकत्वं स्फुटमुक्[illegible] महाभारते "तवांतरात्मा मम च ये चान्ये देहिसंज्ञिताः सर्वे[illegible] साक्षिभूतोऽसौ न ग्राह्यः केनचित्कचिदिति सद्वारकंचावस्थि[illegible] तद्ब्रह्मैव वयमित्यर्थः अत्रेदमवधेयं यद्यपि काचित्कांचित् "ब्रह्मा[illegible] नारायणः शिवश्चनारायणःब्रह्मा नारायणाख्योसौ कल्पादौ भगवान्यथा प्रजाःससर्जभगवान्ब्रह्मानारायणात्मकः ।' ततः[illegible] भगवान्विष्णुरुद्ररूपधरोऽव्ययः ततःकालाग्निरुद्रोसौ भूत्वा सर्वहरोहरिः सर्गस्थित्यंतकरणींब्रह्मविष्णुशिवात्मिकां संज्ञां सयातिभगवानेकएवजनार्दनइत्यादिषु त्रिमूर्त्यैक्यं प्रतीयते तथापि "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणाद्द्वादशादित्यारुद्रा वसवः सर्वाणिछंदांसि एको ह वै नारायणआसीन्नब्रह्मा नेशानः। यन्नाभिपद्मादभवन्महात्मा प्रजापतिः तत्रब्रह्मा चतुर्मुखोऽजायत सोग्रे भूतानां मृत्युमसृजत्त्र्यक्षं त्रिशिरस्कं त्रिपादं खंडपरशुं ब्रह्मा दक्षादयः कालस्तथैवाखिलजंतवः विभूतयो हरेरेता जगतः सृष्टिहेतव„ इत्यादिषु भगवतस्तयोश्चभेदावगमात्सामानाधिकरण्यस्यच "सृष्टिंततः करिष्यामि त्वामाविश्य प्रजापते। हरो हरति तद्वश,इत्याद्यानुगुण्येनांतर्यामित्वेनाप्युपपत्तेरभेदो न युक्तः। नन्वेवमपि ब्रह्माविष्णुरुद्रेंद्रास्ते सर्वे संप्रसूयंते इतिब्रह्माद्यविशेषेण विष्णोरप्युत्पत्तिश्रवणात्त्रिमूर्त्युत्तीर्णं तत्त्वांतरमेष्टव्यं तदेवैतत्त्रिमूर्त्याकारेणावस्थितमिति भेवं सदेवेत्यादिवाक्येषु कंठोक्त्या सर्वं वाक्यं सावधारणमिति न्यायाच्चसावधारणेषु प्रत्येकमेकैकस्यस्वव्यतिरिक्तकारणत्वोपास्यत्वबोधक वाक्यस्थितसामान्यशब्दानांविशेषवाचिपदेसतितत्पर्य्यवसानस्यपशुगपशुन्यायसिद्धत्वादन्वितःसर्वकारणत्वानुपपत्तेरीक्षणाद्यर्थविरोधाच्चविशेष्यव्यवस्थापकत्वानुपपत्तेर्द्रुकसमस्तकारणत्वबोधनात्समुच्चित्यकारणत्वानुपपत्तः चिद्विशेषासाधारणब्रह्मरुद्रेंद्रवैश्वानरादिपदवाच्यानां पुरोवादप्रसिद्धेंद्रादीनां

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचन्द्रिका ।

कार्यस्वकर्मवद्वयस्थयोः। श्रुत्यैवप्रतिपन्नत्वात्तद्वाचिनां तेषां विशेष्यत्व वस्थापकत्वानुपपत्तेःश्रीपतेरसाधारणपुरुषनारायणादिपदवाच्यस्य कुत्रापि कर्मवद्वयस्त्वाश्रवणात् तदुत्पत्तेश्च अजायमानोबहुधा विजायत इति अवतारत्वस्य श्रवणे कर्मकृतत्वस्यापोदितत्वादित रोत्पत्तेस्तद्प्रवादाभावात् तस्यसर्वकारणत्वोपपत्तेस्तस्य सकल जगत्कारणत्ववोधकश्रुत्यैकार्य्योनारायणस्यैव सर्वोत्कृष्टत्वमेष्ट-व्यमित्यन्यत्र विस्तरः ॥ ३० ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

कृपया प्रयुक्तेनावलोकितेन लसता वदनेनोपलंभितानुपलांच्-तान् तच्छोचिषा तेषां वपुस्तेजसा। प्रतिहते प्रतिबद्धदर्शनशक्तिनी ॥ २५ ॥

तत्प्रवणं तेषु मग्नं संहतांजलि बद्धांजलिः ऋक्षणया मधुरया। सूक्तया वैदिक्या ॥ २६ ॥

कान् गुणानुपसंहृत्य तुष्टावेति तत्राह विश्वेति विश्वस्योद्भव-स्थितिलयेषु विभज्यमानैः पृथक् पृथक् क्रियमाणैर्मायायाः प्रकृते र्गुणैः रजः सत्त्वतमः संज्ञैस्तुगुणं कार्यानुकूलं सृष्टये रजोगुणप्रव-र्तकत्वेन, रक्षणाय सत्त्वगुणप्रवर्तकत्वेन, संहाराय तमोगुणप्रवर्तक त्वेन, प्रगृहीतो दे॰ यैस्ते प्रगृहीतदेहाः स्वीकृतावतारा हे ब्रह्मवि ष्णुगिरिशा ? अहं वः "प्रणतोऽस्मि प्रजापते नत्वदेतान्यन्योविश्वाजा तानि परिता बभूव आस्यजानंतो नाम चिद्विविक्तनमहस्ते विष्णो सुमतिं भजामहे। इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्व धाम्ने" इत्यादिसूक्तोक्ताये यूयं तेभ्यो वो युष्मभ्यं भूयो भूयः प्रणतो स्मीत्यन्वयः भक्तिरोमो ऽक्लिष्टमनाः*ब्रह्मस्थो रुद्रस्थः पृथक् स्थितः स्वयमपि विष्णुस्त्रिपुरुषसमाः प्रजाः प्रयच्छत्विति यः पूर्वसंकल्प-स्तं विस्मरन्निवात्रिर्बुधमोहनार्थयिज्ञापयति कएवेति भवतां मध्ये मयेह कएवस्त्रित् कोनूपहूत इत्यन्वयः ॥ २७ ॥

एतदेव विवृणोति एको मयेति इह वने तपः कुर्वता मया विबु-धप्रधानः सर्वदेवोत्तमो ब्रह्मस्थो रुद्रस्थः स्वयं विष्णुरेको भगवाने व प्रजननाय पुत्रत्वोत्पत्तये त्रिपुरुषसमानान् पुत्रान् मह्यं ददात्वि-तिचिन्तीकृतो ध्यातद्वयस्थितेषु तनुभृतां देहिनां मनसोऽपिदूरवि-षया यूयं कथं न्वत्रागतास्तद्ब्रूत संभाषणेन प्रसीदत मे इहास्मिन्नर्थे एकस्मिन् ध्यातेत्रयाणामागमनलक्षणे महान् विस्मयइति "ब्रह्मस्थ श्चैव रुद्रस्थः स्वयं चापि हरिः प्रभुः। प्रजां त्रिपूरुषसमां यच्छत्वेव त्यत्रिरैच्छत। तस्मात्सब्रह्मरुद्राभ्यां सह विष्णुर्जगत्पतिः आगत्य तु त्रिमूर्त्यंशान् प्रादात्पुत्रान् जनार्दनः भा१वित्वाच्चैवकार्यस्य लोकानां मोहनाय च" इति वचनात् लोकमोहनार्थमत्रिणा विकल्पितं न तु ता-त्स्वार्थत्वेन ॥ २८ ॥

तत्त्वं त्विदं कार्यस्य भावित्वात् संकल्पोपेतत्वात् यथा संकल्प स्तथाकार्यमपि भविष्यति । संकल्पस्त्वेकएव तस्माज्झटिति प्रत्य क्षमर्शनेन तं त्रिलोकमोहनार्थमुक्तार्थविकल्पाभिप्रायं जानंतस्तत्त्वगूहनं विधाय प्रहसंतस्त्रयोदेवा आहुरित्याह इतीति ॥ २९ ॥

कर्माप्रतीतेः किमाहुरिति तत्राह यथेति तपश्चरता त्वया यथासंकल्प-कृतस्तेन संकल्पेन तथैव भाव्यं कर्तुमकर्तुमन्यथाकर्तुंसमर्थानांभवतां-मनीषितंममदुरवगाहमितितत्राह नान्यथेति सचासौसंकल्पस्तस्य सक तत्स्तत्संकल्पस्यान्यथाभावो नैवत्वत्संकल्पानुसारेणास्मत्संकल्पेऽपि

* अत्रिरित्यनेनान्वयः

श्रीमद्विजयध्वज तीर्थ कृत पदरत्नावली ।

व्याख्यात इति भावेनाहुः यद्वा इति ब्रह्मस्थो रुद्रस्थस्तथा विष्णुः स्वयं च त्रिपुरुषसमानान् पुत्रान् प्रयच्छत्विति यत्संकल्पं ध्यायसि ते वयं ब्रह्मविष्णुरुद्रा इति अयस्तुभ्यं पुत्रान् दास्याम इति संक-ल्प्यात्रागता इति शेषः निपातद्वयेन प्रमाणांतरप्रसिद्धिद्योतयति ॥ ३० ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

विजृम्भितानिति चितसुखः तच्छोचिषेति सार्द्धकम् । २५ । २६ ॥

विश्वेति । अत्र च श्रीविष्णोरपि मायागुणगृहीतदेहत्वं नेति-ज्ञानादेव कल्पितं तथैवाह । यो मे मया उपहूतः स तेभ्यः पृथक् पृथक् तत्तच्छक्ति विग्रहादि विभागेभ्यो हेतुभ्यः भवतां मध्ये कएव स्यात् । इतरद्वय निरासेन को भवेत् । तस्याविभक्तत्वाच्च कोऽपीति संभावयामीत्यर्थः ॥ २७ ॥

नच त्रयोऽपि यूयमुपासिताः यत एक इति । मया तु तत्तच्छ-क्तित्वेनैक एव चित्तीकृतः । ततः स एव चित्तस्थः सन् मदिष्टं सम्पादयेत् कथं नु यूयमेतावता प्रयासेनात्रागता अतो महा-नेव संकोचो या मम जात इति भावः तथैवाह मनसोऽपीति प्रधा नेरिति सम्बन्धोक्तिपाठान्तरं तदज्ञानं हृष्ट्वेव प्रहस्य ॥ २८ ॥ २९ ॥

उत्तरमाहुर्यथेति । अयं भावः । भवता य एव जगदीश्वर इति पूर्णषड्गुणैश्वर्यो भगवान् न ताबद्विवक्षितः नच महत् स्रष्टृत्वादि विश्वशक्तिकः पुरुषः विसर्गाद्यंशमात्रसिद्धकामनया तावन्मात्रो-पाधितयोपासनाप्रवृत्तेः । यदि च तत्तदुपासनामकार्ष्यस्तदा तत्तद्रूप एवाविरभविष्यत् एवं विश्वेत्यादिपद्येऽप्युद्भवादि शब्दो विसर्गगत तन्मात्रपरा एव । अतो जगदीश्वरशब्देनापि विसर्गादि मात्र शक्तिको विवक्षितः सर्वैकत्वेनोपासितोऽपि सृजामि तन्नि-युक्तोऽहमित्यादिन्यायेन सर्वं तत्तच्छक्त्याश्रयत्वात् श्रीविष्णुःप्राप्तो ऽपि तद्रूपतया न विवक्षितः तद्विग्रहादिनिष्ठत्वाभावात् अथ त्रया-णामभेदोऽपि न विवक्षितः तेषां क एवेत्यादिविरोधात् । किन्तु सामान्यतयैव विवक्षितः सामान्यञ्च विशेषान् विना नोपलभ्यते इत्यत त्रयाणामप्याविर्भावोयोग्य एवेति तथैवाहुः यद्व इति ॥३०॥

श्रीविश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

स्वैः स्वैश्चिह्नैस्त्रिशूलकमण्डलुचक्रादिभिस्तदपि कृपावलोकेनैव उपलंभितान् । एते ईश्वरा एवैतादृशकृपावलोकान्यथानुपपत्ते-रिति ज्ञापितान् । कीदृशेन हसत् प्रसीदद्वदनं यतस्तेन ॥ ३५ ॥

ऋक्षणया मधुरया ॥ २६ ॥

अनुयुगं प्रतिकल्पं विभज्यमानै मायागुणै र्यै विश्वस्य उद्भवाद यस्तेषु प्रवृत्तास्ते प्रसिद्धा एव ब्रह्मादयो यूयं विगृहीतदेहा भव-थेति जानामीति भावः । यद्वा मायागुणैरेव विगृहीतदेहा इति विष्णोरपि प्रकृतिसत्त्वमयदेहत्वं ईश्वरत्वस्यैव निर्धारणसामर्थ्येन भगवत्तत्त्वज्ञानाभावादेव तेनोक्तमिति ज्ञेयं तेभ्योवो युष्मभ्यं प्रण-तोऽस्मि प्रणतिं ददद्स्मीति कृपया मत्सन्देह उच्छिद्यतामिति भावः भवतां मध्ये मया इह मदभीष्टसाधने क उपहूतः ' शरणं तं प्रपद्ये, इत्येकस्यैव निर्दिष्टत्वात् सच जगदीश्वरो भवतां मध्ये क इति भवद्भिरेव कृपया कथ्यतामिति भावः ॥ २७ ॥

तूष्णीस्थितांस्तान् पुनः स्पष्टीकृत्याह । एक एव मया विविधैः

अथास्मदंशभूतास्ते आत्मजा लोकविश्रुताः ॥
भवितारोऽङ्ग ! भद्रं ते विस्रप्स्यन्तिच ते यशः ॥ ३१ ॥
एवं कामवरं दत्त्वा प्रतिजग्मुः सुरेश्वराः ॥
सभाजितास्तयोः सम्यग्दम्पत्यो र्मिषतोस्ततः ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

प्रधानैरुपचारैः विबुधप्रधान इति वा पाठः प्रजननाय पुत्रोत्पत्त्यै चित्तीकृतः चित्तस्थीकृतः यूयं त्रयः कथमत्रागताः ॥ २८ ॥ २९ ॥

यत् यं जगदीश्वरं भवान् ध्यायति ते जगदीश्वरा वयं सत्सं-कल्पस्य तवाभीष्टप्रदातारो भवामेत्यर्थः अयं भावः जगदीश्वरतुल्य एकः पुत्रो मे भूयादिति संकल्पे कतमो जगदीश्वरः स्यादिति सं-देहेन त्रय एव वयं ध्याताः पुनश्च ध्यातेषु त्रिषु मध्ये जगदीश्वर एक आयात्विति पुनरेकस्य चित्तस्थीकृतत्वेऽपि त्रयाणामेवास्माकं जगत्यस्मिन्नैश्वर्यात्त्रय एवागता अस्माकं त्रित्वेप्यैक्यात् वयमेक एव नापि त्वया य एव परमेश्वर इति परमेश्वरशब्दः प्रयुक्तोऽत इन्द्रशत्रो विवर्द्धस्वेत्यादौ संकल्पादपि साधनस्य प्राबल्यदर्शनात् साधनानुरूपं संकल्पानुरूपञ्च तव फलं भविष्यतीति ॥ ३० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

कृपयावलोको यस्मिन् हसच्चतद्वनं च तेनोपलंभितान् उपल-क्षितान् प्रसन्नतया सूचितान् । तद्रोचिषा तेषां दीप्त्या प्रतिहते दृष्टुमशक्ते निमील्य ॥ २५ ॥

चेतश्चित्तं तत्प्रवणं युंजन् । तदाशकं कुर्वन् श्लक्ष्णया मधुरया सूक्तया शोभनार्थया ऽस्तावीत् स्तुतवान् ॥ २६ ॥

तत्र विश्वसृष्ट्यादिहेतुत्वादिगुणवर्णनरूपां स्तुतिं कुर्वन् । एको जगदीश्वरः मयोपहूतः स युष्मासु कइति पृच्छति विश्वेति द्वा-भ्याम् . विश्वोद्भवादिषु निमित्तभूतेषु . अनुयुगं कल्पे कल्पेविभज्यमानै र्मायागुणैर्विग्रहीता सृज्यत्वादिना विशेषतो गृहीता अस्मदादिदेहा यैस्ते प्रसिद्धप्रभावा ब्रह्माविष्णुगिरीशा यूयम् अतो वो युष्मान् प्रण तोऽस्मि तेभ्यः सकाशान्मे मया'शरणं तं प्रपद्येहं य एवजगदीश्वर, इत्येवं य उपहूतः स भवतां भवत्सु कः । कतम इति युष्माभिरेव कथनीय इत्यर्थः ॥ २७ ॥

अस्यैव प्रपंच एक इति । प्रजननाय पुत्रोत्पत्त्यै विबुधप्रधानः एको मयाचित्तीकृतो ध्यातः इह तु तनुभृतां मनसोपि दूराः अगोच-राः त्रयोऽपि कथमागता । अत्र त्रयाणामागमने मम महान्विस्मयः अतो मे मह्यं प्रसीदत कारणं चब्रूत ॥ २८ ॥

हे प्रभो ! अंथतात्पर्यग्रहणे समर्थ ! ॥ २९ ॥

हे ब्रह्मन् ! ते त्वया यथा संकल्पः कृतस्तेन तथैव भाव्यम् यतः सत्संकल्पस्य तेसंकल्पो ऽन्यथा न भवति । यदेकं जगदीश्वरं परब्रह्म भवान्ध्यायति । तं एते वयं त्रयोऽपि तदेकं ब्रह्म नास्माकम-न्योन्यभेदः । अयमर्थः ।"सृजामि तन्नियुक्तोहं हरो हरति तद्वशः,, इति ब्रह्मवचनात् ।"एते वयं यस्य वशे महात्मनः . स्थिता संकुता इव सूत्रयंत्रिता" इति शिववचनाच्च वासुदेवस्य नियंतृत्वं ब्रह्मशिवयोर्नि यन्त्यत्वमस्ति तथा सति नियम्यभूतयोर्ब्रह्मशिवयोः स्वरूपतो भिन्न त्वेपि जगदीश्वरान्मुन्युपाहूतान्नियंतुर्वासुदेवात् . अभिन्नत्वम् . यथा छांदोग्ये, स्वरूपेण भिन्नानामपीं द्रियाणां प्राणायत्ततयाप्राण

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

भिन्नत्वं श्रूयते नवै वाचो नचक्षूंपि नमनइत्याचक्षतेप्राण इत्येवाचक्षते किंचसर्ववेदेतिहासादिसारभूतेस्मिन्"वासुदेवात्परो ब्रह्मन्न चान्योर्थो स्तितत्वत" इत्याद्युक्तत्वात् ."अहोभाग्यमहोभाग्यं नंदगोपव्रजौकसां यन्मित्रं परमानंदं पूर्णंब्रह्मसनातनम्" इत्यादि वक्ष्यमाणाच्च वासुदे वाख्यं परं ब्रह्मवर्णितम् । तस्मात्सर्वस्य विश्वस्य स्वरूपतोभिन्नस्या पि तज्जत्वादिना । तदभिन्नत्वमाह भगवति "सर्वंखल्विदं ब्रह्म तज्जलानिती"ति । ब्रह्मशिवादीनां च वासुदेवजन्यत्वं श्रूयते "नारा यणाद्ब्रह्मा जायते नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि छंदांसि एको ह वै नारायण आसीन्न ब्रह्मानेशान, इति 'अहं सर्व स्य प्रभवो मत्तः । सर्वं प्रवर्तते,, इति श्रीमुखवचनाच्च ॥ ३० ॥

---

भाषाटीका ॥

देवों की कृपा दृष्टि से परिपूर्ण देखा उनकी कांती से क्षोभित होने से मुनि ने दो नेत्र बंद कर लिये ॥ २५ ॥

फिर उनमें लगे हुये चित्त को भली भांति से युक्त करते हुये हाथ जोडकर सुंदर कोमल वाणी से सब लोकों के ईश्वरों को स्तुति करने लगे ॥ २६ ॥

अत्रीजी बोले संसार के उत्पत्ति स्थिति संहारादि कार्यों में सत्वादि रूप से विभाग किये हुये गुणों से सब युगों में देहों को धारण करने वाले हे ब्रह्मा विष्णु शिवजी मैं आपको प्रणाम कर-ता हूं आप कृपा करके कहिये किं आप तीनों के मध्य में मैंने किसे इहां बुलाया है ॥ २७ ॥

मैंनेतो इहांपर एक भगवान् को पुत्रोत्पत्ती के निमित्त मन में धारण किया था फिर आपतो प्राणियों के मन से भी दूर रहने वाले तीनों मूर्ति इहां किस प्रकार से आगये इस बात कुं आप कृपाकर मेरे से कहो मेरे को इस में बडा विस्मय हो रहा है॥२८॥

मैत्रेय जी बोले हे विदुर ! इस प्रकार उन अत्रि मुनि के वचन को श्रवण करके वे तीनो देवेश्वर हस करके मधुर वचन से उन अत्रि मुनि को उत्तर देत भये ॥ २९ ॥

तीनों देव बोले हे ब्रह्मन् ! आप तो सत्संकल्प हो आपने जो संकल्प किया था वह वैसा ही होना चाहिये अन्य था नही होगा तब तो आप जिन को ध्यान करते थे वे ही देव हम लोग आये हैं ॥ ३० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

विस्रप्स्यंतिविस्तारयिष्यंति अंतर्भूतणिजर्थस्यसृप्लृगताविल-स्यरूपम् ॥ ३१ ॥

ताभ्यांसम्यक्सभाजिताः पूजिताः संतः ततःस्थानात्प्रतिजग्मुः ॥ ३२ ॥

सोमोऽभूद्ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित्।
दुर्वासाः शङ्करस्यांशो निबोधाङ्गिरसः प्रजाः ॥ ३३

श्रद्धात्वङ्गिरसः पत्नी चतस्रोऽसूतकन्यकाः।
सिनीवाली कुहू राका चतुर्थ्यनुमतिस्तथा ॥ ३४ ॥

तत्पुत्रावपरावास्तां ख्यातौ स्वारोचिषेऽन्तरे।
उतथ्यो भगवान्साक्षाद्ब्रह्मिष्ठश्च वृहस्पतिः ॥ ३५ ॥

---

श्रीधरस्वामि कृत भावार्थदीपिका।

अंगिरसोब्रह्मणस्तृतीयपुत्रस्य निबोध बुध्यस्व ॥ ३३ ॥

ताःकन्यानिर्दिशति सिनीवालीति ॥ ३४। ३५ ॥

---

श्रीराधारमणदास गोस्वामिविरचिता।
दीपन्याख्यादीपिका टिप्पणी।

अथातो हेतोःअंशेन शक्तिविशेषेण भूताःप्राप्ता आविष्टा इत्यर्थः भूरूप्रप्तावित्यस्मात् ॥ ३१ ॥ ३४ ॥

तत्पुत्रावंगिरसः पुत्रौ ॥ ३५ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

अथ हे मुने! अस्मदंशेन संभूताः सुता लोकविश्रुता भविष्यंति ते तव यशः विस्रप्स्यंति विस्तृतं करिष्यंतिते भद्रमस्तु ३१

एवमभीष्टं वरं दत्वा तयोर्दंपत्योः अत्र्यनसूययोःसम्यङ्मिषतोः पश्यतोः सतोः सम्यक्पूजिताः सुरेश्वराः प्रतिजग्मुः ३२

ततो ब्रह्मणा श्चतुर्मुखस्यांशेन सोमो विष्णोरंशेन दत्तात्रेयःशंभोरंशेन दुर्वासाश्च जाता अथांगिरसः अंगिरस उत्पन्नाः प्रजा मया कथ्यमानाः शृणु ३३

अंगिरसः पत्नीश्रद्धाख्या कर्दमस्य तृतीयां दुहिता चतस्रःकन्यकाः प्रसूतवती कन्याः निर्दिशतिसिनीति ३४

अपरावपि तत्पुत्रौ अंगिरस पुत्रौ उतथ्यः वृहस्पतिरिति ख्यातौ प्रसिद्धौ स्वारोचिषे मन्वंतरे आस्तां भगवान् ब्रह्मिष्ठ इति पुत्रद्वयविशेषणम् ॥ ३५

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली

तर्हि प्रसन्नाश्चेत्प्रजाददत इत्यत्रेर्जिह्वाग्रसंचलनावकाशमददाना आहुः अथास्मांशेति अथ ब्रह्मरुद्रस्थो विष्णुः स्वयमित्येतेवयमित्युक्त्यनंतरं व्यवहारांतरं विरम्यते तवात्मजा भवितारो भविष्यंतीति वरं ददुरित्यर्थः यद्वा यतएवं चसंकल्पोऽथतस्मादितिलोकेतेयशो विस्तृत्यतुभ्यं भद्रंकल्याणं सुखं वितरिष्यंतीत्यन्वयः ॥ ३१ ॥

किमन्वददुरिति तत्राह एव मिति कामवरं कामितपुत्रवरं नान्यमिति शेषः मिषतोः पश्यतोः सतोः ततोऽत्रेराश्रमात् ॥ ३२ ॥

अंशेनेति तृतीयया सोमः साक्षाद्ब्रह्मणोंऽशो न भवति किंतु तेन विशेषेण सन्निहित एव। तथात्वे विष्णोरंशो दत्तः शंकरस्यांशो दुर्वासा इतीव प्रयोगः स्यात् "ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलं ऋते विष्णोरात्मनस्तु तदंशोक्तिः प्रवेशत„ इतिवचनात् आत्मनो जीवस्य तदंशोक्तिर्विष्ण्वंशवचनं प्रवेशत„ इति ज्ञेयमित्यर्थः कथं तर्हि ब्रह्मसंभवानिति प्रत्यक्षोक्तिरितिचेन्न सृष्टिविशेषान्मानांतराविरुद्धवदुक्तेः तथाचोक्तं" सृष्टिभेदाद्विरूपं तु कथापंचोत्तरंशतं वैरूप्यमन्यद्विज्ञेयं तात्पर्यान्मोहनाय चेति। अत्र ग्रंथे कथा पंचोत्तरं शतं सृष्टिभेदाद्विरूपं विपरीतमिव प्रतीयत इति शेषः अन्यद्वैरूप्यं तात्पर्याज्ञानान्मोहनायोक्तमिति ज्ञेयमित्यर्थः कल्पादिभेदादपि कथा भेदो भवतीत्यतोऽपि विरोधो नास्ति" ऋते तु पांदकथं काव्यं रामायणं तथा विष्णोर्ब्रह्मादितां चैव क्रमाद्भवस्तवच्छक्तितां एवद्वापादकं चाम्यते कल्पादिभेदतः कथाभेदस्तु विज्ञेयो मोहार्थेतेषु भिन्नताइति" वचनात् विदिकृताविति धातोर्योगविद् योगशास्त्रकृत् अणिमादियोगज्ञो वा वेधतेः शब्दविकरणे पठितत्वाद् परस्मैपदम्। प्रजाः संततीः ॥ ३३ ॥

कन्यकानामान्याह सिनीवालीति कृष्णचतुर्दश्यभिमानिनी सिनीवाली तत्पंचदश्यभिमानिनी कुहूः शुक्लचतुर्दश्यभिमानिनी अनुमतिः तत्पंचदश्यभिमानिनी राका ॥ ३४ ॥

तत्पुत्रौ तस्याः श्रद्धायाः पुत्रौ स्वारोचिषनाम मनोः पुत्रयोर्नामाह उतथ्यइति उचितुं स्थापयितुमस्येत्युचथ्यः। साक्षाद्भगवान्भक्तपूज्यः वृहत्याः वाचः पालकत्वात्स्वामित्वाद्वा वृहस्पतिः" तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चेति सूत्रात्मकारलोपः सुडागमश्चेति ब्रह्मिष्ठो वैदिकतमः वृहस्पतेर्नपरःसाम्नोविदुरितिश्रुतेः ॥ ३५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

फलश्च तथैव भवेदित्याहुः अथेति अतो हेतोः अस्माकमंशो न शक्तिविशेषेण भूता प्राप्ता आविष्टा इत्यर्थः ॥ ३१—३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी।

अथेति विष्णोः परमेश्वरत्वख्यापनार्थं विष्ण्वंशोदत्त एवावतारो ऽभूत्नेतरौ विस्रप्स्यन्ति विस्तारयिष्यन्ति अन्तर्भूतणिजर्थस्य सृप्लृगतावित्यस्य रूपम् ॥ ३१ ॥

सभाजिताः पूजिताः मिषतो पश्यतोः ॥ ३२ ॥ ३५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

अंग हे मुने! भवितारः भविष्यंति ते तवयशः विस्रप्स्यंति विस्तृतं करिष्यंति ॥ ३१ ॥

सभाजिताः पूजिताः मिषतोःपश्यतोः तत आश्रमपदात् प्रतिजग्मुः ॥ ३२ ॥

योगविदध्यात्मवित् निबोध बुध्यस्व ॥ ३३ ॥ ३४ ॥ ३५ ॥

---

पुलस्त्योजनयत्पत्न्यामगस्त्यं च हविर्भुवि ॥
सोऽन्यजन्मनि दह्राग्निर्विश्रवाश्च महातपाः ॥ ३६ ॥
तस्य यक्षपतिर्देवः कुवेरस्त्विड्विडासुतः ॥
रावणः कुंभकर्णश्च तथान्यस्यां विभीषणः ॥ ३७ ॥
पुलहस्य गतिर्भार्या त्रीनसूत सती सुतान् ॥
कर्मश्रेष्ठं वरीयांसं सहिष्णुं च महामते ॥ ३८ ॥
क्रतोरपि क्रिया भार्या वालखिल्यानसूयत ॥
ऋषीनृषष्टिसहस्राणि ज्वलतोब्रह्मतेजसा ॥ ३९ ॥
ऊर्जायांजज्ञिरे पुत्रा वसिष्ठस्यपरन्तप! ॥
चित्रकेतुप्रधानास्ते सप्तब्रह्मर्षयोऽमलाः ॥ ४० ॥
चित्रकेतुः सुरोचिश्च विरजा मित्र एव च
उल्वणोवसुभृद्यानोद्युमान् शक्त्यादयोऽपरे ॥ ४१ ॥
चित्तिस्त्वथर्वणः पत्नी लेभे पुत्रं धृतव्रतम् ॥
दध्यंश्चमश्वशिरसं भृगोर्वंशं निबोध मे ॥ ४२ ॥
भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत्
धातारंच विधातारं श्रियंच भगवत्पराम् ॥ ४३ ॥
आयतिं नियतिंचैव सुते मेरुस्तयोरदात् ।
ताभ्यां तयोरभवतां मृकंडःप्राण एव च ॥ ४४ ॥
मार्कंडेयोमृकंडस्यप्राणाद्वेदशिरा मुनिः
कविश्च भार्गवो यस्य भगवानुशनासुतः ॥ ४५ ॥

भाषाटीका ।

अब हम लोगों के अंशरूप लोक विख्यात तुम्हारे पुत्र होंगे तुम्हारा मंगल होंवे तुम्हारा यश का विस्तार करेंगे ॥ ३१ ॥

इस प्रकार यथेष्ट वरदान देकर इन दोनों दंपती के देखते २ ही तीनों सुरेश्वर चले गये ॥ ३२ ॥

पश्चात् ब्रह्माके अंशसे चन्द्रमा विष्णुके अंश से योगवेत्ता दत्तात्रेय और शंकरके अंश से दुर्वासा हुये ॥ इसके पीछे अंगिरा की सन्तान सुनो ॥ ३३ ॥

अंगिराकी पत्नी श्रद्धाने चार कन्या पैदा करीं सिनीवाली कुहू राका और चौथी अनुमति ॥ ३४ ॥

इनों के विख्यात दो पुत्र और भी हुये जो कि स्वारोचिष मन्वन्तर में एक उतथ्य दूसरे साक्षात् बृहस्पतिजी हैं ॥ ३५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

पुलस्त्योहविर्भुविपत्न्यामित्यन्वयः सोऽगस्त्यः दह्राग्निर्जाठराग्नि विश्रवाश्चपुलस्त्यस्यसुतइतिशेषः ॥ ३६ ॥

तस्यविश्रवसइडविडायांजातः सुतःकुबेरःअन्यस्यांभार्यायांकेशिन्यांरावणादयस्त्रयःसुताः ॥ ३७ ॥ ३८ ॥

ज्वलतःप्रकाशमानान् ॥ ३९ ॥

चित्रकेतुप्रमुखाजज्ञिरेतेचसप्तर्षयोजाताः ॥ ४० ॥

तानेवाह चित्रकेतुरिति वसुभृद्यानोनामैकः शक्त्यादयोऽपरेऽन्यस्याःपुत्राः ॥ ४१ ॥ ४२ ॥

ख्यात्यांपत्न्याम् पुत्रान्पुत्रौपुत्रींच तानेवाह धातारमिति ॥ ४३ ॥

तयोर्धातृविधात्रोः ॥ ४४ ॥

कविश्चभार्गवोभृगोःपुत्रः यस्यकवेःसुतउशना ॥ ४५ ॥ ४६ ॥

श्रीराधारमणदास गोस्वामिविरचित ।
दीपन्याख्यादीपिकाटिप्पणी ।

इति चकारान्वयः ॥ ३६ ॥

रावणादयस्त्रयो विश्रवसः सुताः ॥ ३७ ॥ ३८ ॥

क्रिया तत्संज्ञत्वभिधाग्री ॥ ३९ ॥

तं च सप्तर्षयो जाता इति पृथक्वाक्यमन्यथा तच्छब्दस्थान-न्वयित्वंस्यात्तेचसप्तर्षयोऽमलादृत्यपि पाठश्रीकासम्मतः ब्रह्मर्षय-इति पाठे प्रमाणांश्चतेऋषयश्चेत्यर्थस्तथैव ॥ ४० ॥ ४१ ॥

भृतव्रतनामानं दध्यंचञ्च ॥ ४२ ॥

पुत्री च पुत्री च पुत्रास्तान् ॥ ४३ ॥

ताभ्यां धातृविधातृभ्यां सकाशात्तयो रायतिनियत्योः ॥ ४४ ॥

यस्य कवेः भगवान्सर्वज्ञ उशना शुक्रः ॥ ४५ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका ।

पुलस्त्यः पत्न्यां स्वभार्यायां हविर्भुवाख्यायां कर्दमस्य चतुर्थ्यां दुहितरि अगस्त्यमजनयत् ॥ अगस्त्यं विशिनष्टियोऽगस्त्यःअन्यजन्मनि दह्राग्निः जाठराग्निरभूत्तथा महातपाःविश्रवाश्च पुलस्त्यसुत इत्यर्थः ॥ ३६ ॥

तस्य विश्रवसइति इलविलासुतः इलविलायां जातःयक्षाणां पतिः प्रभुर्देवः कुबेरः तथाअन्यस्यां भार्यायां केकस्यां रावणादयस्त्रयः पुत्रा विश्रवस एव जाताः ॥ ३७ ॥

पुलहस्य भार्या रत्याख्या कर्दमस्य पंचमी दुहिता सती पतिव्रता त्रीन्सुतानसूत प्रसूतवती तान्निर्दिशति कर्मश्रेष्ठामिति हे महामते ! ॥ ३८ ॥

क्रतोरपि भार्या क्रियाख्या कर्दमस्य षष्ठी सुता ब्रह्मतेजसा ज्वलतः प्रकाशमानान्षष्टिसहस्राणि वालखिल्यान् वानप्रस्थानृषीनसूयत ॥ ३९ ॥

तथा वसिष्ठस्य भार्यायामूर्जायां कर्दमस्य नवम्यां सुतायां हे परंतप ! चित्रकेतुप्रभृतयः सप्तमहर्षयःनिर्मलाचाराःजज्ञिरे अरुंधत्या एव नामांतरमूर्जेति वेदितव्यम् ॥ ४० ॥

पुत्रान्निर्दिशति चित्रकेतुरिति सुमान् तेजस्वीत्यर्थः शक्त्याद-यः अपरे अन्यस्यां भार्यायां जाता इत्यर्थः ॥ ४१ ॥

अथर्वणः पत्नी कर्दमस्याष्टमी सुता शांताख्या चित्तिरिति पाठांतरं, तदातत्तस्या एव नामांतरं भृतव्रतं दध्यंच मश्वशिरसंचपुत्रं लेभेलब्धवती अथ मे मत्तः भृगोर्वंशं निबोधशृणु ॥ ४२ ॥

हे महाभाग ! ख्यात्यां ख्यातिनाम्न्यां कर्दमस्य सप्तम्यांदुहितरि भृगुर्धातृविधातारौ पुत्रौ पुत्रानित्यार्षं बहुवचनं भगवत्परां भगवानाश्रयो यस्यास्तांश्रियं लक्ष्म्यंशभूतां कन्यां चाजीजनत् ॥ ४३ ॥

मेरुः स्वस्य सुते आयतिं नियतिं च तयोर्धातृविधात्रोरदाद्दत्त-वान्ताभ्यां धातृविधातृभ्यां तयोर्मेरुदुहित्रोरायतिनियत्योर्यथा क्रमं मृकंडुः प्राणश्चाभवत् ॥ ४४ ॥

ततः मृकंडोर्मार्कंडेयः प्राणाद्वेदशिरा मुनिरभवत् उशना शुक्रः यस्य वेदशिरसः सुतः स कविः शुक्रश्चभार्गवः भृगुवंशसंभूत इत्यर्थः ॥ ४५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

त्यक्त्वागादगस्त्यः स्वेष्वेवशब्दसंघात इत्यतः शब्दादिविषय जातं प्रति गतो न भवतीति वा सोऽगस्त्योऽन्यजन्मनि अग्निषु दस्रो नामाग्निःदस्रोऽग्निरल्पाग्निरित्यर्थःअन्यजन्मनीति विशेषणं व्यर्थम् अन्न-पूर्णाः पूर्वमग्निरल्पाग्निरिति विवेकस्तु गवेषणीय इति ॥ ३६ ॥

तस्यांविश्रवसः कोऽयं यक्षपतिरित्यत उक्तंदेवः कुबेर इति कुबि आच्छादनइति धातोर्धनदानेन दारिद्र्यं कुंबति आच्छादयतीति कुबेरः अयमर्थःकस्मिंश्चिद्ग्रंथेऽप्यस्तीत्याप्तः स्यादित्यत उक्तमिडविलासुत इति अन्यस्यां पत्न्याम् ॥ ३७ ॥ ॥ ३८ ॥

वालखिल्या अल्पा येषां ते तथा संततिविधुराः ऊर्ध्वरेतस इ-त्यर्थः तान् ब्रह्मतेजसा ब्रह्मनिमित्ततेजसा ॥ ३९ ॥ ४० ॥

अन्येषां नामान्यप्रतिपिपन्नत्वात् किमिति नोक्तानीति शंकामाभूदित्याह चित्रकेतुरिति अपरे सप्तभ्योऽन्ये ते के शक्त्यादयः शक्ति मुनिप्रमुखाः ॥४१॥—॥ ४३ ॥

तयोरायतिनियत्योः ॥ ४४ ॥

यस्य कवेः ॥ ४५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

दस्राग्निरितिसम्बन्धोक्तिः देहाग्निरिति चित्सुखः॥३६॥—॥३८॥

तेजस इति चित्सुखः ॥ ३९ ॥

सप्तब्रह्मर्षय इति पाठश्चित्सुखसंमतः । सप्तर्षय इतिकश्चित् । टीकातूभयथा लगति ॥ ४०-४५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

हविर्भुवि पत्न्यां सोऽगस्त्यः दस्राग्निर्जाठरः विश्रवाश्च पुलस्त्य-स्य पुत्र इति शेषः ॥ ३६ ॥

तस्य विश्रवसः इडविडायां जातः सुतः कुबेरः अन्यस्यां केशिन्याम् ॥ ३०—३२ ॥

शक्त्यादयोऽपरेऽन्यस्याः पुत्राः ॥ ३७ ॥ ४२ ॥

पुत्रीच पुत्रीच पुत्रास्तान् पुत्रान् ॥ ४३ ॥

तयोस्ताभ्यां धातृविधातृभ्याम् ॥ ४४ ॥

कविश्च भार्गवो भृगोः पुत्रः ॥ ४५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

पुलस्त्यां हविर्भुवि पत्न्यामगस्त्यं जनयामास सोऽगस्त्यः अन्य-जन्मनि दस्रो जाठरोऽग्निरभूत् । विश्रवाश्च पुलस्त्यस्य सुत इति शेषः ॥ ३६ ॥

तस्य विश्रवसः । अन्यस्यां केशिन्यां रावणादयः ॥ ३७ ॥ ३८ ॥

ज्वलतः प्रकाशमानान् ॥ ३९ ॥

चित्रकेतुप्रधानाः चित्रकेतुप्रमुखाः ॥ ४० ॥

तानेवाह चित्रकेतुरिति वसुभृद्यानो नामिकः शक्त्यादयोऽपरे अन्यस्यांजाताः ॥ ४१ ॥

चित्तिः शांतिः ॥ ४२ ॥

पुत्रान् पुत्रौ पुत्रींच ॥ ४३ ॥ ४४ ॥

कविश्च भार्गवः अभावयत् अवर्द्धयत् ॥ ४५ ॥ ४६ ॥

---

त एतेमुनयः क्षत्तर्लोकान्सर्गैरभावयन् ॥
एषकर्दमदौहित्रसंतानः कथितस्तव ॥ ४६ ॥
शृण्वतः श्रद्दधानस्य सद्यः पापहरः परः ॥
प्रसूतिं मानवीं दक्ष उपयेमेह्यजात्मजः ॥ ४७ ॥
तस्यांससर्जदुहितॄःषोडशामललोचनाः ॥
त्रयोदशादाद्धर्माय तथैकामग्नयेविभुः ॥ ४८ ॥
पितृभ्यएकां युक्तेभ्यो भवायैकां भवच्छिदे ॥
श्रद्धा मैत्री दया शांतिस्तुष्टिः पुष्टिः क्रियोन्नतिः ॥ ४९ ॥
बुद्धिर्मेधा तितिक्षा ह्रीर्मूर्तिर्धर्मस्य पत्नयः ॥
श्रद्धाऽसूत शुभं मैत्रीप्रसादमभयं दया ॥ ५० ॥

भाषाटीका ॥

पुलस्त्यने हविर्भू पत्नी में अगस्त्य को पैदा किये जो और जन्म में जाठराग्नि हुये और एक बड़े तपस्वी विश्रवा को भी जनमा ॥ ३६ ॥

उनके इडविड़ा में यक्षोंके पति कुबेर हुये और दूसरी पत्नी में रावण कुंभकर्ण और विभीषण हुये ॥ ३७ ॥

पुलहकी गति भार्या ने तीन पुत्र पैदा किये कर्मश्रेष्ठ वरीयान् और सहिष्णु ॥ ३८ ॥

क्रतु की भार्या क्रिया ने ब्रह्म तेज से जाज्वल्यमान साठ हजार वालखिल्य ऋषि पैदा किये ॥ ३९ ॥

वसिष्ठजी के ऊर्जा नामक अरुंधुती भार्यामें चित्र केतु प्रभृति अमल पुत्र हुये वोही सप्त ऋषि हुये ॥ ४० ॥

चित्रकेतु, सरोचि, विरज, मित्र, उल्वण, वसुभृद्यान, द्युमान, ये सात पुत्र हैं अन्य स्त्री में शक्त्यादि इतर पुत्र उत्पन्न होते भये ॥ ४१ ॥

अथर्वण ऋषी की पत्नी चित्ति नाम्नी, दध्यंच नामक, व्रत को धारण करन वारो अश्वशिरा ऐसे पुत्र को प्राप्त होती भई. अब भृगुके वंश को श्रवण करो ॥ ४२ ॥

महाभाग्यवान् भृगु ऋषि, ख्याति नामक पत्नी में धाता, विधाता यह दो पुत्र, और भगवत्परायण श्रीनाम्नी पुत्री को उत्पन्न करते भये ॥ ४३ ॥

मेरुने, आयति, नियति, यह, दोनों पुत्रियोंको धाता विधाता इन दानोंकेलियेदान कियी. उनसूं वे दोनो स्त्रियोंके मृकंड प्राण यह दोनो पुत्र होतेभये ॥ ४४ ॥

मृकंड के पुत्र-मार्कंडेय प्राण के पुत्र वेदशिरा, और कवि भृगु केपुत्र भये जिन कवि के पुत्र उशना नामक शुक्र होते भये ॥ ४५ ॥

---

श्रीधरस्वामि कृत भावार्थदीपिका ।

अजात्मजोब्रह्मपुत्रः नतुप्राचेतसः ॥ ४७ ॥ ४८ ॥
युक्तेभ्यःसंयतेभ्योमिलितेभ्योवा ॥ ४९ ॥ ५० ॥ ५१ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपन्याख्यदीपिका टिप्पणी ।

सर्वैरित्यर्द्धकम लोकाज्ञानाविष्जनान् अभावयन्नुत्पादितवन्तः ॥ ४६ ॥

सात्विकशक्त्यधिष्ठातृत्वात्पापहरः ॥ ४७ ॥

तस्यां प्रसूत्याम् ॥ ४८ ॥

संयतेभ्यः शुद्धान्तःकरणेभ्यः । मिलितेभ्य एकचित्तेभ्यइति-एकभार्यत्वेपिदोषः परिहृतः ४९ ।

श्रद्धा शास्त्रार्थविश्वासशक्त्यधिष्ठात्री देवी शुभं । सत्सङ्गाद्यधिष्ठातारं मैत्री हिताचरणशक्त्यधिष्ठात्री दया लिहेतुकपरदुःखप्रहाणेच्छाशक्त्यधिष्ठात्री ॥ ५० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका ।

देवहूतिदुहितृसंततिमुपसंहरति नवेति हे क्षत्तः ! एते नव मरीच्यादयः सर्गैः स्वस्वैर्लोकानभावयन् उत्पादयामासुः कर्दमदुहितृसंततिश्रवणफलमाह एष इति कर्दमदौहित्रः कर्दमदुहितृसंबंधीसंतानो मया कथितः श्रद्धापूर्वकं शृण्वतः पापनिवर्तकः ॥ ४६ ॥

एवं देवहूतिसंततिमभिधायाथमनोस्तृतीयायाः दुहितुः प्रसूतेः संतानमाह प्रसूतिमिति अजात्मजो ब्रह्मपुत्रो दक्षः मानवीं स्वायंभुवमनुदुहितरं प्रसूतिमुपयेमे उवोढ तस्यां प्रसूत्यां अमललोचनाःसौंदर्यशालिनीः षोडशदुहितॄः ससर्ज ॥ ४७ ॥

तत्र त्रयोदश दुहितॄः विभुस्तत्तदभिप्रायविज्ञानसमर्थो दक्षः धर्माय ददौ एकां दुहितरमग्नये एकां युक्तेभ्यो मिलितेभ्यः पितृभ्य एकां भवच्छिदे भवाय रुद्राय अदात् ज्ञानप्रदत्वाद्रुद्रस्य भवच्छित्वं विवक्षितम् ॥ ४८

तत्र धर्मपत्नीस्त्रयोदश दुहितॄ निर्दिशति श्रद्धेति ॥ ४९ ॥

तासां प्रत्येकं संततिमाह श्रद्धेति आसां श्रद्धादिनामत्वंतदपत्यानां शुभादिनामत्वं च श्रद्धादिधर्मयुक्तत्वेनश्रद्धादिकार्यशुभादिधर्मयुक्तत्वेन च बोध्यंनाम्ना मन्वर्थत्वात् यद्वा श्रद्धा शुभाद्यभिमानिदेवतात्वाद्वातासां तेषां च तन्नामत्वम् ॥ ५० ॥

शांतिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत ।
योगं क्रियोन्नतिर्दर्प्पमर्थंबुद्धिरसूयत ॥ ५१ ॥
मेधा स्मृतिं तितिक्षा तु क्षेमं ह्रीः प्रश्रयं सुतम् ।
मूर्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी ॥ ५२ ॥ *
ययोर्जन्मन्यदोविश्वमभ्यनंदत्सुनिर्वृतम् ।
मनांसि ककुभो वाताः प्रसेदुः सरितोऽद्रयः ॥ ५३ ॥
दिव्यवाद्यंत तूर्याणि पेतुः कुसुमवृष्टयः ।
मुनयस्तुष्टुवुस्तुष्टा जगुर्गंधर्वकिन्नराः ॥ ५४ ॥
नृत्य तिस्मस्त्रियो देव्य आसीत्परममंगलम् ।
देवा ब्रह्मादयः सर्वे उपतस्थुरभिष्टवैः ॥ ५५ ॥

देवाऊचु ॥

यो मायया विरचितं निजयाऽऽत्मनीदं खे रूपभेदमिव तत्प्रचक्षणाय ॥
एतेन धर्मसदने ऋषिमूर्तिनाऽद्य प्रादुश्चकार पुरुषाय नमः परस्मै ५६
सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान्सत्त्वेन नः सुरगणाननुमेयतत्त्वः ।
दृश्याददभ्रकरुणेन विलोकनेन यच्छ्रीनिकेतममलं क्षिपताऽरविंदम् ५७

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

अभावयन् अवर्द्धयन् ॥ ४६ ॥

कर्दमदौहित्रकथाश्रवणफलमाह शृण्वत इति अजात्मजो दक्षः ॥ ४७ ॥ ४८ ॥

युक्तेभ्यो योगेभ्यो हरौ मनोयोगसहितेभ्य इति वा भवाच्छिदे ज्ञानोपदेशेन संसारनिर्मूलनाय ॥ ४९ ॥

तासांसततिस्वनामानुगुणमाह श्रद्धेत्यादिना ॥ ५० ॥ ५१ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

एष कर्दमेति । एतास्तद्दुहितरः स्व स्व नाम निरुक्तसात्विकशक्तीनामधिष्ठात्र्यः तत्पुत्राश्च तदनुरूपाः एवं दक्षदुहितरश्च ज्ञेया ॥ ४६—४९ ॥

श्रद्धाऽसूत शुभमित्यत्र ऋतमिति क्वचित् । एष चित्सुखसंमतः ॥ ५० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

लोकान् नानाविधजनान् उदपादयन्तः ॥ ४६ —४८ ॥

युक्तेभ्यो मिलितेभ्यः ॥ ४६ ॥

श्रद्धायाः स्वस्वनामनिरुक्त्या सात्विकशक्तीनामधिष्ठात्र्यः । तदंशाश्च तदनुरूपाः ॥ ५० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

मानवीं मनोः कन्याम् अजात्मजः ब्रह्मपुत्रः ॥ ४७–४८ ॥

युक्तेभ्यो मिलितेभ्यः ॥ ४९–५१ ॥

---

भाषाटीका ।

हे विदुर जी ये मुनि लोग सृष्टि करके लोकों की वृद्धि करते हुये। ये हमने कर्दम की पुत्रियों का संतान आपसेकहा। इसे जो श्रद्धा करके सुने उस्के पाप जल्दी दूर होते हैं ॥ मनुजी की प्रसूती नाम की पुत्री का ब्रह्मा के पुत्र दक्ष के साथ विवाह हुआ ॥ ४६ ॥ ४७ ॥

दक्षने प्रसूती में सुन्दर नेत्र वाली सोलह कन्या उत्पन्न करीं। उनमें से तेरह धर्म को और एक अग्नि को प्रदान करीं ॥ ४८ ॥

आपुस में मिले हुये पितृ लोगों कों एक और एक संसार को दूर करने वाले श्री महादेव जी को दी ॥ श्रद्धा, मैत्री, दया, शांति, तुष्टि, पुष्टि, क्रिया, उन्नति, बुद्धि, मेधा, तितिक्षा, ह्री, मूर्ति, ये तेरह धर्म की पत्नी हैं श्रद्धाने शुभको पैदा किया एसे ही मैत्रीने प्रसाद को, दयाने अभय को, शांतिने सुख, तुष्टिने मुद पुष्टिने स्मय, क्रियाने योग उन्नतिने दर्प, बुद्धिने अर्थ, मेधाने स्मृति, तितिक्षाने क्षेम, ह्रीने प्रश्रय, को पैदा किया, तथा सर्वगुणों की खान मूर्त्ति देवीने श्रीनरनारायण भगवान को पैदा किये ॥ ४९–५० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

सर्वेषांगुणानामुत्पत्तिर्यस्यांसा ॥ ५२ ॥ ५३ ॥ ५४ ॥

उपतस्थुर्भेजुः ॥ ५५ ॥

निजयामाययायस्मिन्नात्मनिखे गगने रूपभेदं गंधर्वनगरमिवेदं-विश्वंविरचितम् तस्याऽऽत्मनःप्रतिचक्षणाय प्रकाशनायाऽऽत्मानं

योऽद्यप्रादुश्चकारप्रकटितवांस्तस्मैपुरुषायनमः केनरूपेणप्रादुश्चकार ऋषिमूर्तिराकारोयस्मिंस्तेनरूपेण ॥ ५६ ॥

सोऽयन्नोऽस्मान्सुरगणाननल्पकरुणायुक्तेनविलोकनेनविशिष्ट-

---

* सर्वगुणोत्पत्ती इति वीरराघवीयपाठः ॥

एवं सुरगणैस्तात भगवंतावभिष्टुतौ ॥
लब्धावलोकैर्ययतुरर्चितौ गन्धमादनम् ॥ ५८ ॥
ताविमौ वै भगवतो हरेरंशाविहागतौ ।
भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥ ५९ ॥
स्वाहाभिमानिनश्चाग्नेरात्मजांस्त्रीनजीजनत् ।
पावकं पवमानं च शुचिं च हुतभोजनम् ॥ ६० ॥

श्रीधरस्वामिकृत भावार्थदीपिका

नेत्रेणदृश्यात्पश्यतु कथंभूतेन यच्छ्रीनिकेतमम्मलमरविंदंतत्त्विपतातिरस्कुर्वता कथंभूतः अनुमेयंशास्त्रतोविचार्यंनत्वस्माकमपरोक्षंतत्वं यस्य कथंभूतानस्मान् स्थितेर्जगन्मर्यादायाव्यतिकरोऽन्यथात्वंतस्योपशमायसत्वेनगुणेनसृष्टान् ॥ ५७ ॥

लब्धोऽवलोकोयैः सुरगणैस्तैरभिष्टुतावर्चितौसंतौययतुः ॥ ५८॥

भुवोभारस्यव्ययायनाशाय चकारएकवाक्यत्वार्थः तौचसांप्रतमिहागतावित्यर्थः तदुक्तंतंत्रे "अर्जुनेतुनरावेशः कृष्णोनारायणः स्वयमिति,, यदूद्वहः श्रीकृष्णः कुरूद्वहोऽर्जुनः उभावपिकृष्णनामानौ ॥ ५६ ॥

अग्न्यभिमानिनोदेवात् स्वाहानामतस्यभार्या हुतभोजनमितित्रयाणांविशेषणम् ॥ ६० ॥

---

श्रीराधारमणदास गोस्वामिविरचिता ।
दीपन्याख्यादीपिका टिप्पणी ।

शान्तिरन्तःकरणनिरोधशक्त्यधिष्ठात्री । तुष्टिः संतोषशक्त्यधिष्ठात्री, सात्त्विकशक्तीनां प्रकरणात्तस्मयोऽत्रधर्मोत्साहः,एवंदर्पोपि, तपो योगादिसामर्थ्यख्यापनम् ॥ ५१ ॥

मेधा धरणावतीधीः, सच्चिदानंदमूर्तेः प्रकाशकत्वेन मूर्तिसंज्ञत्वम् ॥ ५२ ॥

ययोरिति त्रिकम् सुनिर्वृतं परमानन्दविशिष्टं सत् अभ्यनन्दत्तस्मृद्धमासीत् तुणादि समृद्धा वित्यस्मात् अभिष्टवैस्स्तुतिवाक्यैः ॥ ५३-५५ ॥

यस्मिन्नात्मनि विरचितं तस्यात्मन इति संवन्धः गंधर्वनगरमिवेति नश्वरत्वं ननु मिथ्यात्वे "वैधर्म्याच्च न स्वप्नादिवद्,,इतिन्यायविरोधात् वैराग्यार्थंम्वा मिथ्यात्व एव तथापि परार्थत्वेन न तत्रतात्पर्य्यम् ॥ ५६ ॥

सोयं सर्वाधारस्सर्वस्रष्टृत्वेन प्रसिद्धः ॥ ५७ ॥ ५८ ॥

तौ च नरनारायणौ हरेरंशौ कर्तृ भूतौ इह जगति भुवो भारापनयनाय यदुकुरूद्वहौ कृष्णौ कृष्णार्ज्जुनौ प्रतिभागतौ प्रविष्टौ इति योजनातत्रतयोरागतत्वं सात्वततंत्रेप्रोक्तम् तत्र अर्ज्जुनस्य श्रीभगवत्सखत्वेन नरांशित्वेपि अर्ज्जुने अंशिनि नरस्य तदंशस्यावेशः प्रवेशः यथा समुद्रे नद्याः। कृष्णौ नारायण स्स्वयमित्यंशांशिनोरभेदाभिप्रायेण ॥ ५९ ॥ ६० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका ।

त्रयोदशानां मध्ये मूर्त्याख्या धर्मपत्नी सर्वेषां गुणानां कल्याणगुणानामुत्पत्तिरभिव्यक्तिर्ययोस्तावृषी नरनारायणौ भगवदवतारभूतौ असूत ॥ ५२ ॥

ययोर्नरनारायणयोर्जन्मनि जन्मकाले अदःएतद्विश्वं सुखितं सदभ्यनंदत्सर्वेषां मनांसि दिशः सरितः समुद्रा वाताश्च प्रसन्ना अभूवन् ॥ ५३ ॥

तूर्याणि वाद्यानि देवैरवाद्यंत ध्वनितानि ॥ ५४ ॥

देव्यः देवानां संबंधिन्यः स्त्रियः अवतीर्णौ नरनारायणौ द्रष्टुं सर्वे ब्रह्मादयो देवा अभिष्टवैरुपतस्थु आगत्य समीपे अभितः स्थित्वा स्तोत्रैस्तुष्टुवुरित्यर्थः ॥ ५५ ॥

स्तुतिमेवाहद्वाभ्यां य इति निजयाआत्मीयया मायया संकल्पेन स्वात्मन्येवाधारभूते खेआकाशेरूपभेदं सितनीलादिरूपभेदमिवविरचितं यादिदंविश्वंरचितं तत्राकाशदृष्टांतेन स्वस्यास्पृष्टसुज्यवस्तुदोषत्वमुच्यते यद्वा स्वमिश्चात्मनि जीवे आकाशे रूपभेदमिव इदं देवतिर्यगादिरूपभेदं विरचितं तत्राकाशदृष्टांतेन सितनीलादिरूपभेदो मेघादिकृतो वस्तुतस्तु आकाशादतिरिक्तोपि भ्रांतिदृष्टीनामाकाशाभिन्नत्वेन प्रतीतस्तद्वद्देवादिरूपभेदाद्विलक्षणे ह्यात्मस्वरूपे तदभिन्नत्वेनैव भ्रांतदृष्टीनां प्रतीयमानदेवादिरूपभेद इति विवक्षितं यथोक्तं। सितनीलादिभेदेन यथेदं दृश्यते नभः। भ्रांतिदृष्टिभिरात्मापि तथैकः सन्पृथक पृथगिति अस्मिन् पक्षे यो मायया आत्मनि रचितमित्युक्त्वा भगवत्संकल्पादेव जीवस्य बंध इत्युक्तं भवति तत् प्रतिचक्षणाय तस्य देवादिरूप संसृष्टस्यात्मनः प्रतिचक्षणाय प्रतिबोधनाय देवादिरूपभेदाद्विलक्षणब्रह्मात्मकप्रत्यगात्मस्वरूप बोधनाय तद्वारासंसारमोचनायेत्यभिप्रायः एतेन देवमनुष्यादिसजातीयेन स्वसंकल्पोपात्तेन अप्राकृताकर्मवश्येन ऋष्याकारेण धर्मस्य गृहे यो भगवान्प्रादुश्चकार प्रादुर्भूतः तस्मै परमपुरुषाय ते नमः ॥ ५६ ॥

सोयं स्वसंकल्पकृतजगद्बंधमोक्षो भगवान् अनुमेयतत्वः शास्त्रैकवेद्यविविधविचित्रशक्तिमत्स्वरूपः स्थितिव्यतिकरोपशमायस्थितिःपालनं व्यतिकरः सृष्टिः उपशमः संहारः तेषां समाहारे द्वंद्वः तस्मै जगत्पालनाद्यर्थंपालनाधिकृतभगवदंशभूतद्वाद्यभिप्रायेण स्थितिपदं प्रयुक्तं सत्वेनेतिगुणत्रयोपलक्षणं स्थित्याद्यनुगुणसत्वादिगुणविशिष्टत्वेन सृष्टानस्मान्सुरगणान् अदभ्रकरुणेन अनल्पदयायुक्तेन विलोकनेन दृश्यात् आशीर्लिङ्आर्द्धधातुकत्वात्पश्यादेशाभावःदृश्यानिति द्वितीयां तथाठे तु पश्यत्विति क्रियापदमध्याहर्त्तव्यंदृश्यान्कृपावलोकनविषयत्वयोग्यानस्मान्पश्यत्वित्यर्थः कथंभूतेनविलोकनेन यच्छ्रियो लक्ष्म्या निकेतं स्थानमरविंदं कमलं तत्त्विपता तिरस्कुर्वंता ॥ ५७ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका

हे तात ! एवं लब्धः कृपावलोको यैस्तैः सुरगणैरभिष्टुतौ भगवंतौ नरनारायणौ गंधमादनाख्यंपर्वतं प्रतिययतुः गतवंतौ ॥ ५८ ॥

तावेव हरेरंशतयावतीर्णौ इमौ नरनारायणौ भुवः भारव्ययायभारक्षपणाय यदुकुरुकुलश्रेष्ठौ इमौ कृष्णार्जुनाविहागतौ तावेव कृष्णार्ज्जुनारूपेणावतीर्णावित्यर्थः ॥ ५९ ॥

एवं धर्मपत्नीनां दक्षदुहितॄणांत्रयोदशानांसंततिः कथिता अथ चतुर्दश्या दक्षदुहितु संतानमाह स्वाहेति अभिमानिनः स्वाहांभार्यां स्वस्यात्यंतमनुकूलां मन्यमानादग्नेस्तद्भार्यास्वाहा स्वाहाख्या त्रीन् पुत्रान् प्रसूतवती अभिमानिन इत्यात्मजाविशेषणं वा त्रेताग्न्याभिमानिनो देवानित्यर्थः तानाह पावकमिति हुतभोजनमिति त्रयाणां विशेषणं हुतं देवतोद्देशेन त्यक्तं चरूपुरोडाशादिकं भुक्त इति हुतभोजनस्तम् ॥ ६० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

शमदमादिसर्वगुणानामुत्पत्तिर्ययोस्तौ तथा ॥ ५२—५३ ॥

अभिष्टवैः स्तोत्रैः ॥ ५५ ॥ ॥

यो विष्णुर्निजमायया स्वेच्छया । खे रूपभेदमिव यथाकाशे वाय्वादिरूपभेदआकाशाधारतया प्रतीयते तथात्मनि स्वाधार तया विरचितमिदं विश्वं । तत्प्रतिचक्षाणाय तस्य जगतः स्वस्य चाधाराधेयभावज्ञापनायाद्य धर्मसदने मूर्त्याख्यधर्मभार्यायां एतेना स्मद्दृष्टिगोचरेण ऋषिमूर्तिना ऋषिवेषधारिणी मूर्तिर्यस्य तत्तथा तेन रूपेण । प्रादुश्चकार तस्मै परस्मै पुरुषाय नम इत्यन्वयः 'यथाकाशस्थितो नित्यंवायुः सर्वत्रगो महान्, 'यथाकाशे विमानादिरूपभेदः प्रतीयते । तथा हरौ जगदिद तत्सामर्थ्यात्प्रतीयते, इत्यादेः ॥ ५६ ॥

किमिदानीं विशेषाभीष्टमित्यतस्तत्प्रार्थयते सोयमिति । यो भगवान् भक्ताभीष्टैकचिंतामणिः सोयमवलोकनेन कटाक्षनिरीक्षणेन सुरगणान्नो दृश्यादवलोकयत्वित्यन्वयः द्रष्टव्यत्वे स्वगुणान् लक्षयंति । स्थितीति स्थितिव्यतिकरोपशमाय स्थितिविघ्नपरिहाराय सत्त्वेन गुणेन सृष्टान् । अस्माभिरपि न साकल्येन ज्ञातुं शक्य त इति भावेनाहुः अनुमेयतत्त्व इति प्रत्यक्षागमानुगृहीतव्याप्तिकेन लिंगज्ञानेन ज्ञेयं तत्त्वमनारोपितज्ञानस्वरूपं यस्य स तथा । अवलोकनस्य स्वविषयेजने गुणार्पकगुणोस्तिचेत्प्रार्थनीयतामर्हति तत्कथमत्राहुःअदभ्रेति अदभ्रा अनल्पा पूर्णा करुणायस्य तत्तथा तेन न केवलमनुग्रहगुणः किन्तु कांतिगुणोप्यस्तीत्याहुः क्षिपतेति अरविंदं क्षिपता । स्वकांतिगुणेन । पद्मकांति निरस्यतइत्यर्थः पद्मस्य कोयं माहात्म्यातिशय इति तत्राहुः यच्छ्रीनिकेतमिति यदरविंदं श्रियो निकेतं निवासस्थानं । श्रियो निवासस्थानियत्वं केनचिद्गुणेन भाव्यं स क इति तत्राहुः अमलमिति ॥ ५७ ॥

ततः किं भगवंतावकार्ष्टामिति तत्राह एवमिति ॥ ५८ ॥

तौ करतलामलकवत् ज्ञापयति ताविमाविति यदूद्वहो यादवेश्वरःकृष्णः । कुरूद्वहोऽर्जुनः अस्मिन्नरस्याविशेषावेशाद्धरेरंशत्वं न तु साक्षात् तदुक्तं । नरे विष्णुः समाविष्टः स्वयं नारायणो हरिः अर्जुने च नराविशःकृष्णो नारायणः स्वयमिति ॥ ५९ ॥

अग्न्यभिमानिनो देवान् अग्नेः स्वाहा नाम्नी हुतभोजनामात त्रयाणां विशेषणम् ॥ ६० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

योगमिति सार्द्धकम् ॥ ५१ ॥

मूर्त्तिरिति सर्वगुणस्य भगवत उत्पत्तिः प्रकाशो यस्याः सा अस्य स्थापनात् तावसूतेति पूर्वेणान्वयः भगवदाख्यायाः सच्चिदानन्दमूर्त्तः प्रकाशहेतुत्वान्मूर्त्तिरित्यर्थः ॥५२॥

ययोरिति त्रिकम् ॥ ५३–५५ ॥

य इति । खे रूपं सौरचान्द्रकिरणं धूल्यादिमयं भेदश्च तत्कृतः द्वयोर्द्वन्द्वैक्यं तदस्पर्शित्वात् तदाच्छादकत्वाच्च तदिव सम्प्रति तत्रैव तस्यात्मनः प्रतिचक्षणायप्रकाशनायेत्यादियोज्यम् ॥५७–५८॥

ताविति । आगताविति कर्त्तरि निष्ठा । कृष्णाविति कर्म्मणि द्वितीया कृष्णौ कृष्णार्ज्जुनौ प्रति ताविमौ प्रविष्टवन्तावित्यर्थः कृष्णौ कथम्भूतौ भुवो भारव्ययाय यदुकुरूद्वहौ । यदुकुरुवंशे अवतीर्णावित्यर्थः । चकारोऽत्रान्वाचये मुख्यत्वेन तत्तद्भक्तानां तत्तद्वाञ्छादानार्थमित्यर्थः ॥ ५९—६६ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

स्वयं धर्मपूतसाहमदर्प तपोयोगादिषु सामर्थ्यप्रख्यापनं । अन्यौ स्मयदर्पावधर्म्मवंशौ ज्ञेयौ ॥ ५१ ॥

सर्वगुणस्य निखिलकल्याणगुणार्णवस्य भगवत उत्पत्तिर्यतः सेति शुद्धसत्वस्वरूपा भगवत्प्रकाशिका शक्तिरियं ज्ञेया॥५२–५५॥

यस्मिन्नात्मन्यधिष्ठाने निजया मायया कर्त्र्या इदं विराड्रूपंखे नभसि रूपभेदं मेघवृन्दमिव विरचितं तस्यात्मनः स्वस्य प्रतिचक्षणाय प्रकाशनाय एतेन ऋषिमूर्त्तिना यः प्रादुः प्रादुर्भावं चकार । ऋषिमूर्त्तिनेति प्रकृत्यादित्वात्तृतीया तस्मै पुरुषाय नमः अत्र रूपभेदमिति एतेनेति ऋषिमूर्त्तिनेति पदत्रयस्य क्लीवत्वमार्षम् ॥५६॥

स्थितेर्जगन्मर्यादाया व्यतिकरोऽन्यथात्वं तस्योपशमाय विलोकनेन नेत्रेण कीदृशेन यत् श्रीनिकेतममलमरविन्दं तत् क्षिपता तिरस्कुर्वता ॥ ५७ ॥

लब्धोऽवलोकः कृपा माया यैस्तैरर्चितौ ॥ ५८ ॥ .

ताविमौ नरनारायणौ हरेः कृष्णस्यांशौ कर्त्तारौ इह द्वापरान्ते यदूद्वहकुरूद्वहौ कृष्णौ कृष्णार्ज्जुनौ कर्मभूतौ आगतौ प्राप्तौ कृष्णार्ज्जुनयोः स्वांशिनोस्तावंशौ प्रविष्टावित्यर्थः ।, तथैव भागवतामृतोक्ता कारिका यथा । कर्त्तारौ तौ हरेरंशौ नरनारायणावृषी । द्वापरान्ते कर्मभूतावायातौ कृष्णफाल्गुनाविति ॥ ५९ ॥

अग्नेर्भार्यां स्वाहा अग्न्यभिमानिनस्त्रीनात्मजान् हुतभोजनमिति त्रयाणां विशेषणम् ॥ ६० ॥

---

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः !

सर्वेषां गुणानामुत्पत्तिर्यस्याम् सुनिर्वृतं सुष्ठु सुखितं सत् अभ्यनंदत् ॥५२ ॥

प्रसेदुः प्रसन्ना अभूवन् तूर्य्याणि अवाद्यंत देवैरिति शेषः ॥ ५३–५४ ॥

अभिष्टवैः स्तोत्रैः उपतस्थुर्भेजुः ॥ ५५ ॥

खे इव निर्मले यस्मिन् आत्मनि रूपभेदमिदं विश्वं निजमायया प्रकृत्या विरचितम् ॥ तस्यात्मनः प्रतिचक्षणाय प्रकाशनाय आत्मानं य ऋषिमूर्तिना अद्यप्रादुश्चकार तस्मै नम इत्यन्वयः ॥ ५६ ॥

तेभ्योग्नयः समभवं श्चत्वारिंशच्च पंचच ॥
तएवैकौनपंचाशत्साकं पितृपितामहैः ॥६१॥
वैतानिके कर्माणि यन्नामभिर्ब्रह्मवादिभिः ।
आग्नेय्य इष्टयो यज्ञे निरूप्यंतेऽग्नयस्तु ते ॥६२॥
अग्निष्वाता बर्हिषदः सोम्याः पितुर आज्यपा ॥
साग्नयोऽनग्नयस्तेषां पत्नीदाक्षायणी स्वधा ॥६३॥
तेभ्यो दधार कन्ये द्वे वयुनांधारिणी स्वधा ।*
उभे ते ब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे ॥६४॥
भवस्य पत्नी तु सती भवं देवमनुव्रता ॥
आत्मनः सदृशं पुत्रं न लेभे गुणशीलतः ॥६५॥

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

अनुमेयं शास्त्रतो विचारणीयं तत्त्वं यस्य तथाभूतः सोयम् स्थितिः पालनं, व्यतिकर सृष्टिः, उपशमः संहार, स्तेषां समाहारे कवचनं तस्मै स्थित्याद्यर्थं सृष्टान् नोऽस्मान् सत्वेन शांतेन अत एवा दभ्रकरुणेनाऽनल्पदयेन यदमलं श्रीनिकेतमरविंदंक्षिपत् स्वकांत्या तिरस्कुर्वताऽवलोकनेन ईक्ष्यात् पश्यतु ॥ ५७ ॥

लब्धावलोकैरर्चितौ पूजितौ ॥ ५८ ॥

तौ इमौ नरनारायणौ हरेर्नारायणस्यांशौ कर्तृभूतौ भुवोभारस्य व्ययाय नाशाय यदुकुरूद्वहौ कृष्णौ कर्मभूतौ इह आगतौ प्रविष्टा वित्यर्थः तत्र नरः कुरूद्वहं कृष्णमर्जुनं गतः नारायणश्च यदूद्वहं माधं नारायणं गतः आद्यो नारायणः श्रीकृष्णः। एवमेव भगवान् साक्षाद्यश्चोनारायणः पुमान् मोहयन् माययालोकं गूढश्चरति वृष्णिष्वि त्युक्तत्वात् ॥ अयमर्थः ॥ आदिनारायणः स्वयं भगवान् श्रीकृष्णः एते चांशकलाःपुंसः कृष्णस्तु भगवान्स्वयमित्युक्तत्वात् द्वितीयोना नारायणः पुरुषः। जगृहे पौरुषं रूपं भगवानित्युक्तत्वात्। तस्य नारायणस्यांशः धर्मगृहेऽवतीर्णस्तृतीयो नारायणः। एतच्चावतारा‍णां निधानं बीजमित्युक्तत्वात् ॥ ५९ ॥

स्वाहा तु स्वभर्तुः शकाशात् अग्न्यभिमानिनो देवात्। पावकादींच त्रीनात्मजानजीजनत्। हुतभोजनमितित्रयाणांविशेषणम्॥६०-६१॥

---

### भाषाटीका

जिनों को जन्म होते ही यह जगत अति आनंदित हुआ सबों के मन प्रसन्न होगये तैसेही दिशा, पवन, नदियें, और पर्वत, ये भी प्रसन्न होगये ५३

स्वर्ग में बाजे बजने लगे आकाश से फूलोंकी वर्षा होने लगी संतुष्ट मुनिजन स्तुति करने लगे गन्धर्व किन्नर गान करने लगे देवां गना नृत्य करने लगी इस प्रकार उस समें परम मंगल हुआ और ब्रह्मादिक देवतामी स्तुतियों से उपस्थान देने लगे ५४-५५

### भाषाटीका

देवता बोले। जिस पुरुष ने अपनी माया से आप में "आकाश में गंधर्व नगर के सदृश" इस जगत को रचा अपना प्रकाश करने को धर्म के गृह में इस ऋषि मूर्त्ति से प्रकट हुये एसे पर पुरुष को नमस्कार हो ॥ ५६ ॥

सोये शास्त्रकवेद्य भगवान जगत की मर्यादा में विघ्नोंकी शांति बनाये हुए हम सब देवन कों, लक्ष्मी का गृह अमल कमल शोभाकोभी तिरस्कार करने वाली, अपनी करुणा पूर्ण दृष्टि से देखें

हे विदुर! इस तरह देवगणों ने स्तुतिकर पूजा करीनरनारायण ऋषी इन पर कृपा दृष्टि कर गंधमादन पर्वत को चले गये.

येही नरनारायण आपस्वयं भूभार उतारने को यदुवंश कुरुवंश में श्रीकृष्ण अर्जुन रूप से इस भूतल में अवतार लिये हैं ५६

अग्न्याभिमानी देवता से स्वाहा नाम की भार्या में 'हवन किये हुय को भोजन करने वाले पावक पवमान और शुचि ये तीन पुत्र पैदा हुय ॥ ६० ॥

---

### श्रीधरस्वामिकृत भावार्थदीपिका

पितरस्त्रयः पितामहप्रपितामहैस्तैःसाकंसह ॥ ६१ ॥

वैतानिकेवैदिकेकर्मणियेश्चेयेषां नामभिरग्निदेवताकाः इष्टयोनिरूप्यंते क्रियंते त एतेऽग्नयो नलौकिकाः अतो बहूनां नवैयर्थ्यमिति भावः॥ ६२ ॥

सोम्याः सोमपाः येषामग्नौकरणमस्तितेसाग्नयः तद्रहितास्त्वनग्नयः ॥ ६३ ॥

तयोस्तुसंततिर्नाभावज्जीवन्मुक्तत्वादित्याह उभेतइति ॥ ६४ ॥
गुणशीलतआत्मनः सदृशंदेवमनुव्रताऽपिसतीपुत्रंनलेभे॥ ६५ ॥

---

पा१ * मेधांवैतरणीं स्वधा इति वीरराघवीयपाठः ॥

पितर्यप्रतिरूपे स्वे भवायानागसे रुषा ।
अप्रौढैवात्मनात्मानमजहाद्योगसंयुता ॥ ६६ ॥
इतिश्रीभागवतेमहापुराणेचतुर्थस्कन्धे
विदुरमैत्रेयसम्वादोनाम
प्रथमोऽध्यायः १

—:o:—

श्रीधरस्वामिकृत भावार्थदीपिका ॥

तत्रहेतुः स्वपितरिदक्षेऽप्रतिरूपेऽसदृशेप्रतिकूलेसतीत्यर्थः आत्मनास्वयमवाऽऽस्मानंदेहमजहात्त्यक्तवती योगसंयुतायोगमाश्रित्येति ॥ ६६ ॥

इतिश्रीमद्भागवते महापुराणेचतुर्थस्कंधे
श्रीधरस्वामिकृत भावार्थदीपिका
टीकायां प्रथमोऽध्यायः॥ १ ॥

———

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिकाटिप्पणी

तेभ्यः पावकादिभ्यःपितरस्त्रयः पावकादयस्त्रयःपितामहोऽग्न्यभिमानीदेवः ॥ ६१ ॥

तएवेत्येवकारव्यावर्त्यमाह न लौकिका इति अतः पृथक् पृथक्साधनत्वात् ॥ ६२ ॥

पत्रपुटके जलं धृत्वाऽग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति वारद्वयं जलेहोमो ऽग्नौ करणं कर्मविशेषः तदस्तियेषु त साग्नयः ॥ ६३ ॥

तेभ्यः पितृभ्यः सकाशात् स्वधा नाम्नी तद्भार्य्या द्वेकन्ये गर्भं दधार ज्ञानं शास्त्रीयं परोक्षं विज्ञानमनुभवः ॥ ६४ ॥ ६५ ॥

तत्र पुत्राऽलाभे क्वचिदसादृश्यं अग्निजलयोरिवेत्यभिप्रेत्य प्रतिकूल इत्यार्थिकोर्थः ॥ ६६ ॥

इतिश्रीमद्भागवतेमहापुराणे चतुर्थस्कंधे
दीपिन्याख्यायां दीपिका टिप्पण्याम्
प्रथमोऽध्यायः ॥ १ ॥

———

श्रीमद्वीरराघवाचार्य कृत भागवतचंद्रचंद्रिका ।

तेभ्यः पावकादिभ्यः पंचचत्वारिंशदग्नय समभवन् त एव पंचचत्वारिंशदग्नयः पितृपितामहैः सार्कं सह एकोनपंचाशत् तत्र पितरस्त्रयः पितामह एकः ॥ ६१ ॥

पंचचत्वारिंशदग्नीन्विशिनष्टि वैतानिक इति यन्नामभिर्येषामग्नीनां नामभिः वैतानिके वैदिके कर्मणि तथा यज्ञे यज्ञा यज्ञरूपे वैतानिके कर्मणि आग्नेय्य अग्निदेवताका इष्टयो यागाः ब्रह्मवादिभिर्वैदिकैर्निरूप्यंते त एतेऽग्नय इत्यर्थः ॥ ६२ ॥

अथपंचदस्या दक्षदुहितुः संततिं वक्ष्यन् तत्पतीन्पितॄन् विभजति अग्निष्वात्ता इति अग्निष्वात्ता अयज्वानस्तेनग्नयः येषामग्नौ करणं नास्ति तेऽनग्नयः ते चाज्यपा ये च बर्हिषदो यज्वानस्ते साग्नयः अग्नौ करणवत सोम्या सोमपाश्च तथाच श्रुतिः एवं यज्वानस्ते ये पितरा बर्हिषदः ये वा अयज्वानो गृहमेधिनस्ते पितरोऽग्निष्वात्ता इति तेषामुभयविधानां पितॄणां पत्नी दाक्षायणी दक्षदुहिता स्वधाख्या ॥ ६३ ॥

तेभ्यः पितृभ्यः मेधां वैतरणीञ्च द्वे कन्ये दधार गर्भं धृतवती प्रसूतवतीत्यर्थः तयो संततिर्नास्तीत्याह उभइति ते उभे मेधावैतरण्यौ ब्रह्मवादिन्यौ ब्रह्मोपदेष्ट्र्यौ ज्ञानं शास्त्रजन्यं विज्ञानं विवेकादिजन्यं तयोः पारं अंतं गतवत्यौ सनकादिवदूर्ध्वरेतस्के ते इति भावः ॥ ६४ ॥

भवस्य रुद्रस्य या पत्नी सती नाम्नी सापि गुणशीलादिभिरात्मनः स्वस्याः सदृशं देवं भवं सेवमानापि पुत्रं नलेभे ॥ ६५ ॥

तत्र हेतुः स्वे पितरि दक्षे अनागसे निरपराधिने भवाय रुद्राय रुषा क्रोधेनाप्रतिरूपे असदृशे प्रतिकूले सति आत्मना स्वयमेव आत्मानं देहं अप्रौढैव बालैव सती योगसंयुता अजहात् तत्याज योगाग्निना देहं ददाहेत्यर्थः ॥ ६६ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिकाख्यायांटीकायां
प्रथमोऽध्यायः ॥ १ ॥

———

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

तेभ्यस्त्रिभ्यः पितरः पावकादयःपितामहःस्वाहापतिरग्निः॥६१॥

वैतानिके कर्मणि यज्ञकर्मणि ब्रह्मवादिभिर्येषामग्नीनां नामभिराग्नेय्य अग्निदेवत्या इष्टयो निरूप्यते तेऽग्नय एतादृशमहिमान इत्यर्थः ॥ ६२ ॥

तेषां जातिनामान्याह अग्निष्वात्ता इति तेषामग्नीनां ॥६३॥
ब्रह्मवादिन्यौ वेदविचारविचक्षणे ॥ ६४ ॥
भवपत्न्याः सत्याःकस्यपत्यानीत्याशंकां परिहरतिभवस्येति ॥६५॥

आत्मसमाऽपत्याऽलाभात् तया सत्या किमकारीति तत्राह पितरीति पितरि दक्षे अनागसे भवायाप्रतिरूपेऽननुकूलेविरोधिनि सति अप्रौढैवाऽस्वीकृतेव योगसंयुता प्राणोत्क्रमणनिमित्तयोगनिरतात्मनामनसाऽऽत्मानं हरिं ध्यायंत्यात्मानं देहमजहादत्याक्षीदित्यन्वयः ॥ ६६ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कंधे
श्रीविजयध्वजविरचितायांपदरत्नावल्याम्
प्रथमोऽध्यायः ॥ १ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी

पितरस्त्रयः पितामह एकः तैः साकं सह ॥ ६१ ॥

वैतानिके वैदिके कर्मणि यज्ञे येषां नामगिरग्निदेवताका इष्टयो निरूप्यन्ते क्रियन्ते त एवैतेऽग्नयो न लौकिका अतो न बहूनां वैयर्थ्यमिति भावः ॥ ६२ ॥

सौम्याः सोमपा येषामग्नौ करणमस्ति ते साग्नयः तद्रहितास्त्वनग्नयः ॥ ६३ ॥

तेभ्यः पितृभ्यः सकाशात् स्वधा द्वे कन्ये दधार गर्भे इति शेषः ॥ ६४ – ६५ ॥

पुत्रं न लेभे इत्यत्र हेतुः अनागसे भवाय रुषा कोपेन हेतुना स्वे पितरि अप्रतिरूपे असदृशे प्रतिकूले सतीत्यर्थः ॥ ६६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थे प्रथमोऽध्यायः सङ्गतः सङ्गतः, सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

वैतानिके वैदिके कर्मणि यज्ञे येषां नामभिः अग्निदैवत्यः इष्टयो निरूप्यंते ते एकोनपंचाशत् अग्नयः वैदिका इति शेषः ॥ ६२ ॥

सौम्याः सोमपाः साग्नय अग्नौकरणवतः तद्रहिताः अनग्नयः तेषां सर्वेषामेकैव दक्षकन्या स्वधा पत्नी ॥ ६३ ॥ ६४ ॥

गुणशीलत आत्मनः सदृशं भवमनुवृतापि पुत्रं नलेभे ॥ ६५ ॥

तत्र हेतुमाह पितरीति स्वेपितरि दक्षे । अनागसे निरपराधिने भवाय अप्रतिरूपे प्रतिकूले सति योगमाश्रित्य आत्मना स्वयमेव आत्मानं देहं अमौढैव रुषा । अज़हात् त्यक्तवती ॥ ६६ ॥

इति श्रीमद्भागवत सिद्धांतप्रदीपे चतुर्थ स्कंधीयेप्रथमाध्यायार्थप्रकाशः

भाषाटीका ।

उन तीनों से पैतालीस अग्नि उत्पन्न हुए वह पिता और पितामह सहित सर्व उनचास भये ॥६१॥

यज्ञादि वैदिक कर्म में ब्रह्मवादि लोग जिनके नाम से (आग्नेयी इष्टि) अर्थात् अग्निदेवताक यज्ञनिरूपण करते हैं ये वह वैदिक अग्नि हैं ६२

अग्निष्वात्त बर्हिषद सोमप आज्यप जो पितर हैं वे साग्नि और अनग्नि एसे दो प्रकार के हैं उनकी पत्नी दक्षकी पुत्री स्वाधा है ६३

स्वधाके उन पितृन से वयुना और धारणी दो कन्या हुंइ वे दोनो ब्रह्मवादिनी और ज्ञान विज्ञान के पारंगत होती भई ६४

और महादेव की पत्नी सती सदा अपने गुण शील सदृशपति-श्रीशिव के अनुवर्त्तन में रही तौ भी उनको पुत्र प्राप्त न हुआ ॥६५॥

कारण यह कि निरपराधी श्रीशिवजी पर पिता को प्रतिकूल देख मारे क्रोध के अपरिपक्व अवस्थाही में अपने आप योगबल से से देह कों त्याग दिया ६६

श्रीमद्भागवत महापुराण चतुर्थस्कन्धमें प्रथम अध्यायकी भाषा टीका समाप्त भई ।

---

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

विदुरउवाच ॥

भवे शीलवतां श्रेष्ठे दक्षो दुहितृवत्सलः ।
विद्वेषमकरोत्कस्मादनादृत्यात्मजां सतीम् ॥ १ ॥
कस्तं चराचरगुरुं निर्वैरं शांतविग्रहम् ।
आत्मारामं कथं द्वेष्टि जगतो दैवतं महत् । २ ।
एतदाख्याहि मे ब्रह्मन् जामातुः श्वशुरस्य च ।
विद्वेषस्तु यतः प्राणांस्तत्यजे दुस्त्यजान्सती ॥ ३ ॥

मैत्रेयउवाच ।

पुरा विश्वसृजां सत्रे समेताः परमर्षयः ।
तथाऽमरगणाः सर्वे सानुगाः मुनयोऽग्नयः ॥ ४ ॥
तत्र प्रविष्टमृषयो दृष्ट्वार्कमिव रोचिषा ।
भ्राजमानं वितिमिरं कुर्वंतं तन्महत्सदः ॥ ५ ॥

---

श्रीधरस्वामि कृत भावार्थदीपिका।

द्वितीये प्रथमाध्यायोपक्षिप्तभवदक्षयोः ।
विद्वेषे वर्ण्यतेहेतुर्विश्वसृड्यज्ञसंभवः ॥ १ ॥

सतींसतीनाम्नीम् ॥ १ ॥

नचासौकस्यचिद्वेषार्हइत्याह कइति चराचरगुरुंजगतोदैवतं चतंकोद्विष्टिकथंचनिर्वैरंद्वेष्टि निर्वैरत्वेहेतुः शांतभावेक्तः शांतिरेवावि ग्रहोयस्य कुतः आत्मन्येवा ऽऽरामोरतिर्यस्यतम् यद्वा कः प्रजापति र्दक्षः कथंद्वेष्टि एवंभूतेतस्मिन्द्वेषोऽयुक्तोऽशक्यश्चेत्यर्थः ॥ २ ॥

यतांहेतोर्विद्वेषः यतो विद्वेषात्प्राणांस्तत्याज एतद्याख्याहि ॥ ३ ॥

तदेवाख्यातुमितिहासंप्रस्तौति पुरेति समेताआसन् ॥ ४ ॥

प्रविष्टंदक्षमितिशेषः महत्सदोमहतींसभाम् ॥ ५ ॥

---

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्या दीपिकाटिप्पणी ।

उपक्षिप्ते आरब्धे विश्वसृजां यज्ञे संभवो यस्यानभ्युत्थानादेः विद्वेषानर्हत्वे हेतुः शीलवतां श्रेष्ठ इति ॥ १ ॥

को द्वेष्टीति द्वेष्टुरपि जगद्गतत्वात् निष्ठाशांतिपरायणइत्यत्र भाष्ये तथा व्याख्यानाच्छान्तिरत्र ज्ञप्तिः। पूर्वार्थे दक्षस्य व्यङ्ग्यमर्य्यादया प्राप्तिरिति साक्षात्प्रकृतार्थमाह यद्वेति ॥ २ ॥

तुश्चार्थे जामातुःश्वशुरस्य च यतो हेतोर्विद्वेषः यतश्चविद्वेषात्प्राणांस्तत्याज एतदुभयहेतुमाख्याहीत्यन्वयः ॥ ३ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिका टिप्पणी ॥

तदेव विद्वेषहेत्वादिकमेव समेता मिलिता आसन्निति शेषः ॥ ४ ॥

तत्रेति युग्मकम् तत्र सत्रे सहाग्नयइति कुंडेभ्योऽग्नयोऽभ्युत्थानं चक्रुः ॥ ५ ॥

---

श्रीमद्वीरराघवाचार्य कृत भागवत चंद्रचंद्रिका ॥

भवाय पितर्यप्रतिरूपे सत्यात्मानं तत्याजेति संग्रहेणोक्तं देहत्यागं चाशुत्य तद्विस्तरबुभुत्सया पृच्छति विदुरः भव इति त्रिभिः शीलवंतां निर्वैरत्वसमदर्शनत्वादिरूपस्वभाववतांम श्रेष्ठ भवे रुद्रे दुहितृषु च सत्वादक्ष' सती नाम्नीमात्मजामनादृत्य कस्माद्धेतोर्विद्वेषमकरोत् नच दुहितृजामातरौ विद्वेषार्हांविति भावः ॥ १ ॥

इतश्च न भवो विद्वेषार्ह इत्याह क इति कः ब्रह्मा दक्षः चराचराणां गुरुं ज्ञानोपदेष्टारं अचराणामपि ज्ञानसंपादने समर्थं किमुत चरणामिति कैमुत्यन्याय द्योतनायाचरपदं प्रयुक्तं जगतः जिज्ञासोर्लोकस्य महद्दैवतं आराध्यं रुद्रस्तारकं ब्रह्म व्याचष्टे ॥ २ ॥

शंकराद्ज्ञान मन्विच्छेदिति श्रुति स्मृतिभ्यां ज्ञानार्थं जिज्ञासुभिराध्यमिति भावः निर्वैरंभवं कथं द्वेष्टि अद्वेक्षीदित्यर्थः निर्वैरत्वे हेतुः शांतविग्रहं शांतिरेव विग्रहो यस्य शांति प्रचुरमित्यर्थः आत्मनि सर्वभूतांततरात्मनि परमपुरुषे आरामो रतिर्यस्य तं सर्वं खल्विदं ब्रह्म तज्जलानिति शांत उपासीतेति श्रुत्युक्तरीत्या शमदमादिभिः

उदतिष्ठन्सदस्यास्ते स्वधिष्ण्येभ्यः सहाग्नयः ॥
ऋते विरिञ्चं शर्वं च तद्भासाक्षिप्तचेतसः ॥ ६ ॥
सदसस्पतिभिर्दक्षो भगवान्साधु सत्कृतः ॥
अजं लोकगुरुं नत्वा निषसाद तदाज्ञया ॥ ७ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

सर्वात्मकं ब्रह्मैवोपासीनमित्यर्थः ॥ २ ॥

जामातुर्भवस्य श्वशुरस्य दक्षस्य यतो हेतोर्विद्वेषोऽभवत् यतश्च विद्वेषाद्दक्षस्य दुहिता सती प्राणान् तत्याज एतन्मह्यं हे ब्रह्मन् ! आख्याहि कथय ॥ ३ ॥

एवमापृष्टो मैत्रेयो भवदक्षयोर्मिथोविद्वेषनिमित्तं तन्निमित्तं सती देहत्यागं च सप्रपंचमुपपादयिष्यंस्तदुपोद्घातकीं कथां प्रस्तौति पुरेति विश्वसृजां मरीच्यादिप्रजापतीनां सत्रं बहुयजमानकर्तृकां यागः सत्रं तस्मिन्परमर्षयस्तथा सभृत्या इंद्रादयः सुरगणाः अग्नयोऽन्याभिमानिन्यो देवताश्च समेताः संघीभूता आसन् ॥ ४ ॥

तत्र यज्ञीये देशे प्रविष्टं दक्षमिति शेषः दृष्ट्वा चतुर्मुखं शिवं च विना सर्वे तस्य दक्षस्य भासा आक्षिप्तमभिभूतंतेजः येषां ते सहाग्नयः अग्न्यभिमानिदेवताभिःसहिताः सदस्याः सदसि संस्थिताः स्वाशनेभ्य उदतिष्ठन् उत्थितवंतः दक्षं कथं भूतं शोचिषा देहकांत्या आदित्यमिव भ्राजमानं महत्सदः महतीं सभां धितिमिरं यथा तथा कुर्वन्तम् ॥ ५ ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

अत्र कतिपयैरध्यायैर्हरिभक्तिविधानार्थं तन्माहात्म्यातिशयज्ञापनाय तन्माहात्म्यातिशयाविनाभूतं दक्षाध्वरध्वंसलक्षणं रुद्रस्य माहात्म्यं कथयति तत्रादौ विदुरः सत्यात्मानमजहादीति श्रुतसतीदेहवियोगविशेषं जिज्ञासुर्मैत्रेयं पृच्छति भवे शीलवतामिति विद्वेषाकरणे हेतवः शीलवत्त्वादिना ज्ञापनीयांकाः ॥ १ ॥

स्वस्य गुरुत्वेपि स्वकर्म निंदितमिति भावेनाह कस्तमिति आत्मानि परमात्मन्यंचारामारतिर्यस्य स तथा तम् ॥ २ ॥

तथा च किमिति तत्राह एतदिति विद्वेषो विद्वेषकारणं ॥ ३ ॥

विद्वेषेति मित्तं वक्तुमुपोद्घातं रचयति पुरेति न केवलं महर्षय एव किं तु मुनिमात्रमप्यत्रसमवेतमित्यतो मुनय इति पुनर्वचनं ॥ ४ ॥

किमनेन प्रकृत इति तत्राह तत्रेति प्रविष्टं दक्षमिति शेषः ॥५॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

सतीं यथार्थ नाम्नीमित्यर्थः ॥ १—४ ॥

तत्रेति युग्मकं । ऋते विरिञ्चात् सर्वोऽपीति क्वचित् ॥ ५—७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

द्वितीये बहुनिन्दित्वा शिवं दक्षे गते रुषा ।
युयुधाते शापशर्वैर्नन्दीश्वरभृगू मुहुः ॥ ०॥

शीलेति भवस्य सौशील्याद् दक्षस्य तद्गुरुत्वभावेऽपि दुहितृवात्सल्यात् भवद्वेषो न घटत इति भावः ॥ १ ।

भवस्य सर्वैरवाक्षेप्यत्वे हेतुनाह क इति यद्वा कः प्रजापतिः चराचरगुरुं निर्वैरमित्यादिर्गिर्गुरुर्हि वैरवानप्यशान्तदेहोपि वहिर्दयपि- जगदनादतोपि न द्वेष्टि इति ध्वनिः अन्ये गुणा मा विचार्यन्तांनाम भवस्यजगद्गुरुत्वे जगदिष्टदेवत्वेच दक्षस्य तु जगन्मध्यवर्त्तित्वे द्वेषसंभावनापि कथं स्यादित्यनुध्वनिः ॥ २ ॥

यतः कारणाद्विद्वेषः एतदाख्याहि यतो विद्वेषाच्च प्राणांस्तत्याज ॥ ३ ॥

समेता आसन् ॥ ४ ॥

प्रविष्टं दक्षमिति शेषः ॥ ५–७ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

दक्षस्य भवप्रातिकूल्य कारणं वर्णयत द्वितीयेऽध्यायकी [illegible] इति ॥ १ ॥

शांतः तपोनिष्ठः विग्रहो देहो यस्य तं [illegible] वासुदेव आत्मनो रमण स्थान यस्य तं क [illegible] यद्वा को दक्षः कथं द्वेष्टि ॥ २ ॥

यतो विद्वेषः यतो विद्वेषात्प्राणान् तत्याज एतदा [illegible]

तदेवाख्यातुमितिहासं प्रस्तौति पुरेति सत्रेति [illegible] "कर्तारो बहवो यत्र होज्यते बहवस्तथा बहुभ्यो दीयते [illegible] मभिधीयत" इति अग्नयस्तदधिष्ठातृदेवाः समेता बभूवुः [illegible] तत्र सत्रस्थले प्रविष्टं दक्षमिति शेषः शोचिषा तेजस [illegible] भ्राजमानं महत्सदः महतीं सभां वितिमिरं यथा त [illegible] दृष्ट्वा ॥ ५ ॥

---

भाषाटीका ॥

विदुर ने पूछा शीलवंतों में श्रेष्ठ श्रीशिवजी से दक्षने अपनी परम वत्सला पुत्री का भी अनादर कर के क्यों द्वेष करा ॥ १

चराचर के गुरू निर्वैर शांतविग्रह आत्माराम जगत के बडे देव एसे शिवजी से दक्षने द्वेष कैसे किया ॥ २ ॥

हे मैत्रेयजी यह श्वसुर जमाई का वैर हमसे कहो जिसके कारण सतीने दुस्त्यज प्राणोंकोभी त्यागदिया ॥ ३ ॥

मैत्रेयजी बोले पहले विश्वस्रष्टाओं के यज्ञमें बडे २ ऋषि मुनि देवता अग्नि सब अपने २ अनुचरो सहित इकट्ठे हुयेथे ॥ ४ ॥

उनकी सभामें दक्षप्रजापतिने. जब प्रवेशकिया तब दक्षकी सूर्य सदृश कांति से सभा जगमगायउठी ॥ ५ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

स्वधिष्ण्येभ्यःस्वीयासनेभ्यः ॥ ६ ॥ ७ ॥

प्राङ्निषण्णं मृडं दृष्ट्वा नामृष्यत्तदनादृतः ॥
उवाच वामं चक्षुर्भ्यामभिवीक्ष्य दहन्निव ॥ ८ ॥
श्रूयतां ब्रह्मर्षयो मे सहदेवाः सहाग्नयः ।
साधूनां ब्रुवतो वृत्तं नाज्ञानान्नच मत्सरात् ॥ ९ ॥
अयं तु लोकपालानां यशोघ्नो निरपत्रपः ।
सद्भिराचरितः पंथा येन स्तब्धेन दूषितः ॥ १० ॥

श्रीधरस्वामिकृत भावार्थदीपिका

प्राक्स्वोपवेशनात्पूर्वमेव निषण्णमुपविष्टं मृडं शिवम् तदनादृतस्तेनाभ्युत्थानादिभिरकृतादरः नामृष्यन्नासहत् वामवक्रं यथा भवति तथाऽभिवीक्ष्य ॥ ८ ॥

मेवचनं श्रूयताम् अज्ञानान्मत्सराद्वा न ब्रुवतः ॥ ९ ॥

स्तब्धेनोचिताक्रियाशून्येन ध्वस्तेनेति पाठे भ्रष्टेन ॥ १० ॥

---

श्रीराधारमणदास गोस्वामिविरचिता ।
दीपन्याख्यादीपिका टिप्पणी ।

भगवान्सृष्टिनन्दनः ॥ ६ ॥ ७ ॥

स्वोपवेशनाद्दक्षस्योपवेशनात् तेन शिवेन ॥ ८ ॥ ९ ॥

सरस्वतीपक्षे तु यशोघ्नः परमतेजस्वित्वात् तद्यशआच्छादकः निर्गता अपसमन्तात्त्रपा त्राणं रक्षणं येषां तानपत्रान् रक्षकहीनान् पातीति तथा स्तब्धेन वेदावमंत्रापार्षण्डजनेन कर्त्रा दूषितो वेदमार्गो येनैव हेतुना सद्भिराचरितोनुष्ठितः ध्वस्तेनेति पाठे भावे निष्ठा तथाच केन प्रकारेण रक्षकः सद्भिराचरितः पंथा येन पाषंडेनदूषितस्तस्य ध्वस्तेन ध्वंसन प्रकारेणेति ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

ततः स भगवान् दक्षःसदसस्पतिभिः साधु यथा तथा सत्कृत पूजितः लोकगुरुमजं ब्रह्माणं प्रणम्य तस्या जस्याज्ञया निषसाद उपविष्टवान् ॥ ७ ॥

प्राक् स्वोपवेशात् पूर्वमेवागत्य निषण्णमुपविष्टं मृडं शिवं दृष्ट्वा तेन मृडेनानादृतःप्रत्युत्थानादिभिरसत्कृतो दक्ष नामृष्यत् न सेहे वामं वक्रं यथा तथा दहन्निव चक्षुर्भ्यामभिवीक्ष्य उवाच ॥ ८ ॥

उक्तिमेवाह श्रूयतामित्यादिना यज्ञभाग न लभतामित्यंतेन हे सहाग्नयो महर्षयः! साधूनां वृत्तमाचारं ब्रुवतः कथयतो मेमम वाक्यं वक्ष्यमाणं श्रूयतां युष्माभिरिति शेषः इदं वक्ष्यमाणं वचः अज्ञानान्मत्सराद्वा न कथ्य इत्याह अज्ञानादिति अज्ञानान्मत्सराद्वा न कथयिष्यामीत्यर्थः ॥ ९ ॥

अयं रुद्रः नाम्नापि निर्देष्टुमसहमानोऽयमिति सर्वनाम्ना निर्दिष्टवान् एवमुत्तरत्रापि लोकपालानां यशो नाशकः निरपत्रपः लज्जारहितः स्तब्धेन विहितधर्मपरित्यागिना मूर्खेण वा येन रुद्रेण सद्भिराचरितः अनुष्ठितः पंथा वैदिकाचारः दूषितः दोषं प्रापितः विनाशित इति यावत् ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

ब्रह्मपुत्रत्वाद्रुद्रस्य श्वशुरत्वाच्च नायं प्राकृतः पुरुष इतिभावेनास्मिन्सभा बहुमानं चक्रुरुदतिष्ठन्निति तस्य दक्षस्य भासा ॥ ६ ॥

सर्वोत्थानलक्षणसत्काराभावादतो निर्गमनमितरजनबहुमानेनोपवेशन च सभावितमनयोर्दक्षेण किमकारीति तत्राह सदसस्पतिभिरिति ॥ ७ ॥

उपविष्टश्चेद्रुद्रं विगतकोपोऽप्युपविष्टः किं तत्राह प्राङ् निषण्णमिति नामृष्यदित्यस्य किं लिंगं तत्राह उवाचेति ॥ ८ ॥

वृत्त सदाचारम ॥ ९ ॥

किमिदानीं वृत्तं वक्तुं प्राप्तमत्राह अयंत्विति ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

साधूनां वृत्तं ब्रुवतः किन्त्वज्ञानान्मत्सराद्वा न ब्रुवत इत्यर्थः॥९॥

क्रोधान्धतया साधूनां वृत्तानुवादमपि त्यक्त्वा साक्षान्निन्दामाह अयन्त्विति ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

प्राक् स्वोपवेशात् पूर्वमेव निषण्णमुपविष्टं तदनादृतः तेन मृडेनाभ्युत्थानादिभिरकृतादरः वामं वक्रं यथा स्यात्तथा ८

मे वचनमिति शेषः साधूनां वृत्तं चरित्रं ब्रुवतः वक्तुं प्रवृत्तस्य ममसाधूनां निन्दा स्यादेव तत्र भवद्भिरामर्षेण दुःखं न प्राप्यतामिति ध्वनिः शालित्रेत्राणां यवसाद्यपसारणाभाव इव साधूनामत्र साधुद्वेषाभावे दुःखं स्यात् अद्वेष्टुर्जनस्य तेषु साधुष्वपराधोऽपि स्यादित्यनुध्वनिः ननु शिवस्यासाधुत्वमज्ञानादेव त्वयोच्यते इति चेत्तत्र ममाज्ञानमणवपि नास्ति मत्सरस्तु मया जन्मारभ्य न परिचीयत इत्याह नाज्ञानादिति ॥ ९ ॥

अस्यासाधुत्वमेकाग्रमनसः शृणुतेत्याह लोकपालानां यशोघ्न इति । तुल्यजातीनां सतामेकस्याप्रतिष्ठायां सर्वेषामेव दुर्यशो लोकैरुद्घुष्यत इति भावः । वस्तुतस्तु तदीय सरस्वती शिवं स्तौति यथा यशोघ्नः स्वयशसा तेषां यशस्तिरस्कर्त्ता निर्गता अपत्रा त्राणं येषां तान् अशरणान् पातीति सः । केन प्रकारेणेत्यत आह येन असुरादिना सद्भिराचरितः पंथा दूषितस्तस्य ध्वस्तेन ध्वंसनेन स्तब्धेनेति पाठे स्तब्धानां गर्ववतां हता श्रेष्ठास्तैर्दूषितः पन्था येन हेतुनैव सद्भिराचरितः ॥ १० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

स्वधिष्ण्येभ्यः स्वासनेभ्यः उदतिष्ठन् उत्थिता बभूवुः ॥ ६ ॥

एष मे शिष्यतां प्राप्तो यन्मे दुहितुरग्रहीत् ॥
पाणिं विप्राग्निमुखतः सावित्र्या इव साधुवत् ॥ ११ ॥
गृहीत्वा मृगशावाक्ष्याः पाणिं मर्कटलोचनः ॥
प्रत्युत्थानाभिवादार्हे वाचाऽप्यकृत नोचितम् ॥ १२ ॥
लुप्तक्रियायाऽशुचये मानिने भिन्नसेतवे ॥
अनिच्छन्नप्यदां बालां शूद्रायेवोशतीं गिरम् ॥ १३ ॥
प्रेतावासेषु घोरेषु प्रेतैर्भूतगणैर्वृतः ॥
अटत्युन्मत्तवन्नग्नो व्युप्तकेशो हसन्रुदन् ॥ १४ ॥
चिताभस्मकृतस्नानः प्रेतस्रङ्नृस्थिभूषणः ।
शिवापदेशो ह्यशिवो मत्तो मत्तजनप्रियः ।
पतिः प्रमथभूतानां तमोमात्रात्मकात्मनाम् ॥ १५ ॥
तस्मा उन्मादनाथाय नष्टशौचाय दुर्हृदे ।
दत्ता बत मया साध्वी चोदिते परमेष्ठिना ॥ १६ ॥

मैत्रेय उवाच ।

विनिंद्यैवं सगिरिशमप्रतीपमवस्थितम् ।
दक्षोऽथाप उपस्पृश्य क्रुद्धः शप्तुं प्रचक्रमे ॥ १७ ॥
अयं तु देवयजन इंद्रोपेंद्रादिभिर्भवः ।
सहभागं न लभतां देवैर्देवगणाऽधमः ॥ १८ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

सदसस्पतिभिः सभासदैः साधु यथा तथा सत्कृतः अजं ब्रह्माणम् ॥ ७ ॥

प्राक् पूर्वं निषण्णमुपविष्टं मृडं भवं दृष्ट्वा तेनानुत्थानादनादृतोऽनामृष्यत् नासहत् वामं वक्रं यथा स्यात्तथा चक्षुर्भ्यां दहन्निव अभिवीक्ष्योवाच ॥ ८ ॥ ९ ॥

स्तब्धेनाऽनम्रेण ॥ १० ॥———

भाषाटीका

दक्ष के कांति से न्यून तेज सभास्थ अग्निके सह वर्तमान, ब्रह्मा और शिव इनके व्यतिरिक्त सर्व लोक अपने २ आसनों से उठते भये ॥ ६ ॥

सभा पतियों से उत्तम प्रकार से सत्कृत श्रीमान् दक्ष प्रजापति जीलोक गुरु अजको नमस्कार करके उनी के आज्ञा सूं स्थित होते भये ॥ ७ ॥

अपने आगमन के पूर्वही स्थित ऐसे श्री शिवजी को देख के तत्कृत अनादर को न सहते टेढे उनके ताईं देख बडे कठिनता से बोलते भये ॥ ८ ॥

अग्नि और देव के सहवर्तमान हे ऋषि हे साधून के बीच में अज्ञान वा मत्सर को छोड " जो व्रत कहूं हुं ताको श्रवण करो ॥ ९ ॥

ये लोक पालों के यश को नाशवे वारे लज्जा रहित सज्जनो ने आचरित मार्ग क्रिया शून्य शिवजी ने दूषित कर दिया ॥ १० ॥

श्रीधरस्वामिकृत भावार्थदीपिका

तदेवाह एषइति यद्यस्माद्विप्राग्निसमक्षं सावित्रीतुल्यायामे दुहितुः पाणिमग्रहीत् ॥ ११ ॥

मृगशावस्यहरिणबालस्याक्षिणीवाक्षिणीयस्याःप्रत्युत्थानाभिवादार्हेमह्युचितंमन्मानंवाचाऽपिनाकरोत् ॥ १२ ॥

अनर्हायकन्यादत्तेत्यनुतप्यमानआह लुप्तक्रियायेतिसार्धैश्चतुर्भिः उशतींवेदलक्षणांगिरम् ॥ १३ ॥

प्रेतावासेषुश्मशानेषु व्युप्ताविकीर्णाःकेशायस्य ॥ १४ ॥

चिताभस्मनाकृतंस्नानंयेन प्रेतानांस्रजोमाल्यानियस्यप्रेतस्रक् नृणामस्थीनिभूषणानियस्य शिवइत्यपदेशोनाममात्रंयस्य तमोमात्रात्मकःकेवलतमोरूपआत्मास्वभावोयेषाम् ॥ १५ ॥

उन्मादाभूतविशेषास्तेषांनाथाय दुर्हृदेदुष्टचित्ताय वर्तेतिखेदे वास्तवमन्वयमर्थः लुप्ताःक्रियायस्मिन् परब्रह्मरूपत्वात् अतएवनास्त्यशुचिर्यस्मात् अमानिनेअभिन्नसेतवेइतिचच्छेदः तस्यपरमेश्वरस्यमदीयामानुषीकन्याकथंयोग्यास्यादिति लज्जादिनादातुमनिच्छन्नपितत्संबंधलोभेनदत्तवान् शूद्रायेत्यनर्हत्वमात्रेदृष्टांतोनहीनत्वे पूर्वापरस्ववचनविरोधापत्तेःएतदुक्तंभवति यथाकश्चिच्छूद्रायवेदमर्थलोभेनददातितद्वदिति प्रेतावासेष्वित्यादिसर्वैर्विडंबनमात्रमितिस्वयमेवाह उन्मत्तवदिति अन्यथोन्मत्तइत्येवावक्ष्यत् अशिवोनास्तिशिवोयस्मात्अमत्तोऽमत्तजनप्रियइतिच्छेदः पतिः प्रमथभूतानामितिभक्तवात्सल्यमाहतामसानापदोपमशेषमपनीयपातीतिनष्टानामपिशौचंशुद्धिर्यस्मात् दुष्टेष्वप्येनेषुमयाऽनुकंप्याइतिहृन्मनोयस्य नदुर्हृत्तस्मैवर्तेतिहर्षे ब्रह्मणोवाक्याल्लज्जाभयादिकंपरित्यज्यदत्तेत्यर्थः ॥ १६ ॥

अप्रतीपमप्रतिकूलंयथाभवत्येवमवस्थितमपिविनिंद्य ॥ १७ ॥

देवानांयजनसमयेदेवैः सहभागं न लभतां किंतु तेभ्यः पूर्वमेव लभताम् अग्रभोजित्वात् यद्वा तदुपभुक्तवत्सुलभताम् सर्वपोषकत्वात् तत्रहेतुः देवगणोऽधमोयस्मात्सः ॥ १८ ॥

### श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्यादीपिकाटिप्पणी

एतमेऽशिष्यतां शिष्यलक्षणा ऽनाक्रान्तत्वं पूर्वमेव प्राप्तः ज्ञानवान् सर्वज्ञत्वात् अतएवाऽभ्युत्थानादिकं न चकारेत्यर्थः तथापि साधुवत्साधुतुल्यस्य मे दुहितुः पाणिमग्रहीदितियत्तत् सावित्र्याइव तस्या गुणानपश्येति शपः ॥ ११ ॥

मे दुहितुः पाणि गृहीत्वा कृपया मर्कट तुल्यकामिनोऽपि मे लोचकः संबंधेन द्रष्टा वभूवेति शेषः तथापि यन्मह्लक्षणो जनस्तथापि वाचाप्युचितं नाकरोत्तन्मां धिगित्यर्थः ॥ १२ ॥

लुप्तक्रियत्वादीनां वास्तवार्थं ग्रथ्नी स्व मिभिः कृतपंक्तिभ्रान्तकृत पीत्यइष्टवशादेवेत्यर्थः ॥ १३ ॥ १४ ॥

चितिभास्मकम अत्र वास्तवार्थे प्राप्तमिद्धिनां केषांचिद्वैष्णवानां तथान्मादोऽपि पुराणान्तरप्रसिद्धो ज्ञेयः तत्र च हेतुस्वभक्तः गोपनमेवेति ज्ञेयम् ॥ १५ ॥

हीनत्वाऽभावे हेतुः पूर्वत्रापरत्र स्तुत्यर्थत्वेन व्याख्यातानि यानि दक्षवचनानि तैस्मह स्यदृष्टान्तस्य विरोधापत्ते हीनत्वेनायं दृष्टान्त इत्यर्थः एतदुक्तं भवति दृष्टान्तस्याय निष्कृष्टोऽर्थः विडंबनमात्र देहस्य कुत्सितत्वद र्शनार्थं भक्त स्वगोपनार्थमनुकरणमात्रं तद्दृशव्याख्याप्रतीतौ हेतुः इति स्वयमेवाहेति अन्यथा विडम्बनाभावे ॥ अनुगृहीतुः पितुर्ग्रहणः ॥ १६ ॥

अथ शीघ्रमेव ॥ १७ ॥

अग्रभाजित्वं पिष्टादिकरणानाम प्रसिद्धमिति नैर्घृण्यव्युदासार्थं यद्वेति तत्र पोषकत्वे ॥ अत्र उच्छिष्टभागो वै रुद्रइति श्रुति रनुसंधेया ॥ १७ ॥

---

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

स्तब्धतामेव प्रपंचयति एष इति द्वाभ्याम् एष रुद्रः यत् यस्मान् मेमम शिष्यताम् उपगतः मे दुहितुः सत्याः पाणिं विप्राग्निसाक्षिकं साधुवदग्रहीत् साधुवदितिवतिप्रत्ययेन वस्तुतोऽसाधुरिति व्यंजितम् ११

मर्कटस्येव लोचने यस्य सोऽयं रुद्रःमृगशावस्य हरिणबालकस्य अक्षिणी वाक्षिणी यस्या स्तस्याः सत्याः पाणिं गृहीत्वा ऊढ्वा प्रत्युत्थानाभिवादनादियोग्येमयि वाङ्मात्रेणापि उचितं सत्कार नाकृत न कृतवान् ॥ १२ ॥

अनर्हाय कन्यां दत्तवानहमित्यनुतप्यतमानआहलुप्तक्रियायेतिसार्द्धं चतुर्भिः लुप्तक्रियायलुप्तःक्रियासदाचारोयेन अतएवाशुचयेमानिने दुरहंकारिणे भिन्नसेतवे भिन्नः भ्रंशितः सेतुर्धर्ममर्यादा येन तस्मै अनिच्छन्नपि दातुमिति शेष.अहं बालां कन्यामदां दत्तवान् यथा शूद्राय उशतीं निर्दुष्टां वेदलक्षणां गिरं तथेत्यर्थः ॥ १३ ॥

प्रेतावासेषु श्मशानेषु घोरे विकृतैभूतगणैश्चवृतः वेष्टितः नग्नः विवसनः व्युप्तकेशः विकीर्णकेशः उन्मत्त इव हसन्रुदंश्च अटति पर्यटति ॥ १४ ॥

चिता भस्मनाद्मनभस्मना कृतं स्नानं येन प्रेतानां स्रजो माल्यानि यस्य सः अस्थिभूषणः नृणामस्थीनि भूषणानि यस्य सः स्वयमशिवोऽमंगलोऽपि शिवापदेशः शिव इति व्यवहारमात्रं यस्य स्वयं मत्तो मत्तानां जनानां प्रियश्च तमोमात्रात्मकः केवलतमोरूपः आत्मा स्वभावो येषां तेषां प्रमथभूतानां प्रमथाख्यभूतविशेषाणां पतिः ॥ १५ ॥

तस्मै उन्मादानां भूतविशेषाणां नाथाय दुर्हृदे दुष्टचित्ताय नष्ट

### श्रीमद्वीरराघवाचार्य कृत भागवतचंद्रचंद्रिका ।

शौचाय आचारहीनाय साध्वीं सतीं कन्या मया दत्ता परमेष्ठिना चोदित आदिष्टोऽहं दत्तवानित्यध्याहारः चोदित इत्यार्षत्वाद्यत्ययेन तृतीयार्थेप्रथमा वा वर्ततीत्वेद ॥ केचिदत्र लुप्तक्रियायाशुचये इत्यादि ग्रंथं रुद्रनिंदापरं यथा श्रुतं व्याख्याय वास्तवमन्यमर्थं इत्युपक्रम्य "लुप्ताक्रियायस्मिन्परब्रह्मरूपत्वात् अतएव न शुचिर्यस्मात् अमानिने आभन्नमेनव इतिचच्छेदः तस्य परमेश्वरस्य मदीया मानुषी कन्या कथं योग्यास्यादिति लज्जया दातुमनिच्छन्नपितत्संबंधलोभेन दत्तवान् शूद्र ये यतर्हेत्वमात्रे दृष्टान्तः न हीनत्व पूर्वापरस्वग्रंथविरोधापत्तेः एतदुक्तं भवति यथा कथंचिच्छूद्राय वेद मर्थलोभेन ददातितद्वदिति प्रेतावासेष्वित्यादि सर्वं विडंबनमात्रमिति स्वयमेवाह उन्मत्तवदिति अन्यथा उन्मत्त इत्येवावक्ष्यत् अशिवः नास्ति शिवोयस्मात् अमत्तोऽमत्तजनप्रियः इतिच्छेदः पतिःप्रमथभूतानामिति भक्तवात्सल्यमाह तामसानपि दोषमशेषमपनीयपातिनष्टानामपि शौचशुद्धिर्यस्मात् दुष्टेष्वप्येतेषु मया नुकंप्या इति हृन्मनो यस्य सद्हृत्तस्मैनवेति हर्षे" इति रुद्रस्य प्रशंसापरत्वं व्याचक्षते तत्रायं वास्तवोऽर्थं किंदक्षस्याभिप्रेतः उतैतत्पुराणकर्तुःउतान्यस्यत्वादृशस्य कस्यचित् नाद्यः साधूनांबुवतो भतं नाज्ञानाच्च मत्सरादिति वास्तविकत्वमुपक्रम्य लोकपालानां यशोघ्नो निरपत्रपः येन स्तब्धेन दूषितःएषमे शिष्यतां प्राप्त इत्यादिना निन्द्यतोभिप्रेतत्वासंभवात् निंदायामेवतस्य तात्पर्यातिशयावगमात् अतएवाह दक्षो गिरित्राय विसृज्य शापंतस्माद्विनिःक्रम्यविवृद्धमन्युर्जगामेति निंदापूर्वकशापकरणान्याविवृद्धक्रोधत्वविनिष्क्रमण दयो वक्ष्यमाणा उपपन्नाःनद्वितीयःवेदांतार्थोपबृंहणरूपत्वादस्य पुराणस्य वेदांतेषु च अनपहतपाप्मा वा अहमास्म, नारायणाद्रुद्रो जायत, इत्यादिषु कर्मवश्यत्वकार्यत्वादिश्रवणात्तद्विरुद्धार्थानामत्र निबद्धुमयुक्तत्वनैतत्पुराणकर्त्रभिप्रेतत्यासंभवात् अत एव हि सद्योजायत तन्मन्युः कुमारो नीललोहितः स वै रुरोद देवानां पूर्वजो भगवान्भवःनामानि कुरु हेधातः! स्थानानि च जगत्पत इति वेदांतार्थानुसरणेव कार्यत्वकर्मवश्यत्वचतुर्मुखकृतनामस्थानादिमत्वमुपबृंहितं कचिद्भ्रूमूर्त्तिक्यादिकं प्रतीयमानं प्रद्र न्य येनान्यथाप्युपपन्नमिति पूर्वमेव प्रतिपादितं नतृतीयः आग्रहमूलकत्वात् निंदापरग्रंथस्य यथाकथंचिद्विपरीतार्थपर्यवमानकरणे सर्वत्राप्येवमत्र स्यादिति स्तुतिनिंदयोर्व्यवस्थानुपपत्तेश्च यदप्युक्तं लुप्ताक्रिया यस्मिन् परब्रह्मरूपत्वादिति तदयुक्तं परब्रह्मत्वपि रामकृष्णाद्यवतारेषु लुप्तक्रियात्वादर्शनेन हेताव्यभिचारात् अमानिने अभिन्नसतव इति पदच्छेद इत्यप्ययुक्तं सद्भिराचरितः पन्थायेन स्तब्धेन दूषित इति यज्ञभागंनलभतांदेवैर्देवगणाधम इति पूर्वोत्तर व्याघातात् तस्य परमेश्वरस्य मदीया मानुषी कन्येत्याद्यप्ययुक्तं भवदक्षयोरुभयोरपि चतुर्मुखात्प्रसूतत्वेन दक्षकन्याया मानुषीत्वासंभवात् मनोर्जातत्वाभावात्पुत्र्येति इह मानुषशब्दो व्युत्पादितः तामसानपि दोषमपनीय पातीत्याद्यपि मंदं तानहं द्विषतःक्रूरान्संसारेषु नराधमान् क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषुआसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि मामप्राप्यैव कौंतेय ततोयांत्यधमां गतिमिति तामसानां निग्राह्यत्वगाना त्तस्माद्यथोक्त एवार्थः ॥ १६ ॥

स दक्षः अप्रतीपं अप्रतिक्रियमुदासीनमवस्थितमासीनं गिरिशमेवमुक्तविधया विनिंद्याथ अप उपस्पृश्य आचम्येत्यर्थः क्रुद्धः शप्तुंप्रचक्रमेउपक्रांतवान् ॥ १७ ॥

अयं भवो रुद्रःतुर्हितोयतः देवगणाधमःसर्वेभ्योदेवेभ्योऽधमः

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका।

ततः इन्द्रादिभिर्देवैः सह देवयजने देवोद्देश्यकयागे यज्ञभागं न लभतां न प्राप्नुयात् ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

स्वन उत्तमस्य शिवस्य दत्तावमानविषयत्वं कथमत्राह एव इति गायत्रं विषये पत्र्यव्यवहार इति धातोः पाणिं व्याहरणमुखारणमित्यर्थः साधुवद्यागवत् ॥ ११ ॥

मृगशावो मृगपोतः मर्कटलोचने इव लोचने यस्य स तथा केकराच इत्यर्थः ॥ १२ ॥

भिन्नसेतवं लंघितमर्यादाय उशतीं गिरं पौरुषेयत्वादिदोषरहितां वेदवाणीम ॥ १३ ॥

अशुचिकर्मकरणादशुचित्वमुक्तं न तु द्वेषादित्याह प्रेतावासेष्विति व्युप्तकेशो मुक्तकेशः ॥ १४ ॥

चिताभस्मना श्मशानभस्मना कृतं स्नानं येन स तथा प्रेतानामस्थिग्रंथयोऽस्थिभिर्ग्रथितमालास्ता एव भूषणानि यस्य स तथा शिव इति अपदेशो नाम यस्य स तथा स्वयमपि अशिवोऽशुद्धोऽह ॥ १५ ॥

उन्मत्तजन प्रियमयति केवलं तमोगुणस्वरूपं मनो येषां ते तथा तेषां अतः किमनुशोककारणमत्राह तस्मादिति ॥ १६ ॥

न केवलं दक्षेण दोषा एव गणिताः किं तु स्वानर्थहेतुः शापोपि दत्त इत्याह विनिर्द्यैवमिति अप्रतीपमप्रतिपक्षम् ॥ १७ ॥

इंद्रोपेंद्रादिभिर्देवैः सह देवयजने यज्ञभागं न लभतामित्यन्वयः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

शिष्यतां शासनीयत्वम् ॥ ११ ॥ १२ ॥

यथा शूद्रायोशतीं गिरं कश्चिदनिच्छन् परवशः सन्नेव ददाति तथाहमप्यनिच्छन्नेवास्मै परममहते बालामदां। काका किन्तु इच्छ क्षेपादामित्यर्थः ॥ १३ ॥

वास्तवार्थे प्रेतावासेष्वित्यादिकं भगवत्प्रेमोन्मादमयं ज्ञेयम् ॥ १४ ॥

चितेति सार्द्धकम्। चितेत्यादिकञ्च प्राप्तसिद्धिवैष्णवानामेवेति पुराणान्तरप्रसिद्धम् ॥ १५—१९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

एव इति निन्दा स्तुतिस्तु मम अशिष्यतां अशिष्टतां एता वद्विनपर्यन्तं गुणानपि एव प्राप्तः सर्वज्ञत्वात् प्रथममेवावगतवान् अतएवाभ्युत्थानादिकं न कृतवानिति भावः। तदपि यद्गुहितुः पाणिमग्रहीत् तत् सावित्र्या इव मद्दुहितर्य्येव गुणालक्ष्येति भावः मम कीदृशस्य साधुवत् सार्वरिव वस्तुतस्त्वसाधोः ॥ ११ ॥

प्रत्युत्थानाभिवादार्हे श्वशुरे मयि वाचापि उचितं सन्मानं न अकृत नाकरोत्। स्तुतिपक्षे मर्कटान् मर्कटतुल्यान् कामिनोऽपि। कृपया लोचने तत् कामान् सम्पादयति। तस्मिन् प्रत्युत्थानाभिवादार्हे मल्लक्षणो जनः वाचाप्युचितं न अकृतेति धिङ्मामिति भावः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी

उशतीं वेदलक्षणां गिरं स्तुतिपक्षेतु लुप्ताः क्रिया यस्मिन् परब्रह्मरूपत्वात् नास्ति शुचिर्यस्मात् अमानिने अभिन्नसेतवे इतिच्छेदः स्वयोग्यता इच्छया दातुमनिच्छन्नपि अदां यथा शूद्रा एव उशतीं वेदलक्षणां गिरं ददाति अध्यापयन्ति य लोपस्याभावो वैकल्पिकत्वात् ॥ १३ ॥

प्रेतावासेष्वित्यादिकं सर्वं भगवत् प्रेमोन्मादमयं लीलामात्रमिति स्वयमेवाह उन्मत्तवदिति अन्यथा उन्मत्त इत्येवावक्ष्यत् ॥ १४ ॥

स्तुतिपक्षे चितेत्यादिकं प्राप्तसिद्धिवैष्णवानामेवेति पुराणान्तरप्रसिद्धं अपदेशो कपटरूपा दशा अपि शिवा मंगला यतः स न विद्यते शिवं मंगलं यतः सः तमोमात्रात्मकः तमोमात्रं स्वरूपा आत्मनो येषां स्तुतिपक्षे स्वेच्छया लीलैवयं शम्भोर्यत्तामसानपि कृपया स्वीकरोतीति ॥ १५ ॥

परमेष्ठिना ब्रह्मणा चोदिते प्रेरिते सतीति ममेच्छा नासीत् ब्रह्माज्ञापालनमेव मद्दुःखदमभूदिति ब्रह्माप्यनभिज्ञ इति ध्वनिः मत्पित्रेत्युक्तेः परमेष्ठिनेति नामोच्चारणेनच सोऽपि मत्पितृत्वायोग्य एवेत्वनुध्वनिः। स्तुति पक्षे कृपयाउन्मादानां नग्नानामपि नाथाय नग्नानामपि शौचं यतः। दुष्टेष्वपि इत् कृपामयं मनो यस्य तस्मै ब्रह्मणो वाक्यादयोग्येनापि मयादत्तेत्यर्थः ॥ १६ ॥

अप्रतीपमजातशत्रुम् ॥ १७ ॥

अयान्वांत। स्तुतिपक्षे देवयजने यज्ञे देवैः सह भागं न लभतां तत्र हेतुः देवगणा अधमा यस्मात् सः। नह्यधमैः सह भोजनमुचितं अतः सर्वपावकत्वात् तान् भोजयित्वा भागं लभतामिति भावः ॥ १८ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

यद्यतो मे सावित्री तुल्या या दुहितुःपाणिमग्रहीदतो मे शिष्यतां प्राप्तः ॥ ११ ॥

मृगशावस्याक्षिणी इवाक्षिणी यस्यास्तस्याः उचितं सत्कारं वाचापि नाकृत न कृतवान् ॥ १२ ॥

साधुवदित्यनेनायमसाधुरिति सूचितं भवस्यासाधुत्वं दर्शयन् असाधवे साध्वी दत्तेत्याह सार्द्धैस्त्रिभिः लुप्तेति अनिच्छन्नपि बालामदाम् दत्तवान् उशतीं वेदलक्षणाम् ॥ १३ ॥

व्युप्तकेशः विकीर्णकेशः प्रेतावासेषु श्मशानेषु उन्मत्तवत् हसन् रुदन् नग्नः अटति भ्रमति ॥ १४ ॥

प्रेतसृक् प्रेतानां सृजो यस्य सः नृास्थिभूषणः नृणामस्थीनि भूषणानि यस्य सः शिव इत्यपदेशो नाम मात्रं यस्य सः तमोमात्रात्मकः केवलतमो रूप आत्मा स्वभावो येषां तेषां पतिः तेषु मुख्य इति भावः ॥ १५ ॥

य उक्तप्रकारस्तस्मै उन्मादनाथाय अत्युन्मत्ताय परमेष्ठिना चोदिते सति साध्वी सर्वथा तद्विपरीतस्वभावेति यावत् दत्ता ॥ १६ ॥

स अयं श्वसुरत्वादिना गुरुः अयं जामातृत्वादिना शिष्य इति लोकव्यवहारात्मकः गिरिशं तादृशलोकव्यवहारानीतम् अप्रतीपमप्रतिकूलं यथा स्यात्तथाऽवस्थितमप्येवं विनिन्द्याप उपस्पृश्य चमय शप्तुं प्रचक्रमे ॥ १७ ॥

निषिध्यमानः ससदस्यमुख्यै र्दक्षो गिरित्राय विसृज्यशापम् ।
तस्माद्विनिष्क्रम्य विवृद्धमन्युर्जगाम कौरव्य निजं निकेतनम् ॥ १९ ॥
विज्ञायशापं गिरिशानुगाऽग्रणीर्नंदीश्वरो रोषकषायदूषितः । *
दक्षाय शापं विससर्ज दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः ॥ २० ॥
यएतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि ।
द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतोविमुखो भवेत् ॥ २१ ॥
गृहेषु कूटधर्मेषु सक्तोग्राम्यसुखेच्छया ।
कर्मतंत्रं वितनुतां वेदवादविपन्नधीः ॥ २२ ॥
बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः ।
स्त्रीकामः सोऽस्त्वतितरां दक्षो बस्तमुखोऽचिरात् ॥ २३ ॥
विद्याबुद्धिरविद्यायां कर्ममय्यामसौ जडः ।
संसरंत्विह ये चामुमनुशर्वावमानिनम् ॥ २४ ॥
गिरः श्रुतायाः पुष्पिण्या मधुगन्धेन भूरिणा ।
मथ्ना चोन्मथितात्मानः संमुह्यंतु हरद्विषः ॥ २५ ॥
सर्वभक्षा द्विजा वृत्त्यै धृतविद्यातपोव्रताः ।
वित्तदेहेंद्रियारामा याचका विचरंत्विह ॥ २६ ॥

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः ।

देवयजने देवोद्देश्यवयकयज्ञे ॥ १८ ॥

---

भाषाटीका

ये मेरे शिष्य भावको प्राप्त है ब्राह्मण अग्नि के सामने इसने गायत्री तुल्य मेरी बटी का साधु कि नाई पाणि ग्रहण किया ॥११॥

इस वांनर समान दृष्टि वाले ने मृग बालक समान नेत्र वारी मेरी सुताका पाणि ग्रहण किया उठ के नमस्कार तो दूर रहा मेरा वाणी से भी उचित सत्कार नही किया ॥ १२ ॥

सर्व क्रिया हीन अपवित्र मानी सेतु तोडने वारे, को इच्छा नथी तो भी मैंने कन्या दी जैसे शूद्र को वेद वाणी दें दें ॥ १३ ॥

घोर मर्घट मे रहने वारे प्रेत भूत गण साथ रखने वारे उन्मत के नाई नंग बार खोले हंसते रोवते चिता के भस्म में सदा स्नान करे है प्रेतनकी मुंडमाला हाडों के भूषण पहिने हैं नाम के तो शिव हैं परंतु अशिव हैं मत्त हैं इन को मत्त जन प्रिय है तमोमय प्रमथादि भूतन का ये पति है ॥ १४ ॥ १५ ॥

भूतों का नाथ शौच त्यागी दुष्ट हृदय इसको विरंचि के कहने से मेने साध्वी बेटी दी ॥ १६ ॥

मैत्रेयजी बोले ॥ अपने अप्रतिकूल बैठे श्री शिवजी को ऐसी निंदा कर क्रोधीदक्ष आचमन कर शाप देते भये ॥१७॥

ये शिव देव यज्ञ में इंद्रादिकन के साथभागन लैने पावे ये देव गण में अधम है ॥ १८ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

सदक्षस्तस्मात्स्थानाद्विनिष्क्रम्यजगाम हेकौरव्य ! ॥ १९ ॥

गिरिशस्यानुगानामग्रणीर्मुख्यःरोषएवकषायस्तेनदूषितः आरक्तनेत्रइत्यर्थःतस्यगिरिशस्यवाच्यतांवचनानर्हतां निंद्यतामित्यर्थः तेभ्योऽपिशापंविससर्ज ॥ २० ॥

दक्षंशपति सार्द्धैस्त्रिभिः एतन्मर्त्यंदक्षशरीरमुद्दिश्यश्रेष्ठंमत्वा अप्रतिद्रुहिप्रतिद्रोहमकुर्वति पृथग्दृष्टिर्भेददर्शीतत्त्वतःपरमार्थात् २१

अज्ञत्वमेवाह गृहेष्विति कर्मतंत्रंकर्मपरिकरम् वेदेयेवादाअर्थवादाअक्षय्यंहवैचातुर्मास्ययाजिनः सुकृतंभवतीत्यादयस्तैर्विपन्नाविनष्टाधीर्यस्य ॥ २२ ॥

परोदेहादिस्तमेवाऽऽत्मत्वेनाभितोध्यातुंशीलंयस्यास्तयाबुद्ध्याविस्मृताऽऽत्मनोगतिस्तत्त्वंयेन अतःपशुतुल्यःअतितरांस्त्रीकामोऽस्त्वितिद्वितीयःशापः बस्तस्यमुखमेवमुखंयस्येतितृतीयःशापः ॥ २३ ॥

अयंचशापोऽस्यानुरूपएवेत्याह विद्याबुद्धिःइयमेवतत्त्वविद्येतिबुद्धिर्यस्य अतोऽसौजडएव द्विजान्शपति संसरंत्वितिसार्द्धद्वाभ्यांम् शर्वमवमन्यतइतितथातमसुंदक्षंयेचानुवर्ततेतेसंसरंतुजन्ममरणाद्यनुभवंत्वित्येकःशापः ॥ २४ ॥

श्रुतायांवेदरूपायाः पुष्पिण्याः पुष्पाणीवार्थवादामनःक्षोभकत्वात् अर्थवादबहुलायाइत्यर्थः मधुगंधतुल्येनप्ररोचनेनमथ्नामनःक्षोभकेनोन्मथितआत्मामनोयेषांतेसंमुह्यंतुकर्मस्वासक्ताभवंत्वितिद्वितीयःशाप ॥ २५ ॥

सर्वभक्षा भक्ष्याभक्ष्यविचारशून्याः वृत्त्यैदेहादिपोषणायधृतानिविद्यातपोव्रतानियैः वित्तादिष्वेवाऽऽरामोरतिर्येषांते याचकाःसंतोविचरंत्वितिचशापचतुर्थम् ॥ २६ ॥

पा० * रूषित इति वीरराघवीय पाठः ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिका टिप्पणी ॥

तादृशदौःशील्यप्रदर्शनार्थं हेकौरव्येति संबोधनम् ॥ १९ ॥

कषायवर्णस्य रक्तवर्णत्वात्तत्त्वेन रूपणे व्यङ्ग्यार्थमाह आरक्तेति ॥ २० ॥

भगवानयं न भवतीति भेददर्शी २१

विनष्टा नश्वरकर्मफलासक्तत्वात् अर्थवादानां प्रशंसामात्रपरत्वेन मुख्यार्थपरत्वाभावात् ॥ २२ ॥

बुद्ध्येतिसार्द्धकम् ॥ २३ ॥

अयं च वस्तुसुखत्वप्रापकः अतः विपरीतबुद्धित्वात् जडएव संसरंत्वित्यर्द्धकम् अनुवर्तते अनुकूलतया निंदति ॥ २४ ॥

मनःक्षोभकत्वादिति साधर्म्येऽदृशः प्ररोचनेन क्वचिजनकेन धर्मविशेषेण अप्सरोभिस्सह विहरिष्याम इत्यादिना उन्मथितः क्षुब्धः द्विजान्प्रति द्वितीयःशापः ॥ २५ ॥

भक्ष्याभक्ष्यविचारशून्या इति तृतीयः वृत्त्यै धृतविद्येत्यादिविशेषण विशिष्टास्संतः विचरंतुइह शूद्रादीनां गृहे गृहं इति विशिष्टश्चतुर्थः शापः ॥ २६ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका ॥

हे कौरव्य ! विदुर ! स दक्षः सदस्यमुख्यैः सभ्यश्रेष्ठैर्निषिध्यमानः निर्वार्यमाणोपि विवृद्धः मन्युः क्रोधो यस्य सः गिरित्राय रुद्राय शापं यज्ञभागानर्हतारूपं विसृज्य तस्मात्सत्रदेशात् बहिर्निर्गत्य स्वीयं निकेतनं गृहं प्रति जगाम ॥ १९ ॥

गिरिशानुगानां रुद्रपार्षदानां अग्रणीर्मुख्यःनन्दीश्वरःदक्षविसृष्टं शापं ज्ञात्वा रोष एव कषायस्तेन रूषितः आरक्तनेत्र इत्यर्थः दक्षाय दारुणं शापं विससर्ज तथा तस्य रुद्रस्यावाच्यतां वचनानर्हतां विनिंदतां ये च सदस्या द्विजा अन्वमोदन् अभ्यनन्दन् तेभ्यश्चशापं विससर्जेत्यर्थः ॥ २० ॥

तत्र दक्षं शपति सार्द्धैस्त्रिभिः यो दक्षः अज्ञः देहादिविलक्षणात्मज्ञानरहितः अत एव पृथग्दृष्टिरब्रह्मात्मकस्वतंत्रवस्तुदर्शी अप्रतिद्रुहि प्रतिद्रोहमकुर्वति भगवति भगवदंशावताररूपे भवे मर्त्यमुद्दिश्य मरणादिधर्मभाजमुद्दिश्य केवलनिकृष्टमज्ञात्वेत्यर्थः द्रुह्यति अपकरोति एतत् एतस्मात्कारणात् एतमिति पाठे एतं भवं मर्त्यत्वेन ज्ञात्वेत्यर्थः स दक्षः तत्त्वतः प्रकृतिपुरुषेश्वरयाथात्म्यात् विमुखः पराङ्मुखः भवेत् तत्त्वत्रयज्ञानरहितो भवेदित्यर्थः अयं प्रथमः शापः ॥ २१ ॥

एवं तत्त्वविमुखत्वरूपशापं विसृज्य तत्कार्यरूपमतात्त्विकलोककर्माभिरुचिरूपं शापं विसृजति गृहेष्विति कूटधर्मेषु अविचाल्यानि कर्माणि येषु प्राकृतगुणामंगलगार्हनिर्वाह्यकर्मस्विति यावत् गृहेषु ग्राम्यसुखेच्छया सांसारिक वैषयिक सुखेच्छया सक्तः अत एव वेदवादैः अल्पास्थिरफलसाधनानि कर्माणि अनंतस्थिरफलसाधनत्वेन प्ररोचयद्भिः "अपाम सोमममृता अभूम" "अक्षय्यहवै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिभिरर्थवादैर्विपन्ना विनष्टाधीर्बुद्धिर्यस्य सः कर्मतंत्रं कर्मकलापं वितनुतां अल्पास्थिरफलसाधनकर्माणि कुर्यादित्यर्थः अयं द्वितीयः शापः ॥ २२ ॥

परां देहादिः तमनात्मनात्मत्वेनाभिध्यातुं शीलमस्यास्तया बुद्ध्या विस्मृता आत्मगतिः जीवात्मपरमात्मयाथात्म्यावगतिर्येन अत एवपशुः पशुतुल्यःअतएवातितरां नितरां स्त्रीकामः स दक्षः अचिरादाशु वस्तमुखःवस्तस्य मेषस्य मुखमिव मुखं यस्य सःअस्तु भवेत् ॥ २३ ॥

तथा कर्ममय्यां कर्मात्मिकायां अविद्यायामियमेव विद्येति तत्त्वविद्येति बुद्धिर्यस्य अत एवासौ दक्षः अजः अजतुल्यः पशुप्रायः अस्तु स्यादिति तृतीयःशापः अथ रुद्रावमानिनो दक्षानुकूलान् द्विजान् शपति संसरंत्विति सार्द्धद्वयेन शर्वं रुद्रं अवमन्यत इति शर्वावमानी तममुं दक्षमनुसृत्य ये दक्षकृतशापाभिनंदन इत्यर्थः ते इह लोके संसरंतु जन्ममरणादिभाजो भवंतु अयं प्रथमः शापः ॥ २४ ॥

ये हरद्विषः ते पुष्पितया पुष्पमात्रफलायाः आपातरमणीयायाइत्यर्थः यद्वा पुष्पवन्मनः क्षोभकत्वादर्थवादा पुष्पशब्देन विवक्षिताः पुष्पितयास्तद्बहुलाया इत्यर्थः अथवा पुष्पगंधवत्क्षणमात्रोपभोग्यस्वर्गादिसुखप्रकाशिकायाः श्रुतायाः वेदपूर्वभागरूपाया इत्यर्थः यामिमां पुष्पितां वाचमित्यादिवत् मध्वा मनःक्षोभकेण भूरिणा मधुगंधेन मधुगन्धतुल्येन स्वर्गादिसुखप्रकाशनेन उन्मथितः क्षोभित आत्मा मनः येषां ते हरद्विषस्तेसं मुह्यंतु मोहं प्राप्नुवंतु नित्यानित्यधर्माधर्मादिषु सर्वत्र विपरीतज्ञाना भवंत्विति द्वितीयः शापः ॥ २५ ॥

सर्वभक्षाः सर्वं अविहितप्रतिषिधानिषिद्धम् भक्ष्यं भक्ष्यं येषां ते हर द्विषां द्विजा वृत्त्यै केवलशरीरापत्यकलत्रादिपोषणायैव धृतानि विद्यातपोव्रतानि यैस्ते वित्तदेहादिष्वेवारामो रतिर्येषां ते याचकाः संतो विचरंत्विति तृतीयः शापः ॥ २६ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

ततः किमकारि दक्षेणेति तत्राह निषिध्यमान इति ॥ १९ ॥

एवं दक्षेण शापे शिवाय दीयमाने सति कोपि शिवभक्तस्तमसहमानोभूत्किं तत्राह विज्ञायेति रोषनाम्ना कषायेण वह्निना दूषितः तस्य शिवस्यावाच्यतां दोषलक्षणम् ॥ २० ॥

कोयं शापो दत्त इति तत्राह य एतदिति एतत् मर्त्यं शरीरमद्य श्वो वा नश्वरमुद्दिश्य अप्रतिद्रुहि द्रोग्धारं प्रत्यद्रोहकर्तरि भगवति भक्त्यादिसौभाग्यवति द्रुह्यति वचनादिनेति शेषः तत्त्वतो याथार्थज्ञानाद्विमुखो बहिर्मुखो भूयादित्यन्वयः ॥ २१ ॥

न केवलं बहिष्कृततत्त्वज्ञानः किंतु श्रीनारायणविषयकर्मव्यापारेषु मग्नश्च स्यादित्याह गृहेष्विति वेदवादेन स्वर्गादिषु पुष्पवादिवेदवाक्येन विपन्ना नष्टा धीर्यस्य स तथा अत्र तत्त्वज्ञानविषयः शापस्तात्कालिक एव न तु चिरकालीनः विष्णुवाक्यस्यैव चिरकालीनत्वात् तदुक्तं ये ज्ञानविषयाः शापा मुक्तिगाश्चाधिकारिणां कादाचित्कास्ते भवंति नैवते सार्वकालिकाः। तेषां ज्ञानस्य मुक्तेश्च तारतम्यस्य चैव हि भगवन्नियतत्वात्तु शापादिर्नात्र कारणमिति ॥ २२ ॥

इतोपि तात्कालिक एव शाप इति भावेन दक्षस्य शापविशेषं मुंचति बुद्ध्येति पराभिध्यायिन्या निरंतरशब्दादिविषयचिंताकातरया बुद्ध्या विस्मृतात्मगतिर्विस्मृतपरमात्मगतिः विस्मृतपरमात्मज्ञानः पशुर्विवेकशून्यः अतितरांस्त्रीकामः स दक्षोऽचिरात् वस्तमुखोऽस्त्वित्यन्वयः ॥ २३ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

शापांतरंचाह विद्या बुद्धिरिति अजो दक्षः अविद्यायां विद्या बुद्धिरस्त्विति शेषः शंकरद्वेषिणां च शापविशेषमाह संसरंत्विति ॥ २४ ॥

संसारे कारणमाह गिरेरिति पुष्पिण्याः स्वर्गादिपुष्पप्रतिपादिकायाः गर्भीकृतमुक्तिफलायाः फालकूटनिगिरणात् दैत्याख्यपापनिगिरणाच्च गिरिर्मुख्यप्राणस्तेन शिष्यप्रशिष्यादिषु प्रणीतत्वेन व्याख्यातत्वेन च तस्य सुतायाः वेदवाचो भूरिणा बहुलनमधुगंधेन विषय सुखलक्षणमकरंदपरिमलेन मथ्ना कामेनोन्मथितो विलोडित आत्मा मनो येषां ते तथोक्तास्ते हरद्विषः संमुह्यतु । मोक्षफलप्रतिपादकवेदतात्पर्यापरिज्ञानेनात्मनः स्वर्गादिरेव परमश्रेयोऽस्त्विति विपरीतज्ञानं गच्छंत्वित्यन्वयः मुहवैचित्ये इति धातोर्वैचित्यं विपरीतज्ञानं "गिरिः प्राणःसमुद्दिष्टस्तत्सुतावेदवाक्स्मृता । पुष्पं स्वर्गादयः प्रोक्ताःफलं मोक्ष उदाहृत„ इतिवचनात् उक्त पदार्थानान्यइति अमंगो मन्मथोमन्थाः कामोंगज उदाहृतइत्यभिधानात् ॥ २५ ॥

हरद्विषां शापान्तरमपि विसृजति सर्वभक्षा इति पलांडुंदिसर्वभक्षावृत्त्यै जीवनाय । नधर्मायेति शेषः ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

सदवद्यतामिति चित्सुखः ॥ २० ॥

पृथग्गृहदृष्टिः भगवानयं न भवतीति नीचदृष्टिः ॥ २१ ॥

वितनुतां वदेत्यत्र वितनुताद्वदति क्वचित् ॥ २२ ॥

बुद्धेति सार्द्धकम ॥ २३ ॥

असावज इति क्वचित् संसरन्त्वित्यर्द्धकम ॥ २४—२७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

अत्र मदन्ये युक्तवादिनः केऽपि न दृश्यन्ते । तदस्यामधार्मिकसंकुलायां सभायां न स्थातुमुचितमिति कोपेन ततो निर्ययावित्याह निषिध्यमानः माक्रुध्य मागच्छेत्याद्युच्यमानः ॥ १९ ॥

रोष एव कषायस्तेन दूषितः अतिरक्तनेत्र इत्यर्थः । येच तस्य गिरिशस्य अवाच्यतां निन्दां अन्वमोदंस्तेभ्योऽपि ॥ २० ॥

दक्षं शपति सार्द्धैस्त्रिभिः य इति एतद्दक्षशरीरं मर्त्यं मरणधर्मकं उद्दिश्य एतदेवाहमित्यभिमानास्पदीकृत्य द्रुह्यति असौऽज्ञो भवेत् । अज्ञत्वमेव प्रपञ्चयति पृथग्दृष्टिः स्वतः पृथग्भूतेषु देहापत्यकलत्रादिष्वेव दृष्टिर्यस्य सः तस्मात्तत्त्वतो भगवतः सकाशात् विमुखो भवेत् इति प्रथमः शापः ॥ २१ ॥

वेदेषु ये वादा अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादयस्तैर्विपन्ना धीर्यस्य सः ॥ २२ ॥

परो देहादिस्तमेवात्मत्वेनाभितो ध्यातुं शीलं यस्यास्तया बुद्ध्या पशुः पशुतुल्यः स्त्रीकामोऽस्त्विति द्वितीयः शापः । वस्तस्य छागस्य मुखमिव मुखं यस्येति तृतीयः शापः ॥ २३ ॥

शापत्रयमिदमस्मै समुचितमेव यतो विद्याबुद्धिरित्यादिरतो जडः । अज इति पाठे छागतुल्यः द्विजानपि शपति सार्द्धद्वाभ्यां । अमुं दक्षं ये चानुवर्त्तन्ते ते संसरन्तु इत्येकः शापः ॥ २४ ॥

श्रुताया वेदरूपायाः पुष्पिण्याः पुष्पतुल्यार्थवादबहुलाया मधुगन्ध तुल्येन प्ररोचनेन मथ्ना मनःक्षोभकेण च उन्माथतः आत्मा मनो येषां त समुह्यन्तु कर्मस्वासक्ता भवन्त्विति द्वितीयः ॥ २५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

सर्वभक्षाः भक्ष्याभक्ष्यविचारशून्या इति तृतीयः । वृत्त्यै जीविकार्थमेव नतु धर्मार्थमिति चतुर्थः । वित्तेति पञ्चमः । याचका इति षष्ठः ॥ २६—२८ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

तस्मात्स्थानात् ॥ १९ ॥

रोष एव कषायः विकारहेतुस्तेन दूषितो विकृतः । येद्विजाःतस्य शिवस्याऽवाच्यतां निंदामन्वमोदन्तेभ्यश्च ॥ २० ॥

तत्र दक्षं प्रतिशापमाह य इतिसार्द्धैस्त्रिभिः मर्त्यं देहं पृथगनात्मनि देहे दृष्टिः आत्मबुद्धिर्यस्य सः अप्रतिद्रुहि प्रतिद्रोहरहिते भगवति द्रुह्यति योदक्षः सतत्त्वतो विमुखो भवेत् तत्त्वप्रापणपरहितो भवेत् ॥ २१ ॥

कूटधर्मेषु कूटाः वंचनाबहुलाः धर्मायेषु तेषुगृहेषु कर्मतंत्रमैहिकामुष्मिकफलकं कर्मपरिकरं तनुतां विस्तारयतु वेदवादे रोचनार्थाभिः फलश्रुतिभिरक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिभिः विपन्ना दृष्टार्थाद्भ्रष्टा धीर्यस्य सः ॥ २२ ॥

परं देहादिकमेवात्मत्वादिनाऽभितो ध्यातुं शीलमस्यास्तया विस्मृताऽऽत्मनोरुपास्योपासकस्वरूपयोर्गतिर्येनसवस्तमुखश्छागवदनः ॥ २३ ॥

द्विजान्प्रति शापमाह संसरंत्विति सार्द्धद्वाभ्याम् शर्वमवमन्यत इति शर्वावमानी तममुं दक्षं ये अनु अनुवर्तिनः दक्षोक्तशापाभिनंदिनः तेपि संसरंतु जन्ममरणाद्यनुभवंतु ॥ २४ ॥

श्रुतायाः श्रुतिरूपायाः पुष्पिण्याः पुष्पलतावद्रुचिजनकायाः गिरो मधुगंधेन मधुगंधवन्मनोहरेण प्ररोचनेन मथ्ना मनः क्षोभकेन उन्मथितः आत्मा मनो येषां ते संमुह्यंतु हेयोपादेयविवेकहीना भवंतु ॥ २५ ॥

वृत्त्यै जीविकायै धृतानि विद्यादीनि यैस्ते वितादिष्वेवारामो रतिर्येषां ते ॥ २६ ॥

---

भाषाटीका ।

हे (कौरव्य) हे परीक्षित! सभा के लोगों ने निषेध भी किया तो भी दक्ष शिवजी को शाप देकर वहां से निकल के बड़े क्रोध से भरा अपने घर को चलागया ॥ १९ ॥

शाप दिया जान के शिवजी के पार्षदाग्रणी नंदिकेश्वर रोष से आरक्त नेत्र होकर दक्षको कठिण शाप देते भये, जो ब्राह्मण शिव संबंधि अवाच्यताको अनुमोदन करते रहे उनको भी शाप देते भये ॥ २० ॥

जो कोई दक्षको श्रेष्ठ माने है अद्रोही भगवान शिवजी से द्रोह करेगा वो अज्ञानी भेद दृष्टिवारो तत्त्वज्ञान से विमुख होवे ॥ २१ ॥

छलधर्म गृहो में ग्राम्य सुख की इच्छा कर के जो आसक्त हो वो वेदवादो में नष्टबुद्धि हो कर कर्मतंत्र को मुख्यमाने हैं ॥ २२ ॥

देहादिकों को ईश्वर मानने वारी बुद्धि से पशुवत् ईश्वर की गति भूल स्त्रीकामी दक्ष थोडे काल में बकरा मुख होवे ॥ २३ ॥

तस्यैवं ददतः शापं श्रुत्वा द्विजकुलाय वै ।
भृगुः प्रत्यसृजच्छापं ब्रह्मदंडं दुरत्ययम् ॥ २७ ॥
भगवव्रतधरा येच येच तान्समनुव्रताः ।
पाषण्डिनस्ते भवंतु सच्छास्त्रपरिपंथिनः ॥ २८ ॥
नष्टशौचा मूढधियोजटाभस्मास्थिधारिणः ।
विशंतु शिवदीक्षायां यत्र दैवंसुरासवम् ॥ २९ ॥
ब्रह्म च ब्राह्मणांश्चैव यद्यूयं परिनिंदथ ।
सेतुं * विधारणं पुंसामतः पाषंडमाश्रिताः ॥ ३० ॥
एष एव हि लोकानां शिवः पंथाः सनातनः ।
यं पूर्वे चानुसंतस्थुर्यत्प्रमाणं जनार्दनः ॥ ३१ ॥
तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम् ।
विगर्ह्य यात पाषंडं दैवं वोयत्र भूतराट् ॥ ३२ ॥

मैत्रेयउवाच ।

तस्यैवं ददतः शापं भृगोः सभगवन्भवः ।
निश्चक्राम ततः किंचिद्विमना इव सानुगः ॥ ३३ ॥
तेऽपि विश्वसृजः सत्रं सहस्रपरिवत्सरान् ।
संविधाय महेष्वास ! यत्रेज्यऋषभो हरिः ॥ ३४ ॥
आप्लुत्यावभृथं यत्र गंगा यमुनयाऽन्विता ।
विरजेनात्मना सर्वे स्वं स्वं धाम ययुस्ततः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां दक्षशापोनाम
द्वितीयोऽध्यायः ॥ २ ॥

भाषाटीका

विद्या बुद्धि अविद्या कर्म मयी में ये जडहोय जिनोंने शिवजी को अपमान कीनो है वे जन्म मरण को प्राप्त हों ॥ २७ ॥

पुष्प के समान वेदवाणी को मनमोहक अर्थ वादवाक्यों से मूढहुवे शिवजी के द्वेषी कर्ममार्ग में ही आसक्त रहैं ॥ २५ ॥

ब्राह्मण, देहादि पोषण के अर्थ विद्या तप व्रत करेंगे भक्ष्याभक्ष्य विचार शून्य होवेंगे, धन शरीर सुखको या जग में मांगते डोलेंगे ॥ २६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

प्रत्यसृजत्प्रत्यदात् शापरूपंब्रह्मदंडम् ॥ २७ ॥
सच्छास्त्रस्यपरिपंथिनःप्रतिकूलाः ॥ २८ ॥
सुरागौडीपैष्टीमाध्वीच आसवस्तालादिसंभवंमद्यम् दक्षैश्यात्वं हत्वंतद्यत्रदैवंपूज्यंदेवतावदादरणीयमितिवा ॥ २९ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

ब्रह्मवेदम् कथंभूतम् सेतुंमर्यादारूपम् तदेवाह पुंसांवर्णाश्रमाचारवतांविधारणंधारकम् ॥ ३० ॥

सेतुत्वंप्रपंचयति द्वाभ्याम् एषवेदलक्षणएवाशिवः पंथाः यंपूर्वे ऋषयोऽनुसंतस्थुराश्रितवंतः यद्यस्मिन्जनार्दनःप्रमाणंमूलम् ३१।

भूतराड्भूतानांतामसानांपतिः ॥ ३२ ॥

अन्योन्यशापेनोभयोर्नाशाद्विमनाइवेति तथाऽपिभगवदनुगृहीतानांनाशोनस्यादितिभावः ॥ ३३ ॥

ऋषभः सर्वश्रेष्ठोहरिर्यत्रईज्यः पूज्यः तत्सत्रंसम्यग्विधाय हेमहेष्वास!विदुर ! यत्रप्रयागेऽन्वितातत्रावभृथस्नानंकृत्वाततःस्थानाययुः ॥ ३४ ॥ ३५ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायां
द्वितीयोऽध्यायः ॥ २ ॥

पा० * विधरणमिति श्रीवीरराघवाचार्य्याः ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिका टिप्पणी ।

द्विजकुलाय द्विजकुलमुद्दिश्य ॥ २७ ॥

भवव्रतं चेदं वेदविहितं पूर्वमेवासीत् इदानीं शापात्तत्र पाषंडित्वं विधीयते अन्यथा पूर्वत एव पाषंडित्वे पुनस्तत्र विधानाऽसम्भवः ॥ २८ ॥

धारकं नियामकं ॥ ३० ॥

जनार्दनः प्रमाणं मूलमित्युक्त्वाजनार्दनं मूलममत्वाऽस्वतंत्रोपासनायां भृगुणापो दुरत्ययः वैष्णवानां यथा शंभुरित्यादिवचनबलेन तस्य वैष्णवतमत्वा त्तद्व्रताचरणस्य भगवत्तोषहेतुत्वे शापोप्यकिञ्चित्कर एव स्यात् यत्प्रामाण्यं जनार्दन इति तेनैवोक्तत्वादितिज्ञेयम् यतः शिवनिंदायां तु नरक एव श्रूयते यो मां भजति सर्वत्र एकांतं भावमाश्रितः विनिंदन् देवमीशानं सयातिनरकं ध्रुवमिति ३१

यत्र पाषण्डे ॥३२॥

शापं ददतस्सतः ततो यज्ञसभातः नाशो न स्याद्यतः द्वयोः शापाभ्यां कर्मशैवमार्गौ परिहृतौ श्रीवैष्णवमार्गस्तु शुद्धत्वेन स्थापित एवेति ॥ ३३

तेपीति युष्मकम् अवभृथस्नानं यज्ञान्तस्नानम् ॥ ३४ ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थ स्कंधे दीपिका
दीपिन्याख्यायांटिप्पण्याम् द्वितीयोऽध्यायः ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

एवं शपंतं नंदीश्वरमालक्ष्य भृगुः प्रत्यशपदित्याह मैत्रेयः तस्य नंदीश्वरस्य ब्रह्मकुलायैवमुक्तरीत्या शापं ब्रुवतः सतस्तं शापं श्रुत्वा भृगुर्दुरत्ययं दुरतिक्रमं ब्रह्मदण्डं ब्रह्मदंडकल्पं शापं प्रत्यसृजत् प्रत्यदात् ॥ २७ ॥

तमेवाह भवेति भवस्य रुद्रस्य व्रतं पिशाचचर्यादिकं तद्ये धरंति ये च भवव्रतधराननु व्रताः अनुसरंतः ते सर्वे पाषंडिनो वेदविरुद्धकर्मानिष्ठाः सच्छास्त्राणां भगवच्छास्त्राणां पंचरात्रादीनां परिपंथिनः प्रतिकूला भवेयुः ॥ २८ ॥

पाषंडित्वमेव विशदयति नष्टशौचाइति नष्टशौचा दुराचाराः मूढाधियः परा वरतत्वज्ञानरहिताः जटादिधारिणः शिवदीक्षायां "मुद्रिकाषट्कतत्वज्ञः परमुद्राविशारदः भगासनस्थन्मात्नं ध्यात्वा निर्वाणमृच्छति" इत्याद्युक्त विधशिवदीक्षायां प्रविशन्तो यत्रदीक्षायां सुरा पैष्टी आसवंतालादिसंभवं मद्यं द्वंद्वैकयात् क्लीवत्वं तद्दैवं दवमिव पूज्यं सुरा कुंभस्थापनतत्स्थदेवपूजादेः शैवागमादिष्वाभिधानादेव मुक्तम् ॥ २९ ॥

भवतामयं शापोनुरूप एवेति वदन् तमेव प्रथयति ब्रह्म चेति यतो यूयं पाषंडधर्ममाश्रिता यत् यस्माच्च पुंसां वर्णाश्रमवतां सेतुं स्वर्गापवर्गसाधनयज्ञोपासनादिप्रकाशनेन पुरुषार्थप्रापकं मर्य्यादारूपं वा विधरणं माता पितृसहस्रवद्धितोपदेशादिना विशेषधारकं प्रवर्तकमिति यावत् एवं भूतं ब्रह्मवेदं ब्राह्मणांश्च परिनिंदथ परिनिंदितवंतः ततो विगर्ह्यपाषंडं यातेत्युत्तरत्रान्वयः ॥ ३० ॥

वेदस्य सेतुत्वविधरणत्वे प्रपंचयति एष इति एष एव वेद एव लोकानां वर्णाश्रमवतां शिवः सुखकरः पंथा स्वप्रकाश्ययज्ञोपासनादिद्वारास्वर्गापवर्गोपायः सनातनः अनादिनिधनः अनादिनिधना ह्येषा वागुत्सृष्टा स्वायंभुवेत्युक्तत्वत् यं वेदं तदुक्तयज्ञोपासनादिरूपधर्ममित्यर्थः पूर्वे च सात्त्विका ऋषयः चकारादपरेच अनुसंतस्थुः अनुष्ठितवंतः अनेन शिष्टपरिग्रहकथनेन शैवागमानां तद्वैपरीत्यमावेदितं जनार्दनो भगवान् यद्वेद वेदाख्यं ब्रह्मप्रमाणं यस्य सः, आपत्वात् क्लीवत्वं वेदाः प्रमाणमिति वद्विधेयप्रमाणयापेक्षया अनेन ब्रह्मणोपि शास्त्रयोनित्वकथनेन सर्वापि श्रेयःसंपत्तिर्वेदाधीनेत्युक्तं॥ यद्वा यस्मिन् वेदे जनार्दनः प्रमाणं मूलं कारणमिति यावत् तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद इति श्रुतेः अनेनापौरुषेयत्वकथनेन पौरुषेयत्वप्रयुक्तभ्रमविप्रलंभादिदोषराहित्यसिद्धिः शैवागमानां पौरुषेयत्व तत्प्रयुक्तदोषवत्वं चसूचितम ॥ ३१ ॥

तत्तस्मात् परमं निरतिशयश्रेयः साधनप्रकाशकत्वेन सर्वोत्कृष्टंशुद्धमपौरुषेयं सनातनंसतांवर्त्म ब्रह्म वेदं विगर्ह्य विगर्हणाद्धेतोरित्यर्थः पाषंडं पाषण्डधर्मं यात प्राप्नुत पाषंडधर्म एव निष्ठावंतो भवतेत्यर्थः यत्र यस्मिन् पाषंडे वः युष्माकं भूतानांतामसानां पतिः रुद्रोदैवम् ॥ ३२ ॥

अथ शापप्रतिशापौ निगमयन् अनंतरकथां प्रस्तौति मैत्रेयः हे साधो ! तस्य भृगोः एवं वदतः सतः भगवान् भवो रुद्रः सानुगः सभृत्यः किंचिद्विमना इव इवशब्देन वस्तुत समदर्शित्वात् वैमनस्याभावः सूच्यते ततः यज्ञभूमेर्निश्चक्राम निष्क्रान्तवान् ॥ ३३ ॥

हे महेष्वास! विदुर! यत्र यस्मिन् सत्रे ऋषभः पुरुषोत्तमो हरिरीज्यः आराधनीयः तद्विश्वसृजां सत्रं सहस्र परिवत्सरपर्यंतं अनुष्ठेयं संविधाय अनुष्ठाय तेपि भृग्वादयः ॥ ३४ ॥

यत्र प्रदेशे गंगा यमुनया सहान्विता युक्ता तत्रावभृथं. स्नानं वाप्लुत्य कृत्वा ततः स्वं स्वं धाम स्थानं ययुः प्रापुः ॥ ३५ ॥

इति श्रीमद्वीरराघवाचार्य्यकृतायां श्रीभागवतचंद्रचंद्रिकायां
चतुर्थस्कन्धे द्वितीयोध्यायः ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

ब्राह्मणकुलाय दीयमानं शापं श्रुत्वापि भीत्या कश्चित्प्रतिशापदानसमर्थो नाभूदिति तत्राह तस्यैवमिति ब्राह्मणानामिदमेवायुधं नान्यदिति द्योतनाय ब्रह्मदंडमित्युक्तम् ॥ २७ ॥ २८ ॥

शिवदीक्षायां चांडालादिजन्मनां विप्रत्वकारणलक्षणायां सुरयासूनां तर्पणं यस्मिंस्तथोक्तं यद्वासुरा नाम नारिकेलादिपुष्पसंभवं मधूकपुष्पादिसंभवमासवमथवा ॥ २९ ॥

तीव्रशापप्रदाने निमित्तं वक्ति ब्रह्मेति विशेषेण धारयत्याश्रितानिति विधारणम् ॥ ३० ॥

सेतुं विशिनष्टि एष इति यस्य प्रमाणं सम्यक् वक्ता। प्रमाणं बोधनेऽत्यंतमर्यादाशास्त्रहेतुषु सम्यग्वक्तरि वायः स्यात्प्रमाणं मरणं गताविति यादवः ॥ ३१ ॥

ब्रह्म वेदं भूतराड् भैरवः ॥ ३२ ॥

स्वाऽपमानं श्रुत्वापि महतां महत्त्वविरोधिविकारो न युक्त इति भावेन तस्य हरस्य ततोनिर्गमनं च वक्ति तस्यैवमिति ॥ ३३ ॥

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

एवंविवादेपि सत्रस्यांतरायो नाभूदित्याह तेपीति अंतरायानुत्पादे निमित्तमाह यत्रेति ॥ ३४ ॥

यत्र गंगा भागीरथी यमुनयान्विता संगता तत्र प्रयाग इति शेषः अस्यैव कर्मणः स्वाभीष्टफलप्राप्तिहेतुत्वादिदं समाप्य न कर्मातरं प्रारब्धं तैः किंतु स्वगृहगमनमेवानुष्ठितमित्याह विरजेनेति कर्मणा निर्मलांतःकरणेन युक्ता इति शेषः ॥ ३५ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कंधे
श्रीविजयध्वज तीर्थकृत पदरत्नावल्याम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

भवव्रतेति । वेदविहितमेवात्र भवव्रतमनूद्यते अन्य विहितत्वे पापण्डित्व निधानायोगः स्यात् पूर्वत एव पापण्डित्वं सिद्धमेव विवृणोति सच्छास्त्रेत्यादिना पापण्डमाश्रिता इत्यन्तेन ॥ २८-॥ ३०

तस्मात् स्वतन्त्रत्वेनोपासनायामयं दोषो यतश्च जनार्दनस्यैव वेदमूलत्वमाह एष इति स एव वेदलक्षणः यत् प्रमाणं यत्र मूलमित्यर्थः स्वतन्त्रोपासानायां तत्प्राप्तिः श्रीगीतोपनिषत्स्वेव निषिद्धा येऽप्यन्यदेवताभक्ता इत्यादिभिः अन्यदेवाऽवज्ञा च निषिद्धा यथा गौतमीये 'गोपालं पूजयेद्यस्तु निन्दयेदन्यदेवतां अस्तु तावत् परो धर्मः पूर्वधर्मो विनश्यति, हयशीर्षामां पथि देवहेलनादिति श्रीनारायणवर्मणि तदागः प्रायश्चित्तं श्रीशिवावज्ञादौ तु नन्दीश्वरशापश्च विशेषः संसरन्त्विहेत्यादि दर्शयिष्यते च चित्रकेतुचरिते ॥३१ ३२॥

ततश्च नन्दीश्वरस्य क्रोधावेशं दृष्ट्वा कदाचित् श्रीजनार्दनं तदुपासकांश्च प्रत्यवद्यं वदेदिति शंकमानः श्रीशिवः सानुग एव निष्क्रांत इत्याह तस्यैवमिति । विमना इवेति ननु विमना इत्यर्थ आत्मारामत्वात् । तदेवं द्वयोः शापाभ्यां कर्म शैवमार्गौ परिहृत्यश्री वैष्णवमार्ग एव शुद्धत्वेन स्थापितः । प्रकरणेऽस्मिन् विशेषजिज्ञासायां भक्तिसन्दर्भो दृश्यः ॥ ३३ ॥

तेऽपीति युग्मकम् ॥ ३४ ॥ ३५ ॥

इति श्रीभद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

सुरा गौडी पैष्टी माध्वीच । आसवस्तालादिसम्भवं यथं तयोर्द्वन्द्वैक्यात् पण्ढत्वं । तदेव यत्र दैवं देवतावदादरणीयम् ॥ २९ ॥

ब्रह्म वेदं वेदप्रवर्त्तकान् ब्राह्मणांश्च कीदृशं सन्मार्गे चलतां पुंसां विधरणं धारकं सेतुम् ॥ ३० ॥

वेदनिन्दका यूयं कुपथगामिन एवेत्याह एष वेदलक्षणः । यत् यत्र प्रमाणमिति स एवात्र साक्षी प्रष्टव्य इति भावः ॥ ३१ ॥

विगर्ह्येति वेदनिन्दायाः फलमिदं भवद्भिः प्राप्तव्यमेव मदभिशापस्तु पिष्टपेष्ठ इवेति भावः । भूतराट् भूतानां राजा भूत एवेति निन्दा । भूतेषु सर्वप्राणिषु राजत इति स्तुतिः ॥ ३२ ॥

यत्प्रमाणं जनार्दन इति श्रुत्वा कदाचिज्जनार्दनं तद्भक्तांश्च प्रति किमप्यवद्यं क्रोधादेव नन्दीश्वरो वदेदिति शंकमानो भवस्ततो निष्क्रान्त इत्याह तस्यैवमिति विमना इवेति वस्तुतस्त्वात्मारामत्वा

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

द्विमनाः तेन द्वयोः नन्दीश्वरभृग्वोः शापप्रस्तात् कर्ममार्गान् शैवांश्च परिहृत्य वैष्णवा एव सुधीभिराश्रयणीया इति प्रकरणव्यंग्यवस्तु ज्ञेयम् ॥ ३३ ॥

तेऽपि रुद्रदक्षौ सगणौ विनैव सत्रं संविधाय ययुः । नच तद्विरोधजन्यः कोऽपि विघ्नो बभूवेत्याह यत्र हरिरेव इज्यानां ऋषभ इति रुद्रादि यजनं विनापि यज्ञपूर्त्यभावो नाभूदिति भावः ॥ ३४ ॥ ३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थेऽस्मिन् द्वितीयोऽयं सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

द्विजकुलाय शापं ददतः श्रुत्वा वचनमिति शेषः शापं शापरूपं ब्रह्मदंडं प्रत्यसृजत् प्रत्यदात् ॥ २७ ॥

सच्छास्त्रस्य विधिनिषेधरूपस्य परिपंथिनः प्रतिकूलाः संतः पाषंडिनः स्वेच्छाचारिणो भवंतु ॥ २८ ॥

यत्र यस्यां पाशुपताद्यागमप्रसिद्धायां शिवदीक्षायाम् सुरा गौडी पैष्टी माध्वी च आसवस्तालादिरसस्तयोर्द्वंद्वैक्यात् पंढत्वम् दैववदादरणीयं तस्यां विशंतु ॥ २९ ॥

अहं त्वत्र निमितमात्रमित्याह ब्रह्मेति यद्यस्मात् सेतुं पुरुषार्थचतुष्टयप्रतिपादनाद्विभूतम् अतएवपुंसां तत्तदधिकारिणां विधारणं तत्तदनुरूपपुरुषार्थबोधकत्वेन धारकम् ब्रह्म वेदम् ब्राह्मणान् तद्वक्तांश्च परिनिंदथ निंदितवंतः अतः स्वयमेव पाषंडमाश्रिताः ॥ ३० ॥

अतोऽहमप्यनुमोदयामि केवलं न तु शापं ददामीत्याशयेनाह एष इति ब्रह्माम् यं पूर्वे ब्रह्मादयः अनुसंतस्थुः आश्रितवंतः यचस्मिन् जनार्दनः सर्वजननियमनकर्ता वासुदेवः प्रमाणं मूलम् स एष एव वेदलक्षणः शिवः सुखरूपः सनातनः अनादिसिद्धः पंथा पुरुषार्थदर्शनमार्गः ॥ ३१ ॥

तद्ब्रह्म वेदं सतां वर्त्म विगर्ह्य स्वयमेव पाषंडं स्वेच्छाचारलक्षणं कुपथं यात यो युष्माकं पाषंडिनां यत्र पाषंडे दैवमुपास्यं भूतराट् ॥ ३२ ॥

ऋषभः सर्वेश्वरः यत्रेज्यः पूज्यः तत्सत्रं यागं सहस्रपरिवत्सरात् तावत्कालपर्यंतं संविधायानुष्ठाय ॥ ३४ ॥

यत्र गंगा यमुनया अन्विता तत्र प्रयागे अवभृथस्नानमाप्लुत्य कृत्वा ततः प्रयागात् ॥ ३५ ॥

इतीश्रीमद्भागवते महापुराणेचतुर्थस्कंधे
सिद्धांतप्रदीपेद्वितीयाध्यायार्थप्रकाशः ॥ २ ॥

---

भाषाटीका ॥

ब्राह्मण कुल को ऐसा शाप सुनकर भृगुजी महाकठोर ब्रह्मदंड रूप शाप प्रत्यर्पण करते भये ॥ २७ ॥

जो शिवको व्रत धारण करें जो उनों के अनुवर्ती होवें वे पाखंडी होंय सत्शास्त्र से भ्रष्ट होवेंगे ॥ २८ ॥

भाषाटीका ॥

नष्ट शौची मूढबुद्धि जटा भस्मास्थिधारी शिवदीक्षा में प्रवेश करें जिस में मद्य मांस पूज्य हैं ॥ २९ ॥

पुरुषों की मर्यादा धारण करनेवाले जो वेद और ब्राह्मण उनकी जो तुम निंदा करते हो इसे तुम पाखंडका आश्रय करो हो ॥ ३० ॥

लोगन को सनातन कल्याण मार्ग यही है, जामें पूर्वलोक स्थितभये जिस में प्रमाण जनार्दन है ॥ ३१ ॥

सो वोपरम शुद्ध सनातन, संतोंका मार्ग है, तुह्मारो दैव भूत पति है निंदा करके पाखंडको जावो गे ॥ ३२ ॥

मैत्रेयजी बोले । भृगुदक्ष दोनोंका शापसुन के शिवजी विमनहोकेअनुचरों के सहित वहां से जाते भये ॥ ३३ ॥

भाषाटीका ॥

( हे महेष्वास ) हे विदुर, विश्व के उत्पादक, हजार वर्ष को यज्ञ कर के पूज्य, श्रेष्ट, हरिका पूजन करते भये ॥ ३४ ॥

जहां गंगाजी यमुना से संयुक्त, वहां श्रीप्रयागराजमें अवभृथ स्नान कर के शुद्धांतःकरण से अपने अपने स्थान को प्राप्त होतेभये ॥ ३५ ॥

इतिश्रीमद्भागवतमहापुराण में चतुर्थस्कंध के द्वितीय अध्याय की भाषाटीका समाप्त हुई ॥ २ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

———०:०:०———

मैत्रेयउवाच ।

सदा विद्विषतोरेवंकालो वै ध्रियमाणयोः ।
जामातुः श्वसुरस्यापि सुमहानतिचक्रमे ॥ १ ॥
यदाभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना ।
प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत् ॥ २ ॥
इष्ट्वा स वाजपेयेन ब्रह्मिष्ठानभिभूय च ।
बृहस्पतिसवं नाम समारेभे क्रतूत्तमम् ॥ ३ ॥
तस्मिन् ब्रह्मर्षयः सर्वे देवर्षिपितृदेवताः ।
आसन्कृतस्वस्त्ययनास्तत्पत्न्यश्च सभर्तृकाः ॥ ४ ॥
तदुपश्रुत्य नभसि खेचराणां प्रजल्पताम् ।
सती दाक्षायणी देवी पितुर्यज्ञमहोत्सवम् ॥ ५ ॥
व्रजंतीः सर्वतोदिग्भ्य उपदेववरास्त्रियः ।
विमानयानाः सप्रेष्ठा निष्ककंठीःसुवाससः ॥ ६ ॥
दृष्ट्वा स्वनिलयाभ्याशे लोलाक्षीर्मृष्टकुंडलाः ।
पतिं भूतपतिं देवमौत्सुक्यादभ्यभाषत ॥ ७ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

तृतीयेतुसतीतातयज्ञोत्सवदिदृक्षया ।
गमिष्यंतीमहेशेनवारितानीतिहेतुभिः ॥ १ ॥

ध्रियमाणयोरवतिष्ठमानयोः भृशमवस्थानइत्यस्मात् ॥ १ ॥

यद्यपिरुद्रविहीनोयज्ञोनास्त्येवतथाऽपि दक्षस्यरुद्रपरित्यगोद्वेषाद्गर्वाच्चतत्रद्वेषेहेतुरुक्तःगर्वेहेतुमाह यदातुप्रजापतीनामाधिपत्येऽभिषिक्तस्तदातस्यस्मयोगर्वोऽभवत् ॥ २ ॥

गर्वादेवब्रह्मिष्ठान्सेश्वरानभिभूयतिरस्कृत्य "वाजपेयेनेष्ट्वाबृहस्पतिसवेनयजेत,, इतिश्रुतेर्वाजपेयेनेष्ट्वासमारेभे ॥ ३ ॥

कृतस्वस्त्ययनाः कृतमंगलाः सभर्तृकाइतिदक्षिणादिभिः प्रथममर्हितानामपिपत्न्यर्हणेपुनरर्हणमुक्तम् ॥ ४ ॥

तत्तदाखेचराणांप्रजल्पतांसतांपितृयज्ञमहोत्सवं श्रुत्वातत्रव्रजंतीरुपदेवानांगंधर्वादीनांवरस्त्रियश्चस्वस्यनिलयस्याभ्याशेसमीपेदृष्ट्वौत्सुक्यात्पतिमभ्यभाषतेतित्रयाणामन्वयः ॥ ५ ॥

कथंभूताःस्त्रियोदृष्ट्वा विमानानियानानियासांताः प्रेष्ठैःसहिताः निष्काणिपदकानिकंठेषुयासाम् शोभमानानिवासांसियासाम् ॥६॥

लोलानिचंचलान्यक्षीणियासाम् मृष्टान्युज्ज्वलानिकुंडलानियासांताः ॥ ७ ॥

———

श्रीराधारमणदासगोस्वामि विरचित
दीपिन्याख्या दीपिकाटिप्पणी ।

नीतिहेतुभिःनीत्यायुक्तिभिश्च शिवस्य तुच्छं तस्मिन्द्वेषाऽभावेऽपि दक्षस्य तथा प्रतीतिं विचार्य तथोक्तमिति तदज्ञान एव द्वेषकल्पना ॥ १ ॥

तत्र द्वेषगर्वयोर्मध्ये द्वेषे हेतुरनभ्युत्थानादिम् गर्वे हेतु आधिपत्यम् ॥ २ ॥ ३ ॥

तस्मिन् बृहस्पतिसवे कृतमंगला कृतं मंगलं प्रशस्ताचरणं यैस्तदनंतरं दक्षेणार्हिताबभूवुरितिभावः पौनरुक्त्यव्युदासार्थं व्याचष्टे दक्षिणादिभिरिति ॥ ४–६ ॥

तदुपश्रुत्येति त्रिकम् उत्सवाश्चर्यदर्शनादक्ष्णां लोलत्वम् ॥ ७ ॥

———

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

दक्षो दुहितृवत्सलः विद्वेषमकरोत् कस्मादिति पृष्टं विद्वेषनिमित्तमुक्तं अथ यतः प्राणान्तत्याज दुस्त्यजान्सतीति पृष्टं प्राणत्यागनिमित्तं तत्प्रकारश्चोच्यते तत्रप्राणत्यागनिमित्तमरौद्रकः।गा-

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

रंभः स च गर्वात् गर्वश्च प्राजापत्यादधिकारादिति वक्ष्यन् तावद् भयोर्विद्विषतोः मतोर्महान्कालोतीत इत्याह सदेति एवं मुक्तरीत्या सदाविद्विषतोर्मिथोद्वेषं कुर्वतोर्जामातुर्भवस्य दक्षस्य च ध्रियमाणयोः स्वतिष्ठमानयोःसतोः सुमहान् भूयान्कालः अति चक्रमे व्यतीतः ॥ १ ॥

गर्वनिमित्तमाह यदेति परमेष्ठिना चतुर्मुखेन ब्रह्मणा यदा सर्वेषां प्रजापतीनामाधिपत्ये दक्षोभिषिक्तस्तदा तस्यस्मयो गर्वः अभवत् उपपद्यते स्म ॥ २ ॥

स्मयाच्च रौद्रकं यागमारेभ इत्याह इष्ट्वेति सदक्षःब्रह्मिष्ठान् ब्रह्मात्मकान्सर्वेषां ब्रह्मात्मकत्वेपि रुद्रादेर्ब्रह्मणः आवेशावतारत्वादतिशयेन ब्रह्मत्वमिष्ठन्प्रत्ययनविवक्षितं रुद्रानुचरतदाराधकाभिप्रायेण बहुवचनं अभिभूय पराभाव्य तेभ्यो यज्ञभागं न दास्यामीत्येवं संकल्प्येत्यर्थः वाजपेयेनेष्ट्वा वाजपेयाख्यं यागं कृत्वा बृहस्पतिसवं नाम बृहस्पतिसवाख्यं क्रतूत्तमम् आरेभे आरब्धवान् वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति श्रुतेः ॥ ३ ॥

तस्मिन् बृहस्पतिसवे समारब्धे सर्वे महर्षयः तथा देवर्षयः पितरो देवाश्च तथा तेषां पत्न्यश्च कृतस्वस्त्ययनाः कृतमंगलाः स्वलंकारभूषिताः सभर्तृकाश्चासन् तत्रागत्योपविविशुरित्यर्थः सभर्तृका इत्यनेन भर्तृसान्निध्यादानंदातिशयः सूच्यते ॥ ४ ॥

तत्तथा नभसि खेचराणां प्रजल्पतां पितृयज्ञमहोत्सवं श्रुत्वा दाक्षायणी सती तत्र सर्वाभ्योदिग्भ्यो व्रजंतीरुपदेवानांगंधर्वाणां वरस्त्रियः वरस्त्रीःवामदृशारितीयङ् स्वनिलयाभ्यासे स्वगृहसमीपे दृष्ट्वा औत्सुक्यात् पतिमभ्यभाषतेति त्रयाणामन्वयःकथंभूताःस्त्रियः दृष्ट्वा विमानानि यानानि गमनसाधनानि यासांताः, सप्रेष्ठाः प्रियैः सहिताः, निष्कानि पदकानि कंठे यासां, शोभनानि वासांसि यासां लोलानि चंचलान्यक्षीणि यासां, मृष्टानि उज्वलानि कुंडलानि यासां, ताः ॥ ५—७ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

अत्र शंकरदक्षयोर्विवादकथनव्याजेन शंकरस्य वासुदेवचरणारविंदस्मरणकथनेनहरेरामतमाहात्म्यमेवप्रकाशयतेस्मिन्नध्यायेतत्रादावस्यावैरस्य दीर्घकालीनत्वं दक्षस्य गर्वाधिक्यं च वक्ति सदा विद्विषतोरिति ॥ १ ॥

यदा दक्षः परमेष्ठिना ब्रह्मणा सर्वेषां प्रजापतीनामाधिपत्येऽभिषिक्तस्तदा तस्य स्मयो महाविशेषोऽभूदित्यन्वयः ॥ २ ॥

अरुद्रभागयज्ञकरणादस्यस्मयो लक्ष्यत इत्याशयेनाह इष्ट्वेति स दक्षो नाम्ना वाजपेयेन यज्ञेन हरिमिष्ट्वा ब्रह्मिष्ठः कर्मप्रतिपादकवेदे निष्णातोभूदित्यन्वयः एतच्च कुतोज्ञातमत्राह भूय इति यज्ञांतरकरणारंभसद्भावमित्यर्थ ॥ ३ ॥

तस्मिन् यज्ञे त्रिलोक्याः संमेलनेन दक्षस्य स्मयातिशयो लक्ष्यत इत्याशयेनाह तस्मिन्निति ॥ ४ ॥

ननु किमनेन प्रकृत इति तत्राह तदुपश्रुत्येति दाक्षायणी सती देवी । मिथः प्रजल्पतां खेचराणां यत् पितृयज्ञविषयवचनंतदुपश्रुत्यांतःपुरान्निर्गत्य स्वनिलयसमीपे उपदेववरस्त्रियो दृष्ट्वांतःपुरं प्रविश्य पतिमभ्यभाषतेत्यन्वयः ॥ ५ ॥ ६ ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

सदेति । शिवस्य तु द्वेषस्तदज्ञान एव नतु तस्मिन् बाले पितुरिव ॥ १—४ ॥

तदुपश्रुत्येति त्रिकम् ॥ ५—८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

तृतीये स्वपितुर्यज्ञं दिदृक्षुर्यास्यती सती ।
निवारिता नीतिवाक्यैरदत्ताज्ञा हरेण सा ॥

ध्रियमाणयोः अवतिष्ठमानयोः क्षमापणाभावं प्राप्तवतोरित्यर्थः । धृङ् अवस्थान इत्यस्मात् ॥ १ ॥

यदाभिषिक्त इति शिवद्वेषिणो दक्षस्य सम्पत्तिरियंराजस्यापराधफलमेव पुनरप्यपराधवृद्ध्यर्थमेव अतएवाह स्मयो गर्वः ॥ २ ॥

गर्वादेव ब्रह्मिष्ठानभिभूय बृहस्पतिसवमिति । वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति श्रुतेः ॥ ३ ॥

कृतस्वस्त्ययनाः कृतार्हणाः सभर्तृका इति तेषां पत्न्यर्हणैः पुनरप्यर्हणमुक्तम् ॥ ४ ॥

तत्तदा खेचराणां प्रजल्पतां मुखात् पितुर्यज्ञमहोत्सवमुपश्रुत्य व्रजन्तीरुपदेववरस्त्रियो दृष्ट्वा पतिमभ्यभाषत ॥ ५—७ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

पितृयज्ञमहोत्सवं श्रुत्वा तत्र गंतुमुद्युक्ता सती हरेण हेतुभिर्वारितेत्युच्यते सदा विद्विषतोरिति तृतीयेनाध्यायेन॥ध्रियमाणयोः तिष्ठमानयोः सतोःधृङ् अवस्थाने धातुः सुमहान् बहुतरः कालः अतिचक्रमे गतवान् ॥ १ ॥

यदाभिषिक्तस्तदा स्मयो गर्वोऽभवत् ॥ २ ॥

सगर्वाविष्टोदक्षः ब्रह्मिष्ठान् परब्रह्मनिष्ठान् शिवादीन् अभिभूय अनादृत्येत्यर्थः वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेदिति श्रुतेः वाजपेयेनेष्ट्वा वाजपेयं यागं कृत्वा बृहस्पतिसवं नाम क्रतूत्तमं समारेभे आरब्धवान् ॥ ३ ॥

तस्मिन् क्रतूत्तमे ब्रह्मर्ष्यादयः कृतं स्वस्त्ययनमर्हणं येषांते दक्षिणादिभिः संपूजिता आसन्नित्यर्थः सभर्तृका इति प्रथममर्हितानामपि पत्न्यर्हणे पुनरर्हणं पुनरर्हणमुक्तम् ॥ ४ ॥

तत्तदा सती खेचराणां प्रजल्पतां वदताम् ॥ पितृयज्ञमहोत्सवं श्रुत्वा तत्र सर्वाभ्यो दिग्भ्यो व्रजंती रूपदेववरस्त्रियश्च दृष्ट्वौत्सुक्यात्पति मभ्यभाषतेति त्रयाणामन्वयः ॥ ५ ॥

विमानैर्यानं यासां, प्रष्ठैः सहिताः, निष्कानि पदकानि कंठेषु यासां, शोभनानि वासांसियासां ताः ॥ ६ ॥

स्वनिलयस्याभ्यासे समीपे ॥ लोलानि चपलान्यक्षीणि यासां ॥ मृष्टान्युज्वलानि कुंडलानि यासांताः ॥ ७ ॥

---

भाषाटीका ॥

मैत्रेयजी बोले कि, सदा ऐसेंई करत जामाता श्वशुरो का, महान काल व्यतीत होतो भयो ॥ १ ॥

जब परमेष्ठी ब्रह्मा ने, सर्व प्रजा पति के आधिपत्यमे, अभिषेक कीनो तब गर्व भयो ॥ २ ॥

सत्युवाच ।

प्रजापतेस्तेश्वसुरस्य सांप्रतं निर्यापितोयज्ञमहोत्सवः किल ।
वयंच तत्राभिसराम वाम ते यद्यर्थितामी विबुधा व्रजंतिहि ॥ ८ ॥
तस्मिन् भगिन्यो मम भर्तृभिः स्वकैर्ध्रुवं गमिष्यंति सुहृद्दिदृक्षवः ।
अहंच तस्मिन् भवताभिकामये सहोपनीतं परिबर्हमर्हितुम् ॥ ९ ॥
तत्र स्वसॄर्मे ननु भर्तृसंमितामातृष्वसॄः क्लिन्नधियं च मातरम् ।
द्रक्ष्ये चिरोत्कंठमना महर्षिभिरुन्नीयमानं च मृडाध्वरध्वजम् ॥ १० ॥
त्वय्येतदाश्चर्यमजात्ममायाया विनिर्मितं भाति गुणत्रयात्मकम् ।
तथाप्यहं योषिदतत्त्वविच्च ते दीना दिदृक्षे भवमे भवक्षितिम् ॥ ११ ॥
पश्यप्रयांतीरभवान्ययोषितोऽप्यलंकृताः कांतसखा वरूथशः ।
यासां व्रजद्भिः शितिकंठ ! मंडितं नभोविमानैः कलहंसपांडुभिः ॥ १२ ॥
कथं सुतायाः पितृगेहकौतुकं निशम्य देहःसुरवर्य नेंगते ।
अनाहुता अप्यभियंति सौहृदं भर्तुर्गुरोर्देहकृतश्च केतनम् ॥ १३ ॥
तन्मे प्रसीदेदममर्त्यवांछितं कर्तुंभवान्कारुणिकोबतार्हति ।
त्वयात्मनोऽर्धेऽहमदभ्रचक्षुषा निरूपिता माऽनुगृहाण याचितः ॥ १४ ॥

भाषाटीका ॥

सो दक्ष वाजपेय यज्ञकर, ब्रह्मिष्ठों का तिरस्कारकर के, यज्ञों में उत्तम, बृहस्पति सव नामक यज्ञ को आरंभ करतो भयो ॥ ३ ॥

उस मे सर्व ब्रह्मर्षि, पितृ देवता, और अलंकार भूषित उनों की स्त्रियें भी प्राप्त होती भई ॥ ४ ॥

सती दाक्षायणी देवी आकाश में वार्ता करने हारे देवताओं से, पिता के यज्ञ महोत्सव को सुन कर ॥ ५ ॥

सर्व दिशासूं देव वर की स्त्रियां विमाना रूढ, प्रिय से सहित, कंठ भूषण सुंदर वस्त्र धारण किये, जारहीं हैं ॥ ६ ॥

अपने स्थान समीप, उज्वल कुंडल, चंचल नेत्र वारीं कों देख कर, औ, सुकष से, अपने पति, भूतपति सो, बोलती भई ॥ ७ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

निर्यापितःप्रवर्तितःहेवाम ! शिव ! तेयद्यर्थिताइच्छातर्हिवयंचत त्राभिसरामगच्छामः नचाद्यापियागोनिवृत्तःयतोऽमीविबुधाव्रजंति ॥ ८ ॥

औत्सुक्यंप्रकटयंत्याह तस्मिन्नितिपड्भिः पितृभ्यामुपनीतंदत्तं परिबर्हमलंकारादिद्रव्यंभवतासहार्हितुंस्वीकर्तुमभिकामये अर्हित-मितिपाठेतत्कृतंपरिबर्हमिच्छामीति ॥ ९ ॥

स्वसॄर्भगिनीः भर्तृभिःसंमिताः सदृशीःक्लिन्नधियंस्नेहार्द्रचित्ताम चिरमुत्कंठमुत्सुकंमनोयस्याः साअहंद्रक्ष्यामि हेमृड ! उन्नीयमानंप्र वर्त्यमानमध्वरेषुध्वजमिवदृश्यंश्रेष्ठमध्वरम् यद्वाउच्छ्रिप्यमाणंयज्ञ-केतुंयूपंवा ॥ १० ॥

अहोकिंतत्राश्चर्यंयेनतवैतदौत्सुक्यमितिचेदतआह त्वयीति हे अज ! एतद्विश्वमाश्चर्यरूपंत्वय्येवत्वन्माययाराचितंविभात्यतोयद्यपित वनाश्चर्यबुद्धिस्तथाऽप्यहंयोषिदुत्सुकस्वभावातवतत्त्वंनजानाम्यतो-दीनाकृपणासतीहेभव ! मेभवक्षितिंजन्मभूमिंदिदृक्षेद्रष्टुमिच्छामि ११

दिदृक्षामेवकैमुत्यन्यायेनव्यनक्ति पश्येतिद्वाभ्याम् हेअभवेति सुहृद्वियोगदुःखंत्वयानास्वादितमितिभावः अन्यायोषितःसंबंधर-हिताअपिप्रयांतीःपश्य कांतसखा भर्तृसहिताःवरूथशः संघशः क-थंभूताःयासांविमानैर्नभोमंडितंताःहेशितिकंठ!नीलकंठोतिपरानुग्रहा यत्वयाविषमपिभक्षितमितिसूचयति ॥ १२ ॥

तदा हेसुरश्रेष्ठ!पितृगेहोत्सवंनिशम्यसुतायादेहःकथंनेंगतेदृष्टुंन प्रचलति तथाऽप्यनाहुताः संतःकथंगच्छामस्तत्राह सौहृदंसुहृत्त्वं-धिकेतनंगृहंतथाभर्त्रादीनांचगृहमनाहुताअप्यभियांति संतः सुखत्व-मार्थम् ॥ १३ ॥

हेअमर्त्य ! तत्तस्मात्प्रसीदइदंमेवांछितंकर्तुंभवानर्हतिकारुणिक त्वमेवाह अदभ्रचक्षुषाऽनल्पज्ञानेनापित्वयाऽऽत्मनोदेहस्यार्धेऽहंनिरू पिताधृता यतोऽर्धनारीश्वरइतिख्यातोऽस्यतोमामनुगृहाण याचि-तःसन् ॥ १४ ॥

ऋषिरुवाच ।

एवंगिरित्रः प्रियया ऽभिभाषितः प्रत्यभ्यधत्त प्रहसन्सुहृत्प्रियः
संस्मारितो मर्मभिदः कुवागिषून्यानाह कोविश्वसृजां समक्षतः ॥ १५ ॥

श्रीभगवानुवाच ॥

त्वयोदितं शोभनमेव शोभने ! अनाहुताअप्यभियांति बंधुषु ।
ते यद्यनुत्पादितदोषदृष्टयोबलीयसाऽनात्म्यमदेन मन्युना ॥ १६ ॥
विद्यातपोवित्तवपुर्वयःकुलैः सतांगुणैः षड्भिरसत्तमेतरैः
स्मृतौहतायां भृतमानदुर्दृशस्तब्धा न पश्यंति हि धाम भूयसाम् ॥ १७ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

अभिभाषितोयाचितःकांदक्षोयानाह मर्मभिदंतियेतान्कुवागि-पून्दुरुक्तियाणान्संस्मारितःसन् ॥ १५ ॥

अनाहुताअपीतित्वयायदुदितमुक्तंतच्छोभनमेवकिंत्वनात्म्यंदेहाद्यावहंकारस्तत्कृतेनमदेनमन्युनाचतेबंधवोयद्यनुत्पादितदोषदृष्टयो-भंवतितर्हि नउत्पादितेआरोपितेदोषदृष्टियेषांते ॥ १६ ॥

ननुविद्यादिगुणयुक्तोदक्षस्त्वादृशेषुमहत्सुकथंदोषदृष्टिर्भवेत्तत्राह विद्यादिभिरेवस्मृतौहतायांविवेकज्ञाननष्टेसतिभूयसांमहत्तमानां-धामतेजोनपश्यंतिहि ननुगुणैःकथंविवेकनाशस्तत्राह सतांगुणैर्वि-वेकहेतुभिरव्यसत्तमानांमतरैर्दोषभूतैरतएवतैर्भृतोधृतःपुष्टोवाऽहं--विद्वांस्तापसइत्यादिर्मानोगर्वस्तेनदुष्टादृष्टिर्येषांते ॥ १७ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिका टिप्पणी ॥

प्रवर्त्तितः ऋषिभिरिति शेषः तत्र यज्ञमहोत्सवे ॥ ८ ॥

औत्सुक्यं कालयापनायामशक्तत्वं तस्मिन् यज्ञमहोत्सवे ॥९॥

पूर्वार्थे विशेष्याध्वराऽध्याहाराद्यद्वेति ॥ १० ॥

तत्र यज्ञे येनाश्चर्येण अतः आश्चर्यविश्वाधिष्ठानत्वात् ॥ ११--१२

तदाह कैमुत्यमाह ॥ १३ १४ ॥

मर्मभिद इति तद्वक्ताभिप्रायेण शिवस्य निरहंकारत्वात् यान् कुवागिषून् यद्यपि इषूनां कथनमनुपपन्नं किंतु वाचामेव तथापि परिणामालङ्कारत्वाद्दूरी करोतु दुरितं गौरीचरणपंकजमिति वद्वाचामेव प्राधान्यमिति ज्ञेयम् ॥ १५ ॥

यदुक्तं तच्छोभनमेव योग्यमेवेति यत्तदोर्गम्यमानत्वमेव सद्भावे हि दोषस्य तद्दृष्टित्वं न दोषः किन्तु तदभावेपि आरोपितेऽपरभावेन कल्पिते ॥ १६ ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

हे वाम! हे शंभो! तेतव श्वशुरस्य प्रजापतेर्दक्षस्य कर्तरिषष्ठीयं स्वरूपो महोत्सवः संप्रति निर्यापितः प्रवर्तितः तत्र च विबुधाः व्रजंतिहीत्यपारोक्ष्यं द्योत्यते यद्यर्थिता अर्थिनो भाव अर्थिता यदीच्छा वर्त्तत इत्यर्थः तर्हितत्र वयमपि अभिसराम गच्छामः ॥ ८ ॥

स्वाभिप्रायं प्रकटयंत्याह पञ्चिः तस्मिन् यज्ञे महोत्सवे मम भगिन्यः स्वस्वभर्तृभिःसह सुहृदिदृक्षवः भगिनी माता पित्रादीन् द्रष्टुमिच्छवः आगमिष्यंतिध्रुवं निश्चयः आयांतु किंतव तत्राह अहमपि तस्मिन्नुत्सवे भवतासाकं उपनीतंप्रस्मार्तपत्रादिसमर्पितं परिबर्हं वस्त्राभरणाद्युपायनं ग्रहीतुं कामये इच्छामि ॥ ९ ॥

किं च हे मृड ! चिरोत्कंठ्यमना बहुकालमौत्सुक्याविष्टमना अहंममभर्तृभिः समानीताः स्वस्याभगिनीः भर्तृसम्मता इत्यनेन स्वस्या अपि भर्त्रा अनुग्राह्यत्वं सूच्यते तथा मातृस्वसृः मातृभगिनीःक्लिन्नधियं मद्दर्शनालाभेन क्लिन्नधियं खिन्नचित्तांमयि प्रेमार्द्रचित्तां वा मातरं महर्षिभिरुन्नीयमानं मूर्ध्वं क्रियमाणं अध्वरध्वजं यूपं चद्रक्ष्ये ॥ १० ॥

अहो किं तत्राध्वरं आश्चर्यं येन त्वं दिदृक्षसीत्यत्राह त्वयीति अजात्ममायया अजस्य कर्मायत्तजन्मादिरहितस्यात्मनःपरमात्मनः विष्णोर्मायया संकल्पेन विनिर्मितं गुणत्रयात्मकं सत्त्वादि गुण त्रयात्मक प्रकृति परिणामात्मकंमतद्विविध विचित्रसन्निवेशं जगत्त्वयि आश्चर्यं भाति विविध विचित्रसन्निवेशजगद्दर्शनमेव ज्ञानिनि त्वय्याश्चर्यं बुद्धिजनकं न ततआश्चर्यकरं किंचित्तत्रास्तीत्यर्थः ज्ञानिनोऽज्ञ विचित्रं जगद्दृष्ट्वा आश्चर्यं प्राप्नुवंतीति भावः अत्राजात्मनस्तव माययात्वय्येव विनिर्मितं जगदाश्चर्यं भातीत्यन्वयोऽसंगतः सद्ब्रह्मात्माकाशशिवेंद्रादिशब्दानां छागपशुन्यायेन एकोहवै नारायण आसीन्न ब्रह्मानेशानइति नारायणरूपविशेषेपर्यवसानात्तस्यैव कारणत्वेन जगतस्तन्माययानिर्मितत्वात् युक्तं चैतत् अनपहतपाप्मा वा अहमस्मीति नारायणाद्रुद्रो जायत इतिच कार्यत्वकर्मवश्यत्वादियुक्तस्य रुद्रस्य कारणत्वासंभवात् अन्यथा पूर्वापरविरोधात् तथापि तवाश्चर्यकरस्यान्यस्याभावेप्यहं योषिच्चांचल्यस्वभावा अतत्त्ववित् परावरतत्वमजानती अनेन विशेषण द्वयेन स्थिरचित्तानां तत्त्वविदां च भगवद्विभूतित्वेन जगदवलोकनमवाश्चर्यजनकमिति सूचितमितियथोक्तएवार्थःसाधीयान् अतो दीना कृपणासती हे भव ! मे भवांक्षति जन्मभूमिं दिदृक्षुं द्रष्टुमिच्छामि ॥ ११ ॥

दिदृक्षामेव कैमुत्यन्यायेन व्यनक्ति पश्यंति द्वाभ्यां हे अभव !, अन्या अपि मत्पितृसंबंधरहिता अपि योषितः वरूथशः संघशः प्रयांतिताःपश्य कथंभूताःस्त्रियः कांतःप्रियःस एव सखा यासां ताः हे शितिकंठ ! यासां योषितां व्रजद्भिःकलहंसवत्पांडुरैः शुभ्रैर्विमानैर्नभस्थलं मंडितं भूषितम् ॥ १२ ॥

हे सुरवर्य ! सुरश्रेष्ठ ! पितृगेहकौतुकमुत्सवं निशम्य सुताया देहः कथं नेंगतं द्रष्टुं न प्रचलति अथाप्यनाहुताः संतः कथं वा गमिष्यामः

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

तत्राह सौहृदं सुहृदो निकेतनं तथा भर्त्रादीनां गृहान्प्रत्यनाहुता अपि अभियंति गच्छंति संतः इत्यन्वयार्थः ॥ १३ ॥

उपसंहरति तांदति हे अमर्त्य ! देव ! तत्तस्मात् प्रसीद इदं मे वांछितं कारुणिको भवान् कर्तुमर्हति कारुणिकत्वमेवाह अदभ्रचक्षुषा अनल्पदयादृष्ट्या त्वया आत्मनो देहस्यार्द्धे स्वमेशे अहं निरूपिता भूता यतोऽर्द्धनारीश्वर इति प्रख्यातोसि अतो मया याचितस्त्वं मामनु गृहाण ॥ १४

एवमाभाषितो भवः प्रत्यभाषतेत्याह मैत्रेयः एवमिति गिरित्रं गिरिं कैलासं त्रायते इति गिरित्रो भवः एवमुक्तवत्या प्रियया सत्या अभिभाषितः तस्याः प्रियः सुहृदपि मर्मच्छिदः दक्षस्य मर्मांसि कुवा गिपून् कुत्सिता निशपरा वाच एवेषवस्तान् प्रति संस्मारितः स्मरणं प्रापितः निवृत्तप्रेरणास्मरतेर्वा णिजंतात्कत्तरि क्तः संस्मरन्नित्यर्थः चहिः प्रहसन्निव प्रत्यभ्यधत्तप्रत्यभाषत कं ते कुवागिषवःयान् स्मरन् प्रत्यभ्यधत्तेत्याह कः दक्षः विश्वसृजां प्रजापतीनां समक्षतोऽपराद्धे यान् आह अयं हि लोकपालानां यशोघ्नो निरपत्रप इत्यादिना उक्तवान् तान्संस्मरन्नित्यर्थः ॥ १५ ॥

प्रियेयोक्तमनूद्य प्रत्युत्तरयति भवः त्वयोदितमिति यावदध्यायसमाप्ति हेशोभने ! यत्त्वयोदितमुक्तं अनाहुता अपि बंधुषु अभियंतीति तच्छ्रोतमनमव सत्यमेव किंतु बलीयसा अनात्म्यं देहाभिमानस्तत्कृता यौ मद स्तन मन्युना क्रोधेन च ते बंधवो यदि अनुत्पादितदोषदृष्टय नउत्पादिता गुणेषु सत्स्वपि दोषेष्वेव दृष्टि दर्शनं यैस्तं भवंति तर्ह्यनाहुता अप्यभियंतीति शोभनमित्यर्थः ॥ १६ ॥

ननु विद्यादिसंपन्नो दक्षस्तादृशो त्वयार्थं कथमुत्पादितदोषदृष्टिः स्यात्तत्राह विद्येति सतां साधूनां गुणैर्विद्या तप आदिभिः षड्भिः असत्स्वेषु इतरैर्दोषरूपतां प्राप्तैर्विद्यादय एवाश्रयभेदेन गुणा दोषाश्च स्युरिति भावः स्मृतौहतायां विवेकज्ञानेनएँसति भृतमानदुर्दृशः भृतः पुष्टः मानः अहं विद्वानहं तापस इत्याद्यगर्वस्तेन दुष्टादृग्दृष्टि यैषां ते भूयसां महत्तमानां तेजः तथा यथावस्थितं न पश्यंति हीति असत्स्वेतत्प्रसिद्धि द्योतयति ॥ १७ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

किमभाषतेति तत्राह प्रजापतेरिति निर्यापितः प्रवर्तितः किल-किं वदंती हे वामश्रेष्ठ ! यदितवार्थितास्ति तत्र तर्हि गमनेहेतुमाह अमी इति हि यस्मात्तस्मात् ॥ ८ ॥

गमने निमित्तांतरमप्याह तस्मिन्निति मयि गतायां तस्मात् जनात्पूजाविशेषोऽपि भविष्यतीत्याह अहं चेति परिवर्हं च परवच्चो ह्रीयमानं ॥ ९ ॥

न केवलमुक्तमेव प्रयोजनमर्थांतरमप्यस्तीत्याह तत्रेति अध्वध्वजं यज्ञध्वजं द्रक्ष्य इत्यन्वयः ध्वजो शेफसिकेतवी च श्रेष्ठेत्यो अतदुमे इत्यभिधानं स्वस्ति मेढ्रांकयोध्वजे इति अंकदिवह्नेऽतिको दसोरिति उरस्तु वक्षसि अंष्ठ इति यादवः ॥ १० ॥

एवं बहुविधालापैरप्यविकृतेंद्रियं पति दक्षतन्माहात्म्यविज्ञापनपूर्वकं स्वाभीष्टमुद्गलयति त्वयीति हेअज ! रुद्र ! प्रजाविष्णुहरच्छागा इति यादवः आत्मनो हरेर्मायया च्छया विनिर्मितंगुणत्रयात्मकं रजआदिगुणत्रयोपादानकमाश्चर्यं नानावैचित्र्यांप्रेतमेतद्विश्वं त्वयि भाति नित्यापरोक्षितांतस्यजगन्नारायणस्वरूपस्वात्तत्प्रसादन करतलामलकवद्वे तद्विदं तव ज्ञानकोष्ठे वर्तते अथापि तव द्रष्टव्यां

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

शामावेपि हे भव ! मंगल ! हर ! अहं मे भवच्छितिं जन्मभूमिं दिदृक्षे इत्यन्वयः अत्र हेतुगर्भविशेषणयोर्णोपादीति । युपशब्दा दिसेवायां शब्दादिविषयसेवाशीलत्वादित्यर्थः अतएव ते तव ॥ अतत्त्ववित् यथास्थितस्वरूपाज्ञानत्वात् दीना क्षीणा ज्ञानदुर्बला ॥ ११ ॥

इतोपि गतव्यमिति भावेनाह पश्येति अन्यस्त्रियोपि प्रयांति किं मयेत्यतो गतव्यमित्यर्थः शितिकंठ ! कलहंसवत्पांडुभिर्धवलैः ॥१२॥

युक्तापि गतव्यत्वंवक्ति कथमिति नेंगते न चलति आह्वानाभावे कथं गमनं स्यादित्याशंक्याऽनाह्वानेप्येषां गृहगमनमुचितं भवतीत्याह अनाहुता इति देहकृतः पितुः ॥ १३ ॥

उपसंहरति तन्मे इति यत एवं गंतव्यं बहवो हेतवः संति तत्तस्मात् भवान् पूज्यस्त्वं मम प्रसीद हेअमर्त्य ! देव । इदंवांछितं कर्तुं मर्हसीत्यस्मिन्नर्थं बत कृपा कर्तव्या कारुणिकत्वादित्यर्थःत्वमेव कारुणिको नान्य इत्याशयेनाह त्वयेति अदभ्रचक्षुषा सर्वज्ञेन त्वया सहायं धर्मः पूर्वः गरीयान् निरूपित इति यदतः कारुणिकत्वात्प्रार्थितस्त्वमनुगृहाण वांछितमिति शेष इत्यर्थः ॥ १४ ॥

तथापि प्रियया प्रार्थितः शंकरः किमुत्तरमभ्यधादिति विदुरस्य मानसीं शंकां परिहर्तुमाह एवमिति गिरित्रं गिरिशः । कुत्सिता वाच एव इषवः शराः कुवागिषवस्तान् । को दक्षः ॥ १५ ॥

किंवा बहुनाप्रलापेनाऽनाहूता अप्यभियांतीति यदुक्तं तस्योत्तरं अदिवति भावेनाह त्वयोदितमिति किं तदुदितमित्यत उक्तं अनाहुता इति तर्ह्यनाभयाने किं कारणमत्राह यदीति ते बांधवाः । अनात्ममदेन देहाभिमाननिमित्तदर्पेण जातेन मन्युनाक्रोधेन ॥ १६ ।

असतां विद्यादिकमपि मदावपयजनकत्वेनाप्रयोजकमहेःपयः पानमिवेति भावेनाह विद्येति तप इति असत्तमा विद्यादिभिः षड्भिः सतां योग्यैर्गुणैरुत्पन्नैर्मदैः । स्मृतौ हतायां शास्त्रश्रवणोत्पन्नज्ञाने नष्टे । भूयसां महात्मनां । धाम प्रभावं । न पश्यंति हि यस्मात्तस्मा दित्यन्वयःअदर्शनेकारणमाहअभिमानदुर्दृशइति विद्यामदो धन मद स्तृतीयोभिजनो मदः इति ॥ मदलक्षणकामादिदोष दुष्टेंद्रियत्वा दित्यर्थः अतएव तत्रा अंतरितिशेषः ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

तस्मिन्निति सार्द्धकम् ॥ ९—१३ ॥

अर्हसीति चितसुखः ॥ १४ ॥

अभिभाषित इत्यत्र नाथित इति क्वचित् मर्म्मभिदस्तत्कृकानाम् ॥ १५ ॥ १६ ॥

भृतमानेत्यत्र ह्यभिमानेति क्वचित् स्तब्धा इति चित्सुखस्यापि सम्मतः पाठः ॥ १७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

निर्यापितः प्रवर्त्तितः ते प्रसिद्धा यत्रमी विबुधा व्रजन्ति हि अतएव हेतोः वयमपि तत्र अभिसराम हे वाम ! अर्थित्वम् इयं मम प्रार्थनेत्यर्थः ॥ ८ ॥

तत्र तव मम वा किं प्रयोजनमत आह तस्मिन् भगिन्य इति । तासां सभर्तृकाणामर्हणमिव ममापि सभर्तृकाया अर्हणं भवत्विति कामये इत्याह । अहञ्चेत्यादि । पितृभ्यामुपनीतं दत्तं परिवर्हं वस्त्रालंकारादिद्रव्यं भवता सह अर्हितुं अर्हयितुं स्वीकर्तुमिति यावत् कामये इच्छामि ॥ ९ ॥

श्रीमद्विश्वनाथचक्रवर्तीकृत सारार्थदर्शिनी ॥

किं परिवर्हागिनी यियासतीति तत्राह तत्रेति । क्लिन्नमियं स्ने-हार्द्रचित्ता उन्नीयमानं प्रवर्त्यमानं अध्वरेषु मध्ये ध्वजमिव श्रेष्ठं । यद्वा । उत्क्षिप्यमाणं यज्ञकेतुम् ॥ १० ॥

अस्याश्चर्यमिदं यत्त्वापि प्राकृतलोकस्येव बन्धुष्वेतावान्मोह-स्तत्राह त्वयीति । हे अज ! एतन्मोहादिकं तवात्मारामत्वात्त्वय्ये-वाश्चर्यं भाति अस्माकन्तु स्वाभाविक एवायं धर्म इति भावः । यतो गुणत्रयात्मकर्मादं विश्वमात्ममायाविनिर्मितमतो मुह्यत्येवेतिभावः तथाप्येतद्विश्वमध्येऽपि अहं योषित् । तत्रापि अतत्त्वविच्च ते तव तत्त्वमजानती अतएव दीना भवच्छिर्ति जन्मभूमिं दिदृक्षे हे भव ! ॥११॥

न केवलमहमेकैवंताहशीत्याह पश्येति हे अभवेति सुहृद्वियोग दुःखं त्वया नानुभूतमिति भावः अन्या योषितः सम्बन्धरहिता अपि कान्तसखा भर्तृसहिताः वरूथशः संघशः यासां विमानैर्व्रज-न्त्रिनभो मण्डितं हे शितकण्ठेति परानुग्रहाय त्वया विषमपि भक्षितमत आज्ञां देहीति भावः ॥ १२ ॥

अहन्तु तस्य कन्या भूत्वा कथं धैर्य्यं धास्याभीत्याह कथमिति नेङ्गते न द्रष्टुं प्रचलति ननुतदप्यनाहूताः कथं गच्छामस्तत्राह अनाहूता अपि सौहृदं सुहृदः केतनं गृहं गुरोः श्वसुरस्य देहकृतः पितुश्च ॥ १३ ॥

यदि ते नास्ति जिगमिषा तदपि मदनुरोधेन कृपया गच्छेत्याह तन्म इति हे अमरर्थ ! हे देव ! त्वया अकर्त्तव्यमपि कृतमित्याह अदभ्र चक्षुषा अनल्पज्ञानेनात्मारामेणा आत्मनो देहस्यार्द्धे अहं निरूपिता धृता यतोऽर्द्धनारीश्वर इति ख्यातोऽस्यतोमामाम ॥ १४ ॥

को दक्षो यानाह तान् मर्मभिदः कटुवाक्शरान् प्रियया स्मा-रितः । ननु दक्षप्रयुक्ताः कटुवागिषवः श्रीशिवस्यात्मारामस्य मर्म्म कथं भिन्दन्ति । उच्यते शिवस्य परमेश्वरत्वादात्मारामत्वमस्त्येव तमोगुणयुक्तत्वाच्च कदाचित् पारमैश्वर्यानुसन्धाने सति शोक-मोहरागद्वेषादयोऽपि भवन्ति । तथैव कृष्णस्य सदैवात्मारामत्वे-ऽपि श्रीयशोदादि श्रीबलदेवादि श्रीगोपिकादि विशिष्टत्वे प्रेमव-त्त्वादेव स्वीयपारमैश्वर्यानुसन्धानात् शोकमोहरागद्वेषादयःकिन्तु शिवस्य तमोगुणोद्भतास्ते दुःखाभासानुभवमयाः कृष्णस्य प्रेमो-द्भूतास्ते आनन्दपरमकाष्ठानुभवमयाः । प्रेम्नश्चिच्छक्तिसारवृत्तित्वा दात्मारामत्वस्याप्यसंकोचकाः । असुरादिहिंसादयस्तु सत्वगुण-कार्या एव गुणानां परस्परोपमर्द्दित्वाद् यथा प्रकाशोऽन्धकारं हन्ति तथैव सत्त्वगुणस्तमोरजसी हन्ति । तथैव कृष्णोऽसुरादीश्चि हंतीति शुद्धसत्वरूपे तस्मिन् प्राकृतसत्वकार्यास्ते वर्त्तमाना अपि नापकारकाइतिप्रथमएवव्याख्यातं सप्तमारम्भेच वक्ष्यते ॥ १५ ॥

अनात्म्यं देहादावहंकारस्तत्कृतेन मदेन मन्युना च ते बंधवो यच्चनुत्पादितदोषदृष्यो भवंति ॥ १६ ॥

ननु विदुषां गतपितुर्मूढानामिव दोषदृष्टिः कथं सम्भवेत् तत्रा सतां विद्यादय एवानर्थहेतव इत्याह विद्यादिभिरेव षड्भिर्गुणैः स्मृतौ विवेचनायां हतायां सत्यां भृतास्तैरेव पुष्टाः अहं विद्वांस्ता-पस इत्यादिमानो गर्वस्तेन दुर्दशोऽन्धा भूयसां महत्तमानां धाम तेजो न पश्यन्ति । ननुतैर्गुणैः कथं स्मृतिभ्रंशस्तत्राह सतां गुणै-रसत्तमानांतु इतरैर्दोषैर्दुग्धममृतमपि सर्पमुखे प्रविष्टं विषमेव भवे-दतः स्थानएव गुणा गुणायंत इति भावः ॥ १७ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

हे वाम ! शिव ! ते श्वसुरस्य यज्ञमहोत्सवः सांप्रतमिदानीं निर्या-पितः प्रवर्त्तितः यतोमी विबुधाः व्रजंति ॥ यदि तेऽर्थिता इच्छा तर्हि वयंच तत्रा भिसरामगच्छामः ॥ ८ ॥

पित्रादिभिरुपनीतंदत्तं परिवर्हमलंकारादिकं भवता सह अर्हितु गृहीतुं कामये ॥ ९ ॥

हे मृड ! चिरमुत्कंठमुत्सुकं मनोयस्या साहम् तत्र स्थाने भर्तृ भिः संमिताः तुल्याः सहिता इति यावत् ॥ मे स्वसृः भगिनीः क्लिन्नस्नेहार्द्राधीर्यस्या स्तां मातरं च मातृस्वसृश्च महर्षिभिरुन्नी-यमा नं प्रवर्त्यमानमध्वरध्वजं क्रतुश्रेष्ठं तत यूपं वा द्रक्ष्ये ॥ १० ॥

प्रिये किं तत्राश्चर्य्यं यतस्तत्रौत्सुक्यमत आह हे भव ! एतद्गुणत्र यात्मकं विश्वम् । अजात्ममायया अजस्य विष्णोः आत्ममायया स्वा साधारणेन वयुनेन संकल्पेन विनिर्मितं त्वयि योगेश्वरे भाति एवं भूतस्य तव भार्य्यायाममाश्चर्य्यांतरं नापेचितं तथापि अहं योषित् अतत्त्वविच्च अतोदीना अतो मे भवच्छितिं जन्मभूमिं दिदृक्षे द्रष्टु मि-च्छामि ॥ ११ ॥

हे अभव ! भवोपलक्षितजन्मादि षड्डूर्मिवर्जित ! यद्वा अकारो वासु देवः तस्मान्द्भवो जन्म यस्य स तथा हे विष्णुजात " नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते „ इति श्रुतेः" क इति ब्रह्मणो नाम ईशो हं सर्व देहिनां भावां तवांगसंभूतौ तस्मात्केशवनामवान्, इति स्मृ तेश्च ॥ कांतः एव सखा यासांताः वरूथशःसंघशः ॥ १२ ॥

पितृगेहेकौतुकमुत्सवम् । सौहृदं सुहृद्गृहम् अभियंतीत्यत्र हूत्स्तत्र मार्षम् ॥ १३ ॥

हे अमर्त्य ! देव ! अदभ्रचक्षुषा अनल्पया दृष्ट्या आत्मनोदेहस्यार्द्धे त्वयाहंनिरूपिता नियोजिता ततः प्रसीद प्रसन्नो भव प्रसन्नः । सन् भवान् इदं कर्तुमर्हति ॥ यतश्च कारुणिकोऽतो मा मां याचितः सन् ॥ अनुगृहाण ॥ १४ ॥

एवमुक्तप्रकारेणाभिभाषितो याचितः गिरिं त्रायते इतिगिरित्रः को दक्षो विश्वसृजां समक्षम् संमुखे मर्म भिंदंति ये तान् कुवाणि पून् " कर्णीनालीकनाराचानुद्धरंति शरीरतः वाक्शल्यको न निर्हर्तुं शक्यो हृदिशयो हि सः । वाक्शायका वदनान्निष्पतंति यैराहतः शोचति रात्रहानि परस्यनो मर्मसुते पतंति तान्पंडितोनावसृजेत्परे षुइत्युक्तदोषान् दुरुक्तिबाणान् संस्मारितः सन् प्रत्यश्यधस्त प्रत्यु-त्तर मुक्तवान् ॥ १५ ॥

तदेवाह त्वयो दितमित्यादिना यावदध्यायसमाप्ति हे शोभने ! सुहृदादिगृहमनाहुताः अपि अभियंतीति त्वया यदुदितं तच्छो-भनमेव किंतु ते सुहृदादयोबलीयसा इतरेण अनात्म्यमदेन देहाद्यात्माभिमानेन मन्युना च ॥ अनुत्पादितदोषदृश्यो भवंति तर्हि ॥ १६ ॥

ननु भवद्विधेषु महत्सु विद्यादि संपन्नो दक्षः कुतो दोषदृष्टिः स्यादत्राह विद्येति विद्यादिभिः सतां शिष्टानां गुणैः असत्तमानामि-तरैर्दोषरूपैः स्मृतौ कार्या कार्य विवेकरूपायां हतायां भृतेन भृतेन अहं मानेन दुर्दशाः कुदृष्टयः अतएव स्तब्धाः अनम्रा भूयसां महतां धाम तेजो न पश्यंति ॥ १७ ॥

नैतादृशानां स्वजनव्यपेक्षया गृहान्प्रतीयादनवस्थितात्मनाम् ॥
येऽभ्यागतान्वक्रधियाऽभिचक्षते आरोपितभ्रूभिरमर्षणाक्षिभिः ॥ १८ ॥
तथाऽरिभिर्नव्यथतेशिलीमुखैः शेतेऽर्दितांगोहृदयेन दूयता ॥
स्वानां यथावक्रधियां दुरुक्तिभिर्दिवानिशंतप्यति मर्मताडितः ॥ १९ ॥
व्यक्तं त्वमुत्कृष्टगतेः प्रजापतेः प्रियात्मजानामसि सुभ्रु ! संमता ॥
अथापि मानं न पितुः प्रपत्स्यसे मदाश्रयात्कः परितप्यते यतः ॥ २० ॥
पापच्यमानेन हृदातुरेंद्रियः समृद्धिभिः पूरुषबुद्धिसाक्षिणाम् ।
अकल्प एषामधिरोढुमंजसा पदं परं द्वेष्टि यथाऽसुरा हरिम् ॥ २१ ॥

भाषाटीका ॥

सती बोली- हे वाम ( शिव ) आपने, श्वसुर के यहां, सांप्रत यज्ञ महोत्सव प्रवृत्त है, हम भी वहां जायगीं, बुलाये हुवे देवता जारहे है. ॥ ८ ॥

वा यज्ञ मे पति सहित मेरी वहिने, सुहृदेख वे की इच्छा करने वारी निश्चय से जांयगी मे भी वहां आपके सहित पिता जी दत्त । अलं कारादि ग्रहण कर वेताई इच्छा करुंहुं ॥ ९ ॥

वहां निश्चय से वहिने और समर्तृक मातृ वहिनो को और और स्नेह युक्त माता को, देखों गी, वहोत मन उत्कंठित है; हेमृड ! और महा ऋषियों करके करा भयो यज्ञ ध्वज को देखूंगी ॥ १० ॥

यद्यपि ये आश्चर्य मय माया से निर्मित त्रि गुणात्मक जगत, तुह्मारं को प्रकाश है, तथापि हे अज, मै स्त्री दीन तुह्मारे तत्व की न जानने वारी अपनी जन्म भूमि देखो गीं ॥ ११ ॥

हे संसार निवर्त्तक ! हे शितिं कंठ ! और भी पति सखा वारी अलंकृत स्त्रियें जाय हैं उन्हे देखो ब्रह्मवत् श्वेत विमानो पर बैठ के जाती है. जिन के समूह से आकाश शोभित है ॥ १२ ॥

हे सुवर्य ! पिता के घर के कौतुक सुन बेटी को देह कैसे चंचल न होय है, पति के गुरु के पिता के मित्र संबंधि गृह पर विना बुलाये हुवे जाय हैं ॥ १३ ॥

हे मरण धर्म रहित ! सो मेरे ऊपर प्रसन्न हो ओ, मेरी मनो वांछा को पुरी कर वेताई योग्य हो, आपने मोको अपने अर्धांग मे धारण करी है तासों प्रार्थना करूंहुं अनुग्रह करो ॥ १४ ॥

श्री शंकरा चार्य बोले कि, ऐसे शिवजी से प्रियाजी बोलीं तदा सु हृत्प्रिय शिवजी हांस्य करत बोले, औ विश्व रचवे वार के सामने मर्म भेदी कुत्सित वचन रूपी वाण दक्षके कहेता को स्मण करते भये ॥ १५ ॥

श्री महादेव जी बोले कि हे शोभने ! तुह्मारी कहनी ठीक है, विना बुलाये हुवे भी बंधुओ के यहां जानो, जो वे वली अपने मद के क्रोध से दोष दृष्टि उत्पन्न न करेंतो ॥ १६ ॥

विद्या तप धन शरीर अवस्था ये छैः सँतों के गुण असत्तम करके प्रेरित होंय है, तव बुद्धि हत होने पर गर्वी लोग वडों के धाम को नहि देखे है ॥ १७ ॥

———

श्रीधरस्वामि कृत भावार्थदीपिका।

स्वजनव्यपेक्षयाबंधुदृष्ट्या गृहान्नप्रतीयान्नावलोकयेत्अनवस्थितचित्तत्वमेवाह येवक्रधियाकुटिलयाबुद्ध्यापश्यंति आरोपिताउत्तंभिताभ्रूर्येषुतान्यारोपितभ्रूणितैःअमर्षणैः सक्रोधैरक्षिभिः आरोपिताभिर्भ्रूभिरर्दितवा॥ १८ ॥

ननुस्वजनानांगृहंसुहृद्भिर्गंतव्यंतेषांदुश्चेष्टितंचसोढव्यम् नतस्यदुःसहत्वादित्याह तथेति अरिभिःशिलीमुखैर्बाणैरर्दितांगःखंडितगात्रोऽपितथानव्यथते यतःशेते स्वपिति स्वानांदुरुक्तिभिर्मर्मसुताडितोयथादूयताव्यथमानेनहृदा दिवानिशं तप्यति ॥ १९ ॥

मयितत्रगतायांनयंशंकेतिचेत्तत्राह व्यक्तंनिश्चितमुत्कृष्टागतिःस्थितिर्यस्यतस्यात्मजानांकन्यानांमध्येत्वंप्रियातिमेसंमताऽस्यथापिपितुःसकाशान्मानंनलप्स्यसे मदाश्रयान्मत्संबंधात् ॥ २० ॥

ननुभगवंस्त्वयाकिमितिदक्षस्तिरस्कृतोयतोऽसौत्वांद्वेष्टयतआह पापच्यमानेनालंदह्यमानेनहृदामनसादुःखितेंद्रियः काभिः पुरुषोजीवस्तस्यबुद्धिश्चित्तंतत्साक्षिणांनिरहंकाराणामित्यर्थः समृद्धिभिः पुण्यकीर्त्यादिभिः एषांपदंस्थानमैश्वर्यंप्राप्तुमकल्पोऽशक्तःसन्परंद्वेष्टि असुरायथाहरिंकेवलंद्विषंति ॥ २१ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

द्वितियार्थे आरोपिताभिरुज्जृंभिताभिर्भ्रूभिरुपालक्षितैरमर्षणैरक्षिभिः तत्र वक्रधियेति हेतौ तृतीया ॥ १८ ॥

तस्य दुश्चेष्टितस्य स्वपिति कदाचिन्निद्रात्यपीत्यर्थः ॥ १९-२०

अहंकारो हि चित्ते भवति तत्साक्षित्वं तत्रोदासीनत्वमेव तथा च निरहङ्काराणामिति फलितोर्थः ॥ २१ ॥

———

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

तस्मादेतादृशानामनवस्थितचित्तानां गृहान् स्वजनव्यपेक्षया स्वजन इति बुद्ध्या न प्रतीयात् न गच्छेत् अनवस्थितात्मत्वमेवाह येवक्रा कुटिला तया दृष्ट्या वक्रधियेति पाठे कुटिलबुद्ध्येत्यर्थः आरोपिता उत्तंभिता भ्रूर्येषां तैरमर्षणैः साक्रोधैरक्षिभिः गृहान् प्रत्यभ्यगतान् पश्यंति ॥ १८ ॥

पश्यंत्वेवमथापि सोढ्वागंतव्यमेव बंधुभिस्तत्राह तथेति अरिभिः शत्रुभिः शिलीमुखैः बाणैरर्दितांगः भिन्नगात्रोपि तथा न व्यथते यतः शेते स्वपिति यथा स्वानां वक्रधियां दुरुक्तिभिः मर्मसुताडितः दूयता व्यथमानेन हृदयेन दिवानिशं तप्यति दुरुक्तीनां सोढुमशक्यत्वान्नतद्गृहान्प्रति गंतव्यमित्यर्थः ॥ १९ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

मास्तु त्वद्गमनमहमेका मजिष्यामीति चेन्मामनादृत्यगतायास्त वापिपितृकृतः पराभवः प्राणविपत्तये स्यादित्याह व्यक्तमिति यावत्त माप्ति हे सुभ्रु! यद्यपि त्वमुत्कृष्टगतेः उत्कृष्टा गतिः प्राजापत्याधिका रूपा गतिर्यस्य तस्य प्रजापतेर्दक्षस्यात्मजानां दुहितृणां मध्ये प्रिया प्रीतिविषयासीति मे मता ज्ञाता व्यक्तं स्फुटं तथापि मदाश्रयात् मदाश्रयणात् मत्संबंधाद्धेतोस्त्वं पितुः सकाशान्मानं संमानं न लप्स्यसे यतः मत्संबंधात्कोदक्षः परि तप्यते क्लिश्यति ॥ २० ॥

ननु कुतस्त्वया दक्षस्तिरस्कृतः यतोसौ त्वां द्वेष्टि तत्राह पाप च्यमानेनेति पुरुष बुद्धिसाक्षिणां पुरुषो जीवः बुद्धिर्महान् ते साक्षात्पश्यंतीति तथा तेषां ब्रह्मात्मकत्वेन प्रकृतिपुरुषयथात्म्यविदां-ब्रह्मविदामिति यावत् तेषां समृद्धिभिः पुण्यकीर्त्यादिभिः तेषां पुरुषबुद्धिसाक्षिणां पदं स्थानमैश्वर्यमधिकार मधिरोढुं प्राप्तुमसमर्थः अत एव पापच्यमानेन भृशं तप्यमानेन हृदयेन आतुरेंद्रियः दुखितेंद्रियः तान् परं केवलं द्वेष्टि स्वयं मूर्खोऽज्ञो दुर्भगश्च महद्भिः साम्यमलभमानस्तान् केवलं द्वेष्टि यथा असुरा हरिं द्विषंति ॥ २१ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

क्रमतइतितत्राहनैतादृशानामिति आरोपितभ्रूमिरिति इहस्वत्वा भावदर्छादसः उन्नमितभ्रूभंगैरमर्षणाक्षिभिरसहमानलक्षणोपेतनेत्रैः ॥ १८ ॥

दक्षाध्वराऽगमने कारणांतरं चाह तथारिभिरिति प्रधने युद्धे शिलीमुखैः शरैः ॥ १९ ॥

किं बहुनानुलप्यत्वं दक्षस्य प्रियपुत्रीत्वेपि मदाश्रयत्वेन तप्यमानात्पितुः पूजां न प्राप्नोषीत्याह व्यक्तमिति उत्कृष्टगतेः प्राप्तसर्वाधिपत्यस्य ॥ २० ॥

मत्पितुर्ज्ञानाधिकारिविवेकत्वेन सत्वात् कुतो भवति द्वेष इति आशंक्यसाम्राज्यमदलक्षणासुरावेशान्मत्पदाधिपत्यं नप्राप्तमतोद्वेष इति भावेनाह तातप्यमानेनेति पुरुषबुद्धिसाक्षिणां पुरूषेंद्रियप्रेरकाणामस्मत्सदृशानांसमृद्धिभिः एषां पुरुषबुद्धिसाक्षिणां परं पदमंजसा तरसेनाधिरोढुमकल्पोऽसमर्थो यतो यस्मात्ततो द्वेष्टि इदमसुरलक्षणमिति भावेनोक्तं यथेति ॥ २१॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

वक्रधिया हेतुना रोपितभ्रूभिरुपलक्षितैरमर्षणाक्षिभिः येऽभिचक्षते ॥ १८ ॥

शेते कदाचिन्निद्रात्यपीत्यर्थः ॥ १९—२१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

अत ईदृशाः पित्रादयोऽप्युपेक्ष्या एवेत्याह नैतेति स्वजना इति या विशिष्टा अपेक्षा तया न गच्छेदेति यदि गच्छेत्तदा वरं शत्रुबुद्ध्यैव गच्छेदिति भावः ननु दुरात्मनोऽपि स्वापत्य जामात्रादिषु स्निह्यंत्येवेति तत्राह अनवस्थितात्मनां नायमपि तेषां निश्चय इति भावः ये आरोपिताभिर्भ्रूभिस्तथा अमर्षणाक्षिभिः क्रोधनेत्रैरभिचक्षते पश्यन्ति ॥ १८ ॥

तादृशा बन्धवः शत्रुभ्योऽप्यधिका इत्याह अरिभिः प्रयुक्तैः शिलीमुखैर्यैस्तथा न व्यथते यतः शेते कदाचित् स्वापिति दूयता दूयमानेनेत्युत्तरेणान्वयः ॥ १८ ॥

मयि तत्र गतायां नेयं शंकेति चेत्तत्राह व्यक्तं निश्चितमेव उत्

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

कृष्टगतेरिति विपरीत लक्षणया प्रजापतेर्दक्षस्य आत्मजानां मध्ये त्वं प्रिया अतिस्नेहपात्री भवसि । तथापि तदपि पितुः सकाशात् मानं न प्रतिपत्स्यसे न प्राप्स्यसि यतो मदाश्रयात् मत्संबंधात्१९

ननु भगवंस्तदा त्वया वा दक्षं प्रति मनसा किञ्चित् द्विष्टं तत्र नहि नहीति शपथं कुर्वन् दक्षो मत्सरी सदैवास्मदादीन् द्वेष्टि सम्प्रति मदपराधं कल्पयित्वा द्वेषं प्रकरणामास्त्याह पापच्येति । एषामस्मदादीनां समृद्धिभिर्योगैश्वर्यादिभिर्हेतुभिः पापाच्यमानेन जाज्वल्यमानेन हृदा आतुरेन्द्रियो द्वेष्टि यथा असुरा हरिं । कीदृश एषां परं सर्वोत्कृष्टं पदमधिरोढुं अकल्पः असमर्थः अस्माकन्तु दक्षे त्वत् पितरि द्वेषलेशोऽपि नास्तीति सशपथं वदन् विशिनष्टि पुरुषः परमेश्वर एव बुद्धेर्भद्राया अभद्राया वा साक्षी येषां तेषामिति हे दाक्षायणि! यदि त्वं न प्रत्येषि तदा क्षणं समाधिना परमेश्वरं साक्षात्कृत्य महोपगुणां स एव प्रष्टव्य इति भावः ॥ २० ॥

ननु सत्यं त्वमद्वेष्टैवेति प्रत्येमि तदपि श्वशुरे तस्मिन् प्रत्युत्थानविनयादिकमुचितमेवेत्यत आह । प्रत्युद्गमनाभिवादनप्रत्यभिवादनादिकं मिथो जनैर्यद्विधीयते तत्प्राज्ञैः परस्मै पुरुषाय गुहाशयायैव चेतसा अत्र मत्श्वशुरे मज्जामातरि च परमेश्वरो वर्त्तते तस्मै नम इति भावनयैव विधीयते ननु देहमानिने अप्राज्ञैस्तु परमेश्वरस्मरणाभावाद्देहमानिने एव विधीयते न तत् सम्यगतो दक्षागमन समये श्रीभगवच्चरणसमाहितचेतस्त्वात् यद्यपि दक्षो मया न दृष्टस्तदपि भगवत्सम्माननेन दक्षसम्मानोऽभूदेव दक्षस्त्वज्ञानी वृथा कुप्यतीति भावः ॥ २१ ॥

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः ।

ये वक्रधिया कुटिलया बुध्या आरोपिताभिर्भ्रूभिः अमर्षणाक्षिभिः सक्रोधैर्नयनैः अभ्यागतान् अभिमुखे आगतान् चक्षते पश्यंति एतादृशानाम् अनवस्थितात्मनामस्थिरचित्तानां गृहान् स्वजनत्वेन त्वया स्वकीयबुद्ध्या नेयात् नगच्छेत् ॥ १८ ॥

अरिभिः कर्तृभिः शिलीमुखैः करणैः अर्दितांगोपि तथा न व्यथते किं तु स्वल्पकालं तप्यति पुनः क्षतनिवृतौ सुखी भवति अत्यंततोऽर्दितांगः शेते धीरशये स्वपिति मृतो भवति न तु दिवानिशं तप्यति यथा स्वनांदुरुक्तिभिर्मर्मताडितो दिवानिशं तप्यति ॥ १९ ॥

यद्यपि उत्कृष्टागतिः श्रेष्ठा स्थितिर्यस्य तस्य प्रजापतेः आत्मजानां मध्ये त्वं प्रिया सम्मता चासि इति व्यक्तं निश्चितम् अथापि हे सुभ्रु पितुः सकाशात् मानं न प्रपत्स्यते न प्राप्स्यसे यतो मदाश्रयात् मत्संबंधात्को दक्षः परितप्यते ॥ २० ॥

पुरुषाणां बुद्धेः साक्षिणो ये सर्वज्ञाः तेषां समृद्धिभिः पापच्यमानेनात्यर्थं संतप्यमानेन हृदा आतुरेंद्रियः एषां पदं पदवीम् अधिरोढुमधिगंतुम् अकल्पोऽशक्तः सन् परं केवलं द्वेष्टि यथा हरिमसुरा द्विषंति ॥ २१ ॥

भाषाटीका ।

असावधान आत्मारामोंको स्वजन समझकर उनके घरकी ओर गमन न करें वे घरआए लोगों को टेढी बुद्धि, भ्रुकुटी चढी क्रोध दृष्टी से देखें हैं ॥ १८ ॥

तैसो शत्रुकर के मारे बाणों से पीडितांग दुःखीहो सोयो भयो व्यथा को नहीं प्रासहोवै है जैसो अपने कुटुंबीन की टेढी बुद्धियों

प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे ।
प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने ॥ २२ ॥
सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः ।
सत्वे च तस्मिन्भगवान्वासुदेवो ह्यधोऽक्षजो मे नमसा विधीयते ॥ २३ ॥
तत्ते निरीक्ष्योन पिताऽपि देहकृद्दक्षो मम द्विट् तदनुव्रताश्च ये ।
योविश्वसृग्यज्ञगतं वरोरु ! मां मनागसं दुर्वचसाऽकरोत्तिरः ॥ २४ ॥
यदि व्रजिष्यस्यतिहाय मद्वचो भद्रं भवत्या न ततो भविष्यति ।
संभावितस्य स्वजनात्पराभवो यदा स सद्योमरणाय कल्पते ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्याम् उमारुद्र सम्वादे
तृतीयोऽध्यायः ॥ ३ ॥

भाषाटीका ।

से दुर्वचन से मर्म ताडित अहोरात्र तपे हैं ॥ १९ ॥

सो सुभ्रू ! ये स्पष्ट है दक्ष की बेटीन में तुम तुमप्यारी हो तथा पिता सं.मान नहीं प्राप्त होगा, मोसे दक्षप्रजापति दुःख माने है ॥ २० ॥

अहंकार द्विलपुरुषो की निर्मलसमृद्धिसे दह्यमानआतुरचित्त-वारे, उनके उत्तमअधिकार पर पहुंच नहीं सके; केवल द्वेषक्रिया करतेहैं जैसे राक्षस श्रीहरि से वैर करते हैं

श्रीधरस्वामिकृत भावार्थदीपिका

ननुस्वश्वाप्रत्युत्थानविनयाचकरणादयज्ञातएवासीनत्राह हेसु-मध्यमेप्रत्युद्गमादिकांमिथःजनैर्थाद्विधीयतेतत्प्राज्ञैः साधुविधीयतेसाधु त्वमेवाह परस्मैश्रीवासुदेवाय गुहाशयायांतर्यामिणएवतश्चचेतसै-व परिपूर्णोतस्मिन्कायिकव्यापारायोगात् अतोऽन्तर्यामिदृष्ट्यामनैसा सर्वंकृतमितिभाव ॥ २२ ॥

किंच नकेवलमभ्यागतेष्वेववासुदेवदृष्ट्यानमनंक्रियतेकिंतुनि-त्यमेवमनसिवासुदेवश्चित्यतइत्याह विशुद्धंसत्त्वमंतः करणंसत्त्वगु णोवावसुदेवशब्दितं वसुदेवशब्देनोक्तम् कुतः यद्यस्मात्तत्रसत्त्वे-पुमान्वासुदेवईयतेप्रकाशते अपगतमावृतमावरणंयस्मात्सः अयम-र्थः वासुदेवभवतिप्रतीयतइतिहिवासुदेवः परमेश्वरः प्रसिद्धः सच विशुद्धे सत्त्वेप्रतीयते अतःप्रत्ययार्थेनप्रसिद्धेनप्रकृत्यर्थोनिर्धार्यते त-तश्चवासयतिदेवामितिव्युत्पत्त्यावसत्यस्मिन्निति वावसुः देवोदीव्य-तिद्योततइतिवा वसुभिः पुण्यैर्दीव्यतिप्रकाशतइतिवावसुदेवशब्द-वाच्यंशुद्धंसत्त्वम् ततः किमतआहः सत्त्वेचतस्मिन्मेमयानमसानम-स्कारेणानुविधीयतेसेव्यतइत्यर्थः मनसेतिपाठेमनसाविशेषेणाधी-यतेध्यायतेचिन्त्यतइत्यर्थः यतोऽधोभूतेषुप्रत्याहृतेष्वक्षेषुजायतेप्रकाश ते इंद्रियागोचरइत्यर्थः ॥ २३ ॥

तत्तस्मात्त्वयानिरीक्ष्यः देहकृदपीतिपोषकत्वादिभिरौपचारि कपितृत्वव्यावृत्त्यर्थम् द्विट्शत्रुः तदेवाह हेवरोरु ! योदक्षोविश्वसृजां यज्ञगतंमा निरपराधंतिरोऽकरोत्तिरस्कृतवान् ॥ २४ ॥

विपक्षेदोषमाह यदीति मद्वचोऽतिहायातिक्रम्य यतः संभावित स्यसुप्रतिष्ठितस्ययदापराभवोभवतितदासपराभवस्तस्यमरणायक ल्पत ॥ २५ ॥

श्रीराधारमणदास गोस्वामिविरचिता ।
दीपन्याख्यादीपिका टिप्पणी ।

जनैरज्ञैः प्राज्ञैः विद्वद्भिः तच्च प्रत्युद्गमादि ॥ २२ ॥

तत्रांतः करणस्य विशुद्धत्वं भक्त्येकवासितत्वं सत्वगुणस्य च तत् अप्राकृतत्वेन जाड्यांशराहित्यम् अगोचरस्य गोचरत्वे हेतुर्हि सत्वं विशुद्धं च तत्र सत्वतावसुदेवतावा कुतस्तत्राह यद्यस्मादिति वासुदेवप्रकाशाश्रयत्वात्सत्वता वसुदेवशब्दवाच्यत्वे हेतुं व्याचष्टे अयमर्थ इति प्रतीयते प्रकाशते स च वासुदेवः अतः विशुद्धसत्वमंतरान्यत्र तत्प्रतीतिविरहात् प्रत्ययोऽत्राण् तस्यार्थोहि भवार्थस्तेन प्रसिद्धेन प्रकृतिरत्र वसुदेवशब्दस्तस्यार्थस्तावद्विशुद्ध सत्वमेवेति निर्णीयते ततश्च प्रत्ययार्थप्रसिद्ध्या प्रकृत्यर्थनिर्द्धारणा सेति उक्तपोषार्थं यौगिकनिरुक्तीरपि प्रदर्शयति वासयतीत्यादिना ततः शुद्धांतःकरणस्य वसुदेवशब्दवाच्यत्वे सति किं प्रकृते समायातमत आह सत्वेचेत्यादि विपूर्वकद्धातेः करोत्यर्थत्वात्तत्रा नु योगे अनुकरणमेवार्थः नमस्कारेणानुकरणं च सेवनमेवेत्याधि कार्थत्वादित्यर्थं इत्युक्तम् किंतु त्वधोक्षजइत्येवपाठः मनसेति पाठ इन्यत्र ह्यधोक्षज इति च पाठ इति पूरणीयम् तत्रानुशब्दस्याव्या ख्यानात् प्रत्युत यत इति हि शब्दस्यैवार्थ इति विवेचनीयम् ॥२३॥

तत्तस्मान्निरपराधे मयि वृथा द्वेषकर्तृत्वात् जनिता चोपनं ता च यस्तु विद्यां प्रयच्छति अन्नदाता भयत्राता पञ्चैते पितरस्मृ ताः अन्नदाता पोषक इत्यौपचारिकापितरः तदेव शत्रुत्वमेव छन्दासि व्यवहिताश्चेति तिरोऽकरोदिति योजितम् ॥ २४ ॥

विपक्षे गत्वा निरीक्षणे तस्य सुप्रतिष्ठस्य कल्पते योग्यो भवति ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थ स्कंधे
दीपिका दीपिन्याख्यायांटिप्पण्याम्
तृतीयोऽध्यायः

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

ननु गुरुभूतो दक्षस्त्वया प्रणामादिभिरसत्कृतस्त्वां द्वेष्टि तत्राह प्रत्यद्गमेनि हे सुमध्यमे ! प्राज्ञैरदेहमानिभिर्मिथः परस्परं प्रत्युद्गमप्रश्रयणाभिवादनं प्रत्युत्थानप्रणामाभिवादनंविधीयते मनोवाक्कायैरिति शेषः प्राज्ञाज्ञसन्निपाते तु प्राज्ञैर्गुहाशयाय अंतर्यामिणे परस्मै पुरुषायैवचेतसैव विधीयते न तु देहाभिमानिने करणत्रयेणेत्यर्थः "प्राज्ञैः परस्परं मनसैव विधीयते परिपूर्णो नस्मिन् कायिकव्यापारायोगाद्"इत्यर्थवर्णनं तु अशोभनंप्राज्ञेष्वपि मिथस्तस्य करणत्रयेण "वैष्णवोवैष्णवंदृष्ट्वादण्डवत्प्रणमेद्भुवि„ इत्यादिभिर्विहितत्वात् अंतर्याम्युद्देशेन मानसिकं प्रत्युद्गमनादिकमस्मै देहाभिमानिने दक्षाय विहतमेव मयेति भावः ॥२२ ॥

ननु किं विशेषेण चेतसैव प्रणतिर्विधीयते इत्युच्यते ! न तु मनोवाक्कायानामन्यतमेनेत्यत्र कारणमाह सत्वमिनि विशुद्धं रजस्तमोऽग्यामनभिभूतं सत्त्वं सत्त्वप्रधानं चित्तं वसुदेवशब्दितं वसुदेवशब्देनोच्यत इत्यर्थःतत्र'विशुद्धे सत्वं वसुदेवशब्दप्रवृत्तौ निमितमाह यदिति यद्यस्मात्तत्र सत्वेपुमान्'वासुदेवः अपावृतः अप गत मात्मावरणं यस्मात्सः ईयते प्रतीयते प्रकाश्यते इति यावत् तत्र सत्वं निर्मलत्वात्प्रकाशकमि त्युक्तरीत्या वासुदेवस्वरूपरूपादिप्रकाशकसत्वप्रधानात्वाच्चित्तस्य द्योतमानत्वाद्देवत्वं भगवतो वासभूतत्वाच्च वसुत्वमिति वसुदेवशब्दितं सत्वमित्यर्थः तस्मिंश्च सत्वाख्ये चित्ते अधोक्षजोऽधःकृतेषु अक्षेषु इंद्रियेषु जायते आविर्भवतीत्यधोक्षजः इंद्रियांतरागोचरः केवलपरिशुद्धचेतसैवग्राह्यः भगवान् वासुदेवः मे मया नमसा विधीयते नमस्क्रियत इत्यर्थः अतश्चेतसैव भगवान् प्रणम्यत इति भावः ॥ २३ ॥

तस्मात्त्वया पितापिदेहकृदपि पालक पितृत्वादि व्यावृत्त्यर्थं देहकृदित्युक्तं मम द्विट्मद्वेषी दक्षो न निरीक्ष्यःनिरीक्षितुमयोग्यः तथा तं दक्षं ये ऽनुव्रतास्तेपिन निरीक्ष्याः हे वरोरु! यो दक्षः विश्वसृड्यज्ञगं विश्वसृजां सत्रेगतम् अनागसं निरपराधिनं मां दुर्वचसा दुरुक्त्या तिरोऽकरोत् तिरस्कृतवान् ॥ २४ ॥

यदि मद्वचोऽतिहायाऽतिक्रम्य व्रजिष्यसि तर्हि भवत्यास्तव भद्रं संमानं न भविष्यति प्रत्युत पराभव एव स्यादिति भावः बंधुकृतः पराभवो न दुःखाय भवेदिति चेतत्राह संभावितस्य सत्रसम्मानितस्य स्वजनाद्यः पराभवःस सद्यो मरणाय कल्पते भवति ॥२५॥

इतिश्रीमद्भागवतेमहापुराणे चतुर्थस्कंधे
श्रीमद्वीरराघवाचार्यकृतभागवत चंद्रचंद्रिकायां
तृतीयोध्यायः ॥ ३ ॥

———

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

अभ्युत्थानाभिवादार्हो भवता न संमानितोऽतो द्वेष इति किं न स्यादिति तत्राह प्रत्युद्गमेति प्राज्ञैस्तत्ववेदिभिः पुरुषैर्वैष्णवेष्वागच्छत्सु मिथः प्रत्युद्गमादिकं चेतसा गुहाशयाय हृदयेस्थिताय परस्मै पुरुषायैव विधीयते क्रियते देहाभिमानिने जीवाय न क्रियते इदं तूभयोः समत्वे । बंधुता गुरूत्वनिमित्तेन गुरुत्वेनोक्तमतो दक्षायाऽज्ञाय ज्ञानाभावात्तन्निमित्तद्वेषो न संभाव्यतइति ॥ २२ ॥

किं च मया प्रत्युत्थानादिना मुख्यतः पूज्यस्तु ब्रह्मादिशरीरांतःस्थितो हरिरित्याह सत्त्वमिति विशुद्ध सत्त्वं ब्रह्मादिशरीरं । वसुदेवशब्दितं पृथिव्यादिपदार्थेषु स्थित्वा विद्यांतते तत्कृतमललेपाभावादिति तच्छब्देन शब्दितमित्यर्थः तच्छब्दवाच्यत्वे निमित्तमाहयदीयत इति व्याप्तिक्रीडादिगुणाकरः पुमान्नारायणोपावृतो माया लक्षणावरणरहित ईयतेज्ञायतइति यद्यस्मात्तस्मान्निमितांतरचाह सत्त्वंचेति तत्सत्त्वं च यस्मिन्हरौ यदधीनतया वर्तते तत्संबंधात्तच्छब्दवाच्य मित्यर्थः एवं चवसुदेवेनिवासलक्षणसंबंधाद्वासुदेवः सोऽधोक्षजोतीन्द्रियज्ञानी भगवान्मम मनसा विशेषेण धीयते चिन्त्यते तदुक्तं "रुद्रेण धीयते विष्णुर्विष्णोर्ध्येयोनकश्चन„इतिअनेनपुरीस्थित चतुर्मुखब्रह्माणि प्रकाशमानश्रीविष्णुगुणगणोपसंहारलक्षणोपासनैकाग्रचित्तत्वेन स्थितेन मया कार्यांतरप्रारम्भस्यानुचितत्वात् दक्षस्यहरिस्मरणसत्कारेण तत्सत्कारोपि कृत इति द्वेषे कारणं न पश्यामीत्युक्तं भवति यद्वा यद्विशुद्धं तमआदिगुणानुपरक्तं सत्त्वं तद्वसुदेवशब्दितं च शब्द एवार्थे तत्सत्त्वं गुणो यस्मिन्पुंस्येवास्ति पुमान् श्रीहरिस्तत्र तस्मिन्नेव पुंस्यपावृत ईयत इति यस्मात्तस्मात्स वासुदेवः सात्त्विकप्रियोऽधोक्षजो भगवान्मे मनसा प्रत्युत्थानादिना विशेषेण चिन्त्यत इत्यतो नास्मद्गुरुरित्याभिमानमुग्धत्वेन रजोगुणाभिभूतचितत्वेन चात्र हरेर्विशेषेण सन्निधानाभावात्तव पिता न सत्कारयोग्य इति कृत्वा प्रत्युत्थानादिना न मानित इति अनेन तमआदिगुणाभिभूतत्वेन तत्त्वाज्ञानात् द्वेषोद्रेक इत्युक्तं भवति ॥२३॥

मम त्वत्पूज्यत्वान्मम द्वेषि जनकोपि त्वया द्रष्टुमेवायोग्यो गुरुध्रुक्दर्शने दोषोक्तेरित्याह त्वयेति देहकृदपि ॥ न केवलमांतरोद्वेषोपि तु बाह्योपीति भावेनाह तदनुव्रता इति स्थानं निर्दिशति य इति ॥ २४ ॥

बाधकं चाह यदीति मरणं नाम देहवियोगलक्षणं न त्वकीर्तिलक्षणम् ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे
श्रीमद्विजयध्वजतीर्थ कृतपदरत्नावल्याम्
तृतीयोध्यायः ॥३॥

———

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

प्रत्युद्गमेति । अवैष्णवविषयमेवेदं वाक्यम् अथ भागवता यूयं प्रियाःस्थ भगवान् यथेति पुरतस्तदुक्तेः मद्भक्तपूजाभ्यधिकेति भगवदुक्तेश्च अतएव न देहमानिने वहिर्मुखायेत्युक्तम् ॥ २२ ॥

सत्त्वमिति अयमर्थः विशुद्धं स्वरूपशक्तित्वाज्जाड्यांशेनापि रहितमिति विशेषेण शुद्धसत्त्वं यत् तदेव वसुदेवशब्देनोक्तम् कुतस्तस्य सत्त्वता वसुदेवता वा तत्राह यत् यस्मात् तत्र तस्मिन् पुमान् वासुदेव ईयते प्रकाशते सत्त्वं विशुद्धमित्यादिकं द्वितीयसन्दर्भे अष्टादशाधिकशततमवाक्यव्याख्याने विशुद्धसत्त्वमित्यादिना व्याख्यातमस्ति किन्त्वत्र परस्य वासुदेवशब्दस्य पूर्ववत्प्रत्यन्वयः आद्ये तावदगोचरस्य गोचरता हेतुत्वेन लोकप्रसिद्धत्वसाम्यात् सत्त्वता व्यक्ता द्वितीयेत्वयमर्थः वसुदेवे भवति प्रतीयत इति वासुदेवः परमेश्वरः प्रसिद्धः सच विशुद्धसत्त्वे प्रतीयते अतः प्रत्ययार्थेन प्रसिद्धेन प्रकृत्यर्थो निर्धार्य्यते ततश्च वासयति देवमिति व्युत्पत्त्या वा वसत्यस्मिन्निति वा वसुः तथा दीव्यति द्योतत इति देवः स चासौ स चेति वसुदेवः वसुभिर्भगवद्धर्मलक्षणैः पुण्यैः प्रकाशत इति वा वसुदेवः तस्माद्वसुदेवशब्दितं विशुद्धसत्त्वम् इत्थं स्वयं प्रकाशज्योतिरेकविग्रह भगवज्ज्ञानहेतुत्वेन कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं तु यत् प्राकृतं तामसं ज्ञानं मन्निष्ठ निर्गुणं स्मृतमित्यादौ बहुत्र गुणातीतावस्थायामेव भगवज्ज्ञान श्रवणेन च सिद्धमत्र विशुद्धपदावगतं स्वरूपशक्तिवृत्तिभूत

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

स्वप्रकाशता शक्तिलंक्षणत्वं तस्य व्यक्तं ततश्च सत्त्वे प्रतीयत इत्यत्र करण एवाधिकरणविवक्षा स्वरूपशक्तिवृत्तित्वमेव विशदयति अपावृतः आवरणशून्यः सन् प्रकाशते प्राकृतं सत्त्वं चेत्तर्हि तत्र प्रतिफलनमेवावसीयते ततश्च दर्पणे मुखस्येव तदन्तर्गततया तस्य तत्रावृतत्वेनैवप्रकाशःस्यादितिभावः फलितार्थमाह एवम्भूते सत्त्वे तस्मिन् नित्यमेव प्रकाशमाने भगवान् मे मया मनसा विशेषेण धीयते धार्य्यंत चिन्त्यत इत्यर्थः तत् सत्वतादात्म्यापन्नेनैव मनसा चिन्तयितुं शक्यते इति पर्य्यवसितं ननु केवलेन मनसैव चिन्त्यतां किं तेन सत्त्वेन तत्राह हि यस्मादधोक्षजः अधःकृतमतिक्रान्तमक्षजमिन्द्रियज ज्ञानं येन सः नमसेति पाठे हिशब्दस्थानेऽप्यनुशब्दः पठ्यते ततश्च विशुद्धसत्त्वाश्रयशा स्वप्रकाशता शक्त्यैव प्रकाशमानोऽसौ नमस्कारादिना केवलमनुविधीयते सेव्यते ननु केनापि प्रकाश्यत इत्यर्थः तदेवमदृश्यत्वेनैव स्फुरन्नसावदृश्येनैव नमस्कारादिना अस्माभिः सेव्यत इति तत्प्रकरणसंगतिश्च गम्यते अथ यतो भगवद्विग्रहप्रकाशकविशुद्धसत्त्वस्य मूर्त्तित्वं वसुदेवत्वं च तत एव तत्प्रादुर्भावविशेषे धर्मपत्न्यां मूर्त्तित्वं प्रसिद्धं । श्रीमदानकदुन्दुभौ च वसुदेवत्वमिति विवेचनीयं अत्र श्रद्धा पुष्ट्यादिलक्षणप्रादुर्भूत भगवच्छक्त्यंशरूपस्य भगिनीतया पाठसाहचर्येण मूर्त्तेस्तस्यास्तच्छक्त्यंशप्रादुर्भावत्वमुपलभ्यते तुर्ये धर्मकलासर्गे नरनारायणावृषी इत्यत्र कलाशब्देन च शक्तिरेवाभिधीयते ततः शक्तिलक्षणायां तस्यां च नरनारायणाख्यभगवत्प्रकाशफलदर्शनात् वसुदेवाख्य शुद्धसत्त्वरूपत्वमेवावसीयते तदेवमेव तस्या मूर्त्तिरित्याख्याप्युक्ता तथाच भक्ताद्या विशदार्थतया विमुच्य सैव निरुक्ता चतुर्थे । मूर्त्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी इति । सर्वगुणस्य भगवत उत्पत्तिः प्रकाशो यस्याः सा तावसूतेति पूर्वेणैवान्वयः । भगवदाख्यायाः सच्चिदानन्दमूर्त्तेः प्रकाशहेतुत्वात् मूर्त्तिरित्यर्थः । तथैव तत्प्रकाशफलत्वदर्शनेन च नामैक्येन च श्रीमदानकदुंदुभेरपि शुद्धसत्त्वाविर्भावत्वं ज्ञेयं । तथोक्तं नवमे । वसुदेवं हरेः स्थानं वदंत्यानकदुन्दुभिमिति । अन्यथा हरेः स्थानमिति विशेषणस्याकिञ्चित्करत्वं स्यादिति । तदेवं ह्लादिन्याद्येकतमांशविशेषप्रधानेन विशुद्धसत्त्वेन यथायथं श्रीप्रभृतीनामपि प्रादुर्भावो विवेक्तव्यः । तत्र च तासां भगवति सम्पद्रूपत्वं तदनुग्राह्ये सम्पत् सम्पादकरूपत्वं सम्पदंशरूपत्वं चेत्यादि त्रिरूपत्वं ज्ञेयं । तत्र च तासां केवलशक्तिमात्रत्वेनामूर्त्तानां भगवद्विग्रहाद्यैक्यात्म्येन स्थितिस्तदधिष्ठात्रीरूपत्वेन मूर्त्तानां तु तदावरणतयेति द्विरूपत्वमपि ज्ञेयमिति दिक् ॥ २३ ॥

तत्त इत्यत्र त्वयेति चित्सुखः ॥ २४ ॥ २५ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे
तृतीयोऽध्यायः ॥ ३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

त्वया तदानीं कथं समाधिः कृत इति तु नोपालम्भनीयमेव यतो भगवत्समाधिर्न मदधीनः किंतु तदधीन एवाहमतो भगवत्स्फूर्तौ मम नैव समयनियम इत्याह सत्त्वमिति विशुद्धं सत्त्वमप्राकृतमन्तः करणं वसुदेवशब्दितं वसुदेवशब्देनोक्तं भवति । यद्वा विशुद्धं चिच्छक्तिवृत्तमयमप्राकृतं सत्त्वमेव वसुदेवो भगवज्जनक उच्यते । कुतः यद्यस्मात्तत्र अपावृतो विगतावरणः पुमान् ईयते प्रकाशते सच वासुदेव एव । वसुदेव भवति आविर्भवतीति तच्छब्दस्यार्थः । विशुद्धेऽन्तःकरणे च तस्याविर्भावो दृश्यते । अतो विशुद्धस्यान्तः करणस्य मदीयस्य वासुदेवेति नामेत्यवगतं । ततश्च वसत्यस्मिन् परमेश्वर इति वसुश्चाप्राकृतत्वाद्देवश्चेति वसुदेव इति तद्व्युत्पत्तिश्च गम्यते । अतस्तस्मिन् सत्त्वेऽन्तःकरणे भगवानधोक्षजः प्राकृतेन्द्रियागोचरः स्फुरन् नमसा नमस्कारोपलक्षितया बहुविधसपर्य्यया अनुविधीयते परिचर्यते विशेषेण धीयते धार्यत इति वा । मनसेति पाठे मनसैव सेव्यते अतस्तदानीं मया सेव्यमानो भगवानासीदिति अतस्तत्परिचर्यायामवकाशाभावादेव न मे वहिरनुसन्धानमभूदतः कथय को मे दोष इति भावः ॥ २३ ॥

तत्तस्मादिति यदि त्वं पतिव्रता भवसीति भावः । देहकृदपि पितेति पोषकादिरूपस्तु पिता किमुतेति भावः श्लेषेण देहं कृन्ततीति भावी देहपातश्च सूचितः । मां तिरोऽकरोत् तिरश्चकार २४

विपक्षे दोषमाह यदीति अपहाय अतिक्रम्य । सम्भावितस्य सुप्रतिष्ठितस्य यदा पराभवो भवति तदा स पराभवः तस्य मरणाय कल्पते ॥ २५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थस्य तृतीयोऽयं सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः ।

ननु त्वया प्रत्युत्थानादिना स न सत्कृतोऽद्वेषीत्यत्राह प्रत्युद्गमेति "चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्सुसूनृताम् उत्थाय चासनं दद्यात्स यज्ञः पंच दक्षिणा" इत्यादिशास्त्रतः प्रत्युद्गमादिकं मिथोजनैर्यद्विधीयते प्रत्युद्गमः कायव्यापारः प्रश्रयो विनयो मनोव्यापारः अभिवादनं वाग्व्यापारः तेषां समाहारद्वंद्वैक्यम् तत्प्राज्ञैः सर्वात्मभूतवासुदेव विज्ञैः साधु यथा भवति तथा परस्मै पुरुषाय सर्वात्मने वासुदेवाय गुहाशयायांतर्य्यामिणे एव चेतसा विधीयते क्रियते तदर्चनेनैव सर्वार्चनासिद्धेः यथातरोर्मूलनिषेचनेन तृप्यंति तत् स्कंधभुजोपशाखाः प्राणोपहाराच्च यथेन्द्रियाणि तथैव सर्वार्हणमच्युतेज्येति वक्ष्यमाणमप्यत्रानुसंधेयम् न तु देहमानिनं देहात्मवादिने यत्रस्थानिने जीवाविशेषाय मूलस्थानि वासुदेवार्चनेन सर्वस्यार्चितत्वादिति भावः ॥ २२ ॥

ननु तर्हि त्वयापि तथैव दक्षः कुतो न सत्कृत इत्यत्र प्रत्याहृत वाह्येंद्रिय स्वमनसि बहुधा वासुदेवं नमस्कारादिना भजाम्यतो मनसैव प्रत्युद्गमादिदक्षांतरात्मने कृतमित्याशयेनाह सत्त्वमिति विशुद्धं विशेषतः शुद्धम् यतो वसुभिः पुण्यैर्दीव्यतीति वसुदेवशब्दितं वसुदेवशब्दवाच्यं सत्वमंतःकरणं यत् तत्र अपावृतस्तत्कृतावरणरहितः जीवोयथांतः करणेनावृतोऽस्ति तद्विपरीत इत्यर्थः भगवान् वासुदेव ईयते प्रतीयते अतस्तस्मिन्सत्वे मया नमसा नमस्कारेण विधीयते सेव्यते अतो दक्षोपि मया सत्कृत इति भावः ननु चक्षुषा दृष्ट्वा कुतो नकायव्यापारेणादृतो दक्ष इत्यत्राह अधोक्षज इति स अधोभूतेषु प्रत्याहृतेषु अक्षेषु चक्षुरादिषु जीयते प्रकाशते मनसि अतश्चक्षुरादिनिरोधः कृत इत्यर्थः अतः प्रिये मया तत्र किमपि नापकृतं वृथैव वाग्बाणैस्ताडित इति भावः ॥ २३ ॥

तदेवाह तादिति हेवरोरु ! यतो मम छिद्र तत्तस्मात् ते देहकृत्

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः

मुख्योपिपितापि दक्षो न निरीक्ष्यो विश्वसृजांयज्ञगतमनागसं निरप राधिनं मां वचसा तिरः अकरोत् तिरस्कृतवान् किंबहुना ये तदनु वृतास्तेपि न निरीक्ष्याः ॥ २४ ॥

विपक्षे दोषमाह यदीति यदि मद्वचोऽतिहायोल्लंध्य गमिष्यसि ततो हंतो भवत्या भद्रं न भविष्यति यतः संभावितस्य ॥ सुप्रतिष्ठि तस्य यदा स्वजनात् पराभवो भवति तदा स पराभवः सद्योमरणा य कल्प्यते । नाशहेतुर्भवति २५ ॥

इति श्रीमद्भागवते सिद्धान्तप्रदीपे चतुर्थस्कंधे तृतीयाध्यायार्थप्रकाशः

भाषाटीका ।

हेसुमध्यमे ! खडो होतो नमस्कार करनेये आपसमे करे हैं वे परमपुरुषगुहाशय ईश्वरको मान कियाकरते हैं देहमानीको नहिं२२ विशुद्ध सत्वअंतः करणको नाम है, ऐसे अंतः करणसे नारा-

भाषाटीका ।

यणकी स्पष्ट प्रतीति होवे है ऐसे अंतःकरणमें इन्द्रियोंसे अगोचर भगवान वासुदेवकोंमे नमस्कारद्वारा सेवन करुंहूं ॥ २३ ॥

हे वरोरु ! तुह्मारे देहकर्ता पिता मेरा द्रोही हैं, तुझे देखवे योग्य न ही है, ताके अनुचर भी मोसे द्रोह करे हैं, जो दक्ष विश्व रचवे वारों के यज्ञमें निरपराधीयोंको दुर्वचनसे तिरस्कारकरतोभयो२४ .

जो मेरे वचन को उलंघन कर तुम जाओ गी तो तुह्मारा कल्याण न होय गो, क्योंकि अति प्रशंसित को स्वजनों से तिर स्कार सदा मरण के वरा वर होय है ॥ २५ ॥

इतिश्रीमद्भागवतमहापुराण में चतुर्थस्कन्ध के तृतीयऽध्याय की भाषाटीका समाप्त हुई ॥ ३ ॥

## इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे तृतीयोऽध्यायः ॥३ ॥

## चतुर्थोऽध्यायः ।

—:*:—

### मैत्रेयउवाच

एतावदुक्त्वा विरराम शंकरः पत्न्यंगनाशं ह्युभयत्र चिंतयन् ।
सुहृद्दिदृक्षुः परिशंकिताभवान्निष्क्रामती निर्विशती द्विधाऽऽससा ॥ १ ॥
सुहृद्दिदृक्षाप्रतिघातदुर्मनाः स्नेहाद्रुदत्यश्रुकलाऽतिविह्वला ।
भवं भवान्यप्रतिपूरुषं रुषा प्रधक्ष्यतीवैक्षत जातवेपथुः ॥ २ ॥
ततोविनिश्वस्य सती विहाय तं शोकेन रोषेण च दूयता हृदा ।
पित्रोरगात्स्त्रैणविमूढधीर्गृहान्प्रेम्णाऽऽत्मनोयोऽर्धमदात्सतां प्रियः ॥ ३ ॥
तामन्वगच्छन् द्रुतविक्रमां सतीमेकां त्रिनेत्रानुचराः सहस्रशः ।
सपार्षदयक्षा मणिमन्मदादयः पुरोवृषेंद्रास्तरसा गतव्यथाः ॥ ४ ॥
तां सारिकाकंदुकदर्पणांबुजश्वेतातपत्रव्यजनस्रगादिभिः ।
गीतायनैर्दुंदुभिशंखवेणुभिर्वृषेंद्रमारोप्य विटंकिताययुः ॥ ५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

चतुर्थेतुपतिंहित्वागतापित्राऽवमानिता ॥
रुषानिर्भर्त्स्यंतंयज्ञेजहौदेहमितीर्यते ॥ १ ॥

उभयत्रानुज्ञानेवलान्निवारणेच सुहृद्दिदृक्षुर्निष्क्रामंतीभवात्परिशंकितापुनर्निर्विशंतीचतदासासतीद्विधाआसबभूव नगतानचस्थिता आंदोलावद्गतिरभवत् ॥ १ ॥

सुहृदांदिदृक्षायाः प्रतिघातंमदुर्मनाः अश्रूणांकलाभिर्लेशैरतिविह्वलाव्याकुला अप्रतिपूरुषंस्वसमानपुरुषांतररहितम् प्रधक्ष्यतीवभस्मीकरिष्यतीव रुषाजातोवेपथुः कंपोयस्याः ॥ २ ॥

ततस्तंविहायपित्रोर्गृहानगात् कथंभूतम् यः प्रीत्यातस्यैआत्मनो देहस्यार्धमदात् त्यागेहेतुःस्त्रैणंस्त्रीस्वभावस्तेनविमूढाधीर्यस्याः ३॥

द्रुतविक्रमांशीघ्रंगच्छंतीम् सहपार्षदैर्यक्षैश्चवर्तमानाः मणिमान्मदश्चादिर्येषांते पुरतोवृषेंद्रोयेषांते गतव्यथानिर्भयाः रुद्रातिक्रमेणतस्यागमनाद्वागतव्यथाइतिवा ॥ ४ ॥

तांवृषेंद्रमारोप्यसारिकादिभिः क्रीडोपकरणैः श्वेतातपत्रादिभिश्चमहाराजविभूतिभिः सहविटंकिताः शोभिताययुः सारिकापठनानिरूपितापक्षिणी गीतायनैर्गीताश्रयैः ॥ ५ ॥

———

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

तं पितरं निर्भर्त्स्य वाचा तिरस्कृत्य आसत्यव्ययं बभूवेत्यर्थं ॥ १ ॥

जगदात्मानं वा भस्मी करिष्यंतीवेति व्याख्येयं ईश्वरे तच्छक्तेरभावात् ॥ २ ॥

ततस्तादृशक्रोधानन्तरं तं शिवं मात्रादिविरहजन्येन शोकेन

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिका टिप्पणी ।

शिवविषयकेन रोषेण च दूयता दुःखितेन ग्रहाः पुंसि च भूम्न्येवेति नियमाद्ग्रहानिति बहुत्वं मायाया अपिविमूढधी त्वं भगवन्माययेति ज्ञेयम् ॥ ३ ॥ ४ ॥ ५ ॥

———

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

भवोक्तमर्थेनोपसंहरन्भवान्याः स्वाभिप्रेतार्थलाभनिमित्तशोकं तन्निमित्तं भर्तरिक्रोधं भर्त्तारमनादृत्याध्वरे गमनं तत्र पितृकृतपराभवं तन्निमित्त देहत्यागप्रकारं चाहएतावदिति शंकरःएतावभिधाय उभयत्र पत्न्यास्तत्रगमनेऽगमनेच अनुज्ञादाने बलान्निवारणे च तच्छरीरनाशं चिंतयन् विरराम तूष्णीमास ततःसासती सुहृद्दिदृक्षुः मातापित्रादीन् द्रष्टुमिच्छंतीनिष्क्रामती गृहाद्बहिर्निर्गच्छंती पुनः भवात् शंकरात्परिशंकिता भर्तृवचोऽतिहाय गमने का वा हानिः स्यादिति परिशंकिता च तदाद्विधा आस बभूव ॥ १ ॥

सुहृदां दिदृक्षायाः द्रष्टुमिच्छायायाः प्रतिघातः निरोधस्तेनदुर्मनादुःखिताचित्ताबंधुषुस्नेहाद्रुदंतीअश्रूणांकलाभिर्लेशैरातिविह्वलाव्याकुला भवानी सती अप्रतिपुरुषं समदर्शित्वेन प्रतिपक्षरहितं भवं रुद्रंरुषा जातवेपथुः उत्पन्नशरीरकंपा प्रधक्ष्यती भस्मीकुर्वतीव ऐक्षत अपश्यत् ॥ २ ॥

तदा ततः सती विनिश्वस्य दीर्घं निश्वासं विधाय सतां ज्ञानिनां प्रियोयश्च प्रेम्णाआत्मनो देहस्यार्द्धमदादतवान् अनेनत्यागानर्हत्वमुक्तं तंरुद्रंविहायस्त्रैणं स्त्रीस्वभावस्तेनविमूढधीः नष्टमतिःशोकेन बंधुदर्शनसंभावनानिमित्तशोकेन रोषेण दिदृक्षाप्रतिघात निमित्तक्रोधेन पुनर्दूयता भर्तृवचोऽतिक्रमनिमित्तानर्थसंभावना

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

परितप्तेन हृदा पित्रोर्गृहान् प्रत्यगात् ॥ ३ ॥

द्रुतविक्रमां शीघ्रं पादविक्षेपान्कुर्वतीं एकामसहायां तां सतीं त्रिनेत्रानुचराः सहस्रशोऽनुययुः एतदेव प्रपंचयति सार्द्धेन पार्षदैर्यक्षैश्च सहिता मणिमान्मदश्चादिर्येषां ते पुरः पुरतः वृषेन्द्रं यषांतेतरसा बलेन गतव्यथा निर्भयाः यद्वा आगतव्यथाः इतिच्छेदः रुद्रगमनाभावादागतव्यथा सभयाः तरसा बलात् ॥ ४ ॥

तां सतीं वृषेन्द्रमारोप्य नंदीश्वरे उपवेश्य शारिकादिभिः क्रीडोपकरणैः शारिका पठननिपुणः पक्षिविशेषः श्वेतातपत्रादिभिः राजचिन्हैश्च विटंकिता अलंकृता ययुः ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

हरौ भक्तिविधानार्थं गुर्वादावपि भक्तिरवश्यंकर्तव्येत्यभिप्रेयतेऽस्मिन्नध्याये तत्र देवी मेवं बाधकं ब्रुवन् शंकरः किं चकारेति तत्राह एतावदिति शं सुखं करं यस्य सः शंकरोतीति वा शंकरः उभयत्र प्रस्थापने निवारणे च पत्न्या अंगनाशं शरीरनाशं हि यस्मात्तस्माद्विरराम ततस्तु देवी किमकरोदिति तत्राह सुहृद्दिदृक्षुरिति सा देवी सुहृद्दिदृक्षुः स्वधाम्नो निष्कामती भवात्परिशंकिता स्वधामानिर्विशती चाभूदित्यन्वयः ॥ १ ॥

अंतःकरणवृत्तिभेदात् द्विधा प्रवृत्तिमती भवानी किमकृतेत्याशंक्य तस्या भर्तुः कामजनकमंत्रौषधैः स्त्रीस्वभावं वक्ति सुहृद्दिदृक्षेति सुहृद्दिदृक्षायाः प्रतिघातो भंगस्तेन दुर्मना दुःखितमना अप्रतिपूरुषं प्रतिपक्षपुरुषरहितं अनेन कोपरोदनाभ्यां वशीकरणमंत्राभ्यां वा शिवोऽभिमतानुमतिप्रदः स्यादिति भावो दर्शितः ॥ २ ॥

अनेनापि भावेनस्तिमितसमुद्रवत् स्थितं शिवं दृष्ट्वा तदनमनप्रकारं वक्ति तत इति दूयता तापवता सर्वैश्वर्या एवंभावः कथमित्यत उक्तं स्त्रैणेति स्त्रीणां स्वभावः स्त्रैणं तेन विमूढाधीर्यस्याः सा तथा अज्ञस्त्रियाः स्वभाव एवायं न तु देवस्त्रिया इति भावेनाह प्रेम्णेति आत्मन इति पदं द्विरावर्तनीयं स्वस्य शरीरस्यार्द्धमदासत अदत्त दाम् दान इति धातुः ॥ ३ ॥

स्वशरीरार्धदो हरस्तस्या एकस्या गमनं कथमसहतेत्याशंक्य तत्राह तामन्विति द्रुतं विक्रमः पादविक्षेपो यस्याः सा तथा तां के चनानुचरा अस्त्रगच्छन् न तु मुख्या इत्यत उक्तं मणिमन्मदादय इति पार्षदेषु मुख्यैः सह वर्तमानाः सपार्षदमुख्या आगतव्यथाः स्वस्तिस्यादस्वस्तिवेति प्राप्तमनोदुःखाः ॥ ४ ॥

शीघ्रतरं गच्छंत्या रुद्राण्याः पाश्चात्कैर्दिवागच्छद्भिरनुचरैः किमभूदित्याशंक्य राज्ञीगमनवदन्वितयात्राभूदित्याह तां सारिकेति सारिका क्रीडाशुकी मंडुकं जलक्रीडावाद्यं विलंबिता यथा यथा संभूय गमनं स्यात्तथा शनैश्चरंतः विटंकिता इति पाठे शृंगारिता इत्यर्थः ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

परिशंकिनीति चित्सुखः ॥ १ ॥

प्रधक्ष्यतीव भस्मीकरिष्यतीव आत्मानमिति शेषः । वियोगमहंतीतिवद्दाहगोचरी भविष्यतीवेति वा ॥ २ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

तत इति । स्त्रैणेति मायापि सा भगवन्मायया मोहिताभूदिति भावः स्त्रैणेति सम्बन्धोक्तिः ॥ ३ ॥ ४ ॥

सारिकामिति चित्सुखः पाठान्तरं गच्छन्तीमित्यर्थः । अम्बुजेति चित्सुखः ॥ ५ ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी

उभयत्रानुज्ञायां बलान्निवारणे च सुहृद्दिदृक्षुः सा बलान्निष्क्रामन्ती त्रास भवात् परिशंकिता च पुनर्विशतीचेति द्विधा सैका सती द्विविधा अभूत् । औत्सुक्यशंकयोर्द्वयो संग्रामे तुल्यबलत्वादिति भावः ॥ १ ॥

अश्रूणि कलयतीति सा । न विद्यते प्रतिपुरुषस्तुल्यो यस्य तं भवं मां गन्तु नानुजानीते इति प्रधक्ष्यतीव कदाचिन्मंस्मीकरिष्यतीव ऐक्षत ॥ २ ॥

ततश्चौत्सुक्यशंकयोर्द्वयोरायत्यामौत्सुक्यस्य प्राबल्ये शंकाया पराभवे च तं भवं विहाय दूयता उपतप्यमानेन पित्रोर्गृहान् अगात् कथम्भूतं यः प्रेम्णा आत्मनो देहस्यार्द्धमदात् तं । त्यागे हेतुः स्त्रैणं स्त्रीस्वभावस्तेन मूढा धीर्यस्याः सा ॥ ३ ॥

द्रुतविक्रमां निवारयिष्यतीति शंकया पद्भ्यामेव द्रुतं गच्छंतीं पार्षदैर्यक्षैश्च सह वर्त्तमानाः अहो एकाकिन्येवास्माकमभीष्टदेवी चलतीत्यागता व्यथा येषां ते रुद्रानुचरा इति रुद्रस्यैवाभिप्रायमवगम्येति भावः ॥ ४ ॥

सारिकेत्यादिभिः खेलनोपकरणैस्तस्याः खेलनव्यसनित्वं गीतायनैर्दुन्दुभ्यादिभिर्गायनी लासिकादिभिश्च तस्या गानव्यसनित्वमवधार्येति भावः । श्वेतातपत्रादिभिर्महाराजाविभूतिभिः सह विटंकिताः शोभिता वा ययुः ॥ ५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

भर्त्रा वार्यमाणापि औत्सुक्यातिशयात्पितृगृहं गता तेनाऽनादृता सती देहं जहाविति वर्णयत्येतावदुक्त्वेति चतुर्थेनाध्यायेन विरराम निवारणादुपरतोऽभूत् उभयत्र बलान्निवारणे अनिवारणे च सा तु सुहृदः पित्रादीन्द्रष्टुमिच्छंती निष्क्रामती अवलंघिताङ्गः किंकरिष्यतीति भवात्परिशंकिता पुनर्निविशतीत्येवं द्विधेवाऽऽसं बभूव ॥ १ ॥

सुहृद्दिदृक्षया प्रतिघातेनावरोधेन दुर्मनाः परिम्लानचित्ता अश्रुकलाभिरतिविह्वला रुषा जातवेपथुः कंपमाना रुदती अप्रतिपूरुषं प्रतिपुरुषरहितोयो भवस्तस्मिन् कार्यं भवान्यनुकूलं कुर्याच्चेत पुरुषेणरहितं प्रधक्ष्यतीवैक्षतापश्यत् ॥ २ ॥

स्त्रैणेन स्त्रीस्वभावेन विमूढा कार्याकार्यविवेकरहिता धीर्यस्याः सा य आत्मनो देहस्यार्द्धं प्रेम्णा सतीकर्तृकया भक्त्याददात्तं विहाय पित्रो गृहान् अगात् अहो सांसारिकरागस्य महदनर्थहेतुत्वमिति भावः ॥ ३ ॥

द्रुतविक्रमां शीघ्रगतिम् पार्षदैर्यक्षैश्चसहिताः मणिमान् मदश्च आदिर्येषां ते पुरोऽग्रे वृषेन्द्रं येषां ते गतव्यथाः तदानीं तेषां तत्सहगमनस्यैव न्याय्यत्वात् ॥ ४ ॥

आब्रह्मघोषोर्जितयज्ञवैशसं विप्रर्षिजुष्टं विबुधैश्च सर्वशः।
मृद्दार्वयःकांचनदर्भचर्मभिर्निसृष्टभांडं यजनं समाविशत् ॥ ६ ॥
तामागतां तत्र नकश्चनाऽऽद्रिय-द्विमानितां यज्ञकृतो भयाज्जनः।
ऋतेस्वसॄर्वै जननीं च सादराः प्रेमाश्रुकंठ्यः परिषस्वजुर्मुदा ॥ ७ ॥
सौदर्यसंप्रश्नसमर्थवार्त्तया मात्रा च मातृष्वसृभिश्चसादरम्।
दत्तां सपर्यां वरमासनं च सा नादत्त पित्राऽप्रतिनंदितासती ॥ ८ ॥
अरुद्रभागं तमवेक्ष्यचाध्वरं पित्राचदेवे कृतहेलनं विभौ।
अनादृता यज्ञसदस्यधीश्वरी चुकोप लोकानिव धक्ष्यतीरुषा ॥ ९ ॥
जगर्ह साऽमर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम्।
स्वतेजसा भूतगणान् समुत्थितान् निगृह्य देवी जगतोऽभिसृण्वतः ॥ १० ॥
श्रीदेव्युवाच।
नयस्य लोकेऽस्त्यतिशायनः प्रियस्तथाऽप्रियोदेहभृतां प्रियात्मनः।
तस्मिन्समस्तात्मनिमुक्तवैरके ऋते भवतं कतमः प्रतीपयेत् ॥ ११ ॥
दोषान्परेषां हिगुणेषु साधवो गृह्णंतिके चिन्नभवादृशा द्विज !।

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः

तां सतीं वृषेंद्रमारोप्यसारिका शिक्षिता पक्षिणी तदादिभिः गीताद्यैर्गानाधारैर्दुंदुभ्यादिभिश्च सह चिंटंकिता शोभिता ययुः ॥ ५ ॥

---

भाषाटीका।

श्रीरुक्मिणी रमणोजयति। मैत्रेयजी बोले ॥ शंकरने दोनों तरह से सतीजी को देख इतना कहकर चुप होगये सतीजी को भी इधर सुहृदों के देखने की इच्छा इधर महादेवजी से भी शंका इस लिये कभी भीतर जाय कभी बाहर आवे इस प्रकार सतीजी हिंडोले की तरह आंदोलित होती हुई ॥ १ ॥

सती को सुहृदों के देखने की इच्छा में विघ्न होते देख मन में बडा दुःख भया स्नेह से रोती हुई आंशुन के मारे व्याकुल होकर कांपती हुई लोक में असदृश पुरुष श्रीशिवजी को इस तरह देख ने लगीं जैसे मानों भस्म कर देगीं ॥ २ ॥

पश्चात् जिस सज्जनों के प्यारे ने अपना अर्द्धांग समर्पण किया था उन शिवजी को छोड शोक और क्रोधके मारे दुखित हृदय से ऊंचे २ स्वास लेती हुई स्त्री स्वभाव से मोहित होकर मा बाप के घर को गई ॥ ३ ॥

बडे वेग से अकेली जाती हुई सतीको देख त्रिनेत्र श्रीशिवजी के मणि मान मद को आदि लेकर पार्षद यक्षों के सहित हजारों अनुचर वृषभ को आगे लेकर सती के पीछे गये ॥ ४ ॥

सतीजी को वृषभ पर बैठार के सारिका, गेंद, लीलाकमल, दर्पण, इत्यादिक क्रीडा की सामग्री और छत्र चामर इत्यादि महा राज विभूति तथा गीत का उपयोगी दुंदुभि शंख वेणु इत्यादिकों से शोभा करके गये ॥ ५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका

आसमंताद्योवेदघोषस्तेनोर्जितंशोभमानंयज्ञसंबंधिपशुविशसनं यस्मिन्। यद्वा तेनोर्जितमतिशयितंयज्ञवैशसंपरस्परंस्पर्धायास्मिन् तद्यजनंयज्ञस्थानंसमाविशद्देवी विबुधैश्चजुष्टम्मृदादि भिर्निसृष्टानि-निर्मितानिभांडानिपात्राणियस्मिन् ॥ ६ ॥

कश्चननाद्रियत्नादृतवान् यत्तकृतोदक्षात्तद्भयंतस्मात तत्रहेतुः तेनाविमानितां स्वसृर्जननींचऋतेविना तास्तुसादराः परिषस्वजुरालिंगितवत्यः प्रेमाश्रुभिर्निरुद्धः कंठोयासाम् ॥ ७ ॥

अप्रतिनंदिताऽनादृतासतीनादत्तनगृहीतवती कथम् सौदर्येण-सोदरत्वेनभगिनीनांयः संप्रश्नस्तत्रसमर्थायोग्यायावार्तातयासहतांचनादत्तनाशृणोदित्यर्थः ॥ ८ ॥

नविद्यतेरुद्रस्यभागोयस्मिंस्तं देवेरुद्रेकृतं हेलनमवज्ञामाह्वानाद्यकरणात् ॥ ९ ॥

जगर्हनिंदितवतीअमर्षणाकोपेनविपन्नाऽव्यक्तागीस्तयाशिवंद्वेष्टीतिशिवद्विट्तम् धूमपथः कर्ममार्गस्तत्रश्रमोऽभ्यासस्तेनस्मयोगर्वोयस्य दक्षवधायसमुत्थितान्स्वाज्ञयानिगृह्यनिवार्य ॥ १० ॥

निंदामेवाह नयस्येतित्रयोदशभिः मुक्तवैरकेत्यक्तविरोधेतस्मिन्शिवेभवंतमृतेविनाकतमःप्रतीपयेत्प्रातिकूलमाचरेत् वैराभावेहेतवः यस्यलोकेअतिशायनोऽतिशयितोनास्ति तथाप्रियश्चाप्रियश्चनास्ति समासपाठेऽतिशयेनप्रियोनास्तिदेहभृतांप्रियोऽयमात्मातस्य समस्तस्याऽऽत्मनिकारणभूतसमस्तरूपइतिवा ॥ ११ ॥

तस्यचप्रतिकूलकरणंद्वेधा महत्तमद्रोहेणसाक्षात्तद्द्रोहेणच तत्र पुरुषाणांचातुर्विध्यंवदंतीमहत्तमद्रोहमाह दोषानितिद्वाभ्याम् हेद्विजेत्यधिक्षेपः भवादृशास्त्वद्विधाअसूयकाः परेषांगुणेषुदोषानेवगृह्णंतिनतुगुणान् केचिन्मध्यस्थागुणेषु दोषान्नगृह्णंतिकिंतुयथास्थितान्गुणदोषान्विवेकेनगृह्णंतितेतुमहांतउच्यंते साधवस्तुकेवलंगुणान्-

गुणांश्च फल्गून्बहुली करिष्णवो महत्तमास्तेष्वविदद्भवानघम् ॥ १२ ॥
नाश्चर्यमेतद्यदसत्सु सर्वदा महद्विनिंदा कुणपात्मवादिषु ।
सेर्ष्यं महापूरुषपादपांसुभि-र्निरस्ततेजःसु तदेव शोभनम् ॥ १३ ॥
यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसंगादघमाशु हंति तत् ।
पवित्रकीर्तिं तमलंघ्यशासनं भवानहोद्वेष्टिशिवं शिवेतरः ॥ १४ ॥
यत्पादपद्मं महतांमनोऽलिभि-र्निषेवितं ब्रह्मरसासवार्थिभिः ।
लोकस्य यद्वर्षति चाशिषोऽर्थिन-स्तस्मै भवान्द्रुह्यति विश्वबंधवे ॥ १५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

यगृह्णंतिनदोषांस्तेतुमहत्तराउच्यंते महत्तमास्तुदोषान्नगृह्णंत्येवतेत्र- प्रत्युतफल्गूस्तुच्छानपिगुणान्बहुलीकुर्वंतोतिकरिष्णवोभवंति तेपुभ वानघमविदद्भिदितवान् कल्पतयानित्यर्थः तच्चग्राह्मिष्ठानभिभूयेत्य- नेनसूचितम् ॥ १२ ॥

एतच्चदुर्जनेष्वयुक्तमेवेत्याह नेति कुणपंजडंशरीरंतदेवाऽऽत्मेति- वदंतियेतेषु ईर्ष्याअत्वांतिः सेर्ष्यंयथाभवत्येवंमहतां विनिंदेतियदेत दाश्चर्यंनभवति सेर्ष्यंनिरस्ततेजः प्रभावोयेषामितिवा यद्यपिमहा- पुरुषाः स्वनिंदांसहंतेतथापितत्पादरेणवस्तदसहमानास्तेषांतेजोनि रस्यंति अतोऽशक्तेषुमहन्निंदनमेवोचितमित्यर्थः ॥ १३ ॥

तदेवंमहत्तमद्रोहमुक्त्वातस्मिन्नेवकृतं द्रोहमाह यदितिद्वाभ्याम् यद्यस्यद्व्यक्षरमात्रंशिवइतितत्प्रसिद्धनामनृणांसंबंधमाश्वघंसर्वंहंति केवलं गिरेवेरितमुच्चारितंनतुमनः पूर्वकम् तत्तुसकृदपिप्रसंगादपि तंशिवंद्वेष्टि नलंघ्यंशासनमाज्ञायस्य अहोशिवेतरोऽमंगलरूपः ॥ १४ ॥

पापहरत्वमुक्त्वाभुक्तिमुक्तिप्रदत्वेनशिवंवर्णयन्नाह यस्यपादपद्मं मनांस्येवाऽऽलयस्तैः ब्रह्मरसांब्रह्मानंदः सएवाऽऽसवोमकरंदस्तद- र्थिभिः यच्चार्थिनः सकामस्यलोकस्यतास्ताआशिषोवर्षति ॥ १५ ॥

———

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्यादीपिकाटिप्पणी

पूर्वार्थे वेदघोषेण हिंसाशोभाया अश्लीलत्वाद्यद्वेति स्पर्द्धया वर्द्धते विद्येति न्यायेन वेदघोषे तस्या औचित्यमेव स्वारस्यम् श्रयःपात्रं सुरार्थकम् ॥ ६ ॥

तत्र यज्ञे तत्र दत्ताद्वयं ॥ ७ ॥

वार्त्ताया नीरूपत्वेन ग्रहणासंभवात्प्रतियोगिप्रमितिं विना तन्निषेधानुपपत्तेः श्रवणे लाक्षणिकत्वादित्यर्थं इत्युक्तम् ॥ ८ ॥

लोकदाहस्यासंकल्पादित्युक्तम् ॥ ९ ॥ १० ॥

अतिशयितोधिकः समासपाठे स्वार्थेऽणसमस्तकारणात्वादि तत्र भगवद्भेददृष्ट्या ॥ ११ ॥

चातुर्विध्यं असूयकेषु पुरुषत्वाभावात्तान्विहाय पुरुषाणांमध्य स्थमहन्महतरमहत्तमरूपंचतुर्विधत्वंवदंतीतत्रमहत्तमद्रोहमात्वाद्रोह योर्मध्यंमहत्तमद्रोहमाह अधिक्षेपः महत्तमद्रोहोपत्राहोस्विद्विजत्व मितिसाभ्यसूयानिन्दादोषानेवीतसर्ववाक्यंसावधारणमितिन्यायात् एवकाराध्याहृतःसमथ्यत्यस्वारस्यान्महान्तउच्यन्तइत्याधिव्याख्या तम् अथ दोषं वेदनस्य मिथ्यात्वं वक्तुं कल्पितयानिति जहदजह- ल्लक्षणया व्याख्यानादित्यर्थं इत्युक्तम् तच्च दोपकल्पनम् ॥ १२ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

पूर्वार्थे सेर्ष्यपदस्याऽस्थानपतितत्वमित्यरुच्यावर्थान्तरम् पाद- पांशुशब्देनात्र प्रभावलेशो लक्षणीयः तत्रापीर्ष्या उत्प्रक्षितेतिज्ञेयम् अतो महन्निन्दयैव तेषां तेजोनरासात् ॥ १३ ॥

नृणामित्युपलक्षणा सर्वेषाम् ॥ १४ ॥

नामकीर्त्तनेन पापहरत्वं तच्च पादपद्मं उत्तरयाफ्यांपात्तत्वेन यच्छब्दस्य तच्छब्दाऽनपेक्षत्वं तास्तास्तत्तदपेक्षिता पुत्रादि रूपाः ॥ १५ ॥

———

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

आसमंताद्ब्रह्मघोषेण ऊर्जितं व्याप्तं यज्ञसंबंधि वैशसं विशसनं यस्मिन् तद्ब्रह्मघोषोर्जितं च तद्यज्ञवैशसं चेति कर्मधारयःविप्रर्षिभिः ब्रह्मर्षिभिर्जुष्टं सेवितं तथा विबुधैर्देवैश्च सर्वतो जुष्टं मृदादिभि र्निसृष्टानि निर्मितानि भांडानि पात्राणि यस्मिन् तद्यजनं यागस्थानं समाविशत् ॥ ६ ॥

तत्रागतां तांसतीं जननीं स्वसृश्च ऋते विना कश्चन कोपिनाद्रियत नादृतवान् कुतः यज्ञकर्तो दक्षात् यद्भयं तस्मात् तत्र हेतुः नंनयि मानितां अवमानितां तास्तुसोदराः प्रेमाश्रुभिर्निरुद्धः कंठो यासांतथा भूतास्तां मुदा परिषस्वजुः आलिंगितवत्यः ॥ ७ ॥

मात्रा मातृष्वसृभिःमातृभगिनीभिश्च सौदर्यसंप्रश्नसमस्त वार्तया सोदरीणां भगिनीनां च संबंधीयःकुशलप्रश्नादिस्तत्पूर्वया स- मस्तवार्तया सकलवृत्तांतेन सह समर्थवार्तयेति पाठेसौदर्येण सोदर त्वेन भगिनीनांयःसंप्रश्नः तत्र समर्थायोग्यायया वार्त्तातया सादरं आ- दरेण सहितं यथा तथा सपर्यां पूजामुत्कृष्टमासनं सती नादत्तनस्वी कृतवती तत्र हेतुः पित्रा दक्षेण अप्रतिनंदिताअनादृता ॥ ८ ॥

अरुद्रभागं न विद्यते रुद्रस्य भागो यस्मिन् तमध्वरं यागं विभौ देवे रुद्रे पित्रा दक्षेण कृतं हेलनं अपराधं चावेक्ष्य आह्वानाद्यकर णात् तथा स्वयं यज्ञसदसि पित्रा अनादृता च रुषा लोकान् धक्ष्यती भस्मी कुर्वाणेव चुकोप क्रुद्धवती ॥ ९ ॥

सा सती देवी अमर्षाचप्रक्षया अमर्षेण क्रोधेन विपन्नया अव्यक्तगिरा वाचा रुद्रायहेलनादिनासमुत्थितान् दक्षं हंतुमुद्यतान् भूतगणान् मणिमन्मदादीन् स्वतेजसा स्वबलेन निगृह्य निवार्य धूमपथश्रमस्मयं धूमपथेषुधूमादिमार्गप्रदकर्मसु परिश्रमोत्थगर्वं शिवं द्वेष्टीति शिवद्विट् तं दक्षं जगर्ह निंदितवती निंदावाक्यान्युक्त वतीत्यर्थः ॥ १० ॥

### श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका ॥

तान्येवाह न यस्येति त्रयोदशभिः प्रियात्मनः प्रियः निरतिशयप्रीतिविषयः आत्मा परमपुरुषः यस्य प्रियो हि ज्ञानिनोऽत्यर्थमहमिति गीतत्वात् यस्य रुद्रस्य लोके भुवने देहभृतां मध्येऽतिशायनः अतिशायितः प्रियः प्रीतिविषयः तथाऽप्रियो वा न स्ति सर्वांतरात्मानम् परमात्मानमेव निरतिशयप्रीतिरूपापन्नया भक्त्या भजतस्तस्य सर्वं ब्रह्मात्मकतयानुसंदधतः प्रिया प्रियादिविभागो नास्तीत्यर्थः तस्मिन्मुक्तवैरके सर्वभूतसुहृदि समस्तात्मनि स समस्तस्यात्मा आत्मावत्प्रियः तस्मिन् यद्वा समस्ते आत्मा ब्रह्म पूर्णमिति चित्तं यस्य तस्मिन् तद्वैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहंमनुरभवं सूर्यश्चकक्षीवानृषिरस्मि विप्र इत्यादि श्रुत्युक्तविधया सर्वात्मकंब्रह्मसर्वात्मकत्वेनस्वस्मिन्साक्षात्कुर्वंतीतिवार्थः योऽहंशरीरकः परमात्मास एवमन्वादिशरीरक इति श्रुत्यर्थः यद्वा ब्रह्मण आवेशावतारत्वाद्रुद्रे ब्रह्मदृष्टचैवेदमुक्तं सर्वात्मनीति अस्मिन्पक्षे षष्ठीतत्पुरुषः संमतः एवं विधरुद्रे भवंतंविनाकतमः कोवाप्रतीपये तूप्राति कूल्यमाचरेत् ॥ ११ ॥

एवं ब्रह्मविदग्रेसरस्य रुद्रस्यप्रतीपाविषयत्वमुक्तंअथैतस्मिन्साधौ ब्रह्मविदिकृतापराधिनोदुर्जनात्त्वत उत्पन्नमिदं शरीरंत्यक्ष्यामीति वक्ष्यंती प्रथमं साध्वसाधुलोकौ विभजति दोषानिति हे द्विजपितृशब्देनाऽसंबोधनं तदाधक्षेपायभवादृशाः केचित्त्वादृशाः दुर्जनाः परेषांस्वापेक्षया अन्येषांगुणेषु सत्स्वपिदोषानेव गृह्णंतितानेवोद्घाटयंति न तु गुणांस्तेऽसाधवइत्यर्थः येपुनः रुद्रादयः दोषान्न गृह्णंति किंतु फल्गूनल्पानपि गुणानेवबहुली करिष्णवः वितनोतुमिच्छवो भवंति ते महत्तमाः गुणेपुसाधवइति पाठेयेसाधवःफल्गूनपिगुणान् बहुलीकरिष्णवस्ते महत्तमाइत्यन्वयः तेषु चमहत्तमेषु भवानघम पराधम् अविदद्लब्धवान् कृतवानित्यर्थः ॥ १२ ॥

असतांत्वादृशामिदं महत्स्वपचरणं युक्तमेवेत्याह नाश्चर्यमिति कुणपात्मवादिषु कुणपंशवप्रायं शरीरमेवात्मेति ये वदंति तेषु भवादृशेष्व सत्सु सर्वदासेर्ष्यम् ईर्ष्या अक्षमा सेर्ष्यं यथा भवति तथा महद्भिर्निंदा महत्तमविषयनिंदेति यदेतत्तदाश्चर्यं न भवति प्रत्युतमहापुरुषपादपांसुभिः महापुरुषा महत्तमास्तेषामंघ्रिरजोभिः निरस्तं तेजः प्रभावो येषांतेषु त्वादृशेषु तदेवमहद्भिर्निंदनमेव शोभनं उचितं यद्यपि महांतः स्वानिंदां सहंते तथापि तत्पादरेणवस्तदसहमानास्तेषां तेजोनिरस्यंतिअतोऽसत्सुविनिंदनमेवोचितमित्यर्थः १३

कोसावपचारोमहत्सुमयाकृतइत्यत्राहयादितिद्वाभ्यांयस्यरुद्रस्यद्व्यक्षरंशिव इत्यक्षरद्वयात्मकंनामनामधेयंप्रसंगादीपसद्भिर्द्वरावींगिद्रयेणेरितमुच्चरितं नृणामघं पापमाशु द्राक्हंति निवर्तयति सतामपि नामोच्चारणादेर्भगवन्नामवद्घांनवर्तकत्वादितिभावः अलंघ्यम नतिक्रमणीयं शासनमाज्ञा यस्य तं शिवमशिवोऽमंगलो भवान् द्वेष्टि अहोकष्टम् अमंगलो द्वेष्टीत्यनेनतद्वेषाद्भवतोऽमंगलमनंतरभावीति भावः ॥ १४ ॥

किंच ब्रह्मरसासवार्थिभिः ब्रह्मरसो ब्रह्मानंदः सएवासवो मकरंदस्तदर्थिभिः ब्रह्मानंदानुभवमधुलिप्सुभिः महतां मनांस्येवालयो भृगास्तैर्यस्यरुद्रस्यपादपद्मंनिषेवितं ईश्वराज्ज्ञानिमन्विच्छेदितिज्ञानप्रदत्वादिति भावः कीदृशं तत्पादपद्मं यन्निषेवितं तत्राह यत्पादपद्मम् अर्थिनो लोकस्य याचमानस्य जनस्य आशिषोऽभीष्टानि वर्षति ददाति तस्मै विश्वबंधवे विश्वानुकूलाय भवान् द्रुह्यति अपकरोति क्रुधद्रुहेति चतुर्थी ॥ १५ ॥

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

एवं भर्तृप्रेषितानुचरसूचितस्नेहात् शांतमनस्कत्वेन पश्चान्नगता किं तु पुरत एव गत्वा सा यज्ञवाटमाविशदित्याह आब्रह्मेति आसमंताद्ब्रह्मघोषेण वेदध्वनिना ब्रह्मलोकपर्यंतगामिना ध्वनिना वोर्जितं संकुलं यज्ञार्थं वैशसं पशुसंज्ञपनं पशुहिंसनं यस्मिन् तत्तथा मृच्च दारु च अयश्च कांचनं च दर्भाश्च चर्माणि च तैर्निसृष्टानि निर्मितानि भांडानि यस्मिस्तथा ॥ ६ ॥

तस्या अवज्ञाकरणप्रकारमाह तामागतामिति यज्ञकृतो दक्षस्य कश्चनेत्यस्य व्यावृत्तिमाह ऋते इति स्वसारः स्वसृः तत्स्नेहः कुतोऽवगत इति तत्राह सादराः सानुरागा इति ॥ ७ ॥

सती प्रत्यालिंगनादिकं किं कृतवती नेति भावेनाह सौदर्येति प्रधानावज्ञादुःसहेति भावेनाह पित्रेति अप्रतिनंदिता अकृतमनःसंतोषा ॥ ८ ॥

ततः किमकरोदिति तत्राह अरुद्रभागमिति न रुद्रस्य भागो यस्मिन्स तथा तं कृतहेलनं कृतावज्ञम् ॥ ९ ॥

अभीश्वर्या कुपितमित्यत्र किं लिङ्ग मत्राहजगर्हेति । अमर्षेण विपन्नयागद्गदभावं प्राप्तया धूमपंथाः कर्ममार्गः तद्विषये श्रमः शिक्षा स्मयो गर्वो यस्य स तथा तं कर्ममार्गेऽतिनिष्णातमित्यर्थः स्वतेजसा स्वभावेन निगृह्य निवार्य ॥ १० ॥

स्त्रीत्वेपि प्रमाणवद्युक्त्या निनिंदेत्याह न यस्येति लोके भुवने विद्यमानानां देहभृतां शरीरिणां प्रियात्मनो मनो भीष्टरूपस्य यस्य रुद्रस्य योग्यतातिरेकेणातिशायनः प्रियेतिप्रियस्तथाऽप्रियो द्वेष्यश्चनास्ति । तस्मिन् रुद्रे भवंतमृते पुरुषाणां कतमः पुरुषः प्रतीपको न कोपीत्यर्थःप्रतीपाकरणे हेत्वंतरं चाह समस्तात्मनीति विष्णुवादीन् पट् ऋते इंद्रादिसमस्तस्वामिनि नाहिकाश्चिद्विरोध्य तिष्ठति स्वाम्यपि वैरकृच्चेत्तस्मिन्द्वेषः संभावित इत्यत उक्तमेव हेतुं स्मारयति मुक्तवैरकं इति वैरेत्युपलक्षणं प्रेमापि विमुक्तप्रिय इत्यर्थः ॥ ११ ॥

तत्त्वतोपि भवानपि भवद्वेषं कर्तुं न योग्य इत्याह दोषानिति केचिदसाधवो दुर्जनाः परेषामुत्तमानां गुणेषु दोषानेव गृह्णंति न गुणान् तदुक्तं“ दोषोप्येको यदि गुणगणे तत्र मुक्त्वा गुणौघान् दोषग्राही भवति हि खलः सच्छिकातुल्यधर्म„ इति भवादृशा महत्तमाः द्विजाः फल्गून् गुणान् बहुली करिष्णवो न दोषान्गृह्णंति किं तु गुणानेव “दोषान्मुक्त्वा गुणमनुभवन् स्वल्पमप्येति तृप्तिं साधुर्लोके सलिलमिलितक्षीरपायीव हंस„ इति तत्रैवं शास्त्रे स्थिते महत्तमेषु गणितो भवान् भवद्वेषादघमविदल्लब्धवान् हि अहो कष्टमिति शेषः द्विजा इत्यनेन दक्षस्य शास्त्रविचारयोग्यतातिशयं सूचयति ॥ १२ ॥

असतां योग्यो महत्तमेष्वेकस्य तव शिवद्वेषो ममाश्चर्यबुद्धिं जनयतीति भावेनाह नाश्चर्यमिति * कुणं कर्मफलं पिबतीति कुणपो देहः स एवात्मेति वादिनस्तेषु असत्सु ईर्ष्यया सह वर्तमाना महतां विनिंदास्तीति यत्तेतदाश्चर्यं किंतु तदेव महद्भिर्निंदनमेव शोभनमित्यन्वयः कुणपात्मवादित्वं च विद्वज्जनानिषेवाया अभावादित्याह महापुरुषेति कश्चिद्विद्वज्जनसेवया आप्तशास्त्रज्ञानेन हि तत्त्वज्ञानं स्यात्तद्वेषान्नास्त्यतो युक्तं कुणपात्मवादित्वे न महद्भिर्निंदनं भवांस्तादृशोऽतोममाश्चर्यबुद्धिरिति ॥ १३ ॥

महाद्भिर्निंदनं मया नकृतमिति वक्तुं न शक्यत इत्याह यत् द्व्यक्षरांमति शिव इति द्वे अक्षरे यस्मिस्तत् द्व्यक्षरं यस्य भगवतो यत्

* कुत्सितं णं सुखं कर्मफलं ।

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

द्व्यक्षरं नाम तत् सकृत्कथाप्रसंगात् गिरा वागिंद्रियेणेरितमुच्चारितं नृणामघं अन्येन हंतुमशक्यं दुःखम् आशु हंति नाशयति भवांस्तं शिवं द्वेष्ट्यहो लुप्तक्रियायाशुचये मानिने भिन्नसेतव इत्यतो भवाञ्शिवेतरो लुप्तक्रियोऽशुचिः शिवस्त्वशुचीनां पुंसां शुचिहेतुर्दुःखनाशनान्नित्यं शुचिरिति भावेनाह पवित्रेति शिवनामकीर्तनादेकदा नष्टं दुःखं पुनर्नरोहतीति भावेनाह अलंघ्यंति न लंघ्यमन्यथा कर्तुं शक्यं तन्नामकीर्तनादुत्पन्नं शुभं प्रनष्टमशुभं चेति शासनं शास्त्रं यस्य स तथा तम् ॥ १४ ॥

प्रेतावासेषु यो घोरैश्चिताभस्मकृतस्नानइत्यादेः श्लोकद्वयेनोत्तरं ध्वनयति यत्पादपद्ममिति ब्रह्मरसः * ब्रह्मज्ञानजन्य आनंदः स एवासव इंद्रियतृप्तिकरं मधु तस्यार्थनाशीलं येषां ते तथोक्ताः तैर्महतां सनकादीनां मनांस्येवालयः भृंगास्तैर्यस्य पादपद्मं नितरां सेवितं यद्देव दत्तपादवन्निष्फलं नेत्याह लोकस्येति आशिष अभ्युदयलक्षणाः अनेन गुरुद्रोहित्वं तव प्राप्तमित्युक्तं भवति "सनकादयो रुद्रशिष्यास्तेषामन्ये तु योगिनः ब्रह्मशिष्यस्तथा रुद्रो ब्रह्मा नारायणस्य च," इति विशेषवचनान्महतामित्यनेन सनकादयो गृह्यंते ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

विमानिन इति चित्सुखः । प्रेम्णेति सम्बन्धोक्तिः ॥ ७—१० ॥

प्रतीयत इति चित्सुखः ॥ ११ ॥

केचिदसाधारणाः साधवो गुणेष्वेव दोषान्न गृह्णन्ति प्रकारविशेषेण गुणान्तः पातितयैवं मन्यन्ते । अतः साधारणास्तु ते गुणान् दोषांश्च यथावदेव मन्यन्त इत्यर्थः । तदेवं साधवो महान्तस्तेष्वसाधारणास्तु महत्तराः महत्तमाः पुनस्तुच्छानपि गुणान् बहुलीकरिष्णवो भवन्ति स्वभावत प्रचुरतया मन्यन्ते चकाराद्दोषानपि गुणान् मन्यन्त एवेत्यर्थः । भवादृशास्तु तथा न किन्तु तत्तद्विपरीतभावाः गुणदोषयो र्यथावदमननात् । गुणानां दोषतया ग्रहणात् । तुच्छस्यापि दोषस्य प्राचुर्यमननात् । पूर्वस्माच्च । अतस्ते क्रमेणाऽसन्तोऽसत्तराः असत्तमाश्च ज्ञेयाः अत्रासत्तमेषुगुणानां दोषतया ग्रहणमपि पूर्वस्माच्चेत्युक्तं त एते भवादृशाभवदुपमेयोऽसाधारण गुणिजन· विरोधित्वात् । भवांस्तु महत्तमेष्वपि तथा मननात् सर्वाधम एव किमुत साक्षात् श्रीशिवेऽपीत्यर्थः ॥ १२ ॥

एतच्च नाश्चर्यं अनाश्चर्यत्वे हेतुः कुणपेति । एषां शुद्धमात्मानं त्यजतामशुद्धे तस्मिन्नुपादेयबुद्धीनां किमाश्चर्यमिति भावः । सोपहासमाह । तेजोऽन्तररहितेषु मृतकेषु भीषणान्वमिव तदेव तेजस्त्वख्यापनात् शोभनं गौरवापादकं नान्यत् किमप्यस्तीति तैः किमन्यत् कर्त्तव्यमिति भावः पादपांशुशब्देनात्र प्रभावलेशो लक्ष्यते लक्षणा चेयं तेषामतितुच्छत्वव्यञ्जनार्थासेर्ष्या इति चित्सुखः ॥ १३—१५

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

यजनं यज्ञस्थानं कीदृशं आसमन्ताद्यो वेदघोषस्तेनोर्ज्जितं शोभितं यज्ञसम्बन्धिपशुविशसनं यत्र तत् । यद्वा यज्ञे विदुषां शास्त्रविचारस्पर्द्धया परस्परपराभूयैव वैशसं विबुधैश्च जुष्टं मृदादिभिर्निसृष्टानि निर्मितानि भाण्डानि यत्र तत् ॥ ६ ॥

स्वसृर्जननीश्च ऋते विना तं तत्र कश्चनापि नाद्रियत् तत्र हेतुः यज्ञकृतौ दक्षादयन्द्वयं तस्मात् । ततश्च विमानितां तैरनादृतामपि तां स्वसृर्जनन्यः सादराः दक्षाद्विभ्यत्यः परिषस्वजुः ॥ ७ ॥

सौदर्याणां भगिनीगणानां संप्रश्नैः कुशलप्रश्नैः समर्था योग्या या वार्त्ता तया सह दत्तां सपर्यां नादत्त न गृहीतवती कुशलप्रश्ने न प्रत्युवाच आसनादिकञ्च न पस्पर्शेत्यर्थः । तत्र हेतुरप्रतिनन्दिता अनादृता ॥ ८ ॥

आहूतिमन्त्रान् शृण्वती रुद्रभागहीनमध्वरमवेक्ष्य देवं श्रीरुद्रं स्वावहेलनात् कृतहेलनं ज्ञात्वा चुकोप ॥ ९ ॥

अमर्षेण कोपेन विपन्नया सगद्गदया धूमपथे कर्ममार्गे श्रमेणाभ्यासेन स्मयो गर्वो यस्य तं दक्षवधाय समुत्थितान् स्वाज्ञया निगृह्य निवार्य ॥ १० ॥

गर्हामेवाह त्रयोदशभिः । न यस्येति अतिशायनः यस्मादधिको नास्ति ईश्वरत्वात् । प्रियश्चाप्रियश्च नास्त्यात्मारामत्वात् निर्विसर्ग पाठे अतिशायनश्च प्रियश्चेतीतरेतरयोगेऽपि सर्वोद्वन्द्वो विभाषयैकवद्भवतीत्येकत्वं । ऊकालोऽज् ह्रस्वदीर्घप्लुत इतिवत् । अथच देहधारिणां प्रियात्मनः प्रियात्मस्वरूपस्य तस्मिन् समस्तात्मनि सर्वजगत्कारणे भगवन्तं विनेति भवानेव प्रतीपयेत् प्रतीपं प्रतिकूलं कुर्यात् । यद्वा ऋते सत्यरूपे तस्मिन् मुक्तवैरके सति भगवंतं कः प्रतीपयेत् समुचिताचरणेन प्रतिकूलं कुर्यात् । एते याज्ञिक सदस्यादयस्तु त्वद्दत्तैरन्नैः कुक्षिम्भरा एव किन्तु स रुद्र एव वा तदीयो वा कश्चिदेव प्रतीपयेदिति भावः ॥ ११ ॥

असाधोस्तव सभायामेते खल्वसाधव एवेति वक्तुं साधूनसाधूंश्च लक्षयति दोषानिति । परेषां दोषानपि गुणेषु प्रकारविशेषेण गुणान्तः पातितयैव ये गृह्णन्ति यथा कठोरभाषित्वं यदप्यस्य दोषस्तदपि हितकारित्वादयं रोगनिवर्त्तको निम्बरस इव गुण एवेत्येवं ते साधवो महान्त एव केचिद्भवंति हे द्विजेत्यधिक्षेपे तत्र न भवादृशा इति भवादृशास्तु गुणानपि दोषान्तःपातितयैव गृह्णन्ति यथास्य यत्परोपकारित्वं तत् परद्रव्य जिघृक्षयैवेति दोष एवायमित्येवं ते खल्वसाधवएव येतु दोषान् अपश्यन्तो गुणानेव गृह्णंति यथा वणिगयमातिथेयो निस्तीर्ण इत्येवं ते महत्तराः । तथैव ये दोषानेव गृह्णन्ति नतु गुणान् यथा भिक्षुरयमुदरपूरं स्निग्धान्नं यदत्ति तदयं कामी भ्रष्टो मन्तव्य इत्येवं ते असाधुतराः । येतु फल्गून् तुच्छानपि गुणान् बहुलीकरिष्णवः बहुलीकरणशीलाः किमुता फल्गून् दोषांस्तु नैव पश्यन्ति यथा शीतार्तत्वादेव मदीयवस्त्रमपहरन्नपि शस्त्रपाणित्वेऽपि दयालुत्वादेव न हिनस्ति तदयं धन्य इत्येवं ते महत्तमास्तथैव ये तुच्छानपि दोषान् बहुलीकरिष्णवो गुणान्नैव गृह्णन्ति यथा विरोक्तोऽयं वनमपहाय यद्गृहस्थगृहेषु वसति तत् प्रचुरधनं चोरयितुकाम इत्येवं ते असाधुतमाः ये तु गुणाभावेऽपि परेषां गुणानेव पश्यन्ति । यथा जगत्यस्मिन् केऽपि शिष्टा न सन्ति सर्व एव दुष्टा इति ते अत्यसाधुतमा इत्येवं सत्त्वतारतम्येन साधव इति साधूनां द्वैविध्येऽप्युक्ते तमप् प्रत्ययेन युक्ति सम्भवेन च महतां चातुर्विध्यमायातं । तथैव तमस्तारतम्येन भवादृशा इति अविद्वानधमित्याभ्याम् असाधूनामपि द्वैविध्येऽपि युक्त्या चातुर्विध्यं । शुद्धसत्त्वकल्याणगुणमयभक्तियोगतारतम्येन पुनरप्येवं साधूनामपराधतारतम्येनासाधूनाञ्चातुर्विध्यं ज्ञेयं एवञ्च देहभृतां प्रियात्मनस्तस्मिन् समस्तात्मनि मुक्तवैरक इत्यादिना

* ब्रह्मशब्दस्य ज्ञानेलक्षणा ततोमध्यमपदलोपंचाह ।

श्रीमद्विश्वनाथचक्रवर्तीकृत सारार्थदर्शिनी ॥

श्रीरुद्रस्य सर्वत्रापि प्रीतिमत्वेन सर्वत्रादोषदृष्ट्या च अतिमहत्तमत्वं । तेष्वविद्वद्भवानघमित्यनेन तस्मिन् श्रीरुद्रे दोषमात्र दर्शनात् तस्य च सर्वात्मत्वात् सर्वजगत्येव दोषदृष्टिप्राप्त्या चोदिते परमेष्ठिनेत्यनेन ब्रह्मण्यपि दोषदृष्ट्या ब्रह्मिष्ठानमभिभूय चेति महत्स्वप्यपराधेन च दक्षस्यात्यसत्तमत्वं ध्वनितम् ॥ १२ ॥

एतच्च तादृशेषु दुर्जनेषु उचितमेवेत्याह नेति । कुणपं जडं शरीरं तदेवात्मेति वदन्ति ये तेषु असत्सु या सर्वदापि महद्भिर्निंदा एतदाश्रयेन क्लीबत्वेषु पांशुभिः फल्गुभिः सेर्ष्यं यथास्यात्तथा निरस्तं तेजः प्रभावो येषां तेषु यद्यपि महान्तः स्वनिंदां सहंते तथापि तत्पादरेणवस्तदसहमाना स्तेषां तेजो निरस्यन्तीत्यर्थः । अतोऽसत्सु महद्भिर्निन्दनमेव समुचित फलदायकत्वात् शोभनम् ॥१३॥

नच महत्स्वपि मध्ये श्रीशिवतुल्यः कोऽप्यन्योऽस्तीत्याह यस्य द्व्यक्षरं शिव इति तत् प्रसिद्धं नाम केवलं गिरैव ईरितं ननु मनसा ध्यातं । तच्च सकृदपि प्रसंगादपि पवित्रकीर्तिमिति माधुर्यं अलंघ्य शासनमित्यैश्वर्यं । शिवेतरोऽमङ्गलः ॥ १४ ॥

पापहरत्वमुक्तं मुक्तिप्रदत्वमाह यदिति ब्रह्मरसोब्रह्मानन्दएवासवो मकरन्दस्तदर्थिभिः भोगप्रदत्वमाह लोकस्येति ॥ १५ ॥

---

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः ।

आब्रह्मघोषेरु सर्वतो वेदध्वनिना ऊर्जितमतिशयितम् यज्ञवैशसं मियापरामवार्थवादो यस्मिन् तत् सर्वग्रः विप्रर्षिभिर्जुष्टं सेवितम् विबुधैश्च जुष्टम् मृद्दार्विभिर्निश्चयानि निर्मितानि भांडानि यस्मिन् तत् यजनं यागस्थानं समाविशत् सतीति शेषः ॥ ६ ॥

तत्र यागस्थान मागतां तां सतीं स्वसृजननीं च ऋते यज्ञकृतो दक्षाद्भयं तस्मात् कश्चन जनो नाद्रियत् नादतवान् तत्र हेतुगर्भं विशेषणं विमानितां यज्ञकृतेति विभक्तिव्यत्ययेनान्वयः ताः स्नु प्रेमाश्रुभिर्निरुद्धं कंठं यासां ताः सादरः परिषस्वजुः आलिंगितवत्यः ॥ ७ ॥

सा पित्रा अप्रतिनंदिता सती मात्रा मातृस्वसृभिर्भगिनीभिश्च सादरं यथा तथा दत्तां सपर्यां पूजामुरुक्ष्ममासनं च नादत्त न स्वीकृतवती किंच सौदर्येण सोदरत्वेन भगिनीनां यः संप्रश्न कुशलप्रश्न स्तत्र या समर्था योग्या वार्ता तया सह तांचापि नादत्त नाश्रणो दित्यर्थः ॥ ८ ॥

यज्ञसदसि पूर्वयज्ञसदसि देवे विभौ विपुलज्ञाने पित्रा कृतं हेलनमवेक्ष्यतं वर्तमानमध्वरं चाद्रभागं न विद्यते रुद्रभागो यत्र तथा भूतमवेक्ष्य तस्मिन्नेवाध्वरेपित्रा स्वयमनादृता अधीश्वरी चुकोपेत्यन्वयः ॥ ९ ॥

सा देवी भूतगणान्समुद्यितान् स्वतेजसा निगृह्य निवार्य्य अमर्षेण क्रोधेन विपदया क्षुब्धया गिरा धूमपथे कर्ममार्गेयः अमोऽस्यास्तेनस्मयो गर्वो यस्य शिवं द्वेष्टीति तं जगर्हेगर्हयामास ॥ १० ॥

गर्हामेवाह न यस्येति त्रयोदशभिः यस्य लोके अतिशायनः अतिशयितः प्रियोऽप्रियश्च नास्ति अत एव देहभृताम् प्रियः आत्मा स्वभावो यस्य तस्य तस्मिन् मुक्तवैरके समस्ते पूर्णे वासुदेव आत्मा चित्तं यस्य तस्मिन् यद्वा मर्तवेवासुदेवबुद्ध्यभिप्रायेण वासुदेवावेशावताराभिप्रायेण च महात्मनि शिवे समस्तानामात्मा समस्तात्मेति प्रयोगो युक्तस्तस्मिन् भवंतम् ऋते कतमः प्रतीपयेत् प्रतिकूलमाचरेत् ॥ ११ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

साधुर्निंदकृत उत्पन्नमिदं नचारयिष्ये इति वक्तुं साधवसाधुलक्षणकथनपूर्वकं दक्षदोषान् शिवगुणानाह दोषानित्यादिना द्वेष्टिजेत्यधिक्षेपः ये परेषां गुणेषु सत्सु दोषानेव गृह्णंति ते भवादृशाः साधुप्रतियोगिनः असाधव इत्यर्थः बहुवचनं तेष्वपि तारतम्यं द्योतयति केचित् गुणेषु दोषान्केवलान् न गृह्णंति किं तु दोषान् गुणांश्च विवेकेन गृह्णंति तथोक्तं महाभारते शत्रोरपि गुणावाच्याः दोषावाच्यागुरोरपीति अत्र गुरुः पित्रादिः ते लोकमर्य्यादास्थापकाः महांतः केचिच्च गुणाने व गृह्णंति किंतु फल्गून् तुच्छानपि गुणान् बहुलीकरिष्णवो भवंति ते महत्तमाः एते साधवः तेषु भवान् अघमपराधमविदत् लब्धवान् अकल्पथवित्यर्थः ब्रह्मिष्ठानमिभूयचेत्युक्तत्वाच्च ॥ १२ ॥

कुणपं शरीरं तदेवात्मेति तेषु भवादृशेष्वसाधुषु ईर्ष्यां अत्यांतिः सेर्ष्यं यथा भवति तथा महद्भिर्निंदेति यदेतदाश्रयं न भवति किं तु तदेव महद्भिर्निंदनमेव शोभनमुचितं भवति साधवो यद्यपि स्वनिंदां सहंते तथापि तदंघ्रिरेणवस्तेषां तेजोनिरस्यंतीत्याशयेन तान् विशिनष्टि महापूरुषपादरेणुभिर्निरस्ततेजःक्षिति ॥ १३ ॥

यत्तस्य द्व्यक्षरं शिव इति नाम नृणामाशु अघं हंति कथं प्रसंगादुपचारात् तत्रापि सकृदेकवारमेव गिरेरितं सत् ॥ १४ ॥

यस्य पादपद्मं महतां मनांस्येवालयस्तैः ब्रह्मरसो भगवदानंदः स एवासवो मकरंदस्तदर्थिभिः निषेवितम् यच्च अर्थिनः आशिषः विद्यादिसंपदो वर्षति ॥ १५ ॥

---

भाषाटीका ।

वहां जाकर देखें तो ब्रह्मघोष से पूरित और यज्ञका पशु दिया जाय जहां उस यज्ञ स्थान में सतीजी ने प्रवेश किया कि जहां पर देवता और ब्रह्मर्षि बैठे हुये हैं और चारों तरफ मृत्यका, काष्ठ, लोहा, कंचन, दर्भ और चर्म इनके बने हुये पात्र धरे हैं ॥ ६ ॥

सतीजी के वहां जाने पर मारे दक्ष के डर से किसीने भी इन का आदर नहीं किया केवल मा और बहिनों ने अश्रुपातों से गला भरकर बड़े हर्ष और आदर से इनके साथ भेट मिलाप किया ७

तौ भी सहोदरी बहिनों के प्रश्न की बात भी नही सुनी तथा माता और मासी अर्थात् माकी बहनों ने जो सतीजी को आसन और भेट पूजा दी सतीजीने कुछ भी ग्रहण न करी क्योंकि पिताने तो बात भी नहीं पूंछी ॥ ८ ॥

सतीने एक तो यज्ञमें महादेवजी का भाग न देखा दूसरे पिता ने शिवजी को निमंत्रण भी न दिया तौ भी उतनी चिंता नथी पर यज्ञ सभा में इतनी बडी अधीश्वरी का अनादर किया तब सती जी को बडा क्रोध भया जैसे मानों रोष के मारे लोगों को जला देवेंगी ॥ ९ ॥

इतने में दक्षके मारने को उद्युक्त हुये भूतगणों को सतीजी ने अपनी आज्ञासे रोककर क्रोधभरी हुई दुःखित वाणी से शिवद्रोही कर्ममार्ग के श्रम से गर्वीले, अपने पिता की सबों के सुनते २ बहुत निन्दाकी ॥ १० ॥

श्रीसतीजी बोली । न लोक में देहधारियों के मध्य में जिनका कोई अतिप्रिय न कोई अप्रिय केवल प्रिय है आत्मा श्रीहरि जिन

किं वाशिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्यजटाः श्मशाने।
तन्माल्यभस्मनृकपाल्यवसत्पिशाचैर्ये मूर्द्धभिर्दधति तच्चरणावसृष्टम् ॥ १६ ॥
कर्णौ पिधायनिरयाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने।
छिंद्यात्प्रसह्य रुशतीमसतीं प्रभुश्चे-ज्जिह्वामसूनपि ततो विसृजेत् स धर्मः ॥ १७ ॥
अतस्तवोत्पन्नमिदं कलेवरं नधारयिष्ये शितिकंठ गर्हिणः।
जग्धस्य मोहाद्धिविशुद्धिमंधसोजुगुप्सितस्योद्धरणं प्रचक्षते ॥ १८ ॥
न वेदवादाननुवर्तते मतिः स्वएव लोके रमतोमहामुनेः।
यथागतिर्देवमनुष्ययोः पृथक् स्व एवधर्मेनपरं क्षिपेत् स्थितः ॥ १९ ॥
कर्म प्रवृत्तं च निवृत्तमप्यृतं वेदे विविच्योभयलिंगमाश्रितम्।
विरोधितद्यौगपदैककर्त्तरि द्वयं तथा ब्रह्मणि कर्म नर्छति ॥ २० ॥
मावः पदव्यः पितरस्मदास्थिता या यज्ञशालासु न धूमवर्त्मभिः।
तदन्नतृप्तैरसुभृद्भिरीडिता अव्यक्तलिंगा अवधूतसेविताः ॥ २१ ॥

भाषाटीका।

कों एसे सबों को आत्माके नाईं प्यारे वैर को दूर छोडने वाले एसे शिवजी से पिताजी ! तुमको छोड कौन वैर करेगा ॥ ११ ॥

हे द्विज ! ( अर्थात् तुम पिता कहने योग्य नहीं हो ) तुमारे सदृश मनुष्य और लोगों के गुणों में भी दोषों को देखते हैं और शिवजी सदृश साधुजन गुणों में दोष देखना तो दूर रहा थोडे भी गुण होंय तो उनको बहुत करकें जानते हैं एसे महत्तम पुरुषों में तुमने दोष समझा है ॥ १२ ॥

तुमारे सदृश, देहाभिमानी खोटे मनुष्यों को ईर्षा पूर्वक महज्जनों की निंदा करना ये कुछ आश्चर्य नहीं हैं क्योंकि महापुरुषन के चरण रज से नष्ट तेज वाले तुमारे सदृशों को निंदा करनाही शोभा है ( यद्यपि महापुरुषों के चरण रज से तेज बढना चाहियें परंच अधिकारी नहोनेसनष्ट होजाता है जैसे कमोदनी को सूर्य प्रकाश) ॥ १३ ॥

जिन का दो अक्षर का ( शिव एसा ) नाम भी मनुष्यों की वाणी से एक बार भी निकले तौ भी पापों को नाश कर देवे एसे पवित्रयश वारे जिनकी आज्ञा को जगत में कोई उल्लंघन न कर सकेंएसे शिवजी से अमंगलरूप तुम वैर करते हो अहो ! बडा आश्चर्य है ॥ १४ ॥

जिनका चरणारविन्द ब्रह्म रसरूप मकरंद को पान करने वाले महात्माओं के मनरूप मधुपों से सेवित होरहा है और जिनका चरणारविंद याचकों की कामनाओं को पूर्ण करता है एसे विश्वभर के बंधुरूप श्रीशिवजी से तुम द्रोह करते हो ॥ १५ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

यदुक्तंशिवापदेशोह्यशिवइति यच्चोक्तंप्रेतावासेष्वित्यादितद्धिक्षिपत्याह किंवेति योजटाअवकीर्यश्मशानेऽवसद्वसतिस्म तस्यश्मशानस्थमाल्यानिभस्मानिनृकपालानिचभूषणत्वेनसंतियस्य तरयत्तो-न्येनविदुः किं विदंस्त्येवेतिचेन्न तथासतितंपतद्वास्यानुपपत्तेरित्याह तच्चरणादवसृष्टंगलितंनिर्माल्यंमूर्धभिर्धारयंति ॥ १६

इदानींदेहंत्यक्तुकामाधर्मतत्त्वमाह कर्णावाच्छाद्यनिर्गच्छेत् यद्यदिमर्त्तुमारयितुंवा कल्पोनभवति कदा धर्मावितरिधर्मरक्षकेईशेस्वामिन्यसृणिभिर्निरंकुशैर्नृभिरस्यमानेऽधिक्षिप्यमाणे प्रभुः शक्तश्चेत् रुशतीमकल्याणवादिनीम् प्रसह्यबलाच्छिंद्यात् ततोऽपिस्वयंप्राणान्विसृजेदितियत्सधर्मः ॥ १७ ॥

तवत्वत्तउत्पन्नम् शितिकंठोनीलकंठस्तन्निंदकात् प्रमादादापन्नस्यापवित्रस्यत्यागंविनानशुद्धिरितिदृष्टांतेनाह जग्धस्यभक्षितस्यान्नस्योद्धरणंवमनमेवपुंसोविशुद्धिप्रचक्षते ॥ १८ ॥

यदुक्तंलुप्तक्रियायाशुचयइतितत्प्रत्याह नेति वेदवादान्विधिनिषेधरूपान्स्वएवलोकेस्वात्मन्येवरममाणस्यमहतोमुनेःसम्यग्विरक्तस्यमतिर्नानुवर्तते निवृत्ताधिकारत्वात् अधिकारभेदेदृष्टांतः यथादेवानांगतिराकाशएवमनुष्याणांपृथिव्यामेव अतः स्वएवधर्मेप्रवृत्तिलक्षणेनिवृत्तिलक्षणेवास्थितः सन्परमन्यंधर्मपुरुषंवानाक्षिपेन्ननिंदेत व्यवस्थिताधिकारत्वेनोभयोः सत्यत्वात् नाक्षिपेद्वेतिवाऽन्वयः ॥ १९॥

एतदेवोपपादयंत्याह प्रवृत्तमग्निहोत्रादिनिवृत्तंशमदमादिऋतंसत्यमेवयतोवेदेआश्रितंविहितं तच्चोभयविधव्यवस्थयाश्रितंनत्वविशेषेण व्यवस्थासंदाऽऽहउभयंरागवैराग्यलक्षणंलिंगंचिह्नमधिकारविशेषणंयस्मिन्नस्तत् ननुयावज्जीवमग्निहोत्रंजुहोति शांतोदांत इत्यादिगुनेवंव्यवस्थाप्रतीयतेसत्यम् तथाप्युभयोरेकाधिकारविरोधात्तथापर्यवस्यतीत्याह युगपद्भावोयौगपद्यंयौग पद्येनैकस्मिन्कर्त्तरितत्कर्मद्वयंविरोधि ननुतर्हिनिवृत्तंकर्मशिवेनापिकर्तव्यमेवनेत्याह ब्रह्मणिसदाशिवेकिंचिदपिकर्मनऋच्छतिनप्राप्नोति अतोयथाप्रवृत्तनिवृत्तयोःपरस्परधर्माकरणंनदोषस्तथेश्वरेएतदुभयधर्माकरणेऽपीति भावः ॥ २० ॥

चिताभस्मकृतस्नानस्तथानग्नइत्यादिनायोभोगाभावउक्तस्तन्नाह हेपितः अस्माभिराश्रिताआश्रिताःपदव्योऽणिमादिसमृद्धयोवः

नैतेन देहेन हरे कृतागसो देहोद्भवेनालमलं कुजन्मना ।
व्रीडाममाभूत् कुजनप्रसंगतस्तज्जन्मधिग्यो महतामवद्यकृत् ॥ २२ ॥
गोत्रं त्वदीयं भगवान् वृषध्वजो दाक्षायणीत्याह यदा सुदुर्मनाः ।
व्यपेतनर्मस्मितमाशु तद्व्यहं व्युत्स्रक्ष्यएतत्कुणपं त्वदंगजम् ॥ २३ ॥

मैत्रेयउवाच ।

इत्यध्वरे दक्षमनूद्य शत्रुहन्क्षितावुदीचीं निषसाद शांतवाक् ।
स्पृष्ट्वा जलं पीतदुकूलसंवृता निमील्यदृग्योगपथं समाविशत् ॥ २४ ॥
कृत्वा समानावनिलौ जितासना सोदानमुत्थाप्य च नाभिचक्रतः ।
शनैर्हृदि स्थाप्य धियोरसिस्थितं कंठाद्भ्रुवोर्मध्यमनिंदिताऽनयत् ॥ २५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

युस्माकं मा नसंतीत्यर्थः यतोवः पदव्योयज्ञशालास्वेव भवंति ताश्चतदन्नेनयज्ञगतेनान्नेनतृप्तैः केवलमीडिताधूमवर्त्मभिश्चभुज्यंते याश्चस्मत्पदव्यस्तास्तुनैवंभूताः किंत्वव्यक्तलिंगाःनव्यक्तंलिंगंहेतुर्यासाम् इच्छामात्रप्रभवत्वात् अवधूतैर्ब्रह्मविद्भिःसेविताः अतोऽहमाढ्योरुद्रोदरिद्रइतिगर्वमाकृथाइतिभावः ॥ २१ ॥

किंबहुनोक्तेनेमंदेहंत्यक्ष्याम्येवेत्याह द्वाभ्याम् एतेननालंनपूर्यतेकिम् अपितुअलमेव कथंभूतेन कुजन्मना तदेवाह हरेकृतापराधस्य तवदेहादुद्भूतेनोत्पन्नेन ननुश्लाघ्योऽयंदेहःकथंत्याज्यस्तत्राह कुजनस्यतवप्रसंगतःसंबंधात्ममलज्जाऽभूत् अतोयोमहतामप्रियकर्तातस्माद्यज्जन्मतद्धिक्त्वत्संबंधादश्लाघ्यमित्यर्थः ॥ २२ ॥

किंच परिहासादिषुविनोदेनापिदाक्षायणीतिसंबोधयंस्त्वदीयं त्वत्संबंधवाचकंगोत्रंनामयदावृषध्वजआहगृह्णातितदाहंव्यपेतनर्मस्मितंयथाभवत्येवंसुदुर्मनाअतिदुःखनचित्ताभवामि तत्तस्माद्धिनिश्चितमेतत्कुणपप्रायंव्युत्स्रक्ष्येत्यक्ष्यामि ॥ २३ ॥

दक्षं प्रत्यनुवादंकृत्वा शत्रुहन् क्रोधादिरिपुघातिन् उदीचीमुदीच्यांदिशि पाठांतरउदङ्मुखी शांतवाक्गृहीतमौना जलंस्पृष्ट्वाऽऽचम्य दृक्दृशम् ॥ २४ ॥

योगमार्गमेवाऽऽह कृत्वेति अनिलौप्राणापानावूर्ध्वाधोवृत्तिकरौ निरोधेनसमानावेकरूपौ नाभिचक्रं कृत्वा ततउदानमुत्थाप्य धियासह हृदिस्थापयित्वा कंठमार्गेण भ्रुवोर्मध्यमनयत् ॥ २५ ॥

---

श्रीराधारमणदास गोस्वामिविरचिता ।
दीपन्याख्यादीपिका टिप्पणी ।

आक्षिपन्ती सिद्धांतेन तिरस्कुर्वन्ती त्वत्तोऽन्ये ब्रह्मादयोऽशिवत्वेन किं कुतो न विदुः तथा सति । आंशवत्वेन ज्ञाते सति ॥ १६ ॥

धर्मतत्वं धर्मस्य यथावत्स्वरूपं "तत्वं वाद्यप्रभेदे स्यात्स्वरूपे परमात्मनीति विश्वः ॥ ततोपि जिह्वाछेदे कृतेपि यद्यपि तत्राहं समर्था तथाप्यहंशिवः किंचित् कर्तुमशक्तस्यात् स्वस्त्रीद्वारावधं आश्रितवान् इति स्वस्वामिकीर्त्तौ दूषणं न स्यादिति भावः ॥ १७ ॥

किन्तु देहत्यागं तु कारिष्याम्येवेत्याह अत इति ॥ १८ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

तन्निन्दावाक्यं प्रत्याचष्टे एवकारं स्वधर्मसमभिव्याहारेण व्याख्याय निंदाऽत्यंतायोगं वक्तुं क्रियासमभिव्याहारेण व्याचष्टे व्यवस्थितेति आत्मज्ञानशून्यैः विविदिषार्थं प्रवृत्त धर्म एवानुष्ठेयः तत्सहितैस्तु शमादिनिवृत्तधर्म्म एवेति व्यवस्थितो नियमितो धिकारो ययोः प्रवृत्तनिवृत्तधर्म्मयोस्तत्वेन (हे)मा नीत्युपेर्धेति अत्यंतायोग व्यवच्छेदः ॥ १९ ॥

एतदेव व्यवस्थिताधिकारत्वेनस्वयमेव तच्च विहितत्वं विविच्येस्यस्यव्याख्यां सम्यक् व्यवस्थयेति तत्तदाधिकारिनियमेनेत्यर्थःअविशेषेण सामान्यतया यथास्वाराज्यकामोराजा राजसूयेन यजेतेत्याधिकारविधिस्तत्र यथा स्वाराज्यकामना सर्वेषामेव तथापि राज्ञ इत्यस्या धिकारिविशेषणत्वाद्राज्ञ एव स्वाराज्यकामस्य राजसूयेऽधिकारो नान्यस्य तथात्र रागवतैव प्रवृत्तं कर्मानुष्ठेयं न तु विरक्तेन वैराग्यवतैव निवृत्तं कर्मानुष्ठेयं न तु रागवतेति यथा संख्यं उभयमधिकारिविशेषणं यत्र प्रवृत्ते च कर्मणि तत् तत्र शङ्कते नन्विति एवं व्यवस्था अधिकारिविशेषणरूपान प्रतीयते अग्निहोत्रं रागवान् जुहोति वैराग्यवान् शांतो दान्त इत्यश्रवणात् तथापि अधिकारिविशेषणाऽश्रवणेपि उभयोः प्रवृत्तनिवृत्तकर्मणोः एकस्मिन्नधिकारिणि विरोधेन न हि अग्निहोत्रादिकर्मव्यग्रेण शमादि कर्तुं शक्यते न च शमादिमता विरक्तेन तादृशं कर्मकर्तुं शक्यते इति विरोधादुभयमपि कर्म तथा तत्तदधिकारिविशेषणरूपया व्यवस्थया पर्यवस्यति अन्यथाऽनुपपत्त्या पर्यवसानं प्राप्नोतीत्यर्थः पुनः शङ्कते नन्विति जीवानामेवोभयविधे कर्मणि अधिकारो न त्वीश्वरस्यत्यतः ॥ २० ॥

अत्र संतीति क्रियाध्याहारादित्यर्थोक्तिः तादृशपदव्यभावे हेतुमाह यतोहेतोः पदव्यः यज्ञानुष्ठानेन कीर्त्यादिसमृद्धयःधूममार्गस्याधिकारोभोक्तुर्यजमानास्यैव नतु ऋत्विगादीनामिति धूमवर्त्मभिरित्यस्य तदन्नतृप्तानां विशेषणत्वा योगात्पृथक्क्रियाद्यध्याहारेण व्याचष्टे धूमवर्त्मभिश्चेति नैवं भूतास्तदन्नतृप्तेडितत्वादिविशिष्टा न भवतीति नकारो योजितः अतः श्रीशिवस्यावधूतसेवितपदवीकत्वात् ॥ २१—२२—२३ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्यदीपिकाटिप्पणी

अनुवादं कृत्वा अनुवादमुखेन तद्वक्ष्यं प्रत्याख्यायेत्यर्थः उदीचीमान समभ्यर्थ्य द्वितीया पाठान्तरं इति तत्रोदीचानि पाठांतरं तन्मैत्रादङ्गुष्ठानि व्याख्येयात चक्रवर्त्ती उदङ्मेति मिश्राः उदास्या इति वय पवत्र लभ्रगारवात् ॥ पीतिदुकूलसंवृतेति सधवानां तथाचारात् ॥ २४ ॥

नाभिचक्रे मणिपूरके ॥ हृदि अनाहतचक्रे कंठमार्गेण विशुद्धिचक्रद्वारेत्यर्थः भ्रुवोर्मध्यम् आज्ञाचक्रम् ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचंद्रचंद्रिका ॥

नन्वमंगलचारत्वान्नामैव न स्मृतं त्वं तत्राह किंशतीति यो रुद्रः श्मशाने जटाः अवकीर्य विक्षिप्य तन्मालयभस्मनृकपाली श्मशानमालयभस्मनरकपालवान् पिशाचैः सह अयसत्तमंवमशिवममंगलाचारं रुद्रं तवचरणावसृष्टरज इत्यध्याहारः ये ब्रह्मादयो मूर्द्धभिः शिरोभिर्दधात धारयंति ते त्वदन्ये ब्रह्मादयः मरीच्यादिनवब्रह्मप्रभृतयः यद्वा अतद्गुणसंविज्ञानो बहुव्रीहिः अन्यथा अज लोकगुरुं नत्वेत्यादिपूर्वापरविरोधात् शिवाख्यं शिव इति आख्या नाम यस्य न थाभूतं न विदुः किं विदुरेवेत्यर्थः अमंगलाचारस्त्वनुकरणमात्रमिति भावः नन्वस्य परस्य ब्रह्मणः विष्णोः सर्वोत्तमत्वजगत्कारणत्वोपास्य त्वमोक्षप्रदत्वादिप्रतिपादकवेदांतार्थोपबृंहणपरेऽस्मिन्पुराणे मध्ये तत्र तत्र रुद्रादिजीवविशेषस्य कार्यत्वकर्मवश्यत्वादीन्प्रतिपाद्य पुनः समस्तात्मनि मुक्तवैरके ब्रह्मादयो येमूर्द्धभिर्दधति तच्चरणावसृष्ट नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वं विदुः प्रमाणं बलवीर्ययोर्वा त्वमेव भगवन्नेनाच्छिन्नशक्तेः स्वरूपयोः । विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपदो यथा । अहं ब्रह्मा च शर्वश्च जगतः कारणं परं । त्रयाणामेकभावानां यो न पश्यति वै भिदां सर्वभूतात्मनां ब्रह्मन् स शांतिमधिगच्छतीत्यादिषु भवानी ब्रह्मविष्ण्वादिवचनेषु सर्वोत्तमत्व जगत्कारणत्वोपास्यत्वादीन् विरुद्धान् प्रतिपादयन् भगवान्पाराशर्यः कथं विश्वसनीय इति चेन्न अत्र पुराणे परस्परावरुद्धार्थकथनं न काप्यस्ति क्वचित्प्रतीयमानमपि देवतांतरस्योत्तमत्वकारणत्वोपास्यत्वादिकं प्रतर्दनाधिकरणन्यायेन रुद्रादिशरीरकपरमात्माभिप्रायकं रुद्रादेर्भगवदावेशावतारत्वाद्वा भगवद्दृष्टत्वोपपन्नमेतत् अथ वा यथावस्थितभूतपूर्वप्रवृत्तांतस्य वास्मिन्पुराणे कथनात् तत्र तत्र कथासु भवानीप्रभृतिभिर्यानि वाक्यान्यभिहितानि तेषामेवात्र निबद्धत्वात्तत्र भवान्यादिवाक्यानां पतिपारम्यर्थ्यं ब्रह्मात्मकत्वप्रशंसात्मकत्वादितात्पर्यविशेषप्रवृत्तत्वाच्च पाराशर्येणाविरुद्धमभिहितं तत्त्वमपि ब्रह्मात्मकत्वेनापि रुद्राद्युपासनमाणिकत्तंव्यमिति यद्द्व्यक्षर नाम गिरेरितं नृणां सकृत्प्रसंगादघमाशु हंति पवित्रकीर्त्ति ये मूर्द्धभिर्दधति तच्चरणावसृष्टमित्यादिवचनेभ्यः प्रतीयतंकचित् क्वचत्सात्विकतंत्रे नान्यं देवं नमस्कुर्यान्नान्यं देवं निरीक्षयत् नान्यं प्रसादमारोहेन्नान्यदायतनं विशेदित्यादिभिर्देवतांतरवंदनादिप्रतिषेधः तथा तद्भक्तैः सहदर्शनसमानासनसंस्पर्शसंभाषणादि भुक्त्यादयः प्रतिषिद्धाः प्रत्युत देवतांतरतद्भक्तादरस्तत्र तत्र निंद्यते अतः सात्वतैतत्पुराणयोर्विरोधः नैवं ब्रह्मोपासनं हि द्विविधं सद्वारकमद्वारकं चेति तत्र सद्वारकोपासनं नाम रजस्तमः प्रकृतिब्रह्मरुद्रादिजीवशरीरकपरमात्मोपासनम् अद्वारकं तु शुद्धसत्वमयस्वेच्छोपात्तदिव्यमंगलविग्रहविशिष्टस्य निरस्ताखिलदोषस्यानंतकल्याणगुणाकरस्याश्रयः



श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

पत्युर्नारायणस्योपासक रुच्यनुसारेण वासुदेवसंकर्षणरामकृष्णादिव्यूहविभवादिभेदेनोपासनं तत्राद्यमुपासनं तत्तत्फललिप्सुभिः कार्यं द्वितीयं तु मुमुक्षुभिः कामाभिश्च एतद्वयमपि भगवता गीतासु चार्येणाभिहितम् यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छती-त्यादिना अनन्याश्चिन्तयंतो मामित्यादिना दृशान् देवयजो यांतीत्यादिना च अत्राप्युपक्रमे प्रथमस्कंधेऽभिहितं रजस्तमप्रकृतयः समशीलान् भजंति वै पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः । श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युरिति तथा द्वितीये अकामः सर्वकामो वा मोक्षकाम उदारधीस्तीव्रेण भक्तियोगेन यजेत पुरुषं परमिति वक्ष्यते च धर्मार्थकाममोक्षाणां य इच्छेच्छ्रेय आत्मनः एकमेव हरेस्तत्र कारणं पादसेवनमिति एवं स्थिते द्विविधयाप्युपासनया अव्यभिचारिण्यैव भवितव्यमिति मुमुक्षुणा भजनीयस्योपास्याद्देवतांतरवैभवादिदर्शनेन नमस्कारादिकरणेन च स्वदेवताभक्तिव्यभिचरितास्यादिति सर्वथा मुमुक्षूणां देवतांतर भजनं निषिध्यते सर्वदेवतानां ब्रह्मात्मकत्वेनानुसंधानं त्वविरुद्धमेवेति न सात्वतैतत्पुराणयोर्विरोधः देवतांतरतद्भक्तादिनिंदा तु नहि निंदा निंद्यं निंदितुं प्रवृत्ता किंतु निंद्यादितरत्स्तोतुमिति न्यायेनोपपन्नेत्यवगंतव्यम् ॥ १६ ॥

भवतु बहुधा भावे मयाऽभिभूतस्तथापि किं भवत्या भवितव्यमित्यत्राह कर्णाविति द्वाभ्यां धर्मावितरि धर्मरक्षके ईशे ईश्वरे शभूते महत्तमे अस्वैरिभिर्निरंकुशैरनिवारितैर्नृभिर्दुर्जनैरस्य माने आधिक्षिप्यमाणे सति यद्यधिक्षेपं शृण्वन् सुजनः अकल्पः विनिंदकदुर्जनशिक्षायामसमर्थस्तर्हि कर्णौ श्रोत्रे आच्छाद्य ततो निरयान्निर्गच्छेत् यदि प्रभुः समर्थश्चेत्तु शर्नी दुष्टां जिह्वां प्रसह्य बलात् छिंद्यात् ततः स्वयमप्यसून् प्राणान् विसृजे दिति यत्स धर्मः ॥ १७ ॥

अतः शितिकंठगर्हिणः शंकरद्वेषिणस्तव अपादानस्यैवशेषत्व विवक्षया षष्ठी उत्पन्नं ममसदीयं कलेवरं न धारयिष्ये प्रमादात्पन्नस्याऽपवित्रस्य त्यागं विना न शुद्धिरिति दृष्टांतेनाह मोहाज्जग्धस्य भक्षितस्य जुगुप्सितस्य कुत्सितस्यान्नस्योऽन्नस्य उद्गिरणं वमनमेव पुनर्विशुद्धिम् प्रचक्षते कथयंति ॥ १८ ॥

ननु वृथा किमेव मामहासि यतोऽसावमंगलो रुद्रो वैदिकं पंथानमुल्लंघ्य वर्तते अतो मया वैदिक मार्गानुवर्तिनाऽधिक्षिप्त इत्यत्राह स्वेस्वात्मनि लोके लोकयतं परिशुद्धमनसा दृश्यत इति लोकः ब्रह्मनास्मिन् रममाणस्य महामुनेः रुद्रस्य मतिर्वेदवादान् । अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति अपामसोममस्मृता अभूमेत्यादीन् कर्मप्ररोचकानर्थवादान्नानुवर्तते तेषु नासक्तो भवति निवृत्ति मार्गनिष्ठस्य न प्रवृत्ति मार्गे रुचिरुत्पद्यत इति न तस्य वैदिकपथाऽननुवर्तनमितिभावः अनयोः प्रवृत्ति निवृत्तिधर्मनिष्ठयोराचारः पृथगेव दृश्यते यथा देव मनुष्य योर्गतिः पृथगेव देवानां गतिराकाशएव मनुष्याणां गतिः पृथिव्यामेव तद्वत् अथापि भवानेव श्रेष्ठस्तथाप्युत्कृष्टः स्वकीये धर्मे स्थितो वर्तमानः परं निकृष्टं नक्षिपे नाधिक्षिपेदिति यत्स एव धर्मः ॥ १९ ॥

प्रवृत्तिधर्ममपि वैदिकत्वाविशेषात्किमिति नानुवर्तते भवइत्यत्राह कर्मेति प्रवृत्तं स्वर्गादि फलाभिसंधानप्रवृत्तं कर्म तथा निवृत्तं फलकामनातो निवृत्तं च कर्म उभयोः लिंगं फलाभिसंधिरहितत्वासहितत्वाभ्यां चिन्हाभ्यां युक्तं यथा भवति तथा वेदेविविच्य आश्रितं स्वर्गकामो यजेत शांतो दांत उपरतस्तमेतं वेदानुवचनेन ब्राह्मणा

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

णा विविदिषंति यज्ञेनदानेन तपसानाशकेन धर्मेण पापमपनुद-सीत्यादिवेद श्रमांकर्मगायत्र्यापविहितं तथापितद्वयंप्रवृत्ति निवृत्तिभेदेनद्विविधंकर्मयौगपद्येनैककर्त्तर्येकस्मिन्नधिकारिणिविरोधिपरस्पर विरुद्धमतांग्रह्मार्णोब्रह्मज्ञानेकर्मप्रवृत्तंनिवृत्तंचोभयंकर्मनच्छांतनप्राप्नो तिमाधनतामितिशेषः केवलंनिवृत्तंकर्मवज्ञानयोगानुगुणांनतूभयमि त्यर्थः निवृत्तंकर्माशवेनापिक्रियतइतिभावः ॥ २० ॥

यतएवोभयविधंकर्माधिकारिभेदनव्यवस्थितमतएवास्मदनुष्ठित निवृत्तधर्मसाध्याअणिमादयः सिद्धयः प्रवृत्तिधर्मपरायणानांभवतां नसंतीत्याहहेपितः अस्मदाश्रिताः अस्माभिराश्रिताः परिग्रहीताइत्यर्थःएदव्य अणिमादयः सिद्धयः वःयुष्माकंमा नसंतीत्यर्थः तह्यस्माकंसिद्धयोरुद्रस्यनसंतीतिचेत्तत्राह ॥ याभवदीयास्वर्गादिपदव्यस्ताअनुभूभवत्मभि धूमादिमार्गप्रदर्शज्ञादिकर्मानुयायीभिस्तद मतृप्तैयज्ञांगेनकुत्सितान्नेनतृप्तैरसुभृद्भिःप्राणिभिर्यज्ञशालाम्वेवेडिनाः स्तुताअस्मदाश्रितास्तुपदव्यः अव्यक्तलिंगावधूतमार्गचिन्हादुर्विभाव्यःअत्रभूतनिरस्तनिखिलजरामरणादिसांसारिकधर्मैः सांवताःपरिग्रहीताः अतः फलतोऽनुष्ठानतश्चमहद्वैलक्षण्यंप्रवृत्तिनिवृत्तिधर्मयोरितिनमहत्तमानांप्रवृत्तधर्मरुचिरुत्पद्यतइतिभावः ॥ २१ ॥

किंबहुनांकिंनसर्वथास्वंदेहंत्यक्ष्याम्येवेत्याह नेतिद्वाभ्यां हरेरुद्रेकृतागसः कृतापराधस्यतवदेहोद्भवेनदेहादुत्पन्नेन आपन्नत्वात्मापिचस्यापिनमामःनित्यसापेक्षत्वाद्वाप्येतनकुजन्मनामहीयनकुत्सितेनदेहनननप्रयोजनंकितुअलमलंननुश्लाघ्यामिमंदेहंकथंत्यक्ष्यसितत्राह कुजनस्यतव प्रसंगात्संबंधात् ममव्रीडालज्जाअभूत् अतोमहतामहत्सुकृच्छिप्रियकर्त्ता देहः तस्माद्यज्जन्मतद्धिक्कानिदितंत्वत्संबंधादश्लाघ्यमित्यर्थः ॥ २२॥

किंचवृषभध्वजोरुद्रःपरिहासादिपुनर्मोकिंतुमांदाक्षायणीतिसंबोधयन्त्वत्संबंधबोधकंगोत्रनामयदाआहगृन्हातितदाहंव्यपेतनर्मास्मितंव्यपेतं अपगतंनर्मपरिहासः स्मितंचयथाभवत्येवंसुदुर्मनाः अतिदुखितचित्ताभवामितत्तस्माद्धिनिश्चितमेवतत्कुणपप्रायंत्वदंगाज्जातमिदंकलेवरंव्युत्स्रक्ष्येत्यक्ष्यामि ॥ २३ ॥

हे शत्रुहन् ! हे विदुर ! इतिउक्तप्रकारेणाध्वरे यज्ञेदक्षमनूद्यप्रत्युक्त्वाउदीचीमुत्तरांदिशंप्रविश्योनिःशेषःशांतवाक्गृहीतमौनानिषसादउपविष्टवती तत्रजलंस्पृष्ट्वाआचम्येत्यर्थः पीतदुकूलवस्त्रेण संवृतापावृताहक् दृशमार्पत्वात् द्वितीयायाःलुकनिमील्ययोगपथंयोगिनांदेहत्यागप्रकारं समाविशत् आश्रितवतीत्यर्थः ॥ २४ ॥

योगपथाश्रयणमेवाह कृतेति जितमासनंययामाङ्क्षरहिता अनिंदितानिर्दुष्टामती अनिलौप्राणापानौऊर्ध्वाधोवृत्तिनिरोधेनसमानीसमानवृत्तीनाभिचक्रेकृत्याततउदानवायुमुत्थाप्यधियासहशनैः हृदिस्थाप्यस्थापयित्वापयित्वाउरसिस्थितमुदानवायुंकंठात्कंठमार्गेणभ्रुवोर्मध्यमनयत् ॥ २५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

त्वदंग्ये ब्रह्मा आदिः पिता येषां तेब्रह्मादयः ब्रह्मपुत्राः सनकादयः यो रुद्रस्तन्माल्यभस्मनृकपाली तस्मिन् श्मशाने विद्यामानप्रेतालंकारमालायेत्यास्थिभस्मनरकपालवान् जटा अवकीर्य प्रसार्य पिशाचैः सहश्मशानेऽवसादिति तं शिवाख्यमशिवं विदुः किं न विदुरेव नित्यशुद्ध इत्येव विदुः कुत इति तत्राह ये मूर्धभिरिति ये सनकादयः तच्चरणाविसृष्टरज आदिकं मूर्द्धाभिर्दधति अनेन शिवस्याशिवत्वे ज्ञानपूर्वकं तच्चरणरजोधारणाऽसंभवस्तत्कारणाभावतो नित्य शुद्ध इति तर्कः सूचितः मूर्धभिर्दधतीत्यनेन पुरुषार्थापेक्षयापादपांसुधारणं न त्वन्यथेति ध्वनयति तदुक्तं सुपर्णोऽपिभागोऽशब्रह्मविष्णून् श्रियं गिरंश्रुतिं नमति नो रुद्रं क एव पुरुषार्थभागिति ॥ १६ ॥

सभायां धर्मसंकटे प्राप्ते सभ्यैः कर्तव्यं धर्ममाह कर्णाविति । धर्मस्या वितरि ईशे स्वामिनि । अघृणिभिर्दयागुणरहितैर्नृभिरस्य मानेऽधिक्षिप्यमानेसति मभ्यां यद्यकल्पः शिक्षितुमसमर्थस्तर्हि स्वकर्णौपिधाय निर्यात्तस्माद्देशाद्गच्छेत् प्रभुश्चेदसतांरुशतीं परुषभाषिणीं जिह्वां प्रसह्य छिंद्यात् तथा प्रभुत्वाऽसमर्थश्चेऽसून्वा विसृजेत्स धर्म इत्यन्वयः ॥ १७ ॥

अपि शब्देनेदमेव संभावितमिति ध्वनितं स्पष्टयति अतस्तवेति तव वीर्यादुत्पन्नं शितिकंठगर्हिणो नीलकंठद्वेषिणः अस्मिन्नर्थे न्यायमाह जग्धस्येति जग्धस्य भुक्तस्यांधसोऽन्नस्योद्धरणं वमनं प्रचक्षते वदंति विद्वांस इति शेषः ॥ १८ ॥

ननु ममापराधमेव वदसि मातुलत्वेन गुरुं मां दृष्ट्वाऽभ्युत्थानादिकमकुर्वतस्तस्यापराधं किं न स्मरसीति तत्राह न वेदवादानिति ज्ञानित्वेन स्वेच्छावृत्तिविधर्महासुनः सर्वज्ञतमस्य शिवस्य स एव लोके स्वबिंबभूते प्रकाशमाने हरौ रमतो रममाणस्य तद्दर्शनसुखापानेन नित्यतृप्तस्य मनिर्वेदवादान् यथाश्रमप्रयुक्तानभ्युत्थानादिवेदविधीन्नानुवर्त्ततेनानुसरति लौकिकविलक्षणत्वात् तत्रदृष्टांतमाह यथेति यथा देवमनुष्ययोर्गतिमार्गः पृथग्भिन्नः तस्मात्स्व एव धर्मे स्वविहिते धर्मे स्थितः परमन्यं न क्षिपेत् न दूषयेत अतस्तवैवानर्गलोपराध इति भावः ॥ १९ ॥

ननु ज्ञानिनः प्रवृत्तिकर्मा संभवेपि निवृत्तिकर्म संभवतीति तत्राह कर्मेति वेदं प्रवृत्तं निवृत्तमित्युभयलिंगमुभयविधलक्षणं कर्म विविच्याश्रितं प्रतिपादितं । स्वर्गाद्यर्थंप्रवृत्तं स्यान्निवृत्तं मुक्तये तु यदिति विवेकं कृत्वा कथितमित्यर्थः ततः किं तत्राह विरोधीति तद्द्वयं यौगपद्युगपदेककालमेककर्त्तरि विरोधि प्रकाशतमसोरेकत्रावस्थानवद्विरुद्धं स्यादित्यर्थः ततश्च प्रकृते किं तत्राह तयेति द्वयमित्यनुवर्तते यथा द्वयमेकस्मिन्कर्तारावरुद्धत्वादुपरतं तथाऽऽब्रह्मणि सम्यक् ज्ञानिनि जीवन्मुक्तेपि द्वयं कर्म नच्छति न प्राप्नोति "आब्रह्मस्थितधीर्जीवन्मुक्तश्चेत्यभिधीयते यस्तस्य नं निवृत्तं च प्रवृत्तं कर्म चेष्यत„ इति वचनात् ब्रह्मण्यद्वितीयं सद्वितीयकर्त्राश्रयं कर्म न घटत इत्यर्थस्यानुपपत्तेरुक्त एवार्थः नन्वयधून्पुरुषं पशुमित्यादिश्रुतेर्देवानामपि कर्मप्रतीते रुद्रस्यापि देवांतर्भावात्तस्य कथं तदनर्हत्वमुच्यत इति चेन्नुच्यतेनास्माभिर्देवस्य कर्ममात्राभाव उच्यते किं तु विष्णोराज्ञया नियताधिकारिकं नियमनामकं कर्मास्त्येव मुक्तौ सुखोद्रेकहेतुत्वात्तदुक्तं "यत्तु देवाः प्रकुर्वंति स महानियमः स्मृतः । स महानियमो नाम कर्मयत्स्वाधिकारिकं ॥ महतो नियमाद्विष्णोः प्रीत्यामुक्तौ सुखोन्नतिः केचिच्चि (*) वृत्तमित्याहुर्महानियममच्युत„इति एतदपि उत वेदे विविच्येति ध्वनितं तस्मान्महानियमाख्यकर्माधिकृतस्य स्थितप्रज्ञस्य त्वद्विदया गुणहीनत्वं नाशंकनीयं यदि "देवाश्च ऋष्याद्या निंदंत यत्र कुत्रचित

( * ) अत्रेत्थं प्रमेयं कर्म द्विविधं प्रवृत्तं निवृत्तं चेति स्वर्गादीच्छयाक्रियमाणं प्रवृत्तं निवृत्तमपि द्विविधं मोक्षोद्देश्येन क्रियमाणं तदनुद्देश्येनकेवलमीश्वरप्रीत्यर्थमितिएतद्देवाधिकारिकमुच्यतेतत्रायं देवानां नास्त्येव द्वितीयं महानियमसंज्ञकं तेषामस्तीति या० ।

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

नतावता गुणैर्हीना स्थितप्रज्ञा हि ते मता यथा (२)योग्यं तु तात्पर्यं निंदाया अन्यदेव तु,, इति वचनात् ॥२०॥

अनंतरातीतग्रंथेन रुद्रदक्षयोः पृथङ्मार्गत्वं ध्वनितं कंठोक्तीकरोति माव इति हे पितरस्मदाश्रिता अस्माभिराश्रिताः अवधूतसेविता सनकादियोगींद्रैरभ्यस्ता अव्यक्तलिंगा अन्यैरज्ञातलक्षणा अर्चिरादिमार्गलक्षणा या पदव्यस्ता वो युष्माकं मा नैव भवंति यज्ञशालायामासनेन दीक्षालक्षणेन धूमवर्त्म धूमादिमार्गो येषां ते तथोक्ता तेषां युष्माकं कद्वत्तृप्तै पशुमांसलक्षणेनान्नेन अलं बुद्धिगतैरसुहाद्भिः पशुप्राणहारिभिः पुरुषैराडिता या धूमादिलक्षणपदव्यस्था अस्माकं नैवेति यदतः पृथङ् मार्गत्वात् त्वन्निंदया न रुद्रस्य गुणहीनत्वं अतो न तस्य दूषणमुचितमिति भावः ॥ २१ ॥

किं बहुनोक्तेनेति स्ववैराग्यमाश्रावयति एतेनेति हरे रुद्रे कृतागसः कृतापराधस्य तव देहाद्भवेन देहाज्जातेनात एव कुजन्मना लोके निन्दितोत्पत्तिना कस्मादीदृशं वैराग्यं तवेत्यत आह व्रीडेति कुत्सितश्चासौ जनः कुजनो भवादृशस्तस्य प्रसंगतो जन्यजनकसंबंधकथालक्षणस्तस्मात् कारणांतरं चाह तज्जन्मेति यन्महतामवद्यकृत्मनोविप्रियकारिजन्म धिक् निंदितमित्यर्थः ॥ २२ ॥

ततः किं फलितं तत्राह गोत्रमिति वृषध्वजो भगवान् दाक्षायणी दक्षपुत्रीति त्वदीयं गोत्रं त्वन्नाम्नोपेतं नाम विशेष यदा यावत्सुदुर्मनास्त्वन्नामस्मरणमात्रेण सुतरां विषण्णमना अत एव व्यपेतनर्मस्मितामिति क्रियाविशेषणं अपगतनर्मवचनयुक्तमंदहासो यथा भवति तथा मां प्रत्याह वक्ष्यति हे तात तावत्ततः पूर्वमेव त्वदंगजं तव शरीरादुत्पन्नं कुणपं कुत्सितशरीरमुत्स्रक्ष्य इत्यन्वयः वृषध्वजः स्नेहवशाद्यदा दाक्षायणीति त्वदीयं गोत्रमाह। तावत्तदा आशु त्वदीय द्वेषस्मरणाद्व्यपेतनर्मस्मितं सु दुर्मना भवत्यत इतः परं तथा मा भूदिति कुणपमुत्स्रक्ष्य इति वा मम देहत्यागस्तृणत्यागतुल्य इति द्योतनायात्मनेपदप्रयोगः ॥ २३ ॥

एवं देहत्यागस्यायत्नसाध्यत्वेपीतिकर्तव्यतायाः फलाधिक्यं स्यादिति सूचनाय योगिजनशिक्षणाय च देहत्याग इति कर्तव्यतां दर्शयत्यस्मिन्नध्याये इतीत उदीचीं दिशमुद्दिश्य क्षितौ निषसादेत्यन्वयः धूमाद्यध्वनि रमयतीत्यध्वरस्तस्मिन्यज्ञे स्पृष्ट्वाचम्य पीतं च तत् दुकूलं च तेन संवृताच्छन्ना दृक् दृशौ निमील्य निमीलनयुक्ते कृत्वा योगपथं देहोत्क्रमणयोगमार्गं ॥ २४ ॥

तं विवृणोति कृत्वेति जितासना प्राणादिसंचारवेगेनदेहसंचलनरहिताऽन एवाऽनिंदिताऽकुत्सिता सा सती प्रथमं रेचकपूरके कृत्वाऽनिलौ प्राणापानौ समानौ ऊर्ध्वाधोवृत्तिरहितौ कृत्वा एकविषयगतीविधाय मूलाधारादुत्क्रमणकर्तारं सुषुम्नी संचारिणमुदानमुत्थाप्योर्ध्वमुखं कृत्वा नाभिचक्रमानीय ततो नाभिमंडलाद्धिया निश्चलया बुद्ध्या शनैरुद्गं विना हृदि स्थाप्य उरस्थितं वायुं कंठं नीत्वा कंठाद्भ्रुवोर्मध्यमनयदित्यन्वयः यद्वा सर्वसंधिसंचारिणं वायुं*व्यानमूर्ध्वाधोगतिनिमित्तौ प्राणापानौ समानवायुनैकीकृत्य तं सामानं वायुं सोदानमुदानगत्या सहितमुदानेनैकीकृत्यापर्युपरिस्थानं जीवेन

(२) उत्तमकृतमघनिंदनं शिक्षारूपं, अधमकृतमसुरावेशनिमित्तमिति यथायोग्यमित्यर्थः ।

* व्यानशब्दार्थोयं

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ॥

सहानयदिति अवद्धव्यनयनशक्तिमता वायुना जीवसंबद्धव्यनयनं न तु तन्मात्रं तस्य योगिनो नित्याभ्यस्तत्वात् ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

किं वेति वा शब्दः कटाक्षे । किं किमिति न विद्युरिति हेतुजिज्ञासा तस्यासूयामात्रात्मताख्यापनाय यद्विच किमिति शिरश्चालने तथापि सोपहासतया वेदनाभाव एव तात्पर्यं सोपहासत्वेनैव विशुद्धं हेतुमाह य तच्च इति ॥१६॥

कर्णाविति । अतिसामर्थ्ये अधिक्षेपकजिह्वाच्छेद स्वप्राणत्यागौ । ततोऽन्यूनत्वे तच्छेद तत्याग सकर्णापिधान निर्गमा ज्ञेयाः १७

यस्मात् श्रीशिवादिसंकोचात् तच्छेदे समर्था नाहं । अतस्तवेत्यादि जुगुप्सितस्य अपथ्यस्य विशुद्धि रोगशांतिम् ॥ १८—२१॥

अलं शब्दोऽत्र निवारणे अलं भूषणपर्याप्तिशक्तिवारणवाचकमित्यमरः निवारणं च प्रयोजनाभावः यथा अलमतिविस्तरेण त्यादौ । तस्य च वीप्सा अतिशये नञ् चात्र शिरश्चालने । ततश्चायमर्थः एतेन देहेन मम व्रीडा नाभूत् किं अपित्वभूदेव । तस्मादेतेनात्यर्थमेव प्रयोजनं नास्तीति । यद्वा । एतेनालं प्रयोजनाभावो न अपि तु प्रयोजनाभाव एव तस्मादेते नालमेवेत्यर्थः ॥ २२—२३ ॥

पीतदुकूलेत्यपि तादृश्यास्तदवभृथायामाचारतया ज्ञेयं सतीति पूर्वेणान्वयः ॥ २४—२६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी

यदुक्तं शिवापदेशो ह्यशिव इति यच्चोक्तं प्रेतावासेष्वित्यादि तदाक्षिपन्त्याह । यो जटा अवकीर्यश्मशानेऽवसत् तस्य श्मशानस्य माल्यानि भस्मानि नृकपालनिच भूषणत्वेन सन्ति यस्य तं शिवाख्यम् अशिवं त्वत्तोऽन्ये ब्रह्मादयो न विदुः किं विदन्त्येवेति चेत् न । तथा सति तेषां तद्दास्यानुपपत्तेरित्याह तच्चरणावसृष्टं गलितं निर्माल्यं ये मूर्द्धभिर्धारयन्ति ॥ १६ ॥

ननु त्वं साधून् लक्षयन्ती परेषु दोषदर्शनं निषिद्धमसि अथच मां विप्रं प्रजापतिपतित्वेन जगत्पूज्यं पितरमपि निन्दसीति त्वमप्यसाधुतरैवेति तत्र सम्प्रति निन्दायाः का वार्त्ता शिवद्विषं त्वां यदहं न हन्मि एष मे महापराध इत्यत्र धर्मतत्त्वं शृणिवत्याह कर्णाविति धर्मोऽवितरि धर्मरक्षके महत्तमे ईशे स्वामिनि अश्लीलाभि निरंकुशैः नृभिरस्यमाने अधिक्षिप्यमाणे सति कर्णौ पिधाय निरयाद्विर्गच्छेत् । यत् यदि अकल्पः हन्तुं मर्त्तुं वा यदि न समर्थः स्यात् प्रभुश्चेद्यदि चसमर्थस्स्यादित्यर्थस्तदा असतां निन्दकानां रूपतामकल्याणवादिनीं जिह्वां प्रसह्य बलादेव छिन्द्यात्ततोऽपि निन्दाश्रवणप्रायश्चित्तं कुर्वन् स्वयं प्राणान् विसृजेत् । यद्वा जिह्वाच्छेदनाद्यदि स निन्दकः प्राणान् विसृजेत् तदा धर्मः तस्यानन्तनरकभोग प्रसमनात्तद्वध लक्षणोऽधर्मो न भवतीत्यर्थः तत्रेयं व्यवस्थाः क्षत्रियस्य दंडेऽधिकारात् स एव निंदकजिह्वां छिन्द्यात्, अपरेषामन्यदंडेऽनधिकृतां त्रयाणां मध्ये वैश्य शूद्रौ तनुत्यागरूपं स्वदण्डमेव कुर्वातां ब्राह्मणस्य शरीरदण्डानौचित्यात् सतु कर्णौ पिधाय विष्णुस्मरणेना गच्छेदिति ॥ १७ ॥

अहन्तु सर्वैश्वर्यात् सर्वसामर्थ्याच्च त्वां स्वञ्च ब्रह्माण्डकोटीरपि हन्तुं शक्नुवत्यपि स्वभार्याद्वारा शिव एव दक्षं जघानेति शिवयशोहानि भीत्या त्वां न हन्मि स्वप्रायश्चित्तन्तु करिष्याम्येवेति

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

अरेपाविन् स्वचक्षुर्भ्यां पश्यत्याह अत इति। तत्र त्वत्तः प्रमादादुत्पन्नी-तस्याऽपवित्रवस्तुनस्त्यागं विना न शुद्धिरित्यर्थान्तरन्यासेनाह । जग्धस्य भुक्तस्यान्नस्योऽन्नस्य उद्धरणं वमनम् ॥ १८ ॥

वेहं त्यजाम्येव किंतु त्वया शास्त्रार्थमविदुषा भगवति श्रीरुद्रे निर्दोषेऽप्यारोपितं दुष्क्रियायाशुचय इत्यादिदोषपञ्चकमुद्धृत्यै-वेत्याह नेति स्वएव लोके स्वात्मन्येव रममाणस्य महामुनेर्मतिर्वेद-वादान् विधिनिषेधरूपान् अनुलक्ष्यीकृत्य न वर्त्तते तत्र नधिकारा-देवेति भावः । यदुक्तं "कुशलाचरितेनैषामिह चार्थो न विद्यते । विपर्ययेण चानर्थ„इति "स्वैरंचरन्तिमुनयोऽपि न नह्यमाना„ इति । अतो मुक्तानां बद्धानाञ्च मिथः पृथगेव गतिरित्यत्र दृष्टान्तः । यथेति अतएव स्व स्वीये धर्मे स्थितः परं न क्षिपेदिति विधिः ॥ १९ ॥

ननु प्रवृत्तं कर्म शिवो मा करोतु निवृत्तं कथं न करोतीत्यत आह कर्म प्रवृत्तमाग्निहोत्रादि । निवृत्तं शमदमादि ऋतं सत्यमेव । यतः वेदे भाश्रित विहितं तच्च विविच्य अधिकारद्वयस्यैव तत्र विशेषेण व्यवस्थामेवाह उभयं रागो वैराग्यञ्च चिह्नं यत्र तत् रागे सत्यग्निहोत्रादिवैराग्ये सति शमदमादीनि विविच्याधिकारिद्वये व्यवस्थितमित्यर्थः तत् कर्मद्वयं यौगपद्येन यौगपद्येनैकस्मिन् कर्त्त-रि विरोधि रागवति निवृत्तं विरोधि वैराग्यवति प्रवृत्तं विरोधि अविहितमित्यर्थः । तथैव ब्रह्मणि तत्द्वयं प्रवृतं निवृत्तञ्चेत्युभयमपि न ऋच्छति नाप्नोति । यथा प्रवृत्तनिवृत्तयोः परस्परधर्मेऽकरणे न प्रत्यवायस्तथेश्वरस्य तदुभयकर्माऽकरणेऽपीति भावः ॥ २० ॥

हन्त पुत्रिके ममैवैतद्भाग्यं यत् परमाढ्यतमस्य सदाचारस्य मम कन्या त्वं भिक्षुकस्कदाचारगृहे पतितासि । तदपि सर्वगुणराशी सनिधिस्त्वं स्वभर्तुरपकर्षं यन्न सहसे तत्तव पतिव्रताचूडामणित्वरु-चितमेवेति तत्र सभर्त्सनमाह मेति हे पितः! अस्माभिरास्थिता आश्रिताः पदव्यः अणिमादिसिद्धैश्वर्यवैराग्यज्ञानप्रेमादिसुखवत्यः वो युष्माकं मा । जन्मकोटिभिरपि न भविष्यन्तीत्यर्थः । ननु कुत एवं ब्रूषे ताः सिद्धयोऽप्यस्माकं सन्त्येव नेत्याह याः पदव्यो यज्ञशा-लासु न सम्भवन्ति तदन्नतृप्तैरुदरम्भरैः काकतुल्यैर्धूमवर्त्मभिः क-र्मिभिर्न स्तुताः किन्त्वव्यक्तलिङ्गास्तादृशैरलक्ष्यप्रभावा अवधूतैः सनकादि नारदाद्यैः सेव्यन्ते । वर्त्तमाने क्तः ॥ २१ ॥

एवं दक्षं विनिन्द्य तत्सम्बन्धात् स्वदेहं निन्दति नैतेनेति एतेन मम देहेन न अलम् अपितु अलमलमेव कुतः हरे शिवे कृतागसस्तव देहादुद्भूतेन यो महतामवद्यकृत् भक्तापराधी एतत् जन्म धिक् २२॥

किञ्च । परिहासादिषु त्वदीयं त्वत्सम्बन्धज्ञापकं गोत्रं नाम त्वं दाक्षायणी भवसि तव मत्सङ्गद्वेषनिन्दावर्जादकं स्वधर्म एवे-ति यदा वृषध्वज आह तदाहं विगतनर्मस्मितं यथा स्यादेवं सुदुर्म-ना भवामि तत्तस्मात् हि निश्चितम् एतत् कुणपप्रायं व्युत्सक्ष्ये-त्यक्ष्यामि ॥ २३ ॥

अनूच दक्षं लक्ष्यीकृत्यउक्त्वा हे शत्रुहन्! स्वदेहत्यागमिषेणान्तं स्वशत्रुं सा जघानैवेति भावः। उदीच्यां उदङ्मुखी । उदीचीमिति पाठे उदीच्यां दिशि दृष्टगं पीतदुकूलेति भर्त्तुकामानां कुसुम्भर ञ्जितवसनधारणौचित्यात् ॥ २४ ॥

योगमार्गमेवाह । अनिलौ प्राणापानौ ऊर्द्ध्वाधोवर्त्तिनौ निरोधेन समानौ एकरूपौ नाभिचक्रे कृत्वा तत उदानं प्रति उत्थाप्य धिया सह हृदि स्थापयित्वा ॥ २५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

यदुक्तं शिवापदेशा ह्याशिव इति प्रेतावासमित्यादि च तदाशि पंत्याह किं चेति यः श्मशाने जटा अवकीर्य विक्षिप्य तस्य श्मशान-स्य माल्यानि भस्मानि नृकपालानि च भूषणतया सति-यस्यसत्तथाभूतपिशाचैः महाऽवसत् एवं भूतं तं शिवाख्यमशिवं "इत्यादिएःसगुरुणाभगवान्नीललोहित"इत्याद्युक्तरीत्याशिवस्यपूज्या ब्रह्मादयो न विदुः त्वदन्ये ये ब्रह्मपुत्राः तस्य शिवस्य चरणावसृ-ष्टं रजो मूर्द्धभिर्दधति ते च किंन विदुरित्यन्वयः ॥ १६ ॥

धर्मस्य अवितरि रक्षके जने भागवते ईशे भगवति वा असृणि भिर्निरंकुशैर्नृभिरस्यमानेआक्षिप्यमानेसति यद्यकल्पस्तर्हिकर्णौपिधा य ततः निर्गात् निर्गच्छेत् प्रभुः कल्पश्चेत् रुशतीरुक्षवादिनीमसतां तेषां जिह्वां प्रसह्य बलात् अपिशब्दाद्यदि स्वदेहाद्भगवद्भागवतनिंद कसंबंधो भवेत्तदा असूनपि विसृजेदिति यत्नधर्मः ॥ १७ ॥

एतदेवाह अत इति शितिकंठगर्हिणः नीलकंठनिंदकस्य तव अपादानस्य शैवत्व विवक्षया षष्ठी उत्पन्नमिदं कलेवर नधारयिष्ये यतो मोहाज्जग्धस्य भक्षितस्य जुगुप्सितस्य विषादिदूषितस्यां भ सो भ्रंशोद्धरणं वमनमेव विशुद्धे प्रचक्षते कथयंते ॥ १८ ॥

ननु वेदोक्त कर्मत्यागिनःकुतो धर्माऽवतृत्वमित्यत्राह नात स्वे स्वकीये उपास्ये लोके लोकयंते वेदांतैरिति लोको भगवान् वासुदेव-स्तस्मिन् रमतः महतो मुनेः मननशीलस्य भगवद्ध्याननिष्ठस्य वेद वादान् वेदेषु वादोयेषांतान् प्रवृत्तिधर्मान् मतिर्नानुवर्तते तत्राश-क्तानभवति यथादेवमनुष्ययोः भुविखेइति च पृथगवगतिरस्ति तथा प्रवृतनिवृत जनयोर्गतिः पृथगेवेत्यर्थः ॥ १९ ॥

एतदेव विविच्य दर्शयत्याह कर्मेति वेदे प्रवृतं निवृतं चेति वि-विच्य ऋतं सत्यमेव कर्माश्रितमभिहितम् उभयं बंधमोक्षलक्षणं चिन्हं फलं यस्यतत् "प्रवृत्तं च निवृत्तं च द्विविधंकर्मवैदिकम् । आ वर्तेत प्रवृतेन निवृत्तेनाश्नुतेऽमृतम्„इति सप्तमस्कंधात् यथा द्वयम ब्रह्मणि न ऋच्छति न प्राप्नोति तथा युगपद्भावो यौगपद्येनैक कर्त्ता यौगपद्यैककर्त्ता तस्मिन् विरोधिसंभाराऽधिकारिणि निवृतं न प्रा-प्नोति ब्रह्माधिकारिणि प्रवृतं च न प्राप्नोतीत्यर्थः भवंतः संसारिणः प्रवृतकर्मनिष्ठाः वयं ब्रह्माधिकारिणो निवृतकर्मनिष्ठाइति भावः ॥२०

एतदेवाह मावइति हे पितः या यज्ञशालासु तदन्नतृप्तैरसुभृद्भिर्यु-ष्माभिर्धूमवर्त्मभिः धूममार्गाऽधिकारिभिराडिता संस्तुतास्ताः पद-व्यःप्रवृतकर्मरुपाः अस्मदास्थिता न भवंति याश्चास्मदाश्रिताः अव्यक्तलिंगाः ध्यानादिरूपास्ता वो युष्माकंमा न संतीत्यन्वयः॥२१॥

योजनो महतामवद्यकृत् तस्माद्यज्जन्मतद्धिक् अतो हरे कृताग-सस्तव देहादुत्पन्नेन कुजन्मना कुत्सितजन्मनाएतेन नास्तिप्रयोजनम् किंत्वलमलम् कुजनस्य तव प्रसंगतो मम व्रीडाभूत् ॥ २२ ॥

किंच भगवान् वृषभध्वजः यदा दाक्षायणीति त्वदीयंत्वत्संबं-धवाचकं गोत्रंनामाह तदा अहंव्यपेतनर्मस्मितं यथा स्यादेवं सुदु र्मनाः अतिदुःखिताभवामि तस्मादेतत्कुणपं शवप्रायं त्वदंगजं त्वदे हजं शरीरं व्युत्सृक्ष्येत्यक्षामि ॥ २३ ॥

हे शत्रुहन् ! क्रोधादिरिपुघातिन् ! अध्वरे इत्युक्तप्रकारेण दक्षं प्रत्यनुद्यानुवादं कृत्वाशांतवाक् उपरतवाक् उदीचा उतराभिमुखा क्षितौ निषसाद उपविष्टा सतीजलंस्पृष्ट्वा आचम्य पीतेनदुकूलेन वस्त्रे ण संवृत दृक् दृशांनमील्ययोगपथं योगिनांशरीरत्याग मार्गं सम्य-गाविशत् ॥ २४ ॥

एवं स्वदेहं महतां महीयसा मुहुःसमारोपितमंकमादरात् ।
जिहासती दक्षरुषा मनस्विनी दधार गात्रेष्वनिलाग्निधारणाम् ॥ २६ ॥
ततः स्वभर्तुश्चरणांबुजासवं जगद्गुरोश्चिंतयती नचापरम् ।
ददर्श देहोहतकल्मषा सती सद्यः प्रजज्वाल समाधिनाग्निना ॥ २७ ॥
तत्पश्यतां ख भुविचाद्भुतं महद्धाहेति वादः सुमहानजायत ।
हंत प्रिया दैवतमस्य देवी जहावसून् केन सती प्रकोपिता ॥ २८ ॥
अहो अनात्म्यं महदस्य पश्यत प्रजापतेर्यस्य चराचरं प्रजाः ।
जहावसून्यद्विमतात्मजा सती मनस्विनी मानमभीक्ष्णमर्हति ॥ २९ ॥
सोयं दुर्मर्षहृदयो ब्रह्मधुक्च लोकेऽपकीर्तिम् महतीमवाप्स्यति ।
यदंगजां स्वां पुरुषद्विडुद्यतां न प्रत्यषेधन्मृतयेऽपराधतः ॥ ३० ॥

श्रीमच्छुकदेव कृत सिद्धांतप्रदीपः

सा सती अनिंदिता पतिविमुखजनसंसर्गादिदोषरहिता जितासना अनिलौ प्राणापानौ समानौ कृत्वा नाभिचक्र एकरूपौ संस्थाप्य पुनर्नाभिचक्रतः उदानमुत्थाप्यधिया सह हृदि अनाहतचक्रे स्थाप्य तत उरसि विशुद्धचक्रे स्थितं कृत्वा ततः कंठाद्ब्रह्ममार्गसंभवात् शनैर्भ्रुवांमध्यमनयत् ॥ २५ ॥

———

भाषाटीका ।

क्या तुमसे व्यतिरिक्त और ब्रह्मादिक उन शिव नाम वाले अशिव को नहीं जानते हैं जो श्मशान में जटा खोलकर श्मान की माला, भस्म, मनुष्यों के मुर्डो, को धारण करके पिशाचों के साथ वास करने वाले का भी चरणोंमें समर्पित निर्माल्य को बडे आदर पूर्वक मस्तक से धारण करते हैं ! १६ ॥

जो धर्म की रक्षा करने वारे ईश्वर अपने स्वामी की कोई निरंकुश मनुष्य निंदा करने लगे तो यदि आप असमर्थ होय तो कान मूंद कर वहां से अलग चला जाय और जो मरने मारने को समर्थ होय तो निंदा करने वाली खोटी जिह्वा को उखाड लेय और आप भी मरजाय यही धर्म है ॥ १७ ॥

इस लिये तेरे शिव निन्दकसे उत्पन्न हुये इस शरीर को में न धारण करूंगी मोह से दूषित अन्न खाने वाले की वमन करने ही से शुद्धि होती है ॥ १८ ॥

महामुनि आत्मारामों की मति विधिनिषेधरूप वेद वादों को नहीं अनुवर्त्तन करती है जैसे कि देवताओं की गति आकाश मार्ग में और मनुष्यों की गति भूम में इस लिये अपने धर्म में स्थित हो कर दूसरे की निंदा न करे ॥ १९ ।

कर्म दो प्रकार एक प्रवृतिरूप एक निवृत्तिरूप ये दोनों वेद में सत्य कहे हैं पर ये दोनों राग और वैराग्य दोनों लक्षण वाले धर्म अधिकारि भेद से भिन्न हैं यदि उन दोनों कर्मोंको एक अधिकारि करने लगे तो विरुद्ध पडता है (जैसे संन्यासी को अग्नि होत्रादि गृहस्थ को दंड धारणादि ) तैसेही ब्रह्मभूत शिव को कर्म न करने से दोष नहीं ॥ २० ॥

हे पिता ! हमारे लोगों की समृद्धि तुमको नहीं है तुमारी समृद्धि की स्तुति करने वाले वही हैं जो यज्ञ के अन्न से प्राण पोषण



भाषाटीका ॥

करने वाले हैं और भोगने वाल भी धूम मार्गी हैं इच्छा मात्र से होने वाली हमारी संपदों को ब्रह्मज्ञानी अवधूत लोग सेवन करते हैं ॥ २१ ॥

शिवके अपराध करने वाले तेरे देह से उत्पन्न हुआ यह शरीर इस से मैंनें भरपाया कुजन के संबंध से मुझे बहुत लज्जा हुई धिक्कार उस जन्म को जो महत् पुरुषों का अपराध करे ॥ २२ ॥

भगवान् वृषभध्वज श्री शिव जब कभी मुझको दक्षकी बेटी एसा तेरा नाम लेकर बुलाते तब मेरी हसी मुस्क्यान सब दूर चली जाती और मैं अपनें मनमें बडी लज्जा करके दुःख पाती इस लिये इस तेरे अंगसे पैदा हुये देह को अब तज देतीहूं ॥ २३ ॥

मैत्रेय जी बोले ॥ हे शत्रुहन् । हे क्रोधादि को जीतने वाले विदुरजी ! इस प्रकार यज्ञमें सती जी दक्षके आगे बातें सुनाकर मौन होकर उत्तर की तरफ मुख करके पृथिवी में बैठ गई पीत वस्त्र पहिने हुये आचमन कर नेत्र मूंदकर योग मार्ग में प्रवेश करती हुई ॥ २४ ॥

आसन को जीत प्राण अपान वायु को नाभि चक्र पर समान करके । वहां से उदान को उठाके बुद्धिके साथ हृदय मे लेजा कर उरस्थल, कंठ, मार्ग से भृकुटि के मध्य में लेगई ॥ २५ ॥

———

श्रीधरस्वामिकृत भावार्थदीपिका

महतापूज्यतमेन श्रीरुद्रेण ॥ २६ ॥

चरणांबुजे आसवंभजनानंदम् भर्तुरपरंनददर्श देहश्चसद्यः प्रज्वलितोऽभूत् समाधिनायोऽग्निस्तेन ॥ २७ ॥

खेभुविचहाहेत्यादिवादः तमेवाह हंतेतिविषादे दैवतमस्यपूज्यतमस्यप्रियाकेनदक्षेणप्रकोपितासती ॥ २८ ॥

महदनात्म्यंदौर्जन्यम् अस्यसर्वत्रस्नेहएवन्याय्यइत्याहुःयस्येति येनविमताऽवज्ञाता ॥ २९ ॥

दुर्मर्षमत्यसहनंहृदयंयस्य लोकेजनमध्ये शब्दाक्षरकंच यद्यतः स्वीयामंगजांसुतामपराधतःस्वावज्ञयामृतयेमरणायोद्यतां ननिवारितवान् पुरुषद्विट्शिवद्वेषी ॥ ३० ॥

वदत्येवं जने सत्या दृष्ट्वाऽसुत्यागमद्भुतम् ।
दक्षं तत्पार्षदा हंतुमुदतिष्ठन्नुदायुधाः ॥ ३१ ॥
तेषामापततां वेगं निशाम्य भगवान्भृगुः ।
यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ॥ ३२ ॥
अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा ।
ऋभवोनामतपसा सोमं प्राप्ताः सहस्रशः ॥ ३३ ॥
तैरलातायुधैः सर्वे प्रमथाः सहगुह्यकाः ।
हन्यमाना दिशोभेजुरुशद्भिर्ब्रह्मतेजसा ॥ ३४ ॥
इति श्री मद्भागवते महापुराणे चतुर्थस्कंधे
पारमहंस्यां संहितायां वैयासिक्यां
सतीदेहोत्सर्गश्चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

अद्भुतंदृष्ट्वाच ॥ ३१ ॥

यज्ञघ्नान्हंतीतियज्ञघ्नघ्नंतेनापहतंरक्षइत्यादिना ॥ ३२ ॥

अध्वर्युणाभृगुणा। येतपसासोमंप्राप्तास्तेऋभवोनामदेवाउत्पिताः ॥ ३३ ॥

ब्रह्मतेजसोशद्भिर्देदीप्यमानैः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे
श्रीधरस्वामी कृत भावार्थदीपिकायाम्
चतुर्थोऽध्यायः

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

अनलेति वायुयुक्ताग्निधारणाम् ॥ २६ ॥

भर्तुरपरम् अन्यं नददर्शेति प्रेम्णा सर्वत्र तत्स्फूर्त्तिर्जातेत्यर्थः प्रज्वलितो दीप्तोऽभूत् यथा विद्युत्प्रदीप्त्यांतर्हिता भवति तथांतर्हिताऽभूदित्यर्थः मायिकवस्तूनामेवाऽनित्यत्वं न तु मायायास्तथा च योगबलेन तद्देहोऽणुर्भूत्वा मेनागर्भे प्रविष्टोबभूवेति ज्ञेयम् ॥ २७ ॥

मत एवाद्भुतं तत्प्रज्वलनं तत्र महत्वं चांतर्द्धानविवक्षया तमेव वादमाह ॥ २८ ॥

मस्य दक्षस्य न्याय्य उचितः ॥ २९ ॥

लोके च कीर्त्तिमित्येव पाठः चशब्दात्परकं चेति व्याख्यानाद्-सतीमित्यनेन दुष्कीर्त्तिलब्धौ अप् उपसर्गस्य वैयर्थ्यापत्तेश्च ॥३०॥

अद्भुतश्चेति चकारोध्याहृतः अद्भुतत्वं तु देहस्यांतर्द्धानलक्षणमेव ॥ ३१ ॥

अपहतं रक्षः एकत्वं जात्यपेक्षया ॥ ३२ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्यायां दीपिका टिप्पणी ॥

ओजसा मंत्रहोमादिसाद्गुण्यबलेन सोमं तत्संज्ञके यागे भोक्तृत्वं प्राप्तम्वा ॥ ३३ ॥ ३४ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
दीपिन्याख्या दीपिकाटिप्पण्यां
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

महतामपिमध्येमहीयसामहत्तमेनरुद्रेणादरात् मुहुः पुनः पुनरंकमुत्संगंप्रत्यारोपितंस्वदेहमेवंदक्षक्रोधेन जिहासतीत्यक्तुमिच्छन्तीमनस्विनी स्वतंत्रास्वछन्दमरणेत्यर्थः सतीभवानीगात्रेषुअंगेषुआनिलाग्निधारणांदधार अनिलाग्निधारणाख्यां धारणांचकारेत्यर्थः तयाहि धारणया अनिलाग्न्याविरुत्पातिः ॥ २६ ॥

ततःजगद्गुरोः जगतांजिज्ञसूनांगुरोः स्वभर्तुःरुद्रस्य चरणांबुजां सवं चरणांबुजें आसवमानंदंचिंतयंतीअनुभवंती अतएवहतकल्मषापापरहिताभर्त्तु रपरंसानददर्शनचिंतितवतीदेहश्चसद्यसमाधिनायोऽग्निस्तेन प्रजज्वाल प्रज्वलितोभूत् ॥ २७ ॥

तदद्भुतमाश्च येपश्यतांभुविखेआकाशेचसुमहान्तुच्चैर्हाहेतिवादःघोष अभूत्तदेवाहदेवतमस्यदेवश्रेष्ठस्यरुद्रस्यदेवी प्रियासतीकेनदक्षेणप्रकोपिताप्रकोपंप्रापिता असून्प्राणान्जहौअत्यजत् ॥ २८ ॥

अहोप्रजापतेर्दक्षस्यमहदनात्म्यंदौर्जन्यमद्यपश्यतचराचरं विश्वयस्य रुद्रस्य प्रजाः प्रजावत्प्रीति विषयंविश्वसुहृद इत्यर्थःतस्यरुद्रस्य सती भार्या यद्वा यस्य दक्षस्य चराचरंप्रजाप्रजावत्स्नेहविषयम् सर्वत्रस्नेहएवाऽस्यन्यास्यइतिभावःतेनदक्षेण विमताविमानितासूनजहौनास्त्वयंविमानयोग्येत्याहुःआत्मजाटत्रा पिमनस्विनीप्रशस्त

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

मनस्कागुणवतीत्यर्थः अतएवाभीक्ष्णंपुनः पुनः मानंसन्मानं-प्रत्यर्हति ॥ २६ ॥

दुर्मर्षमत्यंतासहमानंहृदयंयस्यसोयंब्रह्मबंधुःब्राह्मणापदेशोदक्षः लोकेअमतीःकुकीर्तिमपकीर्तिचअवाप्स्यतिचकारान्नरकंचयद्यतःश्वीयामंगजापभराधतः स्वाग्रज्ञयाप्तनयेमरणायउद्यतामुद्युक्तांपुरुषद्विट् शिवद्वेषीदक्षः तत्पुरुषायविग्रहेमहादेवायइतिमंत्रयोगात् यद्वारुद्रस्य भगवदात्मकत्वात्रुद्रंद्विषन्नपिभगवतंद्वेष्टीत्यर्थःनप्रत्यषेधत् नन्यवारयत् ॥ ३० ॥

सत्याः दाक्षायण्या अद्भुतमसुत्यागंप्राणत्यागंदृष्ट्वाजने-एवंवदति सतिरुद्रपारिषदादक्षंहन्तुमुद्यतान्यायुधानियैस्तेउदतिष्ठन् इत्थितवंतः ॥ ३१ ॥

तेषामपतनामापतंतादागच्छतांपारिषदानांवेगंनिशाम्यदृष्ट्वाभगवान्भृगुःयज्ञघ्नान्हंनीतियज्ञघ्नंतेनयजुषा"अपहता असुरारक्षांसिपिशाचा,,इतिमंत्रेणदक्षिणाग्नौजुहाव हंतिविस्मये ।। ३२ ॥

अध्वर्युणाभृगुणाहूयमानेसतियेतपनासोमंप्राप्तास्ते ऋभवोनामदेवाः सहस्रशः उत्पेतुरुत्थिताः ॥ ३३ ॥

ब्रह्मतेजसाउशद्भिर्दीप्यमानैःअलातान्येवायुधानियेषांतेःऋभुमिर्दह्यमानाः प्रमथाः रुद्रपारिषदाः दिशोभेजुः पलायितवंत इत्यर्थः ॥ ३४ ॥

इतिश्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिकायाम्
चतुर्थोऽध्यायः ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

एवं भ्रुवोर्मध्यमनिलमानीय स्वयमपि भ्रुवोर्मध्ये स्थिता किं चकारेति तत्राह एवमिति एवमुक्तप्रकारेण वायं भ्रूमध्यं नीत्वा स्वयं च तत्रस्थिता मनस्विनी वशीकृतमना महतामिंद्रादीनां महीयसा महत्तमेन रुद्रेणादरान्मुहुः शश्वदंकमारोपितं स्वदेहं जिहासतीत्यक्तुमिच्छन्ती सोमाणाङ्गेषु करचरणाद्यवयवेषु अनिलाग्निधारणां देहभस्मीकरणाय वाय्वग्न्युत्पत्तिल (*) क्षणं ध्यानं दधार चकार अनेकार्थत्वाद्धातूनां दक्षरूपेत्यनेनात्महत्या दोषं मार्ष्टि ॥२६॥

ननु वाय्वग्निध्यानं देहत्यागानंतरं चेदुत्क्रांतस्य वायोरनावृत्तेरग्निसंयोगाभावेनाभीष्टकार्यानुत्पत्तिः पूर्वं चेदात्मनोपि नाशसंभवात्सचानुपपन्नश्चेतनस्य नित्यत्वेनानाशादित्याशंक्य सम समयत्वे नोपपत्तेरिति भावेनाह तत इति ततो वाय्वग्निधारणानंतरं सा सती ज्ञानोपदेष्टृत्वेन जगतां गुरोराचार्यस्य स्वभर्तु शिवस्य चरणयोर्ध्यानेनोत्पन्नानंदलक्षमासवं मधु चिंतयत्यास्वादयंती अपरं तस्मादन्यं न चिंतयती च शब्दात्परं विषयवादिकं चिंतयती स्वदेहे विषयवादिकं ददर्श देहं च तत्याजेति वाक्यशेषः ॥

---

* लक्ष्यते फलत्वेनानेनेतिलक्षणं तत्फलकमित्यर्थः

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

देहत्यागस्यान्यथानुपपत्त्यासिद्धत्वादध्याहृत्यान्वयत इत्यदोषः रुद्रं च ब्रह्मवायू चाविष्यां चैवा श्रियं गिरं उमा ।चतंयती देहं तत्याजान्यं न चास्मरदिति वचनाच्चाध्याहारः प्रामाणिक इति प्रतीयते तत इत्यनुवर्तते ततो देहत्यागानंतरं सद्यस्तत्क्षणम् एव पादाद्रिकमेव समाधिजाता ग्निनादेहः प्रजज्वाल अनेन मृतदेहसंस्कारोपि न पित्रादिना कार्य इति ध्वनयति हतकल्मषेत्यनेन विष्णवादिदर्शनानंतरंपितृकोपनिमित्तकिल्बिषमपि नष्टमिति सूचयति यद्वा दर्शनस्यान्यथात्वंचोच्यते दोषादन्यथा ज्ञानं जायते न चास्याः सोस्तीत्यर्थः ॥ २७ ॥

एवं जगत्सुंदरदेहत्यागे कस्याप्यंतः करणे खेदो नाभूत्किं तत्राह तत्पश्यतामिति ॥ २८ ॥

किमनेन सिद्धानुवादेन एकत्रदोषाऽनारोपणेनेति तत्राह अहो इति अनास्थं मूर्खकर्म अहो त्वनार्यमिति पाठे अन्याय्यमित्यर्थः चराचराः प्रजाः यस्य वशे यस्य संतति प्रसूता इति वा ॥ २६ ॥

ननु कथमेतदनार्यमभूदित्याशंक्य तस्य लोकविद्विष्टफलदर्शनादित्याह सोयमिति य एतादृशमनार्यमकार्षीत्सोऽयं दुर्मर्षहृदयो दुःसहहृदयः अत एव ब्रह्मबंधुर्द्विजाधमो ब्राह्मणानां मृदुहृदयत्वात् अथो अद्यप्रभृति । तस्मादिति हेत्वर्थो वा यद्यस्मादित्यनेन संबध्यते पुरुषं शिवं द्वेष्टीति पुरुषद्विट् तत्पुरुषायेति श्रुतेः अनेन विष्णुद्वेषमपि ध्वनयति पुरुषो विष्णुरुच्यत इति श्रुतेः मृतये मरणायोद्यतां प्रयतमानाम् ॥ ३० ॥

( * ) शिवद्वेषग्रहग्रस्तो दक्षो पुत्रीमरणं दृष्ट्वा किमकृतेति तत्राह दक्षस्त्विति ॥ ३० ॥ ( क )

(:०:) निर्गुणं शमादिगुणहीनं । मृतकं देहं महीयसि महादेवे । एनोऽपराधमकार्षमित्यन्वयः ॥ ३० ॥ ( ख )

सहमरणायोग्या भूतगणास्तदा किमकार्षुरिति तत्राह वदतीति अजे दक्षे । सत्या देव्याः असुत्यागं प्राणवियोगलक्षणम ॥ ३१ ॥

दक्षादपिभृगोः शिवे द्वेषो महानिति भावेनभूतगणशक्तिह्रासोपायं होमं वक्ति तेषामिति यज्ञघ्ना ये यज्ञविनाशकास्तान् हंतीति यज्ञघ्नघ्नस्तेन यजुषा येनोपरिचरुस्तरितासो हूनमतामो अनृतं यथंतः तपां वपूष्यर्चिषा जातवेदशुष्कं नवृक्षमुत संदहस्वेत्यादियजुर्मंत्रेण ॥ ३२ ॥

ततः किमभूदत्राह अध्वर्युणेति सोमं सोमं भागं ॥ ३३ ॥

अत्र ब्राह्मणशक्तिरेव बलीयसीति ध्वनयन्नेतैर्देवैर्भूतगणानां पराभवं वक्ति तैरिति अलातान्युल्मुकान्येवायुधानि येषां ते तथोक्तास्तैः । ब्रह्मतेजसा भृगुमंत्रप्रभावेन । उशद्भिर्भूगोः संकल्पं कर्तुमिच्छद्भिरित्यर्थः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृत पदरत्नावल्याम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

( * )दक्षस्तुदृष्ट्वा दुहितुःस्वांनामिक्तंविनाशनम् ।
बहुतप्यतघोरेण मयाऽसाधुकृतं बत ॥ ३० ॥ (क)
(:०:)विद्धमामविजितात्मानं निर्गुणं निरपत्रपम् ॥
योऽहं स्वीकृत्यमृतकं व्यर्थमेनोमहीयसि ॥ ३० ॥ (ख)

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

देहे हतकल्मषेति सम्बन्धोक्तिः तथा च व्याख्या देहे तदुपलक्षिते हृदीति ॥ २७—२६ ॥

ब्रह्मबन्धुरिति क्वचित् । लोके च कीर्तिमसतीमित्येव पाठः । बहुत्र सदपि पाठान्तरं नाङ्गीकृतं । चशब्दान्नरकञ्चेति व्याख्यानात् ॥ ३०—३४ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

महतां महीयसा श्रीरुद्रेण ॥ २६ ॥

चरणाम्बुजम्यासवं मकरन्दं माधुर्यमित्यर्थः चिन्तयन्ती सती न अपरं किमपि ददर्श । ततश्च समाधिजेनाऽग्निना हतं दक्षकन्यात्वाभिमानलक्षणं कल्मषं यस्तथाभूतो देहः प्रजज्वाल दिदीपे । ज्वल दीप्तौ । मदस्ततवाया एव न तदुत्तर क्षण इति विद्युदिव प्रदीप्यान्तरधादित्यर्थः । तस्या मायाशक्तित्वात् मायायाश्च साकारायाः अपि नित्यत्वात् मायिकवस्तूनामेवानित्यत्वव्यवस्थापनाच्च देहनाशो न व्याख्येयः ॥ २७ ॥

दैवतमस्य पूज्यतमस्य प्रिया केन दक्षेण प्रकोपिता सती असून् जहाविति लोकप्रतीतिः ॥ २८ ॥

अनात्म्यं जीवन्मृतत्वं अस्य दक्षस्य न विद्यते आत्मा यस्य स मृतकस्तस्य भावः अनात्म्यं संपूर्वकाविधित्वेनानित्यत्वाद्वृद्ध्यभावः । यस्येति सर्वत्रैव स्नेह उचितः अथच स्वकन्यायामपि जीवन्मृतत्वमेवेति भावः । आत्मजा तत्रापि सती तत्रापि मनस्विनीति धिक् दक्षमिति भावः ॥ २६ ॥

दुर्मरं हृदयः असहिष्णुमनाः पुरुषद्विड् शिवद्वेषी अपराधतः स्वावज्ञया मृतये मरणाय उद्यतां न निवारितवान् ॥ ३० ॥ ३१ ॥

यज्ञघ्नान् हन्तीति "तनाऽपहतं रक्ष" इत्यादिना ॥ ३२ ॥ ३३ ॥

ब्रह्मतेजसा ज्वलद्भिर्दीप्यमानैः ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थस्य चतुर्थोऽयं संगतः संगतः सताम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

महतां मध्ये महीयसामहत्तमेन आदरान्मुहुः अंकमारोपितं स्वदेहं दक्षरुषा दुर्वाचप्रयकर्माभेन जिहासती त्यक्तुमिच्छती गात्रेषु देहावयवेषु अनिलाग्न्योर्धारणां दधार ॥ २६ ॥

ततः सती स्वभर्तुः चरणांबुजे आसवं तद्ध्यानानन्दं चिंतयती अपरं न ददर्श देहश्चसमाधिजाग्निना सद्यः प्रजज्वाल प्रज्वलितोऽभूत् ॥ २७ ॥

तदद्भुतं देहत्यागं पश्यताम् खे भुवि च हाहेत्यादिवादोऽजायत तदेवाह हंतेत्यादिना केन दक्षेण प्रकोपिता देवतमस्याऽसून् अहो ॥ २८ ॥

श्रीशुकदेवकृत सिद्धान्तप्रदीपः ।

अहो यस्य चराचरप्रजाः तस्य प्रजापतेर्दक्षस्य महदनात्म्यं तु पश्यतः । या अभीक्ष्णं पुनः पुनर्मानमेवार्हति सा सती यद्विमता येन प्रजापतिना । अवज्ञाता । असून् । जहौ ॥ २६ ॥

सोयं दक्षः दुर्मर्षमसहमानं हृदयं यस्य पुरुषद्विड् शिवद्वेषी अत एव ब्रह्माणां वासुदेव ब्रह्म नीति ब्रह्मध्रुक् भगवद्भक्तद्वेषी एवं भगवद्द्वेषीत्यर्थः यतनश्च स्वीयामंगजामपराधतः स्वकृतात्स्ववज्ञाद्विदोषतां मृतये मरणायोद्यतां न प्रत्यषेधत् न न्यवारयत् अतश्च लोके ॥ महती मपकीर्तिमवाप्स्यति ॥ ३० ॥

सत्याअद्भुतम असुत्यागं दृष्ट्वा एवं प्रागुक्तरीत्या जने वदति सति तस्य शिवस्य पार्षदा दक्षं हंतुमुदतिष्ठन् ॥ ३१ ॥

आपततां सर्वतो बलादागच्छताम् । वेगं निशाम्य दृष्ट्वा । "अपहता असुरा रक्षांसि पिशाचा" इत्यनेन यज्ञघ्नान्हंतीति यज्ञघ्नघ्नं तेन यजुषाजुहाव ह स्फुटम् ॥ ३२ ॥

तदा अध्वर्युणा हूयमाने सति ये तपसा सोमं प्राप्ता ऋभवो नाम देवास्ते सहस्रशः उत्पेतुः ॥ ३३ ॥

तैर्ब्रह्मतेजसा ज्वलद्भिर्दीप्यमानैः अलातानि साग्निकाष्ठान्येवायुधानि येषां तैः हन्यमानाः दिशो भेजुः प्राद्रवन् ॥ ३४ ॥

इति श्रीमद्भागवतसिद्धांतप्रदीपे चतुर्थस्कंधीये
चतुर्थाध्यायार्थप्रकाशः ॥ ४ ॥

---

भाषाटीका ।

इस प्रकार महत्पुरुषों के पूजनीय श्री शिव ने आदर से वारंवार अपने गोद में जिसका लालन किया सती ने उस देहको दक्ष के ऊपर क्रोध से छोडने के लिये वायु और अग्निकी धारणा को धारणकी ॥ २६ ॥

नब तो जगत के गुरु और अपने पति एसे श्री शिवजी के चरणांबुज के ध्यानानंद के सिवाय सती जी और कुछ नहीं देखती हुई सब कल्मषनाश होने से सती का देह समाधि के अग्नि से तत्काल जलने लगा ॥ २७ ॥

इस अद्भुत आश्चर्य का देखने वालों का पृथिवी और आकाश में बडा हाहाकार होता भया बडे खेदकी बात है देवों में श्रेष्ठ भी शिवजी की प्रिया ने दक्ष से कुपित होकर प्राण त्याग दिये ॥ २८ ॥

अहो ! दक्षकी बडी दुर्जनता है देखो जिस्को सब चराचर अपनी संतान के सदृश पालनीय है सोतो रहा पर जिस्की अवज्ञा से साक्षात्पुत्री सतीने प्राण छोडदिये येतो विचारी सदा सन्मान ही के योग्यथी ॥ २९ ॥

इस असहन शील हृदय वाले, ब्रह्मद्रोही तथा शिवद्रोही की लोक में बडी अपकीर्त्ति होगी जो कि इसके अपराधसे मरने को त्यार हुई आपकी साक्षात्पुत्री कोभी इसने मरने से नहीं निषेध किया ॥ ३० ॥

सती का इस प्रकार अद्भुत देह त्याग को देख लोग एसा कहते थे इतने में सती के साथ आनेवाले पार्षदगण आयुधों के लेकर दक्ष के मारने को खडे हुये ॥ ३१ ॥

आते हुवे इनों का वेग देखकर भृगुने यज्ञ नाश करने वालोंका नाशक यजुर्वेद के मंत्र से दक्षिणाग्नि में हवन किया ॥ ३२ ॥

बस भृगु अध्वर्यु के हवन करतेही जोकि तपसे सोमको प्राप्त

भाषाटीका ॥

हुवेहैं पसे हजारों ऋभुनाम के देव उठ खडे हुये ॥ ३३ ॥

ब्रह्मतेज से दीप्यमान उन ऋभुदेवताओं से (अलात) अधजली लकडियों के आयुधों से ताड़ित हुवे गुह्यक और भूतप्रमथगण सब दिशों में भाग गये ॥ ३४ ॥

भाषाटीका ।

इति श्रीमद्भागवतमहापुराण चतुर्थस्कन्ध में श्रीसती देहत्याग नामवाले चौथे अध्यायकी भाषाटीका समाप्त हुई ॥ ४ ॥
श्रीरुक्मिणीरमणोजयति

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

### मैत्रेय उवाच ।

भवोभवान्या निधनं प्रजापतेरसत्कृताया अवगम्य नारदात् ।
स्वपार्षदसैन्यं च ( १ ) तदध्वरर्भुभि--र्विद्रावितंक्रोधमपारमादधे ॥ १ ॥
क्रुद्धः सुदष्टौष्ठपुटः सधूर्जटिर्जटां तडिद्वन्हिसटोग्ररोचिषम् ।
उत्कृत्य रुद्रः सहसोत्थितोहसन्गंभीरनादोविससर्ज तां भुवि ॥ २ ॥
ततोऽतिकायस्तनुवा स्पृशन्दिवं सहस्रबाहुर्घन( २ )रुक् त्रिसूर्यदृक् ।
करालदंष्ट्रोज्वलदग्निमूर्द्धजः कपालमालीविविधोद्यतायुधः ॥ ३ ॥
तं किंकरोमीति गृणंतमाह बद्धाजलिं भगवान्भूतनाथः ।
दक्षं सयज्ञं जहि मद्भटानां त्वमगणीरुद्र ( ३ ) भटांशको मे ॥ ४ ॥
आज्ञाप्त एवं कुपितेन मन्युना सदेवदेवं परिचक्रमे विभुम् ।
मेने तदात्मानमसंगरंहसा ( ४ ) महीयसां तात ! सहः सहिष्णुम् ॥ ५ ॥
अन्वीयमानः सतु रुद्रपार्षदैभृशं नदद्भिर्व्यनदत्सुभैरवम् ।
उद्यम्य शूलं जगदंतकांतकं स प्राद्रवद् घोषणभूषणाङ्घ्रिः ॥ ६ ॥
अथर्त्विजोयजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्यरेणुम् ।
तमः किमेतत्कुत एतद्रजोऽभूदिति द्विजाद्विजपत्न्यश्चदध्युः ॥ ७ ॥

---

**श्रीधरस्वामिकृत भावार्थदीपिका**

पंचमेतुसतीदेहत्यागमाकर्ण्यशंकरः ।
वीरभद्रंरुपोत्पाद्यतेनदक्षमघातयत् ॥ १ ॥

प्रजापतेर्हेतोर्निधनम् कुतः तेनासत्कृतायाः तस्याध्वरेऋभवोदेवास्तैः ॥ १ ॥

सधूर्जटिःरुद्रोघोरः सन्जटामुत्कृत्योत्पाट्योत्थितः संस्तांभुवि विससर्ज सुदष्टओष्ठपुटोयेन तडितांवह्नीनांचसटाज्वालास्तद्वदुग्ररोचिर्यस्यास्ताम् ॥ २ ॥

ततोजटायाः सकाशादतिकायोवीरभद्रोजातइतिशेषः तनुवात न्वांदेहेनदिवंस्पृशन् अत्युच्चइत्यर्थः घनरुक्कृष्णवर्णः त्रयः सूर्याइववदृशोयस्य करालास्तुंगादंष्ट्रायस्य ज्वलदग्निरिवमूर्धजायस्य कपालमालायुक्तः विविधान्युद्यतान्यायुधानियस्य ॥ ३ ॥

हेरुद्र ! हेभट ! युद्धकुशल ! मद्भटानांत्वमग्रणीःसन्सयज्ञंदक्षंजहि ब्रह्मतेजोदुर्जयमितिमामंस्थाः यतस्त्वंमेंऽशकः ॥ ४ ॥

मन्युनारुद्रेणपरिचक्रमेप्रदक्षिणीचकार असंगमप्रतिघातंयद्रंहोवेगस्तेन भो तात ! महीयसांबलीयसामपिसहःसहिष्णुबलंसोढुंक्षमंमेने ॥ ५ ॥

**श्रीधरस्वामिकृत भावार्थदीपिका**

जगदंतकोमृत्युस्तस्याप्यंतकंशूलम् घोषयंतिशब्दंकुर्वंतीतिघोषणानिनूपुरादीनिभूषणानिययोस्तावंघ्रीयस्यसः ॥ ६ ॥

ककुभिदिशितमोनभवतिकिंतुरजइतिज्ञात्वाऽऽहुः रजएतत्कुतोऽभूत् दध्युश्चिंतयामासुः ॥ ७ ॥

---

**श्रीराधारमणदासगोस्वामि विरचिता**
**दीपिन्याख्या दीपिका टिप्पणी ।**

तेनवीरभद्रेण हतोरिति हेतुत्वं च क्रोधोत्पादने निमित्तत्वम् ॥१॥
क्रुद्धत्वाद्घोरो भयानकस्सन् ॥ २—३—४ ॥
तदा आज्ञाकालं असङ्गरंहसा लिङ्गेन ॥ ५—६ ॥
तमः किमिति काकुः तथा च तमो न भवतीत्यादि व्याख्या ॥७॥

---

**श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥**

एवंसत्याः प्राणत्यागनिमित्तं त्यागप्रकारश्चसप्रपंचमुक्तः अथ तत्प्रसंगात्प्रसक्तं दक्षाध्वर विनाशं पुनस्तत्संधानंच स प्रपंच माह,

---

पा० ( १ ) तदध्वरेर्वीर्पितै तवध्वरेड्भिरितिवा विजयध्वजपाठः ( २ ) रक्तसूर्य्यदृग् इति विजयध्वजः
( ३ ) रुद्रजटांशक द्यात वि० ( ४ ) सहीयसामिति वि० ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

त्रिभिरध्यायैः तत्राद्येनाध्वरविनाश प्रकारमाह भवेत्रेयः भव इति प्रजापते र्देवस्य कर्त्तरि षष्ठी तेनाऽसत्कृतायाः भवान्याः सत्याः निधनं तथा दक्षस्याध्वरे ये ऋभवो देवास्तै र्विद्रावितं पलायितं स्वपार्षदानां सैन्यं च नारदान्मुनेरवगम्य श्रुत्वा अपारं क्रोधमा दधेकृतवानित्यर्थः ॥ १ ॥

ततः स धूर्जटिः रुद्रः घोरः सन्क्रुद्धस्सन्सुष्ठुदष्टः ओष्ठपुटोयेनसः तडितां वन्हीनां च सटाज्वालाः तद्वदुग्ररोचिर्यस्यास्तां जटांउत्कृत्य उत्पाट्य उत्थितः गंभीरो नादो यस्यसः हसन्तां जटांभुवि विससर्ज अपातयत् ॥ २ ॥

ततोजटायाः सकाशात् अतिकायः वीरभद्रः जातइति शेषः तंविशिनष्टितन्वादेहेन दिवंस्पृशन् अत्युच्चइत्यर्थः घनरुक् कृष्णवर्णः त्रिसः सूर्यसदृशदृशोयस्य करालाः उग्रादंष्ट्रायस्य ज्वलन्अग्निरिवमू र्द्धजायस्य कपालानां मालाअस्यसंतीतितथा विविधानिउद्यता-न्यायुधानियस्यसः ॥ ३ ॥

किं करोमि किं करवाणीति गृणांतंभाषंतं बद्धांजलिं तं वीरभद्रं भूतनाथो भगवान् रुद्रः आह उवाच हेरुद्र ! हेभट ! युद्धकुशल ! मद्भटा नां त्वमग्रणीर्नायकः मे अंशभूतःसयज्ञं दक्षंजहिविनाशय ॥ ४ ॥

कुपितेन मन्युना रुद्रेणैवमाज्ञप्तो देवदेवं विभुं रुद्रं परिचक्रमे प्रदक्षिणीचकार तदाअसह्यरंहसा प्रतिघातरहितवेगेन महीयसां बलीयसामपि महःतेजोबलं तरसहिष्णुं पारिषदे सोढुंक्षमम आत्मानंमेने अमन्यत ॥ ५ ॥

सतु वीरभद्रः भूशंनदद्भिः ध्वनद्भिः रुद्रपारिषदैः रन्वीयमानः परिवेष्टितःसुभैरवम् अतिभयंकरं यथा भवति तथा व्यनदत् ननाद ततः स वीरभद्रो जगदंतकोमृत्युस्तस्याप्यंतकोपमं शूलमुद्यम्य घोषणानि ध्वनंति भूषणानि नूपुरादीनियस्यास्तावंघ्रीयस्यसः प्रा द्रवत् दक्षाध्वरंप्रत्यगात् ॥ ६ ॥

अथ ततः ऋत्विजो दक्षाध्वरे ऋत्विजः यजमानः दक्षः तथा सदस्याः सभ्या द्विजास्तत्परस्त्वथउदीच्यां ककुभि दिशि रेणुं परागं शमीक्ष्यतमोनुभवति किंतु रज इति ज्ञात्वाआहुः रजपतत्कु तोऽभूदिति दध्युश्चिंतयामासुः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ॥

विष्णुद्वेषयत्तञ्चरुद्वेषस्याप्यनर्थहेतुत्वान्मुमुक्षुणा स न कर्तव्य इति ज्ञाप्यतेस्मिन्नध्याये तत्रादौ नारदश्रुतभवानीमरणाक्रूवाहीर-भद्रोत्पत्तिं वक्तुमाह भव इति प्रजापतेरवमानेनाऽसत्कृताया धिक्कृ तायास्तस्य दक्षस्याध्वरस्येशत इति तदध्वरेशा भृग्वादयस्तैः ॥ तदध्वरं यजंत इति तद्ध्वरेजः तैस्तदध्वरेड्भिरिति वा पाठः किप् संप्रसारणंच ॥ १ ॥

क्रोधफलमाह क्रुद्ध इति सुदष्टे ओष्ठपुटे यस्य स तथा धूता ज टा अस्य संतीति धूर्जटिः मत्वर्थे किप् प्रत्ययः तडिद्वन्हिसटा वैद्यु-ताग्निज्वाला तद्वदुग्रं रोचिर्यस्याः सा तथा तां रौद्रो मध्यान्हातप इव तीक्ष्णः 'आतपः कथ्यते रौद्र, इति हलायुधः ॥ २ ॥

सा जटा किमभूदिति तत्राह तत इति ततो जटायाः कश्चित्पु रुषोऽभूदिति शेषःतनुवा तन्वा शरीरेण । घनरुक्ः सांद्रारुणः सूर्य स्वद्वद्रकाहशो यस्य स तथा कपालानां मालासमूहोऽस्यास्तीति कपालमाली ॥ ३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

यदर्थमसावुत्पन्नस्तत्कृत्यमाह तं किंनिति हे रुद्र ! मद्भटानाम-ग्रणीत्वे हेतुर्मे जटांशक इति अनेन जटाया आत्मत्वं सूचयति ॥ ४ ॥

'नमस्ते रुद्रमन्यव, इति श्रुतेर्मन्युना महादेवेन युयुत्सूनां योधानां वीरस्वभावं वक्ति मेन इति यदा सोऽन्यासाध्यकर्मसा धनार्थमुपदिष्टस्तदात्मानं स्वमसंगरंहसं काप्यसक्तवेगं महीयसां सहनशक्तिमत्तराणां सहः सहनशक्तिस्तां सहिष्णुं सहनशीलं मेन इत्यन्वयः ॥ ५ ॥

यथात्राविक्रम एव लोकस्योद्वेगजनकः किमुत तद्युद्धविक्रम इति भावेन तद्यात्राप्रभावं वक्ति अन्वीयमान इति यथा सुष्टु भैरवं भयं करं भवति तथा व्यनदत् जगदंतको जगन्मृत्युस्तस्याप्यंतकः संहर्तृघोषणौ शब्दनशीलं भूषणं नूपुरलक्षणमंघ्रौ यस्यसतथा ॥ ६ ।

असौ वीरभद्रो यज्ञवाटनिकटमायादिति वार्ता पुरोगामिनीत-त्सेनाधूलिरेव व्यनक्तीति भावेन ऋत्विगादीनां धूलिदर्शनेन जिज्ञा साप्रकारं वक्ति अथेति उदीच्यां ककुभि दिशि । ऋत्विजो यज्ञप्रव र्तकाः यजमानो यज्ञे दीक्षितः । सभास्थाने स्थित्वा मंत्रतंत्रकर्म ह-विर्देवताप्रिसंबंधं विवेचयंतः सदस्याः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

तदध्वरविविद्रावित मिति चित्सुखः ॥ १—६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

पञ्चमे श्रुतवृत्तांतः कुप्यन् दक्षमघातयत् ।
उत्कृत्य स्वजटोत्थेन वीरभद्रेण धूर्जटिः ॥ १ ॥

प्रजापतेर्हेतोर्निधनं । कुतः तेनासत्कृतायाः तस्याध्वरे ये ऋ-भवो देवास्तैः ॥ १ ॥

सटा ज्वालाः रुद्रो घोरः सन् ॥ २ ॥

ततो जटायाः तन्वा दिवं स्पृशन् त्रयः सूर्या इव दृशो यस्य स अभवत् ॥ ३ ॥

हे रुद्र ! हे भट ! युद्धकुशल ! त्वं मे अंशक इति अस्मत्तेजो दुर्जय-मिति मा मंस्था इति भावः ॥ ४ ॥

मन्युना रुद्रेण परिचक्रमे प्रदक्षिणी चकार । असंगं केनापि सह गन्तुमशक्यं यद्रंहोवेगस्तेन । यद्वा असङ्गस्यात्मारामस्य रुद्र-स्य रंहसा महीयसां बलीयसामपि सहः सहिष्णुं बलं सोढुं क्षमं मेने ॥ ५ ॥

जगदन्तकस्याप्यन्तकतुल्यं । घोषणानि शब्दायमानानि भूष-णानि यस्यास्तावङ्घ्री यस्य सः ॥ ६ ॥

प्रथमं तम इति ततस्तम एतद्भवति किन्तु रज इति ज्ञात्वाऽऽहुः रज एतत् कुतोऽभूदिति ॥ ७ ॥

---

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः ।

चतुर्थे शिवोवीरभद्रेण यज्ञमघातय दित्याह भवइति प्रजापते रसत्कृतायाः भवान्या निधनम् तस्याऽध्वरेयेऋभवस्तैः स्वपार्षद सैन्यंविद्रावितंच अवगम्य अपारंक्रोधमादधेकृतवान् ॥ १ ॥

तदासधूर्जटिः रुद्रः सुष्टुदष्ट ओष्ठपुटोयेनसः क्रुद्धः सन् तडिता वन्हेश्चसटाज्वालातद्वदुग्ररोचिर्यस्यास्ता मुत्कृत्योत्पाट्योत्थाय गंभीर नादोहसन् । भुविविससर्जत्यक्तवान् ॥ २ ।

वाता न वांति नहि संति दस्यवः प्राचीनबर्हिर्जीवति होग्रदंडः ।
गावो न काल्यंत इदं कुतो रजो लोकोऽधुनाकिंप्रलयायकल्पते ॥ ८ ॥
प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचुर्विपाकोवृजिनस्यैष तस्य ।
यत्पश्यंतीनां दुहितॄणां प्रजेशः सुतां सतीमवदध्यावनागाम् ॥ ९ ॥
यस्त्वंतकाले व्युप्तजटाकलापः स्वशूलसूच्यर्पितदिग्गजेन्द्रः ।
वितत्य नृत्यत्युदितास्त्रदोर्ध्वजा--नुच्चाटहासस्तनयित्नुभिन्नदिक् ॥ १० ॥
अमर्षयित्वातमसह्यतेजसं मन्युप्लुतं दुर्विषहं भ्रुकुटया ।
करालदंष्ट्राभिरुदस्तभागणं स्यात्स्वस्ति किं कोपयतो विधातुः ॥ ११ ॥
बह्वेवमुद्विग्नदृशोच्यमाने जनेन दक्षस्य मुहुर्महात्मनः ।
उत्पेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौचपर्यक् ॥ १२ ॥

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

ततोजटातःअतिकायोबृहच्छरीरोवीरभद्रोऽभूदितिशेषः तनुर्वेत्या घंम तन्वादिवंस्पृशन् अत्युच्चदेहइत्यर्थः घनइवरुक्कांतिर्यस्यत्रयः सूर्याइवदृशोयस्यकराला उग्रादंष्ट्रायस्यज्वलदग्निरिवमूर्द्धजाः के- शायस्यकपालानांमालाअस्यसंतीतिसतथाविविधान्युद्यतान्यायुधा- नियस्यसः ॥ ३ ॥

तंबद्धांजलिंकिंकरोमीतिगृणंतंभाषंतम् भूतनाथआह हेरुद्र ! शत्रु- भयवर्द्धन!हेभट! युद्धकोविद ! त्वंहेतुःत्वंमअंशकःअतएवमेभटानाम अग्रणीः अतएवसयज्ञं दक्षं जहिविनाशय ॥ ४ ॥

एवं कुपितेनमन्युनारुद्रेणआज्ञप्तः सवीरभद्रः विभुंविपुलस्वभा- वंपरिचक्रमेप्रदक्षिणीचकारतदाभीतअसंगेनप्रतिघातेन रंहसावेगेन आत्मानंमहीयसांमहद्बलवतामपिसहः सहिष्णुंसहसोबलस्यसहि- ष्णुं सोढुं क्षमंमेने ॥ ५ ॥

सुभैरवंसुभयंकरंयथातथाऽयनदत् तदनंतरंजगदंतकोमृत्युस्त- स्याप्यंतकमपिशूलमुद्यम्यघोषणानिध्वनिवंतिभूषणानिनूपरादीनि यथोस्तादंघ्रीयस्यसः संप्राद्रवत् ॥ ६ ॥

अथानंतरम् उदीच्यांककुभिउत्तरस्यांदिशिरेणुंप्रसमीक्ष्यएतत् तमोभवतिकिम् रजइतिनज्ञात्वाहुः एतद्रजः कुतोभूदितिदध्युः चिंतया मासुः ॥ ७ ॥

### भाषाटीका

श्रीरुक्मिणीरमणो जयति ॥ मैत्रेयजी बोले । महादेवजी भी दक्षप्रजापति केअसत्कार से सतीजी के मरणको और उस यज्ञ के ऋभुदेवों से अपनी पार्षदों की सेना के भागने को नारद के मुखसे सुनकर बड़ा भारी क्रोध करते हुये ॥ १ ॥

मारे क्रोधके (धूर्जटि) घोर रुद्रने अपने दांतों से होठ काटकर बिजली और अग्निकी ज्वाला है मानो इस तरहकी अपनी जटा शिरसे उखाड कर एकाएकी उठकर बड़े गंभीर शब्दसे हसते २ उस जटाको धरती में पटकदी ॥ २ ॥

तबतो एक बडा भारी काले रंग का हजार भुजा वाला बडा ऊंचा अपने शरीर से आकाश को छूने वाला बडी विकराल डाढें सूर्य सदृश तीक्ष्ण तीन नेत्र अग्नि की ज्वाला सदृश शिरपर बाल मुंडोंकी माला पहिने नानातरह के आयुधों को लिये ऐसा एक वीरभद्रनामक गण पैदा होकर खडा होगया ॥ ३ ॥

### भाषाटीका

वह हाथ जोड महादेवजी से बोला कि मैं क्याकरूं तब महादेव बोले कि हे रुद्र दक्षको मारकर दक्षके यज्ञको विध्वंस करो तुमहमारे गणों में अग्रगण्य हो क्योंकि हमारा अंश ही तुमहो ॥ ४ ॥

हे विदुर ! साक्षात भगवान का क्रोध रूप एसे रुद्रकी आज्ञा पायकर उस गण ने महादेवजी की परिक्रमादी और उस समय पर आप अपने को बडे २ बलवानों के बलको सहन करने वाला मानता हुआ ॥ ५ ॥

चलते समय पीछे बडा भयानक नाद करने वाले रुद्र के गण उन सब के अगाडी कालको भी भय करने वाला एक त्रिशूल लेकर पैरों में घड़ं घड़ं शब्द करने वाले नूपुर पहिनके शब्द करता हुआ दौड़ा ॥ ६ ॥

अब उहां यज्ञ में ऋत्विग् लोग यजमान और सभावाले उत्तर दिशाकी तरफ से उड़ती हुई धूर को देख ब्राह्मण और ब्राह्मणों की स्त्रियां भी यों विचार करने लगे कि ये अंधकार है क्या, ये रज कहां से उडती आती है ॥ ७ ॥

### श्रीधरस्वामिकृत भावार्थदीपिका ।

हेत्वंतरासंभवेनौत्पातिकंकल्पयंति वाताइति दस्यूनामभावेहेतुः प्राचीनबर्हिस्तदानीतनोराजाजीवतीति नकाल्यंतंनशीघ्रंनीयंते ॥८॥

प्रसूतिर्दक्षपत्नीसामिश्रामुख्यायासाम् विपाकः फलम् पश्यंती नामितितस्यादुःखाधिक्येहेतुः अयदध्यावअवज्ञातवान् अनागामनाग सम् ॥ ९ ॥

नचेदंसुराऽवज्ञामात्रंकिंतुरुद्रावज्ञानंचातोनाऽस्यभद्रंभविष्यती- त्याहुः यस्त्विति द्वाभ्याम् व्युप्तोविकीर्णोजटाकलापोयस्य स्वशू लस्यसूच्यामग्रेऽर्पिताःप्रोतादिग्गजेंद्रायेनउदितान्युन्नामितान्यस्त्रा- णियैस्तेदोषोबाहवएवध्वजास्तान्वितत्यहर्षेणानृत्यति उच्चोऽट्टहासः कठोरोहासएवस्तनयित्नुर्गर्जितंतेनभिन्नाविदीर्णादिशोयेनसः १०

अमर्षयित्वाऽसहनयुक्तंकृत्वा मन्युप्लुतंक्रोधव्याप्तम् उदस्तांवि क्षिप्ताभगणानक्षत्रसंघायेन पुनश्चतंकोपयतोविधातुरपिकिंस्वस्ति- स्यादस्यादेव काऽन्यस्यकथा ॥ ११ ॥

उद्विग्नाप्रचलितादृग्यस्यनेनजनेनबहुयथाभवत्येवमुच्यमानेसत्यु- त्पाततमा महोत्पाताउत्थिताः पर्यक्सर्वतश्च कथंभूताः महात्मनोऽ पिदक्षस्यभयावहाः ॥ १२ ॥

तावत्सरुद्रानुचरैर्मखो महान्नानायुधैर्वामनकैरुदायुधैः ।
पिंगैः पिशंगैर्मकरोदराननैः पर्याद्रवद्भिर्विदुरान्वरुध्यत ॥ १३ ॥
केचिद्बभंजुः प्राग्वंशं पत्नीशालां तथा परे ।
सदआग्नीध्रशालां च तद्विहारं महानसम् ॥ १४ ॥
रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् ।
कुंडेष्वमूत्रयन्केचिद्बिभिदुर्वेदिमेखलाः ॥ १५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

नानाऽऽयुधानि येषांवामनकैर्ह्रस्वैः उद्यतायुधैः पिंगैःकपिलैः पिशंगैःपीतैः मकरस्येवोदरमाननंचयेषांतैः परितोधावद्भिरयरुद्धः ॥१३॥ यज्ञशालायाः पूर्वपश्चिमस्तम्भयोरुपरिपूर्वपश्चिमाविलंबितंकाष्ठंप्राग्वंशस्तम् यज्ञशालायाः पश्चिमतः पत्नीशालातां यज्ञशालायाः पुरतः स्थितंसदोमंडपम् सदसः पुरोहविर्धानंतस्योत्तरतआग्नीध्रशालाम् तद्विहारंयजमानगृहम् महानसंपाकभोजनशालाम् ॥ १४ ॥

रुरुजुर्बभंजुः उत्तरवेद्यामेखलाः सीमासूत्राणि आज्ञागुरुणांह्यविचारणीयाइतिहेतोर्नैतदोपभागिनइतिभावः ॥ १५ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपन्याख्या दीपिका टिप्पणी ॥

औत्पात्तिकत्वं उत्पातजन्यत्वं ॥ ८ ॥

एष अकस्माद्रज आगमनरूपः अवज्ञातवानिति यत् तदस्य वृजिनस्येति योज्यम् ॥ ९ ॥

यस्त्विति युग्मकम् असहनयुक्तं कृत्वा इत्यसहनस्य कारणत्वं कोपस्य कार्य्यत्वमिति भेदः यः स्वत एव प्रलये ईदृशः पुनश्च तं कोपयत इति योज्यम् ॥ १० ॥

प्रजापतित्वेन महात्मनः श्रेष्ठजीवस्यापि ॥ ११ ॥

आ सर्वत इति कल्पिता टीका परित इत्यनेनैव तदर्थोपपत्तेः आ सम्यक् वेगेनेत्यर्थः ॥ १२ ॥

हविर्द्धानं होमद्रव्यस्थलमिति प्रकरणात्सन्निवेशार्थं रिक्तपूरणाम् आग्नीध्रशालां होमकुण्डस्थलीम् ॥ १३ ॥

उत्तरे हविर्धानोत्तरदेशे या वेदी तस्याः सीमा सूत्राणिअवधिपरिधीः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

हेत्वंतरासंभवेनौत्पातिकं कल्पयंतम्प्रहुः वाता इति वाताश्चंडवायवः नवांति न प्रसरंति दस्यवश्चोरादयः नसंति तत्र हेतुः हि-यस्मात् उग्रदंडो दमनं प्रशासनं यस्यसः प्राचीनवर्हिः तदानींतनो राजाजीवति तस्मिन् जीवति नद्दस्यवः हेत्याकस्मिकत्वद्योतकं गावोनकाल्यंते न शीघ्रंनीयंते अत इदंरजः कुतउत्थितम् अधुनालोकः प्रलयायनाशाय कल्पते संभाव्यतइत्यर्थः ॥ ८ ॥

प्रसूतिर्दक्षस्य पत्नी तन्मिश्राः तत्सहिताः स्त्रियः उद्विग्नचित्ता उद्विग्नंभीतं चित्तं यासां ताऊचुः तस्य दक्षस्ययद् वृजिनं यत्पापंतस्यैवायं विपाकः फलं यत् यस्मात् प्रजेशो दक्षः दुहितृणांपश्यंतीनां सतीनाम् अनेन तस्याःदुःखाधिक्यं सूचितम् अनागसंनिरपराधांसुतां सतींभवानीमवद्ध्यौ अवज्ञातवान् ॥ ९ ॥



श्रीमद्वीरराघवाचार्यकृत भावतचन्द्रचन्द्रिका ।

असह्यपराक्रमं रुद्रंकोपयतो दक्षस्याऽ मंगलमवश्यं भावीत्याहुः द्वाभ्यां यस्त्विति यो रुद्रोंतकाले प्रलयकाल व्युप्तेविकीर्णाः जटाकलापोयस्य स्वशूलस्य सूच्यग्रेण अर्पिताप्रोता दिग्गजेंद्रायेन उद्दितानि उन्नमितानि अस्त्राणियैस्तेदोषः वाहवएवध्वजास्तान् वितत्य प्रसार्य्य उच्चोऽट्टहासः सएवस्तनयित्नुर्गर्जितंतेनभिन्नाविदीर्णा दिशोयेनसः हर्षेणानृत्यति ॥ १० ॥

तमेवं भूतमसह्यमप्रतिघाततेजोयस्यतं रुद्रमममर्पयित्वा असहनयुक्तंकृत्वा मन्युनाक्रोधेन प्लुतं व्याप्तं अतएवदुर्निरीक्ष्यं द्रष्टुमशक्यं भ्रुकुट्या उग्रदंष्ट्राभिश्च उदस्तउत्क्षिप्तो भागणो नक्षत्रसंघोयेनतंकोपयतो विधातुरपि किं स्वास्तिस्यात् विधातुरप्येवमन्यस्यकाकथेत्यर्थः ॥ ११ ॥

उद्विग्नाप्रचलिता दृग्यस्य तेन जनेन बहुयथाभवत्येवमुच्यमाने सति सहस्रशः उत्पाततमामहोत्पाता महात्मनः स्थिरचित्तस्यापि दक्षस्यभयावहादिविभूमौच पर्यक्पारितः उत्थिताः ॥ १२ ॥

तावत्तुआशु रुद्रानुचरैर्महान् मखो यागः हेविदुर ! अन्वरुध्यतप्रत्यवध्यतविनाशित इति यावत् रुद्रानुचरैः कथंभूतैः नाना विचित्राणि आयुधानि येषांतैः वामनकैः ह्रस्वैः उद्यतायुधैः पिशंगैः पीतैः मकरस्येवोदरमाननंच येषांतैः परितोधावद्भिः ॥ १३ ॥

मखानुरोधमेवप्रपंचयतिकेचिद्रुद्रपार्षदाः प्राचीनवंशं वभंजुः त्रोटितवंतः तथाकेचिद्परेपत्नीशालांवभंजुरित्यनुषंगः प्राचीनंपूर्वपश्चिमस्तंभार्पितपूर्वपश्चिमायतत् तिर्यक्काष्ठं प्राग्वंशः तथैकेसदः यज्ञशालायाःपूर्वतः स्थितंमंडपंसदः सदसः पुरतोहविर्धानं तस्योत्तरतआग्नीध्रशालां तद्विहारंयजमानगृहं महानसंपाकभोजनशालाम्॥१४॥

रुरुजुः वभंजुः अमूत्रयन् मूत्रंकृतवंतः तथोत्तरवेद्यामेखला सीमासूत्राणिबिभिदुः ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

न केवलं दध्युरभिदद्धयुश्चेत्याह वाता इति चोराणामभावे निमित्तमाह प्राचीनवर्हिरिति उग्रो दंडो यस्य । उग्रेषु दंडो यस्येति वा स उग्रदंडः प्राचीनवर्हिर्नाम तत्कालभवो राजा । जीवति सप्राणो वर्तत इत्यन्वयः हेत्यनेन तज्जीवनं सर्वेषां सिद्धमिति व्यक्ति ॥ ८ ॥

तत्र केचिद्दक्षभयात्कारणं जानंतोपि तूष्णीमासंस्तद्भयहीनाः प्रसूतिमुख्याः कारणमूचुरित्याह प्रसूतिमिश्रा इति मिश्रशब्दो मुख्यार्थे वर्तते प्रजेशो दक्षो दुहितृणां प्रपश्यंतीनां सतीनामनागममनपराधां नाम्ना सतीं सुतामवद्ध्यौ अवज्ञातवानिति यद्यस्मात्तस्माद्वृजिनस्य पापस्य विपाकः फलमेवेत्यन्वयः ॥ ९ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

सत्यवज्ञानोत्पन्नपरमेश्वरकोपादियमनर्थयातिनी भूलिरिति भावेन सदाशिवमाहात्म्यं वदंतीत्याह यास्त्विति व्युप्तजटाकलापः प्रसारितजटा समूहः वितत्य विस्तृत्यबाहूनिति शेषः उदितान्यस्त्राणि धनुरादीनि येषु ते उदितास्त्रा दोषो भुजा एव ध्वजा दोर्ध्वजा यस्य स तथोक्तः रूक्षाट्टहासः कठोरसिंहनादः स एव स्तनयित्नुः प्रलयकालीनमेघनादस्तेन भिन्ना विद्राविता दिशो यस्य स तथोक्तः भिन्नदृगिति पाठे स्तनयित्नुवन्मेघवद्भिन्ना व्यक्ता दृग्यस्य सतयेत्यर्थः ॥ १० ॥

अनेन प्रकृते किं तत्राह अमर्षयित्वेति एवं विधं तं शिवममर्षयित्वा । विधातु र्दक्षस्य स्वस्ति स्यात्किं । न स्यादेवेत्यन्वयः दंष्ट्राप्रभाभिरुदस्तो निरस्तो भागणो नक्षत्रगणो यस्य स तथोक्तस्तम् ११

न केवलं तर्कतो दक्षस्यैश्वर्यदरिद्रं ज्ञायते किंतु दुर्निमित्तैरपीत्याह बह्वेवमिति किं बहुना पर्यक् सर्वतो दिक्षु ॥ १२ ॥

उत्पातानां क्षिप्रं प्रत्यक्षफलमभूदित्याह तावद्धिति गाथदुत्पाता उत्पन्नास्तावदन्वरुध्यत इत्यन्वयःनानाविधत्वमेव स्पष्टी क्रियते वामनकैरित्यादिनानावरकालक्षेपमंतरेणसमन्नान्मखोरुद्रानुचरैर्वामनकैर्ह्रस्वैर्ह्रस्वशिरोभिश्च पिंगैः कपिलैः पिशंगैर्हरिद्रावर्णैर्मकरवदुदरमाननंच येषां ते तथोक्तास्तैः पर्याप्तवद्भिरितस्तत उत्पतद्भिः॥१३॥

तत्र तत्र स्वस्त्रानुकूलं रोधं चक्रुरित्युक्तं विशिनष्टि कंचिदिति प्राग्वंशमग्निहोत्रस्थानं । यज्ञशालायाः पूर्वपश्चिमस्तंभयोरुपर्यर्था तरयंशावलंबनं पूर्वपश्चिमायतं दारु वा प्राग्वंशस्तं यज्ञशालायाः पश्चिमतः पत्नीशाला । यज्ञशालायाः पुरतो मंडपः सदः । मंडपतः पुरतो हविर्धानी । तस्योत्तरतः शालाग्नीध्रशाला । पशुविशसन स्थानं । तस्याग्नीध्रस्याग्निस्थानं विहारः । महानसः पचनस्थानम् ॥ १४ ॥

रुरुजुः रुजोभंग इति धातुः वेदिमेखला उत्तरवेदिसीमा सूत्राणि ॥ १५ ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

यस्त्वन्तकाल इति युग्मकम् ॥ १० ॥

अमर्षोऽसहनं कोपस्तु तत्कार्यभूतः ॥ ११—१८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

पुनरपि विविधं संशोरेते वाता इति । प्राचीनवर्हि स्तदानीन्तनो राजा ह स्पष्टम् ॥ ८ ॥

प्रसूति र्दक्षपत्नी सा मिश्रा मुख्या यासां ता स्तस्य वृजिनस्यापराधस्य एष विपाकः फलं । पश्यन्तीनामिति तस्या दुःखाधिक्ये हेतुः । अवदध्यौ अवज्ञातवान् अनागां निरपराधां ॥ ९ ॥

नाचास्य प्रजापतेस्तेजस्वित्वं श्रीरुद्रे प्रभवतीत्याहुः यस्त्विति द्वाभ्यां । व्युप्तजटाकलापः विकीर्णजटापुञ्जः । उदितान्युत्थमितानि अस्त्राणि येषु ते दोषो बाहव एव ध्वजा स्तान् वितत्य नृत्यति । स्तनयित्नुर्गर्जितं तेन भिन्ना विदीर्णा दिशो येन तम् ॥ १० ॥

अमर्षयित्वा कोपयित्वा उदस्त उत्क्षिप्तो भागणो वह्निसूर्यादीनामपि ज्योतिर्गणो येन् तं । पुनरपि प्रेयस्यवमानेन कोपयतो विधातुः प्रजापतेः पितु र्ब्रह्मणोऽपि किं स्वस्ति स्यात् कान्यस्य क-

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

थेति दक्षस्य दौरात्म्येन सर्व एव महाविपदि निमंक्ष्याम इति भावः ॥ ११ ॥

हे मातरः! सत्यमेव ब्रूथेत्येवं जनेन तत्रत्यलोकसमूहेनापि बहु उच्यमाने महात्मनोऽपि दक्षस्य । यद्वा विपरीतलक्षणया दुरात्मन इत्यर्थः ॥ १२ ॥

वामनकैर्ह्रस्वदेहैः अन्वरुध्यत आव्रियत ॥ १३ ॥

यज्ञशालायाः पूर्वपश्चिमस्तम्भयोरर्पितं पूर्वपश्चिमायतं काष्ठं प्राग्वंशः । यज्ञशालायाः पश्चिमतः पत्निशाला । यज्ञशालायाः पुरतः सदोमण्डपः सदसः पुरतो हविर्धानं तस्योत्तरत आग्नीध्रशाला तद्विहारो यजमानगृहं महानसं पाकभोजनशाला ॥ १४ ॥

रुरुजुर्बभंजुः ॥ १५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

तच्चिंतामेवाह वाता इति दस्यवोनसंतियतउग्रदंडः प्राचीनवर्हिर्नृपोजीवतिगावोनकाल्यंतेनशीघ्रंचाल्यंतेरजोहेतुमनुपलभ्यहेतुकल्पयंतिलोकोऽधुनाकिंप्रलयायकल्पतेइति ॥ ८ ॥

प्रसूतिमिश्राः सतीमातृसहिताः तस्यप्रजापतिकर्तृकस्यवृजिनस्यपापस्यएषविपाकः फलम् यत्यस्मात् प्रजेशः दुहितॄणांपश्यंतीनाम् अनागांनिष्पापाम् अवदध्यौअवज्ञातवान्॥ ९ ॥

योरुद्रः उग्रः उदात्तः अट्टः कठोरश्चयोहासः सएवस्तनयित्नुर्जितंतेनविदीर्णादिशोयेनअंतकालेप्रलयावसरे व्युप्तोविकीर्णोजटाकलापोयस्य शूलस्यसूच्यामग्रभागे अर्पिताप्रोतादिग्गजेंद्रायेनउदितानिउन्नमितानि अस्त्राणियेषुतेदोषः बाहवएवध्वजाः केतवस्तान् वितत्यनृत्यति ॥ १० ॥

असह्यंदुः सहंतेजोयस्यतंमन्युनाक्रोधेनप्लुतं भ्रुकुटचाद्गुर्विषहंदूष्णमशक्यंकरालामिर्दंष्ट्राभिः उदस्तोविक्षिप्तोभागणोनक्षत्रसमूहोयेनैवंभूतंतममर्षयित्वाप्रातिकूल्यंनीत्वाकोपयतोविधातुरपिकिंस्वस्तिकुशलंस्यात् ॥ ११ ॥

उद्विग्नाभयव्याप्ताद्दग्यस्यतेनजनेन एवंबहूच्यमानेसतिदक्षस्यदिविभुविपर्यक् सर्वतोदिक्षुसहस्रशोभयावहाः उत्पाततमाः अत्युत्पाताः उत्पेतुः ॥ १२ ॥

वामनकैर्ह्रस्वैः पिंगैः कपिलैः पिशंगैः पीतैः मकरवदुदरमाननं येषांतैः अन्वरुद्धः व्याप्तोभूदित्यर्थः ॥ १३ ॥

प्राग्वंशंयज्ञशालागतपूर्वपश्चिमस्तंभोपरिनिहितंकाष्ठम् सदः सभाम् विहारंयजमानगृहम् ॥ १४ ॥

रुरुजुः बभंजुः अमूत्रयन् मूत्रंकृतवंतः ॥ १५ ॥

---

भाषाटीका ।

देखो कुछ पवन भी नहीं चलता है न कोई चोरों का उपद्रव है क्योंकि मारी दंड देने वाले प्राचीन बर्हिका राज्य है गायों को भी कोई नहीं दौडाता है फिर ये इतनी भारी धूर कहां से आई क्या लोक का प्रलय होना है इस समय ॥ ८ ॥

उद्विग्न चित्तवाली प्रसूति प्रभृति स्त्रियां कहने लगी कि यह उस पाप का फल है जोकि प्रजापति ने और लडकियों के देखते निरपराधनी विचारी सती का तिरस्कारकिया ॥ ९ ॥

अबाधंत मुनीनन्यएके पत्नीरतर्जयन् ।
अपरे जगृहुर्देवान्प्रत्यासन्नान्पलायितान् ॥ १६ ॥
भृगुं बबंध मणिमान्वीरभद्रः प्रजापतिम् ।
चंडीशः पूषणं देवं भगं नंदीश्वरोऽग्रहीत् ॥ १७ ॥
सर्वएवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः ।
तैरर्द्यमानाःसुभृशंग्रावभिर्नैकधाऽद्रवन् ॥ १८ ॥
जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान्भवः ।
भृगोर्लुलुंचे सदसि योऽहसत् श्मश्रुदर्शयन् ॥ १९ ॥
भगस्य नेत्रेभगवान्पातितस्य रुषाभुवि ।
उज्जहार सदःस्थोऽक्ष्णायः शपंतमसूसुचत् ॥ २० ॥
पूष्णश्चापातयद्दंतान्कालिंगस्य यथा बलः ।
शप्यमाने गरिमणियोऽहसद्दर्शयन्दतः ॥ २१ ॥
आक्रम्योरसि दक्षस्य शितधारेण हेतिना ।
छिंदन्नपितदुद्धर्तुं नाशक्नोत्त्र्यंबकस्तदा ॥ २२ ॥
शस्त्रैरस्त्रान्वितैरेवमनिर्भिन्नत्वचं हरः ।
विस्मयं परमापन्नोदध्यौपशुपतिश्चिरम् ॥ २३ ॥
दृष्ट्वासंज्ञपनं योगं पशूनां सपतिर्मखे ।
यजमानपशोः कस्य कायात्तेनाहरच्छिरः ॥ २४ ॥

भाषाटीका ।

जोकि प्रलय काल में जटावों को खोलकर त्रिशूल में दिग्गजों को नाथ के शस्त्रवाली भुजा रूप ध्वजावों को ऊपर फैलाकर नृत्य करते हैं जिनके नृत्य समय के ऊंचे अट्टहास की गर्जना से दिशायें विदीर्ण होजाती हैं ॥ १० ॥

जिस्की भ्रुकुटि न सहन हो जिसकी कराल डाढों के मारे तारागणों की कांति फीकी पड जाय क्रोध से व्याप्त ऐसे असह तेज वाले को क्रोध कराने वाले क्या विधाता का भी कुशल हो सका है ॥ ११ ॥

सब लोग आपुस मे ऐसे बात करते रहे इतने में महात्मा दक्ष को पृथिवी आकाश और चारों तरफ बहुत से भयंकर उत्पात होने लगे ॥ १२ ॥

हे विदुरजी ! इतनें मे रुद्रके गणोंने उस यज्ञस्थानको चारो तरफ से घेर लिया वे रुद्र के गण कैसे हैं कि देखने में छोटे२ और नाना प्रकार के आयुधों को लिये पीले और कपिल रंग वाले, घड़ियाल याने मगर मुख और पेट जिनका और चारो ओर से दौड़ते हुये आ रहे हैं ॥ १३ ॥

तब किसीन तो यज्ञशाला के मंडप का आधार जो बांस था उसे तोड़ दिया ऐसे ही किसीने पत्नीशाला कितनोंई ने सभामंडप कितनोंईने अग्निध्रशाला औरन ने यजमान का निवास घर अन्य लोगोंने रसोईघर विध्वंस कर डाला ॥ १४ ॥

कितनेही गणों ने यज्ञ के पात्र फांड़ डाले कोई अग्नि बुझाने लगे कोई वेदी के कुंडोंमें मूत्रकरने लगे किसी ने वेदी की मेड़ तोड़दी॥१५

श्रीधरस्वामिकृत भावार्थदीपिका ॥

प्रत्यासन्नान्पलायितान्समीपस्थान्पलायितानपिजगृहुः ॥ १६ ॥ ॥ १७ ॥

ग्रावभिरर्द्यमानाः नैकधाअनेकधाद्रुद्रुवुः ॥ १८ ॥

स्रुचोहस्तेयस्य भवोवीरभद्रः लुलुंचेउत्पाटितवान् ॥ १९ ॥

उज्जहारोद्धृतवान् यः सदस्थः सभायांस्थितः सन्शपंतंशिवं निंदांकुर्वंतंदक्षमक्ष्णाऽक्षिनिकोचेनासूसुचत्प्रेरितवान् ॥ २० ॥

कालिंगदेशराजस्यानिरुद्धोद्वाहेबलभद्रोयथाद्यूतेदंतान्पातितवान् गरिमणिगुरुतरेरुद्रेनिंद्यमानेदतोदंतान्दर्शयन्योजहास पूष्णोरितिपाठेद्विवचनंभद्रापौष्णाश्चरुर्भवतीत्यत्रान्यसहितस्यापिपूष्णोदंतपातप्राप्त्यर्थं सूचितवान् तथाहि पूषाप्रपिष्टभागोऽदंतकोहितंदेवाअब्रुवन्निति विहितस्यपंपणस्यहिदेवत्वाभावात्तत्रतस्यदंताः संतीति चरुद्वयंस्याच्चेत्संगच्छतइत्याशंक्यतत्रापितस्यदंतपातोऽन्यस्याभेदप्रवृत्तेर्नाद्विवचनेनव्याप्यंतअतएवपूष्णोऽनुग्रहंछंधावश्यति पूषानुयजमानस्यदद्भिर्जक्षितुपिष्टभुगिति केवलश्चेत्तापिष्टभुग्भविष्यति अन्यसहितश्चेद्यजमानस्यदद्भिर्भक्षयिष्यतीत्यर्थः ॥ २१ ॥

छिंदन्नपीत्यत्रशिरइत्युपरिव्यक्तीभविष्यति त्र्यंबकोवीरभद्रः २२

अस्त्रान्वितैर्मंत्रसहितैः अनिर्भिन्नात्वग्यस्यतथाभूतंदक्षंनिशंपः २३

सपशूनांपतिर्मखेसंज्ञपनंयोगंकंठनिष्पीडनादिरूपंमारणोपायंदृष्टतेनोपायेनाहरत् ॥ २४ ॥

साधुवादस्तदातेषां कर्म तत्तस्य शंसताम् ।
भूतप्रेतपिशाचानामन्येषां तद्विपर्ययः ॥ २५ ॥
जुहावैतच्छिरस्तस्मिन्दक्षिणाग्नावमर्षितः ।
तद्देवयजनं दग्ध्वा प्रातिष्ठद्गुह्यकालयम् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे
पारमहंस्यां संहितायां वैयासिक्यां दक्षयज्ञविध्वंसोनाम
पञ्चमोऽध्यायः ॥ ५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

अन्येषांब्राह्मणादीनांतद्विपर्ययोऽसाधुवादः अभूदितिशेषः २५॥
गुह्यकालयंकैलासम् ॥ २६ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायां
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

ग्रावभिः प्रस्तरैः ॥ १८ ॥ १९ ॥ २० ॥

तत्सहितस्यापि इन्द्रसाहित्यावस्थावतोपि पूष्णः दंतपातप्राप्त्यर्थं अवस्थानिमित्तं भेदमाश्रित्य मैत्रेयः द्विवचनं सूचितवान् तथा हि अवस्थाद्वयेपि दंतपातं दर्शयति पूषंति प्रपिष्टेन चरुणा भागोयागो यस्य तथाभूतः पूषा प्रपिष्टचरुणा पूषाणं यजेतेत्यर्थः तत्र इंद्रसहितावस्थायां तस्य पूष्णः एतत् अवस्थाभेदेन दंतानां सत्त्वमसत्त्वं च परस्परविरोधान्न संगच्छेते इत्याशङ्क्य विचार्य्य चरोर्द्विदैवत्यात् तत्रापि इंद्रसहितावस्थायामपि तस्य पूष्णः अवस्थाभेदे इंद्रसाहित्यावस्थायां केवलावस्थायां च अत एवावस्थाद्वयेपि दंतपातनिर्णयादेव अन्येनेन्द्रेण सहितः प्रपिष्टभाग इति इदं पेषणं न यज्ञाङ्गं प्रकरणाभावात् वाक्ये पूषमात्रश्रवणाच्च किन्तु पूषस्वरूपप्रयुक्तं स च पूषाद्विदैवत्येपि चरौ विद्यते इति इंद्रसाहित्येपि चरौ पेषणं स्यात् इति प्राप्ते तृतीयाध्याये तृतीयपादे सूत्रं यथाएकस्मिन्नेकसंयोगादिति एकस्मिन् श्रूयमाणे प्रपिष्टभागे एकस्यैव पूष्णः संयोगाद्विदैवत्ये चरौ न पेषणमित्यर्थः तदुक्तं भट्टैः॥देवतानिष्फलानैव पेषणस्य प्रयोजिका उपादानञ्च यागस्य भागशब्देन विद्यते मुख्यार्थाऽसंभवाद्यागलिलक्षयिषयात्र हि श्रूयते भागशब्दोयं नानुपादानमस्त्यत ॥ इति ननु स च भागशब्दलक्ष्यो यागो द्विदैवत्यः ऐंद्रापौष्णश्चरुर्भवतीति यागांगद्रव्ये चरौ द्वयोः प्राप्तत्वेनैकेन पूष्णाव्यपदेष्टुमशक्यत्वात्सत्यं यद्यपि भागशब्दलक्ष्यस्य यागस्यापि तदङ्गचरौ द्विदैवत्यश्रुतिसामर्थ्यात् द्विदैवत्यं तथापि पूषाप्रपिष्ट भाग इत्यत्र पूषविशिष्टस्यान्यस्याभावादेकदैवत्ये प्रविष्टचरौ पेषणं न द्विदैवत्ये चरौ इति इंद्रसाहित्येपि दंताभावात्पूष्णा न भोक्तुंचरुः शक्यते अतएवानुग्रहे सति यजमानस्य दद्भिर्भक्षणं व्याख्यातमितिनिष्कर्षः ॥ २१ ॥

उपरि व्यक्ती भविष्यतीत्यतस्तच्छब्देन शिरः परामृश्यते २२

पशुपतिस्त्र्यम्बक इत्यादिशब्दास्तदंशवीरभद्रे गौणाः ॥ २३ ॥

संज्ञपनशब्दः यज्ञीयपशुहिंसाप्रकारपरः । २४ ।

तच्छिरो हरणलक्षणं प्रशंसतां अभूदिति साध्यक्रियाऽध्याहारः ॥ २५ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

परवहस्तस्यम ॥ २६ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
दीपिन्याख्यायां दीपिका टिप्पण्याम्
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

अतर्जयन् अभर्त्सयन् अपरेपलायिता न्पुनरनुधावनेन प्रत्यासन्नान् देवान् जगृहुर्गृहीतवंतः ॥१६॥ मणिमान् रुद्रानुचराग्र्यः भृगुंबबन्ध वीरभद्रः प्रजापतिं दक्षं चंडीशः पूषणाख्यं देवं भगाख्यं नंदीश्वरः अगृहात् ॥ १७ ॥

सर्वेदिवौकोभिः देवैः सहिताः सदस्याः सभ्याः ऋत्विजः रुद्रानुचरैर्बध्यमानान् भृग्वादीन् दृष्ट्वाभृशं ग्रावभिःशिलाभिरर्द्यमाना अनेकधाताड्य माना दुद्रुवुः ॥ १८ ॥

स्रुवंहोमसाधनं हस्तेयस्य तस्यजुह्वतः होमंकुर्वतो भृगोः श्मश्रूणिभगवान् भवो वीरभद्रः लुलंचे उत्पाटितवान् किं विशेषेण श्मश्रूण्येवोत्पाटितवान् तत्राह यो भृगुः श्मश्रुदर्शयन् अहसत् रुद्रंपरिहसितवान् अतः श्मश्रूण्येवलुंलुंचइत्यर्थः एवमुत्तरत्रापि ॥ १९ ॥

भगवान् वीरभद्रः रुषाक्रोधेन भूमौपातितस्य भगस्यनेत्रे उज्जहार उद्धृतवान् योभगः सदसि सभायां स्थितःसन् शपंतं शिवनिंदां कुर्वंतं दक्षमक्ष्णानेत्रेणाऽसूसुचत् सूचितवान् प्रेरितवानित्यर्थः॥२०॥

कालिंगस्य कालिंगदेशराजस्यबलः बलभद्रः यथा तथाः पूष्णः दंतान् अपातयत् पातितवान् यःपूषागरिमणि गुरुतरेरुद्रेशप्यमाने सति दतः दंतान् दर्शयन् अहसत् पूष्णोरितिद्विवचनपाठेतु तदिंद्रापौष्णश्चरुर्भवतीत्यत्रान्यसहितस्यापि पौष्णोदंतपातनप्राप्त्यर्थम॥२१॥

ऽथैवक्तो वीरभद्रः दक्षस्योरसि । आक्रम्यपादं विन्यस्य शितधारेण निशितधारेण हेतिना खड्गेन छिंदन्नपि तदातच्छिर इत्यपकृष्यते उद्धर्तुंतदानाशक्नोत् असमर्थोऽभवत् ॥ २२ ॥

अस्त्रान्वितैर्मन्त्रसहितैः शस्त्रैर्ननिर्भिन्नात्वग्यस्य तथाभूतमेनं दक्षंदृष्ट्वेतिशेषः पशुपतिर्हरो वीरभद्रः परंविस्मयमापन्नः प्राप्तः चिरंदध्यौ शिरस उद्धरणोपायंचिंतितवान् ॥ २३ ॥

पशूनांपतिः सवीरभद्रः मखे अध्वरेसंज्ञपनं मारणं योगमुपायं दृष्ट्वा यागीयपशुवदयं हन्तव्य इति दृष्ट्वा निश्चित्यतस्ययजमानो दक्षः स.एव पशुस्तस्य यद्वा यजमानस्ययः पशुः दक्षतोदेशान यजमानं नत्यक्ष्यमाणः पशुस्तस्य संज्ञपनं मारणं योगमुपायं निश्चित्य तेनैवयोगेनतस्य दक्षस्यकायाच्छिर आहरत् उद्धृतवान् ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

तच्छिरश्छेदनरूपं कर्म शंसतांस्तुष्टानां भूतादीनां साधुवादः(१) अभवत् अन्येषांब्राह्मणादीनांतद्विपर्ययःअसाधुवादः(२)अभवदित्यर्थः ॥ २५ ॥

यतस्य दक्षस्यशिरः तस्मिन् तदध्वरसंबंधिनिदक्षिणाग्नौ अमर्षितः क्रुद्धः जुहावतस्य दक्षस्य देवयजनमवं दग्ध्वानाशयित्वा गुह्यकालयं कैलासं प्रतिप्रत् प्रययौ । २६ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृत भागवत चंद्रचंद्रिकायां पंचमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

मणिमान कश्चिद्गणनाथः प्रजापतिं दक्षं । चंडीशाधंडेश्वरः ॥ १७ ॥

सर्वेष्वेवमेव निगृहीताः किं नेत्याह सर्वं एवेति ॥ १८ ॥

अथो वरिभद्रः लुलुंचं उत्पाटयामास ॥ लुञ्च छेदन इति धातुः अनेन कोऽपराधः कृत इति तत्राह सदसीति विश्वसृजां सदसि ॥ १९ ॥

अत्र वीरभद्रः स्वापराधानुकूलं दंडं करोति सर्वेषामित्याह भगस्येति ॥ २० ॥

कलिंगस्य दंतवक्रस्य द्यूते बलो बलभद्रः भृगुणा । गरिमणि ज्ञानोपदेष्टृत्वेन गुरुतमे शिवे शप्यमाने सति यः पूषा दतः दंतान् दर्शयन्नहसत्तस्य ॥ २१ ॥

वीरभद्रो दक्षं बद्ध्वा किमकरोदिति तत्राह आक्रम्येति शितधारेण तीक्ष्णाग्रेण त्रीणि अंबकानि नेत्राणि यस्य ॥ २२ ॥ २३ ॥

ज्ञानफलमाह दृष्ट्वेति मखे पशूनां संज्ञपने हिंसने योगं मंत्रपूर्वकोपायं यजमान एव पशुस्तस्य तेन योगेन ॥ २४ ॥

अयं हि विक्रम उभयेषामुभयथांतःकरणवृत्तिमकार्षीदित्याह साधुवाद इति अन्येषां दक्षपक्षिणाम् ॥ २५ ॥

मंत्रादिशक्त्यैतच्छिरः संधानमपि नकार्यमिति भावेन शिरश्छेदोत्तरक्रियां वक्ति जुहावेति ततः परं किमकारीति तत्राह तद्देवयजनमिति देवयजनं यज्ञं दग्ध्वा विनाश्य गुह्यकालयं कैलासं प्रतिप्रत्प्रायादिति अत्र त्र्यंबको हरः पशुपतिरिति विशेषणमनिर्दिष्टार्थकिंचनतात्पर्यमस्तीति ध्वनयति ॥ पूर्वं वीरभद्रेण स्वेन रूपेण गत्वा यज्ञशालादिकं भंक्त्वा पश्चान्मूलरूपेण गत्वा दक्षमवधीत् तत्राप्युपेंद्रेण हरिणा धर्मपुत्रेण हरिणा च जितः शिवोन्यांस्तत्र स्थितान् जित्वा कैलासमगमदिति तदुक्तं वीरभद्राख्यरूपेण स्वेन पूर्वं ययौ हरः मूलरूपेण पश्चात्तु गत्वादक्षमथावधीत् तथोपेंद्रेण हरिणा जितो धर्मात्मजेन च अन्यान् जिगाय प्रययौ कैलासं स्वं निकेतनमिति ॥ २६ ॥

इतिश्रीमद्भागवते महापुराणेचतुर्थस्कन्धे श्रीमद्विजयध्वजतीर्थकृत पदरत्नावलियाम् पञ्चमोऽध्यायः ॥ ५ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

पूष्णोरिति पाठे टीकायां तत्सहितस्यापीति । इन्द्रसहितो यः पूषा तस्यापि दन्तपातनमकरोदिति प्राप्त्यर्थमित्यर्थः तत्र तस्य दन्तीति तद्रहितस्येति वक्तव्यं स्यात् । इतीति किं तत्राह दन्ती सतु पूषा दन्तवानित्यर्थः । तस्य दन्ताः सन्तीति वा पाठः आशंक्य विचार्य । तत्रापि इन्द्रमाहनन्चपीति । पूष्णा इत्यादि पूर्वार्द्धे । शप्यमान इत्यादि परार्द्धे अनयोः पद्यार्द्धयोर्विपर्ययेण पाठस्तु न स्वामिचित्सुखयोः सम्मतः ॥ २१—२६ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

निघ्नत भवन्तीः सम्प्रति विधवाः कुर्मह इति भर्त्सीलवलगनैर्या पत्नीरतर्जयन् ॥ १६ ॥ १७

प्राधर्षिर्धमानाः नैकधा दुद्रुवुः ॥ १८ ॥

अथो वीरभद्रः । लुलुञ्चे उत्पाटयामास ॥ १९ ॥

शपन्तं दक्षं अक्षिनिकोचेन असूसुचत् प्रेरितवान् ॥ २० ॥

कलिङ्गदेशराजस्यानिरुद्धोद्वाहे बलभद्रो यथा दन्तान् द्यूते पातितवान् गरिमणि गरिमवति रुद्रे । दतो दन्तान् पूष्णोरिति पाठे द्विवचनमैन्द्रापौष्णश्चरुर्भवतीत्यत्रेन्द्रसहितस्यान्यस्यापि पुष्णो दन्तपातन प्राप्त्यर्थं ज्ञेयम् ॥ २१ ॥

हेतिना खड्गेन तन्मस्तकं त्र्यम्बको वीरभद्रः ॥ २२ ॥

शस्त्रैः खड्गादिभिः अस्त्रान्वितैः शर त्रिशूलादि सहितैरच्छित्रत्वचं दृष्ट्वेति शेषः ॥ २३ ॥

संज्ञपनं योगं कण्ठनिष्पीडनेन त्रोटनं । तेनोपायेनाहरत् ॥ २४॥

अन्येषां विप्रादीनां तद्विपर्ययोऽसाधुवादः ॥ २५ ॥

गुह्यकालयं कैलासम् ॥ २६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । चतुर्थे पञ्चमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

अतर्जयन् अभर्त्सयन् प्रत्यासन्नान् योद्धुमागतान् ॥१६—१७॥

नैकधाआद्रवन् अनेकधादुद्रुवुः ॥ १८ ॥

भगवान्वीरभद्रः स्ववामहस्तेयस्यतस्यश्मश्रूणिलुलुंचेउत्पाटितवान् ॥ १९ ॥

शपंतंशापंददतुंप्रवृत्तंदक्षम् अक्ष्णाऽसूचयत् अक्षिसंकोचेनप्रेरितवान् ॥ २० ॥

गरिमणिगुरुतरे ॥ २१ ॥

त्र्यंबकोवीरभद्रः ॥ २२ ॥

अस्त्रान्वितैः मंत्रान्वितैः ननिर्भिन्नात्वग्यस्यतंतथाभूतंज्ञात्वेतिशेषः चिरंदध्यौचिंतांकृतवान् ॥ २३ ॥

---

(१) जयजयेत्यादिशब्दः (२) हाहन्ते त्यादिशब्दः ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

मखे मंडपनं येगं कंठनिष्पीडनादिमारणोपायं दृष्टातेनोपायेनयजमानरूपस्यपशोः शिरः आहरत् उद्धृतवान् ॥ २४ ॥

अन्येषांदक्षपक्षीयानांविपर्ययः हाहेत्यादिवादोऽभूदितिशेषः २५ ॥

पतच्छिरः पतस्यदक्षस्यशिरः गुह्यकालयंकैलासम् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धीये श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपे पञ्चमाऽध्यायार्थप्रकाशः ॥

---

भाषाटीका

कोई मुनि लोगों को बाधा करने लगे कोई स्त्रियों को डराने लगे कितने एक भागते हुवे देवतावों को पकडने लगे ॥ १६ ॥

भृगु को मणिमान ने बांध लिया दक्ष प्रजापति को वीरभद्र-ने एसेही पूषा को चंडीशने भग नामकदेव को नंदीश्वर ने पकडा ॥ १७ ॥

सब ऋत्विज लोग और सभा के लोग और देवता लोग भी मारे पत्थरों की वर्षा के मारे इस दुर्दशा को देख अपनेर प्राण लेकर अनेक तरह से भागे ॥ १८ ॥

जोकि स्रुवा को हाथ मे लेकर होम करते थे उन भृगु को वीरभद्र ने पकड़ कर भृगु की डाढ़ी नोच डाली ॥ १९ ॥

जिसने सभामें भृगुको शाप देते समय आंखसे सूचना करी थी वीरभद्र ने उस भग को मारे क्रोध के धरती में पटक कर दोनों नेत्र उखाड लिये ॥ २० ॥

भाषाटीका ।

दक्षको श्रीरुद्रकी निन्दा करते समय जो दांत दिखाकर हंसा था वीरभद्र ने उस पूषाके दांत गिरा दिये जैसे अनिरुद्धके विवाह में जुआ के प्रसंग में कलिंग देश के राजा दंतवक्र के दांत श्रीवलदेवजी ने तोड दिये थे ॥ २१ ॥

दक्ष के छाती पै चढकर बड़े तीक्ष्णधार के चक्र से दक्ष का शिर काटने को बहुत उपाय किया तब भी नही कटा । तब (अस्त्र अर्थात् ) मंत्र सहित शस्त्रों को गले पर चलाया तब भी दक्षके गले की ऊपर की त्वचा भी नही कटी तब वीरभद्र बड़े विस्मय में होकर विचार करने लगे । इतनेमें वहीं पर यज्ञमें जहां पशुका ( संज्ञपन )अर्थात् आलंभनयाने बलिदान किया जाता है उसी पशु मारने के उपाय को देखकर ( यजमान पशु ) दक्ष का शिर उसी प्रकार काटकर दूर किया ॥ २२—२४ ॥

उस समय वीरभद्र के उस कर्म को देखकर प्रसन्न होकर बड़ाई करने वाले भूत प्रेत पिशाचों का जै जै कार और दक्ष केपक्ष वालों का पश्चात्ताप हाहाकार का शब्द होता भया ॥ २५ ॥

वीर भद्रने तो दक्ष का शिर मारे क्रोध के कुंड में दक्षिणाऽग्निमें होम कर दिया इस प्रकार उस यज्ञ को जलाकर विध्वंस कर के कैलास का प्रस्थान किया ॥ २६ ॥

इतिश्री मद्भागवत महापुराण चतुर्थस्कंध में पंचमो अध्याय की भाषाटीका समाप्त हुई ॥

---

## इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

—:*:—

### मैत्रेयउवाच ॥

अथदेवगणाः सर्वे रुद्रानीकैः पराजिताः ।
शूलपट्टिश निस्त्रिंशगदापरिघ मुद्गरैः ॥ १ ॥
संछिन्नभिन्नसर्वांगाः सर्त्विक्सभ्या (५) भयाकुलाः ।
स्वयंभुवे नमस्कृत्य कार्त्स्न्येनैतन्न्यवेदयन् ॥ २ ॥
उपलभ्य पुरैवैतद्भगवानब्जसंभवः ।
नारायणश्च विश्वात्मा नकस्याध्वरमीयतुः ॥ ३ ॥
तदाकर्ण्य विभुः प्राह तेजीयसि (१)(६) कृतागसि ।
क्षेमाय तत्र साभूयान्न प्रायेण बुभूषताम् ॥ ४ ॥
अथापि यूयं कृतकिल्बिषा (२) भवे ये बर्हिषोभागभाजं परादुः ।
प्रसादयध्वं परिशुद्धचेतसा क्षिप्रप्रसादं प्रगृहीतांघ्रिपद्मम् ॥ ५ ॥
आशासाना जीवितमध्वरस्य लोकः सपालः कुपिते न यस्मिन् ।
तमाशु देवं प्रियया विहीनं क्षमापयध्वं हृदि विद्धं दुरुक्तैः ॥ ६ ॥
नाहं न यज्ञो नच यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम् ॥
विदुः प्रमाणं बलवीर्ययोर्वा (३)(८) यस्यात्मतंत्रस्य क(७)उपायं विधित्सेत् ॥ ७ ॥
स इत्थमादिश्य सुरानजस्तैःसमन्वितः पितृभिः सप्रजेशैः ॥
ययौ स्वधिष्ण्यान्निलयं (४) पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः ॥ ८ ॥

---

**श्रीधरस्वामिकृत भावार्थदीपिका ॥**

षष्ठेतुदेवसंघेनसहगत्वाभवंविधिः ।
सांत्वयामास दक्षादिजीवितार्थमादरात् १

अथदेवगणाः स्वयंभुवेन्यवेदयन्निति द्वितीयेनान्वयः ॥ १ ॥

शूलादिभिः संछिन्नानित्रुटितानिभिन्नानिविदीर्णान्यंगानियेषाम् सहऋत्विग्भिः सभ्यैश्चवर्तमानाः ॥ २ ॥

कस्यदक्षस्य यज्ञंब्रह्माविष्णुश्चनेयतुर्नजग्मतुः यत्रारुद्रकोपश्चस्तत्रनारायणविरिंचावपिनागतौ ॥ ३ ॥

विभुर्ब्रह्मा तेजीयस्यतितेजस्विनिपुरुषेकृतागसिसत्यपिस्वयंतत्रकृतागसांबुभूषतामपराधंकर्तुमिच्छतांसातथाबुभूषातेषांक्षेमायनभूयात् प्रायेणेतिलोकोक्तिः नभवेदेवेत्यर्थः ॥ ४ ॥

अथापिप्रसादयध्वंक्षमापयत येभवंतोबर्हिषोयज्ञस्यभागभाजंपरादुर्दूरादेवखंडितवंतः प्रगृहीतांघ्रिपद्मं पादौप्रगृह्येत्यर्थः ॥ ५ ॥

अध्वरस्यजीवितं पुनःसंधानंप्रार्थयमानाः संतः यस्मिन्कुपितेसतिसपालोलोकोनभवेन्नश्येदित्यर्थः ॥ ६ ॥

**श्रीधरस्वामिकृत भावार्थदीपिका ॥**

वयंतुतत्रगंतुंबिभीमस्त्वमेवकंचिदुपायंविधत्स्वेतिचेदत आहनेति यज्ञस्तदानींतनइंद्रः यस्यतत्त्वंबलवीर्ययोः प्रमाणमियत्तांचनविदुः वीर्यंपराक्रमः पापमितिपाठेऽपराधम् ॥ ७ ॥ ८ ॥

---

**श्रीराधारमणदासगोस्वामि विरचिता**
**दीपिन्याख्या दीपिका टिप्पणी**

अथेति युग्मकम् ॥ १ ॥ २ ॥

एतत् शिवद्वेषफलं यज्ञादिविध्वंसनम् ॥ ३ ॥

तन्निवेदनम् बुभूषतां भवितुमिच्छतां कीदृशत्वेनेत्याकांक्षायां कृतागसामित्यध्याहृतं आकांक्षाविरहेऽभीमायनात् तथा बुभूषा कृतागस्त्वेन भवितुमिच्छा ॥ ४ ॥

यद्यपि क्षेमाय न स्यात्तथापि प्रगृहीतांघ्रिपद्ममिति क्रियाविशेषणं विधेयतया कथंचिच्छिवस्यैव वा विशेषणम् ॥ ५ ॥

हृदि विद्धमिति बहिरङ्गदृष्ट्यैवोक्तम् ॥ ६ ॥

---

पा० ( १ ) कृतागसाम् ( २ ) भवम् ( ३ ) तस्यात्मनः ( ४ ) पुरारेः॥ इमे श्री वीरराघवाचार्य्य सम्मताः पाठाः ॥ ( ५ ) समाकुलाः (६) कृतागसाम् (७) उद्विधित्सेत् इत्येवं श्रीविजयध्वजीयपाठाः ॥ (८) तस्यात्मनः कः पापं विधित्सेदिति सिद्धांतप्रदीपसम्मतःपाठः॥

### श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्या दीपिका टिप्पणी ।

तत्वं परमार्थरूपं यद्यपि श्रीविष्णोरावेशावतारोयं यज्ञः स्वायंभुवीयमन्वन्तरेन्द्रस्तथा पि प्राचीनवर्हिराज्ये षष्ठमन्वंतरेपि यज्ञाधिष्ठातृत्वेन तस्य स्थितत्वात्तदानींतन इत्युक्तम् ॥ ७ ॥

---

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

एवंदक्षाध्वरविनाशउक्तः अथ पुनस्तत्संधानप्रकारं विवक्षुस्तदुपोद्घात रूपं देवकृत रुद्रप्रसादनंवक्ष्यन् तावद्देवानां रुद्रपारिषदताडितानां स्वयंभुवे विज्ञापनं वदन् तेनसह रुद्रसन्निधिंगता इत्याह मैत्रेयः अथेति अथ दक्षयज्ञविनाशानंतरं सर्विक्सभ्याऋत्विग्भिः सभ्यैश्च सहिताः सर्वेदेवगणाः रुद्रानीकैः रुद्रसैन्यैः कर्तृभिः शूलादिभिः साधनैः संछिन्नानि विदीर्णानि सर्वाणि अंगानियेषांते अतएवपराजिताः भयाकुलाः संतः स्वयंभुवे चतुर्मुखायनमस्कृत्यएतद्वृत्तं कात्स्न्र्येनन्यवेदयन् विज्ञापितवंतः ॥ १—२ ॥

किं स्वयंभुवे विज्ञापितवंत इत्युच्यते ब्रह्मापि दक्षाध्वरे आगतस्तद्वृत्तं जानात्येवतत्राह उपलभ्येति अब्जसंभवो भगवान् ब्रह्मासर्वांतरात्मा नारायणश्च पुरैवैतद्भावि दक्षाध्वरविनाशनमुपलभ्यज्ञात्वा भगवान् विश्वात्मेति विशेषणाभ्यां तयोः सर्वज्ञत्वं सूचितं तस्य दक्षस्याध्वरं प्रतिनेयतुः नगतवंतौ ॥ ३ ॥

विभुर्ब्रह्मा तद्देवैर्विनिवेदितमाकर्ण्य श्रुत्वा हऽऽउवाच उक्तिमेवाह तेजीयसीत्यादिना तेजीयसि तेजिष्ठे रुद्रेकृतमागः अपराधंयैस्तेषां बुभूषतांभवितुमिच्छतां श्रेयस्कामानामितियावत् भूयसे क्षमाय श्रेयसे प्रायेणबाहुल्येन न भूयात् तेजीयानिति विभक्ति विपरिणामेनानुषज्यते असत्कृतस्तेजीयान् पश्चात् प्रसाद्यमानोपि क्षेमकृन्नस्यादित्यर्थः प्रायेणेतिलोकोक्तिः ॥ ४ ॥

यद्यप्येवमथापि येभवंतोबर्हिषः यज्ञस्य भागभाजो भागंभजंति प्राप्नुवंतीति तथातान्परादुः बहिष्कृतवंतः ते यूयंपरिशुद्धचेतसा निष्कपटचित्तेनप्रगृहीतांघ्रिपद्मं पादावुपसंगृह्येत्यर्थः भवंरुद्रंप्रसादयध्वंकथंपादोपसंग्रहमात्रेण प्रसन्नोभवतत्राह क्षिप्रप्रसादं पादग्रहणस्यानतिक्रमणीयतामालोच्य आश्वनुग्रहकारिणमिति भावः ॥ ५ ॥

अध्वरस्य यज्ञस्यजीवितं पुनःसंधानं आशासानाःप्रार्थयमानायूयंयस्मिन् रुद्रे कुपितेसतिसपालः दिक्पालसहितो लोकोनस्तिनश्येदित्यर्थः तं दुरुक्तैःदक्षादीनां दुर्वाक्यैःहृदिविद्धंताडितमधुना प्रियया भार्ययाच विहीनं देवभवमाशुक्षमाप यध्वंप्रसादयध्वम् ॥६॥

वयंतत्रंगत्तु विभीमस्त्वमेवकंचिदुपायं चिंतयेत्यत्र रुद्रंप्रस्तौतिनाहमिति यस्य रुद्रस्यतत्त्वं यथात्म्यं बलवीर्ययोः प्रमाणमियत्तांच अहं नविद्मि यज्ञइंद्रःनचनविद्यात् यूयंनचन विद्यात तथामुनयो येऽन्येच देहधारिणांतींद्रियार्थदर्शिनोनविदुःब्रह्मइत्थंयदुक्तं तस्यात्मनः परमात्मावेशावतारभूतस्य उपायं क्षमापायं को विधित्संतनकोपि विधातुमिष्यादित्यर्थः भवद्भिः पादोपसंग्रहणमंतरेणान्यः कःकमुपायं विधित्सेदिति भावः ॥ ७ ॥

सोऽजःब्रह्माऽसुरान्प्रत्येवमादिश्याऽऽज्ञाप्य तैर्देवैः सप्रजापतिभिः पितृभिश्चसह स्वाधिष्ण्यात् स्वस्थानात् पुरारेःप्रभो रुद्रस्य प्रियंनिलयं स्थानभूतं अद्रिश्रेष्ठं कैलासंप्रतिययौ ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

भगवदपरोक्षीकरणाय तत्प्रसादवत्प्रस्तोत्तमभक्त्युत्कर्षतारतम्येन तदनुग्रहंव्यापाद्य इत्यभिप्रायां वर्णयंतेऽस्मिन्नध्याये तत्र सर्वभक्तोत्तममहादेवप्रसादापादनाय देवानां ब्रह्माणंप्राप्य स्वसंकटावज्ञापनप्रकारःकथ्यते अथदेवगणा इत्यादिना रुद्रस्यानीकैः सैन्यैः पार्षदैरित्यर्थः ॥ १ ॥

एतद्वृत्तम् ॥ २ ॥

ननु विष्णुब्रह्मणोर्यज्ञागंतरावश्यकत्वेन तत्स्थितौ यज्ञविनाशो ब्रह्माणं गत्वा देवविज्ञापनं च कथं युक्तं अग्नावैष्णवपुरोडाशं निर्वपति प्रजापते न त्वदेतान्यन्यस्यादिश्रुतेरित्यत आह उपलभ्येति एतद्भावि कार्यं पुरैवोपलभ्य ज्ञात्वाऽब्जसंभवो ब्रह्मा विश्वात्मा विश्वांतर्यामी त्रिमूर्तिगन रूपेण नारायणश्च कस्य दक्षस्याध्वरं नयतुर्नजग्मतुरित्यन्वयः अतो विष्णुब्रह्मणोस्तत्रानवस्थानाद्यज्ञविनाशो देवानां ब्रह्माणं गत्वा विज्ञापनं च युज्यत इति भावः ॥ ३ ॥

विज्ञापितं संकटं श्रुत्वा ब्रह्मणा शिक्षाकरं वाक्यमवादीत्याह तदाति तेजीयसि वलिष्ठे पुंसि विष्णुवायुभिन्ना इत्यतः प्रायेणेत्युक्तम् ॥ ४ ॥

तर्हि तूष्णीं भावोऽस्माकं किमुपायांतरं वा ज्ञापयसीति तत्राह अथापीति बर्हिषो यज्ञस्य भागं स्वविहितांशं भजतीति भागभाक् तं पराकृत्यान्यस्मा अदुरित्यर्थः अथापि कृतापराधानामपि युष्माकं शिवप्रसादनमवाप्य इत्युक्तं भवति प्रसादने किं साधनमित्यत उक्तं परिशुद्धेति राहुग्रस्तचंद्रमंडलवच्चेतस एकस्मिन्नर्थे विकलमपत्वं नस्यादिति परीत्युक्तं न केवलं चेतो नैर्मल्यमलं किंतु कर्म चापेक्षितमित्याह प्रगृहीतेति प्रगृहीते अंघ्रिपद्मे यैस्ते तथोक्ताः ॥ ५ ॥

न केवलं कालांतरभाविनः श्रेयसः साधनं तत्प्रसादनं किंत्वद्यतनस्यापीति भावेनाह आशासाना इति अध्वरस्य जीवितं पुनरनुसंधानलक्षणं जीवनमाशासाना आकांक्षमाणा यूयं दक्षदुर्वचनमेव न कारणमीश्वरस्य कोपस्य कारणांतरमप्यस्तीति भावेनोक्तं प्रियेति न तत्कोपेन परमध्वरस्य विनाशोऽपि तु सपालस्य लोकस्यापीत्यतस्तदकरणाद्भवः प्रसादनेन क्षांतो भवतिक्षिप्रप्रसादमेति तत्स्वभावादिति भावेनोक्तं लोक इति ॥ ६ ॥

बुभूषुणा विष्णुद्वेषवत्तस्य हरेर्मनोनुसारितया वर्तमानस्य श्रीकंठस्य द्वेषः कर्तुं न योग्य इत्याशयेनाह नाहमिति अहं ब्रह्मशर्मास्य विष्णोस्तत्त्वं बलवीर्ययोरित्युपलक्षणं ज्ञानादिगुणानां च प्रमाणं न वेद्मि तथा यज्ञ इंद्रो पि न वेत्ति तथा यूयं न विदुः तथान्ये प्राजापत्यादयो ये च देहभाजः शरीरिणो मुनयः सनकादयश्च न विदुरित्यन्वयः तस्य विष्णोरात्मनोमनसस्तेजस्य वशस्य रुद्रस्य कः पुमानपराधसुखोविधित्सेत् कर्तुमिच्छेत् न कोपि बुभूषुरित्यर्थः यज्ञो यज्ञपत्यादयश्च न विदुरित्यन्वयः यज्ञो यज्ञपतिस्त्विंद्रः पुरुहूतः पुरुष्टत इत्यभिधानादिंद्र एवात्र यज्ञशब्दार्थः नाहं नेंद्रो नचैवान्ये यत्तत्वं न विदुः परं तस्य विष्णोर्वशो रुद्रो मम वाथारथोपि वा नान्यस्य कस्य चित्पुंसस्तस्येत्थं वः कुतः कृतमिति वचनात् स्मृतिसमाख्यानाच्च न यज्ञो विष्णुर्ममवायोरथापिवेत्यनेनात्मनो ब्रह्मणो वायोश्च तत्रस्येत्ययमर्थोपि ध्वनित इति ज्ञायते उदित्यनेन संसारनदीमुत्तर्तुकामैः शिवद्वेषो न कर्तव्य इति सूचयति मोक्षस्य शिवाद्यप्रदिष्टज्ञानापेक्षितत्वात् तदुक्तं मुमुक्षवो ब्राह्मणाश्च शिवइंद्रादिभिस्तथा श्रुत्वा ज्ञानं परं गुरं मुच्यंत ब्रह्मणासहेति॥ ७॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

मया सह गतं चेदेतेषां देवानाम् एव शिवः क्षिप्रप्रसादो भविष्यतीति महादयालोब्रह्मणः कैलासं प्रतियात्रां वक्ति स इत्थमिति अजो ब्रह्मा पुरद्विषः प्रियं कैलासो गिरिशो मृड इत्यभिधानात् तस्य निवास इति विग्रहे यथा विहिताण् प्रत्ययेन कैलास इति रूपं सिध्यति ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अथेति युग्मकम् ॥ १ ॥ २ ॥

समष्टिजीवत्वात् ब्रह्मा परमात्मत्वान्नारायणो विश्वात्मा कस्य नेयतुरध्वरमिति चित्सुखः ॥ ३ ॥

तदाकर्ण्येति । बुभूषतां प्राप्तुमिच्छतां कृतागस्त्वमिति शेषः । कृतागसामिति चित्सुखपुण्यारण्ययोर्मतः । कृतापराधीभवितुमिच्छतामित्यर्थः । यद्वा तेजीयसि तत्र शिवे बुभूषतां सम्बन्धमिच्छतां मध्ये कृतागसि तत्र दक्षे सा सती प्रायेण प्राचुर्येण क्षेमाय न भूयात् न भवेदित्यर्थः ॥ ४--५ ॥

हृदिविद्धमिति बहिरंगदृष्ट्यैवोक्तम् ॥ ६ ॥

यज्ञः स्वायम्भुवमन्वन्तरेन्द्रः श्रीविष्णोरावेशावतारः यज्ञाधिष्ठातृत्वेन तस्य प्राचीनबर्हिं राज्ये षष्ठमन्वन्तरेऽपि स्थितेस्तथोक्तं स इत्थमित्यादि चतुर्दशकम् ॥ ७—९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

कैलासवर्णनं षष्ठे तत्रत्य वटमूलगम् ।
शिवं सह सुरैर्गत्वा स्तुत्वा प्रासादयद्विधिः ॥

स्वयम्भुवे स्वयम्भुवम् ॥ १ ॥ २ ॥

उपलभ्य सर्वज्ञतया ज्ञात्वा कस्य दक्षस्य नेयतुः न जग्मतुः ॥३॥

विभुर्ब्रह्मा तेजीयसि महात्मनि जने कृतागसि कृतम् आगोऽपराधो यस्य तथाभूते सति । क्षेमाय स्वकल्याणाय बुभूषतां जिजीविषतां तत्र क्षेमे विषये सा बुभूषा जिजीविषा मा भूयात् न भवतु श्रीरुद्रे महातेजीयस्यपराधविषयीभूते सति अपराधिनां दक्षादीनां मृत म्रियमाण भविष्यतां स्वक्षेमाय विषयभोगार्थं जिजीविषतां सा जिजीविषा माभवतित्यर्थः । दक्षादयोऽपराधिनो म्रियन्तां नाम मा जीवन्तु जीवित्वा पुनरप्यपराधं करिष्यतां तेषां जीवनेनालं मरणमेव वरमिति भावः । भवतेः सत्तार्थत्वात् सत्तायाश्च जीवनरूपत्वात् बुभूषा जिजीविषयोस्तुल्यार्थता ज्ञेया । प्रायग्रहणं तेषामेव मध्ये केषाञ्चिज्जीवित्वा अपराधमकरिष्यतां जिजीविषा जीवनञ्च भूयादित्यर्थलाभाय ॥ ४ ॥

अथापि यदि बुभूरथेत्यर्थः । कृतकिल्बिषा यूयं भवं प्रसादयध्वं ये भवन्तो बर्हिषो यज्ञस्य भागभाजं भवं पराद्युः दूरादेव खण्डितवन्तः । नच तत्प्रसादो दुष्कर इति वाच्यं अगृहीतेति अंघ्रिपद्मग्रहणमात्रेणैव स प्रसीदत्येवेति तदन्तःकरणमहं जानाम्येवेति भावः ॥ ५ ॥

यस्मिन् कुपिते सति सपाल एव लोको न भवेत् तं क्षमापयध्वं । यूयमध्वरस्य जीवितं प्रार्थयमानाः ॥ ६॥

ननु त्वामेव वयं प्रपन्ना अतस्त्वमेव कमप्युपायं विधत्स्वेति तत्राह । नाहं ब्रह्मापि न यज्ञः इदानीन्तन इन्द्रोऽपि नच यूयं याज्ञिकाः वेदविदोऽपि यस्य तत्वं बलवीर्ययोः प्रमाणमियत्ताञ्च न विदुः ॥ ७ ॥ ८ ॥

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः

षष्ठे शिवंब्रह्मासांत्वयामासेत्युच्यतेअथेति देवगणाः स्वयभुवेन्यवेदयन्निति द्वितीयेनान्वयः ॥ १ ॥

शूलादिभिः संम्यक्छिन्नानित्रुटितानिविदीर्णानिभिन्नानिविदीर्णानिअंगानियेषांते ऋत्विग्भिः संभ्यैश्चसहिताः एतद्वृतांतंन्यवेदयन् विज्ञापितवंतः ॥ २ ॥

विश्वात्मा सर्वात्मानारायणःअब्जसंभवस्तत्पुत्रश्च एतद्दक्षयज्ञविघ्नंपुरैवोपलभ्यज्ञात्वाकस्यदक्षस्याध्वरंनेयतुः नाजग्मतुः ॥ ३ ॥

विभुः विपुलबोधोब्रह्मातद्देवनिवेदितम् आकर्ण्यश्रुत्वातेजीयसि अतितेजस्विनिजनेकृतागसिकृतापराधेसतितत्रतेजीयसिबुभूषताम पराधंकर्तुमिच्छतांसाबुभूषाप्रायेणक्षेमायमंगलायनभूयात्किंत्वमंगलंकुर्यादित्यर्थः ॥ ४ ॥

येभवंतोभवंबर्हिषोयज्ञस्यभागभाजंपरादुः भागाद्बहिश्चक्रुः एवं कृतकिल्बिषाःयद्यपियूयमथापिपरिशुद्धचेतसाप्रगृहीतांघ्रिपद्मपादौ गृहीत्वाक्षिप्रप्रसादमाश्वनुग्रहकारिणंप्रसादयध्वम् ॥ ५ ॥

यस्मिन्रुद्रेकुपितेसतिसपालालोकानस्युः तं सपाललोकक्षेमकामाः अध्वरस्यजीवितं पुनःसंधानमाशानाः प्रार्थयमानाश्च आशुक्षमापयध्वम् ॥ ६ ॥

यस्यबलवीर्ययोस्तत्त्वंमूलंप्रमाणमियत्तांवाअहं नवेद यज्ञइंद्रोनवेत्ति नयूयंविदथः मुनयोन्येचदेहभाजोनविदथ तस्यपापमपराधंकोविधित्सेतविधातुमिच्छेत् ॥ ७ ॥

सुरान्प्रतीत्थमादिश्याऽऽज्ञाप्य ॥ ८ ॥

भाषाटीका

श्री विदर्भराज तनयासमेत श्रीवासुदेव पर ब्रह्मणेनमः ॥ मैत्रेयजी बोले ॥ तिसके पीछे सब देव गण रुद्रकी सेना से हार पाकर त्रिशूल पट्टा इत्यादि आयुधों से घायल होकर ऋत्विज और सभा सदों सहित भयभीत होकर ब्रह्मदेव के पास आकर नमस्कार पूर्वक सब समाचार सुनाते हुवे ॥ १ ॥ २ ॥

इस उपद्रव को भगवान कमल योनि श्री ब्रह्माजी तथा विश्वात्मा श्री नारायण पहिले ही जान चुके थे अतएव दक्ष के यज्ञ में नहीं गये थे ॥ ३ ॥

इस देवतावों की वातको ब्रह्माजी सुनकर बोले कि प्राय कर के तेजस्वी महत्पुरुष का अपराध करके आप सुखकी इच्छा करे एसा नहीं हो सक्ता ॥ ४ ॥

यद्यपि तुम लोगों ने महादेव जी का यज्ञसे भाग उठा दिया इसी से तुम लोग शिव के अपराधी हो तौ भी उनके चरण कमल को पकड कर निष्कपट चित्त से यज्ञ को पुनः संधान की प्रार्थना करते हुवे शिव जी को प्रसन्न करो वो बडी जल्दी प्रसन्न हो जाते हैं ॥ जिस के जरा कोप करने से लोकपालों सहित लोक तत्काल नष्ट हो जांय एसे महादेव तिस पर भी अपनी प्रियासे विहीन, दक्ष के कुवाक्यों से दुखित उनको जल्दी क्षमापन की प्रार्थना, करो ॥ ५ ॥ ६ ॥

भला जिस के बल पराक्रम के प्रमाण को न हम न इन्द्र न तुम लोग न और कोई मुनिलोग भी जान सके हैं एसे स्वतंत्र का कौन अपराध करेगा ॥ ७ ॥

ब्रह्माजी ने देवतों को इस तरह शिक्षा देकर उन देवता और पितृ और प्रजेश सबको साथ लेकर अपने स्थान से महादेवजी का प्रिय निवास पर्वतों में श्रेष्ठ एसे कैलास को गये ॥ ८ ॥

जन्मौषधितपो ( ३ ) मंत्रयोगसिद्धैर्नरेतरैः ॥
जुष्टं किन्नरगंधर्वैरप्सरोभिर्वृतं सदा ॥ ९ ॥
नानामणिमयैः श्रृंगैर्नानाधातुविचित्रितैः ॥
नानाद्रुमलतागुल्मैर्नानामृग ( ४ ) गणावृतैः ॥ १० ॥
नानाऽमलप्रस्रवणैर्नानाकंदरसानुभिः ॥
रमणं विहरंतीनां रमणैःसिद्धयोषिताम् ॥ ११ ॥
मयूरकेकाभिरुतं मदान्धालिविमूर्च्छितम् ॥
प्लावितैरक्तकंठानां कूजितैश्च पतत्रिणाम् ॥ १२ ॥
आह्वयन्तमिवोद्धस्तैर्द्विजान्कामदुधैर्द्रुमैः ॥
व्रजंतमिव मातंगैर्गृणंतमिव निर्झरैः ॥ १३ ॥
मंदारैःपारिजातैश्च सरलैश्चोपशोभितम् ॥
तमालैःशालतालैश्च कोविदारासनार्जुनैः ॥ १४ ॥
चूतैःकदंबैर्नीपैश्च नागपुन्नागचंपकैः ॥
पाटलाशोकबकुलैः कुंदैः कुरबकैरपि ॥ १५ ॥
स्वर्णार्णशतपत्रैश्च वररेणुक ( १ ) जातिभिः ॥
( ५ ) कुब्जकैर्मल्लिकाभिश्च माधवीभिश्च मंडितम् ॥ १६ ॥
पनसोदुंबराश्वत्थप्लक्षन्यग्रोधहिंगुभिः ॥
भूर्जैरोषधिभिःपूगैराजपूगैश्च जंबुभिः ॥ १७ ॥
खर्जूराम्रातकाम्राद्यैः प्रियालमधुकेंगुदैः ॥
( ६ ) द्रुमजातिभिरन्यैश्च राजितं वेणुकीचकैः ॥ १८ ॥
कुमुदोत्पलकल्हारशतपत्रवनर्द्धिभिः ॥
नलिनीषु कलं कूजत्खगवृंदोपशोभितम् ॥ १९ ॥
मृगैः शाखामृगैः क्रोडैर्मृगेंद्रैर्ऋक्षशल्यकैः ॥
गवयैः शरभैर्व्याघ्रैरुरुभिर्महिषादिभिः ॥ २० ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

कैलासंवर्णयति जन्मौषधीत्यादिचतुर्दशभिः नरेतरैर्देवैर्जुष्टम् ९ श्रृंगैरमणंरतिप्रदमित्युत्तरेणान्वयः कथभूतैर्नानाधातुभिर्विचित्रितैः नानाद्रुमलतागुल्माश्चयेषु ॥ १० ॥

नानाअमलानिप्रस्रवणानियेषु नानाकंदराःसानवश्चयेषु रमणैः सहक्रीडंतीनाम् ॥ ११ ॥

मयूराणांकेकाभिःस्वनैर्नादितम् मदांधैरलिभिर्विमूर्च्छितंमूर्च्छना रागगतिविशेषस्तद्व्याप्तंकृतम् रक्तकंठानांकोकिलानांप्लावितैःप्लुतत्वं नीतैःस्वरैः अन्येषांचपतत्रिणांकूजितैः ॥ १२ ॥

उद्धस्तैरुन्नतशाखैर्द्रुमैर्द्विजान्पक्षिणआह्वयंतमिव लोकेहिहस्तमुत्क्षिप्योच्चैःस्वरेणाऽऽह्वानमर्थिनांकुर्वंतिअद्रिश्चोत्क्षिप्तहस्ताकारैर्द्रुमैस्तत्रत्यपक्षिस्वनैश्चतथालक्ष्यतइत्यर्थः व्रजद्भिर्मातंगैर्व्रजंतमिव निर्झरध्वनिभिर्गृणंतंभाषमाणमिव ॥ १३ ॥ १४ ॥

चूताम्रयोर्नीपकदंबयोरवांतरजातिभेदः वेणुकीचकयोश्चनीरंध्रसरंध्रत्वेनभेदः ॥ १५ ॥

स्वर्णार्णैः स्वर्णवर्णैः शतपत्रैर्मंडितम् रेणुकजातिभिरित्यत्ररेणुकाएला जातिर्मालती ॥ १६ ॥

हिंगुभिर्गुग्गुलवृक्षैः. ॥ १७ ॥

द्रुम जातिभिरित्यत्रजातिरवांतरभेदसामान्यम् ॥ १८ ॥

पा० ( १ ) वेणुकेत्यपि क्वचित् ( २ ) नाभिभिर्व्याघ्रै निर्जुष्टं माहिषादि भिरित्यपि पुस्तकान्तरे ॥ ( ३ ) योगमन्त्र ॥ ( ४ ) गणान्वितैः ( ५ ) कुटजैः ( ६ ) द्रुमजातिभिरन्याभिः ॥ तृतीयाङ्कमारभ्यश्रीवीरराघवीयपाठः ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

कुमुदादिसमृद्धिभिर्हेतुभिर्नलिनीपुसरःसु फलंमधुरंयथाभवत्ये- वंकूजंतियानिपक्षिवृंदानितैरुपशोभितम् ॥ १९ ॥

मृगादीभिर्निर्जुष्टंनिषेवितम् पूर्वंमृगगणाः शृंगविशेषणत्वे- नोक्ता इदानींस्वातंत्र्येणेत्यपौनरुक्त्यम् ॥ २० ॥

श्रीराधारमणदासगोस्वामि विरचिता

दीपिन्याख्या दीपिका टिप्पणी ।

स इत्थमित्यादि चतुर्दशकम् मध्ये त्वक्षिमस्तकाङ्का टीका क्रमस्तुबोधायराचिताइतिज्ञेयम् (१) (२) *

नाना मणिमयैरित्यवांतरयुग्मकम् ॥ ८—१० ॥

सानुः शिखरं (३) ॥ ११ ॥

गति विशेषः खराणामारोहा वरोहलक्षणः (४) ॥ १२ ॥

उत्क्षिप्तहस्ताकारैर्द्रुमैरिति द्रुमाणां हस्तस्थानीयत्वे उन्नत-- शाखैरित्यत्र शाखानामंगुलिस्थानीयत्वं ज्ञेयं किंतुउत्क्षिप्तहस्ताका रैरिति उद्धस्तैरित्यस्य व्याख्या तथा चोन्नतशाखैरिति चिन्त्यम् (५) ॥ १३ ॥

मंदारपारिजातौ देवतरुविशेषौ कोविदारःकचनारेति ख्यातः असनो विजयसारः (६) ॥ १४ ॥

नीपो धूलिकदंबः वकुलोत्र मौरसलीति ख्यातः कुरवकस्तिल- कवृक्षः ॥ १५ ॥

स्वर्णः स्वर्णजुही अर्णः अरणीति ख्यातः द्रुमेषु वृक्षत्वसामान्य स्यैकत्वादेकवचनमनुपपन्नमित्यवांतरसामान्यंव्याख्यातम्(७)॥१६॥

पनसादयः प्रसिद्धाः (८) ॥ १७ ॥ १८ ॥

कुमुदादिवन समृद्धिभिर्हेतुभिः (९) (१०) ॥ १९—२१ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

कैलासं वर्णयति जन्मौषधीत्यादिभिश्चतुर्दशभिः जन्मना औष- ध्यादिभिश्चयेसिद्धास्तै र्नरेतरैर्देवयोनिभिः तत्रजन्मतः सिद्धाऔषध्या द्यनपेक्षमेव सृष्टिवेलायामेवदेवत्वेनसृष्टाः औषध्यादिभिःसिद्धास्तु देव त्वसंपादकौषध्याद्युपायैर्देवत्वेनासिद्धाः योगः रुद्रोपासनारूपयोगः मंत्रः यावज्जीवं शिवपंचाक्षर्यादि मंत्रावृत्तिः जुष्टंसेवितं तथाचगी- तं भगवता देवान्देवयजोयांतीति तथाप्सरोभिः किन्नरादिभिश्च- सदावृतम् ॥ ९ ॥

शृंगैः शिखरैः रमणीः प्रियैः सहविहरंतीनां सिद्धानां या योषि तस्तासांरमणंरतिप्रदं शृंगैः कथंभूतैः नानाधातुभिर्गैरिकादिभिः वि चित्रितैः नानाद्रुमाः लतागुल्मानिच येषुतैः ॥ १० ॥

नाना अमलानि स्वच्छानि प्रस्रवणानि स्रोतांसि येषु नाना कंदराः सानूनि च येषुतैः ॥ ११ ॥

तथामयूराणां केकास्वनैः अभितः सर्वतः रुतं नादितं मदेनम करंदपान जनितमदेन भ्रमरालिभिर्भृंगैः विमूर्च्छितंमूर्च्छनाख्य रागगी तिविशेषेण व्याप्तं रक्तकंठानां कोकिलानांप्लावितैः त्रिमात्रशब्दैस्त- थान्येषां पतत्रिणांच कूजितैः ॥ १२ ॥

उद्धस्तै उन्नतशाखैः कामदुघैर्द्रुमैश्च द्विजान् पक्षिणआह्वयंत- मिवस्थितं लोकेहि हस्तमुत्क्षिप्यउच्चैः स्वरेणाह्वानमर्थिनां कामधुक् अद्रिश्चउत्क्षिप्तहस्ताकारैर्द्रुमैः पत्त्रिणांस्वनेश्चतथालक्ष्यतइत्यर्थः ब्रजद्भिर्मातंगैर्गजैर्व्रजंतमिव निर्झराणां ध्वनिभिर्गृणंतं भाषमाणमि-

वस्थितम् ॥ १३ ॥

मंदारादिभिर्वृक्षविशेषैरुपशोभितम् ॥ १४ ॥

चूतैराम्रविशेषैः ॥ १५ ॥

स्वर्णार्णशतपत्रैः सुवर्णवर्णैः कुशेशयैः कुंदादिभिर्लताविशेषै श्च मंडितं रेणुका एला जातिर्मालती ॥ १६ ॥

पनसादिभिर्द्रुमैः ॥ १७ ॥

तथान्यैश्चद्रुमजातिभिः द्रुमसामान्यैर्वेणुकीचकैश्चराजितंमंडितं नीरंध्रमधस्येन वेणुकीचयोर्भेदः द्रुमजातिभिरित्यत्रजातिरवां- तरमदसामान्यम् ॥ १८ ॥

कुमुदादिसमृद्धिभिः शतपत्राणांस्वर्णवर्णानांचनानांऋद्धिभिरा जितंनलिनीपुसरस्सुकलंमधुरंयथाभवतितथाकूजद्भिः खगवृंदैः प क्षिसंघैरुपशोभितम् ॥ १९ ॥

मृगादिभिर्निर्जुष्टंनिषेवितम् ॥ २० ॥

———

श्रीमद्विजयध्वज तीर्थकृतपदरत्नावली

कंटकगुल्मखंडैरप्रवेश्यस्य गंडशैलादिपाषाणैरनारोहस्याचल- स्य किं माहात्म्यंरुद्रप्रियत्वमित्यतस्तं पर्वतं चतुर्दशभिः श्लोकैर्व र्णयति जन्मेत्यादिना नरेतरैर्नरत्वजातिरहितैर्जन्मना विशिष्टकुलो त्पत्त्या कृष्णचित्रकाद्योषधेन कृच्छ्रचांद्रायणादितपसाऽष्टांगलक्षण योगेन मृत्युं जयादिमंत्रेण एतैः सिद्धैरमरत्वादिसिद्धिं गतैर्जुष्टमित्य- नेन सुखसाधनत्वं ध्वनयति नरेतरैः किन्नरगंधर्वैर्जुष्टमप्सरोभिर्वृत- मितिवा ॥ ९ ॥

मनःशिलादिनानाविधधातुभिर्विचित्रैश्चित्राकारंगमितैरिति शृंग विशेषणं नानाभृंगगणावृत्तैः नानाद्रुमादिभिश्चवृतम् ॥ १० ॥

निर्झरः प्रस्रवणमसामान्ति हलः जलस्य नानात्वं मरकतादिस्थल संपर्कात्कर्दमराहित्येनामलत्वं । न तु शौक्ल्येन । तथात्वे नानात्वंवि विरुद्धं कंदरागुहाः । सानूनि तटाकानि । रमणैः सह विहरंतीनां सिद्धयोषितां रमणं रति प्रदम् ॥ ११ ॥

मयूरकेकाभिरुतं शब्दितं विमूर्च्छितं विविधं गीतं रक्तकंठानां कोकिलानां प्लावितैः तारस्वरितैरन्येषां पतत्रिणां कूजितैरुतैः ॥ १२ ॥

किं च पक्षिग्राहकैः पुरुषैरुद्धस्तैरुद्धृतैर्द्विजैः करणैः कामं दुह- द्भिर्द्रुमैराह्वयंतमिव स्थितम् ॥ १३ ॥

पारिजातैः पारिभद्रकैः सरलैर्देवदारुभिः सालतालैः सर्जतृणा- राजैः कोविदारैः कांचनारकैः असनैः पिशंगपुष्पैः अर्जुनैः ककुभैः॥१४

नागैर्नागकेसरैः पुन्नागैः सुरवल्लभैः कुरवकैस्तिलकैः ॥ १५ ॥

सुवर्णाः कृतमालः वीरः करवीरं रेणुकं केतकी कुब्जकैः कुंकु- मतरुभिः माधवी वासंती अत्र संस्कृताधिकारित्वात्पर्यायांतरमेव लिख्यते नानात्वेनापभ्रंशानां तेषांभवनं न शक्यते ॥ १६ ॥

हिंगुरामठः भूर्जैर्भूर्जपत्रैः ओषधीभिर्जनवृक्षैः ॥ १७ ॥

कादम्बरी कृष्णावृंतिकः आम्रातको बिडुलः आम्रो जिह्वारम- करः प्रियालो लवगः धनुर्वा मधुको मधुकरसः इंगुदः किंगुदकः तापसतरुर्वा ॥ १८—१९ ॥

शाखामृगैर्वानरैः क्रोडैर्वराहैः ऋक्षैर्भल्लुकैः शल्यकः कंटकव- राहः गवया वनगावः शरभोऽष्टापदः रुरुर्हरिणेषु महान् ॥ २० ॥

———

* अत्राङ्कमस्तकबिन्दु प्रतिनिधित्वेन अङ्कोभयपार्श्वयोर्द्वे () एवं कार्मुकाकारं रेखेस्थापिते इति ज्ञेयम् ।

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

शृङ्गाणां पूर्वापरं विशेषणद्वयं नानाद्रुमेत्यस्य नानामृगेति विशेषणम् ॥ १० ॥

नानामलेत्यादि द्वयं तु पृथक् पृथगेव ॥ ११ ॥

स्वर्गार्योति । अर्या वर्णाः हिंगुरत्र करञ्जतुल्यो वृक्षविशेषः ॥ १६ ॥ १९ ॥

नानामृगेत्यस्यैव विवरणं मृगैरिति मृगेन्द्रैर्ऋक्षशल्यकैः । गवयैः शरभैर्व्याघ्ररुरुभिर्महिषादिभिः । कर्णान्त्रैकपदाश्वास्यैर्निर्जुष्टं मृगनाभिभिरिति क्वचित् पाठः । तत्र कर्णान्त्रादयो मनुष्याकारा मृगप्रायाः ॥ २० ॥ २१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

कैलासं वर्णयति जन्मौषधीत्यादि चतुर्दशभिः । नरेतरैर्देवैः ॥ ९ ॥ १० ॥

रमणैः कान्तैः सह विहरन्तीनां सिद्धयोषितां रमणं रतिप्रदम् ॥ ११ ॥

मयूराणां केका एव अभितो रुतानि गृहस्थानामिवोक्तिप्रत्युक्तिकोलाहला यत्र तं मदान्धानामलीनां गायकानामिव मूर्च्छितानि राग स्वरालाप मूर्च्छना यत्र तं रक्तकण्ठानां कोकिलानां पतत्त्रिणामन्येषामपि पक्षिणां प्लाविनैः प्लुतस्वं नीतैः कूजितैः तथा उद्धस्तैरुद्गतैर्हस्तैरिव कामदुघैर्द्रुमैर्द्विजान् पक्षिणोऽतिथीन् आह्वयानमिव आह्वयन्तम् ॥ १२ ॥

व्रजद्भिर्मातङ्गैर्व्रजन्तमिव पृणद्भिर्निर्झरैर्गृणन्तमिव मधुरं भाषमाणमिव मन्दारादिभिर्मण्डितम् ॥ १३ ॥ १४ ॥

चूताम्रयोर्नीपकदम्बयोरप्यवान्तर जातिभेदः वेणुकीचकयोश्च नीरन्ध्र सरन्ध्रत्वेन । रेणुकजातिभिरिति रेणुकाएलाजातिर्मालती ॥ १५—१८ ॥

नलिनीषु सरःसु ॥ १६ ॥

नाभिः कस्तूरीमृगः ॥ २० ॥

---

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः

अद्रिप्रवरंयथाविद्युक्तंतदद्रिप्रवरत्वंदर्शयति जन्मेति चतुर्दशभिः सिद्धैर्नरेतरैर्देवादिभिर्जुष्टंसेवितम् ॥ ९ ॥

रमणैः भर्तृभिः सहविहरंतीनां शृंगैः शिखरैः रमणंरतिप्रदमिति द्वयोरन्वयः कथंभूतैः शृंगैः नानामणिमयैः अनेकजातिमणिमयैः अनेकधातुर्विचित्रैः अनेकजातिद्रुमलतागुल्मायेषुतैः ॥ १० ॥

नानाविधानिअमलानिप्रस्रवणानियेषुतैः नानाविधाः कंदराः सानवश्चयेषुतैः ॥ ११ ॥

मयूराणांकेकाभिः स्वनैः अभिरुतंसर्वतोनादितम् मदांधैरलिभिभ्रमरैर्विमूर्च्छितम् मूर्च्छनाभिः रागगतिभिर्व्याप्तंकृतमित्यर्थःरक्तकंठानांकोकिलानांप्लावितस्वरैःअन्येषांपक्षिणांकूजितैश्चआह्वयंतमित्युत्तरेणान्वयः ॥ १२ ॥

कामदुघैर्द्रुमैः उद्धस्तैः उन्नतशाखैः द्विजान्पक्षिणोमुनींश्चाह्वयंतमिवसंतंव्रजद्भिर्मातंगैर्व्रजंतमिवगजरूपंकृत्वा।गच्छंतमिवनिर्झरैर्गृणंतंभाषमाणमिव ॥ १३ ॥

मंदारादिभिरुपशोभितम् ॥ १४ ॥

चूतादिभिर्मंडितमितिद्वितीयेनान्वयः चूतैराम्रविशेषैःकदंबैर्नीपैरितिकदंबेनीपेश्चकदंबविशेषैः ॥ १५ ॥

वरवेणुकजातिभिः वरवेणुकैः श्रेष्ठैरेलापरपर्यायैःजातिभिः मालतीभिः ॥ १६—१७ ॥

वेणुकीचकैः नीरंध्रैः सरंध्रैः श्चोभयविधैर्वेणुभिः ॥ १८ ॥

कुमुदादिभिः नलिनीषुकमलाकरेषुकलंमधुरंयथास्यात्तथाकूजद्भिः खगानांवृंदैः समूहैश्चापशोभितम् ॥ १९ ॥

निर्जुष्टंनितरांसेवितम् ॥ २० ॥

---

भाषाटीका ॥

यह कैलास कैसा है कि औषधि तप मंत्र और योग इन कारणों से और जन्म से सिद्ध देवतावों से सेवित है और सदा काल किन्नर गन्धर्व और अप्सराओं से युक्त है ॥ ९ ॥

और नाना तरह के मणियों के खान वाले, नाना प्रकार के गैरिकादि धातुओं से विचित्र, नाना प्रकार के वृक्ष लता वल्ली वाले, नाना प्रकार के मृगों से व्याप्त शिखरों से शोभित हो रहा है ॥१०

नाना प्रकार के निर्मल जलों के प्रस्राव और नाना तरह की कंदरा और शिखरों से विहार करने वाली सिद्धों की अंगनावों को बहुत रमणीय है ॥ ११ ॥

जहां पर मयूरों की वाणी न्यारी सुनाई दे रही है मत्त मधुपों की गुंजार से रागों की गति विशिष्ट हो रहा है ॥ कोकिलों की ऊंची कुहूकन से और पक्षियों के गूजने से तथा उंचे वृक्ष रूप हस्तों से जैसे पक्षियों को बुलावता होय एसा मालूम पडता है चलते हुवे हाथियों से कैलास भी चलता सा शब्द करते हुवे किन्नरों से कैलास शब्द करता सा मालूम होता है ॥ १२ ॥ १३ ॥

तथामंदार, पारिजात, सरल, तमाल, ताल, कचनार, विजयसार, अर्जुन, आम्रजाति, कदंब धूलिकदंब, नाग, पुन्नाग, चम्पा, पाटल, अशोक, वकुल, कुंद, महदी, इत्यादिक से शोभित है १४॥

तथा सुवर्ण वर्ण वाले कमलोंसे इलाइची मालती एवं कुब्ज माधवी इत्यादि कों से मंडित होरहा है ॥ १६ ॥

कटहर गूलर पीपर पाकरबट और हींग के वृक्षों से तथा भोजपत्र के वृक्ष सुपारी राजपूग जामुन इनसे शोभित है ॥१७॥

खजूर आम्रातक आम्र इत्यादि और प्रयाल मधूक इंगुदी और बहुतसी द्रुमजातियों से शोभित तथा वेणु और कीचक दोनों वंशों की जातियों से सुशोभित हो रहा है ॥ १८ ।

कुमुद उत्पल कल्हार शतपत्र इत्यादि कमलकी जातियों से, वन की समृद्धि से, छोटी २ तलाईयों में मधुर कूंजने वाले पक्षिवृन्दोंसे शोभित हो रहा है मृग वानर शूकर सिंह ऋक्ष शल्यक वनगाय शरभ व्याघ्र छोटे मृग महिष इत्यादि जंतुवों से शोभित हो रहा है ॥ १९ ॥ २० ॥

---

( १ ) कर्णांत्रैक पदाश्वास्यैर्निर्जुष्टं ( २ ) वृकनाभिभिः ।
कदलीषंडसंरुद्धनलिनीपुलिनश्रियम् ॥ २१ ॥
( ३ ) पयस्तं नंदया सत्याः स्नानपुण्य ( ४ ) तरोदया ।
विलोक्यभूतेशगिरिं विबुधा विस्मयं ययुः ॥ २२ ॥
ददृशुस्तत्र रम्यामलकां नाम वै पुरीम् ।
वनं सौगंधिकं चापि यत्र तन्नाम पंकजम् ॥२३ ॥
नंदा चालकनंदा च सरितौ वाह्यतः पुरः ।
तीर्थपादपदांभोज-रजसाऽतीवपावने ॥ ३४ ॥
ययोः सुरस्त्रियः चत्तरवरुह्य स्वधिष्ण्यतः ।
क्रीडंति पुंसः सिंचंत्योविगाह्य रतिकर्शिताः ॥ २५ ॥
ययोस्तत्स्नान विभ्रष्टनवकुंकुमपिंजरम्
वितृषोऽपि पिबंत्यंभः पाययंतोगजागजीः ॥ २६ ॥
तारहेममहारत्न-विमानशतसंकुलाम्
जुष्टा पुण्यजन स्त्रीभिर्यथा खं सतडिद्घनम् ॥ २७ ॥
हित्वा यक्षेश्वर पुरीं वनं सौगंधिकं च तत्
द्रुमैः कामदुघैर्हृद्यं चित्रमाल्यफलच्छदैः ॥ २८ ॥
रक्तकंठखगानीकस्वरमंडितषट्पदम्
कलहंसकुलप्रेष्ठं खरदंडजलाशयम् ॥ २९ ॥
वनकुंजरसंघृष्टहरिचंदनवायुना
अधिपुण्यजनस्त्रीणांमुहुरुन्मथयन्मनः ॥ ३० ॥
वैदूर्यकृतसोपाना वाप्य उत्पलमालिनीः ।
प्राप्तं किं पुरुषैर्दृष्ट्वा त आराद्ददृशुर्वटम् ॥ ३१ ॥
स योजनशतोत्सेधः पादोनविटपायतः ।
पर्यक्कृताऽचलच्छायो(५)निर्नीडस्तापवर्जितः ॥ ३२ ॥

श्रीधरस्वामिकृत भावार्थदीपिका

मृगादिभिर्निर्जुष्टं निषेवितं नाभिः कस्तूरीमृगः पूर्वं मृगगणाः शृङ्गविशेषणत्वेनोक्ताः इदानीं स्वातन्त्र्येणोत्यपौनरुक्त्यम् कदलीखण्डैः संरुद्धानि आवृतानि नलिनीनां पुलिनानि तैःश्रीः शोभा यस्मिन् ॥ २१ ॥

नन्दया गंगया पर्यंतं परिवेष्टितं सत्या भवान्या स्नानेन पुण्यतर मतिसुगन्धमुदकं यस्यास्तया ॥ २२ ॥

अत्र गिरौ वनञ्च ददृशुः यत्र वने तन्नाम सौगन्धिकं नाम पंकजं भवति जातावेकवचनम् ॥ २३ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

पुरीं वर्णयति नन्दाचेति चतुर्भि सरितौ पुराद्वाह्यतो भवतः तीर्थपादस्य हरेः पदाम्भोजस्य रजसा ॥ २४ ॥

ययोर्विगाह्य प्रविश्यक्रीडन्ति ॥ २५ ॥

ययोरम्भो विगततृषोऽपि गजा पिबन्ति तत्र हेतुः तासां सुरस्त्रीणां स्नानेन विभ्रष्टं गलितं यन्नवं कुङ्कुमं तेन पिजरं पीतवर्णं गजीः करिणीः ॥ २६ ॥

तारं रूप्यं तारादिमयविमानानां शतैः शङ्कुलां व्याप्तां तडिद्भिः स्त्रीणां घनैर्विमानानां खेन पुर्याः सादृश्यम् ॥ २७ ॥

पा० ( १ ) कर्णौर्णक ( २ ) मृगनाभिभिः इति विजयध्वज वीरराघवौ ( ३ ) पर्यन्तम् इति चक्रवर्त्ती ॥ परीतमन्दयासत्यास्नान पुण्यकरोदया इति श्री वीरराघवाचार्याः ( ४ ) तमोदया ( ५ ) पर्यंगगतामलच्छाया इति श्री विजयध्वजः ॥

## श्रीधरस्वामिकृत भावार्थदीपिका ॥

यक्षेश्वरपुरीं हित्वा अतिक्रम्य तद्वनञ्च दृष्ट्वा ते आराद्दूराद्वटं ददृशुरिति चतुर्थेनान्वयः कथम्भूतं वनं चित्राणि माल्यानि फलानि छदाश्च पत्राणि येषु तैर्द्रुमैर्हृद्यं सुखकरम् ॥ २८ ॥

रक्तकण्ठखगानामनीकस्य स्वरैर्मण्डिताः षट्पदाः यस्मिन् कलहंसानां कुलस्य प्रेष्ठानि खरदण्डानि पद्मानि तैर्युक्ता जलाशया यस्मिन् ॥ २९ ॥

वनकुंजरैः संघृष्टा ये हरिचन्दनद्रुमाः तत्सम्बन्धिना वायुना पुण्यजनस्त्रीणां मन अधि अधिकमुन्मथयत् ॥ ३० ॥

यत्र च उत्पलमालिन्योवाप्यः तत्र किम्पुरुषैः प्राप्तं वनं दृष्ट्वा प्राप्ता इति पाठान्तरे किम्पुरुषैः प्राप्ता वापीश्च दृष्ट्वेत्यर्थः ॥ ३१ ॥

योजनशतमुत्सेधउच्छ्रायोयस्य पादोनैः सर्वतः पंचसप्ततियोजनप्रमाणैर्विटपैःशाखाभिरायतोविस्तृतः पर्यक्सर्वतःकृताअचला छायायेन निर्गतंनीडंयस्मात् ॥ ३२ ॥

---

## श्रीराधारमणदासगोस्वामि विरचिता

### दीपिन्याख्या दीपिका टिप्पणी

पुण्यन्तुचार्वपीति कोशात् अतिसुगंधमिति व्याख्यातम् गंगायास्स्वतः परमपुण्यत्वात् तस्मान्मन्वंतरांतरेपि गंगाऽऽगमनं प्रकारांतरेण ज्ञेयम् मध्येऽतर्द्धानं च (११) विलोक्येत्यर्द्धकम् ॥ २२—२६ ॥

तारेति पञ्चकम् यत्र च वने प्राप्ता इति पाठान्तरम् ॥२७—३१॥

ताप आतपः आधिदैविकादिश्च तेन वर्जितः ॥ ३२ ॥

---

## श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

कर्णोर्णैः गोकर्णाख्यैः ऊर्णामृगैः एकपदैः अश्वमुखैश्च मृगनाभिभिःकस्तूरी मृगैश्च नितरां जुष्टं कदली षंडैः संरुद्धान्यावृतानि नलनीनां कमलाकराणां पुलिनानितैः श्रीःशोभा यस्मिन् तम् ॥ २१ ॥

स्नानेन पुण्य करं पुण्य संपादकम् उदकं यस्यां तया सत्या निर्मलया नंदया गंगया परिवेष्टितम् भूतेशस्य रुद्रस्य गिरिं कैलासं विलोक्य देवाः विस्मयं ययुःप्रापुः ॥ २२ ॥

ते देवा तत्रगिरौतस्य रुद्रस्यालकां नाम अलिकेति प्रसिद्धां रमणीयां पुरीं सौगंधिकाख्यं वनंचापि ददृशुः सौगंधिकनाम्नोऽन्वर्थतामाह यत्र वने सौगंधिकं नाम पंकजं भवति जातावेक वचनम् २३

पुरीं वर्णयति नंदाचेति चतुर्भिः पुरःपुरात् वाह्यतः वाह्ये नंदा अलक नंदा चेतिद्वे सरितौ भवतः सरितौ विशिनष्टि सार्द्धद्वये नतीर्थपादस्य हरेःपदां भोजरजसा अतीवात्यंतं पावने भगवत्पदाम्भोजरजोयुक्तत्वादत्यंतपवित्र्यकेर इत्यर्थः ॥ २४ ॥

हेवत्स ! सुरस्त्रियः स्वधिष्ण्यतः स्वविमानेभ्यः॥ अवरुह्य च रतिकर्शिताः विहारश्रांताः सत्यः ययोः सरितोर्विगाह्य स्वपुंसः स्वप्रियान् सिंचंत्यः क्रीडंति जलक्रीडां कुर्वंति ॥ २५ ॥

ययोः सरितोरंभः वितृषो पि विगततृष्णा अपिगजाः गजीःकारिणीः अंभःपाययंत्यःपानं कारयंत्यः पिबंति तत्रहेतुः तासां सुरस्त्रीणां स्नानेन विभ्रष्टंगलितं यत्स्वं कुंकुमं तेन पिंजरं पीतवर्णाम् ॥२६॥

पुनः पुरीं विशिनष्टि तारेति तारं रूप्यंतारादि मयविमानानां

## श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

शतैः संकुलां पुण्यजनैः यातुधानैस्तेषांस्त्रीभिश्चजुष्टां तत्रदृष्टांतः तडिद्भिर्मेघैः सहितं खमाकाशं यथेति तत्र विमानानि खमिव पुण्यजनामेघा इव तत्स्त्रियः तडितइव ॥ २७ ॥

एवं भूतां यक्षेश्वरस्य कुबेरस्य पुरीमलकां हित्वा अति क्रम्य-तत्सौगंधिकाख्यं वनंच दृष्ट्वा तेदेवा आरात् वटं ददृशुरिति चतुर्थेनान्वयः कथंभूतं वनं चित्राणि माल्यानि मालायोग्यानि पुष्पाणि किसलयादीनि परिच्छदानि क्रीडोपकरणानि येषु तैः कामान् वर्षद्भि द्रुमैर्हृद्यं मनोहरम् ॥ २८ ॥

रक्तकंठखगानां कोकिलपक्षिणाम् अनीकस्य समूहस्य स्वरैर्मंडिताः षट्पदा यस्मिन् कलहंसानां कुलस्य प्रेष्ठं खरदंडानि पद्मानि तैर्युक्ताः जलाशया यस्मिन् ॥ २९ ॥

वनगजैः संघृष्टाः हरिचंदन द्रुमास्तत्संबंधिना वायुना पुण्यजनस्त्रीणां मनः अध्याधिकं मुहुरुन्मदयत्परवशी कुर्वत् ॥ ३० ॥

वैदूर्यमणिभिः कृतानि कल्पितानि सोपानानि यासु उत्पलानांमालाः पंक्तयो यासु ताः आर्षत्वा द्व्यत्ययेन द्वितीया वाप्यः किंपुरुषैर्व्याप्ताः यस्मिन् वनंसंति तद्वनं दृष्ट्वा यद्वावाप्य इति व्यत्ययत्प्रथमावनंवापीश्च दृष्ट्वा आरात् समीपे वटं ते देवा ददृशुः॥ ३१ ॥

वटं विशिनष्टि सइति सवटः योजनशतमुत्सेधः उच्छ्रयो यस्यपादोनैः सर्वतः पंचसप्तति योजन प्रमाणैर्विटपैः शाखाभिश्चायतो विस्तृतः पर्यक्परितः कृता अचलानिश्चला छाया येन निर्गतं नीडंकुलायं यस्मात् तापेन सूर्यातपेन रहितः ॥ ३२ ॥

---

## श्रीमद्विजयध्वज तीर्थकृतपदरत्नावली

कर्णो गोकर्णःकर्णविहीनो वा ॥ कर्णः कर्णविहिन स्याद्दंडस्तु च्छिन्नपुच्छक इति यादवः कर्णाश्च ऊर्णाश्च एकपादाश्चाश्वास्याश्च कर्णोर्णैकपदाश्वास्यास्तैः ऊर्णादयोपि मृगविशेषाः मृगनाभिभिः कस्तूरिकामृगैः कदलीखंडेन संरुद्धस्य संवृतस्य नलिनीपुलिनस्य पद्माकरसिकतामयोच्चस्थलस्य श्रीर्यस्मिन्स तथा तम् ॥ २१ ॥

नंदया गंगा शाखया नद्या पर्यस्तं परिवृतम् भूतेशगिरिं श्रीकैलासम् ॥ २२ ॥

तत्र कैलासे पुनः किं चित्रमपश्यन्निति तत्राह ददृशुरिति तत्रामसौगंधिकं नाम ॥ २३ ॥

अलकाया वाह्यतो वहिर्भागे तीर्थपादः श्रीनारायणस्तत्पादपद्मरजसा मिश्रितत्वादतीव पावने शुद्धे ॥ २४ ॥

स्वधिष्ण्यतः स्वविमानात् ॥ २५ ॥

तासां स्नाने न विभ्रष्टं संक्रांतं कुचकुंकुमं तेन पिंजरं पीतरक्तम् ॥ २६ ॥

तारै रजतैर्मौक्तिकैर्वा हेमभिः सुवर्णैर्महारत्नैर्माणिक्यादिभिरलंकृतानां विमानानां शतैःसंकुलां निविडां कथमिव स्थितां तडितां घनेन च सह वर्तमानं खमाकाशं यथा तथा ॥ २७ ॥

अलकांतःप्रवेशे तद्वैचित्र्यदर्शनेन तत्स्थजनसंलापेन कालक्षेपेण च्छिन्नदक्षदेहेन यज्ञानुसंधानं दुष्करं स्यादिति धिया तां पुरीं तद्वनं च दृष्ट्वा हित्वावहिरंवगच्छतस्तेदेवा आराद्वटं ददृशुरित्यन्वयः

श्रीमद्विजयध्वजीर्थकृत पदरत्नावली ॥

यक्षेश्वरपुरीं हित्वा तत्सौगंधिकं च वनं दृष्ट्वा समीपे वटं ददृशुरिति वा तद्वनं विशिनष्टि द्रुमैरित्यादिना चित्राणि माल्यानि पुष्पाणि फलानि च्छदाः पत्राणि येषु ते तथा तैः ॥ २८ ॥

खरो दंडो येषां तानि तथा कलहंसकुलस्य प्रेष्ठानि प्रियतमानि खरदंडानि पद्मानि येषु ते तथोक्ताः तं च जलाशया जलाधाराः कासारा यस्मिंस्त तथोक्तम् ॥ २९ ॥

वनकुंजरैर्वनगजैः कंडूतिनिरासार्थं संघृष्टानां निष्पिष्टानां हरिचंदनानां रजोगंधमिश्रवायुनाऽधिकं पुण्यजनस्त्रीणां मनो मुहुर्मथयद्विलोलयत् ॥ ३० ॥

उत्पलानां माला यासु विद्यंते इत्युत्पलमालिनीरुत्पलमालिन्यः वैदुर्यैः कृतानि सोपानानि कृत्रिमावतारस्थलानि यासु तास्तथा एवंविधा वाप्यो यत्र संतीति शेषः तर्किपुरुषैर्विलासार्थं व्याप्तम ॥ ३१ ॥

वटं विशिनष्टि सयोजनेति स वटो योजनानां शतमुत्सेधउन्नतिर्यस्य स तथोक्तः चतुर्द्धाविभक्तशतस्य पादश्चतुर्थांशः पंचविंशतिसंख्या तयोना रहिता संख्या पंचसप्तति तावद्भिर्वैविटपैरायतो विस्तृतः पर्यक् परितो गता कृता पूर्णा अमला च्छाया यस्य स तथा निर्गतानि नीडानि पक्षिमंदिराणि यस्मात्स तथा तापवार्जितः शीतोष्णारहितः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

पुण्यन्तु चार्वपीत्यमरः । चारुत्वं तत्र सौगन्धिकप्रायमेवेति तथा तैर्व्याख्यातम् अतो मन्वन्तरान्तरेऽपि गंगाया आगमनं प्रकारान्तरेण ज्ञेयं मध्यपदलोपश्च ज्ञेयः । विलोक्येति सार्द्धकम् ॥२२--२६॥

तारहेमेति पञ्चकम् ॥ २७ ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

कदलीसमूहैः संरुद्धानि आवृतानि नलिनीनां पुलिनानि तैः श्रीः शोभा यत्र तम् ॥ २१ ॥

नन्दया गंगया पर्यंतं परिवेष्टितं सत्या रुद्रायण्याः स्नानेन पुण्यतरमुदकं यस्याः तया ॥ २२ ॥

तन्नाम सौगन्धिकं नाम पंकजं भवति । जातावेकवचनम् २३

पुरः पुराद्बाह्यतः सरितौ भवतः ॥ २४ ॥

ययोर्विगाह्य ॥ २५ ॥

ययोरम्भो गजा विगततृषोऽपि पिबन्ति । तत्र हेतुः । तासां सुरस्त्रीणां स्नानेन विभ्रष्टैर्नवकुङ्कुमैः पिञ्जरं पीतवर्णं सुगन्धञ्च २६

तारो मुक्ता तडिद्भिः स्त्रीणां घनैर्विमानानां खेन पुर्या सादृश्यम् ॥ २७ ॥

यक्षेश्वरपुरीं वनञ्च हित्वा अतिक्रम्य ते देवा आराद्दूराद्वटं ददृशुरित्यन्वयः ॥ २८ ॥

रक्तकण्ठखगानामनीकस्य स्वरैर्मण्डिताः षट्पदा षट्पदस्वरा यस्मिन् कलहंसकुलप्रेष्ठानि खरदण्डानि पद्मानि येषु ते जलाशया यस्मिंस्तत् ॥ २९ ॥

अधिकं मन उन्मथयत् कामोद्दीपकत्वादिति भावः ॥३०॥

वाप्यः वापीश्च दृष्ट्वा किम्पुरुषैः प्राप्ता प्राप्तमिति पाठे वनविशेषणम् ३१

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

योजनशतमुत्सेध उच्छ्रायो यस्य सः । पादोनैः सर्वतः पञ्चसप्तति योजनप्रमाणैर्विटपैः शाखाभिरायतो विस्तृतःपादोनैःपर्यक् सर्वतःकृता अचला छाया येन सः । निर्नीडः पक्षिवासरहितत्वादनुपद्रवः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः।

कदलीनांषंडैः समूहैः संरुद्धान्यावृतानियानिनलिनीपुलिनानितैः श्रीः शोभायस्मिन्स्नानपुण्यतरोदयंयस्यांतयाप्ऽर्यस्तंपरिवेष्टितम् ॥ २१—२२ ॥

तत्रगिरौपुरींददृशुः यत्रवनेतन्नामसौगंधिकंपंकजंजातावेकवचनं तद्वनंचददृशुः ॥ २३ ॥

पुरींवर्णयति नंदेतिचतुर्भिः सरितौपुरः पुरात्बाह्यतोऽन्तः॥२३॥

रतिकर्शिताः क्रीडाश्रांताः स्वंविमानंविमानंस्वयंऽवरुह्ययोर्नन्दालकनन्दयोर्विगाह्यप्रविश्य पुंसः पतीन्सिंचंत्यः क्रीडंति ॥ २५ ॥

ययोरंभः गजाः गजीः करिणीः पाययंतोवितृषोपिपिबंतितत्रहेतुरमर्त्यवीशेषणम् तासांसुरस्त्रीणांस्नानेनविभ्रष्टैर्विगलितंयन्नवंकुंकुमंतेनपिंजरंपीतम् रुचिविशेषकरमित्यर्थः ॥ २६ ॥

तारैरंजतंतद्दादिमयविमानानांशतैः संकुलांव्याप्ताम् पुण्यजनस्त्रीभिर्जुष्टाम् तत्रदृष्टांतमाह यथाखंसतडिद्घनमिति ॥ २७ ॥

यक्षाणामीश्वरस्यकुबेरस्यपुरींहित्वा ॥ अतिक्रम्यचित्राणिमाल्यानिपुष्पाणिफलानि छदाः पत्रानिचयेषुतैर्द्रुमैर्द्युक्तं मनोज्ञं वनं वापीश्चदृष्ट्वातेवटंददृशुरितिचतुर्थेनान्वयः ॥ २८ ॥

कथंभूतंवनंरक्तकंठानांखगानामनीकस्यसमूहस्यस्वरैः । वाद्यध्वनितुल्यैर्मंडिताः शोभिताः षट्पदाः गायकतुल्याः भ्रमरायस्मिन्तत् कलहंसानांकुलस्यप्रेष्ठम् खरदण्डैः पंकजैर्युक्ताजलाशयाः यस्मिन्तत् ॥ २९ ॥

वनकुञ्जरैः संघृष्टानांहरिचंदनानांवायुनापुण्यजनस्त्रीणांमनः मुहुः अध्यधिकंउन्मथयत् क्षुभितंकुर्वत् ॥ ३० ॥

वैदूर्यकृतसोपानावाप्यः वापीः किंपुरुषैः प्राप्तंसर्वतः सेवितम् वटस्तेददृशुः ॥ ३१ ॥

सवटः योजनशतमुत्सेधः उच्छ्रायोयस्यसः पादोनैः पञ्चसप्तति योजनैर्विटपैरायतोविस्तृतः पर्यक्परितः कृताऽचलाछायायेनसः निर्गतानिनीडाणियस्मात् तापवर्जितः त्रिविधतापरहितइत्यर्थः ॥ ३२ ॥

---

भाषाटीका

तथा कर्णान्त्र एकपद अश्वास्य वृक वस्तूरी मृग इनसे सेवित हैं । और कदली वृक्षों के समूहों से तलइयों के तीर घिर रहे हैं जिसमें ॥ २१ ॥

और सतीजी के स्नान से सुगंधित जल वाली अलकनन्दा से परिवेष्टित अर्थात् घिरा हुआ ऐसे (भूतेशगिरि) कैलास को देखकर देवता लोग विस्मय को प्राप्तहुए ॥ २२ ॥

और उसी जगह देवताओं ने परमरमणीय अलकानाम कुबेरकी पुरी को देखा और वनकोभी देखा कि जिसमें सौगंधिक नाम वाले कमल हैं ॥ २३ ॥

तस्मिन्महायोगमये मुमुक्षुशरणे सुराः।
ददृशुः शिवमासीनं त्यक्तामर्षमिवांतकम् ॥ ३३ ॥
(१) सनंदनाद्यैर्महासिद्धैः शांतैः संशांतविग्रहम्।
उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम् ॥ ३४ ॥
विद्यातपोयोगपथमास्थितं तमधीश्वरम्।
चरंतं विश्वसुहृदं वात्सल्याल्लोकमंगलम् ॥ ३५ ॥
लिंगं च तापसाभीष्टं भस्मदंडजटाजिनम्।
अंगेन संध्याभ्ररुचा चंद्रलेखां च बिभ्रतम् ॥ ३६ ॥
उपविष्टं दर्भमय्यां बृस्यां ब्रह्मसनातनम्।
नारदाय प्रवोचंतं पृच्छते शृण्वतां सताम् ॥ ३७ ॥
कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानुनि।
बाहुं प्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया ॥ ३८ ॥
तं ब्रह्मनिर्वाणसमाधिमाश्रितं व्युपाश्रितं गिरिशं योगकक्षाम्।
सलोकपालामुनयोमनूनामाद्यं मनुं प्रांजलयः प्रणेमुः ॥ ३९ ॥
स तूपलभ्यागतमात्मयोनिं सुरासुरेशैरभि (१) वंदितांघ्रिः।
उत्थाय चक्रे शिरसाऽभिवंदनमर्हत्तमः कस्य यथैव विष्णुः ॥ ४०।
तथाऽपरे सिद्धगणा महर्षिभिर्ये वै समंतदानुनीललोहितम्।
नमस्कृतः प्राहशशांकशेखरं कृतप्रणामं प्रहसन्निवात्मभूः ॥ ४१

भाषाटीका

पुरके बाहर नंदा और अलकनन्दाये दोनों सरितावों को देखा जोकि तीर्थपाद श्रीगोविन्द के चरण कमल के रजसे अत्यन्त पावन हैं ॥ २४ ॥

हे विदुर! जिनके बीच अपने महलों से उतर कर रतिसे खिन्नदेवांगना प्रवेशकर पुरुषोंको सींचती हुई क्रीडा करतीहैं ॥ २५ ॥

जिन सरितों के जल को देव स्त्रियों के स्नान से छूटा जो नवीन कुंकुम तिससे वासित होने से विना प्यास के भी हाथी अपन हथिनियों को पान करावते हुवे आपभी पीते हैं ॥ २६ ॥

चांदी सोना और रत्नों स जटित एसे सैकडों सदनो से व्याप्त होरही हैं यक्षों की स्त्रियों स एसे शोभित होरही है जैसे विद्युलियोंसे मेघ ॥ २७ ॥

इस प्रकारकी यक्षेश्वरकी पुरी अलका को अतिक्रमण कर चित्र विचित्र माला फूलपत्र धारे कामनावों पूर्ण करने वाले वृक्षों से रमणीय एसे सौगन्धिक नाम वनकी भी लंघन करा ॥२८॥

जिस वनमें रक्तकंठ पक्षियों के स्वर से भ्रमरों का स्वरमंडित हो रहा है और जिस्में कलहंसों के समूहोंको प्रिय एसा कमलों से व्याप्त जलाशय हैं ॥ २९ ॥

फिर वह वन जंगली हस्तियों से संघृष्ट हरिचन्दन की वायु द्वारा यक्षों की स्त्रियों के मन वारंवार मथन करता है ॥ ३० ॥

भाषाटीका

जिस्में वैदुर्य्य मणि की सोपान वाली कमलों से भरी हुई वापी हैं किंपुरुष लोगों से प्राप्त एसे वनको देख देख कर आगे चलके देखेंतो एक वट देख पडा ॥ ३१ ॥

वह वट कैसा है कि सौयोजन का तो ऊंचा है और पचहत्तर योजनकी विस्तार वाली शाखावों फैलाहुआ है चारों तरफ अचल जिस्की छाया है और ऊपर कोई घोंसला नहीं है और ताप से वर्जित है ॥ ३२ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

मुमुक्षूणांशरणेआश्रये त्यक्तामर्षोऽतकस्तत्तुल्यम् ॥ ३३ ॥
तंविशिनष्टि सनंदनाद्यैरितिपंचभिः सख्याकुबेरेणोपास्यमानम् ॥ ३४ ॥
विद्याउपासनातपश्चित्तैकाग्र्यंयोगः समाधिस्तेषांपंथानंप्रवर्त्तनद्वारालोकस्यमंगलंहिततपोवात्सल्यात्स्नेहादाचरंतम् ॥ ३५ ॥
सध्याऽभ्ररुचारक्तवर्णेनांगेनभस्मादिलिंगंचंद्रलेखांचबिभ्रतम् ॥ ३६ ॥
व्रतिनामासनंवृसीतस्याम् ब्रह्मप्रवोचंतम् ॥ ३७ ॥

पा० (१) सनन्दाद्यैरिति श्रीवी०॥ (२) वन्दितांघ्रिर्नित श्रीवीरराघवाचार्यराधारमणदासगोस्वामिनोःसंमतःपाठः।

### श्रीधरस्वामिकृत भावार्थदीपिका

सव्यंपादपद्मंदक्षिणे ऊरौकृत्वा।विन्यस्यजानुनिचसव्येबाहुंकृत्वा दक्षिणबाहुप्रकोष्ठेमणिबंधस्थाने अक्षमालांचकृत्वादक्षिणहस्तकृतयातर्कमुद्रयोपलक्षितमासीनमित्यर्थः तदुक्तंयोगशास्त्रे "एकपादमथैकस्मिन्विन्यस्यदूरुसंस्थितम्। इतरस्मिंस्तथाबाहुंवीरासनमिदंस्मृतं तर्कमुद्राचोक्ता तर्जन्यंगुष्ठयोरग्रेमिथःसंयोज्यचांगुलीः। प्रसार्यंबंधनंप्राहुस्तर्कमुद्रेतिमांत्रिका„ इति ॥ ३८ ॥

ब्रह्मनिर्वाणंब्रह्मानंदस्तत्रसमाधिरैकाग्र्यंतमाश्रितम् योगकक्षां-योगपट्टंचवामजानुदृढीकरणार्थंविशेषेणोपाश्रितवंतम् मननशीला-मनवस्तेषामाद्यंमुख्यम् ॥ ३९ ॥

अर्हत्तमोविष्णुर्वामनमूर्तिर्यथा कस्य कश्यपस्य ॥ ४० ॥

महर्षिभिःसहितायेनीललोहितमनुवर्तंतेतेऽपितस्मैवंदनंचक्रुः एवं सर्वैर्नमस्कृतःप्राह कृतःप्रणामोदंचैर्यस्मैतम् ॥ ४१ ॥

---

### श्रीराधारमणदासगोस्वामि विरचिता
### दीपिन्याख्या दीपिका टिप्पणी

तस्मिन्निति पद्कम् (१)महायोगमये समाधिप्राचुर्य्यस्थाने ॥३३॥

शांतैः शान्तिरतिमद्भिः ॥ सम्यक् शांतः शमादिनिष्ठो विग्रहो यस्यतम् उपरतविरोधमितिवा ( २ )॥ ३४ ॥

तेषां विद्यादीनां पंथानं मार्गमास्थितं प्रवर्त्तनद्वाराऽऽश्रितं शिक्षामंतराऽऽत्मारामस्य तदनुष्ठाने प्रयोजनाऽभावात् तदेवाह लोकस्य मंगल मित्यादि चरन्तं कुर्वन्तम् ( ३) ॥३५ ॥

तापसाः शैवास्तेषामभीष्टम् ( ४ ) ॥ ३६ ॥

अथ वृंहति वृंहयति तद्ब्रह्मेति श्रुतेः स्वरूपेण गुणैश्चानतिशयं ब्रह्म भगवत्तत्त्वम् ( ५ ) ॥ ३७ ॥

तर्कमुद्रायास्सार्वदिकत्वाऽभावादुपलक्षणे तृतीया अतइत्ययं इत्युक्तम् ( ६ ; ॥ ३८ ॥

योगपट्टं योगाङ्गसाधनासनोपयोगिपट्टवस्त्रम् ॥ ३९ ॥

स त्विति सार्द्धकम् अभिवंदितांघ्रिरित्यत्राऽभिवन्दितांघ्रिमित्येव पाठः ॥ ४० ॥

नमस्कृत इत्यर्द्धकम् भयस्यांतस्सद्भावाद्वात्तत्प्रसत्त्यर्थं प्रहसन्निवेत्युक्तम् ॥ ४१ ॥

---

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

महायोगमये महायोगोभगवदुपासनायोगस्तत्प्रचुरे महायोगनिष्ठापुरुषप्राचुर्यात् तत्स्थानस्य महायोगमयत्वं मुमुक्षवः ॥ अज्ञानान्मोक्तुमिच्छवः जिज्ञासव इतियावत् ॥ तेषां शरणमाश्रयं तस्मिन् वटमूले आसीनमुपविष्टं त्यक्तामर्षो योऽन्तकस्तत्तुल्यं शिवं सुरा ददृशुः ॥ ३३ ॥

शिवंविशिनष्टि सनंदाद्यैरितिपंचभिः महासिद्धैः शान्तैः सनंदाद्यैर्गुह्यकरक्षसांभर्त्राप्रभुणासख्यायैश्रवणेनचउपास्यमानंसख्यमानंसंशांतविग्रहंनिर्वैरंकृतापराधेपुदेवेष्वपिकृपालुमित्यर्थः ॥ ३४ ॥

विद्याज्ञानयोगः तपः कर्मयोगः ताभ्यांयुक्तोयोगपथः भगवद्भक्तिमार्गः तमास्थितंज्ञानकर्मानुगृहीतभगवद्भक्तियोगनिष्ठमित्यर्थःअधीश्वरंजितेंद्रियम् विश्वसुहृदंचराचराणांसर्वेषांभूतानिभगवद्वपुः



### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

अतस्तदानुकूल्यंमेस्यादित्युक्तरीत्याविश्वानुकूलम् अतएववात्सल्याल्लोकानांमंगलंक्षेममेव चरंतं कुर्वंतम् ॥ ३५ ॥

संध्याभ्ररुचारक्तवर्णेनअंगेनतापसाभीष्टंभस्मादिलिंगंचंद्ररेखांचबिभ्रतम् ॥ ३६ ॥

दर्भमय्यांवृस्यांबुवंतोऽस्यांसीदंतीतिवृशीपृषोदरादित्वात्साधुः आस्तरणविशेषस्तस्यामुपविष्टंपृच्छतेनारदायसतामन्येषांसनंदनादीनां शृण्वतांसतांसनातनंब्रह्मपरमात्मानंप्रणवंवाप्रवोचंतम् ॥ ३७ ॥

सव्यंपादंदक्षिणेऊरौकृत्वा विन्यस्यजानुनिसव्येसव्यबाहुंकृत्वा दक्षिणेबाहुप्रकोष्ठेमणिबंधस्थाने अक्षमालांकृत्वादक्षिणहस्तकृतयातर्कमुद्रयोपलक्षितमासीनमित्यर्थः तदुक्तंयोगशास्त्रेएकंपादमथैकस्मिन्विन्यस्यदूरुसंस्थितम्॥इतरस्मिन्तथाबाहुं वीरासनमिदंस्मृतं तर्कमुद्राचोक्तातर्जन्यंगुष्ठयोर्मध्यंमिथः संयुज्यचांगुलीःप्रसार्यबंधनंप्राहुस्तर्कमुद्रेतिमांत्रिकाइति ॥ ३८ ॥

तं ब्रह्मनिर्वाणसमाधिम् आनंदरूपब्रह्मविषयसमाधिमाश्रितं योगकक्ष्यां योगपथं व्यपाश्रितं विशेषेणापाश्रितं मुनीनामाद्यं मुख्यं मुनिं गिरीशं लोकपालसहिता मुनयः बद्धांजलयः प्रणेमुर्नमस्कृतवंतः ॥ ३९ ॥

स तु गिरिशः सुरासुरेशैरभिवंदितौ अंघ्री यस्य तमागतमात्मयोनिं ब्रह्माणमुपलभ्य ज्ञात्वा तस्मै ब्रह्मणे उत्थायेति पाठांतरं तदा आसनादुत्थाय शिरसा अभिवंदनं प्रणामं चक्रे महत्तमोविष्णुर्वामनरूपः यथा कस्य कश्यपस्य प्रजापतेः यद्वा कस्य चतुर्मुखस्याभिवंदनं चक्रे कस्यरुद्राभिवंद्यत्वं सदृष्टांतमाह महत्तम इति विष्णुर्यथा रुद्रस्य महत्तमः पूज्यः तथा कोऽपीत्यर्थः ॥ ४० ॥

नीललोहितं रुद्रं येपरेसिद्धगणा अनुवर्तंत तैर्महर्षिभिः सह नमस्कृतः आत्मभूः ब्रह्मा कृतप्रणामं कृतः चतुर्मुखविषयः प्रणामो येन तं शशांकशेखरं कृतप्रणाम इति प्रथमांतपाठरुद्रेणकृतप्रणामः प्राह ॥ ४१ ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

सुरा महायोगमये अंप्रैश्वर्यस्वरूपे मुमुक्षूणां शरणे निवासभूते तस्मिन्वटमूले आसीनं शिवं ददृशुरित्यन्वयः ॥ ३३ ॥

सख्या वैश्रवणेन ॥ ३४ ॥

विद्या च तपश्च योगश्च ते तथा तेषां पंथा मार्गस्तमास्थितमनुतिष्ठंतं तदधीश्वरं तेषां विद्यादीनामधीश्वरं विषयमुपदेष्टारं स्वामिनं च लोकं मंगलयतीति लोकमंगलं विश्वस्य सुहृदमनिमित्तबंधुं श्रीनारायणं वात्सल्याद्भक्त्युद्रेकाद्ध्यायंतम् ॥ ३५ ॥

संध्याभ्ररुचा गौर्यालिंगनेन संक्रांतस्तकुचकुंकुमेन रक्तत्वात्स्वतो धवलत्वात्संध्याकालभवमेघवर्णेनांगेन तापसाभीष्टं भस्मच दंडश्च जटाचाऽजिनं च यस्मिंस्तथा तल्लिंगं वेषं लिंगं शेफास्नि वंषं च चिंह्न वृद्धादिसंहताद्विति यादवः चंद्रस्य लेखां कलां च बिभ्रतं भस्मोद्धर्तनेन नेत्राद्यवयवानां रक्तत्वाद्वा संध्याभ्ररुचेति ॥ ३६ ॥

वृस्यां यतियोग्यासने। यतीनामासनं वृसीति हलः। सनातनं नित्यं ब्रह्म वेदतत्त्वम् ॥ ३७ ॥

दक्षिणे ऊरौ सव्यं पादपद्मं कृत्वा सव्ये जानुनि च सव्यबाहुं दक्षिणे जानुनि च दक्षिणबाहुं कृत्वा प्रकोष्ठे कराग्रेऽक्षमाला यस्य स तथा तं तर्कमुद्रया ज्ञानमुद्रयाऽऽसीनम् ॥ ३८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं विधं शिवं दृष्ट्वा किं चक्रुरिति तत्राह तं ब्रह्मेति मनूनां मननशीलानामुपासकानामाद्यं मनुं ब्रह्मावपये योनिर्वाणसमाधिः शरीराभिमानत्यागलक्षणचित्तैकाग्रता तादृशीमवस्थामाश्रितं योगकक्ष्यां योगपट्टिकाम् ॥ ३६ ॥

सर्वेषु प्रणमत्सु सत्सु ब्रह्मा किमकार्षीदित्याशंक्य पितृत्वाद्गुणज्येष्ठत्वाद्गुरुत्वाद्दूरं प्रेष्ठत्वाच्चाऽग्रस्य शिवशर्माहमभिवादयामीत्यभिवाद्य शिवो ब्रह्मणामस्तौषीदित्याह स तूपलभ्येति शिरसंत्यनेनाद्यंगविशिष्टं नतिं ध्वनयति नतिं विशिनष्टि यथेति यथाविष्णोरुद्यंगविशिष्टत्वेन नमनं करोति तथेत्यर्थः सर्वथसूर्यादपि तेजिष्ठेन रुद्रेण प्रणतस्य विरिंचस्य माहात्म्यातिशयोऽस्तीति किं वक्तव्यमिति भावेन शिवं विशिनष्टि महत्तम इति अर्कस्य सकाशादपि महत्तमस्तेजस्वितम इत्यर्थः गुणगुणिनोरभेदाभिप्रायेणायंप्रयोगः "तेजोऽर्थ उत्तमार्थे च पूज्यार्थे च प्रयुज्यते महच्छब्दो महःशब्दो मान्यशब्दस्तथैव चेति,, वचनात्तेजोऽर्थो महच्छब्द इति सिद्धम् ॥ ४० ॥

तत्र ब्रह्मा स्वगुरुत्वमभिनयन् मवं वक्तीत्याह तथेति तथा रुद्रस्य समंतात्स्थिता अपरे ये सिद्धगणास्तैर्महर्षिभिः सहनीललोहितम् अनु नमस्कृतः प्रहसन्निवात्मभूर्ब्रह्माऽऽत्मने कृतप्रणामं शशांकशेखरं प्राहेत्यन्वयः ॥ ४१ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

तस्मिन्निति पट्कम् ॥ ३३ ॥

सनन्दनाद्यैरित्यत्र सनकाद्यैरिति सम्बन्धोक्तिः ॥ ३४—३५ ॥

तापसाः शैवाः तेषाममीष्टम् । अंगेनेत्यत्र कक्षेणेति चित्सुखः कक्षेण योगपदेन ॥ ३६ ॥

ब्रह्म श्रीभगवत्तत्त्वं । प्रवोचन्तमित्युपदिशन्तमित्यर्थः ॥३७॥

बाहुं करम् ॥ ३८—३९ ॥

सतूपलभ्येति सार्द्धकं ब्रह्मणः प्रकटेन वन्दनेन सत्त्वं विशुद्धमित्यस्य तथा व्याख्यानं प्रकटीकृतम् ॥ नमस्कृतइत्यर्द्धकम् ॥ ४० ॥ ४१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

अन्तकमितेति तस्मिन् कृतस्यापराधस्य स्मृत्या त्यक्तामर्षमिवेति तदपि खेषु क्रोधरहितमिव ॥ ३३ ॥

सिद्धैरुपास्यमानं सख्या कुबेरेण च ॥ ३४ ॥

विद्यातपोयोगानां पन्थानं प्रवर्त्तनद्वारा आस्थितमाश्रितं लोकमंगलं तपश्चरन्तम् ॥ ३५ ॥

तापसानां शैवानां सन्ध्याभ्ररुचा रक्तवर्णेनांगेन ॥ ३६ ॥

वृतिनामासनं वृसी तस्यामुपविष्टं ब्रह्म वेदं शृण्वतां सनन्दनाद्यैरिति पूर्वोक्तः पञ्चचन्तत्वात्तेष्वपि नारदस्य श्रैष्ठ्यं तस्य भक्तत्वात् तत्प्रष्टव्यस्य वेदस्यापि प्रायो भक्तिप्रतिपादकत्वं ज्ञेयम् ॥ ३७ ॥

सव्यं पादपद्मं दक्षिणे ऊरौ कृत्वा जानुनि च सव्ये सव्यं बाहुं कृत्वा दक्षिणबाहुप्रकोष्ठे मणिबन्धस्थाने अक्षमालां कृत्वा दक्षिणपाणिकृतया तर्कमुद्रया उपलक्षितमासीनमित्यर्थः तदुक्तं योगशास्त्रे एकं पादमथैकस्मिन् विन्यसेदूरुसंस्थितम् । इतरस्मिंस्तथा बाहुं वीरासनमिदं स्मृतं तर्कमुद्रा चोक्ता तर्जन्यंगुष्ठयोरग्रे मिथः संयोज्य चांगुलीः । प्रसार्य्य बन्धनं प्राहुस्तर्कमुद्रेति मान्त्रिका इति ॥ ३८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

ब्रह्मनिर्वाणं ब्रह्मानन्दम् । "अभो चजालमर्वामिह शुभात्मनःशरीरिणः संसृतिचक्रशातनं तद्ब्रह्मनिर्वाणसुखं विदुर्बुधा" इति प्रह्लादोक्तेरधोक्षजालम्बनं वा तत्र समाधिं चित्तैकाग्र्यमाश्रितं । योगकक्षां वामजानुदृढीकरणार्थं योगपट्टञ्च विशेषेणापाश्रितं । मनूनां मननशीलानामाद्यं मुख्यम् ॥ ३९ ॥

अभिवन्दनमर्थात्तस्यात्मयोनेश्चक्रे अर्हत्तमः यद्यपि स्वतः पूज्यस्तदपि तस्य पितृत्वादिति भावः यथा विष्णुर्वामनः कस्य कश्यपप्रजापतेः ॥ महर्षिभिः सहितायेऽ नारदाद्यो नीललोहितमनुवर्त्तन्ते स्म तेऽपि तस्य वन्दनं चक्रुःएवंनमस्कृतोब्रह्माकृतःप्रणामो देवैर्यस्मैतं शिवमित्यनेनांतर्भयाद्बहिरेवमुखप्रसादः प्रकाशित इत्युक्तम् ॥४०॥४१॥

---

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः।

महायोगीभगवद्भजनयोगस्तन्मये भगवद्भवे मुमुक्षूणांशरण्ये गृहे त्यक्तोऽभषायेन एवंभूतमन्तकमिवासीनम् ॥ ३३ ॥

त्यक्तामर्षतकृतुल्यतायांहेतुंदर्शयन् शिवं विशिनष्टिसनंदनाद्यैरितिपञ्चभिः सनंदनाद्यैः स्वज्येष्ठैर्भ्रातृभिः संशान्तविग्रहंदत्तविपयकक्रोधादिविकारितमित्यर्थः सख्या धनदेनोपास्यमानंच ॥ ३४ ॥

अधीश्वरंलोकनाथम् अतएववात्सल्यात् लोकानांमंगलंहितंचरंतं विद्याभगवदुपासनातपश्चादितत्साधनंसत्साधनंभगवदुपासनामार्गमास्थितम् सर्वलोकाविरोधेनसांगंभगवदुपासनांकुर्वाणमित्यर्थः ३५

तत्स्वभावानुरूपं तपआहलिंगंचेति सन्ध्याभ्ररुचा किंचिदरुणगौरेणांगेन देहेन तापसानामभीष्टं भस्मादिलिंगं तपस्विचिह्नं चन्द्रलेखाञ्च लोकमङ्गलार्थं बिभ्राणम् ॥ ३६ ॥

भगवदुपासनानिष्ठांदर्शयति दर्भमय्यां कुशनिर्मितायां वृस्यां व्रतिनामासने उपविष्टम् नारदाय कनिष्ठभ्रात्रे सनातनं ब्रह्म "अहोभाग्यमहोभाग्यं नन्दगोपव्रजौकसां । यन्मित्रं परमानन्दं पूर्णब्रह्म सनातन" मिति वक्ष्यमाणं भगवंतं प्रवोचन्तं वर्णयन्तम् ॥ ३७ ॥

किञ्च सव्यं पादपद्मं दक्षिणे ऊरौ कृत्वा वामजानुनि वामबाहुं च कृत्वा दक्षिणबाहुप्रकोष्ठे मणिबन्धस्थाने अक्षमालां कृत्वा दक्षिणहस्तकृतया तर्कमुद्रयोपलक्षितमासीनं तादृशासनमुद्रयोर्लक्षणमुक्तं तज्ज्ञैः "एकं पादमथैकस्मिन् विन्यसेदूरुसंस्थितम् । इतरस्मिंस्तथा बाहुं वीरासनमिदंस्मृतम् । तर्जन्यंगुष्ठयोरग्रे मिथः संयोज्य चांगुलीः । प्रसार्य बन्धनं प्राहुस्तर्कमुद्रेति मांत्रिकाः ॥ ३८ ॥

ब्रह्मणि वासुदेवे निर्वाणसमाधिमखण्डं चित्तैकाग्र्यमाश्रितं योगकक्षां योगपट्टं च वामजानुदृढीकरणार्थं व्युपाश्रितम् मनूनां मननशीलानामाद्यं मुख्यंमनुम् लोकपालैःसहितामुनयःप्रणेमुः॥३९॥

कस्य कश्यपस्य विष्णुर्वामनः ॥ ४० ॥

महर्षिभिः सह ये अपर सिद्धगणाः नीललोहितम् समन्तत आसन् तेऽपि अनुअनन्तरमेव तथा तस्मै अभिवन्दनं चक्रुः एवं सर्वैर्नमस्कृतः कृतःप्रणामोयेन तं शशाङ्कशेखरं प्रतिप्रहसन्निव अर्हं वीरभद्रोत्पत्तिदक्षादिसंहारहेतुरित्यभिप्रायेण मर्मगिरिमारुढोऽसि किमित्येवमुपहसन्निव श्रीशिवस्यापि सत्त्वे वर्तास्मद्भगवान् वासुदेवोऽधोक्षजोमे नमसा विधीयते इत्याद्युक्तः श्रीवासुदेवानन्यभक्तत्वेनेश्वरत्वाभावाद्विवशब्दः सर्वोपास्यं सर्वशक्तिम् सर्वकारणकारणं परब्रह्मादिपदवाच्यम् भगवन्तं शिवसांत्वनार्थंतत्प्रेरकं तदंतर्यामिणं श्रीवासुदेवं प्रत्याह वक्ष्यमाणैश्चतुर्भिः श्लोकैः ॥ ४१ ॥

---

ब्रह्मोवाच ॥

जाने त्वामीशं विश्वस्य जगतोयोनिबीजयोः ।
शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम् ॥ ४२ ॥
त्वमेव भगवन्नेताच्छिवशक्त्योः सरूपयोः ।
विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटोयथा ॥ ४३ ॥
त्वमेव धर्मार्थदुघाभिपत्तये दक्षेण सूत्रेण ससर्जिथाध्वरम् ।
त्वयैव लोकेऽवसिताश्च सेतवोयान् ब्राह्मणाः श्रद्दधते धृतव्रताः ॥ ४४ ॥
त्वं कर्मणां मङ्गल मङ्गलानां कर्तुः स्म लोके तनुषे स्वः परं वा ।
अमङ्गलानां च तमिस्रमुल्बणं विपर्ययः केन तदेव कस्य चित् ॥ ४५ ॥
न वै सतां त्वच्चरणार्पितात्मनां भूतेषु सर्वेष्वभिपश्यतां तव ॥
भूतानि चात्मन्यपृथग्दिदृक्षतां प्रायेण रोषोऽभिभवेद्यथा पशुम् ॥ ४६ ॥
पृथग्धियः कर्मदृशोदुराशयाः परोदयेनार्पितहृद्रुजोऽनिशम् ॥
परान् दुरुक्तैर्वितुदन्त्यरुन्तुदास्तान् मावधीर्दैववधान् भवद्विधः ॥ ४७ ॥

भाषाटीका

महायोग सिद्धि देनेवाले मुमुक्षुजनोंके रक्षा करने वाले उस वट वृक्ष के नीचे बैठे हुये क्रोधको त्यागकरने वाले कालके सदृश श्री महादेवजी का देवताओं ने दर्शन किया ॥ ३३ ॥

पांच श्लोकों से उनका वर्णन करते हैं कैसे हैं कि शांत चित्त वाले सनंदनादि महा सिद्धों से तथा गुह्यकों के अधिपति कुवेर जैसे सेवित हैं स्वयं भी शांत स्वरूप हैं ॥ ३४ ॥

स्वयं आप ईश्वर हैं विद्या योग तप इनके मार्ग में स्थित हैं संसार के मित्र हैं कृपासे लोगों के मङ्गल कारक अनुष्ठान को कर रहे हैं ॥ ३५ ॥

सायंकाल के मेघ तुल्य शरीर से भस्म जटा मृगचर्म दंड इत्यादि तपस्या के चिह्नों को धारण किये हैं तथा अर्धचन्द्र को धारण किये हैं ॥ ३६ ॥

कुशासन पर बैठकर सब श्रोताओं के सुनतें२ पूछने वाले नारदजी को सनातन तत्त्वको उपदेश कर रहे हैं ॥ ३७ ॥

दहिनी ऊरुके ऊपर वाम पाद पद्म को रखकर तथा वामजानु पर वाम हस्त को रखकर दहिने हाथ के पँहुचा में रुद्राक्ष की माला को धारण करके इस प्रकार वीरासनसे बैठ हस्त से तर्क मुद्रा करके विराजमान हैं ॥ ३८ ॥

योग पट्टिका के आश्रय से ब्रह्मानंद के सुखसे समाधिमें स्थित सब मुनिनके आदि मुनि श्रीमहादेवजी को इंद्रादि लोकपालों के सहित सब मुनि गणोंने हाथ जोडकर प्रणाम किया ॥ ३९ ॥

तब देव दैत्यों से वंदित चरण कमल वे श्रीमहादेवजी आते हुये ब्रह्माजी को देखकर आसन से उठके जैसे स्वयं पूज्य वामन मूर्ति श्रीविष्णु ने कश्यपका वन्दन कियाथा तैसे शिवजीने भी मस्तक से अपने पिता ब्रह्मा को प्रणाम किया ॥ ४० ॥

वैसेही शिवजी के समीप जो सिद्धगण महर्षिये उनोंने भी ब्रह्मा को प्रणाम किया पसे नमस्कार करने पर देवों से नमस्कृत हुये चन्द्रशेखरसे किंचित् हसते हुये ब्रह्माजी बोले ॥ ४१ ॥

भाषाटीका

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

यद्यपित्वं नीचवन्मां नमस्करोपि तथापि तवैश्वर्यमहं वेद्मीत्याह जाने इतित्वां विश्वस्येशं जानं तत्र हेतुः जगतो योनियो शक्तिः प्रकृतिः बीजञ्च यः शिवः पुरुषः तयोः कारणं तथापि निरन्तरं निर्भेदं यद्ब्रह्म निर्विकारं तदेव त्वमिति जाने ॥ ४२ ॥

ननु विरुद्धमेतत्तत्राह त्वमेव सरूपयोरविभक्तयोः शिवशक्त्योः क्रीडन् विश्वसृष्ट्यादि करोपि ऊर्णनाभिरिव । स्वरूपयोरिति पाठे स्वांशयोः अतो न विरोधः ॥ ४३ ॥

धर्ममर्थञ्च दोग्धि या त्रयी तस्या अभिपत्तये रक्षणाय अध्वरं सृष्टवानसि । यद्वा हे धर्मार्थदुघ ! धर्माद्यभिपत्तये तत्प्राप्तये दक्षेण सूत्रेण निमित्तेन सेतवो वर्णाश्रममर्यादाश्चावसिताः निबद्धाः निर्णीता इति वा । श्रद्दधते श्रद्धया अनुतिष्ठन्ति ॥ ४४ ॥

सर्वकर्मफलदातापि त्वमेवेत्याह । हे मङ्गल ! मङ्गलानां शुभानां कर्मणां कर्तुः स्वः स्वर्गं परं मोक्षं वा तनुषे । अमङ्गलानामशुभानां कर्मणां कर्तुश्च तमिस्रं नरकं तनुषे । तत्र केन हेतुना तदेव तस्मिन्नेव कर्मणि कस्यचित् विपर्ययो भवति ॥ ४५ ॥

त्वत्कोपोऽत्र हेतुरित्यसम्भावितांमति कैमुत्यन्यायेनाह न वै सतां सतः रोषोऽभिभवेत् तव त्वां द्वितीयार्थे षष्ठ्यौ पशुमज्ञं यथा ऽभिभवति न तद्वद्वैधर्म्ये दृष्टान्तः ॥ ४६ ॥

अतो ये पृथग्धियो भेददृशः अतः कर्मदृश एव दुरिशयाः दुष्ट आशयो येषां परेषामुदयेन सम्पदा अर्पिता हृदि रुग् येषां अरुन्तुदा मर्मभेत्तारो दैवेनैव वधो येषां तान् भवद्विधो निरुपमः साधुर्मावधीत् न हन्यात् ॥ ४७ ॥

यस्मिन् यदा पुष्करनाभमायया दुरन्तया स्पृष्टधियः पृथग्दृशः ॥
कुर्वन्ति तत्र ह्यनुकम्पया कृपां न साधवो दैवबलात्कृते क्रमम् ॥ ४८ ॥
भवांस्तु पुंसः परमस्य मायया दुरन्तयाऽस्पृष्टमतिः समस्तदृक् ॥
तया हतात्मस्वनुकर्मचेतः स्वनुग्रहं कर्तुमिहार्हसिप्रभो ! ॥ ४९ ॥
कुर्वध्वरस्योद्धरणं हतस्य भोस्त्वयाऽसमाप्तस्य मनो ! प्रजापतेः ॥
(१)न यत्र भागं तव भागिनोददुः कुयज्विनोयेन मखो निनीयते ॥ ५० ॥
जीवतायजमानोयं प्रपद्येताक्षिणी भगः ॥
भृगोः श्मश्रूणि रोहन्तु पूष्णोदन्ताश्च पूर्ववत् ॥ ५१ ॥
देवानां भग्नगात्राणामृत्विजां चायुधाश्मभिः ॥
भवताऽनुगृहीतानामाशु मन्योस्त्वनातुरम् ॥ ५२ ॥
एष ते रुद्र ! भागोऽस्तु यदुच्छिष्टोऽध्वरस्य वै ॥
यज्ञस्ते रुद्र ! भागेन कल्पतामद्य यज्ञहन् ! ॥ ५३ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां
श्रीरुद्रसांत्वनं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

प्रत्युत साधूनां वृत्तमालोक्यानुग्रहमेव कर्त्तुमर्हसीत्याह द्वाभ्यां । यस्मिन् देशे यदा काले स्पृष्टधियो मोहितचित्ताः । पृथग्दृशो भवन्ति तत्रापराधे साधवोहि अनुकम्पया ऽनन्तरमेव परदुःखासहिष्णुतया चित्तप्रकम्पनेन कृपां कुर्वन्ति नतु क्रमं पराक्रमं कुतः दैवबलात्कृतेऽर्थे ममैव दैवमेवं भूतं कोऽत्रापराधस्तेषामिति मत्वा तद्धननं न कुर्वत इत्यर्थः ॥ ४८ ॥

भवांस्तु अस्पृष्टमतिः । अतः समस्तदृक् सर्वज्ञः । तया मायया हत आत्मा येषां तेषु अतएव कर्मानुगतचित्तेषु इहापराधेऽनुग्रहं कर्त्तुमर्हसि ॥ ४९ ॥

एवं सामान्येनोक्त्वा प्रस्तुतमाह कुर्विति त्रिभिः । त्वया हतस्य अतएवासमाप्तस्य प्रजापतेरध्वरस्य हे मनो ! यत्राध्वरे कुयाज्ञिका भागिनोऽपि तव भागं न ददुः भागार्हत्वमाह येन त्वया मखो निनीयते फलं प्राप्यते ॥ ५० ॥

हे मन्यो ! अनातुरमारोग्यमस्तु ॥ ५१ ॥

भागश्चतत्रास्त्वित्याह एष इति । हे रुद्र ! यावदित्यर्थे यदित्यव्ययं यज्ञे कृते यावानुच्छिष्टः अवशिष्टोऽर्थः । तावानेष ते तव भागोऽस्तु हे रुद्र ! ते भागेनाद्य यज्ञः कल्पतां सम्पद्यताम् ॥ ५२ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

ऐश्वर्यं तत्रप्रतिपाद्यं शैवोपास्यं तत्र ईशत्वे शिवः पुरुषः प्रकृतिनियन्ता जीवोवा शैवानां हिमते सदाशिवः परमकारणं भगवत्प्रकृतिपुरुषाहि तदात्मका एवेति सिद्धान्तः तथापि कारणत्वेऽपि ॥ ४२ ॥

शङ्कते नन्विति एतत् कारणत्वं निर्विकारत्वं च परस्परविरुद्धं विकारव्याप्यत्वात्कारणत्वस्य शिवशक्त्योर्द्वारभूतयोस्सतोः कीदृक् तथा चचिन्तामणिर्यथाशक्तिद्वारातत्तत्पदार्थप्रसवे उपादानं तथा सद्वारकोपादानत्वात्कारणत्वेऽपि निर्विकारत्वमित्यर्थः नच कारणं सद्वारकं न श्रूयते इतिवाच्यम् व्रीहिभिर्यजेत इति व्रीहीणां करणत्वे श्रुतिसिद्धेऽपि पुरोडाशप्रकृतितया तदुपगमात् अविभक्तयोः तन्मायःपिंडवह्निविक्ततयाऽज्ञातयोः पाठान्तरे स्वांशयोः प्रकृतेः शक्तित्वात्पुरुषस्य च चिदंशत्वात्स्वांशत्वम् अतः प्रकृतिपुरुषद्वाराकारणत्वात्स्वतश्चाकरणत्वात्कारणत्वनिर्विकारत्वयोर्न विरोध इत्यर्थः ॥ ४३ ॥

पूर्वार्थे विशेष्यभूतायाखय्या अध्याहाराद्यज्ञेति प्रत्यासत्त्या धर्माद्यभिपत्तये इति तु समीचीनमेवेति स्वारस्यम् सूत्रेण तंतुना निमित्तेन करणेन निबद्धाः निर्णीता इत्यत्र तु सूत्रेण स्वल्पाक्षरमसंदिग्धमित्यादिलक्षणकेन शास्त्रेणेति ज्ञेयं किन्तु सन्निहितत्वात् दक्षरूपेण तंतुनाऽऽध्वररूपं पटं तन्तुवाय इव त्वंससर्जिथेत्यपि

---

(१) ननीयतइति श्रीवीरराघवाचार्याः ॥

श्रीराधारमणदास गोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

व्याख्येयम् ॥ ४४ ॥

तत्र तयोः शुभाशुभकर्मणोर्मध्ये तदेवेत्यन्वयम् तस्मिन्नेव कर्मणि कस्यचित्फलविपर्य्ययो भवति शुभेऽप्यशुभफलम् अशुभेऽपि शुभफलं केन हेतुना भवति वस्तुतस्तु महदपराधतदनुग्रहयोरेव हेतुत्वमभिप्रेतम् ॥ ४५ ॥

अत्र फलवैपरीत्ये प्रायेणेति लोकोक्तिः नाभिभवेदेवेत्यर्थः ॥४६॥

अतस्त्वत्कोपस्य हेतुत्वासंभवात् पुनरतः भेददर्शित्वात् ॥४७॥

पृथग्दृशः साधुषु सापराधा भवंति ममैव दैवमिति साधारणासाधु पक्षे भवपच्चेतु तेषां पृथग्दृष्टीनामेव दैवबलात्कृतेऽपराधे सति दैवपारवश्यात्तेषां को दोष इति मत्वा हननं न कुर्वत इति व्याख्येयम् ॥४८॥

अतः माययाऽस्पृष्टमतित्वात् समस्तदृक् भवतीति पृथग्वाक्यम् भवांस्तु तुशब्दः साधारणसाधुभ्यो वैशिष्ट्यं बोधयति अर्हसि त्वमिति शेषः॥ ४९ ॥

प्रस्तुतं प्रकृतं प्रकरणप्राप्तमिति यावत् हे मनो ! मननशील ! येन त्वया मखो निनीयते तस्य तव भागं न ददुर्यत्र यज्ञे तस्योद्धरणं कुर्व्वित्यन्वयः ॥ ५० ॥ ५१ ॥

हे मन्यो ! क्रोधस्वरूप ! भवन्तमंतरा न कस्याऽप्यत्र सामर्थ्यमितिभावः ॥ ५२ ॥

संपद्यतां सिद्ध्यतु ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
दीपिन्याख्यायां दीपिका टिप्पण्याम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ॥

रुद्रस्य भगवदात्मकत्वात्तदावेशावतारत्वाच्च रुद्रं ब्रह्मणः सामानाधिकरण्येन निर्दिशन् यन्निकृष्टस्य ब्रह्मणोऽसाधारणं प्रकृति पुरुषशरीरकत्वजगत्कारणत्वधर्ममर्यादास्थापकत्वानुग्रहीतृत्वनिग्रहीतृत्वादि तत्सर्वं रुद्रप्रसंशार्थं रुद्ररूपेणाऽवस्थितस्य ब्रह्मण आह जाने त्वामित्यादिभिश्चतुर्भिः हे ईश ! रुद्र ! विश्वस्य कृत्स्नस्य चिदचिदात्मकस्य जगतः योनिबीजभूतयोः क्षेत्रबीजवत्प्रकृतौ पुरुषस्य मिलितत्वात् तयोर्योनिबीजशब्दाभ्यां निर्देशः शक्तेर्ब्रह्मण अपृथक्सिद्धविशेषणभूतायास्त्रिगुणात्मिकायाःप्रकृतेः तथाशिवस्य निर्वाणमय एवायमात्मेत्यादिश्रुत्याप्रत्यगात्मनःसुखरूपत्वाभिधानाज्जीवस्य शिवशब्देन निर्देशः तस्य च यत्परं विलक्षणं "तस्य परमाछ्रेडित"मिति निर्देशात्परशब्देन योगे अन्याराद्दितरर्त्तेदिक्छब्देत्यादिना पंचमी प्रकृतिपुरुषाभ्यां स्वरूपतः स्वभावतश्च विलक्षणमित्यर्थः तच्चनिरंतरं निर्भेदं तत्प्रकृतिपुरुषांतरात्मतयावस्थितमपि निरस्तानिखिलहेयत्वेन समस्तकल्याणगुणात्मकत्वेन चैकरूपमित्यर्थः यद्वा निरंतरम् अंतरं विच्छेदः तस्मान्निर्गतं सर्वानुस्यूतं सर्वांतरात्मतयाऽवस्थितमिति यावत् अथवा कात्स्न्र्येन ज्ञानस्वरूपं नतु प्रदेशभेदेन जडमित्यर्थः तद्ब्रह्मत्वांजाने इदञ्च सामानाधिरण्यं शरीरात्मभावनिबन्धनमावेशावतारत्वनिबन्धनं च नतु तादात्म्यनिबन्धनम् एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधसम्भवौ । मयादर्शितपंथानौ सृष्टिसंहारकारकौ„ सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते ! नारायणाद्रुद्रोजायते अनहतपाप्मा वा अहमस्मीत्यादिभिः कार्यत्वकर्मवश्यत्वाद्यभिधानेन रुद्रादेर्जीवत्वनिश्चयात् तादात्म्यासंभवात् अत एव भवांस्तु पुंसः परमस्य मायया दुरंतयाऽस्पृष्टमतिः समस्तदृगिति व्यतिरेकेण निर्देक्ष्यति ॥ ४२ ॥

एवं ब्रह्मसामानाधिकरण्येन रुद्रं निर्दिश्य ब्रह्मदृष्ट्यातस्य चिदचिच्छरीरकत्वं सृष्ट्यादिकर्तृत्वं चाह

त्वमिति हे भगवन् ! स्वांशयोः स्वस्य तव अंशयोः शिवशक्त्योः प्रकृति पुरुषयोः अत्र विशिष्टवस्त्वेकदेशत्वरूपमंशत्वं विवक्षितं नतु विशेष्यवस्त्वेकदेशत्वं प्रकृति पुरुषयोर्विकाररूपमेतज्जगत्त्वमेव सर्वं खल्विदं ब्रह्मेति यत्सामानाधिकरण्यमिदं शरीरात्मभावनिबन्धन मेव कथं रुद्राख्यजीवविशेषस्य कृत्स्नं प्रपञ्चं प्रति आत्मत्वं जगतश्च शरीरत्वं कथं चिच्छरीरात्मभाव संभवेऽपि शरीर वाचिपदस्य शरीरिवाचकेन सामानाधिकरण्यमिति चेदुच्यते नह्यत्ररुद्राख्य जीवविशेषस्यात्मत्वं जगतस्तच्छरीरत्वं चोच्यते किंतु ब्रह्मविदामहं त्वमादिशब्दाअहंत्वमादिबुद्धयश्चब्रह्मपर्यन्ताः तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च कक्षीवानृषिश्च विप्रश्चास्मि त्वं वा अहमस्मि भगवो देवते अहंवेत्वमसि भगवो देवते तद्योऽहं योऽसौसोऽहम् अहं हरिः सर्वमिदं जनार्दन इत्यादि श्रुतिस्मृतिभिस्तथाप्रतीतेः एवं चात्र प्रस्तोतुश्चतुर्मुखस्य ब्रह्मविदग्रेसरत्वेन तत्प्रयुक्ता अहं त्वमादिशब्दास्तद्बुद्धयश्च ब्रह्मपर्यन्ता इति रुद्रस्य भगवदात्मकत्वेनतत्पर्यन्तत्वमवगम्य ब्रह्मसामानाधिकरण्येन स निर्दिष्टइति विशेष्यभूतस्यब्रह्मणः कृत्स्नचिदचिदंतरात्मत्वंतयोःशरीरत्वंचयुक्तमेव एवमपि कथमात्मवाचिना शरीर वाचिशब्दस्य सामानाधिकरण्यमिति चेत् गवादिशब्दानां जातिगुणादिमात्रपरतया व्युत्पन्नानां शुक्लोगौरित्यादिषु व्यक्तिगुणादिपर्यंतत्वमंतरेणाऽपर्यवसन्नानां यथा व्यक्त्यादिपर्यंतत्वेन सामानाधिकरण्यम् एवं जाति गुणादिवत् शरीरस्याऽपृथक् सिद्धविशेषणत्वात्तद्वाचिमात्रपरतया लोकव्युत्पन्नशरीरिपर्यन्तमभिधत्ते आत्मादेवोजातःइतिवत् तस्यात्मवाचिना सामानाधिकरण्यमुपपन्नमेव नच व्यक्तेराक्षेपाल्लक्षणया वा गौःशुक्लइत्यादि प्रयोगोपपत्तिः अपृथक्सिद्धविशेषणवाचिशब्दत्वस्यलक्षणादि प्रतिबन्धकत्वादन्यथा जात्याकृतिगोत्वगुणादिशब्दानामपि लक्षणादिना गोत्वं शुक्लमित्यादिप्रयोगापत्तेःनन्वेवं जात्यादिशब्दानामप्यपृथक्सिद्धविशेषणवाचिनां व्यक्त्यादिपर्यन्तपर्यवसानेन सामानाधिकरण्यापत्तिरितिचेन्न नियतनिष्कर्षवाचिनां कदाचिदपि विशेष्यपर्यन्तत्वाभावस्य भाष्यादिषूक्तत्वात् अतएव शरीरदेहादिशब्दानां कदाचिदपिनात्मवाचिनासामनाधिकरण्यमितिभाष्यादिषु विस्तरः कृत्स्नचिदचिदात्मकप्रपञ्चशरीरकस्त्वं क्रीडन्निव विश्वं सृजसि पासि रक्षसि अत्सि संहरसि क्रीडन्नित्यनेन जगद्व्यापारो भगवतो लीलैत्युक्तम् ऊर्णपट ऊर्णनाभिर्यथेति दृष्टान्तः "यथोर्णनाभिः सृजते गृह्णते च"इति श्रुति प्रसिद्धः ॥ ४३ ॥

एवं परब्रह्म दृष्ट्याचिदचिच्छरीरकत्वं सृष्ट्यादि कारणत्वमभिधाय पुनस्तद्दृष्ट्या प्रकृताध्वरसंधित्सोत्पादनाय पुरुषार्थचतुर्विधशास्त्रप्रवर्त्तकत्वं धर्ममर्यादापालकत्वं चाह त्वमेवेति ॥ धर्मार्थधुक् धर्मार्थौ दोग्धीति धर्मार्थधुक् धर्मादिप्रपूरकस्त्वमेव अभिपत्तये पुरुषार्थोऽवाप्तये दक्षेणसमर्थेन सूत्रेण सूचितेन शास्त्रेण अध्वरं ससर्जिथ सृष्टवानसि पुरुषार्थसाधनभूतधर्मार्थं संपादनोपायाऽववोधिशास्त्रप्रवर्त्तकस्त्वमेवेत्यर्थः सेतवो वर्णाश्रमधर्ममर्यादाश्च त्वया

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

एवाऽवसिता निबद्धाः कृतेसेतवः येऽवासिता इत्यत्राह यान् सेतून् धृत व्रता व्रतनिष्ठाः संतोब्राह्मणाः श्रद्दधते श्रद्धापूर्वकमनुतिष्ठंति ॥४४॥

पुनर्ब्रह्मदृष्टचैव सर्वकर्मकारयिता तत्तत्फलप्रदश्च त्वमेवेत्याह त्वमिति हे मंगल ! शिव ! लोके मंगलानां कुशलानां कर्मणां कर्तुः कर्त्रेइत्यर्थः स्वः स्वर्गं परं मोक्षं वा तनुषे प्रददासि अभिसंहित फलकर्मणां कर्तुः स्वर्गमनभिसंहितफलकर्मणां कर्तुस्तु मोक्षं तनुष इत्यर्थः अमंगलानामकुशलानां कर्मणां कर्तुरुल्वणं तमिस्रं निरयं तनुषे विपर्ययः अमंगलानां कर्मणां कर्तुः कस्य चिदपि स्वर्गं मोक्षप्राप्तिरूपः विपर्ययः केन केन हेतुना भवेत् न केनापीत्यर्थः अतस्तदेव तत्कृतं फलमेव भवति नतद्विपर्यय इत्यर्थः ॥ ४५ ॥

एवं ब्रह्मदृष्टचा रुद्रंप्रस्तूय तस्य प्रसादोत्पिपादयिषया सतां रोषोनयुक्त इतिकैमुत्यनयेनाह नवा इति त्वच्चरणे अर्पितम् आत्मा चित्तं येषां सर्वेषु भूतेषु तव द्वितीयार्थे षष्ठी त्वामित्यर्थः अत्र त्वां त्वमिति पदद्वयं ब्रह्मपर्यंतं भगवच्चरणारविंदसमर्पितचित्तानां सर्वाणि भूतानि भगवदात्मतया पश्यतामित्यर्थः भूतानि चात्मनि परमात्मनि अपृथक् सिद्धानि दिदृक्षतां द्रष्टुमिच्छतां पश्यतामित्यर्थः सर्वभूतानां भगवच्छरीरतया तदपृथक्सिद्धत्वेन पश्यतामित्यर्थः एवं भूतानां सताम् अत्रापि द्वितीयार्थेषष्ठी सतः वै अनर्थकारित्वेन प्रसिद्धः रोषः नाभिभवेत् अभिभूतान्न कुर्यात् यथा पशुं मूर्खमाभि-भवेत् अतस्तवरोषेन युक्त इति किमुवक्तव्यमिति भावः ॥ ४६ ॥

कृतापराधेष्वपि महांतः कृपावंतोभवंति अतः कृतापराधमपि दक्षम् अनुग्रहीतुमर्हसीत्याह त्रिभिः पृथग्दृशः अब्रह्मात्मकत्वतंत्रव-स्तुदर्शिनः देवमनुष्यदेहात्माभिमानभिन्नधियोवा कर्मण्येवदृष्टि-र्येषां दुष्ट आशयोऽन्तःकरणं येषाम् आनिषां परेषामुदयेन संपदा अर्पिता हृदि रुक् व्यथा येषाम् अरुन्तुदा मर्मच्छेत्तारः दुरुक्तैः परान् तुदन्ति व्यथयन्ति तानेवंभूतान् दैवेनैव वधोयेषां तान् भवद्विधोनिरुपम करुणः मावधीत् माहन्यात् ॥४७॥

प्रत्युत साधूनां वृत्तमालोच्यानुग्रहमेवकर्तुमर्हसीत्याह यस्मिन् देवे यदाकाले दुर्लंघ्यया पुष्करनाभस्य पद्मनाभस्य मायया मुष्ट धियः मोहितचित्ताः पृथग्दृशोभवन्ति ज्ञानैकाकारतया एकरूपेप्या-त्मनि देवमनुष्यादिभेददर्शिनः तथाऽब्रह्मात्मकत्वदर्शिनश्च भवन्तीत्य-र्थः तत्रापराधिषुसाधवोऽनुकम्पयाअन्तरमेवपरदुःखासहिष्णुतया चित्तप्रकम्पेन कृपां कुर्वन्ति नत्वक्रमम् अप्रियं कुतः दैवबलात्कृतेयं मम दैवमेवं भूतं कोऽत्रापराधस्तेषामिति मत्वा कृपामेव कुर्वन्ती-त्यर्थः ॥ ४८ ॥

अतोभवान् परमस्य पुंसः परमपुरुषस्यं दुरन्तया मायया अस्पृष्टमतिः भगवत्प्रपन्नत्वेन अमोहितबुद्धिः अतएव समस्तदृक् सर्वार्थदर्शी तया मायया हतात्मसु मोहितचित्तेषु अतएव अनुकर्मं चेतस्सु कर्मानुगुणचित्तवृत्तिषु सापराधजनेषु अनुग्रहङ्कर्तुमर्हसि हेप्रभो ! समर्थ ! ॥ ४९ ॥

एवं सामान्येनोक्त्वाप्रस्तुतमाह कुर्विति त्रिभिः हे मनो ! रुद्र! त्वया हतस्य अत एवासमाप्तस्य प्रजापतेर्दक्षस्य अध्वरस्योद्धरणं पुनरु-द्धारं कुरु कुर्याः कस्य कुयाज्ञिकस्य दक्षस्य यत्राध्वरे भागिनः भा गार्हस्य तत्र भागं न ददुः येन त्वया हेतुना मखो न नीयते न स-माप्यते निनीयते इति पाठांतरं तदाकिमर्थमध्वरोद्धरणमयमां प्रार्थ-यसेइत्यत्राह मखोयेन त्वयाहेतुनानिनीयते समाप्यते यदपचारान्म खोयिनष्टःपुनस्तस्यैव भवतोऽनुग्रहान्मखः समापनीय इतिभावः॥५०॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

अयं यजमानोदक्षः जीवतात् जीवतु भगः अक्षिणी प्रपद्येत प्राप्नुयात् ॥ ५१ ॥

आयुधैरश्मभिश्चभग्नगात्राणामृत्विजां देवानां च पुनर्भवता अनुग्रहीतानाम् हे मन्यो ! अनातुरम् आरोग्यमाशु अस्तु ॥ ५२ ॥ भागश्च तवास्त्वित्याह एष इति हे रुद्र ! यावदित्यर्थे यदित्यव्ययम् अध्वरस्ययदुच्छिष्टः यज्ञे कृते यावानवशिष्टार्थस्तावानेष तव भागोऽस्तु हे रुद्र ! यज्ञहन् ! अद्य अधुना तेनैव भागेन यज्ञः कल्प्यतां संकल्प्यताम् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिकायां
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

भक्तद्वेषमसहमानेन शिवांतर्यामिणा दक्षयज्ञविनाशनमकारीति ध्वनयंस्तद्यज्ञसंधित्कामस्तस्मिंस्तुष्टे शिवोऽपि तुष्टः स्यात्तस्य भक्तलक्षणत्वाच्छिवस्यासंभाव्यैर्गुणैः शिवांतर्यामिणं नरसिंहं स्तौति जाने त्वामिति हे ईश ! अखंडैश्वर्य ! विश्वस्याखिलस्य जगतो योनिबीजयोर्मातृस्थानीयायाः शक्तेः प्रकृतेरुमायाः पितृस्थानीयस्य पुरुषशब्दवाच्यस्य शिवस्य च सकाशाद्यत्परमुत्तमं निरंतरं स्वगत-भेदरहितं शिवशक्त्योः स्थित्वा मातृत्वपितृत्वलक्षणशब्दप्रवृत्ति-निमित्तापादकं त्वां जान इत्यन्वयः ॥ ४२ ॥

शिवशक्त्योर्योनिबीजत्वमौपचारिकं मुख्यं तु तदंतर्यामिणो हरेरेवेत्यभिप्रेत्याह त्वमेवेति क्रीडयोर्णापटऊर्णनाभिर्यथोर्णां सृजति तन्मध्ये क्रीडते च तां हरति तथा त्वं प्रतिमावत् स्वरूपयोः साक्षाद्रूपयोः शिवशक्त्योः स्थित्वा ताभ्यां करणभूताभ्यां भगवंस्त्वमेवै-तद्विश्वं सृजसि पासि रक्षस्यत्सि संहरसीत्यन्वयः प्रसिद्धं परि-त्यज्याप्रसिद्धांतर्यामिकल्पनायां किं कारणमित्यत उक्तं शक्तेः शिवस्य च परमिति न हि ।शिवशक्त्योः परः शिव इति वक्तुं युक्तं प्रतीतिविरोधात् तर्हि त्वमित्यादिप्रयोगप्रतीतेः कागतिरिति चेन्न अन्तर्याम्यपेक्षया चरितार्थत्वात् तदुक्त "क्रियन्ते स्तुतयोऽन्यत्र तदंतर्याम्यपेक्षया । न जीवेषु गुणाः पूर्णा यथायोग्या हि तद्गता" इति "तद्वशत्वात्स्वरूपं तु विष्णोः सर्वमुदीर्यते स्वरूपं मच सर्वस्य विम्बत्वादेव तूच्यते । साक्षात्स्वरूपम् मत्स्याद्या विष्णोर्नान्ये कथंचन । तस्मादन्यगतादोषा न तस्मिन्पुरुषोत्तमे" इति वचनात् शिवादीनामस्वरूपत्वं मत्स्यादीनां साक्षात्स्वरूपत्वं च सिद्धम् नापलपनीयमिति भावः ॥ ४३ ॥

.दक्षयज्ञविनाशनं तदन्तर्यामिणा हरिणा कृतमिति प्रमाणेन ध्वनितं स्फुटयति त्वमेवेति त्वमेव नान्यो धर्मार्थौ दोग्धीति धर्मार्थधुक् तेन धर्मार्थदुघा सूत्रेण प्रत्युत्थानाद्यकरणनिमित्त दोषसूचकेन दक्षेण हेतुना विसर्जिताध्वरः विनाशितयज्ञो भवसीति शर्वः सोऽपि गुण एवाभूदित्याशयेनाह अभिपत्तय इति तस्यदोषस्याभि-पत्तये प्रतीकाराय परिहाराय पाणि मर्कटलोचन इत्यादिदोष-सूचकेन दक्षेण यो यज्ञ उपक्रातस्तं त्वद्भक्तत्वेऽपि त्वद्भक्तद्वेष्टृत्वा-त्तद्दोषपरिहाराय भक्तवत्सलस्त्वमेव नाशितवानित्यर्थः दक्षोऽपि त्वद्भक्तश्चेत्तद्यागविनाशं किमकार्षीरित्यत आह त्वय्येवेति तव-त्कर्मसु यानि यानि व्रतानि त्वया विहितानि तानि धारयन्तो वै ब्राह्मणा वेदशास्त्रपारगास्ते यान् सेतून् श्रद्दधते मद्भक्तोऽपि

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

स्वोत्तममङ्गच्छेपादिकं न कुर्यादित्यादिलक्षणधर्मसेतवोलोके वेदे च त्वयैवाऽवसिता निश्चित्य निर्णीता इत्यर्थः ॥ ४४ ॥

एवकारेण मन्वादिषु स्थित्वा वर्णाश्रमादिसंहिताम् बिभर्त्ति इति ध्वनितं स्पष्टयति कर्मणामिति "मंगेरलच्" अगिवगिमगिरगिलगिगत्यर्थाः मगेरलच् प्रत्ययो भवति संज्ञाविषये नुमागमश्चकारः स्वरार्थस्तेन मंगलमिति रूपं तस्य सम्बुद्धिर्हेमङ्गलेति हे मङ्गल ! विष्णो ! त्वञ्जीवलोके स्थित्वा मङ्गलानाम् पुण्यानाममङ्गलाना मशुभानां च कर्मणां कर्त्तासि स्वयमन्यानपेक्षितस्तेषामुभयेषां कर्मणाम् फलं स्वर्गादिकमुल्वणान्तामिस्त्रनरकादिकं च तनुपे स्वस्वयोग्यतानुसारेण विस्तृत्यददासीत्यन्वयः ननु नायं नियमो द्रढीयान् विपर्ययदर्शनादित्यत आह विपर्यय इति केनचिद्भक्तद्वेषादिहेतुना कस्य चिद्देवधर्मादेः फलविपर्ययः न तु सर्वस्येत्यज्ञानां धर्मसूक्ष्मज्ञानं दुर्लभमिति भावः ॥ ४५ ॥

नन्वेवं तर्हि ब्रह्मणा हरौ रोषलक्षणा दोषारोपः कृत इत्यागतमित्याशंक्य त्वद्भक्तानामप्यनुचितोरोषो नास्ति किमुतत्वंति भावेनाह न वा इति त्वच्चरणार्पितात्मनां सर्वेषु भूतेष्वपि स्थितं तव त्वाम् पश्यतामात्मन्याधारतया भूतानि च पश्यतामेवापृथक् द्विद्वत्ताम् यथार्थज्ञानेच्छूनाम् सताम् प्रायेणतथा रोषोनाभिमवेद्यथा पशोरज्ञानिनोऽभिभवेदित्यन्वयः अनेन रोषविषयेषु रोषः कर्तव्यो नान्यत्रातो न हरौ दोषारोपो ब्रह्मणा कृत इत्युक्तम् भवति चतुर्थे षष्ठीति सूत्रात् द्वितीयादिचतुर्षु षष्ठीवर्तत इति विधानात्त येत्यस्य द्वितीयार्थेषु युज्यते "विष्णवधीनाजगत्सत्ता प्रतीतिश्चेष्टितं गतिः । इति यन्निश्चितं ज्ञानमपृथग् दर्शनं स्मृतम् ॥ मिथ्या ज्ञानम् पृथग्ज्ञानमिति वेदविदोविदुः । यथैवार्थस्तथा ज्ञानमपृथग् दर्शिरुच्यत,, इति वचनात् अपृथग्दर्शनं नाभेदज्ञानं किन्तुयथावस्तु विज्ञानमिति ज्ञायते ॥ ४६ ॥

हननयोग्यापराध पुरुषविषये यो रोषः स कथं महतोऽपि नाभिभवेदित्याशंक्य सत्यं स्वदोषेण हन्यमानान्नावधीरिति प्रार्थयामह इति ज्ञापयति पृथगृदृश इति ये पृथग्दृक्त्वादिदोषाकराः दुरुक्तैः पराग्वितुदन्ति हे देव ! भवांस्तान्मावधीदित्यन्वयः पृथग्विधान् भिन्नप्रकारान् ज्ञानिलोकविलक्षणानित्यर्थः ॥ ४७ ॥

यद्यपि ब्रह्मविज्ञापनेन प्रसन्नस्य रुद्रान्तर्यामिणो हरेः शान्त्या रुद्रोऽपि शान्तो भवति तथापि रुद्रोऽपि पृथग्वाच्य इति धियाऽधुना दक्षाय कोपो न कर्तव्य इति रुद्रं वक्ति येऽस्मिन्निति अस्मिन्लोके ये दक्षविभ्राजना दुर्लंघ्यया पुष्करनाभस्य मायया वन्धकशक्त्या स्पृष्टधियो यथैव पृथग्दृशोऽस्मिन्जने द्वेषादिकम् कुर्वन्तीति यदा यस्मात्तस्मात्तत्र तेषु जनेषु भवादृशाः साधवोऽनुकम्पया हृदयद्रवीभावेन कृपां समालक्षणोपकारम् कर्तुमिच्छां कथं न कुर्वन्तीत्यन्वयः "हृदयस्य द्रवीभावस्त्वनुकम्पेति कथ्यते । उपकारम् कर्तुमिच्छा कृपेत्याहुर्मनीषिणः" तेऽपि साधुष्वेव केचित्कृत एवं कुर्वन्तीति तत्राह दैवेति तादृग्विधपूर्वकर्मप्रबोधकस्य देवस्य हरेर्बन्धकशक्तिबलात्तथाकृता इति हेतुगर्भविशेषणं हिशब्देन योग्यता विशेषं कथयति ॥ ४८ ॥

"विष्णुमाया हरेरिच्छा बंधशक्तिश्च तद्वशा । सर्वत्रगा हरेरिच्छा बन्धशक्तिर्विवर्जिता" इति वचनात् भवान् सर्वज्ञत्वेन बंधशक्तिरूपर्शाभावात्तेष्वेको न स्यात् अतोऽस्मिन्नज्ञानिजनेऽनुग्रहं कर्तुमर्हसीत्याह भवान्हीति हि शब्दो हेत्वर्थः तया वन्धकशक्त्या हतात्मसु नष्टबुद्धिगुणेषु अत एवानुकर्मचेतःसु हिंसालक्षणकर्मानुविष्टचित्तेषु दक्षादिष्विति शेषः अस्पृष्टमतिः ॥ ४९ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

स्वान्तर्यामिहरिप्रसादेन च प्रसादाभिमुखं रुद्रम् प्रत्येतादृशोऽनुग्रहः कार्य इति वक्ति कुर्वध्वरस्येति हतस्य त्वया कृतांतरायेणेति शेषः अत एवासमाप्तस्याकृताऽवभृथस्नानादिनेति शेषः मनोर्दक्षस्य कोऽयमध्वर इति तत्राह न यत्रेति येन त्वया मखो नि न्यग्भावेन नीचत्वेन नीयते तस्य भागिनो यज्ञभागार्हस्य तव कुत्सिता स्पर्धा एषामस्तीति कुस्पर्धिन ऋत्विजो देवा यत्र यज्ञे भागं विहितहविर्भागं न ददुस्तस्याध्वरस्य । यद्वा येन यज्ञभागयोग्येन त्वयामखो निकामं नीयते तस्य भागिनो देवा भागम् यत्र न ददुस्तस्येति "निन्यग्भावनिकामयो"रिति यादवः ॥ ५० ॥

यजमानसद्भावे यागोद्धारः सम्भवति तस्य मया हतत्वात् कथं नष्टाक्षावयवादीनाम् स्वभागनिरीक्षणाम् कथं चायुधाश्मभिर्भग्नगात्राणामृत्विजाम् होमाद्यंगत्वमित्याशंक्य त्वदनुग्रहसुधासमुद्रमग्नाः सर्वसम्पन्ना भवन्त्वित्याह जीवतादित्यादिना ५१

अनातुरमारोग्यम् ॥ ५२ ॥

सर्वनिरवद्यम् स्यात् यदि मम भागोऽस्ति चेदित्याशंक्य तत्रायमनुशोको माभूदित्याह एष त इति उच्छिष्टः स्विष्टकृद्भागः यदग्नये स्विष्टकृते समवद्यति भागधेयेनैव तद्रुद्रं समर्द्धयति सकृत्सकृदवद्यति सकृदिव हि रुद्र उत्तरार्धादवद्यत्येषा वैरुद्रस्य दिक् स्वायामेव दिशि रुद्रं निरवद्यते इति श्रुतेः ॥ ५३ ॥

इति श्री भागवते महापुराणे चतुर्थस्कन्धे
श्रीविजयध्वजतीर्थ कृत पदरत्नावल्यां
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

तत्र शैवमतमाश्रित्य सर्वपरत्वेन स्तौति जाने इति । शैवाः खलु भगवत्प्रकृतिपुरुषान् सदाशिवरूपत्वेन मन्यन्ते ततश्चायमर्थः । त्वां विश्वस्य प्राकृताऽप्राकृतलक्षणस्य सर्वस्यैवेशं सदाशिवरूपं जाने । यतो जगतः प्राकृतप्रपञ्चस्य योनिबीजयोः परं जाने । योनि बीजे एव क्रमेण व्यनक्ति शक्तेः शिवस्य चेति तत्र केचिन्निर्भेदं ब्रह्म परमकारणत्वेन यन्मन्यन्ते तच्च त्वामेव जाने इत्याह यत्तदिति ॥ ४२ ॥

शिवशक्त्योरिति शिवशक्ती निमित्तीकृत्येत्यर्थः ॥ ४३ ॥

त्वमित्यस्य टीकायां निबद्धा इत्यत्र सूत्रेण तन्तुना निर्णीता इति सूत्रेण शास्त्रविशेषरूपेणेति ज्ञेयम् ॥ ४४ ॥

विपर्ययः केनेत्यत्र महापराधमहदुपासनस्वभावेनेति तत्त्वं ज्ञेयं वक्ष्यते च कुर्वध्वरस्येत्यादिना तदेवत्यत्र तु-देवेति पुण्यारण्यपाठान्तरम् ॥ ४५ ॥

न वै इति । आत्मनि परमात्मनि त्वयि अनन्यत्वेन पश्यताम् ॥४६॥

भवद्विधो भवानिति विशेषः ततोनिरूपन इत्येवार्थः । यद्वा भवद्विधोऽपि किमुत भवानित्यर्थः ॥ ४७ ॥

ननु पुष्करनाभ एवेश्वरः अहं तु तद्भक्त एव तत्राह यस्मिन्निति द्वाभ्यां साधारणा अपि, साधवः भगवत्पक्षे तेषां पृथग् दृशामेव दैवबलादिति ज्ञेयम् ॥ ४८ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

तु शब्दस्तेभ्यो वैशिष्ट्यबोधकः अर्हसि त्वमिति शेषः ॥४६॥ कुयाजिन इति क्वचित् कुस्पर्द्धिन इति चित्सुखः ॥५०—५३॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

यद्यपि त्वं मां प्रणमसि तदपि परमेश्वरैक्यात्तवैश्वर्यमधिकमिति शैवमतमाश्रित्याह जाने इति शैवाः खलु भगवत्प्रकृति पुरुषान् सदाशिवरूपत्वेन मन्यन्ते ततश्चायमर्थः त्वां विश्वस्य प्राकृताऽप्राकृतलक्षणस्य सर्वस्येशं सदाशिवरूपं जाने यतो जगतः प्राकृतप्रपञ्चस्य योनिबीजयो परं जाने योनिबीजे एव क्रमेण व्यनाक्ति शक्तेः शिवस्य चेति यत्तत्प्रसिद्धं निरन्तरं निर्भेदं ब्रह्म तदपि त्वामेव जाने ॥ ४२ ॥

शिवशक्त्योः पुरुषप्रकृत्योः स्वरूपयोः स्वांशयोरिति पाठे शिवस्य स्वांशत्वात् शक्तेस्तच्छायारूपत्वात् तत्समानरूपयोः तृतीयार्थे षष्ठी ताभ्यां विश्वं सृजसि ॥ ४३ ॥

हे धर्मार्थदुघ ! अभिपत्तये धर्मरूपार्थस्य प्रवर्त्तनाय दक्षेण दक्षरूपसूत्रेण अध्वररूपं वस्त्रं तन्तुवाय इव त्वं ससर्ज्जिथ तथा लोके सेतवो वर्णाश्रमधर्ममर्यादाश्च त्वयैवावासिता निर्णीता अतो दक्षवधे सति सम्प्रति धर्मप्रवर्त्तकस्याभावात् धर्मस्य लोपे लोकस्य दुर्गतिः स्यादिति भावः ॥ ४४ ॥

कर्मफलदातापि त्वमेवेत्याह त्वमिति हे मंगल ! मंगलानां पुण्यानां कर्त्तुः स्वः स्वर्गलोकं तनुषे परं मोक्षं वा अमंगलानां पापानां कर्त्तुस्तमिस्रं नरकं तदेव तत्रैव केन हेतुना कस्यचिद्विपर्ययो भवेत् पुण्यकर्त्तुरपि दक्षादेस्तमिस्रं पापकर्त्तुरप्यजामिलादेरपवर्ग इति त्वं पृच्छ्यसे इति भावः ॥ ४५ ॥

मम रोषप्रसादावेव तत्र हेतू इति चेन्मैवं तव प्रसाद एव स भवेत्तु रोष इति कैमुत्यन्यायेनाह न वा इति तव त्वां आत्मनि परमात्मनि त्वयि अपृथग् अनन्यत्वेन यद्वा आत्मनि स्वास्मिन्नपृथग् अभेदेन स्वास्मिन् सुखदुःखे इव भूतान्यपि सुखदुःखवन्ति दिदृक्षतां द्रष्टुमिच्छतामेव किमुत पश्यतां सतां सतः रोषोऽभिभवेत् यथा पशुम् अभिभवेदिति पशव एव रोषवन्तो भवन्ति नतु सन्तःप्रायेणेति जयविजयविषयकरोषवतां सनकादीनामिव दक्षविषयस्तव रोष आत्मारामस्याप्यभूदिति सूचयति ॥ ४६ ॥

नन्वसतसु रोषहेतुकसमुचितशास्तिप्रदानेन विना कृतानामागसां फलाऽप्राप्त्या सर्व एवासन्तोभवेयुस्तत्राह पृथग्धिय इति परोदयेन परसम्पद्दृष्ट्या अरुन्तुदा मर्मभेत्तारः दैवेनैव वधो येषामिति स्वापराधेनैव ते दक्षादयो मरिष्यन्ति तन्मावधीरिति युष्मत्कोपविषयीभूतत्वे तेषां कदाप्युद्धारो न भावीति भावः ॥ ४७ ॥

सर्वसहनशीला अपि साधवः परदुःखासहिष्णवः स्युरतस्ते स्वापराधिनोऽपि दयन्त एवेत्याह यस्मिन् देशे यदा वा काले स्पृष्टधियः अभिभूतबुद्धयः कुर्वंति दुष्कृतमिति शेषः तत्र तेषु अनुकम्पया कृपालुत्वस्वभावेन कृपामेव कुर्वंति नतु तेषु दैवेनैव बलात्कृते दुःखदानार्थं बलात्कारे कृते सति क्रमं पराक्रमम् ॥ ४८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

तवतु साधुचूडामणेः कोपो नैव सम्भवेदित्याह भवांस्त्विति अस्पृष्टमतिः अतः समस्तदृक् तेषामपराधफलं महादुःखं पश्यत्स्येवेति भावः तेष्वनुग्रहप्रकारमाह तया हतात्मास्विति अनुकर्मचेतःस्विति तस्मिन्निति एते खलु मायया हतबुद्धयः कथं विवेकं लभन्तां नानाकर्म ग्रस्तमनसः कथं वा साधून् पश्यंत्वित्यत एतेषु मम दैर्ध्यं वोचितेति ॥ ४९ ॥

तर्हि सम्प्रति किं कर्त्तव्यं तद्ब्रूहीत्यत आह कुर्धीति त्वया हतस्य अतएवासमाप्तस्य प्रजापतेरध्वरस्य हे मनो ! यत्राध्वरे भागिनोऽपि तव भागं न ददुः येन फलदात्रा त्वया मखो निनीयते फलं प्राप्यते ॥ ५० ॥ ५१ ॥

हे मन्यो ! अनातुरमारोग्यमस्तु ॥ ५२ ॥

एष ते भागोऽस्तु यत् उच्छिष्टः उत्कृष्टः शिष्टोऽवशिष्टोऽर्थः तेन ते भागेन यज्ञः कल्पतां सम्पद्यताम् ॥ ५३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठोऽध्यायश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

जाने इति विश्वस्येशं त्वामहं जाने वेद्मि ननुविश्वस्रष्टारमात्मानं किं तथा जानासि नेत्याह परं मत्तोऽन्यं किं शिवं नेत्याहशक्तेःशिवस्य च परम् किं प्रकृतिप्रेरकम् इत्यत्राह जगतः सर्व प्रपंचस्य योनिबीजयोः प्रकृतितत्प्रेरकयोः परं मूलमित्यर्थः प्रकृतिस्तत्प्रेरकः पुरुषश्च तयोर्मूलभूतोभगवांश्च त्वत्तः पुमान् समधिगम्ययायास्य वीर्यं धत्ते महान्तमित्यादौ प्रसिद्धः कस्ताह सईश्वर इत्यत्राह यद्ब्रह्म सर्ववेदैकवेद्यं तत् सर्वे वेदा यत्पदमामनन्ति सर्वे वेदायत्रैकी भवन्ति। वेदैश्च सर्वैरहमेव वेद्य इत्यादिशास्त्रप्रसिद्धम् निरन्तरमिति योमां पश्यति सर्वत्र सर्वं च मयि पश्यति। सर्वस्य चाहं हृदि सन्निविष्टः। इत्यादिश्रीमुखवचनात् सर्वगम् ॥ ४२ ॥

ननु सत्या स्वपितृयज्ञे देहत्यागः कृतस्ततः क्रुद्धेन शिवेन दक्षयज्ञनाशः कृतस्तं शिवं विहाय किं मां स्तौषीत्यत्रत्वमेव सर्वविश्वसृष्टिसंहारादिहेतुः शिवशक्तिद्वारादक्षयज्ञविनाशादिहेतुः दक्षद्वारा यज्ञप्रवृत्तिहेतुः भुक्तिमुक्तिहेतुश्चेत्याह त्वमेवेति त्रिभिः श्लोकैः हे भगवन् ! त्वमेव विश्वं सृजसि पासि अत्सि यथा ऊर्णापटः ऊर्णनाभिः "यथोर्णनाभिः सृजते गृह्णतेच„ इति श्रुतेः एवं सति स्वरूपयोः स्वस्मात्सर्वकारणकारणाद्रूपं ययोस्तयोः स्वांशयोः शिवशक्त्योः भवभवान्योः संबंधि एतत् प्रस्तुतं दक्षयज्ञविनाशादि त्वमेव करोषीति शेषः अतः स्वांशभूतशिवद्वारा यज्ञस्योद्धरणं कुरु इति भावः ॥४३॥

धर्मार्थौदोग्धीति धर्मार्थदुघा त्रयी तस्या अभिपत्तये रक्षार्थं दक्षेण सूत्रेण निमित्तेन अध्वरं ससर्ज्जिथ सृष्टवानसि अतस्त्वमेव शिवद्वारा दक्षशिरः संयोजनं दक्षेण अध्वरोद्धारं च कुर्वीति भावः किंच वर्णाश्रमधर्ममर्य्यादारूपाः सेतवस्त्वयैवाऽवसिताः निर्धारिताः यान् ब्राह्मणाः श्रद्दधतेऽनुतिष्ठंति अतः शिवद्वारा श्मश्रुयोजनादिना भृग्वादिब्राह्मणस्वास्थ्यं कुर्विंतिभावः ॥ ४४ ॥

किंच दक्षेण महति पुरुषे शिवे कन्यादानमात्रेण शिष्यबुद्धिकृता भवान्या पत्याज्ञालोपः कृतः भवेन प्रवृत्तिकर्मपरंपु प्रविदयापि लोकसंग्रहार्थं प्रत्युत्थानादिना श्वशुरः पितातुल्यो नाहतः अतः शिरश्छेददेहत्यागप्रियावियोगादिततःकर्मफलदस्त्वमित्याशयेनस्वौति त्वामिति के परे ब्रह्मणि सर्वकर्मफलदे त्वयि सति कोब्रह्मणि

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

समीरात्मयमदक्षेषु भास्करे,, इति कोशात् कस्य चिदपिकर्त्तुर्विपर्ययो नैवभवति शुभाशुभकर्मवैपरीत्यं नैव भवति"अवश्यमेव भोक्तव्यं कृतं कर्मशुभाशुभ"मितिवाक्यात् यत्तु"तत्र केन हेतुना तदेव तस्मिन्नेवकस्य चिद्विपर्य्ययो भवति,, इतिव्याख्यानंतदयुक्तम् उक्तवाक्यविरोधात् "नहिकल्याणकृत् कश्चिद्दुर्गतिं तात!गच्छति,,इति श्रीमुखवचनविरोधाच्च कचित्प्रसिद्धाशुभकारिणः शुभफललाभः केनापि शुभकर्मणैव प्रसिद्धशुभकारिणः अशुभफललाभः केनाप्यशुभकर्मणैवेति विद्भिः सिद्धान्तितत्वाच्च तत्तस्मात् हे मंगल ! मंगलानां शुभानां कर्तुः सकामस्य निष्कामस्य वा स्वः स्वर्गं परं मोक्षं वा तनुषे यथेति घाचकलुप्तोपमालंकारः तथा अमंगलानामशुभानां कर्मणां कर्त्तुरुल्वणं घोरं शिरश्छेददेहत्यागादिरूपं फलम् अत्यंतामंगलकर्त्तुश्च तामिस्रं पुनः पुनर्जन्ममरणलक्षणं तमिस्रं संसारं तनुष इत्यन्वयः ॥४५॥

एवं शिवान्तर्यामिणं नियोजकं भगवन्तं स्तुत्वाऽथ त्वमध्वरस्योद्धरणं कुर्वित्यादि वक्तुं नियोज्यभूतं शिवं स्तौति नवैसतामिति चतुर्भिः। भूतेषु अभिपश्यतामात्मानामिति शेषः भूतानि च आत्मनि जगत्कारणभूते जिज्ञास्ये "आत्मा वा अरे द्रष्टव्य,, इत्यादि श्रुतिप्रसिद्धे दिदृक्षतां कथं दिदृक्षताम् अपृथक्कारणानन्यतया कार्यकारणयोर्भेदभेदसंबन्धादेवं भूतानां त्वचरणार्पितात्मनां क्रोधानाभिभवेत् यदा तदा तव नाभिभवेदिति किं पुनर्वक्तव्यम् द्वितीयार्थे षष्ठी एवं सर्वस्य कारणानन्यत्वदर्शित्वेन त्वदीयान् त्वां च क्रोधोनाभिभवेत् तमोगुणाधिष्ठातृत्वेन प्रयोजनार्थं क्रोधाभिभूतत्वविडम्बनमपि युक्तमेवेति सूचयतं प्रायःशब्देन यथा पशुं सर्वस्य कारणानन्यत्वमजानन्तं केवलभेददर्शिनमित्यर्थः ॥ ४६ ॥

अतएव तत्त्वज्ञः अतत्त्वज्ञान् पशून् प्रतिक्रोधं माकुर्य्यादित्याह पृथग्धियइति । कर्मसु दृष्टयेषाम् दुष्ट आशयो येषाम् अनिशं निरन्तरं परेषामुदयेनोत्कर्षेणार्पिता हृदि रुग् येषाम् तान् अरुन्तुदः मर्मच्छेतॄन् दैवेनैव बधो येषां तान् पृथग्दृशः अतत्त्वज्ञान् दक्षादिभान् भवद्विधस्तत्त्वज्ञः माव धीत् मा हन्यात् ॥ ४७ ॥

पुष्करनाभस्य विष्णोर्मायया हि स्पृष्टधियः दूषितबुद्धयः यस्मिन् काले यदा यस्मिन् देशे पृथग्दृशोभवन्ति साधुषु इतरबुद्ध्याऽपराधं कुर्वन्तीत्यर्थः तत्र तस्मिन्नेव काले तस्मिन्नेव देशे साधवः अस्मद्दैवबलात्तैः कृतेऽपराधे तेषां को दोषइति मत्वानुकंपया कृपां कुर्वन्ति न तु क्रमं पराक्रमम् ॥ ४८ ॥

परमस्य विष्णोर्मायया भवांस्तु अस्पृष्टमतिः अदूषितबुद्धिः अतएव समस्तदृक् अखंडितदृष्टिः तया मायया हृतात्मसु नष्टमतिषु अतएव अनुकर्मचतःसु कर्मानुगताचित्तेषु इहापराधे अनुग्रहमेव कर्तुमर्हसि ॥ ४९ ॥

हेमन्यो ! तव भागिनः भागार्हस्यापि कुयज्विनः अदीर्घदर्शिनो याज्ञिकाःयत्राध्वरे भागं न ददुः तेन तेनापराधेन त्वया हतस्यातएवासमाप्तस्याध्वरस्योद्धरणं कुरु येनोद्धरणेन मन्योर्निर्नीयते सफलीक्रियते ॥ ५० ॥

पूर्ववत् भवतु ॥ ५१ ॥

आयुर्धैः अश्माभिश्च भग्नगात्राणां हे मन्यो ! अनातुरं स्वास्थ्यम् ॥ ५२ ॥

हे रुद्र ! एष ते भागोऽस्तु कःयावदर्थे यद्दित्यव्ययम् अध्वरस्य यद्-



श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

उच्छिष्टः अध्वरे कृते यावानवशिष्टोऽर्थस्तावान् हे यज्ञहन् ! ते भागेन अद्याधुना यज्ञः कल्पतां संपाद्यताम् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपे
षष्ठाध्यायार्थप्रकाशः ॥६॥

---

भाषाटीका ।

ब्रह्मोवाच आपको मैं जगत् का ईश्वर जानता हूं तथा जगत् के माता पिता रूप प्रकृति पुरुष से परे जो वह निरंतर ब्रह्म स्वरूप हो तिन आपको मै जानता हूं ॥ ४२ ॥

हे भगवन् ! आपही समान रूप वाले प्रकृति पुरुष के भीतर स्थित होकर इस जगत् को मकरी कीट के माफक क्रीडा करते हुये उत्पन्न करते हो रक्षा करते हो संहार करते हो ॥ ४३ ॥

आपही ने धर्म प्रवर्तक वेदों के रक्षा के लिये दक्षको निमित्त करके यज्ञ की प्रवृत्ति की आपही ने जगत् मे धर्म के सेतुबांधे हैं जिनकी श्रद्धा व्रतधारी ब्राह्मण लोग करते हैं ॥ ४४ ॥

हे मंगल मूर्ते ! आपही मंगल कर्म करने वाले पुरुषों को स्वर्ग अथवा परम पद देतेहो अमंगल कर्म करने वालों को घोर नरक देतेहो उसी कर्म में कभी किसी को विपरीत फल भी होजाता है जैसे दक्ष को यज्ञ से दुःखहुआ ॥ ४५ ॥

आपके चरणों मे चित्त लगाने वाले तथा सब भूतों मे आपके स्वरूप को देखने वाले तथा सब भूतों को अपने आत्मा ने अभेद दृष्टि से देखने वाले सत्पुरुषों को पशुओं के तुल्य क्रोध नहीं वश करता है ॥ ४६ ॥

पृथक् बुद्धिवाले दुष्ट अंतः करण वाले पराइ संपत्ति से निरंतर दुःख पाने वाले पुरुष दूसरे पुरुषों को परुष वचनों से मर्म मे भेदन करते हैं वे स्वयं हि दैव के मारे हैं उनको आप सरीके महात्मा नहीं मारते हैं ॥ ४७ ॥

जिस काल मे जिस देश में श्री नारायण की दुस्तरमाया के संबंध होनेसे भेद बुद्धियाले पुरुष महात्मा ओं का अपराध करते हैं तब तहाँ पर महात्मा जन कृपा करकेपरमेश्वर की माया समझ कर समर्थ होने पर भी उनके उपर पराक्रम नहीं करते हैं ॥ ४८ ॥

हे प्रभो ! आपतो परमेश्वर की दुस्तर माया से रहित चित्तहो इसी से सम दृष्टिहो तब उस माया से मोहित कर्म दृष्टि वाले स्वयं मृत दक्षादि कों पर कृपाही करने को योग्य हो ॥ ४९ ॥

हे प्रभो ? जिस यज्ञ मे यज्ञ के फल दाता आपके भाग को खोटे यज्ञ कर्ताओं ने नहीं दिया है नाश होने से असमाप्त उस दक्षके यज्ञ का आप उद्धार कीजिये ॥ ५० ॥

यह यज्ञ का यजमान दक्षप्रजापति जीवै, भग देवता नेत्रों को प्राप्त होवै, भृगु के मोंछ डाढी ऊगैं, पूषा देवता के पहिले से दांत हो जावैं ॥ ५१ ॥

भाषाटीका

हे क्रोध मूर्ते ! रुद्रानुचरों के आयुध तथा शिला प्रहारों से भग्नगात्र देवताओं का ऋत्विजों का आपके अनुग्रह होने से जल्दी कल्याण होवै ॥ ५२ ॥

हे यज्ञ नाशक रुद्रजी ! यज्ञ का उच्छिष्ट यह आपका भाग होवै, आपके भाग देने से यह यज्ञ पूर्णता को प्राप्त होवै ॥ ५३ ॥

भाषाटीका

इति श्री भागवत चतुर्थ स्कंधका षष्ठ अध्याय समाप्त हुआ ॥ ६ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे

षष्ठोऽध्यायः ॥ ६ ॥

—:*:—

## सप्तमोऽध्यायः ।

———*———

### मैत्रेय उवाच ।

इत्यजेनाऽनुनीतेन भवेन परितुष्यता ।
अभ्यधायि महाबाहो ! प्रहस्य श्रूयतामिति ॥ १ ॥

श्रीमहादेव उवाच ।

नाघं प्रजेश ! (१) बालानां वर्णये नाऽनुचिन्तये ।
देवमायाभिभूतानां दण्डस्तत्र धृतो मया ॥ २ ॥
प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः ।
मित्रस्य चक्षुषेक्षेत (२) भागं स्वं बर्हिषो भगः ॥ ३ ॥
पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक् ।
देवाः प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः ॥ ४ ॥
बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः ।
भवन्त्वध्वर्यवश्चाऽन्ये वस्तश्मश्रुर्भृगुर्भवेत् ॥ ५ ॥

मैत्रेय उवाच ।

तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितम् ।
परितुष्टात्मभिस्तात ! साधु साध्वित्यथाऽब्रुवन् ॥ ६ ॥
ततो मीढ्वांसमामन्त्र्य शुनासीराः सहर्षिभिः ।
भूयस्तद्देवयजनं समीढ्वद्वेधसो ययुः ॥ ७ ॥
विधाय कार्त्स्न्येन च तद्यदाह ( ३ ) भगवान् भवः ।
सन्दधुः कस्य कायेन सवनीयपशोः शिरः ॥ ८ ॥
सन्धीयमाने शिरसि दक्षो रुद्राऽभिवीक्षितः ।
सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडम् ॥ ९ ॥
तदा वृषध्वजद्वेषकलिलात्मा प्रजापतिः ।
शिवावलोकादभवच्छरद्ध्रद इवाऽमलः ॥ १० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

सप्तमे विष्णुरुद्भूतः स्तुतोदक्षभवादिभिः ।
यज्ञं प्रवर्त्तयामास दक्षयाति निरूप्यते ॥ १ ॥

अजेन योऽनुनीतः प्रार्थितो भवस्तेनाभिहितम् हे महाबाहो ! विदुर ! ॥ १ ॥

श्रीधरस्वामि कृत भावार्थदीपिका ।

अघमपराधम् स्वापराधमपहृत्याऽनुगृह्णाति दग्धं शीर्षं यस्य तस्य प्रजापतेरजस्य मुखं यस्मिंस्तत्तथा भूतं शिरोऽस्तु बर्हिषः सम्बन्धिनं भागम् मित्रनाम्नो देवस्य ॥ ३ ॥

प्रकर्षेण कृतानि सम्प्राप्तान्यंगानि येषां ते भवन्तु उच्छेषणं यज्ञाऽवशिष्टम् ॥ ४ ॥

---

पा० ( १ ) परेश ( २ ) चक्षुषेक्षेत ( ३ ) तद्यथाह इति श्री धीर० ॥

### श्रीधरस्वामिकृत भावार्थदीपिका ।

येषां स्वंगानि नष्टानि तेऽश्विनोर्बाहुभ्यां कृतबाहवः पूष्णो-हस्ताभ्यां कृतहस्ताश्च भवन्तु अध्वर्यवः अन्ये च ऋत्विजः बस्तस्य श्मश्रूणि यस्य ॥ ५ ॥

मीढुष्टमः शिवस्तेनोक्तम् परितुष्टैश्चित्तैः ॥ ६ ॥

मीढ्वांसं शिवं त्वयागत्य सर्वं कार्यमित्यामन्त्र्य संप्रार्थ्य शुना-सीरा देवाः सह मीढुषा वेधसा च वर्त्तमानाः समीढ्वद्वेधसः ॥ ७ ॥

कार्त्स्न्येन चक्रहस्तबाह्वादिसाधारण्यं विधाय ॥ ८—९ ॥

पूर्वं वृषध्वजद्वेषेण कलिलः कलुषीकृत आत्मा यस्य सः तदा शरत्कालीनोह्रद इवाऽमलोऽभवत् ॥ १० ॥ ११ ॥ १२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्यादीपिका टिप्पणी ।

दक्षेण द्वारेण अहो बालानां वृथैव दण्डः कृत इति प्रहस्य श्रूयतामित्यभिहितम् ॥ १ ॥

पूर्वं श्रूयतामित्युक्तेऽपि महादेव उवाचेति सार्वत्रिकः पाठः दण्डो हितार्थं शिक्षा ॥ २ ॥ ३ ॥

केवलश्चेत्पिष्टभुग् अन्यसहितश्चेद्यजमानस्य दद्भिर्जक्षत्वित्यनु-ग्रहः ॥ ४ ॥

ये म उच्छेषणं ददुः मामनादृत्य स्वयं प्रथमं भुक्तत्वात् ये छिन्नाङ्गा बभूवुस्ते संलग्नांगा भवन्त्वित्यर्थः ॥ ५ ॥

परितुष्टैश्चित्तैरुपलक्षिताः ॥ ६ ॥

मीढ्वांसं वरसेक्तारम् ॥ ७ ॥

हस्तबाह्वादिसाधारण्यं यज्ञे हस्तादियुक्ततया सर्वेषां तुल्यत्वं सवनीयपशोः छागस्य कायेन कबन्धेन सह संदधुः संयोजितवन्तः ॥ ८ ॥

अभिवीक्षितः अभितः कृपादृष्टिविषयीकृतः ॥ ९ ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

एवं ब्रह्मणा प्रसादितो भवो देवाननुगृह्णन् तद्विज्ञापितमङ्गीचकारेत्याह मैत्रेय इतीति । अजेन ब्रह्मणा अनुनीतेन प्रार्थितेन अतएव परितुष्यता भवेन हे महाबाहो ! विदुर ! प्रहस्य श्रूयतामित्यासंज्य अभ्यधायि अभ्यभाषि ॥ १ ॥

तदेवाह नाघमिति । हे परेश ! परेषामस्मदादीनामीश प्रभो ! भगवन्मायामोहितानां बालानां मूर्खाणाम् अघमपराधम् अधुना न वर्णये एवमेवमपचरितमिति न कथयामीत्यर्थः नानुचिन्तये न स्मरामि च किन्त्वपराधऽऽचरणदशायां मयादण्डः कृतः शिक्षामात्रं कृत-मित्यर्थः ॥ २ ॥

तदनुग्रहप्रकारमेवाह प्रजापतेरित्यादिभिस्त्रिभिः दग्धशीर्ष्णः दक्षिणाग्नौ दग्धं शिरो यस्य तस्य प्रजापतेर्दक्षस्य अजमुखं कंठादुपरि एव अजस्य मुखं यस्मिन्नतादृक्शिरो भवतु मित्रस्यतन्नाम्नोदेवस्य चक्षुषी नेत्रे भगेनां चक्षुर्वीक्षेतेत्यत्रार्षत्वादीदृदेदूद्विवचनमिति प्रगृह्यत्वाभावः मित्रस्य चक्षुर्भंगः पूर्वं कृत इत्यर्थसिद्धं चक्षुषेति तृतीया तत्रश्च पक्षो तदा मित्रस्य वाजमुखं शिरोभवतु अस्मिन् पक्षे मित्रस्य शिरोभङ्गः पूर्वमर्थसिद्धो ज्ञेयः भगो भगाख्योदेवः बर्हिषायज्ञस्य स्वीयं भाग चक्षुषा ईक्षेत पश्यतु भगस्य नेत्रे उत्पद्येयातामित्यर्थः अय-मेवार्थः साधु भगस्य नेत्रे भगवान् पातितस्य रुषेति पूर्वं भगस्यैव नेत्रभंगाभिधानात् ॥ ३ ॥

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

पूषा देवः यजमानसंबन्धि पिष्टं भुङ्क्ताइतितथा दाह्नैर्दंतैर्जक्षतु अथा तू पूष्णोदंता उत्पद्येरन्नित्यर्थः ये देवा मेमह्यमुच्छेषणं यज्ञावशिष्टं ददुः दत्तवन्तः ते सर्वे प्रकर्षेण कृतानि सम्यक्कृतानि सर्वाण्यंगानि येषां ते भवेयुरित्यर्थः निकृत्तसर्वांगाइति पाठे ये देवानितरांभिन्न सर्वावयवा ये च मह्यमुच्छेषणं ददुः दातुं मतिं कृतवन्तइत्यर्थः अनुग्रहात्पूर्वं उच्छेषणदानाभावात् तंसर्वे ॥ ४ ॥

अध्वर्यवऋत्विजश्च अश्विनोर्बाहुभ्यां कृतबाहवः उत्पादितबाहवः पूष्णोहस्ताभ्यां कृतहस्ताश्च भवन्त्वित्यन्वयः भृगुः बस्तश्मश्रुः बस्तस्य मेषस्य श्मश्रूणीव श्मश्रूणि यस्य ॥ ५ ॥

एवं रुद्रेणानुगृहीता देवाः किमकुर्वतेत्यत्राह मैत्रेयः तदेति मीढुष्टमोदितं मीढुष्टमः शिवतमोरुद्रस्तेनोदितं गदितं श्रुत्वा सर्वाणि भूतानि परितुष्टात्मभिः परितुष्टचित्तैः हे तात ! विदुर ! साधु-साध्वित्यूचुः ॥ ६ ॥

ततः मीढ्वांसं रुद्रं त्वया आगत्य सर्वं कार्यमित्यामन्त्र्य संप्रार्थ्य शुनाशीरा इन्द्रोपलक्षितादेवाऋभुभिःभृगुणाऽऽहूयमानदक्षिणाग्नि-प्रभवैःऋभ्वाख्यैर्देवैःसहसमीढ्वद्वेधसःमीढुषारुद्रेण वेधसाब्रह्मणा च सहिताः भूयः पुनस्तद्देवयजनं देवा इज्यन्तेऽस्मिन्निति देवयजनं यागदेशं ययुः जग्मुः ॥ ७ ॥

भगवान् भवोरुद्रःयथाह प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखंशिर इत्यादिना तथा कार्त्स्न्येन विधाय हस्तबाह्वादिकं विधाय सवनीयपशोरजस्य संबन्धिशिरः कस्य दक्षस्य कायेन शरीरेण संदधुः ॥ ८ ॥

सवनीयपशोः शिरसि सन्धीयमाने सति रुद्रेणाऽभिवीक्षितो दक्षः सुप्तइवोत्तस्थौउदतिष्ठत् अग्रतः पुरतोऽवस्थितं मृडं रुद्रं ददर्श च ॥ ९ ॥

पूर्वं वृषध्वजे रुद्रे द्वेषेण कलिलः कलुषीकृतः आत्मा यस्य स प्रजापतिर्दक्षः शिवावलोकात् शरत्कालीनहृदइवामलोऽभवत् ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

अत्र भगवज्ज्ञानोपचितं कर्म हरेः साक्षात्कारसाधनं भवतीति तात्पर्यतो निरूप्यते तत्र ब्रह्मोक्तमाकर्ण्य तुष्टेन रुद्रेणोच्यमानप्रति-वचनप्रकारं वक्ति इतीति । धर्मपरिपन्थिनो बाधत इति बाहुः महान्‌श्चासौ बाहुर्यस्य स तथा तस्य सम्बोधनं महाबाहो ! "अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च" अर्जि अर्जने दृशि प्रेक्षणे कमु कांतौ अम् रोगे पशि नाशने बाधृ लोडने एभ्योधातुभ्यः कुप्रत्ययो भवति एषां धातूनां यथा संख्यं तृजि पशि तुक् धुक् दीर्घं हकारश्चेत्येते आगमादेशाश्च भवन्ति ऋजुरवक्रः अन्तुपन्थो वा पशुर्मन्त्रहीनश्चतुष्पाच्च कमेस्तुगागमः कन्तुः कन्दर्पः अमेर्बुगागमः अम्बु जलं पंसि पंसेर्दीर्घः पांसु रजः बाधेर्हकारादेशः बाहुः प्राग्वत् गम ॥ १ ॥

किमभ्यधायीति तत्राह नाघमिति । हे प्रजेश ! सर्वजीवराड्युत्तम अघमपराधं न वर्णये अनेकत्वादप्रामकालत्वादिति शेषः तर्हि पश्चात्तापोऽस्ति किं नेत्याह नानुचिन्तय इति पश्चात्तापं न करोमीत्यर्थः पश्चात्तापाऽकरणे कारणमाह दण्ड इति । अपराधानुसारिदण्डाकरणे अनुतापः स्यात्तदनुसारिणी शिक्षा मया कृतेत्यर्थः ॥ २ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

पुत्रच्छात्रादिभिर्गुरुवाक्यं सबहुमानं ग्राह्यमिति भावं दर्शयन् वक्ति प्रजापतेरिति अजस्य छागस्य मुखं यस्य तत्तथोक्तं पूर्वशिरो ऽनुसन्धानाकरणे कारणं दग्धशीर्ष्ण इति स्वपौरुषजयस्तंभस्थापनायाज्ञजनाशिक्षणाय च भगादीनामप्यन्यावयवैरेव स्वनिर्वाहः स्यादिति भावेनाह मित्रस्येत्यादिना बर्हिषो यज्ञस्य ॥ ३ ॥

दद्भिर्दन्तैः तत्र देवानां विशेषानुग्रहं करोति देवा इति प्रकृतसर्वाङ्गाः पूर्वावस्थाप्राप्तसर्वावयवाः "उच्छेषणभागो वै रुद्र" इति श्रुतेः ये म उच्छेषणं ददुरिति विशेषानुग्रहे हेतुः ॥ ४ ॥

ऋत्विजां नैवमित्याह बाहुभ्यामित्यादि । अध्वर्यव ऋत्विजस्तेषां मध्ये केचिच्छिन्नबाहवः केचिच्छिन्नहस्तास्तेषु छिन्नबाहवोऽश्विनोर्बाहुभ्यां कृतबाहवः पूर्वबाहुप्रयोजना भवन्तु अन्ये च पूष्णो हस्ताभ्यां कृतहस्ता भवन्तु कूर्परस्थोपरिदेशो बाहुस्तदधो हस्तः देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिति श्रुतेः हसदानादनयोरिति ध तुः बस्तस्य श्मश्रूणि यस्य स बस्तश्मश्रुः ॥ ५ ॥

कोऽसावुत्तरकथाप्रसंग इति तत्राह तदेति । मिह सेचन इति धातोः प्रणतजनस्याभीष्टं वर्षन्तो मीढ्वांसस्तेषामतिशयेन मीढ्वान् मीढुष्टमस्तेन कथितम् अनेन तदानीन्तनत्वामोपलब्धमिति रहस्यं ज्ञायते ॥६॥

शुनाशीरा देवाः सहिता मीढ्वद्भ्यां रुद्रब्रह्मभ्यां ये तथोक्ताः ॥ ७ ॥

कस्य दक्षस्य सवनीयपशोर्यज्ञीयपशोः ॥ ८ ॥

शीर्ष्णा शिरसि ॥ ९ ॥

शिवस्याऽवनतपुंस्यनुग्रहसामर्थ्यं व्यनक्ति तदेति "अम्रं सलिलं दे व्योम्नि शरवं कोदण्ड आयुध" इति यादवः शरन्मेघवत् ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

महादेव उवाचेति न सार्वात्रकं दण्डः किन्तु तेषामेव हितार्थाय शिक्षा इत्यर्थः ॥ १—३ ॥

ये म उच्छेषणं यज्ञावशिष्टं ददुरिति मामनादृत्य स्वयं प्रथमं भुक्तत्वात् ये छिन्नाङ्गा बभूवुस्ते प्रकृतसर्वाङ्गा भवन्त्वित्यर्थः ॥४-१८॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

शम्भुं स्तुतवता विष्णुराविर्भूतः स तुष्टुवे ।
दक्षेण ऋत्विगाद्यैश्च यज्ञपूर्त्तिश्च सप्तमे ॥

अजेनाऽनुनीतो यो भवस्तेन ॥ १ ॥

हे प्रजेश ! परेशेति च पाठः बालानामज्ञानां दण्डस्तेषां हितार्थं शिक्षारूपः ॥ २ ॥

अजमुखमिति तस्य तत्तुल्यवाग्बुद्धित्वादिति भावः मित्रस्य चक्षुषेति स्वनेत्रसूचकत्वलक्षणदोषदुष्टत्वादिति भावः भागं स्वामिति तद्विभजनचक्षुषः स्वभोज्यवस्तुमात्रदर्शनतात्पर्य्यकत्वेन पारमार्थिकत्वाभावाद्वैयर्थ्यादिति भावः ॥ ३ ॥

पूषा केवलश्चेत् पिष्टभुग्भवतु । अन्यसहितश्चेत् यजमानस्य दद्भिरिति तस्य दन्तान् प्रकाश्य साधून् हसतः सर्वथैव दन्तधारणाऽनौचित्यादिति भावः उच्छेषणं उत्कृष्टं शेषं शिवभागं ये न ददुस्ते देवा भ्रस्तद्वैविणः दक्षस्य यज्ञे भुक्तभागत्वात् छिन्नाङ्गा अभूवन् सम्प्रति प्रकृतसर्वाङ्गा भवन्तु भञ्जिन्दनसमये दक्षपक्षस्याग्रहणादिति भावः ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

तन्मध्ये ये केचिदध्वर्यवो दक्षपक्षपातिनस्तत्समये बाहुहस्तचालनं चक्रुस्ते भग्नबाहुहस्ता अश्विनोर्बाहुभ्यां कृतबाहवः पूष्णो हस्ताभ्यां कृतहस्ता भवन्तु किञ्च भृगोः श्मश्रूणयुल्लुञ्चितानि मच्च दक्षस्य मुख्य एवाऽमात्योऽतो बस्तमुखस्य तस्य श्मश्रूणां प्राप्तोऽस्त्विति अभिप्रेत्याह बस्तश्मश्रुरिति ॥ ५ ॥

अतिशयेन मीढ्वान् कामवर्षी मीढुष्टमः शिवस्तस्योदितं वचनम् ॥ ६ ॥

मीढ्वांसं शिवमामन्त्र्य त्वया तत्रागत्य यज्ञः सम्पादनीय इति सम्प्रार्थ्य शुनासीरा देवाः मीढुषा वेधसा च सह वर्त्तमानाः ॥७॥

यदाह तद्विधायेति मित्रादयो भगादिभ्यश्चक्षुरादीनि दत्त्वेत्यर्थः कस्य दक्षस्य ॥ ८ ॥

कलिलात्मा कलुषीकृतात्मापि ॥ ९ ॥ १२ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

एवं पूर्वाध्यायोक्तप्रकारेण ब्रह्मणा शिवप्रेरकोभगवान् शिवश्च संस्तुतोयत्कृतवान् तद्वर्णयति सप्तमेनाध्यायेन इत्यजेनेति हेमहाबाहो ! विदुर ! इत्येवमजेनानुनीतोयोभवस्तेन प्रहस्य इतिवक्ष्यमाणं यदभ्यधायि अभिहितं तच्छ्रूयताम् ॥ १ ॥

हे प्रजेश ! बालानामतत्त्वज्ञानाम् अघमपराधम् ॥ २ ॥

दग्धं शीर्षं दक्षिणाग्नौशिरोयस्य तस्य प्रजापतेर्दक्षस्य अजस्य मुखंयस्मिन् तच्छिरोभवतु भगश्च बर्हिषः संबन्धिनं स्वं भागं मित्रस्य मित्रनाम्नोदेवस्य चक्षुषा ईक्षेत ॥ ३ ॥

पिष्टभुक् पूषा तु यजमानस्य यज्ञकर्त्तुर्दद्भिर्दन्तैः जक्षतु अद्यात् ये म उच्छेषणं यज्ञावशिष्टं ददुः ते देवाः प्रकृतानि पूर्ववत् वर्तमानानि सर्वाण्यङ्गानि येषां तथाभूता भवन्तु ॥ ४ ॥

अन्येऽध्वर्य्यवोविनष्टबाहुहस्ताः अश्विनोर्बाहुभ्यां कृतबाहवः पूष्णोहस्ताभ्यां कृतहस्ताभवन्तु बस्तस्य मेषस्य श्मश्रूण्येव श्मश्रूणि यस्य तथा भूतोभृगुर्भवेत् ॥ ५ ॥

मीढुष्टमेन शिवेनोदितम् परितुष्टैः आत्मभिश्चित्तैः ॥ ६ ॥

महर्षिभिः सह शुनासीरा देवाः मीढ्वांसं शिवम् भवताऽऽगत्य सर्वं समर्थनीयमित्यामन्त्र्य समीढ्वद्वेधसः शिवब्रह्मसहिताः ॥ ७ ॥

सवनीयस्य पशोरजस्य शिरः कस्य दक्षस्य कायेन सन्दधुरयोजयन् ॥ ८ ॥

मृडं रुद्रम् प्रजापतिर्दक्षः पूर्वं वृषध्वजद्वेषात्कलिलात्मा मलिनचित्तोऽपि तदा शरत्कालिकहृदइवामलोऽभवत् ॥ ९ ॥ १० ॥

---

भाषाटीका

मैत्रेय जी बोले इस प्रकार से ब्रह्मदेव के स्तुति करने से महादेवजी प्रसन्न होकर हंस कर बोले कि हे महा बाहु ब्रह्मा सुनो ॥ १ ॥

श्री महादेव जी बोले हे ब्रह्माजी ! परमात्मा की माया से मोहित बालबुद्धि वाले देवादिकों के अपराध को मैं कहता भी नहीं हूं स्मरण भी नहीं करता हूं केवल शिक्षा के अर्थ दण्ड मात्र मैंने उनको दिया है ॥ २ ॥

भवस्तवाय कृतधीर्नाऽशक्नोदनुरागतः ॥
औत्कण्ठ्याद्बाष्पकलया सम्परेतां सुतां स्मरन् ॥ ११ ॥
कृच्छ्रात्संस्तभ्य च मनः प्रेमविह्वलितः सुधीः ॥
शशंस निर्व्यलीकेन भावेनेशं प्रजापतिः ॥ १२ ॥

॥ दक्ष उवाच ॥

भूयाऽननुग्रह अहो भवता कृतोमे दण्डस्त्वया मयि भृतोयदपि प्रलब्धः ॥
न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु ॥ १३ ॥
विद्यातपोव्रतधरान्मुखतः स्म विप्रान् ब्रह्मात्मतत्त्वमवितुं प्रथमं त्वमस्राक् ॥
तद्ब्राह्मणान्परम! सर्वविपत्सु पासि पालः पशूनिव विभो ! प्रगृहीतदण्डः ॥ १४ ॥
योऽसौ मयाऽविदिततत्त्वदृशा सभायां क्षिप्तोदुरुक्तिविशिखैरगणय्य(१)तन्माम् ॥
अर्वाक् पतन्तमर्हत्तम ! निन्दयाऽपाद् दृष्ट्याऽऽर्द्रया स भगवान्स्वकृतेन तुष्येत् ॥ १५ ॥

मैत्रेय उवाच ॥

क्षमाप्यैवं समीढ्वांसं ब्रह्मणा चाऽनुमन्त्रितः ॥
कर्म सन्तानयामास(२) सोपाध्यायर्त्विगग्निभिः ॥ १६ ॥
वैष्णवं यज्ञसन्तत्यै त्रिकपालं द्विजोत्तमाः ॥
पुरोडाशं निरवपन्वीरसंसर्गशुद्धये ॥ १७ ॥

भाषाटीका

अज मस्तक वाले दक्ष प्रजापति का बकरे का मुख हो जायगा भगदेवता भी मित्र नामक देवता के नेत्र से अपने यज्ञ भाग को देखेगा ॥ ३ ॥

पूषा देवता दूसरे के साथ रहे तो यजमान के दांतों से भोजन करेगा अकेला होगा तो सत्तु इत्यादि पिठी का भोजन करेगा जिन देवतों ने मेरा भाग देना स्वीकार किया उनके सब अङ्ग पूर्ववत् हो जायंगे ॥ ४ ॥

जिन के भुजा कटे हैं उनके काम अश्विनी कुमार के भुजों से होंगे जिनके हाथ कटे हैं उन के काम पूषा के हाथों से होंगे इस प्रकार सब ऋत्विजों का कार्य होगा भृगु बकरे की डाढी मूंछ वाला होगा ॥ ५ ॥

मैत्रेय जी बोले कि हे तात विदुर ! तब तोंवरदातों में श्रेष्ठ महादेव जी के वचन को सुनकर सब प्राणि मात्र संतुष्ट हृदय से सुन्दर है ऐसे सराहना करनेलगे ॥ ६ ॥

तदनन्तर सब देवता महादेव जी से चलने की प्रार्थना करके ब्रह्मा महादेव ऋषि इन्हीं के सहित फिर भी उसी देवयाग स्थान को गये ॥ ७ ॥

फिर महादेव जी ने जो कहा था सो सब और कार्य करके याज्ञिक पशु के मस्तक को दक्ष के शरीर में जोड दिया ॥ ८ ॥

मस्तक के जुडते मात्र श्री शिव जी के दृष्टि पडने से शीघ्र ही सोते से उठा सरीखा उठकर दक्षप्रजापति ने आगे में महादेव जी का दर्शन किया ॥ ९ ॥

भाषाटीका ॥

तब महादेव जी के द्वेष से अशुद्ध चित्त वाला भी प्रजा पति दक्ष शिव जी के कृपा दृष्टि से शरत्काल के जलहृद के तुल्य निर्मल हो गया ॥ १० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

यदपि यद्यपि प्रलब्धः पराभूतोमया भवांस्तथापि त्वया दण्डो भृतः शिक्षा कृता नतूपेक्षितोऽस्मि युक्तमेवैतदित्याह ब्रह्मबन्धुषु च ब्राह्मणाऽऽभासेष्वपि तुभ्यं तव हरेश्चेति वां युवयोरवज्ञोपेक्षा नास्ति ॥ १३ ॥

तत्र हेतुमाह विद्येति । ब्रह्मा भूत्वा त्वमस्राग्स्राक्षीः किमर्थम् आत्मतत्त्वमवितुं यद्वा ब्रह्मवेदमात्मतत्त्वं चाऽवितुं सम्प्रदायप्रवर्त्तनेन ज्ञापयितुमित्यर्थः तत्तस्मात् हे परम ! उत्कृष्ट ! ॥ १४ ॥

अत्र च प्रत्युपकारोनास्तीत्याह योऽसाविति । अविदिततत्त्वदृशा अप्राप्ततत्त्वज्ञानेन तदगणय्य विस्मृत्य अर्हत्तमनिन्दयाऽर्वागधःपतन्तं मामपाद्रक्षितवान् स्वकृतेनैव परानुग्रहेणैव तुष्येत् न मया तत्प्रति कर्त्तुं शक्यमित्यर्थः ॥ १५ ॥

अनुमन्त्रितोऽनुज्ञातः उपाध्यायसहितैर्ऋत्विगादिभिः अनुवर्त्तयामास ॥ १६ ॥

वीराणां प्रमथादीनां संसर्गकृतदोषस्य शुद्धये निवृत्त्यर्थम् ॥ १७ ॥

पा० (१) विशिखैर्विगणय्य (२) कर्म्मानुवर्त्तयामास इति श्री वीर० ॥

अध्वर्युणाऽऽत्तहविषा यजमानो विशाम्पते ! ॥
धिया विशुद्धया दध्यौ तथा प्रादुरभूद्धरिः ॥ १८ ॥
तदा स्वप्रभया तेषां द्योतयन्त्या दिशो दश ॥
मुष्णंस्तेज उपानीतस्तार्क्ष्येण स्तोत्रवाजिना ॥ १९ ॥
श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलालकभ्रमरमण्डितकुण्डलास्यः ॥
कम्ब्वब्जचक्रशरचापगदाऽसिचर्मव्यग्रैर्हिरण्मयभुजैरिवकर्णिकारः ॥ २० ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

उपात्तहविषाऽध्वर्युणा सह विशुद्धया बुद्ध्या दध्यौ हे विशाम्पते ! विदुर ! ॥ १८ ॥

स्वया प्रभया तेषां तेजोमुष्णंस्तिरस्कुर्वन् उपानीतः समीपं प्रापितः स्तोत्रे बृहद्रथन्तरे वाजौ पक्षौ तद्वता "बृहद्रथन्तरे पक्षौ" इतिश्रुतेः ॥ १९ ॥

तमेवाऽनुवर्णयति श्याम इति द्वाभ्याम्। हिरण्मयवद्रशना यस्येति वक्ष्यं लक्ष्यते अर्कतुल्येन किरीटेन जुष्टः नीलालका एव भ्रमरास्तैर्मण्डितं कुण्डलयुक्तमास्यं यस्य कम्ब्वादिभिरायुधैर्भृत्यरक्षार्थं व्यग्रैर्हिरण्मयैर्भुजैः पुष्पितः कर्णिकार इव शोभमानः भुजानां हिरण्मयत्वं केयूरकङ्कणमुद्रिकाद्यलङ्कारैः ॥ २० ॥

---

श्रीराधारमणदास गोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी

स्तोतुं नाशक्नोत् ॥ ११ ॥

इदानीं भयसान्निध्यान्निर्व्यलीकेन किन्तु परत्र सव्यलीकत्वं व्यक्तीभविष्यतीति ज्ञेयम् ॥ १२ ॥.

शिक्षैव कृता न तूपेक्षितोऽस्मीति भूयाननुग्रहः कृत इति योज्यम् एतत् उपेक्षाराहित्यं युक्तमेव ॥ १३ ॥

तत्र ब्राह्मणाभासेष्वप्युपेक्षाऽभावे पूर्वार्थे भूत्वेत्यध्याहारेऽपि ब्रह्मणोऽप्रकृतत्वाद्यद्वेति तत्तस्माद्वेदादिप्रवर्त्तनेच्छया स्वयमेवसृष्टत्वात् ॥ १४ ॥

अत्र च अपराधेऽपि त्वत्कृतोपकारे योऽसौ परमदयालुत्वेन प्रसिद्धो भवान् अव्यवधानेन यच्छब्दसान्निध्ये तच्छब्दस्य प्रसिद्धिवाचकतया काव्यप्रकाशे निर्णीतत्वादिति परत्रापि ज्ञेयम् तत् तिरस्करणम् तत् अपराधिनोऽपि रक्षणम् आभासार्थं सङ्ग्रहीतुमित्यर्थं इत्युक्तम् ॥ १५ ॥ १६ ॥

यज्ञसन्तत्यै यज्ञाऽविच्छेदाय त्रिकपालं कपालत्रयसंस्कृतं वैष्णवं विष्णुदेवत्यं पुरोडाशं जुहुवुः ॥ १७ ॥

यथा हरिं दध्यौ तथा प्रादुरभूत् ॥ १८ ॥

तदेति त्रिकम्। बृहद्रथन्तरे तन्संज्ञकसामभागौ रशनाया हिरण्मयत्वनाहिरण्यसादृश्याऽसंभवान्मुख्यार्थबाधादू आधाराधेयसम्बन्धात् वक्ष्यं लक्ष्यते पीतत्वातिशयः प्रयोजनम् अलकानां भ्रमररूपकेण मुखस्याब्जत्वं कुण्डलयोश्च तत्प्रफुल्लत्वाय सूर्यत्वमारोप्यते कनकमयैरष्टभिर्भुजैरष्टदलस्थानीयैः पुष्पितः कर्णिकार' कचनार इति ख्यातः स इव शोभमानः कर्णिकाकर्णिकां राति ददातीति व्युत्पत्त्या पद्मं व्याचष्टे तच्चिन्त्यम् रूढिर्योगमपहरतीति न्यायात् ॥ १९ ॥ ॥ २०—२३ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ॥

भवस्तवाय रुद्रस्तुतये कृतधीः कृतमनाः सम्परेताम् परलोकं गतां सतीम् अनुरागतः स्मरन् तस्यामौत्कण्ठ्याद्वाष्पकलानेत्रजललेशस्तेन न ऽशक्नोत्स्तोतुं न समर्थोऽभूत् ॥ ११ ॥

प्रेम्णाविह्वलितः विह्वलचित्तत्वात् कृच्छ्रात् प्रयासेन मनःसंस्तभ्य स्ववशं कृत्वा सुधीः स्तुतिसमर्थबुद्धिमान् प्रजापतिर्दक्षः ईशं रुद्रं निर्व्यलीकेन प्रीतियुक्तेन भावेन अभिप्रायविशेषण शशंस तुष्टाव ॥ १२ ॥

यद्यपि यद्यपि प्रलब्धोमया परिभूतो भवान् तथापि त्वया दण्डो धृतः शिक्षा कृता न तूपेक्षितोऽस्मि युक्तमेवैतदित्याह ब्रह्मवन्धुषु ब्राह्मणाभासेष्वपि तुभ्यं तव हरेर्विष्णोश्चेति वां युवयोः अवज्ञा उपेक्षा नास्ति धृतव्रतेषु स्ववर्णाऽश्रमधर्मविशिष्टेषु ब्राह्मणेषु कुत एवाऽवज्ञा स्यात् न कुतः स्यादित्यर्थः हे भगवन् ! ॥ १३ ॥

तत्र हेतुं वदन् "शास्त्रदृष्ट्या तूपदेशो वामदेववद्,, इतिन्यायेन परमात्मदृष्ट्याऽस्तौति विद्येति ब्रह्मा त्वं चतुर्मुखरूपी त्वं प्रथमं कल्पादौ आत्मतत्त्वं जीवपरयाथात्म्यं स्वानुभवोपदेशाभ्याम् अवितुं रक्षितुं विद्याशास्त्रजन्यं ज्ञानं तपः शमदमादिकृच्छ्रचान्द्रायणादिव्रतं स्ववर्णाश्रमोचितधर्मः एतान् बिभ्रतीति तान् विप्रान् मुखतः अस्राक्षः सृष्टवानसि तत्तस्मात् हेपरम ! सर्वविपत्सु सर्वाऽऽपत्सु ब्राह्मणान् पशून् पालः पशुपालकइव प्रगृहीतदण्डः सापराधेषु कृतशिक्षः पासि रक्षसि ॥ १४ ॥

स्वस्याकिञ्चन्यं निवेदयन् क्षमापयति योऽसाविति अविदिततत्त्वदृशा अप्राप्ततत्त्वज्ञानेन मया विगणय्य तृणीकृत्य सभायां दुरुक्तय एव विशिखाः बाणाः तैः छिन्नस्ताडितोयोऽसौ भवान् अर्हत्तमस्य पूज्यस्य तव निन्दया अर्वाक्पतन्तम् अधोलोकान् गच्छन्तं मां दयार्द्रया दृष्ट्या अपात् विगणय्यविस्मृत्य - कृतःपराभम् अपात् अरक्षदिति वाऽन्वयः सभगवान् भवान् स्वकृतेनोपकारेण तुष्येत् न मया तत्प्रतिकर्त्तुं शक्यमित्यर्थः अनेन स्वस्याऽकिञ्चन्यं निवेदितम् ॥ १५ ॥

स दक्षः मीढुांसं रुद्रमेवं क्षमाप्य प्रसाद्य ब्रह्मणा चतुर्मुखेन चकाराद्रुद्रेण चानुमन्त्रितः अनुज्ञातः उपाध्याय सहितैः ऋत्विग्भिः कर्म अध्वरमनुवर्त्तयामास सम्प्रवर्तयामास सन्तारयामासेति पाठे सन्तारयामास समापयामास ॥ १६ ॥

कथं कृत्वा सन्तारितइत्यत्राह वैष्णवमिति यज्ञसन्तत्यै यज्ञविच्छेदपरिहाराय वीरसंसर्गशुद्धयेच वीणाणां प्रमथानां संसर्गकृतदोषशुद्धये वीरभद्रसंसर्गशुद्धये वा वैष्णवं विष्णुदेवताकं त्रिकपालं त्रिषु कपालेषु संस्कृतं पुरोडाशं द्विजोत्तमा ऋत्विजः निरवपन् ॥ १७ ॥

हे विशांपते ! विदुर ! आत्तहविषा उपात्तहविषा अध्वर्युणा सह यजमानो दक्षः विशुद्धया निर्मलया बुद्ध्या दध्यौ ध्यातवान् तदा तदैव हरिः प्रादुरभूत् आविर्बभूव तथेति पाठे यथा येनप्रकारेण दध्यौ

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ॥

तथा तं प्रकारमनतिक्रम्य प्रादुर्बभूवेत्यर्थः ॥ १८ ॥

दश दिशः द्योतयन्त्या आत्मनः प्रभया तेषां सदस्यानां तेजः मुष्णान् तिरस्कुर्वन् हरिः स्तोत्रे बृहद्रथन्तरे चाजौ पक्षौ यस्य तेन "बृहद्रथन्तरे पक्षा„विति श्रुतेः स्तोत्रदक्षेण वा तार्क्ष्येण गरुडेन उपनीतः समीपं प्रापितः ॥ १९ ॥

आविर्भूतं भगवन्तं वर्णयति श्यामइति द्वाभ्याम् । हिरण्मयद्रशना यस्येति वस्त्रं लक्ष्यते अर्कतुल्येन किरीटेन जुष्टं नीलालकाएव भ्रमरास्तैर्मण्डितकुण्डलमास्यं यस्य कम्बुः शङ्खः अब्जं कमलं चापः शार्ङ्गम् असिः खड्गः चर्मखेटः कम्बु प्रभृतिभिरायुधैः भृत्यरक्षणार्थं व्यग्रैः सत्वरैः हिरण्मयैः भुजैः केयूरादि भूषितैः भुजानां हिरण्मयत्वं केयूरादिभिर्भूषितत्वादवगन्तव्यं पुष्पितैः शाखाविशेषैः कर्णिकारइव शोभमानः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

बाह्यस्वच्छत्वमेव तस्य न त्वान्तरम् तल्लक्षणाभावादिति तत्राह भवस्तवायेति । औत्कंठ्यादुत्पन्नबाष्पकलया आन्तरनैर्मल्याभावे रुद्रस्तव एव न युक्तः स चानेन कर्तुं प्रयत्यते तस्मादान्तरी शुद्धिरप्यनुमीयत इति ॥ ११ ॥

कायिक एव प्रयत्नो न तु वाचिक इति शङ्का माभूदित्याह कृच्छ्रादिति भावेन स्नेहेन ॥ १२ ॥

दक्षस्य शिवे त्वान्तरो द्वेषो नास्तीति ज्ञापयितुं तदनुगुणगणैः स्तुतिं करोति भूयानिति त्वया प्रसह्यापि मदपराधानुगुणो दण्डोधृत इति यद्यस्मात्तस्माद्भूयाननुग्रहः कृतः अहो मे महतां पुंसामनुकम्पा शिरश्छेदादिलक्षणोऽनुग्रहो न स्यात्किन्तु अत्यन्तापकार एवायमामरणमेव लोके कोपदर्शनादतो न युक्त इत्याशङ्क्याऽपराधाधिक्ये नायं नियम इति भावेनाह न ब्रह्मेति । ब्रह्मबन्धुषु ब्राह्मणजातिमात्रेषु तुभ्यम् तव हरेश्च वां युवयोरवज्ञा नास्ति धृतव्रतेषु दीक्षितेषु कुत एवाऽवज्ञाऽतः कृताऽवज्ञत्वान्मयि दण्डकरणं युक्त मन्यथा युष्मदवज्ञानेनाऽनुत्थानतमः प्राप्तिः स्यादिति ॥ १३ ॥

अवज्ञाभावे निमित्तमाह विद्यातप इति ब्रह्माम्भताम् वेदरक्षकताम् ब्रह्मणः पूर्णगुणस्य हरेरात्मतां विशेषसन्निधानदेहतां वा प्रथयितुं प्रख्यापयितुम् अस्राक् अस्राक्षीः स्म यस्मात्तत्तस्मात्स्वसन्निधानपात्रभूतान् ब्राह्मणान्विपत्सु पासीत्यन्वयः ॥ १४ ॥

भवान् कृपासमुद्रोऽहं निर्घृणो दुष्ट इत्यत्र विवेकयुक्तिमाह योऽसाविति! न विदिता तत्त्वदृग्यस्य स तथा तेनाऽलब्धतत्त्वज्ञानेन दृदृक्षीत नास्माकं पुरुषायुषा शतेन त्वत्कृतप्रतिनिधिकरणं शक्यते अतः स्वकर्मणा स्वयमेव च तुष्टोभवेत्याह सभगवानिति ॥ १५ ॥

प्रकृतमनुसरति क्षमाप्येति । सन्तानयामास अनु संहितं चकार ॥ १६ ॥

दुष्टस्य यज्ञस्य प्रायश्चित्तमन्तरेण कथमनुसन्धानं घटत इति तत्राह वैष्णवमिति । वैष्णवं विष्णुर्देवत्यं त्रीणि कपालान्यासनानि यस्य सत्रिकपालस्तं वीरो वीरभद्रस्तस्य संसर्ग उपद्रवस्तस्य शुद्ध्यै परिहाराय निर्वापणं समन्त्रपचनम् ॥ १७ ॥

अध्वर्योः प्रतिपत्ति फलमाह अध्वर्युणेति । यजुःपतिर्मन्त्रदेवता ॥ १९ ॥

तदा प्रत्यक्षस्य हरेः कर्मविशेषं स्वरूपविशेषं चाह तदेति । तार्क्ष्येण गरुडेन स्तोत्रेण सामरूपेण निर्जितोवशीकृतः ॥ १९ ॥

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

हिरण्मयारशना काञ्ची यस्य स तथा हिरण्मयवत्पीतमम्बरं यस्य स तथेति वा अर्कवत् ज्वलता किरीटेन जुष्टः नीलाश्च ते अलकाश्चनीलालकाः त एव भ्रमराश्च कुण्डले च नीलालकभ्रमरकुण्डलानि एतैर्मण्डितमास्यं यस्य स तथा कम्ब्वादिभिर्व्यग्रैर्विवशैः शिक्षाभ्यासदर्शकैरेवाङ्गदादि भूषणायितत्वाद्धिरण्मयैरिवस्थितैर्भुजैर्लक्षितः पुष्पितः कर्णिकारो वृक्षविशेषः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

तदेति त्रिकम् ॥ १९ ॥

कम्ब्वब्जादिभिर्विशिष्टानि अग्राणि येषां तैः ॥ २०—२४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

यद्यपि विप्रलब्धस्तिरस्कृतः तदपि मयि दण्डोभृतः धृत आत्मीयत्व बुद्ध्या शिक्षा कृता नतूपेक्षितोऽस्मि युक्तमेवैतदित्याह ब्रह्मबन्धुषुच ब्राह्मणाभासेष्वपि तुभ्यं तव हरेश्चेति वाम् अवज्ञा नास्ति ॥ १३ ॥

तत्र हेतुः विद्येति । त्वमेव ब्रह्मा भूत्वा अस्राक् अस्राक्षीः । यद्वा ब्रह्म वेदमात्मनस्त्वञ्च रक्षितुं तत्तस्मात् हे परम! पशूनित्यस्माकं पशुत्वं तव पशुपतित्वम् ॥ १४ ॥

एतत् प्रत्युपकर्त्तुं न शक्नोमीत्याह । योऽसौ भवान् अविदिततत्त्वज्ञानेन तत्तिरस्कारणं विगणय्य वस्तु बुद्ध्या न गणयित्वा अर्वागधः पतन्तं कृपामृतेनार्द्रया दृष्ट्या अपात् । अन्यथा मम नरकादुद्धारोनाऽभविष्यदिति भावः । स्वकृतेन परानुग्रहेणैव तुष्येत् न तु तत्प्रत्युपकारेण किमपि मय्यस्तीति भावः ॥ १५ ॥

सोपाध्यायैः ऋत्विगादिभिरनुवर्त्तयामास ॥ १७ ॥

वैष्णवं विष्णुदेवताकं निरवपन् जुहुवुः । वीराणां प्रमथादीनां संसर्गकृतदोषशुद्ध्यर्थम् ॥ १७ ॥

आत्तहविषा अध्वर्य्युणा सह हे विशाम्पते! विदुर! तथा दध्यौ यथा प्रादुरभू दिति ॥ १८ ॥

तेषां ब्रह्मादीनां तेजोमुष्णान् हरिः उपानीतः समीपं प्रापितः स्तोत्रे बृहद्रथन्तरे वाजौ पक्षौ तद्वता "बृहद्रथन्तरे पक्षा„विति श्रुतेः ॥ १९ ॥

तमेवानुवर्णयति श्याम इति द्वाभ्याम् । हिरण्यरशनः कनककिङ्किणिकः । पीताम्बरस्यार्थतः प्राप्तत्वादनुक्तिः रशनाशब्देन वस्त्रं वा लक्षयितव्यम् अर्कतुल्योज्ज्वलकिरीटयुक्तः नीलालका एव भ्रमरास्तैर्मण्डितं कुण्डलयुक्तमास्यं यस्येति भ्रमरपदेनाऽऽस्यस्य पद्मत्वं ततश्च कुण्डलयोस्तत्प्रफुल्लीकरणार्थमागतयोः सूर्यत्वं कम्ब्वादिभिरायुधैर्भृत्यरक्षार्थं व्यग्रैर्हिरण्मयैः कनककेयूरकङ्कण मुद्रिकादिमत्वेन कनकमयैर्भुजैः पुष्पितः कर्णिकार इव शोभमानः । यद्वा कम्ब्वादीनि हस्ताग्रस्थितत्वाद्विशिष्टान्यग्राणि येषु तथा भूता हिरण्मया भुजा एव प्रथमातिशयोक्त्या अष्टैव दलानि तैः शोभमानः कर्णिकारः कमलराज इव मत्वर्थीयाशादिनाऽथवा कर्णिकां राति ददातीति व्युत्पत्त्या वा कर्णिकार शब्देनात्र पद्माभिधानम् ॥ २० ॥

---

वक्षस्यधिश्रितवधूर्वनमाल्युदारहासाऽवलोककलया रमयंश्च विश्वम् ।
पार्श्वभ्रमद्व्यजनचामरराजहंसः श्वेतातपत्रशशिनोपरिरज्यमानः ॥ २१ ॥
तमुपागतमालक्ष्य सर्वे सुरगणादयः ।
प्रणेमुः सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकाः ॥ २२ ॥

श्रीमच्छुकदेवकृत सिद्धांतप्रदीपः।

अनुरागतः सुतां स्मरन् औत्कण्ठ्याद्वाष्पकलयानाऽशक्नोत्॥११॥

मनः संस्तभ्य सुताविनाशस्मरणशोकान्निवार्य शशंस तुष्टाव ॥ १२ ॥

यद्यपि प्रलब्धः मयाभिभूतः तथापि भवता योमयिदण्डोधृतः स तु भूयान् अनुग्रहः कृतः त्वया शिक्षारूपेण दण्डेनाऽऽदृतोऽस्मीति भावः तुभ्यं तव हरेश्च वां युवयोः ब्रह्मबन्धुषु ब्राह्मणाभासेष्वपि अवज्ञा नास्ति धृतव्रतेषु सा कुतो न कुतोऽपीत्यर्थः ॥ १३ ॥

आत्मतत्त्वं वेदरूपं स्वकीयं तत्त्वम् आत्मपरमात्मयाथात्म्यं वा अवितुं ब्रह्मा मुखतः प्राधान्येन ब्राह्मणान् प्रथमम् असृजत् आसाक्षीत् तस्मात् ब्राह्मणान् हे परम ! सर्वविपत्सु त्वं पासीत्यन्वयः ॥ १४ ॥

योऽसौ मया न विदितं तत्त्वं यया तया दृशा सभायां दुरुक्तिविशिखैः दुर्वाक्शरैः क्षितोऽपि तदपराधमविगणय्य अर्हसमनिन्दया अर्वाग् अधस्तमसि पतन्तं माम् अपात् सः स्वकृतेनैव तुष्येत् नाहं प्रतिकर्त्तुं क्षम इति भावः ॥ १५ ॥

स दक्षः ब्रह्मणा अनुमन्त्रितः अनुज्ञातः उपाध्यायसहितैःऋत्विगादिभिः कर्मसन्तानयामास ॥ १६ ॥

ते द्विजोत्तमाः अन्नसन्तत्यै वीराणां प्रमथादीनां संसर्गकृतदोषस्य शुद्धये वैष्णवं विष्णुदेवताकं त्रिकपालं त्रिषु कपालेषु संस्कृतं पुरोडाशं निरवपन् ॥ १७ ॥

हे विशांपते ! विदुर ! आत्तहविषा अध्वर्युणा सह यजमानोदक्षः विशुद्धया भक्तिपूतया धिया दध्यौ हरिं ध्यातवान् तथा ध्यानानुसारेण हरिः प्रादुरभूत् ॥ १८ ॥

तदा दश दिशोविद्योतयन्त्या स्वप्रभया तेषां तेजोमुष्णन् बृहद्रथन्तरे पक्षाविति श्रुति प्रसिद्धौ स्तोत्रे बृहद्रथन्तरे वाजाऽपरपर्य्यायौपक्षौ तद्वता तार्क्ष्येण गरुडेन उपानीतः समीपं प्रापितः ॥ १९ ॥

कथंभूत इत्याकांक्षायां हरिं वर्णयति श्यामइति द्वाभ्याम् । श्यामः नीलमणिमयगिरिवर्णः हिरण्यवद्रशना वस्त्रं यस्य सः अर्कनिभेन किरीटेन जुष्टःनीलालकरूपैर्भ्रमरैर्मण्डितं मकरकुण्डलयुक्तमास्यं मुखपद्मं यस्य सः कम्ब्वादिभिर्व्यग्राणिविराजितान्यग्राणि येषां तैर्हिरण्मये ज्योतिर्मयैर्भुजैः पुष्पितः कर्णिकार इव ॥ २० ॥

---

भाषाटीका

तब दक्ष प्रजापति ने महादेवजी की स्तुति करने की इच्छा की परंतु मेरी हुई पुत्री के स्मरण होने से अनुराग के मारे अश्रुधारा के बहने से भारी उत्कंठा होने से बोल नही सके ॥ ११ ॥

फिर प्रजापति बड़े कष्ट से मन को रोककर शुद्ध बुद्धि होकर प्रेम के मारे विह्वल होकर निष्कपट भाव से महादेवजी की स्तुति करने लगे ॥ १२ ॥

दक्षजी बोले हे भगवन् ! यद्यपि मैंने आपकी अवज्ञा की तथापि आपने मेरे को जो दंड दिया सो मेरे पर बड़ी ही कृपा की क्योंकि श्रीहरि तथा आप इन दोनों का तो कुत्सित ब्राह्मणों पर भी उपेक्षा बुद्धि नहीं है तो हमसरी के व्रत धारियों पर क्यों उपेक्षा होगी ॥ १३ ॥

आपने सृष्टि काल में वेद तथा आत्म तत्त्व की रक्षा के निमित्त विद्या तप व्रत धारण करने वाले ब्राह्मणों को मुख से उत्पन्न किया है परम पूज्य ! तिसी हेतु से हे विभो ! जैसे पशुको चराने वाला दंड हाथ में लेकर पशुओं की रक्षा करता है तैसे ही आप भी सब विपत्तियों में दंड देकर भी ब्राह्मणों की रक्षा करते हो ॥ १४ ॥

जिस भगवान् आपके तत्त्व के नहीं जानने वाले मैंने खोटे वचन रूपी बाणों से सभा के मध्य में जिन आपका तिरस्कार किया तौ भी मेरे उस अपराध को न गिनकर महा पुरुष की निंदा से नरक में गिरते हुये मेरे को कृपा दृष्टि से रक्षित किया सो भगवान् अपने कृपा ही से संतुष्ट होवें हम असमर्थ हैं ॥ १५ ॥

मैत्रेयजी बोले इस प्रकार महादेवजी को क्षमापन करा कर ब्रह्मा की भी आज्ञा पाकर उपाध्याय ऋत्विज अग्नियों के सहित दक्षने यज्ञ को प्रवृत्त किया ॥ १६ ॥

ब्राह्मणों ने रुद्रगणों के संसर्ग की अशुद्धि को दूर करने के लिये यज्ञकी सांग सिद्धि के अर्थ विष्णु देवता के नाम से त्रिकपाल नामक चरू का होम किया ॥ १७ ॥

हे विदुर ! हविग्रहण किये अध्वर्यु के सहितयजमान दक्ष ने शुद्ध चित्त से ध्यान किया तब श्रीनारायण उस यज्ञ में प्रगट भये ॥ १८ ॥

तब तो बृहद्रथन्तर नाम स्तोत्र दोनो पक्ष हैं जिन के ऐसे गरुड जी ने अपने स्कंध पर विराजमान करके श्री भगवान्को उपस्थित किया तिस समय पर नारायण की प्रभा से दशों दिशों में प्रकाश होगया ब्रह्मादिकों के तेज सब नष्ट होगये ॥ १९ ॥

उनका स्वरूप वर्णन दो श्लोकों से करते हैं कि श्यामल उन की मूर्ति है सुवर्ण के तुल्य पीत वस्त्र है सूर्यवत् प्रकाशमान किरिट से वे युक्त हैं भ्रमरोंके तुल्य नील वर्ण केशों से तथा कुंडलों से उनका मुख सुशोभित है शंख चक्र गदा पद्म बाण धनुष ढाल तरवार इन आठ आयुधों से युक्त तथा सुवर्ण से भूषित अष्टभुजों से खिले हुये कचनार कर्णिकार वृक्ष के तुल्य शोभा को प्राप्त होरहे हैं॥ २० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

वक्षस्यधिश्रिता वधूर्लक्ष्मीर्यस्य सः उदारोहासोऽवलोकश्च तयोः कलया लेशेन पार्श्वे उभयतो भ्रमती व्यजनचामरे एव राजहंसौ यस्मिन्सः रज्यमानः शोभातिशयं नीयमानः ॥ २१ ॥

ब्रह्मेन्द्रत्र्यक्षा नायका मुख्या येषां ते ॥ २२ ॥

तत्तेजसा हतरुचः सन्नजिह्वाःससाध्वसाः ।
मूर्ध्ना कृताञ्जलिपुटा उपतस्थुरधोक्षजम् ॥ २३ ॥
अप्यर्वाग्वृत्तयो यस्य महि त्वात्मभुवादयः ।
यथामति गृणन्ति स्म कृताऽनुग्रहविग्रहम् ॥ २४ ॥
दक्षोगृहीत्वार्हणसादनोत्तमं ( १ ) यज्ञेश्वरं विश्वसृजां परं गुरुम् ।
सुनन्द नन्दाद्यनुगैर्वृतं मुदा गृणन् प्रपेदे प्रयतः कृताञ्जलिः ॥ २५ ॥

दक्ष उवाच ।

शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं चिन्मात्रमेकमभयं प्रतिषिध्य मायाम् ।
तिष्ठंस्तयैव पुरुषत्वमुपेत्य तस्यामास्ते भवानपरिशुद्ध इवात्मतन्त्रः ॥ २६ ॥

ऋत्विज ऊचुः ।

तत्त्वं न ते वयमनञ्जन ! रुद्रशापात् कर्मण्यवग्रहधियो भगवन् ! विदामः ।
धर्मोपलक्षणमिदं त्रिवृदध्वराख्यं ज्ञातं यदर्थमधिदैवमदो व्यवस्थाः ॥ २७ ॥

सदस्या ऊचुः ।

उत्पत्त्यध्वन्यशरण उरुक्लेशदुर्गेऽन्तकोग्रव्यालान्विष्टे विषयमृगतृष्णात्मगेहोरुभारः ।
द्वन्द्वश्वभ्रे खलमृगभये शोकदावेऽज्ञसार्थः पादौ कस्ते शरणद ! कदा याति कामोपसृष्टः २८

रुद्र उवाच ।

तव वरद ! वराङ्घ्रावाशिषेहाऽखिलार्थे ह्यपि मुनिभिरसक्तैरादरेणार्हणीये ।
यदि रचितधियं माविद्यलोकोऽपविद्धं जपति न गणये तत्त्वत्परानुग्रहेण ॥ २९ ॥

भृगुरुवाच ।

यन्मायया गहनयाऽपहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपन्तः ।
नात्मन् ! श्रितं तव विदन्त्यधुनापि तत्त्वं सोऽयं प्रसीदतु भवान् प्रणतात्मबन्धुः ॥ ३० ॥

---

श्रीधरस्वामि कृत भावार्थदीपिका ।

हतरुचस्तिरस्कृतप्रभाः सन्नजिह्वा गद्गदवाचः ससाध्वसास्तन्महिम्नाक्षुभितचित्ताः उपतस्थुस्तुष्टुवुः ॥ २३ ॥

यस्य महिमानं प्रति तु अर्वागेव वृत्तिर्येषां तेऽपि यथामति गृणन्ति स्माऽस्तुवन् कृतः प्रकटीकृतोऽनुग्रहार्थं विग्रहो येन तं यद्वा तेषामर्वाग्वृत्तित्वे हेतुः ते तु यस्य महि महिमा विभूतिमात्ररूपा इत्यर्थः ॥ २४ ॥

तत्र तावद्दक्षस्तुतिप्रकारमाह दक्ष इति । गृहीतमर्हणसादनोत्तमं येन तम् उत्तमं पात्रं आसाद्यार्हणेषु समर्पितेषु प्रीत्यासार्हणपात्रं स्वयमेव येन गृहीतमित्यर्थः यद्वा कथं प्रपेदे गृहीतमर्हणसाधनोत्तमं यथा भवति तद्गृहीत्वा प्रपेद इत्यर्थः गृहीत्वेति पाठस्तु सुगमः गृणन्स्तुवन्प्रपेदे शरणं जगाम " दक्षऋत्विक्सदस्येशभृगुब्रह्मेन्द्रयोषितः ॥ ऋषयश्च तथा सिद्धा यजमानी च लोकपः । योगिब्रह्माग्निदेवाश्च स्तुवन्ति जगदीश्वरम् तथा गन्धर्वविद्याध्रब्राह्मणाश्च पृथङ्मतैः „ ॥ २५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

ननु साक्षात्परमेश्वरएव रुद्रस्तस्य ब्रह्मपुत्रत्वेन जीवत्वमनुकारमात्रं हन्त किमिति त्वयाभेददृष्ट्याऽसाववज्ञातइति मां भगवानाक्षेप्स्यतीत्याशङ्क्याप्रच्युतस्वरूपस्य जीवधर्मनाट्यम् तवैव सङ्गच्छते नान्यस्येत्याह शुद्धमिति । स्वधाम्नि स्वस्वरूपे तिष्ठन्भवान् शुद्धम् चिन्मात्रं चैतन्यघनः शुद्धत्वेहेतुः उपरतानित्यनिवृत्ताऽखिलाबुद्ध्यवस्था यस्मात् अतः एकं भेदशून्यम् अतएवाभयं द्वितीयाद्वै भयं भवतीति श्रुतेः जीवस्यापि वस्तुत एवंभूतत्वात्तद्वैलक्षण्यार्थमुक्तम् मायां प्रतिषिध्याऽभिभूय स्वतन्त्र एव संस्तया मायया पुरुषत्वं मनुष्यनाट्यमुपेत्य तस्यां मायायां तिष्ठन्नपरिशुद्धइव रागादिमानिवास्ते रामकृष्णाद्यवतारैः तथाप्रतीयते भवानित्यर्थः अन्ये त्वविद्योपाधयोमायाऽभिभूताः संसरन्ति अतस्त्वमेवेश्वरोनरुद्र इति भावः अतएवेमां दृष्टिं भगवान्धारयिष्यति अहं ब्रह्मा च शर्वश्च जगतः कारणं परमित्यादिना ॥ २६ ॥

---

( १ ) साधनोत्तममिति वीरराघवः ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

ऋत्विजोऽपि स्वस्याऽपराधम् परिहरन्तः स्तुवन्ति भो अनञ्जन ! उपाधिमलशून्य ! यद्यपि त्वमेव रुद्रादिदेवतारूपस्तथाऽपि नन्दीश्वरशापात्कर्मण्येव दुराग्रहधियः सन्तस्तव तत्त्वं न विद्मः किन्तु धर्मस्योपलक्षणभूतं त्रिवित् त्रयीप्रतिपाद्यमध्वराख्यं तव रूपमस्माभिर्ज्ञातं कीदृशं यदर्थं यस्य सिद्धयेऽधिदैवं देवताऽधिकारेणाऽद्धो व्यवस्थाः असूर्यवस्थाः अत्रेयमेव देवता नान्येत्येवं भूतनियमा इत्यर्थः यद्वा व्यवस्था इत्याख्यातम् अडागमाद्यभाव आर्षः यदर्थं मद् इदमिन्द्राद्यधिदैवं रूपं विशेषेणाऽस्थितवानसीत्यर्थः ॥ २७ ॥

सदस्यास्तु निरीश्वरेऽपि दक्षाऽध्वरे धनलाभेनस्वप्रवृत्तिमनुचिन्त्याऽनुतप्ताधिरक्तिमाशासानाः स्तुवन्ति हे शरणद ! आश्रयप्रद ! उत्पत्त्यध्वनि संसारमार्गे वर्तमानोऽज्ञानां सार्थः समूहस्ते पादौकस्त्वत्पदरूपनिवासं कदा यास्यति कथंभूते संसारमार्गे अशरणे विश्रामस्थानशून्ये उरुक्लेशा एव दुर्गमस्थानानि यस्मिन् अन्तकपर्वाग्रेऽव्यालस्तेनाऽन्विष्टे लक्ष्यीकृते विषयरूपा मृगतृष्णमृगतृष्णिका यस्मिन् आत्माऽहङ्कारास्पदं शरीरं ममत्वास्पदं गेहं च सपर्वारुभारायस्य सः द्वन्द्वानि सुखदुःखादीन्येव श्वभ्राणि गर्ता यस्मिन् खलाएव मृगा व्याघ्रादयस्तेभ्योभयं यस्मिन् शोक एव दावाग्निर्यस्मिन् कामेनोपसृष्टः पीडितः ॥ २८ ॥

श्रीरुद्रस्तु पूर्वममनिन्दादुःसहाऽऽसीदिदानीं तु तां न गणयामीत्याह तवेति । आशिषा कामेनाऽसक्तैर्निष्कामैरर्चितधियमभिनिवेशितचित्तम् मा मामविद्योविद्याहीनोलोकोयद्यपविद्धम् जपत्याचारभ्रष्टं जल्पति तज्जल्पनमहं न गणये तत्र हेतुः तव यःपरोऽनुग्रहस्तेन स्वत्पराणां वा योऽनुग्रहस्तेन ॥ २६ ॥

भृगुस्तु स्वभावतस्तत्त्वज्ञानहीना जीवा अतोऽज्ञानकृतं मम दुश्चेष्टितं क्षमस्वेत्याह यन्माययेति । आत्मन्यात्मनि श्रितमनुगतं तव तत्त्वं न विन्दन्ति प्रणतानामात्मा बन्धुश्च ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता

दीपिन्याख्यादीपिका टिप्पणी ।

पूर्वार्थे प्रतीत्यध्याहारादू अर्वाग्वृत्तित्वे हेत्वनभिधानाच्च यद्धेति ॥ २४ ॥

तत्र ब्रह्मादिमध्ये तावदादौ आसाद्य धृत्वा पूर्वार्थे पात्रग्रहणे नार्हणग्रहणमर्थात्सिद्धमित्यरुचेर्यद्धेति क्रियाविशेषणे वृत्तिगौरवा द्गृहीत्वेति पाठस्तु सुगमः ॥ २५ ॥

दक्षेत्यादि संग्रहश्लोकौ स्वरूपे तिष्ठन् भवान् शुद्धं मायाऽशबलितं चिन्मात्रं ब्रह्मैवेति मुख्यमेव सामानाधिकरण्यं न तु लाक्षणिकम् अत एव चैतन्यघन इति व्याख्यातम् ब्रह्मणः शुद्धत्वे हेतुः उपरतेत्यादि न च ब्रह्मणो निर्विशेषत्वाल्लक्षणां विना कथं सामानाधिकरण्यमिति वाच्यम् प्राकृतविशेषाऽभावेऽपि स्वरूपात्मकविशेषस्य श्रीशङ्कराचार्य्यैस्सूत्रभाष्ये स्वीकृतत्वात् तथा हि असत्यपि कर्मणि सवितुः सविता प्रकाशते इति कर्त्तृत्वव्यपदेशदर्शनाद सत्यपि ज्ञानकर्मणि ब्रह्मणस्तदैक्षतेति कर्त्तृत्वव्यपदेशोपपत्तेर्न दृष्टान्तवैषम्यमिति तस्य ब्रह्मण आनन्दरूपत्वेऽपि यदि स्वरूपभूतेन शक्तिशब्दवाच्येन ज्ञानेन स्वानन्दानुभवो न स्यात्तदा जडत्वमेव स्यादिति तादृशपुरुषार्थसाधने प्रवृत्तिरपि न स्यात् अत एव जीववैलक्षण्यार्थमुक्तं मायां प्रतिषिध्येति मायाऽभिभवोऽपि स्वरूपशक्तिमन्तरा न स्यात् तथैवोक्तं श्रीमदर्ज्जुनेन "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनी„ति तथा चिच्छक्त्यभिभूतया मायया जीवविपयिण्या मनुष्यनाट्यं प्राकृतमनुष्यानुकरणमुपेत्य अवतारसमये मायायां तत्कार्य्ये प्रपञ्चे सर्वदा तु तस्यामेव नियन्तृतया तिष्ठन् अविद्योपाधीनां जीवानां प्राकृतमनुष्यवद्विषय रागादिमानिव प्रतीयते अतः स्वरूपशक्त्या मायाभिभवकर्त्तृत्वात् त्वमेवेश्वरो न रुद्रादय इति अन्येषां तथात्वेऽपि वैष्णवगुरौ शिवेऽपि तथा कदाचित्तु अपराधसद्भावादेव शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिव इत्यादिभिस्तस्य तत्तुल्यत्वाङ्गीकारादू अत एव तादृशात्तपाभिप्रायादेव ॥ २६ ॥

तत्त्वं निर्विकारस्यैव सर्वात्मकत्वम् अपूर्वस्य कालान्तरफलोत्पादककर्मशक्तेः पूर्वार्थे एकत्वं बहुवचने अत्र कर्माणि इयमेवेत्यादि कल्पनागौरवमतो यद्धेति व्यवस्थितेति वक्तव्ये त्वं व्यवस्था इत्यत्राडागमाभाव आर्षः आदिना आत्मनेपदश्चार्षम् अत एव इत्यर्थ इत्युक्तम् ॥ २७ ॥

उत्पत्त्यध्वनीत्यस्यैव विशेषणं विषयमृगतृष्णेति किन्तु विषयमृगतृष्णे इति वक्तव्ये सुपां सुपः सुलोपश्चेत्यनेन ङेर्लोपः ॥ २८ ॥

कामेन विषयेच्छया भोगेन वा सङ्गरहितैस्तथा च निष्कामैरिति व्याख्यातम् ॥ २६ ॥

तमसि अज्ञाने अधुनापीत्यपिनाऽज्ञानस्यानादित्वं सूचितम् अनुगतं विष्फुलिङ्गे वह्निमिव व्याप्तं तत्त्वं स्वरूपं "तत्त्वं वाग्प्रभेदे स्यात्स्वरूपे परमात्मनी„ति विश्वः आत्मा आत्मत्वेन प्रकाशमानः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

वक्षस्यधिश्रितावधूर्लक्ष्मीर्यस्य वनमाला अस्यास्तीति वनमाली उदारहासयुक्तोयोऽवलोकः तस्य कलया अपाङ्गेन विश्वं रमयन् पार्श्वयोरुभयोर्भ्रमन्ती व्यजने चामरे एव राजहंसौ यस्य सः शुभ्रातपत्रमेव शशी तेनोपरिरज्यमानः शोभाऽतिशयं नीयमानः ॥ २१ ॥

उपागतं समीपे प्राप्तं तं भगवन्तमालक्ष्य दृष्ट्वा ब्रह्मेन्द्रत्र्यक्षनायका मुख्या येषान्ते सर्वे सुरगणादयः सहसा त्वरयोत्थाय प्रणेमुः नमश्चक्रुः ॥

तस्य भगवतस्तेजसा हतरुचस्तिरस्कृतप्रभाः सन्नजिह्वाः गद्गदवाचः ससाध्वसाः तन्महिम्नाक्षिप्तचित्ताः मूर्द्ध्नि धृतानि अञ्जलिपुटानि येषां ते मूर्द्धसु धृताञ्जलिपुटाइत्यर्थः अधोक्षजमुपतस्थुः तुष्टुवुः ॥ २३ ॥

यस्य भगवतोमहिमानं प्रत्यवांग्वृत्तयोऽधस्तादेव वृत्तयो येषां ते कार्त्स्न्येनतन्महिमानमवगन्तुमनर्हमनोवृत्तयोऽपि भवादयः शर्वादयः कृताऽनुग्रहविग्रहं कृतःप्रकटीकृतःअनुग्रहार्थं विग्रहो येन तं यद्वा कृतोऽनुग्रह एव विग्रहोयेन तं भक्तानुग्रहैकप्रधानमूर्त्तिमित्यर्थः यथा मति गृणन्ति स्म स्मेति विस्मय वाङ्मनसाऽगोचरमहिमानं वाङ्मनस वृत्तिभिस्तुष्टुवुरित्याश्चर्यम् ॥ २४ ॥

तत्र तावद्दक्षस्तुतिप्रकारमाहदक्षइति। गृहीताहणसाधनोत्तमम् अर्ह्यते पूज्यते अनेनेत्यर्हणम् अर्हणसाधनं गन्धपुष्पादिकं गृहीतमर्हणं येन स चासौसाधनोत्तमस्तं साधनेषूत्तमः साधनोत्तमः तम् पुरुषार्थप्रापकानां मध्ये उत्तममित्यर्थः तथाच वक्ष्यति धर्मार्थकाममोक्षाख्यं

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका

य इच्छेदित्यादि अनेन समीहितफलसाधनप्रक्रान्ताध्वरापेक्षया सुखेन पुरुषार्थप्रापकत्वादुत्तमोपायभूतमित्युक्तं भवति यद्वा प्रगृहीतं कर्त्तव्यत्वेनोपात्तं प्रक्रान्तमितियावद् अर्हणां भगवदाराधनभूतयागरूपं पूजनं तस्य यानि साधनानि निर्वर्त्तकानि प्रयाजादीनि तेभ्य उत्तमं यागनिवर्त्तकमित्यर्थः "इष्टाऽऽपूर्त्तं बहुधाजातं जायमानं विश्वंबिभर्तिभुवनस्य नाभि"रिति श्रुतेः बिभर्ति पोषयति-निर्वर्त्तयतीति यावद् अतएव हि पूर्वं तदागमनाभावाद्यागानिर्वृत्तिः नकेवलं यागादिनिर्वर्त्तकएवाऽपि तु तत्फलप्रदोभोक्ताचेत्याह यज्ञेश्वरं यज्ञानां भोक्तारं तत्फलदं चेत्यर्थः तथा च गीतम् "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवचे"ति अत्रेश्वरत्वाक्षिप्तं भोक्तृत्वं रक्षकत्वं च ईश्वरोहि स्वभुक्तेरक्षनि च न केवलं यज्ञस्यैव रक्षकः अपितु यज्ञकर्त्तुर्यजमानस्य दक्षस्यापीत्याहविश्वसृजा मरीच्यादीनां पतिं पालयितारं स्रष्टृ त्वस्याप्युपलक्षणमिदं पतित्वमपि हितोपदेशेनेत्याह गुरुं हितोपदेष्टारं सुनन्दप्रभृतिभिः भृत्यैरनुगैः सुरैर्वृतं परिवेष्टितम् अनेन नित्यभूत्यधिपतित्वमुक्तम् एवंभूतं भगवन्तं कृताञ्जलिर्बद्धाञ्जलिर्दक्षोगृणन् स्तुवन् प्रयतः समाहितचित्तः प्रपेदे शरणङ्गतः ॥ २५ ॥

. तत्र प्रकृतिपुरुषविलक्षणं परमात्मस्वरूपं शर्वशक्तिमच्छिशोध्यनमनुमन्दधानः प्रपद्यते दक्षः ॥

शुद्धमिति। शुद्धमपापविद्धं कर्मरूपोपाधिरहितमकर्मवश्यमिति यावद् अतएव स्वधाम्नि स्वस्वरूपे मायां प्रतिपिध्य निरस्य स्वेन रूपेण अस्पृष्टप्रकृतिजन्यदोषमित्यर्थः शुद्धत्वे हेतुः उपरताखिलबुद्ध्यवस्थम् उपरताः शश्वन्निवृत्ता अखिलाः सर्वा बुद्ध्यवस्था मनोवृत्तयो यस्य तत् नित्यनिवृत्तप्रकृतिपरिणामरूपान्तर्बाह्येन्द्रियसर्ववृत्तत्वादपापविद्धमितिभावः यद्वा स्वधाम्नि उपरता प्रशान्ताऽखिलाबुद्ध्यवस्था यस्य तत् स्वस्वरूपानुभवेनैव नित्यनिवृत्तसर्वमनोवृत्तिरित्यर्थः तत्कुतः एकं समाभ्यधिकरहितं स्वस्वरूपस्य निःसमाभ्यधिकानन्दरूपत्वात्तदेकाऽनुभवेननित्यनिवृत्तसर्वेन्द्रियवृत्तित्वाच्छुद्धमित्यर्थः किमेवंविधस्वरूपं जडं नेत्याह चिन्मात्रं ज्ञानैकरसं क्वचिदप्यजडं नकेवलं स्वयमेवशुद्धमपित्वऽन्येषामपि शुद्धत्वापादकमित्याह अभयम्। नविद्यते भयं यस्मात्तदभयं यदुपासनादशुद्धत्वापादकभयाख्यसंसारनिवृत्तिस्तदभयमित्युच्यते तथाच श्रुतिः "यदाह्येवैप एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथसोऽभयं गतोभवती"ति एवं रूपं स्वरूपं प्रतितिष्ठन् अजहदित्यर्थः तथैवमाययैव पुरुषत्वं पुरुषाकारतामुपेत्य मायां देवादिशरीररूपेण परिणमय्य तस्मिन् जीवान्तरात्मतयाऽवस्थायेत्यर्थः स्वयमात्मतन्त्रः स्वतन्त्रोभवन् तस्यां मायायाम् अपरिशुद्धः कर्म वश्य इवास्ते अहोमहदिदं सर्वशक्तित्वमिति भावः ॥ २६ ॥

अथ ऋत्विजः परमात्मतत्त्वाऽनभिज्ञतामात्मीयामाविद्यन्तस्तं सर्वज्ञाराध्यत्वेन स्तुवन्ति तत्त्वमिति हेअनञ्जन! निरञ्जन! पुण्यापुण्यरूपमलरहितेत्यर्थः वयं नन्दिकेश्वरस्य शापात् कर्मण्येव अवग्रहधियः दुराग्रहचित्तास्ते तव तत्त्वं याथात्म्यं नविद्मः नविजानीमः किन्तु हेभगवन्! पूर्णषड्गुण्यमूर्त्ते! त्रिवृत् त्रयाणां सत्वादीनां गुणानां वृत् भावे क्विप् वर्त्तनं यस्मिन् तत् त्रिभिर्गुणैर्वर्तत इति त्रैगुण्य त्रिपया वेदा इत्युक्तरीत्या तत्तद्गुणानुसारेण ह्यध्वरादि कर्म विहितं धर्मोपलक्षणं धर्मस्य क्रियाजन्यस्यापूर्वस्य देवताप्रसादस्य वा उपलक्षणम् उपलक्ष्यतेऽनेनेत्युपलक्षणंज्ञापकम् उत्पादकमित्यर्थः तृप्तएवेनमिन्द्रः प्रजया पशुभिस्तर्प्पयतीतिदेवताप्रसादादेर्ज्ञापकत्वे

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका।

हि चोदितम् इदमध्वराख्यं कर्मज्ञातम् अस्माभिरिति शेषः कीदृशं तत्कर्म तत्राह यदर्थं यत्प्रयोजनाय यत्कर्मफलप्रदानाय यत्कर्माराध्यत्वाय चेत्यर्थः अदः एतद्दैवम् इंद्रादिदैवतम् अधिव्यवस्था विशेषं अधिष्ठाय स्थितवानित्यर्थः व्यवस्था इत्यत्राडागमाभाव आर्षः अतो इन्द्रादिरूपेण सर्वयज्ञाराध्यस्तत्फलदश्च त्वमेवेत्युक्तं भवति ॥२७॥

अथ सदस्यास्तापत्रयाऽभिघातार्ताः जननपदव्याहेयतामाविष्कुर्वन्तो भगवच्चरणारविन्दशरणागतिं प्रार्थयन्त आहुःउत्पत्त्यध्वनीति हेशरण! उपायनिर्वर्तकशरणप्रद! शरण्येति यावत् उत्पत्त्यध्वनि संसारमार्गे वर्तमानअज्ञानां सार्थः समूहः कामेनोपसृष्टः पीडितः ते तव पादौकः पादा वेव ओकः विश्रान्ति स्थानं कल्पतरुमूलवद्विश्रान्ति जनकस्थानमित्यर्थः कदा याति शरणं गच्छति कथं भूते उत्पत्त्यध्वनि अशरणे विश्रमस्थान शून्ये उरुक्लेशा एव दुर्गमस्थानानि यस्मिन् अन्तकएवोग्रो व्याधः तेनान्विष्टे लक्ष्यीकृते विषयमृगतृष्णात्मगेहोरुभारे विषयरूपा मृगतृष्णिका आत्माभिमानास्पदं च शरीरं गेहं ममतास्पदं गृहं तान्येवोरुभारो यस्मिन्प्रथमान्तपाठे अज्ञसार्थस्य विशेषणं विषयमृगतृष्णादय एव उरुभारो यस्य स इति द्वन्द्वानि सुखदुःखादीन्येव श्वभ्राणि गर्ता यस्मिन् खला दुर्जना एव मृगा व्याघ्रादयस्तेभ्यो भयं यस्मिन् शोक एव दावाग्निर्यस्मिन् ॥ २८ ॥

रुद्रस्तु मम निन्दा दुःसहासीत् पूर्वमिदानीन्तु तां न गणयामीत्याह तवेति। हे वरद! इहास्मिन् लोके आशिषा कामेन अखिलैरर्थ्यै आराधनीये तथाअसक्तैर्मुमुक्षुभिश्चादरेणार्हणीये तव वराङ्घ्रौ निरतिशयसुकुमारत्वसुगन्धत्वादियुक्ते चरणारविन्दे रचिताभिन्यस्तचित्तं माम् अविद्यलोकोऽज्ञलोकःयदि यद्यपि अपविद्धम् आचारं नंजपति जल्पति तथापि तज्जल्पनं न गणये न गणयामि निन्दकान् निगृह्णामीत्यर्थः कुतः त्वत्परानुग्रहेण तव यः परानुग्रहः परेषु अनुग्रहस्तेन हेतुना तव परानुग्रहैकनिरतत्वात्त्वच्चरणारविन्दासक्तचित्तानामस्माकमपि परानुग्रहः एवोचितः इतिभावः ॥ २९ ॥

भृगुस्त्वविद्यातिरोहितस्वरूपत्वेन देहपरवशत्वात्सर्वे ब्रह्मादयो जीवा अपरार्थैकपरास्त्वंतु अपराधसहनैकशीलोऽसि अतः प्रकृतोऽपराधस्त्वया क्षन्तव्य इत्याह यन्माययेति। ब्रह्मादयःसर्वेतनुभृतो देहिनः जीवा इति यावत् गहनया दुरत्ययया यस्य तव मायया अपहृतः तिरोहित आत्मनोबोधः धर्मभूतं ज्ञानं येषां ते अतएव तमसि तमःशब्दवाच्यसूक्ष्मप्रकृतिपरिणामरूपे शरीरे स्वपन्तः शयाना वर्तमाना यद्वा तमःकार्ये जन्मजरामरणादिरूपे संसारे शयानाः आत्मन् आत्मनि श्रितम् आश्रितं जीवान्तरात्मतयाधिष्ठितं तव तत्त्वं स्वरूपयाथात्म्यम् अधुनापि न विदन्ति न जानन्ति सोऽप्रणतानां शरणागतानाम् आत्मबन्धुः आत्मवन्निरतिशयप्रीतिविषयः प्रीतिमांश्च बन्धुः यद्वा प्रणतानामात्मनाम्बन्धुः प्रसीदतु अस्माननुगृह्णातु ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

वधुस्त्वधिश्रितावधूर्भार्या यस्य स तथा पुत्रभार्यावत्प्रेमास्पदत्वद्योतनायाधिश्रितरम इति वक्तव्ये वधूरित्युक्तं वहेश्च वहेर्ज्ञातेरूप्रत्ययोभवति पुत्रभार्यायां गम्यमानायां चकारात्कनीयोभ्रातृभार्यायां धकारश्चान्तादेशः स्वभार्या च वधूः सापि सेवार्थमत्र वर्त्त

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

नत्वालिङ्गनादिसुखावाप्त्यर्थमतः श्रियेति उदारहासावलोकयोः कलया चन्द्रकलावदाह्लादिकया पार्श्वे भ्रमद्व्यजनचामराख्यराजहंसाभ्यामुपरिशुभ्रातपत्रशशिना लक्ष्यमाणो दृश्यमानः एवं विधस्ता र्स्यैणोपनीत इति पूर्वेणान्वयः ॥ २१ ॥

ब्रह्मरुद्रौ विष्णुसमानाविति लोकप्रवादं परिहरंस्तत्पूर्वं देवतानां श्रीनारायणप्रणामं वक्ति तमुपागतमिति ब्रह्मा चतुर्मुख इन्द्रो वायुरूपश्चो रुद्र एते नायका येषान्ते तथोक्ताः ॥ २२ ॥

ननु न प्रणाममात्रमुक्तमत्यादिनिश्चयात्मकं समानानामपि मिथोदर्शनादिति तत्राह तत्तेजसेति सन्नजिह्वाः जिह्वाशक्तिरहिताः गद्गदवाच इत्यर्थः अत्र निमित्तं ससाध्वसा इति ननु सन्नजिह्वत्वेन किं पश्चाज्जगुरिति तत्राह मूर्ध्नीति ॥ २३ ॥

स्तुतिलक्षणवागिन्द्रियादिव्यापाराभावेन केवलोपस्थाने किं प्रयोजनमत्राह अप्यर्वागिति यस्य महिम्ने माहात्म्यविषयेऽनन्तत्वादर्वाग्वृत्तयोऽपि अप्राप्तवाङ्मनसव्यापारा अपि स्वसृष्टब्रह्मा तदादयः कृतानुग्रहविग्रहं भक्तानुग्रहार्थं कृतोविग्रहोयेन स तथा तं श्रीनारायणं यथामति गृणन्तिस्मेत्यन्वयः ॥ २४ ॥

स्तुतिप्रबन्धकथने ग्रन्थाधिक्यं स्यादिति मत्वा यदर्थं हरेराविर्भावस्तस्य दक्षस्य भगवत्प्रतिपत्तिप्रकारं वक्ति दक्ष इति ॥ २५

प्रतिपत्तिर्नाम निर्गुणत्वेन निराकारत्वेन चेत् प्रतिपद्यमानाविषयानुसारिणी स्यात् "केवलोनिर्गुणश्चाकाशं ब्रह्म अनादिर्वायमाकाशः शून्यो लौकिक, इति श्रुतेरन्यथा प्रतिपत्तिर्दोषेणाऽनर्थापत्तिः स्यादिति तत्राह शुद्धमिति यद्रूपं शुद्धं निर्दोषत्वेन शोधितं । कथं शोधितमत्राह स्वधाम्नीति । स्वधाम्नि स्वस्वरूपे उपरतानित्यनिवृत्ता अखिलाबुद्धेरवस्था जाग्रदादिजीवावस्था यस्य तत्तथा तर्हि तन्निराकारं किन्नेत्याह चिन्मात्रमिति। केवलं ज्ञानात्मकं जीवस्याप्येताहक्त्वात् किं विशिष्योच्यत इति तत्राह एकमिति। एकं प्रधानं सर्वोत्तममानहीदशमन्यदस्तीत्याह अभयमिति। "द्वितीयाद्वै भयंभवती,,ति श्रुतेः एतादृशस्यान्यस्याभावात् कालत्रयेऽपि निरस्तभयं कुत एतत् सर्वमित्यत आह प्रतिषिध्येति । गयां जडात्मिकां प्रतिषिध्य दूरीकृत्य तिष्ठंस्तादृग्रूपो भवांस्तया माययोपादानत्वेन महदादि सृष्ट्वा महदाद्युपादानत्वेनाण्डं सृष्ट्वा तदन्तस्त्रिवृदहङ्कारविकृताकाशाद्युपादानत्वेन पुरुषशब्दवाच्यशरीराणि सृष्ट्वा तदन्तः स्थितिमत्तया पुरुषत्वं पुरुषशब्दवाच्यत्वमुपेत्य तदन्तर्यामिरूपेण व्यक्तोभूत्वा तस्यां कार्यकारणलक्षणायां प्रकृतावास्ते । "तुच्छयेनाभ्वपिहित,,मितिश्रुतेः। तत्राज्ञा मायावादिनोऽपरिशुद्धमुपहितं जीवमिवामनन्ति तस्मै तुभ्यं नम इति वाक्यशेषः व्यक्तिलक्षणमेव पुरुषत्वं नतु जीवलक्षणमित्यस्मिन्नर्थे इव शब्दः । "उत्पत्तिर्हरिरूपाणां व्यक्तिरेव न संशयः उत्पत्तिरेव जीवानां देहोत्पत्तिरुदीर्यत,, इति वचनात् "जडमाया न तस्यास्ति शरीरत्वेन कुत्रचित् सृष्ट्वा तथा शरीराणि तस्थितेः पुरुषः स्मृतः । मायायामशरीरायामपि विष्णुः स्वयं स्थितः । तस्मात्प्राकृत इत्येव जीववत्तं वदन्ति हि । अस्पृष्टत्वेऽपि तद्धर्मैस्तद्गतत्वादेव कारणाद्,, इति वचनात् नेन्द्रजाललक्षणा मायाऽत्रोच्यते किन्तु जडा जगदुपादानभूता प्रकृतिरेव ॥ २६ ॥

ऋत्विगादिवैदिकैः श्रीनारायण एव स्तुत्योनान्यश्चेति भावेन तत्प्रतिपत्तिप्रकारं वक्ति तत्त्वं नत इति । अनञ्जन ! पुण्यपापक्षेमरहित ! ऋत्विजो वयं ते तव तत्त्वं न विदामः कस्मात्

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

अज्ञानमत्राहुः ( १ ) रुद्रशापादिति यज्ञादिकर्मण्ययथ्रह्मप्रियोदुराग्रहबुद्धित्वादित्यर्थः नन्वेवं तर्हि एतस्मिन् कर्मणि भवत आविर्भावः कथं घटत इति शङ्कामाभूदित्याह धर्मेति सदा शिवस्य प्रसन्नदृष्टचलोकनोत्फुल्लतत्त्वज्ञानैरस्माभिः क्रियमाणमिदमध्वराख्यं कर्म ज्ञातं त्वत्पूजात्वेनेति शेषः कथमेतदवगतमित्यत उक्तं धर्मेति भक्त्यादि धर्माणामुपलक्षकत्वादित्यर्थः किमत्र प्रमाणमित्यतस्तदृध्वनयति त्रिवृदिति त्रीन्प्रत्यक्षानुमानागमानावृणोतीति तद्नीन्तनैः पुरुषैर्दृश्यमानत्वात् प्रत्यक्षं प्रथमप्रमाणं द्वितीयं हरेराविर्भावलिङ्गं"तृतीयमनपमेसर्वधर्माणां धर्मोऽधिकतमोमतः। यद्भक्त्यापुण्डरीकाक्षं स्तवैरर्चैनरः सदे"त्यागमं, प्रत्यक्षस्यतु लोकविडम्बनार्थत्वोपपत्तेर्लिङ्गस्य चविनोददर्शनायसंभवादागमस्य च स्तुतिरूपत्वेनार्थवादत्वोपपत्तेः अतोनिर्णायकाभावात्सिकतावनिगृहनिर्माणवत्सर्वं शिथिलमभूदिति तत्राह यद्धर्ममिति त्वं यस्याध्वरस्य भागस्वीकारार्थमदोऽधिदैव(२)मुक्तमदैवं ब्रह्मादिदेवताशरीरे आस्था इति यदत इदं निर्णायकं प्रमाणमित्यर्थः"भुङ्क्ते यज्ञभुजोदेवानाविश्य पुरुषोत्तम,,इति वचनं चास्मिन्नर्थे मानं यद्वा कुतो न विदाम इति तत्राह धर्मेति धर्ममदृष्टमुपलक्षयतीति तथोक्तं ज्ञानिभिरिदमध्वराख्यं कर्म यदर्थं यस्त्वमर्थो विपर्ययस्य तत्तथा ज्ञातं कुतः कर्मणस्त्वद्विषयत्वमत्राह अधिदैवमिति सत्त्वमधिदैवमास्था अहं हि सर्वयज्ञानां भोक्तेति यदतस्त्वद्विषयोयज्ञ इति तद्यजनमस्माभिरिन्द्रादिविषयत्वेन ज्ञातमतोन विदाम इति ॥ २७ ॥

हे शरणद! मोक्षलक्षणगृहप्रद ! अशरणे रक्षितृपुरुषरहिते उरवोपहृवः"अविद्यास्मितारागद्वेषाऽभिनिवेशाःपञ्चक्लेशाः,,तैर्दुरन्तकाष्ठ्येनोग्रेण व्यालेनाऽजगरेण सर्पेणाऽक्रान्ते द्वन्द्वानि सुखासुखान्येव श्वभ्राणि गर्तान्यस्मिन्स्त तथा तस्मिन् । खलाः पिशुनास्त एव मृगास्तैर्भयं यस्मिंस्तथा तस्मिन् । शोको मनःपीडा स एव वनवह्निर्यस्मिस्तेवंविधे । उत्पत्त्यध्वनि जननमरणादिमार्गे । अज्ञसार्थः अज्ञानिपरिपत्तयशस्तौ पादौ कदा याति न कदापीति मन्यामहे कुत इति तत्राह कामेति कामेनोपहतत्वात् कामोपहतत्वं स्फुटयति विषयेति विषयमृगतृष्णा शब्दादिविषयाख्यमरीचिकाजलम् उद्दिश्यात्मयत्नः गेहं गृहम् एतद्द्वयमुरुभारोयस्य स तथा "आत्मा देहे धृतौजीवे स्वभावे परमात्मनि यत्नेऽर्केऽग्नौ मतो धात,, इति यादवः यद्वा विषयमृगतृष्णैवात्मगेहं स्वनिवासस्थानं तदेवोरुभारो यस्य स तथा ॥ २८ ॥

रुद्रस्तुत्या सर्वलोकस्य हरेः सर्वोत्तमत्वे संशयमुन्मूलयति तवेति हे वरद ! तवाशिषा कारणेनानभिध्ये अभिध्यानाविषये आशीरर्थ्यानुमयोग्ये । असक्तैर्निःसंगैर्मुनिभिर्ब्रह्मादिज्ञानिभिरभ्यादरेणार्हणीये पूज्ये चरणाब्जौ वरणीयगुणौ श्रीपादे यदि रचितधियं कृतबुद्धिं मां विद्धि मां जानासि लब्धार्थ लोट् कथंभूतं मां लोकापविद्धं लोकबाह्यम् अनेन रुद्रस्य ज्ञान्युत्तमत्वं द्योतयति तर्हि जगति

( १ ) तद्भृत्यनन्दिशापात् ॥

( २ ) अधिकाश्चतेदेवाश्चाधिदेवाः ब्रह्मादयः तेषामिदंशरीरमधिदैवम् । यद्वा देवानांब्रह्मादीनामिदंशरीरंदैवम् अधिकंचतद्दैवंचेतिविग्रहःएतेनादेवानामिदमाधिदैवमितिस्यात् कथमधिदैवमिति शङ्कापरास्ता ॥ इतिदीपिका ।

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

त्वत्परानुग्रहेण न गणये यत्किञ्चन पुरुषं न प्रार्थय इत्यर्थः फलेच्छया ध्यानाभावेऽपि निष्कामत्वेन ध्यानादन्याशिषोऽपि भवन्तीत्यस्मिन्नर्थे च शब्दः हिशब्देन गतिमर्थावीं प्रयुञ्ज इति वाक्यं सूचयति ॥ २६ ॥

ब्रह्मादीनामपि श्रीनारायणतत्त्वज्ञानं दुर्लभं किमुतास्माकं ततो रुद्रे द्वेपस्तत्तत्त्वाज्ञानहेतुक इतिभावं ध्वनयन् भृगुस्तं भगवन्तं स्तौति यन्माययेति श्लोकद्वयेन गहनया गम्भीरया यस्य तव माययाऽप हृत आत्मबोधः स्वरुपज्ञानम् येषां ते तथा अतएव तमस्यविद्यायां स्वपन्तः शयाना ब्रह्मा आदिर्येषां देवानां ते ब्रह्मादयस्तनुभृतः शरीरिणः अनेन देहवत्त्वच्च ज्ञानग्रहणायोग्यतां सूचयति आत्मसु जीवेषु प्रेरकत्वेनाश्रितं स्थितं तव तत्त्वमधुनापीत्यनेनोत्पाद्य दीर्घं कालगतिं सूचयति न विदन्ति सोऽयं प्रणतानामात्मनां जीवानां बन्धुर्भवान्प्रसीदत्वित्यन्वयः यद्वा ब्रह्मादिः कारणं येषां ते ब्रह्मादयस्तनुभृतो जीवा आत्मानं हृदयमाश्रित मन्यत् समम् ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

अर्वागवृत्तित्वमेव सर्वेषां दर्शयति दच इत्यादिना ॥ २५ ॥

गुणसंसर्गिणामस्माकं तदावेशोनाद्भुतः यतः सृजामि तच्छियुक्तोऽहमित्यादिम्य.येनास्वतन्त्रतया ब्रह्म रुद्रावपि कदाचित्तदाविष्टौ भवतः किन्तु भवानेव तत्संसर्गेऽपि तदनाविष्ट इति स्वदोषमार्जनार्थमाह शुद्धमिति । शुद्धमित्यादिलक्षणं यत्तत्त्वं तद्रूपो भवान् श्रीभगवद्रूपे स्वधाम्नि स्वरूपशक्तिमये परमवैकुण्ठे तिष्ठन् शुद्धसत्वादौ हेतुः मायां प्रतिषिध्य न यत्र मायेत्युक्तत्वात् स्वरूपशक्त्याविष्कारेण तत्सम्बन्धं परिहृत्येति तदेवं तिष्ठन्नंशवात्मतन्त्रः सन्नंशेन तयैव मायया पुरुषत्वं तदुद्भूतत्वमुपेत्य तस्यामेव मायायां स्वकार्यायां तत्तन्नियमादिना अपरिशुद्ध इवास्ते । तथा प्रतीयते मात्रमित्यर्थः ॥ २६ ॥

व्यवस्थेति । चित्सुखपाठान्तरम् ॥ २७ ॥

सदस्यास्तु कर्ममार्गेनानादुःखं विचार्य तदुपरतिसदनं तच्चरणोपसरणमेव प्रार्थयन्ते । उत्पत्स्यीति । व्यालाकृष्टेति चित्सुखः ॥ २८ ॥

श्रीरुद्रस्तु अन्यैर्दुरुहं स्वरहस्यं भक्त्यावेशेन प्रकटयन्नेव स्तौति तवेति । आशिषा कामनाया हेतुना अखिलार्थे तद्दातरीत्यर्थः आशिषमाशयात्येद्रे इति चित्सुखः । मा विद्येत्यादौ मां विद्धि लोकानपि स्वार्जितेति चित्सुखः ॥ २९ ॥

नात्माश्रितमिति पुरणारण्यः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

वधूर्लक्ष्मीः । उदारयोर्महामाधुर्यरत्नवर्षिणोर्दोस्सावलोकयोः कलया वैदग्ध्या विश्वमेव रमयन् किं पुनर्भक्तान् पार्श्वयोर्भ्रमन्ती व्यजनचामरे एव राजहंसौ यस्मिन् सः । श्वेतातपत्रमेव शशी तेन उपरिस्थितेनेति । सर्वोपरि शशी तत्तले किरीटरूपोऽर्कः तत्तले आस्यरूपं कमलं तत्पार्श्वद्वये नृत्यत् कुण्डलरूपं पुनरर्कद्वयं तत्पार्श्वद्वये चामररूपं हंसद्वयं । मुखकमलतले लक्ष्मीरूपा विद्युत् सर्वसमुदितं पुनरष्टदलमेकं कमलमेव चन्द्रार्कविद्युद्धमरहंस शङ्खचक्रगदापद्म चापशरचर्मासियुक्तमत्यद्भुतं स विष्णुरदृश्यत इत्यर्थः ॥ २१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ॥

ब्रह्मेन्द्रत्र्यच्चा नायका येषान्ते ॥ २२ ॥

सन्नाजिह्वाः सगद्गदवाचः ससाध्वसाः ससम्भ्रमं क्षुभितचित्ताः मूर्द्ध्ना मूर्द्ध्नि ॥ २३ ॥

महितु महिमानं प्रतितु अर्वागेव वृत्तिर्येषां तेऽपि ॥ २४ ॥

गृहीतमर्हणसादनोत्तमं यत्र तद्यथा स्यात्तथा सादनं पाठे गृहीत्वेति च पाठः ॥ २५ ॥

शुद्धं चिन्मात्रमेव भवान्मायां प्रतिषिध्य स्वधाम्नि स्वरूपे तिष्ठन्नेव भवान् तयैव मायया पुरुषत्वं मनुष्यनाट्यमुपेत्य तस्यां मायायां रामकृष्णाद्यवतारेषु अपरिशुद्ध इव रागादिमानिवास्ते अतस्त्वमेवेश्वरो विद्योपाधिरन्येत्वविद्योपाधयो रुद्राद्यास्तद्दृष्ट्या मनुष्यनाट्यं कुर्वन्तोऽभिनेतुं न जानन्ति । श्वशुरे मयि सभायामात्मारामत्वं प्रकाशितवन्तः । त्वन्तु श्वसुरं सत्राजितं मृतं श्रुत्वा "अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः" इति सत्यभामासान्निध्ये सराम एव रोदीरिति तेन किं तवात्मारामत्वं प्रच्युतमिति भगवानेवाऽखिलकलाविचक्षण इति पुनरपि श्रीरुद्रे कटाक्षः श्रीरुद्राऽपराधशेषेऽस्य भगवद्विग्रहे मायिकत्वबुद्धिरपीति ज्ञेयम् । किञ्च । स्वधाम्नि वैकुण्ठे तिष्ठन्नेव तयैव मायया सहितः पुरुषत्वं महत्स्रष्टृरूपमुपेत्य तस्यां मायायां मायिकेषु समष्टिव्यष्टिषु च आस्ते अन्तर्यामिरूपेण वसति यदुक्तं "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः । एकन्तु महतः स्रष्टृ द्वितीयन्त्वण्डसंस्थितम् । तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति । अपरिशुद्धइव तत्वपरिशुद्धः मायायां स्थितोऽपि तत्सम्बन्धाभावादिति भावः । इति तु वास्तवार्थो ज्ञेयः ॥ २६ ॥

हे मनअन ! मायोपाधिरहित ! नन्दीश्वरशापात् कर्मणि दुराग्रहधियो वयमपि न विद्यो दक्षः कथं ज्ञास्यतीति दक्षे कटाक्षः । तर्हि किं जानीथेति तत्राहुः । धर्म उपलक्ष्यतेऽनेनेति तत् त्रिवृत् त्रयी प्रतिपाद्यम् अध्वराख्यं तव स्वरूपमेव ज्ञातमस्माभिः । यदर्थं यस्य सिद्ध्यै अधिदैवं देवाधिकरणं अदो व्यवस्था इ.मत्र दैवतंत्वेवमसूर्व्यवस्था भवन्ति ॥ २७ ॥

उत्पत्त्यध्वनि संसारमार्गे अशरणे विश्रामशून्ये द्वन्द्वानि सुखदुःखादीन्येव श्वभ्राणि गर्ता यस्मिन् लला एव मृगाः व्यालादयस्तेभ्योभयं यस्मिन् शोक एव दावाग्नि यत्र तस्मिन् । अज्ञानां समूहः ते पादौ कदा याति यास्यति नैव प्राप्स्यति ते चाज्ञाः सम्प्रति दक्षस्तदीया ऋत्विगादय एवैते इत्यन्त इति दक्षादिषु कटाक्षः हे शरणद ! हे आश्रयप्रदेति त्वां यदि स नैवाश्रयते तदा त्वया किं कर्तव्यमिति भावः । कीदृशः विषयरूपा मृगतृष्णा यस्मिन् तथाभूत आत्मा देहोऽहन्तास्पदं गेहञ्च उरुभारो यस्य सः । कामेनोपसृष्टः कामपीडितः ॥ २८ ॥

आशिषा कामेन हेतुना अखिलार्थे अखिलार्थदातर्यपि अस्मद्विर्निष्कामैः अर्हणीये सेवितुमर्हे अङ्घ्रौ रचितनियमाविशतवर्द्ध मा मां न विद्यते विद्या ज्ञानं यस्य तथाभूतं लोका दक्षादयो अपविद्धमाचारभ्रष्टं जपति जल्पति तदपि तज्जल्पनं तव यः पर्यनुग्रहस्त्वत्पराणां वानुग्रहस्तेन न गणये ॥ २९ ॥

ब्रह्मादय इति श्रीरुद्रे कटाक्षः । तमसि स्वपन्त इति तेऽप्यविद्याग्रस्ता एव आत्मन् श्रितं स्वप्रकाशं तव तत्त्वम् अधुनापि न विदन्ति जानीम इत्यभिमानग्रस्ता अन्यानेवाज्ञानिनो वदन्तीति भावः । प्रसीदस्विति अहन्त्वपराधी यथार्थवादित्वाद्वास्म्येवेति भावः ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

भवांस्तु न ब्रह्मादीनां नापि मद्विधानां किन्तु प्रणतानां नम्रस्वभावानामकिञ्चनानां बन्धुः । तदपि प्रसीदतु मदपराधमिमं क्षाम्यतु ॥ ३० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

वक्षस्यधिश्रितावधूः श्रीर्यस्य सः वनमालास्यास्तीति वनमाली उदारहाससहितस्यावलोकस्य कलया विश्वं रमयन् पार्श्वे उभयतोभ्रमन्तौ व्यजनचामररूपौ राजहंसौ यस्मिन् स श्वेतातपत्रमेव शशी तत्रोपरि रज्यमानः शोभमानः ॥ २१ ॥

ब्रह्मादयो नायकाः नेतारो येषां ते ॥ २२ ॥

तस्य तेजसा प्रभया हतरुचोऽभिभूतप्रभाःससाध्वसाः ससंभ्रमाः सन्नजिह्वास्त्यक्ताभ्यवाचः उपतस्थुः तुष्टुवुः ॥ २३ ॥

यस्य भगवतः महि तु महिमानं प्रति तु अर्वागेव पारं गन्तुमनर्हाः एव वृत्तयो येषां तेऽपि यथामति मतिमनतिक्रम्य कृत आविष्कृतोऽनुग्रहेण विग्रहो येन तं गृणन्तिस्म अस्तुवन् ॥ २४ ॥

तत्र तावद्दक्षः गृहीतार्हणासादनोत्तमं कृपया दक्षहस्ताद्गृहीतमर्हणसादनोत्तमम् अर्हणयुक्तपात्रोत्तमं येन तं गृणन् स्तुवन् प्रपेदे शरणं जगाम ॥ २५ ॥

"भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं विविधं ब्रह्ममेतत् । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुष स्त्वन्यः परमात्मेत्युदाहृत„इत्यादि श्रुतिस्मृतिप्रसिद्धानि त्रीणि तत्त्वानि तत्र मायाकार्येषु भोग्यपदार्थेषु प्रविष्टः स्वस्वकर्मवशाद्ब्रह्मादिपिपीलिकान्तभेदवान् ईशानीशादिनामभाक् नानाभिमानवान् कर्मफलभोक्ता मायावृतज्ञानो जीवःअशुद्धः भवांस्तु चिदचिदनन्तशक्तिः कल्याणगुणगणसिन्धुः स्वभावतोऽपास्तसमस्तदोषः नित्यधामस्थः परमानन्दस्वरूपः "विष्णोस्तुत्रीणि रूपाणि पुरुषाख्यान्यथोविदुः । आद्यन्तु महतः स्रष्टृद्वितीयं त्वण्डसंस्थितं । तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते " इति शास्त्रोक्तानि जगद्धिताय रूपाण्याविःकरोति इत्याह भगवदनुग्रहाल्लब्धतत्त्वज्ञानः श्रीदक्षः शुद्धमिति । "योऽस्याध्यक्षः सपरमे व्योमन् ब्रह्मणः सदनादूर्ध्वंतद्विष्णोः परमं पदं शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदु„रित्यादिश्रुतिस्मृतिप्रसिद्धेः"दर्शयामास लोकं स्वं गोपानां तमसः पर„मिति वक्ष्यमाणे स्वधाम्नि तिष्ठन् मायां प्रकृतिं जीवमोहिनीं स्वशक्तिं प्रतिपिध्य स्वधाम्ना विधूय अभिभूय देहेन्द्रियादिरूपां स्वभोगार्थमनारोप्येत्यर्थः मायामयं देहादिकं विनैव स्वासाधारणेन रूपेणेत्यर्थः

तयैव मायया निमित्तभूतया अध्ययनेन वसतीति वत्तृतीया तां महदादिरूपां कर्त्तुमित्यर्थः पुरुषत्वं महत्स्रष्टृपुरुषत्वमुपेत्य कथंभूतं शुद्धम् मायिकदोषवर्जितम् यतश्चिन्मात्रम् मायाकृतजाड्यवर्जितम् अतएव उपरताऽखिलबुद्ध्यवस्थम् उपरता नित्यनिवृत्ताः अखिलाः सङ्कल्पादिरूपा जागरादिरूपाश्च बुद्ध्यवस्था यस्मात् तम् एकं निःसमानाधिकम् अभयम् नास्तिभयं यस्मात्तं "यदाह्येवैष एतस्मिन् अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतोभवती"तिश्रुतेः तस्यां मायायाम् अपरिशुद्ध इव बद्धजीव इव यथा जीवः सुपर्णस्तथा तत्सखः सुपर्णः भवानास्ते "द्वासुपर्णासयुजा सखाया„ इति श्रुतेः तत्र च समष्टिजीवसखो भगवानण्डस्थपुरुषरूपः व्यष्टिजीवसखः सर्वभूतस्थपुरुष रूपइति विवेकः ननु तर्हि तत्र जीववन्ममापि देहादिपारतन्त्र्यं किमित्यत आह आत्मतन्त्र इति एवं भूतं त्वां शरणं गतोऽस्मीति शेषः ॥ २६ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

ऋत्विजस्तु दक्षः त्वत्तत्त्वज्ञः वयं तु त्वत्तत्त्वानभिज्ञाः केवलवेदत्रयीरूपं यज्ञरूपं च त्वां विजानीम इत्याहुः तत्त्वमिति । हे अनञ्जन ! हे निर्दोष ! रुद्रस्य नन्दीश्वरस्य शापात् ते तत्त्वं स्वरूपगुणादियाथात्म्यं न विदामः किन्तु कर्मण्येव अवग्रहा आग्रहवती बुद्धिर्येषान्ते धर्मस्योपलक्ष्यते ज्ञाप्यतेऽनेनेत्युपलक्षणं ज्ञापकं त्रिवृत् ऋगादिरूपं ब्रह्म अध्वराख्यं च ते रूपं ज्ञातमस्माभिः यदर्थम् अध्वराख्यरूपार्थम् अद इदमिन्द्राद्यधिदैवरूपं व्यवस्थाः अङ्गागमाद्यभाव आर्षः विशेषेणाऽऽस्थितवानसीत्यर्थः ॥ २७ ॥

सदस्यास्तु अतत्त्वज्ञस्तत्त्वज्ञो वा त्वत्कृपां विना त्वत्पादौ नैव प्राप्नोतीत्यतः त्वत्पादप्राप्त्यसाधारणकारणं कृपां कुर्वित्याशयेन स्तुवन्ति उत्पत्त्यध्वनीति । हे शरणद ! आश्रयप्रद ! त्वमेव कृपां कुर्यात्तदा त्वत्पादपद्मप्राप्तिर्भवेदिति संबोधनाऽभिप्रायः अन्यथा तु उत्पत्त्यध्वनि उत्पत्त्युपलक्षिते संसारमार्गे वर्त्तमानः विषयमृगतृष्णात्मगेहोरुभारः विषयाख्या मृगतृष्णा च आत्मा आत्मत्वेन गृहीतः देहश्च गेहं गृहं च तान्येवोरुभारोयस्य ननु तयोवृत्तेर्वेदान्ताभ्यासाद्यः सः अतएव कामैर्वासनाभिरुपसृष्टो व्याप्तः एवं भूतः तत्त्वज्ञानहीनइत्यर्थः ज्ञसार्थः एकस्य त्वत्कृपावर्जितस्य तु काकथा ज्ञानां तत्त्वज्ञानां सार्थः समूह इत्यर्थः ते पादौकः कदा याति यास्यति न कोऽपि कदापि यास्यतीत्यर्थः कथम्भूतं उत्पत्त्यध्वनि अशरणे सुखविश्रामरहिते उरुक्लेशैर्दुर्गे अन्तकरूपेण उग्रेण दुर्निवारणेन व्यालेन दुष्टगजेन दुष्टसर्पेण वा अभ्यिष्टे उपरुद्धे "व्यालोदुष्टगजेसर्पे„ इति मेदिनी कोशात् द्वन्द्वानि रागद्वेषशीतोष्णादीन्येव श्वभ्राणि गर्तायस्मिन् खला एव मृगाः सिंहास्तेषां भयं यस्मिन् शोकएव दावोवनाग्निर्यस्मिन् ॥ २८ ॥

श्रीरुद्रस्तु पूर्वं निन्दामसहमानेन मयाऽध्वरनाशः कृतः इदानीन्तु त्वत्कृपया त्वद्ध्यानासक्तस्तां न गणयामीत्याह तवेति हे वरद ! आशिषा कामेन असकृत्स्कामैर्मुनिभिरर्हणीये त्वत्परानुग्रहेण त्वदीयया परया कृपया रचितधियं ध्यानासक्तम् अविद्यः त्वद्ध्यानरूपविद्याऽनभिज्ञोलोकः यदि अपविद्धमाचारविभ्रष्टं मा मां जगति वदति तर्हि तद्वचनं न गणये ॥ २९ ॥

भृगुस्तु भगवन्माया मोहिताः ब्रह्मादयोभगवत्प्रसादं विना आत्मानमपि न जानन्ति कुतो भगवन्तं परमात्मानमिति वदन् भगवत्प्रसादं प्रार्थयते यन्मायधेति यस्य तव गहनया दुरूहया मायया अपहृत आत्मबोधोयेषां ते आत्मन् आत्मनि जीवे श्रितं विद्यमानमपि तव तत्त्वं न विदन्ति सोऽयंप्रसीदतु प्रसादं करोतु प्रणत आत्मा मनो येषां तेषां बन्धुः ॥ ३० ॥

---

भाषाटीका

वक्षस्थल में जिनके लक्ष्मी जी विराजमान हैं और वनमाला को धारण किये हैं सुन्दर मनोहर मन्दहास से जगत्को आनन्द दे रहे हैं दोनो तरफ से राजहंसों के तुल्य चामर दुररहे हैं मस्तक के ऊपर चन्द्रमाके तुल्य श्वेतछत्र से अत्यन्त शोभित हैं ॥ २१ ॥

उन परमात्मा को आये देखकर देवता आदिक ब्रह्मा महादेव गन्धर्वादिक शीघ्र उठकर साष्टाङ्ग प्रणाम करतेभये ॥ २२ ॥

उन नारायण के तेजके मारे सबकी कांति नष्ट होगई सबके वचन बन्द होगये सबही भययुक्त होगये मस्तकों पर हाथ जोड़ कर अधोक्षज नारायण की स्तुति करने लगे ॥ २३ ॥

ब्रह्मोवाच ।

नैतत्स्वरूपं भवतोऽसौ पदार्थभेदग्रहैः पुरुषो यावदीक्षेत् ।
ज्ञानस्य चार्थस्य गुणस्य चाश्रयो मायामयाद्व्यतिरिक्तो यतस्त्वम् ॥ ३१ ॥

इन्द्र उवाच

इदमप्यच्युत ! विश्वभावनं वपुरानन्दकरं मनोदृशाम् ।
सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डैरुपपन्नमष्टभिः ॥ ३२ ॥

पत्न्य ऊचुः

यज्ञोऽयं तव यजनाय केन सृष्टो विध्वस्तः पशुपतिनाऽद्य दक्षकोपात् ।
तं नस्त्वं शवशयनाभशान्तमेधं यज्ञात्मन् ! नलिनरुचा दृशा पुनीहि ॥ ३३ ॥

॥ ऋषय ऊचुः ॥

अनन्वितं ते भगवन् ! विचेष्टितं यदात्मना चरसि हि कर्म नाज्यसे ।
विभूतये यत उपसेदुरीश्वरीं न मन्यते स्वयमनुवर्त्तती भवान् ॥ ३४ ॥

भाषाटीका

यद्यपि उनकी महिमा जानने को ब्रह्मादि देवों की मनोवृत्ति असमर्थथीं तथापि कृपा से धारण की भगवान की मूर्ति को देख कर यथा शक्ति सवही स्तुति करने लगे ॥ २४ ॥

जब भगवान ने सबकी पूजन सामग्री को अङ्गीकार करलिया तब, सब यज्ञोंके ईश्वर सब प्रजापतियों के परमगुरु नन्द सुनन्दादिकों से संसेवित भगवान् को हाथजोड कर सावधान होकर परमआनन्द से दक्षप्रजापति स्तुति करने लगे ॥ २५ ॥

दक्षजी कहने लगे हे प्रभो ! आप सम्पूर्ण बुद्धियों की अवस्थाओं से निवृत्त हो चैतन्य मात्र हो भय रहित हो मायाको दूरकर के विराजो हो फिर उसी ज्ञान शक्तिरूप मायाकों स्वीकार करके पुरुष रूपको धारण करके स्वतन्त्र होकरभी रागादियुक्त• के तुल्य रहतेहो ॥ २६ ॥

ऋत्विज लोग बोले हे उपाधि रहित परमात्मन् ! नन्दीश्वरजी के शाप से हमारी बुद्धि कर्मों मे आग्रह करने वाली होगई है तिससे हम आपके तत्त्वस्वरूप को नहीं जान सके हैं अब हमने इस वेदत्रयी प्रतिपाद्य धर्म जनक यज्ञ के स्वरूप को जाना है कि जिसवास्ते आपने अपने आराधनकेही लिये इन्द्रादि देवतों का पूजन इसमें बतायाहै ॥ २७ ॥

सदस्य लोग बोले हे शरणागत रक्षक ! इस जन्ममरणादि के मार्ग में पडाहुआ रक्षक से रहित रागद्वेषादिक महाक्लेशों के किले में बन्द हुआ है जिसमें उग्रकालरूपी सर्प का भय है और विषयरूपी मृगतृष्णा में मोहित है शरीर देहादि कों का जिसके बडा भार है खलपुरुषरूपी व्याघ्रादिकों के भय वाले रागद्वेषादिकों के तथा शोकरूपी अग्निके गड्ढेमें पडाहुआ अज्ञानी तथा काममें युक्त जीवों का समूह ऐसा कौन है कि जो कभी आपके शरणमें आवै अर्थात् आपकी कृपा विनानहीं आसके ॥ २८ ॥

श्रीमहादेवजी कहनेलगे हेवरद ! जगत्से विरक्त सब मुनियों के आदर से पूजने योग्य तथा सकल मनोरथों के देने वाले सर्वोत्तम आपके चरण कमल में मनलगाने से, न जान कर यदि य[ह] संसारि जन मेरेकुं आचार भ्रष्ट कहता है तो कहे मैंतो आपके परमअनुग्रह से उस बातको कुछनहीं गिनताहूं ॥ २९ ॥

भृगुजी बोले हे प्रभो ! जिन आपकी दुस्तरमायासे ज्ञानहरण होजाने से ब्रह्मादिक देहधारी सब अज्ञान अन्धकार में सोते हुये अभी तकभी अपने हृदय में स्थितभी आपके स्वरूपके तत्त्वको नहीं जानते हैं सोही आप प्रणत जनों के बन्धु हमारे ऊपर प्रसन्न हो जावैं ॥ ३० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

ब्रह्मादयो न विदन्तीति भृगुणोक्ते तदसहमानो ब्रह्मा तत्त्वज्ञानमाविष्कुर्वन्निवाह नैतदिति । पदार्थभेदग्राहकैरिन्द्रियैर्गुणस्येन्द्रियस्य । यद्वा ज्ञानार्थयोः कारणस्य सत्त्वादेः ॥ ३१ ॥

इन्द्रस्तु इन्द्रियविषयः सर्वोऽपि मिथ्येति ब्रह्मणोक्तमसहमान आह । इदं तव वपुरपि उपपन्नमेव ननु प्रपञ्चवदनिर्वचनीयतया अनुपपन्नम् । सुराणां विद्विषः क्षपयन्तीति तथा तैर्भुजदण्डैरुपलक्षितम् ॥ ३२ ॥

ऋत्विजां पत्न्यः स्तुवन्ति । यज्ञोऽयं तव यजनाय त्वां यष्टुं केन ब्रह्मणा पूर्वं सृष्टः । हे यज्ञात्मन् ! त्वं नो यज्ञं नलिनकान्त्या दृशा नेत्रेण पुनीहि पवित्रं कुरु । कथम्भूतं यज्ञं शवाः शेरते यस्मिन्निति शवशयनं श्मशानं तद्वदाभा प्रतीतिर्यस्य सचासौ शान्तमेधश्च उपरतोत्सवः मेधशब्देन पशुहिंसाद्युत्सवो लक्ष्यते । शवमुदकं तत्र शेते इति तथा पद्मं तदाभेति संबोधनं वा ॥ ३३ ॥

ऋषयस्तु कर्माण्यनुतिष्ठन्तस्तत्पुण्येन तत्फलेन च युज्यन्ते भगवति तु तदभावमालक्ष्य विस्मिताः स्तुवन्ति अनन्वितमघटमानं यत्तस्मादात्मना स्वयं कर्माऽचरस्यनुतिष्ठसि नत्वज्यसे न लिप्यसे यतः अन्ये विभूतये संपदे ईश्वरीं लक्ष्मीमुपसेदुर्भेजुः यद्वा यत इति सार्वविभक्तिकस्तसिः यामित्यर्थः भवांस्तु स्वयमेवाऽनुवर्तमानां ता[ं]

॥ सिद्धा ऊचुः ॥

अयं त्वत्कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः।
तृषार्त्तोऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसम्पन्नवन्नः ॥ ३५ ॥

॥ यजमान्युवाच ॥

स्वागतं ते प्रसीदेश ! तुभ्यं नमः श्रीनिवास ! श्रिया कान्तया त्राहि नः।
त्वामृतेऽधीश ! नाङ्गैर्मखः शोभते शीर्षहीनः कवन्धो यथा पूरुषः ॥ ३६ ॥

लोकपाला ऊचुः

दृष्टः किं नो दृग्भिरसद्ग्रहैस्त्वं प्रत्यग्द्रष्टा दृश्यते येन दृश्यम्।
माया ह्येषा भवदीया हि भूमन् ! यस्त्वं षष्ठः पञ्चभिर्भासि भूतैः ॥ ३७ ॥

योगेश्वरा ऊचुः

प्रेयान्न तेऽन्योऽस्त्यमुतस्त्वयि प्रभो ! विश्वात्मनीक्षेन्न पृथग्य आत्मनः
अथाऽपि भक्त्येश ! तयोपधावतामनन्यवृत्त्याऽनुगृहाण वत्सल ! ॥ ३८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ॥

न मन्यते नाद्रियते ॥ ३४ ॥

सिद्धास्तु तत्कथासुखमभिनन्दन्तः स्तुवन्ति अयं नो मनोगजस्त्वत्कथैव मृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्यामवगाढः प्रविष्टो दावाग्नितुल्यं संसारतापं न संस्मरति स्म नच ततो निर्गच्छति ब्रह्मसम्पन्नवद्ब्रह्मैक्यं प्राप्त इव ॥ ३५ ॥

यजमानी दक्षपत्नी स्तौति ते स्वागतं भद्रमागमनं जातं हे अधीश! यथा शिरसा हीनः कवन्धमात्रः पुरुषोऽङ्गैः करचरणाद्यवयवैः शोभमानैरपि न शोभते तथा त्वां विना केवलं प्रयाजाद्यङ्गैर्मखो न शोभतेऽतो नः श्रिया सह त्रायस्व त्वद्भक्तान्कुर्वित्यर्थः ॥ ३६ ॥

लोकपालास्त्वीश्वरत्वाभिमानारूढा भगवतस्तत्त्वमपश्यन्त ऊचुः दृष्टः किं न दृष्टइत्यर्थः कुतः असद्ग्रहैः पुंस्त्वमाविष्टलिङ्गत्वात् असत्प्रकाशरूपाभिर्दृग्भिरिन्द्रियैः अयंभावः शुद्धचित्तानां त्वं शुद्धसत्त्वमूर्तिर्भासि अस्माकं तु वहिर्मुखेन्द्रियाणां पञ्चभूतोपलक्षितो जीवविशेष इवाऽवभासि अतस्त्वमस्मदिन्द्रियगोचरो न भवसि धिगस्म जीवितमिति ॥ ३७ ॥

योगेश्वरास्तदभेदेन भजतामनुग्रहभाक्त्वं मन्यमानाः स्वामिभृत्यभावेन भजतामप्यनुग्रहं प्रार्थयमानाः स्तुवन्ति द्वाभ्याम् प्रेयानिति विश्वात्मनि परब्रह्मणि त्वयि य आत्मनः पृथक्त्वं नेक्षेत अमुतोऽमुष्मादन्यस्ते प्रेष्ठो नास्ति आत्मनोजीवान्पृथक्त्वनेक्षेतेति वा हे वत्सल ! भक्तजनप्रिय ! अतन्यवृत्त्याऽव्यभिचारिण्या भक्त्या भजतोऽनुगृहाणेत्यर्थः ॥ ३८ ॥

---

श्रीराधारमणदास गोस्वामि विरचिता
दीपिन्याख्या दीपिकाटिप्पणी

यावद्वस्तु इन्द्रियैरीक्षेत जानाति तावति प्राकृते वस्तुनि पतत् श्रीविग्रहात्मकं ते स्वरूपं नैव किन्त्वप्राकृतं ब्रह्मात्मकमेव तदुक्तं "ब्रह्मतर्के देहदेहिभिदा चात्र नेश्वरं विद्यते क्वचित्। न विष्णोर्न च मुक्तानां क्वापि भिन्नो गुणो मत"इति तत्र हेतुः यतस्त्वमिन्द्रियज्ञ-

श्रीराधारमणदास गोस्वामिविरचिता
दीपिन्याख्या दीपिका टिप्पणी

ज्ञानस्य गुणस्येन्द्रियस्य अर्थस्य च ज्ञानविषयघटादेराश्रयः प्रकाशकः अद्वयवादिमते तत्तत्प्रतीतेरधिष्ठानं न हि प्रकाशः प्रकाश विषयो भवति न चाऽधिष्ठानमध्यस्तज्ञानविषयं भवतीति उभयत्र तात्पर्यम् तत्रैव हेत्वन्तरं मायामयादूय हिरङ्गशक्तिकार्यात्स्वरूपात्मकविग्रहस्त्वं व्यतिरिक्तः परमते तु अज्ञानकार्याददधिष्ठानस्वरूपस्त्वं व्यतिरिक्तः किन्तु विवर्त्तवादेऽपि गले गृहीतन्यायेनाऽधिष्ठानेऽपि स्वरूपभूता शक्तिस्तैरवश्यं मन्तव्यैव किञ्चित्करत्वमेव शक्तिस्तथा च यथा शुक्तावेव रजतभ्रान्तिर्नत्वङ्गारादौ तथा ब्रह्मण्येव जगद्भ्रान्तिर्नान्यत्रेति नियमात्मा शक्तिरस्त्येव अन्यथाऽज्ञानेनैव विवर्तनां किं तदतिरिक्तब्रह्मस्वीकारेण तदुक्तं श्रीशङ्कराचार्य्यचरणैस्स्वभाष्ये शक्तिश्च कारणकार्यनियमात्मा कल्प्यमाना नान्याऽसती कार्यं नियच्छेत् असत्त्वाऽविशेषात् अन्यथाऽविशेषाच्च तस्मात्कारणस्यात्मभूताशक्तिः शक्तेश्चात्मभूतं कार्यमिति अलमति प्रसङ्गेन प्रकृतमनुसरामः पूर्वार्थे गुणशब्दस्य गुणकार्यं लक्षणेत्यरुचौ यद्वेति ॥३१॥

उपपन्नमेव सत्यत्वेन सिद्धमेव यदि भवत्कृपयाऽस्मदिन्द्रियगोचरं न स्यात्तदाऽऽनन्दोऽपि न स्यात् तस्मादिन्द्रियैर्नेत्तदिति ग्रहो क्तिरसङ्गतेति कटाक्षः ॥ ३२ ॥

दृशा पुनीहीति त्वत्सांनिध्यमन्तरा न किमपि सिद्ध्यतीति भावः ॥ ३३ ॥

अघटमानत्वे हेत्वन्तरं यतश्चेति पूर्वार्थे चकाराध्याहारः यत इत्य धिकश्च यद्यस्मादित्यनेनैवोभयवाक्यस्यैव हेतुत्वोपपत्तेरित्यरुचौ यद्वेति ईश्वरीं जगल्लक्ष्मीम् ॥ ३४ ॥

सिद्धा आत्मारामाः ततः पीयूषनद्यास्सकाशान्न निस्सरति ब्रह्मसम्पन्नवदिति निर्गमनाभावमात्रे दृष्टान्तः न त्वानन्दसाम्ये "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् सा ब्रह्मणि स्वमहिमन्यपि नाथ ! माभूद्,,इत्यादिनाऽऽनन्दतारतम्यप्रतिपादनात् ॥ ३५ ॥

### श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्या दीपिका टिप्पणी ॥

स्तौति सर्वदेवेष्वाक्षेपपूर्वकमिति शेषः प्रयाजाद्यङ्गानि समिधो-यजति इडां यजति वर्हिर्यजति तनूनपातं यजति स्वाहाकारं यजतीति पञ्च विधानि प्रयाजसंज्ञकान्यङ्गानि आदिना व्रीह्यादिपरिग्रहः दर्शपौर्णमासयोः स्वर्गजननं प्रति कथम्भावाकाङ्क्षायां समिदादीनां कथंभावाकाङ्क्षोपशमकत्वेनान्वयात्तेपामङ्गत्वेन विनियोगः प्रकरणाज्ज्ञेयः अतस्त्वां विनाऽङ्गानामशोभाकरत्वात् श्रिया सह त्रायस्वेति यदि संसारान्मुक्तीच्छामात्रं त्राणं स्यात्तदा श्रीसाहित्यमपुष्टार्थं स्यात् तस्माद्दास्यभावेच्छैव गम्यते इत्यभिप्रेत्य त्वद्भक्तान् कुर्विति फलितोऽर्थः ॥ ३६ ॥

भगवत्तत्त्वमपश्यन्तः किन्तु विशेष्यमात्रं निर्विशेषत्वमेव परत्वेन मन्यन्त इति पूरणीयम् भगवत्कृपया भगवतः प्रत्यक्षेऽपि तदमननात् षष्ठः पञ्चभूतातिरिक्तस्सच्चिदानन्ददेह इत्यर्थः पञ्चभिर्भूतैरुपलक्षितो भौतिकदेह इव यत्प्रतीयसे एषा भवदीया माया प्रतारणाशक्तिर्भवति "नाहं प्रकाशः सर्वस्य योगमायासमावृत,, इति श्रीगीतोक्तेः भावार्थे पञ्चभूतोपलक्षित इति जहदजहल्लक्षणामाश्रित्योक्तमतोऽधिगतमज्ञीवितमित्युक्त्वा भगवद्विग्रहे लक्षणावादिनो धिक्कृता इति गम्यते तदुक्तं पाद्मे "यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः । स सर्वस्माद्बहिष्कार्यः श्रौतस्मार्तोद्धिकर्मणः ॥ मुखं तस्याऽवलोक्यापि सचैलः स्नानमाचरेद्,, इति ॥ ३७ ॥

अनुग्रहभाक्त्व कृपापात्रत्वं मन्यमाना आत्मनः स्वस्य पृथक्त्वं स्वतन्त्रसत्ताकत्वं किन्त्वत्र,व्याजस्तुत्या यद्यपि ज्ञानिनः श्रेष्ठास्तथाप्यस्माकन्तु स्वामिभृत्यभावेन भजन एवाऽभिरुचिरित्युक्त्वा दासा एव तवातिप्रिया इति ज्ञानिष्वाक्षेपो व्यज्यते तत्र हेतुः हेवत्सल ! सर्वत्र भक्तवत्सल इत्येव नाम न तु ज्ञानिवत्सलेति "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय,, इत्यादौ ज्ञानिवत्सलत्वं यच्छ्रूयते तच्च तुर्विधा भजन्ते इत्यत्र भजनश्रवणाद्भगवज्ज्ञानी एव प्रस्तूयते नतु शुष्कज्ञानी "श्रेयःसृतिं भक्तिमुदस्य ते प्रभोः क्लिश्यन्ति ये केवलबोधलब्धय,, इत्यादौ तस्य निन्दाश्रवणात् ॥ ३८ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका

अथ ब्रह्मा नात्मन् श्रितं तवविदन्त्यधुनापि तत्त्वमिति भगवत्तत्त्वस्य वेद्यत्वं यद्भृगुणोक्तं तदेव प्रपञ्चयन्नाह नैतदिति । भवतएतद्वाङ्मनसागोचरं स्वरूपं पुरुषो जीवः पदार्थानां भेदं स्वाऽसाधारणं धर्मं गृह्णन्तीति पदार्थभेदग्रहाः पदार्थभेदोगृह्यत एभिरिति वा पदार्थभेदग्रहाः रूपस्पर्शादिग्राहकैश्चक्षुरादिभिरिन्द्रियैरित्यर्थः नेक्षेत् नसाक्षात्कुर्यात् कुतः यावत् यावता यत इत्यर्थः असौ पुरुषः ज्ञानस्य ज्ञायते अनेनेति ज्ञानं करणे ल्युट् तस्य इन्द्रियवर्गस्य अर्थस्यशब्दादेर्विषयस्य गुणस्य च ज्ञानार्थयोः कारणस्य सत्त्वादिगुणस्य च आश्रयः त्वन्तु मायामयात् मायापरिणामरूपात् असतो देहादेःतत्संसृष्टाच्च जीवात् व्यतिरिक्तोऽत्यन्तविलक्षणः प्राकृतं हि चक्षुराद्रीन्द्रियं प्राकृतमेव गृह्णीयात्त्वमप्राकृतं त्वत्स्वरूपमितिभावः ॥ ३१ ॥

इन्द्रस्तु भगवदवतारस्य धर्मसंस्थापनार्थत्वमनुसन्दधन्नाह इदमिति । हे अच्युत ! इदं तव वपुः शरीरं विश्वभावनं विश्वं भावयति सुखिनं करोतीति विश्वभावनम् अतएव मनोदृशां मनसां दृशाञ्च आनन्दं करोतीत्यानन्दकरम् अस्य रूपस्य धर्मसंस्थापनार्थत्वात् तस्य चाधर्मविरतिपूर्वकत्वादधार्मिकविरत्युपयुक्तत्वं विग्रहस्याह । सुरविद्विषः सुराणां विद्विषः असुरास्तान्क्षपयन्तीति तैः उद्धृतान्यायुधानियैस्तैरष्टभिर्भुजदण्डैः दण्डवद्दीर्घैर्भुजैरुपपन्नं युक्तम् ॥ ३२ ॥

ऋत्विक्पत्न्यस्तु भवदाराधनत्वेनोपक्रान्तं विच्छिन्नमध्वरं कृपादृष्ट्या पवित्रीकुर्वित्याहुः यज्ञ इति । अयं यज्ञस्तव यजनाय आराधनाय केन ब्रह्मणा दक्षेण वा पूर्वं सृष्टः आरब्धः सचेदानीं पशुपतिना रुद्रेण दक्षे कोपात् विध्वस्तः हे यज्ञात्मन् ! यज्ञआत्मा-मूर्तिर्यस्य तस्य संबुद्धिः नोऽस्माकं यज्ञं नलिनकान्त्या दृशा नेत्रेण पुनीहि पवित्रं कुरु कथं भूतं यज्ञं शवाः शेरते यस्मिन्निति शवशयनं श्मशानं तद्वदाभा प्रतीतिर्यस्य सः मेधशब्देन पशुहिंसाद्युत्सवो लक्ष्यते शान्तः मेधो यस्य सः उपरतोत्सवः शवशयनाभश्चासौ शान्तमेधश्चेति कर्मधारयः ॥ ३३ ॥

ऋषयस्तु यत्परमात्मनोऽसाधारणमपहतपाप्मत्वं देवमनुष्यादिषु ययापुण्यसजातीय चेष्टितत्वेऽपि तत्फलानामननुभवितृत्वरूपं तदनुसन्दधानाः परिपूर्णत्वेन स्तुवन्ति अनन्वितमिति हे भगवन् ! ते तव त्विचेष्टितमिदमनन्वितमघटमानं विस्मयनीयमित्यर्थः किं तत्राह आत्मना स्वयं कर्म पुण्यापुण्यसजातीयं कर्म चरसि अनुतिष्ठसि नाञ्जसे तत्कृतेन फलेन नलिप्यसे इत्यर्थः इदमप्यन्यदनन्वितमित्याहुः यत इति चतुर्थ्यर्थे तासिः तस्य सार्वविभक्तिकत्वात् यस्यै विभूतये यद्विभूत्यर्थम् ईश्वरीं लक्ष्मीम् उपसेदुःभेजुः ब्रह्मादयइति शेषः द्वितीयार्थेवा तासिः विभूतये सम्पदे यामीश्वरीम् भेजुस्तां स्वयमनुवर्तिनीं स्वयमेवानुवर्तमानां भवाश्च मन्यते नाद्रियते उपेक्षत इत्यर्थः अनेन परिपूर्णत्वमुक्तम् ॥ ३४ ॥

सिद्धास्तु तत्कथासुखमभिनन्दन्तः स्तुवन्ति अयमिति । अयं नोऽस्माकं मनोवारणः मनोगजः क्लेशा आध्यात्मिकादयस्तापास्त एवदावाग्नयस्तैर्दग्धः अतएव तृषाशब्दादिविषयथाऽसक्त्याआर्तः पीडितः ते तव त्वत्कथैव मृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्याम् अवगाढःप्रविष्टो दावं दावाग्नितुल्यसांसारिकाध्यात्मिकादि तापं न सस्मार न स्मरति नच ततो निर्गच्छति ब्रह्मसम्पन्नवत् मुक्तवत् सुखित एवाऽवतिष्ठत इत्यर्थः ॥ ३५ ॥

दक्षपत्नी यजमानी स्तौति स्वागतमिति हेईश ! ते तव स्वागतं भद्रमागमनं जातं हे श्रीनिवास ! प्रसीद प्रसन्नोभव अस्माकमिति शेषः ते तुभ्यं नमः हे अधीश ! यथा शिरसा हीनः कबन्धमात्रः पुरुषः अङ्गैः करचरणाद्यवयवैः शोभनैरपि न शोभते तथा त्वां विना केवलं प्रयाजाद्यङ्गैर्मखो न शोभते अतो नः श्रिया कान्तया सह त्रायस्व पालयेत्यर्थः ॥ ३६ ॥

लोकपालास्तु भगवतः सौलभ्यं तन्मायावैभवम् अनुसन्दधानाः स्तुवन्ति दृष्ट इति त्वं वाङ्मनसागोचरस्वरूपस्वभावस्त्वं नः अस्माकं दृग्भिः मांसचक्षुर्भिः किं दृष्टः कथं दृष्ट इत्यर्थः स्वयं वाङ्मनसाऽवेद्यस्वरूपस्वभावत्वे सति अखिलजननयनविषयतागतस्वरूपः सौलभ्येनैवदृष्ट इत्यर्थः नो इति निपातोवा नञ्पर्यायः दृग्भिर्नो दृष्टः किं दृष्ट एवेत्यर्थः सौलभ्यमेवात्रकारणमितिभावः यद्वा एवाऽविचित्रविषयोऽपि दृग्विषयोजात इत्येषा भवदीया माया भवदीयो विचित्रसङ्कल्प इत्यर्थः मायाशब्दस्य विचित्र सर्गकारि शक्तिविशेष परत्वे पूर्वोक्त एवान्वयः साधुः इदमपि तव माया कार्यमेवेत्याह असद्ग्रहैः असतिदेहे तदनुबन्धिनि च ग्रहः आग्रहः अहं ममताऽभिमान

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ॥

येषां तैर्देहात्माभिमानिभिरित्यर्थः दृश्यं शरीरं येन कारणेन प्रत्यग्दृष्ट्या दृश्यते प्रत्यक्त्वेन दृश्यते आत्मतत्त्वेनाऽभिमन्यत इत्यर्थः एषा दृश्यस्य प्रत्यक्त्वेन दृष्टिः भवदीया माया विचित्रा शक्तिरित्यर्थः तत्कारणभूता भवदीया मायेति भावः हिशब्दः श्रौतीं स्मार्तीं च प्रसिद्धिं द्योतयति "अस्मान् मायीसृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः। नासदासीन्नोसदासीत्तदानीन्तमआसीत् तमसा गूढमग्रेप्रकेतं,, "दैवी ह्येषा गुणमयी मम माया दुरत्यया,, इत्यादि श्रुतिस्मृतिश्चात्रानुसन्धेया एतेन देहात्मभ्रमो भगवन्माया मूल एवेत्युक्तं भवति एवं जीवेशैक्य भ्रमोऽपित्वन्मायामूलएवेत्याहुःहेभूमन्! अनेन जीवस्यैलक्षण्यं सूचितं जीवस्याणुस्वरूपत्वात् यस्त्वं प्रकृतिपुरुषविलक्षणस्त्वं पञ्चभिर्भूतैः पृथिव्यादिभिः सहित इति शेषः अत्र पञ्चभिः भूतैरित्यनेन तत्परिणामरूपं शरीरं लक्ष्यते तद्विशिष्टः षष्ठोऽचिद्विलक्षणो जीवः पञ्चभूतप्रस्तावात् षष्ठइत्युक्तिः भासि जीवत्वेन प्रतीयसे एषापि प्रतीतिस्त्वन्मायैव मायाकार्यभूतैवेत्यर्थः हिशब्दः स्वतन्त्रात्मभ्रमवत्पुरुषेषु प्रसिद्धिद्योतकः ॥ ३७ ॥

लोकपालै र्भगवतोरूप सौलभ्यानुसन्धानपूर्वकं मायावैभवरूपजीवेशैक्यप्रतीतेर्भ्रमत्वेचोक्ते योगीश्वराः परमपुरुषात्स्वतन्त्रभेदं वारयन्तस्तद्भेदस्य पारतन्त्र्यं तस्य च शरीरशरीरिभावशेषशेषिभावादिनिबन्धनत्वञ्चाविष्कुर्वन्तो वात्सल्यगुणविशिष्टत्वेनस्तुवन्ति प्रेयानिति। हेप्रभो! विश्वात्मनि विश्वस्य चिदचिदात्मप्रपञ्चस्यान्तः प्रविश्य स्वयमपरित्यक्तस्वरूपस्वभावत्वेन प्रशासनेन धारके अनेन विश्वस्य शरीरत्वमुक्तमितिजीवानां परतन्त्रभेदोऽभ्युपगत इति वेदितव्यं विश्वात्मनि त्वयि विश्वस्माद्विलक्षणे त्वयि यःपुमान् आत्मनः स्वस्य पृथक्त्वम् पृथक्सिद्धत्वं स्वस्याब्रह्मात्मकत्वमित्यर्थः भेद्वेत् न पश्येत् स्वात्मानं परमात्मशरीरत्वेनाऽपृथक्सिद्धत्वेन ब्रह्मात्मकत्वेनाऽनुपश्येदित्यर्थः अमुतः अमुष्मात् तत्त्वदर्शिनः अन्यस्ते तव प्रेयान् प्रीतिविषयो नास्ति तथैव हि भगवता "प्रियो हि ज्ञानिनोऽत्यर्थं महं सच मम प्रिय,,इति गीतमिति भावः अत्र पृथक्त्वं नेचेदित्यनेन तादात्म्येन दर्शनं विहितमित्यर्थवर्णनं त्वयुक्तं विश्वात्मनि भृत्येशतयेति पूर्वोक्तव्याघातात् विश्वतादात्म्यन्तु सर्वसमयविरुद्धं जडाजडयोरत्यैक्यप्रसङ्गात् अतोविश्वात्मनीति व्यतिरेकनिर्देशएव अत आत्मनः पृथक्सिद्धत्वेनैव दर्शनं प्रतिषिध्यते अनेन परतन्त्र भेदउक्तः शरीरात्मभाव वचनेन तन्दतर्भूताः शेषशेषिभावादयोऽप्यर्थादुक्ताः एवं शरीरत्वेनशेषत्वेन चात्मानमनुसन्दधानो मत्प्रिय इति त्वयैवोक्तमिति यस्त्वयानुगृह्यतइति सिद्धमेव किन्तु योऽसौ शास्त्रसिद्धशरीरात्मभावादिं ज्ञानशून्यः केवल स्वस्वामिभावज्ञानवान् सोऽपि वात्सल्यवता त्वयानुग्राह्य एवेत्याहुः तदापीति यद्यप्यात्मनोऽपृथक्त्वं न पश्यति लोकसिद्धं स्वामिभृत्यभावमेव पश्यति तथापि भृत्येशतया भृत्यस्वामिभावेन उपधावतां समीपगतिं प्रक्रान्तानाम् अनिष्पन्नज्ञानानामित्यर्थः अनन्यवृत्त्या अनुग्रहैकदृष्ट्या अनुगृहाण प्रसीद हेवत्सल ! दोषेऽपि गुणबुद्धिर्वात्सल्यं यथा मातुः पुत्रे वत्सलस्य तवाज्ञानुग्रह उचित इति भावः यद्वा अनन्यवृत्त्या अव्यभिचारिण्या भक्त्या उपधावताम् अनुगृहाणेत्यन्वयः ॥ ३८ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

सर्वस्य हरेस्तत्त्वविषयाज्ञानमुक्त्केदानीं तत्सत्त्वप्रमाणाभावेन ब्रह्मसम्पन्नस्यापि निर्गमने स्मृतिः संभवतीत्यत उक्तं न निष्क्रमितात्ति

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

शून्यप्रायं तत्स्यादित्यतोऽव्यक्तादिविशेषज्ञानिप्रत्यक्षं प्रमाणमिति भावेनाह नैतदिति। एतदव्यक्तादि भवतः स्वरूपं सच्चिदानन्दात्मकं न भवति इह जगति यो वैराग्यभक्त्यादिसाधनसामग्रीमानसौपदार्थभेदग्रहोऽव्यक्तादिपदार्थविशेषज्ञानी ब्रह्माद्यन्यतमः पुरुषोयावत्पदार्थजातं तावत् पृथगीक्षेत् पश्यतीति यस्मात्तस्मादित्यर्थः भेदोऽन्तरं विशेषश्च सूक्ष्मेक्ष्यं चाभिधीयत"इति वचनात् अत्र भेदो विशेषः नन्वव्यक्तादेर्व्यतिरिक्तं चेत्तद्दर्शनं प्रमाणं स्यात्तदेव कुतइति तत्राह ज्ञानस्येति ज्ञानस्येत्युपलक्षणं जातावेकवचनम् ज्ञानेन्द्रियाणां कर्मेन्द्रियाणामर्थस्य शब्दादितन्मात्राणां चाकाशादिभूतानां च गुणस्य सत्त्वादेश्च च शब्दात्तत्कार्ययोर्महदहंकारयोश्चाश्रयान्मायामयात् प्रकृतिविकारात् प्रपञ्चाद्व्यतिरिक्तोऽत्यन्तविलक्षणः केवलाचिदानन्दात्मकनित्यदेहस्त्वमिति यतोऽतइति तदुक्तं "अव्यक्तादिपदार्थानां विशेषज्ञानिनापितु। नदेहोवैष्णवोज्ञेय आनन्दः प्राकृतोनहीति,, अव्यक्तादिपदार्थानां विशेष ज्ञानिना वैष्णवो देहो व्यक्तादि पदार्थानां सम्बन्धेन निर्मितोनज्ञेयः तत्र हेतुमाह आनन्दइति यद्वाऽसौ पदार्थभेदग्रहः पुरुषो यावदीक्षेत् तावदेतदव्यक्तादि भवतः स्वरूपं न भवतीति प्रत्येति ज्ञानिदर्शनस्य यथार्थत्व नियमात् अनेनाज्ञानिपक्ष एवाव्यक्तादि स्वरूपं न ज्ञानिपक्ष इत्युक्तम् अन्यत्समम असत इति पाठे अमाङ्गल्यादित्यर्थः ॥ ३१ ॥

अनन्तरातीते श्लोके प्रत्यक्षमेतत् भवतः स्वरूपं न भवतीत्यन्यथा प्रतीतिमिन्द्रस्तुतिव्याजेन निरस्यति इदमिति अच्युत ! हेयोपादेयरहित! हरे ! इदं दृश्यमानं तव वपुर्विश्वभावनं जगदुत्पादकं ब्रह्मेवेत्यन्वयः वपुःशब्दस्यार्थान्तरमाह आनन्दकरमिति'शुभाकारे तनौ वपु'रित्यभिधानं यावद्गुणानुपसंहृत्योपास्ते तदनुसारिफलं च स्वस्यापिस्यादित्याशयेनाह सुरविद्विडिति सुरविद्विषोऽसुरास्तान् क्षपयन्तीति सुरविद्विट्क्षपणास्तैः ॥ ३२ ॥

अन्तरायितस्य कर्मणः पूर्णफलत्वासिद्धिः श्रीनारायणकटाक्षेणैवेत्यभिप्रायेण पत्न्यः स्तुवन्तीत्याह यज्ञोऽयमिति शवं जलं तस्मिन् शेत इति शवशयः अधिकरणे शेतेरिति कर्त्तर्य्यच्प्रत्ययः कमलं नाभौ यस्य स तथोक्तः तस्य सम्बुद्धिः शवशयनाभ ! कमलनाभ ! शान्तमेधमुपरतं यज्ञं एकपदपक्षे शवाःप्रेताः शेरतेऽस्मिनिति शवशयः पुंसि संज्ञायां घःप्रायेणेत्यधिकरणे घः प्रत्ययः । श्मशानं तस्य आभेव आभा यस्य सः श्मशानकान्तिश्चासावुपरतश्चासावध्वरश्चेति स तथोक्तस्तं पुनीहि शुद्धं कृत्वा पूर्णफलं कुर्वित्यर्थः ॥ ३३ ॥

इतोऽपीदं रूपमुपनिषदेकवेद्यं न मायामयमिति भावेन ऋषयः स्तुवन्तीत्याह अनान्वितमिति भगवंस्तव विचेष्टितमनन्वितं लोककर्मविलक्षणं कुतस्त्वमात्मनाऽन्यसहायमन्तरेण यत्कर्म चरसि करोषि तेन कर्मणा नाज्यसे नालिप्यसे हि यस्मात्तस्मात् "स यत्तत्रकिञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गोह्ययं पुरुष" इति श्रुतेः असङ्गित्वं तवैवोचितमित्याहुः विभूतय इति । यतो यस्याः श्रियः प्रसादाद्विभूतयः ईश्वरान् ब्रह्मादीनुपसेदुः प्रापुस्तां श्रियं स्वयमनुवर्तिनीं स्वतएव निषेवमाणां भवाननन्यतं मनज्ञानइति धातोः अप्राप्तफलार्थं सेवत इति न जानाति किन्तु ऋतुधर्मयज्ञलक्ष्यन्दनवत् भक्तिकरणमस्याः स्वभावइत्येव जानातीत्यर्थः ॥ ३४ ॥

ते तव कथा मृष्टपीयूषनद्यामवगाढो मग्नोऽयं मनोवारणः संसाराख्यं दावं न सस्मार स्मरणाभावे निमित्तमाह ब्रह्मेति

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

कथानयवगाहे हेतुमाह क्लेशेत्यादिना अनेनाप्यस्य रूपस्य ब्रह्मत्वं निरणायीति ज्ञायते ॥ ३५ ॥

पूर्वत्र यजमानेन यथातत्त्वं स्तुतम् अत्र लोकसंस्कारपूर्वकमौत्सुक्याच्च स्वाभीष्टसिद्धयें यजमान्या प्रसूत्या स्तूयते।स्वागतमित्यादिना श्रिया कान्तयासह त्राहि रक्ष कबन्ध इत्यनेन शिरोराहित्ये सिद्धेऽपि स्पष्टत्वाय शीर्षहीन इत्युक्तम् अङ्कैर्ऋत्विगादिभिरन्यत्र करचरणादिभिस्सहितोऽप्यनेन सर्वोत्तमत्वं हरेर्द्योतितम् ॥ ३६ ॥

लोकपालस्तुत्यापि हरेरिदं रूपमनारोपितमितिज्ञायत इति आह दृष्टः किमिति । येन त्वया विश्वं सर्वं दृश्यते ज्ञातं भवति स प्रत्यग्दृष्ट्या ज्ञानदृष्ट्या च दृश्यस्त्वं । नोऽस्माकं असद्ग्रहैः शब्दाद्यमङ्गलविषयग्राहिभिर्दृग्भिः किं प्रयोजनमुद्दिश्य दृष्टोऽनुग्रहमन्तरेणेति शेषः षष्ठः पञ्चभूतव्यतिरिक्तशरीरस्त्वं पञ्चभिर्भूतैर्निर्मितशरीरवद्भिर्दृष्टोभासीति यदेषाभवदीया माया हि भवत्सामर्थ्यमेव नह्यमांसदृष्टिगोचरस्वभावस्य तद्गोचरत्वं सामर्थ्यं विना युज्यते भगवन्महिमैवासौ यदृश्योभगवान् स्वयमितिवाक्यं हिशब्दगृहीतं भूमन्नित्यनेन पूर्णस्यायं स्वभाव इति दर्शयति यद्वा प्रत्यग्दृष्ट्या दृष्टस्त्वमस्माकं दृग्भिर्दृष्टः किमहोऽस्मद्भाग्यं दिव्यदृष्टिगोचरस्यान्यदृष्टिगोचरत्वमिति यत्पञ्चभिर्भूतैः सह षष्ठो भासीति यच्च सेयं भवदीया माया हीति ॥ ३७ ॥

योगेश्वरस्तुत्या प्रतीतं पञ्चभूतात्मकत्वं निवारयति प्रेयानिति। अमृतप्रिय मुक्तप्रिय प्रभो!समर्थ!विष्णो!यो जीवो विश्वात्मनि जगदन्तर्यामिणि त्वयि पृथक्त्वमन्यथात्वं नेचेन्नपश्येत् सुरनरतिर्यगादिषु जीवराशिषु प्रेरकत्वेन स्थितानां तव रूपाणां गुणादीनां चाणुमात्रं भेदं न पश्यतीत्यर्थः तस्मादात्मनो जीवादन्यः प्रेयांस्तव नास्ति हेभृत्येश! भृत्यानां दासानामस्माकमीश! भक्तवत्सलया "भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन,, इति प्रसिद्धातयाऽनन्यवृत्त्या उपधावतां सेवमानानामस्माकमनुग्रहोऽस्त्येव अथापि पुनरनुगृहाणेत्यन्वयः "यथार्थज्ञानिनो नान्यः प्रियोविष्णोस्तु कश्चन। तथाप्यधिक सन्तुष्ट्यै प्रसीदेत्यर्थनं पुनः,, इतिवचनादुपपन्ना प्रार्थनेति अत्राभिदज्ञानिनो हरेराधिकप्रियत्वमुच्यत इत्ययमर्थः "पृथक् ज्ञानं तदित्याहुर्यत्किञ्चिद्वीक्ष्यतेऽन्यथा । ज्ञानं ज्ञेयाऽविरोधेन त्वपृथग्वस्तुनोदृशिः ॥ केचिद्भेदं विनिन्दन्ति ह्यासुरज्ञानवृत्तयः । निराकुर्वन्त्यथोमन्दा भेदस्य परमार्थताम् येतु तत्त्वविदोमुख्या भेदं ब्रह्मान्यवस्तुनोः। परमार्थमिति ज्ञात्वा नित्यं विष्णुमुपासते,, इत्यादिप्रमाणाविरुद्ध इति ज्ञातव्यम् आचार्येणापि नपृथग्यआत्मनः अन्यथा यो न पश्यतीति पृथगित्येतदन्यथेति व्याख्यातं न भेदमिति ॥ ३८ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

श्रीब्रह्मापि भृगुवाक्यमनुमोदमान एवाह नैतादिति । इन्द्रियैः करणभूतैः पुरुषो यावद्वस्तु जानाति तावति वस्तुनि भवत एतत् श्रीविग्रहात्मकं स्वरूपं न स्यात् किन्तु तावदतिक्रम्यैव स्यादित्यर्थः तर्हि किं लक्षणं तत्राह । ज्ञानस्येति । तदेव तद्विग्रहलक्षणस्तमेवाश्रयः नातः परं परम यद्भवतः स्वरूपमित्यादेः तस्मात् कृपया स्वय मेव प्रकाशत इति भावः । व्यतिरिक्तोमतस्त्वमिति चित्सुखपाठान्तरं । व्यतिरिक्तश्चासौ अप्रकारश्चेति ॥ ३१ ॥

प्रायोऽसौ चतुर्भुज एवाविर्भवति सम्प्रति त्वष्टभुज इति साश्चर्यमिन्द्र उवाच । इदमपीति । न केवलमानन्दकरं भुजबाहुल्येना-

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

सुरक्षणाऽतिशयाद्युक्तश्च ॥ ३२ ॥

यज्ञपत्न्यस्तु तत्कृपादृष्ट्यार्द्रितचित्ताः दुःखं निवेदयन्ति य[illegible] इति ॥ ३३ ॥

ईश्वरीं जगल्लक्ष्मीम् अनुवर्त्तनीमिति चित्सुखः ॥ ३४ ॥

सिद्धा अत्र आत्मारामाः ते इति चित्सुखः ॥ ३५ ॥

यजमाना इति चित्सुखः ॥ ३६ ॥

लोकपालास्तु तच्छ्रीविग्रहस्य दृश्यत्वं भौतिकत्वं च निवारयन्ति । दृष्टं किं न इति । किन्तु स्वयमेव प्रकाशस इत्यर्थः । तत्र हेतुः षष्ठः पञ्चभूतातिरिक्तो यस्त्वं सपञ्चभिर्भूतैः स्वोपाधिभिरेव भासि नात्मनेति यत् सैषा त्वदीया मायैव । मायाभिभूतानामेव तथा विवेको भवतीत्यर्थः । प्रत्यग्दृष्ट्या इति चित्सुखः ॥ ३७ ॥

प्रेयानिति अयमर्थः यस्त्वयि विश्वात्मनि आत्मनो जीवान् ईक्षेत त्वच्छक्तित्वात्त्वदनन्यत्वेनैव जानाति नतु पृथक् स्वतन्त्रत्वेनेक्षेत अमुतः अमुष्मात् यद्यपि ते प्रेयान्नास्ति वत्सल ! हे भृत्यप्रिय ! भृत्येशभावेन ये भजन्ति तेषां या अनन्यावृत्तिः अव्यभिचारिणी निजभक्तिस्तयैवानुगृहाण प्रस्तुतत्वेनास्मान् ज्ञानिभक्तानिति लभ्यत इति ॥ ३८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

पदार्थभेदग्रहैर्विषयग्राहकैरिन्द्रियैस्तव एतत्स्वरूपं श्रीमूर्त्ति यावन्न पश्येत् तावदेव ज्ञानस्याऽधिदैवस्यार्थस्याऽधिभूतस्य गुणस्याऽध्यात्मस्य चाश्रयः स्यात्।तत्स्वरूपे साक्षाद्दृष्टे सति नज्ञानादेराश्रयः किन्त्वप्राकृत एव स्यात् यतस्त्वं मायामयादसतोऽधिदैवादेर्व्यतिरिक्तश्चिद्रूपो न तैर्गृह्यसे इत्येतावत्तरयन्तु वयं जानीमोऽत एते प्राकृतेन्द्रियाः पश्याम इत्यभिमानवन्तोऽपि तत्स्वरूपं नैव पश्यन्तीति भृग्वादिषु कटाक्षः ॥ ३१ ॥

इदं तव वपुर्विश्वमपि कृपया भाववन्तं करोतीति तत् । सुरविद्विट्क्षपणैर्दुष्टसंहारकैरित्यष्टभुजमिदं ते वपुरस्माभिः प्राकृतेन्द्रियैरप्यनिर्वाच्यया त्वत्कृपया दृष्टमेव आनन्दकरमित्यस्मदाद्यानन्दान्यथानुपपत्तिरेवात्र प्रमाणमिति ब्रह्मणि कटाक्षः ॥ ३२ ॥

केन ब्रह्मणा । शव शब्दस्योदकवाचित्वात् शवशयनं कमलं तन्नाभ शान्तमेधमुपरतपशुहिंसोत्सवं दृशा पुनीहीति त्वत्सन्निधानं विना वर्त्तमानैः सप्रयत्नैरप्येतैः ।किमपि न सिध्यतीत्यवगतमिति सर्वेष्वेव कटाक्षः ॥ ३३ ॥

अनन्वितमघटमानं यद्यस्मादात्मना स्वयं कर्माचरसि अनुतिष्ठसि अथच नाज्यसे न लिप्यसे । कर्मकारिणस्त्वन्ये सर्वे लिप्यन्ते एवेति ब्रह्मादिषु कटाक्षः । यतश्च अन्ये विभूतये सम्पदे ईश्वरीं लक्ष्मीम् उपसेदुः। भेजुः यद्वा यत इति सार्वविभक्तिकस्तासियामित्यर्थः । भवांस्तु स्वयमेवानुवर्त्तमानां तां न मन्यते नाद्रियते ॥ ३४ ॥

सिद्धा इति केवलया भक्त्यैव प्रेमसिद्धिं प्राप्ता इत्यर्थः त्वत्कथैव मृष्टपीयूषनदी शुद्धामृतनदी तस्याम् अवगाढः निमग्नः दावं संसारज्वालां विस्मृतवान् । अतस्ततो न निष्क्रामति ब्रह्मसम्पन्नवत् ब्रह्मैक्यं प्राप्त इवेति किं कर्म करणाकरणलेपालेपविचारेण भगवतो लीलाकथामृते निमज्जामेति ऋषिषु कटाक्षः ॥ ३५ ॥

यजमानी दक्षपत्नी प्रसूतिः । श्रिया! कान्तयेति मयि त्वद्दासस्वायम्भुवमनोः पुत्र्यां देवहूताविव तव महती कृपास्तीत्यवगतम्।

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

यतः स्वकान्तां श्रियं मद्गृहमनैषीस्तन्नोऽस्मान् रुद्रापराधविध्वस्तात् त्राहि । त्वामृते इति ब्रह्मादिसर्वदेवेषु कटाक्षः ॥ ३६ ॥

असद्ग्रहैर्विषयग्राहिभिरिन्द्रियैस्त्वं किं नोदृष्टः अपि तु दृष्ट इत्यर्थः । असद्ग्रहैरिति पुंस्त्वमजहल्लिङ्गत्वात् प्रत्यगपि द्रष्टापि त्वं त्वत्कृपयैव दृश्यः स्या इत्यर्थः । यतस्त्वं षष्ठः पञ्चभूतातिरिक्तोऽपि पञ्चभिर्भूतैर्भौतिकशरीरो भासीत्येषा भवदीया मायैवेति त्वदीयश्रीविग्रहस्य भौतिकत्वं ये मन्यन्ते तैर्जरासन्धादिभिरिव दृष्टोऽपि त्वं माधुर्य्यानुपलम्भात् नैव दृष्ट इति शुष्कज्ञानिषु ऋषिषु देवेषु च कटाक्षः ॥ ३७ ॥

त्वयि विश्वात्मनि आत्मनो जीवान् यः पृथङ्नेक्षेत त्वच्छक्तित्वात्त्वदन्तन्यत्वेनैव जानाति अमुतः अमुष्माद् यद्यपि ते प्रेयानन्यो नास्ति "प्रियो हि ज्ञानिनोऽत्यर्थमहं सच मम प्रिय,, इति त्वदुक्तेः । तथापि तदपि भृत्यंशतया अहं ते भृत्यस्त्वं मे ईश इति भेदेन दासप्रभुभावेन उपधावतां सेवमानानां या अनन्यवृत्तिः अनन्यभक्त्या अनुवृत्तिस्तयैव तद्दानेनैवास्माननुगृहाण वयं निकृष्टास्त्वदभेदभावं प्राप्तुं कथं शक्नुम इति द्योतितया व्याजस्तुत्या दासा एव तवातिप्रिया इति ज्ञानिषु कटाक्षः । यदुक्तं त्वयैव "न तथा मे प्रियतम आत्मयोनिर्नशङ्करः । नच सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान्,,इति । नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विनेति । तत्र लिङ्गं हे वत्सलेति त्वं भक्तवत्सल इति सर्वत्र श्रूयसे ननु ज्ञानि वत्सल इति ॥ ३८ ॥

———

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

ब्रह्मा त्वज्ञानावधिमाह नैतदिति असौ पुरुषो जीवः यावत् ज्ञानस्य श्रोत्रादि ज्ञानेन्द्रियवर्गस्य गुणस्य गुणकार्यस्य आश्रयः देहेन्द्रियात्माभिमानवान् अर्थस्य गृहादेराश्रयास्तत्र ममेदमित्यभिमानवान् तावत्पदार्थभेदग्रहैः मायामयपदार्थभेदमात्रग्राहकैर्बाह्यवृत्तिभिरिन्द्रियैः भवतः एतत्स्वरूपं न ईक्षेत यतस्त्वं मायामयात् वाह्यवृत्तीन्द्रियग्राह्यात् मायिकपदार्थात् व्यतिरिक्तः ॥ ३१ ॥

इन्द्रस्तु अनात्मज्ञो वहिर्वृत्तिभिरिन्द्रियैर्यद्भगवतो रूपं पितामहोक्तं नेक्षते तन्महताऽऽदरेण स्तौति इदमिति । सुरविद्विषामसुराणां क्षपणैस्तत्क्षपणार्थमेवोदायुधैरष्टभिर्भुजदण्डैरुपलक्षितं तवेदं वपुरुपपन्नं सुनिष्पन्नं श्रुतिनिर्णीतमित्यर्थः हे अच्युत ! यथा त्वमच्युतस्तथा तवानुरूपं तव वपुरिति सम्बोधनाभिप्रायः कथं भूतं विश्वम् भावयत्युत्पादयतीति तत् विश्वपूर्ववर्ति विश्वविलक्षणम् नित्यमप्राकृतमित्यर्थः ॥ ३२ ॥

ऋत्विजां पत्न्यस्तु प्रस्तुतं यज्ञं प्रसङ्गादस्मांश्च कृपाऽवलोकनेन पुनीहि इति प्रार्थयन्ते यज्ञ इति । तव यजनाय केन ब्रह्मणा प्रथममयं यज्ञः सृष्टः स चेदानीं पशुपतिना विध्वस्तः हे यज्ञात्मन् ! हे यज्ञमूर्ते ! तं यज्ञं नोऽस्मांश्च दृशा नेत्रेण पुनीहि नलिनरुचेत्यनेन स्वविषये तत्कृपावलोकने औत्सुक्यं सूच्यते कीदृशं यज्ञं शवाः शेरते यत्र तच्छवशयनं श्मशानं तद्वदाभा यस्य सचासौ शान्तमेधः उपरतोत्सवस्तम् ॥ ३३ ॥

ऋषयस्तु सर्वं परायत्तं कर्मवद्यमपूर्णं च ज्ञात्वा स्वायत्तत्वेन कर्मावद्यत्वेन च भगवन्तं स्तुवन्ति अनन्वितमिति । हे भगवन् ! यद्यस्मात् आत्मना स्वेच्छानुसारेणैव ननु परायत्ततया कर्म च रसि अनुतिष्ठसि नत्वज्यसे न लिप्यसे यस्माच्च यत इत्यत्र सार्व-



श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

विभक्तिकस्तसिः यामीश्वरीं लक्ष्मीं विभूतये सम्पदे ब्रह्मादयः उपसेदुः भेजुः तां स्वयमनुवर्ततीमनुवर्तमानामपि भवान्न मन्यसे स्वविभूतिदात्रीं न मन्यसे स्वतः सिद्धसर्वविभूतिमत्वात् तस्माच्च विचेष्टितं तव वृत्तम् अनन्वितं त्वदन्यत्रासंभावितं त्वय्येव सुसङ्गतमित्यर्थः ॥ ३४ ॥

सिद्धास्तु विषयानन्दवासनां निर्नाशयिषवः ब्रह्मानन्दप्राप्तिकामाः शास्त्रानन्दमभिनन्दन्तः स्तुवन्ति अयमिति । अयं नोऽस्माकं मनएव वारणोगजः क्लेशा आध्यात्मिकादयस्तापा एव दावाग्नयस्तैर्दग्धः सन्तप्तः तृषा विषयवासनया आर्त्तः त्वत्कथैव मृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्यामवगाढो निमग्नः दावं संसाराख्यवनभवं आध्यात्मिकादिक्लेशरूपमग्निं न सस्मार ब्रह्मसम्पन्नवत्ततो न निष्क्रामति त्वत्कथा श्रवणं न त्यजतीत्यर्थः ॥ ३५ ॥

त्वामङ्गिनं विनाङ्गभूतैरन्यैर्देवैस्त्वदाराधनार्थो यज्ञो न शोभतेऽतस्तवागमनं शोभनमित्येवं दक्षपत्नी स्तौति स्वागतमिति । ते स्वागतं शोभनमागमनं जातम् श्रिया लक्ष्म्या सह नोऽस्मान् त्राहि त्वदेकशरणान् कुरु इदमेव यज्ञफलमिति भावः ॥ ३६ ॥

लोकपालास्तु भगवदनुग्राह्यैरिन्द्रियैरेव भगवान् गृह्यते ननु बाह्यवृत्तिभिरिन्द्रियैरित्याहुःअसद्ग्रहैः असति अनित्ये संसारे ग्रहोऽभिनिवेशोयेषां तैरिन्द्रियैःदृग्भिर्मनोबुद्ध्यादिवृत्तिभिश्च प्रत्यग्द्रष्टा प्रत्यग्रोऽतीन्द्रियस्यापि द्रष्टा त्वं नोस्माभिर्दृष्टः किं निर्भ्रमत्वेन निश्चितः किं नेत्यर्थः "नसन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनं नच क्षुषा गृह्यते नापि वाचा,,इत्यादि श्रुतिभ्यः असद्ग्रहैरित्यनेन त्वदनुगृहीतैः सद्ग्रहैस्तु त्वां त्वदनन्याः पश्यन्तीति द्योत्यते"मनसैवानुद्रष्टव्यः दृश्यते सूक्ष्मया बुद्ध्या दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्" इत्यादि शास्त्रात् अतएव यस्त्वं षष्ठः पञ्चभूतकारणभूतः पञ्चभिर्भूतैः विश्वाकारेण स्थितैर्भासि विश्वरूपोभासि सोऽपिनोदृष्टः किं नेत्यर्थः कारणविज्ञानेन कार्यविज्ञानप्रतिज्ञानात् येन त्वया विज्ञानेन नु दृश्यं सर्वं दर्शनार्हं दृश्यते तथा च श्रुतिः "यद्विज्ञानेन सर्वं विज्ञातं भवती,,ति ननु लोकपालानां भवतामप्येवं विधेऽज्ञाने कोहेतुरित्यत्राहुःमायेति । हेभूमन्!एषाऽस्मज्ज्ञानावरणकर्त्री भवदीया माया प्रकृत्याख्या त्वदीया शक्तिः "मम माया दुरत्यया "माययापहृतज्ञाना,, इत्यादि श्रीमुखोक्तेः ॥ ३७ ॥

योगेश्वरास्तु "तत्त्वमसि "क्षेत्रज्ञं चापिमां विद्धि "अंशोनानाव्यपदेशादन्यथा चापि दासकितवादित्वमधीयत एके,, इत्यादि श्रुतिस्मृतिसूत्रसिद्धान्तभूतद्वैताद्वैतात्मजीवब्रह्मसम्बन्धविज्ञानी भक्तस्तवातिप्रियोऽपि तथापि केवल भेदबुद्धयःलोकप्रसिद्धेन स्वस्वामिभावेन त्वां भजन्तोजना भक्तवत्सलेन त्वयाऽनुग्राह्या इति प्रार्थयमानाः स्तुवन्ति प्रेयानिति हेप्रभो ! आत्मनः जीवान् त्वदंशभूतान् परस्परं त्वत्तश्च भिन्नस्वरूपानपि विश्वात्मनि सर्वात्मनि अंशिनि त्वयि पृथक् भिन्नान् यो नेक्षेत्नपश्येत् अमुतः अमुष्मात् अन्यस्ते प्रेयान् प्रेष्ठो नास्ति "ज्ञानीत्वात्मैव मेमतमिति,, श्रीमुखोक्तेश्च अथापि ईशतया नृपेत्यादि वत् केवलनियन्तृतया अव्यभिचारिण्या भक्त्या उपधावताम् हेवत्सल ! हेभक्तवत्सल ! अनुगृहाण प्रसीद ॥ ३८ ॥

———

भाषाटीका

ब्रह्माजी बोले हे प्रभो ! यह पुरुष भेदों की ग्रहण करने वाली इन इन्द्रियों से जितनी वस्तु देखता है सो आपका रूप नहीं है

जगदुद्भवस्थितिलयेषु दैवतो बहुभिद्यमानगुणयाऽऽत्ममायया ।
रचितात्मभेदमतये स्वसंस्थया विनिवर्तितभ्रमगुणात्मने नमः ॥ ३९ ॥

ब्रह्मोवाच ।

नमस्ते श्रितसत्त्वाय धर्मादीनां च सूतये ।
निर्गुणाय च यत्काष्ठां नाहं वेदाऽपरेऽपि च ॥ ४० ॥

अग्निरुवाच ।

यत्तेजसाऽहं सुसमिद्धतेजा हव्यं वहे स्वध्वर आज्यसिक्तम् ।
तं यज्ञियं पञ्चविधश्च पञ्चभिः स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम् ॥ ४१ ॥

देवा ऊचुः ।

पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं त्वमेवाद्यस्तस्मिन्सलिल उरगेन्द्राधिशयने ।
पुमाञ्छेषे सिद्धैर्हृदि विमृशिताध्यात्मपदविः स एवाद्याक्ष्णोर्यः पथि चरसि भृत्यानवसि नः ॥ ४२ ॥

भाषाटीका

क्योंकि आपतो ज्ञान विषय इन्द्रिय इन तीनों के आश्रय होने से सब मायिक पदार्थ से भिन्नहो ॥ ३१ ॥

इन्द्र बोले हे अच्युत ! जगत् की रक्षा करने वाला मनदृष्टि को आनन्द देने वाला दैत्यों के नाश करने वाले तथा उद्यत आयुधों से युक्त आठ भुजदण्डो से युक्त जो यह भी आपका स्वरूप है सोभी दिव्यही है किन्तु कल्पित नहीं है ॥ ३२ ॥

यज्ञ पत्नी बोलीं हे यज्ञ स्वरूप ! आपके आराधन के इस यज्ञकुं दक्षने आरम्भ किया दक्षपर कुपित रुद्रने इसका ध्वंसकिया तब आज यह यज्ञ पशुमेधादि कर्म न होने से श्मशान तुल्य दीखताहै इसको आप अपनी कमलकी कान्ति के तुल्य नेत्र दृष्टि से पवित्र करो ॥ ३३ ॥

ऋषि लोग बोले हे भगवन् ! आपकी लीला बडी अद्भुत है, क्योंकि अपने शरीर से सब कर्म करते हो और पाप पुण्य से लिप्त नहीं होते हो और जिस ईश्वरी लक्ष्मीकुं सब ब्रह्मादिक विभूति के लिये पूजते हैं वही लक्ष्मी आपकी सेवा करती है तौभी आप उस लक्ष्मी को नहीं चाहते हो ॥ ३४ ॥

सिद्ध लोग बोले हे भगवन् ! हमारा यह मन रूप हस्ती संसारके क्लेशरूपी दावानल से जलता हुआ तथा तृषित हुआ आपकी कथारूपी शुद्ध अमृत नदी में प्रवेश होकर ब्रह्मानन्द में मग्नसा होकर उस दावाग्नि को नहीं स्मरण करता है और उसमें से नहीं निकलताहै ॥ ३५ ॥

दक्षकी पत्नी बोली हे ईश ! हे अधीश ! आपका सुन्दर आगमनहुआ आप के अर्थ नमस्कार है आप प्रसन्नहोवो जैसे और अङ्गोंके रहने परभी मस्तकके न रहने से कवन्ध पुरुष नहीं शोभित होता है तैसे आप के विना यह यज्ञ शोभित नहीं होता है तिस से हे श्रीनिवास ! अपनी प्रिया लक्ष्मी के सहित आप हमारी रक्षा करो ॥ ३६ ॥

लोकपाल बोले हे भूमन् ! आप सबके अन्तःकरणोंमें रह कर सबके जानने वाले हो आप के ही अनुग्रह से सब चेतनों को इन्द्रियों के द्वारा पदार्थ ज्ञान होता है तब तिन आपको हमलोग क्या इन असत् पदार्थ ग्राही इन्द्रियों से देख सक्ते हैं किन्तु नहीं जो आप पांच भूतों से भिन्न छठे होकर के भी पांच भूतों के साथ रहे से मालूम पडते हो यह केवल आपकी मायाहै ॥ ३७ ॥

योगेश्वर बोले हे प्रभो ! हे ईश ! हे भक्तवत्सल ! जो पुरुष सब जीवों के अन्तर्यामी होने से उन जीवों को आपसे पृथक् नहीं देखता है उस पुरुष से दूसरा आपको प्रिय नहीं है तौभी अनन्य वृत्ति वाली भक्ति से शास्त्रोक्त विधिसे भजनेवाले हम लोगों पर आप अनुग्रहकरो ॥ ३८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

अव्यभिचारिणी भक्तिः कथं स्याद्भजनीयानां बहुत्वादित्याशङ्क्याहुः जगतउद्भवादिषु निमित्तेषु दैवतो जीवादृष्टाद् बहुधाभिद्यमाना गुणा यस्यास्तया स्वमाययाऽऽत्मनि स्वरूपे रचिता ब्रह्मादिभेदमतिर्येन तस्मै स्वसंस्थया केवलस्वरूपावस्थानेन च विनिवर्तितो भेदभ्रमो गुणाश्च तद्धेतव आत्मनि येन तस्मै ॥ ३९ ॥

शब्दब्रह्म स्तौति नमस्त इति श्रितं स्वीकृतं सत्त्वं येनातोधर्मादिफलप्रसवित्रे ननु सत्त्वगुणत्वं निर्गुणत्वं चैकस्य कथमित्याशङ्क्याह यस्य काष्ठां तत्त्वं नाहं वेद्मि अपरे रुद्रादयश्च नविदुस्तस्मै ॥४०॥

अग्निस्तु यज्ञमूर्त्तिम् प्रणमति। यस्य तेजसा सुष्ठु समिद्धं प्रदीप्तं तेजोयस्य सोऽहं प्रशस्तेऽध्वरे हविर्वहामि तं यज्ञियं यज्ञाय हितं पालकम् यज्ञं यज्ञमूर्त्तिम् पञ्चविधत्वमैतरेयके उक्तं "स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यानि पशुः सोम„ इति पञ्चभिर्यजुर्भिर्यज्ञमन्त्रैः स्विष्टं सुपूजितम् तथाच श्रुतिः "आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहइति पञ्चाक्षरं द्व्यक्षरोवषट्कारः„ स्मृतिश्च चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेवच । हूयते च पुनर्द्वाभ्यां समे विष्णुः प्रसीदत्विति ॥ ४१ ॥

देवास्तु सत्यं वयमपि देवास्तथापि जगदाद्यन्तयोस्त्वमेव नान्यः कश्चिदित्याहुः पुरेति । कल्पापाये प्रलये विकृतं कार्यजातमुदरीकृत्य संहृत्य त्वमेवाद्यः पुमानुरगेन्द्र एवाधिकं शयनं शय्या

गन्धर्वा ऊचुः

अंशांशास्ते देवमरीच्यादय एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः ।
क्रीडाभाण्डं विश्वमिदं यस्य विभूमंस्तस्मै नित्यं नाथ ! नमस्ते करवाम ॥ ४३ ॥

विद्याधरा ऊचुः

त्वन्मायया ऽर्थमभिपद्य कलेवरेऽस्मिन् कृत्वा ममाहमिति दुर्मतिरुत्पथैः स्वैः ।
क्षिप्तोऽप्यसद्विषयलालस आत्ममोहं युष्मत्कथाऽमृतनिषेवक उद्व्युदस्येत् ॥ ४४ ॥

ब्राह्मणा ऊचुः

त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयं त्वं हि मन्त्रः समिद्दर्भपात्राणि च ।
त्वं सदस्यर्त्विजो दम्पती देवता अग्निहोत्रं स्वधा सोम आज्यं पशुः ॥ ४५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

तस्मिन् शेषे शयनं करोषि सिद्धैर्जनलोकादिवासिभिर्विमृशिता विचिन्तिताऽध्यात्मपदवी ज्ञानमार्गो यस्य स एव त्वं य इदानीमक्ष्णोः पथि चरसि प्रत्यक्षोऽसि अवसि रक्षसि ॥ ४२ ॥

गन्धर्वाप्सरसस्तु वयं भिया केवलं सर्वानपि परमेश्वरत्वेनोपश्लोकयामस्त्वमेव तु परमेश्वरोऽन्ये तु त्वदंशा एवेत्याहुः अंशांशा इति। हे विभूमन्! महत्तम ! क्रीडाभाण्डं क्रीडोपकरणं विश्वं ब्रह्माण्डं यस्य तस्मै ते नमनं कुर्मः ॥ ४३ ॥

विद्याधरास्तु केवलं विद्याभिः सम्पदः प्राप्यन्ते अहङ्कारादिव्यामोहानिवृत्तिस्तु त्वत्कथाश्रवणं विना नास्तीत्याहुः अर्थं पुरुषार्थसाधनं कलेवरमभिपद्य प्राप्य त्वन्माययाऽस्मिन्ममेत्यहमिति चाभिमानं कृत्वेममात्ममोहं युष्मत्कथाऽमृतनिषेवक उद्व्युदस्येत् परित्यजेदन्वयः ननु पुत्रादिभिरधिक्षिप्तो दुःखितः सन्परित्यजेदेव नेत्याहुः क्षिप्तोऽपि दुर्मतिः असत्सु विषयेष्वेव लालसा तृष्णा यस्य सः ॥ ४४ ॥

ब्राह्मणाः स्तुवन्ति त्वमिति त्रिभिः। सदस्याश्च ऋत्विजश्च ४५॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

स्वस्वरूपे भानुस्थानीये रचिता प्रकटिता रश्मिस्थानीयानां ब्रह्मादीनां भेदमतिर्नानात्वज्ञानं येन तद्रूपा या भेदमतिर्येन तथा च भजनीयास्ते ब्रह्मादयो न स्वतन्त्रा इति तान्विहायाऽव्यभिचारिणी भक्तिस्त्वय्येवेत्यर्थः तस्य स्वतन्त्रत्वे हेतुमाह स्वसंस्थयेति। केवलेति मायाशबलत्वव्युदासः भेदभ्रमो हि मायावशीकृते जीव एव सम्भवति नतु मायानियन्तरि भगवति तद्धेतवः भ्रमजनकाः गुणा अपि तत्रैव प्रभवन्ति गुणा जीवस्यैव मे इत्युक्तत्वात् ॥ ३९ ॥

स्वीकृतं स्वसान्निध्येनोपकृतम् अतः श्रितसत्त्वत्वात् धर्मादीत्यादिना ज्ञानवैराग्यादिपरिग्रहः तत्त्वं नाहं वेदोऽपि वेदेति एकस्य सत्त्वगुणत्वान्गुणत्वमन्यमाकारत्वविभुत्वादीनामचिन्त्यशक्तिमयत्वं वेदेनैव व्यवस्थापितम् ॥ ४० ॥

अग्निहोत्रम् "अग्निहोत्रं जुहोति स्वर्गकाम,, इति श्रुतेः अग्निहोत्रशब्दश्चात्र तत्प्रख्यन्यायेन कर्मनामधेयपरः अग्निहोत्राख्यहोमेनेष्टं भावयेदिति वाक्यार्थः दर्शपौर्णमासौ "दर्शपौर्णमासाभ्यां यजेत,, इति श्रुतेः दर्शपौर्णमाससंज्ञकेन यागेनेष्टं भावयेदिति वाक्यार्थः चातुर्मास्यानि "चातुर्मास्येन यजेत,, इति श्रुतेः चातुर्मास्यसंज्ञकेन यागेनेष्टं भावयेदिति वाक्यार्थः पशुः "पशुना यजेते,,ति श्रुतेः पशुना यागं भावयेदिति वाक्यार्थः सोमः "सोमेन यजेते,,ति श्रुतेः अत्र गुणकर्मणोर्मानान्तरेणाऽप्राप्तत्वान्मत्वर्थलक्षणया विशिष्टविधानं न चोभयविधाने सोमेन यागं भावयेत् यागेनेष्टं भावयेदिति वाक्यभेदः विशिष्टस्यैकस्य विधानात् तथा च सोमवता यागेनेष्टं भावयेदिति वाक्यार्थः यज्ञमन्त्रैरिति प्रयोगसमवेतार्थस्मारका मन्त्राः प्रयोगकाले व्याप्रियन्ते प्रयोगविधौ मन्त्रेणैव स्मर्त्तव्यमिति नियमविध्याश्रयणाद् स्मृतौ श्रुत्युक्तमन्त्रा एवाहुस्मृताः शिष्टं स्पष्टम् ४१

देवाः पूज्याः यः प्रत्यक्षोऽसि अवसि च स त्वं य आद्यन्तयोर्वर्त्तमानः पुरुषः स एवाऽसि ॥ ४२ ॥ ४३ ॥

अन्यः भक्तिरहितो विद्यायानपि ॥ ४४ ॥ ॥ ४५ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

ननु भगवतो विश्वात्मकत्वे विश्वगतदोषाणां परमात्मन्यापत्तिस्तनः सुखदुःखाद्यनुभवश्च जीववत्तत्राहुः जगदिति जगत उत्पत्तिस्थितिलयेषु निमित्तभूतेषु जगदुद्भवाद्यर्थमित्यर्थः दैवसां दैवात् देवो भगवान् तत्सम्बन्धिसङ्कल्पो दैवस्तस्मात् बहुभिद्यमानगुणाया बहुधाभिद्यमाना गुणाः ब्रह्मरुद्रादिदेहरूपेणपरिणम्यमानाः सत्त्वादिगुणाः यस्यास्तयात्ममायया रचितात्मभेदमतये रचितः आत्मनि योभेदः देवत्वमनुष्यत्वादिरूपः तद्विषया मतिर्बुद्धिर्यस्य तस्मै देहात्माभिमानान्वितक्षेत्रज्ञशरीरायेत्यर्थः यद्वा बहुभिद्यमानगुणाया बहुभिद्यमानाः देवमनुष्यपशुपादपादिरूपेण परिणम्यमानाः सत्त्वादिगुणा यस्याः तथा आत्मनः परमात्मनो मायया तच्छरीरभूतया माययेत्यर्थः "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः जनयन्तीं सरूपाः गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजा" इत्यादिकमत्रानुसन्धेयम् एवम्भूतया मायया दैवात् भगवत्सङ्कल्पात् जगदुद्भवस्थितिलयेषु सत्सु अत्रात्ममाययेत्यनेन आत्मसम्बन्धित्वावगमात्सम्बन्धसामान्यस्य विशेषपर्यवसानजिज्ञासायां "यस्याक्षरं शरीरं यस्याव्यक्तं शरीर,,मिति श्रुतिव्यवस्थापितशरीरशरीरिभावरूपसम्बन्धविशेषे पर्यवसानात् ब्रह्मात्मिकाया मायाया जगदुपादानत्वमवगन्तव्यं जगदुपादानभूतया मायया जगदुत्पत्त्यादिषु सत्सु स्वसंस्थया .स्वस्य संस्था सम्यगवस्थितिः

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

तयारचितात्मभेदमतये रचिता आत्मभेदा आत्मगता देवत्वमनुष्यत्वादयो भेदास्तद्विषया मतिर्यस्य "तस्मै तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि नामरूपे व्याकरो"दित्यादि श्रुत्युक्तरीत्या स्वस्य चिदचिदन्तरात्मतयाऽनुप्रवेशेन चिदचिद्गतनामरूपभेदस्य स्वपर्यन्तत्वव्याचिकीर्षव इत्यर्थं चिदचिद्गतनामरूपभेदस्य चिदचिद्द्वारा स्वपर्यन्तत्वानुद्रष्ट्र इत्यर्थः एवंभूतायपि विनिवर्त्तितभ्रमगुणात्मने विशेषेण निवर्तिता विनिवर्तितां नित्यानिवर्त्तिता भ्रमः अन्यथा ज्ञानविपरीतज्ञानादिरूपाः गुणाः तद्धेतवो रजस्तम आदिगुणाः आत्मनि येन तस्मै स्वेनैव प्रकाशेन नित्यनिवर्तितहेयायेत्यर्थः अनेन विश्वगतदोषापत्तिः परिहृता एवं भूताय ते नमः केवलं नमस्कुर्मो ननु त्वद्गुणान् वर्णयितुं शक्नुम इतिभावः॥ ३९ ॥

योगीश्वरैः निरस्तनिखिलहेयत्वेन स्तुते भगवति स भगवान् किं निर्गुण इत्याशङ्कायां निरस्तनिखिलहेयः समस्तकल्याणगुणश्चेति स्तुवन्नमस्करोति शब्दब्रह्म नम इति अत्र शब्दब्रह्मशब्देन वेदाविवक्षिताः निर्गुणाय निर्गताः सत्त्वरजस्तमआदयो हेयगुणा यस्मात् तस्मै निरस्तनिखिलदोषायेत्यर्थः कल्याणगुणवत्त्वमाह धर्मादीनां धर्मार्थादीनां प्रसूतये प्रकृष्टा सूतिर्यस्मात् स प्रसूतिः तस्मै प्रसवित्र इत्यर्थः धर्मप्रसवितृत्वं धर्मादिप्रकाशकवेदोत्सर्जनद्वारा तथा च श्रुतिः "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद । इति यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै„इति । स्मृतिश्च "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतय" इति अनेन मन्त्रेण सर्वकारणत्वतदुपयुक्तसर्वज्ञत्वसर्वशक्तित्वहितोपदेष्टृत्ववात्सल्यादिकल्याणगुणजातं विवक्षितं तर्हि कति कल्याणगुणा इत्यत्र तेषामानन्त्यमाह तत्काष्ठां तेषां तत्स्वरूपरूपगुणविभूतीनां काष्ठाम् अवधिमहं शब्दब्रह्म न वेद न जानामि अपरे ब्रह्मादयो न विदुः अहमेव न जानामि कुतोऽपरे मदायत्तसूक्ष्मदर्शिनो जानीयुरिति कैमुत्यन्यायोऽत्र विवक्षितः अत्र ज्ञेयत्वनिषेधो न स्वरूपगुणादिविषयः किन्तु तदियत्ताविषयः तथा च श्रूयते "यस्यामतं तस्य मतं मतं यस्य न वेद सः । यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् । अविज्ञातं विजानतां विज्ञातमविजानताम्"इति परिच्छिन्नत्वेन जानतोऽमतम् अपरिच्छिन्नत्वेन जानतस्तुमतमित्यर्थः:४०

एवं शब्दब्रह्माणि निरस्तनिखिलहेयत्वेन समस्तकल्याणविशिष्टत्वेन भगवन्तं स्तुवन्नग्निः तदभिनन्द्याग्निः सर्वतेजसामाच्छादकत्वसर्वतेजः प्रकाशाऽऽपादकत्वादिकल्याणगुणान्तरविशिष्टत्वेन स्तुवन्नमस्करोति यत्तेजसेति यस्य भगवतस्तेजसा प्रकाशेन सुष्ठुसमिद्धं प्रदीप्तं तेजो यस्य सोऽहम् अनेन स्वस्य तत्प्रकाशेन सुसमिद्धतेजस्त्वकथनेन तत्तेजसा विना स्वस्यासुसमिद्धतेजस्त्वमुक्तम् एतदेव हि सर्वतेजसामाच्छादकत्वं यत्स्वायत्तं सर्वतेजसां प्रकाशनमिति अहमिति सूर्यादीनामुपलक्षणं तथा च श्रूयते "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"इति त्वदाहितशक्तीनामेवास्माकं स्वस्वकार्यक्षमत्वमित्याह यत्तेजसा सुसमिद्धतेजाः अहमध्वरे आज्यसिक्तं हविर्वहामि उद्देश्यामिन्द्रादिदेवतां प्रति नयामीत्यर्थः तं यज्ञियं यज्ञाय हितं यज्ञोद्देश्येन्द्रादिदेवतामूर्तिमित्यर्थः पञ्चविधं त्रेतासभ्यावसथ्यरूपेण पञ्चविधाग्निशरीरिणं पञ्चभिर्यजुर्भिः आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहइति पञ्चाक्षरं द्व्यक्षरो वषट्कारइति श्रुत्युक्तैः पञ्चभिर्यजुर्भिः

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका

स्विष्टं सुष्ठुपूजितं तथा चोक्तं "चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ॥ हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु" इति नित्यम् प्रणतोऽस्मि नमस्कृतवानस्मि ॥ ४१ ॥

अग्नाविन्द्रादिदेवतात्मकत्वेन सर्वयज्ञमूर्तित्वेन च भगवन्तं स्तुत्वा जगत्कारणस्य तवेदं सर्वमुपपन्नमिति मन्वाना देवाः सौलभ्यादिनिकल्याणगुणान्तरविशिष्टत्वेन स्तुवन्ति पुरेति॥ आद्यः सर्वोपादानभूतः पुमान् पुरा अग्रे सृष्टेः प्रागित्यर्थः कल्पापाये प्राक्तनकल्पान्ते स्वकृतं स्वसृष्टं विकृतं कार्यवर्गमुदरीकृत्य उदरे निक्षिप्य संहृत्येति यावत् उरगेन्द्रः शेषः स एवाधिशयनं शय्या यस्मिन् तस्मिन् सलिले शेषे शयितवानसि सिद्धैर्जनलोकवासिभिः हृदि विमृशिता अध्यात्मपदवी स्वात्मतत्त्वज्ञानमार्गो यस्य स योगपरिशुद्धमनोग्राह्य इत्यर्थः एवं भूतोऽपि त्वमेवाद्य अधुना अक्ष्णोः पथिचरासि प्रत्यक्षोऽसि वाङ्मनसागोचरस्त्वं सौलभ्यातिरेकात्प्रत्यक्षोऽसीत्यर्थः भृत्यान्नः अस्मान् अवसि पालयसि अनेन भृत्यानुग्रहकातरत्वमुक्तम् ॥ ४२ ॥

देवेषु सर्वकारणत्वसौलभ्यादि गुणविशिष्टत्वेन स्तुतवत्सु गन्धर्वाप्सरसस्त्वत्कार्यभूतमिदं कृत्स्नं जगत्त्वल्लीलोपकरणमिति स्तुवन्तो नमस्कुर्वन्ति अंशांशा इति हे भूमन् ! कृत्स्नं जगदन्तर्बहिश्च व्याप्य वर्तमान ! हे देव ! द्योतमान ! मरीचिरादिर्मुख्यो येषां तथा ब्रह्मेन्द्रौ आद्यौ मुख्यौ येषां रुद्रः पुरोगो मुख्यो येषाम् एते देवगणास्ते तव अंशांशा अत्र देवगणानां मरीचिब्रह्मेन्द्ररुद्रमुख्यत्वकथनं सृष्टिस्थित्याद्यधिकाराधिकृतदेवताबहुत्वाभिप्रायेण तत्र व्यष्टिस्रष्टॄणां मध्ये चतुर्मुखस्य मरीच्यादीनां च प्रधानत्वात् ब्रह्मादयो मरीच्यादय इति चोक्तं तत्रापि प्राधान्याप्राधान्याभिप्रायेण ब्रह्मादयो मरीच्यादय इति च कोटिद्वयेनोक्तिः इन्द्रपुरोगत्वकथनं पालनाधिकारिदिगीशान्तराभिप्रायेण रुद्रपुरोगत्वकथनं तु संहाराधिकार्यभिप्रायेण एवं सर्वेषांभगवदंशांशत्वं ज्ञानशक्तिबलादिभगवद्गुणलेशाऽभिव्यक्तिकृतमिति वेदितव्यं विशिष्टवस्त्वेकदेशरूपांशत्वन्तु सर्वजीवसाधारणमिति तद्विशिष्य न वक्तव्यं क्रीडाभाण्डं क्रीडापरिकरः इदं विश्वं ब्रह्माण्डं यस्य तस्मै ते तुभ्यं नमः हे नाथ ! ते करवाम कैङ्कर्य्यमिति शेषः ॥ ४३ ॥

एवं दक्षादिषु गन्धर्वाप्सरोऽन्तेषु तत्तत्कल्याणगुणविशिष्टं भगवन्तं स्तुतवत्सु तावदास्तां कल्याणगुणवर्णनमसङ्ख्येयत्वात्तेदाम् इदन्त्वद्भुतमाहात्म्यं त्वत्कथामृतमित्याहुः विद्याधराः त्वन्माययेति त्वन्मायया त्वत्सङ्कल्पेन अर्थं सर्वपुरुषार्थसाधनं नृदेहमभिपद्य अस्मिन् कलेवरे तदनुबन्धिनि च ममाहमिति दुर्मति दुर्बुद्धिं कृत्वापि दुर्मतिरिति प्रथमान्तपाठेऽहमिति शेषः अहं ममाभिमानं कृत्वेत्यर्थः अतएव दुर्मतिः वैषयिकसुखलाभे दुःखितचित्तोऽपि उत्पथैः लोकवेदमर्यादोल्लङ्घिभिः स्वैः पुत्रादिभिः क्षिप्तोऽपि तिरस्कृतोऽपि असद्विषयेषु प्रकृतिपरिणामरूपशब्दादिविषयेष्वासक्तोऽपि यदि युष्मत्कथामृतनिषेवकः युष्मत्कथैवामृतं तन्नितरां सेवत इति युष्मत्कथामृतनिषेवकः सेवनमत्र श्रवणश्रावणादिरूपं विवक्षितं तर्हि आत्ममोहम् अहङ्कारममकाररूपं मोहम् उदूब्युदस्येत् उद्वेव्युदस्येत् परित्यजेत् मुक्तो भवेदितिभावः अहम्ममाभिमानग्रस्तस्यासद्विषयप्रवणस्याऽऽत्ममोहनिवर्त्तनद्वारा मुक्तिसाधनं त्वत्कथामृतमेव नान्य उपायोऽस्तीति इदं त्वत्कथामृतमाहात्म्यमत्यद्भुतमितिभावः॥ ४४ ॥

ब्राह्मणास्तु तावदास्तां कथामृतमाहात्म्यमिदं त्वद्भुततमं त्वन्नाममाहात्म्यमिति कथयिष्यन्तः प्रकृतयज्ञनिर्वृत्त्याचिकाङ्क्षया यज्ञयज्ञसाधनमूर्तित्वेन स्तुवन्तस्तत्प्रसादं प्रार्थयन्ते त्वमिति त्रिभिः

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

त्वं क्रतुर्यज्ञः हविः पुरोडाशादिः सदस्याश्च ऋत्विजश्च ते त्वमेव हुताशस्वतारूपः देवता इन्द्रादयः अग्निहोत्रम् अग्निहोत्राख्यकर्मविशेषः क्रतुरित्यनेन यागात्मकत्वमुक्तम् अग्निहोत्रमिति होमात्मकत्वं देवतोद्देशेन द्रव्यत्यागात्मको यागः स एव प्रक्षेपादिको होमः सर्वत्र सामानाधिकरण्यं शरीरात्मभावनिबन्धनम् ॥ ४५ ॥

---

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

विश्वान्तर्यामित्वं तत्स्वामित्वं च हरेरेव मुख्यमित्याशयेनाहुः जगदिति जगदुद्भवस्थितिलयेषु जगदुत्पत्तिस्थितिसंहारेषु लीलया प्रविभज्यमानगुणया सृष्टौ रजः स्थितौ सत्त्वं संहारे तम इति प्रकारेण विभज्यमानाः पृथक्क्रियमाणाः सत्त्वादिगुणा यस्याः सा तयात्माधीनया मायया प्रकृत्या जडया मिथ्याज्ञानं जनयतीश्वरः तस्य भ्रमश्च । सत्त्वाद्या न सन्ति परमेशितुरितिवचनात् प्रकृत्या रचिता कृताऽऽत्मनां जीवानां भेदमतिर्मिथ्याज्ञानं येन स तथा तस्मै स्वसंस्थया एवार्थे हि शब्दः स्वरूपस्थित्यैव महिमलक्षणया अतिवर्तिता निरस्ता भ्रमो गुणाश्च सत्त्वाद्या यस्मात्स तथा स चासौ आत्मा चेत्यतिवर्तितभ्रमगुणात्मा तस्मै हे अतिवर्तितभ्रम ज्ञानानन्दादिगुणात्मन इति भिन्नं वा पदं हि शब्दो ज्ञानानन्दात्मनो हरेरुपाधिना भ्रमयोग्यत्वं निवारयति ३९

हे अमित ! अनन्त ! ते तुभ्यं नमः तत्त्वायाऽद्वयज्ञानाय अमिताऽऽयारोपितरूपायेति वा धर्मादीनामस्माकं च भूतय उत्पत्तिकारणाय चशब्देनास्मत्कारणत्वं निवारयति कारणस्य रजआदिगुणसंसर्गो नास्तीत्याह निर्गुणायेति सृष्टौ प्रवर्तमानस्य तद्गुणाऽस्पर्शो माहात्म्यातिशयाद्युज्यत इतीममर्थं च शब्देन वक्ति अत्रप्रणतिः सम्यक् स्वरूपज्ञानाऽभावेऽपि सामान्यज्ञानेन घटत इति भावेनाह यत्काष्ठामिति "काष्ठोत्कर्षे सीम्नि दिशी„ति यादवः अपरे मदर्वाचीनाः कुतो विदुर्न कुतोऽपीत्यर्थः अनेनाऽस्य परमात्मत्वे न कोऽपि सन्देह इति दर्शितम् ॥ ४० ॥

अनेनापि महाशङ्कामुन्मूलयति यत्तेजसेति यस्य हरेस्तेजसा "यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक„मिति वचनात् सुसमिद्धतेजाः पूज्यत्वेन सम्यक् प्रवृद्धं तेजो बलं यस्य स तथा अहं जातवेदा अध्वरे यज्ञे आज्यसिक्तमाज्येन युतं हव्यं वहामि देवान्प्राप्य विभज्यार्पयामीत्यर्थः ओंश्रावय अस्तु श्रौषट् यज वेयजामहे वौषडिति यजुर्वेदगतैर्यजुर्भिः पञ्चमन्त्रैः स्विष्टं सुष्ठु पूजितं तं पञ्चविधं पञ्चधा विभक्तविग्रहं यज्ञं यज्ञपुरुषं यज्ञेशं यज्ञभावनं यज्ञभुजमित्येवं विधं भगवन्तं प्रणतोऽस्मीत्यन्वयः यज्ञं यज्ञेशमित्यादिपञ्चविधमिति वा योज्यम् उक्तं च । "यज्ञो यज्ञपुमांश्चैव यज्ञेशो यज्ञभावनः । यज्ञभुक् चेति पञ्चात्मा यज्ञेष्विज्यो हरिः स्वय„मिति ओंश्रावयास्तु श्रौषड्यजाथो ये यजामहे वषट्कारान्तकैर्नित्ययजुर्भिः पञ्चभिर्विभु„रिति ॥ ४१ ॥

कल्पापाये प्रलये स्वेन कृतं विकृतं कार्यरूपं जगदुदरीकृत्य उदरे निधाय यज्जलं सृष्टिकाले त्वया पीतं तस्मिन्सलिले उरगेन्द्र एवाधिकं शयनम् उरगेन्द्राधिशयनं तस्मिन्नाद्यः पुमांस्त्वं शेषे अत्र प्रमाणं चाहुः सिद्धैर्मुक्तैर्वैदैर्वा विमृशिता विचारिता अध्यात्मनः परमात्मनः पदवी यस्य स विमृशिताध्यात्मपदविः य एवंविधः श्रीनारायणः स एव नान्यः अद्य नोऽक्ष्णोः पथि चक्षुर्विषये चरासि भृत्यानस्मानवसि च शब्देन भृत्यरक्षणमेव प्रयोजनं नान्यदित्यर्थं निर्द्धारयति नैतद्स्वरूपं भवत इत्यादिना यदुक्तं तन्निर्धारितमनेनेति ॥ ४२ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

हे देव ! आशासानाः फलमाकाङ्क्षमाणा य एते मरीच्यादयो य एते ब्रह्मेन्द्राद्या देवगणा य एते रुद्रपुरोगा भूतगणा इतीदं विश्वं विभूम्नो यस्य तव क्रीडाभाण्डं क्रीडोपकरणं वर्तेत इत्यन्वयः हे नाथ! तस्मै ते तुभ्यं नित्यं नमः करवाम इत्यनेनापि सर्वशङ्कोन्मूलिता ॥ ४३ ॥

अव्यक्तादेस्तद्रूपकल्पनायास्त्वदिच्छाधीनत्वात्त्वत्प्रसादेनैव निरासः स्यादित्याशयेन विद्याधराः स्तुवन्तीत्याह त्वन्माययेति त्वन्मायया त्वदिच्छया त्वदधीनया प्रकृत्या च रचितमर्थं देहकलत्रादिलक्षणमभिपद्य दुर्मतिर्दुःखितमतिः अस्मिन्कलेवरे ममाहमिति मतिं कृत्वा ऽतएव उत्पथैर्दुर्मार्गवर्तिभिः स्वैरिन्द्रियैः क्षिप्तोऽसत्स्वमङ्गलेषु विषयेषु लालस उत्कण्ठावानपि पुमान्युष्मत्कथारसनिषेवक आत्मा मुह्यत्यनेनेत्यात्ममोहः संसारस्तमुद्व्युदस्येन्निरस्यतीत्यन्वयः ॥ ४४ ॥

ब्राह्मणास्तुतिव्याजेन हरेः सर्वस्वातन्त्र्यं द्रढयन्ति त्वं क्रतुरित्याद्यभेदेनोक्तिरन्तर्यामिविषयेति ज्ञातव्यम् । तदुक्तम् सर्वशब्दाभिधेयत्वं सर्वान्तर्यामिकत्वतः । न तु सर्वस्वरूपत्वात्सर्वभिन्नो यतो हरिरिति अपभ्रष्टचेतनैक्याभावेऽपि ब्रह्मरुद्रादिविशिष्टचेतनैक्यं किं न स्यादिति चेत्तन्न प्रमाणविरुद्धत्वात् तदुक्तम् "अन्तर्यामिस्वरूपेण ब्रह्मरुद्राद्यभिन्नता । न तु जीवस्वरूपेण जीवा भिन्ना यतो हरेः । विशेषाभेदवचनं सन्निधानविशेषतः । सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं हरे„रिति ॥ ४५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

ननु योगेश्वरत्वाद्यभिमाने सति भृत्यत्वाद्यभिमानः कुतः स्याद् उच्यते । सर्वोऽप्यन्योऽभिमानस्त्वन्मायागुणभेदभ्रमेणैव जीवेषु रचितः ततः स्वस्फूर्त्यां तस्मिन्निवर्त्तिते त्वत्प्रसादात् सोऽपि स्यादित्याहुः जगदिति । आत्मनां जीवानां भेदमतिर्नानाऽभिमानः ॥३९॥

शब्द ब्रह्मो वाच्येति अत्रायं विरिञ्चिः पूर्वत्र तु यज्ञाधिकारीति वा । पक्षे चात्र पूर्वं ब्रह्माऽपेक्षया यदिन्द्रस्य ज्ञानाधिक्यं स्वामिभिर्दर्शितं तदपि युक्तमेव मन्तव्यम् ॥ ४०—४९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

ननु परब्रह्मणो मम मायाशावल्य एव साकारत्वं तस्मिंश्च सति भृत्येश भावस्तत्र च सति भक्तयात्सल्यमिति; केचिद्व्याचक्षते । सत्यं ते भ्रान्ता एवेत्याहुः । जगदिति । देवता जीवाऽदृष्टात् बहुधा भिद्यमाना गुणा यस्यास्तया स्वमायया रचिता आत्मनि स्वस्वरूपे सृष्ट्याद्यर्थं ब्रह्मादिभेदमतिर्येन तस्मै स्वसंस्थया स्वरूपावस्थानेन तु विनिवर्त्तितो भ्रमरूपो गुणात्मा गुणबुद्धिर्येन तस्मै । आत्मा यत्नो धृतिर्बुद्धिरित्यमरः ॥ ३९ ॥

ब्रह्मो वाचेति तत्रत्योपयोगी धर्मप्रतिपादको वेदः वेदस्तत्त्वं तपो ब्रह्मेत्यमरः । श्रितं सत्त्वं सत्त्वगुणोऽर्थं धर्मज्ञानवैराग्यैश्वर्याणां भूतये उत्पत्त्यै काष्ठां तत्त्वम् अपरेऽपि ज्ञानप्रतिपादका वेदाश्च न विदुः किमुतैते इति कर्मिषु ज्ञानिषु च कटाक्षः ॥ ४० ॥

यज्ञकुण्डस्थोऽग्निराह, यत्तेजसेति स्वध्वरे प्रशस्त यज्ञे हव्यं हविर्वहामि केवलं नतु तत्र तत्त्वं जानामीति ज्ञानाभिमानियाज्ञिकेषु कटाक्षः । तं यज्ञियं यज्ञाय हितं पञ्चविधत्वमेतरेयक उक्तं । स एव यज्ञः । पञ्चविधोऽग्निहोत्रं दर्शपौर्णमासश्चातुर्मास्यानि पशुसोम इति पञ्चभिर्यजुर्भिर्मन्त्रैः स्विष्टं । तथाच श्रुतिः । आश्रावयेति चतुरक्षरम् अस्तु श्रौषडिति चतुरक्षरं यजेति द्वाभ्यां येयजामहे

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

इति पञ्चाक्षरं द्व्यक्षरो वषट्कार इति स्मृतिश्च चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ॥ हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदत्विति यज्ञं यज्ञमूर्त्तिम् ॥ ४१ ॥

स्वकृतं स्वसृष्टं विकृतं कार्यजातम् उदरीकृत्य उदरस्थीकृत्य विमृशिता अध्यात्मपदवी ज्ञानमार्गो यस्य सः । भृत्यान् अवसि पालयसीति पथि चरसीत्याभ्यां द्वाभ्यां त्वत्पालितैर्भृत्यैरेव त्वं दृश्यसे ज्ञायसे नान्यैरिति याज्ञिककर्मिषु ज्ञानिषु च कटाक्षः ॥ ४२ ॥

तुभ्यमेव नित्यं नमः करवामेति वयं यस्य सभां प्रविशामस्तमेव परमेश्वरत्वेन स्तुवाना अपि तेषां त्वदंशांशत्वात्त्वामेव वस्तुतः स्तुवामेति ते स्वस्वीश्वराभिमानिन एव नत्वीश्वरा इति ब्रह्मादिषु कटाक्षः ॥ ४३ ॥

अर्थं विषयमभिपद्य प्राप्य ममाहमित्यभिमानञ्च कृत्वा दुर्मतिः स्वैः पुत्रादिभिः क्षिप्तोऽप्यसद्विषयलालस एव इममात्ममोहं युष्मत्कथामृतनिषेवकः सन् उच्चैर्व्युदस्येत् परित्यजेन्नान्यः इति शुष्कज्ञानिषु कटाक्षः ॥ ४४ ॥

सदस्याश्च ऋत्विजश्च ते ॥ ४५ ॥

———

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

ननु सर्वे आत्मानः परमात्मनः स्वांशभूतास्तत्र,य आत्म परमात्मसम्बन्धवित् समीत्प्रयो भवतु परन्तु अन्येष्वत्यन्तभेदमतयः कुतआगताः तस्यात्यन्तभेदबुद्धिश्च केनापनीतेत्यत्र कारणं वदन्तो भगवन्तं प्रणमन्ति जगदिति जगतः उद्भवादिषु निमित्तेषु बहुभिद्यमानगुणया आत्ममायया स्वमायया दैवादनादिभूताज्जीवकर्मप्रवाहात् निमित्ताद् रचिता अनादिसिद्धा एव प्रबोधिताः आत्मसु जीवेषु भेदमतयः परमात्मनः सकाशादत्यन्तभेदबुद्धयो येन त्वया परमात्मना तस्मै स्वसंस्थया कस्य चिज्ज्ञानार्हस्य शास्त्राचार्यानुग्रहतः हृदि या स्वस्य तव संस्था संस्थितिस्तया विनिवार्तितोऽपनीतो भ्रमोऽत्यन्त भेदभ्रमो गुणा भ्रमहेतवश्च आत्मना ज्ञानार्हस्य जीवस्य तस्मै नमः ॥ ३९ ॥

शब्दब्रह्म तु परंब्रह्म प्राकृतगुणरहितत्वेन स्वाभाविकमङ्गलगुणाकरत्वेनेयत्तानवच्छिन्नत्वेन च स्तुवन्नमस्करोति ते निर्गुणाय निर्गतानित्यं निवृत्ताः प्राकृता गुणा यस्मात्तस्मै "अरूपमस्पर्शमगन्धमित्यादिश्रुतेः श्रितं स्वीकृतं सत्त्वमप्राकृतं शरीरं येन तस्मै आप्रणखात्सुवर्ण इत्यादि श्रुतेः धर्मादीनां सूतये पुरुषार्थचतुष्टयदात्रेऽथवा धर्मोऽत्र धर्मप्रवर्तकं शब्दब्रह्म आदिना ब्रह्मादयस्तेषां वेदब्रह्मादीनां सूतिर्यस्मात्तस्मै शास्त्राचार्थं प्रवर्तकाय "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदो यो ब्रह्माणं विदधाति पूर्वं"मित्यादि श्रुतेः यस्य काष्ठामियत्ताम् अहं न वेद न वेद्मि अपरे ब्रह्मादयश्च न विदुस्तस्मै नमः "यतो वाचो निवर्त्तन्ते अप्राप्य मनसासहे"त्यादि श्रुतेः ॥ ४० ॥

सर्वप्रकाशकनानायज्ञमूर्तित्वादिगुणैरग्निर्भगवन्तं स्तौति यदिति यद्यस्य तेजसा प्रकाशेन सुष्ठु समिद्धं प्रदीप्तं तेजोयस्य सः अग्न्युपलक्षितं सर्वं यत्तेजसैव विभाति "तमेव भान्तमनुभाति सर्वंतस्यप्रभासा सर्वमिदं विभाती,,तिश्रुतेः एवम्भूतोऽहम् स्वध्वरे प्रशस्ते यज्ञे हविर्वहामि उद्देश्यां देवतां प्रतिनयामि आज्यसिक्तामिति विशेषणं भगवत्तेजोयोगं विनाऽग्नेर्विनाशं सूचयति मरुत्तयज्ञे बह्वाज्यसिक्तहविर्भक्षणेनाग्निर्स्तनकल्पोऽभूत् पुनः खाण्डवं दत्वा साऽर्जुनेनभगवतैवरक्षित इति महाभारतेस्थितं यज्ञियं यज्ञाय हितं यज्ञपालकं यज्ञं यज्ञमूर्त्तिम् प्रणतोऽस्मि कथं भूतं पञ्चविधम् पञ्चविधत्वम् ऐतरेयकेदर्शितम् सएपयज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानिपशुसोमइति आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुक्षरं यजेदिति द्व्यक्षरो वषट्कारइति श्रुतिसिद्धैः पञ्चभिर्यजुभिर्यजुर्मन्त्रैः स्विष्टं सुपूजितम् च ॥ ४१ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

देवास्तु सर्वकारणत्वादिगुणवत्त्वेन भगवन्तं स्तुवन्ति पुरेति पुरा वर्तमानकल्पात्प्राक् यः कल्पः तस्याऽपायेऽन्ते यः स्वकृतं विकृतं कार्यमुदरीकृत्य तस्मिन् प्रसिद्धे ब्रह्माण्डमध्यगे सलिले उरगेन्द्र एवाधिकं शयनं शय्या तत्र शेषे शयनं करोषि कथं भूतः सिद्धजनलोकादिवासिभिः विमृशिता विचिन्तिता ऽध्यात्मपदवी तत्त्वज्ञानमार्गो यस्य सएव आद्यः पुमान् अद्यइदानीम् अक्ष्णोः पथि चरासि नोऽस्मान् भृत्यान् अवसि धन्या वयमिति भावः ॥ ४२ ॥

गन्धर्वास्तु वयं त्वदंशभूतानां ब्रह्मादीनां त्वत्तोंऽशिनः पृथक् स्थितिप्रवृत्त्याद्यभावेन त्वदात्मकत्वात्तानपि परमेश्वरत्वेनैवोपश्लोकयाम ब्रह्मादयः स्वकर्मानुरूपाऽत्यल्प त्वद्दत्तदेहगेहादिस्वामिनस्त्वन्तु सर्वचेतनाचेतनात्मकविश्वस्वामीत्याहुः अंशांशास्ते इति ॥ ४३ ॥

विद्याधरास्तु "अजोह्येकोजुषमाणोऽनुशेते जहात्येनांभुक्तभोगामजोऽन्य,, इति श्रुत्युक्तं नित्यबद्धं मुमुक्षुं च जीवविशेषं वर्णयन्तो भगवन्तं स्तुवन्ति त्वदिति दुर्मतिर्नित्यबद्धोजीवः अर्थं कर्मफलमभिपद्य प्राप्य त्वन्मायया अनादितो जीवविमोहिन्या कलेवरे अहमिति अस्मिन् प्रसिद्धे गृहादौ ममेति च कृत्वा उत्पथैर्मुक्तिमार्गबहिष्कृतिभिः स्वैरिन्द्रियैः क्षिप्तोऽपि पुनःपुनर्जन्ममरणप्रवाहे प्रक्षिप्तोऽपि असद् विषयलालसो भवति नतु कदापि विरज्यत इत्यर्थः युष्मत्कथामृतनिषेवको मुमुक्षुस्तु आत्ममोहं देहे अहमिति गेहंममेति विषयप्रावण्यरूपं च आत्मनः मनसः मोहम् उद्व्युदस्येत् वारयेत् ॥ ४४ ॥

ब्राह्मणास्तु क्रियाक्रियावतोर्गुणगुणिनोः अवयवावयविनोः कार्यकारणयोः शक्तिशक्तिमतोश्च सर्वत्र भेदाभेदं सम्बन्धं पश्यन्तश्चिदचिदात्मकस्य सर्वस्य भगवच्छक्तिरूपत्वात्तद्भिन्नत्वेऽपि तदभिन्नत्वमिति मुमुक्षूणां भगवदुपासनविरोधिस्पर्द्धासूयादिनिवृत्त्यर्थं वदन्तो वराहाद्यवतारैः कृतमुपकारं संस्मरन्तो भगवन्तं प्रार्थयन्ते त्वमिति त्रिभिः हुताशोऽग्निः सदस्याश्च ऋत्विजश्च देवता इन्द्राद्याः अग्निहोत्रं होमः कर्मविशेषः सर्वं त्वमेव "सर्वं खल्विदं ब्रह्मे,,ति श्रुतेः अत्र सर्वस्य भगवच्छक्तिमयस्य भगवदधीनस्थित्यादिमत्त्वेन भगवदभिन्नत्वं बोध्यम् स्वरूपेणाऽचेतनपदार्थस्य बन्धमोक्षार्हस्य चेतनपदार्थस्य च बन्धमोक्षप्रदेन नित्यमुक्तप्राप्येन भगवता सहाभेदासम्भवात् परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते इति मुक्तौ स्वरूपभेदश्रवणाच्च आरोपापवादवादिपक्षवस्तु अध्यासगिरिवज्र प्रभृतिषु ग्रन्थेषु पूर्वैर्निर्मूलीकृता इत्यत्रोपरम्यते ॥ ४५ ॥

———

भाषाटीका

जगत्के उत्पत्तिस्थिति संहार में प्राणियों के अदृष्टसे बहुत प्रकार के भेदोंको प्राप्त भयेहैं गुण जिसके ऐसी मायाके द्वारा रचाहैं सब जीवों में भेदबुद्धि जिनने अपने स्वरूपानंद में स्थितहोने से दूरकर दियेहैं भ्रमऔर गुणों को आत्मा में से जिनने तिनं आपके अर्थ नमस्कारहै ॥ ३९ ॥

वेदस्तुति करतेहैं किशुद्ध सत्व गुणके धारण करनेवाले तथा प्राकृतगुणोंसेरहित तथा धर्मादिकों के उत्पादक आपहो आपके तत्व को हमतथा अन्य देवताभी नहीं जानते हैं॥ ४० ॥

त्वं पुरा गां रसाया महाशूकरो दंष्ट्रया पद्मिनीं वारणेन्द्रो यथा।
स्तूयमानो नदँल्लीलया योगिभिर्व्युज्जहर्थ त्रयीगात्र ! यज्ञक्रतुः ॥ ४६ ॥
स प्रसीद त्वमस्माकमाकाङ्क्षतां दर्शनं ते परिभ्रष्टसत्कर्मणाम्।
कीर्त्यमाने नृभिर्नाम्नि यज्ञेश ! ते यज्ञविघ्नाः क्षयं यान्ति तस्मै नमः ॥ ४७ ॥

मैत्रेय उवाच ॥

इति दक्षः कविर्यज्ञं भद्र ! रुद्राऽवमर्शितम्।
कीर्त्यमाने हृषीकेशे सन्निन्ये यज्ञभावने ॥ ४८ ॥
भगवान् स्वेन भागेन सर्वात्मा सर्वभागभुक्।
दक्षं बभाष आभाष्य प्रीयमाण इवानघ ! ॥ ४९ ॥

श्रीभगवानुवाच ॥

अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्।
आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषणः ॥ ५० ॥

भाषाटीका।

अग्नि देवताने कहा कि हे भगवन् ! जिन आपके तेज से मैं बडा तेज वाला होकर सुन्दर यज्ञों में घृत संयुक्त हविको ग्रहण करता हूं सोई आप पांच प्रकार के होकर यजुर्वेद के पांच मंत्रों से पूजित होकर यज्ञ की पालना करते हो यज्ञ स्वरूप हो तिन आपको मैं प्रणाम करता हूं ॥ ४१ ॥

देवता बोले पहिले कल्प के नाश होने पर संपूर्ण विकार रूप जगत् को आपने अपने पेट में स्थापन कर लिया फिर आद्य मूर्ति एक आपही पुरुष रूपसे उस जलके ऊपर शेष शय्या में सोते थे सनकादिक सिद्ध लोग आपके ज्ञान मार्ग को हृदय में विचार करते थे सोई आप जो हमारे नेत्र के आगे घूमते हो सो हम दास लोगों की रक्षा करते हो ॥ ४२ ॥

गंधर्व बोले हे देव ! ये सब रुद्रादिक मरीच्यादि मुनि गण ब्रह्मादि देवगण आपके अंशों के अंश हैं हे व्यापकरूप ! यह सब संसार आपके खेल का सामग्री है हे नाथ ! आपकों हम नित्यही नमस्कार करते हैं ॥ ४३ ॥

विद्याधर बोले हे प्रभो ! पुरुषार्थ का साधन शरीर को प्राप्त होकर भी मनुष्य आपकी माया से दुर्मति होने से इस शरीर में अहंता ममता करके खोटे भोगादि पदार्थों से दुखित होकर भी असत् विषयों में लालसा करता ही रहता है जो आपकी कथा रूपी अमृत का सेवन करता है सो तो संसार के मोह को छोड ही देता है ॥ ४४ ॥

ब्राह्मण बोले हे प्रभो ! आप यज्ञ स्वरूप हो आपही घृतादिक हविहो आपही अग्नि हो आपही स्वयं वेद मंत्र हो आपही समिध होम काष्ठ हो आपही कुश हो आपही यज्ञपात्र हो आपही यज्ञ के सभा वाले ऋत्विक् यजमान यजमानी इन्द्रादि देवता अग्नि होम स्वधा मंत्र सोमलता घृत पशु सब आपही हो ॥ ४५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका

गां पृथ्वीं रसाया रसातलाद्दंष्ट्रया व्युज्जहर्थ विशेषेणोद्धृतवानसि योगिभिस्तूयमानः हे त्रयीगात्र वेदमूर्ते ! यज्ञो यागः सयूपस्तद्विशेषः क्रतुस्तद्रूपी यज्ञसङ्कल्परूप इति वा यज्ञः क्रतुः कर्म यस्येति वा ॥ ४६ ॥

स त्वमस्माकं त्वद्दर्शनमाकाङ्क्षतां प्रसीद अस्मद्यज्ञमप्युद्धरेत्यर्थः नचाशक्यं तथैतत् यतस्तव नाम्नि कीर्त्यमान एव यज्ञविघ्नाः क्षयं यान्ति एवं प्रभावो यस्तस्मै नमः ॥ ४७ ॥

इत्यनेन प्रकारेण सर्वैः हे भद्र ! विदुर ! सन्निन्ये प्रवर्त्तयामास ॥ ४८ ॥

सर्वात्मतया सर्वभागभोक्ताऽपि स्वेन भागेन त्रिकपालपुरोडाशेन प्रीयमाणइव दक्षमाभाष्य सम्बोध्य बभाषे ॥ ४९ ॥

योऽहं जगतः कारणम् आत्मा ईश्वरश्च उपद्रष्टा साक्षीच स्वयंप्रकाशश्च निरुपाधिश्च स एव ब्रह्मा शर्वश्चेत्यन्वयः ॥ ५० ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी।

यागो यूप तस्यैव विशेषः सयूपः क्रतुः ॥ ४६ ॥
एतद्यज्ञोद्धरणम् ॥ ४७ ॥
यज्ञभावने यज्ञपालके ॥ ४८ ॥
दक्षस्य शिवे आक्षेपाऽनिवृत्तेस्सम्यक् प्रसन्नभावादिवेत्युक्तम् ॥ ४९ ॥
आत्मा मूलस्वरूपः ॥ ५० ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका।

यज्ञानुष्ठानोपयुक्तपृथिव्युद्धर्ता यज्ञाऽवबोधिविध्यर्थवादादिरूपेणावस्थितवेदमूर्तिश्च त्वमेवेत्याहुः त्वमिति। पुरा कल्पादौ महाशूकरः श्वेतवाराहरूपस्त्वं वारणेन्द्रो गजश्रेष्ठः पद्मिनीं यथा सरसीमिव अमृतोपमेयं नद्दिवारणेन्द्रेण पद्मिन्युद्धरणं

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

क्वचिदूहस्थं रसाया रसातलात् गाम्पृथिवीं दंष्ट्रया उत्पाटयन् योगिभिः स्तूयमानः व्युज्जहर्थ विशेषेणोद्धृतवानसि हे त्रयीगात्र ! वेदमूर्त्ते ! अतस्त्वमेव यज्ञक्रतुः यज्ञो यागः क्रतुराराधनरूपं कर्म यस्य सः यद्वा हे यज्ञ ! विष्णो ! यज्ञो वै विष्णुः । यज्ञायाचरतः कर्मेति श्रुतिस्मृतिभ्याम् क्रतुः क्रतुमूर्त्तिरित्यर्थः ॥ ४६ ॥

स एवं भूतस्त्वं परिभ्रष्टं सत्कर्मवैदिकं त्वदाराधनरूपं यागाख्यं कर्म येषाम् अतएव तद्भ्रंशपरिहाराय त्वत्सन्दर्शनमाकाङ्क्षताम् कामयमानानाम् अस्माकं प्रसीद प्रसन्नोभव हे यज्ञेश ! यस्य ते तव नाम्नि नृभिः नरैः कीर्त्यमाने सति यज्ञस्य विघ्नाः क्षयं नाशं यान्ति तस्मै ते नमः ॥ ४७ ॥

दक्षादीनां स्तुतिमुपसंहरन् तैःस्तुतो भगवान्ताननुगृह्णन् आबभाष इत्याह मैत्रेय इतीति द्वाभ्याम् हे भद्र ! विदुर ! इत्यनेन प्रकारेण सर्वविश्वभावने विश्वकारणे हृषीकेशे कीर्त्यमाने सति कविः कर्मसु कुशलो दक्षः रुद्राऽभिमर्शितं रुद्रेण विहतं यज्ञं सन्निन्ये प्रवर्तयामास रुद्रेण संस्पृष्टमिति वा पूर्वं रौद्रभागाभावात् रुद्रानभिमर्शितमिदानीं तु तद्भागप्रदानात् तदभिमर्शितमित्यवगन्तव्यम् ॥ ४८ ॥

सर्वात्मा सर्वस्यात्मा सर्वात्मतया सर्वभागभोक्तापि भगवान् स्वेन भागेन त्रिकपाल पुरोडाशेन प्रीयमाण एव दक्षमाभाष्याभिमुखीकृत्य बभाषे ॥ ४९ ॥

तत्र हितोपदेष्टा भगवान् कार्य कारण रूपेणावस्थितः प्रकृतिपुरुषशरीरकोऽहमेक एव मच्छरीरभूतब्रह्मरुद्राख्यजीवाऽनुप्रवेशेन जगत्सृजामि संहरामि स्वावताररूपेण पालयामि अतो मत्तः मच्छरीरभूताच्च व्यतिरिक्तं वस्त्वस्तीति अब्रह्मात्मकस्वतन्त्रवस्तुदृष्टिः देहात्मभ्रान्तिस्वतन्त्रात्मभ्रान्तिमूला नतु तात्त्विकी सर्वस्य ब्रह्मात्मकत्वदृष्टिस्तु तात्त्विकी मुक्त्युपायभूतेत्याह अहमिति। पञ्चभिः अहं निरस्तनिखिलहेयत्वेन समस्तकल्याणगुणात्मकत्वेन च भवद्भिः स्तुतः समाभ्यधिकरहितोऽहं ब्रह्मा च शर्वश्च मदनुप्रविष्टत्वेन मत्सृज्यत्वेन मदायत्तसृष्ट्याद्युपयुक्तज्ञानवत्त्वेन च प्रसिद्धौ मत्प्रयोज्यौ ब्रह्मरुद्रौ च जगतः परं कारणं स्थित्युद्भवलयकारणं "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधसम्भवौ । मदादर्शितपन्थानौ सृष्टिसंहारकारकौ । सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते,, इत्यादि श्रुतिस्मृत्यनुरोधादयमर्थो लभ्यते ननु प्रतिनियतसृष्ट्याद्यधिकारभेदेन पृथक् त्रयाणां कारणत्वेऽभिहिते कथं कृत्स्नस्य जगतः ब्रह्मैककारणत्वमुच्यते अत एव हि तत्र तत्र "ब्राह्मणो वै सर्वा देवता नकिरिन्द्रत्वमुत्तरः अग्निः सर्वा देवता एक एव रुद्रः सोमः पवतेजनिता मतीनां जनिता पृथिव्या जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः आपो वा इदं सर्व,,मित्यादिभिः ब्राह्मणाग्नीन्द्रादीनामपि समाभ्यधिकराहित्यप्रतीतेरर्थवत्त्वमव्याकुलम् ॥ अत्रोच्यते सर्वेषां पृथक्कारणत्वेसमाभ्यधिकराहित्ये च प्रतीतेऽपि तद्व्याहतम् अन्यपरतयाधिगतं चेत्यनादरणीयम् अतएव तत्त्वप्रधानेषु सृष्टिप्रलयप्रकरणेषु यदेव स्वरूपगुणांश्च निरतिशयबृहदुक्तं तदेकमेव ब्रह्म जन्मस्थितिप्रलयसमुदायरूपेण जिज्ञास्यलक्षणेन लक्षितं सूत्रकारेण "जन्माद्यस्य यत" इति तत्र हि कारणभूतवस्तुपरामर्शिना यतइत्यनेन कारणत्वापर्येषु । क्षागोवामन्त्रवर्णादिति सौत्रन्यायात्सद्ब्रह्मादिशब्दानां सामान्यानां नारायणादिविशेषपर्यवसायित्वावश्यम्भावात्सर्वश्रुतीनां नारायण एव पर्यवसानभूमिरिति यत्नोवा इमानीत्यादि श्रुतेहृदयमिति सूत्रकाराभिप्रायो ज्ञायते अतः सृष्ट्यादिभिर्लक्ष्यं कारणमेकमेव ननु नानाभूतम् अहं ब्रह्मा च शर्वश्चेत्यादिभिः प्रतिनियतस्थित्यादिकारणत्वकीर्त्तनं तु प्रयोज्य प्रयोजक भावेन ॥ नन्वेवमपि सृष्ट्यादीनां प्रत्येकं लक्षणत्वात्तल्लक्ष्यमपि कारणं वस्तु नानाभूतमिति चेन्न समुदायस्यैव लक्षणत्वात् सृष्टिस्थितिप्रलयानां समुदायो हि लक्षणं नत्वेकैकं समुदायस्य लक्षणत्वं हि श्रुतिस्वारस्याद्वसीयते यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीत्यत्र न प्रतिवाक्यं तद्ब्रह्मेत्युक्तम् अन्यथैकतरलक्षणवैयर्थ्यञ्च स्यात् ननु समुदितं न लक्षणं व्यावर्त्याऽभावात् नहि जगदुत्पत्तौ निमित्तोपादानभूतस्थित्यादिकारणत्वव्यवच्छेद्यं किमपि वस्त्वस्तीति चेत् सत्यं । व्यवच्छेद्यं नेष्यते तथापि श्रुत्यनुरोधात् सूत्रकारेण जन्मादीत्येकवचनान्तेन समुदायवाचिना समुदायस्य लक्षणत्वमुक्तं श्रुतिश्च तद्विजिज्ञासस्वेति विधित्सितोपासनोपयोगिनिरतिशयबृहत्त्वविपरीतबृहत्त्वशङ्काव्यवच्छेदार्थं समुदायमात्रशङ्कित व्यवच्छेदेनापि हि सप्रयोजनत्वं स्यात् लक्ष्याकारविपरीताकारशङ्कानिराकरणेन विना लक्ष्याकारनिश्चयाऽयोगात् नच जन्मादिष्वेकैककारणत्वं लक्ष्याकारविपरीतशङ्कानिराकरणक्षमं तथा हि उत्पत्तिकारणत्वेऽभिहितेऽपि स्थित्यादिकारणत्वं न चेत् तदनुगुणज्ञानशक्तिविरहात् स्थितिप्रलयकारणभूत वस्त्वन्तरसद्भावाच्च जन्ममात्रकारणस्य निरतिशयबृहत्त्वं नस्यात् मुक्तैर्लयान्तर्भावान्मोक्षप्रदत्वप्राप्यत्वानुगुणैश्च बृहत्त्वं न सिद्ध्यति अतोजन्मकारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षमत्वेऽपि जन्मादिसमुदायकारणत्वस्यैव निरतिशयबृहत्त्वौपयिकसृष्टिस्थितिप्रलयसमुदायकारणत्वं लक्षणमिति ज्ञापितम् अतः समुदायस्यैव लक्षणत्वादपि तल्लक्ष्यं वस्त्वेकमेव साक्षाद्ब्रह्मादीन्प्रतिप्रयोजकत्वेन च कारणमिति सुस्थं नन्वेकस्यैव तव सद्वारकतयाऽद्वारकतया च कारणत्वेऽपि सृष्टेः प्राक् कथमवस्थितः कथं स्रक्ष्यसि कथं तरां ब्रह्मरुद्रादीनां सञ्ज्ञानां त्वयि पर्य्यवसानमित्यत्राह सार्द्धेन आत्मेश्वरमिति इति आत्मनः स्वस्य ईश्वरः आत्मेश्वरः । पतिं विश्वस्यात्मेश्वरमिति श्रुतेः अनेन स्वस्य प्रयोजकान्तराप्रयोज्यत्वमुक्तम् आत्मनां स्वस्मिन् लीनानां जीवानामीश्वरः अन्तः प्रविश्य नियन्तृत्वेनावऽस्थित इति वा उपद्रष्टा उपद्रष्टव्यदेवमनुष्यादिनामरूपाभावात् केवलं द्रष्टृत्वेनावस्थित इत्यर्थः अनेन पदद्वयेन नामरूपविभागानर्हसूक्ष्मप्रकृतिपुरुषशरीरकत्वम् फलितं । यस्याक्षरं शरीरं यस्याव्यक्तम् शरीरम् असद्वा इदमग्रआसीत् । तद्धेदन्तर्ह्यव्याकृतमासीदिति च श्रवणात् एवञ्च नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टत्वेनैव कारणत्वेन स्थितिरित्युक्तम् भवति कारणत्वोपयुक्तकल्याणगुणत्वमाह स्वदृगिति । नित्याविर्भूतासङ्कुचितज्ञान इत्यर्थः स्वयम् आत्मानं पश्यतीति स्वयंदृगिति व्युत्पत्तेः अनेन निमित्तत्वोपयुक्तानिरधिकसर्वज्ञत्वमुक्तं स्वयन्दृगिति उपादानत्वोपयुक्तसर्वशक्तिर्देरप्युपलक्षणं हेयगुणराहित्यमाह अविशेषणः विशेषणाः प्रकृतिपुरुषगतजडत्वपरिणामित्वाऽसर्वज्ञत्वदुःखित्वादयो व्याकाकाराः तद्रहित इत्यर्थः अविशेषण इति न सर्वगुणनिषेधकथनं स्वयन्दृगिति कल्याणगुणविधानात् कारणत्वोपयुक्तगुणकथनापेक्षितत्वान्निषेधस्य विहिततरविषयत्वाच्च ॥ ५० ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

रसाया रसातलात् योगिभिः सनकादिभिः यज्ञक्रतुर्यज्ञसंकल्पः ॥ ४६ ॥

सामगीः सामगायनध्वनिः तया परिभ्रष्टानि विध्वस्तानि सत्कर्माणि येषां ते तथोक्तास्तेषां यज्ञविघ्ना राक्षसाः ॥ ४७ ॥

भद्ररुद्रो वीरभद्रः उच्छिन्ये ऊर्ध्वं नीतवान् समासं कृतवानित्यर्थः ॥ ४८ ॥

सर्वात्मेति हेतुगर्भविशेषणम् सर्वभूतान्तर्यामित्वेन सर्वभागभुक् स्वेन भागेन हेतुना सर्वभागं भुङ्क्ते इति सर्वभागभुक् पूर्वं प्रीयमाण इदानीं प्रीयमाणइत्युभयार्थाभिप्रायेणैव शब्दः इवोभये च सादृश्य इत्यभिधानात् यथा प्रीयमाणः प्रियं वक्ति तथेतिवा४९

ननु भगवान् स्वागतं बभाष इति न युक्तम् दक्षस्य प्रागेव तत्र स्थितत्वात् अन्यद्वक्तव्यं न प्रतीयत इत्याशङ्क्य स्वात्मानं दक्षायोपदिशतीत्याह अहमिति । आत्मेश्वरः आत्मनां जीवानामीश्वर ईशनशीलः उपद्रष्टा सर्वस्मादधिकोद्रष्टा स्वयंदृक् स्वसंप्रकाशः अविशेषणः सर्वोत्तमोऽहं विष्णुर्जगतः परं पृपालनपूरणयोरिति धातुः पालकं कारणं ब्रह्मा ब्रह्मसंज्ञोऽहं परं सृष्ट्यापूरकं कारणं शर्वः शर्वसंज्ञोऽहं जगतः परमुत्कृष्टं कारणं विक्षेपकं संहारकं कृविक्षेप इति मामेवं विधं जानीहीति शेषः ॥ ५० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

स्वावतारत्वोपदेशेन ब्रह्मशिवावप्यादरयति । अहमिति ॥५०-५१॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

त्रयीगात्र हे वेदमूर्त्ते । यज्ञः सयूपः क्रतुर्निर्यूपः ॥ ४६ ॥

नाम्नि कीर्त्यमान एव किं पुनः कीर्त्तिते किन्तरां तत् साक्षात् सन्निधौ यज्ञविघ्ना रुद्रानुचरा इति तेषु कटाक्षः । अत्र स्तावकानामन्यत्र कटाक्षैर्भगवतो भक्तेश्च प्राय उत्कर्षपोषान्न दोष आख्येयः ॥ ४७ ॥

हे भद्र । यद्वा भद्ररुद्रेण वीरभद्रेण अभिमर्षितं विदूषितं संनिन्ये प्रवर्त्तयामास ॥ ४८ ॥

भगवत्त्वेनानन्दपूर्णोऽपि सर्वात्मत्वेन सर्वभागभुगपि स्वेन भागेन प्रीयमाण इवेति रुद्रापराधित्वान्न वस्तुतः प्रीतः । हे अनघेति निरपराधिन्येव भगवान् प्रीणातीत्यत्र त्वमेव प्रमाणमिति भावः ॥ ४९ ॥

मा पुनरपराधं कार्षीरिति हितमुपदिशति अहमिति । स्वयं दृक् स्वप्रकाशः अविशेषणः त्रयाणामस्माकं नास्ति विशेष इत्यर्थः ५०।

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

हे त्रयीगात्र ! वेदमूर्ते । हे यज्ञ यज्ञोवैविष्णुरितिश्रुतेःमहाशूकरः क्रतुः अध्वररूपीत्वमेव पुरा योगिभिः स्तूयमानः नदन् सन् यथा वारणेन्द्रः पद्मिनीं पद्मलतां दंष्ट्रया उद्धरति तद्वत् । गां पृथ्वीं दंष्ट्रया रसायाः रसातलात् लीलयैव उज्जहर्थोद्धृतवान् ॥ ४६ ॥

हे यज्ञेश ! तस्मै उक्तप्रभावाय ते तुभ्यं नमः ते नाम्नि कीर्त्यमाने यज्ञविघ्नाः क्षयं यान्ति अतस्ते दर्शनमाकाङ्क्षमाणानां परिभ्रष्टं सत्कर्म येषां तेषां नोऽस्माकं सत्वं प्रसीद अत्रेदं बोध्यं दक्षादीनां ब्राह्मणपर्यन्तानां लब्धभगवद्दर्शनानां भगवज्ज्ञानभाक्तिमतां मुक्तिः प्रारब्धकर्मक्षये ज्ञेया अतएव दक्षस्य पुनर्जन्म एवं सर्वत्रोह्यम् ॥ ४७ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

हेभद्र विदुर ! इत्येवं सर्वैः यज्ञभावने हृषीकेशे कीर्त्यमाने रुद्रेण अवमर्षितमवज्ञातं यज्ञं संनिन्ये प्रवर्त्तयामास ॥ ४८ ॥

हे अनघ ! भगवान् स्वानन्दतृप्तोऽपि सर्वात्मा अतएव सर्वभागभुगपि भक्तिनिवेदितप्रियतया स्वेन भागेन त्रिकपालपुरोडाशेन प्रियमाण इव दक्षमाभाष्य हेप्रजापते! इत्यादि सम्बोध्य बभाषे॥४९॥

अथ सर्वशक्तिः सर्वात्मा सर्वभिन्नाभिन्नः समानातिशयशून्यः स्वाश्रयः स्वप्रकाशः सर्वकारणभूतोऽहमेव मुमुक्षुभिर्ध्येयः कारणंतु ध्येयमिति स्वनिगमोक्तसिद्धान्तं सर्वेभ्य उपदिशन् स्वात्मके ब्रह्मणि शिवे च दक्षभृग्वादीनां स्पर्द्धासूयादिदोषं जगति च चेतनाचेतनरूपे स्वात्मके ब्रह्मशिवयोः स्पर्द्धासूयादिदोषं निवारयितुं "सर्वं खल्विदं ब्रह्म । ऐतदात्म्यमिदं सर्वं । सर्वं विष्णुमयं जगत् । वासुदेवः सर्वमिति समहात्मा सुदुर्लभः । सर्वमिदमहं च वासुदेवः । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । अहं सर्वस्य प्रभवोमत्तः सर्वं प्रवर्त्तते । क्षेत्रज्ञं चापि मां विद्धि अहं क्रतुरहं यज्ञः । स्वधाहमहमौषधं । मन्त्रोऽहमहमेवाज्यमहमग्निरहंहुतं । पिताहमस्य जगतोमाता धाता पितामहः । वेद्यं पवित्रमोंकारऋक् साम यजुरेवच । गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् । प्रभवः प्रलयस्थानं निधानं बीजमव्ययं । तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामिच । अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन"तदनन्यत्वमारम्भणशब्दादिभ्यः आत्मत्वे नावगच्छन्ति ग्राहयन्ति च,, । इत्यादि श्रुतिस्मृतिसूत्रसिद्धं सर्वस्य स्वात्मकत्वं दर्शयति भगवान् अहमिति पञ्चभिः । अविशेषणः समानस्य अधिकस्य च अभावात् तदपेक्षया यद्विशेषणं तद्रहितः स्वयंदृक् स्वप्रकाशः आत्मेश्वरः स्वानन्येश्वरः ईश्वरान्तररहितः "न यस्य कश्चिज्जनितानचाधिपः,, इत्यादि श्रुतेः जगतः ब्रह्मशिवादिसहितस्य सर्वस्य चेतनाचेतनस्य कारणम् उपादानं निमित्तं च तदात्मानं स्वयमकुरुतेतिश्रुतेः कथं भूतं कारणं परं प्रकृतिकालादीनां जगदुत्पत्तौ निमित्तभूतानामपि परम् ब्रह्मशिवयोरपि परमपुरुषजन्यत्वं श्रूयते "योब्रह्माणंविदधाति पूर्वम् एतस्य ध्यानान्तस्थस्य ललाटात्र्यक्षः शूलपाणिः पुरुषोऽजायतेति स्मर्यते च कइति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् आवान्तवांगसम्भूतौ तस्मात्केशवनामवान् । इति उपद्रष्टा साक्षी च ब्रह्मा शिवश्च चकारात्सर्वं वस्तुजातम् अहमेवेत्यन्वयः अत्रैव ब्रह्मशिवादिसहितस्य सर्वस्य वासुदेवात्मकत्वं प्रपञ्चितं द्वितीयस्कन्धे अहंभव इत्यादिना ॥ ५० ॥

भाषाटीका ।

हे वेदत्रयमूर्त्ते ! आपही पूर्वकाल में महावराह होकर जैसे हस्ती कमल के लताको लावे तैसे दांतसे रसातल में से अनायास से पृथिवीको लेआये उस समयपर यज्ञक्रतुरूपी आपकी गर्जना को सुनकर सनकादि योगिजन आपकी स्तुति करतेथे ॥ ४६ ॥

हे प्रभो ! सत्कर्म से परिभ्रष्ट हुये हमलोग आपके दर्शन की इच्छा करतेहैं आप प्रसन्न हूजिये हे यज्ञेश ! आपके नामके कीर्त्तन करने से मनुष्यों के सब यज्ञके विघ्नक्षय होजाते हैं आपके अर्थ हमारा नमस्कार है ॥ ४७ ॥

मैत्रेयजी बोले इस प्रकारसे यज्ञ रक्षक हृषीकेश की स्तुति होनेपर शुद्ध चित्त वाले दक्षने रुद्रानुचर वीरभद्रा का नाश किया जो यज्ञ तिसको फिर प्रवृत्त किया ॥ ४८ ॥

हे अनघ ! विदुरजी ! सर्वयज्ञों के भाग के भोक्तासर्वांतर्यामी भगवान् अपने यज्ञ भाग के प्राप्त होने से प्रसन्न हुये सरीके दक्षको सम्बोधन करके बोलने लगे ॥ ४९ ॥

आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज! ।
सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां क्रियोचिताम् ॥ ५१ ॥
तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि ।
ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति ॥५२ ॥
यथा पुमान्न स्वाङ्गेषु शिरःपाण्यादिषु क्वचित् ॥
पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः ॥ ५३ ॥
त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ॥
सर्वभूतात्मनां ब्रह्मन्! स शान्तिमधिगच्छति ॥ ५४ ॥

मैत्रेय उवाच ।

एवं भगवतादिष्टः प्रजापतिपतिर्हरिम् ॥
अर्चित्वा क्रतुना स्वेन देवानुभयतोऽयजत् ॥ ५५ ॥
रुद्रं च स्वेन भागेन ह्युपाधावत्समाहितः ॥
कर्मणोदवसानेन सोमपानितरानपि ॥
उदवस्य सहर्त्विग्भिः सस्नाववभृथं ततः ॥ ५६ ॥
तस्मा अप्यनुभावेन स्वेनैवावाप्तराधसे ।
धर्म एव मतिं दत्वा त्रिदशास्ते दिवं ययुः ॥ ५७ ॥
एवं दाक्षायणी हित्वा सती पूर्वकलेवरम् ।
जज्ञे हिमवतः क्षेत्रे मेनायामिति शुश्रुम ॥ ५८ ॥
तमेव दयितं भूय आवृङ्क्ते पतिमम्बिका ॥
अनन्यभावैकगतिं शक्तिः सुप्तेव पूरुषम् ॥ ५९ ॥
एतद्भगवतः शम्भोः कर्म दक्षाध्वरद्रुहः ॥
श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः ६० ॥
इदं पवित्रं परमीशचेष्टितं यशस्यमायुष्यमघौघमर्षणम् ॥
योनित्यदाकर्ण्य नरोऽनुकीर्त्तयेद्धुनोत्यघं कौरव ! भक्तिभावतः ॥ ६१ ॥

इतिश्रीभागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायाम् वैयाशिक्याम्
दक्षयज्ञसंधानं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

भाषाटीका

श्रीभगवान् बोले हम जो उपाधि रहित साक्षी स्वयं प्रकाशक हैं सबके आत्मा हैं ईश्वर हैं सोई हम ब्रह्मा रुद्र रूपभीहैं ॥५०॥

श्रीधरस्वामिकृत भावार्थदीपिका

कुत इत्यत आह । अहमेवाऽऽत्ममायामधिष्ठाय जगत्सृष्ट्यादि कुर्वन् सच्च सत्त्वसन्नसर्वं शक्तिः क्रियोचितां संज्ञां धारयामि ॥ ५१ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

तस्मिन् केवलेऽद्वितीये समानासमानजातीयभेदरहितं ब्रह्मणि मयि ब्रह्मरुद्रौ भूतानि च भेदेनाऽज्ञः पश्यतीत्यर्थः ॥ ५२ ॥

विद्वांस्तु भेदं न पश्यतीति सदृष्टान्तमाह यथेति ॥ ५३ ॥

तस्मादेवमैक्यं पश्यन् कृतार्थो भवतीत्याह । त्रयाणामेकोभावः स्वरूपं येषाम् ॥ ५४ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

स्वेन क्रतुना त्रिकपालेष्ट्या उभयतोऽङ्गैः प्रधानेन च ॥ ५५ ॥

स्वेन भागेन यज्ञावशिष्टेन उदवस्यते समाप्यतेऽनेनेत्युदवसानं तेन कर्मणा सोमपानितरानप्युपाधावदित्यनुषङ्गः ततश्चोदवस्य कर्मसमाप्यावभृथरूपं यथा भवति तथा स्नातवान् ॥ ५६ ॥

स्वेनैवानुभावेनाप्तराधसे प्राप्तसिद्धये तस्मा अपि ॥ ५७ ५८ ॥

आवृङ्क्ते भजते स्म अनन्यभावानामेकैवगतिर्यस्तम् प्रलयकाले सुप्ता शक्तिरीश्वरमिव ॥ ५९ ॥

बृहस्पतेः शिष्यान्मेमया श्रुतम् ॥ ६० ॥

परं पवित्रं य आकर्ण्य तथानुकीर्त्तयेत् । स आत्मनः परस्यापि अघं संसारव्यसनं सर्वदा धुनोति ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

तवैव ब्रह्मशिवत्वं कुतः सोऽहं कारणादिस्वरूपः सर्वशक्तिः सृष्ट्यादिसामर्थ्यं तथा याः सृष्ट्यादिक्रियास्तदुचिताम् ॥ ५१ ॥

अस्थानस्थचकारस्योचितस्थाने आकर्षणादित्यर्थोक्तिः भेदेन दर्शने एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधादज्ञ एव भेदेन पश्यति ॥ ५२ ॥

अङ्गानां न शरीरेणाङ्गिना सजातीयविजातीयभेदौ किन्तु स्वगतभेद एव तथामायाजीवयोस्तच्छक्तित्वेन तदभेदाच्च सजातीयविजातीयभेदौ किन्तु स्वगत एवेति सर्वत्र सिद्धान्तः ॥ ५३ ॥

तस्माद्विदुषो भेददर्शनाभावात् सर्वभूतात्मनां सर्वभूतमात्रस्य तत्तत्कार्येषु प्रवर्त्तकत्वेनात्मनां तथा च पार्थिवाद्दारुणोधूम इति न्यायेन तत्तत्तारतम्यन्त्ववर्जनीयमेवेति भेदादर्शनञ्च तयोर्विष्णुतस्स्वातन्त्र्याभावादेव विष्णोस्तु परमस्वान्तन्त्र्यमेव यथोक्तं श्रीब्रह्मणैव "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः। विश्वं पुरुषरूपेण परिपाति त्रिशक्ति धृक् इति सर्वथा साम्यदर्शने तु दोषोऽपि श्रूयते यथा पाद्मे„ यस्तु नारायणं देवं ब्रह्म रुद्रादि दैवतैः । समत्वेनैव वीक्षेत स पाषण्डी भवेद्ध्रुवम् इति ॥ ५४ ॥

अङ्गैः प्रयाजादिभिः प्रधानेन दर्शपौर्णमासादिना ॥ ५५ ॥

तेन कर्मणा समाप्तीष्ट्या अनुषङ्गः अन्वितस्य क्रियापदस्य पुनस्सम्बन्धः ॥ ५६ ॥

ततश्च सर्वयजनानन्तरम् उदवस्येत्यर्थकम् ॥ ५७—५८ ॥

एकैवगतिर्गम्यः यथा प्रलये मायाशक्तिः पुरुष एव निलीय तिष्ठति सृष्टौ यथा तमेव भजते इति सत्या निजशक्तित्वं व्यञ्जितम् ॥ ५९ ॥

एतत्कर्म चरितम् ॥ ६० ॥

तथाऽऽकर्णानानुसारेण भक्तिभावितः श्रीवैष्णवगुरोः भक्त्या भावितः शोधितः सन्॥ ६१ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीराधारमणदासगोस्वामि विरचितायां
दीपिन्याख्यायां दीपिका टिप्पण्याम्
सप्तमोऽध्यायः ॥ ७ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

सोऽहं सूक्ष्मप्रकृतिपुरुषशरीरकोनिरस्तनिखिलहेयः समस्तकल्याणगुणात्मकोऽहं हे द्विज! वत्त गुणमयीं त्रिगुणात्मिकाम् आत्ममायां आत्मीयां प्रकृतिं समाविश्य जीवद्वारासंकल्परूपज्ञानेनानुप्रविश्य जगत् सृजन् ब्रह्मद्वारासृजन् रक्षन् अद्वारा पालयन् हरन् रुद्ररूपेण संहरन् क्रियोचितां सद्वारकाद्वारकसर्गादिक्रियोचितां संज्ञां ब्रह्मविष्णुशिवात्मिकां संज्ञां दधे बिभर्भि अतः कृत्स्नचिदचिदात्मकप्रपञ्चरूपकार्यरूपेण सूक्ष्मावस्थप्रकृतिपुरुषशरीरकत्वेन कारणरूपेणावस्थितोऽहमेकएवेति न मद्व्यतिरिक्तं वस्त्वस्तीति भावः तथाच श्रूयते "नामरूपे व्याकरवाणि तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" नन्वनुप्रविश्य नामरूपे व्याकरवाणीत्यनुप्रवेशपूर्वकत्वं सृष्टेः प्रतीयते तत्सृष्ट्वा तदेवानु प्राविशदित्यनुप्रवेशस्य सृष्टिपूर्वकत्वं प्रतीयते कथमेतद्विप्रतिषिद्धमुपपद्यते उच्यते अत्र ह्यनुप्रवेशसृष्ट्योः समान कर्तृत्वमात्रमेवविवक्षितं नतु पौर्वापर्यमपीति ज्ञापनाय विप्रतिषिद्धनिर्देशः अतएव हि तस्य त्वष्टाविदधद्रूपमेतीत्यनुप्रवेशसृष्ट्योर्यौगपद्यमन्यत्र स्फुटम् तत्सृष्ट्वा तदेवानुप्राविशदिति स्थित्यर्थानुप्रवेशोवा वेदितव्यः ॥ ५१ ॥

एवं हि सर्वस्य मदात्मकत्वान्मद्व्यतिरिक्तस्वतन्त्रवस्त्वभावाद्मदात्मकस्वतन्त्रवस्तुदृष्टिर्देहात्मभ्रान्तिमूलेत्याह तस्मिन्निति । तस्मिन् कार्यावस्थकारणावस्थप्रकृतिपुरुषेश्वरे किं नियन्तृत्वं राजादिवत्तेत्याह परमात्मनि प्रकृतिपुरुषयोरन्तः प्रविश्य तद्गतैर्दोषैरस्पृष्टे प्रशासनेन भर्त्तरि एवमेव हि परमात्मशब्दार्थोगीताचार्येणोक्तः "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । योलोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इति अत्रलोकत्रयमित्यनेन प्रकृतिपुरुषावुक्तौ तदात्मकत्वाल्लोकत्रयस्य आविश्येत्यत्रान्तःप्रविष्टःशास्तेति श्रुत्यनुरोधादन्तः प्रविश्येत्यर्थः अव्यय इत्यनेनाविकारित्ववाचिना प्रकृतिपुरुषगतदोषास्पर्शित्वमुक्तम् ईश्वरइत्यनेन नियन्तृत्वमभिहितं बिभर्तीत्यनेन धारकत्वं फलितं किमेवं भूतस्त्वदन्यः कश्चिदस्ति नेत्याह। अद्वितीये स्वसमानद्वितीयवस्त्वन्तररहितइत्यर्थः "यथाचोलनृपःसम्राडद्वितीयोऽस्ति भूतलइतिवत् केवले स्वाधिकवस्त्वन्तररहिते तथा च श्रूयते "नतत्समश्चाभ्यधिकश्च दृश्यते स्मर्यते च„ न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य इति यद्विब्रूयादद्वितीय इति स्वसमानवस्तुनिषेधादेव तदधिकवस्तुनिषेधः कैमुत्यन्यायसिद्ध इति तर्हि केवले निरस्तनिखिलहेये ब्रह्मणि स्वरूपेण गुणैश्च निरतिशयबृहति अनन्तकल्याणगुणात्मकस्वरूप इत्यर्थः एवंभूते मयि भूतानि मदन्तरात्मकतया मदायत्तसत्तास्थितीनि मच्छरीतया मदपृथक्सिद्धत्वेन स्थितानि ब्रह्मरुद्रादिभूतानि भेदे न पृथक्सिद्ध्यर्हत्वेन स्वतन्त्राणि अज्ञः ब्रह्मात्मकत्वज्ञानरहितः देहात्मबुद्धिश्च विपश्यति अनेन देहात्मभ्रान्तिः स्वतन्त्रात्मभ्रान्तिश्च भेददर्शनमूलमित्युक्तम् ॥ ५२ ॥

सर्वस्य मदात्मकत्वज्ञानिनस्तु न भूतानि भेदेन पश्यन्तीति सदृष्टान्तमाह यथेति । पुमान् देहात्मभ्रान्तिमानपि पुरुषः स्वाङ्गेषु स्वपृथक्स्थित्यनर्हेषु शिरःपाण्याद्यवयवेषु मध्ये कचित्कस्मिश्चदप्यवयवे पारक्यबुद्धिं परस्येदं परकं तस्य भावः पारक्यन्तेन पृथक्सिद्ध्यनर्हत्वं लक्ष्यते परकीयं ह्यङ्गं स्वस्मात् पृथक्स्थित्यर्हं तद्बुद्धिं न कुरुते एवं मत्परः मदासक्तचित्तः सर्वस्य ब्रह्मात्मकत्वज्ञानसम्पन्न इत्यर्थः भूतेषु मत्पृथक्स्थित्यनर्हत्वबुद्धिं कुरुत इत्यर्थः ॥ ५३ ॥

एवं कृत्स्नस्य जगतः स्वात्मकत्वेन स्वपृथक्स्थित्यनर्हविशेषणत्वप्रकारतामुपपाद्य पृथगीश्वरत्वेन शङ्कितयोर्ब्रह्मरुद्रयोरपि मदा

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

यत्तसत्तादिमत्त्वेन मत्प्रकारत्वज्ञानं मनः प्रशान्तिद्वारा मुक्तिसाधन मित्याह त्रयाणामिति। हे ब्रह्मन् दक्ष! एकभावानां एको भावः सत्ता- येषां भाव इतिस्थित्यादीनामप्युपलक्षणम् एकविधसत्तादिमतां मदा यत्तसत्तादिमतामित्यर्थः एकस्मिन् भावो येषामिति व्यधिकरण- बहुव्रीहिर्वा त्रयाणां ब्रह्मविष्णुरुद्राणां तत्र ब्रह्मरुद्रयोः परमा- त्मायत्तसत्तादिमत्त्वकथनेन तयोः परमात्मानं प्रति अपृथक्सिद्ध- प्रकारतोक्ता विष्णोस्तु विष्ण्वायत्तसत्तादिमत्त्वकथनेनानन्याधी- नसत्तादिमत्त्वं फलितं तथा च श्रूयते "स्वेमहिम्नि प्रतिष्ठितः पतिं विश्वस्यात्मेश्वर,,मिति एकशब्देन मूर्तित्रयातिरिक्तंपरं वस्तूपलक्ष्य- त्रयाणां तदायत्तभावादिमत्त्वकथनं त्वसङ्गतं परत्वस्य जगत्का- रणनिष्ठत्वात्कारणत्वस्यात्मेश्वरउपद्रष्टेत्यादिना विष्णोरेव प्रति पादितत्वात्तदतिरिक्तोत्कृष्टवस्त्वन्तराभावात्तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनीति विष्णोः परत्वस्यैवोक्तत्वाच्च एकभावानां एक स्वरूपाणामिति त्रयाणां तादात्म्यवर्णनन्त्वयुक्तम् ब्रह्मरुद्रयोः कर्म वश्यत्वसृज्यत्वपाल्यत्वनियाम्यत्वादेः "अनपहतपाप्मा वा अह- मस्मि नारायणाद्रुद्रो जायते,, इत्यादिषु श्रुतत्वाज्जीवत्वनिश्चयात् यद्यपि"ब्रह्मा नरायणः शिवश्चनारायणः ब्रह्मा नरायणाख्योऽसौ क- ल्पादौभगवान् यथा। प्रजाःससर्ज भगवान्ब्रह्मानारायणात्मकः।ततःस भगवान् विष्णुःरुद्ररूपधरोऽव्ययः। तत. कालाग्निरुद्रोऽसौ भूत्वा सर्वं हरो हरिः । सर्गस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ससंज्ञां याति भगवानेकएव जनार्दन,, इत्यादि प्रमाणात् त्रिमूर्त्यैक्य मङ्गी कार्यं तथापि 'नारायणाद्रुद्रो जायते नारायणात् द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दांसि नारायणादेव समुत्पद्यन्ते एको ह वै नारायण आसीन्न ब्रह्मा नेशान एको ह वै नारायण आसीन्न ब्रह्मा न च शङ्करः समुनिर्भूत्वा समचिन्तयत् तत एते व्यजायन्त विश्वे हिरण्यगर्भोऽग्निर्यमवरुणरुद्रेन्द्राः यज्ञामिपद्मा- दभवत् स महात्मा प्रजापतिः तत्र ब्रह्मा चतुर्मुखोऽजायत सोऽग्रे भूतानां मृत्युमत्यसृजत् ज्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुं ब्रह्मणः पुत्राय ज्येष्ठाय ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूत- यो हरेरेता जगतः सृष्टिहेतवः। रुद्रः कालान्तकाद्याश्च समस्ता- श्चैव जन्तवः,,इत्यादिषु भगवतस्तयोश्च परस्परभेदावगमात् सामा- नाधिकरण्यस्य "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते ! हरो हरति तद्वश,,इत्याद्यानुगुण्येनान्तर्यामित्वेनाप्युपपत्तेः भेदनिर्देशस्य स्वाभाविकभेदाभ्युपगमेन विनानुपपत्तेश्च न त्रिमूर्त्यैक्यमुपपन्नं तस्माद्यथोक्त एवार्थः सर्वभूतात्मनां तत्र विष्णोः सर्वभूता- त्मत्वम् "एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारा यणः अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा ममान्तरात्मा तव चये चान्ये देहिसंस्थिता,, इत्यादि श्रुतिस्मृत्युक्तसर्वभूतान्तरात्म- त्वरूपमितरयोस्त्वणोश्चेतनस्य चेतनान्तरव्याप्यत्वासम्भवेन सर्व- भूतानां ब्रह्मरुद्राख्यजीवव्याप्यत्वासम्भवात् नान्तरात्मत्वरूपं सर्वभूतात्मत्वम् अपि तु "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च कक्षीवानृषिर्विप्रः त्वंवाहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं योऽसौ सोऽहम् अहं हरिः सर्वमिदं जनार्दनः आत्मेति तूपगच्छन्ति ग्राहयन्ति च इत्यादि श्रुतिस्मृति- सूक्तैकविधया सर्वभूतान्तरात्मत्वेन प्रत्यक्षितपरमात्मस्वरूपं कथ- मेकस्य सकृदुपात्तस्य सर्वभूतात्मशब्दस्यार्थद्वयपरत्वमुच्यते एक स्यापि सर्वभूतात्मशब्दस्य कृतैकशेषस्य बहुवचनान्तस्य निर्दे- शात् भिन्नार्थकानामपि शब्दानां सरूपाणामेकशेषविधानात्

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

यथोक्तार्थपरत्वोपपत्तिः अनेन ब्रह्मरुद्रयोः सर्वभूतान्तरात्मत्वेन प्रत्यक्षितमत्स्वरूपत्वेन प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ज्ञानीत्वात्मैव मे मतामिति मदुक्तरीत्या निरतिशयमत्प्रीतिवि- षयत्वान्मच्छरीरत्वाच्च तद्विषये कृतोऽपराधोमय्येव पर्य- वस्यतीत्यभिप्रेतम् एवं च ब्रह्मरुद्रपरौ सर्वभूतात्मशब्दौ सर्व भूतेष्वात्मा परमात्मा ययोस्ताविति व्यधिकरणबहुव्रीहिविदितव्यौ एवं भूतानां त्रयाणां यः पुमान् भिदां न पश्यति ईश्वरात्त्रय इति न पश्यति अपित्वेक एव ब्रह्मरुद्र रूपेण स्वावताररूपेण च स्थित इति पश्यतीत्यर्थः पूर्वापरानुगुण्यात्प्रमाणान्तरानुरोधाच्च हे ब्रह्मन्! ससर्वात्मकब्रह्मदर्शनशान्ति मनः प्रशान्तिम् अधिगच्छति शान्त्य- धिगमद्वारा मुक्तो भवेदित्यर्थः ॥ ५४ ॥

दक्षाध्वर प्रसंगमुपसंहरति मैत्रेय एवमिति । भगवतैवमादिष्टः प्रजापतीनां पतिः प्रजापतिः ब्रह्मा पतिर्यस्य इति वा दक्षः स्वेन स्वकर्तृकेन क्रतुना हरिमर्चित्वा स्वेन त्रिकपालवैष्णवयागेन हरि- मर्चित्वेति वा उभयतो देवान्दिविष्ठान्भूमिष्ठांश्च अयजत् स्वस्वभाग दिभिर्यथा योग्यमाराधितवानित्यर्थः ॥ ५५ ॥

तथा समाहितांचरः रुद्रं च स्वेन भागेन उच्छेषण रूपेण भागेन उपाधावत् अन्ववर्त्तत अयजदित्यर्थः उदवस्यते समाप्यतेऽनेनेत्यु- वसानं तेन कर्मणा समाप्तकर्मणा सोमपानितरानसोमपांश्च देवान् उपाधावदित्यनुषङ्गः ॥ ५६ ॥

ऋत्विग्भिः सहोदवस्य कर्म समाप्य अवभृथरूपं यथा भवति तथा सस्नौ स्नातवान् स्वेनैवानुभावेनावाप्तराधसे प्राप्तसिद्धये तस्मै दक्षायापि धर्मे विषये एव बुद्धिं दत्वा अस्यमतिर्धर्मासक्ता- स्यादित्यनुगृह्येत्यर्थः ते त्रिदशा देवा दिवं ययुः ॥ २७ ॥

प्रकृतं परमप्रकृतेन संगमयति एवमिति एवमुक्तरीत्यादाक्षायणी सती पूर्वशरीरं हित्वा हिमवतः क्षेत्रभूतायां मेनायां जज्ञे उद्बभूवेति शुश्रुम पराशरादिभ्य इति शेषः अनेन श्लोकैः प्रामाण्यं सू- चितम् ॥ ५८ ॥

भूयो द्वितीये जन्मनि अम्बिका पार्वती अनन्यभावा पतिपारार्थ्य ज्ञानवती एकगतिम् एका अम्बिकैवगतिः प्रवृत्त्युपायोयस्य तं तामेव चिन्तयन्तमतएव दयितं प्रीतिविषयं तमेव पतिमावृङ्क्ते भजति स्म यथा प्रलयकाले पुरुषं सुप्ता लीना शक्तिः यथा चिच्छ- क्तिः प्रलये लीनं पुनः सृष्टिदशायां तत्प्रकारैकस्वभावे तदधीने तथा आवृङ्क्ते स्मेति भावः ॥ ५९ ॥

उक्तायाः कथायाः सम्प्रदायिकतामाह एतादिति । दक्षाध्वरद्रुहः दक्षाध्वरविनाशिनः भगवतः शंभोरेतच्चरितं बृहस्पतेः शिष्या- द्भागवतादुद्धवान्मे मया श्रुतम् ॥ ६० ॥

उक्तायाः कथायाः श्रवणादिफलमाह इदमिति परमेश चेष्टितं परी मा न यस्मात्सपरमो भगवान् स एवेशो यस्य तस्य रुद्रस्य चेष्टितं परमेशयोश्चेष्टितमितिवा यशस्यं यशस्क- मायुष्यं पवित्रमतएव अघौघमर्षणं पापानिचयनिवर्त्तकं पुमानाकर्ण्य तथा यथा श्रुतमनुकीर्तयेत् श्रावयेत् सर्वदा भक्ति भावनः भक्तिंभावयतीति भक्तिभावनः भगवद्भक्तिनिष्ठः द्विती- यान्तपाठे चेष्टितविशेषणं हे कौरव ! अघंधुनाति क्षिपति नाश- यतीत्यर्थः ॥ ६१ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्र चन्द्रिकायां
सप्तमोऽध्यायः ॥ ७ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

एतदेव स्पष्टयति स इति । हे द्विज दक्ष ! योऽहमेवं त्रिरूपः स एवाहं सत्त्वादिगुणमयीमात्ममायां मदधीनजडप्रकृतिमाविश्य रजोगुणोपादानत्वेन ब्रह्माणं सृष्ट्वा ब्रह्माख्यमद्रूपेण तं प्रविश्य जगत्सृजन् । सत्त्वगुणप्रवर्तकत्वेन विष्णुरूपेण विश्वं रक्षन् तमो-गुणोपादानत्वेन शिवं सृष्ट्वा शिवाख्यमद्रूपेण तं प्रविश्य विश्वं हरन् संहरन् तत्तत्क्रियोचिताः संज्ञा अभिवृद्धिहेतुत्वाद्ब्रह्म-नाम । सविलासव्याप्तिहेतुत्वाद्विष्णुनाम । संहारहेतुत्वाद्धरनामेति दध्र इत्यन्वयः अनेन ब्रह्मरुद्रस्थमद्रूपाभ्यां विष्णुरूपेण चाहमेव जगत्सृष्ट्यादित्रयकृदित्यतो ब्रह्मशिवयोः प्रसिद्धयोः सृष्टिसंहार-कर्तृत्ववचनं भ्रान्तिमूलमित्युक्तं भवति ॥ ५१ ॥

एतदेव स्पष्टयति तस्मिन्निति । योऽहं विश्वस्य मुख्यकारणं तस्मिन्मयि केवले प्रकृतिसम्बन्धरहिते । ब्रह्मणि गुणपूर्णे ऽद्वितीये समाधिकरहिते । परमात्मनि स्थिते सति देहात्मबुद्धि-र्देहोऽहमिति बुद्धिर्यस्य स तथा जीवो भूतानि ब्रह्मादीनि । भेदेन स्वातन्त्र्येण । स्वत एव सृष्ट्यादिप्रवृत्तिमन्ति न केनचिन्नियता-नीत्यनुपश्यतीत्यन्वयः अज्ञ इति हेतुगर्भविशेषणम यद्वा भेदेन स्थितानि ब्रह्मादिभूतानि परमात्मन्यनुपश्यतीत्यभेदेनेति शेषः॥५२॥

अज्ञानिदर्शनमुक्त्वा ज्ञानिदर्शनप्रकारमाह यथेति । पुमान् जीवः शिरःपाण्यादिषु स्वाङ्गेषु क्वचिदपि पारक्यबुद्धिं यथा न कुरुते किन्तु स्वकीयबुद्धिमेव करोति एवं मत्परो ब्रह्मादिभूतेषु साम-कत्वबुद्धिं करोति न स्वातन्त्र्यबुद्धिम् ॥ ५३ ॥

अतः फलितमाह त्रयाणामिति हे ब्रह्मन् ! एवमुक्तप्रकारेण ममैव स्वातन्त्र्यादन्येषामस्वातन्त्र्यात् ब्रह्मशिवस्थत्वेन ब्रह्मशिवा-ख्ययोर्मद्रूपयोः पृथक्स्थितस्य विष्णवाख्यस्य मद्रूपस्य चेति त्रयाणां त्रित्वसंख्योपेतानामेकभावानामेकरूपाणामैकैश्वर्याणां सर्वभूता-त्मनां सर्वभूतान्तर्यामित्वेन योजीवोभिदां न पश्यति स शान्तिं मोक्षं गच्छतीत्यन्वयः यद्वा त्रयाणां ब्रह्मविष्णुशिवाख्यानां सर्वभूत-स्वामिनामेकचित्तानां भिदां मिथो विरोधबुद्धिविषयत्वं न पश्यति स शान्तिं स्वस्थबुद्धितया भगवन्निष्ठामाप्नोति ब्रह्मादिजीवानां हरिणा भेदवचनस्य कागतिरिति चेन्न तद्वशत्ववर्तित्वप्रयत्नदृष्टि-विषयत्वात् तदुक्तम् "हरेर्वशत्वदृष्टिस्तु भूतानामपृथग्दृशः । प्रिय-त्वदृष्टिरथवा ब्रह्मादीनां विशेषतः,, इति ॥ ५४ ॥

शान्तिमधिगच्छतीत्यनेन हरेः स्वात्मोपदेशश्चेत्समाप्तः परं दक्षेण किमकारीति तत्राह एवमिति । आदिष्ट उपदिष्टः प्रजापतिः दक्षः स्वेन क्रतुना स्वयज्ञेन स्वेच्छया वा भागवतः भगवद्भक्तः स्वांशवतो वा देवानयजत् पूजयामास उभयत इति पाठे कथ मुभयतः सोमतोनिष्टरादिभिश्च कथ [१] मुभयतः सोमतोहवि-ष्मतो वा ॥ ५५ ॥

उपाधावदुपास्त ततो निरपराधत्वेन शुद्धश्चाभूत् धावुगति-शुद्ध्योरिति धातुः उदवसानेन समाप्तीष्टिलक्षणेन कर्मणा आग्नेयं पञ्चकपालमुदवसानीयं निर्वपेदिति श्रुतेः सोमपानिति पाणिनेरपि सर्वज्ञेन व्यासेन प्रयुक्तत्वाद्क्विप्प्रत्ययः प्रायिक इति ज्ञातव्यम् । इतरान्सोमपानित्यर्थः । उदवस्य समाप्तीष्टिं कृत्वा स्वेनानुभावेन भगवन्महिम्नैवावाप्तराधसं प्राप्तयज्ञसिद्धये ॥ ५६ ॥ ५७ ॥

ननु दक्षकोपेन योगमुक्तदेहया दक्षपुत्र्या सत्या देव्या निवृत्ति लक्षणामुक्तिरवापीति न युज्यते भर्तुः शिवस्यामुक्तदेहत्वात्सती-नामङ्गनानां भर्तृभिः सह मुक्तिश्रवणात् अतोऽनया किमकारि त्याशङ्कां हृद्गतां परिहरति एवमिति क्षेत्रे भार्यायाम् ॥ ५८ ॥

अत्र निमित्तमाह अनन्यभावेति । एकः शंकरोगतिर्यस्याः सा तथा अनन्यभावत्वात् अन्यभक्तिरहितत्वात् शास्त्रार्थं दृष्टान्तमाह शक्तिरिति प्रलये सुप्ता हरावेवरता । सृष्टिव्यापारं विना स्थिता । शक्तिर्भार्या लक्ष्मीः पुरुषमिव यथा भजति तथेत्यर्थः तदुक्तम "शक्तित्वाद्धिरण्यशक्तिस्तु शक्तिशब्देन चोच्यते । शक्यत्वात्प्रकृति-श्चापि स्वापः सृष्टिं विना हरौ । रतिस्तस्यास्तु कथितो नह्यन्यः स्वापइष्यते,, इति ॥ ५९ ॥

भवनेदं कस्माच्छ्रुतमिति तत्राह एतदिति । बृहस्पतेः शिष्या-दुतनाराद्ध दक्षस्याध्वरं यज्ञं द्रोहितवान् हिंसितवान्नाशितवानिति दक्षाध्वरध्रुक् तस्य ॥ ६० ॥

संप्रदायवचनमुक्त्वा तच्छ्रवणादिफलमाह इदमिति ॥ ६१ ॥

शङ्करः स्वां सतीमवाप्य किमकार्षीदिति तत्राह सतीमिति शतमित्युपलक्षणं वह्वीः समा इत्यर्थः ॥ ६२ ॥

अनेन रेतउत्सर्जनावधिः सूचितः तत्र कुत्रेदमुत्ससर्ज । तस्यां देव्यामुतान्यत्र । न प्रथमः प्राप्तपरित्यागे कारणाभावात् न द्वितीयस्त्वनुपपत्तेरिति तत्राह स्ववीर्येति । अकल्पामसमर्थाम अनेनास्या मर्थ्यंकारणमुक्तं भवति इयमेवोपपत्तिः आकाशस्य नीरूपत्वेन तद्धारणायोगात् अधः पतत्तद्रेत आकाशनदी गङ्गाजग्राहेत्याह गङ्गेति ॥ ६३ ॥

गङ्गाया अल्पशक्तिं निरीक्ष्य वह्निस्तत्पीत्वा स्वान्तर्जीर्णं स्वाहाद्वारेण नदीतीरे शरकानने चच्छर्देत्याह पीत्वेति । स्वाहाद्वा रेणेति कस्मात् कल्प्यत इत्यत आचार्यैर्भारतोक्तेरित्युक्तः भारत स्य निर्णायकग्रन्थत्वात् अमोघरेतसोहरस्य वीर्यं निष्फलं भवितुं नार्हति अत्र तृणगतादिनिष्फलमिव प्रतीयते इति तत्राह कुमार इति । ततोरेतसः मातृरहितस्य कुमारस्य स्तनपानं कथमत्राह तस्मादिति ॥ ६४ ॥

[ १ ] अयं पक्षस्तात्पर्योक्तः ॥

सतीं मेनात्मजान्तात ! प्राप्य जायाम्भवः पुनः ।

तया मैथुनमारभ्य रेमे देवः समाः शतम् ॥ ६२ ॥

स्ववीर्यधारणेऽकल्पां ज्ञात्वा जाग्रां स धूर्जटिः ।

उत्ससर्जाम्बरे रेतो गङ्गा जग्राह तन्नदी ॥ ६३ ॥

पीत्वान्तरजरं वह्निश्चच्छर्द शरकानने ।

कुमारोऽभूत्ततस्तस्मै स्तनं षट्कृत्तिका ददुः ॥ ६४ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

एकेन मुखेन षट्कृत्तिकास्तनपानं कथं घटत इति तत्राह षड्भिर्भिरिति। किमधिकारः कुमारइति तत्राह ततइति। सुरा इतिशेषः सर्वासुराणां भयं भीतिं स्वस्थानच्युतिं च करोतीति ॥ ६५ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृत पदरत्नावल्यां
सप्तमोऽध्यायः ॥ ७ ॥

———

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

स्वस्य तदुभयेश्वरत्वेऽपि तदादरार्थं तदनन्यत्वन्यायेनाभेदमुपपादयति भूतानीति । कैमुत्येन दृष्टान्तः ॥ ५२ ॥

प्रकाशश्च निरुपाधिश्च स एव ब्रह्मा च शर्वश्चेत्यन्वयः शर्वस्य मदात्मकत्वान्मत्परस्तु भूतेष्वपि स्वाङ्गेष्विव ममतामेव करोतीत्याह यथेति ॥ ५३ ॥

त्रिदेव्यां पृथगीश्वरत्वमपश्यन्नेव कृतार्थो भवतीत्याह । त्रयाणामेकः पुरुषस्यैव भावः "पार्थिवाद्दारुणोधूम" इति न्यायेन यथायथं प्राकट्यं येषु तेषां सर्वभूतस्य आत्मनां तत्तत्कार्ये प्रवर्त्तकानाम् ॥ ५४—५६ ॥

उद्वस्येत्यर्द्धकम् ॥ ५७—६० ॥

भावन इति चित्सुखपाठान्तरम् ॥ ६१ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे
सप्तमोऽध्यायः ॥ ७ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

ननु परमेश्वरः खल्वेक एव सच भवानेव शास्त्रेपूच्यत इति तत्राह आत्मेति। समाविश्याधिष्ठाय स प्रसिद्धो गुणातीत एक एवाहं क्रियाः सृष्टिस्थितिसंहृतयस्तासु समुचितां संज्ञां स्रष्टेति पालक इति संहर्त्तेत्याख्याम् ॥ ५१ ॥

ननु ब्रह्मणो हिरण्यगर्भत्वेन जीवत्वात् रुद्रस्येश्वरत्वेऽपि गुणस्पर्शात् कथं तयोस्त्वदभेदस्तत्र कैमुत्यन्यायेनाह ब्रह्मरुद्रौचेति भूतानि जीवानपि अज्ञ एव भेदेन पश्यति नतु ।विज्ञः किमुत ब्रह्मरुद्रौ भूतानां मदीयतटस्थशक्तित्वात् ब्रह्मरुद्रयोर्गुणावतारत्वान्मदभेद इत्यर्थः ॥ ५२ ॥

भूतानितु मद्भक्तोऽपि स्वाभेदेन पश्येदित्याह स्वशिरःपाण्यादिषु सुखदुःखे यथा तथैव सर्वभूतेष्वपि सुखदुःखे पश्येदित्येव भक्तानामभेददर्शनमित्यर्थः ॥ ५३ ॥

अभेददर्शनस्य फलमाह त्रयाणामिति ॥ ५४ ॥

प्रजापतिपतिर्दक्षः उभयतः अङ्गैः प्रधानेनच ॥ ५५ ॥

उद्वस्यते समाप्यतेऽनेनेत्युद्वसानं तेन ॥

उद्वस्य समाप्य अवभृथस्नानं चकारेत्यर्थः ॥ ५६ ॥

तस्मै दक्षाय अवाप्तराधसे प्राप्तसिद्धये ॥ ५७ ॥

मेनायां मेनकायाम् ॥ ५८ ॥

आवृङ्क्ते भजते स्म न विद्यतेऽन्यस्मिन् भावो यस्याः सा । एकं गतिरूपं प्रलयकाले सुप्ता शक्तिः पूरुषमीश्वरमसुप्तमिव ॥५९॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतकृत सारार्थदर्शिनी ।

बृहस्पतेः शिष्यादुद्धवात् सकाशात् ॥ ६० ॥ ६१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थे सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ * ॥

———

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

स्वस्य स्वरूपतो निर्विकारत्वं शक्तितोविकारित्वं च दर्श[illegible] सर्वकारणत्वमाह आत्ममायामिति । समाविश्य अधिष्ठाय सृ[illegible] ब्रह्मेति स्वांशविशेषद्वारा हरन् हर इति स्वांशविशेषद्वारा र[illegible] विष्णुरिति स्वावतारद्वारा च क्रियोचितां संज्ञाम् अहं[illegible] दधे धारयामि ॥ ५१ ॥

तस्मिन् सर्वकारणे परमात्मनि सर्वेषामात्मनामात्मनि ब्रह्म[illegible] बृहत्स्वरूपगुणशक्तिमति केवले अन्यनिरपेक्षस्थितिप्रवृत्त्या[illegible] अतएवाद्वितीये समानाधिकशून्ये मयि भेदेन स्वतन्त्रसत्तया ब्र[illegible] रुद्रौ भूतानि चराचराणि सर्वाणि वस्तूनि च अज्ञः पश्यति॥ ५[illegible]

एतदेव दृष्टान्तेन स्पष्टयति यथेति । एवं मत्परो मदुपास[illegible] भूतेषु चेतनाचेतनमच्छक्तिमयेषु ब्रह्मादिस्तम्बपर्यन्तेषु पारक्य[illegible] बुद्धिं न कुर्यात् ॥ ५३ ॥

एकः स्थितिप्रवृत्तिमूलभूतोभावः आश्रयः परः वासुदेवा[illegible] ख्यो येषां तेषां त्रयाणां ब्रह्मविष्णुशिवानाम् उपलक्षणमेत[illegible] त्सर्ववस्तूनाम् "सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः। तस्या[illegible] पिभगवान्कृष्णः किमतद्वस्तु रूप्यताम्,,इति वक्ष्यमाणात् ॥५४॥

प्रजानां जगतां पतिर्भगवान् पतिर्यस्य सः दक्षः भगवता आदिष्ट[illegible] मत्परः सर्वं ब्रह्मशिवादिकं मदभिन्नं पश्येदित्युपदिष्टः स्वेन क्रतुना हरिम् उभयतोभगवदङ्गभूतदेवादिद्वारा साक्षाच्च त्रिकपालपुरो[illegible]डाशादिना अर्चयित्वा देवान् तदङ्गतया अयजत् ॥ ५५ ॥

रुद्रं च स्वेन भागेन यज्ञावशेषेण उपाधावत्समाराधयत् उद्[illegible]वस्यते समाप्यते अनेनेत्युद्वसानं कर्म तेन समाप्येष्ट्या इतरान् सो[illegible]मपानुपाधावत् ॥

उद्वस्य यज्ञं समाप्य ततःऋत्विग्भिः अवभृथरूपंयथाभवति तथा सस्नौ स्नातवान्॥ ५६ ॥

स्वेनैव भगवदुपदेशलब्धेन अनुभावेन अवाप्तराधसे लब्ध[illegible]बोधायापि तस्मै दक्षाय धर्मे मतिं दत्वा दिवं ययुः ॥ ५७ ॥

हिमवतः हिमाचलस्य क्षेत्रे भार्य्यायाम् ॥ ५८ ॥

अनन्यभावानामनन्यभक्तानामेको गतिर्यस्तम् प्रियं भवं भूयःपतिम् आवृङ्क्तेस्म वृतवतीत्यर्थः यथा प्रलयवेलायां सुप्ता शक्तिः पूरुषं सृष्ट्यर्थमुत्थितं परमेश्वरम् ॥ ५९ ॥

बृहस्पतेः शिष्यात् उद्धवात् मे मया श्रुतम् ॥ ६० ॥

हे कौरव! विदुर ! इदमीशस्य चेष्टितम् परंपवित्रम् अघौघानामर्षणं मार्जनम् यो भक्तिभावितः आकर्ण्य गुरुमुखाच्छ्रुत्वा नित्यशः कीर्तयेत्स अघं धुनोति आत्मनः श्रोतृणांचेति शेषः ॥ ६१ ॥

इतिश्रीभागवते महापुराणे चतुर्थस्कन्धे
सिद्धान्तप्रदीपेसप्तमाध्यायार्थ प्रकाशः॥ ७ ॥

———

षड्भिर्मुखैस्तनं पीत्वासबालः षण्मुखोऽभवत् ।
ततश्चक्रुः सैन्यपालं सर्वासुरभयङ्करम् । ६५ ॥

इति विजयध्वज पाठः ॥

भाषाटीका

हे द्विज दक्ष ! सो जो मैं परम कारण हूं सो अपनी त्रिगुण वाली माया को धारण करके संसार के पैदा करने में पालन करने में संहार करने में ब्रह्मा, विष्णु, रुद्र ये तीनों क्रिया के उचित संज्ञाओं को धारण करता हूं ॥ ५१ ॥

सब का अन्तर्यामी जो मैं अद्वितीय केवल परमात्मा परब्रह्म हूं तिस मेरेसे ब्रह्मा रुद्र तथा प्राणि मात्र को जो सर्वथा पृथक् देखता है सो जीव अज्ञानी है ॥ ५२ ॥

जैसे कोई पुरुष अपने अंग मस्तक हस्तादिकों में कहीं भी पराई बुद्धि नहीं करता है तैसेई मेरे व्यापक स्वरूप को जानने वाला पुरुष व्याप्य जीवोंको सर्वांशले पृथक् नहीं देखता है ॥५३॥

हे ब्रह्मन् ! विष्णुके साथ शरीर शरीरी भाव से तथा विशेष्य विशेषण भावसे एकताको प्राप्त भये तथा नारायणके द्वारा सर्वात्म भाव कूं प्राप्त हुये ब्रह्म रुद्रका तथा नारायणका जो भेद नहीं देखता है वही पुरुष शान्ति को प्राप्त होता है ॥ ५४ ॥

इस प्रकार भगवानकी आज्ञाको प्राप्त होकर प्रजापतियों का पति दक्ष, श्रीहरिकूं अपने यज्ञसे पूजन करके अङ्ग प्रधान दोनों रीति से देवताओं का पूजन करते भये अपने भागसे युक्त करके सावधानतासे रुद्रजी की भी स्तुति करते भये ॥ ५५ ॥

यज्ञ कर्मकी समाप्ति में और बाकी देवों कोभी पूजन करके ऋत्विजों के सहित दक्षप्रजापतिने अवभृथ यज्ञांतस्नानक्रिया ॥ ५६ ॥

भाषाटीका

भगवान् के आराधन रूप यज्ञके करने के प्रभावसे स्वयं ही धर्मकी सिद्धि प्राप्त हुई जिस दक्षको तिसको फिरभी धर्मकाही उपदेश करके देवता गण स्वर्गको गये ॥ ५७ ॥

इस प्रकारसे सती दाक्षायणीजीने पहिले शरीरको छोडकर हिमवानकी भार्या मेनाके इहां जन्म लियाथा ऐसा हमने सुनाहै ॥ ५८ ॥

फिरभी अम्बिका सतीजी, जैसे प्रलयकालमें सोई हुई शक्तियां सृष्टिके आरम्भ में जैसे ईश्वरको भजैं तैसे अनन्यभक्ति वालों के एक गतिदायक वही प्रिय शिवजी पतिको वरण करतीहुई ॥५९॥

इस प्रकारसे दक्षके यज्ञके नाश करने वाले भगवान् शम्भुजी के चरित्रकूं साक्षात् बृहस्पति के शिष्य भागवत उद्धवजी से हम ने सुनाहै ॥ ६० ॥

हे कौरव विदुरजी ! यशके आयुके देनेवाले पाप समूहका नाश करने वाले ईश्वरके परम पवित्र चरित्र को जो पुरुष नित्य श्रवण करके भक्ति भावसे कीर्त्तन करै वह पुरुष सब पापोंका नाश करता है ॥ ६१ ॥

इति श्रीभागवत चतुर्थस्कन्ध का सप्तम अध्याय समाप्त ॥७॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे सप्तमोऽध्यायः ।

## अष्टमोऽध्यायः ॥ ८ ॥

—(०)—

### मैत्रेय उवाच

सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः ।
नैते गृहान् ब्रह्मसुता ह्यावसन्नूर्ध्वरेतसः ॥ १ ॥
मृषाऽधर्मस्य भार्यासीद्दम्भं मायां च शत्रुहन् !
असूत मिथुनं तत्तु निर्ऋतिर्जगृहेऽप्रजः ॥ २ ॥
तयोः समभवल्लोभो निकृतिश्च महामते !
ताभ्यां क्रोधश्च हिंसा च यद्दुरुक्तिः स्वसा कलिः ॥ ३ ॥
दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम!
तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥ ४ ॥
संग्रहेण मया ख्यातः प्रतिसर्गस्तवानघ !
त्रिः श्रुत्वैतत्पुमान् पुण्यं विधुनोत्यात्मनो मलम् ॥ ५ ॥
अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह !
स्वायम्भुवस्यापि मनोर्हरेरंशांशजन्मनः ॥ ६ ॥
प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ ॥
वासुदेवस्य कलया रक्षायां जगतः स्थितौ ॥ ७ ॥
जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः ॥
सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः ॥ ८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

दक्षकन्यान्वये प्रोक्ता दक्षयज्ञकथोदिता ।
मनुपुत्रान्वये प्रोक्ता ध्रुवचर्याथ पञ्चभिः ॥ १ ॥
अष्टमे गुरुदारोक्तिरोपमत्सरतः पुरात् ।
निर्गतेन ध्रुवेणाह तपसा तोषणं हरेः ॥ २ ॥

एवं तावन्मनुकन्यान्वयोक्त्यैव मरीच्यादीनां ब्रह्मपुत्राणां वंशा वर्णितास्तत्रावशिष्टं किञ्चिदाह सनकाद्या इति । नावसन्नाश्रिताः ऊर्ध्वरेतसो नैष्ठिकाः अतस्तेषां वंशो नास्ति ॥ १ ॥

अधर्मोऽपि ब्रह्मपुत्रस्तस्य वंशमाह मृषेति चतुर्भिः । दम्भः परप्रतारणम् माया तदुचिता चेष्टा तयोः सोदरयोरपि दाम्पत्यमधर्मांशतया एवमुपर्यपि अप्रजोऽपुत्रः ॥ २ ॥

निकृतिः शठतायत् याभ्यां कलिश्च तस्य स्वसा दुरुक्तिश्चेत्यर्थः ॥ ३ ॥

यातना तीव्रवेदना ॥ ४ ॥

प्रतिसर्गोऽनुसर्ग एव यद्वा प्रतिसर्गः प्रलयः अधर्मस्य प्रलयहेतुत्वात्प्रतिसर्गत्वम् एतदन्तमधर्मवंशम् पुण्यमिति वर्जन द्वारा पुण्यहेतुत्वात् ॥ ५ ॥

मनोः पुत्रवंशम् हरेरंशो ब्रह्मा तस्यांशाद्देहार्धाज्जन्म यस्य ॥ ६ ॥

जगतो रक्षायां स्थितौ ॥ ७ ॥

सुनीतिः सुरुचिश्च जाये तयोर्मध्ये इतरा सुनीतिः ॥ ८ ॥

———

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

अथ दक्षयज्ञकथानन्तरं पञ्चभिरध्यायैर्ध्रुवचरित्रं वर्णयत इति शेषः रोषमत्सरतः क्रोधेर्ष्याभ्याम् ध्रुवेण कर्त्रा तपसा करणेन हरेः हरिकर्मकं तोषणं वर्ण्यते मैत्रेयेणेति शेषः तत्र ब्रह्मपुत्रवंशवर्णनं किञ्चित् सनकादीनां नैष्ठिकत्वं अधर्मस्य वंशवर्णनमशिष्टमाह अतो नैष्ठिकत्वात् ॥ १ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

उपपत्यैऽपि अग्रेऽपि निर्ऋतिः नैर्ऋतकोणाधिपती राक्षसविशेषः ॥ २ ॥

तयोर्दम्पत्योर्दम्भमाययोः एतत्कथनं वर्जनार्थं न तु पुण्यमिति विचारय बुद्ध्या इति महामते ! इति सम्बोधितम् ताभ्यां लोभशठताभ्यां दम्पतिभ्यां यत् याभ्यां क्रोधहिंसाभ्यां दम्पतिभ्यां कलिश्च जाता तस्य कलेः तस्येत्यध्याहारादित्यर्थोक्तिः ॥ ३ ॥

भियं कन्यां मृत्युं पुत्रश्च तयोश्च भीमृत्व्योर्दम्पत्योः तथेति चार्थ ॥ ४ ॥

सङ्क्षेपेण संक्षेपेण अनुसर्गः गौणसर्गः प्रत्याख्यानवत्प्रतिशब्दस्य स्वसमभिव्याहृतविरुद्धार्थं प्रतिपादकत्वादनुसर्गेऽर्थंप्रसिद्धेश्च यद्वेति वर्जनद्वारा अकरणद्वारा दम्भादिकं न कुर्यात् चेत्पुण्यं स्यादित्यर्थः ॥ ५ ॥

अथ मरीच्यादिवंशवर्णनानन्तरम् अतः ब्रह्मपुत्रत्वेन तद्वर्णनस्यापि प्रकृतत्वात् अपिरत्र मरीच्यादिकं समुच्चिनोति ॥ ६ ॥

कलया अंशेन ॥ ७ ॥

तत सुनीतिः ॥ ८ ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

एव

प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः ।
तस्यां ससर्ज दुहितॄः षोडशामललोचनाः ॥

इत्यादिना प्रसूतिवंशमुपक्रम्य तत्प्रसक्तानुप्रसक्तमभिहितम् एवं तावन्मनुकन्यान्वयो वर्णितः अथ मनुपुत्रान्वयं विवक्षुरनुसर्गकथनेऽवशिष्टं किञ्चिदाह । सनकाद्या इति । यतिरिति प्रत्येकं सनकादिविशेषणं तन्त्रेणोपात्तं प्रत्येकाभिप्रायेणैकवचनान्तानिर्देशः ऋषिविशेषणं वा प्रत्यासत्तेः एते ब्रह्मपुत्राः गृहान् गृहाश्रमान् नावसन् नाश्रिताः तत्र हेतुः ऊर्ध्वरेतसः नैष्ठिकाः अतस्तेषां वंशो नास्तीति ॥ १ ॥

अधर्मोऽपि ब्रह्मपुत्रः तस्य वंशमाह । मृषेति चतुर्भिः । अधर्मस्य भार्या मृषा दम्भः पर प्रतारणं माया तदुचिता चेष्टा एतदुभयात्मकं मिथुनम् असूत प्रसूतवती हे शत्रुहन् ! सोदरयोरपि मायादम्भयोर्दाम्पत्यमधर्मोदातया एतमुपर्यपि द्रष्टव्यं तच्च दम्भमायात्मकं मिथुनम् अप्रजोऽपुत्रो निर्ऋतिर्गृहे गृहीतवान् दम्भे पुत्राभिमानं मायायां स्नुषाभिमानं च कृतवानित्यर्थः ॥ २ ॥

हेमहामतेतयोर्मायादम्भयोर्लोभः निकृतिःशठता च ताभ्यां निकृतिलोभाभ्यां क्रोधोऽमर्षो हिंसा च समभवदित्युत्पङ्कः यत् याभ्यां क्रोधहिंसाभ्यां कलिश्च तस्य स्वसा भगिनी दुरुक्तिश्च समभवत् ३॥

दुरुक्तौ कलिः भियं भीतिं मृत्युं च आधत्त उत्पादयामास हे सत्तम! ताभ्यां भीतिमृत्युभ्यां यातनाख्यो निरयः पुमान् एतदुभयात्मकं मिथुनं जज्ञे ॥ ४ ॥ *

अधर्मवंशमुपसंहरन् तस्य संसृतिहेतुत्वान्मुमुक्षुभिरसेव्यतामाह । एतदिति । अधर्मएव वृक्षस्तस्य वंश्याः वंशोभवाः शाखारूपा इतिभावः हि यस्मात् संसृति हेतवः अतः श्रेयस्कामः स्वर्गापवर्गकामः न सेवेत अधर्मवंद्यानिति शेषः विभक्तिविपरिणामेनानुषङ्गः वा आश्रमोत्तमः उत्तमःआश्रमो यस्य सः चतुर्थाश्रमनिष्ठ इत्यर्थः आहिता ग्न्यादित्वादाश्रमशब्दस्य पूर्वनिपातःनितरां न सेवेत ॥ ४ ॥

अथाधर्मवंशस्य प्रतिसर्गान्तर्भावं वदंस्तमुपसंहरन् तच्छ्रवणफलमाह । संग्रहेणेति हे अनघ! तव तुभ्यं मया प्रतिसर्गः संग्रहेण ख्यातः प्रलयहेतुत्वादधर्मवंशस्य प्रतिसर्गत्वम् एतदधर्मवंशं पुण्यं वर्जनद्वारा पुण्य हेतुत्वात्पुण्यं श्रुत्वा पुमानात्मनः स्वस्य मलं पापं विधुनोति ॥ ५ ॥

एवं कन्यान्वयमभिधायाथ मनुपुत्रान्वयं वक्तुमुपक्रमते । अथातः इति । हे कुरुद्वह! अथ "मनोस्तु शतरूपायां तिस्रः कन्याः प्रजज्ञिरे„ इत्युपक्रान्तमनुकन्यान्वयकथनानन्तरम् अतउपक्रान्तस्य वृत्तत्वाद्धेतोः स्वायम्भुवस्य मनोर्वंशं पुत्रान्वयं कीर्तये कथयामीति सम्बन्धः अत्र मनुकन्यामनुपुत्रवंशकथनयोः पौर्वापर्यं हेतुहेतुमद्भावेचसमासव्यासत्वहेतुकस्येच्छायत्तोपक्रान्तत्वो रूक्तिस्वमात्यमेवनिबन्धनम् काकदन्तश्रवणवदश्रव्यत्वशङ्कामपनुदन् मनुं विशिनष्टि पुण्यकीर्तेः पुण्या श्रुश्रूषतां पुण्या पवित्रा कीर्तिर्यस्य तत्र हेतुः हरेरंशांशजन्मनः स्मरणमात्रेण आश्रितदुरितहारिणो भगवतः अंशो ब्रह्मा तस्य अंशाच्छरीराज्जन्म यस्य तस्य हर्यंशांशसंभूतत्वाद्धरिभक्तत्वाच्च हरिचरित्रवन्मनुपुत्रान्वयकथन श्रवणादिकमपि दुरितविनाशनद्वारा पुण्यसंपादकमित्यर्थः ॥ ६ ॥

प्रतिज्ञातमनुवंशंवर्णयति । प्रियव्रतोत्तानपादावित्यादिना आञ्जसौल वर्णनात् प्रियव्रतश्चोत्तानपादश्च तौ इमे अन्वर्थनामनी प्रियं भगवत्प्रीतिकरं व्रतं यस्य स प्रियव्रतः उत्तानौ उन्नतौ पादौ यस्येति उत्तानपादः शतरूपापतेर्मनोः सुतौ वासुदेवस्य कलयाऽर्थोन्नतात्मभगवद्गुणविशेषाविर्भावेन जगतो रक्षायां स्थितौ ॥ ७ ॥

तयोर्मध्ये योऽग्रज उत्तानपादस्तस्य सुनीतिः सुरुचिश्चेति जायेभार्ये तयोः सुनीतिसुरुच्योर्मध्ये सुरुचिः पत्युरुत्तानपादस्य प्रेयसी नितरां प्रीतिविषया इतरा सुनीतिस्तु न प्रेयसी यत्सुतः यस्या अप्रेयस्याः सुनीतेः सुतः पुत्रो ध्रुवः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

संसारविरक्तस्य पुंसः श्रीनारायणश्रीपादपद्ममूलमेव शरणमिति निरूपयत्यस्मिन्नध्याये तत्र परमभागवतस्य ध्रुवस्य चरित्रमनुवर्णयितुं हेयत्वेनाधर्मवंशानुचरितमाह । सनकाद्या इति । गृहान्नावसन् गृहस्थाश्रमं नाभजन्नित्यर्थः ऊर्ध्वरेतस इत्यनेन संन्यासाश्रमं सूचयति ॥ १ ॥

अप्रजः सन्ततिरहितः ॥ २ ॥ ३ ॥ ४ ॥

अत्र मायादयः स्त्रियोऽन्येपुमांसः संसारहेतवोहि यस्मात्तस्माच्छ्रेयस्काम एतान्न सेवेतेत्यन्वयः आश्रमोत्तमी संन्यासी ॥ ४ ॥

मयाख्यात अनुसर्ग इत्यत्र सन्ध्यभावः संग्रहोक्त्वादल्पत्वं नज्ञातव्यम् महानयं ग्रन्थबहुलत्वाल्लोके दृश्यमानत्वाच्चेति प्रदर्शनार्थं इतिज्ञातव्यम् अस्यानुसर्गस्य श्रवणफलमाह त्रिः श्रुत्वेति आत्मनो मनसो मलं विधुनोति निरस्यति ॥ ५ ॥

---

* एतेह्यधर्मवृक्षस्य वंश्याः संसृति हेतवः ।
श्रेयस्कामो न सेवेत नितरामाश्रमोत्तमः ॥ ४ ॥

इति श्रीराघवसम्मतः श्लोकः तैलङ्गश्रीधरीयेऽपि निर्णीतोऽयंमूलपाठस्तथैव विजयध्वजीयेऽपि मूलटीकाच तथैव

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

वक्तव्यायाः कथायाः समाप्तत्वादतः परं किंवक्तव्यमिति तत्राह। अथात इति। अथेत्यनेन पूर्वस्माद्वक्ष्यमाणस्यार्थस्य मङ्गलत्वं वाक्ति यतोऽधर्मादिकं हेयमत उपादेयं कथयामीत्यत इति अपिशब्देन वंशस्यानल्पत्वं श्रुतिस्मृतिभ्यां संभावितत्वमाह हरेरिति। हरेरंशांशेन विशेषावेशेन संहितं जन्म यस्य स तथा तस्य

आविष्टाहरिणाजीवा ब्रह्मादक्षोमनुः पृथुः।
शक्राद्याऋषयश्चैव मत्स्यव्यासादयो हरिः॥

इति ॥ ६ ॥

प्रियव्रतोत्तानपदोर्मनुपुत्रत्वेन पूर्वमुक्तयोः पुनरत्रांकिर्वंशस्यादित्वज्ञापनाय अनुवदति।प्रियव्रतेति। वासुदेवस्य राजराजाख्यस्या कलया सन्निहितौ तदुक्तम्

प्रियव्रतोत्तानपादप्रमुखेषुहरिः स्वयम्।
आविष्टः सर्वभूतेषु ऋषभाद्याः स्वयं हरिः॥

इति ॥ ७ ॥

प्रियव्रतोत्तानपदोर्मध्ये प्रियव्रतविक्रमस्य प्रथमं वक्तव्यत्वे सत्युत्तानपादपुत्रस्य ध्रुवस्यातिरमणीयत्वेन विरक्तिभक्तिजनकत्वेन श्रोतुः श्रद्धाजनकत्वेन् भगवदुपास्तौ क्षिप्रप्रवृत्तिजनकत्वेनाऽऽश्चर्यबुद्धिजनकत्वेन च प्रथमं तच्चरितं वक्तुमुपक्रमते। जाये इति। यस्याः सुनीतेः सुतः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

एवं श्रीकर्दमकन्यारूपाणां सात्विकशक्तिदेवीनां विवरणमुक्त्वा तामसशक्तिदेवीनामाह। मृषेति। निर्ऋतिर्नैर्ऋतकोणाधिपतिः॥१-१८

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

विमातुर्वाग्विषप्लुष्टो मातुर्वागमृताप्लुतः।
ध्रुवोऽष्टमे मधुवने तपसातोषयद्धरिम्॥ ० ॥

तदेवं मनोः कन्यावंशोक्त्यैव मरीच्यादीनां ब्रह्मपुत्राणामपि वंशा वर्णिताः। इदानीं तस्य पुत्रवंशे वक्तव्येऽपि लाघवादवशिष्टानां ब्रह्मपुत्राणां वंशजिज्ञासायामाह। सनकाद्या इति ॥ १ ॥

अधर्मोऽपि ब्रह्मपुत्रस्तस्य वंशमाह। मृषेति। हे शत्रुहन्निति अधर्म्म एव शत्रुस्त्वं मर्यादश्च एव हन्तीत्यर्थः। दम्भः परप्रतारणं माया तदुचिता क्रिया। तयोः सोदरयोरपि दाम्पत्यमधर्मांशतया निर्ऋतिर्नैर्ऋतकोणाधिपतिः॥ २ ॥

निकृतिः शठता यत् याभ्यां कलिश्च तस्य स्वसा दुरुक्तिश्च ॥३॥

एवमत्र शास्त्रे भक्तेरभिधेयत्वेन तस्याश्चानुकूलप्रतिकूलवस्तुजिज्ञासायां वर्जनीयत्वेनाधर्मवंशो नरकान्त उक्तः ॥ ४ ॥

सङ्क्षेपेण संक्षेपेण प्रतिसर्गः प्रलयः प्रलयहेतुत्वात् प्रलयः हे अनघेति अधर्मवंशोऽयं त्वया नानुभूत इति भावः। पुण्यं वर्जनद्वारा पुण्यकरम् ॥ ५ ॥

हरेरंशांशानां कपिलदत्त यज्ञ पृथुऋषभादीनां जन्म यतस्तस्य ॥६॥

वासुदेवस्य कलया कलारूपेण विष्णुना या जगतो रक्षा तस्यां क्रियायां स्थितौ ॥ ७ ॥

तयोर्जाययोर्मध्ये ॥ ८ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

श्रेष्ठ्यं भगवतः षड्भिरुक्तं सती प्रसंगतः।
ध्रुवाख्यानमुखेनाथ पञ्चभिस्तदिहोच्यते ॥ १ ॥

एवं तावद्ब्रह्मपुत्रस्य मनोः कन्यान्वयः मरीच्यादीनां ब्रह्मपुत्राणां चान्वयो वर्णितः इदानीमवशिष्टब्रह्मपुत्रान्वयकथनपूर्वकं मनुपुत्रान्वयमाह एकोनचत्वारिंशदध्यायैः। सनकाद्या इति। एते गृहाश्रमवशात् गृहाश्रमान् नाश्रिताः यतः ऊर्ध्वरेतसः नैष्ठिकाः

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

अतस्तेषां पुत्रपौत्रादिरूपो वंशो नास्ति शिष्यप्रशिष्यादिरूपस्तु स्तीति बोध्यम् तथाहि श्रीमुखवचनम्।

महर्षयः सप्तपूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोके इमाः प्रजाः।

इति ॥ १ ॥

ब्रह्मणः पृष्ठतः उत्पन्नस्य अधर्मस्य ब्रह्मपुत्रस्य वंशमाह मृषेति चतुर्भिः। अधर्मस्य भार्या मृषा आसीत् सा दम्भं परप्रतारणार्थं स्वोत्कर्षख्यापनम् मायां तदनुरूपां वञ्चनांच असूत उत्पादयामास तच्च मिथुनम् अप्रजः अपुत्रः निर्ऋतिः जगृहे गृहीतवान् मायादम्भयोः सोदरयोः दम्पतिभावः अधर्मवंश्यत्वादेवमन्यत्रऽपि ॥ २ ॥

तयोर्मायादम्भयोः अपत्यम् लोभोऽन्यायेनान्यार्थग्रहणसङ्कल्पः निकृतिः शाठ्यं च समभवत् ताभ्यां निकृतिलोभाभ्याम् क्रोधो हिंसा च समभवत् यद्याभ्यां क्रोधहिंसाभ्यां कलिः दुरुक्तिः स्वसा च समभवत् ॥ ३ ॥

कलिर्दुरुक्तौ भार्यायां भियं कन्यां मृत्युं सुतं चाधत्ताजनयत् तयोर्भीमृत्य्वोर्निरयः सुतः यातना तीव्रवेदना कन्या एतन्मिथुनं जज्ञे ॥ ४ ॥

हेऽनघ! प्रतिसर्गः प्रलयः सङ्क्षेपेण संक्षेपेण मया तवाख्यातो वर्णितः सपरिकरोऽधर्मः प्रलयहेतुरतस्तद्वर्णनेन प्रलय एववर्णित इति भावः एतदेनं प्रतिसर्गम् पुमान् त्रिः श्रुत्वा आत्मनोमलं पापं दुर्गतिहेतुं विधुनोति पुण्यं सुगतिहेतुं प्राप्नोतीति शेषः यथा तस्करादिसङ्कुलं दुर्मार्गं श्रुत्वा तच्छ्रवणमात्रेणैव तत्यागी दुःखं विधुनोति सुखं प्राप्नोतीति भावः ॥ ५ ॥

हरेरंशांशब्रह्मा तदंशादेहांशाज्जन्म यस्य तस्य वंशं पुत्रपौत्रादि सन्तानम् ॥ ६ ॥

वासुदेवस्य कलया जगतः पालिन्या शक्त्या जगतो रक्षायां स्थितौ शतरूपापतेर्मनोः सुतौ बभूवतुः ॥ ७ ॥

तत्रोत्तानपादस्य जाये भार्ये तयोर्जाययोर्मध्ये सुरुचिः पत्युः प्रेयसी इतरा सुनीतिः यस्या ध्रुवः सुतः सा न ॥ ८ ॥

---

भाषाटीका

मैत्रेय जी बोले सनकादिक चार मुनि नारद जी ऋभु हंस अरुणियति इनने ब्रह्मा के पुत्र गृहस्थ नहीं होकर ऊर्ध्वरेता होगये इसी से उनका वंश नहीं है ॥ १ ॥

हे शत्रुहन् विदुरजी! ब्रह्मपुत्र अधर्म भी है उसकी मृषा नामक भार्या ने दम्भ माया इन दोनों को पैदा किया उन दोनों को निर्ऋति राक्षस ने ग्रहण किया क्योंकि वह अपुत्र था ॥ २ ॥

हे महामते! उन दम्भ माया दोनों में से लोभ और निकृति भये उनमें से क्रोध और हिंसा भये उनमें से कलि तथा उसकी बहन दुरुक्ति भई ॥ ३ ॥

हे सत्तम! कलि ने दुरुक्ति में मृत्यु भीति दोनों को पैदा किया उन दोनों में यातना निरय ए दो पैदा भये ॥ ४ ॥

हे अनघ विदुर जी! यह प्रति सर्ग मैंने संक्षेप से आप से कहा है इसको तीन वखत श्रवण करने से त्याग करने से मनुष्य अपने आत्मा के पाप को दूर कर सकता है ॥ ५ ॥

हे कुरूद्वह विदुर जी! इस के अनन्तर पवित्र कीर्ति वाले स्वायम्भुव मनु के वंश को कीर्त्तन करताहूं जिनकी कि हरि के अंश ब्रह्मा उनका अंश शरीर से उत्पत्ति है ॥ ६ ॥

एकदा सुरुचेः पुत्रमङ्कमारोप्य लालयन् ।
उत्तमं नारुरुक्षन्तं ध्रुवं राजाऽभ्यनन्दत ॥ ९ ॥
तथा चिकीर्षमाणं तं सपत्न्यास्तनयं ध्रुवम् ।
सुरुचिः शृण्वतो राज्ञः सेर्ष्यमाहातिगर्विता ॥ १० ॥
न वत्स ! नृपतेर्धिष्ण्यं भवानारोढुमर्हति ।
न गृहीतोमया यत्त्वं कुक्षावपि नृपात्मजः ॥ ११ ॥
बालोऽसि बत नात्मानमन्यस्त्रीगर्भसम्भृतम् ।
नूनं वेद भवान् यस्य दुर्लभेऽर्थे मनोरथः ॥ १२ ॥
तपसाराध्य पुरुषं तस्यैवानुग्रहेण मे ।
गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम् ॥ १३ ॥

मैत्रेय उवाच ॥

मातुः सपत्न्याः सुदुरुक्तिविद्धः श्वसन् रुषा दण्डहतो यथाऽहिः ।
हित्वा मिषन्तं पितरं सन्नवाचं जगाम मातुः प्ररुदन् सकाशम् ॥ १४ ॥
तं निश्वसन्तं स्फुरिताधरोष्ठं सुनीतिरुत्सङ्ग उदूह्य बालम् ।
निशम्य तत्पौरमुखान्नितान्तं सा विव्यथे यद्गदितं सपत्न्या ॥ १५ ॥

---

भाषाटीका

शत रूपा के पति जो स्वायम्भुव मनु उनके प्रिय व्रत, उत्तान पाद दो पुत्र थे वे दोनों भगवान की कला से जगत की रक्षा करने के लिये हुये थे ॥ ७ ॥

उत्तानपाद की सुनीति सुरुचि दो भार्या थीं उन दोनों के मध्य में सुरुची तो पति को बडी प्यारी थी जिसके पुत्र ध्रुव जीं हैं वह दूसरी पति की प्यारी नहीं थी ॥ ८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

तयोः प्रियाप्रियत्वे प्रपञ्चयन्ध्रुवचरित्रमाह पञ्चभिरध्यायैः सुरुचेः पुत्रमुत्तमसंज्ञं लालयन् ॥ ९ ॥

तथा अङ्कारोहणं चिकीर्षमाणम् ॥ १० ॥

गर्वोक्तिमेवाह त्रिभिः नेति नृपतेर्धिष्ण्यमासनं नृपात्मजोऽपि भवान्नारोढुमर्हति ॥ ११---१२ ॥

पुरुषमीश्वरम् ॥ १३ ॥

मिषन्तं पश्यन्तम् सन्नवाचं कुण्ठितवाचम् ॥ १४ ॥

उदूह्याऽऽरोप्य अन्तःपुरजनमुखाच्छ्रुत्वा ॥ १५ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

शृण्वत इत्यनादरे षष्ठी ॥ १० ॥

नृपात्मजोऽपीति नृपेऽप्यनादरो व्यञ्जितः ॥ ११-१२-१३-१४ ॥

तत् गर्ववाक्यम् ॥ १५-१६ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

तत्र सुनीत्या अप्रियत्वमेव प्रपञ्चयन् तत्सुतध्रुवचरित्रमाह । एकदेत्यादिना पञ्चभिरध्यायैः। एकदा कदाचित् राजा उत्तानपादःसुरुचेः पुत्रमुत्तमसंज्ञमारुरुक्षन्तम् अङ्कमारोढुमिच्छंतम् अङ्कमारोप्य उत्संगे निधाय लालयन् तथा चिकीर्षमाणम् अङ्कारोहादिकर्तुमिच्छन्तं सपत्न्याः सुनीतेस्तनयं तं ध्रुवं नाऽभ्यनन्दत् यद्वा उत्तममङ्कमारोप्य लालयन् अङ्कमारुरुक्षन्तं ध्रुवं नाऽभ्यनन्दतेति संबन्धः सुरुचिः राज्ञोऽभिप्रायज्ञा तथा चिकीर्षमाणं तं ध्रुवं प्रति राज्ञः शृण्वतः सतः अतिगर्विता सती अतएव सेर्ष्यम् क्षमारहितं यथा भवति तथा आह उवाच ॥ ९ ॥ १० ॥

गर्वोक्तिमेवाह। नवत्सेतित्रिभिः। हे वत्स! नृपतेर्धिष्ण्यमासनमारोढुं भवान्नार्हति नृपात्मजोऽहमारोढुमर्हएव तत्राह त्वं नृपात्मजोऽपि-यद्यस्मात् मया कुक्षौ न गृहीतः नभृतः मद्गर्भज एव नृपासनार्ह इत्यभिप्रायः ॥ ११ ॥

त्वं मया कुक्षौ न गृहीत इत्यहमेव न वेद्मि अपितु भवानपि वेदेत्याह। बालोऽसीति भवान् बालोऽप्यात्मानमन्यस्त्रीगर्भसंभृतं मत्सपत्नीगर्भधृतं नवेद बत नवेद किम् अपितु वेदैवेत्यर्थः नूनमिति निश्चये यद्वा बालो भवान्न जानाति अहं तु वेद्मीत्याह बाल इति। अपि स्त्वर्थकः भवानित्यनेन संबध्यते बाल इति हेतुगर्भं भवांस्तु बालत्वादात्मानमन्यस्त्रीगर्भसंभृतं न वेद अहं तु वेद्मीत्यभिप्रायः अतो यस्य तव दुर्लभे लब्धुमयोग्ये अर्थे नृपासनारोहणरूपेऽर्थे मनोरथ आसीदित्यर्थः वतेत्याश्चर्ये । १२ ॥

सोत्सृज्य धैर्यं विललाप शोकदावाग्निना दावलतेव बाला ॥
वाक्यं सपत्न्याः स्मरती सरोजश्रिया दृशा बाष्पकलामुवाह ॥ १६ ॥
दीर्घं श्वसन्ती वृजिनस्य पारमपश्यती बालकमाह बाला ।
माऽमङ्गलं तात ! परेषु मंस्था भुङ्क्ते जनो यत्परदुःखदस्तत् ॥ १७ ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

यदि दुर्लभोऽर्थो मयासाध्य इति तवाग्रहः तर्ह्येवं साधयेत्याह । तपसेति । यदि त्वं नृपासनमिच्छसि तर्हि तपसा पुरुषं परमपुरुषमाराध्य तस्याराधितस्य परमपुरुषस्यानुग्रहेणैव नतूपायान्तरेणेत्यर्थः मे मम गर्भे आत्मानं साधय आत्मनो मद्गर्भे उत्पत्तिं साधयेत्यर्थः ॥ १३ ॥

एवमुक्तो ध्रुवः किमकरोदित्यत्राह । मैत्रेयः मातुरिति । सपत्न्या मातुः दुरुक्तेन दुर्वचसा भाविक्तः विद्धः ताडितो ध्रुवः दण्डेन हतः सर्पो यथातथा रुषा श्वसन् श्वासं मुञ्चन् मिषन्तं पश्यन्तं शान्नवाचं संकुचितवाचं पितरं हित्वा प्ररुदन् नितरामश्रूणि विमुञ्चन् मातुर्जनन्याः सुनीतेः समीपे जगाम ॥ १४ ॥

तं सकाशमागतं निश्वसन्तं स्फुरितः कम्पितः अधरोष्ठोयेन तं बालं ध्रुवं सपत्न्या गदितं सा सुनीतिरुत्संगउदूह्य अङ्के आरोप्य पौरनुखादन्तः पुरजनमुखान्निशम्य श्रुत्वा नितान्तं नितरां विव्यथे व्यथितवती ॥ १५ ॥

———

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

सुनीतिः कथं पत्युः प्रेम्णानाभूदिति ज्ञायत इति तं प्रकारं वक्ति । एकदेति । नाभ्योत्तमम् आरुरुक्षन्तमङ्कमारोढुकामम् ॥ ९ ॥

तथा चिकीर्षमाणमङ्कमारोढुमिच्छन्तं सपत्न्याः सुनीतेः सेर्ष्यमिति क्रियाविशेषणम् ॥ १० ॥

धिष्ण्यं सिंहासनम् अनर्हत्वे निमित्तमाह । नगृहीतइति ॥ ११ ॥

नेदमाश्चर्यमित्याह । बाल इति । ततः किमिति तत्राह नात्मानमिति । स्वार्थोगर्यामिच्छन्त्यामिष्यतीति भावेनाह । यस्येति यस्य तव ॥ १२ ॥

तर्हि त्वत्पुत्रभावित्वे किङ्कर्तव्यमत्राह । तपसेति । पुरुषं विष्णुम् ॥ १३ ॥

ध्रुवः सपत्न्याः सुरुच्याः वाक्यं श्रुत्वा किमकार्षीदिति तत्राह । मातुरिति । मिषन्तं पश्यन्तं सन्नवाचं तूष्णीभूतं आमिषं हित्वा मातुरिव स्थितस्य बिलस्य सकाशमहिरिवेति वा ॥ १४ ॥

अस्यामवस्थायां सुनीत्याकिमकारीति तत्राह तं निःश्वसन्तमिति ॥ १५ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

सुरुचेः पुत्रमुत्तमसंज्ञम् ॥ ९—१० ॥

धिष्ण्यमासनं यद्यस्मात् नृपात्मजोऽपि त्वं मया कुक्षौ न गृहीतः । त्वं बालेऽस्यत एव नात्मानमित्यादि ॥ ११ ॥ १२ ॥

पुरुषमाराध्येति भक्तम्मन्येयं राज्ञः सन्निधौ ननु वस्तुतो हरिभक्तेयम् । त्वमात्मानं मम गर्भे साधयेति संप्रत्येव त्रिचतुरैः पञ्चषैर्वा मनैर्मद्गर्भप्राप्तिसाधनैर्हरिं संतोष्य त्वं शीघ्रं म्रियस्व । त्वन्मातरमहं रुदतीं पश्येयमित्येवं तव च मम च सुखं भवत्विति भावः ॥ १३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

मिषन्तं पश्यन्तं सन्नवाचं स्त्रैणत्वात् कुण्ठितवाचम् । १४ ॥

उदूह्य आरोप्य ॥ १५ ॥

———

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

उत्तममङ्कमारोप्य लालयन् ध्रुवन्तु अङ्कं स्वतएव आरुरुक्षन्तः-
पि नाभ्यनन्दत ॥ ९ ॥

तथा स्वतएव अङ्कारोहणं चिकीर्षमाणं नतूत्तमवदङ्कारु-
तथापि सेर्ष्यमाह तदपि राज्ञः शृण्वतः यतोऽतिगर्विता ॥ १० ॥

धिष्ण्यमासनम् ॥ ११——१२ ॥

पुरुषं वासुदेवम् आत्मानं साधय उत्पादय ॥ १३ ॥

मिषन्तं नदनादरयन्तं सन्नवाचं भार्याप्रतिषेधार्थं ध्रुवशान्-
नार्थं चाऽब्रुवाणम् । १४ ॥

उत्सङ्गे अङ्के उदूह्य आरोप्य यत्सपत्न्यागदितं तद्धितान्तं पौ-
मुखादन्तः पुरजनमुखात् ॥ १५ ॥

भाषाटीका ।

एक दिन सुरुचिके पुत्र उत्तम को गोद में प्यार करत
राजा गोदमें चढनेकी इच्छा करने वाले ध्रुव पर नाराज हुआ ॥
गोद पर चढने की इच्छा करने वाले ध्रुव सौत के पुत्र
देखकर राजाके सुनतेही गर्व से ईर्षा से सुरुची बोली ॥ १० ॥

हे पुत्र ! यद्यपि तु राज का पुत्र है तथापि मैंने तेरे को गर्भ
में नहीं धारण किया है तिससे तु राजा के आसन में बैठने के
योग्य नहीं है ॥ ११ ॥

मैं इस बात कूं ठीक जानती हूं कि तू बालक है इसी से दूस
री स्त्री के गर्भ से पैदा हुये अपने को नहीं जानता है इसी से
दुर्लभ काम मैं तेराम नोरथ है ॥ १२ ॥

यदि तू राजा के आसन को चाहता है तो तपस्या करके
विष्णु का आराधन कर फिर उनहीं की कृपा से मेरे गर्भ में अ
ले ॥ १३ ॥

मैत्रेयजी बोले सौतिन माता के खोटे वचन से विधे हुये ध्रु
जी जैसे लडकी के मारने से सर्प श्वास लेता है तैसे श्वास ले
लगे चुप रह कर सुनते हुये पिता को छोडकर रोते हुये मा
के पास चले गये ॥ १४ ॥

ओठों को कंपा कर श्वास लेते हुये बालक को सुनीति ने
गोद में उठा लिया रनवासियों से सब हाल को सुना तब सौति
की कही बातों से बडी दुखित हुई माता ॥ १५ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ॥

शोकएव दावाग्निस्तेन दावाग्निगतलतेव स्थिता सा बाल
विलापं चकार ॥ १६ ॥

वृजिनस्य दुःखस्य अमङ्गलमपराधं परेषु मामंस्थाः यद्य
परेभ्योदुःखं ददाति यः स स्वदत्तमेव दुःखं भुङ्क्ते ॥ १७ ॥

सत्यं सुरुच्याऽभिहितं भवान् मे यद्दुर्भगाया उदरे गृहीतः ।
स्तन्येन वृद्धश्च विलज्जते यां भार्येति वा वोढुमिडस्पतिर्माम् ॥ १८ ॥
आतिष्ठ तत्तात ! विमत्सरस्त्वमुक्तं समात्राऽपि यदव्यलीकम् ।
आराधयाधोऽक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा ॥ १९ ॥
यस्याङ्घ्रिपद्मं परिचर्य विश्वविभावनायात्तगुणाभिपत्तेः ।
अजोऽध्यतिष्ठत्खलु पारमेष्ठ्यं पदं जितात्मश्वसनाभिवन्द्यम् ॥ २० ॥
तथा मनुर्वो भगवान् पितामहो यमेकमत्या पुरुदक्षिणैर्मखैः ।
इष्ट्वाऽभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापवर्ग्यम् ॥ २१ ॥
तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ।
अनन्यभावो निजधर्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम् ॥ २२ ॥
नान्यं ततः पद्मपलाशलोचनाद्दुःखच्छिदं ते मृगयामि कंचन ।
यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग ! विमृग्यमाणया ॥ २३ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

दुर्भगया मया उदरे गृहीतस्तस्या एवं स्तन्येन वृद्धश्च दुर्भगत्वमेवाह यां मामिडस्पतिर्भूपतिर्भार्येति वोढुं स्वीकर्तुं विलज्जते वा शब्दाद्दासीत्यपि ॥ १८ ॥

पितृभार्यात्वेन मात्रा समा मातुः सपत्नी तयापि यदुक्तं तपसाराध्य पुरुषमित्यादि तदातिष्ठ कुरु अध्यासनं यदीच्छसि ॥ १९ ॥

परिचर्य निषेव्य विश्वस्य विभावनाय पालनायात्ता स्वीकृता गुणाभिपत्तिः सत्त्वगुणाधिष्ठानं येन तस्य जित आत्मा मनः श्वसनः प्राणश्च यैस्तैरभिवन्द्यम् ॥ २० ॥

एकमत्या सर्वान्तर्यामिदृष्ट्या ॥ २१ ॥

मृग्या पदाब्जयोः पद्धतिर्मार्गो यस्य तमेवाश्रय शरणं व्रज ततो भजस्व नान्यस्मिन् भावो यस्य तस्मिन् निजधर्मैर्भाविते शोधिते ॥ २२ ॥

तमेवेत्यनेन सूचितं सर्वोत्तमत्वं प्रपञ्चयति । नान्यमिति । हस्तेन गृहीतं दीपवत्पद्मं यया इतरैर्ब्रह्मादिभिः ॥ २३ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ॥

दीर्घं यथा स्यात्तथा ॥ १७ ॥

दुर्भगाया दुर्भगया मया यद्यस्मादुदरे गृहीतः तस्मात्सुरुच्या सत्यमभिहितम् ॥ १८ ॥

समाता मात्रा समा तयाप्युक्तं यद्वचस्तत्त्वं कुरु तत्र हेतुः यतोऽव्यलीकं व्यलीकमप्रियं वञ्चकञ्च तद्विरुद्धं प्रियं निष्कपटं च भगवद्भजनस्य सर्वप्रियत्वात् परमहितत्वाच्चातो विमत्सरस्सन्निति द्वेषं परित्यज्येत्यर्थः तेन तव सुखं भवतु मम तु ललाटे विधात्रा रोदनमेव लिखितमिति भावः ॥ १९ ॥

ननु तदाराधने किं तस्या पयोदरे मम प्रवेशो भविष्यतीति चेत्तत्राह । यस्येति । तथा किमेतेन तुच्छेन पैत्रराज्येन तदाराधने ब्रह्मपदमपि न दुर्लभमिति भावः ॥ २० ॥

न केवलं ब्रह्मपदमेव तत्फलं किन्तु "विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः" इत्युक्तो मोक्षोऽपि सुलभ एवेत्याह । तथा मनुरिति अपवर्गोऽत्र पञ्चमस्कन्धगद्योक्तानन्यनिमित्तभक्तिस्तदुत्थं प्रेमसुखमापवर्ग्यम् ॥ २१ ॥

भृत्यवत्सलं मद्विधकोटिमात्रतोऽपि भृत्येषु वात्सल्यवन्तं भावो रतिः अनुपनीतस्य कर्मानधिकारात् निजधर्मैर्भागवतधर्मैः ॥ २२ ॥

विलासाद्गृहीतं पद्मं दीपत्वेनोत्प्रेक्षितं विमृग्यमाणयेति सिद्धपदसान्निध्यात् ॥ २३ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

व्यथामेवाह । सेति । सा सुनीतिर्धैर्यमुत्सृज्य हित्वा विललाप शोक एव दावाग्निस्तेन दावाग्निना दग्धा लतेव स्थिता सा बाला सुनीतिः सपत्न्याः वाक्यं स्मरन्ती सरोजश्रिया सरोजस्य श्रीरिव श्रीः शोभा यस्यास्तया दृशा बाष्पकलाम् अश्रुकणिकामुवाह दधार ॥ १६ ॥

सपत्नीगादितव्यथया दीर्घं यथा तथा श्वासं मुञ्चन्ती वृजिनस्य दुःखस्य पारमवधिमपश्यन्ती अपारदुःखाक्रान्तेत्यर्थः बाला सुनीति बालकं ध्रुवमाह हे तात ! अमङ्गलमपराधं परेषु माभंस्थाः माकार्षीः यत् यस्मात् योजनः परदुःखदः परेभ्यो दुःखं ददातीति परदुःखदः सः तद्दुःखमेव भुङ्क्ते अनुभवति ॥ १७ ॥

सुरुच्याभिहितं सोपालम्भमनुवदन्त्यात्मजं तपसे चोदयति । सत्यमिति । सुरुच्या यदभिहितं तत्सत्यमिति संबन्ध. किमभिहितं तत्राह दुर्भगायाः भाग्यहीनायाः मे मया उदरे भवान् गृहीतः मदुदरे जात इत्यर्थः न केवलं जातएवमद्गर्भेऽपितु तस्याएव ममस्तन्येन स्तनयोर्भवं स्तन्यं तेन वृद्धश्च दुर्भगत्वमेवाह इडा भूमिः इलयोरभेदात्पारस्करादित्वात् सुडागमः इडस्पतिर्भूपतिर्मां भार्येत्यावोढुं स्वीकर्तुं वाचा वक्तुं वा विलज्जते ॥ १८ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

हे तात! तस्मात्त्वं विमत्सरः विगतमत्सरः समात्रा समाता मातुः सपत्नी तयापि यदुक्तं तपसाराध्यपुरुषमित्यादि तदव्यलीकं निर्दोषं यथाभवति तथा आतिष्ठ कुरु समात्रा यदुक्तमिति सामान्येनोक्तं विशेषयति करोति उत्तमोयथातथा त्वमप्यध्यासनं नृपासनमिच्छसि तर्हि अधोक्षजपादपद्ममाराधय ॥ १९ ॥

किंकश्चिदधोक्षजपादपद्ममाराध्यनृपासनादिस्वाभिलषितमवाप्येत्य त्र ब्रह्मार्णं मनुंच निदर्शयति । यस्येति द्वाभ्याम् । विश्वविभावनाय विश्वस्य पालनाय आत्तगुणाभिपत्तेः गुणानां कल्याणगुणानामभिपत्तिर्व्याप्तिर्यस्यामङ्गीकृता गुणाभिपत्तिः कल्याणगुणाश्रयदिव्यमङ्गलमूर्तियेन तस्य यस्याधोक्षजस्य जितः आत्मा मनः श्वसनःप्राणवायुर्यैस्तैरभिवन्द्यम् अङ्घ्रिपद्मं परिचर्य आराध्य अजो ब्रह्मा पारमेष्ठ्यं पदं चतुर्दशभुवनानां मध्ये उत्कृष्टं सर्वोपरि वर्त्तमानं सत्यलोकरूपं स्थानमध्यतिष्ठदधिष्ठितवान् खलु ॥ २० ॥

तथा वः युष्माकं पितामहः पितुः पिता भगवान् मनुरपि एकमत्या अव्यभिचरितभक्त्या पुरुदक्षिणैर्बहुदक्षिणैर्मखैः क्रतुभिः यं भगवन्तमिष्ट्वाराध्य अन्यतः अन्यैर्दुरापं दिव्यं दिवि भवं दिव्यसुखं स्वर्गे भौमं सुखम् सार्वभौमत्वम् आपवर्ग्यं मोक्षसुखं चाभिपेदे अनेनाधोक्षजस्य कुलदैवतत्वमुक्तम् अन्यतः एकमत्यतिरिक्तोपायान्तरेण दुरवापं यमिति वा संबन्धः अन्यतः अन्यस्माद्ब्रह्मरुद्रादेः दुरवापं सुखत्रय मितिवा संबन्धः ॥ २१ ॥

भजन्तमपि मां राजद्वेषाय सद्गुरुरप्युपेक्षेत तत्राह तमिति । हे वत्स! भक्तवत्सलं भक्तेषु वत्सलस्तं सत्स्वपि दोषेषु ताननादृत्य भोग्यताबुद्धिमत्त्वं वात्सल्यं तमेवाश्रय अनेनाश्रयणसौकर्यापादकगुणसंपत्तिरुक्ता आश्रितकार्यापादकगुणसंपत्तिमाह मुमुक्षुभिः संसारबन्धनान्मोक्षमिच्छद्भिर्मृग्या अन्वेषणीया चिन्तनीयेति यावत् पदाम्बुजयोः पद्धतिर्मार्गो यस्य तं मुक्तिप्रदमिति भावः अनेन नित्यसंसारिणां नित्यसूरिपरिषत्संघटनोपयोगित्वरूपाघटितघटनासामर्थ्यरूपाश्रितकार्यापादकसंपत्तिरुक्ता कथमाश्रयामीत्यत्र स्ववर्णाश्रमधर्मानुगृहीतभक्तियोगेनाश्रयेत्याह अनन्यभावे नविद्यतेऽन्यस्मिन् भावोयस्मिन् विजातीयप्रत्ययान्तराव्यवहित इत्यर्थः निजधर्मभाविते निज धर्मैः स्ववर्णाश्रमोचितधर्मैः भाविते निष्पादिते मनसि तैलधारावदविच्छिन्नस्मृतिसंतानरूपमनोव्यापारोविजा तीयप्रत्ययान्तराव्यवहिततैलधारावदविच्छिन्नस्मृतिसंतानरूपा हि भक्तिः अवस्थाप्य विषयी कृत्य पुरुषं पूः संज्ञकशरीरान्तः स्थितदहरकुहरे वसन्तं परम पुरुषं भजस्व ॥ २२ ॥

तमेवेत्यनेन सूचितं सर्वोत्तमत्वं सुखत्रयप्रदत्वं च कथयति । नान्यमिति । ततस्तस्मात् पद्मपलाशलोचनात्पुण्डरीकाक्षादन्यं पुरुषं तव दुःखच्छिदं दुःखनिवारकं न मृगयामि अन्विष्यापि न पश्या मीतिभावः अनेन तापत्रयनिरसनद्वारा सुखत्रयप्रदो भगवानेवेत्युक्तं भवति सर्वोत्तमत्वमाह । योभगवानितरैर्ब्रह्मादिभिः स्वाभिलषितार्थसिद्ध्यर्थमृग्यमाणया मनःप्रणिधानेन चिन्त्यमानया हस्ते न गृहीतं पद्मं यया तया श्रिया महालक्ष्म्या अंग हेध्रुव! मृग्यते अनेन लक्ष्मीपतित्वमुक्तं तेनच सर्वेश्वरत्वं जगत्कारणत्वंच सामर्थ्यादुक्तं भवति ॥ २३ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

धातोरनेकार्थत्वात् कीदृशी व्यथा तयाकारीति तत्राह । सोत्सृज्येति । विलापस्योदरताडनाविना भतत्त्वेन तत्पूर्वकत्तया परिदेवितमित्यर्थः शोकदावाग्निना शोकाख्यवनवह्निना दह्यमानेति शोपः दावलता वनवल्लीं बाष्पकलां नेत्रजलधाराम् ॥ १६ ॥

वृत्त्या सत्यभक्षणवद्राज्ञा कृतावज्ञानस्यापरिहार्यत्वात्संप्राप्तदुःखस्यावसानमचक्षाणा आत्मनो निर्दुष्टमनस्कत्वं दर्शयन्ती बालं शिक्षयतीत्याह । दीर्घं श्वसन्तीति । परदुःखदोजनस्तद्दुःखं स्वयं भुङ्क्ते इति यद्यस्मात्तस्मात्परेष्वमङ्गलं मामंस्थाः न निरूपयेत्यन्वयः ॥ १७ ॥

परेण द्वेषादुक्तमपि गुणग्राहिणः स्वात्मनः पथ्यमेव भवतीति भावेनाह । सत्यमिति । चार्थो वा शब्दः इडस्पतिः राजा यां मां भार्येति च वाढुं वक्तुं घिलज्जते अर्थात्तस्यादुर्भगायाः दुःखहेत्वदरया मे उदरे गृहीतोऽतएव स्तन्येनैव वृद्धो ननु पितृदत्तरसायनेनेति यस्मात्तस्मात्सुरुच्या तपसाराध्येति यदभिहितं तत्सत्यमित्यन्वयः ॥ १८ ॥

एतदेव विवृणोति । आतिष्ठेति मत्पुत्र उत्तमोयथा तथा यद्यध्यासनमिच्छसे आत्मनोऽहि तमाकांक्षसि तर्ह्यधोक्षजपादपद्ममाराधयेति यत्समात्रा सुरुच्या कथितं तदव्यलीकं कर्तुमातिष्ठ । तपइति शेषः ॥ १९ ॥

केनचित् श्रीनारायणश्रीचरणपरिचर्याफलं निरुपममवाप्तं चेत्तर्हि श्रोतुस्तत्र क्षिप्रं प्रवृत्तिर्भवतीति तत्राह । यत्पादेति । परिचर्यपरिपूज्य विश्वविभावनाय विश्वस्य विविधसृष्ट्यर्थमात्तगुणाभिपत्तेः अङ्गीकृतसार्वज्ञ्यादिगुणप्राप्तिहेतोरजोब्रह्माजितात्मा वशीकृतमनाः श्वसनस्य वायोरपि विभागराहित्येन गन्तुं योग्यं वन्द्यम् ॥ २० ॥

चतुर्मुखस्य भगवत्पुत्रत्वेन तत्प्रसादयोग्यतया तस्य तादृशैश्वर्यावाप्तिर्युक्ताऽस्मत्पूर्वजेन केनाप्तं येन अद्यास्माकमपि तत्र मतिः प्रवृत्तिः स्यात् अतस्तदनुभावयेति तत्राह । तथेति । अन्यतोभक्त्या व्यतिरिक्तसाधनेनाऽन्याश्योदेवताभ्योवा भौमं मन्वन्तराधिपत्यं दिव्यं स्वर्गसम्बन्धि आपवर्ग्यं कैवल्यसम्बन्धि अथेत्यनेन देहत्यागानन्तरमेवापवर्गसुखावाप्तिर्नजन्मान्तरं प्राप्येत्याह ॥ २१ ॥

किं बहुनोक्तेन सारं वक्ष्यामीत्याह । तमेवेति । यत्किंचिद्दोषदृष्ट्या विमुखोनस्यादित्यत उक्तं भक्तेति । न केवलं चिपयलौल्येराराध्यं किंतु संसारमोक्षेच्छुभिरपीति भावेनोक्तं मुमुक्षुभिरिति अत्र प्रधान साधनमिदमिति ध्वनयति अनन्यभाव इति अनन्योभावोविषयो यस्य स तथा तस्मिन् तस्य भक्तिसाधनत्वं ध्वनयति निजधर्मेति यमनियमाद्यो निजधर्मास्तैर्भाविते कृततत्स्वात्मभावे ॥ २२ ॥

कुतोऽयमेवापेक्षिताशेषपुरुषार्थावाप्ताविति नियमोऽन्यः किं नस्यादिति तत्राह । नान्यं ततइति । योयुष्माकं कुलदेवता लक्ष्मीकान्तस्तस्तस्मात्पद्मपलाशलोचनादनेनाकारश्चरूपस्योपासनं न संगच्छत इति चोद्यं परिहृतं त्वया नान्विष्योक्तं विचारितेकश्चित्स्यादित्यत उक्तं मृगयामीति लक्ष्मीतरत्वं स्यादिति तत्राह । यइति । श्रीत्वमारत्यादावप्यस्तीत्यत उक्तं इतरैरिति इतरैर्ब्रह्मादिभिः सेव्यापि संपल्लक्षणाश्रीः किं न स्यादित्यत उक्तं हस्तेति । अनेन श्रीः प्रिया मूर्तिमती साक्षाल्लक्ष्मीरिति ज्ञायते मृग्यत इत्यनेन दुर्गुणातःस्वरूपतश्चोत्तमत्वं ध्वनयति विमृग्यमाणयेत्यनेन श्रीकटाक्षमोक्षस्य दुःसाधनत्वमाह ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ॥

वाचोदुमिति त्रिवसुख पुण्यशरण्ययो । बाचा ऊढुं वक्तुमित्यर्थः ॥ १८ ॥ १९ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

यस्याङ्घ्रीति । परिचर्यं निषेव्य आत्मा सान्निध्यमात्रेणाप-हृता गुणाभिपत्तिर्गुणसाम्यं प्रकृतिर्येन तस्य वन्द्यमित्यत्र पद्ममिति सम्बन्धसम्मतपाठान्तरम् ॥ २०—२२ ॥

श्रिया जगदधिष्ठात्र्या हस्तगृहीतपद्मयेति तल्लोचनसाम्येना-धिकतद्रुचेः । सर्वसम्पन्निधानेन तेन पद्मेन सेवाभिलाषाढ्या ॥ २३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

दावलता वनलता ॥ १६ ॥

अमङ्गलं दोषं विमात्रे मा देहि प्राचीनस्वकृतदुष्कृतफलमेव त्वमन्वभूरित्याह यदूयतः परेभ्यो दुःखं ददाति यः स स्वदत्तमेव भुङ्क्ते ॥ १७ ॥

गृहीतः धृतः दुर्भगत्वमेवाह । यां मामिडस्पतिर्भूपतिर्भार्येति वोढुमियं मे भार्या भवतीति बुद्ध्या यो मद्रक्षणपालनभारस्तं वोढुं लज्जते । स्वस्यानुरूपतामननेनेति भावः । वाशब्दाद्दासीति भावमपि ॥ १८ ॥

मात्रा समा समाता तया विमात्रापि स्वद्रूधमाभिसपत्न्यापि यदुक्तं तद् आतिष्ठ कुरु । अव्यलीकं तदप्रियं न भवति । नहि हरि भजनं कस्याप्यप्रियमतो विमत्सरस्तस्याः द्वेषं परित्यज्ये-त्यर्थः । मम रोदनमाजन्म विधात्रा ललाटे लिखितमेव तव तु सुखं भविष्यति भावः ॥ १९ ॥

ननु किं हरिमाराध्य तस्याः पापीयस्याः गर्भे प्रवेक्ष्यामीति तत्र सा वराकी खलु का तस्याः किंकरस्त्वदपितैव वराको दीन-बुद्धिस्त्वं ब्रह्मपदादप्युत्कृष्टं पदं प्राप्तुं पारयिष्यसि तदितः शीघ्रं व्रज हरिं भज मा विपीदेत्याह । यस्येति चतुर्भिः । विश्वस्य विभाव-नाय पालनाय आत्ता स्वीकृता गुणाभिपत्तिः सत्त्वगुणाधिष्ठानं येन तस्य जितात्मश्वसनैर्विजितमनः प्राणैर्योगिभिरभिवन्द्यम ॥२०॥

एकमत्या एकाग्रबुद्ध्या ॥ २१ ॥

भृत्यवत्सलमिति मद्विधमातृकोटितोऽपि त्वयि भृत्ये तस्य वात्सल्यमुद्देष्यतो दुःखगन्धमपि न प्राप्स्यसीति भावः । यं त्वमाश्रयिष्यसि तस्य पदाम्बुजयोः पद्धतिर्मार्ग एव मुमुक्षुभिर्मृग्यते ननु सा तैरपि सुलभा इति भावः । आश्रित्य च न अन्यस्मिन् भाव आसक्तिर्यस्य तादृशे मनसि पञ्चवार्षिकस्य ते कर्मानधि-कारात् निजधर्मैर्भक्तिधर्मैर्भाविते शोधिते मनसि पुरुषम् अवस्थाप्य भजस्व ॥ २२ ॥

सुखाराध्यस्यापि देवतान्तरस्य नश्वरफलदायित्वात्स्वदुःखं निर्मूलयितुमसमर्थस्य भजनं परिणामदर्शिन्यहं त्वां नोपदिशामी-त्याह । नान्यमिति । पद्मपलाशेति तस्य दृष्टिपातेनैव तप्तस्त्वं शीतली भविष्यसीति भावः । हस्ते गृहीतं दीपवत् पद्मं यया इतरैर्ब्रह्मा-दिभिः ॥ २३ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

सा बाला ध्रुवमाता सपत्न्या वाक्यं स्मरती शोकरूपेण दवाग्निना दावदग्धलतेव प्रतीयमाना विललाप सरोज इव श्रीर्यस्यास्तया दृशा वाष्पकलां चोवाह ॥ १६ ॥

सा वृजिनस्य दुःखस्य पारमयधिमपश्यन्ती दीर्घं यथा भवति तथा श्वसन्ती बालकमाह हेतात ! परेषु अमंगलमपराधं मामंस्थाः यत् यःपरदुःखदःसएव तद्दुःखं भुङ्क्ते ॥ १७ ॥

सुरुच्या सत्यमभिहितमुक्तम् यद्यस्मात् यां मामिडस्पतिः भूपः भार्येति वा शब्दाद्दासीति वोढुं स्वीकर्तुं विलज्जते तया मया भवान् उदरे गृहीतः तस्याः दुर्भगायाः मे मम स्तन्येन दुग्धेन वृ-द्धश्च ॥ १८ ॥

तत्तस्मात् हेतात ! समात्रापि मातृसपत्न्यापि तपसाराध्य पुरुष मित्यादि अव्यलीकं सत्यमेव यदुक्तं तत् विमत्सरः सन् तदुक्तं आदरं कृत्वा उत्तमवदध्यासनेच्छां च त्यक्त्वा आतिष्ठ कुरु यदि विमत्सरो भवितुं न शक्नोसि मातृसपत्न्यभिहितं न स्वीकरोषि उत्तमवदध्यासनं च यदीच्छसि तदापि अधोक्षज पादपद्ममेवा-राधय सुरुच्या उक्तः यः पुरुषः सएव मुक्तिं भुक्तिं चोपासकानां ददातीति फलितोऽर्थः ॥ १९ ॥

ननु मुक्तिदो भुक्तिदः कुतोभवेत् नहि अभयदोभयदो भवतीति प्रसिद्धिरित्यत्राधिकार्य्यनुसारेण मुमुक्षुभिः सेवितो यथा मुक्तिं ददाति तथा बुभुक्षुभिः सेवितो भुक्तिमपि ददातीति मुमुक्षुबुभुक्षु मनोरथपूरकत्वं भगवतो दर्शयन्ती भगवन्तमेव सर्वपुरुषार्थ प्रदमा-श्रयेत्याह । यस्येति त्रिभिः । विश्वविभावनाय विश्वगतमुमुक्षुबुभुक्षु जनपालनाय आत्ताआविष्कृता गुणाभिपत्तिः गुणाभिव्यक्तिर्येन तस्य जितः आत्मा मनः श्वसनः प्राणश्च यैस्तैर्मुमुक्षुभिरभिवन्द्यम् अङ्घ्रिपद्मम् अजो ब्रह्मा परिचर्य्य निषेव्य पारमेष्ठ्यं पदम् अध्य-तिष्ठत् ॥ २० ॥

एकमत्या "आत्मत्वेनावगच्छन्ति ग्राहयन्ति„इति सूत्रोक्तेन तादात्म्य सम्बन्धेन मखैरिष्ट्वाभौमं दिव्यं च सुखं भुक्तिसुखम् आपवर्ग्यं मुक्तिसुखं च अभिपेदे ॥ २१ ॥

मुमुक्षुभिर्मृग्या अन्वेषणीया पदाम्बुजयोः पद्धतिर्मार्गआराधन विधिर्वा यस्य तमेव नास्त्यन्यस्मिन्नुपाये उपेयेवा भावो यस्य तस्मिन्स्वधर्मेण भाविते शोधिते निवेद्य आश्रय उपायोपेयभा-वेन शरणं व्रज अध्यासनेच्छायां सत्यां विशेषतो भज ॥ २२ ॥

तदन्यः सर्वपुरुषार्थप्रदो नास्तीत्युपदिशति । नान्यमिति ॥ २३ ॥

---

भाषाटीका

वह सुनीति धैर्य को छोड कर जंगल में आग से जैसी लता व्याकुल हो तैसे होकर विलाप करने लगी सौतिन के वचन को स्मरण कर के कमल कीसी शोभावाले नेत्रों से आंसु ढारने लगी ॥ १६ ॥

लंबा श्वास लेने लगी दुःख के अन्त को नहीं पाकर अबला सुनीति बालक से बोली कि हे तात ध्रुव ! दूसरे का अमंगल मत विचारो क्योंकि जो मनुष्य दूसरे को दुःख देता है सो उसी दुःख को भोगता है ॥ १७ ॥

सुरुचीने सत्य कहा है कि जो मैं दुर्भगाने तेरे को पेट में धारण किया और दूध से बढाया जिससे कि भार्या मान कर मेरे कार्य के भार को ढोने को राजा लज्जा करता है ॥ १८ ॥

सो हे तात ध्रुव ! अब तेरी सौतन माताने जो कहा है सो ठीक है तू दूसरों से मत्सर छोडकर उसी कामको कर अधोक्षज श्रीनारायणके पाद पद्मका आराधनकर यदि उत्तम पुरुष की नाँई राजसिंहासनको चाहता है तो ॥ १९ ॥

मन प्राणको जीतने वाले मुनियों के वन्दना करने योग्य जिस परमात्मात्माके चरण कमलका पूजा करके ब्रह्माने परमेष्ठी स्थान को प्राप्त किया है जिसे परमात्माने संसार के पालने को सत्वा-दि गुण धारण किये हैं उसका पूजन कर ॥ २० ॥

मैत्रेय उवाच

एवं संजल्पितं मातुराकर्ण्यार्थागमं वचः ।
संनियम्यात्मनात्मानं निश्चक्राम पितुःपुरात् ॥ २४ ॥
नारदस्तदुपाकर्ण्य ज्ञात्वा तस्य चिकीर्षितम् ।
स्पृष्ट्वा मूर्द्धन्यघघ्नेन पाणिना प्राह विस्मितः ॥ २५ ॥
अहो , तेजः क्षत्रियाणां मानभङ्गममृष्यताम् ।
बालोऽप्ययं हृदा धत्ते यत्समातुरसद्वचः ॥ २६ ॥

नारद उवाच

नाधुनाप्यवमानं ते सं मानं वापि पुत्रक !
लक्षयामः कुमारस्य सक्तस्य क्रीडनादिषु ॥ २७ ॥
विकल्पे विद्यमानेऽपि नह्यसंतोषहेतवः ।
पुंसोमोहमृते भिन्ना यल्लोके निजकर्मभिः ॥ २८ ॥
परितुष्येत्ततस्तात ! तावन्मात्रेण पूरुषः ।
दैवोपसादितं यावद्वीक्ष्येश्वरगतिं बुधः ॥ २९ ॥
अथ मात्रोपदिष्टेन योगेनावरुरुत्ससि ।
यत्प्रसादं सवै पुंसां दुराराध्यो मतो मम ॥ ३० ॥

भाषाटीका

तैसे ही तुमारा पितामह भगवान् मनु जिस परमात्मा को एकाग्र भक्ति से बहुत दक्षिणा वाले यज्ञों के द्वारा पूजन करके अन्य देवताओं से नहीं प्राप्त होने लालक स्वर्ग लोक मर्त्य लोक के सुख तथा मोक्ष को प्राप्त हुये ॥ २१ ॥

हे वत्सध्रुव ! जिन परमात्मा के चरण कमल के मार्ग को मुमुक्षुजन ढूढते हैं उनका आश्रय लेकर भागवत धर्मों से शोधित इतर विषयों से रहित मन मे स्थापन कर के उन नारायण कू भज ॥ २२ ॥

हे ध्रुव ! ब्रह्मादिक जिन की कृपा को ढूढ रहे हैं एसी लक्ष्मीजी हाथ मे कमल लेकर जिन नारायण की सेवा करें हैं उन कमल लोचन से दूसरे कोइ को मै तेरे दुःख छुडाने वाला ढूढने पर भी नहीं देखती हूं ॥ २३ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

संजल्पितं विलापम् ततोऽर्थस्यागमोयस्मात्तथाभूतं वच आकर्ण्य ॥ २४ ॥ २५ ॥

विस्मित इत्युक्तं तदेवाह । अहो तेजः प्रभावः ।२६।२७॥

विकल्पे मानापमानाविवेके सत्यापि भिन्ना न सन्ति किन्तु मोहकल्पिता एवेत्यर्थः कुतः यत्सुखं दुःखं वा तन्निजकर्मभिरेव भवति यतः ॥२८॥

उपसमोपदेशेन निवर्तयति । परितुष्येदिति षड्भिः । ईश्वरगतिं वीक्ष्य ईश्वरानुकूल्यं विना नोद्यमाः फलहेतव इति ज्ञात्वा परितुष्येत् संतोषमेव कुर्यात् ॥ २९ ॥

दुष्करश्च तवायमुद्यम इत्याह ! अथेतिद्वाभ्याम ! यस्य प्रसादम् रोद्धुं प्राप्तुमिच्छसि ॥ ३० ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

ततो विलापश्रवणानन्तरम् अर्थस्य पुरुषार्थस्य आत्मना बुद्ध्या आत्मानं मनो निरुद्ध्य ॥ २४ ॥

भक्तसंगतेर्यादृच्छिकत्वाद्यदृच्छयागतो नारदः तत्पुरान्निष्क्रमं तत्पुरवासिभ्य उपसमीप एव श्रुत्वा अस्य ध्रुवस्य चिकीर्षितं कर्त्तुमभीष्टं हरेराराधनं प्राह स्वगतम् ॥ २५ ॥

तदेव विस्मितत्वमेव यद्यस्मात् हृदा धत्त एव न विस्मरति ॥ २६ ॥

पूर्वोक्तः स्वगतं नारद उवाचेति स्फुटोक्त्याऽवगम्ये आदि सम्भावनायाम् ॥ २७ ॥

असंतोषहेतव अपमानादयस्तत्कर्त्तारश्च मोहमज्ञानम् ऋते विना न सन्ति कारणं विनाकार्य्याभावात् अत एव किन्त्वित्यां रार्थिकोऽर्थः कार्य्यकारणाभावेहेतुः यतोमोहादभिन्ना इति अकारप्रश्लेषमन्तरा श्रुतेर्भिन्ना इति पौनरुक्त्यमेवस्यात् भिन्ना न सन्ति अभिन्नाइत्यस्य व्याख्यानं यतो हेतोः तथाचापमानादिकार्य्यमुख दुःखयोः कर्ममूलकत्वात् किमर्थं परस्मै क्रोधादिकं कर्त्तव्यमिति भावः ॥ २८ ॥

ईश्वरानुकूल्यं विनेत्यादिव्याख्यानात् दैवेन प्राचीनकर्मणा प्रापितं यावत् यत्प्रमाणकं सुखंदुःखं तावन्मात्रेण परितुष्येत् ॥ २९

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ॥

योगेन भजस्व पुरुषमित्युक्तेः भक्तियोगेन वास्तवार्थे अन्येषां पुंसां दुराराध्यः भक्तेस्सुदुर्लभत्वात् तत्र तु स्वाराध्यः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

सूतोक्तमुपसंहरन् ध्रुवस्य चेष्टामाहमुनिः । एवमिति । मातुः संजल्पितं विलापनं ततः अर्थागमम् अर्थस्य स्वाभिलषितस्यार्थस्यागमो यस्मात्तथाभूतं वच आकर्ण्य आत्मना स्वेनैवात्मानं मनः सन्नियम्य समाधाय पितुरुत्तानपादस्य पुरान्निश्चक्राम निर्गतः ॥ २४ ॥

तन्निष्क्रमणमुपाकर्ण्य आश्रुत्य त्रैकालज्ञो नारदः अस्य ध्रुवस्य चिकीर्षितं ज्ञात्वा चागत्येति शेषः अघघ्नेन दुरितहारिणा पाणिना शिरसि संस्पृश्य विस्मितः प्राह ॥ २५ ॥

विस्मित इत्युक्तं तदेवाह । अहो इति । मानभङ्गम् अभिमानविहतिम् अमृष्यताम् असहमानानां क्षत्रियाणां तेजः प्रभावः अहोविस्मियनीयः यत् यस्मात् अयं ध्रुवः बालोऽपि समातुः मातुः सपत्न्या असद्वचः दुष्टवाक्यं यत् हृदा हृदयेन धत्ते मनसि स्थापयतीत्यर्थः ॥ २६ ॥ *

नारदोक्तिमेवाह । केति । हे वत्स ! भवान् ऋद्धिमत् समृद्धिमत् स्वगृहं हित्वा एकः असहायः क याति गच्छति अङ्ग हे ध्रुव ! त्वां स्वजनादुत्थया उत्पन्नया अवमत्या पराभूत्या संतप्तं नितरां तप्तमालक्षये उत्प्रेक्षये ॥ २६ ॥

अत्र कचित्पुस्तकेषु

किमेतद्भगवन्ध्यानात् दृष्टं तद्योगराधसा ।
नोत्सहे सुरुचेर्वाचा समाधातुं मनः क्षतम् ॥

इत्यधिकः श्लोकः पठ्यते तत्रायं ध्रुवोत्तरत्वेन व्याख्येयः हेभगवन् ! नारद ! एतन्मम स्वजनोत्थपराभवसंतापादिकं योगराधसा योगप्रभावेण यद्ध्यानं सर्ववस्तुसाक्षात्कारापादकं तस्मात्तदृष्टं किन्त्वमेति शेषः अहं तु सुरुचेर्वाचा क्षतं व्यथितं मनः समाधातुं नोत्सहे न शक्नोमि । एवमुक्तो नारदः पुनराह । नाधुनाप्यवमानमिति । एतच्छ्लोकाभावे सर्वोऽपि ग्रन्थो नारदोक्तिपरत्वेन व्याख्येयः हेपुत्रक ! कुमारस्य अतएव क्रीडन दिष्वासक्तस्य तव अधुना बाल्यदशायाम् अवमानं सन्मानं वा न पश्यामि बालो हि मानावमानावनादृत्य परं क्रीडासक्तः अतस्तवापि मानावमानौ न स्त इति पश्यामीत्यभिप्रायः ॥ २७ ॥

यदि ब्रूयात् अहं वयसा बालो न बुद्ध्येति तत्राह । विकल्प इति । विकल्पे मानावमानविवेकेसत्यपि विमोहं विना भिन्ना व्यतिरिक्ताः असन्तोषहेतवो न सन्ति किंतु मोह एवासन्तोषहेतुरित्यर्थः कुतः यत्सुखं दुःखं वा लोके तन्निजकर्मभिरेव भवति यद्वा अहं बालोऽपि मानावमानबुद्धिमानिति ब्रूयास्तर्हीयम् असन्तोषमूला बुद्धि देहात्मभ्रममूला न तात्विकीत्याह । विकल्प इति । सर्वत्र ज्ञानैकाकारतया एकरूपे आत्मनि विकल्पे देवमनुष्यादिभेदे अविद्यमाने इति छेदः असत्यपि देवमनुष्यादिभेदानामात्माकारत्वाभावेऽपीत्यर्थः पुंसां जीवानां मोहमृते देवादिशरीरेष्वात्माभिमानं विना असन्तोषहेतवो न सन्ति देहात्मभ्रम एवासन्तोषहेतुरित्यर्थः विद्यमान इति वा छेदः अपि शब्द उक्तसमुच्चयार्थः विकल्प इत्यनेन संबध्यते विकल्पे देवमनुष्यादिभेदे अपि शब्दात्त्वप्रयुक्तमानावमानादिके च सति मोहं देहात्माभिमानमृते असन्तोषहेतुरन्योनास्तीत्यर्थः असन्तोषस्य देहात्माभिमानाधीनत्वे हेतुमाह भिन्ना यदिति । अत्र लोका इति प्रथमान्तपाठस्सुगमः लोकाश्चेतनवर्गा निजकर्मभिरेव भिन्नाः कर्मकृतदेवादिदेहभिन्ना इति यत् अतो देहे सति तत्रात्मभ्रम एवावमानद्वारासन्तोषहेतुः असंतुष्टस्य चेतनस्य देहात्माभिमानित्वादित्यर्थः यद्वा सप्तम्यन्तपाठः भिन्नेतिभावे क्तः स्त्रीत्वमार्षं भिदेत्यर्थः देवादिदेहभेदे को हेतुस्तत्राह । लोके ज्ञानैकाकारे चेतन वर्ग भिन्ना देवमनुष्यादिभिदा यत् यतः कर्मभिर्भवति अनेन कर्मकृतो देवादिदेहभेदस्तत्कृतो मानावमानमूलो देहात्मभ्रमस्ततोऽसंतोषरूपं दुःखमित्यभिप्रेतम् ॥ २८ ॥

एतदेवोपशमोपदेशेन निवर्तयति । परितुष्येदिति षड्भिः ततो देहात्मभ्रमस्यैवासंतोषहेतुत्वाद्बुधः देहविलक्षणात्मज्ञानी पुरुषः ईश्वरगतिं वीक्ष्य ईश्वरानुकूल्यं विना नोद्यमाः फलहेतवः इति ज्ञात्वा यावत्सुखं दैवेनोपसादितं प्रापितं तावन्मात्रेण परितुष्येत नाधिकं लिप्सेत् अतोऽधिकसुखार्थं नोद्यमः कार्य इति भावः ॥ २९ ॥

दुष्करश्चतवायम् उद्यमः इत्याह । अथेति द्वाभ्याम् । अथनन्मात्रोपदिष्टेन भक्तियोगेन यस्य भगवतः प्रसादम् अपरोक्षं प्राप्तुमिच्छसि स वै भगवान् पुंसां दुःखेनाप्याराधयितुमशक्य इति मे मया ज्ञातो मतः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

बालत्वाद्रोपतोषयोः क्षणकालीनत्वेनासमत्वान्मातृवचः श्रुत्वापि गृह एवावस्थानं हृदि सन्निधाय तत्समर्थनाय ततोनिर्गमनं वा युक्तमिति ध्रुवेण द्वयोर्मध्ये किमकारीत्यान्तरीं शङ्कां परिहर्तुमाह । एवमिति । अर्थस्याभिप्रेतस्यागमः प्राप्तिर्यस्मात्तथा तदा आत्मानं मनः आत्मना धैर्यगुणेन ॥२४॥

ध्रुवोनाममहात्मेति द्योतयंस्तस्य स्वाभीष्टसिद्धि लक्षणां नारदसंवादं वक्ति नारदइति । उपाकर्ण्येत्यनेन नारदस्य दूरश्रवणशक्तिः योगीन्द्रत्वात् स्वाभाविकीति सूचयति सर्वप्राणिचित्तविषयं ज्ञानं

---

* क्वयात्येको भवान् वत्स ! हित्वा स्वगृहमृद्धिमत् ॥
लक्षय त्वावमत्याङ्ग ! सन्तप्तं स्वजनोत्थया ॥

ध्रुवउवाच ।

किमेतद्भगवन् ! ध्यानादृष्टं किं योगराधसा ।
नोत्सहे सुरुचेर्वाचा समाधातुं मनःक्षतम् ॥

इति श्रीराघवविजयध्वजयोरधिकः पाठष्टीकाच ।

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

वा योगसिद्धमिति स्पृष्टेत्यादिना गुरुप्रसादं ध्वनयति अघघ्नेन सर्वदुरितविनाशकेनेति पित्रादिद्वेषनिमित्तदोषनाशं सूचयति ॥२५॥ विद्दि..तद्दयुक्तमभिनयति। अहोइति। तेजोऽर्चयेलक्षणम् असूयता मसहमानानां समातुः समानमातुः सुरुच्याः ॥ २६ ॥ किं प्राहेति तत्राह। क्रयातीति। लक्षये लक्षणवृत्त्या जानामि ॥२६॥ अत्र ध्रुवेण किमुत्तरंदत्तमिति तत्राह। किं न तदति। ध्यानेन ज्ञानं लक्षयति कार्यकारणसंबन्धात् ते त्वया ध्यानजातेन योगराभसाऽष्टांगयोगजनितदूरदर्शनशक्तिलक्षणसामर्थ्येन वा किं न दृष्टं सर्वं दृष्टमेव तथापि वक्ष्यामीति शेषः किं तादिति तत्राह। नोत्सह इति ॥ २६ ॥

नारदेनापि किंप्रत्युत्तरमुक्तमत्राह। नाधुनेति ॥ २७ ॥

ननु क्रीडनादिषु सक्तस्य बालस्य न युक्तमन्यस्य विवेकिनः कथमित्याशङ्क्य नितरामीदृशस्य सन्तोषहेतुत्वमिति बोधयति। विकल्प इति। * विकल्पे शत्रुमित्रादि विविधकल्पने विद्यमानेऽपि पुंसोमोहमृते भ्रममन्तरेणाऽसंतोषहेतवोमनःखेदजनका न सन्ति कुतः लोका जना भिन्नाः स्वानुष्ठितैर्निजकर्मभिरुत्तमाधममध्यमभेदेन नानाविधा इति यस्मात् ॥ २८ ॥

ततईश्वरगतिं बुधोविद्वान्यदैवोपसादितं वीक्ष्य तावन्मात्रेण परितुष्येदित्यन्वयः ईश्वरगतिं वीक्ष्य यावद्दैवोप ।।दितं तावन्मात्रेणेतिवा अनेन सुरुच्या दुर्वचस्तव संतापकारणं नभवतीत्युक्तं भवति ॥ २९ ॥

हरेः प्रसादजनके तपसि स्थितांबुद्धिं दृढां विधातुं बाधकमभिधत्ते। अथेति। अथ यदि मात्रोपदिष्टेन योगेनोपायेन हरेःप्रसादायं हारिमवरुरुत्सासि मनुप्रहोन्मुखीं कर्तुमिच्छासि तर्हापि सहर्गिम पुंसां दुराराध्योमनः कुतस्तपां फलासिरित्यर्थः बाह्यत्वनेन स्वानुभवसिद्धमिति दर्शयति ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः।

नारदो यदृच्छयैवागतः सृषिरिति ज्ञेयम् ॥ २५ ॥

अहो इति स्वगतं वाक्यम्। उवाचेत्यत्र स्फुटोक्तिख्यापनात्। तेजः परिभवेच्छा ॥ २६ ॥ २७ ॥

विकल्पे विद्यमानेऽपि असन्तोषहेतवो मोहमृते न सन्तीत्येव। यतो ऽमी मोहादभिन्नाः। यच्च सुखं दुःखं कर्मभिरिति लोके श्रूयते तत्र च पक्षे तानि मोहमृते न सन्तीत्यर्थः ॥ २८ ॥

यत्र फलप्रापकं दैवं तत्रैवेश्वरानुकूल्यं भवतीति दैवोपसादितेनैव परितुष्येदिति भावः। दैवमीश्वरो वा ॥ २९—३१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतकृतसारार्थदर्शिनी।

प्राह स्वगतम् ॥ २५——२७ ॥

विकल्पोभेदस्तस्मिन् विद्यमानेऽपीति ज्ञानयोगिनां तावद्विकल्पो नास्त्येवेति कावाऽसन्तोषः के वा तस्य हेतवः। भक्तियोगिनां कर्मयोगिनां विकल्पो विद्यत एवेति विद्यमानेऽपि विकल्पे पुंसो मोहं विना असन्तोषस्य हेतवोऽवमानादयस्तत्कर्तारश्च भिन्ना न सन्ति किन्तु मोह एवेत्यर्थः। यद्वयस्माल्लोके सर्वत्र निजकर्मभिरेवाशुभैरसन्तोषहेतवोऽवमानादयः तत्कर्त्तारश्च भवन्तीत्यतःतेन विना कस्मै दोषोदेय इयत एव विवेकिनो भक्ताः कामिनश्च क्रोधामत्सरा भवन्तीति भावः ॥ २८ ॥

यस्मादेवं तस्माद्दैवेन प्राचीननिजकर्मणा उपसादितं प्रापितं यावत् यत्प्रमाणकं सुखं दुःखं वा तावन्मात्रेण परितुष्येत् विवेकेन सोपार्जितबुद्ध्येति भावः तच्च ईश्वरगतिं वीक्ष्य ईश्वरप्रेरितमेव कर्म फलतीति ज्ञात्वेत्यर्थः ॥ २९ ॥

तव तु प्रारिप्सितोऽयमुग्रमोऽतिकठिन इत्याह अथेति अवरोद्धुं प्राप्तुमिच्छसि ॥ ३०—३१ ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

संजल्पितं विलापं ततः अर्थस्य भजनीयस्य आगमः अवधार्य यस्मात्तद्वचः आकर्ण्य आत्मना बुद्ध्या आत्मानं मनः ॥ २४ ॥

नारदो भगवान् सर्वदेशकालज्ञस्तदुपाकर्ण्य अस्य ध्रुवस्य चिकीर्षितं च ज्ञात्वा विस्मितः सन् तन्निकटमागत्य अघघ्नेन पाणिना मूर्ध्नि स्पृष्ट्वा प्राह ॥ २५ ॥

असूयतामसहमानानाम् अहो तेजः प्रभावः यद्यतो बालोऽपि अयं समातुः मातृसपत्न्याः असद्वचः हृदा धत्ते ॥ २६ ॥

क्रीडनम् आदिर्येषां भोजनशयनादीनां तेषु ॥ २७ ॥

विकल्पे सन्मानावमानभेदे सत्यपि पुंसो मोहमृते भिन्नाः मोहव्यतिरिक्तकृताः असन्तोषस्य सन्मानावमानप्राप्तौ रागद्वेषपमनोवृत्त्युपरामस्य हेतवो न हि सन्ति किंतु मोहः स्वकृतकर्मबोध एव हेतुः यत् यौ सन्मानावमानौ निजकर्मभिर्भवतः ॥ २८ ॥

एवमसंतोषनिवृत्तिप्रकारं प्रदर्श्य सन्तोषरहस्योपदेशेन तन्निवृत्ति प्रकारं दर्शयन्निवर्तयति परितुष्येदित्यादिषड्भिः यस्मात्स्वकर्मजन्यसन्मानावमानयुग्मं जीवस्ततः कारणात् हे तात! यावत् दैवेन कर्मफलदेन भगवतोपसादितं तावत्ईश्वरगतिं प्राणिकर्मद्वारैव तदनुरूपपदार्थदातृत्वं वीक्ष्यबुद्ध्या परितुष्येत् ॥ २९ ॥

मात्रोपादिष्टेन योगेन भक्तियोगेन यस्य प्रसादं त्वमवरुरुत्ससि सः पुंसां दुराराध्यो मम मतः ॥ ३० ॥ ३१ ॥

---

### भाषाटीका

मैत्रेयजी बोले इस प्रकारसे अपने मनोरथको देने वाले माता के वचनकी श्रवण करके बुद्धिसे मनको रोककर पिताके घरमें से ध्रुवजी निकल गये ॥ २४ ॥

नारदजी ने उनका चला जाना तथा मनोरथ जानकर पाप नाश करने वाले अपने हाथ से स्पर्श करके विस्मित होकर बोले ॥ २५ ॥

अहो क्षत्रियों का तेज ऐसा है कि मान भङ्गको नहीं सहसके हैं जो कि बालक होकरभी यह माता के खोटे वचनों को हृदय में रखता है ॥ २६ ॥

नारदजी बोले हे पुत्र! अभी तो बालक है खेल में लगा हुआ है तेरेकूं मान अपमान कुछभी नहीं होना दीखता है ॥ २७ ॥

यद्यपि मानापमान का भेद दीखता है तथापि ये सब असन्तोष के हेतु हैं पुरुष के मोह विना भिन्न कुछ नहीं है सब अपने कर्मों से होते हैं ॥ २८ ॥

---

* विकल्पे इत्यस्यान्यथाज्ञानेइति मोहमित्यस्यापि तथैव प्रतीतेः अतस्तात्पर्यानुसारेण व्याख्याति शत्रुमित्रादीति तेन विशब्दः विविधत्वार्थ इत्युक्तं भवति मोहमित्यस्यभ्रममिति

मुनयः पदवीं यस्य निःसंगेनोरुजन्मभिः ।
न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना ॥ ३१ ॥
अतो निवर्ततामेष निर्बन्धस्तव निष्फलः ।
यतिष्यति भवान् काले श्रेयसां समुपस्थिते ॥ ३२ ॥
यस्य यद्दैवविहितं स तेन सुखदुःखयोः ।
आत्मानं तोषयन्देही तमसः पारमृच्छति ॥ ३३ ॥
गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात् ।
मैत्रीं समानादन्विच्छन्न तापैरभिभूयते ॥ ३४ ॥

ध्रुव उवाच ।

सोऽयं शमो भगवता सुखदुःखहतात्मनाम् ।
दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः ॥ ३५ ॥
अथापि मेऽविनीतस्य क्षात्रं घोरमुपेयुषः ।
सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि ॥ ३६ ॥
पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे ॥
ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ॥ ३७ ॥
नूनं भवान् भगवतोयोऽङ्गजः परमेष्ठिनः ।
वितुदन्नटते वीणां हितार्थं जगतोऽर्कवत् ॥ ३८ ॥

---

भाषाटीका ।

हेतात ! इसीसे ईश्वरकी स्वतन्त्रगतिकों देखकर जितना दैव से मिले उतनेही से सन्तोष होजाना बुद्धिमान मनुष्य का काम है ॥ २९ ॥

अथवा यदि तुम माता के उपदेश से योग द्वारा जिस विष्णु की कृपा का होना चाहते हौ सो विष्णु तो पुरुषों से आराधन के योग्य नहीं हैं ऐसा हमारा विश्वास है ॥ ३० ॥

———

श्रीधरस्वामिकृत भावार्थदीपिका

निःसंगेन तीव्रयोगेन युक्तेन समाधिना मृगयन्तोऽपि यस्य पदवीं मार्गं न विदुः स देवोदुराराध्यः ॥ ३१ ॥

श्रेयसां काले वृद्धत्वे ॥ ३२ ॥

सुखदुःखयोर्मध्ये सुखे सति पुण्यं क्षीयतइति दुःखेसति पापं क्षीयत इत्यात्मानं तोषयंस्तमसः पारं मोक्षं प्राप्नोति ॥ ३३ ॥

किञ्च गुणैरधिकात्पुंस इतिल्यब्लोपे पञ्चमी तं दृष्ट्वा प्रीतिं कुर्यात् नत्वसूयामित्यर्थः अनुक्रोशं कृपां लिप्सेन्नतु तिरस्कारम समानान्मैत्रीं नतु स्पर्धाम् । ३४ ॥ ३५ ।

क्षात्रं स्वभावं प्राप्नवतोऽतएवाविनीतस्य दुर्वाक्यबाणैर्भिन्ने हृदि न श्रयते न तिष्ठति ॥ ३६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

अन्यैरनधिष्ठितं त्रिभुवने उत्कृष्टं पदं जेतुमिच्छोर्मे साधु वर्त्म मार्गं ब्रूहि ॥ ३७ ॥

अङ्कज इति पाठे उत्संगाज्जातो यो नारदः स भवान् तत्र विक्रम वीणां वितुदन्वादयन् हितायाटति ॥ ३८—३९ ॥

———

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

समाधिना न विदुः किन्तु भक्तियोगेन तु विदुरेव भक्त्या मामभि जानाति यावान् यश्चास्मि तत्त्वत इत्याद्युक्तेः ॥ ३१ ॥

वास्तवार्थे यतस्समाधिना तत्प्राप्तिर्नस्यात्किन्तु भक्तियोगेनैव अतः मात्रोपदिष्टेयोगे भवान्नितरां वर्त्तताम एष अधोक्षजाराधन विषयकस्तव निर्बन्धः हठान्निश्चितं फलं यत्र तादृश एव नवं जातु कथंचनाब्जेजन्मुकुन्दसेवयन्यवदङ्ग ! संसृतिमिति नैसंगोक्त-त्वात् तस्मात्काले कौमार एवाचरेत्प्राज्ञो धर्मान् भागवतानि हेत्युक्तेर्भजनयोग्य एवास्मिन्नवसरे भवान् यतिष्यति अत एवम सुपस्थिते इत्युक्तम उपस्थितं परित्यज्यानुपस्थितवार्द्धिक्यविचारं मानाभावात् तस्य च भजनकालस्य श्रेयस्संबन्धित्वं श्रेयस्मृतिं भक्तिमुदस्य ते विभो ! इत्यादिप्रामाण्यादेव ॥ ३२ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

सुखदुःखयोर्मध्ये यत्सुखंदुःखं वा यस्य प्राचीनकर्मणा विहितं रचितं स तेन दैवरचितेन सुखेन दुःखेन वात्मानं तोषयन् मोक्षं प्राप्नोतीत्यर्थः तोषप्रकारं व्याचष्टे । सुखे सतीत्यादि ॥ ३३ ॥ ३४ ॥

साऽयं मुमुक्षुकर्त्तव्यत्वेन प्रसिद्धः शमश्चित्तनिरोधः ॥३५॥

यद्यपि कृपयैव दर्शितः अथापि घोरंक्षात्रमिति एतदुपगमामृन ब्राह्मणबालकानेव पायय न तु मां परधर्मत्वेनानभिरुचेरिति भावः ॥३६ ॥

मार्गमात्रं ब्रूहि पुनस्त्वत्कृपया पश्य मे विक्रममिति भावः ॥३७॥

तत्र नारदत्वे लिङ्गं चिन्हं लिङ्गं चिन्हेऽनुमाने चेति विश्वः॥ ३८ ॥

———

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

निःसङ्गेन देहतदनुबन्धिसंगाद्विर्गतेन तीव्रयोगः विघ्नानुपहतो ज्ञानयोगः कर्मयोगश्च तद्युक्तेन समाधिना यस्य भगवतः पदवीं मार्गं मृगयन्तोऽपि मुनयो बहुजन्मभिरपि नविदुः स देवोभगवान् दुराराध्यो मम मत इति पूर्वेण संबन्धः ॥ ३१ ॥

अतो देवस्यापि दुराराध्यत्वाद्धेतोः निवर्ततां गृहान् प्रति यातु भवान् तत्रैव निर्बन्धः निष्फलः अनर्थः अयनमानस्य मम कथं श्रेयः प्राप्तिरित्याशङ्कमानं प्रत्याह। यतिष्यतीति दैवात् श्रेयसां काले समुपस्थिते भवान् यतिष्यति यत्नं करिष्यतीति अधुना तूद्यमो निष्फल इति भावः ॥ ३२ ॥

किञ्च यस्य पुंसः यत् सुखं दुःखं वा दैवेनेश्वरेण विहितं स पुमान् दैवविहितयोः सुखदुःखयोर्मध्ये तेन दैवविहितेन सुखेन दुःखेन वा आत्मानं तोषयन् सुखे सति पुण्यं क्षीयते अमुखे त्वपुण्यमतः पुण्यापुण्यक्षयेन संसृतेर्मोक्षामीत्यात्मानं तोषयन्नित्यर्थः देही देहवान् तमसः पारं प्रकृतिमण्डलातीतं विष्णोः पदमृच्छति याति ॥ ३३ ॥

अपि च यः पुमन् गुणैरधिकः स्वापेक्षयाधिकस्तस्मादियं ल्यब्लोपे पञ्चमी गुणाधिकं दृष्ट्वेत्यर्थः मुदं लिप्सेत् लब्धुमिच्छेत् प्रीतिं कुर्यात् न त्वसूयामित्यर्थः गुणाधमात् गुणाधमं वीक्ष्य अनुक्रोशं कृपां लिप्सेन्नतु तिरस्कारं समानान्मैत्रीं न तु स्पर्द्धां सः तापैराध्यात्मिकादितापैः नाभिभूयते तापत्रयाभिहतो न भवतीत्यर्थः ॥ ३४ ॥

एवं नारदेनोपदिष्टक्रमो ध्रुवः स्वमनीषितेऽविचाल्यमतिस्तद्दर्शनं तदुक्तिं चाभिनन्दन् प्रत्याह। सोऽयमिति चतुर्भिः । भगवता सुखदुःखाभ्यां हतः पराभूत आत्मा मनो येषां तेषां पुंसामस्माकं सोऽयं शमः मनः प्रशान्त्युपायः कृपया दर्शितः ज्ञापितः यो भगवांस्त्वमस्मद्विधैर्मादृशैर्दुर्दर्शः द्रष्टुमशक्यः यद्वा यः शमः अस्मद्विधैर्दुर्दर्शः ज्ञातुमशक्य इति शमप्रशंसा ॥ ३५ ॥

अथापि त्वयोपदिष्टशमस्यापि मम घोरं क्षात्रं स्वभावं उपेयुषः प्राप्तवतोऽप्यविनीतस्य सुरुच्याः दुर्वचांस्येव बाणास्तैर्भिन्ने हृदि न श्रयते शम इत्यनुषंगः शमो न तिष्ठतीत्यर्थः ॥ ३६ ॥

अतो मन्मनीषानुसारेणैव मामनुगृह्य मनीषितोपायप्रकारं ब्रूहीत्याह पदमिति॥ अस्मत् पितृभिस्तेभ्योऽन्यैरप्यनधिष्ठितंत्रिभुवनोत्कृष्टं पदं जंतुमिच्छोर्मे साधुवर्त्म मार्गं ब्रूहि स्वोपदेशोल्लंघनान्मां निगृह्यादित्याशङ्क्य तं प्रसादयति ॥ ३७ ॥

नूनमिति । भवान्परमेष्ठिनो ब्रह्मणः जगद्धितकारिणोऽङ्गजः देहजः अंकज इति पाठे उत्संगाज्जातः वीणां वितुदन् ध्वनयन् जगतो हिताय सूर्यवदटति चरति अतो मन्मनीषापादनमेव जगद्धितकारिणस्तवोचितमिति भावः ॥ ३८ ॥

———

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

मुनयोऽपि यन्मार्गंसमाराध्य नजानन्ति बालकस्त्वंकिमुतेत्याह मुनयइति ॥ ३१ ॥

ततः किं तत्राह । अतइति । तर्हि निःश्रेयसाय प्रयतमानस्य पुंसो जन्मनोनिरर्थकत्वमित्याशङ्क्य नायं कालः किंतु कालान्तर इत्याह यतिष्यतीति काले वार्धके ॥ ३२ ॥

सुखदुःखयोर्मध्ये यत्सुखं दुःखं वा यस्य दैवेन विहितं सदा तयोरेकेन तेनात्मानं तोषयंस्तमसः पारमज्ञानस्यान्तं मोक्षमृच्छति गच्छतीत्यन्वयः ॥ ३३ ॥

मनोदुःखाभावे उपायान्तरमाह । गुणाधिकादिति । शमदमादि गुणाधिकात्पुरुषादिति प्रत्येकं संबध्यते अनुक्रोशं दयां मैत्रीं साहार्दं तापैर्मनः खेदकरैर्भावैः ॥ ३४ ॥

नारदेनैवं बोधितोऽपि ध्रुवस्तं मार्गं प्रशस्य स्वहार्दं विज्ञापयति सोऽयमिति योऽस्मद्विधैर्दुर्दर्शः शास्त्रदृष्ट्या ज्ञातुमशक्यः सोऽयं शमः भगवन्निष्ठालक्षणोभगवता सुखदुःखाभ्यां हतात्मनां पीडितमनसां पुंसां कृपया दर्शितो यद्यपि ॥ ३५ ॥

अथापि तथापि अविनीतस्य कुतः क्षात्रं घोरं धर्ममुपेयुषोगच्छतोमे सुरुच्यादुर्वचोबाणैर्भिन्ने हृदि स शमो न श्रयते स्थितिं न लभत इत्यन्वयः ॥ ३६ ॥

नहिं तव काङ्क्षायाः कियानवधिरिति तत्राह । पदमिति अनन्तराजसिंहासनस्यानित्यत्वेन न तपःसाध्यत्वेनाकांक्ष्यत्वमितिसूचितम् अस्मत्पितृभिरित्यादिनोत्तमस्य मनोरथेनाप्यनवाप्यमित्यसूचि ३७

भवान् लोकाहतार्थाटनत्वान्मदभीष्टमुपदिशतीत्याशयेनाह नूनमिति ॥ ३८ ॥

———

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

अत इति । वास्तवार्थे । निर्निश्चितं फलं यत्र तथाभूत एव मार्गं वर्त्तनाम् । काले प्राप्तावसर एवास्मिन् । यतिष्यतीति वर्तमानसामीप्ये ॥ ३२ ॥

यस्येति । निष्कामकर्मान्यत्राधिकारी ॥ ३३ ॥ ३४ ॥

अस्मद्विधैर्यो दुर्दर्शः सोऽपि यद्यपि कृपया दर्शितः ॥ ३५ ॥

अथापि तथापि ॥ ३६—३७ ॥

भवान् परमेष्ठिनोऽङ्गजोऽपि अङ्कज इति पाठे उत्सङ्गाज्जातोऽपि वह्लीयां वितुदन्नटति नूनं जगत एव हितायेति अत्र श्रीमैत्रेय उवाचेति क्वचित् इतीति । सनिर्बन्धं स्वस्मिन् विश्वासयुक्तः सर्वोत्कृष्टसाधनसाध्यलिप्सायुक्तश्च अतएव प्रीतः ॥ ३८-४१ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

श्रेयसां काले वयसा वृद्धत्वे ॥ ३२ ॥

सुखदुःखयोर्मध्ये तेन सुखेनदुःखेन वा तोषयन् सुखे सति पुण्यं क्षीयते दुःखे सति पापं क्षीयते इति बुद्धेत्यर्थः तमसः संसारात् ॥ ३३ ॥

किञ्च गुणाधिकात् गुणाधिकं प्राप्येति ल्यब्लोपे पञ्चमी ।

**मैत्रेय उवाच**

इत्युदाहृतमाकर्ण्य भगवान्नारदस्तदा ।
प्रीतः प्रत्याह तं बालं सद्वाक्यमनुकम्पया ॥ ३९ ॥

**नारद उवाच**

जनन्याऽभिहितः पन्थाः स वै निःश्रेयसस्य ते ।
भगवान् वासुदेवस्तं भज तत्प्रवणात्मना ॥ ४० ॥
धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः ।
एकमेव हरेस्तत्र कारणं पादसेवनम् ॥ ४१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

लब्धुमिच्छेत् तत्वसूयाम। अनुक्रोशं कृपां तत्ववशां मैत्रीं नतुस्पर्द्धीं लिप्सेदिति यदि स्वस्वभावदोषान्न लभेत तदपि लब्धुं कामयतोऽपीत्यभिप्रायः ॥ ३४ ॥

त्वया यद्यप्यनधिकारिणोऽपि मह्यं कृपयेदमुपशमामृतं दत्तं । तथापि क्षात्रं स्वभावं प्राप्तवतो मम हृदि भिन्ने विदीर्णमृद्भाजन इव न श्रयते न तिष्ठतीति व्याजस्तुत्या शौर्यहीनात् दुर्बलात् ब्राह्मणादेवैतदुपशमामृतं पायय । ममतु महाघोरशौर्यवतः क्षत्रियकुमारस्य नात्र दृष्टिरपि पततीति व्यञ्जितम् ॥ ३५ ॥ ३६ ॥

तर्हि त्वं किमिच्छसीत्यत आह। पदमिति। त्रिभुवनोत्कृष्टत्वेऽपि अस्मत् पितृभिरिति यो मामवमन्यते स्म तेन सुरुचेः पत्या उत्तानपादेन तत्पित्रा ब्रह्मणापि अन्यैरपि ब्रह्मणः पुत्रपौत्रादिभिः अनधिष्ठितमप्राप्तं पदं जिगीषोः स्वीचिकीर्षोर्वर्त्मब्रूहीति त्वं तावत्पवर्त्म मात्रमुपदिशन्नचिरेणैव तद्विजये किञ्चन शौर्यं मे पश्येति भावः ॥ ३७ ॥

ममायन्तु मनोरथः सेत्स्यत्येवेत्यत्र गृहाण्विष्कास्यतएव भवद्दर्शनमेव लिङ्गमित्याह । नूनमिति । अङ्गात्तत्सङ्कल्पादाविर्भूतो लोकहिताय भगवदवतार एव त्वं न कस्यापि पुत्र इति भावः । अङ्गज इति पाठे भवान् परमेष्ठिनोऽङ्गजोऽपि यद्वीणां वितुदन्नटति तज्जगतो हितायैव ॥ ३८ ॥ ४१ ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

श्रेयसां श्रेयः साधनानां ज्ञानभक्त्यादीनां काले बाल्यनिवृत्त्यनन्तरम् यतिष्यति ज्ञानभक्त्यादियत्नं करिष्यति ॥ ३२ ॥

तमसः प्रकृतेः पारं विष्णुपदम् ऋच्छति प्राप्नोति आदित्यवर्णं तमसः परस्तादिति श्रुतेः ॥ ३३ ॥

किञ्च यो गुणाधिकात् ल्यब्लोपे पञ्चमी गुणैरधिकं दृष्ट्वा मुदं लिप्सेत् प्राप्तुमिच्छेत् प्रीतिं कुर्यात् गुणाधमात् गुणाधमं दृष्ट्वानुक्रोशं कुर्यात् समानात् स्वसमं दृष्ट्वा मैत्रीमन्विच्छेत्स तापैर्नाभिभूयते ॥ ३४ ॥

सुखदुःखाभ्यां हतोऽभिभूतः आत्मा मनो येषां तेषां पुंसां यः शमः भगवता कृपया दर्शितः सोऽयमस्मद्विधैः पुंभिर्दुर्दर्शः दुर्लभ इत्यर्थः ॥ ३५ ॥

तथापि दुर्लभपदार्थलाभेऽपि मे मम अविनीतस्य भगवद्भक्तस्य मानार्हस्य तत्र हेतुगर्भं विशेषणं घोरं क्षात्रं क्षत्रियस्वभावमुपेयुषः प्राप्तवतो हृदि न श्रयते न स्थीयते ॥ ३६ ॥

हे ब्रह्मन् ! त्रिभुवनादुत्कृष्टम् अस्मात्पितृभिरन्यैश्चाप्यनधिष्ठितं पदं जिगीषोर्मे साधु वर्त्म मार्गं साधनं ब्रूहि ॥ ३७ ॥

वितुदन् वादयन् ॥ ३८ ॥

---

### भाषाटीका

जिसके मार्गको मुनि लोग कठिन योग समाधि से बहुत जन्मोंतक ढूंढने से भी त्यागके द्वाराभी नहीं प्राप्त हो सकतेहैं॥३१॥

इस हेतुसे इस तुह्मारे निष्फल हठको छोडो वृद्ध तपस्या के समयपर आप यत्न करलेना ॥ ३२ ॥

सुखदुःखदोनोंकेमध्यमे जिसको दैवसे जो विहित होवे उसी से आत्माको संतोषकरताहुआ पुरुषसंसार के पार को प्राप्त होता है ॥ ३३ ॥

अपने से अधिकगुणवाले पुरुषको देखकर आनंद होवे अपने से छोटेकोदेखकर कृपा करे अपने समान को देखकर मित्रता करे तो वह पुरुषकभी दुःखीनहींहोता है ॥ ३४ ॥

हमलोगोंको करने मे कठिन ऐसा यह समताका उपदेश, सुखदुःख से जिनके मननष्ट होरहे हैं ऐसे लोगों के लिये कृपाकर के आपने कहा है ॥ ३५ ॥

तो भी मै घोरक्षत्रिय के धर्म को प्राप्त होनेसे अनम्रहों इसी से सुरुची के वचन रूपीबाणोंसे विधेहुए मेरेहृदयमे यह उपदेश स्थिर नहीं होताहै ॥ ३६ ॥

हे ब्रह्मन् ! अपतो हमारेपूर्वजतथा अन्यलोगों कोभी नहीं प्राप्त और तीनों भुवन मे अधिक स्थान को प्राप्त होनेकीइच्छावाला मैहूं मेरेको आप सुंदर उपाय बताओ ॥ ३७ ॥

यह बात ठीक है कि आप परमेष्ठीभगवान् ब्रह्मा के पुत्र हो जगतके हितके वास्ते वीणाको बजाते हुए सूर्य सरी के संसार में घूमतेहो ॥ ३८ ॥

---

### श्रीधरस्वामिकृत भावार्थदीपिका

निःश्रेयसस्याभिप्रेतार्थस्य पन्थाः कोऽसावित्यत आह । भगवान्वासुदेवोऽतएव तं भज ॥ ४० ॥ ४१ ॥

तत्तात ! गच्छ भद्रं ते यमुनायास्तटं शुचि ।
पुण्यं मधुवनं यत्र सांनिध्यं नित्यदा हरेः ॥ ४२ ॥
स्नात्वाऽनुसवनं तस्मिन् कालिन्द्याः सलिले शिवे ।
कृत्वोचितानि निवसन्नात्मनः कल्पितासनः ॥ ४३ ॥
प्राणायामेन त्रिवृता प्राणेन्द्रियमनोमलम् ।
शनैर्व्युदस्याभिध्यायेन्मनसा गुरुणा गुरुम् ॥ ४४ ॥
प्रसादाभिमुखं शश्वत्प्रसन्नवदनेक्षणम् ।
सुनासं सुभ्रुवं चारुकपोलं सुरसुन्दरम् ॥ ४५ ॥

### श्रीधरस्वामिकृत भावार्थदीपिका

मधुवनाख्यं यमुनायास्तटं गच्छ यत्र मधुवने ॥ ४२ ॥

अध्ययनाद्यभावेऽप्यात्मनउचितानि योग्यानि देवतानमस्कारादीनि कृत्वेति यमनियमा उक्ताः आसनकल्पनं च कुशादिभिः स्वस्तिकादिभिश्च ॥ ४३ ॥

प्राणेन्द्रियमनसां मलं चाञ्चल्यं व्युदस्येति प्राणायामप्रत्याहारौ धारणामाह । अभिध्यायेदित्यादिषड्भिः गुरुणा धीरेण मनसा गुरुं श्रीहरिम् ॥ ४४ ॥

सुरेषुसुन्दरम् ॥ ४५ ॥

---

### श्रीराधारमणदासगोस्वामि विरचिता दीपिन्याख्या दीपिका टिप्पणी ।

अत्र मैत्रेय उवाचेति कचित्पाठः उदाहृतं सनिर्बन्धत्वेनोत्कृष्टं वचनं यद्यपि वास्तवार्थे पूर्वमपि सद्वाक्यमेव तथाप्यत्र स्फुटार्थत्वात्सद्वाक्यमित्युक्तम् ॥ ३९ ॥

अत एव श्रेयः पथत्वादेव तत्प्रवणात्मना तदेकनिष्ठेन मनसा ॥ ४० ॥

श्रेयः पथत्वमेव दर्शयति । धर्मार्थेति । तत्र धर्मादिश्रेयसि एकमेव मुख्यमेव अन्यानि च तदभावादेव विधीयन्त इति भावः सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनमित्युक्तेः ॥ ४१ ॥

तत्तस्मात् पादसेवनस्य मूलकारणत्वात् तातेत्यनुकम्पायां भद्रं ते शीघ्रसिद्धये आशीर्वादः नित्यदा स्वभावत एव हरेस्सांनिध्यं अर्थात्तत्रत्यानामिति शेषः ॥ ४२ ॥

स्नात्वेत्यष्टकम् अत्र बहुवाक्यैकवाक्यत्वाट्टीकाक्रमलाभाय मध्ये द्विबिन्दुमस्तका अङ्काः कर्त्तव्याः अनुसवनं त्रिकालम् (१) ॥ ४३ ॥

त्रिवृता कुम्भकादित्रिविधेन चाञ्चल्यव्युदास एव प्रत्याहारः धारणां सविशेषणाम् अभिसामान्यतो ध्यायेदिति धारणैव व्याख्येया अन्यथा वक्ष्यमाणध्यानेन सांकर्य्यं स्यादिति ज्ञेयम् आश्रयविशेषे सामान्यतश्चित्तस्थिरीकरणं हि धारणा चेतसस्तु चिन्मात्रदोषतासजातीयप्रत्ययप्रवाहो हि ध्यानम् (२) ॥ ४४ ॥

सुन्दरं श्लाघ्याङ्गसन्निवेशम् (३) ॥ ४५ ॥

---

### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

एवं दृढ संकल्पस्य ध्रुवस्य वच आश्रुत्य तदनुगृह्णन्नारदआहेत्याह मैत्रेय इति उक्तप्रकारेण उदीरितं गदितमाकर्ण्य भगवान्नारदः दृढसंकल्पदर्शनेन नितरां प्रीतः तं बालकं प्रतिकृपया सद्वाक्यं हितवाक्यमाह ॥ ३९ ॥

उक्तमेवाह । जनन्या इत्यादिना । विरक्तश्चेन्द्रियरतावित्यन्तेन यावद्भगवानेव भक्त्या प्रसन्नो धर्मादिपुरुषार्थचतुष्टयप्रदस्ततस्तद्भक्तिरेव कार्य्येति वदन् उपासनोपयुक्तं देशमाचारन्ध्येयं भगवतो ध्यानप्रकारं जप्यं मन्त्रं भगवत्सपर्याप्रकारमाहारनियमं च कथयन्नेवमाराधितो भगवानेव त्वत्समीहितमभिनिर्वर्तयतीत्याह । जनन्यासुनीत्या उक्तः यः पन्था उपायः स वै स एव तव निश्श्रेयासाय निश्चितं श्रेयः निश्श्रेयसं तस्मै भवति जनन्याभिहितोपाय एवत्वदभिप्रेतार्थसाधनमित्यर्थः कोऽसौ जनन्याभिहितः पन्थास्तत्राह । भगवान् वासुदेव एव अतस्तत्प्रवणात्मना भगवत्प्रवणचित्तेन तं भगवन्तं भज ॥ ४० ॥

भगवान् वासुदेव एव इत्येतदेव प्रपञ्चयति । धर्मेत्यादिना । यः पुमान् धर्माद्यन्यतमं श्रेयः आत्मनः स्वस्य इच्छेत् तत्र हरेः पादसेवनमेकमेव कारणमुपायः ॥ ४१ ॥

तत्तस्माद्भगवत्पादसेवनस्यैव धर्मादिसाधनत्वात् हे तात ! यमुनायाः शुचि शुद्धं तटं तीरं गच्छ ते तव भद्रं मङ्गलमस्तु तटं विशिनष्टि । यत्र तटे पुण्यं पुण्यावहं मधुवनमस्ति कथं भूतं मधुवनं सर्वदा हरेर्भगवतः सांनिध्यं सांनिध्यवत् तटशब्दस्य तटस्थमधुवने लक्षणा वा तत्कथं भूतं मधुवनं यत्र मधुवने हरेः सांनिध्यमस्ति ॥ ४२ ॥

कालिन्द्या यमुनायाः शिवे मङ्गले सलिले त्रिषवणं स्नात्वा तत्र वने आत्मनः स्वस्य उचितानि योग्यानि देवतानमस्कारादीनि कृत्वा कुशादिभिः स्वस्तिकादिभिश्च कल्पितमासनं यस्य सः निवसन् उपाविशन् त्रिवृता त्रयाणां रेचकपूरककुम्भकानां वृत वर्त्तनं यस्मिन् तेन प्राणायामेन त्रिवृता प्रणवेन प्रणवानुसंधानपूर्वकमिति वार्थः प्राणानामिन्द्रियाणां मनसश्च मलं चाञ्चल्यं शनैर्व्युदस्य अपोह्य गुरुणा श्रेष्ठेन प्राणायामैर्निर्मलेनेत्यर्थः मनसा गुरुं भगवन्तं ध्यायेत् अत्र उचितानि कृत्वेति यमनियमा उक्ताः कल्पितासनइत्यासनं मलं व्युदस्येतिप्राणायामप्रत्याहारौ ध्यायेदिति ध्यानं धारणाप्यनेनैवोक्ता धारणापूर्वकत्वाद्ध्यानस्य एवमष्टाङ्गयुक्तो योग उपदिष्टः ॥ ४३ ॥ ४४ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

ध्येयं गुरुं विशिनष्टि । प्रसादेति । शश्वत्सदा प्रसादे अनुग्रहेऽभिमुखं प्रसन्नं वदनमीक्षणं च यस्य तं शोभना नासिका यस्य शोभने भ्रुवौ यस्य चारू सुन्दरौ कपोलौ यस्य सुरसुन्दरं देववरसुन्दरं देवसुरेभ्योऽपि सुन्दरमिति वा ॥ ४५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ॥

याहच्छिकगतित्वात्तदुक्तमाकर्ण्य स्मित्वा, यौगित्वेनाहश्यशक्तिमत्वात्तूष्णीं गतमुतकिमप्युक्तमिति तत्राह । इतीति । तद्वाक्यं प्रतिप्रीतः ॥ ३९ ॥

प्राक् स्वोक्तमेवद्रढीकर्तमुक्तमन्यद्वा संभवादुभयोरिति तत्राह । जनन्यानि । वा इत्येवार्थः योजनन्याऽभिहितः पन्थाः सएव ते निःश्रेयसस्य स्यान्नान्य इत्यन्वयः कोऽसाविति तत्राह । भगवानिति । यं हरेर्विग्रहेषु वासुदेवनामा भगवांस्तं प्रवणात्मना भजेत्यन्वयः ॥ ४० ॥

अस्मिन्नर्थेऽन्यःकिं न स्यादिति तत्राह । धर्मार्थेति । कारणमितरऽयावनेकं साधनम् ॥ ४१ ॥

अभीष्टसिद्धिसाधनं क्षेत्रं चोपदिशति । तत्तातेति । यस्माद्धरेरेव प्रधानसाधनत्वं तत्तस्मान्मधोः पूर्णानन्दस्य हरेर्वनं भजनं यस्माद्भवति तन्मधुवनं नाम्ना सूचितमर्थं प्रकाशयति । यत्रेति ॥ ४२ ॥

तत्र किं कर्तव्यमिति तत्राह । स्नात्वेति । उचितानि तर्पणादीनि ॥ ४३ ॥

त्रिवृता रेचकादित्रिभिर्मन्त्रैर्युक्तेन यद्वा यरवइतित्र्यक्षरयुक्तेन यद्वा प्रणवयुक्तेन प्राणानामवशब्दमिंद्रियाणां विषयाभिमुखत्वं मनसोऽनवस्थितित्वमिति मलत्रयं गुरूणां गुरुमुपदेष्टारम् ॥ ४४ ॥

पुरुषायुषशतेनाऽप्रमन्नतादिगुणावांश्चेत् किमनेनेत्यतोऽश्रद्धा न कर्तव्येति ध्येयस्वरूपमुपदिशति । प्रसादाभिमुखमित्यादिना ॥ ४५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अतिशयकृपया सुखाराध्यत्वोपायमुपदिशति । तत्तातेति ताते त्यनुकम्पायां विघ्नविघाताय शुभाशीर्वादः भद्रं त इति नित्यदा स्वभावत एव तत्त्वध्ययनादिसाधनवशात् ॥ ४२ ॥

स्नात्वेत्यष्टकम् ॥ ४३ ॥

गुरुणामिति चिदसुखः ह्रस्वश्छान्दसः ॥ ४४—४५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ॥

तव जनन्या यदभिहितं तदेव मदभिहितम् इमत्र विशेषमुपदिशामीत्याह । तत्तातेति । मधुवनमिति सर्वेषु सिद्धक्षेत्रेषु तस्यैव मुख्यत्वात् ॥ ४२ ॥

अध्ययनाद्यभावेऽप्यात्मन उचितानि योग्यानि देवतानमस्कारादीनि ॥ ४३ ॥

त्रिवृता रेचकपूरककुम्भकात्मकेन गुरुणा विशुद्धत्वात् श्रेष्ठेन ॥ ४४ ॥

सुरेभ्योऽपि सुन्दरम् ॥ ४५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

साति वासुदेवे साध्ये वाक्यं साधनप्रतिपादकं वाक्यम् ॥३९॥

यांजनन्याऽभिहितो भगवान् वासुदेवः सवै निश्रेयसः पुरुषार्थस्य पन्थाः पुरुषार्थस्य प्रदः तमेव तत्प्रवणात्मना वासुदेवाभिनिविष्टेन चेतसा भज ॥ ४० ॥

पुरुषार्थानां धर्मादीनांमध्ये यो हिजनः आत्मनः प्रियं धर्मादिकमिच्छेत् तत्र धर्मादिके साध्ये कारणं साधनं एकं हरेः पादसेवनमेव स जनः कुर्यादिति शेषः ॥ ४१ ॥

तत्र मधुवने हरेः सर्वव्यापकस्याऽपि नित्यं सांनिध्यम् श्री मथुरामण्डलं नित्यं वैकुण्ठवत् हरिः प्रकटो वर्तत इत्यर्थःतत्र भागवता अपि नित्यं वर्त्तन्ते नित्यदाहरिसान्निध्योपपत्तेः अनेन श्रीमथुरामण्डलस्य भगवत्प्रियत्वं सर्वतीर्थेभ्य उत्कृष्टत्वं शीघ्रं भगवत्प्रापकत्वं च दर्शितम् ॥ तथा च श्रुतिः "मथुरायां स्थितिर्ब्रह्मन्सर्वदा मेभविष्यती„ति ॥ ४२ ॥

शिवे मङ्गले अनुसवनं त्रिकालं स्नात्वा उचितानि कृत्यानि कृत्वेति यमनियमाः उक्ताः कुशादिभिः स्वस्तिकादिभिश्च कल्पितं संपादितमासनं येन सः ॥ ४३ ॥

त्रिवृता पूरककुम्भकरेचकरूपेण प्राणादीनां मलं चापल्यं व्युदस्य अपोह्य गुरुणा सह गुरुं हरिमभिध्यायेत् श्रीगुरुध्यान पूर्वकं श्रीहरिध्यानं कुर्यादित्यर्थः ॥ ४४ ॥

"यस्य देवे पराभक्तिर्यथा देवे तथा गुरावि„ति श्रुतेरुभयोर्विशेषणानि प्रसादाभिमुखम् अनुग्रहेऽभिमुखं प्रसन्नं वदनमीक्षणं च यस्य शोभने भ्रुवौ यस्य तम् चारुकपोलं सुन्दरगण्डम् सुरेभ्यः सुन्दरम् ॥ ४५ ॥

---

भाषाटीका ॥

मैत्रेयजी बोले तबतो भगवान् नारदजी इस कथन को श्रवण कर के प्रसन्न होकर कृपा कर के उस बालक के प्रति सुन्दर वचन बोले ॥ ३९ ॥

नारदजी बोले तुमारी माताका कहाहुआ मार्ग तुमारे कल्याण करने वाला है भगवान् वासुदेवजो हैं उन मे चित्तलगा कर भजो ॥ ४० ॥

जो पुरुष धर्म अर्थ काम मोक्ष इन के मध्य मे अपने किसी कल्याण को चाहे तो उस मे केवल श्री हरिचरण का सेवनहीं कारण है ॥ ४१ ॥

तिससे हे तात ध्रुव ! पवित्र मधुवन मथुरा मंडल मे जहां श्री हरिका नित्यनिवास है ऐसे पवित्र यमुना किनारे पर चले जाओ ॥ ४२ ॥

तहां पर तीनो काल मे पवित्र यमुना जल मे स्नान कर के उचित ईश्वर नमस्कारादिक कर के निवास करने के स्थान पर आसन बिछावो ॥ ४३ ॥

फिर ओंकार से प्राणायाम कर के प्राण इंन्द्रिय के मल को धीरे से दूर कर के गुरु सहित श्री हरिका ध्यान करो ॥ ४४ ॥

कृपा से सदा सन्मुख निरंतर प्रसन्न नेत्र मुख वाले सुंदर नासिका वाले सुंदर भौं वाले सुन्दर कपोल वाले देवतन से भी सुंदर तरुण अवस्था वाले मनोहर शरीर वाले लाल ओष्ठ अधरवाले परमेश्वर को ध्यान करो ॥ ४५ ॥

---

तरुणं रमणीयाङ्गमरुणोष्ठेक्षणाधरम् ।
प्रणताश्रयणं नृम्णं शरण्यं करुणार्णवम् ॥ ४६ ॥
श्रीवत्साङ्कं घनश्यामं पुरुषं वनमालिनम् ।
शङ्खचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ॥ ४७ ॥
किरीटिनं कुण्डलिनं केयूरवलयान्वितम् ।
कौस्तुभाभरणग्रीवं पीतकौशेयवाससम् ॥ ४८ ॥
काञ्चीकलापपर्यस्तं लसत्काञ्चननूपुरम् ।
दर्शनीयतमं शान्तं मनोनयनवर्द्धनम् ॥ ४९ ॥
पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम् ।
हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ॥ ५० ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

रमणीयान्यंगानि यस्य ओष्ठश्च ईक्षणे ईक्षणं च ओष्ठेक्षणं अरुणे ओष्ठेक्षणे धारयतीति तथा तम् अरुणमोष्ठमीक्षणं चाधारयतीति वा । नृम्णं सुखकरं यद्वा नृम्णं धनं सर्वपुरुषार्थनिधिमित्यर्थः ॥ ४६ ॥

पुरुषं पुरुषलक्षणयुक्तम् ॥ ४७ ॥

कौस्तुभस्याभरणं ग्रीवा यस्य ॥ ४८ ॥

काञ्चीकलापेन पर्यस्तं परिवेष्टितं मनोनयनयोर्वर्द्धनं हर्षकरम् ॥ ४९ ॥

हृत्पद्मकर्णिकाया धिष्ण्यं मध्यस्थानं तदाक्रम्य समर्चतामात्मनि मनसि स्थितम् ॥ ५० ॥

———

श्रीगङ्गाधरभट्टाचार्यभागवतस्वामिविरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

रमणीयाङ्गमिति सुन्दरत्वस्यैवोद्देशः ईक्ष्यतेऽनेनेतीक्षणं नेत्रं जातावेकवचनम् पूर्वार्थे नेत्रार्थलक्षणैव प्रतीयत इत्यरुचौ अर्थान्तरं नृम्णमिति छान्दसं पूर्वार्थे नृम्णशब्दस्य सुखकरत्वरूपोऽर्थोऽप्रसिद्ध इत्यरुचौ यद्वेति धनशब्दस्य पुरुषार्थवाचकत्वं लक्षणया अत एवेत्यर्थ इत्युक्तम् (४)॥ ४६ ॥

पुरुषलक्षणयुक्तं द्वात्रिंशन्महापुरुषलक्षणविशिष्टम् (५) ॥ ४७ ॥

भूषणभूषणाङ्गमित्युक्तेः कौस्तुभस्याभरणमिति व्याख्यातम् ( ६ ) ॥ ४८ ॥

शान्तं निर्विकारं मनस इन्द्रियाणाञ्चाणुत्वाद्वृद्धिर्न संगच्छते इति मुख्यार्थबाधः वृद्धिहर्षयोः कार्यकारणभावः संबन्धः हर्षातिशयः प्रयोजनमित्यभिप्रेत्य हर्षकरमिति व्याख्यानम् (७)॥ ४९ ॥

मनसि स्थितं स्फुरन्तम् एतत्पर्य्यन्तं सविशेषणधारणा वर्णनम् ॥ ५० ॥

———

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

तरुणं बालं रमणीयान्यंगानि यस्य तमधरोष्ठेक्षणारुणम् अधरोष्ठौ ईक्षणे चारुणे यस्य तमरुणोष्ठेक्षणाधरमिति पाठान्तरं तदा अरुणमोष्ठमीक्षणे चाधारयतीति तं प्रणतैर्भक्तैराश्रयणं माश्रयणीयं नृम्णं सुखरूपं यद्वा नृम्णं धनं सर्वपुरुषार्थनिधिमित्यर्थः शरण्यं समीहितोपायत्वेनाध्यवसनीयं करुणानिधिम् ॥ ४६ ॥

श्रीवत्समङ्कं चिन्हं यस्य घनश्यामं नीलाम्बुदश्यामं पुरुषं पुरुषलक्षणयुक्तं वनमाला अस्यास्तीति वनमाली तं शंखादिभिरभिव्यक्ताः शोभमानाश्चत्वारो भुजा यस्य तम् ॥ ४७ ॥

किरीटमस्यास्तीति तं कुण्डलेऽस्यस्त इति तं केयूराभ्यां वलयाभ्यां च युक्तं कौस्तुभाख्यमाभरणं ग्रीवायां यस्य तं पीतंकौशेयं वासो वस्त्रं यस्य तम् ॥ ४८ ॥

कांचीकलापेन पर्यस्तं परिवेष्टितं लसत्काञ्चने नूपुरे यस्य तमतिशयेन द्रष्टुं योग्यं शान्तम् अनुध्यातॄणां मनसो नयनयोश्च वर्द्धनं हर्षकरम् ॥४९ ॥

नखा एव मणयस्तेषां श्रेण्या पद्भ्यां विलसद्भ्यां युक्तं समर्चतां हृत्पद्मकर्णिकाधिष्ण्यं मध्यस्थानं तदाक्रम्य अर्चतां आत्मनि स्थितम् ॥ ५० ॥

———

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

अरुणत्वलक्षणज्ञापनाय पुनरीक्षणं क्वचिद्धरिं पीतवर्णं क्वचित्कृष्णम् ॥ ४६ ॥

क्वचिद्घनवत् श्यामं नीलं पुरुषलक्षणसामग्रीसूचनाय पुरुषग्रहणम् ॥ ४७ ॥ ४८ ॥

कलापोभूषणं बर्हइति वचनात् काञ्चीकलापेन पर्यस्तं संवेष्टितम् ॥ ४९ ॥

नखमणिश्रेण्या विलसद्भ्यां पादाभ्यां समर्चतां भक्तानामात्मनि मध्यदेहे हृदयपद्मकर्णिकाधिष्ण्यमाक्रम्यावस्थितम् ॥ ५० ॥

———

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

ओष्ठमुपरि अधरस्त्वधस्तात् नृम्णमिति छान्दसम् ॥ ४६ ॥

पुरुषं पुरुषस्य भगवतो लक्षणेनान्वितमित्यर्थः । शङ्खादिभिः सर्वत्र विख्याताश्चत्वारो भुजा यस्य तम् ॥ ४७—४८ ॥

स्मयमानमभिध्यायेत् सानुरागावलोकनम् ।
नियतेनैकभूतेन मनसा वरदर्षभम् ॥ ५१ ॥
एवं भगवतो रूपं सुभद्रं ध्यायतो मनः ।
निवृत्त्या परया तूर्णं सम्पन्नं न निवर्त्तते ॥ ५२ ॥
जप्यश्च परमो गुह्यः श्रूयतां मे नृपात्मज !
यं सप्तरात्रं प्रपठन् पुमान् पश्यति खेचरान् ॥ ५३ ॥
ॐनमोभगवते वासुदेवाय ।
मन्त्रेणानेन देवस्य कुर्याद्द्रव्यमयीं बुधः ।
सपर्यां विविधैर्द्रव्यैर्देशकालविभागवित् ॥ ५४ ॥
सलिलैः शुचिभिर्माल्यैर्वन्यैर्मूलफलादिभिः ।
शस्ताङ्कुरांशुकैश्चार्चेत्तुलस्या प्रियया प्रभुम् ॥ ५५ ॥
लब्ध्वा द्रव्यमयीमर्चां क्षित्यम्ब्वादिषु वार्चयेत् ।
आभृतात्मा मुनिः शान्तो यतवाङ् मितवन्यभुक् ॥ ५६ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

कलापविन्यस्तभिति चित्सुखः ॥ ४९ ॥
आत्मन्यवस्थितं मनसि स्फुरन्तम् ॥ ५० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

उपर्यधः स्थितौ दन्तच्छदावोष्ठाधरावुच्येते प्रणताना माश्रयणं नृणां तेषां धनरूपम् ॥ ४६—४७ ॥
कौस्तुभस्याभरणं ग्रीवा यस्य ॥ ४८ ॥
काञ्चीकलापेन क्षुद्रघण्टिका समूहेन । पर्यस्तं परिवेष्टितम् ॥४९॥
समर्चतां भक्तानां धिष्ण्यं स्थानम् । आत्मनि बुद्धौ जीवेच ॥५०॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

तरुणं षोडशवार्षिकम् रमणीयान्यङ्गानि यस्य अरुणे ओष्ठे अंशं आधारयतीति तम् नृणां धनं चिन्तामणिवद्धकाभीष्टप्रदमित्यर्थः ॥ ४६ ॥
श्रीवत्समङ्कं चिन्हं यस्य तम् शङ्खादिभिः अभिव्यक्ता उपलक्षिताश्चत्वारो भुजा यस्य तम् ॥ ४७ ॥
केयूरैः कटकैश्चान्वितम् कौस्तुभरूपमाभरणं ग्रीवायां यस्य तम् ॥ ४८ ॥
काञ्चीकलापेन पर्य्यस्तं परिवेष्टितम् । मनोनयनयोर्वर्द्धनमुत्साहकरम् ॥ ४९ ॥
पद्भ्यां समर्चतां हृत्पद्मकर्णिकैव धिष्ण्यमासनमाक्रम्यावस्थितम् । आत्मनि जीवे चावस्थितमित्यन्वयः आविर्भवति जीवस्वरूपे आराग्रपरिमाणो जीवनियमनार्थं चतिष्ठति तमिति अन्तः प्रविष्टः शास्ता जनानामिति श्रुतेः ॥ ५० ॥

---

भाषाटीका

प्रणाम करने वालों को आश्रय करने के योग्य सबके सुखदायक शरणागत के रक्षक करुणानिधि श्रीवत्सका जिनके वक्षस्थलमें चिह्नहै मेघके तुल्य श्याम वर्णहै वनमाला धारण किये दिव्यपुरुषरूप हैं शङ्ख चक्र गदा पद्म से चारों भुजा जिनके प्रकाशमान हैं किरीट कुण्डल बाजूबन्द कङ्कण तथा कण्ठ में कौस्तुभमणि इनकुं धारण किये हैं पीताम्बर को पहरे हैं कमर में क्षुद्र घण्टिकों को धारण किये हैं सुवर्णकी नूपुरों से शोभित हैं दर्शन करने के अत्यन्त योग्य शान्त विग्रह मन तथा नेत्रके तृप्त करने वाले नखरूपी मणियों की पंक्तिसे शोभायमान, चरणों से पूजन करने वाले भक्तों के हृदयकमलको आक्रमण करके विराजमान हैं ॥ ४६—५० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

ध्यानमाह । स्मयमानमिति । नियतेन प्रागुक्तया धारणया सुस्थिरेण अतएव एकभूतेन एकाग्रेण धारणोक्तानि विशेषणानि ध्यानेऽपि द्रष्टव्यानि । यद्वा यथोक्तमात्रमेव । तदुक्तमेकादशस्कन्धे । नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखमिति ॥ ५१ ॥
समाधिमाह । एवमिति । तूर्णं शीघ्रं सम्पन्नं सत् ॥ ५२ ॥
जप्योमन्त्रः ॥ ५३ ॥ ५४ ॥
द्रव्याण्येवाह । सलिलैरिति । शस्तैर्दुर्वाङ्कुरैः । वन्यैरेवांशुकैः भूर्जत्वगादिभिः ॥ ५५ ॥
पूजाया अधिष्ठानमाह । लब्ध्वा सम्पाद्य द्रव्यमयीं शिलादिभिर्निर्मिताम् अर्चां प्रतिमां पूजासादृगुण्यहेतूनाह माङ्काभ्याम आभृतात्मा धृतचित्तः मितं वन्यं भुङ्क्ते इति तथा ॥ ५६ ॥

स्वेच्छावतारचरितैरचिन्त्यनिजमायया।
करिष्यत्युत्तमश्लोकस्तद्ध्यायेद्धृदयंगमम् ॥ ५७ ॥
परिचर्या भगवतो यावत्यः पूर्वसेविताः।
ता मन्त्रहृदयेनैव प्रयुञ्ज्यान्मन्त्रमूर्त्तये ॥ ५८ ॥
एवं कायेन मनसा वचसा च मनोगतम्।
परिचर्यमाणोभगवान् भक्तिमत्परिचर्यया ॥ ५९ ॥
पुंसाममायिनां सम्यग्भजतां भाववर्द्धनः।
श्रेयो दिशत्यभिमतं यद्धर्मादिषु देहिनाम् ॥ ६० ॥
विरक्तश्चेन्द्रियरतौ भक्तियोगेन भूयसा।
तं निरन्तरभावेन भजेताद्धा विमुक्तये ॥ ६१ ॥
इत्युक्तस्तं परिक्रम्य प्रणम्य च नृपार्भकः।
ययौ मधुवनं पुण्यं हरेश्चरणचर्चितम् ॥ ६२ ॥
तपोवनं गते तस्मिन् प्रविष्टोऽन्तःपुरं मुनिः।
अर्हितार्हणको राज्ञा सुखासीन उवाच तम् ॥ ६३ ॥

नारद उवाच।

राजन्! किंध्यायसे दीर्घं मुखेन परिशुष्यता।
किं वा न रिष्यते कामो धर्मोवाऽर्थेन संयुतः ॥ ६४ ॥

राजोवाच।

सुतो मे वालको ब्रह्मन्! स्त्रैणेनाकरुणात्मना।
निर्वासितः पञ्चवर्षः सह मात्रा महान् कविः ॥ ६५ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका।

यत् करिष्यतीति तदानीमवतारप्राचुर्याभावात् ॥ ५७ ॥

पूर्वसेविताः सेवनं कारिताः कार्यत्वेन विहिता इत्यर्थः मन्त्रहृदयेन द्वादशाक्षरेण ॥ ५८ ॥

एवमुक्तरीत्या मनोगतं यथा भवति तथा कायादिभिर्भक्तिमत्या परिचर्यया परिचर्यमाणोधर्मार्थकामेषु यदभिमतं तच्छ्रेयो दिशतीति द्वयोरन्वयः ॥ ५९—६० ॥

विरक्तः सन्भजेत् किमर्थम् मुक्तये ॥ ६१ ॥

हरेश्चरणाभ्यां चर्चितं मण्डितम् ॥ ६२ ॥

अर्हितं सत्कृत्य समर्पितमर्हणमर्घ्यादिकं यस्मै ॥ ६३ ॥

किं वा न रिष्यते न नश्यतीति सवितर्कः प्रश्नः ॥ ६४ ॥

मात्रा सह निर्वासित इति तस्याभ्यनादृतत्वात् ॥ ६५ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी।

अत एव। स्थिरत्वादेव पूर्वार्थे विशेषणसाम्येधारणाध्यानयोर्भेदोऽस्फुट इत्यरुची यद्वेति ॥ ५१ ॥

न निवर्त्तते ध्येयाकारेण परिणमतीत्यर्थः तदुक्तं योगशास्त्रे

मनसो वृत्तिशून्यस्य ब्रह्माकारतयास्थितिः।
याऽसंप्रज्ञातनामासौ समाधिरभिधीयते

इति ॥ ५२ ॥

अपठन् वाचिकमपि जपन् किमुतोपांशु मानसं वा पुमानिति सर्वाधिकारता सूचिता खेचरान् पार्षदान् ॥ ५३ ॥

अथ दक्षिणकर्णो मन्त्रमुपादिशति अभिमंत। ओंकारवाच्यायषडैश्वर्यपूर्णाय श्रीवसुदेवनन्दनाय विशुद्धसत्त्वे प्रकाशमानाय च नम इति सप्रणवानामपि वैष्णवमन्त्राणां द्विजत्वाद्यनपेक्षत्वं सिद्धान्तम् ध्रुवस्यानुपनीतत्वात् द्रव्यमयीं द्रव्यैकसाध्यां सपर्यां पूजां देशकालविभागविदिति श्रीवृन्दावनादिदेशे वसन्तादिकाले तदुचितसेवां कुर्य्यादित्यर्थः ॥ ५४ ॥

वन्यैर्गन्धधूपादिभिः अर्च्चेदिति पाठान्तरम् ॥ ५५ ॥

लब्ध्वेत्यर्द्धकम् अर्चा श्रीमत्प्रतिमां क्षित्यम्बादिषु चान्यधिष्ठानवरवर्णनम् ॥ ५६ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ॥

आश्रुभेति सार्द्धकम् हृद्यं गतं मनोहरं चरितम् ॥ ५७ ॥

पूर्वैः कार्य्यत्वेन विहिताः सदाचारलब्धा इत्यर्थः परिचर्य्याः पूजासामग्र्यः गन्धचन्दनाद्याः छत्रचामराद्याश्च यावत्यः सन्ति ॥ ५८ ॥

एवमिति युग्मकम् मनोगतं मनसि प्रविष्टं यथास्यात्तथा मनो द्रवेत्यर्थः भक्तिमत्या श्रवणकीर्त्तनादियुक्तया परिचर्य्यया परिचर्य्या तु सेवोपकरणादिपरिष्क्रियेति लक्षणाक्रान्तया परिचर्य्यमाणः सेव्यमानः अमायिनां निष्कामानाम् अत एव सम्यग्भजतान्तु स्वस्मिन्भावं रतिमेव वर्द्धयति ॥ ५९ ॥ ६० ॥

भूयसा निष्कामेन भक्तियोगेन श्रवणकीर्त्तनादिचेष्टारूपया भक्त्या इन्द्रियरतौ विरक्तस्सन् तं भगवन्तं निरन्तरो ज्ञानाद्यनावृतो यो भावः दास्याद्येकतमस्तेन साक्षादेव भजेत सेवेत न तु शिष्यप्रशिष्यादिद्वारा तत्र फलमाह । विमुक्तय इति । विशिष्टा मुक्तिर्हि स प्रेमपार्षदत्वलक्षणा तस्यै तदुक्तं श्रीरसामृतसिंधौ ॥ धनशिष्यादिभिर्द्वारैर्या भक्तिरुपपाद्यते । विदूरत्वादुत्तमता हान्या तस्याश्च नाङ्गतेति ॥ ६१ ॥

हरेश्चरणचर्चितमिति · प्रतिकल्पं श्रीकृष्णस्य तत्राविर्भावात् अप्रकटत्वेनापि नित्यं तत्र वर्त्तमानत्वाच्च ॥ ६२ ॥ ६३ ॥ ६४ ॥

तस्या मातुरत्यनादृतत्वादिति अनादृतत्वमेव निर्वासितत्वेनोत्प्रेक्षितम् ॥ ६५ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

स्मयमानमीषद्धसन्तम् अनुरागयुक्तोऽवलो को यस्य पुरुषोत्तमं नियतेन विजातीयप्रत्ययरहितेन एकभूतेन एकाग्रेण मनसा अभितः पादादिशिरः प्रभृतिध्यायेत् ॥ ५१ ॥

एवं ध्येयमाकारमभिधायेदृशशुभाश्रयध्यानसुखितं मनस्ततस्तूर्णं न निवर्तयेदित्याह । एवमिति । सुभद्रं निरतिशयमङ्गलगुणाकरं ध्यानविषयं भगवतो रूपमभिध्यायेदिति शेषः परया निर्वृत्या निरतिशयेन सुखेन संपन्नं युक्तं मन इति शेषः तूर्णं न निवर्त्तते श्रद्धा परया निर्वृत्या संपन्नं मनस्तूर्णं यथा न निवर्त्तते तथा भगवतो रूपं ध्यायेदिति क्रियाविशेषणत्वानुषङ्गाभ्यां योजनीयम् ॥ ५२ ॥

एवमष्टाङ्गयुक्तं भक्तियोगमभिधाय तदनुग्राहिकां द्रव्यमयीं सपर्यामभिधास्यन् तदुपयुक्तं जप्यं मन्त्रं सप्रभावमाह । जप्यश्चेति हेनृपात्मज ! परमो निरतिशयः अत एव गुह्यो गोपनीयः मन्त्रः मे मत्तः श्रूयतां यं मन्त्रं पुमान्सप्तरात्रं प्रपठन् प्रजपन् खेचरान् पश्यति ॥ ५३ ॥

कोऽसौ मनुरित्यत आह । ओमिति । अयं वासुदेवद्वादशाक्षरो मन्त्रः अस्यार्थस्तु संप्रदायतोऽवगन्तव्यः एतन्मंत्रपूर्वकद्रव्यमयीमर्चामाह । मन्त्रेणेति । देवस्य अनेन मन्त्रेण नाना विधैर्द्रव्यैः द्रव्यमयीं द्रव्यप्रचुरां सपर्यां देशकालयोः सपर्योपयुक्तानुपयुक्तदेशकालयोर्विभागं वेत्तीति देशकालविभागवित्कुर्यात्सपर्योपयुक्तो देशः चण्डालपतितयवनाद्यसेवितः कालस्तु प्रातर्मध्यंदिनसायान्हादिरूपः तदितराव नुपयुक्तौ देशकालौ ॥ ५४ ॥

द्रव्याण्याह । सलिलैरिति । शुचिभिरिति सलिलादिभिः सर्वैरन्यैरपि वन्यैः वनेषु भवैः शस्तांकुरांशुकैः प्रशस्तैर्दूर्वाद्यंकुरैर्वन्यैरंशुकैः भूर्जत्वगादिभिः प्रियया भगवतः प्रीतिविषयया तुलस्या हरिमर्चयेत् आराधयेत् ॥ ५५ ॥

एवं द्रव्यमयीमर्चां लब्ध्वा संपाद्य क्षित्यम्बादिषु चक्राब्जमण्डलादिभिरलंकृतायां क्षितौ गङ्गाजलादिषु आदिशब्दाद्विप्रादित्यमंडलादिषु च अर्चयेत् पूजासाद्गुण्यहेतूनाह । सार्द्धाभ्यां आहृतात्मा आहृतचित्तःमुनिःध्यानानुपयुक्तदशासुशुभाश्रयसंशीलनपरःशान्तः जितेंद्रियः यतवाक् मितभाषणः मितं यथाभवति तथा वन्यंभुङ्क्त इति तथा ॥ ५६ ॥

स्वेच्छावतारचरितैः स्वेच्छयैवोपात्तानतुकर्माणा ये अवतारा वराहादयस्तेषां चरितैः व्यापारैः निजमायया आत्मीयसंकल्पेन उत्तमश्लोकोभगवान् यत् अचिन्त्यं कर्मवदयद्देवमनुष्यादिसजातीयत्वेन चितयितुमशक्यं साधुपरित्राणदुष्कृतविनाशनादिकं करोति तं हृदयंगमं मनोहरं ध्यायेत् तदानीमवतारप्राचुर्याभावात्करिष्यतीति भविष्यन्निर्देशः ॥ ५७ ॥

यावत्योभगवतःपरिचर्याःपूर्वसेविताः सेवनं कारिताःकार्यत्वेन विवक्षितास्ताः सर्वा मन्त्रहृदयेनैव द्वादशाक्षरमन्त्रानुसन्धानयुक्तमनसैव मन्त्रः मूर्त्तिर्विग्रहोयस्य तस्मै भगवते प्रयुञ्ज्यात् युक्ताः कुर्यात् ॥ ५८ ॥

एवमाराधितोभगवान् आराधकानां समीहितधर्मादिश्रेयोदिशतीत्याह । एवमिति द्वाभ्याम् । अमायिनामवञ्चकानामतएव सम्यक् भजतां कर्मायत्तदेहभृतां पुंसां मानवर्द्धनः सम्मानकारी भगवान् भक्तिमती यापरिचर्या तया परिचर्यमाणः धर्मादिषु यदाराधकाभिमतन्तच्छ्रेयोदिशतीत्युभयोरन्वयः ॥ ५९—६० ॥

एवं धर्मादिसाधारण्येन तत्साधनभूता भक्तिरभिहिता तत्र मुक्तिसाधनभूतायां भक्त्यां विशेषं वदन्नुपसंहरति । विरक्तइति । इन्द्रियरतौ इन्द्रियसाध्यक्रीडायां विरक्तः निरन्ततरभावेन विजातीयप्रत्ययान्तराव्यवहितप्रत्ययेन भूयसा बहङ्गोपकृतेनाप्रयाणादनुवर्तमानेन भक्तियोगेन प्रेमात्मकानुध्यानरूपेण "प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इति हिस्मृतिः अत्र हिविरक्त इति विमोकोक्त्या साधनसप्तकं विवक्षितं भूयसेत्यनेन ज्ञानयोगशमदमवाल्यपाण्डित्यमौनादयो विवक्षिताः एवंभूतेन भक्तियोगेन विमुक्तये तं भगवन्तमद्धा साक्षाद्भजेत् अद्धेत्यनेन सद्वारकोपासनं व्यावर्त्तितम् ॥ ६१ ॥

एवमुपदिष्टभगवदाराधनप्रकारोध्रुवो मधुवनं गतवानितिवदन्नन्तरा नारदोत्तानपादयोः सम्वादमाह । इतीत्यादिना । इत्युक्तः रीत्याउक्तः नृपार्भको ध्रुवः तं नारदं परिक्रम्य प्रदक्षिणीकृत्य प्रणम्यच हरेर्भगवतश्चरणाभ्यां चर्चितं सञ्चारितमतएवपुण्यं मधुवनं ययौ ॥ ६२ ॥

तस्मिन् ध्रुवे तपोवनं गते सति मुनिर्नारदः अन्तःपुरं प्रविष्टः राज्ञा उत्तानपादेन अध्यर्हितंसत्कृत्य समर्पितसार्हणामर्घ्यादिकं यस्य सः सुखासीनः सुखावहे आसने यथासुखमासीनो नारद उवाच ॥ ६३ ॥

हेराजन् । परितः शुष्यता मुखेन दीर्घं किं ध्यायसे अर्थेन संयुतः सहितः कामोधर्मश्च च शब्दोवाशब्दार्थः धर्मोवा किं न रिष्यति न नश्यतीति सवितर्कः प्रश्नः ॥ ६४ ॥

एवमुक्तोराजाह । सुत इति । हेब्रह्मन् ! स्त्रैणेन स्त्रीषु भवः स्त्रैणः स्त्रीणामयमिति वास्त्र्यधीनेनस्त्रीनिर्जितेनेति यावत् अतएवाकरुणात्मना करुणारहितचित्तेन मया मे मम सुतः सुत इत्यनेन अपरित्याज्यता गम्यते पंचवर्षइत्यनेन नितरां मात्रा सहनिर्वासितः

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

तस्या अप्यनादृतत्वेन निर्वासितप्रायत्वान्मात्रा सहेत्युक्तिः तथा च भार्यापुत्रयोरपरित्याज्यता स्मृता "वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवी„दिति ननु त्यजेदेकं कुलस्यार्थे इत्युक्तरीत्योत्पथश्चेत्सुतोऽपि त्याज्य एव तत्राह महान् कविः महान् विनयादिगुणसम्पन्नः कविर्बुद्धिमान् ॥ ६५ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

मनसैवं विधं भगवतोरूपं ध्यायेदित्यन्वयः किं विशिष्टेन मनसा नियतेन परिगततयाऽन्यस्ततया प्राप्तपरिपाकत्वेनैकस्मिन्ध्येये वस्तुनि भूतेन बाह्यविषयाभिनिवेशरहितेन ॥ ५१ ॥

निवृत्योद्रिक्तानन्देन संपन्नं पूर्णं ध्येयादितरत्र न निवर्तते न गच्छति ॥ ५२ ॥

जप्योमन्त्रः ॥ ५३ ॥

द्रव्यमयीं द्रव्यप्रधानाम् अर्चा पूजा सपर्यास्यादित्यभिधानम् ॥ ५४

द्रव्याण्याह । सलिलैरिति वन्यैर्वनभवैः ॥ ५५ ॥

द्रव्यमयीमर्चां शिलादिप्रतिमाम् अर्चा तु प्रतिमा प्रोक्ते त्यभिधानं क्षितौ स्थण्डिलेऽग्न्यादिशब्दादादित्यमण्डलेऽग्नौ वा आहृतात्माविषयेऽप्याकृष्य वशीकृतमनाः मितं नियतादर्थं फलमूलादिवन्यं भुञ्जे इति मितवन्यभुक् ॥ ५६ ॥

निजमायया स्वरूपभूतमहिम्ना स्वेच्छया कृतावतारस्तस्य चरितैः कंसवधादिलक्षणैश्चरितं गुणसमूहं हृदयङ्गमान् यान् विभु विक्रमान् करिष्यति तान् ध्यायेदित्यन्वयः ॥ ५७ ॥

परिचर्यादि संक्षिप्य तत्करणप्रकारं वक्ति । परिचर्या इति । यावतीर्यावत्यः पूर्वाचार्यैः कल्पितास्ता मन्त्रहृदयेन मन्त्रेण ( * ) नमःशब्देन च ओं नमोभगवते वासुदेवायेत्यनेन मन्त्रमूर्त्तये मन्त्राक्षरप्रतिपाद्यवासुदेवाय प्रयुञ्ज्यात्कल्पयेदित्यन्वयः ॥ ५८ ॥

एवं विधोपासनाफलमाह । एवमिति । भक्तिमन्तः सन्तस्तेषां परिचर्यया शुश्रूषया देहिनां धर्मादिषु यदभिमतं श्रेयस्तद्दिशतीत्यन्वयः ॥ ५९—६० ॥

सर्वस्मात्साधनाद्विरिक्तभक्ती मुक्तिसाधने इत्याशयेनाह । विरक्तश्चेति । तयोरवश्यकर्तव्यत्वे चशब्दः इन्द्रियरतौ विषयभोगे विरक्तः ॥ ६१ ॥

उत्तरकथा प्रसंगमाह । इत्युक्त इति ॥ ६२ ॥

तन्वस्त्वियं कथा पुनर्नारदः क्वाऽऽयासीदत्राह । तपोवनमिति । अर्हणया पूजासाधनेनार्हितः पूजितः ॥ ६३ ॥

न रिष्यते न हिंस्यते ॥ ६४ ॥

नारदेन पृष्टो राजोत्तरमाह । सुतोमईति । निर्वासितः निष्कासितः कविरित्यनेन ज्ञानित्वं द्योतयति ॥ ६५ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अभिध्यायेत्तद्वैशिष्ट्येन चिन्तयेदित्यर्थः ॥ ५१ ॥

न निवर्तते ध्येयं न त्यजति ॥ ५२ ॥

प्रपठन् वाचिकमपि जपन् किमुतोपांशु मानसं वा खेचरान् पार्षदान्

अथ दक्षिणाकर्णे रह उपदिशति । ओमिति । अनेनानुपूर्ताय ध्रुवाय मन्त्राय महामन्त्रोपदेशेन वैष्णवमन्त्राणां द्विजस्यवस्यापेक्षा परिहृता ॥ ५३—५४——५५ ॥

लब्ध्वेत्यर्द्धकम् अर्चा श्रीमत्प्रतिमाम् ॥ ५६ ॥

आभृतेति सार्द्धकम् । आहृतेति चित्सुखः शान्तो मितवन्य-भुगादिसुगिति चित्सुखः ॥ ५६—५७ ॥

पूर्वसेविता इति सेवनमात्रानुशीलनं तच्चात्र श्रवणे ततो विप्रयोगात् पूर्वं सलिलैरित्यादिना भाविता इत्यर्थः । पूर्वैः सेवितं सदाचारलब्धा इति वा ॥ ५८ ॥

एवमिति युग्मकम् । त्रिवर्गमात्रस्यापि दाने कारणमाह भावचर्द्धन इति । तत्तदुपकारेण स्वस्मिन् भक्तिं वर्द्धयतीति ॥ ५९—६० ॥

अनस्तेभ्यो विरक्तो भजेत् । किमर्थं विशिष्टा मुक्तिर्भक्तिस्तदर्थम् ॥ ६१—६२ ॥

अर्हतः अर्हणायेति चित्सुखः ॥ ६३—६४—६५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

नियतेनात्मक्तेन एक भूतेन एकाग्रेण ॥ ५१ ॥

न निवर्त्तते योगिनो मन इव ध्येयं न त्यजति ॥ ५२ ॥

जप्योमन्त्रः श्रूयतां दक्षिणः कर्णः आश्रीयतामुपदिशामीत्यर्थः । प्रपठन् वाचिकमपि जपन् किमुतोपांशुमानसं वा । खेचरान् पार्षदान् ओमिति अनेनानुपनीताय मंत्रप्रणवमहामन्त्रोपदेशेन वैष्णवमन्त्राणां द्विजत्वाद्यपेक्षापरिहृता ॥ ५३—५४ ॥

वन्यैर्वांकुरैर्संजनस्त्रगादिभिः ॥ ५५ ॥

द्रव्यमयीं शिलादिविनिर्मितामर्चां प्रतिमा प्राप्य तामर्चयेत् पुरश्चित्यम्बादिष्वपि ॥ ५६ ॥

आभृतात्मा सम्यग्धृतचित्तः । यत् करिष्यतीति तदानीमवतारप्राचुर्याभावात् ॥ ५७ ॥

पूर्वसेविताः पूर्वपूर्वभक्तैरनुष्ठितास्ताः परिचर्याः गन्धचन्दन ताम्बूलछत्रचामरादिविविधद्रव्यवतीर्मन्त्रहृदयेनैव मूलमन्त्रोच्चारणेनैव मनसा प्रकल्प्यानीतैरेवोपचारैरित्यर्थः । चिन्तात्र प्रस्तुततत्तद्वस्त्वभावादिति भावः । मन्त्रमूर्त्तये मन्त्रएव ध्यातामूर्त्तिर्यस्य तस्मै तं प्रसादयितुं प्रयुञ्ज्यात् विदधीत ॥ ५८ ॥

एवमुक्तरीत्या मनोगतं यथा स्यात्तथा कायादिभिर्भक्तिमद्भिः श्रवणकीर्त्तनादिभक्तियुक्तया परिचर्यया धर्मादिषु मध्ये यदभिमतं तत्तद्दिशति ददाति ॥ ५९—६० ॥

यस्तु इन्द्रियरमणे त्रिवर्गे विरक्तः चकारान्मोक्षेऽपि स च निरन्तरो ज्ञानकर्मादिव्यवधानशून्यो भावो दास्यादिर्यत्र तेन । विशिष्ट मुक्तये प्रेमवत् पार्षदत्वाय ॥ ६१ ॥

हरेः प्रतिकल्पमाविर्भावात् श्रीकृष्णस्य चरणाभ्यां चर्चितम् ॥ ६२ ॥

आर्हितं सत्कृत्य समर्पितमर्हणमर्घ्यादि यस्मै ॥ ६३ ॥

न रिष्यत न नश्यति किं वेति स वितर्कः प्रश्नः ॥ ६४ ॥

सह मात्रेति तस्या अप्यनादृतत्वात् ॥ ६५ ॥ ६६ ॥

(*) मन्त्र हृदयेनेत्यत्र मन्त्रस्य हृदयेनेत्यन्यथा प्रतीतिवारणायतात्पर्यानुसारेण व्याख्याति । मन्त्रेण नमःशब्देनेति हृदयंनमः शब्द इति मन्त्रोद्धारग्रन्थे प्रसिद्धेर्नमोऽतमन्त्रेणेत्युक्तं भवति ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

नियतेन विषयेभ्यो निरुद्धेन एकभूतेनैकाग्रेण मनसा स्मयमानं मन्दहसितयुक्तम् अभिध्यायेत् ॥ ५१ ॥

ध्यानान्तान्यङ्गान्युक्त्वासमाधिमाह। एवं सुमङ्गं भगवतो रूपमभिध्यायतो मनः परमया ध्यानजन्यया निर्वृत्या सुखसंपत्त्या तूर्णं शीघ्रं संपन्नं सत् ततो न निवर्तते ॥ ५२ ॥

एवमष्टाङ्गं भगवद्भजनयोगमुक्त्वा जप्यं मन्त्रं द्रव्यमयीं सपर्यां चाह। जप्यइत्यादिना। जप्यः जपनीयो मन्त्रः ॥ ५३ ॥

सपर्य्यां पूजाम् ॥ ५४ ॥

द्रव्याण्याह। सलिलैरिति । शस्ताङ्कुरांशुकैः सुखसाध्यैरङ्कुरैः दूर्वाङ्कुरैः अंशुकैः भूर्जत्वगादिरूपैर्वल्कैः ॥ ५५ ॥

एवं द्रव्यमयीमर्चां लब्ध्वा संपाद्य क्षित्यम्ब्वादिषु आदिशब्देन गुरुमनोव्योमादिषु अर्चयेत् आभृतः इतरविषयेभ्यो निवर्तित आत्मा चित्तं येन सः मुनिर्मन्ता भगवत्तत्त्वावगन्ता शान्तः भगवदाराधनेतरचेष्टाशून्यः शान्त उपासीतेति श्रुतेः मितमल्पं वन्यं फलादिकं भुङ्क्ते इति मित वन्यभुक् ॥ ५६ ॥

स्वानां भक्तानां स्वस्यैवेच्छया येऽवतारा भविष्यं वृहद्दिवादारथिप्रभृतयस्तेषां चरितैरचिन्त्यया अतर्क्यया निजमायया निजज्ञानेन स्वसंकल्पेन"माया च वयुनं ज्ञान,,मिति निघण्टुः अचिन्त्या वानिजेषु स्वानन्यभक्तेषु माया कृपा तया वा "माया दम्भे कृपायां चे,,ति विश्वः यदुत्तमश्लोकः करिष्यति, तच्छ्लाघ्यसिद्धं हृदयंगमं मनोहरं ध्यायेत् ॥ ५७ ॥

भगवतो यावत्यः पूर्वसेविताः प्रथमं वर्णिताः परिचर्य्यास्ताः सर्वा मन्त्रहृदयेन वासुदेवमन्त्रेण मन्त्रमूर्तये मन्त्रो मूर्तिर्यस्य तस्मै प्रयुञ्ज्यात् ॥ ५८ ॥

एवं भक्तिमत्कर्तृका या परिचर्य्या तया कायादिभिः परिचर्य्यमाणो भगवान् अमायिनामदम्भिनां पुंसां धर्मादिषु धर्मार्थकाममोक्षेषु यदभिमतं श्रेयस्तदेव दिशति तत्रापि सम्यग्भजतां मनोगतम कथनीयं सुकरंपि गरिष्ठं पुत्रत्वादिरूपे स्वस्मिन् भावमित्यर्थः यतो भावबद्धेनाऽतो दिशतीति द्वयोरन्वयः अनेनैवाभिप्रायेण मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगं भक्तिः सिद्धेर्गरीयसीत्यादिवाक्यानि सुसंगतानीति ज्ञेयम् ॥ ५९—६० ॥

मुमुक्षुर्मुख्यं कृत्यमाह। इन्द्रियरतौ विरक्तः सन् भूयसा भक्तियोगेन तमचाह। निरन्तरभावेन ध्रुवास्मृतिलक्षणेन विमुक्तये भगवद्भावापत्तये तं भगवन्तमद्धा साक्षादुपासनया भजेदिति ॥ ६१ ॥

चरणचर्चितम् चरणाभ्यां मण्डितम् ॥ ६२ ॥

अर्हणमर्पणमर्घ्यहर्णामर्घ्यादि यस्मै सः ॥ ६३ ॥

न ध्यायते नहीयते किम् ॥ ६४ ॥

मात्रा सह महान् कविः अनेन पुत्रसहितायाः सुनीतिदेव्या नित्यं दासश्रवर्णं गम्यते आदराभावेन मयैव निर्वासितः ॥ ६५ ॥

———

भाषाटीका ॥

भक्तों पर अनुराग सहित कृपा कटाक्ष को प्रगट करते हुये मन्दहासयुक्त धर देने वालों में श्रेष्ठ श्री नारायण को एकाग्र चित्त से ध्यान करे ॥ ५१ ॥

ऐसे परम मङ्गल भगवान के रूप मे ध्यान करने वाले पुरुष का मन परम सुख को शीघ्र ही प्राप्त होकर उहां से निवृत्त नहीं होता है ॥ ५२ ॥

हे राज पुत्र ध्रुव ! अपने योग्य परम गोप्य एक मंत्र है हमारे मुख के आगे अपना दाहिना कान लगाकर सुनो मैं तुम को मंत्र का उपदेश करूंगा जिसको कोइ भी पुरुष सात रात तक पाठ मात्रही करें तो आकाश चारी देवतों का दर्शन पाता है ॥ ५३ ॥

ईश्वर प्रकृति पुरुष वाचकओं कारस्वरूप शुद्ध सत्त्व गुण मय षड्गुण युक्त वासुदेव भगवान् के अर्थ नमस्कार है यह उस मंत्र का अर्थ है विना संस्कार किये हुये ध्रुवजी को ओंकार वाले मंत्र का उपदेश करने से यह बात निश्चत होता है कि प्रणव वाले भी वैष्णव मंत्रों का उपदेश सबही को होता है ॥ ५३ ॥ ( क )

नारद जी बोले देश काल के भेद को अच्छे जानने वाला चतुर साधक वासुदेव भगवान् की मूर्ति का विविध प्रकार के गंधादिक द्रव्यों से पूजा करै ॥ ५४ ॥

प्रभु श्री हरि कुं जलों से पवित्र पुष्पों की मालों से जंगली फल मूलादिकों से सुंदर अंकुरों से हरि की परम प्रिया तुलसी जी से पूजे ॥ ५५ ॥

द्रव्यमयी शिलादिक आठ प्रकार मे किसी प्रकार की प्रतिमा को गुरू से प्राप्त होकर अथवा जलादिक मे पूजन करै चित्त को एकाग्र करके लगाय मौन से शांत होकर रहै भगवान् का मनन करै वन के फलादिकों का थोडा भोजन करै ॥ ५६ ॥

फिर परमात्मा अपनी अचिंत्य निज दिव्य ज्ञान से इच्छा पूर्वक अवतारों से उत्तम श्लोक भगवान् जो कुछ चरित्र करेंगे उस चरित्र उस मनोहर रूप को ध्यान करै ॥ ५७ ॥

पूर्वाचार्यों से पूजित जो भगवान् की मूर्ति हैं तिन के मध्य मे वेद मंत्र मूर्ति वाले भगवान् को द्वादशाचर वासुदेव मंत्र से पूजन करै ॥ ५८ ॥

इस प्रकार दृढ संकल्प सें मन वचन शरीर तीनों प्रकार से परम भक्ति युक्त पूजा से यदि भगवान् पूजित होवें तो कपट छोड कर भजने वालों के प्रेम को बढाने वाले भगवान् धर्मार्थ काम मोच में जो उपासक पुरुष का प्रिय होवे सो फल देते हैं ॥ ५९ ॥ ६० ॥

यदि इन्द्रियों के भोगों मे विरक्त होवे तो अपने संसार मुक्ति के लिये निरंतर प्रेम रख कर दृढ भक्ति योग से स्वयं अपने शरीर से श्री हरि का भजन करै ॥ ६१ ॥

इतना कहने पर राज पुत्र ध्रुवजी नारद जी को प्रणाम करके परिक्रमा करके श्री कृष्णचंद्र के चरण चिन्हों से भूषित होने से अति पवित्र मधुवन को चले गये ॥ ६२ ॥

ध्रुव जी के उस तपोवन मथुराकेजाने पर नारद जी उत्तानपाद राजा के रनवास मे प्रविष्ट हुये राजा के अर्घादिपूजा समर्पण करने पर सुन्दर आसन मे बैठ कर राजा से बोले ॥ ६३ ॥

नारद जी बोले हे राजन् ! क्या बडी देर से चिंता कर रहे हो तुमारा मुख क्यों सूख रहा है क्या तुमरा धर्म अर्थ काम मे कोइ पुरुषार्थ नष्ट हो गया है ॥ ६४ ॥

राजा उत्तान पाद बोले हे ब्रह्मन् ! हमारा बालक पुत्र महात्मा ज्ञानी उस को मैंने उस की माता का भी अनादर करके उस को वन को निकाल दिया है मै बडा स्त्री लंपट हूं बडा निर्दयी हूं ॥ ६५ ॥

———

अप्यनाथं वने ब्रह्मन् ! मास्मादन्त्यर्भकं वृकाः ।
श्रान्तं शयानं क्षुधितं परिम्लानमुखाम्बुजम् ॥ ६६ ॥
अहो मेवत दौरात्म्यं स्त्रीजितस्योपधारय ।
योऽङ्कं प्रेम्णाऽऽरुरुचन्तं नाभ्यनन्दमसत्तमः ॥ ६७ ॥

नारद उवाच

मा माशुचः स्वतनयं देवगुप्तं विशांपते ! ।
तत्प्रभावमविज्ञाय प्रावृङ्क्ते यद्यशो जगत् ॥ ६८ ॥
सुदुष्करं कर्म कृत्वा लोकपालैरपि प्रभुः ।
एष्यत्यंचिरतो राजन् ! यशोविपुलयंस्तव ॥ ६९ ॥

मैत्रेय उवाच

इति देवर्षिणा प्रोक्तं विश्रुत्य जगतीपतिः ।
राजलक्ष्मीमनादृत्य पुत्रमेवान्वचिन्तयत् ॥ ७० ॥
तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम् ।
समाहितः पर्यचरदृष्यादेशेन पूरुषम् ॥ ७१ ॥
त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशनः ।
आत्मवृत्त्यनुसारेण मासं निन्येऽर्चयन्हरिम् ॥ ७२ ॥
द्वितीयं च तथा मासं षष्ठे षष्ठेऽर्भकोदिने ।
तृणपर्णादिभिः शीर्णैः कृतान्नोऽभ्यर्चयद्विभुम् ॥ ७३ ॥
तृतीयं चानयन्मासं नवमे नवमेऽहनि ।
अब्भक्ष उत्तमश्लोकमुपाधावत्समाधिना ॥ ७४ ॥
चतुर्थमपिवै मासं द्वादशे द्वादशेऽहनि ।
वायुभक्षो जितश्वासो ध्यायन्देवमधारयत् ॥७५॥
पञ्चमे मास्यनुप्राप्ते जितश्वासोनृपात्मजः ।
ध्यायन् ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचलः ॥ ७६ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

मास्मादन्ति किस्विन्न खादन्तीत्यर्थः ॥ ६६-६७ ॥

देवेन श्रीहरिणा गुप्तमात्मसात्कृत्वा रक्षितम् यस्य यशोजगदावृङ्क्ते व्याप्नोति ॥ ६८ ॥

विपुलयन्विस्तारयन् ॥ ६९-७० ॥

ध्रुवोमधुवने किमकरोदित्यपेक्षायामाह । तत्रेत्यादिना । अभिषिक्तः स्नातः यस्यां प्राप्तस्ताम् ॥ ७१ ॥

कपित्थानि बदराणि चाशनं यस्य आत्मवृत्तिर्देहवृत्तिस्तदनुसारेण ॥ ७२-७३ ॥

तृतीयं च आनयन् ईषदिव नयन्नुपाधावदित्यन्वयः प्रतिमासमाहारसंकोचं तपोऽतिरेकं च कृतवानित्यर्थं ॥ ७४-७५-७६ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

किं स्विदिति अपि किं स्म स्विन् मा खादन्ति माखादेयुरित्यर्थः ॥ ६६ ॥ ६७ ॥

मामेति । हर्षेण सान्त्वने वीप्सा सर्वथा शोकं मा कुरु व्याप्नोतीति व्याप्स्यति वर्त्तमानसामीप्ये वर्त्तमानवद्वा ॥ ६८ ॥

प्रभावमाह । सुदुष्करमिति ॥ ६९ ॥ ७० ॥

तत्र मधुवने कालिन्द्यां स्नातः ऋष्यादेशेन श्रीनारदोपदेशानुसारेण पुरुषं हरिम् ॥ ७१ ॥ ७२ ॥ ७३ ॥

ईषदिवेति तद्ध्यानावेशेन क्लेशाभासस्सूचितः भक्ष्यस्थाने अपां स्वीकारादब्भक्ष इत्युक्तम् ॥ ७४ ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ॥

चतुर्थमपि मासमभिव्याप्य अधारयत् चित्ते स्थापयामास ॥ ७५ ॥

ब्रह्म बृहत्तमत्वाद्भगवद्रूपम् ॥ ७६ ॥ ७७ ॥ ७८ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

हे ब्रह्मन् ! वनं क्षुधितं श्रान्तमत एव दीनः परिम्लानं मुखाम्बुजं यस्यातएव शयानमर्भकमनाथं रक्षकहीनं वृकाः मास्माद्न्त्यपि-मास्म खादन्ति किंस्विदित्यर्थः ॥ ६६ ॥

आत्मानं निन्दति । अहोइति । स्त्रिया जितस्य मे मम दौरात्म्यं अवधारय निश्चिनु अहोवर्ततीति खेदे दौरात्म्यं दर्शयति योऽहमसत्तमः अङ्कमारुरुक्षन्तमारोढुमिच्छन्तं सुतं प्रेम्णा नाभ्यनन्दं नाभिनन्दितवानस्मि ॥ ६७ ॥

एवमुक्तोनारदस्तमाश्वासयन्नाह । मेति । हे विशाम्पते! मनुजपते दैवगुप्तमिति हेतुगर्भं दैवेन ईश्वरेण गुप्तत्वात् रक्षितत्वात् तनयं प्रति तस्य तनयस्य प्रभावमविज्ञाय अज्ञात्वा अविज्ञायेत्यत्र क्त्वा न्तस्य वीत्युपसर्गेण समासे क्त्वो ल्यबादेशो च पश्चान्नञ्समासः अतो ऽनञ् पूर्व इति नल्यप्निषेधः माशुचः माशुच इत्यर्थः वीप्सातात्पर्येण माशोद्विरुक्तस्य प्रयोगः प्रभावमेव विवृणोति। प्रावृङ्क्ते इति सपादेन श्लोकेन यत् यस्य तव पुत्रस्य यशः जगत् प्रावृङ्क्ते व्याप्नोति ॥ ६८ ॥

प्रभुर्जितेन्द्रियो ध्रुवः लोकपालैरिन्द्रादिभिरपि सुदुष्करं कर्तुमशक्यं कर्म तपसा भगवत्तोषणपूर्वकसर्वोत्कृष्टपदसम्पादनरूपं कर्म कृत्वा अतएव चयशोविपुलयन् विस्तारयन् हे राजन् ! अचिरतः आशु एष्यत्यागमिष्यति ॥ ६९ ॥

एवं नारदेनाभाषितोराजा पुत्रमेवानुचिन्तयन्नासीदित्याह मैत्रेयः। इतीति। इत्येवं देवर्षिणा नारदेन प्रोक्तं विमृश्य सविमर्शमाश्रुत्य जगतीपतिरुत्तानपादः राज्यलक्ष्मीमनादृत्य ध्रुवमेवान्वचिन्तयत् ७०।

ध्रुवोमधुवने किमकरोदित्यत्राह । तत्रेत्यादिना । अभिषिक्तः स्नातः यमुनायामितिशेषः यस्यां प्रयातः तपसे प्रयाततवान् तां प्रथमां रात्रिं तत्र मधुवने उपोष्य विभावरीमित्यन्तसंयोगे द्वितीया उपवसतेरभुक्तयर्थस्य आधारस्तु वनमिति तत्र मत्रैतिमप्तमी योध्या समाहितचित्तः दिष्टादेशेन उपादिष्टमार्गेण पुरुषं परमपूरुषं पर्यचरत् परिपूजितवान् ॥ ७१ ॥

तिसृणां रात्रीणां समाहारस्त्रिरात्रं तस्यान्ते कपित्थानि बदराणि च फलानि अशनं यस्य सः आत्मनो देहस्य वृत्तिस्थितिस्तदनुसारेण देहधारणमात्रोपयुक्ताहारेणेत्यर्थः हरिमर्चयन् मासं निन्ये अतिचक्रमे ॥ ७२ ॥

अर्भको ध्रुवः षष्ठे षष्ठे दिने जीर्णैस्तृणादिभिः कृतमन्नं यस्य जीर्णतृणाद्यशनः विभुमर्चयन् द्वितीयं मासं निन्य इत्यनुषङ्गः ॥ ७३ ॥

नवमे नवमेऽहनि अब्भक्षोऽप एव भक्षयन् तृतीयं च मासं नयन् उत्तमश्लोकं भगवन्तं समाधिना उपाधावत् आराधितवान् ॥ ७४ ॥

वायुभक्षः वायुमेव भक्षयन् चतुर्थमपि मासं नयन् जितश्वासः जितप्राणः देवं भगवन्तं ध्यायन् आराधयन्धारणां कृतवान् प्रतिमाससमाहारसंकोचं तपोतिरेकं च कृतवानित्यर्थः ॥ ७५ ॥

पञ्चमे मासि त्वनुप्राप्ते जितप्राणो राजसुतः ब्रह्मभगवन्तं ध्यायन् एकेन पदा चरणेन स्थाणुरिव निश्चलो भूत्वा तस्थौ स्थितवान् ॥ ७६ ॥

---

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

यतोऽसौ सिंहासनपदादप्युत्तमपदं साधयामीति निरूप्यमात्राद्गीन्त्विहाय पुरान्निरगमदित्यत्र मनुमिमानोऽपि राजा तद्गतं दुःखमुद्वलयति अप्यनाथमिति ॥ ६६ ॥

एवमनुतप्य स्वदौरात्म्यं मुनिमपि सम्बोधयति अहोइति त्वया किमकारीति तत्राह । योऽङ्कमिति ॥ ६७ ॥

प्रवक्ता नारदस्तु मदाज्ञाभिमानस्य गत ( १ ) त्वादस्य हरिरेव रक्षक इति कृत्वा एवं तं मानुतपेत्याह । मामेति। ततोऽप्यनुतापो न गच्छतीत्यतः अज्ञानमूलत्वाऽसाविस्याह । तत्प्रभावमिति प्रावृङ्क्ते व्याप्नोति ॥ ६८ ॥

अस्मन्निमित्तवैराग्येन गतः पुत्रो न पुनरेष्यतीति खेदोमाभूदित्याह । सुदुष्करमिति । तत्कर्म तस्य ध्रुव ( २ ) स्यैव योग्यत्वात् लोकपालानां दुष्करं ननु तेषामशक्यत्वात् "नाशक्यं देवतानां तु यदन्यैः शङ्कितं क्वचित् । शक्ता अपि न कुर्वन्ति यदन्यैर्विहितं बुधा,, इति वचनादपि पदेन सूचनात् ॥ ६९ ॥

एवं विस्रब्धस्यापि राज्ञोऽनुतापपरम्परामाह । इतीति । अनेन संसारस्य दुस्तरस्य दुस्तरत्वमसूचि ॥ ७० ॥

ध्रुवोमधुवनं प्राप्य किमकार्षीदत्राह। तत्रेति। आ (३) देशोनोपदेशेन नारदोक्तमार्गेण कृतया दृष्ट्या (४) निरूपणया पुरुषं वासुदेवं पर्यचरदित्यन्वयः ॥ ७१ ॥

तस्य तप आतिष्ठमानस्याशनप्रकारमाह। त्रिरात्रान्तइति। कपित्थबदरयोः फलमशनं यस्य सतथोक्तःफलभुक् अशननियतिं कथयति । आत्मवृत्तीति । यावतात्मनः शरीरस्य वृत्तिस्तदनुसारेण ॥ ७२ ॥ ७३ ॥

उपाधावत् उपास्त ॥ ७४ ॥

अपारयद्तिक्रान्तवान् ॥ ७५ ॥

अचलः स्थिरः ॥ ७६ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

माखादन्ति अर्भक किं खादेयुरेवेत्यर्थः । न खादन्तीति चित्सुखः ॥ ६६ -- ६९ ॥

विश्रुत्येत्यत्र विश्रभ्येति चित्सुखः ॥ ७०—७६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतकृतसारार्थदर्शिनी ।

मा मा सर्वथैव शोकं मा कुरु । तत्प्रभावमविज्ञाय वर्त्तमान इत्यर्थः प्रावृङ्क्ते व्याप्स्यति वर्त्तमानसामीप्ये वर्त्तमानत्वम् ६८॥६९

---

( १ ) ध्रुवमनुसृत्येतिशेषः ।

( २ ) सुदुष्करमित्यत्रदेवानांध्रुवकृतकर्मणयशक्तिरितिभातीत्यतउपपत्तिमाह ॥

( ३ ) दृष्ट्यादेशेनपूरुषमित्यत्रदृष्ट्याचक्षुषाआदेशेनेति असमस्तमिवभातीत्यतस्तात्पर्यानुसारेणव्याचष्टे

( ४ ) नेन दृष्टानेनयेनिर्दिष्टः निरूपणातया । आसम्यक् दिश्यतेउपदिश्यतइत्यादेशउपदेशस्तेन । ततश्चनारदेनसाधननिरूपणपूर्वकृतोपदेशेनेत्युक्तंभवति ॥ दी०

सर्वतोमन आकृष्य हृदि भूतेन्द्रियाशयम् ।
ध्यायन् भगवतोरूपं नाद्राक्षीत्किंचनापरम् ॥ ७७ ॥
आधारं महदादीनां प्रधानपुरुषेश्वरम् ।
ब्रह्म धारयमाणस्य त्रयोलोकाश्चकम्पिरे ॥ ७८ ॥
यदैकपादेन सपार्थिवार्भकस्तस्थौ तदङ्गुष्ठनिपीडिता मही ।
ननाम तत्रार्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे ॥ ७९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

विश्रुत्य विशङ्कंति च पाठः ॥ ७० ॥

मधुवने ध्रुवः किमकरोदित्यपेक्षायामाह । तत्रेति । अभिषिक्तः स्नातः । प्रयतः पूतः ॥ ७१ ॥

कपित्थबदरमात्रभोजी आत्मनो वृत्तेर्जीविकाया अनुसारः स्वीकारस्तेन ॥ ७२ ॥ ७६ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

मास्मादन्ति नखादन्ति किम् ॥ ६६ ॥

महानपि मादृशः प्रमाद्यतीत्याश्चर्ये अहो इति अत्युत्तमपुत्रवियोगात् वर्त्तेति खेदे ॥ ६७ ॥

यस्य यशः जगत् प्रावृङ्कं व्याप्नोति तं स्वतनयं मामाशुचः तत्र हेतुगर्भं विशेषणं दैवगुप्तमिति ॥ ६८ ॥

विपुलयन् वर्द्धयन् ॥ ६९ ॥

अन्वचिन्तयत् तद्ध्यानपरोऽभवत् ॥ ७० ॥

एवं प्रासंगिकमुक्त्वा प्रस्तुतं ध्रुवचेष्टितमाह । तत्रेत्यादिना । तत्र मधुवने प्रयतः वासार्थं कृतप्रयत्नः अभिषिक्तः स्नातः कालिन्द्यामिति शेषः यस्यां तत्र गतस्तां विभावरीं रात्रीमुपोष्य अत्यन्तसंयोगे द्वितीया तस्यामुपवासं कृत्वेत्यर्थः इत्यादेशेन श्रीनारदकर्तृकेन दृष्टेः आदेशेन लब्ध्वा द्रव्यमयीमर्चामित्यादिना यादृष्टिः प्रतिमादिषु भगवद्दृष्टिस्तदुपदेशेनेत्यर्थः पुरुषं श्रीवासुदेवं समाहितः सावधानः सन् पर्यचरत् ॥ ७१ ॥

आत्मनो देहस्य वृत्तिर्वर्तनं जीवनं तस्यानुसारेणानुरोधेन कपित्थादीनि अशनं भोजनं यस्य सः ॥ ७२ ॥ ७३ ॥

नवमे नवमेऽहनि अब्भक्षः जलभोजन उत्तमश्लोकं समाधिनोपाधावन् सन् तृतीयं मासम् आनयत् ईषदिव समापितवानित्यन्वयः प्रतिमाससमाहारसंकोचेन भजनानन्दसंतुष्टिः सूच्यते ॥ ७४ ॥

द्वादशे द्वादशेऽहनि प्राणायामविधिना वायुभक्षः अन्यत्र जितश्वासः चतुर्थं मासं नयन् देवं वासुदेवं ध्यायन् हृदि अधारयत् । ७५ ॥ ७६ ॥

---

भाषाटीका

हे ब्रह्मन् ! क्याजाने उनका मुख कमल क्षुधा तृषा के मारे सूख गया होगा वह कहीं वन मे सो गया होगा उस अनाथ बालक को व्याघ्रादि जन्तु खाय तो नहीं लेंगे ॥ ६६ ॥

अहो मै स्त्री के वश हूं खोटा हूं सो आप जानो जिस अधम मैंने प्रेम से गोद पर चढते पुत्र के उपर नाराजी करी है ॥ ६७ ॥

नारद जी बोले राजन् ! अपने पुत्र का शोच मत करो इस की रक्षा ईश्वर ने की है उसका प्रभाव तुम नहीं जानते हो उस का यश सब जगत मे व्याप्त हो जायगा ॥ ६८ ॥

हे राजन् ! यह ध्रुव इंद्रादिलोक पालो से भी नहीं होने लायक कार्य करके सर्व समर्थ वह तुमारे यश को वढाता हुआ थोडे दि में आजायगा ॥ ६९ ॥

मैत्रय जी बोले इस प्रकार से देवर्षि नारद जी के वचन को सुनकर राजा राज्य लक्ष्मी को भी अनादर करके पुत्र ही की चिंता करने लगा ॥ ७० ॥

ध्रुव जी मथुरा मे जाकर नियमधारण पूर्वक स्नान करके रात्री मे उपवास किया फिर सावधान होकर नारद जी के आज्ञानुसार परमात्मा का पूजन करने लगे ॥ ७१ ॥

अपनी देह स्थिति के अनुसार से तीन तीन दिन पर कैथ और वेर के फलों को खाकर हरि का पूजन करके एक महिना विताया ॥ ७२ ॥

बालक ध्रुवजी ने छठे छठे दिन मे सूखे घास पत्तिन का भोजन कर हरि का पूजन करके दूसरा महिना विताया ॥ ७३ ॥

नवम नवमे दिन मे जल मात्र पीकर के समाधि से उत्तम श्लोक भगवान् की पूजा करके तीसरा मास वितादिया ॥ ७४ ॥

चतुर्थ महिना को भी वारवां वारवां दिन में वायु का भक्षण करके श्वास को जीत करके नारायण का ध्यान करके विता दिया ॥ ७५ ॥

पांचवा महीना जब आया तब राजपुत्र श्वास को जीत कर ब्रह्म का ध्यान करता हुआ एक पैर से खडा होकर अचलता से स्थित होगया ॥ ७६ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

भूतानि शब्दादीनि इन्द्रियाणि च आशेरते यस्मिंस्तस्मात् आकृष्य ब्रह्म ध्यायन् ॥ ७७ ॥

धारयमाणस्य सतस्तस्य तेजः सोढुमशक्नुवन्तः कम्पिताः ॥ ७८ ॥

तस्याङ्गुष्ठेन निपीडिता आक्रान्ता सती मही तत्र तदा अर्धं नाम नमेऽशके अर्धशब्दस्य नपुंसकत्वादंशांशिनोर्भेदाभावे समासाभिकरणयम इभेन्द्रेणाधिष्ठिता तरी नौर्यथा पदे पदे सव्यतो दक्षिणतश्च नमति तद्वत् ॥ ७९ ॥

तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्यासुमनन्यया धिया।
लोका निरुच्छ्वासनिपीडिता भृशं सलोकपालाः शरणं ययुर्हरिम् ॥ ८० ॥

देवा ऊचुः।

नैवं विदामो भगवन्! प्राणरोधं चराचरस्याखिलसत्त्वधाम्नः।
विधेहि तन्नो वृजिनाद्विमोक्षं प्राप्ता वयं त्वां शरणं शरण्यम् ॥ ८१ ॥

श्रीभगवानुवाच।

माभैष्ट बालं तपसो दुरत्ययान्निवर्तयिष्ये प्रतियात स्वधाम।
यतो हि वः प्राणनिरोध आसीदौत्तानपादिर्मयि संगतात्मा ॥ ८२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्याम् ध्रुवचरिते
अष्टमोऽध्यायः ८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका।

अत्यद्भुताश्चर्यमाह। तस्मिन्। ध्रुवे विश्वं विश्वात्मकं विष्णुमा-त्मनः सकाशादनन्यया धिया आत्माभेददृष्ट्याभिध्यायति सति किं कृत्वा असुं प्राणं तद्द्वारं च निरुध्य विश्वमात्मन्येकीकृत्य स्वप्राणनिरोधे कृते विश्वस्य प्राणनिरोधोऽजात इति भावः ॥ ८० ॥

एवं प्राणनिरोधं कदाचिदपि न विद्मः अखिलसत्त्वधाम्नः सर्वप्राणिशरीरस्य तस्माद्वृजिनात्क्लेशात् ॥ ८१ ॥

यतो बालात् कोऽसौ बालः कथं च तस्मात् प्राणनिरोध इत्यत आह। उत्तानपादस्य पुत्रो मयि विश्वरूपे सङ्गतात्मा ऐक्यं प्राप्तो वर्तत इति ॥ ८२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी।

- समेंशके नपुंसकत्वेऽपि महा अर्द्ध ननामेति वक्तव्यमित्याशङ्क्योक्तमाह। अंशांशिनोरिति। सामानाधिकरण्यं समानविभक्तिकत्वम् यत्तुकालभावाध्वेत्यादिनार्द्धदेशमभिव्याप्येतिव्याख्यातं तद्देशशब्दाध्याहारादिगौरवादुपेक्षणीयम् ॥ ७६ ॥

विश्वात्मकमिति। "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्" इति विष्णुपुराणोक्तेः विश्वस्य तच्छक्तित्वाच्छक्तेश्च शक्तिमदव्यतिरेकाद्विश्वरूपमित्यर्थः परमतेतु अधिष्ठानस्यैवाध्यस्तरूपतया प्रतीतत्वाद्बाधितसामानाधिकरण्यम् स्वाभेददृष्ट्येति स्वस्माद्भिन्नदृष्ट्या विश्वात्मकोऽहमिति व्यष्टिसमष्ट्योरभेदनाहंग्रहोपासनया विष्णुं ध्यायति सति तदुपासनसामर्थ्यात् स्वप्राणनिरोधे विश्वस्य प्राणनिरोधो जात इति भावः ॥ ८० ॥ ८१ ॥

ऐक्यमहंग्रहोपासनरूपम् ॥ ८२ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धे
दीपिन्याख्यदीपकाटिप्पण्याम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

भूतेन्द्रियाशयं भूतानि भूतसूक्ष्माणि शब्दादीनि तद्ग्राहकाणीन्द्रियाणि श्रोत्रादीनि शब्दादिविषयप्रवणानीन्द्रियाणीत्यर्थः तानि आशेरते यस्मिन् शयनमत्रनिर्व्यापारः अव्यापारितश्रोत्रादीन्द्रियवन्मनः सर्वतः संकल्पविकल्पादेराकृष्य नियत्य हृदि हृदयपुण्डरीके भगवतो रूपं दिव्यार्चाविग्रहं ध्यायन् भगवतो रूपादपरमन्यन्नाद्राक्षीत् नापश्यत् अन्यन्नाद्राक्षीदित्यनेन ध्यानस्य विजातीयप्रत्ययान्तराव्यवहितत्वम् अनेन ध्यानस्य परिनिष्पत्तिर्नाम फलाव्यवहितपूर्वदशोक्ता ॥ ७७ ॥

तामेव प्रपञ्चयिष्यन् तावत्तत्प्रभावमाह। आधारमिति त्रिभिः। महदादीनां पृथिव्यन्तानां भूतानां तत्संसृष्टानां चेतनानां च आधारं धारकम् अनेन स्थूलचिदचिच्छरीरकत्वमुक्तं सूक्ष्मचिदचिच्छरीरकत्वमाह। प्रधानपुरुषेश्वरं प्रधानं सूक्ष्ममचित्तत्त्वं पुरुषास्तत्संसृष्टचेतनाः तेषामीश्वरम् अन्तः प्रविश्य नियन्तारम् अन्तः प्रविष्टः शास्तेति श्रुतेः अनेन यन्महदादीनां धारकत्वमुक्तं तदप्यन्तः प्रविश्य नियमनेनैवेति विशेषितम् बोध्यम् एवं भूतं भगवन्तं ब्रह्म धारयमाणस्य मतः तस्य तेजः सोढुम् अशक्नुवन्तस्त्रयो लोकाः चकम्पिरे कम्पिताः ॥ ७८ ॥

स पार्थिवार्भको ध्रुवः एकेन पादेन यदा तस्थौ तत्र तदा तस्याङ्गुष्ठेन निपीडिता नितरां पीडिता सती मही भूमिरर्धेनाधिष्ठिता ननाम प्रह्वी बभूव अर्धशब्दस्यात्र समांशवाचित्वाभावेऽपि विधेयतम न क्रियाविशेषणत्वाभिप्रायेण क्लीबत्वनिर्देशः इभेन्द्रेण गजश्रेष्ठेन

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

निषिष्ठिता अधिष्ठिता तरीव नौर्यथा पदेपदे प्रतिपदं सव्येतरतः सव्यतो वामतश्च नमति तद्वत् ॥ ७९ ॥

किञ्चतस्मिन्ध्रुवेऽआत्मनः स्वस्य विश्वं द्वारं सर्वाणीन्द्रियाणि द्वारशब्दः श्रोत्रादीन्द्रियपरः असुं प्राणं च निरुध्य अनन्यया विषयान्तररहितया धिया ध्यायति सति भगवन्तमिति शेषः। यद्वा विश्वशब्दो भगवत्परः विष्णोर्नामसहस्रमित्युपक्रम्य विश्वं विष्णुरित्युक्तत्वात् विश्वात्मकत्वात् विश्वो विष्णुः लोका इन्द्रादिभिः सहिता भृशं नितरां निरुच्छ्वासेन उच्छ्वासाभावेन निपीडिताः हरिं शरणं ययुः प्रापुः ॥ ८० ॥

शरणप्राप्तिमेव प्रपञ्चयति । नैवमिति । हेभगवन्! चराचरस्य एवं विधं प्राणनिरोधं न विदामः कदाचिदपि न जानीमः अचरग्रहणं दृष्टान्तार्थम् तेषामुच्छ्वासनिरुच्छ्वासयोरभावात् यथा अचरस्य उच्छ्वासादिर्नास्ति तथा चरस्यापि प्राप्त इति तत् तस्मात् अखिलसत्त्वधाम्नः चिदचिच्छरीरकस्य तव नः संबन्धिनामस्माकं वृजिनात्प्राणनिरोधरूपात् दुःखात् विमोक्षं विधेहि कुरु वयं शरण्यं समीहितसाधनत्वेनाध्यवसनीयं त्वां शरणमुपायं प्राप्ताः उपायत्वेनाध्यवस्याम इत्यर्थः ॥ ८१ ॥

एवं शरणं गतानाह । शरण्यो भगवान् माभैष्टेति माभैष्ट भयं माकुरुत तपसा दुरत्ययम् अनुल्लङ्घ्यं बालं निवर्त्तयिष्ये निष्पादयिष्यामि समीहितेन संयोजयामीत्यर्थः अतो यूयं स्वधाम स्वस्थानं प्रतियात गच्छत कोऽसौ बालः कथं चैकस्मात् प्राणनिरोधात् विश्वस्य प्राणनिरोध इत्यत आह यतो यदीयप्राणनिरोधाद्धेतोर्वः युष्माकं प्राणनिरोध आसीत् सऔत्तानपादिः उत्तानपादस्य पुत्रो बालो ध्रुवोमयि विश्वप्राणे प्राणनहेतुभूते मयि "को ह्येवान्यात्कः प्राण्याद्येष आकाश आनन्दो न स्यात् यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तंमव्याचक्ष्वेति यः प्राणेन प्राणिति सत आत्मा सर्वान्तरः योऽपानेनापानिति स तआत्मा सर्वान्तर„इतिश्रुतेः संगतः आत्मा अन्तःकरणं यस्य सोऽभूत्स्वप्राणनिरोधेनोच्छ्वासनिश्वासयोरप्यक्षममाणस्य विश्वप्राणिप्राणनहेतुभूतस्य मम तेन निरुद्धत्वात् सर्वप्राणिप्राणनिरोधोऽभूदिति भावः ॥ ८२ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

देवा ध्रुवस्य यशोविस्तृत्यर्थं तत्तपोविघ्नं चक्रुरित्याह। देवाइति। स्वस्मिन्नमायन्द्रजालेन कूष्माण्डाः पिशाचविशेषाः तान्ना-पश्यदित्यनेन ध्रुवस्य देवेभ्योऽत्यधिकशक्तिमत्त्वं नाभिप्रेतं किन्तु परमभागवतत्वेन यशोविस्तृत्यैविघ्नकरणं नतु तत्तपः खण्डनाय तदुक्तम् "यत्र देवैः कृते विघ्ने खण्डितोनपुमान्भवेत्। तत्र तद्यशसे विघ्नं कुर्युनंतु विघातने । यत्र खण्डितता तत्र खण्डनायैव केवलम् तस्य कामा यतोदेवास्ते विशाद्यभिमानिनः। अतोविमोहनायैव प्राप्नुयुस्ते पराजयम् । तेषामशक्तितोकिञ्च विमोहाय सुरद्विषामिति ॥ ७६ ॥ *

नापश्यदित्यर्थस्तद्विवृणोति । सर्वतइति। आकाशादि भूतानांतद्रूपाणां प्राणिनां चेन्द्रियाणामाश्रयं भगवतोरूपं ध्यायतश्च जगत्किंचनालम्बस्वतन्त्रमद्राक्षीत् स्वतन्त्रं नाद्राक्षीदित्यन्वयः॥७७॥

एकाग्रमनसा तस्य वासुदेवं ध्यायतः सत इदमेकमाश्चर्यमभूदित्याह । आधारमिति ॥ ७८ ॥

सर्वाधारं ब्रह्मधारयमाणे ध्रुवे स्थिरत्वेन भाव्यं तत्र लोकानां कम्पनं कथमित्याशङ्क्योपपत्तिमाह।यदैकपादेनेति । तत्र तस्मिन्भागे तयो मध्ये इभेन्द्रेण गजेन गारम्भाधिष्ठिता तरीव यथा नौर्नता भवति तथा तदेव विशिनष्टि। सव्येतरतइति । सव्यतरयोर्वामदक्षिणयोः पादयोः पदे पदे तुङ्गा नता भवति ॥ ७९ ॥

नकेवलं चलनमेव लोकानामभूत्किंतु श्वासोच्छ्वासयोःप्रवृत्तिस्तम्भेन मरणाधिकक्लेशोऽभूदित्याह। तस्मिन्निति तस्मिन्ध्रुवेऽनन्यया ध्येयैकविषयतां गतया धिया श्वासप्रवृत्तिकारणमसुं प्राणं निरुध्य स्तम्भकीकृत्यात्मनोजीवराशेरुत्पत्त्यादेर्द्वारं कारणं विश्वं विष्णुमभितः परित इन्द्रियाभिमानिदेवैः सह ध्यायति निरुच्छ्वासेन निरुद्धप्राणवृत्त्यानिःपीडिताः सलोकपाला लोकाहरिं शरणं ययुरित्यन्वयः भृशमित्यनेन क्षिप्रवाचिना लोकानामेव निरुच्छ्वासोनलोकपालानां देवतानाममन्यप्रवृत्तिहेतूनां स्वोत्तमानुग्रहेण स्वावरानधीनप्रवृत्तीनां तास्तु लोकश्वासार्थं कृपालवोहरिं शरणं ययुरितिध्वनयति उक्तं च "ध्यातुर्ध्रुवस्य कीर्त्यर्थं हरिणा सह देवताः। लोकोच्छ्वासान्निरुध्याथ श्वासार्थं च हरिं ययुः । अन्यप्रवृत्तयस्तेभ्यो न तेषामन्यतः क्वचित् स्वोत्तमेभ्यस्तु देवेभ्यस्तेषां स्युश्चप्रवृत्तय" इति ॥ ८० ॥

किमर्थं शरणं गताइति तत्राह। नैवमिति। अखिलानां सत्त्वानां प्राणिनां धाम समूहोयत्र तत्तथोक्तं तस्य "तेजः शक्तिः समूहश्च गृहं धामेतिकथ्यत„इत्यभिधानात् । वृजिनाद्दुःखात् ॥ ८१ ॥

हरेः शरणं गतानां देवानां भयव्यावर्तकप्रतिवचनप्रकारमाह माभैष्टेति। यतोयस्माद्वोयुस्माकं सकाशात्प्राप्तप्रवृत्तीनां लोकानां प्राणानिरोध आसीत् तं तपसोनिवर्त्तयिष्य इत्यन्वयः कोसाविति तत्राह । औत्तानपादिरिति। मयि सम्यग्गत आत्मामनोयस्य स तथा ध्रुव इत्युक्ते कस्य पुत्रः किं जातिरयमिति शङ्कास्यादित्यतऔत्तानपादिरिति ॥ ८२ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

सर्वात्मकत्वेन बृहत्त्वसत्त्वाद्भगवतो रूपमेव ब्रह्म । अतएव आधारमपि । ततस्तादृशत्वेन धारणात्तदात्मकता प्राप्त्या यदा आधिशेषेण कम्पतेस्म तदा विश्वमपि कम्पतेस्म ॥ ७८ ॥

ततो यत्र स्वाङ्गांशेन भारं विन्यस्यतिस्म तत्रांशे पृथिव्या नमनमपि युक्तम् ॥ ७९ ॥

लोकगौरवादिति चित्सुखः चक्रुपिरे इति शेषः ॥ ८० ॥

तस्मादेव लोकनिरुच्छ्वासतापि ॥ ८१——८२ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भे
अष्टमोऽध्यायः ॥ ८ ॥

* देवाश्चक्रुस्तपो विघ्नं त्रासयन्तः स्वमायया । सर्पैभसिंहकूष्माण्डैस्तान्नापश्यत् परङ्गतः ॥ ७६ ॥

इति विजयध्वज पाठः ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

भूतानां प्राणानामिन्द्रियेषु न शेते न विरथीभवतीति तथाभूतं भगवद्रूपम् यद्वा आ सम्यक् शेते नतु जागर्त्तीति तेषामगम्यमित्यर्थः ॥ ७७ ॥

धारयतः ध्यायतः ध्यायति सतीत्यर्थः ॥ ७८ ॥

तदा तस्याङ्गुष्ठेन निपीडिता मही अर्द्धमर्द्धप्रदेशं व्याप्य ननाम । कालभावेत्यादिना कर्मत्वम् इभेन्द्रेणाधिष्ठिता तरी नौर्यथापदे पदे सव्यतो दक्षिणतश्च नमति तद्वत् ॥ ७९ ॥

तस्मिन् ध्रुवे आत्मनो देहस्य विश्वं सर्वमेव द्वारमसुं प्राणञ्च निरुध्य हरिं ध्यायति सति लोका निरुच्छ्वासनिपीडिता इति व्यष्टिध्रुवसंज्ञक शरीरस्य प्राणेषु निरोधनीयेषु बालत्वात् समष्टेरेव प्राणान् न्यरुन्ध अतएव अनन्यया धियेति व्यष्टिसमष्ट्योरैक्यबुद्धेरेव तत्र कारणमित्यर्थः ॥ ८० ॥

एवं प्राणनिरोधं कदापि न विद्मः अखिलधाम्नः सर्वप्राणिशरीरस्य ॥ ८१ ॥

बालमिति बालत्वादेव स्वप्राणेषु निरुध्यमानेषु युष्माकमपि प्राणान् न्यरुन्ध अतोऽस्मान् हनिष्यतीति बुद्ध्या तस्मान्नभेतव्यमित्याह । यतो ध्रुवात् स मयि संगतचित्तः कमपि नैव जिघांसतीत्यर्थः ॥ ८२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थस्याष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

भूतानि इन्द्रियविषयाः इन्द्रियाणि च शेरते यत्र तन्मनः सर्वत आकृष्य भगवतो रूपं ध्यायन् अपरं किंचन नाद्राक्षीत् ॥ ७७ ॥

महदादीनामनित्यानामाधारं धारकम् प्रधानपुरुषयोः प्रकृतिजीवयोः स्वस्य शकयंशयोर्नित्ययोरीश्वरं ब्रह्मबृहत्स्वरूपगुणादियुक्तं वासुदेवं हृदि धारयमाणस्य तेजसा त्रयोलोकाश्चकम्पिरे॥७८॥

एवं सर्वाधारेण सर्वेश्वरपरब्रह्मादिपदवाच्ये वासुदेवे स्वानन्यभक्तेन हृदा धृते सति गजचरणेन नौकामिवभूमिमेकतोनम्रामवधार्य ध्रुवे निर्जितश्वासे निरुद्धश्वासत्वमात्मनोऽवधार्य तन्मूलमजानन्तो देवाः हरिं शरणं गता इत्याह ॥ यदेति द्वाभ्याम् ॥ यस्य पादः नृपासनास्समात्रा निराकृतःस यत्र तेनैव पादेन यदा हरिध्यानकाले तस्थौ तत्र तदा इभेन्द्रेणा धिष्ठिता आक्रान्ता तरी नौर्यथा पदे पदे सव्यंतरतः वामतो दक्षिणतश्च नमति तथा तस्य नृपार्भकस्याङ्गुष्ठनिपीडिता सती मही शर्द्धं ननाम आत्मनोऽर्द्धेन भागेन किंचिन्नता सती तत्पादगौरवं सूचयामासेत्यर्थः ॥ ७९ ॥

यो दीर्घं [illegible] श्वासं क्रोधवशात् मातृसपत्नीसमीपे प्रवर्तयित्वापि तेन किमपि प्रयोजनं न कृतवान् तस्मिन्नेव ध्रुवे आत्मनः तमेवासुं निश्वासं तद्द्वारं च निरुध्य विश्वं सर्वात्मानं भगवन्तमभिध्यायति तु लोकाः सलोकपालाः भृशमत्यर्थं निरुच्छ्वासेन पीडिताः सन्तः निःश्वासविमुक्तिमन्यतोऽलभमानाः हरिंशरणं ययुः अहो अद्भुतं हरिप्रवचयामिति भावः ॥ ८० ॥

अखिलसत्वानां धाम्नः शरीरस्य चराचरस्य जङ्गमस्थावररूपस्य प्राणरोधं कुत इति न विदामः ततः त्वां शरण्यं शरणागतरक्षणे कुशलं शरणं रक्षितारं प्राप्ताः नोऽवृजिनात् क्लेशाद्विमोक्षं विधेहि ॥ ८१ ॥

यतः औत्तानपादिः उत्तानपादस्य पुत्रः मयि विश्वरूपे सम्यक्गतः आत्मा मनो यस्य सः अहं प्राणप्रवर्तकः सर्वरूपस्तेन जितप्राणेन हृदि रुद्धोऽस्मीत्यर्थः ततोऽहि वः प्राणनिरोध आसीत् तथापि यूयं माभैष्ट धाम प्रतियात बालं दुरत्ययात् अन्येन वियोक्तुमशक्यात् तपसो निवारयिष्ये ॥ ८२ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपे
अष्टमाध्यायार्थ प्रकाशः ॥ ८ ॥

---

भाषाटीका

फिर भूत इंद्रियों का आधार मन को सब तरफ से खैंच कर हृदय में भगवान के रूप का ध्यान करता हुआ और किसी वस्तु को दृष्टि पर नहीं लाया ॥ ७७ ॥

महत्तत्वादिकों के आधार प्रकृति पुरुष के ईश्वर ब्रह्म को ध्रुव के धारण करने से तीनों लोक कांपने लगे ॥ ७८ ॥

जिस वक्त वह राजकुमार एक पाद से खडा हुआ तिसी वक्त उसके पाद के अंगूठे से दबी हुई पृथ्वी ऐसी डगमगाने लगी कि जैसे हाथी के चलने से कोई छोटी नौका डगडगाती दहिने बायें तरफ नवती हुई दीखे ॥ ७९ ॥

उस ध्रुवने जब अपने सब इन्द्रियों के द्वारन को तथा प्राण वायुको रोककर एकाग्र बुद्धिसे विश्वका व्यापक ब्रह्महरि का ध्यान किया तब सब त्रिलोकश्वास के बंद होनेसे अत्यंत पीडित होकर इन्द्रादिलोकपालों के सहित श्रीहरिके शरण गये ॥ ८० ॥

देवता बोले हे भगवन् ! हमलोग नहीं जानते हैं कि चराचर सबजंतुओंके शरीरकापवन क्यों बंद होगया है अब आप हमारे इस कष्टको छुडाइये हमलोग रक्षकजानकर आपके शरण आये हैं ॥ ८१ ॥

श्रीभगवान् बोले देवताहो तुमलोगमत डरो बड़ी भारीतपस्यामेंसे बालककोमैं निवृत्त करूंगा तुमलोग अपने स्थानको चलेजाओ जिससे तुमलोगोंका श्वास बंद हुआ है उसउत्तानपादके पुत्र ध्रुवने हमारे में मनलगा रक्खा है ॥ ८२ ॥

इतिश्रीभागवतचतुर्थस्कन्धका भाषानुवाद लक्ष्मणाचार्य्यकृत
अष्टम अध्याय समाप्त ॥ ९ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः

### मैत्रेय उवाच

त एवं मुत्सन्नभया उरुक्रमे कृतावनामाः प्रययुस्त्रिविष्टपम् ।
सहस्रशीर्षापि ततो गरुत्मता मधोर्वनं भृत्यदिदृक्षया गतः ॥ १ ॥
स वै धिया योगविपाकतीव्रया हृत्पद्मकोशे स्फुरितं तडित्प्रभम् ।
तिरोहितं सहसैवोपलक्ष्य बहिःस्थितं तदवस्थं ददर्श ॥ २ ॥
तद्दर्शनेनागतसाध्वसः क्षिताववन्दताङ्गं विनमय्य दण्डवत् ।
दृग्भ्यां प्रपश्यन् प्रपिबन्निवार्भकश्चुम्बन्निवास्येन भुजैरिवाश्लिषन् ॥ ३ ॥
सतं विवक्षन्तमतद्विदं हरिर्ज्ञात्वास्य सर्वस्य च हृद्यवस्थितः ।
कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोले ॥ ४ ॥
सवै तदैव प्रतिपादितां गिरं दैवीं परिज्ञातपरात्मनिर्णयः ।
तं भक्तिभावोऽभ्यगृणादसत्वरं परिश्रुतोरुश्रवसं ध्रुवक्षितिः । ५

#### श्रीधरस्वामिकृत भावार्थदीपिका ।

नवमे तु हरिं स्तुत्वा लब्ध्वा तस्माद्वरान्ध्रुवः ।
प्रत्यागत्याकरोद्राज्यं पित्रा दत्तमितीर्यते ॥ १ ॥

एवं भगवद्वाक्येन गतभयाः ॥ १ ॥

सवै ध्रुवो योगस्य विपाकेन दार्ढ्येन तीव्रया निश्चलया गरुडाधिरूढं पुरतः स्थितमपि यदान्तर्दृष्टित्वादसौ नापश्यत्तदा भगवतैवान्तः स्थं रूपमाकृष्टमतस्तिरोहितमुपलक्ष्य व्युत्थितः सन् तदवस्थं बहिरन्तः स्फुरितस्तादृशम् ॥ २ ॥

आगतसाध्वसो जातसंभ्रमः विनमय्य आनतं कृत्वा संभ्रममेवाह दृग्भ्यां प्रपिबन्निव पश्यन्नवन्दत आस्येन चुम्बन्निवावन्दत भुजाभ्यामाश्लिषन्निवावन्दतेत्यर्थः ॥ ३ ॥

विवक्षन्तं तद्गुणान्वक्तुमिच्छन्तम् अतद्विदं स्तुत्यादिकर्त्तुमजानन्तम् अस्य ध्रुवस्य सर्वस्य च हृद्यवस्थितत्वात् ज्ञात्वा ब्रह्ममयेन वेदात्मकेन शङ्खेन ॥ ४ ॥

भगवता प्रतिपादितां गिरं प्रतिपद्येति शेषः प्रतिपद्यतामिति पाठे वा वेदात्मिकाम् परिज्ञातः परात्मनो जीवेश्वरयोर्निर्णयो येन सः अत एव भक्त्याभावः प्रेम यस्य असत्वरं स्थैर्येण परितः श्रुतं विख्यातमुरुश्रवः कीर्तिर्यस्य तम् ध्रुवा क्षितिः स्थानं यस्येति भाविनिर्देशः ॥ ५ ॥

#### श्रीराधारमणदासगोस्वामि विरचिता
#### दीपिन्याख्या दीपिका टिप्पणी ॥

प्रत्यागत्य प्रत्यावृत्य ततो देवानां प्रयाणानन्तरं सहस्रशीर्षेति ध्रुवलोकाधिष्ठातुः पृश्निगर्भस्य तदभेदात् ॥ १ ॥

व्युत्थितः समाधेरुपरतः ॥ २ ॥

भुजैरिति द्विवचनार्थे बहुवचनत्वादित्यर्थ इत्युक्तम् ॥ ३ ॥

वेदात्मकेनेति स्पर्शमणिन्यायेन कपोलांतस्थतद्वाण्या ...
वेदार्थमयत्वं व्यज्यते ॥ ४ ॥

तदैव । स्पर्शनकाल एव दैवीं भगवद्विषयां निर्णयोऽत्र द्वयो...
पत्वेऽपि विभुत्वाणुत्वाद्यवच्छिन्नप्रतियोगिताकभेदवन्तावेव ...
तु सर्वथाभेदस्तयोरिति निश्चयः "पृथगात्मानं प्रेरितारं च म...
जुष्टस्ततस्तेनामृतत्वमेती"ति श्रुतेः गुहां प्रविष्टावात्मानौ हि त...
नात् । इति न्यायाच्च अत एवंतादृशभेदज्ञानादेव भक्त्या ध्यान...
नादिरूपया प्रेमतल्लिङ्गमश्रुकम्पादिकम् अन्यथा विषयाश्रय...
नादिभेदाभावेन प्रेम्णास्स्वरूपहानिस्स्यादिति अत एव स्थै...
त्युक्तम् ॥ ५ ॥

#### श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

एवं भगवतोक्तेषु देवेषु स्वधामगतेषु भगवान् भक्तानुग्र...
च्छया ध्रुवेण प्रार्थ्यमानस्तेनस्तुतस्तं समाहितेन संयोज्य स्वधा...
गात् तथापि ध्रुवोऽपि संसाधितसमाहितः स्वधाम जगामेत्या...
नवमेन मुनिः एवं भगवद्वाक्येन उत्सन्नभया गतभया देवा उरु...
भगवति विषये कृतः प्रणामो यैस्ते त्रिविष्टपं सुरलोकं ययुः अ...
सहस्रशीर्षा भगवानपि भृत्यदिदृक्षया भृत्यदर्शनेच्छया मधो...
गरुत्मता वाहनभूतेन सह गतः जगाम ॥ १ ॥

स वै ध्रुवः योगविपाकतीव्रया योगस्य ध्यानयोगस्य विपा...
आपरोक्ष्यपर्यन्तरूपत्वाद्विशेषणविशिष्टत्वं तेन तीव्रया विजाती...
प्रत्ययान्तराव्यवहितया धिया प्रथमं हृत्पद्मकोशे स्फुरितं भाद...
स्फुरितं ततः सहसैवमाश्वेव तिरोहितं ततः पुनः बहिःस्थितं तडित्...

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

अन्तराविर्भूतस्य सहसा तिरोधानेन तडित्साम्यमभिप्रेत्य तडित्प्रभमित्युक्तं तदवस्थयाहृदन्तरस्फुरत्तादृशमुपलक्ष्य प्रत्यभिज्ञाय ददर्श साक्षात्कृतवान् ॥ २ ॥

तस्य भगवतो दर्शनेन आगतसाध्वसः जातसंभ्रमः अर्भकः ध्रुवः अङ्गं शरीरं क्षितौ भूमौ दण्डवद्विनमय्य नतं कृत्वा अवन्दत नमस्कृतवान्संभ्रममेवाह दृग्भ्यां पिबन्निव प्रपश्यन्निव अवन्दत आस्येनचुम्बन्निव अवन्दत भुजाभ्यामाश्लिषन्नालिङ्गन्निवावन्दत भुजैरिति बहुवचनमार्षम् ॥ ३ ॥

तं ध्रुवं विवक्षन्तं गुणान्वक्तुमिच्छन्तं तुष्टूषन्तमित्यर्थः पुनस्तद्विदं स्तोतुमजानन्तम् अस्य ध्रुवस्य सर्वस्य लोकस्य च हृदि हृदये अवस्थितः हेतुगर्भमिदं हृदि अवस्थितत्वात् ज्ञात्वा स हरिः ब्रह्ममयेन ब्रह्म प्रणवः वेदो वा तत्प्रचुरेण ध्वनेः प्रणवाद्यनुकारित्वाद्ब्रह्ममयेनेत्युक्तम्। कम्बुना शङ्खेन कपोल गण्डे बालं ध्रुवं कृपयपस्पर्श ममार्ज ॥ ४ ॥

सवै ध्रुवः दैवीं देवसंबन्धिनीं देवेन भगवताविर्भाविताभित्यर्थः तां वेदार्थप्रचुरां गिरं वाचं तदैव स्पर्शोत्तरकालमेव प्रतिपद्यलब्ध्वा परिज्ञातः कार्त्स्न्येन विदितःपरात्मनोः परमात्मजीवात्मनोः निर्णयो याथात्म्यं येन अत एव भक्तिभावः भक्त्यात्मको भावोऽभिप्रायो यस्य ध्रुवा स्थिरा शाश्वती क्षितिः स्थानं यस्य अयं भावि निर्देशः अनश्वरः स्वरारहितः परिश्रुतं सर्वतो विख्यातमुरु निरवधिकं श्रवःकीर्तिर्यस्य तं भगवन्तम् अभ्यगृणात् अस्तौषीत् ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

हरेः केवलं मोक्षाख्यपुरुषार्थस्य प्राप्तिरेव न किन्त्वैहिकस्यापीतीममर्थं प्रतिपादयत्यस्मिन्नध्याये। तत्रादौ देवानां स्वलोकगमनं हरेर्मधुवनयात्रां च वक्ति । तएवमिति । सहस्रशीर्षा श्रीवासुदेवः "गरुत्मान् गरुडस्तार्क्ष्य,,इत्यभिधानम् ॥ १ ॥

ध्रुवस्य हरिदर्शनप्रकारं वक्ति । सवा इति । योगपरिपाकेन ध्यानपरिणाम्या तीव्रया स्वतएव भगवदुन्मुख्या । तदवस्थं हृत्पद्मकोशे याऽवस्था तया विशिष्टम् ॥ २ ॥

गुरूक्तगुणानुपसंहृत्य भगवदुपास्तौ सक्तस्य ध्रुवस्य किं पुनर्वन्दनादानीति भावेन तत्प्रावणयप्रकारमाह तद्दर्शनेनेति। आगतसाध्वसः प्राप्तसंभ्रमः बालस्वभावं दर्शयन्निव भक्त्यतिशयमाह दृग्भ्यामिति ॥ ३ ॥

भक्तानुकम्पित्वं प्रकटयतोहरेस्तदनुग्रहविशेषमाह। सतमिति। विवक्षन्तं स्तुतिरूपां वाचं वक्तुकामं न तद्यथातत्त्वं वेत्तीत्यतत्त्ववित्तं ब्रह्ममयेन वेदमयेन पाञ्चजन्योवा एष आम्नाय उदिति श्रुतेः कम्बुना पाञ्चजन्याख्यशङ्खेन ॥ ४ ॥

तत्फलमाह । सवाइति । सवै सोऽपि । या गीः पूर्वमज्ञाता तां गिरं दैवीं दव, सर्वेषु देवेषु गुणैर्द्योतमानस्तद्विषयां गिर मुपलब्धिफलमाह। परिज्ञातेति । यावत्स्वयोग्यं परितोज्ञातः परमात्मतत्त्वनिर्णयेन स तथोक्तः तद्भक्त्य भावोरोमाञ्चादिक्रियाविशेषायस्य स तथोक्तः "भावोलीलाक्रियाचे,,ति यादवः असत्वरमिति क्रियाविशेषणं यथा स्खलितं न भवति अनेन संभ्रमलुप्ता द्वियालबत्वस्वभावं व्यावर्त्तयति अत्वरया सह वर्तत इत्यसत्वरस्तमिति भगवद्विशेषणं वा परिश्रुतं व्याप्तमुरु बृहत् श्रवणमङ्गलं श्रवणीयशोयस्य स तथा तं ध्रुवा नित्या क्षितिर्वैकुण्ठादिस्थानं यस्य स तथा तं ध्रुवः क्षितिमितिवा पाठः क्षिनिवासगत्योरितिधातोः क्षितिं गतिमित्यर्थः ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

सहस्रशीर्षेति ध्रुवलोकाधिष्ठातुस्तदभेदात् ॥ १ ॥

तडित्प्रभं यथास्यात्तथा सहसैव तिरोहितम् ॥ २ ॥

प्रपिबन्निवेत्यादिसर्वत्रावेशमात्रतात्पर्यकम्। यद्वा। यथा प्रपश्यन् प्रपिबन्निवेत्यत्र प्रदर्शनमेव प्रपानत्वेनोत्प्रेक्षते। तथा वास्तवार्थमोष्ठस्पन्दनेन चुम्बनं तत्राञ्जलिबन्धार्थं बाहुद्वयघटनयालिङ्गनमपीति ज्ञेयम् । भुजेन वेति क्वचित् ॥ ३—४ ॥

दैवीं भगवद्विषयां निर्णयामीति । ध्रुवक्षितिमिति चित्सुखः ॥ ५—८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतकृतसारार्थदर्शिनी ।

हरिस्तुतिर्वरप्राप्तिः स्वानुतापो गृहागमः ।
बन्धुभिर्मेलनं राज्यं ध्रुवस्य नवमेऽभवत् ॥

गर्भोदशायिना अभेदात् सहस्रशीर्षा तदानीन्तनोऽवतारः पृश्निगर्भो भागवतामृतादवगन्तव्यः ॥ १ ॥

सच गत्वा योगनिमीलिताक्षस्य ध्रुवस्यान्तःकरणं प्रविश्य दर्शनं दत्त्वा तत्रैव पुनरन्तर्द्धाय बहिस्तदग्रे तस्थावित्याह । स वा इति । ध्यानयोगस्य परिपाकेन तीव्रया धिया हृदि सहसैव स्फुरितं तडित्प्रभं यथा स्यात्तथा तिरोहितश्च उपलक्ष्य स्वसमीप एव दृष्ट्वा लब्धनष्टधन इव व्याकुलो भग्नसमाधिरुद्घाटितनेत्रस्तदवस्थं स्थितं तं बहिर्ददर्श ॥ २ ॥

आगतसाध्वसो जातानन्दसम्भ्रमः दृग्भ्यां मुखारविन्दमाधुर्यं प्रपिबन्निव प्रपश्यन् आस्येन चरणारविन्दमाधुर्यं चुम्बन्निव अवन्दत भुजाभ्यामाश्लिष्यन्निव चरणाङ्गुलीदलवरान् पस्पर्श । बहुवचनेन भुजयोर्व्यापारबाहुल्यं लक्षयित्वा आनन्दकम्पो ध्वनितः ॥ ३ ॥

विवक्षन्तं तद्गुणान् वक्तुमिच्छन्तम् । अथच अतद्विदं व्याकरणाद्यज्ञानात् संस्कृतं प्रयोक्तुमशक्नुवन्तं ज्ञात्वेत्यत्र हेतुः । अस्येत्यादि ब्रह्ममयेन वेदात्मकेन शङ्खेन ॥ ४ ॥

प्रतिपद्य प्राप्य प्रतिपादितामिति पाठे प्राप्येति शेषः। परिज्ञातः परात्मनोरीश्वरजीवयोर्निर्णयो येन सः । भक्त्यैव नतु सांख्ययोगादिषु भावोऽभिप्रायः स्वभावो वा यस्य सः । असत्वरं स्थैर्यमालम्ब्य परिश्रुतोरुश्रवसं विख्यातबहुयशसं । ध्रुवा प्रलयेऽप्यनश्वरा क्षितिः स्थानं यस्येति भाविसूचनम् ॥ ५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

नवमे ध्रुवस्य भगवद्दर्शनादिकं वर्णयितुमाह । ते इति । उत्क्षं निवृत्तं भयं येषां ते कृतः प्रणामो यैस्ते ततस्तद्गमनानन्तरमेव भृत्यदिदृक्षयागत इत्यनेन भगवतोऽपि स्वभृत्यदर्शनायोत्सुक्यं सूच्यते मधोर्वनमागत इत्यनेन व्यापकस्यापि भगवतो दूरत्वनिकटत्वगमनार्हत्वसंबन्धत्वादयोऽचिन्त्या गुणाः द्योतिताः ॥ १ ॥

योगस्य भगवद्ध्यानस्य विपाकेन संप्रवृद्धेन तीव्रया भगवत्स्वरूपगुणादिग्रहणे कुशलया पूर्वं हृत्पद्मकोशे स्फुरितं पुनः सहसैव तिरोहितमालक्ष्य पुनस्तदवस्थं यथा हृत्पद्मे दृष्टं तथैव बहिः स्थितं ददर्श तडित्प्रभमित्यनेन हृत्पद्मे बहिश्चेत् स्वविग्रहस्यैव भगवतो व्यापकस्यैव स्वेच्छया विर्भावतिरोभावशक्तिर्द्योत्यते ॥ २ ॥

तस्य भगवतो दर्शनेन आगतसाध्वस उत्पन्नसंभ्रमः अङ्घ्रिविग्रहम् दृग्भ्यां प्रपश्यन् प्रपिबन्निव आस्येन चुम्बन्निव अंसादिलग्नमिव स्वकीयमङ्गं क्षितौ विनमय्यावन्दतेत्यन्वयः दृग्भ्यां

ध्रुव उवाच

योऽन्तःप्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥ ६ ॥
एकस्त्वमेव भगवन्निदमात्मशक्त्या मायाख्ययोरुगुणया महदाद्यशेषम् ।
सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु नानेव दारुषु विभावसुवद्विभासि ॥ ७ ॥
त्वद्दत्तया वयुनयेदमचष्ट विश्वं सुप्तप्रबुद्ध इव नाथ ! भवत्प्रपन्नः ।
तस्यापवर्ग्यशरणं तव पादमूलं विस्मर्यते कृतविदा कथमार्तबन्धो ! ॥ ८ ॥
नूनं विमुष्टमतयस्तव मायया ते ये त्वां भवाप्ययविमोक्षणमन्यहेतोः ।
अर्चन्ति कल्पकतरुं कुणपोपभोग्यमिच्छन्ति यत्स्पर्शजं निरयेऽपि नृणाम् ॥ ९ ॥
या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ ! माभूत्किंत्वन्तकासिलुलितात्पततां विमानात् ॥ १० ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

प्रविविक्षुरित्यादिना भगवन्मूर्तेर्मनोनयनादिभ्यः सर्वेभ्योऽत्यन्तानन्दप्रदत्वमुक्तम् ॥ ३ ॥

विवक्षन्तं स्तुतिं कर्तुमिच्छन्तम् ब्रह्ममयेन आत्मानात्मपरमात्मादिस्वरूपगुणादियाथात्म्यबोधकवेदमूर्तिना ॥ ४ ॥

यः श्रीनारदेन भगवद्दर्शने वेदवाणीधारणार्हः कृतः सः दैवीं ईश्वरस्य विष्णोर्निश्वासभूतां वेदरूपां प्रतिपद्य प्राप्य अतोऽहि श्रीनारदेन संक्षेपतः प्रबोधितोऽपि वेदलभनानन्तरं परितः सर्वतो यथेष्टं ज्ञातः परस्य परमात्मनः आत्मनो जीवस्य निर्णयो येन सः अत एव भक्त्या भावः प्रेम यस्य सः उभयस्वरूपादिज्ञानाभावे भक्त्यभावेन परमात्मभावापत्तिलक्षणमुक्त्यभावः उभयस्वरूपादिनिर्णयविस्तरः श्रीवेदान्तकौस्तुभ वेदान्तरत्नमञ्जूषादिषु च द्रष्टव्यः ध्रुवा कर्मकालादिभिरन्यथा कर्तुमशक्या क्षितिर्वैकुण्ठाख्यं स्थानं यस्य सः परितः श्रुतं विख्यातमुर्वगाधं श्रवः कीर्त्तिर्यस्य तम् अभ्यगृणात् तुष्टाव द्वादशभिः ॥ ५ ॥

---

भाषाटीका ॥

मैत्रयजी बोले वे देवगण इंद्रादिक भगवान् के वचन सुनने से निर्भय होकर उरुक्रम भगवानको प्रणाम करके स्वर्ग लोक को गये भगवान् सहस्रशीर्षापुरुषभी तदनंतर गरुड ऊपर विराजकर भक्तके देखने के लिये मधुवन, मथुराको पधारे ॥ १ ॥

ध्रुवजी की बुद्धि योग से बडी निर्मल होगईथी उसीसे निश्चलथी तबहृदय कमल मे प्रकाशमान विजुलीसे चमकते मूर्तिका अंतर्धान होजाना देखाफिरनेत्र खोलते मात्र बाहर उसी प्रकार की मूर्तिको देखा ॥ २ ॥

उस मूर्तिके दर्शन से बडा संभ्रम को प्राप्त होकर अपने शरीर को झुकाकरके पृथ्वी मे साष्टांग दंडवत् प्रणाम किये फिर नेत्र से ऐसे देखने लगे कि मानोप्यासे पीजायगे मुखसे मानो चुंबन करेंगे भुजोंसे मानों आलिंगन करेंगे ॥ ३ ॥

सबके हृदय मे वास करने वाले हरिने उस की कुछबोलने की इच्छाजानकर को उसके हाथ जोडे हुए देखकर उसके सामर्थ्य देने के लिये वेद मय शंख से कृपाकर के उस के मु[illegible] कपोलमे स्पर्श करदिया ॥ ४ ॥

तब तो वह ध्रुवनिसंदेवी वाणी को प्राप्त होकर सब परमात्मा[illegible] निर्णय को जानगया फिर भक्ति युक्त होकर धीरज से यु[illegible] हुआहै विस्तृत यशजिनका ऐसे भगवान् को ध्रुव पद प्राप्त हो[illegible] वाला ध्रुव स्तुति करने लगा ॥ ५ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका

ईशानुग्रहसंप्राप्तवागाद्यङ्गनवृत्तिभिः
द्वादशादित्यसंकाशैः श्लोकैरस्तौद्धरिंध्रुवः ॥ १ ॥

योमे प्रसुप्तां लीनां वाचमन्यांश्च प्राणानिन्द्रियाणि स्वधा[illegible] चिच्छक्त्या संजीवयति यतः अखिलाश्चक्षुरादिज्ञानक्रियाशक्ती[illegible] रयतीति तथा पुरुषायान्तर्यामिणे ॥ ६ ॥

ननु वागादीन्द्रियशक्तिधरा वह्न्यादयः प्रसिद्धा नाहमित्यत[illegible] एक इति । अनुविश्य पुरुषोऽन्तर्यामी त्वमेक एव तस्या माया[illegible] असत्सुगुणेष्विन्द्रियादिषु स्थितः संस्तत्तद्देवतारूपो नानेव भा[illegible] नतु त्वद्व्यतिरेकेण ज्ञानक्रियाशक्तिधरः कश्चिदस्तीत्यर्थः ॥ ७ ॥

अपिच किंवक्तव्यं वह्न्यादयोज्ञानादिशक्तिधरा न भवन्ती[illegible] यस्माद्ब्रह्मणोऽपि ज्ञानं त्वदधीनमेवेत्याह । त्वद्दत्तया वयुनया ज्ञा[illegible] भवन्तं शरणं प्रपन्नो ब्रह्मा इदं विश्वमचष्टापश्यत् कथम् सुप्तः पुन[illegible] प्रबुद्धः सन् यथा पश्यति तद्वत् अत आपवर्ग्यं मुक्तास्तेषा[illegible] शरणम् कृतविदा सर्वेन्द्रियजीवनेन त्वत्कृतमुपकारं जानता ह[illegible] विस्मर्यते एवं भूतं त्वामभजन्तः कृतघ्ना इत्यर्थः ॥ ८ ॥

ये च मादृशाः कामाद्यर्थं भजन्ति तेऽतिमूढा इत्याह । नूनमि[illegible] भवाप्ययौ जन्ममरणे तद्विमोक्षहेतुं त्वामन्यहेतोः कामाद्यर्थं ये भ[illegible]न्ति ते नूनं विमुष्टमतयो वञ्चितचित्ताः यतस्तं कल्पतरुं त्वामभ्[illegible] ततः कुणपतुल्येन देहेनोपभोग्यं सुखमिच्छन्ति नचैच्छायोग्यं त[illegible]त्याह । यत्स्पर्शजं विषयसंबन्धजन्यसुखं तन्नरकेऽपि भवति ॥ ९ ॥

ननु स्वर्गादिसुखं सकामैः प्राप्यते निष्कामभजने तन्न स्या[illegible]त्यतआहायेति । स्वमहिमनि निजानन्दरूपे ऽपि माभूत् न भवति[illegible] अन्तकस्यासिना कालेन लुलितात्खण्डितात्विमानात्पततां [illegible] नास्तीति किमुवक्तव्यम् ॥ १० ॥

भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो भूयादनन्त ! महताममलाशयानाम् ।
येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथामृतपानमत्तः ॥ ११ ॥
ते न स्मरन्त्यतितरां प्रियमीश ! मर्त्यं ये चान्वदः सुतसुहृद्गृहवित्तदाराः ।
ये त्वब्जनाभ ! भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ १२ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

अतस्ते कथा श्रवणाय सत्संगतिं देहीत्याह । भक्तिं त्वयि प्रवहतां सातत्येन कुर्वताम् ननु मोक्षं किं न याचसेऽतआह । येन महत्प्रसंगेनाञ्जसा अयत्नत एवोरूणि व्यसनानि यस्मिंस्तम् नेष्ये पारंगमिष्यामि भवद्गुणकथैवामृतं तस्य पानेन मत्तः सन् ॥ ११ ॥

कथामृतपानस्य मादकत्वमाह । तेऽति तरां प्रियमपि मर्त्यं देहं न स्मरन्ति नानुसंदधते ये च सुतादयः अदः मर्त्यमनुसंबद्धास्तानपि के ते न स्मरन्ति ये कृतप्रसङ्गाः केषु भवदीयपदारविन्दसौगन्ध्ये लुब्धं हृदयं येषां तेषु तुशब्देनान्येषां कैवल्ययोगादिनिष्ठानां देहाद्यभिमानानिवृत्तिं दर्शयति ॥ १२ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ॥

वागाद्यङ्कतत्त्वाभिरिति । अङ्कुतत्त्वमत्राप्राकृतत्वमेवातएवमृत्योः कृत्वैव मूर्ध्न्यङ्घ्रिमारुरोह हरेः पदमित्युक्तम् । आदित्यसंकाशत्वं भगवदादिसर्वप्रकाशकत्वाभिप्रायकत्वाच्च यद्वचादित्यादेयमन्तरा सर्वप्रकाशः मयदादिपराचानिर्णयश्च स्यादिति चिच्छक्त्या संजीवयतीत्युक्त्वा वागादीनामपि स्पर्शमणिन्यायेन चिदात्मकत्वं व्यज्यते ॥ ६ ॥

तत्तद्देवतानां तत्तटस्थशक्त्यात्मकत्वात्तद्व्याप्यत्वा त्तन्नियम्यत्वात्तत्तद्देवतारूप इति माध्वाः "यस्य पृथिवी शरीर,,मित्यादिश्रुतेः तत्तद्देवतानामपि तच्छरीरत्वं शरीरवाचकाश्च शब्दाः शरीरिपर्य्यन्तवाचका एव व्यक्तिपर्य्यन्तवाचकत्वं यथा जातिवाचकानामिति श्रीरामानुजीयाः तत्तद्देवतानां तस्मिन्नेव कल्पितत्वात् बाधितसामानाधिकरण्यं श्रीस्वामिव्याख्यातु सर्वानुगतेति यथा रुचिग्राह्यमिति ॥ ७ ॥

ज्ञानादीत्यादिना क्रियाशक्तिपरिग्रहः यस्माद्धेतोः अतः ब्रह्मादिसर्वज्ञानस्य त्वदधीनत्वात् मुक्ता जीवन्मुक्ताविदेहमुक्ताश्च तेषामपि शरणं रक्षकमाश्रयणीयं च तत्र जीवन्मुक्तानां शरणं "जीवन्मुक्ताः प्रपद्यन्ते पुनः संसारवासनाम् । यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः । इति वासनाभाष्योक्तेः तद्भजनमन्तरा तेषां पुनः संसारश्रवणात् विदेहमुक्तानामप्याश्रयणीयं मुक्ता अपि लीलया विग्रहं कृत्वा भजन्त इति भाष्योक्तेरेव ॥ ८ ॥

ततोऽर्चनात् तत् विषयसुखम् ॥ ९ ॥

निजानन्दरूपेऽपि असाधारणानन्दमात्रे विशेषे असम्यगाविर्भावरूपे ब्रह्मण्यपि न भवतीति लकारव्यत्ययादित्यर्थोक्तिः एवमानन्दतारतम्यस्य बहुत्रोपपादानाच्छ्रीविग्रहस्य तत्कथादेश्च घनानन्दमयत्वं निरुपाधिकत्वमाभव्यज्यते अत एवैषां पद्यानां सम्यक् तत्त्वनिर्द्धारकत्वेनादित्यरूपत्वं स्वामिभिरुक्तमिति ध्येयम् ॥ १० ॥

अतः ब्रह्मानन्दादपि कथानन्दस्य वैशिष्ट्यात् ननु भवत्वानन्दवैशिष्ट्यं संसारान्मुक्तिस्तु न स्यादिति मोक्षं किन्न याचसे इति पूर्वपक्षाशङ्काग्रन्थो व्याख्येयः पानमत्त इत्यनेनैतदुक्तं भवति यथा मधुपानासक्तानां तदास्वादनमेव मुख्यं फलं शीतादितरणं चानुषङ्गिकं तथा गुणकथासुधापानरसिकानां निरन्तरं तत्पानमेव मुख्यं फलं मोक्षादिकन्तु नान्तरीयकं स्वत एव सिद्धत्वादिति ॥ ११ ॥

अन्येषां कथामृतविमुखानाम् ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका

तत्र स्वकीयवागीन्द्रियसंजीवयितृत्वेन स्वानुभवसिद्धेन ज्ञानप्रदं चिदचिच्छरीरं निखिलजगदेककारणं निरस्तनिखिलहेयगन्धं मुक्त्युपायत्वमुक्तिप्रदत्वाश्रितदुरितौघनिवर्त्तकत्वनिरतिशययशः सम्पन्नत्वनिरतिशयानन्दत्वाद्यपरिमितोदारगुणसागरत्वेन भगवन्तं पञ्चभिः प्रस्तुत्य तस्मिन्स्वमनः प्रावण्यमेकेन संप्रार्थ्य तत्पदारविन्दध्यानासक्तचित्तस्य देहतदनुबन्धिहेतुकदुःखाद्यननुभूतिमेकेनाभिध्याय ततः साधु परित्राणाय स्वेच्छोपात्ताप्राकृतदिव्यमङ्गलविग्रहहं परत्वेन शङ्कितब्रह्मादिदेवतानामपि कारणभूतं स्वावतारेण साक्षाज्जगद्धितारं षड्भिः प्रस्तुत्यैकेन तं शरणमागत्य पुरुषार्थमूर्त्तेस्तस्य भजनादाशिषां सत्यतां वदन् निरतिशयवात्सल्यमेकेन स्तौति । य इति । द्वादशभिः तत्र तान्वागादीन्द्रियसंजीवयितृत्वेन स्वस्मै निर्द्दिशितेन ज्ञानप्रदत्वं निश्चिन्वन्नमस्करोति । य इति यो भगवान्प्रसुप्तां स्वकार्याक्षमां इमां तु प्रवृत्तां मे स्तोतुकामस्य मम वाचं वागीन्द्रियमन्तः प्रविश्य संकल्परूपज्ञानेनात्रानुप्रवेश उच्यते पूर्वमेव प्रविष्टत्वात्त संजीवयतितत्र हेतुः अखिलशक्तिधरः अघटितघटनादिमयंशक्तेस्तदेतदुपपन्नमिति भावः तथा स्वधाम्नः स्वधामभूतान् स्वशरीरभूतानिति यावत् तृतीयान्तपाठे स्वधाम्ना स्वकीयसंकल्परूपेण ज्ञानेनान्तः प्रविश्येत्यन्वयः हस्तचरणश्रवणत्वगादीन् हस्तचरणग्रहणं पायूपस्थयोः कर्मेन्द्रिययोरुपलक्षणं श्रवणत्वग्ग्रहणमवशिष्टज्ञानेन्द्रियाणाम् आदिशब्देनान्तः करणान्तप्रयाधिष्ठातृदेवता संग्रहः अन्यान्प्राणान् इन्द्रियाणि संजीवयति तस्मै भगवते पूर्णषाड्गुण्यमूर्त्तये पुरुषाय पुरुषान्तर्याभिणे अनेन जीवान्तर्यामित्वमुक्तं पूर्वं मचिदन्तर्यामित्वकथनात् तुभ्यं नमः कृत्स्नचिदचिदन्तरात्मत्वेन तत्संजीवयितृत्वेन ज्ञानप्रदत्वं त्वय्येवोपपन्नमिति भावः ॥ ६ ॥

ननु "तत्सृष्ट्वा तदेवानुप्राविशत् अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि,,इति जगत्स्रष्टुरेवानुप्रवेशश्रवणात् नाहं चिदचिदन्तरात्मेत्यत्र जगत्स्रष्टापि त्वमेवेत्याह । एक इति । हे भगवन्! इदं परिदृश्यमानं महदादिसमष्टिव्यष्ट्यात्मकमशेषं सर्वं जगत् उरुगुणया विविधपरिणामक्षमसत्त्वादिगुणया आत्मशक्त्यात्मनः स्वस्य संबन्धिन्या शक्त्या कार्योपयोग्यपृथक्सिद्धविशेषणभूतया मायाख्यया प्रकृत्या सृष्ट्वा सदसद्रूपेषु कार्यकारणभूतेषु सत्त्वादिगुण-

### श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका

मयपदार्थेषु पुरुषो जीवशरीरकः अनुविश्य त्वमेक एव सन् दारुषु हस्वदीर्घवक्रर्जुवक्रादिभेदाभिन्नेषु दारुषु विभावसुवदग्निवन्नानेव बहुधेव विभासि अत्र विभावसुदृष्टान्तेन स्वशरीरभूतचिदचिद्गत-गुणास्पर्शो विवक्षितः इव शब्देन वस्तुत एकत्वं देवमनुष्यादि-शरीरसंसृष्टजीवान्तरात्मकत्वकृतं बहुत्वमपि विवक्षितम् ॥ ७ ॥

एवं निखिलजगदेककारणत्वेन कृत्स्नचिदचिदन्तरात्मत्वेनानिर-स्तनिखिलदोषत्वेन चवागादीन्द्रियसंजीवयितृत्वात्तस्यैव ज्ञानप्रद-त्वमुक्तं तदेव निदर्शयन् तस्यैव निरतिशयपुरुषार्थसाधनत्वेन भजनीयतामाह। त्वद्दत्तयेति। त्वदीयया "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं,,मिति वदतात्वया दत्तया वयुनया ज्ञानेन खीत्वमार्थ हेनाथ! भवन्तं प्रपन्नः शरणं गतो ब्रह्मा चतुर्मुखः सुप्तप्रबुद्ध इव पूर्वं सुप्तः पश्चात्प्रबुद्ध इव विश्वमचष्ट अपश्यत् विश्वरचनोपयोगिज्ञानविधुरस्त्वत्प्रपत्त्या त्वद्दत्तज्ञानेनासृजदित्यर्थः नात्र भूतार्थे विवक्षापश्यतीत्यर्थः हेआर्थबन्धो!अतो नां तापत्रयातुराणां बन्धो अपवर्गशरणं मुक्त्युपायमापवर्ग्यमिति पाठे स्वार्थे ष्यञ् अपवर्गो भव मापवर्ग्यं सुखं तत्साधनमिति वा तव पादमूलं कृतविदा सर्वे-न्द्रियोपजीवनेन ज्ञानप्रदत्वाद्युपकारज्ञेन कथं विस्मर्य्यते एवं महो-पकारिणं त्वामभजन्तः कृतघ्ना एवेत्यर्थः ॥ ८ ॥

तथा त्वां भजन्तोऽपि मादृशाः सकामा मन्दभाग्या एवेत्याह। नूनमिति। कल्पकतरुं कल्पकतरुतुल्यम् आश्रिताभीष्टार्थप्रदत्वेन कल्पतरुतौल्यं विवक्षितं ततो निरतिशयगुणवत्तामाह भवाप्यय विमो क्षणं भवो जन्म अप्ययो मरणं तयोर्मोक्षणं मोचनं यस्मात्तं यद्वा भवा-प्ययौ विमोक्षयतीति णयन्तात्कर्तरि ल्युट् बाहुलकात् मुक्तिप्रद-मित्यर्थः एवं भूतं त्वां ये मादृशा लोकाः अन्यहेतोः अन्यस्य त्रिवर्गस्य हेतोः कारणात् भजन्ति ते जनास्तवमायया मम माया दुरत्ययेत्यु-क्तविधया विमुष्टमतयः अपहृतज्ञानाः नूनमिति निश्चयं कुतस्ते विमुष्टमतय इत्यत्राह। यद्यस्मात्स्पर्शजं विषयेन्द्रियसंबंधजमत एव एतं वै निरयास्तावत्स्थानस्य परमात्मन इत्युक्तविधया नर कप्रायेऽपि संसारे नृणां कुणपोपभोग्यं कुणपेन शवतुल्येन शरीरे णोपभोग्यं सुखमिति शेषः इच्छन्ति ॥ ९ ॥

ननु स्वर्गस्यापि सुखत्वप्रतिपत्तेः किं तदर्थं भजमानान् निन्दित्वा निष्कामान् प्रशंससीत्याशङ्कायां स्पर्शजस्याल्पास्थिरत्वाभिप्रायेणे त्याभिप्रेत्य किं वक्तव्यं निष्कामभक्तिसाध्यस्यापवर्गिकसुखस्य निरवधिकत्वात् नतेन स्पर्शजस्य साम्यमिति यतस्त्वच्चरणध्यानत्व-द्भक्तजनकथाश्रवणजन्यसुखेनापि न कैवल्यमपि समानमिति कैमु-त्यनयेनाह येति। तनुभृतां देहिनां तव चरणकमलध्यानात् भवज्जना भागवतास्तेषां कथाश्रवणेन वा यानिर्वृतिः सुखं स्यात्सानिर्वृतिः हेनाथ!स्वमहिम्न्यपि स्वाभाविकगुणाष्टकरूपमहिम्नि ब्रह्मणि शुद्धा-त्मन्यनुभूयमानेऽपि माभूत्नास्तीत्यर्थःअन्तकासिलुलितान् अन्तकाख्य-शत्रुखड्गात् विमानात्पततां स्वर्गिणां निर्वृतिः स्यात्किनास्त्येवे-त्यर्थः ॥ १० ॥

एवं नित्यनिरतिशयानन्दसाधनभूतं त्वां क्षयिष्णुसातिशयाल्प-सुखसाधनत्वेन भजन्तो मादृशा मन्दभाग्या एवेत्युक्ता स्वस्य सत् संगतिकथाश्रवणादिप्रणाड्याभक्तिमहैतुकीं प्रार्थयते भक्तिमिति हे अनन्त! देशकालवस्तुपरिच्छेदरहित!त्वयि निरस्तनिखिलदोषसार्वज्ञ्य निरतिशयानन्दत्वाद्यपरिमितोदारगुणसागरे त्वयि मुहुः पुनःपुनःनिर न्तरमित्यर्थः भक्तिं प्रवहतां कुर्वतामत एवामलः आशयोऽन्तःकरणं येषां महतामक्रोधाद्यात्मगुणयुक्तानां प्रसंगः प्रकृष्टः संगः महतामि-ति संबंधमात्रे षष्ठी महत्सम्बन्धिसंगमः महत्सुसंगम इत्यर्थः मे स्यात् येन महत्संगेन हेतुना प्रवृत्ता या भवतो गुणकथा सैव मधु तस्य पानेन मत्तः तृप्तः निरस्ततापत्रय इत्यर्थः उरुव्यसनम् अधिकदुःखं गर्भगत एवोल्वणं दुस्सहं नेष्ये तरामि ॥ ११ ॥

न केवलं सत्संगतेः कथाश्रवणादिप्रणाड्यापवर्गिकसुखसाधनत्व मेव किंतुजीवद्दशायामपि देहतदनुबन्धिनिमित्तसुख दुःखाग्रहत्व-मप्यस्त्याह। त इति। हे ईश ! मर्त्यं मरणशीलमपि अतितरां प्रियं शरीरं येच अनु मर्त्यं मनुसृत्य गच्छन्ति वर्त्तते इत्यनुगाः सुतादयः तांश्च ते जना नस्मरंति नाभि मन्यन्ते इत्यर्थः केत इत्यत्राह। हे अब्जनाभ ये जना भवदीयपदारविन्दयोः यत्सौगंध्यं तेन तस्मिन् वालुब्धं हृदयं येषां तेषु भागवतेषु कृतः प्रसंगो यैस्ते इत्यर्थः ॥ १२ ॥

———

### श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

यदीयं स्तुतिर्वेदसिद्धगुणानुरूपा तर्हि ब्रह्ममयेत्युक्तिः सफला स्यादित्यतस्तत्सिद्धैर्गुणैरभिष्टौति। योऽन्तरिति। प्रसुप्तां निद्रितामिमां वैखरीं नामवाचं संजीवयति संस्कारात्मना बोधयति अन्यान् हस्तादीन् प्राणानीन्द्रियाणि स्वस्वविषयाणि करोति तस्मै तुभ्यं नमइत्यन्वयः असुप्तः सुप्तानभिचाकशीतीतिश्रुतिः ब्रह्मणा वा एतानि करणानीति च ॥ ६ ॥

पुरिशयनात्पुरुषश्चेत्पुराणां नानात्वाद्धरेरपि नानात्वेनाद्विती-यत्वभङ्गइति तत्राह। एकस्त्वमिति। एकस्यापि विभावसुवत् प्रविभानात्वमविरुद्धमित्यर्थः "तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभव,,दिति श्रुतिः तस्था असन्तोऽसङ्गत्वगुणा सत्त्वादयोयेषु महदादिषु तें तथा तेषु अनेन स्वगतभेदराहित्यं पुरुषशब्देन प्रवृत्तिनिमित्तंचोक्तं भवति पुरिशयनात्पुरुषमपि एकमेवाद्वितीयमिति च ॥ ७ ॥

अस्मिन्नर्थे किं प्रमाणमत्राह। त्वद्दत्तयेति। वयुनयाज्ञानेन ज्ञेन अनेन दातृदेययोर्हि भेदं दातुरेकत्वं विश्वस्य हर्यधीनत्वं च पश्यतोज्ञानिनः प्रत्यक्षं प्रमाणमित्युक्तं भवति अचष्टापश्यत् सोऽज्ञानाद्विमुक्तो ज्ञानी भवतीतिश्रुतिं सूचयति। सुप्तः प्रबुद्ध इवेनेति ॥ ८ ॥

भगवत्प्रसादादेव भगवद्विषयं ज्ञानं स्यात्तदेव विपत्तौ बाधप्रदर्शने न द्रढयति। नूनमिति। ये अन्यस्य हेयत्वेनानित्यस्य सुखस्य हेतोर्भवाप्ययविमोक्षणं जननमरणात्मकसंसारछुक्तिदं कल्पतरुमिव भक्ताभीष्टदं त्वामर्चन्ति ते तव माययाविप्रलब्धचित्ता विमुष्टाः तयइत्यन्वयः विषयसुखं दुर्लभं चेत्कथं निन्द्यं स्यादित्यत उक्तं णपेति निरयेतिसुलभमित्यर्थः यच्छब्दोऽनुकर्षः ॥ ९ ॥

भवान् भगवत्प्रसाद एव प्रार्थनीय इति सूचयति तस्मा त्किं फलं दृष्टमिति तत्राह। यानिर्वृतिरिति। मा निर्वृतिः स्वमहिमानि अनन्याधारलक्षणमाहात्म्ये ब्रह्मणि परब्रह्मणि स्थितस्य जीवस्यापि माभूत् ध्यानादिकमन्तरेण नस्यात् कुतः "तद्यत्रैतत्सुप्तः समस्तः प्रसन्नः स्वप्नं न विजानाति एषआत्मेति होवाच तदमृतं तदभयमेतद्ब्रह्मेति,,। सहशान्त तद्वदयः प्रवव्राजाऽस्मह प्राप्यैव देवा तद्भयं ददर्शनाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नाविलुलितात्पर्यस्ताद्विमानात्पततां पुंसां मानिर्वृतिर्भवेत् स्वादितिनु। एतदुक्तं भवति कर्मसाध्यज्ञानात्स्वर्गादिलक्षणविमानं प्राप्य इतस्ततोनन्दनादिषु विहारार्थं पततां गच्छतां पुंसां निर्वृतिर्नास्ति किमुवक्तव्यमिति विमानाद्भ्रश्यतामित्यर्थो गौणकारे तत्र दुःखप्राचुर्यात् सानिर्वृतिर्नैस्यादिति वक्तुमयुक्तत्वादुक्तएवार्थः अन्तक

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

सिद्धुखिनस्त्वमनित्यत्वद्योतनायांक्तामति ज्ञातव्यमत्र ध्यानं ज्ञानोत्पत्त्यावन्तरङ्गसाधनं कथाश्रवणं तत्साधनं श्रुतगुणानां पश्चादुपसंहारोपपत्तेरिति ज्ञातव्यम् । अधिकारिणामनन्तत्वात्तत्तद्योग्यताविशेषादेवमुक्तमिति वा ॥ १० ॥

भवज्जना भगवद्भक्ताः तेषां मुखनिःसृताया भगवत्कथायाः श्रवणलक्षणोपासनयेत्युक्तं तत्र भवज्जनस्य चरितलक्षणकथाश्रवणेनेतीममर्थमभिप्रेत्य भगवज्जनसंगतौ भगवत्कथासु श्रवणं सुलभं स्यादिति मत्वा तत्संगतिं प्रार्थयते । भक्तिं मुहुरिति । येन प्रसंगेन भवाब्धिं नेष्ये तरिष्यामि । न प्राप्स्यामीति वा इष्टगताविति धातुः ॥ ११ ॥

भक्तानां लक्षणमाह । नेनेति । यस्मात् * सुतसुहृद्गृहवित्तदारान् संपदः स्मरन्ति ते अनितरां प्रियमाद्यमीशं त्वां न स्मरन्ति हेऽब्जनाभ ! ये भवदीय पदारविन्द सौगन्ध्यलुब्धहृदयेषु भवद्भक्तेषु कृतप्रसंगा भवद्भक्तभक्तास्तेस्मात् सुतादीन् संपद न स्मरन्तीत्यन्वयः अनेन श्रीहरिभक्तिरेव न भवाब्धि संतारिणी किंतु तद्भक्तभक्तिरपीति सूचितम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

यथा केचित् कल्पतरुमाश्रयन्ते । अथच तत् सकाशादेव मृतकद्वारा भोगमिच्छन्ति तद्वाग भोगश्च कुरुक्षेत्रादौ श्मशानवृत्तिकब्रह्मबन्धुषु तद्धस्तेन भोजनाद्रिरूपः प्रसिद्धः ॥ ९ ॥

ये शुद्धभक्तास्तं भवाप्ययमोक्षाविर्भावि ब्रह्मसुखमपि न बहु मन्यन्त इत्याह । येति ॥ १० ॥

अमलाशयानां निष्कामाणां येन परमपुरुषार्थतयाभिमतेन अञ्जसा अयत्नतः एव उरूणि व्यसनानि यस्मिन् नेष्ये गमयिष्यामि तस्यानुभवमात्रं दूरीकरिष्यामीत्यर्थः ॥ ११—१२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

भगवद्दत्तवेदार्थज्ञानस्तुष्टाव यत् ध्रुवः । वेदार्थो हि स एवेति नात्र संशेरते बुधाः । अकस्मादेव स्वीयवागादिसर्वेन्द्रियाणां भगवदुन्मुखभावमालक्ष्य एषामीदृशमप्राकृतत्वं श्रीभगवत्कृतमिति जानन् स्वस्मिन् भगवतो निरुपमां निरुपाधिकां तां कृपामेव साक्षादनुभवन्नति विस्मयेन नमति । य इति । स्वेन धाम्ना चिच्छक्त्या इमां मम त्वद्दासस्य वाचं त्वत्स्वरूपगुणलीलादिकमेव वर्णयित्रीं प्रसुप्तां एतावत्कालपर्यन्तं शयित्वेव स्थितां मृतामिव सञ्जीवयति यातु स्वीयान्नपानादिप्रकृतभोगवार्त्तां विषयी कुर्वती जाग्रत्येव आगामीत् तामत आरभ्य शाययति स्म नाशयति स्मेवेति भावः । न केवलं वागिन्द्रियमेव अपि त्वन्यान् हस्तपादादीनपि त्वत्परिचर्यादिकं विषयीकरिष्णून् प्राणांश्च त्वदुन्मुखानिति ध्रुवस्येन्द्रियादीनां चिन्मयत्वेनाप्राकृतत्वं सद्योजातमितिसूचितम् । अत्र ममेति इमा इति विशेषाभ्यां वागादीन्द्रियाणि विशिष्टान्येव लभ्यन्ते ॥ ६ ॥

साधारणानि तानि जडानि तु सर्वसाधारणजगतां त्वं मायाशक्त्या सह प्रविश्यान्तर्यामी सन्नुदासीन एव चेतयसीति नानात्वेनेत्याह । एक इति । अनुप्रविश्य पुरुषोऽन्तर्यामी तस्या मायाया असत्सु गुणेषु इन्द्रियादिषु चेतयितुं स्थितः सन् नानेव भासि तेन त्वद्भक्तानामिन्द्रियाणि त्वत्प्रसादात्त्वामेव विषयी कुर्वन्ति त्वन्मयान्यप्राकृतान्येव भवन्ति अन्येषान्तु तानि मायामेव विषयी कुर्वन्ति मायामयान्येवेति स्वधाम्नेति पदाभ्यां सिद्धान्तो ध्वनितः ॥ ७ ॥

त्वमेव सर्वशक्तिधरस्त्वद्दत्तज्ञानादिमतां भक्तानामेव कृतज्ञानां त्वं भजनीयो भवसीत्याह । त्वद्दत्तयेति । भवत्प्रपन्नो ब्रह्मादिः सनकादिर्वा ज्ञानिभक्तः त्वद्दत्तया वयुनया ज्ञानेन इदं विश्वमचष्ट अपश्यत् । कथं सुप्तः पुरुषः प्रबुद्धः सन् यथा पश्यति तद्वत् । अतः कृतविदा त्वत्कृतमेवमुपकारं जानता तस्य तव पादमूलं कथं विस्मर्येत कीदृशं आपवर्ग्यस्य अपवर्गो मुक्तिस्तदर्हस्य जिज्ञासुभक्तस्य शरणमेवम्भूतं त्वां त्वत्त एव लब्धज्ञाना अपि त्वामभजन्तः कृतघ्ना एवेत्यर्थः । हे आर्त्तभक्तस्य बन्धो ! एवञ्च ज्ञानिभक्तो जिज्ञासुभक्त आर्त्तभक्तश्चेति श्रीगीतोपनिषदुक्तास्त्रयो भक्ता व्याख्याताः ॥ ८ ॥

यश्चतुर्थोऽर्थार्थिभक्तो मद्विधः सस्वतिनिकृष्टो मूढ इत्याह । नूनं निश्चितमेव विमुष्टमतयो वञ्चितबुद्धयस्ते भवन्ति । के ये भवाप्ययौ जन्ममरणे तयोर्विमोचकं त्वां अन्यहेतोस्तुच्छफलार्थं अर्चन्ति अतस्ते त्वां कल्पतरुमर्चन्ति अथच कुणपेन मृततुल्यदेहेन उपभोग्यं सुखमिच्छन्ति न चेच्छायोग्यं तदित्याह यत् स्पर्शजं विषयसम्बन्धजन्यं सुखं तन्नरकेऽपि शूकरादियोनावपि भवति ॥ ९ ॥

ननु तर्हि भवाप्ययविमोक्षणमित्युक्त्वा ब्रह्मसायुज्यमत्रार्चनस्य फलं ब्रूषे तस्यैव कुणपापभोग्यत्वाभावात् तदिच्छन्त एव भवन्मतेऽभिज्ञास्तत्र नहि नहीत्याह । येति । ध्यानादीन्युपलक्षणं श्रवणादेरपि श्रवणेनेत्युपलक्षणं ध्यानादेरपि सा निर्वृतिः स्वस्य महिमरूपे ब्रह्मणि ब्रह्मानन्देऽपि माभूत् न भवति महतां भावो महिमा त्वं महान् तत्तु तव महत्वं सर्वं व्यापकत्वलक्षणोधर्म एवेति त्वद्भिन्ना यावती निर्वृत्तिस्तावती तत्र कथं वर्त्तनामिति भावः । मदीयं महिमानञ्च परब्रह्मेति शब्दितमिति मत्स्यदेवोक्त्यापि ब्रह्मणो भगवन्महिमत्वमवगतम् । ततश्च अन्तकासिना कालेन लुलितात् विमानात् स्वर्गीयात् पततां नास्तीति किमु वक्तव्यं ततश्च स्वर्गापवर्गाभ्यामधिकस्यान्यस्य कस्यापि फलाश्रवणात् त्वद्भक्तेर्यास्तथं फलं त्वद्भक्तिरेवेति भक्तेः स्वतः फलत्वं भक्तानाञ्च निष्कामत्वमुपपादितम् ॥ १० ॥

साच श्रवणकीर्त्तनादि मयी भक्तिः सत्सङ्गं विना न सुरम्या भवतीति सत्सङ्गं प्रार्थयते । भक्तिं त्वयि प्रवहतां प्रवाहरूपेणाविच्छिन्नामेव दधतां । ननु तर्हि संसारदुःखाब्धेर्भयं ते स्थास्यत्येवेति तत्र साटोपं सभुजास्फोटमाह येन महत् सङ्गबलेन उल्बणमपि बहु व्यसनयुक्तमपि भवाब्धिं नेष्ये प्रहीष्यामि यदि स मदभिमुखमभ्येति तदा आयातु द्रक्ष्यामि किं मे कर्त्तुं शक्नुयादिति भावः कीदृशः सन् भवद्गुणकथैव अमृतं तत्पानेन मत्त इति स्पर्द्धाविशङ्केषादयः सांसारिका धर्मा मत्तं न दुःखयितुं शक्नुवन्ति नापि मृत्युरमृतं पिबन्तं स्प्रष्टुमपि शक्नुयादिति भावः । अत्र सत्सङ्गात्थयैव भक्त्या भगवन्तं साक्षात् कृत्यापि पुनः सत्संगस्य प्रार्थनाद्भक्तिकारणमपि भक्तिफलमपि स्वयं भक्तिरपि सत्सङ्ग इति भक्तानां मतं व्यञ्जितम् ॥ ११ ॥

---

नेनस्मरन्तीत्यत्रभगवद्भक्तभक्ताः स्यान् संपदोयदानस्मरन्ति सदाऽऽद्यमीशंत्वतितरांनस्मरन्तीत्यन्वयाप्रतीतेरतस्तात्पर्यानुसारेणा यो जयति य इति ॥ टी०

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

ननु तदाप्यहन्तास्पदममतास्पदयोर्विद्यमानत्वे खलूद्वेगोदुर्वार इत्यत आह । ते नातितरां प्रियमपि मर्त्यं देहं न स्मरन्ति नानुसन्दधते ये च अदोमर्त्यमनुलक्ष्यीकृत्य वर्त्तमानाः सुतादयस्तानपि के ते ये भवदीयेत्यादि तुशब्देनान्येषां केवलयोगादिनिष्ठानां देहाभिमानानिवृत्तिं दर्शयन्तीति स्वामिचरणाः । भक्तानां निष्कामत्वद्योतकः स्वभाव एवायं वस्तुतस्तु कथमनुवर्त्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयमिति जरयत्यांशु या कोपं निगीर्णमनलो यथेन्यादेरनुसंहितं भक्तः फलं संसारनिवृत्तिरस्त्येव ॥ १२ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

तत्रादौ वाचो वाक् चक्षुषश्चक्षुरित्यादिश्रुतिमुपबृंहयन् स्तौति । य इति । अखिलाः समस्ताः शक्तयोधारयतीति तथा मम प्रसुप्तां वाचमन्यांश्च हस्तादीन् स्वधाम्ना स्वेनान्तर्यामिरूपेण अन्तः प्रविश्य संजीवयति यः तस्मै भगवते पुरुषाय तुभ्यं नमः ॥ ६ ॥

एवं सर्वशक्तित्वसर्वकरणप्रवर्त्तकत्वकरणविलक्षणत्वादिना स्तुत्वा विश्वहेतुत्वप्रकृतितद्गुणनियन्तृत्वकार्यकारणप्रकृतिविलक्षणत्वादिना स्तौति । एक इति । त्वमेक एव स्वशक्त्या अशेषं विश्वं सृष्ट्वा तस्याः शक्तिभूतायाः मायायाः असत्कारणं तद्भिन्नेषु असद्गुणेषु विश्वरूपेण स्थितेषु देहेन्द्रियवाक्प्राणादिषु प्रविश्य तत्तत्प्रवर्त्तकतया नानेव विभासि ॥ ७ ॥

अथ यो ब्रह्मणे विदधाति तस्मै वेदांश्च प्राहिणोतीत्यादि श्रुतिमुपबृंहयन् स्तौति । त्वद्दत्तयेति । हेनाथ! भवत्प्रपन्नः पाद्मोऽपि त्वद्दत्तयैव वयुनया ज्ञानेन सुप्तप्रबुद्ध इव आदौ सुप्तः पश्चात्प्रतिबुद्ध इव विश्वमचष्ट अपश्यत् तस्य तव पादमूलम् आपवर्ग्यं स्वार्थे ष्यञ् अपवर्गरूपं मुक्तौ प्राप्यं च शरणं साधनाव स्थायां सर्वतो रक्षकं च तत्तया साध्यसाधनरूपमित्यर्थः हे आर्तबन्धो ! कृतविदा कृतज्ञेन कथं विस्मर्येत न कथमपीत्यर्थः ॥ ८ ॥

मोक्षप्रदं प्राकृतभोगार्थं येऽर्चन्ति ते मायामोहिता इत्याह । नूनमिति । नूनं निश्चितं ते जनास्तवमायया विमुष्टमतयः ये त्वां भवाप्ययमोक्षणं जन्ममरणनिवर्त्तकं मुक्तिदमित्यर्थः कल्पतरुम् अन्यहेतोः प्राकृतपदार्थलाभार्थम् अर्चन्ति ते कुणपोपभोग्यं कुणपानां शवतुल्यानां जीवन्मृतानामुपभोग्यं स्पर्शजं दारापत्यादिसंबन्धजं सुखं नरकेऽपि शूकरादियोनावपि नृणां जीवानां भवति तदिच्छन्ति ॥ ९ ॥

चतुर्विधं हि सुखं निरञ्जनः परमं साम्यमुपैति मद्भावायोपपद्यते इति श्रुतिस्मृतिप्रोक्तं परब्रह्मभावाप्तिलक्षणमाद्यं तद्भजनजं द्वितीयम् क्षेत्रज्ञस्वरूपप्राप्तिजं तृतीयम् सांसारिकं चतुर्थम् तत्र निष्कामभक्तानां भगवद्भावाप्तिमोक्षप्रदं तद्भजनानन्देयदानन्दंतत्स्वेव ब्रह्मप्राप्तावपि नास्ति कुतः दारापत्यादिप्राकृतपदार्थसंबन्धेनेत्याह । यानिर्वृतिरिति । स्वमहिमनि देहेन्द्रियादिविलक्षणे स्वस्वरूपे ब्रह्मणि अक्षरं जीवात्मनि माभूत् नभवति अन्तकस्य मृत्योः असिः कालस्तेन लुलितात् खण्डितात् विमानात् पततां स्वर्गिणां दारापत्यादिसु खासक्तानामपि सा नास्तीति किमुवक्तव्यम् ॥ १० ॥

एवं सांसारिकसुखं जीवस्वरूपप्राप्तिसुखमनादृत्य भजनसुखमथ भजनफलभूतभगवद्भावापत्तिलक्षणमोक्षसिद्ध्यर्थं भगवज्जननिष्ठानां महतां संगं प्रार्थयते । भक्तिमिति । येन त्वद्भजननिष्ठदकेन संगेन उरुव्यसनं संसारं बहुदुःखमुल्वणं प्रचण्डं भवार्णवं नेष्ये पारं गमिष्यामि ॥ ११ ॥

महत्संगिनां संसारतापप्रदं देहाद्यासक्तिराहित्यमाह । ते न स्मरन्तीति हेईश! हेअब्जनाभ! ये भवदीयपदारविन्दसौगन्ध्ये लुब्धं हृदयं येषां तेषु महत्सु कृतप्रसंगाः ते अन्येषां प्रियमपि मर्त्यं मरणधर्मकं शरीरं नस्मरन्ति येचान्वदः शरीरमनुसुतादयस्तांस्त्वतितरां न स्मरन्ति ॥ १२ ॥

---

भाषाटीका

ध्रुवजी बोले जोभगवान् हमारे अंतः करणमे प्रवेश होकर हमारी इस सोई हुईवाणीको जगाते हैं जो समस्त शक्ति को धारण करते हैं अपने तेजसे अन्यभी सबहस्त चरणादि इन्द्रियोंका तथा प्राणों का प्रेरण करते हैं तिन आप भगवान्के अर्थ हमारा नमस्कार है ॥ ६ ॥

हे भगवन् ! आपएकहीमाया नामक अनेक गुणवाली अपनीशक्तीसे महदादिसंसूर्ण इसजगत्को सृजकरके फिर उस मे प्रवेश होकर पुरुष नामधारण करके उसमाया के असत् गुणों मे नानाप्रकार से भान होते हो जैसे कि काष्ठ में आकृति के अनुसार अग्निभान होता है ॥ ७ ॥

हे नाथ हे आर्तबन्धो ! आप के शरण को प्राप्त हुआ जो ब्रह्मा सो आपके दिये हुए ज्ञानसे इस जगत् को ऐसा जान गयाकि जैसे सोकर उठा हुआ आदमी पहली बात को जानता है मुक्तों को भी शरण लेने योग्य जो आप का पाद मूल तिसको कृतज्ञ होकर कौन कैसे भूलसक्ता है ॥ ८ ॥

वे लोग अवश्य ही आप की माया से मोहित हैं जो लोग जन्म मरण के नाश करने वाले आप को दूसरे काम के निमित्त पूजते हैं वे लोग कल्प वृक्ष की सेवा कर के भी मुरदा के तुल्य शरीर से भोगने के योग्य नरक में भी मनुष्यों को मिलने वाले सुखों को चाहते हैं ॥ ९ ॥

हे नाथ ! जो आनंद जीवों को आप के पादपद्म के ध्यान से होता है अथवा आपके भक्तों के साथ कथा श्रवण मे होता है सो आनंद केवलानुभावानन्द ब्रह्मस्वरूप में भी नहीं होता है फिर काल रूपी खड्ग से कटकर गिरते हुये विमान से गिरने वाले स्वर्ग वासियों को तो कहां वह आनंद होगा ॥ १० ॥

हे अनंत ! आपमें निरंतर भक्ति करने वाले निर्मल अंत.करण वाले महात्मों का संग मेरे को मिले जिससे मै उनके साथ में आपके गुणों के कथा रूप अमृत को पान करके मतवारा होकर के बड़े कठोर दुःख वाले संसार सागर को तर जाऊंगा ॥ ११ ॥

हे ईश.हे पद्म नाभ! जो महात्मा आपके चरण कमल के सुगंध के लोभी हृदय वाले भक्तों का संग करते हैं वे लोग इस मनुष्य शरीर कुं तथा उस शरीर के पीछे जो घर मित्र धन नारी आदि को कभी नहीं स्मरण करते हैं ॥ १२ ॥

---

तिर्यङ्नगद्विजसरीसृपदेवदैत्यमर्त्यादिभिः परिचितं सदसद्विशेषम् ॥

रूपं स्थविष्ठमज ! ते महदाद्यनेकं नातःपरं परम ! वेद्मि न यत्र वादः ॥ १३ ॥

कल्पान्त एतदखिलं जठरेण गृह्णञ्छेते पुमान् स्वदृगनन्तसखस्तदङ्के ।

यन्नाभिसिन्धुरुहकाञ्चनलोकपद्मगर्भे द्युमान् भगवते प्रणतोऽस्मि तस्मै ॥ १४ ॥

त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ।

यद्बुद्ध्यवस्थितिमखण्डितया स्वदृष्ट्या द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से ॥ १५ ॥

यस्मिन् विरुद्धगतयो ह्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्यात् ।

तद् ब्रह्म विश्वभवमेकमनन्तमाद्यमानन्दमात्रमविकारमहं प्रपद्ये ॥ १६ ॥

सत्याशिषो हि भगवंस्तव पादपद्ममाशीस्तथानुभजतः पुरुषार्थमूर्त्तेः ।

अप्येवमार्य ! भगवान् परिपाति दीनान् वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ १७ ॥

मैत्रेय उवाच ॥

अथाभिष्टुत एवं वै सत्संकल्पेन धीमता ।

भृत्यानुरक्तो भगवान् प्रतिनन्द्येदमब्रवीत् ॥ १८ ॥

श्रीभगवानुवाच ॥

वेदाहं ते व्यवसितं हृदि राजन्यबालक ! ।

तत्प्रयच्छामि भद्रं ते दुरापमपि सुव्रत ! ॥ १९ ॥

नान्यैरधिष्ठितं भद्र ! यद्भ्राजिष्णु ध्रुवक्षिति ।

यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् ॥ २० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

नन्वेवं विद्वानपि त्वं किमित्यभिमानं वहस्यतआह । तिर्यगिति । तिर्यङ्नगादिभिः परिचितं व्याप्तं सन्तोऽसन्तश्च विशेषा यस्य महदादीन्यनेकानि कारणानि यस्य हे परम ! अज ! ते इदं स्थविष्ठं विराड्रूपं केवलं वेद्मि अतः परमीश्वरस्वरूपं न वेद्मि यत्रवादः शब्दव्यापारो नास्ति तद्ब्रह्मरूपं च न वेद्मि अतोऽभिमानो न निवर्त्तत इति भावः ॥ १३ ॥

तदेवं भगवदनुकंपया तद्रूपद्वयं ज्ञात्वेश्वररूपमनुपश्यन्नमस्करोति । कल्पान्तएतदिति । एतत्त्रैलोक्यं यः पुमान् शेते स्वस्मिन्नेव दृक् नबहिर्यस्य योगनिद्रारूढत्वात् अनन्तसखः शेषसहायः तदङ्के शेषोत्संगे यस्य नाभिरेव सिन्धुः समुद्रस्तस्मिन् रोहतीति तथा तस्मिन् काञ्चनलोकपद्मस्य गर्भे कर्णिकायां द्युमांस्तेजस्वी ब्रह्मा भवति तं प्रणतोऽस्मीत्यर्थः ॥ १४ ॥

ननु ममापि स्वापाद्यवस्थावत्त्वे कोजीवाद्विशेष इत्यत आह । त्वं तु व्यतिरिक्तोजीवविलक्षण आस्से तिष्ठसि वैलक्षण्यमेवाह त्वंतु नित्यमुक्तोजीवस्तु त्वत्प्रसादान्मुच्यते । त्वं परिशुद्धः सतु मलिनः त्वं विबुद्धः सर्वज्ञः । सतु अज्ञः त्वं आत्मा सतु जडः त्वं कूटस्थः सतु विकारी त्वमादिपुरुषः सतु आदिमान् त्वंतुभगवान् सतु भगहीनः त्वं त्रयाणां गुणानामधीशः सतु परतन्त्रः । कुत एतद्वैलक्षण्यं यद्यतः बुद्ध्यवस्थितिं बुद्धेस्तां तामवस्थां अखण्डितया स्वदृष्ट्या चिच्छक्त्या द्रष्टा पश्यसि द्रष्टेति तृन्प्रत्ययान्तम् । अतोबुद्ध्यवस्थितमित्यत्र षष्ठ्यभावः तथाभूत एव त्वं स्थितौ पालने अधिमखः यज्ञाधिष्ठाता श्रीविष्णुः ॥ १५ ॥

तमेव ब्रह्मरूपेण ज्ञातं नमस्करोति । यस्मिन्निति । पतन्ति अकस्मादुद्भवन्ति विश्वस्य भवो यस्मात् एकमखण्डमाद्यमनादि ॥ १६ ॥

सकामभजनादपि मोक्षमाशासान आह हे भगवन् ! पुरुषार्थः परमानन्दः स एव मूर्त्तिर्यस्य तव पादपद्मं आशिषो राज्यादेः सकाशात् सत्या आशीः परमार्थफलं हि निश्चितं कस्य तथा तेन प्रकारेण त्वमेव पुरुषार्थ इत्येवं निष्कामतया अनुभजतः यद्यप्येवं तथापि हे अर्य स्वामिन् ! दीनान् सकामानप्यस्मान् भगवान् भवान् परिपाति संसारभयाद्रक्षत्येव यतः अनुग्रहे हिताचरणे कातरः परवशः वाश्रा नवसूताधेनुर्वत्सं क्षीरं पाययति वृकादिभ्यो रक्षति च तद्वत् ॥ १७—१८ ॥

व्यवसितं सङ्कल्पितम् ॥ १९ ॥

तत्प्रयच्छामीत्युक्तं किन्तदित्यपेक्षायामाह । नान्यैरिति सार्द्धाभ्याम् । हे भद्र ! ध्रुवाक्षितिर्निवासो यस्मिन् तस्मिन् आहितमर्पितम् ॥ २० ॥

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

एवं विद्वान् कथामृतादिनाभिमाननिवृत्तेरानुषङ्गिकत्वं जानन्नपि अतो विरः इद्रूपात्परमित्युक्त्येश्वररूपस्यचिदानन्दमयत्वं व्यज्यते यत्रनिर्विशेषब्रह्मणिशब्दव्यापारोऽभिधादिर्नास्ति तस्य सविशेषवि विषयत्वात्किन्त्वारोपितनिवृत्तावेव शब्दस्य व्यापारो नतद्बो धेतादृशं ब्रह्मरूपमपि नवेद्मि चकारोऽप्यर्थे तेन च तज्ज्ञानस्येश्वर-ज्ञानान्न्यूनत्वमभिप्रेतम् अतः शाब्दज्ञानित्वेऽप्यनुभवाभावात् ॥१३॥

तदैव तादृशदैन्याविज्ञप्तिकाल एवं ईश्वरस्य स्वरूपं गर्भोदशा-यिपद्मनाभाख्यं तदुक्तं लघुभागवतामृते "गर्भोदकशयः पद्मनाभो सार्वनिरुद्धकः । सोऽयं हिरण्यगर्भस्य प्रद्युम्नत्वे नियामक„ इति काञ्चनलोकपद्मस्य प्रकाशबहुललोकात्मककमलस्य भवतीत्यध्या हारात्कर्मणि चतुर्थ्यभ्युपगमादित्यर्थं इत्युक्तम् ॥ १४ ॥

स्वापाद्यवस्थावत्त्वे स्वापादीत्यादिना जाग्रदादिपरिग्रहः स तु जड इति तस्य चिद्रूपत्वेऽपि जडतादात्म्याध्यासेन जडप्रायत्वाज्जड इत्युक्तम् आदिमत्त्वमापतदध्यासेनैव अतः तृच्प्रत्ययान्तत्वाभावादिक न्तु तृन्प्रत्ययान्तत्वात् भगवति स्वापाद्यवस्थास्तुस्वरूपानन्दोल्ला-सलीला एवेति नजीवसाम्यमिति ज्ञेयम् ॥ १५ ॥

तमेवेश्वरं कस्मिंश्चिदधिकारिणि असम्यगाविर्भावाद्ब्रह्मरूपेण ज्ञातं यस्मिन् निःशक्तिकत्वेन प्रतीतेऽपि आनुपूर्व्यात्भक्तिनाननुभव्य-प्रयुक्तक्रमात् अकस्मादिति नियतकारणानियम्यन्वमेवाकस्मिकत्वं तत्रविरुद्धगतयइति विद्यासर्वज्ञत्वशक्तिः ततोऽविरुद्धाऽविद्याभक्त वात्सल्यलीलया"ततो वत्सानदृष्ट्वेत्यपुलिनेऽपि च वत्सपान् उभावपि वने कृष्णो विचिकायसमंतत„ इतिवत् अननुसंधानरूपामोहाख्याध शोकमोहौस्नेहोवाभयंवायेऽज्ञसंभवादित्यत्राज्ञसंभवा इतिविशेषणास्य व्यावर्त्तकत्वाद्विज्ञसंभवानां तु तेषां तत्र स्वीकारात् अनिशमित्यनेन शक्तीनां नित्यत्वमभिप्रेतम् तत्र वस्तुन एकत्वेऽपि चर्याश्त्वणामिति न्यायेन निर्विकल्पकस्फूर्त्तेः प्राथमिकत्वात्सविकल्पकायाश्च तस्यास्त-दनन्तरजत्वाज्ज्ञानमध्योपासनया तदेव तत्त्वमसम्यगाविर्भवद्ब्रह्मेत्यु-च्यते तदेवात्र प्रस्तूयते अत एवानन्दमात्रमित्युक्तम् ऐश्वर्य्यज्ञानभ-क्त्यातु परमात्मशुद्धभक्त्यातु भगवानिति हर्षितारतम्यादेव तथा-तथास्फूर्त्तिरितिविवेचनीयम् अखण्डं त्रिविधपरिच्छेदशून्यं सजा-तीयादित्रिविधभेदशून्यम्वा ॥ १६ ॥

सकामजनादपि साधनान्मोक्षं संसारनिवृत्तिं मूर्त्तिः श्रीविग्रहः यद्यपि देहदेहिभावाभावात् अन्यपदार्थबहुव्रीहिर्न संगच्छते तथापि "उभयव्यपदेशात्त्वहि कुण्डलवत्„इति न्यायात् राहोःशिर इति वदभे-दषष्ठी यद्यप्येवं त्वत्पादपद्मस्यैव परमपुरुषार्थत्वं तथापि आर्य्यआस-योत्मना अर्य्यस्वामिन् अर्य्यः स्वामिवैश्ययोरिति निपाताद्ध्रस्वादि र्वायम् ॥ १७ ॥

सन्सत्यः उत्कृष्टधामविषयकः संकल्पो यस्य तेन अर्थात् स्तुत्य-नन्तरं प्रतिनन्द्य स्तुतिं संश्लाघ्य ॥ १८ ॥

संकल्पितमर्थं संकल्पादपि परमोत्कृष्टपददानेच्छया तेभद्रामि-त्याशीः ॥ १९ ॥

नान्यैरिति सार्द्धकम् अवान्तरकल्पवासिनां दैनंदिनप्रलयपर्य्यंत स्थायिनामपि परस्तात् लोकत्रयनाश इति त्रिलोकपक्षाभिप्रायेणो-क्तमन्यथा सुदुर्लभं यत्परमं पदंहरेरिति ततो गंतासि मत्स्थानमि-ति आतिष्ठज्जगतांवंद्यं तद्विष्णोः परमं पदमिति ध्रुवस्य वैकुण्ठपदा-धिरोहणाभित्यादिवाक्यानि व्याकुर्व्युः ॥ २० ॥

———

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

अब्जनाभेत्यनेन निरतिशयसौगन्ध्यवद्दिव्यमङ्गलविग्रहवैशिष्ट्य मुक्तं महदाद्यशेषं सृष्ट्वानुप्रविश्य पुरुष इत्यनेन प्रकृतिप्राकृ पुरुषशरीरकत्वं च एवं स्थूलसूक्ष्मशरीरद्वयमुक्तम् अनन्तेत्ये सत्यज्ञानानन्दलक्षणं दिव्यात्मस्वरूपमेतान्नितयमेव यथावि वेचयन् शरणं व्रजति । तिर्यगित्यादिभिश्चतुर्भिः । तत्राद्येन स्थू रूपं प्रपञ्चयति तिर्यगिति हे परम ! स्थूलसूक्ष्मरूपाभ्याम् वि लक्षण निःसमाभ्यधिक ! अत एवाज ! स्थूलरूपगतोत्पत्ति वि शरहित नगाः स्थावराणि एतच्चराणामप्युपलक्षणं तिर्यञ्च पशुमृगादयः द्विजाः अण्डजाः एषां तिर्यक्त्वादेवसंग्रहे सिद्धे बलीवर्दन्यायेन पृथग्ग्रहणम् एवं सरीसृपग्रहणं च आदिशब्दे स्वेदजोद्भिज्जसंग्रहः तिर्यगादिभिः परिचितं परितो व्या सदसत् चिदचिदात्मकं विशेषं विशेषः पृथिवी सोऽस्यास्ती विशेषम् अर्श आदेराकृतिगणत्वादच्‌विशेषपर्यन्तमित्यर्थः महदा महान् आदिर्यस्य अनेकं विविधविचित्रसंनिवेशं स्थवि स्थूलं ब्रह्माण्डात्मकं ते तव रूपं वेद्मि त्वच्छरीरत्वेन वेद्मीत्य अतः स्थूलरूपात्परं विलक्षणं यद्दिव्यमङ्गलविग्रहात्मकं सू रूपं तदपि न वेद्मीति न किंतु त्वत्प्रसादाद्वेद्म्येवेत्यर्थः परं विशिनष्टि । यत्र यद्विषये वादः प्राकृतत्वाप्राकृतत्ववादः प्रवर्त इत्यर्थः यद्वा अवेद्मीतिच्छेदः अवेद्मीत्यकारो निपातो नञ् र्यायः ततश्च अतः स्थविष्ठाद्रूपात्परं विलक्षणं "नभूतसंघसंस्था देहोऽस्य परमात्मन„ इत्युक्ताप्राकृतदिव्यविग्रहात्मकं रूपं त परं दिव्यात्मस्वरूपं सत्यं ज्ञानमनन्तमित्युक्तविधमवेद्मीति न कि त्वत्प्रसादाज्ज्ञानाम्येवेत्यर्थः रूपं स्वरूपं वर्णयन् विशिनष्टि । य वादइति यत्र स्वरूपे च वादः देवतिर्य्यङ्मनुष्यादिजाति वादः निर्विशेषत्ववादश्च प्रवर्त्तत इत्यर्थः यत्र वादः शब्द पारोनास्ति तद्ब्रह्मस्वरूपं च न वेद्मीति व्याख्यानंत्वयुक्तम "स वेदा यत्पदमामनन्तिशास्त्रयोनित्वात्॥१।१।३। वचसां वाच्यमुत्त नतास्म सर्वे वचसां प्रतिष्ठा यत्र शाश्वती । वेदैश्चसर्वैरहमेव वे इत्यादिश्रुतिसूत्रस्मृतिभिः शास्त्रैकवेद्यत्वाभिधानात् ॥ १३ ॥

किंचयः पुनरेतच्चिदचिदात्मकं जगत्कल्पान्ते प्रलये उ गृह्णन् कुक्षौ निवेश्येत्यर्थः स्वस्मिन् दृक् यस्य स्वानुभवै शील इत्यर्थः अनन्तसखः शेषसहायः तदन्त अनन्त भोगशते निद्रारूढोभवति यस्य पुंसोनाभिरेवसिन्धुस्तस्मिन् उद्भूत अनमयं लोकात्मकं पद्मं तस्य गर्भे कर्णिकायां द्युमान् तेजस् ब्रह्मा भवति तस्मै भगवते तुभ्यं प्रणतोऽस्मि ॥ १४ ॥

एवं रूपं विशिष्य पुनः स्वरूपं विशिनष्टि । त्वमिति भ्याम् । ननुजीववन्ममापि स्थूलसूक्ष्मशरीरत्वे ततः कोविशे इत्यत्राह त्वमिति त्वमकर्मायत्तस्वेच्छोपात्ताप्राकृतदिव्यम लगुणास्पदविशिष्टस्त्वं स्थितौ निमित्तभूतायां जगत्पालनार्थ त्यर्थः अधिमखः यज्ञाराध्यो यज्ञफलप्रदश्च व्यतिरिक्तः तिपुरुषविलक्षणः आस्से तिष्ठसि अत्राधिमख इत्यनेन वित्यनेन च परित्राणाय साधूनामित्युक्तरीत्या सर्वयज्ञाराध त्वाय साधुपरित्राणायचत्वज्जन्म नतुजीववत्कर्मायत्तमित्यवगम अव्यतिरिक्त इति छेदे प्रकृति पुरुष विलक्षण एवताभ्याम क्त्वेनावस्थितइत्यर्थः नन्वनंतविचित्रस्थिरचरात्मकस्य धारणपोषणभोगाद्यात्मकं पालनं कथमेकेन मया युगप शक्यमित्यत्राह । बुद्ध्यवस्थितं बुद्धावर्वास्थतं विपर्यभूतं स्वरूपज्ञान विषयमितियावत् अप्रगाढतया असंकुचितया स्वा

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

संकल्परूपज्ञानेन द्रष्टा साक्षात्कर्त्तासि कृत्स्नस्य जगतः सर्वदेशकालावस्थास्वनिष्टनिरसनेष्टप्रापणात्मकपरिपालनोपयोग्यसंकुचितस्वसंकल्परूपज्ञानाश्रयोऽसीत्यर्थः स्थितावधिमजव्यतिरिक्त इत्यपिपाठः तत्र अजः प्रकृतिपुरुषयोः स्वरूपान्यथाभावस्वभावान्यथाभावरूपोत्पत्त्यादिरहितः अतएव व्यतिरिक्तः प्रकृतिपुरुषाभ्यां विलक्षणः स्थितावधिं व्यवस्थितावधिं मत्स्यावतारपर्यन्तं वा सत्त्वं जगत्सर्वमखण्डितज्ञानेन साक्षात्कुर्वन् आस्सेइत्यर्थः एवं सत्त्व नित्यमुक्तः व्याप्यवस्तु गतदोषास्पृष्टः अनेनाचिद्व्यावृत्तिः अचिद्द्रव्यंहि अव्यक्तमहदादिकं स्वकार्येषु पृथिव्यादिषु व्याप्तं तद्गतदोषैः स्पृष्टम् एवं जीवव्यावृत्तिश्च जीवोऽपि स्वादिशरीरेषु व्याप्तः परमार्थतस्तद्गतदोषैरस्पृष्टोऽप्यहं ममाभिमानाभ्यां क्लिश्यतीति न नित्यमुक्तः त्वंतु नित्यमुक्त इति भावः तत्र हेतुः विशुद्धः अकर्मवश्यः नित्यमुक्तशब्दात्परस्य सुपालोप आर्षः कर्मधारयोवा विशुद्धत्वं हेतुः परिशुद्धः असंकुचितज्ञानः जीवोहिकर्माधीनसंकोचविकासभाग्भाव रूपज्ञानाश्रयो न परिशुद्धः इति भावः तत्र हेतुः कूटस्थः निर्विकारः स्वरूपतः स्वभावतोऽपि निर्विकारस्त्वं जीवस्तु स्वभावतो विकारी ननु नित्यमुक्तत्वपरिशुद्धत्वादिगुणास्सन्ति मुक्तेषु नित्यसिद्धेषुचातिव्याप्तानि तत्राह । आत्मा तेष्वन्तःप्रविश्य धारकः नचात्मत्वमन्यत्रतिप्रसक्तमतउक्तमादिपुरुषो भगवान् अधीश इति आदिपुरुष इति कर्मधारयः आदिशब्दश्च कारणवाची कारणंहि कार्यस्यादिः जगत्कारणभूतः पुरुष इत्यर्थः जगत्कारणत्वञ्च न मुक्तेषूपपन्नं "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च भोगमात्रसाम्यलिङ्गाच्चेति,, मुक्तेषु जगद्व्यापाराभावस्य सूत्रितत्वात् भगवच्छब्देन समग्रषाड्गुण्यपरिपूर्णत्वमुच्यते तदप्यन्यत्रातिप्रसक्तमेव अधीशः त्रयाणां सत्त्वरजस्तमसां तत्परिणामरूपाणां त्रयाणां लोकानां वा अधीशः इदमप्यनतिप्रसक्तमेवेति त्रिविधचेतनव्यावृत्तिः ॥ १५ ॥

ननु कथमचेतनेषु चेतनेषु चावस्थितस्यापि तद्गतदोषास्पर्शः नचाकर्मवश्यत्वाद्युपपत्तिः पुण्यापुण्यसजातीयचेष्टितानि कुर्वतस्तदवश्यत्वानुपपत्तेरित्यत्राह । यस्मिन्निति। विरुद्धमतयः विरुद्धामतिर्यासु ताः आश्रयान्तरेषु सामानाधिकरण्यानर्हा विद्यादयो ज्ञानादयः विविधाः शक्तयः आनुपूर्व्यात्क्रमेण यस्मिन् पतन्त्याविर्भवन्ति शक्तिर्हिकार्योपयोग्यपृथक्सिद्धविशेषणं तत्र सृष्टिस्थित्यन्तः प्रवेशनियमनसंहारादीनां क्रमिकत्वेन पौर्वापर्यात्तदुपयुक्तशक्तीनामपि तद्द्वारा पौर्वापर्यमत्रविवक्षितं सर्वदा सर्वशक्तेस्तस्य क्रमेण शक्त्याश्रयत्वायोगात् एवंच सर्वशक्तेस्तस्य सर्वमुक्तमुपपन्नमिति भावः उक्ताकारं ब्रह्म जगत्कारणत्वेन लक्षणेन लक्षयन् संग्रहेण तत्स्वरूपमपि शोधयन् शरणं व्रजति। तदिति। तद्ब्रह्म विश्वभवमेकमित्यनेन "यतोवा इमानि भूतानीति,, वाक्यं स्मारितम् अविकारमानन्दमात्रमनन्तमिति पदत्रयेण "सत्यं ज्ञानमनन्तं ब्रह्मेति,, वाक्यं स्मारितं तत्राहि जन्मादिवाक्ये जगत्कारणत्वेनोपलक्षितस्य ब्रह्मणः स्वरूपं सत्यादिवाक्यशोधितम् एवमत्रापि तथाहि विश्वादयोर्विविधशक्तय इत्यनेन सृष्ट्याद्युपयुक्ताः परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेत्युक्तशक्तीनामभिधानेन जगज्जन्मादयोऽप्युपस्थापिताः सर्वशक्तिमत्त्वेन प्रसिद्धं ब्रह्म यस्मिन्निति यच्छब्देनानूद्योपस्थितानां जन्मादीनां लक्षणत्वमुच्यते विश्वभवमिति भवत्यस्मादिति भवं विश्वस्य भवं विश्वभवं विश्वोत्पत्तिकारणमित्यर्थः एकशब्देनोपादानत्वंनिमित्तत्वंस्थितिसंहारकारणत्वं चैकस्यैवेति विवक्षितं तद्ब्रह्मेत्यनेन अधीहि भगवो ब्रह्मेत्युपक्रमे पृष्टस्य प्रतिवचनत्वसमर्थकं तद्विजिज्ञासस्व तद्ब्रह्मेति वाक्यं स्मारितम् एवं जगत्कारणत्वेनोपलक्षितं ब्रह्म स्वरूपतो लक्षयति। अविकारमिति। अनेन सत्यपदं स्मारितंतेन हि सततपरिणामिनोऽचेतनात्तत्संसृष्टाच्चेतनाच्च वैलक्षण्यमुक्तम् एतमत्राप्यविकारपदेन आनन्दमात्रं मात्रचा कापि जडत्वव्यावृत्तिः अनेन ज्ञानपदं स्मारितम् अनुकूलज्ञानमेवहि आनन्दः श्रौतस्यापि ज्ञानपदस्यानन्दरूपज्ञानपर्यवसानत्वद्योतनायानन्दशब्दः प्रयुक्तः अनेनानन्दपदेन नित्यासंकुचितानुकूलज्ञानाश्रयत्वं विवक्षितं तेन मुक्तचेतनव्यावृत्तिः तेहिबद्धदशायां संकुचितज्ञानत्वेन न नित्यासंकुचितज्ञाना अनन्तपदेन देशकालवस्तुपरिच्छेद राहित्यं विवक्षितं अनेन नित्यसिद्धव्यावृत्तिः तेषां स्वरूपस्याणुपरिमाणत्वेनानन्त्याभावात् तत्र देशपरिच्छेदोनाम इदमत्र नभवतीति कालपरिच्छेदोनाम इदमिदानीं न भवतीति एवं रूपः एतद्द्वयरहितं वस्तुपरिच्छेदोनाम सर्ववस्तुसामानाधिकरण्यार्हत्वम् एवं भूतं ब्रह्माहं प्रपद्ये शरणं गतोऽस्मि ॥ १६ ॥

एवं ब्रह्मस्वरूपगुणान् विशोध्य तं प्रपद्यैतद्भजनस्य फलाविनाभूतत्वमाविष्कुर्वन् धात्मदर्शनेच्छस्तस्याभिमतार्थादप्यतिशयितपुरुषार्थप्रदत्वमाह। सत्याशिषइति। हेभगवन् ! सत्याशिषः आशिषः सत्याः क्रियन्ते येन स सत्याशीः तस्य पुरुषार्थमूर्तेः स्वयं पुरुषार्थभूतस्वरूपस्य तव पादपद्मं यथा आशीः तथा इच्छानुरूपमित्यर्थः अनुभजतोऽतएव दीनान् त्रिवर्गनिष्ठानप्येवम्भूतानस्मान् अनुग्रहकातरः अनुग्रहैकविवशः भगवान् षाड्गुण्यपरिपूर्णः भवान् वत्सकं स्वार्थेकः वाश्रेश नवप्रसूताधेनुरिव हे आर्य स्वामिन् । परिपाति अभिमतप्रदानेन परिपाति परीत्युपसर्गेण सर्वतः पाति संसारभयाच्च पातीत्ययमर्थोविवक्षितः ॥ १७ ॥

स्तुतिमुपसंहरति। अथेति। सत्संकल्पेन दृढसंकल्पेन धीमता ध्रुवेणैवमभिष्टुतः स्तुतः अनन्तरं भक्तेष्वनुरक्तोनिरतिशयप्रीतिमान् भगवान्प्रति सद्यस्तुतिमिमितिशेषः इदं वक्ष्यमाणमब्रवीत्॥१८॥

उक्तमेवाह । वेदेति। हेराजन्यबालक! ते त्वया हृदि व्यवसितम् अभि मतविषयत्वेन निश्चितमहं वेद जानामि ते त्वया व्यवसितमित रैर्दुरापं दुर्लभमपि हे सुव्रत ! ते तुभ्यं प्रयच्छामि ददामि ॥ १९ ॥

व्यवसितमेव प्रपञ्चयति । नान्यैरिति । नान्यैर्धिष्ण्यं हेभद्र ! ध्रुव ! ध्रुवा शाश्वती स्थितिर्वासो यस्मिन् भ्राजिष्णु दीप्तिमत् अन्यैरनधिष्ठितं यत्र स्थाने ज्योतिषां ज्योतीरूपाणां ग्रहादीनां चक्रमाहितमर्पितम् ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

ब्रह्मादीनामपि त्वत्प्रसादात् ऋते त्वद्रूपदर्शनमसुकरं किमुत मादृशानामिति भावेनाह। तिर्यङ्ङगेति। हेअज!अशेषं सर्वावयवोपपन्नं महदादि महत्तत्त्वमादिर्यस्य तत्तथोक्तं सता पृथिव्यादिभूतत्रयेणामता वाय्वादिभूतद्वयेन विशेषोयस्य तत्तथोक्तं स्थविष्ठं स्थूलतमं तिर्यगादिभिर्विरचितं ब्रह्माण्डाख्यं रूपं वेद्मि हेपरम ! अतः स्थूलात्परं सूक्ष्मं रूपं न वेद्मि अत्र हेतुगर्भविशेषणमाह। यत्रेति। वा च इत्युपलक्षणं वेदाभिमानिनांलक्ष्म्यादयोयत्र यद्विषयज्ञानवन्तोन भवन्ति किमुक्तं भवति लक्ष्मी ब्रह्माद्या अनुदिनं पश्यन्तोऽपि किंचिदनन्तत्वेन जानन्ति किन्त्वहं तदुक्तम "पश्यमानोऽपि तु हरिं नतु वेद्मि

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

एवं विद्वान् कथामृतादिनाभिमाननिवृत्तेरानुषङ्गिकत्वं जानन्नपि अतो विरुद्धरूपात्परमित्युक्तो ईश्वररूपस्यचिदानन्दमयत्वं व्यज्यते यत्रनिर्विशेषब्रह्मणिशब्दव्यापारोऽभिधादिर्नास्ति तस्य सविशेषविषयत्वात्किन्त्वारोपितनिवृत्तावेव शब्दस्य व्यापारो नतद्बोधेताहशं ब्रह्मरूपमपि नवेद्मि चकारोऽप्यर्थे तेन च तज्ज्ञानस्येश्वरज्ञानान्न्यूनत्वमभिप्रेतम् अतः शाब्दज्ञानित्वेऽप्यनुभवाभावात् ॥१३॥

तदैव ताहशदैन्याविज्ञप्तिकाल एव ईश्वरस्य स्वरूपं गर्भोदशायिपद्मनाभाख्यं तदुक्तं लघुभागवतामृते "गर्भोदकशयः पद्मनाभोसावनिरुद्धकः। सोऽयं हिरण्यगर्भस्य प्रद्युम्नत्वे नियामक,, इति काञ्चनलोकपद्मस्य प्रकाशवहुललोकात्मककमलस्य भवतीत्यध्याहारात्कर्मणि चतुर्थ्यभ्युपगमादित्यर्थ इत्युक्तम् ॥ १४ ॥

स्वापाद्यवस्थावत्त्वे स्वापादीत्यादिना जाग्रदादिपरिग्रहः स तु जड इति तस्य चिद्रूपत्वेऽपि जडतादात्म्याध्यासेन जडप्रायत्वाज्जड इत्युक्तम् आदिमत्त्वमापतदध्यासेनैव अतः तृच्प्रत्ययान्तत्वाभावात्किन्तु तृन्प्रत्ययान्तत्वात् भगवति स्वापाद्यवस्थास्तुस्वरूपानन्दोल्लासलीला एवेति नजीवसाम्यमिति ज्ञेयम् ॥ १५ ॥

तमेवेश्वरं कस्मिंश्चिदधिकारिणि असम्यगाविर्भावाद्ब्रह्मरूपेण भातं यस्मिन् निःशक्तिकत्वेन प्रतीतेऽपि आनुपूर्व्यात्भक्तिनाऽनन्यप्रयुक्तक्रमात् अकस्मादिति नियतकारणानियम्यत्वमेवाकस्मिकत्वं तत्रनिरुद्धगतयइति विद्यासर्वज्ञत्वशक्तिः तनोऽविरुद्धाऽविद्याभक्तवात्सल्यलीलया "ततो वत्सानदृष्ट्वैत्यपुलिनेऽपि च वत्सपान् उभावपि वने कृष्णो विचिकायसमंतत,, इतिवत् अननुसंधानरूपामोहाख्याकशोकमोहौस्नेहोवाभयंवायेऽज्ञसंभवाइत्यत्राज्ञसंभवा इतिविशेषणस्य व्यावर्त्तकत्वाद्विज्ञसंभवानां तु तेषां तत्र स्वीकारात् अनिशमित्यनेन शक्तीनां नित्यत्वमभिप्रेतम् तत्र वस्तुन एकत्वेऽपि वर्णाम्त्वपामिति न्यायेन निर्विकल्पकस्फूर्त्तेःप्राथमिकत्वात्सविकल्पकायाश्च तस्यास्तदनन्तरजत्वाज्ज्ञानमध्योपासनया तदेव तत्त्वमसम्यगाविर्भवद्ब्रह्मेत्युच्यते तदेवात्र प्रस्तूयते अत एवानन्दमात्रमित्युक्तम् ऐश्वर्यज्ञानभक्त्यातु परमात्मशुद्धभक्त्यातु भगवानिति हष्टितारतम्यादेव तथातथास्फूर्त्तिरितिविवेचनीयम् अखण्डं त्रिविधपरिच्छेदशून्यं सजातीयादित्रिविधभेदशून्यस्त्वा ॥ १६ ॥

सकामजनादपि साधनान्मोक्षं संसारनिवृत्तिं मूर्त्तिः श्रीविग्रहः यद्यपि देहदेहिभावाभावात् अन्यपदार्थबहुव्रीहिर्न संगच्छते तथापि "उभयव्यपदेशात्त्वहि कुण्डलवत्,इति न्यायात् राहोःशिर इति वदभेदेषष्ठी यद्यप्येवं त्वत्पादपद्मस्यैव परमपुरुषार्थत्वं तथापि मार्य्यमासक्तात्मना अर्य्यस्वामिन् अर्य्यः स्वामिवैश्ययोरिति निपाताद्भ्रस्वादिरेवायम् ॥ १७ ॥

सन्सत्यः उत्कृष्टधामविषयकः संकल्पो यस्य तेन अर्थात् स्तुत्यनन्तरं प्रतिनन्द्य स्तुतिं संश्लाघ्य ॥ १८ ॥

संकल्पितमर्थं संकल्पादपि परमोत्कृष्टपददानेच्छया तेभद्रमित्याशीः ॥ १९ ॥

नान्यैरिति सार्द्धकम् अवान्तरकल्पवासिनां दैनंदिनप्रलयपर्य्यंतस्थायिनामपि परस्तात् लोकत्रयनाश इति त्रिलोकपक्षाभिप्रायेणोक्तमन्यथा सुदुर्लभं यत्परमं पदंहरेरिति ततो गतासि मत्स्थानमिति आतिष्ठजगतावंद्यं तद्विष्णोः परमं पदमिति ध्रुवस्य वैकुण्ठपदाधिरोहणमित्यादिव्याख्यानि व्याकुर्व्युः ॥ २० ॥

———

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

अब्जनाभेत्यनेन निरतिशयसौगन्ध्यवद्दिव्यमङ्गलविग्रहवैशिष्ट्यमुक्तं महदाद्यशेषं सृष्ट्वानुप्रविश्य पुरुष इत्यनेन प्रकृतिप्राकृतपुरुषशरीरकत्वं च एवं स्थूलसूक्ष्मशरीरद्वयमुक्तम् अनन्तेत्यनेन सत्यज्ञानानन्दलक्षणं दिव्यात्मस्वरूपमेतान्त्रितयमेव यथावद्विवेचयन् शरणं व्रजति । तिर्यगित्यादिभिश्चतुर्भिः । तत्राद्येन स्थूलरूपं प्रपञ्चयति तिर्यगिति हे परम ! स्थूलसूक्ष्मरूपाभ्याम् विलक्षण निःसमाभ्यधिक ! अत एवाज ! स्थूलरूपगतोत्पत्ति विनाशरहित नगाः स्थावराणि एतच्चराणामप्युपलक्षणं तिर्यञ्चः पशुमृगादयः द्विजाः अण्डजाः एषां तिर्यक्त्वादेवसंग्रहे सिद्धे बलीवर्दन्यायेन पृथग्ग्रहणम् एवं सरीसृपग्रहणं च आदिशब्देन स्वेदजोद्भिज्जसंग्रहः तिर्यगादिभिः परिचितं परितो व्याप्तं सदसत् चिदचिदात्मकं विशेषं विशेषः पृथिवी सोऽस्यास्तीति विशेषम् अर्श आदेराकृतिगणत्वादच्[illegible] विशेषपर्यन्तमित्यर्थः महदादि महान् आदिर्यस्य अनेकं विविधविचित्रसंनिवेशं स्थविष्ठं स्थूलं ब्रह्माण्डात्मकं ते तव रूपं वेद्मि त्वच्छरीरत्वेन वेद्मीत्यर्थः अतः स्थूलरूपात्परं विलक्षणं यद्दिव्यमङ्गलविग्रहात्मकं सूक्ष्मरूपं तदपि न वेद्मीति न किंतु त्वत्प्रसादाद्वेद्म्येवेत्यर्थः परं [illegible] विशिनष्टि । यत्र यद्विषये वादः प्राकृतत्वाप्राकृतत्ववादः प्रवर्त्तते इत्यर्थः यद्वा अवेद्मीतिच्छेदः अवेद्मीत्यकारो निपातो नञर्थीयः ततश्च अतः स्थविष्ठाद्रूपात्परं विलक्षणं "नभूतसंघसंस्थानो देहोऽस्य परमात्मन,, इत्युक्ताप्राकृतदिव्यविग्रहात्मकं रूपं तत्परं दिव्यात्मस्वरूपं सत्यं ज्ञानमनन्तमित्युक्तविधमवेद्मीति न किंतु त्वत्प्रसादाज्जानाम्येवेत्यर्थः रूपं स्वरूपं वोधयन् विशिनष्टि । यत्र वादइति यत्र स्वरूपे च वादः देवतिर्य्यङ्मनुष्यादिजातिवादः निर्विशेषत्ववादश्च प्रवर्त्तत इत्यर्थः यत्र वादः शब्दव्यापारोनास्ति तद्ब्रह्मस्वरूपं च न वेद्मीति व्याख्यानंत्वयुक्तम् "सर्वे वेदा यत्पदमामनन्ति।शास्त्रयोनित्वात्॥१।१।३। वचसां वाच्यमुत्तमं नतास्म सर्वे वचसां प्रतिष्ठा यत्र शाश्वती । वेदैश्चसर्वैरहमेववेद्य इत्यादिश्रुतिसूत्रस्मृतिभिः शास्त्रैकवेद्यत्वाभिधानात् ॥ १३ ॥

किंचयः पुमानेतच्चिदचिदात्मकं जगत्कल्पान्ते प्रलये जठरे गृह्णन् कुक्षौ निवेश्येत्यर्थः स्वस्मिन् हक् यस्य स्वानुभवैकशील इत्यर्थः अनन्तसखः शेषसहायः तदन्त अनन्त भोगे शेते यो निद्रारूढोभवति यस्य पुंसोनाभिरेवसिन्धुस्तस्मिन् उद्भूत काञ्चनमयं लोकात्मकं पद्मं तस्य गर्भे कर्णिकायां द्युमान् तेजस्वी ब्रह्मा भवति तस्मै भगवते तुभ्यं प्रणतोऽस्मि ॥ १४ ॥

एवं रूपं विशिष्य पुनः स्वरूपं विशिनष्टि । त्वमिति द्वाभ्याम् । ननुजीववन्ममापि स्थूलसूक्ष्मशरीरत्वे ततः कोविशेष इत्यत्राह त्वमिति त्वमकर्मायत्तस्वेच्छोपात्ताप्राकृतदिव्यमङ्गलगुणास्पदविशिष्टस्त्वं स्थितौ निमित्तभूतायां जगत्पालनार्थमित्यर्थः अधिमखः यज्ञाराध्यो यज्ञफलप्रदश्च व्यतिरिक्तः प्रकृतिपुरुषविलक्षणः आस्से तिष्ठसि अत्राधिमख इत्यनेन स्थितावित्यनेन च परित्राणाय साधूनामित्युक्तरीत्या सर्वयज्ञाराध्यस्वाय साधुपरित्राणायचत्वज्जन्म नतुजीववत्कर्मायत्तमित्यवगम्यते अव्यतिरिक्त इति छेदे प्रकृति पुरुष विलक्षण एवताभ्यामपृथक्त्वेनावस्थितइत्यर्थः नन्वनंतविचित्रस्थिरचरात्मकस्य जगतो धारणपोषणभोगाद्यात्मकं पालनं कथमेकेन मया युगपच्छक्यमित्यत्राह । बुद्ध्यवस्थितं बुद्धावयस्थितं विपर्यीभूतं [illegible] त्परूपज्ञान विषयमितियावत् अस्वगितया असंकुचितया [illegible]

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

संकल्परूपज्ञानेन द्रष्टा साक्षात्कर्त्तासि कृत्स्नस्य जगतः सर्वदेशकालावस्थास्वनिष्टनिरसनेष्टप्रापणात्मकपरिपालनोपयोग्यसंकुचितस्वसंकल्परूपज्ञानाश्रयोऽसीत्यर्थः स्थितावधिमजव्यतीतारकं इत्यपिपाठः तत्र अजः प्रकृतिपुरुषयोः स्वरूपान्यथाभाव स्वभावान्यथाभावरूपोत्पत्त्यादिरहितः अतएव व्यतिरिक्तः प्रकृतिपुरुषाभ्यां विलक्षणः स्थितावधि व्यवस्थितावधि मत्स्यावतारपर्यन्तं वा सत्वं जगत्सर्वमखण्डितज्ञानेन साक्षात्कुर्वन् आस्से इत्यर्थः एवं त्वं नित्यमुक्तः व्याप्यवस्तु गतदोषास्पृष्टः अनेनाचिद्व्यावृत्तिः अचिद्द्रव्यंहि अव्यक्तमहदादिकं स्वकार्येषु पृथिव्यादिषु व्याप्तं तद्गतदोषैः स्पृष्टम् एवं जीवव्यावृत्तिश्च जीवोऽपि स्वदेहशरीरेषु व्याप्तः परमार्थतस्तद्गतदोषैरस्पृष्टोऽप्यहं ममाभिमानाभ्यां क्लिश्यतीति न नित्यमुक्तः त्वंतु नित्यमुक्त इति भावः तत्र हेतुः विशुद्धः अकर्मवश्यः नित्यमुक्तशब्दात्परस्य सुपालोप आर्षः कर्मधारयोवा विशुद्धत्वे हेतुः परिबुद्धः असंकुचितज्ञानः जीवोहिकर्माधीनसंकोचविकासभाग् भाव रूपज्ञानाश्रयो न परिशुद्धः इति भावः तत्र हेतुः कूटस्थः निर्विकारः स्वरूपतः स्वभावतोऽपि निर्विकारस्त्वं जीवस्तु स्वभावतो विकारी ननु नित्यमुक्तत्वपरिशुद्धत्वविशुद्धत्वानि मुक्तेषु नित्यसिद्धेषुचातिव्याप्तानि तत्राह । आत्मा देष्वन्तःप्रविश्य धारकः नचात्मत्वमप्यतिप्रसक्तमतउक्तमादिपुरुषो भगवान् अधीश इति आदिपुरुष इति कर्मधारयः आदिशब्दश्च कारणवाची कारणंहि कार्यस्यादिः जगत्कारणभूतः पुरुष इत्यर्थः जगत्कारणत्वञ्च न मुक्तेषूपपन्नं "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च भोगमात्रसाम्यलिङ्गाच्चेति,, मुक्तेषु जगद्व्यापाराभावस्य सूत्रितत्वात् भगवच्छब्देन समग्रषाड्गुण्यपरिपूर्णत्वमुच्यते तदप्यनतिप्रसक्तमेव अधीशः त्रयाणां सत्त्वरजस्तमसां तत्परिणामरूपाणां त्रयाणां लोकानां वा अधीशः इदमप्यनतिप्रसक्तमेवेति त्रिविधचेतनव्यावृत्तिः ॥ १५ ॥

ननु कथमचेतनेषु चेतनेषु चावस्थितस्यापि तद्गतदोषास्पर्शः नचाकर्मवश्यत्वादुपपत्तिः पुण्यापुण्यसजातीयचेष्टितानि कुर्वतस्तद्वश्यत्वानुपपत्तेरित्यत्राह । यस्मिन्निति। विरुद्धमतयः विरुद्धामतयोसु ताः आश्रयान्तरेषु सामानाधिकरण्यानर्हा विद्यादयो ज्ञानादयः विविधाः शक्तयः आनुपूर्व्यात्क्रमेण यस्मिन् पतन्त्याविर्भवन्ति शक्तिर्हिकार्योपयोग्यपृथक्सिद्धविशेषणं तत्र सृष्टिस्थित्यन्तःप्रवेशनियमनसंहारादीनां क्रमिकत्वेन पौर्वापर्यात्तदुपयुक्तशक्तीनामपि तद्द्वारा पौर्वापर्यमत्रविवक्षितं सर्वदा सर्वशक्तेस्तस्य क्रमेण शक्त्याश्रयत्वायोगात् एवंच सर्वशक्तेस्तस्य सर्वमुक्तमुपपन्नमिति भावः उक्ताकारं ब्रह्म जगत्कारणत्वेन लक्षयन् लक्षयन् संग्रहेण तत्स्वरूपमपि शोधयन् शरणं व्रजति। तद्विति। तद्ब्रह्म विश्वभवमेकमित्यनेन "यतोवा इमानि भूतानीति,, वाक्यं स्मारितम् अविकारमानन्दमात्रमनन्तमिति पदत्रयेण "सत्यं ज्ञानमनन्तं ब्रह्मेति,, वाक्यं स्मारितं तत्राह जन्मादिवाक्ये जगत्कारणत्वेनोपलक्षितस्य ब्रह्मणः स्वरूपं सत्यादिवाक्यशोधितम् एवमत्रापि तथाहि विद्यादयोविविधशक्तय इत्यनेन सृष्ट्याद्युपयुक्ताः परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेत्युक्तशक्तीनामभिधानेन जगज्जन्मादयोऽप्युपस्थापिताः सर्वशक्तिमत्वेन प्रसिद्धं ब्रह्म यस्मिन्निति यच्छब्देनानूद्योपस्थितानां जन्मादीनां लक्षणत्वमुच्यते विश्वभवमिति भवत्यस्मादिति भवं विश्वस्य भवं विश्वभवं विश्वोत्पत्तिकारणमित्यर्थः एकशब्देनोपादानत्वंनिमित्तत्वंस्थितिसंहारकारणत्वं चैकस्यैवेति विवक्षितं तद्ब्रह्मेत्यनेन अधीहि भगवोब्रह्मेत्युपक्रमे पृष्टस्य प्रतिवचनत्वसमर्थकं तद्विजिज्ञासस्व तद्ब्रह्मेति वाक्यं स्मारितम् एवं जगत्कारणत्वेनोपलक्षितं ब्रह्म स्वरूपतोलक्षयति। अविकारमिति। अनेन सत्यपदं स्मारितं तेन हि सततपरिणामिनोऽचेतनात्तत्संसृष्टाच्चेतनाच्च वैलक्षण्यमुक्तम् एतमत्राप्यविकारपदेन आनन्दमात्रं मात्रचा कापि जडत्वव्यावृत्तिः अनेन ज्ञानपदं स्मारितम् अनुकूलज्ञानमेवहि आनन्दः श्रौतस्यापि ज्ञानपदस्यानन्दरूपज्ञानपर्यवसानत्वद्योतनायानन्दशब्दः प्रयुक्तः अनेनानन्दपदेन नित्यासंकुचितानुकूलज्ञानाश्रयत्वं विवक्षितं तेन मुक्तचेतनव्यावृत्तिः तेहिबद्धदशायां संकुचितज्ञानत्वेन न नित्यासंकुचितज्ञाना अनन्तपदेन देशकालवस्तुपरिच्छेद राहित्यं विवक्षितं अनेन नित्यसिद्धव्यावृत्तिः तेषां स्वरूपस्याणुपरिमाणत्वेनानन्त्याभावात् तत्र देशपरिच्छेदोनाम इदमत्र नभवतीति कालपरिच्छेदोनाम इदमिदानीं न भवतीति एवं रूपः एतद्द्वयरहितं वस्तुपरिच्छेदोनाम सर्ववस्तुसामानाधिकरण्यार्हत्वम् एवं भूतं ब्रह्माहं प्रपद्ये शरणं गतोऽस्मि ॥ १६ ॥

एवं ब्रह्मस्वरूपगुणान् विशोध्य तं प्रपद्यैतद्भजनस्य फलाविनाभूतत्वमाविष्कुर्वन् यात्मदर्शनेष्वस्तस्याभिमतार्थादप्यतिशयितपुरुषार्थप्रदत्वमाह। सत्याशिषइति। हेभगवन् ! सत्याशिषः आशिषः सत्याः क्रियन्ते ये न स सत्याशीः तस्य पुरुषार्थमूर्तेः स्वयं पुरुषार्थभूतस्वरूपस्य तव पादपद्मं यथा आशीः तथा इच्छानुरूपमित्यर्थः अनुभजतोऽतएव दीनान् त्रिवर्गनिष्ठानप्येवम्भूतानस्मान् अनुग्रहकातरः अनुग्रहैकविवशः भगवान् षाड्गुण्यपरिपूर्णः भवान् वत्सकं स्वार्थैकः वाश्रेव नवप्रसूताधेनुरिव हे आर्य स्वामिन् । परिपाति अभिमतप्रदानेन परिपाति परीत्युपसर्गेण सर्वतः पाति संसारभयाच्च पातीत्ययमर्थो विवक्षितः ॥ १७ ॥

स्तुतिमुपसंहरति। अथांग । सत्संकल्पेन दृढसंकल्पेन धीमता ध्रुवेणैवमभिष्टुतः स्तुतः अनन्तरं भक्तेष्वनुरक्तो निरतिशयप्रीतिमान् भगवान्प्रति सद्यस्तुनिमित्तिशेषः इदं वक्ष्यमाणमब्रवीत्॥१८॥

उक्तमेवाह । वेदेति। हेराजन्यबालक! ते त्वया हृदि व्यवसितम् अभि मतविषयत्वेन निश्चितमहं वेद जानामि ते त्वया व्यवसितमित रैर्दुरापं दुर्लभमपि हे सुव्रत ! ते तुभ्यं प्रयच्छामि ददामि ॥ १९ ॥

व्यवसितमेव प्रपञ्चयति । नान्यैरिति । सार्द्धद्वयेन हेभद्र ! ध्रुव ! ध्रुवा शाश्वती स्थितिर्वासो यस्मिन् भ्राजिष्णु दीप्तिमत् अन्यैरनधिष्ठितं यत्र स्थाने ज्योतिषां ज्योतीरूपाणां ग्रहादीनां चक्रमाहितमर्पितम् ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

ब्रह्मादीनामपि त्वत्प्रसादात् ऋते त्वद्रूपदर्शनमसुकरं किमुत मादृशानामिति भावेनाह। तिर्यङ्ङ्गेति। हेअज!अशेषं सर्वावयवोपपन्नं महदादि महत्तत्वमादिर्यस्य तत्तथोक्तं सता पृथिव्यादिभूतत्रयेणासता वाय्वादिभूतद्वयेन विशेषोयस्य तत्तथोक्तं स्थविष्ठं स्थूलतमं तिर्यगादिभिर्विरचितं ब्रह्माण्डाख्यं रूपं वेद्मि हेपरम ! अतः स्थूलात्परं सूक्ष्मं रूपं न वेद्मि अत्र हेतुगर्भविशेषणमाह। यत्रेति। वाच इत्युपलक्षणं वेदाभिमानिनांलक्ष्म्यादयोयत्र यद्विषयज्ञानवन्तोन भवन्ति किमुक्तं भवति लक्ष्मी ब्रह्माद्या अनुदिनं पश्यन्तोऽपि किंचिदनन्तत्वेन जानन्ति किन्त्वहं तदुक्तम "पश्यमानोऽपि तु हरिं नतु वेत्ति

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

कथंचन। वेत्ति किंचित्प्रसादेन हरेरथगुरोस्तथा। द्वेचावब्राह्मणोरूपे मूर्तं चैवा मूर्तं चयतोवाचांनिवर्ततेअप्राप्य मनसा सह इत्यादि श्रुतेः ॥ १३ ॥

सृष्टिसंहारकर्त्रोर्ब्रह्मरुद्रयोर्लोकहृद्गतां विष्णुसमत्वशङ्कां निवर्तयितुमाह। कल्पान्ते इति। अनन्तः सखा यस्य स तथोक्तः स्वदृक् स्वयंप्रकाशः पुमान् कल्पान्ते एतदखिलं जगज्जठरेणोदरेण गृह्णन् संहरंस्तस्यानन्तस्याङ्के शेते यस्य नाभिसिन्धुरुहं नाभिसरसोजातं तदेव काञ्चनं सुवर्णवर्णं लोकात्मकं पद्मं तस्य गर्भे द्युमानतिद्युतिमान् ब्रह्मा जात इति शेषः अनेन रुद्रस्य संहर्तृत्वं ब्रह्मणः स्रष्टृत्वं च द्वारमात्र मिति ज्ञातव्यम् एवं विधमाहात्म्यस्य हरेस्त्वया किमुपक्रियत इति तत्राह। भगवन्न इति ॥ १४ ॥

पङ्के प्रवर्तमानस्य पङ्कलेप इव सृष्ट्यादौ प्रयतमानस्य हरेरनित्यत्वं दोषवत्त्वमशुद्धत्वं च स्यादित्याशङ्क्य योगिनोऽपि दुर्भगशरीरस्थस्य तद्गतदुःखाद्यनुभवो नास्ति किमुतनित्यस्य नित्यमुक्तस्य नित्यशुद्धस्यात एवाप्रतिहतबोधस्येति भावेनाह। त्वंनित्येति। किमेवंभूतः परिच्छिन्न इति नेत्याह। आत्मेति आततत्वादात्मा तर्हि तत्तत्पदार्थसंबन्धेन तत्तद्धर्माः संगस्यन्ते इत्यत उक्तं कूटस्थ इति षड्विकारशून्यः एवंविधः कोऽयमत्राह। आदिपुरुष इति। आदीत्युपलक्षणं जगत आदावन्ते च वर्तमानः पुरुषः पूर्णषड्गुणः श्रीनारायणः पूर्णषड्गुणत्वं स्पष्टमाह। भगवानिति। ऐश्वर्यस्य समग्रस्येति स्मृतेः कुतोऽस्य समग्रैश्वर्यमवगम्यत इत्यत उक्तं त्र्यधीश इति त्रयाणां लोकानां मुक्तामुक्तसंसारिणां वर्तमानादिकालानां वा जाग्रदाद्यवस्थानामृगादिवेदानां वा इत्यादित्रित्वसंख्यावतामधीशः इन्द्रादिव्यावृत्त्यर्थमधीश इत्युक्तं तमेव विशिनष्टि इति यद्यस्मात्तस्मादखण्डतया स्वबुद्ध्या स्वरूपज्ञानेन * वधि संसारस्यावधिभूतं बुद्ध्यवस्थितं बुद्धौ स्थितं त्वां दृष्ट्वावस्थिता ये पुरुषास्तैः सहातोऽस्मात्प्रपञ्चाद्व्यतिरिक्तस्त्वमास्स इत्यन्वयः "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयो„ रिति वचनादल्लोपः प्रामाणिकः ॥ १५ ॥

अघटितघटनशक्तिमत्त्वादयमेवाभीष्टसिद्धये प्रार्थनीय इत्याह। यस्मिन्निति। विरुद्धगतयो लोके विरुद्धविषया विद्यादयो विविधशक्तयो स्थूलत्वमणुत्वहृस्वत्वमित्यादयो यस्मिन् हरावनिशं पतन्ति वर्तन्ते तत्र प्रमाणमाह आनुपूर्व्येति "आनुपूर्वी श्रुतिश्चैव त्रयीचाम्नाय उच्यत„ इत्यभिधानात् विचित्रशक्तिः पुरुषः पुराणः अस्थूलमनण्वहृस्वमित्यादिकया श्रुत्या सिद्धमित्यर्थः अहं तद्ब्रह्म शरणं प्रपद्य इत्यन्वयः जगत्कारणमेव ब्रह्मात्र विवक्षितं न जीव इति भावेनाह। विश्वभवमिति। विश्वस्य भव उत्पत्तिर्यस्मात्तत्तथा नैतल्लक्षणं परमाणुष्वतिव्याप्तमित्याह। एकमिति। परमाणूनामनेकत्वादिदमेव मुख्यकारणमित्यर्थः कारणत्वं सूक्ष्मेत्याह। अविश्वमिति। जगतोऽन्यत् अनन्तमितिपाठे जीवाश्रितं कर्मकारणमस्तीत्याशङ्क्य कर्मणः क्षणभङ्गुरत्वेनानित्यत्वादचेतनत्वाच्च कारणत्वानुपपत्तिरित्यर्थः विश्वस्याद्यन्तवत्त्वेनानित्यत्वादस्य तदभावात्कारणत्वं युक्तमित्याह। आद्यमिति। आद्यमित्युपलक्षणं विश्वस्यादावन्ते भवतीति अनाद्यनन्तत्वं प्रधानस्यास्तीत्यत उक्तमानन्दमात्रमिति इतोऽपि प्रधानस्य कारणत्वमनुपपन्नमित्याह। अविकारमिति ॥ १६ ॥

इतरदेवतानुग्रहात्त्वदनुग्रह एवाभीष्टफलप्राप्तिहेतुरित्याह सत्याशिष इति। पुरुषार्थमूर्तेरानंदानुभवरूपस्य तव पादमूलमनुव्रजतः पुरुषस्याशिष्टयः आचार्यशिष्टाः सत्याशिषोयथार्थशुभप्रदा ह्येव * एवमपि तथापि आर्यपूज्यः अनुग्रहकातरा भवदीनानस्माञ्छिष्यान्विशिष्ट(२)फलप्राप्तये पुनः वात्सेव नवप्रसूर्गौरिव वत्सं परिपातीत्यन्वयः वात्सेव विद्युन्मिमाति वत्सं न मातासिषक्तीति श्रुतिः ॥ १७ ॥

सत्संकल्पेन सत्सत्येऽभ्यर्हिते श्रेष्ठे साधीयसि भवत्यांयादवः ॥ १८ ॥

भूयसां महतां योगिनामपि दुरापमित्यनेनायोग्यानामेव दुरापं न तु योग्यानां तेषां साधनसामग्र्याः सुलभत्वादित्यर्थः सूच्य इत्युत्तरग्रंथेन ज्ञायत इति भावेन विशिनष्टि। नान्यैरिति। ध्रुवा क्षितिर्निवासो यस्मिंस्तत्तथोक्तं मेढीति तिलपीडोलूखलं कल्पनेऽपि लयो नास्तीत्याशयेनाह। स्थास्न्विति। अनेन ध्रुवक्षितीत्यस्य विशेषो दर्शितः पुरस्तादग्रे धर्मादयो यत्स्थानं प्रदक्षिणं चरन्ति तत्तुभ्यं दास्यामीत्यन्वयः वनौकसो वानप्रस्थाः॥१९-२०-२१

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अथ तथा कस्मादाविर्भूतं श्रीभगवन्तमनुभूय निजपूर्वावस्थामनुशोचति। तिर्यगिति। न वेद्मि वर्त्तमानसामीप्ये वर्त्तमानवद्वेति विधानात् एतावन्तं कालं नावेदिषमित्यर्थः। येनान्यथा सङ्कल्प्य तवाराधनं कृतमिति भावः। यथा विराड् रूपे सत्यता सत्यत्वविचारमयोवादस्तथा यत्र नास्तीति प्रौढिवचनम्॥ १३॥

तदेतद्दृश्यमान परमस्वरूपमेव सर्वाश्रयत्वेन प्रतिपादयति। कल्पान्त इति ॥ १४ ॥

ननु रूपित्वे सति विराड् व्यष्टि रूपि रूपेभ्यः प्रपञ्चेभ्यो भवतः को विशेषः येन रूपस्यापि वैलक्षण्यं हेतुत्वेन तर्क्यते तत्राह। त्वं नित्यमुक्तः अविद्याकर्म्माजनितरूपत्वात् परिशुद्धः शुद्धसत्त्वात्मकरूपत्वात् विबुद्धः तत एव स्वरूपसिद्धज्ञानस्यानावरणात् प्रत्युतोल्लासात्। आत्मा स्वरूपाभिन्नत्वात् कूटस्थ एकरूपतया कालव्यापी। सदातनः सर्वरूपत्वात् आदिपुरुषः आदित एव पुरुषाकारः स्वभावसिद्धत्वात्। भगवान् पूर्णशक्त्याश्रयः वस्तुलक्षणत्वात्। अधीशः त्रिगुणशक्ते र्नियामकः तदतिरिक्त स्वरूपशक्त्यात्मकरूपत्वात् तस्मात्तव रूपस्य च प्रकृत्यतीत शक्तिमयत्वादेकान्यैकत्वेनान्याभ्यां रूपि रूपाभ्यां विशेष एव तदतीत शक्तिमयत्वमेव योजयति। यदिति ॥ १५ ॥

तदुभयशक्तियुक्तित्वाच्च तव नायुक्तं। सर्वशक्तित्वात् विरुद्धशक्तिनिधानमेव हि त्वमित्याह। यस्मिन्निति। आनुपूर्व्यात् स्वस्ववर्गे उत्तममध्यमकनिष्ठभावेन वर्तमाना विविधशक्तयः प्रायः परस्परविरुद्धगतयोऽपि यस्मिन् यदाश्रित्याऽनिशं पतन्ति प्रवर्तन्ते स्वस्वव्यापारं कुर्वन्तीत्यर्थः ॥ १६ ॥

तस्मात्त्वद्रूपस्य स्वरूपपूर्णपरमानन्दरूपत्वात् परमपुरुषार्थत्वमेवेति साधूक्तं या निर्वृतिरित्यादिकमित्याह। सत्येति। आशि

* स्थितावधिमित्येकपदभ्रान्तिनिरासायतात्पर्यानुसारेणायोजयति वधिमिति तेनस्थिता वधिमिति पदद्वयंसूचितं। स्थिताइत्यस्यास्थिताइत्यर्थः। वधिमित्यस्यावधिभूतमित्यर्थः। अल्लोपप्रमाणं वष्टीति ॥ दी०

* आचार्यशिक्षयैवास्माकमाशिषोभवंतितथापीत्यर्थः। दी०

(२) आचार्योपदेशजन्यफलादधिकफलप्राप्तये ।

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

प्रयेति चितसुखः । हे अर्य्येति । अर्य्यः स्वामिवैश्ययोरिति निपातात् ह्रस्वादिरेवायम् ॥ १७ ॥

भद्रन्त इति पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे इति प्राचीनसङ्कल्पानुरूपपि लभमानस्य ते दुरापं मत्पदप्राप्त्या ततो वैशिष्ट्येन भद्रमेव भविष्यतीति शुभाशीर्वादाभिप्रायः। तत् प्रयच्छामि तथान्यैर्दुरापमपि प्रयच्छामीत्यन्वयः ॥ १८ ॥

नात्यैरिति सार्धकम् ॥ १९ ॥

कल्पवासिनां दैनन्दिनप्रलयपर्यन्तस्थायिनामपि परस्ताद् स्थास्तु मेध्यामिति क्वचित् पाठः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नन्वेवं चेज्ज्ञानासि तर्हि मत्पित्राविप्राप्तेभ्योऽप्युत्कृष्टं पदं साधयानीति सङ्कल्प्य किमिति तद्भजनमकार्षीः तत्राह तिर्य्यगादिभिः परिचितं व्याप्तं सन्तोऽसन्तश्च विशेषा यस्य तत् महदादीन्यनेकानि कारणानि यस्य स्थविष्ठं विराड्रूपमेव तवाहं वेद्मि वर्त्तमानसामीप्ये वर्त्तमानवद्वेति एतावन्तं कालमवेदपमित्यर्थः । अतः स्थविष्ठात् परमेतद्प्राकृतं चिदानन्दघनं तव स्वरूपं हे परम ! नावेदिषं यत्र वादः शब्दव्यापारो नास्ति तद्ब्रह्म स्वरूपञ्च नावेदिषं अतएव बालत्वेनाज्ञत्वात्तथा दुर्भावनासकरवं साम्प्रतन्तु त्वदीय कस्वरूपयाः प्राप्य सर्व्वमेव वेदार्थमज्ञासिषमत एव श्रीमच्चरणेषु निवेदयामीति भावः ॥ १३ ॥

ननु मां जानासि चेत् त्वामहं परीक्षिष्ये कथय कोऽहमिति तत्राह कल्पान्त इति त्रिभिः । स्वस्मिन्नेव दृक् ज्ञानं यस्य योगनिद्रारूढत्वात् तस्यानन्तस्य शेषस्याङ्के उत्सङ्गे शेते । यस्य नाभिसिन्धुरुहे नाभिकमले आगन्तुकं काञ्चनवर्णं लोकात्मकं यत् पद्मं तस्य गर्भे कर्णिकायां द्युमांस्तेजस्वी ब्रह्मा भवति तस्मै ते त्वां प्रसादयितुं नतोऽस्मि केवलं ननु परिचरितुं किमपि शक्नोमीति भावः ॥ १४ ॥

ननु ममापि शयनाद्यवस्थावत्त्वे को जीवाद्विशेषस्तत्राह । यद्यप्यत्वं नित्यमुक्तः जीवस्तु त्वत्प्रसादान्मुच्यते त्वं परिशुद्धः सच मलिनः त्वं विबुद्धः सर्व्वज्ञः सत्वल्पज्ञः त्वमात्मा सतु देहाध्यासी जडः । त्वं कूटस्थो निर्विकारः सतु विकारी । यद्वा । त्वं कूटस्थ एकरूपतया कालव्यापी सतु नानारूपतयैव । त्वमादिः कारणं पुरुषः पुरुषाकारश्च सतु न कारणं स्त्री पुंनपुंसकाकारश्च त्वं भगवान् सतु भगहीनः । त्वं त्र्यधीशः सतु त्रिगुणाधीनः । त्वं बुद्धेरवस्थितं जीवस्य बुद्धेरवस्थां स्वापादिकमखण्डितया स्वदृष्ट्या चिच्छक्त्या साक्षित्वेन द्रष्टा सतु बुद्ध्यवस्थाभिः खण्डितदृष्टिः त्वं स्थितौ सर्व्वजगत्पालने कर्मयायासे सतु स्वपालनेऽप्यसमर्थः त्वमभिमखः मखादि कर्माधिष्ठाता सतु मखादिकर्माधीनः अतस्त्वं तस्माद्व्यतिरिक्त एवातस्ते तव योगनिद्रादिकन्तु चिच्छक्तेर्विलास इति जानाम्येवेति भावः ॥ १५ ॥

सविशेषं भगवत्स्वरूपमुक्त्वा निर्विशेषं ब्रह्म स्वरूपमाह । यस्मिन्निति । निर्विकारं केवलमानन्दमात्रमेव । नित्यचिदात्मकनानाविशेष ग्रहणा समर्थानां दूरस्थानां केवल शान्तानां भक्तिमिश्रज्ञानदृष्ट्या भातं तद्ब्रह्म त्वन्मदिम स्वरूपं प्रपद्ये यस्मिन् निःशक्तिकत्वेन प्रतीतेऽपि विद्यादयो विविधशक्तयोऽनिशं स्थिता आनुपूर्व्या न पतन्ति प्रतीता भवन्ति । अतएव त्वं भक्तितारतम्येन सामीप्य तारतम्यवतां विशेष तारतम्य ग्रहण समर्थानां भक्तिमिश्रज्ञानिभ्यः किञ्चिदधिकभक्तिमतां प्रथमं विद्याशक्तिमानात्मेति भासि ततोऽप्यधिकभक्तिमतां मायाशक्तिमान् पुरुषो जगत्कारणमिति अतएव विश्वमर्यमिति विशेषणं ततः सम्पूर्णभक्तिदृष्ट्या ऐश्वर्याद्यनन्तशक्तिमान् भगवानिति तत्राप्यतिप्रविष्टधियां लीलालावण्यकलाकुतूहलवैदग्धी महोदधिरिति त्वमनुभवगोचरी भवसि । यथा नगरस्थातिदूरस्थजना विशेषमनुपलभमाना इदमग्रे स्थितं वस्तुमात्रमिति तदेव पश्यन्ति अनतिदूरस्था वृक्षपयडमिति । समीपस्थास्तु विविधनिष्कुटाट्टपुरगोपुरगृहध्वजपताकाद्युक्तं नगरमिति तत्र प्रविष्टास्तु विचित्र तडाग रथ्या विपणि शृङ्गाटकाजिरनृत्यगीतवादित्रादिसकलसुखास्पदमित्यनुभवन्ति । यथाहुः प्राञ्चोऽपि चयस्त्विपार्मत्यवधारितं पुरा ततः शरीरीति विभावितालृतिम् । विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि स इति । शक्तयः कीदृश्यः विरुद्धगतयः इति विद्याविद्ययोः सर्गसंहारयोः जन्मवरवाजन्मयोरनीहस्य सलीलत्वयोरात्मारामत्वभक्तवात्सल्ययोरिरोधेऽपि तत्तच्छक्तीनामतर्क्यैव त्वयि नित्या स्थितिरेव ॥ १६ ॥

ननु मां बालक ! सत्यमेव त्वं मत्स्वरूपं जानास्येव किन्तु तव साम्प्रतिकनिष्कामत्वेऽपि यथा पूर्वसंकल्पमेव फलमहं दास्यामि गृहाणेति तत्र स्वस्याज्ञत्वं विज्ञाप्य प्रेममाधुर्यमाशासान आह सत्येति । हे भगवंस्तव पादपद्ममेव आशिषो राज्यादेः सकाशात् सत्या आशीः परमार्थफलं । कस्य तथा तेन प्रकारेण त्वमेव पुरुषार्थमूर्त्तिरित्येवं निष्कामतया अन्वनुभजतः एवमपि दीनानस्मान् कृतसकामभजनानपि परिपाति निष्कामप्राप्यपादपद्मकिञ्जिन्ममाधुर्य्यदानेनेत्यर्थः तत्र हेतुः । अनुग्रहकातरः बालत्वाद्यथ्यर्थ्य मञ्चु इभक्ति न जानाति तदपि तत्फलंस्वमाधुर्य्यममास्वादयामीति बुद्ध्येत्यर्थः । वात्सा धेनुर्यथा वत्सकमर्थं स्वमभजन्तमपि दुग्धं पाययति वृकादिभ्यो रक्षति च तद्वन्मां स्वचरणभक्तिमाधुर्यमास्वादयतु सकामत्वादिभ्यो भक्तिविघ्नेभ्यो रक्षतु चेति भावः ॥ १७—१८ ॥

राजन्यबालकेति तवैश्वर्य्यस्पृहा स्वाभाविक्येवेति तदहं प्रयच्छामीत्युक्ते तर्हि स्वप्रेमाणं न दास्यसीति कातरमुखं तमाश्वासयति भद्रन्ते इति मा चिन्तय प्रेमाणमपि प्रयच्छामीत्यपिकारार्थः ॥ १९ ॥

त्वया पूर्वं यथा प्रार्थितं पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे त्वत्पितृभिरन्यैरप्यनधिष्ठितमिति तदिदं स्थानं गृहाणेत्याह । नान्यैरिति ध्रुवा नित्या क्षितिर्निवासो यत्र तत् आहितमर्पितं धान्याक्रमणाय आम्यमाणानां पशूनां बन्धन स्तम्भो मेढी यस्यां बलीवर्दसमूहवत् अवान्तरकल्पवासिनां परस्तान्महाकल्पपर्यन्तं स्थास्तु ततो महा प्रलये सति ध्रुवस्य महावैकुण्ठारोहणमिति केचित् ब्रह्माण्ड मध्यवर्त्तिनेऽपि श्वेतद्वीपे मथुरा द्वारकादीनामिव ध्रुवलोकस्यापि सुदुर्लभं यत् परमं पदं हरेरिति ततो गन्तासि मत्स्थानमिति आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदमिति ध्रुवस्य वैकुण्ठपदाधिरोहणमित्यादि प्रमाणेभ्यो भगवल्लोकत्वेन नित्यत्वान्महाकल्पवासिनामपि परस्तादित्यपरे ॥ २० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

एवं भगवदनुग्रहेण प्राप्तज्ञानो यथाशक्ति स्तुत्वाथ कैमुतिकन्यायेन भगवन्तमियत्तान वच्छिन्नत्वेन स्तौति । तिर्यगिति। हे अज हेपरम ! तिर्यगादिभिः परिचितं व्याप्तम् सन्तः स्थूलाः असन्तः सूक्ष्माश्च विशेषा विभोगो यस्मिन् तत् महदादिभिरवयवैरनेकं बहुभेदयुक्तम् यद्यिदं स्थूलं वैराजं ते रूपमपि यदिकात्स्न्र्येन नवेद्मि तर्हि यत्र सर्वकारणे सेश्वरनिरीश्वरादीनां वादः"सर्वे वेदा यत्पदमामनन्ति वेदैश्च सर्वैरहमेव वेद्य„इत्यादि श्रुतिस्मृतिभ्यः शास्त्रैकवेद्यम् अतः स्थाविष्ठात् परं रूपं न वेद्मीति किमुवक्तव्यमित्यर्थः यदुक्तम् अतः परमीश्वरं न वेद्मि यत्र वादः शब्दव्यापारो नास्ति तद्ब्रह्मस्वरूपं च नवेद्मीति तत्र जगत्कारणादीश्वरादन्यस्य ब्रह्मणः सूत्रकारेणाप्रतिपादितत्वात् शब्दव्यापारवर्जितवस्त्वभावाच्च ॥ १३ ॥

एवमियत्तानवच्छिन्नत्वेन स्तुत्वाथ लोकत्रयप्रवेशस्थानत्वादिना स्तुवन्नमस्करोति कल्पान्त इति यः पुमान् पुरुषः एतज्जगज्जठरेण गूढन् उदरे निवेश्य स्वदृष्टिः अनन्तसञ्ज्ञतल्पेऽशेते यस्य च नाभिरेव सिंधुस्तस्मिन् रोहतीति तथा तस्मिन्नकाञ्चनवदुज्वलकोकपद्मस्य गर्भे मध्ये पुमान् ब्रह्माभवति तस्मै ॥ १४ ॥

अथ भोक्ता भाग्यं प्रेरितारंच मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत उभय व्यपदेशात्त्वहिकुण्डलवदित्यादि श्रुति सूत्रसिद्धं विश्वभिन्नाभिन्नं भगवन्तं वर्णयन् शरणं व्रजतिस्त्वमिति द्वाभ्यामत्त्वं श्रुतिप्रोक्तेषु त्रिविधेषु पदार्थेषु भोक्त्रादिषु अधीशः प्रेरयितृशब्दार्थः भोक्तृभोग्यविलक्षणस्वरूपस्तदुभयनियन्तेत्यर्थः तदुभयविलक्षणस्वरूपत्वमुपपादयति । नित्य मुक्तः परिशुद्धः विशुद्धः त्वं नित्यमुक्तेभ्योऽपि परिशुद्धोविशुद्धश्च किं पुनर्बद्धेभ्य इति जीवेभ्यो वैलक्षण्यमुक्तम् आत्मेति अनात्मवर्गोत्कालादितोवैलक्षण्यमुक्तम् सर्वनियन्तृत्वमुपपादयति सर्वहेतुतया चाद्रुपर्यानधिरवं च आदिपुरुषः सर्वहेतुः भगवान् चाद्रुपर्यानधिश्च सर्वज्ञत्वेन सर्वपालकत्वेन च सर्वधिष्ठानत्वं सर्वनियंतृत्वमाह बुद्ध्यावस्थिति अखंडितया देश काल वस्तुभिरप्रतिहतया स्वदृष्टया द्रष्टासाक्षात्पश्यति स्थिती सर्वपालने अभिमुखः यद्वाधिष्ठातृतया वर्तसे एवं भूतो भवान् यत् येभ्यश्चेतनाचेतनेभ्यः अव्यतिरिक्तास्ते तेभ्योभिन्नोऽप्यभिन्नास्ते इत्यर्थः ॥ १५ ॥

ननु कथं भगवतः सर्वभिन्नाभिन्नत्वमित्यत्र हेतुमाह । यस्मिन्निति । यस्मिन् आधारे आधेय भूताः विरुद्धा आधारस्वरूपात्सर्वाधारत्वश्चायत्तत्वादि गुणयुक्तात् विलक्षणाआधेयत्वपरायत्तत्वादिरूपा गतिर्येषां ते विरुद्धगतयो लोकाः अनेककोटि ब्रह्मांडानि आनुपूर्व्यात्सृष्टि संहारक्रमेण अनिशं पतन्ति इत्येवं सर्वाधारत्वेन सर्वभिन्नाभिन्नत्वं भगवतोदर्शितम् विद्याश्चेतनरूपाशक्तयः आदिना अचेतनरूपाः शक्तयश्चयस्मिन् पतंति इत्येवं भगवतः सर्वशक्तित्वेन सर्वभिन्नाभिन्नत्वं दर्शितम् विश्वभवं सर्वकारणमित्यनेन सर्वकारणत्वेन भगवतः सर्वभिन्नाभिन्नत्वं दर्शितम् श्रुत्यापि सर्वस्य ब्रह्मजत्वादिनैव ब्रह्माभिन्नत्वमुक्तं नतुस्वरूपैक्येन सर्वं खल्विदं ब्रह्म तज्जलानितीति यत आद्यं सर्वं पूर्वं वर्ति सर्वोपादान भूतम् शक्तिपरिणामाभिप्रायेण स्वरूपतोऽविकारित्वमाह । अविकारमिति।।सर्वदुःखरहितत्वमाह। आनन्दमात्रमिति।एवं भूतमेकमनेक चेतनाचेतनाश्रयम् ब्रह्म वासुदेवं प्रपद्ये इति संक्षेपार्थः ॥ १६ ॥

हे भगवन् ! पुरुषार्थः मुक्तगम्योयोऽर्थः स एव मूर्तिर्यस्य तस्य तवपादपद्ममेव आशिषं अखिलवर्गरूपात् इतरफलात् सत्या समीचीना आशीः फलम् कस्य तथात्र भगवत्पादपद्ममेव समीचीना मिलेयं दार्ढ्येनानुभजतः यद्यप्येवं तथापि दीनान् सकामानस्मानपि भगवान् भवान् हे आर्य्य ! परिपातिपारतः सर्वतः पुत्रदानेन संसारादभयदानेन चरक्षति यथा वत्सकं दुग्धदानेन वृकादिभयाच्च वाश्रा धेनुः परिपाति तद्वत् ॥ १७ ॥ १८ ॥

व्यवसितं वाञ्छितम् ॥ १९ ॥

तदेव वर्णयति । नार्यद्धाऽप्याप नान्यैरिति । हेभद्र ! ध्रुवा स्थिरा स्थितिर्यस्मिन् ज्योतिषां चक्रं शिशुमाराख्यं यत्राहितमर्पितम् ॥ २० ॥

---

भाषाटीका ॥

हे अज ! हे परम ! तिर्यक् पक्षी सर्पादि देवता और मनुष्य इन से व्याप्त स्थूल सूक्ष्म तत्त्वों से युक्त महदादि अनेक भेदवाला आप का जो यह विराट्रूप है जिसको वेद वचन भी यथार्थ नहीं कह सकते हैं तिस रूपसे परे हम किसी को नहीं जानते हैं ॥ १३ ॥

कल्प के अन्त में इस सब जगत् को उदर में ग्रहण कर के स्वयं प्रकाश अनंत देव के सखापुरुषरूप आप शयन करते हो जिन के नाभिरूपी समुद्र में से पैदा होनेवाला सुवर्ण कमल के मध्ये में तेजस्वी ब्रह्मा उत्पन्न हुआ तिन भगवान् आप के अर्थ नमस्कार है ॥ १४ ॥

आप नित्य मुक्त हो परिशुद्ध हो सर्वज्ञ हो व्यापक हो निर्विकार हो आदि पुरुष हो भगवान् हो तीनों गुणों के तीनों लोकों के ईश्वर हो जो कि बुद्धि के अवस्थों को अपनी दृष्टि से देखते हो लोक रक्षा करने में यज्ञों के अधिष्ठाता हो और इस से अलग रहते हो ॥ १५ ॥

जिन आप के विषय में नाना प्रकार की विरुद्ध बुद्धि निरंतर उपस्थित होती रहती हैं जैसे निर्गुण सगुण इत्यादि विद्या अविद्या आदिक शक्ति भी क्रम से जिन में वर्त्तमान हैं सो जगत् के उत्पन्न करने वाले एक अनंत आद्य आनन्द मात्रस्वरूप निर्विकार आप को मैं शरण प्राप्त हूं ॥ १६ ॥

हे भगवन् ! हे आर्य ! पुरुषार्थ मूर्ति आप के पाद पद्म के भजने वाले लोगों को सत्य सब मनोरथ मिलते हैं तथापि आप उनके ऊपर बडी कृपा करके जैसे गऊ अपने बछरा की रक्षा करती है तैसे हम सब अति दीनजनों की रक्षा करते हो ॥ १७ ॥

मैत्रेयजी बोले इसप्रकार सुंदर संकल्प वाले बुद्धिमान् ध्रुव के स्तुति करने पर भक्तों पर कृपा करने वाले भगवान् संतुष्ट होकर ये वचन बोले ॥ १८ ॥

श्री भगवान् बोले हे राजपुत्र ! जो तुम्हारे मन में निश्चित है सो हम जानते हैं सो हे सुव्रत जो कष्ट से प्राप्त होने योग्य वस्तु है सो भी तुमको हम देंगे तुम्हारा कल्याण होगा चिंता मत करो ॥ १९ ॥

हे । भद्र जो किसी को नहीं प्राप्त हुआ है अक शमान है निरन्तर रहने वाला है जहां पर ग्रह नक्षत्र तारों का चक्र स्थापित है ॥ २० ॥

---

मेढ्यां गोचक्रवत्स्थास्नु परस्तात्कल्पवासिनाम्।
धर्मोऽग्निः कश्यपः शुक्रो मुनयो ये वनौकसः।
चरन्ति दक्षिणीकृत्य भ्रमन्तो यत्सतारकाः॥ २१॥
प्रस्थिते तु वनं पित्रा दत्त्वा गां धर्मसंश्रयः।
षट्त्रिंशद्वर्षसाहस्रं रक्षिताऽव्याहतेन्द्रियः॥ २२॥
त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः
अन्वेषन्ती वनं माता दावाग्निं सा प्रवेक्ष्यति॥ २३॥
इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः।
भुक्त्वा चेहाशिषः सत्या अन्ते मां संस्मरिष्यसि॥ २४॥
ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम्।
उपरिष्टादृषिभ्यस्त्वं यतो नावर्तते गतः॥ २५॥

मैत्रेय उवाच

इत्यर्चितः स भगवानतिदिश्याऽऽत्मनः पदम्।
बालस्य पश्यतो धाम स्वमगाद्गरुडध्वजः॥ २६॥
सोऽपि संकल्पजं विष्णोः पादसेवोपसादितम्।
प्राप्य संकल्पनिर्वाणं नातिप्रीतोऽभ्यगात्पुरम्॥ २७॥

विदुर उवाच

सुदुर्लभं यत्परमं पदं हरेर्मायाविनस्तच्चरणार्चनार्जितम्।
लब्ध्वाप्यसिद्धार्थमिवैकजन्मना कथं स्वमात्मानममन्यतार्थवित्॥ २८॥

मैत्रेय उवाच

मातुः सपत्न्या वाग्बाणैर्हृदि विद्धस्तु तान् स्मरन्।
नैच्छन्मुक्तिपतेर्मुक्तिं तस्मात्तापमुपेयिवान्॥ २९॥

ध्रुव उवाच

समाधिना नैकभवेन यत्पदं विदुः सनन्दादय ऊर्ध्वरेतसः।
मासैरहं षड्भिरमुष्य पादयोश्छायामुपेत्यापगतः पृथङ्मतिः॥ ३०॥

श्रीधरस्वामिकृत भावार्थदीपिका।

धान्याक्रमणाय भ्राम्यमाणानां पशूनां बन्धनस्तम्भो मेढी तस्यां बलीवर्दसमूहवत् अवान्तरकल्पवासिनां परस्तादपि स्थास्नु लोकत्रयनाशेऽप्यनश्वरम् धर्माग्न्यादयो नक्षत्ररूपाः वनौकसः सप्तर्षयो यत्प्रदक्षिणीकृत्य भ्रमन्तश्चरन्ति॥ २१॥

एतच्च राज्यानन्तरं भविष्यतीत्याह। प्रस्थित इति। तुभ्यं पृथ्वीं दत्त्वा वनं प्रस्थिते भावे क्तः वनं प्रति दीर्घगमने कृते सति रक्षिता रक्षिष्यसि॥ २२॥

त्वया असंकल्पितमपि मद्भक्तस्य तव द्रोहादेवं भविष्यतीत्याह। त्वद्भ्रातरीति। सा सुरुचिर्दावाग्निं प्रवेक्ष्यति॥ २३॥

किंच इष्ट्वा माम् यज्ञाहृदयं प्रिया मूर्तिर्यस्य तम्॥२४॥

यतः स्थानात्॥ २५॥

अतिदिश्य दत्त्वा॥ २६॥

संकल्पजं मनोरथम् पादसेवया प्रापितम् संकल्पस्य निर्वाणं समाप्तिर्यस्मात्॥ २७॥

मायाविनः सकामस्य यत्सुदुर्लभं हरेः पदं तदेकेनैव जन्मना लब्ध्वाऽपि स्वमात्मानं मनोऽसिद्धार्थमप्राप्तमनोरथमिव कथममन्यत पुरुषार्थवित्सदपि॥ २८॥ २९॥

(१) यांतीरिति क्रमसन्दर्भ विजयध्वजयो पाठः।

श्रीधरस्वामिकृत भावार्थदीपिका ।

तापमेवाह । समाधिनेति सार्धैः षड्भिः । नैकं अनेके भवा यस्मिन् वहुजन्माभ्यस्तेनेत्यर्थः प्रणामस्तुत्यादिसमये गरुडाधिरूढस्य हरेः पादच्छायायां स्थितमात्मानं स्मरन्नाह । छायामुपेत्येति । पृथङ्मतिर्भेददृष्टिः सन् हाकष्टमिति भावः ॥ ३० ॥

———

श्रीराधारमणदासगोस्वामि विरचिता

दीपिन्याख्या दीपिका टिप्पणी ॥

यातु श्रीध्रुवस्य नक्षत्ररूपेण स्थितिः सा लोकहितार्थं वैकुण्ठस्थस्यैव तस्य प्रतिच्छविरेवमन्तव्या धर्मादयोऽपि पुच्छान्तस्थित ध्रुवस्य शिशुमाराकृतेर्नक्षत्रव्यूहस्यावयवस्था मन्तव्या इति ॥२१॥

पित्रा कर्त्रा प्रस्थितं प्रस्थाने कृते सति प्रस्थानं प्रस्थितमिति भावे क्तः प्रस्थानार्थकप्रस्थितशब्दस्य दीर्घगमनोऽर्थष्टीकाकृद्भिः कृतः अनद्यतनभविष्येऽर्थेहिरक्षितेति लुट् स चात्र नसंगच्छते तद्राज्याभिषेकस्य बहुदिनानन्तरभावित्वादत एव रक्षिष्यतीति लकारव्यत्ययेन व्याख्यातम् ॥ २२ ॥

असंकल्पितमपि समातुर्मरणमेवं मृगयादिप्रकारेण ॥२३ ॥

सत्याः राज्यस्य मदिच्छया स्वीकाराद्भोगानां च मदर्पितानामेव स्वीकारात् सत्यफलत्वेन सत्याः अन्ते षट्त्रिंशद्वर्षसहस्रान्ते ॥ २४ ॥

ततः स्मरणानन्तरं यतिः भक्त्यात्मकयत्नवान् ॥ २५ ॥

दत्वा वरत्वेनेति शेषः पश्यत इत्यनादरे षष्ठी स्वभक्तोत्कण्ठावर्द्धनार्थं पश्यन्तमपि तमुपेक्ष्येत्यर्थः ॥ २६ ॥

मनोरथस्य संकल्पजत्वेऽपि संकल्पातीतफलाधिक्यलाभात्संकल्पनिर्वाणमित्युक्तम् अत एव प्राकृतराजसंकल्पस्य स्वकृतस्यानुतापेन नातिप्रीतइत्युक्तम् तस्य पूर्वोत्तरावस्थावत्त्वमुक्तं श्रीरसामृतसिन्धौ सक्षीणतत्तद्भावः स्याच्छुद्धभक्त्यधिकारवान् यथेभः शौनकादिश्च ध्रुवस्स च चतुस्सन इति ॥ २७ ॥

तदेव विदुरप्रश्नेनाभिव्यनक्ति सुदुर्लभमिति पुरुषार्थविदपि सारासारविवेक्यपि इति तस्य किंभगवद्धामन्यपर्याप्तत्वस्य भ्रान्ति जातेत्यभिप्रायेण प्रश्नः ॥ २८ ॥

तस्य तुच्छराज्येच्छासंकल्प एवानुतापस्समजनितनुधाम्नोऽनित्य बुद्ध्येत्युत्तरमाह । मातुरिति । मुक्तिं विष्णवङ्घ्रिलाभरूपां यथोक्तं पाद्मोत्तरखण्डे विष्णोरनुचरत्वंहिमोक्षमाहुर्मनीषिणइति प्रथमेऽपि येनापवर्गाख्यमदभ्रबुद्धिर्लेभखगेन्द्रध्वजपादपद्ममिति ॥ २९ ॥

यद्यपि देवानां छाया नास्तीति प्रसिद्धिस्तथापि ध्रुवप्रियस्यावतारत्वाद्वतारस्य च प्रपञ्चावतरणरूपत्वात् प्रपञ्चानुकरणं रामकृष्णाद्यवतारेष्वपि छायायाः प्रसिद्धिरेवेति नान्यथा व्याख्या सम भेददृष्टिः शत्रुमित्रादिविषयज्ञानवान् ॥ ३० ॥

———

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका

धान्याक्रमणाय भ्रम्यमाणानां पशूनां बन्धनस्तम्भोमेढिः तस्यां गोचक्रवद्बलीवर्दनमूहवाभिर्हर्नामत्यर्थः कल्पवासिनामवान्तरकल्पवासिनां परस्तादापभ्यास्तु लं कल्पनाशेऽप्यनश्वरं धर्माग्न्यादयो नक्षत्ररूपाः वनौकसोमुनयः सप्तर्षयः यत्प्रदक्षिणीकृत्य भ्रमन्तश्चरन्ति ॥ २१ ॥

तत्स्थानं राज्यादनन्तरंप्राप्स्यसीत्याह । प्रस्थितइति । तुभ्यं गां पृथिवीं दत्वा पित्रा उक्त नपादेन वनंप्रस्थितेइति भावेक्तः वनंप्रति गमने सति धर्मतंत्रयः वर्णाश्रमधर्मपरिपालकः भवान् षट्त्रिंशद्वर्षसाहस्रं वर्षाणां सहस्राणि ततः समाहारेद्विगुः अव्याहतेन्द्रियः अविहतेन्द्रियः रक्षिता रक्षिष्यति गामित्यनुषङ्गः ॥ २२ ॥

त्वयासंकल्पितमपिमद्भक्ते त्वयिद्रोहादेवं भविष्यतीत्याह केन त्वद्भ्रातरीति उत्तमाख्येत्वद्भ्रातरि मृगयायां नष्टे सति तास्मिन्नुत्तमे मनोयस्याः सा माता सुरुचिः वनं प्रविश्य दावाग्निं प्रवेक्ष्यति ॥ २३ ॥

किंच यज्ञहृदयं यज्ञस्य हृदयं तात्पर्यभूमिं यज्ञाराध्यमित्यर्थः मां यज्ञानां प्रभुं पुष्कलदक्षिणैराराध्य इहराज्येसत्याः सत्संकल्पजाः आशिषः इच्छाविषयान् भुक्त्वा अनुभूय अन्तेभोगानन्तरं मामनुस्मरिष्यसि ॥ २४ ॥

ततः सर्वलोकैः सप्तर्षिपर्यन्तैः नमस्कृतं मत्स्थानं मदनुग्रहाल्लब्धं स्थानं गन्तासि प्राप्स्यसि स्थानं विशिनष्टि सप्तर्षिभ्यउपरिष्टात्स्थितं यतिः मनः प्रयतनशीलः गत्वायतः स्थानात्पुनर्वर्तते नावांगवरोहति अपितु ततोवैकुण्ठमेवयातीत्यर्थः ॥ २५ ॥

भगवदुक्तिमुपसंहरन् भगवान् तिरोऽदधदित्याह । मुनिः इत्थं प्रकारेणार्चितः आराधितोभगवान् आत्मनः पदंस्थानं अर्तिदिश्य दत्वा बालस्य ध्रुवस्य पश्यतः सतः गरुडध्वजोगतवान् तदंकितध्वजश्च भगवान्स्वं धाम वैकुण्ठस्थानमगात्प्रापद्यत ॥२६॥

सोऽपिध्रुवोऽपि विष्णोः पादसेवया उपसादितं प्राप्तिं संकल्पजं तपश्चर्यारम्भे फलसंकल्पनिर्वाणं संकल्पस्य निर्वाणं समाप्तिर्यस्मिन् कृतकसुखं नतु स्वाभाविकानन्दाविर्भावः प्राप्यापि नातिप्रीतः नितरामहृष्टचित्तःपुरमगात् ॥ २७ ॥

अनतिप्रीतिकारणं पृच्छतिविदुरः सुदुर्लभमिति प्राप्यापि मायाधिपतेःसर्वान्धरेवन दत्तमित्यर्थःइतरैःसुदुर्लभम् अतिदुःखेनाप्यलभ्यं यत्पदं तत्स्थानं भगवतश्चरणार्चनेनार्जितं संपादितं तत्स्थानम् एकजन्मना लब्ध्वापि द्वितीये शरीरे असत्यवल्लब्ध्वेत्यर्थः स्वमात्मानमसिद्धार्थमिव अपरिपूर्णार्थमिव कथममन्यत मुक्त्यर्थकभगवदनाराधनमेवाप्रीतिकारणमिति वदंस्तस्य परिनापमाह पिः मातुरिति । सपत्न्यामातुः सुरुचेर्वाच एव वाणाः तैर्हृदि विद्धः आध्यथः तान् वाग्बाणान् स्मरन्मुक्तिप्रदाद्भगवतः मुक्तिं नैच्छत् तत्प्रयुक्तं पश्चात्तापमुपेयिवान् प्राप्तः ॥ २८ ॥ २९ ॥

पश्चात्तापविषयां ध्रुवोक्तिमाह । समाधीति सार्धैः षड्भिः ऊर्ध्वरेतसोजितेन्द्रियाः सुनन्दादयः नैकभवेन नैकेअनेके भवा यस्मिन् बहुजन्मना अभ्यस्तेनेत्यर्थः समाधिना यस्य भगवतः स्वरूपं विदुः साक्षात्कृतवन्तः अमुष्यभगवतः पादयोः छायां षड्भिरेवमासेरुपेत्यापि प्रणामस्तुत्यादिसमये गरुडारुढस्य हरेः पादच्छायायां स्थित्वापीत्यर्थः पृथङ्मतिः देहात्माभिमानस्वातन्त्र्याभिमानतः अपगतः भगवत्पादच्छायायाः सकाशाद्दूरीकृतः ॥

———

श्रीमद्विजयध्वजतीर्थ कृत पदरत्नावली ।

सिंहासनाधिपतिरपिभूयादिति भावेनाह । प्रस्थित इति भूमिम् ॥ २२ ॥

उत्तमे भ्रातरि सति कथं सिंहासनाप्तिरिति तत्राह । त्वद्भ्रातरीति । तस्मिन्नेव मनो यस्याः सा तन्मनाः वनमन्वेषती मार्गमाणा अनेन तन्मातृभयमपि प्रत्युक्तमिति ज्ञायते ॥ २३ ॥

पुष्कलदक्षिणैः पुरुषं पुष्कलं पूर्णमिति हलायुधः अनेन दक्षिणानामुत्तमकल्पत्वं ध्वनयति मामनुस्मरिष्यसीत्यनेन सर्वदा स्मरन्नपि मरणकाले विशेषतो मत्स्मरणं कुर्विति विधत्ते प्रपन्नत्वाद्भयाराति॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

ततः किमत्राह । तत इति । यतो नावर्तते यतिरित्यनेन ध्रुवस्य मुक्तेर्नित्यत्वं द्योतयति ॥ २५ ॥

अतिसृज्य दत्त्वा ॥ २६ ॥

सोऽपि ध्रुवोऽपि संकल्पजं संकल्पाज्जातं विष्णोः पादसेवयोपसादितं प्राप्तं संकल्पनिर्वाणं प्रतिज्ञाफलं प्राप्य ॥ २७ ॥

विदुरो मुक्तेरितरेषु पुरुषार्थेषु विरक्तेन भाव्यमिति जानन्नपि तत्प्रकटनाय पृच्छति सुदुर्लभमिति मायाविनां भक्ताभीष्टफलप्रदानसामर्थ्यवतः असिद्धार्थमसाधितप्रयोजनं अर्थवित्तत्कालोचितप्रयोजनं वेत्तीति ॥ २८ ॥

पित्रुपाऽपि सांसारिको निर्बन्धो दुस्त्यज इति भावेन तद्योग्यं परिहरति मातुरिति ॥ २९ ॥

अनेकभवेनेति भवपदमावृत्य व्याख्येयं तथाहि अनेकेषु भवेषु जन्मसु भवति समुत्पद्यत इति तेनामुष्य हरेः पादयोश्छायां प्राप्य पृथङ्मतिर्विपर्यबुद्धित्वादपहृतास्तर्यङ्काऽडित इवाभूवम् ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

धर्मादयो गोचाकृतेः पुच्छान्तस्थितध्रुवाद्वितैर्नक्षत्रव्यूहस्यावयवस्थाः तत्र विष्णोरपि हृदयस्थत्वे यद्गणनं कृतं तत्तु तन्मण्डलाभ्यन्तरमण्डलस्थस्य तस्य लोकहितार्थं प्रतिच्छविमात्रदर्शनादिति गम्यते ॥ २१——२२ ॥

पूर्वमपि निगूढभक्तिसंस्कारेण मङ्गलस्यैव तव द्वेषाक्तयोरेवं स्यादित्याह त्वदिति ॥ २३ ॥

सत्या मत् सम्बन्धेनैव भोगादयोऽर्थाः ॥ २४—२७ ॥

सङ्कल्पनिदानमपि तदतीत विष्णुपदरूपत्वात् सङ्कल्पनिर्वाणं तत्र हेतुः विष्णोः पादेति पादसंवाश्वत्वनं विष्णोरेव सङ्कल्पजं तत् सङ्कल्पजिदिति क्वचित् । कृपया प्रापितमिति वा हेत्वन्तरं तथापि स्वसङ्कल्पस्यानुसन्धानेन तादृशत्वाज्ञानाज्ञातिप्रीतः तादृशत्वाज्ञानस्यापि स्वस्य तुच्छसङ्कल्पमेवाधिकृत्य तिरस्काराद्वा ॥२७॥

अर्थवित् सारासारविवेकी ॥ २८ ॥

मुक्तिः श्रीभगवद्दास्यम् । विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिण इति पाद्मोत्तरखण्डात् । नैव मुकुन्दस्येत्यादि वक्ष्यमाण मैत्रेयवचनैकवाक्यत्वानुरोधाच्च । अत्र अहोबतेत्यादि वक्ष्यमाण वचने च श्रीध्रुवस्य यदपूर्वमनन्यत्वं तदुच्चपदं कामनयैव तत्प्रार्थितवता तेन लब्धमनोरथातीतवरेणापि स्वसङ्कल्पमेव तिरस्कर्तुमुक्तमिति गम्यते । मनोरथातीतत्वं चोक्तं श्रीविदुरेण । सुदुर्लभं यत्परमं पदं हरेरिति स्वयं श्रीध्रुवप्रियेण । ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम् । उपरिष्टादृषिभ्यस्त्वं यतो नावर्तते यतिरिति वक्ष्यते पार्षदाभ्यामपि आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदं सूतेन च ध्रुवस्य वैकुण्ठपदाधिरोहणमिति । पञ्चमे ज्योतिश्चक्रवर्णने । विष्णोर्यत्परमं पदं प्रदक्षिणं प्रक्रमन्तीति यत्तत् विष्णोः परमं पदमपि वदन्तीति । प्रपञ्चान्तर्गतत्वेऽपि तद्धर्मातीतत्वमुक्तं "विकारान्तर्वर्त्ति च तथाहि स्थितिमाह„इति न्यायेन । अतोऽस्मिन्लोके प्रापञ्चिकस्य बहिरंशस्यैव प्रलयो ज्ञेयः । तस्य तु तदानीं अन्तर्द्धानमेव एतद्बालस्यैव हिरण्यकशिपुणोक्तं किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवादिभिरिति अतोऽद्यापि ये तथा वदन्ति ते तत्तुल्या इति भावः ॥ २९ ॥

तथैवाह । समाधिनेति । छायामाश्रयामित्यर्थः देवानां छायाया अभावात् पृथगुभगवतोऽन्यत्र मतिर्यस्य सः ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

धर्माग्न्यादयो नक्षत्ररूपाः । वनौकसः सप्तर्षयः ॥ २१ ॥

एतच्च राज्यभोगानन्तरं भविष्यतीत्याह । प्रस्थिते इति तुभ्यं गां पृथ्वीं दत्त्वा वनं प्रस्थिते इति भावेक्तः । रक्षिता गां रक्षिष्यति । २२ ॥

मङ्गलरक्ते त्वयि समातृके अपराधिन्याः सुरुचेर्यद्भविष्यतित च्छृणिवत्याह । त्वद्भ्रातरीति ॥ २३ ॥

लोके यशश्च तव भविष्यतीत्याह । इष्ट्वेति ॥ २४ ॥

यतो नावर्त्तते इति नित्यत्वं व्यञ्जितम् ॥ २५ ॥

अतिदिश्य दत्त्वा ॥ २६ ॥

सङ्कल्पस्य निर्वाणं समाप्तिर्यस्मात् तत्पदमिति पूर्वेषामनुषङ्गः ॥ २७ ॥

नातिप्रीत इति श्रुत्वा पृच्छति सुदुर्लभ मिति मायाविनः कृपालोः अर्थविद्विज्ञोऽपि ॥ २८ ॥

मुक्तिभक्तिमत्पार्षदत्वं विष्णोरनुचरत्वं हिमोक्षमाहुर्मनीषिण इति पाद्मोत्तरखण्डात् सायुज्यन्तु न व्याख्येयं यन्निर्वृतिस्तनुभृतामिति वाक्येन तत्र तदरोचकत्वज्ञापनात् ननु नैच्छदिति न सङ्गच्छते भक्तिं मुहुः प्रवहतामिति तद्वाक्येन भक्तेरेवनादिच्छाविषयत्वावगतेः । सत्यम् अत्र स्मरन्निति वर्त्तमाननिर्देशात् मातृसपत्नी वाग्बाणव्यथास्मरणदशायामेव नैच्छत् अतस्तदैव मधुवनं आगत्यमत्पित्रादिदुर्लभ परमोच्चपद प्राप्तिकामो भगवन्तं भजिष्ये इति सङ्कल्प्य तपश्चकार भगवत् साक्षाद्दर्शनसमयेतु योऽन्तःप्रविश्येति तदुक्तेस्तदीय सर्वेन्द्रियाणां भगवदाकारत्वात् कुतः सुरुचेर्वाग्बाणस्मरणं किन्तु वेदाहंते व्यवसितमिति भगवद्वाक्येन स्मृतपूर्वस्वीयसङ्कल्पो मत्सकामत्वलक्षण व्यभिचारं प्रभुर्मे जानातीति जातापत्रपोऽन्वतप्यत् हन्त हन्त दुर्बुद्धिरहं कथमेवं सङ्कल्पमकरवं भक्तिं मुहुः प्रवहतामिति साम्प्रतिकीं भक्ति प्रार्थनां मे मत्प्रभुर्मत् कपटमेव जानातिस्म अतस्तदनुरूपं किमपि स्पष्टं नावोचत् । किन्तु पूर्वसङ्कल्पानुरूपमेववरं ददौ त्वद्भ्रातर्युत्तमे नष्ट इत्यादिना पुरातनमस्मादसत्यमपि मां स्मारयामासेत्येवं तस्य लज्जानुतापदैन्यनिर्वेदास्तदुक्तश्लोकषट्के द्रष्टव्याः ॥ २९ ॥

नैकभवेन बहुजन्माभ्यस्तेन गरुडारूढस्य हरेः पादच्छायायां स्थितमात्मानं स्मरन्नाह छायामुपेत्य अपगतोऽधःपतितः यतस्तस्मात् पृथक्विषये मतिर्यस्य सः अतएव मां स्वसङ्गेन प्रभुः स्वधाम नानैषीदिति भावः ॥ ३० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ॥

कुत्र किम्वत् मेढ्यांधान्यानां निस्तुसारत्वसाधनभूते खले आरोपितायां गोचक्रवत् गोवृषसमूहवत् धर्मादयोनक्षत्ररूपाः वनौकसः सप्तर्षयः सतारकाः कल्पवासिनां परस्तात्स्थास्नुस्थिरं यत् प्रदक्षिणी कृत्य भ्रमन्तश्चरन्ति ॥ २१ ॥

तत्स्थानं भूमण्डलरक्षापूर्वकमञ्जनंकृत्वा गन्तासीत्याह प्रस्थितेइति चतुर्भिः गां भूमिं दत्त्वा तुभ्यमितिशेषः पित्राउत्तानपादेन वनं प्रस्थिते भावेक्तः वनंप्रतिगमने कृते सति धर्मसंश्रयः भुवोमण्डलं रक्षिता रक्षिष्यति ॥ २२ ॥

सा सुरुचिः ॥ २३ ॥

यज्ञोहृदयमन्तः करणशुद्धिद्वारा प्रापकं यस्य तम् मुख्यं भ्रमयकनाह मां संस्मरिष्यसीति ॥ २४ ॥

अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत ।
भवच्छिदः पादमूलं गत्वाऽयाचे यदन्तवत् ॥ ३१ ॥
मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः ।
योनारदवचस्तथ्यं नाग्राहिषमसत्तमः ॥ ३२ ॥
दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक् ।
तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा ॥ ३३ ॥
मयैतत्प्रार्थितं व्यर्थं चिकित्सेव गतायुषि ।
प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम् ।
भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः ॥ ३४ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

यतः स्थानात् यतिभिरुपासकः ॥ २५ ॥

अतिदिश्य हरवा अगमत् ॥ २६ ॥

सध्रुवोऽपि संकल्पस्य निर्वाणं समाप्तिर्यस्मात्तत संकल्पजं स्वमनोरथं राज्ञानम विष्णोः पादसेवयोपसादितं आपितं प्राप्यापि नाति प्रीतः पुरमभ्यगात् ॥ २७ ॥

मायाविनः प्रकृत्यधिपतेः हरेः परमंपदं यदितरैः सुदुर्लभं तदेकेनैव जन्मना लब्ध्वापि कथं स्वमात्मानमसिद्धार्थ मिवामन्यत॥२८॥

यद्यपि भगवता भक्तवत्सलेन यतोनावर्त्तते यतिस्तन्मुक्तम्यं पदं दत्तमपि तथापि सुरुचिवाग्बाणव्यथितस्तत्प्राप्त्यर्थं भगवन्तं नाराधितवान् किंतु तमधिराजासनार्थमाराधितवान् तदपि भगवद्दत्तं तत्परमपदप्राप्त्यर्थंनरायभूतं मन्वानस्तापमुपेयिवानित्याह । मातुरति ॥ २९ ॥

यत्पदं सनंदादयोविदुःछान्दोग्यप्रसिद्धा अस्मद्गुरोःश्रीनारदस्य गुरवइत्यर्थः ते एव अनायासेन जानन्ति स्वतआगतविज्ञानात्त्यादि मोक्षधर्मोक्तेःअन्येउर्द्धरेतसोऽपिनैकेबहवोभवाःजन्मानियस्मिन् तेन बहुजन्माभ्यस्तेन समाधिना यद्विदुःतत्पदभिन्ने अधिराजासनेमतिर्यस्य स. अतएव अमुष्य भगवतः पादयोः छायां सामीप्यमुपेत्या प्यपगतः वियोगं प्राप्तोऽस्मि ॥ ३० ॥

---

भाषाटीका

जैसे मेढी के खंभ से सब बैल बांधे जाते हैं तैसे जिस के चारों ओर ज्योतिश्चक्र है जो स्थान कल्पवासी जनों के भी आगे तक रहने वाला है धर्म अग्नि कश्यप शुक्र और भी वनवासी मुनिगण तारों के सहित प्रदक्षिणाक्रम से घूमते फिरते हैं सो स्थान तुम को दिया है ॥ २१ ॥

अब तुमार पितातुमकोपृथिवी देकर जबवनको जांयगे तब तुम धर्म को आश्रय करके छत्तीस ३६ हजार वर्षपर्यंत पृथिवीमंडल की रक्षा करना ॥ २२ ॥

तुमाराभ्राताउत्तमजबवन मे सिकारखेलनेमे मरजायगा तब उसकी माता उसमे मोह करके ढूंडतीहुई दावानल मे प्रवेश कर जायगी । २३ ॥

फिरतुमयज्ञमूर्ति मेरंआधिकदक्षिणा वाले यज्ञोंसेयजन करके इस लोकमे दिव्यभोगोंको भोगकर अंतमे मेरास्मरण करोगे ॥२४॥

तदनंतरसबलोकों के नमस्कार करने योग्य हमारे स्थान जाओगे जो कि सवऋषियों के ऊपरहै जहां का गया लौ[illegible] नहीं है ॥ २५ ॥

मैत्रेयजी बोले इस प्रकार से ध्रुव से पूजित हुये भग[illegible] अपना स्थान ध्रुव को देकर के बालक के देखते देखते गरुड़[illegible] आरोहण होकर के वैकुंठ कूं गये ॥ २६ ॥

ध्रुवजी भी विष्णुभगवान् की चरण सेवा से प्राप्त हुई [illegible] संकल्प की समाप्ति कूं प्राप्त हो कर कुछ अप्रसन्न से हो कर[illegible] को गये ॥ २७ ॥

विदुर जी बोले कि बड़ा दुर्लभ जो विष्णु लोक [illegible] उसको भगवान की चरण सेवा करने से एकही जन्म में प्र[illegible] होकर बड़े बुद्धिमान होकर अकृतार्थ सरीखा अपनेको [illegible] माना उनने ॥ २८ ॥

मैत्रेयजी बोले सौतिन माता के वाणी रूपी बाणों से [illegible] हुए हृदय में उन वचनों का स्मरण करने से मुक्तिदा[illegible] भगवान् से मुक्ति नहीं मागा जिससे उनको चिन्ता होगई ॥ २[illegible]

अपने मन में ध्रुवजी कहने लगे कि जिस परमात्मा के पद[illegible] सनंदनादिक योगि जन अनेक जन्मों की समाधि से ऊर्[illegible] होकर प्राप्त हुये तिस भगवान् की चरण छाया को छै मही[illegible] में प्राप्त होकर मैं पृथक् बुद्धि वाला होगया ॥ ३० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

अनात्म्यमात्मशून्यत्वमज्ञत्वम् भवच्छेत्तुर्यदन्तवत्तदयाचे या[illegible] तवानस्मि ॥ ३१ ॥

अज्ञत्वे कारणं संभावयति मतिरिति पतद्भिर्मदपेक्षयाधःप्रा[illegible] वद्भिरत एवासहनशीलैः नाधुनाप्यवमानंते इत्यादि सत्यमपि ना[illegible] दस्य वचायान गृहीतवानस्मि तस्य मेमतिर्विदूषिता ॥ ३२ ॥

किंच दैवीमिति प्रसुप्तः स्वप्नानिवपश्यन् द्वितीयेऽसत्यपि भ्रा[illegible] व भ्रातृव्यः शत्रुरिति हृच्याहृद्रुजा हृदयशोकेन तप्ये तापम[illegible] भवामि ॥ ३३ ॥

किंच मया प्रसाद्य यत्प्रार्थितं तद्व्यर्थमित्याह भवच्छि[illegible] मिति ॥ ३४ ॥

स्वाराज्यं यच्छतोमौढ्यान्मानोमे भिक्षितो बत ।
ईश्वरात्क्षीणपुण्येन फलीकारानिवाधनः ॥ ३५ ॥

मैत्रेय उवाच

नवै मुकुन्दस्य पदारविन्दयोरजोजुषस्तात ! भवादृशा जनाः ।
वाञ्छन्ति तद्दास्यमृतेऽर्थमात्मनोयदृच्छया लब्धमनः समृद्धयः ॥ ३६ ॥
आकर्ण्यात्मजमायान्तं संपरेत्य यथागतम् ।
राजा न श्रद्दधे भद्रमभद्रस्य कुतोमम ॥ ३७ ॥
श्रद्धाय वाक्यं देवर्षेर्हर्षवेगेन धर्षितः ।
वार्त्ताहर्तुरति प्रीतोहारं प्रादान्महाधनम् ॥ ३८ ॥
सदश्वं रथमारुह्य कार्त्तस्वरपरिष्कृतम् ।
ब्राह्मणैः कुलवृद्धैश्च पर्यस्तोऽमात्यबन्धुभिः ॥ ३९ ॥
शङ्खदुन्दुभिनादेन ब्रह्मघोषेण वेणुभिः ।
निश्चक्राम पुरात्तूर्णमात्मजाभीक्षणोत्सुकः ॥ ४० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

एतदेव सदृष्टान्तमाह । स्वाराज्यं निजानन्दं प्रयच्छतः सकाशाद भिमानः क्षीणपुण्येन मयाभिक्षितोयाचितः क्षीणेन पुण्येनेति वा दृष्टान्त एव संबन्धः यथाऽधनईश्वराच्चक्रवर्तिनः फलीकारान्सतुषत-ण्डुलकणान् याचते तद्वत् ॥ ३५ ॥

एवं निस्पृहत्वं तस्य युक्तमित्याह । तस्य दास्यं विनान्यमर्थमा-त्मनोनैव वाञ्छन्ति यदृच्छयैव लब्धेन मनसः समृद्धिर्येषां ते ॥ ३६ ॥

प्रस्तुतमाह । आकर्ण्येति । सं परेत्य मृत्वा गतमाकर्ण्य यथा तथा न श्रद्दधे विश्वासं न चकार अभद्रस्य मम भद्रं कुतइति मत्वा ॥ ३७ ॥

एष्यत्यचिरेन इति देवर्षेर्वाक्यं श्रद्धाय ॥ ३८ ॥

ब्राह्मणादिभिः पर्यस्तः परिवृतः ॥ ३९ ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

अन्तवत्प्राकृतं राज्यम् ॥ ३१ ॥

मतिर्विदूषितेत्यपि पूर्ववासनानुतापेनैवोक्तम् न तु भगवद्धाम्नि प्राकृतत्वदृष्ट्या "विकारावर्तिचतथाहि स्थितिमाह„इति न्यायेन तस्य नित्यत्वप्रतिपादनात् अस्य च श्रीभगवत्साक्षात्कारादिप्रभा-वेन यथार्थज्ञानवत्त्वात् महाप्रलये तु श्रीमधुपुर्य्यादिवदन्तर्धान-मेव स्यादिति तस्मादद्यापि किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्ण-वादिभिरिति हिरण्यकशिपुवत्तथा वदन्तोऽसुरा एवेति ज्ञेयम ३२

दैवीं देवस्य विष्णोर्जीवविषयां व्यामोहनशक्तिमुपाश्रित्य स्वविषयकत्वेन लब्ध्वा द्वितीये राज्यादिप्रपञ्चेऽसत्यपि अपुरुषार्थे ऽपि मति ॥ ३३ ॥

मयेति सार्द्धकं भवं राज्यादिप्रपञ्चं प्रसार्थेति तद्दर्शनात्पूर्व-मिति ज्ञेयं या निर्वृतिस्तनुभृमामित्यादितद्वाक्यात् ॥ ३४ ॥

एतदेव व्यर्थप्रार्थनमेव अभिमानस्तद्धेतुराज्यप्रपञ्चः ॥ ३५ ॥

यदृच्छयैव याञ्चां विनैव लब्धेन सामीप्यादिमोक्षेन मनस्समृद्धि-र्दर्शनपरिचर्य्यादिविषयकोल्लासो येषामिति व्याख्येयम् अन्यलाभेनै-कान्तिनां मनः समृद्धेरनौचित्यात् ॥ ३६ ॥

प्रासङ्गिकं तापप्रकारमुक्त्वा प्रस्तुतं वर्णनीयं ध्रुवचरितमाह मृत्वाऽऽगतं यथा कश्चन न श्रद्दधाति तथा न श्रद्दध इति योज-नीयम् ॥ ३७ ॥

महाधनं बहुमूल्यम् ॥ ३८ ॥

सदश्वमिति युग्मकम् ॥ ३९ ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

अनात्मा देहः तस्य कर्मज्ञानात्म्यं दौर्जन्यमित्यर्थः तत् पश्यत तच्छोच्यमिति अहो यतेति हाकष्टमितिभावः शोककारणं व्यनक्ति यत् यस्मात् भयच्छिदः गर्भजन्मजरामरणाद्यात्मकसंसारभयनिव-र्त्तकस्य भगवतः पादमूलं गत्वा साक्षात्कृत्य अन्तवत्फलंयाचे या-चितवान् नतु निरतिशयानन्दापहतपाप्मत्वादिगुणाष्टकाविर्भावपूर्वं कब्रह्मानुभवात्मकानन्दमिति भावः ॥ ३१ ॥

स्वस्याल्पास्थिरसांसारिकभोगयाञ्चाकारणं निश्चिनोति । मति रिति । पतद्भिः स्वस्यभोगान्ते स्वर्गात्पतद्भिः पतनशीलैः अतएवा सहिष्णुभिः मदपेक्षयाधः पदप्राप्तत्वात् परसमृद्धि मसहिष्णुभिर्दे-वैर्मे ममम्मतिः बुद्धिर्विदूषिता सांसारिकभोगलौल्यसंपादनेन दोषंप्रा पिता स्वदौर्जन्यमेव व्यञ्जयन् परितपति योऽहमसत्तमः दुर्जनः अतएव नारदवचः विकल्पे विद्यमानेऽपि नह्यसन्तोषहेतवइत्यादि नोक्तं वचः तथ्यं नाग्रहीषं न गृहीतवान् ॥ ३२ ॥

प्रसुप्तवदहमपि दैवीं गुणमयीं दुरत्ययां मायामुपाश्रित्य तया अतएव भिन्नदृक् देहात्माभिमानस्वतन्त्रात्माभिमानी द्वितीये अब्रह्मात्मकस्वतन्त्र वस्तुन्यसत्यपि भ्रातैव भ्रातृव्यः शत्रुरिति यारु-गरोगस्तथा तप्ये तापमनुभवामि ॥ ३३ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

किञ्च मया यत्प्रार्थितं तद्व्यर्थमित्याह मयेति । दुःखेनापिप्रसाद्यितुमशक्यं भवच्छिदं जगदन्तरात्मानं तपसा प्रसाद्य भवं संसारमेव याचे याचितवानस्मि हेति खेदे यतोऽहं भाग्यविवर्जितः दुर्भगः ॥ ३४ ॥

दौर्भाग्यमेव सदृष्टान्तं व्यनक्ति स्वाराज्यं स्वराट् अकर्मवश्यस्तस्य भगवतः स्वाराज्यं "सस्वराड्भवतितस्य सर्वेषु लोकेषु कामचारोभवती,, त्युक्तं मुक्तैश्वर्य्यं यच्छतो ददतोभगवतःसकाशात्केवलं मे मया मानः अभिमानः अभिभिक्षितः याचितः निर्धनः क्षीणं च तत्पुण्यं तेन ईश्वरात् सार्वभौमात् फलीकारानिव सतुषतण्डुलकणानिवेति दृष्टान्तः ॥ ३५ ॥

दुर्लभार्थं प्राप्यापि कथमेवं तपतीति त्वया न शङ्क्यमित्याह । मुनिः नवा इति। मुकुन्दस्य मुक्तिप्रदस्य भगवतःपदारविन्दयोर्यद्रजः परागस्तज्जुषः सेवमानाः भवादृशा जनाः अस्य भगवतोदास्यं शेषत्वमृते विना अन्यमर्थमात्मनः स्वस्य नववाञ्छान्तनेच्छन्ति यतस्ते जनाः यदृच्छया दैवात् लब्धामनसः समृद्धिर्येषां ते ॥ ३६ ॥

प्रस्तुतमाह । आकर्ण्येति । राजा उत्तानपादः आत्मजं ध्रुवं आयान्तम् आकर्ण्यापि संपरेत्य मृत्वा यथागतं पुनरागतमिव न श्रद्दधे न विश्वस्तवान् संपरेत्य गतमित्यागमनदौर्लभ्यमुच्यते तश्च भाग्यहीनत्वाभिप्रायेण तमेव व्यनक्ति अभद्रस्य भाग्यहीनस्य मम भद्रं पुत्रप्रत्यागमनरूपं मङ्गलं कुतो हेतोः स्यादित्यभिप्रायेण न श्रद्दध इत्यन्वयः ॥ ३७ ॥

ततोदेवर्षेर्नारदस्य वाक्यं एष्यत्याचिरतोराजन् यशोविपुलयंस्तवेति वाक्यं तात्कालिकं वा श्रद्धाय विश्वस्य हर्षयोगेन प्रत्यागमननिमित्तसन्तोषयोगेन धर्षितः प्रगल्भितः उद्रिक्तानन्द इति यावत् वार्त्ताहर्तुः पुत्रागमनवार्त्ताहर्तुः पुत्रागमन वार्त्ताकथयितुः महाधनमनर्घ्यं हारंमुक्तामणिमयं प्रीत्यादात् ॥ ३८ ॥

अमात्यवान्धवैरिति द्वन्द्वः ब्राह्मणादिभिः पर्यस्तः परिवृतः।३९।

ब्रह्मघोषेण स्वस्ति वाचनात्मकेन आत्मजावेक्षणोत्सुकः निश्चक्राम निष्क्रान्तवान् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

राजभटादिना ताडितस्येव तस्य पश्चात्तापोद्रेकं वक्ति। अहो वतेति । अनात्म्यं जाड्यम् अन्तवदित्यनेन स्वस्यानित्याधिपत्यं सूचयति तदुक्तम् "आधिपत्यमनित्यं तु ध्रुवलोकस्य यद्ध्रुवे,, यतोनाव रतं यतिरित्युक्तिरपि युज्यत इत्याह नतु तत्स्थानगंतॄणां यतीनां स्थितिरुत्तमेति आधिपत्यमनित्यं चेत्ततो निवृत्त्या न कदापि तस्य मुक्तिरित्यत आह तस्यापि मुक्तिर्नियतेति तर्हि जानता विष्णुनेदं पदं किमिति दत्तं तत्राह नियतं चापितत्पदं तस्य लक्ष्यत्वादुत्तमित्यर्थः तर्हि ध्रुवेणकिमित्यनिन्दीति तत्राह तथापि कामना निन्दा ध्रुवेण सुकृता वतेति मुमुक्षुणा विषयाभिलाषो न कर्त्तव्य इति शिक्षणार्थ मित्यर्थःकामना विषयाभिलाषः। तस्य निन्दा धिक्कारः ॥ ३१ ॥

शास्त्रशिक्षितबुद्धेस्तव कथं बुद्धिव्यामोहः प्राप्त इति तत्राह। मतिर्विदूषितेति । नाधुनाप्ययमानंत इत्यादिनारदवचनम् ॥ ३२ ॥

एतदेव विशदयति । दैवीमिति । सर्वत्र निर्मलत्वेन द्योतमानस्य देवस्य हरेर्विद्यमानां मायां बन्धकशक्तिमुपाश्रित्य स्पृष्ट्वा प्रसुप्तोऽज्ञाने शयितो यथा भिन्नदृग्यथावस्तु न पश्यति । विपरीतं पश्यति च तथाहमपि भ्रातायमुत्तमो भ्रातृव्यः शत्रुरिति द्वन्द्वजा हृदयभेदिरोषेण तप्ये स्वतन्त्रस्याऽन्यस्य हरेः द्विती[illegible] द्भावे सन्तापः संभावित इति नेत्याह । द्वितीय इति । द्वि[illegible] स्वतन्त्रेऽन्यस्मिन्नसत्यविद्यमानेऽपि सर्वस्वातन्त्र्येण सर्वैश्वर्येणा[illegible] तीयत्वमीश्वरत्वं च ब्रह्मादीशितव्यस्य भावात्परमेश्वरत्वं हरेर[illegible] क्तमिति इममर्थमपि पदेन ध्वनयति तदुक्तम्

द्वितीयस्य स्वतन्त्रस्य त्वभावाद्द्वयवार्जितः ।

ईश्वरस्येशितव्यस्यभावात्सपरमेश्वर

इति ॥ ३३ ॥

ध्रुवलोकस्याधिपत्यस्यानित्यात्वात्सुतरां सिंहासनाधिष्ठान[illegible] संप्रार्थ्य भिक्षणं व्यर्थमित्याह। मयैतदिति जगतामिति बहुवचने[illegible] न्येषामाधिपत्यं श्लथयति तेन द्वितीयस्वातन्त्र्याभावोनिश्चीयत[illegible] ज्ञातव्यम् ॥ ३४ ॥

अभीष्टपुरुषार्थदानसामर्थ्याभावान्नभिक्षितमिति न मन्तव्यमि[illegible] ह । भवच्छिदमिति। ञिभीभयेसंचलनयोरितिधातोर्भयमात्रराहि[illegible] चेद्भिक्षितं लोकेऽप्यस्तीति किमित्यनुशोक इत्यत उक्तं चिविशं[illegible] तादात्म्यमिति तादात्म्यं हरिं नियतचित्ततया गृहवद्धरिप्रवेशल[illegible] णो मोक्षःतदुक्तम्

हरौनियतचित्तत्वाद्गृहवत्तत्प्रवेशनात् ।

मोक्षं तादात्म्यमित्याहुर्नतुतद्रूपतःक्वचित्

इति नैकात्मतां मे स्पृहयन्ति केचिदित्यत्र हरिणाकाङ्क्षितत्व[illegible] ङ्क्षितत्वमेवैकात्म्यम् नतु तत्स्वरूपत्वम् हरीच्छतेच्छितंकाम[illegible] नतेनैकस्वरूपतेतिवचनात् कामेन मेकाम आगादित्युपासि[illegible] समयेप्रार्थनोक्तिश्च मे मनोवतदुःखानुभवयोग्यं वस्तुभिक्षितं दौर[illegible] पुण्येन कारणेन अत्र दृष्टान्तमाह । पुलकानिति । पुलका[illegible] स्तुच्छधान्यानि कुलित्थादीनि भक्तसिक्थानीव "स्यात्पुलकस्तुच्छ धान्ये संक्षेपे भक्तसिक्थक,, इतियादवः॥ ३५ ॥

मैत्रेयो ध्रुवस्यानुशोकतात्पर्यमाह । नवा इतितद्दास्यमित्यने[illegible] तादात्म्यमित्येतद्विवृतमर्थतः अन्यपुरुपार्थं कुतो न वाञ्छन्तीति तत्र[illegible] ह । यदृच्छयेति । यदृच्छया भगवदिच्छया आकाङ्क्षामन्तरेणा[illegible] मनोभीष्टानां प्राप्तत्वादित्यर्थः ॥ ३६ ॥

एवंमस्तूत्तरकथाप्रसंगः क इति वैदुरीं शङ्कां परिहरन्निवाह[illegible] कर्ण्येति ॥ ३७ ॥

नन्वश्रद्धया राज्ञः प्राक्तनो द्वेषोऽनुमीयत अभद्रवचनं चौप[illegible] रिकं निश्चायकप्रमाणाभावादिति शङ्कामाभूदित्याह । श्रद्धायेति ह[illegible] र्षवेगेन हर्षोद्रेकेण धर्षितो विवशीकृतः महान्ति धनानि यस्य[illegible] तथा ॥ ३८ ॥

सन्तोऽभ्यर्हिता अश्वायस्य स नथा तं पर्यस्तः परिवृतः॥३९॥

इदमपि राज्ञः स्नेहोद्रेकलक्षणमिति भावेनाह शङ्खेति ॥ ४०॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

अहो इत्यादि । अत्र तादृशत्वाज्ञानपक्षः स्पष्टः पक्षान्तरेऽपि महं स्वयं स्वपाददानेन भवच्छिदस्तस्य पादमूलं प्राप्यापि स्व[illegible] त्वहं त्रिभुवनमात्रोत्कृष्टपदरूपत्वेनान्तवदेव याचे तन्निर्वन्धं परित्यक्तवानस्मि । अप्येवमयं भगवान् परिपाति दीनान् इत्यादेः। नतु तत्पादसेवां तत्पदमेवेत्यर्थः। अतएव राज्यादिकमपि विश्व[illegible] त्वेन लब्धमिति भावः । अत्र प्रकरणे विशेषजिज्ञासा चेद्भगवद् सन्दर्भो दृश्यः ॥ ३१ ॥

तन्निर्बन्धत्यागे हेतुमाह । मतिरिति । पतद्भिः पतनपर्य[illegible] वसानैः ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

भिन्नदृक् श्रीभगवतोऽन्यत्र पुरुपार्थबुद्धिर्यस्य सः क्वचित् सति । ततो द्वितीये असति पुरुपार्थेऽपि सति ॥ ३३ ॥

मयैतदिति सार्द्धकम् ॥ ३४——३५ ॥

यदृच्छया अनायासेनैव लब्धा हस्तगता इवोपसन्ना मनःसमृद्धयः अणिमादिलक्षणाः सार्ष्ट्यादिलक्षणा वा येषां तथाभूता अपि ॥ ३६——४० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनात्म्यमात्मशून्यत्वमज्ञत्वम् । भवच्छिदः अप्रार्थितोऽपि यो भक्तस्य भवं छिनत्ति तस्य पादमूलं गत्वा वैष्णव्या दीक्षयैव प्राप्यं यदन्तवत् तत् अहं याचे प्राप्तुं संकल्पमकरवमिति ममैव दोषः । प्रभुस्तु तदपि कृपया अनश्वरमेव पदं ददौ । ततो गन्तासि मत्स्थानमिति तदुक्तेरिति भावः ॥ ३१ ॥

स्वस्याज्ञतायां कारणं सम्भावयति । मतिरिति । पतद्भिर्मदपेक्षया अधःपतद्भिः अतएवासहनशीलैर्नारदवचः नाधुनाप्ययमानन्त इत्यादि ॥ ३२ ॥

प्रसुप्तः स्वप्नान् पश्यन् यथा द्वितीये असत्यपि व्याघ्रसर्पादिभ्यः खिद्यति तद्वत् । भ्रातैव भ्रातृव्यः शत्रुस्तस्मात् या हृद्रुक् पाडा तयाहं तप्ये वृथैव । यत आत्मदृष्ट्या अहं सच मद्भ्रातेत्युभावपि भगवतो जीवाख्यतटस्थशक्तिवृत्तिरूपौ । देहदृष्ट्याप्युभयोरपि पाञ्चभौतिकत्वान्मायाशक्ति वृत्ति रूपत्वमतो भगवन्माययैव तस्मिन् भ्रातृव्यत्वदृष्ट्या मुह्यामीत्यर्थः ॥ ३३ ॥

मोग्यवस्तुनो भवकारणत्वात् भवम् ॥ ३४ ॥

स्वस्मिन् भक्त्या राजन्ते इति किं वा स्वमेव राट् राजा येषां ते स्वराजो दासास्तेषां भावः स्वाराज्यं दास्यं यच्छतो ददतः सकाशादभिमानः क्षीणपुण्येन क्षीणचारुत्वेन यथा अधनः महाराजचक्रवर्त्तिनः सकशात् फलीकारान् सतुषतण्डुलकणान् भिक्षते तद्वत् । सतु विदग्धः परमोदारो राजा यथा तस्मै तन्मनोरथातीतां सम्पत्ति ददाति तथैव भगवान् मह्यं स्वधामवासित्वमित्यहो मम निर्बुद्धित्वपरमकाष्ठा भगवतश्च कारुण्यौदार्यसीमेति क्षणं सविस्मयस्तिमितोऽभूदिति भावः ॥ ३५ ॥

एवं निस्पृहत्वं तस्य युक्तमित्याह नेति । रजोजुषः परागरसास्वादिनः दास्य मृते आत्मनोऽर्थमन्यं न वाञ्छन्ति यदृच्छया लब्धेन वस्तुना मनसः समृद्धिर्येषाम् ॥ ३६ ॥

ततो मधुवनात् ध्रुवस्य स्वदेशागमन वन्धुनिधनादिकं वर्णयति आकर्ण्येति ॥ ३७ ॥

एष्यत्यचरित इति देवर्षेर्वाक्यं अद्धाय ॥ ३८ ॥

पर्यस्तः परिवृतः ॥ ३९ ॥ ४० ॥

———

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

अनात्मा अल्पबुद्धिस्तस्य भावस्तत्त्वम् अनुदर्शीति वदन्ननज्ञोऽर्थः पदं तयदनित्यं तद्याचे अप्येव मयंभगवानित्यादिवार्यांचितवानस्मि ॥ ३१ ॥

पतद्भिः पुनरावृत्तलोकस्थैः अतएव ममोत्कर्षमसहिष्णुभिः नारदोक्तेन ममोपदेशेनायं वैकुण्ठं मागच्छत्विति बुद्ध्यामे मतिर्विदूषिता अतएव तथ्यं यथार्थं नारदवचः निर्विघ्नतया वैकुण्ठप्रापकसमत्वबोधकं वाक्यं नाग्राहिषम् न गृहीतवानस्मि देवैर्वैकुण्ठगमनानि वारितः अनित्ये राज्यसुखाकारे दुःखमतिदूषणद्वारापातितोऽस्मीति भावः ॥ ३२ ॥

अथ यथार्थगुरुवाक्याग्रहणादौ अनादिमायाकृतं मोहं हेतुं सूचयन् शोचति । दैवीमिति । देवस्य भगवतोमायां विश्वमोहिनीं शक्तिमाश्रित्य असति द्वितीये अब्रह्मात्मकतया अविद्यमानेऽपि संसारे भिन्नदृक् भेदबुद्धिरब्रह्मात्मकमिति मोहवान् भ्रातैव भ्रातृव्यः शत्रुरिति बुद्ध्या हृद्रुजा हृदयशोकेन तप्ये यथा प्रसुप्तः स्वप्नमोहितः स्वकीयं परं मत्वा तप्यते तद्वत् ॥ ३३ ॥

यथा गतायुषि चिकित्सा व्यर्था तद्वन्मयाप्येतदधिराजासनं व्यर्थं प्रार्थितम् अहो भवच्छिदं प्रसाद्य भवमयाचे ॥ ३४ ॥

स्वेन रूपेणान्यनिरपेक्षेण राजत इति स्वराट् भगवान् तस्य भावः स्वाराज्यं भगवद्भावापत्ति यच्छतः सकाशात् मे मया मानः अहो भिक्षितः धिग्मामिति भावः फलीकारान् तुषान् ॥ ३५ ॥

यदृच्छालब्धेनैव भोजनाच्छादनेन मनसः समृद्धिः पूर्णता येषां त ॥ ३६ ॥

अभद्रस्यामङ्गलस्य भद्रं मङ्गलं कुत इतिमत्वा नश्रद्दधे विश्वासं न कृतवान् ॥ ३७ ॥

देवर्षेर्वाक्यम् एष्यत्यचिरत इति ॥ ३८ ॥

यत्पर्यस्तः परित आवृतः ॥ ३९ ॥

आत्मजस्य अगच्छत ईक्षणे उत्सुकः उत्साहवान् ॥ ४० ॥

———

भाषाटीका ।

अहो देखो मेरा बडा अज्ञान है मै बडा मन्दभागी हूं जो कि मैंने मोक्ष देने वाले भगवान के चरण कमल में प्राप्त होकर भी राज्यादि उत्तमपद अनित्य वस्तुकों मागा ॥ ३१ ॥

मरे से नीचे रहनेकी शङ्कासे देवतोंने नहीं सहकर मेरी बुद्धि को भ्रष्ट कर दिया जोकि मे अधमने समताके उपदेशके नारदजी के सत्य वचनको नहीं ग्रहण किया ॥ ३२ ॥

परमेश्वरकी मायाके वश होकर मै जैसे सोया हुआ मनुष्य स्वप्नमें व्याघ्रादिक जो दूसरे नहीं हैं उनको भी देखकर दुखीहोता है तैसेही मैभी अपने भ्रातही को शत्रु मानकर हृदयके ताप रोग से दुखित होताहूं ॥ ३३ ॥

मेरा यह मागना व्यर्थहै जैसे गतायु पुरुषका औषध करना व्यर्थ है मै वडा भाग्य रहितहूं जोकि प्राप्त होने के नहीं योग्य सब जगत्के अन्तर्यामी संसार के छुटाने वाले परमात्माको तपस्या से प्रसन्न कराके फिरभी मैंने संसार सुखही मागा ॥ ३४ ॥

जैसे चक्रवर्त्ति राजाको प्रसन्न करके दरिद्र मनुष्य धानके कणिका को मागे तैसे मैनेभी ब्रह्मानन्द मोक्ष सुख देने वाले नारायणको प्रसन्न करके अपनी मूर्खतासे अभिमान का हेतु राज्यादिक मागा हाय वडी भूल भईहै ॥ ३५ ॥

मैत्रेयजी वोले कि हे तात ! विदुर आप सरीके भगवद्भक्तजन मुकुन्दके चरणकमलके रजकी सेवा करने वाले अयाचक वृत्तिसे ही जिनका मन सन्तुष्ट हैं सो महात्मा भगवान् की दास्य भक्ति के विना और कुछ प्रयोजन को नहीं चाहते हैं ॥ ३६ ॥

अव उत्तानपाद राजाने ध्रुवजी का आने का खवर सुना तौभी जैसे मरेका आना नहीं होता तैसे उनके आनेका विश्वास नहीं किया क्योंकि राजा कहने लगे कि मैनो भाग्यहीन हूं मेरेकुं यह वात कहां से होगीकि जो ध्रुव मिलै ॥ ३७ ॥

सुनीतिः सुरुचिश्चास्य महिष्यौ रुक्मभूषिते ।
आरुह्य शिबिकां सार्द्धमुत्तमेनाभिजग्मतुः ॥ ४१ ॥
तं दृष्ट्वोपवनाभ्याशआयान्तं तरसा रथात् ।
अवरुह्य नृपस्तूर्णमासाद्य प्रेमविह्वलः ४२
परिरेभेऽङ्गजं दोर्भ्यां दीर्घोत्कण्ठमनाः श्वसन् ।
विष्वक्सेनाङ्घ्रिसंस्पर्शहताशेषाघबन्धनम् ॥ ४३ ॥
अथाजिघ्रन्मुहुर्मूर्ध्नि शीतैर्नयनवारिभिः ।
स्नपयामास तनयं जातोद्दाममनोरथः ॥ ४४ ॥
अभिवन्द्य पितुः पादावाशीर्भिश्चाभिमन्त्रितः ।
ननाम मातरौ शीर्ष्णा सत्कृतः सज्जनाग्रणीः ॥ ४५ ॥
सुरुचिस्तं समुत्थाप्य पादावनतमर्भकम् ।
परिष्वज्याह जीवेति बाष्पगद्गदया गिरा ॥ ४६ ॥
यस्य प्रसन्नो भगवान्गुणैर्मैत्र्यादिभिर्हरिः ।
तस्मै नमन्ति भूतानि निम्नमापइव स्वयम् ॥ ४७ ॥

भाषाटीका ।

फिर नारद जी के पहिले कहे वचन में श्रद्धा करके मनमें बडा प्रौढ होकर हर्षित हुये बडे प्रसन्न होकर सन्देशा कहनेवाले दूत को बडा मूल्यवाला एक हार देदिया ॥ ३८ ॥

फिर सुन्दर घोडोंवाला सुवर्ण से भूषित रथपर बैठकर कुल वृद्ध तथा ब्राह्मणों से द्विशान तथा बंधुओं से सहित । ३९ ॥

शंख नगारा के शब्द वेद का ध्वनि बंशी के शब्द से संयुक्त होकर पुत्र की देखने की उत्कण्ठासे पुर से शीघ्र ही राजा निकले ॥ ४० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

अस्य राज्ञोर्महिष्यौ मध्ये उत्तमं निधाय एकामेव शिबिकां नरधिमानमारुह्य ॥ ४१ ॥

उपवनस्याभ्याशे समीपे ॥ ४२ ॥

विष्वक्सेनाङ्घ्रिसंस्पर्शेन हतमशेषमघं बन्धनं च यस्य ॥४३॥

जात उद्दामोमहान्मनोरथो यस्य ॥ ४४ ॥

अभिमन्त्रितः पितुराशीर्भिः सह तेन कृतसंभाषणः ॥४५-४६॥

सुरुच्याः प्रीतिर्नासम्भावितेत्याह । यस्येति नमन्त्यनुसरन्ति आपोयथा स्वयमेव निम्नं देशमवतरन्ति ॥ ४७ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

एकामेव शिबिकामिति तत्प्रभावेन वैषम्यं नष्टमभूदिति सूचितम् ॥ ४१ ॥

तमिति युग्मकम् आसाद्य ध्रुवं प्राप्य ॥ ४२ ॥ ४३ ॥

अथ आलिङ्गनानन्तरं शीतलैः नयनवारिभिरश्रुभिः स्नापयामास ॥ ४४ ॥

अभिमन्त्रितः अभिमन्त्रणं सम्भाषणं तस्य विषयीकृतः तेन च तेन कृतसम्भाषण इति व्याख्यातम् सुरुचेरपि प्रणामे हे सज्जनाग्रणीरिति ॥ ४५ ॥ ४६ ॥

मैत्र्यादिभिर्भक्त्युत्थैरन्यथा प्रसादजननायोगात् ॥ ४७ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

अस्य राज्ञो महिष्यौ भार्ये सुनीतिः सुरुचिश्च उत्तमेन सार्द्धं शिबिकां नरवाहनमारुह्याभिजग्मतुः ॥ ४१ ॥

उपवनाभ्याशे उपवनसमीपे आयान्तं तं ध्रुवं दृष्ट्वा तरसा आशु रथादवरुह्य तूर्णं पुत्रमासाद्य प्रेम्णा विह्वलः परवशः नृपः उत्तानपादः ॥ ४२ ॥

दीर्घोत्कण्ठमनाः अतएव श्वसन् श्वासं मुञ्चन् दोर्भ्यां अङ्गजं पुत्रं परिरेभे अङ्गजं विशिनष्टि विश्वक्सेनस्य भगवतः अङ्घ्रिसंस्पर्शेन हतमशेषमाध्यात्मिकं बन्धनं संसृतिकारणं यस्य तम् ॥ ४३ ॥

जातउद्दामोमहान्मनोरथोयस्य सः राजा द्वितीयांतपदं तनयविशेषणं मूर्ध्निआजिघ्रन् आघ्राणं कुर्वन् शीतैर्नयनवारिभिः अश्रुभिः स्नापयामास ॥ ४४ ॥

पितुरुत्तानपादस्य पादावभिवन्द्य नमस्कृत्य पितुराशीर्भिः अभिमंत्रितः कृतसंभाषणः सत्कृतः संमानितः सज्जनाग्रणीः सज्जनश्रेष्ठः ध्रुवः शिरसा मातरौ सुरुचिं सुनीतिं ननाम ॥ ४५ ॥

उत्तमश्च ध्रुवश्चोभावन्योऽन्यं प्रेमविह्वलौ ।
अङ्गसंगादुत्पुलकावस्रौघं मुहुरूहतुः ॥ ४८ ॥
सुनीतिरस्य जननी प्राणेभ्योऽपि प्रियं सुतम् ।
उपगुह्य जहावाधिं तदङ्गस्पर्शनिर्वृता ॥ ४९ ॥

श्रीमद्वीरराघवाचार्यकृत भागवत चन्द्रचन्द्रिका ।

सुरुचिः पादयोरवनतमर्भकं ध्रुवमुत्थाप्य परिष्वज्यालिङ्ग्य बाष्पैर्गद्गदस्वरयुक्तया गिरा वाचा चिरं जीवेत्याह ॥ ४६ ॥

सुरुच्याः प्रीतिर्नसंभावितेत्याह । यस्येति । मैत्र्यादिभिरात्मगुणैः यस्य हरिः प्रसन्नः तस्मिन् सर्वभूतानि नमन्ति प्रह्वीभवन्ति आपो यथा स्वयमेव निम्नं देशं प्रतिप्रवहन्ति ॥ ४७ ॥

———

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

हरेः शक्तिरचिन्त्येति ध्वनयन् सुनीतिसुरुच्योर्यानं चाह सुनीतिरिति रुक्मं हेम शिबिके आन्दोलिके ॥ ४१ ॥

दूरप्रदेशे दर्शनं सार्वजनीनं न स्यादिति हरिणा पुरनिकट एव घटितमिति भावेन पुरोपवनसमीपे कुमारदर्शनं तदनन्तरं राज्ञोमाननक्रियाविशेषं चाह । तं दृष्ट्वेति ॥ ४२ ॥

अङ्गजं पुत्रम् । विष्वक्सेनाङ्घ्रीति विशेषणेनालिङ्गनव्याजेन तत्स्प्रष्टुरपि पापपरिहारः स्यादितिध्वनयति ॥ ४३ ॥

किमनेनालिङ्गनमात्रेणानन्दातिरेकलक्षणाज्ञापकेनेत्यतस्तद्विशिनष्टि । अथेति । शान्तैः सुशीतलैः सुखलक्षणतयाऽवसितैर्वा "अन्तोऽध्यवसितेमृत्युस्वभावेपरमात्मनी,,ति यादवः शर्म तोषं चशं सुखमितिहलायुधः अनेनराज्याभिषेकमदूरे सूचयति एतमर्थं चध्वनयंस्तं विशिनष्टि । आप्तेति । आप्तः प्राप्तः उद्दाम उत्कृष्टो मनोरथोन्नीरासनादिलक्षणो येन स तथा तम् ॥ ४४ ॥

भगवद्भक्तस्यापि रागद्वेषादिदोषो नास्ति किमुत हरेरितीममर्थं ध्वनयन् ध्रुवोऽपि पित्रानुचितक्रियामाचरतीत्याहाभिवन्द्येतिमातरावित्युक्त्या पूर्वान्तः करणकालुष्यं दूरीकृतमिति व्यनक्ति शीर्ष्णा ननामेत्यनेन पितुर्मातुर्गुरुत्वाधिक्यं सूचयति तदुक्तम् "दशाचार्यसमो भ्राता शतभ्रातृसमः पिता । पितुर्दशशतं माता गौरवेणातिरिच्यत,, । इति सुरुच्या मुख्यमातृत्वाभावेऽपि सत्स्वभावत्वेन भेदबुद्धिर्नकृतेति द्योतनाय सज्जनाग्रणीरिति विशेषितम् ॥४५॥

ध्रुवप्रणामे सुरुच्या द्वेषं विहाय किमभ्यध्यायीति तत्राह । सुरुचिरिति । अर्भकमिति लुप्तोपमं अर्भकं प्रेङ्खच्छिशुमिवेत्यनेन स्नेहविशेषात् ज्ञानगुरुत्वमगणय्य समुत्थाप्येति ज्ञायते ।। ४६ ॥

ध्रुवस्य मरणमाकांक्षमाणा सुरुचिः कथं जीवेति वाचयुदस्यापीति तत्राह । यस्येति । मैत्र्यादिभिर्मैत्रीकरुणादिभिर्नमन्ति प्रह्वीभवन्ति ॥ ४७ ॥

———

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

तमिति युग्मकम् ॥ ४२——४३ ॥

जात इत्यत्र स्नात इति चित्सुखः । निस्तीर्ण इत्यर्थः ॥ ४४ ॥

पूर्वं पितुः पादौ शीर्ष्णाभिवन्द्य मातरौ ननाम तैश्चाशीर्भिः सहाभिमन्त्रितः कृतसम्भाषणः सत्कृतो मानितश्च सुरुचावपि तथा भक्तौ हेतुः सज्जनेति ॥ ४५——५२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

उत्तमेन बालकेन सह एकां शिबिकामारुह्येति ध्रुवस्य निष्क्रमणादिनत एव राज्ञा बहुतरमनुतप्तेन नारदाश्वासितेन ध्रुवमात्रे एव सौभाग्यं दत्तमुत्तम मात्रेतु दौर्भाग्यं । तदपि ध्रुवमाता सुनीतिर्विनयराशिस्तां सपुत्रां स्वशिबिकायामेवारोहयामासेति तत्त्वम् ॥ ४१—४४ ॥

ननु सुरुचिं दुःखदायिनीं कथं शीर्ष्णा ननाम तत्राह सज्जनाग्रणीरिति ॥ ४५ ॥ ४६ ॥

तस्मिन् ध्रुवे सुरुच्याः प्रीतिर्नासम्भावितेत्याह यस्येति ॥ ४७-४८॥

———

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

उत्तमेन सह ॥ ४१ ॥ ४२ ॥

विश्वक् सर्वत्र सेना यस्य तस्य भगवतोऽङ्घ्रिस्पर्शेन हतानि अघरूपाणि बन्धनानि यस्य तम् ॥ ४३ ॥

जातउद्दामोमहान् मनोरथो यस्य सः ॥ ४४ ॥

सज्जनाग्रणीःध्रुवोऽपि पितुः पादावभिवन्द्यतेनाशीर्भिरभिमंत्रितः मातरौ ननाम ताभ्यां सत्कृतः ॥ ४५ ॥ ४६ ४७ ॥

———

भाषाटीका

उत्तानपाद राजा की पटरानी सुरुचि सुनीति दोनों सुवर्ण के गहनानकुं पहर कर राजपुत्र उत्तम को साथ मे लेकर पालकी पर बैठ कर ध्रुव के पास कूं गई ॥ ४१ ॥

नगर बाहर बगीचा के पास में आतेहुये पुत्र को देखकर राजा जल्दी से रथ से उतर कर मिलकर दोनों भुजों से आलिंगन किया बहुतदिनसे उत्कण्ठावालेरहे बड़े श्वास लेकर मिलने लगे क्योंकि भगवान् के चरण स्पर्श होने से ध्रुव के सब बन्धन छूटे हैं जान कर राजा ने बहुत प्रेम किया ॥ ४२ ॥ ४३ ॥

राजा मन में मनोरथ की बड़ी पूर्णता मान कर वारंवार पुत्र-को मस्तस्त को सूंघने लगे और शीतलनेत्रों के आंसूनसे मानो स्नान करादिया ॥ ४४ ॥

सज्जनोंके अग्रगामी ध्रुवजीने पिता के पाद को प्रणाम किया पिताने आशीर्वादसे युक्त किये और सत्कार उनका किया फिर ध्रुवजीने मस्तकसे माता को प्रणाम किया ॥ ४५ ॥

सुरुचिने अपने पैरोंमे पड़े हुए उस बालक को उठाकर आलिंगन करके रूखेसे कंठ से कहाकि हे पुत्र ! चिरकाल तक जीते रहो ॥ ४६ ॥

मैत्रेयजी बोले जिसध्रुवकेमैत्री आदि गुणोंसे हरि भगवान् प्रसन्न होगये उसको सब प्राणिएंसे नमनेलगे कि जैसे जल नीच को नमे है ॥ ४७ ॥

———

श्रीधरस्वामिकृत भावार्थदीपिका ।

ऊहतुर्दधतुः ॥ ४८ ॥ ४९ ॥

पयः स्तनाभ्यां सुस्राव नेत्रजैः सलिलैः शिवैः ।
तदाभिषिच्यमानाभ्यां वीर!वीरसुवो मुहुः ॥ ५० ॥
तां शशंसुर्जना राज्ञीं दिष्ट्या ते पुत्र आर्तिहा ।
प्रतिलब्धश्चिरं नष्टो रक्षिता मण्डलं भुवः ॥ ५१ ॥
अभ्यर्चितस्त्वया नूनं भगवान् प्रणतार्तिहा ।
यदनुध्यायिनो धीरा मृत्युं जिग्युः सुदुर्जयम् ॥ ५२ ॥
लाल्यमानं जनैरेवं ध्रुवं सभ्रातरं नृपः ।
आरोप्य करिणीं हृष्टः स्तूयमानोऽविशत्पुरम् ॥ ५३ ॥
तत्र तत्रोपसंक्लृप्तैर्लसन्मकरतोरणैः ।
सवृन्दैः कदलीस्तम्भैः पूगपोतैश्च तद्विधैः ॥ ५४ ॥
चूतपल्लववासःस्रङ्मुक्तादामविलम्बिभिः ।
उपस्कृतं प्रतिद्वारमपां कुम्भैः सदीपकैः ॥ ५५ ॥
प्राकारैर्गोपुरागारैः शातकुम्भपरिच्छदैः ।
सर्वतोलङ्कृतं श्रीमद्विमानशिखरद्युभिः ॥ ५६ ॥
मृष्टचत्वररथ्याट्टमार्गं चन्दनचर्चितम् ।
लाजाक्षतैः पुष्पफलैस्तण्डुलैर्बलिभिर्युतम् ॥ ५७ ॥
ध्रुवाय पथि दृष्टाय तत्र तत्र पुरस्त्रियः ।
सिद्धार्थाक्षतदध्यम्बुदूर्वापुष्पफलानि च ॥ ५८ ॥
उपजह्रुः प्रयुञ्जाना वात्सल्यादाशिषः सतीः ।
शृण्वंस्तद्वल्गुगीतानि प्राविशद्भवनं पितुः ॥ ५९ ॥
महामणिव्रातमये स तस्मिन् भवनोत्तमे
लालितो नितरां पित्रा न्यवसद्दिवि देववत् ॥ ६० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

हे वीर ! वीरसुवो ध्रुवमातुः अभिषिच्यमानाभ्यां पयस्तदा सुस्राव ॥ ५० ॥

चिरं नष्टो दर्शनमप्राप्तः रक्षिता रक्षिष्यति ॥ ५१ ॥ ५२ ॥

पर्यामनि व्यवहितं पित्रा ह्युपलालनं परामृश्यते ॥ ५३ ॥

पुरं वर्णयति । तत्र तत्रेति चतुर्भिः सवृन्दैः फलमञ्जरीयुक्तैः पूगानां पोतैर्बालवृक्षैस्तद्विधैः सवृन्दैरुपस्कृतं प्रति द्वारमित्युत्तरेणान्वयः ॥ ५४ ॥

चूतपल्लवाश्च वासांसि च स्रजश्च मुक्तादामानि च तेषां विशिष्टं लम्बनमस्ति येषु कुम्भेषु ॥ ५५ ॥

गोपुरैरगारैश्च शातकुम्भाः परिच्छदाः परिकरा येषु विमाना नामिव शिखरैर्द्युतिर्येषाम् ॥ ५६ ॥

चत्वरमङ्गणम् रथ्या महामार्गः अट्ट उच्चस्योपरि निर्मिता भूमिका मार्गः मध्यान्तरः मृष्टः सम्मार्जिताश्चत्वरादयोयस्मिन्५७॥

सिद्धार्थः श्वेतसर्षपः अक्षता यवाः ॥ ५८ ॥
उपजह्रुर्व्यकिरन् सतीः सत्यः ॥ ५९ ॥ ६० ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ॥

तत्रोत्तमस्य प्रेमविह्वलत्वे रज्यन्ति जन्तवस्तत्र स्थावरा अपि इति भक्तिप्रभाव एव ध्रुवस्यापि निर्मत्सराणां सतामित्यु स एवेति ज्ञेयम् ॥ ४८ ॥

सुनीतेस्तु स्वाभाविकमप्यतिशयमाह । सुनीतिरिति ॥ ४९ ॥
तादृशवात्सल्यदर्शनाश्चर्येण सम्बोधनंवीरेति ॥ ५० ॥

अनद्यतनभविष्यत्काले राज सम्पत्तेः भविष्यत्समान्यन रक्षिष्यतीति व्याख्यातम् ॥ ५१ ॥

नूनमिति सम्भावनायाम् यस्यानुध्यायिनो ध्यानपरा यथा लाल्यमानामिति पञ्चकम् तत्र बहुवाक्यैकवाक्यःवादिका

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ॥

लाभाय द्विबिन्दुमस्तकाङ्क्षाः कल्पनीयाः ॥ व्यवहितं यस्येत्यादि पयपङ्कृतव्यवधानं दृष्ट्वेत्यादिप्रकारकं पित्रादिकर्तृकोपलालनं (१) ॥ ५३ ॥

बालवृक्षैस्तद्विधैस्सवृन्दैः (२) ॥ ५४ ॥

उपस्कृतमलङ्कृतम् (३) ॥ ५५ ॥

श्रीमदिति विमानविशेषणम् ४) ॥ ५६ ॥ ५७ ॥

ध्रुवायेति सार्द्धकम् सत्य इति पुरस्त्रीणां विशेषणम् ॥ ५८ ॥

शृण्वन्नित्यर्धकम् ॥ तासां पुरस्त्रीणां वल्गुगीतानि शृण्वन् ॥ ५९ ॥ ६० ॥

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका

उत्तमः ध्रुवश्चोभौ भ्रातरौ प्रेमविह्वलौ अङ्गसंगादालिङ्गनात् पुलकौ उद्गतपुलकौ अन्योन्यं आनन्दाश्रुकणसमूहं मुहुः पुनः पुनरूहतुः मुमुचतुः ॥ ४८ ॥

अस्य ध्रुवस्य जननीसुनीतिः उपगुह्यालिङ्ग्यतस्य तनयस्यास्पर्शनेन निर्वृताङ्गसुखिता आधिमनः पीडां जहौ तत्याज ॥ ४९ ॥

हेवीर ! वीरसुवः वीरस्य ध्रुवस्य जनन्याः सुनीत्याः शिवैः शान्तैर्नेत्रजैः सलिलैरभिषिच्यमानाभ्यांस्तनाभ्यांपयः सुस्राव ॥५०॥

उत्तानपादं जनाः प्रशशंसुः प्रशंसामेवाह ! हेराजन् ! आर्त्तिहा-दुःखापहर्त्ता पुत्रः चिरं नष्टो दर्शनमप्राप्त इदानीं दिष्ट्या भाग्येन त्वया प्रतिलब्धः प्राप्तः अयंभुवो मण्डलं रक्षिता रक्षिष्यति ॥५१॥

प्रणतार्त्तिहा भक्तानां दुःखापहर्त्ता भगवान् त्वया नूनं जन्मान्तरेऽभ्यर्चितः यस्यभगवतोऽनुध्यायिनो ध्यातारः सुदुर्जयं मृत्युं संसारं जिग्युः जितवन्तः ॥ ५२ ॥

एवं जनैर्लाल्यमानं राजा सभ्रातरं सोत्तमं ध्रुवं हृष्टः करिणीं हस्तिनमारोप्य जनैः स्तूयमानः पुरमविशत् ॥ ५३ ॥

अन्तःपुरं वर्णयति। तत्रतत्रेति चतुर्भिः उपसमीपे सम्यक्कलिपतैर्मकरतोरणैः सवृन्दैः फलमञ्जरीयुक्तैः कदलीस्तम्भैः तद्विधैः सवृन्दैः पूगानां पोतैर्लतावृक्षैः ॥ ५४ ॥

चूतपल्लवाश्च वासांसि च स्रजश्च मुक्तादामानि च तेषां विशिष्टं बंधनमस्ति येषु तैः सदीपकैः अपांकुम्भैःप्रतिद्वारमुपस्कृतम् अलंकृतम् ॥ ५५ ॥

गौपुरैरट्टालैश्च कथंभूतैः शातकौम्भाः स्वर्णमयाः परिच्छदाः परिकरा येषां तैः सर्वतः परितः अलंकृतं श्रीमत्सर्वसमृद्धिमत् विमानानामिव शिखरैर्द्युतिर्यस्मिन् ॥ ५६ ॥

रथ्याराजमार्गः अट्टः उच्चस्य प्राकारस्योपरिनिर्मिता भूमिका-मार्गोऽवान्तरः मृष्टाः संमार्जिताश्चत्वरादयो यस्मिन् चन्दनचर्चितं चन्दनाम्बुभिः संसिक्तम् ॥ ५७ ॥

सिद्धार्थाः श्वेतसर्षपाः उपजन्हुः व्यकिरन् सतीः सत्यः विप्रक्रियव्यत्ययआर्षः तासां सतीनां वल्गूनि श्राव्याणि गतानि शृण्वन् पितुर्भवनम् गृहं प्राविशत् ॥ ५८ ॥ ५९ ॥

अनर्घ्यमणिसमूहमये भवनश्रेष्ठेपित्रानितरां लालितः दिवि-देववत्प्रवसत् ॥ ६० ॥

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली

उत्तमस्य भूतत्वेकत्वेन ध्रुवत्वेवाशङ्का दूरोत्सादितेति तयोः प्रणयोद्रेकानिमित्त क्रियामाह। उत्तमश्चेति । अस्रौघं बाष्पप्रवाहम् ओघः परंपरायां स्याज्जलस्रोतसि संचय इति यादवः ॥ ४८ ॥

सूचीकटाहन्यायेन ध्रुवे सुहृद्यादिप्रणयक्रियां प्रोच्याधुना सुनीति विषयामाह। सुनीतिरस्येति ॥ ४९ ॥

अस्य जननीति विशेषणं विशिनष्टि। पय इति ॥ वीरपुत्रस्मरणादिना मातृस्तनयोस्तन्यप्रस्रवणं तज्जनकत्वानुमानं सुलभमित्यर्थः वीरं पुत्रं सुवतीति वीरसूः तस्याः वीरे पुत्रे यश सं वीरवत्तममितिश्रुतिः ॥ ५० ॥

सुनीति कथापि श्रोतॄणां पापप्रणाशिन्यपि भवतीति भावेन तां विशिनष्टि। तां शशंसुरिति इष्ट्या स्यान्मंगलादिष्विष्टयभिधानात् दिष्ट्या पुण्येन ॥ ५१ ।

पुण्यमपि विशिष्यन्तीत्याह। अभ्यर्चित इति । यदि प्रणतार्तिहरोहरिस्त्वया नाभ्यर्चितस्तर्हि चिरं नष्टः पुत्रो न प्रतिलब्धः स्यात् तथा तस्मादभ्यर्चित इति तर्कः किं विशिष्टो भगवानिति तत्राह। यदनुध्यायिन इति । अनेन तर्कस्यानुपपत्तिं दर्शयति ॥ ५२ ॥

ध्रुवस्य जनपालनप्रक्रियां संचिख्यापुरिव मैत्रेयो राज्ञः पुरप्रवेशमाह। लाल्यमानमिति। फलमश्वेव कन्यानां करिणी बालमञ्जुल इति वचनात् करिणीमित्युक्तम् ॥ ५३ ॥

सवृन्दैः पुष्पबन्धनसहितैस्तद्विधैः पुष्पबंधन सहितैः ॥ ५४ ॥

विशिनष्टि चूतपल्लवादीनि येषु ते तथातैः प्रतिद्वारमुपसंस्कृतमलं कृतम ॥ ५५ ॥

शातकुम्भपरिच्छदैः सुवर्णालंकारैः श्रीद्वतां विमानानां शिखराणां द्युतिभिरलंकृतं अनेन देवादीनां विमानानामागमनं सूचयति ॥ ५६ ॥

चत्वरश्चतुष्पथः रथ्या रथमार्गः आदिशब्देन तिर्यगायवान्तर मार्गो गृह्यते ॥ ५७ ॥

सिद्धार्थाः सितसर्षपाः ॥ ५८ ॥

तासां पुरस्त्रीणां वल्गूनि चारूणि गीतानि ॥ ५९ ॥

कश्चिपूत्तमे मञ्चेऽत्तमे भोजनाच्छादनादिना प्रेष्ठया ॥ ६० ॥

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

लाल्यमानमिति पञ्चकम् ॥ ५३—५७ ॥

ध्रुवायेति सार्द्धकम् ॥ ५८ ॥

शृण्वन्निलयर्द्धकम् ॥ ५९ ।६०॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

सुनीतेः पश्चान्मिलनमानन्दमूर्च्छाभङ्गे सतीति ज्ञेयम् ॥४९॥

हे वीर ! त्वामिव भगवद्धर्मवीरं ध्रुवं सूते इति तस्याः सुनीतेः ॥ ५० ॥ ५१ ॥

अभ्यर्चित इत्यत एव स्वपुत्रस्य मृत्युं त्वमजैषीरिति भावः॥५२॥

एवं नृपोऽपि दिष्ट्येति पादोनश्लोकद्वयेन जनैः स्तूयमानः पुरमविशत् ॥ ५३ ॥

पुरं वर्णयति। तत्र तत्रेति चतुर्भिः । उपसंक्लृप्तैस्तदानीमेवोपानादिश्य आनीयारोपितैः। लसन्मकराणि तोरणानि यत्र तैः। सवृन्दैः फलमञ्जरीयुक्तैः । कदलीस्तम्भैरुपस्कृतप्रतिद्वारमित्यन्वयः ॥ ५४ ॥

चूतेति अपां कुम्भैरित्यस्य विशेषणम् ॥ ५५ ॥

गोपुराणि पुरद्वाराणि गोपुरैरट्टालैश्च विमानशिखराणामिव द्योद्युतिर्येषां तैः ॥ ५६ ॥

चत्वरमङ्गनं रथ्या महामार्गः ॥ ५७ ॥

सिद्धार्थाः श्वेतसर्षपाः। अक्षता यवाः। उपजह्रुर्व्यकिरन् सती सत्यः ॥ ५८--६१ ॥

पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः।
आसनानि महार्हाणि यत्र रौक्मा उपस्कराः॥ ६१॥
यत्रस्फटिककुड्येषु महामारकतेषु च।
मणिप्रदीपा आभाति ललना रत्न सन्तियुताः॥ ६२॥
उद्यानानि च रम्याणि विचित्रैरमरद्रुमैः।
कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः॥ ६३॥
वाप्यो वैदूर्यसोपानाः पद्मोत्पलकुमुद्वतीः।
हंसकारण्डवकुलैर्जुष्टाश्चक्राह्वसारसैः॥ ६४॥
उत्तानपादो राजर्षिः प्रभावं तनयस्य तम्।
श्रुत्वा दृष्ट्वाऽद्भुततमं प्रपेदे विस्मयं परम्॥ ६५॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

मुहुः पुनः पुनः ऊहतुः तस्य ध्रुवस्याङ्गस्पर्शेन निर्वृता सुखिता आर्धिं मनोव्यथां जहौ तत्याज॥ ४८॥ ४९॥

हेवीर विदुर! तदा वीरसुवः ध्रुवजनन्याः शिवैः शुभैर्नेत्रजैः सलिलैरभिषिच्यमानाभ्यां स्तनाभ्यां पयः सुस्राव॥ ५०॥

ते पुत्रः चिरं नष्टोदर्शनं प्राप्तः दिष्ट्या भद्रं पुनः प्रतिलब्धः भुवोमण्डलं रक्षिता रक्षिष्यति इतिशशंसुः॥ ५१॥

यस्यानुध्यायिनः ध्यातारः मृत्युंजन्ममरणप्रवाहं जिग्युर्जितवन्तः॥ ५२॥

जनैस्तूयमानः पुरमविशत्॥ ५३॥

पुरं वर्णयति। तत्रैत चतुर्भिः। तत्र तत्र उपसंक्लृप्तैरुपयोजितैः लसद्भिः मकराकारैस्तोरणैः सवृन्दैः फलादिसहितैः कदलीस्तम्भैः नांद्यैः सवृन्दैः पूगानां पोतैर्बालवृन्दैः प्रतिद्वारमुपस्कृतमित्यग्रिमेणान्वयः॥ ५४॥

चूतपल्लवादीनां विशिष्टं वस्त्रनमस्ति येषुतैः कुम्भैश्चोपस्कृतमुपशोभितम्॥ ५५॥

विमानशिखराणां विमानाग्राणामिव द्युतिः कांतिर्येषां तैः शातकुम्भाः स्वर्णमयाः परिच्छदाः परिकरा येषां तैः प्राकारैःगोपुरै रागारैश्च सर्वतोऽलंकृतम्॥ ५६॥

मृष्टानिर्मिलीकृताश्चत्वरादयोयस्मिन् तत् तत्र चत्वरमङ्गणम् रथ्यामहामार्गः महट्टकस्थानो परिरचितः मार्गोऽधान्तरः चन्दनैश्चर्चितं तज्जलैः संसिक्तम्॥ ५७॥

पुरस्त्रियः ध्रुवाय सतीः सत्याआशिषः प्रयुञ्जानाः सिद्धार्थः श्वेतसर्षपस्तदादीनिउपजन्हुः व्यकिरन् इतिद्वयोरन्वयः॥ ५८-६३॥

भाषाटीका।

ध्रुव और उत्तम पदोनो परस्पर आलिंगन करके प्रेमसे मोहित होगये अंगकेस्पर्श से उनके पुलकावली होगई वारंवार स्नेह के आंसु गिरने लगे॥ ४८॥

सुनीतिने प्राणों से भी अत्यंत प्रियपुत्र को आलिंगन करके उसके शरीर के स्पर्श स सुखित होकर मन के सबतापों को दूर किया॥ ४९॥

हे वीरविदुरजीतब आनंदके मारे निकले जो नेत्रके जलतिनसे भिजे हुये, वीर पुत्र वाली सुनी तीके स्तनों से वारंवार दूध निकलने लगा॥ ५०॥

उस रानी से सब मनुष्य कहने लगे कि बड़ा मंगल है तुम्हारा पुत्र दुःखका नाश करने वाला है खोइ गया मिला है और पृथवी की रक्षा करैगा॥ ५१॥

मालूम होता है कि जिस नारायणके ध्यान करने वाले पुरुष मृत्यु को जीत गये हैं उस भक्तार्ति नाशक भगवान का तुमने अच्छा पूजन किया है जो तुमारा ऐसा पुत्र हुआ है॥ ५२॥

मनुष्यों के ऐसे आदर करते करते उत्तम भ्राता सहित ध्रुव को आनंदित होकर हथिनी पर बैठाया तब सब मनुष्य स्तुति करते थे राजा ने पुर मैं प्रवेश किया॥ ५३॥

उस पुरके मार्ग मै तहां तहां बनाये हुये मकरके तोरण फल पुष्प मंजरी सहित कदली के स्तंभ वैसे ही सुपारी के छोटे पेड़ लगे हुये हैं॥ ५४॥

आम के पल्लव वस्त्र माला मुक्ताके हार ये उनमें लटके हैं द्वार द्वार मैं जलों के कलस रखे हैं और दीपक भी रखे हैं॥ ५५॥

और सुवर्ण के सब पदार्थ हैं जिनमें ऐसे दीवाल गोपुर और श्रीमानों के विमान बड़े प्रकाशमान शिखर वाले हैं तिससे चारों ओर से शोभित होरहा है॥ ५६॥

गली अटा अटारी सड़क सब सुंदर झाड के निर्मल किये हैं चन्दन के जल से सींचे गये हैं लाइ अक्षत पुष्प फल चामल और भेट आदि से युक्त हैं ऐसी पुरकी शोभा है॥ ५७॥

रस्ता मै तहां तहां ध्रुव को देखने वाली पुर स्त्री सपेद सरसों अक्षत दधि जल दूव पुष्प फल इनको भेट देकर आशिर्वाद देती थीं ध्रुवजी भी उन स्त्रीनके मनोहरगी तोंको सुनते सुनते पिता के महल मै प्रविष्ट हुये॥ ५८-५९॥

महामणियों के समूह सेवना उस महल मै स्थित हुये फिर पिता के लाड़से स्वर्ग मैं देवता के तुल्य निवासकरतभये ध्रुवजी॥

श्रीधरस्वामिकृत भावार्थदीपिका।

यत्र भवनोत्तमे॥ ६१॥ ६२॥ ६३॥
कुमुद कुमदम पद्मादिमत्यो वाप्यः॥ ६४॥ ६५॥

वीक्ष्योढवयसं तं च प्रकृतीनां च सम्मतम् ।
अनुरक्तप्रजं राजा ध्रुवं चक्रे भुवः पतिम् ॥ ६६ ॥
आत्मानं च प्रवयसमाकलय्य विशां पतिः ।
वनं विरक्तः प्रातिष्ठद्विमृशन्नात्मनो गतिम् ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थ स्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां ध्रुवचरिते
नवमोऽध्यायः ॥ ९ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

ऊढवयसं प्राप्तयौवनम् अनुरक्ताः प्रजा यस्मिन् ॥ ६६ ॥ प्रवयसं वृद्धम् ॥ ६७ ॥

इतिश्रीभागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिका टीकायां
नवमोऽध्यायः ॥ ९ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

उपस्करास्सामग्र्यः ॥ ६१ ॥

यत्रेति त्रिकम् ॥ ६२ । ६३ ॥ ६४ ॥

तं श्रीभगवत्प्रसादवैभवरूपं"प्रभावस्सर्वजित्स्थितिरि,,ति रसामृते तल्लक्षणाचाद्दशस्थितिलक्षणम् प्रभावं श्रीनारदादिभ्यः श्रुत्वा दृष्ट्वा सुरुच्यादिसर्वजनताप्रीतिलिङ्गेन स्वयञ्चानुमाय ॥ ६५ ॥ ६६ ॥

आत्मनस्स्वस्य गतिं प्राप्यं श्रीहरिम् ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
दीपिकादीपनेटीकायाम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

भवनं वर्णयति । यत्र भवने शय्याः दान्ताः क्षीरफेनवन्निर्मलाः शुभ्राश्च रुक्मपरिच्छदाः सुवर्णमयाः परिकराः अनर्घ्याणि आसनानि रौप्या राजता उपस्कराश्च सन्ति ॥ ६१ ॥

यत्र भवने स्फटिकमयकुड्येषु इन्द्रनीलमणिखचितेषु प्रतिफलिता ललनाः स्त्रियः रत्नानि तैः संयुताः मणिप्रदीपाः उपमितसमासः ॥ ६२ ॥

अथातिरम्याण्युद्यानानि च यत्र सन्तीत्यनुषङ्गः तान् विशिनष्टि विचित्रैरमरद्रुमैः संतानपारिजातादिभिर्द्रुमैः कथंभूतैः कूजन्ति विहङ्गानां मिथुनानि येषु गायन्तोमधुपानमत्ता मधुव्रता भृङ्गा येषु तैर्द्रुमैः युक्तानीति शेषः ॥ ६३ ॥

वाप्यश्च यत्र सन्तीत्यन्वयः वापीर्विशिनष्टि । वैडूर्यमणिमयाः सोपाना यासां पद्मानि उत्पलानि कुमुदानि च यासु सन्ति ताः विभक्ति व्यत्यय आर्षः हंसानां कारण्डवानां च कुलैः संघैश्चक्रवाकैः सारसैश्च घुष्टाः शब्दिता विस्मयमाश्चर्यं प्रपेदे ॥ ६४ ॥ ६५ ॥

अथ कतिपयवर्षानन्तरमूढवयसं प्राप्तयौवनं प्रकृतीनां मन्त्रिणां सम्मतमनुरक्ताः अनुरागयुक्ताः प्रजा यस्मिन् तं पुत्रं ध्रुवं वीक्ष्य भुवः पतिं चक्रे राज्याभिषिक्तमकरोत् ॥ ६६ ॥

तत आत्मानं प्रवयसं वृद्धमाकलय्य आलोच्य विशाम्पतिः राजा आत्मनः स्वस्यगतिं मुक्त्युपायं विमर्शयन् अतएव विरक्तः वनं प्रातिष्ठत् प्राविशत्॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिकाटीकायां
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

कशिपूत्तम इत्युक्तं प्रपञ्चयति । पयः फेननिभा इति । दान्ता दन्तनिर्मिताः रुक्मपरिच्छदाः सुवर्णपरिच्छदाः उपर्याच्छादनपटा यासां तास्तथा उपस्कराः पात्राणि रौक्माणि सुवर्णनिर्मितानि ॥ ६१ ॥

रत्नं श्रेष्ठे च निर्दिष्टमिति हलायुधः ललनारत्नैः संयुताः शय्यादय आभान्ति तस्मिन्निति ॥ ६२ ॥ ६३ ॥ ६४ ॥

ध्रुवप्रभावो देवादीनामाश्चर्यबुद्धिजनकः किञ्चितरम्यामिति भावेनोत्तानपादान्तः करणप्रवृत्तिविशेषं वक्ति । उत्तानपादइति६५॥

विस्मयफलमाह । वीक्ष्येति । ऊढवयसमित्यनेन राज्यपालनशक्तिं व्यनक्ति ॥ ६६ ॥

तत्र स्वयं किमकारीति तत्राह । आत्मानंचेति आकलय्य ज्ञात्वा आत्मनः स्वस्य हरेरन्त्र गतिं स्थितिं विमृशन्विचारयन्निति ॥ ६७ ॥

इतिश्रीभागवतेमहापुराणेचतुर्थस्कन्धे
विजयध्वज कृतपदरत्नावल्याम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

यत्रेति त्रिकम् ॥ ६२--६७ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भस्य
नवमोऽध्यायः ॥ ९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यत्र भवनोत्तमे शय्यादयो वाप्यन्ताः भोगोपस्कराः सन्ति ॥ ६२--६५ ॥

ऊढवयसं प्राप्तयौवनम् ॥ ६६ ॥ ६७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थे नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

पद्मं चोत्पलं च कुमुत् कुमुदं च तानि विद्यन्ते यासां ताः पद्मादिमत्यः विभक्तिव्यत्यय आर्षः ॥ ६४ ॥ ६५ ॥

ऊढवयसं प्रवृत्तयौवनम् प्रकृतीनाममात्यादीनाम् अनुरक्ताः प्रजाः यस्मिन् तम् ॥ ६६ ॥

प्रवयसं वृद्धमाकलय्य संख्याय आत्मनः परमात्मनः गतिं मार्गं विमृशन् विचारयन् धनं निरुपद्रवम् हरिभजनस्थानमित्यर्थः ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थे स्कन्धे ।
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे टीकायाम् ।
नवमोऽध्यायः ॥ ९ ॥

---

भाषाटीका ।

हस्ति दांत की बनी हुई पलंगै सुवर्ण से भूषित तिनके ऊपर मै दूध के मलाइके तुल्य को मलवस्त्र विछे हैं विचित्र बडे मूल्य के आसन हैं सुवर्ण की सामग्री उनमें हैं ॥ ६१ ॥

जहां पर स्फटिकमणि के दिवाल महामरकतमणिके म... मै रत्न के दीप लगे हैं नाना रत्नों से भूषित सुंदर स्त्री ... स्थित हैं ॥ ६२ ॥

विचित्र देव वृक्षों के सहित मनोहर वागवगीचा हैं जहां ... पक्षियों के जोडा शब्द करते हैं भ्रमर जहां गान कररहे हैं ॥ ६३ ॥

वैदूर्य मणि की सिढी वाली बावड़ी हैं जिनमें पद्म कुमुद ... के पुष्प खिले हैं हंसकारंडवचक्रवाक सारस पक्षि उनमें शब्द ... रहे हैं ॥ ६४ ॥

कुछ काल मै राजर्षिउत्तानपादजी अपने पुत्रके उस प्रभा... कूं देखकर और सुनकर परम विस्मय कूं प्राप्त हुये ॥ ६५ ॥

फिर राजा ने जब देखा कि ध्रुवजी की यौवन अवस्था होगई है और सब प्रजा उन पर प्रसन्न हैं उनका भी प्रजों मै अनुराग ... तब उन ध्रुवजी को पृथिवी का राजा कर दिया ॥ ६६ ॥

तदनंतर अपने आपको वृद्ध जानकर अपने आत्मा की ... देने वाले परमात्मा को स्मरण कर के राजा उत्तानपाद वि... होकर वन को चले गये ॥ ६७ ॥

इतिश्री भागवत चतुर्थस्कंध
नवमाध्याय का भाषानुवाद लक्ष्मणा-
चार्यकृत समाप्त ॥ ९ ॥

---

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे नवमोऽध्यायः ॥ ९ ॥

—०:०:०—

## दशमोऽध्यायः ॥

—— ०:——

मैत्रेय उवाच ।

प्रजापतेर्दुहितरं शिशुमारस्य वै ध्रुवः ।
उपयेमे भ्रमिं नाम तत्सुतौ कल्पवत्सरौ ॥ १ ॥
इलायामपि भार्यायां वायोः पुत्र्यां महाबलः ।
पुत्रमुत्कलनामानं (१) योषिद्रत्नमजीजनत् ॥ २ ॥
उत्तमस्त्वकृतोद्वाहो मृगयायां बलीयसा ।
हतः पुण्यजनेनाद्रौ तन्मातास्य गतिं गता ॥ ३ ॥
ध्रुवो भ्रातृवधं श्रुत्वा कोपामर्षशुचार्पितः ।
जैत्रं स्यन्दनमास्थाय गतः पुण्यजनालयम् ॥ ४ ॥
गत्वोदीचीं दिशं राजा रुद्रानुचरसेविताम् ।
ददर्श हिमवद्द्रोण्यां पुरीं गुह्यकसङ्कुलाम् ॥ ५ ॥
दध्मौ शङ्खं बृहद्बाहुः खं दिशश्चानुनादयन् ।
येनोद्विग्नदृशः क्षत्तरुपदेव्योऽत्रसन् भृशम् ॥ ६ ॥
ततो निष्क्रम्य बलिन (२) उपदेवमहाभटाः ।
असहन्तस्तं निनादमभिपेतुरुदायुधाः ॥ ७ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

दशमे भ्रातृहन्तॄणां यक्षाणामकरोद्वधम् ।
एक एवालकां गत्वेत्यस्य विक्रम उच्यते ॥ १ ॥

योषितां रत्नमिवातिमनोहरम् कन्यारत्नंचेतिवा ॥ १ ॥ २ ॥

यक्षेणाद्रौ हिमवति हतः आजाविति पाठे युद्धे अस्य गतिं गता मृतेत्यर्थः ॥ ३ ॥

कोपामर्षशुचां द्वन्द्वैक्यम् तेनार्पितोव्याप्तः जैत्रं जयहेतुम् पुण्यजनालयमलकाम् ॥ ४ ॥

रुद्रानुचरा भूतादयः ॥ ५ ॥

दध्मौ वादितवान् येन शङ्खवादनेन हे क्षत्तः ! उपदेव्यो यक्षस्त्रियः ॥ ६—७ ॥

कोपश्चामर्षश्चासहनं शुक् च तेषां समाहारः कोपामर्षशुक् तेन ॥ ४ ॥ ५ ॥

येनेति यच्छब्दस्योत्तरवाक्यस्थत्वात्तच्छब्दापेक्षा नास्ति "साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिक„ इतिवत् ॥ ६ ॥

ततोऽलकातः ॥ ७ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

उपयेम इति उत्तानपादवनगमनानन्तरमेवेति ज्ञेयम् ॥ १ ॥

इलायां पूर्वं परिणीतायां पूर्वपक्षे योषिद्रत्नमिति पुत्रविशेषणम् परत्र चकारोऽध्याहृतः ॥ २ ॥

त्वद्भ्रातर्युत्तमे नष्ट इति भगवद्वाक्यस्य सत्यतामाह । उत्तमस्त्विति । अद्रावित्यत्राजाविति पाठान्तरम् गतिमवस्थाम् ॥ ३ ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

अथ दशमेन ध्रुवः कृतोद्वाह उत्पादितपुत्रोजितभ्रातृहन्तृपुण्यजन आसेत्याह मुनिः । प्रजापतेरिति । शिशुमाराख्यस्य प्रजापतेः दुहितरं भ्रमिमुपयेमे उदवोढ तयोर्ध्रुवभ्रम्योः सुतौ कल्पवत्सराख्यौ ॥ १ ॥

पुनरूढायां वायोर्दुहितरि इडाख्यायां भार्यायां महाबलो ध्रुवः उत्कलनामानं पुत्रं कथं भूतं योषितां रत्नमिवातिमनोहरं कन्यारत्नमितिवा पुत्रमजीजनत् उत्पादयामास ॥ २ ॥

उत्तमस्त्वकृतोद्वाह एव कदाचिन्मृगयायां बलीयसा पुण्यजनेन यक्षेण अद्रौ हिमवति हतः तस्योत्तमस्य माता सुरुचिः तस्य पुत्रस्य गतिं गता मरणं प्राप्तेत्यर्थः ॥ ३ ॥

ध्रुवः भ्रातुरुत्तमस्य वधमाकर्ण्य कोपामर्षशुगिति समाहारद्वन्द्वः तेन अमर्षः अक्षमा अर्पितः व्याप्तः जैत्रं जयशीलस्यन्दनं रथमास्थायाधिरुह्य पुण्यजनालयम् अलकां पुरीं गतः गतवान् ॥ ४ ॥

---

(१) योगेश्वरमिति विजयध्वज पाठः ॥ (२) उद्तिष्ठन्निलापि विजयध्वज पाठः ॥

स तानापततो वीर उग्रधन्वा महारथः ।
एकैकं युगपत्सर्वानहन् बाणैस्त्रिभिस्त्रिभिः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

रुद्रानुचरा भूतादयस्तैः सेवितां गुह्यकैर्यक्षैः सङ्कुलां व्याप्तां पुरीमलकां हिमवतोद्रोण्यां ददर्श ॥ ५ ॥

बृहद्बाहुः खमन्तरीक्षं दिशः दश दिशश्चानुनादयन् प्रतिध्वनयन् शङ्खं दध्मौ नादितवान् येन शङ्खनिनादेन उद्विग्ना चलिताः दृग् यासान्ता उपदेव्योयक्षस्त्रियः हे क्षत्तः ! भृशं नितरामत्रसन् भीतवत्यः ॥६॥

उपदेवाश्च महाभटास्तेबलिनः ततः अलकाया निष्कम्य तस्य ध्रुवस्य शङ्खनिनादमसहन्तः उद्यतायुधाः उद्यतास्त्रशस्त्राः अभितः पेतुः उपयोंगतवन्तः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

अत्र न केवलं मोक्ष एव भगवत्प्रसादायत्तः किंतु वाह्याभ्यन्तरशत्रुजयोऽपीत्यतस्तन्माहात्म्यं वर्ण्यते तत्रादौ ध्रुवविवाहादिप्रकारः कथ्यते ।प्रजापतेरित्यादिना। तत्सुतौ तस्या भ्रमेः सुतौ कल्पो वत्सरश्च ॥ १ ॥

योगेश्वरमणिमाद्यष्टाङ्गयोगानामीश्वरम् अनेन राज्यानिच्छुत्वात् पश्चात्मुक्तिरिति ज्ञायते ॥ २ ॥

राजपुत्र उत्तमः किमभूत् ध्रुवभ्रातृत्वेन तत्कथाया अपिश्रवणार्हत्वात् सापि वक्तव्येति तत्राह। उत्तमस्त्विति। तन्माता तस्योत्तमस्य माता सुरुचिस्तस्योत्तमस्य गतिं मरणलक्षणां गतिं गता ॥ ३॥

अत्र प्राकृतस्वभावेन ध्रुवेण किमकारीति तत्राह । ध्रुवइति । कोपामर्षशुचार्पितः भागुरिन्यायेनास्य शब्दस्य टायन्तत्वं साधु पुण्यजनालयमलकां पुरीम् ॥ ४ ॥

पुररक्षकानाह। रुद्रेति। हिमवतो गिरेर्द्रोण्यां निम्नतटे गुह्यका यक्षास्तैः सकुलां निबिडां स्तिमिताम् ॥ ५ ॥

उपदेव्यो यक्षस्त्रियः ॥ ६ ॥

उदतिष्ठन्निति वा पाठः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

प्रजेति । अस्मात्पुत्राहतः पूर्वमेवोत्तानपादवनगमनमिति गम्यते भ्रम्यादावपि पूर्ववद्भगवच्छक्त्यादिरूपत्वं ज्ञेयम् ॥ १ ॥

इलायां पूर्वपरिणीतायाम् ॥ २—८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

ध्रुवो भ्रातुवधं यक्षैःश्रुत्वा गत्वालकां पुरीम् ।
यक्षान् युद्धे जघानेति दशमे कथ्यते कथा ॥ १ ॥

योषिद्रत्नं कन्यारत्नं च ॥ १ ॥ २ ॥

अग्नौ ।हिमवति । भ्राजाविति पाठे तैः सह युद्धे । अस्य गतिं पुत्रमन्विष्यन्ती दावानलान्मृत्युम् ॥ ३ ॥

अर्पितो व्याप्तः ॥ ४—५ ॥

उपदेव्यो यक्षस्त्रियः ॥ ६—८ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीप ।

यदुक्तं भगवता त्वद्भ्रातर्य्युत्तमेनष्टे मृगयायां तु तन्मनाः ... पन्ती वनं माता सा दावाग्निंप्रवेक्ष्यनीति तदुत्तमविनाशं ... गाद्यक्षवधादिकं वर्णयति। ध्रुवविवाह तत्पुत्रजन्मकथनपूर्वकं ... प्रजापतेरिति दशमेनाध्यायेन ॥ १ ॥

योषिद्रत्नं कन्याम् ॥ २ ॥

बलीयसा बलवता पुण्यजनेन यक्षेण अग्नौ हिमवति ... तस्मस्य गतिं गता तदन्वेषणपरा तीव्रदावाग्नौ दग्धा ॥ ३॥

कोऽपोनुपकारिणि पुण्यजने क्रोधः अमर्षः अक्षांतिः शुक् ... वियोगजाधिः तेषां समाहारद्वन्द्वैक्यं तेनार्पितो व्याप्तः जैत्रं ... पुण्यजनालयमलकाम् ॥ ४ ॥

राजा ध्रुवः गुह्यकैर्यक्षैः संकुलां व्याप्ताम् ॥ ५ ॥

उपदेव्यो यक्षभार्याः ॥ ६ ॥

अभिपेतुः अभितांजग्मुः ॥ ७ ॥

---

भाषाटीका ॥

शिशुमार प्रजापति की पुत्री भ्रमिनाम की उससे ध्रुवजी ... विवाह किया उसके कल्प वत्सर दो पुत्र भये ॥ १ ॥

महाबली ध्रुवजी ने वायुकी पुत्री इला नामक भार्या में उत्कल नामक पुत्र और एक मनोहर कन्या को उत्पन्न किये ॥ २ ॥

उत्तम तो विवाह बिना भये ही सिकार खेलने गया था हिमालय पर्वत में बलवान यक्ष ने उसको मार दिया उसकी माता उसके पीछे जाकर मरगई ॥ ३ ॥

ध्रुवजी भ्राता के वधको सुनकर कोप अमर्ष से शोक से युक्त होकर जीतने लायक रथ पर बैठकर यक्षों की अलकापुरी को गये ॥ ४ ॥

ध्रुव महाराज, रुद्रजी के अनुचरों से सेवित उत्तर दिशा को जाकर हिमवान् पर्वत की कंदरा में गुह्य कों से भरी हुई अलका नामक पुरी को देखे ॥ ५ ॥

हे विदुरजी ! महाबाहु ध्रुवजी ने आकाश तथा दिशों को शब्द से पूरण करते हुये शंख को बजाया जिस शब्द से उद्विग्न दृष्टि वाली होकर यक्षों की स्त्री अत्यंत डर गई ॥ ६ ॥

तदनंतर कुवेरजी के महायोधा लोग निकलकर उस शब्दको नहीं सहने से आयुधों को उठाकर दौड़े ॥ ७ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

एकैकं त्रिभिस्त्रिभिरित्येवं सर्वास्त्रयोदशायुतानि यक्षान्युगपदहन् जघान ॥ ८ ॥

ते वै ललाटलग्नैस्तैरिषुभिः सर्व एव हि ।
मत्वा निरस्तमात्मानमाशंसन् कर्म तस्य तत् ॥ ९ ॥
तेऽपि चामुममृष्यन्तः पादस्पर्शमिवोरगा ।
शरैरविध्यन् युगपद्द्विगुणं प्रचिकीर्षवः ॥ १० ॥
ततः परिघनिर्स्त्रिंशैः प्रासशूलपरश्वधैः ।
शक्त्यृष्टिभिर्भुशुण्डीभिश्चित्रवाजैः शरैरपि ॥ ११ ॥
अभ्यवर्षन् प्रकुपिताः सरथं सह सारथिम् ।
इच्छन्तस्तत्प्रतीकर्तुमयुतानि त्रयोदश ॥ १२ ॥
औत्तानपादिः स तदा शस्त्रवर्षेण भूरिणा ।
न उपादृश्यत च्छन्न आसारेण यथा गिरिः ॥ १३ ॥
हाहाकारस्तदैवासीत्सिद्धानां दिवि पश्यताम् ।
हतोऽयं मानवः सूर्यो मग्नः पुण्यजनार्णवे ॥ १४ ॥
नदत्सु यातुधानेषु जयकाशिष्वथो मृधे ।
उदतिष्ठद्रथस्तस्य नीहारादिव भास्करः ॥ १५ ॥
धनुर्विस्फूर्जयद्दिव्यं द्विषतां खेदमुद्वहन् ।
अस्त्रौघं व्यधमद्बाणैर्घनानीकमिवानिलः ॥ १६ ॥
तस्य ते चापनिर्मुक्ता भित्त्वा वर्माणि रक्षसाम् ।
कायानाविविशुस्तिग्मा गिरीनशनयो यथा ॥ १७ ॥
भल्लैः संछिद्यमानानां शिरोभिश्चारुकुण्डलैः ।
ऊरुभिर्हेमतालाभैर्दोर्भिर्वलयवल्गुभिः ॥ १८ ॥
हारकेयूरमुकुटैरुष्णीषैश्च महाधनैः ।
आस्तृतास्ता रणभुवो रेजुर्वीरमनोहराः ॥ १९ ॥
हतावशिष्टा इतरे रणाजिराद्रक्षोगणाः क्षत्रियवर्यसायकैः ।
प्रायोविवृक्णावयवा विदुद्रुवुर्मृगेन्द्रविक्रीडितयूथपा इव ॥ २० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

निरस्तं पराजितम् तस्य ध्रुवस्य तत्कर्माशंसन् तुष्टुवुः ॥ ९ ॥

तेऽपि तत्कर्मासहमाना अमुमविध्यन् द्विगुणं यथा भवत्येवं षड्भिः षड्भिः प्रतिकर्त्तुमिच्छन्तः ॥ १० ॥

चित्रवाजैर्विचित्रपक्षैः ॥ ११ ॥ १२ ॥

धारासम्पातेन छन्नो गिरिरिव नैवादृश्यत ॥ १३ ॥

सूर्य्यतुल्यः ॥ १४ ॥

यातुधानेषु राक्षसेषु जयकाशिषु जितं जितमिति जयप्रकाशकेषु सत्सु ॥ १५ ॥

व्यधमत् सञ्चूर्णयामास ॥ १६ ॥

वर्म्माणि कवचानि ॥ १७ ॥

शिरःप्रमुखैरास्तृताः प्रकीर्णा रेजुरिति द्वयोरन्वयः ॥ १८ ॥ १९ ॥

प्रायो बाहुल्येन विवृक्णाः संछिन्ना अवयवा येषाम् ॥ २० ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ॥

एकैकं त्रिभिस्त्रिभिरित्युक्ते सर्वानित्यधिकं स्यादिति इत्येव मध्याहृतम् ॥ ८ ॥

तत् युगपत्त्रिभिस्त्रिभिर्योद्धहननलक्षणं कर्म प्राशंसन् ॥ ९-१० ॥

ततः परिघेति युग्मकम् ततः शरवेधानन्तरं प्रासः धोपन इति ख्यातः शक्तिर्बरछीति ख्यातः ऋष्टिः गुर्जेति ख्यातः भुशुण्डी पोलादीति ख्यातः ॥ ११ ॥ १२ ॥

श्रीराधारमणदासगोस्वामिविरचिता ।
दीपिन्याख्या दीपिकाटिप्पणी ।

नोपादृश्यत संछन्न इति स्वाम्यसंमतः पाठः ॥ १३ ॥

हतः प्रतिबद्धः "मनोहतः प्रतिहतः प्रतिबद्धो हतश्च स„ इत्यमरः ॥ १४ ॥

भास्कर इवेति तद्वत्स्वाभाविकशक्त्यैवावरणव्याप्तिर्न तु विक्रमापेक्षेति सूचितम् ॥ १५ ॥

स्वच्छेगैरनिलो यथा मेघसमूहं नाशयति ॥ १६ ॥

तस्य ध्रुवस्य ते बाणाः ॥ १७ ॥

भल्लैरिति युग्मकम् महाधनैरनर्घ्यैः ॥ १८ ॥ १९ ॥

विक्रीडितेत्यत्र विद्राविततेति क्वचित् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

उग्रं भीमं धनुर्यस्य महारथो ध्रुवः आपततः सर्वान् वीरान् युगपदेव प्रत्येकं त्रिभिस्त्रिभिर्बाणैरहन्प्रत्येकं त्रिभिस्त्रिभिर्बाणैः सर्वान् त्रयोदशायुतानि युगपज्जिघान ॥ ८ ॥

तेवै उपदेवाः सर्वेललाटलग्नैस्त्रिभिस्त्रिभिरिषुभिरात्मानं निरस्तं पराजितं मत्वा तस्य तत्कर्म आशंसन् प्रशशंसुः ॥ ९ ॥

तेऽपिच यक्षा उरगाः सर्पाः पादस्पर्शं पादास्तिमिव अमुं ध्रुवममृष्यन्तः असहमाना द्विगुणं यथाभवति तथा षड्भिः प्रतिकर्त्तुमिच्छन्तः शरैर्युगपदेवाविध्यन् निजघ्नुः ततः परिघादिभिः शस्त्रविशेषैरविध्यन् तथा चित्रवाजैश्चित्रपक्षैः शरैरपि नितरां कुपिताः अयुतानां त्रयोदश यक्षास्तत्प्रतिकर्तुं तत्प्रतिक्रियां कर्त्तुमिच्छन्तः सरथं ससारथिमभ्यवर्षन् ॥ १० ॥ ११—१२ ॥

तथा स औत्तानपादिः ध्रुवः भूरिणा शस्त्रवर्षेणाच्छन्न आवृतः आसारेण धारावर्षेण यथा गीरिः पर्वतइवनो पादृश्यत नैवादृश्यत ॥ १३ ॥

तदैव दिवि पश्यतां सिद्धानां महान् हाहाकार आसीत् मनोर्गोत्रापत्यं पुमानयं ध्रुव एवसूर्यः पुण्यजनार्णवं अर्णवः समुद्रस्तस्मिन् मग्नः हंत हाकष्टमित्येवं रूपहाहाकार आसीत् ॥ १४ ॥

ततोमृधे युद्धे यातुधानेषु राक्षसेषु जयकाशिषु जितं जितं मयेति जयप्रकाशकेषु सत्सु जयशालिष्विति पाठे जयकाशिषु सत्सु नीहाराद्भास्करः सूर्य इव तस्माच्छरवर्षात् रथात् कल्यश्चौपे पश्चमी रथे आस्थाय उदतिष्ठत् उत्थितः ॥ १५ ॥

तत उग्रधनुः विस्फूर्जयन् ज्याघातं कुर्वन् द्विषतां पुण्यजनानां खेदमुद्वहन् प्रापयन् बाणौरस्त्रौघं द्विषत्प्रयुक्तमस्त्रसमूहमनिलोवायुरिव मेघपङ्क्तिं व्यधमत् चूर्णयामास ॥ १६ ॥

तस्य ध्रुवस्य चापात् धनुषोविनिर्मुक्तास्तिग्मास्तीक्ष्णा बाणाः गिरीन् पर्वतानशनयोयथा रक्षसां वर्माणि कवचानि छित्वा कायान् देहान् आसमन्ताद्विविशुः ॥ १७ ॥

भल्लैः बाणैः संछिद्यमानानां रक्षसां चारूणि सुन्दराणि कुण्डलानि येषु तैः शिरोभिः स्वर्णमयतालवृन्तसदृशैरूरुभिः वलयैः सुन्दरैर्बाहुभिर्महाधनैरनर्घ्यैः हारादिभिश्चास्तृताः छन्नास्ता रणभूमयः वीराणां मनोहरा विरेजुः बभुः ॥१८ ॥ १९ ॥

हतेभ्योऽवशिष्टा इतरे रक्षोगणाः क्षत्रियवर्यस्य ध्रुवस्य सायकैः बाणैः प्रायः बाहुल्येन विवृक्णाः संछिन्नाः अवयवा येषां रणाजिरात् रणभूमेः सिंहेन विक्रीडितगजा इव मुहुर्मुहुः पलायितवन्तः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

अहन् हतवान् ॥ ८ ॥

पन्नीरोप इपुर्द्वयोरित्यमरः ध्रुववीरकर्मस्तवनेन गुह्यकानां [illegible] वीरत्वमसूचि ॥ ९ ॥

तत्कर्म प्रशस्य गुह्यकैः किं पृष्ठतः प्रसुप्तमिति तत्राह । तेऽपि [illegible] युगपत्सम्भूय ध्रुवकृतविक्रमात् द्विगुणं प्रकर्षेण कर्त्तुमिच्छन्त [illegible] ननु कर्तुं समर्थाः ॥ १० ॥

चित्रा नाना वर्णा वाजाः पक्षा येषां ते चित्रवाजास्तैः ॥ [illegible]

अयुतानां त्रयोदश लक्षादुपरि त्रिंशत्सहस्राणि प्राधान्यविवक्ष[illegible] तत् ॥ १२ ॥

तदा ध्रुवः किमभूदत्राह । औत्तानपादिरिति । आसारेण [illegible] वर्षेण सन्ततनिविडवर्षधारयेत्यर्थः ॥ १३ ॥

मानवः मनोः पौत्रः सूर्यः ज्ञानिप्रियः सूर्य इव सूर्यो वा ॥[illegible]

नन्वत्र मग्नस्य श्वासनिरोधेन मरणं जलं संस्तभ्यावस्था[illegible] मधोगमनमन्यत उन्मज्जनमिति पक्षेष्वेकः सम्भवति अन्यत्र [illegible] जने पलायनापरपर्याये जैत्रंस्यन्दनमित्येतदनुपपन्नं स्यादतः [illegible] भूदिति तत्राह । नदस्त्विति । अथ मज्जनानन्तरमेव ध्रुवरथस्त[illegible] धुन्द्वादुदतिष्ठदित्यन्वयः जलमग्नस्य सूर्यस्यान्यत उन्मज्जनं [illegible] तीति मत्वा यत्र निमज्जनं तद्दृष्टान्तत्वेन नीहारादिति ॥ १५ ॥

द्विषतामस्त्रौघं व्यधमत्वध्वमकरोत् ॥ १६ ॥

एकत्र प्रयोगेण यक्षाणां गालधमनं तेषां चर्मभेदनं शरीरच्छे[illegible] दनं चेति कार्यत्रयमभूदित्याह । तस्य त इति । पविरशनिः शतध[illegible] वज्रं कुलिशं दम्भोलिरिति हलायुधः दम्भोलिरशनिर्द्वयोरित्य[illegible] मरः ॥ १७ ॥

वीररसमाह । भल्लैरिति । भल्लैरर्धचन्द्राकारैर्वराहशरैर्दा[illegible] लाभैः सुवर्णतालसमानैरुरुभिरुत्सर्गैः ॥ १८—१९ ॥

कापि सर्वनाशो न दृष्टश्रुतपूर्व इति किम्वदन्तीमनुसरन्[illegible] हतेति मृगेन्द्रेण सिंहेन विगतक्रीडोपक्रमा यूथपा गजाः ॥२०॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

ततः परिघेति युग्मकम् ॥११—१३ ॥

पुण्यजनेत्यादिकं दैत्यदानववत् यक्षरक्षसोरभेदनिर्देश[illegible]

हतः प्रतिबद्धः । "मनोहतः प्रतिहतः प्रतिबद्धो हतश्च स„ इत्यम[illegible] हतोऽयमित्यत्र हन्तेति चित्सुखः ॥ १४ ॥

नीहारादिव भास्करइतितद्वच्छक्त्यैवतदतिक्रमो ज्ञेयः ॥१५-[illegible]

भल्लैरिति युग्मकम् ॥ १८--१९ ॥

क्रीडिता इत्यत्र द्राविता इति क्वचित् ॥ २०——२१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

द्विगुणं यथास्यात्तथा षड्भिः षड्भिः प्रतिकर्त्तुमिच्छन्तः [illegible]

चित्रवाजैर्विचित्रपक्षैः ॥ ११-१२ ॥

आसारेण धारासम्पातेन छन्नो गिरिरिव नैवादृश्यत १३

सूर्य्यः सूर्य्यतुल्यः पुण्यजनार्णव इति तेषां सरत्वत्ता [illegible] कोऽपि नापकारोऽभूदिति व्यज्यते नह्यर्णवे मग्नस्य सूर्यस्य [illegible] कष्टं भवेदिति ॥ १४ ॥

जयकाशिषु जितं जितमिति स्वजयप्रकाशकेषु सत्सु [illegible]

व्यधमत् संचूर्णयामास ॥ १६ ॥

अपश्यमानः स तदाततायिनं महामृधे कञ्चन मानवोत्तमः।
पुरीं दिदृक्षन्नपि नाविशद्द्विषां न मायिनां वेद चिकीर्षितं जनः ॥ २१ ॥
इति ब्रुवंश्चित्ररथः स्वसारथिं यत्तः परेषां प्रतियोगशङ्कितः।
शुश्राव शब्दं जलधेरिवेरितं नभस्वतो दिक्षु रजोऽन्वदृश्यत ॥ २२ ॥
क्षणेनाच्छादितं व्योम घनानीकेन सर्वतः।
विस्फुरत्तडिता दिक्षु त्रासयत्स्तनयित्नुना ॥ २३ ॥
ववृषू रुधिरौघासृक्पूयविण्मूत्रमेदसः।
निपेतुर्गगनादस्य कबन्धान्यग्रतो नघ! ॥ २४ ॥
ततः खे दृश्यत गिरिर्निपेतुः सर्वतो दिशम्।
गदापरिघनिस्त्रिंशमुसलाः साश्मवर्षिणः ॥ २५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

गिरीनशनयो यथेति आसारेण यथा गिरिरिति दृष्टान्ताभ्यां यक्षाणां शराः ध्रुवस्याकिञ्चित्कराः प्रत्युतोत्साहवर्द्धका एव यथा धारासम्पातेन गिरयः क्षालितमला उद्दीप्ता एव भवन्ति। ध्रुवस्य शरास्तु यक्षाणां प्राणापहारिण एव यथा अशनिभिर्गिरयो विदीर्यन्ते एवेति व्यञ्जितम् ॥ १७ ॥ १८ ॥

आस्तृता आच्छन्नाः ॥ १९ ॥ २० ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

उग्रं धनुर्यस्य सः एकैकं त्रिभिस्त्रिभिरित्येवं सर्वान् त्रयोदशायुतसंख्याकान् युगपदहन् जघान ॥ ८ ॥

आशंसन् प्रशसंसुः ॥ ९ ॥

तेऽपि उरगाः पादस्पर्शमिव तत्कर्म असृष्यन्तः असहमानाः द्विगुणं प्रतिचिकीर्षवः प्रतिकर्तुमिच्छवः अमुं शरैर्युगपदविध्यन् ॥ १०-११-१२ ॥

आसारेण महावृष्ट्या ॥ १३ ॥

मानवो मनुवंशजः सूर्यः प्रतितेजस्वी ॥ १४ ॥

जयकाशिषु जयं द्योतयत्सु यातुधानेषु राक्षसेषु ॥ १५-१६ ॥

प्रायः विवृक्णाः संछिन्ना अवयवा येषां ते मृगेन्द्रेण विक्रीडिताः यूथपा इव विदुद्रुवुः ॥ २० ॥

---

भाषाटीका

सो उग्रधनुवाले महारथ वीर ध्रुवजी एक एक यक्ष को एक ही साथ में तीन तीन बाणों से प्रहार करत भये ॥ ८ ॥

वे सब गुह्यकललाट में उन शस्त्रों के लगने से सबहि अपने आत्मा को हार मान कर ध्रुवजी के उस कर्म की प्रसंशा करने लगे ॥ ९ ॥

वे लोग भी जैसे पाद के छूने से सर्प होवे तैसे उस बात को नहीं सहकर द्विगुण कर ने की इच्छासे बाणोंका प्रहार करत भये ॥ १० ॥

तब तो परिघ तरवार गुर्ज त्रिशूल फरसा बर्छी शक्ति भुसंडी नानाप्रकार के बाणों से कुपति हो कर वर्षा कर के सारथीसहित रथ को ढांकदिया उसका बदला लेने को तेरा अयुत बाण चलाये ॥ १२ ॥

तब तो बडे शस्त्रों की वर्षा से ढकगये सो नहीं देख पडे जैसे वर्षा से पर्वत ढकजाता है तैसे ॥ १३ ॥

तब आकाश में देखने वाले सिद्ध लोगों ने हाहाकार किया बोलने लगे कि मानवरूपी सूर्य यक्षरूपी समुद्र में डूबकर रुक गया ॥ १४ ॥

तब तो यक्षलोग जयशब्द कर के गर्जने लगे इतने में कुहरी मे से जैसे सूर्य निकले तैसे उनका रथ निकल पडा ॥ १५ ॥

तब धनुष का टंकार कर के शत्रुन को दुःख बढाते हुए ध्रुवजी ने सब शस्त्र समूह को नाश कर दिया जैसे पवन मेघों उडाता है ॥ १६ ॥

उन के धनुष मेसे निकले बाण रक्षसों के कवचों को भेद न कर के जैसे वज्र पर्वतों में प्रवेश करते हैं तैसे उन के शरीरों में घुस गये ॥ १७ ॥

भालों से कटे हुए सुन्दर कुंडलों वाले मस्तकों से हेमताल सरी के जंघों से हार केयूर मुकुट बडे मूल्य की पगडी इनों से बिछीहुई रणभूमि शोभित हुई वीरों के मनहरनेवाली थी ॥ १९ ॥

मरने से बचेहुये बाकी रक्षसगण रणभूमि में क्षत्रिय श्रेष्ठ ध्रुवजी के बाणों के मारे प्राय कर सब अंग कटे हुये भगगये जैसे सिंह के भय से हाथी भगें तैसे ॥ २० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका।

आततायिनं शस्त्रपाणिम् ॥ २१ ॥

इति ब्रुवन्नित्यत्रापि न मायिनामित्यादेरनुषङ्गः चित्ररथो ध्रुवः। यत्तः यत्नवान्। प्रतियोगः पुनरुद्योगः तस्माच्छङ्कितः। नभस्वतो वायोर्हेतोः ॥ २२ ॥

विस्फुरन्त्यस्तडितो यस्मिन् तेन त्रासयन्तः स्तनयित्नवोऽशनयो यस्मिन् ॥ २३ ॥

ववृषुर्निपेतुरित्यर्थः। न सृजन्ति शरीरमित्यसृगादि अंसृगादि मेदसः पुंस्त्वमार्षम्। मेदांसि अस्याग्रतो निपेतुः ॥ २४ ॥

साश्मवर्षिणः अश्मसहितं यद्वर्षं तद्वन्तः ॥ २५ ॥

अहयोऽशनिनिःश्वासा वमन्तोऽग्निं रुषाक्षिभिः ।
अभ्यधावन्गजा मत्ता सिंहव्याघ्राश्च यूथशः ॥ २६ ॥
समुद्र ऊर्मिभिर्भीमः प्लावयन्सर्वतो भुवम् ।
आससाद महाह्रादः कल्पान्त इव भीषणः ॥ २७ ॥
एवं विधान्यनेकानि त्रासनान्यमनस्विनाम् ।
ससृजुस्तिग्मगतय आसुर्या माययासुराः ॥२८॥
ध्रुवे प्रयुक्तामसुरैस्तां मायामति दुस्तराम् ।
निशाम्य तस्य मुनयः शमाशंसन् समागताः ।२६।

मुनय ऊचुः

औत्तानपादे ! भगवांस्तव शार्ङ्गधन्वा देवः क्षिणोत्ववनतार्तिहरो विपक्षान् ।
यन्नामधेयमभिधाय निशम्य चाद्धा लोकोऽञ्जसा तरति दुस्तरमङ्ग ! मृत्युम् ॥३०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
चतुर्थस्कन्धे ध्रुवचरिते यक्षमायाधानं नाम
दशमोऽध्यायः । १० ।

---

श्रीधरस्वामिकृत भावार्थदीपिका।

अशनिवन्निःश्वासो येषाम् ॥ २६ ॥ २७ ॥

त्रासनानि भयङ्कराणि। तिग्मा क्रूरा गतिः प्रवृत्तिर्येषाम् असुरत्वमादि शब्दैरदूरान्तरत्वेन यत्त्वा एवोच्यन्ते ॥ २८ ॥

तस्य शङ्कलयाणमाशंसन् प्रार्थितवन्तः ॥ २६ ॥

तव विपक्षान् शत्रून् नाशयतु अद्धा साक्षात् अञ्जसा सुखेनैव मृत्युं तरति ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायाम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ॥

चिकीर्षितं न वेदेति विचिन्त्य दिदृक्षन्नपि नाविशत् ॥ २१ ॥

अत एवेति ध्रुवमित्यत्रापि द्विषामित्यादेरन्वितस्यापि पुनरन्वयोऽनुषङ्गः ॥ २२ ॥

आच्छादितमित्यत्र छुरितमिति चिरसुखः ॥ २३ ॥

रुधिरस्य सत्त्वेन पौनरुक्त्या न सृजतीत्यादियोगवृत्त्या व्याख्यातम् श्लेष्मादीत्यादिना चर्ममांसास्थिपरिग्रहः ॥ २४–२६ ॥

कल्पान्ते प्रलये॥ २७ ॥

अनेकान्यशुभानि ॥ २८-२६ ॥

अद्धा साक्षाज्जन्मान्तरव्यवधानमन्तरैव ॥ ३० ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कंधे
दीपिन्याख्यायां दीपिका टिप्पण्याम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

तदा मानवश्रेष्ठः सध्रुवः महामृधे महति युद्धे आतता[illegible] शस्त्रपाणिमपश्यमानः पुरीन्दिदृक्षन्नपि द्रष्टुकामोऽपि मायिनां[illegible] पुण्यजनानां चिकीर्षितं जनो न वेदत्येवं बुद्ध्वा नाविशत् न[illegible] प्रवान् ॥ २१ ॥

सचित्ररथो ध्रुवः सारथिं प्रति इति न मायिनां वेद[illegible] जन इत्येवं वदन् परेषां विद्विषां प्रतियोगं प्रति क्रियां प्रति[illegible] तः शङ्कमानः अतएव अन्तः यत्नवान् जलदैर्मेघैरीरितं [illegible] गर्जितमिवेत्यर्थः शब्दंशुश्राव ततः समनन्तरमेव नभस्वता [illegible] सह दिक्षु रजः धूलिरदृश्यत दृष्टम् ॥ २२ ॥

व्योमांबरं विफुरन्त्यस्तडितो यस्मिन् त्रासयन्तस्तनयित्नवा[illegible] नयोयस्मिन् तेन मेघसमूहेन सर्वतः छुरितं व्याप्तम् ॥ २३ ॥

रुधिरौघादयः ववृषुः निपेतुरित्यर्थः न सृजतीति शरी[illegible] त्यसृगिह श्लेष्मादिः रुधिरस्य पृथगुपादानात् मेदसः पुंस्[illegible] मेदांसि कवन्धानि शिरोहीनशरीराणि गगनात्तस्य ध्रुवस्या[illegible] निपेतुः ॥ २४ ॥

ततः खे आकाशे गिरिरदृश्यत सर्वतोदिशं सर्वासु दिक्षु [illegible] वर्षिणः अश्मसहितं यद्वर्षणं तद्वन्तः गदादयः निपेतुः ॥ [illegible]

अशनिवन्निश्वासोयेषां ते अहयः सर्पाः आक्षिभिरग्निं व[illegible] उद्गिरन्तः क्रुद्धा गजाः सिंहा व्याघ्राश्च यूथशः संघशः अभ्य[illegible] अभिमुखं तूर्णमागतवन्तः ॥ २६ ॥

ऊर्मिभिस्तरङ्गैर्भीमोभयङ्करः समुद्रः समन्तात् ध्रुवं प्ला[illegible] प्रलय इवमहान् ध्वनिर्यस्यात्तं एवातिभीषणः [illegible]प्राप्तः ॥ २७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उक्तविधान्यन्यानि च मनस्विनामशूराणां त्रासकानि भयंकराणि तिग्मा क्रूरा गतिः प्रवृत्तिर्येषां तेऽसुरा मायया ससृजुः असुरैः ध्रुवे प्रयुक्तामतिदुस्तरां तां मायां निशम्य दृष्ट्वा आगताः सर्वे मुनयः तेऽस्य ध्रुवस्य शं सुखं मङ्गलमाशंसन् प्रार्थितवन्तः ॥ २९ ॥

आशंसामेवविवृणोति। औत्तानपाद इति।अङ्गहे औत्तानपादे! ध्रुव! प्रपन्नतार्तिहरः भृत्यदुःखापहर्त्ता शार्ङ्गधन्वा भगवान् देवः तव विपक्षान् शत्रून् छिनोतु नाशयतु भगवन्तं विशिनष्टि यस्य भगवतो नामधेयं निशम्य श्रुत्वा अभिधाय उक्त्वा वा लोकः अञ्जसा साक्षात् अञ्जसा सुखेनैव दुस्तरं मृत्युं तरति ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिकायां दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली।

अस्यामवस्थायां पुरीं प्रविश्य तत्सर्वमपहृत्य गमनं तत्रावस्थानं वेत्युभयस्मादेकं प्राप्तं तत्र ध्रुवेण किमकारीत्याशङ्क्य भयमपि न कृतं मायिजनकुचेष्टाशङ्कयेति भावेनाह। अपश्यमान इति। तथाहि जनो मायिनां चिकीर्षितं न वेद न जानाति यदत इति ॥२१॥

इदं चिन्तनमुतवाचिकमिति न ज्ञायते इति यतो विविनक्ति। इतिब्रुवन्निति। प्रतियोगेन पुनरुद्यमेन शांकितः जलधेरुत्पन्नमिव नभस्वता वायुनेरितम् ॥ २२ ॥

पुनः किं किं शङ्काकरमभूदिति प्रपञ्चयति। क्षणेनेत्यादिना। छादितं छन्नं विस्फुरन्त्यस्तडितो यस्मिंस्तथा तेन स्तनयित्नुना गर्जितेन ॥ २३ ॥

ववृषुर्मेघा इतिशेषः कवन्धानि शिरोरहितशरीराणि ॥ २४ ॥

अश्मवर्षिणो गिरेर्गदादीनि सर्वतो दिशं निपेतुः ॥ २५ ॥

दृषद्गरलयोरश्मवेश्मधामप्रवेशयोरित्यभिधानात् अश्मवर्षिणा इत्यहिविशेषणं वा अहयश्च निपेतुरशनिर्मेघवह्निज्वाला तद्वन्निःश्वासो येषां ते तथा ॥ २६ ॥

ह्रादो नादः ॥ २७ ॥

अमनस्विनां मनो बलरहितानां तिग्मगतयस्तीक्ष्णप्रवृत्तय आसुर्या असुरजनप्रियया ॥ २८ ॥

स्वकर्तव्यतया मुनयो भगवत्प्रसादेन सर्वत्राजिताय ध्रुवाय हितमुप दिशन्तीत्याह। ध्रुव इति। शं सुखं "समसेदे समीचीने सुष्टुपूजा सुखेषु च„ति यादवः पर्णे शासाविति प्राच्या इति सूत्राद्वासं सुखमिति ज्ञायते ॥ २९ ॥

यन्नामधेयमभिधायेत्यनेन भगवन्नामस्मृत्वाभिधाय युध्यतस्तव शत्रुजयः स्यादित्युपदिष्टमिति ज्ञातव्यम् ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः

चित्ररथस्तन्नामा ध्रुवः व्यदृश्यतेति तु गौडपाठः ॥ २२ ॥

क्षणेन छुरितामिति चित्सुखः। २३——२८ ॥

ध्रुवे इति समाशंसन्निति चित्सुखः। जयमिति शेषः ॥२९-३०॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भस्य दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी।

आततायिनं शस्त्रपाणिम् ॥ २१ ॥

इति न मायिनामिति वाक्यं ब्रुवन्, चित्ररथो ध्रुवः। अनु अनन्तरं नभस्वतो हेतोर्दिक्षु रजः ॥ २२ ॥ २३ ॥

न सृजति शरीरमित्यसृक् श्लेष्मादि मेदसः पुंस्त्वमार्षं मेदांसि ववृषुर्मेघा इति शेषः। अस्य ध्रुवस्याग्रतः ॥ २४ ॥

साश्मवर्षिणः अश्मवर्षिभिः सह वर्त्तमानाः ॥ २५--२७ ॥

अमनस्विनां शौर्यशून्यानाम् असुरा असुरतुल्याः ॥ २८ ॥ २९ ॥

मृत्युं तरति किं यक्ष्मायां त्वं न तरिष्यसीति नारायणास्त्रं स्मारयामासुः ॥ ३० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
चतुर्थे दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

कंचन अपि आततायिनं शस्त्रपाणिमपश्यमानो यदा पुरीं विविक्षुरपि नाऽऽविशत्तदा चित्ररथो ध्रुवो यत्तः सावधानः परेषां प्रतियोगशङ्कितः स्वसारथिं मायिनां चिकीर्षितं जनो न वेद इति ब्रुवन्नेव शब्दं शुश्राव अथ नभस्वतो वायोर्हेतोः रजोऽव्यदृश्यतेति द्वयोरन्वयः। २१-२२ ॥

विस्फुरन्त्यस्तडितो यस्मिन् तेन त्रासयन्तस्तनयित्नवोऽशनयो यस्मिन् तेन घनानीकेन व्योम क्षणेनाच्छादितम् ॥ २३ ॥

न सृजति न त्यजति देहमित्यसृक् श्लेष्मादिः रुधिरस्योक्तत्वात् मेदस इति पुंस्त्वमार्षम् ॥ २४ ॥

खे गिरिरदृश्यत ततोगिरेः सकाशात् गदादयो निपेतुः कथंभूताः साश्मवर्षिणः अश्मसहितं यद्वर्षं तद्वन्तः ॥ २५ ॥

अशनिवन्निश्वासो येषां ते अहयः गजाश्च अभ्यधावन् ॥ २६ ॥

आससाद निकटमगात् ॥ २७ ॥

तिग्मगतयः क्रूरप्रवृत्तयः ॥ २८ ॥

शं कल्याणम् ॥ २९-३० ॥

इति श्रीमद्भागवते महापुराणे सिद्धान्तप्रदीपे दशमाध्यायार्थ प्रकाशः ॥ १० ॥

---

भाषाटीका

तब ध्रुवजी ने किसी शस्त्रधारी को नहीं देखा युद्ध के मध्य मे तो भी आप मनुवंश मे उत्तम होने से पुरी की देखनेकी इच्छा रहते पर भी पुरी मे प्रवेश नहीं किया क्योंकि माया वाले लोगों का कर्तव्य कोई मनुष्य नहीं जान सकता है यक्षमाया वाले हैं२१

इस प्रकार से अपनेसारथि से बात करते थे चित्र रथ वाले ध्रुवजी उद्योग की शंका करते साव धान थे उसी तरफ से उत्पन्न हुआ समुद्र के सरीका शब्द सुना और पवन के मारे धूर भी गगन में छागई ॥ २२ ॥

क्षणमात्र ही में बडे त्रास देने वाले वज्र शब्दों से चमकी हुई बिजली से संयुक्त मेघ समूह ने सब तरफ से आकाश को ढांक लिया ॥ २३ ॥

भाषाटीका ।

हे अनघ विदुरजी ! इन ध्रुवजी के आगे रक्त समूह श्लेष्मा पीव विष्ठा मूत्र मांस कटे मूंड के मनुष्य ए सब आकाश से गिरने लगे ॥ २४ ॥

तदनन्तर आकाश में पर्वत देख पडा चारों तरफ गदा परिघ तरवार मूसल और पत्थरोंकी वर्षा होनेलगी ॥ २५ ॥

क्रोध के मारें आंखों से अग्नि को गिरातेहुये वज्र सरी के कठोर निश्वासवाले सर्प मतवाले हस्ती सिंह व्याघ्र वहुत से दौडने लगे ॥ २६ ॥

लहरों से सब पृथिवी को डुबाता हुआ वडे भारी शब्दवाला प्रलयकाल कासा भयंकर समुद्र आता दीखा ॥ २७ ॥

वडी क्रूर चेष्टावाले असुरलोग अपनी आसुरी माया से इस प्रकार के अधीरजवाले पुरुषों को डर देनेवाली अनेक चीजों को वनाने लगे ॥ २८ ॥

ध्रुवजी के विषय में उन असुरों की उस माया का प्रयोग जानकर उसको वडा दुस्तर समुझ के मुनिलोग आकर ध्रुवजी के मंगलाशासन करने लगे ॥ २९ ॥

मुनिजन बोले हे ध्रुवजी ! शरणागतों के कष्ट को नाश करने वाले देव शार्ङ्ग पाणि भगवान् आप के सव शत्रुओं को नष्ट करें जिन श्रीहरि के नाम मात्र को उच्चारण करने से अथवा सुनने से प्राणि मात्र सहजी से दुस्तर मृत्यु कोभी तर जाते हैं तो और दुःखों के तरने में क्या सन्देह है ॥ ३० ॥

इति श्रीभागवत चतुर्थ स्कन्ध दशमाध्याय का भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ ॥ १० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥

—o:o:o—

मैत्रेय उवाच ।

* निशम्य गदतामेवमृषीणां धनुषि ध्रुवः ।
सन्दधेऽस्त्रमुपस्पृश्य यन्नारायणनिर्मितम् ॥ १ ॥
सन्धीयमान एतस्मिन् माया गुह्यकनिर्मिताः ।
क्षिप्रं विनेशुर्विदुर ! क्लेशा ज्ञानोदये यथा ॥ २ ॥
तस्यार्षास्त्रं धनुषि प्रयुञ्जतः सुवर्णपुङ्खाः कलहंसवाससः ।
विनिःसृता आविविशुर्द्विषद्बलं यथा वनं भीमरवाः शिखण्डिनः ॥ ३ ॥
तैस्तिग्मधारैः प्रधने शिलीमुखैरितस्ततः पुण्यजना उपद्रुताः ।
तमभ्यधावन् कुपिता उदायुधाः सुपर्णमुन्नद्धफणा इवाहयः ॥ ४ ॥
स तान्पृषत्कैरभिधावतो मृधे निकृत्तबाहूरुशिरोधरोदरान् ।
निनाय लोकं परमर्कमण्डलं व्रजन्ति निर्भिद्य यमूर्ध्वरेतसः ॥ ५ ॥
तान् हन्यमानानभिवीक्ष्य गुह्यकाननागसश्चित्ररथेन भूरिशः । (१)
औत्तानपादिं कृपया पितामहो मनुर्जगादोपगतः सहर्षिभिः ॥ ६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

एकादशे तु यक्षाणां क्षयं दृष्ट्वा मनुः स्वयम् ॥
आगत्य वारयामास ध्रुवं तत्त्वोपदेशतः ॥ १ ॥

एवं गदतां वचनमुपदेशमिव निशम्य उपस्पृश्याचम्य यन्नारायणनिर्मितं नारायणास्त्रं तत्संदधे ॥ १ ॥

क्लेशा रागादयो यथा ॥ २ ॥

किञ्च तस्यार्षास्त्रमृषेर्नारायणादुद्भूतमस्त्रं प्रयुञ्जतः सन्दधतः सतः सुवर्णमयाः पुङ्खा मूलप्रान्ता येषाम् कलहंसानां वासांसि पक्षा येषां शरा विनिःसृता इति द्रष्टव्यम् उपरिष्टाच्छिलीमुखग्रहणात् ॥ ३ ॥

प्रधने युद्धे उन्नद्धाः उच्छ्रिताः फणा येषां ते सर्पाः ॥ ४ ॥

पृषत्कैर्बाणैर्निकृत्ता बाह्वादयो येषां तान् परं लोकं निनाय कथं भूतम् ऊर्ध्वरेतसः संन्यासिनोऽर्कमण्डलं निर्भिद्य यं व्रजन्ति तम् ॥ ५ ॥

ताननागसो निरपराधान् ॥ ६ ॥

———

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

स्वयं साक्षादेव न तु केनापि द्वारा तत्त्वोपदेशेन परमात्मोपदेशं कृत्वा तत्त्वं वाच्यप्रभेदे स्यात्स्वरूपे परमात्मनीति विश्वः ॥ १ ॥

एवं श्रीनारायणप्रार्थनामय मुपदेशमिवेति अत एव नारायणस्मरणपूर्वकं नारायणास्त्रसंधानमिति तथा तथाव्याहृतम् ॥ १ ॥

संधीयमाने धनुषि संयुज्यमाने सति रागादय इत्यादिनाऽविद्यादिचतुर्णां परिग्रहः ॥ २ ॥

अस्त्रस्य प्रभावान्तरमप्युच्यत इति किञ्चेत्यस्यार्थः शिखण्डरवस्य शरजशब्दसादृश्यायोगात् भीमरवा इति शिखण्डिनामन विशेषणम् ॥ ३–४–५ ॥

स्ववाक्यप्रामाण्यदार्ढ्याय सहर्षिभिरिति ॥ ६ ॥

———

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

मुनिभिरेव माशंसितोध्रुवः स्वभ्रातुः प्रयुक्तनारायणास्त्रोविनाशितप्रतिपक्षः स्वपितामहानुनीतहृदयः स्वपुरं गत इत्याहैकादशेन मुनिः निशम्येति। एवं वदतामृषीणां निशम्य श्रुत्वा वच इतिशेषः

* अत्र विजयध्वजपाठे अध्याय समाप्तिर्नास्तिपाठस्तु यथान्यत्र तथैव । (१) भूयसेति शुकदेव पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपस्पृश्य अपइतिशेषः आचम्येत्यर्थः यन्नारायणर्षिनिर्मितं तन्नारायणाख्यं संदधे ॥ १ ॥

एतस्मिन्नारायणास्त्रे संधीयमाने प्रयुज्यमाने सति गुह्यकैर्यचैर्निर्मिता मायाः हेविदुर ! ज्ञानोदये सति यथा क्लेशा रागाद्वेषादय इव क्षिप्र माशुविनेशुर्नाशं प्राप्ताः ॥ २ ॥

आर्षम् ऋषिर्नारायणस्तदुद्भूतम् अस्त्रं धनुषि तस्य ध्रुवस्य प्रयुञ्जतः संदधतः सतः स्वर्णमयाः पुङ्खा मूलगन्ता येषां ते शरा विनिः सृताः धनुषो विनिर्गता द्विषतां बलमाविविशुः आविष्टवन्तः यथाभीमः भयंकरोरवोध्वनिर्येषां ते शिखण्डिनः मयूरा यथा वनं विशन्ति पद्मत् भीमरवा इतिद्वाभ्यांनिकेऽप्यन्वेतव्यम् ॥ ३ ॥

तैः तीग्मधारैस्तीक्ष्णधारैः शिलीमुखैर्बाणैः प्रधने युद्धे उपद्रुताः ताड्यमानाः पुण्यजना इतस्ततः तं ध्रुवं प्रकुपिताश्च ते ऊर्ध्वमुद्धृतायुधाः सन्तः उन्नद्धा उच्छ्रिताः फणा येषां तेऽहयः सर्पा इव सुपर्णं गरुडम् अभ्यधावन् ॥ ४ ॥

मृधे युद्धे अभिमुखं धावतः पृषत्कैर्बाणैर्निकृत्ताः संच्छिन्ना बाहादयो येषां तान् पुण्यजनान् परं लोकं निनाय कथंभूतमूर्ध्वरेतसः संन्यासिनः अर्कमण्डलं निर्भिद्य यं व्रजन्ति ॥ ५ ॥

एवमनागसो निरपराधिनः चित्ररथेन ध्रुवेण बहुशः हन्यमानान् पीडयमानान् गुह्यकान् यक्षान् वीक्ष्य ध्रुवस्य पितामहो मनुः स्वायम्भुवः कृपया महर्षिभिः संहोपगतः समीपं प्राप्तः औत्तानपादिंजगाद उवाच ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

असुरमायाविनाशे समर्थं नारायणास्त्रमिति जानन् ध्रुवो मुनिभिरपि तदेवोपदिष्टमिति निरूप्य तदस्त्रं धनुषि सन्दध इत्याह । निशम्येति ॥ १ ॥

तस्यास्त्रस्य माहात्म्यमचिन्त्यमिति भावेनाह । संधीयमान इति अविद्यास्मितारागद्वेषाभिनिवेशाः ॥ २ ॥

आर्षास्त्रम् ऋषिच्छन्दोदेवतासंहितास्त्रं ज्ञानास्त्रं वा ऋषिज्ञानदर्शने धातोः सुवर्णालंकृताः पुङ्खा ज्यानुसंधानप्रदेशा येषां ते सुवर्णपुङ्खाः वसआच्छादन इतिधातोः वासः शब्देन पक्षा लक्ष्यन्ते कलहंसानां वासांसि पक्षा इव पक्षा येषां ते कलहंसवाससः शिखण्डिनो मयूराः भीमो भयंकरो रवो नादो येषां ते तथा ॥ ३ ॥

पुण्यजनानां वीररसमाह । तैरिति । तिग्मधारैरुग्राग्रैः शिलीमुखैः शरैः सुपर्णं गरुडं उन्नद्धफणा उद्धृतफणाः ॥ ४ ॥

अर्कमण्डलं निर्भिद्य यं लोकं व्रजन्ति तं परं लोकं निनायेत्यन्वयः ॥ ५ ॥

किमेवं ध्रुवः सर्वाननपराधिनानकरोदित्यस्योपयोगिकथान्तरमाह । तान्हन्यमानानिति । अनागसो वधयोग्यापराधरहितान् । चित्ररथेन ध्रुवेण ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वमप्येतत्सिमतत्वत्राप्रयाणेनास्ति चतुर्थस्कन्धश्लोकविशत्यध्यायात्मक इति ॥ १—२ ॥

भीमरवा इति शराणामेव विशेषणम् ॥ ३—४ ॥

परं सत्याख्यं लोकम् ॥ ५—१० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यक्षाणां क्षयमालक्ष्य मनुरेकादशे ध्रुवम् ।
तद्वधाद्वारयामास शास्त्रतत्त्वोपदेशतः ॥

ऋषीणां वचः ॥ १ ॥

एतस्मिन्नारायणास्त्रे ॥ २ ॥

आर्षास्त्रम् ऋषे नारायणस्यास्त्रं पुङ्खाः मूलप्रान्ता वासांसि पक्षाः विनिःसृताः शरा इति शेषः ॥ ३ ॥ ४ ॥

पृषत्कैर्बाणैर्निकृत्तवाह्वादीन् तान् परं सत्यलोकं निनाय लोकमूर्ध्वरेतसः सन्न्यासिनोऽर्कमण्डलं निर्भिद्य व्रजन्तीति वक्रकहस्तमृत्युतो विशिष्टस्वर्गिणस्ते बभूवुः । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन इति श्रीगीतोक्तेरावर्तिष्यन्त एव ते । सन्न्यासिसाहचर्येण तेषां मुक्तिर्व्याख्येया । स्वयं भगवन्तं ... प्यां विना संग्राममृतानां कालनेम्यादीनामवतारान्तरेऽप्यो ... दर्शनात् ॥ ५ ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकादशे पुण्यजनहनने प्रवृत्तं ध्रुवं सदुपदेशेन मनुर्निवारयतीति वर्ण्यते निशम्येति उपस्पृश्याचम्य ॥ १ ॥ २ ॥

आर्षं नारायणर्षिप्रकाशितम् ॥ ३ ॥ ४ ॥

पृषत्कैर्बाणैः उर्ध्वरेतसोनैष्ठिकादयः ॥ ५ ॥

भूयसा महाप्रभावेन चित्ररथेन ध्रुवेण ॥ ६ ॥

---

भाषाटीका ।

मैत्रेय जी बोले ऐसे ऋषिनक कहते ही कहते मात्र ध्रुव ने आचमन करके नारायणास्त्र को धनुष में धारण किया ॥ १ ॥

उसका संधान करते मात्र गुह्यकों की निर्मित जो माया सो शीघ्र ही नष्ट होगई जैसे ज्ञान के उदय होने से अविद्यादि क्लेश नष्ट होते हैं ॥ २ ॥

ध्रुव जी के नारायण अस्त्र के धनुष में प्रयोग करते ही सुवर्ण के मूल वाले हंस के पक्ष वाले बाण निकल करके शत्रु के सैन्य में प्रवेश भये जैसे कि वन में मयूर प्रवेश होते हैं ॥ ३ ॥

तीक्ष्ण धार वाले उन बाणों से उपद्रव युक्त होकर वे यक्ष सब कुपित होकर आयुधों को उठाकर ध्रुवजी के ऊपर जैसे गरुड के ऊपर फण उठा कर सर्प दौड़ें ॥ ४ ॥

उनको युद्ध में दौड़े आते हुये देख कर ध्रुवजी ने उनके जंघ, शिर, अधर, उदर, इनों को काट कर परलोक को पहुँचा दिया जहां कि सूर्य मण्डल को भेदन करके ऊर्ध्व रेता लोग जाते हैं ॥ ५ ॥

विना अपराध के उन गुह्यकों को बलवान ध्रुव जी से मारे जाते हुये देखकर पितामह मनु महाराज ऋषियों के सहित आकर समीप में खड़े होकर दया के मारे ध्रुव जी से बोलने लगे ॥ ६ ॥

मनुरुवाच ॥

अलं वत्सातिरोषेण तमोद्वारेण पाप्मना ।
येन पुण्यजनानेतानवधीस्त्वमनागसः ॥ ७ ॥
नास्मत्कुलोचितं तात ! कर्मैतत्सद्विगर्हितम् ।
वधो यदुपदेवानामारब्धस्ते कृतैनसाम् ॥ ८ ॥
नन्वेकस्यापराधेन प्रसङ्गाद्बहवो हताः ।
भ्रातुर्वधाभितप्तेन त्वयाङ्गभ्रातृवत्सल ! ॥ ९ ॥
नायं मार्गो हि साधूनां हृषीकेशानुवर्त्तिनाम् ।
यदात्मानं (१) पराग्गृह्य पशुवद्भूतवैशसम् ॥ १० ॥
सर्वभूतात्मभावेन भूतावासं हरिं भवान् ।
आराध्याप दुराराध्यं विष्णोस्तत्परमं पदम् ॥ ११ ॥
स त्वं हरेरनुध्यातस्तत्पुंसामपि सम्मतः ।
कथं त्ववद्यं कृतवाननुशिक्षन् सतां व्रतम् ॥ १२ ॥
तितिक्षया करुणया मैत्र्या चाखिलजन्तुषु ।
समत्वेन च सर्वात्मा भगवान् संप्रसीदति ॥ १३ ॥
सम्प्रसन्ने भगवति पुरुषः प्राकृतैर्गुणैः ।
विमुक्तो जीवनिर्मुक्तो ब्रह्मनिर्वाणमृच्छति ॥ १४ ॥
भूतैः पञ्चभिरारब्धैर्योषित्पुरुष एवहि ।
तयोर्व्यवायात्सम्भूतिर्योषित्पुरुषयोरिह ॥ १५ ॥
एवं प्रवर्त्तते सर्गः स्थितिः संयम एव च ।
गुणव्यतिकराद्राजन् ! मायया परमात्मनः ॥ १६ ॥
निमित्तमात्रं तत्रासीन्निर्गुणः पुरुषर्षभः ।
व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवत् ॥ १७ ॥
स खल्विदं भगवान् कालशक्त्या गुणप्रवाहेण विभक्तवीर्यः ।
करोत्यकर्त्तैव निहन्त्यहन्ता चेष्टाविभूम्नः खलुदुर्विभाव्या ॥ १८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

नमसां नरकस्य द्वारेण येन रोषेण ॥ ७ ॥ ८ ॥

ननु मद्भ्रातृहन्तारः कथमकृतैनसोऽत आह । नन्विति ॥ ९ ॥

सत्यप्यपराधे तवैतदुचितं न भवतीत्याह । नायमिति । पराग्गृह्य पराग्भूतं देहमात्मानं गृहीत्वा पशवो यथा देहाभिमानादन्योऽन्यं घ्नन्ति तथा भूतानां वैशसं हिंसेति यत् ॥ १० ॥

त्वं च बाल्ये साधुः सन्निदानीं कथमन्यथा कृतवानित्याह । सर्वभूतात्मभावेनेति द्वाभ्याम् ॥ ११ ॥

अनुध्यातो हरेर्हृदि स्थितो विज्ञातो वा तत्पुंसां हरिदासानामपि साधुत्वेन मतः ॥ १२ ॥

सतां व्रतमेवाह । महत्सु तितिक्षया नीचेषु करुणया समेषु मैत्र्या अखिलेषु जन्तुषु समत्वेन च ॥ १३ ॥

ततः कृतार्थो भवतीत्याह । संप्रसन्ने सति गुणैर्विमुक्तोऽनन्तर तत्कार्येण जीवेन लिङ्गशरीरेण निर्मुक्तः सन्निर्वाणं सुखात्मकं ब्रह्म प्राप्नोति ॥ १४ ॥

भ्रातृहन्तृत्वमङ्गीकृत्योक्तमिदानीं तु नात्मनो भ्रातृपुत्रादिसंबन्धो न चान्योऽन्यं हन्तृत्वादिकमपीत्याह । भूतैरिति दशभिः । भूतैः पञ्चभिरारब्धैर्देहाद्याकारेण परिणतैर्योषित्पुरुषश्चेति प्रसिद्धिः तयो-

---

(१) असंगृह्येति विजयध्वजः वीरराघवाचार्यस्तु पराग्गृह्येत्यपि मन्यते ।

श्रीधरस्वामिकृत भावार्थदीपिका ।

व्यवायान्मैथुनात्संभूतिरन्ययोर्योषित्पुरुषयोरिह संसारे भवति १५

एवं तावत्सर्गः प्रवर्तते एवं पालकाकारेण परिणतैर्भूतैरेवस्थितिः हन्तृदेहाकारपरिणतैः संयमः संहारः सच परमात्मनो मायाया गुणानां व्यतिकरान्नतु स्वतः ॥ १६ ॥

ननु जडानां देहानां गुणानां वा कथं सर्गादिहेतुत्वं तत्राह । निमित्तमात्रं पुरुषर्षभ ईश्वरः यत्र यस्मिन्निमित्ते सति कार्यकारणात्मकं विश्वं भ्रमति परिवर्त्तते यथाऽयस्कान्ते निमित्ते सति लोहं प्रवर्त्तते तद्वत् ॥ १७ ॥

ननु सचेन्निमित्तं तर्हि तस्याविशेषाद्युगपदेव सर्गादित्रयं भवेदत आह । स त्विति । कालशक्त्या क्रमेण गुणानां प्रवाहः क्षोभस्तेन विभक्तं मृष्ट्यादिविषयं वीर्यं शक्तिर्यस्य ननु कालोऽपि गुणान् युगपदेव क्षोभयतु तत्राह चेष्टा कालशक्तिर्दुर्विभाव्याऽचिन्त्या॥१८॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ॥

पाप्मना हिंसाजनकेन उत्तरवाक्यस्थत्वाद्यच्छब्दस्य तच्छब्दानपेक्षत्वम् ॥ ७ ॥

आरब्ध इति यत् एतत् आरम्भलक्षणं कर्म ॥ ८ ॥

पुण्यजनेनेत्येकवचनादेकस्यैवापराधः किन्तु तत्संबन्धादिति योजनीयम् ॥ ९ ॥

पराग् बाह्येन्द्रियैः ग्राह्यं दृश्यं देहमेवात्मानं गृहीत्वा मत्वा भयं हिंसालक्षणः ॥ १० ॥

अन्यथा साधुत्वप्रातिकूल्येन सर्वभूतेषु आत्मा परमात्मा एक एवास्ते इति भावेन भावनया ॥ ११ ॥

साधुभिर्ग्रस्तहृदय इत्युक्तत्वाद्धृदि स्थित इतिव्याख्यातम्॥१२॥

अखिलजन्तुष्वित्युपलक्ष्य महत्स्वित्यादिविषयभेदो व्याख्यातः समत्वेन स्वतुल्यहर्षशोकक्षुत्पिपासादिमत्त्वभावनया ॥ १३ ॥

ततः प्रसादानन्तरं भगवत्प्रसादाविर्भूतगुणव्यावर्त्तनार्थं प्राकृतैरिति गुणविशेषणम् अतएव गुणविमुक्तत्वादेव तत्कार्यैण गुणकार्य्यैण ॥ १४ ॥

एवंकारो चार्थे हीति प्रसिद्धौ ॥ १५ ॥

एवमित्यस्यावृत्तिं कृत्वा पालकाकारेणेत्यादि व्याख्यातम् पालकाकारेण पितृमात्राद्याकारेण हन्तृदेहाकारेण दस्युसर्पव्याघ्राद्याकारेण मायया निमित्तशक्त्या इच्छाभासरूपया गुणानामुपादानकारणानां न तु स्वत इति निरीश्वरसांख्यमतं निराकृतम् ॥ १६ ॥

तदेव स्फुटी कर्तुं शङ्कते । नन्विति । मात्रपदेन मायाद्वारोपादानत्वाद्विकारशङ्का दूरोत्सारिता ॥ १७ ॥

तस्य निमित्तस्याविशेषात्तुल्यत्वात् विभक्तं स्वस्माद्विभक्तीकृतं शक्तिर्जीवशक्तिर्मायाशक्तिश्च तथा च तत्तच्छक्तीनां शक्तिमतोऽभिन्नत्वात्स एवोपादानं निमित्तं चेत्यर्थः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तमेवाह। अलमित्यादिना। हेवत्स ! तमोद्वारेण संमोहनात्मकाज्ञानहेतुना "क्रोधाद्भवति संमोह,,इतिस्मरणात् पाप्मना निरयहेतुनारोषेणालं येन रोषेणानागसोऽपि तान् पुण्यजनान् त्वमवधीः हतवानसि ॥ ७ ॥

हेतात ! सद्भिर्विगर्हितमतएवैतत्कर्मास्मत्कुलोचितं न भवति अकृतागसां यक्षाणामयं वधस्ते त्वया आरब्धः ॥ ८ ॥

ननु मद्भ्रातृहन्तार एते उपदेवाः कथमनागसस्तत्राह । नान्येति भ्रातृवत्सल! । भ्रातुरुत्तमस्य योवधस्तेनाभितप्तेन त्वया एकस्य यक्षस्यापराधेन हेतुना तस्यापराधिनः संगात्संबन्धात् बहवो हताः घातिताः ॥ ९ ॥

आत्मानं मनः अस्रं गृह्य अनियम्य परागृह्येति पाठे पराग्भूतं विषयं देहमात्मत्वेन गृहीत्वा पशवोयथा देहाभिमानेनान्योऽन्यं घ्नन्ति तथा भूतानां वैशसं हिंसेति यदयं भगवद्भक्तानां साधूनां मार्गो न भवति ॥ १० ॥

सत्यं भगवद्भक्तानामयं मार्गो न भवतीति ममतूचितमित्यत्राह सर्वभूतात्मभावेनेति । आवसन्त्यस्मिन्नित्यावासः आवसतीति वा आवासः भूतानामावासंधारकमन्तरात्मानञ्चइतरैरब्रह्मात्मकत्वेन वस्तुदर्शिभिः दुराराध्यं हरिं सर्वभूतात्मभावेन सर्वभूतान्तरात्मत्वेनाकारेणाराध्य परमं सर्वोत्कृष्टं तत्प्रसिद्धं विष्णोः पदं लोकमाप प्राप्तवानसि इतः पूर्वमप्राप्तमपि भगवता दत्तत्वात्प्राप्तप्राय-मिति मत्वा आपेत्युक्तम् ॥ ११ ॥

हरेरनुध्यानाद्भजनात्सः हरिभक्तस्त्वं तत्पुंसां हरिभक्तानामपि संमतः भागवतोत्तमत्वेन संमतः सतां साधूनां व्रतमनुशिक्षन् अनुशिक्षयन् लोकस्येति शेषः कथमवद्यं वक्तुमप्यनर्हं पापं कृतवान् भगवद्भक्तस्य नितरामेतदनुचितमित्यर्थः ॥ १२ ॥

भूतद्रोहेन भगवद्भक्तेः कोविरोध इत्यत्राह । तितिक्षयेति । निमित्त अपराधिषु सहनेन करुणया परदुःखासहिष्णुत्वेन अखिलजन्तुषु तरतमभावेन व्यवस्थितेषु मैत्र्या स्वसाम्यबुद्धिकृतहिताचरणेन समत्वेन देहाकारान् प्रकृतिपरिणामत्वेन जीवान् ज्ञानैकाकारत्वेन आत्मानं तु सर्वान्तरात्मत्वेनेत्येवं रूपसमत्वेन वा सर्वात्मा भगवान् संप्रसीदति सर्वात्मेति हेतुगर्भं भगवतः सर्वात्मकत्वादेतत्सर्वान्तरात्मतया देवमनुष्यादिरूपेणावस्थितत्वात्सर्वेषां शरीराणामीश्वर-शरीरत्वेन शरीरकृतोद्रोहः शरीरिण्यात्मन्येव भगवति पर्यवस्यतीति भूतद्रुहे भगवान्न प्रसीदतीत्यर्थः ॥ १३ ॥

भगवत्प्रसादफलमाह । प्रसन्नइति । पुरुषः सर्वात्मब्रह्मोपासनपरः पुमान् तितिक्षादिभिर्भगवति प्रसन्नेसति प्राकृतैः क्रोधादिभिः बद्धदशायां विमुक्तः अन्ते अजीवात्मकृतैर्नितरां मुक्तः निरवधिक-निरतिशयानन्दरूपं ब्रह्म ऋच्छतिप्राप्नोति ॥ १४ ॥

एवं सर्वभूतसुहृत्त्वादीन् भगवत्प्रसादहेतून् प्रसादफलभूतां ब्रह्मप्राप्तिं चाभिधाय तत्त्वोपदेशमन्तरेण भ्रातृमरणदुःखितस्यास्य न मनः प्रशाम्यतीत्यभिप्रेत्य न भ्रातुर्हननकर्तृत्वं नापि यक्षाणां हन्तृत्वं किंतु दैवमेव कारणमिति वक्तुं भ्रात्रादिशरीराणामुत्पत्तिमरणादिकंयथार्थद्विवेचयन् ततुपयुक्तमीश्वरस्यानन्तविविधशक्तिमत्त्वं भूतैरिति । पञ्चभिर्भूतैः पृथिव्यादिभिरारब्धः देवमनुष्यादिशरीरा-पेण परिणतः योषित् पुरुषश्चेत्ययं द्विविधोजनः प्रसिद्धः तयोर्योषि-त्पुरुषयोरन्योऽन्यव्यवायान्मैथुनात्संभूतिरिह भवति तस्मादुद्भूतं प्राणिजातमित्यर्थः पञ्चभूतपरिणामरूपस्त्रीपुरुषात्मकशरीरद्वय-सम्बन्धादुद्भूतमपि प्राणिजातं पञ्चभूतात्मक मेवेति भावः ॥ १५ ॥

एवं व्यष्टिसर्ग उक्तः अथ सर्वशरीराणां पञ्चभूतारब्धत्वे-कदा भूतसृष्टिः तैः शरीरारम्भस्थितिकारणं संहारकारणं च किंस्व-द्वयं कदा कदावा ईश्वरकृतयंच क रूपमित्यत्राह । एव मिति ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यथा स्त्रीपुंसात्मकोजनः तद्व्यवायसंभव एवं परमात्मनः मायायाः परमात्माधिष्ठितायास्तच्छरीरभूतायामायाया गुणानां सत्त्वादीनां व्यतिकरात् तारतम्येन संबन्धात् हे राजन्!ध्रुव!सर्गःसृष्टिः स्थितिः संहारश्च प्रवर्त्तते तत्र रजसो वृद्धावितरयोर्ह्रासे सर्गः सत्त्वस्य वृद्धावितरयोर्ह्रासे स्थितिः तमसोवृद्धौतु संयमः त्रयाणां साम्ये त्रितयाभावः ॥ १६ ॥

ननु स्त्रीपुंसात्मकशरीराणां वैषम्येणसंबन्धानां गुणानां वा जडत्वेन प्रवृत्तिशून्यानां व्यष्टिसमष्ट्यात्मनांकथं परिणामसामर्थ्यं सामर्थ्येऽपि कथं देवमनुष्यादि वैचित्र्यं सुखदुःखतारतम्यं चेत्यत्राह। निमित्तमात्रमिति।निमित्तमेव निमित्तमात्रं नत्वनिमित्तमित्यर्थः नत्रगुणानां महदाद्याकारेण परिणामं देवादिवैचित्र्ये सुखदुःखयोश्च निर्गुणः सत्त्वादिगुणरहितः पुरुषर्षभः ईश्वरःनिमित्तमात्रं गुणानां परिणामस्य तेषां तत्स्वाभाव्यनिबन्धनत्वाद्देवादिवैचित्र्यस्य सुखदुःखतारतम्यस्य च कर्मनिबन्धत्वादीश्वरः साधारणकारणं कालाकाशादिवदित्यर्थः निमित्तत्वमेव दृष्टान्तत्वेन विशदयति॥ यत्र परमात्मनि निमित्ते अयस्कान्तसंनिधौ लोहवत् इदं व्यक्ताव्यक्तम व्यक्तं प्रधानं तत्कार्यं महदादि व्यक्तं कार्यकारणात्मकं विश्वं भ्रमति प्रवर्त्तते अत्र लोके मृत्कुलालयोर्विभिन्नयोरेव निमित्तोपादानत्वदर्शनादुपादानस्य परमात्मनोजगत्सृष्ट्यादिनिमित्तत्वानुपपत्तिरितिमामाशङ्कीन्निराचिकीर्षुणा मात्रपदं प्रयुक्तं नतूपादाननिराचिकीर्षया परमात्मनो मायाया गुणव्यतिकरादित्युपादानत्वाभिधानात् संबन्धसामान्याभिधायिन्या अपिषष्ठ्याः यस्या व्यक्तं शरीरमित्यादिश्रुत्यनुसारेण शरीरात्मभावरूपसंबन्धविशेषे पर्यवसानाच्छरीरस्य कार्योपयोग्यपृथक् सिद्धाकारत्वात् इलक्षणादिविशिष्टमृदादिकार्यभूतघटादीनामिव महदादिकार्याणां प्रकृत्यादिशरीरकपरमात्मकार्यत्वात् अत्र निर्गुणइत्यनेन सत्त्वादिगुणवश्यत्वायत्तकर्तृत्वसुखदुःखादिभाग्जीववैलक्षण्यमभिप्रेतम् ॥ १७ ॥

तदेवविशदयति। स इति। भगवान् हेयप्रतिभटपूर्णषाड्गुण्यः कालशक्त्या कालात्मिकया स्वापृथक्सिद्धकार्योपयोगिविशेषणभूतया शक्त्या गुणक्षोभहेतुभूतया यो गुणानांसत्त्वादीनां प्रवाहः तेनविभक्तवीर्यः विभक्तं कर्मायत्तंदेवमनुष्यादिवैचित्र्येण सुखदुःखतारतम्येन च व्यवस्थापितं वीर्यं शक्तिः जगदिति यावत् "एकदेशस्थितस्याग्नेर्ज्योत्स्नाविस्तारिणीयथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलंजगत्,, इत्युक्तत्वात् अत्र स्यामित्यध्याह्रियते विभक्तवीर्यः स्यामिति इदंकरोति सृजतीत्यन्वयः गुणक्षोभनिमित्तकालप्रकृतिपुरुषशरीरकोऽहं जगत्सृष्ट्यानन्तवीर्यवविचित्रस्थिरत्नरूपः स्यामितिसंकल्पेनेदं जगत्सृजतीत्यर्थः यद्वा गुणप्रवाहेणेति हेत्वर्थे तृतीया हेतुश्चात्र फलमध्ययनेन वसतीतिवत् ततश्च गुणप्रवाहेण गुणप्रवाहार्थं प्रवाहशब्देन गुणकार्यं सृष्ट्यादित्रयं विवक्षितं सृष्ट्याद्यर्थं विभक्तं वीर्यं सृष्ट्याद्युपयुक्तं सामर्थ्यं येन सः ब्रह्मविष्णुरुद्ररूपोभूत्वेत्यर्थः अकर्तैव देवादिवैचित्र्यंसुखदुःखादौ चाकर्तैव देवादिवैचित्र्या देहतज्जीवादृष्टायत्तत्वात् इदंजगत्करोति उत्पादयति तथा अहन्तैव स्वयं हननादिनाश्रयपत्र हन्ति "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः। तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययं। प्रधानकारणीभूता यतोयैसृज्यशक्तयम,, इति स्मृतेः"हंताचेन्मन्यतेहन्तु हतश्चेन्मन्यते हतम उभौतौनविजानीतो नायं हन्ति नहन्यते,, इति श्रुतेश्च अत्र कर्तृत्वं हन्तृत्वंच प्रयोजकरूपेण अकर्तृत्वंतु प्रयोज्यरूपेणेति विवेकः नन्विदमघटमानं कर्तृत्वमकर्तृत्वं चैकस्मिन्कथमुपपद्यते तत्राह।विभुम्नः भगवतः"भूमात्वेव विजिज्ञासितव्य,, इति श्रुतेः चेष्टादुर्विभाव्या अप्रतर्क्याखलु ॥ १८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आगत्य निःशेषं हतेत्युक्तं किंनेत्याह। अलमिति। तमोद्वारेण यथार्थज्ञानप्रतिबन्धकत्वेन नरकद्वारेण पाप्मना पापहेतुना ॥ ७ ॥

किंच धर्मशास्त्रानुवर्तिनामस्माकं कुलधर्मो न भवत्ययमित्याह नास्मदिति। अकृतेनमामिति पदम् ॥ ८ ॥

अकृतापराधत्वं कथं भ्रातृवधलक्षणापराधकरणादिति तत्राह। नन्विति। नन्वेवार्थे वर्तते अपराधेनेति संबध्यते ॥ ९ ॥

तस्यापराधिनः संगात्तदपरित्यागात्तेऽप्यपराधिन इति सृष्टमदर्शनं भागवतानां नोपपन्नमित्याह। नाधर्मिति। आत्मानं मनोऽसंगृह्यानियम्य पशुवन्मूढवत् ॥ १० ॥

इतोऽप्येकापराधेन बहूनां वधो न युक्तः सर्वप्राणिनामन्तर्यामित्वेन हरिमुपास्य प्राप्ततत्प्रसादत्वादित्याह। सर्वभूतेति। सर्वभूतानामात्मभावेनान्तर्यामित्वेन भूतेषु प्राणिष्वावासो यस्य स तथा भूतान्यावसन्त्यस्मिन्निति वा तम् ॥ ११ ॥

प्राप्तपदत्वाद्यद्धरिणा किमिति भावो न तवास्तीत्याह। सत्त्वमिति। तस्य हरेः पुंसां भक्तानां संमतः ततः किं तत्राह। कथमिति ॥ १२ ॥

किं तत्सतां मतं तेन किं फलं तत्राह। तितिक्षयेति। शत्रुषु शत्रुत्वदर्शनं सुहृत्सु सुहृत्त्वदर्शनं समत्वम् ॥ १३ ॥

तत्प्रसादफलमाह। संप्रसन्नइति।ततः किं तत्राह। जीवेति। जीवत्वाभिमानाक्षितरां मुक्तो भवति तत्फलमाह। ब्रह्मेति। नित्यनिर्मुक्तशरीरं परमानन्दं वा ब्रह्म ऋच्छत्याप्नोतीत्यन्वयः। ब्रह्मनिर्वाणं ब्रह्मणि नाशमृच्छतीत्यङ्गीकारे मुक्तेः शून्यभावत्वेन न केनाप्यर्थित्वं स्यात् ॥ १४ ॥

सृष्टिप्रकारज्ञाने ततोविरक्त्या प्रकृतिबन्धहानेच्छा स्यादतस्तामाह भूतैरिति।पुरुषोयोषिद्भिति भावःपञ्चभिःपृथिव्यादिभूतैरारब्धःसृष्टः अतः परं कथं प्रारम्भइत्यतआह। तयोरिति।इह जीवराशौ तयोर्योषित्पुरुषयोर्व्यवायेन मैथुनधर्मेण संभूतिः करचरणादिविभागलक्षणं जन्म भवति समित्यनेन पृथिव्यादिसंयोगेन जन्म सूचयति ॥ १५ ॥

न केवलमादिसर्गः किंतूत्तरत्राप्ययमेवेत्याह। एवमिति। स्थितिसंहारयोः सर्गविपरीतत्वात्कथं सर्गवदित्युच्यत इत्यत्राह। गुणव्यतिकरादिति। रजआदिगुणानां विषमसमावस्थाभेदकारणात् परंपरणामन्तरेण जडेभ्यो गुणेभ्य एवं प्रवृत्तिः कथमत्राह। माययेति। परमात्मनो माययेच्छया प्रेरितेभ्य इति शेषः इदमत्राकूतम्। रजोगुणकार्यभूतारब्धदेहाद्यचेतनाधिष्ठितात्सर्गः पालकसत्त्वगुणकार्यभूतारब्धदेहात्स्थितिः तमोगुणकार्यभूतारब्धदेहात्संयम इति च एतत्सर्वमीश्वरेच्छाधीनमिति ॥ १६ ॥

एतदेव विशिनष्टि। निमित्तमात्रमिति ॥ यत्रेश्वरस्येश्वरस्य सन्निधाने व्यक्ताव्यक्तं कार्यकारणात्मकमिदं विश्वं भ्रमति चेष्टते किमिव अयस्कान्तस्य सन्निधाने लोहं स्वयं यथा तथा सः निर्गुणः सत्त्वादिगुणाशक्त्यनुपहतशक्तिरात्मा परमात्मा तत्र सृष्ट्यादौ निमित्तमात्रं नतूपादानकारणम् ॥ १७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्हि मुख्यकर्तृत्वं हरेर्गतमत्राह । स खल्विति । खलुशब्दोऽन्यकारणशक्तिनिषेधार्थः । स भगवान्योगशक्त्या गुणप्रवाहेषु मृष्ट्यादिषु तत्तत्क्रियानुसारेण विभक्तवीर्यो विभक्तमाहात्म्यः अक्लिष्टकर्तृत्वादकर्तैव जगत्करोति अहंतैव शत्रुभावरहितत्वाद्धि हन्ति संहरति। अनेन हरेः समत्वभंगो निरस्त इति एकस्य विरुद्धकर्तृत्वं कथमित्यत उक्तं चेष्टेति दुर्विभाव्या ज्ञातुमशक्याऽस्मादृशैरिति शेषः कर्तृत्वसामान्यनिषेधे "हरिरक्लिष्टकारित्वादयत्कान्तवदुच्यते ।कामकर्मस्वभावेषु काले चावस्थितो हरिः । सर्वकारणभूतः संस्तत्तन्नाम्नाभिधीयत„ इति वाक्यविरुद्धं स्यादिति नायमर्थः शोभते॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

तत् पुंसामपि संमत इति हर्यनुध्यानत्वेऽपि न प्रौढिवान् किन्तु तद्भक्तजनसम्मतिं गृहीत्वैव सर्वमनुष्ठातेत्यर्थः । यथोक्तमन्वरीषमुद्दिश्य । स वै मन इत्यादौ यथोत्तमःश्लोकजनाश्रया रतिरिति ॥ १२ ॥

द्विषत्सु तितिक्षया हीनेषु करुणया समेषु मैत्र्या । अखिलेषु जन्तषु समत्वेन सुखदुःखादिष्वात्मसाम्यज्ञानेन ॥ १३ ॥

ब्रह्मणस्तत् सुखस्यापि निर्वाणं लयोऽन्तर्भावो यत्र तत् श्रीभगवत्सुखमित्यर्थः । निर्वाणपदस्य विशेषणवैयर्थ्यात् ॥१४—१७॥

शक्तीनां क्रमेण प्रवर्त्तनया कर्तृत्वादित्वेऽपि अकर्तृत्वादिनाच चेष्टाया दुर्विभाव्यत्वं ज्ञेयम् ॥ १८—२० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

उपदेवानां यक्षाणाम् ॥ ८ ॥

ननु निश्चितमेकस्य त्वद्भ्रातृहन्तुर्यक्षस्यापराधेन तत्सङ्गात् तत्सङ्गहेतोरित्यर्थः ॥ ६ ॥

व्यावहारिकस्नेहपारवश्यं भक्तानामनुचितं किं पुनस्तेन परहिंसेत्यत्राह । नायमिति । यदात्मानं देहं परागृगृह्य परागभूतमपि आत्मत्वाभिमानेन गृहीत्वा पशवो यथा देहसम्बन्धेनान्योऽन्यं घ्नन्ति तथा भूतानां वैशसं हिंसेति यत् छन्दसि क्त्वोल्यप् । परागृह्येति पाठे परेति निषेधार्थकम् । जीवात्मानमगृहीत्वेत्यर्थः ॥ १० ॥

नवतु भक्तेष्वप्यतिश्रेष्ठस्यैतदत्यन्तमनुचितमित्याह । द्वाभ्याम्। सर्वेषु भूतेष्वात्मनः स्वस्यैव भावो भावना तेन ॥ ११ ॥

हरेरनुध्यातः अनुनिरन्तरं ध्यातं ध्यानं यस्मिन् सः । वात्सल्याद्धरिणापि स्मर्यमाण इत्यर्थः । तत् पुंसां नारदादीनामपि कृपा पात्रीभूतः ॥ १२ ॥

सतां व्रतमेवाह महत्सु तितिक्षया नीचेषु करुणया समेषु मैत्र्या एवमखिलजन्तुषु समत्वेन स्वतुल्यहर्षशोकक्षुत्पिपासादिमत्त्वभावनया। यदुक्तम्"आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन । सुखं वा यदि वा दुःखं स योगी परमोमत„ इति । सर्वात्मेति सर्वभूतेषु तुष्यत्सु भगवत्तोषोऽनुमेय इत्यर्थः ॥ १३ ॥

जीवेन लिङ्गशरीरेण निर्मुक्तः । ब्रह्मनिर्वाणं ज्ञानी चेत् सायुज्यं भक्तश्चेत् अधोक्षजालम्बनकं दास्यम् अधोक्षजालम्बनमित्यत्र तद्ब्रह्म निर्माणसुखं विदुर्बुधा इति प्रह्लादोक्तेस्तदा प्राकृतैर्गुणैर्विमुक्तः । अप्राकृतैस्तु विशिष्ट इत्यर्थः ॥ १४ ॥

वस्तुान विचार्यमाणेतु कः कस्य हन्ता वध्योवेत्याह। ... भूतैः पृथिव्यादिभिरारब्धैर्देहैर्योषित् पुरुषश्च तयोर्व्यवायाद... योषित्पुरुषयोः सम्भूतिरुत्पत्तिर्भवति ॥ १५ ॥

एवं भूते यथा सर्गः प्रवर्त्तते तथा तैरेव पितृमात्राद्या... स्थितिः पालनं तैरेव दस्युव्याघ्रसर्पाद्याकारैः संयमोनाश... तत्र किञ्च परमात्मनो मायया गुणव्यतिकरादेव नतु स्वतः ... सर्गः सत्त्वेन स्थितिः तमसाहङ्कार इत्यर्थः ॥ १६ ॥

ननु जडानां योषित्पुरुषादिदेहानां गुणानां वा चैतन्या... विना कथं सर्गादिहेतुत्वं तत्राह । निमित्तमात्रं पुरुषंपभईश्वरा... ष्ठाता यत्र यस्मिन्निमित्ते सति कार्यकारणात्मकं विश्वं ... जडमपि चेतनीभवत् देवमनुष्यादि रूपेण तथा तथा परिव... यथा अयस्कान्ते निमित्ते सति लोहं निश्चेष्टमपि ... भवति ॥ १७ ॥

ननु सचेन्निमित्तं नर्हि तस्याविशेषात् युगपदेव सर्गा... भवतु । मैवं रजःसत्त्वतमसां कालशक्त्या क्रमेणैव चोभो ... नतु युगपदतः क्रमेणैव सर्गादि त्रयं भवतीत्याह। स खल्विति... शक्त्या क्रमेण गुणानां प्रवाहः चोभस्तेन विभक्तमात्मनः ... शात् विभक्तीकृतं वीर्यं चिदाभासं जीवशक्त्यात्मकं माया... प्रविष्टं यस्य सः । करोतीति गुणकालजीवनां शक्तित्वेन त... भावात् सएवोपादानकारणं स एव निमित्तकारणञ्चेत्यर्थः।... र्त्तेति तेषां गुणादीनां स्वरूपभूतत्वाभावात् । एवं निहन्ताहन्ते... ननु विश्वं किमर्थं करोति सदैव वा किं न करोति विषमं वा... तीति। सर्वाक्षेपपरिहारार्थमाह। चेष्टा दुर्विभाव्या अतर्क्या वि... विभुत्वादिति । एतदेव तस्य विभुत्वमित्यर्थः १८—२०

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

येन रोषेण ॥ ७ ॥

अकृतैनसान्ते त्वया वध आरब्धः इतियत्तदेतत्कर्म अस्मद... चितं न भवति ॥ ८ ॥

अकृतैनस्त्वंतेषामाह । नन्विति ॥ ९ ॥

परागभूतं देहमात्मानं गृह्य गृहीत्वा यशवो यथान्यं ... तद्वद्भूतानां वैशसं हननमितियत् अयं साधूनां भवद्विधानां... भवति ॥ १० ॥ ११ ॥

अनुध्यातः अनुध्यानतस्तत्पुंसां संमतः ॥ १२—१३ ॥

जीवनिर्मुक्तः लिङ्गशरीरेण निर्मुक्तः निर्वाणं निरतिश... ब्रह्मगच्छति प्राप्नोति ॥ १४ ॥

एकस्यापराधे सर्वान् हन्तुं प्रवृत्तः लोकरीत्या अलंवत्साति... णत्यादिना निवारितः अथ जीवकर्मानुसारेण सर्वं भगवानेव ... ति त्वयातु वृथैव गिरिशभ्रातुर्हेलनं कृतमतस्तं प्रसादयेत्याह।... दध्यायसमाप्ति । भूतैरिति । आरब्धैः पञ्चीकृतैः योषित् पु... उत्पद्यते इति शेषः तयोर्व्यवायादन्ययोर्योषित्पुरुषयोः सम्भू... ह भवति ॥ १५॥

हे राजन्! एवं परमात्मनः मायया शक्त्या गुणव्यतिकरात् स... प्रवर्तते ॥ १६ ॥

ननु एकमेवाद्वितीयं ब्रह्मेत्यादि श्रुतयः अत्रापि च सर्वेति... पुरुषः पुरात नोयएकआसीदित्यादिषु जगत्कारणमेकमेवासी... निश्चयः तत्र भूतैरित्यनेन व्यक्तं माययेत्यनेनाव्यक्तं जगत्का... प्रतीयते परमात्मनइति सम्बन्धमात्रनिर्देशेन ब्रह्मणोऽपि स...

सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ।
जनं जनेन जनयन्मारयन्मृत्युनान्तकम् ॥ १९ ॥
न वै स्वपक्षोऽस्य विपक्ष एव वा परस्य मृत्योर्विशतः समं प्रजाः ।
तं धावमानमनुधावन्त्यनीशा यथा रजांस्यनिलं भूतसङ्घाः २० ॥
आयुषोपचयं जन्तोस्तथैवोपचयं विभुः ।
उभाभ्यां रहितः स्वस्थो दुःस्थस्य विदधात्यसौ ॥ २१ ॥
केचित् कामं वदन्त्येनं स्वभावमपरे नृप !
एके कालं परे दैवं पुंसः काममुतापरे ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्ववर्तित्वमात्रमुक्तं तद्विरुद्धमित्यत्राह।निमित्तमात्रमिति। निमित्तमात्रमिदमस्तीति स्वायत्ततायामितिशेषः वस्तुतस्तु ब्रह्मायत्तस्थित्यादिमत् तदिदं विश्वं व्यक्ताव्यक्तं कार्य्यकारणरूपं यत्र चुम्बकमयस्थनुगृहीतास्वाधीनलोहवत् भ्रमति सः पुरुषर्षभः सर्वेषां पुरुषाणां स्वांशानां जीवानामृषभः स्वामी निर्गुणः अनभिव्यक्तशक्ति गुणःगुणशक्तिः अखिलैरंशैः शक्तिभिश्च युक्तइत्यर्थः तत्र सर्गादेः पूर्वत्र आसीत् ततएव जगदभिन्ननिमित्तोपादानकारणात्सर्गादिः प्रवर्ततेइति फलितोऽर्थः ॥ १७ ॥

भगवतः सर्गादिहेतुत्वं दुर्ज्ञेयचेष्टत्वं च वदन् जगत्सर्गादेर्नियतकालत्वं दर्शयति । स इति । सविश्वसर्गादिहेतुकालशक्त्या गुणानां प्रवाहः क्षोभस्तत्रसर्गकालेनं रजसः स्थितकालेन सत्वस्य संयमकालेन तमसः क्षोभस्तेन विभक्तं सृष्टयादिविषयवीर्यं शक्तिर्यस्य सः अकर्तैव अन्येनानुत्पादित एव करोति । अन्येनापालितएव पालयति । अहंता नास्तिहंता यस्य सहन्नन्तरशून्य एव निहन्ति इदं विश्वमित्यर्थः ॥ १८ ॥

———

भाषाटीका ॥

हे वत्स ! विदुरजी ! नरककाद्वार इस पाप को नहीं करना चाहिये जिससे कि तुमने निरपराध इन गुह्यकों को मारदिया॥७॥

हे तात ! सत्पुरुषों से निंदित यह कार्य हमारे कुलका उचित नहीं है जोकि तुमने निरपराधि उपदेवों का वध आरंभ किया॥८॥

हे भ्रातृवत्सल ध्रुवजी ! तुमने भ्राता के वध से दुःखित हो कर एक के अपराध के प्रसङ्ग से बहुत से गन्धर्वों को मारा ॥९॥

नारायण के अनुवर्ति साधुन का यह मार्ग नहीं है जोकि देह को आत्मा मान कर पशु के तुल्य प्राणियों का हिंसा करना ॥ १० ॥

सर्वभूतों में आत्मतुल्य बुद्धि कर के सर्व भूतों के अन्तर्यामी हरि का आराधन कर के आपने अति दुर्लभ वैष्णव परम पद को प्राप्त किया है ॥ ११ ॥

सो तुम हरि के स्मरण करने योग्य हो हरि भक्त न के मान्य हो सत्पुरुषों के व्रत को शिखानेवाले होकर तुमने ऐसा पाप क्यों किया ॥ १२ ॥

सुख दुःखों के सहने से कृपा करने से सब प्राणियों में मित्रता करने से समता बुद्धि से सर्वात्मा हरि भगवान् प्रसन्न होते हैं ॥ १३ ॥

भगवान् के प्रसन्न होने से जीव प्राकृत गुणों से छूट कर लिंग शरीर रहित हो कर परमानन्द परब्रह्म स्वरूप का अनुभव करता है ॥ १४ ॥

पांच भूतों से बनाहुआ पिण्ड का नाम स्त्रीपुरुष होता है उन्हीं दोनों में मैथुन होने से स्त्रीपुरुषकी उत्पत्ति होती है ॥ १५ ॥

हे राजन् ! इसी प्रकार से परमात्मा की माया के गुणों के वैषम्य होने से सबका उत्पत्ति स्थिति संहार होता है ॥ १६ ॥

उस सृष्ट्यादिक कर्म में निर्गुण परमात्मा केवल निमित्त मात्र ही हैं स्थूल सूक्ष्म रूप इतना जो जगत् है सो केवल जिस की सत्ता से चुंबक के पास लोह जैसा भ्रमता है ॥ १७ ॥

वह भगवान् अपनी कालनामा शक्ति से गुणों के प्रवाह से रज आदि शक्तियों को प्रगट कर के आप अकर्ता होकर सब कार्यों को करता है नहीं मारनेवाला होकर मारता है इस प्रभु की लीला बड़ी विचित्र है ॥ १८ ॥

———

श्रीधरस्वामिकृत भावार्थदीपिका ।

ननु पित्रादिः सृजति पालयति राजादिर्निहन्ति च चोरादिर्नत्वीश्वरस्तत्राह । स इति । जनेन पित्रादिना जनं पुत्रादि जनयन्नादिकृत् अन्तकं चोरादिकं तन्मृत्युहेतुना मारयन्नन्तकरः स्वयं त्वनन्तोऽनादिश्च अव्ययोऽक्षीणशक्तिश्च अयं भावः पित्रादयोऽन्यत उत्पत्त्यादिमन्तो न स्वातन्त्र्येण कारणं किं त्वीश्वर एव तन्नियन्ता सर्वं कारणमिति ॥ १९ ॥

नचैवं कुर्वतोऽपि वैषम्यप्रसक्तिः पक्षपाताभावादित्याह द्वाभ्याम । न वा इति । मृत्युरूपस्य समं यथा भवति तथा प्रजाः कर्मभूता विशतः तस्य साम्येऽपि भूतेषु फलवैषम्यं तत्कर्मवशादिति सदृष्टान्तमाह । तं धावन्तमन्वनीशाः कर्माधीना भूतसंघा धावन्ति अनिलं धावन्तमनुरजांसीव तत्र यथा रजसां तमः प्रकाशजलाग्न्यादिप्रवेशेऽपि नानिलस्य वैषम्यमेवमीश्वरस्यापीति भावः ॥ २० ॥

अपचयमकालमृत्युम उपचयं कालमृत्योरपि रक्षाम यद्वा अपचयं मशकादावुपचयं देवादौ स्वस्थत्वादुपचयापचयाभ्यां रहितोऽसौ विभुर्दुःस्थस्य कर्माधीनस्य विदधाति ॥ २१ ॥

एवं भूतश्चेश्वरः सर्ववादिसम्मतो विवादस्तु नाममात्र इत्याह । केचिदिति पुंसः कामं वात्स्यायनादयः श्रुतिश्च "कामोऽकार्षीत्कामः करोति कामः कर्ता कामः कारयतेत्यादि„ ॥ २२ ॥

अव्यक्तस्याप्रमेयस्य नानाशक्त्युदयस्य च ।
न वै चिकीर्षितं तात ! को वेदाथ स्वसम्भवम् ॥ २३ ॥
नचैते पुत्रक ! भ्रातुर्हन्तारो धनदानुगाः ।
विसर्गादानयोस्तात ! पुंसो दैवं हि कारणम् ॥ २४ ॥
स एव विश्वं सृजति स एवावति हन्ति च ।
तथापि ह्यनहङ्कारान्नाज्यते गुणकर्मभिः ॥ २५ ॥
एष भूतानि भूतात्मा भूतेशो भूतभावनः ।
स्वशक्त्या मायया युक्तः सृजत्यत्ति च पाति च ॥ २६ ॥
तमेव मृत्युममृतं तात ! दैवं सर्वात्मनोपेहि जगत्परायणम् ।
यस्मै बलिं विश्वसृजो हरन्ति गावो यथा वै नसि दामयन्त्रिताः ॥ २७ ॥
यः पञ्चवर्षो जननीं त्वं विहाय मातुः सपत्न्या वचसा भिन्नमर्मा ।
वनं गतस्तपसा प्रत्यगक्षमाराध्य लेभे मूर्ध्नि पदं त्रिलोक्याः ॥ २८ ॥
तमेनमङ्गात्मनि मुक्तविग्रहे व्यपाश्रितं निर्गुणमेकमक्षरम् ।
आत्मानमन्विच्छ विमुक्तमात्मदृक् यस्मिन्निदं भेदमसत् प्रतीयते ॥ २९ ॥
त्वं प्रत्यगात्मनि तदा भगवत्यनन्त आनन्दमात्र उपपन्नसमस्तशक्तौ ।
भक्तिं विधाय परमां शनकैरविद्याग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढम् ॥ ३० ॥
संयच्छ रोषं भद्रं ते प्रतीपं श्रेयसां परम् ।
श्रुतेन भूयसा राजन्नगदेन यथामयम् ॥३१॥
येनोपसृष्टात् पुरुषाल्लोक उद्विजते भृशम् ।
न बुधस्तद्वशं गच्छेदिच्छन्नभयमात्मनः ॥३२॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु कर्मादीनां जडत्वाद्विना स्वरूपतोऽपिभिन्नत्वात्कथमेकमरयं तत्राह। अव्यक्तस्यातएवाप्रमेयस्य तथापि सत्त्वे हेतुः नानाशक्तीनां महदादीनामुदयो यस्मात् चिकीर्षितमेव तावत्कोऽपि न वेद अथ स्वस्य संभवो यस्मात्तमीश्वरं को वेद न कोऽपि अद्धेति पाठे साक्षात् अतस्तत्स्वज्ञानाभावाद्विशेषांश विवाद इत्यर्थः तथा च श्रुतिः "को अद्धावेद क इह प्रावोचत्कुत आयाता कुत इयं विसृष्टिः अर्वाग्देवा अस्य विसर्जनेऽनाथा को वेद यत आबभूवेत्यादिः" ॥२३

ईश्वरवादस्य प्रकृतोपयोगमाह। नचैते। भ्रातुर्हन्तारः उक्तमेव हेतुमनुवदति विसर्गादानयोर्मृत्युजन्मनोः यद्वा विसर्गः सृष्टिः आदानं संहारः दैवमीश्वर एव हि कारणम् ॥ २४ ॥

तथापि निर्लेपतामाह । स एवेति ॥ २५ ॥

अनहङ्कारत्वे हेतुमाह । एष इति ॥ २६ ॥

सत्यमीश्वर एव कर्ता तथाप्यहंकारादि मया न त्यक्तुं शक्य-मिति चेदत आह। तमेवेति चतुर्भिः। मृत्युमभक्तानां भक्तानां त्वमृतं उपेहि शरणं गच्छ तमेवेत्यवधारणे हेतुः यस्मै नसि नसिकायां दामभिर्बद्धा गाव इव विश्वसृजोऽपि नामभिर्यन्त्रिता बद्धाः सन्तो बलिंहरन्ति तत्कारितं कर्म कुर्वन्तीत्यर्थः ॥ २७

तदाराधनं च तव सुशकमेवेत्याह । पञ्चवर्षः स यः त्वं यमा-ध्य त्रिलोक्या मूर्ध्नि पदं स्थानं लेभे लब्धवानसि इदानीं तमेवा-च्छावलोकयेत्युत्तरेणान्वयः प्रात्यक्षि अक्षाणि यस्मिन् क्रिय-शेषणं वा ॥ २८ ॥

हरिं ध्यायन्तं प्रत्याह । हे अङ्गध्रुव ! मुक्तविरोधे आत्मनि सि व्यपाश्रितमवस्थितमात्मदृक् प्रत्यग्दृष्टिः सन् अयं यस्मिंस्तदिदं भेदमसदेव विश्वं यस्मिन् प्रतीयते ॥ २९ ॥

तदन्वेषणफलमाह । त्वं तदान्वेषणकाल एव ॥ ३०

उपदेशसारमाह । संयच्छेति द्वाभ्याम् । प्रतीपं प्रतिकूलम् देनौषधेन यथारोगं नियच्छति ॥ ३१ ॥

येन रोषेणोपसृष्टाद्व्याप्तात् ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामि विरचिता
दीपिन्याख्या दीपिका टिप्पणी ।

कालशक्तेस्तदिच्छावशत्वेनानुयोक्तव्यत्वाभावादचिन्त्यश

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ॥

त्वर्थः उत्पत्त्यादौ पित्रादीनां प्रयोज्यत्वमेव न तु प्रयोजकत्वं परतन्त्रत्वादिति भावं व्याचष्टे । अयं भाव इति ॥ १९ ॥

एवं स्वातन्त्र्येणोत्पत्त्यादिकुर्वतोऽपि तस्य अन्तर्यामिणः तेषां तेषां पुण्यपापादिकर्मणां तथात्वाद्वैषम्यम् ॥ २० ॥

अपचयोपचयशब्दयोर्ह्रासवृद्धिवाचकत्वान्मृत्युरक्षयोर्लाक्षणिकत्वमतो यद्वेति अपचयं ज्ञानादिह्रासमुपचयं ज्ञानादिवृद्धिम् ॥२१॥

एवं भूतः जडकर्मफलप्रदः केचिन्मीमांसकाः देवतां कर्म्माधीनां मन्यमानाः अपरे लौकायतिकाः स्वभावं संस्कारम् एके कालोपासकाः परे ज्योतिर्विदः दैवं ग्रहादि पुंसः कामं मनसिजं पुत्रादिकमकार्षीत् कर्त्ता करिष्यति कारयिता प्रयोजकः ईश्वरधर्म्मान् कर्त्तृत्वादीन् भ्रान्त्या कर्मादिष्वेवारोपयन्तीत्यर्थः तस्माज्जगत्कर्त्तरीश्वरे विवादाभावेऽपि स्वरूपानुभवाभावान्नाममात्र एव विवाद इति तथावतारितम् ॥ २२ ॥

कर्मणो जडत्वमादिना स्वभावस्य परिणामहेतुत्वं कालस्य गुणक्षोभकत्वं ग्रहादेस्तत्तल्लग्नाद्याधिपत्यं कामस्य स्त्रीसङ्गहेतुत्वं गृह्यते तेन स्वरूपतोऽपि परस्परं भिन्नत्वात् अपिना ईश्वरभेदस्समुच्चीयते अथ तदा तत्त्वज्ञानाभावात्स्वरूपस्य याथार्थ्यानुभवाभावात् तथा चेश्वरस्य दुर्ज्ञेयत्वे प्रमाणं श्रुतिः प्राचोचयथाचरफोऽवर्णयत् कुतः केन कृतेयं विविधा सृष्टिः कुत उपादानादायाता प्राप्ता नच देवैः कृतेति वाच्यम् अस्य देवादिसर्वविश्वस्य विसर्जनेन हेतुना देवा अपि अर्वाक् अर्वाचीना एव अथा अतः सर्वमिदं यतआबभूव तं भगवन्तं को वेदेति श्रुत्यर्थः ॥ २३ ॥

प्रासंगिकस्येश्वरवर्णनस्य प्रकृते यक्षवधनिवृत्तौ उपयोगमुपकारं न वै त इति उक्तमेव निमित्तमात्रमित्यादिना वर्णितमेव विसर्गादानशब्दयोर्मृत्युजन्मार्थेऽप्रसिद्धत्वाद्यद्वेति हियतः ॥ २४ ॥

कारणे श्रमादिविकारलेपदर्शनात् तथापि कारणत्वेऽपि अनहंकारात् लेपहेतुप्राकृताहंकाराभावात् गुणैः रजआदिभिः कर्मभिः सृष्ट्यादिभिश्च ॥ २५ ॥

मायया युक्त इति मायायाः स्वाश्रयाव्यामोहकत्वात् विषयस्यैव मोहत्वादनहंकारत्वमिति भावः ॥ २६ ॥

कर्मण्येवविलित्वाध्यवसानात् इत्यर्थ इत्युक्तम् ॥ २७ ॥

प्रत्यञ्चि विषयप्रातिकूल्यनाभिमुखगामीनीन्द्रियाणि यस्मिन् तं भगवन्तं क्रियाविशेषणपक्षे निरुद्धेन्द्रियं यथास्यात्तथेति ॥२८॥

प्रत्यग् दृष्टिः असज्जडानात्मभ्यः प्रातिकूल्येनाञ्चति प्रकाशते इति प्रत्यक् परमात्मा तस्मिन्नेव दृष्टिर्यस्य तथाभूतस्सन् इदं भेदमिथ्यैकं पदम् असदेव मिथ्यैव प्रतीयते रज्वां भुजगवदित्यद्वैतवादिनः तत्रायं भेदः शत्रुमित्रादिरूपः वैष्णवानां मते तु यस्मिन्भगवति स्फुरिते सति असदपुरुषार्थः प्रतीयते चतुर्वर्गो तृणोपमामित्युक्तेः ॥ २९ ॥

आनन्दमात्र इति विशेष्यं शक्तयो विशेषणानि विशिष्टो भगवान् यद्यपि"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया,,इत्यादि प्रामाण्यात् ध्रुवस्य श्रीभगवत्साक्षात्कारात् हृदयग्रन्थिनाशस्यैव तथापि प्रतीत्यभिप्रायेण तथोक्तं वस्तुतस्तु अभिज्ञावचने लृट् इति भूतकाल एव लृट् व्यभिन इत्यर्थः यद्यपि स्मृतियाच्युपपदविरहात् स्मरसि कृष्ण गोकुले वत्स्याम इत्युदाहरणाच्च तथा प्रतिपत्तिस्तथापि यः पञ्चवर्षो जननीं विहायेत्यत्र तदेत्यत्र च स्मृतेः प्रतिपादनात् स्मरसीति गम्यमेव परोक्षयादृत्वात् ॥ ३० ॥

श्रुतेन मनुपदेशेन ॥ ३१ ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृत भागवतचन्द्रचन्द्रिका ।

प्रयोजयितृत्वमेव विशदयति । स इति । सः कालः कालशरीरकः परमात्मा जनैर्नपित्रादिनाप्रयोज्यकर्त्रा जनमुत्पत्त्युन्मुखान् पुत्रादीन् जनयन् आदिकृत् अन्तकं विनाशोन्मुखं मृत्युना प्रयोज्यकर्त्रा मारयन् स्वयं त्वनादिरुत्पत्तिरहितः अव्ययः नाशरहितः अनन्तः अन्तकरः पित्रादिद्वारा जनकः मृत्व्यादिद्वारा अन्तकरः नतुसाक्षात् अतः साक्षादकर्तृत्वं सद्वारकंकर्तृत्वं चैकस्मिन् विविधविचित्रानन्तशक्तिमतीश्वर उपपन्नमितिभावः ॥ १९ ॥

ननु प्रयोजयितृत्वमपि कथमीश्वरस्योपपन्नं वैषम्यनैर्घृण्यादिप्रसंगादित्याशङ्कायां तत्कर्मानुरूपं प्रयोजयितुः पक्षपाताभावादुपपन्नमेव प्रयोजयितृत्वमित्याह । न वा इति । मृत्योः संसारात् परस्यास्पृष्टसंसारस्येत्यर्थः यद्वा मृत्युशरीरकस्य "योमृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरम्,,इति श्रुतेः परस्य परमात्मनः समं यथा भवति तथा प्रजाः कर्मभूताः विशतः तत्तत्कर्मानुरूपनियमनार्थमन्तरात्मतया प्रविशतः न स्वपक्षः नापि विपक्षोऽस्ति पक्षपाताभावं दृष्टान्तेनोपपादयति । तमिति । यथा रजांसि धावमानमनिलम् अनुसृत्य धावन्ति तथा अनीशा अनियन्तारः कर्मानुरूपनियम्या इत्यर्थः भूतसंघास्तत्तत्कर्मानुसारं धावमानं नियन्तारं परमात्मानमनुसृत्य धावन्ति प्रवर्त्तन्ते यथा हर्म्यतलश्वभ्रादिषु रजांस्यनुनेतुर्नवायोर्वैषम्यमस्त्येवं परमात्मन्यपीत्यर्थः ॥ २० ॥

कर्मानुरूपनियमनमेवोपपादयति । आयुष इति । विभुः सर्वान्तरोऽसौ भगवान् जन्तोः कर्मवश्यस्य कर्मायत्तसुखदुःखादिभाज आयुषः अपचयं ह्रासं तथा उपचयं वृद्धिं च स्वयमुभाभ्यामुपचयापचयाभ्यां रहितः अतएव स्वस्थः स्वेनैव हेयप्रतिभटकल्याणैकतानस्वभावेन स्थितः विदधाति करोति एवमुत्पत्तिमरणयोर्देहादिवैचित्र्यसुखदुःखयोश्चाद्वारकं कारणं तत्तत्कर्मैवईश्वरस्तु प्रयोजयितृत्वकारणमित्युक्तं भवति ॥ २१ ॥

एवं सर्वभूतान्तरात्मानं स्वसंकल्पकृतं जगदुदयविभवलयं सर्वज्ञत्वसर्वशक्तित्वाद्यपरिमितोदारगुणसागरं तत्तत्कर्मानुरूपं जगन्नियन्तारं सर्वभूतसुहृदं परमात्मानमविज्ञाय एतमेव कालकर्मादिरूपेण विवदन्ते केचिदित्याह । केचिदिति । एवं सुखदुःखादिहेतुं केचित्कर्म पुण्यापुण्यरूपं कर्मेति वदन्ति हे नृप ! अपरे स्वभावं प्रकृतिपुरुषयोः स्वरूपान्यथामात्रस्वभावान्यथाभावरूपपरिणामस्वभावं वदन्ति एके कालं सत्वादिगुणक्षोभहेतुं कालं वदन्ति परे पुनर्दैवं विधिम् अपरे उत अपरे पुनः पुंसः परमपुरुषस्य कामं सङ्कल्पं वदन्ति अयमेव पक्षः श्रेयान् पुण्यापुण्यरूपस्य कर्मणस्तज्जन्यादृष्टस्यापि भगवन्निग्रहानुग्रहरूपत्वेन तत्संकल्पानतिरिक्तत्वात् कालस्वभावयोरपि तत्संकल्पायत्तत्वात् पुंसोजीवस्य काम इति व्याख्यानं त्वयुक्तं दुःखविषयस्यकामानुपपत्तेः अतोयथोक्तार्थएव साधुः॥२२॥

पुंसः काममिति पक्षस्यैव साधुत्वं ज्ञापयन् कामस्य दुर्ज्ञेयत्वमाह। अव्यक्तस्येति हेतात! अव्यक्तस्य व्यक्तैरिन्द्रियैर्नव्यज्यत इत्यव्यक्तः अतएवाप्रमेयस्य देशादिभिरपच्छिन्नस्य ऐन्द्रियकैर्हि सर्वदेशकालादिभिः परिच्छिद्य गृह्यते अनेन विशेषणद्वयेन प्रकृतिपुरुषवैलक्षण्यसिद्धिः प्रकृतेर्व्यक्तत्वात्पुरुषस्याणुत्वात् उभयवैलक्षण्यापादकं विशेषणान्तरमाह नानाशक्तीनां विचित्रशक्तीनां "परास्यशक्तिर्विवि

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिका ।

चैवश्रूयते स्वाभाविकीज्ञानबलक्रियाच„इतिश्रुतेः उदयः अभिव्यक्ति र्यस्मात् तस्य भगवतः चिकीर्षितं कर्त्तुमिच्छाविषयं कथंभूतं स्वसंभवं स्वस्य लोकस्य संभवं जगदुत्पत्तिरूपं संभवग्रहणं संहारादीनामप्युपलक्षणाम् अद्धा तत्त्वतः को लोकोवेद नकोऽपीत्यर्थः प्रकृतिपुरुषाविलक्षणस्यानन्त विविधशक्तेः परमपुरुषस्य कर्त्तव्यतासंकल्प विषयं जगदुत्पत्तिस्थितिसंहारादिरूपं व्यापारम् एवं विधइति तत्त्वतः कोऽपि नजानातीत्यर्थः तथा च श्रूयते कइत्थावेदयत्र सः कइह प्रावोचत् कुत आयाताकुत इयं विसृष्टिरित्यादिका अत्र भगवत्स्वरूपस्यैवातीन्द्रियत्वात्संकल्पविषययोः सुतरां दुर्विज्ञेयत्वज्ञापना यान्यक्तस्येत्युक्तम् ॥ २३ ॥

एवमुपपादितं भगवत एवोत्पत्तिमरणादिनिमित्तत्वं प्रकृते उपसंहरति । नचैतइति । हेपुत्रक! एतेधनदस्य कुवेरस्यानुगा भृत्याः त्वद्भ्रातृहन्तारो न भवन्ति किंतु पुंसः कर्मवश्यस्य विसर्गादानयोः उत्पत्तिमरणयोर्दैवमीश्वर एव हिकारणम् ॥ २४ ॥

नन्वीश्वरश्चेदुत्पत्त्यादिकारणं तर्हि जीववत्सोऽपिसत्त्वादिगुणविशिष्टत्वात् तत्प्रयुक्तजगद्व्यापाररूपक्रियाश्रयत्वाच्च गुणकर्मभिर्बध्येत तत्राह। सइति। यद्यपि स एवेश्वरो विश्वं सृजति अवति रक्षति हन्तिच तथापि अनहंकारात् देहात्मनोस्तादात्म्याभिमानोऽहंकारः तदभावात् गुणकर्मभिः गुणानां सत्त्वादीनां कर्मभिः गुणकार्यभूतैः कर्मभिर्नाऽयंत नबध्यते यद्यपि जगदुत्पत्त्यादीन् गुणकार्यभूतान् व्यापारान् करोतीश्वरः तथापि स्वशरीरभूतप्रकृतिपुरुषात्मकेषु देवादिपदार्थेषु स्वसंकल्पकृतोत्पत्तिस्थितिलयेषु तादात्म्याभिमानाभावात् स्वयमजहत्स्वभावत्वाच्च न कर्मभिर्बध्यते जीवस्तु कर्मणा संकुचितज्ञानत्वेन जहत्स्वाभाव्याद्देवादिशरीरेषु स्वतादात्म्याभिमानाच्च बध्यत इत्यर्थः ॥ २५ ॥

एवं आब्रह्मादिशरीराणामुत्पत्तिमरणादिनिमित्तं निमित्तस्य चानन्तविविधविचित्रशक्तियोगत्वमत एव नित्यमुक्तत्वं चाभिहितं अथ य एवं भूतो भगवांस्तमेव रागद्वेषादिभिर्विमुक्तस्त्वं सर्वात्मना भजस्वेत्याह । एषइत्यादिना । एषभगवान् भूतात्माभूतानां देवमनुष्यादीनामात्मा साक्षि जीवः नेत्याह । भूतेशः “ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति„इत्युक्तरीत्याचिदचिदात्मकभूतानामन्तः प्रविश्य तत्तत्कर्मानुरूपं नियन्ता न केवलं भूतेश एव अपितु तत्कारणं चेत्याह।भूतभावनः। भूतानि भावयत्युत्पादयतीति भूतभावनः यद्वा भूतानि भावयति सृष्ट्यादिभिः सत्तादिमन्तिकरोतीति भूतभावनः तथा भूतानां सत्तास्थितिप्रवृत्तिहेतुरित्यर्थः कारणत्वमपि न निकृष्टस्वरूपेण अपितु विशिष्टविशेषेणेत्याह । स्वशक्त्या कार्योपयोगि स्वापृथक्सिद्धविशेषणभूतयामायया युक्तः मायावयुनं ज्ञानं ज्ञानपर्यायोऽप्यत्र मायाशब्दोजीववाची अनेन निर्विकारत्वश्रुतिविरोधोऽपि परिहृतः विकाराणां पुरुषगतत्वात् भूतानि सृजति अत्तिसंहरति पाति रक्षतिच ॥ २६ ॥

तमुक्तविधं मृत्युमभजतां बंधकं भजतां त्वमृतं मोचकं दैवं स्वतेजसा विद्यमानं जगतां परमयनं प्राप्यं प्रापकमाधारं च सर्वात्मना सर्वप्रकारेण मनोवाक्कायैरित्यर्थः सर्वात्मकपरब्रह्मभावेनेति वा यद्वा प्राप्यं प्रापकमाधारश्चेति बुद्ध्या एतदेव जगत्परायणमित्यनेनाभिप्रेतम् उपेहि शरणं गच्छ युक्तं चैतदित्याह।यस्मै भगवते विश्वस्रष्टारश्चतुर्मुखमरीच्यादयः बलिं पूजां हरन्ति कुर्वन्ति विश्वसृजोहरन्ति इत्यनेन सर्वेश्वरेश्वरत्वमुक्तं विश्वसृजोहि सर्वेषामीश्वरास्तेषामपि पूज्य इति तत्सिद्धिः ननु विश्वसृजोहरन्तु बलिं तस्यापि गोब्राह्मणादिपूज्यत्वादित्याशङ्कांनिराकर्त्तुं दृष्टान्तमाह । गावोबलीवर्दा थानसि नासिकायां दाम्ना सूत्रेण यन्त्रिताः प्रोताः पुरुषस्य कुर्वन्तस्तथा तद्वशंगता बलिं हरन्ति अनेन सर्ववशित्व सिद्धं वशे सर्वं वर्त्तते स सर्ववशीत्युच्यते तथाच श्रूयते“सर्वस्यशानः भूतपालः एष सेतुर्विधरणः एषां लोकानामसंभेदाय न तस्यकश्चि त्पतिरस्ति लोके नचेशिता नैव च तस्य लिङ्गं स कारणं करणा धिपाधिपो नचास्य कश्चिज्जनिता नचाधिप”इति योयदधीनस्तस्य तदनुवर्त्तनं युक्तमितिभावः ॥ २७ ॥

तवतु विशिष्यतद्भजनमेव युक्तमावाल्यं तत्रैवाभ्यस्तत्वादित्याह। यइति। यांभवान् पञ्चवर्षाणि अस्य पञ्चवर्षः सन् सपत्न्यावचसा भिन्नं मर्भ हृदयं यस्य सः जननीं सुनीतिं विहाय वनं प्राप्य त्र तत्र प्रत्यगक्षं प्रत्यञ्चिअक्षाणीन्द्रियाणि यस्मिन् कर्मणि तथा अध्याहृतेन्द्रियमित्यर्थः क्रियाविशेषणमिदं यं भगवन्तमन्विष्य त्रिलोक्या मूर्ध्निउपरिष्टात् पदं स्थानं लेभेलब्धवान् ॥ २८ ॥

तमेवात्मानं परमात्मदृक् तच्छरीरभूतजीवात्मदर्शी ग्रन्थि अनुवर्तस्वेत्यन्वयः अन्वेषणप्रकारमेवाह । अङ्गहेध्रुव ! यः जीवात्मनि इदमसत् देवमनुष्यादिरूपं सततपरिणामिवस्तु चक्षुर्ग्राह्यं सततपरिणामिनो वस्तुनउत्तरोत्तरावस्थाप्राप्त्या पूर्वावस्थात्यागात्सर्वदा सदिति व्यपदेष्टुमनर्हत्वात् तदुक्तं ष्णवे पुराणे मही घटत्वं घटतः कपालः कपालिका चूर्णरजस्ततोऽणुः । जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहिकिमत्र वस्तुसत् । सद्भावएवं भवतोमयोक्तो ज्ञानं यथासत्यमसत्यमन्यत् अनाशीपरमार्थश्च प्राज्ञैरभ्युपगम्यते। तत्तु नाशिनसंदेहो नाशिद्रव्योपपादितमिति विश्वं प्रतीयते असदित्यस्य विवरणं अस्मिन् जीवे इदं विश्वमसत्प्रतीयते अविद्यमानमेव प्रतीयते स्वतोजीवेदेवमनुष्याद्यात्मकं विश्वमविद्यमानमपिपुण्यापुण्यकर्मणा प्रतीयते नतु मिथ्या प्रतीयत इत्यर्थः तस्मिन् मुग्रह निरवयवे आत्मनि जीवे व्यपाश्रितं व्यवस्थितं निरस्तहेयगुणमेकं निस्समाभ्यधिकमक्षरं निर्विकारं नित्यमुक्तंतमात्मानं एवमुक्तवक्ष्यमाणप्रकारेण अन्विष्येत्यर्थः ॥ २९ ॥

ननूपासित एवमया भगवान् किमधुना भजस्वेत्युच्यते इत्याशङ्कायां मुनिराह । ममाभिमानेन त्रिवर्गलिप्सुना त्वया उपासितोभगवानत एव प्राकृतस्थानमगा इदानीं निर्हेतुकभक्तिं विधाय मोक्ष्यसीत्याह । त्वमिति । प्रत्यक्जीवस्तस्यात्मनि जीवान्तरात्मनि प्रत्यक्आत्मा शरीरं यस्येति वापूर्णषाड्गुण्ये त्रिविधपरिच्छेदरहिते आनन्दमात्रे आनन्दैकरसे नतु क्वापि जड इत्यर्थः उपपन्नसमस्तशक्तौ उपगताशेषज्ञानबलक्रियादिशक्तौ परमपुरुषे त्वं परमां तुक्यव्यवहितेत्युक्तविधां भक्तिं शनकैः समाहितचित्तः विधाय तदाममाहमभिमानाख्यां रूढमूलमविद्यात्मकं ग्रन्थिं विशेषेण निर्मूलं छेत्स्यसि ॥ ३० ॥

यदर्थं तत्त्वोपदेशस्तमाह । संयच्छेति। श्रेयसां पुरुषार्थानां केवलं प्रतीपं प्रतिकूलं रोषं भूयसा श्रुतेन तत्त्वश्रवणेन औषधेन आमयं रोगं यथा तथोपसंहरेत्यर्थः ॥ ३१ ॥ रोषस्य श्रेयः प्रतीपत्वमेव प्रपञ्चयति । येन रोषेणोपसृष्टात् पुरुषाल्लोकः भृशं नितरामुद्विजते बिभेति लोकोद्वेग अधर्मात्पुरुषार्थनाश इति भावः आत्मनः स्वस्याभयं निःश्रेयसमिच्छन् बुधोविद्वान् तद्वशं न गच्छेत् न प्राप्नुयात् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तुर्धिभाव्यत्वमाह । सोऽनन्त इति । य एवं विधः सहरिरस्य विश्वस्यान्तकरः स्वयमनन्तः स्वमारकमृत्युरहितः "अन्तोऽस्यवसिते मृत्यौ,, इति यादसः देवदत्तवत्स्वयं दण्डमादाय हन्ति किं नेत्याह । काल इति । आयुरादिफलपाचकत्वात् । पूर्वापरत्वविशेषोऽपि नास्तीत्याह । अनादिरिति । न केवलमन्तकरः किन्त्वादिकृच्च चौरवत्संवृतो न करोत्यतोऽव्यय इति । अव्ययोऽसंवृतः निमित्तमात्रत्वं स्पष्टयन्नुक्तमेव द्रढयति । जनमिति । जनेन पित्रादिशरीरेण जनं पुत्रादिशरीरं जनयन्नात्मनोऽधीनेन मृत्युना कालरूपेण मारयन् शरीरवियोगं कारयन्वर्तत इत्यन्वयः ॥ १९ ॥

एवं प्रवर्तमानस्य नैर्घृण्यादिदोषापत्तिर्नास्ति समत्वादित्याह । नचा इति । वा इत्यनेनावैषम्यादिसूत्रप्रसिद्धिं दर्शयति समं पुण्यपापानुसारेण । मृत्योः परस्य विलक्षणस्य । रुद्रादीनां मारकत्वादिकमेतत्कटाक्षोपक्षिप्तमिति भावेनाह । तं धावमानमिति ॥ २० ॥

आयुरादिफलपाचकत्वेनान्तादिकर इत्युक्तं । स्पष्टयति आयुष इति ॥ २१ ॥

वहवः कालकर्मादिकमस्योत्पत्त्यादेः कारणमिति संगिरन्ते । तत्पदार्थतात्पर्यापरिज्ञानादिति संतोष्टव्यं यतस्तत्तद्वस्तुषु स्थित्वा तत्तत्क्रियार्थप्रवर्तकत्वेन तत्तन्नाम्नायमेवोच्यत इति भावेनाह । केचिदिति । केचिन्मीमांसकाः अपरे चार्वाकादयः एके पौराणिकादयः परे मौहूर्तिकाः अपरे वात्स्यायनकोविदाः कामकर्मस्वभावेष्विति वचनात् अयमेव निश्चीयत इति॥२२॥

कामकर्मादिशब्दानां कथं निर्वचनं येन तेषां भगवद्विषयत्वं ज्ञायत इति तत्राह । अव्यक्तस्येति । प्रत्यक्षादिप्रमाणाविषयश्चेत् शून्यकल्पोऽयमित्यत उक्तं नाना शक्तीति कर्मादिनानाशक्तीनामुदयो यस्मात्स तथोक्तस्तस्य अनेन परिशेषप्रमाणसिद्धिं सूचयति चिकीर्षितं कर्तुमिष्टं कर्म अस्य संभवमुत्पत्तिं निरुक्तप्रकारं च को ब्रह्मा वेत्ति चत् सोऽप्यद्धा न जानातीत्यर्थः ॥ २३ ॥

एवं सर्वत्र हरेः स्वातन्त्र्यमुपपाद्य फलितमाह । नैवेति । विसर्गादानयोर्मरणजन्मनोः विसर्गस्यादानस्याङ्गीकारस्य चेति वा हिशब्दो हेतौ ॥ २४ ॥

किन्तद्दैवमित्यतो यज्जगत्कारणं ब्रह्म तदेवात्रोक्तमिति स्पष्टयन्द्विविशेषणैर्विशिनष्टि । स एवेति । कर्दमक्षेत्रप्रवृत्तदेवदत्तस्य गुणकर्मलेपोनास्ति अहंकर्तृत्वभिमानाभावादित्याह । अथापीति ॥ २५ ॥

अनेनापि गुणकर्मलेपः कथमुद्घाटित इति तत्राह । एष इति । स्वशक्त्या स्वाधीनया स्वरूपशक्त्या वा ॥ २६ ॥

कार्यपदप्रयोगाभावान्नेदमनुष्ठातुं योग्यमित्याशङ्क्यैवं विश्वं दैवमिति गुणान्तरसमर्पणेनोपसंहरति । तमेवेति । अमृतं नित्यमुक्तं नसि नासिकायां यन्त्रवन्धन इति धातुः दाम्ना यन्त्रिता बद्धाः ॥२७

श्रीनारायणप्रसादेनावाप्तसमस्तसंपदस्तव तन्नियतभूतद्रोहो नघटत इति भावेनाह । यः पञ्चवर्ष इत्यादिना । सर्वप्राणिनः प्रति प्रतिगतमक्षमिन्द्रियं यस्य स तथा तम् अनेन मया क्रियमाणं कर्म नासौ पश्यतीत्येतत्परिहृतम् ॥ २८ ॥

विमुक्तविग्रहैर्योगिभिर्व्यपाश्रितं निषेवितम् अनेन भूतविग्रहोऽस्य प्रियो न भवतीत्युक्तं निर्गुणमावृत्तिशून्यं कुपितत्वात्पुनः प्रसादानभिमुखमित्यर्थः भूतद्रोहे क्रुद्धस्यास्य तपसापि पुनः प्रसादापादनं दुष्करं तवेति ध्वनितम् अनेन शब्दाद्यविषयं वा वागादिनापि प्रसादयितुं दुःशकमित्यर्थः कुतः निर्गुणमतीन्द्रियमिन्द्रियाविषयत्वादित्यर्थः "गुणास्त्वावृत्तिशब्दादिर्ज्येन्द्रिया मुख्यतन्तुषु,, इतियादवः एवं केवलमक्षरं मूलकारणमात्मानं परमात्मानं विशिष्टा मुक्तिर्यस्मात्स तथा तम् एवं गुणविशिष्टं हरिमात्मनि हृद्यन्विष्यालोक्य भजस्वेत्यन्वयः तत्स्वरूपं कीदृशमिति न प्रष्टुमर्ह इति भावेनोक्तमात्मदृशीति पूर्वमात्मानं दृष्टवानिति यत्तस्मात् कथमित्यत उक्तं यस्मिन्निति असदस्वतन्त्रं भिन्नं पञ्चविधभेदोपेतमिदं चेतनाचेतनात्मकं विश्वं यस्मिन् यदाधारतया प्रतीयत इति ॥ २९ ॥

ननु आत्मदर्शिनो मम संसारपाशच्छेदः किमिति नाभूदित्यतस्तादृग्गुणानुपसंहृत्य विम्बोपास्त्यभावादतस्तथोपास्तौ स स्यादिति भावेन तदुपासितप्रकारं विदधान आह । त्वं प्रत्यगात्मनीति । प्रत्यगात्मनि तवाभिमुखे विम्बरूपे भक्तिमुपास्तिलक्षणां सेवां अन्यत्रानुपपन्ना अत्रोपपन्ना अविरुद्धाः समस्ता अस्थूलानणवादिलक्षणाः शक्तयो यत्र स तथा तस्मिन् ॥ ३० ॥

तत्र प्रथमसाधनमिदमित्याह । संयच्छेति ॥ ३१ ॥

श्रेयसां प्रतीपत्त्वं कथमत्राह । येनेति । येन रोषेणोपसृष्टानुपरक्तात् सज्जनानुग्रहस्यापेक्षितत्वाल्लोकोऽज्ञानिजनोऽत्रोच्यते लुक् प्रकाश इति धातोः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनिलदृष्टान्तस्तथापि साम्यमित्यत्रांशे धावत्यनीशो यथा रजांस्यनिलं भूतसंघ इति चित्सुखः ॥ २० ॥

स्वस्थः स्वानन्दमग्न एव सन् खैरितयैव नत्वन्यभावभावितत्वेत्यर्थः । अतो वैषम्यनैर्घृण्ये अपि परिहृते ॥ २१ ॥

केचिदेनं कर्मादिकं वदन्तीति । अस्य ये कर्तृत्वादयो धर्मास्तान् कर्मादिष्वेवारोपयन्तीत्यर्थः । दैवं ग्रहादि । कामं संकल्पं दृष्टिसृष्टिवादिनः ॥ २२ ॥

चिकीर्षितमिच्छाशक्तिलेशमपि किं पुनः सर्वशक्त्याश्रयन्तमित्यर्थः ॥ २३—२५ ॥

कथं सृजतीत्यादौ तत्राह । एष इति । भूतस्यात्मा कारणम् । ईशो नियामकः । भावनस्तत्तद्रूपताप्रापकश्च तत्र हेतुः स्वरूपशक्त्या मायया च युक्तः । बहिरङ्गशक्तिमायाकार्ये तस्यादङ्कारत्वञ्च योजितम् ॥ २६—२७ ॥

य इत्यत्र यो लेभे स त्वमुपेहीति पूर्वेणैवान्वयः ॥ २८ ॥

आत्मानं परमात्मानं यस्मिन् स्फुरिते सति । असदपुरुषार्थमिदं नेदमसत् प्रतीक्षते इति चित्सुखः । अनुभवादिदं युक्तम् ... ष्वेदमिति ॥ २९-३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थ...

अन्यच्च तस्य विभुत्वं पश्येत्याह । ...

अथ चान्येषामन्तकरो नाशकरः ...दर्शिनी ।

स्वयमनादिः जन्मशून्यः अथ.. स्वयमनन्तः नाशरहितः ।

मणिरिव सर्वप्रसवितापि न रूपेणोत्पत्त आह । कालः

पित्रादिना जनं पुत्रादीन्येषामादिकृत् । अव्ययः चिन्ता-

हेतुना कालादि व्ययशून्यः । स्वयमेवादिकृदपि जनेन

... नचैवं ... जनयन् स्वयमेवान्तकृदपि मृत्युना मृत्यु-

इति ... अन्तकं यममपि मारयन् ॥ १९ ॥

... कुर्वतोऽपि वैषम्यप्रसक्तिः पक्षपाताभावादित्याह । नवा

...द्वाभ्याम् । मृत्योर्मृत्युरूपस्य समं यथा स्यात्तथा प्रजा विशतः

तस्य साम्येऽपि भूतेषु फलवैषम्यं तत्तत्कर्मणस्तथा भावादिति

श्रीमद्विश्वनाथचक्रवर्तिकृत सारार्थदर्शिनी ।

सदृष्टान्तमाह । तं धावन्तमनु अनीशाः कर्माधीना भूतसङ्घा धावन्ति अनिलं धावन्तमनुधावन्ति रजांसीव तत्र रजसां तमः प्रकाशजलाग्न्यादि प्रवेशेऽपि नानिलस्य वैषम्यम् एवमीश्वरस्यापीति भावः ॥ २० ॥

तत्राप्यायुषोऽपचयं मशकादावुपचयं देवादौ दुःस्थस्य कर्माधीनस्य ॥ २१ ॥

ननु तर्हि कर्मैव सुखदुःखजन्ममरणादिकारणमस्तु सत्यमत्रैवं धादिनो विवदन्त इत्याह । केचिदिति । केचिन्मीमांसकाः एनं सुखदुःखप्रदं कर्म अपरे लोकायतिकाः स्वभावं : एके व्यावहारिकाः कालं परे ज्योतिषिका दैवं ग्रहादिरूपं देवताम् अपरे वात्स्यायनादयः कामं श्रुतिश्च कामोऽकार्षीत् कामः करोति कामः कर्ता कामः कामयितेत्यादि ॥ २२ ॥

नन्वेषां विवदमानानां मध्ये को व्यवस्थापकस्तत्र तत्तन्मूलतत्त्ववस्तुनोऽज्ञानात्र कोऽपीत्याह । अव्यक्तस्य कैरपि घलबुद्ध्यादिभिर्व्यक्ती कर्तुमशक्यस्य तत्र हेतुरप्रमेयस्य प्रत्यक्षादिप्रमाणैः प्रमातुमशक्यस्य नानाशक्तीनां कालकर्मस्वभावकामादीनामुदयो यस्मादिति तस्यैकैकां शक्तिमाश्रित्यैव विवदमानानां तेषां शक्तिमति तस्मिन् वस्तुतो नास्त्येव विवाद इति भावः तस्य भगवतश्चिकीर्षितमेव कोऽपि नो वेद स्वस्य सम्भवो यस्मात्तं को वेद । यदुक्तं भीष्मेण "न ह्यस्य कर्हिचिद्राजन्! पुमान् वेद विधित्सितम् यद्विजिज्ञासया युक्ता मुह्यन्ते कवयोऽपि हि,, इति तथाच श्रुतिः कोऽद्धा वेद क इह प्रावोचत् कुत आयाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूवेत्यादि ॥ २३ ॥

फलितमाह । नत्वेत इति । विसर्गादानयोः सृष्टिसंहारयोर्दैवमीश्वरः ॥ २४ ॥

तथापि तस्य निर्लेपतां पश्येत्याह । स एवेति ॥ २५ ॥

अनहङ्कारत्वे हेतुमाह । एष इति । स्वशक्त्या मायया युक्तइति मायया बहिरङ्गत्वेन स्वरूपशक्तित्वाभावात् तत्कार्येषु तस्य नाहङ्कारो भवतीति भावः ॥ २६ ॥

नन्वेवं त्वया प्रबोधितोऽप्यहङ्कारं त्यक्तुं न प्रभवामीत्यत आह । तमेवेति चतुर्भिः । उपेहि प्रपद्यस्व तत्प्रपत्तिं विना ज्ञानेनाहङ्कारापगमो दुःशक इति भावः ॥ २७ ॥

त्वन्तु तं प्रपन्नो मत्कुलपद्ममेवासीत्याह । य इति । प्रत्यञ्चि इन्द्रियाणि योगिनां यस्मिंस्तम् ॥ २८ ॥

तत्रैव सम्प्रत्यपि मन्विच्छ, अलं तव व्यावहारिकभद्राभद्रभावनयेति भावः नच तत्रान्वेषणेऽत्र प्रयास इत्याह । आत्मनि तन्मनसि मुक्तविग्रहे निर्विरोधे विशेषेण वात्सल्यात् कृतनिवासं आत्मदृक् त्वद्गुरुः सन् यस्मिन् मन्विष्टे सति इमे शत्रुमित्रादयो भेदा यत्र तदिदं मेदं जगत् असत् अभद्रमरोचकमेव प्रतीयते ॥ २९ ॥

तदा पञ्चवर्षवयसि किमिदं स्मरसीत्यर्थः अधिद्यान्वेष्यिन्तस्यासि अभिज्ञावचने लृडिति भूतकाले एवं लृट् व्यस्मित इत्यर्थः ॥ ३० ॥

मदपि व्यावहारिकलोकमनुकुर्वंस्त्वं तादृशोऽपि भ्रातरि प्रणयं लोके प्रथयन् बहिरेव रोषं धत्से ममाज्ञया तमपि संयच्छ धनेन मदुपदेशयाक्येन अगदेन औषधेन आमयमिवेति त्वादृशानां भक्तानां लोके प्रतिष्ठा प्रख्यापनमध्येको रोग एवेति भावः ॥३१॥

रीतिमाह । येन रोगेण उपसृष्टात् व्याप्तात् ॥ ३२ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

स एव कालः कालशक्तिः शक्तेः स्वरूपेण भिन्नत्वेऽपि शक्तिरपेक्षास्थित्याद्यभावादभेदेन निर्देशः तत्तत्कालक्रमेणोत्पत्तिपित्रादिना जनं पुत्रादि जनयन् आदिकृत् अन्तकश्चोरादि मृत्युराजादिना मारकेण मारयन् अन्तकरः स्वयन्तु अनन्तः मरणानादिः जन्मरहितः अव्ययोऽनिर्विकारश्च ॥ १९ ॥

मृत्योः प्राणिकर्मानुसारेण मारकस्य समं यथा भवति प्रजा विशतः परस्य सर्वनियन्तुः अस्य स्वपक्षोविपक्षोवा नैव च धावमानं क्रियां कुर्वन्तं संघाः धावन्ति क्रियां कुर्वन्ति यथा रजांसि तद्वत् ॥ २० ॥

दुःस्थस्य कर्माधीनस्य उपचयं वृद्धिमपचयं ह्रासम् ॥ २१ ॥

एकैकदेशनिष्ठानामल्पज्ञानां मतानि दर्शयन् भगवतः शक्तित्वेन सर्वरूपत्वं सूचयन् इयत्तानवच्छिन्नत्वमाह । केचि[illegible] द्वाभ्याम् ॥ २२ ॥ २३ ॥

प्रकृतमाह । नेति । हे पुत्रक ! विसर्गादानयोः सृष्टिसंहारयोः कर्मफलदः परमेश्वरः ॥ २४ ॥ २५ ॥ २६ ॥

मृत्युं मरणहेतुममृतं जीवहेतुं दैवं कर्मफलदम् उपेहि प्रव्रज ॥ २७ ॥

यः पञ्चवर्षः भजनानर्होऽपि प्रत्यगक्षं निरुद्धेन्द्रियं यथास्यात्तथाराध्य त्रिलोक्याः मूर्ध्नि पदं स्थानं लेभे लब्धवानसि तमेवा[illegible] च्छेरयुक्तरेण संबन्धः ॥ २८ ॥

हे अङ्ग ! मुक्तविग्रहे त्यक्तविरोधे आत्मनि मनसि तं भग[वन्तं] व्यपाश्रितमप्रस्थितं निर्गुणं प्राकृतगुणशून्यम् एकं सजातीयविजातीयभेदशून्यं स्वगतभेदस्येष्टत्वात् अक्षरं निर्विकारमात्मानं स्वात्मानं विमुक्तं विविधा मुक्ता यस्मात्तं मुक्तिदम् आत्मदृक् एवमुक्तप्रकारेण अन्विच्छ अनुवर्तस्व ननु दुस्त्यजोऽविरोधस्तत्र वर्तते प्रतिबन्धक इत्यत्र सर्वस्य तद्विदाचिच्छक्तिमयत्वात्र विरोधविषयं किं चिदस्तीत्याह अयं भूजलादिरूपोभेदो यत्र तदिदं स्थूलमसत्सूक्ष्मं च वस्तुजातं यस्मिन्नेव प्रतीयते न तत्पृथगित्यर्थः "योमां पश्यति सर्वत्र सर्वंच मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति,,इति श्रीमुखोक्तेः यत्तुसजातीयविजातीयस्वगतभेदशून्यं ब्रह्मेति मतं तत्तुच्छम् सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः इत्यादिश्रुतिविरोधात् ॥ २९—३१ ॥

येन रोषेणोपसृष्टात् अभिसृतात् ॥ ३२ ॥

---

भाषाटीका ।

वह अनन्त होकर अंत करनेवाला काल है अनादि होकर सब का आदि उत्पत्ति करनेवाला है स्वयं अव्यय होकर मनु[ष्य] को मनुष्य से पैदा कराता है चोर व्याघ्रादि मृत्यु के हाथ से मृत्यु को भी करवाता है ॥ १९ ॥

उस परमात्मा का कोई न स्वपक्ष न परपक्ष है वह सब से परे भी है सब का कालरूप भी है प्रजों में समानरूप से प्रविष्ट है जगत् के कार्यों में दौडनेहुये उसके पीछे अनीश्वर सब ऐसे दौडते हैं जैसे पवन के पीछे रज उडता है तैसे ॥ २० ॥

वह आप तो वृद्धिक्षय से रहित है फिर मनुष्य के आयु वृद्धिक्षय करता है आप स्वयं सुखी होकर दूसरे को कर्मानुसार दुःख देता है ॥ २१ ॥

हे नृप ! कोई हमको कर्म कहै हैं कोई स्वभाव कहै हैं कोई काल कहै हैं कोई दैव कहै हैं कोई पुरुष का काम कहै हैं ॥ २२ ॥

हेलनं गिरिशभ्रातुर्धनदस्य त्वया कृतम् ।
यज्जघ्निवान् पुण्यजनान् भ्रातृघ्नानित्यमर्षितः ॥ ३३ ॥
तं प्रसादय वत्साशु सन्नत्या प्रणयोक्तिभिः ।
न यावन्महतां तेजः कुलं नोऽभिभविष्यति ॥ ३४ ॥
( इत्युक्तस्तं प्रणम्याह भगवंस्तेऽनुशासनम् ।
आतिष्ठे भ्रातृमात्रोर्मे शोचतः क्षम्यतामिति ॥ ) *
एवं स्वायम्भुवः पौत्रमनुशास्य मनुर्ध्रुवम् ।
तेनाभिनन्दितः साकमृषिभिः स्वपुरं ययौ ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां ध्रुवचरिते मनुवाक्यम्
एकादशोऽध्यायः ॥ ११ ॥

भाषाटीका ।

हेतात ध्रुवजी ! अप्रगट गति वाले अप्रमेय महिमा वाले जिन परमेश्वर के कर्तव्यकोंहि कोई नहीं जानता है तो उनके अनादि स्वरूप को तो कौन जान सकेगा ॥ २३ ॥

हे तात ध्रुव ! ये सब कुबेर के अनुचर तुम्हारे भ्राता के मारने वाले नही हैं जिससे कि पुरुषके उत्पत्ति मरण में दैवही कारण है ॥ २४ ॥

वही परमेश्वर पैदा करता है वही रक्षा करता है वही नाश करता है तथापि अहंकार न होने से गुण कर्मों से लिप्त नही होता है ॥ २५ ॥

यह परमात्मा सब भूतों का अन्तर्यामी सब भूतों का पालन करने वाला सब भूतों का ईश्वर स्वशक्तिरूप माया से युक्त होकर सृजता है नाश करता है रक्षा करता है ॥ २६ ॥

हे तात ! ध्रुव वही मृत्यु है वही अमृत है वही देव है वही जगत्का आश्रय है सब प्रकार से उनके शरण जाओ जिनके वास्ते ब्रह्मादिक सब प्रजापति लोग भेट देते हैं कैसे कि जैसे रस्सि से नाक में पोहे हुये बैल अपने मालिक के काम को करते हैं तैसे ॥ २७ ॥

जो तुम पांच वर्ष वाले समय पर सौतिन माता के वचन से मर्म वेधन होने से अपनी माता को छोडकर वन में जाकर सब इन्द्रियों को रोक कर तपस्या द्वारा जिस परमात्मा के आराधन करने से तीनों लोक के ऊपर स्थान को पाये हो ॥ २८ ॥

हे ध्रुवजी आप सब वैरों को छोडा हुआ जो अपना अंतःकरण तिसमें विराजमान प्राकृत गुण रहित एक अक्षर स्वरूप सब मायासे रहित जो परमात्मा तिनको अपने स्वरूपका अवलोकनकरके दर्शन करो जिन में कि यह शत्रुमित्रादिभेददृष्टि वाला असत् जगत्प्रतीत होता है ॥ २९ ॥

अपने आत्माके अंतर्यामी भगवान् अनंत आनंदमात्र स्वरूप समस्तशक्तिको धारणकरने वाले श्रीमन्नारायण में परम भक्ति को विधान करके फिर मैंहूं मेरा है ऐसी जो हृदय ग्रंथि है तिसको धारेने छुटायदो ॥ ३० ॥

हे राजन् ! तुमारा कल्याण होगा सबकल्याणों का नाश करने वाला जो क्रोध है तिसको हमारा जो सुना उपदेश तिससे छुटाओ जैसे रोगको औषध से छुटाते हैं ॥ ३१ ॥

जिस क्रोधके संयुक्त हुये पुरुष से सब मनुष्य बडे डर डाते हैं पंडित पुरुष तिस क्रोधका वश नहींहोवे यदि अपना अभय चाहता होयतो ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्यच्च त्वया कार्यमित्याह । हेलनमिति द्वाभ्याम् । यद्यतःआभिवान् घातितवान्॥ ३३ ॥ ३४ ॥ ३५ ॥

इतिश्रीभागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकाटीकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

भ्रातृघ्नान् जघ्निवानिति यत् तदेव हेलनमित्यन्वयाकरणात् प्रत्युत यद्यत इति व्याख्यानात् भ्रातृघ्ना इत्येव स्वामिसम्मतः पाठः अन्यथा इति पदस्यासंबद्धत्वमेवेति ज्ञेयम् ॥ ३३ ॥

महतामिति श्रीरुद्रादपेक्षया बहुत्वम् ॥ ३४ ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीराधारमणदासगोस्वामिभिर्विरचितदीपिकादीपनटीकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

*श्लोकोऽयं श्रीविजयध्वजतीर्थपाद टीकायामस्ति ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किंच गिरिशस्य रुद्रस्य योभ्राता कुवेरस्तस्य हेलनमवमानं त्वया कृतं यत् यतः पुण्यजनान् यक्षान् भ्रातृघ्नानिति बुद्ध्या अमर्षितः क्रुद्धः जघ्निवान् घातितवान् भ्रातृघ्नानित्यस्येति शब्दान्वये प्रथमान्तत्वं यद्यपि न्याय्यं भ्रातृघ्ना इति बुद्ध्या जघ्निवान् इति क्रोडीकारात् तथापि पुण्यजनविशेषणत्वदृष्ट्या द्वितीया प्रयुक्ता ॥ ३३ ॥

तं धनदं संनत्या प्रश्रयेन प्रियोक्तिभिर्विनयवाग्भिश्च हे वत्स ! आशु प्रसादय प्रसन्नं कारय महतां धनदादीनां तेजः अस्माकं कुलं यावन्नाभिभविष्यति न नंक्ष्यति ततः पूर्वमेवाशु प्रसादयेत्यर्थः ॥ ३४ ॥

मनूक्तिमुपसंहरति । एवमिति । स्वायंभुवोमनुः पौत्रं ध्रुवमेवमुक्तप्रकारेणानुशास्य आदिश्य तेन ध्रुवेणाभिनन्दितः अभिमतः ऋषिभिः सह स्वपुरं ययौ ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकाटीकायाम् एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ॥

वैश्रवणस्यसत्त्वेकरत्वेनास्यावज्ञाननिमित्तदोषोऽपि परिहरणीय इत्याह । हेलनमित्यादिना । वैश्रवणे हेलनमपि शिवावज्ञानं स्यात्तद्द्वयज्ञानेन श्रीनारायणविषयज्ञानमपि नोदेतीत्यभिप्रायेणोक्तं गिरिशभ्रातुरिति अत एव महतामिति बहुवचनम् ॥ ३३—३४ ॥

ध्रुवस्य च सत्तमत्वान्मनुर्वेनुशासनानुष्ठानं तथा मनोश्च पौत्रमभिनन्द्य स्वपुरगमनं वक्ति । इत्युक्त इति । शोचत इत्यनेन पूर्ववैरानुसन्धानेन ध्रुवेण तूष्णीं स्थितं भ्रातृमातृमरणप्रतिक्रियां कर्तुं समर्थेनापीति जनश्रुतिपरिहर्तुमिव यक्षवधेप्रवृत्तमिति ध्वनयति ॥ ३५ ॥ ३६ ॥

इतिश्रीभागवतेमहापुराणेचतुर्थस्कन्धे विजयध्वजकृतपदरत्नावल्याम् एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

जघ्निवानिति यत् तदेव हेलनं कृतमित्यन्वयः भ्रातृघ्ना इति वा स्वामिपाठः । महतामिति श्रीरुद्राद्यपेक्षया बहुत्वम् ॥ ३२ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वैश्रवणस्य तवानौचित्यं स्फुटयन्नाह । हेलनमिति । जघ्निवा... यत् तदेव हेलनमित्यन्वयः इति शब्दः समाप्त्यर्थकः स... वा देयः ॥ ३३—३४ ॥ ३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् एकादशश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गिरिशस्य भ्रातुः सख्युः ॥ ३३ ॥

यावन्महतां पुण्यजनानां तेजो नः कुलं नाभिभविष्यति त... पुण्यजनानां राजानं प्रसादय ॥ ३४ ॥ ३५ ॥

इतिश्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपटीकायाम् एकादशाध्यायार्थप्रकाशः ॥ ११ ॥

---

भाषाटीका ।

जो तुमने भाईकेमारने वाले हैं करके क्रोधसे बहुत से गन... को मारा है तिससे तुमने महादेव के भ्राता कुवेर का अप... कियाहै ॥ ३३ ॥

हे वत्स ! जबतक महत्पुरुषों का तेज अपने कुलको परा... करै तब तक शीघ्रही नम्रता से प्रेम की वाणी से उनको प्र... करो ॥ ३४ ॥

इस प्रकार से स्वायम्भुव मनुजी अपने नाती ध्रुवजी को... शिक्षा करके ध्रुवजी से नमस्कृत होकर मुनिनके सहितही... पुरको चलेगये ॥ ३५ ॥

इति श्रीमद्भागवत चतुर्थस्कन्ध एकादश अध्यायका भाषानुवाद लक्ष्मणाचार्य्यकृत समाप्त ॥ ११ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ॥

मैत्रेयउवाच ।

ध्रुवं निवृत्तं प्रतिबुध्य वैशसादपेतमन्युं भगवान् धनेश्वरः ।
तत्रागतश्चारणयक्षकिन्नरैः संस्तूयमानोऽभ्यवदत्कृताञ्जलिम् ॥ १ ॥

धनदउवाच ।

भोभोः ! क्षत्रियदायाद ! परितुष्टोऽस्मि तेऽनघ !
यस्त्वं पितामहादेशाद्वैरं दुस्त्यजमत्यजः ॥ २ ॥
न भवानवधीद्यक्षान् न यक्षा भ्रातरं तव ।
काल एवहि भूतानां प्रभुरप्ययभावयोः ॥ ३ ॥
अहं त्वामित्यपार्थाधीरज्ञानात्पुरुषस्य हि ।
स्वाप्नी वा भात्यतद्ध्यानाद्यया बन्धविपर्ययौ ॥ ४ ॥
तद्गच्छ ध्रुव ! भद्रं ते भगवन्तमधोक्षजम् ।
सर्वभूतात्मभावेन सर्वभूतात्मविग्रहम् ॥ ५ ॥
भजस्व भजनीयाङ्घ्रिमभवाय भवच्छिदम् ।
युक्तं विरहितं शक्त्या गुणमय्यात्ममायया ॥ ६ ॥
वृणीहि कामं नृप ! यन्मनोगतं मत्तस्त्वमौत्तानपदे, विशङ्कितः ।
वरं वरार्होऽम्बुजनाभपादयोरनन्तरं त्वां वयमङ्ग ! शुश्रुम ॥ ७॥
स राजराजेन वराय चोदितो ध्रुवो महाभागवतो महामतिः
हरौ स वव्रेऽचलितां स्मृतिं यया तरत्ययत्नेन दुरत्ययं तमः ॥ ८ ॥
तस्य प्रीतेन मनसा तां दत्त्वैडविडस्ततः ।
पश्यतोऽन्तर्दधे सोऽपि स्वपुरं प्रत्यपद्यत ॥ ९ ॥
अथायजत यज्ञेशं क्रतुभिर्भूरिदक्षिणैः ॥
द्रव्यक्रियादेवतानां कर्म कर्मफलप्रदम् ॥१० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशे धनदेनाभिनन्दितः पुरमागतः ।
यज्ञैरिष्ट्वा हरेः स्थानमारुरोहेति कीर्त्यते ॥ १ ॥

वैशसाद्वधान्निवृत्तं ज्ञात्वा ॥ १ ॥

हेक्षत्रियदायाद ! क्षत्रियपुत्र ! अत्यजः त्यक्तवानसि ॥ २ ॥

नच वैरस्य कारणमस्तीत्याह । न भवानिति । अप्ययभावयोर्मृत्युजन्मनोः ॥ ३ ॥

कथं तर्ह्यहं हन्तेत्यादिबुद्धिस्तत्राह । अहमिति । आभाति प्रकाशते जायत इत्यर्थः अतद्ध्यानाद्देहानुसंधानात् यया धिया बन्धः विपर्ययो दुःखादिः ॥ ४ ॥

तत्तस्माद्गच्छ गत्वा च भगवन्तं भजस्वेत्युत्तरेणान्वयः सर्वभूतात्मको विग्रहो यस्य ॥ ५ ॥

भजनीयावङ्घ्री यस्य तं गुणमय्या शक्त्या युक्तं किं तत्वतः न आत्ममायया अतस्तत्त्वतस्तया विरहितं यद्वा शक्त्यात्ममायया युक्तं विरहितं च सगुणनिर्गुणभेदेन ॥ ६ ॥

काममसंकोचेन अविशङ्कितो निर्भयः अनन्तरमतिनिकटम् ॥ ७॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स वराय चोदित इत्यनुवादरूपं पृथग्वाक्यम् अतः स वव्र इति तच्छब्दस्यापौनरुक्त्यम् ॥ ८॥ ६ ॥

द्रव्यक्रियादेवतानां कर्मसाध्यं फलरूपं कर्मफलप्रदं चेत्यर्थः १०

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ॥

यज्ञैः भगवदर्पितैः हरिमिष्ट्वा ॥ १ ॥

तत्र यत्र मनुरुपदिष्टवांस्तत्रैव ॥ १ ॥

क्षत्रियदायादेति संबुद्धिः दुस्त्यजत्वे हेतुः यद्यस्मात् ॥२-३ ॥

अज्ञानात् स्वरूपाज्ञानात् ॥ ४ ॥

तदिति युग्मकम् तत् तस्मात् सर्वत्र तस्यैव हेतुत्वात् गच्छ तमेव प्राप्नुहि गत्वा चेत्यस्यैकवाक्यतायै अध्याहृतं भजस्व छत्रचामरादिभिः सेवस्व सर्वभूतानामात्मा मूलस्वरूपमिति भावनया यतो मध्यमाकारस्थेऽपि सर्वभूतात्मकः सर्वभूतव्यापको विग्रहो यस्येति निर्गुणपक्षे सगुणपक्षे पातालपादादिकतया सर्वभूतस्वरूपो विराड् विग्रहो यस्य ॥ ५ ॥ ६ ॥ ७ ॥

अनुवादरूपमुक्तस्याभिधानोपसंहाररूपम् । अतः । पृथग्वाक्यत्वात् ॥ ८ ॥

ततः । वरप्रदानानन्तरम् ॥ ९ ॥

अथ पुरप्रतिपत्त्यनन्तरं राजत्वव्यवहारनिष्पत्त्यर्थं स्वप्रतिमूर्तिद्वारैव यज्ञेशमयजत द्रव्यं व्रीह्यादि क्रिया अवघातादि देवताग्न्यादि तेषां कर्म तैः क्रियते साध्यते इति कर्म द्रव्याद्यात्मकयज्ञसाध्यं फलं तद्रूपम् "एतस्यैवानन्दस्य सर्वाणि भूतानि मात्रामुपजीवन्ति„ इति श्रुतेः अन्तर्यामितया तादृशफलप्रदं च "फलमत उपपत्तेः„ ३ । २ । ३७ ॥ इति न्यायात् चकाराध्याहारादित्यर्थं इत्युक्तम् ॥१०॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं पितामहेन स्वायंभुवेनानुशिष्टो ध्रुवः पुण्यजनवधान्निवृत्तः कुबेराल्लब्धवरः स्वधर्माराधितगोविन्दो गुप्ताखिलक्षितिमण्डलो लब्धध्रुवक्षितिर्बभूवेत्याह मुनिर्द्वादशेन । ध्रुवमिति । मनूपदेशेनापगतक्रोधमत एव वैशसात् यक्षाणां वधान्निवृत्तं ध्रुवं प्रति बुद्ध्य ज्ञात्वा भगवान् धनेश्वरस्तत्र ध्रुवसंनिधावागतश्चारणादिभिः संस्तूयमानः बद्धाञ्जलिं ध्रुवमभ्यवदत् उवाच ॥ १ ॥

उक्तमेवाह । भोभो इति षड्भिः । हे क्षत्रियदायाद! क्षत्रियपुत्र! ध्रुव! क्रोधत्यागनिमित्तहर्षातिशयात् द्विरुक्तिः हे अनघ! यक्षवधनिमित्तपापरहित! ते तुभ्यं परितुष्टोऽस्मि कुतः यत् यस्मात् पितामहस्य स्वायंभुवस्योपदेशादनुशासनाद्दुस्त्यजमपि वैरमत्यजः त्यक्तवानसि २

ननु नाहमनघः पुण्यजनहननकर्तृत्वनिमित्तपापसंबन्धात्तत्राह। नेति । भवान् नापि यक्षान् हतवान् नापि यक्षास्त्वद्भ्रातरं हतवन्तः कुतः हि यस्मात् भूतानामप्ययभावयोर्मरणोत्पत्त्योः कालः कालशरीरक ईश्वर एव प्रभुः समर्थः कारणमित्यर्थः ॥ ३ ॥

ननु हन्तृत्वं तत्प्रयुक्तस्वेदश्रमादिकं च मया यक्षैश्चापरोक्षमनुभूयमानमपह्नत्येश्वर एव कथं हन्तेत्युच्यते तत्राह । अहं त्वमिति । पुरुषस्याज्ञानात् देहविलक्षणात्मयाथात्म्यज्ञानाभावात् अतद्देहः तस्य ध्यानात् असज्ज्ञानादिति पाठेऽप्ययमेवार्थः अहं त्वमिति अत्र हन्तेत्यध्याह्रियते सामर्थ्यात् देवादिदेहेषु तत्संसृष्टेषु जीवेषु च अहं हन्ता त्वं हन्ता इत्येवं रूपा अत एवापार्था अर्थशून्या अहं त्वमिति प्रतीतौ योऽर्थो विषयः प्रत्यग्रूपस्तद्रहिता हन्तेति प्र... योऽर्थो विषयस्तद्रहिता च अन्यथाज्ञानविपरीतज्ञानरू... यावत् बुद्धिः स्वाप्नीव स्वाप्नधीरिव आभाति धर्म्यन्तरे धर्मा... प्रतीतिरन्यथाज्ञानं यथा पीतः शङ्ख इति शुक्ले पीतिम्नः प्रती... धर्म्यन्तरस्य धर्म्यन्तरत्वेन प्रतीतिर्विपरीतज्ञानं यथेदं रजत... शुक्त्याश्रयस्य धर्मिणो रजतत्वाश्रयत्वेन प्रतीतिः हन्ताह... ज्ञानं तूभयविधमपि अहमर्थस्य देहरूपधर्मिणोऽहमर्था... धर्म्यन्तरत्वेन प्रतीतेर्विपरीतज्ञानरूपत्वम् अहंपर्याये देहे हन्तृत्वादिरूपधर्मान्तरप्रतीतेश्चान्यथाज्ञानरूपत्वं च आभा... प्रतीयत इत्यर्थः प्रतीतिः प्रमिताप्रमितसाधारणं ज्ञानम् आत्मनः हन्तृत्वादिकं भगवता गीतं "य एनं वेत्ति हन्तारं यश्चैनं मन्... हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते„ इति यद्यप्यह... रात्मनोऽज्ञानाद्धन्तृत्वादिप्रतीतिमात्रं तथापि देहस्य तत्संबन्धे... चेत् मैवं देहस्यापि नित्यं जातमृतस्य तदभावात् तथाचो... "अथचैनं नित्यजातं नित्यं वा मन्यसे मृतम् । तथापि त्वं महाबाहो नैनं शोचितुमर्हसि„ इति नित्यं मृतमिति हेतुगर्भं नित्यं मृत... पुनरस्य मरणकर्तृत्वप्रयुक्तशोको न कार्य इत्यर्थः एवं च हनन... कर्मत्वानाश्रययोर्देहात्मनोर्हन्तृत्वादबुद्धिरन्यथा ज्ञानविपर्... ज्ञानजनकानाद्यविद्यात्मकाज्ञानकार्यत्वात्स्वप्नबुद्धिरिव बाधिता... पर्येति भावः अज्ञानस्यानात्मन्यात्मबुद्धिरूपविपरीतज्ञान... कत्वमुक्तम् "अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः । अवि... तरुसंभूतं बीजमेतद्द्विधा स्थितम्„ इति अत्र स्वाप्नीवापा... भातीत्यनेन दृष्टान्तेन धियो बाधितविषयत्वं विवक्षितं विषयस्य... बाधो नाम तत्र वृत्तिप्रतिबन्ध एव नत्वसत्यत्वं दृष्टान्तदार्ष्टान्तिक... रुभयोरपि ज्ञानतद्विषययोः पारमार्थ्यात् तत्र यथा स्वाप्न... गजतुरङ्गादीनां "न तत्र रथा न रथयोगा नपन्थानो भवन्ति ... रथान् रथयोगान् पथः सृजते„ इति श्रुतेरीश्वरसृष्टानां स्व... द्रष्टृैकानुभाव्यानां तत्कालमात्रावसायिनां परमार्थानामपि ... क्षणिकत्वेन गजतुरगाद्यर्थिनः प्रवृत्तिप्रतिबन्धरूपो बाध एवं ... आत्मभ्रान्तिनिमित्तकोपादित्सया प्रवर्त्तितुमिच्छोः प्रवृत्तिप्रतिबन्ध... रूपो बाधः आत्मनि देहे च हन्तृत्वादिनिमित्तशोकादौ ... त्तिप्रतिबन्धरूपो बाध इत्युभयत्रानुगतोऽर्थः क्रोडीकर्तव्यः दे... त्मबुद्धिः स्वाप्नधीवन्न तात्त्विकसुखदुःखादिमात्रहेतुरपि तु ... त्तरजन्ममरणादिरूपसंसृतिहेतुत्वेन महदनर्थकरी चेत्याह । य... यया अहं त्वमिति बुद्ध्या बाधः जन्ममरणादिरूपः संसार... त्प्रयुक्तो विपर्ययः स्वाभाविकापहतपाप्मत्वाद्याकारस्तद्विप... तानपहतपाप्मत्वाद्याकारश्च भवत इत्यर्थः । अयं भावः । यद्यप... रोक्षं त्वया यक्षैश्चानुभूयते हन्तृत्वादिकं तत्प्रयुक्तस्वेदश्रमा... दिकं च तथापि देहात्मनोरुभयोरपि "हन्ता चेन्मन्यते हन्तुं यश्चैनं ... हन्तारम् अथ चैवं नित्यजातम्„ इत्यादिप्रमाणैर्हन्तृत्वादिबुद्धेर... नमूलत्वप्रतिपादनात् "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्त... इत्यादिभिरीश्वरस्यैव कालशरीरकस्य हन्तृत्वप्रतिपादनाच्च ... श्रमादेश्च सद्वारकतयापीश्वर एव "काठिन्यवान् यो बिभर्ति त... भूम्यात्मने नम" इत्युक्तभूमिद्वारककाठिन्यवदुपपत्तेः न कोऽपि मायाबाध इति ॥ ४ ॥

तत्तस्मात्कालशरीरकस्य भगवत एवोत्पत्तिमरणादिहेतु... त्वात्तमेव भगवन्तं सर्वाणि भूतानि पृथिव्यादीनि ... जीवाश्च विग्रहः शरीरं यस्य तमधोक्षजं सर्वभूतात्मविग्रहं... त्यनेन यक्षेष्वपि भगवदात्मकत्वबुद्धिः कार्येति विवक्षितं ...

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्तेत्युत्तरत्रान्वयः अभवाय मुक्तये हेध्रुव ! ते तुभ्यं भद्रं मङ्गलमस्तु गच्छ गृहान् प्रतीति शेषः भजनप्रकारमाह । सर्वभूतात्मभावेन । चिदचिच्छरीरकत्वेन प्रकारेण अधोक्षजम् अधः कृताः परावृत्ताः अक्षा इन्द्रियवृत्तयो यस्मात् तमिन्द्रियागोचरमित्यर्थः नन्वधोक्षजश्चेत्कथं भजनीयस्तत्राह । भजनीयौ अङ्घ्री चरणौ यस्य तम् अतीन्द्रियत्वेऽपि योगयुङ्मनसाध्येयचरणमित्यर्थः नन्वस्मदादिवत्तस्यापि संसारित्वात्कथममुमेव भजस्वेत्युच्यते तत्राह । भवच्छिदं भवं संसारं छिनत्तीति तं न केवलं स्वयमसंसार्येव अपितु भजतामपि भवच्छिदित्यर्थः ननु प्रकृतिसम्बन्धतत्कार्यादिकमेवहि संसार एवं च जीववत्सर्वभूतात्मविग्रहमित प्रकृतिसंबन्धविधानात्कथं तस्य भवच्छित्त्वं तत्राह । सत्त्वादिगुणमय्या शक्त्या कार्योपयुक्तस्वापृथक्सिद्धविशेषणभूतया आत्मनः स्वस्य संबन्धिन्या मायया प्रकृत्या युक्तं नियन्तृत्वेन युक्तं तया विशेषेण रहितं तादधीन्येन तया विरहितमित्यर्थः जीवस्तु मायापरवश इति संसारी परमेश्वरस्तु तस्याः प्रभुरित्यसंसारीति भावः ॥ ५ ॥ ६ ॥

एवं परमपुरुषार्थलक्षणमोक्षसाधनत्वेन प्रकृतिपुरुषशरीरकस्यामृतेश्वरस्य भगवतो भक्तिं विधेहीत्युपदिश्य तन्मनः परिशीलनाय त्रिवर्गे तं प्रलोभयति । वृणीहीति । हेऔत्तानपादे ! नृप ! यन्मनोगतं मनीषितं तं कामं वरमविशङ्कितः असङ्कोचेन त्वं वृणीहि वरय धर्मादीनां त्रयाणां मध्ये यत्तवेप्सितं तद्वृणीहीत्यर्थः त्रिवर्गवरणं तवानुचितमिति व्यञ्जयन् विशिनष्टि अङ्ग ! हेध्रुव ! परं केवलं परैर्ब्रह्मादिभिरप्यर्ह्यते पूज्यते इत्यर्हौ अम्बुजनाभस्य भगवतः पादौ तयोरनन्तरमव्यवहितचित्तमित्यर्थः त्वां शुश्रुम ॥ ७ ॥

एवं त्रिवर्गे प्रलोभितो महाभागवतो ध्रुवस्त्रिवर्गमनादृत्य भगवच्चरणारविन्दभक्तिदार्ढ्यमेवावृणोदित्याह मुनिः । स इति । राजराजेन कुबेरेण वरवरणाय चोदितः प्रचोदितः स ध्रुवः महाभागवतः भागवतश्रेष्ठः महामतिः धर्मादिष्वल्पास्थिरमतिः हेतुगर्भमिदं विशेषणद्वयं भागवतानां त्रिवर्गस्य निरयप्रायत्वादिति भावः । हरौ भगवति अचलितां दृढां स्मृतिं वव्रे स वराय चोदित इत्यनुवादरूपं पृथग्वाक्यम् अतः स वव्र इति तच्छब्दस्य न पौनरुक्त्यं दृढायाः स्मृतेः फलमाह । यतः अचलितायाः स्मृतेः दुरत्ययं दुरतिक्रमणीयमपि तमः तमःकार्यं संसारात्मकं बन्धं तरति व्यपोहति ॥ ८ ॥

ऐलविलः कुबेरः प्रीतेन मनसा तुष्टेन मनसा तां भगवत्यचलितां स्मृतिं दत्त्वा तस्य ध्रुवस्य पश्यतः सतः अन्तर्दधे अन्तर्हितवान् सोऽपि ध्रुवोऽपि स्वपुरं प्रत्यपद्यत अगात् ॥ ९ ॥

अथानन्तरं भूरिदक्षिणैः समग्रदक्षिणैः द्रव्यं पुरोडाशादि क्रिया ऋत्विग्व्यापारः देवता इन्द्रादिस्तेषां सम्बन्धमात्रे षष्ठी द्रव्यादिसम्बन्धिभिः द्रव्यादिसमवायरूपैरिति यावत् क्रतुभिः कर्मसाध्यम् आराध्यमिति यावत् न केवलं कर्मैव अपितु कर्मणां फलप्रदं यज्ञानामीशं प्रयोजयितारं चायजत यष्टवान् कामकर्मफलप्रदमिति पाठे विहितप्रतिसिद्धयोः फलमित्यर्थः ॥ १० ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

साधनसामग्र्यां भगवत्प्रसादात्स्वरूपानन्दानुभवलक्षणो मोक्षोऽपि तत्तद्योग्यतानुसारेण प्राप्यत इत्युरुर्यापि निर्दिश्यतेऽस्मिन्नध्याये । तत्रादौ ध्रुवकृतापराधं क्षान्त्वा वैश्रवणेन ध्रुवाय वरप्रदानप्रकारं वक्ति । ध्रुवं निवृत्तमित्यादिना । वैशसाद्युद्धात् ॥ १ ॥

परितोषहेतुमाह । यस्त्वमिति ॥ २ ॥

स्वस्य मनोऽश्वेकमत्यं व्यनक्ति । न भवानिति । अप्ययभावयोर्मरणजन्मनोः ॥ ३ ॥

नन्वहं मच्छत्रुनवधिषं न त्वमेतदकार्षीरिति प्रदर्शनं कथमत्राह । अहं त्वमिति । पुरुषस्य परमेश्वरस्य कर्तृत्वाज्ञानादहं त्वं कर्तेति धीरपार्था भ्रान्ता भाति "नाहं कर्ता न कर्ता त्वं कर्ता यस्तु स्वयं प्रभुः" इत्यनेन परमेश्वरकर्तृत्वस्य प्रामाणिकत्वप्रतीतेः कथमिव स्वाप्नीव यथा स्वप्ने जाग्रत्त्वबुद्धिः आत्मन्यविद्यमानकर्तृत्वाभिमानादनर्थोऽपि स्यादित्याह । अनुध्यानादिति । अनुध्यानात्पुनः पुनरात्मनि कर्तृत्वस्मरणात् यया कर्तृत्वधिया सुखादिरूपस्यात्मनो बन्धेन पुत्रमित्रादिस्नेहबन्धेन विपर्ययो दुःखादिर्भवतीत्यतस्तादृशी बुद्धिस्त्वया न कार्येति भावः ॥ ४ ॥

ननु जीवकृतकार्योपक्रमोपसंहारदर्शनात्कथं तस्य जीवस्य कर्तृत्वाभाव इत्याशङ्क्य कर्तृत्वादौ नियमाभावात्तद्दत्तमेव कर्तृत्वं न मम स्वतन्त्रकर्तृत्वमिति निश्चित्य तत्क्रियाविशिष्टं भगवन्तं भजस्वेत्याह । तद्गच्छेति । सर्वभूतानामात्मभावेन कर्तृत्वदानादानयोः कर्ता परमात्मेति स्नेहलक्षणया बुद्ध्या सर्वभूतेष्वात्मा विग्रहो ज्ञानादिगुणपूर्णा मूर्तिर्यस्य स तथा तं यद्वा सर्वभूतानामात्मनि देहे विग्रहः प्रादेशत्वादिलक्षणो यस्य स तथा तम् ॥ ५ ॥

प्रादेशाद्याकारत्वेनावस्थानं कथं गुणशक्तिमन्तरेणात्यतः उक्तं युक्तमिति आत्मसामर्थ्यरूपया शक्त्या युक्तं गुणमय्यात्माधीनया मायया प्रकृत्या विरहितम् ॥ ६ ॥

यद्यपि हरेः करुणावर्षधारापात्रत्वेनान्यतः प्राप्यो वरस्तस्य नास्ति तथापि वैश्रवणो ध्रुवे प्रसन्नः किलेति द्योतनाय वरं वरयेति वक्ति । वृणीहीति । अन्यतः कथं वृणोमीत्यविशङ्कितः अम्बुजनाभस्य हरेः पादयोः सेवायां निरन्तरं सदातनं तदेकमानसमित्यर्थः ॥ ७ ॥

मुमुक्षुणायमेव वरो वरणीय इति शिक्षणाय तस्य वरादानप्रकारमाह । सराजराजेनेति ॥ ८ ॥

ऐलविलः इलविलापुत्रो वैश्रवणः ॥ ९ ॥

ब्रह्मज्ञानोत्पत्तये यज्ञ एव कर्तव्य इति प्रकटनाय तस्य यज्ञकरणप्रकारमाह । अथेति । अथ विषयासक्तिं विहाय पुरप्राप्त्यनन्तरं मङ्गलं कर्मप्रारब्धवान् किंतदित्यत उक्तम् अयजतेति द्रव्यक्रियादेवतानां कर्म विषयम् अकर्मफलप्रदं मोक्षाख्यफलप्रदम् ॥ १० ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भो भो इत्यादिका देवताभिनन्दोक्तयः ॥ १—३ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अज्ञानात् उपाध्यभिमानादेव या अहं त्वमिति धीः साऽपार्थैव अतद्ध्यानादित्यत्र मनुध्यानादिति चित्सुखः ॥ ४ ॥

तदिति युग्मकम् । सर्वभूतानामात्मरूपो विग्रहो यस्य तमिति विग्रहस्यैव परमतत्त्वरूपत्वात् । शक्त्या स्वरूपभूतया मुख्यशक्त्या युक्तं त्रिगुणमय्या स्वात्माधीनमायया विरहितं स्वाश्रययापि तया न स्पृष्टमित्यर्थः ॥ ५ ॥ ६ ॥

वृणीहीति पद्यं व्याख्येयम् ॥ ७ ॥

महाभागवतोऽपि अचलां स्मृतिं वव्र इति न यावन्महतां तेज इत्यादि पितामहवाक्याद्भगवत्स्मरणादौ विघ्नमाशङ्कयंति भावः ॥ ८ ॥ ९ ॥

द्रव्यक्रियादेवतानामिति । द्रव्याद्यात्मकस्य यज्ञस्येत्यर्थ ॥१०॥१२॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

द्वादशे धनदाल्लब्धवरो गत्वा पुरीं हरिम् ।
यज्ञैरिष्ट्वा विरज्यागात् सशरीरो हरेः पदम् ॥

वैशसात् वधात् ॥ १—३ ॥

अतद्ध्यानादेहानुसन्धानात् बन्धः संसारश्च ततो ज्ञानानन्दमयस्य जीवात्मनो विपर्य्ययोऽज्ञानदुःखादिकश्च तौ ॥ ४ ॥

सर्व्वेषु भूतेषु आत्मनः स्वस्येव भावा भावना तेन सर्व्वभूतानि आत्मनि विग्रहे यस्य तम् । अभवाय नास्ति भवो यस्मात्तं विष्णुं प्राप्तुं मायायाः स्वशक्तित्वाद्युक्तं स्वरूपभूतत्वाभावाद्विरहितम् ॥ ५ ॥ ६ ॥

अनन्तरमव्यवधानमति निकटमित्यर्थः ॥ ७ ॥

राज्ञा सह वर्त्तमानेषु सर्व्वेषु लोकेषु राजत इति सराजराजः कुबेरस्तेन ॥ ८ ॥

ऐडविडः कुबेरः ॥ ९ ॥

द्रव्यक्रियादेवतासम्बन्धि कर्म्मप्रदं कर्म्मफलप्रदश्चेति 'स एव कर्म्म कारयति स एव कर्म्मफलं भोजयतीत्यर्थः ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भ्रुवोधनदेनानुमोदितः स्वपुरं गत्वा यज्ञैर्हरिमाराध्य तत्पदमवापेतिवर्णयति । ध्रुवं निवृत्तमिति द्वादशेनाध्यायेन वैशसाद्विनसनात् ॥ १ ॥

यतः दुस्त्यजं वैरमत्यजस्त्यक्तवान् अतः परितुष्टोऽस्मि ॥ २ ॥

अन्ययभावयोः नाशोद्भवयोः कालः "ज्ञः कालकाल„इतिश्रुतिसिद्धः कालशक्तिर्भगवान् ॥ ३ ॥

अज्ञानात् आत्मस्वरूपायोधात् अहं हि हन्ता त्वं वध्यः इत्यादिधीः अपार्था आभाति यथा अतद्ध्यानात् पुरुषेतरभूतव्याघ्रमृगादिध्यानात् स्वप्ने अहं व्याघ्रोहन्ताऽयं मृगोवध्य इत्यादिधीस्तद्वदयंच बन्धः पुनः पुनः शरीरग्रहणं विपर्य्ययः पुनः पुनस्तत्त्यागः ॥ ४ ॥

हेध्रुव! ते भद्रं भवतु गृहं गच्छ यतः सप्तवाप्ययभावयोः प्रभुः तत्तस्मात् तमेव भजस्वेत्युत्तरेण संवन्धः सर्वेषां भूतानां ब्रह्मादिस्तम्बपर्य्यन्तानामात्मनि अन्तरात्मनि योभावोभक्तिस्तेन सर्वभूतात्मभावेन सर्वभूतात्मत्वेन वा सर्वेषां भूतानामचेतनानामात्मनां चेतनानां चयोविग्रह आधारस्तं सर्वभूतस्वरूपो वा विग्रहो यस्य तम् ॥ ५ ॥

गुणमय्या आत्मनां जीवानां वद्धानां मायया विमोहिकया शक्त्या शक्तिमत्तया युक्तम् विशेषतः सर्वेश्वरत्वस्वभावतांपाद्य समस्तदोषत्वादिस्वासाधारणधर्मतस्तया रहितं तद्दोषाद्यकामं यथेष्टम् अनन्तरं दत्तचित्तं त्वां शुश्रुम ॥ ६ ॥ ७ ॥

तमः संसारम् ॥ ८ ॥ ९ ॥

द्रव्यादीनां कर्मसाध्यम् ॥ १० ॥

---

भाषाटीका ॥

मैत्रेयजी बोले मनुजी के उपदेश से ध्रुवजी का उस हिंसा से निवृत्त होना जानकर कुबेर भगवान् अपनी स्तुति करते चारण यक्षकिन्नरों के साथ ध्रुवजी के पास आये और हाथ जोड़े हुये ध्रुवजी से बोलनेलगे ॥ १ ॥

कुबेरजी बोले हें क्षत्रिय पुत्र ध्रुवजी ! मै आप के ऊपर प्रसन्न हुआ हूं जोंकि आपने पितामह मनुजी के वचन से भारी वैर को छोड दिया है ॥ २ ॥

आपने यक्षों को नहीं मारा यक्षों ने भी आपके भाई को नहीं मारा केवल काल ही सब भूतों के उत्पत्ति नाश का हेतु है [illegible] होने से ॥३ ॥

पुरुष को अज्ञान से हम तुम ऐसी व्यर्थ बुद्धि होती है अज्ञान की स्वप्न कीसी मालूम भासती है जिस बुद्धि से पुरुष का बंधन और सुख दुःख का भोग होता हे ॥ ४ ॥

सो हे ध्रुवजी ! अब आप जाओ आप का कल्याण होगा [illegible] भूतों के अंतर्यामी की बुद्धि से सर्व भूत शरीर वाले भक्तों के [illegible] ने लायक चरण वाले संसार के छेदन करने वाले गुणमयी [illegible] माया शक्ति से युक्त तथा अयुक्त भगवान् अधोक्षज का [illegible] करो ॥ ५ ॥ ६ ॥

हे राजन् औत्तानपादि जो तुमारे मनमें होवे सो इच्छा [illegible] मांगो हमसे इसमें शंका मतकरो आप वरलेने के योग्यहो [illegible] आप की श्री भगवान के चरणों मे भक्ति हम ने सुनी है ॥ ७ ॥

मैत्रेयजी बोले कुबेरजी ने जब वर मांग ने का उनसे प्रेरणा [illegible] तब महा बुद्धिमान परमभागवत ध्रुवजी ने भगवच्चरणारविं[illegible] ऐसी अचल भक्ति मांगी कि जिससे यत्न ही विना दुस्तर [illegible] को मनुष्य तरजावै ॥ ८ ॥

तब तो प्रसन्न हो कर कुबेरजी ध्रुवजी को श्री हरिस्मृति [illegible] वर देकर अंतर्धान होगये ध्रुवजी भी अपने पुर को चलेगये ॥ [illegible]

पुर में आकर द्रव्यक्रिया देवता जो यज्ञ के अंग हैं तिनके [illegible] देने वाले सबयज्ञों के ईश्वरजो श्री मन्नारायण तिनका [illegible] दक्षिणा वाले यज्ञों से यजन करते भये ॥ १० ॥

---

सर्वात्मन्यच्युते सर्वे तीव्रौघां भक्तिमुद्वहन् ।
ददर्शात्मनि भूतेषु तमेवावस्थितं विभुम् ॥ ११ ॥
तमेवं शीलसंपन्नं ब्रह्मण्यं दीनवत्सलम् ।
गोप्तारंधर्मसेतूनां मेनिरे पितरं प्रजाः ॥ १२ ॥
षट्त्रिंशद्वर्षसाहस्रं शशास क्षितिमण्डलम् ।
भोगैः पुण्यक्षयं कुर्वन्नशुभैरशुभक्षयम् ॥ १३ ॥
एवं बहुसवं कालं महात्माविचलेन्द्रियः ।
त्रिवर्गौपयिकं नीत्वा पुत्रायादान्नृपासनम् ॥ १४ ॥
मन्यमान इदं विश्वं मायारचितमात्मनि ।
अविद्यारचितस्वप्नगन्धर्वनगरोपम् ॥ १५ ॥
आत्मस्त्र्यपत्यसुहृदोबलमृद्धकोशमन्तःपुरं परिविहारभुवश्च रम्याः ।
भूमण्डलं जलधिमेखलमाकलय्य कालोपसृष्टमिति स प्रययौ विशालाम् ॥ १६ ॥
तस्यां विशुद्धकरणः शिववार्विगाह्य बध्वासनं जितमरुन्मनसा हृताक्षः ।
स्थूले दधार भगवत्प्रतिरूप एतद्ध्यायंस्तदव्यवहितोव्यसृजत्समाधौ ॥ १७ ॥
भक्तिं हरौ भगवति प्रवहन्नजस्रमानन्दबाष्पकलया मुहुरर्द्यमानः ।
विक्लिद्यमानहृदयः पुलकाचिताङ्गो नात्मानमस्मरदसाविति मुक्तलिङ्गः ॥ १८ ॥
सददर्श विमानाग्र्यं नभसोऽवतरद्ध्रुवः ।
विभ्राजयद्दशदिशो राकापतिमिवोदितम् ॥ १९ ॥
तत्रानुदेवप्रवरौ चतुर्भुजौ श्यामौ किशोरावरुणाम्बुजेक्षणौ ।
स्थितावविष्टभ्य गदां सुवाससौ किरीटहाराङ्गदचारुकुण्डलौ ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वस्यात्मनि अस्तर्वे सर्वोपाधिविवर्जिते ॥ ११-१२ ॥

भोगैरैश्वर्यादिभिः अभोगैर्यज्ञाद्यनुष्ठानैः ॥ १३ ॥

बहवः सवा यागाः संवत्सरा वा यस्मिस्तं कालं त्रिवर्गसाधकं नीत्वा अविचलानि संयतानीन्द्रियाणि यस्य ॥ १४ ॥

इदं देहादि भगवन्माययात्मनि स्वस्मिन् रचितं मन्यमानः अत्राविद्यासृष्टिं दृष्टान्तयति अविद्यारचितेति ॥ १५ ॥

आत्मा देहः आत्मादिमायिकमपि पुनः काञ्चनोपसृष्टमनित्यमाकलय्य विचिन्त्य विशालां वदरिकाश्रमम् ॥ १६ ॥

तत्र तत्कृतमष्टाङ्गयोगमाह । तस्यां शिवं वाः उदकं विगाह्य अधिदवेतिस्नानादिनियमा उक्ताः विशुद्धकरण इति शमादयो यमाः आसनादीनि स्फुटमेवोक्तानि जितोमरुत्प्राणो येन आहृता न्यक्षाणि येन भगवतः प्रतिनिधिभूते स्थूले विराड्रूपे यतन्मनो दधार ध्यायन्नव्यवहितो ध्यातृध्येयभेदशून्यः सन्समाधौ स्थितस्तत्स्थूलं व्यसृजत् ॥ १७ ॥

एवमजस्रं नित्यं हरौ भक्तिं प्रकर्षेण वहन्नसौ ध्रुवोऽहमित्यात्मानं न सस्मार यतोमुक्तलिङ्गस्त्यक्तशरीराभिमानः तत्र हेतवः आनन्दवाष्पस्य कलया बिन्दुप्रवाहेणाभिभूयमानः विक्लिद्यमानं द्रवद्धृदयं यस्य पुलकैर्व्याप्ताङ्गः ॥ १८ ॥ १९ ॥

अन्वनंतरं देवप्रवरौ ददर्शेत्यनुषङ्गः गदामवष्टभ्य स्थितौ किरीटादिभिः सहिते चारुणी कुण्डले ययोः ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ॥

तस्य स्वयं कर्मणि अवकाशाभावं व्यञ्जयन् सन्ततां भक्तिं दर्शयति सर्वात्मन्निति। तीव्रो ज्ञानकर्माद्यनावृत ओघः प्रवाहो यस्यास्तां भक्तिमुद्वहन् सातत्येन कुर्वन् तज्ज्ञानपरिपाकात्स्फुरद्गुणं तमेव सर्वत्र ददर्श सतां विभुं स्वाभाविकयाचिन्त्यया शक्त्यामध्यमाकारत्वेपि व्यापकमित्यर्थः ॥ ११-१२ ॥

भोगैरित्यादिलोकानुकरणमात्रम् ॥ १३ ॥

नीत्वा गमयित्वा ॥ १४ ॥

मन्यमान इति युग्मकम् भगवन्मायया सतोऽप्रीतावसतः प्रतीतिकारिण्या रचितमध्यस्तम् अत्र मायारचितत्वे मायिकमपि प्रातीतिकमपि अनित्यं नश्वरमिति मिथ्यात्वानित्यत्वयोः स्फुटमेवभेदोऽवगमितः ॥ १५ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

तत्र बदरिकाश्रमे एतदष्टाङ्गयोगानुष्ठानादि तत्रत्ययोगिनाम वक्षाभावाय द्वित्रिदिनं वाह्यत एव नत्वान्तरीणमित्यग्रिमग्रन्थानुसारेण ज्ञेयम् ॥ १७ ॥

योगानुष्ठाने तस्यावकाशाभावं दर्शयन् सन्ततामेव भक्तिं दर्शयति । भक्तिमिति तस्माद्गार्हस्थ्ये कर्मयोगो वैराग्यं तत्राष्टाङ्गयोगादिकं च ईश्वराज्ञापालनार्थमेवेति ज्ञेयम् ॥ १८ ॥

राकापतिमिवेत्यत्र सादृश्यं निरूपितत्वसंबन्धेन राकापतावन्वेति तच्च प्रयोजकत्वसम्बन्धेन समानधर्मे सच स्वरूपसम्बन्धेन विमाने तथाच राकापतिनिरूपितसादृश्यप्रयोजकधर्मवदभिन्नविमानमिति बोधः एवं सर्वत्रोपमानस्थविभक्तिस्साधुत्वमात्रार्था ॥ १९ ॥

तत्र विमाने अनु विमानदर्शनानन्तरम् अनुपङ्गोऽन्वितस्य पुनस्सम्बन्धः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं यज्ञैरेवायजत अपितु पितामहाद्युपदेशानुसारेण सर्वात्मकत्वेन भगवन्तमभजत चेत्याह । सर्वात्मनीति । सर्वेषामात्मनि अन्तः प्रविश्य प्रशासनेन धारके अत एव सर्वे सर्वशब्दवाच्ये सत्त्व इति पाठे शुद्धसत्त्वमयदिव्यमङ्गलविग्रहविशिष्ट इत्यर्थः ॥ असत्त्व इति छेदेतु सत्त्वादि गुण रहित इत्यर्थः अच्युते आश्रितत्रातरक्षैकदीक्षे भगवति तीव्रौघामविच्छिन्नप्रसरां भक्तिमुद्वहन् कुर्वन् आत्मनि स्वस्मिन् सर्वेषु भूतेषु चावस्थितमात्मत्वेनावस्थितं भगवन्तं तमेवाच्युतं ददर्श साक्षात्कृतवान् ॥ ११ ॥

प्रजाः शीलसंपन्नं सुखभावसद्वृत्त्यादियुक्तं ब्रह्मण्यं ब्राह्मणसेवापरायणं दीनेषु वत्सलं दोषानपेक्षया रक्षकं धर्ममर्यादानां पालकं तमेव ध्रुवमेव पितरं मेनिरे पितरमिवामन्यन्तेत्यर्थः ॥ १२ ॥

भोगैः सुखानुभवैः पुण्यक्षयमभोगैर्दुःखानुभवैरशुभक्षयं पापक्षयं च कुर्वन् पुण्यपापयोरपि स्वफलजननद्वारा ब्रह्मप्राप्तिविरोधित्वेन अनुभवेनैव पुण्यपापे विधुन्वन्नित्यर्थः षट्त्रिंशद्वर्षसाहस्रं वर्षाणां सहस्राण्येव साहस्राणि ततः समाहारद्विगुः षडधिकविंशतिसहस्रसंख्याकवर्षपर्यन्तमित्यर्थः क्षितिमण्डलं शशास अनुशिष्टवान् ॥ १३ ॥

बहुसर्वं बहवः सवाः संवत्सरा यस्मिन् तं त्रिवर्गौपायिकं त्रिवर्गसाधनं कालमविकलेन्द्रियः अव्याहतेन्द्रियः तथापि महात्मा जितेन्द्रियो नीत्वा पुत्राय नृपासनमदात् ॥ १४ ॥

तत इदं देवमनुष्याद्यात्मकं विश्वमात्मनि जीवे मायारचितमाया शब्दस्तस्य[illegible]परया प्रकृतिवाची प्रकृतिपरिणामरूपं स्वप्नगन्धर्वनगरोपमं स्वाप्नगंधर्वनगरमिवास्थितं मन्यमानः ॥ १५ ॥

तथा आत्मा देहः स्त्रियो दाराः अपत्यानि पुत्रादयः सुहृदश्च तान् ऋद्धं समृद्धं पूर्वोत्तरा[illegible]ये बलं चतुरङ्गबलयुक्तं सैन्यं कोशं धनं रमणीयाः परिविहारभुवः परितोविहारभुवः प्रतिविहारभुव इत्यपि पाठ[illegible]मेवार्थः । जलधिमेखला यस्य तत् जम्बूद्वीपात्मकं भूमण्डलं च सर्वं कालोपसृष्टं कालेनोपद्रुतमस्थिरमिति यावत् आ[illegible] विचार्य सः ध्रुवः विशालां बदरिकाश्रमं ययौ ॥ १६ ॥

तत्र [illegible]ङ्गयोगमाह । तस्यामिति । तस्यां विशालायां शिवं वाः निर्मलं पवित्रं च वारि विगाह्य प्रविश्य अनेन स्नानादि[illegible]म उक्तः विशुद्धकरणः विशुद्धेन्द्रियः अनेन शमदमादयो उक्ताः वद्धानि आसनानि स्वस्तिकादीनि येन संजितो मरुत् येन सः मनसा आहृतानि प्रत्याहृतानि अक्षाणि श्रोत्रादीनि याणि येन एवमासनादीनि स्फुटमेवोक्तानि स्थूले भगवद्रूपे भगवद्दिव्यविग्रहे दिव्यात्मरूपापेक्षया स्थौल्यमत्र [illegible] दधार मनो निवेशितवान् एवं धारणा उक्ता एतद्भगवद्रूपे मध्यवहितविजातीय प्रत्ययान्तररहितः ध्यायन् तद्दिव्यात्मस्वरूपं ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इतिस्मरणात् [illegible] व्यसृजत् अनुसंहितवान् यद्वा तद्भगवत्प्रतिरूपं व्यसृजत् [illegible]संहितवान् तद्भगवत्प्रतिरूपं व्यसृजत् विसृष्टवान् दिव्या[illegible] विसृज्यदिव्यात्मस्वरूपमनुसंहितवानित्यर्थः शुभाश्रये [illegible] निवेशमात्रं धारणा शुभाश्रयगतकान्तिसौकुमार्यादिगुण[illegible] ध्यानं तज्जनितानन्दातिशयात्पारवश्यं समाधिरिति भेदः ॥ १७ ॥

एवमजस्रं भगवति नित्यं प्रकर्षेण भक्तिं वहन् कुर्वन् [illegible] ध्रुवः आत्मानं न सस्मार मनुष्यत्वादिवाह्याकारविशिष्टत्वेन स्मृतवान् यतोमुक्तलिङ्गः त्यक्तदेहात्माभिमानः तत्र [illegible] आनन्दवाष्पकलया विन्दुप्रवाहेणाभिभूयमानः विक्लिद्यमान हृदयं यस्य सः पुलकैर्व्याप्ताङ्गः ॥ १८ ॥

स ध्रुवः उद्यतमुदितं राकापतिमिव पौर्णिमाचन्द्रमिव [illegible] दिशः विभ्राजयत् नभसः अवतरत् अवरोहत् विमानं ददर्श ॥ १९ ॥

अनु अनन्तरं तत्र विमानाग्रे देवप्रवरौ ददर्शेत्यनुषङ्गः तौ [illegible] नष्टि किशोरौ यौवनारम्भजुषौ गदामवष्टभ्य स्थितौ किरीटा[illegible]भिः सहिते चारु कुण्डले ययोः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

सर्वात्मनि सर्वान्तर्यामिणि सर्वे "पूर्णो विश्वः पूर्णस्तथा [illegible] समस्तश्चाभिधीयत" इत्यभिधानात् "सर्वः शर्वः शिवस्थाणुः" नामत्वात् सर्वनामसंज्ञा नास्ति आत्मनि स्वस्मिन् भूतेषु [illegible] स्थितं तं विभुं व्याप्तं यं पुरा तपसा प्रत्यक्षीचकार तमित्यर्थः ॥ [illegible]

तस्य प्रजानुरञ्जनविधानमाह । तमेवमिति ॥ १२ ॥

पुराकृतिपर्थैर्मासैरेव भगवदनुग्रहमवाप्याभीष्टभाग्वतो [illegible]स्य किमुवक्तव्य मेतैरिति भावेन तस्य क्षितिपालनकालावधि[illegible] षट्त्रिंशदिति । प्रारब्धपुण्यक्षयमशुभक्षयं ज्ञानसामर्थ्यात् ॥ १३ ॥

बहुसवं बहुतिथमविकलेन्द्रियो वशीकृतेन्द्रियः जरसा [illegible]रादीन्द्रियवैकल्यादन्यदाविलक्षणं न प्राप्त इति वा त्रयाणां धर्मकामार्थानामौपयिकमुपयोगसाधनं देहं नीत्वा [illegible] विधायेत्यर्थः ॥ १४ ॥

पुत्राय सिंहासनं दत्त्वायं किमकार्षीत् गृह एवावस्थितः [illegible]वैराग्यादिसाधनह्रासेन लोकोपहासविषयः स्यादित्यतः [illegible] विहाय देशान्तरं गत इति वक्तव्यमतः कं देशं शुचितीर्थम[illegible]ति तत्राह मन्यमान इत्यादिना । स ध्रुव इदं विश्वं कालोपसृष्ट[illegible]ता कालेन नष्टं भवतीति मन्यमानो विशालां बदरिकाश्रमे [illegible] मानां नदीं प्रययौ इत्यन्वयः "विशालाबदरी प्रोक्ता नगरी [illegible] तथा" इत्यभिधानं कीदृशं विश्वमात्मन्याधारतया [illegible]

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रचितम् "अनिर्देश्ये पुमान्विष्णोरित्यभिधानादस्य विष्णोर्विषयेच्छया रचिते स्वप्नगन्धर्वनगरे उपमा यस्य तत्तथोक्तम्,, महामायेत्यविद्येति नियतिर्मोहिनीति च प्रकृतिर्वासनेत्येवं तवेच्छानन्तकथ्यते। इत्यनेन निरुपपदमायाशब्दस्य हरेरिच्छावाचित्वं कथमितीयमाशङ्का परिहृतेति ज्ञायते ॥ १५ ॥

नन्विदमीश्वरेच्छारचितमिति वक्तुं न युक्तं तथात्वे मिथ्याभूतस्वप्नादिसारूप्यकथनमनुपपन्नं तदुच्यते तस्मान्मायाशब्देनेन्द्रजालमेवोच्यते उक्तमानस्यानेकार्थवृत्तिगवादिशब्दवदुपपत्तेरित्यत उक्तं कालेति उर्वारुकश्यामतादिवत्कालान्तरेऽन्यथा दर्शनाद्यदृष्टं तन्नष्टमिति क्षणभङ्गुरत्वात्स्वाप्नादिसाम्यं न तु मिथ्यात्वात्तस्य चार्थक्रियाकारित्वेन सत्यत्वस्य प्रामाणिकत्वात्तदुक्तम् "अन्यथात्वात्क्षिप्रनाशाज्जगत्स्वप्नादिवत्स्मृतं वर्तमानं नियत्येव सदैव परमात्मनीति आत्मनित्युक्त्या च सत्यत्वमवगम्यते अनादिनित्यनिरस्तकुहकस्य हरेरिन्द्रजालाश्रयत्वं न युज्यते सदानिरस्तकुहकमिति स्वोक्तेश्च निष्कलं निष्क्रियं शान्तमिति श्रुतेः निष्क्रियब्रह्मैक्यमात्मनो जानतो ध्रुवस्य विशालागमनक्रियायोगाच्च आत्मस्त्रीपुत्रादीनां विभ्रान्तभूतत्वेन तद्ग्रहणेन गृहीतानामपि पुनर्वचनं दुष्करं तत्त्यागमपि कृतवानिति ध्रुवस्य वैराग्यातिशयद्योतनायेति परितोषिदाश्भुवः आकलय्य निश्चिरय ॥ १६ ॥

तत्र गतोऽपि पितापुत्रविषयस्नेहं मुक्त्वा वैराग्यद्रढीयस्तया भगवद्भक्तिरामालिङ्गितस्य मुग्धस्येव स्थितस्य तदुपास्तिप्रकारं वक्ति तस्या इति तस्यां विशालायाः शिवांशः मङ्गलवारि स्थूले पाताला दिके नैतन्निजमित्यत उक्तं प्रतिरूप इति शिलावत्प्रतिमास्थाने तदुक्तम् शिलावत्प्रतिमैषा हि विष्णोर्लोकचतुर्दशीति समाधौ निरायासेन चित्तस्य ध्येयवस्तुविषयीकरणमतिप्रवाहे सति अभ्यस्तत्वात्स्थूलध्यानं विसृजन् स्वबिम्बोपास्तेरावश्यकत्वेन स्थूलसन्निहितरूपैक्येन सूक्ष्मरूपमस्मरदित्यर्थः अव्यवहितः स्थूलसन्निहितसूक्ष्मरूपयोरभेदं पश्यन्नित्यर्थः ॥ १७ ॥

तस्यासंप्रज्ञातसमाध्यवस्थामाह । भक्तिमिति । अहमसौ ध्रुव इत्यात्मानं नास्मरत् किंतु भगवन्तमेवास्मरदित्यनेन जीवन्मुक्तत्वं लक्षयति मुक्तलिङ्गः सूक्ष्मशरीराभिमानरहितः ॥ १८ ॥

ध्रुवस्य हरेरपरोक्षज्ञानोत्पन्नप्रसादचिन्हमाह । सददर्शेति । विभ्राजयत् दीपयत् राकापतिं पूर्णचन्द्रम् ॥ १९ ॥

वृक्षात्पतत्पर्णमिव स्वर्गाच्च्युतं नक्षत्रमिव विमानं नाद्राक्षीत् किंतु सनाथमित्याह । तत्रेति । अनु अनन्तरं तत्र विमाने स्थितौ ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भोगैरित्यादिकं लोकानुकरणमात्रं मायया ॥ १३ ॥

अविचलानि विपरिणामादिरहितानि इन्द्रियाणि यस्य ॥ १४ ॥

मन्येति युग्मकम् । मायया रचितमध्यस्तम् आत्मा स्वपरयेति चिदसुखः वासवः प्राणाः ॥ १५—१६ ॥ २२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृत सारार्थदर्शिनी ।

राजानोऽपि देवब्राह्मणान्निमन्त्रणकान् क्रतून् कुर्वन्ति । तान् विना न राज्ञः व्यवहारसिद्धिरिति तदनुरोधेनैव तस्य यज्ञादिकर्मकरणं स्वप्रतिमूर्तिद्वारैव । वस्तुतस्तु स स्वयमवकाशमेव कर्मणि नैव लभत इत्याह । सर्वात्मनि । अथचासर्वे सर्वव्यतिरिक्तस्वरूपे आत्मन्यन्तः करणे सर्वभूतेषु बहिरपि तद्ध्यानपरिपाकात् स्फूर्त्या ददर्श ॥ ११ ॥ १२ ॥

अभोगैर्व्रतनियमादिभिरशुभक्षयं कुर्वन् कर्तुमिच्छन्नित्यर्थः । अत्र तुमर्थे शतृप्रत्ययः तुमुनि च सर्वत्र इच्छतिराक्षेपलब्ध एव भवति यथा देवदत्तो भोक्तुं व्रजतीत्यत्र भोक्तुमिच्छन् व्रजतीत्यर्थो लभ्यते इति तस्य पुण्यपापक्षयचिकीर्षादैन्येनैव वस्तुतस्तूत्पन्नप्रेमत्वात्तस्य पुण्यपापे नैव स्तः ॥ १३ ॥ १४ ॥

बहवः सम्वत्सरा यत्र तं त्रिवर्गोपयोगिनं कालं नीत्वा गमयित्वा ॥ १५ ॥

इदं मायारचितं मायारचितत्वात् सत्यमपि आत्मनि या अविद्या तया रचितैः स्वप्नगन्धर्वनगरैः सहोपमा यस्य तत् असत्यमिवाशुभवन्नित्यर्थः ॥ १५ ॥

आत्मा देहस्तदादिकं सर्वं कालेनोपसृष्टं ग्रस्तमित्याकलय्य विशालां बदरिकाश्रमं ययौ ॥ १६ ॥

विशुद्धकरण इत्यादीनि यमाद्यष्टाङ्गानि भगवत्प्रतिरूपे प्रतिनिधिभूते विराड्रूपे दधार धारणामकरोत् एतद्ध्यायअव्यवहितः भगवत्स्वरूपे व्यवधानशून्यः सन् समाधौ स्थितः तत् स्थूलं व्यसृजत् ॥ १७ ॥

एतच्च सर्वं तत्रत्यानां योगिनां सदाचारसम्मानार्थं छिन्नदिनमेवानुरोधेन चकार वस्तुतस्तु योगे तस्यावकाश एव नास्तीत्याह । भक्तिमिति । इति हेतोरेव मुक्तलिङ्गस्त्यक्तदेहाभिमानः न तु योगाद्धेतोरिति गार्हस्थ्ये कर्मयोगो वैराग्येऽष्टाङ्गयोगश्च तस्य लोकप्रदर्शनार्थक एव बभूवेति भावः ॥ १८ ॥ १९ ॥

तत्र विमाने अनु अनन्तरं देवप्रवरौ ददर्श ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वेति । यस्मिन् सर्वं यतः सर्वं यः सर्वः सर्वरूपधृगित्यादिस्मृतिप्रसिद्धे ॥ ११ ॥ १२ ॥

अभोगैर्व्रतादिभिः ॥ १३ ॥

बहुसमं बहुसंवत्सरात्मकम् त्रिवर्गौपयिकं धर्मार्थकामसाधनम् अविचलेन्द्रियः संयतकरणः ॥ १४ ॥

विश्वं मायारचितं प्रकृत्या निजशक्त्या महदादिक्रमेण विरचितं भगवतेति शेषः तथात्मनि जीवस्थाने अविद्यया स्वरूपज्ञानाभावेन रचितमिदं प्रसिद्धं शरीरं च स्वप्नगन्धर्वनगरोपमम् तद्वदनित्यं मन्यमानः ॥ १५ ॥

आत्मनस्त्र्यादिकंच कालोपसृष्टं कालग्रस्तमाकलय्य निर्धार्य विशालां प्रययौ ॥ १६ ॥

तस्यां विशालायां शिवं पवित्रंवाः गाङ्गं जलं विगाह्य प्रविश्य स्नानादिनियमान्विधायेत्यर्थः विशुद्धकरणः सम्पादितसमादियमः आसनं कुशादिना स्वस्तिकमुद्रया च बध्वाजितमरुत् कृतप्राणायामः मनसा आहृताक्षः कृतप्रत्याहारः भगवत्प्रतिरूपे भगवद्विग्रहे स्थूले एतन्मनो दधार धारणां कृतवान् सामान्यतः सर्वस्मिन् विग्रहे मनोनिवेशनं धारणा पुनर्ध्यायन् ध्यायन् विशेषतः चरणाद्यङ्गध्यानं कुर्वन् समाधौ अव्यवहितः

विज्ञाय तावुत्तमगायकिङ्करावभ्युत्थितः साध्वसविस्मृतक्रमः ।
ननाम नामानि गृणन्मधुद्विषःपार्षत्प्रधानाविति संहताञ्जलिः ॥ २१ ॥
तं कृष्णपादाभिनिविष्टचेतसं बद्धाञ्जलिं प्रश्रयनम्रकन्धरम् ।
सुनन्दनन्दावुपसृत्य सस्मितं प्रत्यूचतुः पुष्करनाभसंमतौ ॥ २२ ॥

सुनन्दनन्दावूचतुः ।

भोभो राजन् ! सुभद्रं ते वाचं नोऽवहितः शृणु ।
यः पञ्चवर्षस्तपसा भवान् देवमतीतृपत् ॥ २३ ॥
तस्याखिलजगद्धातुरावां देवस्य शार्ङ्गिणः ।
पार्षदाविह संप्राप्तौ नेतुं त्वां भगवत्पदम् ॥ २४ ॥
सुदुर्जयं विष्णुपदं जितं त्वया यत्सूरयो प्राप्य विचक्षते परम् ।
आतिष्ठ तच्चन्द्रदिवाकरादयो ग्रहर्क्षतारा: परियन्ति दक्षिणम् ॥ २५ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

परमानन्दादबहिर्भूतः तद्ध्यानं विसृजत् ध्यानजन्यपरमानन्दनिमग्नत्वलक्षणां समाधिं लब्धवानित्यर्थः ॥ १७ ॥

एवमजस्रं नित्यं हरौभक्तिं प्रवहन् आनन्दवाष्पकलया मज्जनानन्दजाश्रुधारया मुहुरर्द्यमानः विक्लिद्यमानहृदयः द्रवितचित्तः आत्मानमप्यसौ ध्रुवोनोमस्मारकृतः संसारमितिभावः इति शब्दोहेत्वर्थे यतोमुक्तिलिङ्गमुक्तोऽहंकारादिरूपसंसारिकचिन्हः ॥ १८ ॥ १९ ॥

तद्विमाने अनुअनन्तरं देवप्रवरौ ददर्शेति पूर्वेणान्वयः ॥ २० ॥

भाषाटीका

सब से भिन्न सब जीवों के आत्मा जो अच्युत भगवान् तिन में अखंडप्रवाहवाली भक्ति को धारण करते हुए अपने आत्मा में तथा सब भूतों में उन्हीं परमात्मा कूं ध्रुवजी निरंतर दर्शन करतेरहे ॥ ११ ॥

उन को इस प्रकार के शील स्वभाव से युक्त ब्राह्मण रक्षक दीनदयाल धर्म मर्यादा के रक्षक पिता के सदृश सब प्रजा मानने लगे ॥ १२ ॥

यज्ञादिकों से पाप का क्षय करके सुख भोग से पुण्य की समाप्ति करके ध्रुवजी ने छत्तीस हजार वर्ष पर्यन्त पृथिवी मण्डल का राज्य किया ॥ १३ ॥

इस प्रकार ध्रुव जी जितेंद्रिय होकर धर्मार्थ काम संपादन के योग का बहुत सा काल विताकर फिर राज्य सिंहासन अपने पुत्र वत्सर के अर्थ देदिया ॥ १४ ॥

यह सब जगत् भगवान की अविद्यानामा शक्ति से आत्मा ही में रचित गंधर्वनगर सा नश्वर है ऐसा जानकर देह भार्या पुत्र सुहृद सेना पूरा खजाना रनवास विहारके बगीचेकी सुंदर भूमि समुद्र की खाई वाला पृथिवी मंडल एसब काल से ग्रसित है ऐसा जान कर बदरीनारायण को चलेगये ॥ १५ ॥ १६ ।

उस बदरिकाश्रम मे दिव्य तीर्थों के स्नान करनेसे अंतःकरण को शुद्ध किया सिद्धासिक आसन में स्थित होकर प्राणायाम किये इन्द्रियों को रोककर प्रत्याहार किया भगवान् के स्थूल के ध्यान में मन को लगाया फिर मन स्थिर होने से स्थूल रू भी छोडकर सूक्ष्मरूप की समाधि मे स्थित भये ॥ १७ ॥

हरि भगवान् के विषयनिरन्तर भक्ति को धारण करते अश्रुपात बारम्बार होते थे प्रेम के मारे हृदय व्याकुल हो रहा अंगों में पुलकावली होजाती थी फिर शरीर का अनुसं छूटजाने से अपने आत्म स्वरूप को भी ध्रुवजी भूल गये ॥ १८

तब ध्रुवजी ने आकाश से उतरते एक सुंदर विमान देखा जो विमान दशों दिशों को प्रकाश करता हुआ चंद्रमा सरीका मालूम पडता था ॥ १९ ॥

तिस के पीछे दो भगवत्पार्षद देखे वे देवतों मे श्रेष्ठ हैं भुजा वाले हैं श्यामवर्ण वाले हैं किशोर अवस्था वाले हैं कमल सरीके नेत्र वाले हैं सुंदर पीताम्बर पहिरे हैं किरीट बाजूबंद सुंदर कुंडल धारण किय हैं गदा के अवलंब खडे हैं ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उत्तमगायः पुण्यश्लोकः तस्य किङ्करौ तौ विज्ञाय । मधुद्विषः पार्षत्प्रधानाविति हेतोः । साध्वसेन सम्भ्रमेण विस्मृतः पूजाक्रमो येन । केवलं तस्य नामानि गृणन् ननाम ॥ २१ ॥ २२ ॥

सुभद्रमिति सशरीरस्यैव विष्णुपदारोहणाभिप्रायं अतीतृपत् तर्पितवान् ॥ २३ ॥

आवां तस्य पार्षदौ ॥ २४ ॥

सुदुर्जयत्वे हेतुः सूरयः सप्तर्षयोऽपि यदप्राप्य केवलं स्थिताः पश्यन्ति । यत्र चन्द्रादयः प्रदक्षिणं यथा भवति तथा परिक्रामन्ति तदातिष्ठ अधितिष्ठ ॥ २५——२६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ॥

पूजाक्रमविस्मरणं च युक्तमेव मन्त्रकपूजाभ्यधिकेत्युक्तेः केवलमिति अन्याङ्गव्यावृत्तिः नामोच्चारणं च तयोः प्रीत्यर्थमेव ॥ २१ ॥

प्रत्यूचतुः प्रीत्योचतुरिति पाठद्वयम् ॥ २२ ॥

भोभोरित्यर्द्धकम्। सशरीरस्येति। श्रीगुरूपदेशानन्तरं सर्वेषामेवोपासकानां चिन्मयदेहप्रादुर्भावक्रमेण भौतिकदेहप्रध्वंसोऽभिप्रेतः अन्यथा प्रदर्शनं तु बहिर्मुखमतोत्खाताभावार्थमेव भक्तितत्त्वस्य परमसुगोप्यत्वात् ॥ २३ ॥

यः पञ्चेति सार्द्धकम्। तपसा ध्यानरूपेण ॥ २४ ॥

सूर्य्यादीनां स्वगत्या वामावर्त्तित्वेऽपि दक्षिणं परियन्तीति ज्योतिश्चक्रगत्योक्तं ध्रुवस्य तत्त्वतस्तदसक्तत्वात्॥ २५ ॥ २६ ॥२७॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उत्तमगायः पुण्यश्लोको भगवान् तस्य किङ्करौ विज्ञाय मधुद्विषः परिषत्प्रधानाविति हेतोः साध्वसेन संभ्रमेण विस्मृतपूजाक्रमः केवलं तस्य नामानि गृणन् संहताञ्जलिर्बद्धाञ्जलिर्ननाम ॥ २१ ॥

कृष्णस्य पादयोर्निविष्टा चेतना चित्तं यस्य प्रश्रयेण विनयेन नम्रा प्रह्वीभूता कन्धरा यस्य तं ध्रुवमुपसृत्य समीपमागत्य पुष्करनाभस्य पद्मनाभस्य भगवतः संमतौ भृत्यौ सुनन्दनन्दौ सस्मितेन सहितं यथा तथा प्रीत्या प्रीतिपूर्वं सूचतुः ॥ २२ ॥

हेराजन्! ते तुभ्यं भद्रमस्तु नोऽस्माकं वाचमवहितः सावधानचित्तस्त्वं शृणु किं तत्राह। यो भवान् पञ्चवर्षः तपसा देवं भगवन्तमतीतृपत् तर्पितवान् ॥ २३ ॥

तस्याखिलजगन्निर्माणचतुरस्य सर्वेश्वरेश्वरस्य शार्ङ्गिणो भगवतः पार्षदावावां त्वां भगवत्पदं प्रतिनेतुं इह संप्राप्तौ ॥ २४ ॥

सुदुर्जयं त्ववितरैर्दुःखेनाप्यसाध्यं विष्णुपदं त्वया जितं साधितं सुदुर्जयत्वमेवाह। सूरयः सर्वेषामुपरिष्टादवस्थिताः सप्तर्षिप्रभृतयः यत्पदमप्राप्यैव परं केवलं विचक्षते पश्यन्ति तथा यत्पदं चन्द्रादयः सोमप्रभृतिग्रहादयश्च प्रदक्षिणं यथा भवत्येवं परियन्ति परितो भ्रमन्ति ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ॥

उत्पन्ननिर्दोषज्ञानत्वात् सहसा विमानपुरुषदर्शनाद्वा तस्य भ्रान्तिज्ञानं नाभूदिति भावेन तत्सत्कारप्रकारमाह। विज्ञायेति। प्रागदृष्टश्रुतवस्तुदर्शने साध्वसलक्षणान्तःकरणवृत्तिविशेषः संभ्रमो भवति तेन सन्नो नष्टो विक्रमः प्रवृत्तिविशेषो यस्य स तथोक्तः उत्तमो भावो लीला क्रिया वा विभूतिर्वा यस्य स तथोक्तः तस्य हरेः किंकरौ सदाक्षिगतौ भूत्वौ संहताञ्जलिर्बद्धाञ्जलिः ॥ २१ ॥

आत्मनो देवत्वेन हस्तादिसंज्ञया स्वागमनज्ञापनं विनैव स्वाभिप्रायसूचनुरित्याह। तमिति। उपलभ्य दृष्ट्वा ॥ २२ ॥

भवान् यं देवमतीतृपत्तृप्तमकार्षीत्तस्य हरेः पार्षदौ त्वां भगवत्पदं नेतुमिह प्राप्तौ विद्धीत्यन्वयः ॥ २३ ॥ २४ ॥

वैकुण्ठं नेतुं किंनेत्याहतुरिति ब्रूते। सुदुर्जयमिति। जितं साधितं सूरयः सप्तऋषिप्रभृतयो यदप्राप्य परं दूरादेव चक्षते पश्यन्ति तर्हि तद्वहनं विपिनं किंनेत्यतउक्तं चन्द्रइति चन्द्रदिवाकरादयो ग्रहा ऋक्षाणि सप्तविंशति संख्याता अश्विन्यादयस्तारा मेषादिराशयो व्योमतले दृश्यमाना ज्योतिर्मूर्तयो वा दक्षिणं परियन्ति प्रदक्षिणं कुर्वन्ति तदातिष्ठेत्यन्वयः ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

भो भो इत्यर्द्धकम् ॥ २३ ॥

यं पञ्चेति सार्द्धकम् ॥ २४ ॥

सुदुर्जयमिति। यदप्राप्यैव परं ब्रह्मान्वेषयन्ति नतु तत् प्राप्यापि। तस्यैव परब्रह्मरूपत्वात् सूर्यादीनां स्वगत्या वामावर्त्तत्वेऽपि प्राप्तिः परियन्ति दक्षिणमिति ज्योतिश्चक्रगत्या व्यपदिश्यते ध्रुवपदस्य तदसक्तत्वात् ॥ २५——२८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

साध्वसेन सम्भ्रमेण विस्मृतः पूजाक्रमः केवलं तस्य नामानि जय नारायण! जय गोपाल! जय गोविन्देत्याद्युच्चारयन्ननाम ॥ २१ ॥ २२ ॥

सुभद्रं त इति। सशरीरस्यैव विष्णोः पदारोहणाभिप्रायः ॥ २३ ॥ २४ ॥

सूरयः सप्तर्षयोऽपि यद्प्राप्य केवलमधः स्थिताः पश्यन्ति। चन्द्रादयः दक्षिणं परियन्ति प्रदक्षिणी कुर्वन्ति ॥ २५—२६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

उत्तमैः सनकनारदादिभिर्गीयते इत्युत्तमगायस्तस्य किंकरौ विज्ञाय अभ्युत्थितः साध्वसेन संभ्रमेण विस्मृतः सत्कारक्रमो येन सः इतिहेतोः पार्षदप्रवरौ केवलं ननाम किंकुर्वन् मधुद्विषो नामानि गृणन् ॥ २१ ॥

सस्मितं यथा स्यात्तथा प्रत्यूचतुः ॥ २२ ॥ २३ ॥ २४ ॥

यत्पदं सूरयः सप्तर्षयः अप्राप्य परं केवलं अधः स्थिता विचक्षते पश्यन्ति यच्चन्द्रादयः दक्षिणं प्रदक्षिणं यथा स्यात्तथा परियन्ति परितोगच्छन्ति तदातिष्ठ ॥ २५ ॥

---

भाषाटीका।

उन दोनों को परमात्माके किंकर जानकर संभ्रम होनेसे पूजा के क्रम को भूलगये पार्षदों में श्रेष्ठ उनको जानकर श्रीहरि के नाम को उच्चारण कर करके हाथ जोड कर नमस्कार किया ॥ २१ ॥

पद्मनाभ भगवान् के परमप्रिय उन दोनों पार्षदों ने देखा कि कृष्ण चरणारविन्द में जिनका मन लगा हुआहै हाथ जोडे हैं प्रेमसे मस्तक नमाये है तब सुनंदनंद दोंनों पार्षद मंद हासस बोले ॥ २२॥

अनास्थितं ते पितृभिरन्यैरप्यङ्ग ! कर्हिचित् ।
आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदम् ॥ २६ ॥
एतद्विमानप्रवरमुत्तमश्लोकमौलिना ।
उपस्थापितमायुष्मन्नधिरोढुं त्वमर्हसि ॥ २७ ॥

मैत्रेयउवाच ।

निशम्य वैकुण्ठनियोज्यमुख्ययोर्मधुच्युतां वाचमुरुक्रमप्रियः ।
कृताभिषेकः कृतनित्यमङ्गलो मुनीन् प्रणम्याशिषमभ्यवादयत् ॥ २८ ॥
परीत्याभ्यर्च्य धिष्ण्याग्र्यं पार्षदावभिवन्द्य च ।
इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम् ॥ २९ ॥
तदोत्तानपदः पुत्रो ददर्शान्तिकमागतम् ।
मृत्योर्मूर्ध्नि पदं दत्त्वा आरुरोहाद्भुतं गृहम् ॥ ३० ॥
तदा दुन्दुभयो नेदुर्मृदङ्गपणवादयः ।
गन्धर्वमुख्याः प्रजगुः पेतुः कुसुमवृष्टयः ॥ ३१ ॥
स च स्वर्लोकमारोक्ष्यन् सुनीतिं जननीं ध्रुवः ।
अन्वस्मरदगं हित्वा दीनां यास्ये त्रिविष्टपम् ॥ ३२ ॥

भाषाटीका।

सुनंदनंद बोले हे राजन् ! तुमारा मंगल हो सावधान होकर हमारा वचन सुनो जो पांच वर्ष में ही आपने नारायण प्रसन्न कीया है ॥ २३ ॥

अखिल ब्रह्माण्ड नायक उन्हीं भगवान् शार्ङ्ग पाणि के हम दोनों द्वार्पद हैं आप को भगवद्धाम को लेजाने को इहां आये हैं॥२४॥

जिस विशणु पद को वडे वडे ज्ञानी लोग दूर से देखते मात्र हैं परंतु उन को वहस्थान प्राप्त नहीं हुआ है सूर्यादिग्रह अश्विन्यादि नक्षत्र अन्यतारागण जिसकी प्रदक्षिणा करते हैं उस स्थान पर तुम वैठो ॥ २५ ॥

दीनां हित्वा कथमगं दुर्गमं त्रिविष्टपं यास्यामीत्यन्वस्मरत् ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

आयुष्मन्नित्यपि सशरीरयानाभिप्रायेमव ॥ २७ ॥

मधुच्यवते स्रवतीति मधुच्युत्ताम् पाठान्तरे मधुच्युतं यस्यांताममृतस्राविणीमित्यर्थः कृतं नित्यं कर्म मङ्गलं चालंकरणं येन अभ्यवादयद्वाचयामास ॥ २८ ॥

तदेव रूपं हिरण्मयं प्रकाशबहुलं बिभ्रत्सन्नियेप ऐच्छत् ॥२९॥

गृहं विमानम् अयंभावः यदा ध्रुवो विमानमारोढुमैच्छत्तदा मृत्युरागत्य प्रणम्योवाच हेमहाराज मामङ्गीकुरु उवाच ध्रुवः स्वागतं ते त्वगं तावदुपविश एवमुक्ता ध्रुवो विष्णोः स्मरणं कृत्वा मृत्योर्मूर्ध्नि पदं दत्त्वा विमानाग्र्यमारुरोह ॥ ३०॥ ३१ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

पाठान्तरे मधुच्युतामिति पाठे नित्यं कर्मचात्र भगवत्पूजनादिरूपम् अलङ्करणं च तिलकमालादिरूपम् ॥ २८ ॥

परीत्य प्रदक्षिणीकृत्य हिरण्मयं शुद्धसत्त्वतेजोविशेषरूपम् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ते तव पितृभिर्मन्वादिभिः तथान्यैरपि अङ्ग हे ध्रुव! कदाचिदप्यनास्थितमनधिष्ठितमत एव जगतां वन्द्यं विष्णोः संबन्धि सर्वोत्कृष्टं तत्त्वया जितं पदं स्थानमातिष्ठ अधितिष्ठ ॥ २६ ॥

हे आयुष्मन् ! उत्तमश्लोकमौलिना उत्तमश्लोकमुख्येन भगवता एतद्विमानश्रेष्ठमुपस्थापितं प्रेषितमेतद्विमानाग्र्यमधिरोढुं त्वमर्हसि अत्रायुष्मन्निति संबोधनं सशरीरयात्राभिप्रायकम् वैकुण्ठपरमपदविष्णुपदादिशब्दा भगवत्स्थानसाम्यात्परमस्थानेष्वपि [illegible] ध्रुवलोके प्रयुज्यन्ते तत्रापि हि भक्तानुजिघृक्षया भगवान् सर्वदा सन्निहितः भक्तानुग्रहादेव तद्विमानादिप्रेषणमुपपन्नम् ॥ २७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वैकुण्ठनियोज्यमुख्ययोर्भगवत्पार्षदप्रवरयोः मधुच्युतममृतस्राविणीं वाचं निशम्य भगवत्प्रियो ध्रुवः कृतमङ्गलस्नानः कृतं नित्यं कर्ममङ्गलमलङ्करणं च येन सः मुनीन् प्रणिपत्याशिषमभ्यवादयत् वाचयामास ॥ २८ ॥

विमानश्रेष्ठं परीत्य परिक्रम्य तदेव रूपं पुनर्हिरण्मयं ज्योतिर्मयं बिभ्रत्सन् तद्विमानाग्र्यमधिष्ठातुमियेष ऐच्छत् ॥ २९ ॥

पेतुः पतितवत्यः स च ध्रुवः स्वर्लोकं आरोक्ष्यन् दीनां मातरं हित्वा अगं दुर्गमं त्रिविष्टपं यास्ये इत्येवं जननीमन्वस्मरत् ॥ ३० ॥

इत्येवं भूतं तस्य ध्रुवस्य व्यवसितमभिप्रायं ज्ञात्वा सुरोत्तमौ सुनन्दनन्दौ देवयानेन देवप्रवरोपस्थापितेन विमानेन गच्छन्तीं देवीं सुनीतिं दर्शयामासतुः ॥ ३१ ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतो ऽपीदमास्थेयमिति प्रतिपादयत इत्याह । अनास्थितमिति अन्यैरनधिष्ठितं चेत्किं श्मशानं तदित्यत उक्तं जगतामिति सा किं वसतिरित्यत उक्तं तद्विष्णोरिति ॥

शिशुमारो ध्रुवश्चैव संस्थितो यत्पुरे सदा ।
तत्पश्यन्ति न यान्त्यन्ये लोकं यान्ति सुरान्विना

इति वचनेन तत्र तात्पर्यमवगन्तव्यम् ॥ २६ ॥

केनेदं विमानं प्रेषितामिति शङ्कां निवारयत इत्याह । एतदिति । उत्तमश्लोकमौलिना शिशुमारमूर्तिना हरिणा ॥ २७ ॥

मैत्रेयो विदुरायाह । भगवद्भक्तमाहात्म्यं श्रृणुवति भावेन तस्य पदमारोढुमिति कर्तव्यतां वक्ति । निशम्येति । वैकुण्ठस्य हरेर्नियोज्यानां पार्षदानां मध्ये मुख्ययोः मधुपुष्परसमिव रसं च्योतति स्रवतीति मधुच्युत्तां कृतं नित्यकर्माख्यं मङ्गलं येन सकृतनित्यमङ्गलः अभ्यवादयदभिवादयामास ॥ २८ ॥

नेदं ध्रुवस्यैव मङ्गलशकुनमन्येषामपि महतां भवतीति ध्वनयंस्तद्यात्राप्रारम्भमाङ्गल्यं वक्ति । परीत्येत्यादिना ॥२९ ॥

यदा धिष्ण्याग्र्यं विमानमधिष्ठातुमियेष तदा दुन्दुभ्यादयो नेदुरित्यन्वयः ॥ ३० ॥ ३१ ॥

नाहमेव सत्यसंकल्पशिरोमणिः किंतु भक्तोऽपीति भावेन हरिणा स्फुरितान्तःकरणवृत्तिविशेषो ध्रुव एतादृशं पुत्रं सूतवत्याः स्वकृतत्यक्तविषयभोगायाः सुनीतेः पुत्रेण सह स्वर्लोकप्राप्त्यर्नभूत स्वयं वा नास्मार्षीदिति लोकापवादं मन्वान इव यदा स्वमातरमस्मार्षीत्तदा कैटभारेः संकल्पं जानानौ तौ पार्षदौ तस्य पुरतो यान्तीं मातरं दर्शयामासतुरित्याह । सचेति । अनेन ध्रुवस्यापि सत्यसंकल्पत्वं लोके प्रकाशितमितिज्ञायते ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तदेव रूपं हिरण्मयं शुद्धसत्त्वतेजोविशेषरूपम् ॥ २९ ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आयुष्मन्निव्यपि सशरीरगमनाभिप्रायम् ॥ २७ ॥

नियोज्याः किङ्कराः मधुच्यवते स्रवतीति मधुच्युत् तां मधुच्युतामिति पाठे मधुच्युतं यस्यां ताम् अभ्यवादयत् वाचयामास ॥ २८ ॥

परीत्य विमानं प्रदक्षिणीकृत्य अभ्यर्च्य गन्धपुष्पादिभिर्भगवद्विमानाय नम इति सम्पूज्य तदेव स्वीयं रूपं हिरण्मयं तेजो बहुलं बिभ्रत् सन् आरोढुमैच्छत् ॥ २९ ॥ ३० ॥ ३१ ॥

अगं सर्वागम्यं त्रिविष्टपं विष्णुपदम् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पितृभिश्चतुर्मुखस्वायंभुवोत्तानपादैः अतएव जगतां चतुर्दशभुवनस्थानां वन्द्यम् परमं पदमिति परवैकुण्ठस्यैव भगवताविष्कृतत्वं यतो नावर्त्तते यतिरिति श्रीभगवतैवोक्तत्वात् ॥ २६ ॥

आयुष्मन्निति भगवदनुग्रहादेव श्रीनारदवच्छुद्धां भागवतीं तनुं प्राप्यमरणाशङ्काशून्य इति द्योत्यते उत्तमश्लोकमौलिना पविभर्कीर्तिमुख्येनोपस्थापितं प्रेषितम् ॥ २७ ॥

वैकुण्ठनियोज्यमुख्ययोर्विष्णुभृत्यश्रेष्ठयोर्मधुच्युतां वाचं निशम्य श्रुत्वा कृताभिषेकः कृतनित्यमङ्गलः मुनीन् प्रणम्य तैराशिषमभ्यवदयत् स्वस्तिवाचनमकारयत् ॥ २८ ॥

धिष्ण्याग्र्यं विमानश्रेष्ठमभ्यर्च्य परीत्य प्रदक्षिणीकृत्य हिरण्मयं भागवतमप्राकृतंरूपं बिभ्रत् तदधिष्ठातुं विमानश्रेष्ठमधिरोढुमियेष ऐच्छत् ॥ २९ ॥

तदा दुन्दुभिनादादिमङ्गलमभूदित्याह । तदेति ॥ ३० ॥

स्वरति शब्दायते स्वरत्युपतापयति स्वविमुखान् वा स्वर्विष्णुस्तस्यलोकमारोक्ष्यन् स्वृशब्दोपतापनयोः दीनां मातरं हित्वा यत्र राजपत्नीत्वात् सा गमिष्यति तत् विशन्ति पुण्यकर्मिणो यस्मिन् तद्विष्टपं तृतीयं विष्टपं त्रिविष्टपं च हित्वा अगं पूर्वाकरीत्या ब्रह्ममन्वादीनामपि दुर्गमं विष्णुलोकं यास्येइति अन्वस्मरत् यद्वा मातरं हित्वा कर्मनिष्ठप्राप्यत्वात् प्रसिद्धत्रिविष्टपादितरमगं त्रिविष्टपं विशन्तिभागवता यस्मिंस्तद्विष्टपं त्रयाणां भक्तिज्ञानविरागाणां फलभूतत्वात् तत्संबन्धि त्रिविष्टपं यास्ये इत्यन्वयः ॥ ३१ ॥ ३२ ॥

---

भाषाटीका ॥

तुमारे पित्रादि लोग जिसमें नहीं स्थितभये और भी कोई नहीं ठहरे हैं जगत के वंदन करने योग्य उस स्थान पर आप स्थित होवो ॥ २६ ॥

हे आयुष्मन् ! यह उत्तम विमान विष्णु भगवान ने पहुंचाया है इस पर तुम आरोहण करो ॥ २७ ॥

मैत्रेयजी बोले उरुक्रम भगवान् के प्रिय श्री ध्रुवजी विष्णुके दासों में श्रेष्ठ उन दोनों के अति मधुर वचन को श्रवण करके स्नान किये नित्यकर्म किये दिव्य मंगल वस्तु तिलक मालादि धारण करके बदरिकाश्रमवासि मुनिन को प्रणाम कर के आशिर्वाद लिया ॥ २८ ॥

इति व्यवसितं तस्य व्यवसाय सुरोत्तमौ ।
दर्शयामासतुर्देवीं पुरो यानेन गच्छतीम् ॥ ३३ ॥
तत्र तत्र प्रशंसद्भिः पथि वैमानिकैः सुरैः ।
अवकीर्यमाणो ददृशे कुसुमैः क्रमशो ग्रहान् ॥ ३४ ॥
त्रिलोकीं देवयानेन सोऽतिव्रज्य मुनीनपि ।
परस्ताद्यद्ध्रुवगतिर्विष्णोः पदमथाभ्यगात् ॥ ३५ ॥
यद्भ्राजमानं स्वरुचैव सर्वतो लोकास्त्रयोह्यनुविभ्राजन्त एते ।
यन्नाव्रजन् जन्तुषु येऽननुग्रहा व्रजन्ति भद्राणि चरन्ति येऽनिशम् ॥३६॥
शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः ।
यान्त्यञ्जसाच्युतपदमच्युतप्रियबान्धवाः ॥ ३७ ॥
इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः ।
अभूत्त्रयाणां लोकानां चूडामणिरिवामलः ॥ ३८ ॥
गम्भीरवेगोऽनिमिषं ज्योतिषां चक्रमाहितम् ।
यस्मिन् भ्रमति कौरव्य ! मेढ्यामिव गवां गणः ॥ ३९ ॥
महिमानं विलोक्यास्य नारदो भगवानृषिः ।
आतोद्यं वितुदञ्श्लोकान् सत्रेऽगायत्प्रचेतसाम् ॥ ४० ॥

भाषाटीका ।

उस विमान को प्रदक्षिणा करके पार्षदों को नमस्कार करके दिव्य हिर राभरूप को धारण कर के उसपर स्थित होने को विचार किया ॥ २९ ॥

तब तो उत्तानपादजी के पुत्र ध्रुवजी ने काल को आये हुये देखा तो मृत्यु के मस्तक मे पैर रख कर अद्भुत विमान मे आरोहण किया ॥ ३० ॥

तब तो नगारा बजे उत्तम गंधर्व गान करने लगे पुष्पों की वर्षा भई ॥ ३१ ॥

वे ध्रुव जी जब स्वर्ग लोक को जाने को हुये तब मनमे स्मरण किया कि मेरे बिना दुखित सुनीति माता को छोड कर मै अति दुर्लभ स्थान को कैसे जाऊंगा ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यवसितमभिप्रायंव्यवसायं ज्ञात्वा ॥ ३३ ॥ ३४ ॥

देवयानेन देवमार्गेण विमानेनेति वा मुनीन् सप्तर्षीनपि ततः परस्ताद्यद्विष्णोः पदं तदभ्यगाद्ध्रुवागतिर्यस्य सः ॥ ३५ ॥

यद्भ्राजमानमनु यस्य रुचा लोका विभ्राजन्ते जन्तुषु येऽननुग्रहा निष्कृपास्ते यन्नाव्रजन्न गतवन्तः ॥ ३६ ॥

अच्युतः प्रियो बान्धवो येषाम् ॥ ३७ ॥ ३८ ॥

अनिमिषमनलसं ज्योतिषां चक्रं यस्मिन्नाहितमर्पितं सद्भ्रमं मेढ्यामाहितो गम्भीरवेगो गवां गण इव ॥ ३९ ॥

आतोद्यं वीणां वितुदन् वादयन् प्रचेतसां ब्रह्मसत्रे भगवन्माहात्म्यप्रसंगेन ध्रुवमाहिमप्रतिपादनपरांश्लीन् श्लोकानगायत ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

देवीं ध्रुववच्छुद्धसत्त्वतेजो विशेषरूपाम् ॥ ३३ ॥ ३४ ॥
गतिः स्थानम् ॥ ३५ ॥

स्वरुचैव भ्राजमानं स्वप्रकाशं भद्राणि श्रवणकीर्त्तनादीनि
शान्ताः भगवन्निष्ठबुद्धयः शमोमन्निष्ठता बुद्धेरिति भगवद्वचनात्
अच्युतप्रियाः वैष्णवाः ॥ ३७ ॥

ध्रुवस्य पृश्निगर्भपरायणत्वेऽपि कृष्णपरायण इत्युक्तिस्तस्य अवतारिणां तदन्तर्भावविवक्षया ॥ ३८ ॥

अनलसत्वस्य गम्भीरवेगेन साम्यम् ॥ ३९ ॥

भगवान् सर्वज्ञस्तत्रापि ऋषिर्भक्तितत्त्वज्ञः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र तत्र पथि विमानारूढैर्देवैः प्रशंसद्भिः कुसुमवृष्टिभिरवकीर्यमाणो ग्रहान् आदित्यादिस्थानानि क्रमशो दृष्टवान् ॥३३-३४॥

देवयानेन सुनन्दनन्दनाख्यदेवप्रवरोपस्थापितविमानेन त्रिलोकीं मुनीन् सप्तर्षीनप्यतिव्रज्यातिक्रम्य ततः परस्तात् यद्विष्णोः पदं तद्ध्रुवा शाश्वती गतिर्यस्य सः ध्रुवः आकल्पस्थायित्वाद्धतेध्रुवत्वमभ्यगात् प्राप्तवान् ॥ ३५ ॥

विष्णोः पदं विशिनष्टि । यदिति । स्वरुचैव यत् भ्राजमानमनुसृत्य तस्य रुचा एते त्रयो लोका भ्राजन्ते यच्च जन्तुषु भूतेषु येऽननुग्रहा निरनुग्रहाः निष्कृपास्तेनाव्रजन गतवन्तः ये च जन्तुषु भद्राणि सुहृत्त्वादीन्यनिशं चरन्ति कुर्वन्ति ते व्रजन्ति तत्पदमभ्यगादिति पूर्वेण संवन्धः ध्रुवस्थानं प्राप्तानामपि सत्यलोकगतानामिव प्रायेण पुनरावृत्त्यभावात्कल्पान्ते मोक्ष्यमाणत्वाद्भूतसुहृत्त्वादीनामेव मुक्तिहेतुत्वाच्चैवमुक्तम् ॥ ३६ ॥

किंच यदच्युतपदमच्युतः प्रियो येषां भागवतानां ते वान्धवा येषां ते शान्ताः शमदमादियुक्ताः समदृशः देहात्मेश्वराणां प्रकृतिपरिणामरूपत्वज्ञानैकाकारत्वसर्वान्तरात्मत्वादिरूपसमदर्शिनः अत एव सर्वभूतानि यथा योग्यं दानमानादिभिरनुरञ्जयन्ति प्रीतिं कुर्वन्तीति सर्वभूतानुरञ्जनाः सिद्धप्राया ननु नितरां सिद्धाः तेपामर्चिरादिगत्या ब्रह्मलोकाप्राप्तेः अञ्जसा सुखेन यान्ति तत्पदमभ्यगादिति पूर्वेणान्वयः अयमर्थः शमदमादिभिः सर्वभूतसुहृत्त्वादिभिश्च परब्रह्मोपासननिष्ठा अपि केचित्प्रारब्धवशाद्बुभुक्षावशाद्वान्तरायविहताः सत्यलोकं ध्रुवलोकं गतास्तत्रत्यभोगोत्तरं परिपूर्णयोगा मुच्यन्त इति ॥ ३७ ॥

इत्युक्तप्रकारेण कृष्णो भगवान् परमयनं प्राप्यं प्रापकमाधारो यस्य स ध्रुवस्त्रयाणां लोकानाममलश्चूडामणिः शिखामणिरिवाभूत् अमल इति दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि विशेषणम् ॥३८॥

हे कौरव्य विदुर! मेढ्यां धान्याक्रमणाय वलीवर्दवन्धनस्तम्भविशेषे गम्भीरवेगो गवां गणः वलीवर्दसमूह इव ज्योतिषां चक्रं यस्मिन् ध्रुव आहितं सत् अनिशं भ्रमति ॥ ३९ ॥

अस्य ध्रुवस्य महिमानं विलोक्य भगवान्नारद ऋषिः आतोद्यं वीणां वितुदन्नादयन्प्रचेतसां सत्रे भगवन्माहात्म्यप्रसंगेन श्लोकान् ध्रुवस्य महिमप्रतिपादनपरान् त्रीन् श्लोकानगायत् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अग्रगामग्रतो गच्छन्तीम् ॥ ३३ ॥ ॥ ३४ ॥

ध्रुवा निश्चला गतिर्यस्य स तथा देवयानेन मार्गेण ॥ ३५॥

तत्पदप्राप्त्यधिकारिणोऽन्वयव्यतिरेकाभ्यामाह।न त इति येतु जन्तुषु खलास्ते यत्र व्रजन्ति येतु जन्तुषु अनुग्रहाद्दयालक्षणादनिशं भद्राणि चरन्ति ते यद्व्रजन्ति ॥ ३६ ॥

एतदेव विशिनष्टि । शान्ता इति । एते खिला इति पाठे जन्तुषु ये भद्राणि चरन्ति एते खिला विष्णोरनुग्रहाद्व्रजन्ति भद्राचरणं विशिनष्टि। येऽनिशमिति । येऽनिशं शान्त्यादिगुणयुक्तास्तेऽच्युतपदं यान्तीत्यन्वयः एतत्पदं प्राप्य स्वरूपाविर्भावयोग्यान् विना पुरस्तादन्यैरित्युक्तम् ॥ ३७ ॥ ३८ ॥

चन्द्रदिवाकरादय इत्यत्र ज्योतिश्चक्रेण प्रदक्षिणीक्रियमाणमेतत्स्थानमित्युक्तं तत्कियद्दूरत इति न प्रतीतं तदिदानीं लक्षयति। गम्भीरेति। गम्भीरवेगानि अनिमीषीव गम्भीरवेगानिमीषि तेषां मिषनिमिष इति धातोः न निमिषन्ति न मिलन्तीत्यनिमिषः तेषाम गच्छतामित्यर्थः यस्मिन्नित्यनेनोपरीति प्रतीतिं निवारयति । मेढ्यामिति अनेन मेढ्याः समीपे परितो भ्रमन्तीति यथा प्रतीतं तथात्रापीत्यर्थः ॥ ३९ ॥

इति केनायं महिमा लालितो येनास्माकमपि तत्र श्रद्धातिशयः स्यादित्यत आह। महिमानमिति । आतोद्यं मद्दकीणावाद्यं आतोद्यं वाद्यमिष्यते,, इति हलायुधः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवीं ध्रुववद्धिरण्मयस्वरूपामित्यर्थः ॥ ३३—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

व्यवसितमभिप्रायं व्यवसायं ज्ञात्वा ॥ ३३ ॥ ३४ ॥

मुनीन् सप्तर्षीनपि ततः परस्तात् यद्विष्णोः पदं तदभ्यगात् । ध्रुवा गतिर्यस्य सः ॥ ३५ ॥ ३६ ॥

यद्भ्राजमानमनु यत् पश्चात् यस्य रुचा लोका विभ्राजन्ते ॥ ३७ ॥ ३८ ॥

अनिमिषं जाग्रदेव कालरूपं गम्भीरवेगो गवां गण इव ॥३९॥

आतोद्यं वीणां वितुदन् वादयन् ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्येवं ध्रुवस्य व्यवसितमाशयं व्यवसायं ज्ञात्वा देवीं सुनीतीं पुरोऽग्रतो यानेन विमानान्तरेण गच्छन्तीं दर्शयामासतुः॥३३॥३४॥

ध्रुवा पुनरावृत्तिवर्जिता गतिर्यस्य सः यत्स्वरुचैव भ्राजमानम् एते त्रयोलोकाः अनुविभ्राजन्ते ये अननुग्रहा निर्दयाः यन्नाव्रजन् न गतवन्तः ये जन्तुषु भद्राणि मङ्गलानि हिताचरणानि चरन्ति ते व्रजन्ति ॥ ३५ ॥ ३६ ॥

किंच शान्तत्वादिगुणवन्तः अच्युतप्रिया एव वान्धवा येषां ते ॥ ३७ ॥

त्रयाणां लोकानां वैकुण्ठादधः स्थितानां चूडामणिरिव शिखामणिरिवाभूत् ॥ ३८ ॥

कथंभूतः यस्मिन् ध्रुवे ज्योतिषां चक्रं मेढ्यां गवां गण इवार्पितं सत् अनिशं भ्रमति सः ॥ ३९ ॥

अस्य ध्रुस्य महिमानं प्रभावं विलोक्य आतोद्यं वीणारूपं वाद्यं वितुदन् वादयन् प्रचेतसां सत्रे श्लोकानगायत् ॥ ४० ॥

---

भाषाटीका

उन दोनो पार्षदों ने ऐसा उनका विचार जान कर आगे दूसरे विमान मे बैठ कर जाती हुई सुनीति को दिखा दिया ॥ ३३ ॥

जाते समय मार्ग मे ध्रुवजी उन उन स्थानों मे विमानों पर बैठे हुये देवतों से स्तुति किये गये पुष्पों से आच्छादित होकर क्रम से सूर्यादि ग्रहों को देखत भये ॥ ३४ ॥

नारद उवाच

नूनं सुनीतेः पतिदेवतायास्तपःप्रभावस्य सुतस्य तां गतिम् ।
दृष्ट्वाभ्युपायानपि वेदवादिनो नैवाधिगन्तुं प्रभवन्ति किं नृपाः ॥ ४१ ॥
यः पञ्चवर्षो गुरुदारवाक्शरैर्भिन्नेन यातो हृदयेन दूयता ।
वनं मदादेशकरोऽजितं प्रभुं जिगाय तद्भक्तगुणैः पराजितम् ॥ ४२ ॥
यः क्षत्रबन्धुर्भुवि तस्याधिरूढमन्वारुरुक्षेदपि वर्षपूगैः ।
षट्पञ्चवर्षो यदहोभिरल्पैः प्रसाद्य वैकुण्ठमवाप तत्पदम् ॥ ४३ ॥

मैत्रेय उवाच

एतत्तेऽभिहितं सर्वं यत्पृष्टोऽहमिह त्वया ।
ध्रुवस्योद्दामयशसश्चरितं संमतं सताम् ॥ ४४ ॥
धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत् ।
स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ४५ ॥
श्रुत्वैतच्छ्रद्धयाभीक्ष्णमच्युतप्रियचेष्टितम् ।
भवेद्भक्तिर्भगवति यया स्यात्क्लेशसंक्षयः ॥ ४६ ॥
महत्त्वमिच्छतां तीर्थं श्रोतुः शीलादयो गुणाः ।
यत्र तेजस्तदिच्छूनां मानो यत्र मनस्विनाम् ॥ ४७ ॥
प्रयतः कीर्तयेत्प्रातः समवाये द्विजन्मनाम् ।
सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत् ॥ ४८ ॥

भाषाटीका ।

उस देव विमान से त्रिलोकी और मुनी इन सवों को अति क्रमण करके सब से परे स्थित निश्चल रहने वाला जो विष्णु पद तिसको प्राप्त भये ॥ ३५ ॥

जिस लोक के अपने प्रकाश से ए तीनों लोक पीछे प्रकाशित हो ते हैं जिस स्थान को सब प्राणियों पर दया नहीं करने वाले नहीं जाते हैं प्राणिमात्र के निरंतर हित करने वाले जहां जातेहैं ॥ ३६ ॥

शांत चित्त वाले सम दृष्टि वाले शुद्ध अंतःकरणवाले सब भूतों के प्यारे अच्युत भगवान् को प्रिय तथा बांधव माननेवाले उस अच्युत पद को जाते हैं ॥ ३७ ॥

इस प्रकार उत्तानपाद के पुत्र ध्रुवजी श्री कृष्ण के भक्त होने से तीनों लोकों के निरमल चूडामणि सरी के होगये ॥ ३८ ॥

हे कौरव्य! विदुरजी! वडा गंभीर वेगवाला जो काल तिस के बस से सूर्यादि ज्योतिरूपों का जो चक्र है सो जिस ध्रुवस्थान मे खलाकीमेढीमे बंधाहुआ बैलोंका समूह सरीका निरंतर घूमता है ॥ ३९ ॥

भगवान् नारदऋषि ने इन ध्रुवजीका ऐसा महिमादेखकर वीणावजाते हुये प्रचेतों के यज्ञ मे इन श्लोकोंको गाया है ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नूनमिति । पतिरेव देवता यस्यास्तस्याः सुतस्य यस्तपःप्रभावस्तस्य तां गतिं फलमधिगन्तुं वेदवादशीला ब्रह्मर्षयोऽपि नैव प्रभवन्ति अभ्युपायान् भगवद्धर्मान् दृष्ट्वापि किंपुनर्नृपाः ॥ ४१ ॥

तपःप्रभावं गतिं च विशिनष्टि द्वाभ्याम् । गुरुदाराः पितृपत्नी सुरुचिस्तस्या वाक्शरैर्भिन्नातएव दूयता हृदयेन वनं यातः सन्नजितमपि यो जिगाय वशीकृतवान् ॥ ४२ ॥

तस्याधिरूढं तेन प्राप्तं पदं यो भुवि क्षत्रबन्धुः क्षत्रियोभवेत्स तमनुवर्षसमूहैरप्यारोढुमिच्छेदपि किम् तत्संकल्पोऽप्यशक्योदूरत आरोहणमित्यर्थः कथंभूतं पदं षड्वा पञ्च वा वर्षाणि यस्य स अल्पैरेवाहोभिर्वैकुण्ठं प्रसाद्य यत्तस्य पदमवाप तत् ॥ ४३ ॥

उद्दाममुत्कृष्टं यशो यस्य ॥ ४४ ॥

धनादेर्निमित्तं ध्रौव्यं ध्रुवस्थानप्रापकं प्रशस्यं प्रशंसार्हं अघमर्षणं पापनाशनम् ॥ ४५ ॥

अच्युतप्रियस्य ध्रुवस्य चेष्टितं श्रुत्वा यो वर्तते तस्य भक्तिर्भवेत् ॥ ४६ ॥

तीर्थं महत्त्वावाप्तिस्थानं गुणा यत्र भवन्ति ॥ ४७ ॥

समवाये सभायाम् ॥ ४८ ॥ ४९ ॥

पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथवा ।
दिनक्षये व्यतीपाते संक्रमेऽर्कदिनेऽपि वा ॥ ४९ ॥
श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः ।
नेच्छंस्तत्रात्मनात्मानं संतुष्ट इति सिध्यति ॥५०॥
ज्ञानमज्ञाततत्त्वाय यो दद्यात्सत्पथेऽमृतम् ।
कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णते ॥५१॥
इदं मया तेऽभिहितं कुरूद्वह ! ध्रुवस्य विख्यातविशुद्धकर्मणः।
हित्वार्भकः क्रीडनकानि मातुर्गृहं च विष्णुं शरणं यो जगाम ॥५२॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्ध
पारमहंस्यां संहितायां वैयासिक्यां ध्रुवचरिते
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नेच्छन्निष्कामस्तत्र श्रवणे आत्मनैवात्मानं प्रतिसंतुष्टो भवतीति हेतोः सिद्धिं प्राप्नोति ॥ ५० ॥

किंच सत्पथे भगवन्मार्गेऽमृतरूपं ज्ञानं यो दद्यात् ॥ ५१ ॥

ध्रुवस्य चरितं मया तेऽभिहितं मातुर्गृहं च हित्वा ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ॥

सुनीतेरिति । तस्या निर्मत्सरोपदेशनीत्यैव श्रीहरिः प्रीत इति भावः यतः पतिदेवतायाः पतिव्रतायाः वस्तुतस्तु स वै पतिस्स्यादित्यादिन्यायेन पतिः श्रीकृष्ण एव देवता यस्याः तस्याः सुतः कथं नैवं भूतः स्यादिति भावः तपःप्रभावस्य तादृशध्यानस्य या सर्वजित्स्थितिस्तस्याः प्रभावस्सर्वजित्स्थितिरिति रसामृतोक्तेः दृष्ट्वापि ज्ञात्वापि तादृशविश्वासाभावात् प्रत्युत वेदवादित्वेन विप्रतिपन्नमतित्वादिति भावः ॥ ४१ ॥

वनं मधुवनमत एवाजितमपि जिगाय ॥ ४२ ॥

पञ्चवर्षस्त्वेऽपि तथैव लोकोक्तिः ॥ ४३ ॥

एतदिति युग्मकम् यदर्थजातं प्रति त्वयाहं पृष्टः इति ध्रुवचरितमपि पृष्टं ज्ञेयम् ॥ ४४ ॥ ४५ ॥

भवेदिति क्रियायां भक्तेः कर्तृत्वात्तस्याः श्रवणे तत्त्वायोगात् क्त्वाप्रत्ययस्य च समानकर्तृकत्वात् श्रुत्वा यो वर्तते इत्यध्याहृत्य व्याख्यातम् ॥ ४६ ॥

तदिच्छूनां तेज इच्छूनां मनस्विनां मानमिच्छताम् ॥ ४७ ॥

प्रयत इति युग्मकम् अर्कदिने रविवारे ॥ ४८ ॥ ४९ ॥

सिद्धिं मुक्तिम् ॥ ५० ॥

ज्ञानं तत्साधनं ध्रुवचरितं देवाः भगवदादयः ॥ ५१ ॥ ५२ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
दीपिन्याख्य दीपिकाटिप्पण्यां
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्लोकानेवाह । नूनमिति । पतिदेवतायाः सुनीतेः सुतस्य ध्रुवस्य यस्तवः प्रभावस्तस्य फलभूतां गतिं अभ्युपायान् गतिसाधनभूतान्भगवदाराधनरूपानुपायानपि दृष्ट्वा वेदवादिनोऽपि ऋषयोऽपि अधिगन्तुं प्राप्तुं नैव प्रभवन्ति न समर्था भवन्ति किंपुनर्नृपाः नृपा न भवन्तीति किमुवक्तव्यमित्यर्थः ॥ ४१ ॥

गुरुदाराः पितृपत्नी सुरुचिस्तस्या वाचो वाग्बाणैर्भिन्नेनात एव दूयता तप्तेन हृदयेन यो ध्रुवः पञ्चवर्ष एव वनं प्रतिगतस्तत्रापि मदाज्ञावशवर्ती अजितमपि विभुं भगवन्तं गुणैर्भगवद्भक्तानां गुणीभूतमैत्र्यादिभिः पराजितं वशंगतमहं भक्तपराधीनो ह्यस्वतन्त्र इतिभगवदुक्तेः भक्तपराधीनमित्यर्थः जिगाय वशीकृतवान् ॥ ४२ ॥

तस्य ध्रुवस्य अधिरूढं प्राप्तं पदमित्यर्थः पदं स्थानं यो भुवि क्षत्रबन्धुः क्षत्रियाभासः वर्षसमूहैरपि अधिरोढुमिच्छेदपि किं तत्संकल्पोऽप्यशक्यः दूरतः आरोहणमित्यर्थः कथंभूतं पदं पञ्च वर्षाणि यस्य सः अल्पैरेवाहोभिर्दिनैर्वैकुण्ठमासाद्य आसन्नं कारयित्वा यत्तस्य पदमवाप ॥ ४३ ॥

ततः ध्रुवचरितं निगमयन् तच्छ्रवणादिफलमाह । मुनिः । एतदिति । त्वया यत्प्रतिपृष्टोऽहं तत्सर्वं तुभ्यं कथितं किं तत्राह । उद्गा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यशसः उत्कृष्टकीर्तेः ध्रुवस्य चरितं सतां हरिभक्तानां सम्मतम् ॥ ४४ ॥

धन्यं धनेच्छया शृण्वतां श्रावयतां च धनसंपादकं तथा यशस्यं यशस्करमायुष्करं स्वस्त्ययनं मङ्गलकरं स्वर्गसम्पादकं ध्रौव्यं ध्रुवस्थानप्रापकं सौमनस्यं मनः पीडाविनाशकं प्रशस्यं प्राशस्त्यसंपादकम् अघमर्षणं पापनिरासकम् ॥ ४५ ॥

एतदच्युतप्रियस्य ध्रुवस्य चेष्टितमभीक्ष्णं पौनःपुन्येन श्रद्धया श्रुत्वा यो वर्त्तते तस्य भगवति भक्तिर्भवति भक्तिफलमाह यया भक्त्या क्लेशानामाध्यात्मिकादीनां संक्षयो भवति ॥ ४६ ॥

महत्त्वं सर्वोत्कृष्टत्वमिच्छतां कामयमानानां तीर्थं महत्त्वं प्राप्तुमुपायो भवेदित्यनुषङ्गः तथा श्रोतुः शीलादयो गुणाः भवेयुरित्यनुषक्तस्य वचनविपरिणामेनान्वयः यत्र यस्मिन् ध्रुवचरिते भूयमाण इति शेषः तदिच्छूनां तेजः इच्छतां तेजो भवेत् तेजसो विधेयत्वेन बुद्धिस्थत्वात्सन्निहितत्वात् प्रकृतत्वात्तच्छब्देन परामर्शाद्युद्देश्यविशेषणत्वोपपत्तिः तथा यत्र यस्मिन् चरिते मनस्विनां प्रशंसायां नित्ययोगे वा मत्वर्थीयोऽस्मायामेधास्रजोविनिरिति विनिः प्रत्ययः मनः प्राशस्त्यं भगवति मनसो नित्ययोगं वेच्छतां मनः प्रशस्तं नित्ययुक्तं वा मनोभवेदित्यर्थः ॥ ४७ ॥

अर्थसामर्थ्यात्प्रातः सायं च सायङ्काले च प्रयतः मनः प्रणिधानयुक्तः द्विजन्मनां ब्राह्मणानां समवाये सभायां पुण्यश्लोकस्य ध्रुवस्य महत्समीहितस्य साधनं चरितं कीर्त्तयेत्॥४८॥

पौर्णमास्यां सिनीवाल्यां दृष्टेन्दुकलायाममावस्यायां श्रवणनक्षत्रयुक्ते दिने अर्कदिने सप्तमीभानुवासरादौ च कीर्त्तयेदिति सम्बन्धः ॥ ४९ ॥

नेच्छन्निष्कामः तीर्थं पादे यस्य सः तीर्थपादो भगवान् तस्य पदाश्रयः भागवतः श्रद्दधानान् श्रद्धायुक्तान् प्रति इदं चरितं श्रावयेत् भागवतस्य नितरामेतच्चरितश्रावणं युक्तमिति भावः तत्र निष्कामतया श्रावणे आत्मना स्वयमेवात्मानं श्रावयित्राध्यत्मानं प्रति सन्तुष्ट इति सन्तुष्टो भगवान् भवेदिति हेतोः सिद्ध्यति निष्कामतया यः श्रावयति तस्मिन् भगवान् स्वयमेव सन्तुष्ट इति सोऽपि सिध्यत्येव मुक्तिं प्राप्नोत्येवेत्यर्थः ॥ ५० ॥

न केवलं निष्कामतया श्रावयितारं भगवानेवानुगृह्णाति अपि तु सर्वे एव देवा अनुगृह्णत इत्याह । ज्ञानमिति । अज्ञातं तत्त्वं तत्त्वत्रययाथात्म्यं येन तस्मै सत्पथे सतां मार्गे भगवन्मार्गे इत्यर्थः अमृतरूपं ज्ञानं यो दद्यात् तस्य कृपालोरतएव दीननाथस्य देवा अनुगृह्णते अनुग्रहं कुर्वन्ति ॥ ५१ ॥

हे कुरूद्वह ! विख्यातं प्रसिद्धं विशुद्धं कर्म यस्य सः शृण्वतामप्यघमर्षणं शोधनं कर्म चेष्टितं यस्य तस्य ध्रुवस्येदं चरितं तुभ्यं मयाभिहितं कथितं यो ध्रुवः अर्भक एव सन् मातृगृहं क्रीडनकानि क्रीडासाधनानि च त्यक्त्वा विष्णुं शरणं जगामेति पुनःपुनर्विस्मयते ॥ ५२ ॥

इति श्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तपसः प्रभावो माहात्म्यं यस्य स तथा तस्य "प्रतापमाहा[त्म्य]योः प्रभावः स्यात्,, इतियादवः ॥ ४१ ॥

अजितं जिगाय वशीचकार ॥ ४२ ॥ ४३ ॥ ४४ ॥

ध्रौव्यं ध्रुवस्य मोक्षस्य साधनम् ॥ ४५ ॥

अच्युतप्रियस्य ध्रुवस्य चेष्टितम् ॥ ४६ ॥

तीर्थमुपायः साधनं मन्त्राद्युपदेष्टृ

तेजोबले प्रभावेऽग्न्योतिष्यर्चिषि रेतसि ।
नवनीतेऽनखे धर्मे दाने हस्ति मदेऽपि च

इत्यभिधानात् तदिच्छूनां तेज आकांक्षमाणानां यत्र यस्मि[न्] [चरि]तेऽश्यमाने तेजोभवतीत्यर्थः ॥ ४७ ॥

समवाये समूहे कीर्तयेदित्यतस्तात्पर्यादिदमिति वक्ति । पु[ण्य]श्लोकस्येति ॥ ४८ ॥ ४९ ॥

आत्रयन् फलाभिसंधिं न कुर्यादिति भावेनाह । नेच्छन्निति चरिते श्राविते श्रुते वा फलमनिच्छन् वर्तते इतिशेषः कथं फलसिद्धिरित्यतआह आत्मनेति। तत्रेत्युत्तरत्रापि संबध्यते तत्र ते श्राव्यमाणे आत्मना मनसात्मानं परमात्मानं प्रति संतुष्टः सि[द्ध]प्राप्ताशीष्टफलोभवति ॥ ५० ॥

ध्रुवचरितव्याख्यानव्याजेन भागवतं ज्ञानमुपदिशतो न केवलं [भग]वानेवानुग्रहं करोति किं तु तदिन्द्रियाभिमानिनो देवा अर्पित[...] ज्ञानमिति ॥ ५१ ॥

पुनरपि तन्माहात्म्यं सूचयन्नुपसंहरति । इदं मयेति॥ ५२॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वादशोऽध्यायः

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नूनमिति । तां गतिं दृष्ट्वापि तस्य अभ्युपायान् अन्तरङ्ग[...] नान्यप्यधिगन्तुं देवयादनशीला ब्रह्मर्षयोऽपि नैव प्रभवन्ति [...] ताम् यद्यप्येवं तेऽपि न तर्हि किमुत तरां नृपा इत्यर्थः दृष्ट्वा[...] इति चित्सुखः ॥ ४१ ॥

य इत्यत्र क इति क्वचित् चित्सुखसम्मतश्च । किन्तु [...] सम्मतः ॥ ४२ ॥ ४३ ॥

एतदिति युग्मकम् यत् पृष्टेऽहमित्यनुसारेण ध्रुवस्य चरि[तं] पृष्टमित्यवगन्तव्यम् ॥ ४४—४७ ॥

प्रयत इति युग्मकम् ॥ ४८—५० ॥

ज्ञानमिति । सत्पथे सन्मार्गान्तर्मुखजनाय । [...] कश्चिन्नास्ति ॥ ५१ ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तपः प्रभावरूपस्य सुतस्य तां प्रसिद्धां गतिं फलं दृष्ट्वापि तस्या अभ्युपायात् अन्तरङ्गसाधनान्यप्यधिगन्तुं न प्रभवन्ति किमुत ताम् । यद्येवं तेऽपि न तर्हि किमुततरां नृपा इत्यर्थः ॥ ४१ ॥

दूयता दूयमानेन ॥ ४२ ॥

क्षत्रबन्धुः क्षत्रियोत्तमोऽपि तमपेक्ष्य क्षत्रियाधमो यः तस्य रूढं पदमनुपश्चात् आरोढुमिच्छेत् स किं वर्षसमूहैरपि आरोहेदिति शेषः । यद् यस्मात् षड्वा पञ्च वा वर्षाणि वयांसि यस्येति वयः-शब्दस्य वृत्तावन्तर्भावः ॥ ४३–४४ ॥

धनादिकामनावतां धन्यमित्यादि ध्रौव्यं ध्रुवस्थानप्रापकं सुमनसो देवास्तद्वद् तेऽप्येतत् श्रोतुं वक्तुञ्चार्हन्तीत्यर्थः ॥ ४५ ॥

श्रुत्वा स्थितस्येति शेषः ॥ ४६ ॥

तीर्थमिदं कारणं यत्र श्रुते सति ॥ ४७--४९ ॥

श्रद्दधानानामिति द्वितीयार्थे षष्ठी नेच्छन् तद्वेतनं किमपि द्रव्यं न प्रतिगृह्णन् तत्र हेतुः आत्मानं प्रति आत्मनैव सन्तुष्टः तत्र श्रावणं मत्कथ्यमानां कृष्णकथां भक्तः श्रद्धया शृणोतीत्येतदेव मम वेतनमिति मन्यमानः इत्यतएव सिद्धिं प्राप्नोति ॥ ५० ॥

जीवनिस्तारकं किमपि ज्ञानं श्रावयत एव महाफलं किमुत ध्रुवचरितमित्याह । ज्ञानेति ॥ ५१--५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थे द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नूनं निश्चितं पतिरेव देवता यस्यास्तस्याः सुतस्य अभ्युपायान् भगवद्धर्मान् दृष्ट्वा लक्ष्यीकृत्य यस्तपसः भगवद्धर्मानुष्ठानस्य प्रभावस्तस्य गतिं फलं वेदवादिनोऽपि अधिगन्तुंनैव प्रभवन्ति नृपाः किमुत ॥ ४१ ॥

अजितमपि जिगाय जितवान् तत्र हेतुगर्भं विशेषणं भक्तगुणैः पराजितमिति ॥ ४२ ॥

यो ध्रुवः षट् पञ्च वा वर्षाणि यस्य सः तत्राल्पैरहोभिर्वैकुण्ठं हरिं प्रसाद्य यत्पदमवाप तस्याधिरूढं तत्पदं भुवि बलेन वयसा प्रसिद्धोऽपि क्षत्रबन्धुः वर्षपूगैरपि किमन्वारुरुक्षेत् आरोहणस्य तु का-कथा आरोहणेच्छामपि कुर्यान्नैवेति काकुः ॥ ४३ ॥

उद्दामं महद्यशोयस्य तस्य ॥ ४४ ॥

ध्रौव्यं ध्रुवपदप्रापकम् ॥ ४५ ॥

एतत् श्रवणफलमाह । श्रुत्वैतदिति द्वाभ्याम् । क्लेशानां सम्यक्क्षयः संसारनिवृत्तिपूर्वकभगवत्प्राप्तिः ॥ ४६ ॥

तीर्थं महत्त्वप्रापकम् श्रोतुःशीलादयोगुणाः स्युः ॥ ४७ ॥

एतच्छ्रवणफलमाह । प्रयत इति पञ्चभिः समवाये समूहे ॥४८॥

सिनीवाल्याममावास्यायां दिनक्षये तिथिनाशे ॥ ४९ ॥

यः तीर्थानि पादयोर्यस्य तस्य हरेः पदाश्रयः सः नेच्छन् निष्कामः सन् श्रद्दधानानां श्रद्दधानान् प्रतिश्रावयेत् तत्र श्रावणे आत्मानं श्रावयितारं प्रतिआत्मना स्वेच्छयैव सन्तुष्टो भवति भगवानितिशेषः इति शब्दो हेत्वर्थः अतो हेतोः सिद्ध्यति श्रावयिता भगवन्तं प्राप्नोति ॥ ५० ॥

सत्पथे भगवन्मार्गे ज्ञानं भगवत्स्वरूपगुणादिविषयममृतं मोक्षं यो दद्यात्तस्य देवानुगृह्णते अनुग्रहं कुर्वन्ति ॥ ५१ ॥

उपसंहरति । इदमिति ॥ ५२ ॥

इतिश्रीमद्भागवत चतुर्थस्कन्धीये सिद्धान्तप्रदीपे
द्वादशाध्यायार्थप्रकाशः ॥ १२ ॥

---

भाषाटीका

नारदजी कहते हैं कि पति को देवता मानने वाली सुनीति के तप के प्रभाव से भया जो ध्रुव तिसकी उस गति को देख कर बडे भारी उपायों को कर के भी वेदवादि मुनिजन भी उस पदवीको प्राप्त होने को समर्थ नहीं होते हैं तो दूसरे राजातो क्या करसकेंगे ॥ ४१ ॥

जिस ने पांच वर्ष का होकर माता के वचन रूपी बाणों से विधे हुये कांपते हृदय से हमारी आज्ञा को ग्रहण करके मधुवन मे जाकर भृत्यों के गुणों से पराजित होने वाले भगवान् को जीत लिया ॥ ४२ ॥

जो कोई क्षत्रिय का पुत्र पृथिवी मे ध्रुव के रहने के स्थान को आरोहण करने की इच्छा से बहुत से वर्षों तक यत्न करेगा तिस वैकुंठ पद को ध्रुवजी ने पांच छः वर्ष के होकर थोडे दिनो मे उपाय सिद्ध करके प्राप्त कर लिया ॥ ४३ ॥

मैत्रेयजी बोले जो तुमने हम से पूछा था सो हमने यह सब कह दिया उत्तम यश वाले ध्रुवजी का चरित्र सत्पुरुषों को संमत है ॥ ४४ ॥

धन प्राप्त करने वाला यश देने वाला आयु देने वाला पुण्य कारक बडा भारी स्वस्ति कारक स्वर्ग देने वाला ध्रुव पद देने वाला मन शुद्ध करने वाला प्रशंसनीय पाप नाशक चरित्र है॥४५॥

अच्युत भक्त के इस चरित्र को श्रद्धा निरंतर सुनने से भगवान मे भक्ति होती है जिस से क्लेश क्षय होते हैं ॥ ४६ ॥

महत्त्वको चाहने वालों को यहचरित आश्रय है सुनने वाले को शीलादिक गुण होते हैं तेजकी चाहना वाले को जिस मे तेज है मान वाले को मान प्राप्त होता है ॥ ४७ ॥

सावधान होकर प्रातः काल मे ब्राह्मणों के समूह में इस का कीर्तन करे पुण्य श्लोक ध्रुव चरित्र सायं काल मे भी कीर्तन करे ॥ ४८ ॥

पूर्णमासी मे अमावस्या मे द्वादशी मे श्रवण नक्षत्र मे दिन के क्षय मे व्यतीपात में संक्रान्ति मे रविवार को ॥ ४९ ॥

श्रद्धा वालों को श्रवण करावे परमात्मा के पद का आश्रय कर के कुछ चाहना नहीं करे तो संतुष्ट होने से सिद्ध होता है अज्ञानी को जो सुंदर मार्ग का ज्ञान देता है उस कृपालु दीनानाथ पर देवता प्रसन्न होते हैं ॥ ५० ॥ ५१ ॥

हे विदुरजी मै ने तुम से यह कहा है विशुद्ध कर्म वाले ध्रुव का चरित्र जो ध्रुवजी क्रीडा के समयमें घर तथा माताको छोडकर विष्णु के शरण कूं गये॥ ५२ ॥

इति श्रीभागवतचतुर्थस्कन्ध द्वादशाध्याय का भाषानुवाद
लक्ष्मणाचार्यकृत समाप्त ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

सूतउवाच

निशम्य कौषारविणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणम् ।
प्ररूढभावो भगवत्यधोक्षजे प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ॥ १ ॥

विदुरउवाच

के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत !
कस्यान्ववाये प्रख्याताः कुत्र वा सत्रमासते ॥ २ ॥
मन्ये महाभागवतं नारदं देवदर्शनम् ।
येन प्रोक्तः क्रियायोगः परिचर्याविधिर्हरेः ॥ ३ ॥
स्वधर्मशीलैः पुरुषैर्भगवान्‌ यज्ञपूरुषः ।
इज्यमानो भक्तिमता नारदेनेरितः किल ॥ ४ ॥
यास्ता देवर्षिणा तत्र वर्णिता भगवत्कथाः ।
मह्यं शुश्रूषवे ब्रह्मन् ! कात्स्न्र्येनाचष्टुमर्हसि ॥ ५ ॥

मैत्रेय उवाच

ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम् ।
सार्वभौमश्रियं नैच्छदधिराजासनं पितुः ॥ ६ ॥
स जन्मनोपशान्तात्मा निःसंगः समदर्शनः ।
ददर्श लोके विततमात्मानं लोकमात्मनि ॥ ७ ॥
आत्मानं ब्रह्म निर्वाणं प्रत्यस्तमितविग्रहम् ।
अवबोधरसैकात्म्यमानन्दमनुसन्ततम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं पञ्चभिरध्यायैर्ध्रुवचर्यानुवर्णिता ।
अथैकादशभिश्चित्रं पृथुचारित्रमुच्यते ॥ १ ॥
तत्र त्रयोदशे वक्तुं पृथोर्जन्म ध्रुवान्वये ।
अङ्ग वेनपिता पुत्रक्रौर्याद्गत इतीर्यते ॥ २ ॥

प्ररूढो भावो भक्तिर्यस्य ॥ १ ॥

अन्ववाये वंशे ॥ २ ॥

नारदेन प्रचेतसां सत्रे वर्णिताः कथाः प्रष्टुं तन्महिमानमाह । मन्य इति । देवस्य दर्शनं यस्य हरेः परिचर्याप्रकारः क्रियायोगः पञ्चरात्रे येन प्रोक्तः ॥ ३ ॥

स्वधर्मशीलैः पुरुषैः प्रचेतोभिः ॥ ४–५ ॥

ध्रुवस्य वंशे ते जाता इति वक्तुं ध्रुवस्य वंशमनुक्रामति ध्रुवस्येत्यादिना । पितुः सार्वभौमश्रियं नैच्छदधिराजासनं च ॥ ६ ॥

अनिच्छायां हेतुमाह । स इति चतुर्भिः ॥ ७ ॥

आत्मानं स्वरूपभूतं ब्रह्मावरुन्धान आप्नुवन् जानन्नात्मनोऽन्यं तदैक्षत स्वयं तु सर्वस्मादन्यः सन् कथं भूतं ब्रह्म निर्वाणं शान्तम् प्रत्यस्तमितः शान्तो विग्रहो भेदो यस्मिन् अवबोधरसैकात्म्यं यस्य ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ॥

तत्रैकादशाध्यायमध्ये सूतउवाचेति ध्रुवचरितवर्णनानन्तरं विदुरेण किमन्यत्पृष्टमित्यपेक्षायां प्रेमस्थगितायाः शुकवाण्याः पूरणं सूत एवाकरोदित्यर्थः एवमन्यत्रापि ज्ञेयम् प्ररूढभावः प्रोद्दीप्तरतिः ॥ १ ॥

आसत अकुर्वत ॥ २ ॥

महाभागवतं वैष्णवसम्प्रदायगुरुं देवस्य श्रीभगवतः दर्शनं तत्त्वज्ञानम् ॥ ३ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

नारदेनेडितः शुद्धभक्त्यैवाराध्योऽसौ न तु धर्म्मादिभिरतयेति स्तुत इत्यर्थः ॥ ४ ॥

तत्र प्रचेतसां सत्रे ॥ ५ ॥

अनुक्रामति । अनुक्रमेण कथयति तादृशसंपत्तिहेतुमधिराजासनं चेति ॥ ६ ॥

विततमनुगतमात्मन्यधिष्ठाने ॥ ७ ॥

सर्वं प्रपञ्चोपाधिकब्रह्मज्ञानमुक्त्वा निरुपाधिकं तदाह । आत्मानमिति युग्मकम् आत्मनः शुद्धजीवादन्यत्ब्रह्म नैचत अभेदांशमात्रानुसन्धानात् ऐकात्म्यमभेदः प्रत्यस्तमितः सर्वभावेन नाशमितो विग्रह उपाधियतस्तन्निरुपाधिकमित्यर्थः अनुसन्ततं सर्वत्रानुस्यूतम् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं कार्त्स्न्येन श्रुतध्रुवचेष्टितो विदुरो महिमानं विलोक्याप्य नारदो भगवानृषिः । आतोद्यं वितुदन् श्लोकान् सत्रेऽगायत्प्रचेतसामित्युक्तप्रचेतसस्तद्ब्रह्मसत्रं च तत्र सम्भावितभगवत्कथाबुभुत्सयापृच्छदित्याह शुकः । निशम्येति । कौषारविणा मैत्रेयेणोपवर्णितं यद्ध्रुवस्य वैकुण्ठस्थानाधिरोहणं तन्निशम्य श्रुत्वा पुनरधोक्षजे भगवति प्ररूढः प्रवृद्धः भावोभक्तिर्यस्य स तं कौषारविमन्यत्प्रष्टुमुपक्रान्तवान् प्रश्नमेवाह । केत इति । ते प्रचेतसां सत्र इत्युक्ताः प्रचेतसः के इति जातिप्रश्नः हेसुव्रत ! मैत्रेय कस्यापत्यानि पुत्रा इति योनिसम्बन्धप्रश्नः कस्यान्ववाये प्रख्याताः प्रसिद्धा इति वंशप्रश्नः कुत्र वा सत्रमासत इति सत्रदेशप्रश्नः ॥ १ ॥ २ ॥

नारदेन प्रचेतसां वर्णिताः कथाः प्रष्टुं तन्महिमानमाह । मन्य इति । देवदर्शनः देवो भगवान् तस्य दर्शनं येन करणेन्युद् तस्योपदेशेन भगवत्साक्षात्कारोपायभूत इत्यर्थः देवस्य दर्शनं साक्षात्कारो यस्य तस्मादिति बहुव्रीहिस्तमत एव महाभागवतं मन्ये तमेव विशिनष्टि । येन नारदेन हरेः परिचर्याविधिः पूजाप्रकाररूपः क्रियायोगः प्रोक्तः पञ्चरात्राद्युपदेशेन कथितः ॥ ३ ॥

क्रियायोगमेव विशदयन् नारदं प्रस्तौति । स्वधर्मेति । भक्तिमता निरतिशयभगवद्भक्तिमता नारदेन यज्ञपुरुषः यज्ञानां भोक्ता प्रभुश्च भगवान् स्वधर्मशीलैः स्वस्ववर्णाश्रमोचितभगवदाराधनरूपपञ्चमहायज्ञाद्यनुष्ठानपरैः पुरुषैरिज्यमान आराध्यमान ईरितः कथितः किल सर्वयज्ञाराध्यभगवत्परिचर्यारूपत्वेन स्ववर्णाश्रमोचित धर्मा अनुष्ठेया इति पञ्चरात्रादौ नारदेन भगवता कथितमित्यर्थः ॥ ४ ॥

एवं नारदं प्रस्तुत्य प्रचेतोभ्यस्तदुपदिष्टकथाः पृच्छति । या इति । देवर्षिणा नारदेन तत्र प्रचेतसां ब्रह्मसत्रे या भगवत्कथा वर्णिताः ताः कथाः शुश्रूषवे मह्यं कार्त्स्न्येन वक्तुमर्हसि ॥ ५ ॥

एवमापृष्टो मुनिः प्रचेतसो ध्रुववंशे जाता इति वक्तुं ध्रुववंशमनुश्रावयति । ध्रुवस्येति । ध्रुवस्य पुत्रः उत्कलाख्यः पितरि ध्रुवे वनम् प्रति गच्छति सति सार्वभौमश्रियं पितुरधिराजासनं च नैच्छत् ॥ ६ ॥

अनिच्छायां किंकारणमित्यपेक्षायां बहुजन्मसिद्धयोगमाहात्म्यप्रत्यक्षितस्वात्मयाथात्म्यानुभवतृप्ततयादन्यत्पुरुषार्थजातं नैच्छदिति वक्तुं तस्य स्वात्मानन्दानुभवमाह । स इति । स उत्कलः जन्मना जन्मप्रभृति उपशान्तः रागादिभिरकलुषित आत्मा मनो यस्य अत एव निस्संगः रागिभिः संगरहितः समदर्शनः सन् लोके विततं व्याप्तमात्मानमात्मनि लोकं च ददर्श लोके विततमात्मानमिति शरीरव्यापकत्वमुक्तमात्मनि लोकमित्यात्मनो धारकत्वमुक्तं लोक्यते इतिलोकः शरीरम् ॥ ७ ॥

आत्मानं प्रत्यगात्मानं ब्रह्म धर्मभूतज्ञानबृहत्तया ब्रह्मशब्दवाच्यं निर्वाणं सुखस्वरूपं प्रत्यस्तमितविग्रहं देहविनिर्मुक्तम् "अशरीरं शरीरेषु,, इति श्रुतेः अवबोधरसैकात्म्यं अवबोध एव रसः एकात्म्यमेकस्वभावत्वं यस्य तं क्वचिदप्यंशे जाड्यरहितमित्यर्थः आनन्दं धर्मभूतानन्दगुणविशिष्टं गुणवचनेभ्यो मतुपोलुगवक्तव्य इत्यनुशासनात् प्रतिसंततमत्यन्तं नित्यम् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र हरिभक्तकथाश्रवणेन शुद्धान्तःकरणस्य बिम्बप्रतिबिम्बज्ञानादेवापवर्गः स्यादिति दीप्यतेऽस्मिन्नध्याये तत्रादौ विदुरस्य प्रचेतसां विषयप्रश्नप्रकारस्तदुत्तरत्वेन मैत्रेयेणाऽस्य वंशावलिर्वर्ण्यते क्रियते । निशम्येत्यादिना । प्ररूढभावः प्रवृद्धभक्तिः सत्रेऽगायत्प्रचेतसामित्युक्तिः प्रश्नबीजम् ॥ १ ॥

अन्ववाये वंशे ॥ २ ॥

महाभागवतेन विदुरेण हरिकथाप्रश्नं विहाय प्रचेतसां प्रश्नः किमिति क्रियते इत्याशङ्क्य तेषां कथापि हरिकथाविनाभूता नारदेन प्रोच्यमानत्वान्नारदस्त्वन्यकथां न वक्ति भागवतचूडामणित्वादित्याह । मन्य इति । क्रियायोगः स क इति तत्राह । परिचर्या विधिर्हरेरिति ॥ ३ ॥

प्रवृत्तानां योग्यः कथं निवृत्तिविषयो भवतीत्याशङ्क्य संकल्पविशेषात्स्यादित्याशयेनाह । स्वधर्मशीलैरिति । अयं भावः साक्षान्नारायण एव चरुपुरोडाशादिद्रव्यस्वामित्वेन तदभिमानित्वेनाग्न्यादिदेवतान्तर्यामित्वेन तच्छब्दप्रवृत्तिनिमित्तस्य मुख्यत्वेन देवतात्वेन च मन्त्रमूर्तित्वेनेज्यत इति नारदेन प्रतिपादित इति ॥ ४ ॥

ततः किं फलितमित्यत्राह । यास्ता इति ॥ ५ ॥

अधिराजासनं राजासनमधिकृत्य वर्तमानं सार्वभौमश्रियमनैच्छदित्यन्वयः ॥ ६ ॥

कुतोनैच्छदिति तत्राह । स जन्मनेति । जन्मप्रभृति भगवन्निष्ठाविगुणयुक्तत्वात् समदर्शनत्वं स्पष्टयति । ददर्शेति । आत्मानं परमात्मानं लोके विततं ददर्श लोकमात्मनि परमात्माधारतयास्थितमद्राक्षीदित्यन्वयः ॥ ७ ॥

तदेव विशिनष्टि । आत्मानमिति । ददर्शेत्यनवर्तते आत्मानं स्वचित्तस्थं हरिमेवं ददर्शेत्यन्वयः कथं ब्रह्म "अथ कस्मादुच्यते ब्रह्मेति बृहन्तोह्यस्मिन्गुणा,, इतिश्रुतेः गुणातो देशतोव्याप्तं हृदयगुहाकाशस्याल्पत्वेन तत्स्थितस्यापि तथात्वात्कथंव्याप्तमित्युच्यत इत्याशङ्क्य प्राकृतवैकृतरूपवत् एवानुपपत्तिः व्याप्तत्वेन हरेस्तादृश शरीराभावादिति भावेनोक्तम् । निर्वाणमिति । "एतद्वाणमवष्टभ्य इति ,, श्रुतौ वाणशब्दस्य शरीरे प्रयोगात् देहविनाशे तत्रस्थस्यापि विनाशसंभवात्कथं ब्रह्मत्वमुच्यत इत्यतोवाह । निर्वाणमिति । निर्गतोनाशोयस्मात्तथोक्तम् "निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जन,, इत्यादयः अनेन देहिनो जीवस्य देहोऽहमिति तन्निमित्तदुःखित्वेऽपि हरेस्तन्नास्तीति ज्ञापितम् हरेः प्राकृतदेहो नास्तीति स्पष्टमाह । प्रत्यस्तमितेति । "गात्रं वपुः संहननं

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ॥

शरीरं वर्ष्मविग्रह" इत्यमरः प्रतीत्युपसर्गयोगेन यानि यान्यवताररूपाण्यन्तर्यामिरूपाणि च तानि तानि सर्वाण्यपि प्राकृतशरीररहितानीति सूचनेन मूलरूपस्य किमु वक्तव्यमित्यायातं तर्हीदं शून्यकल्पमित्यत उक्तमवबोधेति अवबोधरसो-ज्ञानरसः स एवैकमात्मनोऽभिन्नं रूपं यस्य तत्तथोक्तं प्राकृतज्ञानमिश्रितं न भवतीत्येकेत्युक्तम् तस्यापि ज्ञानवाचित्वादवगच्छतीत्यादौ सिद्धत्वात् "ज्ञानज्ञानः सुखसुख" इति श्रुतिरपि सूचिता स्यात् रूपरूपिणोरभेदद्योतनायैकात्म्यमित्युक्तम् "ऐकात्म्यप्रत्ययसारम्" इति श्रुतिश्च एवं चेद्विज्ञानवादानुप्रवेश इति तत्राह। आनन्दमिति। आनन्दयतीत्यानन्दः सुखानुभवरूपमित्यर्थः "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः उपसंहरति। अनुसंततमिति। अतः सर्वप्राणिष्वनुगतत्वेन तद्बहिश्च च गुणगुणिनोरूपरूपिणोरभेदेन ततं व्याप्तमित्युपपन्नमित्यर्थः "समभेद इतियाद्वः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीसूत उवाच श्रीशुकदेव वाक् शेषत्वेन स्थितं स्वयमेवापूरयदित्यर्थः ॥ १——२ ॥

महाभागवतं वैष्णवसम्प्रदायगुरुं देवदर्शनं श्रीभवत्तत्त्वं भगवत्सर्वमङ्गलदर्शनञ्च । अनुकम्प्येषु भगवदनुभवहेतुं वा ॥ ३ ॥

तादृशेनापि नारदेनेडितः ॥ ४ ॥ ५ ॥ ६ ॥

आत्मानमिति युग्मकम्। ददर्श लोके इत्यनेन प्रथमं सोपाधिक ब्रह्म दर्शनमुक्तमधुना निरुपाधिक ब्रह्म दर्शनमाह। प्रत्यस्तमितमिति। निरुपाधिकमित्यर्थः । अनुसन्ततं सर्वत्रानुस्यूतं स्वरूपं परमकारणरूपमात्मनो जीवचच्छुद्धात्तदन्यत्सैच्छत अभेदांशमात्रानुसन्धानात् ॥ ७—११ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रयोदशेऽङ्ग राजस्य पुत्रेष्ट्या यः सुतोऽजनि ।
वेणस्तस्यातिदौरात्म्यान्नृपो निर्विद्य निर्गतः ॥

सत्रे गायत् प्रचेतसामित्याकर्ण्य पृच्छति । के ते इति । अन्वाये वंशे ॥ १ ॥ २ ॥

क्रियायोगः परिचर्याप्रकारः पञ्चरात्रे येन प्रोक्तः ॥ ३ ॥

स्वधर्मशीलैः प्रचेतोभिः ॥ ४ ॥ ५ ॥

ध्रुवस्य वंश एव ते जाता इति तद्वंशकथायामेव प्रचेतसां कथा आयास्यतीत्यभिप्रायेणाह ॥ ६ ॥

जन्मना उत्कलपरयैव उपशान्तात्मा ज्ञानी ॥ ७ ॥

आत्मानं जीवं स्वरूपं स्वरूपभूतं ब्रह्म अवरुन्धानो जानन् निर्वाणं शान्तं प्रत्यस्तमितविग्रहं निरस्तविवादमात्मानं कीदृशम् । अवबोधरसैनैकात्म्यं यस्य तम् अव्यवच्छिन्नेन निरन्तरेण योगाग्निना दग्धं कर्ममलं यस्य तथा भूत आशयो यस्य सः । आत्मनः शुद्धजीवादन्यत् नैच्छत ॥ ८ ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ ध्रुववंशोऽवतीर्णस्यदशभिस्तत्र त्रयोदशे वेणदौः शील्य... त्यपिताङ्गोवनं गत इति वर्ण्यते कौषारविणा मैत्रेयेण ... दृढो भावो भक्तिर्यस्य ॥ १ ॥

अपत्यानि पुत्राः कस्यान्ववाये अन्वये प्रख्याताः ... ख्याताः ॥ २ ॥

श्रीनारदेन प्रचेतःसंनिधौ वर्णितां हरिकथां प्रष्टुं ... रदमहत्त्वमाह । मन्येइति । देवस्य दर्शनं यस्मात् यत्कृपया ... देवदर्शनं भवतीत्यर्थः येन हरेः परिचर्याविधिरूपः क्रियायो... पञ्चरात्रे प्रोक्तः ॥ ३ ॥

स्वधर्मशीलैः प्रचेतोभिर्यत्र भगवान् ईज्यमानस्तत्र भक्ति... नारदेन किलावश्यं भगवान् ईडितः ॥ ४ ॥

अतस्तत्र देवर्षिणा या वर्णितास्ता आचक्षु वक्तुमर्हसि ॥ ५ ॥

कस्यात्पत्यानीति प्रश्ने ध्रुववंशजस्य प्राचीनवर्हिषोऽपत्यानि वक्तुं ध्रुववं शमनुक्रामति ध्रुवस्येत्यादिना सार्वभौमश्रियं राजासनं च नैच्छत् ॥ ६ ॥

आत्मानं विश्वकारणं भगवन्तं लोके चेतनाचेतनात्मके ... चात्मनि ददर्श "योमां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति" ति श्रीमुखोक्तेः ॥ ७ ॥

आत्मानं जीवं ब्रह्मधर्मभूतवृहद्ज्ञानाश्रयं निर्वाणं निर्वि... प्रत्यस्तमितः स्वरूपज्ञानेन निवारितोविग्रहः देहात्मभावो ... च्चम् अवबोधरसेन परब्रह्मणा ऐकात्म्यमपृथक् स्वरूपाि... प्रवृत्त्यादिमत्त्वं यस्य तम् अनुसंततं सर्वेषु सर्वास्ववस्थासु च ... तं स्थितिमन्तं ददर्शेति पूर्वेणान्वयः ॥ ८ ॥

---

भाषाटीका ।

सूतजी वोले मैत्रेयजी का वर्णनकराहुआ ध्रुवजीका ... पद का आरोहणश्रवण कर के अधोत्त भगवान मे प्रे... जम जाने से विदुरजी फिर मैत्रेयजी को पूछने को ... मये ॥ १ ॥

विदुरजी वोले वेप्रचेता कौन हैं किस के पुत्र हैं हे सु... किस के वंश मे प्रसिद्ध हैं कहां पर यज्ञ कर तेथे ॥ २ ॥

ईश्वर के दर्शन करने वाले नारदजी को तो हम महा भा... समुझते हैं जिनने भगवान् का आराधन का क्रिया ... पञ्चरात्र मे कहा है ॥ ३ ॥

अपने अपने धर्मोंमें पुरुषों से पूजित जो यज्ञ पुरुष ... यण भगवान् तिनकी भक्तिमान् नारदजी ने स्तुति की है ॥ ४ ॥

हे ब्रह्मन् ! वहां पर देवर्षि नारदजीने जो भगवत्कथा ... करीं सो सब कथा सुनने को इच्छा करने वाले मेरे ... कहिये ॥ ५ ॥

मैत्रेयजी वोले श्रीध्रुवजी का उत्कलनामक पुत्र भया सो ... ध्रुवजी के वनमें चले जाने के समय सार्व भौम संपत्ति ... अपने पिता का राज सिंहासन को देने पर भी उनने नहीं ... किया ॥ ६ ॥

अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः ।
स्वरूपमवरुन्धानो नात्मनोऽन्यं तदैक्षत ॥ ९ ॥
जडान्धबधिरोन्मत्तमूकाकृतिरतन्मतिः ।
लक्षितः पथि बालानां प्रशान्तार्चिरिवानलः ॥ १० ॥
मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः ।
वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम् ॥ ११ ॥
स्वर्वीथिर्वत्सरस्येष्टा भार्या सूतषडात्मजान् ।
पुष्पार्णं तिग्मकेतुं च इषमूर्जं वसुं जयम् ॥ १२ ॥
पुष्पार्णस्य प्रभा भार्या दोषा च द्वे बभूवतुः ।
प्रातर्मध्यंदिनं सायमिति ह्यासन् प्रभासुताः ॥ १३ ॥
प्रदोषो निशिथो व्युष्ट इति दोषा सुतास्त्रयः ।
व्युष्टः सुतं पुष्करिण्यां सर्वतेजसमादधे ॥ १४ ॥
स चक्षुःसुतमाकूत्यां पत्न्यां मनुमवाप ह ।
मनोरसूत महिषी विरजान्नड्वला सुतान् ॥ १५ ॥
पुरुं कुत्सं त्रितं द्युम्नं सत्यवन्तमृतं व्रतम् ।
अग्निष्टोममतीरात्रं प्रद्युम्नं शिबिमुल्मुकम् ॥ १६ ॥
उल्मुकोऽजनयत्पुत्रान् पुष्करिण्यां षडुत्तमान् ।
अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं गयम् ॥ १७ ॥
सुनीथाङ्गस्य या पत्नी सुषुवे वेनमुल्बणम् ।
यद्दौःशील्यात्सराजर्षिर्निर्विण्णो निरगात्पुरात् ॥ १८ ॥
यमङ्गशेपुः कुपिता वाग्वज्रा मुनयः किल ।
गतासोस्तस्य भूयस्ते ममन्थुर्दक्षिणं करम् ॥ १९ ॥
अराजके तदा लोके दस्युभिः पीडिताः प्रजाः ।
जातो नारायणांशेन पृथुराद्यः क्षितीश्वरः ॥ २० ॥

भाषाटीका ।

वह जन्महीं से शांत चित्त सब संग रहित समदृष्टि वाला होने से सबजगत् में परमात्मा को और अपने मे जगत्को जानता भया ॥ ७ ॥

निरंतर योग रूप अग्नि से कर्म के मल अंतः करण में से दग्ध होजाने से आत्म परमात्म स्वरूप का अनुसंधान करने से शांत नष्ट होगया है भेद दृष्टि जिसमें केवल स्वयं प्रकाश ज्ञान स्वरूप सर्वत्र व्याप्त एक परमात्मा को देखने से अन्य किसी वस्तु को नहीं स्मरण किया ॥ ८—९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कथं भूतः अव्यवच्छिन्नो यो योगः स एवाग्निस्तेन दग्धः कर्ममल आशयो वासना च यस्य ॥ ९ ॥

जडादीनामिवाकृतिर्यस्य तथा भूतो लक्षितः अतन्मतिः न तेषामिव मतिर्यस्य सर्वज्ञत्वात् प्रशान्तान्यर्चींषि ज्वाला यस्यानलस्य तद्वत्स्थितः ॥ १० ॥

यवीयांसमुत्कलात्कनिष्ठम् ॥ ११ ॥

इष्टा प्रिया भार्या ॥ १२ ॥ १३ ॥

निशिथो निशीथः ॥ १४ ॥

स सर्वतेजाश्चक्षुःसंज्ञं मनुं सुतं पुत्रमवाप मनोर्महिषी नड्वला विरजान् शुद्धान् पुरुप्रमुखान् द्वादश सुतानसूत ॥ १५——१८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अंग हे विदुर ! वागेव वज्रं येषाम् ॥ १९ ॥

मथने हेतुः अराजक इति आद्यः पुरग्रामादीनां तेन रचितत्वात् ॥ २० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ॥

प्रशान्तार्चिरिव दग्धोपाधिः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ॥ १३ ॥ १४ ॥

सचक्षुरित्यर्द्धकम् सचक्षुःसंज्ञः सर्वतेजाः सुतं मनुं चाक्षुषनामानमवापेत्यर्थः षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुरित्यष्टमे वक्ष्यमाणत्वात् अत एव टीकायामपि चक्षुःसंज्ञ- इति प्रथमान्त पाठ एव सांप्रदायिको न तु द्वितीयान्त इति ज्ञेयं मनोरिति सार्द्धकम् द्युम्नमित्येव पाठः धूम्रमिति क्वचित् ॥ १५ ॥ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

तेन पृथुना ॥ २० ॥ २१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वरूपं स्वस्वरूपभूतमवरुन्धानः अनुसंदधानः अत एव अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः अव्यवच्छिन्नः निरन्तरः योगः आत्मयाथात्म्यज्ञानयोगः स एवाग्निस्तेन दग्धं कर्मरूपमलं यस्य सः आशयोऽन्तः करणं यस्येति बहुव्रीहिगर्भो बहुव्रीहिः अन्यत् आत्मस्वरूपादन्यत् पुरुषार्थभूतदेहतदनुबन्ध्यादिकं स्वयमन्यः देहादिभ्यो विलक्षणः नैक्षत नापश्यत् ॥ ९ ॥

जडादितुल्यवेषः अतन्मतिः जडादितुल्यमतिरहितः प्रशान्तानि अर्चींषि ज्वाला यस्य सोऽग्निरिव स्थितः बालानां पथि मार्गे स्वमाहात्म्यानाविष्काररूपेण लक्षितः ॥ १० ॥

तमुत्कलं मन्त्रिभिः सहिताः सर्वे तत्कुलवृद्धाः जडमुन्मत्तं च ज्ञात्वा तं विहायेत्यर्थः भ्रमेः सुतं यवीयांसं कनीयांसं वत्सरं भूपतिं राजानं चक्रुः ॥ ११ ॥

वत्सरस्येष्टा शीलरूपगुणादिभिः नितरामनुकूला स्वर्वीथ्याख्या भार्या पुष्पार्णादीन् षट् पुत्रानसूत सुषुवे ॥ १२ ॥

तत्र षण्णां पुत्राणां मध्ये पुष्पार्णाख्यस्य ज्येष्ठस्य प्रभादोषे द्वे भार्ये बभूवतुः तत्र प्रभायाः सुताः प्रातरादयस्त्रयो बभूवुः ॥ १३ ॥

दोषासुताः प्रदोषादयस्त्रय आसन् अत्र व्युष्टः पुष्करिण्याख्यायां भार्यायां सर्वतेजजभाख्यं सुतमादधे जनयामास ॥ १४ ॥

स सर्वतेजाः आकूतिनाम्न्यां पत्न्यां चक्षुः संज्ञं सुतं मनुमवाप मनोः चक्षुः संज्ञस्य नड्वलाख्या महिषी भार्या विरजान् शुद्धान् सुतान् पुरुप्रमुखान् द्वादश पुत्रानसूत ॥ १५—१६ ॥

तत्रोल्मुकः पुष्करिण्यां भार्यायामुत्तमान् श्रेष्ठान् अङ्गादीन् षट् पुत्रानजनयत् ॥ १७ ॥

तत्राङ्गस्य या सुनीथाख्या भार्या सा उल्बणं दुरात्मानं वेननामकं पुत्रं सुषुवे दौरात्म्यमेव प्रपञ्चयति । यदित्यादिना । यस्य वेनस्य दौःशील्यात्तद्दुष्टस्वभावाद्धेतोः स राजर्षिरङ्गः निर्विण्णः नितरां दुःखितः पुरान्निरगात् निर्गतः ॥ १८ ॥

हे अङ्ग हे विदुर ! मुनयः कुपिताः वेनेन कोपं प्रापिताः वाक् वज्रं येषां ते यं वेनं शेपुः किल शप्तवन्तः शापाद्गतप्राणस्य तस्य वेनस्य दक्षिणकरं हस्तं पुनस्ते मुनयो ममन्थुः मथितवन्तः ॥ १९ ॥

मथने हेतुमाह । अराजकइति । तदा शापानन्तरं लोके अराजके राज्ञा रहिते सति अतएव दस्युभिः पीडिताः प्रजा बभूवुः ततः पृथुर्नाम आद्यः पुरग्रामादीनां तेन रचितत्वात् क्षितीश्वरो राजा नारायणांशेन जातः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानाग्निना दग्धवाशान्तःकरणस्यैतादृशभगवद्रूपदर्शनं [illegible] च्छत इत्याह । अव्यवच्छिन्नेति । योगशब्देन तज्ज्ञानित्वं लक्ष्यते अव्यवच्छिन्नयोगेन निरन्तरध्यानलक्षणोपासनया [illegible] न ज्ञानाग्निना दग्धं भस्मीभूतं कर्ममलं पापक्रियानिमित्तं [illegible] किट्टं यस्य स तथा तादृश आशयोऽन्तःकरणं यस्य तथा निर्मलान्तः करणपात्रे प्रज्वलितेन ज्ञानादीपेन लोके [illegible] तमात्मानमात्मनि ततं लोकं च ददर्शेत्युक्त्या द्वयोः सम[illegible] मायातमिति मन्दाशङ्कामपनुदन्विशदयति । स्वरूपमिति । (१) [illegible] रूपं जीवस्य बिम्बरूपं परमात्मानमवरुन्धानः स्वज्ञानान्तः[illegible] तं कुर्वाणः साक्षात्कृतं कुर्वाणोऽस्माद्धरेरन्यत्स्वतन्त्रमा[illegible] तज्जगन्नैक्षत किन्तु तत्सृष्टं तत्स्थापितं तन्नियतं तत्संहृतं त[illegible] पितं तद्वद्धं तन्मोचितमपश्यदित्यर्थः तदा स्वरूपं प्रतिबिम्ब[illegible] स्माद्बिम्बादन्यद्भिन्नं नैक्षतेति बिम्बप्रतिबिम्बयोरैक्यमु[illegible] इति वक्तुं न युक्तम् अवरुन्धान इत्यस्य निर्विषयत्वात् त[illegible] कालस्य पृथङ्निर्देशानुपपत्तेश्च ददर्शेत्यत्र लोकात्मनोराधा[illegible] यत्वोक्तेश्च तस्य च भेदनिष्ठत्वात् तदुक्तम् "भिन्नस्वरूपम[illegible] स्वरूपं तु द्विधा हरेः । भिन्नस्वरूपं ब्रह्माद्यं मत्स्याद्यभिदमु[illegible] इति ॥ ९ ॥

एवं विधोऽपि लोकसंभाषणविसर्जनार्थमविवेकिनाभेवं [illegible] इत्याह । जडेति । अतन्मतिस्तत्तद्वस्तुविषयज्ञानशून्यः विवेकि[illegible] एव सर्वविलक्षणोविष्णो यया संसारं तरति सा मतिर्यस्य सो[illegible] न्मतिरिति प्रशान्तार्चिर्भस्मगर्भितोऽग्निरिव ॥ १० ॥

अस्मिन्नेवं गते कोऽत्र राजाभूदत्राह । मत्वेति । कालावयवस्य व[illegible] रस्य राज्यार्हत्वं कथमित्यतउक्तं यवीयांसमिति कुलवृद्धा [illegible] कल्पनाम्नि सुते स्थिते वत्सरं राजानं कथमकुर्वन्नित्येतच्चोद्यं "क[illegible] कल्पाभिमानी सन् शिशुमारानुगः स्थितः। वत्सरो राज्यमकरो[illegible] त्रादत्तं महाबलः । चक्रे नारायणः सात्त्विकस्तु च्नः कल्पम[illegible] जम्"इत्यनेन परिहर्तव्यम् ॥ ११ ॥

वत्सरोऽपि नाम्ना स्वर्वीथ्यां भार्यायां षट् सुतानापेत्या[illegible] स्वर्वीथीति । स्वर्गमार्गाभिमानित्वात्स्वर्वीथीति ॥ १२ ॥

अत्र यं यमादाय कथा प्रवर्तते स एव वंशे हेतुभूतः [illegible] स्वकृतोद्वाहाः योगिनोऽप्रजाश्चेति तात्पर्यं ज्ञातव्यम् एताः [illegible] सुताश्च कालादितच्चद्वस्त्वभिमानिन इतिच ॥ १३-१४ ॥

स सर्वतेजाश्चक्षुर्नामानं सुतं नाम्नाकूत्यां पत्न्यामवापेत्यन्[illegible] मनोर्महिषी नाम्ना नड्वला वैराजा वैराजापुत्री पुरुकुत्सा[illegible] द्दशसुतानसूतेत्यन्वयः ॥ १५-१६-१७ ॥

---

(१) स्वरूपमवरुन्धानइत्यस्यजीवः स्वस्यरूपमवरुन्धानःइत्य[illegible] प्रतीतिवारणाय तात्पर्योक्तमर्थमाह ॥ स्वरूपमिति

तस्य शीलनिधेः साधोर्ब्रह्मण्यस्य महात्मनः ।
राज्ञः कथमभूद्दुष्टा प्रजा यद्विमना ययौ ॥ २१ ॥
किं वांहो वेनमुद्दिश्य ब्रह्मदण्डमयूयुजन् ।
दण्डव्रतधरे राज्ञि मुनयो धर्मकोविदाः ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अङ्गस्य या सुनीथानामपत्नी सोल्वयामसुरप्रकार्तिं वेनं सुषुव इत्यन्वयः ॥ १८ ॥

यं वेनं अङ्ग विदुर ! गतासोर्मृतस्य ॥ १९ ॥

ततः किमभूत्तत्राह । जातइति ॥ २० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

स चक्षुरित्यर्द्धकम् । स चक्षुः संज्ञः सर्वतेजाः सुतं चाक्षुषंमनुत्वेनावापेत्यर्थः । वक्ष्यते ह्यष्टमे । षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुरिति । तस्मात् टीकायामपि चक्षुः संज्ञ इति प्रथमान्त पाठ एव सम्मतः मनोरिति । वैराजमिति चित्सुखः । वैराजादीन् सुतान् ॥ १५ ॥ २१ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पथि वालै जंडाद्याकृतिभिर्लक्षितः । अतन्मतिः न जडादीनामिव मतिर्यस्य सः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

स सर्वतेजा एव चक्षुः चाक्षुषं सुतं मनुमवापेति व्याख्येयम् । षष्ठश्च चक्षुषः पुत्रश्चाक्षुषोनाम वै मनुरित्यष्टमात् ॥ १५ ॥ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

मथने हेतुः अराजके इति । जातो मथ्यमानात् करात् । आद्यः क्षितीश्वर इति पुरग्रामादिविधायकत्वांशेन ॥ २० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्तदा अव्यवच्छिन्नेन योगाग्निना दग्धानि कर्ममलानि यस्य स आशयोऽन्तः करणं यस्य सः उक्तप्रकारस्वरूपमुपासकस्वरूपमवरुन्धानः भगवदंशतया अनुसंदधानः आत्मनोविश्वकारणात् पुर्वोक्तादुपास्यादन्यं नैक्षत "सर्वं पुरुष एवेदं सर्वं खल्विदं ब्रह्म तज्जलानि ति„ इत्यादिश्रुतेः अंशित्वांशत्वाभ्यां ब्रह्मजीवयोः स्वरूपेण भिन्नत्वेऽप्यंशस्यांशिनिरपेक्षस्थित्याद्यभावात्तदभिन्नं ददर्शेत्यर्थः ॥ ९ ॥

प्रशान्तान्यर्चींषि ज्वाला यस्य सभस्मच्छन्नोऽनल इव जडादीनामिवाकृतिर्यस्य स तथा भूतोबालानामविवेकिनां पथि लक्षितः अतन्मतिः न जडादीनामिव मतिर्यस्य सः ॥ १० । १३ ॥

आद्धे उत्पादयामास ॥ १४ ॥

ससर्वतेजाः आकूत्यां चक्षुः संज्ञं मनुं सुतमवाप विरजान् शुद्धान् ॥ १५—१८ ॥

हे अङ्ग ! वागेव वज्रं येषां ते ॥ १९ ॥

आद्यः क्षितीश्वरः तदनन्तरसंस्थापितधर्मसेतुपालकेभ्यः पूर्वो भूपः ॥ २० ॥

———

भाषाटीका ॥

स्वयं आप अज्ञानी न होकर भी रस्ता में मूर्खों को गूंगा अंधा बहिरा सरी के मालूम देते थे जैसे ज्वाला के शांत होने से अग्नि रहता है ॥ १० ॥

उन को जड उन्मत्त पागल मान कर कुल वृद्ध मंत्रि लोगों ने भ्रमी के पुत्र छोटे भ्राता को राजा कर दिया ॥ ११ ॥

वत्सर की भार्या स्वर्वीथी अति प्रिय थी उस ने छे पुत्रों को पैदा किया पुष्पार्ण तिग्मकेतु इष ऊर्ज वसु जय ॥ १२ ॥

पुष्पार्णकी प्रभा नाम की भार्या और दोषा दो भई प्रभा के पुत्र प्रातः मध्यंदिन सायं तीन पुत्र भये ॥ १३ ॥

प्रदोष निशिथ व्युष्ट ए तीन दोषा के पुत्र भये व्युष्ट ने पुष्करणी मे सर्व तेज पुत्र को पैदा किया ॥ १४ ॥

सचक्षु ने आकूति पत्नी मे मनु पुत्र को उत्पन्न किया मनू से रानी ने निर्मल द्वादश पुत्रों को पैदा किया ॥ १५ ॥

पुरु कुत्स त्रित द्युम्न सत्यवान् ऋत व्रत अग्निष्टोम अतिरात्र प्रद्युम्न शिबि उल्मुक ॥१६ ॥

उल्मुक ने पुष्करिणी भार्या मे उत्तम छे पुत्रों को उत्पन्न किये अंग सुमनस ख्याति क्रतु अंगिरस गय षष्ठः ॥ १७ ॥

अंग की पत्नी जो सुनी था तिसने क्रूरवेन को पैदा किया जिसकी दुष्टता से वह अंगराजा दुखित होकर पुर में से निकल गये ॥ १८ ॥

हे विदुरजी जिनको कुपित होकर के वज्र सरीकी वाणी वाले मुनियों ने शाप दिया उसके मरने पर फिर उनने उसके दक्षिण हस्तको मथन किया ॥ १९ ॥

तिस वखत बिनाराज के होने से प्रजा चोरों से पीडित भये तब नारायण के अंश से आदि पृथिवीश्वर पृथु महाराज प्रगट भये ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यस्याः प्रजाया हेतोर्विमनाः सन्ययौ ॥ २१ ॥

किंवा अंहः अपराधं वेनं उद्दिश्य आलक्ष्य ॥ २२ ॥

नावध्येयः प्रजापालः प्रजाभिरघवानपि ।
यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा ॥ २३ ॥
एतदाख्याहि मे ब्रह्मन् सूनीथात्मजचेष्टितम् ।
श्रद्दधानाय भक्ताय त्वं परावरवित्तमः ॥ २४ ॥

मैत्रेय उवाच

अङ्गोऽश्वमेधं राजर्षिराजहार महाक्रतुम् ।
नाजग्मुर्देवतास्तस्मिन्नाहूता ब्रह्मवादिभिः ॥ २५ ॥
तमूचुर्विस्मितास्तत्र यजमानमथर्त्विजः ।
हवींषि हूयमानानि न ते गृह्णन्ति देवताः ॥ २६ ॥
राजन् ! हवींष्यदुष्टानि श्रद्धया सादितानि ते ।
छन्दांस्ययातयामानि योजितानि धृतव्रतैः ॥ २७ ॥
न विदामेह देवानां हेलनं वयमण्वपि ।
यन्न गृह्णन्ति भागान् स्वान् ये देवाः कर्मसाक्षिणः ॥ २८ ॥

मैत्रेय उवाच

अङ्गो द्विजवचः श्रुत्वा यजमानः सुदुर्मनाः ।
तत्प्रष्टुं व्यसृजद्वाचं सदस्यांस्तदनुज्ञया ॥ २९ ॥
नागच्छन्त्याहुता देवा न गृह्णन्ति ग्रहानिह ।
सदसस्पतयो ब्रूत किमवद्यं मया कृतम् ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यतोऽयमधर्म इत्याह । नावध्येयोऽ वधेयोऽपि न भवति ॥ २३ ॥

परावरविदां मध्ये श्रेष्ठः ॥ २४ ॥

अभावी पुत्रः काम्यकर्मणा बलादापादितो न सुखाय भवेदिति द्योतयन्नङ्गस्य पुत्रोत्पत्तिक्रममाह । अङ्ग इत्यादिना ॥ २५ ॥ २६ ॥

अयातयामान्यगतवीर्याणि ॥ २७ ॥ २८ ॥

यज्ञे गृहीतमौनोऽपि वाचं व्यसृजत्प्रायुङ्क्त ॥ २९ ॥

आहुता आहूताः ग्रहान् सोमपात्राणि इह यज्ञे न गृह्णन्ति॥३०॥

श्रीराधारमणदासगोस्वामिविरचिता

दीपिन्याख्या दीपिकाटिप्पणी ।

वेण इति सप्तम्यन्त एव पाठः ॥ २२ ॥

अवध्येयोऽपि न भवति किं पुनर्वध्यः यद्यस्मात् ॥ २३ ॥

एतत्तादृशविप्रापराधहेतुं तादृशराज्ञस्तादृशी प्रजा कथमिति विस्मयेन तत्रार्थे श्रद्दधानाय श्रद्धां कुर्वते ॥ २४ ॥

काम्यकर्मणा सकामविष्णुयजनेन सुखायैहिकाय न भवेत् किन्तु तद्यजनस्य प्रभावात् वैराग्योत्पादनाय तु भवेदेवं ॥ २५ ॥ २६ ॥

अदुष्टानीत्यादि विशेषणत्रयेण द्रव्ययाजमानर्त्विग्दोषा वृत्ताः ॥ २७ ।

इह जन्मनि स्वल्पमपि हेलनं जानीमः किन्त्वनुमानं करवामेति शेषः यद्यस्मात् ॥ २८ ॥

तद्भागाग्रहणे हेतुं हेलनम् ॥ २९ ॥

इह यज्ञे ॥ ३० ॥ ३१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं दुष्टपुत्रः कथमभूत् अजायत यतः दुष्टायाः प्रजाया ... विमनाः दुःखितमना ययौ पुरान्निर्गतः ॥ २१ ॥

दण्डः असाधुनिग्रहरूपोदण्डः स एव व्रतं तद्बिभर्तीति ... स्मिन् राज्ञि धर्मकोविदा मुनयः किंवाह अपराधम् उद्दिश्य ... येनं ब्रह्मदण्डं प्रति अयूयुजन् ब्रह्मशापेन युक्तं कृतवन्तः प्रजापति ... लनानिष्ठे राज्ञि शापकरणं मुनिभिरनुचितमितिभावः ॥ २२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह । नेति । अघवानपि अपराध्यपि प्रजापालः राजा प्रजाभिर्नावध्येयः अवज्ञेयो न भवति यत यस्मादसौ प्रजापालः लोकपालानामोजः स्वतेजसा बिभर्ति ॥ २३ ॥

हे ब्रह्मन् ! एतत् सुनीथात्मजस्य चेष्टितं श्रद्धानाय शुश्रूषवे दयायुक्ताय भक्ताय मे मह्यम् अनेन स्वस्य श्रवणयोग्यतोक्ता परापरवित्तमः परः परमात्मा अपरः प्रकृतिपुरुषादि तद्विदां मध्ये श्रेष्ठस्त्वम् अनेन कथने योग्यतोक्ता आख्याहि कथय ॥ २४ ॥

एवमापृष्टो मुनिः ब्रह्मवित् काम्यकर्मणि यत्नादापातितोऽपि तेन न तुष्यतीति द्योतयन्नङ्गस्य पुत्रोत्पत्तिक्रममाह । अङ्ग इत्यादिना । राजाचासौ ऋषिरङ्गः क्रतूनां मध्ये उत्तममश्वमेधमाजहार आरब्धवान् तस्मिन्नश्वमेधे क्रतौ ब्रह्मवादिभिः श्रुताध्ययनादिसम्पन्नैः ऋत्विग्भिराहूताः सत्यो देवता नाजग्मुः नागतवत्यः ॥ २५ ॥

हे तात ! ते ऋत्विजो विस्मिता यजमानमङ्गमूचुः उक्तमेवाह । ते त्वया त्वत्सम्बन्धीनि हूयमानानि देवतोद्देशेन प्रक्षेपपूर्वकं त्यक्तानि अयातयामानि अगतवीर्याणि सारवन्तीत्यर्थः हवींषि पुरोडाशादीनि देवता न गृह्णन्ति ॥ २६ ॥

हे राजन् ! हवींषि अदुष्टानि शुद्धानि ते त्वया श्रद्धयासादितानि सम्पादितानि च तथा छन्दांसि क्रत्वङ्गभूता मन्त्रा अयातयामानि स्वरवर्णादिभिरगतवीर्याणि तत्र हेतुः दृढव्रतैः स्वरवर्णाविच्युतत्वेन मन्त्रोच्चारणमेवदृढं व्रतं येषां तैर्ब्रह्मविग्भिर्योजितानि प्रयुक्तानि ॥ २७ ॥

एवं यथावत् अनुष्ठीयमाने क्रतौ देवहेलनं देवान् प्रति हेलनमपराधमणु अल्पमपि वयं न विदामो न जानीमः यत यस्मात् हेलनात् स्वकीयान् भागान् कर्मसाक्षिणः कर्माणि गुणदोषद्रष्टारो देवा न गृह्णन्ति अतोऽस्मदीयं कर्तव्यं देवहेलनेन भवितव्यं परन्तु तद्वयं न विदाम इत्यर्थः ॥ २८ ॥

एवमृत्विग्भिरुक्तोऽङ्गस्य न हृदयाह मनः । द्विजवचः श्रुत्वा अथानन्तरं सुतरामङ्गः उन्मना यजमानोऽङ्गः यत्र गृहीतमौनोऽपि सदस्यान् सदसिस्थितान् प्रति तदनुज्ञया सदस्यानुज्ञया स्वकर्मानन्तरं देवतानागमनकारणं प्रष्टुं वाचं व्यसृजत् प्रायुङ्क्त ॥ २९ ॥

वाग्विसर्गमेवाह । नागच्छन्तीति इह क्रतौ देवता आहूता नागच्छन्ति ग्रहान् सोमपात्राणि न गृह्णन्ति हे सदसस्पतयः मया किमवद्यं हेलनं कृतं तद्यूयं ब्रूत ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रवणमङ्गलत्वात्सामान्यतः कथितं विशेषतो विदुरः श्रोतुं पृच्छतीत्याह । तस्येति । यद्विमनाः यस्या दुष्टप्रजाया विपद्यमनाः ॥ २१ ॥

दण्डव्रतं हिंसाख्यं व्रतं धारयतीति दण्डव्रतधरः "दण्डोऽस्त्री शासने राज्ञां हिंसायां लकुटे गुडे" इतियादवः यद्वा । शासनाख्यं व्रतं बिभ्रति न तेष्वज्ञानलेशः संभाव्यत इत्याह । धर्मकोविदा इति ॥ २२ ॥

नावध्येयो नावज्ञेयः तत्र निमित्तमाह । यदसाविति ॥ २३ ॥

यतएवं तत्त्वं तस्मादत्र महत्किमित्तमस्ति एतन्मे आख्याहीत्यन्वयः ममात्रेतिहासज्ञानं नास्तीति वक्तुं न शक्यमित्यतउक्तं परावरेति ॥ २४ ॥

सूचितमर्थं विस्तरतोवक्तुमुपक्रमते । अङ्ग इति ॥ २५—२६ ॥

न द्रव्यादिदोषादित्याहुरित्याह । राजन्निति । आसादितान्यापादितानि अयातयामान्यगतवीर्याणि ॥ २७ ॥

हेलनमवज्ञानम् ॥ २८—२९ ॥

आहुता आहूताः ग्रहान् हविःपिण्डान् ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वेणमुद्दिश्येति चित्तसुखस्यासम्मतम् ॥ २२--२४ ॥

प्राचीनवल्लवत्तरापराधविशेषेण प्रतिहतपुत्रभाग्यत्वेऽपि तस्य श्रीविष्णुप्रयजनमाहात्म्यात् पुत्रोजातः तथा तेन दूषितस्तद्भाग्यत्वेऽपि तस्मादेवासौ वैराग्यहेतुर्जातः पौत्रश्च तदवतार एवेत्याह । अङ्ग इत्यादिना ॥ २५—२६ ॥

अत्रोपकरणानितु समीचीनान्येवेत्याहुः । राजन्निति । पौरुषवान् इति । तस्य निरर्गलत्वमुक्तं तथापि न गृह्णन्तीति पूर्वेणान्वयः ॥ २७——३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यद्यतो विमनाः सन् ॥ २१ ॥

किञ्च अंहोऽपराधं राज्ञीति राज्ञ एव दण्डेऽधिकारो ननु राज्ञोऽपि दण्डे मुनीनामधिकार इत्यर्थः ॥ २२—२८ ॥

यत्र गृहीतमौनोऽपि वाचं व्यसृजत् प्रायुङ्क्त ॥ २९ ॥

ग्रहान् सोमपात्राणि ॥ ३०—३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्याङ्गस्य यद्यतो विमनाः सन् ययौ ॥ २१ ॥

धर्मकोविदा मुनयः दण्डोऽधार्मिकदमनमेव व्रतं यस्य तस्मिन् राज्ञि किमंहः अपराधमुद्दिश्य येषां प्रति दण्डमयूयुजन्नित्यन्वयः ॥ २२ ॥ २३ ॥

अघवानपि नावध्येय इत्युक्तं सतु धर्मकोविदैर्मुनिभिर्हतोऽत्यन्तमंहस्तेन कृतं तदाख्याहीति पृच्छति । एतदिति । सुनीथात्मजस्य एतदत्यन्तांहश्चेष्टितम् ॥ २४ ॥

यत्पृष्टं तस्य शीलनिधेः साधोः ब्रह्मण्यस्य महात्मनः दुष्प्रजा कथमभूदिति तत्रातिनिर्बन्धसंपादितत्वाद्धर्मवंशोच्छ्रयायामुत्पादितत्वाच्छीलनिध्यादिगुणयुक्ताङ्गाद्वेणोऽधार्मिको ऽभूदित्युत्तरमाह । अङ्गइत्यादिना । तेनाभवद्धार्मिकत्वमन्वेन ॥२५॥ ० ॥ २६——३८ ॥

---

भाषाटीका ।

विदुरजी पूछने लगे कि उस शीलनिधि महात्मा साधु ब्रह्मण्य राजा के ऐसी दुष्ट प्रजा क्यों भई कि जिस के मारे दुःखी होकर वन को चले गये ॥ २१ ॥

और धर्म के जानने वाले मुनि लोगों ने दंड के व्रत धारण करने वाले राजा में क्या अपराध समझ कर ब्रह्म दंड का प्रयोग किया ॥ २२ ॥

सदसस्पतय ऊचुः

नरदेवेह भवतो नाघं तावन्मनाक् स्थितम् ।
अस्त्येकं प्राक्तनमघं यदिहेदृक्त्वमप्रजः ॥ ३१ ॥
तथा साधय भद्रं ते आत्मानं सुप्रजं नृप !
इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ॥ ३२ ॥
तथा स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः ।
यद्यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ॥ ३३ ॥
तांस्तान् कामान् हरिर्दद्याद्यान् यान् कामयते जनः ।
आराधितो यथैवैष तथा पुंसां फलोदयः ॥ ३४ ॥
इति व्यवसिता विप्रास्तस्य राज्ञः प्रजातये ।
पुरोडाशं निरवपन् शिपिविष्टाय विष्णवे ॥ ३५ ॥
तस्मात्पुरुष उत्तस्थौ हेममाल्यमलाम्बरः ।
हिरण्मयेन पात्रेण सिद्धमादाय पायसम् ॥ ३६ ॥
स विप्रानुमतो राजा गृहीत्वाञ्जलिनौदनम् ।
अवघ्राय मुदा युक्तः प्रादात्पत्न्या उदारधीः ॥ ३७ ॥
सा तत्पुंसवनं राज्ञी प्राश्य वै पत्युरादधे ।
गर्भं काल उपावृत्ते कुमारं सुषुवेऽप्रजा ॥ ३८ ॥

भाषाटीका

प्रजालोगों को तो राजा दोष वाला होतो भी उस की अवज्ञा नहीं करनी चाहिये क्योंकि राजा अपने तेज से इंद्रादि लोकपालों के तेज को धारण करता है ॥ २३ ॥

हे ब्रह्मन् ! यह सुनीथाके पुत्र का चरित्र हम से कहो आप तो कार्य कारण सब जानने वाले हो मै श्रद्धा वाला हूं मेरे से कहना चाहिये ॥ २४ ॥

मैत्रेयजीबोले अंग राजर्षि ने यज्ञ किया था तिस यज्ञमेवेद पाठी ब्राह्मणों के बुला ने पर भी देवता नहीं आये ॥ २५ ॥

तब ब्राह्मण सबविस्मित हो कर उस यजमान राजा से बोले हवन की हुई तुमारी हवि को देवता ग्रहण नहीं करते हैं ॥ २६ ॥

हे राजन् ! निर्दोष हवि कों श्रद्धा से हमने तुम्हारे यज्ञ अग्निमें दिये हैं व्रत धारण कर के निर्दोष वेद मंत्रों का भि प्रयोग किया है ॥ २७ ॥

यहां पर हम लोग देवतों का अवज्ञा किंचित् मात्र भी नहीं जान ते हैं जिस से कि कर्म के साक्षी देवता अपने भागों को ग्रहण नहीं करते हैं ॥ २८ ॥

यजमान अङ्गराज ब्राह्मणों के वचन को सुन ब्राह्मणों की आज्ञा को मानकर मौन व्रत को छोडकर सभासद लोगों से पूछने लगा ॥ २९ ॥

हे सभा पति हो बुलाये देवता नहीं आते हैं इहां पात्रों को ग्रहण नहीं करते हैं आप लोग कहिये मैंने पाप किया है ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इह जन्मनि न तावन्मनागपि दृष्यघं स्थितम् कथं कि तस्याघस्य सद्य एव प्रायश्चित्तैः क्षालनात् किंतु प्राक्तनं घमस्ति यद्यस्मादीदृग्गुणाधिकोऽपि त्वं प्रजारहितः ॥ ३१ ॥

अतो यथा देवा हविर्गृह्णन्ति तथात्मानं सुप्रजं साधय साधनीयं तदाहुः। इष्ट इति ॥ ३२ ॥

तथासति स्वभागान् ग्रहीष्यन्ति यद्यतो हरिः साक्षा स्यात् अतस्तेन सह सर्वे देवा आगमिष्यन्तीत्यर्थः ॥ ३३ ॥

नन्वति तुच्छान्कामान्हरिः कथं दद्यात्तत्राह ।तांस्तानिति

प्रजातये पुत्रोत्पत्तये शिपिविष्टाय शिपिषु पशुषु यज्ञ प्रविष्टाय तथाच श्रुतिः "यज्ञो वै विष्णुः पशवः शिपिर्य प्रतितिष्ठतीति ॥ ३५ ॥

तस्मादिति यान्यतयाग्नेः ॥ ३६ ॥

पत्न्यै प्रादात् ॥ ३७ ॥

पुमांसं सूतेऽनेनेति तथा तत्प्राश्य पत्युः सकाशाद्गर्भं अप्रजा सती ॥ ३८ ॥

स बाल एव पुरुषो मातामहमनुव्रतः।
अधर्मांशोद्भवं मृत्युं तेनाभवदधार्मिकः ॥ ३९ ॥
स शरासनमुद्यम्य मृगयुर्वनगोचरः।
हन्त्यसाधुर्मृगान् दीनान् वेनोसावित्यरौज्जनः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

मातामहं मृत्युं मृत्योर्हि पुत्री सुनीथा ॥ ३९ ॥

मृगयुर्लुब्धकः सन् तं दृष्ट्वा वेनोऽसावागच्छतीति जनः सर्वोऽप्यरौत् चुक्रोश ॥ ४० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ॥

मतः अग्रजस्य भागागृहणात् ॥ ३२ ॥

तथा सति पुत्रलाभे सति दिवौकसां भागग्रहणे यज्ञपुरुषवरणस्य हेतुत्वमार्थिकार्थतया व्याचष्टे अत इति ॥ ३३ ॥ ३४ ॥

तथा च शिपिशब्दस्य पशुवाचकत्वे प्रमाणं श्रुतिः ॥ ३५ ॥

तस्मादिति तच्छब्दस्य पूर्वपरामर्शकत्वात् पूर्वत्राग्निशब्दाभावात् अर्थाबाधरूपा वाक्यार्थहेतुर्योग्यता गृहीता तथा तच्छब्देनाग्निर्विवक्षितः यथासिञ्चति तेनेत्युक्ते तच्छब्देन जलविवक्षणं तद्वदित्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥

तेन मृत्यवनुसरणेन ॥ ३९ ॥ ४० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हे नरदेव! इह जन्मनि भवतः ब्रह्मविदस्तावन्मनागपिदप्यवद्यं न स्थितं किन्तु प्राक्तनमेकमघमस्ति यद्यस्माद्यादीदृग्गुणाधिकस्त्वमप्रजः प्रजारहितो बभूविथ ॥ ३१ ॥

अतो देवा यथाहर्वीपि गृह्णीयुस्तथात्मानं सप्रजं सपुत्रं साधय कथं साधनीयं तत्राहुः। इष्ट इति। यज्ञभुग् भगवान् पुत्रं कामयमानस्य ते त्वया इष्ट इज्यमानस्तुभ्यं पुत्रं दास्यति ॥३२॥

तथा सति दिवौकसो देवाः स्वभागधेयानि स्वभागान् "भागरूपनामभ्योधेय" इति स्वार्थेधेयप्रत्ययः ग्रहीष्यन्ति यद्यतः यज्ञपुरुषो हरिः साक्षादपत्याय पुत्रार्थं वृतः स्यादतस्तेन सह सर्वे देवा आगमिष्यन्तीत्यर्थः ॥ ३३ ॥

नन्वाति तुच्छान् कामान् हरिः कथं दद्यात् तत्राहुः। तांस्तानिति। जनो यान् कामान् प्रार्थयते तांस्तान् हरिर्दद्यात् यथा येन प्रकारेण भगवानाराधितो जनैस्तेषां तथा स्वस्वकामानुसारेण फलोदयः फलावाप्तिर्भवति ॥ ३४ ॥

इत्थं व्यवसिता निश्चिन्वाना ऋत्विजः राज्ञोऽङ्गस्य प्रजातये प्रजोत्पत्त्यै शिपिविष्टाय शिपिविष्टत्वगुणविशिष्टाय विष्णवे पुरोडाशं निरवपन् शिपिभिः रश्मिभिः विष्टः आविष्टः शिपिविष्टः तस्मै तथा च मन्त्रः "किमिन्ते विष्णोपरि चक्ष्यं भूत्प्रयस्ववक्षे शिपिविष्टोऽस्मीत्यादि अर्थवादश्च पशोर्भूमायापृष्टिस्तत्क्रिष्णुः शिपिविष्ट इत्यादिनिरुक्तं च यदुत प्रब्रूवे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवतीति यद्वा शिपिषु पशुषु यज्ञरूपेण प्रविष्टाय तथा च श्रुतिः "यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति" इति ॥ ३५ ॥

तस्मात् अग्नेरित्यर्थः अर्थसामर्थ्यात् हेममयानि माल्यानि अम्बराणि च यस्य सः पुरुषः हिरण्मयपात्रेण सिद्धं सम्यक् पक्वं पायसपात्रं गृहीत्वा उत्तस्थौ उत्थितवान् ॥ ३६ ॥

बुद्धिमान् स राजा अङ्गः विप्रानुमतः विप्रैरभ्यनुज्ञातः अञ्जलिना ओदनं पायसङ्गृहीत्वा स्वयमाघ्राय हर्षेण युक्तः पत्न्यै प्रादात् ॥ ३७ ॥

सा राज्ञी राज्ञः स्त्री सुनीथा पुंसवनं पुमांसं सूते अनेनेति पुंसवनं तदोदनं प्राश्य भुक्त्वा पत्युः सकाशात् गर्भमादधे धृतवती अप्रजाः सती गर्भकाले गर्भधारणकाले उपावृते प्रतीते सति कुमारं सुषुवे ॥ ३८ ॥

सः पुरुषः कुमारो बाल एव बाल्यात्प्रभृतीत्यर्थः अधर्मांशोद्भवं मातामहं मृत्युं मृत्योर्हि पुत्री सुनीथा अनुव्रतः अनुसृतोऽभूत् तेन मातामहानुसारेणायमप्यधार्मिकोऽभवत् ॥ ३९ ॥

अधार्मिकत्वमेव प्रपञ्चयति। स इति। स आङ्गः शरासनं धनुरुद्यम्य धनुष्यारोपितशर इत्यर्थः मृगयुर्लुब्धकः सन् वन एव वनगोचरः असाधुः दीनान् मृगान् हन्ति अवधीत् तं दृष्ट्वा सर्वेन आगच्छतीति सर्वोजनः अरौत् चुक्रोश ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

राज्ञा पृष्टान् यजमानकर्मगुणदोषावनिश्चिय तत्परिहृत्य कर्मप्रवर्तनायाजन्त्रिताः सदस्या ऋत्विजः किं विशिष्यमवलोक्य प्राचुरिति तत्राह। नरदेवेति। इहास्मिन् जन्मनि ईदृशः दृष्टोऽप्रजोऽनपत्य इति यद्तः प्राक्तनं पूर्वजन्मार्जितमघं बालहत्यादिकमेकमघमस्तीत्यनुमीयते ॥ ३१ ॥

तथा तस्मात्ते आत्मानं सप्रजं पुत्रेण सहवर्तमानं साधय कुरु ततोभद्रं भवति तत्र क उपाय इतितमाहुरित्याह। इष्ट इति ॥ ३२ ॥

किं भद्रं स्यादित्यत्राह। यथेति। दिवौकसां हरेरङ्गोत्पन्नत्वेन तदाश्रितत्वेन स्थितेस्तन्मनस्कत्वेन तत्पुत्रपात्रपुष्टैः स्वभागादानादानयोस्तदिच्छाविनाभूतत्वाद्भुता नदिष्टत्वात्सर्वं समञ्जसं भवतीतिभावेनाहुरित्याह। यज्ञपुरुष इति। अनेनापुत्रस्य लोकोना स्तीति प्रायिकं सञ्जनतोधर्मवलाल्लोकोऽभवत्येव हरिच्छया विशिष्टपुरुषोत्पत्तये देवैर्हविर्नाहृतम् अङ्गस्यापि बालहत्यादिदोषादनपत्यत्वादिकल्प्यतद्गतिज्ञायते तदुक्तम् "अनपत्योऽपि सद्धर्मालोकजिष्णात्रसंशयः। देवैस्तुपृथुजन्मार्थं हविरङ्गस्य नोद्धृतमिति ॥ ३३ ॥

न केवलं हरिपूजया पुत्रकामस्य पुत्रावाप्तिस्तत्कामेन तत्तदवाप्तिरपिस्यादित्याह। तांस्तानिति। फलाकांक्षानुसारेण पूजापि तादृशीति भावेनाहुः। आराधित इति ॥ ३४ ॥

इतिमुक्त्वा ते तूष्णीमभूवन्किमनेन्याह। इतीति 'प्रजातये संतत्यै शिपिविष्टोनाम पुत्रकामेष्टिदेवताहरेरूपान्तरम् अतएव "शिपि

आक्रीडे क्रीडतो बालान् वयस्यानतिदारुणः ।
प्रसह्य निरनुक्रोशः पशुमारममारयत् ॥ ४१ ॥
तं विचक्ष्य खलं पुत्रं शासनैर्विविधैर्नृपः ।
यदा न शासितुं कल्पो भृशमासीत्सुदुर्मनाः ॥ ४२ ॥
प्रायेणाभ्यर्चितो देवो ये ऽप्रजा गृहमेधिनः ।
कदपत्यभृतं दुःखं येन विन्दन्ति दुर्भरम् ॥ ४३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विष्टस्तु खलतो दुष्कर्मणो महेश्वर,, इत्यन्यवृत्तिनिवारणाय विष्णव इति ॥ ३५ ॥

तस्मात्पुरुषस्तपुरोडाशात् ॥ ३६ ॥

अञ्जलिनौदनमिति पाठः ॥ ३७ ॥

पुमांसं सूत इति पुंसवनं पायसमुपावृत्ते प्राप्ते अप्रजाः पुत्ररहिता ॥ ३८ ॥

बाल्यएव कौमारवया एव अधर्मांशेनोद्भवो यस्य स तथा तं मातामहं मातुः पितरं मृत्युनामानमसुरवरमनुव्रत इति यत्तेन स पुरुषोऽधार्मिको धर्मविरुद्धकर्मकृदभूदित्यनेन विशेषणेन धर्मांशोद्भवो मृत्युरन्योऽस्तीति रहस्यमवगन्तव्यं तदुक्तं "मृत्युर्देवोयमप्राता वेनमातामहोऽसुर,, इति ॥ ३९ ॥

किंनामायं बाल इत्यतस्तत्कर्मानुसृतं नाम लोकाअरुवन्निव्याह । सशरासनमिति । वेनयति पीडयतीतिवेनः "पीडां वेनेतिच प्राहुर्वेनोऽसौपीडनादभूत्,,इतिवचनादसाधुर्दुर्जनः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नरदेव ! भवतोऽनावद्यं किञ्चिदास्थितं अस्त्येकं प्राक्तनावद्यमिति क्वचित् पाठः चित्सुखसम्मतश्च प्राक्तनावद्यं जन्मान्तरीयापराध इति व्याख्यानात् ॥ ३१—४२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भागधेयानि भागरूपाणि धेयानि पत्रेषु धार्याणि हवींषि ॥ ३३ ॥ ३४ ॥

पुरोडाशं यज्ञियद्रव्यं निरवपन्नदुः । शिपिषु पशुषु यज्ञरूपेण प्रविष्टाय । तथाच श्रुतिः "यज्ञोवै विष्णुः पशवः शिपिर्यज्ञएव पशुषु प्रति तिष्ठतीति,, ॥ ३५ ॥ ३८ ॥

तेनेति । मातृदोषादधार्मिकोऽपि विष्णुयज्ञोद्भूतत्वात् पितुर्वैराग्यकारणीभूतत्वेन पितुरुपकारकः । पृथुजनकत्वेन तदयशो वर्द्धनश्च बभूवेति ज्ञेयम् ॥ ३९ ॥

तं दूरादेव दृष्ट्वा वेणोऽसावस्मदपत्यघाती समेतीत्यरौत् चुक्रोश ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स बाल एव । अधर्मांशोद्भवं मातामहं सुनीथापितरं मृत्युमनुव्रतस्तेनाधार्मिकोऽभवत् ॥ ३६ ॥

अरौत् भयाच्चुक्रोश ॥ ४० ॥

---

भाषाटीका ।

सभापति बोले हे नरदेव ! इस जन्ममें आप का पाप कुछ नहीं है एक पूर्वजन्म का पाप है जिस से तुम इस जन्म में निपुत्र हुये हो ॥ ३१ ॥

हे नृप ! तुमारा कल्याण होगा तुम तिसविधी से आराधना सिद्ध करो जिससे सुन्दर पुत्रवाले होजावो पुत्रकी कामना से यज्ञ करोगेतो यज्ञ भोक्ता भगवान् पुत्र देंगे ॥ ३२ ॥

तैसेही देवता लोग अपने भागें को लेंगे जब कि साक्षात् यज्ञ पुरुषको तुम पुत्र के होने को वरण करोगे । ३३ ।

भगवान् तिन तिन सब कामनाओं को देते हैं जिनको मनुष्य चाहता है यह भगवान् जैसे पूजित होते हैं तैसा पुरुषों का फल होता है ॥ ३४ ॥

ब्राह्मणों ने मन मे ऐसा निश्चय करके उस राजा के सन्तान के लिये शिपि विष्टि नामक विष्णु के अर्थ पुरोडाश हवि अर्पण किया ॥ ३५ ॥

उस यज्ञ के अग्नि कुंड मे से एक पुरुष उठकर खड़ा हुआ सो सुवर्ण माला को पहिरा पीताम्बर धारण किया सुवर्ण पात्र मे सिद्ध पायसान्न लाकर निकला ॥ ३६ ॥

उदार बुद्धि वाले ब्राह्मणों कि आज्ञा से राजा ने दोनो हाथों से उस पायस को ग्रहण करके आनंद से सूंघ करके पत्नी को अर्पण किया ॥ ३७ ॥

उस रानी ने उस पुंसवन चरू को खाकर के पति से गर्भ को धारण किया समय पाकर के विना पुत्र वाली ने भी पुत्र को उत्पन्न किया ॥ ३८ ॥

उस बालक पुरुषने बालकही अवस्था में अधर्मांशसे उत्पन्न होने वाले मातामह मृत्युका संगकिया तिससे अधार्मिक होगया ॥ ३९ ॥

वह धनुष को उठाकर जङ्गल में जाकर व्याधकी तरह को करने लगा दुष्टपनासे गरीब मृगनको मारनेलगा उसके डरसे वेन आया ऐसा सब मनुष्य चिल्लाने लगे ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आक्रीडे क्रीडास्थाने बालान् पशूनिवामारयत् ॥ ४१ ॥

विचक्ष्य दृष्ट्वा । ४२ ।

दुर्मनसस्तस्य कुपुत्रनिन्दावाक्यान्याह । प्रायेणेति अप्रजा ये तैरभ्यर्चितः तत्र हेतुः कुत्सितैरपत्यैः संभृतं दुःखं धारयितुमशक्यं दुःखं येन विन्दति ॥ ४३ ॥

यतः पापीयसी कीर्त्तिरधर्मश्च महान्नृणाम् ।
यतो विरोधः सर्वेषां यत आधिरनन्तकः ॥ ४४ ॥
कस्तं प्रजापदेशं वै मोहबन्धनमात्मनः ।
पण्डितो बहुमन्येत यदर्थाः क्लेशदा गृहाः ॥ ४५ ॥
कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात् ।
निर्विद्येत गृहान्मर्त्यो यत्क्लेशनिवहा गृहाः ॥ ४६ ॥
एवं स निर्विण्णमना नृपो गृहान् निशीथ उत्थाय महोदयोदयात् ।
अलब्धनिद्रोऽनुपलक्षितो नृभिर्हित्वा गतो वेनसुवं प्रसुप्ताम् ॥ ४७ ॥
विज्ञाय निर्विद्यगतं पतिं प्रजाः पुरोहितामात्यसुहृद्गणादयः ।
विचिक्युरुर्व्यामतिशोककातरा यथा निगूढं पुरुषं कुयोगिनः ॥ ४८ ॥
अलक्षयन्तः पदवीं प्रजापतेर्हतोद्यमाः प्रत्युपसृत्य ते पुरीम् ।
ऋषीन् समेतानभिवन्द्य साश्रवो न्यवेदयन् पौरव ! भर्तृविप्लवम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे
पारमहंस्यां संहितायां वैयासिक्यां चतुर्थस्कन्धे अङ्गप्रव्रज्या नाम
त्रयोदशोऽध्यायः ॥ १३ ॥



श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वेषां सर्वैः सह आधिर्मानसी व्यथा ॥ ४४ ॥

तं प्रजापदेशं पुत्रनाममात्रमप्यात्मनो मोहने बन्धनं यदर्थो यन्निमित्ताः क्लेशदाः गृहाः भवन्ति ॥ ४५ ॥

इदानीं निर्वेदहेतुत्वेन कुत्सितमेवापत्यमभिनन्दति । कदपत्यमिति । शुचां पदाच्छोकानां स्थानात् वरत्वे हेतुः निर्विद्येतेति तत्कुतः यद्यतः कदपत्यात् गृहाः क्लेशनिवहाः भवन्ति ॥ ४६ ॥

महतामुदयानां विभूतीनामुदयो यस्मिंस्तस्माद्गृहाद्गतः या वेनं सूतेस्म ताम् ॥ ४७ ॥

प्रजाः पुरोहितादयश्च विचिक्युरन्वेषितवन्तः तं तत्रैव सन्तमपि नापश्यन्निति दृष्टान्तेनाह । यथेति ॥ ४८ ॥

साश्रवो रुदन्तः भर्तुर्विप्लवं नाशमदर्शनमित्यर्थः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ॥

पशुमारमिति क्रियाविशेषणम् ॥ ४१ ॥ ४२ ॥

प्रायेणेति । दुःखोक्तिमात्रम् अप्रजगृहमेधिनां नियमेन तद्दुःखाभावात् कुपुत्रभावमात्रस्य तत्फलस्वाभावाच्च न विन्दन्ति न लभन्ते ॥ ४३ ॥

यत इति युग्मकम् यतः ममतास्पदत्वेन स्नेहविषयात् ॥ ४४—४५ ॥

अनिष्टाशङ्कीनि बन्धुहृदयानीति न्यायाच्छुचां पदादिति॥४६॥

स्वस्य वेशान्तरं कृत्वा गत इति ॥ ४७—४८ ॥

विप्लवशब्दस्य नाशवाचकत्वात् नाशशब्दस्य धात्वर्थपुरस्कृतयोगवृत्त्याऽदर्शनवाचकत्वं क्लेशेनोपलब्धमत इत्यर्थं इत्युक्तम् ॥ ४९ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
दीपिन्याख्यदीपिकाटिप्पण्यां
त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आक्रीडे क्रीडास्थाने वयस्यान् यूनोऽपि बालान् दारुणः क्रूरः अत एव निरनुक्रोशः कृपारहितः सन् पशुमारममारयत् पशूनिवामारयत् ॥ ४१ ॥

स नृपः अङ्गः खलं दुरात्मानं पुत्रं नानाविधैः शासनैः सामाद्युपायैर्विचक्ष्यानुशास्येत्यर्थः यदा भृशं नितरां सुदुर्मनाः दुःखितमनाः आस ॥ ४२ ॥

तस्य पुत्रनिन्दावाक्यान्याह । त्रिभिः। ये गृहमेधिनो गृहाश्रमिणः अप्रजा अपुत्रा ये च पुत्रिणोऽपि कुत्सितापत्यकृतं दुर्भरं धारयितुमशक्यं दुःखं न विन्दन्ति न लभन्ते तैर्भगवान् देवः प्रायेणाभ्यर्चितः ॥ ४३ ॥

यतः कदपत्यात्पापीयसी कीर्तिः अपकीर्तिर्महानधर्मश्च नृणां भवेत् यथा यतः कदपत्यात्सर्वेषां विरोधः अनन्तोऽपारः आधिः मानसी व्यथा च जायते ॥ ४४ ॥

तं प्रजापदेशं पुत्रनाममात्रमपि आत्मनो मोहेन बन्धनं कः परिडतो बहुमन्येत यदर्थाः यत्पुत्रापदेशनिमित्ताः क्लेशसंपादका गृहाः भवन्ति पुत्रापदेशमात्रमपि क्लेशकरगृहादिहेतुत्वेनात्मनोबन्धकत्वात्परिडतो न बहुमन्येतेत्यर्थः ॥ ४५ ॥

इदानीं निर्वेदहेतुत्वेन कुत्सितमेवापत्यमभिनन्दति । कदपत्यमिति । शुचां पदात् शोकानां स्थानात् उत्तरोत्तरं गृहाशक्तिजननद्वारा संसारदुःखहेतुत्वादिति भावः सदपत्यात्कदपत्यं वरं श्रेष्ठं मन्ये वरत्वे हेतुः मर्त्यो गृहान्निर्विद्येत निर्वेदं प्राप्नुयात् यतः कदपत्यात् गृहाः शोकावहाः भवन्ति कदपत्यं परमिति पाठे तस्य परत्वं वैराग्यहेतुत्वात् ॥ ४६ ॥

एवमुक्तप्रकारेण निर्विण्णमनाः सः नृपः अङ्गः महतामुदयानां विभूतीनामुदयः समृद्धिर्यस्मिन् तस्माद्गृहान्निशीथे उत्थाय अलब्धनिद्रस्त्यक्तनिद्रः प्रसुप्तां वेनसुवं वेनस्य जननीं सुनीथां हित्वा नरैरनुपलक्षितः अदृष्टः गतः वनं प्रतीतिशेषः ॥ ४७ ॥

पुरोहितादयः सर्वाः प्रजाः पतिं राजानं निर्विद्य गतं निर्वेदं प्राप्य गतं विज्ञाय अत एवात्यन्तशोकेन कातराः सन्तः उर्व्यां पृथिव्यां विचिक्युः अन्वेषणं चक्रुः ननु तत्रैव वसन्तमपि नापश्यन्निति दृष्टान्तेनाह । यथेति । निरूढं हृदये वसन्तमपि तिरोहितं पुरुषं परमपुरुषं यथा कुयोगिनोऽन्वेषयन्ति तथेति ॥ ४८ ॥

प्रजापतेः राज्ञः पदवीं मार्गमलक्षयन्तोऽजानन्तः अत एव हतप्रयत्नाः ते पुरोहितादयः पुरीं प्रत्युपसृत्य आगत्य हेपौरव ! विदुर ! साश्रवः शोकाश्रुसहिताः समेतान् संघीभूतानृषीन् प्रणम्य भर्तृविप्लवं नाशमदर्शनं न्यवेदयन् विज्ञापितवन्तः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आक्रीडे क्रीडास्थाने पशुमारमितिलुप्तोपमा यथा पशुमारोगोघ्नश्चाण्डालस्तथेति ॥ ४१ ॥

स्वशासनमुल्लङ्घ्य वर्तमानं पुत्रमवलोक्य पित्रा किमकारीति तत्राह । तं विलक्ष्येति । दुरशोभनदुःखयोरित्यनेन सुष्ठुदुःखितमनाः ॥ ४२ ॥

प्रलापात् दुःखं चावगम्यत इत्याह । प्रायेणेति। ये गृहमेधिनोऽप्रजा एवं दुर्भरं कदपत्यकृतं दुःखं न विन्दन्ति तैः सर्वैरपि प्रायेण देवो नारायणोऽभ्यर्चित इत्यन्वयः ॥ ४३ ॥

अपकीर्त्यादिदोषहेतुत्वात्परिडतो नरकत्राणहेतुत्वात्सु... पुत्र इति बहुमानं न करोतीत्याह । यत इति ॥ ४४—४५ ॥

न केवलं दुःखमेव कदपत्यात्किन्तु विवेकिनः प्रयोजनं च... त्याह । कदपत्यमिति । क्लेशसमूहेनातुरो मर्त्यः स्वगृहान्निर्वि... यस्माद्वित्तैषणादिशुचां पदात्सदपत्यात्कदपत्यं वैराग्यहेतुत्वा... धु मन्ये इत्यन्वयःहलन्तादपिटापश्चेति वचनाच्छुचेतिरूपं साधु...

नन्वत्र शोकान्मरणं देशान्तरगमनं वा स्यात् तत्र किमकारीति तत्राह। एवं स इति। महानुदयो महतीविभूतिस्तस्या... यादुद्रेको यस्मिंस्तत्तथा तस्मात् लक्षदर्शनाङ्कनयोरितिधा...नुपलक्षितोऽदृष्टः ॥ ४७ ॥

जलादौ मृतोदूरं गतोवेति संशये तयोरेकं निश्चित्य किमस्तदीया इति तत्राह । विज्ञायेति । विचिक्युरन्विष्यादृष्ट... हृदि गूढं पुरुषं हरिम् ॥ ४८ ॥

अन्विष्यादृष्टवन्तः किमकुर्वन्नित्यत आह । अलक्षयन्त इ... पौरव ! विदुर ! साश्रवः वाष्पसहिताः साधीयसो विष्णुर्या... ङ्गस्यैवं दुष्टपुत्रोत्पत्तिस्तन्निमित्तेन विप्लवश्च कथमभूदितीदं... न"अनपत्यत्वकर्मासौ बालहत्या कृतः पुरा । अतोदुष्टोभव... इष्टो विष्णुरतः पृथुः इति ॥ ४९ ॥

इतिश्रीभागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

प्रायेणेति दुःखोक्तिमात्रम् ॥ ४३ ॥

यत इति युग्मकं गृहाणां दोषमाह । यदिति ॥४४ ॥ ४६ ।

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पशुमारं पशूनिवामारयत् ॥ ४१॥४२ ॥

ये अप्रजा अनपत्यास्तैः अभ्यर्च्चितः : तत्र हेतुः कदपत्येन ... पूर्णीकृतं दुर्भरं धारयितुमशक्यं दुःखं ये न विन्दन्ति ॥ ४३ ॥

प्रजापदेशं नाम्नैव प्रजां वस्तुतस्त्वात्मनो दुःखसमुद्रमि... तस्माल्लोकलज्जामनस्तापादिबहुलेभ्यो गृहेभ्यो निःसृत्य ... दलक्षिते प्रदेशे शाकमूलफलादिवृत्तिरहमेव यामान् भगव... भजन्नवशिष्टमायुरव्यर्थीकुर्वन् कृतार्थो भविष्यामीति निश्चिकाय...

निश्चित्य च स्वनिर्वेदामृतप्राप्तिकारणं पुत्रमेव स्मृत्वा भग... तैव परमकृपया विषयभोगान्धं मां स्वचरणान्तकं ... नीपुणा पुत्रोऽयं मह्यं दत्त इत्याह । कदपत्यमिति ॥ ४६ ॥

महोदयस्य महासम्पत्तेरुदयो यत्र तस्मात् । वेणं सूते ... सूस्तां सुनीथां प्रसुप्तामिति यदैव सा प्रकर्षेण स्वापितिस्म ... स्वस्य वेशान्तरं कृत्वेत्यर्थः ॥ ४७ ॥

पुरुषं परमात्मानं निगूढमिति दृष्टान्तेन तस्मिन् दिने ... स्वपुर्य्यां राजा निगूढ एवासीदिति लभ्यते ॥ ४८ ॥

हे पौरव ! विदुर ! भर्त्तुर्विप्लवं नाशमदर्शनमित्यर्थः ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोदशश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आक्रीडे वालविहारस्थले क्रीडतः बालान् वयस्यान् मित्रत्वेन संगतान् पशुमारं यज्ञे कण्ठपीडनादिना पशूनिव अमारयत् ॥ ४१ ॥ ४२ ॥

कदपत्यभृतं कुत्सितैरपत्यैर्भृतं दुर्भरं धारयितुमशक्यं दुःखं न विन्दन्ति न लभन्ते ॥ ४३ ॥

यतः खलात् पुत्रात् ॥ ४४ ॥

प्रजापदेशं प्रजानाममात्रेणोपस्थितम् आत्मनो मोहेन बन्धनम् यदर्थापन्नमित्ताः गृहाः क्लेशदाः सन्ति तं पुत्रं कः पार्षडतः सन् बहुमन्येत आद्रियेत ॥ ४५ ॥

सारग्राहिगुणवतामात्मन आश्रित्याह । कदपत्यामिति । शुचां- शोकानां पदात् मूलात् ॥ ४६ ॥

महोदयानां महासंपदामुदयो यस्मिन् तस्मात् वेनं सूते इति वेनसूस्ताम् ॥ ४७ ॥

विचिक्युः अन्वेषणं चक्रुः पुरुषं परमेश्वरम् ॥ ४८ ॥

ते पौराः पुरीं प्रत्युपसृत्य पुनरागत्य भर्तृविप्लवं स्वाम्यदर्शनम् ॥ ४९ ॥

इति श्रीमद्भागवतचतुर्थस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोदशाध्यायार्थप्रकाशः

———

भाषाटीका ॥

वह बडा क्रूर होने से बरोबर बालकों के साथ खेलने में निर्दयी जबर्दस्ती पकड कर यज्ञ में पशु की नांई गला घोंट मारता था ॥ ४१ ॥

राजा ने उस पुत्र को दुष्ट जान कर बहुत प्रकार की शिक्षा से भी जब सिखाने नहीं सका तब मन से बडा दुःखित हुआ ॥ ४२ ॥

कहने लगा कि जो लोग विना सन्तान के हैं उनने मानों पूर्व जन्म में भगवान की बडी पूजा की है क्योंकि उनों को भारी कठिन जो खोटे पुत्रों का दुःख सो नहीं भोगना पडता है ॥ ४३ ॥

जिससे बडी खोटी कीर्ति होनी है और बडा अधर्म मनुष्यों को होता है जिससे सब के साथ विरोध होता है तथा मनका बडा चिंता होता है ॥ ४४ ॥

जिससे घर भी दुःखदायक होजाते हैं ऐसा जो आत्माको मोहबंधनरूपी खोटे पुत्रको पंडित होकर न भला मानेगा ॥ ४५ ॥

मोह के मारे शोकको देने वाले अच्छे पुत्रसे खोटा पुत्रही ठीकमालूम होता है क्योंकि उस के हेतु से मनुष्य घर से विर कहोजाता है जिससे कि घर क्लेश के देने वाले हैं ॥ ४६ ॥

इस प्रकार से वैराग्य प्राप्त भया वह राजा बडी भारी विभूति वाले घर में से निद्रा न होने से सोती हुई वेन की माताको छोडकर छिप करके जंगल को आधीरात में उठकर चला गया ॥ ४७ ॥

पुरोहित मंत्रि बंधु लोगों ने दुःख पाकर चलाजाना राजा का जानकर जैसे अंतःकरण में स्थित परमात्मा को कुयोगिजन ढूंढते हैं तैसे शोक से अधीरज होकर पृथिवी में ढूढने लगे ॥ ४८ ॥

वे लोग पृथिवी में ढूंढकर उसका पता नहीं मिलने से प्रयत्न निष्फल होजाने से घर में आकर हे विदुरजी ! आंसु गिराते हुये अग्नि के समीप में जाकर अपने स्वामिकानाश होजाना निवेदन करते भये ॥ ४९ ॥

इतिश्रीभागवतचतुर्थ स्कन्धत्रयोदश अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥१३॥

———

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ।

मैत्रेय उवाच

भृग्वादयस्ते मुनयो लोकानां क्षेमदर्शिनः ।
गोप्तर्यसति वै नृणां पश्यन्तः पशुसाम्यताम् ॥ १ ॥
वीरमातरमाहूय सुनीथां ब्रह्मवादिनः ।
प्रकृत्यसंमतं वेनमभ्यषिञ्चन् पतिं भुवः ॥ २ ॥
श्रुत्वा नृपासनगतं वेनमत्युग्रशासनम् ।
निलिल्युर्दस्यवः सद्यः सर्पत्रस्ता इवाखवः ॥ ३ ॥
स आरूढनृपस्थान उन्नद्धोऽष्टविभूतिभिः ।
अवमेने महाभागान् स्तब्धः सम्भावितः स्वतः ॥ ४ ॥
एवं मदान्ध उत्सिक्तो निरङ्कुश इवद्विपः ।
पर्यटन्रथ मास्थाय कम्पयन्निव रोदसी ॥ ५ ॥
न यष्टव्यं न दातव्यं न होतव्यं द्विजाः ! क्वचित् ।
इति न्यवारयद्धर्मं भेरीघोषेण सर्वशः ॥ ६ ॥
वेनस्यावेक्ष्य मुनयो दुर्वृत्तस्य विचेष्टितम् ।
विमृश्य लोकव्यसनं कृपयोचुः स्म सत्रिणः ॥ ७ ॥
अहो उभयतः प्राप्तं लोकस्य व्यसनं महत् ।
दारुण्युभयतो दीप्ते इव तस्करपालयोः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्दशे तु दुष्पुत्रभयादङ्गे गते द्विजैः ।
अभिषिक्तस्य वेनस्य रोषात्तैर्वध उच्यते ॥ १ ॥

क्षेमदर्शिनः क्षेमचिन्तकाः पशुसमानरूपतां पश्यन्तः ॥१॥

अमात्यादीनां प्रकृतीनामसम्मतं पाठान्तरे प्रकृत्या स्वभावेनासम्मतम् ॥ २ ॥

चौराः सर्वे लीना बभूवुः ॥ ३ ॥

आरूढं नृपस्थानं राजासनं येन अष्टविभूतिभिर्लोकपालैश्वर्यैः ॥ ४ ॥ ५ ॥ ६ ॥

सत्रिणो मिलिताः सन्तः ॥ ७ ॥

मूलतश्चाग्रतश्च दीप्ते ज्वलिते काष्ठे तन्मध्यवर्तिनां पिपीलिकादीनां यथोभयतो व्यसनमेवं तस्करेभ्यः पालकाच्च दुःखं प्राप्तमित्यर्थः ॥ ८ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

तैर्द्विजैः कर्तृभूतैः भृग्वादयः युग्मकम् प्रकृत्यसं[illegible] पाठान्तरम् ॥ १—२ ॥ ३ ॥

लोकपाला इन्द्रादयः तेषामैश्वर्यैरिति सप्तद्वीपा[illegible] व्यञ्जितम् "सप्तद्वीपाधिपतयो नृपा वैण्यगयादय" इत्युक्तं[illegible] स्वेनैव संभावितः शूरोऽहं बुधोऽहमिति कृतात्मश्लाघनः[illegible]

एवमिति युग्मकम् सर्वतः सर्वदेशेषु ॥ ५ ॥ ६ ॥

सत्रे हि सर्वमिलनं स्यादिति मिलिता इति व्याख्यातम् तन्मध्यवर्तिनामित्याद्यध्याहारादित्यर्थं इत्युक्तम् ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं पुरोहितादिभिर्निर्वेदिता ऋषयः तमेव खलं [illegible] षिच्य पुनस्तेन पीडिताः स्वतेजसा निहत्य तद्बाहुमथ[illegible] तीर्णं भगवदंशभूतं पृथुं नरश्रेयमभिषिच्य राज्ये प्रतिष्ठाप[illegible] मुरित्याह चतुर्दशेन मुनिः । भृग्वादय इति । लोकानां क्षेम[illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्षेमचिन्तकास्ते विज्ञापिता भृग्वादय ऋषयः नृणां गोप्तरि त्रातर्यसत्यविद्यमाने सति पशुसात्म्यतां पशुसमानरूपतां पश्यन्तः पशुसाम्यतामिति पाठे पशुभिः साम्यं येषां ते पशुसाम्यास्तेषां भावः पशुसाम्यता तां पश्यन्तः ॥ १ ॥

ब्रह्मवादिनः वीरस्य वेनस्य मातरं सुनीथामाहूय तस्यै विज्ञाप्येत्यर्थः प्रकृतीनाममात्यादीनामसंमतमपि वेनं भुवः पतिमभ्यषिञ्चन् भुवः पतिं चक्रुरित्यर्थः ॥ २ ॥

अत्युग्रदण्डं वेनं राजासने प्रतिष्ठितं श्रुत्वा दस्यवश्चोरादयः सर्पेभ्यः त्रस्ता भीताः आखवः मूषका इव सद्यः निलिल्युर्लीना बभूवुः ॥ ३ ॥

स वेनः आरूढं नृपस्थानं राजासनं येन सः अष्टविभूतिभिः लोकपालैश्वर्यैः अणिमादिभिर्वा उन्नद्धः गर्वितः अत एव स्तब्धः विवेकशून्यः: स्वतः स्वयं संभावितः नत्वितरैरिति भावः आत्मानं महाभागं महाबुद्धिमन्तं महाभाग्यवन्तं वा मेने ॥ ४ ॥

एवं तथा ऐश्वर्यमदेनान्धः अन्नः निरङ्कुशो गज इवोत्सिक्तः उत्थितः रथमास्थाय अधिरुह्य रोदसी द्यावापृथिव्यौ कम्पयन्निव पर्यटन् ॥ ५ ॥

हेद्विजाः! क्वचिदपि यागदानहोमादिकं न कर्त्तव्यमित्येवं रूपं धर्मं धर्माभासं भेरीध्वानिना न्यवारयत् यत एवमतो दुर्मदः ॥ ६ ॥

मुनयो भृग्वादयः सत्रिणः याज्ञिका अपि मिलिताः सन्तः दुर्दशस्य वेनस्य चेष्टितमवेक्ष्य लोकानां व्यसनं दुःखं विमृश्य कृपया ऊचुः ॥ ७ ॥

उक्तमेवाह। अहो इति । मूलतश्चाग्रतश्च प्रदीप्ते ज्वलिते काष्ठे तन्मध्यवर्तिनां यथोभयतो व्यसनमेवं तस्करेभ्यः पालकात् पार्थिवाच्च दुःखं प्राप्तमित्यर्थः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुरुवाक्यं श्रद्धयानुतिष्ठतामिहामुत्र श्रेयः स्यादकुर्वतामनर्थश्चेत्येतन्निरूप्यतेऽस्मिन्नध्याये । तत्रादौ भृग्वादिऋषिभिः क्रियमाणां राज्ये वेनस्याभिषेकं वक्ति । भृग्वादयइति। क्षेमानाप्राप्तरक्षायामिति यादवः पशुसाम्यतां- पशुसाधर्म्यसाङ्कर्यम् ॥ १ ॥

हे वीर! प्रकृत्या स्वभावेनामात्यादिबुद्ध्याराज्यासंमतमनुचितम् २

अस्मिन्नभिषिक्ते सत्येको गुणो राज्यस्य स्यादित्याह। श्रुत्वेति। निलिल्युर्निलीनाः ॥ ३ ॥

पालके राज्ञि बहवो गुणा भवन्ति तत्रैकोगुणा इति विशिष्योच्यत इतिचेत् सत्यमस्य सर्वे दोषा एव सन्तीति वक्तुमुपक्रमते। स आरूढेति। आरूढं नृपस्थानं सिंहासनं येन स तथामन्त्र्यामात्यदूतराज्यकोशदुर्गजनपदपुरोहितारव्यैर्वाणिमादिभिर्वाऽष्टविभूतिभिरुन्नद्धः स्तब्धः महत्सूत्थानाद्याचारशून्यः ॥ ४ ॥

अतो लोकस्य किमवद्यमभूदत्राह । एवं मदान्धइति । उत्सिक्त उद्धतः ॥ ५ ॥

हे द्विजाः! ॥ ६ ॥

तत्र निग्रहानुग्रहसमर्थाः मुनयः किमकार्षुरिति तत्राह। वेनस्येति। सत्रिणो यज्वानः ॥ ७ ॥



उभयतस्तस्करपालयोः । दारुणीति सप्तमी षष्ठ्यर्थे दारुणा उभयतो दीप्तो वह्निः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भृग्वादय इति युग्मकम् ॥ १ ॥ २ ॥ ३ ॥

स्वतः स्वेनैव सम्भावितः शूरोऽहं पण्डितोऽहमित्येवं कृतात्मसम्भावनः आत्मसम्भावित इति चित्सुखः ॥ ४ ॥

एवमिति युग्मकम् ॥ ५ ॥ ६ ॥

सत्रिणः सत्रित्वावस्थायां मिथो मिलनं भवतीति तदा मिलिताः सन्तीत्यर्थः ॥ ७ ॥

उभयत इति वनदुर्गादौ पलायने तस्करेभ्यः राष्ट्रे स्थितौ पालादित्यर्थः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चतुर्दशेऽभिषिक्तस्य वेनस्याधर्मवर्त्तिनः ।
प्रबोधितहतस्योरुमथनं मुनिभिः पुनः ॥ १ ॥

साम्यतामिति स्वार्थे ष्यञ् पश्यन् मेषादीन् यथा शृगालवृकादयो नाशयन्ति तथैव नृन् दस्यव इत्यर्थः ॥ १ ॥

प्रकृत्यसंमतं प्रकृत्या सम्मतमिति पाठद्वयं प्रकृतिरमात्यादिः स्वभावश्च तासां तया च असम्मतः ॥ २ ॥ ३ ॥

अष्टविभूतिभिरष्टदिग्वर्तिनीभिः सम्पत्तिभिरिति सप्तद्वीपाधिपत्यं ध्वनितम् । स्तब्धो गर्ववान् स्वतः स्वेनैव सम्भावितः शूरोऽहं पण्डितोऽहमिति कृतात्मकत्थनः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

मूलतश्चाग्रतश्च दीप्ते प्रज्वलितकाष्ठे तन्मध्यवर्त्तिनां पिपीलिकादीनां यथा उभयतो व्यसनमेवं लोकस्य दुर्गादौ पलायने तस्करात् राष्ट्रे स्थितौ पालकात् राजतोभयमित्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पालकाभावात् वेनस्याभिषेकोदुर्वृत्तत्वाद्वधश्च मुनिभिः कृत इति चतुर्दशे वर्ण्यते । भृग्वादयइति ॥ १ ॥

प्रकृत्यसंमतममात्यादीनामसंमतमपि धर्मपालकं वंशजत्वपक्षपातेनाभ्यषिञ्चन् ॥ २ ॥

निलिल्युः अलक्षिता बभूवुः ॥ ३ ॥

आरूढं नृपस्थानं येन सः अष्टविभूतिभिर्लोकपालैश्वर्यैः उन्नद्धः उद्धतः अतएव स्तब्धोऽनम्रः ॥ ४—५ ॥

हेद्विजाः ! त्रैवर्णिकाः क्वचिदपि देशे काले वा यष्टव्यं नेत्यादि वाक्यश्रावणपूर्वकेन भेरीघोषेण सर्वतो धर्मं न्यवारयत् ॥ ६ ॥

सत्रं बहुकर्तृको यागः सोऽस्त्रि येषां ते ॥ ७ ॥

उभयतो दारुणि काष्ठे निरुद्धजन्तोरिव लोकस्योभयतो व्यसनं दुःखं प्राप्तं भवति ॥ ८—९ ॥

---

अराजकभयादेष कृतो राजा तदर्हणः ।
ततोऽप्यासीद्भयं त्वद्य कथं स्यात् स्वस्ति देहिनाम् ॥ ९ ॥
अहेरिव पयःपोषः पोषकस्याप्यनर्थभृत् ।
वेनः प्रकृत्यैव खलः सुनीथागर्भसंभवः ॥ १० ॥
निरूपितः प्रजापालः स जिघांसति वै प्रजाः ।
तथापि सान्त्वयेमामुं नास्मांस्तत्पातकं स्पृशेत् ॥ ११ ॥
तद्विद्वद्भिरसद्वृत्तो वेनोऽस्माभिः कृतो नृपः ।
सान्त्वितो यदि नो वाचं न ग्रहीष्यत्यधर्मकृत् ॥ १२ ॥
लोकधिक्कारसंदग्धं दहिष्यामः स्वतेजसा ।
एवमध्यवसायैनं मुनयो गूढमन्यवः ।
उपव्रज्याब्रुवन् वेनं सान्त्वयित्वा च सामभिः ॥ १३ ॥

मुनय ऊचुः

नृपवर्य ! निबोधैतद्यत्ते विज्ञापयाम भोः ।
आयुः श्रीबलकीर्तीनां तव तात ! विवर्द्धनम् ॥ १४ ॥
धर्म आचरितः पुंसां वाङ्मनः कायबुद्धिभिः ।
लोकान् विशोकान् वितरत्यथानन्त्यमसंगिनाम् ॥ १५ ॥
स ते माविनशेद्वीर ! प्रजानां क्षेमलक्षणः ।
यस्मिन् विनष्टे नृपतिरैश्वर्यादवरोहति ॥ १६ ॥

भाषाटीका।

मैत्रेयजी बोले भृगुआदिकउहां के सब मुनि लोग संसार के कल्याण चाहनेवाले रक्षक के न रहनेसे मनुष्यों को पशूके तुल्य होना समझ कर ॥ १ ॥

उन ब्रह्मवादियों ने वीर पुत्र वाली सुनीथा से कह कर प्रजों के असंमत भी वेन को पृथिवी पति का अभिषेक करदिया ॥ २ ॥

उग्र दंड देने वाले राजा को राजासन पर बैठे सुनकर चौरादिक सब अस्तहोंगये जैसे सर्प से डरकर मूसा होजाते हैं ॥ ३ ॥

वह राजा आसन पर बैठ ने से अभिमानी होकर अष्टैश्वर्यसे गर्वित होने से अपनी बडाई करने वाला अनम्रहो महात्मों का अपमान करने लगा ॥ ४ ॥

निरंकुश हाथी सरीका मद से अंधा होकर रथ पर बैठकर पृथिवी आकाश कंपावता घूमने लगा ॥ ५ ॥

हे ब्राह्मणो ! यज्ञ नहीं करना होम नहीं करना इस प्रकार कह कर नगारा बजा के सब देश मे धर्म को बन्द करने लगा ॥ ६ ॥

ऋषि लोगों ने वेन राजा का खोटा आचरण दे[illegible] लोगों पर कृपा कर के मंत्रियों के सहित कहने लगे।

अहो दोनो तरफ से मनुष्यों को बडा दुःख होना[illegible] दोनों तरफ से आग लगने से लकडी के बीच के कीडे[illegible] दुःख होवे तैसे राजा नही रहा तो चोरों का डर था राजा[illegible] तो राजाही का डर है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवाहुः । अराजकभयादिति । अतदर्हणो राज्यानर्हः[illegible] अस्माकमप्यनिष्टं जातमित्याहुः अहेर्यथा पयःपोषः[illegible] पोषणं पोषकस्याप्यनर्थं बिभर्त्ति पुष्णाति तदेवाहुः । वेन[illegible] ॥ १० ॥

निरूपितो नियुक्तोऽस्माभिः सान्त्वयेमोपपत्तिभिः प्रा[illegible]प्यामः तस्य पातकम् ॥ ११ ॥

स्वस्य तत्पातकस्पर्शे हेतुः तत्पातकित्वं विद्वद्भिः ॥ १२ ॥ गूढो मन्युर्येषाम् सामभिः प्रियोक्तिभिः ॥ १३ ॥ १४ ॥ निष्कामानामानन्त्यं मोक्षमपि ॥ १५ ॥ मा विनशेन्मा विनश्यतु ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ॥

तदेवाहुरुभयतोभयमेवाहुः अराजकभयादिति सार्द्धकम् यथाऽनर्थं पुष्णाति तथा ततोऽपि राजत्वेन पुष्टादपि भयमासीदिति योजनीयम् ॥ ९ ॥

तदेव भयनिवर्त्तकाद्राजतोऽपि भयमेव ॥ १० ॥

तस्य राज्ञः पातकं प्रजाहिंसालक्षणं स्वस्य मुनिसमूहस्य राजकृतपातकस्पर्शो ॥ ११-१२ ॥

स्वतेजसा तपोबलेन ॥ १३ ॥

मुनय ऊचुरिति बहुत्र नास्ति ॥ १४ ॥

लोकान् भोगान् असंगिनां निष्कामानामानन्त्यं मोक्षमपि ॥ १५—१६—१७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाहुः अराजकभयादिति अतदर्हणः राज्यानर्होऽप्येष वेनः अराजकभयाद्राजा कृतः ततो राज्ञोऽप्यद्य भयमासीत् देहिनां कथं स्वस्ति सुखं स्यात् ॥ ९ ॥

अस्माकमप्यनिष्टं जातमित्याहुः अहेः सर्पस्य यथा पयःपोषः क्षीरेण पोषणं पोषकस्याप्यनर्थं करोति तथा तदेवाहुः सुनीथाया अङ्गात्संभूतो वेनः प्रकृत्या स्वभावेनैव खलः दुरात्मा ॥ १० ॥

अस्माभिः प्रजापालो निरूपितः नियुक्तः स एव प्रजाः जिघांसति हन्तुमिच्छति तथापि घातुकत्वेऽप्यमुं वेनं सान्त्वयेम उपपत्तिभिः प्रार्थयिष्यामः ततस्तस्य पातकमस्मान्नस्पृशेत् ॥११॥

निषेधस्य प्रसक्तिपूर्वकत्वात्तमाहुः तत्तस्य दौरात्म्यं विद्वद्भिर्जानद्भिरप्यस्माभिरसद्वृत्तो वेनः नृपः कृतः अस्माभिर्नृपीकरणाद्धेतोरयं भूतानि द्रुह्यति अतोऽस्माभिः सान्त्वितश्चेन्न भूतद्रोहकृतं पापमस्मान् स्पृशतीत्यर्थः सान्त्वनेनाप्रसन्ने सति कृत्यमाहुः । सान्त्वित इति । सान्त्वितः प्रार्थितः अधर्मकृदयं वेनोऽस्माकं याच्ञां नग्रहीष्यति चेत् तर्हिलोकानां धिक्कारेण निन्दया नितरां दग्धं स्वतेजसा स्वेषामस्माकं तेजसा तपोबलेन दहिष्यामः ॥ १२ ॥

एवमध्यवसाय निश्चित्य गूढा मुनयः एनमुपव्रज्य समीपमागत्य सामाभिः प्रियोक्तिभिः वेनं सान्त्वयित्वा अब्रुवन् प्रार्थनापूर्वकमब्रुवन्नित्यर्थः ॥ १३ ॥

हेनृपवर्य ! वयं यद्विज्ञापयामहे तन्निबोध सावधानचित्तः आधत्स्व कथंभूतं तत् तव आयुरादीनां विवर्द्धनं विशेषेण वर्द्धकम् ॥ १४ ॥

किंतदित्याहुः। धर्म इत्यादिभिरष्टभिः । पुंसां वाङ्मनः कायानां वृत्तिभिर्व्यापारैः धर्मः ईश्वराराधनरूपो धर्मः आचरितोऽनुष्ठितः लोकान् विशोकान् निर्दुःखान् वितरति कुरुते असंगिनां विरक्तानामानन्त्यं मोक्षसुखानन्त्यमपि वितरति ॥ १५ ॥

हे वीर ! सः लोकसुखकरो मोक्षसुखानन्त्यकरश्च मा विनश्येत् न नश्येत् यस्मिन्नुक्तधर्मे विनष्टे सति नृपतिः पार्थिवः ऐश्वर्यादवरोहति भ्रश्यति ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दारुण इव उभयतोऽप्यसनं कथमत्राह । अराजक इति । न तस्य राज्यस्यार्हणो योग्यो नभवतीति अतदर्हणः ९ ॥

अयमप्यस्माकमनर्थकर इत्याहुरित्याह । अहेरिवेति ॥ १० ॥

युष्माभिः कथंपोषित इति तत्राह । प्रकृत्येति । सुनीथागर्भसंभवत्वात् अस्माभिः प्रजापालो निरूपितः स सांप्रतं प्रजा जिघांसति वै हन्तुमेवाकांक्षति वै ॥ ११ ॥

तर्हि किं क्रियते इति तत्राह । तथापीति । प्रकृत्याखलत्वादस्मदुक्तं न शृणोति यद्यपि तथापीति । सांत्वने हेतुमाह । मास्मानिति । युस्मत्सांत्वनाग्रहणो क्रियाधर्षं करिष्यन्ति तदशक्तौ तत्सांत्वनं व्यर्थमाह । तद्विद्वद्भिरिति । असद्वृत्तइति । तस्यादौरात्म्यं विद्वद्भिः ॥ १२—१३ ॥

एवं जिज्ञासमानाः कालक्षेपं नाकुर्वन्नित्याह । एवमिति ॥१४॥

आनन्त्यमसंगिनां फलाभिसंधिरहितानाम् ॥ १५ ॥

स धर्मोमाविनशेत् नष्टोनस्यात् बाधकमाहुरित्याह । यस्मिः न्निति अवरोहति अधोगाति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अराजकेति, सार्द्धकम् ॥ ९ ॥

टीकायां पुष्णातीत्यनन्तरं । तथा ततोऽप्यासीद्भयमित्यन्वय इति ज्ञेयम् ॥ १०—१३ ॥

मुनय ऊचुरिति बहुत्र नास्ति ॥ १४—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अतदर्हणः राज्यानर्हः देहिनामन्येषां का कथा अस्माभिरेवाय मभिषिक्तः सम्प्रत्ययमस्मानेव,न यष्टव्यमित्याद्याज्ञया शास्तीत्याहुः अहेरिति ॥ ९—१० ॥

सान्त्वयेम उपपत्तिभिः प्रबोधयाम तथा सति अस्मान् पापं न स्पृशेत् अन्यथातु पापं स्पृशेदेवेत्याहुः तत्पातकं विद्वद्भिरिति ॥ ११ ॥ १२ ॥

दहिष्यामः धक्ष्यामः ॥ १३ ॥ १४ ॥

असंगिनां निष्कामाणामानन्त्यं मोक्षम् ॥ १५ ॥

मा विनशेत् मा विनश्यतु ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथाहेः पयसा पोषः पोषणं पोषकस्याप्यनर्थभृद्भवति तथा प्रकृत्या स्वभावेनैव खलो वेनः प्रजापालोनिरूपितस्तन्निरूपणमस्माकमप्यनर्थभृदित्युत्तरेण योजना ॥ १० ॥

तत्पातकमस्मदभिषिक्तवेनस्य पातकम् ॥ ११-१२-१३-१४ ॥

पुंसां सकामानां विशोकान् दृष्टशोकवर्जितान् बहुकालसुखदानित्यर्थः वितरति ददाति असंगिनां निष्कामानामानन्त्यमनन्तस्य भगवतः साधर्म्यम् वितरति ॥ १५-१६-१७ ॥

---

राजन्न साध्वमात्येभ्यश्चोरादिभ्यः प्रजा नृपः ।
रक्षन् यथा बलिं गृह्णन्निह प्रेत्य च मोदते ॥ १७ ॥
यस्य राष्ट्रे पुरे चैव भगवान् यज्ञपूरुषः ।
इज्यते स्वेन धर्मेण जनैर्वर्णाश्रमान्वितैः ॥ १८ ॥
तस्य राज्ञो महाभाग ! भगवान् भूतभावनः ।
परितुष्यति विश्वात्मा तिष्ठतो निजशासने ॥ १९ ॥
तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे ।
लोकाः सपाला ह्येतस्मै हरन्ति बलिमादृताः २०

भाषाटीका ।

राजा नहीं होने बाधक था तो भी अराजक भय से राजा किया तो उस से भी बडा भय होगया तो कैसे मनुष्यों का भला होगा जैसे सर्प के दूध पिलाने से पिला ने वाले को भी दुख दाई है ॥ ९ ॥

क्योंकि वेन तो स्वभाव ही दुष्टी थाके गर्भ से खल रूप पैदा हुआ है ॥ १० ॥

उस को राजा बनाया तो वही प्रजा को मारने चाहता है तो भी हम इस को समझावेंगे तो हम को उस का पाप नहीं लगेगा ॥ ११ ॥

इस बातको नहीं जानकर हमने वेनको राजा बनाया अब वह अधर्मी समझाने से हमारी बातको नहीं मानेगातो लोगोंके धिक्का रसे जलाहुआ है तिसको अपने तेजसे हम जलावेंगे ॥ १२ ॥

इस प्रकार विचार करके मुनि लोगों ने क्रोधको छिपाकर वेन राजाके पास आकर मीठे वचनों से समझाया ॥ १३ ॥

मुनि लोग बोले हे राजवर्य ! जो हमलोग निवेदन करते हैं सो आप सुनो हे तात यह बात आपका आयुःलक्ष्मीबल कीर्त्ति की बढाने वालीहै ॥ १४ ॥

मनुष्यों का मनवचन कर्म बुद्धि से आचरण किया जो धर्महै सो दिव्य लोकों को प्राप्त करता है निष्काम पुरुषों को मोक्षफल देताहै ॥ १५ ॥

हेवीर ! प्रजोंका सुखदेना रूप वह तुम्हारा धर्म मत नष्टहो जिसके नाश होनेसे राजा ऐश्वर्य से नष्ट होजाताहै ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

असाधवो ये अमात्यास्तेभ्यः यथा यथा शास्त्रम् ॥ १७ ॥ ॥ १८ ॥ १९ ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

यस्य राष्ट्र इति युग्मकम् वर्णाश्रमधर्मेष्वात्मा मनो येषां तैः ॥ १८-१९ ॥

एतस्मै परमप्रसिद्धाय ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे राजन् ! असाधवो ये अमात्यास्तेभ्यः चोरादिभ्य यथा शास्त्रं प्रजाः पालयन् ताभ्यो बलिं पूजां गृह्णन् स्व इह लोके प्रेत्य परलोकं प्राप्य च मोदते सुखीभवति ॥

यस्य राज्ञो राज्ये पुरे च स्थितैश्चातुर्वर्ण्यचातुराश्रम्य तथा व्यवस्थितैर्जनैः यज्ञानां भोक्ता प्रभुश्च भगवान् स्व पञ्चयज्ञादिरूपेण इज्यते आराध्यते ॥ १८ ॥

हे महाभाग ! तस्य निजशासने निजं स्वकीयं यच्छासनं विहितं प्रजापालनादिरूपं कर्म तस्मिन् तिष्ठतः राज्ञः विश्व सर्वात्मा भूतभावनः भूतानि भावयत्युत्पादयतीति भूतभा जगत्कारणभूतो भगवान् परितुष्यति ॥ १९ ॥

परितुष्यतु भगवान् किंतेन तत्राह । तस्मिन्निति । जगत श्वरा ब्रह्मादयस्तेषामपीश्वरे तस्मिन् भगवति तुष्टे सति लकाः पालकैः सहिताः लोका आदृताः आदरेण युक्ता स्मै परितुष्टभगवते राज्ञे बलिं हरन्ति प्रापयन्ति ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कोऽसौ धर्मो यो लोकान् दधातीति तत्राहुरित्याह । राजन् असाधवो दुर्जनाः अमात्याः सचिवास्तेभ्यः "साधुस्त्रिषूचिते सज्जने वार्धुषौ पुमान्„ इत्यभिधानम् "यथा सादृश्ययोग्यत्ववी स्वार्थानतिक्रम„ इतिवचनात् यथा योग्यं षष्ठांशं बलिं ह ॥ १७ ॥ १८ ॥ ॥ १९ ॥

तत्तुष्ट्या किं फलं स्यादित्यत्राह । तस्मिन्निति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्य राष्ट्रे इति युग्मकम् ॥ १८—२१ ॥

---

तं सर्वलोकामरयज्ञसंग्रहं त्रयीमयं वेदमयं तपोमयम्।
यज्ञैर्विचित्रैर्यजतो भवाय ते राजन्! स्वदेशाननुरोद्धुमर्हसि ॥ २१ ॥
यज्ञेन युष्मद्विषये द्विजातिभिर्वितायमानेन सुराः कला हरेः।
स्विष्टाः सुतुष्टाः प्रदिशन्ति वाञ्छितं तद्धेलनं नार्हसि वीर! चेष्टितुम् ॥ २२ ॥

वेन उवाच

बालिशा बत यूयं वा अधर्मे धर्ममानिनः।
ये वृत्तिदं पतिं हित्वा जारं पतिमुपासते ॥ २३ ॥
अवजानन्त्यमी मूढा नृपरूपिणमीश्वरम्।
नानुविन्दन्ति ते भद्रमिह लोके परत्र च ॥ २४ ॥
को * यज्ञ पुरुषो नाम यत्र वो भक्तिरीदृशी।
भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम् ॥ २५ ॥
विष्णुर्विरिञ्चो गिरिश इन्द्रो वायुर्यमो रविः।
पर्जन्यो धनदः सोमः क्षितिरग्निरपां पतिः ॥ २६ ॥
एते चान्ये च विबुधाः प्रभवो वरशापयोः।
देहे भवन्ति नृपतेः सर्वदेवमयो नृपः ॥ २७ ॥
तस्मान्मां कर्मभिर्विप्रा! यजध्वं गतमत्सराः।
बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् ॥ २८ ॥

मैत्रेय उवाच

इत्थं विपर्ययमतिः पापीयानुत्पथं गतः।
अनुनीयमानस्तद्याच्ञां न चक्रे भ्रष्टमङ्गलः ॥ २९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

वर्णाश्रमधर्मेषु आत्मा मनो येषां तैः ॥ १८—२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वर्णाश्रमेषु तदनुरूपेषु धर्मेषु आत्मा मनो येषां तैः ॥ १८ ॥
निजशासने स्वकीये प्रजापालनादिधर्मे ॥ १९-२० ॥

---

भाषाटीका।

हेराजन्! छोटे मंत्रियों से चोरादिकोंसे प्रजों को रक्षा करके किस्ती लेनेसे इस लोक परलोक में सुख पाता है ॥ १७ ॥

जिसके राज में ग्राम में वर्णा श्रम धर्म युक्त मनुष्यों के द्वरा स्वधर्म से यज्ञपुरुष विष्णु भगवान् पूजित होते हैं ॥ १८ ॥

हे महा भाग! भूतपालक भगवान् विश्वात्मा निजआज्ञामें रहने वाले उस राजा के उपर प्रसन्न होते हैं ॥ १९ ॥

सब जगत्के ईश्वरों के ईश्वर ओहैं लोकपालों के सहित लो जिन को भेंट देतेहैं उनभगवान् के प्रसन्न होने से फिर कौनसी वस्तु दुर्लभ है ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सर्वान् लोकांश्च तत्पालानमरांश्च तत्प्रापकान्यज्ञांश्च सङ्गृह्णाति नियच्छतीति तथा तं विचित्रैर्द्रव्ययज्ञादिभिः भवाय समृद्धये स्वदेशांस्तद्वासिनो जनान् अनुरोद्धुमनुवर्तितुम ॥२१॥

युष्मद्विषये स्वदेशे हरेः कला अंशाः सुराः तेषां सुराणां हेलनमवज्ञाम ॥ २२ ॥

बालिशा अज्ञाः वृत्तिदमन्नादिप्रदं मां हित्वा ॥ २३ ॥ २४ ॥

भर्तृस्नेहो विदूरो येषाम ॥ २५ ॥ २६ ॥

देहे भवन्ति नृपतेरतो नृपतिरेवेश्वर इतरे तदंशा इति भावः ॥ २७ ॥

बलिं च करादिकम् अग्रभुगाराध्यः ॥ २८ ॥ २९ ॥

---

* कोतशुकदेवः

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्यादीपिकाटिप्पणी ।

नियच्छत्यधितिष्ठति अनुवर्त्तितुं तत्रैव यजने प्रवर्त्तयितुम् ॥ २१—२२ ॥

अधर्मे जारोपासने वृत्तिदमिति अद्यैव मया फलमूलादिभोटने निषिद्धे सद्य एव मरिष्यथ इति भावः ॥ २३—२४—२५ ॥

विष्णुरिति युग्मकम् ॥ २६ ॥ २७ ॥

तस्मादीश्वरत्वात् ॥ २८ ॥

अनुनीयमानस्त्वामभिः प्रबोध्यमानः ॥ २९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वान् लोकान् तत्पतींश्चामरानमरत्वप्रापकान् यज्ञांश्च संगृह्णाति नियच्छतीति तथा त्रयीमयं धर्माधर्मादिबोधकत्रयीप्रचुरं वेदैकप्रमाणकत्वेन तत्प्राचुर्यं विवक्षितं त्रयीभागद्वयात्मकत्वात् किंरूपं पूर्वभागप्राचुर्यं किंरूपं चोपरितनभागप्राचुर्यमित्यत्र तद्विवेचयन् विशिनष्टि । यज्ञमयं तपोमयमिति । यज्ञप्रचुरं पूर्वभागोदितानां तेषामाराधनत्वे तत्प्राचुर्यं विवक्षितम् आराधनप्रकारप्रकाशकत्वेन पूर्वभागस्य तस्मिन् प्रामाण्यमिति भावः अत्र "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति वेदैश्च सर्वैरहमेव वेद्य„इत्यादिकमनुसंधेयं तपोमयं तपांसि उपासनानि तत्प्रचुरमाराध्यस्वरूपगुणादिप्रकाशकत्वेनोपरितनभागस्य प्रामाण्यमिति भावः तं विचित्रैर्द्रव्यदेवतादिभिर्नानाविधैर्यज्ञैः ते भवाय मुक्तये भवायेति छेदे ते तव समृद्धय इत्यर्थः यजतः यागं कुर्वाणान् स्वदेशान् तद्वासिनो जनान् अनुरोद्धुम् अनुवर्तितुं हे राजन् ! अर्हसि ॥ २१ ॥

यस्य राज्ञो देशवासिभिर्जनैर्भगवानिज्यते सोऽपि मुच्यत इत्यभिप्रायेण ते भवायेत्युक्तं तदेव प्रपञ्चयति । यज्ञैरिति । युष्मद्विषये तव देशे द्विजातिभिर्वितायमानेन निरन्तरं क्रियमाणेन यज्ञेन हरेर्भगवतः कलाः शरीरभूताः सुराः इन्द्रादयो देवाः स्विष्टाः यथाशास्त्रमिज्यमाना अत एव तुष्टास्तव वाञ्छितं प्रदिशन्ति प्रयच्छन्ति हे वीर ! तद्धेलनं तेषां देवानां हेलनम् अवज्ञां चेष्टितुं कर्तुं भवान्नार्हतीति ॥ २२ ॥

एवं विज्ञापितो वेन आहेत्याह । वेन इति । यूयं बालिशा अज्ञाः वै नूनं कुतः यतः अधर्मे धर्ममानिनः धर्मं मन्वानाः तदेव प्रपञ्चयति ये त्वादृशा जनाः वृत्तिदम् अन्नादिप्रदं प्रभुं हित्वा जारं पतिमुपासते ॥ २३ ॥

ये च मूढाः नृपरूपेणावस्थितमीश्वरमवजानन्ति अवज्ञां कुर्वन्ति ते जना इह परत्र च लोके भद्रं कल्याणं नविन्दन्ति न प्राप्नुवन्ति किन्तु दुःखिता भवन्तीत्यर्थः ॥ २४ ॥

भर्तृस्नेहे विघातो यासां तासां कुयोषितां निजस्त्रीणां यथा जारपुरुषे भक्तिस्तथा यज्ञपुरुषे वः युष्माकमीदृशीभक्तिः स यज्ञपुरुषः को नाम किंशब्दः कुत्सायाम् असम्भावनायां वा॥२५॥

वरशापयोरनुग्रहनिग्रहयोः प्रभवः समर्थाः विष्ण्वादयोऽन्येच देवा नृपते राज्ञो देहे वसन्ति अतो नृपः सर्वदेवमयः सर्वदेवताप्रचुरः ॥ २६ ॥ २७ ॥

तस्मात् नृपस्य सर्वदेवमयत्वात् मामेव हि विप्रा गतमत्सराः यूयं यजध्वं मह्यमेव बलिं स्वामिग्राह्यभागादिकं हरत समर्पयत अग्रभुक् आराध्यः कः पुमानस्ति ॥ २८ ॥

इत्थमेवं विपरीतमतिः पापीयान् उत्पथं दुर्मार्गं अनुनीयमानोऽपि प्रार्थ्यमानोऽपि तेषामृषीणां याच्ञां न ... ऽयं भ्रष्टमङ्गलः ॥ २९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि श्रीनारायण एवेज्यत इत्याहुरित्याह । तं सर्वेति ... शब्दः प्रत्येकमभिसंबध्यतेसर्वान् लोकानमरान् यज्ञान् सङ्गृ... सर्वलोकामरयज्ञ संग्रहस्तं त्रय्या त्रिभिर्वेदैः प्रतिपाद्येषु मु... पाद्यत्वात्त्रयीमयस्तं सर्वद्रव्याणां भगवद्विषयत्वाद्धरिर्द्रव्यम... अनेनैव तपोमयमिति व्याख्यातम् ।

सर्वसंग्रहणाद्विष्णुः सर्वसंग्रहउच्यते ।
वेदस्य तस्य वक्तृत्वात्प्राधान्यं तु त्रयीमयः ॥
सर्वं तद्विषयत्वेन मुख्यं सर्वमयस्तत ।

इतिवाक्यं चात्र मानम् एवं विधं श्रीहरिं वि... यज्ञैस्ते तव भवाय भद्राय यजतः स्वदेशान् स्वस्य तव ... आदेश उपदेशो येभ्यो यज्विभ्यस्ते स्वदेशास्तान् स्वस्य दे... सर्जनं दानं येषां ते तथा तान्विप्रांस्त्वमनुरोद्धुमनुकूलं... मर्हसीत्यर्थः"भवोभद्रेहरे प्राप्तौ„इतियादवः ॥ २१ ॥

इन्द्रादिविषयेण स्वर्गादिफलप्रदेन यज्ञेन हरियजनं ... संगच्छते प्रत्युत तद्विघातेनानर्थ एवस्यादित्याशङ्क्येन्द्रादयो वि... मुख्यसन्निधानपात्रत्वेन तदिज्यया तत्प्रीत्या प्रीता यज्ञमा... यद्यदभीष्टं तत्तद्दिशन्त्यन्यथा यजने तदवज्ञया नर्थमेव प्रयच्छ... हुरित्याह । यज्ञेनेति । विष्णोः "सन्निहितत्वात्तुसर्वदेवाहरेः ... इति वचनान्मत्स्यादिवत् क ... न भवन्तीति ज्ञातव्यं फलवन्ना... धातोरात्मनि हरेः सन्निधा बध्नन्तीति कला इत्यर्थः ॥ २२ ॥

ऋषीणां वाक्यामृतं शिरसि वज्रपातोपममिव मन्य... गूढाक्षेपाभिसंधिर्वेनः प्रतिवक्तीत्याह । वेनइति ॥ २३ ॥

स्वबुद्ध्या बालिशत्वमुपपादयति । अवजानन्तीति ॥ २४ ॥

पुनरपि वेनः शापयोग्यापराधमात्मनि कर्तुं वक्ति । को ... इति ॥ २५ ॥

अस्मद्भक्तिविषयो नाम्ना विष्णुः सृष्ट्यादिकारिणस्तद... नियता विरिञ्चादयस्तत्परिवारभूता इति भ्रान्तिर्मा ... विष्णुप्रभृतयो मयि सन्निहिता अतस्तत्तच्छक्तिमत्त्वादह... खिलोत्तम इज्यतम इत्याह । विष्णुरित्यादिना ॥ २६ ॥

वरशापयोर्दाने प्रभवः सर्वदेवमय इत्युपसंहारः ॥ २७ ॥ ...

किंफलितं तदाह । इत्थमिति । तेषामृषीणां याच्ञाम् ॥ २...

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

विष्णुरिति युग्मकम् ॥ २६—३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ते भवाय तवैव भूत्यै यजतो यजनकर्तॄन् स्वदेशवर्तिनो अ... अनुरोद्धुं तत्रैव यजने प्रवर्तयितुम् ॥ २१ ॥

चेष्टितुं कर्तुम् ॥ २२ ॥

इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना ।
भग्नायां * भव्य ! याच्ञायां तस्मै विदुर ! चुक्रुधुः ॥ ३० ॥
हन्यतां हन्यतामेष पापः प्रकृतिदारुणः ।
जीवन्जगदशावाशु कुरुते भस्मसाद्ध्रुवम् ॥ ३१ ॥
नायमर्हत्यसद्वृत्तो नरदेववरासनम् ।
योऽधियज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥ ३२ ॥
कोवैनं परिचक्षीत वेनमेकमृतेऽशुभम् ।
प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनः ॥ ३३ ॥
इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः ।
निजघ्नुर्हुंकृतैर्वेनं हतमच्युतनिन्दया ॥ ३४ ॥
ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम् ।
सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वृत्तिदं पतिमिति अद्यैव मया फलमूलादित्रोटनं निषिद्धं सद्य एव मरिष्यथेति भावः ॥ २३ ॥ २९ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हेराजन् ! यथा मूले स्कन्धादीनां संग्रहो भवति एवं सर्वेषां लोकानाममराणां तद्वासिनां यज्ञानां तत्प्रापकानां चसंग्रहो यस्मिन् सर्वात्मनि तं त्रयीमयं यज्ञबोधकवेदत्रयीरूपं द्रव्यमयं यज्ञियद्रव्यरूपं तपोमयं तप आलोचनं ज्ञानं मोक्षरूपं तत्साधनरूपं विचित्रैः स्वाधिकारप्राप्तैः प्रवृत्तिरूपैर्निवृत्तिरूपैश्च यजतः स्वदेशान् उभयविधान् स्वदेशस्थान् अनुरोद्धुं तत्तद्धर्मे नियोजयितुं त्वमर्हसि कस्मै प्रयोजनाय ते भवाय ऋद्ध्यै अभवायेति छेदे मोक्षाय एवं कृते तवापि भुक्तिर्मुक्तिश्च भविष्यतीत्यर्थः ॥ २१ ॥

तद्धेलनं तस्य सर्वात्मनो हरेर्हेलनमवज्ञानं चोदितुं हेवीर ! नार्हसि ॥ २२ ॥

बालिशा अज्ञाः वृत्तिदम्पतिं मां हित्वा नार्य इव जारं यज्ञपुरुषमुपासते ॥ २३ ॥ २४ ॥

भर्तुः स्नेहो विदूरे यासां तासां कुयोषितां यथा जारे भक्तिस्तथामत्स्नेहाविदूराणां वो युष्माकं यत्र ईदृशी भक्तिः स यज्ञपुरुषः क्व वर्तते ॥ २५ ॥

पर्जन्यः वृष्ट्यधिष्ठात्री देवता स इन्द्राभिन्न एव पर्जन्यो भगवानिन्द्र इति वक्ष्यमाणात् ॥ २६—२९ ॥

———

भाषाटीका ॥

सब लोक तथा सब लोकपाल और यज्ञ इन को अपने आधीन रखने वाले वेदत्रय कर्म प्रतिपाद्य वेदोक्त द्रव्य यज्ञस्वरूप तपस्वरूप जो भगवान् तिनके हे राजन् ! विचित्र यजन करने को तुमारे कल्याण के वास्ते सब देशों को आज्ञा देने के अर्थ आप योग्यहो ॥ २१ ॥

हे वीर ! तुमारे राज्य में ब्राह्मणादि कों से विस्तार किये हुये यज्ञ से भगवान् विष्णु के कला इन्द्रादि देवता यज्ञ द्वारा संतुष्ट होने से मनोरथ को देंगें उनकी अवज्ञा नहीं करनी चाहिये॥ २२ ॥

वेनबोला तुम लोग मूर्ख हो अधर्म को धर्म मानने वाले हो तुम से लोग वृत्ति देने वाले पति को छोड कर जार पुरुष की सेवा करने वाली स्त्री के तुल्य होते हैं ॥ २३ ॥

जो मूर्ख लोग राजा रूपी ईश्वर का अपमान करते हैं वे लोग इस लोक मे तथा परलोक मे कल्याण को नहीं प्राप्त होते हैं २४

कौन सा यज्ञ पुरुष है जिस मे तुमारी ऐसी भक्ति है पति के स्नेह सो हीन खोटी स्त्रियों की जैसे जार पुरुष मे भक्ति होती है ॥ २५ ॥

विष्णु ब्रह्मा महादेव इन्द्र वायु यम सूर्य पर्जन्य कुबेर चन्द्रमा पृथवी अग्नि समुद्र ॥ २६ ॥

ये तथा और भी वरदान तथा शापके देने वाले सब देवता राजा के शरीर मे रहते हैं तिससे सर्व देवस्वरूप राजा होताहै

तिससे हेब्राह्मणो ! मत्सर छोडकर वेदोक्त कर्मो से मेरा पूजन करो मेरेको भेट दो मेरेसे दूसरा कौन आगे भागलेने वाला है ॥ २७ ॥ २८॥

मैत्रेयजीबोले इस प्रकार से विपरीत बुद्धि वाला पापी दुर्मार्ग मे चलने वाला नष्ट मंगल वाला उनकी विनती को नही सुना ॥ २९ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेनासत्कृताः भग्नायां याच्ञायां चुक्रुधुः क्रोधं चक्रुः ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥

परिचक्षीत निन्देत अशुभं वेनं विना कृतघ्नतामाहुः यदनुग्रहविषयः सन्नीदृशमैश्वर्यादि प्राप्तः ॥ ३३ ॥

पूर्वं गूढमन्यवः इदानीं रूढमन्यवः प्रकटकोपाः हुंकृतैर्हुंकारैः ॥ ३४ ॥

स्वाश्रमपदं प्रति ऋषिभिर्गते गमने कृते सति विद्यायोगेन मन्त्रसहितया युक्त्या पालयामास ॥ ३५ ॥

* हव्येति विजयध्वजः

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्यादीपिकाटिप्पणी ।

नियच्छत्यधितिष्ठति अनुवर्त्तितुं तत्रैव यजने प्रवर्त्तयितुम् ॥ २१—२२ ॥

अधर्मे जारोपासने वृत्तिदमिति अद्यैव मया फलमूलादित्रोटने निषिद्धे सद्य एव मरिष्यथ इति भावः ॥ २३—२४—२५ ॥

विष्णुरिति युग्मकम् ॥ २६ ॥ २७ ॥

तस्मादीश्वरत्वात् ॥ २८ ॥

अनुनीयमानस्सामभिः प्रबोध्यमानः ॥ २९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वान् लोकान् तत्पतींश्चामरानमरत्वप्रापकान् यज्ञांश्च संगृह्णाति नियच्छतीति तथा त्रयीमयं धर्माधर्मादिबोधकत्रयीप्रचुरं वेदैकप्रमाणकत्वेन तत्प्राचुर्यं विवक्षितं त्रयीभागद्वयात्मकत्वात् किंरूपं पूर्वभागप्राचुर्यं किंरूपं चोपरितनभागप्राचुर्यमित्यत्र तद्विवेचयन् विशिनष्टि । यज्ञमयं तपोमयमिति । यज्ञप्रचुरं पूर्वभागोदितानां तेषामाराधनत्वे तत्प्राचुर्यं विवक्षितम् आराधनप्रकारप्रकाशकत्वेन पूर्वभागस्य तस्मिन् प्रामाण्यमिति भावः अत्र"सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति वेदैश्च सर्वैरहमेव वेद्य„इत्यादिकमनुसंधेयं तपोमयं तपांसि उपासनानि तत्प्रचुरमाराध्यस्वरूपगुणादिप्रकाशकत्वेनोपरितनभागस्य प्रामाण्यमिति भावः तं विचित्रैर्द्रव्यदेवतादिभिर्नानाविधैर्यज्ञैः ते भवाय मुक्तये भवायेति छेदे ते तव समृद्धय इत्यर्थः यजतः यागं कुर्वाणान् स्वदेशान् तद्वासिनो जनान् अनुरोद्धुम् अनुवर्तितुं हेराजन् ! अर्हसि ॥ २१ ॥

यस्य राज्ञो देशवासिभिर्जनैर्भगवानिज्यते सोऽपि मुच्यत इत्यभिप्रायेण ते भवायेत्युक्तं तदेव प्रपञ्चयति । यज्ञैरिति । युष्मद्विषये तव देशे द्विजातिभिर्वितायमानेन निरन्तरं क्रियमाणेन यज्ञेन हरेर्भगवतः कलाः शरीरभूताः सुराः इन्द्रादयो देवाः स्विष्टाः यथाशास्त्रमिज्यमाना अत एव तुष्टास्तव वाञ्छितं प्रदिशन्ति प्रयच्छन्ति हेवीर ! तद्धेलनं तेषां देवानां हेलनम् अवज्ञां चेष्टितुं कर्त्तुं भवान्नार्हति ॥ २२ ॥

एवं विज्ञापितो वेन आहेत्याह । वेन इति । यूयं बालिशा अज्ञाः यं नूनं कुतः यतः अधर्मे धर्ममानिनः धर्मं मन्वानाः तदेव प्रपञ्चयति ये त्वादृशा जनाः वृत्तिदम् अन्नादिप्रदं प्रभुं हित्वा जारं पतिमुपासते ॥ २३ ॥

ये च मूढाः नृपरूपेणावस्थितमीश्वरमवजानन्ति अवज्ञां कुर्वन्ति ते जना इह परत्र च लोके भद्रं कल्याणं नविन्दन्ति न प्राप्नुवन्ति किन्तु दुःखिता भवन्तीत्यर्थः ॥ २४ ॥

भर्तृस्नेहे विघातो यासां तासां कुयोषितां निजस्त्रीणां यथा जारपुरुषे भक्तिस्तथा यज्ञपुरुषे वः युष्माकमीदृशीभक्तिः स यज्ञपुरुषः को नाम किंशब्दः कुत्सायाम् असम्भावनायां वा ॥२५॥

वरशापयोरनुग्रहनिग्रहयोः प्रभवः समर्थाः विष्ण्वादयोऽन्येच देवा नृपते राज्ञो देहे वसन्ति अतो नृपः सर्वदेवमयः सर्वदेवताप्रचुरः ॥ २६ ॥ २७ ॥

तस्मात् नृपस्य सर्वदेवमयत्वात् मामेव हि विप्रा गतमत्सरा यूयं यजध्वं मह्यमेव बलिं स्वामिग्राह्यभागादिकं हरत समर्पयत अग्रभुक् आराध्यः कः पुमानस्ति ॥ २८ ॥

इत्थमेवं विपरीतमतिः पापीयान् उत्पथं दुर्मार्गं प्राप्तः अनुनीयमानोऽपि प्रार्थ्यमानोऽपि तेषामृषीणां याच्ञां न चक्रेऽयं भ्रष्टमङ्गलः ॥ २९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि श्रीनारायण एवेज्यत इत्याहुरित्याह । तं सर्वेति । सर्व-शब्दः प्रत्येकमभिसंबध्यते सर्वान् लोकानमरान् यज्ञान् सङ्गृह्णाति सर्वलोकामरयज्ञसंग्रहस्तं त्रय्या त्रिभिर्वेदैः प्रतिपाद्येषु मुख्यप्रतिपाद्यत्वात्त्रयीमयस्तं सर्वद्रव्याणां भगवद्विषयत्वाद्धरिर्द्रव्यमयस्तं अनेनैव तपोमयमिति व्याख्यातम् ।

> सर्वसंग्रहणाद्विष्णुः सर्वसंग्रहउच्यते ।
> वेदस्य तस्य वक्तृत्वात्प्राधान्यं तु त्रयीमयः ॥
> सर्वं तद्विषयत्वेन मुख्यं सर्वमयस्तत ।

इतिवाक्यं चात्र मानम् एवं विभं श्रीहरिं विचित्रैर्यज्ञैस्ते तव भवाय भद्राय यजतः स्वदेशान् स्वस्य तव देशादेश उपदेशो येभ्यो यज्विभ्यस्ते स्वदेशास्तान् स्वस्य देशोऽतिसर्जनं दानं येषां ते तथा तान्विप्रांस्त्वमनुरोद्धुमनुकूलीकर्तुमर्हसीत्यर्थः"भवोभद्रेहरे प्राप्तौ„इतियादवः ॥ २१ ॥

इन्द्रादिविषयेण स्वर्गादिफलप्रदेन यज्ञेन हरियजनं कथं संगच्छते प्रत्युत तद्विघातेनानर्थ एवस्यादित्याशङ्क्येन्द्रादयो विष्णोर्मुख्यसन्निधानपात्रत्वेन तदिज्यया तत्प्रीत्या प्रीता यजमानाय यद्यदभीष्टं तत्तद्दिशन्त्यन्यथा यजने तदवज्ञया नर्थमेव प्रयच्छन्तीत्याहुरित्याह । यज्ञेनेति । विष्णोः"सन्निहितत्वात्तुसर्वदेवाहरेः कला„ इति वचनान्मत्स्यादिवत्क ला न भवन्तीति ज्ञातव्यं कलबन्धन इति धातोरात्मनि हरेः सन्निधां बध्नन्तीति कला इत्यर्थः ॥ २२ ॥

ऋषीणां वाक्यामृतं शिरसि वज्रपातोपममिव मन्यमानो गूढाक्षेपाभिसंधिर्वेनः प्रतिवक्तीत्याह । वेनइति ॥ २३ ॥

स्वबुद्ध्या बालिशत्वमुपपादयति । अवजानन्तीति ॥ २४ ॥

पुनरपि वेनः शापयोग्यापराधमात्मनि कर्तुं वक्ति । को यज्ञ इति ॥ २५ ॥

अस्मद्भक्तिविषयो नाम्ना विष्णुः सृष्ट्यादिकारिणस्तदाज्ञानियता विरिञ्चादयस्तत्परिवारभूता इति भ्रान्तिर्मा भूदत एवैते विष्णुप्रभृतयो मयि सन्निहिता अतस्तत्तच्छक्तिमत्त्वादहमेवाखिलोत्तम इज्यतम इत्याह । विष्णुरित्यादिना ॥ २६ ॥

वरशापयोर्दाने प्रभवः सर्वदेवमय इत्युपसंहारः ॥ २७ ॥ २८ ॥

किंफलितं तदाह । इत्थमिति । तेषामृषीणां याच्ञाम् ॥ २९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

विष्णुरिति युग्मकम् ॥ २६—३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ते भवाय तवैव भूत्यै यजतो यजनकर्तॄन् स्वदेशवर्तिनो जनान् अनुरोद्धुं तत्रैव यजने प्रवर्तयितुम् ॥ २१ ॥

चेष्टितुं कर्तुम् ॥ २२ ॥

इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना ।
भग्नायां * भव्य ! याच्ञायां तस्मै विदुर ! चुक्रुधुः ॥ ३० ॥
हन्यतां हन्यतामेष पापः प्रकृतिदारुणः ।
जीवन्जगदशावाशु कुरुते भस्मसाद्ध्रुवम् ॥ ३१ ॥
नायमर्हत्यसद्वृत्तो नरदेववरासनम् ।
योऽधियज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥ ३२ ॥
कोवैनं परिचक्षीत वेनमेकमृतेऽशुभम् ।
प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनः ॥ ३३ ॥
इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः ।
निजघ्नुर्हुंकृतैर्वेनं हतमच्युतनिन्दया ॥ ३४ ॥
ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम् ।
सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वृत्तिदं पतिमिति अद्यैव मया फलमूलादिशोटनं निषिद्धे सद्य एव मरिष्यथेति भावः ॥ २३ ॥ २९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हेराजन् ! यथा मूले स्कन्धादीनां संग्रहो भवति एवं सर्वेषां लोकानाममराणां तद्वासिनां यज्ञानां तत्प्रापकानां चसंग्रहो यस्मिन् सर्वात्मनि तं त्रयीमयं यज्ञबोधकवेदत्रयीरूपं द्रव्यमयं यज्ञियद्रव्यरूपं तपोमयं तप आलोचनं ज्ञानं मोक्षरूपं तत्साधनरूपं विचित्रैः स्वाधिकारप्राप्तैः प्रवृत्तिरूपैर्निवृत्तिरूपैश्च यजतः स्वदेशान् उभयविधान् स्वदेशस्थान् अनुरोद्धुं तत्तद्धर्मे नियोजयितुं त्वमर्हसि कस्मै प्रयोजनाय ते भवाय ऋद्ध्यै अभवायेति छेदे मोक्षाय एवं कृते तवापि भुक्तिर्मुक्तिश्च भविष्यतीत्यर्थः ॥ २१ ॥

तद्धेलनं तस्य सर्वात्मनो हरेर्हेलनमवज्ञानं चोदितुं हेवीर ! नार्हसि ॥ २२ ॥

बालिशा अज्ञाः वृत्तिदम्पतिं मां हित्वा नार्य इव जारं यज्ञपुरुषमुपासते ॥ २३ ॥ २४ ॥

भर्तुः स्नेहो विदूरे यासां तासां कुयोषितां यथा जारे भक्तिस्तथामत्स्नेहविदूराणां वो युष्माकं यत्र ईदृशी भक्तिः स यज्ञपुरुषः क वर्तते ॥ २५ ॥

पर्जन्यः वृष्ट्यधिष्ठात्री देवता स इन्द्राभिन्न एव पर्जन्यो भगवानिन्द्र इति वक्ष्यमाणात् ॥ २६—२९ ॥

भाषाटीका ॥

सब लोक तथा सब लोकपाल और यज्ञ इन को अपने आधीन रखने वाले वेदत्रय कर्म प्रतिपाद्य वेदोक्त द्रव्य यज्ञस्वरूप तपस्वरूप जो भगवान् तिनके हे राजन् ! विचित्र यजन करने को तुमारे कल्याण के वास्ते सब देशों को आज्ञा देने के अर्थ आप योग्यहो ॥ २१ ॥

हे वीर ! तुमारे राज्य में ब्राह्मणादि कों से विस्तार किये हुये यज्ञ से भगवान् विष्णु के कला इन्द्रादि देवता यज्ञ द्वारा संतुष्ट होने से मनोरथ को देंगें उनकी अवज्ञा नहीं करनी चाहिये॥ २२॥

वेनबोला तुम लोग मूर्ख हो अधर्म को धर्म मानने वाले हो तुम से लोग वृत्ति देनें वाले पति को छोड कर जार पुरुष की सेवा करने वाली स्त्री के तुल्य होते हैं ॥ २३ ॥

जो मूर्ख लोग राजा रूपी ईश्वर का अपमान करते हैं वे लोग इस लोक मे तथा परलोक मे कल्याण को नहीं प्राप्त होते हैं २४

कौन सा यज्ञ पुरुष है जिस मे तुमारी ऐसी भक्ति है पति के स्नेह सो हीन खोटी स्त्रियों की जैसे जार पुरुष मे भक्ति होती है ॥ २५ ॥

विष्णु ब्रह्मा महादेव इन्द्र वायु यम सूर्य पर्जन्य कुबेर चन्द्रमा पृथवी अग्नि समुद्र ॥ २६ ॥

ये तथा औरभी वरदान तथा शापके देने वाले सब देवता राजा के शरीर मे रहते हैं तिससे सर्व देवस्वरूप राजा होताहै तिससे हेब्राह्मणो ! मत्सर छोडकर वेदोक्त कर्मो से मेरा पूजन करो मेरेको भेट दो मेरेसे दूसरा कौन आगे आगलेने वाला है ॥ २७ ॥ २८॥

मैत्रेयजीबोले इस प्रकार से विपरीत बुद्धि वाला पापी दुर्मार्ग मे चलने वाला नष्ट मंगल वाला उनकी विनती को नही सुना ॥ २९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेनासत्कृताः भग्नायां याच्ञायां चुक्रुधुः क्रोधं चक्रुः ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥

परिचक्षीत निन्देत अशुभं वेनं विना कृतघ्नतामाहुः यदनुग्रहविषयः सन्नीदृशमैश्वर्यादिः प्राप्तः ॥ ३३ ॥

पूर्वं गूढमन्यवः इदानीं रूढमन्यवः प्रकटकोपाः हुंकृतैर्हुंकारैः ॥३४॥

स्वाश्रमपदं प्रति ऋषिभिर्गते गमने कृते सति विद्यायोगेन मन्त्रसहितया युक्त्या पालयामास ॥ ३५ ॥

* हव्येति विजयध्वजः

एकदा मुनयस्ते तु सरस्वत्सलिलाप्लुताः ।
हुत्वाग्नीन् सत्कथाश्चक्रुरुपविष्टाः सरित्तटे ॥ ३६ ॥
वीक्ष्योत्थितान् महोत्पातानाहुर्लोकभयंकरान् ।
अप्यभद्रमनाथाया दस्युभ्यो न भवेद्भुवः ॥ ३७ ॥
एवं मृशन्त ऋषयो धावतां सर्वतो दिशम् ।
पांसुः समुत्थितो भूरिश्चोराणामभिलुम्पताम् ॥ ३८ ॥
तदुपद्रवमाज्ञाय लोकस्य वसु लुम्पताम्।
भर्त्तर्युपरते तस्मिन्नन्योऽन्यं च जिघांसताम् ॥ ३९ ॥
चोरप्रायं जनपदं हीनसत्त्वमराजकम् ।
लोकान्नावारयन् शक्ता अपि तद्दोषदर्शिनः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

पुंवद्भाव आर्षः सरस्वत्याः सलिले आप्लुताः कृतस्नानाः विष्णुकथाश्चक्रुः ॥ ३६ ॥

तदा तूत्पातान्वीक्ष्य भुवो भद्रं न भवेत्किमित्याहुश्च ॥ ३७ ॥

एवं मृशन्तस्तर्कयन्त ऋषयः स्थिताः तदा धावतां चोराणां भूरिः पांसुः समुत्थितः ॥ ३८ ॥

तत्तदा तेषां लोकस्य धनं लुम्पतां जिघांसतां चोपद्रवमाज्ञाय ॥ ३९ ॥

तथा चोरप्रायमराजकं हीनसत्त्वं च जनपदमाज्ञाय शक्ता अप्यवारणे दोषदर्शिनोऽपि जनान् लुम्पतो लोकान्नावारयन्नित्यन्वयः ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी।

भव्यायां श्रेष्ठायाम् ॥ ३० ॥

ध्रुवमिति संभावनायाम् ॥ ३१—३४ ॥

मन्त्रिभिस्सह मन्त्रणं नीतिविचारो मन्त्रस्तत्सहितया तैलद्रोण्यां क्षेपणलक्षणया युक्त्या ॥ ३५—३६ ॥

महोत्पातानित्यत्र तदोत्पातानित्येव स्वामिसंमतः पाठः ॥ ३७—३८ ॥

तदिति युग्मकम् दुष्टेभ्यो लुण्ठकेभ्योऽवारणे दोषदर्शिनोऽपि क्षत्रियाः आत्मन एव रक्षन्तो किमस्माकमन्यैरित्युदासीनाः सन्तः जनान् दुर्बलांल्लुम्पतः निःस्वं कुर्वतो लोकांश्चोरान्नावारयन्नित्यन्वयः ॥ ३९—४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इतीत्थं पण्डितमात्मानं मन्वानेन तेनासत्कृता अवज्ञातास्ते मुनयः भव्यया च आयां लोकशुभावहया च आयां सत्यां हे विदुर! तस्मै चुक्रुधुः कुपितवन्तः ॥ ३० ॥

क्रोधमेव प्रपञ्चयति। हन्यतामिति। प्रकृत्या स्वभावेन दारुणो घातुकः अत एव पापीयानेष वेनो हन्यतां कोपाद्वद्धिरक्तिः यतोऽसौ जीवन् जगत् भस्मसात् भस्मभूतमाशु कुरुते ध्रुवं नूनम् ॥ ३१ ॥

असद्वृत्तोऽयं वेनो राजासनं प्रति नार्हति योग्यो न भवति हि यस्मात् यो वेनः अनपत्रपो निर्लज्जः यज्ञपतिं विष्णुं विनिन्दति ॥ ३२ ॥

अशुभमशुभाचारं वेनमेकमृते विना को वै पुमान् तं विष्णुं परिचक्षीत निन्देत वेनस्य कृतघ्नतामाह। यस्य विष्णोरनुग्रहभाजनः अनुग्रहविषयः सन्निदमैश्वर्यं प्राप्तः ॥ ३३ ॥

इत्थं व्यवसिता निश्चिन्वाना ऋषयः रूढमन्यवः पूर्वं गूढमन्यव इदानीं रूढमन्यवः सन्तः पूर्वमेव भगवन्निन्दया हतप्रायं वेनं हुंकारैर्निजघ्नुः ॥ ३४ ॥

एवं हुंकारैरेव वेन निहत्य ऋषिभिः स्वाश्रमस्थाने गते प्राप्ते सति शोचती सुनीथा पुत्रस्य कलेवरं विद्यायोगेन मन्त्रसहितया युक्त्या पालयामास ॥ ३५ ॥

पुंवद्भावः आर्षः ते मुनयः एकदा सरस्वत्याः सलिलैराप्लुताः स्नाता अग्निं हुत्वा प्रातरग्निकार्यं कृत्वा सरितस्सरस्वत्यास्तटे उपविष्टाः सन्तः सत्कथां भगवत्कथां चक्रुः कथयामासुः ॥ ३६ ॥

तदा उत्थितान् महोत्पातान् वीक्ष्य उत्पातैर्यल्लोकानां भयं तेनातुरा दुःखिताः अनाथाया भुवः दस्युभ्यश्चौरादिभ्यो भद्रं न भवेत्किमित्याहुः ॥ ३७ ॥

एवम् ऋषिषु ब्रुवत्सु सत्सु सर्वतो दिशं सर्वासु दिक्षु धावतामभितो धनादिकं लुम्पतां हरतां चोराणां भूरिर्बहुलः पांसुः समुत्थितोऽभूत् वसु धनं लुम्पतां चोराणां भर्तरि राज्ञि उपरते नष्टे सति अन्योऽन्यं जिघांसतां हन्तुमिच्छतां लोकानां तथाविधमुपद्रवम् ॥ ३८॥३९ ॥

तथा चोरप्रायमराजकं राजहीनं सत्त्वं च जनपदमाज्ञाय ज्ञात्वा शक्ता अपि वेनमिव हुंकारेणैव चोरान्निहन्तुं शक्ता अपि ऋषयः तद्दोषदर्शिनः तस्माच्चोरादिहननाद्यो दोषः पापं पश्यन्तः घातं न घातका विप्रा इति स्वधर्मं पश्यन्त इति भावः नावारयन् न निवारितवन्तः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

आत्मनि शापसामर्थ्यं समुल्लसति कर्णौ पिधाय निर्याणमनुचितमिति पश्यन्तः शापात्पूर्वंभाविकोपायुधस्पृश्यय उद्दामित्याह। इतीति। इतिशब्दः प्रकारवचनः हव्यविपर्ययायाम् ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ऊचुश्चेत्याह । हन्यतामिति । जीवंश्च जगद्भस्मसात्करोति ॥ ३१ ॥ ३२ ॥

निन्द्यदोषसद्भावान्निन्दतीति किं न स्यादत्राह । कोवेति "निरनिष्टो-निरवद्य„ इतिश्रुतेरशुभोऽयमेव निन्द्यदोषाकर इतिभावः । यस्य हरेरनुग्रहस्य भाजनं यस्यानुग्रहो यस्मिन्स यदनुग्रहः पुमान् स एव भाजनं वा तदनुग्रहरहितत्वादयं हन्तव्य इत्यर्थः अत्र क्रोधवचनयोः क्रमकरणमेकैकं दृष्ट्वास्मानयं क्षमापयेदिति बुद्ध्या कृतमिति ज्ञातव्यम् ॥ ३३ ॥

मरेत्युक्तिः श्रोतॄणां श्रोत्रदुःसहेति प्रकारान्तरेण तं जघ्नुरित्याह । इत्थमिति । एवं मारितो वेनः कं लोकमवाप ऋषीणां तन्मतदूषकत्वात् के तस्यानुष्ठातारस्तन्मतनिरासिनः पृथोश्च चिरभावित्वादुत्सन्नप्रायमितिच वक्तुं न युक्तं तत्र तत्र दृश्यमानत्वादिति सर्वम् "अहं * ब्रह्मेति वेनस्तु ध्यायन्नापाधरं तमः । नद्वाद्धान्तोमहीं व्याप्तो भेयींख्यापयतोऽनिशम् । असुराराक्षसाश्चैव पिशाचास्तत्पथि स्थिताः । भूमौ तत्पृथुना सर्वं निरस्तं महिमात्मना । पुनः कलियुगे प्राप्ते अष्टाविंशतिमे मनोः । वैवस्वतस्य समये जाताः क्रोधवशा भुवि । ख्यापयन्ति दुरात्मानो मणिमांस्तत्पुरः सर„ इत्यतोऽत्रतु ग्रन्थबाहुल्यादन्यत्र विस्तृतत्वाच्च ज्ञातुमनभ्यर्थितत्वाच्च न प्रपञ्चितमिति ज्ञातव्यं तेषां क्रोधवशानां पुरःसरोऽग्रगन्ता मुख्य-इत्यर्थः ॥ ३४ ॥

वेनस्य पुत्राभावादृषीणां क्रोधात् पुरोहितस्य भीतत्वात्प्रेतकार्यमन्त्रवक्त्रभावात्परं कलेवरं किंकृतमत्राह । ऋषिभिरिति । विद्यायोगेन मन्त्रौषधादिविद्योपायेन शोचतीत्येन मातृस्वभावो दर्शितः ॥ ३५ ॥

एवं वेनं शप्त्वा तपोबलादन्यमेकं राजानं चक्रुस्तद्वंश्याभावात्तूष्णीमासुः कलेवरं मुनयः किमकुर्वन्निति परीक्षितः शङ्कां परिहरन्नुत्तरकथाप्रसंगमाह । एकदेति । सरयूनाम्नो नद्याः सलिले आप्लुताः कृतस्नानाः सतोऽभ्यर्हितस्य विष्णोः कथा यदा चक्रुः ॥ ३६ ॥

तदा महोत्पातान् वीक्ष्याहुरित्यन्वयः किमाहुरिति तत्राह । अपीति । अपिशब्दस्य भवेदित्यनेनान्वयः अनाथाया हेतुगर्भविशेषणादभद्रं संभावितमिति प्रावोचन्नित्यर्थः ॥ ३७ ॥

वसुलुम्पतां चोराणां सकाशाद्भूमेः पांसुः समुत्थित इत्यन्वयः ॥ ३८ ॥

ततः किमभूदत्राह । तदुपद्रवमिति । तत्तदा लोकस्य चोराणामुपद्रवमाज्ञायैव निश्चित्य मृतस्य वेनस्य महीपतेरूरुं तरसा ममन्थुरित्यन्वयः ॥ ३९ ॥

---

*अत्रभगवन्निन्दायाः फलं निजघ्नुरिति प्रसिद्धहिंसैवेतिभाति नचतद्युक्तं भगवन्निन्दयावेनोद्धिंजस्तमसिपातित इतिप्रमाणेतमः प्राप्तिलक्षणं फलमित्युक्तम् । अतोऽस्समाख्याप्रमाणेनाभिप्रायमाह ॥ अहंब्रह्मेति ॥ पुनरिति ॥ येपूर्वंगन्धमादनगिरौभीमेन मणिमत्पुरोगमा निहताः तएवशंकरादिरूपेण जाता इत्यर्थः उक्ताख्यायिकयाच अहं ब्रह्मास्मीत्युपासनाशास्त्रप्रवृत्तौ वेनएवमूलभूतः ॥ तदीयसिद्धान्तानुसारेण मणिमानेव शंकरोभूत्वाद्वैतप्रतिपादकभाष्यमकरोत् । तदनुसारेणचित्सुखादिदुरात्मानोऽपि पञ्चपादिकादिग्रन्थांश्च कुर्वितिबोध्यम् ॥ तेननिजघ्नुरित्युक्तहननं तमःप्राप्तिरेव हन्हिंसागत्योरितिधातोर्गतिरेव हननम् ॥ साचगतिस्तमसि स्थितिरूपा तथाच दैत्यहतिस्तमसिनियतस्थितिरेवेत्युक्तं भवति ॥ टी०

युष्मत्तोऽन्ये तन्निवारका न सन्ति किमिति तटस्थचोद्यं परिहरन्तीत्याह । चोरप्रायमिति । सत्यं तद्दोषदर्शिनो यद्यधर्मकर्तारं नवारयन्ति सदोषस्तानपि स्पृशेदिति दोषं पश्यन्तः किञ्च शक्तास्तान्निवारणे समर्था अपि लोकाः लुक्प्रकाशन इति धातोः विशिष्टज्ञाना जना हीनसत्त्वं पराक्रमविधुरमराजकं प्रजापालकरहितं जनपदं वीक्ष्य चोरादीन्नावारयन्निति यदत इत्यर्थः ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

वीक्ष्येति । तदोत्पातानित्येव स्वामी ॥३७--३८॥

तदिति युग्मकम् । चौरेति शक्तानामपि तेषां तदपवारणे हेतुः वरशापाभ्यां तस्मिन्निवारणे तपः क्षयरूपदोषदर्शिनः ॥ ३९--४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेनासत् कृताः ॥ ३० ॥

भस्मसात् कुरुते करिष्यते तस्मादयमेव भस्मीकर्त्तव्य इति भावः ॥ ३१ ॥ ३२ ॥

एनं विष्णुं कोवा परिचक्षीत निन्देत् । येषां विना यद्यस्मादीदृशमैश्वर्यं प्राप्तोहि अनुग्रहभाजनं भवति तस्मान्निरनुग्रहो-हन्तव्य एवेति भावः ॥ ३३ ॥ ३४ ॥

विद्यायोगेन मन्त्रसहितया तैलादिप्रक्षेपयुक्त्या ॥३५॥

सरस्वदिति पुंवद्भाव आर्षः ॥ ३६ ॥ ३७ ॥

एवं मृशन्तो विचारयन्तः ऋषयो यावत् स्थिता तावदेवेति शेषः ॥ ३८ ॥

तत्तदा तेषां लोकस्य धनं लुम्पतां जिघांसताश्चोपद्रवमाज्ञाय तथा चौरप्रायं जनपदञ्चाज्ञाय ये शक्ता अप्यवारणे दोष दर्शिनोऽपि जनाः क्षत्रियलोकाः आत्मन एव रक्षन्तः किमस्माकमन्यैरित्युदासीना अन्यान् लुम्पतो लोकान्नावारयन्नित्यन्वयः ॥ ३९ ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे भव्य ! ॥ ३० ॥ ३१ ॥

अनपत्रपः निर्लज्जः ॥ ३२ ॥

यदनुग्रहभाजनः अतएव ईदृशमैश्वर्यं प्राप्तः एवं भूतः कः एनमैश्वर्यप्रदं हरिं वेनं कृतघ्नमृते परिचक्षीत विनिन्देत् न कोऽपीत्यर्थः ॥ ३३ ॥

रूढः प्रवृद्धोमन्युर्येषां तैर्हुंकृतैर्हुंकारैः ॥ ३४ ॥

स्वाश्रमपदं स्वाश्रमस्थानं प्रति गते गमने कृते विद्यायोगेन पुत्रकलेवरं पालयामास ॥ ३५ ॥

सरस्वत्सलिलाप्लुताः सरस्वत्या जले स्नाताः ॥ ३६ ॥

तदा महोत्पातान् वीक्ष्य अनाथाया भूपतिहीनाया दस्युभ्यः अभद्रं न भवेत् किमित्याहुः ॥ ३७ ॥

ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः ।
स्रवते ब्रह्म तस्यापि भिन्नभाण्डात्पयो यथा ॥ ४१ ॥
नाङ्गस्य वंशो राजर्षेरेष संस्थातुमर्हति ।
अमोघवीर्या हि नृपा वंशेऽस्मिन् केशवाश्रयाः ॥ ४२ ॥
विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः ।
ममन्थुरूरुन्तरसा तत्रासीद्बाहुको नरः ॥ ४३ ॥
काककृष्णोऽति ह्रस्वाङ्गो ह्रस्वबाहुर्महाहनुः ।
ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्द्धजः ॥ ४४ ॥
तं तु ते ऽवनतं दीनं किं करोमीति वादिनम् ।
निषीदेत्यब्रुवंस्तात ! स निषादस्ततोऽभवत ॥ ४५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्वेवं मृशन्तो विचारयन्त ऋषयः स्थिताः तदा धावतां चोराणां भूरिः पांसुः समुत्थितः ॥ ३८ ॥

तस्मिन् वेणे भर्तरि भूपतौ उपरते नष्टे सति तत्तेषां चोराणां लोकस्य वसु धनं लुम्पताम् अन्योऽन्यं जिघांसतां च उपद्रवमाज्ञाय ॥ ३९ ॥

अराजकं गोप्तृहीनं हीनसत्त्वंच जनपदं चौरप्रायमाज्ञाय शक्ताः समर्था अपि लोकान् जनवसुलुम्पकान् अन्योऽन्यं जिघांसतः नावारयन् तत्र हेतुन्दर्शयितुं मुनीन् विशिनष्टि । तद्दोपदर्शिन इति । तस्मिन् चोरनिवारणे कर्मणि ते हिंसादिदोपदर्शिन इत्यर्थः तथोक्तं महाभारते "ब्राह्मणानां परोधर्मो वेदानां धारणादपि-अहिंसासत्यवचनं क्षमासन्तोष इत्यपि,, इति ॥ ४० ॥

———

भाषाटीका ।

अपनेही को पंडित मानने वाले उस वेनने जब उन ब्राह्मणों का अपमान किया तबहेभव्य! विदुरजी अपनीयाचना के भंग होनेसे उसपर उन्होंने क्रोधकिया ॥ ३० ॥

बोलनेलगे कि मारो मारो यह स्वभावहीं से दुष्टहै यहजीता रहेगा तो जगत्को जल्दी भस्म करदेगा ॥ ३१ ॥

यह खोटे आचरण वाला राजा के सिंहासन के योग्य नाहिं है जोंकि यज्ञके अधिष्ठाता विष्णुभगवान् की निंदा करताहै और निर्लज्ज है ॥ ३२ ॥

जिस ईश्वर के अनुग्रह मात्र होनेसे ऐसा ऐश्वर्य को पाया उस को इस अशुभ वेन के विना दूसरा कौन निंदा करेगा ॥ ३३ ॥

इस प्रकार क्रोध को प्राप्तभये मुनि लोग उस को मारने को उद्यत भये फिर भगवान की निंदा से स्वयं मरेहुये को हुंकार शब्दों से मार दिया ॥ ३४ ॥

ऋषि लोग जबअपने आश्रम को चलेगये तब सुनीथाने अपने पुत्रके शरीर को विद्या योग से रखकर शोच करके उसका पालना किया ॥ ३५ ॥

वेही मुनीलोग एक दिनसरस्वतीजी मे स्नान करके उसके किनारे पर होम करके बैठ कर कुछ भगवत्कथा करतेथे ॥ ३६ ॥

आकाश में उठेहुये बडेलोक भयंकर उत्पातों को देखकर कहने लगे कदाचित् विना राजाकी पृथवी का कुछ बुरा तो नही होने वाला है ॥ ३७ ॥

ऐसे मुनिजन विचार करतेथे उतनेही में लूट मचाकर दौडे हुये चोरोंकी उडाई धुल चारों तरफ से उडती देखपडी ॥ ३८ ॥

पृथवी पति के चलेजानेसे धन चोराने वालों का आपस में मारने वालों का किया हुआ मनुष्यों का उपद्रव को देखकर ॥ ३९ ॥

सब देशको चोरके वरोवर और निर्बल विना राजा का देख कर दोषको देखनेवालेहैं समर्थ भी हैं तो भी लोकों को निवारण नही किया मुनियोंने ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

शक्तानां क्षत्रियाणामवारणे दोष इति किं वक्तव्यम मह हगपि शान्तोऽपि ब्राह्मणोऽपि यदि दीनानां समुपेक्षको भवेत्तर्हि तस्यापि ब्रह्म तपः स्रवति ॥ ४१ ॥

अत उपेक्षादोषपरिहाराय नाङ्गस्येत्यादिविनिश्चित्य महीपतेरूरुं तरसा ममन्थुरित्यन्वयः संस्थातुं नाशं गन्तुं यद्वा ऋषय एव लुम्पतो लोकान्नावारयन् कथं भूताः हुंकारेणैव वेनं निवारयितुं शक्ता अपि तर्हि तस्मिंन्नवारणे तन्मरणादिदोषदर्शिनः नचोदासत चोरोपद्रुते दीनोपेक्षायां तपोहानिप्रसंगात् नचान्यं तन्निवारकं राजानमकुर्वन् अङ्गवंशोच्छेदस्यानर्हत्वात् अतो वेनस्यैव देहं ममन्थुरिति योज्यम् बाहुको वामनः ॥ ४२-४३ ॥

तमेवाह । काक इव कृष्णः महत्यौ हनू कपोलप्रान्तौ यस्य ह्रस्वौ पादौ यस्य ॥ ४४—४५ ॥

तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः।
येनाहरज्जायमानो वेनकल्मषमुल्बणम् ॥ ४६ ॥

* इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां
चतुर्दशोऽध्यायः ॥ १४ ॥

——○*○——

श्रीधरस्वामिकृतभावार्थदीपिका ।

गिरिः काननं च गोचर आश्रयो नतु पुरादिप्रवेशो येषां तत्र हेतुः येन कारणेनासावहरत्ततस्तस्य वंश्यास्तथा भूताः ॥४६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
चतुर्दशोऽध्यायः ॥ १४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

ब्राह्मण इति युग्मकम् स्रवति नश्यति ( १ ) ॥

अतः क्षत्रियाणां का वार्त्ता ब्राह्मणानामप्यवारणे दोषश्रवणात् पूर्वोणं क्षत्रियान्नावारयन् तेषामेव दोषः समजनि ब्राह्मणास्तु एवं विनिश्चित्य ममन्थुरिति वाक्यभेदोऽसंबद्धार्थः प्रतीयतेत्यरुचौ यद्वेति । तत्किं शक्तानामप्यवारणं किमर्थमित्यर्थः तन्मरणादिदोषे तपः क्षयदोषो दर्शितः ( २ ) ॥ ४१ ॥ ४२ ॥

विनिश्चित्येति युग्मकम् द्वितीययोजनायान्तु ब्राह्मण इति चतुष्कमिति ज्ञेयम् ॥ ४३—४५ ॥

ततः दोषहरणात् तथाभूताः पुरप्रवेशादिभोगहीनाः ॥४६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
दीपिन्याख्यदीपिकाटिप्पण्यां
चतुर्दशोऽध्यायः ॥ १४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वेवमृषीणामपि शक्तानां चोरोपद्रुतदीनलोकोपेक्षायां तपो नाशप्रसङ्गः स्यादिति ब्राह्मणः समदृगित्यनेनाशङ्क्य स्वतपसो नाशाभावार्थं राजान्तरमेव संपाद्य तन्मुखेनैव दीनपरित्राणं कार्यमित्यभिप्रायेण राजान्तरकरणोपायभूतमन्थनादिकं चक्रुरित्याह । नाङ्गस्येति द्वाभ्याम् । समदृक् सर्वस्य ब्रह्मात्मकत्वदर्शी तदुपयुक्तशमादिसंपन्नोऽपि ब्राह्मणो यदि दीनानां समुपेक्षकः स्यात् तर्हि तस्य ब्रह्म तप इति यावत् स्रवते गच्छति यथा भिन्नभाण्डस्थं जलं तद्वत् ॥ ४१ ॥

अत उपेक्षारूपदोषपरिहाराय नाङ्गस्येत्यादि विनिश्चित्य महीपतेरूरुं तरसा ममन्थुरित्यन्वयः राजर्षेरङ्गस्यैष वंशः संस्थातुं अवसानं प्राप्तुं नार्हति हियतोऽस्मिन्वंशे जाता नृपा अमोघवीर्याः तत्र हेतुः केशवाश्रयाः ॥ ४२ ॥

एवमित्थं विनिश्चित्य ऋषयः विपन्नस्य विपत्तिं प्राप्तस्य मृतस्येत्यर्थः ऊरुं तरसा बलेन ममन्थुः मथितवन्तः तत्र मथिते ऊरौ बाहुकोनाम नर आसीत् उद्बभूव ॥ ४३ ॥

बाहुकमेव विशिनष्टि । काकेति । काक इव कृष्णः अतीव ह्रस्वाङ्गः ह्रस्वौ बाहू यस्य महान्तौ हनू कपोलप्रान्तौ यस्य ह्रस्वा वाक् यस्य निम्नं नतं नासिकाग्रं यस्य रक्ते अक्षिणी यस्य ताम्रवर्णा मूर्द्धजाः केशा यस्य सः ॥ ४४ ॥

तं बाहुकं दीनं किङ्करोमीति दीनवादिनं च राज्यानर्हमभिप्रेत्य निषीदेति उपविशेत्युक्तवन्तः हे तात ! ततः निषीदेति ऋषिवचनात् स बाहुकः निषादोऽभवत् स च निषादजातीयोऽभवदित्यर्थः ॥ ४५ ॥

तस्य बाहुकस्य एव वंश्यास्ते नैषादा गिरिः काननं गोचरः आश्रयो नतु पुरादिप्रवेशो येषां ते अभवन् तत्र हेतुः येन कारणेनासौ बाहुको जायमानमुल्बणमुत्कटं कल्मषं पापमहरत् स्वीकृतवान् ततस्तस्य वंश्यास्तथा भूता इत्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
चतुर्दशोऽध्यायः ॥ १४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सामान्यमुक्त्वा जातिविशेषस्य दोषाधिक्यमाहुरित्याह । ब्राह्मण इति । ब्रह्मेति भावप्रधानो निर्देशः दुष्टोपद्रवेण दीनानां जनानामुपद्रवं दृष्ट्वा समुपेक्षकस्तूष्णीं भूतः स्यात्तस्य ब्रह्मत्वं ब्राह्मण्यं स्रवते नश्यति तन्निदर्शयन्ति । भिन्नेति । तस्मादस्माभिरनुष्ठेयमिति भावः ॥ ४१ ॥

इतोऽपीत्याहुरित्याह । नाङ्गस्येति । संस्थातुं नाशं प्राप्तुं कुत इत्यत उक्तममोघेति ॥ ४२ ॥

यथामृतमन्थने कालकूटमादावुदभूदेवं तत्रापीति भावेनाह । तत्रेति । तत्र मथ्यमाने सति बाहुको वामनः "कुब्जक्षुद्रदीर्घखर्वह्रस्ववामनबाहुका„ इत्यभिधानम् ॥ ४३ ॥

विशिनष्टि । काकेति । महाहनुः स्थूलकपोलः । निम्ननासाग्रोऽधोनतघ्राणशिराः ॥ ४४ ॥

ततो निषीदेति वचनात् ॥ ४५ ॥

सकदिति तं विशिनष्टि । योऽपाहरदिति । अनेन वेनश्च तुर्यांविभक्त इति ज्ञायत इति । तथाहि तामसो राजसः सात्त्विकस्तामसतामस इति । तत्र तामसांशो निषादः । राजसांशः स्वर्गस्य गन्ता । सत्त्वांशः पृथुः । तामसतामसांशो वेनः स्वयमन्ध

* अत्र विजयध्वजे अध्यायसमाप्तिर्नास्ति

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

न्मनोगतः । तदुक्तम्। ऽयंशोवेनः समुद्दिष्टः सत्त्वांशः पृथुतामगात्। रजोंऽशश्च दिवं प्राप निषादस्तामसोऽभवत्। स्वयम्वेनश्चतुर्थस्तु महातमसि पातितः। इति रजोंऽशोवेनो दिवङ्गत इति केनावगम्यत इतिचोद्यम्। "पापरूपी पृथग् जातोनिषादो वेनदेहतः। यस्मात्तस्मात्पृथोःपुत्राद्रजोवेनो दिवं ययौ,, इत्यनेन परिहृतमिति ग्रन्थान्तरसिद्धत्वादत्र न विस्तृतम्॥ ४६॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तर्ह्युपेक्षन्तामेव तत्राह। ब्राह्मण इति चतुष्कम्॥ ४१॥

तर्हि किं कर्त्तव्यं तत्राह। नाङ्गस्येत्यादि॥ ४२—४६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
चतुर्द्दशोऽध्यायः॥ १४॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

शकानां क्षत्रियाणामवारणे दोष इति किं वक्तव्यं समदृगपि शान्तोऽपि ब्राह्मणो दीनानां समुपेक्षको भवेत्तर्हि तस्यापि ब्रह्म तपः स्रवति॥ ४१॥

नन्वेवञ्चेत्तर्हि भृग्वादयस्ते मुनयः कथं निश्चिन्ताः स्थिताः सत्यं त एव स्वैर्दस्युवधप्रजापालनाभ्यां तपःक्षयविक्षेपादिकमालक्ष्य कोऽप्येको जनो राजा कर्त्तव्य इति व्यवस्थायां परामृश्याहुः। नाङ्गस्येति। संस्थातुं नष्टीभवितुं बाहुको वामन इति प्रथमं तद्देहान्मात्रांशः पृथग्भूय प्रकटीबभूवेत्यर्थः॥ ४२—४४॥

निषीदेति। नासौ राजयोग्य इति व्यवसायेत्यर्थः॥ ४५॥

येन कारणेनासौ जायमानो वेणकल्मषमहरत् जग्राह तेन स निषादो नीचजातिरभवत्। तस्य वंश्यास्तु नैषादा अति नीचा बभूवुरित्यन्वयः॥ ४६॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
चतुर्द्दशश्चतुर्थस्य सङ्गतः सङ्गतः सताम्॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

किञ्च दीनसमुपेक्षकस्य विप्रस्य तपोहानिमङ्गवंशस्य विनाशानर्हतां च विनिश्चित्य दीनरक्षार्थमङ्गवंशप्रवृत्त्यर्थञ्च के स्योरुं ममन्थुरित्याह। ब्राह्मणइतित्रिभिः। समदृगपि शान्तोऽपि ब्राह्मणोऽपि यदि दीनानां समुपेक्षको भवेत्तर्हि तस्यापि ब्रह्मतपः स्रवते॥ ४१॥

संस्थातुं नाशं गन्तुम्॥ ४२॥

विपन्नस्य मृतस्य बाहुको ह्रस्वकायः॥४३॥

महत्यौ हनूकपोलप्रान्तौ यस्य ह्रस्वौ पादौ यस्य सः॥४४-४५॥

येन स जायमानः वेनकल्मषं स्वस्मिन् अहरत् तेन हेतुना तस्य वेनकल्मषरूपिणो वंश्याः पुत्रपौत्रादयः गिरिकाननगोचराः गिरयः काननानि च गोचरा विषया वासस्थानानि येषां ते नृ पुरादिवासा इत्यर्थः॥४६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्द्दशाध्यायार्थप्रकाशः॥ १४॥

भाषाटीका।

क्योंकि ब्राह्मण समदृष्टि वाला है शान्त है दीनों का समुपेक्षक करनेवाला होवे तो उसका तप जैसे फूटे वर्तन मेंसे जल चलाजाता है तसा चलाजाता है॥ ४१॥

उनने विचार किया कि अंग राजर्षि का वंश नष्ट नहीं होना चाहिये क्योंकि इस वंश में केशव के आश्रय करनेवाले दृढवीर पराक्रम वाले राजा होते आयेहैं॥ ४२॥

इस प्रकारसे मुनि लोगोंने विचारकर मरे हुये वेन राजाके अंग को वेग से मर्दन किया तो उसमेंसे एक वामन नामा मनुष्य प्रकट भया॥ ४३॥

कौवा सरीका काला उसका वर्ण था बहुत छोटा अंग भुजा छोटे थे कपोल वडे थे पाद छोटे थे नासाग्र भाग नीचा था लाल आंखें थीं तांबे सरीके वाल थे॥ ४४॥

हे तात विदुरजी! वह पुरुष वडे दीन भावसे नम्रतासे बोला मैं क्याकरों ऐसे बोला तब तिससे मुनियों ने कहाकि ( निषीद ) बैठो तिसीसे वह निषाद तबसे होगया॥४५॥

उसके वंशवाले नैषाद जाति के भये वनपर्वतों में रहते हैं जिस निषाद के प्रगट होने से वेनका तीव्र पाप छूटगया॥४६॥

इतिश्रीभागवत चतुर्थस्कन्धचौदहवां अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत समाप्त॥१४॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे चतुर्द्दशोऽध्यायः॥ १४॥

## पञ्चदशोऽध्यायः ।

---:o:---

### मैत्रेय उवाच

अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः ।
बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ १ ॥
तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः ।
ऊचुः परमसंहृष्टा विदित्वा भगवत्कलाम् ॥ २ ॥

### ऋषय ऊचुः

एष विष्णोर्भगवतः कला भुवनपालनी ।
इयं च लक्ष्म्याः संभूतिः पुरुषस्यानपायिनी ॥ ३ ॥
अत्र तु प्रथमो राज्ञां पुमान् प्रथयिता यशः ।
पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः ॥ ४ ॥
इयं च सुदती देवी गुणभूषणभूषणा ।
अर्चिर्नामवरारोहा पृथुमेवावरुन्धती ॥ ५ ॥
एष साक्षाद्धरेरंशो जातो लोकरिरक्षया ।
इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥ ६

### मैत्रेयउवाच

प्रशंसन्ति स्म तं विप्रा गन्धर्वप्रवरा जगुः ।
मुमुचुः सुमनोधाराः सिद्धा नृत्यन्ति स्वःस्त्रियः ॥७॥
शङ्खतूर्यमृदङ्गाद्या नेदुर्दुन्दुभयो दिवि ।
तत्र सर्व उपाजग्मुर्देवर्षिपितृणां गणाः ॥ ८ ॥
ब्रह्मा जगद्गुरुर्देवैः सहासृत्य सुरेश्वरैः ।
वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिन्हं गदाभृतः ॥ ९ ॥
पादयोररविन्दं च तं वै मेने हरेः कलाम् ।
यस्याप्रतिहतं चक्रमंशः स परमेष्ठिनः ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः पञ्चदशे विप्रैर्मंथनाद्वेनबाहुतः ॥
जातस्य तु पृथोरुक्तमभिषेकार्हणादिकम् ॥ १ ॥ १-२ ॥
किमूचुरित्यत आह । एष इति चतुर्भिः। लक्ष्म्याः संभूतिः कला॥३॥
अत्र यः पुमान् स तु महाराजो भविष्यति ॥ ४ ॥
सुदती शोभनदन्तवती गुणानां भूषणानां च भूषणरूपा अवरुन्धती भर्तृत्वेन भजन्ती भविष्यति ॥ ५ ॥
अत्र हेतुः । एष इति । लोकस्य रिरक्षया रिरक्षयिषया ॥ ६ ॥
स्वः स्त्रियः अप्सरसो नृत्यन्ति स्म ॥ ७ ॥ ८ ॥
देवैः सहासृत्यागत्य वैन्यस्य पृथोः चिन्हं रेखात्मकं चक्रम् ॥ ९

श्रीधरस्वामिकृतभावार्थदीपिका ।

अप्रतिहतं रेखान्तरैरभिन्नं चक्रं यस्य चिह्नं स परमेश्वरस्यांशः ॥ १० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

अथ निषादलक्षणमलापगमानन्तरं तस्य शुद्धस्य ॥ १–२ ॥

ऋषय ऊचुरिति पाठः स्वाम्यसम्मतः किमूचुरिति व्याख्यानेन पौनरुक्त्यप्रत्यायनात् अनपायिनी स्वरूपशक्तित्वादाभिन्ना ॥ ३ ॥

अत्र यः पुमान् इति व्याख्यानात् अत्र यः प्रथम इत्येव स्वामिसम्मतः पाठः अयन्त्विति पाठे अथमित्यस्य स इत्यर्थकल्पना यच्छब्दस्याध्याहारः अत्रेत्यस्यापीति ज्ञेयम् ॥ ४ ॥

भूषणभूषणमित्येव स्वामिसम्मतः पाठः भूषणरूपेति रूपकतया व्याख्यानात् योगेनतु भूषणेत्यपि संगच्छते ॥ ५ ॥

अत्र पृथोरेव भजने हेतुः ॥ ६–७ ॥

तत्र पृथुगृहे ॥ ८ ॥

ब्रह्मेति सार्द्धकम् ॥ ९ ॥

यस्येत्यर्द्धकम अभिन्नमसंमिश्रम् ॥ १०—१३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथानन्तरं तस्य अपुत्रस्य महीपतेर्वेनस्य बाहुभ्यां पुनर्विप्रैर्मथ्यमानाभ्यां मिथुनं स्त्रीपुंसात्मकं समपद्यत उद्बभूव ॥ १ ॥

ब्रह्मवादिन ऋषयः तज्जातं मिथुनं दृष्ट्वा भगवत्कलां भगवदंशं विदित्वा अत एव परमसंतुष्टा ऊचुः ॥ २ ॥

किमूचुरित्यत आह । एष इति चतुर्भिः । एष पुमान् भगवतो विष्णोर्भुवनपालिनी कला भुवनपालनार्थं कलयावतीर्ण इत्यर्थः इयं स्त्री लक्ष्म्याः संभूतिः संभवः कलेत्यर्थः तत्र हेतुः पुरुषस्यानपायिनी पुरुषमविहाय जातेति भावः "राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि। अन्येषु चावतारेषु विष्णोरेषानपायिनी„ इतिवचनार्थोऽत्रानुसंधेयः ॥ ३ ॥

अयं मिथुने यः पुमान् सोऽयं राजा प्रथमः मुख्यः यतोऽयं यशः कीर्तिं प्रथयिता विस्तारयिता अतः पृथुश्रवाः पृथुकीर्तिसम्पन्नः पृथुर्नाममहाराजो भविष्यति नामशब्दः प्रसिद्धौ प्रथयति यशः पृथुरिति योगरूढिभ्यां प्रख्यातो महाराजो भविष्यतीत्यर्थः ॥ ४ ॥

इयं तस्मिन् मिथुने सेयं सुदती शोभनदन्तवती इतरस्याप्युपलक्षणमिदं वरारोहा स्त्री यतो गुणानां भूषणानां च भूषणा भूषणवदौज्ज्वल्यविशिष्टाश्रयभूतेत्यर्थः ततोऽर्चिर्नाम अर्चिते उज्ज्वलतीत्यर्चिरिति योगरूढिभ्यां प्रख्याता पृथुमेवावरुन्धती भविष्यति ॥ ५ ॥

अत्र हेतुः। एष इति। रक्षितुमिच्छारिरक्षा लोकस्य रिरक्षया साक्षाद्धरेरंश एव पृथुर्जातः आवेशावतारः तत्परा तदनन्याहों अत एवानपायिनी श्रीः लक्ष्मीरियं जज्ञे लक्ष्म्यंशजातेत्यर्थः ॥ ६ ॥

तं पृथुं विप्राः प्रशंसन्तिस्म प्रशशंसुः गन्धर्वश्रेष्ठा जगुः गानं कृतवन्तः सिद्धाः सुमनोधाराः पुष्पवृष्टीर्मुमुचुः स्त्रियः स्वः स्वर्गस्तत्रत्याः स्त्रियः अप्सरसः नृत्यन्ति ननृतुः ॥ ७ ॥

शङ्खादयो दुन्दुभ्यादयः विनेदुः तत्र पृथोः समीपे देवादीनां गणाः उपाजग्मुः आगताः गुरुः पिता हितोपदेष्टा च ब्रह्मा चतुर्मुखः देवैः सहागत्य वैन्यस्य वेनापत्यस्य पृथोर्दक्षिणे हस्ते गदाभृद्भगवतश्चिह्नं रेखात्मकं चक्रादिकं दृष्ट्वा ॥ ८ ॥

तथा पादयोररविन्दं च दृष्ट्वेत्यर्थः हरेः कलामंशं मेने अप्रतिहतं रेखान्तरैरभिन्नं चक्रं सुदर्शनं यस्य चिन्हं तस्य परमेष्ठिनः परमपुरुषस्यांशस्य व्यधिकरणेऽइमे षष्ठ्यौ परमेष्ठिनेति तृतीयान्तपाठे तु तस्य पृथोः परमेष्ठिना ब्रह्मणा ब्राह्मणैः सहाभिषेक आरब्ध इत्यन्वयः अंशः सन्निति पाठे अप्रतिहतं रेखान्तरैरसंकीर्णं चक्रं रेखात्मकं चक्रम् अंशः सन् सुदर्शनांशः सन् यस्य स्थितमिति शेषः अंशशब्दापेक्षया सन्निति पुलिङ्गनिर्देशः ॥ ९ ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ सत्त्वांशात्पृथोरुत्पत्तिं वक्ति । अथेति ॥ १ ॥ २ ॥

एष विष्णोः कलेति लिङ्गव्यत्ययेन मत्स्यादिवत्साक्षादंशतावचः साक्षादंशो नायं किंतु विशेषावेशात्तदंश इति मन्तव्यमिति ध्वनयति तदुक्तं "पृथुहैहयादयो जीवास्तेष्वाविष्टो हरिः स्वयम् । विशेषावेशतस्तेषु साक्षाद्वयंशतावचः । किस्तुधन्वन्तरि ऋषभकपिला मत्स्यपूर्वकाः आकूतिजैतरेयौ च धर्मजत्रयमेव च धन्वन्तरिर्हयग्रीवो दत्तात्रेयश्च तापसः।स्वयंनारायणस्त्वेते नाणुमात्रविभेदिनः। बलतो रूपतश्चैव गुणैरपि कथंचन„ इति इयंचलक्ष्म्याः संभूतिरिति विशेषणात् पृथुरपि हरेः साक्षादंश इतरथास्य तत्पतित्वायोगादिति बुद्धिव्यामोहो नकर्तव्य। "तत्रसन्निहिता श्रीश्च यत्र सन्निहितो हरिः। नास्यासन्निधिमात्रेण रमा पत्नीत्वमाव्रजेत् *साक्षादेवतुसाक्षाच्च हरेः सन्निधितः क्वचित्। गोप्यादिरूपा भर्त्रा विपरीतंनतु क्वचित„ इति निर्णायकवचनात् पुरुषोधातुपुनीपुन्नः पुंस्त्वात्मपरमात्मनोरित्यभिधानात् प्रकरणबलाच्च पुरुषं परमात्मानमपहाय नतिष्ठतीत्यभिप्रायेणोक्तं पुरुषस्यानपायिनीति लक्ष्मीविशेषणवती कापि रमणी भर्तृवियोगशून्या जातेति तात्पर्यमिति ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीनारायणचरणारविन्दमकरन्दानिषेविणां महतांपुरुषाणामिहामुत्रानभिमता अपि भगवदिच्छया सकलाः संपदो भवन्तीति निरूप्यतेऽस्मिन्नध्याये पृथुकथाकथनव्याजेन तत्रादौ विप्राणां पृथुप्रशंसाप्रकारं वक्ति । अत्रेति । तुशब्देन भेदवादिना पृथोर्हरेश्च महान्भेदोऽस्तीति सूच्यते एतदर्थद्योतकप्रमाणसद्भावात्तथाह्युक्तम्

ब्रह्मण्यनन्ते गरुडे रुद्रे कामे शचीपतौ ।
अनिरुद्धे मनौ चैव पृथौच कृतवीर्यजे ॥
नारदे चैवमाद्येषु विशेषात् सन्निधिर्हरेः ।
सुदर्शनादिष्वस्त्रेषु तथा सन्निहितो हरिः ।
नरलक्ष्मणौ बलश्चैव शेषस्यांशाः प्रकीर्तिताः ॥
तथा भरतशत्रुघ्नौ शङ्खचक्रावुदाहृतौ ।
प्रद्युम्नश्च कुमारश्च स्कन्दः कामांशकाः स्मृताः ।

इति । वैन्ये पृथौ सन्निहितो राजरूपी जनार्दन इति विशेषवचनेनायं वैन्यः पृथुः श्रीनारायणांशः अन्यस्तथा कश्चित् पृथुर्ना

---

*साक्षादेवेति । यत्रहरिः कृष्णादिरूपेणावतीर्णः तत्रसाक्षात् रुक्मिण्यादिरूपेण लक्ष्मीर्हरेःपत्नीत्वमाव्रजेत् विपरीतमिति हरिरन्यस्मिन्यत्रसंन्निहितः तत्र रमा साक्षादवतीर्य पत्नी नभवतीत्यर्थः ॥ दी०

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मा तत्रोच्यत इति शङ्का निर्मूलितेति ज्ञातव्यम् अत्रास्मिन् वर्षे राज्ञां गणनसमये प्रथमः कथं यतो यशः प्रथयिता अतः पृथयितृत्वात् पृथुर्नाममहाराजेत्यत्र टच्प्रत्ययाभावस्तेभ्यो वैशिष्ट्य द्योतनार्थः ॥ ४ ॥

सुदती शोभमानदन्ता अर्चिर्नामगुणैरर्चितत्वाद्भूषणैर्ज्वलितत्वात् "अर्चिर्मोज्वाला„इत्यभिधानं वरोवरणीय आरोहो नितम्बो यस्याः सा तयोक्ता अवरुन्धती पतित्वेन स्वीकुर्वाणा भविष्यतीत्यर्थः ॥ ५ ॥

एष पृथुः साक्षाद्धरेःश्रीनारायणस्यांशइति सत्तमुप्रथमेतिसूत्रादंशस्य सन्निधानस्य मुख्यं पात्रं लोकरिरक्षया जनरक्षणेच्छया यद्वा प्रत्यक्षसदृशोः साक्षादित्यधिधानाद्धरेः साक्षादंशः पृथोर्यांजाति स्तज्जातिसदृशजातिरूपेण सन्निहित इत्यर्थः तदुक्तं राजरूपीजनार्दन इति यतोहरेः पृथौ सन्निधानविशेषात्तदंशत्वं तस्माच्छ्रियोऽपि तथा वचनमित्यस्मिन्नर्थे हिशब्दः "हिहेताववधारणे„ इतियादवः अवधारणार्थत्वे उक्तस्मृतिविरोधः ॥ ६ ॥

गन्धर्वप्रवरादयस्तत्र द्विजप्रशंसासमये गानादिकं चक्रुरित्यन्वयः ॥ ७ ॥ ८ ॥

तत्र देवान्विशिनष्टि । ब्रह्मेति । तस्मिन् पृथौ सन्निहितां हरेः कलां मेन इत्यन्वयः ॥ ९ ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ऋषय ऊचुरिति बहुत्र किन्तु किंमूचुरिति पौनरुक्त्या स्वाम्यसम्मतोऽयम् ॥ १ ॥ २ ॥ ३ ॥

अयं राज्ञां भाविनां प्रथमः तेषां तदनुसारिचेष्टायां यशः प्रथयिता च। अतएव पृथुश्रवाः अत्र श्र.इति पाठस्तु स्वामि सम्मतः४॥

भूषणमित्येव स्वामिमतम् । रूपकत्वेन निर्देशात् ॥ ५ ॥ ६ ॥

मैत्रेय उवाचेति क्वचिन्नास्ति ॥ ७-८ ॥

ब्रह्मेति सार्द्धकम् ॥ ९—१६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तद्वेणबाहु मथनजन्मनः सार्धिपश्च पृथोः ।
अभिषेकोपायनाद्याहृतिः पञ्चदशोऽभवत् ॥ ० ॥

अथात्र पित्र्यंशो विष्णुयज्ञप्रभावश्च कीदृश उद्धवेदित्यपेक्षायां मुनिभिर्मथनमाह । अथेति ॥ १—२ ॥

सम्यक् भूतिः सम्पत्तिस्तद्रूपा लक्ष्मीः ॥ ३ ॥

बाहुभ्यामिति चात्र तेजो भगवत्प्रभावश्च क्षत्रियस्य बाहोरेव तिष्ठतीत्यभिप्रायेण अत्र यः पुमान् प्रथमः स प्रथयितेति निरुक्त्या पृथुः ॥ ४ ॥

गुणानां भूषणानाञ्च भूषणरूपा अवरुन्धती भक्त्या वशीकुर्वती भविष्यति ॥ ५ ॥

रिरक्षया दिदृक्षिषया ॥ ६ ॥

सुमनसां पुष्पाणां धारा इव धारा मुमुचुः ॥ ७ । ८ ॥ ९ ॥

अप्रतिहतं रेखान्तरैरभिन्नं पाणितल इत्यर्थः । परमेष्ठिनः परमेश्वरस्य ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चदशे श्रीपृथोर्जन्माद्युत्सवमाह । अथेति । समपद्यत प्रादुरभूत ॥ १ ॥ २ ॥

सम्भूतिः कला ॥ ३ ॥

यतो यशः प्रथयिता अतः पृथुश्रवाः विपुलकीर्तिः पृथुर्नाममहाराजो भविष्यति ॥ ४ ॥

गुणा एवभूषणानि यासां ताः गुणाभूषणास्तासामपि भूषणचूडामणितुल्या पृथु मेवावरुन्धती पतित्वेनाश्रयन्ती सती अर्चिर्नाममहाराज्ञी भविष्यति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

आसुत्यागत्य चिह्नं रेखारूपं चक्रम् ॥ ९ ॥

अप्रतिहतं रेखान्तरैरदूषितम् ॥ १० ॥

भाषाटीका ।

मैत्रेयजी बोले इसके अनन्तर अपुत्री उस राजाके दोनों भुजों को जब मुनियों ने फिर मर्दनकिया तब स्त्री पुरुषका जोडा उत्पन्न हुआ ॥ १ ॥

ब्रह्मवादि मुनि पैदा भये जोडा को देख कर भगवान्‌की कला जानकर बडे सन्तोष से बोले ॥ २ ॥

ऋषि बोले यतो साक्षात् भगवान् विष्णुकी संसार को रक्षा करने वाली कला है और ये दूसरी साक्षात् लक्ष्मी की कलाहैं जो सदा विष्णुके साथ रहती है ॥ ३ ॥

इन दोनों में पहिला पुरुष है सब राजों मे प्रथम होगा संसार में यशको फैलावैगा बडे भारी यश वाला पृथु नाम महाराज होगा ॥४॥

यह जो सुंदर दांतो वाली देवी है गुणों की तथा भूषणों की भी भूषण रूप है यह उत्तम रूप वाली अर्चि इसका नाम है यह पृथु महाराज की अनुवर्तन करने वाली होगी ॥ ५ ॥

पृथु महाराज साक्षात् हरि के अंश लोककी रक्षाकरने को प्रगट भये हैं एअर्चिः भगवत् परा लक्ष्मी उत्पन्नभई जो सदा साथ रहने वाली है ॥ ६ ॥

मैत्रेयजीबोले ब्राह्मण लोगउनकी प्रशंसा करने लगे श्रेष्ठ गन्धर्वगान करने लगे सिद्धलोग फूलोंकी धारवर्षाने लगे स्वर्ग की अप्सरा नाच करने लगीं ॥ ७ ॥

आकाश मे शंख मृदङ्ग नगारा आदि सब बाजा बजे उहांपर देवगण पितृगण ऋषिगण सबही उपस्थित भये ॥८॥

जगद्गुरुब्रह्माजीने इन्द्रादि देवतोंके सहित आकर वेन पुत्र के दहिने हाथ मे भगवान् के सुदर्शन का रेखा रूप चिन्ह को देखा ॥ ९ ॥

दोनों चरणों मे कमल का चिन्ह देखकर उनको हरि का अंश समुझा क्योंकि जिसके दूसरे रेखों से नहीं मिला चक्र का रेखाहोवै वह परमात्मा का अंश होता है ॥ १० ॥

तस्याभिषेक आरब्धो ब्राह्मणैर्ब्रह्मवादिभिः ।
आभिषेचनिकान्यस्मा आजह्रुः सर्वतो जनाः ॥ ११ ॥
सरित्समुद्रा गिरयो नागा गावः खगा मृगाः ।
द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम् ॥ १२ ॥
सोऽभिषिक्तो महाराजः सुवासाः साध्वलंकृतः ।
पत्न्यार्चिषालंकृतया विरेजेऽग्निरिवापरः ॥ १३ ॥
तस्मै जहार धनदो हैमं वीरवरासनम् ।
वरुणः सलिलस्रावमातपत्रं शशिप्रभम् ॥ १४ ॥
वायुश्च वालव्यजने धर्मः कीर्तिमयीं स्रजम् ।
इन्द्रः किरीटमुत्कृष्टं दण्डं संयमनं यमः ॥ १५ ॥
ब्रह्मा ब्रह्ममयं वर्म भारती हारमुत्तमम् ।
हरिः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम् ॥ १६ ॥
दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाम्बिका ।
सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम् ॥ १७ ॥
अग्निराजगवं चापं सूर्यो रश्मिमयानिषून् ।
भूः पादुके योगमय्यौ द्यौः पुष्पावलिमन्वहम् ॥ १८ ॥
नाट्यं सुगीतं वादित्रमन्तर्धानं च खेचराः ।
ऋषयश्चाशिषः सत्याः समुद्रः शङ्खमात्मजम् ॥ १९ ॥
सिन्धवः पर्वता नद्यो रथवीथीर्महात्मनः ।
सूतोऽथ मागधो वन्दी तं स्तोतुमुपतस्थिरे ॥ २० ॥
स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान् ।
मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत् ॥ २१ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आभिषेचनिकान्यभिषेकसाधनानि ॥ ११-१२-१३ ॥

हे वीर ! वरासनमुत्तमासनम् सलिलस्य स्रावो यस्मात् १४॥

द्वे वालव्यजने ॥ १५ ॥

ब्रह्ममयं वेदमयं वर्म कवचं तत्पत्नी श्रीः श्रियं सम्पदम् ॥१६॥

दशचन्द्राकाराणि बिम्बानि कोशे यस्य तम् असिं खड्गं शतचन्द्रं चर्मरूपाश्रयमतिसुन्दरम् ॥ १७ ॥

अजस्य गोश्च शृङ्गाभ्यां निर्मितं चापं योगमय्यौ पादस्पर्शमात्रेणाभीष्टदेशप्रापिके ॥ १८ ॥

नाट्यादिकौशलं खेचराः आत्मजं स्वप्रभवम् ॥ १९ ॥

तं स्तोतुमुपस्थिताः ॥ २० ॥

स्तावकान् स्तोतुमुद्यतान् अभिप्रेत्य ज्ञात्वा ॥२१॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

तस्मै इति सार्द्धषट्कम् किन्तु बहुवाक्यैरेकवाक्यत्वात्मध्ये... विज्ञेयाः ( १ ) ॥ १४ ॥ १५ ॥

अव्याहतामविच्छिन्नाम् (२) ॥ १६ ॥

चर्मेति ढालेति व्याख्यातम् (३) ॥ १७ ॥ १८ ॥

नाट्यादिदानस्यासम्भवाद्धचपायात्तत्कौशलं व्याख्या... ( ४ ) ॥ १९ ॥

सिन्धव इत्यर्द्धकम् रथवीथीरथाश्वादिमार्गान् ( ५ ) ॥ २० ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका

आभिषेचनिकानि अभिषेकसाधनानि सर्वतो दिग्भ्यो जनाः अस्मै पृथवे आजह्रुः आहृतवन्तः ॥ ११ ॥

सरितः समुद्राश्च गिरयो हिमवदादयः नागाः सर्पाः खगाः शकुनयो धौरादयश्चेत्येवं सर्वभूतान्युपायनं सान्मानिकं समाजह्रुः ॥ १२ ॥

स महाराजः पृथुरभिषिक्तः सुवासाः कौशेयादिमहार्हवस्त्रः स्रग्वी स्रग्वैजयन्ती अस्यास्तीति स्रग्वी अलंकृतः किरीटाद्याभरणैरिति शेषः तथालंकृतया भार्यया अर्चिषा सह अपरोऽग्निरिव रेजे रराज ॥ १३ ॥

सर्वभूतानि समाजह्रुरुपायनमित्येतत्प्रपञ्चयति । तस्मा इति । हेवीर ! तस्मै पृथवे धनदः हैमं हिरण्मयं श्रेष्ठं सिंहासनं जहार सलिलस्य स्रावो यस्मात्तथा भूतं शशिप्रभमातपत्रं वरुणः आजहारेत्यनुषङ्गः ॥ १४ ॥

वायुर्द्वे बालव्यजने कीर्त्तिमयीं कीर्त्तिप्रचुरां कीर्त्तिसंपादकत्वेन तत्प्राचुर्य्यमत्र विवक्षितं स्रजं धर्म आजहारेति सर्वत्रानुषङ्गः संयमनं दुष्कृद्विषयसमीचीननियमनसाधनं दण्डम् ॥ १५ ॥

ब्रह्मा चतुर्मुखः ब्रह्ममयं वेदमयं ब्रह्मप्रवचनापादकसामर्थ्यवत्त्वेन ब्रह्मप्राचुर्यमत्र विवक्षितं वर्म कवचं भारती सरस्वती उत्तमं महार्हहारं हरिः उपेन्द्रः सुदर्शनचक्रं यदा पृथौ भगवदंशोऽनुप्रविष्टः तदेदं चक्रमपि सुदर्शनांशेनानुप्रविष्टमिति भावः तत्पत्नी हरिपत्नी श्रीः अव्याहतां श्रियं सम्पदम् ॥ १६ ॥

दशचन्द्राकाराणि बिम्बानि कोशे यस्य तमसिं खड्गं रुद्र आजहार पत्नी अम्बिका शतं चन्द्राकाराणि बिम्बानि यस्मिन् तच शतचन्द्राख्यं खेटापरपर्य्यायश्चर्मेत्यर्थः सोमश्चन्द्रः अमृतमयान् अमृतस्राविरत्वेन तत्प्राचुर्य्यमत्र विवक्षितम् अश्वानाजहार रूपाश्रयमतिसुन्दरं रथम् ॥ १७ ॥

अग्निराजगवमजस्य गोश्च शृङ्गाभ्यां निर्मितं चापं सूर्यः रश्मिमयान् रश्मिवत्सर्वत्र प्रवेशसामर्थ्येन तत्प्राचुर्य्यमत्र विवक्षितं भूर्धरणी योगमय्यौ योगवदभीष्टदेशप्रापणसमर्थत्वेन तत्प्राचुर्य्यमत्र विवक्षितम् अन्वहमहरहर्बलिं पूजार्हं पुष्पं द्यौराजहार ॥ १८ ॥

खेचराः सिद्धसाध्यगन्धर्वादयः नाट्यादीन्याजन्हुः प्रापयामासुः ऋषयः सत्याः आशिषः आजन्हुः कृतवन्त इत्यर्थः समुद्रः आत्मजं स्वस्माद्भवं शङ्खमाजहार ॥ १९ ॥

सिन्धवो नदाः नद्यः पर्वताश्च महात्मनः पृथोः रथवीथीः रथमार्गान् आजन्हुः ददुः धातूनामनेकार्थत्वाद्दाने वृत्तिः ततः सूतादयस्तं पृथुं स्तोतुमुपतस्थिरे उप समीपे स्थितवन्तः ॥ २० ॥

तान् सूतादीन् स्तावकान् स्तोतुमुद्युक्तानभिप्रेत्य प्रतापवान् महाप्रभावः वेनस्यापत्यं पृथुः मेघनिर्ह्लादया मेघगर्जनवद्गम्भीरया वाचा प्रहसन् स्मितपूर्वमिदं वक्ष्यमाणमब्रवीत् ॥ २१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एवं प्रशस्य ब्राह्मणैः किमकारीति तत्राह । तस्येति । अभिषेकसाधनानि स्वयं संपादितानि किं वान्यैरित्यत आह । आभिषेचनिकानीति ॥ ११ ॥

तत्रोपायनानि क आजह्रुरिति तत्राह । सरिदिति ॥ १२ ॥ १३ ॥

न केवलं सरिदादय उपायनन्ददुः किन्त्वन्येलोकपालादयोपीत्याह । तस्मा इति ॥ १४ ॥ १५ ॥

तस्य हरेः पत्नी लक्ष्मीः ॥ १६ ॥

नाम्ना दशचन्द्रं खड्गं त्वष्टा विश्वकर्मा रूपाश्रयं रथम् ॥ १७ ॥

योगमयेऽणिमादियोगसाधने ॥ १८ ॥

अन्तर्धानमदृश्यतामात्मजमात्मनोजातम् ॥ १९ ॥

रथवीथी रथमार्गान् । यथारमविंराजा निषेवणीय इति भावेन सूतादीनामुपस्थानप्रकारं वक्ति । सूतोऽथेति ॥ २० ॥

पृथोर्निरहङ्कारत्वप्रकटनाय वक्ति । स्तावकानिति । मेघनिर्ह्लादवत् मेघध्वनिवत् ध्वनिर्यस्याः सा तया तया ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

सूत इत्यर्द्धकम् ॥ २०—२३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ब्रह्ममयं वेदमयं वर्म कवचं । तत्पत्नी लक्ष्मीः श्रियं सम्पत्तिम् ॥ १६ ॥

दशचन्द्राकाराणि बिम्बानि कोशे यस्य तमसिं खड्गम्। शतचन्द्रं चर्म । रूपाश्रयमतिसुन्दरम् ॥ १७ ॥

अजस्य गोश्च शृङ्गाभ्यां निर्मितं चापम् । योगमय्यौ पादुके ईमात्रेणाभीष्टदेशप्रापिके ॥ १८ ॥

आत्मजं स्वभवम् ॥ १९——२१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

आभिषेचनिकानि अभिषेकार्हाणि वस्तूनि ॥ ११ ॥ १२ ॥ १३ ॥

वीरवरासनं महाराजासनम् सलिलस्रावं सलिलस्य पीयूषस्य स्रावोयस्मात्तथाभूतम् ॥ १४ ॥

बालव्यजने चामरद्वयम् ॥ १५ ॥

भारती सरस्वती तस्य हरेः पत्नी श्रीः अव्याहतामक्षयां श्रियं सम्पदम् ॥ १६ ॥

दशचन्द्रा इव चन्द्रा यस्मिन् तथा तमसिम् खड्गम् शतचन्द्रं खड्गसाहचर्य्याचर्मेत्यध्याहारः ॥ १७ ॥

अजानां गवां च शृङ्गैर्निर्मितमाजगवम् योगमय्यौ यथेष्टगतिसाधनभूते ॥ १८ ॥

आत्मजं स्वोद्भवम् ॥ १९ ॥ २० ॥ २१ ॥

---

भाषाटीका।

ब्रह्मवादिब्राह्मणोंने उनके अभिषेकका आरंभ किया अभिषेककी सामग्री कों सब लोगोंने ला दिया ॥ ११ ॥

नदी समुद्र पर्वत नाग गऊ पक्षी मृग अंतरिक्ष पृथवी और सब प्राणि ए सब भेटों को लाये ॥ १२ ॥

सो पृथु महाराज अभिषेक कर के सुंदर वस्त्र को पहर कर सुंदर अलंकार धारण कर के अलंकार धारण की हुई अर्चित

पृथुरुवाच

भोः सूत ! हे मागध ! सौम्य ! वन्दिँल्लोकेऽधुना स्पष्टगुणस्य मे स्यात् ।
किमाश्रयो मे स्तव एष योज्यतां मामय्यभूवन् वितथा गिरो वः ॥ २२ ॥
तस्मात्परोक्षेऽस्मदुपश्रुतान्यलं करिष्यथ स्तोत्रमपीच्यवाचः ।
सत्युत्तमःश्लोकगुणानुवादे जुगुप्सितं न स्तवयन्ति सभ्याः ॥ २३ ॥
महद्गुणानात्मनि कर्तुमीशः कः स्तावकैः स्तावयतेऽसतोऽपि ।
तेऽस्याभविष्यन्निति विप्रलब्धो जनावहासं कुमतिर्न वेद ॥ २४ ॥
प्रभवो ह्यात्मनः स्तोत्रं जुगुप्सन्त्यपि विश्रुताः ।
ह्रीमन्तः परमोदाराः पौरुषं वा विगर्हितम् ॥ २५ ॥
वयं त्वविदिता लोके सूताद्यापि वरीमभिः ।
कर्मभिः कथमात्मानं गापयिष्याम बालवत् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां
पञ्चदशोऽध्यायः ॥ १५ ॥

———○✻○———

भाषाटीका।

महारानी के सहित विराजमान होने से दूसरे अग्नि देवता से शोभित भये ॥ १३ ॥

हे वीर विदुर जी उन को कुबेर जी ने उत्तम आसन दिया वरुण देवता ने जल झरता हुआ चंद्रमा सरी का एक छत्र दिया ॥ १४ ॥

वायु ने छोटे दो पंखा दिये धर्म ने कीर्ति मयी माला दीनी इंद्र ने उत्तम किरीट दिया यमराज ने नियमन कर ने का दंड दिया ॥ १५ ॥

ब्रह्माजीने ब्रह्ममयकवच पहिराया सरस्वतीने उत्तमहार पहिराया उपेंद्र भगवान्ने सुदर्शन चक्र दिया लक्ष्मीजीने अचल लक्ष्मीदीनी ॥ १६ ॥

दशचन्द्रमा सरीका तरवार को महादेवजीने दिया शतचन्द्रमासरीका ढालगपार्वतीने दिया चन्द्रमानेअमृतमयघोडादिये विश्वकर्माने सुन्दर रथ दिया ॥ १७ ॥

अग्निने अजगवधनुषदिया सूर्यने किरणमयबाण दिये पृथिवी ने योग मयखडाऊं दिये अंतरिक्षने निरन्तर फूलोंकी वर्षाकरी १८॥

खेचरोंने नाच गान वाजा अंतर्धान विद्यादी ऋषियोंने सत्य आशीर्वाद दिये समुद्रने अपना शंख दिया ॥ १९ ॥

सिन्धु पर्वत नदी इनोंने महात्मा पृथुको रथके मार्गदिये फिर सूत मागध वन्दिजन उनको स्तुति करने लगे ॥ २० ॥

प्रतापवाले वेण पुत्र पृथुजीने उनकी स्तुति करते जानकर हँसकरके मेघकीसी गंभीर वाणीसे उनसे बोले ॥ २१ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

लोके स्पष्टगुणस्य सतो मे स्तुतिः स्यात् अधुनातु किमाश्रयो मे स्तवो योज्यताम् अतो वो गिरोऽधुना मयि वितथा माभूवन् यद्वा लोकेऽधुना स्पष्टगुणस्य मे किमाश्रयः स्तवः स्यात् अत एव क्रियमाणः स्तवो मे मदन्यस्य योज्यतां ननु मे वितथाभिधानापत्तेरित्यर्थः ॥ २२ ॥

तस्मात्परोक्षे कालान्तरे स्पष्टेषु गुणेषु सत्स्वस्मादुपश्रुतानि यशांसि प्रतिस्तोत्रमलमत्यर्थं करिष्यथ हे अपीच्यवाचो मधुरगिरः सभ्यैः प्रेरिता वयं त्वामेव स्तुम इति चेत्तत्राह । उत्तमश्लोकस्य गुणानुवादे कार्ये सति जुगुप्सितमर्वाचीनं नास्तवयन्ति ॥ २३ ॥

ननु संभावितैरेव गुणैरात्मानं जनः स्तावयतीति चेत्तत्राह । महतां गुणानात्मनि संपादयितुं शक्तोऽप्यसतो गुणान्सम्भावनामात्रेण कः स्तावयते यद्वा आदावेव सतोऽपि कः स्तावयते स्वत एव प्रख्यातिसिद्धेः अन्यस्तु मिथ्यागुणस्तुतिश्लाघी मन्द इत्याह । त इति । यद्ययं शास्त्राभ्यासादिकमकरिष्यत्तर्ह्यस्य ते विद्यादयो गुणा अभविष्यन्निति क्रियातिपत्त्या विप्रलब्धो जनानामवहासं न वेद ॥ २४ ॥

किञ्च प्रभवोऽपि विश्रुता अपि ह्रीमन्तोऽपि जुगुप्सन्ति वेति दृष्टान्ते यथातिस्तुतौ क्रियमाणायां विगर्हितं ब्राह्मणवधादि पौरुषं निन्दन्ति तथोचितामपि स्तुतिं न सहन्त इत्यर्थः ॥ २५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वरीमभिरिति । दीर्घत्वमार्षं भवितृप्रधानोऽयं निर्देशः वरिष्ठैः कर्मभिरविदिता इत्यर्थः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
पञ्चदशोऽध्यायः ॥ १५ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

सूनइत्यर्द्धकम् पूर्वार्थेऽधुनेत्यस्योत्तरार्द्धेऽन्वितत्वेनास्थानपतितत्वं मेहत्य स्याधिकत्वं वाक्यभेदश्चेत्यस्वरसाद्यद्वेति हेतोर्थज्ञत्वादित्यर्थोक्तिः ॥ २१—२२ ॥

किञ्च परोक्षेचा परपक्षेच तदेव युक्तमित्याह । सतीति ॥ २३ ॥

पूर्वार्थेऽपेरस्थानपतितत्वमकारप्रश्लेषगौरवञ्चातोयद्वेति ॥२४-२५॥

भवति पूर्वं तिष्ठति पश्चाद्विकृतिं गच्छति इति भविता प्रकृतिस्तत्प्रधानोऽयं वरिमशब्दः अन्यथा वरत्वकर्मणोस्सामानाधिकरण्यासम्भवात् ॥ २६ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
दीपिन्याख्यदीपिकाटिप्पण्यां
पञ्चदशोऽध्यायः ॥ १५ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तमेवाह हे सूतादयः । लोकेऽधुनास्पष्टगुणस्य सतो मे मम एषः युष्माभिः करिष्यमाणः स्तवः किमाश्रयो योज्यतां लोके प्रख्याताहि गुणाः स्तोत्रविषया अप्रख्यातगुणस्य मे स्तवो वितथा भावाद्वितथः स्यात् अतो वोयुष्माकं स्तुतिगिरः मयि वितथा माभूवन् युष्माकं चानिष्टापत्तिः स्यादिति भावः ॥ २२ ॥

तस्मात्परोक्षे कालान्तरे स्पष्टगुणेषु सत्सु अस्मानुपाश्रितानि यशांसि प्रतिस्तोत्रमलमत्यर्थं करिष्यथ हेअपीच्यवाचः! मधुरवाचः सूतादयः! अनवसरे समीरितानां मधुरगिरां शोभानोपपद्यत इत्यभिप्रायः सभ्यैः प्रेरिता वयं त्वामेव स्तुम इति चेत्तत्राह उत्तमश्लोकस्य भगवतो गुणानुवादेन कार्ये सति जुगुप्सितमनुत्तमश्लोकगुणानुवादमीदृशं सभ्या न स्तावयन्ति स्तुतिं न कारयन्ति ॥ २३ ॥

ननु गुणानामधुनास्पष्टत्वेऽपि भविष्यद्गुणैरात्मानं जनः स्तावयेदिति चेत्तत्राह । महद्गुणानिति । अधुनाऽसतोऽपि महता गुणानात्मनि स्वस्मिन् कर्तुं सम्पादयितुमीशः शक्तोऽपि स्तावकैः स्तोतृभिः कः स्तावयते स्तुतिं कारयते न कोऽपीत्यर्थः यदि कश्चिदेते गुणाः अभविष्यन्निति करिष्यमाणाः शत्रुजयादिभिः शौर्यादयो गुणाः स्वस्मिंश्च भविष्यन्तीति बुद्ध्यात्मानं स्तावयते स कुमतिः विप्रलब्धोऽधिक्षिप्तो जनानामपहासं न वेद ॥ २४ ॥

सुमतयः स्वात्मस्तुतिं निन्दन्तीत्याह । प्रभव इति । परमोदाराः निरतिशयौदार्यादिगुणसंपन्नाः प्रभवोऽपि सद्गुणानात्मनि सम्पादयितुं शक्ता अपि विश्रुताः प्रख्याता अपि ह्रीमन्तो लज्जायुक्ताः सन्तः आत्मनः स्वस्य विगर्हितं पौरुषं तद्विषयं स्तोत्रं वा जुगुप्सितं निन्दन्ति ॥ २५ ॥

हेसूताद्याः! सूतप्रभृतयः लोके अविदिता अप्रख्याता वयन्तु वरिमभिः नितरां वरिष्ठैः दीर्घ आर्षः सूताद्यापीति पाठे सूतेति जात्यभिप्रायैकवचनं तच्च मागधानामप्युपलक्षणं हे सूतादयः अद्यापि अधुनापि वरीमभिः वरिष्ठैः कर्मभिर्लोके अविदिता वयमतः कथमहं बालवदात्मानं गापयिष्यामि शिष्यात्वे अर्तिह्रीब्लीरीत्यादिना पुक् तस्माल्लुडुत्तमैकवचनं स्तावयिष्यामीत्यर्थः ॥ २६ ॥

इतिश्रीमद्भागवतेमहापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायां
पञ्चदशोऽध्यायः ॥ १५ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे सूताद्याः! योज्यतां स्तुतिं प्रयुञ्जतां वोयुष्माकमेषस्तवोमे किमाश्रयः कं गुणमाश्रित्य वर्तमानः स्यादित्यन्वयः तव शौर्यादिगुणमाश्रित्य वर्तत इतितत्राह । लोकइति । अस्पष्टगुणस्याप्रकाशितपराक्रमादिगुणस्य यद्वा यद्यहं प्रख्यातगुणः स्यां तर्हिप वः स्तवोयोज्यताम् । नचतथा तस्मात्किमाश्रयोयोज्यते यत एवमतो वोमयि प्रयुक्तागिरो वितथा माभूवन्नित्यन्वयः ॥ २२ ॥

किमिदानीं फलितमत्राह । तस्मादिति । यस्मादिदानीमनाविष्कृतगुणा वयं तस्मादीडयवाचो यूयं परोक्षे कालान्तरे कृतविक्रमानन्तरमस्मदुपाश्रितान्यस्मद्विषयाणि कर्माण्युपाश्रित्यालमत्यर्थं स्तोत्रं करिष्यथेत्यन्वयः यद्वा कथं कारंचवं वितथाः स्युरस्मद्गिर इति तत्राह । तस्मादिति । यतो वयमप्रकाशितगुणास्तत्र प्रवर्तमानाभिधयाणामसत्त्वाद्वितथ्यमालभन्ते तस्मात्तद्दोषपरिहारार्थमस्मदपरोक्षे चास्मन्निकटेऽस्मदूदूरप्रदेशे वर्तमानो योहरिस्तस्येड्यवाचो हरेराश्रितानि चरितान्यङ्गीकृत्य स्तोत्रमलंकरिष्यथ भूषितं कुर्वन्तु अन्यथा दूषितमेव स्यादतस्तस्य गुणानां नित्यत्वात्तद्विषया युष्मद्गिरः सफलाः स्युः अविद्यमानकथका वन्दिनः परिकीर्तिता इतियुष्मद्दोषोऽपिपरिहृतः स्यादिति भाविनो गुणान् समूह्य स्तुमइति तत्राह । सतीति । उत्तमश्लोकगुणानामनुवादे सत्यभ्यर्हितेऽपि सभ्या आत्मस्तवनं जुगुप्सितमिति न स्तावयन्ति आत्मप्रशंसां मरणमिति स्मृतेः ॥ २३ ॥

वयं तत्र तत्र तं प्रभुंस्तुत्वा ततः फलं लभामहे तत्कथमित्याशङ्क्य तन्मूर्खविषयं न विद्वद्विषयमित्याशयेनाह । महद्गुणानिति । अनभिव्यक्तत्वेन बाल्येऽविद्यामानानपि महतां पृथिव्यादीनां क्षमादिगुणानात्मनि कर्तुमिच्छन् प्रकाशयितुकामः कोविद्वांस्तावकैर्भृत्यादैःस्तावयते न कोऽपीत्यन्वयः कथं तन्मूर्खविषयमभूदिति तत्राह । सवाइति । यद्वा यदुक्तं हरिविषयं स्तोत्रमलं करिष्यथेति तद्गुणसंबद्धं स्तोत्रं निर्गुणे हरौ कथं संगच्छते तथात्वे वोस्मद्गिरां वैतथ्यं सुलभं स्यादितितत्राह । सतीति । उत्तमश्लोकस्य हरेर्गुणानामनुवादे सति स्तोतृणां पापहरत्वेन प्रशस्ते । सभ्याः पण्डिताः विषमूत्रपूर्णमद्वपुरिति कायेति जुगुप्सितमात्मानं न स्तावयन्तीत्यन्वयः सभ्येष्वेकोऽपि तथाविधः किं न स्यादिति शङ्कमानो मूर्खपक्षेति भावेनाह । महद्गुणानिति । आत्मन्यसतोमहतःअणोरणीयान्महतोमहीयानिति श्रुतिसिद्धस्य हरेर्गुणानौदार्यादिकानात्मनि कर्तुमिच्छन् स्तावकैः कोविद्वान् स्तावयते अपिपदं तो[illegible] जुगुप्सितमित्यनुकर्षति । किमिन्त्याक्षेप इत्यतो लोका[illegible]वादत्रिपयत्वादित्याशयेनाह । सवाइति ।२४।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

सद्गुणाः प्रभवोऽप्यात्मस्तुतिं जुगुप्सन्ते किमुत वयमितिभावे नाह। प्रभवोऽपीति। विद्यमानगुणासंदृब्धस्तोत्रं प्रत्यक्षप्रमितं पारमार्थिकं पौरुषमपि निन्दन्तीत्यर्थः ॥ २५ ॥

वरीमभिर्वरणीयैः श्रेष्ठैरित्यर्थः ॥ २६ ॥

इतिश्रीभागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तस्मात् परोक्षे काले न व्यवधाने देशे न वा स्पष्टेषु गुणेषु सत्सु अस्माकमुपश्रुतानि यशांसि प्रतिस्तोत्रमलमत्यर्थं करिष्यथ हे अपीच्यवाचः । मधुरगिरः अपीच्येति चित्सुखः । ईड्याः पूज्या वाचो येषाम् । अथ परोक्षेचापरोक्षे चैतदेव युक्तमित्याह । सतीति ॥ २३ ॥

अन्यस्तु सर्वथा तुच्छ इत्याह । महदिति ॥ २४ ॥

अन्येतु प्रभवस्तावयितुं योग्याः स्वस्तोत्रं जुगुप्सन्ति । तथापि विश्रुताः तत्तद्गुणैरविख्याताः ते के तत्राह । ह्रीमन्तः परमा महान्तश्चेति ॥ २५ ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

लोके अधुना अस्पष्टगुणस्य मे स्तवोऽयं किमाश्रयः स्यात् कं गुणं मे दृष्ट्वा स्तुध्वे इत्यर्थः । स्तवं विना स्थातुं न शक्नुम इति चेत् अमे मद्विधस्य कस्यचिद्योग्यजनस्य एष क्रियमाणः स्तवो योज्यतां ननु मे । ननु कोऽत्र ते दोषस्त्वं किं बिभेषीति तत्र न मेदोषः किन्तु युष्माकमेव दोषप्रसक्तेर्बिभेमीत्याह । मेति । मयि विषये वो गिरो माऽवितथा भवन्तु ॥ २२ ॥

ननु भो गुणरत्नाकर ! भवतो निखिला एवैते गुणाः स्पष्टी भविष्यन्त्येवेति ह्यस्त्वेव स्तुम इति चेत्तत्राह। तस्मादिति । यस्मादुन्मद्गुणा भविष्यन्ति तस्मात् अस्मदुपश्रुतानि यशांसि प्रति स्तोत्रमलमत्यर्थं करिष्यथैव ननु कुरुथ तदा के युष्मान्निषेत्स्यन्तीति भावः । तदापि परोक्षएव ननु मत्साक्षात् । हे अपीच्यवाचः! मनोज्ञवाक्कौशलाभिज्ञाः । नहि स्तव्यः संमुखएव स्तुत्वा ह्रेपयितुं युज्यते इति भावः । ननु किं कुर्मः सभ्यैः प्रेरिता वयमधुनारभ्यैव त्वामेवस्तुम इति चेत्सभ्यैव ब्रूयेत्याह । उत्तमःश्लोकस्य गुणानुवादे सदैव सर्वथैव स्तवनीये सति जुगुप्सितमर्वाचीनं मद्विधं जनं न स्तावयन्ति सभ्यत्वान्यथानुपपत्तेरिति भावः ॥ २३॥

ननु सत्तूत्तमःश्लोको भवानेवेति तत्राह । महतो भगवतो गुणान् आत्मनि स्वास्मन् कर्त्तुं शिरःशेखरी कर्त्तुमीशः समर्थोऽपि कोऽभिज्ञः आत्मानं स्तावयते न कोऽपि । सतो वर्त्तमानानपि किं पुनरवर्त्तमानान् ।मन्दस्तु अनीशोऽपि अवर्त्तमानानपि स्तावयत एवेति भावः स च कुमर्तिर्जनावहासं न वेद कीदृशः तेऽस्येति यथयं शास्त्रशास्त्र कलाभ्यासादिकमकरिष्यत्तदा वीरः पण्डितो विदग्धोऽप्यमविष्यदिति क्रियातिपत्त्या विप्रलब्धः उपहसितः ॥ २४ ॥

स्वस्तावकाः प्रभवो न ज्ञेयाः यतः प्रभवोहीत्यादि । वा इवार्थे विगर्हितं पौरुषमिव यथार्थं सतां धर्मध्वंसं परम् इत्यादि स्तोत्रं निन्दन्ति ॥ २५ ॥

वरीमभिरिति । दीर्घत्वमार्षं वरिमभिः श्रेष्ठत्वैर्यमविदिता ख्याताः । अतः कथं कर्मभिरात्मानं गापयिष्यामः ॥ २६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चदशश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भोःसूत! हेमागध! हेवन्दिन्! सौम्येति सर्वेषां विशेषणम् हे अस्पष्टगुणस्य मे स्तवः किमाश्रयः स्यात् अतो मयि वो गि वितथा मा अभूवन् अधुना एष मे स्तवो मायोज्यतामित्यन्वयः ॥

तस्मात् हेअपीच्यवाचः!मङ्गलवचनाः! परोक्षे कालान्तरे अस्मत् प्रचारकाले अस्मदुपश्रुतानि यशांसि प्रतिस्तोत्रमलं लोकमुपा करिष्यथ सूतादेःस्वस्तवे नियोजकान् प्रत्याह उत्तमकीर्तेर्वासुदेवस्य गुणानुवादे कार्ये सति लोकेऽप्रसिद्धत्वादिना जुगुप्सित न स्तवयन्ति ॥ २३ ॥

महद्गुणान् आत्मनि कर्तुं संपादयितुमीशः समर्थोऽपि असतोऽविद्यमानान् तान् स्तावकैः कः स्तावयते वैपरीत्ये तु यद्ययं महद्यत्नमा अकरिष्यत् तदाप्यस्य ते महद्गुणाः अभविष्यन्निति क्रियातिपत्त्या विप्रलब्धःकुमतिर्जनावहासं न वेद ॥ २४ ॥

विश्रुता विख्यातगुणा अपि प्रभवः पुनःपुनर्बहून् गुणान् सम्पादयितुं शक्ता अपि परमोदारा ह्रीमन्तः आत्मनः स्तोत्रं जुगुप्सन्ति वाशब्द इवार्थे विगर्हितं पौरुषमिव ॥ २५ ॥

हेसूत ! अपि निश्चितम् अद्य अधुना अविदिताः अप्रकाशितगुणा इत्यर्थः वरीमभिर्दीर्घत्वमार्षं कर्मभिः बालवदात्मानं कथं गापयिष्यामः ॥ २६ ॥

इतिश्रीमद्भागवते महापुराणेचतुर्थस्कन्धे
सिद्धान्तप्रदीपे
पञ्चदशाध्यायार्थप्रकाशः ॥१५॥

---

भाषाटीका ।

पृथुमहाराज बोले हे सूत ! हे मागध हे सुन्दरवचनवाले व जब लोक में हमारे गुण प्रगट होंगे तब स्तुति करोगे अब किस आश्रय से स्तुति होगी ऐसा मत होवे कि जो तुम्हारी वाणी व्यर्थ होजाय ॥ २२ ॥

हे सुन्दर वचनवाले बंदिजनों हमारे परोक्ष मे हमारे गुणों को तुम कथन करना क्योंकि उत्तम श्लोक भगवान् विष्णु के गुणों के रहते २ निंदित दूसरे मनुष्य की स्तुति सभ्य पुरुष नहीं करवाते हैं ॥ २३ ॥

जो पुरुष अपने में उत्तम गुणों को सम्पादन करने को समर्थ है सो पुरुष दुसरे स्तुति करनेवालों से क्यों स्तुति करावेगा जो गुण न होंगे तो यदि स्तुति करावैगा तो वंचक होगा

भाषाटीका ॥

दोनों प्रकार से स्तुति कराने में जो जनों का उपहास होता है उस को कुबुद्धि पुरुष नहीं जानते हैं ॥ २४ ॥

जो प्रभु लोग हैं वे प्रसिद्ध हों तोभी स्तुति अपनी होने में प्रसंसा नहीं करते हैं जो लज्जावाले परमउदार हैं वे लोग अपने पौरुषचर्या न को गर्हित मानते हैं ॥ २५ ॥

हे सूत हमतो अभी उत्तम कर्मोंसे लोक में प्रसिद्ध नहीं हैं हम कैसे अंबसरी के अपने चरितको गवावैंगे ॥ २६ ॥

इति श्री भागवत चतुर्थ स्कन्ध पन्द्रहवां अध्याय का भाषानुवाद लक्ष्मणाचार्यं कृत समाप्त ॥ १५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोध्यायः ।

---:o:---

मैत्रेय उवाच

इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः ।
तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥ १ ॥
नालं वयन्ते महिमानुवर्णने यो देववर्योऽवततार मायया ।
वेनाङ्गजातस्य च पौरुषाणि ते वाचस्पतीनामपि बभ्रमुर्धियः ॥ २ ॥
अथाप्युदारश्रवसः पृथोर्हरेः कलावतारस्य कथामृतादृताः ।
यथोपदेशं मुनिभिः प्रचोदिताः श्लाघ्यानि कर्माणि वयं वितन्महि ॥ ३ ॥
एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्त्तयन् ।
गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम् ॥ ४ ॥
एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः ।
काले काले यथा भागं लोकयोरुभयोर्हितम् ॥ ५ ॥
वसु काल उपादत्ते काले चायं विमुञ्चति ।
समः सर्वेषु भूतेषु प्रतपन् सूर्यवद्विभुः ॥ ६ ॥
तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि ।
भूतानां करुणः शश्वदार्त्तानां क्षितिवृत्तिमान् ॥ ७ ॥
देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः ।
कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत् ॥ ८ ॥
आप्याययत्यसौ लोकं वदनामृतमूर्तिना
सानुरागावलोकेन विशदस्मितचारुणा ॥ ९ ॥
अव्यक्तवर्त्मैष निगूढकार्यो गम्भीरवेधा उपगुप्तवित्तः ।
अनन्तमाहात्म्यगुणैकधामा पृथुः प्रचेता इव संवृतात्मा ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षोडशे सर्वलोकेशैः सत्कृतं भार्यया युतम्
मुनिप्रयुक्ताः सूताद्याः स्तुवन्ति स्मेति वर्ण्यते ॥ १ ॥

गायकाः सूतादयः ॥ १ ॥

नालं न समर्थाः यो भवान् अवतारेष्वप्यस्याधिक्यमाहुः वेनस्याङ्गाज्जातस्य ते पौरुषाणि प्रत्यवितर्क्यतया ब्रह्मादीनामपि धियो बभ्रमुः कुतः पुनर्वयं तद्वर्णने समर्था भवेम ॥ २ ॥

तथापि यथावद्वर्णयितुमशक्ता अपि कथाश्रुते सादराः मुनिभिः कृत उपदेशो योगबलेन हृदि प्रकाशनं तदनतिक्रम्य वितन्महि विस्तारयामः ॥ ३ ॥ ४ ॥

तनौ स्वदेहे लोकपालानां तनूर्मूर्तीः काले बिभर्त्ति यथा भागं पालनपोषणानुरञ्जनादिकार्यानुसारेण यज्ञादिप्रवर्तनेन स्वर्गस्य हितं यथा वृष्ट्यादिना च भूर्लोकस्य हितं भवति तथा ॥ ५ ॥

सूर्यादितनुधारणमेवाहाष्टभिः वसु धनं करादानकाले आदत्ते दुर्भिक्षादिकाले विमुञ्चति च अष्टौ मासान् सूर्यो यथा वसु जलमादत्ते वर्षासु विमुञ्चति तद्वत् ॥ ६ ॥

मस्तके पादेनाक्रमतामप्यार्त्तानां भूतानामतिक्रमं सहिष्यते क्षितेर्वृत्तिः सर्वसहनं सा वृत्तिर्यस्यास्ति स तथा ॥ ७ ॥

देवेऽवर्षति एष कृच्छ्रं गताः प्राणा यासां ताः प्रजाः स्वयं वृष्टिं कृत्वा रक्षिष्यति अत्र हेतुः असौ नरदेववपुर्हरिरिति ॥ ८ ॥

वदनमेवामृतमूर्तिश्चन्द्रस्तेन सानुरागोऽवलोको यस्मिन् विशदं यत्स्मितं तेन चारुणा अत्र च कचिद्वर्तमाननिर्देशो वर्त-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मानसामीप्ये वर्तमानवद्वेति भूतनिर्देशश्च "आशंसायां भूतवच्च ॥ ३।३।१३२ ॥ इति द्रष्टव्यः ॥ ९ ॥

न व्यक्तं वर्त्म प्रवेशनिर्गममार्गो यस्य निगूढं निष्पत्तेः पूर्वमविज्ञातं कार्यं यस्य तच्च कार्यं गम्भीरं. किमर्थमेतत्कृतमित्यन्यैरज्ञाताभिप्रायं विधत्त इति तथा उपगुप्तं सुरक्षितं वित्तं यस्य अनन्तमाहात्म्यश्चासौ गुणानामेकं धाम विष्णुर्यस्मिन् अनन्तमाहात्म्योपेता गुणा एवैकं धाम स्थानं यस्येति वा संवृतात्मा संयतमूर्तिः समुद्रचरत्वेन वरुणस्याप्येते गुणा द्रष्टव्याः ॥ १० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिन्याख्या दीपिकाटिप्पणी ।

मुनिप्रयुक्ता मुनिभिर्विनियुक्ताः ॥ १ ॥

आधिक्यमस्य पृथोस्सर्ववृत्तिसंपादनप्रयुक्तादिराजत्वांशेन ज्ञेयमन्यथाऽऽवेशत्वेन तत्त्वानुपपत्तेः कृष्णस्तु भगवान् स्वयमिति परिभाषाशास्त्रविरोधाच्चेतिचकारोऽप्यर्थे तद्वर्णने महिमानुवर्णने२

आदृताः आदरणमादृतिस्सा विद्यते येषां ते तथाच सादरा इति व्याख्यातम् भावे क्तिन् ततोऽर्शआदिभ्योमत्वर्थीयोऽच् ॥३॥

धर्मसेतूनां गोपनं हि त्रेधा भवति स्वयमाचरणेन तच्छिक्षणेन तद्विरोधिशासनेन चेति त्रिविधमपि क्रमेण विशेषणत्रयेण दर्शितमिति धर्मसेतुवर्णनमेव विधेयम् ॥ ४ ॥

मूर्तास्तत्तच्छक्तिरूपाः ॥ ५—६—७ ॥

अत्र वृष्टिं कृत्वा रक्षणे ॥ ८ ॥

अत्र वदनमेवामृतमूर्त्तिश्चन्द्रइति मयूरव्यंसकादिसमासाश्रयणात्परिणामालङ्कृतिः वदने आरोप्यमाणस्यामृतमूर्त्तेः आरोपविषयवदनात्मना परिणतिमन्तरा सानुरागावलोकनादिक्रियार्थत्वासंभवात् तथैव च तल्लक्षणं "परिणामः क्रियार्थश्चेद् विषयी विषयात्मना,, इति नात्र पूर्वपदार्थप्रधानउपमितिसमास आशङ्क्यः आप्यायनक्रियायाश्चन्द्रगतत्वेनैव प्रसिद्धेः वदने तादृशक्रियानुगुण्यासंभवादित्यालङ्कारः भूतनिर्देशश्च तुतुषु आजह्रारित्यत्राशंसायां प्रार्थनायां प्रशंसायां वा अर्थे द्योत्ये सति भूतवत्प्रयोगो द्रष्टव्यः ॥ ९ ॥

द्वितीयार्थे अनन्तमहिमयुक्ताः कारुण्याद्यो भगवद्गुणा एकमेकं मुख्यं स्थानं संकीर्त्तनादिना रमणं विषयो यस्य सः ॥ १० ॥

---

### श्रीमद्वीर राघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमविकत्थयितृा पृथुनात्मस्तुतौ वारिता अपि तुष्टमनसो गायकास्तुष्टुवुरित्याह स्तुतिः पञ्चदशेन । इतीति । गायकाः सूतादयस्तस्य पृथोर्वागेवामृतं तस्य सेवया तुष्टं मनो येषां मुनिभिर्भगवदंशभूतस्य पृथोरविकत्थयितृत्वादिकल्याणगुणजाताभिर्ज्ञैर्मुनिभिः प्रचोदिता स इत्युक्तप्रकारेण ब्रुवन्तमपि स्वपार्ति पृथुं तुष्टुवुः१॥

तत्र गायकाः पृथोः कल्याणगुणानुवर्णनात्मकस्तुनावात्मनामसामर्थ्यमापादयन्तः पुनः मुन्यनुगृहीताः सन्तस्तत्सामर्थ्यमाहुः। नालमितिद्वाभ्याम् तं तव महिम्नः अनुवर्णने वयं नालं नं समर्थाः कुतः यो भवान् देवदेवः देवानां सद्गुणैर्दीप्यमानानामपि ब्रह्मादीनां देवः निरतिशयानन्तकल्याणगुणजातेन दीप्यमानो भवान् मायया आत्मीयसंकल्परूपज्ञानेन: "मायावयुनं ज्ञानम्,, इति मायाशब्दस्य ज्ञानपर्यायत्वात् अवततार. अवतीर्णः अनन्तकल्याणगुणाकरो भगवानेव त्वद्रूपेणावतीर्णः अतः कथमनन्तानां गुणानां वर्णने वयं प्रभव इत्यर्थः ननु सत्यमनन्तानां भगवद्गुणानां वर्णने यूयमसमर्था इति अहं तु मानुषस्तत्कथं मद्गुणानुवर्णने यूयमप्रभवस्तत्राहुः वेनस्याङ्गाज्जातस्यावतीर्णस्यापि अजहदनन्तकल्याणगुणजातस्य भगवदंशभूतस्य पौरुषाणि प्रतीति शेषः अप्रतर्क्यतया वाचस्पतीनां ब्रह्मादीनामपि धियो बुद्धयः किमु वक्तव्यं वयमसमर्था इति यतो ब्रह्मादय एवमु मुमुहुरित्यर्थः ॥ २ ॥

यद्यपि त्वन्महिमानुवर्णने वयं नालं तथापि विपुलकीर्तेः हरेरंशावतारभूतस्य पृथोः कथामृते आदृताः सादरा वयं मुनिभिरुपदेशो यथा भवति तथा प्रणोदिताः प्रेरिताः सन्तः श्लाघ्यान्यनवद्यानि कर्माणि वितन्महे विस्तारयामः ॥ ३ ॥

विस्तारमेव प्रपञ्चयति । एष इति । एष पृथुः धर्मभृतां वर्णाश्रमानुबन्धिधर्मानुष्ठानपराणां मध्ये श्रेष्ठः "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते,, इत्युक्तरीत्या स्वयं कृत्स्नविदप्यकृत्स्नविल्लोकसंग्रहार्थं नितरां स्ववर्णाश्रमोचितधर्मानुष्ठानपर इत्यर्थः अत एव लोकमकृत्स्नविल्लोकं धर्मे अनुवर्तयन् अनुवर्तयिता स्वस्ववर्णाश्रमोचितधर्ममनुष्ठापयिता धर्मः सेतुर्येषां तेषां सेतुर्हि तीरान्तरप्रतिलम्भकः तद्वच्छ्रौतस्मार्तधर्मः स सभीहितप्रापको येषां ते धर्मसेतवः धर्मैकशरणाः साधव इति यावत् तेषां गोप्ता तत्परिपन्थिनां धर्मविरोधिनामसाधूनां शास्ता यद्वा धर्मा एव सेतवः मर्यादा येषां तेषां गोप्ता केनाकारेणेत्यपेक्षायां लोकं धर्मेण वर्तयन् इत्यपोद्धृतप्रकारनिर्देशः ॥ ४ ॥

एष पृथुः स्वयमेक एव लोकपालानां सूर्येन्द्रादीनां तनूः तनुवत्कार्योपयोग्यपृथक्सिद्धविशेषणभूतानितरसाधारणान् गुणान् तनुशब्दस्य शरीरपरत्वेऽपि कार्योपयोग्यपृथक्सिद्धविशेषणत्वमेव प्रवृत्तिनिमित्तं तद्गुणपरत्वेऽपि तुल्यं तनौ स्वदेहे काले काले यथाभागं भागमनतिक्रम्य उभयोर्लोकयोर्हितं यथाभवति तथा विभर्त्तीत्यर्थः ॥ ५ ॥

तत्र सूर्यादितनुधारणमेवाहुरष्टभिः । वसु धनं काले उपादत्ते स्वीकरोति काले दुर्भिक्षकाले विमुञ्चति अष्टौ मासान् सूर्यो यथा प्रतपन् वसु जलमादत्ते वर्षासु विमुञ्चति तद्वत् अत एव सर्वेषु भूतेषु समः ॥ ६ ॥

वैन्यः प्रभुरुपरिमस्तके पादादिना आक्रमतामप्यार्तानां भूतानां करुणः करुणावान् अतिक्रमं तितिक्षति सहिष्यते अतः क्षितिवृत्तिमान् भूमेर्या वृत्तिः सहनं तद्वृत्तिर्यस्यास्तीति ॥ ७ ॥

तथा देवे अवर्षति सति कृच्छ्रगताः प्राणा यासां ताः प्रजाः स्वयं वृष्टिं कृत्वा इन्द्रवद्रक्षिष्यति अत्र हेतुः असौ नरदेववपुर्हरिरिति ॥ ८ ॥

असौ पृथुर्वदनामृतमूर्तिना वदनमेवामृतमूर्तिश्चन्द्रस्तेन लोकमाप्याययति वर्द्धयति वदनामृतमूर्तिना कथं भूतेन अनुराग सहितोऽवलोको यस्मिन् विशदं यत् स्मितं तेन चारु सुन्दरं तेन अत्र क्वचित् क्वचित् वर्तमाननिर्देशो वर्तमानसामीप्ये वर्तमानवद्वेति भूतनिर्देश आशंसायां भूतवच्चेति द्रष्टव्यः ॥ ९ ॥

अव्यक्तं प्रवेशनिर्गमयोरविज्ञातं वर्त्म मार्गो यस्य निगूढं निष्पत्तेः प्रागविज्ञातं कार्यं यस्य गम्भीरवेदी किमर्थमेवं कृतवानिति परैरज्ञाताभिप्रायः उपगुप्तं सुरक्षितं वित्तं धनं यस्य सः अनन्तमाहात्म्याद्धेतोर्गुणानामेकं धाम आश्रयः मुख्यं प्रचेता इव संवृतात्मा समुद्रावरणेन वरुण इव चरैर्भिः समुद्रैः जलप्राकारादिभिर्वा परिवेष्टितमूर्तिः वरुणस्याप्युक्तगुणा द्रष्टव्याः ॥ १० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पृथुस्तुतिव्याजेन हरौ भक्तावतारार्थं तन्माहात्म्यं निरूप्यते अस्मिन्नध्याये तन्वत्र सूतादयः स्तुतौ पृथुना निवारिता अग्रे के-स्तोतारो येन ततः स्तुत्वा हरौ भक्तिरवतार्यतेत्याशङ्क्य मुनिप्रेरि-तास्त एव तुष्टुवुरिति तत्स्तुतिप्रकारमुपक्रमते इति सुवाणांमित्या-दिना ॥ १ ॥

वयं स्तोष्याम इति प्रारम्भ एव श्रेयान्नतु तत्र समर्था इत्याहुरित्याह नालमिति । अलं समर्थाः पृथुसन्निहित श्रीहरिमहिमसंदर्भत्वा दिति भावेनोच्यते । य इति । यो देवदेवः श्रीनारायणो मायया भक्ता-नुकम्पेच्छया अवततार तस्य वेनाङ्गजं वेनस्याङ्गादवयवाज्जन्म मतस्य मतसातत्यगमन इति धातोर्विशेषसन्निहितत्वेन प्राप्तस्य । ते त्वयि स्थितस्य हरेः पौरुषाणि वर्णयितुं वाचस्पतीनां ब्रह्मादी-नामपि धियो वभ्रमुरिति यस्मात्तस्मादयं न समर्था इति किमुव-र्णनी । चशब्दः कैमुत्यार्थः अन्यत्र देवो हरिस्तस्य देवो देवनं क्रीडनं यस्मिन् पृथौ स देवदेवः पृथुः मायया भगवदिच्छोद्बोधितमुनीच्छया अवततार प्रकाशितोऽभूत्तस्य तेवेनस्याङ्गादवयवाज्जातस्य पौरुषाणि कथयितुं वाचस्पतीनां कवीनां धियो वभ्रमुरिति यदत इति पीयाद्वे न मनोलक्ष्यते मनसा वाचाप्रेसङ्कल्पयत्यथ वाचा व्याहरतीति श्रुतेः वाचोऽभ्रमंतीति किमुक्तव्यमित्यर्थः ॥ २ ॥

तर्हि निवर्ततामित्याहुरित्याह । अथापीति । असमर्था अपि कथामृ-तादरत्वान्निवर्तितुं मनोनायातीत्यर्थः तर्हि किं न कुर्वन्ति किं तत्राहु-रित्याह । यथोपदेशामिति । साकल्येन स्तवनाशक्तो निवर्तनं वरमित्यत उक्तं मुनीभिरिति आज्ञोल्लङ्घनभीरुत्वाद्वितन्महे प्रपञ्चयामः ॥ ३ ॥

किं गुणविशिष्टः प्रपञ्च इत्यत्रोच्यते । एषइति । तत्परिपन्थिनां तस्य धर्मसेतोर्वैरोधिनाम् ॥ ४ ॥

एष पृथौ सन्निहितो हरिस्तनौ स्वदेहे तनूः शक्तिलक्षणा मूर्तिः यथा भागं बिभर्ति ॥ ५ ॥

भरणप्रकारं दर्शयति । वसुकालेत्यादिना । वसुर्वेदेऽग्नौ योक्त्रेशेवसुतो-ये महाधन इत्यभिधानात् यथा सम्भवं योज्यं करादानकाले वसु धन मुपादत्ते दुर्भिक्षादौ दानयोगपुरुषागमनकाले विसृजति सूर्योऽपि ग्रीष्मादिकाले वसुजलमुपादत्ते वर्षादौ मुञ्चति समो यथा योग्यं दण्डादिषु प्रतपन् प्रतापं कुर्वन्नन्यत्र यथर्तुप्रतपन् ॥ ६ ॥

उपर्याक्रमतामात्मानमतिक्रम्य वर्तमानानां सतामक्रममपराधं-तितिक्षति सहते दारिद्र्येणार्तानां क्षितिवृत्तिमान् भूमिलक्षणा-वृत्तिदाता भूमार्थो मतुबर्थः ॥ ७ ॥

देवेऽवर्षति मनावृष्टौ सत्याम्बुभुक्षया कृच्छ्रप्रायाः क्लिष्टेन्द्रि-यचेष्टाः प्रजा रक्षिष्यतीत्यन्वयः ॥ ८ ॥

वदनामृतमूर्तिना मुखचन्द्रेण ॥ ९ ॥

अव्यक्तं सूक्ष्मं वर्त्म चारैः प्रवेशमार्गो यस्य स तथा अव्यक्तानां योगिनां वर्त्म यस्येतिवा नितरां गूढं कार्यं कर्तव्यं यस्य । उप गुप्तवित्तः सुरक्षितकोशः सुरक्षितयशा वा "वित्तं यशोधनं वित्तो-विद्वान् विश्रुतएवच" इत्यभिधानम् । अनन्तानां माहात्म्य गुणानामेकं धामाश्रयो यस्य स तथा अनन्तमाहात्म्यगुणा एवैकन्धाम यस्य स तथा वा अन्यत्र शेषस्य माहात्म्यगुणैकधामा सम्वृत-आत्मा स्वरूपं यस्य स तथा ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वेनस्याङ्गजस्यापीति चकारेण लभ्यते ॥ १-२ ॥ ३ ॥

स्वयं धर्मभृतां श्रेष्ठो लोकं च धर्मेऽनुवर्त्तयंस्तत्परि-पन्थिनां शास्तेति । धर्मं सेतूनां गोप्तेत्यर्थः ॥ ४ ॥

तनूः शक्तीः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

सम्भृतात्मेतिचिद् सुखः परिपूर्णरूपइत्यर्थः ॥ १०-१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मुनिप्रयुक्ताः सूताद्याः षोडशे तुष्टुवुः पृथुम् ।
स्तवश्च पृथ्वीदोहादिभावितद्वृत्तिसूचकः ॥ ० ॥

नालं न समर्थाः मायया कृपया । यद्वा । स्वशक्त्या मा[इ]-या सह ते तव पौरुषाणि प्रति ब्रह्मादीनामपि धियो वभ्रमुः ॥ २ ॥

यथोपदेशं मुनिभिरस्मदन्तःकरणप्रविश्य कृतमुपदेश-मनतिक्रम्य ॥ ३ ॥ ४ ॥

एक एवैष तनौ स्वमूर्त्तावेव लोकपालानां तनूर्मूर्त्तीर्बिभर्ति काले काले प्रतिसमयं लोकयोरिति यज्ञादिप्रवर्त्तनेन स्वर्गस्य वृष्ट्यादिना भूर्लोकस्य च हितं भागं भगसम्बन्धि यथा स्यात्तथा "भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः ॥ ५ ॥

सूर्यादितुल्यतामाहाष्टभिः । वसु धनं करादानकाले आदत्ते दुर्भिक्षादिकाले विसृजति च अष्टौ मासान् सूर्यो यथा वसु जलमादत्ते विसृजति च वर्षासु तद्वत् ॥ ६ ॥

अक्रममनतिक्रमं तितिक्षति सहते क्षितिवृत्तिमान् पृथ्वी क्षमावद्युक्तः ॥ ७ ॥

रक्षिष्यति स्वयमेव वृष्टिं दत्त्वा पालयिष्यति ॥ ८ ॥

वदनमेवामृतमूर्तिश्चन्द्रस्तेनेति चन्द्रतनूधारणमुक्तम् ॥ ९ ॥

न व्यक्तं वर्त्म अन्तःप्रवेशनिर्गमयोर्मार्गो यस्य सः । निगूढं निष्पत्तेः पूर्वमविज्ञातं कार्यं यस्य सः तथा कार्यं गम्भीरमन्यैरज्ञाताभिप्रायं यथा स्यात्तथा विधत्ते इति वेधाः । उप आधिक्येन गुप्तं वित्तं धनं ज्ञानञ्च यस्य सः । अनन्तस्य विष्णोरिव माहात्म्यं गुणाश्च एकं मुख्यं धाम प्रभावश्च यस्य सः संवृतात्मा अन्यालक्षितस्वभावः प्रचेताः वरुण इवेति समुद्र-चरत्वेन वरुणस्याप्येते गुणा द्रष्टव्याः ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

षोडशे मुनिचोदितैः सूताद्यैः श्रीपृथुस्तुतिः कृतेति वर्ण्यते इतीति । मुनिभिस्तत्प्रभावाभिज्ञैश्चोदिता गायकाः सूताद्याः तद्वागेवामृतं तत्सेवया तुष्टमनसस्तुष्टुवुः ॥ १ ॥

यो देववर्यः सर्वदेवपूज्यः मायया कृपया अवततार तस्य वेना-ङ्गजातस्य ते महिमानुवर्णने वयं नालं न शक्ताः किं बहुना वाचस्पतीनां ब्रह्मादीनामपि धियः तेपौरुषाणि प्रति वभ्रमुः ॥ २ ॥

अथापि कथामृतमात्तं प्रीतिविषयं येषां ते मुनिभि-प्रचोदिता यथोपदेशमुपदेशमनतिक्रम्य पृथोर्हरेः कर्माणि वित-न्महि विस्तारयामः ॥ ३—४ ॥

काले काले यथाकालं यथाभागं पालनादिकार्यानुसारेण उभ-योरैहिकामुष्मिकयोर्यज्ञादिना वृष्ट्यादिना यथाहितं भवति तथा लोकपालानां तनूर्मूर्तीः । एक एवैषः पृथुर्हरिर्बिभर्ति ॥ ५ ॥

एतदेव प्रपञ्चयति । वसुकाल इत्यष्टभिः यथा सूर्योऽर्कं प्र-याकाले उपादत्ते त्यागकाले विसृजति च तथा श्रीपृथुर्हरिः ध-नम् ॥ ६ ॥

दुरासदो दुर्विषह आसन्नोऽपि विदूरवत्।
नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥ ११॥
अन्तर्बहिश्च भूतानां पश्यन् कर्माणि चारणैः।
उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम् ॥ १२॥
नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि।
दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः ॥ १३॥
अस्याप्रतिहतं चक्रं पृथोरामानसाचलात्।
वर्त्तते भगवानर्को यावत्तपति गोगणैः ॥ १४॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

चितेर्वृत्तिः सर्वसत्त्वापराधसहनरूपास्यास्तीति तथाभूतः। अतिक्रममपराधं तितिक्षति सहिष्यते ॥ ७॥

कृच्छ्रे कष्टं प्राप्ताः प्राणा यासान्ताः मरणाभिमुखाः इन्द्रवत् पर्जन्यरूपी रक्षिष्यति ॥ ८॥

अनुरागसहितोऽवलोको यस्मिन् तेन विशदेन स्मितेन चारु सुन्दरं तेन वदनामृतमूर्तिना मुखचन्द्रेण आप्याययति वर्द्धयति अत्र क्वचिद्वर्त्तमाननिर्देशो "वर्तमानसामीप्येवर्तमानवद्वा„ इति भूतनिर्देशश्च "आशंसायां भूतवच्च„ इति द्रष्टव्यः ॥ ९॥

एष पृथुर्हरिः अव्यक्तवर्त्मा अलक्षितमार्गः। दुर्ज्ञेयगतिरित्यर्थः इदं करिष्ये इत्येवं शत्रुदमनादिकार्यप्रकाशने शत्रुपलायनादिदोषपचारणार्थं निगूढकार्यो गुप्तकर्मा गम्भीरं साहसादिदोषराहित्येन देशकालाद्यनुसारेण विभक्ते इति गम्भीरवेधा उपगुप्तं सुरक्षितं वित्तं यस्य सः अनन्ते हरौ माहात्म्यं महत्त्वं येषां ते गुणाः शान्त्यौदार्यकारुण्यादयः एकन्धाम यस्य सः संयतः आत्मा मनो देहो वा यस्य सः प्रचेता इव ॥ १०॥

---

भाषाटीका।

मैत्रेयजी बोले इस प्रकार कहतेहुये पृथुमहाराज के वचनामृत से सन्तुष्ट हुये गायकजन मुनिजनों के प्रेरणासे महाराजकी स्तुति करनेलगे ॥ १॥

हे महाराज! आपकी महिमाके वर्णन करनेमे हमलोग समर्थ नहीं हैं जोआप सब देवों में श्रेष्ठ हो अपनी माया से अवतार लिये हो वेनराजके अंगसे होने वाले आपके पौरुषों के वर्णन में ब्रह्मादि को भीभी बुद्धि भ्रमित होजाती है ॥ २॥

तो भी उत्तम कीर्तिवाले हरिके कलावतार पृथुमहाराज की कथारूपी अमृतसे सन्तुष्टभये हमलोग मुनिजनों के प्रेरणा से सुने हुये उपदेश के अनुसार प्रसंशनीय आपके गुणों का विस्तार करेंगे ॥ ३॥

यह पृथुमहाराज धर्मधारियों में श्रेष्ठ हैं सबलोकों को धर्ममें चलाने वालेहैं धर्म मर्यादा के रक्षक हैं धर्म विरोधियों के शासन करने वालेहैं ॥ ४॥

यह महाराज स्वर्ग मर्त्य दोनों लोकके हितकेलिये समय समय पर कार्य करनेको इकेलेही अपने शरीर में सबलोक पालों के मूर्तियों को धारण करतेहैं ॥ ५॥

यह महाराज समय पर धन को ग्रहण करतेहैं समय पर उस का खर्च करतेहैं सूर्य सरी के प्रताप वाले होकर सब भूतमात्र में समदृष्टि से वर्तते हैं ॥ ६॥

अपने मस्तक पर पैर रखने वाला हो यदि दुःखी हो तो उसके अपराध को पृथुमहाराज क्षमा करने वाले हैं सदा प्राणिमात्र पर दया करतेहैं दुखित के अपराध सहने को पृथिवीसे क्षमा वान्हैं ॥ ७॥

राजशरीर ये भगवान् इन्द्रके नहीं वर्षते भयं मे कष्ट को प्राप्त भई प्रजाको अनायासहीसे इन्द्र के सरीका रक्षा करलेवेंगे ॥ ८॥

यह महाराज सब लोकों को अपने मुखचंद्र से तृप्त कर देते हैं जिस वदन में मन्दहास है कृपा पूर्वक देखना है जिस से वह मुख बडा मनोहर है ॥ ९॥

इनका मार्ग बड़ा गुप्त है इनके कार्य गुप्त होते हैं गंभीर अभिप्राय से कार्य करने वाले हैं धनको गुप्त से रखने वाले हैं अनन्त माहात्म्यवाले गुणों के आकर श्रीविष्णु के आश्रय हैं इस प्रकार से पृथुमहाराज वरुण के तुल्यगुणों वाले हैं ॥ १०॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

दुरासदः शत्रोर्मनसापि प्राप्तुमशक्यः दुर्विषहः शत्रुभिः सोढुमशक्यः विदूरवत्पौरुषेणाभिभवितुमशक्यः वेन एवारणी स्तस्मादुत्थितः ॥ ११॥

चारणैर्गुप्तभृत्यैः पश्यन्नपि स्वस्तुतिनिन्दादावुदासीन इव वर्तिष्यते यथा देहिनामध्यक्षोऽविकृत आत्मभूतो वायुः सूत्रात्मा तद्वत् ॥ १२॥

आत्मद्विषां सुतमिति सुतग्रहणं स्वात्मजसाम्यार्थम् धर्मपथे यमस्य वृत्ते स्थितः ॥ १३॥

चक्रमाज्ञा सेना वा रथस्य वा चक्रं मानसाचलमभिव्याप्य प्रवर्तते किम्पर्यन्तमित्यत आह अर्को रश्मिगणैर्यावत्तपति तावत् ॥ १४॥

रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः ।
अथामुमाहू राजानं मनोरञ्जनकैः प्रजाः ॥ १५ ॥
दृढव्रतः सत्यसन्धो ब्रह्मण्यो वृद्धसेवकः ।
शरण्यः सर्वभूतानां मानदो दीनवत्सलः ॥ १६ ॥
मातृभक्तिः परस्त्रीषु पत्न्यामर्ध इवात्मनः ।
प्रजासु पितृवत्स्निग्धः किङ्करो ब्रह्मवादिनाम् ॥ १७ ॥
देहिनामात्मवत्प्रेष्ठः सुहृदां नन्दिवर्धनः ।
मुक्तसंगप्रसङ्गोऽयं दण्डपाणिरसाधुषु ॥ १८ ॥
"एष दोग्धा मही वीरो गां सतीमोजसौषधीः ।
समां करिष्यते चेमां धनुष्कोट्या समन्ततः" ॥*
अयन्तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयावतीर्णः ।
यस्मिन्नविद्यारचितं निरर्थकं पश्यन्ति नानात्वमपि प्रतीतम् ॥ १९—२० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यस्माद्रञ्जयिष्यत्यथ तस्मान्मनोरञ्जनैर्हेतुभिरमुं राजानमाहुः मनोरञ्जनकैरिति चेष्टितविशेषणं वा ॥ १५—१६ ॥

मातरीव भक्तिर्भजनं यस्य आत्मनो देहस्यार्धे इव पत्न्यां प्रीतिमान् ॥ १७ ॥

नन्दिं सुखं वर्धयतीति तथा मुक्तसंगेषु प्रकृष्टः संगो यस्य दण्डपाणिरित्यपराधानुपेक्षणमुच्यते नादण्ड्यमित्यत्र पक्षपाताभाव उक्तः ॥ १८ ॥

अयंत्विति तुशब्देन निरुपमत्वं दर्शयति कोऽसावात्मा तमाह यस्मिन्प्रतीतमपि नानात्वमर्थशून्यं पश्यन्ति ॥ १९—२० ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिन्याख्या दीपिकाटिप्पणी ।

त्रिदूरस्थस्य हि पौरुषेणाभिभवो न भवतीति धर्मलुप्ताश्रेया ॥ ११ ॥

परस्तुतिनिन्दादौ हि लोक उदासीनोवर्त्तते अयन्तु स्वस्तुतिनिन्दादावपि वर्त्तेतेति इव शब्दार्थः अविकृतः अपञ्चीभूतत्वाद्विकारशून्यः आत्मभूतः समष्टिलिङ्गत्वान्मुख्योपाधिः ॥ १२ ॥

वैरिणमप्यदण्ड्यं न दण्डयतीत्येतावतैव चारितार्थ्ये सुतग्रहणं स्वात्मजसाम्यार्थम् ॥ १३—१४ ॥

मनोरञ्जनैर्हेतुभिः मनसः प्रसादनैश्चेष्टितधर्मैर्हेतुभिः द्वितीयेऽर्थे नन्द्यादिविहितो ल्युप्रत्ययः ॥ १५—१६ ॥

भजनमनुवृत्तिः ॥ १७—१८ ॥

अयंतु साक्षादित्यतः पूर्वम् एषदोग्धा मही वीरो गां सतीमोजसौषधीः समां करिष्यते चेमां धनुष्कोट्या समन्तत इति यद्यं क्वचिदधिकं दृश्यते तत्र पौनरुक्त्यादव्याख्यानाच्च किंचित् मिवर्जयन् ननु निरुक्तगुणमध्य परस्त्रीसङ्गवर्जनादयः कतिचिद्गुणा देवमनुष्यादिष्वपि दृश्यन्त एव किमिति आश्चर्यार्थं वर्ण्यन्ते तत्र साम्यं परिहरन्नाह । अयं तु साक्षादिति ॥ १९—२० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुरासदः शत्रोर्मनसा प्राप्तुमशक्यः शत्रुभिः सोढुमशक्य आसन्नः सन्निहितोऽपि दूरवत्पौरुषेणाभिभवितुमशक्यः [illegible] यतोऽस्तस्मादुत्थितोऽजय्योऽग्निरिव अनलस्याप्येतद्गुणाद्रष्टव्याः ।

चारणैर्गूढपुरुषैः अन्तर्बहिश्च भूतानां कर्माणि पश्यन् स्तुतिनिन्दादावुदासीनो वर्तिष्यते देहिनामध्यक्षो देहधारणहेतुभूतः सूत्रात्मा सूत्ररूपो वायुरिव सूत्रात्मेति [illegible] आर्षः वायुरात्मेव देहिनामिति पाठान्तरं तत्र आत्मा अन्तः प्रविश्य धारको वायुरिवेत्यर्थः उदासीन इवास्त [illegible] दृष्टान्तः ॥ १२ ॥

एष पृथु आत्मद्विषां शत्रूणामपि सुतमदण्ड्यं न दण्डयेत् सुतग्रहणं स्वात्मजसाम्यार्थम् आत्मजमपि दण्ड्यं दण्डयिष्यतोऽसौ धर्मपथे स्थितः यमस्य वृत्तौ स्थितः ॥ १३ ॥

अस्य प्रभोश्चक्रमाज्ञारथचक्रम् अप्रतिहतं सत् मानसाचलमभिव्याप्य वर्तते किं वक्तव्यमामानसाचलादिति यतोऽसावसूर्यो यावद्गोगणैः किरणसमूहैस्तपति तावत् वर्तते ॥ १४ ॥

राजशब्दप्रवृत्तिनिमित्तं प्रजारञ्जनरूपमस्मिन्नेव पुष्कलमित्याह रञ्जयिष्यतीति अयं पृथुरात्मनः स्वस्य विचेष्टितैर्व्यापारैः [illegible] लोकं रञ्जयिष्यति अथ ततः मनोरञ्जनहेतुभिरमुं राजानं प्रजा आहुः ॥ १५ ॥

दृढव्रतः अप्रतिहतसङ्कल्पः सङ्कल्पोऽपि तस्य नासमीचीनः एव इत्याह । सत्यसन्धः सत्यं समीचीनं सन्धत्ते सङ्कल्पत इति सत्यसन्धः ब्रह्मण्यः ब्राह्मणेषु साधुः वृद्धानां ज्ञानवृद्धानां सेवकः सर्वभूतानां शरण्यः रक्षकत्वेन विश्वसनीयः मानदः संमानदः दीनेषु वत्सल ॥ १६ ॥

* अयंश्लोकः वीरराघवविजयध्वज शुकदेवैर्व्याख्यातः श्रीधरस्वामिभिरव्याख्याततत्वेन जीवगोस्वामि चक्रवर्ति राधारमण गोस्वामिभिःप्रतीकंधृत्वोपेक्षितः ।

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

परस्त्रीषु परदारेषु मातरीव भक्तिभजनं यस्य आत्मनो देहस्यार्द्धे इव पत्न्यां वर्त्तते प्रजासु पितृवत्स्निग्धः दीनानवेत्सलोन प्रीतिपूर्वकमनुवर्त्तनशीलः ब्रह्मवादिनां ब्रह्मविदां किङ्करो दासः१७ देहिनामात्मवत् निरतिशयप्रीतिविषयः सुहृदां नन्दिमानन्दं सुखं वर्द्धयतीति तथा मुक्तसङ्गेषु वीतरागिषु प्रकृष्टः सङ्गो यस्य असाधुषु दण्डपाणिरित्येवापराधाक्षमोऽप्यते नादण्ड्यमित्यत्र पक्षपाताभाव इत्यपौनरुक्त्यम् ॥ १८ ॥

एष महावीरः पृथुः ओजसा बलेन सतीं गां भूमिमोषधीर्दोग्धा भूमेरोषधीर्धोक्ष्यतीत्यर्थः अकथितंचेति दुहेः द्विकर्मकत्वाद्गामिति द्वितीयानिर्देशः तथा इमां भूमिं स्वधनुःकोट्या परितः समां करिष्यते १९

किंबहुनायं सद्गुणानामाश्रय इति यतोऽसावनन्तकल्याणगुणनिधिर्भगवानिहावतीर्ण इत्याहुः अयं त्विति अयंत्वित्यनेन निरस्तसमाभ्यधिकत्वमभिप्रेतं तत्र हेतुः साक्षाद्भगवान् भगवच्छब्दप्रवृत्तिनिमित्तभूतज्ञानादिषाड्गुण्यपूर्णोहेयगुणराहित्यमुच्यते कूटस्थ इति निर्विकार इत्यर्थः त्र्यधीशः त्रिलोकेशः त्रिविधचेतनानामीश इतिवा एवंभूतो यः परमात्मा स कलया स्वांशेन जीवेनावतीर्ण इत्यर्थः शरीरभूतपृथ्वाख्यजीवोपलक्षितोऽवतीर्णः आवेशावतार इत्यर्थः यद्वा यो भगवान् स आत्मा जीवशरीरकः विशेष्यसंनिधौ गवादिशब्दा नांयाकिपर्य्यन्तत्ववज्जीववाचिनोऽपि आत्मशब्दस्य शरीरिपरमपुरुषपर्य्यन्तत्वस्याकृतिनयसिद्धत्वात् कलया इत्थंभूतलक्षणे तृतीयेयं स्वापृथक्सिद्धज्ञानादिगुणविशेषेणोपलक्षितोऽवतीर्णः कोऽसावात्मा यच्छरीरकोऽवतीर्ण इत्यत्राह । यस्मिन्निति । यस्मिन् जीवे प्रतीतमपि अविद्यारचितं प्रकृतं परिणामरूपं नानात्वं देवमनुष्यादिभेदं निर्गतमर्थाद्वस्तुतः निरर्थकम् अवास्तविकं पश्यन्ति तत्त्वदर्शिन इति शेषः परमार्थत आत्मनि अविद्यमानं देहात्माभिमानिनामात्मनि प्रतीतमपि नानात्वं देहविलक्षणात्मयाथात्म्यदर्शिनः प्रकृतिपरिणामरूपत्वेन तद्गतमेव पश्यन्तीत्यर्थः यस्मिन् प्रतीतं नानात्वमित्यनेनात्मनि नानात्वस्य प्रतीतिविषयत्वं नतुप्रमितिविषयत्वमित्युक्तम् अनेन जीवेनानात्वमविद्यासंबन्धकृतं नतु स्वभावतः इत्युक्तं भवति यद्वा ननु जीवशरीरककलयावतीर्णश्चेत् जीवस्याविद्यासंबन्धादाविधका जैवा दोषाः परस्मिन् पुरुषे प्रसज्येयुस्तत्राहुः । यस्मिन्निति । भगवति प्रतीतमपि जीवशरीरकत्वादिना हेतुना प्रतीतमपि अविद्याकृतं नानात्वं निरर्थकं पश्यन्ति अर्थात्प्रयोजनान्निर्गतं निरर्थकमकार्य्यकरं यद्यपि जीवशरीरकत्वादिना प्रतीयते तथापि जीव इव बालकत्वयुवत्वादिकं देवादिदेहसम्बन्धात्प्रतीयमानमपि न वास्तविकं किन्तु देवादिदेहगतमेवैवं परस्मिन्नपि पुरुषे जीवसम्बन्धात्प्रतीतमपि जीवगतमेव नतु परमपुरुषगतं नचैवं जीवस्य शरीरत्वादवास्तविकेनापि नानात्वेनानर्थप्रसक्तिरिति वाच्यं जीवस्याप्यनर्थप्रसक्तेः सशरीरत्वप्रयुक्तत्वाभावात् प्रकृतिवश्यत्वाद्यायत्तत्वात् परमात्मनस्तु मायां स्ववशीकुर्वतः प्रकृतिवश्यत्वकर्मवश्यत्वाद्यभावेनानर्थाप्रसक्तेः एतदेवाभिप्रेत्य निरर्थकं पश्यन्तीत्युक्तम् २०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अग्नेः शक्तिसन्निधानस्वभावमाह । दुरासदइति ॥ ११ ॥ वायुसन्निधानफलमाह । अन्तर्बहिरिति । अन्तश्चारवैः श्वाससञ्चारैर्बहिश्चारिगूढपुरुषैः प्रेमलम्बनत्वाद्देहिनामात्मा वायुस्तु प्राणरूपेणोदासीनउपरिस्थितोऽभोवर्तमानं सर्वमीक्षते यथा तथायमप्यध्यक्षः सर्वस्मादुपरि वर्तमानावचो यस्येति वाध्यक्षः परितोवर्तमानं जानाति तथेति वा ॥ १२ ॥

आत्मद्विषामात्मशत्रूणां सुतमप्यदण्ड्यं न दण्डयति दण्ड्यं तमात्म जमपि दण्डयति तत्र निमित्तमाह । धर्मपथं इति अनेन धर्मराजस सन्निधानफलमुक्तं भवति ॥ १३ ॥

परमेष्ठ्यंशसन्निधानफलमाह। अस्येति। आमानसाचलात्मानसपर्वतपर्यन्तङ्गोगोरश्मिगणैः ॥ १४ ॥

चन्द्रगुणसन्निधानफलमाह । रञ्जयिष्यतीति पद्यस्मादस्मात् ॥ १५ ॥

सन्धोऽवधौ प्रतिज्ञायामिति यादवः ॥ १६ ॥ १७ ॥

आनन्दवर्धनः आनन्दवृद्धिकरः मुक्तसङ्गैः परमहंसैः प्रसङ्गोयस्य स तथा पूर्वं ध्वनितमर्थं स्पष्टयति दण्डपाणिरिति ॥१८–१९॥

उक्तमिदं सर्वं श्रीनारायणसन्निधानफलमित्यभिप्रेत्याह । अयंत्विति । तुशब्द एवार्थे अस्मिन्पृथौ कलयावतीर्णः सन्निहितः साक्षाद्भगवांस्तु ऋष्याद्यन्यतमो न स्यात्किन्तु नारायणएवेत्यत्र हेतुगर्भविशेषणद्वयमाह । त्र्यधीश इति । त्रयाणामीशा इन्द्रादयस्तेषामप्यधिकत्वेनेशः " स्यादध्यधिक ईश्वर ,, इति यादवः चेतनाचेतनकूटे तिष्ठतीति कूटस्थः स्थानदोषत्वेन लेपनमस्य नास्तीत्यत्र उक्तमात्मेति गुणपूर्णत्वादात्मा तर्हि स्थानभेदान्नानात्वमायातमत्रोच्यते । यस्मिन्निति । यल्लोके निरर्थकं तद्यस्मिन् हरौ प्रतीतमविद्यया हरीच्छयारचितङ्कल्पितन्नानात्वमिव यथा पश्यन्ति एतदुक्तं* भवति यल्लोके खपुष्पादिकमविद्यमानं तन्मत्स्यादिरूपवद्रूपेषु प्रतीतं नानात्वं यथामिथ्याभूतं पश्यन्ति योगिनस्तथेति २ तदुक्तं यल्लोकेनिरर्थकं तद्गगनरूपेषु प्रतीतनानात्वदृष्टान्तेन पश्यन्ति सन्तः मत्स्यरूपादीनान्नानात्वस्यैवनिरर्थकमितिपाठे एवं धर्मान्पृथक् पश्यन्नितिच अनेन तद्भमांशानामपि पृथक्त्वदर्शने नानर्थ इत्युक्तं भवति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

एष दोग्धेति पद्यं पुनरुक्तमिव परंपरा । अतः पृथङ्नाङ्गीकृतम् । देवमनुजान्तरेष्वपि ते गुणाः सन्तीति न तत्साम्यमित्याह । अयं तु साक्षादिति । यतः स एव कलया शक्त्या सह अवतीर्णोऽस्मिन् प्रविष्टः आत्मा परमात्मा सर्वातिशयगुणधर्मवाद्युः यस्मिन् भगवति साक्षात् सति नानात्वं स्वात्मनि देवमनुष्यत्वादिभेदं निरर्थकं पुरुषार्थशून्यं पश्यन्ति । अविद्या कल्पितत्वेनाति तुच्छत्वादिति भावः ॥ १९——२१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

दुरासदः दुष्प्रापः शत्रुवर्गैरनिकटः दुर्विषहः शत्रुशार्द्दैः सोढुमशक्यः । वेगा एवार्चिषस्तन्मथनाद्युत्थितः ॥ ११ ॥

चारैरश्चरितैश्चरैश्चपश्यन्नुदासीनोऽसक्तः पृथुपक्षे भृत्यामात्यादिष्वासक्तोऽपि तैरुदासीन इव लक्ष्यमाणः । वायुः सूत्रात्मेव आत्मा अन्तर्यामीव पृथुरध्यक्षः ॥ १२ ॥

धर्म्मपथे यमस्य वृत्तौ ॥ १३ ॥

---

* अत्रयस्मिन्परब्रह्मणि अविद्यारचितमनिर्वचनीयाविद्याकल्पितं विश्वं प्रतीतं भ्रान्तिप्रतीतिसिद्धं नानात्वमिदं भेदमिव निरर्थकं मिथ्याभूतं पश्यन्तीत्यन्यथा प्रतीतेर्यथायद्यचायन्दे ॥ दी० २ तात्पय

अयं भुवो मण्डलमोदयाद्रेर्गोप्तैकवीरो नरदेवनाथः ।
आस्थाय जैत्रं रथमात्तचापः पर्यस्यते दक्षिणतो यथार्कः ॥ २१ ॥
अस्मै नृपालाः किल तत्र तत्र बलिं हरिष्यन्ति सलोकपालाः ।
मंस्यन्त एषां स्त्रिय आदिराजं चक्रायुधं तद्यश उद्धरन्त्यः ॥२२॥
अयं महीं गां दुदुहेऽधिराजः प्रजापतिर्वृत्तिकरः प्रजानाम् ।
यो लीलयाद्रीन् स्वशरासकोट्या भिन्दन् समां गामकरोद्यथेन्द्रः ॥२३॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चक्रमाज्ञा सेना वा रथस्य चक्रं वा । मानसोत्तरगिरिमभिव्याप्य वर्त्तते । किं पर्यन्तमित्यत आह अर्को यावत्तपतीति ॥ १४ ॥

मनोरञ्जनानि कानि सुखानि येभ्यस्तैरात्मचेष्टितैर्यल्लोकं रञ्जयिष्यतीत्यर्थः । अन्यस्तु राजतीति निरुक्त्या अयन्तु रञ्जयति राजतीति निरुक्तिद्वयेनैव राजेति भावः ॥ १५ ॥

सत्यसन्धः सत्यप्रतिज्ञः । व्रतसन्धयोः शास्त्रीयलौकिकत्वाभ्यां भेदो ज्ञेयः ॥ १६ ॥

परस्यामात्मनो देहस्यार्द्धे इव प्रीतिमानिति शेषः ॥ १७ ॥

नन्दि सुखं वर्द्धयतीति सः. मुक्तसङ्गेषु विरक्तेष्वेव प्रसङ्गो यस्य सः ॥ १८ ॥

यस्मिन् वर्त्तमाना मुनयोऽविद्यया रचितमेकस्यापि जीवस्य स्थूलसूक्ष्मदेहाध्यासात् नानात्वं स्वप्ने च नानात्वं प्रतीतमपि निरर्थकमवस्त्वेव पश्यन्ति ॥ १९ ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वेन एवारण्यास्तत्रुत्थितः पृथुरूपोऽनलः । आसन्नः निकटचरोऽपि विदूरवत् अभिभवितुं नैव शक्यः ॥ ११ ॥

अन्तर्गूढस्थाने कृतानि जनानां कर्माणि चारयैः गुप्तभृत्यैः पश्यन् वायुरिवोदासीनः रागद्वेषरहितोऽपि आत्मेव परमात्मेवाध्यक्षस्तत्तत्कर्मानुसारेण फलदो भविष्यति ॥ १२ ॥

धर्मपथे धर्ममार्गे स्थितः ॥ १३ ॥

चक्रमाज्ञा रथचक्रं वा ॥ १४ ॥

मनोरञ्जनकैः प्राणिमनोह्लादकरैः आत्मचेष्टितैः यस्माल्लोकं रञ्जयिष्यति । अथ तस्मादमुं राजानमाहुः ॥ १५—१६-१७ ॥

देहिनामात्मवत् प्रेष्ठः अतिप्रियः सुहृदां नन्दि सुखं वर्द्धयतीति तथा । मुक्तसंगेषु त्यक्तदुःसंगेषु प्रकृष्टः । संगो यस्य सः । असाधुषु दण्डपाणिर्धर्मराजोऽवहित इत्यर्थः ॥ १८ ॥

महीं गां गोरूपां सतीम् ओजसा औषधीर्दोग्धा इमां महीं समां करिष्यते ॥ १९ ॥

"आत्मा वा अरे द्रष्टव्यः स विजिज्ञासितव्यः„ इत्यादिश्रुतिप्रसिद्धो जिज्ञास्यः साक्षाद्भगवान् त्र्यधीशः त्रिगुणानियन्ता स्वशक्तिविशेषेण विश्वस्रष्टेत्यर्थः स्वरूपतस्तु कूटस्थो निर्विकारः एवं स्वरूपतो निर्विकार एव स्वशक्त्याविश्वाकार इत्यौपनिषदानां सिद्धान्तः अविद्या विद्याहीनाः अनौपनिषदाः मूर्खास्तु "यतोवा इमानि भूतानि जायन्ते„ इत्यादि श्रुतिप्रतीतंयस्कायंत्वेन प्रसिद्धमपि स्वयमात्मानम कुरुतेत्यादिश्रुतेःयाविरचितमपिना नात्वं नानाकार्यभावं यस्मिन्निरर्थं पश्यन्ति नाङ्गीकुर्वन्तीत्यर्थः वेदान्तविद्याहीनानां बुद्धकापिलकणादादीनां तर्कमूलाः श्रीमद्भिर्भगवद्भिर्बादरायणचरणैरविरोधाध्याये निराकृताः कलया अर्चीरूपधारिण्या श्रिया सह श्रीपृथुरूपधारी अवतीर्णः

---

भाषाटीका ।

अत्यन्त दुःसह समीप होकर दूर सरीके होने से वेन अरण्यमें होने वाले पृथु रूपी अग्नि के जीतने को कोई भी न समर्थ है ॥ ११ ॥

बाहर भीतर दूतों के द्वारा सब कर्मों को देखने हुये उदासीन सरीके प्राणि मात्रों के भीतर वायु के तुल्य हो रहे हैं ॥

दण्ड के योग्य न होतो शत्रु के पुत्र को भी नहीं दंड देते धर्म मार्ग मे चलने वाले हैं तिसी से दड के योग्य यदि पुत्र होतो उसको दंड देते हैं ॥ १३ ॥

इन पृथुमहाराज की आज्ञा चक्रमानसाचल पर्यंत है और पर्यंत सूर्य भगवान् अपने किरणों से तपते हैं तहां तक सर्व आज्ञा चलती है ॥ १४ ॥

सबके मन रंज न करनेवाले अपने चरित्रोंसे सब प्रजों को र न करेंगे तिस से प्रजा लोग इनको राजा कहेंगे ॥ १५ ॥

दृढ संकल्प वाले हैं सत्य प्रतिज्ञा वाले हैं ब्राह्मणों के रक्षक हैं वृद्धजनों के अनुवर्तन करने वाले हैं सब प्राणि मात्र के शरण होने से रक्षा करने वाले हैं दूसरे को मान देने वाले हैं दीन के दयालु हैं ॥ १६ ॥

पर स्त्री को माता की नाईं देखने वाले हैं पत्नी को अपने अर्धांग मानने वाले हैं प्रजाओं मे पिता सरी के स्नेह करने वाले हैं ब्रह्म वेत्ताओं के सेवक हैं ॥ १७ ॥

सब प्राणी को आत्मा के तुल्य प्रिय हैं मित्र के आनन्द देने वाले हैं विरक्तों के संग करने वालेहैं दुष्टों को तो यमराज के तुल्य हैं ॥ १८ ॥

यह वीर पृथिवी से औषधी दुहकर धनुष के अग्र से पृथिवी को सम करेंगे ॥ १९ ॥

साक्षात् भगवान् तीनों लोक के ईश्वर हैं निर्विकार हैं व्यापक हैं विष्णु के कला से अवतीर्णहैं जिनमे विषम पुरुष अविद्या से विरचित विपरीत नाना बुद्धि करते हैं ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आउदयाद्रेरस्ततपर्यन्तं गोप्ता गोपायिष्यति तदर्थं पर्यस्यते पर्यटिष्यति प्रदक्षिणीकरिष्यतीत्यर्थः ॥ २१ ॥

अस्मै तथा प्रदक्षिणं कुर्वते मंस्यन्ते ज्ञास्यन्ति तस्य यश उद्धरन्त्य उदाहरन्त्यः कीर्तयन्त्यः ॥ २२ ॥

इन्द्र इवाद्रीन्विभिन्दन् ॥ २३ ॥

विस्फूर्जयन्नाजगवंधनुः स्वयं यदा चरत्क्ष्मामविषह्यमाजौ ।
तदा निलिल्युर्दिशि दिश्यसन्तो लाङ्गूलमुद्यम्य यथा मृगेन्द्रः ॥ २४ ॥
एषोऽश्वमेधाञ्छतमाजहार सरस्वती प्रादुरभावि यत्र ।
अहार्षीद्यस्य हयं पुरन्दरः शतक्रतुश्चरमे वर्त्तमाने ॥ २५ ॥
एष स्वसद्मोपवने समेत्य सनत्कुमारं भगवन्तमेकम् ।
आराध्य भक्त्या लभतामलं तज्ज्ञानं यतो ब्रह्म परं विदन्ति ॥ २६ ॥
तत्र तत्र गिरस्तास्ता इति विश्रुतविक्रमः ।
श्रोष्यत्यात्माश्रितागाथाः पृथुः पृथुपराक्रमः ॥ २७ ॥
दिशो विजित्याप्रतिरुद्धचक्रः स्वतेजसोत्पाटितलोकशल्यः ।
सुरासुरेन्द्रैरुपगीयमानमहानुभावो भविता पतिर्भुवः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां
षोडशोऽध्यायः ॥ १६ ॥



श्रीधरस्वामिकृतभावार्थदीपिका ।

लाङ्गूलमुन्नमय्य यथा मृगेन्द्रश्चरति तथा धनुर्विस्फूर्जयन् यदा क्ष्मामचरत् ॥ २४ ॥

सरस्वती यत्र प्रादुरभावि प्रादुरभूत् कर्मकर्तरि चिण् तत्राहार्षीत् हरणं करिष्यतीत्यर्थः ॥ २५ ॥ २६ ॥

विश्रुता विक्रमा यस्य गाथाः प्रबन्धान् आत्माश्रिता विष्णवाश्रिताः ॥ २७ ॥

उपगीयमानो महानुभावो यस्य ॥ २८ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अयं नरदेवनाथः प्रभुः आउदयाद्रेः उदयाद्रिपर्यन्तं भुवो मण्डलं गोप्ता रक्षिष्यति रक्षणार्थमेकवीरः स्वसमानाभ्यधिकवीरान्तरशून्यः जैत्रं जयशीलं रथमास्थाय अधिष्ठाय आत्तां धृतः चापो धनुर्येन सः अर्कवत् दक्षिणतः पर्यस्यते प्रदक्षिणां करिष्यतीत्यर्थः ॥ २१ ॥

अस्मै तथा प्रदक्षिणीकुर्वते पृथवे लोकपालैरिन्द्रादिभिः सहिता नृपाला राजानः तत्र तत्र बलिमुपायनं हरिष्यन्ति समर्पयिष्यन्ति तेषां नरलोकपालानां नृणां स्त्रियः तस्य पृथोः यशः कथयन्त्यः कथयन्त्य आदिराजं पृथुं चक्रायुधं भगवन्तं मंस्यन्ते ज्ञास्यन्ति ॥२२॥



तद्यशः कथनरूपं स्त्रीणां वाक्यमाहुरयामित्यादिभिश्चतुर्भिः-अयमित्यादिकं न सूतादिवाक्यम् एष दोग्धा महावीरो गां सतीमित्यनेन पौनरुक्त्यापत्तेः अत एव दुदुहे अकरोत् चिलिल्युरिति भूतनिर्देशोपपत्तिः अयमधिराजः पृथुः प्रजापतिः प्रजापालनाधिकृतः प्रजानां जीवनोपायकरः जीवनोपायं चिकीर्षुरित्यर्थः पर्य्यवसानं दोग्ध्यं गां गोरूपधरां मही दुदुहे इन्द्र इव स्वशराग्रकोट्या शरासशब्दो धनुः कोट्येति पूर्वमुक्तत्वात् शराग्र्यस्य धनुःश्रेष्ठस्य कोट्या अग्रेण लीलया अद्रीनभिन्दन् गां भूमिं समामकरोत् करिष्यतीत्यर्थः ॥ २३ ॥

लाङ्गूलं पुच्छमुद्यम्य उन्नमय्य यथा मृगेन्द्र सिंहः चरति तथा आजगवं धनुः विस्फूर्जयन् शत्रुभिः सोढुमशक्यो विक्रमो यस्य सः यदा क्ष्मामचरत् तदा असन्तो धर्मविरोधिनो दिशि दिशि निलिल्युः लीना बभूवुः ॥ २४ ॥

एष पृथुः सरस्वती सरस्वत्याख्या महानदी यत्र यस्मिन् ब्रह्मावर्त्ते प्रादुरभावि प्रादुरभूत् कर्मकर्तरि चिण् तत्र देशे शतमश्वमेधानाजहाराकरोत् यस्य शतक्रतोः क्रतुः शतं संकल्पानुतिष्ठतः पृथोश्चरमे शततमे क्रतौ वर्तमाने प्रवर्तमाने सति पुरन्दरः इन्द्रोऽयमश्वमहार्षीत् हृतवान् ॥ २५ ॥

एषः पृथुःस्वसद्मोपवनं स्वगृहस्य उपसमीपे यद्वनं तस्मिन् तत्रैकमसहायं भगवन्तं सनत्कुमारं भक्त्या आराध्य तदमलं ज्ञानमलभत किं तत् यतो ज्ञानात् परं ब्रह्म विन्दन्ति ॥ २६ ॥

विश्रुताः विक्रमाः यशांसि यस्य पृथुः पराक्रमः प्रभावो यस्य सः पृथुः आत्माश्रयाः स्वविषया गाथाः प्रबन्धरूपास्तास्ता गिरः श्रोष्यति ॥ २७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

स्वतेजसा स्वबलेन उत्पादिताः निर्मूलिताः लोकानां शल्य सदृशाः सुरारातयो येन सः अत एवाप्रतिरुद्धचक्रः अप्रतिहताङ्कः दिशो विजेष्यति सुरासुरश्रेष्ठैरुपगीयमानः महानुभावो यस्य सः भुवः पतिः भविता भविष्यति ॥ २८ ॥

इतिश्रीभागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

राज्यावधिमाहुरित्याह । अयमिति । ओदयाद्रेरुदयपर्वतपर्यन्तं पर्यस्यते पर्यटिष्यति ॥ २१ ॥

अन्येषु राजसु सत्सु अस्याधिराज्यं कथमित्याशङ्क्य चक्रवर्तित्वाद्युज्यतइति उच्यते । तस्मा इति ॥ २२ ॥

कीदृशं यशउद्धरन्त्य इत्यत्राह । अयं महीमिति ॥ २३ ॥

निलिल्युर्निलीनाः लाङ्गूलं पुच्छम् ॥ २४ ॥

महार्णीदित्यनेनास्य प्रतिभटः शतमखपदनान्यइति द्योतनाय कथितमितिज्ञातव्यं चरमे अन्त्येऽश्वमेधे वर्तमाने सति ॥ २५ ॥

यतोज्ञानात्परं ब्रह्म प्रत्यक्षं भवति योगिनः ॥ २३ ॥

तद्बुधिष्यत्कपातीतत्वेन कथं कथ्यत इत्यत्रोच्यते । तत्रेति । आत्माश्रिताः स्वविषया वाग्भिः षड्भिश्चरणैरुपलालिता यशोनिबन्धाः ॥ २७ ॥

अप्रतिरुद्धचक्रोऽप्रतिहताज्ञो भविता भविष्यतीत्युपसंहरते ॥२८

इतिश्रीभागवते महापुराणे चचतुर्थस्कन्धे विजयध्वजकृतटीकायाम् षोडपोऽध्यायः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्त्रिय इति । स्त्रियोऽपीत्यर्थः । उद्धरन्त्य इत्येव पाठः स्वामिसम्मतः मध्ये उद्धाहरन्त्य इति व्याख्यानोपादानात् ॥ २२——२३ ॥

स्वामित्यत्र स्वयमिति क्वचित् ॥ २४ ॥

प्रादुरभावि प्रादुर्भविता पृथुनैव ॥ २५ ॥

विदन्तीत्यत्र क्वन्तीति चित्सुखः ॥ २६—२७ ॥

भविता पतिर्भुव इत्यत्र जयतां पृथुर्भवेति चित्सुखः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य षोडशोऽध्यायः, ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ओदयाद्रेरुदयाद्रिमभिव्याप्य दक्षिणतः पर्यस्यते प्रादक्षिण्येन पर्यटिष्यति ॥ २१ ॥

मंस्यन्ते ज्ञास्यन्ति उद्धरन्त्यः कीर्तयन्तः ॥ २२ ॥

तासां किमाकारमेतद्यशः कीर्तनमित्याकाङ्क्षायामाहुः । श्लोकचतुष्कं अयमिति शरासकोट्या शरासनाग्रेण इन्द्र इवाद्रीनभिनन्दन् ॥ २३ ॥

लाङ्गूलमुन्नमय्य यथा मृगेन्द्रश्चरति तथा धनुर्विस्फूर्जयन् यदा क्ष्मामचरत् ॥ २४ ॥ २५ ॥२६॥

इति तत्र तत्र देशे ताभिरुक्तास्तास्ता लोकप्रसिद्धा गिरः गाथा आत्माश्रिताः स्वीयकवितया वर्णिताः कथाश्च । अत्र दुदुह इत्यादिवत् भूतकाल प्रयोगस्तदुक्तिकाले तत्तत् कर्मणामतीतत्वात् ॥ २७ ॥ २८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षोडशोऽयं चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अयं श्रीपृथुरूपी हरिः आउदयाद्रेर्भुवोमण्डलं गोप्ता गोपायिष्यति तदर्थं जैत्रं जयावहं रथमास्थाय पर्यस्यते पर्यटिष्यति ॥२१॥

एषां स्त्रियः तद्यशः चक्रायुधकीर्तिमुद्धरन्त्यः कीर्तयन्त्य आदिराजं चक्रायुधं मंस्यन्ते ज्ञास्यन्ति स्त्रियो मंस्यन्ते यदा तेकुतो न मंस्यन्ते इति प्रभावत्वं श्रीपृथोर्योतितम् ॥ २२ ॥

वज्रेण यथेन्द्रः अद्रीन् तथा गां स्वशरासकोट्या शरासनस्य क्षिप्यन्तेऽनेन तत्तथा तस्य धनुषः कोट्या गां भूमिं भिन्दन् लालयन् समामकरोत् करिष्यति ॥ २३ ॥

यदा क्ष्मां भूमिमचरत् तदा असन्तोऽसाधवो निलिल्युः ॥ २४ ॥

यत्र देशे सरस्वती प्रादुरभावि प्रादुरभूत्कर्मकर्तरिचिण् तत्र शतमश्वमेधान् आजहार आहरिष्यति चरमे वर्तमाने अनुष्ठीयमाने अश्वमहार्षीत् ॥ २५ ॥

यतो ज्ञानात्परं ब्रह्म विदन्ति तदमलं ज्ञानमलभत लप्स्यते ॥२६॥ विश्रुता विक्रमा यस्य सः आत्माश्रिताः आत्मविषयाः गिरो गाथाः निबन्धरूपाः ॥ २७ ॥

अनुगीयमानोऽनुवर्ण्यमानो महानुभावो महाप्रभावो यस्य सः भुवः पतिर्भविता भविष्यति ॥ २८ ॥

इतिश्रीभागवते महापुराणे चतुर्थस्कन्धे सिद्धान्तप्रदीपे षोडशाध्यायार्थप्रकाशः ॥ १६ ॥

---

भाषाटीका ।

ये महाराज उदय पर्वत से लेकर सब पृथिवी मण्डल की रक्षा करने वाले हैं एकही वीर हैं राजों के ईश्वर हैं सब को जीतने वाले रथ मे बैठ कर धनुष को धारण करके सब पृथिवी मे घूमेंगे जैसे दक्षिण की तरफ से सूर्य घूमता है ॥२१॥

सर्वत्र देशों में तहां तहां लोकपालों के सहित सब राजा लोग इनको भेट देंगे उन राजों की स्त्रीजन इन आदिराज को इनका यश को गातीहुई इन महाराज को चक्रायुध विष्णु करके मानेंगे ॥ २१ ॥

ये महाराज पृथिवी का दोहन करेंगे प्रजों के जीविका देनेवाले प्रजापति होंगे जो अनायास से अपने धनुष के अग्र भाग से पर्वतों को भेद न करके इन्द्रकी नांई पृथिवी को बराबर करदेंगे ॥ २२ ॥

भाषाटीका ।

अपने अजगव धनुष का टंकार शब्द करते हुये पृथी में विचरेंगे तब युद्धमें भी उसके शब्द को नहीं सहकर जैसे पूंछ उठाये हुये सिंह को देखकर मृग भगते हैं तैसे दिशा दिशा में चोरादि दुष्ट सब छिपजांयगे ॥२३॥

जहां पर सरस्वती नदी प्रगट भई है वहां पर येमहाराज सौ-१०० अश्व मेधयज्ञ करेंगे उन्ही के अंत के समय मे इंद्र आकर घोडा को हरण कर ले जायगा ॥२४ ॥

ये महाराज अपने उपवन मे आये हुये एकेले भगवान् सनत्कुमार को प्राप्त होकर उनकी भक्ति पूर्वक आराधना से उस निर्मल ज्ञान को प्राप्त होंगे कि जिस से पर ब्रह्म को जान कर प्राप्त हो जाते हैं ॥ २५ ॥

देशों मे तहां तहां सर्वत्र इस प्रकार प्रसिद्ध पराक्रम वाले विख्यात कीर्ति वाले ये महाराज महान् विष्णु भगवान् की कथाओं को सुनेंगे ॥ २६ ॥ .

दिशों को जीत कर निष्कंटक आज्ञा को चला कर अपने प्रभाव से सब संसार के दुखका नाश करके देवता दैत्यों के गान करने लायक यशपढा कर सब पृथिवीके राजा हो रहेंगे ॥२७ २८॥

इति श्री भागवत चतुर्थ स्कंध सोलवां अध्याय का भाषा नुवाद लक्ष्मणाचार्य कृत समाप्त ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे षोडशोऽध्यायः समाप्तः ॥ १६ ॥

## सप्तदशोऽध्यायः।

———:o:———

मैत्रेय उवाच

एवं स भगवान् वैन्यः ख्यापितो गुणकर्मभिः।
छन्दयामास तान् कामैः प्रतिपूज्याभिनन्द्य च ॥ १ ॥
ब्राह्मणप्रमुखान् वर्णान् भृत्यामात्यपुरोधसः।
पौरान् जानपदान् श्रेणीः प्रकृतीः समपूजयत् ॥ २ ॥

विदुरउवाच

कस्माद्दधार गोरूपं धरित्री बहुरूपिणी।
यां दुदोह पृथुस्तत्र को वत्सो दोहनं च किम् ॥ ३ ॥
प्रकृत्या विषमा देवी कृता तेन समा कथम्।
तस्य मेध्यं हयं देवः कस्य हेतोरपाहरत् ॥ ४ ॥
सनत्कुमाराद्भगवतो ब्रह्मन्! ब्रह्मविदुत्तमात्।
लब्ध्वा ज्ञानं स विज्ञानं राजर्षिः कां गतिं गतः ॥ ५ ॥
यच्चान्यदपि कृष्णस्य भवान् भगवतःप्रभोः।
श्रवःसुश्रवसःपुण्यं पूर्वदेहकथाश्रयम् ॥ ६ ॥
भक्ताय मेऽनुरक्ताय तव चाधोक्षजस्य च।
वक्तुमर्हसि योऽदुह्यद्वैन्यरूपेण गामिमाम् ॥ ७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ततः सप्तदशे लोकक्षुधाः प्रशमयन्पृथुः
ग्रस्तबीजां महीं हन्तुं यत्तां भीत्या तया स्तुतः ॥ १ ॥

छन्दयामास तोषितवान् ॥ १ ॥

भृत्यानमात्यान्पुरोधसः पुरोहितांश्च श्रेणीस्तैलिकताम्बूलिकादीन्पौरविशेषात् प्रकृतीर्नियोगिनः ॥ २ ॥

दोहनं पात्रम् ॥ ३ ॥

मेध्यं यज्ञार्हम् ॥ ४ ॥

सविज्ञानमपरोक्षज्ञानसहितम् ॥ ५ ॥

पूर्वदेहः पृथ्ववतारस्तत्कथाश्रयम् श्रवो यशः सुष्ठु श्रवो यस्य ॥ ६ ॥

अदुह्यदुग्धवान् ॥ ७ ॥ ८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं सूतादिभिः प्रख्यापितोरुगुणगणः पृथुः प्रतिपूजितसूतब्राह्मणभृत्यामात्यगणः क्षुत्पीडितजनैः प्राप्तशरण आत्मनिरुद्धबीजां महीं जिघांसुः पुनस्तया प्रसादितो बभूवेत्याह मुनिः * षोडशेन। एवमिति। भगवान् वैन्यः पृथुरेवं गुणैः कर्मभिश्चात्मीयैः प्रख्यापितः प्रसिद्धिं प्रापितस्तान् सूतादीन् कामैस्तत्तदिच्छाविषयैर्वस्त्राभरणादिभिः प्रतिपूज्य तेषां स्तुतिमभिनन्द्य च छन्दयामास तोषितवान् ॥ १ ॥

ब्राह्मणादीन् चतुरो वर्णान् भृत्यामात्यान् पुरोधसः पुरोहितान् श्रेणीः तैलिकताम्बूलिकादीन् पौरान् पुरवासिनो जानपदान् देशवासिनो जनान् प्रकृतीः निजयोगिनः समपूजयत् ॥ २ ॥

एवं सूतादिस्तुतिकथनव्याजेन समासतः आचितपृथुचरितं मुनिं पुनस्तच्चरितशुश्रूषया चत्ता पृच्छतीत्याह। विदुरइति। बहुरूपिणी कामरूपिणी धरित्री कस्माद्धेतोर्गोरूपं दधार यां पृथुर्दोह तत्र वत्सः कः दोहनं दोहनसाधनं पात्रम् ॥ ३ ॥

प्रकृत्या स्वभावेन विषमा पर्वतादिभिर्निम्नोन्नता [illegible] धरित्री कथं समीकृता पृथोर्मेध्यं यज्ञार्हं हयमश्वं देव इन्द्रः कस्य हेतोः अपाहरत् ॥ ४ ॥

हे भगवन्! मैत्रेय! ब्रह्मविदांमध्ये उत्तमात् सनत्कुमारात् ब्रह्म विषयं सविज्ञानमुपासनात्मकज्ञानसहितं ज्ञानं शास्त्रजन्यं ज्ञानं लब्ध्वा राजर्षिः पृथुः कां गतिं गतः प्राप्तः ॥ ५ ॥

सुश्रवसः शोभनकीर्तेः प्रभोर्भगवतः कृष्णस्य यः पूर्वदेहः प्रथमोऽवतारः पृथुस्तस्य या कथा तदाश्रयं तत्प्रतिपाद्यं पुण्यं शृण्वतां पुण्यसंपादकं श्रवोयशः यच्चान्यदपृष्टमपि तत्सर्वं [illegible]

* अत्रसप्तदशाध्यायारम्भेऽपि चतुर्दशपञ्चदशयोरेकाध्यायत्वोपपादनादाह षोडशेनेति।

## सूत उवाच

**चोदितो विदुरेणैवं वासुदेवकथां प्रति ।**
**प्रशस्य तं प्रीतमना मैत्रेयः प्रत्यभाषत ॥ ८ ॥**

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तव अधोक्षजस्य च भक्ताय अनुरक्ताय मे मह्यं वक्तुमर्हसि कोऽसावधोक्षजो यस्य भक्तायेत्युक्तं तत्राह । योऽधोऽक्षजो वैणयरूपेण पृथुरूपेणावतीर्णः इमां गां पृथ्वीमदुह्यत दुग्धवान् ॥ ७ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

अस्मिन्नध्याये सूतादिभिः श्रीहरिर्महिमोपनिबद्धत्वेन पृथोर्महिम्न उक्तत्वात्तन्माहात्म्यमवोच्यते तत्रादौ सूतादितृप्तिकरणप्रकारमाह । एवं भगवानित्यादिना छन्दयामास तोषयामास ॥ १ ॥

"राज्ञा समानवयसः श्रेणयस्त्वङ्गरक्षका„ इत्यभिधानाच्छ्रेणयोऽङ्गरक्षकाः ॥ २ ॥

विदुरः सूतादिभिः सूचितङ्गोदोहनादिपृथुविक्रमं विस्तरन्नः श्रोतुं लोकोपकाराय पृच्छति । कस्मादिति। दोहनं पात्रद्रव्यम३-४-५

पूर्वदेहाः * पुरातनास्तेषां कथाश्रयं सत्कथासम्बन्धं सुश्रवसो हरेः श्रवो यशः ॥ ६ ॥

योऽदुह्यदिति सर्वप्राणिनां तच्छक्तिनियतत्वात्पुनर्वचनमादौ वक्तव्यार्थम् ॥ ७ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

अथेदृशलोकसाहाय्याय भविष्यामीति संजातसुखस्य तस्य वृत्तमाह । एवमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

कां गतिं ब्रह्मरूपां भगवद्रूपाम् ॥ ५ ॥

यद्वान्यदिति द्वयेन श्रीविदुरस्य सर्वत्राप्येतदेवहार्दं व्यक्तं भवेदित्यत्र भवानिति क्वचित् चित् सुखसम्मतोऽयम् । देहत्वभावे श्यावतारत्वं पूर्वत्वं प्राक् प्रकाशापेक्षयैव ॥ ६ ॥ ७ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पृथुः सप्तदशे लोकैः क्षुधार्त्तैरभ्यर्थितः ।
धरां ग्रस्तसमस्तान्नां निघ्नन् भीत्या तया स्तुतः ॥ १ ॥

छन्दयामास तोषितवान् ॥ १ ॥

श्रेणीस्तैलिकताम्बूलिकादीन् प्रकृतीर्नियोगवर्त्तिनः समपूजयत धन्याःस्थ भोधन्याः स्थ युष्मानहं साधु पालयानीत्येतदेवमत्कर्तृकं युष्मत्परिचर्यां भूयादिति मधुरमभ्यभाषत ॥ २ ॥ ॥ ३-४-५-६ ॥

अदुह्यतेत्यार्षमभोक्ष् ॥ ७ ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सप्तदशे स्तावकादीन्सत्कृत्य लोकवृत्तिसिद्धये प्रवृत्तो भगवान् भूमिं हन्तुमुद्युक्तस्तयास्तुत इति वर्णयति । एवमिति । ख्यापितः प्रकथितः संस्तुत इत्यर्थः तान् स्तावकान् कामैर्भोगैः प्रतिपूज्य साधुवादिनो यूयमित्यादिमधुरवाक्यैरभिनन्द्य च छन्दयामास वरार्थनादनपूर्वकेन वरदानेन तोषितवानित्यर्थः ॥ १ ॥

श्रेणीस्तत्तच्छिल्पवतस्तैलिकताम्बूलिकादीन् प्रकृतीर्नियोगिनः ॥ २ ॥

दोहनं पात्रम् ॥ ३ ॥

देव इन्द्रः मेध्यं यज्ञियम् ॥ ४—५ ॥

सुश्रवसः शोभनयशसः श्रीकृष्णस्य पूर्वदेहः पृथ्ववतारस्तत्कथाश्रयं श्रवो यशः ॥ ६ ॥

यः श्रीकृष्णः अदुह्यत दुग्धवान् ॥ ७ ॥

———

भाषाटीका ।

मैत्रेय जी बोले इस प्रकार से वह भगवान् वेन पुत्र पृथु महाराज गुण कर्मों से जब कीर्तित भये तब उन सूतादिकों की प्रशंसा करके उनको मनोरथ वर मागने की आज्ञा दिये ॥ १ ॥

ब्राह्मणादिक सववर्ण भृत्य मंत्री पुरोहित पुरवासी देशवासी और प्रजा इन सबों का यथा योग्य सन्मान किया ॥ २ ॥

विदुर जी पूछने लगे कि बहुत रूप वाली पृथिवी ने गऊ का रूप क्यों धारण किया जिस को पृथुजी ने दुहा है तिस में वत्सा कौन है दुहने का पात्र क्या है ॥ ३ ॥

स्वभाव से विषम पृथिवी देवी को उन ने कैसे सम किया उन के यज्ञ के घोडा को इंद्र ने क्यों हरण किया ॥ ४ ॥

हे ब्रह्मन् ! ब्रह्मवेत्ताओं मे श्रेष्ठ सनत्कुमारजी से विज्ञान सहित ज्ञानको प्राप्त होकर वे राजर्षि किस गति को प्राप्त भये ॥ ५ ॥

और भी जो कुछ सुन्दर कीर्तिवाले भगवान् प्रभु श्रीकृष्णचन्द्र का पवित्र पूर्व देह का चरित्र हो तिस को कहिये ॥ ६ ॥

आपका और भगवान् का मैं भक्त अनुरागी हूं मेरे से आप कहिये जिन भगवान् ने पृथुरूप से पृथिवी को दुहा है ॥ ७ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

जनतायास्त्वं पाल इत्यामन्त्रितो नियुक्तः तदा निरन्ने क्षितितले सति क्षुधा क्षामाः क्षीणा देहा यासां ताः प्रजा पत्य पतिं पृथुमब्रुवन् ॥ ८ ॥ ९ ॥

मैत्रेय उवाच

यदाभिषिक्तः पृथुरङ्ग ! विप्रैरामन्त्रितो जनतायाश्च पालः ।
प्रजा निरन्ने क्षितिपृष्ठ एत्य क्षुत्क्षामदेहाः पतिमभ्यवोचन् ॥ ९ ॥
वयं राजन् ! जाठरेणाभितप्ता यथाग्निना कोटरस्थेन वृक्षाः ।
त्वामद्य याताः शरणं शरण्यं यः साधितो वृत्तिकरः पतिर्नः ॥ १० ॥
तन्नो भवानीहतु रातवेऽन्नं क्षुधार्दितानां नरदेवदेव !
यावन्न नंक्ष्यामह उज्झितोर्जा वार्त्तापतिस्त्वं किल लोकपालः ॥ ११ ॥

मैत्रेय उवाच

पृथुः प्रजानां करुणं निशम्य परिदेवितम् ।
दीर्घं दध्यौ कुरुश्रेष्ठ ! निमित्तं सोऽन्वपद्यत ॥ १२ ॥
इति व्यवसितो बुद्ध्या प्रगृहीतशरासनः ।
सन्दधे विशिखं भूमेः क्रुद्धस्त्रिपुरहा यथा ॥ १३ ॥
प्रवेपमाना धरणी निशाम्योदायुधं च तम् ।
गौः सत्यपाद्रवद्भीता मृगीव मृगयुद्रुता ॥ १४ ॥
तामन्वधावत्तद्वैन्यः कुपितोऽत्यरुणेक्षणः ।
शरं धनुषि सन्धाय यत्र यत्र पलायते ॥ १५ ॥
सा दिशो विदिशो देवी रोदसी चान्तरं तयोः ।
धावती तत्र तत्रैनं ददर्शानूद्यतायुधम् ॥ १६ ॥
लोके नाविन्दत त्राणं वैन्यान्मृत्योरिव प्रजाः ।
त्रस्ता तदा निववृते हृदयेन विदूयता ॥ १७ ॥
उवाच च महाभागं धर्मज्ञापन्नवत्सल ! ।
त्राहि मामपि भूतानां पालनेऽवस्थितो भवान् ॥ १८ ॥
स त्वं जिघांससे कस्माद्दीनामकृतकिल्बिषाम् ।
अहनिष्यत्कथं योषां धर्मज्ञ इति योमतः ॥ १९ ॥
प्रहरन्ति न वै स्त्रीषु कृतागःस्वपि जन्तवः ।
किमुत त्वद्विधा राजन् ! करुणा दीनवत्सलाः ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

जाठरेणाग्निनाभितप्ताः यः साधितो विप्रैर्मन्यनेन सम्पादितस्तं त्वां शरणं याताः ॥ १० ॥

तत्तस्मान्नोऽस्माकमन्नं रातवे रातुं दातुमीहतु ईहतां यत्नं करोतु उज्झितोर्जोऽस्यक्ताश्चाः सन्तः वार्त्ताया जीविकायाः पतिः ॥ ११ ॥

परिदेवितं विलापं निमित्तं हेतुमन्वपद्यत ज्ञातवान् ॥ १२ ॥

पृथिव्या ओषधिबीजानि ग्रस्तानीति व्यवसितो निश्चितवान् ॥ १३ ॥

मृगयुना द्रुतानुगता मृगीव ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

योधर्मज्ञ इति मतः स भवान् योषां मां कथमहनिष्यद्धनिष्यति ॥ २९ ॥ २० ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवमापृष्टो मुनिर्विस्तरेण पृथुचरितं वक्तुमुपचक्रमे इत्याह सूतः चोदित इति । अस्य शुकवचनत्वं तु न्याय्यं विदुरोक्त

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वासुदेवस्य पृथोः कथां प्रति चोदितो मैत्रेयः प्रीतमनाः सन् तं विदुरं प्रशस्य प्रस्तूय अभाषत ॥ ८ ॥

अङ्ग हे विदुर ! विप्रैर्यदा पृथुरभिषिक्तः जनतायाः जनसमूहस्य "ग्रामजनबन्धुसहायेभ्यस्तल्" इति समूहार्थे तल्प्रत्ययः पाल इत्यामन्त्रितो नियुक्तश्च तदा क्षितिपृष्ठे भूमण्डले निरन्ने अन्नरहिते सति क्षुधा क्षामाः क्षीणा देहा यासान्ताः प्रजा एत्य समीपमागत्य पतिं पृथुमब्रुवन् ॥ ९ ॥

हे राजन् ! यथा कोटरगतेन वन्हिना वृक्षा अभितस्तप्ता भवन्ति तथा जाठरेणाग्निना अभितप्ताः सन्तः यो भवान्नोऽस्माकं वृत्तिकरः पतिः विप्रैः साधितः मथनेन सम्पादितस्तं शरण्यं त्वामधुना शरणं याताः गताः ॥ १० ॥

तस्मात् हे नरदेव ! उज्झितोऽस्त्यक्तान्ना वयं यावन्न नंक्ष्यामहे न नाशं यास्यामस्तावदेव क्षुधार्दितानां नोऽस्माकमन्नं रातवे दातुं भवानीहतु यत्नं करोतु यतस्त्वं वार्ताया जीविकायाः पतिः रचिता लोकानां पालकश्च प्रजानां करुणां परिदेवितं विलापं निशम्य श्रुत्वा पृथुः दीर्घं चिरं दध्यौ चिन्तितवान् हे कुरुश्रेष्ठ ! सः पृथुः निमित्तं लोकस्य निरन्नत्वे निमित्तं हेतुमन्वपद्यत ज्ञातवान् ॥ ११—१२ ॥

इतीति । पृथिव्या ओषधिबीजानि ग्रस्तानीति व्यवसितः निश्चिन्वानः प्रगृहीतं शरासनं धनुर्येन सः यथा त्रिपुरहन्ता रुद्रः तथा भूमेर्हेतोः क्रुद्धः विशिखं बाणं सन्दधे ॥ १३ ॥

उद्यतायुधं शरासने संहितशरं पृथुं निशम्य दृष्ट्वा धरणी प्रवेपमाना नितरां भयात्कम्पमाना गौः सती गोरूपं धृतवती मृगयुना व्याधेन क्रुद्धेन द्रुता अनुद्रुता भीता मृगीव हरिणीव अपाद्रवत् पलायितवती ॥ १४ ॥

तत्र तत्र तामेव धृतगोरूपां धरणीमनुसृत्य गतवान् ॥ १५ ॥

सा देवी धरित्री दिशो विदिशः रोदसी द्यावापृथिव्यौ तयोरन्तरमन्तरिक्षं च धावती सती तत्र दिग्विदिगादिषु एनं पृथुमनुप्रविष्टमुद्यतमुद्धृतमायुधं येन तं ददर्श ॥ १६ ॥

मृत्योर्भीताः प्रजा इव वैन्यात्पृथोस्त्रस्ता सती त्राणं रक्षणोपायं लोके नाविन्दत नालभत किन्तु तदा विदूयता नितरामुपतप्तेन हृदयेन निवृत्तं न्यवर्तत ॥ १७ ॥

उवाच च उक्तमेवाह । हे महाभाग ! महाबुद्धिमन् परेङ्गितज्ञेत्यर्थः धर्मज्ञ स्त्रीवधानर्हत्वरूपधर्मज्ञ आपन्नवत्सल आपन्नेषु आपदं प्राप्तेषु वत्सलत्वविशिष्ट भूतानां पालने अवस्थितो भवान् अतो भूतेष्वन्तर्भूतां मामपि त्राहि ॥ १८ ॥

सत्यं भूतपालनाधिकृतः त्वम् अकृतकिल्बिषां निरपराधां दीनां मां कथं जिघांससि हन्तुमिच्छसि अनेन स्त्रस्यावध्यत्वमुक्तं हन्तुर्भवं तवानुचितमित्याह । अहनिष्यदिति । अतो न पौनरुक्त्यं धर्मज्ञ इति मतः ज्ञातो यो भवान् योषां मां कथ महनिष्यत् हनिष्यति ॥ १९ ॥

हे राजन् ! सामान्यजना अपिकृतागःस्वपि कृतापराधास्वपि स्त्रीषु नैव प्रहरन्ति किमुत दीनवत्सलाः करुणास्त्वादृशा न प्रहरन्तीति ॥ २० ॥

॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र शुकोऽपि कथाप्रसङ्गं सन्दधातीत्याह। चोदितइति। त्वयाहं यथा चोदित एवं विदुरेणेति ॥ ८ ॥

तत्र पूर्वोत्तरकथाविच्छेदपरिहारायादितएव मैत्रेयोक्तीत्याह । यदेति । क्षितिपृष्ठेभूगोलके निरन्ने भोजनपदार्थरहिते सति ॥ ९ ॥

निरन्न इत्यनेन दुःखनिमित्तमिति ज्ञातं तत्कीदृशमत्राह । वयमिति । जाठरेण जठरसम्बन्धिनाग्नि कोटरंवृक्षविवरं युष्माकमीदृशाग्निपरिहाराय अन्यशरणाप्राप्तिः किन्न स्यादत्राह । यःशाधीति । यस्त्वन्नोऽस्माकं वृत्तिकरः पतिर्यस्मात्तस्मान्नोऽस्माकञ्चाभिमनुशिक्षस्वेयं बुद्धिरिति ॥ १० ॥

वृत्तिकर इत्यनेन ज्ञाताभिप्रायस्यापि राज्ञः स्वाभिप्रायमुज्ज्वलयन्तीत्याह । तन्न इति । रातवे मरणाय उज्झितान्नास्त्यक्तान्नाः पूर्वमेवेति शेषः वार्तापतिः जनानामन्नं दत्वा वा रक्षक इत्यर्थः ॥ ११ ॥

राज्ञोराजधनमदोत्सिक्तत्वसम्भवेन किमुत्तरं कार्यमभूत्तत्राह पृथुरिति । करुणान्दयाजनकं निमित्तमन्नाभावस्य कारणमन्वपद्यत ज्ञातवान् ॥ १२ ॥

ज्ञात्वाप्यशक्यमितिमत्वा साधयिष्याम इति गुर्वाजङ्घिकावार्णामुक्त्वा किङ्कार्यान्तरं तेनास्थायीति तत्राह । इतीति । विशिखं शरं त्रिपुरहा हरः ॥ १३ ॥

तत्र भूम्या किमकारीति तत्राह । प्रवेपमानेति । वेपृकम्पनइति-धातुः गौः सती गोरूपा मृगयोर्व्याधात् ॥ १४ ॥

अत्र पृथुना पलायन्त्याश्रिया किमिति निवृत्तं किन्नेत्याह । तामेवेति । अन्वव्रजत् पृष्ठतोगतोऽभूत् सारङ्गइव कार्यसारग्राहित्वात्पृष्ठतोऽयासीदेव न बाणं मुक्त्वावधीदित्याशयेनाह । शरमिति ॥ १५ ॥ १६ ॥

राजरूपिणो हरेः सन्निधानविशेषवित्त्वादुत्तरकार्यस्यापि-स्वाभिप्रेतत्वान्नेन्द्राद्यन्यतमोऽपि तामत्रायतेत्याह । लोकेनेति । वैन्यादन्यस्माज्जीवन् भद्राणि पश्यतीति बुद्ध्यैव हरेः सर्वप्राणिप्रेरकत्वेन तच्छक्तिनियतत्वाच्च भूमेरावृत्तिमाह । अस्तेति ॥ १७ ॥

अत्र वचनमेवानुसर्तव्यं नान्यदिति भावयती वक्ति । उवाचेति ॥ १८ ॥

रक्षायां नियुक्तस्य तवापराधमन्तरेणाभिहननं न युक्तमित्याह। सत्यमिति । एवमपि मांहनिष्यसि चेत्तव धर्मज्ञत्वमपहसितं स्यादित्याशयेनाह । अहनिष्यदिति । योभवान् धर्मज्ञ इति मतोऽभविष्यत्तर्हि कथं योषां माहनिष्यदित्यन्वयः ॥ १९ ॥

वालिशा अपि जन्तवः स्त्रीवधन्नकुर्वन्ति किम्पुनर्भवादृशा इत्याह । प्रहरन्तीति ॥ २० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

निमित्तं वक्ष्यमाणानुसारेण पृथिव्या ग्रस्तबीजत्वम् ॥१२॥

इति वक्ष्यमाणतत्कर्तव्यव्यवसितो निश्चितवान् । ममाभिपेके संजातेऽपि बीजानि गोपायतीति क्रुद्धः ॥ १३—१४ ॥

तद्विति तत्र तत्रेत्यर्थः तामेवान्वद्रवदिति पाठः क्वचित् ॥१५-१९॥

जन्तवः साधारणा जन्तुतुल्या मूढा अपि मनुष्या इत्यर्थः ॥ २० ॥

———

**मां विपाटयाजरां नावं यत्र विश्वं प्रतिष्ठितम् ।**
**आत्मानं च प्रजाश्चेमाः कथमम्भसि धास्यसि ॥ २१ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

जनतायास्त्वं पाल इत्यामन्त्रितो नियुक्तश्च तदा ॥ ९ ॥

यस्त्वं साधितः विप्रैर्मन्थनेन सम्पादितः ॥ १० ॥

तत्तस्मान्नोऽस्माकमस्मभ्यमन्नं रातवे रातुं दातुमीहतु ईहतां यत्नं करोतु । अत्र माविलम्ब्यतामित्याहुः । यावदिति । उज्झितोर्जोऽस्यक्ताम्नाः सत्यः । वार्त्तापतिर्जीविकाकर्त्ता ॥ ११ ॥

निमित्तं हेतुं पृथिव्यैव ओषधिबीजानि ग्रस्तानीति अन्वपद्यत ज्ञातवान् ॥ १२ ॥

ममाभिषेके जातेऽपि यदीयं बीजानि गोपायति तदस्यां चतुर्थमुपायमेव करवाणीति व्यवसितं निश्चयो यस्य सः । भूमेर्भूमिं प्रति ॥ १३ ॥

मृगयुणा द्रुता अनुगता मृगीव ॥ १४ ॥

तत्तदा ॥ १५ ॥

रोदसी द्यावापृथिव्यौ तयोरन्तरमन्तरीक्षमनु स्वपृष्ठदेशे उद्यतायुधमेनं पृथुं ददर्श ॥ १६ ॥

निववृते पृथोरभिमुखी बभूव ॥ १७—१८ ॥

अहनिष्यत् हनिष्यति ॥ १९—२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रशस्याभिनन्द्य ॥ ८ ॥

हेऽङ्ग । यदा विप्रैः पृथुरभिषिक्तः जनतायाः जनसमूहस्य त्वं पाल इत्यामन्त्रितो नियुक्तश्च तदा निरन्ने क्षितिपृष्ठे क्षुत्क्षामाः क्षुधा क्षीणाः देहा यासां ताः प्रजा पत्य निकटमागत्य पतिं पृथुम् अभ्यवोचन् अब्रुवन् ॥ ९ ॥

जाठरेण भौदर्य्येण यः साधितः अस्मत्पालनाय मुनिभिर्मन्थनेन संपादितः अतस्तन्त्वां शरणं रक्षितारं याताः प्राप्ताः ॥ १० ॥

तत्तस्मात् लोकपालस्त्वं वार्तापतिः जीविकाप्रदः भवान् नोऽस्माकमन्नं रातवे दानाय इह यत्नं करोतु यावद्वयम् उज्झितोर्जोऽस्यक्ताम्नाः सत्यो न नङ्क्ष्यामेह ॥ ११ ॥

करुणं परिदेवितं विलापं निशम्य श्रुत्वा दीर्घं चिरं परिदध्यौ तदनन्तरं निमित्तं निरन्नत्वे कारणमन्वपद्यत ज्ञातवान् ॥ १२ ॥

ओषधिबीजानि भूम्या ग्रस्तानीति बुद्ध्वा व्यवसितो निश्चितवानः यथा त्रिपुरस्य हेतोः क्रुद्धस्तद्वत् भूमेर्हेतोः क्रुद्धः विशिखं संदधे ॥ १३ ॥

मृगयुद्रुता व्याधानुगता ॥ १४—१५ ॥

सा गोरूपिणी रोदसी द्यावापृथिव्यौ अन्तरमन्तरीक्षम् अनु अनुक्रमम् ॥ १६—१७ ॥

आपन्नवत्सल ! प्रपन्नपाल ! ॥ १८ ॥

अकृतकिल्बिषां तत्रापि दीनां त्वं कथं जिघांससे यो धर्मज्ञ इति मतः स भवान् योषां मां कथमहनिष्यत् हनिष्यति ॥ १९—२० ॥

---

भाषाटीका ।

सूतजी बोले वासुदेव की कथा कहने को विदुरजीने जब प्रेरणा किया तब प्रसन्न होकर मैत्रेयजी भाषण करने लगे ॥ ८ ॥

हे विदुरजी ! जिससमय मे ब्राह्मणोंने नियुक्त करके पृथु महाराजको पृथिवीका राजा किया तब लोग सब पृथिवीमें अन्न न होनेसे भूख से कृश शरीर वाले होकर राजा से कहने लगे ॥ ९ ॥

हे राजन् ! जैसे जङ्गल के वृक्ष की आगसे पेड जलते हैं तैसे हमलोगभूखकी जठराग्निसे जलते हैं हमलोगअब आपके शरणआये हैं जो आपवृत्तिदेनेवाले पति हो ॥ १० ॥

सो आप हमको देनेको अन्नकी चेष्टा करो हे नरदेव! हम सब लोग क्षुधा से पीडित हैं जब पर्यन्त हम लोग अन्न के विना न मरजायं तब तक आप यत्न करो आप हमारे लिये लोक पाल हो ॥ ११ ॥

मैत्रेयजी बोले पृथु महाराज ने प्रजों का ऐसा करुणा में रोदन सुनकर हे कुरुश्रेष्ठ देरतक विचारा तो उपाय मालूम पडा ॥ १२ ॥

मनमें उपाय को विचारकर धनुषको हाथ में लेकर जैसे त्रिपुरासुर के ऊपर क्रोध करके महादेवजीने बाण उठायाथा तैसे पृथिवीपर उठाया ॥ १३ ॥

उनको आयुध उठाया जानकर पृथिवी कांपने लगी गऊका रूप धारण करके जैसे बहेलिया के खेदने से गऊ भगे तैसे भगी ॥ १४ ॥

क्रोध से बडी लाल आंख कर के पृथुजी उस के पीछे दौडे धनुष चढा कर जहां वह गई तहां गये ॥ १५ ॥

वह देवी दिशा विदिशा आकाश पाताल बीचमें दौडती जहां गई तहां धनुष चढाये इनको देखती भई ॥ १६ ॥

जैसे मृत्यु से प्रजोंका बचना नहीं होता है तैसे लोक में पृथु से पृथिवी को कहीं भी रक्षक नहीं मिला तब तो डरके मारे कांपते हृदय से पृथिवी भगने से बन्द होगई ॥ १७ ॥

फिरमहाभाग पृथुजीसे बोलने लगी हे धर्मज्ञ ! हे भक्त वत्सल आप भूतों के पालन मे स्थित होतो मेरीभीरक्षा करो ॥ १८ ॥

मैंनिरपराधिनीहूं गरीबहूं मेरेकूं आप क्यों मारने चाहते हो आप धर्मज्ञमाने जाते हो सो स्त्री को कैसे मारोगे ॥ १९ ॥

हे राजन् ! सब लोक अपराध करने वाली भी स्त्रियों पर प्रहार नहीं करते हैं और आप सरीके कृपा वाले दीनवत्सल क्यों स्त्री को मारेंगे ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अजरां दृढाम् धास्यसि धारयिष्यसि ॥ २१ ॥

पृथुरुवाच

वसुधे ! त्वां वधिष्यामि मच्छासनपराङ्मुखीम् ।
भागं बर्हिषि या वृङ्क्ते न तनोषि च नो वसु ॥ २२ ॥
यवसं जग्ध्यनुदिनं नैव दोग्ध्यौधसं पयः ।
तस्यामेवं हि दुष्टायां दण्डो नात्र न शस्यते ॥ २३ ॥
त्वं खल्वोषधिबीजानि प्राक्सृष्टानि स्वयंभुवा ।
न मुञ्चस्यात्मरुद्धानि मामवज्ञाय मन्दधीः ॥ २४ ॥
अमूषां क्षुत्परीतानामार्त्तानां परिदेवितम् ।
शमयिष्यामि मद्बाणैर्भिन्नायास्तव मेदसा ॥ २५ ॥
पुमान् योषिदुत क्लीब आत्मसम्भावनोऽधमः ।
भूतेषु निरनुक्रोशो नृपाणां तद्वधोऽवधः ॥ २६ ॥
त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः ।
आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥ २७ ॥
एवं मन्युमयीं मूर्तिं कृतान्तमिव बिभ्रतम् ।
प्रणता प्राञ्जलिः प्राह मही सञ्जातवेपथुः ॥ २८ ॥

धरोवाच

नमः परस्मै पुरुषाय मायया विन्यस्तनानातनवे गुणात्मने ।
नमः स्वरूपानुभवेन निर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये ॥ २९ ॥
येनाहमात्मायतनं विनिर्मिता धात्रा यतोऽयं गुणसर्गसंग्रहः ।
स एव मां हन्तुमुदायुधः स्वराडुपस्थितोऽन्यं शरणं कमाश्रये ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

बर्हिषि यज्ञे या भवती देवतारूपेण भागं वृङ्क्ते भजते वसु-धान्यादिकम् ॥ २२ ॥

गोरूपेण तु यवसं तृणं जग्धि अत्तीत्यर्थः पयस्तु नैव दोग्धि दुग्धं न स्रवति अत्रास्मिन्नपराधे ॥ २३ ॥

आत्मनि देहे रुद्धानि ॥ २४ ॥

मद्वधे सर्वथा अन्नं न स्यादिति चेदत आह । अमूषां प्रजानाम् मेदसा मांसेन ॥ २५ ॥

यत्तूक्तं योषां कथं हनिष्यतीति तत्राह । पुमानिति । तस्य वधोऽवध एव ॥ २६ ॥

यच्चोक्तं कथमम्भसि धास्यसीति तत्राह । त्वामिति । तिलशस्तिलप्रमाणानि खण्डानि इत्येवं भूतामवस्थां नीत्वा ॥ २७ ॥

मन्युमयीं मूर्तिं बिभ्रतः कृतान्ततुल्यत्वमुच्यते नतु कृतान्तस्य मन्युमयी मूर्त्तिरिति ॥ २८ ॥

शुद्धसत्त्वतनुं देवमकस्मादतिदारुणम् । वीक्ष्यमाणा पृथुं पृथ्वी तुष्टाव करुणोक्तिभिः । मायया विन्यस्ता रचिता नानाघोरादितनवो येन गुणात्मने गुणमयत्वेन प्रतीयमानाय वस्तुतस्तु निर्धुता निरस्ता द्रव्यक्रियाकारकेष्वधिभूताध्यात्माधिदैवेषु विभ्रमोऽहङ्कारस्तन्निमित्ता ऊर्मयो रागद्वेषादयश्च यस्मिंस्तस्मै ॥ २९ ॥

अहो सर्वजीवाश्रयत्वेन सृष्टां मां कथं हन्तुं प्रवर्तत इत्याह । येन विधात्रात्मनां जीवानामायतनमहं निर्मिता यतो यस्यां मयि गुणसर्गस्य चतुर्विधभूतग्रामस्य संग्रहो धारणम् स्वराट् स्वतन्त्रः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च यत्र मयि विश्वं जगत्प्रतिष्ठितं तामजरां दृढां नावं नावरूपां विपाट्य विभिद्य आत्मानमिमाः प्रजाश्चाम्भसि कथं धास्यसि धारयिष्यसि ॥ २१ ॥

एवमुक्तो धरण्या पृथुस्तदुक्तीः प्रतिवक्ष्यन्नाह । वसुध इति । यत्त्वयोक्तं त्वं जिघांससे कस्मादीनामकृतकिल्बिषामिति तत्रोत्तरमाह । त्रिभिः । हे वसुधे! मच्छासनपराङ्मुखीं मदाज्ञातिवर्तिनीं त्वां वधिष्यामि राज्ञो ममाज्ञातिलङ्घनमेवाद्यं भवत्याः प्रथमोऽपराध इति भावः ॥ २२ ॥

किञ्च या भवती बर्हिषि यज्ञे भागं वृङ्क्ते देवतारूपेण भागं भजते या च त्वं वसु धान्यादिकं न तनोषि न ददासि उपका-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रानभिज्ञायास्तवायं द्वितीयोऽपराध इति भावः ॥ ननु सापराधाया अपि गोरूपाया मम वधोऽनुचितस्तत्राह । यवसमिति । या गौरनुदिनं यवसं तृणमेव जग्धि अत्ति अथ पयस्तु नैव संदोग्धि न प्रपूरयति तस्यां दुष्टायां गवि दण्ड एवोचितः अन्यत्रादुष्टायां गवि दण्डो न प्रशस्यते इत्ययं धर्मो दृश्यत इति भावः ॥ २३ ॥

स्वयं भुवा ब्रह्मणा भूतानां जीवनार्थत्वेन प्राक् कल्पादौ सृष्टानि औषधिबीजानि आत्मनि स्वस्यां रुद्धानि आत्मनि ग्रस्तानीत्यर्थः मां भूतपालनाधिकृतमवज्ञाय पराभूय अत एव मन्दधीस्त्वं न मुञ्चसि अतस्त्वद्वध उचित एवेति भावः ॥ २४ ॥

तर्हि किं मद्वधसाध्यं प्रत्युत मद्वधेऽन्नं न स्यादित्यत्राह । अमूषामिति । क्षुत्परीतानां क्षुधा परितो व्याप्तानामत एवार्तानाममूषां प्रजानां परिदेवितं दुःखं मद्बाणैर्भिन्नायास्तव मेदसा मांसेन शमयिष्यामि ॥ २५ ॥

यदप्युक्तमहनिष्यत्कथं योषां धर्मज्ञ इति यो मत इति तत्राह । पुमानिति । पुमान् योषिद्वा क्लीबः नपुंसको वा आत्मसंभावितः आत्मनैव संभावितः ननु परैः अत एवाधमः भूतेषु निरनुक्रोशः निष्कृपः स्यात्तर्हि पुमादिविभागमनादृत्य तद्वध एव नृपाणामुचित इत्यर्थः ॥ २६ ॥

यदप्युक्तं मां विपाट्येत्यादिना तत्राह । त्वामिति । मायागां मायया धृतगोरूपां तथा दुर्मदां मदभावे कथमस्मसि प्रजा धास्यसीत्येवं रूपदुर्मदविशिष्टां त्वां शरैर्मद्बाणैस्तिलशः तिलप्रमाणानि खण्डानीत्येवं भूतामवस्थां नीत्वा प्रापय्य आत्मनो मम योगबलेन योगसामर्थ्येनैवाहं प्रजाः आत्मानं च धारयिष्यामि ॥ २७ ॥

एवं मन्युमयीं क्रोधप्रचुरां मूर्तिं विग्रहं बिभ्रतं कृतान्तमिव स्थितं पृथुमित्यर्थः ननु कृतान्तवन्मन्युमयीं मूर्तिं बिभ्रतमिति कृतान्तस्य तदभावात् प्रणता प्रह्वीभूता मही धरित्री संजातकम्पा प्राञ्जलिराह ॥ २८ ॥

पृथुनैवं प्रत्युक्ता पृथ्वी साक्षाद्भगवदवतारभूतोऽयं पृथुः सर्वज्ञः सर्वशक्तिर्न मया वञ्चयितुं शक्य इत्यालोच्य स्वयमोषधिबीजनिर्गमोपायं विवक्ष्यन्ती क्रोधादयं स्वोपदिष्टोपायं माग्रहीदित्याशङ्क्य तावत् क्रोधोपशमनाय आत्मनो दैन्यमाकिञ्चन्यं च निवेदयन्ती चिदचिच्छरीरत्वेन जगत्सृष्ट्यादिकारणत्वेन धर्मपरित्राणनिमित्तावतारविशिष्टत्वेन च स्तौति । नमः परस्मा इति । मायया स्वापृथक्सिद्धविशेषणभूतया मायया प्रकृत्या विन्यस्तनानातनवे निष्पादितदेवमनुष्यादिव्यष्टिचेत्रज्ञशरीराय अनेन प्रकृतिपुरुषशरीरकत्वं जगत्कारणत्वं तच्च सद्वारकमिति चोक्तं भवति सद्वारकत्वमेव व्यनक्ति गुणात्मने प्रकृतेर्गुणविशिष्टत्वात्तद्द्वारा सत्त्वादिगुणस्वभावःयथाकाठिन्यवान् यो बिभर्ति तस्मै भूतात्मने नम इति भूमिद्वारा काठिन्यवत्त्वं ननु स्वरूपतो गुणात्मकत्वं निर्गुणश्रुतिविरोधात् प्रकृतिपुरुषशरीरकत्वेऽपि तद्वैलक्षण्येन स्थितिमाह । परस्मै प्रकृतिपुरुषविलक्षणाय वैलक्षण्ये हेतुमाह । स्वरूपानुभवेन निर्धूतक्रियाकारकविभ्रमोर्मये स्वरूपानुभवःस्वविषयं यथावस्थितं ज्ञानं स्वरूपशब्देन प्रकृतिपुरुषेश्वरस्वरूपाण्यपि विवक्षितानि स्वरूपाणां प्रकृतिपुरुषेश्वररूपाणामनुभवेन याथात्म्यज्ञानेन निर्धूता निरस्ता द्रव्यक्रियाकारकविभ्रमाः द्रव्यक्रियेति द्वन्द्वः विभ्रमशब्दः प्रत्येकं संबध्यते द्वन्द्वान्ते श्रुतत्वात् तत्र द्रव्यभ्रमो नाम पृथिव्यादिद्रव्येषु देहेष्वात्मभ्रमः इच्छामि द्वेष्मीति देहगतक्रियाणामात्मनि भ्रमः क्रियाभ्रमः कारकभ्रमः कर्तृत्वभ्रमः स च "अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् । शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः„इत्युक्त्या कर्तृत्वस्याधिष्ठानादिषु पञ्चस्वनुगतत्वेऽप्यात्मगतत्वेनैव प्रतीतिरूपः एते त्रयो भ्रमाः तत्प्रयुक्ताः ऊर्मयःअशनायापिपासाशोकमोहजरामृत्य्वाख्याः तस्य सर्वदा युगपत्प्रत्यक्षतमसं वस्तुविषयप्रमितिरूपसाक्षात्कारनिरस्तदोषमूलभ्रमतत्कार्यत्वाद्वैलक्षण्यसिद्धिः गुणभेदाभिप्रायेण नमसो द्विरुक्तिः अत्र जगत्कारणत्वकथनेन तदुपयुक्तसार्वज्ञ्यसर्वशक्तित्वादिमत्त्वस्यापि विवक्षितत्वात् सर्वज्ञसर्वशक्तित्वात्त्वत्कार्यजगदन्तर्भूताहं वञ्चयितुं न समर्थेत्यभिप्रेतम् अनेन स्वस्या आकिञ्चन्यमप्युक्तम् ॥ २९ ॥

तदेव विशदयन्त्याह । येनेति । येन धात्रा दधाति विदधाति सृजतीति धाता तेन त्वया आत्मायतनम् आत्मनां व्यष्टिजीवनामायतनं स्थानभूतमहं विनिर्मिता सृष्टा कथं भूताहं यतः यस्मिन् मयि गुणसर्गसंग्रहः गुणमयप्रकृतिपरिणामात्मकदेवादिप्रपञ्चो वर्तते स एव धाता भवान् उदायुधः उद्धृतायुधः स्वराट् स्वतन्त्रः स्वराडित्यनेन नह्यन्यो निवारकोऽस्तीति अभिप्रेतं मां स्वसृष्टभूमिं हन्तुमुपस्थितः ततस्त्वत्तोऽन्यं कं शरणं रक्षणोपायमाश्रये न कमपि किन्तु त्वामेवेत्यभिप्रायः ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न केवलमदृष्टहानिरपि तु दृष्टहानिरपि स्यादित्याह । मां निहत्येति अजरां नूतनामिवस्थितां धास्यसि धारयिष्यसि ॥ २१ ॥

श्लोकद्वयमितिकरणाय पृथुर्भीतिकरं वाक्यं वक्ति । वसुध इति । ननु वधयोग्यापराधः क इति तत्राह । मच्छासनेति । अनेन तव पत्युर्मम स्त्रीवधो न दोषाय भर्तृशासनातिक्रम एवापराधित्वादिति ध्वनितं किं तत्त्वच्छासनातिलङ्घनं येनापराधिनी स्यामत्राह । भागमिति । या भवती बर्हिषि यज्ञे भूः स्वाहेति हुतं हविर्भागं वृङ्क्ते वृणोति सा त्वं वसु धनं योग्यं न तनोषि परिपाकेन न प्रपञ्चयसीत्यन्वयः ॥ २२ ॥

एतदेव विशिनष्टि । यवसमिति । हविराख्यं यवसं पयःशब्दस्य जलेऽपि वृत्तेरित्यत औधसमिति गोरूपत्वादेवमुक्तिः । मत्पालिताभ्यः प्रजाभ्यः या पयो न दोग्धि तस्यामेवं दुष्टायामत्र भवत्यां दण्डो न शस्यत इति नहि शस्यत एवेत्यर्थः ॥ २३ ॥

आत्मन्यसत्त्वान्मुञ्चामीतिनेत्याह । त्वं खल्विति । त्वदधिकरणत्वेन प्रजाजीवनार्थत्वेन विरिञ्चिसृष्टौषध्यदानेचौर्याख्यदोषोऽपि तव स्यादित्यर्थः आत्मनि सत्त्वात् न दास्यामीति दुराग्रहबुद्धिरवज्ञेति ॥ २४ ॥

मद्वधस्तव कोपनिवारणावसाथी ननु शरणागतप्रजारक्षणोपायसिद्धिरिति तत्राह । अमूषामिति । अमूषां शरणागतानां मेदसा मांसविशेषेण ॥ २५ ॥

तथापि स्त्रीवधो न शस्त इति तत्राह । पुमानिति । य एवं विधस्तद्वधः ॥ २६ ॥

यदुक्तं मां निहत्यात्मानमिमाः प्रजाश्चाम्भासि कथं धारयिष्यसीति तत्राह । त्वां स्तब्धामिति । मायागामित्यनेन गोवधदोषोऽपि नास्तीति सूचितम् आत्मयोगबलेनौत्पत्तिकस्वरूपधारणया शक्त्या ॥ २७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र निरुत्तरया धरया किमकारीति तत्राह । एवमिति ॥ २८ ॥ स्वयंदेवताखेकत्वेन हरेरन्यस्यैवं विधवाक्यानुदयादित्यादिहेतुना ज्ञातत्वात् धरापृथ्व्यन्तर्यामिणं तद्योग्यैर्गुणैरन्यत्रायोग्यैः श्रीनारायणमभिष्टौति । नम इति । मायया प्रकृत्या चित्प्रकृत्या वा विन्यस्तायोग्यतया विरचिता नानातनवो ब्रह्मादिजीवदेहा येन स तथोक्तस्तस्मै "ब्रह्मादिजीवदेहास्तु मायादेहाः प्रकीर्तिता„ इतिवचनात् मायाशब्देन नेन्द्रजालमवाच्यत इति । स्वस्यापि प्राकृतदेहसम्भवेन देवदत्तवत्कर्माणा श्रान्तत्वेन प्रपञ्चरचनानुपपत्तिरित्यत उक्तम गुणात्मन इति । सत्त्वादिगुणरहितस्वरूपाय यदि हरेः स्वरूपं प्राकृतगुणरहितं तर्हि कीदृशं येन देहित्वेन सृष्ट्यादौ प्रवृत्तिः स्यादित्यस्यापीदमेवोत्तरं । गुणात्मनइति ज्ञानानन्दादिगुणदेहाय "आत्मा जीवे धृतौ देह„ इतियादवः अस्तु ज्ञानादिगुणदेहत्वं तथापि प्रकृत्या प्रवर्त्तमानस्य कर्दमसयोरिव कथितदोषानिरस्तार इतितत्राह । स्वरूपेति । स्वरूपानुभवेन "तद्ब्रह्म वेदाहं ब्रह्मास्मि„ इति श्रुतिसिद्धेन स्वरूपापरोक्षेण निर्धूता निरस्ता द्रव्यक्रियाकारकनिमित्तानां विभ्रमाणामूर्मयो येन स तथा द्रव्यादयस्तामसतैजसवैकारिकाहंकारसंज्ञाः । यद्वा द्रव्यं गुणानामाधारो देहः क्रियाकर्मेन्द्रियं कारकं ज्ञानेन्द्रियं एतन्निमित्तानां विभ्रमाणां संशयाद्यन्त.करणधर्माणामूर्मयः परम्परा दूरोत्सारिता "येन विभ्रमः संशये भ्रान्तौ शोभायाश्च„ इति यादवः तत्र किं कारणमित्यत उक्तंस्वरूपेति । द्रव्यक्रियादिनिमित्तविभ्रमोर्मयोऽस्माकमेव न हरेरिति निरणायि ॥ २९ ॥

यतः स्वामित्वेन पितृत्वेन गुरुत्वेन स्थितं हारिं शरणं विहाय ममान्योरक्षकोऽस्तीतिभ्रान्तालब्धान्यन्निवृत्तेत्यतस्तत्स्वामित्वादिकं तवैवेति सयुक्तिकमाह । येनेति । येन धात्रा हरिणाहमात्मीयतनुः स्वशरीरत्वेन निर्मिता "यस्य पृथिवी शरीरम्„ इतिश्रुतेः यतो यस्मात् सत्त्वादिगुणैः सर्गसंग्रहः स्यात् स एव पितृभूतः स्वराट् स्वामी उदायुधः शिक्षागुरुर्मां हन्तुमुपस्थित इत्यन्वयः किमत इति तत्राह अन्यमिति । "किं कुर्मः कस्य वा ब्रूमो गरदायां स्वमातरि„ इति वाक्यं ध्वनयति कमित्यनेन ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वसुधेत्यादि वाक्यमपि विभीषिकामात्रम् ॥ २२—२६ ॥

मन्युमयीं मन्युप्रचुरां मूर्त्तिं विभ्रतं तन्मयतया सम्पादयन्तमित्यर्थः ॥ २८ ॥

पृथिव्युवाचेत्येव पाठः पुरुषाय भूयसे विन्यस्तमायेति सम्बन्धोक्तिः ॥ २६–३१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विपाट्य विदार्य्य अजरां दृढाम् ॥ अम्भसीति मयि मृतायां सत्यां गर्भोद एव स्थास्यतीत्यर्थः ॥ २१ ॥

बर्हिषि यज्ञे या भवती देवतारूपिणी भागं वृङ्क्ते भजते वसु धनानादिकम् ॥ २२ ॥

गोरूपेण यवसं तृणं जग्धि अत्ति पयस्तु न दोग्धि न पूरयति न ददातीति यावत् कामपूरोऽस्म्यहं नृणामिति यत् तस्यामेवं दुष्टायां त्वय्यपराधिन्याम् ॥ २३--२४ ॥

मेदसा मांसेन ॥ २५ ॥

यदुक्तं योषां कथं हनिष्यसीति तत्राह । पुमानिति । आत्मसम्भावनोमिथ्याहङ्कारमत्तः निरनुक्रोशो निर्दयः तस्य वधोऽवध एव २६॥

ननु गोवधं कथं करिष्यसि गोमांसं वा कथं भोजयिष्यसीति तत्राह । माययैव गां न तु वस्तुतः । यच्चोक्तं कथमम्भसि धास्यसीति तत्राह । तिलशः तिलप्रमाणसहस्रखण्डतामवस्थां नीत्वा ॥ २७ ॥ २८ ॥

विन्यस्ता निर्मिता नाना भूतास्मदाद्यानवो यस्य तस्मै यतो गुणात्मने गुणमयाय । यदुक्तं महीतलं तज्जघनमित्यादि । ननु तर्हि स्वतनुं त्वां किमहं हन्मीति तत्राह । स्वरूपानुभवेनेति । यावत् स्वरूपशक्तेरनुभवो न स्यात्तावदेव मायाशक्तिमतस्तवास्मदाद्यास्तनवः स्वरूपानुभवेन तु विनिर्धूतानि निरस्तानि द्रव्यक्रियाकारकाणि अधिभूताध्यात्माधिदैवानि तैर्विभ्रमोर्मिः संसारतरङ्गश्च यस्मात्तस्मै । यदुक्तं । यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः । तावत् स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत„ इति अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते । उभे अपि न गृह्णन्ति मायासृष्टे विपश्चित इतिच ॥ २९ ॥

एवञ्चेत्तर्हि त्वदुक्तिप्रामाण्येनैव त्वयि मम नास्ति ममतेत्यत स्त्वां हन्म्येवेत्यत आह । यंनेति । नहि स्वहस्तेनारोपिता वल्ली स्वहस्तेनैव छिद्यते इति भावः तत्राप्युपकारिकास्मीत्याह । आत्मनां जीवानां आयतनं यतो यस्यां मयि गुणसर्गस्य चतुर्विधभूतग्रामस्य संग्रहो धारणं स्वराट् स्वतन्त्रः ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अजरां दृढां विपाट्य विदार्य्य धास्यसि धारयिष्यसि ॥२१॥

अकृतकल्मषां कथं जिघांससे इत्यत्राह । वसुधे इत्यादि या भवती भागं तु वृङ्क्ते भजते सा त्वं वसु धान्यादिकं न तनोसि अतो वधिष्यामि ॥ २२ ॥

या अनुदिनं प्रतिदिनं यवसं तृणं जग्धि अत्ति औधस्यं पयो न दोग्धि ऊधोगतं दुग्धं न स्रवति तस्यां दुष्टायाम् अत्र लोके दण्डो न शस्यते इति न अपि तु शस्यते एव ॥ २३ ॥

त्वं तु मन्दधीः आत्मनि अस्तानि न मुञ्चसि ॥ २४ ॥

क्षुत्परीतानां क्षुधा व्याप्तानाम् अमूषां प्रजानामपरिदेवितं विलापं तव मेदसा मांसेन शमयिष्यामि ॥ २५ ॥

योषां कथमामहनिष्यदित्यत्राह । पुमानिति ॥ २६ ॥

अम्भसि कथं धास्यसीत्यत्राह । त्वामिति । मायया दम्भेन कपटेन गोरूपधारिणीं तिलशः तिलप्रमाणानि खण्डानि इत्थं भूतामवस्थां नीत्वा आत्मयोगबलेन स्वकीययोगप्रभावेण प्रजाः धारयिष्यामि ॥ २७ ॥ २८ ॥

आत्मनो भगवदुत्पादितत्वमग्रिमेन श्लोकेन वक्तुं पूर्वं भगवतः सर्वोत्पादकतां वर्णयन्ती नमस्करोति । नम इति । गुणात्मने सर्वकारणत्वसर्वज्ञत्वसर्वैश्वर्यत्वादिगुणाश्रयाय मायया स्वशक्त्या विन्यस्ता नानामहदादितृणान्ताः तनवो येन तस्मै नमः अप्राकृतगुणाश्रयत्वेन स्तुत्वाथ प्राकृतगुणरहितत्वेन स्तौति । स्वरूपानुभवेन निर्धुताः स्वभावतोऽपास्ताः द्रव्यक्रियाकारकेषु अधिभूताध्यात्माधिदैवेषु विभ्रमाऽहङ्कारस्तन्निमित्ता ऊर्मयो रागद्वेषादयश्च यस्मात्तस्मै नमः निर्धुतेति ह्रस्वमार्षम् ॥ २९ ॥

य एतदादावसृजच्चराचरं स्वमाययात्माश्रयया वितर्क्यया ।
तयैव सोऽयं किल गोप्तुमुद्यतः कथं नु मां धर्मपरो जिघांसति ॥ ३१ ॥
नूनं बतेशस्य समीहितं जनैस्तन्मायया दुर्जययाकृतात्मभिः ।
न लक्ष्यते यस्त्वकरोदकारयद्योऽनेक एकः परतश्च ईश्वरः ॥ ३२ ॥
सर्गादियोस्यानुरुणद्धि शक्तिभिर्द्रव्यक्रियाकारकचेतनात्मभिः ।
तस्मै समुन्नद्धनिरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे ॥ ३३ ॥
स वै भवानात्मविनिर्मितं जगद्भूतेन्द्रियान्तःकरणात्मकं विभो ! ।
संस्थापयिष्यन्नज ! मां रसातलादभ्युज्जहाराम्भस आदिसूकरः ॥ ३४ ॥
अपामुपस्थे मयि नाव्यवस्थिताः प्रजा भवानद्य रिरक्षिषुः किल ।
स वीरमूर्त्तिः समभूद्धराधरो यो मां पयस्युग्रशरो जिघांससि ॥ ३५ ॥
नूनं जनैरीहितमीश्वराणामस्मद्विधैस्तद्गुणसर्गमायया ।
न ज्ञायते मोहितचित्तवर्त्मभिस्तेभ्यो नमो वीरयशस्करेभ्यः ॥ ३६ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धे
पृथुविजये धरित्रीनिग्रहोनाम
सप्तदशोऽध्यायः ॥ १७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

येन धात्रा भगवताहम्भूरात्मनां जीवानामायतनं विनिर्मिता किम्बहुना यतः सर्वहेतोः गुणसर्गसंग्रहः गुणैः सृज्यन्ते इति गुणसर्गाः महदादयस्तेषां संग्रहो ब्रह्माण्डरूपः सर्वोऽपि प्रपञ्चः स एव स्वराट् उदायुधो मां हन्तुमुपस्थितो यदि तर्हि कमन्यं शरणमाश्रये ॥ ३० ॥

---

भाषाटीका ॥

जिसमे सब संसार है ऐसी दृढ नौका सरीकी मोकुं नाश करोगे तो अपने को और इन प्रजाओं को जल में कैसे रखोगे ॥ २१ ॥

पृथुजी बोले हे वुसुधे तेरेको मै मारूंगा क्योंकि तू मेरे से वाहिर्मुख है यज्ञों में देवता रूपसे तू भाग लेती है और अन नहीं देती है ॥ २२ ॥

तू गऊ है तो घांस तो सब दिन खाती है और स्तनो का दूध नहीं देती है ऐसी दुष्ट होने पर जरूर दण्ड होना चाहिये ॥ २३ ॥

पूर्व काल में ब्रह्मा के पैदा किये औषधियों के बीजों को अपने भीतर रखकर नही छोडती है मंद बुद्धि से मेरी अवज्ञा करती है ॥ २४ ॥

ये सब जो प्रजा क्षुधा से पीडित हैं दुखित हैं इनके शोक को बाणों से काटे हुए तेरे मांस से मै शांतकरूंगा ॥ २५ ॥

पुरुष हो या स्त्री हो या नपुंसक हो जो अपने को ही चाहने वाला अधम है औरपर जिसको दया नहीं है उसको राजा लोग मारें तो दोष नहीं होता है ॥ २६ ॥

तू जो कपट से गऊ बनी है तू अभिमान वाली है तेरे को बाणों से तिलों के बरोबर काटकर अपने आत्माके योग बल इन सब प्रजों को हम धारण करेंगे ॥ २७ ॥

ऐसं क्रोध मय मूर्ति धारण किये अंतक कसरी के पृ[illegible] महाराज को देख कर कांपती हुई पृथिवी नमस्कार क[illegible] के हाथ जोड कर विनती करने लगी ॥ २८ ॥

पृथिवी बोली माया से नाना रूप धारण करने वाले दिव्य गुणों वाले अपने स्वरूप के अनुभव से अध्यात्म अधिभू[illegible] अधिदैव मे अहंकार की ऊर्मी राग द्वेषादिकों को दू[illegible] करने वाले परम पुरुष आप के अर्थ नमस्कार है ॥ २९ ॥

जिन आपने मेरेकुं अपना स्थान बनाया आप विधाता हैं जिन आप से यह सब गुणों की सृष्टि होती है सोही आ[illegible] स्वतंत्र हो करभी आयुध उठाकर मेरे को मारने को तत्पर भ[illegible] तो मै दूसरे किस के शरण जांऊं ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सृष्टिसंहारकारकोऽहमेवेति चेत्तथापि प्रजापालने प्रवृत्त[illegible] मद्वधोऽनुचित एवेत्याह । यएतादिति । आत्माश्रयया जीवविषय[illegible] यया ॥ ३१ ॥

अतो दुर्ज्ञेयमीश्वरचेष्टितमित्याह । नूनमिति । अकृतात्मभिर[illegible] क्षिप्तचित्तैः य ईश्वरः स्वतन्त्रः अकरोद्ब्रह्माणम् परत [illegible] तेन ब्रह्मणा चराचरमकारयत् यश्च स्वत एकः परतो मा[illegible] यानेकः ॥ ३२ ॥

तस्मादचिन्त्यशक्तये केवलं नम इत्याह । सर्गादिजन्मस्थि[illegible] तिभङ्गमस्य जगतोऽनुरुणद्धनुवर्तते करोति द्रव्याणि महाभू[illegible] तानि क्रिया इन्द्रियाणि कारका देवाः चेतना बुद्धिः आत्मा[illegible] कारः तैः स्वशक्तिरूपैः समुन्नद्धाः समुत्कटा निरुद्धाः शक्त[illegible] यस्य ॥ ३३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

प्राणिनां धारणार्थं मां रसातलादुद्धृत्येदानीं प्रजारक्षणे प्रवृत्तस्य मद्वधो न युक्त इति सकरुणमाह। द्वाभ्याम्। हेऽज ! यः सृष्टवान्स एव भवान् स्वनिर्मितं चराचरं जगत्सम्यक् स्थापयितुमादिसूकरः सन् मामभ्युज्जहार ॥ ३४ ॥

स एव धराधरो वराहोऽपामुपस्थे उपरि मयि नावि आधारभूतायामवस्थिताः प्रजा रक्षितुमिच्छुर्वीरमूर्तिः पृथुरूपः समभूत् एवं भूतो यः स त्वं पयसि निमित्ते मां जिघांससीति चित्रमित्यर्थः ॥ ३५ ॥

तस्मादीश्वरचेष्टितं दुर्ज्ञेयमिति कैमुत्यन्यायेनोपसंहरति। नूनमिति। तस्येश्वरस्य गुणसर्गरूपया मायया मोहितं चित्तमेव वर्त्म येषाम् मोहितानि चित्तवर्त्मानि येषामिति वा तैर्जनैरीश्वराणां हरिभक्तानामेव तावदीहितं न ज्ञायते किं पुनस्तस्य परमेश्वरस्य अत एव परमेश्वरवत्तेभ्योऽपि नम एव केवलं वीराणां जितेन्द्रियाणां यशः कुर्वन्ति ये तेभ्यः यथा वीराणां यशो वर्द्धेत तथा चेष्टतां नतु यथेष्टमिति भावः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ननु य एव स्रष्टा स एव हन्ति चेत्किं त्वया विधेयं सत्यं स्रष्टुरपि हन्तृरूपधारणा एव हनने प्रवृत्तिरुचिता नत्ववितृरूपधारिणस्तवेत्याह। यएतदिति। यो भवानेव एतच्चराचरात्मकं जगत् आत्मा आश्रयो यस्यास्तया अवितर्क्यया एवं विधेति चिन्तयितुमशक्यया स्वापृथक्सिद्धविशेषणभूतया प्रकृत्या मायाशब्दः संकल्परूपज्ञानपरो वा अवितर्क्येन स्वसंकल्पेनासृजत् स एव भवान् तथैव संकल्पेन गोप्तुं चराचरात्मकं जगद्रक्षितुमुद्यतः उद्युक्तः नतु कालाग्निरुद्राद्यवतारेणैव हन्तुं प्रवृत्त इत्यर्थः अतः प्रजापालनरूपधर्मप्रवर्तकस्त्वं मां प्रजानां भोग्यभोगोपकरणभोगस्थानरूपां मां कथं नु जिघांससि हन्तुमिच्छसि ॥ ३१ ॥

विचित्रानन्तशक्तेस्तव प्रभावमजानन्त्या ममेदं त्वदीयं कृत्यमनुचितमिव प्रतीयते त्वच्चिकीर्षितं तु न विजानीयुरित्याह। नूनमिति। अकृतात्मभिः अवशीकृतचित्तैः त्वामप्रपन्नैरिति यावत् दुर्जयया जेतुमशक्यया स्वमायया स्वात्मीयमायया कारणभूतया ईशस्य तव समीहितं चेष्टितं चिकीर्षितं जनैर्न लक्ष्यते न ज्ञायते इति। यद्वा। दुर्जयया स्वमायया हेतुभूतया अकृतात्मभिः मोहितचित्तैर्मादृशैर्जनैरीशस्य तव समीहितं न लक्ष्यत इत्यर्थः कोऽसावीश्वरः यस्य समीहितं न लक्ष्यते तत्राह। यः स्वत एकोऽपि परतः ब्रह्मरुद्रादिचेतनरूपशरीरभेदादनेकः सन् अकरोत् महदादिपृथिव्यन्तजगत्सृष्टिमकारयत् व्यष्टिसृष्टिमित्यर्थः स ईश्वरस्त्वमेवेति भावः ॥ ३२ ॥

अतोऽचिन्त्यशक्तये तुभ्यं केवलं नम इत्याह। सर्गादीति। यो भवान् अस्य जगतः सर्गादि सृष्ट्यादिकं द्रव्यक्रियाकारकचेतनात्मभिः द्रव्यं प्रधानात्मकमचिद्द्रव्यं क्रिया जीवादृष्टाख्यं कर्म कारकः करोति गुणक्षोभमिति कारकः कालः चेतनो जीवः एतद्रूपाभिः शक्तिभिः अनुरुणद्धि अनुवर्तते करोतीति यावत् तस्मै समुन्नद्धाः कार्योन्मुखं विरुद्धाः शक्तयो यस्य तस्मै सृष्टिस्थितिसंहाराणां युगपद्विरुद्धत्वात्तद्द्वारा तदुपयुक्तशक्तीनां विरोधः युगपत्सृष्ट्यादीनां मिथो विरोधत्वेऽपि कालभेदादुपपन्नत्वेन सृष्ट्याद्युपयुक्तशक्तिमत्त्वमुपपन्नं वेधसे कारणभूताय परस्मै प्रकृतिपुरुषविलक्षणाय पुरुषाय तुभ्यं नमः ॥ ३३ ॥

तव समुन्नद्धविरुद्धशक्तिमत्त्वं न मानान्तरगम्यमपि त्वपरोक्षं मयैवानुभूतमित्याह। हेविभो ! आत्मनि आत्मना स्वयं विनिर्मितं भूतानि पृथिव्यादीनि इन्द्रियाणि श्रोत्रादीनि अन्तःकरणं चैतदात्मकं जगत्संस्थापयिष्यन् हेऽज ! कर्मायत्तोत्पत्तिशून्य तथापि आदिसूकरः स्वेच्छोपात्ताप्राकृतदिव्यवराहावतारो भूत्वा भवान्मां त्वन्निर्मितजगदाधारभूतां मामम्भसः अम्भसि प्रविश्य ल्यब्लोपे कर्मण्यधिकरणे चेत्यधिकरणे पञ्चमी रसातलात् अभ्युज्जहार उद्धृतवान् ॥ ३४ ॥

स धराधरः आदिवराहः अद्य अपामुपस्थे उपरि नावि नौकावदाधारभूतायां मयि अवस्थिताःप्रजा रिरक्षिषुः रक्षितुमिच्छुः भवान् समभूत् भवद्रूपेणावतीर्णः स एव त्वमधुना वीरमूर्तिः पृथुरूप उग्रः तीक्ष्णः शरो यस्य पयसि निमित्ते गां गोरूपां मां जिघांससि हन्तुमिच्छसि किंत्वेतद्विरुद्धशक्तिमत्त्वं मयैवोपलक्षितमित्यर्थः ॥ ३५ ॥

एवमचिन्त्यविविधशक्तिमत्त्वेन भगवन्तं स्तुत्वा तदेव पुनरनुसन्दधती सर्वानवतारान्नमस्करोति। नूनमिति। येषामीश्वराणामीश्वरावतारणामीहितं चिकीर्षितं तद्गुणसर्गमायया तस्य ईश्वरस्य सम्बन्धिन्या सत्त्वादिगुणकार्यप्रपञ्चमूलया मायया मोहितं यच्चित्तं तस्य वर्त्मनि वृत्तयो येषां तैर्मादृशैर्जनैर्न ज्ञायते नूनं निश्चितं तेभ्यः वीराणामन्येषामपि यशस्करेभ्यो हिरण्याक्षादीनां भगवता युद्धे निहता इत्येवं रूपकीर्तिसम्पादकेभ्योऽवतारेभ्यो नमः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तव निर्मातेश्वरोऽन्यस्त्वां जिघांसुः पृथुराजा चापर इति मन्दाशङ्कां परिहरन्निव पूर्वोक्तार्थं विवृणोति। य एतदिति। आत्मैवाश्रयो यस्याः सा आत्माश्रया तयातएवावितर्क्यया विविधतर्काविषयया "अजामेकां लोहितशुक्लकृष्णाम्" इत्यादिश्रुतिसिद्धत्वान्निर्धक्कृमश्च क्यत्वे*तदद्वैतवादितर्कागोचरयेत्यर्थः एवं विधया स्वमायया स्वप्रकृत्यास्रष्टुः पालयितुश्चैकत्वेन तस्य हन्तृत्वं न युक्तमदर्शनादित्यर्थः "वार्तासंभाव्ययोः किल" इत्यभिधानम् अतः संभावितं न भवतीति यथा स्वस्य तर्काविषयत्वं तथा मायया अपीति सूचितम् ॥ ३१ ॥

हरेस्तर्काविषयत्वं स्पष्टयति। नूनं तवेति। विभो। अकृतात्मभिरल्पबुद्धिभिरशिक्षितबुद्धिभिर्वा जनैर्दुर्जयया स्वमायया ईशस्यैश्वर्यादिगुणाकरस्य समीहितं समीचीनं चेष्टितं न लक्ष्यते नूनं तर्कयामीत्यन्वयः "तर्कनिश्चितयोर्नूनम्" इति यादवः समीहितं किन्तदित्यतआह। यस्त्विति। अकरोत्कार्यं ब्रह्मणा यस्त्वं जगत्कारयश्च अनेकः "इन्द्रोमायाभिःपुरुरूपईयते" इति श्रुतेः तत्वत एकः "एकमेवाद्वितीयम्" इति श्रुतेः एवं विधः स परतः परेषामीश्वरो नास्माकमार्तानामिति चोदया क्षेप (२) लक्षणमर्थविशेषं ध्वनयति अर्थान्तरासंभवात् ॥ ३२ ॥

---

* एवचासौमद्वैतवादितर्कश्चेति विग्रहः।

(२) एतेन परतः परानुग्रहादीश्वरः किमिति किंस्विरस्कर्त्वेन-योज्यमित्युक्तंभवति ॥ दी०

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

कर्तृत्वेन कारयितृत्वेन सर्वस्वातन्त्र्यप्रतीतेः पृथिव्यादीनां कर्तृत्वमीश्वरशक्त्यानुस्यूतत्वादित्याह । सर्गादीति । द्रव्याणि पञ्चभूतानि क्रियाः कर्मेन्द्रियाणि कारकाः ज्ञानेन्द्रियाणि चेतनो जीव एतान् व्याप्य तिष्ठन्तीति चेतनात्मानस्ताभिः शक्तिभिर्योऽस्य जगतः सर्गाद्यनुगुणाद्धि तत्तद्योग्यतानुकूल्येन करोति तस्मै नम इत्यन्वयः एकस्य युगपदनेकवैचित्र्योपेतपदार्थस्रष्टृत्वं कथमुपपद्यतइत्यत उक्तं समुन्नद्धेति तदुक्तं "विरुद्धशक्तयो यस्य नित्या युगपदेव तु । तस्मै नमो भगवते विष्णवे सर्वजिष्णव„ इति कर्तृत्वशक्तिः स्वरूपभूतेत्युक्तं वेधस इति कर्तृत्वशक्तिमते । किन्नामधेयमस्येत्यत उक्तं परस्मा इति । अनेन पुंशक्तिमत्त्वादस्यैवोक्तमुपपन्नमित्यसूचि ॥ ३३ ॥

पूर्वं त्वयैव भूतधात्रीत्वेन संकल्पतत्वाद्धिरण्याक्षनीतां मामुदाहारितवांस्तत्रात्मयोगबलेनैव धारयिष्यामीत्यङ्गीकारे सङ्कल्पभङ्गः स्यादित्याशयेनाह । सवा इति । सवा इत्यनेन य एतदित्याद्युक्तं परामृश्यते मा माम् ॥ ३४ ॥

भूमेरुद्धर्तान्योऽहमन्यस्तस्मात्सङ्कल्पभङ्गः कथमिति मन्दाशङ्कां परिहरति । अपामुपस्थे इति । जलस्योपरि स्थितां मां जिघांसति स वीरमूर्तिर्भवानद्य रचितुकामो धराधरो भूमेर्भर्ता समभूदित्यन्वयः ॥ ३५ ॥

स्त्री त्वमस्मद्विचेष्टितं किञ्जानासीत्याशङ्क्य सत्यं तथाप्यस्माकं युष्मत्प्रसादनाय नम इत्येतावत्कर्तुमुचितमिति भावेनाह । नूनं जनैरिति । त्वद्गुणसर्गमायया तव सृष्ट्यादौ गुणकर्मभूतया सर्गमायया प्रकृत्या ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

नूनमिति । तच्छब्दतदुपाधिविशिष्टत्वेन स्वयमेव भगवानेक एवानेकः सन् जगदकरोत् तदसंसर्गित्वेन तु स्वयमेक एव सन् तत्तद्वाराकारयत् न केवलमेतावदेव तदैश्वर्य्यम् । परतो जगतः परस्मिन् वैकुण्ठेऽपि ईश्वर इति । अतो युक्तमेवालक्ष्यचेष्टितत्वमित्यर्थः स ईश्वर इति चित्सम्बन्धे स्वं स्वयम् ॥ ३२ ॥

कारकाः प्रकृति प्रवर्त्तका देवाः ॥ ३३ ॥ ३४ ॥

योमामित्यादौ गोपायसे अग्रसर इति सम्बन्धः ॥ ३५ ॥

ईश्वराणामन्येषामपि । वीरयशस्करेभ्य इति तथापि भद्रमेव ते करिष्यन्तीति भावः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु मयैव जगत् सृज्यते संह्रियते चेति सत्यं तदपि सम्प्रति पालने प्रवृत्तस्य तव मद्वधोऽनुचित इत्याह । य इति ॥ ३१ ॥

ननु तर्हि त्वं मामधर्मिणां ब्रूषे तत्र नहि नहि किन्तु दुर्ज्ञेयमैश्वर्यमित्याह । नूनमिति । अकृतात्मभिर्विक्षिप्तचित्तैः । य ईश्वरोऽकरोत् सर्गं अकारयद्विसर्गम् । स एव एकः परतो मायातोऽनेकश्च ॥ ३२ ॥

तस्मादचिन्त्यशक्तये केवलं नम इत्याह । अनुरूपाद्धि भक्तैश्च स्यानुरोधेन करोति । द्रव्यक्रियाकारकाणि भूतेन्द्रियदेवताः चेतना बुद्धिः आत्माहङ्कारस्तैः । समुन्नद्धाः प्रबलाः परस्परविरुद्धाश्च शक्तयो यस्येति पालनसंहारशक्ती उभे अपि प्रबले इत्यर्थः पालयितुं संहर्त्तुञ्च त्वं प्रभुर्यथेच्छसि तथा कुरु तुभ्यं नम इति भावः ॥ ३३ ॥

अस्मिन् कारुण्यमुत्पादयन्ती पूर्ववृत्तं स्मारयति । सवा इति द्वाभ्याम् ॥ ३४ ॥

उपस्थे उपरिस्थायां मयि नावि नौकारूपायां सएव धराधर आदिशूकरो मत्स्वामी त्वं योमां स्वभार्य्यां पयासि निमित्ते जिघांससि । अयमर्थः इमास्त्वत्प्रजा मत्पत्यान्येव मदुत्सङ्गे स्थितानि नित्यमहं स्तन्यं पयः पाययान्येव साम्प्रतमेतद्दुर्वृत्तमाध्वरशीलं शिक्षयन्ती माताप्यहं क्रुद्धा पयो न पाययामीति त्वं पृथुरूपी मां ताडयसीति ॥ ३५ ॥

किञ्च त्वं मां हनिष्यसीति विश्वसत्यप्यहं न विश्वसिमि ईश्वराणां खलु का स्त्री के वा पुत्रभृत्यादय इत्याह । नूनमिति । तवेश्वरस्य गुणसर्गमायया गुणेषु देवमनुष्यतिर्यग्योनिषु सर्गो यतस्तया मायया अविद्यया मोहितं भ्रमितं चित्तवर्त्म त्वद्गुणान्मुखं येषां तैरस्मद्विधैर्जनैः । वीराणां दयावीराणां यशः कुर्वन्तीति तेभ्य इति त्वं चेन्मां न दयसे तदा दयावीराणां यश एव यास्यतीति भावः ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
सप्तदशश्चतुर्थेऽयं सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वमायया स्वकृपया आत्माश्रयया जीवांशपयिण्या एतच्चराचरं दावसृजदधुना तवैव गोप्तुमुद्यतः सांख्यं धर्मपरः सर्वपालनरूपधर्मपरः तु अहो मामेव केवलां कथं जिघांसति ॥ ३१ ॥

अतः नूनं निश्चितम् ईशस्य समीहितं दुर्ज्ञेयया तस्येश्वरस्य मायया गुणमय्या शक्त्या हेतुभूतया अकृतात्मभिः अस्वेश्वरे न नियोजित आत्मा मनो यैस्तैर्न लक्ष्यते कः यः आत्मानं विश्वाकारमकरोत् "तदैक्षत बहुस्यां स्वयमात्मानमकुरुत सच्चत्यच्चाभवत्„ इति श्रुतिभ्यः नन्वेवं विकारित्वसंसारित्वादिदोषाः प्रसज्येरन्नित्यत्राह । परत इति । सार्वयिगक्तिकस्तामिः पराभ्यो भिन्नस्वरूपाभ्यः प्रधानपुरुषादिरूपाभ्यः शक्तिभ्यो अकारयत् नतु स्वरूपेण विकारी संसारी चेत्यर्थः ननु तर्ह्यनेककारणसिद्धिरत्राह । यएक एवानेक इति । स्वयमेकः सजातीयविजातीयभेदद्वयशून्यः स्वगतानां प्रकृतिपुरुषादीनां स्वशक्तीनामपेक्षयानेकः एवं स्वाभाविकभेदाभेदाश्रय इत्यर्थः तथा च श्रुतयः "एकः सन्बहुधा विचचार एको देवो बहुधा सन्निविष्टः त्वमेकोऽसि बहुधा बहून् प्रविष्टः इत्याद्याः स्मृतयश्च तत्र भगवान्मनुराह । एकत्वे सति नानात्वं नानात्वे सति चैकता । अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति„ इति श्रीमुखवचनं च एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम् इति हरिवंशे ब्रह्मादिकर्मवाक्यम् । "केचिद्बहुत्वेन वदन्ति देवमेकात्मना केचिदेक

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुरातनम् । वेदान्तसंस्थापितसत्त्वयुक्तं द्रष्टुं तमीशं वयमुद्यताःस्मइति श्रीमत्पञ्चरात्रेऽपि।"अभेदः केवलोभ्रान्तिस्तथा भेदोऽपि केवलः। तस्मादुचितः कर्तव्यो भेदाऽभेदमयो विधिः,, इति तथैवाह । भगवान्सूत्रकार : । अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके । उभयव्यपदेशादहिकुण्डलवत्,, इत्यादिपूर्वाचार्यवाक्यमपि । सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः । ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूतापिश्रुतिसूत्रसाधिता,,इति ॥ ३२ ॥

भगवच्छक्तीः स्फुटतया वर्णयन्ती नमस्करोति । सर्गादीति योऽस्य विश्वस्य सर्गादिशक्तिभिः अनुरुणद्धि अनुवर्तते करोतीत्यन्वयः काःता इत्याकाङ्क्षायामाह । द्रव्यक्रियाकारकचेतनात्मभिरिति । द्रव्यमचेतनं प्रधानं क्रियाकारकचेतनाशब्दार्थः इन्द्रियदेवतान्तःकरणरूपः आत्मा जीवः उपलक्षणतया कालादीनां ग्रहणम् एतद्रूपाभिः कथम्भूताय समुन्नद्धंनिरुद्धशक्तये समुन्नद्धा एकैका अतिप्रबला निरुद्धाशक्तिमदधीनस्थितिप्रवृत्तिकाः शक्तयो यस्य तस्मै ॥ ३३ ॥

यः सृष्टवान्स एवात्मविनिर्मितं जगत् संस्थापयिष्यन् आदिशूकरः सन् रसातलादम्भसो मामभ्युज्जहार ॥ ३४ ॥

यः धराधरः समभूत् स एव अपामुपस्थे उपरि नावि मयि अवस्थिताः प्रजा रिरक्षिषुः वीरमूर्तिः सन् अथ मां पयसि दुग्धे निमित्ते जिघांससि एतद्भगवच्चेष्टितमतिगह्वरमिति भावः ॥ ३५ ॥

भगवच्चेष्टितस्यातिगह्वरत्वं वदन्ती नमस्करोति । नूनमिति । तस्य भवतो गुणाः शक्तिगुणाः सत्त्वादयस्तेषां सर्गः सृज्यते इति सर्गः संसारस्तत्र या मायाऽहंममात्मिका तया मोहितानि चित्तवर्त्मानि चित्तवृत्तयो येषां तैरस्मद्विधैर्जनैरीश्वराणां येषां भवतामीहितं चिकीर्षितं न ज्ञायते तेभ्यो नमः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तदशाध्यायार्थ प्रकाशः ॥ १७ ॥

भाषाटीका ।

जिन आपने सृष्टि के पहिले इस स्थावर जंगम को सृजा है अचिन्त्य अपने आश्रय करने वाली माया से सृजकर फिर उसी माया से रक्षा करने को भी उद्यत हो फिर मेरे कुं कैसे मार ने की इच्छा करते हो ॥३१॥

यह बात निश्चित है कि परमेश्वर की दुस्तर माया से मोहित पुरुषों को ईश्वरका कर्तव्यज्ञात नहीं होता है क्योंकि जो ईश्वर एक है फिर अनेकभी है आपने ब्रह्मा को पैदा किया फिर ब्रह्मासे जगत् को पैदा कराया सो जगत् का ईश्वर है ॥३२॥

जो भगवान् पृथिव्यादि महा भूतों से ज्ञानेन्द्रिय कर्मेन्द्रिय इन्द्रादिक देवता बुद्धि अहङ्कार रूप जो अपनी शक्ति है तिन के द्वारा इस जगत् की सृष्टि आदि करें हैं जिन भगवान् की उत्कृष्ट शक्ति हैं उन विधाता परम पुरुष के अर्थ नमस्कार हो ॥ ३३ ॥

सो जिन आपने अपनेसे स्वयंबना था जो पंचभूत इन्द्रिय अंतःकरण रूप जगत् हे विभो ! हे अज ! उस जगत्को स्थापन करने के लिये आदिसूकर अवतार से मेरे को रसातल के जलमें से लाये हो ॥ ३४ ॥

सोई आप जलके ऊपर नाव सरीकी जो मै तिसमेरे ऊपर वर्तमान जो सब प्रजा तिनकी रक्षा करने को जो बरा हमूर्ति भये सोइ वीरमूर्ति पृथु भये हो सो अब जलके ऊपर उग्रबाण लेकर मेरे को मारना चाहते हो ॥ ३५ ॥

निश्चित है कि ईश्वर की गुण सृष्टि की माया से मोहित हो रहा है चित्त रूपी मार्ग जिनका ऐसे हम सरीके मनुष्य ईश्वर के चरित्र को नहीं जान सकते हैं इसी से जितेन्द्रियों के यश करने वाले जो भगवद्भक्त हैं तिन के अर्थ नमस्कार है ईश्वर के गुणों को तो कौन कह सकेगा ॥ ३६ ॥

इति श्रीभागवत चतुर्थस्कन्ध
सतरहवां अध्यायका भाषानुवाद
लक्ष्मणाचार्यकृत समाप्त ॥१७॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे सप्तदशोऽध्यायः समाप्तः ॥ १७ ॥

## अष्टादशोऽध्यायः ।

———○✻○———

मैत्रेय उवाच

इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम् ।
पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना ॥ १ ॥
संनियच्छाभि भो ! मन्युं निबोध श्रावितं च मे ।
सर्वतः सारमादत्ते यथा मधुकरो बुधः ॥ २ ॥
अस्मिंल्लोकेऽथवाऽमुष्मिन् मुनिभिस्तत्त्वदर्शिभिः ।
दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये ॥ ३ ॥
तानातिष्ठति यः सम्यगुपायान् पूर्वदर्शितान् ।
अवरः श्रद्धयोपेत उपेयान् विन्दतेऽञ्जसा ॥ ४ ॥
ताननादृत्य यो विद्वानर्थानारभते स्वयम् ।
तस्य व्यभिचरन्त्यर्था आरब्धाश्च पुनःपुनः ॥ ५ ॥
पुरासृष्टा ह्योषधयो ब्रह्मणा या विशांपते !
भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः ॥ ६ ॥
अपालितानादृता च भवद्भिर्लोकपालकैः
चोरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमोषधीः ॥ ७ ॥
नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा ।
तत्र योगेन दृष्टेन भवानादातुमर्हति ॥ ८ ॥
वत्सं कल्पय मे वीर ! येनाहं वत्सला तव ।
धोक्ष्ये क्षीरमयान् कामाननुरूपं च दोहनम् ॥ ९ ॥
दोग्धारं च महाबाहो ! भूतानां भूतभावन !
अन्नमीप्सितमूर्जस्वद्भगवान् वाञ्छते यदि ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टादशे महीवाक्याद्वत्सपात्रादिभेदतः
पृथ्व्यादिभिस्तु सा दुग्धा स्वं स्वं दुग्धमितीर्यते ॥ १ ॥

हेऽभिभो प्रभो ! यद्वा भो देव ! अभि अभयं यथा भवत्येवं मन्युं संनियच्छ श्रावितं विज्ञापितं न मद्वाक्येऽनादरः कर्तव्य इत्याह । बुधो हि सर्वतः सार मादत्ते ॥ २ ॥

मयि जीर्णाश्चौषधीरुपायेन गृहाणेति वक्तुमुपायेन सर्वं सिद्ध्यति नान्यथेत्याह। अस्मिन्निति त्रिभिः । पुंसां श्रेयसः पुरुषार्थस्य प्रसिद्धयेऽस्मिंल्लोके कृष्यादयोऽमुष्मिंश्च लोकेऽग्निहोत्रादयो योगा उपाया दृष्टाः प्रयुक्ता अनुष्ठिताश्च ॥ ३ ॥

पूर्वदर्शितान् अवरोऽर्वाचीनः ॥ ४ ॥

अविद्वानविद्वानपीतिशः व्यभिचरन्ति न सिध्यन्ति ॥ ५ ॥

सहेतुकमुपायमाह । पुरेति षड्भिः ॥ ६ ॥

भवद्भिरिति राजसामान्याभिप्रायेण वेनादिभिरिति वा अपालिता चोराद्यनिवारणात् अनादृता च यज्ञादिप्रवर्तनाभावात् यज्ञार्थं अग्रसं गिलितवती अन्यथा धृतव्रतैर्भुक्ता न प्ररोक्ष्यन्ते ततः यज्ञादयो न सिद्ध्येयरन्निति भावः ॥ ७ ॥

क्षीणा जीर्णाः ॥ ८ ॥

दोहनं दोहपात्रम् दोग्धारं चोपकल्पय धोक्ष्ये प्रपूरयिष्यामि ॥ ९ ॥

भूतानामभीप्सितमन्नम् ऊर्जस्वद्बलप्रदम् ॥ १० ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सर्वकारणत्वेन विचित्रशक्तिमत्त्वेन च पृथुं प्रस्तूय तदभिमतौषधिवीजनिर्गमोपायं विवक्ष्यन् तत्र तं विश्वासयितुं प्रसादयन्त्याह महीत्याद्य मुनिः । इत्थं पूर्वोक्तप्रकारेण पृथुमभिष्टूय ततोऽप्यनिवृत्तरुषा प्रफुरितः नितरां चलितः अधरोष्ठो यस्य तं दृष्ट्वेति शेषः भीता सत्यपि निर्मही आत्मानं मन आत्मना बुद्ध्या संस्तभ्य निर्भयं कृत्वा आह ॥ १ ॥

उक्तमेवाह । भोःपृथो ! अभि अभितः कार्त्स्न्येन मन्युं क्रोधं सन्नियच्छ उपसंहर मे मया आचितं विज्ञापितं निबोध जानीहि किं तदित्यत्राह । बुधः सारासारविभागज्ञः यथा मधुकरः भृङ्गः तथा सर्वतः सर्वेभ्यो वस्तुभ्यः सारमादत्ते गृह्णाति वक्ष्यमाणरीत्या मत्तः सारभूतक्षीरादानेनैवेष्टसिद्धौ किं वृथा मह्यं कुध्यसीति भावः ॥ २ ॥

मया गीर्णा ओषधीरुपायेन गृहाणेति वक्तुमुपायेन सर्वं सिध्यति नान्यथेत्याह । अस्मिन्निति त्रिभिः । पुंसां कामिनां श्रेयसः पुरुषार्थस्य प्रसिद्धये निष्पत्तये तत्त्वदर्शिभिः मुनिभिरस्मिल्लोके ये उपायाः कृषिगोरक्षवाणिज्यादयः जीवनोपाया दृष्टा विज्ञाता निर्णीता इति यावत् ये चामुष्मिन् परस्मिन् लोके स्वर्गसाधनभूता अग्निहोत्रादयः उपायाः प्रयुक्ता अनुष्ठिताश्चशब्दात् दृष्टाश्च ॥ ३ ॥ ४ ॥

तानेव पूर्वैर्मुनिभिर्दर्शितानुपायान् योऽवरोऽर्वाचीनः सम्यक् श्रद्धया कर्तव्येषु त्वरया उपेतः युक्तः समातिष्ठति स एवाञ्जसा सुखेनोपयानुपायसाध्यान् विन्दते लभते अन्यस्तु न विन्दत इत्याह तानिति । यो विद्वानविद्वान् वा तान् पूर्वदर्शितानुपायाननादृत्य स्वयमर्थान् स्व बुद्ध्या स्वबुद्धिमात्रेणापुरुषार्थसाधनत्वेनावधारणीयार्थान् पुरुषार्थोपायाभासानारभते तस्यार्थास्त उपायाभासाः पुनः पुनः प्रारब्धाश्च अन्तराय विहता पुनः पुनरनुष्ठिता अपि व्यभिचरन्ति न फलजनका भवन्तीत्यर्थः ॥ ५ ॥

नन्वस्त्वेवं कोऽसावोषधिवीजनिर्गमोपायः किमर्थं च तानि त्वमाग्रस इत्यत्राह । पुरेति । हेविशाम्पते! ब्रह्मणा पुरा या ओषधयः स्टष्टा इह जीवनार्थत्वेन यज्ञानुष्ठानद्वारा परत्रलोके स्वर्गाद्यर्थत्वेन स्टष्टास्ता ओषधयः अधृतव्रतैः लोकपालयज्ञानुष्ठानव्रतरहितैरत एवासद्भिः भुज्यमाना मया दृष्टा असद्भिर्भुज्यमाना इमा ओषधयः समूला नश्येयुरित्यालोचिता इत्यर्थः ॥ ६ ॥

अहं च भवद्भिर्भवादृशैः लोकपालैरपालिता अनादृता च सती लोके सर्वस्मिन् चौरीभूते चौरप्राये सति यज्ञार्थे यज्ञनिमित्ते ओषधीरग्रसं गिलितवती असद्भिर्भुज्यमाना न रोक्ष्यन्ति ततश्च यज्ञादयो न सिध्येयुरित्यालोच्याग्रसमित्यर्थः ॥ ७ ॥

ता मया गीर्णा वीरुधः ओषधयः भूयसा महता कालेन मयि क्षीणाः जीर्णाः नूनं निश्चये जीर्णानां पुनर्निर्गमने दृष्टेन निश्चितेन योगेनोपायेन आदातुं ग्रहीतुमर्हति ॥ ८ ॥

कोऽसौ दृष्टो योगस्तत्राह । वत्समिति त्रिभिः । हेवीर! महाबाहो! हे भूतभावन ! यदि भवान् भूतानामूर्जस्वद्बलप्रदमन्नं वाञ्छति तर्हि मे गोरूपाया ममानुरूपं वत्सं दोहनं दुहन्त्यस्मान्निति दोहनं पात्रं दोग्धारं चोपकल्पय येन वत्सादिसामग्रीसंपादनेन अहं तव वत्सलत्वाद्धिषये वात्सल्यवती क्षीरमयान् क्षीरविकारान् मत्तःक्षीरप्रकृतिकान् कामान् काम्यन्त इति कामा ओषधीदछन्दः सोमवीर्योजोबलासवादयस्तान् धोक्ष्ये क्षीररूपेण प्रपूरयिष्यामि ॥ ९—१० ॥



श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वरूपभूता गुणाहरेरपरोक्षज्ञानाद्व्यज्यन्त इत्येतदर्थसंग्रहार्थं भूमेस्तत्तद्वसुदोहनं निरूप्यतेऽस्मिन्नध्याये । तत्रादौ पृथोः क्रोधशमनाय पुनर्भूमेस्तत्प्रतिवचनप्रकारम्वक्ति । इत्थमिति ॥१॥

कथं नियच्छामि क्रोधं येन तच्छान्तिहेतुं श्रुत्वाक्रान्तःकरणोभवामीति तत्राह । निबोधेति । पुंसेह सद्धर्म एवाशिक्षणायो न सल्लिकाधर्म इत्याशयेनाह । सर्वत इति ॥ २ ॥

कीदृशं श्राव्यते यत्प्रकृतोपयोगि स्यादत्राह । अस्मिन्निति । लोके कृष्यादिश्रेयःसिद्धये वीजाद्यार्जनोपाया अमुष्मिन् स्वर्गादौ यागादियोगास्तत्त्वदर्शिभिर्मुनिभिर्दृष्टा प्रयुक्ताश्चेत्यन्वयः ॥ ३ ॥

ततः किमित्यतोऽन्वयव्यतिरेकावाह । तानातिष्ठतीति ॥ ४ ॥

अविद्वानव्युत्पन्नः व्यभिचरन्ति नियमेन न सिध्यन्ति ॥५॥

किंबहुकथाकथनेनाधुनौषधीनामनुपलम्भः कस्मात्तन्निमित्तं कथयेति तत्राह । पुरेति । याः पुरा विरिञ्चेन सृष्टास्ता ओषधीरहमग्रसमित्यन्वयः ॥ ६ ॥

असत्पुरुषैर्भुज्यमानत्वं भवादृशेन क्षत्रियेणारक्षितत्वमगोपितत्वं नृलोकस्य चोरप्रायत्वं चावेक्ष्य सत्सूत्पन्नेषु श्रीनारायणपूजालक्षणयज्ञप्रयोजनस्यावश्यकत्वादिति ॥ ७ ॥

तर्हि ता देहीति तत्राह । नूनमिति । क्षीणानामापादनं दुःसाध्यमिति तत्राह । तत्रेति । शास्त्रदृष्टेन ननु स्वरूपतो नष्टा उत लघुतामापन्ना इति संशयोमाभूत्तत्तत्कार्यसाधने तच्छास्त्रदृष्टोपायेन सर्वं साध्यम् ॥ ८ ॥

तथापि किरातानुचराणां वानराणां वा रेणुकाया वा भृतसंजीविन्यादिनेत्यत्र प्राप्तमुपायं वक्ति । वत्समिति । वत्सला वत्सप्रिया अनुरूपं तत्तद्योग्यं दोहनं दोहक्रियाविशेषम ॥ ९ ॥

नैतावता पूर्यत इत्युक्तम दोग्धारं चेति । ओजस्वद्वष्टम्भकृत्प्राणधारणशक्तिप्रदमित्यर्थः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नूनमिति । पूर्वपूर्वकल्पेषु पूर्वपूर्वपृथुभिर्दृष्टेन शास्त्रद्वारा ज्ञानेन योगेनोपायेन ॥ १—८ ॥

वत्समिति युग्मकम् ॥ ९ ॥ १० ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अष्टादशेऽवनिं कामधेनुं दुग्ध्वा स्वमीप्सितम् ।
वत्सपात्रादिभेदेन दुग्धं सर्वेऽपि लेभिरे ॥ १ ॥

हे अभिभो प्रभो ! सर्वत इति यद्यप्यहं निकृष्टा तदपि ममापि वाचं शृणु । मद्वाचि सारस्तिष्ठति चेत्तं गृहाण नान्यथेत्यर्थः॥१॥२॥

गवां दुग्धपूर्णादप्यापीनादुपायेन दोहनेनैव दुग्धं लभ्यते ननु गालिताद्विदारिताद्वा तस्मादित्यतो मयि स्थितान्यन्नानि सर्वाणि त्वमुपायेन गृहाणेति वक्तुमुपायस्य प्रामाण्यं दर्शयति । अस्मिन्निति । योगा उपाया अस्मिन् लोके कृष्यादयः अमुष्मिंश्च लोके अग्निहोत्रादयः दृष्टाः प्रयुक्ता अनुष्ठिताश्च ॥ ३ ॥

अवरोऽर्वाचीनः । उपेयान् साध्यवस्तूनि ॥ ४ ॥ ५ ॥

प्रकृतमाह । पुरेति षड्भिः ॥ ६ ॥

समां च कुरु मां राजन् ! देववृष्टं यथा पयः ।
अपर्तावपि भद्रं ते उपावर्तेत मे विभो ! ॥ ११ ॥
इति प्रियं हितं वाक्यं भुव आदाय भूपतिः ।
वत्सं कृत्वा मनुं पाणावदुहत् सकलौषधीः ॥ १२ ॥
तथापरे * च सर्वत्र सारमाददते बुधाः ।
ततोऽन्ये च यथा कामं दुदुहुः पृथुभाविताम् ॥ १३ ॥
ऋषयो दुदुहुर्देवीमिन्द्रियेष्वथ सत्तम ! ।
वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं शुचि ॥ १४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भवद्भिरिति येषां मनसि कृत्वा तत्पुत्रे पृथावुपालम्भः अपालिता यज्ञादिप्रवर्त्तनाभावात् प्रत्युत विधर्मप्रवर्त्तनादनादृता अथ अनन्तरं चौरीभूते इति येषां भूते सतीत्यर्थः । अन्नसमिति यदि नाग्रसिष्यं तदाहमद्य कथं प्राप्स्य इत्यर्थः । यज्ञार्थं त्वत्प्रवर्त्तयिष्यमाणानां यज्ञानां कृते ॥ ७ ॥

क्षीणाः सूक्ष्मतया स्थिताः । दृष्टेन योगेन वक्ष्यमाणेनोपायेन ॥ ८ ॥

दोहनं दोहपात्रं धोक्ष्ये प्रपूरयिष्यामि । ऊर्जस्वत् बलप्रदम् ॥ ९ ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भूमिवाक्यात्तां पृथ्व्याः दुदुहुरित्यष्टादशे वर्ण्यते । इत्थमिति। आत्मानं मनः संस्तभ्य स्थिरं कृत्वा ॥ १ ॥

भोः प्रभो ! मन्युं क्रोधमभिनिः शेषतः संयच्छ उपसंहर मे आर्थितं प्रार्थितं निबोध यतो बुधः यथा मधुकरः पुष्पेभ्यः सारं गृह्णाति तथा सर्वतः सर्वेभ्यः सारमादत्ते तथोक्तं महाभारते "अपिवालात्प्रवदतोह्यपि मूर्खात्प्रजल्पतः । सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पद„ इति ॥ २ ॥

अस्मिन् लोके कृष्यादयः अमुष्मिन् अग्निहोत्रादयः ते एव पुंसां श्रेयःप्रसिद्धये मनोरथलाभाय भवन्ति ॥ ३—४ ॥

अर्थाः उद्योगाः व्यभिचरन्ति निष्फला भवन्ति ॥५ ॥ ६ ॥ ७ ॥

वीरुधः ओषधयः क्षीणाः जीर्णाः तत्र आदाने दृष्टेन लोकप्रसिद्धेन आदातुं ग्रहीतुम् ॥ ८ ॥

लोकप्रसिद्धं योगमेवाह । वत्समिति। यदि भूतानामीप्सितमूर्जस्वत् बलप्रदमन्नं वाञ्छते तर्हि येनाहं कामान् धोक्ष्ये तादृशं वत्सं दोहनं पात्रं दोग्धारं च प्रकल्पयेति द्वयोरन्वयः ॥ ९—१० ॥

---

भाषाटीका ॥

मैत्रेयजी बोले क्रोधसे ओठों को कम्पायते हुये पृथु महाराज को इस प्रकार से स्तुति करके अपनी बुद्धि से मन को रोक कर बड़ी भय भीत पृथिवी बोली ॥ १ ॥

हे प्रभो ! क्रोध को रोको मेरे कहे वचन को सुनो पंडितलोग भौंरा की नांईं सब जगे से सार को ग्रहण करते हैं ॥ २ ॥

इस लोक में अथवा उस लोक में तत्त्वदर्शी मुनिलोगोंने जो उपाय दिखाये हैं उन्हीं उपायों के प्रयोग करने से मनुष्यों को सिद्धि होती है ॥ ३ ॥

प्राचीनों के दिखाये उन उपायों को जो आश्रय करता है नूतन पुरुष वह उन उपायों से अनायास फल को प्राप्त होता है ॥ ४ ॥

उन उपायों को छोड करके जो पंडित भी होकर कार्यों का आरम्भ करे तो उस के बारम्बार आरम्भ किये कार्य व्यर्थ होजाते हैं ॥ ५ ॥

हे राजन् ! पूर्वकाल में ब्रह्मा जीने ओषधियों को पैदा किये उन ओषधियों को व्रत त्यागी असत् पुरुषों को भोगते मैंने देखा ॥ ६ ॥

लोकपालक आपलोगोंने जब मेरा पालन नहीं किया अनादर किया सब लोग जब चोर होगये तब यज्ञ के वास्ते मैंने ओषधियों का ग्रास करलिया ॥ ७ ॥

निश्चय से वो लता मेरे में अधिक काल होने से क्षीण हो गईं उसमें दिखाये हुये उपाय से आप ग्रहण कीजिये ॥ ८ ॥

हे धीर ! जिससे मैं तुमारी वत्सला प्यारी हूं तो वत्स की कल्पना करो लायक पात्र कल्पना करो तब दुग्धरूपी मनोरथ को मैं पूरण करूंगी ॥ ९ ॥

हे महाबाहो ! यदि आप बलकारक अन्नादिक चाहते हैं तो कोई प्राणी के मध्य में दुहनेवाला भी कल्पना करो ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपगतेऽपि वर्षतौ देववृष्टमुदकं यथा मे मयि सर्वत्र वर्तेत ॥ ११ ॥

मनुं स्वायंभुवम् ओषधीर्व्रीह्यादीः ॥ १२ ॥

प्रसंगादर्थान्तरमाह। तथेति। यथा पृथुरेवं सर्वत्र वाक्ये परेऽपि सारमाददते प्रस्तुतमनुवर्तयति । ततोऽन्ये च ऋष्यादयः पश्चात् दुदुहुः पृथुना भावितां वशीकृताम् ॥ १३ ॥

देवीं पृथ्वीम् वाङ्मनःश्रवणैर्वेदग्रहणादिन्द्रियाणां पात्रत्वम् ॥ १४ ॥

* ततोऽपरेइतिविजयध्वजः ।

कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् ।
हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः ॥ १५ ॥
दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम् ।
विधायादूदुहन् क्षीरमयःपात्रे सुरासवम् ॥ १६ ॥
गन्धर्वाप्सरसोऽधुक्षन् पात्रे पद्ममये पयः ।
वत्सं विश्वावसुं कृत्वा गान्धर्वं मधु सौभगम् ॥ १७ ॥
वत्सेन पितरोऽर्यम्णा कव्यं क्षीरमधुक्षत ।
आमपात्रे महाभागाः श्रद्धया श्राद्धदेवताः ॥ १८ ॥
प्रकल्प्य वत्सं कपिलं सिद्धाः सङ्कल्पनामयीम् ।
सिद्धिं नभसि विद्यां च ये च विद्याधरादयः ॥ १९ ॥
अन्ये च मायिनो मायामन्तर्धानाद्भुतात्मनाम् ।
मयं प्रकल्प्य वत्सं ते दुदुहुर्धारणामयीम् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सोमममृतम् वीर्यं मनः शक्तिम् ओज इन्द्रियशक्तिम् बलं देहशक्तिं च तदेव पयः ॥ १५ ॥

सुरामासवं च तालादिमद्यम् ॥ १६ ॥

मधु वाङ्माधुर्यं सौभगं सौन्दर्यं तत्संहितम् ॥ १७ ॥

कव्यं पितृणामन्नम् आमपात्रे अपक्वे मृन्मये अधुक्षत दुदुहुः ॥ १८ ॥

संकल्पनामयीमणिमादिसिद्धिम् ये च विद्याधरादयस्ते च तमेव वत्सं प्रकल्प्य नभस्येव पात्रे खेचरत्वादिरूपां विद्यां दुदुहुः ॥ १९ ॥

अन्ये च किंपुरुषादयोऽन्तर्धानेनाद्भुतात्मनां संबन्धिनीं मायाम् धारणामयीं संकल्पमात्रप्रभवाम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे वीर! पर्वतादिभिर्निम्नोन्नतां पृथ्वीं समां कुरु किं त्वत्समीकरणसाध्यं तत्राह। देवप्रवृष्टं वर्षासु देवेन पर्जन्येन वृष्टं पयः जलमपर्तावपि वर्षर्त्वपगमेऽपि मे मम यथा उपावर्तेत सर्वतो वर्तेत इत्थं समीकरणाभावे कापि जलं न तिष्ठेदतः समाहं कर्तव्येत्यर्थः हे प्रभो! ते तुभ्यं भद्रं दोहनसमीकरणाभ्यां भद्रं भूयादित्यर्थः ॥ ११ ॥

एवं धरित्र्याभिहितः पृथुस्तथैवाकरोदित्याह मुनिः। इत्युक्तविधं प्रियं हितं च भूमेर्वाक्यमादाय ओमित्यनुमन्य मनुं स्वायंभुवं वत्सं कृत्वा पाणौ दोहनपात्रे स्वयं दोग्धा भूत्वा सकलौषधीः अदुहत् सकलौषधिप्रकृतिभूते क्षीरमदुहत् क्षीरं प्रदुह्य धरित्र्यां तद्विकारान् ओषधीः प्रादुर्भावयामासेत्यर्थः एवमग्रेऽपि बोध्यम् ॥ १२ ॥

यथा पृथुरेवमपरे च बुधाः सारासारविवेककुशलाः सर्वत्र सर्वेषु पदार्थेषु सारमाददते गोरूपाया धरित्र्याः क्षीरं प्रदुह्य सर्ववस्तुषु सारं निहितवन्त इत्यर्थः तदेवाह । अन्ये ऋषिप्रभृतयः यथाकामं स्वस्वकामानुरूपं पृथुभाविताम् पृथुवशीकृतां दुदुहुः ॥ १३ ॥

के के किं किमदुहंस्तत्राह । ऋषय इति । ऋषयो वसिष्ठादयः बृहस्पतिं वत्सं कृत्वा देवीं धरित्रीमिन्द्रियेषु पात्रभूतेषु वाङ्मनःश्रवणैर्वेदग्रहणादिन्द्रियाणां पात्रत्वम् हे सत्तम! विदुर! शुचि पवित्रं छन्दोमयं छन्दःप्रचुरं छन्दःप्रकृतित्वेन तत्प्राचुर्यमत्र विवक्षितं पयः क्षीरं दुदुहुः दुग्धवन्तः ॥ १४ ॥

तदा सुरगणाः इन्द्रं वत्सं कृत्वा हिरण्मयेन पात्रेण वीर्यं मनःशक्तिः ओज इन्द्रियशक्तिः बलं देहशक्तिः एतत्त्रयसम्पादकं सोमममृतं तदात्मकं पयः अदूदुहन् ॥ १५ ॥

दितेरपत्यानि दानवा दोग्धारः असुरश्रेष्ठं प्रह्लादं वत्सं विधाय कृत्वा अयः पात्रे "गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा,, इति त्रिविधां सुरामासवं च तालादिमद्यं पयः दुदुहुः कार्यकारणयोरभेदोपचारेण सुरासवं पयो दुदुहुरित्यभेदनिर्देशः ॥ १६ ॥

एवमग्रेऽपि गन्धर्वाप्सरसश्च दोग्धारः विश्वावसुं वत्सं कृत्वा पद्ममये पद्मात्मके पात्रे गन्धर्वाणां सम्बन्धिसौन्दर्यं च पयः अधुक्षन् दुदुहुः ॥ १७ ॥

श्राद्धदेवताः पितरः पित्रादिपितृगणाः दोग्धारः अर्यमणा वत्सेन अर्यमाणं वत्सं कृत्वेत्यर्थः आमपात्रे अपक्वे मृन्मये पात्रे श्रद्धया कव्यं पितृणामन्नं क्षीरमधुक्षत दुदुहुः आर्षत्वात् व्यत्ययेनात्मनेपदं कव्यस्य विशेषेण श्रद्धया देयत्वज्ञापनाय श्रद्धया अधुक्षतेत्युक्तं यद्यपि श्रद्धया देयं श्राद्धं तस्य देवता इत्यवयवार्थादेव कव्यस्य श्रद्धापूर्वकत्वं प्रतीयते तथापि गच्छतीति गौः गमेर्डोः गौर्गच्छतीत्यत्र प्रकृत्युपात्तगमनस्येव प्रकृत्युपात्तश्रद्धाया अविवक्षणात् श्रद्धयेत्युक्तम् ॥ १८ ॥

सिद्धा दोग्धारः कपिलं मुनिं वत्सं प्रकल्प्य नभसि आकाशे पात्रे सङ्कल्पनामयीं संकल्पप्रचुरामणिमादिः संकल्पानुसारित्वात्संकल्पनामयीमित्युक्तं सिद्धिमणिमादिसिद्धिमधुक्षन् तथा ये च विद्याधरादयस्ते दोग्धारः तेऽपि तमेव वत्सं कपिलं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।
प्रकल्प्य नभस्येव पात्रे खेचरत्वादिरूपां विद्यां क्षीरात्मना दुदुहुः ॥ १९ ॥

अथान्ये च मायिनः आश्चर्यरूपधारिणः किंपुरुषादयो दोग्धारः वत्सत्वे वत्सभावे मयं प्रकल्प्य मयं वत्सं कृत्वेत्यर्थः धारणामयीं धारणाप्रचुरां मनोव्यापारविशेषधारणाख्ययोगानुसारित्वाद्धारणामयीमित्युक्तम् एतच्चैकादशस्कन्धे स्फुटीभविष्यति अन्तर्धानमद्भुतं रूपं चेत्येतदुभयाकारत्वेन तदात्मिकां मायां विचित्ररूपसर्गकारिणीं शक्तिं दुदुहुः ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।
ओषध्युत्पत्तौ प्रधानसाधनं जलन्तद्विषमायां मयि देवदृष्टं पयो न समं प्रसरति तद्यद्यपत्तौ चापि अवृष्टकाले समं स्यात्तथा मां नमां कुर्वन्त्यथौषध्युत्पादे स्वस्कोपविषया स्यामित्याह । समां चेति ॥ ११ ॥

अत्रापि त्वदुक्तं त्वय्येवोद्दीर्य वातव्यमन्यथा वधिष्यामीति पुनरपि पृथुना किं कुपितं न किन्तु तदुक्तमङ्गीकृतं तत्र ग्राहित्वादित्याह । इतीति । प्रियहितं श्रोतृसुखं प्रियं पथ्यं हृदयंगमं हितं भूपतिः पृथुः ॥ १२ ॥ १३ ॥

ततोऽपर इत्युक्तं विव्रियते । ऋषय इत्यादिना । देवीं सरस्वतीं इदमेव विशिनष्टि । छन्दोमयमिति । वेदमयं पयः कुत्र वागिन्द्रियेषु ॥ १४ ॥

न केवलं सोमरसमात्रमदूदुहन् किन्तु तदुद्भवं गुणं चेत्याह । वीर्यमिति । पराक्रमं माहात्म्यं वा ओजोऽवष्टम्भशक्तिं बलं निराहारत्वेऽपि चेष्टाशक्तिमत्र बाह्यानेव गुणानदूदुहन्नतु स्वरूपभूतान् तदुक्तं "गुणाः स्वरूपभूताश्च बाह्याश्चेति द्विधा मताः । स्वरूपभूताव्यक्ते हरेर्बाह्यान्दुदुहुःपय„ इति ॥ १५ ॥

अयःपात्रे अयोमये पात्रे सुराख्यमासवं मधुप्रह्लादस्य प्रतिमन्वन्तरमुत्पन्नप्रायत्वादत्रोक्तं "प्रतिमन्वन्तरं प्रायः प्रह्लादाद्याबभूविर„ इतिवचनात् ॥ १६ ॥

गान्धर्वं गानं मधु सौभगं सौभाग्यलक्षणं मधु ॥ १७ ॥

आमपात्रे नवभाण्डे श्राद्धदेवताः श्राद्धकर्मणाम् ॥ १८ ॥

संकल्पनामयीं संकल्पमात्रेणाणिमादिसिद्धिप्रदां सिद्धिं ये विद्याधरादयस्ते च नभसि विद्यां खेचरत्वलक्षणां सिद्धिमधुक्षन् खग्वयः ॥ १९ ॥

अन्तर्धानगतात्मनादृश्यत्वे प्राप्तमनस्करत्वेन अन्ये मायिनोधारणामयीं चिन्तामात्रसाध्यां मायाम् ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः
सकलौषधीस्तत्तद्बीजमयानि पयांसि । तत्सेकमात्रेण सर्वौषधिप्रभावात् मनोर्वत्सत्वं सर्वभूभृद्गणमूलत्वात्तत्सम्बन्धेन तत्तस्यास्तदुद्भावनभावोत्पत्तेः एवमुत्तरत्रापि श्रीपृथुपाणेः पात्रत्वं तत्र तत्पालनशक्तिप्रकाशात् तत्प्रभावात् पयसश्चाक्षयत्वं ज्ञेयम् ॥ १२—१३ ॥

यथा पृथ्व्या गोरूपत्वं तथा पयसोऽपि साक्षाद्वत्सत्वमेव । तस्य छन्दोमयत्वञ्च तदुपलम्भमात्रेण छन्दस्त्वं सहसा प्रादुर्भावात् । तत् प्रादुर्भावयोग्यानि तु वाङ्मनःश्रवणरूपाणीन्द्रियाणि । तेषां पात्रत्वं तत्तद्द्वारके सेकेन तत्प्रादुर्भावात् । तत्र ब्रह्मिष्टानां बृहस्पतिरिति न्यायेन प्रथमाधिकारी बृहस्पतिरिति स एव वत्सः कृत इत्यादिकं सर्वत्रानुसन्धेयम् ॥ १४ ॥

वीर्यादिहेतुं सोपममृतरूपं पयः ॥ १५ ॥

श्रीमतः प्रह्लादस्य भावित्वेऽपि पृथिव्युपदेशेन सोऽयं प्र… दैत्यानां भावनामयो ज्ञेयः अयः पात्र इति दोह्यस्य निकृष्टत्वे… पूर्वस्य दोहस्य प्रकृष्टत्वापेक्षया हिरण्मयेत्युक्तम् ॥ १६ ॥

गन्धं सौरभ्यमयं मधु तद्रूपं पयः तच्च ससौभगं सौ… सहितम् । तत्र सौभगसौन्दर्याभ्यां तत्तत्प्रकाशोजातः … गानमाधुर्यमिति ज्ञेयं पद्मस्य पात्रत्वं च तत्त्रयास्पदत्वेनोक्त… कत्वात् ॥ १७ ॥

आमपात्रस्य पितृसन्तर्पणाक्षमाघत्वाच्चदुपयोगः ॥१८—…

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।
अपर्त्तौ अपगतेऽपि वर्षर्त्तौ ॥ ११-१२ ॥

प्रसङ्गादर्थान्तरमाह । तथेति । यथा पृथुः पृथिव्या वाक्यम… जग्राह गृहीत्वाच स्वकार्यं साधयामास तथा अपरेऽ… सर्व्वत्र सर्व्वेषामेव सर्व्ववाक्येषु सारं गृह्णन्तीति नीतिः … राज्येऽराजकेच धर्म्मलोपात् सर्व्वेषामपि सर्व्वं … वस्तु सर्व एव पुनः प्रापुरित्याह । तत इति । अन्येच ऋष्याद… पञ्चदश । पृथुना भाविता सर्व्वमहं दास्यामीति दित्सुता… वर्त्ती कृतां मनुवन्तायिणाचा रूपम् ॥ १३ ॥

देवीं पृथ्वीं वाङ्मनःश्रवणैर्वेदग्रहणादिन्द्रियाणां पात्र… त्वम् ॥ १४ ॥

सोमममृतं वीर्यं मनः शक्तिं चेन्न इन्द्रियशक्तिं बलं शरी… शक्तिं तदेव पयः ॥ १५ ॥

सुरैव आसवोमादकः पदार्थस्तम् ॥ १६ ॥

मधु माधुर्यं गान्धर्वमिति पाठे गानम् ॥ १७ ॥

कव्यं पितृणामन्नम् आमपात्रे अपक्वमृन्मये ॥ १८ ॥

संकल्पनामयीमणिमादिसिद्धिं नभसि पात्रे विद्याञ्च खेच… रत्वादिरूपाम् ॥ १९ ॥

अन्येच किम्पुरुषादयः । अन्तर्द्धानेनाद्भुतात्मनाम् अभूतस्व… वानां सम्बन्धिनीं मायां धारणामयीं सङ्कल्पमात्रप्रभवाम् ॥२०॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।
हेराजन्! अपर्तौ अपगतेऽपि प्रावृषि यथा पयो मे मयि उपाव… त तथा मां कुरु ततस्ते मद्दमभीप्सितसिद्धिर्भविष्यतीति शेषः॥११-१२

यथा कांधं विहाय सारं गृहीतवान् तथा सर्वत्र लोके बुध… सारमाददते अतो विपश्चिता सारग्राहिणा भवितव्यमिति आ… प्रासङ्गिकमुक्ता प्रस्तुतमाह । ततः पृथोरन्ये च ऋष्यादयः पृथुन… भावितां यथाकामं यथेष्टं दुदुहुः स्वस्वावसरं दैत्यादीनां तदाग… मनुत्पन्नत्वात् ॥ १३ ॥

इन्द्रियेषु वेदस्योच्चारणधारणाकरणेषु वाङ्मनःश्रोत्रे… छन्दोमयं वेदात्मकम् ॥ १४ ॥

सुरगणा आदित्यादयः सोमं पीयूषं वीर्यौजोबलानि म… इन्द्रियदेहशक्तयः तद्रूपं पयोऽदूदुहन् ॥ १५ ॥

सुरां गौडीमाध्वीं त्रिविधां मदिरामासवं तालादिभवं … समाहरन्नकृत्स्यम अयःपात्रे लोहपात्रे प्रह्लादं वत्सं विधाय दैत्य… दानवाः अदूदुहन् ॥ १६ ॥

गन्धर्वा वाद्यं गानं नृत्यं च मधु वाद्याद्यनुरूपं करणसौन्दर्य… एतद्रूपं पयः अधुक्षन् दुदुहु ॥ १७ ॥

यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः ।
भूतेशवत्सा दुदुहुः कपाले क्षतजासवम् ॥ २१ ॥
तथाऽहयो दन्दशूकाः सर्पा नागाश्च तक्षकम् ।
विधाय वत्सं दुदुहुर्बिलपात्रे विषं पयः ॥ २२ ॥
पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम् ।
अरण्यपात्रे चाधुक्षन्मृगेन्द्रेण च दंष्ट्रिणः ॥ २३ ॥
क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वे कलेवरे ।
सुपर्णवत्सा विहगाश्चरं चाचरमेव च ॥ २४ ॥
वटवत्सा वनस्पतयः पृथग्रसमयं पयः ।
गिरयो हिमवद्वत्सा नानाधातून् स्वसानुषु ॥ २५ ॥
सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक् पयः ।
सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताम् ॥ २६ ॥
एवं पृथ्वादयः पृथ्वीमन्नादाः स्वन्नमात्मनः ।
दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह ! ॥ २७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे महाभाग ! आमपात्रे अपक्वे मृन्मये कव्यं पितृणामन्नम् अधुक्षत दुदुहुः ॥ १८ ॥

सिद्धाः सङ्कल्पनामयीमणिमादिकां सिद्धिं ये विद्याधरादयस्ते च खेचरत्वादिविद्यां कपिलं वत्सं प्रकल्प्य नभसि पात्रे दुदुहुरित्यन्वयः ॥ १९ ॥

अन्ये च ये मायिनः अद्भुतविद्योपजीविनस्ते अन्तर्धानेनाद्भुतात्मनां तत्सम्बन्धिनीम् धारणामयीं सङ्कल्पमात्रप्रभवाम् मायां आश्चर्यप्रकाशिकां विद्यां नभस्येव दुदुहुः ॥ २० ॥

भाषाटीका ।

हे राजन् मेरे को बरोबर करो जिससे देवतों का वर्षाया जल बिना वर्षा ऋतुके सर्वत्र रहजाय इसमें आप का जय होवै गा ॥ ११ ॥

इस प्रकार से पृथिवी का हित प्रिय वचन को ग्रहण करके पृथुमहा राजने मनुमहाराज को बछरा बनाकर हस्त को पात्र कल्पना कर सब ओषधियों को दुहा ॥ १२ ॥

तिसी प्रकार और भी जो ज्ञानी हैं वे सार को ग्रहण सर्वत्र करते हैं तदनन्तर और सब भी यथारुचि पृथु की वशकरी हुई पृथिवी को दुहते भये ॥ १३ ॥

हे वत्स विदुरजी इस के अनन्तर ऋषिलोगों ने इंद्रियों को पात्र बनाकर बृहस्पति को बछरा बनाकर वेदरूपी पवित्र दुग्ध को दुहा ॥ १४ ॥

देवता लोगों ने इन्द्र को बछरा बनाकर सुवर्ण पात्र में अमृत मनःशक्ति इन्द्रिय शक्ति देहशक्ति रूप दुग्ध को दुहा ॥ १५ ॥

दैत्यदानव लोगोंने असुरों मेंश्रेष्ठ प्रह्लादजीको बछरा बनाकर लोहे के पात्र में मदिरा रूप दूधको दुहा ॥ १६ ॥

गन्धर्व अप्सरा लोगों ने पद्म के पात्र में विश्वावसु को बछरा बनाकर सुन्दर गन्धर्व गान को दुहा ॥ १७ ॥

श्राद्ध के देवता पितर लोगों ने अर्यमा को वत्सबना कर कच्चे मट्टि के पात्र में कव्यनाम अन्न को दुहा ॥ १८ ॥

सिद्ध लोगोंने कपिल भगवानको वत्सबनाकर आकाशमें सङ्कल्प मयी सिद्धि को दुहा ऐसे विद्या धरादिकों ने भी श्रीकपिलजीं को बछरा बनाकर आकाश को पात्र बनाकर खेचर साधन विद्या को दुहा ॥ १९ ॥

और भी जो कि पुरुषादिक हैं मायावाले तिनने मयदानव को बछरा बनाकर यथा रुचि पात्र में अन्तर्धान रूपी अद्भुत धारणा मयी माया को दुहा ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भूतेशो रुद्रः स एव वत्सो येषाम् क्षतजं रुधिरं तदेवासवम् ॥ २१ ॥

अहयो निष्फणाः दन्दशूका वृश्चिकादयः सर्पाः सफणास्त एव कद्रूसन्ततिजा नागाः बिलपात्रे मुखे ॥ २२ ॥

यवसं तृणम् । गोवृषं रुद्रवाहं वृषभम् मृगेन्द्रेणास्युत्तरेणान्वयः ॥ २३ ॥

क्रव्यं मांसम् । चरं कीटादि अचरं फलादि ॥ २४ ॥ २५ ॥

अनुक्तसर्वसंग्रहार्थमाह । सर्वे इति । सर्वे स्वजातौ यो मुख्यस्तेन वत्सेन ॥ २६ ॥

उपसंहरति । एवमिति । स्वन्नमभीष्टमन्नम् तमेव । क्षीरभेदं दुदुहुः दोहः पात्रम् ॥ २७ ॥

ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः ।
दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः ॥ २८ ॥
चूर्णयन् स्वधनुष्कोट्या गिरिकूटानि राजराट् ।
भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः ॥ २९ ॥
अथास्मिन् भगवान् वैन्यः प्रजानां वृत्तिदः पिता ।
निवासान् कल्पयांचक्रे तत्र तत्र यथार्हतः ॥ ३० ॥
ग्रामान् पुरः पत्तनानि दुर्गाणि विविधानि च ।
घोषान् व्रजान् सशिविरानाकरान् खेटखर्वटान् ॥ ३१ ॥
प्राक् पृथोरिह नैवैषा पुरग्रामादिकल्पना ।
यथा सुखं वसन्तिस्म तत्र तत्राकुतोऽभयाः ॥ ३२ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां पृथुविजयोनाम
अष्टादशोऽध्यायः ॥ १८ ॥

———○*○———

श्रीधरस्वामिकृतभावार्थदीपिका ।

इमां पृथ्वीम् ॥ २८ ॥

धनुषोऽग्रेण गिरिशृङ्गाणि चूर्णयन् राजराट् राज्ञां राजा सर्वेषामाजीविकादानात् ॥ २९ ॥ ३० ॥

ग्रामा हट्टादिशून्याः पुरो हट्टादिमत्यः ता एव महत्यः पत्तनानि दुर्गाणि विविधानि । यथाह बृहस्पतिः । "औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा„इति घोषान् आभीराणां निवासान् व्रजान् गवां निवासान् शिविरं सेनानिवासस्थानं तत्सहितानाकरान् स्वर्णादिस्थानानि खेटाः कर्षकग्रामाः खर्वटाः पर्वतप्रान्तग्रामास्तांश्च ॥ ३१ ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टादशोऽध्यायः ॥१८॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पिशिताशना मांसभक्षा यक्षादयो दोग्धारः भूतेशो रुद्रो वत्सो येषां भूतेशं वत्सं विधायेत्यर्थः कपाले पात्रे क्षतजं रुधिरं तदेवासवमासववन्मादकत्वादासवमित्युक्तम् दुदुहुः ॥ २१ ॥

अहयो निष्फणा दन्दशूकाः दंशनस्वभावाः सर्पाः सफणाः त एव कद्रूसन्ततिजाता नागा दोग्धारः तक्षकं वत्सं विधाय बिलान्येव पात्राणि तेषु विषं पयः दुदुहुः ॥ २२ ॥

तदा पशवो दोग्धारः गोवृषं गोषु वृषं श्रेष्ठं रुद्रवाहनं वृषभं वत्सं कृत्वा अरण्यमेव पात्रं तस्मिन् यवसं तृणं क्षीरम् अधुक्षन् मृगेन्द्रेणेत्युत्तरेणान्वयः ॥ २३ ॥

क्रव्यादा मांसाशिनः दंष्ट्रिणो व्याघ्रादयः प्राणिनः दोग्धारः मृगेन्द्रेण सिंहेन वत्सेन स्वकलेवरं पात्रे क्रव्यं मांसं दुदुहुः विहगाः पक्षिणः सुपर्णो गरुडः वत्सो येषां ते चरं कीटादिकम् अचरं फलादिकं च दुदुहुः ॥ २४ ॥

वनस्पतयः वृक्षाः वटो वत्सो येषां तथाभूताः सन्तः पृथक् कट्वम्लमधुरादिभिन्नं रसमयं पयः दुदुहुः गिरयः पर्वता दोग्धारः हिमवान् वत्सो येषां तथाभूताः सन्तः स्वसानुषु पात्रेषु तेषु नानाधातून् गैरिकादीन् दुदुहुः ॥ २५ ॥

अनुक्तसंग्रहार्थमाह । सर्वे स्वजातौ यो मुख्यस्तेन वत्सेन स्वे पात्रे सर्वान् स्वापेक्षितान् कामान् दोग्धीति तं सर्वकामदुघां पृथ्वीं पृथक् पृथक् पयः दुदुहुः ॥ २६ ॥

उपसंहरति । एवमिति । एवमन्नादाः अन्नकाङ्क्षिणः पृथ्व्यादयः आत्मनः स्वस्य स्वन्नं समीचीनमन्नं स्वाभीष्टमन्नमित्यर्थः तदेव क्षीरभेदं दोहपात्रं दोहादिभेदेन दुदुहुः हे कुरूद्वह ! ॥ २७ ॥

ततो महीपतिः पृथुः प्रीतः सन् सर्वकामदुघामिमां पृथ्वीं प्रेम्णा दुहितृत्वे चकार दुहितरममन्यतेत्यर्थः यतोऽयं दुहितृवत्सलः ॥ २८ ॥

ततो राजराट् राज्ञां राजो विभुः समर्थः वैन्यः पृथुः स्वधनुष्कोट्या स्वधनुषोऽग्रेण गिरिकूटानि गिरिशृङ्गाणि चूर्णयन् भूमण्डलं प्रायशः समं चक्रे प्रायोग्रहणात्केनाप्यसमीकृतमपि क्वचित् क्वचित् दृश्यत इत्यभिप्रेतम् ॥ २९ ॥

अथ दोहनसमीकरणानन्तरं प्रजानां वृत्तिदः जीविकाप्रदः पिता पितृवद्रक्षकश्च भगवान् वैन्यः पृथुः यथार्हतः यथायोग्यं तत्र तस्मिन् भूमण्डले प्रजानिवासान् कल्पयाञ्चक्रे ॥ ३० ॥

के ते निवासास्तत्कल्पिता इत्यत्राह । ग्रामानिति । ग्रामा हट्टादिशून्याः पुरः हट्टादिमत्यः तएवमहत्यः पत्तनानि दुर्गाणि विविधानि

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

औदकपार्वतवार्क्षादिभेदभिन्नानि घोषान् आभीराणां निवासान् व्रजाः गवां निवासस्थानानि शिविरान् सेनानिवासस्थानानि तत्सहितानाकरान् स्वर्णोत्पत्तिस्थानानि खेटान् कृषीवलग्रामान् खर्वटान् पर्वतप्रान्तग्रामान् कल्पयामासेत्यन्वयः ॥ ३१ ॥

किं पृथोः प्राक् ग्रामादयो नाभूवन्नेत्याह । इह भूमण्डले पृथोः प्राक् पूर्वमेषा पुरग्रामादिकल्पना नैव नास्त्येवेत्यर्थः तत्र पृथुकल्पितग्रामादिषु नास्ति कुतोऽपि भयं यासां ताः प्रजाः यथासुखं स्वस्वसुखानुसारेण वसन्तिस्म अवसन्नित्यर्थः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पिशिताशना मांसभक्षाः भूतेशो भैरवाख्यो रुद्रो वत्सो येषां ते तथोक्ताः क्षतजासवं रुधिराख्यं मद्यम् ॥ २१ ॥

अह्यादीनां विषधरत्वसाम्येऽप्यवान्तरविशेषत्वात्पृथगुक्तिः॥२२॥

गोवृषं नन्दिकेश्वरं मृगेन्द्रेण सिंहेन दंष्ट्रिणः ॥ २३ ॥

क्रव्यादाः प्राणिनो हिंस्राः क्रव्यमपक्वमांसं स्वकलेवरे पात्रे दुदुहुरित्यन्वयः चरं जङ्गममचरं तरुफलम् ॥ २४ ॥

वनस्पतयः तिक्तादिभेदेन बहुत्वाद्रसस्य पृथगित्युक्तं नानाधातून् सुवर्णादीन् ॥ २५ ॥

उपसंहरति।सर्व इति। स्वजातिषु मुख्यःस्वमुख्यःसएववत्सस्तेन सर्वान् कामान् दोग्धीति सर्वकामदुघा ताम् ॥ २६ ॥

एकस्याः पृथ्व्याः क्षीरभेदः कथमत्राभूदत्राह । एवमिति । दोहभेदेन वत्सभेदेनादिशब्दाद्दोग्धृभेदेन च ॥ २७ ॥

राज्ञा किं प्रीतं कुपितमुत तूष्णींभूतमिति संशयावसरो नास्तीत्याहातत इति। लोकगोविलक्षणक्षीरभेददातृत्वादत्र प्रीतेरेव सम्भावितत्वात् ॥ २८ ॥

इदानीं भूमेःसमीकरणप्रकारं वक्ति। चूर्णयन्निति।गिरिकूटानि गिरिशृङ्गाणि "कूटोऽस्त्री शृङ्गमायाद्येष्वद्रिकुञ्जेषु भेदयोः,, इति यादवः कश्चित्कश्चिद्गिरिकूटादीनां सत्त्वात्प्राय इत्युक्तम् ॥ २९ ॥

भूमेः समीकरणेन सुखपर्यटनात्परं प्रजानां प्रयोजनं किमकारि राज्ञेति । तत्राहाथेति ॥३०॥

उक्तं विशिनष्टि। ग्रामानिति। ग्रामोबहुजनाकीर्णो राजराजाश्रयं पुरम् समुद्रसङ्गतनद्युपकण्ठे यवनजनाश्रयःपत्तनम् जलपर्वतादिना गन्तुमशक्यं स्थानं दुर्गं गवां स्थानं घोषः गोपालानां स्थानं व्रजः "गोष्ठंघोषइति प्रोक्तोव्रजस्तत्पालसंस्थिति,,इत्यभिधानाद्गोष्ठाध्वनिवहाव्रजा इति सामान्यवचनमिति ज्ञातव्यं सेनानिवेशस्थानं शिबिरं वैश्यानामाश्रयो नगरं मृगयोपजीवनं खेटः। आदिस्थादिवारमुद्दिश्य यत्र वणिजांयोगस्तत् खर्वटाख्यं स्थानं वस्त्रभारविक्रयस्थानं वा । पाषण्डिनां निवासस्थानं वा ॥ ३१ ॥

इदं पुरादिनिर्माणं पृथोर्माहात्म्याविनाभूतमित्याह । प्राक्पृथोरिति। किमत इति तत्राह। यथेति। अनेनेतः पूर्वं राज्ञां साधुत्वेऽपि स्वाधया प्रजानां निवाससुखं नास्तीति सूचितम् ॥ ३२ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पश्वादयस्तत्तद्देवताः ॥ २३ ॥

स्वकलेवरे स्व स्व भक्ष्यकलेवरे इत्यर्थः । सुपर्णोऽयं न वैनतेयः किन्तु श्रीप्रह्लादवद्भावनामयः ॥ २४ ॥ २५ ॥

पृथ्वीं मन्वाद्या इति क्वचित् ॥ २६—३२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भूतेशो रुद्रः क्षतजं रुधिरं तदेवासवम् ॥ २१ ॥

अहयो निष्फणाः दन्दशूका वृश्चिकादयः । सर्पाः सफणाः तएव कद्रूसन्ततिजा नागा बिलपात्रे मुखे ॥ २२ ॥

यवसं तृणं गोवृषं रुद्रवाहं वृषभं । मृगेन्द्रेण सिंहेन वत्सीकृतेनेत्युत्तरेणान्वयः ॥ २३ ॥

क्रव्यं मांसं सुपर्णो गरुडः। चरं कीटादि अचरं फलादि २४-२५॥

अनुक्तमर्थसंग्रहार्थमाह । स्वजातौ यो मुख्यस्तेन वत्सेन॥२६॥

उपसंहरति । एवमिति । स्वस्वमभीष्टमन्नं तमेव क्षीरभेदं दुदुहुः दोहः पात्रम् ॥ २७ ॥

इमां पृथ्वीं दुहितृत्वे इति स्वहस्तेनैवान्नमयदुग्धादानात् स्त्रीभावस्यानौचित्यं शरहस्तेन स्वेन दण्डकरणान्मातृभावस्याप्यनौचित्यमालक्ष्य पारिशेष्यात्तस्यां वात्सल्योदयाच्च दुहितृत्वमेव रसावहमिति ज्ञेयम् ॥ २८—२९—३० ॥

ग्रामा हट्टादिशून्याः पुरोहट्टादिमत्यः । ताश्च महत्यः पत्तनानि दुर्गाणि विविधानि । यथाह बृहस्पतिः "औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा,,इति घोषान् आभीराणां स्थानानि व्रजान् गवां शिविराणि सेनायाः आकराः सुवर्णरूप्याद्युद्भवस्य खेटाः कर्षकाणां खर्वटाः पर्वतप्रान्तवर्तिनाम् ॥ ३१——३२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थेऽष्टादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पिशिताशनाः मांसभोजनाः क्षतजं रुधिरमेवासवं दुदुहुः ॥ २१ ॥

अहिप्रमुखाः भुजङ्गावान्तरभेदाः दन्दशूका इति पदं विषवतां सर्वेषामुपलक्षकम् बिलपात्रे मुखादिच्छिद्ररूपे पात्रे ॥ २२ ॥

यवसं तृणम् गोवृषं नन्दिकेश्वरम् ये दंष्ट्रिणः क्रव्यादास्ते मृगेन्द्रेण वत्सेनेत्युत्तरेणान्वयः ॥ २३ ॥

क्रव्यादा मांसभोजिनः चरं कीटादि अचरं फलादि स्वकलेवरे इत्यत्रापि योज्यम् ॥ २४ ॥

वनस्पतयोऽपि स्वकलेवरे पृथक् रसमयं पयो दुदुहुः । धातूनिति । रत्नादीनामुपलक्षणम् ॥ २५ ॥

सर्वे अन्ये इहानुक्ता अपीत्यर्थः ॥ २६ ॥

एकस्यां क्षीरभेदे हेतुं दर्शयन्नुपसंहरति । दोहवत्सादिभेदेन पात्रवत्सदोग्धृभेदेन क्षीरभेदम् आत्मनः स्वस्य स्वस्य शोभनमद्य ते इत्यन्नमदनीयमेवमुक्तप्रकारेण दुदुहुरिति शेषः ॥ २७ ॥

दुहितृत्वे चकार एकपत्नीव्रतधरत्वे च भूपतिरिति संज्ञामपि न स्वीकृतवानिति भावः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

धनुष्कोट्या धनुषोऽग्रेण राजराट् राजराजः प्रायः शब्देन नदीनां गमनार्थं क्वचित् क्वचित् भूम्यां वैषम्यं क्वचित् क्वचित् पाषाणकाष्ठादिसिद्ध्यर्थं गिरीन् अशेषयदिति योज्यते ॥ २९ ॥

उक्तप्रकारेण वृत्तिदो जीविकाप्रदः निवासानपि कल्पयांचक्रे ॥ ३० ॥

निवासानेवाह । ग्रामानिति । ग्रामाः हट्टादिरहिताः पुरो हट्टादिमत्यः ता एव महत्यः पत्तनानि दुर्गाणि शत्रुभिरगम्यानि विविधानि तद्वैविध्यं राजनीतिग्रन्थे दर्शितम् । "जलदुर्गं गिरिदुर्गं वनदुर्गं तथैव च । दुर्गाण्येतान्यदुर्गाणि नरदुर्गं दुर्गमेव हि,, इति । बृहस्पतिरप्याह । औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथेति घोषान् आभीरनिवासान् व्रजान् गोनिवासान् शिविराणि सैन्यनिवासस्थानानि तत्सहितान् आकरान् स्वर्णाद्युत्पत्तिस्थानानि खेटान् कर्षकग्रामान् खर्वटान् गिरिग्रामान् ॥३१-३२॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टादशाध्यायार्थप्रकाशः ॥ १८ ॥

---

भाषाटीका ।

यक्ष राक्षस भूत पिशाच मांस खाने वाले इन्होंने महादेवजी को बछरा बनाकर कपाल पात्र में रक्त मद्यको दुहा ॥ २१ ॥

तैसेही सर्प बीछू विनाफणवाले सांप कद्रू के सन्तान नाग इन्होंने तक्षक को बछराबनाकर बिलको पात्रकर विषरूप दूधको दुहा ॥ २२ ॥

पशुओं ने महादेवजी के वृषभ को बछराबनाकर जंगल पात्र में घास रूप दूध को दुहा ॥ २३ ॥

क्रूरदांतों वाले जंतु मांसखाने वाले प्राणियोंने अपने … को पात्रबनाकर मांसको दुहा पक्षियोंने गरुड को बछराबना… कीडाफल आदि दुहे ॥ २४ ॥

वृक्षों ने वट को बछराबना कर अलग अलग रस रूप दूध… दुहा पर्वतोंने हिमवान् को बछराबना कर अपने शिखर … पात्र में नाना प्रकार के धातु रूप दुग्ध को दुहा ॥ २५ ॥

सबोंने अपने श्रेष्ठ को बछरा बनाकर अपने अनुकूल पात्र… अलग२ दूध सब काम देनेवाली पृथुमहाराज की वश करी… पृथिवी से दुहा ॥ २६ ॥

इस प्रकार से पृथुआदिक अपने २ अन्न को क्षीर समुभ… पात्रों के भेद से दुहते भये ॥ २७ ॥

तिस के अनन्तर सब काम देनेवाली पृथिवी के ऊपर पृथु… हाराज प्रसन्न होकर पृथिवी को पुत्री मानकर उसपर … दयालु भये ॥ २८ ॥

वैन्यमहाराजने अपने धनुष के अग्रभाग से पर्वतों के शिख… को चूर्ण करके इस भूमण्डल को प्रायः बरोबर करदिया ॥ २९ ॥

तदनन्तर प्रजों के जीविका देनेवाले भगवान् वैन्यने त… तहां यथा योग सबके निवास स्थान बनाये ॥ ३० ॥

सहर ग्राम खेड़ा नाना तरह के किला अहीरों के ग्राम ग… के गोष्ठ सेनाके स्थान खदान खेतीवालों के ग्राम पर्वतों के ए… के गाम सब बनाये ॥ ३१ ॥

पृथुमहाराज से पहिले सहर गाम नहीं बनेथे जहां इच्छा… तहां प्रजा लोग निर्भय होकर सुखपूर्वक निवास क… तेथे ॥ ३२ ॥

इति श्रीभागवत चतुर्थस्कन्ध अठारहवां अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे अष्टादशोऽध्यायः समाप्तः ॥ १८ ॥

## उनविंशोऽध्यायः ।



### मैत्रेय उवाच

अथादीक्षत राजा तु हयमेधशतेन सः ।
ब्रह्मावर्त्ते मनोः क्षेत्रे यत्र प्राची सरस्वती ॥ १ ॥
तदभिप्रेत्य भगवान् कर्मातिशयमात्मनः ।
शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम् ॥ २ ॥
यत्र यज्ञपतिः साक्षाद्भगवान् हरिरीश्वरः ।
अन्वभूयत सर्वात्मा सर्वलोकगुरुः प्रभुः ॥ ३ ॥
अन्वितो ब्रह्मशर्वाभ्यां लोकपालैः सहानुगैः ।
उपगीयमानो गन्धर्वैर्मुनिभिश्चाप्सरोगणैः ॥ ४ ॥
सिद्धविद्याधरा दैत्या दानवा गुह्यकादयः ।
सुनन्दनन्दप्रमुखाः पार्षदप्रवरा हरेः ॥ ५ ॥
कपिलो नारदो दत्तो योगेशाः सनकादयः ।
तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः ॥ ६ ॥
यत्र धर्मदुघा भूमिः सर्वकामदुघा सती ।
दोग्धि स्माभीप्सितानर्थान् यजमानस्य भारत! ॥ ७ ॥
ऊहुः सर्वरसान् नद्यः क्षीरदध्यन्नगोरसान् ।
तरवो भूरिवर्ष्माणः प्रासूयन्त मधुच्युतः ॥ ८ ॥
सिन्धवो रत्ननिकरान् गिरयोऽन्नं चतुर्विधम् ।
उपायनमुपाजह्रुः सर्वे लोकाः सपालकाः ॥ ९ ॥
इति चाधोक्षजेशस्य पृथोस्तु परमोदयम् ।
असूयन् भगवानिन्द्रः प्रतिघातमचीकरत् ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनविंशेऽश्वमेधाङ्गहयापहरणात्पृथोः ।
इन्द्रं हन्तुं प्रवृत्तस्य धात्रा वारणमुच्यते ॥ १ ॥

हयमेधशतेन निमित्तेनादीक्षत दीक्षितोऽभूत् शताश्वमेधसङ्कल्पमकरोदित्यर्थः ब्रह्मावर्त्ते

सरस्वती दृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ १ ॥

आत्मनः स्वस्य कर्मातिशेन इत्यतिशयमभिप्रेत्य ज्ञात्वा तादिति तं पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे ॥ २ ॥

अतिशयमेव दर्शयति । यत्रेति सप्तभिः । साक्षादन्वभूयत प्रत्यक्षेणादृश्यत ॥ ३ ॥ ४ ॥

सिद्धादयश्च तं हरिमन्वीयुरित्युत्तरेणान्वयः ॥ ५ ॥ ६ ॥

धर्मदुघा हविर्दोग्ध्री धेनुः सती ॥ ७ ॥

ऊहुर्वहन्तिस्म सर्वरसानिक्षुद्राक्षादिरसान् क्षीरं च दधि च अन्नं च पानकादिगोरसोघृतं तक्रं च तांश्च भूरीणि विस्तृतानि वर्ष्माणि शरीराणि येषां ते फलादि प्रासूयन्त मधुच्युतो मधुस्राविणः सन्तः ॥ ८ ॥

चतुर्विधं भक्ष्यं भोज्यं चोष्यं लेह्यं च ॥ ९ ॥

अधोक्षज ईशोनाथो यस्य परम उदयोऽभिवृद्धिर्यस्मिंस्तत्क्रतोसूयन्नसहमानः प्रतिघातं विघ्नं चकारेत्यर्थः ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं पृथुर्धरित्र्या गोरूपधरायास्तत्संदर्शितोपायदुग्धोपधिबीजः समीकृतभूमिः कल्पितप्रजानिवासोऽभूदित्युक्तम् अथ सङ्कल्पितशताश्वमेधः स्वनुष्ठितैकोनशताश्वमेधपशुर्जिघांसितशतक्रतुश्चतुराननिदेशनिवृत्तेन्द्रवधो विरमितचरमक्रतुः कृतशतक्रतुसख्यः कृतावभृथस्नानः प्राप्तदेववरो विप्रगणाशासितोदत्तर्त्विग्दक्षिणः पूजितदेवर्षिगणो बभूवेत्याह मुनिरष्टादशेन। अथेति । अथ दोहनसमीकरणप्रजानिवासकरणानन्तरं स राजर्षिः पृथुः हयमेधशतेन निमित्तेनादीक्षत दीक्षितोऽभूत् शताश्वमेधसङ्कल्पमकरोदित्यर्थः कुत्रेत्यत्राह । मनोः स्वायंभुवस्य क्षेत्रे तदुपितक्षेत्रे "सरस्वती दृषद्वत्योर्देवनद्योर्यदन्तरम् । तंदेव निर्मितं देशं ब्रह्मावर्तं प्रचक्षत„ इति प्रसिद्धेः ब्रह्मावर्ताख्ये यत्र क्षेत्रे प्राची सरस्वती नदी प्रवहते इति शेषः ॥ १ ॥

भगवान् शतक्रतुरिन्द्रः तदात्मनः स्वस्य कर्मातिशेत इत्यतिशयमभिप्रेत्य ज्ञात्वा आत्मन इति पञ्चमी वा पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे ॥ २ ॥

कर्मातिशयं प्रपञ्चयन् ब्रह्मावर्तं प्रस्तौति । यत्रेति सप्तभिः । यत्र महोत्सवदेशे ईश्वरः सर्वान्तरात्मा षाड्गुण्यपूर्णः सर्वलोकहितोपदेष्टा प्रभुर्यज्ञाराध्यः तत्फलप्रदश्च हरिः साक्षादन्वभूयत प्रत्यक्षोऽभूत्तत्राविर्बभूवेति यावत् ॥ ३ ॥

कथम्भूतोऽन्वभूयत तत्राह । ब्रह्मरुद्राभ्यां तथा सभृत्यैर्लोकपालैश्च अन्वितो युक्तः गन्धर्वादिभिरुपगीयमानः अन्वभूयत ॥ ४ ॥

सिद्धादयः सुनन्दनन्दौ प्रमुखौ मुख्यौ येषां ते हरेर्भगवतः पार्षदप्रवराश्च ॥ ५ ॥

तथा कपिलादयः ये चान्ये भगवतो भक्तास्तेऽपि तत्सेवने भगवत्सेवन उत्सुकाः आसक्ताः सन्तः तं भगवन्तमन्वीयुः अनुसृत्य गतवन्तः ॥ ६ ॥

हे भारत ! यत्र ब्रह्मावर्ते धर्मदुघा घृतादिहविर्दोग्ध्री भूमिः सर्वकामदुघा तत्तदीप्सितानीप्सितांश्च कामान् दुहन्ती यजमानस्य पृथोरभीप्सितानर्थान् दोग्धि दुदुहे ॥ ७ ॥

नद्यः सर्वरसान् इक्षुद्राक्षादिरसान् क्षीरं दधि चान्नं पानकादि गोरसं घृतं तक्रं च ऊहुः वहन्तिस्म तरवः भूरीणि विस्तृतानि वर्ष्माणि शरीराणि येषां तथाभूता मधुश्च्युतः मधुस्राविणः सन्तः प्रासूयन्त पुष्पफलादिकामिति शेषः ॥ ८ ॥

सिन्धवः समुद्राः रत्नानां निकरान् समूहान् धृतवन्त इति योग्यक्रियाध्याहारः यद्वानुपक्तस्य प्रासूयन्त इत्यस्य प्रकृतोपयुक्तार्थपरत्वं गिरयः चतुर्विधं भक्ष्यभोज्यचोष्यलेह्यभेदेन चतुर्विधमन्नं प्रददुः सपालकाः सर्वे जना उपायनं सांमानिकमुपाजन्हुः समर्पितवन्तः ॥ ९ ॥

अधोक्षजो भगवान् ईशो नाथो यस्य तस्य पृथोर्भगवदवतारभूतस्याप्यावेशावतारत्वाज्जीवाभिप्रायेणाधोक्षजेशस्येत्युक्तम् इत्युक्तविधः परमः उदयो वृद्धिर्यस्मिन् तत्कर्म असूयन् असहमानः प्रतिघातं विघ्नमचीकरत् अकरोत् शिवुत्तप्रेषणात्क्रतोणिच् ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मार्पितकर्मणा शुद्धान्तःकरणस्य पुंसो हरेरापरो[illegible]स्यादिति वेदयितुं पृथोर्यज्ञकरणव्याजेन हरेर्माहात्म्यं निरूप्यतेऽस्मिन्नध्याये "कर्मणा ज्ञानमातनोति„ इतिश्रुतेः तत्र [illegible]मतः पृथोर्यज्ञदीक्षाप्रकारमाह। अथेति। "घोटकेवीथितुरगतुरङ्गाश्वतुरङ्गमाः। वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय„ इत्यमरः नाम्नाब्रह्मावर्ते "सरस्वतीदृषद्वत्योरन्तरन्देवनिर्मितम् । ब्रह्मावर्त्तं मानवा विदुर्देशं विचक्षणा„ इत्यभिधानं प्राचीमैन्द्रींदिशमुद्दिश्य स्यन्दमाना ॥ १ ॥

अत्रेन्द्रेण स्वनामाभिभूष्णौयज्ञे क्रियमाणे कथं क्षान्तमत तदभिप्रेत्येति ॥ २ ॥

शतक्रतोः कर्मणोऽतिशयमाह। यत्रेति। सर्वात्मा सर्वव्यापी निघण्टुवत् यज्ञपतिरित्यादिनाम्नां बहुत्वकथनेन किमेकेन तेनेत्यतउक्तमन्वितइति । अनेनापि राजैश्वर्यं न द्योतितमित्यतउ[illegible] सुपगीयमान इति ॥ ४ ॥

गायकानां किञ्चिदनुगमस्य स्वाभिप्रेतमुपेत्य पश्चादन्यतो गम[illegible] सम्भवादित्यतो यावद्गम्यमनुगन्तॄनाह । सिद्धेति ॥ ५ ॥

तत्त्वविदामनुगमनमेव तन्माहात्म्यद्योतकमित्यतउक्तं कपिल[illegible]स्वादिना नित्यविरोधिनां दैत्यादीनामनुगमनं कथं संगच्छत इत्य[illegible] उक्तं भागवताइति । अनेन दैत्यादयो द्विधाः सन्तीति ध्वनितं ये [illegible] तस्य सेवनोत्सुकास्तेचान्वीयुरिति ॥ ६ ॥

धर्मदुघा यज्ञयोग्यपयोदोग्ध्रीति । न केवलमेतावदेव किन्तु सर्वकामदुघा नैतत्स्तुतिमात्रमनुभवसिद्धमित्याह। महीति । महि[illegible]न्महनीयत्वाच्च मही ॥ ७ ॥

गोपा*लानां रसानां चतुर्विधान्नजनित्वेन कथं तत्संभव इत्यत्राह। ऊहुरिति । अनेन नदीनां मूर्तिमत्त्वं लक्षयति अन्यथा मूर्तिमधार्यमाणानां वोढुमसम्भवात् वर्ष्मदेहप्रमाणयोरित्यभिधानात् स्थूलप्रमाणाः ॥ ८ ॥

भक्ष्यं भोज्यं लेह्यं पेयञ्चेति चतुर्विधं व्ययार्थं द्रव्यं न कोशादुद्धार्यं किन्तु सर्वैरानीतमेवालं प्रीत्यापि तस्याति शुद्धत्वादिति भावेनाह । उपायनानीति ॥ ९ ॥

भूमण्डले कोऽप्यजातशत्रुर्नास्ति यतः श्रीनारायणैकदेवस्य पृथोरपि यज्ञविघ्नं शक्रोऽकरोदित्याह । इतीति । इतिशब्दः प्रकारवचनः उक्तप्रकारयज्ञे महोदय असूयन्नसहमानः स्वार्थे वा यक्प्रत्ययः ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

पृथोस्तद्यज्ञमहोत्सवरूपं कर्म स्वात्मनोऽतिक्रामकं ज्ञात्वा अत्र टीकायां कर्मातिशयमिति समस्ते पदे वक्तव्ये अतिशयमात्रं यदुक्तं तन्नेदं विग्रह वाक्यं किन्त्वर्थदर्शनमात्रं यथा कर्म पर्यन्तं पृथग्योजितमातिशयमिति च पृथगेव निरुक्तम् । कर्मणोऽतिशयमिति तु स्वयमूह्यम् ॥ १ ॥ २ ॥

यत्रेति युग्मकम् ॥ ३—६ ॥

यत्र धर्मेति । धर्मे घृतक्षीरादीति कर्म ॥ ७—८ ॥

टीकायां भक्ष्यं चर्व्यं भोज्यं चर्वणादिकं विनाऽभ्यवहारार्थम् ॥ ९—१३ ॥

---

* गोपालानान्तरसानामिति समस्तं पदम् ॥

चरमेणाश्वमेधेन यजमाने यजुष्पतिम् ।
वैन्ये यज्ञपशुं स्पर्द्धन्नपोवाह तिरोहितः ॥ ११ ॥
तमत्रिर्भगवानैक्षत्त्वरमाणं विहायसा ।
आमुक्तमिव पाखण्डं योऽधर्मे धर्मविभ्रमः ॥ १२ ॥
अत्रिणा चोदितो हन्तुं पृथुपुत्रो महारथः ।
अन्वधावत सन्नद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ १३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ऊनविंशेऽश्वमेधस्य हयहारिहरेर्मुहुः ।
पापण्डसृष्टिस्त्रिर्विणुभिस्तद्वधं को न्यवारयत् ॥ ० ॥

सरस्वती दृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते । तत्र हयमेधशतेन निमित्तेन ॥ १ ॥

आत्मनः सकाशात् ॥ २ ॥

कर्म्मातिशयमेव दर्शयति । यत्रेति सप्तभिः ॥ ३—७ ॥

भूरिवर्ष्माणः बहुप्रमाणाः फलादिकं प्रासूयन्त मधूनां च्युत् क्षरणं येषु ते "वर्ष्म देहप्रमाणयोः,, इत्यमरः ॥ ८-९ ॥

पृथोस्त्विति पृथोस्तदिति पाठद्वयम् ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ऊनविंशे पृथुयज्ञमहोत्सवं वर्णयति । अथेति । हयमेधशतेन निमित्तेन अदीक्षत दीक्षितोऽभूत् ॥ १ ॥

शतक्रतुरिन्द्रः आत्मनः स्वस्मात् पृथोः अतिशयं कर्म अभिप्रेत्य तस्य पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे ॥ २ ॥

कर्मणोऽतिशयत्वमेव दर्शयति । यत्रेति सप्तभिः । साक्षादन्वभूयत प्रत्यक्षेणादृश्यत ॥ ३ ॥

अत एव ब्रह्मादिभिरन्वितः सन् गन्धर्वादिभिरुपगीयमानोऽभूत् ॥ ४—६ ॥

यत्र कर्मणि भूमिः धर्मदुघा हविर्दोग्धी धेनुः सती सर्वकामदुघा सर्वान्कामान् दोग्धीति अभीप्सितानर्थान् दोग्धिस्म पूरयतिस्म ॥ ७ ॥

सर्वरसान् इक्षुद्राक्षादिरसान् ऊहुर्वहन्तिस्म भूरीणि वर्ष्माणि शरीराणि येषां ते मधुच्युतः मधुस्राविणः सन्तः प्रासूयन्त फलान्यजनयन् ॥ ८ ॥

सिन्धवः रत्नसमूहान् उपाजन्हुः गिरयो भक्ष्यं भोज्यं चोष्यं लेह्यं चेति चतुर्विधमुपाजन्हुः सर्वे लोकाः पालकैः सहिताः उपायनमुपाजन्हुः ॥ ९ ॥

परमः श्रेष्ठ उदयोऽभिवृद्धिर्यस्मिन् तत्कर्मासूयन् असहमानः प्रतिघातं विघ्नम् अचीकरत् ॥ १० ॥

---

भाषाटीका ॥

मैत्रेयजी बोले इसके अनन्तर मनुका क्षेत्र जो ब्रह्मावर्त्त है जहां पर प्राची सरस्वती है तहां पर पृथु महाराज ने सौ अश्वमेधकी दीक्षा को धारण किया ॥ १ ॥

इस बात को जानकर भगवान् इन्द्रने अपना अपमान समझकर पृथु महाराज के यज्ञ के महोत्सव को नहीं सहन किया ॥ २ ॥

जिस यज्ञ में साक्षात् भगवान् यज्ञपति ईश्वर हरि सर्वात्मा सर्व लोक के गुरु प्रभु दर्शन को प्राप्त भये ॥ ३ ॥

अनुचरों के सहित लोक पाल तथा महादेव जी ब्रह्मा जी इनको साथमें लेकर मुनियों को साथ लेकर भगवान् उपस्थित भये तब गंधर्व अप्सरागण गान नृत्य करतेथे ॥ ४ ॥

सिद्ध विद्याधर दानव दैत्य गुह्यक सुनंद नंद आदि भगवान् के उत्तम पार्षद ॥ ५ ॥

कपिलजी नारदजी दत्तात्रेयजी सनकादिक योगेश्वर और जो भगवान् की सेवा के प्रेमी हैं वे सब भागवत भगवान के आने के पीछे आगये ॥ ६ ॥

जहां धर्म की पूर्णा करने वाली भूमी सब कामों को पूर्ण करने वाली है सो यजमान पृथुराज के सब मनोरथों को पूर्ण करती है ॥ ७ ॥

नदियों ने क्षीर दधि अन्न गोरस और सर्व रस इनको धारण किया वृक्ष सब बड़े होकर मधु को चुवाने फलने लगे ॥ ८ ॥

समुद्रों ने रत्नों के समूह को धारण किया पर्वतों ने भक्ष्य भोज्य लेह्य चोष्य चार प्रकार के अन्न को धारण किया लोक पालों के सहित सब लोकों ने भेट पहुंचाया ॥ ९ ॥

इस प्रकार से अधोक्षज को नाथ मानने वाले पृथु महाराज का बड़ा भारी उदय को देखकर भगवान् इंद्र ईर्षा करके यज्ञका घात करने को उद्यत भये ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वैन्ये यजुष्पतिं विष्णुं यजमाने सति स्पर्धमान इन्द्रस्तिरोहितः सन्नश्वमपहृतवान् ॥ ११ ॥

त्वरमाणं धावन्तम् "आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् संनद्धोवर्मितः सज्ज,, इत्यमरसिंहः । पाखण्डधर्मं कवचमिव गृहीतवन्तमित्यर्थः अधर्मे धर्मविभ्रमो धर्मोऽयमिति भ्रान्तिकरो यस्तम् ॥ १२—१३ ॥

तं तादृशाकृतिं वीक्ष्य मेने धर्मं शरीरिणम् ।
जटिलं भस्मनाच्छन्नं तस्मै बाणं न मुञ्चति ॥ १४ ॥
वधान्निवृत्तं तं भूयो हन्तवेऽत्रिरचोदयत् ।
जहि यज्ञहनं तात ! महेन्द्रं विबुधाधमम् ॥ १५ ॥
एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा ।
अन्वद्रवदभिक्रुद्धो * रावणं गृध्रराडिव ॥ १६ ॥
सोऽश्वं रूपं च तद्धित्वा तस्मा अन्तर्हितः स्वराट् ।
वीरः स्वपशुमादाय पितुर्यज्ञमुपेयिवान् ॥ १७ ॥
तत्तस्य चाद्भुतं कर्म विचक्ष्य परमर्षयः ।
नामधेयं ददुस्तस्मै विजिताश्व इति प्रभो ! ॥ १८ ॥
उपसृज्य तमस्तीव्रं जहाराश्वं पुनर्हरिः ।
चषालयूपतश्छन्नो हिरण्यरशनं विभुः ॥ १९ ॥
अत्रिः सन्दर्शयामास त्वरमाणं विहायसा ।
कपालखट्वाङ्गधरं वीरो नैनमबाधत ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न मुञ्चतिस्म ॥ १४ ॥
हन्तवे हन्तुम् यज्ञहनं यज्ञं हतवन्तम् ॥ १५ ॥
गृध्रराड् जटायुः ॥ १६ ॥
तस्मै हित्वा तदर्थमुत्सृज्य ॥ १७ ॥
विचक्ष्य दृष्ट्वा ॥ १८ ॥

उपसृज्य सृष्ट्वा तेनच्छन्नः सन् चषालोयूपाग्रे निक्षिप्तः काष्ठकटकस्तद्युक्ताद्यूपात् हिरण्यनिर्मिता रशना यस्य तं रशनाया दृढत्वेन छेदाशक्त्या रशनासहितमेवोद्धृत्य यूपाग्रान्नीतवानित्यर्थः विभुः समर्थः ॥ १९—२०—२१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रतिघातकरणमेव प्रपञ्चयति । चरमेणेत्यादिना । यजुष्पतिं भगवतस्त्रयीपतित्वेऽपि प्रकृतस्याश्वमेधस्य यजुर्वेदविहितत्वात् तदधिपतिरित्यभिप्रायेण यजुष्पतिमित्युक्तं यजुष्पतिं भगवन्तं चरमेण शततमेनाश्वमेधेन वैन्ये पृथौ यजमाने आराधयति स्पर्धन् स्पर्द्धमानः इन्द्रः चक्षिङो ङित्करणेनानुदात्तेत्त्वलक्षणस्यात्मने पदस्यानित्यत्वज्ञापनाच्छन्नादेशः तिरोहितः सन् यज्ञपशुमश्वमपोवाह अपहृतवानित्यर्थः ॥ ११ ॥
तमिन्द्रं विहायसा आकाशे त्वरमाणं धावन्तं भगवानत्रिर्मुनिरैक्षत् कथम्भूतमधर्मं धर्मविभ्रमः धर्मभ्रान्तिकरजटिलत्वाद्याकारलक्षणो पाखण्डस्तम् आमुक्तं प्रविष्टं यद्वा आमुक्तमिव कवचमिवेत्यर्थः कोऽसौ पाखण्डः येनामुक्तस्तमाह । य इति । पूर्ववदर्थः ॥ १२ ॥
अत्रिणा सूचिते ज्ञापिते पृथोः पुत्रः संक्रुद्धः सन् तं पशुहर्तारमन्वधावत् तिष्ठ तिष्ठेतिच अब्रवीत् ॥ १३ ॥

तादृशाकृतिं पाखण्डाकृतिं तमश्वहर्तारं वीक्ष्य जटिलं अ… धारिणं भस्मनाच्छन्नं हेतुगर्भमिदं विशेषणद्वयम् जटिल… भस्मनाच्छन्नत्वाच्च शरीरिणं मूर्तन्धर्मं मेने बभ्रामेत्यर्थः … स्तस्मै अश्वहर्त्रे अश्वहर्तारं हन्तुं बाणं न मुञ्चति नामुञ्च… जटिलत्वादिरूपेणाधर्मेऽपि धर्मभ्रमकरणे भ्रान्तस्तस्मै ब… नामुञ्चदित्यर्थः ॥ १४ ॥
वधादश्वहर्तुर्वधान्निवृत्तं तं पृथुपुत्रं हन्तुम् अत्रिर्भूयः पु… अचोदयत् प्रेरयामास चोदनामेवाह । हे तात ! यज्ञहनं यज्ञवि… कर्तारमत एव विबुधेष्वधमं यज्ञस्य विबुधाराधनरू… हन्तृत्वात् तेष्वधर्ममिति भावः महेन्द्रं जहि संहर ॥ १५ ॥
एवं प्रोक्तो वैन्यसुतः पृथुपुत्रः विहायसा आकाशे त्व… माणं धावन्तमिन्द्रं रावणं गजं मृगराडिव सिंह इवाभि… क्रुद्धः अन्वद्रवत् अनुपृष्ठतः अद्रवत आधावितः ॥ १६ ॥
स स्वराट् इन्द्रः तत् पाखण्डं रूपम् अश्वं च हि… अन्तर्हितस्तिरोहितस्तस्थौ स्थितवान् स वीरः पृथुपुत्रः पशु… अश्वमादाय गृहीत्वा पितुः पृथोः यज्ञमुपेयिवान् प्राप्तवान् ॥ १७ ॥
तस्य च पृथुपुत्रस्य तदद्भुतं विस्मयनीयं कर्म इन्द्रगम… नाश्वाहरणरूपव्यापारं वीक्ष्य दृष्ट्वा परमर्षयोऽत्र्यादयः … तस्मै पृथुपुत्राय विजिताश्वः विजयेनाहृत अश्वो येन … विजिताश्व इत्यन्वर्थनामधेयं ददुश्चक्रुः ॥ १८ ॥
हे प्रभो ! विजितेन्द्रिय । विदुर प्रभुर्हरिरिन्द्रः तीव्रं वि… तम उपसृज्य सृष्ट्वा तेन तमसा छन्नः सन् चषाल… चषालाग्रे क्षिप्तः चषालः काष्ठकटकस्तद्युक्तात् यूपाद्धि… र्थः हिरण्यनिर्मिता रशना यस्य तमश्वं पुनर्जहार अपहृतवा… पूर्ववद्विहायसा त्वरमाणमिन्द्रमत्रिर्मुनिः विजिताश्वाय सन्द… र्शयामास ॥ १९ ॥
सन्दर्शितोऽपि वीरो विजिताश्वः एनमिन्द्रं कपालखट्वाङ्गधरं हे… गर्भमिदं कपालखट्वाङ्गधारित्वात् ना बाधत नहतवान् ॥ २० ॥

* रावणं मृगराडिवेति श्रीवीरराघवः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कीदृशं विघ्नमकरोदित्यत्राह। चरमेणेति। चरमेणान्त्येन शततमेन यज्ञेन यजुष्पतिं यजुर्मन्त्राधिदैवतं हरिं यजमाने सति स्पृष्टुः स्पर्धायामिति धातोः शतृच् प्रयोगेणात्मनः शतक्रतुत्वं तस्य पृथोरेकोनशतक्रतुत्वं तस्य हरेरभिप्रेतमिति ध्वनयन्निन्द्रो हरेरुल्लङ्घनं नाकरोदिति ज्ञायते हरेरनभिप्रेतत्वे अश्वापहरणं तत्कृटाद्वतो न क्षममिति उत्तमश्लोकविग्रहाविति वक्ष्यमाणत्वात् ॥११॥

नन्वेवं तर्हि ऋषीणां त्रिकालदर्शित्वख्यातिरपहस्तितेति तत्राह। तमत्रिरिति। विहायसा गन्तुं त्वरमाणं पुनः किमाकारमद्राक्षीदित्यत उक्तमामुक्तमिवेति पाखण्डरूपमामुक्तं गृहीतमिव स्थितं पाखण्डं लक्षयति। योऽधर्मे इति। जनानां ज्ञानदुर्बलानामधर्मे धर्मोऽयमिति विभ्रमो बुद्धिभ्रंशो यस्तत्पाखण्डरूपम् ॥ १२ ॥

अत्रिणा दृष्टं चेत्प्रकृते किमागतमत्राह। अत्रिणेति ॥ १३ ॥

अनुधावनेन प्रत्यावर्त्य शक्रेण सह युद्धमभूत्किं नेत्याह। तमिति। अधर्मशरीरिणं पापदेहिनं सेन इत्यन्वयः मुञ्चति मुमोच जटापाखण्डिना सह युद्धं न धर्म इति ॥ १४ ॥

चोरक्रियामनुवर्तमानस्य पुंसो वधो न दोषायेति मुख्यधर्मविदुषा तत्र प्रेर्यमाणेन भवितव्यमिति जानन् अत्रिः पुनश्च तमचोदयदित्याह। पापान्निवृत्तमिति। वैशब्देन पापशङ्कां निवारयति। गुरोर्वचनमौषधमितिस्मृतेः। विबुधाधिपत्यं चतुर्मुखस्याप्यस्तीत्यत उक्तम् महेन्द्रमिति ॥ १५ ॥

गृध्रराट् जटायुः ॥ १६ ॥

अत्रेन्द्रोऽसुरजनमोहाय स्वामिशक्तिम् दर्शयन्निवाभवदित्याह। सोऽश्वमिति तदुक्तम् "देवाः शक्ताश्च मोहाय दर्शयेयुरशक्तवत्। ऋषीणां चैवराज्ञां च नहि ते देवतासमाः। आज्ञया वा हरेः कापि कार्यतो वा क्वचित्कचित्„ इति यत्र कापि तुदेवैर्ऋष्यादिषु प्रणिपातादिकं क्रियते सोऽपि तत्स्थहरौ मनसा सङ्कल्प्यक्रियत इति तात्पर्यं ज्ञातव्यं च तदुक्तम् "प्रणिपातादिकं देवैर्ऋष्यादिषु जनार्दने। क्रियतेऽतो न तेषां हि तेजोभङ्गः कथञ्चन। अत्युत्तमानावरे तेजोभङ्गो न विद्यते। यथा नराणां तिर्यक्षु प्रायः साम्ये हि-सस्मृत„ इति ऋष्यादिषु स्थिते जनार्दने क्रियत इत्यर्थः ॥ १७ ॥

इन्द्रं जितवता पृथोः पुत्रेण लोकसम्मतं किञ्चयस्तंभवक्षणं यशः प्राप्तमत्राह। तत्तस्येति ॥ १८ ॥

पुंसां स्वकार्यसिद्धिपर्यन्तं प्रयत्नवता भाव्यमिति न्यायमनुसन्धान इन्द्रः पूर्वस्मादधिकयत्नं विधाय दुर्जनमोहाय वेषान्तरं विधायाश्वमपहार्षीदित्याह।:उपसृज्येति। हरिरिन्द्रः चपालयूपयोरन्तर्मध्ये छन्नो निलीनः "चषालो यूपकटकः कम्बासु गहनावृतिः„इत्यभिधानाद्वृक्षनिर्मितयूपे वलयश्चषालः हिरण्येन रचिता रशना काञ्ची यस्य तम् ॥ १९ ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तं तादृशाकृतिमिति श्रीशिवादिषु दर्शनात् कस्यचिद्धर्मस्यायमपि वेशो भवेद् इति भ्रमादिति भावः ॥ १४—२१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यजुःपतिं विष्णुं अपोवाह अपजहार ॥ ११ ॥

अत्रिरैक्षदिति तदीक्षणभीत्या त्वरमाणं पलाय्य धावन्तं पाषण्डं पाषण्डवेशं कवचमिव आमुक्तं गृहीतवन्तम् "आमुक्तः प्रतिमुक्तश्च पिनद्धश्च„इत्यमरः। अधर्मेऽपि धर्म्म विभ्रमो भ्रमो यतः स एव यः ॥ १२ ॥ १३ ॥

तं तादृशाकृतिमिति श्रीशिवादिषु दर्शनात् कस्यचिद्धर्मस्यायमपि वेशोभवेदिति भावनया ॥ १४ ॥

हन्तवे हन्तुम् ॥ १५ ॥

त्वरमाणमिन्द्रं गृध्रराट् जटायुः ॥ १६ ॥

तस्मै तं पृथुपुत्रमन्तर्धानविद्यां शिक्षयितुमित्यग्रिमग्रन्थ दृष्ट्वा व्याख्येयम् ॥ १७ ॥ १८ ॥

उपसृज्य तमोऽन्धकारं पाखण्डवेशेन छन्नः सन् चषालो यूपाग्रे निक्षिप्तः काष्ठकटकः। तद्युक्तात् यूपात् हिरण्यरसनमिति रसनाया दृढत्वेन छेत्तुमशक्त्या रसनासहितमेवोद्धृत्य यूपाग्राश्रीतवानित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

चरमेणान्त्येन यजुःपतिं विष्णुं यजमाने स्पर्द्धन् इन्द्रस्तिरोहितः सन् यज्ञपशुमश्वमपोवाह, अहरत् ॥ ११ ॥

तमिन्द्रमत्रिर्विहायसा नभोमार्गेण त्वरमाणं धावन्तं पाषण्डं वेषमामुक्तं कवचमिव स्वीकृतवन्तमैक्षत अत एव अधर्मे धर्मविभ्रमः धर्मोऽयमिति भ्रान्तिकरो यः ॥ १२ ॥

चोदितः प्रेरितः ॥ १३॥

तादृशाधर्मेवत्प्रतीयमाना आकृतिर्यस्य तं वीक्ष्य वाणं न मुमुचे तिस्म ॥ १४ ॥

हन्तवे हिंसनाय यज्ञहनम् अश्वहरणेन यज्ञविघ्नकरम्॥१५॥

गृध्रराडिव जटायुरिव ॥ १६ ॥

तस्मै वैन्यसुताय अश्वं रूपं च हित्वा ॥ १७ ॥

विचक्ष्य दृष्ट्वा विजिताश्व इति नामध्येयं संज्ञां दधुः हे प्रभो ! धर्मावतार ॥ १८ ॥

हरिरिन्द्रस्तीव्रं गाढं तमः उपसृज्य सृष्ट्वा तेन तमसा छन्नः चषालयूपतः चषालः यूपाग्रे निक्षिप्तः काष्ठकटकस्तद्युक्ताद्यूपात् हिरण्मयी रशना यस्य तम् ॥ १९ ॥ २० ॥ २१ ॥

---

भाषाटीका।

अंत के अश्वमेध में जब यजमान पृथु महाराज यज्ञपति भगवान् का यजन करने लगे तब ईर्षा करके छिपकर यज्ञ के घोडा को इंद्र हरण करके लेगये ॥ ११ ॥

बड़ी शीघ्रता से आकाश में भगते हुए उस इंद्र को भगवान् अत्रि मुनिने देखा कि इंद्र ने पाखंड वेष कवच पहरा है जिस रंगे वस्त्रादिकों को देखकर मनुष्यों को अधर्म मेंभी धर्म की भ्रांति होती है ॥ १२ ॥

अत्रिजी के कहने से पृथु महाराज का पुत्र महारथ ने इंद्र को मारने को पीछे दौड़ा खड़ारह खड़ारह ऐसा कहा ॥ १३ ॥

उसकी वैसी आकृती देखकर उनने शरीर धारी धर्म जाना जिसके जटा हैं भस्म लगाया है तब तिसके वास्ते बाण नहीं चलाया ॥ १४ ॥

अत्रिणा चोदितस्तस्मै सन्दधे विशिखं रुषा ।
सोऽश्वं रूपं च तद्धित्वा तस्थावन्तर्हितः स्वराट् ॥ २१ ॥
वीरश्चाश्वमुपादाय पितृयज्ञमथाव्रजत् ।
तदवद्यं हरेरूपं जगृहुर्ज्ञानदुर्बलाः ॥ २२ ॥
यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया ।
तानि पापस्य खण्डानि लिङ्गं खण्डमिहोच्यते ॥ २३ ॥
एवमिन्द्रे हरत्यश्वं वैन्ययज्ञजिघांसया ।
तद्गृहीतविसृष्टेषु पाखण्डेषु मतिर्नृणाम् ॥ २४ ॥
धर्मइत्युपधर्मेषु नग्नरक्तपटादिषु ।
प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ॥ २५
तदभिज्ञाय भगवान् पृथुः पृथुपराक्रमः ।
इन्द्राय कुपितो बाणमादत्तोद्यतकार्मुकः ॥ २६ ॥
तमृत्विजः शक्रवधाभिसन्धितं विचक्ष्य दुष्प्रेक्ष्यमसह्यरंहसम् ।
निवारयामासुरहो महामते ! न युज्यतेऽत्रान्यवधः प्रचोदितात् ॥ २७॥
वयं मरुत्वन्तमिहार्थनाशनं ह्वयामहे त्वच्छ्रवसा हतत्विषम् ।
अयातयामोपहवैरनन्तरं प्रसह्य राजन् ! जुहवाम तेऽहितम् ॥ २८॥
इत्यामन्त्र्य क्रतुपतिं विदुरास्यर्त्विजो रुषा ।
स्रुग्घस्ताञ्जुह्वतोऽभ्येत्य स्वयंभूः प्रत्यषेधत ॥ २९ ॥
न वध्यो भवतामिन्द्रो यद्यसौ भगवत्तनुः ।
यं जिघांसथ यज्ञेन यस्येष्टास्तनवः सुराः ॥ ३० ॥

---

भाषाटीका ।

मारने से निवृत्त होने पर फिर उसको मारने के लिये अत्रिजीने कहा हेतात ! यज्ञ का नाश करने वाला देवतों में अधम इंद्र को मारो ॥ १५ ॥

ऐसा कहने पर पृथु का पुत्र आकाश में भगते हुए उसके पीछे जैसे रावण के पीछे जटायु दौड़े थे तैसे क्रोध कर के दौड़ा ॥ १६ ॥

सो इंद्र उस घोडा को उस रूपको भी उस पृथु पुत्र के वास्ते छोड़कर अंतर्धान होगया वीर पृथु पुत्र उस घोड़ा को लेकर पिता के यज्ञ में आये ॥ १७ ॥

हे प्रभो विदुरजी ! पृथु पुत्र के उस अद्भुत कर्म को देख कर बड़े ऋषि लोगों ने उसका विजिताश्व नाम रखा ॥ १८ ॥

बड़ा भारी अंधेरा करके इंद्र ने फिर चषाल यज्ञ स्थंभ के पास छिपकर सोना के शांकल वाले घोड़ा को हरण कर लिया ॥ १९ ॥

आकाश में जल्दी जाते हुये उसको अत्रिजी ने पृथु पुत्र को दिखाया तब कपाल खट्वांग धारण किये इंद्र को [illegible] कर पृथु पुत्र वीर ने नहीं मारा ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अवद्यं निन्दितं रूपं मन्दप्रज्ञा जगृहुः ॥ २२॥

तदेव पाखण्डनामनिरुक्त्या दर्शयति । यानीति । बहुवच[illegible] चान्यान्यपि गृहीतानीत्युक्तम् ॥ २३॥

तत्प्रभृति पाखण्डमार्गाः प्रवृत्ता इत्याह। एवमिति। तेन गृही[illegible] पुनर्विसृष्टेषु नग्ना जैनाः रक्तपटा बौद्धाः आदिशब्देन कापालि[illegible] यस्तेषूपधर्मेषु धर्मोपमेषु धर्मएवायमिति मतिः सज्जत[illegible] द्वयोरन्वयः पेशलेषु आपाततोरम्येषु वाग्मिषु हेतु[illegible] रेषु ॥ २४ ॥ २५ ॥ २६ ॥

शक्रवधेऽभिसन्धितं कृताभिप्रायं प्रचोदितात्पशोर्वधाद[illegible] वधस्तव न युज्यते ॥ २७ ॥

तद्वधं तु वयं करिष्याम इत्याहुः । वयमिह यज्ञनाशकं त्व[illegible]

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वैव हतप्रभमिन्द्रमाह्वयामहे कैः अयातयामैरगतवीर्यैराह्वानमन्त्रैः अनन्तरं च ते तवाहितं जुहवाम होष्यामः ॥ २८ ॥

अस्य पृथोः स्रुक् हस्ते येषां तान् ॥ २९ ॥

यमिन्द्रं यज्ञेन जिघांसथ यज्ञेनेज्याः सर्वे सुरा यस्य तनवः स इन्द्रो भवतां बधार्हो न भवति यद्यस्माद्यज्ञो नामायमिन्द्रो भगवतस्तनुरवतारः "ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत । सयामाद्यैः सुरगणैरपात्स्वायंभुवान्तरम्,, इत्युक्तत्वात् ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत्रिणा पुनः स एवेन्द्र इति चोदितो विजिताश्वः रुषा तस्मै इन्द्राय विशिखं बाणं संदधे इन्द्रः अश्वं तद्रूपं कपालखट्वाङ्गधरत्वादिरूपं हित्वा अन्तर्हितः सन् तस्थौ ॥ २१ ॥

अथानन्तरं वीरो विजिताश्वः स्वाश्वं स्वपितुर्यज्ञाङ्गमश्वमुपादाय गृहीत्वा पितुः पृथोर्यज्ञमव्रजत् तत्प्रभृतिपापषण्डमार्गः प्रवृत्त इत्याह । तदवद्यमिति सार्द्धत्रिभिः । हरेरिन्द्रस्य तदवद्यं निन्दितं रूपं जटिलत्वादिरूपं ज्ञानदुर्बला ज्ञानहीना जगृहुः ॥ २२ ॥

एतदेवोपपादयति । हयस्याश्वस्य जिहृक्षया ग्रहीतुमिच्छया यानि यानि रूपाणि जग्राह तानि तानि रूपाणि पापस्य खण्डानि समूहा इति वर्णलोपेन निरुक्तानि रूपाणि लिङ्गं पण्डलिङ्गं पापित्वज्ञापकं षण्डसमूह इत्यन्वर्थनाम्ना इहास्मिल्लोके उच्यत इत्यर्थः ॥ २३ ॥

एवं वैन्यस्य पृथोः यज्ञजिघांसया यज्ञविघ्नकर्तुमिच्छया अश्वमिन्द्रे हरति सति अश्वहरणोपायतया तेन इन्द्रेण गृहीतेषु पुनः पुनः विसृष्टेषु ॥ २४ ॥

उपधर्मेषु धर्माभासेषु अत एव पेशलेषु मृदुलेषु अनुकूलाभासेष्विति यावत् वाग्मिषु मितमिव सम्यगिव वादिषु नग्नरक्तपटादिषु भावप्रधानो निर्देशः नग्नरक्तपटादित्ववत्सु पाषण्डेषु रूपेषु नृणां मतिर्धर्म इतिभ्रान्त्या प्रायेण प्रायशः सक्ता आसक्ता भवति ॥ २५ ॥

तदिन्द्रकृतं क्रतुविघ्नमभिप्राय ज्ञात्वा अपरिमितपराक्रमः पृथुः कुपितः सन् उद्यतं कार्मुकं धनुर्यस्य सः इन्द्राय बाणमादत्त इन्द्रं हन्तुं बाणं गृहीतवानित्यर्थः ॥ २६ ॥

शक्रवधे कृताभिसंधितं कृताभिप्रायमत एव क्रोधेन दुष्प्रेक्ष्यमसह्यं परैः सोढुमशक्यं रंहो बलं वेगश्च यस्य तं पृथुमृत्विजः अध्याद्यः निवारयामासुः निवारणमेवाह । अहो महामते ! प्रचोदितात्विहितारपशोर्वधात् अन्यस्य बधस्तु न युज्यते ॥ २७ ॥

तद्वधं तु वयं करिष्याम इत्याहुः । वयमिति । इहार्थनाशनं यज्ञनाशकं त्वत्कीर्त्यैव हतप्रभं मरुत्वन्तमिन्द्रं वयमाह्वयामहे केरयातयामैरगतवीर्यैरुपह्वैराह्वानमन्त्रैरनन्तरं च हे राजन् ! ते तव अहितं शत्रुं तमिन्द्रं प्रसह्य मन्त्रबलेन अग्नये जुहवाम पशुपुरोडाशमिवाग्नौ होष्यामः ॥ २८ ॥

इति तं क्रतुपतिं पृथुमामन्त्र्य विज्ञाप्य हे विदुर ! अस्य पृथोः ऋत्विजः स्रुक् हस्ते येषां तान् रुषा क्रोधेन जुह्वतः होमं कुर्वाणान् स्वयंभूश्चतुराननः अभ्येत्य आगत्य प्रत्यषेधत निवारयामास ॥ २९ ॥

प्रतिषेधमेवाह । भवतामार्त्विज्ये कर्मण्यधिकृतानामिन्द्रो बध्यो न भवति कुतः यत् यस्मात् यज्ञः भगवतस्तनुः शरीरं तथा सुराश्च यस्य भगवत इष्टाः निरतिशयप्रीतिविषयाः तनवः तत्कथं यज्ञेन भगवच्छरीरभूतमिन्द्रं जिघांसथ हन्तुमिच्छथ ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वि फाया ब्धिरसः पृथग्भावं कुर्वती शिखा यस्य स विशिखः "विनिर्विषं पृथग्भाव,, इति यादवः एवं विधं शरं दृष्ट्वा किं परावृद्वदिन्द्रो न किन्तु निलीनोऽभूत् रूपान्तरेण यज्ञान्तराय करणायेत्याह । सोऽश्वमिति ॥ २१ ॥

अन्तर्हित इत्यनेन गृहीतरूपं विसृज्य रूपेणान्तर्द्धानं गम्यते तत्र पूर्वरूपं किमभूदचेतनस्य चेतनसम्बन्ध एव हानादिक्रिया सामर्थ्यमन्यथोच्छ्वसनीभूय नष्टं स्यात् न तदुक्तं देवकृतस्यान्यथात्वादर्शनादत्राह । तदवद्यमिति । हरेरिन्द्रस्य ज्ञानदुर्बला अन्यथाबानिन इत्यर्थः ॥ २२ ॥

रूपस्यावद्यत्वमाह । यानीति । खण्डानि लिङ्गानि खण्डं समुदायः किमित्यतउक्तम् लिङ्गमिति । खण्डपदस्य समुदायनाचित्वेऽपि इहास्मिन् प्रकरणे खण्डशब्देन लिङ्गमुच्यते । अभ्यर्हितत्वानुभयोः समुदायवाचित्वात् "लिङ्गं शेफसि वेषे च चिह्ने बुद्ध्यर्थसंहतौ,, इत्यभिधानात् संहतिः समुदाय इत्यर्थः पापस्य वेषो वा अव्ययत्वरसाम्यान्नृणांयादिति निरुक्तिकारवचनादेकेनापि प्रकारेण विवक्षितार्थसिद्धिः स्फुटेति ॥ २३ ॥

सांप्रतं ये वर्त्तमानाः पाखण्डा एतन्मूला इत्याह । एवमिति । मतिरभिरुचिरभूदिति शेषः ॥ २४ ॥

कथं धर्म इति निरूप्य स्वयं किं रूपेषूपधर्मेषु स्वतोऽधर्मत्वेऽपि उपमितधर्मेषु इदुक्तम् "धर्मोपमस्त्वधर्मोऽयमुपधर्मः स उच्यत,,इति चक्षुर्विषयं लक्षणमाह । नग्नेति । आदिशब्देन कन्थानरकपालढक्कादिमत्त्वं गृह्यते । तेषामनुरत्तादनमाह । प्रायेणेति । सङ्गं निमित्तमाह । पेशलेष्विति । पेशलेष्वविचाररमणीयेषु । एतदपि कुत इत्यतउक्तम् । वाग्मिष्विति । कुतर्कबृंहितशास्त्रप्रवाचालेषु ॥ २५ ॥

एवमस्यामवस्थायां पृथुनाकृतः पराक्रमो न श्रूयत इति तत्राह । तदभिप्रायेति ॥ २६ ॥

विहितहिंसां विनान्यहिंसोद्यमे तत्त्वविदोनिन्द्रिताः किंतत्राह ऋत्विजइति । कुतो न युक्त इत्यतउक्तम् । अप्रचोदितइति अविहितत्वात् ॥ २७ ॥

कथं तर्हि तद्विग्रहोपायइति तत्रोच्यते । वयमिति । अयातयामोपह्वैरन्यत्राप्रयुक्तत्वेनागतसारैर्मन्त्रैः मरुत्वन्तमिन्द्रम् अर्थनाशनं यज्ञाख्यप्रयोजनद्रुहम् आहूय किंकुर्वन्तीति तत्रोच्यते । तमग्नयइति ते तवाहितम् ॥२८ ॥

ननिन्द्रे निधनं गते यज्ञ एव न स्यात् मन्त्राणां तद्विषयत्वात् "मरुत्वन्तंसख्याय हवामह,,इति श्रुतेः अतोऽत्रधर्मरहस्य वेदी कोऽपि नाभूदिति समाधानं परिहरतो ब्रह्मणा उक्तिप्रकारं वक्ति । इतीति । क्रतुपतिं पृथुम् । अस्य पृथोः सम्बन्धिनः स्रुग्न्यस्तं हविः मन्त्रशक्त्येति शेषः ॥ २९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

किमाकारः प्रतिषेधइति तत्राह। न वध्यइति। कुतो न वध्य इत्यतउक्तं यज्ञइति। यद्यस्माद्भगवतोहरेस्तनुर्यज्ञः अनेनेन्द्रस्यावध्यत्वे किमायातमत्राह। यस्येति। सुरा इन्द्राद्या हरेरिष्टास्तनवो विशेषासन्निधानयोग्या यस्मात्तस्मात्तस्येष्टतनुत्वादस्मिन्यज्ञे तमिन्द्रं न जिघांसत इन्द्रजिघांसया हरेरप्रीत्या यज्ञएव न स्यादित्यर्थः यद्वा यज्ञोभगवत इन्द्रस्य तनुर्येनेष्टाः सुराश्च यस्येन्द्रस्य तनवस्तस्मादस्मिन्यज्ञे तं न जिघांसतेति॥ ३०॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ज्ञानदुर्बला जगृहुरिति प्रथमं तादृशवेशेन यज्ञादिदूषकमतेन च परितः स्वसंप्रदायं रचयित्वा पश्चात्तेऽर्थप्रवृत्ते॥ २२-२३॥

एवमिति युग्मकम्। उपधर्मेष्विति। नग्नादय उपधर्मास्तेष्विति योज्यम्॥ २४-२५॥

तदिति। अश्वमेधादिभागेज्यस्यापीन्द्रस्य वधोद्यमोऽयं श्रीभगवच्छक्तिविशेषस्यैव मूलेन्द्रत्वमननात्॥ २६—२८॥

प्रत्यभाषतेति चित्सुखः॥ २९॥

यमिन्द्रं यज्ञेन जिघांसथ स इन्द्रो भवतां न वध्यः। कुतः यद्यस्मात् यज्ञो यागो भगवतस्तनुः सुराश्चेन्द्राद्या यस्य इष्टास्तनवः। तस्मादेकां तनुं हत्वा नान्या रक्षितुं युक्ता किन्तु द्वयमपि रक्षितुं युक्तमिति भावः॥ ३०—३२॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ज्ञानदुर्बला इति पृथु पुत्रेणावधात् स्वेषामवध्यत्वमभिमन्यमानाः। यज्ञादिदूषकमतप्रवर्त्तकं स्वसम्प्रदायं रचयित्वा परधनाक्षेपणान्तर्द्धानादिक्षुद्रसिद्धीरेव साध्यत्वेन निरचैषुरित्यर्थः॥२२॥

पाखण्डनाम निरुक्ति। यानीति। बहुवचनेन बहव एव पाखण्डप्रभेदाः प्रवृत्ता इत्युक्तम्॥ २३॥

तेनेन्द्रेणादौ गृहीतेषु पश्चाद्विसृष्टेषु नग्ना जैनाः रक्तपटा बौद्धा आदिशब्देन कापालिकादयः। उपधर्मेषु धर्मोपमेषु नतु धर्मेषु। पेशलेष्वापाततोरम्येषु वाग्मिषु हेतूक्तिचतुरेषु॥ २४—२६॥

शक्रवधेऽभिसन्धिः सञ्जातो यस्य तं। विचक्ष्य दृष्ट्वा प्रचोदितात् शास्त्रविहितात् पशोर्वधादन्यस्य वधो न युज्यते॥ २७॥

ननु तर्ह्यत्र कः प्रतीकारस्तदाहुः। वयमिति। अयातयामैरगतवीर्यैः उपहवैराह्वानमन्त्रैः। अत्र तदानीं तस्येन्द्रस्य भगवदवतारत्वेऽपि विप्राणाञ्च तेषामबहिर्मुखत्वेऽपि तथाभूतोक्त्या कर्ममार्गस्य स्वभाव एव द्योतितो यत्तत्र प्रवृत्ता विवेकि नोऽप्यन्धा भवन्तीति यथा ब्रह्मणा कामस्य श्रीरुद्रेण क्रोधस्य श्रीविष्णुनापि यज्ञावतारे तस्मिन् मात्सर्य्यकौटिल्यादिकमीहमानेनेन्द्रत्वस्य स्वभावो द्योतित इति॥ २८॥

अस्य पृथोः॥ २९॥

भगवत्तनुरिति नहि भगवद्विग्रहो विप्रैर्हन्तुमध्यवस्यते भवतां तर्हि विप्रत्वमेव कुतः यं यज्ञेन जिघांसथेति स खलु यज्ञः कथं यज्ञेन वध्यो भवेत् यथा क्षीराब्धिः क्षीरप्रस्थक्षेपणेति किञ्च यस्य यज्ञस्येन्द्रस्य च तनवः सुरास्तेच यज्ञेन युष्माभिरिष्टा इज्यन्ते स्मेति कथं स मरिष्यतीत्येतमपि विवेकं न कुरुथेति भावः॥ ३०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हरेः रूपम् इन्द्रस्य पाखण्डवेषम् अवद्यं निन्द्यम् दुर्बला ज्ञानेनहीनाः॥ २२॥

लिङ्गं खण्डमिहोच्यते अन्यत्र षण्डशब्दः समूहवाचकः तु चिन्हवाचक इत्यर्थः॥ २३॥

तदारभ्य पाखण्डप्रवृत्तिस्तत्र च विचक्षणानां पाखण्डे प्रायेण मतिः सज्जते इत्याह। एवमिति द्वाभ्याम्। पाखण्डेषु पापस्य खण्डेषु ज्ञापकेषु अत्र पेत्येकदेशग्रहणेन पापमुच्यते उपधर्मेषु वेदानुवादेषु धर्मोऽयमिति मतिः प्रायः सज्जते इति अन्वयः॥ २४॥

तत्र नग्नाः जैनाः रक्तपटा बौद्धाः आदिपदात्कापालिकादयः पेशलेषु आपाततोरम्येषु वाग्मिषु वाचालेषु॥ २५॥

पृथुपराक्रमः विपुलप्रभावः॥ २६॥

शक्रवधायाभिसन्धितं कृताभिप्रायम् दुष्प्रेक्ष्यं दुःखेन प्रेक्षितुमशक्यम् असह्यरंहसं दुःसहवेगम् ऋत्विजो निवारयामासुः अहो महामते! प्रचोदितात् विहितात् अन्यस्य वधः दीक्षितस्य तव न युज्यते॥ २७॥

वयं मरुत्वन्तमिन्द्रं त्वद्य अर्थनाशनं यज्ञनाशकं त्वच्छत्रुं ते यशसैव हतत्विषं नष्टकान्तिम् अयात यामैरगतसारैःउपहवैः आह्वानमन्त्रैरिह ह्वयामहे आह्वयामहे अनन्तरं प्रसह्य ते अहितम् अग्नये जुहुवाम॥ २८॥

क्रतुपतिं पृथुम्॥ २९॥

यद्यतः यज्ञेनेष्टाः सुराः यस्य तनवः तनुवद्वशवर्तिनः सः यज्ञो नामायमिन्द्रो भगवत्तनुरवतारः "ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत। सुयामाद्यैः सुरगणैरपात् स्वायंभुवान्तरम्" इत्युक्तत्वात् अतः यं यूयं जिघांसथ सभवतां वध्यो न भवति॥ ३०॥

---

भाषाटीका।

अत्रिके प्रेरणाकरनेसे पृथुपुत्रने क्रोधकरके फिर प्रहार किया तब इन्द्र घोडा को और उस रूपको छोडकर छिपगये॥ २१॥

इसके अनन्तर पृथु पुत्र वीर घोडाको लेकर पिताके यज्ञमें आये इन्द्रके उस निन्दित रूपको जोअज्ञानी हैं तिनोंने ग्रहण किया॥ २२॥

घोडाके हरने की इच्छासे जिन रूपोंको इन्द्रने ग्रहण किया वे सब पाप के खण्ड हैं इहां पर खण्ड करके चिन्ह नाम है॥ २३॥

इस प्रकारसे पृथु महाराज के यज्ञके नाश करनेकी इच्छासे घोडाके हरण करनेमें ग्रहणकरके छोडे हुये रूप पाखण्ड हैं तिन्हों मे मनुष्योंकि रुचि होती है॥ २४॥

नङ्गा होना लाल कपडा पहिरना इत्यादि जो उप धर्म हैं तिनमे प्राय करके भ्रांति से व्यवहार चतुर वाकचतुर जान करके मनुष्य आसक्त होजाते हैं॥ २५॥

बडे पराक्रम वाले पृथुभगवानने इस बातको जानकर कुपित होकर धनुष चढाकर इन्द्रपर बाण चलाने का तैयार किया॥ २६॥

अत्यंत क्रोध वेग वाले होकर इंद्रके वध में उद्यत उन पृथु महाराज को देखकर ऋत्विजों ने निवारण किया कि हे महामते! इस यज्ञ में विहित से अन्य का वध करना उचित नहीं है॥ २७॥

तदिदं पश्यत महद्धर्मव्यतिकरं द्विजाः!
इन्द्रेणानुष्ठितं राज्ञः कर्मैतद्विजिघांसता ॥ ३१ ॥
पृथुकीर्तेः पृथोर्भूयात्तर्ह्येकोनशतक्रतुः।
अलं ते क्रतुभिः स्विष्टैर्यद्भवान् मोक्षधर्मवित् ॥ ३२॥
नैवात्मने (१) महेन्द्राय रोषमाहर्तुमर्हसि।
उभावपि हि भद्रं ते उत्तमश्लोकविग्रहौ ॥ ३३ ॥
मास्मिन् महाराज! कृथाःस्म चिन्तां निशामयास्मद्वच आदृतात्मा।
यद्ध्यायतो दैवहतं नु कर्तुं मनोऽतिरुष्टं विशते तमोऽन्धम् ॥३४॥
क्रतुर्विरमतामेष देवेषु दुरवग्रहः।
धर्मव्यतिकरो यत्र पाखण्डैरिन्द्रनिर्मितैः ॥ ३५ ॥
एभिरिन्द्रोपसंसृष्टैः पाखण्डैर्हारिभिर्जनम्।
ह्रियमाणं विचक्ष्वैनं यस्ते यज्ञध्रुगश्वमुट् ॥ ३६ ॥
भवान् परित्रातुमिहावतीर्णो धर्मं जनानां समयानुरूपम्।
वेनापचारादवलुप्तमद्य तद्देहतो विष्णुकलासि वैन्य! ॥ ३७ ॥
स त्वं विमृश्यास्य भवं प्रजापते! सङ्कल्पनं विश्वसृजां पिपीपृहि।
ऐन्द्रीं च मायामुपधर्ममातरं प्रचण्डपाखण्डपथं प्रभो! जहि ॥ ३८ ॥

मैत्रेयउवाच।

इत्थं स लोकगुरुणा समादिष्टो विशां (२) पतिः।
तथा च कृत्वा वात्सल्यं मघोनापि च सन्दधे ॥ ३९ ॥

भाषाटीका ॥

आपके अर्थ के नाश करने वाले इंद्र को हम यहां पर बुलाते हैं उसका तेज तो आपके यशसे नष्ट होगया है प्रबल वीर्य वाले मंत्रों से आवाहन करके हे राजन्! आपके शत्रु का होम करेंगे ॥ २८॥

हे विदुरजी! यज्ञपती को ऐसा कहकर इनके ऋत्विजोंने रोष के मारे जब होम का आरंभ किया तब तुरत आकर ब्रह्माजीने निषेध किया ॥ २९ ॥

ब्रह्माजी बोले जिसको मारना चाहते हो सो इन्द्र तुमारे मारने के योग्य नहीं है क्योंकि यज्ञ में जो देवता पूजे जाते हैं वे सब इन्द्र के शरीर हैं यह इन्द्र भगवान् का शरीर है ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अतो बलीयसानेन सख्यमेव कर्तव्यमन्यथा भूयः पाखण्डं स्रक्ष्यतीत्याशयेनाह। तदिदमिन्द्रेणानुष्ठितं महदन्याय्यं पश्यत किमित्यपेक्षायामाह। धर्मस्य व्यतिकरं विपर्ययं पाखण्डपथम् ॥ ३१ ॥

तर्हि किमत्र युक्तमित्यत आह। पृथुकीर्तेरिति। एकेनोनं शतं यस्मिंस्तादृशः क्रतुः क्रतुप्रयोगः पृथोर्भूयात् पृथुरिति पाठे एकोनशतं क्रतवो यस्य तादृशोऽपि महेन्द्रात्पृथुकीर्तिर्भूयादित्यर्थः तदेवमृत्विजः प्रत्युक्त्वा पृथुं प्रत्येवाह। अलमिति ॥ ३२ ॥

आत्मनैवात्मने महेन्द्राय रोषं कर्तुं नार्हसि तत्र हेतुः उभावपीति ॥ ३३ ॥

तथापि क्रतुसमाप्तिमेव ध्यायन्तं प्रत्याह। अस्मिन् यज्ञविघ्ने चिन्तां मास्मकृथाः यद्यस्माद्दैवहतं कार्यं कर्तुं ध्यायतो मनोऽनुनिश्चितमतिरुष्टं सदन्धन्तमोमोहं विशति नतु शान्तिं लभते ॥ ३४ ॥

अत एव तव क्रतुर्विरमतु नन्विन्द्रः किं न निवार्यतेऽत आह यतो देवेषु दुराग्रहो भवतीति यत्र क्रतौ ॥ ३५ ॥

इन्द्रदुराग्रहकृतमनर्थं पश्यन्नाह। एभिरिन्द्रेणोपसंसृष्टैरधिष्ठितैर्हारिभिश्चित्ताकर्षकैः य इन्द्रस्तेऽश्वं मुष्णातीति तथा यज्ञाय द्रुह्यति तथा तेन सृष्टैः ॥ ३६ ॥

ततो मम किमिति चेत्तत्राह। भवानिति द्वाभ्याम्। साङ्ख्ययोगादिनानासिद्धान्तानुरूपं धर्मं वेनस्यान्यायाल्लुप्तं परित्रातुं तद्देहाद्विष्णोः कलेव त्वमवतीर्णोऽसि ॥ ३७ ॥

हे प्रजापते! अस्य विश्वस्योद्भवं विचार्य यैरुत्पादितोऽसि तेषां विश्वसृजां सङ्कल्पं पिपीपृहि आर्षः प्रयोगः पूरयेत्यर्थः प्रचण्डो यः पाखण्डमार्गः मैन्द्रीमायोपधर्मजननी तां जहि ॥ ३८ ॥

तथा च कृत्वा यज्ञाग्रहं हित्वा वात्सल्यं स्नेहं कृत्वेन्द्रेण सन्धानं च कृतवान् ॥ ३९ ॥

(१) आत्मनेति श्रीजीवगोस्वामि चक्रवर्तिनौ। (२) विशांपतिरिति श्रीवीरराघवः।

कृतावभृथस्नानाय पृथवे भूरिकर्मणे ।
वरान् ददुस्ते वरदा ये तद्बर्हिषि तर्पिताः ॥ ४० ॥
विप्राः सत्याशिषस्तुष्टा श्रद्धया लब्धदक्षिणाः ।
आशिषो युयुजुः क्षत्तरादिराजाय सत्कृताः ॥ ४१ ॥
त्वया हूता महाबाहो ! सर्व एव समागताः ।
पूजिता दानमानाभ्यां पितृदेवर्षिमानवाः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां पृथुविजयोनाम
एकोनविंशोऽध्यायः ॥ १९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृतमवभृथसम्बन्धिस्नानं येन स तस्मै ॥ ४० ॥ ४१ ॥
तुष्टानां वाक्यं । त्वयेति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
ऊनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हेद्विजाः ! राज्ञः पृथोरेतद्यज्ञरूपं कर्म जिघांसता नाशयितुमिच्छता इन्द्रेणानुष्ठितं धर्मस्य व्यतिकरः यस्मिन् तदिदं पाषण्डात्मकं महदन्याय्यं पश्यत ॥ ३१ ॥

तर्हि तथा चेत्पृथुकीर्तेः विपुलकीर्तेः पृथोः एकोनशतं यस्मिन् तादृशक्रतुप्रयोगः एकोनशतक्रतुरपि पृथुः महेन्द्रात् पृथुकीर्तिर्भूयादित्यर्थः पृथुकीर्तिः पृथुरिति पाठे एकोनशतं क्रतवो यस्य तादृशः पृथुर्भूयादित्यर्थः पृथुं सान्त्वयति ते त्वया स्विष्टैः सम्यगनुष्ठितैः एतावद्भिः क्रतुभिरलं यत् यस्मात् भवान्मोक्षधर्मवित् मुमुक्षोरागाद्यनपेतमेव कर्मानुष्ठानं युक्तमितिभावः ॥ ३२ ॥

आत्मना मनसा दोषं महेन्द्राय आहर्तुं स्वीकर्तुं त्वं नार्हसि हि यस्मात् त्वं महेन्द्रश्चेत्युभावपि उत्तमश्लोकस्य भगवतो विग्रहौ शरीरभूतौ अतो नान्योऽन्यं विरोधो युक्त इतिभावः ते तुभ्यं भद्रं भूयात् ॥ ३३ ॥

हेमहाभाग ! अवहितमना मद्वचो निशामय शृणु अस्मिन् यज्ञविघ्ने चिन्तां मास्मकृथाः यत् यस्मात् दैवहतं कार्यं कर्तुं ध्यायतः पुरुषस्य मनः तु, नितान्तमतिरुष्टमन्धन्तमः मोहं विशति ननु शान्ति लभते ॥ ३४ ॥

अत एव तत्र क्रतुर्विरमताम् नन्विन्द्रः किं न निवार्यते तत्राह । यतो देवेषु दुरवग्रहो भवति यत्र क्रतौ इन्द्रनिर्मितैः पाषण्डैर्धर्मव्यतिकरोऽभवत् ॥ ३५ ॥

इन्द्रदुराग्रहकृतमनर्थं पश्येत्याह । एभिरिन्द्रेणावसृष्टैः कल्पितैः पाषण्डैर्हारिभिश्चित्तापकर्षकैः ह्रियमाणं क्षीणीक्रियमाणं जनं विचक्ष्व पश्य यस्ते तव यज्ञभुक् यज्ञनाशकः अश्वं मुष्णाति अपहरतीति तथा ॥ ३६ ॥

ततो मम किमिति तत्राह । भवानिति द्वाभ्याम् । नानाममयानुरूपं विविधसिद्धान्तानुरूपं धर्मं वैन्यस्याप्यवरादन्याय्यादवप्लुतं परित्रातुम् अद्य अधुना तस्य वेनस्य देहतः इह लोकेऽवतीर्णः वैन्यः वेनपुत्रोऽपि त्वं विष्णुकलासि विष्णोरंशभूतोऽसि ॥ ३७ ॥

स विष्णुकलाभूतस्त्वम् अस्य जगतो भवमुत्पत्तिं विमृश्य विचार्य हे प्रजापते ! विश्वसृजां सङ्कल्पनं सङ्कल्पं पिपीर्षि पूरय येभ्यो विश्वसृड्भ्यो ऽस्य जगत उत्पत्तिः तेषां संकल्पं पूरयेत्यर्थः प्रजापालनाधिकृतस्य तवेदं युक्तमित्यभिप्रायेण प्रजापते इति संबोधनं कृतं प्रचण्डो यः पाषण्डमार्गः सैवेन्द्रमाया उपधर्मस्य माता जननी तां जहि प्रभो ! तथा कर्तुं समर्थस्त्वमित्यभिप्रायेण प्रभो इतिसंबोधनम् ॥ ३८ ॥

उपसंहरति । इत्थमिति पञ्चभिः । इत्थमेवं लोकगुरुणा सम्यगादिष्टो दिशाम्पतिः दिक्पतिः स पृथुः मघोना इन्द्रेण सह तथा च प्रश्नोकरीत्या सख्यं कृतं तेनैव च सन्दधे सन्धिं कृतवान् ॥ ३९ ॥

कृतमवभृथसम्बन्धिस्नानं येन तस्मै भूरिकर्मणे विपुलव्यापाराय पृथवे तस्य पृथोर्बर्हिषि यज्ञे ये तर्पितास्ते वरदा देवा वरान् ददुः ॥ ४० ॥

सत्याः फलाविनाभूताः आशिषः आशीर्वादाः येषां ते विप्राः श्रद्धयाचासदक्षिणाः अत एव तुष्टाः पुनश्च सत्कृताः हे क्षत्तः ! आदिराजाय पृथवे आशिषः युयुजुः कृतवन्तः ॥ ४१ ॥

हे महाबाहो ! विदुर तथान्ये ये तत्र यज्ञे समागतास्ते सर्वे आहताः प्रीतिविषयीकृताः यथा योग्यं दानमानाभ्यां पूजिताः पित्रादयः ॥ ४२ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
ऊनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीपथमिव चक्ति । तदिदमिति । इन्द्रेण शतक्रतुत्वहानिलक्षणाभीत्यैतदनुष्ठितमिति ध्वनयति । इन्द्रेणेति । पृथोराज्ञः पतनं जिघांसया ॥ ३१ ॥

इदानीं पृथुमभिवदति । पृथुकीर्तिरिति हेपृथो! त्वमेकोनशतक्रतुरिति पृथुकीर्तिः मघवातकीर्तिर्भूया इत्यन्वयः हिशब्देन त्वमेवं

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विश्वकीर्तिमान्नाम्य इति स्फोटयति शक्रः शतक्रतुर्भूयादहन्त्वदा-ज्ञया एकोत्तरशतक्रतुर्भूयासमित्येवमभिसन्धिः स्यादत्राह । अलन्त इति । ते शिष्टैरेकाद्यैः क्रतुभिरधिकः स्यामिति बुद्धिरलन्तिष्ठतु "अलन्तुभूषणा शक्तौ पर्याप्तौ विनिवारणे,, इति यादवः तवैतदेव भूषणमिति भावेनाह । यज्ञवानिति । मोक्षधर्मस्तारतम्यादिलक्ष-णास्तं वेत्तीति यद्यस्मात्तस्मान्निर्वृत्तिधर्मज्ञ इति वा अनेन पृथुजी-वादिन्द्रस्थात्युत्तमत्वं सूचितमिति ज्ञायते ॥ ३२ ॥

फलितमाह । नैवात्मनेति । तत्सन्निहितहरेर्विशेषनिवासहेतु-त्वादात्मन इत्युक्तम् एतदेव विशिनष्टि । उभाविति । उत्तमश्लोकस्य हरेर्विशेषस्थितिहेतुर्विग्रहो देहो ययोस्तौ तुभ्यं भद्रमस्तु हरेः सन्निधानविशेषपात्रत्वात् अन्योऽन्यं जयपराजयौ न वक्तव्यौ ॥ ३३ ॥

रोषशमनमेव कर्तुमुचितमन्यथा चिन्तया देहनाशस्तव स्या-दित्याह । मास्मिन्निति । यद्दैवहतं कार्यं तत्कर्तुमुपायं ध्यायतः पुंसो-मनोऽतिकष्टमन्धन्तमो विशते तुशब्देन लोकद्वयेऽप्यनर्थपरम्परां सूचयति हेत्वर्थो वा तस्मादस्मिन् कार्ये चिन्तां स्मृत्वा माकृथा इत्यन्वयः "स्मृते वृत्ते निषेधे स्म,, इति यादवः अथैतत्कुर्वित्याह । निशा-मयेति । निशामय शृणु ॥ ३४ ॥

किं तदत्राह । क्रतुरिति । न केवलं क्रतोर्विरामेण पूर्यते किन्तु देवेषु दुरवग्रहो विरमताम् देवेषु कुपितेषु त्वद्राष्ट्रे वृष्टिविघातोऽपि स्यादतस्तद्दुरवग्रहविरामः कर्तव्य इत्यर्थः क्रतुविशेषणं वा कुपितदेवविषयो दुष्टोऽवग्रहो यस्मात् स तथा देवप्रीत्या सुवृष्ट्यर्थं यज्ञोऽनुष्ठीयते तत्र देवप्रतिहते क्रतौ क्रियमाणे तदप्रीत्याऽना-वृष्ट्यां व्रीह्याद्योषध्यनुत्पत्त्याऽन्नाभावेन प्राणिनां प्राणधारणो-पायाभावेन देहवियोगलक्षणो विनाशः स्यादिति "व्याङ्परिभ्यो-रमः,, इत्यनेन विहितपरस्मैपदप्रयोगं विहाय स्वार्थहानिसूचनाय विरमतामित्यात्मनेपदप्रयोगः इतोऽपि क्रतुर्विरमत्वित्याह । धर्म-व्यतिकर इति । यत्र यस्मिन्नश्वमेधे क्रियमाणे सति इन्द्रनि-र्मितैः पाखण्डैर्धर्मव्यतिकरोऽधर्मे धर्मबुद्ध्या धर्मनाशः स्यात् ॥ ३५ ॥

धर्मव्यतिकरं प्रत्यक्षतोऽपि पश्येत्याह । एभिरिति । हारिभिर्वशी-करणसमर्थैर्ह्रियमाणां संगृह्यमाणामेतत्कर्म विचक्ष्व पश्य कोऽसावि-न्द्र इत्यत आह । यज्ञेति । यज्ञं द्रुह्यतीति यज्ञध्रुक् अश्वं मुष्णातीति अश्वमुट् स इन्द्र इत्यर्थः ॥ ३६ ॥

धर्मावनार्थमवतीर्णस्त्वाञ्च तस्य नाशप्रयत्ने महानतिक्रम इत्या-शयेनाह । भवानिति । चशब्दो धर्मविरोधिपरिहारार्थमपीति आद्यं नानासमयानुरूपं नानाविधशास्त्रानुसृतं वेनापचारात्क्षेत्रनाशपापचा-पदवलुप्तं नष्टं तस्य वेनस्य देहतः अहङ्क इति भ्रान्तिर्माभूदित्य-तस्तत्स्वरूपमुपदिशति । विष्णुकलेति । हैवैन्य । अनेन विष्णोः म-न्त्रेण स्थितिहेतुत्वात्तत्कलाविशिष्टत्वात्तद्धर्मावहाचरणं न युक्त मिति सूचयति ॥ ३७ ॥

उक्तोपसंहारमुखेन कर्तव्यं विधत्ते । सत्त्वमिति । यस्माद्धर्मावनार्थ-मवतीर्णोऽसि तस्मात्त्वं प्रजापतेरिन्द्रस्याभिमतं त्वद्विकीर्तिं शत-क्रतुत्वं विमृशदमनुष्ठिते धर्मविरोधः स्यादिति मया तत्र कार्यमिति विचार्य विश्वसृजः इन्द्रस्य सङ्कल्पितं पृथुना शतक्रतुत्वं न विधेय-मिति निरूपितमतिपीपृहि अत्यन्तं पूरयेत्यन्वयः इन्द्रस्य विरोधा-करणेऽभितः सर्वतो भवं शुभं भवतीति विमृश्य विश्वसृजः प्रजा-पतेर्मम तवैकोनशतक्रतुत्वं सङ्कल्पितमति पीपृहीति वा पृपालनपूर-णयोरितिधातुः प्रचण्डस्य पाखण्डस्य पन्थानमैन्द्रीमिन्द्रनिर्मि-तामुपधर्मस्य मातरञ्जनयित्रीं मायाञ्च जहि विशिष्टधर्माचरणेन विनाशयेत्यन्वयः ॥ ३८ ॥

सात्त्विकप्रधानत्वात्पृथुना चतुर्मुखोक्तं गृहीतमित्याह । इत्थ-मिति । मघोनेन्द्रेण ॥ ३९ ॥

यज्ञान्तोऽवभृथस्तत्प्रभवमावभृथ्यं कृतमावभृथ्यं स्नानं येन स तथोक्तस्तस्मै ॥ ४० ॥

एतदेव विशिनष्टि । विप्रा इति । सत्याशिषोऽभीष्टसाधनसमर्थ-शुभवाक्यप्रबन्धाः आशीर्दानलक्षणा एव फलाविर्भावप्रदर्शनाय युयु-जुरित्युक्तम् फलनित्यसम्बन्धार्थमेवा ददातेः कालान्तरेऽपि फल-प्राप्तिसंशयहेतुत्वसम्भवात् ॥ ४१ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
ऊनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

आत्मनेति । सम्बन्धोक्तिः आत्मना मनसेति व्याख्यानात् । स्वामिव्याख्यायां सन्देह एव । पूर्वन्यायेनैवाह । उभावपीति ॥ ३३-३४ ॥

किञ्च देवेषु दुरवग्रहो विरोधहेतुरयं क्रतुर्विरमतु । ननु तद्विरोधे का क्षतिस्तत्राह । धर्मव्यतिकरो धर्मव्याघातः धर्मो-दूषितः स्यादित्यर्थः ॥ ३५ ॥

पाखण्डानां बलं दर्शयति । एभिरिति ॥ ३६ ॥

तर्हि पाखण्डान्यप्युपेक्षणीयान्येवेत्याह । भवानिति द्वाभ्याम् ॥ ३७-४० ॥

चित्सुखमतेतु अत्रोनविंशोऽध्यायः । तथाच कृतवान् सर्वमि-ति चित्सुखः ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
ऊनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च तद्व्याजेनाधर्म एव वर्द्धिष्यते तत्राधर्मस्य राज्ये मूर्त्त-मेव प्रवृत्तं पश्येत्याह । तदिदमिति । धर्मस्य व्यतिकरत्वं पाखण्ड पथम् ॥ ३१ ॥

तर्हि किं तवाभिप्रेतमित्यत आह । पृथ्विति । एकोनशतक्रतु-रपि पृथुरगं शतक्रतोरिन्द्रादपि पृथुकीर्तिर्विपुलयशा भूया-दिति क्रतुभिर्यश एव साध्यं तच्च मदाशीर्वादादेव भविष्यतीति भावः । पृथुकीर्त्तेः पृथोरिति षष्ठ्यन्तपाठे एकोनशतमेव क्रतु-र्भूयादित्येकत्वं जात्यपेक्षया एकोनशतमिति संख्या व्यक्त्यपेक्षया सिद्धं क्रतुशतस्य संकल्पोऽपूर्णोऽपि मदाशीर्वादादेकोनत्वेऽपि पूर्णो भवत्वित्यर्थः । ऋत्विजः प्रत्युक्त्वा पृथुं प्रत्याह । अलमिति ॥ ३२ ॥

आत्मने इत्यत्र हेतुः । उभावपीति द्वयोरपि युवयोर्भगवद्-वतारत्वादित्यर्थः ॥ ३३ ॥

तदपि क्रतुसमाप्तिं ध्यायन्तं तं प्रत्याह । मास्मिन्निति । यद्दै-व हतं कर्म तत्कर्तुं ध्यायतः पुंसः तु निश्चितं मनोऽतिकष्टं सत् अन्धंतमो मोहं विशति नतु शान्तिं लभते ॥ ३४ ॥

अतएव क्रतुर्विरमतां नन्विन्द्रः किमिति न निवार्यते तत्राह । देवेषु मध्येऽयं दुराग्रहो भवति यत्र क्रतौ ॥ ३५ ॥

इन्द्रदुराग्रहकृतमनर्थं दर्शयति । एभिरिति । हारिभिश्चित्ता-कर्षकैः । य इन्द्रस्ते अश्वं मुष्णातीति तथा यज्ञाय द्रुह्यतीति तथा तेन सृष्टैः ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्वत्तः सकाशात् धर्म एव प्रवर्त्तितुमर्हति नत्वधर्म इत्याह । भवानिति ॥ ३७ ॥

अस्य विश्वस्य भवं कल्याणं हे प्रजापते ! विश्वसृजां यैर्मन्यनादुत्पादितोऽसि तेषां संकल्पनां संकल्पं पिपीपृहि भावः प्रयोगः पूरयेत्यर्थः । उपधर्मस्य मातरं जनयित्रीं कीदृशीं प्रचण्डस्य पाखण्डस्य पन्थानम् भाविष्टलिङ्गत्वादयुक्तं पुंस्त्वम् ॥ ३८ ॥

च एवार्थे यथा ब्रह्मणा आज्ञा तथैव वात्सल्यं कृत्वेति यज्ञस्य वयो वृद्धत्वेऽपि देवेन्द्रत्वेऽपिच ब्रह्मणा एवाज्ञया तत्र पृथोर्वात्सल्यं साच तयोर्विशुद्धसत्वेन तुल्यत्वेऽपि पृथोर्भक्त्युत्कर्षेणाऽर्हितत्वमात्रस्यैव कृतेति ज्ञेयं सन्दधे सन्धिं चकार ॥३६-४१॥

तुष्टानां वाक्यं । त्वयेति ॥ ४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
ऊनविंशश्चतुर्थेऽयं सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

राज्ञः पृथोः एतत् यज्ञलक्षणं कर्म जिघांसतेन्द्रेण धर्मव्यतिकरो नाशो यस्मात् तत्पापखण्डरूपम् अनुष्ठितं प्रवर्त्तितं हे द्विजाः ! पश्यत असांस्थित इन्द्रः पुनः पाषण्डरूपाणि प्रवर्त्तयिष्यतीति भावः ॥ ३१ ॥

पृथुकीर्त्तेः स्वभावादेव विपुलयशसः पृथोः एकेनोनं शतं यस्मिन् तथाभूतः क्रतुः प्रयोगो भूयात् पृथुं प्रत्याह । अलमिति ॥ ३२ ॥ ३३ ॥

दैवादयं यज्ञविघ्न उपस्थितः तत्र चिन्ता पुनर्यज्ञसमापनयत्नश्च न युक्त इत्याह । मेति । अस्मिन् यज्ञविघ्ने ॥ ३४ ॥

यत्र देवेषु इन्द्रादिषु दुरवग्रहः दुष्टो निराकरणार्थमाग्रहः यत्र चेन्द्रनिर्मितैः पाखण्डैर्धर्मव्यतिकरः स एव क्रतुर्विरमताम् ॥ ३५ ॥

यज्ञाय द्रुह्यतीति यज्ञध्रुक् अश्वं मुष्णातीति अश्वमुट् एवं भूतो य इन्द्रस्तेन सृष्टैर्निर्मितैः हारिभिर्बुद्धिभ्रंशकैः ह्रियमाणं धर्मात्पराङ्मुखीक्रियमाणं विचक्ष्व ॥ ३६ ॥

हे वैन्य ! वेनस्यापचारात् अयुक्ताचरणात् लुप्तं समयानुरूपं कालानुगुणं धर्मं परित्रातुं तस्य देहात् विष्णोः कलैवावतीर्णोऽसि ॥ ३७ ॥

हे प्रजापते ! अस्य विश्वस्य भवं भद्रं प्रति विश्वसृजां स्वजनकानां मुनीनाम् सङ्कल्पनां भगवानेवावतीर्य विश्वस्य भद्रं करिष्यतीत्येवं भूतं संकल्पं पिपीपृहि पूरय उपधर्मस्य पाखण्डधर्मस्य मातरं जननीं प्रचण्डमन्यैर्दुर्निवारणं विसृज्य पाखण्डपथं च जहि ॥ ३८ ॥

तथा कृत्वा यज्ञसमाप्त्याग्रहं त्यक्त्वा वात्सल्यं स्नेहं च कृत्वा मघोना इन्द्रेण सह संदधे मैत्रीमकरोत् ॥ ३९ ॥

कृतमवभृथसम्बन्धिस्नानं येन तस्मै ये तद्धर्हिषि तर्पितास्ते वरान् ददुः ॥ ४० ॥ ४१ ॥

विप्रतुष्टिं तद्वाक्येनाह । त्वयेति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोनविंशाध्यायार्थप्रकाशः ॥ १९ ॥

भाषाटीका ।

हे द्विजो ! यह तुम देखो बडा धर्म का वैपरीत्य है जो महाराज के यज्ञ के नाश करने की इच्छा से इन्द्रने पाखंड रूप धारण किये हैं ॥ ३१ ॥

बडी भारी कीर्तिवाले पृथुमहाराज को एक कम सौ ही रहैं तो भी कोई हानि नहीं है सब पूर्ण होजायगा ब्रह्मा से बोले हे महाराज ! आप यज्ञों को मत करो आप तो धर्म के ज्ञाता हो ॥ ३२ ॥

महेंद्र अपने आत्माके अर्थ आप रोष करने को योग्य हो आपका कल्याण होगा आप दोनों भगवान के [illegible] हो ॥ ३३ ॥

हे महाराज ! इस विषय में आप चिंतामत करो [illegible] युक्त मन से हमारे वचन को श्रवण करो जिससे ईश्वर की इच्छा जिस में न हो उस कार्य के करने [illegible] ध्यान करने वाले पुरुष का मन रुष्ट होकर और [illegible] मोह में प्रविष्ट होजाता है ॥ ३४ ॥

इस यज्ञ की अब निवृत्ति होनी चाहिये जिसमें कि [illegible] का आग्रह होगया है तिसी में इंद्र के निर्माण किये पाखंडों से धर्म का विनाश होगया ॥ ३५ ॥

मनुष्यों के मन को हरण करने वाले इन पाखंडों मोहित मनुष्यों को देखो जो कि पाखंड तुमारे घोडा हरने वाले यज्ञ में विघ्न; करने वाले इंद्र ने निर्माण कि[ये] हैं ॥ ३६ ॥

आप तो वेनके अपचार से जो लुप्त होगया [illegible] का धर्म समयानुरूप तिसके रक्षा करने को वेन के शरीर से अवतार को प्राप्त भये हो साक्षात् विष्णु भगवान् [की] कला हो ॥ ३७ ॥

सो आप इस संसार की उत्पत्ति को विचार कर और प्र[जा] पतियों के संकल्प को पूरण करो खोटे धर्म को पैदा क[रने] वाली जो इंद्र की माया सोई पाखंड मार्ग तिसका नाश करो ॥ ३८ ॥

मैत्रेयजी बोले इस प्रकार से लोक गुरु ब्रह्मा के आज्ञा देने [से] पृथु महाराज ने प्रेम करके इंद्र के साथ में संधि करके मि[त्र] मान लिया ॥ ३९ ॥

तब महाराज ने अब भृथ स्नान किया तब यज्ञ में त[र्पित] जो देवता उन सबों ने एकत्र होकर वरदान दिया ॥ ४० ॥

सत्य आशीर्वाद करने वाले ब्राह्मण संतुष्ट भये जिन्हों [ने] श्रद्धा से दक्षिणा पाई है हे विदुरजी सत्कार युक्त होने से उन्हों ने आदि राज पृथु महाराज को आशीर्वादों के प्रयोग किये ॥ ४१ ॥

फिरबोले कि हे महाबाहो ! आपके बुलाने से हम सब ग एकत्र आये पितर देवर्षि मनुष्य सबका दानमानसे [अ]पने पूजन किया ॥ ४२ ॥

इतिश्रीमद्भागवत चतुर्थस्कन्ध
उन्नीसवां अध्यायका भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १९ ॥

---

## विंशोऽध्यायः ।

मैत्रेय उवाच ।

भगवानपि वैकुण्ठः साकं मघवता विभुः ।
यज्ञैर्यज्ञपतिस्तुष्टो यज्ञभुक् तमभाषत ॥ १ ॥

श्रीभगवानुवाच ।

एष ते कारषीद्भङ्गं हयमेधशतस्य ह ।
क्षमापयत आत्मानममुष्य क्षन्तुमर्हसि ॥ २ ॥
सुधियः साधवो लोके नरदेव ! नरोत्तमाः ।
नाभिद्रुह्यन्ति भूतेभ्यो यर्हि नात्मा कलेवरम् ॥ ३ ॥
पुरुषा यदि मुह्यन्ति त्वादृशा देवमायया ।
श्रम एव परं जातो दीर्घया वृद्धसेवया ॥ ४ ॥
अतः कायमिमं विद्वानविद्याकामकर्मभिः ।
आरब्ध इति नैवास्मिन् प्रति बुद्धोऽनुषज्जते ॥ ५ ॥
असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे ।
अपत्ये द्रविणे वापि कः कुर्यान् ममतां बुधः ॥ ६ ॥
एकः शुद्धः स्वयं ज्योतिर्निर्गुणोऽसौ गुणाश्रयः ।
सर्वगोऽनावृतः साक्षी निरात्मात्मात्मनः परः ॥ ७ ॥
"देहाद्युपाधास्तद्धर्मा न स्युस्तद्द्रष्टुरात्मनः ।
कैवल्यं तस्य वैधर्म्यं तत्सुषुप्तं निदर्शनम्," ॥ *
य एवं सन्तमात्मानमात्मस्थं वेद पूरुषः ।
नाज्यते प्रकृतिस्थोऽपि तद्गुणैः स मयि स्थितः ॥ ८ ॥
यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयान्वितः ।
भजते शनकैस्तस्य मनो राजन् ! प्रसीदति ॥ ९ ॥
परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः ।
शान्तिं मे समवस्थानं ब्रह्म कैवल्यमश्नुते ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विंशेतु विष्णुना साक्षात् पृथोर्यज्ञेऽनुशासनम् ॥
वरदानप्रसङ्गेन प्रीतिश्चान्वोऽन्यमीर्यते ॥ १ ॥

मघवता साकमिन्द्रेण सह वर्तमानः ॥ १ ॥

आत्मानं त्वां क्षमां कारयतोऽमुष्य त्वमपि क्षन्तुमर्हसि ॥ २ ॥

यर्हि यस्मात्कलेवरमात्मा न भवत्यतस्तदभिमानेन भूतानि नाभिद्रुह्यन्ति ॥ ३—४ ॥

अविद्याखरूपादानं ततः कामस्ततः कर्म तैरारब्ध इति विद्वान-त एव प्रतिबुद्ध आत्मज्ञोऽस्मिन्नैवानुषज्जते ॥ ५ ॥

तथापि पुत्रादिममत्वेन भूतद्रोहेण च सङ्गो भवेत्तत्राह । असं-सक्त इति ॥ ६ ॥

प्रतिबोधक्रमं विवृण्वन्देहेऽनुषङ्गाभावमाह । एक इति द्वाभ्याम्। असावात्मा आत्मनो देहात्परो भिन्नः तत्र नवधावैलक्षण्येन भेदं साधयति । एक इतिनवभिः पदैः । देहो हि बाल्युवादिभेदादनेको मलिनश्च जडश्च सगुणश्च स्वकारणभूतगुणाश्रितश्च परिच्छिन्न-श्च गृहादिभिरावृतश्च दृश्यश्च सात्मा च आत्मा तु वैधर्म्यतो भिन्नः ॥ ७ ॥

---

* अयं श्लोकष्टीका सहितोऽधिको विजयध्वजवीरराघवयोर्वर्तते ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मस्थं स्वस्मिन् स्थितम् प्रकृतिस्थोऽपि देहस्थोऽपि तद्विकारैर्न लिप्यते यतः स मयि ब्रह्मणि स्थितः ॥ ८ ॥

इयमवस्था कस्योत्पद्यत इत्यपेक्षायामाह । यः स्वधर्मेणेति चतुर्भिः ॥ ९ ॥

भवतु मनः प्रसन्नं ततः किं तत्राह । यर्हि विशदाशयः प्रसन्नमनास्तदा परित्यक्तगुणः सन् सम्यग्दर्शनो भूत्वा शान्तिमश्नुते शान्तिमेवाह । मे मम सम्यगौदासीन्येनावस्थानमेव ब्रह्म तदेव कैवल्यमश्नुते ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं चतुर्मुखादेशानिवृत्तक्रोधः कृतशतक्रतुसख्य आहतर्त्विग्देवगण आसीदित्युक्तम् अथ भगवता निवेदितेन्द्रक्षमापणः प्रतिबोधिततत्त्वत्रययाथात्म्यस्वधर्मैः परवरणप्रवर्तितः प्रतिनिवृत्तत्रिवर्गलिप्सः प्रपूजितपरमपुरुषः स्वपुरमगादित्याह । मुनिरेकोनविंशेन । भगवानपीति । षाड्गुण्यपूर्णो यज्ञरक्षकः सर्वयज्ञाराध्यो वैकुण्ठः परमपुरुषः पृथ्वनुष्ठितैर्यज्ञैः सम्यगाराधितो मघवता सह इन्द्रेण सह तं पृथुमभाषत जगाद ॥ १ ॥

उक्तमेवाहाएष इति। एष इन्द्रस्ते तव हयमेधशतस्याश्वमेधशतसंकल्पस्य हि यस्मात् भङ्गमकार्षीत् अत आत्मानं त्वां क्षमापयतः क्षमां कारयतः अमुष्य इन्द्रस्य क्षन्तुमर्हसि इन्द्रविषये क्षमां कर्त्तुमर्हसीत्यर्थः ॥ २ ॥

कथं दुःसहोऽपराधः क्षन्तुं शक्यस्तत्राह । सुधिय इति । हे नरदेव! लोके नरोत्तमाः सुधियः देहात्मयाथात्म्यविदः साधवः परोपकारपराः भूतेभ्य आगस्कृद्भ्योऽपि भूतेभ्यः नाभिद्रुह्यन्ति कुतः यर्हि यस्मात्कलेवरमनात्मा आत्मेतरत् अतस्तदभिमानेन द्रोहं न कुर्वन्तीत्यर्थः सुधिया सोढुं शक्य एवेति भावः ॥ ३ ॥

एवमन्वयमुखेन सुधियां भूतद्रोहाकरणमभिधाय व्यतिरेकमुखेनाह । पुरुषा इति । यदि त्वादृशाः सुधियः पुरुषा ईश्वरमायया यदि मुह्यन्ति देहात्ममोहेन देहप्रयुक्तभूतद्रोहादिकं कुर्वन्ति तर्हि त्वादृशैश्चिरकालकृतया महतां सेवया श्रम एव परं केवलं जातः सम्पादितः न तु सुधिय एवेति भावः ॥ ४ ॥

अतः सुधियां देहात्माभिमानप्रयुक्तभूतद्रोहादेरभावात् अन्यथा दुर्धीत्वप्रसङ्गाच्च इमं कायं देहमविद्याकामकर्मभिः अविद्या अज्ञानं तच्च देहात्माभिमानस्वतन्त्रात्माभिमानरूपेण द्विविधं कामः अविद्यामूलकः शब्दादिविषयेष्विच्छाविशेषः कर्म काममूलकं पुण्यापुण्यरूपम् एभिरारब्धः उत्पादित इत्येवमिमं कायं देहं विद्वान् जानन् अत एव प्रतिबुद्धः चिदचिदीशयाथात्म्यज्ञः अस्मिन् देहे नैवानुषज्जते एवकारेण नितरामासक्त्यभावः सूच्यते ॥ ५ ॥

देह एवानासक्तः कथं देहानुबन्धिष्वासक्तः स्यादित्याह । असंसक्त इति । अस्मिन् शरीरे असंसक्तः समित्येकीकारे आत्मना सह देहमेकीकृत्य तस्मिन्नासक्त इत्यर्थः अमुना शरीरेणोत्पादिते सम्पादिते गृहे अपत्ये पुत्रादौ द्रविणे वित्ते च ममतां को नाम बुधः कुर्यात् न कोऽपि बुधः कुर्यात् अज्ञस्तु कुर्यादित्यर्थः अतो बुधः देहार्थे देहानुबन्ध्यर्थे वा भूतद्रोहादिकं न कुर्यादिति भावः ॥६॥

एव इत्यनेन चिदचिदीशयाथात्म्यज्ञानवत्त्वमुपक्षिप्तं तत्कीदृशमित्यपेक्षायां तत्र एक इति श्लोकद्वयेन चिदचिदीशस्वरूपं विशोध्याथ य एवमित्येकेन आत्मयाथात्म्यज्ञानयोगस्य भगवद्ध्यानाङ्गत्वं तत एकेन कर्मयोगस्य तदङ्गत्वमभिधाय तदुपयानुगृहीतभक्तियोगस्य भगवत्प्राप्त्युपायतामभिधायेदृशभगवदुपासननिष्ठस्य देहानुबन्धिप्रयुक्तविकारा न स्युरित्याह । एक इत्यादिना । प्रकृतिविविक्तात्मस्वरूपशोधनेन प्रकृतिपरिणामरूपदेहस्य तद्विपरीतधर्मवत्त्वस्यार्थादेव सिद्धेः पृथक् तच्छोधनं नापेक्षितमिति तावदात्मस्वरूपं प्रकृतिविविक्तं शोधयति। एकः ज्ञानैकाकारतया सर्वत्र एकस्वरूपः "एको व्रीहिः सुसंपन्नः सुभिक्षं कुरुते प्रजा,, इति वदयं निर्देशः नानाकारेषु देवमनुष्यादिशरीरेष्ववस्थितोऽपि सर्वत्र ज्ञानैकाकारतया सर्वत्र एकस्वरूप इत्यर्थः देहस्तु देवमनुष्यपशुपादपतदवान्तरभेदभिन्नः । शुद्धः निर्मलः देहस्तु मलिनः । स्वयं ज्योतिः स्वयं प्रकाशः निर्गुणः रागद्वेषादिरहितः गुणाश्रयः ज्ञानानन्दादिगुणाश्रयः सर्वगः अणुस्वरूपत्वेऽपि धर्मभूतज्ञानेन सर्वव्यापी अनावृतः देह इव गृहादिभिरनावृतः साक्षी देहेन्द्रियादीनामपरोक्षं द्रष्टा देहस्तु परप्रकाश्यः रागद्वेषादिगुणाश्रयः ज्ञानादिगुणानाश्रयः व्याप्यः आवृतः दृश्यश्चेत्यर्थसिद्धं परं केवलमात्मा देहादिष्वन्तः प्रविश्य धारकः देहस्तु धार्यः अत आत्मनः देहात्परः विलक्षणः ॥ ७ ॥

अत एव देहादिभिःउपात्ताः स्वीकृताः आदिशब्दः प्राणेन्द्रियपरः तद्धर्माः तेषां देहादीनां धर्माः बाल्ययौवनाशनायापिपासादयः तच्छब्देन बाल्यादीनां तदेकान्तत्वं सूच्यते तद्धर्मास्तस्य देहादेर्द्रष्टुरात्मनो जीवस्य न स्युः तस्य आत्मनो यत्कैवल्यं देहगतजात्यादिराहित्यमेव तस्य देहादिधर्मशून्यं देहविलक्षणमात्मस्वरूपं कदा स्फुरतीत्याशङ्कायां सुषुप्त्युत्क्रान्त्यादिरित्यभिप्रयन् तत्र सुषुप्तेर्जीवदवस्थायामेवाहरहरनुभूयमानत्वेन सुषुप्तिरेव निदर्शनमित्याह तत् तत्र सुषुप्तं सुषुप्तिभावेक्तः निदर्शनमुदाहरणमित्यर्थः सुषुप्तौ हि देहगतब्राह्मणत्वादिव्याद्याकारो नानुभूयते किन्तु देहविलक्षणं स्वस्वरूपं तथा चोक्तं तृतीये भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिष्विह निद्रया । लीनेष्वसति यस्तत्र निर्दिष्टो निरहंक्रिय । इति निरहंक्रिय इत्येनेन देहतद्धर्माणां चात्मप्रतीत्यविषयत्वमुच्यते एवं प्रकृतिपुरुषयोः स्वरूपे निरूपिते यद्वा इदं श्लोकद्वयं प्रधानजीवविलक्षणपरमात्मस्वरूपकथनपरं प्रकृतिपुरुषस्वरूपं त्वर्थाद्विशोधितं भवति प्रकृतिविविक्तात्मस्वरूपविवेचनपरत्वे हि सुषुप्तं तन्निदर्शनमिति स्वरसं स्यात्सुषुप्तौ देहादेरप्रतीतावपि उक्तविधत्वेनात्मस्वरूपस्य प्रतीतेः तस्मादयमर्थः एकः स्वसमाभ्यधिकः द्वितीयवस्त्वन्तररहितः शुद्धः अपापविद्धः अपहतपाप्मेत्यर्थः स्वयंज्योतिः निरुपाधिकः स्वयंप्रकाशः निर्गुणः प्रकृतिपुरुषगताज्ञत्वदुःखित्वादिहेयगुणरहितः गुणाश्रयः अनन्तकल्याणगुणाश्रयः सर्वगः स्वरूपतः स्वभावतश्च विभुः अनावृतः देहादिष्ववस्थितोऽपि तैरपरिच्छिन्नः साक्षी सर्वं युगपत्साक्षात्कर्ता उदासीनो वा आत्मनः उक्ताकारविपरीताज्जीवात्परः विलक्षणः परमात्मा एवं मा यस्मात्स परमः स चासौ आत्मा च स्वसमानाधिकाभावस्तराव्याप्तः स्वव्यतिरिक्तस्य सर्वस्यान्तः प्रविश्य प्रशासनधारकः जीवस्तु नैकः किन्तु बहवः समानाकाराः "नित्यो नित्यानां चेतनश्चेतनानां नत्वेवाहं जातु नासम,,इत्यादिकमत्रानुसन्धेयं यद्यपि जीवस्वरूपमपि स्वयं ज्योतिरेव तथापि तत्स्वरूपसत्तास्थितिप्रवृत्त्यादेः परमात्मेच्छायत्तत्वस्य । "द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया,,इति स्मरणात् न निरुपाधिकस्वयंज्योतिष्ट्वं तथा जीव

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

देहद्वारा रागद्वेषादियुक्तः नातिशुद्धः यद्यपि प्रजापतिवाक्यं जीवस्याप्यपहतपाप्मत्वं "य एष आत्मापहतपाप्मा" इत्यादिना श्रुतं तथापि तत्कर्मणा संकुचितं मुक्तौ तत्परमात्मप्रसादादाविर्भूतमिति न सर्वदा विशुद्धत्वं तथाच श्रुतिः "एष सम्प्रसादो ऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यत,, इति सूत्रं च "सम्पद्याविर्भावः स्वेन शब्दात,,इति तथा कल्याणगुणाश्रयो न भवति किन्तु दुःखित्वादिहेयगुणाश्रयः अत्र निर्गुणगुणाश्रयशब्दाभ्यां हेयगुणनिषेधकल्याणविधी विवक्षितौ अत्र न हिंस्यात्पशुमालभेतेति च उत्सर्गापवादनयेन दहरविद्यायां य एष आत्मापहतपाप्मेत्यादिना हेयगुणान् प्रतिषिध्य सत्यकाम इत्यादिना कल्याणगुणान् विदधती श्रुतिरेव प्रमाणं तथापि जीवो न सर्वगः अणुत्वात् तथाच श्रुतिः "एषोऽणुरात्मा चेतसा वेदितव्यः आराग्रमात्रो ह्यवरोऽपि दृष्टः,, इति अत एव परिच्छिन्नः नापि साक्षी किन्तु कर्मफलादी तथाच श्रूयते "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति तथाच स्वस्मादधिकेन परमात्मना व्याप्यः धार्यश्च य आत्मनि तिष्ठन्नित्यादि श्रुतेः एवं जीवस्वरूपमर्थाद्विविक्तं द्रष्टव्यं पूर्वव्याख्योक्तिरीत्या प्रकृतिस्वरूपमपि यतएव प्रकृतिपुरुषाभ्यां विलक्षणः परमात्मा अतएव हेतोः देहाद्युपात्तादिशब्देन जीवसंग्रहः देहैर्जीवैश्चोपात्ताः परिणामित्वकिंचिज्ज्ञत्वदुःखित्वादयः औपाधिका धर्माः तद्धर्माः प्रकृतिपुरुषैकान्ता जडत्वाणुत्वादयः स्वाभाविकाश्च .तद्द्रष्टुः प्रकृतिपुरुषयोः साक्षात्कर्त्तुः आत्मनः तयोरन्तर्व्याप्यावस्थितस्य परमपुरुषस्य न स्युः कैवल्यं प्रकृतिपुरुषगतपरात्क्वाणुत्वादिविपरीतप्रत्यक्त्वापरिच्छिन्नत्वादिधर्मवत्त्वमेव कैवल्यं . प्रकृतिपुरुषाभ्यां वैलक्षण्यं नामेत्यर्थः तत्तत्र जीवात्परमात्मनो वैधर्म्ये सुषुप्तं सुषुप्तिः निदर्शनमुदाहरणमित्यर्थः सुषुप्तग्रहणमुत्क्रान्तेरप्युपलक्षणं तथाहि सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशो दृश्यते वाजसनेयके "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु,, इति प्रकृतस्य प्रत्यगात्मनः सुषुप्त्यवस्थायामकिञ्चिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्,, इति तथा उत्क्रान्तावपि प्राज्ञेनात्मनान्वारूढ उत्सर्जन् यातीति न च स्वपतउत्क्रामतो वास्य किञ्चिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वारोहौ संभवतः न च क्षेत्रज्ञान्तरेण । तस्यापि सर्वज्ञत्वासम्भवात् तस्मात्तत्र प्राज्ञेनेति सर्वज्ञः परमात्मा उक्तः न बाह्यं किञ्चन वेद नान्तरमित्यज्ञो जीव उच्यते तस्मात्तत्र वैधर्म्यं निदर्शितं तथाच सूत्रं "सुषुप्त्युत्क्रान्त्यो र्भेदेन,, इति ॥ * ॥

यइति। यः पुमान् एवं परमात्मनो धार्यतयाव्याप्यतया आत्मनि परमात्मनि स्थितमात्मानं प्रत्यगात्मानं वेद उपास्ते नतु तदुपासनमात्रपरः किन्तु मयि अन्तर्यामिणि पूर्वोक्तैकत्वादिधर्मिणि स्थितः मदुपासननिष्ठ इति यावत् तिष्ठतेर्ध्यातोरुपासनपरत्वम् "अभयं प्रतिष्ठां विन्दते तन्निष्ठस्य मोक्षोपदेशात्,, इत्यादिश्रुतिसूत्रादिषु प्रयोगादवगम्यते ज्ञानयोगानुगृहीतभक्तियोगनिष्ठ इत्यर्थः प्रकृतिस्थोऽपि उपासनदशायां प्रकृतिविशिष्टोऽप्युपासननिर्वृत्त्यनन्तरं तद्गुणैः प्रकृतिगुणैर्न युज्यते किन्तु मुक्तो भवेदित्यर्थः ॥ ८ ॥

एवं यः पुमान् स्वधर्मेण स्ववर्णाश्रमोचितपञ्चमहायज्ञादिनित्यनैमित्तिकादिधर्मेण निराशीः स्वधर्मसाध्यफलेष्वाशारहितः अनभिसंहितफलकर्तृत्वक इत्यर्थः मां सर्वकर्माराध्यमिन्द्रादिसर्वदेवताशरीरं सर्वकर्मफलप्रदं नित्यं श्रद्धया कर्तव्येषु कर्मसु त्वरया भजते हे राजन् ! पृथो ! तस्य ज्ञानकर्मयोगाभ्यामनुगृहीतभगवद्भक्तियोगनिष्ठस्य मनः शनकैः प्रसीदति दारादिभिरकलुषितं भवति ॥ ९ ॥

एवं परित्यक्तगुणः कात्स्न्र्येन त्यक्तरागादिगुणः अत एव विशदाशयः निर्मलान्तः करणः अत एव सम्यग्दर्शनः उक्त विधात्मस्वरूपतद्विलक्षणपरमात्मस्वरूपदर्शी शान्तमशनायाद्यूर्मिषट्करहितं मे मत्संयन्धि समवस्थानं सम्यगावासभूतं मच्छरीरभूतमित्यर्थः ब्रह्म गुणतो बृहत्त्वाद्ब्रह्मशब्दवाच्यं कैवल्यं केवलप्रकृतिवियुक्तमाविर्भूतापहतपाप्मत्वादिगुणकमात्मस्वरूपम् अश्नुते प्राप्नोति ब्रह्मात्मकाविर्भूतगुणाष्टकस्वरूपेण सम्पन्नो भवति मुक्तो भवतीति यावत् ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्रोत्तमगुणया स्वयोग्योपासनाविषयो हरिरुपदेष्टव्य इति द्योतयितुं पृथुजीवाय हरिणा स्वात्मोपदिश्यत इति प्रतिपादयितुमाह। भगवानिति। अपिशब्दस्य ब्रह्मभाषणेन पुनः समुच्चयः कारयितृत्वेन स्वामित्वेन भोक्तृत्वेनाप्येक एवोच्यत इति दर्शनाय वैकुण्ठादिनामग्रहणं चशब्देनाग्रपूज्येष्ट इति समुच्चिनोति जगदुत्पत्तौ विश्लिष्टानां भूतानां संयोजकत्वाद्वैकुण्ठः तदुक्तम् शान्तिपर्वणि ।

> मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना ।
> वायुश्च तेजसा सार्द्धं वैकुण्ठत्वं ततो ममेति ॥
> अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च इति ॥ १ ॥

हयमेधशततमस्येति व्याख्येयम् अन्यथा चरमाश्वमेधासिद्ध्या तदेकभङ्गाभावेन सर्वभङ्गापत्त्या त्वमेकोनशतक्रतुरित्यनुपपन्नं स्यादिममर्थं ग्रन्थान्तरे सिद्धं नेत्यनेन सूचयति किमत्र कार्यं तदाज्ञापयेति तत्राह । क्षमापयत इति । आत्मानं त्वां क्षमापयतोऽमुष्येन्द्रस्य क्षन्तुमर्हसीत्यन्वयः आत्मानं मां क्षमापयत इति वा त्वयि सन्निहितत्वेन तव विरोधाचरणं गमेति तत्तस्मान्मम क्षमापणं प्रार्थनमित्यर्थः ॥ २ ॥

अक्षमा साधुगुणो न स्यादित्याह। सुधिय इति। तत्र निमित्तमाह । यर्हीति । कलेवरमनात्मा जडमत एवानित्यं यर्हि यस्मात्–तस्मात् ॥ ३ ॥

इतोऽपि क्षमाकर्तव्येति व्यतिरेकमुखेनाह । पुरुषा इति ॥ ४ ॥

तर्हिकिन्तत्राह । अतएवेति ॥ ५ ॥

शरीरासङ्गफलमाह । असंसक्त इति । अमुना देहेन पुत्रादिगतममतावुद्धित्यागः फलमित्यर्थः ॥ ६ ॥

शरीराद्यासक्तिरप्येकत्वादिगुणविशिष्टपरमात्मज्ञानिन एव सुदृढा स्यादित्यतस्तत्स्वरूपं निरूपयति । एक इत्यादिना । द्वष्टादिप्वेकत्वादिकमौपचारिकं हरौ तु निरुपचरितमिति द्योतनाय वेदान्तसिद्धगुणानुपदिशति । तथाहि । "एको देव इति न जायते म्रियते वा विपश्चित्" इति जननादिदोषाभावाच्छुद्धः पूर्णः स्वतः शुद्धबुद्धस्वरूपो नित्यचिन्मय इति "अत्रायं पुरुषः स्वयंज्योतिः परं ज्योतिरुपसम्पद्यति केवलो निर्गुणश्चेति विज्ञानमानन्दं

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रज्ञेति अन्तर्बहिश्चततसर्वम्„ इति अनावृतः स्वस्यान्येषामावृत एव "अन्येषामावृतो विष्णुः स्वस्यानावृत एव च„ इति साक्षी चेति निर्गत आत्मा स्वामी यस्य स निरात्मा तस्यात्मान्यो न विद्यत इति अनात्मनो गुणराशिरहिताज्जीवराशेः परः उत्तमः पुरुषस्त्वन्य इति ॥ ७ ॥

हरेः सर्वगतत्वेन जननादिदेहधर्माः सम्भवन्त्युत कथं देहिपरत्वमत्राह । देहादीति । देहप्रभृतितद्धर्मा देहधर्मा जननादयस्तद्द्रष्टुस्तेषां धर्माणां द्रष्टुः "आत्मनः सर्वस्य जगतोऽन्तर्यामिणो हरेर्नस्युरित्यन्वयः "आत्मा सर्वस्य जगतस्तस्यात्मान्यो न विद्यत„ इति कीदृशा अपार्थाः पुरुषार्थाख्यप्रयोजनशून्याः हरेर्धर्मः क इति तत्राह । कैवल्यमिति । "अनन्यसदृशत्वाच्च केवलोऽसौ हरिः स्मृत„ इति वचनात् कैवल्यं नामान्यसादृश्यराहित्यं धर्म इत्यर्थः वा इत्येतत्तच्चरत्वमावः कैवल्यमिति वाक्यं सूचयति नित्यनिर्दुःखत्वं च तस्य धर्मस्तद्दृष्टाद्वारोहयति । सुषुप्तमिति । तस्य धर्मस्य निदर्शनं दृष्टान्तः सुषुप्तं शरीराभिमानाभावेन हर्येकस्थितिः सुषुप्तिर्नाम नहि तदा दुःखलेशोऽस्ति "सतासोम्यतदासम्पन्नोभवति„इतिश्रुतेः(१)सुषुप्तवच्चनिर्दुःखोजाग्रद्वच्च प्रवृत्तिमानिति च आत्मावगम्यत्वं वातद्धर्मः अत्रापि सुषुप्तमुदाहरणं हि मानम् (२) तस्यापि जन्यज्ञानाभावेनाहमिति स्वरूपज्ञानवेद्यत्वात्

आत्मनैवावगम्यत्वाद्धरिरेव सुषुप्तवत् ।
केवलत्वेन विज्ञेयो मुक्तस्तद्वद्दुःखतेति च ॥ ० ॥

भगवद्धर्मकथनफलमाह । य एवं सन्तमिति । यः पुरुष एवं सन्तमात्मस्थं जीवान्तर्यामिणमात्मानं वेद स प्रकृतिस्थोऽपि तस्य शरीरगुणैः क्षुत्पिपासादिलक्षणैर्नाज्यते न लिप्यते समवस्थितः सम्यगाहितचित्तत्वादिति हेतुगर्भविशेषणम् ॥ ८ ॥

मनः प्रसादस्य प्रथमसाधनत्वात्तत्सम्भवः केन स्यादिति तत्राह । य इति ॥ ९ ॥

मनःप्रसादफलमाह । परित्यक्तगुणा इति । परितस्त्यक्ता गुणाविषयलक्षणा येन स तथा समस्थानं निर्विकारंयद्ब्रह्म कैवल्यं स्वस्वयोग्यतानुरोधेन पूर्णताबक्षणं कवलाभावं तल्लक्षणं शान्तिमे प्रसादान्मुक्तिमश्नुत इत्यन्वयः ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एष ते ह्यकरोदिति क्वचित् पाठः ॥ १ ॥ २ ॥

प्रथमं ज्ञानद्वारा तं सान्त्वयति । सुधिय इत्यादिभिः । कलेवरमत्र स्थूलसूक्ष्मात्मकम् ॥ ३ ॥ ४ ॥

तत्रासंसक्त इत्यादिना देहद्वयविलक्षणं शुद्धं जीवात्मानांकिञ्चित् प्रतिबोधाय सूचयित्वा सम्यक्प्रतिबोधाय परमात्मानमुपदिशति। एक इति। असौ जीवादिवाक्यागोचर आत्मा परमात्माख्य आत्मा आत्मनः शुद्धात् जीवात्परः यतोऽसौ एकः जीवस्तु नाना असौ शुद्धः असम्भाव्यदोषसङ्गः सतु अज्ञानदोषविक्षिप्तत्वेन शुद्धः मण्डलस्थानीयत्वादसौ मुख्यत्वेन स्वयंज्योतिः सतु रश्मिस्थानीयत्वादापेक्षिकतया । असौ गुणेभ्यो निर्गतः सर्वथैव सिद्धः स तु प्रज्ञा-

नेन तदभिमानसम्बद्धः असौ सूर्य इवाभासः । वर्णानां गुणाश्रय एव नतु तद्वाच्यः असौ विभुः सन्वणुः असौ देहादिष्वप्यनावृतः सत्वावृतः असौ साक्षादृद्रष्टृत्वात् साक्षी सतु प्रब्रह्ममयशक्तिरत्वादेव । असावेवात्मान्तररहितः सतु तदात्मकः ॥ ५ ॥ ६ ॥ ७ ॥

आत्मस्थं शुद्धजीवान्तर्यामित्वेन स्थितम् । मयि स्थितो मदाश्रितत्वेनानुसन्धायी ॥ ८ ॥ ९ ॥

मम समवस्थानं शक्त्याद्यविशिष्टतयाविर्भावविशेषः तद्ब्रह्म कैवल्यमश्नुते अनुभवति ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विज्ञो प्रीतिं सहेन्द्रेण विष्णुना बोधितः पृथुः ।
चकार तुष्टावच तं स दत्त्वागाद्वरं प्रभुः ॥ ० ॥

तनश्च भगवानपि प्रादुर्भूय स्वांशमिन्द्रमुपानीय सन्धिं यन् पृथुं प्रबोधयामासेत्याह । भगवानपीति ॥ १ ॥

आत्मानं त्वां क्षमां कारयतोऽमुष्य ॥ २ ॥

यर्हि यतः कलेवरमात्मा न भवति अतस्तत्राभिमानानौचित्यात् । कुतो भूतद्रोहः सम्भवेदित्यर्थः ॥ ३ ॥

भगवन्मायया मोहनादेव भवेदिति चेत्तत्राह। पुरुषा इति। अतो वृद्धसेवयैव मायानावरणात् प्रतिबुद्धः प्रतिबोधमविद्ययैव कामः कामादेव कर्माणि तैरारब्धोऽयमिति इमं विद्वान् जानन् ॥ ५—६ ॥

अनासक्तेः कारणमात्मज्ञानमतः परमात्मज्ञानमुपदिशति एक इति। आत्मा परमात्मा आत्मनो देहात् जीवाच्च परो भिन्न एकः। देहोजीवश्चानेकः। एवमशुद्धः प्रकाशहीनः सगुणः गुणजन्यत्वात् गुणाधीनत्वाच्च गुणाश्रित जडत्वादनुरूपत्वाच्चासाक्षी देहेन गृहादिभिश्चावृतः अचेतनत्वात् सलेपद्रष्टृत्वाच्चासाक्षी स जीवत्वाद स परमात्मकत्वाच्च सात्मेति देहजीवाभ्यां सकाशाद् वैलक्षण्यं परमात्मन उक्तम्। एतेनैव जीवस्य देहेन सह सकाशाद् वैलक्षण्यं च दर्शितमिति ॥ ७ ॥

स प्रकृतिस्थः देहस्थोऽपि देहगुणैर्नाज्यते इति न देहीत्यर्थः ॥ ८ ॥

अयमुक्तलक्षणः प्रबोधो भक्तिमिश्रेण ज्ञानेन यतमानस्य भवतीति तत्साधनमाह ! य इति ॥ ९॥

तत्फलमाह । परीति साम्राज्यमाशान्तिम् अश्नुते शान्तिमेमे समवस्थानं मम समं निर्भेदमवस्थानं सामान्यावस्थां भागमतेऽकारलोपः । तद्ब्रह्म कैवल्यम् ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवदुपदेशात्सन्तुष्टमनाः पृथुः देवराजं परिष्वज्य विरं त्यक्तवान् भगवानपि पृथवे वरं दत्त्वा स्वलोकं प्रत्यपद्यत इति वर्णयते भगवानपीति विंशोनाध्यायेन आत्मानं त्वां क्षमापयतोऽस्य क्षन्तुमर्हसि ॥ १ ॥ २ ॥

भूतेभ्यः कलेवरप्रतिकूलेभ्योऽपि इत्यर्थादाक्षिप्यते यर्हि यत आत्मा न भवति अतो नाभिद्रुह्यन्ति ॥ ३ ॥

देवस्य मम मायया प्रकृत्या ॥ ४ ॥

(१) सुषुप्त्यवस्थापन्नोजीववदित्यर्थः ।
(२) सुषुप्तजीवस्यापि ।

उदासीनमिवाध्यचं द्रव्यज्ञानक्रियात्मनाम् ।
कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम् ॥ ११ ॥
भिन्नस्य लिङ्गस्य गुणप्रवाहो द्रव्यक्रियाकारकचेतनात्मनः ।
दृष्टासु संपत्सु विपत्सु सूरयो न विक्रियन्ते मयि बद्धसौहृदाः ॥ १२ ॥
समः समानोत्तममध्यमाधमः सुखे च दुःखे च जितेन्द्रियाशयः ।
मयोपक्लृप्ताखिललोकसंयुतो विधत्स्व वीराखिललोकरक्षणम् ॥ १३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु कलेवरद्वारा तत्प्रतिकूलभूतकृतोपद्रव आत्मनि फलति तदा कलेवरस्यानात्मत्वेऽपि कथम्भूतेभ्यो न द्रुह्यन्तीत्यत आह। अत इति। अतः वृद्धसेवातः अविद्या अनादितःआत्मानात्मपरमात्मस्वरूपाद्यज्ञानं तन्मूलः कामो विषयभिलाषस्तन्मूलानि कर्माणि तैः शुभाशुभकर्मफलायतनो देह आरब्धः इत्येवममुं कायं देहं विद्वान् प्रबुद्धः नान्यो द्रोहादिविषयः मम कर्मानुसारेणेश्वरप्रेरितानि सुखदुःखानि भवन्तीति ज्ञानवान् अस्मिन् काये नैव सज्जते इत्यन्वयः एतानि भूतानि मम कायप्रतिकूलानि अतो मम द्रोहविषयाणीति न मुह्यतीति भावः ॥ ५॥ ६ ॥

नात्मा कलेवरमित्यनेन कलेवरादन्य आत्मेत्युक्तं तस्यात्मनः पुरुषा इत्यनेनानेकत्वमुक्तं यस्तु देवशब्देन मायाख्यामयुक्तः स क इत्याकांक्षायाम् "नित्योनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्," इतिश्रुतिमुपबृंहयन् जीवात्मनः परः स परमात्मेत्याह। एक इति। निर्गुणः प्राकृतगुणरहितः गुणाश्रयः कल्याणगुणाश्रयः निरात्मा निर्गत आत्माश्रयो यस्य स्वाश्रय इत्यर्थः। आत्मा अन्तर्यामी आत्मनः जीवात्परस्तदुपास्यः ॥ ७॥

पुरुषा यदि मुह्यन्तीत्यनेन श्लोकेन देवमायामोहितत्वेन बद्धत्वं जीवानामुक्तं ततः केनोपायेन मुक्तिरित्याकाङ्क्षायां मद्विषयकज्ञानभक्त्यादिसाधनैर्मुक्तिर्भवतीत्याह। य एवमिति त्रिभिः। आत्मस्थमन्तर्यामिणम् ॥ ८॥ ९ ॥

परित्यक्तगुणः गुणातीतः सम्यग्दर्शनः सम्यग्ज्ञानवान् अत एव समवस्थानं मदात्मकत्वेनावस्थानमश्नुते अत एव मे शान्ति ध्यानसमाधिनिष्ठामत एव ब्रह्मकैवल्यं ब्रह्मभावापत्तिलक्षणं मोक्षं चाश्नुते ॥ १० ॥

---

भाषाटीका।

मैत्रेयजी बोले वैकुंठ भगवान् भी प्रभु यज्ञपति यज्ञभोक्ता यज्ञों से सन्तुष्ट होकर इंद्रके सहित उपस्थित होकर पृथु महाराज से बोले ॥ १ ॥

श्रीभगवान् बोले आप के अश्व मेध का भंग इन इंद्रने किया है अब ए अपनी क्षमा कराते हैं सो आप क्षमा करने को योग्य हो ॥ २ ॥

हे नरदेव! संसार में साधु जो मनुष्य उत्तम हैं सुंदर बुद्धि वाले सो शरीर आत्मा नहीं है इस विचार से शरीर के निमित्त से किसी का द्रोह नहीं करते हैं ॥ ३ ॥

आपसे पुरुष भी यदि परमेश्वर की माया से मोहित होजायं तो दीर्घ काल पर्यंत जो ज्ञान वृद्धों की सेवा करी है तिसमें केवल परिश्रम ही मात्र हुआ जानना चाहिये ॥ ४ ॥

इसी से ज्ञानी पुरुष इस शरीर को अज्ञान के कामना शुभा शुभ कर्मों से रचित जानकर स्वयं मोक्षार्थी होने से इसमें आसक्त नहीं होते हैं ॥ ५ ॥

यदि शरीर में आसक्ति नहीं होगी तो इसी शरीर के सम्बन्ध से भये पुत्र धनादिकमें पंडित होकर कौन ममता करेगा॥६॥

देह का आत्मा का भेद इन हेतुओं से देखो जैसे देह तो अवस्था के भेद से बदलकर अनेक होजाते हैं आत्मा एकही है देह तो मलिन है आत्मा शुद्ध है देह तो जड है आत्मा स्वयं प्रकाश है देह अनेक गुणों वाला है आत्मा उन गुणों से रहित हैं देह गुणों के आश्रयसे बना है आत्मा में तो ज्ञानादिगुण सदा रहते हैं देह तो एक देश में है आत्मा तो सूक्ष्म होने से सर्वत्र प्रविष्ट होने वाला है देह तो घर के भीतर रह जाता है आत्मा किसी के भीतर ही मात्र नहीं रहता है देह तो दृश्य है आत्मा द्रष्टा साक्षीहै देह तो आत्माके आधीन है आत्मा स्वतन्त्र है ॥ ७॥

देहादिकों के जो विकारी धर्म सो उनके द्रष्टा आत्माके नहींहैं आत्मा का एक स्वभाव से रहना उनसे भेद है उस में दृष्टांत जैसे सुषुप्ति अवस्था में सब विषयों से अलग आत्मा रहता है ॥ ०॥

जो पुरुष इस प्रकार से शरीर मे स्थित आत्मा को जानता है सो शरीर में स्थित होने से भी प्रकृति के गुणों से खिन्न नहीं होता है क्योंकि वह हमारे आश्रित है ॥ ८ ॥

जो निष्काम होकर श्रद्धासे अपने वर्णाश्रम धर्मों से मेरा सेवन करता है हे राजन्! उसका मन धीरेसे शान्त होजाता है॥९॥

जब शांत प्रसन्न मन होजाता है तब सब गुण छूट जाते हैं निर्मल ज्ञान होजाता है तब हमारे स्वरूप में स्थित होने से शान्ति कैवल्य ब्रह्म को प्राप्त होजाता है ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सम्यग्दर्शनमेवाह। उदासीनमेवात्मानं द्रव्यज्ञानक्रियात्मनः देहज्ञानकर्मेन्द्रियमनसामध्यक्षमिवस्थितमात्मानं यो वेद ॥ ११ ॥

संसारिणः कथं कूटस्थत्वमत आह। भिन्नस्य लिङ्गस्य देहस्य गुणप्रवाहः संसारः भिन्नत्वे हेतुः द्रव्याद्यात्मकस्य तत्र चेतना चिदाभासः अतो दृष्टासु प्राप्तासु हर्षशोकादिभिर्नविक्रियन्ते ॥ १२ ॥

त्वं च सूरितः सुखे दुःखे च समः सन् समानाउत्तममध्यमाधमा यस्य जितानीन्द्रियाण्याशयश्च येन स त्वमखिललोकरक्षणं विधत्स्व कथमेकेन मया रक्षणं कर्तुं शक्यं तत्राह। मयेश्वरेणोपक्लृप्ताः संपादिता येऽखिला लोका अमात्यादयस्तैः संयुतः ॥ १३ ॥

श्रेयः प्रजापालनमेव राज्ञो यत्सांपराये सुकृतात्षष्ठमंशम् ।
हर्ताऽन्यथा हृतपुण्यः प्रजानामरक्षिता करहारोऽघमत्ति ॥ १४ ॥
एवं द्विजाग्र्यानुमतानुवृत्तधर्मप्रधानोऽन्यतमोऽवितास्याः ।
ह्रस्वेन कालेन गृहोपयातान् द्रष्टासि सिद्धाननुरक्तलोकः ॥ १५ ॥
वरं च मत्कंचनमानवेन्द्र! वृणीष्व तेऽहं गुणशीलयन्त्रितः ।
नाहं मखैर्वै सुलभस्तपोभिर्योगेन वा यत्समचित्तवर्ती * ॥१६॥

मैत्रेय उवाच

स इत्थं लोकगुरुणा विष्वक्सेनेन विश्वजित् ।
अनुशासित आदेशं शिरसा जगृहे हरेः ॥१७॥
स्पृशन्तं पादयोः प्रेम्णा व्रीडितं स्वेन कर्मणा ।
शतक्रतुं परिष्वज्य विद्वेषं विससर्ज ह ॥ १८ ॥
भगवानथ विश्वात्मा पृथुनोपहृतार्हणः ।
समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः ॥१९॥
प्रस्थानाभिमुखोऽप्येनमनुग्रहविलम्बितः ।
पश्यन् पद्मपलाशाक्षो न प्रतस्थे सुहृत् सताम् ॥२०॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु रक्षणं दण्डादिसापेक्षमतस्तपोऽन्यद्वा पुण्यं करिष्यामीति चेदत आह। श्रेय इति। यद्यस्मात् सांपराये परलोके प्रजाभिः कृतात्सुकृतात्षष्ठमंशं हर्ता हरति अरक्षणे दोषमाह। अन्यथा प्रजाभिर्हृतं पुण्यं यस्य स प्रजानामघमत्ति पापं भुङ्क्ते अन्यथेत्यस्य विवरणं करहारः सन् न रक्षिता चेत् ॥ १४ ॥

एवञ्च मोक्षोऽप्यनायासेन भविष्यतीत्याह । द्विजाग्र्याणामनुमतश्चासौ अनुवृत्तश्च परम्पराप्राप्तो यो धर्म्मः स एव प्रधानं अर्थकामौ तु प्रासङ्गिकौ यस्य । अन्यतमः अतिशयेनान्यः धर्म्मादिष्वनासक्त इत्यर्थः । एकपद इति पाठे धर्म्मः प्रधानावन्यतमावर्थकामौ यस्य इत्यर्थः । अस्याः पृथिव्या अविता सन् अल्पेन कालेन गृहागतान् सनकादीन् द्रक्ष्यसि अनुरक्तो लोको यस्मिन् सः ॥ १५ ॥

मद् मत्तः सकाशात् किञ्चित् वरं वृणीष्व । गुणाः शमादयः शीलं निर्म्मत्सरत्वादिस्वभावः तैरहं यन्त्रितः वशीकृतः तद्रहितैस्तु मखादिभिर्नाहं सुलभः यतः समं चित्तं येषां तेष्वेव वर्त्तितुं शीलं यस्य सोऽहम् ॥ १६ ॥ १७ ॥

क्षमापयितुं पादयोः स्पृशन्तं स्वेन कर्म्मणा अश्वापहरणेन व्रीडितम् प्रेम्णा परिष्वज्य ॥ १८ ॥

भगवान् प्रस्थानाभिमुखोऽपि अनुग्रहेण विलम्बितः सन्नप्रतस्थे प्रयाणं न कृतवानिति द्वयोरन्वयः । कथम्भूत उपहृतमर्पितमर्हणं यस्मै । समुज्जिहानया समुद्गच्छन्त्या वर्द्धमानया भक्त्या गृहीते चरणाम्बुजे यस्य ॥ १९ ॥

पद्मपलाशवदक्षिणी यस्य तथा भूतः सन् एनं पृथुं पश्यन् ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तत्त्वत्रयविमर्शनपूर्वकं ज्ञानकर्मयोगानुगृहीतभगवद्भक्तियोगस्यामृतत्वप्राप्त्युपायतामभिधायैवं विधस्य पुंसो जीवदवस्थायामवस्थानप्रकारमाह। उदासीनमिति। द्रव्यं पृथिव्यादिभूतानि ज्ञ श्रोत्रादिज्ञानेन्द्रियाणि क्रिया वागादिकर्मेन्द्रियाणि आत्मा मन एषामध्यक्षमधिपं कूटस्थं स्वरूपतो निर्विकारमत एव द्रव्यमयत्स्मात् प्रत्यगात्मानमुदासीनमिव स्थितं यो वेद द्रव्याद्यध्यक्षत्वं प्रकृतिसम्बन्धकृतं परमार्थतस्तु कूटस्थ उदासीन इत्थंमात्मानं यो वेद सः शोभनमाप्नोति जीवनदशायामपि सुखमेवाप्नोतीत्यर्थः ॥ ११ ॥

ननु विप्रतिषिद्धमेतदुच्यते द्रव्याद्यध्यक्षत्वं कूटस्थत्वमुदासीनत्वं चेति करणप्रवर्तकत्वमेव हि करणाधिपत्वं तच्च विकार तदभावः कूटस्थत्वमुदासीनत्वं तत्राह। भिन्नस्येति। द्रव्यक्रियाकारकचेतनात्मनः द्रव्यं पृथिव्यादि क्रिया कारकाणि कर्मेन्द्रियाणि चेतना ज्ञानेन्द्रियजातम् एतदात्मकस्येत्यर्थः क्रिया कर्मेन्द्रियाणिकारकाणि ज्ञानकरणानि श्रोत्रादीनि चेतना चित्तमेतदात्मकस्येति वार्थःद्रव्याद्यात्मकस्यात एव भिन्नस्य देवमनुष्यादिभावेन भिन्नस्य लिङ्गस्य शरीरस्य गुणप्रवाहःगुणपरिणामो भवतीति अयंभावः यद्यपि द्रव्याद्यध्यक्षत्वरूपविकार आत्मन्यस्ति तथापि स विकारः ज्ञानविकाररूपःस च धर्मभूतज्ञानगतो न स्वरूपगतइति स्वरूपतः कूटस्थत्वमुदासीनत्वं च देवादिरूपेण परिणामस्तु द्रव्यादिसंघातस्यैवेति ननु धर्मतोऽपि सति विकारे न कूटस्थत्वोपपत्तिः कूटस्थता हि निर्विकारता सा च नित्यता परम्परया धर्मतो वा नित्यत्वे कथं नित्यतेति चेत् उच्यते धर्मभूतं ज्ञानद्रव्यं नित्यं

* समवृत्तवर्तीति विजयध्वजः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य च कर्मणा कदाचित्संकोचः कदाचिद्विकास इत्यवस्थाद्वयमङ्गीक्रियते तत्र संकोचोनाम प्रसराभावः तदभावो विकासः प्रसररूपाभावस्य भावरूपत्वात् अतो धर्मभूतं ज्ञानं द्रव्यमपि नित्यमेवेति धर्मतोऽपि कूटस्थतोपपत्तिः पृथिव्यादीनां तु स्वरूपतःस्वभावतश्च विकार इति न कूटस्थत्वम् अत आत्मनः सततमेकरूपत्वात् देहस्य प्रतिक्षणपरिणामित्वादपुरुषार्थत्वाद्देहप्रयुक्तासु दृष्टासु प्राप्तासु सम्पत्सु विपत्सु च सूरयस्तत्त्वत्रयविवेचनचतुरा न विक्रियन्ते सम्पदापत्प्रयुक्तहर्षशोकाभ्यां न युज्यन्त इत्यर्थः कथं सति शरीरे तत्प्रयुक्तहर्षशोकासम्बन्धस्तत्राह । मयि निरतिशयप्रीतिविषये बद्धं सौहृदं यैस्ते सौहृदशब्देन सुहृदो धर्मो निरतिशयप्रेमोच्यते तेन प्रीतिरूपमुपासनं लक्ष्यते बद्धशब्देन तस्य विजातीयप्रत्ययान्तराव्यवहितत्वं च तथाच प्रत्ययान्तराव्यवहितमद्विषयनिरतिशयरूपभक्त्या विस्मृतदेहधर्मा हर्षशोकाभ्यां न युज्यन्त इत्यर्थः त्वं च सूरिः ॥ १२ ॥

अतः सुखदुःखे च देहप्रयुक्ते समः सन् साम्यं मम कथं संभवेत्तत्राह विजितेन्द्रियाशयः वशीकृतबाह्येन्द्रियान्तःकरणः जितेन्द्रियस्य तव सुखदुःखयोः साम्यं संभवेदेवेत्यर्थः अत एव समाना उत्तममध्यमाधमाः यस्य स तिर्यङ्मनुजदेवादिषु देहातिरिक्तसर्वात्मसाम्यानुसन्धानपरस्तेषां च ब्रह्मात्मकत्वेन साम्यधीः त्वमखिललोकरक्षणं विधत्स्व कथमेकेन मया तत्कर्तुं शक्यं तत्राह । मयेश्वरेण उपलक्षिताः सम्पादिताः अमात्यादयोऽखिललोकास्तैः संयुतः ॥ १३ ॥

ननु मम मुमुक्षामनुत्पाद्य किमखिललोकरक्षणं विधत्स्वेत्युच्यते तत्राह । श्रेयइति । राज्ञः प्रजापालनमेव श्रेयःसाधनं समीहितपुरुषार्थसाधनमित्यर्थः कुतःयत् यस्मात् प्रजापालनात् साम्पराये देहवियोगे प्रजाभिर्यत्कृतं सुकृतं तस्य षष्ठमंशं हर्ता हरति अन्यथा लोकरक्षणाभावे प्रजानामरक्षिता प्रत्युत प्रजापीडनादिना तद्दत्तं करं स्वामिग्राह्यभागं हरतीति हरः तथाभूतः अत एव प्रजाभिरात्तपुण्यस्तासामघमत्ति ॥ १४ ॥

तस्मात् यदि प्रजाःपालयासि धर्मतस्तदा तव मुक्तिरपि सुलभा स्यादित्याह । एवमिति । द्विजाग्र्यानामनुमतश्चासावनुवृत्तश्च व्यस्तपाठेऽनुवृत्तश्च धर्मप्रधानः अनभिसंहितफलस्ववर्णाश्रमोचितधर्मप्रधानः अन्यतमःप्रजानाम्मध्ये अन्यतम इव स्वस्मिन् स्वातन्त्र्यमनारोप्येत्यर्थः अविता रक्षिता यदि स्याः भवेः तदा कृत्स्नेनाल्पेन कालेन गृहान् प्रत्युपगतान् सिद्धान् सनकादीन् अनुरक्ताः स्वस्मिन् अनुरागयुक्ता लोका यस्य स त्वं द्रष्टासि तैरुपादिष्टतत्त्वोऽमृतत्वं यास्यसीत्यर्थः॥१५॥

किञ्च हे मानवेन्द्र! मत् मत्तः सकाशात् कं चिद्वरं वृणीष्व ते तव गुणाः शमादयः शीलं निर्मत्सरादिस्वभावस्तैर्यन्त्रितः वशीकृतोऽहं तद्रहितैस्तु मखैर्योगैः तपोभिः कृच्छ्रचान्द्रायणादिभिर्योगेन वा नाहं सुलभः कुतःयत् यस्मात्समं चित्तं येषां तेष्वेव वर्तितुं शीलमस्य सोऽहम् ॥ १६ ॥

स विश्वजित् पृथुरयं लोकगुरुणा विष्वक्सेनेन भगवता अनुशिष्टः हरेरादेशमाज्ञां शिरसा जगृहे अतीवादृतवानित्यर्थः ॥ १७ ॥

ततः पादयोः क्षमापयितुं स्पृशन्तं स्वेन स्वीयेन अश्वहरणादिकर्मणा व्रीडितं लज्जितं शतक्रतुमिन्द्रं प्रेम्णा परिष्वज्यालिङ्ग्य तस्मिन् विद्वेषं विससर्ज अत्याक्षीत् हेति विस्मये आद्यापराधजनितविद्वेषं तदैव विससर्जेति विस्मयते ॥ १८ ॥

ततो विश्वात्मा सर्वात्मा भगवानपि पृथुनोपहृतं समर्पितमर्हणमर्घ्यादिकं यस्य समुज्जिहानया समुद्रिक्तया भक्त्या गृहीतौ चरणौ अम्बुजे इव यस्य प्रस्थानाभिमुखः स्वलोकं प्रति प्रयाणाभिमुखोऽपि अनुग्रहेण विलम्बितः सञ्जातविलम्बः सतां भक्तानां सुहृत् निरतिशयप्रीतिमान् एवं पृथुं पश्यन् पद्मदलवद्विशाले अक्षिणी यस्य सः पद्मपत्रविशालाभ्यामक्षिभ्यां पश्यन्निति भावः न प्रतस्थे न ययावित्यर्थः ॥ १९ ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सम्यग्दर्शन इत्युक्तं दर्शनप्रकारं दर्शयति । उदासीनमिवेति । द्रव्यज्ञानक्रियात्मनां तामसवैकारिकतैजसरूपाणां पदार्थानामध्यक्षमाधिपतिम् । उदासीनमिवाक्लिष्टकारिणमेव कूटस्थं निर्विकारमात्मानं हरिं यो वेद सं शोभनं दर्शनमेवाप्नोतीत्यन्वयः हरिरक्लिष्टकारित्वादुदासीन इतीर्यत इति च ॥ ११ ॥

इदं चावश्यं ज्ञेयमित्याह । भिन्नस्येति । द्रव्यक्रियाकारकचेतनानि सन्ततं व्याप्य तिष्ठतीति द्रव्याद्यात्मा तस्य जीवाद्भिन्नस्य। कालादिव्यवधानेन लीनं पदार्थजातं गमयतीति ज्ञापयतीति लिङ्गं तस्य मनसो यः सत्त्वादिगुणानां प्रवाहः प्रवर्तनविशेषस्तं दृष्ट्वा ज्ञात्वा । प्रत्यक्षासु विपत्सु सम्पत्सु च प्राप्तासु न विक्रियन्ते जातोऽहं मृतोऽहमित्यादिविकारं न प्राप्नुवन्ति के सूरयः अत्र हेतुगर्भविशेषणमाह । मयीति । मयि बद्धं सौहृदं महत्त्वबुद्धिलक्षणं प्रेम यैस्ते तथा तस्मादिति शेषः"जीवाद्भिन्नस्य मनसो गुणाः सत्त्वादयो मताः । तज्ज्ञात्वा न विकुर्वीत स्वस्वरूपं मनस्तथा„इति वचनात् उक्त पदार्थोनान्य इत्यर्थः ॥ १२ ॥

इदमपि मुक्तिसाधनमित्याह । सम इति । सुखे च दुःखेच समो निर्विकारःसमानाःस्वस्वयोग्यतानुसारेणउत्तममध्यमाधमाश्च यस्य स तथोक्तः समत्वे कारणमाह। जितेति रक्षायां किम्बल इत्यत उक्तं मयेति मया उपक्लृप्तः अखिलः पूर्णःसत्त्वगुणस्तेन संयुतः॥ १३ ॥

अपवर्गानुपयोगिप्रजापालनेन किमित्याशङ्क्येदमेव तव श्रेय इत्याह । श्रेय इति । सम्पराये मोक्षे प्रजाकृतसुकृताद्विभज्य षष्ठमंशं सुकृतं लभत इति यस्मात्तस्मादिति विपक्षे बाधकमाह । अत इति । अतोऽन्यथेत्यस्य विवरणमरक्षितेति„ दुःखेनोव्यसनं स्वघम„इति यादवः ॥ १४ ॥

गुरूपदिष्टज्ञानस्यैव मुक्तिहेतुत्वात्किं प्रजारक्षणेनेत्याशङ्क्य तेन ज्ञानोपदेष्टृसिद्धज्ञानिप्राप्तिस्ततः संविद्य प्राप्यत इत्याह । एवमिति ॥ १५ ॥

साक्षात्कृतो वैकुण्ठोऽपि कञ्चनवरं नादादिति लोकापवादं परिहरति । वरश्चेति । अपवादभीरुर्वरं वृणीष्वेति वाक्ति ननु तद्गुणलुब्ध इत्यत उक्तं तेऽहमिति मखादीनन्तरेण गुणशीलयन्त्रित इति किंविशिष्योच्यत इति तत्राह । नाहमिति । योगेनाष्टाङ्गलक्षणेन समं तत्तद्वस्तुयोग्यतानुसृतं वृत्तं वर्तनं येषां ते समवृत्ताः पुरुषास्तेषु वर्तितुं शीलमस्येति समवृत्तवर्ती यद्यस्मात्तस्मादहं तव मखादिना सुलभः स्यां किन्तु गुर्वादिषु संवृद्धभक्त्यैवेत्यर्थः ॥ १६ ॥

पृथुरात्मनि गुणग्राहित्वलक्षणं प्रकटयन् श्रीरमणोक्तमग्रहीदित्याह । स इत्थमिति । विश्वजित समस्तजेता ॥ १७ ॥

विष्वक्सेनेन श्रीहरिणोक्तं गृहीतमिति शृङ्गग्राहिक इव दर्शयतीत्याह । स्पृशन्तमिति । मनसा पृथुसन्निहितराजरूपिणां

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेः पादयोः स्पृशन् व्रीडितमसुरजनमोहाय लज्जास्वभावं दर्शयन्तमायासदुःखव्रीडादीन्प्रायशः सुखिनोऽपि तु । नियमाद्दर्षिभूपेषु मोहायादर्शयन् सुराः । इति वचनाद्व्रीडितत्वं तेनेत्यर्थः ॥१८॥

विष्णोः पृथौ प्रसादोद्रेकं दर्शयति । भगवानिति । विश्वात्मा पूर्णात्मा जगत्समस्तं विश्वं च निखिलं पूर्णमुच्यते इत्यभिधानाद्विश्वपदस्य पूर्णार्थत्वमेवाङ्गीकर्तव्यं नतु प्रपञ्चात्मत्वं तस्य बहुप्रमाणविरुद्धत्वात् चन्द्रोदये समुद्रवृद्धिवदनुदिनं समुज्जिहानया भक्त्येत्यनेन "अपक्वभक्तियुक्तायै न तेषां हरिदर्शनम् । प्रायो भवति दुःखस्य स्वभावः प्रायशो भवेत् । इति वचनात्साक्षात्कृतमधोक्षजं प्रत्यक्षं पश्यतः पृथोरपक्वभक्तियुक्तेभ्योऽप्युत्तमत्वं दर्शयन् तत्साक्षात्कारं भक्तेरेव प्रयोजकत्वात्तच्छृङ्खलया कीलितत्वान्मद्बन्धने सैव सम्पादनीयेति सूचयति ॥ १९ ॥

यात्रा प्रयाणं प्रस्थानमित्यभिधानम् ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

केवलमेव दर्शयति । उदासीनमिति । अध्यक्षमिव स्थितमप्युदासीनं यो वेदेत्यन्वयः अभयं मोक्षमिति सम्बन्धोक्तिः सोऽभयमिति चित्सुखः शोभनमिति गौडीयः पाठः ॥ ११ ॥

अथ भक्तिपक्षेणापि तं सान्त्वयति । भिन्नस्येति ॥ १२ ॥

अथ कर्त्तव्यमुपदिशति । सम इति लोकेत्यत्र सत्त्वेति चित्सुखः । ॥ १३ ॥ १४ ॥

उत्तरकाले तस्य स्वभक्तिनिष्ठां स्वभक्तेषु विख्यापयितुमिच्छया अन्येषु ज्ञानादिप्रवर्त्तनेच्छया च तस्य कर्त्तव्यं सूचयति । एवमिति ॥ १५ ॥

सम्प्रत्यपि पूर्व्वेच्छयाह। वरञ्चेति । गुणशीले अत्र भक्त्युत्थे एव ज्ञेये । तत्र गुणाः गुरूपसत्तिप्राप्ताः पाण्डित्यादयः । शीलन्तु सुस्वभावो विनयादिः समत्वञ्च नारायणपराः सर्व्वे इत्यादि रीत्या तदुत्थमेव नतु योगाद्युत्थानि तानि । न रोधयति मां योग इत्यादेः ॥ १६ ॥

तदेवं श्रीभगवत आदेशत्रयं जातमिन्द्रेण प्रीतिः सिद्धानुगमनं यात्रास्वीकारश्चेति । तदेव त्रयमपि स्वीचकारेत्याह। स इत्थमिति । तत्रान्तिमद्वयं स्वानुकूलेन प्रकारविशेषेण प्रथमन्तु यथावदेव स्वीचकारेत्याह । स्पृशन्तमिति । प्रेम्णेति । परमं प्रेमास्पदत्वेन श्रीभगवता स्वयं मेलितत्वादिति भावः ॥ १७-२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सम्यग्दर्शनमेवाह । द्रव्यज्ञानक्रियात्मनामधिभूताधिदैवाध्यात्ममनसाम् अध्यक्षं जीवात्मानमुदासीनमिव तेष्वनासक्तमिव यो वेद । स इमं कूटस्थमात्मानं वेद यः परमात्मानं वेद स अभयं प्राप्नोतीत्यावृत्त्यान्वयः । अनेनप्रकारेण सम्यगुदासीनत्वाभावेऽपि साधनदशायां ज्ञानोत्सार्द्धं सूचयति ॥ ११ ॥

ननु द्रव्यादीनामध्यक्षत्वेऽपि जीवस्य तेष्वौदासीन्यमात्रएव कथं संसाराभाव इत्यत आह । भिन्नस्य जीवादन्यस्य लिङ्गदेहस्यैव गुणप्रवाहः संसारः भिन्नत्वे हेतुः द्रव्याद्यात्मकस्य अधिभूताध्यात्माधिदैवबुद्ध्यादि स्वरूपस्य अयमर्थः । लिङ्गदेहस्य खल्वभिमानेनैव जीवस्य संसारो नत्वौदासीन्येनेति तत्राध्यक्षत्वेऽपि न जीवस्य क्षतिः लिङ्गस्यापि तदेवालिङ्गत्वमिति। एवं च यः स्वधर्मं[...]दिना भक्तिमिश्रेण ज्ञानेन यतमानानां संसाराभावमुक्त्वा केवा[...] केवलयैव भक्त्या जरयत्याशु या कोशं निगीर्णमनलो य[...] न्यायेन संसारनिवृत्तये यतमानानामपि संसाराभावमाह । [...]ष्विति । आसक्त्यभावात् प्राकृतसम्पद्विपदोर्नविक्रियन्ते आस[...] भावे हेतुः । मयि वद्धेति सौहृदयद्वस्तु केवलयैव भक्त्या भ[...]त्युपपादितं तृतीयस्कन्धे ॥ १२ ॥

त्वञ्च मयि बद्धसौहृद इत्यतो मन्निदेश एव वर्तस्वेत्याह । [...] इति चतुर्भिः । प्राकृतसम्पद्विपदोः समबुद्धिः । समानाः सत्त्वा[...] गुणैरुत्तममध्यमाधमा यस्य सः । मयेश्वरेणोपक्लृप्ताः सम्पादि[...] येऽखिललोका अमात्यादयस्तैः संयुतः । ईश्वरदत्तैश्वर्योऽहमि[...] राज्ञापालनरूपं प्रजारक्षणं करोमीति बुद्ध्येत्यर्थः ॥ १३ ॥

अन्यस्यापि राज्ञः प्रजापालनमेव धर्म इत्याह । सांपराये[...] लोके प्रजानां सुकृतात् हर्ता ग्रहीता ॥१४॥

द्विजार्य्यैः शास्त्राभिज्ञैर्विप्रैरनुमतोऽथचानुवृत्तः परम्पराप्रा[...] धर्म एव प्रधानं यस्य सः । अन्यतमस्तत्रानासक्त ऐकपद्य[...] कर्मधारयः अस्याः पृथिव्याः ॥ १५ ॥

अत्यनुकम्पाविगतगाम्भीर्यं आह । वरञ्चेति । गुणशीला[...] यन्त्रितो वशीकृतः प्राकृताभ्यां ताभ्यां वशीकारासम्भवादप्रा[...] ते भक्त्युत्थे एव ज्ञेये गुणो दयाक्षमादिः । शीलं विनयस्नेहा[...] मयः स्वभावः । नाहमिति । न रोधयति मां योग इत्य[...] यद्यस्मात् समं तुल्यमेव सर्व्वेषां चित्तवर्त्ती चित्ताधिष्ठा[...] सर्वत्रोदासीन एव नतु कस्यापि वश्य इत्यर्थः ॥ १६ ॥ १७ ॥

स्वेनाश्वापहरणेन ॥ १८ ॥

समुज्जिहानया सम्यगुद्यन्त्या प्रतिक्षणं वर्द्धमानयेत्यर्थः ए[...] पृथुम् ॥ १९ ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं भूतद्रोहादिरहितानां मुमुक्षूणां साधनसम्पत्त्या मुक्ति[...] मुक्त्वा अथ साधनकालेऽपि आत्मानात्मविवेकेवलाज्जन्ममरण[...] रहितत्वं संपाद्विपद्योगे हर्षशोकरहितत्वं चाह । उदासीन[...] द्वाभ्याम् । द्रव्यज्ञानक्रियात्मनां देहावयवानां पञ्चभूतज्ञानकर्मेन्द्रि[...] नसामध्यक्षम् तेभ्यो विलक्षणमित्यर्थः उदासीनम् इहा[...] निर्विषयाम् भजनानन्दतृप्तत्वादनुदासीनमपीतीवशब्दार्थः कू[...] निर्विकारमिममात्मानं यो वेद स शोभनं जन्ममरणादिभया[...] वम् आप्नोति ॥ ११ ॥

यतो भिन्नस्य जीवादन्यस्य द्रव्याणि क्रिया कर्मेन्द्रियाणि क[...] काणि ज्ञानेन्द्रियाणि चेतना बुद्धिः एतदात्मकस्य लिङ्गस्य [...] जीवोऽस्तीति जीवात्मज्ञापकस्य देहस्य गुणप्रवाहः सत्त्वादिगुण[...] मितो देवादिजन्ममरणप्रवाहो नतु जीवात्मनः अतः शोभनं प्र[...] तीत्यन्वयः अत एव संपत्सु च दृष्टासूपस्थितासु मयि बद्धसौहृ[...] न विक्रियन्ते हर्षशोकाभ्यां न युज्यन्ते ॥ १२ ॥

अथ विशेषतः श्रीपृथुं प्रत्याह। सम इत्यादि। समानाः उत्तमा[...] यस्य सः सुखे दुःखे च समः मयोपक्लृप्तैरुपयोजितैरखिलै[...] मात्यादिभिः संयुतः अखिललोकानां रक्षणं विधत्स्व ॥ १३ ॥

यद्यतो राजा लोकरक्षणात् सांपराये परलोके प्रजाभिः कृ[...] कृतात् षष्ठमंशं हर्ता हरति अन्यथा विपक्षे करहारः सन् प्रजा[...] तपुण्यः प्रजानामघमारी अतः राज्ञः प्रजापालनमेव श्रेयः ॥१[...]

स आदिराजो रचिताञ्जलिर्हरिं विलोकितुं नाशकदश्रुलोचनः ।
न किंचनोवाच स बाष्पविक्लवो हृदोपगुह्यामुमधादवस्थितः ॥ २१ ॥
अथावमृज्याश्रुकला विलोकयन्न तृप्तदृग्गोचरमाह पूरुषम् ।
पदा स्पृशन्तं क्षितिमंस उन्नते विन्यस्तहस्ताग्रमुरङ्गविद्विषः ॥ २२ ॥

पृथुरुवाच ॥

वरान् विभो ! त्वद्वरदेश्वराद्बुधः कथं वृणीते गुणविक्रियात्मनाम् ।
ये नारकाणामपि सन्ति देहिनां तानीश ! कैवल्यपते ! वृणे न च ॥ २३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रथमस्याः प्रजायाः अविता द्विजाभ्यानुमतः विप्रसंमतश्चासावनुवृत्तः संप्रदायागतो यो धर्मस्तत्प्रधानावन्यतमाचर्थकामौ यस्य अनुरक्ता लोका यस्मिन् सः त्वं गृहोपयातान् सिद्धान् सनत्कुमारान् द्रक्ष्यसि ॥ १५ ॥

हेमानवेन्द्र मन्मत्तः कश्चन वरं वृणीष्व यतोऽहं ते गुणाः समचित्तत्वं शीलं विष्णुप्रावण्यं ताभ्यां गुणशीलाभ्यां यन्त्रितः वशीकृतः यतोऽहं मखादिभिर्न सुलभः किन्तु समचित्तवर्ती समचित्तेषु वर्तनशीलः ॥ १६—१७ ॥

पादयोः स्पृशन्तं क्षमापयितुं चरणस्पर्शं कुर्वन्तं कर्मणाभ्वापहरणापायडप्रवर्तनात्मकेन परिष्वज्यालिङ्ग्य विद्वेषं विससर्जेत्यकवान् ॥ १८ ॥

उपहृताहंणः समर्पितपूजार्होपायनः समुज्जिहानया समृद्धया ॥ १९ ॥

अनुग्रहेण विलम्बितः ॥ २० ॥

---

भाषाटीका ॥

उदासीन होकर के देह ज्ञानेन्द्रिय कर्मेन्द्रिय मन इनका प्रेरक रूप से स्थित निर्विकार स्वरूप जो पुरुष आत्माको जानता है सो कल्याण को प्राप्त होता है ॥ ११ ॥

पृथक् देह को गुणों के हेतु से प्रवाह रूप संसार होता है पृथक् भिन्न क्यों है कि पंचभूत ज्ञानेन्द्रिय कर्मेन्द्रिय देवता बुद्धि इनों से संयुक्त है इसी हेतुसे ज्ञानी पुरुष मेरे मे दृढ भाव होने से संपत्ति या विपत्ति के देखने पर भी विकार को नहीं प्राप्त होते हैं ॥ १२ ॥

तुम सम दृष्टि वाले हो कर उत्तम मध्यम अधम तीनों को समान मान कर सुख दुःख मे भी सम हो कर इंद्रिय तथा अंतःकरण इन को जीत कर मेरे बनाये जो मंत्रि आदि लोक इनों से संयुक्त हो कर हे वीर सब जगत् का रक्षा करो ॥ १३ ॥

राजा का तो प्रजा पालन करना ही धर्म है जिस से कि पर लोक मे प्रजा पालन अच्छे करने से पुण्य मे से छठवां भाग मिलता है यदि ऐसा न करे तो प्रजा की रक्षा न करने से पुण्य नष्ट होजाता है फिरकर लेने वाला राजा पापके फलको भोगता है ॥ १४ ॥

इस प्रकार से ब्राह्मणों के आज्ञा से उन का अनुवर्तन कर के धर्म को प्रधान मान कर सब से श्रेष्ठ हो कर इस भूमी के रक्षक हो कर थोड़े दिनों मे लोगों को प्रसन्न करते रहो तो आप घर ही मे आये हुये सनत्कुमारादि सिद्धों को देखो गे ॥ १५ ॥

हे मानवेंद्र ! हम यज्ञों से वा तपस्या से योग से सुलभ नहीं हैं जिससे कि हम सम चित्त वालों के हृदय में रहते हैं तब तुम्हारे शील गुणों से हम बंधगये हैं तो हम से तुम कोई वर मांगो ॥ १६ ॥

मैत्रेयजी बोले उपदेष्टा विश्वक्सेन भगवान् की जब ऐसी आज्ञा भई तब भगवान् की आज्ञा को महराज ने मस्तक से धारण किया ॥ १७ ॥

प्रेम से चरण स्पर्श करते हुये अपने घोडा हरण से लज्जित जो इंद्र उनका आलिंगन करके वैर को छोड दिया ॥ १८ ॥

इसके अनंतर विश्वस्वरूप भगवान्, अत्यंत बढी हुई भक्ति से पूजा समर्पण करके जब पृथु महाराज ने चरण पकड़ लिये तब जाने की तैयारी मे थे तौभी उन के ऊपर अनुग्रह होने से रुक गये आप सत्पुरुषों के विपत् बंधु हैं तिस से कमल से नेत्रों को प्रकाश कर के देखने लगे ॥ १९ ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भगवतस्तत्कृपातिरेकमुक्त्वा तस्य भक्त्युद्रेकमाह । स इति द्वाभ्याम् । बाष्पविक्लवत्वेन तूष्णीमवस्थितः सन् अमुं हरिं हृदोपगुह्याधात् धृतवान् ॥ २१ ॥

अतृप्तयोर्दृशोर्गोचरं विषयभूतम् । पदा क्षितिं स्पृशन्तमिति।अयं भावः । न खलु देवाः पदा भुवं स्पृशन्ति अतः कृपापरवशो हरिः नूनमात्मानं विस्मृतवानिवेति अतएव स्खलनपरिहारायेव गरुडस्योन्नते स्कन्धे विन्यस्तं हस्ताग्रं येन तम् ॥ २२ ॥

वरं वृणीष्वेति यदुक्तं तदसद्मान आह । हे विभो ! वरदानां ब्रह्मादीनामीश्वरात् वरप्रदात् त्वत् त्वत्तः सकाशात् बुधः कथं वरान् वृणीते । कीदृशान् । गुणैर्विक्रियत इति गुणविक्रियोऽहङ्कार स एव आत्मा येषां तेषां ब्रह्मादीनां सम्बन्धिनः देहाभिमानिनां भोग्यानिति वा । तथा चेद् बुध एव न भवतीत्यर्थः । जुगुप्सितत्वादपीत्याह । य इति । बुध एवाहमपि न वृणे इति समुच्चयाय चकारः ॥ २३ ॥

न कामये नाथ ! तदप्यहं क्वचिन्न यत्र युष्मच्चरणाम्बुजासवः ।
महत्तमान्तर्हृदयान्मुखच्युतो विधत्स्व कर्णायुतमेष मे वरः ॥ २४ ॥
स उत्तमश्लोकमहन्मुखच्युतो भवत्पदाम्भोजसुधाकणानिलः ।
स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः ॥ २५ ॥
यशः शिवं सुश्रव ! आर्यसंगमे यदृच्छया चोपशृणोति ते सकृत् ।
कथं गुणज्ञो विरमेद्विना पशुं श्रीर्यत्प्रवव्रे गुणसंग्रहेच्छया ॥ २६ ॥
अथाभजे त्वाखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः ।
अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात्कृतत्वच्चरणैकतानयोः ॥ २७ ॥
* जगज्जनन्यां जगदीश ! वैशसं स्यादेव यत्कर्मणि नः समीहितम् ।
करोति फल्ग्वप्युरुदीनवत्सलः स्व एव धिष्ण्येऽभिरतस्य किन्तया ॥ २८ ॥
भजन्त्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम् ।
भवत्पदानुस्मरणादृते सतां निमित्तमन्यद्भगवन्न विद्महे ॥ २९ ॥
मन्ये गिरं ते जगतां विमोहिनीं वरं वृणीष्वेति भजन्तमात्थ यत् ।
वाचा नु तन्त्या यदि ते जनोऽसितः कथं पुनः कर्म करोति मोहितः ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कैवल्यपत इति सम्बोधनात् कैवल्यं वरिष्यतीति मा शङ्कीरित्याह । नेति । महत्तमानामन्तर्हृदयान्मुखद्वारेण निर्गतो भवत्पदाम्भोजमकरन्दो यशः श्रवणादिसुखं यत्र नास्ति तादृशं चेत् कैवल्यं तर्हि तत् क्वचित् कदाचिदपि न कामये । तर्हि किं कामयसे तदाह । यशः श्रवणाय कर्णानामयुतं विधत्स्व । ननु कोऽप्येवं न वृतवान् किमन्यचिन्तयेत्याह । मम त्वेष एव वर इति ॥ २४ ॥

ननु तर्हि कैवल्याभावे रागद्वेषाद्याकुलानां भक्तिसुखमपि न स्यादित्याशङ्क्याह । स इति । भवत्पदाम्भोजसुधायाः कणो लेशः तत्सम्बन्धी योऽनिलः स एव दूरादपि किञ्चिद्यशःश्रवणमात्रमित्यर्थः । विस्मृतं तत्त्ववर्त्म यैः कुयोगिभिः तेषामपि पुनः स्मृतिमात्मध्यानं वितरति । अतो न खलु भक्तानां रागादिसम्भवः । अतो नोऽस्माकं सारग्राहिणामन्यैर्वरैरलम् । भक्तावेव मोक्षादिसर्वसुखान्तर्भावादिति भावः ॥ २५ ॥

ननु भक्तिर्मुक्तिफलैवातः फलं विहाय साधने भवतः कोऽयमाग्रह इत्याशङ्क्याह हे सुश्रवः ! मङ्गलकीर्ते! ते शिवं यशः सतां सङ्गमे यः सकृदपि यदृच्छयाप्युपशृणोति गुणज्ञश्चेत्स पशुं विनान्यः कथं विरमेत् गुणातिशयं सूचयति । श्रीर्यद्यश एव प्रकर्षेण वृतवती गुणानां सर्वपुरुषार्थानां संग्रहः स्वास्मिन् समाहारस्तदिच्छया ॥ २६ ॥

अतो लक्ष्मीरिवान्यवरत्यागेन त्वामेवाहं भज इत्याह । अथेति । लालस उत्सुकः सन् कर्मणि क्रियमाणे यथेन्द्रेण सह कलिरेवं भक्तावपि किं लक्ष्म्या सह कलिः स्यादिति वितर्कयति एकस्मिन् पत्यौ स्पर्धमानयोरावयोरपि किं कलिर्नस्यादिति काका वितर्कः ननु पर्यायेण सेवायां न स्यात् नैवम् कृतस्त्वच्चरणयोरेवैकस्तानो मनो विस्तारो याभ्यां तयोः ॥ २७ ॥

भवतु वा कलिस्तथापि भजेयमेवेत्याह । जगज्जनन्यां वैशसं विरोधः स्यादेव तत्र हेतुर्यस्याः कर्मणि नः समीहितमिच्छा भवति तथापीन्द्राविरोधे मत्पक्षपातवदत्रापि तव पक्षपात एव स्यादित्याह फल्गु तुच्छमप्युरु बहु करोषि यतो दीनेषु वत्सलो दयावान् स्वे स्वरूप एव रतस्य तया किं प्रयोजनम् तां नाद्रियस इत्यर्थः ॥ २८ ॥

यतस्त्वं दीनवत्सलोऽतएव साधवो निष्कामा अथ ज्ञानानन्तरमपि त्वां भजन्ति कथंभूतम् मायागुणानां विभ्रमो विलासस्तस्योदयः कार्यं स निरस्तो यस्मिंस्तम् ते किमर्थं भजन्ति तत्राह भवत्पदानुस्मरणाद्विनान्यत्तेषां निमित्तं फलं न विद्मः ॥ २९ ॥

वरैः प्रलोभनञ्च कृपालोस्तवानुचितमित्याशयेनाह । मन्ये नु अहो ते वाचा तन्त्या यदि जनोऽयमसितोऽबद्धः स्यात्तर्हि पुनः फलैर्मोहितः सन् कथं कर्म करोति ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं भगवतो भक्ते वृथौ कृपातिरेक उक्तः पृथोर्भगवति भक्त्युद्रेकमाह । स इति द्वाभ्याम् । स आदिराजः पृथुः बद्धाञ्जलिरानन्दाश्रुपूर्णलोचनः अत एव हरिमवलोकितुं नाशकत् न समर्थोऽभूत् बाष्पैर्विक्लवः अधृष्टस्तूष्णीमवस्थितः सन् किञ्चिदपि नोवाच एवं तु असुं हरिं हृदा उपगुह्य आवृत्य संश्लिष्य आलिङ्ग्येति यावत् अधात् धृतवान् ॥ २१ ॥

अथानन्तरमश्रुकला अश्रुकणान् हस्तेनापमृज्य अतृप्तं दृशोर्गोचरं विषयभूतं पदा चरणेन क्षितिं भूमिं स्पृशन्तं अयं भावः न खलु देवाः पदा भुवं स्पृशन्ति अतः कृपापारवश्यान्नूनं हरिरात्मानं विस्मृतवानिर्वात उरङ्गद्विषो वैनतेयस्य उन्नते अंसे स्कन्धे विन्यस्तं हस्ताग्रं येन तं पुरुषं परमपुरुषमाह उवाच ॥ २२ ॥

तत्र यदुक्तं वरं वृणीष्वेति तदसहमान आह । हे विभो! वरदानां ब्रह्मादीनामीश्वराद्वरदात्त्वत्तः सकाशात् बुधः अर्थकाम

* जगज्जगत्यामिति श्रीवीरराघवविजयध्वजतीर्थौ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दीनां सातिशयत्वं नश्वरत्वं च जानन् वरान् वृणीते कीदृशान् ये वरा गुणविक्रियात्मनां सत्त्वादिगुणानुसारेण विक्रिया विकाराः यस्मिन्नात्मनि स्वभावे स आत्मा स्वभावो येषां नारकाणां संसारिणामपि देहिनां सन्ति तेषामपि भोग्या इत्यर्थः तस्मात् हेकैवल्यपते ! मुक्त्यधिपते मुक्तिप्रदेत्यर्थः हेईश ! सर्यान्तर तान् क्षुद्रान् न वृणे ॥ २३ ॥

तर्हि कैवल्यमेव वरय तत्राह । नेति । हेनाथ ! महत्तमानां भागवतानामन्तर्हृदयान्मुखद्वारेण निर्गतो भगवत्पदाम्बुजमकरन्दो यशः श्रवणादिसुखं यत्र नास्ति तादृशं चेत् कैवल्यमपि तत्र कामये न वृणे तर्हि किं कामयसे तत्राह । त्वद्गुणश्रवणाय मे मह्यं कर्णायुतं कर्णानामयुतम् अयुतशब्द आनन्त्यपरः गुणानामानन्त्यादनन्तगुणश्रवणार्थमनन्तश्रोत्राणि विधत्स्व देहि एष एव ममाभिमतो वर इत्यर्थः ॥ २४ ॥

किं मद्गुणश्रवणसाध्यं यदर्थं कर्णायुतं प्रार्थयसे तत्राह । स इति । हेउत्तमश्लोक! महतां त्वद्भक्तानां मुखाच्च्युतः सः भवतः पदाम्भोजयोर्या सुधा तस्या यो लेशः तत्सम्बन्धी योऽनिलो वायुः दूरादपि किञ्चिद्यशःश्रवणमात्रमित्यर्थः विस्मृतं तत्त्ववर्त्म तत्त्वमार्गः यैः कुयोगिभिस्तेषामपि नः अस्माकं त्वद्विषयां स्मृतिं भक्तिं वितरति ददाति अतो वरैः पुरुषार्थान्तरसाधनभूतैरलम् ॥ २५ ॥

त्वद्विषयभक्तिवर्द्धकत्वात्त्वद्गुणश्रवणस्य यदृच्छयापि त्वद्गुणानेव शृणुयामित्याह । यश इति । हेसुश्रवः ! शोभनकीर्ते ! सतां सङ्गमे सति सकृदपि यदृच्छयापि ते तव यशः कीर्तिमेव परं शृणोमि सकृदपि यदृच्छयापीत्यनेन असकृदत्यादरेण यशसः श्रोतव्यता सूच्यते तदुपपादयति यः कश्चित् पुमान् गुणज्ञः सारग्राही चेत् पशुं कर्मजडमृते कथं विरमेत्त्वद्गुणानुश्रवणादिति शेषः अगुणज्ञः पशुश्चेत्त्वद्यशः सकृदाश्रुत्य ततो विरमेदित्यर्थः गुणज्ञस्याविरामं सदृष्टान्तमुपपादयति यत् यस्मात् श्रीर्लक्ष्मीर्गुणानां भवदीयकल्याणगुणानां सङ्ग्रहेच्छया संस्मरणेच्छया प्रवव्रे त्वामिति शेषः यद्वा गुणानां सर्वपुरुषार्थानां संग्रहः स्वस्मिन्समाहारस्तदिच्छया त्वद्यशः प्रवव्रे नितरां वृतवती ॥ २६ ॥

अतो लक्ष्मीरिवान्यपरित्यागेन त्वामेवाहं भजामीत्याह। अथेति। हे भगवन् ! अखिलपुरुषोत्तममखिलेभ्योबद्धमुक्तनित्येभ्यः पुरुषेभ्यः उत्तमं "पञ्चमीभयेन„इत्यत्र पञ्चमीति योगविभागात् समासः अनेन जीवानामभजनीयत्वं विवक्षितमखिलपुरुषोत्तमत्वे हेतुः गुणालयं त्रिविधेष्वपि चेतनेष्वसंभावितनित्यनिरुपाधिकानन्याधीनसर्वज्ञत्वसर्वशक्तित्वसर्वकारणत्वसत्यज्ञानानन्तत्वादिकल्याणगुणाश्रयं त्वामेव पद्मकरेव लक्ष्मीरिव लालसः अभजं भजेयमित्यर्थः ननु द्वयोरपि मां भजमानयोरिन्द्रेण सहेव तव कलहः स्यात्तत्राह एकपतिस्पृधोः एकस्मिन् पत्यौ स्पर्द्धमानयोः एकभर्तृश्रद्धावतोरिति यावत् आवयोः लक्ष्म्या मम च कलिः कलहो न स्यात् असंभावितः असंभवमेवोपपादयति त्वच्चरणैकतानयोः त्वच्चरणयोरेकतानो मनस ऐकाग्र्येण वृत्तिर्ययोस्तयोः आवयोः तत्कलिरित्येतत् क न भवेदेवेत्यर्थः विषयस्यापरिच्छिन्नत्वादिति भावः ॥ २७ ॥

भवतु नाम कलिस्तथापि भजेयमित्याह । हे जगदीश ! जगज्जनन्यां जगन्मातरि लक्ष्म्यां वैशसं विरोधः स्यादेव तत्र हेतुः यस्याः कर्मणि नः समीहितमिच्छा भवति तथापीन्द्रविरोधेऽपि मत्पक्षपातवत् अत्रापि वः पक्षपातश्च स्यादित्याह । फल्गु तुच्छमपि उरु बहु करोषि यतो दीनेषु वत्सलः स्व एव धिष्ण्ये स्वस्वरूप एवाभिरतस्य तव तया जगज्जनन्या किं प्रयोजनं तां नाद्रियस इत्यर्थः यद्वा नन्वेतावन्तं कालं कर्म फलासङ्गेनानुष्ठितमधुना फलासङ्गाभावेऽप्यवश्यं मां भजतोऽप्यैहिकं फलं दास्यत्येव तत्राह। जगज्जनन्यामिति । हेजगदीश ! कर्मणि यज्ञादौ जगज्जनन्या प्रकृत्या यन्नः अस्माकं समीहितं फलं तद्वैशसमनर्थरूपं फलं संसाराभिप्रायेण वैशसमित्युक्तं स्यादेव प्राकृतं फलं स्यादेवेत्यर्थः किन्तु फल्गु अपि प्राकृतफलसाधनत्वेन तुच्छमपि यज्ञादिकर्म उरु करोषि तस्मिन् स्वाराधनैकवेषतामापाद्य स्वविषयभक्त्युत्पादनद्वारानन्तस्थिरमुक्तिफलसाधनतासम्पादनेनोरु करोषीत्यर्थः यतो भवान् दीनवत्सलः दोषादर्शी अयम्भावः यद्यप्यनादिप्रकृतिसम्बन्धात् यज्ञादिकर्मणां त्वदाराधनरूपतामजानन्तः पशुपुत्रपुत्रस्वर्गाद्यैहिकामुष्मिकफलसाधनतामापाततश्चोदनाभ्यः प्रतिपन्नामवबुध्य कर्माण्यनुतिष्ठामः तथापि त्वं दीनेषु दासेषु दोषादर्शी फल्गुफलाशां निवर्त्यानन्तस्थिरफलसाधनतामेव निष्पादयसीति जगज्जगत्यामिति पाठे प्राणिपूर्णभुवन इत्यर्थः फल्गुत्वमेवोपपादयति स्व एव धिष्ण्ये स्वस्वरूप एवाभिरतस्य स्वात्मारामस्येत्यर्थः तया जनन्या किं प्रयोजनं स्वात्मारामस्य प्राकृतं फलं किमपि न भवति अतिक्षुद्रमित्यर्थः स्वात्मारामस्य जगज्जगत्यां फल्गु परलोकप्राप्तिरित्यर्थः ॥ २८ ॥

एवमैश्वर्यान्तरेभ्य आत्मानुभवस्यातिशय उक्तः ततोऽपि भगवदनुभवस्यातिशयत्वं सूचयन् स्वात्मानुभवपूर्वकभक्तियोगस्य कर्तव्यतां सोदाहरणमाह । भजन्तीति । अत एव केवलकर्मणां फल्गुत्वादेव साधवो निष्कामा अथ प्रत्यगात्मतया याथात्म्यज्ञानानन्तरं त्वां भजन्ति कथंभूतं व्युदस्तमायागुणविभ्रमोदयं मायाया ये गुणा रजस्तम आदयः तन्मूलको यो भ्रमः देहात्मभ्रमः स्वतन्त्रात्मभ्रमश्च तस्य य उदयः उद्रेकः व्युदस्तः निरस्तः मायागुणविभ्रमोदयो येन तं संश्रितमायागुणभ्रमनिरासकमित्यर्थः निरतिशयानन्दरूपमात्मानुभवं लब्ध्वापि किमर्थं मां भजन्ते तत्राह । हेभगवन् ! सतां भवत्पदानुस्मरणात् ऋते त्वत्पदाम्बुजस्मरणं विना अन्यदभिमतं फलं न विद्महे नित्यनिरतिशयानन्तानन्दरूपे त्वच्चरणस्मरणसमुद्रे विप्रुडिव केवलस्यात्मानुभवोऽप्यतितुच्छ इति भावः ॥२९॥

वरैः प्रलोभनं कृपालोस्तवानुचितमित्याशयेनाह । मन्य इति । त्वां भजन्तं मां वरं वृणीष्वेति यदात्थ अवोचः तां ते तव गिरं जगतां विमोहिनीं मिषमिश्रपयःपानप्रलोभनवाक्यतुल्यां मन्ये त्वद्भजनात्प्राप्तसंसाराणां दैवात्त्वद्भजने सति पुनस्तेषां वरप्रलोभनैः संसारहेतुमेवापादयसि भक्तानुग्रहैकशीलस्य दयालोस्तव तद्विग्रहोऽनुचित इतिभावः नु अहो ते तव तस्या वामतुल्यया वन्ध्यया वाचा "अपामसोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति„इत्यादिकया यामिमां पुष्पितां वाचमितिस्वर्गविषया वेदगिरा जनो लोकः यदि असितः अबद्धः स्यात् विजृम्भते आपाततः प्रतिपन्नफलाशानिर्मुक्तो मुमुक्षुः स्यादित्यर्थः तर्हि कथं पुनः फलैर्मोहितः सन् कर्म प्रवृत्तिधर्मं करोतीत्यर्थः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न केवलं पृथोर्भक्त्युद्रेक आन्तरः । अपितु बाह्योऽपि दृश्यत इति भावेनाह । स आदिराज इति । चक्षुर्बाह्यव्यवहारोपरमेण पुनः किमकारीति तत्राह । हृदेति ॥ २१ ॥

किमनया तूष्णीं व्यवस्थित्या द्रष्टुस्तन्द्रीहेतुभूतयेति निरूप्य हर्युक्तस्योत्तरं वक्तुमुपक्रमते। अथेति। अश्रुकणान्नेत्रजलबिन्दून् अतृप्तयोरलंबुद्धिमप्राप्तयोर्दर्शनगोचरं विषयमुरगविद्विषः गरुडस्य ॥ २२ ॥

भगवदादिष्टं चेत्पृथुना गृहीतमथ तदुक्तेषु कस्योत्तरत्वेन वक्तव्यमस्यास्तीति न पश्याम्यन्यदतः किमाहेति तत्राह । वरानिति। जातावेकवचनमिति न्यायेन वरं वृणीष्वेत्युक्तं तत्र वरयन्वेनाभिमताः किमैहिका उत पारत्रिका आद्ये स्रक्चन्दनवनितादयो यदि तर्हि तत्रापि वदामीत्याह । वरानिति । सुखभत्वाद्वरणीया न भवन्तीत्याह । गुणेति । गुणेषु विषयेषु विक्रिया विकारस्तेन युक्त आत्मा मनो येषां ते तथा तेषां नारकाणां नरकस्थानामपिशब्देन नरलोके किं वक्तव्यमिति सूचयति वैश्रवणात् पुलाकादानवत्कैवल्यपतेस्त्वद्देतादशवरादानं जुगुप्सितमित्यर्थः द्वितीयोऽप्यनेनैव प्रत्युक्तः स्वर्गसारूप्यादिलक्षणमोक्षभेदेन पारत्रिका अपि द्विधा भिद्यन्ते तत्र कैवल्येऽपि न ममाभिरुचिः किमुत स्वर्गादाविति ॥ २३ ॥

एवं तर्हि तव कोऽभिप्राय इत्यत आह । न कामय इति । क्वचिदित्यनेन पुरुषार्थमात्रमाक्षिपति तर्हि मया देयं नास्तीत्यत्राह महत्तमेति।महत्तमानामन्तर्हृदयान्मुखद्वारेण च्युतं निःसृतं कर्णयोरमृतं तच्चरितलक्षणं विधत्स्वेत्यन्वयः अनेन सर्वदैतत्तुभ्यमस्त्वितितत्र त्वदनुग्रहएव कारणमन्यथा न स्यादिति ध्वनयति अभीष्टं पूरयति एष इति ॥ २४ ॥

हस्तप्राप्तमणित्यागवत्कैवल्यादिपुरुषार्थत्यागेन तव किं फलितमिति तत्राह। स इति। हेउत्तमश्लोक ! महतां मुखद्वारेण च्युतः २५॥

ननु मत्कथा भवता बहुशोऽश्रावि अतोऽस्मादाग्रहाद्विरम्यान्यं वरं वरयेति चेत्तत्राह।यश इति हे सुश्रवः!शोभनकीर्ते आर्याणां त्वत्तत्त्वज्ञानां सङ्गमे यदृच्छया प्रसङ्गतः प्राप्तं तव यशः कथारूपेण ग्रथितं भक्त्या उपश्रृणोति स गुणज्ञः सारज्ञः पुरुषः पशुमश्नुते कथमस्माद्विरमेदित्यन्वयः तत्र हेतुः श्रीरिति गुणास्त्वावृत्तिस्ततसंग्रहेच्छया यद्यशः प्रवव्रे इति यस्मात्तस्मात् अनेन यशः श्रवणमात्रवृत्त्या क्रियते चेदानन्दाभिवृद्धिः स्यादिति सूच्यते 'गुणास्त्वावृत्तिशब्दादिर्ज्येन्द्रियामुख्यतन्तुषु,, इति यादवः ॥ २६ ॥

अथ तस्मादहन्त्वामभजम्भजामि । तथाप्येकमेव पतिं स्पर्धेते इत्येकपतिस्पृधौ तयोस्तवचरणैकतानयोस्त्वत्पदैकनिष्ठयोरावयोः कलिः कलहः कुतो न स्यात् अपि किं न स्यादेव ॥ २७ ॥

जन्तुस्वभावमपेक्ष्य कलिः स्यादिति शङ्का ननु भगवद्भक्तस्येत्यभिप्रेत्याह। जन्तोरिति। हेजगदीश ! अखण्डेश "जगत्समस्तं विश्वं च निखिलं पूर्णमुच्यते,, इति च जगत्यां राजप्रधानलोके विद्यमानस्य जन्तुसमूहस्य मिथो वैशसं हिंसालक्षणः कलहः स्यात् कलिस्वभावत्वात् । अत्रास्मद्विषये स न स्यान्निमित्ताभावादित्युक्तं यत्कर्मणीति नोऽस्माकं कर्मणि स्वत्पूजालक्षणे यत्समीहितं शुभलक्षणं चेष्टितं तत्फल्गु अल्पमपि उरु महत्करोषि । तत्र हेतुगर्भविशेषणमाह । दीनवत्सल इति । तत्राप्यल्पस्यापि शुभस्य फलप्रदानेन महत्त्वकरणं ननु परमाणुपरिमितस्य शुभस्य सुखपर्वतीकरणम् । तथा सति वैषम्यापातः स्यात् तस्य निर्दोषत्वाखम्भवादिति बोद्धव्यम् इतोऽपि कलिर्न स्यादित्याह। स्वएवात स्वस्वरूपभूते धिष्ण्ये महिम्न्येव "धिष्ण्यं तेजश्च सामर्थ्यं महिमा चोच्यते,, इत्यभिधानम् स्वसुखार्थमन्यापेक्षां विनाभिरतस्य वात्सल्यं विना तया श्रियापि किमत्रापि वात्सल्यमेव का येन येन भक्त्यतिशयः क्रियते तत्र तत्राधिकवात्सल्यं स्या तात्पर्यमवबोद्धव्यम् जगत्यां मूलप्रकृतौ श्रियां जन्तोरस्म वैशसं विषमबुद्धिलक्षणं स्यादेव । ननु पण्डितस्य कुतः यद्य नः कर्मणि श्रौतादिविषये वैशसं यत्संज्ञपनलक्षणं तत्समीची हितं भक्तिपूर्वकत्वात् अल्पपुण्यस्य तव न मद्भक्तियोग्यत्वम करोषीति।'यमेवैष वृणुते तेन लभ्य,,इति श्रुतेः भक्तिवशत्वद्यो फल्ग्वप्युरु करोपीत्युक्तमनेन हरौ भक्तिरवश्यं कर्तव्येति अन्यत्समिति भजनक्रियामपि न शक्नुमः कर्तुं त्वत्प्रसा रेकेणेत्याह । जगज्जगत्यामिति । जगता जङ्गमेनोपलक्षणमेतत् वरेणापि युक्तायां जगत्यां लोके । नोऽस्माभिः कर्मणि यत्समीहितं स्यात् तद्वैशसमेव हिंसारूपमेवात एव फल्गु फलं ततः स्वतश्च तृप्तये नालमित्यर्थः अथ भगवानुरु करोति अत्र हेतुगर्भविशेषणं हे दीनवत्सलेति हेत्वन्तरमाह। एवेति । परिपूर्णानन्दरूपेऽभिरतस्य तया भजनक्रियया किं वात्सल्यादुरु करोतीत्यर्थः अथवा अप्येकपतिस्पृधोः कलिः दिति सन्देहः कुतः पूर्वमधुना तव मयि पक्षपातात्कलिरित्या जगज्जगत्यामिति। जगतो जङ्गमस्थावरलक्षणस्य प्राणिसमूह जगत्याधार भूता मूलप्रकृतिर्लक्ष्मीस्तस्यां वैशसं पीडा स्यादेव जगदीश ! कुतः यद्यस्मादस्माकं कर्मणि श्रौतादौ फल करोति न तथा तया कृतं हे दीनवत्सल ! अथवा किमिदमाश्च मित्याह। स्व एवेति। तया श्रिया किं प्रयोजनं कामिनामुपकारि त्यर्थः जगज्जगत्यामित्येकपदेऽपि लक्ष्म्यामित्यर्थः अथवा अ हिंसारूपत्वात्तदन्तःपाती कथमहं त्वां भजामि त्वत्प्रसादं वि त्याह । जगदिति । हे जगदीश ! जगत्यां लोके यज्जगत्प्राणिसमू तद्वैशसमेव हिंसाप्रकृतिरेव । तथापि तदन्तःपातिभिरस्मा कर्मणि यत्समीहितं स्यात्तत्फल्गु हिंसारूपमप्युर्वहिंसारूप करोति भवान् हे दीनवत्सल ! किमर्थमेवं पक्षपातेन करो स्वे धिष्ण्येऽभिरतस्य तया अहिंसया तव किं केवलं मामुद्दु वेति भाव इति केचिद्व्याचक्षते तदसत् पदानां विवक्षितार्था वकत्वेन पाठसम्प्रदायाभावेन प्रमाणविरोधेन प्रेक्षावद्भिरुपेक्ष यत्वात्पूर्वापरविरोधाच्च लक्ष्म्या हरेर्भक्तेषु पक्षपातकथनस्य भवविरुद्धत्वाच्च ॥ २८ ॥

अस्मिन्नर्थे साधुसम्मतिमाह । भजन्तीति। (१)अथान्यद्वा न्नर्थे प्रमाणमस्तीति किन्तदिति तदुच्यते अत एव भक्तवा ल्यादेव साधवः सज्जनास्त्वां भजन्ति कं गुणमुपसंहर्तुं तत्रोक्तं व्युदस्तेति मायागुणानां विभ्रमोदयो विलासोदयो स निरस्तो येन स तथा तं संसारोच्छेदोऽपि न स्वत एवा त्यभिप्रेत्याह । भवत्पदेति । अन्यत्कर्मादिकम् ॥ २९ ॥

विमुक्तिमुख्यनिमित्तमङ्घ्रिस्मरणादन्यन्नास्तीति यद्यस्मात्त स्त्वजन्तं प्रतिवरं वृणीष्वेति वाणी जगन्मोहकरीत्याह । मन्ये गि मिति। तदुपपादयति। वाचेति"तस्येदं वाचा तन्त्या नामभिर्दा सर्वं सितम्,, इति श्रुतिः पिञ्यन्धने यद्यसितो बन्धनरहितस्त पुनः शश्वत्कथं कर्म करोतीत्यन्वयः ॥ ३० ॥

(१) अत्र अथ शब्दस्यानन्तर्याद्यर्थत्वे असङ्गतिमालोच्य स मर्थदर्शयति । अस्मिन् विषये ज्ञानिसम्मतिरूपमन्यच्च प्रमाण व्यनक्षात पक्षान्तरे अथशब्दः अत इत्यनेन परामृश्य हेतुं दर्श वात्सल्यादिति ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ सिद्धोपदेशस्वीकारे प्रकारविशेषं दर्शयिष्यते । वरेतु दर्शयंत। वरान् विभो इति। वरदानां ब्रह्मादीनामपीश्वरात् सर्वातिशयवरदायकादपि त्वत्त इत्यर्थः यो बुधः कथं वृणीते चकारादहमबुधोऽपि न वृणे इत्यर्थः ॥ २३ ॥

न कामय इति। कर्णायुतप्रार्थनमत्यासक्तितत्परम् ॥ २४ ॥

यदिच वयं न तादृशप्रार्थनाधिकारिणः गाढासक्त्यभावात् तथापि तच्छ्रवणमेव स्तादित्याह। स इति। तत्त्वमत्र तत्पदाम्भोजमेव मूलं तदनुगतत्वेन शुद्धात्मज्ञानञ्च ॥ २५ ॥

यतो यश इति। पशुं विना योऽन्यो गुणज्ञो मनुष्यमात्रः स कथं विरमेत् स मनुष्येष्वपि पशुः यो न विरमेत् स पशुष्वपि परमगुणज्ञ इत्यर्थः। गुणानां त्वदीयानां संग्रहेच्छया आत्मनि प्रतिसंक्रमितुमिच्छया ॥ २६ ॥

अथाभज इत्यादिद्वयं न खल्वस्य तत्कान्तभावाद्वासना जाता किन्तु भक्तिवासनैव दृष्टान्तस्त्वत्र तस्या भक्त्यंश एव। तथा स्पर्द्धातु तत्परमकृपोपलब्धत्वेन धीराख्यदास्यतां प्राप्तस्य नायोग्यमिति। अन्येत्वेवं मन्यन्ते तत् खलु तदीयदानविषयककृपासूचकसप्रेमवचनविनोदमात्रं नतु लक्ष्मीस्पर्द्धावहं करोमीत्यनेन स्वस्मिंस्तुच्छत्वमननात् अथवा अथाभज इति कलहाभाव एव योऽयं तत्र हेतुः त्वच्चरणेति जगज्जनन्यामिति तु कलहे ॥ २७ ॥ २

अनघेति। दीनवात्सल्यमेव मुख्यमुद्दीपनमित्यर्थः साधवः प्रोज्झितकैतवाः तदेवावधारयति। भवादिति। ऋते इत्युक्त्वाप्य न्यदित्युक्तिरवधारणार्था ॥ २९—३० ॥ ३१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भगवतः कृपातिरेकमुक्त्वा तस्य पृथोर्भक्त्यतिशयमाह। स इति ॥ २१ ॥

भवत्पदयोर्दृशोर्गोचरं विषयभूतं पदा क्षितिं स्पृशन्तमित्यत्र भावः श्रीस्वामिचरणैर्व्याख्यातो यथा न खलु देवाः पदा भुवं स्पृशन्ति अतः कृपापरवशो हरिर्नूनमात्मानं विस्मृतवानिव। अतएव स्खलनपरिहाराय गरुडस्योन्नते स्कन्धे विन्यस्तं हस्ताग्रं येन तमिति ॥ २२ ॥

वरं वृणीष्वेत्यस्योत्तरमाह। वरान् बुधः कथं वृणीते किन्त्वबुध एवेत्यर्थः तत्रापि गुणैर्विक्रिया विकारो यस्य तथा भूत आत्मा मनो येषां कर्म्मिणां सम्बन्धिनः स्वर्गादीनित्यर्थः कैवल्यपते इति। कैवल्यकामोऽपि यान् न वृणीते तानहं कैवल्यनामाप्यसहिष्णुः कथं वृणे इति भावः ॥ २३ ॥

किम्वा कैवल्यपते इति। सम्बोधनात् कैवल्यं वरिष्यतीति माशङ्किष्ठाः किन्तु कैवल्यमपि येभ्य एव रोचते तेभ्य एव तदीयतामित्यभिप्रायेणैव तु मया तच्छब्देनामन्त्रितोऽसीत्याह। नेति। वरञ्च मत् कञ्चन वृणुष्वेति यदुक्तं तत्र सामान्यतो वरानहं नैव कामये विशेषतोऽपि कञ्चन वरं कैवल्यं तदपि क्वचित् कदाचिदतिदुःखदशायामपि न कामये कुतः यत्र कैवल्ये युष्मच्चरणाम्बुजस्य आसवो मकरन्दस्तदीयगुणकथामाधुर्यभावो नास्ति कीदृशः महत्तमानामन्तर्हृदयात् मुखद्वारा च्युतः अन्तर्हृदयेनास्वाद्यानन्दोद्रेकात् कीर्त्यमान इत्यर्थः। शुकमुखादमृतद्रवसंयुतमितिवन्मदास्वाद्यत्वे सति तस्यातिमाधुर्यमुदयते इति भावः। मधुरमपि जलं क्षारभूमिप्रविष्टं यथा विरसीभवति तथैवावैष्णवमुखान्निर्गतो भगवद्गुणोऽपि नातिरोचक इति व्यतिरेकश्च गम्यः। तर्हि किं कामयसे इत्यत्राह। विभत्स्वेति। महतां गुणानां कथानांचानन्त्यात् यत्र यत्र ये ये यो या गुणकथाःकीर्त्यमानाः स्युस्तासामेकामपि कथामहं त्यक्तुं न शक्नोमीत्यतिलोभात् कर्णानन्त्यस्पृहा तेन कैवल्यकामा येभ्यः श्रोत्रादीन्द्रियेभ्यो प्रियेभ्यो द्रुह्यन्ति तान्येवाहं कामये इति द्योतितम्। ननु कोऽप्येवं न वृणीते सत्यं मम त्वेष एव वरो नान्य इति ॥ २४ ॥

ननु महातत्त्वज्ञैरपि दुर्लभं कैवल्यमपि कुतो नेच्छसीति तत्र व्याजस्तुतिमाश्रित्याह। स इति। भवत्पदाम्भोजसुधायाः कणो लेशस्तत्सम्बन्धी तावदनिलोऽपि किमुत तत्कणःकिमुततरां सा सुधा। तद्गुणकथालेशप्रसङ्गोऽपीत्यर्थः स्मृतिं त्वच्चरणस्मरणं वितरति अतएव विस्मृततत्त्वमार्गाणामिति तयोपदिष्टं यद्यपि वैलक्षण्यसालक्षण्याभ्यां परमात्मजीवात्मदेहतत्त्वं तदधुनैव मया विस्मृतमत एव कुयोगिनामिति व्याजस्तुतिः। अस्माकं वरैरलं विस्मृततत्त्ववर्त्मत्वात् कैवल्येन त्वत्कथास्वादैकव्रतत्वाद्धरान्तरैरप्यस्माकं प्रयोजनं नास्ति। वयं कुयोगिनो निकृष्टाः खल्वभ्यस्ततत्त्ववर्त्मानः सुयोगिनो भवितुं न प्रभवामइति कथं कैवल्याय स्पृहयाम इति कथं वा कीटविशेषा मधुव्रता इव त्वच्चरणकमलमकरन्दास्वादमात्रेणैव पूर्णा राज्यादिसम्पत्तीः प्राप्तुं शक्नुम इति भङ्ग्या स्वेपामेवोत्कर्षो ध्वनितः ॥ २५ ॥

ननु मत्कथास्वादादपि विरम्य योगीन्द्रस्पृहणीयं कैवल्यमेव गृहाणेति तत्राह। यश इति। हे सुश्रवः! मङ्गलकीर्त्ते! तव यशः यदृच्छया अयत्नतोऽकस्मात् प्राप्तमपि सकृदपि यः शृणोति गुणज्ञश्चेत् स कथं तस्मात् विरमेत् पशुं विनेति यो विरमेत् स मनुष्येषु पशुः यो न विरमेत् स पशुष्वपि मनुष्य इति ध्वनिः। तथापि चित्तवडिशं शनकैर्वियुङ्क्त इत्याद्युक्तलक्षणलक्षितात् युष्मद्यशःपीयूषाब्धिरमते योगिने त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः कथायामित्याद्युक्तस्वभावाय कर्म्मिणे च पशवे पिण्याकतुषबुषादिकमिव कैवल्यादिकं देहि नतु मह्यं मनुष्यायेत्यनुध्वनिः। ननु यद्यशःस्वादादपि कैवल्यादिकमधिकं भवेदित्यत्र योगी कर्म्मी च प्रमाणं कैवल्यादिभ्योऽपि यद्यशःस्वादोऽधिक इति भवन्मते कः प्रमाणमिति। तत्राह। श्रीमहालक्ष्मीर्ब्रह्मादिसर्व्वजगत्पूज्या सर्व्वगुणमण्डितापि तद्यशो यत्रे गुणानां तदीयरूपरसगन्धशब्दस्पर्शलीलालावण्यकारुण्यानां सम्यक् ग्रहणमास्वादनसामर्थ्यं तदिच्छयेति सैवात्र प्रमाणं तदुपलक्षिता अन्येऽप्यास्वादितचरकैवल्यसुखमपि लघूकरिष्णवो यशस्येव रममाणाः शुकादयोऽपि प्रमाणम्। घासबुद्धयैवेक्षुपल्लवानि चरन्नप्यन्ततस्तदीयकाण्डस्वरुचिर्घासमेवास्वादयन् वृष इव योगी सहकारपल्लवानि त्यक्त्वा कण्टकमेव स्वादयन्नुष्ट्र इव कर्म्मी किं प्रमाणं भवेदिति भावः। भक्तावेव मोक्षादिसर्व्वसुखान्तर्भावात् गुणानां सर्व्वपुरुषार्थानां संग्रहः। स्वस्मिन् समाहारस्तदिच्छयेति स्वामिचरणाः ॥ २६ ॥

अतः केवलं भजनमेव वृणे नतु वरानित्याह। अथ आसम्यक् निष्काम एव केवलामेव भक्तिं कुर्व्वे। ननु ज्ञानकर्म्मादिसिद्ध्यर्थं ज्ञानी कर्म्मीव गुणी भूतामित्यर्थः। तत्रापि न नारदादिरिव किन्तु पद्मकरा लक्ष्मीरिव मार्ज्जनलेपनपादसम्वाहनव्यजनताम्बूलार्पणादिभिरभीक्ष्णमेवेत्यर्थः। यतो लालसः लालसावान् "स महान्

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

लालसाढ्यो„ इत्यभिधानादत्यधिकं स्पृह इत्यर्थः । न चात्र पृथोरुज्ज्वलभाव आशङ्कनीयः । उत्तरश्लोके जगज्जनन्यामित्युक्तेः जगति च स्वस्यान्तःपाताल्लक्ष्म्यां जननीभावेन स्वस्य-दास्यभावव्यक्तेः । अतः पद्मकरंवेत्युपमेयं परिचरणांशेनैव भगवच्चरणपरिचर्य्यायां तस्या एवातिप्रसिद्धेः लक्ष्म्यां परमभक्तिमतोऽपि स्वस्य वीरभक्तत्वं वाचैव द्योतयन्नाह । अपीति कर्म्मणि क्रियमाणे यथेन्द्रेण सह कलिः एवं भक्तावपि लक्ष्या सह कलिः स्यादिति वितर्कयति एकस्मिन् पत्यौ स्पर्द्धमानयोरपि किं कलिर्न स्यादिति काका वितर्कः ! ननु पर्य्यायेण सेवायां न स्यात् मैवम् । कृतस्त्वच्चरणयोरेकस्तानोऽविरामो मनोविस्तारो याभ्यां तयोः ॥ २७ ॥

"कृपां तस्य समाश्रित्य प्रौढां नान्यमपेक्षते । अतुलां यो वहन् कृष्णे प्रीतिं वीरः स उच्यते„ इति वीरभक्तोचितं स्वस्वभावं प्रकटयन्नाह । जगज्जनन्यां जगन्मध्यवर्त्तित्वेन ममापि जनन्यां लक्ष्म्यां वैशसं विरोधः स्यादेव कुतः यस्याः कर्म्मणि नः समीहितमिच्छा सा खलु युष्मद्वक्षस्यासीना विराजताम् अहं पुत्र एव सर्व्वं युष्मच्चरणपरिचरणं करवाणि तस्याः कोऽयमाग्रहो यत्परिचरणं विना न जीवतीति भावः ननु त्वमर्व्वाचीनः साति प्राचीना त्वं निकृष्टः साति महतीति तया सह किं विरुद्ध्यसे सत्यं तथापीन्द्रविरोधे मत्पक्षपातवदत्रापि मयि तव पक्षपात एव स्यादित्याह । फल्गु तुच्छमपि त्वमुरु करोषि यतो दीनेषु वत्सलः । ननु त्वं तस्याः कोपान्नविभेषि किं तत्र सत्यं न बिभेमीत्याह । स्व एव धिष्ण्ये स्वसामर्थ्येऽभिरतस्य मम तया किं न किमपीत्यर्थः तत्कृपोद्रेक एव मम सामर्थ्यं यदुक्तं वीरभक्तोदाहरणेषु । "प्रलम्बरिपुरीश्वरो भवतु का क्षतिस्तेन मे कुमारमकरध्वजादपि न किञ्चिदास्ते फलम् । किमन्यदहमुद्धतः प्रभुकृपाकटाक्षश्रिया प्रिया परिषदग्रिमां न गणयामि भामामपि" इति धिष्ण्यः शक्रौ च पारद इति पुंस्काण्डेऽमरदत्तः ॥ २८ ॥

तदेवं न केवलमहमेव किन्तु सर्वे एव त्वद्भक्ता वरं वृण्वन्तीत्याह । भजन्त्यथेति । यतस्त्वं दीनवत्सलः अतएव भजन्ति व्युदस्तो निरस्तो भवति मायागुणानां विभ्रमोदयोविविधवरस्पृहा यतस्तं त्वद्भजनस्यैवायं स्वभावो यद्वरस्पृहा निवर्त्तत इति ननु तर्हि भजनस्य किं फलं तत्राह । भवदिति । निमित्तं फलं अनुस्मरणस्यैव सर्वसुखचूडामणेस्तदितरसुखातिरस्कारकत्वादिति भावः ॥ २९ ॥

ननु तर्ह्यहं स्वभक्तं प्रति वरं वृणीष्वेति कथं ब्रवीमि तत्राह । मन्य इति । यदि कश्चिदपक्वो भक्तस्त्वत्प्रलोभनात् कमपि वरं वृणुते तदैव तस्य भक्तिरसवञ्चनात् सर्वनाश इति भावः । स्वकर्मणा पितृलोक इति स्वर्गकामोऽश्वमेधेन यजेतेत्यादि वेदलक्षणापि तव वाग् जगन्मोहिनीत्याह । नु अहो ते वाचा तन्त्या यदि जनोऽयमासितोऽवद्धः स्यात्तदा पुनः पुनः फलैर्मोहितः सन् कथं कर्म करोति ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवतो भक्तवश्यत्वमुक्त्वा तस्य भगवत्प्रावण्यमाह । सहत्या-

दिना स आदिराजोऽश्रुलोचनः प्रेमाश्रुलोचनो यतो
विलोकितुं नाशकत् यतश्च सः आदिराजः वाष्पैः प्रेमोद्गमैः
नासिकाविकारैः विक्लवः वक्तुमक्षमोऽतो न किञ्चनोवाच अत
ष्णीमवस्थितः असुं हरिं हृदोपगुह्य अधात् धृतवानि
न्वयः ॥ २१ ॥

अथानन्तरम् अश्रुकलामवमृज्य अतृप्तदृशोर्गोचरं प्राप्तं
विलोकयन् आह पदा स्पृशन्तं क्षितिमित्यनेन देवाः पदा क्षि
न स्पृशन्ति स तु देवदेवः स्वेच्छया भक्तवात्सल्येन सर्वं क
तीति सूच्यते ॥ २२ ॥

गुणैर्विविधतया क्रियते इति गुणविक्रियः संसारस्तस्मि
न्मा मनो येषामबुधानां भवत्पराङ्मुखानां नारकाणामपि
सन्ति तान् कैवल्यपतेः केवलस्याक्षरस्य भावः कैवल्यं क्षेत्रज्ञ
रूपमात्रप्राप्तिस्तत्पतेः वरदानां भुक्तिमात्रदातॄणां ब्रह्मादीनां
श्वरात्स्वभावापत्तिमोक्षप्रदादित्यर्थः तत्त्वतो बुधः कथं वृणी
तस्मादहं च न वृणे ॥ २३ ॥

तर्हि कैवल्यं भुक्तिं मुक्तिं वा तवेष्टं वरं वृणीष्वेत्यत्राह
नेति । महत्तमानां वैष्णवाग्र्याणामन्तर्हृदयान्मुखतश्च्युतो नि
स्वामीष्टतया हृदि निहितस्तदधिकारिजनानन्दाय मुखतः प्र
र्तितः भवत्पदाम्भोजयोः कीर्तिरूपे मकरन्दः यत्र नास्ति त
त्कीर्तिश्रवणानर्हम्वस्तु न कामये इत्यर्थः किन्तु मे वरः एष
च कीर्तिश्रवणाय कर्णायुतं विधत्स्व ॥ २४ ॥

हे उत्तमश्लोक ! उत्तमकीर्ते सभवत्पदाम्भोजयोः सुधायाः
रूपायाः कणस्य लेशस्यापि योऽनिलः दूरतोऽपि कीर्तिलेशश्रव
मित्यर्थः विस्मृतं तत्त्वत्वर्त्म यैस्तेषां कुयोगिनां नो स्मृ
विरति ॥ २५ ॥

भगवद्यशसः गुणज्ञसेव्यत्वं मुक्तिप्रदत्वं किम्बहुना
सर्वस्वभूतत्वं चाह । यश इति । हेसुश्रवः ! शोभनकीर्ते ! शिवं श्रव
काले सुखदमन्ते मुक्तिदं ते यशः सतां सङ्गमे सकृदपि यः शृण
ति स गुणज्ञश्चेत् पशुमृते कथं विरमेत् न कथमपीत्यर्थः यत
गुणसंग्रहेच्छया श्रीः मुक्तलोके मुमुक्षुलोके च भगवत्सह
देवी वव्रे ॥ २६ ॥

अहमपि लालसः समुत्सुको मुमुक्षुल्लोके लीलां कुर्वन्तं मु
लोके च विहरन्तं श्रीवत् आभजे आवयोः एकस्मिन्पत्यौ से
स्पर्द्धमानयोरपि कलिः कलहो न स्यादेव तत्र
कृतत्वच्चरणैकतानयोः कृतो नियोजितस्त्वच्चरणयोस्तान
भरन्यासविस्तारो याभ्यां तयोः तर्हि त्वयि समर्पितात्मनो
योर्विरोधो भवति ॥ २७ ॥

हेजगदीश ! यस्याः कर्मणि त्वत्सेवायां नः समीहितम्
कमपीच्छा भवति तस्यां जगज्जनन्यां नो वैशसं विरोधोऽसम्भा
तोऽपि यदि स्यादेव तर्हि भवतु यतो दीनवत्सलस्त्वं
अत्यल्पमपि भक्तकृतमुरु बहु करोषि स्वे धिष्ण्ये स्वकीये वास
ने भक्तहृदि स्वमहिम्नि वारमतस्तव स्वानन्यभक्तजनं
तया किम् "न मे भक्तात्प्रियतमो ह्यात्मयोनिर्न शङ्कर
न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान्"इति वदन
णाच्च ॥ २८ ॥

अथ तव फल्गूरुकारित्वादिगुणगणज्ञानानन्तरम् अत
दीनेषु वत्सलत्वात् निरस्तो मायागुणानां विभ्रमस्य विला
दयः प्रभावो यस्मात् तं त्वाम् भजन्ति कस्मै प्रयोजनाय

त्वन्माययाऽद्धा जन ईश! खण्डितो यदन्यदाशास्त ऋतात्मनो बुधः।
यथा चरेद्बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितुम् ॥ ३१ ॥

मैत्रेयउवाच ॥

इत्यादिराजेन नुतः स विश्वदृक्तमाह राजन्! मयि भक्तिरस्तु ते।
दिष्ट्येदृशी धीर्मयि ते कृता यया मायां मदीयां तरति स्म दुस्त्यजाम् ॥ ३२ ॥
तत्त्वं कुरु मयादिष्टमप्रमत्तः प्रजापते!
मदादेशकरो लोकः सर्वत्राप्नोति शोभनम् ॥ ३३ ॥

मैत्रेयउवाच।

इति वैन्यस्य राजर्षेः प्रतिनन्द्यार्थवद्वचः।
पूजितोऽनुगृहीत्वैनं गन्तुं चक्रेऽच्युतो मतिम् ॥ ३४ ॥
देवर्षिपितृगन्धर्वसिद्धचारणपन्नगाः।
किन्नराप्सरसो मर्त्याः खगा भूतान्यनेकशः ॥ ३५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

आह। भवत्पदानुस्मरणादृते अन्यन्निमित्तं प्रयोजनं सतां साधूनां न विद्महे ॥ २९ ॥

भजन्तं वरं वृणीष्वेति त्वं यदात्थ तां ते गिरं जगतां विमोहिनीं मन्ये अन्यथा ते वाचा नु तन्त्या असितः अबद्धः कथं मोहितः कर्म करोति ॥ ३० ॥

---

भाषाटीका।

वे आदि राजा पृथु महाराज हाथ जोड़ कर खड़े रहे आंसुओं के भर आने से दर्शन को भी नहीं समर्थ हो सके कण्ठ मे वाष्प के भर जाने से कुछकभी कह नहीं सके इन परमात्मा को हृदय मे ध्यान कर के स्थिर चित्त से स्तुति करने लगे ॥ २१ ॥

तदनन्तर आंसुओं को पोंछ कर नहीं तृप्त भये नेत्रों के आगे स्थित आदि पुरुष भगवान् चरण से पृथिवी को स्पर्श करके खडे हैं एक हाथ ऊंचे गरुड के कंधे पर रखा है ऐसे देख स्तोत्र कहने लगे ॥ २२ ॥

पृथु महाराज बोले हे विभो हे ईश वर देने वालों में श्रेष्ठ आप से विवेकी हो कर कौन वरों को मांगेगा जो वर के सुख तीनों गुणों के विकार वाले नरक वासि जीवों को सुलभ हैं तिन को मै कैवल्य पति से नहीं मांगूगा ॥ २३ ॥

उस कैवल्य कोभी में नही चाहताहूं जिसमें कि आपके भक्त महा पुरषोंके मुखसे गिरा आपके चरणारविन्द का कथारूपी रस न होवै तिसिसे कथा सुननेको दशहजार कानोंकी शक्ति दीजिये यही मेरा वर मागना है ॥ २४ ॥

हे उत्तम श्लोक! महत्पुरषों के मुखसे गिरा आपके चरणकमल के मकरंद बूंदका वायु तत्त्वमार्ग को भूलेहुये कुयोगि हमलोगों को फिर स्मृतिकरा देता है तिससे और वर न हीं चाहियें ॥ २५ ॥

हे सुन्दर कीर्तिमन्! सत्पुरुषों के सङ्गमें यदि किसी प्रकार से आपके यशको सुनताहै तो पशुके विना गुणग्राही यदि हो तो आप के गुणों को नहीं छोड़ताहै जिनगुणों को सम्पादन की इच्छा से लक्ष्मीजी ने वरण किया है ॥ २६ ॥

इसी हेतु से संपूर्ण पुरुषों मे उत्तम सब गुणों के स्थान आप को मैं लक्ष्मी जी की नांई भजूंगा यद्यपि आप एक पतिपर हम दोनों की इच्छा रहेगी तौ भी आप के चरण मे एकाग्र बुद्धि रहने से हम दोनों का कोई कलह नहीं होगा ॥ २७ ॥

हे जगदीश अथवा जगन्माता लक्ष्मी जी से विरोध हो भी जायगा क्यों कि उन के करने की सेवा मे हमारी इच्छा है तो भी चिन्ता नहीं क्यों कि आप तो दीनदयाल हो भक्तों का थोड़ा किया भी अधिक मानते हो क्यों कि अपने स्वरूप मे आनन्दित आप को लक्ष्मी से क्या प्रयोजन है ॥ २८ ॥

इसी हेतु से महात्मा लोग आप को भजते हैं क्यों कि आपने माया के गुणों के विलास को दूर कर दियाहै हे भगवन् आप के चरण स्मरण के विना उन महात्मों का दूसरा कुछ निमित्त हम नहीं जानते हैं ॥ २९ ॥

आप की वाणी जगत् को मोहने वाली है ऐसा मैं मानता हूं जोकि आप भजन करने वाले मेरे से भी वर मांगो कहते हो ऐसा आप की वेदलक्षणा वाणी मे यदि मनुष्य न बंधा होवै तो फिर मोहितहो कर उन प्रवृत्ति मार्ग के कर्मों को क्यों करे ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

त्वन्मायया खण्डितस्य त्वया पुनः खण्डनं न कर्तव्यं किन्तु हितश्चेष्टितव्यमित्याह। त्वन्मायया ऋतादात्मनस्त्वत्तः खण्डितः पृथक्कृतो यद्यतोऽन्यत्पुत्रादिकमाशास्ते अतः स्वयमाविज्ञापित एव हितं चेष्टितुमर्हसि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

यज्ञेश्वरधिया राज्ञा वाग्वित्ताञ्जलिभक्तितः ।
सभाजिता ययुः सर्वे वैकुण्ठानुगतास्ततः ॥ ३६ ॥
भगवानपि राजर्षेः सोपाध्यायस्य चाच्युतः ।
हरन्निव मनोऽमुष्य स्वधाम प्रत्यपद्यत ॥ ३७ ॥
अदृष्टाय नमस्कृत्य नृपः सन्दर्शितात्मने ।
अव्यक्ताय च देवानां देवाय स्वपुरं ययौ ॥ ३८ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां वैयासिक्यां संहितायां पृथुचरिते पृथुस्तवोनाम
विंशोऽध्यायः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वाग्वित्ताञ्जलिभिर्भक्तितः पूजिताः सन्तः वैकुण्ठानुगताः पार्षदाश्च ॥ ३६ ॥

अमुष्य राज्ञः हरन्निवेति लोकोक्तिः वस्तुतस्तस्य मनः सर्वदैव तदधीनमस्त्येव स्वधाम राज्ञो हृदयम् ॥ ३७ ॥

अदृष्टाय लोचनपथमतिक्रान्ताय सन्दर्शित आत्मा येन तस्मै वस्तुतोऽव्यक्ताय ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

त्वन्मायया मोहितस्य त्वया पुनर्मोहनं नोचितं किन्तु हितमेव चेष्टितव्यमित्याह । त्वन्माययेति । हेईश ! त्वन्मायया अबुधः स्वात्मपरमात्मयाथात्म्यज्ञानविधुरः जनः लोकः दैवात्त्वां भजन् ऋतात्मनः सत्यात्मनस्त्वत्तः यदि अन्यत् अर्थकामादिकमाशास्ते तर्हि खण्डितः पृथक्कृतः दूरीकृत एव स्यादित्यर्थः ईशेति हेतुगर्भम् आत्मना ईशेन त्वया आत्मीयमैश्वर्यं दूरीकृतं स्यादितीशत्वमेव विप्लुतं स्यादिति भावः अतः स्वयमविज्ञापित एव बालहितमज्ञपुत्राहितम् पिता यथा चरेत् कुर्यात्तथा नः समीहितं कर्तुमर्हसि ॥ ३१ ॥

एवमुक्तो भगवान् तदुक्तमनुजग्राहेत्याह मुनिः । हेराजन् ! ते त्वया साधु वर्णितं यत् यस्मात् आशिषः ऐहिकपुरुषार्थान्नाशास्से नेच्छसि अतो भवान् मत्परः स्वर्गापवर्गनरकान् समं यथा तथा पश्यति अपवर्गोऽत्र कैवल्यं नरकग्रहणं दृष्टान्तार्थं नरकवत्स्वर्गापवर्गौ हेयौ द्रक्ष्यसीत्यर्थः *

हेमहाराज ! ते तुभ्यमहं प्रीतः यस्मात्त्वं मदादेशं श्रद्दधानः विश्वसन् दुस्त्यजमपि रोषमत्यजः तन्मदादेशविश्वसनमेव मह्यं परमुत्कृष्टमर्हणमाराधनम् ॥ ० ॥

इति पूर्वोक्तरीत्या आदिराजेन पृथुना नुतः स्तुतः स विश्वभुग्भगवान् तमादिराजं प्रत्याह उक्तमेवाह हेराजन् ! मयि ते तव भक्तिरस्तु वर्द्धतां दिष्ट्या दैववशेन ते त्वया मयीदृशी धीर्भक्तिः कृता कथंभूता यया धिया दुस्त्यजामपि मदीयां मायां तरति स्म ॥ ३२—३३ ॥

उपसंहरति । इतीति । वैन्यस्य राजर्षेः प्रभोः अर्थवत् शृण्वतामपि पुरुषार्थसाधनं वचः अभिनन्द्य तेन पूजितः एवं वैन्यं अनुगृह्याच्युतो भगवान् गन्तुं मतिं चक्रे ॥ ३४ ॥

तदा देवादयः सर्वे राज्ञा यज्ञेश्वरधिया भगवदात्मकत्वधिया यथायोग्यं वागादिभिः सभाजिताः पूजिताः ततः यज्ञमूर्तिं वैकुण्ठं भगवन्तमनुसृत्य गताः ययुः ॥ ३५ ॥ ३६ ॥

सोपाध्यायस्य राज्ञः पश्यतः सतः अमुष्य राज्ञो मनः हरन्निव भगवान् स्वधाम प्रत्यगात् ॥ ३७ ॥

अदृष्टाय चक्षुर्विषयतामप्राप्ताय सन्दर्शित आत्मा येन तस्मै देवानां ब्रह्मादीनामपि देवाय वासुदेवाय "वसन्ति यत्रभूतानि भूतात्मनि„इति निरुक्तवासुदेवपदवाच्याय नमस्कृत्य स्वपुरं ययौ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि मोहित इत्याह । त्वन्माययेति । अबुधो योजनः स्वात्मनः सत्यात्मनो हरेः सकाशादन्यत्स्वर्गादिकमाशास्त इति यत्तस्मादेष त्वन्मायया खण्डितस्त्वदुपास्तेर्धियोजित इत्यर्थः अस्यामवस्थायां बहुप्रजल्पेनकिमिदमेव प्रार्थय इत्याह यथेति ॥३१॥

पृथूक्तं श्रीपतिमनसि संविष्टमिति भावेन हरेस्तदुक्तिप्रशंसाप्रकारमाह । साध्विति। साधूचितं इदमात्यन्तिकभक्तलक्षणमिति भावेनाह।स्वर्गेति। नरकान्नरकान्तरप्राप्तिसमये किञ्चिन्निर्वेदसमत्वम् ॥ ० ॥

मद्भक्तस्य रोषत्याग एव मत्प्रीतिसाधनमित्याह। प्रीत इति ॥ प्रतिवचनं चेत्समाप्तं परं किमकारि हरिणेति तत्राह इतीति ॥ ३२ ॥ ३३ ॥ ३४ ॥

---

* ने साधुवर्णितंराजन्नाशास्से न यदाशिपः । स्वर्गापवर्गनरकान् समंपश्यतिमत्परः ॥
प्रीतोऽहंते महाराज रोषं दुस्त्यजमत्यजः । मदादेशंश्रद्दधानस्तन्मह्यं परमार्हणम् ॥
इत्यधिकौदलोकौ श्रीवीरराघवश्रीविजयध्वजतीर्थयोःपाठे ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरिमनुगता देवादयः किञ्चकुरित्याह । देवेति ॥ ३५ ॥

सर्वप्राणिषु यज्ञेश्वरो हरिरवस्थितः तदुक्तं "भूतेषु हरिरित्येव सर्वभूतेषु च हरेः पूजा कार्यात्मचेदिभिः,, इति हर्यर्पणधिया तथा । सर्वभूतेषु च हरेः पूजा कार्यात्मचेदिभिः,, इति वचनात् इदं सर्वं तदर्पणमस्त्विति धीर्यज्ञेश्वरधीस्तया समाजिताः संभाविताः ॥ ३६ ॥

गन्तुं मन एव कृतं नतु गतमिति शङ्कामाभूदित्याह । भगवानपीति ॥ ३७ ॥

राज्ञो यज्ञशालातः स्वपुरप्रस्थानप्रकारमाह । अदृष्टायेति । अदृष्टाय चक्षुरेरविषयाय स्वस्य संदर्शितात्मने साक्षात्कारितस्वरूपाय ॥ ३८ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

त्वन्मायया खण्डितस्य त्वया पुनः खण्डनं न कर्त्तव्यं किन्तु हितं चेष्टितव्यमित्याह । त्वन्मायया ऋतादात्मनस्त्वत्तः खण्डितः पृथक् कृतः यद्यतोऽन्यत् पुत्रादिकमाशास्ते अतः स्वयमाविर्भावितः पिता एव हिते चेष्टितुमर्हसि ॥ ३१ ॥

मैत्रेयउवाच इति क्वचिन्नास्ति च यथा पृथोः श्रीमद्भगवदेकनिष्ठा तथैव तेनान्यथानुपदेशे विश्वाशश्च । तथा श्रीभगवतोऽपि तदेकदित्सयैव तथाप्यन्यत्र प्रवर्त्तनन्तु तन्निष्ठाप्रकटनार्थी त्रिकारविशेषे तद्द्वारैव ज्ञानादिप्रचारणार्थश्चेति स्फुटमेव दर्शयति । इत्यादीति । अन्यथा ज्ञानमस्तु ते इत्येवोच्येतेति भावः ततः सुदुस्तरामिति क्वचित् पाठः ॥ ३२—३४ ॥

देवर्षीति युग्मकम् ॥ ३५ ॥

वैकुण्ठस्यानुगताः सेवायमानाः पार्षदास्तु तेनैव सह गमिष्यन्तीति योग्यत्वात् ॥ ३६—३७—३८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नस्मात्त्वं वृणीष्वेति प्रलोभनेन स्वभक्तपरीक्षामपि न कुर्यां इत्याह । त्वदिति । जनः सर्व एव यद्यस्मात् ऋतात्मनः सत्यस्वरूपात् भजनात् वस्तुतः सकाशादन्यदेवाशास्ते नोऽस्माकन्तु त्वन्मते यद्भद्रं भवति तदेव समीहितुं चेष्टितुमर्हसि । यथेति बालस्य हिताहितं पितैव जानाति बालस्त्वध्ययनखेलनादिकं स्वहिताहितं विपर्ययेण जानातीत्येवं महां वरस्य प्रदानं वा हितं विसृज्य स्वसम्मतमेव भद्रं क्रियतां न पुनर्मम सम्मतिरेव प्रमाणीकर्त्तव्येति भगवत्येव पृथुना विश्रम्भो व्यञ्जितः ॥३१॥

भगवानपि तथैवाह । मयि भक्तिरित्यतो जीवानां सर्वथा किं हितमिति प्रश्ने सर्वज्ञैरपि वेदवादिभिः प्रत्युक्तं ज्ञानयोगादिकं न विश्वसनार्यम् । भगवन्तमपेक्ष्य तेषामप्यज्ञत्वादिति भक्तेरेव हितत्वं नान्यस्येति सिद्धान्तो निर्द्धारितः ॥ ३२—३७ ॥

अन्यैरदृष्टाय सन्दर्शित आत्मा आश्रयो येन तस्मै इति वैकुण्ठ गमनपर्यन्तं पृथुस्तु तं ददर्शैवेत्यर्थः ॥ ३८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
विंशोऽध्यायश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥



श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ॥

हे ईश ! ऋतः सत्यः आत्मा आश्रयो यस्य सर्वदा स्थित्यादिप्रदस्त्वमेव "ऐतदात्म्यमिदं सर्वम्,, इत्यादिश्रुतेः तस्मात्त्वत्तः जनस्त्वन्मायया खण्डितः अब्रह्मात्मकत्वभ्रान्तिं नीतोऽतोऽबुधः अत एव यस्मात्त्वत्तोऽन्यत् ऐहिकामुष्मिकं सुखमाशास्ते अतो यथा पिता बालस्य हितं चरेत् तथा अद्धा साक्षात्पिता स्वयं त्वमेव नो हितं समीहितुमर्हसि ॥ ३१ ॥

मायां तरतिस्म जन इति शेषः ॥ ३२—३५ ॥

वैकुण्ठानुगता विष्णुपार्षदाः ततः स्थानात् ॥ ३६ ॥ ३७ ॥

पूर्वं सन्दर्शितः आत्मा विग्रहो येन तस्मै पुनरदृष्टाय परोक्षतां गतायापि नमस्कृत्य स्वपुरं ययौ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
विंशाध्यायार्थप्रकाशः ॥ २० ॥

---

भाषाटीका ।

हे ईश ! निश्चित है कि आप की माया के लगने से सत्य स्वरूप आप से यह संसारी अज्ञानी जन पृथक् हो गया है जिस हेतु से कि यह अन्य पदार्थों को चाहता है और जैसे पिता स्वयं ही बालक का हित करता है तैसे आप ही हमारे हित करने को योग्य हो ॥ ३१ ॥

मैत्रेयजी बोले इस प्रकार से आदि राज ने जब स्तुति किया तब सर्वदर्शी भगवान् उनसे बोले कि हे राजन् ! हमारे विषयमें तुमारा भक्ति होवे यह बडी मंगल की बात है कि जो तुमने हमारेमें ऐसी भक्ति की है जिस भक्ति से मनुष्य दुस्त्यज मायाको तर जाते हैं ॥ ३२ ॥

तिससे हे प्रजापते तुम हमारे उपदेश को करो सावधान हो कर हमारी आज्ञा को करने वाला सर्वत्र शुभ को प्राप्त होता है ॥ ३३ ॥

मैत्रेय जी बोले वेनपुत्र राजर्षि के इस प्रकार यथार्थ वचन की प्रशंसा करके पूजित होकर राजा पर अनुग्रह करके जाने को भगवान् ने विचार किया ॥ ३४ ॥

तब देवर्षि पितर गंधर्वसिद्ध चारण पन्नग किन्नर अप्सरा मनुष्य पक्षि अनेक प्रकार के प्राणी इन सबों को परमेश्वर बुद्धि से राजा ने वचन से धन से हाथ जोड कर सन्मान किया फिर ये सब भगवान् के पीछे आये थे सो चले गये ॥ ३५—३६ ॥

अच्युत भगवान् भी उपाध्याय सहित राजर्षिके मन को हरते से अपने वैकुंठ धामको चले गये ॥ ३७ ॥

राजा भी अपने आत्मस्वरूप को दिखाकर अदृष्ट भये देवों के देव भगवान् के अर्थ नमस्कार करके यज्ञ शाला से अपने घर को गये ॥ ३८ ॥

इति श्री भागवतचतुर्थस्कंध बीसवां अध्याय का
भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ २० ॥

## एकविंशोऽध्यायः ॥

## मैत्रेय उवाच ॥

मौक्तिकैः कुसुमस्त्राग्भिर्दुकूलैः स्वर्णतोरणैः ।
महासुरभिभिर्धूपैर्मण्डितं तत्र तत्र वै ॥ १ ॥
चन्दनागुरुतोयार्द्ररथ्याचत्वरमार्गवत् ।
पुष्पाक्षतफलैस्तोक्मैर्लाजैरर्चिभिरर्चितम् ॥ २ ॥
सवृन्दैः कदलीस्तम्भैः पूगपोतैः परिष्कृतम् ।
तरुपल्लवमालाभिः सर्वतः समलंकृतम् ॥ ३ ॥
प्रजास्तं दीपवलिभिः संभृताशेषमङ्गलैः ।
अभीयुर्मृष्टकन्याश्च मृष्टकुण्डलमण्डिताः ॥ ४ ॥
शङ्खदुन्दुभिघोषेण ब्रह्मघोषेण चर्त्विजाम् ।
विवेश भवनं वीरः स्तूयमानो गतस्मयः ॥ ५ ॥
पूजितः पूजयामास तत्र तत्र महायशाः ।
पौरान् जानपदांस्तांस्तान् प्रीतः प्रियवरप्रदः ॥ ६ ॥
स एवमादीन्यनवद्यचेष्टितः कर्माणि भूयांसि महान् महत्तमः ।
कुर्वन् शशासावनिमण्डलं यशः स्फीतं निधायारुरुहे परं पदम् ॥ ७ ॥

## सूत उवाच ॥

तदादिराजस्य यशो विजृम्भितं गुणैरशेषैर्गुणवत्सभाजितम् ।
चत्ता महाभागवतः सदस्पते ! कौषारविं प्राह गृणन्तमर्चयन् ॥ ८ ॥

## विदुर उवाच ॥

सोऽभिषिक्तः पृथुर्विप्रैर्लब्धाशेषसुरार्हणः ।
बिभ्रत्स वैष्णवं तेजो बाह्वोर्याभ्यां दुदोह गाम् ॥ ९ ॥
कोन्वस्य कीर्तिं न शृणोत्यभिज्ञो यद्विक्रमोच्छिष्टमशेषभूपाः ।
लोकाः सपाला उपजीवन्ति काममद्यापि तन्मे वद कर्म शुद्धम् ॥१०॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकविंशे तु पृथुना प्रजानामनुशासनम् ।
महासत्रे सुरादीनां महासदसि वर्ण्यते ॥ १ ॥

पुरं ययावित्युक्तं तत्पुरमनुवर्णयति। मौक्तिकैरिति त्रिभिः॥१॥

चन्दनागुरुयुक्तैस्तोयैरार्द्रा रथ्यादयस्तद्युक्तम् तोक्मैर्हरितय-वैरङ्कुरैर्दातवा अर्चिभिर्दीपैः ॥ २ ॥

सवृन्दैः पुष्पफलयुक्तैः कदलीस्तम्भैः पूगैर्वृक्षैस्तथा[illegible] सर्वतः समलंकृतं शोभितम् ॥ ३ ॥

संभृतान्यशेषाणि मङ्गलानि दध्यादीनि तैः सह[illegible] मृष्टा उज्ज्वलाः कन्याश्च ॥ ४ ॥

गतस्मयो निरहंकारः ॥ ५ ॥

प्रियान्वरान्प्रददातीति तथा ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणैर्महानत एव महत्तमः पूज्यतमः ॥ ७ ॥

गुणैर्विजृम्भितमूर्जितं गुणवद्भिः सभाजितं सत्कृतं यशो गृणन्तमर्चयन्प्राह सदसस्पते ! शौनक ॥ ८ ॥

लब्धान्यशेषसुराणामर्हणानि येन सः किमकरोदिति शेषः ॥ ९ ॥

अथवर्णौत्सुक्यमाविष्कुर्वन्प्रार्थयते । कोन्विति । यस्य विक्रमः पृथ्वीदोहनं तस्योच्छिष्टतुल्यं कामम् तत्तस्य कर्म वद ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुरं ययावित्युक्तं तत्पुरमनुवर्णयति । मौक्तिकैरिति । मौक्तिकैर्मुक्तादामभिः चन्दनागरुयुक्तैस्तोयैरार्द्रा रथ्यादयः अस्मिन् सन्तीति तथा तोक्मैर्यवाङ्कुरैरर्चिभिर्दीपैश्च ॥ १ ॥ २ ॥

पूगपोतैर्बालपूगैः परिष्कृतमलंकृतं संभृतान्यशेषाणि मङ्गलद्रव्याणि दध्यादीनि तैः सहाभिजग्मुः राज्ञोऽभिमुखं ययुः मृष्टानि निघर्षितानि कुण्डलानि यासां ताः मृष्टा उज्ज्वलाः कन्याश्च अमीयुः ॥ ३ ॥ ४ ॥

ततः शङ्खादिघोषेण ऋत्विजां वेदघोषेण च सह वन्दिभिः स्तूयमानो विगतस्मयः निरहङ्कारः वीरः पृथुः भवनं विवेश ॥ ५ ॥

तत्र तत्र रथ्यादिषु पौरादिभिः पूजितः महायशाः विपुलकीर्तिः पौरान् पुरवासिनः जानपदान् देशवासिनश्च तदीयप्रजादिभिः प्रीतः तेभ्यो समीहितवरप्रदो भूत्वा यथायोग्यं पूजयामास ॥ ६ ॥

तथा गुणैर्महान् अत एव महत्तमः पूज्यतमः अत एवानवद्यचेष्टितः निर्दुष्टोत्तरव्यापारः एवमादीनि दोहनादीनि भूयांसि कर्माणि कुर्वन् भूमण्डलं शशास अनुशिष्टवान् ततः स्फीतं विपुलं यशः इह लोके निधाय परंपदं वैकुण्ठमारुरोह अभिरूढवान् ॥ ७ ॥

एवं श्रुतपृथुचरित्रः क्षत्ता एवमादीत्यादिशब्दोपक्षिप्तान्यतदुदारचेष्टितशुश्रूषया पुनः प्राहेत्याह सूतः । श्रुत्वेति । अशेषैर्गुणैर्विजृम्भितमूर्जितं गुणवद्भिः सभाजितं सत्कृतमधिराजस्य पृथोर्यशः श्रुत्वा महाभागवतः क्षत्ता हे सदस्पते ! शौनक गृणन्तं कथयन्तं कौषारविं मैत्रेयमर्चयन् साधुसाध्विति सम्मानयन्प्राह ॥८॥

उक्तमेवाह । स इति द्वाभ्याम् । विप्रैर्ब्रह्मर्षिभिः राज्येऽभिषिक्तः लब्धमशेषाणामखिलानामिन्द्रादीनामर्हणं येन सः वैष्णवं विष्णोः सम्बन्धि तेजः वीर्यं बाह्वोः बिभ्रत् बिभ्राणः याभ्यां वैष्णवतेजःशालिभ्यां गां उदोह एवंभूतः किमकरोदिति शेषः ॥ ९ ॥

अथवर्णौत्सुक्यमाविष्कुर्वन् प्रार्थयते । कोन्विति । अस्य पृथोः कीर्तिमभिज्ञश्चेत्कोनु न शृणोति कथम्भूतस्य यस्य विक्रमः पृथ्वीदोहनादिरूपः तस्य यदुच्छिष्टं तुच्छं काममद्यापि अशेषभूपाः लोकपालैः सहिता लोकाश्च उपजीवन्ति तत्कर्म तदीयं शुद्धं निरवद्यं चेष्टितं मे मह्यं वद ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देवादीन्विना हरेर्ब्रह्मणः सन्निधानपात्रमित्येतत्प्रतिपाद्यतेऽस्मिन्नध्याये तत्रानन्तरातीताध्याये पृथुः पुरं ययावित्युक्तं तत्पुरं वर्णयति । मौक्तिकैरित्यादिना ॥ १ ॥

पिष्टचन्दनागुरुभिश्रतोयैरार्द्रा रथ्याचत्वरमार्गा यस्मिंस्तत्तथोक्तं गामयतोयैरर्चिभिर्दीपज्वालाभिः ॥ २ ॥

पूगपोतैः क्रमुकपुष्पैः परिष्कृतमलंकृतम् ॥ ३ ॥

सम्भृतानि सम्पादितानि अशेषाणि मङ्गलानि दध्यादीनि तैश्च युक्ताः मृजूसंशुद्धाविति धातुः ॥ ४ ॥

भूयः पुरप्रवेशानन्तरं गतस्मयो गर्वरहितः ॥ ५ ॥

प्रियानभीष्टान्वरान् प्रददातीति प्रियवरप्रदः ॥ ६ ॥

प्रश्नमङ्कुरयन्नुपसंहरति । स एवमिति । भूयांसि महांति स्फीतं पुष्टं लोके निधाय ॥ ७ ॥

गुणवद्भिः पुरुषैः सभाजितं पूजितम् ॥ ८ ॥

किमाहेति । तत्राह । सोऽभिषिक्त इति स पृथुर्यत्कर्माकरोत्तन्मे वदेत्यन्वयः । लब्धान्यशेषैः सुरैः कृतान्यर्हणानि येन स तथोक्तः ॥ ९ ॥

वक्तव्यत्वे गुणमाह । कोन्वस्येति । "देवेभ्य * ऋषयो भूपाश्चोच्यन्ते शक्तिमत्तया । क्वचित्क्वचित्तु मोहार्थं कदाचित्कात्तु हेतुत" इति वचनाद्युक्तं सपाला इति ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मौक्तिकैरिति त्रिकम् । तोक्मैरित्यत्र स्तोमैरिति चित्सुखः॥१-८॥

विभ्रच्च वैष्णवमिति । गौणपाठः स इत्यत्र तु पौनरुक्त्यं लक्ष्यते ॥ ९ ॥

यद्विक्रमेति । येन विक्रम्य उपात्तं तत् उच्छिष्टमेवेत्यर्थः॥१०-१३॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकविंशे महासत्रे सर्वसौन्दर्यमण्डितः ।
प्रश्रयाब्धिः पृथुर्भक्तिं स्वप्रजाः समशिक्षयत् ॥ १ ॥

पुरं ययावित्युक्तं तत् पुरमनुवर्णयति । मौक्तिकैरिति त्रिभिः । मौक्तिकादिभिर्यत् यत् पुरं मण्डितं तत्र तत्र ययाविति पूर्वेणान्वयः ॥ १ ॥

तोक्मैर्हरितयवैः अर्चिभिर्दीपैः ॥ २ ॥

सवृन्तैः फलपुष्पवृन्तसहितैः पूगपोतैर्नूतनगुवाकवृक्षैः ॥ ३ ॥

निर्मञ्जनार्थं दीपावलिभिः सम्पूर्णाशेषमङ्गलैर्दध्यादिभिः सहिताः । मृष्टकन्याः मार्जितगात्र्यः कुमारिकाः । मृष्टकुण्डलेति तदुपलक्षितोज्ज्वलवस्त्रालंकारयुक्ताः ॥ ४ ॥

गतस्मयः स्वस्य तादृशमसाधारणमैश्वर्यं वीक्ष्यापि विगतगर्व इत्यर्थः ॥ ५ ॥

पूजितः पौरादिभिः स्वर्णमुद्रानर्घ्यनव्यवस्त्राद्युपायनार्पणेनेत्यर्थः पूजयामास स उत्तीर्णकञ्चुकोष्णीषादिप्रतिदानेनेत्यर्थः ॥ ६ ॥

महान्महत्तम इति उत्तममध्यमकनिष्ठतया त्रिविधेषु महत्सु मध्ये उत्तमः महत्तम इत्यर्थः ॥ ७ ॥

गुणवद्भिः सभाजितं सत्कृतं यशोगृणन्तं हे सदस्पते ! शौनक ! ॥ ८ ॥

बाह्वोर्बिभ्रदभूत् ॥ ९ ॥

यस्य विक्रमेण उच्छिष्टमिति सर्वेषां कामानां पृथ्वीदोहनस्य यद्विक्रमकृतत्वादित्यर्थः आरब्धानेवेति मत्वेति शेषः ॥ १० ॥

---

* अस्मिन् श्लोके पृथादेर्देवेभ्योऽप्यतिशयितशक्तिमत्त्वमितिभातीत्यतस्तदुक्तेरभिप्रायंप्रमाणेनाह ॥ टी०

गङ्गायमुनयोर्नद्योरन्तरा क्षेत्रमावसन् ।
आरब्धानेव बुभुजे भोगान् पुण्यजिहासया ॥ ११ ॥
सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृक् ।
अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥ १२ ॥
एकदासीन्महासत्रदीक्षा तत्र दिवौकसाम् ।
समाजो ब्रह्मर्षीणां च राजर्षीणां च सत्तम ! ॥ १३ ॥
तस्मिन्नर्हत्सु सर्वेषु स्वर्चितेषु यथार्हतः ।
उत्थितःसदसो मध्ये ताराणामुडुराडिव ॥ १४ ॥
प्रांशुः पीनायतभुजो गौरः कञ्जारुणेक्षणः ।
सुनासः सुमुखः सौम्यःपीनांसः सुद्विजस्मितः ॥ १५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्री पृथुःस्वप्रजामन्वशासदिति वर्णयत्येकविंशे तत्रादौ पुरं यथाचिनि यदुक्तं तत्पुरं वर्णयति । मौक्तिकैरित्यादिना ॥ १ ॥

चन्दनागुरुसंयुक्तैः तोयैरार्द्रा रथ्यादयो विद्यन्ते यस्य तत् पुष्पादिभिः स्तोकैरङ्कुरैः अर्चिभिर्दीपावलिभिरार्चितमलंकृतम् ॥२॥ सवृन्दैः पत्रफलसहितैः परिष्कृतम् वेष्टितम् ॥ ३ ॥

मृष्टैः प्रज्वलितैः कुण्डलैरलंकृताः ध्वजाः मृष्टाः उज्ज्वलाः कन्याश्च संभूतैः सम्पादितैः अर्घैर्दध्यादिमङ्गलैः सह अभीयुः अभिमुखं जग्मुः ॥ ४ ॥

स्तूयमानोऽपि गतस्मयो निर्गर्वः ॥ ५ ॥

प्रियान्वाञ्छितान्वरान् प्रकर्षेण प्रियोक्तिभिः सह ददातीति तथा ॥ ६ ॥

महान् श्रेष्ठः यतो महत्तमो विष्णववतारः स्फीतं शुद्धं यशो विताय परं पदं विष्णुलोकमारुरुहे ॥ ७ ॥

हे सदस्पते शौनक ! क्षत्ता विदुरः अशेषगुणैर्विजृम्भितमूर्जितं गुणवद्भिः सभाजितं स्तुतं तदादिराजस्य यशोगृणन्तं कौषारविमर्चयन्नाह ॥ ८ ॥

स पृथुः विप्रैरभिषिक्तः स च लब्धान्यशेषसुराणामर्हणानि येन तथा भूतः बाह्वोर्वैष्णवं तेजो बिभ्रद आसीत् ॥ ९ ॥

यद्यस्य विक्रमोच्छिष्टं भूपादयः कामम् उपजीवन्ति तस्य विशुद्धं कर्म मे मह्यं वद ॥ १० ॥

---

भाषाटीका ।

मैत्रेयजी बोले महाराज के पुर के जाते समय मे पुरकी शोभा ऐसी थी कि मोतियों की माला फूलों की माला सुन्दर वस्त्र सुवर्ण के तोरण बड़े सुगंध वाले धूप इन्हों से सब शोभा है चंदन अगरुके जलों से भीजे हुये चौतरा अङ्गना गली रहैं जिसमै फूल अचत फल अङ्कुर खील इन्हों से भूषित है फल फूलों के सहित केला के खंभा सुपारी के पेड इनसे शोभित है वृक्ष पत्ता मालों से सब अलंकृत है ॥ १—२—३ ॥

प्रजा जितनी सब सम्पूर्ण मङ्गल पदार्थों को भेट के पदार्थों को लेकर उनके साथ आये उज्वल कुण्डल वाली शरीर से शुद्ध निर्मल कन्या भी उनके साथ चलीं ॥ ४ ॥

शंख के नगारे के शब्द ब्राह्मणों के वेद शब्द होते थे सब स्तुति करते समय वीर पृथु महाराज निरभिमान होकर पुर प्रविष्ट भये ॥ ५ ॥

सर्वत्र पूजित होकर पुरवासी देशवासी सब के वर को प्रसन्न होकर सब का सत्कार किया ॥ ६ ॥

पवित्र चेष्टा वाले पृथु महाराज इस प्रकार से कर्म न किये आप महात्मा हैं महात्माओं में श्रेष्ठ हैं तो इन कर्मों करके पृथिवी का पालना किया जगत् में विस्तृत यश को स्थाप करके भगत्पदको आरोहण किया ॥ ७ ॥

सूत जी बोले हे शौनकजी ! आदि राजा के यश से संयु संपूर्ण गुणों के होने से गुण वाले लोगों से प्रशंसित ऐसे चरित्र को कहते हुये मैत्रेयजीकी पूजा करके महा भागव विदुर जी पूछ ने लगे ॥ ८ ॥

विदुर जी बोले देवतों से सब छत्र चामरादि कों को प्राप्त कर ब्राह्मणों से अभिषेक किये गये वैष्णव तेज को धारण हुये जिन दोनों भुजों से पृथिवी को दुहे उन महाराज के चरि को ज्ञानी हो कर कौन नहीं सुनेगा जिन के कि जूठ न भोगों सब सराहते हैं तथा लोकपालों के सहित लोक अब भी भोगते उन के शुद्ध कर्म को आप मेरे से कहिये ॥ ९—१० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्राचीनकर्मभिः प्रारब्धानेव बुभुजे नतु भोगान्तरार्थं कर्माणि करोति तदपि भोगेन पुण्यक्षपणेच्छया नतु सुखासक्त्येत्यर्थः ॥ ११ ॥

अस्खलितोऽप्रतिहत आदेश आज्ञा यस्य सप्तसु द्वीपेष्वेक एव दण्डं धारयतीति तथा किं सर्वत्र नेत्याह । ब्राह्मणकुलव्यतिरेकेण अच्युतो गोत्रप्रवर्तकतुल्यो येषां वैष्णवानां तद्व्यतिरेकेण च ॥ १२ ॥

एकदा तस्य महासत्रदीक्षा आसीत्तत्र सत्रे देवादीनां समाज आसीदित्यर्थः ॥ १३ ॥

तस्मिन्पूज्येष्वर्चितेषु सत्सु सदसो मध्ये उत्थितः सन् समन्ततः समैक्षतेति पञ्चेनान्वयः ॥ १४ ॥

प्रांशुरुन्नतः पीनावायतौ भुजौ यस्य कञ्जवदरुणे ईक्षणे यस्य शोभना द्विजाः स्मितञ्च यस्य ॥ १५ ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

एवमुक्तो मुनिराह। गङ्गायमुनयोरित्यादिना। यद्यप्यत्र मुनिराहेत्याहेत्येवं रूपं सूतवाक्यमपेक्षितं तथाप्यर्थसिद्धत्वान्मैत्रेय उवाचेत्यस्य स्वाख्यानादावभिधानान्नेह प्रयुक्तम्। एवं प्रश्नेऽपि शुकवाक्यमर्थसिद्धं ज्ञेयम् गङ्गायमुनयोर्महानद्योरन्तरा मध्ये स्थितं ब्रह्मावर्ताख्यं क्षेत्रं क्षेत्रे आवसन् "उपान्वध्याङ्वसः,, इत्याधारस्य कर्मसंज्ञायां द्वितीया आरब्धानेव प्राचीनकर्मायत्तानेव भोगानपूर्वसाधनानुष्ठानारब्धान् तत्रहेतुः पुण्यजिहासया पुण्यक्षपणेच्छया मुमुक्षोः पापवत्पुण्यस्यापि स्वफलजननद्वारा मोक्षविरोधित्वेन पुण्यस्यापि जिहासितव्यत्वबुद्धिमतः मोक्षविरोधिभागे साधनत्वेन कर्मानुष्ठानासम्भवादिति भावः बुभुजे अनुभूतवान् ॥ ११ ॥

सर्वत्रास्खलितः अप्रतिहतः आदेश आज्ञा यस्य सप्तद्वीपेषु एक एव दण्डं धारयति तथा स्वसमानराजान्तररहित इत्यर्थः दण्डधारणं किं सर्वत्र न ब्राह्मणकुलादन्यत्रापि किं सर्वत्र न किन्तु अच्युतगोत्रतः अच्युतगोत्रात् अन्यत्र जात्यन्तरेष्वपि भागवतकुलादन्यत्रेत्यर्थः ॥ १२ ॥

एकदा महासत्रदीक्षा आसीत् महासत्रसङ्कल्पं कृत्वा तत्र दीक्षितोऽभूदित्यर्थः तत्र महासत्रे दिवौकसां देवानां ब्रह्मर्षीणां देवर्षीणां च समाजः सभा आसीदित्यर्थः हे सत्तम! ॥ १३ ॥

तस्मिन् समाजे महत्सु पूज्येषु यथायोग्यं पूजितेषु सत्सु स्वेनेति शेषः सदसः मध्ये उत्थितः सन् समन्ततः समैक्षतेति षष्ठेनान्वयः तं विशिनष्टि। ताराणां मध्ये उडुराडिव चन्द्र इव स्थितः ॥ १४ ॥

प्रांशुरुन्नतः पीनावायतौ दीर्घौ भुजौ यस्य पद्मवदरुणे ईक्षणे यस्य शोभना नासिका यस्य सुन्दरं मुखं यस्य सौम्यः प्रसन्नः पीनावंसौ स्कन्धौ यस्य शोभना द्विजा दन्ता यस्मिन् तत्स्मितं यस्येति बहुव्रीहिगर्भो बहुव्रीहिः ॥ १५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्रद्धावतः श्रोतुं यस्मिञ्छ्रद्धा विदुषा तदेव वक्तव्यमिति भावयन्मैत्रेयस्तत्रोत्तरत्वेन तत्कथामाह। गङ्गेति। यावद्भिर्भोगैर्देहस्थितिः स्यात्तानेव नाधिकानित्येवकारार्थः तानपि पुण्यजिहासया पुण्यक्षयाभिप्रायेण न सुखार्थम् ॥ ११ ॥

सर्वत्रेत्युक्तं सङ्कोचयति। अन्यत्रेति। अच्युतगोत्रतो वैष्णवकुलात् "गोत्रं नाम्नि कुले खलम्,, इति यादवः ॥ १२ ॥

ज्ञानिनः प्रारब्धकर्मभोगस्य नियतत्वेन सिद्धत्वात्तेतद्वर्णनमपेक्षितमन्यत्किञ्चिच्छ्राव्यमस्ति चेद्वक्तव्यमिति तत्राह। एकदेति "यज्ञभेदे सदादाने सत्रमाच्छादनेवन" इत्यभिधानात् दीक्षेति विशेषणाद्दीक्षायत्र इत्यर्थः समाजः सम्मेलनम् ॥ १३ ॥

दानार्थं भोजनार्थं वा मिथो निरीक्षणार्थं चेतस्ततः सङ्गच्छन्ते जनाः किमत्र चोद्यमिति तत्राह। तस्मिन्निति। तस्मिन्समाजेऽर्हत्सु सम्मान्येषु "अर्हन्तौ जिनसम्मान्यौ,, इति यादवः उडुराट् चन्द्रः स राजा समन्ततश्चतुर्दिक्षमुपविष्टानैक्षतेति षष्ठश्लोकेनान्वयो वेदितव्यः ॥ १४ ॥

कथम्भूत इति तल्लक्षणं वक्ति। प्रांशुरित्यादिना। गौरो निर्मलः यद्वा "गौरोऽरुणे सिते पीत" इति वचनात् गौरश्चन्द्रांशुप्ववर्ण- विशेषविशिष्टत्वं वक्ति कञ्जारुणेक्षण इत्यादिना सौम्यः सुन्दरः विप्रप्रियो वा सोमयोग्यो वा द्विजा दन्ताः ॥ १५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तस्मिन्निति सार्द्धषट्कम् ॥ १४—१५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

आरब्धानेवेति। मत्वेति शेषः। यद्यपि भगवदवतारत्वेन भक्तत्वेन च न तस्य प्रारब्धं कर्म तदपि भक्तिभूम्नातिदैन्येन प्राकृतजीव एवाऽहं सुखदुःखाभ्यां पुण्यपापे जिहासामीति तदभिमानो ज्ञेयः ॥ ११ ॥

अच्युत एव गोत्रं प्रवर्त्तकतुल्यो येषां तेभ्यश्चेति वैष्णवानां वर्णाश्रमाभावो व्यञ्जितः। अन्यत्रेति ब्राह्मणानां शास्तृत्वे तत्तद्वेदाचार्यमेव वैष्णवानां तु तत्तन्मन्त्रगुरुमेव शास्तृत्वे व्यवस्थाप्येत्यर्थः। "पुत्रांश्च शिष्यांश्च नृपोगुरुर्वा मल्लोककामो मदनुग्रहार्थः। इत्थं विमन्युरनुशिष्यात्,,इति ऋषभोक्तेः ॥ १२ ॥

एकदा तस्य महासत्रदीक्षा आसीत्। तत्र सत्रे देवानाञ्च समाज आसीत् ॥ १३ ॥

अर्हत्सु पूज्येषु ऋष्यादिषु किञ्चिद्विज्ञापनार्थमुत्थितः सन् समैक्षतेति षष्ठेनान्वयः ॥ १४ ॥

प्रांशुरुन्नतः ॥ १५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

गङ्गायमुनयोरन्तरा मध्ये यत् क्षेत्रं तदावसन् पूर्वकर्मभिः प्रारब्धानेव बुभुजे ननु भोगार्थं करोति लोकसंग्रहार्थं तु पुण्यानि करोत्येव पूर्वकर्मफलभोगोऽपि पुण्यजिहासया पुण्यकर्मक्षपणेच्छया नत्विन्द्रियप्रीतये। प्रारब्धानेव बुभुजे भोगान् पुण्यजिहासयेत्युक्तिर्मुमुक्षुरितिद्योतनाय। भगवदवतारस्य कर्मफलभोगाद्यसंभवात्। यत्र क्षेत्रज्ञे भगवद्गुणाद्यावेशस्तस्यापि बद्धत्वासंभवेन कर्मफलभोक्तृत्वासंभवाच्चेत्यलं विस्तरेण एवमृषभपरशुरामादिष्वपि बोध्यम् ॥ ११ ॥

सर्वत्र सर्वदेशवर्तिषु जनेषु अस्खलितः आदेशो यस्य सः सप्तद्वीपेषु एक एव दण्डं धृष्णोति प्रगल्भते इति दण्डधृक्। अन्यत्रेत्यनेन तयोः पूज्यत्वेन प्रायः शासनानर्हत्वात् ॥ १२ ॥

एकदा एकस्मिन्काले महासत्रदीक्षा आसीत् पृथोरिति शेषः तत्र तस्मिन्काले देवादीनां समाजः आसीदित्यर्थः ॥ १३ ॥

तस्मिन्समाजे अर्हत्सु पूज्येषु यथार्हतः स्वर्चितेषु सत्सु ताराणामुडुराट् चन्द्र इव सदसो मध्ये उत्थितः सन् समन्ततः समैक्षतेति षष्ठेन सम्बन्धः ॥ १४-१५ ॥

---

### भाषाटीका।

मैत्रेयजी बोले गंगा यमुना दोनों के मध्य में ब्रह्मावर्त क्षेत्र में निवास करते हुये महाराज पुण्यपापकर्मों के नाश करने की इच्छा से प्रारब्ध कर्मों को भोगते रहे ॥ ११ ॥

सर्वत्र उनकी आज्ञा स्वतन्त्रतासे रही सातों द्वीप के नियंता एकही थे परंतु ब्राह्मण वैष्णव इन दोनों कुलोंका नियमन नहीं करते थे ॥ १२ ॥

न्यूढवक्षा बृहच्छ्रोणिर्वलिवल्गुदलोदरः ।
आवर्त्तनाभिरोजस्वी काञ्चनोरुरुदग्रपात् [१] ॥ १६ ॥
सूक्ष्मवक्रासितस्निग्धमूर्द्धजः कम्बुकन्धरः ।
महाधने दुकूलाग्र्ये परिधायोपवीय च ॥ १७ ॥
व्यञ्जिताशेषगात्रश्रीर्नियमे न्यस्तभूषणः ।
कृष्णाजिनधरः श्रीमान् कुशपाणिः कृतोचितः ॥ १८ ॥
शिशिरस्निग्धताराक्षः समैक्षत समन्ततः ।
ऊचिवानिदमुर्वीशः सदः संहर्षयन्निव ॥ १९ ॥
(२) चारुचित्रपदं श्लक्ष्णं मृष्टं गूढमविक्लवम् ।
सर्वेषामुपकारार्थं तदा अनुवदन्निव ॥ २० ॥

॥ राजोवाच ॥

सभ्याः ! शृणुत भद्रं वः साधवो य इहागताः ।
सत्सु जिज्ञासुभिर्धर्ममावेद्यं स्वमनीषितम् ॥ २१ ॥
अहं दण्डधरो राजा प्रजानामिह योजितः ।
रक्षिता वृत्तिदः स्वेषु सेतुषु स्थापिता पृथक् ॥ २२ ॥
तस्य मे तदनुष्ठानाद्यानाहुर्ब्रह्मवादिनः ।
लोकाः स्युः कामसन्दोहा यस्य तुष्यति दिष्टदृक् ॥ २३ ॥
य उद्धरेत्करं राजा प्रजा धर्मेष्वशिक्षयन् ।
प्रजानां शमलं भुङ्क्ते भगं [३] च स्वं जहाति सः ॥ २४ ॥
तत्प्रजा ! भर्तृपिण्डार्थं स्वार्थमेवानसूयवः ।
कुरुताधोक्षजधियस्तर्हि मेऽनुग्रहः कृतः ॥२५॥

भाषाटीका ॥

हे सत्तम ! विदुरजी तहाँपर एक समय में महासत्र की दीक्षा महाराज ने धारण करी तब देवता ब्रह्मर्षि राजर्षि इनका बड़ा समाज हुआ था ॥ १३ ॥

तिस समाज में पूजनीय पुरुषों की यथा योग पूजा होने पर सभा के मध्यमें महाराज ऐसे खड़े होकर सोभित भये जैसे तारों के मध्य में चंद्रमा दीखै ॥ १४ ॥

ऊंची जिनकी मूर्ति है पुष्ट विशाल भुजा हैं गौरवर्ण है लाल कमलसे नेत्र हैं सुंदर मुख है सुंदर नासिका है सौम्य स्वरूप है पुष्ट कांधे हैं मंदहास से शोभित सुंदर दांतहैं ॥ १५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यूढं विस्तीर्णं वक्षो यस्य वलिभिस्तिसृभिर्वल्गु सुन्दरं दलवदश्वोऽग्रमश्वत्थपत्रमिव उपरि विस्तृतमधस्तात्संकुचितमुदरं यस्य आवर्तवन्निम्ना नाभिर्यस्य काञ्चनवदुज्ज्वलावूरू यस्य उन्नताग्रौ पादौ यस्य ॥ १६ ॥

सूक्ष्माश्च ते वक्राश्चासिताश्च स्निग्धा मूर्द्धजा यस्य कम्बुवत्त्रिरेखाङ्किता कन्धरा यस्य परिधाय वासित्वा उपवीयोत्तरीयं कृत्वा ॥ १७ ॥

नियमे निमित्ते न्यस्तानि त्यक्तानि भूषणानि येन सः अत एव तैरनावृतत्वाद्व्यञ्जिताशेषगात्रेषु श्रीः स्वाभाविकी शोभा येन कृतान्युचितानि कर्माणि येन ॥ १८ ॥

शिशिरे सन्तापहरे स्निग्धे च तारे ययोस्ते अक्षिणी यस्य वक्ष्यमाणं वाक्यमुक्तवांश्च ॥ १९ ॥

चारु श्रोत्रप्रियम् चित्राणि पदानि यस्मिन् श्लक्ष्णं प्रशस्तं मृष्टं शुद्धं गूढं गम्भीरार्थम् अविक्लवमव्याकुलम् उक्तं स्वयमनुभूतमनुवदन्निव ॥ २० ॥

भापणे हेतुः धर्मं जिज्ञासुभिः पुंभिः सत्सु स्वमनीषितमा

(१) उदग्रवागिति श्रीविजयध्वजतीर्थः। (२) वीरराघवविजयध्वजतीर्थयोरिदंद्वयमेकमेव। (३) भागमिति विजयध्वजतीर्थः

## श्रीधरस्वामिकृतभावार्थदीपिका ।

वक्तव्यमतः प्रजानुशासनमिषेण जिज्ञासैव क्रियते न युष्मान्प्रति धर्मप्रवचनमिति भावः ॥ २१ ॥

इदानीं प्रजाः शिक्षयिष्यन् प्रजाशिक्षणादिकं ममावश्यकमित्याह । अहमिति त्रिभिः । पृथक् सेतुषु स्थापिता स्थापयिता॥२२॥

दिष्टकृत् प्राक्कर्मसाक्षीश्वरो यस्य तुष्यति तस्य वेदवादिनो यान् लोकानाहुः प्रजारक्षणाद्यनुष्ठानाते लोका मे स्युः कथंभूताः कामानां सम्यक् दोहः प्रपूरणं येषु ॥ २३ ॥

अन्यथा त्वनिष्टं स्यादित्याह । य इति । शमलं पापम् भगमैश्वर्यम् ॥ २४ ॥

तत्तस्माद्धेप्रजाः ! भर्तुर्मम पिण्डदानवत्परलोकहितार्थं स्वकार्यमेव कुरुत स्वधर्ममेवानुतिष्ठत अधोक्षजे धीर्येषां तादृशाः सन्तः वासुदेवार्पणदृष्ट्येत्यर्थः अनुग्रहः कृतो भवेदिति शेषः ॥ २५ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

व्यूढं विस्तीर्णं वक्षः यस्य बृहन्तौ पीनौ श्रोणी नितम्बौ यस्य वलिभिस्तिसृभिः मञ्जु सुन्दरं दलवदश्वत्थपर्णवत् उपरि विस्तृतमधस्तात्संकुचितमुदरं यस्य आवर्तगम्भिरा नाभिर्यस्य ओजस्वी इन्द्रियशक्तिमान् काञ्चनवदुज्ज्वलावूरू यस्य उदग्रौ उन्नतौ पादौ यस्य ॥ १६ ॥

सूक्ष्माश्च वक्राश्च सिताश्च स्निग्धाश्च मूर्द्धजा यस्य कम्बुवत्त्रिरेखाङ्किता कन्धरा कण्ठः यस्य महाधने अनर्घ्ये दुकूलश्रेष्ठे परिधाय वासित्वा उपवीय उत्तरीयं कृत्वा ॥ १७ ॥

नियमे निमित्ते न्यस्तानि त्यक्तानि अशेषभूषणानि येन अत एव तैरनावृतत्वात् व्यञ्जिताशेषावयवेषु श्रीः स्वाभाविकी शोभा येन श्रीमान् समुदायकान्तिमान् कुशपाणिः पवित्रपाणिः कृतानि उचितानि कर्माणि येन ॥ १८ ॥

शिशिरे सन्तापहरे स्निग्धे च तारे ययोस्ते अक्षिणी यस्य एवंभूत उर्वीशः सदस्यान् सन्तोषयन्निव इदं वक्ष्यमाणं वाक्यम् उक्तवान् वाक्यं विशिनष्टि। चारुचित्रपदं चारूणि चित्राणि पदानि यस्मिन् श्लक्ष्णं प्रसन्नं मृष्टं शुद्धमनपशब्दितं गूढ गम्भीरागाधार्थमविक्लवमव्याकुलम् ॥ १९ ॥ २० ॥

अयमस्मान्प्रति सर्वज्ञ इव धर्मानुपदेष्टुमुत्सहत इति बुद्ध्या सभ्या माक्रुद्धेयुरिति मनीषया स्ववाक्यश्रवणाय सभ्यान् प्रार्थयते । सभ्या इति । हेसभ्याः ! सभायामुपविष्टाः अनुपविष्टान् संबोधयति इह समभूमौ य आगता मूर्ध्नांश्रेत् मामसूयेरन्नित्यभिप्रायेण विशिनष्टि । साधव इति । नाहं ज्ञः किन्तु जिज्ञासुः जिज्ञासितव्यं विज्ञापयामीत्यभिप्रायेणाह । धर्मं जिज्ञासुभिः स्वमनीषितं ज्ञेयं सत्सु सतां समीपे आवेद्यं विज्ञापनीयं प्रजानुशासनव्याजेन जिज्ञासैव क्रियते न तु युष्मान्प्रति धर्म उपदिश्यत इति भावः ॥ २१ ॥

इदानीं प्रजारक्षणादिकं ममाप्यावश्यकमित्याह । अहमिति त्रिभिः । धात्रा भगवता प्रजानां दण्डधरत्वेनाहं योजितो नियुक्तः न केवलं दण्डधर एव किन्तु रक्षितृत्वेन आजीविकाप्रदत्वेन क्षेपु स्वस्ववर्णाश्रमोचितेषु सेतुषु धर्ममर्यादासु पृथगसङ्करेण स्थापयितृत्वेन च योजित इत्यर्थः ॥ २२ ॥

किं प्रजारक्षादिसाध्यं फलं तत्राह । तस्येति । ब्रह्मवादिनः परार्थतत्त्वस्य स्वानुष्ठानेनोपदेष्टारः प्रजारक्षणादिना राज्ञः यान् पुण्यलोकान् प्राप्यत्वेनाहुः ते लोकाः तस्य प्रजारक्षणादिनिष्ठस्य मे तदनुष्ठानात् प्रजारक्षणाद्यनुष्ठानात् कामसन्दोहा मत्समीहितकामपूरणा भवेयुः स्युरिति सम्भावनायां लिङ् स्वस्य मुमुक्षुत्वेन प्राकृतलोकस्य प्राप्यत्वाभावात् अतो ह्यहमाह यस्येति । यस्य प्रजारक्षणादिनिष्ठस्य दिष्टकृत् प्रजारक्षणादिकर्मसाक्षी ईश्वरः तुष्यति तस्मिन् तुष्टे मुक्तिरपि सुलभेति भावः ॥ २३ ॥

अन्यथा त्वनिष्टं स्यादित्याह । य इति । यो राजा धर्मेषु प्रजा अशिक्षयन् करं स्वामिग्राह्यभागमुद्धरेत् करमात्रं गृह्णीयादित्यर्थः तर्हि प्रजानां सम्बन्धि शमलं पापमेव भुङ्क्ते सः स्वीयं भगं ज्ञानशक्तिबलैश्वर्यादिकं च जहातीत्यर्थः ॥ २४ ॥

तत्तस्मात् हेप्रजाः ! भर्तुर्मम पिण्डार्थं पिण्डदानवत्परलोकहितार्थं स्वार्थं स्वार्थप्रयोजनमेव स्वस्ववर्णाश्रमोचितधर्ममेवासूयारहिताः कुरुत अनुतिष्ठत अधोक्षजधियः भगवद्विषयकबुद्धयः तदर्पणदृष्ट्येति यावत् "तत्कुरुष्व मदर्पणम्„ इति स्मृतेः ॥ २५ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्यूढवक्षा उन्नतवक्षाः वलीभी रेखाभिः अतिशयेन वल्गु सुन्दरमुदरं यस्य स तथा उदग्रवागुन्नतवाक् ॥ १६ ॥

सूक्ष्माश्च वक्राश्चासिता नीलाश्च स्निग्धाश्च मूर्द्धजाः केशा यस्य स तथा कम्बुवत्त्रिरेखाङ्कितवृत्तशङ्खवत्कन्धरा यस्य स तथा उपधायोत्तरीकृत्य ॥ १७ ॥

नियमे यज्ञनियमविषये ॥ १८ ॥

किमर्थं निरीक्षणमिति अविदुषां चित्तव्याकुलतां परिहरति । ऊचिवानिति । चित्राणि पदानि यस्मिंस्तत्तथा श्लक्ष्णं मधुरं हृद्यं हृदयप्रियं गूढमर्थतो गम्भीरमविकलचमत्कारमस्खलितमिति यावत् वचनमिति शेषः ॥ १९ ॥ २० ॥

किमनेन चित्तव्याकुलता परिहृतेति तत्राह । सभ्या इति । वो भद्रमस्त्वित्युक्तं प्रथमं चित्तव्याकुलतापरिहारायेति ज्ञातव्यं धर्मं जिज्ञासुभिर्ज्ञातुकामैः पुरुषैः स्वमनीषितं सत्सु योग्येष्वावेद्यम् ॥ २१ ॥

किन्तत्स्वमनीषितमित्यत उक्तम् । अहमिति । "दण्डोऽस्त्री शासने राज्ञां हिंसायां लकुटे गुड" इत्यभिधानात् तत्तद्योग्येषु तं तं दण्डं धारयतीति दण्डधरः धात्रा हरिणा धातृशब्दार्थं लक्षयति । लक्षितेत्यादिना । स्थापिता स्थापयिता ॥ २२ ॥

तस्य मे कामान् सन्दुहन्तीति कामसन्दोहाः कर्मण्यण्प्रत्ययः कामानां सन्दोहा येष्विति वा लोकाः स्युरिति ब्रह्मवादिनः आहुरिति यद्यस्मात्तस्मादेतत्फलमन्वीक्ष्याहं धात्रेह प्रजापालनादौ योजित इत्यन्वयः तदनुध्यानात्तस्य प्रजापालनस्यानुष्ठानादित्यनुवादः श्रीनारायणप्रसादेन भाविनो लोकाः कथं प्रजापालनेन स्युरिति तत्राह । यस्येति ॥ २३ ॥

व्यतिरेकमाह । य उद्धरेदिति । भागं षष्ठांशं पुण्यम् ॥ २४ ॥

इदानीं प्रजाः प्रत्याह । तत्प्रजेति । यस्मात्प्रजानामरक्षणे प्रत्यवायो भवति तत्तस्मात् हेप्रजाः ! यद्यनसूयवो यूयमधोक्षजे हरौ धियं कुरुत तर्हि नोऽनुग्रहः कृतो भवेदित्यन्वयः तवानेन किं तत्राह । भर्तृपिण्डार्थमिति । भर्तुर्मम षष्ठांशलक्षणसुकृतात्स्वप्रयोजनाय न केवलं मम युष्माकमप्यस्ति प्रयोजनमित्याह । स्वार्थमिति ॥ २५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

काञ्चनोरुरिति काञ्चनस्तम्भमूर्वोरित्यर्थः। उदग्रवागिति चिवसुखः॥ १६॥

परिवीयोपवीयचेति सम्बन्धोक्तिः॥ १७—१९॥

चारुचित्रेति स्वरवर्णोच्चारविशेषेण चारु श्रोत्रप्रियम्। अनुप्रासादिना चित्रपदम्। अश्लीलनिरासेन सविनयनैव सर्वहितार्थाभिरुचिरार्थोपदेशेन श्लक्ष्णां प्रशस्तं व्याकरणानुगमेन मृष्टं शुद्धम्। सुविचारलक्ष्यतात्पर्यत्वेन गूढं गम्भीरार्थम्। अतिस्वराद्यभावेन पूर्वपराविरोधेन च अविक्लवमव्याकुलम्॥ २०—२२॥

तस्येति। कामिनृपाणामपि तादृशभगवदादेशप्रवर्त्तनार्थमेवोक्तं ननु स्वार्थं वासनार्थं तु लोका भक्तजनाः। दिष्टदिगिति सम्बन्धः दिष्टं दिशतीति॥ २३—२५॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

व्यूढं विस्तीर्णं वक्षो यस्य सः। वलिभिस्त्रिवलिभिर्वल्गु सुन्दरं दलवत् अश्वत्थपत्रमिवोपरि विस्तृतमधस्तात् संकुचितमुदरं यस्य दक्षिणावर्त्तवन्निम्ना नाभिर्यस्य सः काञ्चनस्तम्भाविवोरू यस्य उन्नताग्रौ पादौ यस्य सः॥ १६॥

उपवीय उत्तरीयं कृत्वा॥ १७॥ १८॥ १९॥

चारु मनोहरत्वात् सरसं चित्रपदं सालङ्कारं श्लक्ष्णं मधुराक्षरं मृष्टं निर्दोषम्। गूढं सव्यङ्ग्यम् अविक्लवं स्फुटितार्थबोधकम्॥२०॥

साधवो य इत्यन्यैरागतैरपि मम न प्रयोजनमिति भावः। न च नृपत्वादहं युष्मान् किमप्यादिशामि शास्मि वा। किन्तु किमपि जिज्ञासुरहं युष्मानिरेव शासनीय आदेश्यश्चेत्याह। सत्सु साधुषु भागवतः प्राज्ञेषु सत्सु धर्मं जिज्ञासुभिः पुंभिः स्वमनीषितं स्वविचारितमात्मीयं ज्ञापयितुमर्हमेव स्वेषु प्रामाण्यथाभावादिति भावः॥ २१॥

न च त्वं राजा अस्माकमाराधनीय इति वाच्यं प्रत्युत युष्माकमेव दण्डादिसाधनलक्षणे आराधने परमेश्वरेणाहं प्रवर्त्तित इत्याह। अहमिति। धात्रा परमेश्वरेण नियोजितः कुत्र कुत्र कर्म्मणीत्यत आह। दण्डधर इति। विकर्मरोगोपशमनौषधरूपे दण्डधर इत्यर्थः। रक्षितेति दस्युचौरादिभ्यो रक्षणे वृत्तिद इति जीविकाप्रदाने। सेतुषु पृथक् पृथक् स्थापयितेति प्रति स्ववर्णाश्रमाविधर्ममर्य्यादायाः स्थापने इति युष्माकं बहुविधपरिचरणभारोऽस्मन्मूर्द्ध्नि न्यस्तो वर्त्तत इति भावः॥ २२॥

तस्याहं प्रतिमासिकं प्रतिवार्षिकं वेतनमपि प्राप्नोमीत्याह। तस्य मम तत्तत्स्वकर्मानुष्ठानाद् यान् लोकान् प्राप्यान् ब्रह्मवादिन आहुस्ते स्युरित्यन्वयः। लोकाः पारत्रिकाः मदिच्छानुरूपाः कामानां मदभिलषितानां सम्यग्दोहः प्रपूरणं यत्र यस्य ममेति दिष्टदृक् सर्वधर्मसाक्षी मत्प्रभुः। यदुक्तं तेनैव श्रेयः प्रजापालनमेवेत्यादि॥ २३॥

किञ्च। मम कृत्येषु मध्ये धर्मप्रवर्त्तनमेव मुख्यं नित्यञ्च यदभावे ममाप्यनिष्टं स्यादित्याह। य इति भगमैश्वर्यम्॥ २४॥

तत्तस्माद् हे प्रजाः! भर्त्तुर्भरणकर्त्तुर्मम पिण्डार्थं पिण्डदानवत् परलोकहितार्थं स्वेषामेवार्थं कार्य्यं कुरुत युष्माभिः स्वकृत्ये कृते सति मम कृतार्थता भविष्यतीति नात्र मदर्थं पृथक् कोऽपि भारो भवतामिति भावः। स्वार्थमेव वदन् विशिनष्टि। हे अधोक्षजधिय इति "मय्येव मन आधत्स्व मयि बुद्धिं निवेशयेति" भगवद्गीताप्रामाण्याद्भगवन्तं भजतेत्यर्थः॥ २५॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

व्यूढं विशालमुरो वक्षो यस्य वलिभिस्त्रिवलिभिर्वल्गु सुन्दरं दलवदधोऽश्वत्थपत्रवदुदरं यस्य सः। काञ्चनस्तम्भाविवोरू यस्य उन्नताग्रौ पादौ यस्य स तथा॥ १६॥

सूक्ष्माः वक्राः असिताः कृष्णाः स्निग्धाः मूर्द्धजाः केशा यस्य। कम्बुवत्कन्धरा ग्रीवा यस्य वासः परिधाय उत्तरीयमुपवीयोपवीतमिव धृत्वा॥ १७॥

व्यञ्जिता प्रकटिता अशेषगात्रश्रीः शोभा यस्य नियमे निमित्ते न्यस्तानि भूषणानि येन॥ १८॥

शिशिरे सन्तापघ्ने स्निग्धे च तारे यस्य ते अक्षिणी यस्य स तथा इदं वक्ष्यमाणं वाक्यमूचिवान्॥ १९॥

चारूणि मनोहराणि चित्राणि पदानि यस्मिन् तत् मृष्टं गम्भीराभिप्रायम् अविक्लवं वैक्लव्यरहितम् किं बहुना मृष्टं सर्वगुणयुक्तत्वात् श्लक्ष्णं प्रशस्तं सर्वदोषवर्जितत्वात्॥ २०॥

धर्मं जिज्ञासुभिः ज्ञातुमिच्छद्भिरस्मद्विधैः पुरुषार्थसिद्धये स्वमनीषितं सत्सु शिष्टेषु आवेद्यं युक्तमयुक्तं चेति परीक्षार्थं विज्ञापनीयं शृणुत॥ २१॥

सत्सु स्वमनीषितविज्ञापनमिषेण प्रजाशिक्षणादौ प्रवृत्तः प्रजाशिक्षणाद्यधिकारं स्वस्य दर्शयति। अहमिति। धात्रा परमात्मना पृथग्वर्णाश्रमोचितेषु मर्यादासु प्रजानां स्थापिता योजितः कृतः मर्यादावर्त्तां रक्षिता वृत्तिदश्च योजितः। निर्मर्यादानां दण्डधरः योजित इत्यन्वयः॥ २२॥

प्रजारक्षणादिफलमाह। तस्येति। दिष्टदृक् दैवज्ञो हरिर्यस्य तुष्यति तस्य ब्रह्मवादिनो यान् लोकानाहुः ते कामसन्दोहाः कामपूरकाः लोकाः तस्य धातृनियोगकर्तुर्मे तदनुष्ठातुः प्रजारक्षणाद्यनुष्ठानात्स्युः॥ २३॥

प्रजारक्षणाद्यभावे दोषमाह। य इति। शमलं पापम् भगमैश्वर्यम्॥ २४॥

तत्तस्मात् हेप्रजाः! अनसूयवः असूयादोषारोपस्तद्रहिताः भर्तुः पिण्डार्थं मम तुष्ट्यर्थं स्वकल्याणार्थं च कुरुत पृथक् हे सेतुषु निष्ठामिति शेषः कथम्भूताः अधोक्षजधियः स्वधर्मैर्हरिमेवाराधनीय इत्येवं वासुदेवविषयकबुद्धयः तर्हि वो भवताम् अनुग्रहः कृतः स्यात्॥ २५॥

भाषाटीका।

जिनके विस्तृत तथा स्थल है कटि भागस्थूल है त्रिवलियों से शोभित पीपल के पत्र सरीका उदर है गहरी नाभी है दिव्य तेजहै सुवर्ण से प्रकाशमान जंघाहैं ऊंचे चरणहैं॥१६॥

जिन के पतले टेढे चिकने केश हैं शङ्खसी ग्रीवा है बड़े मूल्य के उत्तम दो वस्त्रों को पहिर ओढे हैं॥ १७॥

यज्ञ के नियम से सब भूषणों के छोडदेने से सकल शरीर की शोभा प्रगट हो रही है जिन के कृष्ण मृग के चर्म को धारण किये हैं दिव्य शोभा युक्त हैं सन्ध्यादि कर्मों को किये हैं कुशा को हाथ में लिये हैं॥ १८॥

सन्ताप को मिटाने वाली नेत्र की पुतली हैं जिनके ऐसे पृथु महाराज ने देखा चारोंतरफ फिर सभा को खुसी करते हुये वचन बोले॥ १९॥

यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः ।
कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत्प्रेत्य तत्फलम् ॥ २६ ॥
अस्ति यज्ञपतिर्नाम केषांचिदर्हसत्तमाः! ।
इहामुत्र च लक्ष्यन्ते ज्योत्स्नावत्यः क्वचिद्भुवः ॥ २७ ॥
मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः ।
प्रियव्रतस्य राजर्षेरङ्गस्यास्मत्पितुः पितुः ॥ २८ ॥
ईदृशानामथान्येषामजस्य च भवस्य च ।
प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृता ॥ २९ ॥
दौहित्रादीनृते मृत्योः शोच्यान् धर्मविमोहितान् ।
वर्गस्वर्गापवर्गाणां प्रायेणैकात्म्यहेतुना ॥ ३० ॥
यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः ।
सद्यः क्षिणोत्यन्वहमेधती सती यथा पदाङ्गुष्ठविनिःसृता सरित् ॥ ३१ ॥
विनिर्धुताशेषमनोमलः पुमानसङ्गविज्ञानविशेषवीर्यवान् ।
यदङ्घ्रिमूले कृतकेतनः पुनर्न संसृतिं क्लेशवहां प्रपद्यते ॥ ३२ ॥

भाषाटीका ।

सुन्दर विचित्र पदोंवाली अतिसरल बहुत सफ़ा गूढ आशयवाली प्रगल्भ ऐसी वाणी सबके उपकार के लिये बोले ॥२०॥ महाराज बोले हे सभा वाले साधुजन जो यहां आये हो आपका भला हो आप सुनो जो सत्पुरुष हैं उन के विषय में जिज्ञासु पुरुषों को अपना विचार जनाना चाहिये ॥ २१ ॥
मैं इस संसार में प्रजों के मध्य में दण्ड देने वाला रक्षा करने वाला सब की जीविका देने वाला अपने मर्यादाओं में अलग् अलग् स्थापन करने वाला राजा नियोजित हुआ हूं ॥ २२ ॥
उन धर्मों को मैं अनुष्ठान करूंगा तब भगवान् सन्तुष्ट होंगे तब कामना के पूरण करने वाले जो लोक ब्रह्मवादियों के कहे हैं सो मेरे को मिलेंगे ॥ २३ ॥

जो राजा प्रजों को धर्म में शिक्षा नहीं दे कर किस्ती लेता है वह प्रजा के पाप को भोगता है अपने ऐश्वर्य को नाश करता है ॥ २४ ॥

तिस हेतु से हे प्रजा गण! अपने मालिक के परलोक सुधरने को अपने भले होने को परमात्मा में मन लगाकर सब कर्म करो तो मेरे पर बडा अनुग्रह होगा ॥ २५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शास्तुः शिक्षयितुरनुज्ञातुरनुमोदितुश्च प्रेत्य परलोके यत्फलं तत्तु तुल्यम् ॥ २६ ॥

कर्म कर्तव्यमित्यनुमोदामहे ननु वासुदेवेऽर्पणीयमिति वेनादिभिस्तदङ्गीकारादित्येवं वादिनः शनैः सम्बोधयन्नाह हे अर्हसत्तमाः! यज्ञपतिर्नाम परमेश्वरः केषाञ्चिन्मते तावदस्ति तथापि विप्रतिपत्तेर्न तत्सिद्धिरित्याशङ्क्य जगद्वैचित्र्यान्यथानुपपत्तिप्रमाणयति । इहामुत्र च ज्योत्स्नावत्यः कान्तिमत्यो भुवो भोगभूमयः शरीराणि च ॥ २७ ॥

नन्विदं कर्मवैचित्र्यादेव सेत्स्यति तथापि विद्वदनुभवेनेश्वरसिद्धिरित्याह। मनोरिति त्रिभिः। अस्मत्पितामहस्याङ्गस्य॥ २८ ॥

कृत्यमस्ति । अवश्यं कर्मफलदात्रा साध्यमिति तेषां मतमित्यर्थः ॥ २९ ॥

मृत्योर्दौहित्राद्वेनादीन्विना धर्मे विमोहितान् अतः शोच्यान् ननु कर्मैव फलं दास्यति विध्युद्देशगतायादेवताः किं परमेश्वरेणात आह। वर्गेति वर्गोऽर्थत्रिवर्गः स्वर्गो धर्मस्यफलमपवर्गो मोक्षस्तेषामैकात्म्येनैकरूप्येण सर्वानुगतेन हेतुना तत्रापि प्रायेण हेतुना अयम्भावः न तावज्जडस्य कर्मणः फलदातृत्वं घटते नचार्वाग्देवतानां स्वातन्त्र्यम् अन्तर्यामिश्रुतेः । नच तदा कर्मसाम्ये फलतारतम्यं क्वचित्तदसिद्धिश्च सम्भवति । अतः स्वातन्त्र्येण कर्तुमकर्तुमन्यथा कर्तुं समर्थेन परमेश्वरेण भाव्यमिति ॥ ३० ॥

किञ्च । जीवानां मोक्षदः परमेश्वर एव नार्वाग्देवतास्तासामपि जीवत्वाविशेषादित्याशयेनाह । त्रिभिः । यस्य पादयोः सेवायामभिरुचिस्तपस्विनां संसारतप्तानामशेषैर्जन्मभिः समृद्धं धियां मलं सद्यः क्षपयति तमेव भजतेति तृतीयेनान्वयः कथम्भूता अहन्यहनि वर्द्धमाना सती सात्विकी तत्पादसम्बन्धस्यैव महिमेति दृष्टान्तेनाह । यथेति ॥ ३१ ॥

विनिर्धुता अशेषा मनोमला यस्य असङ्गो वैराग्यं तेन विज्ञानस्य विशेषः साक्षात्कारस्तदेव वीर्यं यस्य । यस्याङ्घ्रिमूले कृताश्रयः सन् ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

यूयं तन्मदनुशासनमनुमोदध्वं किमनुमोदनमात्रसाध्यं तत्राह । कर्तुरिति । यद्यस्मात्कर्तुः प्रयोज्यस्य शास्तुः प्रयोजकस्य अनुज्ञातुः अनुमन्तुः तत्रा प्रवृत्तस्य प्रवर्तकत्वं प्रयोजकत्वं प्रवृत्तस्य प्रवर्तकत्वमनुमन्तृत्वमिति विवेकः प्रेत्येति कृदन्तयोगात्कर्तरि षष्ठी कर्त्रादिभिः प्रेत्य परलोकं प्राप्य तुल्यं फलमनुभूयत इत्यर्थः ॥ २९ ॥

अत्र यस्य तुष्यति दिष्टदृक् कुरुताधोक्षजाधिय इति कर्मणां भगवदाराधनरूपत्वमाराधितात्कर्मभिर्भगवतश्च फलप्राप्तिरवगम्यते तत्र निरीश्वरवादिनां केषाञ्चिन्मत इदमुक्तमनुपपन्नमित्युद्भाव्येश्वरसिसाधयिषया तत्सद्भावं तावत्प्रतिजानीते । मस्तीति । ते हि निरीश्वरवादिन एवमाहुः प्रकृतिपुरुषातिरेकेणेश्वराख्यः कश्चित्पदार्थो न विद्यते प्रमाणाभावात् न तावत्प्रत्यक्षं तदविषयत्वात् तस्य नाप्यनुमानं प्रत्यक्षोपलब्धसाध्यधर्माव्यभिचारिसाधनधर्मविषयत्वेनानुमानस्य प्रत्यक्षाविषये तदप्रवृत्तेः नापि शब्दः न तावल्लौकिकः भ्रमप्रमादादिदोषसंस्पर्शसम्भावनया तस्य प्रामाण्यनिश्चयायोगात् नापि "सत्यं ज्ञानमनन्तं निष्क्रियं निष्कलम्" इत्यादिवैदिकशब्दः लोके वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासम्भवात् व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्यरूपार्थ एव शब्दस्य प्रामाण्यमिति लौकिकव्युत्पत्त्यनुसारेण वैदिकशब्दानामपि कार्यवस्तुपरत्वेनैव व्युत्पत्तिनिश्चयात्सिद्धरूपे ईश्वरे तेषां प्रामाण्यासम्भवात् अत एवास्मात्फलप्राप्तिश्चासम्भाविनी न चेष्टा पूर्तं बहुधाजातं ब्रह्मविदाप्नोति परमित्यादिकमामुष्मिकं ब्रह्मोपासनात्तत्प्राप्तिरूपं च फलं श्रुतमिति वाच्यं तस्य कर्मसु कर्तृभूतस्य प्रत्यगात्मनो याथात्म्यवेदनप्रतिपादनपरत्वात् अतः कर्तुः संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात्तत्र फलश्रुतिरर्थवादमात्रं न च विचित्रसृष्ट्यन्यथानुपपत्त्या ईश्वरसिद्धिस्ततः फलसिद्धिश्चेति वक्तुं युक्तं पुण्यापुण्यरूपानुष्ठितकर्मसंस्कृतायाः प्रकृतेरेव पुरुषार्थानुरूपं विचित्रपरिणामसम्भवात् यथा विषादिदूषितानामन्नपानादीनामौषधविशेषाप्यायितानां च सुखदुःखहेतुभूतपरिणामविशेषस्य देशकालादिव्यवस्थया दर्शनं तद्वदिति संग्रहः हेसत्तमाः ! केषाञ्चिदास्तिकानां मते यज्ञपतिर्नाम यज्ञाराध्यस्तत्फलप्रदश्चेश्वराख्यः कश्चिदस्ति तत्र तावद्विचित्रसृष्ट्यन्यथानुपपत्तिं प्रमाणयति । इहामुत्रचेति । इह लोके चामुष्मिंश्च लोके ज्योत्स्नावत्यः प्रकाशवहुलाः भुवः विचित्रा भोगभूमयः तल्लोकारो विचित्रशरीराश्च दृश्यन्ते एतच्च दर्शनमीश्वरमन्तरेणानुपपन्नं यदुक्तम् प्रकृतेरेव जीवकर्मानुगुणं विचित्रपरिणामसंभव इति नैतदुपपद्यते सर्वेश्वरानधिष्ठितायाः तस्या विचित्रपरिणामासंभवात् यद्यनधिष्ठिताया अपितस्याः परिणामः संभाव्येत तर्हि प्रलयदशायां तस्याः विचित्रपरिणामार्थमीश्वरानपेक्षणात् सततपरिणामस्वभावत्वे नापरिणामित्वेनावस्थानं न स्यात् ईश्वराधिष्ठितत्वे तु तस्य सत्यसंकल्पत्वेन विचित्रसृष्टितदभावावुपपन्नौ नच क्षेत्रज्ञाधिष्ठितत्वेन तावुपपन्नाविति वक्तुं शक्यं तेषामनुन्मत्तानां स्वेच्छयैव स्वानर्थावहापुण्यानुष्ठानपूर्वकपशुपादपत्वादिशरीरापादनस्यासम्भवात् ईश्वराभ्युपगमे तु "इष्टापूर्तं बहुधा जातं जायमानम् ।

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥

इत्युक्तरीत्या भागवान्पुरुषोत्तमोऽवाप्तसमस्तकामः सत्यसङ्कल्पःस्वमाहात्म्यानुगुणलीलाप्रवृत्तः एतानि समीचीनान्येतान्यसमीचीनानीति कर्मद्वैविध्यं संनिधाय दानोचितदेहेन्द्रियादिकं तन्नियमनशक्तिं च सर्वेषां सामान्येन प्रदिश्य स्वशासनावबोधिवेदाख्यशास्त्रं च तदुपसंहारार्थं चान्तरात्मतयानुप्रविश्यानुमन्तृतया च च्छन् तत्र पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं धर्मार्थकाममोक्षैर्वर्द्धयति शासनातिवर्तिनं च तद्विपर्ययैर्योजयति सर्वमेतदुपपन्नं वैचित्र्यामिति भावः न च सत्यं ज्ञानादिभिः कर्माङ्गभूतप्रत्यगात्मयाथात्म्यं विविच्यते इति शक्यं कर्तुः प्रत्यगात्मनः शुद्धस्याशुद्धस्य च खद्योतकल्प... यादिहेयसम्बन्धयोगस्यासम्भावनीयस्वरूपस्वभावयोः निरस्ताखिलहेयगन्धानन्तकल्याणगुणाकरस्वसङ्कल्पकृतजगदुदयविभवलीलसर्वशक्तित्वज्ञानानन्दादिस्वरूपस्वभावैकान्तयोः ... तथाहि "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः तदैक्षत बहुस्यां प्रजायेय ... तत्तेजोऽसृजत यः सर्वज्ञः सर्ववित् यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति नचैषां वाक्यानां सिद्धवस्तुपरत्वासम्भवः ... याहच्छिकव्युत्पत्तेरपि शारीरकमीमांसायां सिद्धान्तितत्वेन ... एव व्युत्पत्तिरिति निर्बन्धस्य निर्निबन्धनत्वात् फलश्रुतिरर्थवाद... त्यपि न युक्तिमत् अर्थवादादेः प्रतियमानार्थे तात्पर्याभावे ... रात्रिसत्रप्रतिष्ठापगोरणशतयातनासाध्यसाधनभावे शर्कराद्रव्यपशुविशेषादेरर्थवादोक्तस्यापि विवक्षिततत्त्वादिति संक्षेपः ।

केषां चिदित्युक्तानास्तिकान् प्रदर्शयन् तेषामीश्वराभ्युपगमोऽस्तीत्याह । मनोरिति । अस्मत्पितुः पितुः अस्मत्पितामहस्याङ्गस्य ॥ २८ ॥

अजस्य चतुर्मुखस्य भवस्य रुद्रस्य मन्वादीनां गदाभृता भगवता कृत्यं कर्म कर्तव्यं कर्म फलदानरूपं प्रयोजनमस्ति मन्वादीनां मते अवश्यं कर्मफलदात्रा भवितव्यमित्यभ्युपगतमित्यर्थः ॥ २९ ॥

नन्वचेतनस्य क्षणभाविनः कर्मणः फलप्रदत्वासंभवेऽदृष्टाख्यशक्तिकल्पनाद्वारेण फलसाधनत्वं स्यात् विध्युद्देशश्रुतताया वा किमीश्वरेणेति चेत्याशङ्कां परिहरन् दर्शयति । वर्गो धर्मादिःस्वर्गो धर्मफलं अपवर्गो मोक्षः एषां प्रायशः ऐकात्म्य... हेतुना एकमात्मा स्वरूपं येषां तेषां भाव ऐकात्म्यम् एकेनैव यत्वरूपैकात्म्यंतद्रूपेण हेतुना वर्गादीनामेकेनैव प्रदेयत्वश्रवणरूपहेतुना ईश्वरोऽभ्युपगतो मन्वादिभिरित्यर्थः तथा च "इष्टापूर्तं बहुधाजातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः तदेवाग्निः तद्वायुस्तत्सूर्यस्तदु चन्द्रमा" इत्यादि स्मर्यते च "यां यां तनुं भक्तः धर्मार्थकाममोक्षाख्यं य इच्छेत्" इत्यादि ... यजदेवपूजायामिति देवताराधनभूतयागाद्याराध्यभूताग्निवाय्वादिदेवतानामेव तत्तत्फलहेतुतया तस्मिन् तस्मिन्नपि ... व्यपदेशस्तावद्दृश्यते वायव्यंश्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्यादिषु तत्र हि कामिनःसिसाधयिषितफलसाधनत्वप्रदेशो विध्यपेक्षित एवेति नातत्परत्वशङ्का युक्ता एवमपौरुषेय... फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागेना श्रुतः ...

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

स्वशक्तिकल्पनमनुपपन्नं यद्वाग्व्यादीनां फलसाधनत्वं स एवैनं भूतिं गमयतीत्यादिना प्रतीतं तद्वाय्वाद्यात्मनाराध्यतया फलदायित्वेनावस्थितस्य परमपुरुषस्यैवेति श्रूयते इष्टापूर्त्तमित्यादिका तदेवाग्निस्तद्वायुरित्यादिका चेति अतोऽपूर्वस्य देवताया वा न फलसाधनत्वमिति मन्वाद्युपादानं प्रदर्शनमात्रं नतु परिगणनमित्याशयेनाह। दौहित्रादीनिति। धर्मे विमोहितान् धर्मस्वरूपतदनुष्ठानतत्साधनतत्फलसाधनादिकमजानानान् अत एव शोच्यान् मृत्योर्दौहित्रादीन् आदिशब्दः प्रकारे तत्सदृशानित्यर्थः वेनादीन् ऋते विना सर्वेषां मते ईश्वरोऽस्तीत्यर्थः ॥ ३० ॥

एवं केवलकर्मणां तन्मूलकापूर्वस्य स्वातन्त्र्येण देवतायाश्च फलसाधनत्वाभावः परमपुरुषस्यैव साधनभावश्चोपपादितः इदानीं तद्दृढिम्ने तस्य भगवत्पदारविन्दभजनस्यैवानर्थनिरासकत्वपूर्वकपुरुषार्थोपादकत्वमाह। यत्पादेति। तपः सन्ताप आध्यात्मिकादिः तप सन्ताप इति धात्वर्थानुरोधात् तद्वतां तापत्रयातुराणामित्यर्थः यस्य भगवतः पादयोर्या सेवा भक्तिस्तस्यामभिरुचिरहरहः प्रवर्द्धमाना सती अनेकजन्मभिः अनन्तजन्मभिरुपचितं सम्वर्द्धितं धियो मनसः मलं सद्यः क्षिणोति क्षपयति तमेव भजतेति तृतीयेनान्वयः तत्पादसम्बन्धस्यैव महिमेति दृष्टान्तेनाह। यथेति। यथा तत्पादाङ्गुष्ठविनिःसृता सरित् गङ्गा मलं क्षिणोति तथेत्यर्थः ॥ ३१ ॥

किं मलक्षपणसाध्यं तत्राह । विनिर्धुतं निरस्तमशेषं मनोमलं यस्य असङ्गो वैराग्यम् । इदं साधनसप्तकोपलक्षणं विज्ञानं प्रकृतिविविक्तात्मयाथात्म्यवेदनं ताभ्यां विशिष्यते इति विशेषः अङ्गभूतज्ञानकर्मकृतोपकार इत्यर्थः तदेव वीर्यं बलं यस्य भक्तियोगस्य सोऽस्यास्तीति तथा यस्य भगवतोऽङ्घ्रिमूले कृतकेतनः कृतस्थानः तदेकनिरतः अनेन भक्तियोगस्य विजातीयप्रत्ययान्तराव्यवहितत्वं विवक्षितम् ईदृशः पुमान् क्लेशवहां गर्भजन्मजरामरणादिक्लेशकारिणीं संसृतिं पुनर्न प्रतिपद्यते ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

सभ्याननुदिश्याह। यूयमिति। तेन किमस्माकं फलमित्यत उक्तम् अनुज्ञातुरिति । अनुज्ञात्रादीनां शास्त्रेषु यत्फलमुक्तं तत्तदनुज्ञानुसारिफलं स्यादित्यभिप्रायेण तुल्यमित्युक्तं नतु कर्त्रनुज्ञात्रोस्तुल्यफलत्वं स्यादन्यथा कृतहान्यादिदोषापत्तिरिति ॥ २६ ॥

ननु यद्यधोक्षजसद्भावे प्रमाणं स्यात्तर्हि तद्धियं कुरुतेति विधातुं युक्तं तदेव कुत इति तत्राह। अस्तीति। यद् दृष्टं तदेव सत् यददृष्टं तदेवासदिति वादिनोऽपेक्ष्य केषां चिदित्युक्तं केषां चिद्व्यासादीनां महात्मनां पक्षे यज्ञपतिर्नाम विष्णुरस्तीत्यन्वयः "यज्ञो यज्ञपतिर्यज्वा" इत्यादि स्मृतेः श्रीनारायणस्य प्रसादेन प्राप्या लोकास्तेन नियता देवताश्च सन्तीत्येतदेकोक्त्याह। इहेति। इह मनुष्यलोके तच्छरीरे च। अमुत्र स्वर्गादौ ज्योत्स्नावत्यः प्रकाशभूयिष्ठा भुवः स्थानविशेषाः इन्द्रियादिप्रेरकत्वेन भवनाद्भुवो देवताश्च दृश्यन्ते। प्रमाणात इति शेषः। "प्रकाशचक्षुषो देवा मानुषाश्चापि केचन" इति वचनात्। दुर्लभत्वात्क्वचिदित्युक्तमिहेत्यनेन बिलस्वर्गं लक्षयति सुखहेतुत्वेन चन्द्रिकया तुल्यरत्नप्रकाशेन प्रकाशितत्वात् ज्योत्स्नावत्य इति ॥ २७ ॥

केषां चिदिति सूचितांस्तान्नामतो निर्दिशति । मनोरिति । अस्मत्पितुर्वेनस्य पितुः ॥ २८ ॥

अजस्य ब्रह्मणः गदाभृतो हरेः । कृत्यं पूजालक्षणं कार्यमस्ति ॥ २९ ॥

स्वर्गादेरन्याधीनतया तत्प्राप्त्यर्थं तदुपादानस्यैव कर्तव्यत्वेन तत्र किं गदाभृतः कृत्येनेति तत्राह । राज्येति । राज्यादेः प्रायेणान्याधीनत्वमन्तरेणैवैकात्मनः समस्तात्प्रधानस्य हरेर्हेतुता कारणत्वम् । "एकात्मा हरिरुद्दिष्टः प्रधानत्वात्समस्ततः" इति वचनात् "ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः" इति श्रुतेः स्वर्गादिप्राप्त्यर्थमपि श्रीनारायणस्य पूजा ज्ञानजननी कार्येत्याशयः ननु प्रायः शब्दस्य प्राचुर्यार्थावधारणार्थत्वे निषिध्यावशिष्टान्तरनिषेधः कथं क्रियते इति चेन्न तस्यावधारणाक्षेपे प्रयोगदर्शनात् तदुक्तम् "प्रायः पदं स्यात्प्राचुर्ये चाक्षेपात्मावधारणे । अर्थक्षोऽवधृतिः क्षेपो सुखाक्षेपोऽवधारणम्" इति । एकश्चेतनो जीव एव राज्यादेः कारणमधिकृतत्वादिति चेन्न विपक्षाविरोधात् अनाम्नातत्वाच्च "एकात्मा हरिरुद्दिष्टः प्रधानत्वात्समस्ततः" इति । एतत्समाख्यानस्मृतिविरोधाच्च केषां चित्येनेन केषां चिन्नास्तीत्युक्तं नास्तिकानाह । दौहित्रादीनिति मृत्योर्दौहित्रो दुहितुः पुत्रो वेनः ॥ ३० ॥

यज्ञपतिरस्तु राज्यादेर्हेतुर्येन विधिना फलसिद्धिः स्यात्तं प्रकारमुपदिशेत्यत आह। यत्पादेति । अत्र गङ्गादृष्टान्तो बुद्ध्यवतारार्थं नतु गङ्गाकृष्णपादसेवयोः फलसाम्याभिप्रायेण कृष्णपादसेवा साक्षाज्ज्ञानसाध्यप्रसादसाधनं गङ्गासेवा तु शुद्धान्तःकरणस्य भगवत्सेवामुत्पाद्य तत्साधनमिति परम्परयोपसङ्गच्छते ॥ ३१ ॥

नष्टमनोमलस्य किमात्यन्तिकफलमत्राह । विनिर्धुतेति । निरस्तमनोदोषस्य पुंसो विषयासङ्गलक्षणवैराग्याज्जाताया भक्तेर्विज्ञानं भवति तदेव विशेषवीर्यमस्यास्तीति असङ्गविज्ञानविशेषवीर्यवान् यस्याङ्घ्रिमूले कृताश्रयः विज्ञानात्पूर्वं यथा संसारमाप्नोति तथा नाप्नोतीत्यस्मिन्नर्थे पुनरिति संसारक्लेशप्रतिपत्तिमपि नाप्नोति किं पुनस्तत्प्राप्तिरित्यतः प्रपद्यत इति ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

यूयमिति । तत् पूर्वोक्तं भगवद्धर्मम् अनुमोदने हेतुः कर्तुस्तद्धर्मानुष्ठातुः परलोके यत्फलं तच्छ्रावयितुरनुमोदितुश्च भवतीति ॥ २६ ॥

इन्द्रपाखण्डभ्रंशितमतीन् प्रति प्रथममाह । अस्तीति । हे अर्हसत्तमाः! यज्ञपतिर्नाम सर्वकर्मफलदातृत्वेन श्रुतिप्रतिपादितः परमेश्वरः केषाञ्चिच्छ्रुत्यर्थतत्त्वज्ञानां मते तावदस्ति । तथापि विप्रतिपत्तेर्न तत्सिद्धिरित्याशङ्क्य तत्र जगद्वैचित्र्यान्यथानुपपत्तिप्रमाणमभ्युपोद्बलकमित्याह । इह प्रत्यक्षेणामुत्र शास्त्रेण तद्वदित्यनुमानेन ज्योत्स्नावत्यः कान्तिमत्यो भुवो भोगभूमयो देहाश्च क्वचित् क्वचिदेवोपलभ्यन्ते न च कर्मसाम्ये फलतारतम्यम् । क्वचित् क्वचिच्च तदसिद्धिश्च भवति । अतः स्वातन्त्र्येण परमेश्वरेण भाव्यम् । केषाञ्चिदिह सत्तमा इति पाठस्तु स्वाम्यधृतः ॥ २७ ॥

अत्र विद्वदनुभवो हि प्रमाणमित्याह । मनोरिति त्रिकेण । अस्मत्पितामहस्याङ्गस्य । प्रह्लादबली तदानीं बालादेव ज्ञातौ गणितौ ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गदाभृता परमेश्वरेण कृत्यमस्ति हृदये बहिरप्याविर्भूय तेषां मुहुः कृत्यसम्पादनात् तेन यत्कृत्यं करणीयं तत्तेषामस्तीत्यर्थः । तेषामेव तेन कृत्यमस्ति नान्येषामित्यर्थो वा । तदन्यांस्तु निन्दितत्वेनाह । मृत्योर्दौहित्रादीन् वेणप्रभृतीन् धर्म्मे विमोहितान् । गदाभृच्छब्देन तन्नाम्ना प्रसिद्धात् ॥ २९ ॥

श्रीविष्णोरन्यत्र परमेश्वरत्वं वारयति । श्रुतियुक्तिविद्वदनुभवेषु तं गदाभृतं विशिनष्टि । वर्गेति वर्गोऽत्र त्रिवर्गः धर्म्मस्य लक्षणतः अपवर्गो मोक्षः तेषामैकात्म्येन रूपेण सर्व्वानुगतेन हेतुना । तदुक्तं स्कान्दे ।

बन्धको भवपाशेन भवपाशाच्च मोचकः ।
कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः ॥

इति दौहित्रेत्यादिकद्वयोः पद्ययोर्गौडीये विपर्य्ययेण पाठश्चित्सुखपुण्यारण्ययोर्मतः मूलन्तु स्वाम्यसम्मतं ऐकात्म्येत्यत्र एकार्थेति चित्सुखः ॥ ३० ॥

तत्र शुद्धभक्तास्तु विशिष्टा इत्याह । यदिति द्वाभ्याम् ॥३१॥

विज्ञानस्य विशेषणत्वं भगवत्पर्य्यन्तानुभवात् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कार्य्यं खलु सर्व्वानुमोदनेन सिद्ध्यतीत्यत आह । यूयमिति । शास्तुः शिक्षयितुः अनुज्ञातुरनुमोदयितुः प्रेत्य परलोके यत्फलं तत्तुल्यम् ॥ २६ ॥

ननु कुरुताधोक्षजंधिय इत्यधोक्षजाराधनं प्रवर्त्तयितुमीहसे तत्कथं सम्भवेत् त्वत्पित्रा वेणेन तदुपदेशकैरन्यैरप्यनङ्गीकृतत्वादित्यत आह । अस्तीति । हे अर्हसत्तमा ! इति विपरीतलक्षणया यज्ञपतिर्नाम परमेश्वरः केषाञ्चिन्मते तावदस्ति तथापि विप्रतिपत्तेर्न तत्सिद्धिरित्याशङ्क्य जगद्वैचित्र्यान्यथानुपपत्त्या प्रमाणयति । इह प्रत्यक्षेणामुत्र शास्त्रेण च ज्योत्स्नावत्यः कान्तिवैचित्र्यवत्यः क्वचिदित्यज्योत्स्नावत्यश्च अतिशयोक्त्या दृष्टादृष्टशुभकर्मणां फलतारतम्यवत्यः फलाभाववत्यश्च । भुवः भोगभूमयो देहाश्च लक्ष्यन्ते । अयमर्थः । न तावत् कर्मणः फलदातृत्वं घटते जडत्वात् । न चार्वाग्देवतानां स्वातन्त्र्यमन्तर्यामिश्रुतेः । नच तत्कर्मसाम्ये फलतारतम्यं क्वचित्तदभावश्च सम्भवति । अतः कर्तुमकर्तुमन्यथा कर्तुं समर्थेन परमेश्वरेण भाव्यं यस्यैवादरतारतम्ये सति फलतारतम्यमादराभावे फलाभाव इति ॥२७॥

विद्वदनुभवेनापीश्वरसिद्धिमाह । मनोः स्वायम्भुवस्यास्मत्पितुः पितुः पितामहस्येत्यर्थः । प्रह्लादवली तदानीं शास्त्रादेव ज्ञात्वा गणितौ ॥ २८ ॥

गदाभृता कृत्यमस्ति गदाधारणान्मधुरमनोहररूपवतेत्यर्थः । कृत्यञ्च तेषां निरन्तरसाक्षात्तच्चरणपरिचरणमेव ज्ञेयम् । तदन्यांस्तु निन्द्यत्वेनाह । मृत्योर्दौहित्रादीन् वेणादीन् विना धर्मं विमोहितान् अतएव शोच्यान् मृत्योरित्यनेन ते अद्य यद्यत्र मन्मते विप्रतिपत्स्यन्ते तर्हि तन्मृत्योस्तन्मातामहस्यैव पुरीं प्रस्थापयिष्याम्येवेति द्योत्यते ॥ २९ ॥

तं गदाभृतं विशिनष्टि । वर्गेति । वर्गोऽत्र त्रिवर्गं स्वर्गो धर्मस्य फलम् अपवर्गो मोक्षस्तेषाम् ऐकात्म्यहेतुना एकोऽसहायश्चासावात्मा स्वरूपश्चेत्येकात्मा स्वार्थे ष्यञ् ऐकात्म्यं तेन वर्गादीनामैकात्म्येन अन्यनिरपेक्षस्वस्वरूपेणैव हेतुनेत्यर्थः । तेन वर्गस्वर्गापवर्गकामैरपि गदाभृदर्च्चनीय इति तेषां निष्कामानां सकामानाञ्च गदाभृता कृत्यमस्तीत्यायातम् । अत्र प्रमाणम् "अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम्" इति । यत् कर्मभिर्यत्तपसेत्यादौ सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसेत्यादिकञ्च । अत्र प्रायेणेत्यनेन क्वचित् कर्मज्ञानादिसापेक्षस्वस्वरूपेणेति कर्मज्ञानादिमिश्रयापि भक्त्या भक्तिमिश्रैरपि कर्मज्ञानादिभिर्वर्गादिसिद्धिर्नतु भक्त्या विनेति निष्कृष्टार्थः । भक्तेस्तु तत्स्वरूपत्वन्तु प्रसिद्धम् ॥ ३० ॥

उक्तमेवार्थं क्रमेण विवृण्वन् भगवतः केवलयैव भक्त्या यथा जनः कृतार्थी भवति नतु तथा तपोज्ञानादिभिः क्रियाकर्मभिरित्याह । यदिति द्वाभ्याम् । तपस्विनामिति तपोभिर्निजबुद्धेर्मालिन्यं दूरीकर्त्तुमशक्नुवतामित्यर्थः सद्य इति यदैव महत्कृपया पादसेवाभिरुचिर्भवेत्तदैवेत्यर्थः । ततश्चान्वहं प्रतिदिनं वर्द्धमानैव स्यात् सती शुद्धसत्त्वस्वरूपा नित्येत्यर्थः । तत्पादसम्बन्धस्यैवैष महिमेति दृष्टान्तेनाह । यथेति । तं भजतेति तृतीयेनान्वयः ॥ ३१ ॥

ततश्चासङ्गो वैराग्यं विज्ञानविशेषः श्रीमूर्त्तिसौन्दर्याद्यनुभवस्ताभ्यामेव यद्वीर्यं प्रभावस्तद्वान् । केतनमाश्रयः इति भक्तेः कैवल्यं दर्शितम् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनुज्ञातुः अनुमोदितुः ॥ २६ ॥

अधोक्षजधिय इत्यनेनोक्तपरमात्मनि वेनादिभिर्विमोहितानां केषाञ्चिदसंभावनामालक्ष्य तान् प्रति शनैः परमात्मतत्त्वं वर्णयति । अस्तीति । केषां चित् वेनादिव्यतिरिक्तानां मते यज्ञपतिरस्ति यतो यज्ञादिफलेन इह अर्हसत्तमाः पुज्यतमाः नरोत्तमा अमुत्र सूर्यादयो यज्ञपतिकृताः लक्ष्यन्ते क्वचित् इह श्वपचादयः अमुत्र राह्वादयः अज्योत्स्नावत्यः भुवः शरीररूपाः पापफलभोगभूमयः यज्ञादिकर्मवर्जिताः यज्ञपतिकृता एवं लक्ष्यन्ते स्वतः उत्तमभावस्य प्राप्तेः अधमभावान्निवृत्तेश्चासम्भवात् ॥ २७ ॥

जीवानां मुमुक्षुबुभुक्षूणां भुक्तिमुक्तिप्रदेन परमेश्वरेणावश्यं भाव्यमित्याह । मनोरितित्रिभिः ॥ २८ ॥

कृत्यं प्रयोजनमस्ति मुक्तिरूपं प्रयोजनं गदाभृतैव हेतुभूतेन साधितमित्यर्थः ॥ २९ ॥

धर्मविमोहितान् । उचिते धर्मे मोक्षमार्गभूते विमोहितान् अत एव शोच्यान् । गर्ह्यान् मृत्योर्दौहित्रादीन् सुनीथात्मजादीन् प्रायेण ऋते । तेषामपि जन्मादिप्रदात्रा गदाभृतैव कृत्यमस्त्यतः प्रायग्रहणम् कीदृशेन वर्गस्वर्गापवर्गाणामैकात्म्येन हेतुना वर्गस्त्रिवर्गस्तत्फलभूतः स्वर्गश्च अपवर्गो मोक्षश्च तेषामैकात्म्येनाद्वितीयेन हेतुना ॥ ३० ॥

अथ यत्पादसेवा रुचिर्बहुजन्मोपचितं तपस्विनां बुद्धिमलं हरति यच्चरणं शरणं गतो जनो विधूतमनोमलः संसृतिं न प्रपद्यते तं यूयमपि भजतेत्याह । यदितित्रिभिः ॥ ३१ ॥

असंगो वैराग्यं विज्ञानमात्मानात्मपरमात्मविषयकं ज्ञानं ताभ्यां विशेषतो वीर्यवान् हरिभक्तिबलवान् ॥ ३२ ॥

---

तमेव यूयं भजतात्मवृत्तिभिर्मनोवचः कायगुणैः स्वकर्मभिः ।
अमायिनः कामदुघाङ्घ्रिपङ्कजं यथाधिकारावसितार्थसिद्धयः ॥ ३३ ॥
असाविहानेकगुणोऽगुणोऽध्वरः पृथग्विधद्रव्यगुणक्रियोक्तिभिः ।
सम्पद्यतेऽर्थाशयलिङ्गनामभिर्विशुद्धविज्ञानघनः स्वरूपतः ॥ ३४ ॥
प्रधानकालाशयधर्मसंग्रहे शरीर एष प्रतिपद्य चेतनाम् ।
क्रियाफलत्वेन विभुर्विभाव्यते यथानलो दारुषु तद्गुणात्मकः ॥ ३५ ॥
अहो ममामी वितरन्त्यनुग्रहं हरिं गुरुं यज्ञभुजामधीश्वरम् ।
स्वधर्मयोगेन यजन्ति मामका निरन्तरं क्षोणितले दृढव्रताः ॥ ३६ ॥
मा जातु तेजः प्रभवेन्महर्द्धिभिस्तितिक्षया तपसा विद्यया च ।
देदीप्यमानेऽजितदेवतानां कुले स्वयं राजकुलाद्द्विजानाम् ॥ ३७ ॥
ब्रह्मण्यदेवः पुरुषः पुरातनो नित्यं हरिर्यच्चरणाभिवन्दनात् ।
अवाप लक्ष्मीमनपायिनीं यशो जगत्पवित्रं च महत्तमाग्रणीः ॥ ३८ ॥
यत्सेवयाशेषगुहाशयः स्वराट् विप्रप्रियस्तुष्यति काममीश्वरः ।
तदेव तद्धर्मपरैर्विनीतैः सर्वात्मना ब्रह्मकुलं निषेव्यताम् ॥ ३९ ॥
पुमांल्लभेतानतिवेलमात्मनः प्रसीदतोऽत्यन्तशमं स्वतः स्वयम् ।
यन्नित्यसम्बन्धनिषेवया ततः परं किमत्रास्ति सुखं हविर्भुजाम् ॥ ४० ॥

भाषाटीका ।

हे पितर देवर्षि आप निर्मल हो आप इस बात की सम्मति करो क्योंकि करने वाले को शिखा ने वाले को अनु मोदन करने वाले को परलोक में बरोबर फल होता है ॥ २६ ॥

हे सत्पुरुषो! यद्यपि आग्रही अज्ञानी लोग नहीं मानते हैं तथापि यज्ञों का कर्ता भोक्ता भगवान् ईश्वर अवश्य है क्योंकि इस लोक तथा परलोक में प्रकाश वाली भोग्य भूमि बहुत दीखती हैं बिना ईश्वर के यह विचित्रता नहीं होसकी है तिससे कोइ पुरुषों के मत में ईश्वर अवश्य है ॥ २७ ॥

मनु महाराज उत्तानपाद ध्रुवजी महाराज राजर्षि प्रियव्रत हमारे पिता के पिता अङ्ग राजा इस प्रकार के और ब्रह्मा महादेव प्रह्लाद जी बलि राजा इन सबों का भगवान् में भक्ति हैं इनों ने भगवान् को धर्म अर्थ काम मोक्ष के फल दाता समझ कर ईश्वर को माने हैं एक मृत्युका धेवता वेनादिक शोचने लायक धर्म में मोहित लोक न माने तो क्या चिन्ता है ॥ २८ ॥ २६ ॥ ३० ॥

जिन भगवान के चरण सेवा की नित्य बढती हुई रुचिमात्र होने से तपस्या करने वालों के अनेक जन्मों के बुद्धि के मल शीघ्र दूर हो जाते हैं जैसा कि उन के चरणों से निकली गङ्गा जी से होता है ॥ ३१ ॥

जिन के चरण कमल के आश्रय लेने से मनुष्य के सब मन के मल दूर हो जाते हैं विज्ञान साक्षात्कार होने से बुद्धि का बल बढता है तब मनुष्य फिर क्लेश दायक संसार में नहीं गिरता है ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मवृत्तिभिरध्यापनादिभिः मनोवचःकायानां गुणैर्ध्यान-स्तुतिसपर्याभिः अमायिनो निष्कपटाः सन्तः ननु अज्ञाविभिः सेव्ये किमस्मद्भक्त्या भविष्यति तत्राह । यथाधिकारमेवावसिता निश्चिता समाप्ता वार्थसिद्धिर्येषाम् ॥ ३३ ॥

स्वकर्मभिर्यागादिभिर्भजतेत्युक्तम् तत्र "ब्रह्मार्पणं ब्रह्महविः" इति न्यायेन सर्वेषु यागतदङ्गतत्फलेषु भगवद्दृष्ट्या कर्मकर्तव्यं न भिन्नदृष्ट्येति वक्तुं तेषां भगवद्रूपतामाह । द्वाभ्याम् । असौ भगवानेव स्वरूपतो विशुद्धविज्ञानघनोऽप्यगुणो निर्विशेषणोऽपि सविशेषकर्ममार्गेऽनेकगुणो नानाविशेषणवान् अध्वरो यज्ञः सम्पद्यते "यज्ञो वै विष्णुः" इतिश्रुतेः" अनेकगुणत्वमेवाह । पृथग्विधानि यानि द्रव्यादीनि तैः तत्र द्रव्याणि व्रीह्यादीनि गुणाः शुक्लादयः क्रिया अवघातादयः उक्तयो मन्त्राः अर्थोऽङ्गसाध्य उपकारः आशयः सङ्कल्पः लिङ्गमपदार्थानां शक्तिः नाम ज्योतिष्टोमादि तैश्चाध्वरः सम्पद्यते ॥ ३४ ॥

यागतदङ्गानां भगवद्रूपत्वमुक्त्वा यागफलस्यापि भगवद्रूपतामाह । प्रधानेति । एष विभुः परमानन्दोऽपि शरीरे चेतनां विषयाकारां बुद्धिं प्रतिपद्य तदभिव्यङ्ग्यानन्दरूपः सन् क्रियाफलत्वेन प्रतीयते "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । यथानलो दारुषु स्थितस्तद्गुणात्मकोदाहकमेदं दीर्घवक्रत्वादिमांस्तद्वत् । कथंभूते शरीरे प्रधानमव्यक्तम् कालस्तत्क्षोभकः आशयो वासना धर्मोऽदृष्टं तैः संगृह्यते अन्यत् इति तथा तस्मिन् ॥ ३५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवमप्रवृत्तान्भगवद्भजनं प्रवर्त्य स्वतः प्रवृत्तानां प्रवृत्तिमभिनन्दनेन द्रढयति । अहो इति वितरन्ति कुर्वन्ति ॥ ३६ ॥

इदानीं हरिभक्तिदार्ढ्याय ब्राह्मणभक्तिं विधत्ते । माजातिवत्यष्टाभिः महत्यश्च ता ऋद्धयश्च ताभिर्यद्राजकुलस्य तेजस्तत्तस्मात्सकाशाद्द्विजानां कुलेऽजितो देवता येषां वैष्णवानां तेषां च कुले मा जातु प्रभवेत्कदाचिदपि प्रभावं न करोतु कथम्भूतं समृद्धिभिर्विनापि स्वयमेव तितिक्षादिभिर्देदीप्यमाने ॥ ३७ ॥

ब्राह्मणांस्तुवन्नाह । यच्चरणाभिवन्दनाद्धरिर्लक्ष्मीं यशश्चावाप यत्सेवया चेश्वरस्तुष्यति तदेव ब्रह्मकुलं निषेव्यतामिति द्वयोरन्वयः ॥ ३८ ॥

तस्य हरेर्लोकसंग्रहरूपो यो धर्मस्तत्परैः ॥ ३९ ॥

ननु ब्रह्मकुल एव नित्यं सेव्यमाने सर्वदेवतामुखभूतेऽग्नौ यज्ञाद्यनुष्ठानं न स्यान्न च तेन विनाचित्तशुद्धिर्न च तया विना मोक्षः स्यादित्याशङ्क्याह । पुमानिति द्वाभ्याम् । यस्य ब्रह्मकुलस्य नित्यं सम्बन्धेन निषेवया पुमान् स्वयमेव ज्ञानाभ्यासादिकं विनाप्यत्युत्तमं मोक्षं लभेत कुतः यत्सेवया स्वत एवानतिवेलं शीघ्रं प्रसीदतः शुद्धन्त आत्मनश्चित्तात् ततः परं श्रेष्ठं देवानां किं मुखमस्ति ब्राह्मणसेवयैव यज्ञादिफलं ज्ञानफलं तत्सर्वं भवतीत्यर्थः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्मात्स्वकर्मभिः वर्णाश्रमोचितैः पञ्चमहायज्ञादिभिः आत्मवृत्तिभिः "शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च" इत्यादिस्थानोक्तशमादिभिः मनोवचःकायगुणैर्ध्यानस्तुतिपरिचर्यादिभिः अमायिनो निष्कपटाः सन्तः कथंभूतं कामं समीहितं दोग्धि प्रपूरयतीति कामधुक् तदङ्घ्रिपङ्कजं यस्य यथाधिकारावसितार्थसिद्धयः अधिकमध्यधिकृत्य क्रियते साध्यते इति व्युत्पत्तेः यथाधिकारं स्वसमीहितं फलमनतिक्रम्यावसिता निश्चिता अर्थसिद्धिः फलसिद्धिर्येषां ते स्वसमीहितार्थानुसारेण फलसिद्धिर्भविष्यतीत्येवं निश्चितबुद्धय इत्यर्थः । निश्चयस्याप्यनुष्ठानोपयोगित्वात्संशयस्यानर्थावहत्वात् तथा च स्मर्यते "नायं लोकोऽस्ति न परो न सुखं संशयात्मनः । अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति" इति ॥ ३३ ॥

ननु प्रतिकर्मणां द्रव्यदेवतादिभेदादेव भेदः अन्यथा कर्मैक्यमेव स्यात् ततश्च प्रतिनियतसाधनोपसंहारप्रयासो व्यर्थः स्यात् एवं च कथमेकदेवतोद्देशेन सर्वकर्मानुष्ठानं कुरुतेत्युच्यते तत्राह । असाविति । अत्र गुणाध्वर इति पाठः गुणोऽध्वर इति च तत्रऽयस्तपाठे गुण इति छेदः भगवद्विशेषणं हेयगुणरहित इत्यर्थः अनेकगुण इति शुभगुणविधानात्समस्तपाठे त्वध्वरविशेषणं सत्त्वादिगुणान्वित इत्यर्थः करणद्वारा तदन्वयो बोध्यः तत्र स्वरूपतः स्वरूपेण विज्ञानघनः विज्ञानशब्देन अनुकूलात्मकज्ञानं विवक्षितं घनशब्देन तस्यैव सान्द्रत्वमभिप्रेतं विज्ञानैकस्वरूप इत्यर्थः अगुणः निरस्तहेयगुणः अनेकगुणः अनन्तकल्याणगुणः योऽसौ परमात्मा स एव पृथग्विधानेकद्रव्याणि व्रीह्याज्यपश्वादीनि गुणाः शुक्लामालम्भेन कृष्णामालभेतेत्यादिविध्युद्देशश्रुतशुक्लादयः क्रियाः अवहननालेपनालम्भनादयः उक्थ्या मन्त्राः पृथगात्मत्वं भिन्नत्वमन्वेतव्यं पृथग्विभक्त्यादिभिः अध्वरः सन् अध्वरस्य द्रव्यादिसङ्घातरूपत्वाद्द्रव्यादीनां भगवच्छरीरत्वात् अध्वररूपो भूत्वेत्यर्थः श... शयलिङ्गनामभिः सम्पद्यते अर्थः अध्वरप्रयोजनं स्वर्गादि... फलं तस्य आशयः आश्रयाणि जलाशयकमलाशय इति प्र... गात् लिङ्गान्यग्नीन्द्रादिरूपशरीराणि नामानि वाचकान्य... दिशब्दाः तैः संपद्यते अग्नीन्द्रादिलिङ्गस्य फलाश्रयत्वं फल... क्रियाया अग्नीन्द्राद्याश्रितत्वाद्बोध्यम् अध्वराराध्यत्वेन तत्फल... नावगतेन्द्रादिनामरूपात्मको भवतीत्यर्थः तथा च श्रुतिः "... वै विष्णुः तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा" इत्यग्नीन्द्रादि... द्वारभेदेन द्रव्यादिभेदेन च कर्मणां भेदः अग्न्याद्यन्तरात्मत... वस्थितस्य परमपुरुषस्यैकस्यैवाराध्यत्वफलप्रदत्वाद्युपपत्तिश्च... स्यतः एकदेवताराधनत्वमप्युपपन्नमिति भावः ॥ ३४ ॥

एवं कर्मतदाराध्यदेवतारूपत्वमुक्तम् अथ कर्मभोक्तृजीवत्वं तत्फलरूपत्वं चाह । प्रधानेति । एषः भगवान् प्रधानं प्रकृ... कालस्तद्गुणक्षोभकः आशयो वासना धर्मः अदृष्टमेभिः सृष्टं उत्पादितं इति तथा तस्मिन् शरीरे चेतनां शब्दाद्यनुभवरूपं ज्ञानं प्रतिपद्य जीवद्वारा प्रतिपद्येत्यर्थः तत्र जीवादिभिः सामाना... धिकरण्यं च हेतुः "विभुर्य आत्मनि तिष्ठन्" इत्युक्तरीत्या जीवान्तरात्मतयावस्थानात् सर्वजगदुपादानत्वादुपादानत्वस्य च भाव... वस्थाविशेषवतः प्रागवस्थायोगित्वरूपत्वाज्जीवं प्रत्युपादान... च जीवधर्मभूतज्ञानसङ्कोचविकाशरूपविकाराश्रयत्वस्यापि जीव... द्वारकत्वेन विभोः परस्य सत्त्वात् शब्दाद्यनुभवरूपचेत... प्रतिपद्येत्युक्तं क्रियाफलत्वेन स्वर्गादिरूपतया विभाव्यते निश्ची... यते एवं कर्मतदाराध्यतत्फलभोक्तृतत्फलरूपत्वमुक्तं तत्र कर्मादि... गतदोषसंस्पर्शमाशङ्क्य तन्नेत्यभिप्रायेण दृष्टान्तमाह । यथेति । दारुषु अनलोऽग्निर्यथा तद्गुणात्मकः दारुगतदैर्घ्यवक्रत्वादिमान्... यतं तद्वत् वस्तुत एकरूपोऽप्यनलोऽधिष्ठानवैचित्र्याद्विचित्र इ... प्रतीयते तथेत्यर्थः सामानाधिकरण्येन व्यपदिश्यत इति ॥ ३५ ॥

तदेवमप्रवृत्तान् भगवद्भजने प्रवर्त्य स्वतः प्रवृत्तानां प्रवृत्त्यभिनन्दनेन प्रथयति । अहो इति । ये भूतले मामकाः मद्विषया... सिनो जनाः दृढव्रताः दृढसंकल्पाः स्ववर्णाश्रमधर्मयोगेन य... भुजामिन्द्रादीनामपीश्वरम् अन्तरात्मानं गुरुं हितोपदेष्टार... हरिं स्वाश्रितदुरितहरं नित्यं भजन्ति तेऽमी जनाः मम अनुग्र... वितरन्ति कुर्वन्ति अहो इति हर्षे ॥ ३६ ॥

इदानीं भगवद्भक्तिदार्ढ्याय ब्राह्मणभक्तिं विधत्ते । माजातिवत्यष्टभिः । तत्र तावत् ब्राह्मणकुलस्य राजकुलनिग्रहविषयत्वं प्रार्थयते महद्धिभिः महत्यश्च ता ऋद्धयस्ताभिर्यद्राजकुलस्य तेजस्तस्मात्सकाशात् द्विजानां कथंभूतानामजितो भगवान् देवता येषां तेषां कुले जातु कदाचिदपि मा प्रभवेत् प्रभावं न करोतु कथंभूते समृद्धिभिर्विनापि स्वयमेव तितिक्षादिभिः देदीप्यमाने यद्वा राजकुलस्य ब्राह्मणकुलनिग्रहविषयत्वं प्रार्थयते अजितदेवतानां द्विजानां कुले तितिक्षया द्वन्द्वसहनेन तपसा कृच्छ्रादिना ब्रह्मोपासनया वा आतिथ्यया अतिथ्याराधनया चकाराच्छमदमादिसंग्रहः एभिर्देदीप्यमाने सति तेषां तेजः महद्धिभिः राजकुलेन्द्रनोः कदाचिन्मा प्रभवेत् महद्धियुक्तगर्वसहिताद्राजकुलात् ब्राह्मणकुलं कुपितं माभूदित्यर्थः कुलद्वयमन्योऽन्यं यथायोग्यमनुगृह्णात्विति भावः ॥ ३७ ॥

यच्चरणाभिवन्दनात् येषां चरणाभिवन्दनात् हरिर्लक्ष्मीं जगत्कीर्तिं यशश्चावाप यत्सेवया चेश्वरस्तुष्यति तदेव ब्रह्मकुलं निषेव्यतामिति द्वयोरन्वयः हरिं विशिनष्टि । ब्रह्मण्यदेव...

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ब्राह्मणसेवापरायणानां मन्वादीनामपि देवः पुराणः पुरुष इति नचैवमीश्वरस्य लक्ष्मीयशसः सम्बन्धस्य सोपाधिकत्वप्रसङ्गः भगवदितरेषां यश आदिसम्बन्धस्य ब्राह्मणसेवायत्तैककथनमात्रतात्पर्यकत्वादस्य श्लोकस्यार्थवादवाक्यस्य स्वार्थे तात्पर्याभावात् । विधिस्तावकात्वात् न चार्थवादस्य स्वार्थे तात्पर्याभावे सतीतरेषामपि यश आदिसम्बन्धेऽपि तात्पर्यं नास्तीति वक्तुं शक्यं ब्राह्मणसेवाविध्यपेक्षितफलसमर्थकत्वेन तत्र तात्पर्यनिश्चयात् नह्यसता गुणेन प्ररोचना संभवति नच पयः पिब शिखा ते वर्द्धन इति बालाद्युपच्छन्दनवाक्ये असतापि गुणेन प्ररोचना दृश्यते इति वाच्यं तत्रापि यद्यसत्त्वनिश्चयस्तर्हि प्रवृत्तेः प्रवृत्त्यर्थप्ररोचनायां एवानुपपत्तेः तस्मात्तत्रासत्तामजानतां बालानां पयःपानादिप्रवृत्त्यर्थं शिखावर्द्धनादिकमसदपि फलत्वेन कीर्त्यते तत्रासत्त्वं प्रत्यक्षतोऽवगतमिह तु मन्वादिषु ब्राह्मणसेवकेषु यशःसम्बन्धस्यैव प्रत्यक्षतुल्यशास्त्रेणावगमादसता निश्चायकस्य प्रमाणान्तरस्याभावात् नच तेषां तत्सम्बन्धे ब्राह्मणसेवातिरिक्तमदृष्टान्तरमेव कारणमिति वक्तुं युक्तम अदृष्टान्तरस्यापि स्वस्ववर्णाश्रमैकान्तनित्यनैमित्तिकपूर्वकयागजन्यत्वात् स्ववर्णाश्रमधर्मेषु ब्राह्मणसेवाया अप्यनुप्रविष्टत्वात् स्वराट् स्वतन्त्रः अकर्मवश्यः तथापि विप्रप्रियःविप्रार्थिभिः बहुव्रीहिषष्ठीतत्पुरुषसमासद्वयेनान्योऽन्यं भृशं प्रीतिविषयत्वलाभाद्विपर्यवेलक्षण्याधीनत्वात्पारतन्त्र्यस्य स्वतन्त्रस्यापि स्वेच्छया पारतन्त्र्योपपत्तेः ईश्वरस्तुष्यति ईश्वरस्याकर्मवश्यत्वं नाम देवमनुष्यादिसजातीयचेष्टां कुर्वतोऽपि तच्चेष्टायत्तसुखदुःखाद्यस्पर्शित्वं नचैतद्विप्रतिषिद्धं यद्येवं तत्प्रयुक्तसुखाद्यस्पर्शनं चेति विप्रतिषिद्धमिति शङ्क्यं स्वार्गनारकव्यापारेषु तथादर्शनात् एवं चेश्वरस्य ब्राह्मणसेवातद्भागजन्यसुखाद्यस्पर्शिनोऽपि तत्सेवापरायणत्वकथनेन द्विजसेवाया आवश्यकत्वद्योतनाय स्वराडिति विशेषणं नन्वन्यसेवयान्यः कथं तुष्येत्तत्राह । अशेषगुहाशयः। सेवकसेव्ययोरुभयोरपि हृदयगुहायां तदन्तरात्मतया निविष्टत्वेन सेवाजन्यद्विजादिनिष्ठप्रीतिरपि द्विजादिद्वाराश्रयः सेवकानिष्टसेवाश्रद्धादिकमवेक्ष्य तुष्यतीत्यर्थः कामं तुष्यतीत्यनेन द्विजसेवातोऽधिकस्तोषहेतुर्नास्तीति द्योत्यते तस्मात् द्विजसेवाया यश आदिहेतुत्वाच्च तद्धर्मपरैः द्विजसेवैकशीलैः तदुपयुक्तं गुणमाह । विनीतैः एकविंशपर्णोपादानेन द्विजप्रसादेनेति नियमान्तरेणान्यो हेतुरनुपेक्षित इति सूचितं सर्वात्मना करणत्रैयक्येन ब्रह्मकुलं निषेव्यताम् ॥३८-३९॥

किञ्च "प्रसादे सर्वदुःखानां हानिरस्योपजायते। प्रसन्नचेतसोह्याशु बुद्धिः पर्यवतिष्ठति"इत्युक्तरीत्या सर्वदुःखहानिहेतुभूतमनःप्रसादनिर्वर्तकत्वादपि द्विजमेवैव कार्यत्याह।पुमानिति। येषां ब्राह्मणानां नित्यसम्बन्धरूपसेवया पुमान् अतिबलं शीघ्रं स्वयमेव प्रयत्नान्तरेणैव प्रसीदतः आत्मनः मनसः शमं शान्ति लभेत ततः शान्तमनसः किमस्ति असाध्यमिति शेषः शान्तमनसाऽसाध्यं किञ्चिदपि नास्तीत्यर्थः किञ्च हविर्भुजामिन्द्रादीनां मुखं ब्राह्मणमेवयेन तन्मुखानां हविर्भुजां यज्ञाराध्यदेवानामपि सेव्याः कृता स्यात् "ब्राह्मणकुलं ब्राह्मणोऽस्य मुखमासीत्" इति ब्राह्मणकुलस्य भगवदंशभावतारस्य यज्ञ गो मुखत्वात्तद्वाराभजनेन हविर्भुग्भिरारा<br>
ध्यमानयापरिहितः परमात्मा तुष्यतीति ब्राह्मणा पत्राद्यादिभिराराध्याः इति भावः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं तत्सेवाफलमुक्तात्तदुपास्ति विधत्ते। तमेवेति। फलस्यानुभवसिद्धत्वादन्ययोगव्यवच्छेदार्थं एवशब्दः भजतैवेत्ययोगव्यवच्छेदो वा आत्मनि हरावेव वृत्तिर्वर्तनं येषां ते तथा तैः अयमेव मन आदीनां गुणः यद्विष्णुविषयत्वेन चरणम् । स्वकर्मभिः स्वस्वविहिताश्रमादिकर्मभिः । उक्तमेतत्सर्वमप्रयोजकं व्याजिन इत्यत उक्तममायिन इति फलपूर्वविधाने क्षिप्रप्रवृत्तिर्भवतीति भावेनोक्तं कामदुघेति वेदानुकूलमिति द्योतनाय दुघेति इदमेव दर्शयितुमित्थं भावमाह । यथेति । "अथात आनन्दस्य मीमांसा भवति" इत्यादिश्रुतौ मनुष्योत्तममारभ्य ब्रह्मपर्यन्तं योग्यमधिकारो योग्यतालक्षणस्तस्मिन्नवसिता निर्णीता अर्थसिद्धिरानन्दप्राप्तिर्या तदर्थमित्यर्थः । अर्थः मोक्षः । "अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजन" इति यादवः ॥ ३३ ॥

स्वकर्मभिरित्युक्तकर्मकरणप्रकारमाह । असाविति।"आत्मा वा इदमेक एवाग्र आसीत्"इत्यादिश्रुतिसिद्धोयोऽसौ श्रीनारायण इह जीवराशौ सता पुंसानुष्ठितैरनेकगुणाध्वरैः सम्पद्यते प्राप्यत* इत्यन्वयः ते चाधिकारभेदात् बहव इत्याशयेनाह । पृथगिति । षोडशादिभेदभिन्नैरनेकगुणत्वं व्यनक्ति । द्रव्येति । द्रव्यम्पुरोडाशादिकल्पोक्तगुणविशिष्टं "द्रव्यं गुणानामाधार" इति यादवः गुणो विशिष्टमातापितृजन्यत्वादिक्रिया ऋत्विग्व्यापारः इन्द्राग्न्य इत्याद्युक्तयो येषु ते तथा तैः अर्थेषु यजमानेषु आशयोऽन्तःकरणं येषां ते देवा अर्थाशयास्तेषां लिङ्गानि वज्रधरत्वादीनीन्द्रादिनामानि च येषु ते तथा तैः यद्वाथाशयत्वमुक्ताश्रयत्वं चक्रधरादिलिङ्गं नारायणादिनाम च येषु ते तथा तैः कथं प्राप्यते । विशुद्धविज्ञानघनस्वरूपतः एवं ज्ञानेन प्राप्य इत्यर्थः अनेन कर्मणा शुद्धान्तःकरणाज्जातं ज्ञानं संसारनिवर्तकमित्युक्त्वा "कर्मणैव हि संसिद्धिमास्थिता जनकादय" इत्यादेर्गतिरुक्तेति ज्ञायते ॥ ३४ ॥

कर्मसाधनज्ञानेन ज्ञायत इत्युक्तं तत्र विशिष्टतया ज्ञानं मुक्तिसाधनं स्यादिति तं प्रकारं ब्रूते । प्रधानेति । प्रधानं प्रकृतिः कालः फलपाचकः आशयोऽन्तःकरणं कर्मजीवादृष्टमेतानि सन्ति ज्ञातीति प्रधानकालाशयकर्मसङ्ग्रहः स्वकेषु सर्वेषु शरीरमेव शिष्यते यस्य मशरीरशेषो जीवस्तं प्रतिपद्य प्राप्य चेतनो ज्ञानशक्तिमानस्याविलुप्तज्ञान इत्यर्थः विभुः श्रीनारायणोऽयं क्रियाफलत्वेन कर्मफलदातृत्वेन पुण्यकर्मभिः पुरुषैर्विभाव्यते ज्ञायत इत्यन्वयः। फलमत उपपत्तेः इति सूत्राद्धरेः कर्मफलदातृत्वं सिद्धमत्र दृष्टान्तमाह । यथेति । यथानलोऽग्निस्तत्तद्दारुणां गुणं स्थौल्यादिकमादत्ते दारुस्थौल्याद्यनुसारेण स्वयं च स्थौल्यादिमान् भवतीति तद्गुणात्मको विधुक्तगुणवत्सु दारुषु अग्निमंथनादिनाभिव्यक्तो ज्ञायते तथा प्रधानादिशब्दाभिधेयलक्षणार्थैः परिवृतो जीवान्तर्गतो जीवपरिमाणगुणानुकारी तदनुष्ठितकर्मफलदातृत्वेन गुरुशिष्यव्याख्यानश्रवणलक्षणमथनेनाभिव्यक्तो हरिर्ज्ञायत इति भावः प्रधानादीनां तदधीनत्वं तद्भिन्नत्वं च दर्शयितुं तद्गुणान् देहस्थत्वेऽपि तद्गुणासम्पृक्ताभावदर्शनाय दारुनल निदर्शन प्रधानेन देहदोषदारगुणासामर्थ्य जगद्रक्षणोऽप्ययं दोषराहित्यं सूचयितुं दार्वनलपदमुपात्तमिति ज्ञापयति ॥ ३५ ॥

---

* सम्पद्यत इत्यस्य सम्पन्नो भवतीत्यन्यथाप्रतीतिस्तात्पर्यार्थं प्रदर्शयति ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुरुशिष्यव्याख्यानादिमथनेन हरिरभिव्यक्तो भवतीत्युक्तं तत्र गुरवः शिष्याश्च श्रीनारायणमुखोत्पन्नत्वात् व्याख्यानादेर्मुखव्यापारत्वेनात एव मुखत्वेन सात्त्विकत्वेन च त्वत एव व्याख्यानादौ प्रवृत्तिसम्भवाज्जलस्यन्दनवद्ब्राह्मणा एवेत्यभिप्रेत्याधुना तानभिष्टौति । अहो वतेति । अमीइत्यनेन हरेर्मुखजातत्वं परामृशति वतेति चित्तं द्रवीकरोति अहो इति सभ्यानुन्मुखीकरोति इष्टदेवतात्वेन गुरुत्वेन स्वविहितकर्मफलदातृत्वेन श्रीनारायण एव पूज्य इत्यतो विशेषणत्रयम् "एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा" इति वचनात् स्वधर्मयोगो भक्तियोगस्तेन यजन्ति पूजयन्ति भगवद्भक्तत्वेन स्वचेतः प्रीतिजनकत्वान्मामका इत्युक्तं कृष्याद्यन्यव्यापारराहित्यप्रकटनाय निरन्तरामिति एतत्सूचनाय धृतव्रता इति सत्रादिकर्मसु दीक्षितानामन्यव्यापाराभावस्तथाप्यपीति कर्मणां फलाधिक्यद्योतनाय क्षोणितले पतनदुःखक्षयहेतुत्वात् प्रतिष्ठाहेतुत्वाच्च क्षोणितल इति क्षिणुवये तत्प्रतिष्ठायामिति धातुः ॥ ३६ ॥

स्ववंश्यानां राज्ञां शिक्षामाह । मा जात्विति । राजकुले विद्यमानाभिर्महर्द्धिभिः समुत्थितं तेजः प्रभावलक्षणमजितः श्रीनारायणो देवता येषां ते तथा तेषां तितिक्षादिना देदीप्यमाने द्विजानां कुले जातु कदाचिदपि मा प्रभवेत् कुलक्षये समर्थं न भवेत् ॥ ३७ ॥

न केवलं ब्रह्मकुलं नाभिभवनीयं किन्तु तत्र भक्तिरपि कर्तव्येत्यत्र कैमुत्यन्यायमाह । ब्रह्मण्यदेव इति । "अर्कमर्कटमण्डूकविष्णुवासववायवः । तुरङ्गसिंहशीतांशु यमाश्च हरयो दश इति निगदाद्धरिरिन्द्रो यस्य श्रीनारायणस्य चरणाभिवन्दनादनपायिनीं लक्ष्मीमवाप जगत्पवित्रं यशश्चावाप सोऽपि पुरातनः पुरुषो ब्रह्मण्यदेवो ब्राह्मणप्रियश्च । देवः क्रीडादियुक्तश्चेत्यन्वयः ब्राह्मणप्रियत्वं क्रीडामात्रमिति दर्शयितुं देव इति पदम् अत एव महत्तमाग्रणीरित्युक्तं महतामिन्द्रादीनां सकाशादुत्तमा ब्रह्मादयस्तेषामप्यग्रणीः श्रेष्ठस्तस्मात् क्रीडामात्रमिदम् अत एवानुपपत्त्या हरिशब्देनेन्द्र एव गृहीतः "यत्प्रसादेन देवेन्द्रो वेदोदितयशा अभूत् । सोऽपि विष्णुरमेयात्मा सदा ब्राह्मणवत्सल" इति स्मृतेश्च प्रतीतार्थपरित्यागो युक्तः अजितदेवतानामित्युक्तिविरोधाच्च ॥ ३८ ॥

अस्तु विष्णुर्द्विजप्रियस्ततः प्रकृते किमित्याशङ्क्य विष्णुभक्तिमवमृश्य ब्राह्मणसेवाकार्येत्याह । यत्सेवयेति । अपवर्गावाप्तौ श्रीलक्ष्मीकान्तप्रसाद एवापेक्षणीयोऽतः क्षितिदेवप्रीत्या किमित्यतो वा यत्सेवयेति भगवत्प्रसादोत्पत्तौ विप्रसेवाद्वारमित्यर्थः स्वराट् स्वतन्त्रः यतो विष्णुप्रसादो भवति तस्माद्ब्राह्मणकुलं निषेव्यतामित्युपसंहरति । तदेवेति । तद्धर्मपरैर्विष्णुधर्मपरैः ॥३९ ॥

ब्राह्मणसेवाप्रसन्नश्रीनारायणप्रसादान्मौक्तिकपरमानन्दोऽपि भवतीत्याह । पुमानिति । यस्य हरेर्नित्यसम्बन्धी येषां ते यन्नित्यसम्बन्धाद्द्विजास्तेषां निषेवया सेवालक्षणसङ्गतः पुमानतिवेलं क्षिप्रं तस्यात्मनो हरेः प्रसादतोऽत्यन्तशमं भगवन्निष्ठाजन्यमुक्तिसुखं लभेत ततस्तस्मान्मोक्ष (१) सुखात्परमन्यत्सुखं हविर्भुजामप्यत्र संसारेऽस्ति किमास्त्येव हविर्भुजो देवताः । किं विशिष्टं स्वयं स्वरूपभूतम् । अस्वरूपमपि स्वरूपवन्नोपचरितमित्याह । [illegible] इति । महत्सेवां द्वारमाहुर्विमुक्तेरिति महत्सेवाया अपि मुक्ति-साधनत्वं सिद्धं यद्वा यन्नित्यसम्बन्धानां सतां निषेवया पुमा[न्]त्मनो मनसः प्रसादतोऽत्यन्तशममतिशयितभगवन्निष्ठां ल[भे]त ततः श्रीनारायणनिष्ठायाः स्वतोऽकृत्रिमं स्वयं स्वरूपसुखं लभेत इत्युत्तरत्रापि सम्बध्यते शेषं पूर्ववत् ॥ ४० ॥

(१) इदंव्याख्यानन्वात्पर्यप्रदर्शितम् ।

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यूयन्तु यथाधिकारं भजतेत्याह । तमेवेति । स्वकर्मभिश्च[...] अगुणः प्राकृतगुणरहितोऽपि ॥ ३४ ॥

चेतनां जीवस्य बुद्धिं प्रतिपद्य नियन्तृरूपेण प्रकाशक[...] चाविश्य तत्तादात्म्यापन्नस्वशक्त्या स्वयमेव बहिरपि स[...] नन्शांशरूपक्रियाफलत्वेन विभाव्यते प्रकाशते कर्मकर्[...] प्रयोगः ॥ ३५ ॥ ३६ ॥

माजात्वित्यस्य टीकावतारिकायां ब्राह्मणभक्तिमिति वैष्ण[व]मात्रस्यापि ब्राह्मणान्तःपातोऽङ्गीकृतः पद्यार्थं द्वयोरपि व्याख्या[न]मानत्वात् ॥ ३७ ॥

ब्रह्मण्येति स्तुतिमात्रमिदमिति टीकाभिप्रायः । तथाप्य[...] ज्ञातभगवन्महिमत्वात्तादृश्युक्तिरनुचितेति । तत्राविष्टो हरि[...] स्वयं लोकसंग्रहायास्तौदित्येवं समाधेयम् । यद्वा । यच्चरणा[भि]न्दनलक्षणाद्विनयगुणादनपायिनीं लक्ष्मीं सर्वाश्रयणीयतावद्[...] सम्पत्तिमवाप सर्वेषां लोकानामाश्रयणीयो बभूवेति तात्पर्यं भृगुपरीक्षादावित्यर्थः । अतो यशश्चेति ॥ ३८ ॥

विनीतैरित्यत्र हितं सदेति क्वचित् ॥ ३९ ॥

ततः परमिति तु परेण योजनीयम् ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु गार्हस्थ्यकर्मनिमग्ना वयं कथं केवलया भक्त्या भज[...]स्तत्र कर्ममिश्रां भक्तिमुपदिशन्नाह । तमेवेति । स्वकर्मभिर्या[...] दिरक्षणादिकृष्यादिसेवादिभिरेव या आत्मवृत्तयस्ताभिः स[...] अपि मन आदीनां गुणैः स्मरणकीर्त्तनप्रणत्यादिभिर्भज[...] यद्वा । मन आदीनां गुणैर्विद्यादिगानादिभारवहनादि[...] स्वकर्मभिर्या आत्मवृत्तयो जीविकास्ताभिरेव भजत । [...]विका अपि ता भगवदर्थं वा किञ्चिन्मात्र्योऽपि नित्यं [...] विनियुक्ताः स्युस्तर्हि हरिभक्तिरेव भवतीत्यर्थः । यथाधि[...] ब्राह्मणादिवर्णधर्ममनतिक्रम्यैवावासिता निश्चिता अर्थसिद्धि[...] यद्वा । यथेति येषां येषां येषु शिल्पेष्वधिकार औत्पत्तिक[...] भगवदर्थे कृतैस्तै ते तैलिकताम्बूलिकपर्यन्ता अपि कृ[...] भवन्तीत्यर्थः । आत्मनः स्वस्यैव वृत्तिः सत्ता येषु तैः स्व[...] भिर्वर्णाश्रमधर्मैरपि सहिताः सन्तो भजतेति भक्तः प्राधा[न्येन वि]हितम् ॥ ३३ ॥

कर्मस्वरूपतोऽशुद्धं जडं राजसमपि भगवदर्पितं सत [...] गुणीभूतभक्त्यंशेन विशुद्धसत्त्वं चैतन्यमेव फलतो भवती[...] क्तिमिश्रं कर्मोपदिशति द्वाभ्याम् । असाविति । तज्जन्या प्र[...] ध्वरं दर्शयति असावध्वरोऽनेकगुणो नानाविशेषणवान् [...] ऽपि भगवदर्पणरूपभक्तिमाहात्म्यात्तत्फलदशायामगुणो गु[...] तो भवन् स्वरूपतो विशुद्धविज्ञानघनः ब्रह्मानन्दरूपत्वेन [...]

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यते कर्मणोऽस्य मोक्षफलकत्वादिति भावः । तेन साक्षात्त्वदीयश्रवणकीर्त्तनादिस्तु प्रथमत एव विशुद्धविज्ञानघनः स तु सर्व्वतोऽपि श्रेष्ठ इति द्योतितम् । यद्वा असौ भगवानेव स्वरूपतो विशुद्धविज्ञानघनोऽपि अगुणोऽपि अस्मिन् कर्ममार्गेऽनेकगुणोऽध्वरो यज्ञः सम्पद्यते । अनेक गुणत्वमाह । पृथग्विधानि यानि द्रव्यादीनि तैः तत्र द्रव्याणि व्रीह्यादीनि गुणाः शुक्लादयः । क्रिया अवघातादयः उक्तयो मन्त्राः । अर्थोऽङ्गसाध्य उपकार आशयः सङ्कल्पः लिङ्गं पदार्थानां शक्तिः नाम ज्योतिष्टोमादि तैश्च ॥ ३४ ॥

भगवदर्पितस्य कर्मणस्तन्मिश्रभक्तेश्च फलं भगवत्प्राप्तिरेवेत्याह । प्रधानमव्यक्तं कालः क्षोभकः आशयो वासना धर्म्मोऽदृष्टैः संगृह्यते जन्यत इति तथा तस्मिन् शरीरे चेतनां स्वार्पितकर्म्मकरणे बुद्धिं प्रतिपद्य अन्तर्भावितण्यर्थत्वात् निष्पाद्येत्यर्थः कृपया कर्म्मफलत्वेन विभुः स्वयमेव भगवान् विभाव्यते प्रकाशते कर्म्मकर्त्तरि प्रयोगः । "यदत्र क्रियते कर्म्म भगवत्परितोषणम् । ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम्" इति वचनात्तदर्पितकर्म्मा भक्तिमिश्रज्ञानद्वारा तमेव प्राप्नोतीत्यर्थः । किञ्च । कर्म्मार्पणश्रद्धाभक्तितारतम्येन ज्ञानतारतम्येन च भगवत्प्राप्तितारतम्यं भवेदित्याह । यथा चन्दनागुरुधवखदिरादिस्थितोऽग्निस्तत्तद्गुणानुरूपां भवेत्तथैव भगवानप्युपासकस्योपासनातारतम्येन फलप्रदो भवेत् भक्तिमिश्रकर्मिणे निष्कामाय मोक्षं कर्ममिश्रभक्तिमते शान्तरतिश्चैव भक्तितारतम्यवते सालोक्यादिकञ्च ददातीति भक्तेर्गुणभावप्राधान्यादिकं दर्शितम् ॥३५॥

भो महाराजाधिराज प्रभो ! भक्त्युपदेशेन वयं कृतार्थीकृतास्तद्वयं नित्यं भगवन्तं भजाम इत्यानन्दजल्पिनो जनान् लक्ष्यीकृत्याह । अहो इति ॥ ३६ ॥

इदानीं भक्तेः सुस्थिरत्वार्थं वैष्णवब्राह्मणावज्ञां निषिध्यति मा जात्विति । महर्द्धिभिर्महासम्पत्तिभिर्हेतुभिर्यद्राजकुलात् राजकुलस्य तेजस्तत् जातु कदाचिदपि मा प्रभवेत् प्रभावं मा करोतु कुत्र अजितदेवतानां वैष्णवानां कुले द्विजानां कुले च कीदृशे महर्द्धिभिर्विनापि तितिक्षादिभिः स्वयमेव देदीप्यमाने ॥ ३७ ॥

भक्तिदार्ढ्याय ब्राह्मणभक्तिं विधत्ते सप्तभिः । यत्परस्तेत्यादिकं लोकसंग्रहार्थकभगवद्वचनानुवादमात्रं ज्ञेयम् ॥ ३८ ॥

तदेव तस्मादेव हेतोः ॥ ३९ ॥

ननु ब्रह्मकुल एव नित्यं सेव्यमाने सर्व्वदेवतामुखभूतेऽग्नौ यज्ञाद्यनुष्ठानं न स्यात् न च तेन विना चित्तशुद्धिर्न च तया विना मोक्षः स्यादित्याशङ्क्याह । पुमानिति द्वाभ्याम् । यस्य ब्राह्मणकुलस्य नित्यसम्बन्धेन निषेवया आत्मनो मनसः प्रसीदतः क्रमेण प्रसन्नीभवतः अत्यन्तशमं मोक्षं स्वयं लभेत अनतिवेलं शीघ्रमेव अतएव ततः परं किं हविर्भुजां देवानां मुखमस्ति ब्राह्मणसेवयैव यज्ञादिफलं ज्ञानफलं च सर्व्वमेव सिद्ध्यतीत्यर्थः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतः यथाधिकारमवसिताः निश्चिताः अर्थानां चतुर्विधपुरुषार्थानां सिद्धिर्यैस्ते हरिभजनेन सर्वपुरुषार्थसिद्धिरिति कृतविश्वासा इत्यर्थः अमायिनो निष्कपटाः यूयम् स्वकर्मभिः स्वोचितैर्यज्ञादिकर्मभिः मनोवचः कायगुणैः ध्यानगुणगानपरिचर्याभिः आत्मैव वृत्तिर्निर्वाहहेतुर्येषां तैः सर्वैर्जनैरपि तमेव भजतेत्यन्वयः ॥ ३३ ॥

कर्मभिर्भजतेत्युक्तं तत्र "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना" इति श्रीमुखोक्तानुसारेण सांगे यज्ञे तत्फलभोक्तरि तत्फले च भगवद्दृष्टिः कर्तव्येत्याह । असाविति द्वाभ्याम् । असौ हरिरेवाध्वरः सांगस्य यज्ञस्य तदायत्तस्थितिप्रवृत्त्यादिमत्त्वेन तदभिन्नत्वात् यज्ञो वै विष्णुस्तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा इत्यादिश्रुतेः कथंभूतोऽध्वरः पृथग्विधैर्द्रव्यादिभिः अर्थाशयलिङ्गनामभिश्च इह कर्मकाण्डे संपद्यते सम्यक् ज्ञायते गत्यर्थानां ज्ञानार्थत्वात् तत्र द्रव्याणि व्रीह्यादीनि गुणाः शुक्लादयः क्रिया अवहननादयः उक्तयो मन्त्राः अर्थोऽङ्गसाध्य उपकारः आशयः संकल्पः लिङ्गं पदार्थशक्तिः नाम ज्योतिष्टोमादि कथंभूतः असौ विशुद्धविज्ञानघनः स्वरूपतः व्रीह्यादिवत् जडत्वपरिच्छिन्नत्वादिधर्मको न भवति यतोऽगुणो हेयगुणरहितः अनेकगुणः अनेकमङ्गलगुणगणार्णवः ॥ ३४ ॥

एषः विभुर्विष्णुः प्रधानं प्रकृतिः कालः क्षोभकः आशयो वासना धर्मः कर्मतः संगृह्यते जन्यते इति तथा तस्मिन् चेतनां प्रतिपद्य तत्त्वमसि क्षेत्रज्ञं चापि मां विद्धीति श्रुतिस्मृतिभ्याम् अंशांशिनोरभेदविवक्षया स्वात्मजीवरूपेण "अन्तः प्रविष्टः शास्ता जनानाम्" इत्यन्तर्यामिरूपेण च बाह्याभ्यन्तरेन्द्रियजन्यं बोधं क्रियाफलत्वेन स्वर्गादिरूपेण विभाव्यते निश्चीयते भोग्यरूपत्वेऽपि तदसाधारणेन रूपेण सर्वदोषास्पृष्टत्वं भगवतो दृष्टान्तेनाह । दारुषु अनलो यथा तद्गुणात्मकः दाहकत्वादीनामनलगुणानामेवात्माश्रयः । तद्गुणात्मैव तद्गुणात्मकः । न तु दाह्यत्वादीनां दारुगुणानामाश्रयस्तद्वदित्यर्थः ॥३५॥

भगवदाराधने वेनादिसंगदोषतोऽप्रवृत्तान् प्रवर्त्यायस्ततः प्रवृत्तानभिनन्दति । अहो इति । क्षोणितले ये हरिं क्लेशहरं गुरुं हितोपदेष्टारं यजन्ति ते अहो मम अनुग्रहं वितरन्ति कुर्वन्ति अत एव ते मामकाः ममातिप्रियाः ॥ ३६ ॥

विप्राणां गवां जनार्दनस्य तद्भृत्यानां च भक्तिमुपदिशति । माजात्वित्यष्टभिः महर्द्धिभिः राजकुलादुत्थितं तेजः जातु कदाचिदपि अजितदेवतानां विष्णुभक्तानां द्विजानां च कुले मा प्रभवेत् कथंभूते राजमहर्द्धिनैरपेक्ष्येणैव तितिक्षादिभिर्देदीप्यमाने ॥ ३७ ॥

लोकसंग्रहार्थं भगवानपि विप्रान् सत्करोतीत्याह । ब्रह्मण्यदेव इति ॥ ३८ ॥

ब्रह्मकुलसेवया भगवान् तुष्यतीत्याह । तद्धर्मपरैस्तस्येश्वरस्य यत्सेवयेति लोकसंग्रहरूपो यो धर्मस्तत्परैः ॥ ३९ ॥

ब्रह्मकुलसेवया शीघ्रमन्तःकरणशुद्धिर्जायते ब्रह्मकुलादन्यत् श्रेष्ठं हविर्भुजां मुखं नास्तीत्याह । पुमानिति । यस्य ब्रह्मकुलस्य नित्यसम्बन्धेन निषेवया पुमान् जनः अनतिवेलं शीघ्रं स्वतः प्रसीदतः आत्मनोऽन्तःकरणस्यात्यन्तशमं स्वयमेव लभेत ततः परं श्रेष्ठं हविर्भुजां देवानां मुखम् अत्र कर्मभूमौ किमस्ति नास्तीत्यर्थः तद्ब्रह्मकुलं निषेव्यतामिति पूर्वेणान्वयः ॥ ४० ॥

---

भाषाटीका ।

उन भगवान् को आप लोग भजो अपनी वृत्तियों से उन का आराधन करो मन कर्म वचन से अपने कर्म उन मे अर्पण करो निष्कपट हो कर भजो उन के चरण कमल कामधेनु हैं तुमारे अधिकार के अनुरूप सब सिद्धि प्राप्त हो जाय गी ॥ ३३ ॥

अश्नात्यनन्तः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख इज्यनामभिः ।
न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यपर्यगुः [1] ॥ ४१ ॥
यद्ब्रह्म नित्यं विरजं सनातनं श्रद्धातपो मङ्गलमौनसंयमैः ।
समाधिना बिभ्रति हार्थदृष्टये यत्रेदमादर्श इवावभासते ॥ ४२ ॥
तेषामहं पादसरोजरेणुमार्या ! वहे या [2] धिकिरीटमा [3] युः ।
यं नित्यदा बिभ्रत आशु पापं नश्यत्यमुं सर्वगुणा भजन्ति ॥ ४३ ॥
गुणायनं शीलधनं कृतज्ञं वृद्धाश्रयं संवृणते नु सम्पदः ।
प्रसीदतां ब्रह्मकुलं गवां च जनार्दनः सानुचरश्च मह्यम् ॥ ४४ ॥

॥ मैत्रेय उवाच ॥

इति ब्रुवाणं नृपतिं पितृदेवद्विजातयः ।
तुष्टुवुर्हृष्टमनसः साधुवादेन साधवः ॥ ४५ ॥
पुत्रेण जयते लोकानिति सत्यवती श्रुतिः ।
ब्रह्मदण्डहतः पापो यद्वेनोऽत्यतरत्तमः ॥ ४६ ॥
हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ।
विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः ॥ ४७ ॥
वीरवर्य ! पितः ! पृथ्व्याः समाः संजीव शाश्वतीः ।
यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्त्तरि ॥ ४८ ॥

भाषाटीका ।

वही भगवान् यद्यपि गुण रहित हैं विज्ञान घन स्वरूप हैं विशेषण रहित हैं तथापि अलग अलग व्रीहि आदिक द्रव्य शुक्ल आदि गुण अवघातादिक्रिया वैदिक मंत्र अंग साध्य अर्थ संकल्प पदार्थों की शक्ति ज्योतिष्टोमादिनाम इन सब प्रकारोंसे अनेक गुण वाले होकर इस कर्म मार्ग में यज्ञ रूपसे प्रसिद्ध हैं ॥ ३४ ॥

वही विभु भगवान् परमानंद स्वरूप होकरभी प्रकृति काल वासना धर्म इन से बना हुआ जो शरीर तिसमें विषयाकार बुद्धि स्वरूप को प्राप्त होने से क्रिया फल रूप हो जाते हैं जैसे अग्नि काष्ठमें काष्ठके ही आकार से भान होता है तैसे ! ॥ ३५ ॥

जो हमारे प्रजा पृथिवी में दृढ व्रत धारण करके जगत् पूज्य यज्ञ भोक्ता देवतों के ईश्वर श्रीहरि को अपने वर्णाश्रम धर्म योग से आराधन करते हैं अहो वे प्रजा लोग मेरे पर बडा अनुग्रह करते हैं ॥ ३६ ॥

बडी संपत्तियों के होने से राजकुल से पैदा हुआ जो तेज, तितिक्षा तप विद्या करके स्वयं दीप्तिमान ब्राह्मण वैष्णवों के कुलपर अपने प्रभाव को मत प्रगट करै ॥ ३७ ॥

ब्रह्मण्य देव पुरातन पुरुष हरि भगवान् ने भी प्रति दिन जिन ब्राह्मणों की सेवा करने से अचला लक्ष्मी [illegible] जगत्को पवित्र करने वाला यश को प्राप्त किया महापुरु[illegible] में अग्रगण्य हो गये ॥ ३८ ॥

जिस ब्रह्मकुल के सेवा करने से सर्वांतर्यामी स्वयं प्रका[illegible] श ब्राह्मण प्रिय परमेश्वर अति संतुष्ट होते हैं उसी ब्राह्म[illegible] ण कुल को भगवद्धर्म तत्पर होकर सब प्रकार से न[illegible] होकर आप लोग सेवन करो ॥ ३९ ॥

जिस ब्राह्मण कुल के निष्कपट सेवा करने से चि[illegible] निर्मल हो जाता है तब शीघ्र ही और उपाय के बिना [illegible] पुरुष मोक्ष को प्राप्त हो जावै उस ब्राह्मण कुलके [illegible] को छोडकर और अग्नि आदिक कौन देवतों का मुख [illegible] सकता है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हरेरपि तदेव परं मुखमित्याह । अश्नातीति । इज्यानां पूज्यान[illegible] मिन्द्रादीनां नामभिर्यस्य मुखे श्रद्धया हुतं हविरनन्तो यथाश्ना[illegible] तथा चेतनया रहिते हुताशने हुतं नाश्नाति केहुतमश्नाति तत्त्व[illegible] कोविदैः सर्वदेवमयश्चैतन्यमूर्तिरनन्त इतितत्त्वं विद्भिः [illegible] एवं भूतोऽसौ तत्राह । पारमहंस्यं ज्ञानं तत्परानर्हन्त्यधिकुर्वन्ति[illegible] पारमहंस्यपर्यास्ता गावो वाचो यस्मिन् उपनिषद्भिर्ज्ञानघनत्वेन[illegible]

---

( १ ) पारमहंस्यचर्यगुः इतिश्रीविजयध्वजतीर्थः । ( २ ) वहेयेति प्रार्थनायां लिङ् । ( ३ ) आयुरिति छेदः आयुः पर्यन्तं ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्यर्थः यद्वा परमहंसानां ज्ञाननिष्ठानां गम्यः पारमहंस्यः परितो न गच्छन्ति गावो वाचो यस्मात्सपर्यगुरिन्द्रियनियन्ता सचासौ स च पारमहंस्यपर्यगुर्ज्ञानरूपः सर्वान्तर्यामीत्यर्थः ॥ ४१ ॥

न केवलं चेतनत्वेन हुताशनाद्विशेषः किन्तु वेदज्ञानादपीत्याह । यदित्यव्ययम् । ये ब्रह्मवेदं नित्यं बिभ्रति तेषामिसुत्तरेणान्वयः मङ्गलं नाम "प्रशस्ताचरणं नित्यमप्रशस्तस्य वर्जनम् एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः" मौनमध्ययनविरोधिवार्तात्यागः समाधिना चित्तस्थैर्येण । अर्थदृष्ट्ये वेदार्थमपि विचारयन्तीत्यर्थः । यत्र वेदे इदं विश्वमवभासते यथादर्शे मुखम् ॥ ४२ ॥

हे आर्या ! आआयुर्यावज्जीवमधिकिरीटं मुकुटस्योपरि वहेयेति प्रार्थनायां लिङ् यं रेणुम् ॥ ४३ ॥

गुणभजनस्य फलमाह । गुणायनमन्वनुसम्पदः संवृणते सम्यग्भजन्ति तस्मात्प्रसीदतां प्रसीदतु गवाञ्च कुलम् ॥४४॥४५॥

साधुवादमाह। पुत्रेणेतिषड्भिः यद्यतो वेनोऽपि तमो नरकमत्यतरदतितताार ॥ ४६—४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु "अग्निमुखा वै देवा" इति देवानामग्निमुखत्वश्रवणात् अग्नौ हुतमेव हविर्भुगन्तरात्मभूतपरमात्मप्रीतये भविष्यति तत्राह । अश्नातीति । सत्यमग्निरपि तन्मुखमिति तथापि तत्त्वकोविदैर्ब्राह्मणानां भगवत्प्रियतमशरीरत्वं जानद्भिः "न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम्" इति भगवद्वचनात् इज्यनामभिः आराध्येन्द्रादिनामभिः यस्य ब्राह्मणस्य मुखे श्रद्धया हुतं हविरनन्तो भगवान् यथा अश्नाति तथा चेतनया रहिते हुताशने अग्नौ हुतं नाश्नाति कुत एवं भूतोऽसौ तत्राह। पारमहंस्यपर्यगुः परमहंसा भगवदुपासकाः तेषां भावः कर्म वा पारमहंस्यं ज्ञाननिष्ठेति यावत् यद्वा चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् परमहंसा एव पारमहंस्याः तान् परित्यज्य न गच्छति तैः परितो गीयत इति वा अगुः गाङ्गतावित्यस्मान्नञ्पूर्वात् गैशब्दइत्यस्मात् वा कुभ्रंश्चेत्यौणादिकसूत्रे प्राक्प्रत्ययनिर्देशात् धात्वन्तरादपि कुप्रत्ययस्याभ्युगमात्कुप्रत्यये "अतोलोपइटिच" इत्यालोपः न च तत्रापि सन्वद्भावस्यापिविधानाद् द्वित्वापत्तिः बहुलग्रहणात्तदभावात् यद्वा मृगय्वादेराकृतिगणत्वात्कुप्रत्ययः "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। ज्ञानीत्वात्मैव मे मतम्" इति भगवद्गीतोक्तरीत्या निरतिशयप्रीतिविषयान् परमहंसान् अत्यादरेणावेक्ष्यमाणस्तत्रैव नित्यम् सन्निहित इति तत्साक्षात्स्वमुखे न्यस्तमिव भुङ्क्ते इति भावः ४१

न केवलं चेतनत्वेन हुताशनाद्विशेषः किन्तु वेदतदर्थज्ञानानुष्ठानादिनापीत्याह । यदिति । यद्ब्रह्मकुलं विरजं रागाद्युपेतं भ्रमप्रमादादिपुरुषदोषविनिर्मुक्तं च सनातनमनादिब्रह्मपरं ब्रह्म तत् स्वरूपप्रकाशकं वेदं च श्रद्धा उपासनायामध्ययनाध्यापनजपपारायणादिषु त्वरा उपासनोपयुक्तज्ञानकर्मयोगे ऽध्ययनाद्युपयुक्तकाण्डव्रतादिश्च कर्मयोगस्य कृच्छ्रादिरूपानशनादिगर्भत्वात्तपःशब्देनाभिधानं युक्तं मङ्गलं विशुद्धाचारः मौनं वाङ्नियमः आरम्भणसंशीलनं च संयमः ध्यानोपयुक्तशमदमादिः अध्ययनाद्युपयुक्तकरणनिग्रहश्च समाधिना ध्यानेन धारणया च अर्थदृष्ट्ये अर्थः पुरुषार्थरूपं ब्रह्म अभिधेययज्ञोपासनाश्च तद्दृष्ट्ये तत्साक्षात्काराय तदाराधनाय च इहास्मिंल्लोके बिभ्रति ब्राह्मणाः यत् ब्राह्मणकुलं पुनर्ब्रह्म विशिनष्टि । यत्र ब्रह्मणि परस्मिन् वेदे च इदं विश्वं परमात्मस्वरूपादिकं च आदर्श इवावभासते प्रकाशते ॥ ४२ ॥

तेषां ब्राह्मणानां पादसरोजरेणुं हे आर्याः ! आयुः आआयुः इत्याङ्प्रश्लेषोऽत्र बोध्यः यावज्जीवमित्यर्थः अधिकिरीटं मुकुटोपरि वहेयेति प्रार्थनायां लिङ् किन्तद्वहनसाध्यं तत्राह । यं ब्राह्मणपादसरोजरेणुं नित्यदा बिभ्रतः वहतः पुरुषस्य पापमाशु नंक्ष्यति अमुं वहन्तं सर्वगुणा कल्याणगुणाः भजन्ति आश्रयन्ते ॥ ४३ ॥

तं च गुणालयं शुभगुणाश्रयं शीलमेव धनं यस्य तं कृतमुपकारं जानातीति कृतज्ञं वृद्धान् ज्ञानाधिकान् आश्रयते इति तं सर्वाः सम्पदः वृणुते वृणीते लट् आत्मनेपदं छन्दस इति झस्यादादेशः आभ्यस्तयोरात इत्यालोपः सम्यक् भजन्ते उपसंहरन्ति ब्रह्मकुलं द्विजकुलं गवां च कुलं सानुचरः सभक्तः भगवाँश्च मह्यं प्रसीदताम् ॥ ४४ ॥

एवं वदन्तं नृपतिं पृथुं पित्राद्यः साधवः गुणगास्तुष्टमनसः साधुवादेन साधुसाध्विति वादेन तुष्टुवुः स्तुतवन्तः ॥ ४५ ॥

स्तुतिमेवाह । पुत्रेण लोकान् पुण्यलोकान् पिता जयति साधयतीति श्रुतिः जनश्रुतिः सत्यवती अबाधिता पुत्रेणेति पुत्रशब्दावयवार्थविषयभूतेनेत्यर्थः पुंसंज्ञकान्नरकात्त्रायते इति हि पुत्रशब्दं निदर्शयन्ति यत् यस्माद्वेनोऽपि तमः नरकमतरत् ॥ ४६ ॥

तथा हिरण्यकशिपुरपि भगवन्निन्दया तमो विविक्षुः प्रवेशमाशङ्कितः "आशंसायां सन् वक्तव्य" इति सन्नन्तात् सनासंशभिक्षउः इत्युः सूनोः प्रह्लादस्यानुभावतः प्रभावात् तमः नरकं अत्यगात् अतिक्रम्य भगवन्तमगादित्यर्थः ॥ ४७ ॥

तस्मात्त्वं वीरश्रेष्ठ ! पृथ्व्याः पतिस्त्वं शाश्वतीः समाः सम्वत्सरान् सञ्जीव कालाध्वनोरत्यन्तसयोग इति द्वितीया यस्य तव सर्वलोकानामेकस्मिन्नद्वितीयेभर्तर्यच्युते ईदृशी भक्तिरस्ति ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि ब्रह्मकुलसेवा कर्तव्येत्याह । अश्नातीति । भगवत्तत्त्वकोविदैः पुरुषैरिज्यस्य हरेर्नामभिर्यन्मुखे श्रद्धया हुतमनन्तो यथाश्नाति तथा चेतनया बहिष्कृते जडे हुताशने हुतं नाश्नातीत्यन्वयः अनन्त इत्यनेन न केवलमात्रं फलं किन्तु अनन्तमेवेति ध्वनयति अनुनयार्थः खलुशब्दः या इत्यनेन नाहं तथापीति प्रसिद्धिं स्मारयति ब्राह्मणेष्वपि यतिमुखाशनेन हरेर्विशेषतस्तृप्तिरित्यभिप्रेत्याह। पारमहंस्येति । पारमहंस्यैः ( २ ) परमहंसाश्रमस्थैर्यैर्या वरणीया गावो यस्य स पारमहंस्यवर्यगुः । त एव तद्वचनाभिप्रायं विदित्वा श्रद्धयानुष्ठातार इत्यर्थः यद्वा परमहंसविषया यया मनो हरा गावो यस्य तथा यतीनाधिकं स्तौतीति तेषामेव तत्त्वज्ञानाधिक्यादित्यर्थः चित्रगुशब्दवदयं शब्दः ॥ ४१ ॥

नन्वग्नित आधिक्यं चेतनावत्त्वं प्रयोजकं वेदवैदिकानामाराधनपात्रत्वं स्यादित्याशङ्क्य ब्रह्मकुलस्य वैशिष्ट्यमाह । यद्ब्रह्मेति । अत्र यावद्ब्रह्मविष्ठितं तावती वागिति श्रुतिर्वेदस्य परब्रह्मणश्च लक्षण-

---

( २ ) पारमहंस्यवर्यगुरित्यस्य तात्पर्यानुसारेणार्थमाह ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

साम्यात् द्वयमप्येकोक्त्या वक्ति । यद्ब्राह्मणकुलं नित्यत्वादिगुणविशिष्टब्रह्म वेदं हरेस्तत्त्वं च बिभ्रत् बिभर्ति तद्धारणे सामर्थ्यं वक्ति । श्रद्धेति "आचारहीनं न पुनन्ति वेदा" इति वचनं मङ्गलं पुण्यं संयमो दमः समाधिरेकाग्रता । किमर्थमित्यत उक्तमर्थसिद्धय इति । पुरुषार्थोपयोगीतरज्ञानप्रयासोऽपि न कार्य इत्याह । यत्रेति । यत्र ब्रह्मणि श्रीनारायणे इदं जगदादर्शे दर्पण इवावभासते वेदे चेदं पुरुषार्थचतुष्टयं ज्ञायते यद्वा यत्र ब्रह्मकुले इदमुक्तं ब्रह्मद्वयं दर्पण इवावभाति ॥ ४२ ॥

एवं ब्रह्मकुलमभिष्टूयात्मक्रियोपदेशतस्तत्सेवा यावदायुः कर्तव्येति विधत्ते । तेषामिति । हेआर्याः ! तत्त्वज्ञानोत्पत्तौ प्रथमसाधनं पापप्रणाशः सोऽप्यनेन स्यादित्याशयेनाह । यं नित्यदेति । उत्तरफलमाहामुमिति अमुं पुरुषम् ॥ ४३ ॥

एतदेव विशिनष्टि । गुणालयमिति । सम्पदो गुणालयत्वादिविशिष्टं पुरुषमनुसम्वृणात इत्यन्वयः सम्वृणुत इतिपाठे सम्वृणवत इति व्याख्येयं यं नित्यसम्बन्धनिषेवयेत्यादौ प्रस्तुतो जनार्दनः पारमहंस्यवर्यगुरित्यनेन ध्वनिता गावश्च ब्रह्मकुलं च प्रसीदत्वित्युपसंहरति । प्रसीदतामिति । ब्रह्मकुलसेवावद्गोकुलसेवा ब्रह्मादिपरिवृतश्रीजनार्दनसेवा च यथाशास्त्रविहितं मुमुक्षुणा कर्तव्येत्यतो वाह । प्रसीदतामिति ॥ ४४ ॥

इदानीं मैत्रेयः पृथूक्तावविप्रतिपत्तिः सर्वस्याभूदिति वक्ति । इतीति । साधुवादेन निर्दोषवाक्येन ॥ ४५ ॥

सूचितं स्पष्टयति । पुत्रेणेति । सोऽयं मनुष्यलोकः पुत्रेण जय्य इत्यादिकं श्रौतमपि दृष्टचरितमित्याहुरित्याह । ब्रह्मदण्डेति । अश्वत्पुत्रेण पितरोत्यायन्बहुलं तम इति श्रुतिरत्र प्रमाणम् । पापस्य वेनस्य तमस्तरणं सत्यश्चेत्सर्वेऽपि मुक्तिप्राप्तियोग्या इत्यायातं ननु नारकी कोऽपीतिचेन्न वेनशब्दस्य तामसराजससात्त्विकभेदेनाभिधेयत्रित्वस्य प्रामाणिकत्वात्"वेनस्थो राजसो जीवः पृथुना स्वर्गमिति गतः । स्वयं तु तम एवाप सात्त्विकः पृथुतामगात्"इति स्मृतेः तथाच वाक्ययोजना ब्रह्मदण्डहतो विप्रशापहतः पापो दैत्यो नाम्ना वेनस्तमोऽतरादिति यत्तदिति प्रशंसामात्रं ननु सत्यं सत्यन्तु सर्वस्मादत्याधिकं दुःखोदर्कं तमोऽत्यतरद्गच्छत्तृप्लवनतरणयोरिति धातोः प्लुगताविति च "अतिस्यादधिकार्थोक्तौ प्रशंसायामति क्रम"इत्यभिधानात् यत्तामसो वेनः सर्वदुःखकरो दैत्यः सोऽत्यतरत्सुखभोगलोकमतिक्रम्यागच्छदन्धन्तम इति शेषः ब्राह्मणानां विप्राणां दण्डो राजयोग्यशिक्षा तया हतो गतः दण्डोऽस्त्री शासने राज्ञामिति यादवः हनहिंसागत्योरिति धातोः । रजोगुणपानं पातीति वा पापो राजसो वेनस्तमोऽत्यतरत् तमोऽतिक्रम्य स्वर्गमिति गतः पृथुगणेनेति शेषः । यदतरत् तदुमशक्यं तमोगुण इति शेषः तदतिक्रम्य वर्तमानं स*त्वं वेत्तीति ज्ञानांशो वेनोऽत्यधिकार्थं भक्त्यादिगुणविस्ताराभिधेयं पृथुत्वमतरदाप्नोदिति । पापान्पातिरक्षतीति वापिबति संहरतीतिवा पापः ब्रह्म वेदस्तदुक्तो दण्डो हिंसा यस्य पशोः सब्रह्मदण्डः तं पशुं हन्तीति नाम्यमविहितमिति ब्रह्मदण्डहतः दण्डो हिंसायां लकुडे गुड इति च ॥ ४६ ॥

हिरण्यकशिपुरपि सनकादिशप्तो जयः श्रीहरिपार्षदस्तस्य तमोऽतिगमनं युक्तमन्यस्य तदाविष्टस्यासुरस्य तमोऽतिगमनमौपचारिकमर्थवादवत् ॥ ४७ ॥

एवं तृप्ताः सर्वे स्वमनोगतं विज्ञापयन्ति वीरवर्येति पृथ्व्याः पितः ! पातृत्वात्पितृत्वम् ननु त्वयैव नाथेनेत्युत्तरश्लो पृथावपि भक्तेः कर्तव्यत्वम् प्रतीयते अथ कथं भगवत्येव भक्तिः कर्तव्येति चेदुच्यते तत्र पृथुस्थपरमैश्वर्यमपेक्ष्यैवकारेणान्यगव्यवच्छेदः क्रियते यो ब्रह्मक्षत्रमाविश्येत्युत्तरत्र पृथुस्थत्वप्रतीतेः ॥ ४८ ॥

* वेदशब्दार्थकीर्तनमिदं ।

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

मुख्यत्वसिद्धिः पर्य्यगुरिति । गाव इन्द्रियाणि ॥ यस्मात् परित्यज्य हेतोर्वा पूर्व्वत्र न गच्छन्ति स्वातन्त्र्येण न तिष्ठन्तीत्यर्थः उत्तरत्र यमेवा लम्ब्य वर्तन्त इत्यर्थः ॥ ४१ ॥

यद्ब्रह्मेति युग्मकम् । यदिति जसोलुक् छान्दसः योऽधिकिरीटमायुरिति चितसुखः यो रेणुः ॥ ४२ ॥ ४३ ॥

वृद्धाश्रयमिति । तादृशं ब्राह्मणमेकमप्याश्रित्य वर्त्तमिति गुणायनमित्यादिकमधिकारिणो वृद्धाश्रयस्य विशेषणम् । गुणाश्चात्र शान्त्यादयः सम्पदो विद्यादयश्च त एव गुणशब्देन पुनः प्रोक्ताः । अत्र ब्राह्मणानामेव सर्व्वोपदेष्टृत्वात् प्रसाद्यत्वेन श्रेष्ठमभिप्रेतमिति । प्रसीदतां ब्रह्मकुलमित्यन्तमुक्त्वैव गवामित्युक्तः ॥ ॥ ४५ ॥

पुत्रेणेति । सत्पुत्रेणेत्यर्थः । तमः श्रीपृथुजन्मनः पूर्व्वं कतिचिद्दिनानि प्राप्तं नरकम् । अनुभावतः श्रीनृसिंहादिप्रादुर्भावकारणात् भक्तिलक्षणात् प्रभावादित्यर्थः । श्रीवाराहाद्यवतारे कारणान्तरमप्यस्ति । अत्र तु स एव कारणमिति भावः ॥ ४६ ॥ ४७ ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हरेरपि तदेव परं मुखमित्याह । अश्नातीति । श्रद्धया हुतं दत्तम् इज्यानां नामभिरिति यथा इन्द्राय स्वाहा आदित्याय स्वाहेति इज्यानामिन्द्रादीनां नाम्ना वह्नावाहुतिर्दीयते तथैव तेषां नाम्ना यदि ब्राह्मणमुखे पक्वान्नानि समर्पयति तदा ते इन्त एवाश्नाति तस्मिंश्च भुक्तवति तेषां शाश्वती तृप्तिः प्रीतिश्च स्यादित्यर्थः । चेतनया वहिष्कृते रहिते पारमहंस्यपरान् ज्ञानिभक्तांश्चार्हन्तीति पारमहंस्यपर्य्या गावो वेदवाचोऽङ्गकिरणश्च यस्य सः ॥ ४१ ॥

चेतनत्वेनैव हुताशनाद्विप्राणां श्रैष्ठ्यं न किन्तु वेदज्ञानादित्याह । यद्यस्माद्ब्रह्म वेदं श्रद्धादिभिर्बिभ्रति मङ्गलं नाम "प्रशस्ताचरणं नित्यमप्रशस्तस्य वर्जनम् । एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः । मौनमध्ययनविरोधिवार्तात्यागः समाधिना चित्तस्थैर्य्येण किमर्थमर्थानां वस्तुमात्राणां दृष्टये ज्ञानाय । कमेवमत आह । यत्र वेदे इदं जगत् सर्व्वमेव अवभासते ज्ञानविषयीभवति आदर्शे दर्पण इव ॥ ४२ ॥

हे आर्य्याः ! आ आयुर्यावज्जीवं अधिकिरीटं वहेय प्रार्थनालिङ् यं रेणुम् अमुं बिभ्रतं पुमांसम् ॥ ४३ ॥

गुणभजनस्य फलमाह । गुणायनमिति । सम्यक् स्वयं वृणुते पतिम्वरा इवेत्यर्थः । तस्मात् प्रसीदतां प्रसीदतु ॥ ४४ ॥ तमो नरकम् । हे पृथ्व्याः पितः ! ॥ ४६—४८ ॥

अहो वयं ह्यद्य पवित्रकीर्ते ! त्वयैव नाथेन मुकुन्दनाथाः ।
य उत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां(१) व्यनक्ति ॥ ४९ ॥
नात्यद्भुतमिदं नाथ ! तवाजीव्यानुशासनम् ।
प्रजानुरागो महतां प्रकृतिः करुणात्मनाम् ॥ ५० ॥
अद्य नस्तमसः पारस्त्वयोपासादितः प्रभो ! ।
भ्राम्यतां नष्टदृष्टीनां कर्मभिर्दैवसंज्ञितैः ॥ ५१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवानपि ब्रह्मकुलमुखे यथा भश्नाति तथा हुताशने नाश्नातीत्याह। भश्नातीति। अनन्तः अपरिमितस्वरूपगुणः पारमहंस्यपर्यगुः पारमहंस्यं ज्ञानं तत्परानधिकुर्वन्तीति पारमहंस्यपर्य्याः गावो वेदान्तवाचो यस्मिन्निति वेदान्तैकवेद्यो भगवान् तत्त्वकोविदैः श्रद्धया यन्मुखे हुतं यथा हुताशने इज्यनामभिर्हुतं नाश्नाति तद्ब्रह्मकुलं निषेव्यतामिति पूर्वेणान्वयः ॥ ४१ ॥

यदित्यव्ययं ये ब्राह्मणाः नित्यमनादिसिद्धं ब्रह्म वेदं विरजं शुद्धं सनातनं परं ब्रह्म च बिभ्रति तेषामित्युत्तरेणान्वयः यत्र शब्दब्रह्मणि विषयतया परब्रह्मणि कार्यतया इदं विश्वमादर्शतले इवावभासते यथावद्दृश्यते कस्मै प्रयोजनाय बिभ्रति अर्थदृष्टये शब्दब्रह्म तदर्थज्ञानाय परं ब्रह्म तत्कार्यज्ञानाय "यद्विज्ञाने सर्वं विज्ञातं भवति,, इति श्रुतेः यद्वार्थऽस्य याजनस्य दृष्टये ज्ञानाय पुरुषार्थचतुष्टयलाभायेति फलितार्थः कैरुपायैः श्रद्धादिभिः तत्र सङ्कलं गुरुचरणप्रणामादि मौनमयुक्तभाषणत्यागः समाधिश्चित्तैकाग्र्यम् ॥ ४२ ॥

हेभार्य्याः ! तेषामुभयब्रह्मविदां पादसरोजरेणुम् अधिकिरीटं किरीटोपरि आआयुर्यावज्जीवं वहेयेति प्रार्थनायां लिङ् पादपद्मरेणुं बिभ्रतः पापमाशु नश्यति अमुं बिभ्रतम् सर्वदा सर्वगुणाः भजन्ति आश्रयन्ति ॥ ४३ ॥

तेषां गुणानामेकदेशं गुणभजनस्य फलं च दर्शयति। शीलधनमित्येको गुणः कृतज्ञमिति द्वितीयः श्रद्धाश्रयमिति ज्ञानभक्त्यादिगुणगणमूलभूतः श्रद्धाश्रयत्वलक्षणो महागुणो दर्शितः एवमादिगुणायतनम् अनु अनुसम्पदः संवृणुते सम्यगाश्रयन्ते तस्माद्ब्रह्मकुलङ्गवां कुलं च सानुचरः अनुचरैर्वैष्णवैः सहितः जनार्दनश्च मह्यं प्रसीदतां प्रसीदतु ॥ ४४ ॥

साधुवादेन पृथुकृतेन हृष्टमनसः तुष्टुवुः स्तुतवन्तः ॥ ४५ ॥

स्तुतिमाह। पुत्रेणेति षड्भिः। पुत्रेण लोकान् जयति साधयति पितेति शेषः इति श्रुतिः सत्यवती यथार्था यतो वेनोऽपि तमः अतरत् अतितितार मघवा पुत्रीभूतेनेति शेषः ॥ ४६ ॥

दृष्टान्ततया प्रह्लादेन हिरण्यकशिपुस्तमोऽत्यगादित्याह। हिरण्यकशिपुरिति। अत्यगादिति क्रियापदेन शास्त्रप्रसिद्धः पूर्वकल्पीयो हिरण्यकशिपुः सूच्यते ॥ ४७ ॥

शाश्वतीः समाः बहुसम्वत्सरान् ॥ ४८ ॥

---

भाषाटीका ।

उपनिषदोंसे प्रतिपादित अनन्त भगवान् भी तत्त्व वेत्ता पुरुषों के ब्राह्मणोंके मुख में श्रद्धा पूर्वक इन्द्रादि नामों से अर्पण किये पदार्थ को ग्रहण करतेहैं तैसे चेतना से रहित अग्नि मे अर्पण करनेसे नहीं भोजन करते हैं ॥ ४१ ॥

नित्य निर्मल सनातन वेद को श्रद्धा तप सदाचार मित भाषण संयम समाधि से ब्राह्मण लोग धारण करतेहैं तिससे उनकी दिव्य दृष्टि होती है उस वेद में सब साधन दर्पण मे मुख सरीके दीखते हैं ॥ ४२ ॥

हे श्रेष्ठ पुरुषो ! उन ब्राह्मणों के चरण रेणु को आयु के समाप्ति पर्यन्त मै अपने मस्तक के किरीट में धारण करता हूं जिस की रेणु के धारण करने वालेके पाप नष्ट होते हैं और सब गुण उसको मिलते हैं ॥ ४३ ॥

क्षांत्यादि गुणवाला सुस्वभाव को धन सरीका रखने वाला कियेका उपकार मानने वाला वृद्ध पुरुषों का आश्रय करने वाला जो पुरुष हो उसको सब संपत्ति स्वयं चाहती है इसी के लिये ब्राह्मण वंशी गऊका कुल भागवतों के सहित जनार्दन भगवान् हमारे ऊपर संतुष्ट होवैं ॥ ४४ ॥

मैत्रेयजी बोले इस प्रकार कथन करने वाले महाराज से पितर देवता ब्राह्मण महात्मा सब सन्तुष्ट होकर साधु साधु बोलने लगे ॥ ४५ ॥

पुत्रसे पिता को दिव्य लोक की प्राप्ति होती है यह कथन सत्य ही है जिसी हेतु से कि ब्राह्मणों के दंड से मरा पापी वेन भी आज नरक को जीत गया ॥ ४६ ॥

हिरण्यकशिपू भी भगवान् की निन्दा से नरक को जानेवाला था परन्तु अपने पुत्र प्रह्लाद के प्रभावसे नरक को जीत गया ॥ ४७ ॥

हेवीरश्रेष्ठ ! हे पृथिवी के पिता ! आप सदाकाल जीते रहो जिन आपकी सब लोक के एक मालिक होने पर भी नारायण मे ऐसी भक्ती है ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मुकुन्दनाथाः स्म त्वन्नाथत्वमेव मुकुन्दनाथत्वे पर्यवसितमित्यर्थः तत्र हेतुर्य इति ॥ ४९ ॥

आजीविनां सेवकानाम् आसम्यगनुशासनम् प्रजास्वनुरागः प्रकृतिः स्वभावः ॥ ५० ॥

उपासादितः प्रापितः कर्मभिर्भ्राम्यताम् ॥ ५१ ॥

ईश्वरदृष्ट्या विप्रादयोऽपि प्रणमन्ति । नमहति । ब्रह्मविद्ग

(१) व्यनक्तीतिश्रीविजयध्वजतीर्थः ।

नमो विवृद्धसत्त्वाय पुरुषाय महीयसे ।
यो ब्रह्मक्षत्रमाविश्य बिभर्तीदं स्वतेजसा ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पारमहंस्यां
संहितायां पृथुचरिते पृथुवाक्य
एकविंशोऽध्यायः ॥ २१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्राह्मणजातिमधिष्ठाय चत्रं क्षत्रियं बिभर्ति क्षत्रं चाविश्य ब्रह्म बिभर्ति तदुभयं चाविश्येदं विश्वं बिभर्ति ॥ ५२ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

हेपवित्रकीर्ते ! वयं त्वयैव नाथेन मुकुन्दनाथाः स्वनाथत्वमेवास्माकं मुकुन्दनाथत्वे पर्यवसितमित्यर्थः कुतः यो भवान् ब्रह्मण्यदेवस्य उत्तमश्लोकस्य विष्णोः कथां व्यनक्ति प्रकाशयति ॥ ४९ ॥

नाथ ! तव आजीव्यानुशासनं राजानमाजीवन्त्युपजीव्याः तेषामस्माकम् मनुशासनमिति यदिदं नात्यद्भुतं कुतः महात्मनां करुणात्मनां कृपास्वभावानां प्रजास्वनुरागः प्रकृतिः स्वभावः ॥ ५० ॥

हेप्रभो ! दैवसंज्ञितैः दैवापरपर्यायैः कर्मभिः भ्रमतां संसरताम् अत एव नष्टदृष्टीनां नोऽस्माकं अधुना त्वया तमसः नरकस्य पारस्तीरमुपासादितः प्रापितः ॥ ५१ ॥

ईश्वरदृष्टया प्रणमन्ति । नमइति । ब्राह्मणजातिमधिष्ठाय चत्रं बिभर्ति क्षत्रमाविश्य ब्रह्मकुलं बिभर्ति तदुभयमाविश्य इदं विश्वं बिभर्ति तस्मै भरणोपयुक्त गुणमाह। विवृद्धसत्त्वाय रजस्तमोभ्यामनभिभूतसत्त्वप्रचुराय अत एव महीयसे परमपुरुषविभूतिभूताय तुभ्यं नमः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे-
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकविंशोऽध्यायः ॥ १५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुकुन्दो नाथो येषां ते तथा अनेनाप्युक्तशङ्का पर्यहारि व्यनक्ति अस्माभिरपृष्टामपि कथां व्यक्तां करोषि ॥ ४९ ॥

तव भृत्यानामस्माकमनुशासनं नैकान्तानियतमित्याह्वारित्याह । आत्यन्तिकमिति ॥ ५० ॥

उपासादितः प्रापितः भ्राम्यतामेकत्रावस्थानमलभमानानाम् ॥ ५१ ॥

अहो वयमित्यत्रान्तर्याम्यपेक्षयेत्युक्तं तत्तत्त्वज्ञानमेषां सिद्धमिति भावेन तत्सिद्धान्तं प्रकटयति । नम इति । यो विष्णुः ब्रह्म राजकुलोत्पन्नं पृथुमाविश्येदं ब्रह्म ब्राह्मणकुलं बिभर्तीत्यन्वयः ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

व्यनक्तीति क्वचित् । व्यनक्तीरिति चित्सुखः ॥ ४९-५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
एकविंशतितमोऽध्यायः ॥ २१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मुकुन्दनाथाभूम तवैव मुकुन्दत्वात् मुकुन्दभक्ति विशालत्वादिति भावः यो भवान् ॥ ४९ ॥

आजीविनां सेवकानाम् आ सम्यगनुशासनं प्रजास्वनुरागः प्रकृतिः स्वभावः ॥ ५० ॥ ५१ ॥

ईश्वरदृष्टया विप्रादयोऽपि प्रणमन्ति । नम इति । ब्रह्मविशेष ब्राह्मणजातिमधिष्ठाय चत्रं क्षत्रियं बिभर्ति । क्षत्रमाविश्य ब्रह्म बिभर्ति । तदुभयमाविश्य इदं विश्वं बिभर्ति ॥ ५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थे एकविंशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे पवित्रकीर्ते ! त्वया नाथेन वयं मुकुन्दनाथाः स्म यतो भवान् विष्णोः कथां व्यनक्ति प्रकटयति ॥ ४९ ॥

हेनाथ ! आजीविनां भवदाश्रितजीविकानाम् मनुशासनं तव नात्यद्भुतम् यतो महतां प्रजानुरागः प्रकृतिः स्वभाव एव ॥ ५० ॥

दैवसंज्ञितैः प्राकृतैः फलोन्मुखैः कर्मभिर्भ्राम्यतां तमसः संसारस्य पारस्त्वयोपासादितो दर्शितः ॥ ५१ ॥

द्विजाः नमः कुर्वन्ति । यो हरिः ब्रह्म ब्राह्मणजातिं प्रविश्य

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दिरूपेण यत्रं चात्रियजातिं प्रविश्य पृथ्व्यादिरूपेणेदं बिभर्ति तस्मै विशुद्धसत्वाय महीयसे पुरुषाय नमः ५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकविंशाध्यायार्थप्रकाशः ॥ २१ ॥

---

भाषाटीका ।

हे पवित्र यश वाले महाराज ! आपके मालिक होनेसे ही हम लोग परमेश्वर को स्वामी मानने लगे जो आप उत्तम श्लोकों मे उत्तम ब्रह्मण्य देव विष्णु भगवान् की कथा को हमसे प्रगट करते हैं ॥ ४९ ॥

हे नाथ ! आप को यह बात कुछ आश्चर्य नहीं है जो आप हमसेवकों को उपदेश करते हो जिससे कि प्रजा को अनुरक्त करना यह दया वानों का स्वभावही है ॥ ५० ॥

हे प्रभो ! प्रारब्ध नामक कर्मों से भ्रमते हुये अज्ञानी हम लोगों को आज आपने अज्ञान अन्ध से पार कर दिया है ।५१।

विशुद्ध सत्व स्वरूप पुरुष महान् परमेश्वर के अर्थ नमस्कार हैं जो भगवान् ब्राह्मण चत्रिय वैश्य इनमें प्रवेश होकर अपने प्रभाव से इस जगत्को पालन करते हैं ॥ ५२ ॥

इति श्रीभागवत चतुर्थस्कन्ध एकवीसवां अध्यायका भाषानुवाद लक्ष्मणाचार्य कृत समाप्त ॥ १५ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे एकविंशोऽध्यायः समाप्तः ॥ २१ ॥

## ॥ द्वाविंशोऽध्यायः ॥

—o:*:o—

॥ मैत्रेय उवाच ॥

जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम् ।
तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः ॥ १ ॥
तांस्तु सिद्धेश्वरान् राजा व्योम्नोऽवतरतोऽर्चिषा ।
लोकानपापान् कुर्वत्या सानुगोऽचष्ट लक्षितान् ॥ २ ॥
तद्दर्शनोद्गतान् प्राणान् प्रत्यादित्सुरिवोत्थितः ।
ससदस्यानुगो वैन्य इन्द्रियेशो गुणानिव ॥ ३ ॥
गौरवाद्यन्त्रितः सभ्यः प्रश्रयानतकन्धरः ।
विधिवत् पूजयाञ्चक्रे गृहीताध्यर्हणासनान् ॥ ४ ॥
तत्पादशौचसलिलैर्मार्जितालकबन्धनः ।
तत्र शीलवतां वृत्तमाचरन् मानयन्निव ॥ ५ ॥
हाटकासन आसीनान् स्वधिष्ण्येष्विव पावकान् ।
श्रद्धासंयमसंयुक्तः प्रीतः प्राह भवाग्रजान् ॥ ६ ॥

॥ पृथुरुवाच ॥

अहो आचरितं किं मे मङ्गलं मङ्गलायनाः ! ।
यस्य वो दर्शनं ह्यासीद्दुर्दर्शानां च योगिभिः ॥ ७ ॥
किं तस्य दुर्लभतरमिह लोके परत्र च ।
यस्य विप्राः प्रसीदन्ति शिवो विष्णुश्च सानुगः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वाविंशे तु परं ज्ञानं पृथवे हरिशासनात् ।
सनत्कुमारो भगवानुपादिशदितीर्यते ॥ १ ॥

मुनयः सनकादयः ॥ १ ॥

अर्चिषा लक्षितान्सनकादयइति ज्ञापितान् । अचष्टापश्यत् ॥२॥

तेषां दर्शनेनोद्गतान् प्राणान्प्राप्तुमिच्छुरिव । अयंभावः "ऊर्ध्वं प्राणाह्युत्क्रामन्ति यूनःस्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते" इतिस्मृतेः प्राणास्तावत्तत्तेजसाक्षिप्तास्तान्प्रत्युद्गच्छन्त्यतः प्राणहानिः स्यादिति भयादिव ससम्भ्रमम्प्रत्युद्गमं चकारेति सह सदस्यैरनुगैश्च वर्तमानः इन्द्रियेशो जीवो गुणान्गन्धादीन्प्रति यथोद्गच्छतीत्यौत्सुक्ये दृष्टान्तः ॥ ३ ॥

यन्त्रितो वशीकृतः गृहीतमध्यर्हणमर्घ्यमासनञ्च यैस्तान् मार्जितं क्षालितमलकबन्धनं यस्य मानयन्निव स्वयञ्चचार ॥ ५ ॥

भवस्याप्यग्रजत्वेन मान्यान् ॥ ६ ॥

प्रीतः प्राहेत्युक्तं तदेव प्रीतिपूर्वकं वचनमाह । अहो इतिदशभिः । हेमङ्गलायनाः ! मङ्गलमयनं येषाम् मया किमङ्गलमाचरितम् [...] मे योगिभिरपि दुर्दर्शानां वो दर्शनमासीत् ॥ ७ ॥ ८ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं भगवता ह्रस्वेन कालेन गृहोपयातान् द्रष्टासि [...]निति । कुमारागमनं तैश्च तत्त्वोपदेश इति तद्विस्तरेण व[...] कुमारागमनमाह मुनिः । जनेष्विति । विपुलपराक्रमं पृथुं प्र[...] जनेषु प्रगृणत्सु वदत्सु सत्सु सूर्यस्येव वर्चो येषां ते चत्व[...] मुनयः तत्रोपजग्मुरित्यर्थः ॥ १ ॥

लोकानपापान् कुर्वन्त्या अर्चिषा लक्षितान् सनकादय[...] लक्षितान् व्योम्नः आकाशादवरोहतः तान् सिद्धेश्वरान् सा[नु]... सभृत्यो राजा अचष्ट अद्राक्षीत् ॥ २ ॥

तेषां दर्शने नोद्गतान् प्राणान् पुनः प्राप्तुमिच्छुरिव । [...] प्राणा ह्युत्क्रमान्ति यूनः स्थविर आगते । प्रत्युत्थानाभिवाद[...] पुनस्तान् प्रतिपद्यते । इत्ययमर्थः सूचितः प्राणास्तावत्तत्ते[...]

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

क्षिप्ताः प्रत्युद्गच्छन्ति स्वयमननुगच्छतः प्राणहानिः स्यादिति भयादिव ससम्भ्रमं सदस्यैरनुगैश्च यथा इन्द्रियेशः क्षेत्रज्ञः गुणान् शब्दादीनुद्गच्छतीत्यौत्सुक्ये दृष्टान्तः उत्थितः ॥ ३ ॥

गौरवात् यन्त्रितः वशीकृतः सद्यः प्रश्रयेण विनयेन नता कन्धरा यस्य सः गृहीतमभ्यर्हणम् अर्घ्यमासनं चयैस्तान् यथाविधि पूजयांचक्रे ॥ ४ ॥

तत्पादानां शौचैः सलिलैर्मार्जितं क्षालितम् अलकबन्धनम् केशबन्धनं यस्य शीलवतां वृत्तं मानयन्निव स्वयमाचरन् ॥ ५ ॥

हाटकासने स्वधिष्ण्यं वेदिकायां पावकानिवासीनानुपविष्टान् श्रद्धासंयमाभ्यां तद्वाक्यश्रवणात्वरातदुपयुक्तकरणनियमनाभ्यां संयुक्तः भवाग्रजान् रुद्रात्पूर्वजान्सनकादीन् प्राह ॥ ६ ॥

उक्तमेवाह । अहो इति दशभिः । हेमङ्गलायनाः! मङ्गलं किं मे मया किं पुण्यम् अहो आचरितं कृतं यतः यस्य मे योगिभिरपि दुर्दर्शानां दुःखेनापि द्रष्टुमशक्यानां वो युष्माकं दर्शनमासीत् सुकृतमन्तरेण मादृशानां भवद्दर्शनं न संभाव्यते इत्यर्थः ॥ ७ ॥

किमस्मद्दर्शनसाध्यं तत्राह । यस्य पुंसः विप्रा भवादृशाः शिवो रुद्रो मङ्गलरूपो वा विष्णुश्च प्रसीदति तस्य इह परत्र वा वांक किं दुर्लभतरमस्ति सर्वं सुलभमेवेत्यर्थः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पृथुसनत्कुमारसम्वादोपदेशेन सर्वस्माद्भिन्नमनुग्रहमन्तरेण दुर्ज्ञेयं भगवत्तत्त्वं निरूप्यते ऽस्मिन्नध्याये । तत्रादौ सनत्कुमारादिमुनीनामागतिं वक्ति । जनेष्विति ॥ १ ॥

अर्चिषा लक्षितान् लक्षणतो ज्ञातानचष्ट अद्राक्षीत् ॥ २ ॥

तेषां दर्शनेनोद्गतान् प्राणान् प्रादातुमिच्छुरिव अयं भावः

ऊर्ध्वं प्राणाह्युत्क्रामन्ति यूनः स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते

इति स्मृतेः प्राणास्तावत् तेजसा क्षिप्तास्तान् प्रत्यागच्छन्ति अतः स्वयमनभिगच्छतः प्राणहानिः स्यादिति भयादिव ससम्भ्रमः प्रत्युद्गमनं चकारेति इन्द्रियेशो जीवो गुणानिन्द्रियाणीव ॥ ३ ॥ ४ ॥ ५ ॥

हाटकासने सुवर्णपीठे स्वधिष्ण्येषु स्वस्थानेषु स्थितान् संयमः प्रश्रयः भवाग्रजान् शिवज्येष्ठान् तृतीयस्कन्धे हरात्पूर्वजातत्वोक्तेः संसाराग्रजातत्वं तद्विरुद्धत्वादुपेक्षणीयम् ॥ ६ ॥

संसारिणां सतां संदर्शनस्य दुर्लभत्वात् अतः पूर्वाचरितं मङ्गलं ममास्तीति ध्वनयन्विस्मयीकरोति । अहो इति । कृष्णे कृष्णविषये ॥ ७ ॥

नैतच्चित्रमित्याह । किन्तस्येति । अनुगतेन प्राणेन सह वर्तत इति सानुगः कस्मिन्वहमिति श्रुतिः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अर्चिषा कथम्भूतया लोकानपापान् कुर्व्वत्येति चित्सुखः । कुर्व्वाणानिति क्वचित् ॥ १ ॥ २ ॥

प्रत्यादित्सुरिति चित्सुखः प्रत्यापित्सुरिति क्वचित् ॥ ३ ॥ ४ ॥ ॥ ५ ॥ ६ ॥ ७ ॥

किञ्च । त्वादृशाश्च विप्राः साधारणा न भवन्तीत्यर्थान्तरन्यासेन व्यनक्ति । किन्तस्येति ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्वाविंशे परमं ज्ञानं ज्ञापयित्वा ततः परम् ।
सनत्कुमारः पृथवे शुद्धां भक्तिमुपादिशत् ॥ ० ॥

प्रगृणत्सु स्तुवत्सु । पृथौ स्वसद्मोपवनं गते चेति शेषः । तथैव भगवदुक्तेः ॥ १ ॥

अर्चिषा लक्षितान् सनकादय इति ज्ञापितान् । अचष्ट अपश्यत् ॥ २ ॥

अभ्युत्थानमुत्प्रेक्षते तेषां दर्शनेन दर्शनतेजसा उद्गतान् प्राणान् प्रति प्राप्तुमिच्छुरिव ।

ऊर्द्धं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते

इतिस्मृतेरभ्यर्हितानभ्युत्थानत आयुःक्षयोक्तेः इन्द्रियेशो जीवो गुणान् गन्धादीन् प्रतीत्यौत्सुक्ये दृष्टान्तः ॥ ३ ॥

यन्त्रितः सङ्कुचित कायिकवाचिकवृत्तिः ॥ ४ ॥

शीलवतां वृत्तमिति शीलवद्भिरेवं वर्तितव्यमिति स्वयमाचरन् मानयन्निव मन ज्ञाने ॥ ५ ॥

भवस्याप्यग्रजत्वेन मान्यान् ॥ ६ ॥ ७ ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वाविंशे श्रीकुमारा भगवत्परस्य भगवत्प्राप्तिं तद्विमुखस्य संसारमुक्तवन्त इत्याह । जनेष्विति । प्रगृणत्सु स्तुवत्सु ॥ १ ॥

लोकान् अपापान् कुर्वत्या अर्चिषा दीप्त्या लक्षितान् सनकादय इति ज्ञापितान् सानुगः राजा पृथुः अचष्ट अपश्यत् ॥ २ ॥

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते

इतिस्मृतेः श्रेष्ठे आगते इतरस्य प्रत्युत्थानाभिवादाभावे आयुर्हानिर्भवेत्तद्रक्षार्थं प्रत्युत्थानादिकं कृतवानित्याह । तदिति । तेषां दर्शनेनोद्गतान् प्राणान् प्रत्यादित्सुः प्राप्तुमिच्छुरिवोत्थितः इन्द्रियेशो जितेन्द्रियगुणान् तपोव्रतहरिगाथाश्रवणादीन् प्रति जीवो गन्धादीन् प्रति वा यथोत्थायगच्छतीत्यौत्सुक्ये दृष्टान्तः उत्थित इत्यादिनात्र "चक्षुर्दद्यान्मनोदद्याद्वाचं दद्यात्तु सूनृताम् । उत्थाय चासनं दद्यात्स यज्ञः पञ्च दक्षिण" इति पञ्च दक्षिणो यज्ञोऽपि दर्शितः ॥ ३ ॥

यन्त्रितस्तदधीनताङ्गतः प्रश्रयेण विनयेनानता कन्धरा यस्य सः गृहीतमभ्यर्हणमर्घ्यमासनं च यैस्तान् विधिवत्पूजयाञ्चक्रे ॥ ४ ॥

तेषां चरणक्षालनजलैः मार्जितमार्द्रीकृतमलकबन्धनं यस्य सः शीलवतां वृत्तं विनयप्रार्थनादिरूपं मानयन् इव अङ्गीकुर्वन्निव स्वयमाचरत् ॥ ५ ॥

हाटकासने सुवर्णासने आसीनान् भवाग्रजान् शिवपूर्वजान् शिवादीनामपि पूज्यानित्यर्थः ॥ ६ ॥

मङ्गलं परं ब्रह्म अयनमाश्रयो येषां मङ्गलमयनं स्थानं वा

नैव लक्ष्यते लोको लोकान्पर्यटतोऽपि यान् ।
यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः ॥ ९ ॥
अधना अपि ते धन्याः साधवो गृहमेधिनः ।
यद्गृहा ह्यर्हवर्याम्बुतृणभूमीश्वरावराः ॥ १० ॥
व्यालालयद्रुमा वै तेऽप्यरिक्ताखिलसम्पदः ।
यद्गृहास्तीर्थपादीयपादतीर्थविवर्जिताः ॥ ११ ॥
स्वागतं वो द्विजश्रेष्ठा ! यद्व्रतानि मुमुक्षवः ।
चरन्ति श्रद्धया धीरा बाला एव बृहन्ति च ॥ १२ ॥
कच्चिन्नः कुशलं नाथा ! इन्द्रियार्थार्थवेदिनाम् ।
व्यसनावाप एतस्मिन्पतितानां स्वकर्मभिः ॥ १३ ॥
भवत्सु कुशलप्रश्न आत्मारामेषु नेष्यते ।
कुशलाकुशला यत्र न सन्ति मतिवृत्तयः ॥ १४ ॥
तदहं कृतविश्रम्भः सुहृदो वस्तपस्विनाम् ।
संपृच्छे भव एतस्मिन्क्षेमः केनाञ्जसा भवेत् ॥ १५ ॥
व्यक्तमात्मवतामात्मा भगवानात्मभावनः ।
स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

येषां तत्सम्बोधने हेमङ्गलायनाः ! मे मया किं मङ्गलं शुभमाचरितम् ॥ ७ ॥ ८ ॥

---

भाषाटीका ।

मैत्रेयजी बोले पृथु महाराज से जब मनुष्य ऐसा कहते थे तबही सूर्य केसे तेज वाले चार मुनि ऊहां पर आये ।१।

आकाश से उतरते हुये अपने तेजसे सब लोकों के पाप को दूर करते हुये ऐसे सिद्धेश्वरों का अपने भृत्यों सहित राजाने दर्शन किया ॥ २ ॥

उनके दर्शन से उठे हुये प्राणोंको लौटाने सरीकी चेष्टा से सब सभा सदों के चाकरों के सहित जैसे मन इन्द्रियों के सहित गंधादि ग्रहण मे प्रवृत्त होता है तैसे उठे ॥ ३ ॥

पृथु महाराज उनके प्रभाव से वशी भूत होकर प्रेम से मस्तक नम्र करके दिव्य आसनों पर उनको बैठा कर विधि पूर्वक पूजा करते भये ॥ ४ ॥

तहां सुन्दर स्वभाव वालों के स्वभाव को मानकर आचरण करते से महाराज ने उन मुनिन के चरणों के जलसे अपने मस्तक के केशों को शुद्ध किया ॥ ५ ॥

वेदी मे स्थित अग्नि के तुल्य सुवर्ण सिंहासन मे बैठे उन ऋषिन के आगे श्रद्धा कर चित्त को एकाग्रकर के प्रसन्नता से महादेवजी के बडे भ्राता मुनियों से महाराज प्रार्थना करने लगे ॥ ६ ॥

पृथु महाराज बोले हे मङ्गल स्वरूप मुनिगण ! मैंने न जाने कौनसा पुण्य किया है कि जिस के प्रभाव से मुनियों को दुर्लभ जो आपका दर्शन सो मोकूं हुआ ॥ ७ ॥

उस पुरुष को इस लोक मे तथा परलोक मं क्या दुर्लभ है जिस पर ब्राह्मण तथा श्री विष्णु तथा शिवजी तथा भगवान् विष्णु के भक्त भी प्रसन्न होजावें ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्दर्शत्वमेवाह। नैवेति।सर्वदृशमात्मानं यथा सर्वे दृश्या न दृश्यन्ते येऽस्य विश्वस्य हेतवो महदादयो मन्वादयो वा। कथंभूतान् । येऽस्य सर्वदृगात्मदर्शनस्य हेतवस्तान् ॥ ९ ॥

येषां साधूनां गृहा अर्हाणां पूज्यानां वर्या वरणीयाः स्वीकाराहाः अर्घ्यादयो येषु तादृशाः अम्बु च तृणाश्च भूमिश्च ईश्वरो गृहस्वामी चावरा भृत्यादयश्च ॥ १० ॥

व्यालानामालया द्रुमा एव ते अरिक्ताः पूर्णा अखिलाः सम्पदो येषु तादृशा अपि यद्गृहा ये गृहास्तीर्थपादीया वैष्णवास्तेषां पादतीर्थेन विवर्जिताः ॥ ११ ॥

स्वागतं भद्रमागमनं जातम् । यद्यस्माद्बाला एव भवन्तो बृहद्व्रतानि चरन्ति यद्वा येषां वो व्रतान्यन्ये बालाश्चरन्ति ॥ १२ ॥

इन्द्रियार्था विषयास्तानेवार्थं पुरुषार्थं ये विदन्ति तेषां व्यसनान्युप्यन्ते यस्मिंस्तस्मिन् संसारे ॥ १३ ॥

नन्वभ्यागतानां कुशलं पृच्छन्ति लोके न त्वात्मनस्तत्राह। भवत्स्विति ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्तस्मात्कृतविश्वासः संस्तपस्विनां संतप्तानां सुहृदो वो युष्मान्पृच्छामि ॥ १५ ॥

न खल्वन्ययोगितुल्या यूयं किन्तु साक्षाद्भगवानेवेत्याह । व्यक्तं निश्चितमात्मवतां धीराणामात्मा तेष्वात्मत्वेन प्रकाशमानः । आत्मानं भावयति प्रकाशयतीति तथा । अजः श्रीनारायणः इमां पृथ्वीं चरति ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुर्दर्शत्वमेवाह । नैवेति । लोकान् पर्यटनोऽपि यान् युष्मान् लोको नैव लक्षयते न पश्यति यथा सर्वदृशं सर्वज्ञमात्मानम् अस्य विश्वस्य हेतुभूताः ब्रह्मादयः सर्वेऽपि न लक्षयन्ते तथेत्यर्थः यस्य हेतव इति पाठे तु हेतवः ब्रह्मादयः सर्वे यस्य यत्संबन्धिनः यस्य शेषभूताः तं सर्वज्ञमात्मानं यथा न लक्षयन्ति तथेत्यर्थः ॥ ९ ॥

तद्दर्शनेन स्वस्य धन्यतामाविष्करोति । अधना इति । गृहमेधिनः अधन्या अपि यदि साधवः तर्हि ते धन्या एव हि यतः येषां गृहमेधिनां साधूनां गृहाः अर्हाः पूज्या भवादृशैस्तैर्वर्या वरणीयाः स्वीकार्याः अम्बु जलं तृणं भूमिः ईश्वरो गृहस्वामी अपरे गृहवासिनो भृत्यादयश्च येषु तथा भूता भवन्ति ॥ १० ॥

एवमन्वयमुखेन धन्यतामाविष्कृत्य व्यतिरेकमुखेनाप्याविष्करोति । व्यालेति । अरिक्ताखिलसम्पदः अरिक्ताः पूर्णा अखिलाः सम्पदः येषु तादृशा अपि यद्गृहा गृहमेधिनां गृहाः यदि तीर्थपादङ्घ्रिणान् तत्संबन्धिनस्तीर्थपादीया भागवतास्तेषां पादतीर्थेन विवर्जितास्तर्हि एते गृहाः व्यालालयद्रुमाः सर्पावासचन्दनद्रुमप्रख्याः ॥ ११ ॥

एवमन्वयव्यतिरेकाभ्यां तदागमनेन स्वस्य धन्यतामभिधाय तेषां स्वागतप्रश्नपूर्वकं स्वाभाविकीं धन्यतामाह । स्वागतमिति । हे द्विजश्रेष्ठाः ! वः युष्माभिः स्वागतं कुशलमागतं किं भवतामकुशलमस्तीत्यभिप्रायः यत् यस्मात् बाला एव भवन्तः मुमुक्षवः अत एवं धीरा जितेन्द्रियाः सन्तः बृहन्ति व्रतानि चरन्ति यद्वा येषां वो व्रतानि युष्माभिर्दर्शितान्येवान्यमुमुक्षवः बृहन्ति दीर्घकालनिर्वृत्त्या निवृत्तिधर्मरूपव्रतानि चरन्ति ॥ १२ ॥

काकाभिप्रेतकुशलाभावमेव व्यङ्क्तुं स्वस्य तावत्कुशलाभावं व्यनक्ति । कच्चिदिति । किमस्माकं कुशलमस्तीत्यर्थः कथं भूतानां हेनाथाः ! इन्द्रियार्थान् शब्दादीनेवार्थान् पुरुषार्थरूपान् विन्दन्तीति तथा तेषामत एव यस्मिन्नुप्यन्ते बीजानि स आवापः स्वेषं व्यसनानामावापः संसारः तस्मिन् स्वकर्मभिः पतितानाम् ॥ १३ ॥

नन्वभ्यागतानां नः कुशलं किं न पृच्छसि तत्राह । भवत्सु कुशलप्रश्नः नेष्यते तत्र हेतुः आत्मारामेषु ब्रह्मात्मकस्वात्मानुभवैकपरेषु ननु आत्मारामाणां कदाचित्कुशलसंभावनया कुशलप्रश्न इष्यतां तत्राह । यत्र आत्मारामेषु कुशलाकुशलरूपा मतिवृत्तय एव न सन्ति कुशलाकुशलविषयचिन्तनरूपमतिवृत्तयो हि सङ्गकामक्रोधसंमोहादिजननद्वारा सुखदुःखादिहेतवः अतस्तासामेवाभावात्कुतो भवत्स्वकुशलसम्भावनेत्यर्थः मतिवृत्तीनां च सङ्गादिद्वारा कुशलनिमित्तत्वं भगवता गीतम् ।

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात् क्रोधोऽभिजायते ।
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ १४ ॥

तत्तस्मात् अहं कृतविश्वासः सन् तपस्विनां तापत्रयातुराणामस्माकं सुहृदो युष्मान् एतस्मिन्संसारे वर्तमानस्य केन हेतुना क्षेमः सुखं मोक्ष इति यावत् अञ्जसा सुखेन भवेदिति पृच्छामि ॥ १५ ॥

स्वभक्तानुग्रहीतुं भगवानेव भवादृशरूपश्चरतीत्याह । व्यक्तमिति । आत्मवतां प्रशंसायां मतुप् प्रशस्तचित्तानां ज्ञानिनामात्मा निरतिशयप्रीतिविषयः प्रीतिमांश्च तथाहि गीतम् । “प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय” इति । आत्मशब्देनात्मत्वप्रयुक्तम् तदुभयं विवक्षितम् आत्मा हि निरतिशयप्रीतिविषयः : स्वशरीरे प्रीतिमाँश्च आत्मभावनः आत्मनः जीवान् भावयति स्वविषयज्ञानप्रदानादिना साक्षावतः करोतीत्यात्मभावनः स्वपरयाथात्म्यज्ञानविधुरा हि जीवाः स्थावरपर्यन्तजन्मभिरसत्प्रायास्तानात्मवतः करोतीत्यर्थः सिद्धाः ज्ञानिनः तद्रूपः तथाच गीतं भगवता “ज्ञानीत्वात्मैव मे मतम्” इति अजो भगवान्स्वानां भक्तानामनुग्रहाय स्वाननुग्रहीतुमिमां पृथिवीं चरति व्यक्तं निश्चितम् ॥१६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुर्दर्शत्वमधिकदृष्टान्तत्वे नोपपादयति । नैवेति । लक्ष्यते लक्षणावृत्तयापि भवद्विषयं ज्ञानं नाप्नोति असम्भवपरिहाराय पर्यटत इति सर्वो जनः सर्वदृशं साक्षित्वेन पश्यन्तमात्मानं परमात्मानं यथा न जानाति ब्रह्मादीनां तद्विषयज्ञानसम्भवात् कथं सर्व इति सर्वं कवलीक्रियते इत्यत उक्तं य इति । येच ब्रह्मादयोऽस्य जगतो हेतवः कारणभूतास्तेऽपि न विदन्तीति अत्रेदं तात्पर्यं यथात्मानं स्वं हरिर्वेत्ति तथा न जानन्तीति तदुक्तं “सर्वेशाश्च विरिञ्चाद्या न जानीयुर्हरिं परम् । हेतवो जगतोऽप्यस्य यथासौ वेद केशव„ इति अनेन वेदाहमेतमित्यादिर्गतिरप्युक्ता भवति दुष्टजनव्यामोहनाय वा तद्विशयज्ञानस्य दुःसाध्यत्वज्ञापनाय वाधिकदृष्टान्तप्रयोजनं किञ्च जगत्कारणतामाददानोऽयं हेतुशब्दो विरिञ्चादीनां सार्वज्ञ्यमप्याक्षिपन्न सर्वात्मना ज्ञानाभावो युक्त इति श्रीनारायणवत्तद्विषयज्ञानाभाव एव उच्यत इति व्यनक्तीति ॥ ९ ॥

भवतां पुरुषेष्वनुग्राहकत्वे भगवद्भक्तिसामग्रीमत्वमेव प्रयोजकं नतु धनिकत्वादिकमित्याशयेनाह । अधना अपीति । अर्हवर्याः पूज्यश्रेष्ठास्तेभ्यो दत्तमम्बु च तृणं च भूमिश्च सुवाचश्चार्हवर्याम्बुतृणभूमिसुवाचस्ता धारयन्ति बिभ्रतीति तथोक्ताः ॥ १० ॥

तीर्थपादो विष्णुस्तस्य भक्तास्तीर्थपादीयास्तेषां पादतीर्थवर्जिताः सम्पर्करहिता हिशब्दो यथा शब्दार्थे यथा व्यालालया दुष्टसर्पाश्रया वृक्षा वर्ज्यास्तथा तादृग्गृहाः सम्पद्युक्तत्वेऽपि वर्ज्या इत्यर्थः ॥ ११ ॥

किम्बहुजल्पेनेति भावेन तदागमनं लालयति । स्वागतमिति । वो युष्माकं स्वागमनं सुष्ठु अस्माकं सुखहेतुत्वादिति शेषः कथमस्मदागमनं सुखहेतुरत्राह यद्व्रतानीति। मुमुक्षवो धीराः श्रद्धया यद्व्रतानि चरन्ति ते यूयं वयोदर्शनेन बाला अपि वृद्धन्ति ज्ञानेन वर्धन्ते ज्ञानवृद्धत्वादागमनं भद्रमित्यर्थः ॥ १२ ॥

राजा स्वस्वागतवचनानन्तरं पृथुं प्रति युष्मं च स्वस्तिकमिति मुनिवचनात्पूर्वं स्वकुशलमाक्षिपति । कच्चिदिति । व्यसन-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बीजान्युत्पन्तेऽस्मिन्निति व्यसनावापः तस्मिन्नेतस्मिन्संसारे स्वकृतकर्मभिः पतितानां नः कुशलं कच्चित्किं न किमपीत्यन्वयः आत्मनो यानेन कुशलं पृच्छति अस्माकं कुशलं भविष्यति कच्चिदिति ॥ १३ ॥

नन्वभ्यागतास्मत्कुशलप्रश्नसामन्तरेणात्मकुशलप्रश्नः कथं मज्ञाप्रतीतीति तत्राह । भवत्स्विति । इदं कुशलमकुशलमिति मतिवृत्तयो यत्र येषु भवत्सु न सन्ति अतो भवत्सुखप्रश्नो नेष्यते कुतः आत्मना सह आरामो रमणं क्रीडा येषां ते तथा तेषु अतो भवत्सु कुशलप्रश्नस्याभावादौत्सुक्यादात्मकुशलप्रश्न इति भावः ॥ १४ ॥

अस्तु तर्हि तव कुशलं भविष्यतीत्यभिमतं वेचतो वयमकुशलाब्धिमग्नास्तस्मादेतादृशानां केन प्रकारेण कुशलं स्यादिति तं प्रकारं पृच्छामीत्याह । तदहमिति । तपस्विनां सुहृदोऽत्र पूज्यान् भवे संसारे क्षेमं संसारोच्छेदलक्षणं मङ्गलमञ्जसा क्षिप्रं स्यात्कौटिल्यञ्जसाह्वायेत्यमरः ॥ १५ ॥

नतु मोक्षविषयप्रश्नपरिहारो दुरवबोधोऽतोऽन्यं पृच्छ नाचिकेतो मरणं मानुप्राक्षीरिति श्रुतेरित्याशङ्क्य भवन्तो भगवद्विशेषसन्निधानपात्रत्वात्पृष्टार्थव्याख्यानसमर्था इत्यभिप्रेत्याह । व्यक्तमिति । व्यक्तं स्पष्टे बुधे तु नेत्यभिधानात् अत्र स्पष्टं व्यक्तमित्यर्थः आगवतां ब्रह्मादियोगिनामात्मामीप्रवर्ती हि आत्मभावनो मनःप्रेरकश्चेतनानां सत्ताप्रदो जन्मादिरहितो भगवान् स्वभक्तानामनुग्रहायेमां भूमिं सिद्धरूपी भवादृशः सिद्धास्त एव रूपं प्रतिमास्यास्तीति चरतीत्यन्वयः "हरेस्तु प्रतिमाः प्राज्ञास्तत्रस्थः केशवः स्वयम् । ददाति ज्ञानमीशेशः परमात्मा स्वयं प्रभुः" इत्यतो ज्ञानिनां प्रति मात्वं सिद्धमतोऽप्यत्रात्मवतां व्यक्तं स्पष्टमिति पुनरावृत्त्या योज्यम् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

य इति पूर्वोक्तान् विशिनष्टि । नैवेति । आत्मानं परमात्मानं एवमस्य साकारत्वं दर्शितम् ॥ ६ ॥

तृणभूमिसुवाग्धारा इति चित्सुखः । फलमूलैस्तृणैर्वापि वाग्भिरद्भिर्विलोचनैः । पूज्यन्ते तीर्थिनः सद्भिर्विलुप्तविभवैरपि । अत्रेदं पद्यं क्वचित् वर्त्तते तत्र वाक्यस्य टीकामते दृश पद्यत्वाविशेषवोभ्रंश्च । किन्तस्येत्यादिपद्याभावात् । किन्त्वेतन्मते टीकासंवादिता स्यात् । किन्त्वस्येत्यादिकमयोजयित्वैव दुर्दर्शत्वमाहेति । सहसा योजनात् शलाकाप्राप्तन्तूभयमेव ॥ १० ॥

तदेवं ब्राह्मणत्वेन स्तुत्वा वैष्णवत्वेन स्तौति । व्यालेति । द्रुमा इते इति क्वचित् ॥ ११ ॥

अथ तान् वैष्णवत्वेऽपि ज्ञानप्रधानात् ज्ञात्वा तद्दर्शेन स्तौति । स्वागतमिति त्रिभिः । बाला एव बाल्यावस्थामारभ्यैवेत्यर्थः । बृहन्ति सर्वतो महान्ति व्रतानि परिव्राडुचितानि ॥ १२—१४ ॥

पूर्वं न कामये नाथ तवप्यहं क्वचिदित्यादौ शुद्धभक्तैकनिष्ठत्वेन व्यक्तोऽपि स उत्तमश्लोकेत्यादौ भगवल्लीलाश्रवणमात्रेण संमतानुपङ्क्तिकज्ञानप्राप्तिरपि स इत्थं लोकगुरुर्योति पूर्वोक्तं श्रीभगवन्निर्देशगौरवेण । तत्र शीलवतां वृत्तमाचरन्नित्यत्रोक्तमहदादरस्वभावेन च तद्विवक्षितम् ज्ञानमपि श्रोतुमनुमोदते । तदहमिति ॥ १५ ॥

भगवत्तदभेदनिर्देशेन तमुभयमपि हेतुं स्वयमेव दर्शयन् व्यक्तमिति ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दुर्दर्शत्वमाह । नैव लक्ष्यते न पश्यति यथा सर्वदृशं स दर्शिनमात्मानं सर्व्वोऽपि लोको न पश्यति लोकस्य का येऽस्य जगतो हेतवो ब्रह्ममरीचिप्रभृतयः तेऽपि न पश्यन्ति ।

येषां साधूनां गृहाः अर्हाः अर्हाणां पूज्यजनानां वर्ण्याः णीयाः स्वीकारार्हाः अम्ब्वादयो येषु भक्ष्यद्रव्याभावे पानार्थं च तदभावे शय्यार्थं तृणानि च तदभावे आसनार्थं परि माणा भूमिश्च तदभावे प्रीतिवागञ्जल्याद्यर्थमीश्वरो गृहस्वा च तस्याप्यभावे अवराश्च साष्टाङ्गप्रणिपातार्थं तत्पुत्र दयश्च येषु ते ॥ १० ॥

व्यालतुल्यानां कटुवाग्वर्षिणां पुत्रकलत्रादीनामावा येषु तथाभूता द्रुमा एव तेदृगृहस्था येषां छायापि केऽपि न स्पृहयत इति भावः अरिक्ताः पूर्णाः अखिलसम्पदः तथाभूताः तथाभूता अपि येषां गृहास्तीर्थपादीयानां वैष्णवा पादतीर्थेन पादक्षालनोदकेन रहिताः ॥ ११ ॥

यस्मात् बृहन्ति व्रतानि ब्रह्मचर्य्येण । मुमुक्षवः चरन्ति भवन्तस्तु बाला एव मुक्ता एवेति ब्रह्मचर्य्यं कष्टं मुमु कष्टञ्च न जानन्तीति भावः ॥ १२ ॥

इन्द्रियार्थविषयसुखमेव पुरुषार्थं जानतामस्माकं व्यसनानु प्यन्ते यस्मिन् तस्मिन् संसारे ॥ १३ ॥

नन्वभ्यागतान् प्रति कुशलप्रश्नस्तेषामेव क्रियते त्मन इत्यत आह । भवत्स्विति । तेनाभ्यागतेषु कुशलप्रश्नस्या श्यकत्वात् युष्मत्सम्बन्धिकुशलप्रश्नस्यानौचित्यात् स्वस न्ध्येव कुशलं पृष्टमिति भावः ॥ १४ ॥

किञ्च । युष्मदागमनमस्मदुद्धारप्रयोजनकमेव युक्तेत वात्मकुशलप्रश्न एव मम सम्प्रति युज्यते इत्याह । त हमिति क्षेमः क्षेमम् ॥ १५ ॥

भवन्तं खलु मदिष्टदेवो भगवान्नारायण एवेत्यहं जानामी त्याह । व्यक्तमिति । आत्मा स्वयमेव सेव्यत्वेन वर्तते येषां आत्मवन्तो भक्तास्तेषामात्मा आत्मैव प्रीतिविषयीभूत इत्य स्वानां स्वेषां भक्तानामात्मानं भावयति प्रकाशयतीति इमां पृथ्वीम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वदृशं सर्वद्रष्टारमात्मानं परमेश्वरम् अस्य विश्व हेतवः प्रकृतिमहदादयः ॥ ९ ॥

अर्हाणां पूज्यानां वर्ण्याः स्वीकारार्हाः अम्ब्वादयो तादृशा येषां गृहाः ते अधना अपि गृहमेधिनो धन्याः साधवः तत्रेश्वरो गृहस्वामी अवराः पुत्रादयः ॥ १० ॥

अरिक्ता अनपगताः अखिलाः सम्पदो येषु तथाभूता गृहाः तीर्थे पादयोर्यस्य स तीर्थपात् विष्णुस्तदीयानां तीर्थेन यदि विवर्जिताः स्युस्तर्हि एते व्यालालयद्रुमा इ शब्द इवार्थे व्यालो भुजगे सर्पे इतिमेदिनीकारकोशः ॥ ११ ॥

॥ मैत्रेय उवाच ॥

पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु ।
स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह ॥ १७ ॥

॥ सनत्कुमार उवाच ॥

साधु पृष्टं महाराज ! सर्वभूतहितात्मना ।
भवता विदुषा चापि साधूनां मतिरीदृशी ॥ १८ ॥

सङ्गमः खलु साधूनामुभयेषां च संमतः ।
यत्सम्भाषणसम्प्रश्नः सर्वेषां वितनोति शम् ॥ १९ ॥

अस्त्येव राजन् ! भवतो मधुद्विषः पादारविन्दस्य गुणानुवादने ।
रतिर्दुरापा विधुनोति नैष्ठिकी कामं कषायं मलमन्तरात्मनः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भो द्विजश्रेष्ठाः ! वो युष्माकं स्वागतं शोभनमागमनं जातम् । येषां वो बृहन्ति व्रतानि नैष्ठिकब्रह्मचर्य्यपूर्वकाणि भगवदाराधनरूपाणि धीरा जितेन्द्रियाः बालाः निरहङ्कारा मुमुक्षवः एव चरन्तीति योजना ॥ १२ ॥

हे नाथाः ! इन्द्रियार्थेषु शब्दादिषु अस्थिरेषु । अर्थवेदिनां स्थिरस्वमतीनां व्यसनानि दुःखान्येवोप्यन्ते यस्मिन् तस्मिन् संसारे पतितानां नः कश्चित्कुशलमस्ति ॥ १३ ॥

नन्वस्मत्कुशलप्रश्नः कुतो न कृत इत्यत आह । भवत्स्विति यत्र येषु ॥ १४ ॥

यस्माद्यूयमात्मारामाः तस्मात् कृतविश्वासः अत्र तपस्विनां मुमुक्षूणां सुहृदो युष्मान् अञ्जसा साक्षाद्भगवत्प्राप्तिलक्षणः क्षेमः केन भवेदिति संपृच्छे पृच्छामि ॥ १५ ॥

व्यक्तं निश्चितम् आत्मा परमेश्वरः जिज्ञास्यतया विद्यते येषां तेषामात्माश्रयः स्वानामनुग्रहाय आत्मभावनः आत्मानं भावयतीति । अयमस्मीति प्रकटयतीति तथा सिद्धरूपी योगेश्वररूपी चरति ॥ १६ ॥

---

भाषाटीका ।

संसार में घूमने पर भी जिनको कोई नहीं जानता है जैसे कि इस जगत् के साक्षी परमात्मा तथा इसके हेतु महत्तत्वादिकों को कोई नहीं जानता है ॥ ९ ॥

जिनके घरके मालिक नौकर भूमि जल तृण ये सब पदार्थ महात्मों के सेवा के लायक हैं वे लोग निर्धन होकर भी धन्य हैं ॥ १० ॥

जिनके घरमें तीर्थपाद भगवान् के भक्तों के चरणोदक कभी नहीं गिरे हैं उनके सम्पत्ति से भरे हों तो भी सर्पों के रहने के वृक्ष हैं ॥ ११ ॥

हे महा भागो ! आपका सुन्दर आगमन हुआ जो कि आप लोग बालक ही होकर मुमुक्षु होने से नैष्ठिक ब्रह्मचर्यव्रत को धीरबुद्धि से श्रद्धापूर्वक धारण करते हो ॥ १२ ॥

दुःख के खान इस संसार में अपने कर्मो से पड़े हुये हम लोग इन्द्रियों के भोग्य रूप रसादिकों को अच्छे जानने वाले हैं हमारा कुशल होगा क्या ॥ १३ ॥

आपतो आत्माराम ही आपसे तो कुशल का प्रश्न हो नहीं सकता है क्योंकि आप लोगों में तो कुशल अकुशल गुण की वृत्ति कोई भी नहीं हैं ॥ १४ ॥

सो मैं आप सुहृद् तपस्वी जनोंपर विश्वास करके पूछता हूं कि इस संसार में अनायास से किस उपाय से कल्याण होगा ॥ १५ ॥

यह बात निश्चित है कि ज्ञानी पुरुषों का आत्मा अन्तर्यामी भगवान् उनको अपना स्वरूप प्रकाश करते हैं सो जगत् के अपने भक्तों के अनुग्रह के हेतु से सिद्ध रूप से जगत् में विचरते हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सूक्तं शोभनवचनम् सारं न्याय्यम् सुष्ठु गम्भीरार्थम् मितमल्पाक्षरम् मधु श्रोत्रप्रियम् मुखप्रसत्त्या स्मयमान इव प्रतीयमानः ॥ १७ ॥

विदुषा जानतापि ईदृशी परार्थैकपरा ॥ १८ ॥

स्वयमपि पृथोःसङ्गममभिनन्दति । सङ्गम इति । उभयेषां वक्तॄणां श्रोतॄणाञ्च येषां सम्भाषणसहितः सम्प्रश्नः सर्वेषां शं सुखं विस्तारयति ॥ १९ ॥

तदेवं सङ्गमसम्प्रश्नं चाभिनन्द्यानुवादमुखेनैव मोक्षसाधनमुपदिशति। अस्त्येवेति । गुणानामनुवादने प्रश्नद्वारेणानुवादप्रवर्तने अवश्य इत्यर्थः आत्मनो मनसोऽन्तरन्तस्थं कामात्मकं मलन्विधुनोति कषायं धातुरागवदनिवर्त्यम् ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वीजान्युप्यन्तेऽस्मिन्निति व्यसनावापः तस्मिन्नेतस्मिन्संसारे स्वकृतकर्मभिः पतितानां नः कुशलं कच्चित्किं न किमपीत्यन्वयः आत्मनो यानेन कुशलं पृच्छति अस्माकं कुशलं भविष्यति कच्चिदिति ॥ १३ ॥

नन्वभ्यागतास्मत्कुशलप्रशंसामन्तरेणात्मकुशलप्रश्नः कथं सङ्गाघटीतीति तत्राह । भवत्स्विति । इदं कुशलमकुशलमिति मतिवृत्तयो यत्र येषु भवत्सु न सन्ति अतो भवत्सुखप्रश्नो नेष्यते कुतः आत्मना सह आरामो रमणं क्रीडा येषां ते तथा तेषु अतो भवत्सु कुशलप्रश्नांशाभावादौत्सुक्यादात्मकुशलप्रश्न इति भावः ॥ १४ ॥

अस्तु तर्हि तव कुशलं भविष्यतीत्यभिमतं येयतो वयमकुशलाब्धिमग्नास्तस्मादेतादृशानां केन प्रकारेण कुशलं स्यादिति तं प्रकारं पृच्छामीत्याह । तदहमिति । तपस्विनां सुहृदोऽत्र पूज्यान् भवे संसारे क्षेमं संसारोच्छेदलक्षणं मङ्गलमञ्जसा क्षिप्रं स्नागञ्झटित्यञ्जसाह्वायेत्यमरः ॥ १५ ॥

ननु मोक्षविषयप्रश्नपरिहारो दुरवबोधोऽतोऽन्यं पृच्छ नाचिकेतो मरणं मानुप्राक्षीरिति श्रुतेरित्याशङ्क्य भवन्तो भगवद्विशेषसन्निधानपात्रत्वात्पृष्टार्थव्याख्यानसमर्था इत्यभिप्रेत्याह । व्यक्तमिति । व्यक्तं स्पष्टे बुधे तु नेत्यभिधानात् अत्र स्पष्टं व्यक्तमित्यर्थः आत्मवतां ब्रह्मादियोगिनामात्माभीष्टवर्षी हि आत्मभावनो मनःप्रेरकश्चेतनानां सत्ताप्रदो जन्मादिरहितो भगवान् स्वभक्तानामनुग्रहायेमां भूमिं सिद्धरूपी भवादृशाः सिद्धास्त एव रूपं प्रतिमास्यास्तीति चरतीत्यन्वयः "हरेस्तु प्रतिमाः प्राज्ञास्तत्रस्थः केशवः स्वयम् । ददाति ज्ञानमीशेशः परमात्मा स्वयं प्रभुः" इत्यतो ज्ञानिनां प्रति मात्वं सिद्धमतोऽप्यत्रात्मवतां व्यक्तं स्पष्टमिति पुनरावृत्त्या योज्यम् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यं इति पूर्वोक्तान् विशिनष्टि । नैवेति । आत्मानं परमात्मानं एवमस्य साकारत्वं दर्शितम् ॥ ६ ॥

तृणभूमिसुवाग्धारा इति चित्सुखः । फलमूलैस्तृणैर्वापि वाग्भिरद्भिर्विलोचनैः । पूज्यन्ते तीर्थिनः सद्भिर्विलुप्तविभवैरपि । अत्रेदं पद्यं क्वचित् वर्त्तते तत्र वाक्यस्य टीकामते दश पद्यत्वाविशेषबोधश्च । किन्तस्येत्यादिपद्याभावात् । किन्त्वेतन्मते टीकासंवादिता स्यात् । किन्तस्येत्यादिकमयोजयित्वैव दुर्दर्शत्वमाहेति । सहसा योजनात् शलाकाप्राप्तन्तूभयमेव ॥ १० ॥

तदेवं ब्राह्मणत्वेन स्तुत्वा वैष्णवत्वेन स्तौति । व्यालेति । द्रुमा इवेते इति क्वचित् ॥ ११ ॥

अथ तान् वैष्णवत्वेऽपि ज्ञानप्रधानात् । ज्ञात्वा तदंशेन स्तौति । स्वागतमिति त्रिभिः । वाला एव वाल्यावस्थामारभ्यैवेत्यर्थः । वृहन्ति सर्व्वतो महान्ति व्रतानि परिव्राडुचितानि ॥ १२—१४ ॥

पूर्व्वं न कामये नाथ तदप्यहं क्वचिदित्यादौ शुद्धभक्त्येकनिष्ठत्वेन व्यक्तोऽपि स उत्तमःश्लोकेत्यादौ भगवल्लीलाश्रवणमात्रेण संम्मतानुषङ्गिकज्ञानप्राप्तिरपि स इत्थं लोकगुरुर्णोति पूर्व्वोक्तं श्रीभगवन्निर्देशगौरवेण । तत्र शीलवतां वृत्तमाचरन्नित्यत्रोक्तमहदादरस्वभावेन च तद्विवक्षितम् ज्ञानमपि श्रोतुमनुमोदते । तदहमिति ॥ १५ ॥

भगवत्तदभेदनिर्देशेन तमुभयमपि हेतुं स्वयमेव दर्शयन् व्यक्तमिति ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दुर्दर्शत्वमाह । नैव लक्षयते न पश्यति यथा सर्व्वदृशं स... दर्शिनमात्मानं सर्व्वोऽपि लोको न पश्यति लोकस्य का ... येऽस्य जगतो हेतवो ब्रह्ममरीचिप्रभृतयः तेऽपि न पश्यन्ति ॥ ...

येषां साधूनां गृहाः अर्हाः अर्हाणां पूज्यजनानां वर्ण्य... णीयाः स्वीकारार्हा अम्व्वादयो येषु भक्ष्यद्रव्याभावे पानार्थं ... च तदभावे शय्यार्थं तृणानि च तदभावे आसनार्थं परि... माणा भूमिश्च तदभावे प्रीतिवागञ्जल्याद्यर्थमीश्वरो गृह... च तस्याप्यभावे अवराश्च साश्रुप्रणिपाताद्यर्थं तत्पुत्र... दयश्च येषु ते ॥ १० ॥

व्यालतुल्यानां कटुवाग्वर्षिणां पुत्र कलत्रादीनामा... येषु तथाभूता द्रुमा एव तेदूगृहस्था येषां छायापि कैरपि ... न स्पृश्यत इति भावः अरिक्ताः पूर्णा अखिलसम्पदो ... तथाभूताः तथाभूता अपि येषां गृहास्तीर्थपादीयानां वैष्ण... पादतीर्थेन पादक्षालनोदकेन रहिताः ॥ ११ ॥

यद्यस्मात् वृहन्ति व्रतानि ब्रह्मचर्य्याणि । मुमुक्षवः ... चरन्ति भवन्तस्तु वाला एव मुक्ता एवेति ब्रह्मचर्य्यं कष्टं मुमु... कष्टञ्च न जानन्तीति भावः ॥ १२ ॥

इन्द्रियार्थविषयसुखमेव पुरुषार्थं जानतामस्माकं व्यसना... प्यन्ते यस्मिन् तस्मिन् संसारे ॥ १३ ॥

नन्वभ्यागतान् प्रति कुशलप्रश्नस्तेषामेव क्रियते ... स्मन इत्यत आह । भवत्स्विति । तेनाभ्यागतेषु कुशलप्रश्नस्या... श्यकत्वात् युष्मत्सम्बन्धिकुशलप्रश्नस्यानौचित्यात् स्वस... न्ध्येव कुशलं पृष्टमिति भावः ॥ १४ ॥

किञ्च । युष्मदागमनमस्मदुद्धारप्रयोजनकमेव बुद्ध्वा ... दात्मकुशलप्रश्न एव मम सम्प्रति युज्यते इत्याह । ... हमिति क्षेमः क्षेमम् ॥ १५ ॥

भवन्तं खलु मदिष्टदेवो भगवान्नारायण एवेत्यहं जाना... त्याह । व्यक्तमिति । आत्मा स्वयमेव सेव्यत्वेन वर्तते येषां ... आत्मवन्तो भक्तास्तेषामात्मा आत्मेव प्रीतिविषयीभूत इत्यर्थ... स्वामां स्वेषां भक्तानामात्मानं भावयति प्रकाशयतीति ... इमां पृथ्वीम् ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वदृशं सर्वद्रष्टारमात्मानं परमेश्वरम् अस्य विश्व... हेतवः प्रकृतिमहदादयः ॥ ९ ॥

अर्हाणां पूज्यानां वर्ण्या स्वीकारार्हाः अभ्युत्थानादयो ... तादृशा येषां गृहाः ते अधना अपि गृहमेधिनो धन्याः ... साधवः तत्रेश्वरो गृहस्वामी अवराः पुत्रादयः ॥ १० ॥
अरिक्ता अनपगताः अखिलाः सम्पदो येषु तथाभूता ... गृहाः तीर्थं पादयोर्यस्य स तीर्थपात् विष्णुस्तदीयानां ... तीर्थेन यदि विवर्जिताः स्युस्तर्हि एते व्यालालयद्रुमा इव ... शब्द इवार्थे व्यालो दुष्टगजे सर्पे इतिमेदिनीकारकोशः ॥ ११ ॥

॥ मैत्रेय उवाच ॥

पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु ।
स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह ॥ १७ ॥

॥ सनत्कुमार उवाच ॥

साधु पृष्टं महाराज ! सर्वभूतहितात्मना ।
भवता विदुषा चापि साधूनां मतिरीदृशी ॥ १८ ॥
सङ्गमः खलु साधूनामुभयेषां च संमतः ।
यत्सम्भाषणसम्प्रश्नः सर्वेषां वितनोति शम् ॥ १९ ॥

अस्त्येव राजन् ! भवतो मधुद्विषः पादारविन्दस्य गुणानुवादने ।
रतिर्दुरापा विधुनोति नैष्ठिकी कामं कषायं मलमन्तरात्मनः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भो द्विजश्रेष्ठाः ! वो युष्माकं स्वागतं शोभनमागमनं जातम् । येषां वो वृहन्ति व्रतानि नैष्ठिकब्रह्मचर्य्यपूर्वकाणि भगवदाराधनरूपाणि धीरा जितेन्द्रियाः बालाः निरहङ्कारा मुमुक्षवः एव चरन्तीति योजना ॥ १२ ॥

हेनाथाः ! इन्द्रियार्थेषु शब्दादिषु अस्थिरेषु । अर्थवेदिनां स्थिरत्वमतीनां व्यसनानि दुःखान्येवोप्यन्ते यस्मिन् तस्मिन् संसारे पतितानां नः कश्चित्कुशलमस्ति ॥ १३ ॥

नन्वस्मत्कुशलप्रश्नः कुतो न कृत इत्यत आह । भवत्स्विति यत्र येषु ॥ १४ ॥

यस्माद्यूयमात्मारामाः तस्मात् कृतविश्वासः अत्र तपस्विनां मुमुक्षूणां सुहृदो युष्मान् अञ्जसा साक्षाद्भगवत्प्राप्तिलक्षणः क्षेमः केन भवेदिति संपृच्छे पृच्छामि ॥ १५ ॥

व्यक्तं निश्चितम् आत्मा परमेश्वरः जिज्ञास्यतया विद्यते येषां तेषामात्माश्रयः स्वानामनुग्रहाय आत्मभावनः आत्मानं भावयतीति । अयमस्मीति प्रकटयतीति तथा सिद्धरूपी योगेश्वररूपी चरति ॥ १६ ॥

---

भाषाटीका ।

संसार में घूमने पर भी जिनको कोई नहीं जानता है जैसे कि इस जगत् के साक्षी परमात्मा तथा इसके हेतु महत्तत्त्वादिकों को कोई नहीं जानता है ॥ ९ ॥

जिनके घरके मालिक नौकर भूमि जल तृण ये सब पदार्थ महात्मों के सेवा के लायक हैं वे लोग निर्धन होकर भी धन्य हैं ॥ १० ॥

जिनके घरमें तीर्थपाद भगवान् के भक्तों के चरणोदक कभी नहीं गिरे हैं उनके सम्पत्ति से भरे हों तौ भी सर्पों के रहने के वृक्ष हैं ॥ ११ ॥

हे महा भागो ! आपका सुन्दर आगमन हुआ जो कि आप लोग बालक ही होकर मुमुक्षु होने से नैष्ठिक ब्रह्मचर्यव्रत को धीरबुद्धि से श्रद्धापूर्वक धारण करते हो ॥ १२ ॥

दुःख के स्थान इस संसार में अपने कर्मों से पड़े हुये हम लोग इन्द्रियों के भोग्य रूप रसादिकों को अच्छे जानने वाले हैं हमारा कुशल होगा क्या ॥ १३ ॥

आपतो आत्माराम हो आपसे तो कुशल का प्रश्न हो नहीं सकता है क्योंकि आप लोगों में तो कुशल अकुशल गुण की वृत्ति कोई भी नहीं हैं ॥ १४ ॥

सो मैं आप सुहृद तपस्वी जनोंपर विश्वास करके पूछता हूं कि इस संसार में अनायास से किस उपाय से कल्याण होगा ॥ १५ ॥

यह बात निश्चित है कि ज्ञानी पुरुषों का आत्मा अन्तर्यामी भगवान् उनको अपना स्वरूप प्रकाश करते हैं सो जगत् के अपने भक्तों के अनुग्रह के हेतु से सिद्ध रूप से जगत् में विचरते हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सूक्तं शोभनवचनम् सारं न्याय्यम् सुष्ठु गम्भीरार्थम् मितमल्पाक्षरम् मधु श्रोत्रप्रियम् मुखप्रसत्त्या स्मयमान इव प्रतीयमानः ॥ १७ ॥

विदुषा जानतापि ईदृशी परार्थकपरा ॥ १८ ॥

स्वयमपि पृथोःसङ्गममभिनन्दति । सङ्गमइति । उभयेषां वक्तॄणां श्रोतॄणाञ्च येषां सम्भाषणसहितः सम्प्रश्नः सर्वेषां शं सुखं विस्तारयति ॥ १९ ॥

तदेवं सङ्गमम्प्रश्नं चाभिनन्द्यानुवादमुखेनैव मोक्षसाधनमुपदिशति । अस्त्येवेति । गुणानामनुवादने प्रश्नद्वारेणानुवादप्रवर्तने अथवा इत्यर्थः आत्मनो मनसोऽन्तरन्तस्थं कामात्मकं मलंविधुनोति कषायं आतुरागवदनिवर्त्यम् ॥ २० ॥

शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सध्र्यग्विमृशेषु हेतुः ।
असङ्ग आत्मव्यतिरिक्त आत्मनि दृढा रतिर्ब्रह्मणि निर्गुणे च या ॥ २१ ॥
सा श्रद्धया भगवद्धर्मचर्यया जिज्ञासयाध्यात्मिकयोगनिष्ठया ।
योगेश्वरोपासनया च नित्यं पुण्यश्रवःकथया पुण्यया च ॥ २२ ॥
अर्थेन्द्रियारामसगोष्ठ्यतृष्णया तत्सम्मतानामपरिग्रहेण च ।
विविक्तरुच्या परितोष आत्मन्विना हरेर्गुणपीयूषपानात् ॥ २३ ॥
अहिंसया पारमहंस्यचर्यया स्मृत्या मुकुन्दाचरिताग्र्यसीधुना ।
यमैरकामैर्नियमैश्चाप्यनिन्दया निरीहया द्वन्द्वतितिक्षया च ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चित्तशुद्ध्यैव बहिर्वैराग्यमात्मरतिश्च भवति नच ततोऽधिकं साधनमस्ति शास्त्रेषु तयोरेव मोक्षहेतुत्वनिश्चयादित्याह । शास्त्रे-ष्विति । सध्र्यग्विमृशेषु सम्यग्विचारवत्सु शास्त्रेषु क्षेमस्य हेतु-रेतावानेव सुनिश्चितः कोऽसौ आत्मव्यतिरिक्ते देहादावसङ्गो वैराग्य-मात्मनि च दृढा रतिः प्रीतिः आत्मनो विशेषणं निर्गुणे ब्रह्म-णीति ॥ २१ ॥

नन्वेतदेवातिदुर्लभमित्याशङ्क्योत्तमाधिकारिणः श्रवणमात्रेण भवत्यन्यस्य तु चित्तशुद्ध्यनुसारेण साधनतारतम्यतो वर्धमानया भक्त्येत्यभिप्रेत्याह। सेति चतुर्भिः। सा ब्रह्मणि रतिरसङ्गश्च श्रद्धादिभिः स्यादिति चतुर्थेनान्वयः जिज्ञासया तत्तद्विशेषबुभुत्सया पुण्यं श्रवो यशो यस्य तस्य हरेः पुण्यया कथया च ॥ २२ ॥

अर्थारामा अर्थनिष्ठास्तामसा इन्द्रियारामाः कामनिष्ठा राज-सास्तैः सह या गोष्ठी तस्यामतृष्णया तेषां च ये सम्मता अर्थाः कामाश्च तेषामपरिग्रहेणानासक्त्या विविक्ते विजने या रुचिस्तया साक्षात्मन्येव परितोषे सति स्यात्किन्तु हरेर्गुणपीयूषपानाद्विना तस्मिन्सति विविक्ते रुचिर्न कार्या नचात्मनि परितोषः कार्य-इत्यर्थः ॥ २३ ॥

पारमहंस्यचर्यया उपशमादिप्रधानया वृत्त्या स्मृत्यात्महिता-नुसंधानेन मुकुन्दाचरितमेवाग्र्यं सीधु श्रेष्ठमसृतं तच्चरितस्मृति-सुखेनेत्यर्थः मार्गान्तरस्यानिन्दया निरीहया योगक्षेमार्थक्रिया-राहित्येन शीतोष्णादिद्वन्द्वसहनेन ॥ २४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं पृथोः सूक्तं शोभनं वचनं सारं न्याय्यं सुष्ठु गम्भीरार्थं मितमल्पं मधु श्रोत्रप्रियं श्रुत्वा प्रीत्या स्मयमान इव कुमारः प्रत्युवाच ॥ १७ ॥

तत्र सत्सङ्गत्यादिप्रणाड्योत्तरोत्तरमहरहरभ्यासाधेयातिशय-साधनसप्तकानुगृहीतप्रयाणानुवृत्तप्रीतिरूपापन्नाविच्छिन्नप्रत्यक्ष-तापन्नपरभक्त्यपरपर्यायभगवद्भक्तियोग एव क्षेमहेतुरिति विवि-क्षुस्तावत्प्रश्नमभिनन्दति । साध्विति । हे महाराज ! भवता साधु सम्यक् पृष्टं कथं भूतेन विदुषापि तत्त्वहितपुरुषार्थज्ञान-वतापि सर्वभूतहितात्मना सर्वभूतहितकरणप्रवृत्तिबुद्धिमता भूतहितार्थमेव त्वया पृच्छ्यते ननु स्वयं वेत्तुम् स्वत एव ज्ञत्वादि-त्यर्थः भूतहिताचरणमेव साधूनां स्वभाव इत्याह । साधूनां साध-यन्ति परकार्यमिति साधवः तेषां गतिः प्रवृत्तिः ॥ १८ ॥

ईदृशभूतहिताचरणरूपा सत्संगतिस्तावन्मूलकारणमित्याह सङ्गम इति । उभयेषां बुभुक्षूणां मुमुक्षूणां च स्वसमीहित भोगमोक्षादेः प्रथमं साधूनां सङ्गम एवेति सम्मतः स... ङ्गमस्य भोगमोक्षसाधनत्वमुपपादयति । येषां साधूनां सम्भाषण सहितःसंप्रश्नः सम्भाषणसंप्रश्नः शाकपार्थिवादित्वादुत्तरपद... समासः यद्वा संभाषणावसरे संप्रश्नः सम्यक् प्रणिपातसेवापूर्व... स्वर्गापवर्गसाधनप्रश्नः सर्वेषामुभयेषां स्वर्गापवर्गसुखं वितनो... सति संप्रश्ने साधुभिर्भोगमोक्षसाधने उपदिश्येते इति साधून् प्र... संप्रश्नः शमपेक्षितं वितनोतीत्यर्थः ॥ १९ ॥

एवं सत्संगस्य भोगमोक्षप्रथमकारणत्वमुक्तं तत्र भोगम... धनत्वमेव प्रथमं सत्सङ्गः ततः सम्भाषणं ततः प्रश्नः ततस्तत्स... धनयोगाद्युपदेशस्ततः साधनोपसंहारेण यागाद्यनुष्ठानं तत... भोग इति इयं च प्रणाडी मुमुक्षाधिकृतस्य कर्मणामल्पास्थिरत्व... त्वनिर्णयपूर्वकानन्तास्थिरफलापातप्रतीतिः पुरुषस्य न व... ष्येति तामनादृत्य सत्सङ्गतेर्मोक्षसाधनत्वंप्रणाड्योपपिपाद... पुस्तावत्सङ्गतिस्ततः सम्भाषणं ततः प्रश्नः ततो भगवद्गुण... नुश्रवणं ततस्तत्रानुराग इत्येतत्पञ्चकं तावत्त्वयि सिद्धमेवत्वा... अस्त्येवेति । हे राजन्मधुद्विषः पादारविन्दयोः ये गुणाः ते... मनुवादने अनुश्रवणे सदा रतिर्भवतोऽस्त्येव रतिरस्त्येवेत्य... तत्पूर्वभाविसङ्गत्यादिचतुष्टयमप्यस्तीत्यर्थादुक्तं भवति तेन वि... रत्यसम्भवात् अस्तीति सिद्धवन्निर्देशेन रत्यन्तं पञ्चकमवश्यं मुमु... क्षूणां प्रथमं सम्पादनीयमित्युक्तं भवति यतः रतिः सि... ततो भक्त्यन्तरमुत्तरोत्तरसाध्यं सिद्धप्रायमेवेत्यभिप्रायेणाह। यो... या नैष्ठिकी अव्यभिचरिता भगवद्गुणानुवादनरतिः अन्तरात्म... मनसः मलरूपं कषायं धातुरागवदनिवर्त्यं पुण्यरूपं कर्म क... भृशं विधुनोति क्षपयति ॥ २० ॥

रत्यन्तरभाविसाधनजातं विवक्षुः साक्षान्मोक्षसाधनभू... उक्तविधाभक्तिरेवेत्याह । शास्त्रेष्विति । नृणां मोक्षस्य क्षेमस्य समीचीनसाधनविमर्शो येषु तेषु शास्त्रेषु साक्षान्निरपेक्षो हे... साधनम् इयानेव सुनिश्चितः एवकारेण "तमेवं विद्वानमृत इह भ... नान्यः पन्था अयनाय विद्यते तमेव विदित्वातिमृत्युमेति" इत्यु... ऽनन्तरोपायत्वं विवक्षितम् इयानित्युक्तः कोऽसौ तत्राह । नि... सत्त्वादिगुणरहिते आत्मनि किञ्चिवे नेत्याह ब्रह्मणि स्वरूपेण गु... बृहति ब्रह्मणीत्यनेनैव गुणत्रयराहित्यपरत्वं निर्गुणशब्द...

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निश्चितं या दृढा रतिर्यश्च आत्मव्यतिरिक्तेष्वसङ्गः सङ्गाभावश्चेती-यानेनेत्यर्थः अत्र रतिशब्देनोक्तविधपरभक्तिजन्यभगवत्स्वरूप-साक्षात्कारलक्षणपरज्ञानजन्यभगवत्प्रीत्यतिशयरूपा परमभक्ति-र्विवक्षिता तस्यां च दार्ढ्यं नाम चाञ्चल्यराहित्यं चाञ्चल्यं च मध्ये मध्ये विषयान्तरानुचिन्तनरूपं तच्च विषयान्तरासक्तिजन-नद्वारा भक्तिविरोधि चाञ्चल्यकार्यमपि निषिध्यते असङ्ग आत्म व्यतिरिक्ते इति अत एवात्मव्यतिरिक्तासङ्गस्यापि पृथग्वा रत्या सह वा उपायत्वभ्रमो न कार्यः ॥ २१ ॥

एवं विजातीयप्रत्ययान्तराव्यवहितप्रीत्यतिशयरूपा परमभक्तिः साक्षात् क्षेमहेतुरित्युक्तम् एवंभूता परमभक्तिः कथं निष्पद्यत इति जिज्ञासायां तत्साधनान्युपदिशति । सेति । निर्गुणे ब्रह्मणि या रतिः सदसत्यनात्मनि असङ्गश्च श्रद्धादिभिः स्यात् इति चतु-र्थान्वयः अत्र निर्गुण इत्यस्य पूर्ववदर्थः अनात्मनि आत्मव्यति-रिक्ते शब्दादिविषये तस्य सदसत्त्वं नाम संनिहितासंनिहितत्वं यद्यप्यत्र श्रद्धादीनामवश्यसम्पादनीयत्वाभिप्रायेण सम्भावित-क्रमाणामपि क्रममनादृत्य ते कथितास्तथापि क्रममाश्रित्यैव व्याख्या-यते तत्र प्रथमं नित्यं योगेश्वरोपासनया योगेश्वरा योगश्रेष्ठाः "योगि-नामपि सर्वेषामद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्त-तमो मतः" इत्युक्तविधया युक्ततमाः भागवतास्तेषामुपासना सेवा तदानुकूल्येन वृत्तिः तया ततः पुण्यश्रवःकथया पुण्यश्रवसः भग-वतः कथया भगवत्पुण्यश्रवणेनेत्यर्थः आश्रयतः स्वतश्च पुण्य-रूपत्वख्यापनाय पुण्यश्रवःकथया पुण्ययेत्युक्तं ततः ॥ २२ ॥

अर्थेन्द्रियारामगोष्ठ्यतृष्णया अर्थारामाः अर्थपरायणाः तैः सह गोष्ठी तस्या या अतृष्णा अनासक्तिस्तया तेषामर्थेन्द्रियारामाणां सम्मता अर्थाः कामाश्च तेषामपरिग्रहेण भगवद्गुणानुश्रवणेन च भगवत एव पुरुषार्थरूपत्वमर्थकामयोस्तद्विपर्ययरूपत्वं ज्ञात्वा तयोर्विरक्तः स्यादिति गुणानुश्रवणातृष्णयोः पौर्वापर्यं युक्तं ततः जिज्ञासया तत्त्वहितपुरुषार्थविविदिषया ततः आचार्यवत्त्व-येत्यर्थसिद्धं पुमानाचार्यवानिति वक्ष्यमाणत्वात् "आचार्यवान् पुरुषो वेद आचार्याद्धैव हि विदिता विद्या" साधिष्ठं प्रापत्"इति श्रुतेराचार्यवत्ताया अपि साधनत्वनिश्चयात् अनेन "परीक्ष्य-लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्वि-ज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्य-न्तश्रुत्यर्थोऽनुसंहितः तत आध्यात्मिकयोगनिष्ठया आचार्यो-पदिष्टो भगवदुपासनाय आध्यात्मिको योगः तस्मिन् या निष्ठा मननात्मिका तया ततः श्रद्धया आध्यात्मिकयोगानुष्ठानविषयया त्वरया एवं पूर्वकालसाधनजातमुक्तम् अथ समस्तकालसाधन-जातमुच्यते अत्र न पौर्वापर्यं सम्भूय सर्वेषामनुष्ठानविधानात् ततः भगवद्धर्मचर्यया भगवद्धर्मा भगवदाराधनैकवेषाः पञ्च-महायज्ञादयो नित्यनैमित्तिकाः तेषां चर्या आध्यात्मिकयोगाङ्गत्वे-नानुष्ठानं तया पारमहंस्या परमहंसानां सम्बन्धिनी या चर्या ब्रह्मात्मकस्वात्मयाथात्म्यानुभवरूपा तया आध्यात्मिकयोगस्य ज्ञानकर्मयोगाभ्यां निर्वर्त्यत्वात् विविक्तरुच्या जात्याश्रयानिमित्ता-दुहाद्यादिषु रुच्या आत्मन् आत्मनि च यः परितोषस्तेन आत्मा-नुभवजनितसन्तोषमात्रेणैव नतु तद्व्यतिरिक्तसन्तोषेणेत्यर्थः तर्हि किम्भगवद्गुणानुभवजनितसन्तोषोऽपि निषिध्यते नेत्याह हरे-र्भगवतो गुणानुश्रवणस्मरणरूपं पीयूषममृतं तस्य पानात् विना तदन्यविषयानुभवजातसन्तोषाभावेनेत्यर्थः ॥ २३ ॥

अहिंसया भूतसुहृत्त्वेन स्मृत्या भोजनाद्युक्तदशास्वपि शुभा-श्रयसंशीलनरूपस्मृत्या तथा भोजनोत्तरादिदशासु मुकुन्दस्या-चरितानि चेष्टितानि तान्येवाग्र्यं श्रेष्ठं शीधु अमृतं तच्चरितश्रवण-श्रवणस्मरणरूपामृतसुखेनेत्यर्थः यमैर्वाह्येन्द्रियनिग्रहैः अकामै-रन्तरिन्द्रियनिग्रहैः शमैरित्यर्थः नियमैः शौचाचारादिभिः अनि-न्दया इतरसाध्यसाधनादीनामनिन्दया तन्निन्दायां चित्तस्य तत्प्रावण्यप्रयुक्तचाञ्चल्यं स्यादिति भावः निरीहया देहधारणाद्य-नुपयुक्तचेष्टाराहित्येन द्वन्द्वानां शीतोष्णाधिव्याध्यादीनां तितिक्षा सहिष्णुता तया ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पृथोः कण्ठशोषणपर्यन्तं तदुक्तं श्रुत्वा निरपेक्षत्वादन्यतो गतं तैरिति शङ्का मा भूत्सूक्तस्वारसारत्वात् कर्णासुखत्वात्प्रत्युत्तर-यितुं शक्तत्वाच्चेति तत्र सनत्कुमारस्तं प्रत्याहेत्याह। मैत्रेय इति मधु नाम सुखं विन्द्यादित्यादेः ॥ १७ ॥

किमाह। साध्विति । तथाहि साधूनां गतिः स्थितिरीदृशी स्वयं विद्वानपि लोकोपकाराय प्रवर्तत इति ॥ १८ ॥

न केवलं तवैवास्मद्दर्शनेन शमस्माकमपीति भावेनाह। सङ्ग-म इति। शम्भगवन्निष्ठालक्षणं सुखम् ॥ १९ ॥

अत्र शिक्षणीयांशोऽस्माकं नास्तीति भावेनाह। अस्त्येवेति । भवतोऽस्य मधुद्विषः पादारविन्दे गुणानुवादलक्षणा रतिरस्त्ये-व या रतिः कषायं मनः कलुषीकुर्वाणं कामं विषयतृष्णा-लक्षणं कषेण क (१) र्षणेन गच्छतीति कषायं पापम् एवमुभय-विधमन्तरात्मनो मलं किट्टं विधुनोतीत्यन्वयः अनेन हरौ रति-रितरत्र हरिद्विष्यरतिर्विरक्तिरिति द्वयं पुरुषार्थस्य मुख्यसाधन-मुक्तमिति ज्ञेयं तदुक्तं "रतिः परात्मनि हरावन्यत्रारतिरेव च । पुमर्थसाधनं ज्ञेयं नातोऽन्यन्मुख्यमिष्यत" इति ॥ २० ॥

एतदेव विशिनष्टि । शास्त्रेष्विति । सम्यग्विमृष्टेषु समीचीन-विचारवत्सु कोऽसाविष्यत आह । असङ्ग इति । आत्मनो व्यतिरि-क्ते परमात्मनो भिन्ने ब्रह्मादितृणान्तवस्तुनि असङ्गो हेयलक्षणा बुद्धिर्ब्रह्मणि परिपूर्णे निर्गुणे सत्त्वादिगुणरहिते निर्णीतान-न्दादिगुणे वा निर्णिर्णयनिषेधयोरित्यभिधानात् हरौ या रतिः एतद् द्वयं मुख्यसाधनमित्यर्थः ॥ २१ ॥

एतादृशं साधनं कथं स्यादिति तत्साधनान्याह । तच्छ्रद्धयेति । तस्मिन् हरौ श्रद्धया भगवद्धर्माणां वर्णाश्रमादिविहितानां चर्यया चरणेन जिज्ञासया ब्रह्मविचारेण आध्यात्मिकयोगो-ष्टाङ्गयोगस्तन्निष्ठया पुण्यश्रवा हरिस्तस्य कथया ॥ २२ ॥

अर्थस्य देहस्य इन्द्रियाणां चारामेषु क्रीडावनेषु गुणेषु विषयेष्वतृष्णया हेयबुद्ध्या तेषां विषयाणां संमतानां स्रक्-चन्दनवनितादीनामपरिग्रहेणास्वीकारेण आत्मन् देहभोगविषयं परितोषोऽस्त्वयुक्तिः ॥ २३ ॥

स्मृत्या जन्मजरादिचिन्तया सीधुसुधा पूर्वत्र कथ्याकथ्यप्रबंध इति धातोः भगवद्गुणसंदब्धशास्त्रेण उत्तरत्र तत्कृतकंसवधादि-पराक्रमलक्षणकर्मामृतपानेन । "अहिंसासत्यमस्तेयं ब्रह्मचर्यं दया-

(१) आवृत्तिमभिप्रेत्य कषायपदस्य स्वाभिमतार्थं तात्पर्यं प्रदर्शि-तार्थोऽयं कषायपदस्य ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जैवम्। क्षमा धृतिर्मिताहारः शौचं चैते यमा दश । कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा । अक्लेशजननं प्रोक्तमहिंसात्विहयोगिभिः । तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् । सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् । एते तु नियमाः प्रोक्ता" इति याज्ञवल्क्ययोगशास्त्रे अभिधानात् अभिध्यया अखण्डस्मरणेन निरीहया अनिषिद्धचेष्टया ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सूक्तमुक्तमप्रतिपाद्यवचनं श्रीसनत्कुमारोऽपि तस्य तथैव सिद्धज्ञानत्वं व्यञ्जयति तथापि तस्य तत्पृच्छायां पूर्वोक्तं हेतुद्वयममुक्त्वा गौरवविशेषाय वक्ष्यमाणभगवदभिप्रेतान्यहितरूपहेत्वन्तरमेव योजयति च । साध्विति । अतः प्रकटो ज्ञानमयोऽर्थोऽन्यान् प्रति प्रतिपाद्यः अप्रकटो भक्तिमयस्तु भवद्विधान् प्रति इति भावः तत्र प्रथमः टीकायां स्पष्टः चरमस्त्वत्रावगन्तव्यः ॥ १७ ॥ १८ ॥

किं वक्तव्यं भवादृशां साधूनां सङ्गमः सङ्गः नृणामेव सम्मतः परमसुखप्रद इति । परन्तु तद्वक्तृश्रोतॄणामपि तादृश इत्यर्थः तत्र हेतुः । यदिति ॥ १९ ॥

यतोऽस्माभिर्युष्मदुपदेष्टव्यं ज्ञानं ततोऽप्युत्कृष्टा या श्रीभगवति रतिः सैव त्वय्यस्ति । ततस्तत्साधनाय कामादिनाशोपदेशस्तु सुतरां पुनरुक्त एवेत्याह । अस्त्येवेति ॥ २० ॥

तथैव योजयति । शास्त्रेष्विति । किमुताप्राकृतानन्तपरमकल्याणगुणाकृष्टात्मारामगणे भगवतीत्यर्थः ॥ २१ ॥

सेति । चतुष्कम् ॥ २२ ॥

तथैवाह । विना हरेरिति ॥ २३ ॥

अनिन्द्यया शास्त्रीयमार्गान्तरस्याकुत्सनया अनिन्द्ययेति चित्सुखः ईश्वरध्यानेनेति च तद्व्याख्या ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सारं न्याय्यं सुष्ठु गम्भीरार्थं मितमल्पाक्षरं मधु मधुरं स्मयमान इव प्रसन्नमुख इत्यर्थः ॥ १७ ॥ १८ ॥

भो राजन् ! यथैवास्मत्सङ्गो भवदभिवाञ्छितस्तथैव भवत्सङ्गोऽप्यस्मदभिवाञ्छित इत्याह । सङ्गम इति । उभयेषां सङ्गः नृणां सङ्गस्यमानानाञ्च सम्मतः अभिलषितः । सर्वेषां श्रोतृवक्तृसन्निहिततत्सन्निहितानामपि ॥ १९ ॥

किञ्च । त्वमात्मनः क्षेमं पृच्छसि तव तु क्षेमं भगवति नैष्ठिकी रतिर्विराजमानैव दृश्यत इत्याह। अस्त्येवेति । कषायं धातुरागवदनिवर्त्यमपि कामं यथेष्टं निर्मूलमेव या विधुनोति सा रतिस्तव सदेति कषायासम्भव उक्तः ॥ २० ॥

तदपि त्वत्प्रश्नस्योत्तरमवश्यं देयमिति क्षेमस्य हेतुं सूचयित्वाह । शास्त्रेष्विति । बहुवचनेन न कस्याप्यत्र विप्रतिपत्तिः सम्यगन्विष्टेषु सम्यग्विचारवत्स्वपीति अविचारितशास्त्रा विप्रतिपद्यन्तां नाम किन्त्वैरिति इयानेवेति वतुप्रत्ययैवकाराभ्यामेतयोरेव सारत्वं सुनिश्चितमिति न पुनरेतदर्थं शास्त्राणि पुनर्द्रष्टव्यानीति द्योतितं

असङ्गोऽनासक्तिः दृढा रतिरत्यासक्तिः क्षेमशब्देन सायुज्य... रतिप्रेमाणोऽधिकारिभेदेन द्रष्टव्याः ॥ २१ ॥

तत्र प्रथमं भक्तेः प्राधान्यमाह । सेति चतुर्भिः । सा रतिः श्र... दिभिः स्यादिति चतुर्थेनान्वयः । पुण्यं श्रवो यशो यस्य तस्य पुण्यया कथया ॥ २२ ॥

अर्थारामा धनसंग्रहेच्छवः । इन्द्रियारामा भोगासक्ता... या गोष्ठी तस्यामतृष्णया विनेति हरेर्गुणपीयूषपाने... लभ्यते तदा विविक्तरुचिस्ततः आत्मपरितोषो विहाय जनसं... परस्मादपि गायकादेः सकाशादपि कृष्णलीलास्वादाय... दित्यर्थः ॥ २३ ॥

पारमहंस्यचर्य्यया उपशमप्रधानवृत्त्या । स्मृत्या श्रीगुरु... सदाचारधारणेन मुकुन्दस्याचरितं चरित्रं तदेव अमृतं मधु तेन स्वादमनेनेत्यर्थः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूक्तं शुद्धं वाक्यं तत्पूर्वोक्तम् ॥ १७ ॥

विदुषापि भवता सर्वभूतहितात्मना साधु पृष्टम् साधूनां मतिः ईदृशी सर्वभूतहितकारिणी ॥ १८ ॥

उभयेषां श्रोतॄणां श्रावयितॄणां च सम्मतः एतेषां संवाद... सहितः सम्प्रश्नः सर्वेषां शङ्कल्यायां वितनोति ॥ १९ ॥

क्षेमः केन भवेदिति प्रश्नः यास्माभिः क्षेमसाधनभूता... योग्या सा मधुद्विषः पादारविन्दस्य गुणानुवादने रतिः... तोऽस्त्येव सैवान्तरात्मनः कषायं दुर्निवर्त्यङ्गामं संसारा... लक्षणम् सङ्कल्पं विधुनोति ॥ २० ॥

नृणां क्षेमस्य भगवत्प्राप्तिलक्षणस्य मोक्षस्य शास्त्रेषु सुनि... तोऽर्थोऽस्ति तमाह । निर्गुणे हेयगुणरहिते आत्मनि परमात्म... रतिः आत्मव्यतिरिक्ते परमात्मव्यतिरिक्ते असङ्गश्चेति ॥ २१ ॥

तस्याः साधनान्याह । सेति चतुर्भिः । सा श्रद्धादिभिः स्या... चतुर्थेन संबन्धः पुण्यश्रवसो भगवतः पुण्यया कथया च... ॥ २२ ॥

अर्थारामैरिन्द्रियारामैश्च सह या गोष्ठी तस्यामतृष्णा... तत्सम्मतानां तत्सङ्गिनामपरिग्रहेणासङ्गेन च विविक्त... एकान्तवासेनेति यावत् हरेर्गुणपीयूषपानाद्विना क... आत्मनि परमेश्वरे यः परितोषः ध्यानेनावस्थितिस्तेन ॥ २३ ॥

स्मृत्या आत्मानात्मपरमात्मरूपादिस्मरणेन च मुकुन्द... तमेवाग्र्यं मुख्यं सीधु इतरविस्मारकममृतं तेन हृदि ... तेन ॥ २४ ॥

---

भाषाटीका ।

मैत्रेयजी बोले पृथु महाराज के सुन्दर मधुर वो... सुन कुछ मन्दहास युक्त होकर सनत्कुमारजी बोले ॥ १७ ॥

सनत्कुमारजी कहने लगे कि हे महाराज आप सर्व... तों के हितैषी विद्वान् हो सत्पुरुषों की ऐसी ही मति तो है ॥ १८ ॥

महात्मों के संग में तो पूछने वाले का तथा कहने वाले दोनों का सम्मत है क्योंकि उनका प्रश्न उत्तर सबका बढ़ाया करता है ॥ १९ ॥

हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेन विजृम्भमाणया।
भक्त्या ह्यसङ्गः सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥ २५ ॥
यदा रतिर्ब्रह्मणि नैष्ठिकी पुमानाचार्यवान् ज्ञानविरागरंहसा।
दहत्यवीर्यं हृदयं जीवकोशं पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥ २६ ॥
दग्धाशयो मुक्तसमस्ततद्गुणो नैवात्मनो बहिरन्तर्विचष्टे।
परात्मनोर्यद्व्यवधानं पुरस्तात्स्वप्ने यथा पुरुषस्तद्विनाशे ॥ २७ ॥
आत्मानमिन्द्रियार्थं च परं यदुभयोरपि।
सत्याशय उपाधौ वै पुमान् पश्यति नान्यदा ॥ २८ ॥

भाषाटीका।

हे राजन्! मधुसूदन भगवान् के चरण कमल के गुणों का अनुवाद करने मे जो आपकी मति है सो और को दुर्लभ है एक निष्ठावाली जो मति सो अन्तरात्मा का कषाय रूप मल को दूर करती है ॥ २० ॥

सब शास्त्रों मे सब विचारों मे इतनाही एक कल्याण का उत्तम निश्चित कर्तव्य है सो क्या कि परमात्मा से भिन्न संसार मे वैराग्य तथा प्राकृत गुण रहित ब्रह्म मे अनुराग होजाना ॥ २१ ॥

वह रति किससे होती है कि भगवद्धर्मों के आचरण करने से जिज्ञासा करनेसे अध्यात्म योग मे निष्ठा होने से योगीश्वरों की उपासना करने से और नित्य प्रति भगवान् की पवित्र कथा के श्रवण होने से ॥ २२ ॥

धन रूपादिक विषय इनमे निरत पुरुषों के सङ्ग को छोडने से उनके सम्मत पदार्थों के त्यागने से श्रीहरि कथामृत पान के विना अन्य विषय मे एकान्त रुचि न होने से आत्म स्वरूप मे सन्तुष्ट होनेसे ॥ २३ ॥

हिंसा के त्यागने से परम हंस वृत्ति के धारण से आत्म हित के अनुसन्धान से भगवच्चरित्र रूपी श्रेष्ठ अमृत पान करने से कामना के त्याग से यमादिक व्रतों से निन्दा के त्याग नेसे चेष्टाओं के परित्याग से शीत उष्णा दिक के सहने से ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

कथयेत्यत्रोक्तमपि कथनं भक्तावन्तरङ्गत्वेन पुनरुच्यते तत्परा हरिभक्तास्तेषां कर्णपूराः कर्णालङ्कारभूता ये हरेर्गुणास्तेषामभिधानेन सदसति कार्यकारणरूपे ॥ २५ ॥

भवत्वन्यत्रासङ्ग आत्मरतिश्च ततः किमत आह। यदा निष्ठां प्राप्ता रतिर्भवति तदाचार्यवान् सन् ज्ञानवैराग्ययोर्वेगेनावीर्यं निर्वीर्यं सञ्जीवस्य कोशमावरकं हृदयं पुमान्दहति कथम्भूतं पञ्चमहाभूतप्रधानं यद्वा अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च तदात्मकम् उत्थितः प्रज्वलितोऽग्निर्योनिमरणिमिव यद्वा यदा रतिराचार्यानुग्रहश्च तदा ज्ञानविरागयोर्वेगेनोत्थितः साक्षात्कारोऽवीर्यं पुनः प्ररोहक्षमं यथा न भवत्येवं हृदयं दहति शेषं समानम् ॥ २६ ॥

ततः किमत आह। दग्ध आशयो हृदयमुपाधिर्यस्य अतएव मुक्ताः समस्तास्तद्गुणाः कर्तृत्वादयो येन आत्मनः सकाशाद्बहिर्घटादयन्तः सुखदुःखादि नैव विचष्टे नं पश्यत्येव कुतइत्यपेक्षायां द्रष्टृदृश्यप्रतीतेरन्तःकरणहेतुत्वादित्याह। परो दृश्य आत्मा द्रष्टा तयोर्यद्व्यवधानं भेदकं पूर्वमासीत्तस्य विनाशे सति यथा स्वप्ने राजाहमित्यारोपितं सैन्यादिद्रष्टारं दृश्यं सैन्यञ्च स्वप्नावस्थानाशे न पश्यति तद्वत् ॥ २७ ॥

द्रष्टृदृश्यभेदप्रतीतेरन्तःकरण—हेतुत्वमन्वयव्यतिरेकाभ्यामुपपादयति। आत्मानमिति। आत्मानं द्रष्टारमिन्द्रियार्थं दृश्यमुभयोस्तयोः परं सम्बन्धहेतुमहङ्कारं चाशयोऽन्तःकरणे सत्येव जाग्रत्स्वप्नयोः पश्यत्यन्यदा सुषुप्तौ न तदुक्तं "दृश्यानुरञ्जितं द्रष्टृ दृश्यं द्रष्टुरञ्जितम्। अहङ्कृत्योभयं रक्तं तन्नाशेऽद्वैततात्मन" इति ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हरेर्भगवतः तत्परा भागवतास्तेषां कर्णपूराः। कर्णालङ्कारभूताः कर्णेषु प्रवाहरूपा वा ये गुणाः गुणशब्दस्य सापेक्षत्वेऽपि सम्बन्धिशब्दत्वात् समासः तेषामभिधानेन विजृम्भमाणया भक्त्या परभक्त्या भगवद्गुणश्रवणस्मरणादेरर्थकामवैतृष्ण्यात् तत्त्वहितपुरुषार्थचिकित्साजननद्वाराचार्योपसत्तिहेतुत्वाभिप्रायेण पुण्यश्रवःकथया पुण्यया चेत्युक्तम् उपासनदशायामप्यानन्दकत्वाभिप्रायेण मुकुन्दचरिताग्र्यशीधुनेत्युक्तम् अत्र तु आप्रयाणानुवर्त्तमानाहरहरभ्यासाधेयातिशयदर्शनसमानाकारं ध्यानोपासनादिशब्दवाच्यपरभक्तेस्तज्जनितभगवत्स्वरूपसाक्षात्कारलक्षणपरज्ञानजन्यभगवत्प्रीत्यतिशयरूपसमाधिपरमभक्त्याद्यपरपर्यायरतिनिष्पादकत्वेऽनुग्राहकत्वाभिप्रायेण हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेनेत्युक्तमिति न पौनरुक्त्यम् ॥ २५ ॥

एवं श्रद्धादिसहकृतपरभक्तिजन्यपरज्ञानजन्यसमाध्यपरपर्यायरतेः क्षेमसाधनत्वमुपपाद्य केन प्रकारेण रतेः साधनत्वमिति चिकित्सायामाह। यदेति। यदा च ब्रह्मणि नैष्ठिकी दृढा रतिः तदा आचार्यवान् आचार्यानुग्रहविषयः पुरुषः ज्ञानविरागसहकृतरत्यात्मकज्ञानवेगेन उद्रिक्तरत्येत्यर्थः हृदयं हृत्स्थानं प्राप्नुवन् जीवात्मा हृदि ह्ययमात्मेति श्रुतेः पञ्चात्मकं पञ्चभूतात्मकं जीवकोशं शरीरम् अवीजं बीजरहितं भिन्नाज्ञानरूपमूलं यथा तथा यद्वा छिन्नपुण्यपापमूलं यथा दहति सन्तापयति अज्ञानकृतपुण्यपापात्मकमूलो हि देहसम्बन्धः देहसम्बन्धनिमित्ताज्ञानमूलकपुण्यपापात्मकं

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

कर्म्म निःशेषं दहति रतिः क्षेमसाधनमित्यर्थः देहमाश्रित्य तिष्ठतो जीवस्य ज्ञानार्चिषः स्वाश्रयदेहदाहे दृष्टान्तमाह । योनिमिवेति । उत्थितः ज्वलितोऽग्निः योनिमरणिमिवेत्यर्थः दहत्यवीर्यमिति पाठेऽप्ययमेवार्थः देहस्य वीर्यं मर्म हि पुण्यपापात्मकं कर्म्मैव ॥ २६ ॥

एवं देहसम्बन्धनिमित्तंपुण्यपापरूपं कर्म निःशेषं दग्धवत्या रत्या मुक्तस्य न पुनः पञ्चात्मकजीवकोशसम्बन्ध इत्याह । दग्धाशय इति । एवं दग्धाशयः दग्धशरीरः मुक्ताः समस्ता गुणा देहगुणा रागादयो येन सः आत्मनः वहिर्भूतं शरीरमन्तः अन्तर्भूतं रागादिदोषजातं च न विचष्टे न पश्यति न पुनर्देहादिसम्बन्धं प्राप्नोतीत्यर्थः वहिरन्तश्च विशिनष्टि । तद्विनाशे देहविनाशे पुरस्तात्संसृतिदशायां परात्मनोर्जीवपरयोर्यद्व्यवधानं व्यवधायकं सम्बन्धज्ञानच्याचकं भवति तच्छरीरं तज्जन्यरागद्वेषादिकं च न पश्यति परात्मनोर्यद्व्यवधानं पुरस्तादित्यनेन मुक्तजीवपरयोः सम्बन्धज्ञानप्रत्यायो नेत्युक्तं भवति स्वप्ने यथा देहं रागादिकं च पश्यति तथेत्यर्थः देहाद्यस्थिरत्वेश्वरसृष्टत्वज्ञापनाय स्वप्नदृष्टान्तः ॥ २७ ॥

कुतो न पश्यति तत्राह । आत्मानमिति । आत्मानं देहमिन्द्रियार्थं शब्दादिकमुभयोर्देहेन्द्रियार्थयोर्यत्परमन्यत् भोगोपकरणभोगस्थानादिकं तत्सर्वमाशये वासनाख्ये उपाधौ सति पुमान् पश्यति नान्यथेत्यर्थः वासना करणकलेवरभोगस्थानभोगोपकरणादिषु प्रावण्यम्॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्परा हरिपरास्तेषां कर्णौ पूरयतीति कर्णपूरणं कर्णाभरणं सा यद्धरेर्मुहुर्गुणाभिधानं तेन लिङ्गव्यत्ययश्छांदसः यद्वा हरेर्गुणाभिधानेन विजृम्भमाणया भक्त्या कीदृश्या तत्परकर्णपूरया एतैरुक्तैः साधनैः सदसत्कार्यकारणात्मकप्रपञ्चविषयेऽसङ्गः स्यात् प्रथमा सप्तम्यर्थे परात्मनि मुक्तप्रपञ्चस्वामिनि निर्गुणे ब्रह्मणि च रतिः स्यादित्यन्वयः यद्वा सदसतो जगतः परश्चात्माचेति सदसत्परात्मा तस्मिन् ॥ २५ ॥

अस्तु ब्रह्मण्यसङ्गनिशिता रतिस्ततः किं तत्राह । यदेति । यदा ब्रह्मणि नैष्ठिकी सर्वोत्कृष्टा रतिरपरोक्षज्ञानलक्षणा भवति तदाचार्यवांस्तदुपदिष्टार्थसाफल्यात्तद्भक्तिमान् पुमान् ज्ञानवैराग्ययो रंहसोद्रेकेणात्मीजं (१) हृदयं स्वरूपोपाधिं विना बाह्योपाधिं दहतीत्यन्वयः किमनेन जीवस्येत्यत उक्तं जीवकोशमिति जीवस्य गृहस्थानीयं तर्हि तद्दाहे जीवोऽपि दग्धः स्यादित्यत उक्तं पञ्चात्मकमिति पञ्चभूतस्वरूपमत एव ब्राह्ममित्युच्यते "जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं ब्राह्ममेव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः । सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत् कथं चात्मविनाशाय प्रयत्नः सेत्स्यते क्वचित् । अपुमर्थता च मुक्तेः स्यादभावात्पुंस एव तु । ज्ञानज्ञेयाद्यभावाच्च सर्वथा नोपपद्यते तस्मादेतन्मतं येषां तमोनिष्ठा हि ते मता" । इति वचनात् न स्वरूपबीजहृदयदाहोऽस्यार्थः किंत्वस्वरूपोपाधेरित्यभिप्रायः तत्र दृष्टान्तमाह । योनिमिति । अरणौ रुस्थितोऽग्निरिवेति ॥ २६ ॥

बीजाश्रयनाशे (२) तद्गुणानां ज्ञानादीनामपि नाशादात्मनो वहि-

---

(१) नात्रनञ्निषेधार्थः किन्तुतदन्यत्ववाचीत्यभिप्रायेणाप्रवृत्ततात्पर्यानुसृतंव्याख्यानमिदम् । (२) एतच्छ्लोकीयतात्पर्ययोजनां मनसिनिधायतदनुसारेणयोजयति ।

रन्तरिति भेदं न विचष्टे न विपश्यति अन्यदर्शनाभावेऽपि स्वात्म... पश्यतीत्यत एवेति अन्धवद्दृष्ट्यभावात् न किञ्चिदपि पश्यति... कथं तर्हि संसारावस्थायामत्राह । परात्मनोरिति । परस्यात्मनो जीवस्य च यद्यदा पुरस्तात्संसारावस्थायां व्यव... जवनिका स्थानीयावस्था तदा यथा स्वप्ने संदिग्धज्ञान... वधानं भवतीति तत्र तद्विनाशे बीजहृदयनाशे त्वपुरस्त... त्मनाश एवातः स्वरूपज्ञाननाशात्संसारावस्थैवोत्तमा स्यात्... चित् ज्ञानस्यापि संभवादित्यर्थः उक्तादन्यथा स्वीकारे नि... यदि न दृश्येत जीवात्मपरमात्मनोः मुक्तौ तदा विमोक्षाय... यत्नं कर्तुमर्हति । "मग्नस्य हि परे ज्ञाने किं न दुःखतरं भवे... प्रवृत्तिधर्ममेवाहं मन्ये भरतसत्तम" । इति प्रमाणविरोध आपत्... इति ॥ २७ ॥

अतः फलितमाह । आत्मानमिति । आत्मानं जीवमिन्द्रि... शब्दादिविषयं च यदप्युभयोरात्मेन्द्रियार्थयोः परमुत्तममीश्व... त्वं बीजाशयलक्षण उपाधौ सत्येव पुमान् पश्यति अन्य... तदभावे न पश्यतीत्यन्वयः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

ननु हरेर्गुणश्चेदीदृशस्तर्हि स एव पुरुषार्थः स्यात् ... ब्रह्मज्ञानं साधनत्वेन निर्दिश्यते । उच्यते । मुमुक्षूणामेव नतु ... कपुरुषार्थिनामित्याह । हरेरिति तत्पराणां तदेकभूषणत्वे ... पूररूपाः श्लेषेण कर्णौ पूरयन्तीत्यपेक्षान्तरनाशकाश्च ये गुण... स्तेषामेवान्यकर्तृकेनान्यविषयेण वाभिधानेन विजृम्भमाणा ... भक्तिर्मुमुक्षामयी तयैव केवलया हि निश्चितमसङ्गो वैराग्यं निर्... ब्रह्मणि च रतिः स्यादिति योज्यम् ॥ २५—३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कथयेत्यत्रोक्तमपि कथनं भक्त्यन्तरङ्गत्वेन पुनरुच्यते ... परा हरिभक्तास्तेषां कर्णपूराः कर्णालङ्कारभूता ये हरेर्गुणा... णामभिधानेन । अनात्मनि आत्मव्यतिरिक्ते सदसति भद्रा... जगति असङ्गोऽनासक्तिः ॥ २५ ॥

ततः किं स्यादित्यत आह । यदेति । आचार्य्यवान् गुरुभक्ति... मान् रत्युत्थयोर्ज्ञानवैराग्ययोर्वेगेन अवीर्यं निष्प्रभावं जीवस्य ... मावरकं हृदयमहङ्कारात्मकं लिङ्गदेहं पुमान् दहति कथम्... पञ्चात्मकं अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशास्तद... त्मकं यथा अरणावुत्थितोऽग्निः स्वयोनिमरणिमेव दहति तथैव... प्राकृतबुद्धीन्द्रियादौ लिङ्गदेह एव उत्थिता रतिस्तमेव दह... वह्निना काष्ठं दहतीत्युक्तौ वह्निरेव काष्ठं दहतीति वद्दार्ष्टान्ति... सङ्गतिः ॥ २६ ॥

ततः किमत आह । दग्धाशयो दग्धलिङ्गदेहः । अतएव मुक्... स्त्यक्ताः समस्तास्तद्गुणाः कर्तृत्वादयो येन सः । आत्मनः ... वहिर्वाह्यं शब्दस्पर्शादिकं भोग्यमर्थमन्तः शोकमोहादिकञ्च ... विचष्टे । परात्मनोः परमात्मजीवात्मनोर्यदेव मध्ये पुरस्तात् पू... व्यवधानमासीत्तच्च पश्यतीत्यव्यवहितं परमात्मानमेव पश्यतीत्यर्थः... यथा स्वप्ने दृष्टं स्वप्नविनाशे सति न पश्यति ॥ २७ ॥

लिङ्गदेह एव जीवस्योपाधिः स एव व्यवधानशब्दवा... स्तत्सत्त्वे तमेव पश्यति तदभावे परमात्मानमेव पश्यतीत्याह... आत्मानं भोक्तारमुपाधिधर्म्मग्रस्तं जीवमिन्द्रियार्थं भोग्य... परं भोगोत्थं सुखदुःखञ्च आशये लिङ्गदेहे उपाधौ सत्येव पु...

निमित्ते सति सर्वत्र जलादावपि पूरुषः ।
आत्मनश्च परस्यापि भिदां पश्यति नान्यदा ॥ २९ ॥
इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः ।
चेतनां हरते बुद्धेः स्तम्बस्तोयमिव ह्रदात् ॥ ३० ॥
भ्रश्यत्यनुस्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये ।
तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः ॥ ३१ ॥
नातःपरतरो लोके पुंसः स्वार्थव्यतिक्रमः ।
यदध्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात् ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पश्यति न त्वन्यदा लिङ्गदेहाभावे तदा तु परमात्मानमेव पश्यतीति भावः ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुहुः पुनः पुनः तत्पराणां कर्णपूराः श्रोत्रभूषणा ये हरेर्गुणास्तेषामभिधानेन विजृम्भमाणया भक्त्या च सदसति स्थूलसूक्ष्मरूपे अनात्मनि आत्मव्यतिरिक्ते संसारे असङ्गः ब्रह्मणि परमात्मनि रतिस्तया ध्रुवानुस्मृत्यपरपर्यायया भगवद्भावप्राप्तिलक्षणः क्षेमश्च स्यात् ॥ २५ ॥

एवं श्रद्धादिसंयुक्तया भक्त्या भगवति रतिस्तया मोक्षलक्षणः क्षेम इत्युक्तमथसंक्षेपतो मुक्तिक्रममाह । यदेति । यदा मुक्त्यर्हे जन्मनि पुमानाचार्यवान् भवति "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियं ब्रह्मनिष्ठम् आचार्यवान्पुरुषो वेद" इत्यादिश्रुतेः । ज्ञानप्रदं गुरुं प्राप्नोतीत्यर्थः तदा तत्प्रसादलब्धज्ञानविरागयोरंहसा वेगेन ब्रह्मणि नैष्ठिकी ध्रुवानुस्मृतिलक्षणा रतिर्भवति स ज्ञानवैराग्यरतिसम्पन्नः पुमान् । अवीर्यं दुर्बलं हृदयं मनोयुक्तं जीवकोशमात्मावरकं पञ्चात्मकं पञ्चतन्मात्रात्मकं लिङ्गदेहं योनिं काष्ठमग्निरिव दहति मुक्तो भवतीत्यन्वयः ॥ २६ ॥

तदा दग्धाशयः दग्ध आशयो नानावासनामयोऽहङ्कारो यस्य सः अत एव मुक्ताः समस्ताः तद्गुणाः अहङ्कारगुणा येन सः आत्मनः सकाशात् बहिः मित्रशत्र्वादितत्कृतमन्नमानापमानादि नैव विचष्टे नैव पश्यति यथा स्वप्ने मित्रशत्र्वादि बहिः तत्कृतं मानायमानादिच अन्तर्दृष्टं तद्विनाशे तु नैव विचष्टे तद्वत् । परः परमात्मा आत्मा जीवस्तयोः पुरस्तात् यद्व्यवधानम् । अन्योऽसावन्योऽहमस्मि न स वेद यथा पशुरित्यादिश्रुत्या दर्शितमत्यन्तभेदं च नैव विचष्टे ॥ २७ ॥

आत्मानं पाञ्चभौतिकं देहमिन्द्रियाणि श्रोत्रादीनि अर्थान् शब्दादीन् समाहारद्वन्द्वैकवद्भावः यदुभयोरिन्द्रियार्थयोः परं विश्वं तच्च आशये नानावासनामये अहंकारे उपाधौ सति पश्यति अन्यदा तल्लयस्थाने सुषुप्त्यादौ न पश्यति मुक्तौ समूलाहंकारनाशे आत्मनो बहिरन्तर्न विचष्टे इति किमुत वक्तव्यम् ॥ २८ ॥

---

भाषाटीका ।

भगवत् भक्तों के कर्णों के आभूषण रूप भगवद् गुणों के सुनने से बढ़ीहुई भक्ती से संसार में वैराग्य होता है और कार्य कारण रूप प्राकृत गुण रहित परब्रह्म में रुचि होती है ॥२५॥

जब ब्रह्म में निश्चल रति होती है तब पुरुष आचार्य की शरणागती लेकर ज्ञान वैराग्य के वेग से वासना रहित हुआ लिंग शरीर पंचकोशात्मक जो है तिसको जला देता है जैसे कि काष्ठ में निकला अग्नि काष्ठ को जलावै तैसे ॥ २६ ॥

परमात्मा जीवात्मा के स्वरूप ज्ञान में व्यवधान करनेवाला जो आशय तिसके नाश होने से हृदयरूप उपाधि दग्ध होजाता है इसी से उपाधिकृत अहंकारादिक नष्ट होजाते हैं तब स्वप्न के नाश होने से जैसे स्वप्न पदार्थ नहीं दीखते हैं तैसे आत्मा के बाहिर भीतर के विकारों को नहीं देखता है ॥ २७ ॥

अन्तःकरण रूप उपाधि के रहने से पुरुष अपने आत्मा का कर्तृत्व तथा इन्द्रियों के अर्थ और इन दोनों से परे जो अहङ्कार तिसको जाग्रत-स्वप्न-अवस्थों में देखता है सुषुप्ति में समाधि मे नहीं देखता है ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकस्मिन्नात्मनि द्रष्टृद्रष्टव्यादिभेदप्रतीतिरौपाधिकीति दृष्टान्तेन स्पष्टयति । निमित्तइति । लोकेऽपिच सर्वत्र जलदर्पणादौ भेदनिमित्ते सत्येवात्मनो बिम्बभूतस्य परस्य प्रतिबिम्बस्य च भेदं पश्यति नतु जलाद्यभावे ॥ २९ ॥

तदेवं चतुर्भिरसङ्गात्मरत्योर्मोक्षहेतुत्वमुक्तमिदानीमनात्मरतेः संसारहेतुत्वमाह । इन्द्रियैरिति चतुर्भिः । ध्यायतां गुणारोपेण स्मरतां पुंसामिन्द्रियाणि स्मृतैर्विषयैराकृष्यन्ते तैश्च मनआकृष्यते विषयासक्तिं प्राप्यते तच्च बुद्धेःसकाशात्तद्धर्मं चेतनां विचारसामर्थ्यं हरति एतच्चाविवेकिना न लक्ष्यत इति दृष्टान्तेनाह तीरजः कुशादिस्तम्बः यथा मूलैस्तोयं ह्रदादपहरति तद्वत् ॥ ३० ॥

चित्तं चेतनामनु तस्यामपहृतायां स्मृतिः पूर्वापरानुसन्धानं भ्रश्यति एवं तद्रोधं ज्ञानभ्रंशमात्मन एव हेतोरात्मनोऽपह्नवं नाशं प्राहुः ॥ ३१ ॥

एवंभूतो नाशो भवतु ततश्च किमित्यत आह । यदधि यमधिकृत्यान्यस्य विषयस्य प्रियतमत्वम् आत्मनस्तु कामाय सर्वं प्रियं भवतीतिश्रुतेः तस्यात्मनः स्वेनैवयो व्यतिक्रमोऽपह्नवस्तस्मात् स्वार्थनाशोऽतः परतरःस्वार्थनाशो नास्ति ॥ ३२ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मुक्तावुपाध्यभावादौपाधिकदेहाद्यसम्बन्धः स्वाभाविकजीवसम्बन्धज्ञानसद्भावश्चोक्तः । संसृतावुपाधिसद्भावाज्जीवसम्बन्धज्ञानाभावमाह। निमित्त इति। जडं शरीरं सर्वस्मिन् जडादौ निमित्ते शरीराद्युपाधौ सति आत्मनः स्वस्य परस्य परमात्मनश्च भिदां सम्बन्धविरहं पश्यति अन्यथा उपाध्यभावे मुक्तावित्यर्थः न पश्यति यद्वा भिदां वैषम्यं पश्यति नान्यदा शरीराद्युपाधिविगमे परमसाम्याविर्भावान्न वैषम्यं पश्यतीत्यर्थः ॥ २९ ॥

अत्र दृढारतिर्नैष्ठिकी रतिरिति अन्तरा विषयान्तरानुचिन्तनं रतिविरोधीत्यवगम्यते तस्य च विरोधित्वं सङ्गादिजननद्वारेति सङ्गः प्रतिषिद्धः असङ्ग आत्मव्यतिरिक्ते असङ्गः सदसत्यनात्मनि ज्ञानविरागरंहसेति तद्विषयचिन्तनायाः सङ्गादिद्वारा रतिविरोधित्वमुपपादयति । इन्द्रियैरित्यादिना। ध्यायतां विषयचिन्तनं कुर्वतां विषयैः शब्दादिभिः आकृष्टानि यानीन्द्रियाणि तैर्मन आकृष्टमाक्षिप्तं सत् बुद्धेः पुरुषार्थतत्साधनव्यवसायात्मिकाया बुद्धेः चेतनां तत्सम्बन्धिज्ञानं पुरुषार्थतत्साधनविषयां व्यवसायरूपां बुद्धि शक्तिं हरति तत्र दृष्टान्तः स्तम्बः तीरस्थकुशादिस्तम्बः केनचिदाकृष्टो यथा तीरशैथिल्यहेतुतया ह्रदात्तोयमपि च्यावयति नद्यद्रिति यद्वा स्तम्बो यथा मूले तोयं ह्रदादुपहरति।चिन्तना विषयशब्दादिविषयाक्षिप्तवाह्येन्द्रियाक्षिप्तमनसि शब्दादिविषयेषु अन्यपरे सति मोक्षतदुपायानवसातुं बुद्धिर्न शक्नोतीत्युक्तं भवति ॥३० ॥

एवं व्यवसाये भग्ने सति अनुस्मृतिरुपासनं योगकालानुसन्धानं भ्रंशयति तदनुग्राहकं कालान्तरेपूपास्यसंशीलनरूपं चित्तं चिन्तनं च भ्रंशयति एवं स्मृतिक्षये उपासनाक्षये सति ज्ञानभ्रंशः स्वपरयाथात्म्यज्ञानभ्रंशो भवति तद्रोधकं ज्ञानभ्रंशाङ्कुरयः मूल्यः आत्मनः एव हेतोरात्मापह्नवम् आत्मनस्तिरोधानं प्राहुः उपासनविच्छेदादात्मरूपस्य भगवच्छेषतया न विशदावभास इत्यर्थः तथा चोक्तम्

> योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
> किं तेन न कृतं पापं चौरेणात्मापहारिणेति ॥ ३१ ॥

एतदेवाह । नात इति । आत्मनः हेतोः स्वस्य. व्यतिक्रमात्स्वस्वरूपातिलङ्घनात्स्वस्वरूपं विहायात्मनोऽन्यस्य प्रेयस्त्वं शब्दादिविषयप्रेयस्त्वं यदस्ति अतः परतरः पुंसः स्वार्थव्यतिक्रमः स्वपुरुषार्थविरहः लोके नास्ति ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र दृष्टान्तमाह । निमित्त इति । जीवात्मपरमात्मनोर्भेदस्यान्वयव्यतिरेकासिद्धत्वेन प्रामाणिकत्वात्तदपलापे महासुरत्वमेव स्यादिति भावः ॥ २९ ॥

जीवपरयोः सत्यभेदाप्रनीतौ किं कारणमित्याशङ्क्याज्ञानमेव तत्र कारणं तदपि विषयातिसक्त्या स्यादित्याह । इन्द्रियैरिति । पुंसो मनोबुद्धेश्चेतनां बहुस्मरणशक्तिं हरत इत्यन्वयः "बहुस्मरणशक्तिस्तु चेतनेत्युच्यते बुधैरिति" वचनात् मनसो हरणे कारणानीन्द्रियाणीत्याह । इन्द्रियैरिति । हरिकथाश्रवणादियोग्यैः श्रोत्रादीन्द्रियैराक्षेपे चायं हेतुरित्याह । विषयाकृष्टैरिति । दृष्टान्तेन बुद्ध्यारूढं करोति स्तम्ब इति स्तम्बो जलनिर्गमद्वारम् ॥३०॥

बुद्धेर्बहुस्मरणशक्तिभ्रंशे सर्वानार्थान् आपद्यन्त इत्याह । भ्रष्टमिति । भ्रष्टं चित्तमनुबहुस्मरणशक्तिभ्रंशानन्तरं स्मृतिरंश: यथार्थस्मरणसामर्थ्यं भ्रंशयति स्मृतिक्षयेऽनेकशाखयथार्थस्मरणशक्तिनाशे सर्वोत्तमः स्वतन्त्रः पञ्चविधभेदस्वामी मदधीनमेतं भावं मरणेऽपि न मुञ्चामीति भगवत्पक्षपात ज्ञानं भ्रंशयति तदस्तु ततः किं तत्राह । तद्रोधमिति । आत्मनो ज्ञानस्वरूपस्य तस्य तादृशस्य ज्ञानस्य रोधं नात्मनः स्वरूपस्यापह्नवं नाशं प्राहुरित्यन्वयः ॥ ३१ ॥

अतश्च किमनिष्टमापन्नमत्राह । नात इति । पुंसः स्वार्थव्यतिक्रमः स्वप्रयोजनस्य व्यतिक्रमो नाशोऽतः स्वरूपभूतज्ञानपरतरोऽन्यतमो नाशो लोके नास्तीत्यन्वयः आत्मनो नित्यत्वात्तन्नाशोऽनवशेषो घटादीनां सावयवत्वेन तन्नाशः सावशेष इति विशेषद्योतनाय लोक इत्युक्तं ननु देहपुत्रादेः प्रेयस्त्वात्तन्नाशस्यापि महानाशत्वेन दुःखहेतुत्वात् किं नाशो विशिष्योच्यत इति तत्राह । यद्यस्तीति । आत्मनोऽन्यस्य पुत्रादेर्यद्यपि प्रेयस्त्वमस्ति तथापि पुत्रादेरात्मशेषत्वेन प्रियत्तन्नाशस्य स्वव्यतिक्रमात्स्वरूपज्ञाननाशादाधिक्यं नास्तीति नञध्याहारेणान्वेतव्यमत एव नातः परतर इत्युक्तम् । केचित् स्तीति पठन्ति । तत्पक्षेऽध्याहारं विनान्वयः कर्तव्यः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मनः सोपाधेः आत्मापह्नवं निरुपाधेरात्मनोऽज्ञानमित्यर्थः ॥ ३१ ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपाधिसत्त्व एवोपाधिधर्म्माध्यासः । सचोपाधिः कर्म्मशान्मानुषदेवातिर्य्यगादिर्भवति न तु तदभाव इत्यत्र दृष्टान्तमाह निमित्त इति । जलतैलदर्पणचक्षुरादौ निमित्ते विद्यमान एव पुंस आत्मनः स्वस्य परस्यान्यस्य च भिदामुपाधेर्संध्यमोत्तमाधम पश्यति तत्र जले चाञ्चल्यं दर्पणे नैर्मल्यञ्चक्षुषि मालिन्यञ्च पश्यति तथैव मानुषदेवतिर्य्यक्शरीरेषु भद्राभद्रं केवलं केवलाभद्रञ्च पश्यति नान्यदेति ज्ञानेनोपाधिनाशे तु न पश्यति किन्तु परमात्मानमेव पश्यति भक्त्या उपाध्य एकस्मिन्नात्मनि दृश्यादि-भेदे प्रतीतिरौपाधिकीति दृष्टान्तं स्पष्टयति । निमित्त इति । लोकेऽपि सर्वत्र जलदर्पणादौ निमित्ते सत्येव आत्मनो विम्बभूतस्य परस्य प्रतिविम्बस्य च पश्यति नतु जलाद्यभावेन शुद्धो जीवो रतिमान्दिनैव लब्धानानन्दविग्रहः परमात्मन एव तस्य नारायणरामकृष्णादिनानन्दाकारस्य षडैश्वर्य्यमाधुर्य्यवतः सौन्दर्य्यादिकं सौनादिभिरास्वादयेदिति मुख्यञ्च फलं द्रष्टव्यम् । तस्मिन् परमहंसमहामुनीनामन्वेषणीय चरणौ चलयन्नित्यादिपूर्वोक्तेः

इदानीमात्मव्यतिरिक्तवस्त्वासक्तेः संसारहेतुत्वमाह । इन्द्रियैरिति चतुर्भिः । ध्यातुमनिच्छतामप्यभ्यासपारवश्येनैव तामरयर्येऽपि तिष्ठतां पुंसामिन्द्रियाणि विषयैः पुत्रकलत्र शब्दस्पर्शादिभिः स्मृत्यारूढैः प्रथममाकृष्यन्ते, ततो विषयैरिन्द्रियैर्मन आक्षिप्तं भवति । तच्च बुद्धेश्चेतनां विचारं हरते । अलक्षितहरणे दृष्टान्तः स्तम्बः कुशादिगुच्छस्तीरजः खैस्तोयं ह्रदादपहरति तद्वत् ॥ ३० ॥

अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् ।
भ्रंशितोज्ञानविज्ञानाद्येनाविशति मुख्यताम् [१] ॥ ३३ ॥
न कुर्यात्कर्हिचित्सङ्गं तमस्तीव्रं तितीरिषुः ।
धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम् ॥ ३४ ॥
तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते ।
त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः ॥ ३५ ॥
परेऽवरे च ये भावा गुणव्यतिकरादनु ।
न तेषां विद्यते क्षेममीशविध्वंसिताशिषाम् ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च चित्तं चेतनामनु तस्यामपहृतायां सत्यां स्मृतिः पूर्वापरानुसन्धानं भ्रंशयति । एवं तद्रोधं ज्ञानभ्रंशमात्मन एव हेतोरात्मनोऽपह्नवं नाशं प्राहुः ॥ ३१ ॥

यद्यस्मात् आत्मानः सकाशात् अन्यस्य देहादेः प्रेयस्त्वं कीदृशमपि अधिकम् । यद्वा न विद्यते धीः परामर्शो यत्र तत्तच्च स्वेनैव स्वत एव यो व्यतिक्रमस्तस्मात् न त्वन्यदत्र कारणमस्तीत्यर्थः जीवस्य तस्याविद्यासंसर्गोऽनादिर्यादृच्छिक एवेति प्राक् प्रतिपादितम् । तस्माज्जीवाश्रयकः परमात्मविषयकः प्रीत्यतिशयो युज्यते । तदर्थं भक्तिरेव कर्तुमुचितेति भावः ॥ ३२ ॥

स्मृतिश्च
आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि इति ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु मुक्तौ आत्मपरमात्मनोरत्यन्तं भेदं मा पश्यतु इह कुतः पश्यतीत्यत्राज्ञानान्निमित्तात्पश्यतीत्याह । निमित्ते इति । जलादौ निमित्ते सति जले चरणाग्रे भूमौ निहिते दर्पणे च ऊर्ध्वमस्तकतयावस्थितस्यात्मनः परस्य देवदत्तादेश्चापि भिदां भेदं वैपरीत्यमधोमस्तकत्वमित्यर्थः पश्यति नान्यदा जलादिनिमित्ताभावे न पश्यति । एवं यावदज्ञानं तावदात्मनोऽत्यन्ततो ब्रह्मभिन्नत्वं पश्यति जाते ज्ञाने तु आत्मनो ब्रह्मात्मकत्वं पश्यतीत्यर्थः ॥ २९ ॥

एवं भगवत्परस्य मुक्तिमुक्त्वाथ तद्विमुखस्य संसारमाह । इन्द्रियैरित्यादिना । ध्यायतां विषयस्मरणपराणां मनः विषयाकृष्टैरिन्द्रियैराक्षिप्तमभिभूतं सत् बुद्धेश्चेतनां स्तम्बो ह्रदाम्भ इव हरते ॥ ३० ॥

चित्तमनु चेतनापहारानन्तरम् स्मृतिः पूर्वापरानुसंधानं भ्रंशयति स्मृतिक्षये ज्ञानभ्रंशः ज्ञानरोधः तद्रोधं ज्ञानरोधन्तु कवयः क्रान्तदर्शिनः आत्मन एव हेतोः आत्मनोऽपह्नवं नाशं प्राहुः नाशशब्दार्थोऽत्र विस्मृतिः ॥ ३१ ॥

आत्मविस्मृतिरेव महती हानिरित्याह । नात इति । लोके पुंसः स्वार्थव्यतिक्रमः स्वार्थस्य हानिः अतः परतरः श्रेष्ठः नास्ति अतः कुतः यत् यं आत्मानम् अधि अधिकृत्य अन्यस्य विषयस्य प्रेयस्त्वं प्रियतमत्वं तस्यात्मनः स्वेनैव यो व्यतिक्रमः विस्मृतिस्तस्मात् आत्मार्थेऽन्यस्य प्रियत्वे श्रुतिर्मानम् "नवा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति" इति

भाषाटीका ।

सर्वत्र जगत् में जल तथा दर्पणादि निमित्त रहने से अपने विम्ब प्रति विम्ब के भेदको पुरुष देखता है विना निमित्तके समय पर नहीं देखता है ॥ २९ ॥

विषयों को स्मरण करने वाले पुरुषों का मन उन विषयों से खिंचजाता है तब वह मन बुद्धि मेंसे विचार शक्तिको हर लेता है कैसे कि जैसे जलसे किनारे का कुशस्तंब जलको हरण करै तैसे ॥ ३० ॥

विचार के नष्ट होने से पूर्वापर अनुसंधान नष्ट हो जाता है उस स्मृति के नाश होने से ज्ञानका नाश होजाता है ज्ञान का नाश होना जो है तिसी को ज्ञानी जन आत्मा का नाश होना कहते हैं ॥ ३१ ॥

इस संसार में पुरुष का इस बात से दूसरा कोई स्वार्थ नाश नहीं है जोकि आत्म स्वरुप के न जानने से आत्मा से भिन्न वस्तु को प्रिय मानना है ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कुतइत्यत आह । अर्थस्याभिध्यानमिन्द्रियस्यार्थः कामस्तस्याभिध्यानं सर्वार्थनाशः ज्ञानं विज्ञानञ्च परोक्षापरोक्षम् येन ध्यानेन मुख्यतां स्थावरताम् ॥ ३३ ॥

अनात्मरतेरनर्थहेतुत्वमुक्तं सङ्गस्याप्याह । नेति । यद्वस्तु धर्मादीनां विघातकं तस्मिन्सङ्गम् तमः संसारम् ॥ ३४ ॥

तुल्यवन्निर्देशात्पुरुषार्थसाम्यभ्रान्तिं वारयति । तत्रापीति कृतान्तः कालः ॥ ३५ ॥

भयसंयुतत्वमेवाह । परे ब्रह्मादयोऽवरेऽस्मदादयोगुणक्षोभादनु पश्चाद्भवन्ति ईशः कालस्तेन विध्वंसिता आशिषो येषाम् ॥ ३६ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

विषयध्यानतत्संयोगयोरनर्थकारित्वमुपसंहरति । अर्थेन्द्रियेति द्वाभ्याम् । अर्थेन्द्रियाणि शब्दाद्यर्थविषयाणि श्रोत्रादीनि तेषामर्थस्य

( १ ) भ्रंसित इति मुख्यतामिति च श्रीविजयध्वज तीर्थः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शब्दादेरभिध्यानं नृणां सर्वार्थापन्हवः सर्वपुरुषार्थविरोधीत्यर्थः स्वर्गादिसाधनभूतयागादेरपि तदेकमनस्केन कार्यत्वात्सर्वपुरुषार्थविरोधीत्युक्तं येन शब्दाद्यभिध्यानेन ज्ञानविज्ञानाद्भ्रंशितः ज्ञानं शास्त्रजन्यं विज्ञानमुपासनात्मकं तयोः समाहारद्वन्द्वः तस्माद्भ्रंशितः मुख्यतां स्थावरतामाविशति प्राप्नोति ॥ ३३ ॥

तीव्रमनर्थकृत्तमः अज्ञानं तितीरिषुः तरितुमिच्छुः कर्हिचित् सङ्गं न कुर्यात् यद्विषयासङ्गनं धर्मादीनामत्यन्तविघातकम् ॥ ३४ ॥

धर्मादिभिः साकं मोक्षस्य तुल्यवन्निर्देशात्तस्येतरपुरुषार्थसाम्यं वारयति । तत्रापीति । तत्रापि चतुर्णां मध्ये मोक्ष रूप एव पुरुषार्थः आत्यन्तिकतया अन्यतमतीतवर्तमानतया नित्यतयेत्यर्थः इष्यते इच्छाविषयो भवति त्रैवर्गरूपार्थः कृतान्तः कालः तद्भयसंयुतः ३५

अनित्यतामेवाह । परावरे । उत्कृष्टापकृष्टरूपा ये भावाः पदार्थाः आब्रह्मस्तम्बपर्यन्ता गुणव्यतिकराद् गुणवैषम्यरूपस्रष्टेः अनुपश्चाद्भवन्ति ननु प्रलये अत एव ईशेन कालरूपेण परमात्मना विध्वंसिता आशिषो येषां क्षेमो रक्षणं स्थिरत्वमित्यर्थः न विद्यते इत्यर्थः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ तस्मान्नृणामिन्द्रियार्थानां विषयाणामभिध्यानं निरन्तरं सञ्चिन्तनं सर्वार्थानां सर्वपुरुषार्थानामपह्नवो विनाशहेतुः येनेन्द्रियेणेन्द्रियार्थाभिध्यानेन ज्ञानविज्ञानात्सामान्यविशेषलक्षणज्ञानाद्भ्रंसितो भ्रंशितो मुग्धतां विवेकराहित्यमाविशति प्राप्नोतीत्यर्थः ॥ ३३ ॥

विषयाभिध्यानस्यापि दुष्टसंसर्गो मूलकारणं स विपश्चिता न कार्यं इत्याह । न कुर्यादिति । धर्मादीनामत्यन्तविघातकमिति यदतो विपश्चितीव्रमस्तितीर्षुणा मनसा कदापि दुष्टसङ्गं न कुर्यादित्यन्वयः न कार्यः कर्हिचित्सङ्ग इति वा पाठः तदा विपश्चितेति योज्यम् ॥ ३४ ॥

धर्मादिभिः सह पाठाद् मोक्षस्यापि तत्तुल्यता स्यादिति शङ्कां परिहरति । तत्रापीति । स्वपक्षपातस्त्वभ्यासाद्योगार्थं व्यापृतस्य तु । भवेत्ततोऽनेकशास्त्रयथार्थस्मरणोज्झिता । नद्यत्यन्तः स्मृतेर्नाशाद्गवत्पक्षपातिता । विनद्येत्तेन चैवास्य भवेज्ज्ञानाविपर्ययः । न च ज्ञानविपर्यासादन्यन्नाशकरं क्वचित् । सर्वस्यैतस्य मूलं हि दुष्टसंसर्ग एव तु । दुष्टसङ्गो विरक्तस्याप्यन्यथा ज्ञानकारणम् । दुष्टसङ्गाद्धि विष्णोश्च स्वात्मत्वं मन्यतेऽबुधः । अभावं स्वात्मनोऽन्यस्य मुक्तिं चापि निरात्मताम् । इति समाख्यास्मृतिसिद्धत्वादयमेवार्थो न शुकतीर्थोक्तार्थो ग्राह्यः तमोहेतुत्वात् मोक्षस्यात्यन्तिकत्वं कस्माद्विशिष्योच्यते धर्मादेरपि पुरुषार्थत्वादित्यत्राह । त्रैवर्ग्य इति । त्रिवर्गसम्बन्धिपुरुषार्थः कृतान्तस्य कालात्मनो हरेर्भूविभ्रमजनितनाशलक्षणभयसंयुतो यतस्तस्मादिति शेषः भविष्यन्नाशमवलोक्य नित्यमिति ॥ ३५ ॥

त्रैवर्ग्यार्थो ब्रह्मलोकादिसम्बन्धी नानित्य इति तत्राह । परावरेचेति । गुणव्यतिकरान्मूलप्रकृतेरनु अनन्तरं ये भावाः पदार्थाः परावरे पश्यदतीतकाले ये वर्तमाना उत्कृष्टनिकृष्टलक्षणा वा ईशस्य कालनाम्नो हरेर्भूविभ्रमणाविध्वंसिताशिषां विनाशितशुभानां तेषां क्षेमी नित्यानन्दी नास्तीत्यन्वयः अनेन ब्रह्मादिप्राप्तिलक्षणः पुरुषार्थोऽपि न नित्य इत्युक्तं भवति ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथेति चित्सुखः ॥ ३३ ॥

धर्मादयस्त्रयोऽप्यत्र मोक्षस्यानुकूला ज्ञेयाः । धर्मस्य ह्यापवर्ग्यस्येत्यादि न्यायेन । तितीरिषुरित्यत्र तितीर्षुरिति क्वचित् ...तनमिति गौडाः नैष चित्सुखसंमतः ॥ ३४ ॥ ३५ ॥

तत्र हेतुः पर इति सम्बन्धोक्तिः परावर इति चित्सुखः ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यत्तु अर्थस्य धनस्य इन्द्रियार्थानां विषयाणाञ्च ध्यानं ... व सर्वार्थनाशः येनाभिध्यानेन ज्ञानात् विज्ञानाच्च भ्रंशितो मुग्धः स्थावरताम् ॥ ३३ ॥

सङ्गं धर्मशास्त्रनिषिद्धमेव ननु विषयासक्तिमात्रं ... द्धेतरविषयासक्तिमतामेव त्रिवर्गेऽधिकारादिति केचिदाहुः विषयासक्तिमात्रमेव धर्मादयोऽप्यत्र मोक्षस्यानुकूला ग्राह्याः धर्मस्य ह्यापवर्ग्यस्येति न्यायेन इत्यन्ये । यत् यः ॥

तत्रापि तेष्वपि मध्ये त्रैवर्ग्यः त्रिवर्गभवः ॥ ३५ ॥

भयसंयुतत्वमेवाह । परे ब्रह्मादयः अवरे इन्द्रादयश्च ये गु... क्षोभाद्नु पश्चाद्भवन्ति । ईशः कालः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विषयध्यानस्येन्द्रियैराक्षिप्तं मनो बुद्धेश्चेतनां हरतीत्यात्माऽपह्नवहेतुत्वमुक्तमथविषयध्यानस्य सर्वापह्नवहेतुत्वमाह अर्थेति । अर्थेन्द्रियार्थाभिध्यानम् अर्थानां विषयाणामिन्द्रियार्थेन्द्रियप्रीतये यदभिध्यानं तदेव सर्वेषामर्थानां पुरुषार्थानामपह्नवो नाशः येन अर्थेन्द्रियार्थाभिध्यानेन ज्ञानाद्भ्रंशितो मुग्धः स्थावरतां विशति ॥ ३३ ॥

अतः तमोधर्मादिसाधनदुःखं तितीरिषुः यद्वस्तु धर्मादीनामत्यन्तं विघातकं तत्र सङ्गं कर्हिचिदपि न कुर्यात् ॥ ३४ ॥

तेषु मोक्षो मुख्यः पुरुषार्थस्तदर्थी तद्विघातके विषये सङ्गं न कुर्यादित्याशयेनाह । तत्रापीति । कृतान्तात्कालाद्भयं संयुतः ॥ ३५ ॥

त्रैवर्ग्यस्यार्थस्य कालभयसंयुतत्वमेवाह । परे इति परे ... भिकाः अवरे ऐहिकाः किं बहुना गुणव्यतिकराद् गुण... भावनु पाश्चात्याः ये प्राकृता भावास्तेषां क्षेमः स्वास्थ्यं न ... यतः ईशेन कालशक्तिना विध्वंसिता आशिषो येषाम् ॥ ३६ ॥

---

भाषाटीका ।

धन रूपादिकों का जो ध्यान करना है वही मनुष्यों के सर्व नाशक है जिससे कि ज्ञान विज्ञान से छूट कर ... स्था वर योनिको प्राप्त हो जाता है ॥ ३३ ॥

इस हेतु से जो अज्ञान के तरने को चाहता है सो ... धर्म अर्थ काम मोक्ष इनके विघातक वस्तु की आ... न करे ॥ ३४ ॥

तत्त्वं नरेन्द्र ! जगतामथ तस्थुषाञ्च देहेन्द्रियासुधिषणात्मभिरावृतानाम् ।
यः क्षेत्रवित्तपतया हृदि विष्वगाविः प्रत्यक् चकास्ति भगवांस्तमवेहि सोऽस्मि ॥ ३७ ॥
यस्मिन्निदं सदसदात्मतया विभाति माया विवेकविधुतिः स्रजि वाहिबुद्धिः ।
तं नित्यमुक्तपरिशुद्धविशुद्धतत्त्वं प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ॥ ३८ ॥
यत्पादपङ्कजपलाशविलासभक्त्या कर्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः ।
तद्वन्नरिक्तमतयो यतयोऽपि रुद्धस्रोतोगणास्तमरणं भज वासुदेवम् ॥ ३९ ॥
कृच्छ्रो महानिह भवार्णवमप्लवेशां षड्वर्गनक्रमसुखेन तितीरषन्ति ।
तत्त्वं हरेर्भगवतो भजनीयमङ्घ्रिं कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् ॥ ४० ॥

(१) ( मनोमात्रमिदं विश्वं यथा स्वप्ने मनःक्रिया ।
क्रियाच वासना मात्रं सानीहायाम्प्रलीयते ॥ ० ॥
आत्मात्वनीहया साक्षात्स्वयञ्ज्योतिः प्रसिध्यति ।
एवं व्युदस्यात्ममायाज्ञानंस्तूपरमेन्मुनिः ॥ ० ॥
न यत्र निद्रा मूर्च्छावा नार्थदृक्च मनोरथः ।
नानुवृत्तिर्नप्रलयस्तद्ब्रह्मपरमम्विदुः ॥ ० ॥ )

## भाषाटीका ।

तिन चारों में मोक्ष ही एक उत्तम पुरुषार्थ है जिससे कि धर्म अर्थ काम तो नित्य ही काल के भय से संयुक्त हैं ॥ ३५ ॥

सत्त्वादि गुणों के पीछे उत्पन्न होनेवाले ब्रह्मादिक तथा अस्मदादिक सब प्राणि जो हैं तिनके मनो रथों को ईश्वर नाश करता है तिससे इनको सुख नहीं होता है ॥ ३६ ॥

---

## श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्मादनात्मरतिरनर्थहेतुस्तत्तस्माज्जगतां जङ्गमानां तस्थुषां स्थावराणां च देहादिभिरात्मनाहङ्कारेण चावृतानां हृदि यश्च-कास्ति प्रकाशते तमवेहि कथं सोऽस्मीति सोऽस्तीतिपाठे स एवै-कोऽस्ति ततोऽन्यदसदित्यर्थः ननु जीवो हृदि चकास्ति नान्यस्तत्राह। क्षेत्रविदं जीवं तपति नियमयतीति क्षेत्रवित्तपस्तस्य भावस्तत्ता तयान्तर्यामिरूपेण यद्वा क्षेत्रवित्ते अहं ममतास्पदे पातीति क्षेत्र-वित्तपस्तेन रूपेण जीवस्तु पारतन्त्र्यान्न पाति ननु कर्म जीवं नि-यच्छति न आविः प्रत्यक्च तर्हि बुद्धिः न प्रत्यक्प्रातिलोमं चकास्ति बुद्धिस्तु पराग्विषयाकारेण तर्ह्यहंकारः न विष्वग्व्याप्तत्वेन सतु परिच्छिन्नः एवंभूतो यो भगवांस्तमवेहीति ॥ ३७ ॥

स्थावरजङ्गमादीनां हृदि चकास्तीत्युक्ते तेषां सत्त्वं तत्संबन्धा-दीश्वरस्य मालिन्यं च प्रसक्तं निराकुर्वन्नुद्रिक्तभक्त्या तं प्रणमति यस्मिन्निदं विश्वं सदसदात्मतयोत्कृष्टनिकृष्टभावेन कार्यकारण-भावेन वा मायैव विभाति तं प्रपद्ये मायात्वे हेतुः विवेकेन विधु-तिर्निराकृतिर्यस्य तत् स्रजि वेति वाशब्दो दृष्टान्ते नित्यमुक्तम् यतः परिशुद्धम् तत्कुतः विशुद्धं तत्त्वं सत्यमतएव प्रत्यूढाभि-भूता कर्मभिः कलिला मलिना प्रकृतिर्येन तम् ॥ ३८ ॥

तमवेहीति ज्ञानमुपदिष्टं तस्य दुष्करत्वेन भक्तिमुपदिशति द्वाभ्याम्। यस्य पादपङ्कजयोः पलाशान्यङ्गुलयस्तेषां विलासः कान्तिस्तस्य भक्त्या स्मृत्या कर्माशयमहङ्काररूपं हृदयग्रन्थि कर्म-भिरेव ग्रथितम् रिक्ता निर्विषया मतिर्येषाम् रुद्धः प्रत्याहृतः स्रोतो-गणा इन्द्रियवर्गो यैः अरणं शरणम् ॥ ३९ ॥

ननु ब्रह्मविदाप्नोति परमितिश्रुतेः कथं यतयो नोद्ग्रथयन्तीत्युच्यते तत्राह। कृच्छ्रइति। अप्लवेशां न प्लवस्तरणहेतुरीट् ईशो येषान्तेषां महानिह तरणे कृच्छ्रः क्लेशः तेह्यसुखेन योगादिनेन्द्रियषड्वर्गग्राह भवार्णवं तितीर्षन्ति तत्तस्मात् उडुपम्प्लवम् दुस्तरार्णवमित्यर्थः अर्णशब्दे वकाराभाव आर्षः यद्वा दुस्तरोदकरूपं व्यसन-मित्यर्थः ॥ ४० ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमाचिद्विकाराणामनित्यत्वमुक्तम् अथ पारमहंस्यचर्ययैत्यु-पचितं प्रकृतिविलक्षणस्य नित्यस्यात्मस्वरूपस्य भगवदात्मकत्वं-नानुसन्धानमाह। तदिति। तत्तस्मात् हेनरेन्द्र!असवः प्राणाः धिष-णात्मशब्देन ज्ञानद्वारभूतं मन उच्यते देहेन्द्रियप्राणमनोभिरा-वृतानां देहाद्यात्मकानामित्यर्थः तस्थुषां स्थावराणां जगतां जङ्गमानां च क्षेत्रविदः क्षेत्रज्ञाः स्थावरजङ्गमान्तस्था जीवाः तपति अन्तरात्मतया नियच्छतीति तपः तस्य भावस्तत्ता तया जीवान्त-रात्मतया यः हृदि स्थितः प्रत्यक् स्वस्मै भासमानः अनेन पराचोऽचेतनाद्वैलक्षण्यं विष्वगाविः विष्वक्सर्वतः आविः प्रकाशमानः स्वरूपेण गुणैश्च व्यापक इत्यर्थः अनेन जीववैलक्ष-ण्यमुक्तं भगवान् पूर्णषाड्गुण्यः अनेनोभयवैलक्षण्यमुक्तं चकास्ति स भगवानहमस्मीत्यवेहि भगवदात्मकोऽहमस्मीति बुद्ध्यस्वेत्यर्थः

---

(१) अधिकश्लोकाः सटीकाः श्रीविजयध्वजतीर्थमते ।

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

यद्वा देहेन्द्रियप्राणमनोभिरावृतानां स्थावरजङ्गमदेहस्थचेतनानां यः क्षेत्रवित्ते अहङ्कारममकारास्पदे शरीरवित्ते ते पातीति क्षेत्रवित्तपः तस्य भावस्तत्ता तया जीवरूपतया परागर्थविलक्षणः प्रत्यग्भूतो हृदि चकास्ति तं जीवात्मानं स भगवानस्मीत्यवेहि भगवदात्मकोऽहमिति बुद्ध्यस्वेत्यर्थः "तत्त्वमसि अयमात्मा ब्रह्म"त्यादिवद्यं सामानाधिकरण्येनानुसन्धाननिर्देशः शरीरविषयबुद्धिशब्दादीनां शरीरिपर्यन्तत्वमाकृतिनयेन खण्डो गौरित्यादिवद्बोध्यम् ।३७।

ननु भगवतः क्षेत्रज्ञशरीरत्वेन तद्रूपतयावस्थितौ क्षेत्रज्ञगतदोषप्रसक्तिर्मैवमित्याह । यस्मिन्निति । क्षेत्रज्ञरूपे मायाविवेकविधुतिः मायायाः सकाशाज्जीवपरयोः विवेकस्तस्य विधूननहेतुः विवेकज्ञानविरोधिसदसदात्मतया कार्यकारणरूपेण इदं देवमनुष्यादि नानाविधरूपजातं स्रजि सर्पबुद्धिरिव विभाति जीवतादात्म्येन प्रतिभातीत्यर्थः तं नित्यमुक्तपरिशुद्धविशुद्धतत्त्वं स्वतः प्रकृतिसम्बन्धकर्मरहितस्वप्रकाशस्वरूपं तथापि प्रत्यूढकर्मकलिलप्रकृतिप्रत्यूढा अनादितया रूढमूलं यत्कर्म तेन कलिला मिश्रा प्रकृतिर्यस्य तं स्वसंसृष्टकर्ममिश्रवासनमित्यर्थः प्रपद्ये अनुसन्दधे यथा नृसिंहो भगवान् श्वेत इति नृसिंहमूर्तेर्भगवतः श्वेतत्वं विग्रहद्वारकं नत्वव्यवधानेन एवं क्षेत्रज्ञरूपस्य भगवतः क्षेत्रज्ञद्वारैव कर्मसम्बन्धाज्ञानादिकं न त्वव्यवधानेनेत्यर्थः ॥ ३८ ॥

एवं क्षेत्रज्ञशरीरत्वेनावस्थानं निर्दोषत्वं चोक्तम् अथ स्वेनरूपेणावस्थितिमाह। यत्पादेति। यद्वा तुभ्यमुपदिष्टभगवद्भक्तियोगं सर्वेऽपि मुमुक्षवोऽनुतिष्ठन्ति अतस्त्वमपि तमेवानुतिष्ठेत्याह।यत्पादेति। रिक्तेषु भगवद्व्यतिरिक्तेषु मतिः रिक्तमतिः अभगवदात्मकत्वबुद्धिर्वा न विद्यतेरिक्तमतिर्येषां ते नरिक्तमतयः तमेव मन्वाना इत्यर्थः निरुद्धस्रोतोगणाः निरुद्धः प्रत्याहृतः स्रोतोगणः इन्द्रियवर्गोयैस्ते सन्तः साधवः यस्य भगवतः पादपङ्कजयोः पलाशा इवाङ्गुलयस्तेषां विलासः कान्तिस्तस्याः भक्त्या कर्म च आशयश्चं कर्माशयम् आशयो वासनाग्रथितं स्वसम्बद्धमुद्ग्रथयन्ति नाशयन्ति तस्मात्त्वमपि तमेव अरणम् ऋगतौ करणे ल्युट् स्वप्रापकमित्यर्थः वासुदेवं भजस्व भगवद्भक्तिमन्तरेण संसारार्णवो दुस्तरः ॥ ३९ ॥

अतस्तमेव भजस्वेत्युपसंहरति । कृच्छ्र इति ।अप्लवेशा ईश्वराख्यप्लावरहिताः षड्वर्गनक्रं षडिन्द्रियवर्गग्राहं भवार्णवमिह दुःखेन ये तितीर्षयन्ति तर्तुमिच्छन्ति तेषां महान्कृच्छ्रः क्लेशः तत्तस्मात्त्वं हरेर्भगवतः भजनीयं सुखाराध्यमङ्घ्रिमुडुपं प्लवं कृत्वा व्यसनं दुःखात्मकं दुस्तरार्णं तर्तुमशक्यं भवार्णवमुत्तर पारं गच्छ ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

( जगतो हरिणा बुद्धिपूर्वं सृष्टत्वात्तत्प्रसादेन तस्य बन्धनिवृत्तिरन्यथोक्तानर्थ एवेत्याह । मनोमात्रमिति । इदं प्रत्यक्षप्रमाणसिद्धं विश्वं ब्रह्मादिस्तम्बपर्यन्तं हरेर्मनसामितं निर्मितं त्रातं रक्षितं मीयते संह्रियते मी हिंसायामिति धातोः अमात्रे अपरिच्छिन्ने मनसि स्थितत्वाद्वामनोमात्रं तदुक्तम् मनोमात्रं हरेर्यस्मान्मनसा मीयते जगदिति अत्र दृष्टान्तमाह । यथेति। कथं क्रियानामेति । तत्राह। क्रियाचेति स्वप्ने हरेरिच्छया जाग्रद्दृष्टकरितुरगादिवासनया निर्मिता मात्रन्ति प्रवर्तन्त इति मात्रम् ॥ व्याप्ते मनसि विष्णोश्च स्थितत्वाद्वासनामयमिति आच्छादन इति धातोः ईश्वरेच्छयाच्छाद्यमानत्वाद्वासन वस आच्छादनेत्यस्माद्धातोर्वा वासनामयमिति च यत् हरेरिच्छाधीनं जगदतो हरेरनीहायां सृष्टिव्यापारराहित्यावस्था सत्त्वादिगुणसाम्यलक्षणायां लीयते स्वस्वकारणानुप्रवेशपूर्वं व्यक्ततामाप्नोति न तु शून्यतां तदेतदाह । अनीहायामिति। हरेरिच्छाधीना जगतः स्थितिः अतो विष्णोरनीहायां सकलं जगदिति च ॥ ० ॥

ननु मुक्तैः कीदृशो विष्णुः प्राप्यत इति तत्राह । स्वयंज्योतिर्नित्याविलुप्तप्रकाशः साक्षात्तुर्य आत्मा जाग्रदाद्यनुभविनो जीवात्मनां भिन्नो विष्णुरनीहया अवस्थितस्तु द्व्यापारशून्य एव व्याप्तरूपी प्रसिध्यति प्राप्तं मुमुक्षुरितिशेषः अनीहावस्थ एवासौ मुमुक्षुभिरवाप्यत इति फलमाह । एवमिति । जीवपरयोरेवमुक्तविधस्वरूपं जानन्मुनिः भिदापरपर्यायामात्ममायां बन्धशक्तिं व्युदस्य परमेश्वरमुपगम्य सुखलक्षणां रतिं प्राप्य निर्मूलितसं भवेदित्यर्थः एवं विद्वान्बन्धशक्तिं व्युदस्य हरिमाप्नुते भिदा च माया च भ्रमश्चेत्याभिधीयते । बन्धशक्तिर्यया बम्भ्रमीत्यनिशं भुवीति च ॥ ० ॥

अनीहावस्थ एव मुमुक्षुभिःप्राप्य इत्युक्तं तत्स्पष्टमाचष्टे यत्रेति । निद्रा सुषुप्तिर्मूर्च्छामोहः अर्थदृग्जाग्रत् अनुवृत्तिर्जीवन्मुक्तिः अनुवृत्तिरिति प्राज्ञैर्जीवन्मुक्तिरुदीर्यत इति च निद्राद्यवस्थाः यत्र न सन्ति स्वशक्तिर्व्याञ्जता न भवन्ति जितात्मनो मनो जयवतो मुमुक्षोः प्राप्यं ब्रह्मेत्यन्वयः ॥ ० ॥

ननु जीवात्मा तदुपजीव्यः परमात्मा च कथं इत्याशङ्क्य तत्तत्त्वं विविच्योपदिशन्नाह। तत्त्वमिति। हेनरेन्द्र मनयोः स्थावरजङ्गमयोर्मध्ये विष्वगाधिनाना दुःखः जीवोऽसि स दुःखीति श्रुतिः तत्त्वं हृदि स्थितमवेहि हृदि आत्मेति श्रुतिः अनेन जीवात्मनो देहे कुत्रावस्थानमिति परिहृतेति ज्ञायते त्वं क इति तत्राह । सोऽस्मीति ।योऽहं तव शो जीवोऽस्मि तं मां ज्ञानान्म (१) हान्भवामीत्यवेहि अनेन तस्यज्ञानमावश्यकमित्युक्तं भवति अथ जीवस्वरूपज्ञानानन्तरमीश्वरज्ञानं प्रददामीत्याह । अथेति । यः क्षेत्रवित्क्षेत्रज्ञः सर्वान्तर्यामी सर्वस्य प्रत्यक् चकास्ति आभिमुख्येन प्रकाशते शरीरस्थोऽपि तन्मलाद्यलिप्ततया जीवव्यतिरिक्तो जीवस्योपकारित्वेन साक्षित्वेनावभासते स भगवांस्तुभ्यं सुखादि श्रीनारायण इत्यवेहि तं विशिनष्टि । जगतामिति । देहश्रोत्राणि चासवः प्राणाश्च धिषणा बुद्धिश्चात्माहंकारश्चेत्येतैरावृत जगतां जङ्गमानां तस्थुषां स्थावराणां च तत्त्वं सर्वसत्ताप्रदत्वात् तदुक्तम्

> सर्वसत्ताप्रदत्वात्तु सर्वतत्त्वं हरिः स्मृतः।
> सर्वत्र विततत्वाद्वा सोऽहं त्वमिति चोच्यते
> सर्वान्तर्यात्मकत्वात्तु न जीवात्मतया हरिरिति च।
> अभिमानस्त्वहंकार आत्माचेत्यभिधीयत इति

वचनात्तत्रात्माहंकारः व्यवधानेनान्वयोऽपि योग्य पेक्षया भवेदिति वचनात् सात्त्विकानां जीवपरभेदज्ञाने

---

१ तात्पर्योक्तमिदम् ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ष्टमुक्तिसाधने योग्यतामपेक्ष्य व्यवधानेनान्वयो युक्तः अनेनेतरेषा-
मभेदज्ञाने तमःसाधने योग्यतेति यथास्थितान्वय इति दर्शितं
किञ्च तत्त्वज्ञानस्य गोपनीयत्वेन परोक्षत्वस्य देवप्रीतिहेतुत्वात्
"परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विप" इति श्रुतेः । अतो यथा-
पाठमेवार्थं वदन्तोऽसुरप्रकृतित्वान्न मोक्षशास्त्राधिकारिण इति
बुद्धा सद्भिस्तत्सङ्गः परिहर्तव्यश्चण्डालसङ्गवदिति तात्पर्यम्॥३७॥

ननु मायाकल्पितपञ्चभूतात्मदेहे अत्रैव सुखदुःखे अनुभवति
अत्रैव संसरति अत्रैव मुच्यत इत्याचार्योक्तेः । विमुक्तश्च मुच्यत
इति श्रुतेश्चातो न स्वामिभृत्यभावेनात्र द्वयाङ्गीकारो युक्त इति
तत्राह । यस्मिन्निति । इदं सत्पृथिव्यादिकमसद्गगनादिकं जगद्य-
स्मिन्भगवति आत्मतया निजस्वरूपतया विभातीति योऽयमयो-
गिराद्धान्तः स मायाविवेकविधुंतिः माययोर्ज्ञानप्रकृत्यभिधेययो-
र्विवेकात् विजिर् पृथग्भाव इति धातोः ज्ञानदेहो हरिः पञ्च
भूतदेहो जीव इति पृथङ्निश्चितज्ञानाद्विधुतिर्विध्वंसो यस्यायो-
गिराद्धान्तस्य स तथोक्तः एतदेव दृष्टान्तेन स्पष्टयति । स्रजीति ।
स्रजि मालाकृतौ रज्ज्वावहिबुद्धिर्वा अयं भावः यथारज्जुतत्त्वा-
ज्ञानाद्रज्जौ सर्पज्ञानमुत्पन्नं गुरूपदेशात्सर्पणादर्वीशिरोलक्षणफ-
णाद्यभावज्ञानाद्वास्पर्शकार्कश्यज्ञानाद्वा विधूयते तथा प्रमाण-
बाहुल्यदर्शनात्तत्त्वज्ञानोपदेष्ट्राचार्यवाक्याद्वा ब्रह्मणो जगदात्मत्वं
विधूयते नित्यमुक्तत्वादिलक्षणानामनन्यसाधारणानां सत्वान्न
ब्रह्मणः संसारो युक्त इति स्पष्टयन् यच्छब्देनोक्तं तच्छब्देन परा-
मृश्य प्रपद्य इति क्रियापदेनान्वेति तमिति । जीवव्यावृत्त्यर्थं नित्य-
शब्दः प्रेत्यकमभिसम्पद्यते नित्यमुक्तं नित्यपरिशुद्धं च नित्यवि-
बुद्धं च सत्तत्त्वमनारोपितं रूपं तद्यस्य स च अत एव प्रत्यूढे निरस्ते
कर्मपुण्यपापलक्षणमदृष्टं सत्त्वादिगुणकलिलाप्रकृतिश्च येन स
तथा तं यत्स्वरूपतया भातमज्ञानाङ्गनादिकं विवेकज्ञानिना रज्जौ
सर्पभावद्विधूयते तं नित्यमुक्तभावेन निरस्तप्रकृतिं भजेत् "न
भ्रान्तिर्जगतो दृष्टिर्न भ्रान्तिर्हरिदर्शनम् । अन्योऽन्यात्मतया दृष्टि
र्भ्रान्तिरित्यवधार्यताम् । मायेति ज्ञाननाम स्यान्मायेति प्रकृतिस्तथा
ज्ञानस्वरूपं विष्णोस्तु प्रकृतिर्न हरेस्तनुः एवं विवेकिनो विश्वं
ब्रह्मरूपेण नेष्यते । पञ्चभूतात्मकं देहं विष्णोः पश्यन्त्ययोगिनः ।
तथा नयोगिराद्धान्तो ज्ञानदेहो यतो हरेः" इति प्रमाणबाहुल्यान्मा-
यादिशब्दानामुक्त एवार्थो न दुर्वादिकल्पित इति निरवद्यं सर्प
भावत् सर्पज्ञानवत् ॥ ३८ ॥

एवं विधसंसारोच्छेदे कारणं हरेः सर्वोत्तमत्वज्ञानं भक्त्य-
विनाभूतमतो भक्तिरेव प्रधानमित्याह । यत्पादेति । यस्य पादप-
ङ्कजयोः पत्रायमाणास्वङ्गुलीषु तत्तत्त्वं नोद्ग्रथयन्ति कुत इति
हेतुगर्भविशेषणमाह । विरुद्धेति । विरुद्धमार्गाः स्रोतोगुणाः संसार-
गुणा येषां ते तथोक्ताः संसारगुणानां विरुद्धत्वेन हेयत्वेन प्रती-
यमानत्वादित्यर्थः संसारगुणानां विरुद्धत्वेन प्रतीतौ किं कारण-
मितिचेन्न नैजः सर्वगुणोत्कर्षस्वभावो दुस्त्यजः तदुक्तम् ।

नैजः सर्वगुणोत्कर्षः सर्वेभ्यो महदुच्यत

इति च अनेन तत्त्वज्ञानिषु तत्तद्गुणोत्कर्षो महत्त्वकारण-
मित्युक्तम् भवति द्विमतौ च ज्ञानदौर्बल्यं कारणम् ।

अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः ।
एकस्तद्वेद भगवान् प्रभुर्नारायणो विराडिति ॥

अनेन श्रीनारायणादृते सर्वेषामिति द्वामत्यं सम्भाव्यत इति
सूचितम् अतस्त्वं तं वासुदेवमरणं शरणं व्रजेत्यन्वयः ॥ ३९ ॥

संसारोत्तारहेतुत्वाद्भक्तेरेव सर्वगुणोत्कृष्टत्वमित्यभिप्रेत्याह ।
कृच्छ्र इति । अप्लवेशा भक्तिलक्षणतरीरहिताः षड्वर्ग एव नक्रो
यस्मिन् स तथा तं भवार्णवं ये तितीर्षन्ति तर्तुमिच्छन्ति तेषामिह
महान् कृच्छ्र इति । यस्मात्तस्मात्त्वं हरेर्भजनीयमङ्घ्रिमुडुपं नावं
कृत्वा व्यसनं विविधापद्युक्तम् दुस्तरार्णवं ज्ञाननावं विना तर्तुम-
शक्यं संसारसमुद्रमुत्तरेत्यन्वयः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्त्वमिति । अनावृतानामिति चित्सुखः । चित्तपतेति सम्ब-
न्धोक्तिः सोऽस्मीति तदंशत्वं नित्यतदधिष्ठानत्वं वा । तस्मिन्
परमप्रेमास्पदत्वव्यञ्जनार्थमेवोक्तम् । सोऽस्तीतिपाठेऽपि क्षेत्रवित्त
पतयेति विशेषणेन तदर्थमेव ज्ञेयं नतु विवर्त्तवादिनामिव स्थाणु-
पुरुषवत् कल्पनामयामित्याभिप्रायात् ॥ ३७ ॥

यस्मिन् श्रीभगवति तं प्रपद्य इत्यनेन सोऽस्तीत्येव पाठः
स्थापितः॥ ३८ ॥

त्वदभीष्टा श्रीहरिभक्तिस्तु सर्वत्र परमश्रेयोरूपेत्याह । यत्-
पादेति द्वाभ्याम् । तद्वत्तत्तद्विमतयइति चित्सुखः ॥ ३९ ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स च केवलमोक्षो भक्तेर्गुणाभावे ऽपि निर्भेदब्रह्मज्ञान-
सिद्ध्या स्यादित्याह । तत्तस्माज्जगतां जङ्गमानां तस्थुषां स्थावरा-
णाञ्च देहेन्द्रियप्राणबुद्ध्यहङ्कारैरावृतानां हृदि यश्चकास्ति प्रका-
शते तं परमात्मानमवेहि जानीहि । ज्ञानप्रकारमाह । सोऽस्मीति
भानुकिरणस्यापि भानुत्वमिव शुद्धपरमात्मकिरणोऽहं परमा-
त्मैव ननु मायेति सोऽस्तीति पाठे स एकोऽस्ति नान्य इत्यर्थः ।
ननुजीवो हृदि चकास्ति तत्राह । विष्वक्सर्व्वतो भावेन आविः
प्रकटमेव क्षेत्रविदं जीवं तपति नियमयतीति क्षेत्रवित्तपस्तस्य
भावस्तत्ता तया अन्तर्यामिरूपेणेत्यर्थः । कीदृशं चकास्ति प्रत्यक्
प्रतिलोमम् ॥ ३७ ॥

स्थावरजङ्गमादीनां हृदि चकास्तीत्युक्तेस्तेषां पृथक् सत्त्वं
तत्सम्बन्धादीश्वरस्यापि मालिन्यं प्रसक्तं निराकुर्वन् प्रणमति
यस्मिन्निदं विश्वं सदसदात्मतया उत्कृष्टनिकृष्टभावेन कार्य्य-
कारणभावेन वा स्थितं माया विभाति मायात्वे हेतुः विवेकेनैव
विधुतिर्निराकृतिर्यस्य तत् । विवेकश्चायं विश्वस्य मायिकत्वा-
न्मायात्वेन मायायाश्च परमात्मनो बहिरङ्गशक्तित्वात् जीवस्य च
तत्तटस्थशक्तित्वात् शक्तिशक्तिमतोर्भेदाभावमननात् निर्भेदात्म-
ज्ञानमेवेति । स्रजि अहिबुद्धिर्वेति वा शब्देन विवर्त्तवादिनां
विवर्त्तवादेन वा निर्भेदात्मज्ञानसिद्धिरिति परमतञ्च दर्शितम् ।
तं नित्यमुक्तम् । यतः परिशुद्धं तत्कुतः यतो विशुद्धं तत्त्वं सत्त्वं
प्रत्यूढा अभिभूता भवति कर्म्मभिः कलिला मलिना प्रकृतिर्यस्मात्
तं प्रपद्य इति प्रपत्तिरूपया भक्त्या विना मोक्षो न भवेदिति भक्ते-
रङ्गत्वमभिव्यज्य गुणभावो दर्शितः ॥ ३८ ॥

तदेवं सा श्रद्धयेत्यादिना भक्तेः प्राधान्ये ज्ञानमिश्रया भक्त्या
साध्यां मुक्तिसहितां शान्तरतिमुक्त्वा तत्त्वं नरेन्द्रेति श्लोकद्वयेन
भक्तिमिश्रज्ञानसाध्यां सायुज्यमुक्तिञ्च दर्शयित्वा तमवेहि सोऽ
स्मीति पदैस्तस्य शुद्धदास्यभक्त्यैक स्पृहस्य तत्रारुचिमभिप्रेत्य

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भक्तेः कैवल्ये शुद्धभक्त्या तदभीष्टया साध्यं प्रेमाणमानुषङ्गिक-मुक्तिकं वदंस्तामेव भक्तिं सर्वथोत्कर्षयति । यत् पादेति द्वाभ्याम् । यस्य पादपङ्कजयोः पलाशान्यङ्गुलयस्तेषां विलासभक्त्या विशेषेण लासः प्रतिक्षणवर्द्धमाना कान्तिर्यस्यां तया साधनरूपया भक्त्या साध्यरूपया च । यद्वा । विलासयुक्तया भक्त्या विविधाद्भुत-शिल्पया अभ्यञ्जनोद्वर्त्तनस्नपनसचाकूचिक्यप्रसाधनादिसप-र्य्यया । यद्वा । अङ्गुलीनां विलासः कान्तिस्तस्य भक्त्या स्मृत्यापीत्यर्थः । कर्माशयं कर्म्मवासनामयमहङ्कारं ग्रथितम् । येनैव स्वकर्मणा तद्विपरीतेन भगवत्कर्म्मणा उद्ग्रथयन्ति । सन्तो वैष्णवाः तद्वत् यतयः सन्यासिनो न कुतः । रिक्ता निर्विषया अविद्यमाना मति-र्येषां ते रिक्तधना इव निर्बुद्धयोऽसन्तश्चेत्यर्थः । सन्तस्तु भगव-द्विषयमतयः सुबुद्धय एवेति भावः । निरुद्धो नद्यादेः स्रोतसा-मिवेन्द्रियाणां गणो यैः । नहि स्रोतांसि निरोद्धुं शक्यानि भव-न्तीति निर्बुद्धित्व चिह्नमेतदेवेति भावः । सन्तस्तु भगवत्सौन्दर्य्या-मृतादिषु प्रसारितचक्षुरादीन्द्रियगणाः सुधियः सुखिनश्चेति भावः । तमरणं शरणं वसुदेवनन्दनं भज श्लेषेण अरणं निःसंग्राम-मेव अन्यथा तव इन्द्रियैः सह संग्रामो भविष्यति तत्र च त्वमेव पराभूतो भविष्यसीति भावः ॥ ३९ ॥

तैर्यतिभिः संसारतरणं न सुकरमित्याह । कृच्छ्र इति । अप्लवेशां नप्लवस्तरणे हेतुः ईट् समर्थः ईशो हरिर्वा येषां तेषां महान् इह कृच्छ्रः क्लेशः । यत इन्द्रियषड्वर्गनक्रं भवार्णवमसुखेन तर्त्तुमिच्छन्ति नतु तरन्तीत्यर्थः । यदि कामादितरङ्गैर्न हन्यमानः षडिन्द्रियन-क्रैश्च न चर्व्यमाणः स्वयञ्च बलिष्ठः श्रान्तोऽप्यनलसः स्यात् तदा ज्ञानवैराग्याभ्यां दोर्भ्यां चिरेणैव कथञ्चिदेव तेषां मध्ये कोऽपि कष्टेनैव तरतीति भावः । तस्मात्त्वं हरेरङ्घ्रिमुडुपं प्लवं कृत्वा व्यसनं संसारदुस्तरार्णवमुत्तर । अत्रोडुपं कृत्वेति समा-श्रिता ये पदपल्लवमिति त्वत्पादपोतेन महत्कृतेनेत्याद्युक्ते-र्हरिपदप्लवाश्रयणमात्रेणैव भवार्णवस्य गोवत्सपदप्रमाणत्वे जाते तत्तरणे खलु कः प्रयास इति प्लवारोहणं नाशङ्क-नीयम् ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ जीवब्रह्मणोः "तत्त्वमसि क्षेत्रज्ञं चापि मां विद्धि आत्मत्वे-नावगच्छन्ति ग्राहयन्ति च" इत्यादिश्रुतिसूत्रसाधितभेदसहिष्णुव-भेदलक्षणसामानाधिकरण्यभावनया भगभङ्गजनेन संसारमुत्त-रेत्याह । तदिति चतुर्भिः । यस्मान्मोक्ष एवार्थ आत्यन्तिकतयेष्य-ते । त्रैवर्गिकोऽर्थो नित्यं कृतान्तभयसंयुतस्तस्मात् हे नरेन्द्र ! त्वं मोक्षसिद्धये जगतां जङ्गमानां तस्थुषां स्थावराणां च देहादिभिः आत्मनाहङ्कारेण चावृतानां व्यासानां हृदि प्रत्यक् यश्चकास्ति प्रकाशते तं सोऽस्मीत्यवेहि तदात्मकोऽस्मीति भावय ननु हृदि ह्ययमात्मेति श्रुत्या किं क्षेत्रज्ञः स इत्यत्राह । क्षेत्रविदो जीवान् तपति नियमयतीति क्षेत्रवित्तपस्तस्य भावस्तत्ता तया विश्वक् सर्वतः आविः प्रकटः ॥ ३७ ॥

मुमुक्षुजनशिक्षार्थे श्रीपृथुं प्रत्युपदिष्टा ब्रह्मात्मकत्वभावनाथ स्वयमपि तथैव भावनया हरिं शरणं व्रजति भगवान् सनत्कुमारः यस्मिन्निति । तं भगवन्तम् आत्मतयोक्तश्रुतिस्मृतिसूत्रोक्तेनात्मत्वेन भेदसहिष्णुवभेदेन प्रपद्ये शरणं गच्छामि स्वरूपेण नि[...] चिदचिदात्मकस्य जगतः सर्वं खल्विदं ब्रह्म तज्जलानि[...] श्रुत्या ब्रह्माभिन्नत्वकथनात् भगवन्तमात्मत्वेन पृथुं प्रति [...] षित्वा स्वयं गृहीत्वा भगवतः स्वरूपेण जीवेभ्यो वैलक्षण्यमा[...] प्रसिद्धं स्रजि अहिबुद्धिरिव इवार्थे वाशब्दः देवत्वमनुष्य[...] बुद्धिरूपं विवेकविधुति ज्ञाननिवर्त्यमज्ञानं यस्मिन् आविर्भा[...] विभाति नास्तीत्यर्थः । तत्र हेतुगर्भं विशेषणं प्रत्यूढकर्म[...] प्रकृतिमिति प्रत्यूढा सर्वदा दूरीभूता कर्मभिः कलिता [...] प्रकृतिः स्वभावो यस्मात्तम् कर्मभिरनावृतं सर्वज्ञमित्यर्थः [...] सत् मुक्तत्वमसत् बद्धत्वं च मायादम्भाद् मालिन्यं च [...] भाति तं प्रपद्ये तत्र हेतुगर्भं विशेषणं नित्यमुक्तपरिशुद्धवि[...] तत्त्वमिति ॥ ३८ ॥

अहं तं प्रपद्ये शरणं गतोऽस्मीत्युक्तमिदानीं त्वमपि [...] भजेत्याह यदिति । तमरणं शरणं भक्तरक्षितारं भज ननु ज्ञा[...] त्रेण मुक्तिः स्यादेव किं भक्त्या-इत्यत आह । यस्य पाद[...] जयोः पलाशानि अङ्गुलयस्तेषां विलासो विहारो यत्र तस्य [...] ङ्गुलिसंस्पृष्टस्य रेणोरपि भक्त्या सन्तः साधवः ग्रथितमना[...] सम्बद्धं कर्माशयं कर्मकोशरूपं हृदयग्रन्थिमुद्ग्रथयन्ति रिक्त[...] भक्तिरहितबुद्धयोरुद्धस्रोतोगणाः वशीकृतेन्द्रियवर्गा अपि [...] ज्ञानादिबहुसाधनपरा अपि तद्वत् न उद्ग्रथयन्ति तमा[...] प्रपद्ये त्वमपि तमेव तथैव भजेति भावः ॥ ३९ ॥

हरिभक्तिरहिताः यतयः कर्माशयं नोद्ग्रथयन्ति यतस्तेषाम[...] शां नास्ति प्लव ईष्टे इतीट् ईश्वरो येषां हरिविमुखानामिह भव[...] वतरणे महान् कृच्छ्र एव हरिभक्तिहीनज्ञानवैराग्येन्द्रियदमन[...] रूपः क्लेश एव यतोऽसुखेन हरिभक्तिहीनेन ज्ञानादिप्र[...] ते षड्वर्गनक्रं इन्द्रियषड्वर्गग्राहं भवार्णवं तितीर्षयन्ति त[...] हरेः अङ्घ्रिमुडुपं नावं कृत्वा व्यसनं दुःखरूपम् दुस्तरार्ण[...] यान्तरैर्दुःखेनापि तर्त्तुमशक्यं भवार्णवमुत्तर ॥ ४० ॥

---

### भाषाटीका ।

हे नरेन्द्र ! तिस कारण से देह इन्द्रिय प्राण बुद्धि अहं[...] इनों से आवृत जो स्थावर जङ्गम तिनके हृदय में जो भग[...] जीवान्तर्यामी होकर प्रत्यक्ष होकर प्रकाश मान हैं उनको [...] जानो कि हमारे अन्तर्यामी हैं ॥ ३७ ॥

विवेक से नाश होने वाली माया जो कि परमेश्वर में [...] कारण रूप से ज्ञात होती है जैसे कि रस्सी में सर्प [...] बुद्धि वो भगवान् नित्य मुक्त हैं सब प्रकार से शुद्ध हैं [...] स्वरूप हैं कर्मों से मलिन प्रकृति के दूर करने वाले हैं [...] में शरण प्राप्त हूं ॥ ३८ ॥

जिनके चरण कमल के पत्ररूपी अगुलियों की कान्ति [...] स्मरण से महात्माजन कर्म वासनाकि ग्रन्थिकों जैसे [...] करते हैं तैसे भगवद्भक्ति से रहित सब इन्द्रियों के रोकने [...] भी योगी जन ग्रन्थिकों नहीं दूर कर सकते हैं ऐसे आश्र[...] वासुदेव भगवान् को भजो ॥ ३९ ॥

छैः इन्द्रिय समूह रूपी मगर है जिसमें ऐसा संसार [...] समुद्र को दुःख रूपी योगादि उपायों से जो तरने चाहें [...] ईश्वररूपी नौका नहीं होने से उनको उसका तरना बड़ा [...]

॥ मैत्रेय उवाच ॥

स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा।
दर्शितात्मगतिः सम्यक् प्रशस्योवाच तं नृपः ॥ ४१ ॥

॥ राजोवाच ॥

कृतो मेऽनुग्रहः पूर्वं हरिणाऽऽर्तानुकम्पिना।
तमापादयितुं ब्रह्मन्! भगवन्! यूयमागताः ॥ ४२ ॥
निष्पादितश्च कार्त्स्न्येन भगवद्भिर्घृणालुभिः।
(१) साधूच्छिष्टं हि मे सर्वमात्मना सह किं ददे ॥ ४३ ॥
प्राणा दाराः सुता ब्रह्मन्! गृहाश्च सपरिच्छदाः।
राज्यं बलं मही कोश इति सर्वं निवेदितम् ॥ ४४ ॥

भाषाटीका।

है तिससे तुम भजने योग्य भगवान् के चरण को नौका करके दुस्तर संसार सागर को तरजाओ ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

आत्ममेधसा ब्रह्मविदा दर्शिता आत्मनोगतिस्तत्त्वं यस्मै सः॥४१॥

ब्रह्मन्निति सम्बोधनं प्राधान्यादेकस्य यूयमित्युक्तिः सर्वान्प्रति ॥ ४२ ॥

आत्मना देहेन सह सर्वं राज्यादिकं मदीयं साधूच्छिष्टं साधुभिः स्वीयंसत् मह्यं प्रसादरूपेण दत्तमतस्तत्र मम स्वत्वाभावाद्गुरुदक्षिणार्थं किन्ददे न हि पित्रा दत्तं मोदकादि तस्मै दानरूपेण प्रत्यर्प्यते ॥ ४३ ॥

निवेदनन्तु तदीयस्यैव समर्पणं यथा भृत्यो राज्ञे सेवादिरूपेण ताम्बूलादिकमर्पयति तथा मयापि सर्वं निवेदितं स्वीकुरुतेत्याह। प्राणा इति ॥ ४४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

आत्ममेधसा ब्रह्मविदा ब्रह्मपुत्रेण सनत्कुमारेण दर्शिता आत्मनो गतिस्तत्त्वं यस्य स नृपः पृथुः सम्यक् प्रशंसां कृत्वा तं कुमारमुवाच ॥ ४१ ॥

आर्तानां तापत्रयातुराणाम् अनुकम्पिना हरिणा पूर्वं मे महामनुग्रहः कृतः हे ब्रह्मन्! भगवन्! तमनुग्रहमापादयितुं निष्पादयितुं यूयमत्रागताः ॥ ४२ ॥

दयालुभिर्भवद्भिर्यत्समीहितं कार्त्स्न्येन निष्पादितं ब्रह्मोपदेष्टे तुभ्यं मदीयं किन्देयमस्तीत्याह। साधूच्छिष्टमिति। आत्मना देहेन सह सर्वं मे मदीयं साधूनामुच्छिष्टं साधूनामनुग्रहलब्धमित्यर्थः अतो भवदनुग्रहाल्लब्धं भवद्भ्यः किन्ददे गुरुदक्षिणार्थं किं ददे नह्यनुग्रहात् पित्रा दत्तं पुनस्तस्मै दीयत इत्यर्थः ॥ ४३ ॥

यद्यप्येवं तथापि राज्ञे भृत्येनेव मया निवेदितं स्वीकुरुतेत्याह। प्राणाइति। प्राणाः असवः रायः धनानि सपरिच्छदाः सोपकरणा गृहा राज्यं बलं मही कोशः सह्यात्मकोशः पञ्चाकारत्वात्कोश इत्युक्तम् यद्वा कोशः रत्नभाण्डादिरूपः रैशब्दस्तद्व्यतिरिक्तधनपरः इति शब्दः प्रकारे एवं विधमन्यत्सर्वमपि निवेदितं तुभ्यं मयेति शेषः ॥ ४४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इतः परमुपदेष्टव्यांशो नास्त्यतः परं राज्ञा किमुक्तमत्राह। स एवमिति। आत्मनो हरेर्मेधा ज्ञानं यस्य स तथा तेन मनो योगवता वा ॥ ४१ ॥

किमवोचत्तत्राह। कृत इति ॥ ४२ ॥

तदपूरणे भगवदागमनेनापि किं प्रयोजनमिति शङ्कांशो नास्तीत्याशयेनाह। निष्पादितमिति। घृणालुभिर्दयाशीलैः एवमुपकर्तृभ्यो युष्मभ्यं कापि गुरुदक्षिणा मया दातव्या तद्गुरुदक्षिणालक्षणं किं धनमात्मना देहेन सह ददे ददामि न मम किञ्चित्स्वाधीनमस्तीत्यर्थः राज्यादिकमस्ति चेत्सर्वं तत्साधुभ्यो दत्तं तदधीनमहं कथं दास्यामि परकीयदानाच्चौर्यमापद्यत इतिभावेनोक्तं साधुदत्तमिति ॥ ४३ ॥

ननु तथापि साधुभिरात्मसात्कृतं राज्यादिकं तद्दातव्यमिति चेत्सत्यं तद्दातुं योग्यं चेद्दास्यामीत्याह। प्राणा इति। रायो वित्तानि ॥ ४४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

आत्ममेधसापि दर्शिता आत्मनः स्वस्य गतिः भगवद्रूपा यस्मै सः ॥ ४१ ॥

अतएवान्तःस्वभक्तिस्थापकतत्तदभिप्रायकश्रीभगवदावेशमयतदुपदेशलाभेनानुमोदते। कृत इति ॥ ४२ ॥

निष्पादितमिति चित्सुखः। घृणालुभिरिति चित्सुखस्यापि मतः। ननु घृणात्मभिरिति। साधुभिर्भगवद्भृन्दैर्भृग्वादिभिरुच्छिष्टं यज्ञान्ते मया दत्तं सत् निजोच्छिष्टवन्मध्येव समर्पितं तादृशमनादरणीयं किं ददे ॥ ४३ ॥

(१) साधुदत्तमितिश्रीविजयध्वजतीर्थः।

सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ ४५ ॥
(१) स्वमेव ब्राह्मणो भुङ्क्ते स्वम्वस्ते स्वं ददाति च ।
तस्यैवानुग्रहेणान्नं भुञ्जते क्षत्रियादयः ॥ ४६ ॥
यैरीदृशी भगवतो गतिरात्मवाद एकान्ततो निगमिभिः प्रतिपादिता नः ।
तुष्यन्त्वदभ्रकरुणाः स्वकृतेन नित्यं को नाम तत्प्रतिकरोति विनोदपात्रम् ॥ ४७ ॥

॥ मैत्रेयउवाच ॥

त आत्मयोगपतय आदिराजेन पूजिताः ।
शीलं तदीयं शंसन्तः खेऽभूवन्मिषतान्नृणाम् ॥ ४८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

साधुभ्यो दत्तमेव विवृणोति । निवेदितं निवेदनरूपेणैव दत्तं पूर्वं तैरेव प्राणादीनां मह्यं समर्पितत्वात् ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आत्ममेधसा आत्मविदा ॥ ४१ ॥

ब्रह्मन्निति सनत्कुमारस्यैकस्य प्राधान्यात् यूयमिति सर्व्वान् प्रत्युक्तिः ॥ ४२ ॥

गुरुदक्षिणार्थं दातुं किमपि न पश्यामीत्याह। साधूच्छिष्टमिति। साधुभिर्युष्माभिरेव भृग्वादिभिः स्वीयं राज्यादिकं प्रसादीकृत्य मह्यं दत्तं कथं पुनर्दास्यामि पित्रा दत्तस्य ताम्बूलचर्वितस्य तस्मै प्रतिदानानौचित्यात् ॥ ४३ ॥

ननु साधूनां राज्यादिषु कथं स्वत्वं जातं तत्राह । प्राणा इति । अश्वमेधयागान्ते प्राणादिकं सर्व्वं मया पूर्व्वमेव दत्तं पुनश्च तैर्निजोच्छिष्टं मह्यमेव समर्पितमिति भावः ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मनि परमात्मनि श्रीकृष्णे मेधा यस्य तेन दर्शितात्मनः परमात्मनो गतिस्तत्त्वं यस्मै सः ॥ ४१ ॥

ब्रह्मन् इति भगवन्निति च सम्बोधनं सर्वेषां तुल्यस्वभावत्वात् यूयमिति बहुवचनं तद्बहुत्वविषयम् । तमनुग्रहमापादयितुं साधयितुम् ॥ ४२ ॥

स चानुग्रहो घृणालुभिः कृपालुभिः निष्पादितः आत्मना सह देहेन सह सर्वं राज्यादिकं साधूनामुच्छिष्टवदनपेक्ष्यमतः किं ददे ॥ ४३ ॥

यद्यप्यनपेक्ष्यं तथापि गुरुनिष्कृत्यर्थं यदस्ति तद्देयमेवेत्याह । प्राणा इति । तत्रापि अन्यत्र दानं सम्भवति गुरुरूपिणो हरेस्तु सर्वं स्वत एवास्ति अतो भवदीयमेव प्राणादिकं सर्वं निवेदितं सर्वं निवेदितमर्पितं स्वीकुरुत ॥ ४४ ॥ ४५ ॥ ४६ ॥

---

भाषाटीका ।

मैत्रेयजी बोले आत्मज्ञानी ब्रह्मपुत्र सनत्कुमार जी ने इस प्रकार आत्मका ज्ञान उपदेश किया तब महाराज [illegible] प्रशंसा करके बोले ॥ ४१ ॥

महाराज बोले हे ब्रह्मन् ! हे भगवन् ! दुःखितों पर [illegible] करने वाले श्री हरिने पहिले अनुग्रह किया था तिसी को स[illegible] दन करने को आप सब आये हो ॥ ४२ ॥

आप दयालु हैं आप लोगों ने भगवान् के अनुग्रह को [illegible] प्रकार से सिद्ध करदिया हमारे सब पदार्थ साधु महात्मो[illegible] उच्छिष्ट है तो मैं आपको क्या देने लायक हूं ॥ ४३ ॥

हे ब्रह्मन् ! प्राण स्त्रीजन पुत्र सब सम्पत्ति सहित गृह[illegible] सेना पृथिवी अथवा खजाना यह सम्पूर्ण मैंने आपको [illegible] किया है ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मनः स्वत्वाभावं प्रपञ्चयति। सैनापत्यञ्चेति द्वाभ्याम् [illegible] वस्ते परिधत्ते अन्नमात्रं केवलं भुञ्जते नतु दाने स्वतन्त्राः [illegible]

सत्यपि स्वत्वे सर्वस्वेनापि न गुरोः प्रत्युपकर्तुं शक्यमित्[illegible] यैरिति । आत्मवादेऽध्यात्मविचारे एकान्ततो निश्चयेन निगमि[illegible] विद्भिः ते नित्यमनल्पकरुणाः स्वकृतेनैव दीनोद्धरणकर्मणा तुष्[illegible] को नाम तत्कृतमुपकारं प्रति स्वयमुपकरोत्युदपात्रमञ्जलि[illegible] मयाञ्जलिरेव तेभ्योबद्ध इत्यर्थः । यद्वा विनोदपात्रमुपहासास्पद[illegible] प्रत्युपकारे प्रवृत्तो जनानामुपहासास्पदं भवेदित्यर्थः ॥ ४७ ॥

खेऽभूवन्नाकाशमार्गेणोद्गताः ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ननु मद्योग्यमेव मह्यं समर्पणीयं तत्राह । सैनापत्यम् । [illegible] नायकत्वं दण्डनेतृत्वं दण्डनायकत्वं तथा सर्वलोकाधिपत्यं [illegible] शास्त्रविदर्हति ॥ ४५ ॥

एतदेवोपपादयति। ब्राह्मणः स्वमेव स्वीयमेवान्नं भुङ्क्ते [illegible]

(१) अयं श्रीविजयध्वजतीर्थ मतेनास्ति ।

**वैन्यस्तु धुर्यो महतां संस्थित्याध्यात्मशिक्षया ।**
**आप्तकाममिवात्मानं मेन आत्मन्यवस्थितः ॥ ४९ ॥**
**कर्माणि च यथाकालं यथादेशं यथावलम् ।**
**यथोचितं यथावित्तमकरोद्ब्रह्मसात्कृतम् ॥ ५० ॥**

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

मेव वस्त्रादिकं वस्ते परिधत्ते ददाति च क्षत्रियादिभ्यः तस्यैव ब्राह्मणस्यैवानुग्रहेण लब्धमन्नं क्षत्रियादयो भुञ्जते ॥ ४६ ॥

सत्यपि स्वत्वे सर्वस्वेनापि न गुरोः प्रत्युपकर्तुं शक्यमित्याह । यैरिति । आत्मवादे अध्यात्मविचारे एकान्ततो निश्चयेन निगमिभिः निगमानुसारिभिः यैर्युष्माभिः ईदृशी दुस्तरमहाव्यसनात्मकसंसारार्णवनिस्तरणोपायभूता नः अस्मभ्यं प्रतिपादिता ते नित्यमतल्प करुणाः भवन्तः स्वकृतेन आर्तोद्धरणकर्मणा तुष्यन्तु को नाम स्वकृतमुपकारं प्रति स्वयमुपकरोति उदपात्रं तोयाञ्जलिं विना उदकप्रदानपूर्वकमञ्जलिबन्धनमेव तस्य प्रत्युपकार इत्यर्थः ॥ ४७ ॥

आत्मयोगं पान्ति अनुष्ठानानुष्ठापनाभ्यामित्यात्मयोगपतयस्ते सनकादयः आदिराजेन पृथुना पूजिताः सन्तः तदीयं पृथोः सम्बन्धि शीलं प्रशंसन्तः नृणां मिषतां पश्यतां सतां खे अभूवन् खमाकाशमारूढा इत्यर्थः ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

युष्मभ्यं सर्वं निवेदितमिति मोहादुक्तं तत्त्वन्तव्यं सर्वस्य युष्मदीयत्वाच्च मया दातव्यमित्याह । सैनापत्यमित्यादिना ॥ ४५ ॥ ४६॥

किं बहुनालापेनेदमेव भवदर्हणमित्याह । यैरीदृशीति । निगमिभिर्वैदिकैरात्मवादे वेदान्ते एकान्ततो मुख्येन निर्णीतत्वात् यैर्भवद्भिरीदृशी हरेर्गतिरस्माकं प्रतिपादिता ते यूयं स्वकृतेन तुष्यध्वमित्यन्वयः किं नीरसमधुरवचनेनेत्युक्तं तुष्यन्त्विति ॥ ४७ ॥

तत्प्रियवचनान्ते तैः किमकारीत्यत्राह । त आत्मेति । आत्मयोगस्याध्यात्मयोगस्योपदेष्टृत्वेन पतयः मिषतां पश्यतां खे आकाशे ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र हेतुमाह । सैनापत्यमिति ॥ ४५ ॥

स्वमिति । ब्राह्मणस्यैवाज्ञया सर्व्वं दातव्यं तदन्यथा तु दोषाय स्यादिति तात्पर्यम् ॥ ४६ ॥

स्वकृतेन दीनोद्धरणकृतिरूपस्वभावेनेत्यर्थः । टीकायां द्वितीयार्थे प्रत्युतविनोदपात्रं भवतीति योज्यम् ॥ ४७ ॥

अत्र मैत्रेय उवाचेति क्वचित् । योगगतय इति चित्सुखस्यासम्मतः ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु सैनापत्यादिभिः किं फलं ब्राह्मणस्येति तत्राह । सैनेति । मास्तु फलमेतैस्तस्य तदपि तस्यैव दानपात्रत्वात् स एव कृपया ग्रहीतुमर्हतीति भावः ॥ ४५ ॥

यस्मादेवं तस्मात् स्वयमेवेत्याह । वस्ते परिधत्ते ॥ ४६ ॥

सत्यपि स्वत्वे सर्व्वस्वेनापि नैव गुरोः प्रत्युपकर्तुं शक्यमित्याह । यैरिति । आत्मवादे अध्यात्मविचारे निगमिभिर्वेदविद्भिः स्वकृतेनैव दीनोद्धारकर्मणा स्वाभाविकेन तत्प्रत्युपकरोति को नाम न कोऽपि उदपात्रमञ्जलिं विनेति मयाञ्जलिरेव बद्ध इति भावः । यद्वा विनोदपात्रमुपहासास्पदं प्रत्युपकारे प्रवृत्तो जनो जनानामुपहासास्पदं भवेदित्यर्थः ॥ ४७ ॥

खेऽभूवन्नाकाशमार्गेण सत्यलोकं गताः ॥ ४८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यैर्निगमिभिर्वेदान्तविद्भिः आत्मवादे परमात्मस्वरूपविचारे भगवतः परमात्मनः गतिस्तत्त्वमेकान्ततो मुख्यनिर्णयेन सिद्धान्तनिश्चयेनेत्यर्थः नः प्रतिपादिता ते नित्यमदभ्रकरुणाः तेनैव अनन्तरोपकरणत्वगुणेन स्वकृतेन स्वकीये शिष्ये मयि कृतेन स्वदुपदेशद्वारा प्रकाशितेन तुष्यन्तु उदपात्रमञ्जलिमात्रं विना न तत्प्रति करोति ॥ ४७ ॥

खेऽभूवन् आकाशे अगमन् ॥ ४८ ॥

---

### भाषाटीका ।

सेनापति का अधिकार राजका अधिकार दण्डदाता का अधिकार सबलोकों का अधिकार वेदशास्त्र जानने वाले ब्राह्मण ही को होना योग्य है ॥ ४५ ॥

ब्राह्मण अपने ही पदार्थों को भोगता है अपने ही वस्त्र को पहरता है अपने ही पदार्थ को देता है ब्राह्मण के ही अनुग्रह से क्षत्रियादिक सब पदार्थ को भोगते हैं ॥ ४६ ॥

आप लोग वेदार्थ के जानने वाले हैं आपने आत्मा के प्रसंग मे अत्यन्त करके इस प्रकार का मार्ग हमको बताया है आप लोग बडे दयालु हो अपने किये के उपकार से आपको संतुष्ट होना चाहिये और कौन ऐसा है कि जो केवल हाथ जोडने के विना कुछ आपका प्रत्युपकार कर सके ॥ ४७ ॥

मैत्रेयजी बोले वे आत्म ज्ञानीयों मे श्रेष्ठ मुनिजन पृथु महाराज से पूजित भये महाराज के गुणों की प्रशंसा करते हुये मनुष्यों के देखते देखते आकाश मार्ग मे चले गये ॥ ४८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

धुर्यो मुख्यः अध्यात्मशिक्षया संस्थितिरेकाग्रता तयात्मन्यवस्थितः सन्मेने ॥ ४९ ॥

ब्रह्मसात्कृतं ब्रह्मण्यर्पितं यथा भवति तथा ॥ ५० ॥

फलं ब्रह्मणि विन्यस्य निर्विषङ्गः समाहितः ।
कर्माध्यक्षञ्च मन्वान आत्मानं प्रकृतेः परम् ॥ ५१ ॥
गृहेषु वर्त्तमानोऽपि स साम्राज्यश्रियान्वितः ।
नासज्जतेन्द्रियार्थेषु निरहम्मतिरर्कवत् ॥ ५२ ॥
एवमध्यात्मयोगेन कर्माण्यनुसमाचरन् ॥
पुत्रानुत्पादयामास पञ्चार्चिष्यात्मसम्मतान् ॥ ५३ ॥
विजिताश्वं धूम्रकेशं हर्यक्षं द्रविणं वृकम् ।
सर्वेषां लोकपालानां दधारैकः पृथुर्गुणान् ॥ ५४ ॥
गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः ।
मनोवाग्वृत्तिभिः सौम्यैर्गुणैः संरञ्जयन् प्रजाः ॥ ५५ ॥
राजेत्यधान्नामधेयं सोमराज इवापरः ।
सूर्यवद्विसृजन् गृह्णन् प्रतपंश्च भुवो वसु ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निर्विषङ्गः कर्मस्वनासक्तः कर्माध्यक्षं कर्मसाक्षिणमुदासीनं मन्वानोऽकरोदिति पूर्वेणैवान्वयः नासज्जतेत्युत्तरेण वा ॥५१-५२॥
अर्चिषि भार्यायाम् ॥ ५३ ॥ ५४ ॥ ५५ ॥

सोमश्चासौ राजा च स इव भुवो वसु धनं गृह्णन्विसृजंश्चासौ सूर्यवत् राज्ञः प्रतपनमाज्ञाकरणम् ॥ ५६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

धुर्यः श्रेष्ठो वैन्यस्तु महतां सनत्कुमारादीनामध्यात्मशिक्षया हेतुभूतया या संस्थितिर्निष्ठा तया आत्मन्येवावस्थितः परमात्मोपासननिष्ठः आत्मानमाप्तकाममवाप्तसमस्तकाममिव—मेने ॥ ४९ ॥

तथा परमात्मोपासनाङ्गत्वेन देशकालादिकमनतिक्रम्य कर्माणि वर्णाश्रमोचितानि ब्रह्मण्यर्पितं भवति यथा तथाकरोत् ॥ ५० ॥

एवमुपासनाङ्गत्वेन कर्मयोगमकरोदित्युक्तं तञ्च कर्मयोगं फलसङ्गकर्तृत्वत्यागात्मयाथात्म्यानुभवपूर्वकमकरोदित्याह। फलमिति। ब्रह्मणि फलं संन्यस्य फलस्य ब्रह्मायत्ततामनुसंधाय नतु स्वानुष्ठीयमानकर्मायत्ततामित्यर्थः तथा निर्विषङ्गः ममेदम् कर्मेति मतिरहितः अनेन सङ्गत्याग उक्तः कर्माध्यक्षं कर्मसु कर्तृत्वाभिमानिनमात्मानं प्रत्यगात्मानं प्रकृतेः परं मन्वानः कर्तृत्वाभिमानः प्रकृतिसंसर्गकृतो नतु स्वभावत इत्येवं मन्वान इत्यर्थः अकरोदिति पूर्वेणान्वयः ॥ ५१ ॥

स पृथुः गृहेषु भोगस्थानेषु वर्त्तमानोऽपि साम्राज्यश्रियान्वितोऽपि सन्निहितभोग्यभोगोपकरणोऽपि निरहंमतिः देहात्मभ्रमरहितः अत एव इन्द्रियार्थेषु नासज्जत नासक्तोऽभूत् यथा सूर्यः स्वप्रभया पङ्कादिषु व्याप्नुवन्नपि तैर्न लिप्तस्तथेत्यर्थः ॥ ५२ ॥

एवमध्यात्मयोगेन भगवद्भक्तियोगेन अध्ययनेन वसतीतिवद्धेत्वर्थे तृतीया अध्यात्मयोगार्थमित्यर्थः यद्वा प्रकृतिविविक्तात्मयाथात्म्यज्ञानयोगपूर्वकं कर्माणि अनुदेशकालानुसारं समाचरन्. अर्चिषि अर्चिर्नाम्न्यां भार्यायामात्मसम्मितान् आत्मतुल्यान्सम्मतानिति पाठे आत्मानुकूलानित्यर्थः पुत्रानुत्पादयामास ॥ ५३ ॥

पुत्रान्प्रतिनिर्दिशति । विजिताश्वमित्यर्धेन । विजिताश्वादीन् पुत्रानित्यन्वयः सर्वेषामिन्द्रादीनां पृथक् प्रत्येकं योऽसाधारणो गुणस्तान्सर्वानेक एव अच्युतात्मनः अच्युतस्य परमात्मनो या जगत्सृष्टिस्तस्या गोपीथाय रक्षणाय स्वे स्वे काले तत्तत्काले दधौ दधार ॥ ५४ ॥

मनोवाक्कायैः सौम्यैर्गुणैश्च प्रजाः संरञ्जयन् राजेति नामधेयमधात् दधार अपरः सोमराज इव सोमश्चासौ राजा च सोमराजः स इव लोकरञ्जनात्सोमश्चन्द्रोराजेति नाम यथाभवत् तथेत्यर्थः ॥ ५५ ॥

लोकपालासाधारणगुणानुचितकालेष्वेक एवाधादित्युक्तम् तदेवोपपादयति । सूर्यवदित्यादिना यावदध्यायसमाप्ति भुवः वसु धनं गृह्णन् विसृजन्नसौ सूर्य इव प्रातः प्रतपन् आज्ञां कुर्वन् तेजसा अग्निरिव दुर्द्धर्षः परैरभिभवितुमशक्यः महेन्द्र इव दुःखेनापि जेतुमशक्यः ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पृथुना तेभ्यः समप्रानुग्रहः प्राप्त इत्यस्य लक्षणमाह । वैन्य इति। महतां धुर्यः धूर्वोढा संस्थित्या सम्पूर्णयाध्यात्मशिक्षया परमात्मतत्त्वज्ञानादानलक्षणाया इव शब्द एवार्थे ॥ ४९ ॥

तस्य कर्मकरणप्रकारमाह । कर्माणीति ॥ ५० ॥

निर्विपङ्गः कर्मफलेष्वनासक्तः प्रकृतेः परमात्मानं श्रीहरिं कर्मणामध्यक्षं साक्षिणं मन्वानः ॥ ५१ ॥ ५२ ॥

विषयासक्त्या वर्त्तमानस्य पुत्राद्युत्पादनेन स्वपुरराज्यरक्षणपुण्यप्राप्तिः कथमत्राह । एवमिति । अर्चिषि भार्यायाम् ॥ ५३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एवं संन्यस्तसर्वकर्मापि राजा भगवदनुग्रहाविरोधेन तत्त-त्कर्मयोग्येन्द्रादितत्तद्गुणान् दधारेत्याह। सर्वेषामिति ॥ ५४ ॥

जगत्प्राणेर्गोपीथाय रक्षणाय अच्युते आत्मा मनो यस्य सोऽच्यु-तात्मकः राजशब्दं निर्वक्ति। मनोवागिति ॥ ५५ ॥

रञ्जनाद्राजेति इन्द्रादिगुणधारणप्रकारं विविच्य वक्ति। सोम-राज इत्यादिना। वसु जलं "वसु रत्नं जलं रश्मिर्वसुर्देवो विभाव-सुः" इत्यभिधानम् ॥ ५६ ॥ ५७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

वैन्यास्त्विति। शुद्धभक्तत्वात् भगवद्भक्तिं विना नैवान्यत्र सम्यगाप्तकामत्वमितीव शब्देन द्योतितम् ॥ ४९ ॥

कर्माणि चेति युग्मकम्। चकारादत्रापीवशब्दः सम्बध्यते ब्रह्मसात्कृतं यथा स्यात्तथाकरोदित्यर्थः। अध्यात्मशिक्षया। गुर्वाज्ञयादरेण कर्मणश्च लोकसङ्ग्रहापेक्षया कृतत्वात्। यद्वा। तथापि ब्रह्मसात्कृतं भगवत्यर्पितं यथास्यात्तथाऽकरोत् ॥५०॥५१॥

गृहेष्विति। सार्द्धमेकं वाक्यं नासज्जतेत्यनेनैव सम्बन्धात्। एवमित्यर्द्धस्योत्तरेण सम्बन्धो न युज्यते। विजिताश्वस्य प्राक्-तनत्वात् यद्यपि पूर्वं स्वस्योत्तमःश्लोकमहन्मुखच्युत इत्यादौ तल्लीलाश्रवणानुषङ्गेनैव सर्व्वज्ञानसम्पत्तिर्दर्शिता। यद्यपि च यथा चरेद्बालहितमित्यादौ तद्दत्तमारेण श्रीभगवताऽपि इत्या-देराजेनेत्यादौ तदेव दृढीकृतं तथा यद्यपि च। यत्पादपङ्कजप-लाशविलासभक्त्येत्यादौ कुमारैरपि तदेवानुमतं तथाप्यध्यात्मयो-गविधानमिदमुपाधिमात्रपरित्यागार्थं प्रयुज्य भक्तिस्तु यथा पूर्वं निष्काभैव विवक्षितेत्यग्रेऽपि ज्ञेयम्। फलेन तत्कारणानु-मानात् अन्ते हि वैकुण्ठगमनमेव वक्ष्यते। तच्च भक्तस्यैव स्यात्। किं प्रजल्पनिमिषामृषभानुवृत्त्येत्यादेस्तद्देव श्रीभगवदभिमतिः श्रीगुर्व्वाज्ञया स्वामिमतिश्च रक्षितेति ॥ ५२ ॥

पुत्रानुत्पादयामासेति प्राक्तनी कथा ॥ ५३ ॥

विजिताश्वस्य प्राक्तनत्वात्। यथा पूर्व्वं वन्दिभिः स्तुतस्त-थासौ सर्व्वथाभूदिति दर्शयन्नाह। सर्व्वेषामित्यादि ॥५४—६२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अध्यात्मशिक्षाया या सम्यक् स्थितिर्मर्य्यादा तया आप्त-काममिव नरवाप्तकामं तस्य शुद्धभक्तत्वात् केवलया भक्त्यैवाप्त-कामत्वात् वेदविदां शास्त्रान्तरेष्विव अध्यात्मादिष्वपि तस्य ज्ञाने जिज्ञासैवासीत् सा पूर्णैवेतावन्मात्रमिवकारेण द्योतितम्। आत्मनि स्वभाव एवावस्थितः अध्यात्मशिक्षयापि शुद्धभक्ति-भावस्तस्य नापगत इति भावः ॥ ४९ ॥

कर्माणि चेति चकारेण शुद्धभक्तानां कर्मानधिकृतत्वे-ऽपि गृहस्थानां लोकसङ्ग्रहार्थं वा वर्णाश्रममर्य्यादालोपाभावार्थं वा भक्तिमार्गाकुत्सनार्थं वा रहस्यायाः शुद्धाया भक्तेर्गोपनार्थं वा स्वयं वा प्रतिमूर्त्या वा पूर्व्वाचारतोऽनासक्त्या किञ्चित् कर्मकरणं न दूषणावहमित्यपि साम्प्रदायिका आहुः। किञ्च। ताः कर्माणि श्रद्धाराहित्यादश्रद्धया कृतमकृतमेवावमिति शुद्ध-भक्तैर्ज्ञातिः। यथाकालयथादेशयथाबलशब्दैः कालदेशपात्रा-नुसारेणैव करणमसामस्त्येन कर्म्मकरणम्। तत्रापि यथोचित-मित्यनेन शुद्धभक्तानां कर्म्मानौचित्याल्लोकप्रदर्शनार्थेव कर्म्मकर-णाद्वस्तुतःकर्म्माकरणमेवायातम्। ब्रह्मसात्कृतं ब्राह्मणसाद्व्यापारं यथास्यात्तथाकरोदिति तस्य कर्म्मव्यापारान् ब्राह्मणा एव चक्रुरिति तस्य कर्म्मविक्षेपाभाव उक्तः। निर्व्विषङ्गोऽनासक्तः। आत्मानमन्तर्यामिणम् ॥ ५० ॥ ५१ ॥ ५२ ॥

अध्यात्मयोगेन विनैवासक्त्या कर्म्माणि कुर्वन् यद्वा। अध्यात्मेति सप्तम्यर्थेऽव्ययीभावः। आत्मनि स्वतः सिद्धो यो योग आसक्तिविनाभूतविषयभोगलक्षणः सिद्धिविशेषस्तेनैव पुत्रानुत-पादयामास। ननु पुत्रोत्पादने हेतुकस्तस्य स्त्रीविषयकः कोऽपि कामावकारोऽस्तीत्यर्थः ॥ ५३ ॥ ५४ ॥

यथा पूर्व्वं वन्दिभिः संस्तुतस्तथैवासौ सर्व्वदाभूदिति दर्श-यन्नाह। सर्व्वेषामिति। गोपीथाय पालनाय ॥ ५५ ॥

सोमश्चासौ राजाचेति स इव ॥ ५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

महतां धुर्य्यः श्रेष्ठः अध्यात्मशिक्षया संस्थितिः भगवद्दास्य-कतया समवस्थानं तया आत्मनि भगवति अवस्थितः सन् आप्तकाममिवात्मानं मेने ॥ ४९ ॥

'ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यम् ब्रह्मकर्मसमाधिना' इत्युक्तविधिना ब्रह्मसात्कृतं ब्रह्मण्यर्पितं यथा स्यात्तथा कर्माण्यकरोत् ॥ ५० ॥

निर्विषङ्गः कर्मस्वनासक्तः प्रकृतेः परमात्मानं परमेश्वरम् कर्माध्यक्षं कर्माराध्यं मन्वानः तस्मिन्ब्रह्मणि परमेश्वरे फलम् विन्यस्य कर्माण्यकरोदिति पूर्वेणान्वयः ॥ ५१ ॥ ५२ ॥

अर्चिषि पत्न्यामात्मसंमितान् स्वतुल्यान् ॥ ५३ ॥

जगत्प्राणेः गोपीथाय रक्षणाय एकः स्वे स्वे काले सर्वेषां लोक-पालानां गुणान् पृथक् दधार ॥ ५४ ॥

मनआदिवृत्तिभिः सौम्यैर्गुणैश्च प्रजाः रञ्जयन् सोमश्चासौ राजा च तथा अपरः सोमराजश्चन्द्र इव राजेति नामधेयमधात् भुवो वसु धनं गृह्णन् विसृजन् प्रतपन् प्रकाशयन् सूर्यवत् ॥५५॥५६॥

---

भाषाटीका।

सब महत्पुरुषों में श्रेष्ठ वेन पुत्र महाराज आत्म विद्या से एकाग्रताको प्राप्त होकर आत्म स्वरूप मे रत होकर अपने को कृत कृत्य मानते भये ॥ ४९ ॥

जैसा देश जैसा काल जैसा बल जैसा धन जैसी योग्यता हो वैसे कर्मों को करके ब्रह्मार्पण करते थे ॥ ५० ॥

कर्मों का फल ब्रह्म मे अर्पण कर दिये संसार से आसक्ति छोड़ दिया सावधान होकर रहे कर्मों के साक्षी आत्मा को उदासीन मान लिया प्रकृति से परे आत्म स्वरूप को जाना ॥ ५१ ॥

वे महाराज घर मे रहकर भी सर्व पृथिवी के राज्य से युक्त होकर भी निरहंकार होने से इन्द्रियों के विषयों मे नहीं आसक्त भये जैसे सूर्य लिप्त नहीं होता है ॥ ५२ ॥

हे विदुरजी इसी प्रकार से पृथु महाराजने अध्यात्म योग संयुक्त होकर कर्मों का अनुष्ठान करते करते काल के क्रम

दुर्धर्षस्तेजसेवाग्निर्महेन्द्र इव दुर्जयः ।
तितिक्षया धरित्रीव द्यौरिवाभीष्टदो नृणाम् ॥ ५७ ॥
वर्षति स्म यथाकामं पर्जन्य इव तर्पयन् ।
समुद्र इव दुर्बोधः सत्त्वेनाचलराडिव ॥ ५८ ॥
धर्मराडिव शिक्षायामाश्चर्ये हिमवानिव ।
कुबेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा ॥ ५९ ॥
मातरिश्वेव सर्वात्मा बलेन सहसौजसा ।
अविषह्यतया देवो भगवान् भूतराडिव ॥ ६० ॥
कन्दर्प इव सौन्दर्ये मनस्वी मृगराडिव ।
वात्सल्ये मनुवन्नृणां प्रभुत्वे भगवानजः ॥ ६१ ॥
बृहस्पतिर्ब्रह्मवादे आत्मवत्त्वे स्वयं हरिः ।
भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु ।
ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यः परोद्यमे ॥ ६२ ॥
कीर्त्योर्ध्वगीतया पुम्भिस्त्रैलोक्ये तत्र तत्र ह ।
प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां रामः सतामिव ॥ ६३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां वैयासिक्यां संहितायां
द्वाविंशोऽध्यायः ॥ २२ ॥

भाषाटीका ।

से अर्चि नामक अपनी भार्या से अपने सदृश पांच पुत्रों को उत्पन्न किये ॥ ५३ ॥

उनके नाम विजिताश्व धूम्रकेश हर्यक्ष द्रविण वृक यद्यपि पृथुमहाराज एक हैं तथापि परमात्मा के परमभक्त होने से जगत्के रक्षा करने को समय समय पर सब लोकपालों के अलग अलग गुणों को धारण करते थे ॥ ५४ ॥

सुन्दर वचन मनोवृत्ति से सौम्यस्वरूप से उत्तम गुणों से प्रजों के रंजन करने से दूसरे सोमराज चन्द्रमा से होकर राजा ऐसे नाम को धारण किये ॥ ५५ ॥

सूर्य सरी के पृथिवी के रसों को ग्रहण त्याग करते सरीके जगत्के धन का ग्रहण त्याग करते थे तेज से अग्नि सरीके तेजस्वी हैं इन्द्र सरी के सबके जीतने वाले हैं ॥ ५६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अग्निरिव दुर्धर्षः द्यौः स्वर्ग इव ॥ ५७ ॥

समुद्रो यथा गाम्भीर्येणैतावानिति न बुध्यते तथासावभिप्रायतो दुर्बोधः अचलराण्मेरुरिव ॥ ५८ ॥ ५९ ॥

सर्वात्मा सर्वत्र सञ्चारशक्तिः बलादिभिर्मातरिश्वेव [illegible] श्रीरुद्रः ॥ ६० ॥

अजो ब्रह्मेव ॥ ६१ ॥

आत्मवत्त्वे जितेन्द्रियत्वे भक्त्यादिभिः परार्थोद्यमे चात्मतुल्यो निरुपमः ॥ ६२ ॥

पुम्भिः सत्पुरुषैः रामः सीतापतिर्यथा सतां कर्ण[illegible] प्रविष्टः ॥ ६३ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तितिक्षया सहनेन धरित्रीव अपराधतितिक्षासमं[illegible] श्रीतुल्यः नृणामभीष्टदानावसरे द्यौः स्वर्ग इव पर्जन्य इव [illegible]यन् नृणां कामान् वर्षति स्म ॥ ५७ ॥

समुद्र इव दुर्बोधः अपरिच्छेद्यः सत्त्वेन अचलराडिव [illegible] शिक्षायां धर्मराडिव यम इव ऐश्वर्ये हिमवानिव हिमवान् हि[illegible] कर: मघवानिवेति पाठे इन्द्र इव वरुण इव गुप्तार्थः [illegible] मातरिश्वा वायुरिव सर्वात्मा सर्वगः बलेन ओजसा च ॥ [illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अविशस्यनया भगवान् भूतराट् रुद्र इव बलं शरीरबलं ओज इन्द्रियबलं महः देहकान्तिः सौन्दर्येण कन्दर्प इव मृगराट् सिंह इव मनस्वी स्वैरी ॥ ६० ॥

मनुः स्वायम्भुवः अजश्चतुर्मुखः प्रभुत्वे ब्रह्मवादे वेदवादे बृहस्पतिरिव आत्मवत्त्वे यदधीनं धनं स हि धनवान् यदधीन आत्मा स आत्मवान्स्वाधीनत्वे इत्यर्थः ॥ ६१ ॥

गोषु गुरुषु विप्रेषु च विष्वक्सेनानुवर्तिषु च भक्तः ह्रियादिभिः परार्थोद्यमे आत्मतुल्यः निरुपमः ॥ ६२ ॥

त्रैलोक्ये तत्र तत्र पुरग्रामादिवासिभिः पुम्भिः ऊर्ध्वमुच्चैर्गीतया कीर्त्या स्त्रीणां कर्णरन्ध्रेषु प्रविष्टः सतां कर्णरन्ध्रेषु रामः सीतापतिरिव ॥ ६३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अचलराट् मेरुः ॥ ५८ ॥

कोशाढ्यः धनौघपतिः ॥ ५९ ॥

सर्वात्मा सर्वान्तरस्थः भूतराट् सदाशिवः ॥ ६० ॥

मृगराट् सिंहः अजो ब्रह्मा ॥ ६१ ॥

आत्मतत्त्वे परमात्मतत्त्वज्ञाने अधिकदृष्टान्तोऽयम् अथापि तमेवाह । भक्त्येत्यादिना । गवादिषु भक्त्या लज्जादिगुणेन ॥ ६२ ॥

पुंभिरूर्ध्ववीतयोच्चैः कीर्तितया कीर्त्या स्त्रीणां कर्णरन्ध्रेषु प्रविष्टः सतां कर्णरन्ध्रेषु प्रविष्टः परोद्यमेचात्मतुल्यः स्वकार्यसमो राम इवेत्यन्वयः"गुरुविप्रेषु भक्त्या च परेषां हितकृत्तया । प्रश्रयेण च कीर्त्या च पृथूराममनुव्रत„इति वचनात् नेदं स्तुतिमात्रं सत्यमित्यर्थः"न गुरुर्न च धर्मोऽस्ति रामदेवस्य कुत्र चित् । तथापि धर्मरक्षार्थं गुरुभक्तिमदर्शयत्„इत्यतो रामस्य लोकसंग्रहार्थं तद्वचनवाप्तफलप्राप्त्यर्थं गुरुभक्त्यादिकमिति संतोष्टव्यम्॥६३॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्त्रीणां सत्स्त्रीभिश्चोर्द्ध्वं गीतया सर्वोर्द्ध्वत्वेन नीतयेत्यर्थः ॥ ६३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
द्वाविंशतितमोऽध्यायः ॥ २२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वसु धनं रसश्च द्यौः स्वर्ग इव ॥ ५७ ॥

सत्त्वेन स्थैर्य्येण अचलराट् सुमेरुः ॥ ५८ ॥ ५९ ॥

सर्व्वात्मा सर्व्वत्र सञ्चारयुक्तः ॥ ६० ॥

अजो ब्रह्मा आत्मवत्त्वे जितेन्द्रियत्वे ॥ ६१ ॥

भक्त्यादिभिः परार्थोद्यमेन च आत्मनैव तुल्यो निरुपमः ६२ । ६३

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वाविंशोऽपि चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्यौः स्वर्ग इव ॥ ५७ ॥

यथाकामैर्यथेष्टैर्भोगैः पर्जन्य इव वर्षतिष्म सत्त्वेन धैर्येण अचलराट् मेरुरिव ॥ ५८ ॥ ५९ ॥

सर्वात्मा सर्वगः बलादिभिश्च मातरिश्वेव ॥ ६० ॥

प्रभुत्वे प्रजापतित्वे ॥ ६१ ॥

आत्मवत्त्वे स्वाधीनत्वे ॥ ६२ ॥ ६३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वाविंशाध्यायार्थप्रकाशः ॥ २२ ॥

---

भाषाटीका ।

सहने मे पृथिवी से हैं मनुष्यों के मनोरथ पूर्ण करने मे स्वर्ग सरीके हैं सब के मनोरथों को तृप्त करते हुये मेघ से वर्षते हैं ॥ ५७ ॥

समुद्र सरीके अगाध हैं स्थिरता मे मेरु से हैं शिक्षा मे धर्मराज से हैं आश्चर्य मे हिमाचल से हैं ॥ ५८ ॥

कुवेर से खजाना वाले हैं पदार्थ गुप्त रखने मे वरुण से हैं शरीर बल इन्द्रिय बल मनो बल से पवन से सर्व व्यापक हैं ॥ ५९ ॥

दूसरे के असह्य होने मे साक्षात् भूतराज महादेव भगवान् से हैं सुन्दर पना मे कंदर्प से हैं निर्भय पन मे सिंह से हैं ॥ ६० ॥

मनुष्यों पर दयालुता मे मनु महाराज से हैं स्वामिपन में भगवान् ब्रह्मा से हैं ब्रह्म विचार में बृहस्पति से हैं जितेन्द्रिय पन में स्वयं हरि से हैं ॥ ६१ ॥

गुरु ब्राह्मण गउ भागवत वैष्णव इनके विषय भक्ति करने में लज्जा करने में नम्रता करने में सुस्वभाव में तथा पराये कार्य करने में तो अपनेसरीके आपही हैं दुसरा नहीं है ॥ ६२ ॥

पुरुषों के द्वारा ऊंची कीर्ति के गान होने से तीनों लोक में सब के कर्ण छिद्रों के द्वारा हृदय में तथा स्त्रीजनों के हृदय में ऐसे प्रविष्ट हैं जैसे श्रीरामचंद्र सत्पुरुषों के हृदय मे प्रविष्ट हों ॥ ६३ ॥

इति श्रीभागवत चतुर्थस्कन्ध बाईसवां अध्यायका
भाषानुवाद लक्ष्मणाचार्य कृत
समाप्त ॥ २२ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

## ॥ त्रयोविंशोऽध्यायः ॥

### ॥ मैत्रेय उवाच ॥

दृष्ट्वात्मानं प्रवयसमेकदा वैन्य आत्मवान् ।
आत्मना वर्धिताशेषस्वानुसर्गः प्रजापतिः ॥ १ ॥
जगतस्तस्थुषश्चापि वृत्तिदो धर्मभृत्सताम् ।
निष्पादितेश्वरादेशो यदर्थमिह जज्ञिवान् ॥ २ ॥
आत्मजेष्वात्मजां न्यस्य विरहाद्रुदतीमिव ।
प्रजासु विमनःस्वेकः सदारोऽगात्तपोवनम् ॥ ३ ॥
तत्राप्यदाभ्यनियमो वैखानससुसम्मते ।
आरब्ध उग्रतपसि यथा स्वविजये पुरा ॥ ४ ॥
कन्दमूलफलाहारः शुष्कपर्णाशनः क्वचित् ।
अब्भक्षः कतिचित्पक्षान् वायुभक्षस्ततः परम् ॥ ५ ॥
ग्रीष्मे पञ्चतपा वीरो वर्षास्वासारषाण्मुनिः ।
आकण्ठमग्नः शिशिर उदके स्थण्डिलेशयः ॥ ६ ॥
तितिक्षुर्यतवाग्दान्त ऊर्ध्वरेता जितानिलः ।
आरिराधयिषुः कृष्णामचरत्तप उत्तमम् ॥ ७ ॥
तेन क्रमानुसिद्धेन ध्वस्तकर्मामलाशयः ।
प्राणायामैः सन्निरुद्धषड्वर्गश्छिन्नबन्धनः ॥ ८ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

त्रयोविंशे सभार्यस्य वने नित्यसमाधितः ।
विमानमधिरुह्याथ वैकुण्ठगतिरीर्यते ॥ १ ॥

प्रवयसं वृद्धं दृष्ट्वा तपोवनमगादिति तृतीयेनान्वयः स्वकृतोऽनुसर्गोऽन्नादिसर्गः पुरग्रामादिसर्गश्च वर्द्धितोऽशेषः स्वानुसर्गो येन१॥

निष्पादित ईश्वरादेशः प्रजापालनादिर्येन जज्ञिवान् जातः॥२॥

आत्मजां पृथ्वीम् विमनःसु चिन्तातुरासु सदारः सभार्यः ॥ ३॥

अदाभ्या विघ्नैर्नाशयितुमशक्या नियमा यस्य वानप्रस्थानां सुसम्मते उग्रे तपस्यारब्धः प्रवृत्तः कर्तरि क्तः यथास्य धरामण्डलस्य विजये पूर्वं महता यत्नेन प्रवृत्तस्तथेति ॥ ४ ॥

उग्रं तपो दर्शयति । कन्दमूलेति त्रिभिः । क्वचित्कदाचित् ॥५ ॥

चतुर्दिक्षु चत्वारोऽग्नय उपरि सूर्य इति पञ्चानां तपः सन्तापो यस्य स पञ्चतपाः आसारं सहत इत्यासारषाट् शिशिरऋतौ स्थण्डिले शयो भूमिशयनः सर्वदा ॥ ६ ॥ ७ ॥

तेन तपसा क्रमानुसिद्धेन शनैः प्राप्तेन ध्वस्तानि कर्माणि यस्यातोऽमल आशयो यस्य छिन्नानि बन्धनानि वासना यस्य ॥ ८ ॥ ९ ॥ १० ॥

---

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।**

एवं सर्वगुणसम्पन्नः सम्पालितलोकः आसीदित्युक्तम् [illegible] त्मजेष्वारोपितराज्यभरः सभार्यः प्रविष्टतपोवनः कुमारोपदि[illegible] ध्यात्मयोगनिष्ठः प्राप्तपरमपुरुष आसीत् । तत्पत्नी तल्लोकमागा[illegible] वदन् पृथुवृत्तान्तमुपसंहरति मुनिः। दृष्ट्वेति। वैन्यः पृथुः आत्मवान् [illegible] स्वाराज्यादीनामल्पास्थिरत्वज्ञानवान् आत्मानं प्रवयसं वृद्धं [illegible] तपोवनमगादित्युत्तरेणान्वयः आत्मना स्वेन वर्द्धितः [illegible] स्वानुसर्गः स्वविषयवर्त्यनुसर्गः व्यष्टिसर्गः यस्य ॥ १ ॥

जगतः जङ्गमस्य तस्थुषः स्थावरस्य चापि वृत्तिदः जीवि[illegible] प्रदः सतां धर्मभृत् निष्पादितः ईश्वरादेशः प्रजापालन[illegible] रूपो येन यदर्थं यत् लोकपालनाद्यर्थं जज्ञिवान् जातः त[illegible] कृत्वेत्यर्थः ॥ २ ॥

## श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मजेषु आत्मजां पुत्रीकृतां भूमिं कथंभूतां विरहात्पृथोर्विश्लेषाद्रुदतीमिव स्थितां विन्यस्य प्रजासु विमनःसु चिन्तातुरासु सतीषु सदारः सभार्यः एकः असहायः ॥ ३ ॥

तत्र तपोवने उपात्ताः स्वीकृताः आत्मनो नियमाः शमदमादयो येन अक्षोभ्यनियम इति पाठे विघ्नैर्नाशयितुमशक्या नियमा यस्य वैखानसानां वानप्रस्थानां सुसम्मते उग्रे तपसि आरब्धः प्रवृत्तः कर्त्तरिक्तः स्वस्य धरामण्डलस्य विजये पूर्वं यथा महता यत्नेन प्रवृत्तः ॥ ४ ॥

उग्रं तपो वर्णयति । कन्दमूलेति त्रिभिः । कन्दाद्यलाभे कदाचित्तृणाशनः यद्वा कांश्चित्पक्षान् कन्दाद्याहारः कांश्चित्तृणाद्यशनः कांश्चिदब्भक्षः ततः वायुभक्ष एव ॥ ५ ॥

ग्रीष्मे ऋतौ चतुर्दिक्षु चत्वारोऽग्नयः उपरि सूर्यस्तेषां तपस्तापो यस्य वर्षासु ऋतौ आसारं धारासम्पातं सहते इत्यासारषाट् मुनिः तदा शुभाश्रयसंशीलनपरः शिशिरे ऋतौ उदके आकण्ठमग्नः स्थण्डिले शयः । दर्भादिभिः परिस्तृतभूमिशयः ॥ ६ ॥

तितिक्षुः शीतोष्णादिसहः यतवाक् मौनव्रतः दान्तः दमयुक्तः ऊर्ध्वरेताः शान्तः जितानिलः जितप्राणः एवं भूतः कृष्णं भगवन्तमारिराधयिषुः एवं विधमुत्तमं तप आचरत् ॥ ७ ॥

क्रमानुरुद्धेन शनैः शनैः प्राप्तेन तेन तपसा ध्वस्तानि कर्माणि यस्य प्राणायामैः अमल आशयोऽन्तः करणं यस्य सन्निरुद्धः प्रत्याहृतः षडिन्द्रियवर्गो येन छिन्नानि बन्धनानि व्यसनानि यस्य ॥ ८ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

योगेन देहत्यागप्रकारः पृथ्व्यादितत्त्वानां तदभिमानिदेवतानां च स्वस्वकारणप्रवेशलक्षणो लयश्च देहत्यागकाले चिन्तनीय इति निरूप्यतेऽस्मिन्नध्याये । तत्रादौ पृथोस्तपसि प्रारम्भप्रकारं वक्ति । दृष्ट्वेत्यादिना । प्रवयसं गतवयसं स्थविरमात्मवान् जितमनाः सहितोऽनुसर्गः पुत्रपौत्रादिलक्षणो येन जनेन स सानुसर्गः वर्धिताशेषः सानुसर्गः स्वराज्यकालीनजनो येन स तथा ॥ १ ॥

आरामकरणेन स्थावरस्य वृत्तिदानम् ॥ २ ॥

आत्मजां पृथिवीं राज्ञ एप्यद्वियोगाद्रुदतीमिव स्थिताम् ॥ ३ ॥

आत्मनियमः कन्दमूलाद्याहारः शरीरयात्रार्थमापाद्यो येन स आपाद्यात्मनियमः पुरा स्वविषये स्वराष्ट्रे उग्राणां दुष्टानां तपसि संतापे दण्डे यथा प्रारब्धस्तथोग्रतपसि कायक्लेशादिलक्षणे प्रारब्ध इत्यर्थः ॥ ४ ॥

आत्मनियमानाह । कन्देति ॥ ५ ॥

चण्डतपश्चाह । ग्रीष्म इति । पञ्चतपांस्यग्नयो यस्य स पञ्चतपाः अग्नेकोऽग्निरर्कः आसारषाट् निराश्रयतयोग्रवृष्टिसेवी शिशिरे हिमर्तौ स्थण्डिलेशयो निशीति शेषः ॥ ६ ॥

आरिराधयिषुः आराधयितुकामस्तदर्थमुग्रं तप आचरदित्यन्वयः ॥ ७ ॥ ८ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दृष्ट्वेति त्रिकम् ॥ १ ॥

निष्पादितेति तस्य नित्यं भगवत्पार्षदत्वं लीलामात्राङ्गीकृतेन नराकारोपाधित्वं तदादेशसम्पादनार्थमेव धर्म्मज्ञानाद्यनुकरणम् । तदादेशश्च साधारणलोकशिक्षार्थमेवेति व्यक्तं तदेवमपि शुद्धभक्तत्वमेव स्थापितम् ॥ २ ॥

रोदने लिङ्गं प्रजासु विमनःस्विति ॥ ३ ॥

अदाभ्येति दभ नोदन इति कल्पद्रुमात्। एतद्दुष्टैव अदाभ्येति गौडाः । अध्यात्मेति सम्बन्धोक्तिः आत्मनियमानिति चित्सुखः ॥ ४ ॥

कन्देतित्रिकम् ॥ ५ ॥

वीरेत्यत्र धीरेति क्वचित् । जितेत्यत्र यतेरिति क्वचित् । आरिराधयिषुः कृष्णमिति। तत्तत्प्रचारार्थं तेनावतारितत्वात्तदाज्ञाप्रतिपालनरूपमाराधनं कर्त्तुमिच्छुरित्यर्थः ॥ ६ ॥ ७ ॥

तेनेति युग्मकम् । सिद्धेनेत्यत्राविरुद्धेनेति क्वचित् । ध्वस्तकर्म्मेत्यादिकमनुकरणमात्रम् ॥ ८ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रयोविंशे वनं गत्वा तपः कृत्वा हरिं यजन् ।
त्यक्त्वा नृलोकं सस्त्रीको वैकुण्ठमगमत् पृथुः ॥ ० ॥

आत्मानं देहं प्रवयसं वृद्धं दृष्ट्वा अद्यापि भगवान् मां साक्षात् सेवार्थं स्वपार्श्वं न नयतीत्यतोऽनुमीयते मम तावत्प्रमाणकं भजनं नाभून्निष्कषायता च न वर्त्तत इत्यतो वानप्रस्थाश्रममिषेण वनं गत्वा कीर्त्तनस्मरणाभ्यामद्यावेव यामात्रयत्नसमत्पूर्व्वपुरुषो ध्रुव इव शीघ्रंभगवत्प्राप्त्यर्थमेव तपः कुर्व्वन् लोके वानप्रस्थधर्मं ख्यापयामासीति मनसि निश्चित्य तपोवनमगादिति तृतीयेनान्वयः आत्मना स्वेनैव वर्द्धितोऽशेषः स्वीयोऽनुसर्गः अन्नादिपुरग्रामादिसर्गो येन सः आत्मजां पृथ्वीम् १–३॥

तत्रापीति । यथा गार्हस्थ्ये कर्म्मकरणं कर्मिजनप्रदर्शनया तथैव तृतीयाश्रमेऽपि वानप्रस्थजनप्रदर्शनयास्य तपश्चरणमित्याह । वैखानसानां सुसम्मते उग्रतपसि आरब्धः प्रवृत्तः । अदाभ्यनियमोऽखण्डव्रतः । दभनोदने इति धातोः रूपं स्वस्य स्वीयस्य धरामण्डलस्य जये यथा पूर्व्वं यत्नेऽति प्रवृत्तः ॥ ४ ॥ ५ ॥

चतुर्दिक्षु चत्वारोऽग्नय उपरि सूर्य्य इति पञ्चतपाः । आसारषाट् धारासम्पातसहः । स्थण्डिलेशयः भूमिशायी ॥ ६ ॥

ननु लोकप्रदर्शनार्थकेऽपि तस्मिंस्तावति तपसि तस्य कीदृशं मन आसीत्तत्राह।आरिराधयिषुरिति। वैकुण्ठे साक्षात् कृष्णाराधनकामोऽहं तपश्चरामीति तस्य सङ्कल्प आसीदित्यर्थः। दृश्यते च रागात्मकभक्तिमतां सिद्धानां श्रीविशाखादिगोपीजनानां वृहद्वामनदृष्टानां श्रुतीनाञ्च कृष्णप्राप्त्यर्थं तपश्चरणमिति ॥ ७ ॥

तेन तपसा क्रमेणानुसिद्धेन परिपाकं प्राप्तेन अमलाशयः प्रफुल्लमनाः ध्वस्तकर्म्मांशु स प्रागेव प्राणायामैर्भगवन्मन्त्रावृत्तिभिरेव भक्तिमार्गविहितैः । आत्मनि स्वस्मिन्नधिकृतं विनयादित्वात् स्वार्थे ठक् आध्यात्मिकं परमन्तिमं यत्पादपङ्कजपलाशेत्यादिपद्यद्वयेनोक्तं शुद्धं भक्तियोगं व्याख्यान्तरे आध्यात्मिकस्य ज्ञानयोगस्य परत्वानुक्तेः श्रेष्ठत्वानुक्तेश्च तेन च पुरुष-

सनत्कुमारो भगवान् यदाहाध्यात्मिकं परम् ।
योगं तेनैव पुरुषमभजत् पुरुषर्षभः ॥ ९ ॥
भगवद्धर्मिणः साधोः श्रद्धया यततः सदा ।
भक्तिर्भगवति ब्रह्मण्यनन्यविषयाभवत् ॥ १० ॥
तस्यानया भगवतः परिकर्मशुद्धसत्त्वात्मनस्तदनुसंस्मरणानुपूर्त्या ।
ज्ञानं विरक्तिमदभून्निशितेन येन चिच्छेद संशयपदं निजजीवकोशम् ॥ ११ ॥
छिन्नान्यधीरधिगतात्मगतिर्निरीहस्तत्तत्यजेऽच्छिनदिदं वयुनेन येन ।
तावन्न योगगतिभिर्यतिरप्रमत्तो यावद्गदाग्रजकथासु रतिं न कुर्यात् ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भजनासम्भावादुत्तरश्लोकेचानुपपत्तेश्चासङ्गतिरेव तादृशशब्देनोक्तिस्तु भक्तियोगस्य रहस्यत्वव्यञ्जिकैव ज्ञेया ॥ ८ ॥ ९ ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रयोविंशे श्रीपृथुः पुरुषोत्तमसाम्यं प्राप्त इति वर्ण्यते आत्मानं प्रवयसं वृद्धं दृष्ट्वा तपोवनमगादिति तृतीयेनान्वयः आत्मना स्वप्रभावेण वर्द्धितः अशेषः सकलः स्वानुसर्गः स्वकृतः अनुसर्गो येन सः ॥ १ ॥

निष्पादितः अन्नोत्पादनादिना ईश्वरस्य आदेशो येन सः किं बहुना यदर्थमिह जज्ञिवान् तत्सर्वं विधायेत्यर्थः ॥ २ ॥

आत्मजां भुवम् ॥ ३ ॥

तत्रापि तपोवनेऽपि यथा पुरा स्वदिग्विजये स्वभूमण्डलविजये आरब्धः तथा अदाभ्या विघ्नैरनभिभूताः नियमा यस्य सः वैखानसानां वानप्रस्थविशेषाणां सम्मते उग्रे तपसि आरब्धः सम्यक् प्रवृत्तः ॥ ४ ॥ ५ ॥

ग्रीष्मे चतुर्दिक्षु चतुर्णामग्नीनां सूर्यपञ्चमानां तपः संतापो यस्य स पञ्चतपाः वर्षासु प्रावृषि प्रवृत्तासु वृष्टिषु आसारं धारासम्पातं सहत इत्यासारषाट् शिशिरे ऋतौ उदके आकण्ठमग्नः मुहूर्तादिनियमानुसारेणेति बोध्यम् स्थण्डिलेशयः दर्भादिपरिवृतभूमिशयनः सर्वदेति शेषः । मुनिर्भगवत्स्वरूपगुणादिमननशीलः ॥ ६ ॥

आरिराधयिषुः आराधयितुमिच्छुः ॥ ७ ॥
क्रमानुसिद्धेन तपसा ध्वस्तानि कर्माणि यस्य सः अतोऽमलः आशयोऽन्तःकरणं यस्य सः प्राणायामैः सन्निरुद्धषड्वर्गः प्रत्याहृतषडिन्द्रियगणः अत एव छिन्नानि बन्धनानि रागद्वेषादयो यस्य सः ॥ ८ ॥

---

भाषाटीका ।

मैत्रेयजी बोले जितेंद्रिय पृथु महाराज अपने से अपने ही सब जगत्के अन्न आदिकों के पैदा करने वाले स्थावर जंगम सब के जीविका देने वाले सत्पुरुषों के धर्म को धारण करने वाले जिस लिये पृथिवी में अवतार हुआ है तिस सर्व कार्य को संपादन करचुके हैं तब एक दिन उनने अपने शरीर को वृद्ध हुआ देखा तब पुत्री भाव से कल्पित पृथिवी [illegible] विरह होने की शंका से रोती सी थी देखी उस पृथिवी को [illegible] पुत्रों के स्वाधीन करके वियोग मे प्रजाओं के दुःखित होने पर [illegible] अपनी भार्या के सहित तपोवन को चले गये ॥ १ ॥ २ ॥ ३ ॥

तहां पर भी अखंडित व्रतों को धारण किये वानप्रस्थ वैखानसों के व्रत मे ऐसी निष्ठा करा जैसी पहिले जगत् जय करने में थी इस प्रकार उग्रतपस्या में स्थित रहे ॥ ४ ॥

कन्दमूल फलों के आहार किये कभी सुखी पत्तियों का आहार किया कितने पक्षों तक जल मात्र पकिर रहे तिस पीछे वायु मात्र के आहार से रहे ॥ ५ ॥

वीर पृथु महाराज ग्रीष्म ऋतु में पञ्चाग्नि को तापते थे वर्षा ऋतु में मेघकी धारा को सहते मौन होकर रहते शिशिर ऋतु में कण्ठ मात्र जल में रहते थे सदा काल भूमी में शयन करते थे ॥ ६ ॥

सुख दुःख सहने वाले मितभाषी इन्द्रियों का दमन करि मैथुन का त्याग करदिया प्राणायाम से पवन को जीतिके श्री कृष्ण की आराधना के लिये उत्तम तपस्या करते रहे ॥ ७ ॥

क्रम से बढने तपसे कर्मों के नष्ट होजाने से अन्तःकरण निर्मल होगया प्राणायामों से पांचो ज्ञानेंद्रियों को रोकने से सब वासना छूटि गयीं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

परिकर्मणा परिचर्यया शुद्धसत्त्वआत्मा मनोयस्य तस्य ज्ञानं [illegible] कीदृशं येन निजमुपाधिं जीवकोशं हृदयग्रन्थिं संशयानामसम्भा[illegible] नार्वानां पदमाश्रयं चिच्छेद कीदृशेन अनया भक्त्या निशि[illegible] तीक्ष्णेन कथम्भूतया तस्य भगवतोऽनुसंस्मरणेनानुपूर्तिः सम्[illegible] र्यस्यास्तया निशितेन ॥ ११ ॥

किञ्च छिन्ना अन्यधीर्देहात्मबुद्धिर्यस्य यतोऽधिगतात्मगतिर[illegible] एव निरीहः प्राप्तासु सिद्धिषु निस्पृहः येन वयुनेन ज्ञानेन संशयपदं चिच्छेद तत्तत्यजे त्यक्तवान् तत्प्रयत्नादप्युपरराम [illegible] तस्य योगसिद्धिष्वपि निस्पृहत्वं युक्तमेवेत्याह । तावन्नाप्रमत्तः [illegible] प्रमत्तो भवति तस्य श्रीकृष्णकथारतत्वान्न तासु लाभांग [illegible] इत्यर्थः ॥ १२ ॥ १३ ॥

एवं स वीरप्रवरः संयोज्यात्मानमात्मनि ।
ब्रह्मभूतो दृढं काले तत्याज स्वं कलेवरम् ॥ १३ ॥
सम्पीड्य पायुं पार्ष्णिभ्यां वायुमुत्सारयन् शनैः ।
नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरःकण्ठशीर्षणि ॥ १४ ॥
उत्सर्पयंस्तु तंमूर्ध्नि क्रमेणावेश्य निस्पृहः ।
वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत् ॥ १५ ॥
खान्याकाशे द्रवं तोये यथास्थानं विभागशः ।
क्षितिमम्भसि तत्तेजस्यदो वायौ नभस्यमुम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

देहत्यागप्रकारमाह। सम्पीड्येति पञ्चभिः। पायुर्गुदं सम्पीड्येति मुक्तासनंसूचितम्।सम्पीड्य सीवनीं सूक्ष्माङ्गुल्फेनैव तु मध्यतः। सव्ये दक्षिणगुल्फेन मुक्तासनमितीरितम् । मूलाधाराद्वायुमुत्सारयन्नूर्ध्वंनयन् नाभ्यामवस्थाप्य ततः कोष्ठेष्ववस्थाप्यायूयुजदित्युत्तरेणान्वयः कोष्ठान्येवाह । हृदादीनां द्वन्द्वैक्यम्। शीर्षं भ्रूमध्यं तस्मिन् ॥ १४ ॥

तं वायुम् पाठान्तरे एवममून्प्राणानुत्सर्पयन् क्रमेण मूर्ध्नि ब्रह्मरन्ध्रे आवेश्य ततो देहारम्भकपञ्चभूतानि समष्टिभूतेषु विलापितवांस्तदाह। वायुं वायावयूयुजदेकीकृतवान् कायं देहगतं कठिनांशं क्षितौ ॥ १५ ॥

खानीन्द्रियच्छिद्राणि द्रवांशं तोये तदेवं देहं प्रविलाप्याद्वितीयात्मप्रतिपत्त्यर्थं महाभूतानामपि लयमाह। क्षितिमम्भस्येकीकृतवान् तदम्भस्तेजसि अदस्तेजो वायौ अमुं वायुं नभसि ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सनत्कुमारोयमुत्कृष्टमाध्यात्मिकं योगमाह ।· तेनैव योगेन पुरुषर्षभः पृथुः पुरुषं परमरूपमभजत् ॥ ९ ॥

भगवद्धर्मिणः निवृत्तधर्मेण श्रद्धया यततः यत्नं कुर्वतः साधोः पृथोः भगवति पूर्णषाड्गुण्ये ब्रह्मणि अनन्यविषया अव्यभिचारिणी भक्तिरभवत् ॥ १० ॥

भगवत्कर्मणा परिचर्यया शुद्धसत्त्वात्मनः शुद्धसत्त्वमनसः तस्य भगवतः संस्मरणं पूर्वोक्तमभक्तिः तस्यानुपूर्तिः परिपूर्णता तया जातं यत् परज्ञानं विरक्तिश्चोद्भूत कीदृशं ज्ञानं येन निशितेन ज्ञानेन संशयपदं संशयस्थानं निश्चेतुमशक्यस्वरूपं जीवकोशं प्रकृतितत्त्वं चिच्छेद स्वस्मिन्नसम्बद्धमकरोत्तादृशं ज्ञानमभूदित्यर्थः ॥ ११ ॥

छिन्नान्यधीः छिन्नप्रकृतिधीः देहात्मबुद्धिरहितः अधिगता आत्मगतिरात्मस्वरूपमाध्यात्मं येन अत एव निरीहः निर्व्यापारःयेन वयुनेन ज्ञानेन इदं प्रकृतिसम्बन्धमच्छिनत्तदपि ज्ञानं तत्यजे तत्याज अनित्यं जडं शरीरमनुसंधाय तदन्योऽस्मीति हि विवेकज्ञानमुदेति तत्र शरीरमपि प्रतिसम्बन्धितया बुद्धिस्थं स्यात् योगकाष्ठायां ब्रह्मात्मनि साक्षात्कृते देहप्रतिसम्बन्धितया ज्ञानाभावात्तत्यज इत्युक्तं नहि केवलं घट इत्यनुभवे घटान्यदतिप्रतिसम्बन्धितया ज्ञानमनुवर्त्तते तद्वदित्यर्थः । एवमेकाग्रतायां हेतुमाह । तावदिति । भगवत्कथासु रतिं यावन्नकरोति तावद्योगगतिभिरप्रमत्तो न भवति अश्रुतभगवत्कथानां प्रमादः स्यादेव अस्य भगवत्कथारतित्वान्न प्रमाद इत्यर्थः ॥ १२ ॥

स वीरश्रेष्ठः पृथुः आत्मानमात्मनि परमात्मनि संयोज्य समर्प्य स्वतः सिद्धमपृथक्सिद्धसंबन्धमनुसंधायेत्यर्थः । आविर्भूतगुणाष्टकतया ब्रह्मप्रकारं प्राप्तः अभ्युपगतप्रारब्धावसानकाले स्वशरीरं तत्याज ब्रह्मभावप्राप्तेः कलेवरानन्तभाविंत्वेऽपि सिद्धवदभिप्रायकृतः पूर्वकालनिर्देशः ॥ १३ ॥

कलेवरत्यागपूर्वकब्रह्मभावप्राप्तिप्रकारमेवोपपादयति । सम्पीड्येति। गुल्फाभ्यां पायुं गुदं सम्पीड्य सन्निरुध्य मूलाधाराद्वायुं शनैरुत्सारयन् ऊर्ध्वं नयन् नाभ्यामवस्थाप्य ततः हृदयादिषु कोष्ठेषु स्थानेषु अवस्थाप्य हृदयादीनां द्वन्द्वैक्यं प्राण्यङ्गत्वात् तत्र शीर्षं भ्रूमध्यं भ्रुवोर्मध्ये प्राणमावेश्य सम्यगितिश्रुतेः ॥ १४ ॥

तं च ततः मूर्ध्नि ब्रह्मरन्ध्रे उत्सर्पयन् ऊर्ध्वं नयन् क्रमेण ब्रह्मरन्ध्रे चावेश्य निस्पृहः अणिमाद्यैश्वर्यकैवल्यादिषु स्पृहारहितः यद्यपेक्षा स्यात् योगिनस्तदैश्वर्यादिकमपि स्यात् इति स्पृहा निषिध्यते वायुं स्वदेहस्थं वायौ महाभूते कायं देहरूपपृथिवीं क्षितौ महाभूते एवमग्रेऽपि अयूयुजत् लीनमनुसंहितवान् ॥ १५ ॥

खानि इन्द्रियाधिष्ठानानि देहविवराणि द्रवं देहस्थं जलं तोये महाभूते यथा स्थानं यथा कारणं विभागशः असङ्करेण एवं देहस्थभूतांशानां महाभूतसमष्टितयानुसन्धानमुक्तम् अथ पृथिव्यादितत्त्वानामुत्पत्तिक्रमेण लयानुसन्धानमुच्यते क्षितिभूतमम्भसि महाभूते अयूयुजादित्यनुषङ्गः तत् अम्भः महा तेजसि अदस्तेजः वायौ अमुं नभस्याकाशे ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

योगमुपासनोपायम् ॥ ९ ॥

भक्तिः प्रेमपूर्वं भजनं अनन्यधिया भगवदेकविषया ॥ १० ॥

भक्तेः फलमाह । तस्येति । येन ज्ञानेन संशयविपर्ययज्ञानस्थानं निजत्वेनाभिमतं जीवकोशं बाह्यान्तःकरणं लिङ्गशरीरमं वा चिच्छेद छिनत्ति तादृशं भगवतो ज्ञानं तस्य पृथोरभूदित्यन्वयः तस्य हरेरनुस्मरणं निरन्तरध्यानं तत्पूर्वयानया भक्त्या परिशुद्धकर्मा सत्त्वगुणयुक्त आत्मा मनो यस्य स तथा तस्य

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अभूदित्यनेन भूसत्तायामितिधातोः सत एव ज्ञानस्याविर्भाव उच्यते न तु प्रागसतः तस्य ज्ञानित्वात् ज्ञानिनो ज्ञानस्याविर्भावः नहि पुरोवर्ती घटः पटो वा आविरभवदिति व्यवहारो दृष्टचर इति चेन्न यद्यत्प्रतिबन्धकेन तिरोभावसंभवात्तदुक्तम् ।

आविर्भावतिरोभावौ ज्ञानस्य ज्ञानिनोऽपि तु ।
अपेक्ष्याज्ञस्तथा ज्ञानमुत्पन्नमिति चोच्यते ।

ज्ञानिनोऽपि ज्ञानस्याविर्भावतिरोभावावपेक्ष्यासावज्ञस्तथा तस्य ज्ञानं समुत्पन्नमिति व्यवहारो युज्यत इत्यर्थः ॥ ११ ॥

उत्पन्नज्ञानस्य स्थितिमाह। छिन्नेति। येन वयुनेनेदमच्छिनत्तज्ज्ञानं तत्यज इत्यन्वयः अन्यथा ज्ञानसम्भव इदमुक्तं कथं युक्तं स्यादित्यत उक्तम्। छिन्नान्यधीरिति । निरस्तान्यथाज्ञानः स्वरूपज्ञानाभावे कथमिदमित्यत उक्तम् अधिगतात्मगतिरिति। आत्मशब्देन स्वस्वरूपं परमात्मा चोच्यते अधिगतेऽपरोक्षीकृते परमात्मा स्वस्वरूपं च येन स तथा अत एव तत्साधर्म्यमाह। निरीहइति। ज्ञानोत्तरकालीनप्रवृत्तिमान्नतु पूर्ववद्विधिबद्ध इत्यर्थः। अत्र ज्ञानत्यागो नाम निर्लेपेन स्वरूपज्ञानेन करतलामलकवत्प्रत्यक्षत्वेन वृत्तिज्ञानस्य बाह्यान्तःकरणजन्यस्य भेदनिरीक्षणं मद्भिन्नमिदं नश्वरमिति दर्शनं नत्वन्यः। तदुक्तम्।

अपरोक्षतया वृत्तिज्ञानभेदनिरीक्षणम् ।
स्वरूपज्ञानसंस्थित्या ज्ञानत्याग उदीर्यत इति ।

अयं विशेषोऽपि तत्यज इति व्यत्यासेन सूचित इति कथमस्य स्वरूपज्ञानमस्तीति ज्ञायत इति तल्लक्षयति। तावदिति। यावद्गदाग्रजस्य श्रीनारायणस्य कथासु रतिं न कुर्यात्तावद्यतिर्निर्जितेन्द्रियग्रामोऽपि पुरुषो योगगतिभिः प्राणायामादिलक्षणैर्योगसाधनैरप्रयत्नोऽनाविर्भूतस्वरूपज्ञानो भवति अनेन भगवत्कथारतिः स्वरूपज्ञानेनेति वक्ष्यते। तदप्युक्तम्। स्वरूपज्ञानतः सम्यग्रतिर्विष्णुकथासु चेतियद्वा। योगादुत्पन्नैर्गतिशब्दवाच्यैर्ज्ञानैः स्वरूपविषयैर्भगवत्तत्त्वं ब्रह्मादितारतम्यं पञ्चविधभेदं जीवस्वरूपमित्यादिविषयबाहुल्यात् स्वरूपज्ञानस्य बाहुल्यं प्रयत्नो न भवति ॥ १२ ॥

उपसंहरत्येवमिति ब्रह्मभूतः ब्रह्मणि भूतः ब्रह्माधारतयास्थित इत्यन्वयः काले प्रारब्धकर्मक्षयसमये तत्याजेत्यनेन स्वकलेवरमेवात्याक्षीन्न तु स्वरूपज्ञानमित्यवगन्तव्यम् ॥ १३ ॥

स्वच्छन्दमृत्यूनां योगिनां देहत्यागप्रकारं दर्शयितुमस्योत्क्रान्तिप्रकारमाह। संपीड्येति। वज्रासनस्थितो वायुमुत्सर्पयन्नूर्ध्वं नयन्मूलाधारान्नाभ्यां हृद्युरसि कण्ठे च शीर्षणि भ्रूमध्ये चेत्येषु कोष्ठेषु स्थानविशेषेषु शनैरवस्थाप्य ॥ १४ ॥

अनेन क्रमेणासून् पञ्च वृत्त्या बहुवचनं मूर्ध्नि शिरोमध्यप्रदेशे आवेश्य निस्पृहः स्थिरचित्तस्तिष्ठेदित्यन्वयः देहे स्थितानां पञ्चभूतानां स्वस्वकारणेषु लयोऽनेनोच्यते देहे वायुभागं तत्कारणेऽधिदैववायावयूयुजत् अध्यात्मवायोरधिदैववायुः कारणम् तत्रैव लय इत्यचिन्तयदित्यन्वयः। तदुक्तम्। अस्येदं कारणमिति ज्ञानमेव विलापनम्। समाधिकाले विज्ञेयं देहादेर्दर्शनात्पुनरिति एतदेवोत्तरत्रापि ज्ञातव्यम् ॥ १५ ॥

छिद्रबहुत्वापेक्षया खानीति बहुवचनं ग्रन्थान्तरोक्तेर्यत्तदपेक्षया विभागश इति इदानीं पञ्चभूतानां स्वकारणेषु लयध्यानमाह। खान्यनिलमिति ॥ १६ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कर्म्मवज्ज्ञानमपि भगवदाराधनायैवानुकृतमित्याह। सनन्दि... अत एव तत्फलं तथैव जातमित्याह। भगवदिति। ... तदेति कचित् ॥ १० ॥

ततस्तादृश भक्त्यङ्ग ज्ञानवैराग्ये व्यज्योपाधिपरित्यागश्च ... इत्याह।तस्यानयेति। पूर्व्वेत्यत्र पूर्वेति चित्सुखः ॥ ११ ॥

ततश्च छित्वा अन्यत्र उपाधिरूपे धीर्हृष्टिर्यस्य अधिगता ... टिता आत्मनः पार्षदरूपस्यागतिर्ज्ञानं येन तथाभूतः सन् अत ... निरीहः प्राप्त्यन्तरेच्छाशून्यः सन् येन वयुनेनेदं संशयपदमा... नत् तत् तत्यजे। न चानुष्ठितो ज्ञानयोगः स्वगतिदानेन तस्य ... गतिं विहन्तुं शक्नोति यतः। यावदिति। अत्र तु स्वाभावि... च तत् कथारतिरित्यपि नासौ प्रभवेदिति भावः। अत्र वैकु... गतिस्तु न सिद्धान्तवदिति टीकाभिप्रायश्च ॥ १२ ॥ १३ ॥

एवं भावनागतं त्यागमुक्त्वा साक्षादप्याह। एवमिति धीरेति कचित्। आत्मानं मन आत्मनि पार्षदरूपे मत ... ब्रह्मभूतः शुद्धचिद्रूपः सन् काले भगवतस्तादृशेच्छा... दृढमपुनरावृत्तिर्यथा स्यात्तथा स्वं स्वीकृतं कलेवरमुपाधि तत्याज... संपीड्येति त्रिकम्। उत्सर्पन्निति चित्सुखः ॥ १४—१६ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च "हरिभक्तिमहादेव्याः सर्व्वा मुक्त्यादिसिद्धयः। भुक्त... यश्चाद्भुतास्तस्याश्चेटिकावदनुव्रता,, इति नारदपञ्चरात्रोक्तेः... स्यानन्यभक्तिमतोऽनाकाङ्क्षतोऽपि स्वत एव स्वयं ब्रह्मवि... तथा अणिमाद्यष्टादशसिद्धयश्च मूर्त्तिमत्य एवागत्य वयं भगव... प्रेषितास्त्वदर्थमेव अस्मानङ्गीकुर्विति वदन्त्यस्तस्याभिमु... प्रादुरभवन्नित्याह। तस्येति द्वाभ्याम्। परिकर्म्मणा परिचर्य... शुद्धसत्त्व एवात्मा मनो यस्य तस्य पृथोरनया भक्त्या ज्ञानं ब्र... विद्याख्यं विरक्तियुक्तमभूत् स्वतएव प्रादुर्बभूव। भक्त्या कीदृश्या भगवदनुक्षणस्मरणेनानुपूर्तिर्यस्यास्तया यद्यपि शुद्धभक्ताः... तका इव भक्तेरेव माधुर्य्यास्वादिनः स्वयं प्राप्तामपि ब्रह्मवि... नाङ्गीकुर्व्वन्ति तत्कार्य्यभूतो लिङ्गदेहध्वंसो भक्त्यैव विना... सन्धानेनापि भवेत्। यदुक्तम्। जरयत्याशु या कोषं निगीर्णम... नलो यथेति। तदपि यथा कश्चित् जाठरानलेन जरयिष्यमाण... स्यापि निगीर्णान्नस्य शीघ्रपाकार्थं किमप्यौषधं पिबति तद्व... पृथुर्भगवद्धाम्नि साक्षात्सेवाप्राप्त्यर्थमत्युत्कण्ठः कालविलम्ब... सहिष्णुः सोपाधिध्वंसनार्थं ब्रह्मज्ञानमङ्गीचकारेत्याह। निर्दि... तेनातितीक्ष्णेन येन ज्ञानेन निजजीवकोषं सोपाधिम् चिच्छेद... कीदृशं संशयपदं भक्त्यादृष्टसाक्षाद्भगवच्चरणस्य मे जीवकोषो नास्त्यस्तिवेति। तदीयसन्देहास्पदम्। वस्तुतस्तु जीवको... नास्त्येव कृष्णस्य पूर्व्वदेहकथाश्रयमिति उभावपि च भद्रः... उत्तमः श्लोकविग्रहावित्याद्युक्तेः। पृथुदेहस्य भगवद्विग्रहत्वात् तदपि पृथोस्तस्य योगेन स्वदेहत्यागचिकीर्षा तु भक्तिमहिम... स्वस्मिन् प्राकृतत्वमननात् देहपातश्रवणान्तु वहिर्मुखमतोत्सा... भावार्थं भगवदवताराणामिव अन्येषां भगवद्भक्तानामिव ... माययैव प्रत्यायितं भगवत्सु श्रीरामस्य भक्तेषु श्रीध्रुवस्य ... पाताभाव एव तेषां देहपाताभावोपलक्षणार्थोऽयं इति भक्तान् प्रति सिद्धान्तो दर्शितो ज्ञेयः ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च छिन्ना अन्यधीर्देहात्मबुद्धिर्यस्य सः । अधिगतात्मगतिः अनुभूतपरमात्मस्वरूपः । निरीहः प्राप्तासु सिद्धिषु निस्पृहः । ननु कथं निस्पृहत्वं विद्याङ्गीकारादित्यत आह । येन वयुनेन ज्ञानेन इदं लिङ्गशरीरमच्छिनच्छिच्छेद तत्तत्याज तत्यजे । तावत्प्रयोजनार्थमेव तदङ्गीकारादनन्तरञ्च तज्ज्ञानं तत्याजैवेति वस्तुतो निस्पृहत्वमेवेत्यर्थः । अयमत्राशयः । शुद्धाया भक्तेः फलं छिविधमनुसंहितं ज्ञानसिद्ध्यादि । तत्र च कस्य चिद्भक्तस्य स्वतः प्राप्त एव तत्र तत्र यद्यादित्सा स्यात्तदा शुद्धाया भक्तेः सङ्कोचः स्यात् यदुक्तमेकादशे । अन्तरायान्वदन्त्येतानिति । किञ्च । तत्तत्त्यागसामर्थ्यञ्च शुद्धभक्त्यभ्यासबलेनैव स्यादित्याह । तावदिति । तस्य श्रीकृष्णकथारतत्वान्न तासु लोभोजात इति श्रीस्वामिचरणाः ॥ १२ ॥

किञ्च तासु सिद्धिषु मध्ये स्वच्छन्दमृत्युनाम्नीं सिद्धिं । स्वयमुपस्थितामालक्ष्य शीघ्रमेव भगवत्पार्श्वे जिगमिषोस्तस्य पृथोर्विद्याया इव तस्या अपि यदैवाङ्गीचिकीर्षा अजनिष्ट तदैव तया महाकर्मठपुरोधसेव देहत्यागप्रकारं शिक्षयत्या पृथुः स्वेच्छयैव सुखेन देहं त्यक्तुमारेभे इत्याह । एवमिति षड्भिः । वीरप्रवर इति देहमेवाधुनैव त्यक्त्वा शुद्धचिन्मयाकारः सन् संप्रत्येव वकुण्ठं गत्वा भगवच्चरणौ परिचराणीति जातमहोत्साह इत्यर्थः आत्मानं मनः आत्मनि पार्षदरूपे देहे ' अतएव ब्रह्मभूतः शुद्धचिद्रूपः सन् ॥ १३ ॥

देहत्यागे व्यापारान् स्वयं स्फुरितानाह । सम्पीड्येति मुक्तासनं सूचितम् । सम्पीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु मध्यतः । सव्ये दक्षिणगुल्फेन मुक्तासनमितीरितमिति । मूलाधारचक्राद्वायुमुत्सारयन् ऊर्ध्वं स्वाधिष्ठानचक्रं नयन् नाभ्यां मणिपूरकचक्रे अवस्थाप्य ततः कोष्ठेष्ववस्थाप्य अयूयुजत् इत्युत्तरेणान्वयः । कोष्ठान्येवाह । हृत् अनाहतचक्रम् । उरः कण्ठाधोविशुद्धिचक्रम् । कण्ठस्तस्यैव चक्रस्याग्रदेशः शीर्षे भ्रूमध्याज्ञाचक्रं तस्मिन् ॥ १४ ॥

तं वायुमुत्सर्पयन् । असूनिति पाठे प्राणान् । मूर्द्धि ब्रह्मरन्ध्र आवेद्य वायुं देहारम्भकं तं समष्टिवायौ अयूयुजत् एकीकृतवान् । एवमन्यान्यऽपि देहारम्भकभूतचतुष्टयानि समष्टिभूतेषु विलापितवानित्याह कायं कायस्थिता क्षितिः क्षितौ एवं कायस्थिततेजः खानिकायस्थितच्छिद्राणि द्रवं कायस्थितं जलं तदेवं देहं प्रविलाप्य अद्वितीयात्मप्रतिपत्त्यर्थं महाभूतानामपि लयं भावयामासेत्याह । क्षितिमम्भसीत्यादि । तत् अम्भः अदः तेजः अमुंवायुं मनसो देवतानां चेन्द्रियेषु लयस्तु तानि विना मनआदयः स्वरूपं न प्राप्नुवन्ति । तत्तद्ग्राह्यरूपापि मात्रालम्भनत्वादिति भावना मयो ज्ञेयः अमूनि तन्मात्राणि ॥ १५ ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आध्यात्मिकयोगं जीवस्य भगवदात्मकत्वभावनायोगम् ॥ ९ ॥

भगवद्धर्मिणः भगवत्प्रीणनार्थतपआदिधर्मवत अनन्यविषया भगवदितरविषयशून्या ॥ १० ॥

तस्य पृथोर्भगवतः परिकर्मणा परिचर्यया शुद्धसत्त्वः पवित्रान्तःकरणः आत्मा यस्य तथाभूतस्य विरक्तिमत् ऐहिकामुष्मिकपदार्थेभ्यो वैराग्यं तद्युक्तम् । भगवत्स्वरूपगुणादिविषयकं ज्ञानमभूत् कीदृशं तस्य भगवतोऽनुस्मरणेन अनुपूर्त्या अनुसमृद्धया तया भागवद्भक्त्या शितेन येन निजं जीवकोशम् । जीवावरकमहङ्कारं देहादौ अहम्ममाभिमानरूपं चिच्छेद तत् कथम्भूतं निजजीवकोशम् संशयानामुपास्योपासककृपाफलभक्तिरसविरोधिपदार्थविषयकाणां पदमाश्रयम् ॥ ११ ॥

अहङ्कारनाशानन्तरं तस्य कर्मजन्यलोकस्पृहाशून्यत्वमाह । छिन्नान्यधीरिति अधिगता आत्मनो जीवपरयोर्गतिर्याथात्म्यं येन सः अत एव छिन्नान्यधीः देहे अहमिति गेहादौ ममेति च धीरहङ्कारो येन स निरीहोऽभवत् कर्मजन्येषु लोकेषु निःस्पृहो भवति ननु येन ज्ञानेनाहङ्कारं जनश्छिनत्ति ततोऽहं ज्ञानवानित्यहङ्कारः पुनर्भवेदत्राह । येन वयुनेनेदं निजजीवकोशम् अच्छिनत् तत् तत्यजे गुरुमूर्तिनान्तर्यामिमूर्तिना च श्रीकृष्णेनैवेदं ज्ञानं "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति श्रीमुखोक्तेः अतः श्रीकृष्णदानित्यर्थः ननु केचित् यतयोऽपि कर्मजन्येषु लोकेषु भ्रमन्ति तत्र किं कारणमत्राह । यावत् गदाग्रजकथासु रतिं न कुर्यात् श्रीकृष्णभक्तो न भवेदित्यर्थः तावत् यतिरपि योगगतिभिः कर्मयोगगतिभिः केवलंत्वब्रह्मध्यानलक्षणयोगोत्पन्नाभिः सिद्धिभिर्वा अप्रमत्तो न भवति किन्तु ताभिः प्रमत्तः कर्मजन्येषु लोकेषु भ्रमतीत्यर्थः ॥ १२ ॥

तदनन्तरं पृथुः किं चकारेत्याकांक्षायामाह । एवमिति । आत्मनि ब्रह्मणि श्रीकृष्णे आत्मानं दृढं संयोज्य स्वं कलेवरं तत्याज तदनन्तरं ब्रह्मभूतो ब्रह्मसाधर्म्यं प्राप्तः इत्यन्वयः ॥ १३ ॥

कलेवरत्यागप्रकारवर्णनपूर्वकं ब्रह्मसाम्यापन्नत्वं श्रीपृथोर्वर्णयति । सम्पीड्येति सार्द्धैः पञ्चभिः । पायुं गुदं गुल्फाभ्यां सम्पीड्य निरुध्य वायुं मूलाधाराच्छनैरुत्सारयम् उन्नयन् नाभ्यामवस्थाप्य तदनन्तरं हृदि उरसि कण्ठे शीर्षे भ्रूमध्यं तस्मिन् हृदादीनां प्राणयङ्गत्वात् द्वन्द्वैक्यम् एवं क्रमेण हृदादिषु कोष्ठेष्ववस्थाप्य अयूयुजदित्यग्रिमेण सम्बन्धः ॥ १४ ॥

इत्थमसून् प्राणान् उत्सर्पयन् क्रमेण मूर्द्धि ब्रह्मरन्ध्रे आवेद्य देहावयवान् वाय्वादीन् महाभूतेषु वाय्वादिषु यथास्थानं विभागशोऽयूयुजत् तत्र कायं कायावयवं कठिनांशम् ॥ १५ ॥

खानि देहगतानि छिद्राणि ॥ १६ ॥

---

भाषाटीका ।

भगवान् सनत्कुमार जी ने जो आध्यात्मिक योग कहा था उसी उत्तम योग से पुरुषों मे उत्तम पृथु महाराज ने परम पुरुष नारायण का भजन किया ॥ ९ ॥

भगवद्धर्मोंके करनेसे साधुता होनेसे श्रद्धापूर्वक यजन करने से पृथु महाराज की भगवान् में अनन्य विषय भक्ति होगई ॥ १० ॥

भगवान् की सेवा से अन्तः करण शुद्ध होगया फिर भगवत् स्मरण से भक्ति बढ गई तिससे वैराग्य युक्त ज्ञान होगया उस तीक्ष्ण ज्ञान से संशयादिकों का आश्रय जो अहंकार सो नष्ट हो गया ॥ ११ ॥

अन्य देहादिकों में आत्म बुद्धि नष्ट हो गई आत्मा के तत्त्व का ज्ञान होगया सकल चेष्टा छूट गई फिर जिस ज्ञान से ग्रंथिका छेदनाकिया था उसका भी यत्न छोड दिया तब तक योगी कों विषयों में असावधानता होती है जब तक श्रीकृष्ण कथा में रति न करें ॥ १२ ॥

ये वीरों में श्रेष्ठ महाराज इस प्रकार से परमात्मा में मन को लगाकर ब्रह्मस्वरूप को प्राप्त होकर समय आने पर इस शरीर को त्यागते भये ॥ १३ ॥

इन्द्रियेषु मनस्तानि तन्मात्रेषु यथोद्भवम् ।
भूतादिनामून्युत्कृष्य महत्यात्मनि सन्दधे ॥ १७ ॥
तं सर्वगुणविन्यासं जीवे मायामये न्यधात् ।
तं चानुशयमात्मस्थमसावनुशयी पुमान् ।
ज्ञानवैराग्यवीर्येण स्वरूपस्थोऽजहात्प्रभुः ॥ १८ ॥
अर्चिर्नाम महाराज्ञी तत्पत्न्यनुगता वनम् ।
सुकुमार्यतदर्हा च यत्पद्भ्यां स्पर्शनं भुवः ॥ १९ ॥
अतीव भर्तुर्व्रतधर्मनिष्ठया शुश्रूषया चारषदेहयात्रया ।
नाविन्दतार्तिं परिकर्शितापि सा प्रेयस्करस्पर्शनमाननिर्वृतिः ॥ २० ॥
देहं विपन्नाखिलचेतनादिकं पत्युः पृथिव्या दयितस्य चात्मनः ।
आलक्ष्य किञ्चिच्च विलप्य सा सती चितामथारोपयदद्रिसानुनि ॥ २१ ॥
विधाय कृत्यं ह्रदिनीजलाप्लुता दत्त्वोदकं भर्तुरुदारकर्मणः
नत्वा दिविस्थांस्त्रिदशांस्त्रिःपरीत्य विवेश वह्निं ध्यायती भर्तृपादौ ॥ २२ ॥
विलोक्यानुगतां साध्वीं पृथुं वीरवरं पतिम् ।
तुष्टुवुर्वरदा देवैर्देवपत्न्यः सहस्रशः ॥ २३ ॥
कुर्वत्यः कुसुमासारं तस्मिन्मन्दरसानुनि ।
नदत्स्वमरतूर्येषु गृणन्ति स्म परस्परम् ॥ २४ ॥

भाषाटीका ।

चरणों के एडी से गुदा को दबा कर धीरे धीरे पवन को चलाकर नाभि मे उदर मे रखकर हृदय मे कण्ठ मे भ्रूमध्य मे लेगये ॥ १४ ॥

क्रमसे उस वायु को मस्तक मे चढा कर जगत्से निस्पृह होकर प्राणको वायु मे शरीर को पृथिवी मे तेज को अग्नि मे लयकर दिया ॥ १५ ॥

इन्द्रियों को आकाश मे लय किया जलके अंश को जलमे लीन किया ऐसे यथा स्थानों मे सब को लीन किये पृथिवी को जलमे जलको तेज मे तेज को वायु मे वायु को आकाश मे लय किये ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं तामसाहङ्कारकार्यस्याकाशपर्यन्तस्य लयमुक्त्वा सात्त्विकराजसाहङ्कारकार्याणां लयमाह । इन्द्रियेष्विति । इन्द्रियेषु मन इतिदेवानामप्युपलक्षणम् सविकल्पकज्ञाने मनस इन्द्रियैराकर्षणात्तेषु लयाभिधानं नतुकार्यत्वात् । तदुक्तङ्गीतासु।इन्द्रियाणां हिचरतां यन्मनोऽनुविधीयत इति। अत्र च इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मन इति इन्द्रियेषु नभइतिपाठेऽप्ययमर्थः।भट्टादीनां मतेनभश्चाक्षुषं केषाञ्चिन्मानतरम् आनुमानिकत्वमतेऽपीन्द्रियव्यापारोऽस्त्येव नभोगुणश्च शब्दः श्रोत्रग्राह्योऽत इन्द्रियग्राह्यत्वादिन्द्रियेषु नभो विलापितमिति तानीन्द्रियाणि यथोद्भवमुद्भवो वृत्तिलाभः स… षयाधीन इति श्रोत्रादीनां विषयेषु शब्दादिषु लयः । यद्वा त… त्रकार्याण्येवेन्द्रियाणि मनोऽप्यपञ्चीकृततन्मात्रकार्यम् आहङ्कारि… त्वाभिधानं तदधीनत्वविवक्षयेत्यविरोधः भूतादिनाहङ्कारेण … वशिष्टनभः सहितानीन्द्रियाण्युत्कृष्य परतो नीत्वा भूतादौ वि… तेन सह महत्तत्वे सन्दध इत्यर्थः ॥ १७ ॥

सर्वेषां गुणानां कार्याणां विन्यासःस्थितिर्यस्मिंस्तं मह… मायामयेमायोपाधिप्रधाने जीवे तंचानुशयमुपाधिं यःपूर्वमनु… यी पुमान् जीवोऽसौ पृथुर्ब्रह्मणि स्थितः सन्नजहादित्यर्थः ॥ १८ ॥

वनप्रवेशमारभ्य राज्ञ्याः कथामाह। अर्चिर्नामेतिचतुर्भिः। अनु… नुजगाम अतदर्हापि नार्हतिया किंपद्भ्यां भुवःस्पर्शनमितिय…

भर्तुर्व्रतंयद्भूमिशयनादितस्मिन् धर्मे या निष्ठा तया कृशीय… यमार्षीदेहयात्राकन्दमूलादिवृत्तिस्तयाचार्तिंदुःखं न प्राप । … हेतुः प्रेयसः करेण स्पर्शनं मानश्च ताभ्यां निर्वृतिर्यस्याः ॥ २० ॥

पृथिव्याः पत्युः दुहितृत्वं तु तस्याद्देवतारूपेण विपन्नं नष्ट… लश्चेतनादिकं यस्मिंस्तथाभूतं देहमालक्ष्यतं देहश्चितामरोपयत ॥ २१ ॥

कृत्यंतत्कालोचितं विधाय ह्रदिन्या जले आप्लुता स्नाता… भर्तुरुदकं दत्त्वा दिव्यन्तरिक्षे स्थितान्देवान्नत्वा वह्निंत्रिःप्रदक्षि… कृत्य ॥ २२ ॥

देवैःसहिताः ॥ २३

गृणन्ति स्मामाषन्त ॥ २४ ॥ २५ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तामसाहङ्कारकार्याणामाकाशपर्यन्तं लयमुक्त्वा सात्त्विकाहङ्कारकार्याणां लयानुसन्धानमाह। इन्द्रियेषु मन इति । सविकल्पकज्ञाने मनस इन्द्रियैराकर्षणात् तेषु लयानुसन्धानमुक्तं नतु तत्कार्यत्वात् वैकारिकत्वान्मनसः यदुक्तं गीतासु "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते" इति। अत्रापि इन्द्रियैर्विषयाकृष्टैराकृष्टं ध्यायतां मन इति तानीन्द्रियाणि तन्मात्रेषु अत्रापीन्द्रियाणां वैकारिकत्वेऽपि तेषां शब्दादितन्मात्रैराकर्षणात् तन्मात्रेष्वित्युक्तम् अयमर्थः तामसाहङ्कारकार्याणां पृथिव्यादीनामाकाशपर्यन्तं लयमभिधाय तद्धर्माणाङ्गन्धादितन्मात्राणामिन्द्रियाकर्षकत्वेन इन्द्रियाणां च मनस आकर्षकत्वेन च मन इन्द्रियार्थानामुत्तरोत्तरानुवर्त्तित्वेन कार्यकारणयोरिव प्रदर्शयितुं लयानुसन्धानकीर्तनमिति परमार्थत इन्द्रियाणां वैकारिकेऽहङ्कारे आकाशस्य सशब्दस्य भूतादौ लय इति विवेकः तैजसस्य तु अहङ्कारस्य वैकारिकभूताद्योरनुग्राहकत्वमात्रमेव नतु कार्यान्तरमस्ति इति न तत्कार्यलय उक्तः यथोद्भवं यथा प्रवृत्ति मन आदीनामुत्तरोत्तराधीनप्रवृत्तिकत्वात् इन्द्रियेषु नभ इत्यपि पाठो दृश्यते नभः आकाशं शब्दादितन्मात्रेषु इन्द्रियविषयेषु विषये तद्वच्छब्द उपचारात्प्रयुक्तः भूतानां तन्मात्रेषु यथोद्भवं लय इत्यर्थः तानि तन्मात्राणि यथोद्भवमुद्भवमनतिक्रम्य उद्भवत्यस्मादिति उद्भवः कारणे भूतादावित्यर्थः भूतादिशब्दोवैकारिकतैजसयोरपि प्रदर्शनार्थः अत एव बहुवचनं तदयमर्थः भूतादिवैकारिकतैजसनामानि उपसंहृतकार्याणि उत्कृष्य आत्मनि आत्मा चित्तं तदनुग्राहके महत्तत्त्वे सन्दधे अनुसंहितवान् भूतादिना समुत्कृष्येति पाठे तानि तन्मात्राणि भूतादिना तामसाहङ्कारेण कारणभूतेन सह समुत्कृष्य तस्मिन् विलाप्य इत्यर्थः लयस्य कारणवस्तुना सह संश्लेषरूपत्वात्साहित्यविवक्षया तृतीया तं भूतादिं महतीत्यन्वयः ॥ १७ ॥

तं महान्तं सर्वगुणविन्यासबीजे गुणवैषम्यहेतुभूते मायामये प्रधाने न्यधात्स्वार्थे मयट् तं सर्वगुणविन्यासं जीवे मायामय इति पाठे तु तं महान्तं सर्वेषां गुणानां कार्याणां विन्यासः स्थितिर्यस्मिन् तत्प्रधानमव्यक्तं प्रतिन्यधात् प्रधानेन्यधादित्यर्थः तच्चाव्यक्तं मायामये अचित्समष्टिसंसृष्टे जीवे न्यधादित्यर्थः "महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते" इति श्रुत्यनुरोधात् अनुशयो भुक्तशिष्टं कर्म तद्वाननुशयी पूर्वं संसृतिदशायामनुशयी क्षीणप्रायदोष इत्यर्थः पुमान् जीवः असौ पृथुः तमचित्समष्टिसंसृष्टमात्मस्थं स्वस्वरूपस्थं नितरां प्रकृतिसम्बन्धवियुक्तमनुसंहितवानित्यर्थः ततो ज्ञानवैराग्यबलेन अनुशयं भुक्तावशिष्टं पूर्वोत्तरभेदेन सञ्चितानभ्युपगतबुद्धिपूर्वकभेदेन च भिन्नं पुण्यपापात्मकं कर्म अजहात् अत्याक्षीत् ततः प्रभुरकर्मवश्यो भूत्वा स्वरूपस्थः परमात्मात्मकाविर्भूतगुणाष्टकः स्वस्वरूपेणावस्थितोऽभून्मुक्तोऽभूदित्यर्थः ॥ १८ ॥

अथार्चिर्नाम्नी पृथोः पत्नी महाराजस्य स्त्री सुकुमारी अतदर्हा वनगमनादिक्लेशमनर्हन्त्यपि पतिमनुसृत्य वनं गता प्रविष्टा अतदर्हत्वमेवाह । यस्या अर्चिषः पद्भ्यां भुवः स्पर्शनं पद्भ्यां भुवमप्यस्पृशन्ती महाभोगशालिनी साक्षात् पद्भ्यां वनं प्रविष्टवतीत्यतदर्हत्वमुक्तम् ॥ १९ ॥

अतीव यद्भर्तुः व्रतं स्थण्डिलशयनादिरूपं तस्मिन् व्रते या निष्ठा तया भर्तुः शुश्रूषया ऋषीणामियमार्षी देहयात्रा कन्दमूलाद्याहाररूपा तया च कृशीभूतापि आर्तिं दुःखं नाविन्दत यतः प्रेयसः प्रियतमस्य पृथोः करस्पर्शनादिरूपः यः सम्मानः तेन निर्वृता ॥२०॥

आत्मनः स्वस्याः पृथिव्याश्च पत्युः पृथोः देहं विपन्नानि विगतानि अखिलानि चेतनादीनि बुद्धीन्द्रियप्राणादीनि यस्मिन् तथाभूतमालक्ष्य दृष्ट्वा किञ्चिद्विलप्य च सा सती अर्चिः तं देहं अद्रिसानुनि चितामारोपयत् ॥ २१ ॥

ततस्तत्कालोचितं कृत्यं च विधाय ह्रदिन्याः सरस्या जलेष्वाप्लुता सती उदारकर्मणो भर्तुः उदकं दत्त्वा दिविस्थान् त्रिदशान् नत्वा भर्तुः पादं ध्यायती चितां त्रिः परीत्य प्रदक्षिणीकृत्य वह्निं विवेश ॥ २२ ॥

वीरश्रेष्ठं पतिं पृथुमनुसृत्य गतां साध्वीं विलोक्य वरदा देववध्वः देवैः सह सहस्रशः तुष्टुवुः ॥ २३ ॥

तथा तस्मिन् मन्दरसानुनि कुसुमवर्षं कुर्वन्त्यः अमरतूर्येषु देवदुन्दुभ्यादिषु नदत्सु सत्सु परस्परं गृणन्ति स्म अभाषन्त ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इन्द्रियलयप्रकारध्यानमाह । इन्द्रियाणीति । समस्तानीन्द्रियाणि यथोद्भवं यथोत्पत्ति स्वस्वकारणेषु लीयन्त इति तन्मात्राणि शब्दादीनि च यथोद्भवं लीयन्त इति व्यचिन्तयदित्यन्वयः अत्रायं विभागः इन्द्रियाणि तैजसाहंकारे तदभिमानिदेवा वैकारिकाहंकाराभिमानिषु तेषां देहा वैकारिकाहंकारे पृथिव्यादयो गन्धादिभिः सह भूतादौ तामसाहंकारे लीयन्त इति भूतादिरित्युपलक्षणम् एवं त्रिविधाहंकारस्तानीन्द्रियादीन्समुच्चित्य संभृत्य महत्यात्मनि महत्तत्त्वे तदभिमानिनि चतुर्मुखे चाहंकाराभिमानी रुद्रो लीयत इति मनः संदध इत्यन्वयः ॥ १७ ॥

सर्वेषां गुणानां भक्तिज्ञानादीनां विशेषेण न्यासो निधानं यस्मिन्स तथा तं सत्त्वादिगुणैर्विविधा प्रपञ्चरचना येन स तथा तं वा तं महान्तं चतुर्मुखं तत्त्वलक्षणं जडं च मायामये मायाशब्दवाच्ये जीवे प्राणधारणशक्तिमति लक्ष्मीतत्त्वे न्यस्यति प्रविशतीति ध्यायेत् अन्यत्तु जडप्रकृतौ लीयत इतिजीवशब्दवाच्यत्वं च चेतनशरीराकारतया परिणामादुपचारः प्रलये केशवमनुशेत इत्यनुशयशब्दवाच्यत्वं पुंशक्तियुक्तत्वात्पुल्लिङ्गशब्दवाच्यां प्रकृतिं च जगदादानावात्मशब्दाभिधेयस्य हरेराधारतया तिष्ठतीत्यात्मस्थमचिन्तयत् अनुशयी चित्प्रकृत्यधीनत्वात्तद्द्वारागतत्वाच्चानुशयिशब्दवाच्योऽसौ पुमानित्युपलक्षणं चेतनराशिः अप्राकृतशरीरत्वात्स्वरूपशब्दवाच्ये ब्रह्मणि चतुर्मुखेन सह तिष्ठतीति ध्यानं व्यधात् प्रभुरित्यनेन मनोऽनुसंधानमस्तीति ध्वनयति केनैतत्सामर्थ्यमभूदित्यत उक्तं ज्ञानेति यद्वा एवं विधोपासनाजनितसामर्थ्येनानुशयी पृथुः स्वस्वरूपे ब्रह्मणि सायुज्यलक्षणं मोक्षमाप्तुं व्यधादित्यन्वय इति "मायेति प्रकृतिश्चेति मायाजीवश्च कथ्यते । शेतेऽनुकेशवं यस्मात्तस्मादनुशयोऽपि च । एतैस्तु नामभिर्वाच्या श्रीविष्णोरनपायिनी। तथैवानुशयी जीवस्तया बद्धो यतः सदा। पुरुषः शयनात्पूर्णं तथाऽहानाद्दहं स्मृतः। अप्राकृततनुत्वात्तु स्वरूपं हरिरुच्यते । नित्यचिद्दर्शनान्नित्यं ब्रह्म पूर्णत्वतः सदा" इति । समाख्यासिद्धत्वादुक्तपदार्थानामद्वैतवादिकल्पित इति सिद्धम् ॥ १८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पत्या चैवं गते तत्र वनेऽर्चिषा भार्य्यया किमकारीति तत्राह । अर्चिर्नामेति । पङ्कषां भुवः स्पर्शनं यत्तदनर्हा ॥ १९ ॥

भर्तुर्व्रतं ग्राम्यवर्जनादि तदेव स्वस्या अपि धर्मः तत्र निष्ठया आर्षदेहयात्रया कन्दमूलफलाद्यशनलक्षणया एवं विधानुष्ठानेन परिकर्शितापि प्रेयसः पत्युः करस्पर्शलक्षणमानेन निर्वृतानन्दप्लुता मार्त्ति व्रतानुष्ठाननिमित्तक्लेशं नाविन्दतेत्यन्वयः ॥ २० ॥

एवं तस्याः पृथोः पत्नीत्वयोग्यतामनुवर्ण्योत्तरक्रियां वक्ति । देहमित्यादिना । पृथिव्यां आत्मनः स्वस्याश्च दयितस्य पत्युर्देहं विपन्नाखिलचेतनादिकं चैतन्यप्राणादिवृत्तिलक्षणरहितमाखक्ष्य चितां शवदहनसाधनकाष्ठम् ॥ २१ ॥

हृदिनी नदी त्रिः परीत्य प्रदक्षिणीकृत्य ॥ २२ ॥

सत्याः वनेऽपि राजस्त्रीभोगलक्ष्मीसामग्री समभूदित्याह । विलोक्येति ॥ २३ ॥

कुसुमासारं पुष्पवृष्टिम् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तमित्यर्द्धकम् । ज्ञानवैराग्ययोर्वीर्यं यस्मात्तेन भक्तियोगेनेत्यर्थः स्वस्वरूपे पार्षदलक्षणे स्थितः सन् प्रभुस्तत्र महासमर्थः जहादित्यत्राप्यधादिति क्वचित् । अप्यधात् तिरोहितवान् अजहादित्यर्थः इति स्वामितात्पर्य्यादेष एव पाठ इति तज्ज्ञाः अजहादित्येव पाठः किन्तु यः पूर्व्वमित्यध्याहारसम्पादनायैव हेत्युक्तमन्ये ॥ १८ ॥ १९ ॥

प्रेयसः कर्म्मभूतस्य यत् सेवायां करेण स्पर्शने मानः पूजनञ्च ताभ्यां निर्वृतिर्यस्याः । निर्वृतेति चित्सुखः ॥ २० ॥

किञ्चिद्विपलप्येति । स्नेहेन विलप्य विचारेण तु तत् परित्यज्येत्यर्थ ॥ २१—२५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदेवं तामसाहङ्कारकार्य्यस्याकाशपर्यंतं लयमुक्त्वा सात्त्विकराजसाहङ्कारकार्य्याणां लयमाह । इन्द्रियेष्विति । मन इति देवानामप्युपलक्षणं मनः देवताश्च इन्द्रियेषु सन्दधे विलापयामास । तानीन्द्रियाणि तन्मात्रेषु शब्दादिष्विति मनस इन्द्रियाधीनत्वात् इन्द्रियेषु लयः । इन्द्रियाणाञ्च विषयाधीनत्वात् विषयेषु लयः सङ्गत एव । यदुक्तम् इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मन इति । यथोद्भवमिति परत्रैवान्वेति । ननु पूर्व्वत्र । ततश्च यथोद्भवं यथास्यात्तथा अमूनि तन्मात्राणि भूतादिना अहङ्कारेण उत्क्षिप्य तत्रैव भूतादावेव उत्कर्षेण क्षिप्त्वा प्रविलाप्येत्यर्थः तं भूतादिञ्च महत्यात्मनि महत्तत्त्वे इन्द्रियेषु नभ इति पाठे यथास्थानमित्यस्यानुवृत्तेः सर्व्वत्राधाराधेयभावेनैव लयो ज्ञेयः । तथाहि क्षितिमम्भसि तिष्ठति अम्भस्तेजसि तिष्ठतीत्येव पूर्व्वपामाधेयानां परपरत्राधारे लयः नभश्च इन्द्रियेषु तिष्ठतीति तस्य तेषु लयः । मनसोऽपीन्द्रियत्वादिन्द्रियाणि सर्व्वाणि विषयोन्मुखत्वानि येषु तिष्ठन्तीति इन्द्रियाणां तन्मात्रेषु लयः ततश्च तन्मात्राणां यथोद्भवमित्यनेन पूर्व्वानुवृत्तेन यथास्थानमित्यनेनाप्यन्वयः सम्भवति ॥ १७ ॥

सर्व्वेषां गुणानां विन्यासः स्थितिर्यत्र तं मायामये ... जीवोपाधौ मायायामित्यर्थः । स जीवो यत् पुनर्भव इत्या... जीवोपाधावपि जीवशब्दप्रयोगदर्शनात् तञ्चानुशयमुपाधि... पूर्व्वमनुशयी पुमान् जीवः असौ पृथुर्ज्ञानवैराग्यरूपाया नि... शक्तेर्वीर्येण प्रभावेन स्वस्वरूपे भगवद्भक्तिलब्धे पार्षददेहे स्थि... सन्नजहात् प्रभुः त्यागे परमसमर्थः । पूर्वंचिच्छेदसंशय... निजजीवकोषमिति यत्कोपच्छेदनमुक्तं तदेतत्प्रकारकमेव ... स्थूलदेहत्यागसमये पिष्टपेषन्यायेन तथा चक्र इति ततश्च ... वत्प्रेषितं विमानमारुह्य वैकुण्ठं जगामेत्यग्रिमवाक्ये व्यक्तं भावि...

वनप्रवेशमारभ्य राज्ञाः कथामाह।अर्चिर्नामेति चतुर्भिः ...

व्रतं भूमिशयनादिधर्मः श्रवणकीर्तनादिः । आर्षदेह... कन्दमूलादिवृत्तिः तथा प्रेयसः कर्म्मभूतस्य यत् सेवायां ... या स्पर्शनं मानः पूजनञ्च ताभ्यामेव निर्वृतिर्यस्याः सा ...

आत्मनः स्वस्य पत्युः पृथोः दया संजाता अस्येति ... तस्तस्य पृथिव्यां दुहितृभावात् तस्यां तस्य देयैवेत्यर्थः किञ्चिच्च विलप्येति तत्कालोचितक्रियाव्यग्रत्वात् ॥ २१ ॥

दिविस्थितान् स्वर्गादागत्य पृथुं दिदृक्षूंस्तस्याङ्गणे एवान्तरिक्षे स्थितान् वह्निं त्रिः प्रदक्षिणीकृत्य ॥ २२ ॥ २३ ॥

गृणान्तिस्म ऊचुः ॥ २४ ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भूतादिना अहङ्कारेण मेलयित्वा सिंहावलोकनन्यायेन क्षि... दीनां गन्धादौ लयमाह । यथोद्भवमुद्भवमुत्पत्तिमनतिक्रम्य त... त्रेषु तानि अमूनि क्षित्यादीनि उत्क्षिप्य तत्कारणेन भूतादि... तामसाहंकारेण सह आत्मनि तत्कारणे महति सन्दधे इत्य... अनुक्तसंग्रहार्थमाह । इन्द्रियेषु मन इति । इन्द्रियाणि इष्व... यग्रहणसाधनानि यस्य तथा भूतं मनश्च भूतादिना त... रणेन सह महति संदधे इत्यर्थः ॥ १७ ॥

तं महान्तं सर्वगुणविन्यासं सर्वगुणाश्रयं प्रधानं प्रतिन्य... तच्च प्रधानं जीवयति स्वशक्तिभूतं प्रधानं सृष्ट्युन्मुखं करो... जीवः सर्वहेतुः परमेश्वरस्तस्मिन् न्यधात् । नितरां शक्ति... शक्तिभूतं प्रधानमनुसंहितवान् ननु तस्य स्वतः सर्वदा परि... कामस्य विश्वसृष्ट्यर्थं प्रधानप्रवर्तने किं प्रयोजनमत्राह । माया... लीलामये "लोकवत्तु लीलाकैवल्यम्,,इति न्यायात् यद्वा माय... जीवानुग्रहार्थं प्रधानादिप्रेरके इत्यर्थः बुद्धीन्द्रियमनःप्राणान्... नामसृजत्प्रभुः । मात्रार्थं च भवार्थं च आत्मने कल्पनाय ... वक्ष्यमाणात् तस्य कारणं नास्तीत्याह । तं मायामयमा... स्वाश्रयमचिन्तयदिति शेषः असौ पृथुः अनुशयी अनुशयो ... तरत् कर्म तद्वान् ज्ञानवैराग्यवीर्येण अजहात् तदनन्तरं स्वरू... मुक्तप्राप्यभगवत्स्वरूपाश्रितः आविर्भूतापहतपाप्मत्वादिगुण... प्रभुरभूत् भगवत्साधर्म्यलक्षणं मोक्षं लब्धवानित्यर्थः ताद... भगवदवताराणां सर्वदैव मुक्तत्वात् मुमुक्षूणां हिताय मुक्ति... स्तद्द्वारा दर्शित इति बोध्यम् ॥ १८ ॥

अर्चिर्वृत्तान्तमाह । अर्चिरिति चतुर्भिः।अर्चिः सुकुमारी ...

॥ देव्य ऊचुः ॥

अहो इयं वधूर्धन्या या चैवं भूभुजाम्पतिम् ।
सर्वात्मना पतिं भेजे यज्ञेशं श्रीर्वधूरिव ॥ २५ ॥
सैषा नूनं व्रजत्यूर्ध्वमनुवैन्यं पतिं सती ।
पश्यतास्मानतीत्यार्चिर्दुर्विभाव्येन कर्मणा ॥ २६ ॥
तेषां दुरापङ्किन्त्वन्यन्मर्त्यानां भगवत्पदम् ।
भुवि लोलायुषो ये वै नैष्कर्म्यं साधयन्त्युत ॥ २७ ॥
स वञ्चितो वतात्मध्रुक् कृच्छ्रेण महता भुवि ।
लब्ध्वापवर्ग्यं मानुष्यं विषयेषु विषज्जते ॥ २८ ॥

॥ मैत्रेय उवाच ॥

स्तुवतीष्वमरस्त्रीषु पतिलोकं गता वधूः ।
यं वा आत्मविदां धुर्यो वैन्यः प्रापाच्युताशयः ॥ २९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पद्भ्यां भुवो यत्स्पर्शनं तदनर्हापि चशब्दोऽप्यर्थे तथापि पतिमनुवनं गता इति तस्या भर्तरि भक्त्यतिशयो दर्शितः ॥ १९ ॥

भर्तुर्यद्व्रतं स्थण्डिलशयनादि तस्मिन् धर्मतः या निष्ठा तया ऋषीणामियमार्षी कन्दमूलादिसेवनरूपा यात्रा देहधारणवृत्तिस्तया च सा अतीव कर्शितापि आर्तिं दुःखं नाविन्दत यतः प्रेयसः करस्पर्शेन यन्मानं तेन निर्वृतिः सुखसम्पत्तिर्यस्याः सा ॥ २० ॥

पृथिव्या दयितस्य प्रियस्य पितुरित्यर्थः । आत्मनः पत्युः विपन्नाखिलचेतनादिकं विनष्टचेष्टादिकं देहम् आलक्ष्य किञ्चिद्विलप्य तदनन्तरमद्रिसानुनि चितां तद्देहमारोपयत् ॥ २१ ॥

नृदिन्या जले आप्लुता स्नाता कृत्यं तत्कालोचितं विधाय भर्तुर्जलं दत्त्वा दिवि अन्तरिक्षे स्थितान् त्रिदशान्देवान्नत्वा भर्तृदेहदाहार्थं नियोजितं वह्निं त्रिःपरीत्य भर्तुः पादं ध्यायती तमेव वह्निं विवेश ॥ २२ ॥

देवैः सह वरदाः देवपत्न्यः स्तुष्टुवुः ॥ २३ ॥

कुसुमासारं पुष्पवर्षं कुर्वन्त्यः गृणान्तिस्म अभाषन्त ॥ २४ ॥

भाषाटीका ।

मनको इन्द्रियों में इन्द्रियों को तन्मात्रों में यथायोग्य भूतों को भूतादि अहङ्कार में अथवा अहङ्कार को महत्तत्व में लीन किया ॥ १७ ॥

सब गुणों की जिसमें स्थिति है तिस महतत्त्व को माया उपाधि वाले जीव नामक लिङ्ग शरीर में लीन किया शरीर के अभिमानी पृथुजी ने वैराग्यके वीर्य से अपने स्वरूप में स्थित होकर लिङ्ग शरीरको त्याग दिया ॥ १८ ॥

उनकी पत्नी अर्चिनाम की महारानी उनके पीछे वनको गई यद्यपि वह सुकुमारि है वन जाने लायक नहीं है जो पगसे भूमिका स्पर्श करे ॥ १९ ॥

अत्यन्त करके पतिका व्रत धर्म में निष्ठा रखने वाली होकर शुश्रूषा करती थी यद्यपि सरीरकी देहकी स्थिति करके बहुत कृश होने पर भी उसने कुछ दुःख नहीं माना प्यारे पति के हस्त के स्पर्श होने ही से सब दुःखों को भूल जाती थी ॥ २० ॥

पृथिवी के तथा अपने प्रिय पति के देह को सर्व प्रकार से चेतना रहित देखकर कुछ देर तक विलाप करके पर्वत शिखर पर चिता बनाकर आर्चि महारानी ने उस चिता में उस शरीर का आरोपण किया ॥ २१ ॥

उस काल के उचित सब काम को करके सरोवर के जल में स्नान किया फिर उदार कीर्ति वाले पति के लिये जल से तर्पण किया आकाश में रहने वाले देवतों को प्रणाम किया तीन बखत चिता की परिक्रमा की फिर पतिके चरणों का ध्यान करके अग्नि में प्रविष्ट हो गई ॥ २२ ॥

वीरों मे श्रेष्ठ पृथु महाराज के पीछे गई पतिव्रता अर्चि महारानी को देखकर देवताओं के साथ मे रहने वाली हजारों देव पत्नियों ने बड़ी प्रशंसा करी ॥ २३ ॥

उस मन्दराचल पर्वत के शिखर में पुष्पों की वर्षा करी उन्हो ने फिर देवतों के बाजे बजे तब आपस में देव स्त्री प्रशंसा करने लगीं ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

असतीनां दुर्विभाव्येन कर्तुमशक्येन कर्मणा ॥ २६ ॥

भगवान्पद्यते गम्यतेऽनेनेति तथा तन्नैष्कर्म्यं ज्ञानं ये चञ्चलायुषोऽपि साधयन्ति तेषामन्यद्देवादिपदं किमु दुर्लभं न किमपीत्यर्थः ॥ २७ ॥

इत्थंभूतानुभावोऽसौ पृथुः स भगवत्तमः ।
कीर्तितंतस्य चरितमुद्दामचरितस्य ते ॥ ३० ॥
य इदं सुमहत्पुण्यं श्रद्धयावहितः पठेत् ।
श्रावयेच्छृणुयाद्वापि स पृथोः पदवीमियात् ॥ ३१ ॥
ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः ।
वैश्यः पठन्विट्पतिः स्याच्छूद्रः सत्तमतामियात् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

अभक्तं शोचन्ति। स वञ्चितइति । यत आत्मने द्रुह्यति योऽपवर्गसाधनं मानुष्यं लब्ध्वापि विषयेष्वासक्तिं याति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

विशां पश्वादीनां वैश्यादीनां वा पतिः स्यात् । शूद्रः शृण्वन्निति शेषः तस्य पाठानधिकारात् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भाषणमेवाह । अहो इति । इयं वधूः अर्चिर्धन्या कृतार्था अहो इत्याश्चर्ये हर्षे वा या वधूः भूभुजां राज्ञां पतिं पतिं स्वभर्त्तारं सर्वात्मना सर्वप्रकारेण भेजे प्राप्ता यज्ञेशं भगवन्तं श्रीरूपिणी वधूरिव ॥ २५ ॥

तस्मात्सैषा सती अर्चिः पश्यतो नभस्थानतीत्य दुर्विभाव्येन चिन्तयितुमप्यशक्येन कर्मणा पतिपाराध्यादिना पतिं स्वभर्तारं वैन्यं पृथुमनुसृत्योर्ध्वं व्रजति नूनम् ॥ २६ ॥

भगवान् पद्यते गम्यतेऽनेनेति भगवत्पदं भगवत्प्राप्तिसाधनं नैष्कर्म्यं निवृत्तिधर्मं ये विद्युद्वदतीव चञ्चलायुषोऽपि साधयन्ति तेषां भगवद्भक्तानामन्यद्देवादिपदं किमु दुर्लभं न किंचिदित्यर्थः ॥ २७ ॥

अभक्तं शोचन्ति । स इति । यः पुमानापवर्ग्यमपवर्गसाधनं मानुष्यं मनुष्यं जन्म कृच्छ्रेण दुस्साध्येन महता कर्मपरिपाकेन भुवि लब्ध्वापि विषयेषु विषज्जते स वञ्चितो दैवेन वञ्चित इति खेदे ॥२८॥

एवं सुरस्त्रीषु स्तुवन्तीषु सतीषु वधूरर्चिः पतिलोकं गता प्राप्ता कोऽसौ पतिलोकः आत्मवतां ज्ञानिनां धुर्यः श्रेष्ठः वैन्यः पृथुः अच्युताश्रयो भगवतो निवासभूतं वैकुण्ठाख्यं यं लोकं प्राप तं लोकं गतेत्यर्थः ॥ २९ ॥

उपसंहरति । इत्थमिति । भगवत्तमः भगवताम् ।

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

इत्युक्तविधभगवतां मध्ये श्रेष्ठः असौ पृथुरित्थं भूतानुभावः उक्तविधप्रभावसम्पन्नः उदारचरितस्य पृथोश्चरितं ते तुभ्यं मया कीर्तितम् ॥ ३० ॥

एतच्चरितकीर्तनश्रवणश्रावणमाह । यः पुमान्सुमहत्पुण्यसाधनमिदं चरितमवहितमनाः समाहितचित्तः श्रद्धया पठेत् शृणुयात् श्रावयेद्वा स पृथोः पदवीं गतिमियात् प्राप्नुयात् ॥३१॥

आनुषङ्गिकफलमाह । ब्राह्मणः ब्रह्मवर्चस्वी भवेत् राजन्यः क्षत्रियः पठनादिकं कुर्वन् जगतीपतिर्भवेत् वैश्यः वि[illegible] शूद्र उत्तमतां सजातीयेषु प्राप्नुयात् ॥ ३२॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

धन्या सर्वगुणैः पूर्णा "अनपेक्षो गुणैः पूर्णो धन्य [illegible]च्यते बुधैः" इत्यभिधानम् ॥ २५ ॥ २६ ॥

ये मर्त्या नैष्कर्म्यं मोक्षलक्षणं भगवत्पदं साधयन्त्युत [illegible] ह्लोलानि चलान्यायूंषि येषां ते तथा तेषामन्यद्दुरापं [illegible] किमपीत्यर्थः ॥ २७ ॥

आपवर्ग्यं मुक्तिसाधनकारणम् ॥ २८ ॥

पतिलोकं नाथवन्तं लोकमिति शङ्कानिवृत्त्यर्थं वैन्यो यं [illegible] प्राप तं पतिलोकं गताभूदिति स्पष्टितम् ॥ २९ ॥

उपसंहरति। इत्थमिति । योऽसौ पृथुरित्थं भूतानुभावः [illegible] अनुभावः प्रभावे स्यान्निश्चये भावसूचक" इति यादवः।

भगो योन्यां भगो यत्ने यशोवीर्यार्कभूतिषु।
कान्तीच्छाज्ञानवैराग्यधर्मैश्वर्यतपःसु च ॥

इति वचनात् सत्प्रयत्नादिगुणवतामतिशयेन प्रधानत्वात् [illegible] वत्तमः ॥ ३० ॥

फलमाह । य इति । पदवीं भक्तिज्ञानादिलक्षणाम् ॥ ३१ [illegible] वर्णभेदेन फलं विविनक्ति । ब्राह्मण इति ॥ ३२॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एषा इत्यङ्गुल्या दर्शयन्ति । ऊर्द्ध्वं श्रीवैकुण्ठलोकं मनु[illegible] मित्यग्रपश्चाद्भावेन दर्शनात् ॥ २६ ॥

टीकायां भगवत्प्रापकं ज्ञानमिति भक्तियोगाङ्गत्वमुक्[illegible] यद्वा । भगवत्पदं श्रीवैकुण्ठं नैष्कर्म्यं कर्म्मणा न [illegible] त्यर्थः । विद्युल्लोलायुष इति चितसुखमतः ॥ २७ ॥

आपवर्ग्यं सालोक्यादिसिद्धिदं भक्तियोगसिद्धिदं वा ॥ [illegible]

पत्युः श्रीपृथोः सम्बन्धिनं लोकम् । तत् प्राप्तलोकमि[illegible] तस्य प्रापञ्चिकत्वं निषेधयति । यं वा इति । आत्मविदां धुर्यःअच्यु[illegible] इति ज्ञानप्रचारत्वेनात्मविदामाश्रयः । स्वत स्वच्युतमात्र [illegible] इत्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥

ब्राह्मण इति सार्द्धयुग्मकम् ॥ ३२—३८ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एषेत्यङ्गुल्या दर्शयन्ति। ऊर्ध्वमित्यधः किं चितास्मिन दर्[illegible]

त्रिः कृत्व इदमाकर्ण्य नरो नार्यथवादृता ।
अप्रजः सुप्रजतमो निर्धनो धनवत्तमः ॥ ३३ ॥
अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ।
इदं स्वस्त्ययनं पुंसाममङ्गल्यनिवारणम् ॥ ३४ ॥
धन्यं यशस्यमायुष्यं स्वर्ग्यं कलिमलापहम् ।
धर्मार्थकाममोक्षाणां सम्यक्सिद्धिमभीप्सुभिः ।
श्रद्धयैतदनुश्राव्यं चतुर्णां कारणं परम् ॥ ३५ ॥
(१) विजयाभिमुखो राजा श्रुत्वैतदभियाति यान् ।
बलिं तस्मै हरन्त्यग्रे राजानः पृथवे यथा ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भावः । नूनमिति वितर्के येयं विमानस्था काचिद् विद्योतिनी दृश्यते सैषा अर्चिरेव भवेदित्यर्थः । अनुवैण्यमित्यग्रे विमानस्थं वैण्यं तत्पश्चादर्च्चिषमपि विमाने पश्यतेत्यर्थः ॥ अस्मानतीत्येति वयं देवता भूत्वाप्यस्याः पादतलवर्तिन्योऽभूमेति भावः ॥ २६ ॥

हन्त हन्त ईदृश्य एव मानुष्यो वयमपि भूयास्म यदि भाग्यं स्यादित्याहुस्तेषामिति । किमन्यत् पारमेष्ठ्यादिकंनु ये वै निश्चितमेते पृथ्वर्च्चिः प्रभृतयः भगवतः पदं धाम वैकुण्ठं नैष्कर्म्यं रूपम् ॥ २७ ॥

अभक्तं शोचन्ति । स इति ॥ २८ ॥

ननु किं सहमरणपुण्यलभ्यं पतिलोकं नहि नहि यं लोकं वै निश्चितं वैण्यः प्राप आत्मविदां धुर्य्य इति न तस्य प्राकृतः पतिलोकः प्राप्यर्हः इति भावः । अच्युताश्रय इति नापि सायुज्यं लभ्यम् । न कामये नाथेत्यादितदीयप्रार्थनाविरोधात् । अतः श्रीस्वामिचरणैरेतदध्यायार्थं उक्तः । यथा । भयो विशे सभार्य्यस्य वने नित्यसमाधितः । विमानमधिरुह्याथ वैकुण्ठगतिरीर्य्यत इति भक्तभिक्षेष्वेव पतिलोकस्य वलीयस्त्वं ज्ञेयम् ॥ २९—३१ ॥

विशां पश्वादीनां वैश्यानां वा पतिः स्यात् ॥ ३२ ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वात्मना संपूर्णचेतसा पतिं भेजे अभजत् ॥ २५ ॥

नूनं निश्चितमस्मानतीत्य अतिक्रम्य ऊर्ध्वं व्रजति ॥ २६ ॥

निर्गतानि बन्धनभूतान्युपासकानां कर्माणि यस्मात्तन्नैष्कर्म्यं स्वाश्रितकर्मबन्धविमोचकं परं ब्रह्म ये भुवि साधयन्ति आराधयन्ति तेषां भगवत्पदम् अन्यत् पुरुषार्थजातं च किंदुरापमपि तु सुलभमेवेत्यर्थः ॥ २७ ॥

बतेति खेदे योऽपवर्ग्यं मुक्तिसाधनं मानुष्यं महत्कृच्छ्रेण लब्ध्वा विषयेषु इन्द्रियार्थेषु विसज्जते स मायया वञ्चितः अत एव आत्मने द्रुह्यतीत्यात्मध्रुग् भवति ॥ २८ ॥

वैन्यः यं वैण्यायं लोकं प्राप तं पत्युर्वैन्यस्य लोकं गता ॥ २९ ॥

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति

एवं विधः अतिशयेन भगवान् इति भगवत्तमः । उद्दामचरितस्य उत्तमपराक्रमस्य ॥ ३० ॥

अवहितः सावधानः ॥ ३१ ॥

विट्पतिः वैश्यानां पतिः सत्तमतां स्वज्ञातिप्रधानताम् ॥३२॥

---

भाषाटीका ।

देवस्त्री बोलने लगीं अहो ये वधू धन्य है जोकि सर्व-प्रकार से संपूर्ण राजों के पति पृथु महाराज को सेवन करती हुई जैसे कि विष्णु को लक्ष्मी भजती है ॥ २५ ॥

सब देखो ये बड़े दुष्कर्म को कर के पतिव्रता धर्म से हम सब को अतिक्रमण कर के वेन पुत्र महाराज के पीछे ऊर्ध्व लोकको जाती है ॥ २६ ॥

जो मनुष्य क्षणिक आयु वाले होकर भी निष्कर्म रूप-भगवत्पद को प्राप्त होते हैं संसार में उनकों और कौनसी बात दुर्लभ है ॥ २७ ॥

वह पुरुष अवश्य ही ठगा गया है आत्मद्रोही है । बड़े कठिन से जो मोक्ष प्राप्त होने योग्य मनुष्य शरीर को प्राप्त होकर भी विषय में आसक्त होता है ॥ २८ ॥

मैत्रेयजी बोले देवतों की स्त्री न के ऐसे स्तुती करने पर अर्चि महा रानी उस पति लोक को गई जिस लोक को भगवद्भक्त पृथु महाराज गये ॥ २९ ॥

इस प्रकार के प्रभाव वाले उत्तम ऐश्वर्यवान् पृथु महाराज भये उन का उत्तम चरित्र हमने आप के आगेकहा है ॥ ३० ॥

जो पुरुष श्रद्धा से सावधान होकर महापुण्य रूप इस कथा को पढ़े अथवा सुनावे सो पृथु महाराज की पदवी को प्राप्तहोय ॥ ३१ ॥

ब्राह्मण होतो ब्रह्मतेज वाला हो क्षत्रिय होतो पृथिवी का राजा वैश्यहोतो वैश्यों का पति हो शूद्रहोतो उत्तमता को प्राप्त होवे ॥ ३२ ॥

---

(१) संग्रामाभिमुख इति श्रीविजयध्वजतीर्थः ।

मुक्तान्यसङ्गो भगवत्यमलां भक्तिमुद्वहन् ।
वैन्यस्य चरितं पुण्यं शृणुयाच्छ्रावयेत्पठेत् ॥ ३७ ॥
वैचित्रवीर्याभिहितं महन्माहात्म्यसूचकम् ।
अस्मिन् कृतमतिर्मर्त्यः पार्थवीं गतिमाप्नुयात् ॥ ३८ ॥
अनुदिनमिदमादरेण शृण्वन् पृथुचरितं प्रथयन् विमुक्तसङ्गः ।
भगवति भवसिन्धुपोतपादे स च निपुणां लभते रतिं मनुष्यः ॥ ३९ ॥
इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां
पृथुचरितं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यपि बहूनि फलानि भवन्ति तथापि मुक्तान्यसङ्ग एव श्रवणादि कुर्यात् ॥ ३७ ॥

महतो भगवतो माहात्म्यस्य सूचकम् । पार्थवीं पृथुसम्बन्धिनीम् पार्थिवीमिति वा पाठः ॥ ३८ ॥

प्रथयन् कीर्तयन् भवसिन्धौ पोतः पादो यस्य ॥ ३९ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

नरो नारी वाहता आदरेण युक्तः त्रिःकृत्वः त्रिवारमिदमाकर्ण्य अप्रजाः सुप्रजाःविद्यारूपद्रविणबलादियुक्तपुत्रवान् भवेत् निर्धनः धनवतां मध्ये श्रेष्ठः अनभिव्यक्तकीर्तिः विपुलकीर्तिः मूर्खः ज्ञानविधुरः पण्डितो भवेत् ॥ ३३ ॥

स्वस्ति मङ्गलं ईयतेऽनेनेति तथा अमङ्गलं निवारयतीति तथा धन्यं धनसम्पादकं यशस्करम् आयुष्करं स्वर्गसाधनं कलिदोषहरम् ॥ ३४ ॥

धर्मादीनां सिद्धिं सम्यगभीप्सुभिः चतुर्णां धर्मादीनां परं कारणं साधनमेतत् चरित्रं श्रद्धयानुश्राव्यम् ॥ ३५ ॥

एतच्चरितं श्रुत्वा राजा संग्रामाभिमुखो यान् याति तस्मै अभियात्रे बलिं हरन्ति यथा राजानः पृथवे ॥ ३६ ॥

यद्यप्येवं विधानि बहूनि फलानि तथापि त्यक्तान्यफलसङ्गः भगवति भक्तिमुद्वहन्कुर्वन् ॥ ३७ ॥

वैचित्रवीर्याणां विचित्रवीर्यशालिनामभिमतं महतो भगवतो माहात्म्यस्य सूचकं वैन्यस्य चरितं शृणुयात् श्रावयेत् पठेच्च एवं चेदस्मिन् भगवति कृतमतिर्मर्त्यः पार्थिवीं पृथुना लब्धां गतिमाप्नुयात् ॥ ३८ ॥

य इदं पृथुचरितमत्यादरेण अनुदिनं शृण्वन्प्रथयन्कीर्तयन् विमुक्तान्यफलासङ्गः स मर्त्यः भवसिन्धौ पोतौ प्लवरूपौ पादौ यस्य तस्मिन् भगवति निपुणां मतिं लभेत ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचान्द्रिकायां
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रवणाद्यावृत्त्यासाधारणफलमाह । त्रिःकृत्व इति ॥ ३३ ॥

प्रतिपन्थिनिवारकं चेदभीष्टसिद्धिः स्यादनेन तत्कथं स्या[illegible] तस्तद्विशिनष्टि । इदमिति ॥ ३४ ॥

व्याख्यातुर्विशेषफलमाह । धर्मार्थेति । चरितस्य [illegible] सामर्थ्याभावे तदिच्छया किमित्यत उक्तं चतुर्णामिति [illegible] मान्यस्वभावे किमनेनेत्यत उक्तं परमिति परमुत्कृष्टम् ॥ ३५ ॥

असकृदावृत्त्या क्षिप्रं दिग्विजयफलमपि स्यादित्याह । सं[illegible] भिमुख इति ॥ ३६ ॥

भगवद्भक्त्यविनाभावेन श्रवणादिकुर्वत उक्तं फलं [illegible] न्यथा इत्याह । मुक्तेति ॥ ३७ ॥

पुनस्तात्पर्यादस्मिन्भक्तिं प्रथयति । वैचित्रवीर्येति । [illegible] पार्थवीं पृथोर्विद्यमानाम् ॥ ३८ ॥

तस्य चरितस्य शब्दविषयपरत्वे कथं भागवता[illegible] कार्यत इति तत्राह । अनुदिनमिति । प्रथयन् व्याख्यां कुर्वन् [illegible] सिन्धोः संसारसमुद्रस्य पारभूते तीरान्तरीभूते निपुणां [illegible] प्रसादजननसमर्थाम् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मनुष्य इति । मनुष्यमात्रस्याधिकारिता दर्शिता ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अमलां शुद्धां भक्तिमुद्वहन् उद्वोढुं मुक्तान्यसङ्गः [illegible] फल एव शृणुयात् ॥ ३७ ॥

हे विचित्रवीर्य्यस्य पुत्र ! महतां माहात्म्यस्य सूचकं [illegible] पाख्यानमिदमभिहितम् । पार्थवीं पृथुसम्बन्धिनीम् ॥ ३८ ॥ [illegible]

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोविंशश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रिः कृत्वः त्रिवारमाकर्ण्य सुप्रजा भवेद् धनवत्तमः धनवत्सु श्रेष्ठो भवेद् ॥ ३३ ॥

अमाङ्गल्यस्याहितस्य निवारणम् ॥ ३४ ॥

सम्यक् सिद्धिमभीप्सुभिः श्रद्धयैतदनुश्राव्यमिति सार्द्धश्लोकान्वयः ॥ ३५ ॥ ३६ ॥ ॥

उत्तमाधिकारीन्प्रत्याह । मुक्तान्यसंग इति ॥ ३७ ॥

हे वैचित्रवीर्य ! विदुर ! महतो भगवतो माहात्म्यसूचकं वैन्यस्य चरितमभिहितं कथितमस्मिन् चरिते पार्थवीं पृथुसंबन्धिनीं गम्यते इति गतिस्तां भगवद्भावापत्तिम् ॥ ३८

प्रथयन् कीर्तयन् भवसिंधोः पोतस्तारकः पादो यस्य तस्मिन् गम्यते अनया इति गतिर्भक्तिस्ताम् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोविंशाध्यायार्थप्रकाशः ॥ २३ ॥

---

भाषाटीका ।

नर अथवा नारी आदर से तीन बार यदि इस को श्रवण करेतो अपुत्री पुत्रवान् हो निर्धन धनीहो विना कीर्तिवाला कीर्तिमान् मूर्ख हो तो पण्डित होजावै ॥ ३३ ॥

यह चरित्र मनुष्यों का कल्याण कारक है अमङ्गलनाशक है धनदायक है यशदायक है आयुदायक है स्वर्गदायक है कलिमलनाशक है ॥ ३४

धर्म अर्थ काम मोक्ष की अच्छि सिद्धि चाहने वालों को श्रद्धा से इसका श्रवण करना चाहिये यह चारों की सिद्धि का कारण है ॥ ३५ ॥

विजय को उद्यत होकर राजा जिनके सन्मुख जाय वे सब शत्रु राजा इसी का पूजा भेट करते हैं जैसे पृथु जी को करते थे ॥ ३६ ॥

पृथु महाराज के पवित्र चरित्र को जो सुनै सुनावै पढ़ै पढ़ावै सो भगवान् में निर्मल भक्ति को प्राप्त होकर अन्य विषयों से विरक्त रहै ॥ ३७ ॥

हे विदुर ! महापुरुषों के माहात्म्य के जनाने वाला यह चरित्र है जो मनुष्य इस में बुद्धि को लगावैगा सो पृथु महाराज की गति को प्राप्त होगा ॥ ३८ ॥

जो मनुष्य फल की इच्छा छोडकर इस पृथु चरित्र को सुनै फैलावै सो मनुष्य संसार सागर के नौका जो भगवान् तिन में सुन्दर प्रीति को प्राप्त होजावै ॥ ३९ ॥

इति श्रीभागवत चतुर्थस्कन्ध त्रयोविंशाध्यायका
भाषानुवाद लक्ष्मणाचार्य कृत
समाप्त ॥ २३ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

## ॥ चतुर्विंशोऽध्यायः ॥

॥ मैत्रेय उवाच ॥

विजिताश्वोऽधिराजासीत् पृथुपुत्रः पृथुश्रवाः ।
यवीयोभ्योऽददात्काष्ठा भ्रातृभ्यो भ्रातृवत्सलः ॥ १ ॥
हर्यक्षायादिशत्प्राचीं धूम्रकेशाय दक्षिणाम् ।
प्रतीचीं वृकसंज्ञाय तुर्यां द्रविणसे विभुः ॥ २ ॥
अन्तर्धानगतिं शक्राल्लब्ध्वान्तर्धानसंज्ञितः ।
अपत्यत्रयमाधत्त शिखण्डिन्यां सुसम्मतम् ॥ ३ ॥
पावकः पवमानश्च शुचिरित्यग्नयः पुरा ।
वसिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः ॥ ४ ॥
अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत ।
य इन्द्रमश्वहर्त्तारं विद्वानपि न जघ्निवान् ॥ ५ ॥
राज्ञां वृत्तिं करादानदण्डशुल्कादिदारुणाम् ।
मन्यमानो दीर्घसत्रव्याजेन विससर्ज ह ॥ ६ ॥
तत्रापि हंसं पुरुषं परमात्मानमात्मदृक् ।
यजंस्तल्लोकतामाप कुशलेन समाधिना ॥ ७ ॥
हविर्धानाद्धविर्धानी विदुरासूत षट् सुतान् ।
बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम् ॥ ८ ॥
(१ बर्हिषत्सुमहाभागो हाविर्धानिः प्रजापतिः ।
क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ! ॥ ९ ॥
यस्येदं देवयजनमनुयज्ञं वितन्वतः ।
प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम् ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकादशभिरध्यायैः पृथोश्चरितमीरितम् ।
प्रचेतसामथाष्टाभिस्तन्मध्ये पञ्चभिः पितुः ॥ १ ॥
चतुर्विंशे प्रपौत्रात्तु पृथोः प्राचीनबर्हिषः ।
प्रचेतसां जनिस्तेभ्यो रुद्रगीतं च वर्ण्यते ॥ २ ॥

अधिराज आसीदित्यर्थः । यवीयोभ्यः कनिष्ठेभ्यः काष्ठा दिशः ॥ १ ॥
तुर्यां चतुर्थीमुत्तरां दिशम् ॥ २ ॥
शक्राल्लब्ध्वा पृथोरश्वमेधेऽश्वविजयावसरे ॥ ३ ॥

अपत्यत्रयमेवाह । पावक इति । पुरा यः शापस्तस्मान्मनुष्यत्वेनोत्पन्नाः सन्तो योगगतिमग्नित्वं प्राप्ताः ॥ ४ ॥
नभस्वत्यामन्यस्यां भार्यायाम् । अन्तर्धानस्य विशेषणमिति एतेन शक्रादन्तर्धानगतिलाभे कारणमुक्तम् ॥ ५ ॥
स चान्तर्धानो राज्ञां वृत्तिं करादानादिभिर्दारुणां परोपतापात्मिकां मन्यमानो विससर्ज ह ॥ ६ ॥
हन्ति स्वानां क्लेशमिति हंसस्तं पुरुषं पूर्णम् । कुशलं ... तद्रूपेण समाधिना ॥ ७ ॥ ८ ॥
हाविर्धानिर्हविर्धानस्य पुत्रः योगेषु च प्राणायामादिषु ...

(१) महाबाहो इति श्री वीरराघवः ।

श्रीधरस्वामिकृतभावार्थदीपिका

क्रियाकाण्डनिष्णातत्वमाह । यस्येति । इदं वसुधातलं देवयजनं यज्ञवाटं वितन्वतः यत्रैको यज्ञः कृतस्तत्समीप एव यज्ञान्तरं कुर्वतः सतः अत एव प्राचीनबर्हिरित्युच्यते ॥ १० ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं कार्त्स्न्येन पृथुचरितमभिधाय तत्सन्ततिं तच्चरित्रं चाभिधातुमुपक्रमते मुनिः । विजिताश्व इति । विजिताश्वः पृथोः पुत्रः विपुलकीर्तिः अधिराज आसीत् भ्रातृवत्सलो विजिताश्वः यवीयोभ्यः कनिष्ठेभ्यः भ्रातृभ्यः काष्ठा दिशः प्रादात् ॥ १ ॥

कां काष्ठां कस्मै प्रदादित्यत्राह । हर्यक्षाय प्राचीं दिशं धूम्रकेशाय दक्षिणां दिशं वृकसंज्ञाय प्रतीचीं दिशं तुरीयाय चतुर्थायुदीचीं दिशं द्रविणसे विभुर्विजिताश्वः अदिशददात् ॥ २ ॥

पृथोरश्वविजयावसरे शक्रादन्तर्धानगतिं तिरोधानगतिं लब्ध्वा अन्तर्धानसंज्ञितः अन्तर्धानाख्योऽभूत् विजिताश्वस्यैव अन्तर्धान इति नामान्तरमित्यर्थः अन्तर्धानसंज्ञितो विजिताश्वः शिखण्डिन्यां सुसम्मतमपत्यत्रयमाधत्त उत्पादयामास ॥ ३ ॥

अपत्यत्रयमेवाह । पावक इति । पुरा यो वसिष्ठस्य शापः तस्मात् त्रयोऽग्नयः गार्हपत्याहवनीयदक्षिणाग्नयः पावकादिरूपेण मनुष्येषूत्पन्नास्ते पुनर्योगगतिमग्नित्वं प्राप्ताः आहवनीयत्वादेः संस्काररूपत्वात्तेषां मनुष्यरूपेणोत्पत्त्यनर्हत्वात्तदभिमानिदेवतानामुत्पत्तिरत्र विवक्षिता ॥ ४ ॥

नभस्वत्यामन्यस्यां भार्यायामन्तर्द्धानो विजिताश्वः हविर्धानं पुत्रं लेभे अन्तर्धानं विशिनष्टि । यः अन्तर्धानोऽश्वहर्तारं विद्वान् जानन्नपि न अघ्निवान् एतेन शक्रादन्तर्धानगतिलाभे कारणमुक्तम् ॥ ५ ॥

राज्ञां वृत्तिं करादानदण्डशुल्कादिभिरतिदारुणां परपीडात्मिकां मन्यमानः दीर्घसत्रानुष्ठानव्याजेन विससर्जेत्यर्थः ॥ ६ ॥

तत्रापि दीर्घसत्रेऽपि हंसं स्वानां क्लेशं हन्तीति हंसं शुद्धं वा परमात्मानं पुरुषं परमपुरुषमात्मदृक् प्रकृतिविलक्षणात्मयाथात्म्यज्ञानी सन् यजन् कुशलेन विघ्नानुपहतेन समाधिना भगवल्लोकमवाप ॥ ७ ॥

हे विदुर ! हविर्धानादन्तर्धानपुत्रात् हविर्धानी तद्भार्या बर्हिषदादीन् षट्सुतान् असूत ॥ ८ ॥

हे महाबाहो ! हाविर्धानिः हविर्धानस्यापत्यं बर्हिषत् प्रजापालनपरः क्रियाकाण्डेषु योगेषु च निष्णातः निष्ठितोऽभूत् हे कुरूद्वह ! ॥ ९ ॥

क्रियाकाण्डेषु निष्णातत्वमेवाह । यस्येति । इदं वसुधातलं देवयजनं यज्ञवाटं वितन्वतः यत्र देशे एको यज्ञः कृतस्तत्समीप एव देशे पुनर्यज्ञान्तरं कुर्वतः प्राचीनाग्रैः कुशैः कृत्स्नं वसुधातलमास्तृतमासीत् अत एव प्राचीनबर्हिरित्युच्यते ॥ १० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ईश्वरज्ञानमन्विच्छन्मोक्षमिच्छेज्जनार्दनादित्यतो मोक्षासिद्धये रुद्राज्ज्ञानोपदेशप्रकारो ब्रह्मपदयोग्यानामृजूनां देवानामुत्तमाधिकारित्वं चेति द्वयमस्मिन्नध्याये निरूप्यते तत्रादावेतस्योपोद्घातमाह । विजिताश्व इति । काष्ठा दिशः ॥ १ ॥

तुरीं चतुर्थीमुत्तराम् ॥ २ ॥

अन्तर्धानगतिमदृश्यविद्याम् नाम्ना शिखण्डिन्यां भार्यायाम् ॥ ३ ॥

पुरा पूर्वजन्मनि । अग्नीनां मनुष्ययोनावुत्पत्तौ निमित्तमाह । वसिष्ठेति । तत्फलमाह । पुनरिति ॥ ४ ॥

अन्तर्धानो विजिताश्व एव । तं विशिनष्टि । य इन्द्रमिति ॥ ५ ॥

कर्माधिकारे स्थितस्य तस्य सन्यासप्रकारं वक्ति । राज्ञामिति ॥ ६ ॥

भगवदर्पणक्रियया क्रियमाणस्य कर्मणा उत्पन्नज्ञानफलमाह । तत्रापीति । हंसं निर्मलम् ॥ ७ ॥ ८॥

हविर्धानपुत्रो बर्हिष्मत्कर्मकाण्डेषु प्रवर्तमानो निवृत्तिमार्गाविरोधेनोभयत्र निष्णातोऽभूदित्याह । बर्हिष्मदिति ॥ ९ ॥

तत्र क्रियाकाण्डनैष्णात्यं विशदयति । यस्येति । अनेन प्राचीनबर्हिरिति नामध्वनयति देवयजनं यज्ञक्षेत्रम् ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

राज्ञामिति । साक्षात्त्यागे राजमर्य्यादालङ्घनं स्यादिति भावः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पृथोः प्रपौत्रात् प्राचीनबर्हिषो ये प्रचेतसः ।
चतुर्विंशे रुद्रगीतं त आपुरिति कीर्त्यते ॥

अधिराजा अधिराजः यवीयोभ्यः स्वकनिष्ठेभ्यः ॥ १ ॥ २ ॥

लब्ध्वा पितुरश्वमेधीयाश्वविजयावसरे इत्यर्थः अन्तर्द्धाननामा ॥ ३ ॥

योगगतिमाग्नेयम् ॥ ४ ॥

नभस्वत्यामन्यस्यां भार्य्यायां योऽन्तर्द्धानः । विद्वानपि न जघ्निवानिति शक्रादन्तर्द्धानगतिलाभे कारणम् ॥ ५ ॥

योऽन्तर्द्धानो राज्ञां वृत्तिं विससर्ज । कुतः करादानादिभिर्दारुणां मन्यमानः ॥ ६ ॥

अत्रापि दीर्घसत्रेऽपि कर्मकुर्व्वन्नपि हंसावतारं यजन् तस्य लोकपद लोको वासस्थानं यस्य मृगेक्षणीतिवत् समासः तस्य भावस्तत्ता ताम् हन्ति स्वानां क्लेशमिति हंसस्तं पुरुषं पूर्णम् ॥ ७ ॥ ८ ॥ ६ ॥

यस्येदं वसुधातलं कुशैरास्तृतमाच्छादितमासीदिति । पृथिव्यां तादृशं स्थलं नासीद्यत्र तेन यज्ञः कृतो नासीदित्यत एव स प्राचीनबर्हिरित्युच्यत इति भावः । तत्राप्यनुयज्ञं प्रति यज्ञमेवं देशानां संक्षेपमेव यजनं वितन्वतः विस्ताय्यं मुख्यकल्पेनैव कुर्व्वतः ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमेकादशभिरध्यायैः पृथुचरितमुक्त्वाऽथाष्टाभिस्तत्पुत्रपौत्रादिचरितमाह तत्र चतुर्विंशे विजिताश्वादिगुणवर्णनपूर्वकम् रुद्रगीतं वर्ण्यते । विजिताश्वः पृथुश्रवाः महायशाः अधिराजासीत् अधिराजः आसीत् यवीयोभ्यः कनिष्ठेभ्यः काष्ठा दिशः १-२॥

सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम् ।
यां वीक्ष्य चारुसर्वाङ्गीं किशोरीं सुष्ठ्वलङ्कृताम् ।
परिक्रमन्तीमुद्वाहे चकमेऽग्निः शुकीमिव ॥ ११ ॥
विबुधासुरगन्धर्वमुनिसिद्धनरोरगाः ।
विजिताः सूर्यया दिक्षु क्वणयन्त्यैव नूपुरैः ॥ १२ ॥
प्राचीनवर्हिषः पुत्राः शतद्रुत्यां दशाभवन् ।
तुल्यनामव्रताः सर्वे धर्मस्नाताः प्रचेतसः ॥ १३ ॥
पित्रादिष्टाः प्रजासर्गे तपसेऽर्णवमाविशन् ।
दशवर्षसहस्राणि तपसार्चंस्तपस्पतिम् ॥ १४ ॥
यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता ।
तद्ध्यायन्तो जपन्तश्च पूजयन्तश्च संयताः ॥ १५ ॥

॥ विदुर उवाच ॥

प्रचेतसां गिरित्रेण यथासीत्पथि सङ्गमः ॥
यदुताह हरः प्रीतस्तन्नो ब्रह्मन् ! वदार्थवत् ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पृथोरश्वमेधविजयावसरे विजिताश्व एव शक्रादन्तर्द्धानगतिं लब्ध्वा अन्तर्द्धानसंज्ञितोऽभूत् ॥ ३ ॥

योगगतिमाग्नित्वं गताः ॥ ४ ॥ ५ ॥

अन्तर्द्धानस्यापि परमेश्वरभक्त्या मुक्तिमाह । राज्ञामितिद्वाभ्याम् । राज्ञां वृत्तिं करादानादिभिर्दारुणाम् हिंस्रां मन्यमानो विससर्ज ह ॥ ६ ॥

तत्र व्याजमात्रेण क्रियमाणे दीर्घसत्रे हन्ति भक्तक्लेशमिति हंसमात्मदृक् उपास्योपासकस्वरूपवित् कुशलेन निर्विघ्नेन सम्यक् समाधिना यजन् पूजयन् तल्लोकतां भगवत्पार्षदत्वमाप ॥ ७ ॥ ८ ॥

योगेषु ज्ञानवैराग्यभक्तिषु ॥ ९ ॥

तस्य क्रियाकाण्डेषु निष्णातत्वमाह । यस्येति । अनुयज्ञं यत्रैको यज्ञः कृतस्तदनुतत्समीपे यज्ञान्तरं कुर्वतः प्राचीनाग्रैः कुशैरास्तृतं वसुधातलं देवयजनं देवपूजनस्थानमासीत् अत एव प्राचीनवर्हिरिति तस्य नाम ॥ १० ॥

---

भाषाटीका ।

मैत्रेयजी बोले पृथु महाराज के पुत्र विजिताश्व नाम के राजा हुये सो बडी कीर्ति वाले थे उनने अपने छोटे भ्रातों को सब दिशा दान करदियीं ॥ १ ॥

हर्यक्ष को पूर्व दिशा दिया धूम्रकेश को दक्षिण दिशा दिया । वृकको पश्चिम दिशा दिया द्रविणस को उत्तर दिशा दिया ॥ २ ॥

इन्द्र से अन्तर्धान गति को प्राप्त होकर अन्तर्धान संज्ञा को प्राप्त हुये फिरशिखण्डिनी के मध्यमें अपने सम्मत तीन [illegible] को उत्पन्न किये ॥ ३ ॥

पावक पवमान शुचि ये तीन अग्नि पूर्वकाल में वसिष्ठ [illegible] शाप से पैदा भये फिर योग गति को प्राप्त होगये ॥ ४ ॥

अन्तर्धानने नभस्वती के मध्यमें हविर्धान को उत्पन्न [illegible] जिनने घोडा चुराते हुये इन्द्र को जानकर भी नहीं माराथा ।

किस्ती का लेना इत्यादि राजों का वृत्ति दण्ड देना [illegible] दारुण कर्म जानकर दीर्घ सत्र के निमित्त से राज्य को [illegible] दिया ॥ ६ ॥

फिर वनमें भी जाकर आत्मज्ञानी होकर हंस पुरुष [illegible] मात्मा का आराधन करके निपुण समाधि से भगवत् के [illegible] को प्राप्त होगये ॥ ७ ॥

हे विदुरजी ! हविर्धान के सकास से हविर्धानी ने छः [illegible] पैदा किये वर्हिषद् गय शुक्ल कृष्ण सत्य जितव्रत ॥ ८ ॥

हविर्धान के पुत्र वर्हिषत् बडे भाग्यशाली होकर प्रजा[illegible] भये हे कुरूद्वह ! वे क्रियाकाण्ड मे योग शास्त्र में भी नि[illegible] भये ॥ ९ ॥

जिनके सब यज्ञों में देवता यजन में सब पृथिवी तल प्रा[illegible] अग्रवाले कुशों से ढकगया ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

समुद्रस्य कन्यां देवदेवेन ब्रह्मणोपदिष्टां शतद्रुतिनाम्नीं [illegible] वालां परिक्रमन्तीं प्रदक्षिणं गच्छन्तीम् शुकीमिवाग्निरेवं [illegible] यते । सप्तर्षीणां सत्रे तद्भार्या दर्शनेनाग्निः कामसन्तप्तोऽ[illegible] च तद्भार्यां स्वाहानाम सप्तर्षिभार्यारूपधारिणी सती [illegible] रमयित्वा च तद्रेतः शुकीरूपेण शरस्तम्बे निधायाग[illegible]

सङ्गमः खलु विप्रर्षे ! शिवेनेह शरीरिणाम् ।
दुर्लभो मुनयो दध्युरसङ्गाद्यमभीप्सितम् ॥ १७ ॥
आत्मारामोऽपि यस्त्वस्य लोककल्पस्य राधसे ।
शक्त्यायुक्तो विचरति घोरया भगवान् भवः ॥ १८ ॥
॥ मैत्रेय उवाच ॥
प्रचेतसः पितुर्वाक्यं शिरसादाय साधवः ।
दिशं प्रतीचीं प्रययुस्तपस्यादृतचेतसः ॥१९॥
समुद्रमुपविस्तीर्णमपश्यन् सुमहत्सरः ।
महन्मन इव स्वच्छं प्रसन्नसलिलाशयम् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यथा सप्तर्षिभार्याभ्रान्त्याग्निः कामितवांस्तद्वदिति स्तुकीमिवेति-पाठे स्तोकघृतधारामिवेत्यर्थः ॥ ११ ॥

सूर्यया नवोढयैव विबुधादयो विजिता अभिभूतास्तश्च नूपुरैः पादौ क्वणयन्त्यैव तद्ध्वनिमात्रेणेत्यर्थः ॥ १२ ॥

तुल्यं नाम व्रतमाचारश्च येषाम् । धर्मस्नाता धर्मपारगाः॥ १३॥

तपसा तपसां पतिं हरिमर्चन्नर्चयामासुः ॥ १४ ॥ १५ १६ ॥

मुनयोऽपिसंगत्यागेनाप्तुमिष्टं यं दध्युरेव केवलं न तु प्रापुः । तेन शिवेन ॥ १७ ॥

ननु मुनीनां किं तद्ध्यानेन घोरत्वादित्याशङ्क्याह । आत्मारामोऽपि लोकरचनायाः पालनाय ॥ १८ ॥

गुर्वाज्ञाकारिणां शिवदर्शनं स्वत एव भवतीत्याशयेनाह । प्रचेतस इति ॥ १९ ॥

समुद्रमुपसमुद्रात्किंचिन्न्यूनम् । "उपोऽधिकेच,, इति कर्मप्रवचनीयः प्रसन्नाः सलिलाशया मत्स्यादयो यस्मिन् ॥ २० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स प्राचीनबर्हिः समुद्रस्य पुत्रीं देवदेवेन ब्रह्मणा उपदिष्टां शतद्रुतिमित्याख्यामुपयेमे तां विशिनष्टि किशोरीं बालां चारूणि सुन्दराणि सर्वाण्यप्यङ्गानि यस्यास्तां सुष्ठु अलङ्कृतां उद्वाहे विवाहे परिक्रमन्तीमग्निर्यां शतद्रुतिमग्निश्चकमे शुकीमिव अयमर्थः । सप्तर्षीणां सत्रे तद्भार्यादर्शनेनाग्निः कामदष्टोऽभूत् तं च तद्भार्या स्वाहानाम सप्तर्षिभार्यारूपधारिणी सती रमयामास रमयित्वा च तद्रेतः शुकीरूपेण सरस्तम्बे निधायागच्छत् तां च यथा सप्तर्षिभार्या भ्रान्त्याग्निः कामितवान् तद्वदिति स्तुकीमिति पाठे स्तोकघृतधाराभिवेत्यर्थः ॥ ११ ॥

सूर्यया नवोढयैव नूपुरैः क्वणयन्त्या शतद्रुत्या विबुधादयः सर्वे विजिताः वशीकृता मोहिता इति यावत् ॥ १२ ॥

प्राचीनबर्हिषः सकाशात् शतद्रुत्यां दशपुत्रा अभवन्नुदभवन् पुत्रान् विशिनष्टितुल्यं नाम व्रताचारो येषां ते धर्मस्नाताः धर्मनिष्णाताः धर्मपारगा इति यावत्। निष्णातशब्दो हि सर्वत्र विधवितानुष्ठानान्तरभाव्यवभृथस्नानस्थानियमान्तगमनमाह । प्रचेतसः प्रचेतो नामानः ॥ १३ ॥

प्रजासर्गे पित्रा उपदिष्टाः प्रथमं तपश्चर्तुं वनमरण्यमाविशन् दशसंख्याकवर्षाणां वत्सराणां सहस्राणि तपसां पतिं भगवन्तं तपसा आर्चन्नर्चयामासुः ॥ १४ ॥

पथि मार्गे दृष्टेन प्रसीदता गिरिशेन रुद्रेण यदुक्तमुपदिष्टं तद्ध्यायन्तस्तदर्थं ध्यायन्तस्तज्जपन्तश्च समाहितचित्ताः पूजयन्तश्च आर्चन्निति पूर्वेणान्वयः ॥ १५ ॥

गिरिशेनोक्तं ध्यायन्त इत्याद्युक्तं तत्र किमुक्तं गिरिशेनेति पृच्छति विदुरः । यदा यस्मिन् काले पथि गिरित्रेण सह प्रचेतसां सङ्गम आसीत् हे ब्रह्मन् ! प्रीतो हरो रुद्रः अर्थवत् पुरुषार्थसाधनं यदाह तन्नो अस्मभ्यं वद ॥ १६ ॥

शिवसङ्गमस्य दौर्लभ्यमाह । हे विप्रर्षे ! शरीरिणां नृणां संसारे शिवेन साकं सङ्गमो दुर्लभः दुःखेनापि लब्धुमशक्यः मुनयः अभीप्सितं प्राप्तुमिष्टं यं शिवमसङ्गात् विषयान्तरसङ्गत्यागात् दध्युरेव केवलं न तु प्रापुस्तेन शिवेन ॥ १७ ॥

ननु मुनीनां किंतद्ध्यानेन घोरत्वादित्याशङ्क्याह । योऽयं भगवान् उत्पत्त्यादिज्ञानवान् हरः आत्मारामोऽपि आत्मारामत्वेन लोकसञ्चारप्रयोजनरहितोऽपीत्यर्थः दीनलोकस्य राधसे सिद्धये दीनाननुग्रहीतुमिति यावत् शक्त्या स्त्रिया सह युक्तः घोरया भूत्या उपलक्षितो विचरति ॥ १८ ॥

एवमापृष्टो मुनिस्तत् यथा वक्तुमुपक्रमते । प्रचेतस इति । साधवः प्रचेतसः पितुः प्राचीनबर्हिषः वाक्यं प्रजाः सृजेति वाक्यं शिरस्याधाय अतिगौरवेण शिरसानुमोद्य सृष्ट्यर्थं तपसा दृतचेतसः प्रतीचीं दिशं प्रति ययुः ॥ १९ ॥

समुद्रमुपसमुद्रात् किञ्चिन्न्यूनम्। उपोऽधिकेच" इति कर्मप्रवचनीयत्वे तद्योगात् द्वितीया समुद्रसमीपे वा विस्तीर्णं सुशोभनं महत् श्रेष्ठं सर अपश्यन् महत्त्वमेव स्पष्टयति महतां ज्ञानिनां मन इव स्वच्छं निर्मलं प्रसन्नाः सलिलाशया ये मत्स्यादयः यस्मिन् ॥ २० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अपत्नीकस्यास्य यज्ञकरणं कथमिति शङ्कां निवारयितुमाह । सामुद्रीमिति समुद्रपुत्रीमिति वचनादयं विशेषो ज्ञातव्यः देवदेवेन ब्रह्मणोक्तां तां विशिनष्टि । यामिति। शुकीमिव यथा नाडना शुकीं राजपुत्रीमग्निः प्रदक्षिणीकुर्वाणां कामितवानिवदायान्तरभाव्यथः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यामेनामप्यादातुं शक्यमावेऽप्यग्निश्चकमे इत्यन्वयः। "राजपुत्रीं शुकीमग्निरावर्तन्तीं प्रदक्षिणम्। आदायान्तरधाद्दानसमये मन्मथातुर" इति वचनादयं विशेषो ज्ञातव्यः॥ ११॥

अग्निश्चकम इति यदेतच्चित्रमिति भावेनाह। विबुधेति। अग्नेरपि विबुधेष्वेकत्वात् सूर्यां नवोढा सूर्यं विहर्तुं नासहेति श्रुतेः॥ १२॥

तुल्यं नाम व्रतं च येषां ते तथा किं तत्तुल्यं नामेत्यत्राह। प्रचेतस इति॥ १३॥

तत्कर्माह। पित्रादिष्टा इति॥ १४॥

एषां को गुरुः किं जप्यं किंध्येयमत्राह। यदुक्तमिति॥ १५॥

संक्षेपेणोक्तम् विस्तरतः श्रोतुं विदुरः पृच्छति। प्रचेतसामिति। यद्वा। किं वा अर्थवत्प्रयोजनवत्॥ १६॥

पथिकानां पुरुषाणां तत्र सङ्गमः सुलभः स्यादतः किञ्चोक्तमत्राह। सङ्गम इति। असङ्गा मुनयः सतामभीप्सितमदधुस्तेन शिवेन सह सङ्गमः॥ १७॥

जगतो निरोगत्वाय विचरतोऽपि शिवस्यात्मारामत्वेन निस्पृहस्य सङ्गमेऽपि सम्भाषणं न सम्भाव्यत इत्याशयेनाह। आत्मारामोपीऽति। यस्त्वस्य लोककल्पस्य जनस्य रोगान्मुक्तत्वस्य राधसे सिद्धये तीव्रया शक्त्येत्यनेन सम्भाषणानुपपत्तिं सूचयति॥ १८॥

सम्भाषणस्य योग्यावस्थां वक्ष्यन्मैत्रेयः प्रचेतसां कथामादित आवर्तयति। प्रचेतस इति॥ १९॥

समुद्रमुपससमुद्रस्य समीपे विस्तीर्णं दक्षिणोत्तरायतं महतः कण्वस्य मुनेर्मन इव स्वच्छं। यद्वा। महतां श्रीनारायणस्य चरणारविन्दपरायणानां मनो यथा निर्मलं तथा॥ २०॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

सामुद्रीमित्यर्द्धकम्॥ ११॥ १२॥

धर्मस्नाता इत्यत्र धनुःस्नाता इति चित्सुखः धनुर्वेदपारगाः॥ १३॥ १४॥ १५॥

घोरया दुष्टं प्रति॥ १६॥ १७॥ १८॥ १९॥

समुद्रमिति त्रिकम्। समुद्रमुप उपसमुद्रं तत्समीपमित्यर्थः स्वच्छत्वं स्थलस्य प्रसन्नत्वं सलिलस्य किं कुर्वत् सरः विद्रु पद्मकोश रजो विक्षिपत्। कीदृशं तद्व्रजः पवनेन उत्सवः उद्रेको यस्य तत्॥ २०॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

समुद्रस्य कन्यां देवदेवेन ब्रह्मणोपदिष्टाम् शुकीमिवेत्येवं व्याख्यायते। महर्षीणां सत्रे तद्भार्यादर्शनेनाग्निः कामार्तोऽभूत् तत्र तद्भार्यो स्वाहा नाम सप्तर्षिभार्याणां रूपधारिणी सती रमयामास रमयित्वा च तद्रेतः शुकीरूपेण शरस्तंबे निधायागच्छत् तां यथा सप्तर्षिभार्याभ्रान्त्या अग्निः कामितवान् तद्वत्। स्तुकीमिवेति पाठे स्तोक घृतधारामिवेत्यर्थः॥ ११॥

सूर्यया नवोढयैव विजिताः। तत्र नूपुरैः पादौ क्वणयन्त्यैव ध्वनिमात्रेणैव नतु तां केऽपिद्रष्टुं शेकुरिति भावः॥ १२॥ १३॥

तपसां पतिं हरिमभ्यर्चयामासुः। कीदृशाः यदुक्तं गिरिशेन तदेव ध्यायन्तः। यत् रहो रहस्यं प्रीतः सन् वाचा अभिनयेनैव आह॥ १४॥ १५॥ १६॥

असङ्गात् सङ्गं परित्यज्य अपि सर्वतो भावेन हृत्पिस्तं ... मिष्टं यं मुनयोऽपि दध्युरेव॥ १७॥

मुनीनां ध्यानगम्योऽपि कृपया सकामानामपि कामं ... दृश्योऽपि भवतीत्याह। आत्मेति। लोककल्पस्य राधसे लोक... रथकल्पस्य सिद्धये॥ १८॥ १९॥

समुद्रमुपसमुद्रात् किञ्चिन्न्यूनं उपोऽधिके हीने चेति ... प्रवचनीयः॥ २०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सामुद्रीं समुद्रपुत्रीम् देवदेवेन ब्रह्मणोक्ताम् यामग्निः ... इत्युत्तरेणान्वयः उद्वाहे विवाहकाले परिक्रमन्तीं प्रदक्षिणं ... न्तीमग्निश्चकमे अकामयत शुकीमिव सप्तर्षीणां सत्रे सप्तर्षि... दर्शनेन कामसंतप्तमग्निं तद्भार्य्या स्वाहाख्यासप्तर्षिभार्या... रमयित्वा तद्रेतः शुकीरूपेण शरस्तंबे निधायागच्छत् तां यथा... सप्तर्षिभार्या भ्रान्त्याचकमे तद्वत्॥ ११॥

यया सूर्यया नवोढयैव विबुधादयो विजिता मो... तदपि नूपुरैः पादौ क्वणयन्त्यैव नूपुरध्वनिमात्रेणैवेत्यर्थः॥ १२॥

सर्वे दशापि तुल्यं नाम व्रतं च येषां ते धर्मस्नाताः कृत... दुष्णाता इत्यर्थः॥ १३॥

अर्णवं तत्तीरगं सरः आविशन् तपस्पतिं हरिम् अर्च... अर्चितवन्तः॥ १४॥

संयताः जितेन्द्रियाः॥ १५॥ १६॥

यमभीप्सितं सङ्गमसङ्गात् सङ्गत्यागेन दध्युरेव स ... दुर्लभः यद्वा। यं शिवं दध्युस्तेनेति योजना॥ १७॥

घोरया संहारशक्त्या युतोऽपि लोके यः कल्पः स्वधर्मे विदु... स्तज्जनस्य राधसे पालनाय विचरति॥ १८॥ १९॥

समुद्रमुपतत्समीपगम् प्रसन्नाः सलिलाशयाः ... यस्मिन् तत्॥ २०॥

---

भाषाटीका।

सुन्दर अङ्गवाली किशोर अवस्था वाली सुन्दर ... पहरी हुई जिसको देखकर विवाह के वखत परिक्रमा ... समय अग्नि ने भी इच्छा की जैसे कि सप्तर्षियों की भार्या शुकी ... इच्छा की थी॥ ११॥

देवता असुर गन्धर्व मुनि सिद्ध नर उरग इन सब... सब दिशा में जिसने अपने नूपुर के शब्द रूपी नगाड़े ... जीत लिया॥ १२॥

शतद्रुती में प्राचीनबर्ही के दश पुत्र भये समान ... वाले धर्म में बड़े निपुण प्रचेता भये॥ १३॥

पिता ने प्रजा सृष्टि को आज्ञा दिया तब तपस्या करने ... समुद्र में गये॥ १४॥

दश हजार वर्ष पर्यन्त तपस्या से भगवान् कीनी ... मिले हुये श्री महादेव जी ने जो कहा था उसी का ध्यान ... जप पूजन करते थे एकाग्र होकर॥ १५॥

विदुरजी बोले प्रचेतों का महादेवजी के साथ मार्ग में ... सङ्ग हुआ प्रसन्न होकर महादेव जी ने जो कहा हो सो ... हमसे कहो॥ १६॥

नीलरक्तोत्पलाम्भोज कल्हारेन्दीवराकरम् ।
हंससारसचक्राह्वकारण्डवनिकूजितम् ॥ २१ ॥
मत्तभ्रमरसौस्वर्यहृष्टरोमलताङ्घ्रिपम् ।
पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम् ॥ २२ ॥
तत्र गान्धर्वमाकर्ण्य दिव्यमार्गमनोहरम् ।
विसिस्म्यू राजपुत्रास्ते मृदङ्गपणवाद्यनु ॥ २३ ॥
तर्ह्येव सरसस्तस्मान्निष्क्रामन्तं सहानुगम् ।
उपगीयमानममरप्रवरं विबुधानुगैः ॥ २४ ॥
(१) तप्तहेमनिकायाभं शितिकण्ठं त्रिलोचनम् ।
प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥ २५ ॥
स तान् प्रपन्नार्तिहरो भगवान् धर्मवत्सलः ।
धर्मज्ञान् शीलसम्पन्नान् प्रीतः प्रीतानुवाच ह ॥ २६ ॥

॥ श्रीरुद्र उवाच ॥

यूयं वेदिषदः पुत्रा विदितं वश्चिकीर्षितम् ।
अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम् ॥ २७ ॥
यः परं रंहसः साक्षात्त्रिगुणाज्जीवसंज्ञितात् ।
भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥ २८ ॥
स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चितामेति ततः परं हि माम् ।
अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाहं विबुधाः कलात्यये ॥२९॥
अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।
न मद्भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥ ३० ॥

भाषाटीका ।

हे विप्रर्षि ! इस संसार में शरीरधारी को महादेवजी के साथ सङ्गम होना बडा दुर्लभ है क्योंकि मुनिलोग जिनकी इच्छा से ध्यान करते हैं ॥ १७ ॥

जो भगवान् महादेवजी स्वयं आत्माराम हैं तौ भी लोक कार्य के लिये घोर शक्ति से युक्त होकर विचरते हैं ॥ १८ ॥

प्रचेता संपूर्ण साधु पिता के वाक्य को मस्तक से ग्रहण करके तपस्या में मन लगाकर पश्चिम दिशा को चले गये ॥ १९ ॥

समुद्र के किनारे पर बडा भारी सरोवर देखा जो कि सत्पुरुषों के मन सरीका निर्मल है प्रसन्न निर्मल जिसमें जल भरा है ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

नीलोत्पलादीनामाकरं जन्मस्थानम् उत्पलाम्भोजकल्हाराणि रात्रिदिनसंध्याविकासीनि इन्दीवरं नीलोत्पलम् तस्य पुनरुक्तिः प्राचुर्यज्ञापनार्थम् हंसादिभिर्निकूजितम् ॥ २१ ॥

मत्तानां भ्रमराणां सौस्वर्येण हृष्टरोमाणो लताङ्घ्रिपाः यस्मिन् पद्मकोशरजो दिक्षु विक्षिपता पवनेनोत्सवो यस्मिन् ॥ २२ ॥

तत्र मृदङ्गपणवादिवाद्यमनु पश्चाद्दिव्यैर्मार्गभेदैर्मनोहरं गान्धर्वं गानमाकर्ण्य विस्मयं प्राप्ताः पाठान्तरे मृदङ्गपणवादि अवद्यत् तेषां ध्वनिमतिरस्कुर्वदित्यर्थः ॥ २३ ॥

ते च त्रिलोचनं वीक्ष्य जाताश्चर्याः प्रणेमुरित्युत्तरेणान्वयः ॥ २४ ॥

तप्तहेमराशिसदृशकान्तिं शितिर्नीलः कण्ठो यस्य तम् ॥ २५ ॥ २६ ॥

वेदिषदो बर्हिषदः चिकीर्षितं भगवदाराधनं विदितम् ॥ २७ ॥

अनुग्रहकारणमाह । यः साक्षाद्वासुदेवं प्रपन्नः स हि मे प्रियः कथंभूतम् रंहसः सूक्ष्मात्त्रिगुणात्प्रधानाज्जीवसंज्ञितात्पुरुषात् परं प्रकृतिपुरुषयोर्नियन्तारमित्यर्थः ॥ २८ ॥

तर्हि किं तस्य महत्त्वमत्यादित्याह । स्वधर्मनिष्ठः पुमान्बहुभिर्जन्मभिर्विरिञ्चतां प्राप्नोति ततोऽपि पुण्यातिशयेन मामेति भागवतस्त्वथ देहान्तेऽव्याकृत प्रपञ्चातीतं वैष्णवं पदमेति यथा ह रुद्रा

(१) तप्त हे मानि कर्णाभमिति श्रीविजयध्वजतीर्थः

श्रीधरस्वामिकृतभावार्थदीपिका ।

भूत्वा धिकारिकवद्वर्तमानो विबुधा देवाश्चाधिकारिकाः कल्पात्यये-ऽधिकारान्ते लिङ्गभङ्गे लप्स्यन्ति ॥ २९ ॥

अथ भागवतत्वाद्यूयं मे प्रियाः स्थ भवद्भिरपि मयि प्रीतिः कार्येत्याशयेनाह । मदन्यो भागवतानां च प्रेयान्नास्ति ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नीलोत्पलादीनामाकरं जन्मस्थानमुत्पलानि रात्रिविकासीनि अम्भोजानि दिनविकासीनि कल्हाराणि सन्ध्याविकासीनि इन्दीवरं नीलोत्पलं तस्य पुनरुक्तिः प्राचुर्यज्ञापनार्था हंसादिभिः विकूजितं चक्राह्वाः चक्रवाकाः ॥ २१ ॥

मत्ता ये भ्रमरास्तेषां सौस्वर्येण मधुरस्वरेण हृष्टरोमाणो लताङ्घ्रिपा यस्मिन् उपश्लिष्टलताग्रैः हृष्टरोमाण इव अङ्घ्रिपा यस्मिन् तदित्यर्थः। पद्मकोशेषु यद्रजः तत् कर्म दिक्षु विक्षिपता पवनेन उत्सवो यस्मिन् ॥ २२ ॥

तत्र मृदङ्गादिभिरन्वितं दिव्यैर्मार्गभेदैः प्रकारभेदैः मनोहरं गान्धर्वं गानमाकर्ण्य ते राजपुत्राः विसिस्म्युः विस्मयं प्राप्ताः २३।

तदैव तस्मात्सरसो विनिर्गच्छन्तं विबुधानुगैः गन्धर्वकिन्नरादिभिः उपगीयमानममरश्रेष्ठं सप्रमथगणम् ॥ २४ ॥

तप्तहेमराशिसदृशकान्ति नीलः कण्ठो यस्य तं प्रसादाभिमुखं त्रिलोचनम् रुद्रं वीक्ष्य संजातहर्षाः प्रचेतसः प्रणेमुः नमस्कृतवन्तः ॥२५॥

स भक्तवत्सलो भगवान् गिरीशः प्रपन्नान् नमस्कुर्वाणान् धर्मज्ञान् विनयादिशीलसंपन्नान्प्रचेतसः स्वदर्शनप्रीतान्स्वयमपि प्रीत उवाच ॥ २६ ॥

उक्तिमेवाह । यूयमिति । यावदध्यायसमाप्ति यूयं वेदिषदः प्राचीनबर्हिषः पुत्राः वः युष्माकं चिकीर्षितं भगवदाराधनम् च विदितं वः अनुग्रहाय युष्माननुग्रहीतुं मे मम दर्शनम् कृतं कारितं मयेत्यर्थः ॥ २७ ॥

अनुग्रहकारणमाह । य इति । त्रिगुणात्मकात्तमसः प्रधानात् क्षेत्रज्ञाच्च साक्षात्परं विलक्षणं सूक्ष्मादिति पाठे त्रिगुणात्मकार्यावस्थात् सूक्ष्मात्कारणावस्थाच्च तमसः प्रधानात् क्षेत्रज्ञाच्च परमित्यर्थः भगवन्तं प्रकृतिपुरुषवैलक्षण्यापादकपूर्णज्ञानादिगुणाश्रयं वासुदेवं यः प्रपन्नः स मे प्रियः भगवद्भक्तस्य सर्वोत्कृष्टत्वादिति भावः ॥ २८ ॥

सर्वोत्कृष्टतामेवाह । स्वधर्मनिष्ठ इति । पुमान् शतजन्मभिः केवलस्ववर्णाश्रमधर्मनिष्ठः विरिञ्चितां विरिञ्चिसालोक्यं तत्सास्यं वा ऋति मामित्यत्राप्येवं ततः परं ततः परस्तान्मामेति अथानन्तरं भागवतः निवृत्तिधर्मानुष्ठानपरः अव्याकृतं चक्षुराद्यनवगम्यं वक्तुमयोग्यं वा वैष्णवं विष्णोः सम्बन्धिपदं स्थानमेति अहं विबुधाः अश्विन्द्रादयश्च कल्पात्यये स्वस्वाधिकारान्ते यथा प्राप्नुवन्ति तथेत्यर्थः ॥ २९ ॥

अथ ननु यूयं भागवता स्थ भवथ अतो मम भगवान् यथा प्रियः एवं यूयमपि प्रिया भवथ भागवतानां भागवतेभ्यः मे अन्यः प्रियः कश्चिन्नास्ति ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कतिपयैः श्लोकैः सरसः सेवनीयत्वं वक्ति । नीलेत्यादिना । नीलोत्पलानां रक्तोत्पलानामब्जानामम्भोजानामिन्दीवराणां पद्मविशेषाणां कह्वाराणां सौगन्धिकानामाकरमुत्पत्तिस्थानं ... कारण्डवः प्लव" इत्यभिधानम् ॥ २१ ॥

मत्तभ्रमराणां सौस्वर्येण शोभनस्वरपरंपरया हृष्टरोम... युक्ता अङ्घ्रिपाः वृक्षा यत्र तत्तथा तद्रोमलोमत्वांगत्यर्थः ... पद्मकोशरजो विक्षिपतः प्रसारयतः पवनस्योत्सवः शत... सौरभ्यलक्षणो यस्मिंस्तथा तत् "कोशोऽस्त्री मुकुले दिव्य ... इति यादवः ॥ २२ ॥

दिव्यो मार्गो येषां ते दिव्यमार्गा देवास्तेषां मनोहरं ... मार्गमिति पाठे दिव्याः क्रीडादिके हेतवो मार्गाः सप्तस्वरभेदा... स्तत्तथा तादृशं गान्धर्वं गानं मृदङ्गादीनामनुकूलम् ॥ २३ ॥

तप्तहेमनिकर्षस्तप्तसुवर्णकर्षणपाषाणस्तद्वन्निर्मलं ... दृष्टान्तोऽयं ननु धावल्ये तप्तहेमनिकर्षाभ इत्यतोऽन्यः कश्चिद्... शितिकण्ठमिति । सोऽपि मयूरः किं न स्यादित्यतस्त्रिलोचनमि...

प्रणतिफलमाह । स तानिति ॥ २६ ॥

वो युष्माकमनुग्रहायैवैवंविधं भद्रं कल्याणं दर्शनं ... मित्यन्वयः । अनेन तीव्रया शक्त्या विचरतीत्यस्य परिहार... भवति सम्भाषणायोग्यरूपदर्शनादिति ॥ २७ ॥

विष्णुभक्तानस्मान्कथं भवाननुगृह्णातीति चेत्तत्राह । यः ... इति । यो जीवसंज्ञितात् त्रिगुणात्तमसो लक्ष्मीतत्त्वात् साक्षा... परस्तं भगवन्तं वासुदेवं शरणं प्रपन्नः स मे प्रियो हि ... त्तस्माद्भवन्तो मदनुग्रहयोग्या इत्यर्थः स जीवमायां ... सिसृक्षती तम आसीत्तमसा गूढमग्रे प्रकेतमिति वचनद्वयेन ... तत्त्वस्य जीवशब्दवाच्यत्वं तमः शब्दवाच्यत्वं च सिद्धम् ...

इतोऽप्यनुगृह्णामीति वक्तुमृजूनामपि बहुजन्मसाध्यो ... त्प्रसादः किमुतान्येषामिति ध्वनयन् विरिञ्चपदप्राप्तिसा... सामग्रीमाह। स्वधर्मेति। वैराग्यभक्तिज्ञानादयः स्वधर्मास्तेषु ... नितरां स्थितिर्यस्य स तथा स ऋजुष्वेकः पुमान्बहुज... भिरेकोनशतजन्मभ्यः पूर्वकालमारभ्य सञ्चीर्णहर्युपासनाजि... भगवत्प्रसादेन विरिञ्चतामेति ब्रह्मपदं प्राप्नोतीत्यन्वयः तत... ब्रह्मपदानुभवानन्तरं मां श्रियमेति हि शब्देन श्रीद्वारमात्र... इति सूचयति अव्याकृतं विशति यर्हि गुणत्रयात्मा काल... स्वमनुभूयेत्युक्तेरव्याकृतं निर्विकारं लक्ष्मीतत्त्वमित्यर्थः ।

> ऋजवो नाम ये देवा योग्या ब्रह्मपदस्य तु ।
> त एव शतजन्मानि विशेषोपासका हरेः ॥
> प्राप्य ब्रह्मपदं पश्चाच्छ्रियं प्राप्यानुमोदिताः ।
> तया ततो हरिं यान्ति वसन्ति हरिसंनिधौ ॥
> अनादिकालभक्ताश्च ज्ञानिनस्ते न संशयः ।
> विशिष्टा ज्ञानभक्त्यादौ सर्वजीवनिकायतः ॥
> सर्वदापि विशेषेण शतजन्मप्रयत्नतः ।
> स्वपदप्राप्तिरुद्दिष्टा ततो मुक्तिरवाप्यत इति ॥

निर्णायकवचनानुक्त एवार्थो नापरः उक्तलयं विश... भागवत इति। अथ श्रियं प्रविश्य भागवतो भगवद्भक्... ब्रह्मा यथार्ह यथायोग्यं विविधैः कार्यकारणसंघातैः सह ... षोडशकलात्मकशरीरलयोपलक्षितजगत्प्रलये वैष्णवं पदमप... भगवत्स्वरूपमेतीत्यन्वयः अस्मदादयोऽप्यनेनैव ... हि यथा ऋजुष्वेकः पुमान् बहुलजन्मसञ्चीर्णपुण्यस... पदं प्राप्यानुभूय श्रीद्वारा सायुज्यलक्षणां मुक्तिमाप्नु... तथाहं चत्वारिंशज्जन्मभिरार्जितैः सुकृतैः शैवं पदं ... नुभूय तथेन्द्रोऽपि विंशद्भिर्जन्मभिरापादितैः पुण्यैरिन्द्रपद...

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

त्वानुभूय तपोन्द्रादन्ये दशभिर्जन्मभिरुत्पादितैः शुभैः स्वस्वयोग्यं पदं प्राप्य तत्तत्पदभोग्ययोग्यसुकृतं भुक्त्वा ब्रह्मणा सह विमुक्तिमाप्नुम इति। तदुक्तं "तथैव चत्वारिंशद्भिः पदं शैवं च जन्मभिः। विंशद्भिरैन्द्रं दशभिरन्येषामभ्युदीरितम्„इति यथाहमिति पाठे यथाहं श्रीहरिप्रसादेन शैवं पदमाप्तोऽस्मि तथा ऋजुरेकः पुमान् शतजन्मभिर्विरिञ्चतामेतीति योज्यं विदेहि रुद्रो रुद्रियं महित्वमिति श्रुतिश्च॥ २६॥

ततः प्रकृते किं फलितमत्राह। अथेति। अथैवमुक्तप्रकारेणानादिकालमारभ्य भगवद्भक्तोऽहं यस्मात्तस्माद्भागवता भगवद्भक्तत्वाद्यूयं मे प्रियाः स्थ यथा भगवानित्यधिकदृष्टान्तः न केवलं यूयमेव मत्प्रिया अन्येऽपि भगवद्भक्ता इत्याह। नम इति। भागवतानां सकाशात् चशब्दात् प्रेम्णो निरुपमचरितत्वमाह अन्येनाम्रुदेभ्यो वरदानेन तत्प्रीतिरीपचारिकीति दर्शितम्। यद्वा युष्माकमपि भागवत एव प्रियो नापरोऽन्यथा भागवतत्वहानिरित्याशयेनाह। नम इति। मम भागवतानां युष्माकं च भागवतादन्यः प्रेयान्नास्तीत्यन्वयः। अनेन युष्माकं चाहमपि प्रिय इति ध्वनितम्॥३०॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तत्र गान्धर्वमिति। पणवाद्यवदिति पाठे मतुप् ज्ञेयः॥ २३॥

तर्हीति। हेमनिकायाभमिति चित्सुखः सुवर्णराशिसदृशवर्णम्॥ २४॥ २५॥

प्रपन्नान् गिरिश इति कचित्॥ २६॥

दर्शनमिति हेतुमण्णयन्तान्भावे युच् दर्शनमित्यर्थः॥ २७॥

ब्रह्मणो हि प्रतिष्ठाहमिति न्यायात् रहस इति ब्रह्मणोऽपि। यद्वा रहसः चतुश्लोकीप्रोक्तस्य रहस्याख्यस्य प्रेम्णः परं परमाश्रयम्। रंहस इति लेखकभ्रमः सूक्ष्मादिति स्वटीकायामस्वारस्यात् तमस इति चित्सुखः॥ २८॥

स्वधर्मैत्यस्य टीकायां तत् किमिति तत्र हेतुः क इत्यर्थः। विबुधा इत्यत्र विबुधैरिति चित्सुखः विबुधैः कार्यैः सह॥ २९॥ ३०॥ ३१॥ ३२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

नीलञ्च तदुत्पलञ्चेति तथाभूतं यदुत्पलमतएव इन्दीवरं नीलोत्पलमिति न पुनरुक्तिः॥ २१॥

मत्तभ्रमराणां सौस्वर्येण हृष्टरोमाण इव मुकुलयुक्ता लताङ्घ्रिपाश्च यत्र तत्। पद्मकोशरजो दिक्षु विक्षिपता पवनेन उत्सवो यत्र तत्॥ २२॥

गान्धर्वं गानं मार्गा गानसम्बन्धिनः कदा मृदङ्गपणवादिवाद्यमनु पश्चात् पणवाद्यवदिति पाठे मतुप् ज्ञेयः। यद्वा मृदङ्गपणवादि कीदृशमवत् रक्षत्। स तु मूलध्वनिभिरपि गानमतिरक्तुर्वदित्यर्थः॥ २३—२६॥

चिकीर्षितं भगवदाराधनमेव अत एव वो युष्माकमनुग्रहाय मया दर्शनं कृतं दत्तम्। यद्वा वोऽनुग्रहाय युष्मत्कर्तृकानुग्रहप्राप्तये मयैव दर्शनं कृतम्। यद्वा। वोऽनुग्रहाय युष्माननुग्रहीतुं युष्माकं दर्शनं मया कृतमित्यर्थः॥ २७॥

अनुग्रहे कारणमाह। यः साक्षाद्भगवन्तं वासुदेवं प्रपन्नः स हि मे प्रियः कथम्भूतं रहसः सूक्ष्मात् त्रिगुणात् प्रधानात् जीवसंज्ञितात् पुरुषाच्च परं प्रकृतिपुरुषयोर्नियन्तारमित्यर्थ इति स्वामिचरणाः। यद्वा। त्रिगुणान्मायाशक्तेः जीवसंज्ञितात् जीवशक्तेश्च रहः सर्वदुर्लक्ष्यं यत् निर्गुणं ब्रह्म तस्मादपि परं ब्रह्मणो हि प्रतिष्ठाहमिति गीताभ्यः। यः साक्षात् प्रपन्नः नतु कर्म्मार्पणद्वारा नापि देवतान्तरभक्तिज्ञानादिव्यवधानेनेत्यर्थः। स हि सत्यव प्रिय इति तेन मद्भक्तोऽपि न मे यथाप्रिय इति भावः॥ २८॥

ब्रह्मरुद्रविष्णूनामस्माकं सुकृतैः प्राप्तितारतम्यं मन्मुखादेव यूयं शृणुतेति वदन् विष्णोः सर्वतः श्रेष्ठ्यमाह। स्वधर्मनिष्ठः पुमान् शतजन्मभिर्विरिञ्चतां विरिञ्चिपदमेति तत्राप्यनिष्ठितत्वे शतजन्मभिरपि न प्राप्नोतीत्यर्थः। ततो विरिञ्चितोऽपि परं श्रेष्ठं मां ततोऽपि पुण्यातिशयैश्चेति। भागवतस्तु अथ देहान्त एव अव्याकृतं प्रपञ्चातीतं वैष्णवं पदं वैकुण्ठमेति। यथाहमेमि प्रतिक्षणमेव वैकुण्ठं वसन्नेकेन प्रकाशेन भगवन्तं भजामीत्यर्थः। विबुधाश्चाधिकारिकभक्ताः कला लिङ्गं तस्यात्यये स्वस्वाधिकारान्तेऽपि लिङ्गभङ्गे एवैष्यन्तीति भक्तसाधनसाध्यसमयानां सुखलभ्यत्वेनापि सर्वोत्कर्षो दर्शितः॥२९॥

अथ अतएव भागवतानाञ्चेति चकारेण यथैत्यस्यान्वयात् भागवतानां यथा भगवतोऽन्यः प्रेयान्नास्ति तथा मत् मत्तोऽपीत्यर्थः॥ ३०॥ ३१॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

उत्पलादिपद्मजातिभेदानामाकरम् हंसादिभिः कूजितम्॥ २१॥

मत्तभ्रमराणां सौस्वर्येण हृष्टरोमाणो लताङ्घ्रिपा यत्र तत् पद्मकोशेषु यद्रजस्तद्दिक्षु विक्षिपता पवने नोत्सवो यत्र तत्॥ २२॥

तत्र सरसि मृदङ्गपणवादिवाद्यमनुपश्चाद्दिव्यैः स्वरालापमार्गैर्मनोहरम् गान्धर्वं गानम् आकर्ण्य ते राजपुत्रा विस्मयं प्रापुः॥ २३॥

तर्ह्येव तस्मात् सरसो विनिष्क्रामन्तं त्रिलोचनं वीक्ष्य जातकौतुकाः प्रणेमुरित्युत्तरेणान्वयः विबुधानुगैरुपगीयमानम्॥ २४॥

तप्तहेमनिकायः प्रज्वलितसुवर्णराशिस्तद्वदाभा यस्य तम्, शितिकण्ठं नीलकण्ठम्॥ २५॥ २६॥

वेदिषदः बर्हिषदः यूयं पुत्राः वो युष्माकं भद्रं भवतु चिकीर्षितं भगवदाराधनं विदितं ज्ञातमतो वोऽनुग्रहाय दर्शनमस्मद्दर्शनं मे मया कृतं कारितम्॥ २७॥

रंहसः कालवेगात् त्रिगुणात् जीवसंज्ञितात् पुरुषात् परं तेषां नियन्तारं वासुदेवं यः अन्यो व्यवहारानुसारेण प्रिय इति भावः॥ २८॥

यो वासुदेवं प्रपन्नः स मे साक्षात्प्रिय इति स्वप्रियत्वकथनेन वासुदेवं प्रपन्नस्य श्रेष्ठ्यमुक्तमथ शीघ्रं मुक्तत्वेन तच्छ्रैष्ठ्यमाह। स्वधर्मनिष्ठः स्वधर्मनिष्ठ इति विरिञ्चिधर्मनिष्ठः विरिञ्चितां चतुराननताम् ततः परं ततोऽपि बहुजन्मानन्तरं मामेति मद्धर्मनिष्ठः भागवतस्तु अथ प्रारब्धक्षयानन्तरमेव अव्याकृतं संसारविलक्षणं नित्यं वैष्णवं पदं स्थानमेवैति यथाहं रुद्रः विबुधा ब्रह्मादयः कलात्यये अधिकारान्ते लिङ्गभङ्गे सत्येष्यन्ति॥ २९॥

अथ अतो यथा भगवान् मम प्रियस्तथा यूयं भागवताः

इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम् ।
निःश्रेयसकरं चापि श्रूयतां तद्वदामि वः ॥ ३१ ॥

॥ मैत्रेय उवाच ॥

इत्यनुक्रोशहृदयो भगवानाह तान् शिवः ।
बद्धाञ्जलीन्राजपुत्रान्नारायणपरो वचः ॥ ३२ ॥

॥ श्रीरुद्र उवाच ॥

जितन्त आत्मविद्धुर्य ! स्वस्तये स्वस्तिरस्तु मे ।
भवता राधसा राद्धं सर्वस्मा आत्मने नमः ॥ ३३ ॥
नमः पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने ।
वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे ॥ ३४ ॥
सङ्कर्षणाय सूक्ष्माय दुरन्तायान्तकाय च ।
नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने ॥ ३५ ॥
नमो नमोऽनिरुद्धाय हृषीकेशेन्द्रियात्मने ।
नमः परमहंसाय पूर्णाय निभृतात्मने ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रियाः स्थ भवथ भागवतानां भागवतेभ्यः भगवतश्च अन्यः मत् मे प्रेयान्न भवति ॥ ३० ॥

---

भाषाटीका ।

जिस सरोवर में नीलवर्ण के लालवर्ण के कमल कुमोदिनी कल्हार खिले हैं हंस सारस चक्रवाक कारण्डव आदि पक्षि शब्द कर रहे हैं ॥ २१ ॥

मतवाले भौंरान का सुन्दरस्वर सुन पडता है खिले पुष्पयुक्त लता लगे हुये पेड किनारेपर हैं चारो तरफ पवन का उडाया कमलों के पुष्पोंका रज पडा है उहां पर दिव्य गानमार्ग से मनको हरने वाला है ॥ २२ ॥

उहां पर गांधर्व गान को श्रवण कर के उस के पीछे मृदङ्ग का पणाव का वाजा सुनके राज पुत्र सब विस्मित भये ॥ २३ ॥

तिसी समय मे उस सरोवर मेसें निकलते हुये श्री महादेवजी का दर्शन किया सब भृत्यगण उनके सङ्ग मे हैं देवतोंके अनुचर गान करते हैं ॥ २४ ॥

तप्त सुवर्ण सी कांती वाले नीलकण्ठ वाले तीन नेत्र वाले प्रसन्न मुखारविन्द वाले श्री रुद्रजी कों देखते मात्र सबके मन में वडा कौतुक हुआ जाकर नमस्कार सबने किया ॥ २५ ॥

धर्मके रक्षा करनेवाले भगवान् महादेवजी ने उनको भगवद्भक्त धर्मज्ञ शील युक्त प्रसन्न चित्त वाले जानकर प्रसन्न होकर वचन बोले ॥ २६ ॥

श्री रुद्र बोले आप लोग बर्हिषद के पुत्रहो आपके मनोरथको मैने जान लिया है तुमारे ऊपर कृपा करने को मैने ऐसा दर्शन दिया है ॥ २७ ॥

जो प्राणी त्रिगुण प्रकृति पुरुष दोनो से परे भग[illegible] वासुदेव के शरण कूं प्राप्त है सो मेरा अत्यन्त प्रिय है ॥ [illegible]

जो पुरुष अपने वर्णाश्रम धर्म मे ठीक चलता है ऐसे सौ जन्म बीतने से ब्रह्मा के पद को प्राप्त होता है [illegible] आगे मेरे पद को प्राप्त होता है और जो भगवद्भक्त है तो जैसे हम तथा अधिकारिक देवता तैसे लिङ्ग देह के [illegible] प्रकृति मण्डल से पृथक् भगवद्धाम वैकुण्ठ को प्राप्त जाताहै ॥ २९ ॥

इसी से आप लोग भागवत हो तो भगवान् सरी के [illegible] हो मेरों को भागवतों से दूसरा कोईभी कभी भी प्रिय नहीं है [illegible]

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत इदं जप्तव्यम् श्रूयतामिति विविक्तमसंकीर्ण [illegible] भवति ॥ ३१ ॥

सृष्ट्यादौ ब्रह्मणा सृष्टा पुत्रेभ्यः प्रोक्तमिष्टदम् ।
स्तोत्रं प्राह प्रचेतोभ्यः कृपया भगवान् शिवः ॥ ३२ ॥

ते जितन्तवोत्कर्षः आत्मविद्धुर्याणां स्वस्तये शोभन[illegible] स्वानन्दलाभायेत्यर्थः अतो मे स्वस्तिः स्वानन्दसत्तास्तु ननु [illegible]त्कर्षो मदर्थ एव किं नस्यात्तत्राह । भवता राधसा स्वानन्द[illegible] राद्धम् सिद्धम् त्वं परमानन्दरूपेणैव नित्यं स्थित इत्यर्थः [illegible] भूतायात्मने तुभ्यं नमः सर्वस्मै सर्वरूपाय च ॥ ३३ ॥

सर्वरूपत्वं प्रपञ्चयन्प्रणमति । सार्द्धैर्दशभिः । पङ्कजं लोका[illegible] नाभौ यस्य तस्मै कारणात्मने नमः कारणत्वादेव सृज्यानां प्रा[illegible] ये उपाधयो भूतानि सूक्ष्माणि तन्मात्राणीन्द्रियाणि च तेषा[illegible] नियन्त्रे अन्तःकरणचतुष्टयाधिष्ठातृत्वेन प्रणमति । [illegible] श्लोकार्द्धैः । वासुदेवाय चित्ताधिष्ठात्रे कूटस्थाय निर्वि[illegible] चित्तस्यैकरूपत्वात् ॥ ३४ ॥

स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः।
नमो हिरण्यवीर्याय चातुर्होत्राय तन्तवे ॥ ३७ ॥
नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे।
तृप्तिदाय च जीवानां नमः सर्वरसात्मने॥ ३८ ॥
सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे।
नमस्त्रैलोक्यपालाय सहओजोबलाय च ॥ ३९ ॥
(१) अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने।
नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सङ्कर्षणायाहङ्काराधिष्ठात्रे सूक्ष्मायाव्यक्ताय दुरन्तायानन्ताय अन्तकाय मुखाग्निना लोकदाहकाय विश्वस्य प्रकृष्टो बोधो यस्मात् अन्तरात्मने बुद्ध्यधिष्ठात्रे ॥ ३५ ॥

हृषीकाणामीशं यदिन्द्रियं मनस्तदात्मने सूर्यरूपेण प्रणमति। परमहंसाय सूर्याय पूर्णाय तेजसा विश्वव्यापिने निभृतात्मने क्षयवृद्धिशून्याय ॥ ३६ ॥

स्वर्गापवर्गयोर्द्वाराय शुचिन्यन्तः करणे निषीदतीति शुचिषत्तस्मै 'हंसः शुचिषदि' तिश्रुतेः हिरण्यं वीर्यं यस्य तस्मै अग्निरूपाय चातुर्होत्रं कर्म तस्मै तत्साधनायेत्यर्थः कुतस्तन्तवे तद्विस्तारकाय ॥ ३७ ॥

सोमत्वमाह। ऊर्जे पितृणामन्नाय इषे देवानामन्नाय यज्ञरेतसे सोमाय सहि पितृणां देवानां चान्नम् एवं रूपाय त्रय्याः पतये हरये नमः सूर्याग्निसोमत्वेनैव तेजस्त्वमुक्तम् जलत्वमाह। सर्वरसात्मने जलरूपाय ॥ ३८ ॥

विशेषाय पृथ्वीरूपाय सर्वेषां सत्त्वानां प्राणिनां ये आत्मानस्तेषां देहाय स्थवीयसे विराड्देहाय च त्रैलोक्यपालाय वायवे सह आदिरूपाय सहि प्राणरूपेण त्रैलोक्यं पालयति सह आदिधर्मा च ३९

नभसे आकाशायार्थानां लिङ्गाय ज्ञापकाय शब्दगुणत्वात् अन्तर्बहिरात्मनेऽन्तर्बहिर्व्यवहारालम्बनाय एवं महाभूतरूपत्वमुक्तम्। अमुष्मै स्वर्गाय भूरिवर्चसे "एष वै ज्योतिष्मन्तम्पुण्यं लोकं याति,, इति श्रुतेः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत इदं वक्ष्यमाणं जप्तव्यं श्रूयतामित्यन्वयः जप्तव्यं विशिनष्टि। विविक्तमसङ्कीर्णं यद्वा विविक्तं कर्तरि क्तः विवेचकं प्रकृतिपुरुषविलक्षणत्वेन परमात्मविवेचकमित्यर्थः अत एव पवित्रमत एव मङ्गलं धर्मादिपुरुषार्थसाधनानां निःश्रेयसकरं मुक्तिसाधनमत एव परं वः युष्मभ्यं वदामि ॥ ३१ ॥

इत्येवं वदामीति प्रतिज्ञापूर्वकमनुक्रोशहृदयः भगवान्नारायण एव परः प्राप्यः प्रापकश्च यस्य सः शिवः बद्धानि अञ्जलिपुटानि यैस्तान् राजपुत्रान् प्रति वचः वाक्यमाह ॥ ३२ ॥

स्वरूपरूपस्वभावैस्तत्सर्वोत्कृष्टत्वं भक्तानुग्रहार्थमेव न स्वार्थमिति वदन् सर्वान्तरात्मत्वगुणविशिष्टं नमस्करोति। जितमिति। हे आत्मविद्धुर्य! आत्मवतां ज्ञानिनां धुर्य रक्षक ते तव जितमुत्कर्षः स्वरूपेण गुणैश्च निरतिशयोत्कर्षः जितमिति भावे क्तः स्वस्तये आत्मविदामिति शेषः यद्वा आत्मविद्धुर्या योगीश्वरास्तेषां स्वस्तये सुखाय त्वामुपासीनानां निरतिशयानन्दावहस्वरूपरूपगुणा भक्तानुग्रहैकप्रयोजना इत्यर्थः अतो मे त्वामुपासीनस्य मम स्वस्तिः त्वदनुभूतिसम्भूतं सुखमस्तु नत्वसत्तां प्राप्नुयादित्यर्थः मे स्थायित्वेनावतिष्ठत्विवत्यर्थः ननु विषयानन्दवदनुभूतिसम्भूतानन्दोऽपि क्षणिक एव स्यात्तत्राह। राधसा सिद्धरूपेण भवता सिद्धं संसिद्धं साध्यत्वेन विषयाणामस्थिरत्वादनुभवसम्भूतानन्दोऽप्यस्थिरः तव तु सिद्धरूपत्वात्त्वां नित्यमनुभवतो मम त्वदनुभवसम्भूतानन्दः स्थायीति भावः अत्र परमात्मानन्दसाधनभूततद्विषयभक्तेः स्थैर्यं प्रार्थ्यते ननु मम कथं सर्वोत्कृष्टता ममापि देवादीनां मध्येऽन्यतमत्वादित्यत्राह। सर्वस्मा आत्मने नम इति। सर्वस्मै प्रपञ्चरूपाय तत्र हेतुः आत्मन इति यथा देवमनुष्यादिशरीरेष्वात्मतयानुप्रविष्टो जीवः देवोऽयमिति देवादिसामाधिकरण्येन व्यपदिश्यते तद्वत्परमात्मा "यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन्,, इति चिदचिदन्तरात्मतयावस्थितस्तद्व्यपदेशेन व्यपदिश्यते तत्तदन्तरात्मत्वमेव तत्तद्व्यपदेशव्यपदेश्यत्वनिमित्तमितियुक्तमात्मत्वस्य सर्वत्वव्यपदेशहेतुत्वं। यद्वा आत्मनः आकाशः संभूत इत्यत्रेवात्मशब्दः कारणात्मपरः तथाचायमर्थः कारणं हि मृद्द्रव्यम् कार्यात्मना परिणतं मृद्वयं घट इति कार्याभेदेन व्यपदिश्यते तथा सूक्ष्मचिदचिद्विशिष्टः कारणभूतः परमात्मा स्थूलचिदचिद्विशिष्टब्रह्मरूपप्रपञ्चव्यपदेशव्यपदेश्य इति युक्तं कारणात्मत्वस्य सर्वस्य व्यपदेशहेतुत्वम् एवं चेदृशं सर्वात्मत्वसर्वकारणत्वप्रयुक्तसर्वात्मकत्वं त्वय्यैवैकान्तमिति त्वमेव सर्वोत्कृष्ट इति ॥ ३३ ॥

अन्यदप्युत्कर्षापादकं गुणजातं वदन् तद्विशिष्टं नमस्करोति। नम इति। पङ्कजनाभाय लोकात्मकं पङ्कजं नाभौ यस्य तस्मै एवं कार्यावस्थप्रपञ्चरूपमुक्तं कारणावस्थप्रपञ्चरूपतामाह। भूतसूक्ष्माणामिन्द्रियाणां चात्मने आश्रयाय उभयनिर्वाहकमन्तरात्मत्वं तत्प्रयुक्तदोषास्पृष्टत्वं चाह। वासुदेवाय वासुश्चासौ देवश्च तस्मै "सर्वत्रासौ समस्तं च वसत्यत्रेव वै यत" इत्युक्तकर्त्रधिकरणव्युत्पत्तिनिरुक्तवासुशब्दवाच्यसर्वान्तरात्मत्वगुणविशिष्टाय तथापि देवाय तद्व्याप्यगतदोषास्पर्शनेन दीप्यमानाय अत एव शान्ताय अशनायापिपासाशोकमोहजरामृत्युभिरूर्मिभिर्विरहिताय अत एव कूटस्थाय निर्विकाराय अत एव स्वरोचिषे नित्यासंकुचितापरिच्छिन्नस्वप्रकाशाय ॥ ३४ ॥

(१) अन्धालिङ्गायेति श्रीवीरराघवाचार्यः।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कारणावस्थप्रपञ्चात्मकत्वस्य प्रपञ्चसंहारपूर्वकत्वाज्जगत्संहर्तृत्वगुणविशिष्टतामाह । सङ्कर्षणाय । समित्येकीकारे अविभक्तनामरूपत्वेन कर्षणाय कर्षयत्याकर्षयति स्वस्मिन् जगदुपसंहरति तथा तस्मै केनाकारेण संहर्तृत्वं तत्राह । अन्तकाय । मुखाग्निना लोकदाहकाय अत एव सूक्ष्माय नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टाय एवं भूतायापि दुरन्ताय अन्तर्हिताय अनुपसंहार्यायेत्यर्थः । उपसंहारो हि कार्यस्य कारणेन सह संश्लेषः तस्य कारणान्तराभावेनानुपसंहार्यत्वात्कारणानां काष्ठाभूतायेत्यर्थः फलितः एवं कार्यावस्थकारणावस्थप्रपञ्चरूपत्वतदनुगुणगुणयुक्तं नमस्कृत्य जगद्रक्षकत्वतदुपयुक्तगुणविशिष्टं नमस्करोति । नम इति । विश्वप्रबोधाय विश्वं प्रबोधयति धर्मादिपुरुषार्थतत्साधनप्रकाशकवेदाख्यशास्त्रोपदेशेन वेदयतीति । विश्वप्रबोधस्तस्मै विश्वोज्जीवयित्र इत्यर्थः । न केवलमुपदेशमात्रेणापि तु व्यूहविभवान्तर्यामित्वादिरूपेण विभवमूलत्वसाध्वसाधुनिग्रहानुग्रहदेहेन्द्रियादिसञ्जीवयितृत्वादिभिश्चेत्याह । प्रद्युम्नाय । दुष्कृन्निग्रहसाध्वनुग्रहैकप्रयोजनरामकृष्णादिमूलप्रद्युम्नव्यूहाय अन्तरात्मने सर्वदेशकालावस्थासु युगपत्सर्वजगदन्तः प्रवेशपूर्वकं प्रशासनेन भर्त्रे ॥ ३५ ॥

नमसोऽद्विरुक्तिः तत्तद्गुणविशेषविशिष्टत्वाभिप्रायेण अनिरुद्धाय अनिरुद्धव्यूहाय हृषीकाणामिन्द्रियाणां यदीशं मन इन्द्रियाणि च तदात्मने तद्रूपाय सर्वात्मकत्वे विशिष्य हृषीकेन्द्रियग्रहणमनिरुद्धोपासनस्थानकृतं तथाचोक्तं तृतीये ।

यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् ।

शारदेन्दीवरश्यामं संराध्यमृषिभिः शनैरिति ॥

उक्तस्य जगद्रूपत्वादेर्जीवस्येव देवादिरूपत्वात् कर्मायत्तत्वशङ्कायामाह । परमहंसाय । हिनस्ति कर्मार्थं पुण्यापुण्यरूपमलमाश्रितेषु स्वमिश्रेति हंसस्ततः कर्मधारयाच्चतुर्थी अपहतपाप्मने इत्यर्थः । पूर्णाय अन्तर्बहिश्च व्याप्य स्थिताय नित्यनिरुपाधिकान्तर्बहिर्व्याप्तिकृतं जगद्रूपत्वं न भगवत औपाधिकं जीवस्य तु देवादिशरीरेष्वभिव्याप्तिः "पिप्पलं स्वाद्वत्ति" इति श्रुतेःकर्मकृतेति । तस्य देवादिरूपमौपाधिकमिति ततः परमात्मनो वैलक्षण्यसिद्धिः यद्वा । परमहंसाय अपहतपाप्मने अत एव निर्वृतात्मने शोकरहिताय निभृतात्मने इति पाठे क्षयवृद्धिशून्याय अत एव पूर्णाय सर्वदान्तर्बहिश्च व्याप्य स्थिताय । यद्वा पूर्णाय व्यापकाय निभृतात्मने अवाप्तसमस्तकामाय अयमपि जगद्रक्षणोपयुक्त एव गुणः अवाप्तसमस्तकामो हि स्वाश्रितान् समीहितकामप्रदानेन सम्यक् पालयति नतु दरिद्रः ॥ ३६ ॥

अन्यदपि जगद्रक्षणोपयुक्तं गुणजातमाह । स्वर्गापवर्गयोः द्वाराय साधनभूताय ।

इष्टापूर्तं बहुधाजातं जायमानं विश्वं बिभर्ति

भुवनस्य नाभिः अमृतस्यैष सेतुः इत्यादि श्रुतेः ।

सेतुरिव मेनुर्लम्भकः प्रापकः सेतुर्हिनीरान्तरप्रापकः स्वर्गापवर्गद्वारत्वमेवोपपादयन्नमस्करोति नित्यं सदा शुचिषु योगिश्चिन्तेषु सीदति रमत इति शुचिषत् योगिभिर्नित्यमुपास्यत्वेन तत्समीहितापवर्गप्रदात्र इत्यर्थः हिरण्यं वीर्यं यस्य सोऽग्निस्तस्मै अग्निरूपाय चतुर्थी होतृणामयं चातुर्होत्रः चतुर्भिः होतृभिः ... तस्मै तन्तवे यज्ञाय तद्रूपायेत्यर्थः । यज्ञस्वरूपत्वप्रयो... तत्फलदत्वादिभिः स्वर्गद्वारायेत्यर्थः ॥ ३७ ॥

ऊर्क्पितॄणामन्नम् इड् देवानामन्नं तद्रूपाय ऊर्गिडादिरूपेण पि... नां तृप्तिमापादयन् तदन्तर्यामिरूपेण यः फलदस्तस्मै इत्यर्थः । ... वेदस्य पतये रक्षकाय प्रतिपाद्याय च यज्ञस्य रेतः फलं ... अत्र हिरण्यरूपायेत्याहवनीयाद्यग्निरूपत्वमुक्तम् । चातु... तन्तव इति । द्रव्यक्रियामन्त्राद्यात्मकयज्ञरूपत्वम् ऊर्जे इ... यज्ञाराध्यदेवतारूपत्वं त्रय्याः पतये इति स्वर्गापवर्गतन्त्र... प्रकाशकवेदकारणत्वमेवं स्वर्गापवर्गद्वारत्वं स्वर्गद्वारशब्दे... लौकिकसुखसाधनत्वमभिप्रेतं तदुपपादयन्नमस्करोति ... तृप्तिदाय शब्दस्पर्शादिविषयानुभवजसुखप्रदायेत्यर्थः । ... पपादकं सर्वरसात्मन इति । सर्वे रसाः कट्वम्ललवणमाधुर्य... तदात्मने तद्रूपायेत्यर्थः कट्वादिरसानां च गुणपरिणा... त्वात् । रसोऽहमप्सु कौन्तेय इति । रसस्य तद्विभूतित्वगानात्... रसात्मन इत्युक्तं इदं शब्दस्पर्शरूपात्मकत्वस्याप्युपलक्षणम्...

इयत्तीयसे स्थूलाय विशेषाय पृथिव्यात्मने गन्धरूपायेति ... पुण्यो गन्धः पृथिव्यां चेति गीतावचनात् एवं गन्धरसा... न्यरूपेण तृप्तिदत्वमुक्तम् अथ भोग्यभोगोपकरणभोगस्थाना... णा तृप्तिदत्वमाह । सर्वसर्वात्मदेहाय सर्वमचेतनजातं भोग... रणभोगस्थानरूपं सर्वे आत्मानो भोक्तारो जीवाश्च देहः ... रं यस्य तस्मै प्रकारान्तरेणापि तृप्तिदत्वमाह सहः ... सामर्थ्यमिन्द्रियशक्तिः ओजः तेजः बलं धारणसामर्थ्यं ... शक्तिस्तद्रूपाय सह आदिरूपेण तृप्तिदायेत्यर्थः एवमाकारेण ... द्रक्षकत्वमित्याह । त्रैलोक्यपालाय उक्तविधया त्रैलोक्याल... कृत्स्नजगत्पालायेत्यर्थः ॥ ३९ ॥

एवं जगदुपादानत्वतत्तदन्तरात्मत्वतदनन्यत्वतत्संहर्तृत्वा... स्तदेकासाधारणधर्मैः सर्वोत्कृष्टं नमस्कृत्य अथ चिदचिद... सर्वमपि वस्तु तच्छरीरमेवातस्ततोनोत्कृष्टमस्तीत्यभिप्रायेण ... त्मकत्वेन नमस्करोति । शब्दलिङ्गायेति । शब्द आकाशगुण... लिङ्गं शरीरं यस्य तस्मै नभसे आकाशरूपाय च इदं ... वितद्गुणशरीरकत्वस्याप्युपलक्षणं शब्दादिषु नियमवृ... व्याप्यतच्छरीरकत्वेन स्थितायेत्यर्थःव्याप्तिश्चवेदामग्निरिव ... च तिलेषु तैलमिव नान्तरेव किं त्वन्तर्बहिश्चेत्याह । अन्तर्बहि... इति । अतति संततमविच्छिद्देन व्याप्नोतीत्यात्मा अन्तर्बहिश्च... स्थितायेत्यर्थः तथा च श्रूयते ।

। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।

इति पुण्याय यज्ञादिपुण्यशरीराय अमुष्मैलोकाय स्वर्गाय ... रूपाय लोकाय तल्लोकरूपाय भूरिवर्चसे ... पाय ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुप्रसन्नेन भवता यत्किंचिदुपदिश्यते ... मानुभाविकं स्यादित्यस्य वाक्यस्यावसरमाहदान ... मिति । अनेन बहुपुरश्चरणमन्तरेण चिप्रं सत्यं ... भवति ॥ ३१ ॥

न केवलं प्रतिज्ञामात्रं किन्तूपदिष्टं चेत्याह । इतीति ...

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्वादिविशेषणेनानुग्रहातिशयं द्योतयति किञ्चोपदेशकाले शिष्याणामित्थं भावं च सूचयति ॥ ३२ ॥

स्वोपदेशः फलितो युष्माकमिति भावेनाह । जितमिति । हेआत्मविद्धुर्या परमात्मज्ञानिषु श्रेष्ठाः वो जितं सर्वमिति शेषः कुतः स्वस्तये भगवदुपासनाख्यसत्कर्मणो मयोपदिष्टमिति यत्तस्मादिति शेषः "प्रशस्ते कर्मणि तथा सच्छब्दः पार्थयुज्यत" इति स्मृतिः । किञ्च भगवति भवतां भक्तिरनुदिनमेधतामिति भावेनाह । स्वस्तिरिति । युष्माकं हरौ स्वस्तिः समीचीनसद्भावः सती भक्तिरस्तु ततश्च तया भक्त्या भवतां राधसे सिद्धये भगवत्तत्त्वं राध्यं पूज्यं कथं सर्वस्मै सर्वान्तर्यामिणे आत्मने स्वामिने नम इत्येतावदेवास्माकं शक्यं नातोऽन्यदिति सङ्कल्प्येत्यर्थः "सर्वान्तर्यामिकत्वात्तु सर्वनामा जनार्दनः । नतु सर्वस्वरूपत्वात्सर्वेशेशो हरिर्यतः" । इतिवचनात्सर्वनामा न जगदात्मत्वमनेनोच्यत इत्यर्थः ॥ ३३ ॥

इदानीं ध्येयस्वरूपं दिशति । नमःपङ्कजनाभायेत्यादिना । भूतानि पञ्चभूतानि पञ्चभूतसूक्ष्माणि शब्दादीनि इन्द्रियाणि श्रोत्रादीनि पतित्वात्सततं व्याप्य तिष्ठतीति अत सातत्यगमन इति धातुः तस्मै ॥ ३४ ॥

दुरन्तायान्तत्रयवर्जिताय विश्वप्रबोधाय पूर्णज्ञानाय विश्वस्य प्रबोधो यस्मादिति वा स तथा तस्मै ॥ ३५ ॥

हृषीकमिन्द्रियं प्रोक्तमित्यतो हृषीकेशो जीवस्तस्येन्द्रियस्वामिने किञ्च इन्द्रियमिन्द्रस्य विद्यमानं यस्य किञ्च तस्यात्मा स्वामी हृषीकेशश्चायमिन्द्रियात्मा चेति विग्रहस्तस्मै निभृतात्मने स्तिमितरूपाय ॥ ३६ ॥

शुचावग्नौ सीदति तिष्ठतीति शुचिषत् तस्मै योऽग्नौ तिष्ठन्निति श्रुतेः हिनोति दुःखं रतिं यापयतीति हिरण्यं तादृशं वीर्यं यस्य स तथा तस्मै स्वर्णवर्णरेतस इति वा चतुर्षु होतृषु स्थित्वा तैः क्रियमाणं यत्कर्म तत्कर्तृत्वाच्चातुर्होत्रस्तस्मै तन्तवे व्याप्ताय संततिप्रवर्तकाय वा ॥ ३७ ॥

ऊर्जे पितृस्वदात्रे इषं देवान्नदात्रे इच्छारूपाय वा यत्रे रेतो रतिर्यस्य स तथा तस्मै सर्वरसात्मने सर्वरसानां दात्रे ॥ ३८ ॥

सर्वसत्त्वानां सर्वप्राणिनामात्मदा ईहा चेष्टा यस्य स तथा तस्मै आत्मानं ददातीत्यात्मदा य आत्मदेति श्रुतेः सर्वप्राणिष्वात्मदेहस्तत्तदङ्गुष्ठमात्रस्वरूपं यस्य स तथा तस्मै इति वा विशेषाय विशिष्टाय पृथिव्यां स्थित्वा तस्याः सर्वस्माद्विशेषं करोतीति वा गुणगुणिनोरभेदाभिप्रायेण सह इत्याद्युक्तं सहस्तितिक्षाशक्तिः ओजोऽवष्टम्भशक्तिः बलम्बाह्याद्यवयवशक्तिः ॥ ३९ ॥

अर्थः शास्त्रं वेदाख्यं लिङ्गं ज्ञापकं प्रमाणं यस्य स तथा तस्मै अर्थस्य पुरुषार्थस्य लिङ्गं हेतुस्तस्मा इति वा नभसे आकाशवदसङ्गाय न भस्यते प्रकाश्यते न ज्ञायत इति वा भसभक्षणदीप्त्योरिति धातुः पुण्याय पुनानाय लोकाय प्रकाशाय अमुष्मै अधिदेववासिने पुण्याय लोकाय स्वर्गादिलोकदात्रे वा ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इक् श्तिपौ धातुनिर्देशे असधातुश्चात्र सत्तामेव वदतीत्यात्मविच्छ्रेष्ठानां स्वस्तये शोभनस्थित्यै सद्भक्तलक्षणायै तं तव जितमुत्कर्षो गुणादिप्रकाश इत्यर्थः । मुक्तानामपि सिद्धानामित्यादेः यस्मादेव स एव पुरुषार्थः । तस्मान्ममापि स एव स्वस्तिरस्तु प्रार्थनायां लोट् । तत्र किं तव साधनमित्याशङ्क्य विभक्तिपरिणामेनाह । ते तुभ्यं नम इति । तत्र च मम न स्वातन्त्र्यं किन्तु तवैवेति । तदेव नमो विशिनष्टि । भवतेति । राधसा सर्व्वसाधकेन राद्धं सिद्धं सर्व्वसाधकत्वे हेतुः आत्मने अन्तर्यामिणे सर्व्वस्मै सर्व्वरूपाय चेति । यद्वा । स च स्वस्तिर्दीनमनसो रूप एव योग्य इति तदेव करोति तं नम इति । अन्यत् समानं वासुदेवादय एते पद्मनाभस्यैवांशाः । ननु महावासुदेवादयः निर्विकारायेति व्याख्यायां विकारस्तदाभास इति सङ्कर्षणादीनां तदाभासत्वं दर्शितम् । धुर्य्येत्यत्र वर्य्येति क्वचित् ॥ ३३ ॥ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

अर्थेत्यर्द्धकम् । नम इत्यर्धकम् ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनुक्रोशः कृपा हृदये यस्य सः ॥ ३२ ॥

भगवन्तं स्तुवानो भक्तः प्रथमं जयजयेति वदेदित्याह । आत्मविद्वर्य्याणामात्मारामाणां स्वस्तये शोभनसत्तायै त्वया जितंस्वोत्कर्ष आविष्कृतः । इक् श्तिपौ धातुनिर्देश इति स्तिप्शोभनसत्ता च भगवद्गुणमाधुर्य्याकृष्टतया सायुज्यस्पृहाराहित्येन शुकादीनामिव तद्भक्तत्वेन सनातनी स्थितिः । यदुक्तम् । "तथा परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगविधानार्थमिति कुर्व्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः" इति च । अतो मे मम स्वस्तिः शोभनसत्ता अस्तु । भवता प्रयोजकेन यत् आराधः आराधनं तेन राद्धं तस्य सिद्धिरस्तु । ननु श्रीगुरुणा मद्भक्तेनान्येन वा मदाराधनं भवति नतु मयेति तत्राह । सर्व्वस्मै सर्व्वस्वरूपाय आत्मने त्वमेव गुरुवैष्णवादिरूपः स्वभजनं कारयसीति भावः ॥ ३३ ॥

किञ्च त्वद्विषयकः सर्वेन्द्रियव्यापार एव त्वद्भक्तिः सर्व्वेन्द्रियाणि च त्वदधीनान्यतः कृपया मदिन्द्रियाणि स्वविषयव्यापारवन्ति सम्पादयेति प्रणमति । नम इति । भूतसूक्ष्माणि शब्दादितन्मात्राणि इन्द्रियाणिच तेषामात्मने नियन्त्रे पङ्कजनाभायेति हे पङ्कजनाभ तव नाभिपङ्कजोद्भवाद्ब्रह्मत एव मदीयस्यास्य मर्त्यदेहस्योद्भूतत्वादिमं स्वभक्त्युन्मुखं कुरु तुभ्यं नम इति भावनाभिप्रेता एवं भक्त्युपयोगार्थं देहेन्द्रियाणि समासेन संशोध्य पुनः प्रत्येकमपि शोधयितुं प्रथमं चित्ताधिष्ठातारं वासुदेवं प्रणमति । वासुदेवायेति । भो वासुदेव ! मच्चित्तं शान्तं निर्विकारं कृत्वा स्वरोचिषा प्रकाश्य भक्त्यावेव चेतय तुभ्यं नम इति ॥ ३४ ॥

सूक्ष्माय अव्यक्ताय दुरन्ताय अन्तकाय मुखाग्निना लोकदाहकाय । भोः सङ्कर्षणदेव ! ममाहन्ताममतयोर्वृत्तीनां देहगेहादिनिबन्धनानामनन्तानां तद्बन्धनं सन्दह्य तास्ततो विच्युतीकृत्य भक्त्याश्रयविषययोर्निबधान तुभ्यं नमइति ॥ ३५ ॥

हृषीकाणां यदीशमिन्द्रियं मनस्तदात्मने तन्नियन्त्रे । हे अनिरुद्ध ! देव मन्मनो भक्त्याविवानुरञ्जय तुभ्यं नम इति । एव-

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मन्तःकरणचतुष्टयं तदुपास्यदैवतवासुदेवादिप्रणामैभिः संशोध्य बहिःकरणानि तथा देहारम्भकाणि पञ्चभूतानि च शोधयितुमधिष्ठातृरूपत्वेन भूतरूपत्वेन च प्रणमति । नमः परमेति चतुर्भिः । परमहंसाय सूर्य्याय निभृतात्मने नितरां भृता वृष्ट्यादिभिः पालिता आत्मानो जीवा येन तस्मै शुचिनि अन्तःकरणे सीदतीति शुचिषत् । "हंसः शुचिषत्" इति श्रुतेः । भो सूर्य्यात्मकदेव ! मच्चक्षुः श्रीमूर्त्तिसौन्दर्य्य एव प्रवर्तय देहगतं सूर्य्यात्मकं तेजश्च शुद्ध्यतु तुभ्यं नम इति ॥ ३६ ॥

हिरण्यवीर्य्याय अग्निरूपाय चातुर्होत्रकर्म्मसाधनाय कुतः तन्तवे तद्विस्तारकाय । भो वह्न्यात्मकदेव ! यथान्येषां कर्म्म प्रवर्त्तयसि तथैव मम वाचं कीर्तनभक्तौ प्रवर्त्तय वह्न्यात्मकं तेजश्च शुद्ध्यतु तुभ्यं नम इति ॥ ३७ ॥

ऊर्जे पितृणामन्नाय इषे देवानामन्नाय यज्ञरेतसे सोमाय भो सोमात्मकदेव ! मम देवर्ष्यादि ऋणं परिशोध्य मन्मनो भक्त्यैवासक्तञ्च सोमात्मकं तेजश्च शुद्ध्यतु तुभ्यं नम इति पूर्व्वमुपास्यदैवतप्रणत्या संशोध्यापि मनसो दुर्दमत्वादधिष्ठातृदेवतप्रणत्यापि पुनः संशोधनमिदं ज्ञेयम् एवं सूर्य्याग्निसोमरूपं तेजश्च तद्रूपेण प्रणत्या संशोध्य रसनेन्द्रियं रसञ्च संशोधयितुं रसरूपेण प्रणमति । तृप्तिदायेति हे रसात्मकदेव ! हरे मम रसनां भवदीयवस्तुमाधुर्य्य एव स्वादं प्रापय दैहिका आपश्च शुध्यन्तु तुभ्यं नमः ॥ ३८ ॥

सर्व्वेषां सत्त्वानां प्राणिनां ये आत्मानस्तेषां देहाय स्थवीयसे विराड्देहाय चेति । हे पृथिव्यात्मक हरे! मम घ्राणेन्द्रियं भवदीयसौरभ्य एव प्रवर्त्तयन् देहञ्च स्वीयपरिचर्यादिषु प्रवर्त्तयेति त्रैलोक्यपालाय प्राणवायुस्वरूपाय सहओजोबलाय मनइन्द्रिय देहेषु सह ओजोबलरूपेण प्रविश्य तत्तत्पाटवः कर्त्तव्य इत्यर्थः हे वायुस्वरूप हरे! मम त्वगिन्द्रियं त्वदीयसौकुमार्य्यादावेवोल्लासयन् देहेन्द्रियमनांस्यपि भजनसामर्थ्यवन्ति कुरु तुभ्यं नम इति ॥ ३९ ॥

अर्थानां लिङ्गाय ज्ञापकाय शब्दगुणत्वात् । अन्तर्बहिरात्मने अन्तर्बहिर्व्यवहारावलम्बनाय भो नभः स्वरूप हरे! मम श्रोत्रं भवत्सौन्दर्य्ये एव प्रवर्त्तयन् स्वीयनामभन्त्रसक्तिप्रकाशार्थं स्फोरय। मम नभस्तत्त्वं च शुद्ध्यतु तुभ्यं नम इति । एवं स्वीयभूतेन्द्रियमनांसि भगवदुपासनोन्मुखीकृत्य उपासनां प्राप्य वैकुण्ठलोकस्वरूपत्वेन प्रणमति । नम इति । पुण्याय सर्व्वोत्तमाय पुण्यन्तु चान्येपोत्सवः । भूरिवर्चस इति लोकान्तरव्यावृत्तिः ॥ ४० ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इदं जप्तव्यं स्तोत्रं वो युष्मभ्यं वक्ष्यामि तत् विविक्तमसङ्कीर्णं यथा स्यात्तथा श्रूयतामित्यन्वयः ३१ ॥

अनुक्रोशः कृपा हृदये यस्य सः नारायणः परः पूज्यो यस्य सः इति वचः इति वक्ष्यमाणं वाक्यमाह ॥ ३२ ॥

हे आत्मविद्धुर्य्य ! ते तव जितमुत्कर्षः स्वस्तये सर्वप्राणिकल्याणाय अतो ते स्तोतुरपि स्वस्तिरस्तु ननु ममोत्कर्षो ममैव स्वस्तये भवत्वित्यत आह । भवता राधसा नित्यापरिमितस्वस्ति... राद्धं सिद्धम् त्वं नित्यापरिमितनिरतिशयस्वस्तिरूपेणैव वर्तमानोऽसीत्यर्थः सर्वस्मै सर्वरूपाय सर्वमूलत्वात् आत्मने सर्वाश्रयत्वात् नमः ॥ ३३ ॥

सर्वमूलत्वं सर्वाश्रयत्वं च प्रपञ्चयन्नमस्करोति । नम इति पङ्कजं विश्वात्मकं नाभौ यस्य तस्मै सर्वमूलाय भूतसूक्ष्म... आत्मने आश्रयाय स्थितिप्रवृत्त्यादिहेतवे चित्ताद्याश्रयत्वेन ...रोति वासुदेवाय चित्तनियन्त्रे कूटस्थाय निर्विकारस्वरूपाय ।

सङ्कर्षणाय अहंकारनियन्त्रे प्रद्युम्नाय अन्तरात्मने बुद्धि... विश्वस्य प्रबोधो यस्मात्तस्मै ॥ ३५ ॥

हृषीकाणि श्रोत्रादीनि वाह्येन्द्रियाणि तदीशभूतमिन्द्रि... स्तस्यात्मने नियन्त्रे परमो विष्णुरेव स्वाश्रितानां ... ज्ञानोपदेशेन संशयं हन्तीति हंसस्तस्मै नमः पूर्णाय ... मादिपूर्णावतार रूपिणे भूतात्मने निभृता लब्धकामाः ... जीवास्तत्तत्कालगताः भक्ता यस्मात्तस्मै नानावतार... स्यर्थः ॥ ३६ ॥

स्वर्गापवर्गद्वाराय कर्मप्रवर्तकत्वेन स्वर्गद्वाराय अर्चिरादि... गोवयवत्वेनापवर्गद्वाराय सूर्यरूपाय नमः शुचिनि त्रिगुणदो... दे परमे व्योम्नि सूर्यादिचेत्रब्रह्मस्वरूपे वा नित्यं सीदतीति शु... तस्मै च नमः हिरण्यवीर्याय अग्निरूपाय नमः चतुर्णां होतृणां चातुर्होत्रं कर्म तस्मै तन्तवे होतृतत्कर्मतत्फले चातुस्सूत्र... नमः ॥ ३७ ॥

ऊर्जे पितृणामन्नाय इषे देवानामन्नाय यज्ञरेतसे सोमाय ... त्रय्याः पतये वेदत्रयीप्रोक्तकर्मतत्फलादिस्वामिने नमः ... वृत्तिदाय पर्जन्यादिरूपिणे सर्वरसात्मने जलरूपाय च नमः ।

सर्वसत्वानां ये आत्मानस्तेषां देहाय विशेषाय पृथिवी... स्थवीयसे विराड्रूपाय च नमः त्रैलोक्यपालाय वायुरूपाय ... आदिरूपाय इन्द्रियमनोदेहशक्तिरूपाय च नमः ॥ ३९ ॥

अर्थलिङ्गाय अर्थज्ञापकाय शब्दरूपाय इदं स्पर्शादीनाम... लक्षणम् नभसे आकाशाय च नमः अन्तर्बहिरात्मने नमः ... र्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इति श्रुतेः "यो मां प... सर्वत्र सर्वं च मयि पश्यति" इतिस्मृतेश्च सर्वस्यान्तर्बहिश्च ... स्वरूपं यस्य तस्मै नमः पुण्याय यज्ञतपोव्रतदानादिरूपाय ... लोकाय पुण्यसाध्याय च नमः भूरिवर्चसे विपुलज्ञानाय ... रूपाय च ।

> यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
> क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत

इति स्मृतेः ॥ ४० ॥

---

## भाषाटीका ।

यह स्तोत्र तुमारे को एकान्त मे जपना चाहिये अति पवित्र है श्रेष्ठ है मङ्गल कारक है मोक्ष दायक ... कहता हूं सो तुम सुनो ॥ ३१ ॥

मैत्रेयजी बोले इस प्रकार से कृपा हृदय वाले ... शिवजी नारायण तत्परहो कर हाथ जोडे हुये राज ... बोले ॥ ३२ ॥

श्रीरुद्रजी बोले आत्मज्ञानियों मे जो श्रेष्ठ तिनके ... के लिये आपका जय है तब आपकी कृपा से मेरा भी ...

प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे ।
नमोऽधर्मविपाकाय मृत्यवे दुःखदाय च ॥ ४१ ॥
नमस्त आशिषामीश ! मनवे कारणात्मने ।
नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे ।
पुरुषाय पुराणाय सांख्ययोगेश्वराय च ॥ ४२ ॥
शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने ।
चेतआकूतिरूपाय नमो वाचो विभूतये ॥ ४३ ॥
दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् ।
रूपं प्रियतमं स्वानां सर्वेन्द्रियगुणाञ्जनम् ॥ ४४ ॥
स्निग्धप्रावृड्घनश्यामं सर्वसौन्दर्यसंग्रहम् ।
चार्वायतचतुर्बाहुं सुजातरुचिराननम् ॥ ४५ ॥
पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम् ।
सुद्विजं सुकपोलास्यं समकर्णविभूषणम् ॥ ४६ ॥
प्रीतिप्रहसितापाङ्गमलकैरुपशोभितम् ।
लसत्पङ्कजकिञ्जल्कदुकूलं मृष्टकुण्डलम् ॥ ४७ ॥
स्फुरत्किरीटवलयहारनूपुरमेखलम् ।
शङ्खचक्रगदापद्ममालामण्युत्तमर्द्धिमत् ॥ ४८ ॥
सिंहस्कन्धत्विषो बिभ्रत्सौभगग्रीवकौस्तुभम् ।
श्रियानपायिन्याक्षिप्तनिकषाश्मोरसोल्लसत् ॥ ४९ ॥

भाषाटीका ।

होवैं आप तो स्वयं सिद्ध स्वरूप हौ तो सर्व स्वरूप आत्म स्वरूप आपके अर्थ नमस्कार है ॥ ३३ ॥

आपके नाभिसे जगत्कारण कमल हुआ है भूत सूक्ष्म तथा इन्द्रिय इनके आप नियन्ता हो शान्त स्वरूप हो निर्विकार हो स्वयं प्रकाश हो ऐसे जो आप वासुदेव तिनके अर्थ नमस्कार है ॥ ३४ ॥

सूक्ष्म रूप अनन्त रूप काल रूप जो आप सङ्कर्षण रूप तिनके अर्थ नमस्कार है संसार में सब के ज्ञान देने वाले सबके बुद्धिके अधिष्ठाता ऐसे जो आप अनिरुद्ध स्वरूप तिनके अर्थ नमस्कार है ॥ ३५ ॥

इन्द्रियों के स्वामी हृषीकेश स्वरूप जो अनिरुद्ध तिनके अर्थ नमस्कार है परम हंस सूर्य स्वरूप पूर्ण स्वरूप आप अग्नि रूप के अर्थ नमस्कार है ॥ ३६ ॥

स्वर्ग मोक्षके द्वार रूप नित्यही शुचि अन्तःकरण में स्थित होने वाले हिरण्य जिनका वीर्य है चातुर्होत्र कर्म के साधन भूत आप हो यज्ञों के विस्तार करने वाले हो तिन आप को नमस्कार है ॥ ३७ ॥

पितरों के अन्न रूप देवतों के अन्न रूप सोम स्वरूप वेद त्रयीके पति सब जीवों के तृप्ति कारक जल रूप सब रस स्वरूप आपके अर्थ नमस्कार है ॥ ३८ ॥

सब प्राणियों के देह रूप विराट् रूप पृथिवी रूप तिन को नमस्कार तीनों लोकों के पालक इन्द्रिय बल देह बल मनो बल रूप ऐसे वायू रूप को नमस्कार है ॥ ३९ ॥

शब्द के द्वारा पदार्थ को जनाने वाले बाहिर भीतर सर्वत्र वस्तु के व्यवहार कारण आकाश स्वरूप आपको नमस्कार है पुण्य से प्राप्त होने वाले अत्यन्त प्रकाश वाले स्वर्गादि लोक रूप आपके अर्थ नमस्कार है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रवृत्ताय च निवृत्ताय च कर्मणे पितृदेवाय यथाक्रमं पितृदेवप्राप्तिफलाय अधर्मफलरूपाय च मृत्यवे ॥ ४१ ॥

हे ईश ! आशिषां कारणात्मने सर्वकर्मफलदात्रे मनवे सर्वज्ञाय मन्त्रात्मकायेति वा विष्णुत्वेन प्रणमति । बृहते धर्माय पर मधर्मात्मने कृष्णाय ॥ ४२ ॥

पूरेचकसंविग्नवलिवल्गुदलोदरम् ।
प्रतिसङ्क्रामयद्विश्वं नाभ्यावर्त्तगभीरया ॥ ५० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रुद्ररूपेण प्रणमति । मीढुषे रुद्राय अहङ्कृतमहङ्कारस्तदात्मने स च कर्तृकरणकर्मशक्तित्रयसमेतस्तस्मै ब्रह्मत्वेन प्रणमति । चेतो ज्ञानमाकूतिः क्रिया तद्रूपाय वाचो विविधा भूतिः सृष्टिर्यस्मात्तस्मै ॥ ४३ ॥

एवं नमस्कृत्य दर्शनं प्रार्थयते । दर्शनमिति नवभिः । भागवतैः सत्कृतं दर्शनं देहीत्यस्य विवरणं रूपमित्यादिप्रदर्शयेत्यन्तम् स्वानां भक्तानां प्रियतमं रूपं प्रदर्शयेति नवमेनान्वयः सर्वेषामिन्द्रियाणां ये गुणा विषयास्तेषामञ्जनं व्यञ्जकम् सर्वेन्द्रियविषयविषयिरूपमित्यर्थः सर्वेन्द्रियाणि स्वगुणैरनाक्त रञ्जयतीति वा ॥ ४४ ॥

स्निग्धः प्रावृषि यो घनस्तद्वच्छ्यामम् सर्वेषां सौन्दर्याणां संग्रहो यस्मिन् चारव आयताश्चत्वारो बाहवो यस्मिन् सुजातं यथोचितं सर्वावयवरुचिरमाननं यस्मिन् ॥ ४५ ॥

पद्मस्य कोशे मध्ये यानि पलाशानि तद्वदक्षिणी यस्मिन् सुकपोलमास्यं यस्मिन् समौ कर्णौ विभूषणं यस्य कुण्डलयोरग्रे वक्ष्यमाणत्वात् ॥ ४६ ॥

प्रीत्या प्रहसितावेक्षापाङ्गौ यस्मिन् ॥ ४७ ॥

स्फुरन्ति किरीटादीनि यस्मिन् शङ्खादिमत् उत्तमर्द्धिर्लक्ष्मीः यद्वा एतैरुत्तमा ऋद्धिरुत्कर्षो यस्यास्ति तत् ॥ ४८ ॥

सौभगयुक्ता ग्रीवा येन सिंहस्य स्कन्धे परितः प्रसरन्तः केसरा एव त्विषस्तादृशीः सर्वतस्त्विषो बिभ्रचासौ सौभगग्रीवः कौस्तुभो यस्मिन् यद्वा सिंहस्येव स्कन्धौ तयोस्त्विषः कुण्डलहारादिदीप्तिर्बिभ्रदिति पृथग्विशेषणं सौभगयुक्ता ग्रीवा येन स कौस्तुभो यस्मिन् श्रिया हेतुभूतया क्षिप्तस्तिरस्कृतो निकषाश्मा स्वर्णरेखाङ्कितो निकषग्रावाणो येन तादृशेनोरसा उल्लसच्छोभमानम् ॥ ४९ ॥

श्वासोच्छ्वासाभ्यां सविग्नाश्चश्चला वलयस्ताभिर्वल्गु सुन्दरं चलदश्वत्थपत्रसदृशमुदरं यस्मिन् प्रतिसंक्रामयद्यतो निर्गतन्ते नैव द्वारेण पुनः प्रवेशयदिव ॥ ५० ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

प्रवृत्ताय निवृत्ताय च कर्मणे प्रवृत्तिनिवृत्त्यात्मककर्मरूपाय पितृदेवाय प्रवृत्तिकर्माराध्यतत्फलप्रदपितृदेवादिशरीराय धर्मविपाकाय धर्मोऽनभिसंहितफलभगवदाराधनरूपः तस्य विपाकः फलं तस्मै निवृत्तिधर्मफलरूपायेत्यर्थः तथा मृत्यवे दुःखदाय दुःखप्रदमृत्युरूपाय ॥ ४१ ॥

हेऽऽशिषामीश ! यद्वा हे ईश ! आशिषां धर्मादीनां कारणात्मने फलप्रकाशकाय मनवे सर्वज्ञाय स्वायंभुवादिमनुरूपाय वा मन्वन्तराधिदैवताय वा मन्त्ररूपाय वा एवं सर्वात्मकत्वेन नमस्कृत्य साक्षान्नमस्करोति बृहते स्वरूपेण गुणैश्च निरतिशयबृहत्त्वाय धर्माय कृष्णाय सिद्धरूपधर्माय सिद्धरूपेऽपि धर्मशब्दः प्रयुज्यते तथाच श्रीमहाभारते "ये च वेदविदो विप्रा येचाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनमिति अकुण्ठधर्मणे अप्रतिहतज्ञानाय ॥ ४२ ॥

पुरुषायेति । पुराणपुरुषाय कपिलाद्यंशावताररूपेण नमस्कृ... सांख्येश्वरः कपिलः योगेश्वरो हिरण्यगर्भः तद्रूपाय शक्तिश्चं ... सामर्थ्यं तद्युक्ताय नवब्रह्मेन्द्ररुद्रकालरूपायेत्यर्थः मीढुषे मि... सूर्यात्मकपर्जन्याय "तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजा... इति पर्जन्यस्यापि भगवद्विभूतित्वगानात् अहंकृतमहंकारतत्त्वा... त्मने चेत आकूतिरूपाय चेतसः आकूतिः स्वरूपं तदेव यस्य ... तथोक्तस्तस्मै "यस्याहंकारः शरीरं यस्य मनः शरीरम्" ... श्रुतेः वाचो विभूतये वाक्प्रपञ्चाय यद्वा चेतश्चाकूतिः श... यस्य रूपं स तथोक्तस्तस्मै मनोवाक्कायरूपत्रयात्मने मन... विषयरूपायेत्यर्थः इदमनुक्तरूपत्वसंग्राहकं किंचिद्वस्तु क्षीरा... दिगतमाधुर्यादियदेवं विधमिति वाचा वक्तुमशक्यमपि म... चिन्तयितुं शक्यं किंचित् वस्तुदूरस्थमर्वागदृक्चक्षुरादिभिरनुभ... शक्यमप्येवं विधमिति वाचा वक्तुं शक्यं किंचिद्विकायेनानु... शक्यं यथा सन्निकृष्टघटपटादिकमेवं विधवस्तुशरीरायेत्यर्थः

एवं पारमैश्वर्योपादकगुणगणविशिष्टं भगवन्तं नमस्... तदीयदिव्यमङ्गलविग्रहदर्शनं प्रार्थयमानो विग्रहं च वर्ण... दर्शनमिति नवभिः । भागवतैरर्चितं ते रूपं दिदृक्षूणां द्रष्टुमि... नोऽस्माकं दर्शनं देहीत्यन्वयः रूपं विशिनष्टि स्वानां भक्तानां ... तमं सर्वेषामिन्द्रियाणां ये ये गुणाः असाधारणधर्माः श्रवण... तद्दर्शनघ्राणनादयः तैरञ्जनमभिव्यक्तिर्यस्मिन् यद्वा देहादिवि... शेषणं यद्वा सर्वेषामिन्द्रियाणामप्राकृतानां तद्गुणानां ... दीनां च अञ्जनमभिव्यक्तिर्यस्मिन् तदिति "सर्वकर्मा सर्वकामः सर्व... गन्धः सर्वरस" इतिश्रुतेः ॥ ४४ ॥

स्निग्धः प्रावृषि वर्षितो यो घनस्तद्वत्श्यामः सर्वेषां सौन्दर्य... संग्रहो यस्मिन् चारवः सुन्दरा आयता आजानुलम्बिनश्च... रो बाहवो यस्मिन् सुजातं सुकुमारं सुन्दरमाननं यस्मिन्...

पद्मस्य कोशे मध्ये यानि पलाशानि तद्वदीक्षणी द... सुन्दरे भ्रुवौ यस्मिन् शोभना नासिका यस्मिन् शोभना ... दन्ता यस्मिन् सुकपोलमास्यं यस्मिन्निति बहुव्रीहिः समौ ... वेव विभूषणं यस्मिन् कुण्डलयोरग्रे वक्ष्यमाणत्वात् ॥ ४६ ॥

प्रीत्या प्रहसितावेक्षापाङ्गौ यस्मिन् अलकैः कुन्त... शोभितं नूतनपङ्कजकिञ्जल्कवत्पिशङ्गं दुकूलं यस्मिन् मृष्टे ... कुण्डले यस्य ॥ ४७ ॥

स्फुरन्ति किरीटादीनि यस्मिन् शङ्खादिभिरुत्तमा श्रीः ... श्रीरस्मिन्नस्तीति तथा ॥ ४८ ॥

सिंहस्कन्धत्विष इति द्वितीयाबहुवचनं सिंहस्य ... परितः प्रसरन्तः केसरा इव सर्वतस्त्विषो बिभ्रती ... भगा ग्रीवा तस्यां कौस्तुभो यस्मिन् यद्वा सिंहस्येव स्कन्धौ तयोस्त्विषः कुण्डलहारादिदीप्तीर्बिभ्रदिति पृथग्विशे... सौभगयुक्तग्रीवायां कौस्तुभो यस्मिन् सौभगा ग्रीवा ... कौस्तुभो यस्मिन्निति बहुव्रीहिगर्भो वा बहुव्रीहिः श्रिया ... भूतया आक्षिप्तस्तिरस्कृतो निकषाश्मा सुवर्णरेखान्तो नि... पाषाणो येन तादृशेन उरसा उल्लसत् शोभमानं यद्वा ... उपलक्षितेन निकषोपधूपरक्तसुवर्णरेखासदृशा श्रिया उ...

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तेनेत्युरोविशेषणम् आचितः शङ्कितः निकषाश्मा येन तेन उरसा उल्लसत् शोभमानं लक्ष्मीसहितं श्यामं वक्षः कनकनिकषरेखान्वितमश्मानं शङ्कयतीत्यर्थः पूरकरेचकाभ्यां श्वासोच्छ्वासाभ्यां सम्विग्नाश्चपलाः वलयस्ताभिः वल्गु सुन्दरं दलवदश्वत्थपत्रसदृशमुदरं यस्मिन् । यद्वा । सृष्ट्या पूर्यते पाल्यते इति वा जगत्पूरं तत् रेचकं संहरणसमर्थं यस्मिन् संविग्नाः समदा वलयो यस्मिन् दलवदुदरं पूरकरेचकसम्विग्नवलिवल्गुदलोदरं यस्मिन्निति द्वन्द्वो बहुव्रीहिः पूर्वयोः कर्मधारयो द्विपदो वा बहुव्रीहिर्यतो नाभिद्वारा निर्गतं विश्वमावर्त्तवद्गभीरया नाभ्या प्रतिसङ्क्रामयत् पुनः प्रवेशयदिव स्थितं गम्भीरनाभिद्वारेण बहिष्ठं विश्वमन्तर्निवेशयदिव स्थितमित्यर्थः ॥ ४९ ॥ ५० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रवृत्तिनिवृत्तिमार्गप्रवर्त्तकत्वात्तस्मै पितृदेवेषु च स्थित्वा तत्तद्योग्यकारणत्वात्तच्छब्दवाच्याय कर्मणां विपयाय क्रियारूपाय वा धर्मविपाकाय पुण्यफलप्रदाय मृतेरुद्गतो मृत्युस्तस्मै मृत्यौ स्थित्वा तत्करणाद्वा मृत्युस्तस्मै दुःखदाय असुरेभ्य इति शेषः दुःखदायिन इति पाठे । दुरशोभनदुःखयोरिति यादवः । न सुखमिति श्रुतिः । दुःखं दायति शोधयतीति तस्मा इति वा । दैप्शोधने इति धातुः ॥ ४१ ॥

मनवे मननशीलाय मन्त्रवाच्याय वा ४२ ॥

सांख्यं यथार्थज्ञानं योग उपायो ऽष्टाङ्गविशिष्टो वा तयोरीश्वराय शक्तित्रयसमेताय ज्ञानक्रियेच्छाशक्तियुक्ताय मीढुषे वीर्यवते अभीष्टदात्रे वा अहंकृते रुद्रे आत्मा यस्य स तथा तस्मै ॥ ४३ ॥

चेतस आकूतिरभिप्रायस्तं रूपयति समर्थयति इति चेतआकूतिरूपस्तस्मै वाचो विविधा भूतिः सृष्टिर्येन तस्मै किमभिप्रेत्य स्तुतमिति तत्राह । दर्शनमिति । कीदृशं दर्शनं साकारविषयं निराकारविषयं वा द्वितीये गगनवत् व्याप्तमुतघटाकाशवत्परिमितं पक्षद्वयमप्यनभीष्टमनधिकारात्तस्मात्प्रथम एव पक्षस्तत्रापि रूपाणामानन्त्यादीदृशं रूपं प्रकाशयेत्याह । भागवतार्चितमिति । यदेतदीदृशं रूपं प्रदर्शयेत्यन्वयः ॥ ४४ ॥

सर्वसौन्दर्याणां संग्रहं पात्रम् ॥ ४५ ॥

सुजातं कोमलं विदुरित्यभिधानं शोभना द्विजा दन्ता यस्य तत्सुद्विजम् ॥ ४६ ॥ ४७ ॥

कर्णाभरणानां बहुत्वद्योतनाय मृष्टकुण्डलमिति पुनर्वचनम् ॥ ४८ ॥

शङ्खादयो यस्मिश्चिह्निनास्तच्छङ्खचक्रगदापद्ममालामणिना वत्तमा शुद्धयोऽस्य सन्तीत्युत्तमर्द्धिमत् सौभगेत्युभयत्र सम्बध्यते सौभाग्ययुक्तौ श्रीवाकौस्तुभौ यस्मिंस्तत् उरोविभ्रद्विस्तीर्णमिति शेषः ॥ ४९ ॥

सौभगमुरो विशिनष्टि । अनपायिन्येति नित्यया श्रिया साचिव्यं साचिहितं च निकषाश्मा स्वर्णवर्णपाषाणस्तद्वद्वर्त्तमानमुरः आचितनिकषाश्मोरस्तनोल्लसत् श्वासानां पूरकरेचकाभ्यां सम्विग्नाः संचलिताः वलयो रेखा अस्य सन्तीति पूरकरेचकसम्विग्नवलिमत् तच्च पल्लवेनाङ्कुरदलेन सदृशं तत्तथा ॥ ५० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नमो धर्म्मेत्यर्द्धकम् नमस्त इत्यर्द्धकम् ॥ ४१ ॥

अथ त्रिदेवी रूपत्वेन स्तुतेषु विष्णुरूपत्वे पद्मनाभाभेदेनैव स्तौति । नमो धर्म्मायेति । तत्र पुरुषाय पुराणायेति पद्मनाभरूपेण निःश्वासप्रवर्त्तितवेदद्वारा धर्माय बृहते नमः स्वयं भगवद्धर्म्मस्वरूपेण तदनुगतसर्व्वधर्म्मप्रवर्त्तनद्वारा सांख्ययोगेश्वरायेति कपिलदत्तात्रेयादिरूपेण तत्तत्प्रवर्त्तनद्वारा कृष्णायाकुण्ठमेधस इति परब्रह्मरूपेण ज्ञानप्रवर्त्तनद्वारा विश्वपालकायेत्यर्थः व्यतिक्रमो नर्द्धशम्भु तदिच्छाया अनैयत्यात् ॥ ४२ ॥

शिवब्रह्मरूपत्वे तु परिच्छिन्नैश्वर्य्यतया स्तौति । शक्तीत्यर्द्धकाभ्याम् ॥ ४३ ॥

तदेवं सर्व्वरूपत्वमुक्त्वा तदेतावद्रूपेणैव ज्ञानशक्तिविशेषेण विशेषाभिलाषं कुर्वन्नात्माभीष्टं रूपं वर्णयति । दर्शनमित्यष्टकेन । ननु सर्व्वात्मकत्वे सति नित्यं मम दर्शनं प्राप्नोष्येवेत्याशङ्क्याह । भागवतैः सात्वतैरार्चितं सर्व्वसारस्वरूपत्वेन सेव्यमानमिति । रूपमिति सार्द्धाष्टकम् । सतामित्यस्यान्ते स्वानां ज्ञातिरूपाणां स्वपार्षदाणां प्रियतमं सर्वेन्द्रियगुणाञ्जनञ्च ॥ ४४ ॥ ४५ ॥

समकर्णान्तं यथाशोभि प्रमाणान्वम् ॥ ४६ ॥ ४७ ॥ ४८ ॥

त्विष इत्यत्रतुल्यमिति मध्यन्धोक्तिपाठान्तरम् । प्रतिसंक्रामयत् प्रवेशयत् सौन्दर्य्यणाकर्षयदिव । यद्वा । सृष्टिप्रलययोर्निर्गमयत् प्रवेशयच्चेति प्रभावगाम्भीर्य्यं दर्शितं प्रदर्शयदिति चित्सुखः ॥ ४९—५२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

धर्मान्तरस्यापि प्रयोजकत्वेन प्रणमति । प्रवृत्तायेत्यादि । पितृदेवाय पितृदेवप्रापकाय ॥ ४१ ॥

निषिद्धकर्म्मफलदायित्वेन प्रणमति । नमोऽधर्म्मेति । अधर्म्मस्य विपाकः फलं यस्मात्तस्मै विहितकर्म्मफलदायित्वेन प्रणमति नमस्त इति । हे ! आशिषामीश ! स्वर्गादिफलदायिन् ! मनवे सर्व्वमन्त्ररूपाय कारणात्मने कर्म्मकारकस्वरूपाय भक्तिरूपत्वेन तद्विषयत्वेन प्रणमति नमो धर्म्मायेति अधिकारिभेदेषु कपिलदत्तात्रेयाद्यवतारभेदेन सांख्ययोगयोरपि प्रवर्त्तकाय ॥ ४२ ॥

अहङ्कारस्याधिदैवादिभेदत्रयसहितस्य पुनरपि तदधिष्ठातृदैवतस्वरूपप्रणत्या संशोधनमाह । शक्तीति । कर्तृकर्मकरणशक्तित्रयसमेताय । मीढुषे रुद्रस्वरूपाय अहङ्कृतमहङ्कारस्तदात्मने भो ! रुद्रस्वरूप ! हरे ! ममाहन्ताममतयोर्वृत्तयः शुद्धान्तु भक्तिमय्यो भवन्तु तुभ्यं नम इति । ज्ञानेन्द्रियकर्मेन्द्रियाणां शुद्धिमाह । चेतो ज्ञानं आकूतिः क्रिया तद्रूपाय ब्रह्मस्वरूपाय वाचो वेदलक्षणाया विविधा भूतिः सृष्टिर्यस्मात्तस्मै तथा वाच इति तदुपलक्षितानां कर्म्मेन्द्रियाणां शुद्धिर्व्यञ्जिता ज्ञानेन्द्रियाणामपि शुद्धिः पूर्व्वमुक्तापि पुनरनया प्रणत्यापि ज्ञेया । हे रुद्र ! स्वरूप हरे ! ममबुद्धिप्राणवृत्तीर्भक्त्युन्मुखी कुरु तुभ्यं नम इति ॥ ४३ ॥

एवं स्मरन् प्रणामैरेव स्वस्य देहेन्द्रियमनसां शुद्ध्या योग्यतामापाद्य दर्शनं प्रार्थयते नवभिः । दर्शनं इहानि । ननु कीदृशं दर्शनं भवदभिमतं ददामि तत्राह । भागवतैरर्चितं न तु

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

बौद्धादेरित्यर्थः । रूपं रूपवत् स्वानां प्रियतममिति वैराजदर्शनं व्यावृत्तम् । सर्वेन्द्रियगुणैः रूपादिभिः अञ्जनं अञ्जनमत्यासक्ति- र्यत्र तदिति ब्रह्म दर्शनमपि व्यावृत्तम् । यद्वा सर्वेन्द्रियाणां गुणाञ्जनं गणयुक्तं हितकरमञ्जनं मन आदि सर्वेन्द्रियाणां यत्र दुर्विषयग्रहणरूपमान्ध्यं परित्यज्य स्वस्वचक्षुःप्राप्नुवन्ती- त्यर्थः । चक्षुषश्चक्षुरित्यादिश्रुतेः ॥ ४४ ॥

किञ्च तथापि । स्निग्धेति । स्नेहवत्त्वस्नेहजनकत्वचिक्कणत्वा- न्युक्तानि प्रावृण्मेघेति रसवर्षित्वसर्वतापोपशमकत्वमनश्चा- तकहर्षत्वानि श्लेषेण आसस्यगेव वर्षति भक्तमनोरथमिति प्रावृड् घनश्याममर्मातनिविडश्यामम् । सर्वेषामेव प्राकृताप्राकृत- वस्तुनिष्ठानां सौन्दर्याणां संग्रहो यत्र तत् । यद्वा । सौन्दर्यैक- पूर्वकं सम्यक् ग्रहणमाकर्षणं यत्र तदित्यत एवान्यत्र तादृश- सौन्दर्यं नास्तीत्यर्थः । यद्वा । सर्वसौन्दर्येण कर्त्रा सम्यगा- सक्त्यैव ग्रहणं यस्येति सर्वसौन्दर्यमपि स्वं सफलयितुं यदेव गृह्णातीति भावः । चतसृषु दिक्षु भुजा यस्येति पद्मनाभोपासकाः चत्वारो भुजा यस्येति वैकुण्ठनाथोपासकाः प्रेयसीसाहित्यादेव चतुर्भुजत्वमिति श्रीकृष्णोपासकाः सुजातकमलमिव रुचिरमाननं यस्य तम् ॥ ४५ ॥

पद्मकोशस्थे कोमले पलाशे इवाक्षिणी यत्र तत् ॥ ४६ ॥

प्रीतिव्यञ्जकं प्रहसितमपाङ्गे वामनेत्रान्ते यस्येति प्रेयसी- साहित्यं सूचयति ॥ ४७ ॥

शङ्खचक्रगदापद्मानि करचतुष्टये करतलद्वये वा रेखारूपाणि ज्ञेयानि मालाश्च आभरणस्था मणयश्च उत्तमर्द्धिः शोभासम्पत्त तद्वत् ॥ ४८ ॥

सिंहस्येव यौ स्कन्धौ तयोस्त्विषो हारकुण्डलादिदीप्तीर्वि- भ्रत् । सौभगयुक्ता ग्रीवा येन तथा भूतः कौस्तुभो यत्र तत् । अनपायिन्या श्रिया लक्ष्मीरेखाहेतुभूतया आक्षिप्तस्तिरस्कृतो निकषाश्मा स्वर्णरेखाङ्कितो निकषपाषाणो येन तादृशेन उरसा उल्लसच्छोभमानम् ॥ ४९ ॥

पूररेचकाभ्यां श्वासोच्छ्वासाभ्यां संविग्नाश्चञ्चला या वल- यस्ताभिर्वल्गुदलवदश्वत्थपत्रसदृशमुदरं यत्र तत् । आवर्तवद्गम्भी- रया नाभ्या विश्वं प्रतिसंक्रामयत् । तयैवोद्भूतं पुनस्तयैव स्वस्मिन् प्रवेशयदिव स्वसौन्दर्येणाकर्षदिव इत्यर्थः ॥ ५० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रवृत्ताय पितृलोककामाय निवृत्ताय मुक्तिकामाय । अधिकारिणे नमः पितृदेवाय पितृसहिताय देवाय प्रवृत्ताधिकारिलभ्याय पित्रे निवृत्ताधिकारिलभ्याय देवाय परमात्मने नमः । कर्मणे भोगमोक्षसाधनाय नमः । अधर्मस्य विपाकाय फलाय कुत्सित- लोकरूपाय मृत्यवे मारकाय दुःखदाय अधर्मफलदाय कामादिरू- पाय । नवधर्मादेरप्यभेदो वासुदेवे कथं भवतीत्यत्रोच्यते । सर्व- स्य चेतनाचेतनस्य वस्तुजातस्य श्रीवासुदेवस्वरूपात् सर्व- ज्ञत्वपरब्रह्मत्वसर्वनियन्तृत्वसर्वशक्तित्वसर्वात्मत्वादिधर्मवतः । जडत्वाल्पज्ञत्वनियम्यत्वादिना भिन्नत्वेऽपि पुरुषात्केशलोमादे रिव भूमितः ओषध्यादेरिव गुणिनो गुणस्येव नियन्तुः सकाशा- न्नियम्यस्येव पृथक्स्थितिप्रवृत्त्याद्यभावात् । अभिन्नत्वमतो न वासुदेवस्वरूपे धर्माधर्माल्पज्ञत्वजडत्वादियोग इति दिक् ॥ ४१ ॥

हे ईश आशिषां कारणात्मने मनवे मन्त्ररूपाय च ते धर्माय च नमः बृहते बृहत्स्वरूपगुणशक्त्याश्रयाय अप्र मेधसे निरावरणज्ञानाय कृष्णाय स्वयं भगवते नमः ॥ ४२ ॥

पुरुषाय पुरुषावताराय पुराणाय पुरापि नवाय । सांख्य ष्टिसंहितादिरूपं कापिलं तन्त्रं योगो योगश्चित्तवृत्तिनिरोध दिरूपं पातञ्जलं तयोरीश्वराय कपिलपतञ्जलिनामकमुनि प्रवर्तकाय यद्वा सांख्ययोगो विष्ण्ववतारभूतकापिलप्रोक्तं शास्त्रं तृतीये स्कन्धे स्थितं तदीश्वराय शक्तित्रयं विश्वसृष्ट्या सामर्थ्यं तत्समेताय विश्वसृष्ट्यादिहेतवे नमः । मीढुषे अहंकृतात्मने । अहंकाराधिष्ठात्रे नमः । चेत आकूतिरूपाय कर्मप्रवर्तकाय वाचो विविधा भूतिः सृष्टिर्यतस्तस्मै चतुर्मुख नमः ॥ ४३ ॥

एवं भगवदसाधारणगुणगणकथनेन सर्वेश्वरं सर्वान्त भगवन्तं श्रीवासुदेवं नमस्कृत्येदानीं तत्साधारणं श्रीविग्रहं प्रार्थयते । दर्शनमित्यादिनवभिः । तत्र भागवतार्चितं दर्शनं नि विग्रहदर्शनं नो देहीति श्लोकार्थान्वयः अस्यैव श्लोकार्द्ध विवरणं रूपमित्यादिरूपं श्रीमन्मङ्गलविग्रहं प्रदर्शयेति तात्पर्य संवन्धः स्वानां स्वानन्यशरणानां प्रियतमम् सर्वो विष्णुः भगवान् तदिन्द्रियाणि स्वगुणैः कान्त्यादिभिः रञ्जयतीति यत्र भगवदिन्द्रियाण्यपि वशीभूतानि भवन्ति कोऽन्यस्तद्दर्श र्शनादौ योग्यस्तथापि तत्प्रदर्शयेति भावः ॥ ४४ ॥

स्निग्धः प्रावृषि यो घनस्तद्वच्छ्यामं सर्वाणि सौन्दर्या सम्यग्गृह्यन्तेऽस्मिंस्तत् चारवः रमणीयाः आयताश्च चत्वा बाहवो यस्मिंस्तत् सुजातं शोभनतयानादिसिद्धं रुचिरमा यस्मिंस्तत् ॥ ४५ ॥

पद्मस्य कोशो मध्यं तत्रत्ये पलाशा इव अक्षिणी यस्मिंस्त समौ कर्णौ तद्विभूषणे च यत्र मृष्टकुण्डलमित्यनेन तु कुण्डल योमृष्टत्वं वर्ण्यते अतो न पुनरुक्तिः ॥ ४६ ॥

प्रीत्या प्रहसितौ अपाङ्गौ यस्मिंस्तत् ॥ ४७ ॥

स्फुरन्ति दीप्तियुक्तानि किरीटादीनि यस्य तत् शङ्खादीनि रुत्तमा ऋद्धिः श्रीर्यत्र ॥ ४८ ॥

सिंहस्कन्धयोः सिंहशब्द उत्कृष्टवाचकः उत्कृष्टस्कन्धयो स्त्विषः कान्तीः बिभ्रत् सौभगयुक्ता ग्रीवा येन स कौस्तुभो यस्मिंस्तत् अनपायिन्या श्रिया आक्षिप्तः । अभिभूतः निकषा श्मा स्वर्णरेखायुक्तो निकषपाषाणो येन तेनोरसा उल्लसत् शोभितम् ॥ ४९ ॥

पूररेचकाभ्यां प्राणस्य प्रवेशनिर्गमनाभ्यां संविग्नाश्चालिता वलयस्ताभिर्वलिभिः सुन्दरं दलवदश्वत्थपत्रसदृशमुदरं यस्मिंस्तत् विश्वं नाभितः पद्मरूपेण निर्गतम् तया आवर्तगभीरया ना भ्या प्रतिसंक्रामयत् । लयं कुर्वदिव ॥ ५० ॥

---

### भाषाटीका ।

कर्मने प्रवृत्ति निवृत्ति रूपपितृदेवकर्म रूप आप के अर्थ नम स्कार है धर्म के फल रूप मृत्यु रूप दुःखदायक आप को नमस्कार है ॥ ४१ ॥

संपूर्ण संपत्ति के ईश्वर मनु कारणात्मा मनु धर्म महान् स्व प्रकाश बुद्धि वाले कृष्ण को नमस्कार पुराण पुरुष सांख्य योग के ईश्वर आपको नमस्कार है ॥ ४२ ॥

श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् ।
समचार्वङ्घ्रि जङ्घोरुनिम्नजानुसुदर्शनम् ॥ ५१ ॥
पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोऽन्तरघं (१) विधुन्वता ।
प्रदर्शय स्वीयमपास्तसाध्वसं पदं गुरो ! (२) मार्गगुरुस्तमोजुषाम् ॥ ५२ ॥
एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम् ।
यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ ५३ ॥
भवान् भक्तिमता लभ्यो दुर्लभः सर्वदेहिनाम् ।
स्वाराज्यस्याप्यभिमत एकान्तेनात्मविद्गतिः ॥ ५४ ॥
तं दुराराध्यमाराध्य सतामपि दुरापया ।
एकान्तभक्त्या कोवाञ्छेत् पादमूलं विना वहिः ॥ ५५ ॥
यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते ।
विश्वं विध्वंसयन् वीर्यशौर्यविस्फूर्जितभ्रुवा ॥ ५६ ॥
क्षणार्द्धेनापि तुलये न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ५७ ॥
अथानघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्वहिः स्नानविधूतपाप्मनाम् ।
भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात्सङ्गमोऽनुग्रह एष नस्तव ॥ ५८ ॥
न यस्य चित्तं वहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत् ।
यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते गतिम् ॥ ५९ ॥
यत्रेदं व्यजते विश्वं विश्वस्मिन्नवभाति यत् ।
तत्त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम् ॥ ६० ॥

भाषाटीका ।

तीन शक्ति से युक्त मनोरथ पूरक महादेव अहंकार रूप चित्त स्वरूप वासना स्वरूप वचन विभूति आपके अर्थ नमस्कार है ॥ ४३ ॥

अपने भक्तों का अति प्रिय सव इन्द्रिय गुणों के प्रकाशक भागवतों से पूजनीय आपका दर्शन दर्शनेच्छु हम लोगों को दीजिये ॥ ४४ ॥

वर्षा काल में अत्यन्त चिकने मेघकीसी श्यामलमूर्ति संपूर्ण सौन्दर्यों का एक स्थान सुंदर चार भुजों से युक्त सुंदर मुखारविंद से सुशोभित ॥ ४५ ॥

पद्म के कली के दल से नेत्रों से युक्त सुंदर भृकुटी सुंदर नासिका युक्त सुंदर दंत सुंदर कपोल वाले मुखसे युक्त समान कर्णों में विभूषण युक्त ॥ ४६ ॥

प्रीति प्रकाशक हास संयुक्त नेत्र दृष्टि से सुशोभित दिव्य अलकावली युक्त प्रकाशमान पद्म केसर सरीके वस्त्र विभूषित उज्वल कुंडल युक्त ॥ ४७ ॥

देदीप्यमान किरीट कङ्कण हार नूपुर कटिमेखलादि के युक्त शङ्ख चक्र गदा पद्म वनमाला उत्तम मणि इनकी शोभा से सर्व सम्पत्ति युक्त ॥ ४८ ॥

सिंह सरीके स्कन्धोंमें कुण्डलादिकों की दीप्ति को धारण करने से मनोहर सुन्दर शोभा युक्त ग्रीवा में कौस्तुभ मणि से भूषित सदा स्थिर लक्ष्मी रेखा से सुवर्ण घर्षण पाषाण की शोभाको दूर करने वाले वक्षस्थल से शोभायमान ॥ ४९ ॥

श्वासके प्रवेश निर्गम रूप पूरक कुम्भक से कम्पायमान त्रिवली युक्त पत्र सदृश उदर युक्त आवर्त सी गम्भीर नाभी से जगत को फिर भीतर लेजाने से प्रतीयमान ॥ ५० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्यामश्रोण्याधिकं रोचिष्णु यत्पीतं दुकूलं तत्र स्वर्णमयी मेखला यस्मिन् अङ्घ्री च जङ्घे च ऊरू च निम्ने अनुन्नते जानुनी च सर्वैश्चारुभिरेतैः शोभनं दर्शनं यस्य समाश्चारवोऽङ्घ्रयादयो

(१) नोऽन्तरघमिति श्रीविजयध्वजतीर्थः । (२) पुरोमार्गगुरुरिति श्रीविजयध्वजतीर्थः ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्मिन् निम्ने जानुनी यस्मिन् शोभनं दर्शनं यस्येति पदत्रयं वा ॥ ५१ ॥

पदा दीपस्थानीयेन। यद्वा। एवंभूतेन पदोपलक्षितं रूपं पदं शरणं प्रदर्शयेत्यर्थः। शरदि यत्पद्मं तस्य पलाशं तद्वद्रोचिर्यस्य तेन नखदीप्तिभिरन्तर्भवमघमज्ञानं विधुन्वता स्वीयं पदं शरणं प्रदर्शय अपास्तं प्रह्लादादीनां साध्वसं येन तत् हे गुरो ! यतस्त्वमेव तमोजुषामज्ञानामस्माकं मार्गप्रदर्शको गुरुः ॥ ५२ ॥

अतिदुर्लभमिदं मयाप्रार्थितमिति स्तोतैवाह । एतद्रूपमनुध्येयं ध्यानार्हमेव न तु प्रत्यक्षतः प्राप्यमित्यर्थः ॥ ५३ ॥

तर्हि किंकेनापि न प्राप्यते तत्राह । भवानिति । दुर्लभत्वमेवाह। स्वर्गे राज्यं यस्य तस्याप्यभिमतः स्पृहणीयः किञ्च एकान्तेन च आत्मवित्तस्यापि गतिर्गम्यः ॥ ५४ ॥

अतस्त्वद्व्यतिरेकेण न किञ्चिद्वाञ्छामीत्याह । तं त्वामेकान्तभक्त्याराध्य बहिः स्वर्गादिसुखम् ॥ ५५ ॥

तत्र हेतुः । यत्र पादमूले शरणं प्रविष्टं कृतान्तः कालो ममायं वश्य इति नाभिमानं करोति । किं कुर्वन् वीर्यं प्रभावः शौर्यमुत्साहस्ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं विध्वंसयन्नपि ॥ ५६ ॥

त्वत्पादमूले प्रविष्टस्य कृतान्तभयाभावः कियानयं लाभो यतस्त्वद्भक्तसङ्ग एव सकलपुरुषार्थश्रेणिशिरसि नरीनर्तीत्याह । भगवतस्तव संगिनां सङ्गस्य क्षणार्धेनापि स्वर्गं न तुलये समं न गणयामि न चापुनर्भवं मोक्षं मर्त्यानामाशिषो राज्याद्याः किमुत ॥ ५७ ॥

अथ अतो हेतो रनघावघहरावङ्घ्री यस्य तस्य तव कीर्तिर्यशस्तीर्थं गङ्गा तयोः क्रमेणान्तर्बहिः स्नानाभ्यां विधूतः पाप्मा येषाम् अत एव भूतेष्वनुक्रोशः कृपा सुसत्त्वं च रागादिरहितं चित्तं शीलं चार्जवादि विद्यते येषां तेषां सङ्गमोऽस्माकं स्यात् एष एव नस्तवानुग्रहः ॥ ५८ ॥

तत्त्वज्ञानं च त्वद्भक्तसङ्गादेव भवतीत्याह । न यस्येति । येषां सतां भक्तियोगेनानुगृहीतं शुद्धं सत्त्वस्य चित्तं बाह्यार्थविक्षिप्तं न भवति तमो रूपायां गुहायां च नाविशल्लयं न प्राप तत्र तदा मुनिस्तव गतिं तत्त्वं पश्यति ॥ ५९ ॥

कीदृशं तत्त्वं तदाह । यत्रेति ॥ ६० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्यामयोः श्रोण्योः नितम्बयोरधिकं रोचिष्णु यत्पीतं दुकूलं तत्र स्वर्णमयी मेखला यस्मिन् अङ्घ्री च जङ्घे च ऊरू च निम्ने अनुन्नते जानुनी च संमदचारुभिः जान्वादिभिः शोभनं दर्शनं यस्य ॥ ५१ ॥

एवं विग्रहमनुवर्ण्य तद्दर्शनं प्रार्थयते । यदेति । शरदि यत्पद्मं तस्य यानि पलाशानि तद्वद्रोचिर्यस्य तेन पदा चरणेन नोऽस्माकमन्तरघमन्तःस्थितं पापहेतुमज्ञानं नखकान्तिभिर्विधुन्वतापनयता शरत्पद्मस्थानीयचरणस्थपलाशस्थानीयाङ्गुलिस्थनखरोचिभिरघं विधुन्वता पदापास्तः निरस्तः साध्वसः भक्तानां भयं यस्मिंस्तत्स्वीयं पदं रूपम्। यद्वा। उक्तविधेन पदोपलक्षितस्त्वमपास्तसाध्वसं स्वीयं पदं पद्यते ऽवगम्यत इति पदं रूपं प्रदर्शय यतस्त्वमेव तमोजुषामज्ञानिनां गुरोर्मार्गगुरुः गुरुर्मार्गप्रदर्शको भवसि ॥ ५२॥

ननु "न मांसचक्षुरभिवीक्ष्यते तं न चक्षुषा पश्यति कश्चनै[...] मनीषा मनसाभिक्लृप्त इति प्राकृतचक्षुरादिभिरग्राह्यं योग[...] द्धमनोग्राह्यमप्राकृतं मदीयरूपमपरिशुद्धमनसस्तव कथं [...] येति प्रार्थयसे इत्याशङ्कायामाह । एतदिति । एतदुक्त[...] रूपमात्मशुद्धिमन्तःकरणनैर्मल्यमभीप्सतामस्माकं केवलम[...] मेव एतद्रूपस्य ध्यानविषयत्वमेव प्रदर्शयेति प्रार्थ्यते ननु [...] त्कार इति भावः किं ध्यानविषयत्वमात्रसाध्यं तत्राह। यत[...] विषयात् त्वद्रूपात् ध्यानं योगाङ्गत्वेन स्ववर्णाश्रमोचित[...] तिष्ठतां पुंसामभयदः साक्षान्मोक्षसाधनभूतो भक्तियोगः [...] क्तियोगो भवति ध्यानयोगोऽपि परज्ञानप्रणाड्या परमभक्ति[...] परिणमतीत्यर्थः ॥ ५३ ॥

परमभक्तिमता तु भवान् लभ्य इत्याह । भवानिति । स[...] दुर्लभोऽपि भवान् भक्तिमता प्रसंशायां मतुप् परमभ[...] लभ्य एव दुर्लभत्वमेवाह । स्वाराज्येति । आत्मविदामुक्तभ[...] निष्ठानां गतिः प्राप्यस्त्वं स्वाराज्यस्याप्यभिमतः स्वाराज्य[...] राजते इति स्वराट् तस्य भावः स्वाराज्यं कैवल्यमपा[...] सम्बन्धमात्रविवक्षया षष्ठी स्वाराज्यादप्यभिमतः स्पृ[...] स्वाराज्यं हि सर्वस्मादभिमतं ततोऽप्यभिमतस्त्वमित्यर्थः ॥

अतोऽतीव स्पृहणीयत्वात्त्वत्तोऽन्यत्र किंचिद्वाञ्छामि[...] तमिति । तं दुराराध्यमुपायान्तरैराराधयितुमशक्यं भवन्तं [...] दुरापया दुःसाध्यया एकान्तभक्त्याव्यभिचारिण्या [...] आराध्य त्वत्पादमूलं विना बहिरन्यत् स्वर्गादिसुखं को वा [...] कोऽपीत्यर्थः ॥ ५५ ॥

तत्र हेतुः यत्र पादमूलेऽरणं शरणं प्रविष्टं पादमूलं [...] यां गतमित्यर्थः कृतान्तः कालो मया वशीकृत इति ना[...] करोति किं कुर्वन् वीर्यं प्रभावः शौर्यमुत्साहः ताभ्यां विस्फू[...] क्षुभितया भ्रुवा विश्वं विध्वंसयन् नाशयन् ॥ ५६ ॥

त्वत्पादमूलं प्रपन्नस्य कृतान्तभयाभावः कियानयं लाभ[...] ता त्वद्भक्तसङ्गलेश एव सकलपुरुषार्थश्रेणीशिरसि उपरि [...] र्तीत्याह । क्षणार्धेनेति । भगवतस्तव साङ्गिनां त्वद्भक्ताना[...] तेषां सङ्गस्य क्षणार्धेनापि न स्वर्गं तुलये समानं न गण[...] नचापुनर्भवं मोक्षं भागवतसङ्गस्य स्वर्गमोक्षौ न सदृ[...] पुनर्मरणशीलानामाशिषः आशीर्विषयपुत्रपश्वन्नादय इत्य[...]

एवं निरतिशयगुणवत्त्वाद्भागवतसङ्गस्य अथ अतो [...] रनघावघहरावङ्घ्री यस्य तस्य तव कीर्तिर्यशः तीर्थं गङ्गा [...] क्रमेणान्तर्बहिःस्नानाभ्यां विधूतः पाप्मा येषामत एव भूते[...] क्रोशः कृपा सुसत्त्वं सत्त्वोत्तरं चित्तं शीलमार्जवादिकं [...] सन्ति तेषां सङ्गः नोऽस्माकं स्यादेत एव नोऽस्माकं त्वदनुग्र[...]

तत्त्वज्ञानमपि भागवतसङ्गादेव भवतीत्याह । नेति । [...] भागवतानां भक्तियोगेनानुगृहीते विशुद्धं सत्त्वप्रचुरं सद [...] पुंसः चित्तं बहिरर्थाः शब्दादिबाह्यविषयाः तेषु वि[...] भवति प्राप्यताभ्रान्तिमन्न भवति तमोरूपायां गुहायां [...] शयलीनं स्यात्तदा स मुनिः ते गतिं स्वरूपमञ्जसा सुखेन [...] जानाति ॥ ५९ ॥

गतिं विशिंषन् प्रपद्यते । यत्रेति द्वाभ्याम् । इदं कृत्स्नं वि[...] दात्मकं विश्वं यत्राधारभूते त्वत्स्वरूपे व्यज्यते [...] स्वरूपं विश्वस्मिन् कृत्स्नप्रपञ्चेऽवभाति प्रकाशते [...]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव प्रह्वार्थयं: तव तत्त्वमित्यर्थः यत्रेदमित्यनेनाधारत्वमुक्तं कथम-मूर्तस्याधारत्वमिति शङ्कायामभिव्यापकत्वरूपमाधारत्वमिति मत्वा-शयेन विश्वमिमत्स्वमाति यदित्युक्तं आधारो हि त्रिविधः औ-पश्लेषिको वैषयिकोऽभिव्यापकश्चेति सर्व व्याप्यावस्थितस्यापि व्याप्यवस्तुगतदोषास्पर्शे दृष्टान्तमाह । ज्योतिराकाश इव वि-स्तृतमिति । विस्तृतमाकाश इव ज्योतिः सूर्यार्चिरिवेति दृष्टान्तद्व-यमभिप्रेतं तथा छुभयं दृष्टान्तीकृतमभियुक्तैः "आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकस्थो जलाधारेष्विवां-शुमान्" इति अयमभिप्रायः घटादिषु वृद्धिह्रासभाक्षु पृथक्पृथक् संयुज्यमानमप्याकाशं दोषहेत्वभावाद्वृद्धिह्रासादिदोषैर्न स्पृश्यते-यथा जलाधारेषु विषयेषु वस्तुतोऽनवस्थितस्तत्र दृश्यमानोऽ-प्यंशुमान् दोषहेत्वभावात्तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते तद्व-दिति ॥ ५० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दक्षिणावर्तेन गम्भीरया निम्नया नाभ्या विश्वं प्रतिसंक्राम-यत् प्रसदिव स्थितं समानानि चारूणि अङ्गप्रत्यादीनि यस्मिन् तत्तथोक्तं सुदर्शनं सुचक्षुः ॥ ५१ ॥

नखद्युमिर्नखानां तेजोभिःनोतुस्तोतुरुधं पापं विधुन्वता नाशय-ता पदोपलक्षितः पुरोमार्गगुरुरुक्रान्तस्याचिरादिमार्गोपदेष्टा त्वं क्लिश्यतानां नस्तमोजुषामज्ञानिनां पुरइत्यस्मत्पदान्वयो वा अस्माकं पुनः प्रदर्शयेति ॥ ५२ ॥

विनियोगमाह । एतदिति । आत्मनः स्वस्य शुद्धिः संसार-मुक्तिलक्षणा तामिच्छतामितोऽन्यथास्मच्छुद्धिर्न स्यादित्यतोध्येय-मिति वर्णाश्रमादिविहितस्वधर्म एव मुक्तिसाधनमिति भ्रान्तिं निवारयति । यद्भक्तियोग इति । वर्णाश्रमादिविहितस्वधर्मं कुर्वतां पुंसां भगवद्भक्तियोगो नित्याभयप्रद इति यत् ॥ ५३ ॥

तस्मादभक्तिमतां दुर्लभो भवान् सर्वदेहिनां भक्तिमतां लभ्य इति न केवलं मुक्त्यर्थमस्मदादेर्ध्येयं किञ्चिन्द्रादेर्वापीत्यभि-प्रेत्याह । स्वाराज्यस्येति । स्वः स्वर्गे राज्यं यस्येन्द्रादेरात्मविदा-त्मज्ञः परमात्मा तदात्मानमेवावेदहं ब्रह्मास्मीति श्रुतेः। तस्य गति-र्मुक्तिलक्षणा एकान्तेन नियमेनाभिमता अविप्रतिपन्ना मुक्त्यर्थ-मेव भक्तिर्नस्वर्गाद्यर्थमित्यतो वाह । स्वाराज्यस्येति । इन्द्रादेरित्य-ध्याहार्यम् इन्द्रादेः स्वाराज्यस्यावाप्तावपि आत्मवित्परमात्मा गम्यतेऽनयेति आत्मविद्गतिर्भक्तिर्या त्वेकान्तेनाभिमतेत्यन्वयः । यद्वा । आत्मविदां परमात्मज्ञानिनां गतिरूपा या भक्तियादृशी तादृशीति भक्त्या त्वनन्यया शक्य इति स्मृतेः ॥ ५४ ॥

भगवदिच्छाविनाभूतत्वादिन्द्रादीनां स्वर्गादिकं तद्भक्त्या कामितं न स्वतोऽतो बुद्धिमान् न स्वातन्त्र्येणान्यत् याचत इति भावेनाह । त्वां दुराराध्यमिति । सतामपि दुरापया बहि-र्देहिकम् ॥ ५५ ॥

पादमूलं विनिन्दति । यत्रेति । शरणं शरणं वीर्यशौर्याभ्यां विस्फूर्जितया स्फुरितया भ्रुवा । विश्वं विध्वंसयन् वशे कुर्वन् ॥ ५६ ॥

भक्त्या यत्फलं स्वर्गादिकं नतु लय इत्यन्वयः भागवतसङ्ग-लक्षणया भक्त्या मुक्तावानन्दोद्रेकलाभाभिप्रायेणेति तात्पर्यं तदुक्तम्

सङ्गो भागवतैर्भूयानपुनर्भवमाप्नतः ।
यतो विशिष्टमानन्दं मुक्तौ जनयति स्फुटमिति ॥ ५७ ॥

ननु सत्सङ्ग एवंफलोऽस्तु ततो युष्माकं किमपेक्षितमत्राह । अथेति । यस्मात्त्वद्भक्तानां सङ्ग एवंविधफलोऽथास्मात्तवाङ्घ्रयो-र्जातयोः कीर्तितीर्थयोर्भागवतादिशास्त्रश्रवणलक्षणा कीर्तिस्तीर्थं विष्णुपद्यादि तयोरन्तर्बहिःस्नानाभ्यां विधूतपाप्मनामत एव भूतेषु अनुक्रोशसुनस्वशीलिनां सात्त्विकस्वभावानां सतां सङ्ग-मो नोऽस्माकं स्यात् अतोऽनेन वयं कृतार्था इत्यत उक्तमनुग्रह इति ॥ ५८ ॥

सत्सङ्गयाच्ञायाः कोऽभिप्राय इत्यत आह । न यस्येति । यद्-दा सत्सङ्गस्तत्र तदा सत्सङ्गमे भक्तियोगेनानुगृहीतं यस्य पुंसश्चित्तं स्मृतिकारणमन्तःकरणं बहिरर्थेषु शब्दादिषु विभ्रमं विविधभ्रमणं नाविशेत् न गच्छति यस्य मनश्च गुहायां हृदये निविष्टमात्मानमाविशति स मुनिस्ते तव पदं स्वरूपमञ्जसा विचष्टे पश्यति नन्वित्यन्वयः सत्सङ्गत्या समुत्पन्नभगवद्भक्त्या वैराग्यदृढया प्रबलीकृतया भगवदुपासनया परोक्षमत्र भवता-त्वमिप्रायः भक्त्या त्वनन्ययेत्यादेः ॥ ५९ ॥

सत्सङ्गतिः सर्वथा सम्पाद्येति प्रतिपाद्याधुना भक्तिविषय-तत्त्वं निर्दिशति । यत्रेति । केचिज्जगद्ब्रह्माज्ञानकल्पितमिति सङ्गिरन्ते अन्ये शून्यमेव सम्प्रत्या सदिवाभातीति अपरे तत्परिणतमिति इतरे प्रागसतः सत्ता समवायि येन जातामत्य-दृष्टवाञ्चेश्वरोऽप्येक इति तान्सर्वानपि निरस्यतीत्यतोवाह । यत्रेति । यत्र यदाधारतया व्यज्यते इत्यनेनैते पक्षाः प्रतिक्षिप्ताः पूर्वं सत एव व्यक्तिसंभवात्तदनुगतप्रविधभेदानां व्यक्तत्वेन सत्यत्वसिद्धेः विश्वस्मिन् स्थितमप्यज्ञानां न भातीत्युक्त्या सुन-रामीश्वरसद्भावो दर्शितः ब्रह्मतत्त्वमित्यनेन सुतरां परं ज्योति रित्यनेनाज्ञानसम्पर्काभावः स्पष्टः आकाश इवेति निराकारप-क्षोऽपि निरासीति ज्ञायते अपरिच्छिन्नत्व एवाकाशदृष्टान्तो न शून्यत्वे इति ग्रन्थप्रपञ्चतया उपरम्यत इति ॥ ६१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वोक्तध्यानस्य फलमाह । एतदिति । यत् यस्मात् भक्तियोगः प्रेमा भवति तच्च ध्यानं गाढश्रद्धावरणाभावेन स्वधर्मसापेक्षा-नां भक्तियोगाभासं जनयति स च संसारभयनाशमात्रं करो-तीत्याह । अभयद इति । ध्यानकैवल्यं कुर्वता प्रशस्तभक्तियोग-युजा तु भवानपि लभ्यत इत्याह । भवानिति । भवांस्तु जीव-न्मुक्तपर्यन्तानां सर्वदेहिनां दुर्लभः किञ्च स्वाराज्यस्याप्यभिमतः लब्धसालोक्यादिकेऽपि वाञ्छितः । एकान्तेन सालोक्यादि-सुखनिरपेक्षेण भक्तियोगेन तु आत्मविदां सर्वदेहज्ञानिनां गतिः परमफलरूपः ॥ ५३—५४ ॥

तच्च युक्तमित्याह । नमिति । सतां ज्ञानिनामपि । इत्थं सता-मितिवत् । बहिः स्वर्गादिसुखम् ॥ ५५ ॥

नच तत्र स्वर्गादाविव भयमस्तीति वाच्यमित्यभिप्रेत्याह । यत्रेति । कृतान्तोऽपि । मर्त्यान्मृत्युरित्यादेः अत्र टीकायां विषयी-करोतीति तु वाच्यं विस्फूर्जितेति क्वचित् ॥ ५६ ॥

अहन्तु न तुलये गौरवलाघवयोरतिरस्पष्टत्वादिति भावः ॥ ५७ ॥

विधूनो जगतोऽपि पाप्मा यैः। मद्भक्तियुक्तो भुवनं पुनाती-तिवत् ॥ ५८ ॥

गतिं गुणलीलादिमयीं स्वरूपावस्थितिम् ॥ ५९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदीयभक्तियोगानुग्रहं विना तु ब्रह्मत्वभगवत्त्वान्तर्यामित्व-कालत्वभेदेनान्तरङ्गबहिरङ्गाविर्भावेषु तत्रातिदुर्बोधत्वदुराराध्यत्वदुर्वशत्वदुःसहत्वान्येवेत्याशयेनाह । यत्रेदमिति सप्तभिः । तत्र ब्रह्मत्वमाह । आद्येन तद्ब्रह्मत्वमिति योज्यम् । ततश्च स्वभक्तियोगं विना तदेतदपि दुर्बोधं स्यादिति भावः ॥ ६७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्यामश्रोण्या अधिकं रोचिष्णु तत्कान्त्युज्ज्वलनयुक्तं यत् पीतदुकूलं तत्र स्वर्णमयी मेखला यस्मिंस्तत् । समं तुल्यप्रमाणश्च चारु सुन्दरश्च अङ्घ्रिजङ्घोरु यत्र तत् समाश्चारवोऽङ्घ्र्यादयो यस्मिन्निति जानुनी यस्मिन् शोभनं दर्शनं यस्येति पदत्रयं वा ॥ ५१ ॥

नखद्युभिर्नखानां कान्तिभिरेव अघमन्धकारं दूरीकुर्वता पदा दिव्यदीपकेनेव स्वीयं पदं स्वरूपं स्थानं वा । यद्वा । हे प्रभो ! तव सर्वाङ्गलावण्यदर्शनं प्राप्तं किन्तु चरणतलमाधुर्यं नोपलब्धं तत्र यद्यपि महायोगपीठे तिष्ठतस्तव द्वयोः पदयोः सामस्त्येन दर्शनासम्भवस्तदपि एकेन पदा भुवमवष्टभ्यापरं पदं किञ्चिदुन्नमय्य दर्शयेत्याह । पदा एव पदं दर्शय वामपदा भुवमवष्टभ्य दक्षिणंपदं किञ्चित्तिरश्चीनीकृतमुन्नमय्य प्रदर्शय यथा चक्रध्वजवज्राङ्कुशादिदर्शनेन संसारभयं निवर्त्तत इत्याह । अपास्येति । ननु कथमीदृशी मतिस्तवाजनीति तत्र श्रीगुरुप्रसादादित्याह । हे गुरो ! तमोजुषामज्ञानतिमिरान्धचक्षुषामस्माकं मार्गगुरुभक्तिमार्गोपदेष्टा त्वमेव गुरुरूपधारीत्यर्थः ॥ ५२ ॥

श्रीरुद्र एव विशेषं ज्ञापयितुमेतदिति पद्यमाह । यावत् दर्शनं न लभ्यते साधकभक्तेन तावदेव तद्रूपमेव पुनः पुनर्ध्येयम् आत्मनो जीवस्य शुद्धिमविद्यामालिन्यक्षालनमिच्छतेति नतु प्रकारान्तरेण त्वंपदार्थशुद्धिर्भक्तानामुचितेति भावः । यथा वासुदेवादिप्रणतिभिर्देहद्वयशुद्धिरुक्ता तथा स्निग्धप्रावृडित्यादिध्यानपौनःपुन्येन जीवस्य च शुद्धिरियमुक्ता । ततो दर्शनं ततः पार्षदत्वप्राप्तिरिति शुद्धभक्तगतं दर्शितम् । अत्र किं माहात्म्यं वाच्यं यतः स्वस्वधर्ममनुतिष्ठतामाश्रमिणामपि यस्य भक्तियोग एवाभयदो नतु कर्मज्ञानादिरित्यर्थः ॥ ५३ ॥

पुनरप्येवं स्तुवीतेत्याह । भवानिति । स्वर्गेषु राज्यं राजत्वं यस्य तस्य ब्रह्मणोऽप्यभिमतः स्पृहणीयः । आत्मविदां सनकादीनामपि गतिरूपः ॥ ५४ ॥

पुनरपि श्रीरुद्रएव श्लोकत्रयमाह । तमिति । बहिः स्वर्गादिसुखम् ॥ ५५ ॥

संसार भयन्तु तस्य नास्त्येवेति किं तत् प्रार्थनेनेत्याह । यत्र । पादमूले शरणं शरणं प्रविष्टं जनं कृतान्तः कालो ममायमिति नाभिमन्यते । वीर्यं प्रभावः शौर्यमुत्साहः ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं ध्वंसयन्नपि ॥ ५६ ॥

सत्सङ्गं तु वाञ्छेदेवेत्याह । क्षणार्द्धेनेति । भगवत्सङ्गिनां सङ्गस्य क्षणार्धेन किमुत द्विज्ञादिक्षणेन किमुततरां तत्फलभूतया भक्त्या किमुततमां भक्तिफलेन प्रेम्णेति कैमुत्यातिशयो द्योतितः । स्वर्गं कर्मफलमपुनर्भवं मोक्षं ज्ञानफलमपि न तुलये किमुत ज्ञानं किमुततरां कर्म किमुततमां राज्याद्या इष्टा आशिषः ॥ ५७ ॥

तस्मादेवं प्रार्थनया स्तुवीतेत्याह । अथेति । अनन्त पापहरणचरणकमलस्य तव कीर्त्तिर्यश्च स्तीर्थं गङ्गा तयोः ... णान्तर्बहिः स्नानाभ्यां विधूतः पाप्मा येषामतएव भूतेषु क्रोशः कृपा सुसत्त्वं च शुद्धमन्तःकरणं शीलं चार्जवादि ... येषां तेषां सङ्गमो नोऽस्माकं स्यादेष एव नस्त्वदनुग्रहः ॥ ५८ ॥

त्वदीयसाधुसङ्गादेव चित्तं विशेषतः शुध्येत् विशुद्धे च ... त्वद्रूपलीलालावण्यानुभवः स्यादिति विशुद्धमेव चित्तं ... यस्य चित्तं बहिरर्थविभ्रमं न त्वदीयस्मरणश्रवणा... बाह्यार्थविक्षिप्तं न भवति तमो गुहायां च नाविशत् सुप्ति... प्यप्रविष्टं त्वदीयश्रवणस्मरणादिसमये यच्चित्तं लयविक्षेप... न भवतीत्यर्थः । तत्र हेतुः यत् खलु भक्तियोगेनानुगृहीतं ... शुद्धं भवति अयमाशयः दश नामापराधा भक्त्यपराधा एव ... विक्षेपकारकाः तेषामपगमे एव भक्तिदेवी प्रसीदति । प्रसीद... एव तस्या अनुग्रहः स्यात् स च भक्तिसमयगतलयविक्षेपाभाव... इत्यतस्तत्र शुद्धे चित्ते मुनिर्मननशीलः सन् तव गतिं ... लीलालावण्यादिकं विचष्टे पश्यति ॥ ५९ ॥

यत्तु कश्चिन्मुनिस्तव ब्रह्मस्वरूपं विचष्टे तदपि त्वमेव ... परममहतस्तन्महिमा व्यापकन्तेजः इत्याह । यत्रेति ॥ ६० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्यामश्रोण्याधि अधिकं रोचिष्णु यद्दुकूलं पीतः पट... स्वर्णमेखला यस्मिंस्तत् समाभ्यां चारुभ्यां अङ्घ्र्यादिगुल्फा... निम्नाभ्यामनुन्नताभ्यां जानुभ्यां च शोभनं दर्शनं यस्य तम् ...

हे गुरो ! ज्ञानप्रद ! शरत्पद्मपलाशवद्रोचिर्यस्य तेन ध्यातृ... मन्तरघमज्ञानं नखद्युभिर्विधुन्वता अपनयता पदा उपल... स्वीयं पदं रूपमपास्तसाध्वसं यथा भवति तथा प्रद... यतस्तमोजुषां तमो देहगेहादिरूपं संसारमनादितः सेवमान... नस्त्वं मार्गप्रदर्शको गुरुरसि ॥ ५२ ॥

स्वीयं रूपं प्रदर्शयेत्युक्तं तत्र तद्रूपस्य ध्यानरूपोभक्ति... भवति अतो मुमुक्षुभिर्ध्याने एवं द्रष्टव्यं प्रत्यक्षतस्तु नह... मतिदुर्लभमित्याशयेनाह । एतदिति । आत्मशुद्धिमभीप्सतां... ध्येयं ध्याने तद्दर्शनं तावत्कर्तव्यमतो ध्याने प्रदर्शयेति भावः ... नैव मुमुक्षुः कृतार्थः स्यादित्याह । यदिति । यद्यस्य ... भक्तियोगः ध्यानादिभजनयोगः स्वधर्ममनुतिष्ठतां भक्तिसा... भूतस्वधर्मकारिणाम् अभयदो मुक्तिदः ॥ ५३ ॥

स्वर्गं राज्यं यस्य बुभुक्षोस्तस्याभिमतस्तदिष्टसाधक... एकान्तेनाव्यभिचारिभजनेनात्मविदः स्वपरस्वरूपविदो मुक्त... गंस्यत इति गतिः प्राप्यः ॥ ५४ ॥

बहिः स्वर्गराज्यादिकम् ॥ ५५ ॥

कृतान्तः कालः वीर्यशौर्याभ्यां विस्फूर्जितया प्रज्वलि... भ्रुवा विश्वं विध्वंसयन्नपि यत्र पादमूले निर्विष्टस्य ... नाभिमन्यते हरिपादपद्मं भजतो जन्ममरणप्रवाहलक्षणः सं... नास्तीति मन्यते इत्यर्थः ॥ ५६ ॥

कृतान्तभये विश्वस्मिन् विरक्तिस्त्वत्पादपद्मेऽनुरक्तिश्च ... सङ्गाद्भवत्यतो महत्सङ्गमाहात्म्यकथनपूर्वकं महत्सङ्गं ... प्रार्थयते । क्षणार्द्धेनेति द्वाभ्याम् । भगवत्सङ्गिनां भाग... सङ्गस्य क्षणार्द्धेन स्वर्गं न तुलये तुल्यं न गणयामि ।

यो माययेदं पुरुरूपयाऽसृजद्बिभर्ति भूयः क्षपयत्यविक्रियः ।
यन्भेदबुद्धिः सदिवात्मदुःस्थया तमात्मतन्त्रं भगवन् ! प्रतीमहि ॥ ६१ ॥
क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये ।
भूतेन्द्रियान्तःकरणोपलक्षितं वेदे च तन्त्रे च त एव कोविदाः ॥ ६२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उवाह कृष्णो भगवान् श्रीदामानं पराजितः ।
बिभर्ति कचिदाज्ञतः पीठकोन्मानपादुकमिति ॥

गोपगोपीनां भागवतसङ्गवतां मोक्षादप्यधिकलाभः स्फुटी-भविष्यत्यतः अपुनर्भवं मोक्षं च न तुलये क्षेत्रज्ञस्वरूपमात्रप्राप्ति-र्यात्र मोक्षशब्दार्थः मर्त्यानामाशिषो राज्याद्याः सम्पदो न तुलये इति किमुत ॥ ५७ ॥

अथ अनः अनघौ ध्यातृपापघ्नौ अङ्घ्री यस्य तस्य तव कीर्तियशः तीर्थं जलप्रधानं रजः प्रधानं च तत्र जलप्रधानम् ।

यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन
मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत् ॥
स्नात्वानुसवनं नित्यं कालिन्द्याः सलिले शुभे ।

इत्यादिनात्रैव वर्णितं श्रीगङ्गायमुनादिरूपम् । महाभारते च ।

गङ्गां च यमुनां चैव प्लक्षजातां सरस्वतीम् ।
रथस्थां चैव सरयूं गण्डकीं गोमतीं तथा ।
अपर्युषितया यास्ते नदीः सप्त पिबन्ति ये इति

रजः प्रधानं श्रीवृन्दावनादि ।

धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः ।
यान् ब्रह्मेशो रमादेवी दधुर्मूर्ध्न्यघनुत्तये ॥

इत्याद्यत्रैव वर्णितम् । तयोः क्रमादन्तःस्मरणेन बहिः स्नानादिना विधूतः पाप्मा येषाम् अत एव भूतेषु प्राणिषु अनुक्रोशो दया शोभनं वैषम्यादिरहितं च शीलमार्जवादि च विद्यते येषां तेषां नोऽस्माकं सङ्गः स्यात् एष एव नस्तवानु-ग्रहः ॥ ५८ ॥

तेषां सङ्गमात्रं न कर्तव्यं किन्तु भक्तिः कर्तव्येति सूचयन् तत्प्रसादेन तत्त्वज्ञानं भवतीत्याह । यस्येति । ननु अहो अति चपल-मपि यद्भक्तियोगानुगृहीतं येषामुक्तगुणानां भागवतानां भक्तियो-गानुगृहीतमत एव शुद्धं सत् यस्य जनस्य चित्तं बहिरर्थेषु विषयेषु विभ्रमः नित्यत्वादिभ्रान्तिर्यस्य तथा विधं न भवति तमो रूपायां गुहायामात्मानात्मपरमात्मविवेकरहितायामन्तः करणवृत्तौ च नाविशत् लीनं न स्यात् । तत्र तदा स मुनिः अञ्जसा अनायासेन ते तव गतिं स्वरूपं विचष्टे साक्षात्प-श्यति ॥ ५९ ॥

तत्त्वमेव नाना गुणयुक्ततया यत्रत्याहिना वर्णयति । यत्र कारणे व्यज्यते । उत्पद्यते विश्वस्मिन् कार्ये अवभाति तथापि आकाशवत् असङ्गतया विस्तृतम् ॥ ६० ॥

---

भाषाटीका ।

श्याम कटि के ऊपर प्रकाशमान सुवर्ण कटिमेखला युक्त पीतांबर भूषित बरोबर सुन्दर जंघ उरु युक्त मांसल जानु वाले सुन्दर दर्शन योग्य ऐसे आपके स्वरूप का दर्शन कराईये ॥ ५१ ॥

शरद ऋतु के कमलके पुष्प के पत्रकीसी कांति वाले चरण से नखों के प्रकाश से हमारे हृदय के पाप रूप अन्धकार को नाश करके हे अज्ञानी जनों के मार्ग दायक गुरु सकल भयनिवारक आपके स्वरूप का दर्शन कराओ ॥ ५२ ॥

अंतःकरण की शुद्धि करने की इच्छा वाला इस रूप को नित्य ध्यान करै अपने वर्णाश्रम धर्म के अनुष्ठान कर ने वाले मनुष्यों को भगवान् का भक्ति योग अभय देने वाला है ॥ ५३ ॥

हे प्रभो ! आप सर्व देहधारियों को दुर्लभ हो तो भी भक्तिमान् को सुलभ हो ब्रह्मा के भी तथा आत्मज्ञानी के भी आपमाननीय और गति दायक हो ॥ ५४ ॥

कठिन आराधन से प्राप्त होनेवाले ऐसे आपकी आराधना करके सत्पुरुषों को भी दुर्लभ एकान्त भक्ति से प्रसन्न होनेपर आपके पादमूल के विना अन्य पदार्थों को कौन मांगेगा ॥ ५५ ॥

वीर्य शौर्य से क्रोधयुक्त भृकुटी से सब जगत् का नाश करने वाला भी जो काल है सो भी आपके पादमूल में शरण जाने वाले पुरुष के ऊपर अभिमान नहिं कर सकता है ॥ ५६ ॥

भगवद्भक्तों के सङ्गम क्षण का आभाषि संवाद हो तो उसके बरोबर मोक्ष तथा स्वर्ग दोनों को हम नहीं गिनते हैं और मर्त्यादिकों की सम्पत्ति तो क्या तुल्य होगी ॥ ५७ ॥

इसी हेतुसे निष्पाव जो आप तिन के जो चरण कमल तिसकी कीर्ति तथा प्रक्षाल न रूप जो गंगा तिन दोनों से भीतर बाहिर का मल छूटगया है जिनका ऐसे जो आपके भक्त और प्राणिमात्र के ऊपर कृपा करने के स्वभाव वाले शुद्ध अन्तःकरण वाले जो आपके भक्त तिनका हमको सदा संग होवे यही हमारे ऊपर आप का पूर्ण अनुग्रह है ॥ ५८ ॥

जो योगी आप के भक्तियोग को ग्रहण करता है तब उसका चित्त बाहिर के विषयों में नहीं जाता है शुद्ध हो जाने से भीतर भी अन्धकार उसको नहीं होता है तब वह आप की गति को जान सक्ता है नहीं तो कभी नहीं जानता है ॥ ५९ ॥

जिस आप के स्वरूप में यह सब जगत् तन्तु में पट सरीका प्रतीत है जो आप इस जगत् में सच्चिदानन्द रूप से प्रतीत होते हो वही आकाश वत् सर्वत्र व्याप्त जो आपका स्वरूप सोई परम तत्त्व है ॥ ६० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

जगत उपादानत्वेन तत्त्वं लक्षितं निमित्तत्वेनापि तदेव लक्षय-न्नाह । य इदं विश्वं सदिव परमार्थमिव माययाऽसृजत् । कथम्भूतया । यया भेदबुद्धिरन्येषां भवति तथा आत्मनि त्वयि दुःस्थया स्वकार्ये कर्तुमसमर्थया तं त्वां निरस्तभेदं प्रतीमहि जानीमः ॥ ६१ ॥

यद्यपि त्वमेव निर्भेदं ब्रह्म तथापि प्रागुक्तं साकारमिदं तव-

त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजः सत्त्वतमो विभिद्यते ।
महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥ ६३ ॥
सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन ।
अथो विदुस्तं पुरुषं सन्तमन्तर्भुङ्क्ते हृषीकैर्मधु सारघं यः ॥ ६४ ॥
स एष लोकानतिचण्डवेगो विकर्षसि त्वं खलु कालयानः ।
भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाविषह्यः ॥ ६५ ॥
प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ६६ ॥
कस्त्वत्पदाब्जं विजहाति पण्डितो यस्तेऽवमानव्ययमानकेतनः ।
विशङ्कयास्मद्गुरुरर्चति स्म (१) यद्विनोपपत्तिं मनवश्चतुर्दश ॥ ६७ ॥

अथ त्वमसि नो ब्रह्मन्! परमात्मन् विपश्चिताम् ।
विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः ॥ ६८ ॥
इदं जपत भद्रं वो विशुद्धा नृपनन्दनाः! ।
स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः ॥ ६९ ॥
तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम् ।
पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥ ७० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

रूपं ये यजन्ति त एव वेदागमतत्त्वज्ञा इत्याह। क्रियाकलापैर्यैकर्मयोगिनः पूजयन्ति त एव कोविदा नत्वेतद्वनादृत्य केवलज्ञाने प्रवृत्ताः तन्त्रे आगमे कथम्भूतमिदम् भूतेन्द्रियान्तःकरणैरखतन्त्रैर्यदुपलक्ष्यते नियन्तृरूपं तत् ॥ ६२ ॥

नन्वभिन्ने मयि भेदं कुर्वन्तः सन्तः कथं ते कोविदाः नहि तैर्भेदः क्रियते त्वयैव क्रीडार्थं चेतनाचेतनात्मको भेदः कृत इत्याह। त्वमिति। आद्यस्त्वमेक एव सुप्ता मायाख्या शक्तिर्यस्य पश्चात्तया शक्त्या रजःसत्त्वतमसां द्वन्द्वैक्यं यतो रजआदेः महानहङ्कारः खञ्च मरुदग्निवार्धराश्च वारुदकम् सुराश्चर्षयश्च भूतगणाश्चैवमिदं जगद्यतो भवति तद्विभिद्यत इत्यन्वयः ॥ ६३ ॥

एतदुपपादयति। सृष्टमिति। जरायुजाण्डजस्वेदजोद्भिज्जरूपेण चतुर्विधं स्वांशेन प्रविष्टः अथो इति हेतोः पुरस्यान्तः सन्तमंशं चिदाभासं पुरि शयनात्पुरुषं विदुः तर्हि किमीश्वरमेवं संसारिणं विदुर्नेत्याह। सरघा मधुमक्षिकास्ताभिः सृष्टं मध्विव क्षुल्लकविषयसुखमविद्यावृतः सन्यो भुङ्क्ते तं जीवमित्युः तथाच श्रुतिः"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" निर्णीतंच गुहांप्रविष्टावात्मानौ हि तद्दर्शनात् ॥ १ । २ । ११ ॥ इत्यत्र ॥ ६४ ॥

तव तु सर्वनियन्तुः कुतः संसार इत्याह। यः स्वशक्त्येदं सृष्टवान्स एव त्वं खलुभूतैरेव भूतानिमेघपङ्क्तीर्वायुरिव कालयन्विचालयन्लोकान् विकर्षसि संहरसि अनुमेयतत्त्वोलक्ष्यस्वरूपः ॥ ६५ ॥

विकर्षणप्रकारमाह। प्रमत्तमिति। इति कृत्यमेवमेवमिदं कर्तव्यमिति चिन्तयोच्चैः प्रमत्तं तत्र हेतुः विषयेषु लालसमतिकामुकम् प्राप्तेऽपि विषये प्रवृद्धलोभम् । अन्तकस्त्वमभिपद्यसे ... क्षुधा लेलिहानो जिह्वयौष्ठप्रान्तौ स्पृशन्सर्पो मूषकमिव ॥ ६६ ॥

अतः कस्तव पदाब्जं त्यजेदपण्डितश्चेत् । कथम्भूतः । ... वमानोऽनादरस्तेन व्ययमानं केतनं शरीरं यस्य सः यदस्मद्गुरुर्ब्रह्मार्चतिस्मेति सर्वेषां स्तोतृणां वाक्यम् विशङ्कया नाशशङ्कया विनोपपत्तिमिति। दृढविश्वासेन मनवश्चतुर्दशार्चन्ति स्म ॥ ६७ ॥

उपसंहरति। अथेति । रुद्रभयेन ध्वस्तमतो न कुतश्चिद्भयं यस्यां तादृशी गतिरसि ॥ ६८ ॥ ६९ ॥ ७० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं विश्वाधारत्वमुक्तमथ विश्वस्य निमित्तमुपादानं च ...रणं त्वमेवेत्याह। य इति। यो भवानिदं विश्वं स्वात्मकं ... या बहुधा परिणामशीलया मायया सृजन् बिभर्ति पुनः ... संहरति तथाप्यविक्रियः निर्विकारः कथंभूतया मायया ... दुःस्थयात्मसु जीवेषु दुःस्थया दुष्टा यथा भवति तथा स्थि... संसाररूपानर्थकारित्वेन स्थितयेत्यर्थः यथात्मदुःस्थया ... यद्यस्मादीश्वराद्भेदबुद्धिः स्वनिष्ठबुद्धिः स दिव सदर्थविद्या... नमिव भवति तं त्वामात्मतन्त्रं प्रतीमहि प्रपद्येमहीत्यर्थः तत्रा... दुस्थयेति जीवेषु दुःस्थत्वकथनेन परमात्मनि अनर्थकारित्व... यद्भेदबुद्धिः स दिवेति स्वतन्त्रात्मभ्रमहेतुत्वमुक्तमिदं देहात्म... हेतुत्वस्याप्युपलक्षणम् अविक्रिय इत्यनेन उपादानत्वमुक्तं ... हि प्रसक्तिपूर्वकः प्रसक्तिश्चोपादानत्वेन निमित्तस्य ... प्रसक्त्यभावाद्धाव्यवस्थाविशेषवतः प्रागवस्थायोगो ...

---

( १ ) यद्विनोपपत्तिरिति श्रीवीरराघवाचार्यः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

थं ततश्चास्याग्नोगित्वप्रयुक्तविकारप्रसक्तौतन्निरोधोयुक्तः विका-
रस्य स्वापृथक्सिद्धविशेषणीभूतचेतनाचेतनगतत्वाद्विशेष्ये वि
काराभावादविक्रिय इत्युक्तं ननु निमित्तकारणस्यापि कुलालादेः
दश्रमादिविकारदर्शनात्त्वत्परस्मिन्नपि निमित्तत्वप्रयुक्तविकारो
निषिध्यत इतिचेन्न "तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत" इति
श्रुत्या संकल्पमात्रेण जगत्सृजतो विकारप्रसक्त्यभावात्सृजन्निति
निमित्तत्वमुक्तं कर्तृत्वमेव हि निमित्तत्वं तत्रविशिष्टस्वाकारेणोपा-
दानत्वं निष्कृष्टविशेष्याकारेण निमित्तत्वमितिविवेकः विभर्ति-
क्षपयतीति रक्षितृत्वं संहर्तृत्वं च तस्येत्युक्तं भवति आत्मतन्त्रमि-
त्यनेनाकर्मवश्यत्वमुक्तमनेन श्लोकद्वयेन "ब्रह्मवनं ब्रह्म स वृक्ष-
आसीद्यतो द्यावा पृथिवी निष्टतक्षुः मनीषिणो मनसा विब्रवीमि
वो यदध्यतिष्ठद्भुवनानि धारयन्" इति श्रुत्यर्थउक्तः अत्र किंस्वि-
द्वनमित्यादिना वृक्षशब्दोपलक्षितमुपादानं वनशब्दोपलक्षितमा-
धारः यदध्यतिष्ठदिति निमित्तं च किमिति प्रश्नपूर्वकं ब्रह्मणो
एवोपादानत्वनिमित्तत्वाधारत्वादीनि नान्यस्येति प्रतिज्ञापूर्वकोत्त-
रत्वमस्य वाक्यस्यावगम्यते यतो वृक्षशब्दोपलक्षितोपादाना-
द्ब्रह्मणो द्यावा पृथिव्युपलक्षितं कृत्स्नं जगन्निष्टतक्षुः निष्टतक्ष
ससर्जेत्यर्थः ॥ ६१ ॥

ईदृशभगवत्स्वरूपविषयकं भक्त्यात्मकं ज्ञानं भागवतसङ्गादेव
लभ्यत इत्युक्तमिदानीं भागवतसंगवत्स्ववर्णाश्रमोचितानभिसं-
हितधर्मानुष्ठानमात्मयाथात्म्यज्ञानयोगश्च भक्त्यङ्गमित्याह। क्रिया-
कलापैरिति । ये योगिनः प्रकृतिविविक्तात्मयाथात्म्यज्ञानयोग एषा
मस्तीति योगिनः श्रद्धायुक्ताः सन्तः क्रियाकलापैः स्ववर्णाश्र-
मोचितकर्मभिः अनभिसंहितफलैरिदमेवोक्तविधमेव भगवत्स्वरूपं
सिद्धये मुक्तये साधु सम्यग्यजन्ति आराधयन्ति इदं कथंभूतं भूता-
दिभिरप्राकृतैः शुद्धसत्त्वमयैरुपलक्ष्यते इत्युपलक्षणम् अप्राकृतो-
कविधदिव्यमङ्गलविग्रहविशिष्टमित्यर्थः त एव योगिनः वेदे कर्म-
योगप्रकाशके तन्त्रे आत्मयाथात्म्यज्ञानयोगप्रकाशके सांख्ये तन्त्रे
च कोविदाः कुशला भवन्ति ॥ ६२ ॥

अविक्रिय इत्यनेन उपादानकारणत्वमुपक्षिप्तं विभर्तीति
भर्तृत्वं क्षपयतीति संहर्तृत्वं चेति तदेवोपपादयति चतुर्भिः ।
तत्रत्वमित्युपादानमुपपादयति । त्वमुक्तविधस्वरूपगुणविभूति-
स्त्वं पुरुष आद्य आदौ सृष्टेः पूर्वं भवः आद्यः सृष्टेः पूर्वं
प्रलयदशायामासीदित्यर्थः कथंभूत आसमित्यत्राह । सुप्तशक्तिः
सुप्ताः स्वस्मिन् लीनाः शक्तयः चिदचिदादिशक्तयो यस्य अत
एव एकः असहायः वक्ष्यमाणनामरूपविभागनिबन्धनबहुत्वप्रति-
संबन्धिनामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टत्वेनासहाय एवाव-
स्थित इत्यर्थः ततस्तया स्वापृथक्सिद्धविशेषणभूतया शक्त्या
रजःसत्त्वतम इति द्वन्द्वैक्यं तदपेक्षया विभिद्यते इत्येकवचनं रजः
सत्त्वतमांसि विभिन्नानि विभक्तान्यभूवन् यतोरजआदेर्महान्महतो
ऽहङ्कारस्त्रिविधः ततो भूतादिभ्यः क्रमेण खमाकाशस्ततो
मरुद्वायुस्ततोऽग्निस्ततो वा आपः ततो धरा पृथिवी तेभ्यः खा-
दिभ्यः पञ्चीकृतेभ्योऽण्डोत्पत्तिद्वारा सुरा ब्रह्मादयः ऋषयो मरी
च्यादयः अन्ये मनुजतिर्यगादयः अभूवन् सृष्टेः पूर्वं स्वस्मिन्नुप-
संहृतचिदचिच्छक्तिनामरूपविभागानर्हसूक्ष्मचिदचिच्छरीरकस्त्वमे
क एव कारणतयावस्थितोऽपेक्षितकर्तृकरणाधिकरणाद्युपकरण-
जातः सर्वज्ञः सर्वशक्तिः स्वलीलैकप्रयोजनः स्वात्मिकां मायां
जीवद्वारानुप्रविश्य मायाशरीरकं स्वात्मानमेव संकल्पमात्रेण
महदादिपृथिव्यन्तसमष्टिरूपेण देवादिचतुर्विधव्यष्टिभूतरूपेण
च परिणमय्यस्वपर्यन्ततत्तन्नामरूपभागासीदित्यर्थः ॥ ६३ ॥

त्वं पुरुष इत्युक्तं तत्र पुरुषशब्दप्रवृत्तिनिमित्तं दर्शयन्पुरुष-
शब्दवाच्यतामाह। सृष्टमिति। यतः यो भगवान्स्वशक्त्या प्रकृति-
रूपया सृष्टमिदं चतुर्विधं देवमनुष्यतिर्यक्स्थावरभेदेन पुरं
शरीरमात्मनोंऽशकेनांशभूतेन जीवेन जीवान्तरात्मतया पुरमनु-
प्रविष्टः अथोऽतः तं भगवन्तमन्तः पुरस्यान्तः जीवान्तरात्मतया
सन्तं पुरुषं विदुः पुरुषशब्दवाच्यं विदुः तथाचोक्तम्। पुंसंज्ञे तु शरी-
रेऽस्मिन् शयनात्पुरुषो हरिः। शकारस्य षकारोऽयं व्यत्ययेनेति। कोऽ
सावात्मनोंऽशः यदन्तरात्मतया पुरमनुप्रविष्टस्तत्राह । यः जीवः
हृषीकैरिन्द्रियैः सारघं सारघा मधुमक्षिका सारं पुष्पाद्विगतं
घ्नन्ति गच्छन्ति प्राप्नुवन्तीति व्युत्पत्तेः अत्र सारघशब्दस्तदुपा-
र्जितमधुनि लाक्षणिकमधुकरोपार्जितमध्विव मधुकरस्थानीये-
न्द्रियोपार्जितशब्दादिभोग्यजातं भुङ्क्तेऽनुभवति स इत्यर्थः अत्र
जीवान्तरात्मतयानुप्रवेशकथनं नियतदेशकालकर्माद्यनुगुणयेन
जगद्रक्षणार्थानुप्रवेशाभिप्रायकम् ॥ ६४ ॥

अथ संहर्तृत्वमुपपादयति। स इति । य एष कालशरीरकस्त्व-
मत्युग्रवेगः कालवेगमनुसन्दधतामायुःक्षयनिमित्तभयोत्पाद--
दलक्ष्यमाणरूपः अविपह्यवेगो वायुर्मेघपङ्क्तीरिव भूतैरेव
भूतानि कालयानः पीडयन् विकर्षसि संहरसि ॥ ६५ ॥

विकर्षणप्रकारमेवाह । प्रमत्तमिति । इति कृत्यमेवं कर्तव्यमि-
ति चिन्तयोच्चैः भृशं प्रमत्तं विषयेषु शब्दादिषु लालसमति-
कामुकं प्राप्तेऽपि विषये प्रवृद्धलोभं जनमप्रमत्तः कालरूपस्त्वं
सहसा बलादन्तकोऽभिपद्यसे प्राप्नोसि यथा क्षुधा लेलिहानः

जिह्वयोष्ठप्रान्तौ स्पृशन् सर्पो मूषकमिवेत्यर्थः ॥ ६६ ॥

एवं सर्वोत्कृष्टत्वात्पण्डितो बुद्धिमान् भवेच्चर्हि को वा त्वत्प-
दाब्जं विजह्यात् न कोऽपीत्यर्थः कथम्भूतः यस्तवाथमानोऽना-
दरस्तेन व्ययमानं केतनं शरीरं यस्य त्वत्परिचर्यां विना
वृथैव शरीरं मन्वान इति भावः अत एवास्मद्गुरुर्निःश-
ङ्कया त्वत्पदाब्जमेवार्चयति आराधयति स्म कोऽसौ तव गुरु-
र्योमामर्चयति स्म तमाह । यदिति । यस्य दिनोपपत्तिः दिन-
निष्पत्तिर्नाम चतुर्दशमनवो यस्य दिवसनिष्पत्तिरूपाः सन्ति
स ब्रह्मैवाऽस्मद्गुरुः पितेत्यर्थः ॥ ६७ ॥

अतस्त्वमेव प्राप्य इति यदुपसंहरति। अथेति । हेब्रह्मन् !
परमात्मन् कृत्स्नं विश्वं रुद्रभयात्त्वदात्मकस्य रुद्रस्य भयात्
ध्वस्तं नाशं प्राप्तं त्वन्तु विपश्चितां नोऽकुतश्चिद्भया नास्ति कुतोऽपि
भयं यस्याः सा कुतश्चिद्भया गतिरसीति कृत्स्नं विश्वं रुद्रभ-
यादिति परोक्षनिर्देशो रुद्रान्तरसामान्याभिप्रायकः ॥ ६८ ॥

एवं स्वस्मै ब्रह्मोपदिष्टस्तोत्रेण भगवन्तं प्रस्तूय तेभ्यः प्रचे-
तोभ्यः उपदिश्य तस्मिन्स्तोत्रे तदर्थे तान् रोचयन्नाह रुद्रः।
इदमिति । हेनृपनन्दनाः ! विस्रब्धा विश्वासयुक्ताः कर्तरि क्तः इदं
भगवत्स्तवनं जपत अर्थतः शब्दतश्चानुसंधत्तमनेन जपेन वः
युष्माकं भद्रं मङ्गलं भविता तथा स्वधर्मं स्ववर्णाश्रमोचितं
धर्ममनुतिष्ठन्तः भगवत्यर्पितान्तःकरणाःसन्त इत्यर्थः ॥ ६९ ॥

असकृत् पौनः पुन्येन हरिं ध्यायन्तो गृणन्तः स्तुवन्तः तमेव
सर्वभूतेष्ववस्थितमात्मस्थं पूजकान्तरात्मतयावस्थितं भगवन्तं
पूजयध्वं सर्वभूतेष्ववस्थितमित्यनेन पेतदात्म्यमिदं सर्वमिति

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रुत्यर्थोऽनुसन्धीयते आत्मानमित्यनेन तदात्मेति श्रुत्यर्थः आत्मस्थमित्यनेन तत्त्वमसीति श्रुत्यर्थोऽनुसंहितः अत एव तत्स्थत्वादनुपश्यन्ति यत एव हि साधव इति श्रुत्यर्थउक्तः ॥ ७० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत्रेत्यधिकरणनिर्देशाच्छुक्तिकायां रजतव्यक्तिवद्यस्मिन् कल्पितत्वान्मिथ्याभूतं जगदिति भ्रान्तिं निराचष्टे । योमाययेति । यो हरिः पुरुरूपया शुक्ललोहितकृष्णाभेदेन बहुरूपया मायया प्रकृत्येदं जगदसृजत् बिभर्ति पुनः संहरति अत्र प्रकृतेरेव महदाद्यात्मना विकारो नतु परमात्मन इत्याशयेनोक्तम् । अविक्रिय इति । अनेन शुक्त्यज्ञानविकारो रजतमित्यपास्तमेवमपि परमात्मा जीवादिभ्यो भिन्नतया सम्यक्किमिति न प्रतीयत इत्याशङ्क्य सा प्रतीतिः सम्यक् ज्ञानिविषयेत्याह । यन्नेदेति । यस्य हरेर्जीवादिभ्यो भेदबुद्धिः सदिवा निर्दोषज्ञानविषयैवेत्यर्थः दिनवाचिना दिवाशब्देन कथं ज्ञानार्थतोच्यते प्रसिद्ध्यभावादिति न वाच्यम् "रात्रिरज्ञानमुद्दिष्टं सम्यक् ज्ञानं दिवा स्मृतं" इतिवचनात् । शुक्तिरजतज्ञानवन्नेदं पुरुषार्थोपयोगीतिचेन्न ।

जीवेभ्यो जडतश्चैव भेदज्ञानं हरेः सदा ।
वास्तवं ज्ञानमुद्दिष्टं तेन मुक्तिरवाप्यत

इति वचनात् तत्र युष्मत्प्रतीतिः कीदृशीति तत्राह । आत्मसंस्थयेति । यया स्वाधीनया प्रकृत्या निर्विकारः सृष्ट्यादिकरोति तयात्मसंस्थया परमात्मव्यवस्थया स्थितं त्वां प्रतीमहि विजानीमहे स्वाधीनामपि प्रकृतिं विहाय सृष्ट्यादि कर्तुं समर्थ इति द्योतनायात्मतन्त्रमिति अत एव भगवन्निति सम्बोधयाम्बभूवुरिति ॥ ६१ ॥

अस्तु सृष्ट्यादिकर्तृ ब्रह्म स्वर्गकामो यजेतेत्यादि वाक्यप्रमाणेनेज्यमिन्द्रादिकं स्यात्तादृक् प्रमाणासम्भवादिति तत्राह । क्रियाकलापैरिति । इदं प्रेत्यापि न मुञ्चामीति श्रद्धयान्विता ये कर्मयोगिनः क्रियासमूहैर्ज्ञानसिद्धये इदं जगत्कर्तृ ब्रह्मैव साधु यजन्ते नेन्द्रादिकं त एव स्वर्गकामो यजेतेत्यादि वेदे "शुद्धस्फटिकसंकाशं वासुदेवं निरञ्जनमित्यादि„ तन्त्रे च कोविदास्तद्हृदयज्ञा इत्यर्थः न केवलं श्रुतिस्मृतिभ्यां ज्ञात्वा यजन्ति किन्त्वनुमानेनापीति भावेनाह । भूतेति । भूतेन्द्रियान्तःकरणैरुपलक्ष्यते ज्ञायत इतिभूतेन्द्रियान्तःकरणोपलक्षणम् भूतादीनामचेतनत्वेन स्वतः प्रवृत्त्यसम्भवात्तत्प्रेरकोऽन्यश्चेतनोऽस्ति । सचेश्वर एवान्यस्यान्वयव्यतिरेकाभ्यां शक्त्यदृष्टेरिति यद्वा वेदे तन्त्रे च श्रद्धान्विता ये योगिन इदं यजन्ति त एव कोविदाः कर्मकाण्डस्वारस्यज्ञानपटव इति । अनेनेन्द्रादिकं यजन्तो वेदादितात्पर्यार्थं न जानन्तीति ज्ञापितम् ॥ ६२ ॥

ननु जीवादिदं जगत्केचित्सङ्गिरन्ते इदं निपुणप्रणीतं विशिष्टकार्यत्वाच्चित्रादिकार्यवदित्यनुमानं जीवाद्भवन्ति भूतानीति कानिचिद्वाक्यानि चोदाहरन्त्यत इदं लक्षणमतिव्याप्तमिति शङ्कानिरासायाह । त्वमेक इति । आद्यः प्रपञ्चोत्पत्तेः पूर्वभवः । पुरुषस्त्वमेक एवाभूदित्यन्वयः ब्रह्मैवेदमग्रआसीदित्यादेः पुरुष इत्यनेन कर्त्तारमीशं पुरुषं ब्रह्मयोनिमिति वाक्यं सूचित अनेन जीवस्य व्यावृत्तोऽस्य ब्रह्मयोनित्वोक्तेः लक्ष्मीतत्त्वस्य द्विती-

यस्य विद्यमानत्वात्कथमेक इति विशेष्टुं शक्यत इति सुप्तेति । अत्र सुप्तेत्यनेन प्राप्तिरुपलक्ष्यते "यदायं पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति"इति श्रुतेः स्वात्मनि शक्तिः मुख्यार्थाङ्गीकारेऽज्ञत्वापत्तेरन्यैरदृष्टत्वमङ्गीकर्तव्यम् स्वाप उद्दिष्टहर्यन्यत्रत्वदर्शनमिति वचनात् । एवं प्रलयं संक्षिप्य सृष्ट्यवस्थामाह । तयेति । या प्रलये हरौ सृष्टिकाले प्राप्ते हरेः कटाक्षेण सिसृक्षुत्वविशेषमाप्तया शक्तिशब्दशब्दितया प्रकृत्या साम्यावस्थामाप्तया विषमावस्थामापद्यते सृष्टिक्रममपेक्ष्य रजः सत्त्वतम इति स्योक्तं स्थित्यादेः सृष्ट्यनन्तरत्वात् रजः सृष्टौ सत्त्वं तमः संहृतौ चेति भिद्यते रजः सत्त्वतमोभ्यां भिन्नं सत्त्वं रजस्तमोभ्यां तमश्च सत्त्वरजोभ्यामित्ययं भेदः प्राधान्यरत्वात्तत्कार्यस्वभावदर्शनादवगन्तव्यः उक्तं भेदं विशिनष्टि महानहमिति । ततो गुणवैषम्यात् सत्त्वप्रधानं महत्तत्त्वं मानी ब्रह्माचाभूदिति बोद्धव्यं तत्राहंकारं त्रिविधाभिन्नम् । साहङ्कारात् खादि वैकारिकाहङ्कारादिन्द्रियाभिमानिनो देवाः तैजसाहङ्कारात् ज्ञानहेतुत्वादपिशब्दवाच्यानीन्द्रियाणि भ्यः सुरनरतिर्यगादिभूतगणा अभूवन् किं बहुनोक्तेनेदं चर जगद्यतो यस्मादुत्पन्नं तदेवं विभिन्नमिति ज्ञातव्यं आत्मन आकाशः सम्भूतइत्यादिश्रुत्यनुगृहीतं मानमस्मिन्नर्थे ॥ ६३ ॥

अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेश्चेतनप्रकृतावस्थातन्त्र्या तेर्विचित्रप्रपञ्चरचनान्यथानुपपत्त्या विशिष्टचेतनसिद्धिः श्वर एवर्थापत्तेरन्यथा सिद्धिपरिहारायाह । सृष्टमिति । प्रविश्येत्यनेनार्थापत्तेरन्यथा सिद्धिः परिहृतेति प्रपञ्चसु खिक्यात्प्राज्ञानां सुबोधत्वाच्चोपरम्यते आत्मांशेन स तत्सृष्ट्वेत्यादिश्रुतेः जरायुजादिभेदेन चतुर्विधं पुरं प्रविश्य कैर्जीवैरिन्द्रियैःसारघं सारमात्रं मधु सुखं भुङ्क्ते यस्मादयो अत्र पुरे सन्तं त्वां पुरुषं विदुरित्यन्वयः । तदस्यास्तीत्यर्थ उपच्प्रत्ययः सन्तमित्यनेन निर्दोषत्वं सूचयति "सत घशब्दः स्यात" इतिवचनात् पुनर्मधु नाम सुखं विन्यात सारमेव भुङ्क्ते नत्वसारमित्याशयेन सारवत्सारमात्रं तु मित्यतोऽपि कथित एवार्थः ॥ ६४ ॥

संहर्तृलक्षणस्य कालाधीनतया प्रतीयमानत्वात्तत्रातिव्याप्ति मिति तत्राह । स एष इति । योऽग्रतः स्रष्टा स एव त्वं कालयानः कलद्रावण इति धातुः । कालरूपी भूत्वा त्वं भूतैः यैर्मादिभिर्भूतानि विचकर्षसि संहरिष्यसीत्यन्वयः अविरोध परिहार्यः अत्र हेतुं ध्वनयति । अतिचण्डेति । अत्रानुमानं त्याह । अनुमेयेति उदाहरणमाह । घनावलीरिति । चलन्ती दृष्ट्वा चलनं वायुकर्तृकमिति यथा कल्प्यते तथात्रापीति

अवान्तरसंहारस्त्वदन्येन किं न स्यादत्राह । प्रमत्तमिति लेलिहानः पुनः पुनर्जिह्वया सृक्किणी लिहन् ॥ ६६ ॥

एवं भगवतः स्वरूपं निरूप्य तदुपासनात्यागस्तु विद्वानिति भावेनाह । क इति । पण्डित एवं ज्ञात्वा पुमान् कस्त्वत्पदाब्जं त्यजति । यद्यदाचरति श्रेष्ठ इत्यत्र ध्वनयति त्यजति चेत्सुरेतरः इतोऽपि मोक्तुं निमित्तं स्वाह । यत्त इति । अयमब्जकेतनः पुमानपि विगतशङ्कः तव यत्पदाब्जमर्चति स्म स्मरते इत्यन्वयः । स्मृतौ इति स्मृति यादवेः । कोऽयमब्जकेतन इत्यतोऽस्मद्गुरुरतिजनक

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नोपदेष्टृत्वाच्च गुरुरिति अनेन ततः परंहिमामित्यत्र श्रीरेवोच्यते न रुद्र इति निरणायीत्यतो मायावादिनां व्याख्यानं पूर्वापरविरुद्धत्वादुपेक्षणीयमित्यस्माभिस्तन्मतनिरासाय प्रयासो न क्रियत इति इतोऽपि तत्पादसेवा न हातव्येत्याह । यद्भिनेति । चतुर्दशमनवोऽस्मादेतत्फलं भवतीत्युपपत्त्यपेक्षां विनापि यच्चरणारविन्दमर्चन्ति ॥ ६७ ॥

* अनुदिनं सुप्तिदशायां श्रीनारायणस्पर्शेन परमानन्दोऽनुभूयते किमुत कैवल्य इति वेदयंस्तस्य दौर्लभ्यमाह । यत्स्पृष्ट इति । येनाङ्घ्रिणा स्पृष्टोऽहरहर्मुक्तक्लेशो जनोऽमृताम्भोधौ परमानन्दसमुद्रे शेते यावत्तावत्तदानीं वेद सुखं वेत्त्यथोत्थानानन्तरं तेऽङ्घ्रिं वेद नु किमित्याक्षेपः तत्सुखं स्मरते च यद्यपि सुखमहमस्वाप्समिति परामृशति तथापि तवाङ्घ्रिं न वेत्ति न स्मरतीतिभावः । अनेन तादृशः पुरुषो दुर्लभ इति सूचितम् ॥ ० ॥ विचित्रे जगति कश्चिद्वीरोऽस्मदभयदः किं न स्यादिति शङ्कां विहायैवं प्रार्थनीय इति वक्ति । अथेति । विश्वं रुद्रभयध्वस्तमिति यस्मात् अथ तस्मादेवं विपश्चितां नस्त्वमकुतश्चिद्भया गतिरसीत्यन्वयः ब्रह्मन् ! परमात्मन्निति पदद्वयेन बहिरन्तश्च त्वां विनान्योऽभयदो नास्तीति सूच्यते ॥ ६८ ॥

ध्येयस्वरूपं निरूप्याधुना पूर्वोक्तं जाप्यं विधायोपसंहरति । इदं जपतेति । सर्वस्मा आत्मने नम इत्यारभ्य वाचो विभूतय इत्यन्तं यदुक्तं तदिदं जपतेत्यन्वयः ॥ ६९ ॥

आत्मस्थामित्युपदिश्य सर्वभूतेष्ववस्थितमिति वचनं परिच्छिन्नत्वपरिहारायोक्तमिति ज्ञायते ॥ ७० ॥ ७१ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवत्त्वमाह । य इति । यदित्यस्यान्ते यत् यया भेदबुद्धिः परमेश्वरात् त्वत्तोऽन्ये स्वतंत्रसत्ता का इति बुद्धिर्भवति । आत्मदुःस्थया त्वयि स्वरूपभूतमहाभगवत्त्वदर्शनेनात्मनि दुःस्थयास्वं दौस्थ्यं दर्शयन्त्या ॥ ६१ ॥

अन्तर्यामित्वमाह । क्रियेति । इदमेवेति त्रयाणामभेदं दर्शयति कर्ममार्गे ये सर्वान्तर्यामिदृष्टितत्पराः त एव भगवत्तत्त्वकोविदा नान्ये ततः किं पुनर्भक्तिमार्गे साक्षात्तदुपासका इत्यर्थः ॥ ६२ ॥

अन्तर्यामित्वमेव स्थापयति । त्वमेक इति द्वाभ्याम् । तत्रप्रथमेनांश्यनुवादः द्वितीयेनांशप्रतिपादनम् । अत्र अन्तः सन्तमंशमिति टीकासम्मतम् ॥ ६३—६४ ॥

कालत्वमाह । स एव इति द्वाभ्याम् । सर्वदुःखहन्तरि सर्वसुखदातरि स्वस्मिन्नुन्मुखं विधातुं दययैव तथा विभीषयस इति भावः ॥ ६५—६६ ॥

अनस्तद्भक्तिरेव पुरुषार्थं इत्युपसंहरति । क इति द्वाभ्याम् । विशङ्कयापि हेतुना को विजह्याति अस्मद्वर्गादयस्तु उपपत्तिं युक्तिं विना स्वभावत एवेत्यर्थः तथा मनव इति मन्वन्तरस्य भक्तानामुपलक्षणं चेतन इति चित्सम्बन्धयोः पाठान्तरम् ॥ ६७ ॥

हे विपश्चितां परमात्मन् ! स्वभावतः प्रेष्ठत्वमेवास्माकमकुतश्चिद्भया गतिः त्वां विना तु विश्व सर्वमेव रुद्रात् कालात् भयं तेन ध्वस्तमिति । तत्र प्रथमं कर्ममिश्रां भक्तिमाह । इदमिति । ततः शुद्धामाह । तमेवेति ॥ ६८—७२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वयं तु त्वां भगवत्स्वरूपमेवानुबुभूषाम इत्याह । यो भवान् इदं विश्वं पुरुषरूपेणाऽसृजत् विष्णुरूपेण बिभर्ति सङ्कर्षणरूपेण क्षपयति मायया कीदृश्या आत्मनि त्वयि दुःस्थया स्वकार्यं कर्तुमसमर्थया यद्यस्या मायाया भेदे भेदप्रभेदरूपे जगत्येव बुद्धिर्ज्ञानं लोकानां स्यात् तच्च ज्ञानं सदिव प्रशस्तमिव न तु प्रशस्तमित्यर्थः क्लीवत्वमार्षम् । हे भगवन् ! श्रीकृष्ण ! तं त्वामात्मतन्त्रं प्रतीमहि साक्षादनुभवेमेति प्रार्थनेयम् ॥ ६१ ॥

केचित् कर्मयोगिनोऽष्टाङ्गयोगिनश्च सर्वभूतान्तर्यामिप्रथमं पुरुषं त्वां यजन्तीति तन्त्रेणैवाह । क्रियेति । इदमेव किं तत्राह । भूतेन्द्रियान्तःकरणैरस्वतन्त्रैर्यदुपलक्ष्यते ज्ञाप्यते तन्नियन्तृरूपम् । त एव कर्मिणां योगिनां च मध्ये कोविदाः नान्ये ॥ ६२ ॥

केचित्तु त्वं प्रकृत्यन्तर्यामी प्रथमपुरुषोऽनुभूयसे इत्याह । त्वमिति । सुप्ता मायाख्या शक्तिर्यस्य पश्चात्तयैव शक्त्या प्रबुद्धया त्वत्त एव रजआदिकं विभिद्यते यतो रजआदेर्महानहमित्यादि ६३॥

यस्त्वन्तर्यामी सङ्गी पुरुषो जीवः स तु नोपास्य इत्याह । सृष्टमिति । इदं चतुर्विधं जरायुजाण्डजस्वेदजोद्भिज्जरूपमात्मा अन्तर्यामी अंशकेन येन निकृष्टांशेन सह प्रविष्टस्तमपि अन्तः सन्तं अन्तरेव न तु बहिः सन्तं जीवं पुरुषं विदुः यः सारघं सरघाभिर्मधुमक्षिकाभिः सृष्टं मधु इषीकैर्भुङ्क्ते । सारघदृष्टान्तेन तन्माक्षिकादंश सन्तप्तत्वेऽपि तद्भोजनात्यागादासक्तिर्द्योतिता तत्राश्चानिशयोक्त्यलङ्कारेणाभक्त्या स दुःखं विषयसुखं तुच्छमविद्यावृतो यो भुङ्क्त इत्यर्थः । तथाच श्रुतिः । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीतीति ॥ ६४ ॥

तमेव भक्तिहीनं जीवं सपरिच्छदमेव कालरूपस्त्वमाकर्षसीत्याह । स एष इति द्वाभ्याम् । कालयानश्चालयन् लोकान् भोगस्थानान्यपि भूतानि भूतैरिति जीवो जीवस्य जीवनमिति न्यायेनेत्यर्थः अनुमेयतत्त्वः अलक्ष्यस्वरूपः ॥ ६५ ॥

विकर्षणप्रकारमाह । प्रमत्तमिति । इति कृत्यं एवमेवमिदं कर्तव्यमिति तच्चिन्तया प्रमत्तम् । अभिपद्यसे आक्रमसि क्षुधा ललिहानः जिह्वया ओष्ठप्रान्तौ अतिशयेन स्पृशन् सर्पः आखुं मूषिकमिव ॥ ६६ ॥

एवम्भूतं त्वां निर्बुद्धिरेव न भजेदित्याह । क इति । अवमानो दुष्टजनकृतोऽनादरस्तेन व्यथमानं केतनं नाशं प्राप्तमिव शरीरं यस्य सः । यदस्मद्गुरुर्ब्रह्मा अर्चति स्मेति सर्वेषां स्तोतॄणां वाक्यम् विशङ्कया भयबन्धशङ्कया मनवोऽपि उपपत्तिं युक्तिं विना स्वभावत एव विश्वासदार्ढ्येन । यद्वा । कामनां विना ॥ ६७ ॥

उपसंहरति । अथेति । विपश्चितां गतिरसि नत्वविपश्चितां यतो विश्वं रुद्रभयध्वस्तं विश्ववर्तिनोऽज्ञा जीवाः कालभयध्वस्ता एवेत्यर्थः ॥ ६८ ॥

स्वधर्ममनुतिष्ठन्त इति प्रचेतसां कर्ममिश्रभक्तिमध्यमालक्ष्योक्तिः ॥ ६९ ॥ ७० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु यत्र विश्वं यदि व्यज्यते तर्हि विकारित्वं नस्य स्यात्तत्राह । य इति । मायया स्वशक्तिभूतया बहुरूपया महदादिविकाररूपया नानावस्थारूपया य इदं विश्वमसृजत स्वरूपतस्त्वविक्रियः नतु

* यत्स्पृष्टोऽहरहर्मुक्तक्लेशः शेतेऽमृताम्बुधौ ॥ तावद्वेदाथतच्चेदङ्घ्रिज्ञनोऽनुस्मरतेचनत् । इति श्रीविजयध्वजतीर्थपाठः ॥ ० ॥

**योगादेशमुपासाद्य धारयन्तो मुनिव्रताः ।**
**समाहितधियः सर्व एतदभ्यसतादृताः ॥ ७१ ॥**

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तर्हि प्रकृतिरेव जगत्कर्त्री किम्ब्रह्मकारणवादेनेत्यत्राह। आत्मदुःखया स्वतःख्यातुमशक्यया स्वच्छकितया त्वदन्तर्गतयेत्यर्थः हे भगवन्! तं त्वां प्रतीमहि जानीमः सैवानर्थकारिणीत्याह। यत् यया भेदबुद्धिः स्थूलोऽहं कृशोऽहं देवोऽहं मनुष्योऽहमित्यादिभेदबुद्धिः सदिवास्ति सत्येवास्ति ॥ ६१ ॥

सिद्धये मुक्तयेक्रियाकलापैः स्वयजनात्मककर्मसमूहैः भूतादिभिस्तामसराजसवैकारिककार्यैः व्यष्टिसमष्टिरूपैरुपलक्षितमुत्पादकधारकनियन्त्रादिरूपमिदमेव तव रूपं येयोगिनः साधु यजन्ति ते वेदे तन्त्रे तदर्थप्रकाशके आगमे च एते एव कोविदाः ॥ ६२ ॥

अथ यजनीयस्य भगवतः विश्वहेतुत्वनिःसमानातिशयत्वसर्वकर्मसाक्षित्वादिगुणान् जीवस्य कर्मासक्तत्वबद्धत्वादीन् गुणांश्च जानन् त्वां को न भजेदित्याह । त्वमितिपञ्चभिः। सुप्ता महाप्रलये लीना प्रकृत्याख्या शक्तिर्यस्य सः पुनः सृष्टिवेलायां तयैव रज आदिर्विभिद्यते रज आदीनां द्वन्द्वैक्यम् ततः महान् अहं महङ्कारश्च खं च विभिद्यते ततः महदादयो विभिद्यन्ते एवं क्रमेण यतः इदं विश्वं भवति स त्वमेक एव आद्यो विश्वहेतुरसि नास्ति त्वत् समोऽधिकस्य तु कावार्तेति भावः ॥६३॥

भगवतो विश्वहेतुत्वादिगुणानुक्त्वाथ तस्य कर्मफलदातृत्वं जीवस्य तद्भोक्तृत्वं वर्णयति । सृष्टमिति ।

प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।
चोभयामास संप्राप्ते सर्गकाले व्ययाव्ययाविति ।

स्मृतेः स्वशक्त्या प्रकृत्या आत्मांशकेन जीवेन च इदं चेतनाचेतनामकं विश्वं सृष्ट्वा जरायुजाण्डजस्वेदजोद्भिज्जरूपेण चतुर्विधं पुरमन्तर्यामिरूपेण प्रविष्टोऽसि अथो अतो हेतोः पुरस्यान्तः सन्तं त्वां पुरुषं बन्धनिवर्तकतया विदुः यश्च हृषीकैरिन्द्रियैः सार्धं सरघाभिर्मधुमक्षिकाभिः संचितं मध्विव क्षुल्लकं कर्मफलं भुङ्क्ते तं जीवं बद्धतया विदुः ॥ ६४ ॥

लोकान् कालयानश्चालयन् विकर्षसि संहरसि ॥ ६५ ॥

इतिलोकप्रसिद्धया इदं कृतमिदं करिष्ये इत्येवं भूतया कृत्यचिन्तया ॥ ६६ ॥

तेऽवमानेन त्वत्पराङ्मुखत्वेन व्ययमानकेतनं शरीरं यस्य सः त्वद्भजनं विना वृथायुर्नाशं मन्यमानः कः पण्डितस्त्वत्पदाब्जं विजहाति यदस्मद्गुरुर्ब्रह्मेति सर्वेषां स्तोतृणामसमच्छदेन ग्रहणम् विनोपपत्तिम् उपपत्तिः फलाभिसन्धिस्तां विना यद्वोपपत्तिरर्चनीयत्वयोग्यतान्वेषणं तां विना तस्याः सर्ववेदप्रसिद्धत्वात् अर्चति मनवश्चार्चन्ति विगता शङ्का यस्यां सा विशङ्का भगवत्प्राप्तिस्तया अध्ययनेन वसतीतिवसृतीया भगवत्प्राप्त्यर्थमित्यर्थः ॥ ६७ ॥

हे ब्रह्मन्! परमात्मन्! रोदयतीति रुद्रो मृत्युस्तद्भयाद्भूस्तमथ अतस्त्वं गम्यते इति गतिः शरणमसि ॥ ६८ ॥ ६९ ॥ ७० ॥

भाषाटीका ।

जिस भगवान् ने बहुत रूप वाली माया से इस जगत-को सृजा है और जो पालता है फिर नाश करता है स्वयं विकार बिना ही रहता है जिसमें मनुष्यों को बुद्धि है परन्तु उस परमात्मा में भेद वैषम्य स्थिर रहता है वह जो स्वतंत्र भगवान् तिस को हम जानते हैं ॥

योगीजन जो हैं सो नाना प्रकार की क्रियों से युक्त हो कर इसी तत्व का यजन करते हैं भूतों अन्तःकरण से उपलक्षित नियंता रूप समझते हैं लोग वेदों मे तथा पंचरात्र तंत्र में अति निपुण हैं ॥

तुम ही एक आद्य पुरुष हो प्रलयकाल में सब शक्ति को सुप्त कर के रखते हो तिसी माया शक्ति से सत्व रज तम तीन भेद होते हैं तिन से महत्तत्व है तिस से अहङ्कार होता है फिर आकाश वायु जल पृथवी देवता ऋषि भूत गण यह सम्पूर्ण जगत उसी से होता है ॥ ६३ ॥

अपनी शक्ति से बनाया हुआ जरायुज अण्डज स्वेदज उद्भिद ऐसे चार प्रकार के शरीर मे अपने जीव अंश से प्रवेश हो कर रहने के हेतु इन को पुरुष कहते हैं वही मधुकि नाईं सब विषय सुखों को भोगते हैं ॥

सोही आप बडे प्रचंड वेगवाले सब भूतों को इधर उधर चलाते हुये जैसे पवन में घोंको चलावै तैसे काल हो होकर दूसरे प्राणि के द्वारा दूसरों को नाश करते हो उपसंहार करते हो ॥ ६५ ॥

संसार के कर्तव्य कार्यों की चिन्ता से प्रमत्त अत्यंत विषयों में लालसा वाला जो पुरुष है तिसको आप सावधान रहने वाले शीघ्रही काल रूप से ग्रहण कर लेते हैं भूखा सर्प मूसाको ग्रहण करै ॥ ६६ ॥

आपके अनादर करने से नाश होने वाला है शरीर का ऐसा कौन पंडित है कि जो आप के चरण कमलों को देवै और की तो क्या बात है इन कालादिकों की शंकासे गुरु ब्रह्माजी तथा बिना युक्ति के भी चतुर्दश मनु आप को पूजन करते हैं ॥ ६७ ॥

हे परमात्मन् ! हे ब्रह्मन् ! सब जगत् संहारकरुद्रअग्नि से ग्रसित है ऐसे जानने वाले हम लोगोंको सब तरफ से गति रक्षक आपहीहो ॥ ६८ ॥

हे राजपुत्रो ! तुमलोग शुद्धचित्त होकर भगवानमें अंतःकरण को अर्पण करके अपने वर्णाश्रम धर्म का अनुष्ठान करते विश्वाससे इस स्तोत्र का जप करो ॥ ६९ ॥

सब के अन्तर्यामी अपने श्री आत्मा मे वर्तमान सब स्थावर जंगम भूतों में स्थित वही परमात्मा का ध्यान करते निरंतर श्री हरि का पूजन करो ॥ ७० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

योगादेशं नामेतत्स्तोत्रमुपासाद्य पाठतः प्राप्य मनसा धारयन्तोऽभ्यासेन जपन्तः ॥ ७१ ॥

इदमाह पुराऽस्माकं भगवान् विश्वसृक् पतिः ।
भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ॥ ७२ ॥
ते वयं नोदिताः सर्वे प्रजासर्गे प्रजेश्वराः ।
अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः ॥ ७३ ॥
अथेदं नित्यदा युक्तो जपन्नवहितः पुमान् ।
अचिराच्छ्रेय आप्नोति वासुदेवपरायणः ॥ ७४ ॥
श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम् ।
सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥ ७५ ॥
य इमं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम् ।
अधीयानो दुराराध्यं हरिमाराधयत्यसौ ॥ ७६ ॥
विन्दते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरन् ।
मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥ ७७ ॥
इदं यः कल्य उत्थाय प्राञ्जलिः श्रद्धयाऽन्वितः ।
शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥ ७८ ॥
गीतं मयेदं नरदेवनन्दनाः ! परस्य पुंसः परमात्मनः स्तवम् ॥
जपन्त एकाग्रधियस्तपो महच्चरध्वमन्ते तत आप्स्यथेप्सितम् ॥ ७९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां रुद्रगीतं नाम
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विश्वसृजां पतिर्ब्रह्मा ॥ ७२ ॥
सिसृक्ष्मः सृष्टवन्तः ॥ ७३ ॥
युक्त एकाग्रचित्तः ॥ ७४ ॥
ज्ञानमेव नौर्यस्य ॥ ७५ ॥
योऽधीयानो भवत्यसौ हरिमाराधयति ॥ ७६ ॥
अमुष्माद्धरेः असत्वरन् स्थिरः सन् मद्गीतं स्तोत्रं तेन गीतात्स्तुतात् यद्यदिच्छति तत्तद्विन्दते एक एव वल्लभः प्रिय आश्रयस्तस्मात् ॥ ७७ ॥
कल्ये उषसि ॥ ७८ ॥
तपश्चरत तपसोन्ते ईप्सितं प्राप्स्यथ ॥ ७९ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

योगादेशं नामैतत्स्तोत्रमासाद्य पाठतः प्राप्य मनसा धारयन्तः समाहितचित्ताः मौनव्रतनिष्ठाः आदृता आदरयुक्ताः सर्वे यूयमभ्यसत ॥ ७१ ॥

स्तोत्रस्य सांप्रदायिकत्वमाह । इदामिति । विश्वसृजां मरीच्यादीनां पतिर्विश्वसृड् ब्रह्मा आत्मजानां स्रष्टुमिच्छतां भृग्वादीनामस्माकं पुरा आह उपदिष्टवान् ॥ ७२ ॥

ते उपदिष्टस्तोत्रा वयं प्रजासर्गे निमित्ते प्रचोदिताःअनेन स्तोत्रेण निरस्ताज्ञाना विविधाः प्रजाः सिसृक्ष्मः विसृष्टवन्तः ॥७३॥

पुमान्समाहितचित्तो वासुदेवः परमयनं प्राप्यं प्रापकमाधारश्च यस्य तथाभूतः इदं नित्यदा जपन्नाशु स्वसमीहितं श्रेयः प्राप्नोति ॥ ७४ ॥

श्रेयसामपि मध्ये ज्ञानस्यैव निरतिशयपुरुषार्थरूपमोक्षसाधनत्वेन निरतिशयश्रेयस्त्वं वदन् तत्साधनतामस्य स्तोत्रस्याह श्रेयसामिति द्वाभ्याम् । सर्वेषामपि श्रेयसां मध्ये ज्ञानं भगवद्भक्त्यात्मकं ज्ञानमेव निःश्रेयसं नितरां श्रेयः स्मृतं कुतः ज्ञानिनो भगवद्भक्तियाथात्म्यज्ञानवन्तः उपायान्तरैर्दुस्तरमपि व्यसनार्णवं दुःखसागरात्मकं संसारं तरन्ति ॥ ७५ ॥

यःपुमान् मया गीतमिदं स्तोत्रं श्रद्धया युक्तः अधीयान अध्ययनं कुर्वाणः उपायान्तरैर्दुराराध्यमपि हरिमाराधयति हरिविषयां भक्तिं लभते इत्यर्थः ॥ ७६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननो मया यद्गीतं तस्य गीतात् भावे कः गानाद्धेतोः सुप्रा ताच्छ्रेयसां सर्वपुरुषार्थानां वल्लभात्प्रभोरमुष्माद्भक्ताराधितात्प-रमपुरुषाच्छ्रेयः इच्छति असत्वरास्थिरः सन् तत्सर्वं विन्दते ल-भते ॥ ७७ ॥

यः पुमानिदं कल्य उपसि उत्थाय प्राञ्जलिः शृणुयादन्यान् श्रावयेद्वा स मर्त्यः सर्वैः कर्मरूपैः बंधनैर्मुच्यते भक्तो भवति ॥७८॥

हेनरदेवनंदनाः!मया गीतमिदं परमपुरुषस्य स्तवंजपन्तः समा-हितचित्ताः तपश्चरध्वं कुरुध्वं अन्ते तपसोऽन्ते तत्तस्मा दीप्सित मवाप इयथ ॥ ७९ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्र
चन्द्रिकायां चतुर्विंशोऽध्यायः

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रद्धां जनयति । इदमाहेति । विश्वसृक्पतिर्ब्रह्मा ॥ ७२ ॥

नेदं श्रवणमात्रं किन्त्वनुभवसिद्धमित्याह । ते वयमिति ॥७३॥

न केवलमिदं युष्माकमेवान्येषामपि श्रेयस्करमित्याह । अथेति ॥ ७४ ॥

तत्किंश्रेय इति तदाह । श्रेयसामिति । श्रेयसा मध्येव प्रधान-श्रेयस्त्वमित्याह । सुखं तरतीति । ॥ ७५ ॥

न केवलमनेनापवर्गिकं फलं किन्त्वपेक्षितं चैहिकमपि-स्यादित्याह । य इदमिति । । ७६ ॥

मद्गीतमित्यनेन गान्धर्वं नास्त्यमिति अस्मत्सेविनो मूढा इति द्योतनाय श्रेयसामित्युक्तम् ॥ ७७ ॥

फलविशेषार्थं कालविशेषमाह । कल्य इति। कल्ये उपसि ॥७८॥

श्रद्धातिशयजननार्थं पुनरुक्तं । करोति गीतं मयेति । एकाग्र-धियः ध्येयादनन्यविषयाधीर्येषान्ते तथोक्ताः अग्रे जगदादावेक एव यः स एकाग्रस्तद्द्वारावेव धीर्येषां ते तथेति वा अन्ते देहान्ते युष्मद्विवायेदमुक्तमिति प्रकाशनाय चरध्वमित्यात्मने पदप्र-योगः ॥ ७९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सिसृक्षम इति स विसर्गः पाठः। सिसृक्ष्मेति। क्वचित्॥७३-७४॥

तत्र श्रेयो ज्ञानमेवेत्यभिप्रेत्य ज्ञानं स्तौति श्रेयसामिति । ज्ञान-मत्र भागवतमेव ॥ ७५ ॥ ७६ ॥

असत्वरन्निति क्रियाचारार्थः ॥ ७७ ॥ ७८ ॥

तपश्चात्र भगवदाराधनलक्षणमेव ॥ ७९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भस्य
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

योगोदेशं नामैतत् स्तोत्रमुपासाद्य पाठतः प्राप्य अभ्यासं पन्तः ॥ ७१ ॥

अस्माकमस्मान् ॥ ७२—७३ ॥

अथ अतः ॥ ७४ ॥

ज्ञानं प्रस्तुतत्वात् भगवद्रूपगुणैश्वर्यज्ञान मेव सुखं ज्ञाननौरित्याभ्यां कैवल्योपयोगिज्ञानस्य तु क्लेशोऽधिक पामव्यक्तासक्तचेतसामिति कृच्छ्रो महानिह भवार्णवम पड्वर्गनक्रमसुखेन तितीर्षन्तीत्याभ्यां दुःखबहुलत्वस्या स्य च श्रवणात् ॥ ७५ ॥

अत एव भक्तिमेवाह । य इममिति । योऽधीयानो असन्त्वरन्नित्याचार क्रियन्तं स्थिर इत्यर्थः ॥ ७६ ॥

मद्गीतगीतात् मया गीतोऽयं स्तवो यदि गीतः अमुष्मात् शोभनं प्रीणातीति सुप्रीतस्तस्मात् स्तव प्रति प्रीतो भवतीत्यर्थः ॥ ७७ ॥ ७८ ॥

ईप्सितमाप्स्यथेति तेषां सकामत्वं व्यंजितम् ॥ ७९ ॥

इतिसारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
चतुर्विंशश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ।

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यूयं सर्वे योगादेशं योगादेशनाममेतत्स्तोत्रमु पाठतः प्राप्य बुद्ध्या धारयन्तः मुनिव्रताः मननशीलाः हितधियः सन्तः अभ्यसत ॥ ७१ ॥

सिसृक्षुः प्रजाः स्रष्टुमिच्छुः विश्वसृजां पतिर्ब्रह्मा क्षतां भृग्वादीनामात्मजानामस्माकं पुरा इदं स्तोत्रमाह ।

अनेन स्तोत्रेण ध्वस्तं तमोऽज्ञानं येषां ते सृष्टवन्तः ॥ ७३ ॥ ७४ ॥

सर्वेषां दानव्रततपोयज्ञादीनां मध्ये ज्ञानं भगवत्स्वरू दिबोधः परं श्रेष्ठं निःश्रेयः अतः ज्ञानं नौर्यस्य सः संसारं दुष्पारमपि सुखं तरति ॥ ७५ ॥ ७६ ॥

असत्वरन् स्थिरीभूतःसन् पुरुषः यद्यदिच्छति अमुष्मात् भगवतो विन्दति कथम्भूतात् मद्गीतस्य गानात् सुप्रीतात् श्रेयसां पुरुषार्थानामेको मुख्यो स्मात् ॥ ७७ ॥

कल्ये प्रातः ॥ ७८ ॥

इदं परमात्मनः स्तवं जपन्तो महतप आरध्वम् अन्ते ते ईप्सितमाप्स्यथ ॥ ७९ ॥

इति श्रीमद्भागवने महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

### भाषाटीका ।

यह जो योगादेश नामक स्तोत्र है इसका तुम से प्राप्त होकर मनसे इसका धारण करते सा से आदर युक्त होकर इसका अभ्यास करो ॥ ७१ ॥

पूर्व कालमे प्रजा पति ब्रह्माजी ने सृष्टि के इच्छा क होकर सृष्टि की इच्छा वाले भृग्वादिक के मसे इस स्तोत्र को कथन किया है ॥ ७२ ॥

भाषाटीका ।

सो हम लोग प्रजा की सृष्टि में प्रेरित होनेसे सब प्रजेश्वर अज्ञान से रहित होकर विविध प्रकार के प्रजों को सृजते हैं ॥ ७३ ॥

तिस से जो पुरुष नियम युक्त सावधान होकर प्रति दिन वासुदेव परायण होकर इसको जपेगा सो जल्दी कल्याण मोक्ष को प्राप्त होजायगा ॥ ७४ ॥

इस लोक में सबसाधनों से ज्ञान ही परम कल्याण कारक है ज्ञान की नौका वाला व्यसनरूप दुस्तर समुद्र को सुख पूर्वक तर जाता है ॥ ७५ ॥

मेरे गान किये इस भगवत्स्तव को जो श्रद्धा युक्त होकर पाठ करेगा सो पुरुष दुराराध्य हरि भगवान् को भी प्रसन्न करलेगा ॥ ७६ ॥

स्थिर रह कर इस स्तोत्र को जो पाठ करेगा सो हमारे गीत गाने से प्रसन्न हुये भगवान् से सब मनोरथों को प्राप्त होगा क्यों कि भगवान् सब कल्याणों के एक अधि पति हैं ॥ ७७ ॥

जो पुरुष प्रातःकाल में उठकर श्रद्धा युक्त हाथ जोडकर इस स्तोत्र को सुनै अथवा सुनावै सो मनुष्य सम्पूर्ण कर्मों से मुक्त होजाय ॥ ७८ ॥

हे राजपुत्रो ! मेरे गाये हुये परम पुरुष के स्तोत्र को आप लोग एकाग्र चित्त होकर जपते रहो तब अपने मनोरथ को प्राप्त होजाओगे ॥ ७९ ॥

इति श्रीभागवत चतुर्थस्कन्ध चौबीसवांअध्यायका
भाषानुवाद लक्ष्मणाचार्य कृत
समाप्त ॥ २४ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे चतुर्विंशोऽध्यायः समाप्तः

---

[ १०३ ]

## ॥ पञ्चविंशोऽध्यायः ॥

—○:*:○—

॥ मैत्रेय उवाच ॥

इति सन्दिश्य भगवान् वार्हिषदैरभिपूजितः ।
पश्यतां राजपुत्राणां तत्रैवान्तर्दधे हरः ॥ १ ॥
रुद्रगीतं भगवतः स्तोत्रं सर्वे प्रचेतसः ।
जपन्तस्ते तपस्तेपुर्वर्षाणामयुतं जले ॥ २ ॥
प्राचीनवर्हिषं चत्तः ! कर्मस्वासक्तमानसम् ।
नारदोऽध्यात्मतत्त्वज्ञः कृपालुः प्रत्यबोधयत् ॥ ३ ॥
श्रेयस्त्वं कतमद्राजन् ! कर्मणात्मन ईहसे ।
दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह चेष्यते ॥ ४ ॥

॥ राजोवाच ॥

न जानामि महाभाग ! परं कर्मापविद्धधीः ।
ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः ॥ ५ ॥
गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः ।
न परं विन्दते मूढो भ्राम्यन् संसारवर्त्मसु ॥ ६ ॥

॥ नारद उवाच ॥

भो भो ! प्रजापते ! राजन् पशून् पश्य त्वयाध्वरे ।
संज्ञापितान् जीवसङ्घान्निर्घृणेन सहस्रशः ॥ ७ ॥
एते त्वां संप्रतीक्षन्ते स्मरन्तो वैशसं तव ।
सम्परेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः ॥ ८ ॥
अत्र ते कथयिष्येऽमुमितिहासं पुरातनम् ।
पुरञ्जनस्य चरितं निबोध गदतो मम ॥ ९ ॥
आसीत् पुरञ्जनो नाम राजा राजन् ! बृहच्छ्रवाः ।
तस्याविज्ञातनामासीत् सखाऽविज्ञातचेष्टितः ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रचेतस्सु तपस्यत्सु तत्पित्रे नारदो घृणी ।
प्राचीनबर्हिषेऽध्यात्मं पारोक्ष्येणाह पञ्चभिः ॥ १ ॥

पुरञ्जनकथाव्याजात्पञ्चविंशे तु नारदः ।
आत्मनो बुद्धिसङ्गेन विविधामाह संसृतिम् ॥ २ ॥

प्रचेतस्सु तपस्तीव्रं तप्यमानेषु नारदः ।
पुरञ्जनकथाकूटं प्राह प्राचीनबर्हिषे ॥ ३ ॥ ॥ १ ॥ २ ॥

प्रचेतस्सु तपश्चरत्सु नारदः प्राचीनबर्हिषं बोधितवान् अतः प्रचेतसां कथामसमाप्यैव तत्पितुर्वृत्तमाह । प्राचीनबर्हिषमिति ॥ ३ ॥

श्रेयःफलमीहसे इच्छसि इह कर्माणि तदुभयं नेष्यते वि[illegible] रक्तैः ॥ ४ ॥

परं श्रेयो मोक्षम् कर्मभिरपविद्धा विक्षिप्ता धीर्यस्य ॥ ५ ॥
किञ्च गृहेषु स्थितः पुत्रादिष्वेव पुरुषार्थधीर्यस्य ॥ ६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका

कर्मफलेषु वैराग्यमुत्पाद्य ब्रह्मविद्यामुपदेष्टुं योगानुभावेन यज्ञपशून्प्रत्यक्षं प्रदर्शयाह । भो भो इति । संज्ञापितान्मारितान् ॥७॥

एते त्वां सम्परेतं मृतं सम्प्रतीक्षन्ते वैशसं त्वत्कृतां पीडां स्मरन्तः ततश्चायःकूटैर्लोहयन्त्रमयैः शृङ्गैश्छिन्दन्ति छेत्स्यन्ति ॥८॥

अत्रास्मिन्सङ्कटे निस्तारकममुमितिहासं कथयिष्यामि ॥ ९ ॥

तत्र जीवस्य विषयासक्त्या संसारः सचेश्वरानुग्रहेण निवर्तत इति वक्तुं विपर्ययगृहीतस्य साक्षाद्बोधयितुमशक्ते राजवृत्तान्तमिवाह । आसीदिति । पुरञ्जनादीन्स्वयमेवैतः पञ्चमेऽध्याये व्याख्यास्यति तथापि सुखग्रहणाय यथोपयोगं किञ्चित्किञ्चिद्व्याख्यास्यामः तत्र स्वकर्मभिः पुरं शरीरं जनयतीति पुरञ्जनो जीवः न विज्ञातं नाम यस्य नच विज्ञातं चेष्टितं यस्य स ईश्वरस्तस्य सखा यद्वा विज्ञातं चेष्टितं जीवप्रेरणादिलक्षणं यस्य जीवपारतन्त्र्यस्यानुभवसिद्धत्वात् ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं रुद्रोपदिष्टभगवत्स्तोत्रतदाराधनप्रकारेषु प्रचेतस्सु तपश्चरत्सु प्राचीनबर्हिर्नारदोपदिष्टाध्यात्मपारोक्ष्यः पुत्रेष्वारोपितमहाभारो भगवन्तमुपास्य तल्लोकमगादित्याह मुनिः पञ्चभिरध्यायैः । इत्युक्तप्रकारं संदिश्य उपदिश्य भगवान् रुद्रः बार्हिषदैः सम्यक् पूजितः राजपुत्राणां प्रचेतसां पश्यतां सतां तत्रैवान्तर्हितवान् ॥ १ ॥

तत इदं रुद्रेण गीतं भगवत्स्तोत्रं जपन्तः प्रचेतसो वर्षाणामयुतं दशसाहस्रवर्षपर्यन्तं जले तपस्तेपुः पाकं पचतीति वन्निर्देशः तपश्चक्रुरित्यर्थः ॥ २ ॥

प्राचीनबर्हिषमिति । हेक्षत्तर्विदुर ! तत आत्मविद्याविशारदो भगवान् आगत्य केवलं कर्मस्वेवासक्तचित्तं प्राचीनबर्हिषं बोधितवान् ॥ ३ ॥

बोधनप्रकारमेवाह । श्रेय इति । अत्र प्रचेतसां कथामसमाप्यैवान्तरा प्राचीनबर्हिषः कथावशिष्टा प्रस्तूयते इत्यवगन्तव्यम् हेराजन्नात्मने स्वस्मै कर्मणानुष्ठीयमानेन यज्ञादिकर्मणा कतमत् श्रेयः किम्वा श्रेयः साध्यमीहसे इच्छसि दुःखनिवृत्तिः सुखावाप्तिश्चेदिष्यते तर्हि इह कर्मणि तदुभयं नेष्यते केवलकर्मणा तदुभयं न साध्यत इत्यर्थः ॥ ४ ॥

एवं केवलकर्मणामपुरुषार्थसाधनतां प्रतिबोधितः उद्विग्नमना राजाह । नेति । हे महाभाग ! कर्मभिराक्षिप्ता धीर्यस्य सोऽहं परं श्रेयो न जानाम्यतस्त्वं विमलमन्दः करणैर्मल्यापादकं ज्ञानं मे मह्यं ब्रूहि उपदिश येन ज्ञानेनाहं कर्मरूपाद्बन्धनाद्बन्धपाशान्मुच्येय मुक्तो भवेयम् ॥ ५ ॥

कूटधर्मेषु अतिवाल्यधर्मेष्ववर्जनीयप्रवृत्तिधर्मेष्विति यावत् अत एव संसारद्वारेषु भ्राम्यन्ममताङ्कुर्वन्पुत्रादिष्वर्थधीः पुरुषार्थबुद्धिरतएव मूढो मादृशः परं श्रेयो न विन्दते ॥ ६ ॥

कर्मफलेषु वैराग्यमुत्पाद्य ब्रह्मविद्यामुपदेष्टुं योगानुभावेन यज्ञपशून्प्रत्यक्षं प्रदर्शयाह । भोभो इति । हे प्रजापते राजन् ! अध्यात्मतत्त्वश्रोतृत्वाभप्रयुक्तादरात्सम्भ्रमाद्वा भोभो इति द्विरुक्तिः यद्वा हेप्रजापते हेराजन्निति विशेषणद्वयाभिप्रायेण द्विरुक्तिः निष्करुणेन त्वयाध्वरे संज्ञपितान्मारितान् जावसङ्घरूपान् पशून् सहस्रशः पश्य ॥ ७ ॥

एते पशवः तव वैशसं त्वत्कृतां पीडां स्मरन्तः त्वां सम्परेतं मृतं प्रतीक्षन्ते कदायं मरिष्यतीति प्रतीक्षन्त इत्यर्थः यदा च त्वं मरिष्यसि तदैते पशव उत्थितमन्यवः सञ्जातक्रोधा अयःकूटैर्लोहवदतिशीर्णैः शृङ्गैः त्वां छिन्दन्ति छेत्स्यन्ति ॥८॥

ननु "नवाउवेतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिः सुगेभिः यत्र यन्ति सुकृतो नापि दुष्कृतः तत्रत्वा देवः सविता दधातु" इति याज्ञीयसंज्ञपनस्य हिंसात्वाभावश्रवणात्तादात्विकदुःखजनकत्वेऽपि निहीनपशुजन्मनिवर्तनद्वारा स्वर्गोपभोगयोग्यसुन्दरतरजन्मसम्पादकत्वेन तादात्विकदुःखादिजनकौषधपानकर्णच्छेदनचौरादिकर्मकारयितृचिकित्सकपित्रादिवद्धितकारिणि संज्ञपितरि पशूनां क्रोधासम्भवाच्च कथमेवमुच्यते इतिचेन्न कर्मफलेषु वैराग्यजननार्थत्वेनान्यपरत्वात्तदुक्तेः अत एव वैराग्योदयायान्यापदेशमुखेनाध्यात्मोपदेशात्मकमितिहासं प्रस्तोतुं प्रतिजानीते । अत्रेति । अत्र निरतिशयपुरुषार्थतत्साधनाद्यज्ञानरूपे सङ्कटे तत्त्वहितपुरुषार्थनिश्चायकं पुरातनं पुरञ्जनाख्यराजचरित्रात्मकमितिहासं ते तुभ्यं कथयिष्ये गदतः इतिहासं सम्यक् कथयतः मम मत्तः सकाशान्निबोध अवहितमनाः शृणु ॥ ९ ॥

एवं प्रतिज्ञायेतिहासं प्रस्तौति । आसीदिति । अत्रान्यापदेशमुखेनाध्यात्मोपदेशः क्रियते ननु साक्षादेवाध्यात्मोपदेशः किन्न क्रियते साक्षात्तदुपदेशेऽपि वैराग्योदयसम्भवात् उच्यते देहात्माभिमानस्वतन्त्रात्माभिमानग्रस्तस्य तत्त्वहितपुरुषार्थाद्यनभिज्ञस्य वैषयिकमेव सुखं परमं पुरुषार्थमभिमन्यमानस्य हठात्तत्त्वोपदेशः क्रियमाणोऽपि न सुप्रतिष्ठितः स्यादित्यालोच्य चिरमनभ्यस्तस्त्रीपुन्नपुंसकगर्भजन्मजरामरणजाग्रत्स्वप्नसुषुप्त्याद्यात्मकसंसारमनुवर्ण्य तत्र दोषानुद्घाट्य हेयतावुद्ध्युत्पादनद्वारा क्रियमाणस्तत्त्वोपदेशः सुप्रतिष्ठितः स्यादिति तत्र जीवो राजत्वेन शरीरं पुरत्वेन परमात्मा सखित्वेन बुद्धिर्भार्यात्वेन च निरूप्यते तत्र पुरञ्जनादीन्स्वयमेवेतः पञ्चमाध्यायं व्याख्यास्यति तथापि सुखग्रहणाय किञ्चिद्व्याख्यास्यामः । तत्र हेराजन् ! पुरं शरीरं व्यनक्ति जनयति निर्मापयतीति पुरञ्जनः कश्चिद्राजा स्वकर्मभिः पुरःस्थानीयशरीरोत्पादकजीवस्थानीयो विवक्षितः आसीदित्यनेन निरूपणीये जीवेऽनादिसत्ता विवक्षिता तं विशिनष्टि पृथुश्रवाः पृथुश्रवः कीर्तिर्यस्य "निर्याणमयमेवायमात्मा" प्रजापति वाक्ये "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः ।

> अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च
> नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः

इत्यादिश्रुतिस्मृतिप्रसिद्धकल्याणगुणगणविशिष्ट इत्यर्थः तस्य पुरञ्जनस्य अविज्ञातं नामधेयं यस्य स तथाभूतः कश्चिद्विज्ञानचेष्टितः सखा आसीत् अत्र परमात्मस्थानीयं मित्रं विवक्षितं परमात्मा हि जीवस्य मित्रं श्रूयते "माता पिता भ्राता निवासः शरणं सुहृद्गतिश्च नारायणः" इति एवं हिताचरणशीलं सखायं परमात्मानं तदाज्ञामतिलङ्घ्यायं संसारी जीवः नामतोऽपि न जानाति किमुत स्वरूपरूपगुणविभूतिभिरितिख्यापनायाविज्ञातनामेत्युक्तं यद्वा सखेत्यनेनाभिप्रेतं यद्दोषानपेक्षणेन हिताचरणशीलत्वं तत् स्थापयितुमविज्ञातनामेत्युक्तम् अविज्ञात इति "गतिबुद्धिशब्दार्थेभ्यश्च" इति कर्तरिक्तः अविज्ञातेत्यर्थः अविज्ञाता सहस्रांशुरित्यविज्ञातृशब्दो हि नामसहस्रे भगवन्नामतया विनियुक्तः तत्र स्वाश्रितान् स्वसमत्वेनानुसन्धाय तद्धितपरा-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परोऽपकारुण्यपरवश आश्रितदोषान्न जानातीत्यविज्ञाते त्याभियुक्तैर्व्याख्यातम् एवं च विपुलापराधवत्त्वेऽपि संश्रयणमात्ररूपकिञ्चिदानुकूल्येन रिरक्षिपुरित्यर्थः इह विज्ञात शब्दः कर्तृसाधनः कान्त इति विशेषः अविज्ञातचेष्टित इति च्छेदे जीवेनाविज्ञातं चेष्टितमन्तः प्रविश्य नियमनादिरूपं यस्य स इत्यर्थः कथापक्षे तु अन्यैरविज्ञातचेष्टित इत्यर्थः विज्ञातचेष्टित इतिच्छेदे तु प्रसिद्धञ्जगद्व्यापाररूपं चेष्टितं यस्य सः यद्वा विज्ञातं चेष्टितं जीवप्रेरणादिलक्षणं यस्य सः जीवपारतन्त्र्यस्यानुभवसिद्धत्वादिति भावः कथापक्षे तु राजवत्सखापि विपुलकीर्त्यादियुक्त इत्यर्थः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अध्यात्ममगर्भपुरञ्जनोपाख्यानप्रकथनेन संसारसागरे दुराग्रहग्राहदुरवगाहे निमज्जतां दूरीकृतसत्सङ्गानां हरिचरणारविन्दमकरन्दसेवानभिज्ञानां गमागमादि नाना व्यसनभराक्रान्तशिरोधराणां शिशुकलत्रापत्याहतश्रवणानां कुटुम्बभरणातिवाहितदिनकरगमागमानां पुरुषाणां वैराग्यरसानुभावितनिपुणबल भक्तिप्रदीपानुगृहीतापवर्गलक्षण पुरुषार्थसाधन भगवदपरोक्षज्ञानललनाकटाक्ष प्रसन्नमुरमथन प्रसादपरशुमन्तरेण संसारतरुच्छेदो न स्यादिति तादृशी साधनसामग्री निरूप्यते पञ्चस्वध्यायेषु तत्रोपोद्घातं रचयति । इतीति ॥ १ ॥

रुद्रान्तर्धानानन्तरं प्रचेतोभिः किमकारीति तत्राह । रुद्रगीतमिति ॥ २ ॥

एतदन्तरे श्रोतुं योग्यां कथां वद तत्कथाशेषं तदनन्तरं श्रोष्याम इति क्षत्तुरान्तरीं शङ्कां मैत्रेयः परिहरतीत्याह । प्राचीनबर्हिषमिति । स्यात्कृपालुः कारुणिक इति वचनात्साधुरयं शब्दः ॥ ३ ॥

ईहया कर्मणा श्रेयसामवाप्तिरिष्यते त्वं तत्र श्रेयसां कतमच्छ्रेय आत्मन ईहसे कर्मणेच्छसि एतदेव विशिनष्टि । दुःखहानिरिति । अत्रायं भावः पुरुषार्थिना पुरुषेण प्रार्थ्यानि श्रेयांसि बहूनि सन्ति तेषां कतमच्छ्रेयो दुःखहानिलक्षणमुतसुखावाप्तिमथवोभयमथान्यत्तदपत्यादिलक्षणमिति । इह कर्मणि तदुभयं न॥ ४ ॥

अत्र राजा सर्वश्रेयोऽवाप्तौ मुख्यसाधनं ज्ञानमेवेति नारदस्य हार्दं विद्वांस्तदेव भवतोपदेष्टव्यमिति प्रार्थयते । न जानामीति । नारदेन सहोत्तरप्रत्युत्तरायासान्नजानामीति वाक्यं सुखमिति मन्वानेन तत्तथोक्तम् ॥ ५ ॥

काम्यधर्ममयेषु गृहाश्रमेषु पुत्रादिरेवार्थ इति धीर्यस्य स तथा ॥ ६ ॥

यद्यपि कर्मज्ञानोत्पत्तौ सहकारि तथापि कर्तुमसुखकमिति मत्वा निन्दति । भोभोइति ।

> यथावत्कर्मकर्तुस्तु ज्ञानं साहाय्यकारकम् ।
> अन्यथा कुर्वतः कर्म निरयाय भविष्यति ।
> तथापि कर्म निन्दन्ति तपतः कर्तुमञ्जसा ।
> शक्यं ज्ञानफलस्यापि बहुत्वान्मोहनायच ।

इतिवचनान्निन्दनं युक्तम् । तस्मात्कर्मविधानं च न व्यर्थमिति तात्पर्यार्थ इति निरणायि संज्ञापिताहिंसितान् ॥ ७ ॥

सम्प्रति तेऽप्य उपद्रवाभावेऽपि परत्रास्तीत्याह । एते ... वैशसं शस्त्रेण छेदनं संपरेतं मृतम् अयोनिर्मिता आयुधाः कूटाः ।

कूटोऽस्त्रीपुञ्जमायाद्येष्वद्रिशृङ्गेपुभेदयोरिति यादवः ।

अत्रेममर्थमितिहासेन बोधयिष्यामीत्याह । अत्रेति । पुरा... अतति सततं विषयीकृत्य वर्तत इति पुरातनमभ्याख्या... मित्यर्थः । अततसातत्यगमन इति धातुः । अन्यथा इति हासः पुरा... मितिवाक्यात् पुनरुक्तं स्यात् कमधिकृत्य वर्तत इत्यत... पुरञ्जनस्येति ॥ ८ ॥

पुरञ्जनो नामकः यमाश्रित्येयं कथा वर्तते वृहच्छ्रवा ... विशिष्टो जीवो भवतीत्युच्यते अभिमानेन सर्वेषां जीवानां ... भिमानी चतुर्मुखो ब्रह्मा देवानां विशेषतः अत्र पुरञ्जनस्तु ... क्षत्रियो मुक्तियोग्योऽसुरान्विना मनुष्यजीवाभिमानी अतु ... कलिः तत्र जीवसंसारज्ञप्त्यै श्रोतॄणां पापपरिहाराय ... वृद्धये च नारदेन पुरञ्जनस्य कथाप्रसङ्गोऽकारीति तदुक्तम् ।

> देवजीवाभिमानी तु ब्रह्मैव तु चतुर्मुखः ।
> मनुष्याणां तु जीवानामभिमानी पुरञ्जनः ।
> स तु राजा हरेः पुत्रश्चासुराणां कलिः स्वयम् ।
> जीवसंसृतिवित्तस्मात्पुरञ्जनकथापि तु ।
> तस्माज्जीवसृतिज्ञप्त्यै पुरञ्जनकथां मुनिः ।
> नारदोऽश्रावयत्तस्मान्नृपं प्राचीनबर्हिषम् ।
> प्रायस्तु तत्कथाजीवे स्थिता प्रत्येकशोऽपितु ।
> प्रत्येकं यत्तु युज्येत तदुक्तेयं यथा तथा ।
> उक्तं भागवतेऽप्येतत्पुराणे यावदिष्यते ।
> प्रत्येकशस्तु जीवानां तदन्यत्तस्य केवलमिति ।

अतोऽत्र यथा सम्भवं तत्तत्पदानि तत्तदर्थपरतया योज... तात्पर्यं ज्ञायते पुरं स्वयोग्यानन्दपूर्त्तिं जनयिष्यति व्युत्प... तीति पुरञ्जनः । पृपालनपूरणयोः । अन्यस्तु कर्मभिः ... शरीराणि चतुर्विधानि जनयतीति निर्वक्तव्यम् आ... द्रुपादित्यादेः क्षत्रजातिज्ञापनाय । राजेति । इतिहासत्वद्यो... सीदिति । तस्य पुरञ्जनस्य शरीरिणोऽपि नामरूपादि... न ज्ञायत इत्यविज्ञातं नाम यस्येति । सोऽविज्ञातनाम... सखासीदित्यन्वयः । द्वासुपर्णेत्यादि श्रुतेः । अन्यस्तु ... तर्हि शून्य इत्यतो विज्ञातेति विज्ञातं चेष्टितं जगत्सृ... लक्षणं यस्य स तथा अन्यो नीतिशास्त्रप्रसिद्धव्यापारः ...

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जपरूपमेव तपश्चक्रुरित्यर्थः ॥ १—२—३ ॥

दुःखहानिः सुखावाप्तिरेव श्रेयः पुरुषस्यार्थः तत्तु कर्मणि नेष्यते । कर्मसम्पाद्यस्य सुखस्यापि दुःखसम्भि... सान्तत्वाच्च । नेह येष्याते इति चित्तसुखः ॥ ४ ॥

कर्मोपविद्धधीः सन् परं श्रेयः साधनं श्रेयश्च न जा... तस्मात् विमलं ज्ञानं साधनसाध्यान्तरगतं ब्रूहि ॥ ५—...

तत्र तस्य शुद्धसत्त्वाधिकारित्वममन्वानो मुक्तिसाधन... श्चामेव भक्तिमुपदेष्टुं तादृशीमेव कथामवतारयति । अत्रेति... हासं पुरातनमिति मुनेर्नेः मिथ्यावचनम् । पूर्ववृत्तमिदम... दसम्बाचापि प्रायः स्यादिति । एवमेव हि तत्तत्कथा... तिश्च स्यात् तथैव वक्ष्यति प्राकारेत्यादि ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अविज्ञात इति नाम यस्य दुर्ज्ञेयत्वादिति भावः ॥१०-११-१२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्राचीनबर्हिषं कर्ममग्नं राजकथामिषात् ।
नारदः पञ्चविंशाद्यैः पञ्चभिः प्रत्यबोधयत् ॥ ० ॥
पञ्चविंशे पुरञ्जन्याः सङ्गं प्राप्य पुरञ्जनः ।
नवद्वारे पुरे तस्या रेम इत्यनुवर्ण्यते ॥ ० ॥

यदैव रुद्रः स्वगीतं स्तोत्रं प्रचेतस उपदिदेश । तदैव तत्पितरं प्राचीनबर्हिषं नारदोऽपि पुरञ्जनोपाख्यानेन ज्ञानवैराग्यभक्तीरुपदिदेशेति प्रचेतसां कथामसमाप्यैव तत्पितुः कथामाह। प्राचीनेति । हन्त ! हन्त ! मत्प्रियशिष्यस्य ध्रुवस्य वंशोऽयं कर्मणि निमज्जति तदिममुद्धरामीति कृपालुः ॥ १ ॥ २ ॥ ३ ॥

श्रेयो नेष्यते इह कर्मणि न लभ्यते कर्म सम्पाद्यस्य सुखस्यापि दुःखमिश्रत्वात् नश्वरत्वाच्च ॥ ४ ॥

कर्मभिरपविद्धधीर्विक्षिप्तबुद्धिः ॥ ५ ॥

गृहस्थः सर्व एव मादृश इत्याह । गृहेष्विति ॥ ६ ॥

कर्मफलेषु वैराग्यमुत्पादयितुं योगबलेन यज्ञपशून् प्रत्यक्षं प्रदर्शयन्नाह भो ! भो ! इति संज्ञपितान् मारितान् ॥ ७ ॥

कदायं मरिष्यतीति त्वां प्रतीक्षन्ते वैशसं त्वत्कृतं स्वशरीरच्छेदम् । अतः सम्परेतं त्वामयःकूटैर्लोहयन्त्रमयैः शृङ्गैश्छिन्दन्ति वर्त्तमाननिर्देशेनाविलम्बवत् एव छेत्स्यन्ति ॥ ८ ॥

वैषयिककथाप्रियमिमं वैषयिककथयैव प्रबोधयामीति मनसि विचार्य्य तस्यैव प्राचीनबर्हिषः कथामेव कथान्तरकल्पनया अप्रस्तुतप्रशंसालङ्कारेण तत्प्रबोधे कारणीकुर्वन्नाह । अत्रेति । स्पष्टं वस्तुतस्तु ते तवैव चरितं कीदृशस्य पुरमेतत् शरीरं स्वकर्मणा जनयतीति तस्य पुरञ्जनस्य पुरातनं मातृगर्भप्रवेशात् पूर्वमप्यारभ्येत्यर्थः ॥ ९ ॥

आसीदिति । पुरञ्जनादीन् स्वयमेव इतः पञ्चमेऽध्याये व्याख्यास्यते तदपि सुखग्रहणाय यथोपस्थिति व्याख्यास्यामः। पुरञ्जनो जीवः आध्यात्मादिभिर्विराजमानत्वाद्राजा । अवो यशः दृष्टादृष्टसुखसाधनकर्मादिशुश्रूषुत्वात् श्रवः श्रवणञ्च । अविज्ञातं नाम यस्य न विज्ञातं चेष्टितं यस्य स ईश्वरस्तस्य सखा । यद्वा । विज्ञातं चेष्टितं जीवप्रेरणादिकं यस्य जीवपारतन्त्र्यस्यानुभवसिद्धत्वात् ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ रुद्रोपदेशतो हरिं ध्यायत्सु प्राचीनबर्हिष्पुत्रेषु प्राचीनबर्हिषःआत्मानात्मपरमात्मविवेकं भगवज्ज्ञानभक्त्युत्पत्तये आह पञ्चभिरध्यायैः। तत्र जीवस्य बुद्धिसङ्गेन विचित्रां संसृतिं पञ्चविंशेनाध्यायेन इति पूर्वोक्तं हरिभजनप्रकारं संदिदृशोपदिदृश्य बर्हिषदः प्रचेतोभिः ॥ १ ॥ २ ॥

प्रत्यबोधयत् मुमुक्षुं कृतवान् ॥ ३ ॥

कर्मणा आत्मनः कतमत् श्रेयः ईहसे इच्छसि श्रेयस्तु दुःखहानिः सुखावाप्तिश्च प्राकृतमण्डलमतिक्रम्य भगवद्धामावाप्तिः श्रेयः इष्यते ।

निरञ्जनः परमं साम्यमुपैतीत्यादिश्रुतिभिः ।

इह कर्मणि च नास्त्यकृतं कृतेनेत्यादिश्रुत्या तन्नेष्यते इत्यन्वयः ॥४॥

हे महाभाग ! कर्मभिरपविद्धा विमोहिता धीर्यस्य सोऽहं परं श्रेयः दुःखहानिपूर्वकसुखावाप्तिलक्षणं मोक्षं न जानामि ॥ ५ ॥

कूटाः कपटरूपाः धर्माः येषु अत एव संसारवर्त्मसु नरकप्रापकेषु धीः पुरुषार्थबुद्धिर्यस्य सः भ्राम्यन् परं त्वदुक्तं श्रेयो न विन्दते ॥ ६ ॥

मुमुक्षुर्भूत्वात्मन्यात्मानं पश्येदिति

श्रुतेस्तस्य मुमुक्षामुत्पाद्य आत्मानात्मविवेकपूर्वकं परमात्मज्ञानमुपदेष्टुं योगबलेन यज्ञपशून् प्रत्यक्षं प्रदर्श्याह । भगवान्नारदः भो भो ! इत्यादि त्वया संज्ञापितान् मारितान् ॥ ७ ॥

वैशसं त्वत्कृतं हिंसनम् अयःकूटैः लोहमयशृङ्गैः छिन्दन्ति छेत्स्यन्ति ॥ ८ ॥

अत्र काम्यकर्मासक्तित्यागपूर्वकनिःश्रेयससाधनग्रहणे ते तुभ्यमितिहासं कथयिष्ये तदाह । पुरञ्जनस्य चरितं निबोधेति ॥ ९ ॥

अनादिमायामोहितो जीवः सर्वज्ञं परमानन्दं श्रीवासुदेवमन्तर्यामिरूपेण सदा सह चरन्तमपि स्वस्वामिनं विस्मृत्य मायाकार्येषु देवमनुष्यादिदेहेषु बुद्ध्यानुवर्तितया भ्रमति स यदा ब्रह्मविद्रूपदेशेनात्मानात्मपरमात्मविवेकं प्राप्य परमात्मज्ञानभक्तिमान् भवेत्तदा मुक्तः स्यात् तदर्थं श्रीनारदः साक्षादध्यात्मानात्मविवेकादिकमुपदेष्टुं शक्तस्तथापि राजस्वभावानुसारेण राजरूपकेनोपदेशं करोति । आसीदित्यादिना । तत्रैकोनत्रिंशाध्यायगतदेवर्षिव्याख्यानुसारेण पुरञ्जनादिपदानि सुखबोधाय व्याख्यायन्ते कर्मणा तत्फलं भोक्तुं पुरं जनयतीति पुरञ्जनो नाम राजा मायायां राजमानो जीव आसीत्तस्य राज्ञः आसमंतात् विज्ञातानि नामानि यस्य आसमंतात् विज्ञातं चेष्टितं कर्म यस्य आसमंतात् विज्ञातं सर्वेषां चेष्टितं येन वा सः सर्वलोकवेदप्रसिद्धः सर्वज्ञः सखा आसीदित्यन्वयः ।

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः
पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति
सर्वनामा सर्वकर्मा यः सर्वज्ञः इत्याद्याः
श्रुतय अत्रानुसंधेयाः ॥ १० ॥

---

भाषाटीका ।

मैत्रेयजी बोले भगवान् श्री महादेवजी ने ऐसा उपदेश किया तब प्रचेतों ने पूजा की तब राजपुत्रों के देखतेही महादेवजी वहीं अन्तर्धान होगये ॥ १ ॥

वे सब प्रचेता रुद्र गीत भगवान् के स्तोत्र को जपते हुए दश हजार वर्ष पर्यन्त जलके मध्य में तपस्या करते रह गये ॥ २ ॥

हे विदुरजी ! कर्म में जिनका मन लगा है ऐसे प्राचीन बर्हि के ऊपर कृपालु होकर अध्यात्म तत्त्व के जानने वाले श्री नारदजी ने जाकर उनको चेताया ॥ ३ ॥

नारदजी बोले हे राजन् ! कर्म से तुम अपना क्या कल्याण चाहते हो दुःख का नाश होना सुखका मिलना दो श्रेय हैं सो तो कर्म मार्ग में विचारवान् को कुछ नहीं है ॥ ४ ॥

सोऽन्वेषमाणः शरणं बभ्राम पृथिवीं प्रभुः ।
नानुरूपं यदाविन्ददभूत्स विमना इव ॥ ११ ॥
न साधु मेने ताः सर्वा भूतले यावतीः पुरः ।
कामान् कामयमानोऽसौ तस्य तस्योपपत्तये ॥ १२ ॥
स एकदा हिमवतो दक्षिणेष्वथ सानुषु ।
ददर्श नवभिर्द्वार्भिः पुरं लक्षितलक्षणाम् ॥ १३ ॥
प्राकारोपवनाट्टालपरिखैरक्षतोरणैः ।
स्वर्णरौप्यायसैः शृङ्गैः सङ्कुलां सर्वतो गृहैः ॥ १४ ॥
नीलस्फटिकवैदूर्यमुक्तामरकतारुणैः ।
क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमिव ॥ १५ ॥
सभाचत्वररथ्याभिराक्रीडायतनापणैः ।
चैत्यध्वजपताकाभिर्युक्तां विद्रुमवेदिभिः ॥ १६ ॥
पुर्यास्तु बाह्योपवने दिव्यद्रुमलताकुले ।
नदद्विहङ्गालिकुलकोलाहलजलाशये ॥ १७ ॥
हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना ।
चलत्प्रवालविटपनलिनीतटसम्पदि ॥ १८ ॥
नानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः ।
आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः ॥ १९ ॥
यदृच्छया गतां तत्र ददर्श प्रमदोत्तमाम् ।
भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः ॥ २० ॥

भाषाटीका

राजा बोले हे महाभाग ! श्री नारदजी मैं नहीं जानता हूं केवल कर्म मे मेरी बुद्धि फसी है अब आप निर्मल ज्ञानकहो जिससे मैं कर्मों से छूट जाऊं ॥ ५ ॥

घरों मे काम्य कर्मों को करता हुआ पुरुष पुत्र स्त्री धन इनमे यथार्थ बुद्धि करके मूर्ख होकर संसारके मार्ग मे लगा हुआ मोक्ष को नहीं जानता है संसार के मार्ग मे घूमता रहता है ॥ ६ ॥

नारदजी बोले हे राजन् प्रजापते ! तुमने निर्दयी होकर जिन हजारों पशुओं को यज्ञ में मारा है उन जीवों को तुम देखो ॥ ७ ॥

ए सब तुमारा रस्ता देख रहेहैं तुमारी घातक हिंसा को स्मरण करते हैं तुम जब मरोगे तब लोहा के शस्त्रों से तुमको मारेंगे इनको बडा क्रोध होरहा है ॥ ८ ॥

इस विषय मे हम तुमसे इस पुरातन इतिहास को कहेंगे यह पुरञ्जनका चरित्र है हमारे कहने से इसका श्रवण करो ॥ ९ ॥

हे राजन् ! बडा यश वाला एक पुरंजन नामक राजा था अज्ञात नामका एक उसका सखा था ( ईश्वर ) अथवा [illegible] चेष्टा को कोई भी नहीं जानता है ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शरणं भोगायतनं देहं पृथिवीं तदुपलक्षितं ब्रह्माण्डम् ॥ [illegible] यावत्यः पुरस्तास्तस्य तस्य कामस्योपपत्तये प्राप्तये [illegible] साधु न मेने गवादिदेहानामैहिकपारलौकिकभोगभोग्य[illegible] घात् । तथा च श्रुतिः । "ताभ्यो गामानयत्ता अब्रुवन्नवै नोऽ[illegible]मिति ताभ्योऽश्वमानयत्ता अब्रुवन्नवै नोऽयमलमिति" इति ॥ [illegible]

हिमवतो दक्षिणेषु सानुषु कर्मक्षेत्रे भारतवर्षे पुरं [illegible] शरीरम् लक्षितानि दृष्टानि सर्वाणि लक्षणानि यस्याम् [illegible] पङ्गुत्वादिदोषरहितामित्यर्थः ॥ १३ ॥

तामनुवर्णयति त्रिभिः । अत्र किञ्चित्किञ्चित्सादृश्यमा[illegible] कथासौन्दर्याय प्राकारादीनि वर्ण्यन्ते । परिखैरिति । पुं[illegible] मक्षाणीन्द्रियाणि गवाक्षाः त्वगादयः शरीरावयवाः [illegible]

श्रीधरस्वामिकृतभावार्थदीपिका

पुरावयवत्वेन निरूप्यन्ते स्वर्णादिशृङ्गैः शिखरैर्युक्ता ये गृहास्तैः सङ्कुलामिति आधारादिचक्राणि गृहाः शृङ्गाणि च राजसादिस्वभावा विवक्षिताः ॥ १४ ॥

नीलादिभिः क्लृप्ता हर्म्यस्थली यस्याम् । अयथां माणिक्यम् स्थली हृदयम् नाड्यो नीलादिभावेन निरूप्यन्ते तच्चाद्विषयवासना वा । भोगवतीं नागानां पुरीमिव ॥ १५ ॥

सभा समाजस्थानम् चत्वरं चतुष्पथः रथ्या राजमार्गः आक्रीडायतनं द्यूतादिस्थानम् आपणो हट्टस्तैः चैत्यं जनानां विश्रामस्थानम् ध्वजेषु पताकास्ताभिश्च युक्ताम् ॥ १६ ॥

अत्र च विषयनिष्ठबुद्धियोगेन जीवस्य देहसम्बन्ध इति विवक्षया विषयवर्गं बाह्योपवनत्वेन निरूपयति तद्विशेषान् स्रक्चन्दनादीन् दिव्यद्रुमलतादिभावेन शेषः कथालङ्कारः बाह्योपवने प्रमदां ददर्शेति चतुर्थेनान्वयः नदतां विहङ्गालिकुलानां कोलाहलो येषु ते जलाशया यस्मिन् ॥ १७ ॥

हिमनिर्झराणां विप्रुषो बिन्दवस्तद्वता कुसुमाकरसम्बन्धिना वायुना चलन्तः प्रवाला विटपाः शाखाश्च येषां तैर्द्रुमैर्नलिनीनां सरसीनां तटेषु सम्पत्समृद्धिर्यस्मिन् ॥ १८ ॥

अनाबाधे तत्कृतबाधारहिते मुनिव्रतैरहिंस्रैः आत्मानमाहूतं मन्यते यत्र ॥ १९ ॥

तत्र प्रमदोत्तमां विषयविवेकवतीं बुद्धिं ददर्श यदृच्छयागतामिति तयोः सम्बन्धस्य दुर्निरूप्यत्वं दर्शयति । तामनुवर्णयति । सार्धैश्चतुर्भिः दशभिर्ज्ञानकर्मेन्द्रियैः एकैकं प्रत्येकं शतमनन्ता वृत्तयस्तासां नायकैः पतिभिः सह पाठान्तरे नायिकास्त्रियो येषां तैः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स पुरञ्जनः प्रभुः करणादिमत्त्वाच्छरण्यं भोगायतनं शरीरम् एकदाकथापक्षेवासस्थानमन्वेषमाणः पृथिवीं कर्मफलोदयतद्भोगायतनप्रकृतिपरिणामरूपं ब्रह्माण्डं बभ्राम देवादिस्थावरान्तशरीरेष्वनुप्रविष्टः प्रकृतिमण्डले संसरतीत्यर्थः कथापक्षे भूमण्डलस्थपुराण्यनुप्रविश्य तत्र कञ्चित्कालं निवसन् कृत्स्नां पृथिवीं चचारेत्यर्थः यदा च स्वस्यानुरूपं शरणं देवमनुष्यादिशरीरं नाविन्दत नालभत किन्तु तिर्यक्पादपादिशरीरमविन्दत तदा विमना इव बभूव पादपादिशरीरेषु चैतन्यानभिव्यक्तेर्धिमना इवेत्युक्तं निश्चैतन्य इवाभूदित्यर्थः ननु दुःखितमना इति देहात्माभिमानिनो जीवस्य निहीनशरीरस्यापि प्रीतिविषयत्वात् कथापक्षे तु दुःखितमना इवेत्यर्थः ॥ ११ ॥

कामान् भोग्यान् शब्दादीन् सर्वानपि कामयमानोऽसौ पुरञ्जनः तस्य तस्य शब्दादेर्विषयस्योपपत्तये लब्धयेभूतले यावत्यः पुरस्ताः सर्वाः पुरः साधु न मेने शब्दादिसर्वविषयोपभोगोपयुक्तशरीराणि कामयमानः केषु चिच्छरीरेषु केषांचिदिन्द्रियाणामनभिव्यक्तत्वादनभिव्यक्तकतिपयेन्द्रियशरीराण्यनुप्रविशन् तत्र सर्वविषयालाभात्तानि न साधु मेन इत्यर्थः कथापक्षे तु तत्र पुरि केषांचिद्भोग्यवस्तूनां सत्स्वेऽपि सर्वेषामभावान्न साधु मेन इत्यर्थः ॥ १२ ॥

एकदा सुकृतविशेषपरिपाकदशायां हिमवतो दक्षिणेषु सानुषु कर्मतत्फलोत्पत्तियोग्येषु कर्मक्षेत्रेषु भारतवर्षेषु इत्यर्थः पुरं मनुष्यशरीरं लक्षिणानि दृष्टानि सर्वाणि लक्षणानि यस्यां तामनवद्याङ्गादिदोषराहितामित्यर्थः कथापक्षे वक्ष्यमाणप्राकारादिसंचिन्होपयुक्तनवभिर्द्वारैः नवभीरन्ध्रैश्चक्षुर्द्वयश्रोत्रद्वयनासिकाद्वयमुखपायूपस्थरूपैर्लक्षितां पक्षान्तरे स्पष्टं ददर्श अभिव्यक्तसर्वेन्द्रियसर्वविषयभोगोपयुक्तं मनुष्यादिशरीरमुपलब्धवानित्यर्थः ॥ १३ ॥

कानि लक्षणानीति विचित्सायां तानि वदंस्तां पुरीमनुवर्णयति त्रिभिः । प्राकारेत्यादि । यद्यप्यत्रप्राकारादिसाधर्म्येण रूपणीयाः पदार्थाः शरीरे न सन्ति तथापि किंचित्साद्दश्यमवलम्ब्य कथासौन्दर्याय प्राकारादीन्यनुवर्ण्यन्ते परिखैरिति पुंस्त्वमार्षम् अन्यथा परवल्लिङ्गतायां परिखाभिरिति स्यात् अक्षा गवाक्षाः अत्र त्वगादयः प्राकारत्वेन रूप्यन्ते रोमपङ्क्तिरुपवनं स्कन्धोपरिभागोऽट्टालः रुधिरौघः परिखा नव रन्ध्राण्यक्षाः अक्षिपक्ष्मतोरणं स्वर्णादिशृङ्गैः शिखरैर्युक्ता ये ग्रहास्तैः संकुलां व्याप्तामत्र मूलाधारादीनि षट्चक्राणि गृहत्वेन रूप्यन्ते राजसत्वादिस्वभावाः शृङ्गत्वेन विवक्षिताः ॥ १४ ॥

नीलादिभिः क्लृप्ता हर्म्यस्थली यस्यां हर्म्यस्थलीति हृदयं विवक्षितं हृदयगताः शतैकनाड्यः केसरा वा नीलादिभावेन रूप्यन्ते अतो नानाकारनाडीभिर्व्याप्तत्वाद्भोगवती पुरी इव श्रिया दीप्ताम् ॥ १५ ॥

सभा समाजस्थानं चत्वरं चतुष्पथः रथ्या राजमार्गः आक्रीडायतनं द्यूतादिस्थानमापणो हट्टः चैत्यं जनानां विश्रामस्थानं ध्वजेषु पताकास्ताभिर्विद्रुमवेदिकाभिश्च युक्ताम् अत्र हर्म्यस्थलीत्वेन रूपितं हृदयमेव सभाचत्वरक्रीडायतनगुणाये गात्समादिभावेन रूप्यते हृदि ह्ययमात्मा प्रतिष्ठित इति जीवस्य हृदयस्थानत्वश्रवणाज्जीवाश्रितत्वाच्चेन्द्रियप्राणानां सर्वेन्द्रियकन्दरूपत्वाद्धृदयस्य सभारूपत्वात्तत एव चत्वररूपत्वमपि परमात्मनः क्रीडास्थानत्वात्क्रीडायतनं च चक्षुरादीन्द्रियस्थानानि हट्टः तेभ्यो हि शब्दादीन्याकृष्यानुभवति पुरञ्जनः सुषुम्णा रथ्या राजवद्गच्छतो जीवस्य मुक्तिमार्गत्वात्सुषुम्णायाः पुरीतत् चैत्यं जीवस्य सुषुप्तौ विश्रामस्थानत्वादाधारादिचक्रस्थाः कर्णिकाः विद्रुमवेदिका ध्वजपताकाः करतलपादनखानि ॥ १६ ॥

एवं देहं पुरभावेन रूपयित्वा विषयवर्गं देहानुबन्धि कलत्रापत्यादिवर्गं बाह्योपवनत्वेन रूपयति पुर्यादिति । बाह्योपवने प्रमदां ददर्शेति चतुर्थेनान्वयः दिव्यद्रुमाश्लिष्टलताभिराकुलेन नदतां विहङ्गानामलिकुलानां च कोलाहलो येषु ते जलाशया यस्मिन् तस्मिन् ॥ १७ ॥

हिमनिर्झराणां विप्रुषः बिन्दवस्ताः कुसुमाकरसंबन्धिना वायुना चलन्तः प्रवालविटपाः शाखा येषां तैर्द्रुमैः नलिनीतटेषु सम्पत्समृद्धिर्यस्मिन् ॥ १८ ॥

नानाविधैर्वन्यमृगसमूहैरनाबाधे तत्कृतबाधारहिते तत्र हेतुः मुनिव्रतैरहिंस्रैर्यत्रोपवने कोकिलकूजितैः पान्थः स्वात्मानमाहूतमिव मन्यते एवं विषयवर्गो बाह्योपवनत्वेन रूपितः तस्य शरीराद्बहिष्ठत्वात् कोलाहलशब्देन शब्दस्य कुसुमाकरवायुशब्दाभ्यां गन्धस्पर्शयोः चलत्प्रवालेति सौन्दर्यकथनेन रूपस्य जलाशयहिमनिर्झरनलिनीशब्दैः रसस्य च प्रत्यभिज्ञानाच्च तद्विशेषाः स्रक्चन्दनादयो दिव्यलतादिभावेन रूप्यन्ते यद्वा देहानुबन्धिवर्गोऽत्र बाह्योपवनत्वेन रूप्यते तत्र संसारी पुमान् द्रुमः द्रुमवत्तज्ज्ञानविकारात्मकदेहसंसृष्टत्वात्तमाश्रिताः स्त्रियो लताः द्रुमस्य लता इति षष्ठीसमासः तदाश्रितान्यपत्यानि विहङ्गा योषित्संश्लिष्टानामलिकुलमपत्यादीनां मधुरालापाः कोलाहलः वापी-

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कुल्या तटाकादीन्यां जीविकादिरूपाणि जलाशयहिमनिर्झरनलिन्यादिरूपेण रूप्यन्ते कुसुमाकरशब्देन पुष्पवाटिकादीनि विवक्षितानि चलत्प्रवालविटपेत्याम्रपनसादि फलजातिवृक्षा विवक्षिता आरण्यकमृगव्याघ्रैरित्यनेन श्यालश्वशुरादयो वा विवक्षिताः ते ह्यारण्यकमृगवत्प्राणतुल्यधनापहारिणः धनापहारित्वमपि तेषां न हिंसया किन्तु सान्त्वेनेति द्योतयितुं मुनिव्रतैरिति विशेषणं यत्र यस्मिन्नेवं भूते बाह्योपवने कोकिलकूजिततुल्यकलत्रापत्यादिमधुरोक्तिभिः पान्थः निवृत्तिमार्गनिष्ठोऽपि स्वात्मानमाहूतमिव देहानुबन्धिवर्गे आसक्तिं प्रापितमिव मन्यते ॥ १९ ॥

तत्रोपवने आसक्तां बुद्धिं यदृच्छयोपगतां ददर्श यद्यप्यत्र जीवस्य बुद्ध्या सह सम्बन्धदशायां बुद्धेर्बाह्योपवनरूपदेहानुबन्धिवर्गसम्बन्धाभावेन बुद्धेस्तदासक्तिर्नास्तीति तथापि भाविष्यद्देहानुबान्धवर्गासक्त्यभिप्रायेण कथासौन्दर्यायैवं वर्णितमित्यवगन्तव्यं यदृच्छयागतामित्यनेन जीवबुद्ध्योः संबन्धो न स्वसङ्कल्पकृतः किन्तु दैवकृत इति सूच्यते या प्राकारादियुक्ता पुरी यस्याः पुर्याः बाह्योपवने कोकिलकूजितः पान्थः आत्मानमाहूतं मन्यते तां यदृच्छया गतां पुरीं तत्रोपवने प्रमदां च ददर्शेति वान्वयप्रकारः अस्मिन्पक्षे मानुषदेहस्य दुर्लभत्वं सूचितं कथापक्षे तु स्पष्टोऽर्थः प्रमदोत्तमां विशिनष्टि दशभिः ज्ञानकर्मेन्द्रियैरेकैकं शतमनन्तावृत्तयः तासां नायकैः पतिभिर्भृत्यैः सहायान्तीमभिगच्छन्तीम् ॥२०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स स्वर्गादिस्थानादर्वाग्गतः कर्मणा शरणं सुखदुःखभोगयोग्यं शरीरमन्वेषमाणः पृथिवीं कर्मभूमिं यत्राम अन्यत्र पुरं प्रभवन्त्यस्मात्कर्माणीति प्रभुः अन्यत्र परपापमर्दनसमर्थः अनुरूपं दुःखभोगमन्तरेण सुखभोगयोग्यम् अन्यत्र दुर्गादिलक्षणाम् ॥ ११ ॥

यावतीस्तिर्यगादिलक्षणाः पुरः शरीराणि । अभिपत्तये प्राप्त्यै ताभ्यो गामानयत्ता अब्रुवन्नवै नोऽयमलमित्यादि श्रुतिः । अन्यत्र शत्रुसाध्यत्वात् ॥ १२ ॥

एकदाभीप्सितशुभकर्मफलोदयसमये हिमवतो दक्षिणेषु सानुषु कर्मफलसंभजनपटुषु । वनपणसंभक्ताविति धातुः । भारतभूप्रदेशेषु प्रत्येकं यत्तुयुज्येत तदुत्रेयं यथा तथेत्युक्तत्वात् यथा संभवमुन्नीयते श्रोत्रादिनवद्वारैर्लक्षितलक्षणामन्धपङ्गुबधिरत्वादिदुर्लक्षणशून्यां पुरीं पुरुषशरीरं ददर्श दृष्ट्वा प्राविशदित्यध्याहार्थं ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं वतेति श्रुतिः । अन्यत्र स्पष्टम् ॥ १३ ॥

पुरीमित्युपक्रान्तत्वात्तदनुसारेण तद्वर्णनं क्रियते । प्राकारैरित्यादिना । अध्यात्मान्तैः शब्दाद्यैरखिलाद्यादयो यथानुकूलं लक्षणीयाः प्राकारो दुर्गभित्तिः अट्टालोभित्त्यन्तभूप्रदेशः परिखा दुर्गबहिः परितः खातनदी स्वर्णादिभी रचितैः शृङ्गैः शिखरैः अन्यत्र सात्त्विकराजसतामसैः सङ्कुलाम् ॥ १४ ॥

नीलादिभिरिन्द्रनीलरत्नादिभिः क्लृप्ता विरचिता हर्म्यस्थल्यो यस्यां सा तथा तां भोगवतीं नागपुरीम् ॥ १५ ॥

आक्रीडा क्रीडाभूमिः आपणः क्रयस्थानं चैत्यं चन्दनशाला । वेदिः परिष्कृता भूमिरित्यमरः ॥ १६ ॥

स राजा विषयलक्षणबाह्योद्याने स्थितः तत्र यदृच्छया गतां प्रमदोत्तमां ददर्शेति चतुर्थश्लोकेनान्वयः ॥ १७ ॥

हिमनिर्झराणां शीतलतुङ्गस्थलपतज्जलधाराणां वि... तोयविन्दुमता कुसुमाकरसौरभवता वायुना चलन्तः ... येषु ते तथा ते च विटपिनश्चलत्प्रवालविटपिनस्तैः ... नलिनीतटानां पद्माकरतीराणां संपदो यस्मिंस्तत्तथा तस्मिन्

आबाधा महती पीडेत्यभिधानमनाबाधि उपद्रवरहिते कोकिलकूजितानां मात्राविशेषैरेहि आविशेत्याहूतमात्मानं मन्यते अन्यत्र प्राकारो देहचर्म उपवनं रोमादि अट्टालं तन्मध्ये वसादि परिखा मांसबहिस्त्वक् तोरणस्थानीयो बाहुः ... पताकाः पार्श्वद्वयस्योर्ध्वमुखवंशस्यास्थि वा तोरणं शृङ्ग ... स्थानीयं कर्णादिगुहाः उदरादिप्रदेशाः नीलवैदूर्यादिरत्न... विशेषैः समलंकृतं हर्म्यस्थलीस्थानीयं चर्मादि भोगसाधनं ... भोगवती सभा हृदयं सर्वदेवानां निवासस्थानीयत्वात् ... नाडी सन्धिः रथ्या ब्रह्मनाडी आक्रीडा हस्तः आयतनानि ... गोलकानि आपणो वाक् चैत्यं मस्तकं ध्वजः केशपाशः ... वेदीरत्नाद्यलंकृतकटिप्रदेशः । बाह्योपवनं देहबाह्यविषये तस्य रमणीयतां वर्णयति हिंस्येत्यादिना वक्राद्यध्या... वर्णनीयः बाह्येत्युक्तत्वात् प्रकर्षेण मदयन्तीति प्रमदाः ... यिक्यो बुद्धयस्तासां मध्ये उत्कृष्टं तमोस्थानं पुरं यस्याः सा प्रमदोत्तमा प्रधानेत्युक्ते आत्मानात्मविवेकविज्ञा बुद्धिरित्यर्थः स्यात् सचानुपपन्नः तां बुद्धिं विहाय वैरिबुद्धिं प्राप्य मुग्धोऽभूदित्यर्थः ( १ ) अन्यथाप्रतीत एव ... दशभिर्भृत्यैर्ज्ञानकर्मेन्द्रियसंज्ञैः सहागच्छन्तीति च ... एकैकस्य शतमित्यनन्ता अनन्ता या वृत्तयस्तासां नायकाः केचन वृत्तिविशेषास्तैर्युक्तैः ॥ १९ ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स एकदेति चित्सुखः ॥ १३—१६ ॥

पुर्यास्त्वतिसार्द्धत्रिकम् । यद्यपि बुद्ध्यादिमयलिङ्ग... सहैव जीवस्य सर्व्वदा स्थितिः । तथापि मनुष्यशरीरे प्रा... बुद्ध्यादयो विलक्षणा भवन्तीति अपूर्व्ववत्तत्प्राप्तिनिर्दे... क्षेयम् ॥ १७—१६ ॥

यदृच्छया दैवतः । भृत्यैरिति सार्द्धषट्कम् ॥ २० ॥ २१ ॥ ... ॥ २३ ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शरणं वासस्थलं सुखभोगायतनं देहञ्च । वभ्रामेति ... जन्मवत्त्वात् नानुरूपमिति क्वापि जन्मनि स्वाभीप्सितसम... स्वप्राप्त्यदर्शनात् इवेति सूकरादिजन्मन्यपि विषयानन्द... वस्तुतो विमनस्त्वाभावात् ॥ ११ ॥

यावतीर्यावत्यः सर्व्वत्र विषयानन्दप्राप्तावपि तस्य ... कामस्य उपपत्तये प्राप्त्यै साधु न मेने । गवादिदेहानां ... साधनयोग्यत्वाभावात् । तथाच श्रुतिः । ताभ्यो गामानयत् ता अब्रुवन् न वै नोऽयमलमिति ताभ्योऽश्वमानयत् ता अब्रुवन् नोऽयमलमितीति । तत्तद्देहानामसाधुमननं च गर्भदशायामेव श्वाहं पुनर्जात इत्यादिश्रुतेस्तत्रैव विवेकोत्पत्तेः ॥ १२ ॥

( १ ) प्रधानेत्यर्थाङ्गीकारेदित्याकारकोऽर्थोऽप्रतीत एव ...

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

हिमवतो हिमालयस्य दक्षिणेषु भारतभूमौ कर्म्मक्षेत्रे तत्रत्यमनुष्यदेहस्यैव फलसाधनत्वात् पुरं मनुष्यदेहं लक्षितानि दृष्टानि लक्षणानि यस्यामिति पङ्ग्वन्धादिदेहस्य म्लेच्छान्त्यजादिदेहस्य च व्यावृत्तिः॥ १३॥

प्राकारास्त्वचः उपवनानि बहिर्विषयाः अट्टालो मुखं परिखा गुणाः। परिखैरित्यार्षम्। अक्षा गवाक्षा रोमरन्ध्राणि तोरणानि नेत्रादीनि द्वाराणि स्वर्णाद्यैः शृङ्गैः पित्तकफवातैर्धातुभिः राजससात्त्विकतामसैः स्वभावैर्वा गृहैराधारचक्राद्यैः सङ्कुलां व्याप्ताम्॥ १४॥

इन्द्रनीलादिभिः रत्नैः क्लृप्ता हर्म्यस्थल्यो यस्यां समासान्तविधेरनित्यत्वान्न कप्। अरुणं माणिक्यं स्थल्यो हृदयकण्ठभ्रूमध्यस्थानानि नीलादयस्तद्वर्णा नाड्यो ज्ञेयाः। भोगवतीं नागानां पुरीं पक्षे भोगवतीमिवेति वस्तुविचारतो भोगा अपि तत्र न सन्तीत्यर्थः॥ १५॥

सभा राजोपवेशस्थानं सा चात्र हृदयं तत्रैव राज्ञः पुरञ्जनस्य जीवस्य स्थितेः। चत्वरं चतुष्पथं तच्चात्र तालुधःस्थलं तत्रैव मुखनासानयनकर्णमार्गाश्चत्वारः रथ्या राजमार्गः इडापिङ्गलासुषुम्णाः। आक्रीडायतनानि द्यूतादिस्थानानि इन्द्रियगोलकाः। आपणो हट्टो मनोगोलकः चैत्यं विश्रामस्थानं चित्तमध्यं ध्वजे भगवद्वैमुख्यरूपे संयुक्ताः पताकाः पञ्चक्लेशाः। विद्रुमवेद्य आधारादिचक्रमध्यस्थलभेदाः॥ १६॥

अत्र विषयनिष्ठबुद्धियोगेन जीवस्य देहसम्बन्ध इति विवक्षया बाह्योपवनभूतं विषयवर्गं विशिष्य वर्णयति। पुर्य्यां इति त्रिभिः। बाह्योपवने प्रमदोत्तमामविद्यावृत्तिं बुद्धिं इच्छयैवागतां यदृच्छयैव पुरञ्जनो राजा ददर्शेति तयोः प्राथमिकसम्बन्धस्य निर्हेतुत्वमुक्तं तेन कथापक्षे हे राजन्! युष्मद्विधैरुपवने प्रमदोत्तमा कदापि नानेतव्या कथञ्चित् स्वतएव प्राप्त्या दृष्टा स्पृष्टा वा स्याच्चेत्तदात्मधिक्कारः कर्तव्यः अध्यात्मपक्षे शब्दस्पर्शादिभोग्यवस्तुषु बुद्धिर्न देया। दैवाद्गता चेदनुतपनीयमिति विधिर्व्यञ्जितः। कीदृशे दिव्यद्रुमेति रूपवैचित्र्यं नदद्विहङ्गेति शब्दवैचित्र्यम्॥ १७॥

हिमनिर्झराणां विप्रुषो बिन्दवस्तद्वता कुसुमाकरवायुना चलन्तः प्रवाला विटपाः शाखाश्च येषां तैः वृक्षैर्नलिनीनां सरसीनां तटेषु सम्पत् समृद्धिर्यस्मिन् अत्र हिमनिर्झरेति रसः कुसुमाकरेति गन्धः। वायुनेति स्पर्शः चलत्प्रवालेऽपि व्यञ्जितस्य पक्षिपुष्पफलादिसद्भावस्यावश्यकत्वात् शब्दादिविषयपञ्चकवैचित्र्यमेव ज्ञेयम्॥ १८॥

अनाबाधे तत्कृतबाधारहिते मुनिव्रतैराहिंस्रैः। पक्षे पुरञ्जनस्य पुण्यवत्त्वात् पापाभावाच्च भोगाः निष्कण्टका एव कोकिलकूजितैः पान्थः आत्मानमातिथ्यादानार्थमाहूतं मन्यते अध्यात्मपक्षेऽपि तन्निष्कण्टकान् भोगान् स्वीयकुटुम्बबन्धुब्राह्मणातिथ्यादिभ्यः विभज्यैव यत्र भुङ्क्ते इत्यर्थः। कूजितैः वचोभिः॥ १९॥

कीदृशैः दशभिर्ज्ञानकर्म्मेन्द्रियैः। एकैकं प्रत्येकं शतमनन्ता वृत्तयस्तासां नायकैः नायिकैरिति पाठे नायिकाः स्त्रियो येषां तैः॥ २०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स राजा यस्यां देहमित्यर्थः अनुरूपं भोगयोग्यम्॥ ११॥

कामान् विषयान् कामयमानः तस्य तस्य कामस्योपपत्तये यावतीः पुरः गवादिशरीराणि न साधु मेने तथाच श्रुतिः

ताभ्यो गामानयत्ता अब्रुवन्नवै नोऽयमलमिति।
ताभ्योऽश्वमानयत्ता अब्रुवन्नवै नोऽयमलमिति॥ १२॥

एकदा मनुष्यदेहप्राप्तिकाले हिमवतो दक्षिणेषु सानुषु भारतवर्षगतकर्मक्षेत्रेषु नवभिर्मुखादिरूपैश्छिद्रैरुपलक्षितानि दृष्टानि लक्षणानि यस्यामन्धपङ्ग्वादिदोषरहितां पुरं मनुष्यदेहरूपां ददर्श॥ १३॥

तामनुवर्णयति। प्राकारेति त्रिभिः। किञ्चित्साहश्यमादाय त्वगादयो देहावयवाः कथासौष्ठवार्थं प्राकारादिपुरावयवतया रूप्यन्ते प्राकारेण त्वचा उपवनैः रोमैः अट्टालैः शिरोनासादिभिः परिखैरिति पुंस्त्वमार्षत्वात् परिखाभिः अनिष्टपदार्थनिवारणार्थाभिश्चेष्टाभिः अक्षेषु चक्षुरादिषु तोरणैः पक्ष्मादिरूपैः स्वर्णरौप्यायसैः शृङ्गैः शिखरैरजःसत्त्वतमःस्वभावैः सर्वतोगृहैराधारादिचक्रैः संकुलाम्॥ १४॥

नीलाद्यरुणान्तसदृशैर्नेत्रगतकृष्णबिन्दुप्रभृतिनखान्तैरङ्गैःक्लृप्ताः हर्म्यस्थल्योऽक्षिगोलकादिरूपा यस्याः ताम् तत्रारुणं माणिक्यम्॥ १५॥

सभा समाजस्थानं हृद्रूपा हृद्ययमात्मेति श्रुतेः चत्वरं चतुष्पथः सर्वतो नाडीप्रचारः रथ्या राजमार्गः सुषुम्णारूपः मुक्तिमार्गत्वात् ताभिः आक्रीडं यथेष्टरमणस्थानं तत्तुल्या स्वप्नावस्था आयतनं सुखस्थानं तत्तुल्या सुषुप्त्यवस्था आपणं व्यवहारस्थानं तत्तुल्या जागरावस्था तैश्च चैत्यं स्थितिस्थानं तत्तुल्यमशानम् ध्वजा पताकाः केशास्ताभिश्च विद्रुमवेदिनिभैरधरादिभिश्च युताम्॥ १६॥

यथा पुर्या बाह्योपवनं तथादेहाद्बाह्योविषयसमुदायः सोऽपि दिव्यद्रुमादिरूपोऽतो नात्र विशेषकल्पना व्याख्येयेनाद। पुर्यां इति। पुर्य्याः तत्तुल्यस्य देहस्य बाह्योपवने प्रमदा तुल्यायाः बुद्धेः दिव्यद्रुमयुतादिविषयकर्णोत्तरूपेण संचारस्थाने विषयवर्गे प्रमदां ददर्शेति चतुर्थेनान्वयः विषयानेवाह दिव्यद्रुमेत्यादिना। दिव्यद्रुमादिभिराकुले व्याप्ते नदतां विहङ्गालिकुलानां कोलाहलो येषु ते जलाशया यस्मिन्॥ १७॥

हिमनिर्झराणां विप्रुमता विन्दुयुक्तेन शीतलेन कुसुमाकरसंबन्धिना सुगन्धेन वायुना चलन्तः प्रवाला नवपल्लवा विटपाः शाखाश्च येषां तर्विटपिभिर्नलिनीनां सरसीनां तटेषु संपत्समृद्धिर्यत्र तस्मिन्॥ १८॥

नानाविधैः अरण्यमृगाणां वनपशूनां व्रातैः समूहैः मुनिव्रतैः मुनीनामिव व्रतं येषां तैः अनाबाधे बाधारहिते यत्र उपवने पान्थः कोकिलकूजितैः आत्मानमाहूतं मन्यते॥ १९॥

तत्रोपवने यदृच्छया स्वभावत एवागतां प्रमदोत्तमां प्रमदासमावत् जीवविमोहिनीं बुद्धिं ददर्श तामनुवर्णयति। भृत्यैरिति सार्धचतुर्भिः। दशभिरिन्द्रियैः एकैकशतनायकमेकं प्रतिशतं वृत्तयस्तन्नाथैः सहायान्तीम्॥ २०॥

---

भाषाटीका।

वह पुरञ्जन राजा अपने भोगस्थानको ढूंढता हुआ सब पृथिवी में घूमता था परन्तु कहींपर अनुकूल स्थान न मिला तिससे दुखित सा होकर चिन्ता करने लगा॥ ११॥

( तेषां परिवृढो राजन् ! सर्वेषां वलिमुद्वहन् ॥
सस्त्रीकाणां सखा तस्या वहुरूपोऽग्रणीः स्त्रियः ॥ ० ॥ )
पञ्चशीर्षाहिना गुप्तां प्रतीहारेण सर्वतः ।
अन्वेषमाणामृषभमप्रौढां कामरूपिणीम् ॥ २१ ॥
सुनासां सुदतीं वालां सुकपोलां वराननाम् ।
समविन्यस्तकर्णाभ्यां विभ्रतीं कुण्डलश्रियम् ॥ २२ ॥
पिशङ्गनीवीं सुश्रोणीं श्यामां कनकमेखलाम् ।
पद्भ्यां क्वणद्भ्यां चलतीं नूपुरैर्देवतामिव ॥ २३ ॥
स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ ।
वस्त्रान्तेन निगूहन्तीं व्रीडया गजगामिनीम् ॥ २४ ॥
तामाह ललितं वीरः सव्रीडस्मितशोभनाम् ।
स्निग्धेनापाङ्गपुङ्खेन स्पृष्टः प्रेमोद्भ्रमद्भ्रुवा ॥ २५ ॥
का त्वं कञ्जपलाशाक्षि ! कस्यासीह कुतः सति !।
इमामुपपुरीं भीरु ! किञ्चिकीर्षसि शंस मे ॥ २६ ॥
क एतेऽनुपथा ये त एकादशमहाभटाः ॥
एता वा ललनाः सुभ्रुः ! कोऽयं तेऽहि पुरःसरः ॥ २७ ॥

भाषाटीका ।

पृथिवी में जितने मकान (शरीर) देखे तिनमें किसी को उसने अच्छा नहीं माना क्योंकि वे मकान ऐसे नहीं थे कि जहां पर उसके मनो वांछित सब कामों का भोग होसके ॥ १२ ॥

एक दिन हिमालय पर्वत के दक्षिण शिखर पर ( भारत वर्ष में ) एक पुरी ( मनुष्य शरीर ) देखी उसमें नौ दर्वाजे हैं सुन्दर लक्षणों से शोभित है ॥ १३ ॥

उस पुरीमें दीवाल उपवन अटारी खाई ( त्वचामांसादिक युक्त हैं झरोखा तोरण इत्यादि नेत्र छिद्रादि हैं सुवर्ण चांदि लोहा ( वात पित्त कफ ) के शिखर हैं तिनसे वडी शोभा है १४॥

उत्तम नील मणि स्फटिक वैदूर्य मुक्ता माणिक्य इनसे जहां के मकान बने हैं शरीर मे नाडी सब हैं इसी शोभा से प्रकाशमान भोगवती सरी की पुरी दीखती थी ॥ १५ ॥

और समाज के स्थान चतुष्पथ राजमार्ग क्रीडा के थानरु वजार विश्राम स्थान ध्वजा पताका से युक्त हैं ए सब आधार चक्रादिक हैं ॥ १६ ॥

पुर के वाहिर में एक उपवन है सो वडा सुन्दर उस में नानाप्रकारके वृक्ष तलाव भी वहां हैं यहां के सरोवर के पांच शब्द करते हैं तिससे मालूम होता है कि सरोवर शब्द कर रहे हैं ॥ १७ ॥

और सरोवर के किनारे जो वृक्ष हैं उनके शाखा सब ठण्डे जलके विन्दु सहित शीतल पवन से हलें उस से उस स्थान की वडी शोभा हो रही है ॥ १८ ॥

और नाना प्रकार के जङ्गल के जन्तु सब आपस वैर को त्याग कर के स्थित हैं तिस से किसी बाधा सम्भावना नहीं है और वृक्षों पर कोकिल शब्द हैं उस से मालूम होता है कि मार्ग जाने वालों बुलाते हैं ॥ १९ ॥

उस ठिकाने पुरञ्जन जीवने दैवयोगसे आई हुई एक स्त्री को देखा ( वह विवेक वाली बुद्धि है ) उसके सौ सौ को साथ में लिये दश नौकर हैं वे वृत्तियों के सहित दश इन्द्रिय हैं ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्च शीर्षाणि वृत्तयो यस्य तेनाऽहिना प्राणेन प्रती[illegible] पालकेन गुप्ताम् ऋषभं भर्तारमप्रौढां षोडशवार्षिकीम् ॥ २१ ॥ गन्धज्ञानादिभिर्बुद्ध्यवयवैः सुनासत्वादिनिरूप्यते सम [illegible] रचितौ कर्णौ ताभ्यां कुण्डलशोभां दधतीम् ॥ २२ ॥ अक्षमयं हि सौम्य ! मन इति यत्कृष्णां तदन्नस्येत्यादि [illegible] सारेण श्यामामित्युक्तम् नूपुरैः क्वणद्भ्याम् नूपुरेण [illegible] वीयकानामप्युपलक्षणाद्बहुवचनम् ॥ २३ ॥

( १ ) अयं श्लोकः सटीकः श्रीविजयध्वजतीर्थमते ।

त्वं ह्रीर्भवान्यस्यथ वाग्रमा पतिं विचिन्वती किं मुनिवद्रहो वने ।
त्वदङ्घ्रिकामाप्तसमस्तकामं क्व पद्मकोशः पतितः कराग्रात् ॥ २८ ॥
नासां वरोर्वन्यतमा भुवि स्पृक् पुरीमिमां वीरवरेण साकम् ।
अर्हस्यलंकर्तुमदभ्रकर्मणा लोकं परं श्रीरिव यज्ञपुंसा ॥ २९ ॥
यदेष मापाङ्गविखण्डितेन्द्रियं सव्रीडभावस्मितविभ्रमद्भ्रुवा ।
त्वयोपसृष्टो भगवान् मनोभवः प्रबाधतेऽथानुगृहाण शोभने ! ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यञ्जितं कैशोरं यौवनोपक्रमो याभ्याम् समौ च वृत्तौ [illegible] ॥ २४ ॥

[illegible]तामाहेति । तयोः सम्वादोक्तिः सम्बन्धदार्ढ्याय अपाङ्ग एव [illegible]ङ्खं मूलप्रान्तो यस्य कटाक्षस्य बाणस्य तेन स्पृष्टो विद्धः [illegible]भ्यां उच्चैर्भ्रमन्ती सूर्धनुःस्थानीया यस्मिंस्तेन ॥ २५ ॥

कुतः स्थानादिहागतासि हे सति ! पुर्याः समीपस्था उप-[illegible]री भूस्तामालक्ष्य किं कर्तुमिच्छसीत्यर्थः ॥ २६ ॥

ते तव येऽनुपथा अनुवर्तिन एते के एकादशो महान् भटो [illegible]हद्वलत्वेन वक्ष्यमाणो येषु दशसु ते बुद्धेर्मनसः पृथगुपादानं [illegible]द्धिपरिचारकेन्द्रियसहायतया तत्परिचारकत्वविवक्षया ॥ २७ ॥

त्वं ह्रीः किम्पतिं धर्मं विचिन्वती अथवा भवानी पतिं शिवं विचिन्वती अथवा किं वाक् सरस्वती पतिं ब्रह्माणम् रमा पतिं विष्णुम् मुनिरिव संयता सती कथम्भूतं पतिम् त्वदङ्घ्रि-[illegible]मेनैव त्वत्कृतया त्वदङ्घ्रिकामनयैव प्राप्ताः समस्ताः कामा येन तम् ॥ २८ ॥

हे वरोरु ! आसां मध्ये त्वमन्यतमापि न सम्भवसि यतो भुविस्पृक् नहि देवता भुवं स्पृशन्ति वीरवरेण मया ननु त्वमकर्मा कथं त्वया सहालङ्करोमीति चेत्तत्राह । अदभ्रमनल्पं कर्म त्वत्सङ्गाद्यस्य मम तेन स्वतोऽकर्मत्वेन त्वत्सङ्गात्सकर्मा भवामीत्यर्थः परं वैकुण्ठम् ॥ २९ ॥

यद्यस्मात्तवापाङ्गेन विखण्डितमिन्द्रियं मनो यस्य तं मां मनोभवो बाधते अथ तस्मादनुगृहाण सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन विभ्रमन्ती या भ्रूस्तयोपसृष्टः प्रेरितः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पञ्च शीर्षाणि पञ्च वृत्तयो यस्य तेनाहिना प्राणेन प्रतिहारेण पालकेन अहेर्वायुभक्षत्वेन तत्प्रचुरत्वादहिनेत्युक्तं सर्वतो गुप्तां रक्षितां सर्वेषामिन्द्रियाणां प्राणाधीनवृत्तित्वादहिना गुप्तामित्युक्तम् ऋषभं पतिमन्वेषमाणाम् अनेन चेतनैकभार्यत्वं तत्प्रवर्त्यत्वञ्च विवक्षितमप्रौढामिति बुद्धेश्चेतनेन सह संबन्धदशायामप्रौढप्रमेव कार्याक्षमत्वेऽपि तद्योग्यतास्तीति सूचयति कामरूपिणीमित्यनेन गन्धरसादिज्ञानभेदभिन्नतां सूचयति ॥ २१ ॥

तदेव प्रपञ्चयति सुनासामिति । बुद्धिवृत्तयो हि गन्धरसादिज्ञानभेदेन तदवान्तरभेदेन च बहुविधाः ताभिर्बुद्धिवृत्तिभिस्तस्याः सुनसत्वादि रूप्यते सुनासां शोभना नासा गन्धात्मिका घ्राणेन्द्रियवृत्तिर्यस्यास्ताम् एवमग्रेऽपि दन्तकपोलाननश्रोणिपादस्तनादिव्यापारजन्यहर्षादीनामपि बुद्धिवृत्तित्वात्ताभिः सुदन्नत्वादिरूपणं क्रियते नासिकादन्तकपोलाननकरश्रोणिपादस्तनादिविशेषणभूतानां शोभनत्वसमविन्यस्तत्वादीनामपि स्वविशेष्यभूतनासिकादेर्गन्धादिवृत्तिद्वारा बुद्धिविशेषणत्वं द्रष्टव्यं समं विन्यस्तौ रचितौ कर्णौ ताभ्यां कुण्डलशोभां दधतीम् "अन्नमयं हि सौम्य ! मन" इति यत् कृष्णांतदन्नस्येत्यादिश्रुत्यनुसारेण श्यामामित्युक्तं कुण्डलश्रीसम्बन्धः कुण्डलालंकृतकर्णाधिकरणश्रोत्रेन्द्रियश्रवणवृत्तिद्वारा ॥ २२ ॥

एवं पिशङ्गनीविकनकमेखलासंबन्धोऽपि स्तननाभिनितम्बव्यापारजन्यहर्षादिवृत्तिद्वारेति द्रष्टव्यं नूपुरैः क्वणद्भ्यां पद्भ्यां चलन्तीं नूपुरगमनसंबन्धोऽपि पादेन्द्रियवृत्तिद्वारा कथं च स्पष्टं नूपुरैरिति बहुवचनं पादाङ्गुलीयकानामुपलक्षणमन्यथा नूपुराभ्यामिति श्रूयेत ॥ २३ ॥

व्यञ्जितं कैशोरं यौवनोपक्रमो याभ्यां समौ च तौ वृत्तौ च निर्गतावन्तरात् संश्लिष्टावित्यर्थः स्तनौ व्रीडया लज्जया वस्त्रान्तेन निगूहन्तीं छादयन्तीं गज इव गच्छतीति तां गजगामिनीम् ॥ २४ ॥

व्रीडया सहितं यत्स्मितं तेन शोभनां सुन्दरां प्रति वीरः पुरञ्जनः प्रेम्णोच्चैर्भ्रमन्त्यौ भ्रुवौ यस्मिंस्तेन स्निग्धेनापाङ्ग एव पुङ्खं मूलप्रान्तो यस्य कटाक्षबाणस्य तेन स्पृष्टो विद्धः सललितं यथा तथाह तयोः सम्वादोक्तिः संबन्धदार्ढ्यार्थेति ज्ञातव्यम् ॥ २५ ॥

हे पद्मदललोचने ! का त्वं किंजातीयकेति प्रश्नः कस्य संबन्धिनी पुत्री असि कुतः स्थानादिहागतासि हे सति ! इमामुपपुरीमस्याः पुर्याः समीपे किं कर्तुमिच्छसि ॥ २६ ॥

एतेऽनुपथा अनुवर्तिनः क एते एकादश महाभटाः बुद्धिमनसोर्वृत्तिकृतभेदमाश्रित्य मनसा सहेन्द्रियाणामेकादशत्वादेकादशो महाभटो मनोरूपो येषां ते क एते इत्युक्तं हे सुभ्रूः ! एता ललनाः का इति वृत्त्यभिप्रायेण प्रश्नः तासामानन्त्यादेता इति निः सङ्ख्याको निर्देशः पुरःसरति गच्छतीति पुरःसरोऽहिः सर्पः कः प्राणो व्याप्रियमाणो तदनु सर्वेन्द्रियव्यापारात्पुरः सर इत्युक्तं बुद्धिस्वरूपतत्कारणतत्संबन्धकारणतत्कार्यवित्सु प्राचीनर्बर्हिरादिलोकाभिप्रायकं का त्वमिति प्रश्नकथनं ज्ञानकर्मोभयेन्द्रियाणां प्रवृत्तिः बुद्ध्यायत्ता उत इति संशयनिराचिकीर्षाभिप्रायकं क एतेऽनुपथा इति प्रश्नकथनं बुद्धेरपि प्राणायत्तप्रवृत्तिरिति ख्यापनाय कोऽयं तेऽहिः पुरःसर इति प्रश्नोक्तिः ॥ २७ ॥

त्वं ह्रीरिति । यस्यास्तवाङ्घ्रिकामनयैवाप्ताः कामा यस्य तं पतिं मुनिवद्वने रहः एकान्ते विचिन्वती त्वं वराहं विचिन्वती ह्रीः भूमिः उत शङ्करं विचिन्वती भवानी आहोस्विद्ब्रह्माणं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विचिन्वती वाक् सरस्वती अथवा विष्णुं विचिन्वती रमा लक्ष्मीरसि यदि रमा तर्हि पद्मकोशः कराग्रात्क पतितः कराग्रे पद्मकोशाभावान्नरमेत्यर्थः एवं रमादिरूपेणोत्प्रेक्षोक्तिः रमादीनां विष्ण्वादिभिरिवानादिदृढतरसंबन्धख्यापनाय कथासौन्दर्याय वा एवमग्रेऽप्यनुपयुक्तं कथासौन्दर्यायेति द्रष्टव्यम् ॥ २८ ॥

एवंहृयाद्यन्यतमत्वेन संभाव्यासां मध्ये कापि त्वं न भवसीत्याह-नासामिति हेवरोरु ! आसां ह्रीभवानीवाग्रमाणां मध्येऽन्यतमा नासि न भवसि तत्र हेतुः यतस्त्वं भुवः स्पृक् भुवं स्पृशतीति भूस्पृक् न हि रमादीनामन्यतमा देवता भुवं स्पृशतीति भावः अतो-मत्प्रार्थितं कुर्वित्याह।अर्हसीति।अदभ्रकर्मणानल्पकर्मणा वीरवरेण वीरश्रेष्ठेन मया साकं सह इमां पुरीं नवमुखीमलङ्कर्तुं शोभयितु-मर्हसि परं लोकं वैकुण्ठं यज्ञपुंसा विष्णुना सह श्रीर्लक्ष्मीरिव मया सह पुरीं प्रविश्य सुखमनुभवेत्यर्थः ॥ २९ ॥

यद्यस्मात्तवापाङ्गेन विखण्डितमिन्द्रियं मनो यस्य तं मां सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन सविभ्रमा या भ्रूस्तयोपसृष्टः एष मनोभवः कामः प्रबाधते अथातः अनुगृहाण हेशोभने ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र पुरंजनस्य ये भृत्या याश्च भार्याद्यास्ते सर्वेऽपि मानुषेन्द्रियाभिमानिनः गायत्र्याद्या देवेन्द्रियतद्वृत्तीनामाभिमानिन्य इति । तदुक्तम् ।

> ये पुरंजनभृत्याद्या भार्याद्याः सर्व एव च ।
> तेऽपि मानुषबुद्ध्यादेर्विशेषा अभिमानिनः ।
> गायत्र्याद्यास्तु देवानां तेऽपि चैतेषु संस्थिताः ।
> अलक्ष्म्याद्यापराद्यास्तु आसुरास्तेऽपि मानुषा इति ।

तेषां सर्वेषां परिवृढो मनो नामा जीवो वा तत्तद्विषयवैचित्र्यमपेक्ष्य मनसो बहुरूपत्वं जीवस्य तु योनीनां वैचित्र्यात् ॥०॥

पञ्चशीर्षाहिना प्राणादिपञ्चवृत्त्याख्यशिरसा मुख्यप्राणाख्यसर्पेण प्रतीहारेण द्वारपालकवद्वर्तमानेन ऋषभं पतिं स्वकृत्यनुकूलवृत्तिलक्षणं पुरुषमित्यर्थः अत एवाप्रौढामनूढामपरिगृहीतपाणिमिव स्थितामित्यर्थः कामरूपिणीं विषयवैचित्र्यात्तत्तदाकारानुमिताकाराम् ॥ २१ ॥

उन्नताभिमानलक्षणनासिकां सुदतीं विषयवृत्तिलक्षणदन्ताम् बालां सुकुमारवृत्तिं बाह्याभ्यन्तरवृत्तिलक्षणाभ्यां शोभनाभ्यां वरं वरणीयमाननं चेष्टा यस्याः सा तथा तामनचेष्टायामितिधातुः समं यथा तथा विन्यस्ताभ्यां कल्पिताभ्यां बाह्यान्तःकरणविशेषाभ्यां संकल्पविकल्पभेदेन द्वाभ्यां मनोरूपाभ्यां कुण्डलश्रियं विषयेषु परिवर्तनाश्रियं बिभ्रतीं वर्तयन्तीम् ॥ २२ ॥

पिशङ्गा विषयोपरक्ता नीवी आच्छादनवृत्तिर्यस्याः सा तथा तां सुश्रोणीं सुष्ठाश्रयवृत्तिमतीं श्यामां तमोगुणप्रचुरां कनकमेखलां रजोगुणलक्षणसुवर्णकाञ्चीं पद्भ्यां रजस्तमोमिश्रितवृत्तिविशेषाभ्यां नूपुरैः शिशुकलभाषणलक्षणैः क्वणन्तीमित्यादिप्रयोगाल्लक्षणावृत्त्या ऊहनीया न वाच्यवृत्त्या काञ्चनानयेनि कचित्मद्वृत्तिविषयत्वाद्देवतामिवेति ॥ २३ ॥

व्यञ्जितकैशोरौ अभिव्यञ्जितमध्यमावस्थौ मध्यमां बुद्धिसंस्थामित्युक्तेः ध्वनस्तनशब्द इतिधातोः स्तनौ शब्दौ वर्णवृत्तलक्षणोपेतौ निरन्तरमेकस्मिन्नेव वृत्ते विश्रमौ लघुभेदरहितावित्यर्थः व्रीडया वृत्तिविशेषेण वस्त्रान्तेन आच्छादन इति धातोराच्छादनशीलवृत्तिभागेन निगूहन्तीं भिव्यक्तिं कुर्वाणां गजगामिनीं गजवदूर्ध्वमूलाधारां बुद्धिम् ॥ २४ ॥

आहेति । स्वकार्यविषये प्रवर्त्तयितुमभिमुखीचकार विशिष्टप्राणबलोपेतः स व्रीडस्मितशोभिनीं स्वकार्यानि अपाङ्गप्रेमेत्यादिनापि तत्तद्योगवृत्तिविशेषं लक्षयति प्रेम्णा ती भ्रूः प्रेमभ्रमद्भ्रूस्तया ॥ २५ ॥

का त्वमित्यादिलोकानुकारवचनं भ्रान्त्या प्रलापो वा रीमित्यनेन ज्ञायते अन्यथोपपुरीति ह्रस्वत्वेन प्रयोगः देहसमीपे वर्त्तमानाम् ॥ २६ ॥

अनुपथाः स्वमार्गमनुवर्त्तमाना ये इमे मनसा सह शभटा एते ललविलास इति धातोः ललना विलासोपेता विशेषाः हि गता वितिधातोः अहिरगतः सह प्रजः पु नासिकारन्ध्रचरः श्वासः ॥ २७ ॥

त्वं ह्रीरित्यादिकमनुकरणं लज्जावृत्तिविशिष्टत्वात् ह्रीः रूपवृत्त्या भवानीति वचनवृत्त्या वाक् रमणवृत्त्या रमा पतिं स्वामिनं वने देहलक्षणे वासनावने मुनिवन्मनोवत् साम्येनाप्ताः समस्ताः कामा येन स तथा अघिरघिर्वर्ज इति धातोः यथा अङ्घ्र्योर्गतिसाधनत्वं तथा मनसोऽपि संकल्प्य पुरुषस्य विषयोपगमनात् पद्मकोशः कन्दुकवत् मनः कराग्राद्वृत्तिविशेषात्पतितो गतः क कां वृत्तिमुप बाह्यार्थः स्पष्टः ॥ २८ ॥

हे वरोरु ! यदि त्वमासां ह्रीमुखानां वृत्तिविशेषाणामन्य वृत्तिविशिष्टा नासि किंतु स्थिरवृत्तिविशिष्टासि भुवि स्पृक् आशावती तर्ह्यदभ्रकर्मणा महापराक्रमवता रेण मया साकमिमां पुरीं देहलक्षणामलंकर्तुमर्हसि व यज्ञपुंसा श्रीनारायणेन सह श्रीः परं लोकं वैकुण्ठमिवेत्यन्वयः अदभ्रकर्मणेति कर्मानन्त्यं लक्षयति ॥ २९ ॥

हेशोभने ! व्रीडया सहितो हासः व्रीडाहासस्तेन युक्तं न विभ्रमन्त्यौ भ्रुवौ यस्याः सा तथा तस्यास्तव सका सृष्टः प्राप्त एष मनोभवो मनसो जातो रागलक्षणो विशेषो भगवांस्ताभिः भूत्वा मा मां प्रबाधते स्वानुगृ णा यः सचक्षुं करोति यद्यस्मादथ तस्मादनुगृहाण कथम्भूतं मामपाङ्गेन शरीरादिना वृत्तिविशेषेण विख नीन्द्रियाणि यस्य स तथा तम् ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्निग्धेन स्निग्धत्वादलब्धभङ्गेनापाङ्गरूपेण बाणस्य तत्पर्यन्तभागेनापि स्पृष्टो विद्ध इत्यर्थः ॥ २५—२९ ॥

यदेष तेऽपाङ्गेति । अथोपसृष्ट इति प्रबाधतेऽनुगृ प्रथमतृतीयचतुर्थचरणेषु पाठा दृश्यन्ते । तत्र त्वयेति वि संमतश्च । किन्तु यदेष ते ऽपाङ्गेति अथोपसृष्ट इति प्र मानुगृहाणेत्येव पाठाः स्वामिसंमता लक्ष्यन्ते ॥ ३०—३१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पञ्चशीर्षा अहिः पञ्चवृत्तिः प्राणः तेन प्रतीहारेण द्वारपालेन गुप्तां रक्षिताम् । ऋषभं स्वस्या उपभोक्तारं पतिं जीवमप्रौढामित्यप्रौढेव कान्ता यथा पतिं मोहयति तथैवाविद्यावृत्तिर्बुद्धिर्जीवमित्यर्थः । कामरूपिणीं नित्यविविधशृङ्गारधारिणीं पक्षे विविधवासनावतीम् ॥ २१ ॥

गन्धज्ञानादिभिर्बुद्धेर्वृत्तिभिरेवावयवैः सुनासत्यादि रूप्यते रसास्वादचर्व्वणासक्तयो दन्ताः सुकपोलत्वं बुद्धेः स्वच्छता आननं बुद्धेरग्रभागः समं यथा स्यात्तथा धात्रैव कौशलेन विन्यस्ताविव यौ कर्णौ ताभ्यां कुण्डलशोभां विभ्रतीं प्रवृत्तिनिवृत्तिशास्त्रार्थमवधारयन्तीम् ॥ २२ ॥

पिशङ्गनीवीं पीताम्बरां रजोगुणमयसमस्तकर्मावृतां श्यामामिति बुद्धेः श्यामत्वात् तच्च तस्या जीवान् प्रति सूर्यस्थानीयेश्वरावरकमेघस्थानीयत्वात् । क्वणद्भ्यामिति । चलन्तीमित्याभ्यां बुद्धेरस्थैर्यमेव शास्त्रेषु शब्दितमिति द्योतितं नूपुरैरिति बहुवचनेन पादाङ्गुलीयादीन्यप्युपलक्षितानि ॥ २३ ॥

स्तनौ रागद्वेषौ । यदुक्तं । इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । न तयोर्वशमागच्छेत्तौ ह्यस्य परिपन्थिनाविति । व्यञ्जितकैशोराविव्यत एव वृद्धस्यापि रागद्वेषौ नित्यतरुणावेव लोके दृश्येते समौ च वृत्तौ वर्त्तुलौ च पक्षे समं तुल्यमेव वृत्तं पुंमात्रमोहनं चरित्रं ययोस्तौ । निरन्तरावतिपीनत्वान्मूलदेशे ऽवकाशशून्यौ । पक्षे वस्तुतस्तयोरैक्येन निर्भेदौ यदुक्तं । काम एष क्रोध एष रजोगुणसमुद्भव इति निगूहन्तीमिति रागद्वेषावपि शिष्टजनैर्ह्रीविनयाभ्यां निगूह्येते एव ॥ २४ ॥

अविद्यावृत्त्या जीवः स्वमिच्छयैव बध्नाति । न तु तमीश्वरस्तया बलात्कारेण बध्नातीति वक्तुं तयोः सम्बन्धस्य प्रकारमाह । तामाहेति । स्निग्धेन स्निग्धत्वादलब्धभङ्गेन अपाङ्गरूपेण पुङ्खेन तत्पर्यन्तेनापि कटाक्षशरेण विद्ध इत्यर्थः । यतो वीरः वीरत्वादेव तदप्यक्रान्त इत्यर्थः । पक्षे भोगोत्साहवत्त्वाद्वीरः । अयमर्थः । अविद्या खलु भोग्यपदार्थभूतं स्वं दर्शयति जीवस्तत्र सुरसबुद्ध्या भोक्तृत्वमङ्गीकुर्वन् अनुरज्यति । ईश्वरस्तु तत्र विरसबुद्ध्या ततो विरज्यतीति ॥ २५ ॥

यद्यपि बुद्ध्यादिभिः सहैव जीवस्य सर्वदा स्थितिस्तथापि मनुष्यशरीरसम्बन्धिनस्ते बुद्ध्यादयो विलक्षणा भवन्तीत्यनुरागेण च तां बुद्धिमपरिचिन्वन्निव पृच्छति । का त्वमिति । कुतः स्थानादिहागतासि । हे सति ! पुर्याः समीपस्था उपपुरी उपवनभूमिस्तामवलम्ब्य किं कर्त्तुमिच्छसि ॥ २६ ॥

अनुपथा अनुवर्त्तिनः एकादशो महाभटा येष्विति वृहद्वलत्वेन वक्ष्यमाणं मन आलक्ष्य ललनाश्चेत्य इतीन्द्रियवृत्तीरालक्ष्य अहिः क्रीडोपकरणीभूत इति प्राणमालक्ष्य प्रश्नः ॥ २७ ॥

लोके ह्यविवेकात स्वस्य बुद्धिरुत्कृष्टेति सर्वस्याभिमतिरिति पुरञ्जनवाक्येनाभिव्यञ्जयति । त्वं ह्रीरिति । तस्या मुखनेत्राद्यावरणव्यञ्जितां ह्रियमालक्ष्य न त्वं ह्रीमती किन्तु साक्षात् स्वयं ह्रीरेव मां मोहयन्ती सती किं पतिं धर्मं विचिन्वती अत्र वने रहो वत्तसे इति स्वबुद्धिवृत्तिमाधुर्यैः स्वमोहनप्रपञ्चः । अथवा भवानीति सौन्दर्यमालक्ष्योक्तः पतिं शिवं विचिन्वती किं वाक् सरस्वतीति तस्या महाबुद्धिमत्तामालक्ष्य पतिं ब्रह्माणं रमा लक्ष्मीरिति महासम्पत्तिमभिलक्ष्य पतिं विष्णुं मुनिरिव संयता सती कथम्भूतं पतिं त्वदङ्घ्रिकामनयैव प्राप्ताः समस्ताः कामा येन तं । लोकेऽपि स्वबुद्धिबलाधीनमेव सर्वमैश्वर्यं सर्वस्येति ब्रुवते । केति पद्मकोशां लीलाकमलं स च जीवस्य विवेक एव तया तदवलक्षितमेव स्वहस्तवशीकृत्य दूरतः क्षिप्त इति ज्ञेयम् ॥२८॥

त्वदनुरूपोऽहमेवेति वक्तुं स्वकृतं सन्देहं स्वयमेव निरस्यति नासामिति । हे वरोरु ! यतस्त्वं भुवि स्पृक् न हि देवता भुवं स्पृशन्ति वीरवरेण मया परं वैकुण्ठं पक्षे किञ्चिद्विवेकप्राप्त्या स्वबुद्धिं न सर्वोत्कृष्टां मन्यते लोकः किन्तु स्वानुरूपामेवेति भावः ॥ २९ ॥

यद्यस्मात्तवापाङ्गेन विखण्डितमिन्द्रियं चक्षुर्यस्य तं मां मनोभवो मदनस्त्वया उपसृष्टः प्रेरितः सन् बाधते । पक्षे विखण्डितज्ञानचक्षुषं मनोभवो वैषयिकीवासना उपसृष्टस्त्वयैवाधिक्येन निर्मितो मां बाधते अतोऽनुगृहाण त्वदीयान् शब्दस्पर्शादीनुपभोक्तुं लभेयेत्यर्थः । वस्तुतस्त्वनुगृहाण स्वभगिनीं विद्यां सन्दर्शयेति दैवघटितोऽर्थः ॥ ३० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चशीर्षाणि प्राणापानादिमुख्यभागा यस्य तेनाहिना देहविलचरेणान्तर्वायुनेत्यर्थः प्रतिहारेण पालकेन गुप्तां रक्षिताम् चेतनं विना अचेतनरूपायाः पतिहीनायाः प्रमदाया इव दीनत्वात् ऋषभं चेतनमन्वेषमाणां मृगयन्तीमप्रौढां बालां भगवदनुग्रहं विना मुक्तिमार्गेऽसावधानां कामरूपिणीं संसारमार्गे नानारूपधारिणीम् ॥ २१ ॥

गन्धादिविषयिकाभिर्नानावृत्तिभिः सुनासत्वादिरूप्यते समविन्यस्तौ रचितौ यौ कर्णौ ताभ्यां कुण्डलश्रियं बिभ्रतीं लोकप्रसिद्धकुण्डलादिविषयकाभिर्वृत्तिभिः कुण्डलादिकं रूप्यते ॥२२॥

श्यामामित्यनेन तस्यास्तृष्णावृत्तिरूपेण नित्यं तारुण्यं विवक्षितं यथोक्तं महाभारते ।

> जीर्य्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्य्यतः ।
> अहो बलीयसी तृष्णा या नित्यं तरुणायते इति ।

नूपुराभ्यामिति वक्तव्ये बहुवचनमेकैकशो नूपुरादिविषयिका वृत्तयोऽनेकरूपा इति द्योतयति देवतामिवेत्यनेनान्तदुष्टा बहिः शुद्धेवेति द्योत्यते ॥ २३॥ २४ ॥

कथासौन्दर्याय संबन्धदार्ढ्याय च तयोः संवादमाह । तामाहेति । वीरः पुरञ्जनः व्रीडया सहितं यत्स्मितं मन्दं हसितं तेन शोभनां तां पुरञ्जनीं ललितं यथा तथाह कथंभूतः प्रेम्णा उद्भ्रमन्ती भ्रूर्धनुःस्थानीया यत्र तेन अपाङ्ग एव पुङ्खो मूलप्रान्तो यस्य तेन कटाक्षरूपेण बाणेन स्पृष्टो विद्धः ॥ २५ ॥

तद्वाक्यमाह । कात्वमिति षड्भिः । इमां पुरीमुपसमीपे किंचिकीर्षसि मे मह्यं शंस कथय ॥ २६ ॥

ते तव ये अनुपथाः अनुचरास्ते एते के मनसा सहेन्द्रियागणालक्ष्याहैकादशमहाभटा इति । एकादशोमहाभटो येषु दशसु ते तद्वृत्तीरालक्ष्याह । एता वेति । प्राणमालक्ष्याह । क इति । पुरः सरति गच्छतीति अग्रगः अयमहिर्नागः ॥ २७ ॥

त्वं ह्रीः असि त्वदङ्घ्रिरेव काम्यते इति काम ईप्सितोऽर्थस्तेनाना समस्ताः कामा येन तं त्वत्प्राप्त्यैव लब्धसर्वार्थमित्यर्थः पतिं धर्मं वने रहः एकान्ते मुनिर्वाविचिन्वती किम् अथवा भवानी

तदाननं सुभ्रु सुतारलोचनं व्यालम्बिनीलालकवृन्दसम्वृतम् ।
उन्नीय मे दर्शय वल्गुवाचकं यद्व्रीडया नाभिमुखं शुचिस्मिते ! ॥ ३१ ॥

॥ नारद उवाच ॥

इत्थं पुरञ्जनं नारि याचमानमधीरवत् ।
अभ्यनन्दत तं वीरं हसन्ती वीरमोहिता ॥ ३२ ॥
न विदाम वयं सम्यक्कर्त्तारं पुरुषर्षभ ! ।
आत्मनश्च परस्यापि गोत्रं नाम च यत्कृतम् ॥ ३३ ॥
इहाद्य सन्तमात्मानं विदाम न ततः परम् ।
येनेयं निर्मिता वीर ! पुरी शरणमात्मनः ॥ ३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

असि पतिं भवमथवा त्वं वाक् सरस्वती असि पतिं ब्रह्माणमथवा त्वं रमासि पतिं विष्णुं विचिन्वती यदा रमा त्वमसि तर्हि पद्मकोशः कराग्रात् क पतितः ॥ २८ ॥

आसामन्यतमा त्वं नासि यतो भुविस्पृक् द्वयमुक्तिः सामान्यतो ज्ञेया रमा रुक्मिण्यादिरूपेण भुवं स्पृशत्येव अतो वीरवरेण मया साकमिमां पुरीमलंकर्तुमर्हसि परं वैकुण्ठं यज्ञपुंसा विष्णुना ॥ २९ ॥

यद्यतः तवापाङ्गेन कटाक्षेण विखण्डितमिन्द्रियं मनो यस्य तं मां सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन विभ्रमन्ती या भ्रूस्तयोपलक्षः प्रवर्तितः एष मनोभवः कामः प्रबाधते अथातो हेतोरनुगृहाण ॥ ३० ॥

भाषाटीका ।

( हे ! राजन् अपनी स्त्रियों के सहित उन दशों का मालिक सब के भेटों का लेने वाला बहु रूप धारियों मे श्रेष्ठ उस नारीका और एक सखा है ॥ ० ॥

वह स्त्री युवा अवस्थावाली है कामरूपिणी है पांच फणावाला एक सर्प उसका द्वारपाल है तिस से वह सब प्रकार से सुरक्षित है ॥ २१ ॥

उसकी नासिका दन्त अति सुन्दर गण्डस्थल सुन्दर है वालावस्था है सुन्दर उसका मुख है सुन्दर समकर्णों की शोभा से कुण्डलकी लक्ष्मी को धारण करती है ॥ २२ ॥

वह श्याम वर्ण वाली है पिङ्गलवर्ण उसकी कोधनी है उस का कटिभाग सुंदर शोभित है नूपुरवाजा से शब्दायमान चरणोंसे चलने से देवता सरी की मालूम देती है ॥ २३ ॥

स्तन दोनों किशोर अवस्था को जना रहे हैं समानहैं गोल हैं मिले हुये हैं उन दोनों स्तनों को लज्जा के मारे वस्त्र के अग्र भाग से ढकती हुई है हस्ती सरीका गमन करतीहै ॥ २४ ॥

उसके प्रेम युक्त लज्जा सहित मनोहर कटाक्षरूपी बाण से ताडित होने से वह वीर जीव पुरंजन उस युवी स्त्री से प्रेम के वचन बोला ॥ २५ ॥

हे कमल दल लोचनी ! तू कौन है कौनकी है इहां क्यों आई है हे सति ! उपवनवाली इस पुरी मे तु क्या करेगी है सो मेरे से कह देना ॥ २६ ॥

ए ग्यारह वडे जोधा कौन तेरे साथ हैं हे सुंदर भृकुटी एसलि कौन हैं यह आगे चल ने वाला सर्प कौन है ॥

तु क्या देवी है अथवा सरस्वती है अथवा लक्ष्मी जो कि एकान्त में मुनिसरीकी पति को ढूंढती है पति के सब मनोरथ तेरे चरण से ही सिद्ध होते तेरे हाथ में से पद्म का पुष्प कहां गिर गया ॥ २८ ॥

इन तीनों देवी मे से भी तू कोई नहीं है क्योंकि पृ को स्पर्श कर रही है जो कुछ हो परन्तु तु अब मैं वर हूं मेरे सहित इस पुरी को शोभित करके मेरे इहां रह जैसे विष्णु के सहित लक्ष्मी वैकुण्ठ को शोभित करती है ॥ २९ ॥

तेरे नेत्र के कटाक्षों से मेरी सब इन्द्रिय शिथिल गई हैं मन्दहास युक्त लज्जा युक्त भ्रुकुटी सहित तेरा है तेरा चलाया हुआ भगवान् कामदेव मेरे को बाधा है हे शोभने ! मेरे पर अनुग्रह करदे ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्व्रीडया सम्मुखं न भवति तदाननमुन्नीय मे दर्शय भ्रुवौ यस्मिन् सुतारे शोभनकनीनिके लोचने यस्मिन् लम्बिनो दीर्घा ये अलकास्तेषां वृन्देन सम्वृतम् वल्गूनि कानि वाक्यानि यस्मिन् ॥ ३१ ॥

हेवीर ! साधि तं दृष्ट्वा मोहिता सती तमाह ॥ ३२ ॥

यत्पृष्टं कस्यासीत्यनेन कस्य पुत्री गोत्रजेति कास्ति किं नामासीति तत्राह । आत्मनो मम परस्य तवापि सम्यङ् न विद्मः गोत्रं नाम च यत्कृतं भवति विद्मः ॥ ३३ ॥

आत्मनो मम शरणमियं पुरी येन निर्मिता विद्मः ॥ ३४ ॥

एते सखायः सख्यो मे नरा नार्यश्च मानद ! ।
सुप्तायां मयि जागर्ति नागोऽयं पालयन् पुरीम् ॥ ३५ ॥
दिष्ट्याऽऽगतोऽसि भद्रं ते ग्राम्यान् कामानभीप्ससे ।
उद्वहिष्यामि तांस्तेऽहं स्वबन्धुभिररिन्दम ! ॥ ३६ ॥
इमां त्वमधितिष्ठस्व पुरीं नवमुखीं विभो ! ।
मयोपनीतान्गृह्णानः कामभोगान् शतं समाः ॥ ३७ ॥
कं नु त्वदन्यं रमये ह्यरतिज्ञमकोविदम् ।
असम्परायाभिमुखमश्वस्तनविदं पशुम् ॥ ३८ ॥
धर्मो ह्यत्रार्थकामौ च प्रजानन्दोऽमृतं यशः
लोका विशोका विरजा यान्न केवलिनो विदुः ॥ ३९ ॥
पितृदेवर्षिमर्त्यानां भूतानामात्मनश्च ह ।
क्षेम्यं वदन्ति शरणं भवेऽस्मिन् यद्गृहाश्रमः ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यत्पृष्टं क एते अनुपथा इति तत्राह । एत इति ॥ ३५ ॥

आस्तां नामगोत्रादियद्यागतोऽसि एतद्दिष्ट्या भद्रं तावत् ग्राम्यानिन्द्रियग्रामार्हान् उद्वहिष्यामि सम्पादयिष्यामि स्वबन्धुभिः सखिभिः सखीभिश्च ॥ ३६ ॥

समाः सम्वत्सरान् मनुष्यदेहप्रवेशाच्छतमित्युक्तम् ॥ ३७ ॥

प्रवृत्तिस्वभावत्वान्निवृत्तिनिन्दापूर्वकं तत्सङ्गमभिनन्दति । कमिति पञ्चभिः । त्वत्तोऽन्यं कं नु रमये अरतिज्ञं नैष्ठिकम् । अकोविदमनिषिद्धसुखत्यागिनम् । सम्परायो मृत्युस्तदनभिमुखं परलोकचिन्ताशून्यम् । अश्वस्तनविदं श्व इदं कर्तव्यमितीहलोकचिन्ताशून्यम् । अतएव पशुतुल्यम् ॥ ३८ ॥

अत्र गार्हस्थ्ये । प्रजानन्दः पुत्रसुखम् । अमृतं मोक्षः । केवलिनो यतयः ॥ ३९ ॥

गृहाश्रम इति यदेतत्क्षेमार्हं शरणमाश्रयं वदन्ति ॥ ४० ॥ ४१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यन्मुखं व्रीडयाभिमुखं न भवति तत् स्वमाननमुन्नीय मह्यं दर्शय आननं विशिनष्टि । शोभने भ्रुवौ यस्मिन् सुतारे कनीनिके लोचने यस्मिन् व्यालम्बिनो दीर्घा ये नीलालकास्तेषां वृन्देन संवृतं वल्गूनि वाचकानि वाक्यानि यस्मिन् शुचि स्मितं यस्मिन् शुचिस्मिते इतिपाठे सम्बोधनम् ॥ ३१ ॥

एवमधीरवदविजितेन्द्रियवद्याचमानं पुरञ्जनं नारी प्रमदा वीरं दृष्ट्वा मोहिता सती वीरं तं मोहयन्ती अभ्यनन्दातानेनान्योऽन्यपारतन्त्र्यं सूच्यते ॥ ३२ ॥

यत्पृष्टं कस्यासीति अनेन कस्य पुत्रीजातेति कात्वमिति किंस्वरूपा किन्नामासीति तत्राह । नेति । आत्मनो मम परस्य तवापि कर्तारं स्रष्टारं सम्यक् न विद्मः कर्तारं विशिनष्टि । गोत्रं नाम च यत्कृतं येन कर्त्रा कृतं भवति ॥ ३३ ॥

इहास्यां पुर्यामधुना सन्तं वसन्तमात्मानं पुरीमन्तः प्रविश्य नियन्तारं त्वां जानीमः ततः आत्मनः त्वत्तः मत्तश्च पर विलक्षणं पुरुषं न विदामः कोऽसौ परः यं न विद्म इति वदसि तत्राह । हेवीर ! आत्मनस्तव मम च शरणमियं पुरी येन निर्मिता तमित्यर्थः इहाद्य सन्तमात्मानं विदाम इत्यनेन केवलसंसारिणो जीवस्य बुद्धिः तत्स्वरूपमविशदावभासं गृह्णाति न तु याथात्म्येनेत्युक्तं न विदाम वयं वीर ! कर्तारं न विदाम मतः परं येनेयं निर्मिता वीर ! पुरीत्यनेन जीवस्य करणकलेबरादि सम्पादनचतुरं कृत्स्नजगदुदयविभवलयलीलं प्रकृतिपुरुषविलक्षणं परमपुरुषमापाततस्तत्त्वतश्च न विषयीकरोतीत्युक्तम् ॥ ३४ ॥

यत्पृष्टं क एतेऽनुपथा इति तत्राह । एत इति । एकादश महाभटाः ता ललनाश्च मे मम सखायः सख्यश्चानुवर्तिनो भृत्या इत्यर्थः अनेनेन्द्रियाणां तद्वृत्तीनां च बुद्ध्यैकायत्तत्वमुक्तं यत्पृष्टं कोऽयं तेऽहिः पुरः सर इति तत्राह । मयि सुप्तायां सत्यामयं नागः पुरीं पालयन् जागर्ति अनेन बुद्धीन्द्रियमनआदिषु सर्वेषु सुप्तेषु निर्व्यापारेषु सत्स्वपि प्राणव्यापारोऽस्तीति सर्वापेक्षया प्राणस्य प्राधान्यमुक्तम् ॥ ३५ ॥

आस्तां नाम गोत्रादि दिष्ट्या पुर्यामागतोस्यनेन मनुष्यदेहसंबन्धो दैवकृतो दुर्लभ इत्युक्तम् अतस्ते भद्रं तावद्ग्राम्यानिन्द्रियग्रामार्हशब्दादीनवाप्स्यसि हेऽरिन्दम ! अहं स्वबन्धुभिः सखिभिरिन्द्रियैः सहेत्यर्थः तान् ग्राम्यान् भोगांस्ते तुभ्यं उद्वहिष्यामि सम्पादयिष्यामि ॥ ३६ ॥

हे विभो ! नव द्वारामिमां पुरीं शतं समाः सम्वत्सरान् मया उपनीतान्प्रापितान्कामान् गृह्णानः अधितिष्ठस्व मनुष्यदेहप्रवेशाभिप्रायेण शतमित्युक्तम् ॥ ३७ ॥

संसारिणो जीवस्य प्रवृत्तिस्वभावत्वान्निवृत्तिनिन्दापूर्वकं तत्सङ्गमभिनन्दति पञ्चभिः । कन्विति ! त्वत्तोऽन्यं कं रमये क्रीडयाम्यनेन निवृत्तिमार्गनिष्ठो न बुद्ध्यधीन इत्युक्तं तत्र हेतुररतिज्ञं नैष्ठिक विरक्तमित्यर्थः अत एवाकोविदमनिपुणमनिषिद्धस्यादि

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

सुखस्यत्यागिनमसम्परायाभिमुखं सम्परायो मृत्युस्तदनभिमुखं मरणाभीरुमिति वा "कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिमित्युक्तेः अश्वस्तनविदं श्वोभवं श्वस्तनं कालान्तरानुभाव्यं स्वर्गादिभोग्यत्वेन न वेत्तीत्यश्वस्तनवित्तम् "एते वै निरयास्तात ! स्थानस्य परमात्मनः" इति ।

वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय ! देवेन्द्रत्वादिकं फलमिति ।

स्वर्गादिसुखस्य मुमुक्षोर्हेयत्वादित्यर्थः पशुं पशुतुल्यमिति निन्दति ॥ ३८ ॥

एवं निवृत्तिधर्मस्थं निन्दित्वा प्रवृत्तिस्वभावं स्तौति । धर्म इति । अत्र प्रवृत्तिमार्गे धर्मः स्वर्गादिसाधनो यागादिरूपो धर्मः तथार्थकामौ प्रजानन्दः पुत्रसुखममृतं मोक्षः यशः कीर्तिः विशोकाः निर्दुःखा विरजाश्च निर्मला लोकाः पुण्यलोकाश्च सिध्यन्तीतिशेषः लोकान् विशिनष्टि । यान् लोकान् केवलिनो निवृत्तिधर्मस्था न विदुः ॥ ३९ ॥

किञ्चास्मिन्भवे गृहाश्रम इति यदेतत्पित्रादीनां क्षेमार्हं शरणमाश्रयं वदन्ति पित्रादीनां गृहाश्रमिणामाराधकमाश्रित्यावस्थानात् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे शुचिस्मिते ! निर्मलविलासं त्वदाननं तव चेष्टाविशेषं मे दर्शयेत्यन्वयः सुभ्रु शोभना भ्रूर्भ्रमणशीलं विषयेषु यस्य तत्तथा सुतरां शोभनं लोचनमालोचनं यौक्तिकं ज्ञानं यस्य तत्तथा ततस्तर्हि किमिति न प्रकाशत इत्यत उक्तं व्यालम्बीति व्यालम्बिनामविस्रंसिनां चञ्चलानां नीलालकोपमवर्णानां तामसानां वृत्तिविशेषाणां वृन्देन संवृतं गूढं तस्मान्न प्रकाशत इत्यर्थः तर्हि कथं दर्शनमिति तत्राह । उन्नीयेति । तामसवृत्तिविशेषान् पृथक्कृत्य पुनरपि कीदृशं वल्गु सुंदरं वाचकं वक्रम् वाक्यं यस्य तत्तथा यदाननं व्रीडया वृत्तिविशेषेण ममानभिमुखं न संमुखं तदितिशेषः ॥ ३१ ॥

नरः पुरुषस्तमंवच्भिनी नारी वैषयिकी बुद्धिः हमन्ती उल्लसन्ती विशिष्ट ईरो ज्ञानं यस्य स वीरस्तमपि मोहयितुं शीलमस्या अस्तीति वीरमोहिनीति ॥ ३२ ॥

यदुक्तं । कस्यासीति तत्राह । नेति । हे पुरुषश्रेष्ठ ! कर्तारमुत्पादकं भर्तारं पोषकं वा सम्यग् लक्षणवत्तया न विदाम न जानीम हे गुणवदाश्रय ! कश्चिदस्तीति सामान्यमेव न तु विशिष्टमित्यतः सम्यगिति किञ्चात्मनो मम परस्योत्पादकस्यापि यथा नामकृतं यच्च गोत्रं तदपि न जानीमह इत्यन्वयः अनामगोत्रमिति श्रुतेः ॥ ३३ ॥

तर्हि किमपि न वेत्सि चेद्बुद्धित्वहानिरिति तत्राह । इहेति । इह सन्तमात्मानं मामहमित्यद्येदानीं जानीमहे उत्तरकाले सन्देहः कर्मवशात् ततः परं ततोऽन्यत्किमपि न विदाम इत्यन्वयः तस्मात्परमीश्वरं न विदाम येनेश्वरेण मम शरणं निवासयोग्येयं पुरीविरचितेति वा ॥ ३४ ॥

के तेऽनुपथा इति तत्राह । एत इति ॥ ३५ ॥

इवबन्धुभिरिन्द्रियैः ॥ ३६ ॥

हस्तपादयोरेकत्वेन नवत्वं मुखानि द्वाराणि शतं म... नेन शतायुर्वै पुरुष इति श्रुतेः । मनुष्याणां शतायुर्निर्... नुष्यशरीरमिहाभिप्रेतम् ॥ ३७ ॥

तत्र हि ज्ञानोत्पत्तिः कुत इति तत्राह । कान्यानि । का... स्त्वदन्यं मनुष्यशरीरप्रविष्टं चेतनं विहायान्यं पर्याप्... गतं रमयेत्सुखिनं कुर्यादित्यन्वयः कुत इत्यत उक्तम् । अरतिं...

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्चमानव इति स्मृतेः । परमात्मरतिज्ञानरहितं शब्दादिविषयरतिज्ञानहीनं वा तदा... इत्यत उक्तम् । अकोविदमिति । अपण्डितत्वादित्यर्थः पाणि... भावः कथमित्यत्राह । असांपरायेति । सांपरायो मोक्षस्त... मुखो न भवतीत्यसांपरायाभिमुखस्तं युद्धाभिमुखकामो ना... भिमुखत्वं कथमित्यत उक्तमश्वस्तनविदमिति श्वस्तनं म... नवेत्तीत्यश्वस्तनवित्तं न विदुः श्वस्तनं न लोकालोक... श्रुतिः श्वस्तनं तमपीदृशमिति न वेत्तीत्यश्वस्तनवित्तं वा ... वेवं विध इत्युक्तं पशुमिति तत्त्वज्ञानरहितमत्र सद्बुद... द्धी द्वे यथासंभवं विशेषणैस्तत्तदर्थतया ज्ञातव्ये असद्बुद्धि... क्षायां पाशुपतागमज्ञानशून्यम् अन्यत्रोक्तार्थः असद्बुद्धिपक्षेऽपि... तानुसारेण मोक्षादिकं स्वस्यैवार्थेन इदं समस्तमुपपन्नमिति...

इतोऽपि श्वस्तनोऽपि नास्त्येवेत्याह । धर्म इति । अत्र धर्मार्... दयः सन्तीति हि यस्मात्तस्मात्प्रजानन्दः । पुत्रसुखममृतं ... मन्योन्यमविरोधेन धर्माद्यनुष्ठानं न सुशकमिति भावेनाह । यान्... केवलिनो निष्किंचना उदरम्भरिजना वा ॥ ३९ ॥

सर्वाश्रमाणामुपजीव्यत्वात् गृहाश्रम एव ज्यायानि... पितृदेवेति । आत्मनोऽस्य देहस्य क्षेम्यं मोक्षयोग्यं शरणं... न्तीति यत्तस्मादिति शेषः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतिहासपक्षे पुरञ्जनभोगार्थं परोक्षेण काचिदेव नि... मिति न विदामेत्युक्तम् ॥ ३३—३४—३५ ॥

तांस्तेऽहमित्यत्र स्नेहानिति कचित् ॥ ३६—५३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्मृतिभ्रष्टस्य कामिनो जीवस्य वैयग्र्यं दर्शयति । त्वमिति । मनोहरं यथा स्यात्तथा वक्तीति तत् । यदाननं तवेदं न ... मुखमिति भगवत्यविद्ये देवि मदीयचिन्मयज्ञानानन्दभोगाद्... वञ्चित एव किन्तु स्वीयां रूपादिविषयसम्पत्तिं सम्प्रति म... त्वेनोपकल्पय अलमेतावता वाक्येन तत्राननमित्यादिना रू... गन्धस्पर्शानां वाचकमिति शब्दस्य च भोगप्रार्थनाभिव्यञ्जन...

अधीरवत् वस्तुतस्तु चिद्रूपत्वाद्धीरमेव । हे वीरेति ! तवे... यं कथ्यत इति ध्वनिः । मोहिनेति । यथा विषयमाधुर्... जीवोऽनुरञ्जितस्तथा चिन्माधुर्यैर्जीवेनापि सानुरञ्जनेत्यर्...

यत् पृष्टं कस्यासि कासीति तत्राह । न विदामेति । इ... कस्यचिन्मुनेर्मोहनार्थमायातायाः कस्याश्चिदप्सरस इयं ... वा जानीते स्म अध्यात्मपक्षे या जीवज्ञानमावृणोति सा ... श्वरमहं जानामीति व्याहर्तुमर्हतु गोत्रमिति । किं गोत्राहं ... किं नाम्नी चाहमिति न विदाम ॥ ३३ ॥

तर्हि किं जानामीत्यत आह । इहाद्येति । येनात्मनः स्व... वा शरणमास्पदं पुरी निर्मिता तं न विदामेति कथादेः

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

केनचिन्मुनिना कर्द्दमेनेव विषयभोगार्थं पुरीयं योगबलेन निर्म्मितेति राजा जानीते स्म ॥ ३४ ॥

यत्पृष्टं क एतेऽनुपथा इति तत्राह । एत इति । सखाय इन्द्रियाणि सख्यस्तद्वृत्तयः । नागः प्राणः मयि सपरिकरायां सुप्तायां सत्यां जागर्त्ति । स्वप्ने इन्द्रियाणां लये सुषुप्तौ मनोबुद्ध्योरपि लये प्राणो विराजत एव ॥ ३५ ॥

दिष्ट्या भाग्येनैव आगतः मनुष्यशरीरं प्राप्तोऽसीति । उद्वक्ष्यामि संपादयिष्यामि स्वबन्धुभिः सखिभिः सखीभिश्च समाः सम्वत्सरान् मनुष्यदेहप्रवेशाच्छतमित्युक्तम् ॥ ३६—३७ ॥

कथापक्षे सम्प्रति पतिवरैवाहमकस्मात् प्राप्तं स्वसदृशं त्वां पश्यन्ती नान्यमन्वेषयामीत्याह । कमिति । अध्यात्मपक्षे तु बुद्धिरियं राजसी किञ्चित् सत्त्वमिश्रत्वाद्धार्मिकैवेति तामस्या सात्त्विक्या च बुद्ध्या आवृतं पुमांसं निन्दति । कमिति पञ्चभिः । स्वावरयोनिगतत्वादरतिज्ञं पश्वादियोनिगतत्वेन रतिज्ञत्वेऽप्यकोविदम् । विप्रक्षत्रियादिजातित्वेन कोविदत्वेऽपि सम्परायो युद्धं तदनभिमुखमवीरमित्यर्थः । क्षत्रियजातित्वेन वीरत्वेऽपि अश्वस्तनविदं श्वः परश्वो वा मरणानन्तरं मे किं भविष्यतीति ज्ञानशून्यत्वादधार्मिकमित्यर्थः । पशुतुल्यत्वात्पशुम् ॥ ३८ ॥

त्रिवर्गसाधकं गार्हस्थ्यमभिनन्दति । धर्म इति । प्रजार्थकरत्युत्थ आनन्दः पुत्रपौत्रादिलालनरूप आनन्दो वा अमृतमदनीयं यज्ञशिष्टादि । अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृत इति मेदिनी । लोका यागादिप्राप्याः । केवलिनो यतयो यान्न विदुरित्यतिदुःखग्राप्यस्य चतुर्थपुरुषार्थस्यानभिनन्दनात् सात्त्विकी बुद्धिरपि निन्दिता । अध्यात्मपक्षे त्रिवर्गस्योपपादनमविद्ययैवेत्युक्तम् ॥ ३९ ॥

गृहाश्रमस्तु सर्वेषां सुखद इत्याह । पित्रिति । अस्मिन् भवे मनुष्यजन्मनि यद् क्षेमं शरणं वदन्ति स गृहाश्रमः ॥४०—४१॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे शुचिस्मिते ! यत् व्रीडया अनभिमुखं तदाननमुन्नीय मे मह्यं त्वं दर्शय शोभने सुभ्रुवौ यस्मिन् सुतारे लोचने यस्मिन् व्यालम्बिनो दीर्घा ये नीलाः अलकास्तद्वृन्देन सम्वृतम् वल्गूनि मधुराणि वाचकानि पदानि यस्मिन् तत् ॥ ३१ ॥

वीरेण पुरञ्जनेन मोहिता ॥ ३२ ॥

आत्मनः परस्य तव च कर्त्तारं यद् कृतं गोत्रं नाम च तमपि न विदाम न विद्मः ॥ ३३ ॥

शनैः आत्मानं पुरीं च पुरञ्जनायार्पयन्त्याह । इहेति । आत्मानं स्वात्मानमिह मम समीपे अद्य सन्तं परं त्वां च न विदाम येन आत्मनः प्रियस्य तव इयं मदभिन्ना भार्या शरणं गृहरूपा पुरी च निर्मिता तं च न विदाम न विद्मः ॥ ३४ ॥ ३५ ॥

दिष्ट्या आगतोऽसि अतस्ते भद्रं भवतु यान् कामान् त्वमभीप्ससे तांस्ते स्वबन्धुभिः सह अहं उद्वक्ष्यामि सम्पादयिष्यामि ॥ ३६ ॥

समाः सम्वत्सरान् ॥ ३७ ॥

निवृत्तिनिन्दां विना प्रवृत्तौ रुचिर्न स्यादतो निवृत्तिनिन्दापूर्वकं तत्सङ्गमभिनन्दति । कमिति पञ्चभिः । त्वदन्यम् अरतिज्ञं नैष्ठिकम् अत एवाकोविदम् असम्परायाभिमुखं सम्परायो मृत्युः पुत्रोत्पादनादिना देहं हित्वा स्वर्गं यास्यामीति सम्परायाभिमुखः तद्विपरीतं पुत्रोत्पत्त्याद्यपेक्षकमित्यर्थः अश्वस्तनविदम् इदं भार्यापुत्रादिसुखाय श्वःकर्तव्यमिति भार्यापुत्रादिरक्षाचिन्तादिशून्यमत एव पशुमैहिकामुष्मिक सुखानर्हम् कं रमये न कमपीत्यर्थः ॥ ३८ ॥

अत्र गार्हस्थ्ये केवलिनो विरक्ताः ॥ ३९ ॥

भवे संसारे ॥ ४० ॥ ४१ ॥

---

भाषाटीका

हे सुभ्रु ! तुमारा मुख सुन्दर है दोनों भ्रुकुटियों से सुशोभित है इस मुख में जो नेत्र है सो सुन्दर तारा वाले हैं यह मुख सुन्दर नीलवर्ण के केशों से युक्त है जिस मुख में सुन्दर मनोहर वचन हैं जो मुख लज्जा के मारे हमारे सन्मुख नहीं होता है सुन्दर मन्दहास वाले इस मुख को उठाकर मेरे को दिखाओ ॥ ३१ ॥

श्री नारदजी बोले इस प्रकार से अधीर सरीके होकर जब पुरञ्जन ने याचना करी, तब वह नारी, वीर के स्वरूप से मोहित होकर हसती हुई पुरञ्जन से बोली ॥ ३२ ॥

हे ! पुरुषर्षभ ! अपने अथवा दूसरे के करने वाले को हम नहीं जानते हैं नाम गोत्र करनेवाले को भी नहीं जानते हैं ॥ ३३ ॥

अपना इहांपरं रहना मात्र हम जानते हैं इससे आगे हे वीर ! जिसने हमारे स्थान इस पुरी को बनाया है तिसको नहीं जानते हैं ॥ ३४ ॥

हे मानद ! ये, सब नर नारी मेरे सखा और सखी हैं मैं जब सोती हूं तब यह सर्प इस पुरी को पालन करता हुआ जगता रहता है ॥ ३५ ॥

हे अरिन्दम ! आप अच्छे आये आपका भला होवै आप विषय भोग को चाहते हौ तब मैं अपने बन्धुओं के सहित तुमारे उन कामों को पूर्ण करोंगी ॥ ३६ ॥

हे विभो ! इस नौ मुख वाली पुरी में तुम रहो मैं तुम को सबकामों को देउंगी सैकडों वर्ष पर्यन्त उनको ग्रहण करते हुये तुम रहो ॥ ३७ ॥

तुमको छोडकर मैं दूसरे कौन को रमाऊं जो कि रतिको नहीं जानता है अपण्डित है परलोक चिन्ता रहित कल होने की बात को नहीं जानने वाला पशु सरीका है ॥ ३८ ॥

इस गृहस्थ आश्रम में धर्म अर्थ काम मोक्ष पुत्र सुख यश शोक रहित निर्मल लोक प्राप्त होसकते हैं जिन लोकादिको को विरक्त पुरुष नहीं जानते हैं ॥ ३९ ॥

इस संसार में गृहस्थाश्रम पितृ देवता मनुष्य तथा और भूतमात्र सबका कल्याण कारक आश्रय है ऐसा विद्वान् जनों का कथन है ॥ ४० ॥

---

का नाम वीर ! विख्यातं वदान्यं प्रियदर्शनम् ।
न वृणीत प्रियं प्राप्तं मादृशी त्वादृशं पतिम् ॥ ४१ ॥
कस्या मनस्ते भुवि भोगिभोगयोः स्त्रिया न सज्जेद्भुजयोर्महाभुज ! ।
योऽनाथवर्गाधिमलं घृणोद्धतस्मितावलोकेन चरत्यपोहितुम् ॥ ४२ ॥

॥ नारद उवाच ॥

इति तौ दम्पती तत्र समुद्य समयं मिथः ।
तां प्रविश्य पुरीं राजन् ! मुमुदाते शतं समाः ॥ ४३ ॥
उपगीयमानो ललितं तत्र तत्र च गायकैः ।
क्रीडन् परिवृतः स्त्रीभिर्ह्रदिनीमाविशच्छुचौ ॥ ४४ ॥
सप्तोपरि कृता द्वारः पुरस्तस्यास्तु द्वे अधः ।
पृथग्विषयगत्यर्थं तस्यां यः कश्चनेश्वरः ॥ ४५ ॥
पञ्चद्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा ।
पश्चिमे द्वे अमूषां ते नामानि नृप ! वर्णये ॥ ४६ ॥
खद्योताविर्मुखी च प्राग्द्वारावेकत्र निर्मिते ।
विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः ॥ ४७ ॥
नलिनी नालिनी च प्राग्द्वारावेकत्र निर्मिते ॥
अवधूतसखस्ताभ्यां विषयं याति सौरभम् ॥ ४८ ॥
मुख्या नाम पुरस्ताद्वास्तया पणवहूदनौ ।
विषयौ याति पुरराड्रसज्ञविपणान्वितः ॥ ४९ ॥
पितृहूर्नृप ! पुर्या द्वार्दक्षिणेन पुरञ्जनः ।
राष्ट्रं दक्षिणपञ्चालं याति श्रुतधरान्वितः ॥ ५० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भोगिभोगयोः सर्पदेहाकारयोस्तव भुजयोर्यन्न सज्जेदेवं भूतं कस्याः स्त्रिया मनः स्यान्न कस्या अपि । यो भवाननाथवर्गो दीनस्तेमास्तेषामाधिमलमस्यर्थमपोहितुं सर्वत्र चरति केनापोहितुम् घृणयोद्धतोऽतिशयितो यः स्मितपूर्वकोऽवलोकस्तेन ॥ ४२ ॥

समुद्य समुदीर्य समाः सम्वत्सरान् ॥ ४३ ॥

तत्र जाग्रदवस्थां संक्षेपेणाऽऽह । उपगीयमान इति । सुषुप्त्यवस्थामाह । ह्रदिनीं हृदयाकाशं स्वापस्थानम् । शुचौ निदाघे ॥ ४४ ॥

इदानीं नवद्वारप्रदर्शनपूर्वकं जाग्रदवस्थां प्रपञ्चयति । सप्तेति यावदध्यायसमाप्ति तस्याः पुर उपरि कृता द्वारः सप्त वृता इति पाठे संवृताः नेत्रे नासिके श्रोत्रे मुखं चेति सप्त अधो द्वे द्वारौ गुदलिङ्गे यः कश्चनेति आत्मनः सम्यगविज्ञानादनियतत्वाच्च ॥ ४५ ॥

तासु सप्तसु पञ्च द्वारः पौरस्त्याः पूर्वदिग्भवाः ॥ ४६ ॥

खद्योतवदल्पप्रकाशा वामनेत्ररूपा आविः प्रकटं मुखं [illegible] सा बहुप्रकाशा दक्षिणनेत्रलक्षणा "तस्माद्दक्षिणोऽर्धं [illegible] वीर्यावत्तर" इति श्रुतेः स्वानुभवाच्च तत्र प्रकाशाधिक्यम् । [illegible] संलग्ने विभ्राजितं रूपम् द्युमत्सखश्चक्षुःसहितः ॥ ४७ ॥

नलनालशब्दौ छिद्रवचनौ तद्वती नलिनी नालिनी च [illegible] दक्षिणनासिके अत्रापि संज्ञाभेदादेव कार्यन्यूनाधिक्यं [illegible] वज्ज्ञेयम् । अवधूतो वाय्वधिष्ठितो घ्राणः सौरभं गन्धम् ॥ ४८ ॥

मुख्या प्रधाना आस्यम् । आपणो भापणम् । बहूदनाभि[illegible] बहोदन इत्यनुक्तिः परोक्षवादत्वाय रसज्ञं रसनेन्द्रियं [illegible] वागिन्द्रियं ताभ्यामन्वितः ॥ ४९ ॥

दक्षिणेनेति न तृतीया किन्तु दक्षिणस्यां दिशीत्यर्थे [illegible] तद्धितोऽयमेनप्प्रत्ययोऽव्ययसंज्ञः एवमुत्तरेणेति अयमर्थः [illegible] विषयाणामन्यतोऽनवगतानां प्रकाशयालमिति पञ्चालं [illegible] श्रवणकाले च बलाभिक्याद्दक्षिणकर्णः प्रथमं प्रवर्तते [illegible]

### श्रीधरस्वामिकृतभावार्थदीपिका ।

च प्रथमं श्रोतव्यं कर्मकाण्डमित्येतावता साम्येन प्रवृत्तसंज्ञस्य कर्मकाण्डस्य दक्षिणकर्णेन श्रवणमिष्यते । अतस्तदर्थमनुष्ठाय पितृभिराहूतः पितृलोकप्रापकं पितृयानं प्रपद्यते तदनेन प्रकाशितं पितृणामाह्वानमनेन भवतीति पितृहूर्दक्षिणकर्णः एवं द्वैपरीत्येनोत्तरः कर्णो देवहूः तथा च व्याख्यास्यति । "पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः । प्रवृत्तं च निवृत्तं च शास्त्रं पञ्चालसंज्ञितम् । पितृयानं देवयानं श्रोत्राच्छ्रुतधराद्व्रजेत्" इति ॥ ५० ॥ ५१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हेवीर ! विख्यातं कामित्वेन प्रसिद्धं वदान्यं त्यागिनं कामार्हं वहितमस्यजन्तामित्यर्थः अत एव प्रियेषु शब्दादिविषयेषु दर्शनं दृष्टिर्यस्य तं कथापक्षे विख्यातं यशस्विनं वदान्यं दानशीलं प्रियदर्शनं सुन्दरमित्यर्थः ईदृशं त्वादृशं निःसमं पतिं दैवात्प्राप्तं मादृशी निःसमाना का वा स्वयं न वृणीत वृणुयादेवेत्यर्थः ॥४१॥

हे महाभुज ! भुजगेन्द्रभोगयोः सर्पदेहाकारयोः तव भुजयोः कस्याः स्त्रियो मनः न सज्जेदासक्तं भवेद्वा भवाननाथवर्गाः दीनानां स्तोमाः तेषामाधिमलमत्यर्थमपोहितुं सर्वत्र चरति केन हेतुनापोहितुं घृणयोद्धतः अतिशयितो यःस्मितपूर्वकोऽवलोकस्तेन ॥ ४२ ॥

एवं संबन्धदार्ढ्यख्यापनाय तयोः संवादमभिधायोपसंहरन् तयोर्व्यापारमाह नारदः । तौ दम्पती पुरञ्जनपुरञ्जन्यौ मिथोऽन्योऽन्यं समयं संकेतं समुद्य समुदीर्य दैवादन्योऽन्यं दृढतरं संबध्येत्यर्थः हेराजन् ! प्राचीनबर्हिः तां पुरीं प्रविश्य शतं समाः संवत्सरान् मुमुदाते ॥ ४३ ॥

एवं जीवबुद्ध्योर्जीवकर्मानुरूपदैवाख्यपरमपुरुषसंकल्पायत्तदृढतरसंबन्धं तत्प्रयुक्तदेहसंबन्धं च पारोक्ष्यरूपेणाभिधाय शुश्रूषोः प्राचीनबर्हिषः प्राप्यपरब्रह्मव्यतिरिक्तवैतृष्ण्यजननार्थं प्राप्य तृष्णाजननार्थं संसरतो जीवस्य जाग्रत्स्वप्नसुषुप्तिमरणावस्थासु दोषानुद्घाटयितुं जाग्रदाद्यवस्थाः प्रतिपिपादयिषुः कथाव्याजेन तावत्समासतः सुषुप्त्यवस्थामाह । उपगीयमान इति । ललितं यथा भवति तथा गायकैरुपगीयमानः पुरञ्जनः स्त्रीभिः परिवृतस्तत्र तत्र क्रीडन् शुचौ आषाढे क्रीडानिमित्तश्रमापनोदनाय ह्रदिनीं सरसीमाविशदिति कथापक्षे अर्थः पक्षान्तरे तु जाग्रदवस्थायां स्त्रीभिरिन्द्रियवृत्तिभिस्तत्र तत्र क्रीडन् शब्दादिविषयाननुभवन् व्यापृतकरणत्वात्तत्प्रयुक्तश्रमनिर्हरणाय शुचौ ह्रदिनीमाविशदित्यर्थः ह्रदिनीशब्देन पुरीतदाख्या नाडी विवक्षिता शुचिशब्देन ब्रह्म शुचौ ब्रह्मण्याविश्य तद्द्वारा ह्रदिनीमाविशदित्यर्थः प्रासादखट्वापर्यङ्कवत्समुच्चयेन नाडी पुरीतद्ब्रह्माणि हि जीवस्य सुषुप्तिस्थानं ननु विकल्पेन अथ यत्रैतत्सुषुप्तः समस्त संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सुप्तो भवति अथ यदा सुषुप्तो भवति यदा न कस्य चन वेद हितानाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्युपसृप्य पुरीतति शेत इति तथा यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवतीति त्रयाणामपि सुषुप्तिस्थानत्वश्रवणात्कार्यभेदेन समुच्चये संभवति पाक्षिकबाधगर्भविकल्पस्यान्याय्यत्वात् संभवति च प्रासादखट्वापर्यङ्कवन्नाड्यादीनां कार्यभेदः तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ ब्रह्म च पर्यङ्कस्थानीयं ततो ब्रह्मैव साक्षात्सुषुप्तिस्थानम् ॥ ४४ ॥

इदानीं जाग्रदवस्थां प्रतिपादयति । सप्तेत्यादि यावदध्यायसमाप्ति तत्र नवभिर्द्वार्भिः पुरीं लक्षितलक्षणामिति द्वारत्वेन रूपितानां चक्षुरादीन्द्रियस्थानानामिन्द्रियाणां च गौणनामानि तत्कार्याणि तद्विषयांश्च कथयन्नाह । सप्तेति । तस्याः पुरः पुर्याः सप्त द्वारः उपरि कृताः चक्षुर्द्वयश्रोत्रद्वयनासिकाद्वयं मुखश्चेति द्वे द्वारावधः कृते कल्पिते गुदं लिङ्गं चेति किमर्थमेवं कल्पिता इत्यत्राह । तस्याः पुर्यां यः कश्चन ईश्वरः पृथगसङ्करेण विषयान् शब्दादीन्प्रति गत्यर्थं विषयानवगन्तुमित्यर्थः संसारिणां जीवस्य स्वपरयाथात्म्यज्ञानाभावान्मनुष्यशरीरस्यानियतत्वाच्च यः कश्चनेत्युक्तं कथापक्षे विषयशब्दो देशपरः देशान्प्रतिगत्यर्थमित्यर्थः ॥ ४५ ॥

पञ्चेति । तत्र तासु सप्तसु द्वार्षु पञ्चद्वारः पौरस्त्याः पूर्वदिग्भवा एका दक्षिणा तथा एकोत्तरा द्वे पश्चिमे पश्चिमदिग्भवे हेनृपते ! तुभ्यममूषां द्वारां नामानि गुणनामानि वर्णये ॥ ४६ ॥

खद्योता खद्योतवदल्पप्रकाशा वामनेत्ररूपा आविः प्रकटं मुखं यस्याः सा बहुप्रकाशा दक्षिणनेत्ररूपा ख्यातुभयाश्च तत्र प्रकाशाधिक्यमवगन्तव्यम् एते द्वारावेकत्र निर्मिते लग्ने ताभ्यां खद्योताविर्मुखीभ्यां द्वाभ्यां द्युमत्सखः द्युमान्सूर्यस्तदधिष्ठेयं चक्षुरिन्द्रियमपि द्युमत्तदेव सखा यस्य सः । यद्वा । द्युमतः सखा द्युमत्सखः "राजाहःसखिभ्य इतिटच्" चक्षुषा सहित इत्यर्थः विभ्राजितमालोकादिना प्रकाशरूपं जनपदं विषयं यात्यवगच्छति कथापक्षे तु खद्योतादिशब्दा अश्वकर्णादिशब्दवत्केवलसंज्ञाशब्दा इत्यवगन्तव्यं जनपदं देशं याति गच्छतीत्यर्थः ॥ ४७ ॥

नलनालशब्दौ छिद्रवचनौ नलमस्या अस्तीति नलिनी एवं नालिनी वामदक्षिणनासिके अत्रापि संज्ञाभेदादेव कार्यन्यूनाधिक्यं पूर्ववज्ज्ञेयं अवधूनयति कम्पयतीत्यवधूतो वायुस्तत्सखोऽत्वधिष्ठितो घ्राणः ताभ्यां द्वाभ्यां सौरभं गन्धं विषयं याति ॥४८॥

मुख्येति । मुख्या प्रधाना आस्य रूपा द्वाः पूर्वदिग्भवा तया मुख्यया द्वारा पणः पणनं व्यवहारः भाषणं बहूदनश्चित्रमन्नं बहूदनः इत्यनुक्तिः परोक्षवादत्वाय पणबहूदनौ विषयौ पुरराट् पुरञ्जनः रसनेन्द्रियं विपणो वागिन्द्रियं ताभ्यामन्वितो याति ॥ ४९ ॥

पुर्यां दक्षिणेन दक्षिणस्यां दिशि एनयन्ताद्व्ययं पितृहूर्नाम द्वाः पितॄन् जिहीते गच्छत्यनयेति पितृहू. ओहाङ् गतौ इत्यस्मात् क्विप् तिश्चद्योः कृरिति कुप्रत्ययो बाहुलकात पितृलोकप्राप्तिसाधनभूता यागादिक्रिया तदवबोधिनी त्रयी पूर्वभक्तिश्च पितृहूशब्दार्थः तत्र दक्षिणकर्णस्य बलाधिक्याच्छ्रोतॄणां प्रथमं त्रिवर्गप्रावण्याच्च प्रवृत्तिशास्त्रश्रवणे प्रवर्तत इति । प्रथमं श्रोतव्यं पितृलोकप्राप्तिसाधनकर्मप्रकाशकप्रवृत्तिशास्त्रश्रवणसाधनत्वाद्दक्षिणकर्णः पितृहूः अनन्तरं श्रोतव्यब्रह्मप्राप्तिफलनिवृत्तिधर्मप्रकाशकोत्तरशास्त्रश्रवणसाधनत्वाद्वामकर्णो देवहूः ननूत्तरभागतदर्थश्रवणादावपि बलाधिक्याद्दक्षिणकर्ण एव प्रथमं प्रवर्तत इति । कथमेतदुच्यते इति चेत् एवं तर्हि एव

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गुणनामधेयवलात्पूर्वभागतदर्थानां शास्त्रप्राधान्येन दक्षिणकर्णश्रवणविधानमुत्तरभागतदर्थानां तु वामकर्णप्राधान्येन श्रवणविधानं चानुमीयते यथा दक्षिणं दीक्षितः पूर्वमंक्ते सव्यं हि मनुष्या अञ्जत इत्यत्र दृष्टार्थत्वान्मनुष्याः सव्यनयनाञ्जनं पूर्वं कुर्युरित्येवं प्रमाणान्तरेणाप्राप्तस्य सव्यनयनाञ्जनस्य सिद्धवन्निर्देशानुपपत्तौ सव्यनयनस्य प्रथममञ्जनेन दृष्टविशेषालाभात्प्रसिद्धवन्निर्देशानुपपत्त्यामानुपूर्वीभिरवश्यं प्रथमं सव्यनयनाञ्जनं कर्तव्यमिति विधिरनुमीयते तद्वत् यथा वा तस्मादपि वध्यं प्रपन्नं न प्रति प्रयच्छन्तीति शरणागतस्य प्रत्यर्पणं प्रमाणान्तरेणाप्राप्तमपि तस्मादिति प्रसिद्धवन्निर्देशानुपपत्त्या शरणागतो न प्रत्यर्पणीय इति विधिरनुमीयते तद्वत्पूर्वोत्तरभागयोर्यथाक्रमं दक्षिणोत्तरकर्णप्राधान्येन श्रवणमन्यतोऽप्राप्तमप्यनेनैव सिद्धवन्निर्देशगुणनामधेयबलेन विधीयत इति निरवद्यं पुरञ्जनः पितृहूद्वारा श्रुतिधरः श्रोत्रेन्द्रियं श्रवणविषयं शब्दं धरत्यवगच्छतीत्यनेनेतिव्युत्पत्तेः तेनान्वितो युक्तः दक्षिणपाञ्चालं दक्षिणद्वारगम्यं पाञ्चालं पञ्चते व्यक्तीकरोतीति पाञ्चालं पच्यते व्यक्तीक्रियत इति वा पाञ्चालं पचिव्यक्तीकरणे इत्यस्मात् "तमिविशिचण्डिमृणिकुलिकपिपालिपञ्चिभ्यः कालन्„ इत्यौणादिककालच्प्रत्ययान्तः पाञ्चालशब्दः ततः प्रज्ञादिभ्यस्स्वार्थेऽण् प्रवृत्तिधर्मप्रकाशकशास्त्रात्मकं राष्ट्रं याति ॥ ५० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किं बहुनोक्तेन फलितं वक्तीत्याह । कानामेति । वदान्यं पुत्रकलत्राद्यभीष्टदानशीलं स्वयं प्राप्तत्वात् ॥ ४१ ॥

त्वादृशमित्युक्तं किंचिद्विशिनष्टि । कस्या मन इति । अनाथवर्गस्यास्मदादेराधिं मनो दुःखं मलमपोहितुं चरसि घृणया दययोद्धतपुञ्जृम्भितं यस्मिंस्तत् तत्पूर्वकोयोऽवलोकस्तेन दर्शनेन कस्याः स्त्रियाः ॥ ४२ ॥

परमफलितमाह । इमीति । समयं प्रमाणपूर्वकं समुह्य सम्वादं कृत्वा देहप्राप्तेः पूर्वं तदनन्तरं वा याथार्थ्यविवक्षयैतद्वचः पुरीं देहं शतं समा इति शतं वर्षाण्यवश्याच्छेदितिश्रुतेरर्थमनुकरोति मुरहर्षे इति धातोः हर्षशोकयोः सुखदुःखयद्वंधुत्वादुभयं पर्यायेण बुद्धिपुरुषौ प्राप्तवन्ताविल्यर्थः ॥ ४३ ॥

तत्र प्रथमं मोदप्रकारमाह । उपगीयमान इति । जाग्रदावस्थायां तत्र तत्र प्रतीन्द्रियविषयं गायकलक्षणैः शब्दादिभिर्विषयैरुपगीयमानः सेव्यमानः स्वप्नावस्थायां स्त्रीभिः केवलं मनोवृत्तिलक्षणाभिः परिवृतः "स्त्रीभिर्वा यानैर्वा" इति श्रुतेः शुचौ तत्रामित्ते शोके प्राप्ते शीतलाममाधतोयधारामिव सुषुप्तिकाले सच्छब्दवाच्यं ब्रह्मस्वरूपस्थितिमाविशत् सुखावस्थायामभूदित्यर्थः लक्षितं यथा तथा अन्यत्र शुचौ ऋतुविशेषे

सता सोम्य ! तदा सम्पन्नो भवतीति श्रुतेः :

सत्पुरुषः स्त्रीशब्दवाच्यैर्भक्त्याविभिः परिवृतः क्रीडन् विहरन् कालं यापयन् इदिनीं ह्लादिन्यां ब्रह्मनाड्यां हृदयस्थानेष्टदलपद्मे स्थितं श्रीनारायणमाविशदभ्यायदित्यर्थः ॥ ४४ ॥

देहाख्यं पुरं प्रसिद्धपुरसाम्येन वर्णयति । सप्तेति । पुर उपरि सप्त द्वारः कृताः द्वे नेत्रे द्वे नासिके कर्णौ चेति अधो द्वे पायूपस्थे इति कृत्यमाह । विषयगत्यर्थं ... द्विविषयज्ञानार्थं निर्मिता इत्यर्थः तस्यां पुर्यां कश्चनेश्व... मरूपो लोकविलक्षणः श्रीनारायणोऽस्तीत्यन्वयः जीवो ... रसामर्थ्योपेतत्वादीश्वर इत्युच्यते देहस्वामित्वाद्वा ... त्त्वार्दिमत्त्वात्तुच्छत्वेन यः कश्चनेति ॥ ४५ ॥

तत्रापि विभागमाह । पञ्चेति । तासामुपरि द्वारां मध्ये ... स्त्याः पुरस्ताद्भवाः पञ्चद्वारो नेत्रादय इत्यर्थः पश्चाद्द्वे ... दक्षिणकर्णलक्षणा दक्षिणा तथोत्तरा वामकर्णलक्षणा ... द्वेऽधोभागे द्वे पायूपस्थे अमूषां नव द्वाराम् ॥ ४६ ॥

खे आकाशे सति द्योतते रूपं गृह्णातीति खद्योता ... वत् द्योतत इति वा दक्षिणचक्षुर्लक्षणा आविः प्रकाशे मुखयस्याभिमुखी भवतीति साविर्मुखी प्रकाशमुखी न ... तमसि रूपग्रहणाभावादिति वामचक्षुर्लक्षणा ताभ्यां ... प्रकाशितं जनस्य द्रष्टुः पदमालम्बनं रूपाख्यं याति ... करोति गृह्णातीत्यर्थः कथंभूतः द्युमानादित्यश्चक्षुर्लक्षणः यस्य स तथा चक्षुरिन्द्रियसहित इत्यर्थः द्युमानादित्य... वासहेतुत्वाच्चक्षुषोऽपि तन्नाम

आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदिति श्रुतेः ।

आदित्यो ह्वै चक्षुस्तेनानुगृहीतं रूपं गृह्णातीति च ॥ ...

नलो नाम श्वासः सोऽस्या अस्तीति नालिनी नलोद्भवो योऽस्या विद्यत इति नालिनी नलनालौ श्वासोच्छ्वासौ ... सञ्चारे हेतुत्वान्नलिनी नालिनीति द्वे गोलके नासि... अवागुपरि तिर्यक् धुनोतीत्यवधूतो वायुः घ्राणेन्द्रिया... तेन प्रेर्यमाणं घ्राणेन्द्रियमपि तच्छब्दवाच्यं तदेव सखा ... स तथा घ्राणेन्द्रियसहित इत्यर्थः सौरभं विषयं गन्धं गृह्णाति ॥ ४८ ॥

पुरस्तान्मुख्यानाम द्वाः आस्यच्छिद्रलक्षणास्ति ... पुरञ्जनस्तया द्वारा आपणबहूदनौ पणाव्यहार इति ... आपणो वदनव्यापारः बहूदनो नानाविधभोज्यजातं तौ ... व्यवहरति अभ्यवहरति च रसज्ञो जिह्वेन्द्रियं विपणो वा ... ताभ्यामन्वितः ॥ ४९ ॥

नाम्ना पितृभूः पातृत्वात्पितरो देवाः प्रियाभवन्त्यस्य ... मानस्य दक्षिणकर्णलक्षणा शरीरलक्षणायाः पुर्या द्वार... दक्षिणकर्णलक्षणेन द्वारेण उत्क्रान्तः पुरञ्जनो यजमानो ... पाञ्चालं दक्षिणानां देवानां लोकलक्षणं राष्ट्रं याति ... पञ्चेन्द्रियाणयलं याति भूषयति । अलं भूषण इति धातोः ... न्द्रियाणामलं बुद्धिहेतुत्वादिति याम पुरं ब्रह्मलक्षणं ... प्रादुर्भावयति प्रकाशयतीति पुरञ्जनः तत्त्वज्ञानी दक्षिण... निवृत्तशास्त्रं यात्यवगन्तुमिति वा दक्षिणस्तत्त्वज्ञापक... इतिहासादिना सह पञ्चसंख्योपेतो वेदः स पचालं तत्त्व... नान्यापेक्षेति कृत्वा मध्यमपुरञ्जनो दक्षिणपाञ्चालं पञ्च... राष्ट्रं याति रन्तुमिवायं पञ्चानां शब्दानां समूहः पाञ्चा... पचालं भोक्तुमिति बुद्धिहेतुत्वादिति कृत्वा सर्वत्राप्ययमेव ... स्याह । श्रुतधरेति । श्रुतं लोकं शास्त्रं वा विषयं या धार... श्रुतधरः श्रोत्रेन्द्रियं तेन सख्या सहितः ॥ ५० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भोगिभोगयोः सर्पशरीराकारयोस्तव भुजयोः कस्याः स्त्रिया मनो न स्यात् भवश्च सत् कस्या न सज्जेदित्यावृत्त्या अन्वयः । यो भवान् अनाथवर्गाणामस्मदादीनामाधिमन्तःपीडामपोहितुं दूरीकर्तुं चरति केन स्मितावलोकेन हे घृणोद्धत ! कृपया उद्दण्ड आध्यात्मपक्षे चैतन्येनैव चक्षुरादयः सनाथा भवन्तीत्युक्तम् ॥४२॥

समयं सङ्केतं समुद्य समुदीर्य ॥ ४३ ॥

तत्र मुमुदाते यतं समा इत्यादिना जाग्रदवस्थां संक्षेपेणोक्त्वा स्वप्नावस्थामाह । क्रीडन्निति स्त्रीभिर्वृत इति । स्वप्ने इन्द्रियाणामवसन्नत्वात् तत्संस्कारेण तद्वृत्तीनामेव तत्तत्कार्यकारित्वात् सुषुप्त्यवस्थामाह । हृदिनीं नदीं हृदयाकाशं स्वापस्यानञ्च शुचौ निदाघे सुषुप्तौ च ॥ ४४ ॥

इदानीं नवद्वारप्रदर्शनपूर्वकं जाग्रदवस्थां विस्तरेणाह । सप्तेति । तस्याः पुरः पुर्याः उपरि ऊर्ध्वप्रदेशे अधो द्वे श्रोत्रे नेत्रे नासिके मुखञ्चेति सप्त द्वारः अधो गुदलिङ्गे इति द्वे द्वारौ य ईश्वरः पुरञ्जनः तस्य ॥ ४५ ॥

तासु सप्तसु मध्ये पञ्च द्वारः पौरस्त्याः पूर्वाभिमुखः दक्षिणा एका दक्षिणाभिमुखी दक्षिणकर्णरूपा उत्तराभिमुखी वामकर्णरूपा ॥ ४६ ॥

खद्योतवदल्पप्रकाशा वामनेत्ररूपा आविर्मुखी बहुप्रकाशा दक्षिणनेत्ररूपा "तस्माद्दक्षिणाङ्गमात्मनो वीर्यवत्तर" इति श्रुतेः एकत्र संलग्ने विभ्राजितं रूपं द्युमत्सखः चक्षुःसहितः ॥ ४७ ॥

नलनालशब्दौ छिद्रवचनौ तद्वत्यौ वामदक्षिणनासिके प्राङ्मुखौ अवधूतो वाय्वधिष्ठितो प्राणः कथापक्षे विषयं देशं बहुसुरभिमत्त्वात् सौरभं पक्षे गन्धम् ॥ ४८ ॥

सर्वद्वारमुख्यत्वात् सर्वसञ्जीवकत्वाच्च मुख्या तया एकयैव आपणबहूदनौ द्वौ देशौ अन्यत्र द्वाभ्यां द्वाभ्यामेकदेशं यातीत्यपि सुखत्वे हेतुः । पक्षे मुख्या आस्यमापणो भाषणं बहूदनश्चिन्नमक्षं बहोदन इत्यनुक्तिः परोक्षवादत्वात् । रसज्ञं रसनेन्द्रियं विपणो वागिन्द्रियं ताभ्यां युक्तः ॥ ४९ ॥

हे नृप ! दक्षिणेन दक्षिणस्यां दिशि दक्षिणमुखीत्यर्थः ॥ ५० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भुजगेन्द्रभोगयोर्नागराजदेहतुल्ययोः अनाथवर्गस्य अशरणसमूहस्य आधिमलं मनोव्यथारूपं मलं घृणया कृपयोद्धतेनातिशयितेन स्मितावलोकेनापोहितुं निराकर्तुं चरति ॥ ४२ ॥

इत्येवं समयं सम्बन्धनिबन्धं मिथः परस्परं समुदीर्य समाः सम्वत्सरान् ॥ ४३ ॥

उपगीयमान इत्यनेन जाग्रदवस्था हृदिनीं हृदयाकाशमित्यनेन सुषुप्त्यवस्था च सूच्यते शुचौ कथापक्षे ग्रीष्मे अध्यात्मपक्षे श्रमकाले ॥ ४४ ॥

अधुना नवद्वारानुवादपूर्वकं जाग्रदवस्थां प्रपञ्चयति । सप्तेति आध्यायसमाप्तेः । तस्याः पुरः यः कश्चनेश्वरो जीवस्तस्य पृथग्विषयगत्यर्थं सप्त द्वारस्तस्यामुपरि कृता द्वे अधः ॥ ४५ ॥

पौरस्त्याः पूर्वाभिमुखाः ॥ ४६ ॥

खद्योतालपप्रकाशा वामनेत्ररूपा आविर्मुखी विपुलप्रकाशा दक्षिणनेत्ररूपा ताभ्यां द्युमत्सखः चक्षुरिन्द्रियसहायो जीवः विभ्राजितं जनपदं रूपं विषयं याति ॥ ४७ ॥

नलं छिद्रमस्याः अस्तीति नलिनी मन्दवामनासापुटरूपा नालमपि छिद्रमेवास्या अस्तीति नालिनी प्रबलछिद्रदक्षिणनासापुटरूपा संज्ञाभेदसामर्थ्यात् ताभ्यामवधूतसखः प्राणेन्द्रियसहायः ॥ ४८ ॥

पुरस्तात् पूर्वा द्वार्मुख्या प्रधाना आस्यरूपा तया रसज्ञविपणाभ्यां रसनावाग्भ्यामिन्द्रियाभ्यामन्वितः पुरराट् देही आपणबहूदनौ भाषणचित्रान्नरूपौ विषयौ याति छन्दोभङ्गभयादापणबहोदनाविति नोक्तम् ॥ ४९ ॥

दक्षिणेनेति । एनप्प्रत्ययान्तमव्ययम् दक्षिणस्यां दिशि पितृलोकप्रापकप्रवृत्तिशास्त्रश्रवणद्वारा पितृणामाह्वानं भवत्यनेनेति पितृहूर्दक्षिणः कर्णस्तद्रूपा पुर्या द्वाः तया द्वारा दक्षिणपाञ्चालं कथापक्षे दक्षिणपाञ्चालदेशविशेषमध्यात्मपक्षे दक्षिणं प्रथमतः श्रोतव्यं पञ्चानां विषयाणां प्रकाशनेयालं पाञ्चालं प्रवृत्तिपरं शास्त्रम् तस्य पूर्वं श्रोतव्यत्वाद्दक्षिणकर्णस्य च स्वविषये पूर्वपातित्वाच्चैवमुक्तम् श्रुतधरान्वितः श्रोत्रेन्द्रियान्वितः याति प्राप्नोति ॥ ५० ॥

---

भाषाटीका ।

हेवीर ! हमसरी की ऐसी कौन स्त्री है कि जो तुमसरीके पति को न वरे क्योंकि आप विख्यात हो दानी हो रूपवान् हो स्वयं आगये हो ॥ ४१ ॥

हे महाभुज ! इस संसार में किस स्त्री का मन सर्प के सरीर के तुल्य आपके भुजों में आसक्त न होगा जो आप कृपा से युक्त हो कर हमसरीके दुखितों का दुःख को मन्द हास युक्त अवलोकन से दूर करने को विचरते हो ॥ ४२ ॥

श्री नारदजी बोले इस प्रकार वे दोनों पति पत्नी आपस में प्रतिज्ञा करके हे राजन् ! उस पुरी में प्रवेश करके सौ वर्ष पर्यन्त आनन्दित रहे ॥ ४३ ॥

राजा पुरञ्जन एक दिन ग्रीष्म ऋतु में मनोहर गीत गान करते हुये गायकों को साथ में लेकर स्त्रियों के साथ में क्रीडा करता हुआ सरोवर में प्रविष्ट हुआ ॥ ४४ ॥

उस शरीर रूप पुर के ऊपर में मुख आदि सात द्वार हैं नीचे दो द्वार हैं यह सब उस पुरके मालिक जीवके देश विषयों के भोग को जाने के मार्ग हैं ॥ ४५ ॥

हे नृप ! तिन में पांच द्वार पूर्व के हैं एक दक्षिण में एक उत्तर में है दो नीचे हैं इन सबों के नाम में तुम से कहता हूं ॥ ४६ ॥

खद्योता आविर्मुखी दो द्वार एक ठिकाने पूर्व के हैं उन दोनों से द्युमत् का सखा होकर विभ्राजित नाम देश को राजा जाता है ये दोनों नेत्र हैं रूप देश है ॥ ४७ ॥

नलिनी नालिनी एक ठिकाने पूर्व के द्वार हैं उन में से राजा अवधूत का सखा हो कर सौरभ नाम देश को जाता है ए दो नासा छिद्र हैं गन्ध देश है ॥ ४८ ॥

मुख्या नाम पूर्व का द्वार है उन में से राजा रसज्ञ विपण को साथ में ले कर पणबहूदन दो देशों को जाता है यह मुख है भोजन सम्भाषण दो विषय हैं ॥ ४९ ॥

पितृहू नाम का पुर का दक्षिण द्वार है उस में से पुरञ्जन राजा श्रुतधर के साथ दक्षिण पाञ्चाल देश को जाता है यह दहिना कान है शब्द ग्रहण विषय है ॥ ५० ॥

देवहूर्नाम पुर्या द्वा उत्तरेण पुरञ्जनः ।
राष्ट्रमुत्तरपञ्चालं याति श्रुतधरान्वितः ॥ ५१ ॥
आसुरी नाम पश्चाद्द्वास्तया याति पुरञ्जनः ।
ग्रामकं नाम विषयं दुर्मदेन समन्वितः ॥ ५२ ॥
निर्ऋतिर्नाम पश्चाद्द्वास्तया याति पुरञ्जनः ।
वैशसं नाम विषयं लुब्धकेन समन्वितः ॥ ५३ ॥
अन्धावमीषां पौराणां निर्वाक्पेशस्कृतावुभौ * ।
अक्षण्वतामधिपतिस्ताभ्यां याति करोति च ॥ ५४ ॥
स यर्ह्यन्तःपुरगतो विषूचीनसमन्वितः ।
मोहं प्रसादं हर्षं वा याति जायात्मजोद्भवम् ॥ ५५ ॥
एवं कर्मसु संसक्तः कामात्मा वञ्चितोऽबुधः ।
महिषी यद्यदीहेत तत्तदेवान्ववर्त्तत ॥ ५६ ॥
क्वचित्पिबन्त्यां पिबति मदिरां मदविह्वलः ।
अश्नन्त्यां क्वचिदश्नाति जक्षत्यां सह जक्षिति ॥ ५७ ॥
क्वचिद्गायति गायन्त्यां रुदत्यां रुदति क्वचित् ।
क्वचिद्धसन्त्यां हसति जल्पन्त्यामनुजल्पति ॥ ५८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

असुरा इन्द्रियारामास्तेषामियमासुरी शिश्नद्वाः ग्रामकं ग्रामस्थजनानां कं सुखं व्यवायं दुर्मदेन गुह्येन्द्रियेण ॥ ५२ ॥

निर्ऋतिर्नाम गुदो मृत्युद्वारत्वात् वैशसं मलविसर्गम् लुब्धकेन पायुना तेनोत्क्रान्तस्य दुःखप्राप्तेर्लुब्धकसाम्यम् ॥ ५३ ॥

अमीषां मध्ये निर्वाक् पादः पेशस्कृद्धस्तस्तावुभावन्धौ छिद्राभावात् स्वतो ज्ञानक्रियाशक्त्यभावाच्च अक्षण्वतामिन्द्रियवतां देहानामधिपतिः पुरञ्जनः त्वगिन्द्रियस्यानुक्तिः सर्वेष्वन्तर्भावात् ॥ ५४ ॥

अन्तः पुरं हृदयं गतः विषूचीनं सर्वतोमुखं मनः मोहप्रसादहर्षास्तमःसत्त्वरजःकार्याणि जाया बुद्धिरात्मजा इन्द्रियपरिणामास्तदुद्भवम् ॥ ५५ ॥ ५६ ॥

जक्षत्यां भक्षयन्त्याम् ॥ ५७ ॥ ५८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं पुर्या उत्तरेण उत्तरस्यां दिशि देवहूर्नाम द्वाः तया पुरञ्जनः श्रुतधरान्वितः उत्तरपाञ्चालं याति यद्यपि प्रवृत्तिनिवृत्त्यनवबोधिनः शब्दाः सन्ति संसारिणो जीवस्य श्रोतव्यास्तथापि श्रोतव्यानां मध्ये प्रवृत्त्यवबोधिशास्त्रात्मकशब्दस्यैव श्रोतव्यत्वाभिप्रायेण दक्षिणपाञ्चालमुत्तरपाञ्चालमित्युक्तम् एवं पूर्वत्रापि याति सौरभमित्यादिषु द्रष्टव्यम् ॥ ५१ ॥

पुर्याः पश्चादासुरीनाम द्वाः अस्यते क्षिप्यतेऽनेनेन्द्रियमित्यसुरं मेढ्रन्ततः स्वार्थेऽणि टिड्ढाणञित्यादिना ङीप् तया पुरञ्जनः दुर्मदेन दुरुद्धरः मदो यस्य तेन उपस्थेन्द्रियेण सं… ग्रामकं ग्राम्यजनानां कर्म मैथुनादिकं याति ॥ ५२ ॥

पुर्याः पश्चान्निर्ऋतिर्नाम द्वाः निर्ऋतिर्नाशः मृत्युद्वा… द्गुदं निर्ऋतिः तया पुरञ्जनः लुब्धकेन पार्थिवेन्द्रियेण तेन… न्तस्य दुःखप्राप्तेर्लुब्धकसाम्यं तेन समन्वितः वैशसं … दुःखं याति ॥ ५३ ॥

अमीषां पौराणां पुर्याः सम्बन्धिनां द्वाराणां मध्ये … पादपाणी अन्धावक्षौ निर्वाक्पेशस्कृतौ वाक्शब्देन … गिन्द्रियाधिष्ठानं मुखरूपं छिद्रं लक्ष्यते छिद्रपेशस्कृतमा… वाक्पेशस्कृतावित्युच्येते पेशस्कृन्नाम हि कीटविशेषः स्वाप… स्वतैस्तन्तुभिः स्वनिवासभूतं करण्डं निर्माय स्वनिर्गमनद्वारं… मप्यज्ञानेन पिधाय तत्रैव विनश्यति तद्वत्पाणिपादयोर्निः… स्वाज्ञानाभावाच्च तौ निर्वाक्पेशस्कृतावित्युच्येते ताभ्यां … अक्षण्वतामिन्द्रियवतां देहानामधिपतिः पुरञ्जनः याति ग… गच्छति करोति कर्म करोति च ॥ ५४ ॥

अन्तःपुरं हृदयं गतः प्रविष्टः "हृदि ह्ययमात्मा प्रतिष्ठित…" श्रुतेः स पुरञ्जनः यदा विषूचीनेन मनसा विष्वगञ्चति … व्याप्रियत इति विषूचीन इति व्युत्पत्तेः समन्वितो भवति … जाया बुद्धिरात्मजा इन्द्रियवृत्तयः ताभ्यामुद्भवं मोहादि… न्यतमं याति मोहप्रसादहर्षाः तमःसत्त्वरजःकार्याणि … गुणा अत्र त्वगिन्द्रियस्यानुक्तिः सर्वेष्वन्तर्भावात् ॥ ५५ ॥

एवमिन्द्रियस्थानविषयाणां गौणनामानि … चाभिधाय मनःपर्यन्तसर्वेन्द्रिययुक्तस्य बुद्धिपारवश्य…

* निर्वाक्यौपस्करावुभाविति श्रीविजयध्वजतीर्थः ।

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । अज्ञः अत एव कामप्रवण आत्मा मनो यस्य कर्मसु कामसाधनेषु कर्मस्वासक्तः अत एव दैवेन वञ्चितः महिषी बुद्धिर्यद्यदीहेत व्याप्रियेत यद्यच्छब्दादिविषयं प्रतीन्द्रियाणि प्रवर्तयतीत्यर्थः तत्तदेवान्ववर्तताऽनुवृत्तवान् ॥ ५६ ॥

अनुवर्तनमेवोपपादयति चतुर्भिः । क्वचिदिति । पिबन्त्यां पाने व्याप्रियन्त्यां बुद्धौ पिपासामुत्पादयन्त्यां सत्यामित्यर्थः मदविह्वलः मदपरवशः सन् मदिरां पिबति एवमुत्तरत्रापि द्रष्टव्यमश्नन्त्यां भुञ्जन्त्यां जक्षत्यां चर्वन्त्याम् ॥ ५७ ॥ ५८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुर्या वामकर्णलक्षणा देवभूर्नाम द्वाःस्थितः प्रजादिरूपेण क्रीडादिगुणोपेतत्वाद्देवः पितृगणः प्रियो भवत्यस्य श्राद्धादिकर्तुरिति तेनोत्तरेण वामकर्णलक्षणद्वारेणोत्क्रान्तः पुरञ्जनः उत्तरपाञ्चालमूर्ध्वलोकप्राप्तिहेतुत्वादुत्तराः उत्तरन्ति विनरन्ति ददतीत्युत्तराः पितरस्तेषां लोकलक्षणं राष्ट्रं याति अत्रापि पूर्वोक्तेन संख्योपेतः पुत्रलक्षणं पुरं जनयतीति पुरुषप्रजननकर्मा लोको जीवः उत्तरमुत्कृष्टं पाञ्चालं प्रवृत्तशास्त्रमिति वा अन्यस्तु पूर्वोक्त एव किमेतत्प्रतीतार्थं परित्यज्य व्यत्यस्य कथने कारणमितिचेदुच्यते । दक्षिणश्रोत्रमार्गेण देवलोकं व्रजत्यसौ । वामश्रोत्रेण पितृणामिति वेदविदो विदुरिति प्रमाणम् ॥ ५१ ॥

असुरजनहितत्वादासुरी नाम पश्चाद्द्वाः शिश्नलक्षणास्ति तया द्वारा ग्राम्यकं नाम मैथुनकं सुखं विषयं यात्यनुभवति दुष्टो मदो यस्य स तथा तेनोपस्थेन्द्रियेण सहितः असूनामिन्द्रियाणां रतिहेतुत्वादासुरीति वा सुखहेतुत्वाद्वा सतामपि ग्राह्यम् ॥ ५२ ॥

निर्गच्छत्यस्मात्पुरीषलक्षणमलमिति निर्ऋतिर्नामाधो द्वाः गुदलक्षणं छिद्रं वैशसं पुरीषोत्सर्गलक्षणं विषयं पापं हिंसालक्षणनरकं वा लुब्धकेनार्वागिन्द्रियेण कृच्छ्रेण मलमोचनादेषा संज्ञा ॥ ५३ ॥

अमीषां द्वाराणां मध्ये उभौ निर्वाक्पेशस्करौ पादौ हस्तश्चान्धौ ज्ञानशून्यौ भवतः । निर्गतं वाक्यं यस्मात् स निर्वाक्यः पादः कर्तुः पुरुषस्योपकरणभूतत्वादुपस्करो हस्तः हस आदान इति धातोरादातृत्वात् अक्षाणीन्द्रियाणि विद्यन्ते येषां तेऽक्षवन्तो जीवास्तेषां पतिः पुरञ्जनस्ताभ्यां पादहस्ताभ्यां याति करोति चेत्यन्वयः ॥ ५४ ॥

कचिद्धृदयाख्यान्तः पुरङ्गतो विष्वक् सर्वतोऽञ्चतीति विषूचि मनस्तेन सहितः स्वयं पुरञ्जनो जायात्मजेभ्य उद्भवो जन्म यस्य स तथा तमोमोहाद्यन्यतमं यातीत्यन्वयः जाया भक्तिरात्मजो ज्ञानं भक्तिज्ञाने तज्ज्ञानादुत्पन्नं प्रसीदत्यनेनेति प्रसादः परमानन्दः मुह्यत्यनेनेति मोहो निरयः हृष्यत्यनेनेति हर्षः स्वर्गस्थानम् ॥ ५५ ॥

इदानीमसद्बुद्धेः प्रकारं दर्शयति । एवमिति । ग्राम्यकर्मसु काम्यन्त इति कामा विषयास्तेष्वात्मा मनो यस्य स तथा वञ्चितो दैवेनेति शेषः अबुधो विवेकशून्यः महिषी बुद्धिलक्षणा मतं हिनस्तीति महिषी अन्यत्र मतं ददातीति महिषी यद्यत्कर्मकारयितुमीहेत तत्तत्कर्मान्ववर्तत अन्वकरोदेव ॥ ५६ ॥

तत्किं तदाह । क्वचिदिति । पिबन्त्यां पातुमिच्छन्त्यामित्याद्यूह्यम् अनेन सङ्गस्थिरपि ध्वनितेति ज्ञातव्यम् ॥ ५७ ॥ ५८ ॥ ५९ ॥ ॥ ६० ॥ ६१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्धाविति ज्ञानहीनत्वात् ॥ ५४—६१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उत्तरेण उत्तरस्यां दिशि श्रुतधरः श्रोत्रेन्द्रियं दक्षिणकर्णेन बलाधिक्यात् प्राथम्याच्च कर्मकाण्डश्रवणं वामकर्णेन ज्ञानकाण्डश्रवणमिति द्वारदेशयोर्नामभेदः कृतः । पञ्चानामपि विषयाणां श्रोत्रेणैव प्रथममवगमात् पाञ्चालमिति संज्ञा ज्ञेया ॥५१॥

असुरा इन्द्रियारामास्तेषामियमासुरी शिश्नद्वाः ग्रामकं ग्रामस्थजनानां कं सुखं व्यवायं दुर्मदेन उपस्थेन्द्रियेण ॥ ५२ ॥

निर्ऋतिर्गुदं मृत्युद्वारत्वात् । वैशसं मलविसर्गं लुब्धकेन पायुना तेनोत्क्रान्तस्य दुःखप्राप्तेर्लुब्धकसाम्यम् ॥ ५३ ॥

अमीषां मध्ये निर्वाक् पादः पेशस्कृत् हस्तस्तावुभावप्यन्धौ छिद्राभावात् । अक्षवतामिन्द्रियवतां द्वाराणामधिपतिः ॥ ५४ ॥

अन्तःपुरं हृदयं विषु सर्वतोऽञ्चतीति विषूचीनं मनस्तद्युक्तः । मोहप्रसादहर्षास्तमःसत्त्वरजःकार्याणि जाया बुद्धिः आत्मजाः सामान्यविशेषनिश्चयज्ञानादयस्तद्युक्तम् ॥ ५५—५६ ॥

जीवस्योपाधिधर्माध्यासं प्रपञ्चयति । क्वचिदित्यादि । यदुक्तं प्रकृतेः क्रियमाणानि गुणैरात्मनि मन्यत इति जक्षत्यां चर्वन्त्याम् ॥ ५७—५८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

ब्रह्मप्रापकशास्त्रश्रवणद्वारा देवस्य ब्रह्मणः आह्वानमनेन भवत्यतो देवहूर्वामकर्णस्तद्रूपा पुर्या द्वाः उत्तरेणोत्तरास्यां दिशि तयोत्तरपाञ्चालम् कथापक्षे देशविशेषमध्यात्मपक्षे उत्तरं कर्मकाण्डविचारानन्तरश्रोतव्यम् । पञ्चानामुपासककृपाफलभक्तिरसतद्विरोधिपदार्थानां प्रकाशनायालं निवृत्तिशास्त्रम् ॥ ५१ ॥

असुराः औपस्थ्यसुखलुब्धास्तत्सम्बन्धिनी उपस्थस्थानरूपा तया दुर्मदेनोपस्थेन्द्रियेण समन्वितः ग्रामकं ग्रामे यत्कं सुखं मैथुनं तद्याति ॥ ५२ ॥

निर्ऋतिः गुदरूपा द्वाः तया लुब्धकेन पायुना समन्वितः वैशसं मलविसर्गविषयं याति ॥ ५३ ॥

अमीषां पौराणां पुरगतानां द्वाराणां मध्ये उभौ अन्धौ निश्छिद्रौ निर्वाक् पादः पेशस्कृत् हस्तः ताभ्याम् अक्षवतामिन्द्रियगोलकानामधिपतिर्याति करोति च स्वगत्युक्तिः सर्वेष्वन्तर्भावाभिप्रायेण ॥ ५४ ॥

स यर्हि विष्वगञ्चतीति विषूचीनम् मनस्तेन समन्वितोऽन्तःपुरं हृदयं गतो भवति तदा जायात्मजा जायाबुद्धिस्तदात्मजा इन्द्रियद्वारा तमःसत्त्वरजोवृत्तयस्तद्युक्तं मोहं तमोवृत्तिकार्यं प्रसादं सत्त्ववृत्तिकार्यं हर्षं रजोवृत्तिकार्यं च याति ॥ ५५ ॥

एवं कर्मसु संसक्तः यतः कामेषु कर्मफलेषु आत्मा बुद्धिर्यस्य सः यतोऽबुधः हेयोपादेयविवेकहीनः यतो वञ्चितो बुद्ध्यं-

क्वचिद्धावति धावन्त्यां तिष्ठन्त्यामनुतिष्ठति ।
अनुशेते शयानायामन्वास्ते क्वचिदासतीम् ॥ ५९ ॥
(१) क्वचिच्छृणोति शृण्वन्त्यां पश्यन्त्यामनुपश्यति ।
क्वचिज्जिघ्रति जिघ्रन्त्यां स्पृशन्त्यां स्पृशति क्वचित् ॥ ६० ॥
क्वचिच्च शोचतीं जायामनुशोचति दीनवत् ।
अनुहृष्यति हृष्यन्त्यां मुदितामनुमोदते ॥ ६१ ॥
विप्रलब्धो महिष्यैवं सर्वप्रकृतिवञ्चितः ।
नेच्छन्ननुकरोत्यज्ञः क्लैब्यात् क्रीडामृगो यथा ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां पुरञ्जनोपाख्याने
पञ्चविंशतितमोऽध्यायः ॥ २५ ॥

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः

ति शेषः अत एव महिषी बुद्धिर्यद्यदीहेत तत्तदेव अन्ववर्तत अनुवर्तितवान् ॥ ५६ ॥

ध्यायतीव लेलायतीवेत्यादिश्रुतिमुपबृंहयति । क्वचिदित्यादिना । जक्षत्यां भक्षयन्त्याम् ॥ ५७ ॥ ५८ ॥

भाषाटीका ।

देवहू नामक जोपुर का द्वार है उत्तर की तरफ तिससे राजा श्रुतधरके साथ उत्तर पंचाल नाम देश को जाता है यह वायां कान है शास्त्र विषय है ॥ ५१ ॥

आसुरी नाम पीछे का द्वार है तिससे दुर्मद के साथ ग्रामक नाम देश को राजा जाता है यह लिङ्ग इन्द्रिय है मैथुन इसका विषय है ॥ ५२ ॥

निर्ऋति नाम के पीछे का द्वार है तिससे पुरञ्जन राजा लुब्धक के साथ वैशस नामक देश को जाता है यह गुदा इन्द्रिय है मल त्याग इसका विषय है ॥ ५३ ॥

इन सब द्वारों मे निर्वाक् पेशस्कृत ये दोनो अन्धे द्वार हैं इन दोनों से छिद्र वाले सब इन्द्रियों का पपि गमन तथा ग्रहण करता है यह हस्त और पाद हैं चलना पकडना इनका विषय है ॥ ५४ ॥

जब यह राजा विषूचीन के साथ अन्तः पुर को जाता है तब स्त्री पुत्रों के हेतु से मोह प्रसाद हर्ष को प्राप्त होता है यहां मन के सहित जीव बुद्धि के वृत्तियों को भोगता है ॥ ५५ ॥

इस प्रकार से यह राजा कर्म मे आसक्त होकर कामों मे बद्ध होकर वंचित होगया तब रानी जो कुछ चाहे तिसी काम को करने लगा यहां बुद्धि की वृत्तियों मे आत्मा प्रवृत्त होजाता है ॥ ५६ ॥

कभी रानी के मदिरा पीने से मद से विहल होकर आपभीं मदिरा पीता है उसके खाने से आप खाता है चणकादिभक्षण करने से आपभी भक्षण करता है ॥ ५७ ॥

उसके गाने से आपभी गाता है उसके रोने से आपभी रोता है उसके हँसने से आपभी हँसता है उसके [illegible] से आपभी बोलता है ॥ ५८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आसतीमासीनाम् ॥ ५९ ॥ ६० ॥ ६१ ॥

सर्वासंगत्वादिलक्षणा प्रकृतिः स्वभावो वञ्चितोयस्य प्रकृत्या वञ्चित इति वा नेच्छन्ननिच्छन् क्लैब्यात्पारवश्या[illegible]

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आसतीमासीनामासिषां जनयन्तीमनुसृत्यास्ते ॥ ५९ ॥ एवं शोचतीमनुशोचतीत्यादेरर्थः ॥ ६०--६१ ॥

एवं महिष्या बुद्ध्या विप्रलब्धः विशेषेण विमोहित एव सर्वा प्रकृतिरक्षोभाद्यात्मस्वभावः वञ्चिता यस्य स[illegible] भाव इत्यर्थः नेच्छन्ननिच्छन्नपि क्लैब्यात्पारवश्यादनुकरोति क्रीडार्थो मृगः ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तथाहि महोऽस्यास्तीति महि ब्रह्म तस्मिन्नित्योत्सवस्तु[illegible] सीदति विषयीकृत्य वर्तत इति महिषी सद्बुद्धिस्तया [illegible] प्रलब्धः प्राप्ताभीष्टकार्यलाभः सर्वप्रकृतिर्वञ्चितो वञ्चि[illegible] जनस्वभावः अस्विष्णुं जानातीत्यज्ञः सद्बुद्ध्यधीनत्वा[illegible] गत्वमपि युक्तम् ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

( १ ) अयंश्लोकः श्रीवीरराघवाचार्यमतेनास्ति ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विप्रलब्धः अत्र जीवस्य शक्तिमत्तायां "पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्य्ययौ" इत्येतत् सूत्रमप्यनुसन्धेयम् ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आसतीमासीनाम् ॥ ५९—६०—६१ ॥

विशेषेण प्रकर्षेण एवमनेन प्रकारेण लब्धः प्राप्तः सर्वथा प्रकृत्या स्वभावेन ज्ञानानन्दादिरूपया वञ्चितस्त्याजितः नेच्छन् एकेन स्वस्वभावेन वस्तुतस्तदनिच्छन्नपि क्लैव्यात् पारवश्य प्रापकादपरस्मात् स्वभावात् अनुकरोति तद्धर्ममात्मन्यध्यवस्यति ॥ ६२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थे पञ्चविंशोऽयं सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आसतीमासीनाम् ॥ ५९ ॥ ६० ॥

हृष्यन्त्यां बहिरिष्टपदार्थदर्शनादिना मुदितामिष्टपदार्थस्मरणेन ॥ ६१ ॥

माहिष्या बुद्ध्या विप्रलब्धो मोहितः तत्र हेतुः सर्वो विष्णुस्तस्य शक्तिभूतया प्रकृत्या वञ्चितः अत एवाज्ञः आत्मानात्मपरमात्मज्ञानहीनः नेच्छन् अनिच्छन् अपि क्लैव्यात्पारतन्त्र्यात्क्रीडार्थो मृगः यथा अनुकरोति ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चविंशाध्यायार्थप्रकाशः ॥ २५ ॥

---

भाषाटीका ।

उसके दौडने से आपभी दौडता है उसके खडी होने से आपभी खड़ा होता है उसके सोने से आपभी सोता है उसके बैठने से आपभी बैठता है ॥ ५९ ॥

उसके सुनने से सुनता है उसके देखने से आप देखता है उसके सूंघने से सूंघता है उसके छूने से आप छूता है ॥ ६० ॥

कभी उस को शोच करती देख कर आप भी दुखी सा होकर शोचता है उस के हर्ष होने से हर्षित होता है उस के आनन्दित होने से आनंदित होता है ॥ ६१ ॥

इस प्रकार रानी से वंचित होने से सब निजस्वभाव से वंचित होगया तब जो नहीं चाहता है सो काम भी अज्ञानी होकर करता है कादरपना से जैसे खेलने का मृग परवश होवे करे तैसे ॥ ६२ ॥

इति श्रीभागवत चतुर्थस्कन्ध पचीसवांअध्याय का
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ २५ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पञ्चविंशोऽध्यायः समाप्तः ॥ २५ ॥

---

## षड्विंशोऽध्यायः ।

॥ नारद उवाच ॥

स एकदा महेष्वासो रथं पञ्चाश्वमाशुगम् ।
द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम् ॥ १ ॥
एकरश्मेकदमनमेकनीडं द्विकूवरम् ।
पञ्चप्रहरणं सप्तवरूथं पञ्चविक्रमम् ॥ २ ॥
हैमोपस्करमारुह्य स्वर्णवर्माक्षयेषुधिः ।
एकादशचमूनाथः पञ्चप्रस्थमगाद्वनम् ॥ ३ ॥
चचार मृगयां तत्र दृप्त आत्तेषुकार्मुकः ।
विहाय जायामतदर्हां मृगव्यसनलालसः ॥ ४ ॥
आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः ।
न्यहनन्निशितैर्बाणैर्वनेषु वनगोचरान् ॥ ५ ॥
तीर्थेषु प्रतिदृष्टेषु राजा मेध्यान् पशून् वने ।
यावदर्थमलं लुब्धो हन्यादिति नियम्यते ॥ ६ ॥
य एवं कर्मनियतं विद्वान् कुर्वीत मानवः ।
कर्मणा तेन राजेन्द्र! ज्ञानेन न स लिप्यते ॥ ७ ॥
अन्यथा कर्म कुर्वाणो मानारूढो निबध्यते ।
गुणप्रवाहपतितो नष्टप्रज्ञो व्रजत्यधः ॥ ८ ॥
तत्र निर्भिन्नगात्राणां चित्रवाजैः शिलीमुखैः ।
विप्लवोऽभूद्दुःखितानां दुःसहः करुणात्मनाम् ॥ ९ ॥
शशान् वराहान् महिषान् गवयान् रुरुशल्यकान् ।
मेध्यानन्यांश्च विविधान् विनिघ्नन् श्रममभ्यगात् ॥ १० ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

षड्विंशे मृगयाव्याजात्स्वप्नजागरणोक्तितः ।
सद्बुद्धित्यागयोगाभ्यां संसृतिः सा प्रपञ्च्यते ॥ १ ॥

तदेवमात्मन उपाधिकृतां सुषुप्तावस्थां जाग्रदवस्थां चोक्त्वेदानीं स्वप्नावस्थामाह । स एकदेति दशभिः । महानिष्वासो धनुः कर्तृत्वभोक्तृत्वाद्यभिनिवेशो यस्य स रथमारुह्य पञ्चप्रस्थं वनमगादिति तृतीयेनान्वयः । रथं तदानीमेव विधृतं स्वप्नदेहम् जाग्रद्देहस्य शतसम्वत्सरोपभोग्यपुरत्वेनोक्तत्वात् । पञ्च ज्ञानेन्द्रियाण्यश्वा यस्य आशुगं शीघ्रगतिम् । द्वे अहन्ताममते ईषे दण्डके यस्य द्वे पुण्यपापे चक्रे यस्य एकं प्रधानमक्षो यस्य गुणा वेणवो ध्वजा यस्य पञ्च प्राणा बन्धुराणि यस्य ॥ १ ॥

एकं मनो रश्मिः प्रग्रहो यस्य एका बुद्धिर्दमनः सूतो यस्य तं च एकं हृदयं नीडं रथिन उपवेशस्थानं यस्मिन् शोकमोहौ कूवरौ युगबन्धनस्थानं यस्य पञ्च शब्दादयो विषयाः प्रगृह्यन्ते प्रक्षिप्यन्ते यस्मिन् । अस्य व्याख्यानं भविष्यति इन्द्रियार्थप्रक्षेप इति सप्त धातवो वरूथा रक्षार्थं चर्मावरणानि यस्य पञ्च कर्मेन्द्रियाणां विक्रमा गतिप्रकारा यस्य ॥ २ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हैमोपस्करं सौवर्णाभरणम् स्वर्णवर्मा वर्म कवचम् । रजोगुणावृतः अक्षयेषुधिः इषुधिर्निषङ्गः अनन्तवासनाऽहङ्काररोपाधिः एकादशो मनोरूपश्चमूनाथः सेनापतिर्यस्य वासनामयस्य मनसः प्रग्रहत्वं सङ्कल्पविकल्पात्मकस्य बृहद्बलत्वेन चक्षुरमाज्ञस्य चमूनाथत्वमिति विभागः । पञ्चशब्दादयो विषयाः प्रस्थाः सानवो यस्मिंस्तद्वनं भजनीयं देशमगात् ॥ ३ ॥

आत्ता गृहीता इषवो रागादिरूपाः कार्मुकं च भोगाद्यभिनिवेशरूपं येन जायां विवेकवतीं बुद्धिं विहाय अतदर्हां त्यागानर्हाम् । त्यागे हेतुः मृग्यन्त इति मृगा विषयास्तेषु व्यसनं भोगासक्तिस्तेन लालसातिस्पृहा यस्य ॥ ४ ॥

घोरो रागादिभिः वनेषु भजनीयदेशेषु वनगोचरान् भजनीयविषयान् व्यहनदात्मसात्कृतवान् कथापक्षे तु स्पष्टमेव ॥ ५ ॥

नन्वासुरीं वृत्तिमाश्रित्येनिकामति मृगया निन्द्यते कथापक्षे तावद्राज्ञो विहितैव साध्यात्मपक्षेऽपि जीवस्य विषयभोगो विहित एवेत्याशङ्क्याह । तीर्थेष्विति त्रिभिः । अयं भावः नहि मृगया विधीयते रागप्राप्तत्वात्किन्तु नियम्यते प्रवृत्तिः सङ्कोच्यते नियममेव षड्विधं दर्शयति । यद्यलमत्यर्थं लुब्धो रागी सन् हन्यात्तर्हि तीर्थेषु श्राद्धादिष्वेव तत्रापि प्रतिदृष्टेषु प्रख्यातेष्वेव न नित्यश्राद्धादिषु तत्रापि राजैव नेध्यानेव वनपत्र यावदुपयोगमेवेति एवं जीवस्य विषयसेवापि यावदुपयोगं न यथेष्टमिति नियम एवेत्यर्थः ॥ ६ ॥

अतो नावश्यकत्वमित्याह । य इति । एवं नियतं कर्म विद्वान् तेनेत्युपलक्षणम् । तेनान्येन वा कर्मणैवमनुष्ठितेन यज्ज्ञानं भवति तेन ज्ञानेन हेतुना सोऽनुष्ठाता न लिप्यते ॥ ७ ॥

अन्यथा नियमोल्लङ्घनेऽनान्तःकरणशुद्ध्यभावात् कर्तृत्वाभिमानमारूढः कर्मभिरनुबध्यते ततश्च गुणप्रवाहे पतितोऽधो व्रजति ॥ ८ ॥

प्रासङ्गिकं परिसमाप्य पुनर्मृगयामेवानुवर्णयति । तत्रेति । चित्रा वाजाः पक्षा येषां तैः विप्लवो नाशः करुणात्मनां कृपालूनां दुःसहः ॥ ९ ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सुषुप्त्यवस्थां जाग्रदवस्थां चाभिधायेदानीं स्वप्नावस्थामाह दशभिः । स इति । स पुरञ्जन एकदा सुषुप्त्यनन्तरं महानिष्वासो धनुः कर्तृत्वभोक्तृत्वाद्यभिनिवेशो यस्य सः रथमारुह्य पञ्चप्रस्थं वनमगादिति तृतीयेनान्वयः रथशब्देनात्र शरीरं विवक्षितम् ।

आत्मानं रथिनं विद्धि शरीरं रथमेव च ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।

इन्द्रियाणि हयानाहुरित्यादिश्रुत्या उपासननिर्वृत्तौ शरीरादीनां रथादिभावेनान्यत्र निरूपितत्वात् तच्च शरीरमत्रौचित्यात्स्वाप्नं विवक्षितम् तद्धि तदानीमेव स्वप्नद्रष्टृपुण्यपापानुरोधेनेश्वरसृष्टं भवति जाग्रद्देहस्य तु शतसम्वत्सरोपभोग्यपुरत्वेनोक्तत्वात् रथं विशिनष्टि । पश्चादवं पञ्च ज्ञानेन्द्रियाणि चक्षुरादीन्यश्वा यस्य तमाशुगं शीघ्रगम् अनेनापि स्वप्नमेव शरीरमत्र विवक्षितमित्यवगम्यते जाग्रद्देहस्याशुगत्वासम्भवादितिभावः द्वावहङ्कारममकारौ ईषिके दण्डके यस्य तं द्वे पुण्यपापे चक्रे यस्य तं तथैकं प्रधानमक्षो यस्य त्रयो गुणाः सत्त्वादयो वेणवो ध्वजा यस्य तं पञ्च प्राणा बन्धुराणि बन्धनानि यस्य तथाभूतम् ॥ १ ॥

पुनः कीदृशम् एकं मनो रश्मिः प्रग्रहरज्जुर्यस्य तम् एका बुद्धिर्मनः सारथिर्यस्य एकं हृदयं नीडं रथिन उपवेशस्थानं यस्य द्वौ शोकमोहौ कूवरं युगबन्धनस्थानं यस्य पञ्च शब्दादयो विषयाः प्रगृह्यन्ते प्रक्षिप्यन्ते आपात्यन्ते यस्मिन् तं सप्त धातवो वरूथाः चर्माद्यावरणानि यस्य तं पञ्च कर्मेन्द्रियाणि विक्रमा गतिप्रकारा यस्य तथाभूतम् ॥ २ ॥

हैमोपस्करं सुवर्णाभरणं स्वर्णाभरणविशिष्टस्वाप्नदेहसृष्टिसम्भवाभिप्रायेण हैमोपस्करमित्युक्तं कथासौन्दर्यं वा एवमनुपयुक्तं कथासौन्दर्यायेति द्रष्टव्यं स्वर्णमयं वर्म कवचं रजोगुणावृत्तिर्यस्य अक्षयेषुधिः इषवो बाणा धीयन्तेऽस्मिन्निति इषुधिर्निषङ्गः अक्षय इषुधिरनन्तवासनाश्रयोऽहङ्कारो यस्य स तत्र बुद्धिपूर्वकप्रवृत्तिहेतुः संस्कारविशेषो वासना सा चाज्ञानवासना कर्मवासनाप्रकृतिसम्बन्धवासना चेति त्रिप्रकारा अविद्यानाम ज्ञानानुदयान्यथाज्ञानविपरीतज्ञानरूपेण त्रिविधमज्ञानं प्रकृतिसम्बन्धः स्थूलसूक्ष्मरूपाचित्सम्बन्धः स च देवमनुष्यादिदेहभेदेन बहुविधः सजातीयकर्मारम्भे रुचिः सा च विषयभेदाद्बहुप्रकारा पुण्यापुण्यरूपेण द्विविधं कर्मेति ज्ञेयम् एकादशेन्द्रियवृन्दात्मकसेनापतिः पञ्च शब्दादयो विषयाः प्रस्थाः सानवो यस्मिंस्तद्वनं भोगस्थानमगात् ॥ ३ ॥

तत्र वने दृप्तः गर्वितः स्वाप्नदेहपरवश इत्यर्थः आत्ताः स्वीकृता इषवः वासनारूपाः कार्मुकं कर्तृत्वाद्यभिनिवेशो यस्य अतदर्हां त्यागानर्हां जायां विवेकात्मिकां सात्त्विकीं बुद्धिं विहाय त्यागे हेतुः मृग्यन्त इति मृगाः शब्दादिविषयास्तेषु यद्व्यसनमत्यासक्तिनिमित्तं दुःखं तेन लालसः अन्यन्तव्यसनासक्तः ॥ ४ ॥

आसुरीं तामसीं वृत्तिं बुद्धिमाश्रित्य घोरात्मा घोर आत्मा चित्तं यस्य सः रजोगुणकार्यक्रोधाविष्टः कामभिर्गाधिषु क्रुद्धचित्त इत्यर्थः अत एव निरनुग्रहः विरोधिष्वनुग्रहरहितः निशितैः कायचर्मैः विषयसान्निध्यापादकैरिति यावत् बाणैः कर्मवासनारूपैः शरैः वनेषु भोगस्थानेषु वनगोचरान् वनगोचरमृगतुल्यान् देवोपसादितान्नित्यर्थः व्यहनदात्मसात्कृतवान् कथापक्षे स्पष्टमेव ॥ ५ ॥

नन्वासुरीं वृत्तिमाश्रित्य इति मृगयानिन्दा न युक्ता कथापक्षे राज्ञस्तस्य विहितत्वात् अध्यात्मपक्षेऽपि देवोपसादितविषयभोगो विहित एवेत्यत्राह । तीर्थेष्विति त्रिभिः । मृगयाया रागप्राप्तत्वाच्च सा विधीयते किन्तु नियम्यते मृगयाप्रवृत्तिः सङ्कोच्यत इत्यर्थः नियममेव षड्विधमुपदर्शयति लुब्धो रागी सन् यदि निहन्यात्तर्हि तीर्थेषु श्राद्धादिषु तन्निमित्तेषु तत्रापि प्रतिदृष्टेषु विहितमांसकेषु एवेति । तत्रापि राजैव मेध्यानेव वन एव यावदुपयोगमेवेति अध्यात्मपक्षेऽपि जीवस्य यावदुपभोगमेव विषयभोगो नियम्यत इतिभावः ॥ ६ ॥

य एवं विद्वान् हिंसाया विषयभोगस्य च रागप्राप्ततां तन्नियमं च विद्वान् कुर्वीत हिंसां विषयभोगं च कुर्याद्वा न कुर्याद्वा रागप्राप्तत्वेनावश्यकत्वाभावादितिभावः रागप्राप्तस्य हि पक्षे प्रत्यवायाभावमात्रं क्रियते नादृष्टम् अतः सुतरां रागप्राप्तस्य त्यागेन प्रत्यवाय इति नवेत्युक्तं तेनैवं नियतेन कर्मणा ज्ञानेन एवं कृतेन कर्मणा यज्ज्ञानं भवति तेन हेतुना सः कर्ता न लिप्यते पापे-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रिति शेषः यद्वा स विद्वान् ज्ञानेन रागप्राप्तानां त्याज्योपादेयविवेकज्ञानरूपेण हेतुना कर्मणानादिपापरूपकर्मणा न लिप्यते ॥ ७ ॥

अन्यथा नियतं कर्म कुर्वाणः अहं ममाभिमानारूढः कर्मभिरनादिपुण्यापुण्यकर्मभिरनुबध्यते वशीक्रियते ततः कर्मपारवश्याद्गुणप्रमाहे संसारे पतितः नष्टदेहात्मविवेकः अधो नरकं व्रजति ॥ ८ ॥

एवं प्रासङ्गिकं परिसमाप्य प्रकृतां मृगयामनुवर्णयति । तत्रेति । विचित्रवाजा नानाविधवासनारूपा विचित्रपक्षाः येषां ते वासनाभिरूपोद्धलितैरित्यर्थः शिलीमुखैः पुण्यापुण्यकर्मभिर्हेतुभूतैः निर्भिन्नान्यनुभवेन जीर्णानि गात्राण्यवयवा येषां तेषां मृगाणां विषयाणां विप्लवो नाशः करुणात्मनां कृपालूनां दुःसहोऽभूत् कामिभिरनुजीर्णावयवान् विनष्टान् शब्दादिविषयाननुसन्दधतां सर्वभूतसुहृदां ज्ञानिनां विषयविप्लवो मनसापि स्मर्तुमसह्योऽभूदित्यर्थः कथापक्षेस्पष्टोऽर्थः ॥ ९ ॥

शशान् वराहानित्यादिकथनं शब्दादिभेदेन च विषयवैचित्र्यज्ञापनाय कथापक्षे तु तत्सौन्दर्याय मेध्यान् विहितानन्यानविहितांश्च विषयान् निघ्नन्नात्मसात्कुर्वन् व्यापृतकरणत्वाच्च श्रममध्यगात् प्राप्तवान् ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अधुना जाग्रदवस्थाप्रकारकथनेन संसारप्राप्तिं कथयन् जाग्रदवस्थाप्रवेशं तावदाह । स एकदेति । स पुरञ्जनः एकदा स्वप्नविषयभोगप्रापककर्मक्षये जाग्रद्भोगप्रापककर्मागमने सति पञ्चेन्द्रियद्वारेण सूनार्थमात्मा प्रतिष्ठते यस्मिन्निति पञ्चप्रस्थं वनं जाग्रद्विषयलक्षणकान्तारमगादनुवभूवेत्यन्वयः किं कृत्वा कथंभूत इति तदाह । महेष्वास इति । महत इति महः प्रणवः स एवेष्वासो धनुर्यस्य स तथा यथार्थकथनमेतत् अन्यत्र महांश्चासौ इष्वासो यस्येति स्वर्णवर्णलक्षणरजोगुणाख्यं वर्म यस्य स तथा अक्षये प्रवृत्तिनिवृत्तिलक्षणे इषुधी यस्य स तथा एकादशेन्द्रियलक्षणायाश्चम्वा नाथः पञ्चेन्द्रियाण्येवाश्वा यस्य स तथा तम् आशुगच्छत्यस्ति जायत इत्यादिविकारं परिणामलक्षणमित्याशुगस्तं द्वे पुण्यपापलक्षणे कर्मणी एव चक्रे यस्य स तथा तम् एकः सूत्रात्मा वायुरक्षो यस्य स तथा तं त्रयः सत्त्वादिगुणा एव वेणवो ध्वजा यस्य स तथा तं पञ्चप्राणा एव विनतोन्नतप्रदेशा बन्धुराख्या यस्य स तथा तम् अनेन प्रयासश्चारहेतवो नाडीविशेषाः कथ्यन्ते आधारो वा ॥ १ ॥

एको मनआख्यो रश्मिः प्रग्रहो यस्य स च एको बुद्ध्याख्यो दमनः सारथिर्यस्य सचैकरश्म्येकदमनस्तम् ।

> बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।
> प्राणा बन्धुरमुद्दिष्टा गुणाः सत्त्वादयो ध्वजाः ॥
> मूलवायुरक्षसंज्ञश्चक्रे द्वे पुण्यदुष्कृते ।
> इन्द्रियाण्यश्वसंज्ञानि हृदयं नीडमुच्यते ॥
> शीतोष्णलक्षणौ द्वौ तु कूबरौ शब्दपूर्वकम् ।
> पञ्चप्रहरणं सप्तत्वगाद्या गुप्तयः स्मृताः ॥
> पृथिव्याद्या विक्रमाख्या देहाख्यो रथ उच्यते ।

इत्यध्यात्मयोगे एकं हृदयलक्षणं नीडं यस्य स तथा शीतोष्णलक्षणौ कूबरौ युगंधरौ यस्य स तथा तं पञ्चेन्द्रियाणां पञ्चशब्दादिविषयाणां च सन्निकर्षलक्षणानि प्रहरणानि यस्मिन्स तथा तं पञ्चसूनासाधनानि प्रहरणानीति वा सप्तत्वगाद्या धातवो वरूथो गुप्तिर्यस्य स पञ्चानां भूतानां विक्रमः प्रभावो यस्मिन्स तथा तम् ।

हैमोपस्करं मुकुटकुण्डलाभरणैः स्वर्णविकारैर्भूषितं रथगताविति धातोः ज्ञानलक्षणगमनसाधनं देहमारुह्य अक्षयेषुधिरनन्तवृत्त्या लम्बमानान्तःकरणोपाधिरिति रागादीनस्यति निरस्यति ग्लापयतीति इष्वासो ज्ञानं स च महान् यस्य स इति वा ॥ ३ ॥

इषवश्च कार्मुकं चात्तं गृहीतं येन स तथा रागात्मकं कार्मुकं विवेककार्यं स्वकृत्यं मुञ्चत्यनेनेति निरुक्त्या । विपिनं विषयकाननं मृगयां शब्दादिभोगलक्षणां चचार युयुजे अतदर्हो त्यागयोग्यां सद्बुद्धिलक्षणां विहायासद्बुद्धिं चादायेति शेषइति विवेकः मृग्यन्तइति मृगा विषयास्तेषां भोगलक्षणे लालसउत्सुकः अन्यत्र हरिणानां हिंसने व्यापारवान् ॥ ४ ॥

आसुरीं हिंसालक्षणां वृत्तिं घोरात्मा विषयप्रसक्तः संसारभयरहितः निर्गतोऽनुग्रहो दयालक्षणो यस्मात्स हनत् । हनहिंसागत्योरिति नितरामगच्छदसेवतेत्यर्थः बाणैः कपटमनोवृत्तिभिः वनेषु जाग्रद्विषयप्रदेशेषु दांस्तत्रत्यशब्दादिविषयलक्षणान्मृगान् ॥ ५ ॥

ननु राज्ञा हि मृगयानिष्णातमया पशुहिंसया । राजा मृगयां चरन् दर्पेण लिप्यत इति अग्नीषोमीयं पशुं भेतेत्यादौ विहितत्वात्कथमासुरीं वृत्तिमाश्रितेति तत्राह । तीर्थेष्विति । श्रुतिदृष्टेषु श्रुतिस्मृतिविहितेषु राजा स्वविहिताचारनिष्ठया शोभमानो मेध्यान् प्रभृतीन् यावदर्थं यावत् प्रयोजनं लुब्धः फलार्थी नियम्यते विधिवाक्यैरितिशेषः अध्यात्मेतिप्रमाणशास्त्रेषु विहितान्मेध्यान्मेधयोग्यान् ज्ञानयोग्यान् धर्मान् रमणीयान् विषयान् वने विषयव्यवहारे गृध्नुर्यावता देहावस्थितिस्तावन्मात्रमलमत्यर्थं वार्थमिति शेष इति नियम्यते शिक्षाविषयीक्रियत मिति विशेषणादलुब्धो लोकोपकारार्थं पशून् दधिकमपि हननमपि कुर्वन्नदुष्यतीतितात्पर्यं ज्ञायते ।

> उपकारः सतां येन तत्कृत्वा नैव दुष्यति ।
> अतीवनिन्दितमपि बह्वहिंसा युगेव वा ।

अथ वा ज्ञानिनः कर्म न दुष्टमपि लिप्यत इति ॥ ६ ॥

ननु निषनकर्माकरणे ज्ञानिनोऽपि दुष्कर्मलेपः तत्राह । य एवमिति । यो नियतमनियतं वा विद्वान् विविधं पुण्यं पापं वा कर्म कुर्वीत न वा कुर्वीत तेनोभयविधेन कर्मणा न लिप्यते केन निमित्तेनेत्यत नेति कर्मलेपाभावे ज्ञानं कारणमित्यर्थः ।

> तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते ।
> एवमेवं विदिपापं कर्म न श्लिष्यत इति श्रुतेः ।

अथवा ज्ञानिनः कर्म न दुष्टमपि क्षिप्यत इति स्मृतेश्च ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

अन्यपक्षं बाधकमाह । अन्यथेति । अन्यथा ज्ञानाभावे । अनर्थोऽपि भवतीत्याह । गुणप्रवाह इति ॥ ८ ॥

एवं प्रासङ्गिकीं कथां समाप्य प्रकृतमनुसरति । तत्रेति । तत्र विषयलक्षणे वने चित्रवाजैरनेकाङ्कुरसुखाख्यपक्षोपेतैः शिलीमुखैः शिलावत् दृढसुखैर्लम्पटेन्द्रियमनोवृत्तिविशेषैर्निर्भिन्नगात्राणां दुर्दिननानावयवानां करुणात्मनां पापनिमित्तेन मुक्तानामस्माकं रक्षकोऽपि न गतिरस्तीति रुदितानामिव स्थितानां बभ्राज्ञमुकानां विषयाणां विप्लवो विनाशः समासिलक्षणोऽभूदित्यन्वयः अन्यत्र व्यक्तम् ॥ ९ ॥

क्षुधान् वराहानिति । मेध्यान्महिषानित्यादिना त्वमेध्यान् शशातिशयितानन्दलक्षणान्वरणीयत्वेनाहेयान्महिषान्महितं ददातीति निरुक्त्या सनदान इति धातुस्तस्य डप्रत्ययः सकारस्य मूर्धन्यादेशः गवयान् गतवयसः जरसं गतानिति शेषः रुरून् बन्धहेतून् खं सुखं खिलाप्रयतीति शल्यकानित्येवमादिविषयान् अश्नन् गच्छन्भुञ्जान इत्यर्थः ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

स एकदेति त्रिकम् । टीकायामेका बुद्धिरविवेकवती । पञ्चविषया हतमृगस्थानीयाः । पूर्वत्र शब्दादयो वासनामयविषयाः। अत्र तु तद्वासना इति भेदः ॥ १-१३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

धार्मिकस्यापि जीवस्य दैवात्तामसभावतः।
पङ्क्तिशो सद्धियस्त्यागः पुनः प्राप्तिश्च वर्ण्यते ॥

धार्मिकस्य विवेकिनोऽपि जीवस्य कदाचिद्दैववशात्तामसभावोद्गमेनाविवेकतो निषिद्धविषयासक्तिः स्यादिति दर्शयन् विषयलौल्यातिरेकार्थमेव देहं रथरूपत्वेन वर्णयति । स एवैकस्मिन् समये रथमारुह्य पञ्चप्रस्थं वनमगादिति तृतीयेनान्वयः महानिष्वासो धनुः कर्तृत्वभोक्तृत्वाभिनिवेशो यस्य सः । पञ्चज्ञानेन्द्रियाण्यश्वा यस्य आशुगं शीघ्रगतिम् । द्वे अहन्ताममते ईषे दण्डिके यस्य द्वे पुण्यपापे चक्रे यस्य एकं प्रधानमक्षो यस्य त्रयो गुणा वेणवो ध्वजा यस्य पञ्च प्राणा बन्धुराणि निबन्धनानि यस्य एकं मनोरश्मिः प्रग्रहो यस्य सः एका बुद्धिर्दमनः सूतो यस्य तच्च तच्च । एकं हृदयं नीडं रथिन उपवेशस्थानं यत्र द्वौ शोकमोहौ कूबरौ युगबन्धनस्थानं यस्य पञ्चेन्द्रियव्यापाराः श्रवणादयः प्रहरणान्यस्त्राणि यस्य सप्त धातवो वरूथा रथगुप्त्यर्थं चर्माद्यावरणानि यस्य पञ्चविक्रमं कथापक्षे विस्तृतविक्रमं पथि विस्तारे अध्यात्मपक्षे पञ्चकर्मेन्द्रियाणि विक्रमा गमनानि यस्य हैमोपस्करं स्वर्णमयपरिच्छदम् । अध्यात्मपक्षे हैमा हिमसम्बन्धिन उपस्करा अतिजाड्यादस्फूर्तय एव परिच्छदा यस्य स्वर्णवर्मा रजोगुणाकवचः अक्षय्येषुधिः अनन्तवासनः । एकादश चमूनाथाः सेनान्यो यस्य सः । पक्षे एकादशो मनोरूपश्चमूपतिर्यस्य सः । वासनाहेतोर्मनसः प्रग्रहत्वं सङ्कल्पविकल्पात्मकस्य मनसो बृहद्बलत्वेन वक्ष्यमाणस्य चमूनाथत्वमिति विभागः । पञ्चप्रस्थं पञ्चप्रस्थसंज्ञम् । पक्षे पञ्चशब्दादिमद्वस्तूनि प्रस्थाः सानवो यत्र तत् ॥ १—३ ॥

मृगयां परदारगमनादिपापम् । इषवो रागद्वेषादयः कार्मुकम् भोगाभिनिवेशरूपं धर्मशीलां बुद्धिम् ॥ ४ ॥

न्यहनन्निति वाणादिकरणकहिंसादिपापं कृतवानित्यर्थः ॥ ५ ॥

ननु कथापक्षे राज्ञो मृगया विहितैव अध्यात्मपक्षेऽपि जीवस्य भोक्तृत्वाद्विषयभोग उचित एवेति किमिति निन्द्यत इत्यत आह । तीर्थेष्विति त्रिभिः । अयं भावः नहि मृगया विधीयते रागप्राप्तत्वात् किन्तु नियम्यते प्रवृत्तिः सङ्कोच्यते । नियममेव पङ्क्तिं दर्शयति यदालमलर्थं लुब्धो रागी सन् हन्यात् तर्हि तीर्थेषु श्राद्धादिष्वेव । तत्रापि श्रुतिदृष्टेषु प्रख्यातेष्वेव ननित्यश्राद्धादिषु तत्रापि राजैव मेध्यानेव वन एव यावदुपयोगमेवेति एवं जीवस्य विषयसेवापि यावदुपयोगमेव न यथेष्टमित्यभ्यनुज्ञा रूपो नियम एवेत्यर्थः ॥ ६ ॥

स तेन कर्मणा न लिप्यते । ज्ञानेनेति तत् कर्म जन्येन ज्ञानेन हेतुनेत्यर्थः ॥ ७ ॥

अन्यथा नियमोल्लङ्घनेन अन्तःकरणशुद्ध्यभावात् कर्तृत्वाभिमानमारूढः कर्मभिरनुबध्यते ततश्च गुणप्रवाहपतितोऽधो व्रजति । तेनाध्यात्मपक्षेऽपि निषिद्धेतरविषयभोग एव जीवस्योक्त इत्यर्थः ॥ ८ ॥

प्रासङ्गिकं परिसमाप्य प्रकृतमाह । तत्रेति । विचित्रपक्षैः शरैर्विप्लवो नाशः । पक्षे विविधदोषयुक्तैरिन्द्रियैर्विविधहिंसादिपापं करुणात्मनां कृपालूनामस्मादृशां दुःसहः । अतएव त्वमेव प्रबोध्यस इति भावः ॥ ९ ॥

अममध्यगादिति धार्मिक जीवोहि कथञ्चिद्दैववशात् कञ्चित् कालमधर्मं कृत्वा अनुतापं प्राप्तः स्यादित्यर्थः ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तदेव सुषुप्त्यवस्थां जाग्रदवस्थां चोक्त्वाथ पङ्क्तिशो मृगयाव्याजेन स्वप्नावस्थां पुनर्जाग्रदवस्थां च प्रपञ्चयति । स इति । स पुरञ्जनः एकदा स्वप्नवेलायाम् अध्यात्मपक्षे महान् कर्तृत्वभोक्तृत्वाद्यभिनिवेशो धनुर्यस्य सः रथं जीवस्य स्वप्नशरीरादिनिमातृत्वे अनिष्टपाकादिनिर्मातृत्ववत् अनिष्टशरीरादिनिर्मातृत्वासंभावात् परमेश्वरनिर्मितं स्वप्नशरीरम् जाग्रद्देहस्य तु ज्ञानसंवत्सरोपभोग्यपुरत्वेनोक्तत्वात् आरुह्य पञ्चप्रस्थं वनमगादिति तृतीयेनान्वयः कीदृशं रथं पञ्चाश्वम् पञ्च ज्ञानेन्द्रियाण्यश्वा यस्य तमाशुगं शीघ्रगं द्वे अहंकारममकाररूपे ईषे दण्डिके यस्य तम् द्वे पुण्यपापरूपे चक्रे यस्य तम् एकं प्रधानमक्षो यस्य तम् त्रयो गुणाः वेणवो ध्वजा यस्य पञ्च प्राणाः बन्धुराणि बन्धनानि यस्य तम् ॥ १ ॥

एकं मनो रश्मिर्यस्य तम् एका बुद्धिर्दमनः सूतो यस्य तम् अनेकरूपत्वाद्बुद्धेः कलत्रत्वं युक्तमेव एकं हृदयं नीडं यस्य तम् द्वौ शोकमोहौ कूबरस्थंभनस्थानं यस्य तम् पञ्चेन्द्रियार्थाः शब्दादयः प्रह्रियन्ते आपात्यन्ते यस्मिन्निति पञ्चप्रहरणास्तम् सप्त धातवो वरूथाः चर्माद्यावरणानि यस्य तम् पञ्चकर्मेन्द्रियाणि विक्रमाः गतिप्रकारा यस्य तम् ॥ २ ॥

हैमोपस्करं स्वप्नदृष्टपुण्यानुसारेण स्वर्णालंकारयुक्तम् स्वर्णमयं वर्म कवचं यस्य सः रजो गुणावृत्तिरित्यर्थः अक्षय्यो बहुबाणयुक्तः इषुधिनिषङ्गो यस्य सः नानावासनाश्रयाहंकारधर इत्यर्थः एकादशो मनोरूपश्चमूनाथो यस्य सः गतवान्

ततः क्षुत्तृट्परिश्रान्तो निवृत्तो गृहमेयिवान् ।
कृतस्नानोचिताहारः संविवेश गतक्लमः ॥ ११ ॥
आत्मानमर्हयाञ्चक्रे धूपालेपस्रगादिभिः ।
साध्वलङ्कृतसर्वाङ्गो महिष्यामादधे मनः ॥ १२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनेकरूपत्वात् रदिमत्वं चमूनाथत्वं युक्तमेव पञ्चेन्द्रियार्थाः प्रकर्षेण तिष्ठन्तीति प्रस्थाः मृगाः यस्मिन् तद्वनमगात् ॥ ३ ॥

आत्ताः गृहीताः वासनारूपाः इषवः कर्तृत्वभोक्तृत्वाद्यभिनिवेशरूपः कार्मुकश्च येन सः अतदर्हाम् त्यागानर्हाम् जायां जाग्रद्व्यवहारयोग्यां बुद्धिं विहाय मृग्यन्ते इति मृगाः इन्द्रियार्थास्तद्व्यसने भोगे लालसा यस्य सः मृगयां कथापक्षे वध्यपशवन्वेषणारूपामध्यात्मपक्षे इन्द्रियार्थान्वेषणरूपां चचार ॥ ४ ॥

घोरात्मा दुष्टचित्तः बाणैः वासनारूपैः वनेषु भोगस्थानेषु वनगोचरान् शब्दादिरूपान् मृगान् न्यहनत् हनर्हिंसागत्योरित्यस्मात् अग्रहीत् ॥ ५ ॥

आसुरींवृत्तिमास्थाय घोरात्मा निरनुग्रह

इत्यर्द्धेन कथापक्षे मृगयाध्यात्मपक्षे विषयसेवाचानिषेद्वेति द्योतितं तदेवोपपादयति । तीर्थेष्विति त्रिभिः । यद्यलमत्यर्थं लुब्धो भवति तथापि तीर्थेषु श्राद्धादिष्वेव तत्रापि प्रतिदृष्टेषु प्रख्यातेष्वेव नतु नित्यश्राद्धादिषु तत्रापि राजैव मेध्यानेव वने एव यावदुपयोगमेव पञ्चन् हन्यादिति षड्भिः प्रकारैर्नियम्यते पशुहिंसासंकोच्यते नतु अग्नीषोमीयं पशुमालभेतेत्यादिवाक्यैर्विधीयते राग प्राप्तत्वात् एवं जीवस्य विषयसेवापि ऋतौ भार्यामुपेयादित्यादिवाक्यैः संकोच्यते इत्यर्थः ॥ ६ ॥

यो मानवः कर्म हिंसात्मकं विषयसेवनात्मकं च एवं नियतं षड्भिः प्रकारैः संकोचितमपि यो विद्वान् तत्त्ववित् स तेन ज्ञानेन तत्त्वबोधेन न कुर्वीत अत एव कर्मणा न लिप्यते इति नकारस्योभयत्र सम्बन्धः ॥ ७ ॥

विद्वान् हिंस्रं कर्म न करोति मन्दाधिकारी तूक्तरीत्या नियमेन कुर्यात् अन्यथा तु तादृशकर्म कुर्वाणः यतो मानारूढो यतो गुणप्रवाहपतितोऽत एव नष्टप्रज्ञो निबध्यते कर्मणेतिशेषः अत एवाधो व्रजति ॥ ८ ॥

प्रासंगिकमुक्त्वा प्रकृतमाह । तत्रेति । विप्लवो विनाशः ॥९॥१०॥

---

### भाषाटीका ।

( नारदजी बोले एक दिन वह राजा पुरंजन हाथ मे बडाधनुष को लेकर पांच घोडों से जल्दी चलने वाला दोदण्ड वाला दो चक्र वाला एक धुरा वाला तीन ध्वजा वाला पांच बंधन वाला एक रस्सी वाला एक सारथी वाला एक सारथिस्थान वाला दो जुआ वाला पांच आयुध वाला सात आवरण वाला पांच गति प्रकार वाला तथा सुवर्ण के आभरणों वाला जो रथ तिसपर बैठा सुवर्णका कवच पहरा अक्षय तरकस बांधे ग्यारह सेनापतिन को साथ में लेकर पंच प्रस्थ नामक वन को गया यहां पर कर्तृत्व का अभिमान धनुष है रजोगुण कवच है वासना बाण हैं अहंकार तरकस ही ग्यारह इन्द्रियों का नाथ है वासनायुक्त मन ही है पांच इन्द्रिय घोडे हैं संवत्सरवेग गति है अहंता ममता दण्ड हैं पुण्य पाप दो चक्र हैं प्रधान ही धुरा है सत्त्वादि गुण ध्वजा हैं पांच प्राण ही बन्धन हैं वासनासहित मन लगाम है एक बुद्धि सारथी है एक हृदयही बैठने का स्थानहै शोक मोह दोनों कूवर हैं शब्दादिपां चविषयके ... आयुध हैं त्वगादि सात धातु वरूथ हैं कर्मेन्द्रिय ... विक्रम हैं रजोगुण सुवर्ण स्वप्न देह रथ है पृथिव्यादि ... शिखर वाले स्वप्नास्थानमें जीवका प्रवेश होना है ॥ १० ॥

गर्वित होकर धनुषबाण को हाथ में लेकर मृगों ... में लालसा करके नहीं छोडने लायक भार्या को छोडकर ... में सिकार खेलने लगा यहां रागादिक बाण हैं ... धनुष हैं शब्दादिक विषय मृग हैं विवेकवाली भार्या है ॥ ४ ॥

आसुरी वृत्तिको ग्रहण करके घोर चित्त ... को छोडकर तीखे बाणों से वन में घूमने वाले ... वनमें मारने गया यहां जगत् अवस्था के संस्कार ... में वहीं विषय भोग किये हैं ॥ ५ ॥

यदि मांस की अति इच्छा होतो शास्त्रों में ... श्राद्धादि कों में ही राजा जङ्गल में जाकर प्रयोजन ... पवित्र मृगों को मारे ऐसी शास्त्र की आज्ञा है ॥ ६ ॥

हे राजेन्द्र ! इस प्रकार से जान कर जो मनुष्य कर्म करता है सो उस कर्म में लिप्त नहीं होता है ॥ ७ ॥

शास्त्र विधि को छोड कर कर्म करै तो अभिमान ... बन्ध जाता है गुण प्रवाह में पडकर ज्ञान ... से नरक को जाता है ॥ ८ ॥

तहांपर जिन मृगों के शरीर काटे हैं उनके ... से बहुतों का नाश होगया यहां इन्द्रियों से ... हिंसा है ॥ ९ ॥

खरगोश हैं सूअर हैं भैंसा हैं रोज मृग हैं ... सेह हैं ऐसे पवित्र मृग तथा अन्य मृगों के मारने से ... को परिश्रम होगया यहां स्वप्न देख कर थकजाना है ॥ १० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं स्वप्नावस्था दर्शिता इदानीं पुनरपि ... बुद्ध्या रममाणस्य पुत्रादिसन्ततिं प्रपञ्चयिष्यन्कथा... तस्याः प्रणयकुपिताया अनुनयं प्रस्तावसहितमाह । ... रञ्य यावदध्यायसमाप्ति । एयिवानागतः कृतं स्नानमुचि... रश्च येन संविवेश शय्यामाश्रितः ॥ ११ ॥ १२ ॥

तृप्तो हृष्टः सुदृप्तश्च कन्दर्पाकृष्टमानसः ।
न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम् ॥ १३ ॥
अन्तःपुरस्त्रियोऽपृच्छद्विमना इव वेदिषत् ! ।
अपि वः कुशलं रामाः ! सेश्वरीणां यथा पुरा ।
न तथैतर्हि रोचन्ते गृहेषु गृहसम्पदः ॥ १४ ॥
यदि न स्याद्गृहे माता पत्नी वा पतिदेवता ।
व्यङ्गे रथ इव प्राज्ञः कोनामासीत दीनवत् ॥ १५ ॥
क्व वर्तते सा ललना मज्जन्तं व्यसनार्णवे ।
या मामुद्धरते प्रज्ञां दीपयन्ती पदे पदे ॥ १६ ॥

॥ रामा ऊचुः ॥

नरनाथ ! न जानीमस्त्वत्प्रिया यद्व्यवस्यति ।
भूतले निरवस्तारे शयानां पश्य शत्रुहन् ! ॥ १७ ॥

॥ नारद उवाच ॥

पुरञ्जनः स्वमहिषीं निरीक्ष्यावधुतां भुवि ।
तत्सङ्गोन्मथितज्ञानो वैक्लव्यं मरमं ययौ ॥ १८ ॥
सान्त्वयन् श्लक्ष्णया वाचा हृदयेन विदूयता ।
प्रेयस्याः स्नेहसंरम्भलिङ्गमात्मनि नाभ्यगात् ॥ १९ ॥
अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः ।
पस्पर्श पादयुगलमाह चोत्सङ्गलालिताम् ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

गृहमेधिनीं सात्त्विकीं बुद्धिं राजस्यां बुद्ध्यां वर्तमानो नापश्यत् ॥ १३ ॥

वेदिषत् हे प्राचीनबर्हिः ! अन्तःपुरस्त्रियस्तत्सखीः सेश्वरीणाम् स्वामिनीसहितानाम् । यथा पुरेत्यादि पृथग्वाक्यम् ॥ १४ ॥

व्यङ्गे चक्रादिहीने ॥ १५ ॥ १६ ॥

निरवस्तारे आस्तरणरहिते ॥ १७ ॥

अवधुतां त्यक्तदेहावराम् । तत्सङ्गेनोन्मथितं व्याकुलं ज्ञानं यस्य ॥ १८ ॥

स्नेहसंरम्भः प्रणयकोपस्तस्य लिङ्गं कुटिलदृष्ट्यादि स्वस्मिन्न लब्धवान् ॥ १९ ॥

उत्सङ्गमारोप्य लालिताम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं राजस्या बुद्धेः कार्यभूतां जाग्रदवस्थां तामस्याः बुद्धेः कार्यभूतां स्वप्नावस्थां चाभिधायेदानीं विद्वान् कुर्वीतेति सूचितविवेकः कथमुदेतीति विविस्तायां प्रणयकलहनिमित्तक्रोधाविष्टप्रियानुनयनकथनव्याजेन संसारिणो जीवस्य विवेकात्मसात्त्विकबुद्धेर्लम्भं द्योतयन् "प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी" इत्युक्तसात्त्विकबुद्ध्यलाभदशायां दैवात्तदलाभनिमित्तपरितापोदयं ततस्तल्लिप्सां ततस्तदुचितसाधनैस्तल्लब्धिं च द्योतयन् कथापक्षे तत्सौन्दर्याय तां बुद्धिं महिषीत्वेनेन्द्रियवृत्तीरन्तःपुरस्त्रीत्वेन परिकल्प्य तदनुनयप्रकारमाह । ततइत्यादिना । क्षुत्तृड्भ्यामशनायापिपासाभ्यां परिश्रान्तः स्वापन्नशरीरेऽपि क्षुत्तृषोरनुवृत्तेरेवमुक्तं ततः स्वाप्नविषयानुभवरूपमृगयाया निवृत्तः गृहं पुरत्वेन रूपितजाग्रद्दृहगतहृदयस्थानमभियान्प्राप्तः ततः कृतं स्नानमुचित आहारश्च येन सः अत एव गतश्रमः सम्यगुपविष्टवान् ॥ ११ ॥

ततो धूपादिभिरात्मानमर्हयांचक्रे ततः साधु सम्यगलंकृतानि सर्वाण्यङ्गानि येन सः महिष्यां मन आदधे कृतस्नानोचिताहार इत्यनेन सुखजनकविवेकात्मसात्त्विकबुद्ध्युत्पत्तिप्रारम्भावस्थायाः सुखकरत्वं सूच्यते स्नानाहारधूपालेपनस्रग्भूषणाद्यलङ्कारैर्जातानन्द इव महिष्यां विवेकात्मिकायां बुद्धौ मन आदधे निहितवानित्यर्थः कथापक्षेतु स्पष्टोऽर्थः ॥ १२ ॥

उचिताहारेण तृप्तः धूपालेपस्रगादिभिर्हृष्टः सुदृप्तः तृप्तिहर्षाभ्यां सुतरां दृप्तः अत एव च कन्दर्पेणाकृष्टं वशीकृतं मानसं यस्य सः गृहमेधिनः स्वस्य संबन्धिनीं गृहिणीं गृहसख्या अस्तीति तां स्वाश्रय एवस्थितां वरारोहां वरस्त्रियं न व्यचष्ट न ददर्श यथा कामपरवशः स्वगृहे एव क्वचिदन्तर्हितां प्रियां नाप-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इयन्तथायं जीवो विवेकात्मकबुद्धिलिप्सापरवशस्तां स्वाश्रयिनां न लब्धवानित्यर्थः ॥ १३ ॥

हेवेदिषन्! प्राचीनबर्हिः विमना इव दुःखितमना इवान्तः पुरस्त्रियः तत्सखीरपृच्छत्पुरञ्जनः तदलाभनिमित्तवैमनस्यः बुद्धिमूलकेन्द्रियवृत्तीः पप्रच्छ कथेन्द्रियवृत्त्या बुद्धिः सात्त्विकी स्यादिति परिशीलितवानित्यर्थः ॥ १४ ॥

प्रश्नमेवाह । अपीतित्रिभिः । हेरामाः! स्त्रियः सेश्वरीणां स्वामिनीसहितानां वः युष्माकमपि कुशलमपिशब्दः प्रश्ने कुशलप्रश्ने हेतुः हि यस्मात् गृहेषु पुरा मदिष्या व्यापारं दशायां गृहसंपदः यथैव रोचन्ते न तथेदानीं रोचन्ते विवेकाभावेन न कोऽपि पुरुषस्य गुणः प्रकाशतेऽतो विवेकः किमुदेष्यतीति चिन्तितवानित्यर्थः ॥ १५ ॥

गृहेषु माता वा पतिर्देवता यस्याः सा पत्नी वा यदि न स्यात्तर्हि व्यङ्गे चक्राश्वादिरहिते रथ इव प्राज्ञः बुद्धिमान् को नाम पुरुषो दीनवदासीत वसेदित्यर्थः विवेकाभावे देहत्यागो वर इति भावः सा ललना क वर्तते कथंभूता ललना व्यसनार्णवे दुःखार्णवे मज्जन्तं मां पदे पदे क्षणे क्षणे स्वयं प्रज्ञां दीपयन्ती बोधयन्ती सती उद्धरेत् व्यसनार्णवात् यथा विरहशोकातुरं पुमांसं प्रौढा प्रिया तदनुकूलाचरणहितोपदेशादिना शोकमपनुद्य सुखयति तद्वद्विवेकात्मिका बुद्धिरपि पदे पदे हिताहितं प्रकाशयन्ती पुमांसमुद्धरति ईदृशी बुद्धिः क वर्तत इति व्यज्यते ॥ १६ ॥

हेनरनाथ! त्वत्प्रिया यद्व्यवस्यति निश्चिनोति तन्न जानीमः यदर्थं वैमनस्यमापन्ना तद्वैमनस्यहेतुं न जानीमः त्वत्प्रियां तु जानीम इत्याहुः हेशत्रुहन्निरवस्तारे आस्तरणरहिते भूतले स्वधुतां शयानां पश्येति कथापक्षेऽर्थः अध्यात्मपक्षे त्वदधीनेन्द्रियवृत्तीनां सर्वासां निश्चयात्मिकबुद्धिमूलकत्वात्कयापीन्द्रियवृत्त्या सानोदेतीत्यालोच्य यदनादरवशात्प्रियानादृता सतीव मद्विमुखी अभूदित्यनुसंहितवानित्यर्थः आदरो बुद्धेः शिक्षणम् ॥ १७ ॥

पुरञ्जनो भुवि पतितां महिषीं निरीक्ष्य तत्सङ्गे नोन्मथितं व्याकुलं ज्ञानं यस्य सः परमं भृशं वैक्लव्यं शोकपारवश्यं ययौ। अहो मदीयेयं बुद्धिरेतावन्तं कालमेवं विपरीतासूदितिवैक्लव्यं ययावित्यर्थः ॥ १८ ॥

ततः श्लक्ष्णया सूक्ष्मया वाचा विदूयता परितप्तेन हृदयेन मनसा सान्त्वयन्ननुनयन् प्रेयस्याः प्रियायाः प्रेमसंरम्भः प्रणये स्वस्मिन् यः कोपः तस्य लिङ्गं कारणमात्मनि मनसि नाध्यगात् निश्चितवान् विवेकोदयसाधनभूतस्वादरणमन्विच्छन् तावदेतावत्कालं तदनु हृदये कारणमन्वेषयन्नपि तन्नाध्यगादित्यर्थः तस्य दैवायत्तत्वादितिभावः ॥ १९ ॥

वीरः पुरञ्जनः अनुनये सान्त्वने कोविदः कुशलः अनुनयकोविदैरिति तृतीयान्तपाठे तु वाक्यैरिति विशेष्यमध्याहार्यं शनकैर्महिषीमनुनिन्ये सान्त्वयामास अनुनयप्रकारमेवाह। पादयुगलं पस्पर्श प्रियायाः पादौ गृहीतवान् तत उत्सङ्गारोपादिना लालितमाह । अध्यात्मपक्षे त्वनुनये स्ववशीकारे कोविदैर्निपुणैरुपायैः स्ववशामनुनिन्ये पस्पर्श पादयुगलमित्यनेनाद्यप्रभृतिविवेकात्मिकां बुद्धिमनुसृत्यैव वर्तेयमिति प्रतिज्ञातवानित्युक्तम् भवति उत्सङ्गलालितामाहत्येनेन स्ववशीकृतया विवेकात्मिकया बु[illegible] एवमनुसंहितवानित्युक्तम् ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जाग्रद्विषयाननुभूय सुषुप्तिप्राप्तिप्रकारमाह । तत इ[illegible] ततो जागरणान्निवृत्तः क्षुत्तृड्लक्षणमनोवृत्तिभ्यां व्यावृ[illegible] हलचलनाडीविशेषं प्राप्तः कृतं जाग्रद्विषयभोगरूपा[illegible] चणस्नानं येन सः उचित आहारः स्वरूपसुखावाप्ति[illegible] यस्य स तथा संविवेश सुप्तोऽभूदित्यन्वयः ॥ ११ ॥

स्वापात्पूर्वव्यापारमाह । आत्मानमिति । महिष्यां बुद्धौ [illegible] धूपादिलक्षणवृत्तिभिरात्मानमन्तर्यामिलक्षणं ब्रह्मस्वरूपमर्द[illegible] संपत्तिलक्षणमलंकारमकरोत् ।

सता सोम्य! तदा संपन्नो भवतीति श्रुतेः ।

संपत्तिलक्षणालङ्कारयुक्तसर्वावयवः हृष्ट इत्यादिना सुप्ता[illegible] विशिष्ट उच्यते अनेन स्वप्नप्राप्तिरपि निरूप्यत इति ज्ञातव्यं [illegible] वृत्त्यावस्थानुभवः स्पष्ट एव स्वप्नप्रापककर्मोद्रेके [illegible] महिष्यां बुद्धौ मन आदध इत्युपपद्यते कं स्वरूपसुखं दद[illegible] प्रकटयतीति कन्दर्पः स्वापस्तेनोत्कृष्टं मानसं यस्य स [illegible] स्वप्नावस्थायामपि स्वापस्य सत्त्वात् ॥ १२ ॥

बुद्ध्याहितमनाः किमकरोदिति । तत्राह । न व्यचष्टेति । [illegible] धिनीमुपात्तज्ञानवर्ती गृहिणीं नानावासनाकारमनो[illegible] मतीं वरस्य हरेरारोहो विषयतया यस्याः सा वरारो[illegible] शास्त्रीयां बुद्धिं न व्यचष्ट दर्शनं नाम निश्चयज्ञानं [illegible] तीति ज्ञातव्यं स्वप्नस्य वासनात्मकत्वात् निर्णयज्ञाना[illegible] दित्यर्थः हेवेदिषन्! प्राचीनबर्हिः अन्तः पुरस्त्रियः इन्द्रिय[illegible] नोवृत्तीर्वा अपृच्छत् स्वप्नव्यापारमकरोत् ॥ १३ ॥

हेरामा! इतिवृत्तयः सम्बोध्यन्ते ईश्वरीबुद्धिः गृह[illegible] शरीरेन्द्रियादिशोभाः बुद्धौ विद्यमानायां रोचन्ते नान्यदेति । [illegible]

व्यङ्गे चक्राश्वादिरहिते रथे प्राज्ञो बुद्धिमान् रथी [illegible] लक्षणेन प्राणेन हीने देहे प्राज्ञः सुषुप्तिप्रवर्तकः परमात्मा [illegible]

पदे पदेऽनुक्षणं मम प्रज्ञां दीपयन्ती भगवद्विषयज्ञा[illegible] धयन्ती या मामुद्धरति संसारादिति शेषः सा ललना [illegible] बुद्धिः क वर्तत इत्यन्वयः ॥ १६ ॥

वाह्यकथामनुसृत्योत्तरकथाप्रत्युत्तरमाह । नरनाथेति [illegible] वस्यति यन्निश्चित्य तिष्ठति तन्न जानीम इत्यन्वयः निर[illegible] आस्तरणरहिते भूतले पूर्णे भगवत्पादमूले शयानां [illegible] वीणां यथार्थवर्णनमेतत् ॥ १७ ॥

इदानीमसद्बुद्धिनिमित्तप्रवृत्तिप्रकारमाह । पुरञ्जन इति [illegible] नकर्मवैचित्र्यात् प्रतिक्षणं वृत्तिभेदोऽपि प्रामाणिक [illegible] एतद्वचनमुपपद्यत इति अवधुतां सद्वृत्तिभिर्हितां [illegible] यिकया बुद्धेः सङ्गेन स्त्रीकारेण तादृशकर्मणा प्रा[illegible] नष्टं ज्ञानं यथार्थलक्षणं यस्य स तथा ॥ १८ ॥

प्रेयस्या बुद्धेः प्रेम्णा संरम्भो हिंसालक्षणो नाध्य[illegible] लिङ्गं कारणमात्मनि स्वस्मिन्नाध्यगात् न ज्ञातवान् [illegible] कुण्ठितान्तरत्वात् रम्भः हिंसायाम् ॥ १९ ॥

अनुनिन्य इत्यादिकथालङ्कारः अनुनयनं नाम विषयबुद्धि[illegible] त्वप्रकटनं बुद्धेर्मन आदिवत्त्वात् पादास्तत्पक्षद्वयं पस्प[illegible] कृतवान् मनोलक्षणा उत्सङ्गे सम्भावितामिदमेव स्वीकरण[illegible]

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अन्तरिति सार्द्धकम् ॥ १४—१८ ॥
नाभ्यगाद् गभीरकोपरवात् ॥ १९—२३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

क्षुत्तृट्परिश्रान्त इति कृतानां दुष्कृतानां स्मरणान्याकुल इत्यर्थः। निवृत्त इति पापेभ्यो विरत इत्यर्थः। गृहमेधियानित्यधर्ममर्यादां विहाय पुनर्धर्ममर्यादायां स्थातुमियेषेत्यर्थः। कृतस्नान इति ब्राह्मणानामन्त्र्य पापप्रायश्चित्तं कृतवानित्यर्थः। तृप्तिताहारः मांसमदिराद्यशुचिभक्षणं तत्याजेत्यर्थः। संविवेश कश्चित् स्थिरीबभूवेत्यर्थः ॥ ११ ॥

आत्मानमर्हयाञ्चक्र इति साधून् मुनीन् विदुषश्च सन्मान्यातीय तैः स्वान्तःकरणं शोधयामासेत्यर्थः कैः धूपादिभिरिति धर्मज्ञानवैराग्यादिनानोपाख्यानोपदेशैः। साध्वलङ्कृतसर्वाङ्ग इति शास्त्रानुसरणीकृतसर्वचित्तवृत्तिक इत्यर्थः महिष्यामिति पूर्वावस्थाप्राप्तायां धर्मशीलायां स्वबुद्धावित्यर्थः ॥ १२ ॥

तृप्त इत्यादिना अधर्मसंस्कारोऽपगम उक्तः। कन्दर्पोत्कृष्टमास इति पूर्वदशावर्त्तिनीं धर्मनिष्ठावतीं बुद्धिं युवतिमिव प्राप्तुमत्युत्सुक इत्यर्थः। नव्यचष्टेति कथापक्षे मृगयाव्याजेन वनं गत्वा कामपि कामिनीं रमयामासेति पुरञ्जनी मानिनी बभूवेति हेतोरिति भावः। अध्यात्मपक्षे आगन्तुकपापकृतमनोमालिन्यस्य निःशेषानपगमाद् प्राक्तनी धर्मप्रयोजिका बुद्धिरीप्सितापि न शीघ्रमाविर्भवेदित्येव विवक्षितम् ॥ १३ ॥

वेदिषत् हे प्राचीनबर्हिः ! ईश्वरीणां स्वामिनीसहितानामेतर्हि इदानीं तां विनेत्यर्थः। पक्षे अन्तःपुरस्त्रीः अन्तःकरणवृत्तीः पूर्वदशावस्था धर्म्मप्रवर्त्तिनीर्मनाक् प्रादुर्भूता वीक्ष्य परामर्शं। हन्तैतादृश एव मम बुद्धिवृत्तयो यदि सांप्रतिकपापसंस्कारानुच्छिद्यमानाः स्थिराः स्युस्तदैव ममोद्धार इति कुशलप्रश्नस्यार्थः। ननु विषयभोगेन सुखीभव किं ते धर्म्मेणेत्यत आह। एतर्हि इदानीं निषिद्धविषया न रोचन्ते ॥ १४ ॥

माता विष्णुभक्तिः पत्नी धर्म्मशीला बुद्धिः। व्यङ्गे चक्रादिहीने ॥ १५ ॥

क वर्त्तत इति सद्बुद्धिवृत्तय एव काश्चन नानुभूयन्ते ननु वस्तुतः सद्बुद्धिरिति मनसि खिद्यति स्म ॥ १६ ॥

निरवस्तारे आस्तरणरहिते। पक्षे तव हृदयमेव तस्याः पुष्पपर्य्यङ्कस्तस्माद्विच्युतिरेव तस्याः सद्बुद्धेर्निरवस्तारे भूतले शयनं शत्रुहन् ! हे वीर पक्षे त्यक्तपाप ! ॥ १७ ॥

अवधूतां त्यक्तदेहादरां पक्षे खेनैव स्वहृदयात् च्यावितत्वात् खण्डितां निरीक्ष्य हन्त ममैवायं महापराध इति विचार्य्य तत्सङ्गेन तस्याः पुनराद्रिस्तया उन्मथितज्ञानः तिरस्कृतस्वदुर्बुद्धिक इत्यर्थः। वैक्लव्यं दैन्यम् ॥ १८ ॥

सान्त्वयन्निति मद्भाग्यादियं मे प्राक्तनी बुद्धिः पुनरप्याविर्भवति यां विनैव मम दुर्गतिरिति मनोऽनुलापः। प्रेमसंरम्भचिह्नं नाध्यगादिति ममाप्येवं पापाचरणं केन कारणेनाभूदिति चणं परामर्शः ॥ १९ ॥

अनुनिन्य इति पुनरप्यारभ्य दुर्विषयभोगे बुद्धिर्मया नैव कार्येति परस्पर्श पादयुगलमिति अहङ्कारत्यागसाधुजनसंमानावेव तस्याः पादौ तौ परस्पर्श प्राप उत्सङ्गलालितां स्वहृदयनिकटमेवानीताम् २०॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पुनर्जीवं प्रति बुद्धिसङ्गत्या संसारप्रापयं जीवस्य वर्णयतितत इत्यादिना। आर्द्रायणात् प्राप्तः कृतं स्नानमुचितं आहारश्च येन स तथा कृतस्नान इत्यादिवाक्यानि कथासौन्दर्यार्थानि११॥

महिष्यां विवेकवत्यां बुद्धौ ॥ १२ ॥ १३ ॥

हे वेदिषत् ! ईश्वरीणां वः कुशलमित्यपृच्छत् ॥ १४ ॥

यथा मातृविदर्शने तथा एतर्हि तद्दर्शने न रोचन्ते व्यङ्गे चक्रादिहीने ॥ १५ ॥

पदे पदे प्रतिचणं प्रज्ञां चेतनाम् ॥ १६ ॥

यद्यद्यवस्यति निश्चिनोति तन्न जानीमः। निरवस्तारे निरास्तरणे ॥ १७ ॥

अवधुतामवधूताम्। तत्सङ्गेन तदासक्त्या उन्मथितं ज्ञानं धैर्यं यस्य सः। अध्यात्मपक्षे पुरञ्जन इत्यादिना जीवस्य बुध्यधीनत्वमात्रं वर्ण्यते ॥ १८ ॥

प्रेयस्याः प्रियायाः संरम्भः स्वस्मिन्कोपस्तस्य लिङ्गं बीजमात्मनि चित्तेनाभ्यगात् न ज्ञातवान् ॥ १९ ॥

अनुनये सान्त्वने कोविदश्चतुरः। अनुनिन्ये सान्त्वयामास अनुनयकोविदत्वं दर्शयति। परस्पर्शेत्यादिना। उत्सङ्गमङ्कमारोप्य लालितामाह ॥ २० ॥

भाषाटीका।

तब क्षुधा तृषासे श्रमित होने सें लौट कर घर को आगया स्नान भोजनकरके थकाई मिटनेसे बैठ गया यहां पापों से निवृत्त होना विश्राम कहा है ॥ ११ ॥

सुन्दर तरह से शरीर को भूषित किया धूप चन्दन माला आदि से सर्वांग में युक्त होकर फिर अपनी रानी पर मनको लगाया ॥ १२ ॥

तृप्त है हर्षित है गर्वितहै कन्दर्प से मन उसका खिचगया है फिर घरमें अपनी गृहमेधिनी सुन्दरी गृहणी को नहीं देखाहै ॥१३॥

हे वेदिषद ! प्राचीन बर्हिः अन्तः पुरकी स्त्रियों को बडा दुखित होकर पूछने लगा हे स्त्रियों तुमारी ईश्वरीके सहित तुमारा सब कुशल है कि नहीं ॥ १४ ॥

अब पहिले सरी की घरकी सम्पत्ति नहीं रुचती है यदि घरमें माता अथवा पतिको देवता मानने वाली पत्नी घरमें न होवे तब तो बिना पहिया के रथ सरी के उस घर में दुखी सरी का कौन रह सकता है ॥ १५ ॥

वह ललना अब कहां है जोकि दुखसागर में डूबते में मेरे को बुद्धि बढाकर क्षण क्षण में उद्धार करती थी ॥ १६ ॥

स्त्री जन बोली हे नरनाथ ! हम नहीं जानते हैं कि तुमारी प्यारी क्या विचारती है हे शत्रुहन ! बिना बिछाये पृथिवी में पडी है सो देखो ॥ १७ ॥

नारदजी बोले पुरञ्जन ने अपनी रानी को देखा कि पृथिवी में पडी है तब तो उसके संग से ज्ञानके नष्ट होजाने से बडी विकलता को प्राप्त होगया ॥ १८ ॥

॥ पुरञ्जन उवाच ॥

नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे! ।
कृतागःस्वात्मसात्कृत्वा शिक्षादण्डं न युञ्जते ॥ २१ ॥
परमोऽनुग्रहो दण्डो भृत्येषु प्रभुणार्पितः ।
बालो न वेद तत्तन्वि!बन्धुकृत्यममर्षणः ॥ २२ ॥
सा त्वं मुखं सुदति!सुभ्र्वनुरागभारव्रीडाविलम्बविलसद्धसितावलोकम् ।
नीलालकालिभिरुपस्कृतमुन्नसं नः स्वानां प्रदर्शय मनस्विनि!वल्गुवाक्यम् ॥ २३ ॥
तस्मिन्दधे दममहं तव वीरपत्नि!योऽन्यत्र भूसुरकुलात्कृतकिल्बिषस्तम् ।
पश्ये न वीतभयमुन्मुदितं त्रिलोक्यामन्यत्र वै मुररिपोरितरत्र दासात् ॥ २४ ॥
वक्त्रं न ते वितिलकं मलिनं विहर्षं संरम्भभीममविमृष्टमपेतरागम् ।
पश्ये स्तनावपि शुचोपहतौ सुजातौ बिम्बाधरं विगतकुङ्कुमपङ्करागम् ॥ २५ ॥
तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य स्वैरङ्गतस्य मृगयां व्यसनातुरस्य ।
का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्नमुशती न भजेत कृत्ये ॥ २६ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पारम-
हंस्यां संहितायां वैयासिक्यां पुरञ्जनोपाख्याने
षड्विंशोऽध्यायः ॥ २६ ॥

---

भाषाटीका

बड़े कोमल वचन से रानी को समझाने लगा हृदय भय से कांपता था उसका तौ भी प्यारी का अपने पर क्रोध होने के चिन्हं को उसने नहीं जान पाया ॥ १९ ॥

तबतो बड़ी विनती करने में चतुर उस वीरने धीरे से उसकी विनती करने का आरम्भ किया दोनों चरणोंको भी अपने गोद मे लेकर प्यार करके बोलने लगा ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृतमागोऽपराधो यैस्तेषु आत्मसात्कृत्वा अस्मदधीनोऽयमिति मत्वा शिक्षार्थं दण्डं न कुर्वन्ति ते भृत्या मन्दभाग्याः ॥ २१ ॥

यतः परमोऽनुग्रहो दण्डः । यस्तु दण्डतो विषीदति सोऽज्ञ इत्याह । बाल इति।बन्धुकृत्यं शिक्षाकरणम् । अमर्षणः क्रोधी ॥२२॥

हेसुदति! हेसुभ्रु!हेमनस्विनि! सा त्वमस्माकं स्वामिन्यतः स्वानान्मुखं प्रदर्शय । कीदृशम् । अनुरागभारेण व्रीडया यो विलम्बो मन्थरता तेन विलसन्हासितावलोको यस्मिन् नीला अलका एवालयस्तैरुपस्कृतं भूषितम् । उन्नतनासिकम् । वल्गु वाक्यं यस्मिंस्तत् ॥ २३ ॥

हेवीरपत्नि! वीरस्य मम भार्ये यस्ते कृतापराधस्तस्मिन्नहं ब्राह्मणकुलादन्यत्रान्यस्मिन्मुरारिपुदासादितरत्र च दमं दधे दण्डं करोमि किन्तु तं विगतभयमुच्चैर्मुदितं त्रिलोक्यामन्यत्र कुत्रयाद्बहिरपि न पश्यामि मद्भयादेवासौ मरिष्यतीत्यर्थः ॥ २४ ॥

ते वक्त्रमितः पूर्वं कदाचिदपि वितिलकं न पश्यामि संरम्भेण कोपावेशेन भीमं भयङ्करमविमृष्टमनुज्ज्वलम् । अपेतरागं स्नेहशून्यं तथा ते सुजातौ शोभनौ स्तनावपि शुचा अश्रुभिरुपहतौ न पश्यामि तथा बिम्बफलाकारमधरं न कुङ्कुमपङ्कतुल्यस्ताम्बूलरागो यस्मात्तादृशं न पश्यामि । कुत एवं जातमिति शेषः पाठान्तरे एवं भूतं मुखं पश्यन् शं न विन्दामीत्यन्वयः विगतः कुङ्कुमपङ्करागो यस्मात् स्तनयोर्विशेषणम् ॥ २५ ॥

तत्तस्मात्कृतं किल्बिषमपराधो येन तस्य किल्बिषं स्वैरं स्वातन्त्र्येण त्वामपृष्ट्वा मृगयां गतस्य देवो देवनं तां राति ददातीति देवरः कान्तस्तं कामवेगेन विस्रस्तं पौंस्नं पौरुषं धैर्यं यस्य तम् । उशती कामयमाना कृत्ये योग्येऽर्थे का न भजेत ॥ २६ ॥

इतिश्रीभागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे शुभे ! ईश्वराः स्वामिनः येषु कृतापराधेषु भृत्येष्वात्मसात्कृत्वा मदधीना एतेऽतो नैते दण्डनीया इति मत्वा शिक्षार्थे दण्डं न कुर्वन्ति ते भृत्या मन्दभाग्या इत्यर्थः ॥ २१ ॥

कुतो यतः प्रभुणा भृत्येष्वर्पितो दण्डः परमोऽनुग्रहः भृत्यानां हितायैव भवतीत्यर्थः यस्तु दण्डितो विपीदति सोऽज्ञ इत्याह । वाल इति।अमर्षणः दण्डं नमर्षतीत्यमर्षणः हे तन्वि! तद्रन्धो स्वामिनः कृत्यं शिक्षाकरणमनुग्रह इति न वेद स वालो मूर्खः अज्ञ इत्यर्थः अतो मम शिक्षार्थमेव स्वामिनी त्वं विमुच्यधूरित्यर्थः अध्यात्मपक्षे तु स्वामिनीवन्मद्रक्षणैकान्ताया बुद्ध्या विवेकात्मिकाया इतः पूर्वमनुदयोऽस्मदनुग्रहार्थ एव यतोऽहमिदानीं विवेकालाभनिमित्तपरितापयुक्तः तामेवातीवाहतवानित्यनुसंदध इत्यर्थः ॥ २२ ॥

हे सुदति ! हेसुभ्रूः हेमनस्विनि ! सा त्वमस्माकं स्वामिन्यतः खानां नो मुखं प्रदर्शय कीदृशमनुरागभारेण व्रीडया च यो विडम्बो मन्थरस्तेन विलसद्धसितावलोको यस्मिन् नीलालका एवालयस्तैरुपस्कृतं भूषितमुच्चनासिकं वल्गुवाक्यं यस्मिन् निरतिशयसौन्दर्ययुक्तायाः प्रियाया उक्तविधमुखावलोकनसंजातमानन्दमनुभूयमान इवाहं स्थिरं निरतिशयसुखापादकविवेकोदये सुखीत्यनुसंहितवानित्यर्थः ॥ २३ ॥

हेवीर पत्नि! वीरस्य मम भार्ये यस्ते तुभ्यं कृतकिल्बिषः कृतापराधः तस्मिन्नहं ब्राह्मणकुलादन्यत्र कुलेऽपि मुररिपुदासादन्यत्र दमं दण्डं दधे करोमि मे त्वत्सहायस्य मम क्रुद्धस्य सतः त्रैलोक्याद्बहिरपीतिशेषः त्रैलोक्याद्बहिश्चान्तश्चोच्चैर्मुदितं विगतभयं च पुरुषं न पश्यामि यदीयं व्यवसायात्मिका बुद्धिर्मम संप्रति हितास्यात्तदा तत्सहायोऽहं तद्विरोधिनो निरस्यामिविवेकिना मयासाध्यं किमपि त्रिलोक्या अन्तर्वहिश्च न विद्यते मुररिपुदासादयस्तु विवेकिनो ममानुकूला एवेत्यनुसन्दधे ॥ २४ ॥

ते तव वक्त्रमितः पूर्वं कदाचिदपि वितिलकं तिलकरहितं न पश्यामि इदानीं तु मलिनं विगतहर्षं संरम्भेण क्रोधावेशेन भीमं भयङ्करमविमृष्टमनुज्ज्वलमपेतरागं स्नेहशून्यं तथा ते सुजातौ स्तनौ अविशोकाश्रुभिरुपहतौ चतथाविम्वफलाकारमधरं च विगतः कुङ्कुमपङ्कतुल्यः ताम्वूलरागो यस्मिन् तादृशं पश्यामि कुतएवं जात मिति शेषः व्यवसायात्मिकबुद्धेरभिव्यक्तेःप्रारम्भदशायामविशदत्वात्तादृशावस्थां तां प्रियानादरनिमित्तक्रोधेनात्मानमनलं कुर्वन्तीं शोचन्तीं स्त्रियमिवोत्प्रेक्ष्यते इत्यर्थः ॥ २५ ॥

तस्मात्कृतं किल्बिषमपराधो येन तस्य किल्बिषमेवाह। स्वैरं स्वातन्त्र्येण त्वामपृष्ट्वा मृगयाङ्गतस्य मे प्रसीद प्रसन्ना भव देवं देवनं क्रीडां राति ददातीति देवरः कान्तस्तं कामवेगेन विध्वस्तं गतं पौरुषं धैर्यं यस्य तमत एव वशंगतं का स्त्री कामयमाना कृत्ये कर्तुं योग्यार्थे न भजते भजतैवेत्यर्थः विवेकाभावादप्रसन्नस्य मम स्वप्नावस्थाभूदतो विवेकात्मकबुद्धियुक्तोऽहं प्रसन्नो वर्तयमेव मदंममाभिमानी विहाय वशङ्गतं कार्यापादकं मां व्यवसायात्मिका बुद्धिरपीहानुवर्तिष्यतीत्यनुसंहितवानित्यर्थः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ये येषु कृतापराधेषु शिक्षालक्षणं दण्डं न कुर्वते नूनं तेऽकृतपुण्या इत्यन्वयः ॥ २१ ॥

दण्डस्य निग्रहलक्षणत्वात् कथं प्रार्थ्यत इत्यत आह । परम इति । तर्हि लोकः कथं दुःखं मन्यत इति तत्राह । वाल इति । दण्डस्य पापप्रायश्चित्तरूपत्वात् जानातीत्यर्थः अनुतापादिवृत्तिविशेष इति ज्ञातव्यम् ॥ २२ ॥

उपस्कृतं मण्डितम् ॥ २३ ॥

भूसुरकुलात् ब्रह्मकुलात् क्रुद्धस्य मे सकाशाद्वीतभयं नष्टभयं तं न पश्ये ॥ २४ ॥

इतः पूर्वं वक्त्रादिकं विगततिलकादिकं न पश्यामीत्यन्वयः शुचा शोकाश्रुणोपहतौ सुजातौ कोमलौ ॥ २५ ॥

कुसुमास्त्रस्य कामस्य वेगेन विस्रस्तं श्लथितं पौंसं पौरुषं यस्य स तथा तं देवं रतिक्रीडादिकं राति ददातीति देवरः पतिस्तं कृत्ये प्रयोजननिमित्ते प्राप्तमुशती कामयमाना का स्त्री न भजेत ॥ २६ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्यत्र भूसुरकुलादिकं धर्मनिष्ठजीवमाधिकृत्य पुरञ्जनाख्यानात् ॥ २४—२६ ॥

इतिश्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ॥

कथापक्षे प्रिये मह्यं यत् कोपरूपं दण्डं करोपि तत्कृपया सापराधमपि निजदासमबुधं शिक्षयस्यतस्त्वामितज्जन्मनि कदापि न त्यक्ष्यामीत्यर्थान्तरन्यासेनाह । नूनमिति द्वाभ्याम । आत्मसात् कृत्वा अस्मदधीनोऽयमिति मत्वा शिक्षार्थं दण्डं येषु न कुर्वन्ति ते भृत्या मन्दभाग्यास्तेन येषु दण्डं कुर्वन्ति ते भूरिभाग्या इत्यहं तं दण्डपात्रीभवन्नात्मानं भूरिभाग्यमेव मन्य इति भावः । अध्यात्मपक्षे हन्त हन्त प्रतिष्ठितस्यापि मम कादाचित्कपापाचरणेन संप्रति यल्लोकनिन्दा चित्ताप्रसादौ परमनुःसहायभूतं तत् परमेश्वरेणैव मह्यं शिक्षादण्डो दत्तस्तदहमेतज्जन्मनि पुनः कदापि सद्बुद्धिं न त्यक्ष्यामीति तां सद्बुद्धिमेव मनसा सम्बोध्याह । नूनमिति द्वाभ्याम ॥ २१ ॥

यस्तु दण्डितो विषीदति सोऽज्ञ इत्याह । वाल इति । अमर्षणः क्रोधी पक्षे सद्बुद्धिं प्रति स्वगतमाह । त्वां सद्बुद्धिं त्यक्तवतो मम यः साम्प्रतिकोऽनुतापः एष एव त्वद्दत्तो दण्डः परमो ममानुग्रह एव यतः पुनरपि पापासक्तिर्न मे भाविनीति भावः ॥ २२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दण्डस्तु दत्त एव सम्प्रति प्रसीदेत्याह । सा त्वमिति । सा प्रसिद्धा त्वमस्माकं स्वामिनी अनुरागभारेण व्रीडया यो विलम्बः मन्थरता तेन विलसन् हसितावलोको यस्मिन् वल्गूनि वाक्यानि यस्मिन् तत् । अध्यात्मपक्षे सर्व्वेणैव प्रकारेण सैवेऽयं मे प्राक्तनी बुद्धिरनुकूलीभूय स्थिरा भवत्विति मुहुः प्रार्थना ॥ २३ ॥

हे वीरपत्नि ! वीरस्य मम भार्य्ये यदन्यः कश्चिन्मदीयस्तव प्रातिकूल्यमकरोत् । तस्मिन् दमं दण्डं दधे करोमि यतस्त्वदाहं त्वदधीनत्वात्त्वदीय इत्यर्थः किन्तु ब्राह्मणकुलादन्यत्र मुररिपोर्दासादितरत्र तद्द्वये मम नास्ति प्रभुतेति पुरञ्जनस्यास्य प्राचीनबर्हिष्ट्वात् प्राचीनबर्हिषश्च पितृपैतामह धर्म्ममर्य्यादानुल्लङ्घनात् सा मर्य्यादा चान्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रत इति पृथुचरितोक्तेर्ब्राह्मणवैष्णवयोः करदण्डाद्यग्रहणरूपैवेति विवेचनीयम् । अतो ब्राह्मणवैष्णवाभ्यामन्यत्र त्रिलोक्यां त्रिलोकीमध्ये अन्यत्र त्रिलोक्या बहिर्वा वीतभयं भक्तो विगतभयमुत उच्चैर्मुदितं न पश्यामि । मद्भयादेवासौ मरिष्यतीति भावः । अध्यात्मपक्षे यदि प्राचीनदैहिकाद्वा पापाचरणात्तव प्रातिकूल्यं तदा हे सद्बुद्धे ! दमं तदुपशमकं दानपुण्यव्रतादिकं करोमि । यदितु ब्राह्मणकोपात् वैष्णवापराधाद्वा तदातु तौ दुरुपशमावेवेत्याह । भूसुरकुलादन्यत्रेत्यादि तद्द्वयापराधस्य तद्द्वयप्रसादादेवोपशान्तिर्नान्यथेति भावः । वीतभयमित्याद्यधर्मनिर्मूलने साटोपोक्तिः ॥ २४ ॥

वक्त्रं वितिलकं कदापि न पश्यामि संप्रति मद्दौर्भाग्यादेव पश्यामीति भावः । विगतः कुङ्कुमपङ्कस्येव ताम्बूलस्य रागो यत्र तं विम्बाधरं विन्दामि शर्मीन्न पाठ विगतकुङ्कुमपङ्करागाविति स्तनयोर्विशेषणं पक्षे वितिलकत्वादिभिरुपलब्धाया अपि सद्बुद्धेः पूर्ववत् प्रसादाभावोद्योतितः ॥ २५ ॥

प्रेयस्याः प्रसादं प्रार्थयते । तन्म इति । किल्विषमेवाह । स्वैरमित्यादि । देवो देवनं क्रीडा तं राति ददातीति देवरः कान्तस्तं स्मरशरवेगेनैव विस्रस्तपौंस्नं पुरुषार्हं स्वातन्त्र्यं यस्य तम् । उशती कमनीया कृत्ये कान्तविषयकस्नेहोचिते कर्मणि का न भजेत पक्षे सद्बुद्धिमेव साक्षात् कृत्वाह प्रसीद प्रसन्ना भवन्ती मम हृदि विराजस्व मम कीदृशस्य स्वैरं निरङ्कुशमेव कृतकिल्बिषस्य मृगयां गतस्य व्याधस्येव पापिन इत्यर्थः । व्याधो मृगवधाजीवो मृगयुर्लुब्धको हि स इत्यभिधानात् सद्बुद्धेः स्वस्मिन्नवस्थितिमर्थान्तरन्यासेनाह । केति । स्त्री यथा कान्तं सापराधमपि न जहाति तथैव हे सद्बुद्धे ! मां त्वं न जहीहीत्यर्थः ॥ २६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षड्विंशोऽयं चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदि मया तवापराधः कृतस्तत्र शिक्षार्थं मयि दण्डं न करोषि तर्हि मम मन्दभाग्यता स्यादतोऽवलोकनमात्रेणैवमपि दण्डं नियोजयेत्याशयेनाह । नूनमित्यादि ॥ २१—२२ ॥

हेसुदति ! हेसुभ्रु ! हेमनस्विनि ! । या मया कोपिता सा नः स्वानां मुखं प्रदर्शय । आभिमुख्येनावलोकयेत्यर्थः । स्वकीयेषु कृतापराधेषु भावविशेषगर्भेणावलोकनमात्रेणैव दण्डो भवतीति कीदृशम् । अनुरागभारश्च व्रीडाविलम्बो व्रीडानाविल... ताभ्यां विलसत् हसितमवलोकश्च यस्मिन् तत् । नीलालक... रलिभिरुपस्कृतमलङ्कृतम् वल्गूनि वाक्यानि यस्मिन् तत् ॥ ...

यद्यन्येन तेऽपकृतं तर्हि ब्राह्मणं हरिदासं च वर्ज... तस्मिन्नपि दण्डं करोमीत्याह । तस्मिन्निति । हेवीरपत्नि ! त्रि... क्यामन्यत्र त्रैलोक्याः बहिश्च वीतभयं मम दण्डा... भूसुरकुलात् अन्यत्र मुररिपोर्दासाच्च इतरत्र न पश्ये... ते यस्त्वत्सम्बन्धी यो जनस्तस्य तव च कृतकिल्बिषो यस्त... अहं दमं दण्डं दधे करोमि तं सूचयेति शेषः ॥ २४ ॥

स्वैरगमनरूपं स्वस्मिन्दोषं सम्भाव्य तन्निमित्तक्रोधजं ... देर्वितिलकत्वादिकमित्यवधार्य तद्वर्णनपूर्वकं सान्त्वनं करो... वक्त्रमिति द्वाभ्याम् । ते वक्त्रं मुखं वितिलकं शृङ्गारहीनं सं... भीमं भयदम् अविमृष्टमकृतोद्वर्तनम् अपेतरागं गतस्नेहं मुख... स्तनौ च शुचोपहतौ शोकाश्रुसंसिक्तौ विम्बाधरं च ... कुङ्कुमपङ्कसदृशं ताम्बूलरागं यस्मात्तथाभूतम् पूर्वं कदापि न... इदानीं तु पश्यामीति भावः ॥ २५ ॥

तत्र मम स्वैरगमनमेव कारणमितिवदन् क्षमापयति । तन्म... दिति । व्यसनातुरस्य स्वैरं स्वातन्त्र्येण त्वामपृष्ट्वैव मृगयां ... तत्तस्मादेव कृतकिल्बिषस्य मे प्रसीद प्रसन्ना भव तत्र ... दर्शयति देवं देवनं क्रीडां राति ददातीति देवः क्रीडा... कुसुमास्त्रस्य कामस्य वेगेन विस्रस्तं पौंस्नं धैर्यं यस्य तं ... वशंगतमुशती कामयमाना कृत्ये कर्तुं योग्ये का न भजेत् ! ...

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षड्विंशाध्यायार्थप्रकाशः ॥ २६ ॥

---

भाषाटीका ।

पुरञ्जन बोला हे शुभे ! वे लोग पुण्यात्मा नहीं है ... जिनके स्वामी लोग अपना समुझकर अपराध ... दण्ड नहीं देते हैं जिससे कि उन को शिक्षा होवे । प्रभु जब भृत्य के ऊपर दण्ड करता है तब ... यह जानना चाहिये जो भृत्य दण्ड को नहीं सहता तो हेतन्वि ! मूर्ख ही है ॥ २२ ॥

सो हे मनस्विनि उत्साह मन वाली हम भृत्यों को ... मुखका दर्शन कराओ वह मुख कैसा है कि सुंदर ... दांत हैं अनुराग का जो भार लज्जा तिसमें जो धीरता ... प्रकाशमान मन्दहास युक्त चितवन् है जिस में और ... सरी के काले वालों से शोभित है ऊंची जिसमें नासि... सुन्दर जिस में वचन हैं ॥ २३ ॥

हे वीर ! भगवान् का दास वैष्णव तथा ब्राह्मण ... या इन दोनों को छोड कर और दूसरे मैं ... नहीं देखता हूं कि जो तेरा अपराध करके फिर ... में कहीं भी सुख से रहे मैं उसके अवश्य ... वाला हूं ॥ २४ ॥

भाषाटीका।

आज से पहिले हमने तुमारे मुखको विना तिलक का मलिन हर्ष रहित क्रोध से भयंकर विना मार्जित चन्दनादि रहित नहीं देखा था स्तन दोनों भी आंसू से युक्त नहीं देखे थे विम्बसरीका अधरभी कुङ्कुम राग से रहित नहीं देखा था ॥ २५ ॥

सो अब तू मेरे पर प्रसन्न हो मैं सुहृदहूं मैंने अपराध किया है मैं अपने इच्छा से सिकार खेलने चला गया मैं व्यसनों से आतुर हो गया जगत में ऐसी स्त्री कौन होगी कि जो क्रीडा करने वाला अपने वशवर्ती कामबाण के वेग से पौरुष को छोडने वाला अपने कार्य में तत्पर पुरुष को आप भी सुन्दरी होकर भी नहीं भजेगी ॥ २६ ॥

इति श्रीभागवत चतुर्थस्कन्ध छवीसवां अध्याय का भाषानुवाद लक्ष्मणाचार्य कृत समाप्त ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे षड्विंशोऽध्यायः समाप्तः ॥ २६ ॥



## ॥ सप्तविंशोऽध्यायः ॥

॥ नारद उवाच ॥

इत्थं पुरञ्जनं सध्र्यग्वशमानीय विभ्रमैः ।
पुरञ्जनी महाराज ! रेमे रमयती पतिम् ॥ १ ॥
स राजा महिषीं राजन् ! सुस्नातां रुचिराननाम् ।
कृतस्वस्त्ययनां तृप्तामभ्यनन्ददुपागताम् ॥ २ ॥
तयोपगूढः परिरब्धकन्धरो रहोऽनुमन्त्रैरपकृष्टचेतनः ।
न कालरंहो बुबुधे दुरत्ययं दिवानिशेति प्रमदापरिग्रहः ॥ ३ ॥
शयान उन्नद्धमदो महामना महार्हतल्पे महिषीभुजोपधिः ।
तामेव वीरो मनुते परं यतस्तमोऽभिभूतो न निजं परं च यत् ॥ ४ ॥
तयैवं रममाणस्य कामकश्मलचेतसः ।
क्षणार्द्धमिव राजेन्द्र ! व्यतिक्रान्तं नवं वयः ॥ ५ ॥
तस्यामजनयत्पुत्रान् पुरञ्जन्यां पुरञ्जनः ।
शतान्येकादश विराडायुषोऽर्धमथात्यगात् ॥ ६ ॥
दुहितॄर्दशोत्तरशतम्पितृमातृयशस्करीः ।
शीलौदार्यगुणोपेताः पौरञ्जन्यः प्रजापते ! ॥ ७ ॥
स पञ्चालपतिः पुत्रान् पितृवंशविवर्द्धनान् ।
दारैः संयोजयामास दुहितॄः सदृशैर्वरैः ॥ ८ ॥
पुत्राणां चाभवन् पुत्रा एकैकस्य शतं शतम् ।
यैर्वै पौरञ्जनो वंशः पञ्चालेषु समेधितः ॥ ९ ॥
तेषु तद्रिक्थहारेषु गृहकोशानुजीविषु ।
निरूढेन ममत्वेन विषयेष्वन्ववद्ध्यत ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तविंशे प्रियापुत्राद्यासक्त्या विस्मृतात्मनः ॥
कालकन्याद्युपाख्यानैर्जरारोगाद्युदीर्यते ॥ १ ॥

तदेवं जीवस्याज्ञानयादिकथासौन्दर्येणात्यन्तमुपाधिवश्यत्वमुक्त्वा तन्निमित्तां संसारपरम्परां निरूपयितुमाह । इत्थमिति । अत्र च प्रतिपदं कथञ्चिदध्यात्मपक्षेऽपि योजयितुं शक्यमेव श्रीनारदेन तु जीवस्य स्त्रीपुरुषवासनादार्ढ्येन विचित्रा संसृतिर्भवतीत्येतावदेव कथातात्पर्यं दर्शितम् । कश्चित्पुमान्कश्चिच्च स्त्री कश्चिन्नोभयमन्दधीः । देवो मनुष्यस्तिर्यग्वा यथा कर्मगुणं भव इति वदता तत्रादौ पुंस्त्वेन संसृतिरध्यायत्रयेणोक्ता ततश्चैकेनाध्यायेन स्त्रीत्वेन संसृतिं प्रदर्श्येश्वरप्रसादलब्धज्ञानेन मोक्षकम् ततस्तदेव यथोपयोगं व्याख्यातमिति पञ्चाध्याय्याः प्रतीयते प्रतिपदमध्यात्मयोजना तु दुर्घटा निष्प्रयोजना स्वप्रौढिख्यापनमनादृत्य यथोपयोगमेव व्याख्यास्यामः । सम्यक् विभ्रमैर्विलासैः ॥ १ ॥

कृतं स्वस्त्ययनं मङ्गलं कुङ्कुमसिन्दूरादिभिर्यस्यास्ताम् ॥ २ ॥ उपगूढः परिरब्धः परिरब्धा कन्धरा तस्या येन सः । अनुमन्त्रैरनुकूलैर्गुह्यभाषणैः अपकृष्टा चेतना विवेको यस्य । कालरंहः आयुर्व्ययम् प्रमदैव परिग्रहो न ज्ञानसाधनं यस्य ॥ ३ ॥

महार्हतल्पे उत्कृष्टशय्यायां शयानः महिष्या भुज…

श्रीधरस्वामिकृतभावार्थदीपिका।

रुपधानमुच्छीर्षकं यस्य अविसर्गपाठे शयनक्रियाविशेषणम् तां महिषीमेव परं पुरुषार्थममन्यत नतु यन्निजं रूपं ब्रह्म तत् तमसा ऽज्ञानेनाभिभूतो यतः ॥ ४ ॥ ५ ॥

पुत्रानिन्द्रियपरिणामान् दुहितृस्तदनन्तरं बुद्धिवृत्तीः पुत्रसंख्या च बाहुल्यमात्रविवक्षया दुहितृसंख्या तु पुत्रेभ्यो न्यूनत्वेन गार्हस्थ्यसौन्दर्यार्थमेव विराट् सम्राट् आयुषोऽर्धमित्याद्यपि कथासौन्दर्यार्थमेव ॥ ६ ॥

पुरञ्जनकन्यात्वात्पौरञ्जन्यः हेप्रजापते! ॥ ७ ॥

दारैः परिणामानन्तरं हिताहितचिन्ताभिः वरैरुचितविषयभोगैः ॥ ८ ॥

पुत्राणां पुत्राः कर्माणि पञ्चालेषु शब्दादिविषयेषु ॥ ९ ॥

तेषु पुत्रादिषु तेषामपि ये रिक्थहाराः पुत्रास्तेषु च ॥१०॥११॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं जाग्रत्स्वप्नसुषुप्त्यादिभिरवस्थाभिः संसरतो जीवस्य दुर्लभोऽपि कदाचिद्दैवात्सञ्जातपरितापस्य विवेकात्मकबुद्ध्युदयः इदानीमेव सञ्जातविवेकमपि अनन्तवासनारुचिप्रकृतिसम्बन्धादियुक्तं पुमांसम्।

यया धर्ममधर्मं च कार्यंचाकार्यमेव च।
अयथावत्प्रजानाति बुद्धिः सा पार्थ! राजसी।
अधर्मं धर्ममिति या मन्यते तमसा वृता।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ! तामसी।

इत्युक्तविधरजस्तमःप्रचुरा सती बुद्धिःपुनःप्रसह्य स्ववशीकृत्य संसारयामासेत्याह। इत्थमिति। हे महाराज! इत्थं दैवात्कदाचित् सञ्जातविवेकमपि पुरञ्जनं विभ्रमैः धर्माधर्मकार्याकार्यादिविषयकैर्विभ्रमैर्भ्रमजननद्वारैरित्यर्थः सध्यूक् सम्यक् शनैः स्ववशमानीय पुरञ्जनी रजःप्रचुरा बुद्धिः पतिं रमयती स्वकार्यप्रवणं कुर्वती स्वयं रेमे व्यापृतवती कथापक्षे तु सम्यग्विभ्रमैर्विलासैरन्यत् स्पष्टं केचिदत्र प्रतिपदं कथञ्चिदध्यात्मपक्षे योजयितुं शक्यमेव श्रीनारदेन तु जीवस्य स्त्रीपुरुषवासना दार्ढ्येन विचित्रा संसृतिर्भवतीत्येतावदेव कथातात्पर्यं दर्शितम्।

क्वचित्पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमन्दधीः।
देवो मनुष्यस्तिर्यग् वा यथा कर्म गुणं भव

इति वदता तत्रादौ पुंस्त्वेन संसृतिरध्यायत्रयेणोक्ता ततश्चैकेनाध्यायेन स्त्रीत्वेन संसृतिं प्रदर्श्येश्वरप्रसादाल्लब्धज्ञानेन मोक्ष इत्युक्तं ततस्तदेव यथोपयोगं व्याख्यातमिति पञ्चाध्याय्यर्थः प्रतीयते प्रतिपदमध्यात्मयोजना तु दुर्घटा निष्प्रयोजना चेति स्वप्रौढिख्यापनमनादृत्य यथोपयोगमेव व्याख्यास्याम इत्याहुः तत्र प्रतिपदमध्यात्मयोजनमनुपयुक्तं चेत् किमर्थं तत्कथनमिति द्रष्टव्यं न च कथासौन्दर्यार्थेति वक्तुं शक्यमध्यात्मोपयुक्तांशकथनेनैव तत्सौन्दर्यलाभादन्यथा कथासौन्दर्य्यार्थमप्यनुपयुक्तांशानां बहूनां सत्त्वेन तेषामपि कथनापत्तेः यदपि क्वचित्पुमानित्यादि तत्र क्वचित्पुमानित्यादिग्रन्थस्य निगमनपरत्वेन प्रधानप्रतिपाद्यस्यैव निगमनीयत्वेन तस्य प्रतिपदमध्यात्मयोजनाभावे प्रमाणत्वाभावान्नहि यावन्तोऽर्थाः कथितास्ते सर्वे निगमनीया इत्यस्ति नियमः यदपि यथोपदेशंव्याख्यातमित्यादि तदपि न अप्रसिद्धपदव्युत्पत्तिकथनेन तदनुकूलतयां प्रसिद्धव्युत्पत्तीनां पदानां व्याख्यातुं शक्यत्वेन तावन्मात्रव्युत्पत्तिप्रदर्शनात् यदपि चोक्तं प्रतिपदमध्यात्मयोजना दुर्घटा निष्प्रयोजना चेति तत्र निष्प्रयोजनत्वं यथोपदेशं व्याख्यातेषु पुरञ्जनादिष्वर्थविशिष्टं जीवस्य स्त्रीपुरुषवासनादार्ढ्येन विचित्रा संसृतिर्भवति ईश्वरप्रसादलब्धज्ञानेन मोक्ष इत्युक्त्यैव चारितार्थ्येन पञ्चाध्याय्या वैयर्थ्यंस्य स्पष्टत्वाद्दुर्घटा चेति परमवशिष्यते तत्रात्यन्तदुर्घटं यत्पदमध्यात्मपक्षे तद्विहायान्यानि पदानि सर्वाणि तत्पक्षे व्याख्येयान्येवानुपयुक्तं पदमगत्या कथासौन्दर्यायेति वक्तुं युक्तं यत्र श्लोकस्थानां सर्वेषामपि पदानां दौर्घट्यं सा त्वं मुखं सुदति सुभ्रनु रागभारैत्यादौ तत्र संघातात्मकवाक्यार्थद्योत्यत्वस्यकस्य चिदुपयुक्तार्थस्य योजना कर्तव्या ॥ १ ॥

तथाहि हेराजन्! स राजा पुरञ्जनः सुस्नातां कृतमङ्गलस्नानां रुचिरमुज्ज्वलमम्बरं यस्याः कृतं स्वस्त्ययनं मङ्गलं कुङ्कुमासिदुरादिभिर्यस्यास्तां तृप्तां स्वाद्वन्नपानादिभिरुपागतां समीपमागतां महिषीमभ्यनन्दत् सुस्नातां रुचिराम्बरादिभिः सुन्दरतरां महिषीमभिनन्दयन् स्त्रियमिव राजसीं बुद्धिमनुकूलाममन्यतेत्यर्थः॥२॥

तया माहिष्या उपगूढः आश्लिष्टः परिरब्ध आश्लिष्टा महिष्याः कन्धरा येन स अनेन जीवबुद्ध्योरन्योऽन्यं दृढतरसंबन्धः सूचितः एकत्वेनानुसंधानं च व्यज्यते रह एकान्ते अनुकूलैर्गुप्तभाषणैः शब्दादिविषयचिन्तनैरपकृष्टा चेतना विवेको यस्य प्रमदैव प्रमदालस्य कारिणी बुद्धिरेव परिग्रहो न विवेको यस्य सः ॥ ३ ॥

महार्हतल्पे उत्कृष्टशय्यायां हृदये शयानः अधितिष्ठन् कालरंहः कालवेगमायुष्यं दुरत्ययं संसारिणा वर्जनीयं दिवा निशेत्येवंरूपेण न बुबुधे नानुसंहितवानित्यर्थः कथापक्षे तु स्पष्टोऽर्थः महार्हतल्पे उत्कृष्टशय्यायां हृदये महिष्या भुज एव उपधिः उपधीयतेऽस्मिन् शिर इत्युपधिरुपधानमुच्छीर्षकं यस्य सः शयानः अनेन बुद्धिपारवश्यं सूचितं व्यवायतः विषयभोगात्तमोऽभिभूतः अज्ञानतिरोहितः तामेव महिषीमेव बुद्धिसङ्गकृतं वैषयिकसुखमेव पुरुषार्थममनुत नतु निजं स्वरूपं तत्परं परमात्मस्वरूपं च नान्वमन्यत इत्यर्थः ॥ ४ ॥

तया महिष्या एवं तत्पारवश्येन रममाणस्य संसरतः अत एव कामैः शब्दादिभिरनुभूयमानैः कश्मलं मलिनं चेतो यस्य हेराजेन्द्र! नवं नूतनं वयः क्षणार्द्धमिव व्यतिक्रान्तं देहधारिणस्यैव भोक्तृत्वाद्देहाभिप्रायेण नवं वयो व्यतिक्रान्तमित्युक्तं पक्षान्तरे व्ययमेवार्थः ॥ ५ ॥

तस्यां महिष्यां पुरञ्जनः पुत्रानिन्द्रियपरिणामरूपानेकादशशतानि अजीजनदुत्पादयामास आयुषः हेविराट् इति संबोधनं पुरुषायुषः शतसंवत्सरात्मकस्यार्धंपञ्चाशद्वर्षात्मकमतिक्रान्तमभूत् इदमपि देहाभिप्रायेणोक्तम् ॥ ६ ॥

दुहितृरिन्द्रियपरिणामानन्तरभाविनी बुद्धिवृत्तिरूपाः दशाधिकशतं पित्रोर्जीवबुद्ध्योः भ्रातृणामिन्द्रियपरिणामानां च यशस्करीरनुकूलाः अनुकूलो हि यशस्करो न तु प्रतिकूलः शीलं राजसतामसस्वभावः अनन्तसुखाभिव्यक्तिजनकस्वरूपमौदार्यरूपश्च यो गुणाः तेनोपेताः युक्ता अजीजनदित्यनुषङ्गः सर्वा अपि दुहितरो दशाधिकशतं पौरञ्जन्यः पुरञ्जनस्यापत्यत्वात्पौरञ्जयन्य इत्युच्यन्ते हेप्रजापते! अत्र पुत्रसंख्या बाहुल्यमात्राभिप्राया दुहितृसंख्या च पुत्रेभ्यो न्यूनत्वेन गार्हस्थ्यसौन्दर्यार्था ॥ ७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सः पाञ्चालपतिः पञ्चन्ति विषयान्व्यक्तीकुर्वन्त्यनुभावयन्तीति पञ्चालाः इन्द्रियाणि त एव पाञ्चालाः प्रज्ञादित्वात्स्वार्थेऽण् तेषां पतिःकरणाधिपो जीव इत्यर्थः पित्रोर्वंशं विशेषेण वर्द्धयन्तीति तान् इन्द्रियपरिणामरूपान् दारैर्हिताहितचिन्तारूपाभिर्भार्याभिः संयोजयामास तथा दुहितॄः वरैरुचितैर्विषयभोगरूपैः पतिभिः संयोजयामास ॥ ८ ॥

पुत्राणां पुत्राः पुण्यापुण्यरूपकर्मरूपा एकैकस्य शतं शतं शतशब्दो बाहुल्याभिप्रायकः अभवन् पौत्रान्विशिनष्टि । यैः पौत्रैः पौरञ्जनो वंशः संसारः तेषु पाञ्चालेषु शब्दादिविषयेषु निमित्तेषु निमित्तमिह फलं शब्दादिविषयभोगार्थमित्यर्थः समेधितः सम्वर्द्धितः यद्वा वंश इन्द्रियपरिणामतदनन्तरबुद्धिवृत्तिरूपपुत्रपुत्र्यादिरूपो वंशः शब्दादिविषयेषु कर्मभिरेव समेधत इत्यर्थः ॥ ९ ॥

तेषु तस्य पुरञ्जनस्य रिक्थहारेषु पुत्रेषु गृहं शरीरं कोशः अहं ममाभिमानाश्रयोऽहंकारः अनुजीविन इन्द्रियप्राणादयः तेषु निरूढेन रूढमूलेन ममत्वेन ममकारेणासक्तः न प्राबुध्यत स्वस्वरूपपरमात्मस्वरूपे इति शेषः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुरञ्जननाम्नो जीवस्य जाग्रत्स्वप्नयोरन्यस्यामवस्थायां विषयप्रसरणमाह । इत्थमिति । विभ्रमैर्वृत्तिविशेषैरेमे विष * येषु व्यावृत्तवत्यां जयलक्षणवृत्त्यां सुषुप्तजनवत्स्थितम् ॥ १ ॥

रुचिरेण कमनीयेनाम्बरेण नानावसनेन सम्वृतां कृतं स्वस्त्ययनं स्वस्त्याशीर्वचनस्यायनं वृत्तिविशेषो यस्याः सा तथा तां तामसानां तामससङ्गमो सुखकारण इति द्योतनायैव मुक्तिः ॥ २ ॥

कयाचिद्वृत्त्या परिरब्धः वृत्त्यन्तराब्धकन्धरः "कण्ठो ग्रीवा कन्धरा च" इत्यभिधानं रहोऽनुमन्त्रैर्भणितादिलक्षणवृत्तिभिरपकृष्टं चेतनं स्वरूपज्ञानं यस्य स तथा इदं दिवाज्ञानमियं निशाज्ञानमिति कालरंहो ज्ञानाज्ञानविशेषावस्थां प्रमदावैषयिकबुद्धिरेव परिग्रहो यस्य स तथा ॥ ३ ॥

शयानस्तत्त्वमजानन्महार्हतल्पे ज्ञाननाशिनि वृत्तिविशेषे महिषीभुजोपधे बुद्धेरहङ्कारलक्षणवृत्तिशिरोऽधिष्ठाने तामेवामनुत कर्त्ता भोक्ता सुखी दुःखीति तद्धर्मानात्मन्यमन्यत तत्र कारणमाह । व्यवायत इति । मैथुनलक्षणाज्ञानवृत्तिविशेषात् इदमेवाह । तम इति । निजमात्मानं तत्परं ब्रह्मलक्षणं तत्त्वं नामन्यत निजमात्मीयमित्यभिधानम् ॥ ४ ॥

वयः शुद्धज्ञानानन्दरूपलक्षणं व्यतिक्रान्तं गतप्रायमासीत् ॥ ५ ॥

अभिभूतनिजज्ञानस्य तस्य विषयबुद्धेर्नानावृत्त्युत्पत्तिप्रकारमाह । तस्यामिति । चक्षुरादीनि मनोऽन्तानीन्द्रियाण्येकादशसंज्ञानि विषयीकृत्य शतमनन्ताः परिणामा वृत्तयो भवन्ति ताः शतान्येकादशपुत्रा उच्यन्ते बाल्यावस्थायां बुद्धिविस्ताराभावाद्यौवनावस्थायां तत्संभावनमपेक्ष्यायुषोऽर्धमगादित्युच्यते विषयमेव राजयतीति विराट् ॥ ६ ॥

---

* । इदंशोध्यमपिबहुपुस्तकेष्वेवमेवातोनशोध्यते ।

परिणामानन्तरं बुद्धिवृत्तयो दुहितॄरित्युच्यन्ते पितृशब्द... नामिन्द्रियाणां परिणामानां भ्रातृशब्दवाच्यानां ज्ञानानन्द... यशसो नाशिनीः "कॄ विक्षेप" इति धातुः स्वजातिप्रसिद्ध... दार्यगुणयुक्ताः बाह्यविवक्षया संख्याकथनमनन्तसंख्य... संख्यैव पौरञ्जन्योऽनेकदेहजननहेतवः हे प्रजापते ! ॥ ७ ॥

पुत्रान् बुद्धिपरिणामान् दारैः परिणामानन्तरचेष्टाभिः... जनं दुहितॄर्बुद्धिवृत्तीः सदृशैर्वरैर्वृत्तियोग्यविषयैः ॥ ८ ॥

पुत्राणां पुत्रा अभवन्निति परिणतवृत्तिभ्यो वृत्त्यन्तर... पाञ्चालेषु विषयेषु ॥ ९ ॥

तस्य रिक्थं विषयधनं हरन्तीति तद्रिक्थहारास्तेषु ... वासना गृह्णातीति गृहं तच्च कोशो मनस्तदुपजीव्यन्त... गृहकोशानुजीविनस्तेषु निगूढेन प्रविष्टेन ममेते परिणा... इति कल्पितेन ममत्वेन विशेषेण सक्तो नात्मानं परञ्च ... तीत्यन्वयः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

मनुते इत्यत्र अमनुतेति स्वामिसम्मतः पाठः । किञ्च ... आहदः ॥ १—५ ॥

तस्यामिति सार्द्धकम् । मातृ इत्यत्र भ्रातृ इति क्वचित् ।... पाठस्तु न चित्सुखसम्मतः ॥ ६ ॥

शीलेत्यर्द्धकम ॥ ७ ॥

सपत्नेतिटीकायां हिताहितचिन्तापि यथा सौगन्ध्य... प्यादौ हितचिन्ता दौर्गन्ध्यकौरूप्यादावहितचिन्तेति ॥ ८ ॥...

अन्ववध्यतेत्यत्र अन्वरुद्ध्यतेति क्वचित् किन्तु मूलपाठ... चित्सुखसम्मतः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सद्बुद्ध्या सहितस्यास्य सुकृतान्यपि कुर्व्वतः ।
सप्तविंशे जरारोगाद्युपाख्यानेन कथ्यते ॥ ० ॥

तदेवं धार्मिकस्यापि जीवस्य कदाचिदन्तराये प्राप्ते ... धदुष्कृतदूषितान्तःकरणस्यापि पुनर्लब्धविवेकस्य ... तपःप्रायश्चित्तादिकं कृतवतोऽपि मनोमालिन्यानपगमाद... मनुतापसहस्रविदीर्णस्य भाग्यवशादेव पुनरपि सद्बुद्धे... प्रपञ्चिता इदानीं पूर्व्ववदेव धर्म्मबुद्धिमतः सदाचारस्य ... गार्हस्थ्यमाह । इत्थमिति । सध्र्यक् सम्यक् विभ्रमैर्विलासै... पक्षेऽधर्म्मे मतिं परित्यज्य पूर्व्ववद्धर्म्मबुद्धावेवासक्तो ... त्यर्थः ॥ १ ॥

सुस्नातेत्यादिना स्वीयसद्बुद्धेः प्रसन्नतामालक्ष्य विगत... मालिन्यः कृतार्थो बभूवेत्युक्तम् ॥ २ ॥

अनुमन्त्रैरनुकूलगुह्यभाषणैः पक्षे धर्म्मकर्म्मनिर्वाह... णाभिः । अपकृष्टा विलुप्तीकृता चेतना संसारतरण... बुद्धिर्यस्य सः । कालस्य रंहो वेगं वैराग्याभावान्न बुबुधे ... मिदं दिवागतमियं निशा आगतेति एतत्प्रकारकमित्यर्थः ॥ ३ ॥

महिष्या भुज एव उपधिरुपधानं यस्य सः । अविरुद्ध... शयनक्रियाविशेषणम् । तामेव व्यवायतो हेतोर्मनुते । ... सुखमेव पुरुषार्थममन्यत अमनुतेति च पाठः । ननु निजं ...

**ईजे च क्रतुभिर्घोरैर्दीक्षितः पशुमारकैः ।**
**देवान् पितॄन् भूतपतीन्नानाकामो यथा भवान् ॥ ११ ॥**

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

परश्च किमपि अमनुत अगणयदित्यर्थः । तमसा अज्ञानेन यतोऽभिभूतः । अध्यात्मपक्षे व्यवायतो धर्म्मपत्नीसङ्गतो धर्म्मासक्त्या धर्म्ममेव पुरुषार्थममन्यत नतु मोक्षं यतो न निजम् जीवस्वरूपं नापि परं परमेश्वरस्वरूपं धार्म्मिक इत्युन्नद्धमदः । महामना दानशीलः महार्हतल्पे पुण्यकर्म्मणि शयानो मग्नः । महिषी भुजोपधिरविद्योपाधिः ॥ ४—५ ॥

पुत्रान् विवेकनिर्णयसंशयादीन् । दुहितॄर्लज्जोत्कण्ठाचिन्तायाः पुत्रसंख्या बाहुल्यमात्रविवक्षया दुहितृसंख्यातु पुत्रेभ्यो न्यूनत्वेन गार्हस्थ्यसौन्दर्य्यार्थं विराट् सम्राट् जीवश्च आयुषोऽर्धमत्यगादिति पञ्चाशद्वर्षपर्य्यन्तं विषयभोगलाम्पट्यमधिकमिति विवक्षया पितृमातृयशस्करीरिति तासां पुण्यक्रियाहेतुरूपत्वात् ॥ ६ ॥

पुरञ्जनकन्यात्वात् ताः पौरञ्जन्य उच्यन्ते इति शेषः ॥ ७ ॥

दारैर्मतिधृत्यादिभिः वरैर्विनयप्रणयादिभिः ॥ ८ ॥

पुत्राणां पुत्राः पुण्याचरणादयः पाञ्चालेषु शब्दादिषु ॥ ९ ॥

तेषु विवेकादिषु पुत्रेषु तस्य पुरञ्जनस्य रिक्थहारेषु अभिमानादिधनहर्तृषु गृहानुजीविषु प्राणेषु कोशानुजीविषु सह भोज आदिषु ॥ १० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सप्तविंशे जीवस्य नानाबुद्धिवृत्तिविमोहितस्य जरारोगादिनानादुःखप्राप्तिर्भवतीति वर्ण्यते । इत्थमिति । पुरञ्जनी जीवाधिष्ठिता बुद्धिः पुरञ्जनं जीवमित्थं सध्र्यक् सम्यक् वशमानीय विभ्रमैर्विलासैः आत्मपरमात्मस्वरूपादिज्ञानं विना बुद्धावात्मभ्रान्त्या जीवस्य स्त्रीपुन्नपुंसकभावनानादेहतन्निबन्धनजरामयादिदुःखावाप्तिरित्यध्यायार्थः अन्यत्कथा सौन्दर्यार्थम् ॥ १ ॥

कृतं स्वस्त्ययनं मङ्गलं वस्त्राभरणकुङ्कुमसिन्दूरादिभिर्यस्यास्तां तृप्तां भोजनपानादिभिः प्रसन्नाम् ॥ २ ॥

उपगूढ आलिङ्गितः परिरब्धा भार्याकन्धरा येन सः रहोनुमन्त्रैः एकान्ते अनुकूलैर्भाषणैः अपकृष्टा अपनीता चेतना विवेको यस्य सः कालस्य रंहो वेगं दिवानिशेति न वेद यतः प्रमदया परितः ग्रहो ग्रहणं यस्य सः ॥ ३ ॥

महिषी भुजैवोपधिरुपबर्हणं यस्य सः तामेव परं पुरुषार्थं मनुते नतु निजं स्वस्वरूपं यत्परं सर्वात्मभूतं वासुदेवस्वरूपं च यतस्तमोऽभिभूतः अज्ञानावृतः ॥ ४ ॥

नवं वयः श्रेयःसाधनयोग्यं यौवनम् ॥ ५ ॥

विराट् विकलः पुत्रान् अध्यात्मपक्षे इन्द्रियपरिणामान् ॥६॥

हेप्रजापते ! दुहितॄः इन्द्रियपरिणामानन्तरबुद्धिवृत्तीः तस्या मजनयदिति पूर्वेणान्वयः ॥ ७ ॥

दारैरिष्टानिष्टचिन्तारूपाभिर्भार्याभिःवरैरुचितैर्विषयभोगरूपैः ८

पुत्राणां पुत्राः कर्माणि पञ्चालेषु शब्दादिविषयेषु ॥ ९ ॥



तेषु पुत्रादिषु तद्रिक्थहारेषु तेषां पुत्रेषु गृहादिषु च नितराम् रूढेन ममत्वेनान्वबध्यत ॥ १० ॥

———

भाषाटीका

नारदजी बोले हे महाराज ! प्राचीनबर्हि इस प्रकार से पुरञ्जनी अपने विभ्रमभावों से वश करके पतिको रमाती हुई आपभी रमण करती हुई रही इहां पर भोग मे जीव बुद्धि का परतंत्रहो जाता है यह कहा गया है ॥ १ ॥

हे राजन् ! अपनी रानी जब सुंदर स्नान करके सब मङ्गल सिंगार करके मुख का शोभा बनाकर तृप्त होकर जब पास मे आई तब पुरञ्जन राजा प्रसन्न हुआ ॥ २ ॥

उस रानी ने इसके कांधे में हाथ डाला है इसने उसके कांधे मे डाला एकांत मे संभाषण भये से राजा का चित्त खिच गया तब दिन रात के बीतने से भी कठिन काल वेगको इसने नहीं जाना ( विषयासक्तपुरुषको आयु का जाना मालुम नहीं पडता है ) ॥ ३ ॥

अत्यंत मद के होजाने से वह राजा बडी खुसी से सोता रहता था बडी अच्छी शय्यां मे रानी के गलबाई डार कर रहने से उसको अज्ञान ऐसा हुआ कि जो अपनापराया कुछ नहीं समुझता था ( अर्थ दोनो पक्ष में एकही है ) ॥ ४ ॥

हे राजेन्द्र ! उस रानीके साथ मे उसके रमण के काम मे चित्त लगजाने से नूतन अवस्था क्षणार्धके तुल्य चलागया ॥ ५ ॥

तब उस पुरञ्जनी में पुरञ्जनने ग्यारहसौ पुत्र पैदा किये तब उस की आधी आयु बीतगई ( इहां इन्द्रियों के परिणामहीं पुत्र हैं ) ॥ ६ ॥

एकसौदश पुत्री पैदा करीं जोकि पिता माता के यशकरने वाली हैं हेराजन् ! शील औदार्य गुणवाली हैं ( एसब बुद्धिकी वृत्ती हैं ) ॥ ७ ॥

उस पाञ्चाल पति राजा ने पुत्रोंको दुसरी लडकियों के साथ लडकियों का दुसरे पुत्रों के साथ सदृश योग्यता जानकर संयोग विवाह करदिया ( इहां हिताहित चिन्ता विषय भोगोंका योग है ) ॥ ८ ॥

एक एक पुत्र के सौ सौ पुत्र भये जिनोंसे पुरञ्जन का वंश पञ्चाल देशों में बढगया ( इहां नाना कर्म हीं पुत्र हैं विषय पाञ्चाल हैं ॥ ९ ॥

उन पुत्रों में उनके पुत्रों में घर के अनुचरों में ममता के बढने से राजा विषयोंमें बन्धगया ( इहां आधारादिचक्र इन्द्रि प्राणोंका कथन है ) ॥ १० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

युक्तेष्वात्महितेषु कर्मस्वनवहितस्य स वै कालो जरासमयः ॥१२

युक्तेष्वेवं प्रमत्तस्य कुटुम्बासक्तचेतसः ।
आससाद स वै कालो योऽप्रियः प्रिययोषिताम् ॥ १२ ॥
चण्डवेग इति ख्यातो गन्धर्वाधिपतिर्नृप ! ।
गन्धर्वास्तस्य बलिनः षष्ट्युत्तरशतत्रयम् ॥ १३ ॥
गन्धर्व्यस्तादृशीरस्य मैथुन्यश्च सितासिताः ।
परिवृत्त्याविलुम्पन्ति सर्वकामविनिर्मिताम् ॥ १४
ते चण्डवेगानुचराः पुरञ्जनपुरं यदा ।
हर्तुमारेभिरे तत्र प्रत्यषेधत्प्रजागरः ॥ १५ ॥
स सप्तभिः शतैरेको विंशत्या च शतं समाः ।
पुरञ्जनपुराध्यक्षो गन्धर्वैर्युयुधे बली ॥ १६ ॥
क्षीयमाणे स्वसम्बन्धे एकस्मिन् बहुभिर्युधा ।
चिन्तां परां जगामार्तः सराष्ट्रपुरबान्धवः ॥ १७ ॥
स एव पुर्यां मधुभुक्पञ्चालेषु स्वपार्षदैः ।
उपनीतं बलिं गृह्णन् स्त्रीजितो नाविदद्भयम् ॥ १८ ॥
कालस्य दुहिता काचित्त्रिलोकीं वरमिच्छती ।
पर्यटन्ती न बर्हिष्मन् ! प्रत्यनन्दत कश्चन ॥ १९ ॥
दौर्भाग्येनात्मनो लोके विश्रुता दुर्भगेति सा ।
या तुष्टा राजर्षये तु वृतादात्पूरवे वरम् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चण्डवेगः सम्वत्सरेणावर्तमानेनोपलक्षितः गन्धर्वा दिवसाः ॥ १३ ॥

गन्धर्व्यो रात्रयः तादृशीस्तादृश्यः मैथुन्यो दिवसैर्मिथुनीभूय स्थिताः सिताश्चासिताश्च शुक्लकृष्णपक्षीयाः परिभ्रमणेन सर्वैः कामैः सह विनिर्मितां पुरीमपहरन्ति ॥ १४ ॥

प्रजागरः प्राणः ॥ १५ ॥

विंशत्या च सह ॥ १६ ॥

स्वसम्बन्धे स्वसम्बन्धिनि प्राणे ॥ १७ ॥

स एव मधुभुक् क्षुद्रसुखभोक्ता स्वपार्षदैरिन्द्रियैः नाविदन्नालोचितवान् ॥ १८ ॥

कालस्य दुहिता जरास्ति तां न प्रत्यनन्दत नैच्छत् बर्हिष्मन् हे प्राचीनबर्हिः ॥ १९ ॥

पूरवे ययातिपुत्राय तेन वृता सती वरमदात् ययातिः शुक्रशापाज्जरां प्राप्य पुत्रानुवाच इमां गृह्णीतेति तां ज्येष्ठाश्चत्वारो न जगृहुः पूरुस्तु जगृहे ततो ययातिस्तस्मै राज्यं ददाविति जरैवादादित्युक्तम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

नानाकामः नानाभूतान् शब्दादिविषयान् कामयमानः [cut off] रकैः हिंसागर्भैरतएव घोरैः क्रतुभिः कर्मेन्द्रियव्याप[cut off] दीक्षितः कृतसङ्कल्पः कर्मेन्द्रियव्यापाररूपान् क्रतूनार[cut off] तेषां प्रायशः पञ्चसूनादिहिंसागर्भत्वात्पशुमारकैरित्युक्त[cut off] दीनीजे इष्टवान् देवशब्दो देवाधिष्ठितेन्द्रियपरः इन्द्रियाण्य[cut off] पत्सीदित्यर्थः पितॄन् भूतपतीनिति दृष्टान्ताभिप्रायकं यथा [cut off] देवपितृभूतपतीनीजे तथायं देवानीजे इत्यर्थः ॥ ११ ॥

युक्तेषु दृढतराभिसन्धियुक्तेषु कर्मसु प्रमत्तस्य नितरा[cut off] कस्य कुटुम्बे बुद्धितद्वृत्त्यादावासक्तचित्तस्य स वै कालः [cut off] समयः आससाद प्राप्तः देहदृष्टेर्यदमुक्तं कालं विशिनष्टि । यः [cut off] प्रिययोषितां परस्परमप्रियकरः ॥ १२ ॥

चण्डवेग आशुवेगः संवत्सररूपः कालः ख्यातः प्रसिद्धः [cut off] गन्धर्वाणां गन्धर्वाश्च गन्धर्व्यश्च "पुमान्स्त्रिया" इत्येकशेषः तेषा[cut off] पतिः तस्य बलिनः प्रसह्यायुर्हरतःचण्डवेगस्य भृत्या षष्ट्यधि[cut off] तत्रयदिवसात्मकाः गन्धर्वाः परोक्षमायारूपधनापहारित्वाद्ग[cut off] रूपत्वेन रूप्यन्ते ॥ १३ ॥

तथा तादृशीरस्य चण्डवेगस्य सम्बन्धिन्यः तादृश्यः [cut off] त्वाद्वचनव्यत्ययेन द्वितीया षष्ट्युत्तरशतत्रयसङ्ख्याका गन्धर्व्यः [cut off]

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

त्मिकाः मैथुन्यः दिवसैरेवं मिथुनीभूय स्थिताः सिताश्चासिताश्च शुक्लकृष्णपक्षीयाः परिवृत्त्या परिभ्रमणेन सर्वैः शब्दादिभिः तत्करणैश्च विनिर्मितां पुरीं शरीरं विलुम्पन्ति अपहरन्ति अपहर्तुमारेभिरे इत्यर्थः जराप्राप्त्यनन्तरप्राप्ता इत्यर्थः एतत्सर्वं देहदृष्ट्योक्तमिति द्रष्टव्यम्॥ १४ ॥

चण्डवेगस्यानुचरास्ते गन्धर्वाः पुरञ्जनस्य पुरीं यदा हर्त्तुमारेभिरे आरब्धवन्तः अत्र पुर्यां यः प्रजागरः प्राणः सुषुप्त्यवस्थायामपि प्राणव्यापारात्प्रजागर इत्युक्तं प्रत्यषेधयन्न्यवारयत यावत् प्राणव्यापारस्तावच्छरीरस्यावैकल्येनावस्थानात्प्रत्यषेधादित्युक्तम् ॥ १५ ॥

स एकः प्रजागरः सप्तभिर्विंशत्या सप्तविंशतिसंख्याकैर्भूतपञ्चकतन्मात्रपञ्चकज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकापानादिप्राणचतुष्टयमनोबुद्ध्यहङ्कारात्मकैः शरैः शतं समा इति प्रारब्धोपलक्षणं यावत् प्रारब्धावसानं पुरञ्जनपुरस्याध्यक्षः पालः बली गन्धर्वैः सह युयुधे युद्धं चकार शरीरं न विस्मापयामासेत्यर्थः ॥ १६ ॥

बहुभिः साकं युधि एकस्मिन् स्वसामर्थ्ये क्षीयमाणे सति शतवत्सरावसान इत्यर्थः शब्दादिभिः सहितः प्रजागरः परां चिन्तामवाप शरीरं प्राणयामीति चिन्तामवापेत्यर्थः ॥ १७ ॥

स पुरञ्जनः मधुभुक् स्वपार्षदैरिन्द्रियैः पाञ्चालेषु शब्दादिविषयेषु मध्ये उपानीतं प्रापितं बलिं शब्दाद्यन्यतमं विषयं गृह्णन् अनुभवन् स्त्रिया बुद्ध्या जितो वशीकृतः भयं मृत्युभयं नाविन्दन्नालोचितवान् ॥ १८ ॥

काचित्कालस्य दुहिता जरा रूपा काचिदस्ति सा त्रिलोक्यां वरं पतिमिच्छती पर्यटत् हेबर्हिष्मन् तां कालकन्यां कोऽपि पुमान्नप्रत्यनन्दत नावृणोत् ॥ १९ ॥

अनभिनन्दने हेतुं वदन् तन्निमित्तं गुणनामधेयमाह। दौर्भगेन दुष्टं भगं सौन्दर्यं यस्माद्भवति स दुर्भगः स एव दौर्भगस्तेनात्मना स्वरूपेण लोके दुर्भगेति विश्रुता प्रख्याता तां विशिनष्टि। या कालकन्या ययातिपुत्रेण पूरुणा वृता सती तुष्टा तस्मै राजर्षये पूरवे वरं राजासनरूपमदात् ययातिर्देवयानीगमनमनुक्रुद्धशुक्रशापाज्जरां प्राप्य पुत्रानुवाचेमां जरां गृह्णीतेति तां च ज्येष्ठाश्चत्वारो न जगृहुः पूरुस्तु जगृहे ततो ययातिस्तस्मै राज्यं ददाविति जरैवादादित्युक्तम् ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

देवान् काम्यफलदान् भूतपतीन् भैरवादीन् ॥ ११ ॥

एवं विधया क्रियया युक्तेषु काम्येषु सक्तस्येति शेषः हरौ मनो योगवत्सु ज्ञानेषु एवमुक्तप्रकारेण प्रमत्तस्य तद्वार्तारहितस्येति वा प्रिया हृद्या योषितो येषान्ते तथा तेषां विषयिणामपि योऽप्रियोऽनपेक्षितः ॥ १२ ॥

गन्धर्वाणां कलाकाष्ठादीनां स्वावयवानामधिपतिश्चण्डो वेगो यस्य स तथेति ख्यातः स काल आससादेत्यन्वयः गन्धर्वा दिवसाः ॥ १३ ॥

गन्धर्व्यो रात्रयस्तावतीस्तावत्यः मिथुनीभूय वर्तमाना मैथुन्यः सिता दिवसा असिता रात्रय इति सितासितपरिवृत्त्या परिभ्रमणेन पुनः पुनरावर्तनेन कामान् विलुम्पन्ति क्षपयन्तीत्यन्वयः॥१४॥

हर्तुं जीर्णबलाकर्तुं प्रजागरः प्राणः प्राणान्नय एवंतस्मिन्पुरे जाग्रतीति श्रुतेः प्राणबलाद्व्यापाराय प्रवर्तत इत्यर्थः ॥ १५ ॥

स सप्तभिः शतैर्विंशद्भिश्चाहोरात्रैः शतं समाः शतवर्षपर्यन्तं युयुधे तेषां पराक्रमं निरुध्य स्वयं प्राणबलाद्देहमपालयदित्यर्थः ॥ १६ ॥

राष्ट्रेण विषयेण पुरेण देहेन बान्धवैरिन्द्रियैः सहवर्तमानः ॥ १७ ॥

स्त्रीजितो बुद्ध्या विवेकं प्राप्तः विषयेषु स्वपार्षदैरिन्द्रियैरुपनीतं बलिं रूपादिविषयं गृह्णन् मधुभुक् कर्मफलभुक् कालनिमित्तं भयं नाज्ञासीदित्यन्वयः ॥ १८ ॥

अस्ति जायते परिणमते वर्धत इति चतुर्धर्मप्रकारप्राप्तिनिरूप्य प्रक्षीयते विनश्यतीत्येतदुक्तं जराप्राप्तिमाह। कालस्येति। कालात् जरा जायत इति कालस्य दुहितेति। विशेषनामाश्रवणात्काचिदिति ॥ १९ ॥

या स्वात्मनः शरीरस्य दौर्भाग्यत्वेन सौन्दर्याभावेन लोके दुष्टो भगो यस्याः सा तथेति विश्रुता यां जरां तुष्टः पिता ययातिः राजश्रेष्ठाय पूरवे वरमदात् तां कश्चन न प्रत्यनन्दतेत्यन्वयः॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यथा भवानिति। विभक्तिपरिणामेनापि सर्वत्र योज्यम् ॥११॥
युक्तेष्विति सार्द्धकम्। यांऽप्रिय इत्यत्र यो वर इति क्वचित्। प्रिययोषितामिति चित्सुखः ॥ १२ ॥ १३ ॥

गन्धर्वा इति सार्द्धकम्। तादृशीत्येव पाठः ॥ १४ ॥ १५ ॥

विंशकेनेत्यत्र विंशत्या चेति टीका विंशद्भिरिति चित्सुखः ॥ १६—२३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ईजे इति पद्यद्वये साम्यं यथा भवानिति तथैव कथेयं कथ्यते तव दृष्टान्तत्वं तुसङ्गोपनार्थमेवेति भावः ॥ ११ ॥

एवं युक्तेषु भक्तिवैराग्यादिष्वात्महितेषु प्रमत्तस्यानवहितस्य। स कालः जरासमयः।प्रिययोषितां कान्ताजनानामप्रियः सम्भोगप्रातिकूल्यात् ॥ १२ ॥

किञ्च चण्डवेगः सम्वत्सर इति ख्यातो यो गन्धर्वाधिपतिस्तस्य। गन्धर्व्वा दिवसाः पुरीं विलुम्पन्तीत्यन्वयः। गन्धर्व्यो रात्रयः तावतीस्तावत्यः मैथुन्यः दिवसैर्मिथुनीभूय स्थिताः ॥ १३ ॥

सिताश्चासिताश्च शुक्लकृष्णपक्षीयाः परिवृत्त्या परिभ्रमणेन पुरीमपहरन्तीति जन्मारभ्य प्रतिदिनमायुरपहार एव पुर्या अपहार उपचरितः ॥ १४ ॥

यदा पञ्चाशद्वर्षानन्तरं पुरं देहमपि हर्तुमारेभिरे तदा प्रजागरः प्राण एव प्रत्यषेधत्। मा पुरमरे मयि तिष्ठति लुम्पतेति साटोपमाह इति पञ्चाशद्वर्षानन्तरमपि छिन्नवर्षपर्यन्तं बलं नापयातीत्युक्तम् ॥ १५ ॥

कदाचिदटमाना सा ब्रह्मलोकान् महीं गतम् ।
वव्रे बृहद्व्रतं मां तु जानती काममोहिता ॥ २१ ॥
मयि संरभ्य विपुलमदाच्छापं सुदुःसहम् ॥
स्थातुमर्हसि नैकत्र मद्याच्ञाविमुखो मुने! ॥ २२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

युद्धन्तु प्रजागरस्य तैः सार्द्धं जन्मारभ्यैवाभूदित्याह सप्तभिः शतैर्विंशकेन चेति वर्षंगतानां दिनानां रात्रीणाञ्च तावत्येव सन्ध्या दर्शिता । शतं समा यावत् परमायुरित्यर्थः ॥ १६ ॥

त्रिपञ्चाशद्वर्षपर्य्यन्तं प्रजागरस्य प्रायः पराजयो नाभूत् तदनन्तरं तु तस्योत्तरोत्तरं पराजय एवेत्याह । क्षीयमाणे स्वसम्बन्धे स्वसम्बन्धिनि प्राणे आर्त्तः पुरञ्जनः ॥ १७ ॥

मधुभुक् क्षुद्रसुखभोक्ता स्वपार्षदैरिन्द्रियैः ॥ १८ ॥

प्रकटमेव जरा प्रवेशमुपाख्यानेनाह । कालस्येति । हे बर्हिष्मन् कोऽपि न प्रत्यनन्दत् नैच्छत् ॥ १९ ॥

पूरवे ययातिपुत्राय तेन वृता सती वरमदादिति ययातिस्तस्मै स्वीयजराग्राहिणे तुष्टो राज्यमदादिति जरैवादादित्युक्तम् ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नाना ऐहिकामुष्मिकभोगाविषयाः कामाः संकल्पा यस्य सः यथा भवान् तथा इंजे ॥ ११ ॥

युक्तेषु योग्यतया गृहीतेषु क्रतुषु । एवं यथा त्वं प्रमत्तोऽसि तथा प्रमत्तस्य । स कालः जरापादकः सम्वत्सरः ॥ १२ ॥

चण्डवेगो दुर्निवारवेगः । गन्धर्वाणां दिवसानां पतिः ॥ १३ ॥

तादृशीः उक्तसंख्याकाः सिताः शुक्लाः असिताः कृष्णाः याः सन्ति ताः निशाः अस्य चण्डवेगस्य गन्धर्व्यः मैथुन्यः । दिवसरूपैर्गन्धर्वैर्मिथुनीभूय स्थिताः । परिवृत्त्या पुनः पुनरावृत्त्या सर्वैः कामैः सह विनिर्मितां पुरीं विलुम्पयन्ति ॥ १४ ॥ १५ ॥

स प्रजागरः एक एव सप्तभिः शतैर्विंशत्या च सह शतं समाः । सम्वत्सरान् युयुधे ॥ १६ ॥

एकस्मिन् स्वसम्बन्धिनि प्राणे बहुभि र्युधि क्षीयमाणे राष्ट्रपुरबान्धवैः विषयं देहबुद्ध्यादिभिः । सह चिन्तां जगाम पुरञ्जन इति शेषः ॥ १७ ॥

पुर्य्यां देहे पञ्चालेषु विषयेषु मधुभुक् रसास्वादी स्वपार्षदैरिन्द्रियैरुपनीतं बलिं विषयसुखं गृह्णन् । भयं कालभयं नाविन्दत् । यतः स्त्रीजितः बुद्धिजितः ॥ १८ ॥

वरमिच्छती तदर्थं त्रिलोकीं पर्यटन्ती काचिद्दुर्लक्षगतिः । कालस्य दुहिता जरास्ति हेबर्हिष्मन् । तां कश्चन अपि न प्रत्यनन्दत नैच्छत् ॥ १९ ॥

ययातिना दत्ता पूरुणा वृता अतो या तुष्टा राजर्षये पूरवे त्वं राजा भवेति वरमदात् । ययातिना तुष्टेन वरो दत्तः वरदाने सैव निमित्तमतो या तुष्टा वरमदादित्युक्तम् । पूर्वकल्पीयं ययातिचरितं संस्मृत्य भविष्यं वा भूतवत् कथा सङ्गत्यर्थं श्रीनारदेनोक्तम् ॥ २० ॥

---

भाषाटीका ।

पशु जिन में मारे जाते हैं घोर यज्ञों में दीक्षा लेकर जैसे हो तैसे नाना कामना वाला होकर देवता पितरभूत पतिं यजन करने लगा कथा पक्ष में तथा अध्यात्म पक्ष में तुल्य ही है ॥ ११ ॥

इस प्रकार से कुटुम्ब में चित्त के आसक्त होने से भग में उसका प्रमाद होगया इतने में वह काल उपस्थित है जो कि स्त्रियों को प्रिय मानने वाले कूं प्रिय नहीं है ॥ १२ ॥

हे नृप ! चण्डवेगनाम से विख्यात् एक गन्धर्वों का है उसके साथ में बडे बल वाले तीनसौ साठ गन्धर्व यहांपर दिन ही गन्धर्व हैं चण्ड वेग काल वर्ष है ॥ १३ ॥

उसी प्रकार उनकी गन्धर्वी भी हैं शुक्ल कृष्ण रूपवती सो परि भ्रमण से उस पुरञ्जन पुरी को लूटती हैं यहां कृष्ण पक्ष की रात्री आयू को क्षय करती हैं ॥ १४ ॥

इस चण्ड वेगके जितने अनुचर उननें जब पुरञ्जन की को नाश करना विचारा तब पांच मस्तक वाले नागने उन रोका [ प्राण के रहने से मरण नहीं होता है ] ॥ १५ ॥

उस नागने सातसौ वीस गन्धर्वों के साथ सौ वर्ष तक किया [ प्राण का रहना ही युद्ध है ] ॥ १६ ॥

बहुत गन्धर्वों के साथ उस एक नाग के युद्ध में जब बल हीन होगया तब पुरका अधि पती पुरञ्जन बडी चिं को प्राप्त हुआ ( देहका बल हारने से प्राण दुर्बल होनें जीव को चिन्ता होती है ) ॥ १७ ॥

वह राजा पाञ्चाल देशों में अपने प्रजाओं की भेट को करता हुआ स्त्री के बस होकर विसयों के भोगने में भूलगया ( विषयों के भोगने में आयू का क्षय होना नहीं पडता है ) ॥ ॥ १८ ॥

हे बर्हिस्मन् काल की पुत्री जरा नामक तीनों लोकों के इच्छा से घूमती थी उस को किसी ने अङ्गीकार नहीं ( वृद्ध अवस्था को कोई नहीं चाहता है ) ॥ १९ ॥

अपने दुर्भग होने से लोक में दुर्भगा करके विख्यात जिसनें पुरू राजा के वरणे से उसको वरदान दिया ( अर्थ पक्ष मे एक ही है ) ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

सा जरा बृहद्व्रतं नैष्ठिकम् ॥ २१ ॥

प्रत्याख्यातवति मयि संरभ्य क्रोधं कृत्वा नैकत्र स्थाता सीति शापमदात् ॥ २२ ॥

ततो विहतसङ्कल्पा कन्यका यवनेश्वरम् ।
मयोपदिष्टमासाद्य वव्रे नाम्ना भयं पतिम् ॥ २३ ॥
ऋषभं यवनानां त्वां वृणे वीरेप्सितं पतिम् ।
सङ्कल्पस्त्वयि भूतानां कृतः किल न रिष्यति ॥ २४ ॥
द्वाविमावनुशोचन्ति बालावसदवग्रहौ ।
यल्लोकशास्त्रोपनतं न राति न तदिच्छति ॥ २५ ॥
अथो भजस्व मां भद्र ! भजन्तीं मे दयां कुरु ।
एतावान् पौरुषो धर्मो यदार्ताननु कम्पते ॥ २६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आधयो व्याधयश्च यवनास्तेषामीश्वरं भयनामानं वव्रे ॥ २३ ॥

हेवीर ! त्वामीप्सितं पतिं वृणे न रिष्यति न नश्यति ॥ २४ ॥

लोकतो वेदतश्च यद्देयत्वेन ग्राह्यत्वेन चोपनतं प्राप्तं तद्याच्यमानं यो न ददाति यश्च दीयमानं नेच्छति न गृह्णाति इमौ द्वौ कर्मभूतावनुशोचन्ति सन्तः ॥ २५ ॥

पुरुषेण कर्तव्यो धर्मः पौरुषः ॥ २६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कदाचित्सा कालकन्या भूर्लोके पर्यटन्ती ब्रह्मलोकात्सत्यलोकान्महीं भूमिं गता प्राप्तं मां बृहद्व्रतं नैष्ठिकं जानत्यपि काममोहिता सती वव्रे ॥ २१ ॥

प्रत्याख्याता मया सा तु कालकन्या विशाम्पते! ततो मया प्रत्याख्याता मयि संरभ्य क्रोधं कृत्वा विपुलं महान्तं दुस्सहं दुरतिक्रमणीयं शापमदात् शापमेवाह । हेमुने ! त्वं यतो मयाऽऽभिमुख्यस्तत एकत्र चिरेण स्थातुं नार्हसीति ॥ २२ ॥

ततो विहतसंकल्पा भ्रष्टमनोरथा कालकन्यका आधयो व्याधयश्च यवनाः तद्वत्पीडाकारित्वात्तेषामीश्वरं मया उपादिष्टं नाम्ना भयं भयनामानं पतिमासाद्य वव्रे ॥ २३ ॥

वरणप्रकारमेवाह । ऋषभमिति । हेवीर ! यवनानामृषभमीश्वरं त्वामीप्सितं वृणे त्वयि कृतो भूतानां संकल्पः न रिष्यति न नश्यति ॥ २४ ॥

त्वयाहं न प्रत्याख्येया इत्याह । द्वाविति । लोकतो वेदतश्च यद्देयत्वेन ग्राह्यत्वेन स्वेनोपनतं प्राप्तं तद्याच्यमानाय यो न ददाति यश्च दीयमानं यो नेच्छति न गृह्णातीमौ द्वौ असदवग्रहावसदर्थः अवग्रहोऽभिमानः आग्रहो वा ययोस्तावत एव बालावज्ञौ कर्मभूतावनुशोचन्ति इमौ प्रत्यनुशोचन्ति सन्त इत्यर्थः ॥ २५ ॥

हेभद्र ! भजन्तीं मां भजस्व मयि दयां कुरु पौरुषः पुरुषेण कर्तव्यो धर्मः एतावानेव किं तद्यदार्ताननुकम्पते ॥ २६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

तु शब्दोऽप्यर्थे या मां बृहद्व्रतं ब्रह्मचारिणं जानन्त्यपि ब्रह्मलोकान् महीमागतं वव्र इत्यन्वयः तत्र हेतुः काममोहितेति ॥ २१॥

ततः किमभूदिति तत्राह । मयीति ॥ २२ ॥

सा कन्या यवनेश्वरं नाना व्याधीनां स्वामिनं नाम्ना भयं मृत्युं पतिं वव्र इत्यन्वयः ॥ २३ ॥

न रिष्यति न दह्यति ॥ २४ ॥

असन्नवग्रह आग्रहो ययोस्तौ तथा बालौ स्वकार्यांशौ । अनुशोचन्ति सर्वे इति शेषः कौ तौ यौ लोकशास्त्रयोरविरोधतयोपनतं प्राप्तमर्थिभ्यो न राति न ददाति दायं स्वीयं नेच्छति ताविति शेषः नन्वनेन लोकविद्विष्टं चेच्छास्त्रीयमपि न कर्तव्यमित्यायातं समत्वेन सह्योक्तेन"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ"इत्यादिविधानं व्यर्थमितीयं शङ्का ।

अलौकिकं च शास्त्रीयं कर्तव्यं लौकिकं कुतः ।
लोकार्थं शास्त्रहा याति निरयं त्वितरः सुरान् ।

इत्यनेन परिहर्तव्या तस्माच्छास्त्रानुसारि लौकिकं कर्तव्यं नेतरदिति तात्पर्यमितरः शास्त्रानुकूललौकिकं कुर्वाणः सुरान् याति स्वर्गादिपुरुषार्थमाप्नोतीत्यर्थः ॥ २५ ॥

उपसंहरति । अथो इति । यस्मादिदं शास्त्रीयमर्थो तस्मात् संक्षिप्य स्वकार्यस्य कर्तव्यतामाह । एतावानिति । पौरुषः पुरुषनिष्ठः ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यतो भूतानामन्यैरपि भूतैस्त्वयि कृतः सङ्कल्पो मनोरथो न रिष्यति नष्टुं नार्हति । मम तु त्वदेकपरायणायाः सुतरां नार्हतीत्यर्थः ॥ २४—२८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

महीं गतामिति प्राकृतमनुष्यभ्रान्त्येत्यर्थः । बृहद्व्रतं नैष्ठिकं ब्रह्मचारिणं संन्यासिनं वा महाप्रभाववन्तं वा सा कमपि न त्यजतीत्यर्थः ॥ २१ ॥

मयि प्रत्याख्यातवति संरभ्य क्रोधं कृत्वा पक्षे मद्देहस्य कर्मारब्धत्वाभावात् षडूर्मिराहित्येन तस्याः प्रवेशासामर्थ्यमेव मत्प्रत्याख्यानत्वेन कृपालुत्वेन सर्वत्र मम गमनमेव तस्याः शापफलत्वेनोत्प्रेक्षितमिदं ज्ञेयम् ॥ २२

मयोपदिष्टमिति लोकानां भयमेव जरया जीर्णा भवत्विति स्वस्य दयालुत्वं सूचितम् ॥ २३ ॥

कालकन्योदितवचो निशम्य यवनेश्वरः।
चिकीर्षुर्देवगुह्यं स सस्मितं तामभाषत ॥ २७ ॥
मया निरूपितस्तुभ्यं पतिरात्मसमाधिना।
नाभिनन्दति लोकोऽयं त्वामभद्रामसंमताम् ॥ २८ ॥
त्वमव्यक्तगतिर्भुङ्क्ष्व लोकं कर्मविनिर्मितम्।
याहि मे पृतनायुक्ता प्रजानाशं प्रणेष्यसि ॥ २९ ॥
प्रज्वारोऽयं मम भ्राता त्वं च मे भगिनी भव।
चराम्युभाभ्यां लोकेऽस्मिन्नव्यक्तो भीमसैनिकः ॥ ३० ॥
इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पारम-
हंस्यां संहितायां वैयासिक्यां पुरञ्जनोपाख्याने
सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

यवनानामाधिव्याधीनां न रिष्यति न नश्यति पक्षे भूतानां भगवद्भक्तानां सङ्कल्पो न रिष्यति लोकानां भयं जीर्णं भवत्विति नारदेन यः सङ्कल्पः कृतः सोऽन्यथा भवितुं नार्हतीति त्वं मे पतिर्भव यथा त्वामहं भुञ्जे भूतशब्देन भगवद्भक्तोऽप्युच्यते यदुक्तं भूतानि भव्यानि जनार्दनस्येति ॥ २४ ॥

याचावशौ सन्तोऽनुशोचन्ति लोकशास्त्रयोरुपनतमुचितं वस्तु देयं न ददाति। प्राप्तं न गृह्णातीति तेन कन्याहं स्वयम्वरा अकस्मात्त्वद्गृहमागता गृहस्थेन त्वया प्राह्यैवेति भावः। पक्षे लोकेषु कृपालुना नारदेन यदभिलषितं भयं जीर्णं भवत्विति तल्लोकशास्त्रोचितमेवातस्त्वं मां गृहाणेत्यर्थः ॥ २५ ॥

पौरुषः पुरुषेण निर्वृत्तः। पक्षे स्वबलं प्रकाशयापि त्वया जरां न गृह्णामीति वक्तुमशक्यं नारदोक्तिबलात्त्वामहं गिलन्तीं संहरिष्याम्येवेति स्वगतं वदन्ती याहिर्यक्रोक्त्या सोत्प्रासमाह। अथो इति ॥ २६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

संरब्धः संकुप्य नैकत्र स्थातुमर्हसीति शापमदात् ॥ २१ ॥ २२ ॥

यवनानामाधीनां व्याधीनां चेश्वरं भयनामानं मृत्युं पतिम् वव्रे ॥ २३ ॥

भूतानां भूतैस्त्वद्विधैः त्वयि कृतः सङ्कल्पः न रिष्यति व्यर्थो न भवति ॥ २४ ॥

लोकशास्त्राभ्यामुपनतं देयतया प्राप्ततया प्राप्तम् तत्पात्रेण याच्यमानं यो न दाति न ददाति यश्च तत् दीयमानं नेच्छति न स्वीकरोति इमौ द्वौ असदवग्रहौ दुराग्रहौ शोचन्ति दानादानतत्त्वज्ञा इति शेषः ॥ २५ ॥

अथो अतः हे भद्र! मां भजस्व मे मयि दयां कुरु पुरुषेण कृतः पौरुषो धर्मः एतावानेव तमेवाह। यदार्तानुकम्पते इति ॥ २६ ॥

---

भाषाटीका।

वह काल कन्या त्रिलोकी में विचरती हुई एक दिन ब्रह्म-लोकसे पृथिवीमें आया हुआ जो मैं तिसको देखकर वरने यद्यपि मैं ब्रह्मचारी हूं तथापि काम मोहित होकर वरने (ब्रह्मचारी आदिकों कोभी नहीं छोडती है ॥ २१ ॥

मेरे ऊपर वह क्रोध करके मेरे को बडा कठोर शाप भई कहा कि मेरे याचना के विमुख होने से तुम एक स्थि नहीं रहने पाओगे ( लोकोपकार के अर्थ पर्यटन उत्तम है ) ॥ २२ ॥

तब तो वह कन्या अपने मनोरथ के नष्ट होने से उपदेश से भयनामक पतिको वरण करती हुई ( जरा का पति मृत्यु है ) ॥ २३ ॥

उससे बोली कि हे वीर! यवनों के श्रेष्ठ आपको मैं करती हूं तुमारे विषय में भूतों का किया हुआ निष्फल नहीं होता है ( यहां कथा की शोभा मात्र है ) ॥ २४ ॥

ये दोनों पुरुष सोचते हैं क्योंकि इन दोनों का है जोकि लोक व्यवहार से प्राप्त वस्तू को मिलने से लेता है और जो मागने से नहीं देता है ( कथामात्र है ) ॥ २५ ॥

इस हेतू से मैं तुमारा अनु वर्तन करती हूं हे भद्र! मेरे ऊपर दया करो यदि एक मनुष्य का परम धर्म है दुखितों के ऊपर दया करता है [ कथा मात्र है ] २६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

देवगुह्यं मरणम्। तद्धि प्राणिनां वैराग्यायुदयाय उच्यते ॥ २७ ॥

तुभ्यं तव आत्मसमाधिना ज्ञानदृष्ट्या याच्यमानोऽयं लोको नेच्छति ॥ २८ ॥

अतोऽव्यक्तगतिः कुतः प्राप्तेत्यलक्षितगतिः सती लोकं भुंक्ष्व एवं सर्वोऽपि लोकस्तव पतिः स्यादित्यर्थः। ननैवं शङ्कनीयं प्रतिकूलां मां लोको हनिष्यतीति यस्मात्त्वमेव नाशं करिष्यसीत्याह। याहीति। या मदीया यवनपृतना युक्ता ॥ २९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च । प्रज्वार इति । मारको वैष्णवो ज्वरः माहेश्वरस्य व्याध्यन्तः पातित्वात् भीमा घोराः सैनिका यस्य ॥ ३० ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कालकन्ययोदितं वचः श्रुत्वा स यवनेश्वरो भयनामा देव गुह्यं मरणं तद्धि प्राणिनां वैराग्याजुदयाय ने वैर्गोप्यते कर्तुमिच्छुः स्मितेन सहितं यथा तथा समभाषत ॥ २७ ॥

तुभ्यं मया आत्मसमाधिना चित्तैकाग्र्येण बहुधा विचार्येत्यर्थः लोकरूपः पतिर्निरूपितो निश्चितः कोऽसौ इत्यत्राह । याऽथमानो लोकस्त्वामभद्रामसत्तमां नेच्छति ॥ २८ ॥

अतोऽव्यक्तगतिः कुतः प्राप्तेत्यलक्षितगतिः सती कर्मनिर्मितं लोकमाक्रम्य भुङ्क्ष्व एवं सर्वोऽपि हि लोकः तव पतिः स्यादित्यर्थः ननु एवं त्वया शङ्कनीयं मां प्रतिकूलां लोको हनिष्यतीति यस्मात्वमेव लोकस्य नाशं करिष्यसीत्याह । याहीति । या मदीया पृतना यवनानां सेना तया युक्ता याहि ॥ २९ ॥

प्रज्वारो वैष्णवज्वरः त्वां प्रणेष्यतीति लोकं प्रतिप्रापयिष्यति अत्र प्रज्वार इति मारको वैष्णवज्वरो विवक्षितः न माहेश्वरस्तस्य व्याध्यन्तःपातित्वेन मारकत्वाभावात् प्रज्वारो मम भ्राता त्वं च मे भगिनी, स्वसा भव उभाभ्यां प्रज्वारकालकन्याभ्यां युवाभ्यां सहाहं भीमसैनिकः यवनसेनानायकः अव्यक्तगतिः सन् लोके चरामि अत्र कालस्य दुहिता काचिदित्यादिश्लोकद्वयेन जराया लोकविद्वेषविषयत्वमुक्तं कदाचिदटमानेत्यादिना श्लोकत्रयेण नारदस्य जरानाक्रान्तत्वमुक्तम् एतच्च नैष्ठिक सनकादीनामप्युपलक्षणं स्वस्य शापप्रस्तत्वकथनं तस्यावर्जनीयत्वाभिप्रायकं ततो विहतसङ्कल्पेत्यादिना जराधिव्याधिप्रज्वारभयानां पूर्वस्योत्तरोत्तरहेतुत्वमन्योऽन्यसाहित्येन मरणहेतुत्वं चोक्तं जरादीनां परस्परभापत्यादिकथनं तेषां मूर्तिमत्त्वाभिप्रायेण तदधिष्ठातृदेवताभिप्रायेण वा उपपन्नम् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्मादुसंगत्वमनपेक्ष्य तद्वचनस्यादरप्रकारमाह । कालकन्येति देवस्य विधातुर्गुह्यं रहस्यं वक्ष्यमाणमर्थं सस्मितमभाषतेत्यन्वयः ॥ २७ ॥

तत्र भोगोपायमुपदिशति । नाभिनन्दतीति । अयं लोकोऽसम्मतां त्वां नाभिनन्दतीति यस्मात् ॥ २८ ॥

तस्मात्वमज्ञातगतिर्लोकं भुंक्ष्व ॥ २९ ॥

योऽयं मम भ्राता प्रज्वारः सैववैष्णवोभयलक्षणः सोऽप्रजोऽनपत्यस्त्वां प्रणेष्यति प्रहीष्यतीत्यन्वयः भीमा भयङ्कराः सैनिकाः सेनापतयो यस्य स तथा सः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वमित्यर्द्धकम् । याहीत्यर्द्धकम् । प्रजानाशमित्यत्र प्रज्वारस्त्वामिति चित्सुखः ॥ २९ ॥

प्रज्वारोऽयमित्यत्र अप्रजोऽयमिति चित्सुखः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

देवस्य परमेश्वरस्य गुह्यं रहस्यं संसारचक्रप्रवर्त्तनं चिकीर्षुः । सस्मितमिति त्वद्वचनमिदमप्रत्याख्येयमिति स्मितेन ज्ञापयन्नित्यर्थः ॥ २७ ॥

तुभ्यं त्वां भोजयितुमित्यर्थः । आत्मसमाधिना मनसोभावनया अयं भूर्लोकस्थो लोकः त्वां नेच्छति ॥ २८ ॥

अतस्त्वमव्यक्तगतिः कुतः प्राप्तेत्यलक्षितगतिः सती लोकमाक्रम्य बलात्कारेण सर्व्व एव लोकस्तव पतिः स्यादित्यर्थः । प्रतिकूलां मां लोकोहनिष्यतीति बिभेषि चेत् मत्पृतना यवनसेना तया युक्ता सती याहीति प्रजानां त्वया भुक्तानां नाशं त्वं प्रणेष्यसि करिष्यसि त्वां हन्तुं पुनः कः प्रभवेदिति भावः ॥ २९ ॥

प्रज्वार इति मारको वैष्णवज्वरः माहेश्वरस्यतु व्याध्यन्तःपातित्वात् मम भगिनी कापि नास्तीति त्वमेव भगिनीभव ननु नारदोक्तमन्यथा भवितुं नार्हतीति त्वं मे पतिरेव भवेति सत्यम् । अधर्म्मवंशोद्भवानामस्माकं भगिन्यपि भार्य्या स्यादततस्तव भ्राताप्यहं पतिस्तस्मान्नारदोक्तमपि प्रमाणीकरणीयं भगवद्भक्तानां निकटमहं यामि चेन्मामपि निर्भरं भुक्त्वा संहर । नारदं यथा पतिं नाकृथास्तथान्यमपि भगवद्भक्तं त्वमपि पतिं न कुरुष्व । अतएव मयोक्तं त्वमव्यक्तगतिर्भुङ्क्ष्व लोकं कर्म्मविनिर्मितमिति भक्तानां कर्म्मविनिर्मितत्वाभावात्ते तव पतयो न भवन्तीति तेषु तेष्वहमेव ते पतिरिति नारदोक्तमपि सुसङ्गतमभूदिति ३०

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थे सप्तविंशोऽयं सङ्गतः सङ्गतः सताम् ॥ २७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दीव्यति व्यवहरति पित्रादिरूपेणेति देवो जीवः स गुह्यः तादृशव्यवहारानर्हो भवति यस्मात्तन्मरणम् । चिकीर्षुः अनयैव प्राणिनां मरणं भवतु इतीच्छावान् ॥ २७ ॥

तुभ्यं तव अयं लोकस्त्वां नाभिनन्दति नेच्छति ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतः अध्यक्ता दुर्लक्ष्या गतिर्यस्या सा त्वं लोकं भुंक्ष्व । सर्वोऽपि कर्मनिर्मितो लोकस्त्वया भुज्यमानस्तव पतिरित्यर्थः ॥२८॥ प्रज्वारो मारको ज्वरः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तविंशाध्यायार्थप्रकाशः ॥ २७ ॥

भाषाटीका ।

यवनेश्वर कालकन्या के कथन को श्रवण कर के देवतों से भी गुप्त कुछकार्य करने की इच्छा से मंद हाससे उस कालकन्या से बोला ( यहांगोप्य प्राणियोंका मरण है )॥ २७॥

मैंने अपने विचार सें तेरे लिये एक पति निश्चै किया है जिससे कि यह लोग अभद्र असम्मत होने से तो नहीं चाहता है ॥ २८ ॥

तिससे तू अपने स्वरूप को छिपा कर कर्म निर्मित लोक है तिस में जाकर हमारे सेना के सहित उसको भोग सब प्रजाओं का नाश करेगी ( जरा वस्था के शरीर में रोगादिक सेंना सहाय होता है तब मृत्यु होता है ) ॥ २९॥

यह प्रज्वार नाम का हमारा भाई है तू हमारी बहन है तुम दोंनों के साथ मैं भयङ्कर सेना को लेकर छिपकर लोक मे विचरूंगा ( जरा सहित ज्वर का संयोग होने से मृत्यु होता है ) ॥ ३० ॥

इति श्रीभागवत चतुर्थस्कंध सत्ताइसवां अध्यायका
भाषानुवाद लक्ष्मणाचार्य्य कृत
समाप्त ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे सप्तविंशोऽध्यायः समाप्तः ॥ २७ ॥

## ॥ अष्टाविंशोऽध्यायः ॥

॥ नारद उवाच ॥

सैनिका भयनाम्नो ये बर्हिष्मन्! दिष्टकारिणः ।
प्रज्वारकालकन्याभ्यां विचेरुरवनीमिमाम् ॥ १ ॥
त एकदा तु रभसा पुरञ्जनपुरीं नृप ! ।
रुरुधुर्भौमभोगाढ्यां जरत्पन्नगपालिताम् ॥ २ ॥
कालकन्यापि बुभुजे पुरञ्जनपुरं बलात् ।
ययाभिभूतः पुरुषः सद्यो निःसारतामियात् ॥ ३ ॥
तयोपभुज्यमानां वै यवनाः सर्वतो दिशम् ॥
द्वार्भिः प्रविश्य सुभृशं प्रार्दयन् सकलां पुरीम् ॥ ४ ॥
तस्यां प्रपीड्यमानायामभिमानी पुरञ्जनः ।
अवापोरुविधांस्तापान् कुटुम्बी ममताकुलः ॥ ५ ॥
कन्योपगूढो नष्टश्रीः कृपणो विषयात्मकः ।
नष्टप्रज्ञो हृतैश्वर्यो गन्धर्वयवनैर्बलात् ॥ ६ ॥
विशीर्णां स्वपुरीं वीक्ष्य प्रतिकूलाननादृतान् ।
पुत्रान् पौत्रानुगामात्यान् जायां च गतसौहृदाम् ॥ ७ ॥
आत्मानं कन्यया ग्रस्तं पञ्चालानरिदूषितान् ।
दुरन्तचिन्तामापन्नो न लेभे तत्प्रतिक्रियाम् ॥ ८ ॥
कामानभिलषन् दीनो यातयामांश्च कन्यया ।
विगतात्मगतिस्नेहः पुत्रदारांश्च लालयन् ॥ ९ ॥
गन्धर्वयवनाक्रान्तां कालकन्योपमर्दिताम् ।
हातुं प्रचक्रमे राजा तां पुरीमनिकामतः ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टाविंशे तु वैदर्भ्याख्यानेन स्त्रीविचिन्तया ।
स्त्रीत्वं प्राप्तस्य देवेन कदाचिन्मुक्तिरुच्यते ॥ १ ॥

इदानीं तु पुरञ्जनस्य पुंदेहत्यागपूर्वकं स्त्रीत्वप्रकारमाह । सैनिका इत्यादि । राजसिंहस्य वेश्मनीत्यन्तेन दिष्टं दैवं कुर्वन्त्यभिकुर्वन्तीति तथा मृत्योरादेशकारिण इति वा ॥ १ ॥

जरत्पन्नगेन जीर्णप्राणेन पालिताम् ॥ २ ॥ ३ ॥

द्वार्भिश्चक्षुरादिभिः रोगरूपेण प्रविश्य ॥ ४ ॥ ५ ॥

कन्यया जरयोपगूढः संस्तत्प्रतिक्रियां न लेभे इति तृतीयेनान्वयः । हृतैश्वर्य उत्थानादिष्वशक्तः ॥ ६ ॥

प्रतिकूलाननपेक्षितविषयप्रापणात् अनादृतानादरमकुर्वाणान् स्वाधीनत्वाभावात् अनुगा इन्द्रियाणि अमात्या इन्द्रियदेवाः गतसौहृदामध्यवसायाभावात् ॥ ७ ॥

कन्यया जरया ग्रस्तम् पञ्चालान् विषयान् अरिभिर्व्याध्यादिभिर्दूषितान् ॥ ८ ॥

कालकन्यया हेतुभूतया यातयामान्निःसारानपि कामानभिलषन् विगता आत्मनो गतिः पारलौकिकी ऐहिकः पुत्रादि-

श्रीधरस्वामिकृतभावार्थदीपिका।

स्नेहश्च यस्य सः गतिस्नेहादिति वा पाठः स राजा पुरञ्जनो हातुं प्रचक्रमे उपक्रान्तवानिति द्वयोरन्वयः ॥ ९ ॥

अनिकामतोऽनिच्छयापि ॥ १० ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं जरादीनामुत्तरोत्तरहेतुत्वं संभूय मृतिहेतुत्वं चाभिधायेदानीमेते सर्वे पुरञ्जनपुरीमाविश्य पीडयन्तो विप्लावयामासुरिति वदन्।

यं यं वापि स्मरन् भावं त्यजत्यन्ते कले वरम्।
तं तमेवैति कौन्तेय! सदा तद्भावभावित

इत्युक्तरीत्या कथापक्षे पुरञ्जनस्य राज्ञः स्त्रीचिन्तया जन्मप्राप्तिकथनव्याजेनाध्यात्मपक्षेऽपि जीवस्य कर्मवशात् स्त्रीप्राप्तिं तत्र पुनरदृष्टविशेषाद्भागवतसङ्गतिमीश्वरप्रसादं चाह। सप्तविंशेन नारदः। हे बर्हिष्मन्! भयनाम्नो ये सैनिकाः सेनायां भवाः सैनिकाः दिष्टकारिणः आदेशकारिणः ईश्वरस्येति शेषः प्रज्वारकालकन्याभ्यां सहेमां भूमिं विचेरुः पर्यटुः ॥ १ ॥

ते सैनिकाः कदाचिद्देहारम्भकप्रारब्धावसाने जरत्पन्नगेन जीर्णप्रायेण पालितां भौमैर्भूम्यां भवैर्भोगैः शब्दादिविषयभोगैराढ्यां पुरञ्जनपुरीं रुरुधुः ॥ २ ॥

कालकन्या जरापि पुरञ्जनपुरीं बलाद्बुभुजे पुरञ्जनपुरं जराव्याध्यादिग्रस्तमभूदित्यर्थः कालकन्यां विशिनष्टि। यया कालकन्यया ऽभिभूतः पुरुषः निस्सारतां प्राप्नुयात् ॥ ३ ॥

तया कालकन्ययोपभुज्यमानां सकलां पुरञ्जनपुरीं यवनाः सर्वतो दिशं द्वार्भिः प्रविश्य चक्षुरादिषु रोगरूपेण प्रविश्य भृशमधिकं प्रार्दयन् पीडितवन्तः ॥ ४ ॥

तस्यां पुर्यां यवनादिभिः प्रपीड्यमानायां ममेयं पुरीत्याभिमानी पुरञ्जनः कुटुम्बे बुद्धीन्द्रियमन आदिरूपेण या ममता तया आकुलः आक्षिप्तचित्तः बहुविधान् तापान् क्लेशान् आप ॥ ५ ॥

कन्यया बुद्ध्योपगूढः दृढतरं संश्लिष्टः विषयेष्वेवात्मा चित्तं यस्य अतः कृपणः अत एव नष्टप्रज्ञः नष्टविवेकः नष्टश्रीर्ज्ञानात्मिका यस्य यवनैर्बलात् हृतमैश्वर्य्यमुत्थानादिशक्तिरूपं यस्य सः तत्प्रतिक्रियां न लेभे इति तृतीयेनान्वयः ॥ ६ ॥

विशीर्णं शिथिलं स्वपुरं तथा प्रतिकूलाननपेक्षितविषयप्राणाननादृतानादरमकुर्वाणान् स्वाधीनत्वाभावात्पुत्रानिन्द्रियपरिणामरूपान् पुत्रपौत्रान् पुण्यापुण्यकर्मरूपान् तदनुगानीन्द्रियाश्रयमात्यानिन्द्रियदेवताः गतं सौहृदं स्नेहो यस्यास्तां जायां तस्या अपि स्वाधीनत्वाभावात् ॥ ७ ॥

कन्यया जरया ग्रस्तमात्मानं शरीरमरिभिर्विघ्नादिभिर्दूषितान् पाञ्चालान् विषयांश्च वीक्ष्य दृष्ट्वा अपारचिन्तामापन्नः तस्य पुरादिविशीर्णत्वादेः प्रतिक्रियां प्रतिकारं परिहारोपायं न लेभे ॥ ८ ॥

कालकन्यया हेतुभूतया यातयामान्निःसारानपि कामानभिलषन् दीनः कृपणः विगता आत्मनो गतिः पारलौकिकी ऐहिकः पुत्रादिस्नेहश्च यस्य पुत्रदारान् इन्द्रियपरिणामबुद्धीर्लालयन्नुपच्छन्दयन् ॥ ९ ॥

गन्धर्वैरहोरात्ररूपैर्यवनैराध्यादिभिश्चाक्रान्तां कालकन्ययाऽवमर्दितां पीडितां पुरीमकामतः अनिच्छयापि राजा पु[...] हातुं त्यक्तुं प्रचक्रमे उपक्रान्तवान् ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ईश्वरेच्छोपनतकर्मवशाच्छरीरमनुविश्य स्थितस्य [...] जाग्रदाद्यवस्थाभेदं प्रतिपाद्याधुना शरीरवियोगलक्षण[...] वक्तुमुपक्रमते। सैनिका इत्यादिना। वातादिव्याधिसमूहा [...] मवनिं विचेरुरित्यनेन जरादिव्याधयोऽस्मिन् प्रपञ्च एव ना[...] ज्ञायते ॥ १ ॥

भौमभोगा अशनपानवसनलक्षणा रुरुधुः शरीरं [...] जरत्पन्नग इति प्राणवलाच्चेष्टाल्पत्वं लक्ष्यते न तु प्राणस्य [...] निस्सीमबलत्वात् ॥ २ ॥

कन्यापि बुभुज इति यौवनानन्तरं विवेश ॥ ३ ॥

प्रार्दयन्निति जराग्रस्तस्य पलितस्याक्षिमान्द्यं बधिरत्वं [...] भङ्गं चामाकुलत्वमग्निदौर्बल्यं कण्ठे घुरुघुरुत्वमित्यादिना[...] धयो दृश्यन्ते इति ॥ ४ ॥ ५ ॥ ६ ॥

पुत्रान् गोलकलक्षणान् पौत्रानिन्द्रियाणि अमात्यानम[...] वर्तनीया अमात्या इन्द्रियाभिमानिनो देवास्तांश्च। अत सा[...] गमन इति धातोः। बुद्धेरपि पूर्ववदतिशयो नास्तीति ग[...] हृदाम् ॥ ७ ॥

कन्यया रजसा पाञ्चालान्विषयानरिदूषितान् वि[...] हतान् ॥ ८ ॥

यातयामान् गतयामान् गतात्मसंविन्नष्टपरमात्म[...] एव निःस्नेहः परमात्मनि भक्तिरहितो विरुद्धस्नेहो वा ॥ [...]

अनिकामतोऽनिच्छातः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कन्येति त्रिकम् ॥ १—६ ॥ ७—८ ॥

कामानिति युग्मकम्। गतीत्यत्र सुखीति चित्सुखः। [...] मत इत्यस्य अनिच्छयापीति चित्सुखव्याख्या च ॥ ९ ॥ [...] १२ ॥ १३ ॥ १४ ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

त्यक्त्वा शीर्णां पुरीं स्त्रीत्वं प्राप्तः सत्सङ्गतो [...]
भक्त्या पुरञ्जनः प्राप तमशान्विशके स्फुटम् ॥ [...]

इदानीं जीवस्य स्थूलशरीरपरित्यागप्रकारमाह। [...] इत्यादिना। पुरीं विहायापगत इत्यन्तेन सैनिका व्याधयः [...] रिणः दुरदृष्टफलोत्पादकाः ॥ १ ॥

जरत्पन्नगेन जीर्णप्राणेन पालिताम् ॥ २ ॥

द्वार्भिश्चक्षुरादिभिः। अभिमानीति पुर्यामभिमा[...] देव ॥ ३ ॥ ४ ॥

विशीर्णां विशीर्य्यमाणां प्रतिकूलान् शोकादीन् [...] आदरमकुर्वाणान् सर्व्वथा निगिलितुमुपक्रान्तानि[...]

भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः ।
ददाह तां पुरीं कृत्स्नां भ्रातुः प्रियचिकीर्षया ॥ ११ ॥
तस्यां सन्दह्यमानायां सपौरः सपरिच्छदः ।
कौटुम्बिकः कुटुम्बिन्या उपातप्यत सान्वयः ॥ १२ ॥
यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया ।
पुर्यां प्रज्वारसंसृष्टः पुरपालोऽन्वतप्यत ॥ १३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

पुत्रान् विवेकादीन् पौत्रान् धैर्य्यगाम्भीर्य्यादीन् अनुगानिन्द्रियाणि अमात्यान् मन आद्यधिष्ठातृदेवांश्चन्द्रादीन् चकारात् गतसौहृदान् स्वस्वकृत्यादि सम्यगकुर्वाणान् जायां बुद्धिश्च गतसौहृदामध्यवसायादिरहिताम् । कन्यया जरया पञ्चालान् शब्दादीन् अरिभिः रोगादिभिः तेषां तेषां प्रतिक्रियां मन्त्रौषधादिभिरपि कृतैर्न लेभे ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

कामानभीष्टभोजनादीन् यातयामानपि क्षुन्मान्द्यादिहेतोरित्यर्थः विगता आत्मनो गतिः पारलौकिकी ऐहिकः पुत्रादिस्नेहश्च यस्य सः स्नेहादिति च पाठः । आनिकामतः अनिच्छयापि ॥ ९ ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बुद्धिविमोहितस्य जीवस्य अन्तकाले जरादिनिमित्तकदेहत्यागपूर्वकं "यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् तं तमेवैति कौन्तेय ! सदा तद्भावभावित" इति श्रीमुखोक्तप्रकारेण स्मरणरूपदेहान्तरलाभं गुर्वनुग्रहलब्धभगवज्ज्ञानभक्त्यादिसाधनसंपत्त्या मुक्तिं च वर्णयति । सैनिकेत्यष्टाविंशेनाध्यायेन भयनाम्नः सैनिका आधयो व्याधयः दिष्टकारिणः प्राक्कर्मफलसाधकाः परमेश्वराज्ञाकारिणः प्रज्वारकालकन्याभ्यां सहेमामवनिं विचेरुः॥१॥

जरत्पन्नगो जीर्णप्राणस्तेन ॥ २ ॥ ३ ॥

द्वार्भिरिन्द्रियच्छिद्रैः ॥ ४ ॥ ५ ॥

कन्योपगूढो जराभिभूतः गन्धर्वैरहोरात्रैः यवनैराधिभिश्च हतैश्वर्योरुद्धचेष्टस्तत्प्रतिक्रियां न लेभे इतितृतीयेन सम्बन्धः ॥ ६ ॥

अनुगा इन्द्रियाणि अमात्यास्तदधिष्ठातृदेवाः तान् गतसौहृदामध्यवसायशून्याम् ॥ ७ ॥

पाञ्चालान् विषयान् अरिभिः अहोरात्राधिव्याधिरूपैः ॥ ८ ॥

कन्यया जरया यातयामान् गतसारानपि अभिलषन् पुरीमनिकामतः अनिच्छन्नपि हातुं प्रचक्रमे इति द्वयोरन्वयः ननु जीवात्मनः अनात्मभूतदेहेन्द्रियबुद्ध्यादिसङ्गमात्रेणैवं भूतदुःखावाप्तौ किंकारणमित्यत्राह । विगतात्मगतिस्नेह इति । विगत आत्मगतिस्नेहः आत्मनो जीवस्य गतिर्भगवत्पादपद्मं तद्विषयकोऽनुरागः यस्मात्सः ॥ ९ ॥ १० ॥

---

भाषाटीका ।

नारदजी बोले हे बर्हिष्मन् ! भय नामा के आज्ञा करने वाले जो सैनिक सो प्रज्वार काल कन्या के सहित इस पृथिवी में घूमने लगे ॥ १ ॥
हे नृप ! वह सब एक दिन बडे वेग से जाकर पृथिवी मे भयसे युक्त वृद्ध नाग से पालित पुरंजन की पुरी को घेरते भये ( जरादिक दुर्बल शरीर को घेर लेते हैं ) ॥ २ ॥

काल कन्या ने भी उस पुरंजन पुर को बलात्कार से भोग किया जिसके वस होने से पुरुष शीघ्रही निर्बल हो जाता है ॥ ३ ॥

उसके भोगते हुई उस पुरी को देख कर यवनों ने चारों तरफ से द्वारों में से प्रवेश होकर भंजन किया ( शरीर वृद्ध होने से रोग होते हैं ) ॥ ४ ॥

उस पुरी के पीडित होने से उसका अभिमानी पुरञ्जन कुटुम्बी होने से ममता से आकुल होकर नाना, प्रकार के सन्तापन कूं प्राप्त हुआ ( जीवदेह के अध्याससे दुखी होता है ) ॥ ५ ॥

कन्या से आलिङ्गित होने से गत श्री दीन विषयासक्त नष्ट बुद्धि हो गया तब यवनों ने उस के ऐश्वर्य को नष्ट कर दिया ॥ ६ ॥

पुरंजन ने देखा कि अपनी पुरी टूटगईहै पुत्र पौत्र भृत्य मन्त्री सब प्रतिकूलहैं आदर नहीं करते हैं भार्या स्नेह नहीं करती है ॥ ७ ॥

आत्मा को कन्या ने ग्रास करालियाहै पंचाल देशों को शत्रुओं ने घेरालियाहै तब राजा को बडी चिन्ता भई उसका उपाय कुछभी नहीं देखा ( शरीर वृद्धावस्था युक्त होनेसे अनेक दुःख होते हैं ) ॥ ८ ॥

बडा दुखित होकर काम कन्या के वस होकर हीन भोगनकी चाहना करने लगा आत्माके स्नेहको छोड कर स्त्री पुत्रनका स्नेहकरने लगा ॥ ९ ॥

गंधर्व गणोंसे आक्रान्त और काल कन्यासे मर्दित उस पुरीकूं इच्छा नही रहने पर राजाने छोडने का विचार किया [ शरीर दुखित होने से छोडनेकी इच्छा होती है ] ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स परिच्छदो भृत्यवर्गसहितः । कुटुम्बेन दीव्यतीति कौटु-

न शेके सोऽवितुं तत्र पुरुकृच्छ्रोरुवेपथुः ।
गन्तुमैच्छत्ततो वृक्षकोटरादिव सानलात् ॥ १४ ॥
शिथिलावयवो यर्हि गन्धर्वैर्हृतपौरुषः ।
यवनैररिभी राजन्नुपरुद्धो रुरोद ह ॥ १५ ॥
दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान् ।
स्वत्वावशिष्टं यत्किञ्चिद्गृहकोशपरिच्छदम् ॥ १६ ॥
अहं ममेति स्वीकृत्य गृहेषु कुमतिर्गृही ।
दध्यौ प्रमदया दीनो विप्रयोग उपस्थिते ॥ १७ ॥
लोकान्तरं गतवति मय्यनाथा कुटुम्बिनी ।
वर्तिष्यते कथं त्वेषा बालकाननुशोचती ॥ १८ ॥
न मय्यनाशिते भुङ्क्ते नास्नाते स्नाति मत्परा ।
मयि रुष्टे सुसन्त्रस्ता भर्त्सिते यतवाग्भयात् ॥ १९ ॥
प्रबोधयाति माऽविज्ञं व्युषिते शोककर्शिता ।
वर्त्मैतद्गृहमेधीयं वीरसूरपि नेष्याति ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

म्बिकः कुटुम्बिन्या सन्धिर्नात्र विवक्षितः । सान्वयः पुत्रादिसहितः ॥ १२ ॥

यवनैरुपरुद्धान्यायतनानि यस्य स पुरपालः ॥ १३ ॥

पुरु बहु कृच्छ्रं तेन उरुर्वेपथुर्यस्य वृक्षकोटरादिव सर्पः ॥ १४ ॥

कण्ठे उपरुद्धो रुरोद घुरघुरध्वानिं चकार ॥ १५ ॥

दुहित्रादीन्दध्यावित्युत्तरेणान्वयः । जामयोऽत्रस्नुषाः स्वत्वमात्रेणावशिष्टम् । भोगस्तु प्रागेवक्षीणाः ॥ १६ ॥ १७ ॥

ध्यानमेवाह । लोकान्तरमिति ॥ १८ ॥

अनाशितेऽभोजिते भर्त्सिते भर्त्सने कृते यतवाग्भवति ॥ १९ ॥

अविज्ञमविवेकिनं माम् । व्युषिते देशान्तरं गते गृहमेधीयं वर्त्म गृहधर्ममपि किं नेष्यत्यनुवर्तयिष्यति । युक्तमेतद् यतो वीरसूः पुत्रवती । किं वा मद्विरहमसहमाना मरिष्यत्येवेत्यर्थः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भयनाम्नो योऽग्रजो भ्राता प्रज्वारः स उपस्थितः पुरञ्जनपुरीमधिष्ठितः भ्रातुर्भयनाम्नः प्रियं कर्तुमिच्छया कृत्स्नां तां पुरीं ददाह प्रज्वाराख्योवैष्णवज्वरः शरीरं प्रविश्य भृशं तेप इत्यर्थः ॥ ११ ॥

तस्यां पुर्यां नितरां प्रज्वारेण तप्यमानायां भार्यासहितः भृत्यवर्गसहितश्च कुटुम्बेन सह दीव्यतीति कौटुम्बिकः कुटुम्बिन्या सह महिष्या सह सान्वयः पुत्रादिसहितः उपातप्यत ॥ १२ ॥

कालकन्यया पुर्यां ग्रस्तायां सत्यां यवनैरुपरुद्धान्यायत[illegible] यस्य सः पुरपालः प्रजागरः प्रज्वारेण संस्पृष्टः अन्वत[illegible] पुरपालः प्राणाः ॥ १३ ॥

पुरु बहु कृच्छ्रं दुःखं तेन उरुर्वेपथुर्यस्य पुरि इति पाठे [illegible] मुषितुमवस्थातुं न शशाक नाशक्नोत् किन्तु ततः पुर्या[illegible] सहिताद्वृक्षकोटरात्सर्प इव गन्तुमैच्छत् ॥ १४ ॥

यदा गन्धर्वैः शिथिलाः अवयवा यस्य हृतं पौरुषं [illegible] यस्य तदायं हे राजन्! यवनैरुपरुद्धः रुरोद व्याध्यादिभिर्निरुद्ध[illegible] घर्घरध्वानिं चकारेत्यर्थः ॥ १५ ॥

दुहित्रादीन् दध्यौ ध्यातवानित्युत्तरेणान्वयः दुहि[illegible] देहानुबन्धिचिन्ताभिप्रायकं जामयोऽत्र स्नुषाः ताश्च जा[illegible] दुहितॄणां पतयः पार्षदा भृत्याश्चेति द्वन्द्वः तान् स्वत्वमात्र[illegible] वशिष्टं भोगस्तु प्रागेव क्षीणाः यत्किञ्चिद्गृहादिरूपं वस्तु [illegible]

तच्चाहं ममाभिमानविषयं कृत्वा गृहेषु दारेषु कुमतिः कु[illegible] मतिर्यस्य आसक्तबुद्धिगृही पुरञ्जनः प्रमदया सह वि[illegible] विश्लेषे उपस्थिते प्रतीते सति दध्यौ बुद्ध्यात्मिकां प्रमदां वि[illegible] गमिष्यामि उत सहैवेति चिन्तामकरोदित्यर्थः ॥ १७ ॥

ध्यानमेवाह । मयि लोकान्तरं प्रति गतवति सति इयमनाथा [illegible] म्बिनी बालकान् प्रत्यनुशोचन्ती कथं वर्तिष्यते मय्यनाशितेऽ[illegible] जिते न भुङ्क्ते एवमुत्तरत्रापि भर्त्सिते भर्त्सने कृते भया[illegible] नियता वाग्यस्याः सा मौनं बिभर्तीत्यर्थः ॥ १८ ॥

अविज्ञमविवेकिनं मां प्रबोधयति विवेचयति व्युषिते दे[illegible] रङ्गते शोकेन कर्शिता गृहमेधीयं वर्त्म तत् गृहस्थधर्म[illegible] नेष्यत्यनुवर्तिष्यते युक्तमेतद्यतो वीरसूः पुत्रवती । किं वा म[illegible] रहमसहमाना मरिष्यति ॥ १९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दारकाः पुत्राः दारिका दुहितरश्च अपरायणाः न विद्यते त्पयनमाश्रयो येषां ते अपरायणाः मयि गते सति कथं जु- वर्तिष्यन्ते भिन्ना नौर्येषां ते पुरुषाः उदधौ समुद्रे इवेति अत्र लोकान्तरं गतवतीत्यनेन सर्वेन्द्रियपरिणामहेतुभूता जीवैकायत्ता बुद्धिर्लोकान्तरं गच्छता जीवेन सह गच्छति उतनेत्याशङ्कोत्था- पिता यस्मैतद्गृहमेधीयमित्यर्द्धेन सहैव गच्छतीत्युक्तं तथा कथं दारका इत्यनेन परिणामपरिणामितदनन्तबुद्धिवृत्तिकारणानीन्द्रि- याण्यपि किं सहैव गच्छन्तीति उत नेति संशय्य सहैव गच्छन्ती- त्युक्तं भवति। एतदेव कथासौन्दर्याय परोक्षमभिधीयते तथाच गीतं भगवता ।

मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयादिति ।

बुद्धेर्मनोवृत्तिविशेषमात्रत्वेन मनसः सह गमनकथनेन बुद्धेरपि गमनं गीतं भवति इति गम्यते ॥ २० ॥ २१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रज्वारः पुरीं ददाहेति शरीरे च ज्वरः प्रवृत्त इत्यर्थः भ्रातुर्मृत्युनाम्नो हितकरणेच्छया ॥ ११ ॥ १२ ॥

यवनैर्व्याधिभिरुपरुद्धमायतनं पत्तनं शरीरनाडीलक्षणं यस्य स तथा पुरपालः प्राणः अनुतापो जीवक्लेशं प्रेक्ष्य ॥ १३ ॥

सानलाद्गिवृताद् गृहबिलादिव ॥ १४ ॥ १५ ॥

अधुना कामिनां मरणव्यवस्थां दर्शयति । दुहितॄरिति । अत्र प्रवृत्तिमन्तरेण बाह्यदुहित्रादयोऽपि ग्रहीतुं शक्यन्ते ॥ १६ ॥

विप्रयोगे मरणलक्षणे प्रमदया बुद्ध्या अन्यया च ॥१७॥

लोकान्तरं गतवतीत्यादि कथालङ्कारः ॥ १८ ॥

अनशिते अभुक्ते भर्त्सिते भर्त्सने कृते यतवाक् तूष्णीं भावमा- श्रिता ॥ १९ ॥

व्युषितेऽन्यत्र स्थितेनेष्यत्यनुवर्तयिष्यति किम् ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दुहितॄरिति युग्मकम् । अहं ममेतिस्वीकृत्येति क्वचित् ॥ १६—१९ ॥

मा विज्ञमित्यत्र मां विज्ञमिति चित्सुखः ॥ २०—२६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रज्वारो विष्णुज्वरः ॥ ॥ ११ ॥

स पौरः सप्तधातुसहितः सपरिच्छदः सर्वेन्द्रियभृत्यवर्ग- सहितः कुटुम्बेन दीव्यतीति कौटुम्बिकः कुटुम्बिन्या बुद्ध्या सह सन्यमाव आर्यः सान्वयः पुत्रपौत्रादियुक्तः ॥ १२ ॥

पुरपालः प्रजागरः प्राणः ॥ १३ ॥

स पुरपालः अवितुं रक्षितुं वृक्षकोटरादिव सर्पः ॥ १४ ॥

रुरोद आसन्नमृत्युर्घुर्घुरध्वनिं चकार ॥ १५ ॥

यामयोऽत्र स्नुषाः। प्रमदया स्त्रिया सह विप्रयोगे उप- स्थित इति जीवस्य स्थूलशरीरभङ्गे बुद्ध्या विच्छेदाभावात् प्रमदेयं न पुरञ्जनी किन्तु संसारिणो जीवस्य सर्व्वेन्द्रियै- र्भोग्या ममतास्पदीभूता व्यावहारिक्येव भार्य्या व्याख्येया दुहित्रादयोऽप्यत्र तत्सम्बन्धिन्यो नरवध्यात्मपक्षीया व्याख्येयाः मरणकाले च जीवस्य स्त्रीपुत्रादीनामेव स्मरणं सम्भवति नतु बुद्धिविवेकादीनामिति केचिदाहुः। अन्येतु धर्म्मवती बुद्धिरेव पुरञ्जनीत्येव पूर्व्वं प्रस्तुतेत्यतो मृत्युसमये धर्म्मबुद्ध्या विच्छेदो बुद्ध्यन्तरेण संयोगः न मय्यनाश्रिते भुङ्क्ते इत्यादिकं तु सम्यग्बुद्धिविच्छेदात् पूर्व्वमेव यदुक्तं तदेवाग्रे वक्ष्यते तच्च ममा- धुनापि धर्म्माचरणे तृप्तिर्न जाता किं करोमि मरणमुपस्थित- मित्येतस्यैवार्थस्योत्प्रेक्षया विवरणं ज्ञेयमित्याचक्षते ॥ १६-१७-१८ ॥

अनाशिते अभोजिते भर्त्सिते भर्त्सनं कृतवति ॥ १९ ॥

मामविज्ञं व्युषिते प्रवासं गते सति । अपि किं नेष्यति अनुवर्त्तयिष्यति युक्तमेतत् यतो वीरसूः पुत्रवती किं या मद्वि- रहमसहमाना मरिष्यत्येवेत्यर्थः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

ददाहातपत् ॥ ११ ॥

कुटुम्बिनी बुद्धिस्तया सह ॥ १२ ॥ १३ ॥

वृक्षकोटरात् पक्षीव ॥ १४ ॥ १५ ॥

दुहित्रादीन् दध्यावित्यग्रिमेणान्वयः जामयः जामभार्याः स्वत्वमात्रेणावशिष्टं यद्यत् भोगस्तु प्रागेव क्षीणं ममत्वमात्रविषय- मित्यर्थः ॥ १६ ॥

गृहेषु गृहादिषु अहं ममेति स्वीकृत्य दध्यौ ॥ १७ ॥

ध्यानमेवाह । लोकान्तरं गतवतीत्यादिना । अनेन कथापक्षेऽपि न केवलं पुर्याः भार्यायाश्च वियोगः किन्तु देहवियोगोऽपीति द्योत्यते ॥ १८ ॥

अनाशित अभोजिते भर्त्सिते भर्त्सने कृते ॥ १९ ॥

मा मामविज्ञं प्रवोष्यति मयि व्युषिते देशान्तरं गते गृहमेधीयमेतद्धर्मं मार्गं नेष्यति किमनुवर्तयिष्यति ॥ २० ॥

---

भाषाटीका ।

भय नाम वाले का बड़ा भाई प्रज्वार नाम का है उस ने आकर अपने भाई के प्रीति से सम्पूर्ण पुरी को जला दिया ( ज्वर शरीर में दाह करता है ) ॥ ११ ॥

उस पुरी के जलने से अपनी सामग्री तथा पुरवासियों के सहित कुटुम्बिनी के सहित पुत्रादिकों के सहित सन्ताप करने लगा ( अर्थ तुल्य है ) ॥ १२ ॥

यवन ने सब स्थान को जब रोक लिया कालकन्या ने जब ग्रास कर लिया प्रज्वारने भी आक्रमण कर लिया तब पुरवासी राजा सन्ताप करने लगा ( रोगादि होने से पीड़ा होती है ) ॥ १३ ॥

बड़े कष्ट होने से कांपने लगा रक्षा भी नहीं करने सका उहांसे जाने भी नहीं सका जैसे कि अग्निवाले वृक्ष को कोटर में ॥ १४ ॥

जब शरीर के अवयवशिथिल हो गये तो गंधर्वों ने पौरुष को हर लिया तब यवन शत्रुओं ने जब घेर लिया तब रोदन करने गगा ( मरण से पहिले प्राण के कष्ट का कथन है ॥ १५ ॥

कथं नु दारका दीना दारकीर्वाऽपरायणाः ।
वर्तिष्यन्ते मयि गते भिन्ननाव इवोदधौ ॥ २१ ॥
एवं कृपणया बुद्ध्या शोचन्तमतदर्हणम् ।
ग्रहीतुं कृतधीरेनं भयनामाभ्यपद्यत ॥ २२ ॥
पशुवद्यवनैरेष नीयमानः स्वकं क्षयम् ।
अन्वद्रवन्ननुपथाः शोचन्तो भृशमातुराः ॥ २३ ॥
पुरीं विहायोपगत उपरुद्धो भुजङ्गमः ।
यदा तमेवानुपुरी विशीर्णा प्रकृतिङ्गता ॥ २४ ॥
विकृष्यमाणः प्रसभं यवनेन बलीयसा ।
नाविन्दत्तमसाविष्टः सखायं सुहृदं पुरः ॥ २५ ॥
तं यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना ।
कुठारैश्चिच्छिदुः क्रुद्धाः स्मरन्तो मीवमस्य तत् ॥ २६ ॥
अनन्तपारे तमसि मग्नो नष्टस्मृतिः समाः ।
शाश्वतीरनुभूयार्तिं प्रमदासङ्गदूषितः ॥ २७ ॥
तामेव मनसा गृह्णन् बभूव प्रमदोत्तमा ।
अनन्तरं विदर्भस्य राजसिंहस्य वेश्मनि ॥ २८ ॥
उपयेमे वीर्यपणां वैदर्भीं मलयध्वजः ।
युधि निर्जित्य राजन्यान् पाण्ड्यः परपुरञ्जयः ॥ २९ ॥
तस्यां स जनयाञ्चक्रे आत्मजामसितेक्षणाम् ।
यवीयसः सप्त सुतान् सप्तद्रविडभूभृतः ॥ ३० ॥

भाषाटीका ।

अपनी पुत्री पौत्र वहू जमाइ पार्षद और जो कुछ अवशिष्ट स्वत्व है घर खजाना इन पदार्थों मे अहन्ता ममता को स्वीकार करके कुटम्बी गृहस्थ होने से दुखित होकर वियोग के समय मे स्त्री के सहित शोच करने लगा ॥ १६ ॥ १७ ॥

हम जब लोकान्तर को चले जांय गे तब अनाथा हमारी कुटुंबिनी बालकों का सोच करती कैसे रहैगी ॥ १८ ॥

यह मेरे में तत्पर होकर मेरे न खाने से नहीं खाती है मेरे नहीं नहाने से नहीं नहाती है मेरे रोष होने से डरती है डराने से भय से चुप हो जाती है ॥ १९ ॥

मै भूलताहूं तब मेरेको समझाती है मै विदेश जाऊं तब शोचती है अब बीरोंकी माता होने परभी इस गृहस्थ धर्म को नहीं चला सकेगी [ देह नाश होते समय मे बुद्धिको मोह होता है ) ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

न विद्यते परमयनमाश्रयो येषां तेऽपरायणाः पुत्राः कन्या यद्वा पराश्रयाः कन्याः भिन्ना नौर्येषाम् ॥ २१ ॥

अतदर्हणं वस्तुतस्तस्य ब्रह्मत्वात् ॥ २२ ॥

प्रकृतिमेष यदा क्षयं स्थानं नीयमानस्तदानुपथाः प्राणाइन्द्रियाणि च । तथाच श्रुतिः । तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति ॥ २३ ॥

प्रकृतिं महाभूतात्मताम् ॥ २४ ॥

नाविन्दन्न सस्मार पुरः पूर्वं सखायं सन्तमीश्वरम् ॥ २५ ॥

अदयालुना काम्यकर्मसु ये संज्ञप्ता हताः । अमीवं क्रौर्यं वा ॥ २६ ॥

शाश्वतीः समा आर्तिमनुभूय ॥ २७ ॥

अन्तकाले तां भार्यामेव मनसा गृह्णन्स्मरन्ननन्तरं विदर्भस्य वेश्मनि प्रमदोत्तमा बभूव । अतः परमस्मिन् प्रकरणे ...
प्रकृतोपयोगि विवक्षितम् । स्त्रीध्यानेन स्त्रीत्वप्राप्तावपि ...

श्रीधरस्वामिकृतभावार्थदीपिका

ध्यानेन पूर्वादृष्टेन च धार्मिकाद्विदर्भाज्जन्माभूत् । धार्मिकसङ्गेन च विशुद्धस्य भागवतेन मलयध्वजेन सङ्गोऽभूत् । ततो विष्णुभक्तिस्ततो वैराग्यं ततस्तमेव भर्तृरूपं गुरुं पातिव्रत्यधर्मेण भजतां भगवत्प्रसादलब्धज्ञानेन मोक्ष इति । अन्यत्तु कथालङ्कारमात्रं तथापि किञ्चिद्वृत्तिसामान्येनेह योजयिष्यामः । विदर्भस्य विशिष्टदर्भोपलक्षितस्य कर्मठस्य राजसिंहस्य धर्मेण हि प्रजापालनेन यज्ञादिना च क्षात्रिया राजन्ते तेषु श्रेष्ठस्य वेश्मनि ॥ २८ ॥

मलयोपलक्षिते दक्षिणदेशे ध्वज इव दर्शनीयः सहि श्रीविष्णुभक्तप्रधानो देशः तत्र मुख्यो महाभागवत इत्यर्थः पण्डा निश्चयबुद्धिस्तामर्हतीति पाण्ड्यः स उपयेमे पुरञ्जनो भागवतसङ्गं प्राप्त इत्यर्थः ॥ २९ ॥

आत्मजां श्रीकृष्णसेवारुचिम् तत्सङ्गेन भगवद्धर्मे सुचिरभूदित्यर्थः असितस्य श्रीकृष्णस्येक्षणं यया ताम् यवीयसः सप्तसुतान् "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यमिति" भक्तिप्रकारान् सख्यात्मनिवेदनयोस्त्वं पदार्थज्ञानोत्तरकालत्वात्तस्य च भगवत्तैवोत्तरत्रोपदेक्ष्यमाणत्वादिदानीमनुत्पत्तेः सप्तेत्युक्तम् भगवद्धर्मरुच्या तच्छ्रवणकीर्तनादिकं जातमित्यर्थः द्रविडभूमिपालकान् द्रविडभूमिर्हि श्रवणादिभक्तिभिरेव सुरक्षितास्तीति प्रसिद्धम् ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं कृपणया बुद्ध्या शोचन्तमतदर्हणं शोकानर्हं वस्तुत अपहतपाप्मत्वादिगुणाष्टकविशिष्टत्वात् एवं पुरञ्जनं ग्रहीतुं पुराद्विश्लेषयितुं कृतधीर्निश्चितबुद्धिर्भयनामा मृत्युः प्राप्तः ॥ २२ ॥

यथा स्वकं स्वकीयकर्मानुगुणं स्थानं प्रति यवनैः पशुवन्नीयमानः तदानुपथाः प्राणा इन्द्रियाणि च शोचन्तः यवनैः पीडिता अत एवातुराः शोचन्तोऽन्वद्रवन्ननुसृत्य गतवन्तः तथा च श्रुतिः

> तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं
> सर्वे प्राणा अनूत्क्रामन्तीति ।

प्राणो ज्येष्ठः प्राणः सर्वे प्राणा इन्द्रियाणीत्यर्थः ॥ २३ ॥

यवनैरुपरुद्धः पुरीं स्थूलशरीरं तु विहायैव गतः भुजङ्गयद्दशमानं वृक्षकोटरं विहाय यथा भुजङ्गमो गच्छति तद्वदित्यर्थः यदा गतस्तदा तमेव तद्गमनानन्तरमेव पुरी विशीर्णा शिथिला सती प्रकृतिं महाभूतात्मतां गता प्राप्तवती कथापत्रं तु दारापत्यादयः सर्वे पुरञ्जनविश्लेषमसहमानास्तेनैव सह विनष्टाः अभूवन्पुरी च विनष्टाभूदित्यर्थः ॥ २४ ॥

वलीयसा यवनेन प्रसभं पुरः पुर्यां विकृष्यमाणः तमोज्ञानमाविष्टः सखायं स्वेन सहवर्तमानं सह वृत्तिर्हि सख्युर्धर्मः सुहृदं विपुलापराधत्वेऽपि किञ्चिदानुकूल्येन रिरक्षिषाबुद्धिमन्तं परमात्मानं नाविन्दन्नसस्मार ॥ २५ ॥

अदयालुना दयारहितेनानेन पुरञ्जनेन यज्ञे कर्मेन्द्रियव्यापाररूपे यज्ञे ये पशवः संज्ञप्ताः हिंसिताः ते पशवः आत्मवैशसं स्वविषयेकृतद्रोहं स्मरन्तः अत एव क्रुद्धाः कुठारसदृशैः शृङ्गैरेनं चिच्छिदुः ॥ २६ ॥

अनन्तपारेऽपारे तमसि नरके मग्नः अत एव गतविवेकः शाश्वतीः समाः सम्वत्सरान् । कालाध्वनोरत्यन्तसंयोग इति द्वितीया । आर्ति दुःखमनुभूय प्रमदासङ्गदूषितः प्रमदासङ्गेन दूषितचित्त इत्यर्थः प्रमदात्र देहानुबन्धिनी भार्या विवक्षिता नतु बुद्धिरूपा बुद्धिसङ्गस्यासंसारमनुवर्तमानत्वेन सर्वेषां सर्वदा स्त्रीजन्मापत्तेः ॥ २७ ॥

तां भार्यामेव मनसा गृह्णन्नन्तकाले स्मरन्ननन्तरं राजसिंहस्य विदर्भस्य वेश्मनि प्रमदोत्तमा बभूवेत्यन्वयः एवं तिर्यगादिरूपेण संसरतो जीवस्यादृष्टविशेषपरिपाकवशान्मनुष्यजन्मप्राप्तस्य तत्रापि जाग्रत्स्वप्नसुषुप्त्यवस्थासु दोषाननुकीर्त्य पुनर्दैवात्कदाचित्सञ्जातविवेकस्यापि प्रबलकर्मरूपप्रतिबन्धवशाद्रजस्तमःप्रचुरबुद्धिपारवश्येन देहदेहानुबन्धिविषयाहंममाभिमानग्रस्तस्य जरामरणाद्यवस्थासु दोषानभिधायेदानीं देहावसाने देहानुसम्बन्धिप्रमदास्मरणनिमित्तस्त्रीजन्मप्राप्तिं तत्रापि प्राक्तनकादाचित्कयादृच्छिकपुण्यवशात्सत्कुलप्रसूतिं ततो महाभागवतभर्तृसम्बन्धं तत्सेवाप्रकारं ततस्तेन तुष्टस्य भगवतः प्रसादाज्ज्ञानोदयञ्चाह । तत्र कथापक्षेऽपि विदर्भादिपदानां श्रौतपदार्थं अध्यात्मपक्षे तु विदर्भस्य विशिष्टं दर्भोपलक्षितं कर्म यस्य तस्य राजन्ते सत्कर्मानुष्ठानेनेति ते राजानः कर्मानुष्ठानपराः तेषां मध्ये सिंहस्य श्रेष्ठस्य वेश्मनि गृहे प्रमदा बभूव पुरञ्जनः कर्मविशेषेण विशिष्टकुले स्त्रीत्वं प्राप्त इत्यर्थः ॥ २८ ॥

तां वैदर्भीं विदर्भस्य दुहितरं वीर्यं भगवद्भक्तियोगानुष्ठानसामर्थ्यमेव पणः शुल्कबन्धनं यस्यास्तां भागवतमेव वृणयानीत्येवंसङ्कल्पवतीं मलयध्वजः मलयपर्वतोपलक्षितदक्षिणदेशः तत्र ध्वज इव दर्शनीयः स हि विष्णुभक्तिप्रधानो देशः तत्र मुख्यो भागवत इत्यर्थः तथा पण्डा बुद्धिर्निश्चयात्मिका तामर्हतीति पाण्ड्यः परस्य परमात्मनः पुरं पुरवद्वासस्थानं शरीरम् अथ "यदिदमस्मिन्ब्रह्मपुरम्" इति श्रुतेः तज्जयतीति पुरञ्जयः देहगुणाद्यजित इत्यर्थः युधि इन्द्रियजयरूपे युद्धे राजन्यान् जितेन्द्रियान्निर्जित्य जितेन्द्रियश्रेष्ठोऽभूदित्यर्थः उपयेमे यद्यप्यत्र "राज्ञो जातावेवेति वाच्यम्" इति जातौ नियमितोऽयं यत्प्रत्ययः तदन्तो राजन्यशब्दः क्षत्रियजातीयवचनस्तथाप्यत्र गौण्या वृत्त्या जितेन्द्रियपरः क्षत्रियजातीयो हि जयेन राजत इति जयगुणयोगाज्जितेन्द्रिये तस्य वृत्तेः संभवात् ॥ २९ ॥

स मलयध्वजस्तस्यां वैदर्भ्यामसिते श्रीकृष्णे ईक्षणं दृष्टिर्यया तां श्रीकृष्णसेवारुचिरूपामात्मजां सञ्जनयांचक्रे वैदर्भ्यां भागवतसङ्गेन भगवत्सेवारुचिरभूदित्यर्थः तथा यवीयसः आत्मजाया अनु जातान् सप्तसुतान् ।

> श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
> अर्चनं वन्दनं दास्यमित्येवं रूपान्

सख्यात्मनिवेदनयोस्तु भगवदनपायित्वतच्छेषतैकानुसन्धानरूपयोर्भगवतैव उत्तरत्रैव वक्ष्यमाणयोरिदानीमनुत्पत्तेः सप्तेत्युक्तं भगवद्धर्मरुच्या तच्छ्रवणकीर्तनादिकं जातमित्यर्थः द्रविडभूमिपालकान् द्रविडभूमिर्हि श्रवणादिभिरेव सुरक्षितास्तीति प्रसिद्धम् ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भिन्ना नौर्येषां ते भिन्ननावः ॥ २१ ॥

अतदर्हणां शोकायोग्यं मरणायोग्यामिति वा ॥ २२ ॥

स्वकं क्षयं कर्मणा शरीरान्तरमनुपथाः प्राणेन्द्रियादयः ॥ २३ ॥

यदा विहङ्गमो भुजङ्गमः पुरीं विहायोपगतस्तदा तमनुशरीरं च विशीर्णं प्रकृतिं पञ्चभूतात्मतां गतं पञ्चभूतेभ्य उत्पन्नं पुनस्तदवशेषमापेत्यर्थः ॥ २४ ॥

तम आविष्टः अज्ञाननिमित्तमोहं प्राप्तः सखायं परं सदा सह वर्तमानं परमात्मानं सुहृदमनिमित्तबन्धुं नाविदन्नास्मरदित्यन्वयः ॥ २५ ॥

अदयालुना क्रूरेण हिंसाकर्मरतेनेत्यर्थः तु शब्देन ब्रह्मार्पणबुद्ध्याऽननुष्ठानं सूचयति ॥ २६ ॥

अनन्तपारेऽवसानरहिते तमसि निरये प्रमदासङ्गेन विषयबुद्धिस्त्रीकारेण दूषितोऽशुद्धः ॥ २७ ॥

तां विषयबुद्धिमेव उत्तमा उद्गततमा प्रगतमदा मदरहिता बुद्धिरभूत् अत्र मरणजनने कथालङ्कारार्थे अध्यात्मार्थस्य मण्डूकप्लुतिन्यायेन पदाक्षिप्तस्यापि सम्भवात् वाच्यमपच्युतेति वचनात् ॥ २८ ॥

उपयमनं नाम स्वाधीनताकरणं वीर्यपणां ब्रह्मचर्यादिसाधनसाध्यां वैदर्भीं निशितां क उपयेमे मलं यापयतीति मलयः शान्तमनःसंस्कारः स एव ध्वजो यस्य स तथा हरिसेवादिना संस्कृतमना इत्यर्थः रूपकमात्रस्य लिङ्गव्यत्ययो न दोषाय "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति" इति श्रुतेः मनसोऽपि बुद्ध्यधीनकरणशक्तिरुपपत्तिमतीति बोद्धव्यं किं कृत्वा युधि यमनियमादिलक्षणे युद्धे राजन्यान् राजृदीप्ताविति धातोर्दीपकानीन्द्रियाणि वशीकृत्य चञ्चलस्य मनसो बुद्ध्यधीनकरणशक्तिः कथमिति तत्राह । पाण्ड्य इति । पण्डोधर्माज्ज्ञातं विवेकज्ञानं तेन सम्पन्नः तत्कुत इति तत्राह । परेति । परेषामिन्द्रियाणां विषयलक्षणं पुरं जयतीति आत्मानभिमतमार्गगन्तृत्वादिन्द्रियाणाम् परत्वं तदभावे सुहृत्त्वमेव मननान्मन उद्दिष्टमिति मनश्चेतनो वा धाह्यार्थस्त्वेवं पुरञ्जन पुरञ्जनीसङ्गेन तद्वासनादूषितो नाम्ना वैदर्भी प्रमदोत्तमाभूत् पुरञ्जनीतत्पुरञ्जनसङ्गातिशयेन वासना वशात्मना मलयध्वजः पुमानभूत् विषयसङ्गातिरेकलक्षणकारणात् पुंसः स्त्रीत्वं स्त्रियाः पुंस्त्वं च ततस्त्रीत्वमेवावशिष्यते विषयसङ्गातिरेको न कर्तव्य इति शिक्षणार्थं चेदमुक्तमितितात्पर्यं ज्ञातव्यम् ॥ २९ ॥

तस्यां बुद्धौ असितो नित्यमुक्तो हरिस्तस्येक्षणं यया भवत्यसितेक्षणात्मजा विष्णुभक्तिः विरागविनयदानधैर्यास्पर्धनविवेकदमाः सप्त संख्याताः बुद्धेर्जातत्वात् सुता इत्युच्यन्ते विष्णुभक्त्यनन्तरकाले स्पष्टत्वाद्यवीयस इति सप्तयाजय (१) वपावन्धो लक्ष्यते सवन्धो द्रविलः प्राप्तगर्भलक्षणगतिस्तस्य जीवस्य भूः स्थानं मुक्तिलक्षणं बिभ्रति उत्पाद्य ददतीति सप्तद्रविडभूभृतः डलयोरभेदः मृलाजरित्र इति दर्शनात् सप्तेन्द्रियाणि यानेनोच्यन्ते रागादिभ्यो मुक्ताः प्रकाशितरूपाः सुता इति उच्यन्ते ॥ ३० ॥

(१) इदंशोध्यं ।

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनन्तेति युग्मकम् ॥ २७ ॥

तामेवेति अध्यात्मपक्षे तादृशधर्ममयबुद्धितादात्म्यं प्राप्त इत्यर्थः । धार्मिकगृहे जन्म तथैवेति भावः ॥ २८ ॥

युधि वादे राजन्यान् कर्मकाण्डानुगतन्यायान् ॥ २९ ॥

आत्मजां श्रवणादिरुचिं सप्तेति सख्यमात्मनिवेदनपर्यन्तं काष्ठा प्राप्त्यनन्तरमेवाधिकारात् ॥ ३० ॥ ३१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

दारकीर्दारिक्यः कन्याः परायणाः वृद्धस्य ममाद्यं प्रतिक्षणसेवैकनिष्ठाः कथं वर्त्तिष्यते रुदित्वा रुदित्वैव ... ष्यन्तीत्यर्थः भिन्ना विदीर्णा नौर्येषां त इव ॥ २१ ॥

अतदर्हणां तस्य चैतन्यरूपत्वेन शोकानौचित्यात् । ... धार्मिकत्वेन भयकर्तृकग्रहणानर्हमित्यर्थः ॥ २२

ततश्चैष पशुवन्नीयमानोऽभूत् यवनैर्यमदूतैः तमनुशा... अद्रवन् अनुपथा अनुवर्त्तिनः तथाच श्रुतिः "तमनुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनुक्रामन्तं सर्वे प्राणा अनू... न्त" इति ॥ २३ ॥

यवनैरुपरुद्धः प्रकृतिं महाभूतात्मतां ॥ २४ ॥

तमसा अज्ञानेन नाविन्दत् सखायं पुरः सन्तमपीश्वरम् । ... ये संज्ञताः काम्यकर्मसु खड्गैश्छिन्नास्ते तं कुठारैः ... पराधम् ॥ २६ ॥

अनन्तपारे अन्तपारशून्ये तमसि दुःखे ईजे च बहुनि... रित्युक्तत्वात् बहुकालं स्वर्गसुखमप्यनुभूयेति ज्ञेयं ... प्राचीनबर्हिषो वैरस्यार्था स्त्रीस्मरणात् स्त्री बभूव ... पक्षे दुःखातिशयप्रयुक्तमूर्च्छावशादेव मृत्युकाले स... क्षणिक एवोक्तः वस्तुतस्तु स्वर्गभोगान्ते पुण्यशेषेण ... धर्मबुद्धिविशिष्ट एव धार्मिकगृहे जन्म लेभे इत्य... विवक्षितं स्त्रीत्वपुंस्त्वादिकं त्वविवक्षितमेव यद्वक्ष्यते "... पुमान् कश्चिन्न स्त्री कश्चिन्नोभयमन्दधीः देवो मनुष्यो... यथा कर्मगुणो" भव इति ॥ २७—२८ ॥

अथैवं जीवस्य यावद्भक्तिर्न भवेत्तावन्नैव संसारा... सा च भक्तिर्यादृच्छिकी यादृच्छिकसाधुसङ्गात् यादृ... साधुकृपया भवतीति दर्शयन् तज्जन्मनि तस्य सा... बभूवेत्याह । उपयेमे इति । आदरणीयत्वेन मलयतुल्येषु ... ध्वज इव श्रेष्ठः । उपयेमे कृपया शिष्यत्वेनाङ्गीचकार । ... पणामिति कृपालक्षणः स्वप्रभाव एवात्र हेतुर्नत्वन्यः ... यदुक्तं मद्भक्तिश्च यदृच्छयेति भवापवर्गो भ्रमतो यदा ... जनस्य तर्ह्यच्युत सत्समागम इति न्यायेन कस्मिंश्चि... जीवस्याकस्मादेव साधुसङ्गो भवेदिति विघाचितं ... विजित्य तदीयपापापराधकालकर्मादीन् निर्मूलीकृत्य ... पण्डदेशोद्भवः पक्षे सदसद्विवेचना पण्डा तामर्हतीति ... पण्ड्य एव पाण्ड्यः परपुरञ्जयः शत्रुपुरजेता पक्षे ... त्थसन्देहच्छेदी ॥ २९ ॥

असितेक्षणानाम्नीं कन्यां पक्षे असितस्य श्री... ईक्षणं यया तां श्रीकृष्णसेवारुचिमित्यर्थः श्रीगुरुकृपया ...

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

स्य श्रीकृष्णसेवारुचिरभूदित्यर्थः। यवीयसस्तदुत्तरकालभवान् श्रवणस्मरणकीर्त्तनपादसेवार्चनवन्दनदास्यरूपान्। सख्यात्मनिवेदनयोः प्रथमं दुष्करत्वादुत्तरत्र स्वत एव जनिष्यमाणत्वाच्च लक्ष्यः कीदृशान् द्रविडभूमिपालान् पक्षे द्रविडदेशे स्थानकाद्रि सर्वविजेतृत्वाद्भूभृतो नृपानिव विराजमानान् द्रविडदेशस्य श्रवणकीर्त्तनादिभक्तिप्रधानत्वात्॥ ३०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भिन्ना नौर्येषां ते भिन्ननावः उदधाविव दारकाः पुत्रादयः रिकाः दुहित्राद्याः कथं नु वर्तिष्यन्ते॥ २१॥

अतदर्हणं शोकानर्हमपि तस्य भगवदंशस्य शोकनिमित्ततद्देहगेहविलक्षणत्वात् तथापि कृपणया बुद्ध्या शोचन्तं यनामा मृत्युः यत्तु अतदर्हणं वस्तुतस्तस्य अज्ञत्वादिति तदकम् सर्वशास्त्रप्रसिद्धजीवत्वाज्ञत्वमायामोहितत्वादिधर्मवतो नित्यकत्वस्वानन्यबन्धविमोचकत्वसर्वज्ञत्वमायाधिपत्वसर्वात्मत्वसश्वरत्वादिस्वाभाविकधर्मवता सह स्वरूपेणैक्यासम्भवात् त्वमसीत्यादिवाक्यैस्तु जीवपरयोरंशांशिनोः स्वरूपभेदसहितुरभेदः प्रतिपादितः अन्यथा सर्वं खल्विदं ब्रह्मेत्यत्रापि जडात्मकस्य सर्वस्य स्वरूपतो ब्रह्माभिन्नत्वं स्यात् रज्जौ सर्पवत् ब्रह्मणि सर्वमध्यस्तमित्यङ्गीकारे तु बन्धमोक्षादिप्रतिपादकस्य सर्वस्य शास्त्रस्य वन्ध्यापुत्रोऽस्मीति वाक्यवत् अप्रामाणिकत्वं स्यादित्यलं विस्तरेण॥ २२॥

यवनैः आदयादिभिः अनुपथा इन्द्रियादयः अन्वद्रवन् तमुत्क्रामन्तं प्राणोऽनुत्क्रामति "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति" इति श्रुतेः॥ २३॥

उपरुद्धो भुजङ्गमः प्राणः यदा पुरीं विहायोपगतस्तदा तमेवानु पुरी विशीर्णा प्रकृतिं पञ्चभूतभावं गता प्राप्ता॥ २४॥

पुरः पुरोवर्तिनं सदा निकटस्थमपि सखायं सुहृदं सर्वहितकारिणं परमात्मानं नाविन्दत॥ २५॥

अदयालुना ये संज्ञप्ताः हतास्ते अस्य तदेवामीवं पापं स्मरन्तस्तं चिच्छिदुः॥ २६॥

अनन्तपारं तमसि विपुले नरके शाश्वतीः समाः बहूनि वर्षाणि मग्नः तत्र हेतुः प्रमदासङ्गदूषित इति कथापक्षे पुरीं भार्यां देहं च हित्वा नरके मग्नस्तत्र प्रमदा प्रसिद्धा भार्या तत्सङ्गदूषितस्तां हित्वा नरके मग्नः अध्यात्मपक्षे तु प्रमदा बुद्धिस्तस्याः मरणकाले त्यागस्यासम्भवात् प्रसिद्धभार्याध्यानात् प्रीत्यमाप्तेः वक्ष्यमाणत्वाच्च प्रसिद्धभार्याध्यानरूपबुद्धिवृत्तिं हित्वा नरके मग्नः यतस्तत्सङ्गदूषित इत्यर्थः आर्तिमनुभूय प्रमदोत्तमा बभूवेत्यग्रिमेण सम्बन्धः॥ २७॥

तामेवोभयपक्षेऽपि लोकप्रसिद्धां भार्यां मनसा गृह्णन् "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय! सदा तद्भावभावितः" इति श्रीमुखवचनाच्च प्रमदोत्तमा बभूव पूर्वदेहे बुद्धिसहायः यं यं भावं मरणकालेऽपि न विस्मरति तं तमेव जन्मान्तरेऽपि पुण्यापुण्यकर्मानुरूपं प्राप्नोतीति फलितोऽर्थः स्त्रीभावस्य पुन्नपुंसकदेवमनुष्यादिभावोपलक्षणत्वात् कथापक्षे विदर्भादिशब्दाः स्पष्टार्थाः अध्यात्मपक्षे विवक्षितेष्वर्थेषु कश्चित्कश्चिल्लीयन्ते विशिष्टानि दर्भाणि दर्भोपलक्षितानि कर्माणि यस्य स तथा तस्य धार्मिकस्य गृहे इत्यर्थः॥ २८॥

मलयोपलक्षिते सर्वभूमण्डलसारभूते भारते वर्षे ध्वज इव प्रसिद्धः हरिभक्तः पाण्ड्यः हेयोपादेयविवेकिनी बुद्धिः पण्डा तद्युक्तः परपुरञ्जयः परस्य विष्णोः पुरं वैकुण्ठं तद्भक्त्या जयतीति तथाभूतो यो गुरुः। वीर्यपणां पुण्यलभ्यां राजन्यान् निर्जित्य उपयेमे बुद्धिमोहितो जीवो देहाद्देहान्तरं गच्छन् स्त्र्यादिरूपं मुक्तिसाधनयोग्यं देहं हर्यनुग्रहात् प्राप्य भर्त्रादिरूपं श्रीकृष्णभक्तत्वादिमुक्तिसाधनप्रदं गुरुं कदाचित्प्राप्नोतीति फलितोऽर्थः॥ २९॥

असितस्य श्रीकृष्णस्य ईक्षणं यया तां श्रीकृष्णसेवारुचिम् यवीयसः कनिष्ठान् श्रीकृष्णश्रवणकीर्तनस्मरणपादसेवनार्चनवन्दनदास्याख्यान् सप्त सुतान् जनयाञ्चक्रे ते च सप्त द्रविडभूभृतः। सप्तद्रविडोपलक्षितभारतवर्षरूपभूमिपालाः भारते वर्षे श्रीकृष्णश्रवणादीनां प्रसिद्धेः भगवत्प्रसादविशेषलभ्यस्य सख्यस्य आत्मनिवेदनस्य च श्रवणाद्युत्तरभावित्वात् सप्तसुतानित्युक्तम् यत्र श्रवणकीर्तनयोः रुचिसाधनत्वेन तस्यान्तर्भावात् स्मरणाद्यात्मनिवेदनान्तान् सप्त जनयाञ्चक्रे इत्यर्थः अन्यथा गुरुरूपस्य भर्तुः सख्यात्मनिवेदनानुत्पादनेन अपूर्णसाधनोपदेष्टृत्वप्रसङ्गः स्यात्॥ ३०॥

---

भाषाटीका।

मेरे चलेजाने से पुत्र पुत्री दुखी होकर कैसे रहेंगे उनका कोई आश्रय नहीं है जैसे समुद्र में नाव के टूटने से होता है तैसे हो जांयगे॥ २१॥

इस प्रकार से यद्यपि शोचने लायक नहीं हैं तथापि शोच ताथा तब उसको पकडने को निश्चय करके भय नामक आ पहुंचा॥ २२॥

इस को पशुसरीका बांध कर जब यवन अपने घर को लेजाने लगे तब इसके अनुचर शोचते हुये इसके पीछे दौडे (यम दूत जब यमपुर को लेजातेहैं तब प्राण भी पीछे जाते हैं)॥ २३॥

पुरी का पालक सर्प जब गया तथा तब तिसके पीछेही पुरी नष्ट हो गई (प्राण के जाने से शरीर नष्ट होता है)॥ २४॥

बलवान् यवन ने जब अवरदस्ती खैंचा तब शोक युक्त होने पर अपने सखा को उसने नहीं देखा (जीव ईश्वर को भूल जाता है)॥ २५॥

जिन यज्ञ पशुओंको इसने मारा था निर्दय होकर वेई पशु अब इसको क्रुद्ध होकर इसकी हिंसा को, स्मरण करके इसको कुठारोंसे काटने लगे॥ २६॥

अति गम्भीर दुःखसागर में डूबकर बहुत वर्ष पर्यन्त दुःख भोगता रहा स्त्री के संगसे दूषित हो गया था॥ २७॥

उसी को मन में याद रखनेसे सुन्दर स्त्री होगया पीछे विदर्भ महाराजके घरमें ही स्त्रीजन्म पाया॥ २८॥

एकैकस्याभवत्तेषां राजन्नर्बुदमर्बुदम् ।
भोक्ष्यते यद्वंशधरैर्मही मन्वन्तरं परम् ॥ ३१ ॥
अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम् ।
यस्यां दृढच्युतो जात इध्मवाहात्मजो मुनिः ॥ ३२ ॥
विभज्य तनयेभ्यः क्ष्मां राजर्षिर्मलयध्वजः ।
आरिराधयिषुः कृष्णं स जगाम कुलाचलम् ॥ ३३ ॥
हित्वा गृहान् सुतान् भोगान् वैदर्भी मदिरेक्षणा ।
अन्वधावत पाण्ड्येशं ज्योत्स्नेव रजनीकरम् ॥ ३४ ॥
तत्र चन्द्रवसा नाम ताम्रपर्णी वटोदका ।
तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो मृजन् ॥ ३५ ॥
कन्दाष्टिभिर्मूलफलैः पुष्पपर्णैस्तृणोदकैः ।
वर्त्तमानः शनैर्गात्रकर्षणं तप आस्थितः ॥ ३६ ॥
शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये ।
सुखदुःखे इति द्वन्द्वान्यजयत्समदर्शनः ॥ ३७ ॥
तपसा विद्यया पक्वकषायो नियमैर्यमैः
युयुजे ब्रह्मण्यात्मानं विजिताक्षानिलाशयः ॥ ३८ ॥
आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थिरः ।
वासुदेवे भगवति नान्यद्वेदोद्वहन् रतिम् ॥ ३९ ॥
स व्यापकतयात्मानं व्यतिरिक्ततयात्मनि ।
विद्वान् स्वप्न इवामर्शसाक्षिणं विरराम ह ॥ ४० ॥

भाषाटीका ।

तब पाण्ड्यदेशका राजा मलयध्वज ने युद्ध मे राजों को जीत कर पराक्रम के मूल्य से इसे लेकर विवाह किया ॥ २९ ॥

उस मलयध्वज राजा ने उस वैदर्भी के मध्य मे एक कन्या सात पुत्र द्रविड़ के राजा उत्पन्न किये ( दक्षिण देशमेपरम भागवत का शिष्य हुआ तब भगवान् मे रुचि श्रवणादिक सात भक्ति ओंसे संपन्न होगया ) ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अर्बुदमिति श्रवणादीनां प्रत्येकमनेके प्रकारा अभवन्नित्यर्थः तदुक्तम् "भक्तियोगो बहुविधो मार्गैर्भामिनि ! भाव्यते" इति येषां वंशधरैः यतः प्रवृत्तैः सम्प्रदायभेदैः कृत्स्ना मही मन्वन्तरं ततः परं च भोक्ष्यते विद्याकामकर्मभ्योऽपि रक्षिष्यते ॥ ३१ ॥

अगस्त्यः अगानि निष्क्रियाणि गात्राणि स्त्यायति सङ्घातयतीत्यगस्त्यो मनः स प्राक्प्रथमजातां दुहितरं कृष्णसेवालक्षणामुपयेमे तस्य मनः कृष्णे दृढां रतिं बबन्धेत्यर्थः धृतानि शमदमादीनि व्रतानि यया तां रतिम् दृढेभ्यः सत्यलोकादिभोगेभ्योऽपि च्युतस्तद्रहितः कृष्णरताविहामुत्र भोगविरक्त इत्यर्थः स एवोपशमात्मकस्त्वान्मुनिः कथम्भूतः इध्मवाह[illegible] यस्य सः "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः [illegible] ब्रह्मनिष्ठम्" इत्यादिश्रुतिप्रसिद्धा समिद्धरणोपलक्षित[illegible] पसत्तिर्वैराग्यादभूदित्यर्थः नह्यविरक्तस्य गुरूपसत्तिः [illegible] कथापक्षे यथाश्रुतमेव ॥ ३२ ॥

क्ष्मां विभज्य तत्र श्रवणादिभक्तिभेदं व्यवस्थाप्य । [illegible] इदानीं पुरञ्जनस्य स्त्रीभावं प्राप्तस्य सर्वेषां [illegible] "पतिरेव गुरुः स्त्रीणाम्" इति वचनात्पतिसेवया गुरुशुश्रू[illegible] दर्शयितुमाह । हित्वेत्यादिना मनोदय इत्यन्तेन ग्रन्थेन । [illegible] तीति मदिरमीक्षणं यस्याः ॥ ३४ ॥

तत्र चन्द्रवसाख्या नद्यस्तासां पुण्यैः सलिलैरुभयत्र[illegible] आत्मनो मलं क्षालयंस्तप आस्थित इत्युत्तरेणान्वयः ॥ [illegible] अस्यते भूमौ क्षिप्यत इत्यष्टिर्बीजम् ॥ ३६ ॥ ३७ ॥

विद्ययोपासनया पक्वकषायो दग्धकामादिवासन[illegible] आत्मनो ब्रह्मतां भावयामास अक्षाणीन्द्रियाणि अनिल[illegible] आशयश्चित्तम् विजिता अक्षादयो येन ॥ ३८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

आस्तेस्म वर्षशतमिति ज्ञानस्य दुःसाधनतां दर्शयति । अत एव हरौ भक्तिं कृतवानित्याह । वासुदेवे रतिमुद्वहन्नन्यद्देहादिकं न वेद ॥ ३९ ॥

स एवं वर्तमान आत्मन्यात्मानं विद्वानन्यस्मादुपरराम कथम् विद्वान् व्यतिरिक्ततया देहादिव्यतिरिक्तत्वेन कुतः व्यापकतया देहादिप्रकाशकत्वेन ननु देहाद्याकारो विमर्शः एतत्प्रकाशयति न तु निराकार आत्मा अत आह । आमर्शस्यापि साक्षिणम् अयं भावः आमर्शो नामान्तःकरणवृत्तिः सा च जडत्वादात्मप्रकाश्यैवेति यथा स्वप्ने ममेदं शिरश्छिन्नमित्यादिप्रतीतौ तद्व्यतिरिक्तमात्मानं वेत्ति तद्वत् ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हेराजन् ! तेषां पुत्राणामेकैकस्यार्बुदमर्बुदं पुत्रा अभवन् श्रवणकीर्तनादीनां प्रत्येकमनेकप्रकारा अभवन्नित्यर्थः येषां वंशधरैर्यतः प्रसूतैः सम्प्रदायभेदैर्मन्वन्तरमतः परं च मही भोक्ष्यते ह्यनुभूयते श्रवणकीर्तनादिसम्प्रदायभेदैर्मही व्याप्ता इत्यर्थः ॥ ३१ ॥

अगस्त्योपलक्षितो मुमुक्षुर्दृढव्रतमव्यभिचारिणीं दुहितरं भगवत्सेवारूप्यात्मिकामुपयेमे स्वीकृतवान् दुहितरं विशिनष्टि । यस्यां दुरितरिदृध्मवाहात्मजःइध्मवाहः समित्पाणिः तेन तत्पूर्वकगुरूपसत्तिर्लक्ष्यते 'गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुतिप्रसिद्धसमिद्वाहपूर्वकगुरूपसादाज्जातो ब्रह्मोपदेशात्मको मुनिः उपदिष्टस्यार्थस्य मननप्रचुरत्वान्मुनिः दृढं व्रतं श्रवणोपयुक्तशमदमात्मकं व्रतं यस्य सः "प्रशान्तचित्ताय शमान्विताय" इति श्रुतेः उपासनोपयुक्तशमादीनां श्रवणकालेऽभावाच्च जातः बभूव ॥ ३२ ॥

तनयेभ्यः श्रवणकीर्तनादिभ्यः पुत्रेभ्यः क्ष्मां स्वोपजीव्यां भगवद्भक्त्यात्मिकां पृथ्वीं विभज्य श्रवणकीर्तनादिसाध्यामनुसन्धाय स मलयध्वजः कृष्णमाराधयितुमिच्छुः कुलाचलं मलयपर्वतं प्रतिजगाम गतः ॥ ३३ ॥

गुरूपसत्तिपूर्वकशमादियुक्तश्रवणमननादिपूर्विकां श्रवणकीर्तनादिसाध्यं भगवत्सेवारूपं वैदर्भ्यांमुत्पाद्य तया सह भगवन्तमाराधयितुं विविक्तं पुण्यदेशं ययावित्युक्तमथ मलयध्वजस्य महाभागवतस्याष्टाङ्गयुक्तभगवद्भक्तियोगानुष्ठानप्रकारं वैदर्भ्याः पत्युः परिचर्याप्रकारं चाह । हित्वेत्यादिना मर्मादश्च इत्यन्तेन ग्रन्थेन मदिरं भगवत्सेवाहर्षरूपमदिरेक्षणां ज्ञानं यस्याः सा वैदर्भी सुतान् सुखप्रदान् गृहान् सुखशब्दस्तत्साधनेषूपचारात्प्रयुक्तः अत एव पुंस्त्वं त्यक्त्वा पाण्ड्येशं मलयध्वजमन्वधावतानुसृत्य गतवती यथा रजनीकरं चन्द्रं ज्योत्स्ना चन्द्रिका ॥ ३४ ॥

तत्र कुलाचले चन्द्रवसा ताम्रपर्णी प्रसिद्धा नदी तस्याः पुण्यैः सलिलैरात्मनः स्वस्योभयमान्तर्बाह्यं च मलं मृजन् स्नानपानादिभिः शोधयन् तप आस्थित इत्युत्तरेणान्वयः ॥ ३५ ॥

कन्दाष्टयः कन्दबीजानि कन्दाष्टन्याद्भिभिः पूर्वपूर्वाभावे उत्तरोत्तरैर्वर्तमानः देहधारणं कुर्वाणः पश्चाच्छनैः गात्रकर्षणं शरीरशोषणं तप अनशनतप आस्थित इत्यर्थः ॥ ३६ ॥

ततः समदर्शनः शीतोष्णादिनिमित्तचित्तविकाररहितः शीतोष्णादिद्वन्द्वान्यजयत् ॥ ३७ ॥

तपसा कर्मयोगेन विद्यया ज्ञानयोगेन च प्रक्षः निरस्तः कषायः धातुरागवद्दुनिवर्त्यं पुण्यापुण्यात्मकं पापं यस्य स यमैर्नियमैश्च विजितान्यक्षाणीन्द्रियाण्ययनिलः प्राणः आशयोऽन्तःकरणं च येन स ब्रह्मणा परमात्मनात्मानं प्रत्यगात्मानं युयुजे अधिकरणस्यैव करणत्वविवक्षया तृतीया ब्रह्मण्यात्मानं युयुजे ब्रह्मात्मकं स्वात्मानमनुसंहितवानित्यर्थः ॥ ३८ ॥

स्थाणुरिवैकत्र देशे दिव्यं वर्षशतं निश्चल आस्ते उपविष्टवान् भगवति वासुदेवे रतिमनुरागात्मिकां भक्तिमुद्वहन् कुर्वन्नन्यच्छरीरादिकं न वेद न सस्मार ॥ ३९ ॥

स मलयध्वजः साक्षाद्द्रष्टारमात्मानं परमात्मानमात्मनि जीवात्मानं व्यापकतया विलक्षणतया व्यापकत्वरूपवैलक्षण्येनेत्यर्थः विद्वान्स्वप्न इवामृश्य स्वप्न इवानित्यं देहवृत्तान्तमामृश्य तस्माद्विरराम केवलपरमात्मानुसन्धानपरोऽभूदित्यर्थः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अर्बुदमर्बुदमित्यनेन सत्यो वृत्तयो गृह्यन्ते मही शास्त्रविरुद्धविषयलक्षणामन्वन्तरं मनुष्यजीवनावधिपरं शतवर्षं प्रारब्धपुण्यवशाद् बुद्ध्यावरणादिभिः प्राणैरिन्द्रियैरेव विषयान् भुङ्क्त इत्यर्थः ॥ ३१ ॥

"स्त्यै ष्ट्यै शब्दसङ्घात,, इति धातोः । अगं भगवन्तं स्त्यायति शब्दसमूहेन स्तुतिं करोतीत्यगस्त्यो भक्तः प्राश्रं पुरातनं श्रीनारायणं दोग्धीति दुहिता भक्तिस्तामुपयेमे संसारनिवर्तने शक्तिमत्तयाचलामकरोदित्यर्थः कीदृशीं ब्रह्मचर्यादिव्रतसाध्यां दृढं च्युतः पुत्रादिस्नेहो यस्मात्स दृढच्युतः पूर्वस्माद्विरागो दृढतरोऽभूदित्यर्थः इध्मवासो गुरुकुलवास एवात्मजो यस्य स तथा वैराग्यादेव गुरुकुलवासो भवति "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति श्रुतेः सौम्येमाः समिध आहरेति च ॥ ३२ ॥

वैराग्यादिसम्पत्त्या राजत इति राजा विवेकित्वादृषिः राजा चासावृषिश्चेति राजर्षिः वैराग्यविवेकज्ञानसम्पन्नः शुद्धवासनाक्तिः पुरुषस्तनयस्थानीयेभ्यो विरागादिभ्य इन्द्रियेभ्यो वा क्ष्मां शास्त्रलक्षणां भोग्यलक्षणां वा विभज्येदं श्रोतव्यं नेदमिति विविच्यायं विषयः सेवनीयो नायमिति कुलाचलं निश्चलं वासार्थं गुरुकुलं जगाम वैराग्यादिगुणसंपन्नः शरीरयात्रानिर्वाहकविषयभोगी गुरुकुलसन्निधिमवात्सीदित्यर्थः कृष्णं पूर्णानन्दमाराध्यापरोक्षीकर्तुकाम इत्यर्थः ॥ ३३ ॥

मदिरेक्षितां रातीति मदिरं तादृशमीक्षणं ज्ञानं यस्याम् सा तथा शुद्धज्ञाना विषयानुषङ्गं विहाय तदनुसारिणी बभूवेति पाण्ड्येशमन्वपद्यतेत्यभिप्रायः अत्र सुतशब्देन रागादयो लक्ष्यन्ते तान्विहायेत्यर्थः मुक्तावपि शुद्धात्मनो दाढ्यम नास्तीति दर्शयितुं ज्योत्स्नेवेति ॥ ३४ ॥

तत्र गुरुकुलवासे चन्द्रवदाह्लादकं निर्मलं च वदति ज्ञापयतीति वेदान्तशास्त्रं यथौ चन्द्रमदेतिपाठे वसार्थान्तसूत्रश्कारस्य मकारः चन्द्रबिम्बं विषयीकरोतीति वा नामलोकप्रसिद्धं "पर्ण आच्छादन,, इति धातोः ताम्रं रजस्तमश्च पर्णयत्याच्छादयति परिभवतीति ताम्रपर्णी वेदार्थव्याख्या तथामरश्चात्र तत्र प्रदा पृणातीति प्रकाशलक्षणं दानं करोतीति वा "पृण दान,, इतिधातोः नदीयत्र्यदनशील दयाशृङ्शाहात श्रोतृ

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यामुदकवदाह्लादजननाद्वा वरोदका तस्या व्याख्यायाः प्रकाशितैः पुण्यैः शोधकैः सलिलैर्युक्तिलक्षणैरात्मनोऽन्तःकरणस्य उभयत्र प्रतिवादिनिमित्तबाह्यं दुर्युक्तिमलं संशयाद्यन्तरमलं मृजन् शोधयन् ॥ ३५ ॥

"मूल प्रतिष्ठायाम्" इतिधातोः मूलं जगदाधारं ब्रह्म फलन्ति निष्पादयन्तीति मूलफलानि तैः कं सुखं ददातीति कन्दं मिताशनं तदादिर्येषां मितस्वापादीनां तानि कन्दादीनि योगसाधनानि तैः ।

नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नत इतिस्मृतेः

पुष्पवन्मृदुलैः पर्णैराच्छादनैरुन्नतमकं दुःखं येभ्यस्तान्युदकानि तृणानि आस्तरणानि तैरेतैश्च वर्तमानः शरीरयात्राङ्कुर्वाणः गं ह्ना १ नङ्गमयतीति गात्रमज्ञानं कर्शयत्यल्पीकरोतीतिगात्रकर्शनं "तप आलोचन" इति धातोरालोचनं मननमनुतिष्ठन्॥३६॥

शीतोष्णादीनि द्वन्द्वान्यजयत सहमानो वर्तत इत्यन्वयः शीतोष्णादिशब्दैः कामादयो लक्ष्यन्ते इति ज्ञातव्यमुभयेषां शरीराधिकरणत्वात् ॥ ३७ ॥

तपसा मननलक्षणेन जातया विद्यया ज्ञानेन नियमादिभिश्च पक्वकषायः शिथिलीकृतपाप आत्मानमन्तःकरणं ब्रह्मणा युयुजे विषयेभ्य आनीय श्रीनारायणेन सह वर्तमानमकरोत् तदेकनिष्ठमकुरुतेत्यर्थः यद्वात्मानमन्तर्यामिरूपं ब्रह्मणा व्याप्तिरूपेण युयुजे एकत्वेन ददर्शेत्यर्थः विजिताक्षानिलाशयो वशीकृतेन्द्रियप्राणान्तःकरणः आशयोऽभिलाषो वा ॥ ३८ ॥

स्थाणुरिवस्थित एकत्र गुरुकुले श्रुतमतः शास्त्रे बुद्धिप्रसादजनके विविक्तस्थाने वा दिव्यं वर्षशतं बहुकालमुपासीन आस्त इत्यन्वयः मुक्तिसाधनं भक्तिरेव नान्यदिति तस्या अतिशय फलमाह । वासुदेव इति । उपासको वासुदेवे भगवति वेदान्तविचारनिर्णीतगुणरत्नाकरे हरावुपासनालक्षणां रतिमुद्वहन् कुर्वन्नन्यत्स्वतन्त्रं वस्तु न वेद किन्तु सर्वं तदधीनमेव ज्ञातवानित्यर्थः ॥ ३९ ॥

ननु ब्रह्मव्यतिरिक्तस्य वस्तुनोऽभावादेकमेवाद्वितीयमिति श्रुतेरेतदेव नान्यद्वेदेति प्रतीत एवार्थः किं न स्यादिति तत्राह । सव्यापकतयेति । स आमृश्य विचार्यात्मनि जीवे स्थितं साक्षिणं "स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति„ इति श्रुतेः । साक्षात् द्रष्टृत्वेन वर्तमानं स्वप्ने यथा परतन्त्रतया जीवं पश्यति तथा अन्यदपीति विद्वांस्तथात्मानं, परमात्मानम् व्यापकतया सर्वव्यापित्वेन चेतनाचेतनात्मकजगद्व्यतिरिक्ततया च विद्वान् विरराम संसाराद्विरक्तो जीवन्मुक्तावस्थामापेत्यन्वयः यद्वात्मानं व्यापकतयात्मनि जीवे व्यतिरिक्त तथा च विद्वान् स्वप्न इव स्वतन्त्रं साक्षिणं जीवं परतन्त्रमामृश्य निश्चित्य विररामेति हेत्यनेन जीवस्यास्वातन्त्र्ये हरेस्तदन्यत्वे ।

यतः स्वप्नो न स्वातन्त्र्यस्तनस्तद्दर्शकः परः ।
जीवादन्यस्तु विज्ञेयः स विष्णुरयथार्थताम् ।

इति प्रसिद्धिः सूच्यते ॥ ४० ॥

---

१ गंधानमश्नाति न घ्रातीति गात्रमितिपाठः सम्यक् ।

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अगस्त्योऽपि तत्रस्थोऽपि महाभागवतस्तत्तुल्योऽन्यो कश्चित् प्राक् प्रथमजां दुहितरं कृष्णसेवारति स्वीकृतवान् । स्वसम्मतत्वेनानुमोदितवानित्यर्थः । धृतानि … मादीनि व्रतानि यया तां रतिं यस्यां तत्स्वीकृतायां … विघ्नसम्भावनारहितोऽसौ च्योततीति च्युतः सर्वेन्द्रि… चकश्च यः स भक्तियोगो जातः दृढत्वे हेतुः मुनिमन… इत्यर्थः । ततश्च इध्मवाहः शिष्यीभूता वैष्णवा एव बहवः आ… सहाया यत्र तादृशोऽभूत् ॥ ३२ ॥

आरिराधयिषुः कृष्णमित्युपरिष्टादस्य तपो ध्यानाभ्यास… श्रीपृथुवदेव व्याख्येयं कुलाचलं मलयम् ॥ ३३ ॥

मदयतीति मदिरे श्रीभगवद्रूपे ईक्षणं यस्याः पावके… गुरावीश्वरभावेनेत्यर्थः ॥ ३४ ॥

तत्रेति युग्मकम् । चन्द्रवटं नामेति चित्सुखः कन्दादि… ति चित्सुखपुण्यारण्यौ ॥ ३५—३६ ॥ ३७ ॥

आत्मानं शुद्धजीवं । ब्रह्मणि सर्वाश्रये भगवति युयुजे … काश्रयत्वेन सस्मार । सूर्यकाश्रयत्वे रश्मिपरमाणुमिव ॥ … तथा स्मरणेन च तस्मिन् रतिरव्यवच्छिन्ना जाते… आस्त इति ॥ ३९ ॥

ततश्च सर्ववैलक्षण्येन भगवद्विज्ञानं जातमित्याह । स … आत्मनि शुद्धजीवेऽधिष्ठाने आत्मानं तदधिष्ठातारं परमात्मानं … व्यापकव्यतिरिक्तस्वरूपतया च विद्वान् जानन् । तदर्वाक्ते… रराम । व्यापकत्वेन व्यतिरिक्तत्वेन दृष्टान्तः । स्वप्ने तत्र… प्रपञ्चतद्द्रष्टारमिवेति आमर्शेत्यत्र आमृश्येति सम्बन्धोक्तिः ॥ …

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तेषामेकैकस्यार्बुदमर्बुदमिति पुत्रपौत्रादिभेदान् एवं … णादीनां प्रत्येकं नामलीलादिभेदैर्नामादीनाञ्च प्रत्येकम… भेदैस्तेषामपि दास्यसख्याद्यभिरुचितत्त्वभेदैरित्येवमसंख्य… प्रकारा इत्यर्थः । यदुक्तं "भक्तियोगो बहुविधो मार्गैर्भामि… भाव्यत" इति । येषां वंशधरैर्यतः प्रवृत्तैः सम्प्रदायभेदैः । इ… महीं मन्वन्तरं ततः परं च भोक्ष्यते अविद्याकामकर्म… रक्षिष्यते ॥ ३१ ॥

प्राग्दुहितरं प्रथमजातां दुहितरमगस्त्य उपयेमे … अगानि स्वतोगत्यसमर्थानीन्द्रियाणि स्थापयति सह… स्वेन मिलिती करोमीत्यगस्त्यो मनः स कृष्णसेवारुचि स्वी… दृढानि दयाक्षमादीनि व्रतानि यस्यां यतो वा महत्… जीवस्य मनः कृष्णसेवासक्तं बभूवेत्यर्थः यस्यामसितेक्ष… दृढेभ्यः सत्यलोकादिभ्योऽपि च्युतस्तद्रहितः इहामुत्रभोगे वि… जात इत्यर्थः । यद्वा दृढेभ्यो ज्ञानादिभ्यस्तत्साध्येभ्यो मो… भ्यश्च च्युतः मनसः कृष्णसेवारुच्यैकतानत्वादन्यसाधन… स्पृहाराहित्यं जातमित्यर्थः कथं भूतः इध्मवाह आत्मजो … सः "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रो… ब्रह्मनिष्ठम्"इत्यादि श्रुतिप्रसिद्धा समिद्वहनोपलक्षिता गुरु… रभूदित्यर्थः । कयापक्षे अगस्त्यस्य पुत्रो दृढच्युतः तस्य … इध्मवाह इति मलयध्वजस्य कन्यावंश उक्तः ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

क्ष्मां विभज्य तत्र तत्र श्रवणादिभक्तिभेदं प्रवर्तयेत्यर्थः । कुलाचलमेकान्तस्थलं भक्तिप्रदं वेङ्कटादिपर्वतं वा ॥ ३३ ॥

सुतान् हित्वेति पतिव्रता पत्युरिव गुरोः सेवायां प्रवृत्तः शिष्यः श्रवणकीर्त्तनादीन्यपि भोगान् तत्तुल्यान् प्रेमानन्दानपि गृहान् तदुचितविविक्तस्थलमपि नैवापेक्षेत श्रीगुरुसेवयैव सुखेन सर्वसाध्यसिद्ध्यर्थमित्युपदेशो व्यञ्जितः माद्यति हृष्यतीति मत् इरा वाणी हृष्यन्त्यां वाण्यां वेदलक्षणायामेव ईक्षणं यस्याः । गुरुसेवाया एव वेदेन सर्वाधिक्यस्योक्तत्वादित्यर्थः मदयतीति मदिरं श्रीभगवद्रूपं तत्रेक्षणं यस्या इति सन्दर्भः । कथापक्षे तु मदिरा ईक्षणयोर्यस्याः सा परमतरुणयपीत्यर्थः ॥ ३४ ॥ ३५ ॥

उभयत्र अन्तर्बहिश्चात्मनो मलं क्षालयंस्तप आस्थितः तस्य तपश्चर्यां पृथुवदत्युत्कण्ठासूचकमेव व्याख्येयम् ॥ ३६ ॥ ३७ ॥

ब्रह्मणि उत्तरश्लोकस्पष्टीभूतार्थे वासुदेवे आत्मानं मनः ॥ ३८ ॥

तादृशस्मरणभक्त्या भगवति रतिरव्यवच्छिन्ना जातेत्याह । आस्त इति ॥ ३९ ॥

तादृशरत्या च सर्वत्र भगवत्स्फूर्त्तिरभूदित्याह । स इति । व्यापकतया जातरतित्वेन सर्वास्वेव दिक्षु स्फुरद्ब्रह्मरूपतया विद्वान् जानन् तदप्यात्मनि स्वस्मिन् व्यतिरिक्ततया वियुक्तत्वेनैव जानन् प्रेमोत्कण्ठातापेन विरराम मूर्च्छां प्रापेत्यर्थः । विरहोत्थस्फूर्त्तिजनितभगवद्दर्शनेन विरहो न शाम्यतीत्यत्र दृष्टान्तः स्वप्न इव जानन् । नहि स्वप्ने भुक्तेनौदनादिना स्वप्नोत्थितस्य जनस्य क्षुधा शाम्यतीत्यर्थः । ननु स्फूर्त्तौ किं प्रमाणमित्यतो विशिनष्टि आमर्शो नामान्तःकरणवृत्तिः स एव साक्षी ननु लोचनं यत्र तम् । अन्तः करणवृत्तीनां विरहसन्तापानपगमात् लोचनाभ्यां तद्दर्शनमपि तत्र स्फूर्त्तिजनितमेवेत्यनुभवादिति भावः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेषां श्रवणादीनामेकैकस्य अर्बुदमर्बुदमभवन् बहवो भेदा अभवन्नित्यर्थः यद्येषां वंशधरैः पुत्रपौत्रैर्मन्वन्तरम् ततोऽपि परं सर्वदेत्यर्थः मही भोक्ष्यते अधर्मतो रक्षिष्यते ॥ ३१ ॥

प्रागुदितरं श्रीकृष्णसेवारुचिं धृतव्रतां धृतं कृष्णप्रावण्यरूपं व्रतं यया ताम् अङ्गानि स्थापयति चालयतीत्यगस्त्यो जीवान्तःकरणं कथंभूतः मुनिर्यन्ता सारार्थावगन्ता उपयेमे स्वीकृतवान् यस्याम् "स गुरुमेवाभिगच्छेत् समित्पाणिः" इति श्रुतेरिध्मवाहो मुमुक्षुस्तस्य आत्मजः आत्मजवत् हित इत्यर्थः यतो दृढच्युतः दृढा प्रतिरोहितामुष्मिकभोगवासना च्युता यतः स विरागो जातः ॥ ३२ ॥

मलयध्वजो वैदर्भ्यां गुरुरूपः पतिः क्ष्मां तनयेभ्यो विभज्य जगत्यां श्रीकृष्णश्रवणादीन्यवस्थाप्य कुलाचलं कुलं श्रीकृष्णभजनोपकरणसमूहोऽचलं सुदृढं यत्र तदेकान्तं श्रीकृष्णाराधनस्थानम् जगाम ॥ ३३ ॥

अथ पुरञ्जनस्य स्त्रीध्यानात्स्त्रीत्वं प्राप्तस्य विषयेभ्यो विरक्तस्य पतिरूपगुरुभार्क्ति प्रपञ्चयति । हित्वेत्यादिना । मदयतीति मदिरमितररागविस्मारणमीक्षणं यस्याः सा ॥ ३४ ॥



तत्र मलयध्वज इति शेषः श्रीकृष्णाराधनस्थाने चन्द्रमसाद्युपलक्षिताः भरतखण्डस्था या नद्यस्तासां पुण्यैः सलिलैरुभयत्रान्तर्बहिश्च आत्मनो मलं मृजन् तप आस्थित इत्युत्तरेणान्वयः चन्द्रमसादि नदीविशेषोक्तिः ॥ ३५—३६—३७ ॥

पक्का भर्जिताः कषायाः कामादिवासना यस्य सः धिजितान्यक्षाणीन्द्रियाणि अनिलः प्राणः आशयो मनश्च येन सः ॥ ३८ ॥

स्थाणुरिव स्थिरो निश्चलः एकत्र दिव्यं वर्षशतमास्ते उपविष्टवान् वासुदेवे रतिमुद्वहन् अन्यत् न वेद दिव्यं वर्षशतमित्यनेन गार्हस्थ्यं परित्यज्य श्रीकृष्णाराधने स्वजीवनकालं योजितवानित्यर्थः अन्यत्र वेदेत्यनेन समाधिदार्ढ्यमुक्तम् ॥ ३९ ॥

आत्मानात्मपरमात्मपदार्थानां मध्ये परमात्मानं रतिविषयत्वेन वेदेत्युक्तमथात्मानं ज्ञातृत्वेन अनात्मानं देहादिकमनित्यत्वेन जानन् अनात्मतो विरक्तोऽभूदित्याह । व्यापकतयेति । स्वप्ने अमर्षः अन्तःकरणवृत्तिविशेषस्तत्साक्षिणं यथा अमर्षव्यतिरिक्ततया जानाति तथा आत्मनि देहे व्यतिरिक्ततया देहभिन्नतया आत्मानं तत्साक्षिणं व्यापकतया करचरणादिगतसुखदुःखज्ञातृत्वेन धर्मेण पूर्णतया विद्वान् विरराम देहाद्यनात्मदर्शनादिति शेषः ॥ ४० ॥

---

भाषाटीका ।

हे राजन् ! तिनों के मध्यमें एक एक के दश दश हजार पुत्र भये जिन के वंशवाले इस पृथिवी को मन्वतर भर भोग करेंगे ॥ ३१ ॥

मलयध्वज की पहिली पुत्री धृत व्रता नाम की तिसका अगस्त्यने विवाह करके ग्रहण किया जिसके मध्यमें दृढ च्युत मुनि उत्पन्नहुआ उसका पुत्र इध्मवाह हुआ [ मन कृष्ण की भक्ति में लग गया ] ॥ ३२ ॥

मलयध्वज जी श्रीकृष्ण की आराधना करने के लिये अपने पुत्रों को पृथिवी को देकर कुलाचल पर्वतको गये ( पृथिवी में श्रवणादिभक्ति को स्थापन कर के कुरुक्षेत्र को गये ) ॥३३॥

युवा अवस्था वाली वैदर्भी घर पुत्र भोग सबको छोड कर जैसे चांदनी चन्द्र के पीछे जाती है तैसे पांड्य राजा के पीछे दौडी ( पहिले पुरञ्जन अब वैदर्भी जीव गुरु के शरण गया ] ॥ ३४ ॥

वहांपर ताम्रपर्णी चन्द्रवसा वटोदकादि नदीहैं उन के स्नानों से नित्य ही बाहिर भीतर के मलको नाश किया॥३५॥

कंद मूल फल गुठली पुष्प पत्ता तृण जल इन चीजों से निरन्तर शरीर का निर्वाह करके शरीर का शोषक तपस्या किया ( गुरू की तपस्या कही है ) ॥ ३६ ॥

शीत गर्मी पवन वर्षा क्षुधा प्यास प्रिय अप्रिय सुख दुःख इन द्वन्द्वों को सदा समदर्शन होगया ॥ ३७ ॥

तप से ज्ञान से सब मल नष्ट होगये नियम यम से ब्रह्ममें मन को लगाया इन्द्रिय अन्तःकरण श्वास इन को रोक लिया ॥ ३८ ॥

दिव्य सौ वर्ष पर्यन्त एक जगे स्थिर होकर रहा भगवान् वासुदेव में मनके लगाने से दूसरा कुछ भी नहीं देखा ॥ ३९ ॥

साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृप ! ।
विशुद्धज्ञानदीपेन स्फुरता विश्वतो मुखम् ॥ ४१ ॥
परे ब्रह्मणि चात्मानं परं ब्रह्म तथात्मनि ।
वीक्षमाणो विहायेक्षामस्मादुपरराम ह ॥ ४२ ॥
पतिं परमधर्मज्ञं वैदर्भी मलयध्वजम् ।
प्रेम्णा पर्यचरद्धित्वा भोगान् सा पतिदेवता ॥ ४३ ॥
चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा ।
बभावुपपतिं शान्ता शिखा शान्तमिवानलम् ॥ ४४ ॥
अजानती प्रियतमं यदोपरतमङ्गना ।
सुस्थिरासनमासाद्य यथापूर्वमुपाचरत् ॥ ४५ ॥
यदा नोपालभेताङ्घ्रावूष्माणं पत्युरर्चती ।
आसीत्संविग्नहृदया यूथभ्रष्टा मृगी यथा ॥ ४६ ॥
आत्मानं शोचती दीनमबन्धुं विक्लवाश्रुभिः ।
स्तनावासिच्य विपिने सुस्वरं प्ररुरोद सा ॥ ४७ ॥
उत्तिष्ठोत्तिष्ठ राजर्षे! इमामुदधिमेखलाम् ।
दस्युभ्यः क्षत्रबन्धुभ्यो बिभ्यतीं पातुमर्हसि ॥ ४८ ॥
एवं विलपती बाला विपिनेऽनुगता पतिम् ।
पतिता पादयोर्भर्तू रुदन्त्यश्रूण्यवर्तयत् ॥ ४९ ॥
चितिं दारुमयीं चित्वा तस्यां पत्युः कलेवरम् ।
आदीप्य चानुमरणे विलपन्ती मनो दधे ॥ ५० ॥

भाषाटीका ।

देहादिकों से पृथक् सर्वत्र व्यापक आत्माको जानकर अन्तःकरण का साक्षी समझकर जगत् से निवृत्त होगया ॥४०॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

केन विद्वांस्तत्राह । साक्षाद्धरिरेव यो गुरुस्तेनोक्तेन सर्वतोमुखं यथा तथा स्फुरतानवच्छिन्नेन ज्ञानेन ॥ ४१ ॥

तदेवाह । पर इति । ब्रह्मैवाहं न संसारीति ब्रह्मण्यात्मन ईक्षणे शोकादिनिवृत्तिः अहमेव ब्रह्मेत्यात्मनि ब्रह्मण ईक्षणे ब्रह्मपारोक्ष्यनिवृत्तिः अतो व्यतिहारेणेक्षमाणोऽस्मात्संसारादुपरराम नन्वेवमपि जीवस्य कुतो ब्रह्मत्वापत्तिः ईक्षणस्यैव व्यवधायकत्वादित्याशङ्क्याह । ईक्षां विहाय दग्धेन्धनानलवत्तस्याः स्वयमेवोपशान्तेरिति भावः ॥ ४२ ॥ ४३ ॥

उपपतिं पत्युः समीपे यद्वा पत्युः किंचिन्मात्रं न्यूना तत्समाना सती बभावित्यर्थः "उपोऽधिके च" इति कर्मप्रवचनीयस्तद्योगे च द्वितीया शान्तमङ्गारावस्थमनलमुपशान्ता शुद्धा ज्वाला भवति तद्वत् ॥ ४४ ॥

तदानीमपि सुस्थिरमासनं यस्य अत एवाजानती यथा पूर्वमसेवत ॥ ४५ ॥

पत्युरङ्घ्रिमर्चयन्ती यदा तस्मिन्नङ्घ्रावूष्माणं नापश्यत्
अबन्धुं पतिरहितम् अश्रुभिरासिच्य ॥ ४७ ॥

क्षत्रबन्धुभ्योऽधार्मिकक्षत्रियेभ्योऽपि ॥ ४८ ॥

अवर्तयत्प्रवर्तयामास ॥ ४९ ॥

तस्यां निधायाग्निदानेनादीप्य च ॥ ५० ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

साक्षाद् भगवान् हरिरेव गुरुः तेनोक्तेन सर्वतः स्फुरताकुण्ठितेन विशुद्धज्ञानदीपेन स्वपरयाथात्म्यप्रकाशकेन ॥ ४१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मानं प्रत्यगात्मानं परे ब्रह्मणि परं ब्रह्म प्रत्यगात्मनोऽनु-मायाः उपासनेन साक्षात्कुर्वन्नित्यर्थः परे ब्रह्मणीति धारकत्वमुक्तं परं ब्रह्मेति व्यापकत्वमुक्तं तत ईहां विहाय उपरराम उपासना-त्मकं ध्यानं हित्वोपरराम यावदुपरमसामरणमनुपासितवा-नित्यर्थः ॥ ४२ ॥

वैदर्भी भोगान् हित्वा पतिरेव दैवता यस्याः सा भगवद्दारा-ननुरूपसर्वोत्कृष्टधर्मनिष्ठं मलयध्वजं पतिं प्रेम्णा पर्यचरत्परिचर्यां चक्रे ॥ ४३ ॥

चीरं वासो वस्त्रं यस्याः सा व्रतेनानशनादिना क्षामा कृशीभूता वेणीभूता जटीभूताः शिरोरुहाः केशा यस्याः सा उपपतिं पत्युः समीपे यद्वा पत्युः किञ्चिन्मात्रं न्यूना तत्समाना सतीत्यर्थः "उपोऽधिके च" इति कर्मप्रवचनीयत्वेन तद्योगे द्वितीया शान्तमङ्गाराद्यवस्थमनलं शान्ता निर्धूमा शिखा ज्वाला यथा भाति तद्वद्बभौ ॥ ४४ ॥

यदा पतिरुपरराम तदानीमपि सुस्थिरासनमासाद्यावस्थात एवोपरतं मृतं प्रियतमं पतिमजानती अङ्गना वैदर्भी यथा पूर्वं पत्युरङ्घ्री उपाचरत्पर्यचरत् ॥ ४५ ॥

यदा चार्चती पत्युरङ्घ्रौ ऊष्माणां नोपलभेत नोपलब्धवती तदा संविग्नहृदया दुःखितचित्तासीदभूत् यथा स्वसमूहाद्भ्रष्टा वियुक्ता मृगी हरिणी तद्वत् ॥ ४६ ॥

अबन्धुं पतिरहितमत एव दीनमात्मानं शोचन्तीति विक्लवाश्रुभिः शोकोद्गतनेत्रजलैः स्तनावासिच्य एकान्ते सुस्वरं प्ररुरोद हेति खेदे ॥ ४७ ॥

तदेवाह ! हे राजर्षे ! जितेन्द्रियश्रेष्ठोत्तिष्ठोत्तिष्ठ च क्षत्रबन्धुभ्यो ऽधार्मिकक्षत्रियेभ्यः अत एव दस्युरूपेभ्यः केवलत्रिवर्गनिष्ठेभ्यः इत्यर्थः बिभ्यतीं भयं प्राप्तवतीं निवृत्तिमार्गलोपेन बिभ्यतीमित्यर्थः इमामुदधिमेखलां समुद्रवेष्टितां भूमिं पातुं सम्यग्ज्ञानिष्ठास्वधर्मप्रव-र्तनेन रक्षितुमर्हसि ॥ ४८ ॥

पतिमनुसृत्य विजने ऽरण्ये गता बाला वैदर्भी एवं विलपन्ती भर्तुः पादयोः पतिता रुदत्यश्रूण्यवर्तयन्निरवर्तयामास ॥ ४९ ॥

दारुमयीं चितिं कृत्वा विरच्य्य तस्यां चित्यां पत्युः कलेवरं शरीरं प्रदीप्य प्रज्वाल्य विलपन्ती पत्युः पादयोरनुमरणे सह गमने मनो दध्रे धृतवती ॥ ५० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तदभेदश्रुतेः कोऽभिप्राय इत्याशङ्क्य जीवान्तर्यामिणो हरेः ब्रह्मविदाप्नोति परमिति श्रुतिप्रतिपाद्यस्य व्याप्तस्यापि न कश्चि-द्भेदोऽस्तीत्यर्थं इत्यभिप्रेत्याह । साक्षादिति ॥ ४१ ॥

आत्मानं जीवान्तर्यामिणमीक्षां तयोर्भेददर्शनमस्माच्छरीराद् हेत्यनेन अस्य प्रामाणिकत्वं द्योतयति ॥ ४२ ॥

पतिं स्वाश्रयमिन्द्रियद्वारेण भोगान्विहाय परिचरणं नाम-तस्य हितप्रेरकत्वम् ॥ ४३ ॥

चीरवासाः सत्त्वगुणलक्षणे * क्षीचक्षुपि दिरोरुहलक्षणा वृत्तयो यस्याः सा तथा उपपतिं पत्युः स्वमनसः समीपे शान्तमि-त्यनेन धूमराहित्यं ननु निर्वाणत्वं न हि नष्टस्याग्नेः शिखा कथा-पत्ते यथा स्थित एवार्थः अभूत् दृष्टान्तस्य सम्भवात् तस्मिंश्च धूमता ज्वलतोऽग्नेः शिखेव निर्मलतया श्रेयसाऽन्तरङ्गमि-त्यर्थः ॥ ४४ ॥

इदानीं बुद्धेर्वृत्तिविशेषान् लक्षयति । अजानतीति । अङ्गना भ-गवज्ज्ञानसाधना उपरतं जीवन्मुक्तावस्थाप्राप्तं प्रियतमं स्वस्या आत्यन्तिकं प्रियं तमजानती बाह्यवृत्तिविशिष्टं सुस्थिरासनं तदे-कवृत्तिनिष्ठालक्षणं पीठमाप्य पूर्वसंस्कारवशात् यथा पूर्वमुपा-चरत् शुभकर्मणि प्रेरयामास ॥ ४५ ॥

यदेवं प्रेरयति च यदा पत्युरङ्घ्र्युपलक्षितैकदेशे ऊष्माणामौष्ण्यं नोपलभेत शुष्कजलनारिकेलफलवत् देहाभिमानं विहाय-स्थितत्वात्तदौष्ण्यानुपलम्भस्तस्या इति ततोऽपि वृत्त्यन्तर-वैशिष्ट्यमाह । आसीदिति । तदा संविग्नहृदया वृत्त्यन्तरविशि-ष्टासीत् मिश्रबुद्धिमपहाय स्वरूपबुद्ध्याऽवतिष्ठत तदेवमव-स्थाविशेष इति तात्पर्यं ज्ञातव्यम् ॥ ४६ ॥

बन्धुः स्वामी तदनुमानराहित्यादबन्धुः शोचन्ती प्रकाश-यन्ती विक्लवेत्यादिना प्रतिक्षणमनन्तबुद्धिवृत्तयो लक्ष्यन्ते विपिने देहलक्षणे स्थिता सुस्वरं प्ररुरोदेतीदं बुद्धेर्लक्षणमस्यामुक्तिकाले नाशात् चिदाचिद्ग्रन्थ्या व्यापारविशेषाल्लक्षणावैलक्षण्यं प्रतिक्षणं ज्ञातव्यम् ॥ ४७ ॥

उदधिः कर्म तदेव मेखला स्थानीयं यस्याः सा तथा तां दस्युभ्योऽहङ्कारादिभ्यः क्षत्रबन्धुभ्यो मिथ्याज्ञानादिभ्यो बिभ्य-तीं मां रक्षितुमर्हसि त्वदनुगृहीतया बुद्ध्याऽज्ञानादयो निवर्तन्त इत्यर्थः ॥ ४८ ॥

विपिने वासनाघने विलपतीव धावतीव दर्शयती भर्तुः पादयोः पतिता स्वामिनं विहाय स्थिता अश्रूण्यवर्तयन्मुग्धेवा भवत् ॥ ४९ ॥

दारुमयीं भक्तिविषयां चितिं सम्विदं कृत्वा प्रकाश्य तस्यां सम्विदि पत्युः कलेवरं संसारकारणमादीप्य दग्ध्वा अनुमरणे अनु-स्यूतदोषनाशे मनो दधे तादृशीं वृत्तिं प्राकाशयत् ॥ ५० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तदेवं येन विज्ञानेन जीवन्मुक्तिदशामाप तेनात्यन्तिकमुक्ति-मप्यापेत्याह । साक्षादिति युग्मकेन ॥ ४१ ॥

परे ब्रह्मणि भगवति तदाश्रयत्वेनेत्यर्थः । आत्मनि शुद्धे तदधिष्ठातृत्वेनेत्यर्थः । ईक्षां सिद्धेक्षत्वात् तत्प्रयत्नं विहायेत्यर्थः अस्माद्देहद्वयलक्षणोपाधेरुपरराम ननु तस्मात्तदीक्षाहेतुचिच्छ-क्त्याविर्भावादपीत्यर्थः अनलादीनां कालवाय्वादिवत्तस्या नाश-काभावात् आश्रयस्य विद्यमानत्वाच्च ॥ ४२ ॥

वैदर्भ्याख्यः पुरञ्जनस्तु तत्सेवयैव प्राप्यं प्रापेत्याह । पतिमि-त्यादिना ॥ ४३—४४ ॥

यथा पूर्वं श्रीभगवत्प्रतिमामिवाचेष्टमानमपि पाद्यादिनोपा-चरत् आनर्च ॥ ४५—४९ ॥

चितिमिति । अस्मिन्नध्यात्मपक्षे स्त्रीत्वादिकमौपचारिक-मेव ॥ ५० ॥

---

* इदं वाक्यं शोध्यं तथापि बहुपुस्तकेष्वैकमत्यातो न शो-ध्यते ॥

**तत्र पूर्वतरः कश्चित्सखा ब्राह्मण आत्मवान् ।**
**सान्त्वयन् वल्गुना साम्ना तामाह रुदतीं प्रभो ! ॥ ५१ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततश्च तस्योत्पन्नप्रेम्णो भगवतः साक्षाद्दर्शनमप्यभूदित्याह । साक्षादेव भगवता हरिणा सन्तापहारिणा विश्वतो मुखं स्फुरता समन्तादेव प्रस्फुरत्तेजसा गुरुणा सता उक्त उपदिष्टो यो ज्ञानदीपः स्वमाधुर्य्यानुभवप्रकारस्तेन तस्मिन्नेव परे ब्रह्मणि आत्मानमीक्षमाणः वासुदेवे भगवति नान्यद्वेदोद्वहन् रतिमिति पूर्व्वोक्तेः भगवति स्वरतिमुद्वहन्तमनुरागिणं पश्यन्नित्यर्थः तथैव "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति भगवदुक्तेः । आत्मनि स्वस्मिंश्च परब्रह्म सानुरागमीक्षमाणः तत्क्षण एव प्रवर्त्तितानन्दमूर्च्छावशादीक्षां विहाय अस्मात् स्थूलसूक्ष्मोपाधिद्वयात् स्पष्टमेव विरराम ऐश्वर्य्यपक्षीयास्तु श्लोकत्रयमिदमेवं व्याचक्षे स मलयध्वज आत्मानं परमेश्वरं सर्व्वव्यापकतया सर्व्वस्माच्च व्याप्याज्जगतो व्यतिरिक्ततया च आत्मनि स्वस्मिन्नधिष्ठातारं विद्वान् जानन् विरराम संसारादित्यर्थः । व्यापकत्वे व्यतिरिक्तत्वे च दृष्टान्तः आमर्शसाक्षिणं मन आदिद्रष्टारं जीवमध्यात्मादिव्यापकमथ च स्वप्ने सुषुप्तावध्यात्मादिव्यतिरिक्तमिव सुखमहमस्वाप्समित्यत्र तत्तद्व्यतिरिक्तस्य केवलस्यात्मन एवानुभवादिति नन्वेतज्ज्ञानं कुतोऽसाववापेति तत्राह । साक्षादिति । ददामि बुद्धियोगन्तं येन मामुपयान्ति ते इति भगवदुक्तेः तेनैव ज्ञानदीपेन परे ब्रह्मणि भगवत्याश्रयतत्त्वे आत्मानं शुद्धजीवमाश्रितमीक्षमाणः तथा आत्मनि शुद्धजीवे च स्वमेव परं ब्रह्म भगवन्तमधिष्ठातारमीक्षमाणः । विहायेक्षामिति जातप्रेमत्वादन्ते तं परामर्शमपि विहायेत्यर्थः श्रीभागवतस्य मोहिनीत्वादितोऽप्यन्यथा केचिद्व्याचक्षते तत्तु त एव गृह्णन्ति न सन्तः ॥ ४१—४२ ॥

तदेवं श्रीगुरुदेवस्य सिद्धिदशापर्य्यन्तं शिष्यस्तं परिचरन्नेव वर्त्ततेति दर्शयति । पतिमिति चतुर्भिः ॥ ४३ ॥

पतिमुप "उपोऽधिके च" हीनेइति कर्म्म प्रवचनीयस्तद्योगे द्वितीया पत्युः सकाशात् किञ्चिन्मात्रन्यूनेत्यर्थः । शान्तमङ्गारावस्थं निर्धूममनलमुपशान्ता शुद्धा ज्वाला यथा भाति तद्वत् ॥ ४४-४५ ॥

अर्च्चेति अर्च्चन्ती नोपलभेत नोपालभत ॥ ४६ ॥

गुरोः साधकशरीरापगमे सति । पत्युर्विच्छेदे पतिव्रतेव शिष्यस्तद्विच्छेदसन्तप्तो विलापमग्नो भवतीत्याह । आत्मानं शोचति मामितः परं कस्त्रास्यत इति शोकाकुला ॥ ४७ ॥

उत्तिष्ठेति पक्षे हे गुरो ! इमां पृथ्वीं त्वत् प्रवर्त्तितश्रवणादिभक्तिगतिं दस्युभ्यः भक्तिविरोधिमतेभ्यो बिभ्यतीम् ॥ ४८ ॥

अवर्त्तयत् प्रवर्त्तयामास ॥ ४९ ॥

तस्यां निधाय अग्निदानेनादीप्य च पक्षे श्रीगुरोर्देहसंस्कारं कृत्वा श्रीमद्गुरुचरणवियुक्तोऽहं तदीयगुणानुस्मरणमयशोकदावाग्निदग्धदेहं प्राणं धर्त्तुमशक्नुवंस्तदुपदिष्टश्रवणकीर्त्तनादिभक्तौ नैव शक्तिं धास्यामि । तस्मादद्यैव मरिष्यामीति शिष्यो मनसि निश्चिनोतीति दर्शयामास ॥ ५० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मलयध्वजस्य मोक्षमाह । साक्षादिति द्वाभ्याम् । " ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन् देहं स याति परमां गतिम्" इति साक्षाद्भगवतोक्तेन अन्तकाले भगवत्स्मारकेन सर्वतो मुखं स्फुरताऽकुण्ठेन ज्ञानमेव दीपस्तेन ॥ ४१ ॥

परे ब्रह्मणि अंशिनि आत्मानमंशभूतम् आत्मनि च ब्रह्म अंशि स्वरूपमीक्षमाणः ईक्षां संसारेक्षां विहाय ... संसारात् उपरराम मुक्तोऽभूदित्यर्थः ॥ ४२ ॥

वैदर्भीवृत्तमाह । पतिमित्यादिना ॥ ४३ ॥ ४४ ॥

सुस्थिरमासनं यस्य तं प्रियतममुपारतं मृतमजानती ... पूर्ववदुपाचरत् ॥ ४५ ॥

अङ्घ्रिमर्चती तत्रोष्माणं नोपलभेत नापश्यत् ॥ ४६— ...

विपिने पतिमनुगता तस्य पादयोः पतिता अश्रूणि ... यत अमुञ्चत् ॥ ४९ ॥

आदीप्य अनुमरणे मनो दधे ॥ ५० ॥

---

भाषाटीका ।

हेनृप ! हरिगुरु साक्षात् भगवान् का कहा हुआ जो ... ज्ञान रूप दीप सर्वत्र प्रकाश मान् तिससे परब्रह्म ... को आत्मा मे परब्रह्म को देखता हुआ संसार की ... को छोडकर विषयों से उपरत होगया ॥ ४१—४२ ॥

परमधर्म के जानने वाले मलयध्वज पति के ... की सेवा को करतीं हुई वैदर्भी पति को देवता ... करने लगी ॥ ४३ ॥

चीरवस्त्र धारण करके व्रतों से कृशित होकर ... वेणी को धारण करके शान्त अग्नि के पीछे जैसी ... शिखा होती है तैसे पति के समीप मे रहती थी ॥ ४४ ॥

इसप्रकार सेवा करने मे पति ने शरीर त्यागा ... जान कर सुन्दर स्थिर आसन से पहिले सरीकी ... करती रही ॥ ४५ ॥

पति के अर्चन समय मे जब चरण मे गर्मी नहीं ... पडी तव यूथ से छूटी मृगी सरीकी दुखित होगई ॥ ४६ ॥

कोइ बन्धुन रहनेसे विकल के आंसु से स्तनों को सि... आत्मा को शोचती हुई जङ्गलमें वडे स्वरसे रोदन करने ल...

हे राजर्षि ! उठो उठो समुद्र की परिखा वाली इस ... को रक्षा करो हनि क्षत्रियों से यह पृथिवी डरतीहै ॥ ४८ ॥

इस प्रकार विलाप करती हुई बाला वन में पति के ... मे गिरकर रोकर आसुओं को गिराने लगी ॥ ४९ ॥

काष्ठों की चिता बनाकर उस में पति के शरीर को ... अग्नि जलाकर पति के पीछे मरने की इच्छा किया ॥ ५० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

पूर्वतरोऽनादिरीश्वरः सखा द्वासुपर्णाविति श्रुतेः ... प्रियवाक्येन सम्बोधयन् ॥ ५१ ॥

॥ ब्राह्मण उवाच ॥

का त्वं कस्यासि कोऽवाऽयं शयानो यस्य शोचसि ।
जानासि किं सखायं मां येनाग्रे विचचर्थ ह ॥ ५२ ॥
अपि स्मरसि चात्मानमविज्ञातसखं सखे ! ।
हित्वा मां पदमन्विच्छन् भौमभोगरतो गतः ॥ ५३ ॥
हंसावहं च त्वं चार्य ! सखायौ मानसायनौ ।
अभूतामन्तरा वौकः सहस्रपरिवत्सरान् ॥ ५४ ॥
स त्वं विहाय मां बन्धो ! गतो ग्राम्यमतिर्महीम् ।
विचरन् पदमद्राक्षीः कयाचिन्निर्मितं स्त्रिया ॥ ५५ ॥
पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् ।
षट्कुलं पञ्चविपणं पञ्चप्रकृतिस्त्रीधवम् ॥ ५६ ॥
पञ्चेन्द्रियार्था आरामा द्वारः प्राणा नव प्रभो ! ।
तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः ॥ ५७ ॥
विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया ।
शक्त्यधीशः पुमांस्त्वत्र प्रविष्टो नावबुध्यते ॥ ५८ ॥
तस्मिंस्त्वं रामया स्पृष्टो रममाणोऽश्रुतस्मृतिः ।
तत्सङ्गादीदृशीं प्राप्तो दशां पापीयसीं प्रभो ! ॥ ५९ ॥
न त्वं विदर्भदुहिता नायं वीरः सुहृत्तव ।
न पतिस्त्वं पुरञ्जन्या रुद्धो नवमुखे यया ॥ ६० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्य यं शोचसि अग्रे सृष्टेः पूर्वं विचचर्थ ह मयि स्थितत्वेन सख्यसुखमनुभूतवानसि ॥ ५२ ॥

ननु नाहमावयोः सख्यं सहचरत्वं च जानामीति चेत्तत्राह । यद्यपि मां न जानासि तथाप्यात्मानं त्वामविज्ञातसखमविज्ञातः कश्चिन्मे सखा आसीदित्येवं किं स्मरसि सखे इति पुंस्त्वनिर्देशः प्राक्तनपुंस्त्वस्मरणाय सख्यं स्मारयन् स्ववियोगकृतमनर्थमाह । हित्वेति । सार्द्धैः षड्भिः पदं स्थानम् ॥ ५३ ॥

हंसौ शुद्धौ मानसं हृदयमयनं ययोः कथापक्षे मानससरसि स्थितौ पक्षिणावभूतां जातौ ओकौ गृहम् अन्तरा विनैव वाशब्द एवार्थे सहस्रपरिवत्सरान् महाप्रलयो यावत् ॥ ५४ ॥

हे बन्धो ! ग्राम्ये सुखे मतिर्यस्य स्त्रिया मायया ॥ ५५ ॥

पञ्चशब्दादय आरामा उपवनानि यस्मिन् नव द्वाराणि प्राणाश्छिद्राणि यस्मिन् एकः प्राणः पालो यस्मिन् त्रीणि पृथिव्यप्तेजांसि कोष्ठानि प्राकारा यस्मिन् षट् ज्ञानेन्द्रियमनांसि कुलान्यभीष्टविषयसमर्पका वणिजो यस्मिन् पञ्च विपणा हट्टाः कर्मेन्द्रियाणि यस्मिन् पञ्च भूतानि प्रकृतिरुपादानकारणं यस्य स्त्री बुद्धिरेव धवः पतिः स्वामिनी यस्मिन् ॥ ५६ ॥

स्वयमेवमं श्लोकं व्याचष्टे । पञ्चेन्द्रियार्था इति षट्कुलमिति षट्त्वमेकपालमिति च स्पष्टत्वान्न व्याख्यातम् ॥ ५७ ॥

भूतान्येवाव्यया प्रकृतिरुपादानं यस्य स्त्रीधवमित्यस्य व्याख्यानं शक्तिरधीशा यस्य तद्वशः सन्नित्यर्थः ॥ ५८ ॥

स्पृष्टोऽभिभूतः अतो न विद्यते श्रुते ब्रह्मत्वे स्मृतिर्यस्य ॥ ५९ ॥

तत्त्वगुपदिशति । नत्वमिति चतुर्भिः । सुहृत्पतिः नवद्वारे पुरे यया रुद्धोऽसि तस्याः ॥ ६० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र तस्मिन्नवसरे पूर्वतरः पुरातनः ईश्वररूपः कश्चित्सखात्मवान् ब्राह्मण आगत्य वल्गुना मधुरेण साम्ना सामवाक्येन सान्त्वयन्नुपलालयन् रुदन्तीं प्रत्याह । हे प्रभो ! निरुपाधिक-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सखः यादृच्छिकसुकृतमात्रसन्तुष्टो भगवान् ब्राह्मणरूपेणागत्य वैदर्भीं सान्त्वयन्नाह भागवतसम्बन्धमात्रतुष्टो भगवान्वैदर्भीमनुजग्राहेति यावत् ॥ ५१ ॥

उक्तिमेवाह । का त्वमित्यादिना । तथैवान्तरमावयोरित्यन्तेन कात्वमिति कथं जातीयकेति प्रश्नः कस्यासि कस्य संबन्धिन्यसिको वायमित्यपि तथा यस्य शोचसि यदर्थं शोचसि शयानस्य स्वस्य च स्वरूपमुभयोः संबन्धं देहप्रयुक्तमविदित्वा किं वृथा शोचसीत्यभिप्रायः सखायं मां जानासि किं स्वस्वरूपमेवाजानती त्वं कथं मत्स्वरूपं जानासीत्यर्थः तत्र हेतुर्येन मया हेतुनाग्रे सृष्ट्यादौ विचकथं विकृतवानसि अनादित्वत्कर्मानुगुणमत्संकल्पेन स्वपरस्वरूपं विस्मृत्य देवमनुष्यादिविकारं प्राप्तोऽसीत्यर्थः ॥ ५२ ॥

यद्यपि मां न जानासि तथाप्यात्मानं त्वामविज्ञातसखमविज्ञातः कश्चिन्मे सखा आसीदिति किं स्मरसि हे सखे ! इति पुंस्त्वनिर्देशः प्रकृतिविलक्षणपुरुषस्वरूपस्मरणाय सख्यं स्मारयन्स्वावियोगकृतमनर्थमाह । हित्वेति सार्द्धैः षड्भिः । मामन्तरात्मभूतं हित्वा ग्राम्यभोगः शब्दादिविषयानुभवः तस्मिन्नासक्तः पदं भोगस्थानं देवमनुष्यादिशरीरमन्विच्छन् गतः मद्वियोगं प्राप्तः स्वपरयाथात्म्यज्ञानविधुरो जात इत्यर्थः ॥ ५३ ॥

हे आर्य ! त्वं चाहं सहस्रपरिवत्सराननन्तकालमन्तरावोकः शरीररूपगृहमध्य एवान्तरेति मध्येऽव्ययं वाशब्द एवार्थः ओको गृहं मानसायनौ हृत्पद्मगृहगतौ सखायौ हंसावभूतां सखिशब्दार्थसामानाधिकरण्याच्छेषे प्रथमः इति प्रथमपुरुषः अत्र हंसत्वविधानाय युष्मदस्मदोः सखित्वमुद्दिश्यतं उद्देश्यानुगुणा च सर्वत्र तिङ्विभक्तिः प्रयुज्यते तद्यथा त्वं वाहमस्मि भगवो देवते तत्त्वमसीति भगवो देवते तत्त्वमसीति अत्र सखित्वं न विधेयं युष्मदस्मदर्थोद्देशेनात्र पूर्वतरः कश्चित्सखा अविज्ञातसखं सखे इत्यनेनैव प्राप्तत्वाद्धंसत्वं त्वप्रासं हंसत्वं शुद्धत्वं हिनस्ति निरस्यति विकारानिति हंसः ततश्चायमर्थः अपास्तमरणौ स्वतो निरस्तविषयसुखाविति औपाधिको हि जीवस्य विषयभोगः कथापक्षे मानससरसि स्थितौ पक्षिणावभूताम् ॥ ५४ ॥

स त्वं हंसस्त्वं बन्धुं सखायं मां विहाय विस्मृत्य ग्रामेषु शब्दादिषु मतिर्यस्य सः मही प्रकृतिमण्डलं प्राप्तः तत्रापि पदं निवासस्थानं विचिन्वन् यद्वा मह्यां विचरन्कदाचित्पदमद्राक्षीरित्यन्वयः पदं त्रिंशनष्टि स्त्रिया प्रकृत्या निर्मितम् ॥ ५५ ॥

पञ्चारामं पञ्चारामा उपवनानि यस्मिन्नवद्वाराणि छिद्राणि यस्मिन्नेकः पालः पालको यस्मिन् त्रीणि कोष्ठानि प्राकारा यस्मिन् षट्कुलानि अभीष्टविषयसमर्पकाणि यस्मिन् पञ्चविपणाः हट्टा यस्मिन् पञ्चप्रकृतिरुपादानकारणं यस्य स्त्री भार्या एव धवा स्वामिनी यस्मिन् तत् ॥ ५६ ॥

स्वयमेव श्लोकं व्याचष्टे । पञ्चेन्द्रि । पञ्चेन्द्रियार्थाः शब्दादयः आरामाः प्राणायनाः प्राणाधीना इन्द्रियाणां चक्षुरादीनि तेषां प्राणायत्तप्रवृत्तिमत्त्वात्तदाश्रयत्वाच्च नेत्रद्वयश्रोत्रद्वयादिरूपाच्छिद्राणि नव द्वारः प्राणायना इन्द्रियस्थानानि गोलकानि छिद्राणि इति यावत् नवद्वार एकः प्राणः पालो यस्मिन्निति स्पष्टत्वान्न व्याख्यातं तेजोऽवन्नानि तेजश्चापश्चान्नं पृथिवी च एतानि कोष्ठानीत्यर्थः इन्द्रियसंग्रहः मनसा सह ज्ञानेन्द्रियषट्कं प्रत्येकं कुलवदभीष्टप्रापकत्वात्कुलमित्यर्थः ॥ ५७ ॥

क्रियाशक्तिः कर्मेन्द्रियाणि पञ्च विपणाः पञ्च त्यस्य व्याख्यानं भूतप्रकृतिरिति भूतानि पञ्च पृथिव्यादीनि अव्यया नित्या प्रकृतिरुपादानकारणमत्र भूतान्तर्गतानां तेजोऽबन्नानां त्रयाणां देहारम्भकत्वात्प्रकृतित्वं कोष्ठस्थानीयाश्रित स्वरूपेण परिणामात्तेजोऽबन्नानि कोष्ठानीत्युक्तं तथा च "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो भागः तत्पुरीषं मध्यमस्तन्मांसमापः पीतास्त्रेधाविधीयन्ते तासां यः स्थविष्ठः तन्मूत्रं योमध्यमस्तल्लोहितं तेजोऽशितं त्रेधाविधीयते तस्य स्थविष्ठो भागस्तदस्थीति यद्यपि कोष्ठस्थानीयत्वेन परिणामेषु वन्नेषु पञ्चीकरणप्रक्रियया वाय्वाकाशावपि प्रविष्टौ तथापि तेषां शानां बाहुल्यात्त्रिकोष्ठमित्युक्तं भूतात्मकोपादानस्य प्रतिक्षणपरिणामशीलत्वेऽप्यवस्थावद्द्रव्यस्य प्रधानाख्यस्य नित्यत्वादव्ययत्वं तथा च श्रुतिः "गौरनाद्यन्तवती अजामेकामिति" च "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपीति स्मृतिः" व्याख्या शक्त्यधीश इति शक्तिर्बुद्धिरधीशा यस्य तद्वशः इत्यर्थः पुमान् भवान् तत्र पदे प्रविष्टः नावबुध्यते स्वात्मानं च न जानाति ॥ ५८ ॥

तस्मिन् पदे त्वं रामया स्त्रिया बुद्ध्या स्पृष्टोऽभिमृश्यमानः विषयाननुभवन्नत एव गता स्मृतिः स्वपरयाथात्म्यज्ञानरूपा यस्य सः तत्सङ्गाद्बुद्धिनिमित्तदेहानुबन्धितां पापीयसीमीदृशीं स्त्रीयोनिरूपां दशां प्राप्तः हे विभो! धर्मतो न स्वभाव ! ॥ ५९ ॥

एवं स्ववियोगनिमित्तप्रकृति परिणामरूपबुद्धिसङ्ग निमित्तेयं संसृतिरूपानर्थपरम्परेत्यभिप्राय सर्वं प्रकृतिनिमित्तं रूपवैचित्र्यं नात्मनो धर्मः किन्तु बुद्धिसङ्गनिमित्तं तत् आत्मनि प्रतीयत इति वदन् प्रकृतिविलक्षणब्रह्मात्मकयाथात्म्यमुपदिशति । नेति । त्वं विदर्भस्य दुहिता न भवसि अयं मलयध्वजस्तव पतिरपि न भवति नव द्वारे पुरे यस्मिन् रुद्धोऽसि तस्याः पुरञ्जन्यास्त्वं पतिरपि न भवसि विदर्भदुहित्रादीनां देहाकारत्वेनात्माकारत्वाभावादिति भावः ॥ ६० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र तस्यामवस्थायां कश्चिद्वेदान्तवाक्यार्थो हितोदितं सखिधर्मे वर्तमानो ब्राह्मणो ब्रह्मसम्बन्धी निर्दोषशब्दलक्षणसम्बन्धी वाग्मवान् परमात्मगुणप्रतिपादनपरः साम्ना सान्त्वप्रकाशनेन सान्त्वयन् प्रतिपदं दर्शितान्वयः बुद्धिमाधयदिति कथापक्षे प्रतीत एवार्थः ॥ ५१ ॥

तदनुकरणतया बोध्यन इत्याह । केति । का किं इति शिष्टा न कापि किञ्च कस्यासि कं पुरुषमाश्रित्य स्थिता कमपि सर्वचेतनानुस्यूतत्वाच्च निर्देष्टुं शक्यते यस्य यद्यहमिति प्रकाश्य वर्तमे अयं शयानः शरीरि पदार्थः कः पाञ्चभौतिकत्वात्तवचास्य न कोऽपि किंतु चेतनस्यैवेत्यर्थः त्वं का नामा गोत्रतो लिङ्गतश्च त्रयमप्यस्ति कस्यासि पुत्री भार्या वा न कस्यापीत्यर्थः वाऽयं शयानस्तव निरूपित सत्यनेन सम्बन्धः यस्य मरणे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स इति वा अग्रे पूर्वकाले येन मया विचचर्थ विचरितवानसि तं सखायं त्वया सह वर्तमानं मां जानासि किं सखित्वात् ज्ञातुं प्राप्तिरस्तीत्येतदशब्देनाह ॥ ५२ ॥

किंच हंसखे ! अविज्ञातः । परमात्मा सखा यस्य स तथा तमात्मानं त्वं स्मरस्यपि न स्मरसि चेत् स्मरेति चार्थः विद्गुरुत्वात्मनोरभेदादिवमुमर्थाविषयमिदानीं ज्ञानागमनं चेतनमाविमज्येवाह । हित्वेति । विषयभोगरतस्तदर्थं भोगस्थानमन्विच्छन् मृगयन्मां हित्वा गतः पृथक्कृत इव अग्रत इति पाठे पदमन्विच्छन्नसूवित्यन्वयः ॥ ५३ ॥

वाक्यार्थाभिमानी कश्चिच्चेतनः स्वात्मनो रूपं च तत्त्वत उपदिशति । हंसाविति । आर्य ! आवां अहं च त्वं च हंसौ स्वतो निर्लेपौ मानसं ज्ञानमयं ययोस्तौ तथा सहस्रपरिवत्सरान् बहुकालं रममाणौ अवास्व अन्यत्र मानससरोवराश्रयौ हंसौ प्रसिद्धौ प्राक् चीर्णपुण्यनिचयादवाप्तजातिस्मृतिः ॥ ५४ ॥

पुनः प्रारब्धकर्मवशात् प्राम्यमतिर्मां विहाय कर्मभूमिं गतो विचरन् पर्यटन् किञ्चित्पदं भोगस्थानमद्राक्षीः स्त्रिया विषयबुद्ध्या रचितम् ॥ ५५ ॥

एकः पालः प्राणो यस्मिंस्तत्तथा तत् स्त्रीधवः पतिः स्वामी यस्मिन् तत्स्त्रीधवम् ॥ ५६ ॥

पञ्चारामार्थमाह । पञ्चेति । इन्द्रियार्थाः शब्दादयः नवद्वारमित्यस्यार्थमाह । द्वार इति । प्राणादयो द्वार इत्युच्यन्ते त्रिकोष्ठमाह । तेज इति । षट्कुलमाह । गोलकेति । गोलकाख्येन्द्रियार्था गृह्णन्त इति गोलकेन्द्रियसङ्ग्रहः ॥ ५७ ॥

विपणी व्यवहारः क्रियाशक्तिः कर्मेन्द्रियशक्तिः पञ्चप्रकृतीत्येतदाह । भूतेति । पञ्चभूतानां या प्रकृतिर्मूलकारणं सा पञ्चप्रकृतिरित्युच्यते अव्यया नित्या स्त्रीधवमाह । शक्तीति । शक्तिर्बुद्धिः सैवाधीशा पुरोपभोगे कारणं यस्य स शक्त्यधीशः अन्यत्र कोष्ठानि भाण्डागारस्थानानि कुलानि वहिष्ठपदार्थदर्शनाय निर्मितस्थानानि ॥ ५८ ॥

रामया विषयबुद्ध्या स्पृष्टो वशीकृतः हतस्मृतिः शास्त्रज्ञानरहितः विषयबुद्धिसङ्गफलं नरकादि भवतीत्यर्थः ॥ ५९ ॥

न त्वमित्यादि विषयवैराग्यमुच्यते ॥ ६० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्राज्ञरूपो भूत्वा ॥ ६१ ॥ ५२ ॥

कथापक्षे सखे इति जीवस्वमात्रस्मरणाय ॥ ५३ ॥

यद्यपि परमात्मसन्दर्भे ज्ञानेच्छुरयमधिकारीत्यभेदोपदेशपर्यवसानत्वं व्याख्यातम् । तथाप्यपरितोषादत्र भक्तिपर्यवसानत्वमेव व्याख्यायते यथा सख्यमेव स्थापयति सृष्टेः मानसायनौ महाप्रलयसमये तु ओकस्तद्रूपमुपाधिमन्तरेणाभूतामभूवेत्यर्थः सहस्रपरिवत्सरान् व्यर्थेति महाप्रलयोपलक्षणम् ॥ ५४ ॥

स्वविस्मृतौ हेतुमाह । स त्वमिति सार्द्धैः षड्भिर्मयसे इत्य चिद्भिः । तत्र स त्वमिति युग्मकम् । स्थितिसमये तु स तथा विधस्तं मां विहायाहन्ताममताश्रयां व्यवसाय महीं स्वप्नसहितजाग्रद्दशां गतः सन् विचरन् पश्यालोचयाहित्यर्थः ॥ ५५ ॥ ५६ ॥

पञ्चेन्द्रिया इति युग्मकम् ॥ ५७ ॥

विभो ! हे सर्वसाधनसमर्थ तथा पीत्यर्थः ॥५८॥५९॥६०॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वगुरुविरहव्याकुलीभावदशायामिव शिष्यस्य भगवद्दर्शनं स्यादिति द्योतयति । तत्रेति । पूर्वं नरः अनादिरीश्वरः सखा द्वासुपर्णावित्यादि श्रुतेः ब्राह्मणः ब्राह्मणवेशधारीति साक्षात् स्वीयस्वरूपदर्शनं प्रेम्णा विना न भवतीति ज्ञापयति स्मेति भावः आत्मवान् अन्तराच्छन्नीकृतस्वस्वरूपयुक्तः ॥५१॥

कोऽयं शयान इति प्रश्ने मम श्रीगुरुरयमिति कथापक्षे मम पतिरयमिति चेत् मां किं जानासीति ननु त्वमेव विप्रो मम क इत्यत आह । सखायमिति । कथं त्वया सह मम सख्यमित्यत आह । येन मया सह अग्रे सृष्टेः पूर्वं विचचर्थ । मय्येव मिलित्वा मत्सङ्गेन सुखमनुभूतवान् त्वमेवासीरित्यर्थः ॥ ५२ ॥

नन्वहं किमपि न जानामीति तत्राह । अपीति । यद्यपि मां न जानासि तदप्यात्मानं स्वमविज्ञातसखमविज्ञातः कश्चिन्मे सखास्तीत्येवं किं स्मरसि बहुव्रीहावपि टच् आर्षः अविज्ञातस्य सखायमिति वा सखीत्यप्रयुज्य सखे इति पुंस्त्वनिर्देशः प्राक्तनपुंस्त्वं स्मारयितुम् एवमग्रेऽपि त्वमेव स्मारय चेदत आह । हित्वेति । सृष्ट्यारम्भे प्राचीनकर्मवशादेवेत्यर्थः पदं स्थानम् ॥ ५३ ॥

हंसौ शुद्धात्मानौ मानसं हृदयमयं ययोस्तौ कथापक्षे मानससरसि स्थितौ पक्षिणावभूतां जातौ ओकौ गृहमन्तरा विनैव वाशब्द एवार्थे सहस्रं परिवत्सरान् महाप्रलयो यावदित्यर्थः ॥ ५४ ॥

स्त्रिया मायया ॥ ५५ ॥

पञ्चविषया आरामा उपवनानि यत्र नव द्वाराणि प्राणाच्छिद्राणि यत्र एकः प्राण एव पालो यत्र त्रीणि पृथिव्यन्तेजांसि कोष्ठानि यत्र षट् ज्ञानेन्द्रियमनांसि कुलानि वणिजो यत्र तत् पञ्च कर्मेन्द्रियाणि विपणा हट्टा यत्र तत् पञ्च महाभूतानि प्रकृतिरुपादानकारणं यस्य तत् स्त्री बुद्धिरेव धवः पतिः स्वामिनी यस्मिन् तत् ॥ ५६ ॥

श्लोकमिमं स्वयमेव व्याचष्टे । पञ्चेति । प्राणाः प्राणच्छिद्राणि नव कुलमिति वणिजामेवार्थतः प्राप्तं भूतानि पञ्चैव प्रकृतिः कारणमत्र पदे प्रविष्टः पुमान् मुह्यति । कीदृशः शक्तिर्बुद्धिरेव अधीशा यस्य स इति स्त्रीधवमित्यस्य व्याख्यानं तत्पदं स्त्रीस्वामिकमिति किं वाच्यं तत्र प्रविष्टः पुमानपि स्त्रीस्वामिक एव भवेदित्यर्थस्य द्योतनार्थं पुंविशेषणत्वेनोपन्यस्तम् ॥ ५७ ॥ ५८ ॥

न श्रुता न अवणविषयीकृता स्मृतिः स्वज्ञानं येन सः ॥५९॥

नन्वेवं यद्यहमश्रुतस्मृतिरेवास्मि तर्हि मत्स्मृतिं त्वमेव आनयेत्यत । आह । नेति । त्वं विदर्भस्य प्राकृतजीवस्य कस्यापि न दुहिता नापत्यं किन्तु मच्छक्तिरूपो जीवोऽसीति भावः । अयं वीरोऽपि न ते सुहृत् हितकारी किन्त्वहमेव एतद्रूपेण त्वद्गुरुर्भूत्वा स्वभक्तिमुपदिश्य सख्यानुरूपं कृत्यमकरवम् । इति पत्नद्वयं पृथक् पृथक् व्यवस्यति यथा नवमुखे पुरे स्वं रुद्ध-

माया ह्येषा मया सृष्टा यत्पुमांसं स्त्रियं सतीम् ।
मन्यसे नोभयं यद्वै हंसौ पश्यावयोर्गतिम् ॥ ६१ ॥
अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भो ! ।
न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि ॥ ६२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च पुरञ्जन्यास्त्वं न पतिः किन्तु अविद्योपहितं चैतन्यमसि कथापक्षे स्पष्टमेव ॥ ६० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पूर्वतरः अनादिः परमेश्वरः ब्राह्मणः ब्राह्मणरूपः साम्नानुकूलवाक्येन ॥ ५१ ॥

यस्य मम येन मया कर्मफलमभुञ्जता साक्षिमात्रेण हेतुना अग्रे सृष्टः पूर्वं विचचर्थ ह नानायोनिषु सुखादिकमनुभूतवानसि तं मां "द्वा सुपर्णा सयुजा सखाया समानं वृक्षम्" इति सुप्रसिद्धं जानासि किम् ॥ ५२ ॥

अविज्ञातः सखा यस्य तमात्मानं नवद्वारपुरं स्वेपणकालिकं स्मरसि अपि किम् स्वतं स्मारयन् स्वावियोगकृतमनर्थमाह । हित्वेति षड्भिः । भौमभोगेषु शब्दादिविषयेषु रतः तदर्थं पदं स्थानमन्विच्छन् मां हित्वा तदेव गतः नवद्वारस्थानासक्तोऽभूरित्यर्थः पुंस्त्ववतिहिंसः प्राकनपुंस्त्वस्मरणाय ॥ ५३ ॥

तदेव प्रपञ्चयति । हंसावित्यादिना । हेआर्य ! ओकः अन्तरा- स्थूलं शरीरं विनैव वाशब्दोऽवधारणे सहस्रपरिवत्सरान् अहं त्वं च सखायौ अभूतां कथंभूतौ मानसं सूक्ष्मशरीरगतं हृदयमयनं ययोस्तौ इत्यन्वयः ॥ ५४ ॥

ग्राम्ये सुखे मतिर्यस्य सः अत एव मां विहाय अत्यन्ततो विस्मृत्य ॥ ५५ ॥

पञ्चविषया आरामा उपवनानि यस्मिंस्तत् नव द्वाराणि प्राणाच्छिद्राणि यस्मिंस्तत् एकः प्राणः पालो यस्मिंस्तत् पृथिव्यप्तेजोरूपत्रिकोष्ठकम् षट्कुलानि कुत्सितविषयग्राहकाणि मनःसहितानि ज्ञानेन्द्रियाणि यस्मिंस्तत् पञ्चकर्मेन्द्रियाणां विपणो हट्टो यस्मिंस्तत् पञ्चभूतानि प्रकृतिरुपादानं यस्य तत् स्त्री बुद्धिरेव स्वामिनी यस्य तत् ॥ ५६ ॥

पूर्वश्लोकं स्वयं व्याचष्टे । पञ्चेति । प्राणाः प्राणच्छिद्राणीन्द्रियगोलकानि नवद्वारः एकपालमिति स्पष्टत्वान्न व्याख्यातम् ॥ ५७ ॥

क्रियाशक्तिः कर्मेन्द्रियगणः भूतानि अव्यया नित्या प्रकृतिरुपादानम् शक्तिर्बुद्धिरधीशा यथा यस्य सः बुद्धिवशः पुमान् भवान् स्वात्मानं मच्छक्तिभूतं मां च नावबुध्यते ॥ ५८ ॥

रामया बुद्ध्या स्पृष्टोऽभिभूतः अतो न विद्यते श्रुते तत्त्वश्रुत्र्जुने अंशांशित्वे स्मृतिर्यस्य सः ॥ ५९ ॥

सुद्गपतिनस्ति मध्यात्मपदे गुरुत्वनिषेधो नास्ति यत् मया हेतुभूतया पूर्वत्र पुमांसमिदानीं सतीं श्रेष्ठां स्त्रियं मन्यसे सैषा मया सृष्टा महदादिरूपैर्नानावस्थां नीता विभ्रमोद्दिष्टा माया यतः उभयं पुंस्त्वस्त्रीत्वयुग्मं जीवे नास्ति अतः अहं पुमान् अहं स्त्री इत्याग्रहं हित्वा यद् यौ हंसौ तयोरावयोः स्वरूपं पश्य ॥ ६०—६१ ॥

भाषाटीका ।

हे प्रभो ! उसी समय पर आत्मज्ञानी पूर्वका सखा ब्राह्मण आकर उसके समझाने के लिये मनोहर भाव युक्त वचनोंमे उसरोती हुई वैदर्भी से बोला ( अनादि अन्तर्यामी परमात्मा है ) ॥ ५१ ॥

ब्राह्मण बोला कि तू कौन है किसकी कन्या है यह कौन है जिसको शोचती है जिसके साथ पहिले विचरती है सखा हूं मेरे को जानती है किनहीं ( अन्तर्यामी भगवान जीव को समुझाते हैं ॥ ५२ ॥

हे सखा अपना नाम अज्ञात सखा जानते हो कि नहीं स्थान की चाहना कर के पृथिवी के भोगों में रत हो सखा को छोड कर तुम चले गये थे ॥ ५३ ॥

हे आर्य ! हम तुमदोनों हंस थे मानसरोवर में रहते थे वर्ष तक विना घर के रहे ( प्रलय काल में जीव का नहीं रहता है ) ॥ ५४ ॥

हे बन्धो ! विषय सुख में मन लगने से मेरे को छोड़ तुम पृथिवी को चले गये घूमते घूमते कोई एक स्त्री का मकान को तुमने देखा ( अनेक योनि में भ्रमते माया का मनुष्य शरीर देखा ) ॥ ५५ ॥

उस स्थान मे पांच उपवन हैं नौ दरवाजे हैं एक है तीन परकोटा हैं छै दुकान वाले हैं पांच दुकान हैं उसके कारण हैं स्त्री उसकी मालिकिनी है ॥ ५६ ॥

तिसमे रूपादिक पांच विषय आराम हैं नौ प्राण के द्वार हैं एक मुख्य प्राण पालक है पृथिव्यादिक इन्द्रियों का समूह दुकान वाले हैं ॥ ५७ ॥

कर्मेंद्रिय दुकान हैं महा भूत कारण हैं बुद्धि उस पुर मालिक है पुरुषको उस पुरमें प्रवेश होने से अपना ज्ञान रहता है ॥ ५८ ॥

तिस पुरमे तुम प्रवेश होकर स्त्रीका संग पाकर सखा को भूल गये तब हे प्रभो ! उस स्त्री के संग से ऐसी दशा को प्राप्त भये हो ॥ ५९ ॥

तुम विदर्भ की पुत्री नहीं हो यह वीर तुमारा पति नहीं जिसने तुमको नौ द्वारके पुर मे रोका था उस पुरंजनी की भी तुम नहीं हो ॥ ६० ॥

श्रीधरस्वामिकृतभावार्थदीपिका

पुमांसं पूर्वजन्मनि यदमन्यथा इदानीं च सतीं श्रेष्ठां यन्मन्यसे एषा माया यत उभयमपि वस्तुतो नास्ति

यथा पुरुष आत्मानमेकमादर्शचक्षुषोः ।
द्विधा भूतमवेक्षेत तथैवान्तरमावयोः ॥ ६३ ॥
एवं समानसो हंसो हंसेन प्रतिबोधितः ।
स्वस्थस्तद्व्यभिचारेण नष्टामाप पुनः स्मृतिम् ॥ ६४ ॥
बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम् ।
यत्परोक्षप्रियो देवो भगवान् विश्वभावनः ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां पुरञ्जनोपाख्याने
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

द्वावां हंसौ शुद्धौ नौ आवयोर्वक्ष्यमाणां गतिं स्वरूपं पश्य ॥ ६१ ॥

तत्त्वंपदार्थयोश्छिद्रंशेनैक्यमाह । अहमेव भवान् उपचारं धारयति न चान्य इति व्यतिहारोपदेश उक्ताभिप्रायः छिद्रमन्तरम् ॥ ६२ ॥

तर्हि कथमावयोरज्ञत्वसर्वज्ञत्वादिधर्मभेदस्तत्राह । यथेति । आत्मानं देहमादर्शे निर्मलं महान्तं स्थिरं चावेक्षेत परस्य चक्षुषि च तद्विपरीतम् विद्याविद्योपाधिकृतो धर्मभेद इत्यर्थः ॥ ६३ ॥

एवममुना प्रकारेण स मानसो हंसः चेत्रज्ञो हंसेन परमात्मना बोधितः सन् स्वस्थ आत्मनि स्थितः संश्चिरं ध्यात्वा तद्व्यभिचारेणेश्वरवियोगेन विषयाभिलाषबुद्ध्या नष्टां स्मृतिमहं ब्रह्मास्मीति ज्ञानं पुनः प्राप्तवान् ॥ ६४ ॥

कथामात्रमिति बुद्धिं वारयति । बर्हिष्मन्निति । पारोक्ष्येण राजकथामिषेण तत्र हेतुः यद्यस्मात् हे बर्हिष्मन्!प्राचीनबर्हिः एतद्राजकथाभिधेयात्मकथाप्रदर्शिना यस्माद्देवः श्रीनारायणः परोक्षप्रियः साक्षादात्मज्ञानकथनेन तव चेतसि कथा नायातीति भावः ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एव यस्माद्धेतोः पूर्वजन्मनि पुमांसमिदानीं सतीं श्रेष्ठां स्त्रियं मन्यसे एषा हेतुभूता मया सृष्टा मायैव अत उभयमप्यात्मनि न वस्तुतोऽस्ति हि यस्मादावां हंसौ शुद्धौ नौ आवयोः अथ अधुना गतिं वक्ष्यमाणां स्वरूपं पश्य विमर्शयेत्यर्थः ॥ ६१ ॥

किञ्च वक्ष्यमाणमेवाह । अहं भवान् भवच्छरीरकः त्वमेवाहं त्वद्रूप एवाहं त्वं कदाचिदपि न मच्छरीरत्वरहितः अहं तव सदा आत्मा त्वं तु मम सदा शरीरभूत इत्यर्थः नचान्यस्त्वमतो न त्वमदन्यः न मत्सम्बन्धविधुर इत्यर्थः विचक्ष्व ।समक्षयं नौ आवयोः छिद्रं सम्बन्धवैधुर्यं मनागपि अल्पमपि जातु कदाचित् कवयो विद्वांसः न पश्यन्ति एवं सम्बन्धनियमकथनेनापृथक्सिद्धजातिगुणप्रभादिविशेषणविशिष्टव्यक्तिगुणिप्रमयादिवज्जीवेश्वरात्मकं वस्तुविशिष्टरूपेणैकमेवेत्युक्तं भवति भो इत्यव्ययं सम्बुद्धौ ॥ ६२ ॥

एतदेव दृष्टान्तेन दर्शयति । यथेति । पुरुषः पुरुषाकारमात्मानं स्वमादर्शे महत्युपाधौ चक्षुषि परस्य चक्षुष्यल्पे उपाधौ द्विधाभूतं वृद्धिभाक्त्वेनह्रासभाक्त्वेन च द्वेधाभूतं यथाऽवेक्षेत पश्येत तथा आवयोरप्यन्तरं यथा जातिगुणाद्यपृथक्सिद्धविशेषणविशिष्टं पुरुषाख्यं मांसपिण्डं तत्तद्विशेषणाद्युक्तमेकमेव विशिष्टं वस्त्वादर्शचक्षुराद्युपाधिप्रयुक्तवृद्धिह्रासादिगुणविशिष्टमवेक्षेत एवं शरीरात्मभावेन नियतविशेषणविशेष्यभूतं जीवेश्वरात्मकं विशिष्टमेकमेव वस्तु स्थूलसूक्ष्मशरीरेष्वनुप्रविष्टमुपाधिवशाज्ज्ञानाभूतमिव पश्यतीत्यर्थः पुरुषमवेक्षेत इत्यनेनायमर्थोऽवगम्यते पुरुषो हि जातिगुणाद्यनेकविशेषणविशिष्टः जातिव्यक्त्योरिव गुणगुणिनोरिवप्रभाप्रभावतोरिवशरीरात्मनोरावयोर्भेदर्शनाभावः बिम्बप्रतिबिम्बयोरिव जीवेशयोरौपाधिको भेदः न स्वाभाविक इति तु नार्थः आदर्शचक्षुषोरित्युपाधिद्वित्वकथनादादर्शचक्षुर्गतयोः प्रतिबिम्बयोः बिम्बेन साकमभेदेऽपि तयोः परस्परं भेदसद्भावावगमाच्चादर्शप्रतिबिम्बाच्चक्षुःप्रतिबिम्बोऽन्यः बिम्बप्रतिबिम्बयोरभेदस्य दृष्टान्तत्वे दृश्यं प्रतिबिम्बानां भेदोऽभ्युपगन्तव्यः अन्यथा बिम्बप्रतिबिम्बयोरिव तेषु द्वैलक्षण्यं न प्रतीयेत अभेदसाधकबिम्बप्रतिबिम्बयोः सामग्र्यभावाच्च नहीकप्रतिबिम्बत्वं साधकं प्रतिबिम्बानां बिम्बावस्थात्वेन तासां भिन्नत्वादत एव हि पिण्डत्वघटत्वकपालत्वाद्यवस्थानां परस्परभेदा एकमृद्द्रव्यावस्थात्वमात्रेणाभेदाभ्युपगमः प्रतीतिपराहतः तस्मादत्र बिम्बप्रतिबिम्बयोरौपाधिकभेदप्रतिपादनपरोऽयं श्लोकः किन्तु यथोक्तार्थपर एव अस्तु वात्र बिम्बप्रतिबिम्बयोरेव दृष्टान्तत्वं तथापि तयोर्यत्साधर्म्यं तदेवात्र दृष्टान्तीकृतं ननु तादात्म्यमप्यविरुद्धोपयुक्तांशमात्रेण दृष्टान्तसम्भवाज्जीवब्रह्मणोस्तादात्म्यं स्वेतरप्रकरणविरुद्धं स्वपरयाथात्म्यज्ञानाभावनिमित्तदेहात्मभ्रमस्वतन्त्रात्मभ्रमवतः तन्निवृत्तये क्रियमाणेऽस्मिन्स्तत्त्वोपदेशप्रकरणे जीवपरयोः पारमार्थिकसखित्वप्रतिपादनात्सखित्वं हि पदार्थद्वयनिरूपितं न च सखित्वमपि स्त्रीपुंसमानात्वादिवदौपाधिकमेवात्रोपदिश्यत इति वक्तुं शक्यं तत्सद्भावादि-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शानां हंसत्वादीनामप्यौपाधिकत्वप्रसङ्गात् मायाह्येषा मया-सृष्टेतीश्वरस्य संसारयितृत्वावगमाच्च नहि सर्वज्ञ ईश्वरोऽनुन्मत्तः स्वानर्थरूपं संसारं स्वस्मिन्नारोपयतीति युक्तिमत् किञ्च येनाग्रे विचक्ष्व पश्य अत्र प्रमाणमाह इति श्रुतेऽहं शब्दस्य बोधनार्हतोपयोग्यत्वं विचकथं माया ह्येषामयासृष्टेति स्रष्टृत्वाद्युक्तसर्वज्ञत्वादिगुणविशिष्टपरमात्मवाचिनोऽहं शब्दस्य बोधनार्हतोपयोग्यत्वं संसारित्व-विशिष्टजीववाचिनो भवच्छब्दस्य मुख्यार्थपरित्यागेन चैतन्यमात्रै-क्यप्रति पादनपरत्वमस्वरसमिति दिक्. विस्तरस्तु तत्त्वमस्यादि-वाक्यस्य जीवब्रह्मतादात्म्यपरत्वे(१)भाष्योक्तदूषणानुसारेणानुस-न्धेयः स्वपक्षे उपपत्तिरपि तदुक्तरीत्या एवानुसन्धेया ॥ ६३ ॥

सख्योः सम्वादमुपसंहरति । एवमिति । हंसेन परमात्मनैवं प्रतिबोधितः आवेदितस्वपरयाथात्म्यो मानसः मनसा सहवर्त-मानो जीवः तद्व्यभिचारेण पूर्वं स्वपरयाथात्म्यज्ञानाभावेन नष्टां स्मृतिं पुनरपि स्वात्मनो भगवच्छेषतैकरसतामनुसंदधानो मुक्तो बभूवेति भावः ॥ ६४ ॥

उपाख्यानमुपसंहरति । हे बर्हिष्मन्नेतद्वृत्तान्तमध्यात्ममात्मानम मधिकृत्य प्रवृत्तं पारोक्ष्येणान्यापदेशमुखेन प्रदर्शितमतो न त्वया केवलं कथामात्रबुद्धिः कर्तव्येति भावः पारोक्ष्येण किमर्थ-मुपदिष्टं तत्राह । यद्यस्माद्विश्वस्य कारणभूतो भगवान्परोक्षप्रियः "परोक्षप्रिया इव हि देवा" इति श्रुत्या देवानां परोक्षप्रियत्वा-श्रवणाद्देवतासार्वभौमो भगवान् परोक्षवादेन नितरां तुष्यतीति एवमुक्तमित्यर्थः इदं श्रोतुरस्मिन् श्रद्धाद्रढिम्न उक्तं परोक्षप्रिया इव हि देवा इत्यर्थस्यार्थवादत्वादन्यथा साक्षात्कृतैः श्रवणकीर्त-नादिभिर्भगवतस्तोषाभावप्रसङ्गाच्च तस्मात्पारोक्ष्यकीर्तनं श्रोतुर्बु-द्ध्यवगमार्थमेवेति द्रष्टव्यम् ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवत-
चन्द्रचन्द्रिकायामष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रारब्धकर्मणोयं विषफलानुभवार्थं मया मदन्तर्यामिणा हरिणा बुद्धा संकल्पितेन माया बन्धकशक्तिरिच्छा या सा चाचिन्त्यम हिमेत्याह । मादिति । तर्हि किं तत्त्वज्ञानमिति तद्विविच्याह । हंस-मिति । तत्वतो नामगोत्रादिराहित्येन चेतनं हंसं निर्मलं पश्य आत्मनो हरेर्गतिं तत्तत्सत्ताप्रदत्वेन स्थितां पश्य आत्मनां मम गतिं त्वां प्रबोध्य गच्छतो मम यात्रां पश्येति वा अनेन बोध्य-बोधकयोरनुभवसिद्धत्वाद्बाधितो भेद इति ज्ञातव्यम् ॥ ६१ ॥

ननु "कर्माणि विज्ञानमयश्चात्मा परेऽव्यये सर्व एकीभवन्ति तत्त्वमस्यहं ब्रह्मास्मि" इत्यादिश्रुतिभिरैक्यस्य प्रतिपाद्यत्वात्कथं भेदोऽबाधित इति ज्ञायते न चेदमौपचारिकं गुरुशिष्योप-देशत्वाद्विप्रलम्भानुपपत्तेरित्याशङ्क्य जीवसत्ताप्रदत्वाच्चेतनत्वेन तत्सदृशत्वाच्चाभेदव्यपदेशः "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञ-वत्" इति सूत्रात् जीवसत्ताप्रदत्वात्तु सदृशत्वाच्च दैशवः कथ्यते तदभेदेन नतु जीवस्वरूपतः इति प्रमाणविरोधबाहुल्याच्च त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति दूषितत्वाच्चाभेदस्येत्यभिप्रे-त्याह । अहमिति । भवानहं त्वं मत्तोऽन्यो न च त्वन्तु अहमेवेति

विचक्ष्व पश्य अत्र प्रमाणमाह । नेति । कवयस्तत्त्वदर्शिनः न्मनागल्पमपि नावयोश्छिद्रमन्तरं पश्यन्ति "द्रव्यं कर्म च अ" इति वाक्यार्थं पश्यन्तोऽस्मदन्तर्यामिणमन्तरेणावयोः नास्ति किमुत इष्टानिष्टप्राप्तिपरिहारलक्षणप्रवृत्तौ शंका शून्यदेशीययोरन्तर्यामिणस्तत्स्वपरयोरन्योरिव भेदं पश्यन्ति पश्यन्तीत्यभिप्रायः भवदन्तर्यामिमदन्तर्यामी चान्यो न भवान् त्वमेवाहमेक एवेति जानीहि त्वयि स्थितस्त्वमित्य प्रमाणयतां कवीनां दर्शनादिति वाहं भवाश्च किन्तु अतस्त्वं त्वमेवाहमहमेवेति विचक्ष्व अन्यथा न पश्य कु मनाक् छिद्रं कियानेव विशेष इति न पश्यन्ति किन्तु भेदं पश्यन्तीति वा ॥ ६२ ॥

जीवसत्ताप्रदत्वाज्जीवेनाभेदः परस्येत्यत्र दृष्टान्तमाह । आदर्शचक्षुषोः प्रतीयमानस्य प्रतिबिम्बस्य सत्तादर्शविम्बा त्वात्तदेवेदमितिवदावयोरन्तरं मत्सत्ताया अप्यस्मत्स्वाम्य त्वादावां तदभिन्नाविति व्यवहारः यथा दर्पणाद्युपाधि त्मानं बहुधा पश्यन्ति तथावयोरन्तर्यामिणोरन्तर्यामिति वा ।

उपसंहरति । एवमिति । तद्व्यभिचारेण विपर्ययबुद्धिप्रस शयेन नष्टां तिरोहितां स्मृतिं शास्त्रविषयामापेत्यन्वयः ।

कथा बाह्याध्यात्मपक्षभेदेन निरूप्येत इत्यतः कथ मिति तत्राह । बर्हिष्मन्निति परोक्षणान्यापदेशेन एवं किङ्कारणं तत्राह । यत्परोक्षेति । "परोक्षप्रिया इव हि देवा" दिश्रुतिः अनेनाहं भवानित्यादेरप्यस्मदुक्त एवार्थो न प्रा इत्येतत्सुतरामवोधि ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

हंसावित्यत्र हंसमिति चित्सुखः मामिति शेषः नौ इति कश्चित् ॥ ६१ ॥

सख्योपयोगि शुद्धत्वं प्रतिपादयन् द्वयोरैकात्म्यं स्थाप नोभयमित्यधिकेनाहमित्येकेन ॥ ६२ ॥

ननु द्वयोरन्तरत्वे सति कथं माया तवाधिकारो मम कारिणीति माया ह्येषेत्यत्र दर्शितं कथं वा सख्यं तत्राह । अत्र विज्ञातृपुरुषाभिमुखेष्वादर्शादिषु स्वच्छेषु चाक्षुषं तेजः सद् बलीयसा सौर्येण तेजसा प्रतिश्रान्तः प्रवर्तितं मुख सत् तदेव मुखं ग्राहयन्दोषवशात्तद्देशतामभिमुखतां च मुख दयत् । पूर्वदृष्टाभिमुखादर्शस्य द्विदंशनाभाभिमुखश्च मुख रोपयतीत्येवं ज्ञायते प्रतिबिम्बमिति केचिन्मन्यन्ते तथाच तथैव प्रतीयेन दोषवशादित्यादौ को वा हेतुः सूर्यादिर्मा च तद्विरोधिकल्पनान्तरं सृज्येत तथा सूर्यप्रतिबिम्बानाम स्तिर्यञ्च दृश्यन्ते तत्र चाभासे यदीयत्वादिकमनुभूयते वा हेतुः । तस्मादन्यथानुपपत्त्येदमेव लभ्यते सर्वस्य वस्तु रानुकारिणीच्छटा सर्वथाव्यवहिते देशे मज्जन्त्येव किन्तु त्वात्रोपलभ्यते स्वच्छं वस्त्वन्तरं प्राप्य तु समुद्भवन्ती त मुद्रावद्विपरीततदाद्यं प्राप्नुवती प्रतिबिम्बमुच्यते । यद्वा वस्तुनस्तथैवेश्वरदत्ता शक्तिः यद्विम्बस्य रूपं स्वस्मिन् आह

(१) श्रीरामानुजभाष्ये जिज्ञासाधिकरणे ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्व प्रतिभासितमेव प्रतिबिम्बत्वं यदेव बिम्बत्वं व्यवहितेऽपि देशे निजाभासमुद्गिरतीति तस्मादयमर्थः आदर्शे स्वच्छवस्तु आत्मनो निजदेहस्यानन्याकारच्छटात्वेन स्वचक्षुषि च बहिर्निःसृत-तादिन्द्रियमयकेवलं तत्तेजोऽसि साक्षात्तद्रूपात्मत्वेनात्मानमेव यथा द्विधा भूतमेवेक्षते लोकस्तथैवावयोरन्तरं भेदांशः स्वच्छांशस्य शुद्धजीवस्यैव प्राकृतोपाधौ प्रतिफलनप्रायत्वादिति भावः । चक्षुषो निकृष्टप्रतिबिम्बोपाधितया व्याख्यानन्तु विचार्यं चक्षुः शब्देन साक्षाद्धितं स्वचक्षुः परित्यज्य परचक्षुर्वचनं कष्टं स्वचक्षुश्च न तु स्पष्टं सति च स्पष्टे नैल्यादिदृष्टान्ते तद्रूपाकान नापादयामसि स एष चाभेदात्मको भेदः सख्यदार्ढ्यायैव निर्दिष्टः जानासि किं सखायं मामिति हंसावहञ्च त्वं चार्य ! सखायावित्युपक्रमाभ्यासा-नुसारात् ॥ ६३ ॥

मुनिरपि तथैवोपसंहरति । एवमिति । स्वस्थः प्राधानिकावेशरहितः सन् तदव्यभिचारेण पूर्वमीश्वराख्यहंसवर्णितसख्यतया नष्टां तिरोहितां स्मृतिं जानासि अपि किं सखायं मामिति अपि स्मरसि चात्मानमविज्ञातसखमित्यत्र पूर्वोक्तं सख्यानुसन्धानं पुनराप इति अत्र पुनः शब्देन स्मृतिशब्देन तत्स्मृतेर्नाशादस्वाभाविकत्वं विवक्षितम् किन्तु बलाद्यावृतस्यापि सख्यस्य स्वाभाविकत्वादनादित्वमित्यत्र कृतहान्यकृताभ्यागमप्रसङ्गात् ॥ ६४ ॥

अस्य सर्वस्यापि प्रसङ्गस्य भगवत्प्रीतिपरमेव स्पष्टयति । र्पदिति ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु यद्येव तर्हि कथं मे तथा तथा प्रतीतिस्तत्राह । मायेति । यतः कदाचित् स्वं पुमांसं मन्यसे कदाचित् सतीं स्त्रियं कदाचिदुभयं नपुंसकमित्यर्थः उपलक्षणमेतत् कदाचिन्मनुष्यं कदाचिद्देवतिर्यगादिकं च यद्यस्माद्धे निश्चितमावां हंसौ शुद्धौ आवयोर्गतिं वक्ष्यमाणं स्वरूपं पश्य ॥ ६१ ॥

अहं परमात्मैव भवान् जीवः मत्तोऽन्यः मत्तश्चैतन्यस्वरूपात् भिन्न इत्यर्थः । ननु किमेतन्मद्रहस्यं ब्रूषे तत्राह । भोः कृष्णभक्त ! गतकोपं यथास्यात्तथा त्वमेव विचक्ष्व सविमर्शं पश्य । "हनुमत्कोपे समाख्यातः शिवे च कुक्कुरेऽपि च" इति मेदिनी ननु कदाचिदस्यं मम तथा मत्प्रभोस्तवापि नातः परोऽन्यः कलङ्को यदा आवयोर्भेद इति तत्राह । नेति । नौ आवयोश्छिद्रमीदृशं कलङ्कं जातु कदाचिदपि मनागीषदपि कवयो विज्ञा न पश्यन्ति किन्त्वविज्ञा एव भेदं पश्यन्तीत्यर्थः ॥ ६२ ॥

नन्वहं भवानिति त्वदुक्तिरेव सोढुमशक्या तत्र साकूत्या-पर्यवसितमाह । यथेति । पुरुषो जीव आत्मानं स्वं एकमपि मोक्षदशायां बन्धदशायाञ्च क्रमेण आदर्शचक्षुषोर्द्विधाभूतमादर्शे मणिमयदर्पणे यथोचितप्रमाणं सम्पूर्णतेजस्कं महान्तमवलम्बीक्षते चक्षुषि तु अत्यल्पप्रमाणमल्पतेजस्कमतिक्षुद्रं चैव ईक्षेत यथेति यथा एकस्यापि द्विधा भूतत्वमुपाधिधर्मालिप्तत्वालिप्तत्वाभ्यां भेदमीक्षेत तथैव आवयोः परमात्म जीवात्मनोः सदैव द्विधाभूतयोरन्तरं सदैव भेदमीक्षेत । "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः । अहं देहमध्ये परमात्मस्वरूपेण यत्र त्वञ्च जीवो वर्त्तसे तत्राह स्वतो निरुपाधिरपि स्वैरतया सकललोकदेहगतः सन्नन्तर्यामी स्वसमुचितप्रमाणः सम्पूर्णतेजस्को महानिश्चलो मुक्तजीव इव सदैव निर्लेप एव जीवः अत्यल्पप्रमाण एव अत्यल्पतेजस्कोऽतिक्षुद्रः सदैव उपाधिधर्मग्रस्तः कदाचिदेव मुक्तिदशायामलिप्त इति सदैवावयोर्भेदं जानीयादित्यर्थः । यदुक्तमहं भवान्न चान्य इति तत् खलु अहं यथा चित् तथा भवानपि चित्तु जडो मायेत्यर्थः । एतत्पद्ययोरर्थान्तरन्तु शास्त्रस्यास्य मोहिनीत्वव्यापकमसुरेष ग्राह्यमकात्मवादस्य भगवदनभिमतत्वात् यदुक्तम् । तृतीये भगवतैव "यथोल्मुकाद्विस्फुलिङ्गाद्धूमाद्वापि स्वसम्भवात् । अप्यात्मत्वेनाभिमतात् यथाग्निः पृथगुल्मुकात् । भूतेन्द्रियान्तःकरणात् प्रधानाज्जीवसंज्ञितात् । आत्मा तथा पृथग्द्रष्टा भगवान् ब्रह्मसंज्ञित" इति श्रुत्या च "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति" इति स्मृत्या च "एकदेशे स्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा" इति तथा सच्चिदानन्दविग्रहो भगवान् निरुपाधिरेव तस्य चिदुपाधित्वमपि सुरमतेनैवोक्तमिति ज्ञेयम् ॥ ६३ ॥

उपसंहरति । एवमिति । स्वस्थः प्राधानिकावेशरहितः । तदव्यभिचारेण भगवद्धंसमुखेन नष्टां स्मृतिं पुनरेव श्रीगुरुकृपया प्राप्तमेव पुनः प्राप अथाभ्यासानुगुणकथनात् सुपर्णाश्रुतेर्विलयन्वाच प्रेमवत्पार्षदत्वप्राप्तिरेव श्रीनारदेन परमपुरुषार्थोऽभिमतो ज्ञेयः ॥ ६४ ॥

कथामात्रमिदमिति बुद्धिं मा कृथा इत्याह । बर्हिष्मतेऽत्र पारोक्ष्येण राजकथामिषेण तत्त्व हेतुः । यद्यस्मात् तदेव प्रेक्षालिकीयं कथा कथितेतिभावः ॥ ६५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टाविंशश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तामेव गतिं दर्शयति । अहमिति द्वाभ्याम् । अहं भवानेव नान्यः त्वं चाहमेव नान्यः भो सखे ! इति त्वं विचक्ष्व ननु परिच्छिन्नत्वबुद्धिमद्दयत्वाद्यल्पत्वादिधर्मिणो मम परिपूर्णत्वसर्वज्ञत्वादिधर्मिणा भगवता सह अहं भवान् त्वमहमित्यैक्यं कथं घटते इत्यत्राह । कवयः मनागीषदपि जातु कदाचिदपि नौ आवयोः छिद्रं पृथगवस्थानं न पश्यन्ति न हि अंशांशिनोः गुणिनोः प्रभाप्रभावतोः जातिव्यक्त्योः कार्यकारणयोः पृथगवस्थानं सम्भवति ततः स्वरूपतो भिन्नयोरप्यावयोः पृथगवस्थानाभावादभेद इति स्वाभाविकः आवयोर्भेदाभेद सम्बन्ध इत्यर्थः अत्र प्रमाणभूतं शास्त्रं पूर्वमेवोदाहृतम् ॥ ६२ ॥

स्वाभाविकभेदाभेदसम्बन्धमेव दृष्टान्तेनोपपादयति । यथेति । यथा पुमान् आत्मानं स्वभावत एकमेव देहमादर्शे चक्षुषि च आत्मिमपुरुषान्तरनेत्रे च द्विधाभूतं स्वभावत एव चक्षुरादयवयवगतान युक्तत्वाद्द्विप्रकारं जातमवेक्षते तथैव आवयोरपि अभेदं सत्यं वचान्तरं भेदमवेक्षतेति योजना ॥ ६३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तद्व्यभिचारेण आत्मपरमात्मविस्मृतिपूर्वकवुद्ध्याद्यनात्मासक्ति रूपेण नष्टां स्मृतिमात्मपरमात्मस्मृतिं पुनराप ॥ ६४ ॥ उपसंहरति। बर्हिष्मन्निति। परोक्षेण राजकथामिषेण ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टाविंशाध्यायार्थप्रकाशः ॥ २८ ॥

---

भाषाटीका ।

यह केवल हमारी बनाई माया है जो तुम पुरुष स्त्री सती अपने को मानते हो जो उभय रहित मानते हो हम दोनों हंस हैं हमारी गति को देखो ॥ ६१ ॥

जो हम हैं सो तुम हो दूसरे नहीं हो तुम ही हम हैं विचार कर देखो विद्वान् लोग हमारे तुमारे मध्यमें कुछ भी अन्तर नहीं देखते हैं इहांपर जीव ईश्वर का व्याप्य व्यापक भाव है एवं शरीर शरीरी भाव हैं कार्य कारण भाव है [illegible] भेद रहने पर भी अभेद निर्देश किया है ॥ ६२॥

जैसे पुरुष अपने शरीरको दर्पण में भिन्नरूप से दे[illegible] वैसे ही तुमरा हमारा फरक है यहां जीवों के [illegible] देवमनुष्यादिक भेद प्रतीत होता है और आत्मा तो शुद्ध [illegible] ज्ञानाकार ईश्वर के तुल्य ही है ॥ ६३ ॥

इस प्रकार से हंस के समझाने से स्वस्थ होकर उस सखा के वियोग होने से जो चली गई थी उस स्मृ[illegible] फिर प्राप्त होगया ॥ ६४ ॥

हे वर्हिषमन् ! यह अध्यात्म ज्ञानपरोक्षरूप से [illegible] है क्योंकि विश्वपालक भगवान् परोक्ष के प्रिय हैं ॥ ६५ ॥

इति श्रीभागवत चतुर्थस्कन्ध अट्ठाईसवां अध्याय
का भाषानुवाद लक्ष्मणाचार्य कृत
समाप्त ॥ २८ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे अष्टाविंशोऽध्यायः समाप्तः ॥ २८ ॥

## ॥ ऊनत्रिंशोऽध्यायः ॥



॥ प्राचीनबर्हिरुवाच ॥

भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते ।
कवयस्तद्विजानन्ति न वयं कर्ममोहिताः ॥ १ ॥

॥ नारद उवाच ॥

पुरुषं पुरञ्जनं विद्याद् यद्व्यनक्त्यात्मनः पुरम् ।
एकद्वित्रिचतुष्पादं बहुपादमपादकम् ॥ २ ॥
यो ऽविज्ञाताहृतस्तस्य पुरुषस्य सखेश्वरः ।
यन्न विज्ञायते पुम्भिर्नामभिर्वा क्रियागुणैः ॥ ३ ॥
यदा जिघृक्षन् पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान् ।
नवद्वारं द्विहस्ताङ्घ्रिं तत्रामनुत साध्विति ॥ ४ ॥
बुद्धिं तु प्रमदां विद्यान्ममाहमिति यत्कृतम् ।
यामधिष्ठाय देहेऽस्मिन् पुमान् भुङ्क्ते ऽक्षभिर्गुणान् ॥ ५ ॥
सखाय इन्द्रियगणा ज्ञानं कर्म च यत्कृतम् ।
सख्यस्तद्वृत्तयः प्राणः पञ्चवृत्तिर्यथोरगः ॥ ६ ॥
बृहद्बलं मनो विद्यादुभयेन्द्रियनायकम् ।
पञ्चालाः पञ्च विषया यन्मध्ये नवखं पुरम् ॥ ७ ॥
अक्षिणी नासिके कर्णौ मुखं शिश्नगुदाविति ।
द्वे द्वे द्वारौ बहिर्याति यस्तदिन्द्रियसंयुतः ॥ ८ ॥
अक्षिणी नासिके आस्यमिति पञ्च पुरः कृताः ।
दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः ॥ ९ ॥
पश्चिमे इत्यधो द्वारौ गुदं शिश्नमिहोच्यते ।
खद्योताविर्मुखी चात्र नेत्रे एकत्र निर्मिते ।
रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनत्रिंशे परोक्षार्थव्याख्यानेनोपसंहृतम् ।
स्त्रीसङ्गतो भवस्तीव्रस्तत्सङ्गान्मुक्तिरीरितिस्फुटम् ॥ १ ॥

कवयोऽध्यात्मविदः ॥ १ ॥

व्यनक्ति लिम्पति चेतनीकरोतीत्यर्थः । यद्वा । व्यनक्ति प्रकटयति ततश्च स्वकर्मणा पुरं जनयतीति पुरञ्जनपदं व्याख्यातं भवति । एकद्व्यादयः पादा यस्य ॥ २ ॥

अविज्ञातशब्देनाहृतो व्याहृत उक्तो यः स ईश्वरः अविज्ञातनामनिरुक्तिः यद्यस्मात्पुम्भिर्नामादियोगेन न विज्ञायते ॥ ३ ॥

तत्र तेषु पुरेषु मध्ये ॥ ४ ॥

अक्षिभिरिन्द्रियैः ॥ ५ ॥

पञ्चवृत्तित्वात्पञ्चशिराः सर्प इव प्राणः ॥ ६ ॥

एकादशमहाभट इत्यनेन एकादशो महाभटो नायक इत्यु-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कस्तं दर्शयति बृहद्वलं यस्य तन्मनः नव खानि द्वाराणि यस्य॥७॥
द्युमत्सख इत्यादेरर्थं संक्षेपेणाह । यस्तादिन्द्रियसंयुतः स आत्मा ताभिर्द्वाभिर्बहिर्यातीति ॥ ८ ॥
पुरः पूर्वभागे कृताः ॥ ९ ॥
नेत्रे इति रूपमिति चक्षुषेति खद्योतादनीं व्याख्यानं शेषोऽनुवादः ईश्वरः पुरञ्जनः ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतदध्यात्मं पारोक्ष्येण प्रदर्शितमित्युक्तम् । तत्राध्यात्मत्वे कथं पुरञ्जनपदव्युत्पत्तिरिति विवित्सायां राजा पृच्छति । भगवन्निति । हे भगवन् ! तेऽध्यात्मविदुत्तमस्य ते तव वचः परोक्षरूपं वाक्यमस्माभिः केवलं देहात्मबुद्धिभिः सम्यक् नावगम्यते नावबुध्यते अध्यात्मविदस्तु त्वद्वचो जानन्ति कर्मस्वेव यज्ञादावेव मोहिताः यद्वा कर्मणा पुण्यापुण्यादिकर्मणा तिरोहितस्वपरयाथात्म्याः वयं कथं जानीमः ॥ १ ॥

एवमापृष्टो भगवान्नारदः पुरञ्जनादीनि पदान्यध्यात्मपक्षानुकूलतया व्युत्पादयति। पुरुषमित्यादिना । पुरुषं क्षेत्रज्ञं पुरञ्जनं पुरञ्जनशब्दबोध्यं विद्यात् पुरुषे पुरञ्जनपदप्रवृत्तौ निमित्तमाह । यः पुरुषः आत्मना मनसा सह पुरं शरीरं व्यनक्ति दृढतरं संबध्नातीति पुरञ्जनः पूःशब्दे उपपदे अञ्जेर्ल्युट् पूःशब्दस्तु शरीरे गौणया वृत्त्या प्रयुज्यते नह्यत्र सर्वाणि पदानि मुख्यार्थान्येवेत्याग्रह इति भावः पुरं विशिनष्टि । एकद्वित्र्यादयः पादा यस्य बहवः पादा यस्य न विद्यन्ते पादा यस्य तत् ॥ २ ॥

योऽविज्ञातशब्देनाहृत उक्तः तस्य पुरञ्जनाख्यस्य पुरुषस्य सखा स ईश्वरः तस्मिन्नविज्ञातशब्दप्रवृत्तिनिमित्तमाह । यद्यस्मात्पुंभिर्नामादिभिर्न विज्ञायते इत्यविज्ञातः यद्यपि हरिविष्ण्वादिनामभिः जगद्व्यापारादिक्रियाभिः सत्यज्ञानादिगुणैश्च शास्त्रतो ज्ञायत एव तथापीयत्तया न ज्ञायते नामक्रियागुणानामानन्त्यादितिभावः न विज्ञायत इति कर्मणि व्युत्पत्तिः कर्त्तरि व्युत्पत्तेरप्युपलक्षणं सा च दर्शिता पुरस्तात् ॥ ३ ॥

यदायं पुरुषः क्षेत्रज्ञः प्रकृतेर्गुणान् ज्ञानकर्मोभयेन्द्रियविषयान्कात्स्न्र्येन अजिघृक्षद्ग्रहीतुमैच्छदनुभवितुमैच्छदित्यर्थः तदा नव द्वाराणि छिद्राणि यस्य द्वौ हस्तौ पादौ च यस्य तन्मनुष्यशरीरं साधु समीचीनमित्यमनुत तिर्यगादिशरीरेषु सर्वेन्द्रियाणामनभिव्यक्तेः सर्वविषयानुभवासंभवान्मनुष्यशरीरमेव--सर्वविषयानुभवयोग्यं मत्वा दैवात्तदुपलभ्य साध्वित्यमनुतेत्यर्थः अनेन सोऽन्वेषमाणः शरणमित्यादिना कोकिलकूजितैरित्यन्तं व्याख्यातम् ॥ ४ ॥

बुद्धिं प्रमदां विद्यात्तत्र प्रमदाशब्दप्रवृत्तौ निमित्तमाह । यद्यया बुद्ध्या ममाहमिति कृतं मदश्चित्तविकारः अहं ममाभिमानरूपमदहेतुत्वाद्बुद्धिः प्रमदेत्युच्यत इत्यर्थः किंच यां बुद्धिमधिष्ठायाक्षभिरिन्द्रियैः गुणान् शब्दीन् विषयानाश्रिन् देहे भुङ्क्ते गुणानुभवजन्यमदहेतुत्वाच्च प्रमदा बुद्धिरित्यर्थः ॥ ५ ॥

भृत्यैर्दशभिरायान्तीमित्यस्यार्थमाह। सखाय इति । इन्द्रियगणाः ज्ञानकर्मोभयेन्द्रियगणाः सखायः भृत्याः तत्र सखिशब्दप्रवृत्तिनिमित्तमाह । तद्वृत्तय इन्द्रियवृत्तयः ज्ञानं शब्दादिविषयकं ज्ञानं व्यवहृत्यादानगत्यादिरूपं कर्म च यत्कृतं येनेन्द्रियगणेन कृतं सह प्रवृत्तिमत्त्वमन्योन्य सखित्वमत्र विवक्षितं एकैकशतनायकैरित्यस्यार्थमाह इति । तद्वृत्तयः इन्द्रियवृत्तयः सख्यः भवन्ति पञ्चशीर्षा थमाह । प्राण इति । पञ्चवृत्तित्वात्पञ्च शिराः सर्प इव

अन्यत्सुगममित्यभिप्रेत्य एकादशमहाभटा इत्यं दशमहाभटमाह । स्वविषयेषु प्रसह्य प्रवर्त्तकत्वात् बृहद्ब एव ज्ञानकर्मोभयेन्द्रियाणां नायक मन एकादशो महाभ अत्र प्रकरणे पाञ्चालशब्दो बह्वर्थेषु प्रयुक्तः दाक्षि मुत्तरपाञ्चालमित्यत्र शास्त्रे सपाञ्चालपतिरित्यत्रेन्द्रियेषु वंशः पाञ्चालेष्विति विषयेषु तत्र मुख्यार्थमाह । पञ्च विषयाः पञ्चालाः पच्यन्ते व्यक्तीक्रियन्ते इति व्युत्प बन्धिषु लाक्षणिकप्रयोगः अनेकार्थकल्पनायोगादिति सप्तोपरिकृता द्वार इत्यादेरर्थमाह । यत्पुरं मध्ये यस्य मध्ये नवानां खानां द्वाराणां समाहारः नवखमक्षिना रूपमित्यर्थः यद्वा पुरं मध्ये यन्नवखं यानि नव द्वाराणि द्वे अक्षिणी द्वे नासिके द्वौ कर्णौ शिश्नगुदौ द्वौ इत्येवं द्वे मुखमेकमिति मिलित्वा नवखमित्यन्वयः द्युमत्सख इ संक्षेपेणाह । यस्तादिन्द्रियसंयुतः अक्ष्यादिच्छिद्रगतेन्द्रि स आत्मा ताभिर्द्वाभिर्बहिर्याति बहिष्ठान् शब्दादीन् भवति इत्यर्थः ॥ ७-८ ॥

पञ्चद्वारस्तु पौरस्त्या इत्यस्यार्थमाह । अक्षिणी आस्यं मुखमित्येवं पञ्चद्वारः पूर्वभागे कृताः अत्र व्याख्या न विवक्षितः दक्षिणोत्तरद्वारावाह । दक्षिणो दक्षिणः दक्षिणेति प्रतीकोपादानं दक्षिणः कर्ण इति व्याख्याने ऽपि ॥ ९ ॥

पश्चिमे द्वे इत्युक्ते पश्चिमे द्वारावाह । पश्चिम इति पश्चिमे इति प्रतीकग्रहणं तस्याधो द्वाराविति ते चाधो द्वारौ के इत्यत्राह । गुदाशिश्नाविहोदितावि स्मिन्प्रकरणे उदितौ कथितौ खद्योताविर्मुखीत्यादे खद्योतेति । एकत्र निर्मिते लब्धे ये खद्योताविर्मुखीशब्द द्वारौ ते अत्र प्रकरणे नेत्रे इत्यर्थः अत्र नेत्रे इति शेषः प्रतीकः ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिजनितज्ञानमेव हरेः प्रसादजनकं न कर्मादि साधनमित्येतदस्मिन्नध्याये निरूप्यते तत्रादौ प्राचीनबर्हि विद्वानपि लोकोपकाराय सम्यक् पृच्छति । भगवन्निति । हर्षार्थं भगवन्निति सम्बोधनमस्माभिरस्मादृशैः प्रवक्तृ त्वभावपरिहारार्थं सम्यगिति तत्र किङ्कारणं तत्राह । न कवीनां कर्माभावेन विविदिषन्ति यज्ञेन दानेनेत्यादिविधान मितीयं शङ्का कवय इत्यनेन पर्यहारि कर्मणा शुद्धान्तःक हर्युपासनासाध्यप्रकारेणातिक्रान्तदर्शनस्य कथिन्यात् ॥ १ ॥

व्यनक्तीत्यनेन पुरञ्जनपदं निरुक्तं पुरस्य देह यस्मात् स पुरञ्जन इत्यर्थः "अञ्जू व्यक्तिकरण" इति धातुः यति प्रकाशयतीति वा पुरञ्जनः "जनी प्रादुर्भाव" इति धातुः कविधमित्याह । एकेति । एकपादादिजातिजन्तुशरीर

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्राज्ञशरीरमपेक्ष्य वा द्वौ पादौ मनुष्यादेरिव पादा ज्वरादेः चत्वारः पादाः पश्वादेः बहवः पादाः सहस्रपादादेः अपादकं सर्पादि ॥ २ ॥

ननु परमात्मनोऽप्यविज्ञातत्वात्किमविशिष्टोच्यत इति तत्राह । यन्नेति । अनेन भक्तानुग्रहार्थं नामरूपादिग्रहणं न स्वतोऽस्ति न तथा परमात्मनः शुक्लभास्वरमपाकजमित्यादिनिरूपत्वादित्यादिप्रदर्शितम् ॥ ३ ॥

यदा प्रकृतेर्गुणान् जिघृक्षन् स्रक्चन्दनादिविषयानादातुमिच्छति तदा नवद्वारादिलक्षणं साधुतत्साधनमिति मन्यत ॥४॥

आर्षेयाय "समक्षामिन्द्रियं श्रोत्रम्"इत्यभिधानादक्षाणीन्द्रियेष्वक्षुषा रूपं दृष्ट्वानन्तरमन्येन्द्रियप्रवृत्तेरिति चक्षुषः प्राधान्यद्योतनायाक्षिरित्युक्तिं विहायाक्षिभिरिति गुणान्विषयान् ॥ ५ ॥

यत् येनेन्द्रियगणेन तेषामिन्द्रियाणां विषयेषु वृत्तयो व्यापाराः पुररक्षणं यथोरगो निरूपितस्तथा देहरक्षणं "उरस्तु वक्षसि श्रेष्ठ" इत्यभिधानात् उरः श्रेष्ठश्च गमको ब्रह्मप्रापकश्चेत्युरगो मुख्यप्राणः ( १ )"श्रेष्ठश्च"स एतान् ब्रह्म गमयतीति सूत्रश्रुत्योरयमर्थः अन्यत्र उरसा वक्षसा गच्छतीत्युरगः सर्पः पञ्चधा वृत्तिर्यस्य स पञ्चवृत्तिः विस्तृतव्यापारो वा फणोत्क्षेपणं फणाया भूमावाक्षेपणं मण्डलीकरणमाकुञ्चनं मण्डलमोक्षः प्रसारणं दीर्घीभूय गमनमिति पञ्चवृत्तिः नागस्य ॥ ६ ॥

"मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति" इति श्रुतः ज्ञानकर्मेन्द्रियाणां विषयं प्रतिनेतृत्वादुभयेन्द्रियनायकमित्युक्तम् एषां विषयाणां मध्ये नव खानि द्वारलक्षणानि छिद्राणि यस्य तत्तथोक्तं तत्पुरं शरीरम् ॥ ७ ॥

तत्तदिन्द्रियसंयुतः अक्षादिद्वारेण बहिर्विषयबुभुक्षौ सति नेत्रादीन्द्रियेण विषयं भुङ्क्ते इत्यर्थः ॥ ८ ॥

अक्षिणी इत्यादिना द्वे द्वे द्वार इत्युक्तं तद्विवेचयति अक्षिणी इति ॥ ९ ॥

पश्चिमं द्वे इत्युक्तं तत्राह । पश्चिम इति । खद्योतेत्यानुक्रम् दृणोति खद्योतेति ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न सम्यगिति कथारीतेर्बुद्धत्वात्स्वध्यात्मरीतेः ॥ १ ॥ २ ॥

आहूत इत्यत्र आहूय इति चित्सुखः पुम्भिरशास्त्रैः नामादीनां शास्त्रैकवेद्यत्वात् ॥ ३—४ ॥

बुद्धिमंमाहमिति जाग्रद्वतमेव ज्ञेयं स्वप्नगतानां तदनुगतत्वात् ॥ ५—७ ॥

द्वे द्वे इति मुखस्यापि घ्राणरसनाभेदेन द्वित्वात् ॥ ८ ॥

अक्षिणी नासिके इति सार्द्धकम् ॥ ९ ॥

चक्षुषेति द्युमत्शब्दस्य व्याख्यानम् ॥ १०—१३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकोनत्रिंशकेऽध्यात्मपक्षव्याख्यानमुच्यते ।
कर्मप्रश्नोत्तरं राज्ञो वैराग्याय कथापरा ॥

सम्यगिति किञ्चिदवगतश्चेत्यर्थः ॥ १ ॥

पुरुषं जीवम् ॥ २ ॥

अविज्ञातशब्देन आहूतो व्याहृतो यः स ईश्वरः ॥ ३ ॥

तत्र तेषु पुरेषु तिर्यगादिषु मध्ये ॥ ४ ॥

बुद्धिमविद्यामक्षभिरिन्द्रियैः ॥ ५ ॥

पञ्चवृत्तित्वात् पञ्चशिराः सर्प इव ॥ ६ ॥

एकादश महाभटा इत्यनेनैकादशो महाभटो नायक इत्युक्तं तं व्याचष्टे बृहद्बलं यस्य तन्मनः नव खानि द्वाराणि यस्य ॥ ७ ॥

द्वे द्वे द्वारौ मुखाविकमेकैका च प्राप्ताभिर्द्वाभिर्बहिर्याति कः यस्तत्तदिन्द्रिययुक्तो जीव इत्यर्थः ॥ ८ ॥

पुरः प्राङ्मुखस्य पुरञ्जनपुरस्य पूर्वभागे कृताः ॥ ९ ॥

खद्योतादीनां व्याख्या नेत्रे इति रूपमिति चक्षुषेति द्युमदित्यस्य व्याख्या ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ऊनत्रिंशे परोक्षार्थव्याख्यानं करोति । भगवन्नित्यादिना पृथुः श्रीनारदः ते वचो गूढार्थं वाक्यं नावगम्यते न विबुध्यते ॥ १ ॥

पुरुषं जीवं पुरञ्जनं विद्यात् यथत आत्मनः पुरं कर्मणा व्यनक्ति प्रकटयति द्व्यादयः पादा यस्य तत्तथा बहवः पादा यस्य तत् न विद्यन्ते पादा यस्य तत् ॥ २ ॥

यः अविज्ञातसखित्वेन आहूतः उदाहृतः स तस्य जीवस्य सखा ईश्वरः यतः नामभिः श्रेष्ठत्वद्योतकैः अहं ऋग्वेदी अहं यजुर्वेदीत्यादिभिः क्रियाभिर्यज्ञतपोवृत्तादिभिर्गुणैरुदारत्वादिभिश्च चाशब्दोऽनुक्तसमुच्चयार्थः विविधैरुपायैः पुंभिर्न विज्ञायेत स्वानुग्रहलब्धभक्तियोगविज्ञेयत्वात् ॥ ३ ॥

प्रकृतेर्गुणान् प्रकृतिगुणकार्यभूतान् शब्दादीन् यदा जिघृक्षत गृहीतुमिच्छत् तदा तत्र तेषु पुरेषु नवद्वारं मनुष्यशरीरं साध्विति अमनुत ॥ ४॥

अक्षभिरिन्द्रियैः गुणान् विषयान् ॥ ५

यत् येन गणेन ज्ञानं शब्दादिबोधरूपं कर्म च आदानादिरूपं कृतं भवति पञ्चवृत्तित्वात् पञ्चशिराः उरगः यथा प्राणः ॥ ६ ॥ ७ ॥ ८ ॥

पुरः पूर्वदिशि कृताः ॥ ९ ॥ १० ॥

---

भाषाटीका ।

राजा प्राचीनबर्हि बोले हे भगवन् ! नारदजी आपके वचन को हम लोग नहीं समझ सकते हैं ज्ञानी सब बात को जान सकते हैं कर्म मे मोहित हम लोग नहीं जान सकते हैं ॥ १ ॥

नारदजी बोले जीव को पुरञ्जन जानना चाहिये क्योंकि आत्मा के पुरको प्रगट करता है वह पुर एक पाद द्विपाद त्रिपाद बहु पाद विना पाद के है ॥ २ ॥

अविज्ञाता नाम से जो सखा कहा सो ईश्वर है जिसको कि कोई पुरुष नाम क्रिया गुणों से किसी प्रकार नहीं जान सकता है ॥ ३ ॥

जब पुरुष सब प्रकारसे प्रकृति के गुणोंको ग्रहण करने चाहा या मुखादि नौ द्वार वाला दो हाथ पांव वाला पुरको देखकर उसको बहुत अच्छा माना ॥ ४ ॥

( १ ) सूत्रम् ।

नलिनी नालिनी नासे गन्धः सौरभ उच्यते ।
घ्राणोऽवधूतो मुख्यास्यं विपणो वाग्रसविद्रसः ॥ ११ ॥
आपणो व्यवहारोऽत्र चित्रमन्धो बहूदनम् ।
पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः ॥ १२ ॥
प्रवृत्तं च निवृत्तं च शास्त्रं पञ्चालसंज्ञितम् ।
पितृयानं देवयानं श्रोत्राच्छ्रुतधराद्व्रजेत् ॥ १३ ॥
आसुरी मेढ्रमर्वाग्द्वार्व्यवायो ग्रामिणां रतिः ।
उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते ॥ १४ ॥
वैशसं नरकं पायुर्लुब्धकोऽन्धौ तु मे शृणु ।
हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च ॥ १५ ॥
अन्तःपुरं च हृदयं विषूचिर्मन उच्यते ।
तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः ॥ १६ ॥
यथा यथा विक्रियते गुणाक्तो विकरोति वा ।
तथा तथोपद्रष्टात्मा तद्वृत्तीरनुकार्यते ॥ १७ ॥
देहो रथस्त्विन्द्रियाश्वः सम्वत्सररयो गतिः ।
द्विकर्मचक्रस्त्रिगुणध्वजः पञ्चासुबन्धुरः ॥ १८ ॥
मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वन्द्वकूबरः ।
पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः ॥ १९ ॥
आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति ।
एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत् ।
सम्वत्सरश्चण्डवेगः कालो येनोपलक्षितः ॥ २० ॥

भाषाटीका ।

प्रमदा स्त्री बुद्धि जानना चाहिये जिसका किया मै मेरा ऐसा अभिमान होता है जिस बुद्धिके परवश होने से पुरुष इस शरीर मे इन्द्रियों से विषयों को भोगता है ॥ ५ ॥

इन्द्रियगण जो हैं सोई सखा हैं जिनका कि ज्ञान कर्म कार्य होना है उन इन्द्रियों की वृत्ति सखी हैं पाञ्च वृत्तियाला प्राण ही सर्प है ॥ ६ ॥

दोनों प्रकार की इन्द्रियों का नायक बृहद्बल नामक मन है पाञ्चरूपादिक विषय पञ्चाल हैं जिसके मध्य में नौ द्वारवाला पुर है ॥ ७ ॥

दो नेत्र दो नासिका दो कर्ण मुख लिङ्ग गुदा दो दो द्वार एक ठिकाने हैं उन रस्तों से उन इन्द्रियों सहित जीव बाहिर जाता है ॥ ८ ॥

दो आंख नाक दो मुख ऐसे पाञ्च पूर्व के द्वार हैं दक्षिणकर्ण दक्षिण द्वार है उत्तर कर्ण उत्तर द्वार है ॥ ९ ॥

नीचे के दो द्वार पश्चिम हैं लिङ्ग गुदा खद्योता आविर्मुखी दो नेत्र एकत्र बनाये हैं जीव नेत्रों से विभ्राजित नामक [illegible] देखता है ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नासे इति व्याख्या अवधुनोतीत्यवधूतो वायुस्तत्प्रधानं [illegible] चक्षुसेन सहैकस्थानत्वात् घ्राणोऽवधूतः । आस्यमिति [illegible] रसज्ञविपणान्वित इत्यत्र रसज्ञशब्दनिर्दिष्टस्य रसविदि[illegible] वादः रसज्ञशब्दनिर्दिष्टस्य रसविदित्यनुवादः रस इति [illegible] रसनेन्द्रियमित्यर्थः विपणो वाग्रसविद्रस इत्येव पाठः आर्ष[illegible] दोषः ॥ ११ ॥

अन्धोऽन्नम ॥ १२ ॥ १३ ॥

ग्रामकमित्यस्यानुवादो ग्रामिणां रतिरिति तस्य [illegible] व्यवाय इति ॥ १४ ॥ १५ ॥

विषूचीनपदार्थानुवादो विषूचिरिति तद्गुणैर्मनोगुणैः [illegible] स्वरजोभिः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

महिषी यद्यदीहेतेत्यादेरर्थं सङ्गृह्णाह । यथा यथा बुद्धिः स्वप्ने विक्रियते जाग्रति विकरोति वा इन्द्रियाणि परिणमयति तथा गुणै रक्तो लिप्त आत्मा तथा तथा तस्या वृत्तीर्दर्शनस्पर्शनाद्याः केवलमुपद्रष्टैव सन् बलादनुकार्यते ॥ १७ ॥

आशुगमित्येतद्व्याचष्टे । सम्वत्सरस्येवाप्रतिहतो रयो वेगः प्रतीतितो यस्य स सम्वत्सररयः वस्तुतस्त्वगतिः स्वप्नशरीरादेर्बुद्धावेव विवृतत्वेन देशान्तरगत्यभावात् पाठान्तरे सम्वत्सरश्च तत्कृतं रयश्च ताभ्यां गतिर्यस्येति द्वीपमित्यस्य व्याख्या नारदेन न कृता द्विचक्रमित्यस्य व्याख्या द्विफर्मचक्र इति त्रिगुणध्वज इति त्रिवेणुपदव्याख्या ॥ १८ ॥

पञ्चप्रहरणमित्येतद्व्याचष्टे । पञ्चेन्द्रियार्थप्रक्षेप इति ॥ १९ ॥

पञ्चेन्द्रियैः सूनाविनोदमिवान्यायेन विषयसेवां करोतीति पञ्चसूनाविनोदकृत् अनेन चचार मृगयां तत्रेत्यादिव्याख्यातम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

* एवं विभ्राजितमित्यस्य व्याख्यानं रूपमिति शेषः प्रतीक ईश्वरः पुरञ्जनः खद्योतादिशब्दास्तु गौणाः अतोऽत्र न प्रवृत्तिनिमित्तमुक्तं नासे गन्ध इति च व्याख्यानं शेषः प्रतीकः ॥ ११ ॥

घ्राण इति व्याख्यानमवधूत इति प्रतीकः मुख्येति प्रतीकस्तस्य व्याख्यानमास्यमिति रसज्ञविपणौ व्याचष्टे। विपणोवागिति विपण इति प्रतीकः वागिन्द्रियमिति व्याख्या रसविदित्यर्थतः प्रतीकः रसज्ञविपणान्वित इति मूलाद्रसः रसनेन्द्रियमिति व्याख्यानं आपणबहूदनौ व्याचष्टे । आपण इति प्रतीकः व्यवहारः वाग्व्यवहार इति व्याख्या बहूदनमिति प्रतीकः चित्रमन्धमन्नमिति व्याख्या ॥ १२ ॥

पितृहूरित्यनुवादः दक्षिणकर्णाविति व्याख्यानम् । दक्षिणा दक्षिणः कर्णः इत्यनेन दक्षिणैका तथोत्तरेति व्याख्यातं पितृहूर्दक्षिणः कर्णः इत्यनेन तु पितृहूर्नाम पुर्या द्वा देवहूर्नाम पुर्या द्वारित्युक्तगुणानामविपर्यौ दक्षिणोत्तरकर्णावेवेत्युच्यत इति भेदः क्रममनादृत्य तृतीयाध्यायोक्तचण्डवेगादिपदार्थानाह। सार्द्धैस्त्रिभिः चण्डवेग इति प्रतीकः संवत्सर इति विवरणं तत्र तत्प्रवृत्तौ निमित्तमाह। कालः पुरुषायुषरूपः कालः येन संवत्सरेण चक्रवत्तूर्णं भ्रमतोपलक्षितः ज्ञापितः परिच्छिन्नः चक्रवत्तूर्णं वेगेन पुरुषायुषस्य परिच्छेदकत्वाच्चण्डवेग इत्युच्यत इत्यर्थः ॥ १३ ॥

तस्य चण्डवेगस्य संबन्धिनो गन्धर्वा गन्धर्व्यश्च यथाक्रममहानि रात्रयश्च स्मृता इत्यर्थः तत्र गन्धर्वप्रवृत्तौ निमित्तमाह । यतः षष्ट्युत्तरशतत्रयमहानि रात्रयश्च परिक्रान्त्या परिवर्तनेन गन्धर्वपरोक्षेणायुः पुरुषायुषं हरन्ति अतो गन्धर्वगुणयोगात्तत्पदबोध्या इत्यर्थः ॥ १४ ॥

कालकन्येत्यस्य व्याख्या जरेति कालस्य पुरुषायुषं हरतः दुहितृवज्जरायाः प्रीत्यावहत्वात्सा कालदुहितेत्युच्यते । त्रिलोक्यां वरमिच्छन्तीत्यादिः प्रज्वारस्त्वां प्रणोष्यतीत्यस्य संग्रहेणार्थमाह ।

* अत्र श्रीवीरराघवमते त्रिंशच्छ्लोकपर्यन्तं श्लोकानां पौर्वापर्यं नैनं एवं क्वचिच्छ्रीहिजयध्वजीयेऽपि तत्र व्याख्यानं दृष्ट्वानुक्रमः करणीयः पाठकैः ।

लोकस्तां नाभिनन्दतीति प्रज्वारोऽयं ममेत्यस्यार्थः स्वसारमिति सार्द्धेन क्षयाय लोकस्येति शेषः ॥ १५ ॥

भीमाः सैनिका यस्येति बहुव्रीह्यर्थं प्रत्युपसर्जनीभूतभीमसैनिकानाह । आधयः मनः पीडा व्याधयो देहपीडास्तस्य भयनाम्नः सैनिकाः एते भूतानामुपसर्गाश्च खला दुष्टाः यवनाः दुर्यवनवार्द्धिस्तत्राद्यवनाः अतीव दुःखावहत्वादरयः उपसर्गाः सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभमात्सर्येर्ष्यावमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः तत्राधिव्याधीनां भीमसैनिकरूपणान्मृत्योस्तस्येति प्राधान्येन निर्देशात्तद्व्यतिरिक्तपर उपसर्गशब्दः प्रज्वारपदार्थमाह । द्विविधो ज्वर इति ॥ १६ ॥

एवं क्रममनादृत्य तृतीयाध्यायस्थपदानि व्याख्याय सिंहावलोकनन्यायेन पुनरेतदध्यायस्थपदान्येवावशिष्टानि व्याख्येयानि व्याचष्टे । प्रवृत्तं चेति । दक्षिणपाञ्चालमुत्तरपाञ्चालमित्युक्तपाञ्चालशब्दार्थमाह । प्रवृत्तं प्रवर्तकं कर्तरि क्तः त्रिवर्गतत्साधकस्वरूपावबोधनेन प्रवर्तकं शास्त्रं प्रवृत्तमित्युच्यते निवृत्तं निवर्तकं त्रिवर्गतत्साधनेभ्यस्तन्निवृत्तं त्रिवर्गस्यास्थिरफलत्वोपदेशपूर्वकं ततो निवृत्त्यानन्तस्थिरफलब्रह्मोपासनतत्स्वरूपरूपगुणादिप्रकाशकं शास्त्रं निवृत्तमित्युच्यते तदेवं शास्त्रद्वयं पाञ्चालसंज्ञकमित्यर्थः पञ्चेन व्यक्तीकरोति त्रिवर्गं तत्साधनं तन्निवृत्तीरिति व्युत्पत्तेः एवं पाञ्चालशब्दस्य प्रवृत्तिनिवृत्त्यात्मकशास्त्रद्वयपरत्वं सामान्येनाभिधाय तस्य दक्षिणोत्तराभ्यां विशेषितस्य प्रवृत्ते निवृत्ते च क्रमेण प्रवृत्तौ निमित्तमाह । पितृयानमिति । पितरो हि दाक्षिणात्याः तान् यान्त्यनेनेति पितृयानं प्रवृत्तशास्त्रोदितकर्मणा दाक्षिणात्यान् पितॄनाराध्य तान् प्राप्नुवन्तीति दाक्षिणात्यपितृप्राप्तिसाधनप्रकाशकत्वात् पितृयाणं शास्त्रं दक्षिणपाञ्चालमित्युच्यते एवं देवयानमुत्तरपाञ्चालमिति श्रुतधरान्वित इत्युक्तश्रुतधरपदार्थमाह । श्रोत्रादीति श्रोत्रेन्द्रियाच्छ्रुतधरादिति प्रतीकः श्रोत्रादिति व्याख्यानं तत्रान्वित इत्युक्तोऽन्वयः किंरूप इति विवित्सायां हेतुत्वेनेति द्योतनाय हेतुपञ्चमी प्रयुक्ता किम्प्रति हेतुत्वमिति बिभित्साशान्तये व्रजेदित्युक्तं चेत्रज्ञ इति शेषः व्रज गतौ सर्वे गत्यर्था ज्ञानार्था इतिन्यायेन पितृयानदेवयानापरपर्याये दक्षिणोत्तरपाञ्चाले शास्त्रे श्रोत्रेन्द्रियेण साधनरूपेण हेतुनावगच्छति चेत्रज्ञ इत्यर्थः ॥ १७ ॥

आसुरीनाम पश्चाद्द्वारित्यस्यार्थमाह । आसुरीमेढ्रमिति । आसुरीतिप्रतीकः मेढ्रमिति व्याख्या पश्चादित्यस्य व्याख्या अर्वागिति आसुरपदप्रवृत्तिनिमित्तं तूक्तं पुरस्तादत्रानुक्तिस्तु स्पष्टत्वात् ग्राम्यकमित्यर्थतोऽनुवदति ग्रामिणां रतिः तस्य व्याख्या व्यवायइति मैथुनमित्यर्थः दुर्मदशब्दानुवादेन तदर्थमाह । उपस्थ इति । निर्ऋतिनामेत्यस्यार्थ माह । निर्ऋतिरिति प्रतीकः गुद इतिव्याख्या ॥ १८ ॥

वैशसशब्दानुवादेन तदर्थमाह । वैशसं नारकमिति । नरके भवं नारकं दुःखमित्यर्थः । लुब्धक इति प्रतीकः पायुरिति व्याख्या अन्धावमीपामित्यस्यार्थमाह । अन्धौत्विति । मे मत्तः अन्धशब्दार्थौ शृणु पाणिपादावन्धौ इति प्रतीकः पाणिपादौ व्याख्या जातिपरोऽयं निर्देशः पाणी पादौ चेति विवक्षितार्थः अन्धपदप्रवृत्तिनिमित्तं निर्वाकूपेशस्करत्वं पूर्वमेवोक्तं शेषोऽनुवादः ॥ १९ ॥

स यर्हि इत्यस्यार्थमाह । अन्तःपुरमिति । अन्तःपुरमित्यनुवादः हृदयमिति व्याख्या विषूचीनमित्यस्यार्थोऽनूद्यते विषूचीरिति मन इति तदर्थः शेषोऽनुवादः तद्गुणैः सङ्कल्पविकल्पादिभिः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नलिन्याचाह। नलिनीति॥ ११॥

अवधूतमाह। घ्राण इति। मुख्यानाम पुरस्तादुक्ता इत्यस्यार्थमाह। मुख्येति। या मुख्या नामद्वाः आस्यं रसज्ञविपणान्वित इत्येतदाह। विपण इति। विपणो वागिन्द्रियं रसवित् रसज्ञः रसो-रसनेन्द्रियमापणं व्याचष्टे। आपण इति। चित्रमन्ध इत्यादौ बहूदनमित्यस्य विविधौदनः॥ १२॥

पाञ्चालशब्दस्यार्थान्तरमाह। प्रवृत्तमिति॥ १३॥

श्रुतधरेत्यस्य श्रोत्रमिति तेनोत्क्रान्तः पितृयानादिमार्गे व्रजति आसुर्याः कृत्यमाह। मेहनार्थमिति। मेहनं पुरीषोत्सर्जनं ग्रामिणां रतिर्मैथुनम्॥ १४॥ १५॥ १६॥

तद्गुणैर्मनोगुणैर्बुद्धिगुणैर्वा एतदेव प्रतिपादयति। यथेति। स्वप्नकाले करितुरगादिदृष्टश्रुतवस्तुवासनावसितं मनो बुद्धिर्वा विक्रियते दैवेनेति शेषः बहुसंस्काराधिवासितत्वादन्यत्र प्रवाहमन्तरेणैव स्वयं वा विकरोतीत्याह। गुणेति॥ १७॥

यथा यथा विषयविकारेण परिणमते तथा तथा स्वप्नादेरुपद्रष्टात्मा जीवस्तद्वृत्तिर्बुद्धिमनो वृत्तेरनुकूलवृत्तिरिति कीर्त्यते यथा यथा मनो विक्रियते गुणाक्त आत्मना गुणरूपिता बुद्धिस्तथा विकरोति बुद्धिर्यथाविकरोति तथात्मापीति वा उभयेन्द्रियनायक इत्युक्तेर्मनोविकारानुकारि बुद्ध्यनुकारिप्रवृत्तिमत्त्वमात्मनो युज्यते इन्द्रियाण्येवाश्वा यस्य स तथा सम्वत्सरेत्युपलक्षणं दिन रात्रिपक्षमाससम्वत्सरलक्षणौर्येयोर्मिर्गतिर्यस्य स तथा॥ १८॥

द्विकर्मेत्यादिषु बहुव्रीहिः पञ्चासुबन्धुरः पञ्चासवः प्राणा एव बन्धुरो यस्य स तथा एकरदम्येकदमनमित्यस्यार्थमाह। मन इति॥ १९॥

पञ्चप्रहरणमित्यस्यार्थमाह। पञ्चेति। प्रतीतितः सुखमनभवे यद्दुःखं सा मृगतृष्णिका तां तदुक्तम् "सुखवद्दूरतो हृदयं तत्काले दुःखमेव यत्। मृगतृष्णेयतः प्राहुर्भोगं वैषयिकं बुधाः" इति॥२०॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

दुर्मद इति चित्सुखः॥ १४॥

यथा यथा विक्रियते गुणाक्त इत्येव पाठः॥ १५-१७

आकूतिः कर्मेन्द्रियपञ्चकं सम्वत्सर इत्यर्द्धकम्॥ १८—२०॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अवधुनोत्यवधूतो वायुस्तदात्मकेनोच्छ्वासेन सहैकस्थानत्वादूघ्राणोऽप्यवधूत उच्यते मुख्या इत्यस्य व्याख्या आस्यमिति रसनविपणान्वित इत्यस्य व्याख्या वागिति रसज्ञ इत्यस्य व्याख्या रसविदित्यनुवादः रस इति व्याख्या तु रसो रसनेन्द्रियं नवाचरैकपादोऽयमनुष्टुब्भेदः॥ ११॥

चित्रमन्धश्चतुर्विधमन्नम्। यातीति श्रुतधरान्वितः श्रुतधरपदव्याख्या श्रोत्रादिति॥ १२॥ १३॥

ग्रामकं नाम विषयमित्यत्र ग्रामकामित्यस्य ग्रामिणां रतिरित्यनुवादः व्याख्या तु व्यवाय इति॥ १४॥ १५॥

विषूचीन इत्यनुवादो विषूचिरिति व्याख्या तु मन तद्गुणैर्मनोगुणैस्तमःसत्त्वरजोभिः॥ १६॥

महिषी यद्यदीहेतेत्यादेर्व्याख्यानमाह। यथा बुद्धिः स्वप्ने यते जागरे विकरोति इन्द्रियाणि विपरियामयति तथा गुणाक्तस्तया गुणैर्लिप्त आत्मा तस्या वृत्तीर्द्रष्टा केवलमुपद्रष्टैवापि सन् बलादनुकार्य्यते बुद्धेव त्यर्थः॥ १७॥

सम्वत्सरस्य रयो वेग एव गतिरित्याद्युपदव्याख्या न्तरे सम्वत्सरश्च तत्कृतं रयश्च ते एव गतिर्यस्य त्रिगुण इति त्रिवेणुपदव्याख्या त्रयोगुणाःसत्त्वादयः ध्वजो यस्य॥

पञ्चप्रहरण इत्यस्य व्याख्या पञ्चानामिन्द्रियाणामर्थेषु स्वस्वव्यापाराणां प्रक्षेपः। श्रवणादीनि पञ्चप्रहरण त्यर्थः॥ १९॥

आकूतिः कर्मेन्द्रियपञ्चकं विक्रममिति पञ्चविक्रम व्याख्या पञ्चेन्द्रियैः सूनाविनोदमित्यन्यायेन विषयसेवां इति पञ्चसूनाविनोदकृत्। अनेन चचार मृगयां व्याख्यातम्॥ २०॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ईश्वरः पुरञ्जनः रसज्ञविपणान्वित इत्येतद्व्याचष्टे। वाग्रसविद्रस इति। विपणः वाक् वागिन्द्रियम् रसवित् रसः रसनेन्द्रियम्॥ ११॥

व्यवहारः आदानादिः अन्धोऽन्नम्॥ १२॥

प्रवृत्तं शास्त्रं पाञ्चालसंज्ञितं पितृयानं पितृलोकप्रापकं शास्त्रं पाञ्चालसंज्ञितं देवयानं परमेश्वरप्रापकं श्रोत्रात् श्रुत श्रोत्रेन्द्रियात् व्रजेत्॥ १३॥

मेढ्रमुपस्थेन्द्रियस्थानम् ग्रामकामित्यस्यानुवादः ग्रामिणां रितिति तद्व्याख्या व्यवाय इति॥ १४—१५॥

तद्गुणैर्मनोगुणैस्तमःसत्त्वरजोभिः॥ १६॥

महिषी च यद्यदीहेतेत्यादिकं व्याचष्टे। बुद्धिर्यथा स्वप्ने यते जाग्रति विकरोति इन्द्रियाणि परिणामयति तथा गुणैः आक्तो लिप्त उपद्रष्टा जीवः तस्याः वृत्तीः बलादनुवर्त्यते॥ १७॥

एवं पञ्चविंशाध्यायगतानि पदानि संक्षेपतो व्याख्या षड्विंशाध्यायगतानि पदानि व्याचष्टे देहो रथ इत्यादि रसरय इव गतिर्यस्य सः यस्तु सम्वत्सरस्येवाप्रतिहतो प्रतीतितो यस्य स सम्वत्सररयो वस्तुनोऽगतिः बुद्धावेव विवर्तत्वेन देशान्तरगत्यभावादिति तद्यथा रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् सृजते" इत्यादिश्रुतेः स्वप्नसृष्टेः परमेश्वरकृतायाः वात् स्वप्नदृशो जीवस्य तूपकरणाद्यभावात्तत्कर्तृत्वा द्वे पापपुण्ये कर्मणी चक्रे यस्य सः त्रिगुणा ध्वजा यस्य बन्धुराः ग्रन्थनानि यस्य स च स च सः॥ १८—१९॥

आकूतिः कर्मेन्द्रियगणः चालो विक्रमः पञ्चसु

तस्याहानीह गन्धर्वा गन्धर्व्यो रात्रयः स्मृताः।
हरन्त्यायुः परिक्रान्त्या षष्ट्युत्तरशतत्रयम् ॥ २१ ॥
कालकन्या जरा साक्षाल्लोकस्तां नाभिनन्दति
स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः ॥ २२ ॥
आधयो व्याधयस्तस्य सैनिका यवनाश्वराः।
भूतोपसर्गाशुरयः प्रज्वारो द्विविधो ज्वरः ॥ २३ ॥
एवं बहुविधैर्दुःखैर्दैवभूतात्मसम्भवैः।
क्लिश्यमानः शतं वर्षं देहे देही तमोवृतः ॥ २४ ॥
प्राणेन्द्रियमनोधर्मानात्मन्यध्यस्य निर्गुणः।
शेते कामलवान् ध्यायन् ममाहमिति कर्मकृत् ॥ २५ ॥
यदात्मानमविज्ञाय भगवन्तं परं गुरुम्।
पुरुषस्तु विषज्जेत गुणेषु प्रकृतेः स्वदृक् ॥ २६ ॥
गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः।
शुक्लं कृष्णं लोहितं वा यथा कर्माभिजायते ॥ २७ ॥
शुक्लात्प्रकाशभूयिष्ठाँल्लोकानाप्नोति कर्हिचित्।
दुःखोदर्कान् क्रियायासांस्तमःशोकोत्कटान् क्वचित् ॥ २८ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

मृगेव दुःखोदर्कों यो विनोदस्तत्कृत् मृगतृष्णां मृगतृष्णावत् निःसारां मृगयां प्रति धावति अनेन चचार मृगयां तत्रत्यादि- व्याख्यातम् ॥ २० ॥

---

भाषाटीका।

नलिनी नालिनी दो नासिका हैं गन्ध सौरभ है घ्राण अव- धूत है मुख्या मुख है विपणा वाक् इन्द्रिय है रस जानने वाला रसवित् रसज्ञ है ॥ ११ ॥

व्यवहार आपण है नाना प्रकार के अन्न बहूदन हैं दहिना कान पितृहू है उत्तर कर्ण देवहू है ॥ १२ ॥

प्रवृत्त निवृत्त शास्त्र पञ्चाल है पितृयान देवयान दोनों को श्रुत धरके साथ कान के रस्ते जीव जाता है ॥ १३ ॥

पीछे का द्वार आसुरी नाम का सो लिङ्ग है व्यवाय मैथुन नामक का रति है लिङ्ग का नाम दुर्मद है गुदा का नाम निर्ऋति है ॥ १४ ॥

वैशस नरक का नाम है लुब्धक गुदा का नाम है हस्त पाद दोनो अन्ध हैं तिन दोनों से युक्त होकर जाता है और कार्य्य करता है ॥ १५ ॥

अन्तः पुर हृदय है मन विषूची है तहांपर तिस मन के गुणों से मोह प्रसाद हर्ष को प्राप्त होता है ॥ १६ ॥

गुण युक्त होने से जैसे विकार युक्त होता है अथवा विकार करता है तैसे उपद्रष्टा जीव उन वृत्तियों का अनु करण करता है ॥ १७ ॥

देह रथ है इन्द्रिय घोडा हैं संवत्सर का वेग गति है पुण्य पाप दो कर्म चक्र हैं तीन गुण ध्वजा हैं पाञ्च प्राण बंधुर हैं ॥ १८ ॥

मन लगाम है बुद्धि सारथी है हृदय रथिके बैठने का स्थानहै शोक मोहादि जुआ के बन्धन स्थान हैं इन्द्रियों के पाञ्च अर्थ रूपादिक प्रक्षेप हैं ॥ १९ ॥

पाञ्च कर्मेन्द्रिय बाहिर का विक्रम है मृगतृष्णा को दौडता है एक इन्द्रिय सेना हैं पञ्चसूना का विनोद करने वाला है ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

परिक्रान्त्या परिभ्रमणेन ॥ २१ ॥

भगिनीत्वेन जगृहे लोकानां क्षयाय ॥ २२ ॥

चराः सञ्चारिणः भूतानामुपसर्गे पीडायामाशु शीघ्रं मृत्यु- हेतू रयो वेगो यस्य प्रज्वारस्येति प्रशब्दव्याख्या पाठान्तरे सूत- कृता अरयः अनेन चारिभिरुपरुद्ध इत्यपिदं व्याख्यातम् द्विविधः शीतोष्णरूपेण प्रवेशनिर्गमभेदात् ॥ २३ ॥

एवं परोक्षत्वेनोक्तमर्थं व्याख्याय सर्वकथातात्पर्यमाह एवमित्यादिविरमकर्मेणात्यन्तेन आधिदैविकादिभिर्दुःखैः क्लिश्य-

क्वचित्पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः ।
देवो मनुष्यस्तिर्यग्वा यथा कर्मगुणं भवः ॥ २९ ॥
क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम् ।
चरन् विन्दति यद्दिष्टं दण्डमोदनमेव वा ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मानो ममाहमिति देहे शतं वर्षाणि शेते वर्तत इति द्वयोरन्वयः ॥ २४ ॥

अशनायापिपासादीन् प्राणधर्मानन्धत्वादीनिन्द्रियधर्मान् कामादीन् मनोधर्मांश्च निर्गुणोऽप्यात्मन्यध्यस्य कामलवान् विषयसुखलेशान् ध्यायन् कर्मकृत् ॥ २५ ॥

ततः किमत आह । यदेति द्वाभ्याम् । स्वदृक् स्वप्रकाशस्वभावोऽपि ॥ २६ ॥

शुक्लं सात्त्विकम् कृष्णं तामसम् लोहितं राजसम् यथा कर्म तथा जायते ॥ २७ ॥

तदेवाह । शुक्लादिति द्वाभ्याम् । प्रकाशो भूयिष्ठो येषु दुःखमुदर्के उत्तरफलं येषु क्रियया आयासो येषु तान् लोहितान् तमःशोकावुत्कटौ येषु तान् कृष्णादिति ज्ञेयम् ॥ २८ ॥

नोभयं नपुंसकम् यथाकर्मगुणं कर्मगुणानतिक्रम्य ॥ २९ ॥

तेषु दैववशेन सुखदुःखे प्राप्नोतीति सदृष्टान्तमाह । द्वाभ्याम् क्षुधा परीतो व्याप्तः सारमेयः श्वा दण्डं दण्डेन ताडनम् ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं कर्मस्थित्यादेः संग्रहेणार्थमाह । यदेति । यदा स्वप्ने विक्रियते कर्मणि लकारः बुद्धिरिति शेषः यदा च जाग्रति विकरोतीन्द्रियाणि परिणमयति तदा तदा स्वप्नजाग्रदवस्थयोस्तस्या गुणैरक्तो लिप्तः आत्मा स्वभावतः उपद्रष्टापि तस्याः वृत्तीर्दर्शनश्रवणाद्याः प्रत्यनुकार्यते बलादनुवर्त्यते ॥ २१ ॥

एवं प्रथमाध्यायस्थपदानि व्याख्यातान्यथ द्वितीयाध्यायस्थपदानि व्याचष्टे देह इतित्रिभिः यो रथ उक्तः स देहः येचाश्वा उक्ताः ते इन्द्रियरूपाण्यश्वाः आशुगमित्यत्र विवक्षिता गतिः सम्वत्सररयः सम्वत्सरवेगतुल्या तूर्णप्रतिपत्तिः स्वाप्नदेहप्रतिपत्तिर्हि तत्कालमात्रावसायित्वेनातितूर्णाद्वे पुण्यापुण्यरूपे कर्मणी चक्रे यस्य सः पुण्यापुण्यकर्मणी एव द्विचक्रमितिचक्रशब्देन विवक्षिते इत्यर्थः त्रिवेणु मित्यत्र विवक्षिता वेणवो ध्वजाः सत्त्वरजस्तमोगुणा इत्यर्थः पञ्च असवः प्राणाः एतदन्नमनम् कुरुत इतिश्रुतेः बन्धुरा बन्धनानि यस्य बन्धुरत्वेन विवक्षिताः पञ्च प्राणा इत्यर्थः पञ्चासुबन्धुर इत्यपिपाठः व्याख्यायां विशेषानवगमात् ॥ २२ ॥

रश्मिः प्रग्रहत्वेन यो विवक्षितः स मनः यः सूत उक्तः सबुद्धिः यन्नीडं रथिन उपवेशनस्थानं तद्हृत् हृदयस्थानं द्वन्द्वं शोकमोहौ कूवरं युगबन्धनस्थानं यस्य द्विकूवरमित्युक्तौ द्वौपदार्थौ द्वन्द्वात्मक शोकमोहावित्यर्थः पञ्चप्रहरणामित्युक्ताः पञ्चप्रहरणानि अनुभाव्याः पदार्था पञ्चेन्द्रियार्थाः शब्दादय इत्यर्थः पञ्चेन्द्रियाणां प्रक्षेपा स्येति बहुव्रीहिः सप्तधातवः वरूथाः स्वर्णाद्या[illegible] यस्य सप्तवरूथमित्यत्र वरूथत्वेन रूपिताः सप्तपदार्थाः [illegible]तव इत्यर्थः ॥ २३ ॥

पञ्च विक्रममित्यत्र विक्रमत्वेन गतिप्रकारत्वेन वि[illegible] आकूतिः पञ्चकर्मेन्द्रियाणीत्यर्थः बाह्यवहिष्ठविषयासक्तः दशेन्द्रियाण्येव चमूः सेना यस्य स पञ्चसूनाहिंसा[illegible] दस्तं करोतीति तथा मृगतृष्णां मृगमरीचिकावत्सुखानु[illegible] विषयानुभूतिं करोतीत्यर्थः अत्र स एकदामहेष्वासं[illegible] पञ्चाश्वमाशुगमित्यादीनां दशानां श्लोकानां स्वप्नावस्था[illegible] पूर्वैर्व्याख्यातत्वादस्माभिरपि स्वप्नावस्थापरत्वेनैव व्या[illegible] तद्व्याख्यारूपमिदं देहो रथस्त्विन्द्रियाश्वा इतिश्लोकत्रयं [illegible]नुरोधेन व्याख्यातं वस्तुतस्तु दशश्लोका जाग्रद्देहतद्[illegible] परत्वेनैव व्याख्येया व्याख्यान स्वारस्यात् व्याख्याने हि संव[illegible] गतिरित्युक्तं नहि स्वाप्नदेहस्य संवत्सरवेगात्मकगतिः सं[illegible] तस्य तत्कालमात्रावसायित्वात्तस्य तत्सदृशप्रतीतिमात्र[illegible] स्वारस्यमेकादशेन्द्रियचमूपतिरित्युक्तत्वाच्च नहि स्वाप्ने ए[illegible]न्द्रियाणां व्यापृतिः संभवति तत्सम्बन्धमात्रविवक्षा[illegible]रस्यं पञ्चसूनाविनोदकृदित्युक्तत्वाच्चहि पञ्चसूनानां स्वाप्ने[illegible]घत्वं युक्तं तस्मादिदं जाग्रद्देहतद्व्यापारपरमेव व्याख्येयं [illegible] भोगायतनत्वख्यापनाय पूर्वं पुरत्वनरूपितं जाग्रदवस्था[illegible] शरीरमेवेदानीं रथत्वेन रूप्यते देहो रथित्वेन इन्द्रियादयो[illegible]त्वेन किमर्थमेवं रूपणमिति चेदुच्यते रथोहि स्वाभिमतदे[illegible] प्रापणसमर्थः तद्वन्मनुष्यशरीरमपि वैष्णवपदप्राप्तिसाधनो[illegible] पयोगीति ज्ञापनाय रथभावेन रूप्यते तथाहि कठवल्ल्या[illegible]

आत्मानं रथिनं विद्धि शरीरं रथमेव च ।
बुद्धिं तु सा रथिं विद्धि मनः प्रग्रहमेव च ।
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।
यस्त्वविज्ञानवान् भवत्यमनस्कः सदा शुचिः ।
न स तत्पदमाप्नोति यस्माद्भूयो न जायते ।
विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोःपरमं पदम्[illegible]

एतत्क्लृप्त्यर्थं एवात्रोपवृंहित इति श्रुत्या रथादिभावेन [illegible]मेव देहादीनामत्रापि तद्भावरूपणरूपसंवादात् तर्हि श्रुतौ [illegible]नोक्ता अत्र तूच्यते इति चेत् अत्र विवक्षिता मृगया श्रुतौ [illegible] यस्त्व विज्ञानवान् भवत्यमनस्क इत्यत्र परब्रह्मप्राप्तिसाधनं [illegible] पयुक्तशरीरं दैवाल्लब्धवतः क्षेत्रज्ञस्य ब्रह्मस्वरूपतदुपासनादि[illegible] फवेदशास्त्रोल्लङ्घनेन पुनरनादिदुरितनिमित्ताविवेकादिना [illegible] कामचारो ह्यत्र मृगया विवक्षिता सा च मुक्तिमार्गविरोधि[illegible] विवेकलब्धिप्रार्थनतयावगम्यते एतदेव यस्त्वविज्ञानवानि[illegible] वगम्यते अविज्ञानवान् विविच्यज्ञानं विवेकः सोऽस्यास्ति[illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वान् स न भवतीत्यविज्ञानवान् विवेकात्मकसात्त्विकबुद्धया विरहित इत्यर्थः न विद्यते शुचिः कामाचारादिना यस्य ऽशुचिरित्यर्थावगमात् श्लोकार्थस्तु पूर्वोक्त एव नचैवं पृथक् प्नावस्था न कथिता स्यात्ततश्च तद्वत्तदोषानुकीर्तनेन श्रोतुर्ध- त्योदयो न स्यादिति वाच्यं जाग्रदवस्थाप्रपञ्चेनैव स्वप्नावस्था- येवं विधेति ज्ञातुं शक्यत्वेन तस्याः पृथगवक्तव्यत्वात् अत व हि मूर्च्छावस्था पृथक् नोक्तेति सङ्ग्रहः ॥ २४ ॥

एवं परोक्षेणोक्तमर्थं व्याख्याय कृत्स्नकथातात्पर्यमाह । एव- मित्यादिना । त्रिभिस्तापैस्तदवान्तरभेदेन बहुविधैर्दुःखैरेवं शत- र्षं यावच्छरीरं क्लिश्यमानः देही क्षेत्रज्ञः तमोवृतस्तमसाज्ञाने- नावृतोऽभिभूतः ॥ २५ ॥

प्राणादेर्धर्मानात्मन्यध्यस्य पिपासुरहं बुभुक्षुरहं काणोऽहंबधि- रोऽहं दुःख्यहंसुख्यहमित्येवं प्राणादेर्धर्मानात्मन्यारोप्य सुखलेशा- न्वाचिन्तयन्नहं ममाभिमानाभ्यां पुनर्देहान्तरप्राप्तिहेतुभूतकर्माणि कुर्वन् शरीरे वसति ॥ २६ ॥

कुतोऽयं संसार इति विवित्सायां स्वपरयाथात्म्यरूपोपासना- पज्ञानाभावादेवेत्याह । यदेति । स्वात्मानं हितोपदेष्टारं प्रकृति- पुरुषविलक्षणं षाड्गुण्यपूर्णं परमात्मानं चाज्ञात्वा क्षेत्रज्ञः स्वभा- वतः स्वदृक् स्वानुभवपरोऽपि प्रकृतेर्गुणेषु शब्दादिषु यदा विपज्जेत नितरां सक्तो भवेत् ॥ २७ ॥

गुणेष्वेव शब्दादिष्वभिमानी भोग्यताबुद्धिमानत एव विषय- परवशः विषयलाभसाधनतया शुक्लं सात्त्विकं कृष्णं तामसं लोहितं राजसमित्येवं रूपेण त्रिविधानि कर्माणि कुरुते तदा यथा स्वशुक्लादिस्वस्वकर्मानुसारेणाभिजायते पुनर्जन्मान्तरं प्रतिपद्यते ॥ २८ ॥

तदेवाह।शुक्लात्सात्त्विकात्कर्मणो हेतोः प्रकाशभूयिष्ठान्प्रकाशः भू- यिष्ठःप्रचुरो येषु तान् लोकान् देहान्कर्हिचित्प्राप्नोति कर्हिचिदित्यनेन सात्त्विकं कर्म तत्प्रयुक्तः सात्त्विकोदेहश्च दुर्लभ इत्युक्तं क्रियायाः राजसात्कर्मणः दुःखोदर्कान् दुःखमुत्तरं येषां तान् दुःखपरं- परासम्पादकानित्यर्थः तान् लोकान् तमस्तामसात्कर्मणः विभ- क्लिष्टार्थः यद्वा तमःशोकावज्ञानशोकाद्युत्कटौ येषु तान् तामसात् कर्मणः इतिवा शेषः कचिद्रजस्तमः प्रचुरम्लेच्छादिदेशेषु सात्त्वि- कादिकर्मकर्तृस्वरूपं तत् स्पष्टं गीतं भगवता "नियतं सङ्गरहितमराग द्वेषतः कृतं अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते । यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः । क्रियते बहुलायासन्तद्राजसमुदा- हृतम् अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म तत्तामसमुदाहृतम्" इत्यादिना ॥ २९ ॥

गुणकर्मानुसारेण जन्मापि नपुंस्त्वादिरूपेण नियतं प्राप्नोति किंत्वनियतमेवेत्याह । कचिदिति । अन्धधीरज्ञः नोभयंनपुंसकं भव- तीत्यर्थः तत्रापि यथा कर्मगुणं कर्मगुणावनतिक्रम्य देहादिरूपेण भवः जन्म भवतीति शेषः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पञ्चेन्द्रियद्वारेण विषयसेवालक्षणहिंसाकलाविनोदं करोतीति पञ्चसूनाविनोदकृत् येन सम्वत्सरेण द्विपरार्धायुर्लक्षणः कालः ॥ २१ ॥

परिक्रान्त्या परिवृत्त्या पुनःपुनरावर्तनेनेत्यर्थः ॥ २२ ॥

क्षयाय जगत इति शेषः भूतोपसर्गा ग्रहोपद्रवाः ॥ २३ ॥

अधुना लक्षणया वृत्त्या उक्तमर्थं विवृत्यर्थं प्रत्यक्षमाह । एव- मिति । दैवभूतात्मसम्भवैराधिभूताध्यात्मविषयतया जातैरेवं बहु- विधैर्दुःखैः क्लिश्यमानस्तमोवृतस्तत्परिहारोपायमजानन् देही शेते इति श्लोकद्वयेनान्वयः कियन्तं कालं शतवर्षं क्लृप्तत्वात् "शतायुर्वै- पुरुष" इति न्यूनातिरेकसम्भवेऽप्येवमुक्तं दुःखोत्पत्तौ कारणमाह । कामेति । प्राणधर्मानशनपिपासादीनिन्द्रियधर्मानन्धत्वादीन् मनो- धर्मान् शोकमोहादीनात्मनि स्वस्मिन्नध्यस्यारोप्य बुभुक्षितः पिपा- सितोऽहमन्धः काणोऽहं शुष्कोऽहं मुग्धोऽहमिति निर्गुणश्चेतनत्वेन स्वतो गुणरहितः ननु शरीरकारणक्षये मोक्षसम्भवात् क्लेशानु- भवोऽप्युपकाराय स्यादिहिन इत्यात्राह । कर्मकृदिति । आचतुर्दश- माद्वर्षात्कर्माणि नियमेन तु । दशावराणां देहानां करोत्ययमि- त्यादेर्न कर्मक्षयान्मुक्तिः नन्वस्तु कर्मकर्तृत्वं हर्षपर्येण क्रियमाणानां न दुःखदातृत्वमित्यत्राह । ममेति ॥ २४ ॥ २५ ॥

कर्मकृदित्यत्र कीदृशं कर्म करोतीति तत्राह । यदेति । यदा अद- गज्ञानी पुरुषः संसारे इष्टानिष्टफलदमात्मानं स्वान्तर्यामिणम- विज्ञाय प्राकृतेषु गुणेषु विपज्जते तदा स गुणाभिमानी देही शुक्ला- दीनि सात्त्विकादीनि कर्माणि यथा कुरुते तथा सात्त्विकादिश- रीरतया जायते अवशः विष्णुवशः स इत्यनेन कर्मणः स्वातन्त्र्यं निराह आत्मशब्दस्य साधारणत्वेन कथं निर्णय इत्यतो भगवन्त- मित्यादिविशेषणत्रयम् ॥ २६ ॥ २७ ॥

त्रिविधानां कर्मणां फलमाह । शुक्लानिति । प्रकाशभूयिष्ठांस्ते- जोमयान् देवादीन् क्रियायासान् क्लेशकर्मसाध्यान् राजसान् दुःखप्रचुरान् मनुष्यादीन् तमः शोकोत्कटान् तामसान् स्वकर्मणः शोकभूयिष्ठान् तिर्यगादीनाप्नोतीत्यन्वयः ॥ २८ ॥

कचित्कचिदिति । बहुजन्मापेक्षया नोभयं नपुंसकत्वमेतदेव विशिनष्टि । देव इति । यथा कर्मगुणं यथा यथा कर्मणां गुणानामा- नुगुण्यं तथा भव उत्पत्तिर्देवादिविषया ॥ २९ ॥

तत्र दृष्टान्तमाह।क्षुदिति। दण्ड प्रहारं दिष्टं दैवतः प्राप्तम् ॥३०॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परिसृत्येत्यत्रपरिक्रान्त्येति कचित् ॥२१--२३ ॥

एवमिति युग्मकम् ॥ २४ ॥ २५ ॥

यदेति युग्मकम् ॥ २६—२९ ॥

क्षुदिति युग्मकम् ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

परिभ्रम्या परिभ्रमणेन ॥ २१ ॥

लोकानां क्षयाय स्वसारं स्वसृत्वेन जगृहे पक्षे स्वस्य क्षयाय स्वसारमपि तां जगृहे अधर्मवंशोद्भवत्वात् स्वसुरपि तस्याः स्वयमेव पतिरभूदिति कालकन्या वैष्णवजनेष्वपि कृपालोनारद- स्याज्ञया मृत्युमेव जरयतीति ॥ २२ ॥

ज्वराः सञ्चारिणः भूतसम्बन्ध्युपसर्गाः पवनजलहिमाग्नि सूर्यातपकुपथ्यादिकृताः श्वासतन्द्रा प्रलापादयः आशुरयाः शीघ्रवेगा यस्य सः द्विविधो ज्वरः शीतोष्णभेदात् भूतोपसर्गा-

तथा कामाशयो जीव उच्चावचपथा भ्रमन् ।
उपर्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम् ॥ ३१ ॥
दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु ।
जीवस्य न व्यवच्छेदः स्याच्चेत्तत्तत्प्रतिक्रिया ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वरय इति पाठे भूतकृताः राजचौरकृमिजलादिकृता उपसर्गाः पीडास्तु अरयः अनेन अरिभिरुपरुद्ध इत्यरिपदव्याख्या ॥ २३ ॥

कथेयं वैराग्यार्थेत्याह । एवमिति । दैवेत्याधिदैवकाधिभौतिकाध्यात्मिकैः प्राणधर्म्मान् क्षुत्पिपासादीन् इन्द्रियधर्म्मान् अन्धत्वादीन् मनोधर्म्मान् कामादीन् निर्गुणोऽप्यात्मन्यध्यस्य ॥ २४ ॥ २५ ॥

आत्मानं परमात्मानम् ॥ २६ ॥ २७ ॥

शुक्लं सात्त्विकं कृष्णं तामसं लोहितं राजसं दुःखमुदर्कं उत्तरफलं येषु सुखपदार्थेषु तान् क्रियया आयासश्च येषु तान् लोहितान् आप्नोति तमःशोकावेव उत्कटौ येषु तान् कृष्णानिति ज्ञेयम् ॥ २८ ॥

पुरञ्जनः परस्मिन् जन्मनि स्त्री कथं बभूवेत्यत आह । कचिदिति । नोभयं नपुंसकं कर्म्मगुणानतिक्रम्य यथा कर्म्मगुणम् ॥ २९ ॥

तेषु जन्मसु दैववशादेव सुखदुःखे प्राप्नोतीति सदृष्टान्तमाह द्वाभ्याम् । दीन इति । राजकीय सारमेयव्यावृत्त्यर्थं सारमेयः श्वा ॥ ३०—३१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ सप्तविंशाध्यायगतानि पदानि व्याचष्टे सम्वत्सर इत्यादिसार्द्धैस्त्रिभिः येन सम्वत्सरेण परिक्रान्त्या निरन्तरया आवृत्त्या ॥ २१ ॥

वधाय लोकानां मरणाय खसारं भगिनीतया जगृहे ॥ २२ ॥

चराः अस्थिराः भूतानामुपसर्गे क्लेशे आशु रयो मारको वेगो यस्य सः द्विविधः शीतोष्णरूपेण प्रवेशनिर्गमभेदात् ॥ २३ ॥

अथाष्टाविंशाध्यायार्थे कचित्पुमानित्यादिकचित्स्त्रीतिवाक्यैः सूचयन् कृत्स्नप्रकरणतात्पर्यमाह । एवमित्यादिना । तमोवृतोऽनादिमायावृतः ॥ २४ ॥

निर्गुणोऽपि अशनादिधर्मरहितोऽपि अशनापिपासादीन् प्राणधर्मान् बधिरत्वादीन् इन्द्रियधर्मान् राजसत्वादीन् मनोधर्मान् आत्मन्यध्यस्यारोप्य कामलवान् सुखलेशान् ध्यायन् अहं मम इतिहेतोः कर्मकृत् शेते देहे वसति ॥ २५ ॥

प्रकृतेर्गुणेषु देहादिषु गुणकार्येषु स्वदृक् स्वदेहेन्द्रियादिषु आत्मबुद्धिः भार्यादिदेहेन्द्रियादिषु स्वीयबुद्धिः सन् विसज्जते अयं देवदत्तादिनामको गौरत्वादिगुणकोऽहमिमे भार्यापुत्रादयो ममैवेत्या सक्तिं करोतीत्यर्थः ॥ २६ ॥

गुणाभिमानी गुणकार्येषु स्वपरदेहेपूकरीत्याहं ममेत्याभिमानवान् शुक्लं सात्त्विकं कृष्णं तामसं लोहितं राजसं यथा कर्म तथैवाभिजायते देहं लभते ॥ २७ ॥

शुक्लात्कर्मणः प्रकाशबहुलान् लोक्यन्ते कर्मफलानि भुज्यन्ते यैरिति लोकान् देहान् क्रियाभिरायासो येषु तान् लोहितान् तमःशोकावुत्कटौ येषु तान् कृष्णान् ॥ २८ ॥

कचित्पुमान् कचित्स्त्री च भवति कचिन्नोभयं [illegible] पुंसकत्वात् यतः कर्मगुणानतिक्रम्येति यथाकर्मगुणं [illegible] भवति ॥ २९ ॥

सारमेयः श्वा ॥ ३० ॥

---

भाषाटीका ।

संवत्सर ही चण्डवेग है जिससे काल उपलक्षित [illegible] दिन उसके गन्धर्व हैं रात्री गन्धर्वी हैं वेही तीनसौ सा[illegible] कर आयु को हरते हैं ॥ २१ ॥

जरावस्था साक्षात्काल कन्या है मनुष्यादि उनके [illegible] चाहते हैं सब के क्षय करने को उस वहिन को मृत्यु [illegible] भ्वरने ग्रहण किया ॥ २२ ॥

आधि व्याधि उसके सेना वाले यवन दूत हैं [illegible] की पीडा करने में शीघ्र वेग वाला प्रज्वार दो प्र[illegible] ज्वर है ॥ २३ ॥

इस प्रकार बहुत से देव भूत आत्मा के दु[illegible] दुःखित होकर जीव सौ वर्ष पर्यन्त अज्ञानयुक्त रहता है [illegible]

प्राण इन्द्रिय मनके धर्मों को आत्मा के मान लेता है [illegible] इनके गुणों से रहित, है काम के कणों को ध्यान करता [illegible] रहता है मैं हूं मेरा है ऐसे कर्म करता है ॥ २५ ॥

स्वयं प्रकाश है तौ भी परम गुरु भगवान् को [illegible] कर पुरुष प्रकृति के गुणों में जब आसक्त हो जाता है [illegible]

तब वह गुणों का अभिमानी होने से परवश [illegible] कर्म करता है सात्त्विक राजस तामस जैसा करै वैसा [illegible] होता है ॥ २७ ॥

कभी सत्व गुण से बहुत प्रकाश मान लोकों को [illegible] कभी तमोगुण से क्रिया से बडा परिश्रम जिनमें [illegible] के प्राप्त करने वाले इन लोकों मे जाता है ॥ २८ ॥

कभी पुरुष कभी स्त्री कभी मन्दबुद्धि होने से [illegible] कर्म गुण के अनुसार देवता मनुष्य पक्षी होता है [illegible]

क्षुधा से युक्त कुत्ता जैसे दुःखित होकर घर घर में [illegible] जो कुछ दैव से दण्ड प्रहार अथवा भोजन को पाता है [illegible]

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कामव्याप्त आशयो यस्य ॥ ३१ ॥

ननु तर्हि सुखस्य सम्भवाद्दुःखस्य च प्रतीकारसम्[illegible] कान्ततो हेयत्वं तत्राह । दुःखेष्विति । दुःखस्य प्रतीकार[illegible] अस्ति स्याच्चेत्तस्य तस्य प्रतिक्रिया तथापि त्रिविधेषु [illegible] मध्ये एकतरेणापि दुःखेन व्यवच्छेदो वियोगो नास्ति [illegible]

यथा हि पुरुषो भारं शिरसा गुरुमुद्वहन् ।
तं स्कन्धेन स आधत्ते तथा सर्वाः प्रतिक्रियाः ॥ ३३
नैकान्ततः प्रतीकारः कर्मणां कर्म केवलम् ।
द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ ! ॥ ३४ ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
मनसा लिङ्गरूपेण स्वप्ने विचरतो यथा ॥ ३५ ॥
अथात्मनोऽर्थभूतस्य यतोऽनर्थपरम्परा ।
संसृतिस्तद्व्यवच्छेदो भक्त्या परमया गुरौ ॥ ३६ ॥
वासुदेवे भगवति भक्तियोगः समाहितः ।
सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति ॥ ३७ ॥
सोऽचिरादेव राजर्षे ! स्यादच्युतकथाश्रयः ।
शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः ॥ ३८ ॥
यत्र भागवता राजन् ! साधवो विशदाशयाः ।
भगवद्गुणानुकथनश्रवणव्यग्रचेतसः ॥ ३९ ॥
न्मुखरिता मधुभिच्चरित्रपीयूषशेषसरितः परितः स्रवन्ति ।
यान्वितृषो नृप ! गाढकर्णैस्तान्न स्पृशन्त्यशनतृड् भयशोकमोहाः ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रतिक्रियाणामपि दुःखरूपत्वादिति सदृष्टान्तमाह । यथा-हीति ॥ ३३ ॥

दुःखस्य मूलभूतानि कर्माणि प्रतिक्रियादिकर्मभिर्नैव निवर्तेत इत्याह । नैकान्ततोऽत्यन्तं सवासनं केवलं ज्ञानरहितमविद्ययोपसृतं प्राप्तमतो विरोधाभ्न निवर्त्यनिवर्तकत्वमिति भावः अत्र दृष्टान्तः स्वप्ने दृष्टः स्वप्नः प्रबोधं विना यथा तं स्वप्नमत्यन्तं न प्रतिकरोतीत्यर्थः ॥ ३४ ॥

ननु तर्ह्यज्ञानविलसितसंसृतिहेतोर्देहादेरप्यसत्त्वात्किंतन्निवर्तनप्रयासेन तत्राह । अर्थेहीति । लिङ्गरूपेणोपाधिभूतेन ॥ ३५ ॥
तदेवं संसृतिप्रकारमुक्त्वा तन्निवृत्तिप्रकारमाह । अथ तस्मात्पुरुषार्थभूतस्यैवात्मनो यतो ज्ञानान्मनसो वा अनर्थपरम्परारूपा संसृतिर्भवति तस्य व्यवच्छेदो गुरुरूपे वासुदेवे भक्त्यैव ॥ ३६ ॥

ननु संसृनिनिवृत्तिर्वैराग्यपूर्वकाज्ज्ञानादेव ननु भक्त्या "तरति शोकमात्मवित्" इत्यादिश्रुतेस्तत्राह । वासुदेव इति । सध्रीचीनेन समीचीनेन प्रकारेण ॥ ३७ ॥

नन्वसौ महाफलो भक्तियोगः कथं स्यादत आह । सत्यच्युतस्य कथामाश्रित्य वर्तमानो ऽचिरात्स्यात् कस्य स्यात्तदाह । शृण्वतोऽधीयानस्य च ॥ ३८ ॥

कुत्र स्यात्तदाह । यत्रेति । भगवतो गुणानुकथने श्रवणे च व्यग्रं सत्वरं चेतो येषां ते ॥ ३९ ॥

ननु साधु सङ्गं विना स्वयमेव हरिकथाचिन्तनादिना भक्तिर्भवेदेवेत्याशङ्क्याह । द्वाभ्याम् । तस्मिन् स्थाने महद्भिर्मुखरिताः कीर्तिताः मधुभिदश्चरित्रमेव पीयूषं तदेव शिष्यत इति शेषो यासु असारांशरहितशुद्धामृतवाहिन्य इत्यर्थः अवितृषोऽलम्बुद्धिशून्याः सन्तो गाढैः सावधानैः कर्णैर्ये ताः सरितः पिबन्ति सेवन्ते अशनशब्देन क्षुल्लक्ष्यते अशनादयस्तान्न स्पृशन्ति भक्तिरसिकान्न बाधन्त इत्यर्थः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवंविधेषु जन्मसुसुखलाभो दुर्लभ इति सदृष्टान्तमाह । यथेति द्वाभ्यां यथा क्षुधा परिक्षून: व्याप्तः अत एव दीनः सारमेयः श्वा प्रतिगृहमटन्यद्दिष्टं यत् स्वकर्मायत्तं दण्डेन ताडनं वोदनं वा विन्दति प्राप्नोति ॥ ३१ ॥

एवं जीवोऽपि कामव्याप्तः आशयो यस्य उच्चावचपथा उत्कृष्टापकृष्टमार्गेण उपर्यूर्ध्वं लोकेषु अधः मध्ये अधो लोकेषु भ्रमन् नरकेषुमध्येइहलोकेषु "ऊर्ध्वंगच्छन्ति सत्त्वस्था मध्येतिष्ठन्ति राजसाः । जघन्यगुणा वृत्तिस्था अधो गच्छन्तितामसा„ इत्युक्तरीत्या भ्रमन् दिष्टं दैवायत्तम् प्रियमप्रियं वा याति प्राप्नोति ॥ ३२ ॥

ननु तर्हि सुखस्य सम्भवात् दुःखस्य प्रतीकाररूपकर्मान्तरसम्भवान्नैकान्ततो हेयत्वं तत्राह । दुःखेष्विति । दैवभूतात्महेतुष्वाधिदैविकाधिभौतिकाध्यात्मिकतापरूपेण त्रिविधेषु दुःखेष्वन्यतरस्य यदि प्रतिक्रियास्याच्चेत्तथाप्यन्यतरेण न व्यवच्छेदः नामस्यन्धः भगवदुपासनमन्तरेण न तापत्रयविनाशनसमर्था प्रतिक्रियास्तीति भावः ॥ ३३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रतिक्रियापि दुःखरूपेति दृष्टान्तमाह । यथाहीति । यथा पुमान् गुरुं भारं शिरसा उद्वहन् शिरसो विश्रान्तये तद्भारं स्कन्धेनाधत्ते उद्वहति तथा सर्वाः प्रतिक्रिया दुःखप्रतीकारास्तादात्विकालपविश्रान्तिकरास्ता अपि दुःखरूपा इत्यर्थः किञ्च प्रतिकारोऽपि कर्मात्मक एव दुःखहेतुरपि कर्मैव तत्रो-भयोरप्यज्ञानमूलत्वेन दुःखहेतौ कर्मणि कर्मान्तरेण प्रतिकृतेऽपि न मूलं निवर्तते ततश्च पुनरपि दुःखनिमित्तकर्मोदयाधैकान्ततः कर्मणां प्रतीकारः संभवतीत्याह । केवलं ज्ञानविधुरं कर्म कर्मणां दुःखहेतूनामैकान्ततः निःशेषतः प्रतीकारो न भवति द्वयं निवर्त्यं निवर्तकं चेत्युभयविधं कर्म हि यस्मादविद्यापसृतं देहात्मभ्रान्तिरूपाहंकारममकारात्मकाज्ञानेन उपसृष्टं गर्भितं तन्मूलमित्यर्थः तत्र दृष्टान्तः स्वप्ने स्वप्न इवेति स्वशिरश्छेदादिविषये स्वप्ने जागरणेन निवृत्तेऽप्यज्ञानस्य मूलस्यानिवृत्तेः पुनः स्वप्नो भवति तद्वत्स्वप्ननिवर्तकं स्वप्नान्तरमिवेति वा ज्ञानहीनस्य कर्मणि प्रतिकृतेऽपि नाविद्यानिवृत्तिरित्यर्थः ॥ ३४ ॥

नन्वहंममाभिमानरूपाज्ञानमेव कर्मद्वारा दुःखहेतुरित्युक्तं तदज्ञानमेव प्रतिक्रियतां तत्राह । अर्थे इति । अर्थे आत्मन्यविद्यमानेऽपि देवत्वमनुष्यत्वाद्याकाराभावेऽपि देहात्मभ्रान्तिमूला दुःखरूपा संसृतिर्न निवर्तते कुत इत्यत्राह । मनसेति । लिङ्गरूपेण हन्तुर्देहात्माभिमानहेतुभूतमनःसद्भावादित्यर्थः मनसो भ्रान्तिजननद्वारा दुःखादिहेतुत्वे दृष्टान्तमाह । स्वप्न इति । यथा स्वप्ने विचरतः संकल्पादिकं कुर्वतो मनसो हेतोर्देशान्तरगमनराज्याभिषेकस्वशिरश्छेदादिनिमित्तसुखदुःखादिकं भवति तथेत्यर्थः ॥ ३५ ॥

अतः पुरुषार्थभूतस्यात्मनो देहात्मभ्रान्त्यहङ्कारममकारतन्मूलोभयविधकर्मद्वारानर्थरूपसंसारहेतुत्वान्मनसस्तदेव वशीकर्तव्यं वशीकरणोपायश्च भगवद्भक्तिरेवेत्याह । अथेति । अथातः पुरुषार्थभूतस्यात्मनः अनर्थपरंपरा दुःखपरम्परारूपा संसृतिर्यतो मनसो भवति तद्व्यवच्छेदः तस्य मनसो व्यवच्छेदः परमभक्तियोगोऽपि ननिर्निमित्तमुदेति दुःखनिमित्तदेहात्मभ्रान्त्याद्यजनकत्वरूपो व्यवच्छेदः मुक्तिरिति यावत् गुरौ भगवति परमया भक्त्या भवति ॥ ३६ ॥

कथं तद्व्यवच्छेदहेतुसंबन्धस्तत्राह । वासुदेव इति । सध्रीचीनेन समीचीनेन प्रकारेण वासुदेवे भगवति समाहितो निहितः कृत इति यावत् भक्तियोगः परमभक्तियोगः वैराग्यं विषयेष्वनासक्तिं ज्ञानं परं ज्ञानं च जनयिष्यति परभक्त्यादिप्रशाड्या सुखदुःखादिनिवर्तकः परमभक्तियोग उदेष्यतीत्यर्थः ॥ ३७ ॥

परमभक्तियोगोऽपि कुतः स्यात्तत्राह । स इति । अच्युतकथाश्रयः अच्युतस्य कथैवाश्रयो यस्य सः परमभक्तियोगः अचिरादेव स्यात् हे राजर्षे ! भगवत्कथाश्रवणात्परमभक्तियोग उदेष्यतीत्यर्थः । अच्युत कथाश्रयः परमभक्तियोगः कथंभूतः स्यात्त त्राह । नित्यदा अच्युतकथाः शृण्वतः श्रद्दधानस्य कथाश्रवण विषयनिष्ठायुक्तस्य नित्यमधीयतः कथा अधीयानस्य ॥ ३८ ॥

कुत्र शृण्वतस्तत्राह । यत्रेति । हे राजन् साधवः विमलान्तःकरणाः भगवतो गुणानुकथने श्रवणे च व्यग्रं सत्वरं चेतो येषां ते यत्र वसन्ति तत्रेत्यर्थः ॥ ३९ ॥

तत्र कथं श्रवणं लभ्यते शृण्वतां च कानि दु[ःखानि] नश्यन्ति तत्राह । तास्मिन्निति । तस्मिन् देशे सद्भिर्मुख[...] मधुभिदो भगवतश्चरित्रमेव पीयूषं तदेव शेषः शिष्य[...] शेषः असारांशरहितः सारांशो यासु ताः सरितो [...] अच्युतकथाः परितः स्रवन्ति प्रवर्त्तन्ते भागवतप्रचुरदेशे मु[...] मेवभगवत्कथाश्रवणमिति भावः ताः सरिद्रूपाः भगव[...] ये जना अवितृष अलंबुद्धिशून्याः सन्तो गाढंरसावधा[...] पिबन्ति शृण्वन्ति तानशनादयः न स्पृशन्ति न बाधन्ते ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कामे विषये आशयो यस्य स तथा ॥ ३१ ॥

एवं भ्रमतः सुखं क्वापि न स्यात्किं तत्राह । दुःखेष्विति । [...] दिहेतुषु दुःखेषु मध्ये एकतरेण दुःखेनापि जीवस्य व्यव[...] वियोगो नास्तीत्यन्वयः प्रतिक्रियया सुखं स्यादित्याह । [...] र्दीति । तस्य तस्य दुःखस्य प्रतिक्रिया परिहारः सोऽपि दु[ःख] मेव ॥ ३२ ॥

स्कन्धस्य यथा भवति तथा सर्वाः प्रतिक्रिया दु[ःख] इत्यन्वयः ॥ ३३ ॥

अग्निष्टोमादिकर्मणामन्यकर्मनिवृत्तौ (१) प्रबोधकाभावा[...] दुःखव्यवच्छेदो घटत इति चेत्तत्राह । नैकान्तत इति । [...] श्रीनारायणार्पणबुद्धिरहितं कर्म कर्मणामैकान्ततो नियमेन [...] न भवति कुत इति तत्राह । द्वयमिति । निवार्यं निवर्तकं चे[...] द्वयमविद्योपसृतमीश्वराज्ञानानुविद्धं हि यस्मात्तस्मादिति [...] तत्र दृष्टान्तः स्वप्ने वर्तमानः स्वप्नो यथा तस्य निवर्तको [...] किन्तु"अतः प्रबोधोऽस्मात् इति तत्र प्रबोधादावीश्वर एव [...] सृत्योः (२) क्रियानेव विशेष इति ॥ ३४ ॥

स्वप्नवद्वरः संसारो निवर्ततामिति तत्राह । अर्थे इति । [...] ज्ञानलक्षणपदार्थे अविद्यमाने संसृतिर्न निवर्तते कथमिव [...] वासनानां गमकेनोद्बोधकेन मनसा स्वप्ने विचरतो [...] भुञ्जानस्य पुंसः संसारो यथा न निवर्तते निद्राया अनिवृ[...] तथात्र ननु स्वप्नसंसारयोः कथं साम्यं स्वप्नदृष्टानां [...] नष्टत्वात्संसारदृष्टानां किञ्चित्स्थायित्वदर्शनादित्यस्याभि[...] त्तरमित्यभिप्रायेणोक्तमर्थे इति अयं भावः यथार्थज्ञाना[...] भयोः साम्यं ननु स्थायित्वास्थायित्वात् न हि दृष्टान्तदार्ष्टा[...] सर्वसाम्यं क्वापि दृष्टं "संसृतेः स्वप्नसाम्यं तु यथार्थज्ञाना[...] म„इति वचनात्" जाग्रत्यविद्यमानं तु देहात्मत्वं तु केवल[...] यमानं स्वप्ने तु जाग्रत्त्वज्ञानमेव च"इति वचनात् उभय[...] ज्ञानाभावोऽपि ज्ञायते संसारे लब्धजन्मा यदि भगवज्ज्ञा[...] दयेत्तर्ह्ययं संसारो निष्प्रयोजनः स्यादित्यतो ह्यर्थं [...] पीति न तु मिथ्यात्वादितिमिमर्थं हि शब्देन सूचयति ॥ [...]

एवं विभज्ञानोत्पत्तौ किं मुख्यसाधनमत्राह । अथेति । [...] रकेवलकर्मणो दुःखहेतुः संसारः सति भगवज्ज्ञाने [...] अथ तस्मात्संसारनिवृत्त्यर्थेऽर्थभूतस्य पुरुषार्थयोग्यस्यात्मनो [...] यतो यस्य हरेरज्ञानादनर्थपरम्परा श्वयोनिः कुकृत्वास[...] लक्षणा संसृतिर्यो तद्व्यवच्छेदस्तस्य संसारस्य निवृ[त्ति...] भक्त्या स्यादिति यतस्तस्मात्तस्य हरेः ज्ञानजननीं [...] कुर्यादित्यन्वयः ॥ ३६ ॥

[ १ ] निवृत्तौसत्यां दुःखोद्बोधकनिमित्ताभावादित्यर्थः । [ २ ] तत्रोऽपि विशेषदित्यर्थः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानद्वारा भक्तेः संसारोच्छेदकत्वमिति भावेनाह । वासुदेव इति । सध्रीचीनेन प्राणायामादिवह्निना निर्दग्धमलेनान्तःकरणेन समाहितः सम्यक् स्थापितः सध्रीचीनेन निष्कामेण पुरुषेणेति वा यद्यपि भक्तेः पूर्वभाविवैराग्यं तथापि पश्चात् दृढं कृतवती-त्यतो वैराग्यं जनयिष्यतीति ज्ञानं द्विविधम् ॥ ३७ ॥

भक्तियोगस्य साधनमाह । सोऽचिरादिति । अच्युतकथा आश्रयो यस्य स तथा अनेन हरिकथाभक्तियोगस्य साधनमच्युतकथाधि-कारप्रकारमाह । शृण्वत इति । श्रद्धादिगुणसम्पत्तिरधिकारल-क्षणम् ॥ ३८ ॥

कुत्रेयं सम्भूयत इति तत्राह । यत्रेति । अव्यग्रचेतसस्तदेक-चित्ताः ॥ ३९ ॥

तस्मिन् सतां समाजे महद्भिर्मुखरिताः शब्दात्मना निर्गमिता यास्ताः सरितस्तान् पुरुषान् ॥ ४० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

भगवद्गुणानामनुकथने अनुश्रवणे च व्यग्रं विवशं चेतो येषां ते नच तत्कथा तत्र स्वयत्नसापेक्षा न च साधनानन्तरस्य व्यपेक्षा न च परिच्छिन्नेत्याह । तस्मिन्निति महान्तो मुखरिता याभिरिति आहिताग्न्यादित्वान्निष्ठायाः परनिपातः ॥ ३१—४० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु निर्बुद्धिः श्वा दण्डप्रहारं प्राप्नोति बुद्धिमांस्तु दुःखस्य कारणमेव न करोति दैवात् प्राप्तौ रोगादिदुःखस्य प्रतिकारञ्च करोतीति तत्राह । दुःखेषु त्रिविधेषु मध्ये एकतरेणापि न व्यवच्छेदो न विरहः तत्तद्दुःखस्य प्रतिक्रियापि स्याच्चेत्तदपि न प्रतिक्रियायामपि दुःखरूपत्वादिति भावः ॥ ३२ ॥

तत्र दृष्टान्तः यथाहीति ॥ ३३ ॥

ननु यस्माद्दुःखस्य कारणं दुष्कृतकर्म्मैव तस्मात् सर्व्वदु-ष्कृतक्षयकामनया कस्मिंश्चिद्बृहति यागकर्म्मणि कृते सर्व्वदुः-खनाशः स्यादेवेति तत्राह । नैकान्तत इति । द्वयं दुष्कृतं कर्म्म दु-ष्कृतनिवर्त्तकञ्च कर्म्मेति द्वितयमविद्यामुपसृतमाश्रितं तद्द्वयस्य तमोरजोगुणजनकत्वादिति भावः । तद्यथा रजसि सत्त्वांशेन तमसो निवर्त्तकेऽपि तमोंऽशस्तिष्ठति तथा सर्व्वदुष्कृतनिवर्त्तकेऽपि यागकर्म्मणि पशुहिंसालक्षणं दुष्कृतं तिष्ठत्येवेत्यत्र दृष्टान्तः । स्वप्ने पुत्रो मृत इति । दुःखप्राप्तिस्तत्स्वप्नमध्य एव पुनः स्वप्ने पुत्रो जीवतीति तद्दुःखोपशमः किञ्च तदैव तं पुत्रं सर्पो दशतीति पुनर्दुःखप्राप्तिरिति प्रबोधं विना यथा स्वाप्निकं दुःखं न निवर्त्तते तथा संसारनिर्वृत्तिं विना सांसारिकं दुःखं न निवर्त्तत इत्युक्तम् ३४

ननु सुखदुःखादेर्देहधर्म्मत्वाद्वस्तुतस्त्वसङ्गस्य जीवात्मनो दुःखादिकं नैव विद्यत इत्यविद्यमानस्य दुःखस्य किं निवर्त्त-नप्रयासेनेत्यत आह । अर्थे दुःखादौ जीवात्मनोऽवस्तुभूतेऽपि तन्निवर्त्तनं विना संसृतिर्न निवर्त्तते यथा स्वप्ने लिङ्गरूपेणो-पाधिभूतेन मनसा सह विचरतो जीवस्यासत्यमपि सर्पादिकं वस्तु दुःखदमेव प्रबोधं विना ॥ ३५ ॥

तर्हि संसारनिवृत्तिरेव कथं भवेत्तत्राह । अथेति । भक्तिप्रक-रणारम्भे आत्मनो जीवस्य परमार्थभूतस्य यत एवाविद्यातो-ऽनर्थपरम्परा संसृतिस्तस्या विच्छेदो गुरौ भक्त्येति गुरुर्न स स्यादित्यादिना हरिभक्त्युपदेशकस्यैव गुरुत्वविधानाद्गुरौ हरौ च भक्त्येत्यायातं ततश्च पुरञ्जनस्यापरस्मिन् जन्मनि गुरौ हरौ च भक्त्या निस्तारो विख्यातः ॥ ३६ ॥

साधनभक्त्या प्रेमपर्य्यन्ता भक्तिर्भवतीत्याह । वासुदेव इति द्वाभ्याम् । भक्तियोगः प्रेमा भगवत्येव सम्यगाहित इति भजनस्य तत्सुखे तात्पर्य्यं नतु स्वसुखे सध्रीचीनेन समीचीनेन प्रका-रेण यज्ज्ञानं वैराग्यञ्च तदिति सायुज्यप्रयोजनकयोर्ज्ञानवैराग्ययो-र्व्यावृत्तिः । यदुक्तम् । "वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम्„ इति तत्राप्यहैतुकपदोप-न्यासेन अत एव ज्ञानवैराग्ययोर्भक्त्युत्थत्वात्तदर्थं भक्तेन पृथक् प्रयतनीयत्वमिति द्योतितम् ॥ ३७ ॥

अस्य भक्तियोगस्य साधनमपि भक्तियोग एवेत्याह । सोऽचि-रादिति । अच्युतकथामाश्रयत इति । तज्जन्य इत्यर्थः कस्य स्यात्त-दाह । शृण्वत इति । अधीयतः भगवद्धर्म्मानधीयानस्य श्रवणा-दिभक्तित्रयात्मकमात्रं ज्ञेयम् ॥ ३८ ॥

कुत्र स्यात्तदाह । यत्रेति । यथैव गृहासक्ता गृहकर्म्मव्यग्रास्तथैव हन्तायमनुकथनस्य समयः हा हा श्रवणस्य समयो व्यतीतः सम्प्रति कीर्त्तनस्य समयोऽस्त्येति हा हन्त मन्दभाग्योऽहं निद्रा-लस्यदुर्दैहिककृत्यगमितसमयः शीघ्रगतिरेव भक्तसमाजं केन प्रकारेण गच्छामीत्येवं व्यग्रं चेतो येषां ते ॥ ३९ ॥

यत्र भागवतास्तत्रैव भगवत्कथा इति कोऽयं नियम इति चेत्तत्राह । तस्मिन् महत्सदसि मुखं रान्ति गृह्णन्तीति मुखराः महद्भिर्मुखराः कृता इति मुखरिताः स्वयमेव मुखप्राप्तीकृताः या महतां मुखे सदा तिष्ठन्तीत्यर्थः ता एव कास्तत्राह । मधु-भिद्चरित्रपीयूषाणां ये शेषाः महद्भिरास्वाद्यास्वाद्य महाप्रसा-दीकृतास्त एव सरितो महानद्यः परितश्चतुर्दिक्षु प्रतिभक्ताग्र एव स्रवन्ति ता ये पिबन्तीति तासां स्वादाधिक्यं तेषाञ्च तृष्णाधिक्यं सूचितम् । ता इति । तासामेकमपि कणं परित्यक्तुं न शक्नुवन्तीत्यनुरागो व्यञ्जितः अवितृषः अलं बुद्धिशून्याः गाढैरिति दृढत्वेन स्ववसम्भावनाशून्यैः अशनतृट्क्षुधाद्य भुङ्क्ते इति भोजनाकाङ्क्षा भयादयश्च न स्पृशन्तीति भक्तैरेव कृपया परस्परं भोजितत्वात् आकिञ्चन्येनैवभयाभावात् ते न स्मरन्त्यतितरां प्रिय-मित्याद्युक्त्या विस्मृतममतास्पदत्वेनैव शोकमोहाद्य भावादिति ४०

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कामा विषयभोगसङ्कल्पा आशये अन्तःकरणे यस्य सः दिष्टं कर्मानुसृतं प्रियाप्रियं सुखं दुःखं वा याति प्राप्नोति ॥ ३१ ॥

"अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्„ इति श्रुतेर्दुःखस्य स्वकृतकर्मफलस्य प्रतिक्रिया नास्ति "पुण्येन पापमपनुदति" इति श्रुतेः स्याच्चेन्न तत्प्रतिक्रिया तथापि त्रिविधेषु दुःखेषु मध्ये एकतरे-णापि दुःखेन व्यवच्छेदो वियोगो न घटेत प्रतिक्रियाया अपि दुःखरूपत्वात् ॥ ३२ ॥

दुःखनिवारणाय पुण्यकर्माचरणरूपा प्रतिक्रियापि दुःखरूपै-वेतीत्युक्तं तत्र दृष्टान्तमाह । यथाहीति ॥ ३३ ॥

अथ पुण्यकर्माचरणात्मिका दुःखरूपापि प्रतिक्रिया यदि निःशेषं दुःखमूलं कर्म हन्यात्तदानुष्ठेया भवेत्सा तु न तथा भवे-त्याह । नैकान्तत इति। केवलं ज्ञानहीनं कर्म कर्मणां दुःखमूलानाम् एकान्ततो निःशेषतः प्रतिकारो नास्ति तेषां वासनात्मकं मूलं नोत्पाटयति यतो द्वयं निवर्त्यं निवर्तकं च अविद्योपसृतमनात्मनि देहे आत्मत्वाभिमानरूपेणाज्ञानेन उपसृष्टम् अतो ऽज्ञानमूलत्वेन तयो-

एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः ।
न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥ ४१ ॥
प्रजापतिपतिः साक्षाद्भगवान् गिरिशो मनुः
दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः ॥ ४२ ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
भृगुर्वसिष्ठ इत्येते मदन्ता ब्रह्मवादिनः ॥ ४३ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नास्यन्ततो बाध्यबाधकसम्बन्धः अत्र दृष्टान्तमाह । स्वप्ने स्वप्न इव मृगं मां व्याघ्रोहन्तु मायातीत्येवम्विधे स्वप्ने निवारणार्हे मृगहननार्हो व्याघ्रोऽहमिति स्वप्नान्तरः निःशेषतो निवर्तको न भवति उभयस्वप्नमूलभूतस्याज्ञानस्यानिवृत्तत्वात् प्रबोधस्योभयस्वप्ननिवर्तकस्याभावात् ॥ ३४ ॥

ननु पुरञ्जनोपाख्यानेनानेन देहादिविलक्षणतया वर्णितस्य भगवदात्मकस्य ज्ञानस्वरूपस्य वस्तुतो देहरूपत्वाभावात् पूर्वोक्ता संसृतिः स्वत एव निवृत्ता भगवद्भजनादिसाधनस्य नास्त्यपेक्षेत्यत्राह । अर्थे इत्यादि । अर्थे देहात्माभिमानरूपे अविद्यमानेऽपि उक्तात्मज्ञानेन बाधितेऽपि नानावासनामूलेन मनसा लिङ्गेन संसृतिहेतुना विचरतः पुंसः संसृतिकर्मानुष्ठानपूर्वकपुरञ्जन्यादिजन्ममरणप्रवाहो न निवर्तते इत्यन्वयः ॥ ३५ ॥

अथ अतो हेतोर्यतो येन मनसा अर्थभूतस्य भगवदात्मकत्वेन पुरुषार्थस्वरूपस्य अनर्थपरम्परा अनर्थस्य देहात्मभ्रमस्य परम्परा अनुवृत्तिर्यस्यां तथाभूता संसृतिर्वर्तते तस्य मनसः व्यवच्छेदो परमया तपो व्रतकर्मात्मज्ञानेभ्यः श्रेष्ठया गुरौ भगवति भक्त्या भवति ॥ ३६ ॥

सध्रीचीनेन आत्मज्ञानवता समीचीनेन पुरुषेण वासुदेवे समाहितः सम्यगर्पितो भक्तियोगः ज्ञानं भजनीयस्वरूपगुणानन्दादिनिरतिशयत्वविषयकम् तदनन्तरं वैराग्यं भजनीयेतरसातिशयपदार्थेभ्यो विरक्तिं जनयति चकारात्तदनन्तरं प्रेमाविशेषलक्षणो भक्तियोगश्च वैराग्यविजृम्भितो भवति ततः कृतार्थो भवतीत्यर्थः ॥ ३७ ॥

ननु यतो वासुदेवज्ञानमन्यत्र वैराग्यं च भवति स भक्तियोगः कीदृशस्य पुरुषस्य स्यादित्कमात्मकश्चेत्यत्राह । श्रद्धानस्य जनस्य अत एव नित्यदा शृण्वतः नित्यदा अधीयतः अच्युतकथा इति शेषः अचिरादेव स्यात् अत एव अच्युतकथाश्रयः स्यात् अच्युतकथैवाश्रयो यस्य सः अच्युकथाश्रवणकीर्तनाद्यात्मक इत्यर्थः ॥ ३८ ॥

ननु स कुत्र स्यादित्यत्राह । यत्रेति ॥ ३९ ॥

भागवतसमाजे हरिकथामृतपानं मतं क्षुत्तृडादयोऽपि नाभिभवन्तीत्यन्वयव्यतिरेकाभ्यामाह । तस्मिन्निति श्लोकद्वयेन । तस्मिन् भागवतसमाजे महद्भिर्मुखरिताः वर्णिताः मधुभिच्चरित्रमेव पीयूषं तदेव शिष्यते इति शेषः असत्कथारुचिविनादिनीषु यासु ता अवितृषः अविगततृषः तास्वतिलुब्धाः ॥ ४० ॥ ४१ ॥

---

### भाषाटीका ।

तिसी प्रकार अन्तःकरण मे कामना रखने वाला ऊंचे नीचे मार्ग में घूमता हुआ स्वर्ग में अथवा नरक में दुःख कर्म फलको प्राप्त होता है ॥ ३१ ॥

दैहिक दैविक भौतिक तीनों प्रकार के दुःखों में से नहीं छूटता है यदि छूटने का उपाय भी हो तो एक के ने से दूसरा हो जाता है ॥ ३२ ॥

जैसे कोई मनुष्य मस्तक के भार को ढोने में भारी कर कांधेपर लेलेवे तो अधिक सुख नहीं है तैसे ही सब के निवृत्ति के उपाय भी हैं ॥ ३३ ॥

केवल कर्म ही कर्मो का निवर्तक नहीं हो सकता है दोनों ही अज्ञान के अभिमान से किये जाते हैं स्वप्न का भय जगने विना नष्ट नहीं होता हैं हे राजन् ! ॥ ३४ ॥

यथार्थ नहीं है तो भी संसार निवृत्त नहीं जैसे मनके द्वारा लिङ्ग शरीर से स्वप्न में विचरने वाले को सुखादिक होते हैं ॥ ३५ ॥

यथार्थ रूप जो आत्मा तिसका अनर्थ की संसार है उसका नाश होना परमगुरु भगवान् की भक्ति

वासुदेव भगवान् के विषे सावधानतासे किया जो सो अच्छे प्रकार से वैराग्य और ज्ञान को उत्पन्न करेगा ।

हे राजर्षि अच्युत कथा का आश्रय लेने वाला योग नित्य प्रति सुनने वाले कूं तथा पढने वाले होता है ॥ ३८ ॥

हे राजन् ! जहांपर निर्मल अन्तःकरण वाले भगवत् गुणानुवाद के कथन श्रवण में व्यग्रचित्त वाले रहते हैं ॥ ३९ ॥

तहांपर महत् पुरुषों के मुख से गिरी हुई भगवान् के रूपी शुद्ध अमृत की नदी वहती है तिनको जो लोग होकर पीते हैं हे नृप ! सावधान कर्णों से सुनने से प्यास भय शोक मोह नहीं बाधा करते हैं ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्सङ्गमन्तरेण स्वयमेव कथाचिन्तनादावालस्यादिना वेशाभावाच्च क्षुत्पिपासाद्यभिभूतस्य भक्तिर्न सम्भवतीत्याह रिति ॥ ४१ ॥

भगवदनुग्रहमन्तरेण तु न कस्यापि ज्ञानसम्भव सन्यायेनाह चतुर्भिः । प्रजापतिपतिर्ब्रह्मा ॥ ४२ ॥

अद्यापि वाचस्पतयस्तपोविद्यासमाधिभिः ।
पश्यन्तोऽपि न पश्यन्ति पश्यन्तं परमेश्वरम् ॥ ४४ ॥
शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे ।
मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम् ॥ ४५ ॥
यदा यमनुगृह्णाति भगवानात्मभावितः ।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥ ४६ ॥
तस्मात्कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु ।
मार्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ॥ ४७ ॥
स्वं लोकं न विदुस्ते वै यत्र देवो जनार्दनः ।
आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः ॥ ४८ ॥
आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम् ।
स्तब्धो बृहद्वधान्मानी कर्म नावैषि यत्परम् ।
तत्कर्म हरितोषं यत् सा विद्या तन्मतिर्यया ॥ ४९ ॥
हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ।
तत्पादमूलं शरणं यतः क्षेमो नृणामिह ॥ ५० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मदन्ताः अहं नारदोऽन्ते येषाम् ॥ ४३ ॥

वाचां पतयोऽपि तपोविद्यासमाधिभिरुपायैः पश्यन्तो विचिन्वन्तोऽपि पश्यन्तं सर्वसाक्षिणं न पश्यन्ति ॥ ४४ ॥

कुत इत्यत आह। शब्दब्रह्मणि वेदे उरुर्विस्तारो यस्य अर्थतोऽपि पारशून्ये तस्मिन् वर्तमानाः मन्त्राणां लिङ्गैर्वज्रहस्तत्वादिगुणयुक्तविविधदेवताभिधानसामर्थ्यैः परिच्छिन्नमेवेन्द्रादिरूपं तत्तत्कर्माग्रहेण भजन्तः परं परमेश्वरं न विदुः ॥ ४५ ॥

तर्ह्यन्यः कोनाम कर्मणामाग्रहं हित्वा परमेश्वरमेव भजेदित्यत आह। यदा यमनुगृह्णाति अनुग्रहे हेतुः आत्मनि भावितः सन् स तदा लोके लोकव्यवहारे वेदे च कर्ममार्गे परिनिष्ठितां मतिं त्यजति ॥ ४६ ॥

अर्थकाशिषु परमार्थत्वेन प्रकाशमानेषु पुरुषार्थबुद्धिं मा कृथाः प्ररोचनाय केवलं श्रोत्रप्रियेषु न स्पृष्टं वस्तु यैः ॥ ४७ ॥

ननु वेदेन स्वर्गादिसाधनत्वेनोक्तानि कर्माणीति वेदवादिनो वदन्ति कथमस्पृष्टवस्तुष्वित्युच्यते तत्राह। येधूम्रधियो मलिनबुद्धयः सकर्मकं कर्मपरं वेदमाहुस्ते अतद्विदोऽवेदज्ञाः यतस्ते स्वं स्वरूपभूतं लोकमात्मतत्त्वं वेदतात्पर्यगोचरं न विदुः यत्र देवोऽस्ति ॥ ४८ ॥

त्वं तु महामूर्ख इत्याह। आस्तीर्येति। बृहद्वधाद्बहुपशुवधात् मानी यज्वाहमित्यहङ्कारी अतस्तब्धोऽविनीतः सन् कर्म नावैषि परं विद्यास्वरूपं तच्च न वेत्सि नारदः स्वयं कृपया तद्द्वयं निरूपयति। हरिं तोषयतीति हरितोषं यत्तदेव कर्म यया तस्मिन् हरौ मतिर्भवति सैव विद्या महाफलत्वात् ॥ ४९ ॥

कुत इत्यपेक्षायां हरेः परमफलत्वं दर्शयन्नाह। द्वाभ्याम्। हरिर्देहभृतामात्मा ईश्वरश्च तत्र हेतुः स्वयं स्वातन्त्र्येण प्रकृतिः कारणमतस्तेषां तत्पादमूलमेव शरणमाश्रयः यतो यस्मिन् ॥ ५० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवत्कथाश्रवणविरोधिनः अशनादय एवेत्याह। एतैरिति। स्वभावजैर्देहस्वभावप्रयुक्तैरेतैरशनादिभिर्नित्यमुपद्रुतो जीवलोकः हरेः कथामृतसमुद्रे रतिं न करोति नूनं निश्चयः भगवत्कथाश्रवणाभिमुख्यविरोधिनोऽशनादीन् शनैः सात्त्विकदेशस्थभागवतसंगतिलब्धभगवद्गुणश्रवणेन निरस्येदित्यर्थः ॥ ४१ ॥

एवं प्रथमं भागवतसङ्गः ततो भगवद्गुणानुश्रवणं ततो भगवदुपासनं ततो विरागस्ततो भगवत्साक्षात्काररूपं परज्ञानं ततो भगवदनुभवजन्यप्रीत्युत्कर्षरूपा परभक्तिः ततो मुक्तिरिति प्रणाडी कथिता इदानीं प्राप्यस्य परमात्मनो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावस्य प्राप्त्युपयुक्तभक्तियोगानुष्ठानकारणं तदनुग्रहमन्तरेण नान्योऽस्तीत्याह। प्रजापतिपतिरित्यादिना। प्रजापतिश्चतुर्मुखः गिरिशो रुद्रः मनुः स्वायंभुवः प्रजाध्यक्षा दक्षादयः आदिशब्देन कश्यपादयो ग्राह्याः तथा नैष्ठिकब्रह्मचारिणः सनकादयः ॥ ४२ ॥

मरीच्यादयो मत्पर्यन्ता नारदपर्यन्ताः सर्वे ब्रह्मवादिनः ॥ ४३ ॥

तथा च वाचस्पतयः बृहस्पतिव्यासादयोऽपि तपोविद्याद्युपायैः पश्यन्तोऽपि उपासीना अपि सर्वज्ञं परमेश्वरं इयत्तया न पश्यन्ति वाङ्मनसापरिच्छेद्यस्वरूपस्वभावत्वादिति भावः ॥ ४४ ॥

एत एव न जानन्ति किमु कर्मजडाः मादृशा न जानन्तीत्याह।

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

शब्दब्रह्मणीति । उरुविस्तरे "ऽनन्ता वेदा इति" श्रुतविस्तरे दुष्पारे दुरधिगमतात्पर्ये शब्दब्रह्मणि शब्दात्मके ब्रह्मणि वेदे चरन्तः तत्र श्रुतपशुपुत्रवृष्टयन्नस्वर्गाद्यैहिकामुष्मिकफललिप्सवः मन्त्रलिङ्गैः मन्त्रश्रुतवज्रहस्तत्वादिगुणलिङ्गैर्व्यवच्छिन्नं युक्तमिन्द्रादिदेवतावर्गं भजन्तः समीहितसाधनतया यजन्तः परम्परमात्मानं न विदुरपरिच्छेद्यस्वरूपस्वभावस्येयत्तया वेद्यत्वमसंभवि अपरिच्छिन्नत्वेन ज्ञानेऽपि तदुपासनमेव कारणं न केवलं कर्मेति भावः ॥ ४५ ॥

यदा भगवानात्मभावित आत्मना स्वेनैव भावितः यदीयानुसङ्गिकप्रासङ्गिकयादृच्छिकाद्यन्यतमाज्ञातसुकृतव्याजमात्रसन्तुष्टेन स्वेनैव भावितः रक्षणोन्मुखः यमनुगृह्णाति स पुमाल्लोके देहयापनोपयुक्ते कर्माणि शिश्नोदरादिव्यापारे वेदे च वेदपूर्वभागमात्रोदिते च कर्मणि परिनिष्ठितां मतिं जहाति भगवतानुगृहीत एवमुक्त्युपायोपसंहाराय प्रभवतीत्यर्थः ॥ ४६ ॥

तस्माद्भगवदनुग्रहस्यैव कारणत्वाद्धेबर्हिष्मन् ! भगवदनुग्रहानुसरत्सङ्गस्त्वमर्थकाशिषु स्वर्गादिफलशोभिषु कर्मस्वज्ञानादर्थदृष्टिं पुरुषार्थसाधनमतिं मा कृथाः तत्र हेतुः श्रोत्रस्पर्शिषु प्ररोचनया केवलं श्रोत्रप्रियेषु न स्पृष्टं वस्तु निरतिशयपुरुषार्थरूपं यैस्तेष्वनित्याल्पफलेषु वह्वायासेष्वित्यर्थः ॥ ४७ ॥

ननु "अपाम सोमममृता अभूम अक्षय्यंह्वै चातुर्मास्ययाजिनः सुकृतम्" इत्यादिभिः कर्मसाध्यफलस्यापि नित्यत्वावगमात्कथमस्पृष्टवस्तुष्वित्युक्तन्तत्राह । धूम्राधियः । रजस्तमःप्रचुरबुद्धयः धूमवदावरकत्वात्तमसो धूम्रधिय इत्युक्तं यत्र पूर्वोत्तरभागात्मके वेदे जनार्द्दनो भगवान्कर्मभिराराध्यत्वेनोपास्यत्वेन च प्रतिपन्नः तं वेदं सकर्मकं कर्मणा सहितं केवलकर्मतात्पर्यकमाहुस्तेऽतद्विदः वेदतात्पर्यानभिज्ञा न ब्रह्म वेदिन इत्यर्थः यतस्ते स्वरूपभूतं लोकमात्मतत्त्वमपि न विदुः केवलदेहात्मवादिनः अक्षय्यंहवा इत्यादिवाक्यानि भगवदाराधनत्वेन कृतार्थानि चातुर्मास्यादिकर्माणि भगवदुपासननिर्वर्तनद्वारा निःश्रेयसरूपामृतत्वप्राप्तिप्रतिपादनपराणीत्येवं विधतात्पर्यमजानन्तः तानि वाक्यानि केवलस्वर्गादिसुखसाधनभूतकर्मपराणीति मन्वानाः केवलमज्ञा इत्यर्थः ॥ ४८ ॥

तस्मात्त्वमपि केवलकर्मजडो भूत्वा प्रागग्रैर्दर्भैः कृत्स्नं क्षितिमण्डलमास्तीर्य आस्तरणपूर्वकमिष्ट्वा बृहद्वधाद्बहुपशुहिंसया मानी महायज्वाहमित्यभिमान्यतः स्तब्धोऽविनीतः कर्म भगवदाराधनरूपं कर्म नावैषि न जानासि किं तत्कर्म यत्परं श्रेष्ठं परमपुरुषार्थभूतमोक्षसाधनभूतं निवृत्तिधर्मापरपर्यायम् ॥ ४९ ॥

अमुक्तिसाधनं कर्म विद्यां च निन्दति । तदिति । हरितोषं भगवत्तोषकारणं यत्तदेव कर्म प्रशस्तमितरत् निन्दितं यया विद्यया ज्ञानेन तन्मतिः हरिभक्तिः भवति सैव विद्या प्रशस्ता इतरा निन्दितेत्यर्थः तथाचोक्तं "तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये । आयासायापरं कर्म विद्यान्या शिल्पनैपुणम्" इति कासौ विद्या यया हरिमतिरिति विवित्सायां तत्स्वहितपुरुषार्थज्ञानमेवेत्याह । हरिरिति । भगवान्निरस्तनिखिलदोषः समस्तकल्याणगुणाकरः ईश्वरः स्वयं प्रकृतिर्जगदुपादानकारणं देहभृतामात्मान्तः प्रविश्य धारकः निरस्तनिखिलदोषत्वसमस्तकल्याणगुणाकरत्वसर्वान्तरात्मत्वविशिष्टत्वरूपं परतत्त्वं भगवच्छरीरत्वततस्तज्यत्वादिकं तत्त्वमित्यर्थः ॥ ५० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अशनादिस्पर्शफलमाह । एतैरिति । एतैरशनादिभिः ... सहजैर्हरिकथामृतनिधिरातिविघ्नफलैः ॥ ४१ ॥

अधुनाशनाद्युपद्रवविधुरेणापि साकल्येन श्रीहरिज्ञानं ... भमित्याह । प्रजापतिरित्यादिना "प्रजापतिपतिर्ब्रह्मा ... कथ्यत" इति वचनात् प्रजापतिपतिर्ब्रह्मा ॥ ४२ ॥

अहमेवान्तो येषां ते मदन्ताः ॥ ४३ ॥

ब्रह्मवादित्वेऽपि वाक्पटुत्वाभावाच्च पश्यन्तीत्यतो वाक् ... इति "यत्पश्यन्तोऽपि न पश्यन्ति तद्विष्णोः परमं पदम्" ... न्वयः ॥ ४४ ॥

तत्साधनमानबाहुल्याभावात्तद्विषयज्ञानानुदयाच्च ... चेदत्राह । शब्देति । निर्दोषः शब्द आगम इति निर्दोषशब्द ... दुष्पारेऽनन्ते कुत इत्यत उक्तम् । उरुविस्तर इति । चरन्तो ... सया वर्तमाना अपि मन्त्रलिङ्गैर्वेदोक्तलक्षणैर्व्यवच्छिन्नं ... ननु सम्यगुक्तमेवं विधं परं परमात्मानं भजन्त ... अपि तन्न विदुरित्यन्वयः । विभ्रद्रापिं हिरण्ययं वरुणो ... जमित्यादिवेदो वदन्नप्यनुभवानारोहयितृत्वेन वक्ति ... द्वस्वरूपत्वेन सम्यक् न जानन्ति तस्य सेवापि न ... देनानुभवारोहोऽपि क्रमेण स्यादिति तदुक्तम्„ वेदो वदन्नपि न सम्यग्वक्ति कुत्रचित् । नारोहयत्यनुभवमप्रसिद्धस्वरूपः ... व्यनुभवारोहः प्रसन्ने केशवे भवेत्„ किञ्चिदेव सम्यक् सर्वं ... भवत्यमुमिति यद्वा मंत्राख्यैर्लिङ्गैर्हेतुभिर्व्यवच्छिन्नं कोदण्ड ... रामादिलक्षणं परमं भजन्तोऽपि तत्प्रसादमन्तरेण परं ... साकल्येन न विदुरिति शबलं भजन्तः परं शुद्धं न विदुरि ... नुपपन्नः परमार्थभेदाभावेनैकस्मिन् ज्ञातेऽन्यज्ञानस्य ... त्वात् "येनाश्रुतं श्रुतं भवति" इति श्रुतेश्च यथा रामस्वरूप ... स्वरूपज्ञानं जांबवतस्तयोरेकत्वादित्याहुः ॥ ४५ ॥

नन्विदानीं मायया क्षिप्तमपि चेतनसमवेतं ज्ञानमद्य ... स्मिन्कश्चित्काले ऽनुसंधानलक्षणं किञ्चिद्विशेषमापादयेत् ... धानाननुसंधाने युंक्ते इति तत्राह । सर्वेषामिति । इह ... सर्वेषां जन्तूनां सन्ततं देहपोषणे प्रज्ञा बुद्धिः समावृता ... तास्ति नृणां तया प्रज्ञया को विशेषः स्वरूपानुसंधान ... समापन्नो न कोऽपीत्यन्वयः त्वत्पक्षे त्वदृष्टादीनां मिथ्यात्वे ... यायामसामर्थ्यादेव न कस्य चिदैक्येन संधानमवश्यं ... वीति ॥ ४६ ॥

जीवन्मुक्त्यवस्थायामपि जीवात्मत्वाहानेर्हरेर्भेदः ... भावेन स्वरूपत्वासिद्धये साधनमाह । लब्ध्वेति । इह ... नामन्ते भगवद्बोधितपूर्वादृष्टविशेषान्मनुष्यत्वं लब्ध्वा ... मिति देहाद्यसद्ग्रहं संसारे देही छित्वात्मदृत्यात्मानं ... कलेवरं विहाय यः संसारी जीवात्मा विशिष्टं ... ब्रह्मेत्यन्वयः ॥ ४७ ॥

हरिप्रसादं विना तज्ज्ञानं न स्यात्तस्मिन् सत्युत्पन्नमात्र ... स्य फलमाह । यदेति । यदात्मेति तूपगच्छन्ति प्रायहन्ति ... कृप्रकारेणात्मभावितः मम स्वामी हरिर्नित्यमिति भावं ...

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यकस्यानुगृह्णात्यात्मानं प्रकाश्यानुभवमुत्पादयति स पुमाँल्लोके वेदे च परिनिष्ठितां मतिं जहाति बाह्यपदार्थविषयां सम्विद-मपहाय परमात्मानमेव सर्वेन्द्रियैरनुभवन्नास्त इत्यन्वयः अनेनो-पासकस्य मुक्तिकल्पनं कथां ध्वनयति तदुक्तम् ।

यदा त्वनुभवीभूयाच्छब्दमात्रानुरोधनम् ।
त्यक्त्वाथ तं विदुः प्राज्ञास्त्यक्तवेद इति स्म ह ॥
यदैव त्यक्तवेदः स्यादथास्मान्मुच्यते भयात् ।

इति निर्दोष शब्दलक्षणवेदप्रहाणेनैश्वराज्ञान्तानुप्रवेशः स्यादित्यत उक्तम् "प्रायस्तु वैदिका एव रुद्राद्या अपि वै पुरा" इति आदिशब्देन मुक्तियोग्यमात्रं गृहीतं पुरेत्यनेन जन्मप्रभृतिवैदिकत्वमस्तीति ज्ञाप-यति। प्राय इत्यनेन त्यक्तवेदत्वं पश्चादिति तदप्येतत् द्वयं कस्य मुख्यमित्यत "उक्तं वैदिकस्त्यक्तवेदश्च ब्रह्मैवैकः प्रजापतिः,, इति रुद्रादीनां कथंकारं पश्चादपि त्यक्तवेदत्वं प्राप्तमित्यत उक्तं "ततस्तु केशवं भक्त्या सम्पूज्य बहुजन्मसु । त्यक्तवेदत्वमापन्नाः प्रसादात्परमेष्ठिन,, इति "केवलं वेदशब्देन जानन् वैदिक उच्यते वेदं विनाप्यनुभवाज्जानंस्तु त्यक्तवैदिक,, इत्यनेन मिथो विरुद्धयो-र्वैदिकत्यक्तवेदशब्दयोरेकाधिकरणत्वं कथं युज्यत इतीदं चोद्य-मपनोदितम् "तत्त्वं वेदानुसारेण चिन्तयन्वैदिको भवेत्। वेद ऊहा-ननुसरेद्यस्य स त्यक्तवैदिक" इत्यनेन वेदशब्देन ज्ञातृत्वं तमन्त-रेणानुभवितृत्वं च कथं विविच्यत इति चोद्यं परिहृतं त्यक्त-वैदिकस्त्यक्तवेदराशिरित्यर्थः ॥ ० ॥ *

उपसंहरति । तस्मादिति । यस्माज्ज्ञानेनैव मोक्षस्तस्मादज्ञाना-द्भगवत्तत्त्वापरिज्ञानादर्थकाशिषु प्रयोजनत्वेन प्रकाशमानेष्वग्नि-ष्टोमादिलक्षणेषु कर्मस्वर्थदृष्टिं मा कृथाः न कुरु इत्यन्वयः तत्प्र-वृत्तौ निमित्तमाह । श्रोत्रस्पर्शिष्विति । अपाम सोममिति श्रवणे श्रोत्रसुखं स्पृशन्तीति श्रोत्रस्पर्शीनि तेषु हेयत्वे कारणं वक्ति । अस्पृष्टवस्तुष्विति । परमात्माख्यवस्तुसम्बन्धगन्धरहितेषु ॥ ० ॥

अज्ञानादित्युक्तं विवृणोति । स्वंलोकमिति । ये कर्मनिष्ठास्ते यत्र लोके जनार्द्दनो देवोऽस्ति तं स्वलोकं स्वेन प्राप्यं वैकुण्ठादि-स्थानं न विदुरित्यन्वयः अनेन वैकुण्ठादिस्थानमीदृशमिति न जानन्ति किमुत हरिमित्यर्थादूध्वनितमिति ज्ञायते अन्यथा विदु-रित्याह । आहुरिति । धूम्रे धूमरते धूममार्गे धीर्येषां ते धूम्रधियः तत्र निमित्तमाह । अतद्विद इति । तस्य वेदस्य तत्त्वं ब्रह्मलक्षणं न विदन्तीति कर्मणा सह वर्तत इति सकर्मकस्तम् ॥ ४८ ॥

कर्मविनान्यन्न वक्तीति सकर्मकत्वमित्ययमविवेक इत्याह । आ-स्तीर्येति। वृहतां वहूनां वधात् संज्ञपनलक्षणात् यष्टाहमिति मानी त्वं कर्म नावैषि प्राचीनाग्रदर्भास्तरणं कृत्वा पशुसंज्ञपनमेव जानासि नतु कर्मस्वरूपमित्यर्थः "कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृत-मित्यादिना विधीयमानं यत्परं कर्म तन्न जानासीत्युच्यते नतु कर्ममात्रम् ॥ ४९ ॥

* सर्वेषामेवजन्तूनां सततं देहपोषणे ।
अस्तिप्रज्ञासमायत्ता कोविशेषस्तदात्मृणाम् ॥
लब्ध्वेहान्ते मनुष्यत्वं हित्वा देहाद्यसद्ग्रहम् ।
आत्मसृत्याविहायेदं जीवात्मा सविशिष्यते ॥
इतिद्वयं पञ्चचत्वारिंशदनन्तरं श्रीविजयध्वजतीर्थनये पठ्यमानं सटीक मुपलभ्यते तदनन्तरं यदेत्यादिपद्यानि ।

कल्पोक्तद्रव्यसामग्र्या क्रियमाणस्य कर्मणः कथं परत्वा-भाव इति तत्राह । तत्कर्मेति । हरेस्तोषोऽनुग्रहलक्षणो यस्मात्तत्कर्म तस्मात् ब्रह्मार्पणबुद्ध्या क्रियमाणस्य कर्मणः परत्वं न द्रव्य-सामग्र्या तस्यावरत्वेन (१) दारिद्र्यहेतुत्वात् ननु ममापि वेदविद्याधिकारित्वेन कर्मानुष्ठानस्य तत्पूर्वकत्वमस्तीति तत्राह । साविद्येति । यया विद्यया तस्य हरेर्मतिर्ज्ञानमुत्पद्यते सा विद्या वेदार्थज्ञानलक्षणा नान्या अन्यास्त्वविद्या कर्मविषया हेयपक्ष इति कोऽसौ हरिर्येन तज्ज्ञानपूर्वकमनुष्ठितं कर्म सफलं स्यादत्राह । हरिरिति । दुरितहरणशीलत्वाद्धरिर्देहभृतां जीवानामात्मा स्वामी स्वयं सर्वव्यावृत्तः प्रकृतिर्मूलकारणमीश्वराणामाद्यैश्वर्यरूप एषां गुणानामभिकरणभूतो यः स हरिरिति ज्ञातव्यम् ॥ ५० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एतैरिति । महत्सङ्गप्रभावेनैव सा कथा तद्विघ्ननाशिकां रतिं जनयतीति भावः ॥ ४१ ॥

तां विना साधनान्तरैस्त्वस्मद्विधानामपि भगवज्ज्ञानं न स्यात् किमुतान्येषामित्याह । चतुर्भिः । तत्र प्रजापतीति त्रिकं तपः कृच्छ्रादि विद्या उपासना समाधिश्चित्तैकाग्र्यं पश्यन्तो-ऽपीति यथार्थज्ञानात् ॥ ४२-४३-४४ ॥

ततः कर्मनिष्ठास्तु सुतरामेव न जानन्तीत्याह । शब्देति ॥ ४५ ॥

महत्सु श्रद्धातारतम्यात्तु भगवदनुग्रहः समयभेदमपेक्ष्य प्रवर्त्तमानः सर्वनिरपेक्षां भक्तिं ददातीत्याह । यदा यस्येति । आत्मनि महद्द्वारा कथाश्रवणेन शुद्धे चित्ते भावितः सन् यदा यस्या-नुगृह्णाति तदा स लोके लौकिकव्यवहारे वेदे च कर्मकाण्डे परिनिष्ठितामपि मतिं जहाति ॥ ४६ ॥

अर्थकाशिषु अर्थत्वेन प्रतीयमानेषु ॥ ४७ ॥

आहुः अत्र "क इत्था वेद यत्र स" इत्यस्याः श्रुतेरर्थमाह । स्वमिति । ये धूम्रधियो वेदं सकर्मकं कर्ममात्रप्रतिपादकमाहुः ते स्वं जनार्द्दनस्य स्वं स्वरूपं लोकं वैकुण्ठाख्यं न विदुः किन्तु स्वर्गादिकमेव विदुः । यत्र लोके यत्परं कर्म भगवद्धर्मलक्षणं तन्न विदुः ॥ ४८ ॥

तस्य कर्मत्वं परत्वं च दर्शयति । तदिति । यद्धरितोषं तदेतुकं तदेव कर्म तस्यैव कर्त्तव्यत्वादिति भावः । तथा सैव च विद्या शास्त्रोत्थं ज्ञानं यया तन्मनिस्तदनुभवोऽपि भवतीति ॥ ४९-५० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सत्सङ्गमन्तरेण स्वयमेव हरिकथाचिन्तनादालस्यादिना रसा-वेशाभावाच्च क्षुत्पिपासाद्यभिभूतस्य भक्तिनं प्रायो विकसतीति व्यञ्जितमेवार्थमभिधयाप्याह । एतैरिति ॥ ४१ ॥

ननु "तरति शोकमात्मवित्,, इति श्रुतेर्ज्ञानिनां किं भक्त्येति तत्र कैमुत्यन्यायेन ज्ञानिनो नैव जानन्तीत्याह । प्रजेति चतुर्भिः । भगवान् सर्वज्ञः महन्ता इति न केवलं तानेव निन्दामि अपि त्वात्मानमपि एते तपोविद्यासमाधिभिर्न पश्यन्तीति भक्त्या तु पश्यन्तीत्यर्थः । एतेषां भक्तिमत्त्वस्यापि प्रसिद्धेः एते वयं भक्त्या

(१) विद्यमानद्रव्यव्ययेन ।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

विना के वराका इति भावः वाचस्पतय इति अन्यान् प्रति शास्त्रार्थमुपदेष्टुं सरस्वतीपतयो भवन्ति स्वयन्तु शास्त्रार्थं नैव जानन्ति भक्तिं विना व्याख्यानादिति भावः अद्यापीति तप आदीनां पारिपाकश्च ज्ञापितः अज्ञानस्य लक्षणं पश्यन्तोऽपि विचिन्वन्तोऽपि न पश्यन्तीति ॥ ४२—४४ ॥

कर्मिणस्तु सुतरामेव न जानन्तीत्याह । शब्दब्रह्मणि वेदे दुष्पारे अर्थतः उरु विस्तर इति शब्दतोऽपि दुष्पारे मन्त्रलिङ्गैर्वज्रहस्तत्वादिचिह्नैर्विशिष्टमिन्द्रादिकं भजन्तः परं परमेश्वरं न विदुः ॥ ४५ ॥

ननु यदि ज्ञानिनः कर्मिणश्च न जानन्ति तदा कस्तं जानाति भक्त एवेति चेत् स भक्त एव कथं स्यात् केन वा चिह्नेन स ज्ञेय इत्यत आह । यदेति । आत्मनि मनसि भावितः अर्थाद्भक्तैरेव हे भगवन्निमं जनं संसारादुद्धरणमङ्गीकुर्व्विति स्वभक्तैर्मनसि निवेदितो भगवान् यदा यस्य यमनुगृह्णाति तदैव स भक्तः लोके लौकिकव्यवहारे वेदे च कर्म्मकाण्डे परिनिष्ठितामपि मतिं त्यजति ॥ ४६ ॥

अर्था इव प्रकाशन्त इत्यर्थकाशिनस्तेषु अर्थदृष्टिं पुरुषार्थबुद्धिं प्ररोचनाय केवलं श्रोत्रप्रियेषु न स्पृष्टं वस्तु यैस्तेषु ॥ ४७ ॥

ननु तर्हि कथमेते मत्पुरोधसो मुनयो विद्वांसो मां यागादिकर्म्मैव कारयन्तीति तत्राह । स्वमिति । यत्र जनार्द्दनो देवो वर्त्तते तं लोकं वैकुण्ठं स्वं स्वीयं स्वप्राप्यं न विदुः किन्तु स्वर्गमेव स्वं विदुरित्यर्थः । यतो धूम्रधियो मलिनबुद्धयो वेदं सकर्म्मकं कर्मपरमेवाहुः । अतद्विदः वेदार्थानभिज्ञाः । यदुक्तम् । भगवता "कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता । मयादौ ब्रह्मणा प्रोक्ता धर्म्मो यस्यां मदात्मकः" इति ॥ ४८ ॥

त्वन्तु तैरनभिज्ञैरध्यापितो महामूर्ख एवेत्याह । आस्तीर्य्येति । बृहद्वधात् बृहत्पशुवधात् मानी महायज्वाहमित्यहङ्कारी स्तब्धोऽविनीतः ॥ ४९ ॥

ननु तर्हि परमेव कर्म्म किं तदिति कृपया त्वमेव ब्रूहीत्यत आह । तदिति । अन्यत्पुनः कर्म्मैव नोच्यत इति भावः । सेति अन्या पुनर्धीरेव नोच्यत इति भावः ॥ ५० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वासुदेवस्वरूपगुणादीयत्ताविविरित्सुं प्रति तदीयेयत्तां तु ब्रह्मादयोऽपि न जानन्तीत्याह । प्रजापतिरिति त्रिभिः ॥ ४२—४३ ॥

तप आदिभिर्येयोपदेष्टं पश्यन्तोऽपि न पश्यन्ति । एतावत्त्वेन तु न जानन्ति ॥ ४४ ॥

कर्मनिष्ठास्त्विन्द्रादिरूपं तदंशं भजन्तो भगवन्तं न जानन्तीत्याह । शब्दब्रह्मणीति । अर्थतो दुष्पारे स्वरूपत उरुविस्तरे चरन्तः । अध्ययनादिना प्रविष्टा अपि तन्त्रलिङ्गैर्वज्रहस्तत्वादिगुणयुक्तेन्द्रादिदेवताभिधानसामर्थ्यैः परिच्छिन्नमेतावत्त्वेन मितमिन्द्रादिकं भगवदंशं भजन्तः परं भगवन्तं न विदुः वेदो भगवत्कृपाहीनान् स्वर्गादिप्रापकेन्द्रादियजनरूपे कर्मणि नियोजयति ननु भगवदाराधने इति भावः ॥ ४५ ॥

भगवान् आत्मना जीवेन भावितः प्रार्थितः यदा यं जीवमनुगृह्णाति स लोके स्वर्गादौ अयं लोकः कर्मणा मम प्राप्य इत्येवं निष्ठितां वेदे च अयं देवः कर्मपरः इत्येवं [illegible] मतिं जहाति वेदं वासुदेवपरं मत्वा तद्भक्तो [illegible] भावः ॥ ४६ ॥

अज्ञानात् वेदस्य कर्मपरत्वभ्रमात् अर्थकाशिषु अ[illegible] शितत्वेन भासमानेषु श्रोत्रस्पर्शिषु कर्णरम्येषु न स्पृष्टं परब्रह्मलक्षणं यैस्तेषु त्वमर्थदृष्टिं पुरुषार्थबुद्धिं मा कृथाः ॥ [illegible]

ये धूम्रधियो धूम्रोपलक्षितकर्मसंयैव धीर्येषां तथा भूताः [illegible] वेदे जनार्द्दनः देवो विषयतया द्योतते तं वेदं सकर्मकं कर्मप[illegible] ते च अतद्विदः वेदार्थानभिज्ञाः सर्ववेदार्थभूतं जनार्दनं न [illegible] किं बहुना स्वं लोकं स्वात्मानमपि न विदुरित्यन्वयः ॥ [illegible]

त्वं तु बृहद्वधात् आत्मविस्मरणात् स्तब्धः वि[illegible] दर्भैः क्षितिमण्डलमास्तीर्य मानी चासि यतः परं श्रे[illegible] नावैषि कर्महीनश्रेयर्थः ॥ ४९ ॥

ननु किं कर्म का विद्या कश्चात्मेत्यत्राह ॥ तदिति । स्वतं[illegible] न्त्येण प्रकृतिर्विश्वोपादानरूपो हेतुः ॥ ५० ॥

---

### भाषाटीका ।

स्वभाव ही से पैदा होने वाले इन क्षुधादिकों से [illegible] लोक सब दुःखित है तिसीसे हरि कथा समुद्र में प्रे[illegible] करता है ऐसा मालूम होता है ॥ ४१ ॥

साक्षात् प्रजापति के पति ब्रह्माजी महादेवजी [illegible] दक्षादिक प्रजापति सनकादिक ब्रह्मचारी ॥ ४२ ॥

मरीचि अत्रि अङ्गिरा पुलस्त्य पुलह क्रतु भृगु [illegible] इनोंसे लेकर हमपर्यन्त ब्रह्मज्ञानी ॥ ४३ ॥

अब पर्यन्तसब बड़े विद्वान् लोक तप विद्या समाधि से [illegible] परमेश्वर को ढूंढने से भी नहीं देखते हैं ॥ ४४ ॥

अत्यन्त कठिन अर्थ वाला बहुत विस्तार वाला जो वेद [illegible] रात दिन परिश्रम करनेवाले लोग मन्त्रों के लिङ्गों से [illegible] हित भगवान् को नहीं जान सकते हैं ॥ ४५ ॥

मन में ध्यान करनेसे जिसको जिस वखत भगवान् [illegible] कर लेताहै सो पुरुष उसी समय लोक में तथा वेद में [illegible] निष्ठित जो मति है तिसको छोड देता है ॥ ४६ ॥

तिससे हे बर्हिष्मन् ! राजन् ! अज्ञान से पुरुषार्थ [illegible] दीखने वाले श्रोत्र में फलश्रवण से सुखकारक परम[illegible] नहीं स्पर्श करने वाले जो कर्म तिनमें यथार्थ बु[illegible] करना ॥ ४७ ॥

रागद्वेषादि से जिनकी बुद्धि अच्छादित है वे लोग [illegible] कर्मप्रतिपादक कहते हैं वे लोग अपने लोक [illegible] जानते हैं कि जहां साक्षाज्जनार्दन भगवान् हैं ॥ ४८ ॥

तुमने कुशों से सब पृथिवी को ढांक दिया है [illegible] प्राणियोंका करके धृष्ट अभिमानी हो रहे हो कर्म [illegible] परमात्मा के स्वरूप को तुम नहीं जानते हो जिससे [illegible] का सन्तोष होवे सोइ कर्म है जिससे भगवान् में [illegible] वे सोई विद्या है ॥ ४९ ॥

हरि ही सब देहधारियों के अन्तर्यामी हैं [illegible] कारण हैं सबके नियन्ता हैं उनका पादमूलही सब [illegible] को इस संसार में रक्षक है ॥ ५० ॥

स वै प्रियतमश्चात्मा यतो न भयमण्वपि ।
इति वेद स वै विद्वान् यो विद्वान्स गुरुर्हरिः ॥ ५१ ॥

॥ नारद उवाच ॥

प्रश्न एवं हि संछिन्नो भवतः पुरुषर्षभ ! ।
अत्र मे वदतो गुह्यं निशामय सुनिश्चितम् ॥ ५२ ॥

क्षुद्रं चरं सुमनसां शरणे मिथित्वा रक्तं षडङ्घ्रिगणसामसु लुब्धकर्णम् ।
अग्रे वृकानसुतृपो विगणय्य यान्तं पृष्ठे मृगं मृगय लुब्धकबाणभिन्नम् ॥ ५३ ॥

सुमनःसमधर्मणां स्त्रीणां शरण आश्रमे पुष्पमधुगन्धवत्क्षुद्रतमं काम्यकर्मविपाकजं कामसुखलवं जैह्व्यौपस्थ्यादि विचिन्वन्तं मिथुनीभूय तदभिनिवेशितमनसं षडङ्घ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितरामतिप्रलोभितकर्णमग्रे वृकयूथवदात्मन आयुर्हरतोऽहोरात्रान्तान्कालवलवविशेषानविगणय्य गृहेषु विहरन्तं पृष्ठत एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तोऽन्तःशरेण यमिह पराविध्यति तमिममात्मानमहोराजन् ! भिन्नहृदयं द्रष्टुमर्हसीति ॥ ५४ ॥

स त्वं विचक्ष्व मृगचेष्टितमात्मनोऽन्तश्चित्तं नियच्छ हृदि कर्णधुनीं च चित्ते ।
जह्यङ्गनाश्रममसत्तमयूथगाथं प्रीणीहि हंसशरणं विरम क्रमेण ॥ ५५ ॥

॥ राजोवाच ॥

श्रुतमन्वीक्षितं ब्रह्मन् ! भगवान् यदभाषत ।
नैतज्जानन्त्युपाध्यायाः किन्न ब्रूयुर्विदुर्यदि ॥ ५६ ॥
संशयोऽत्र तु मे विप्र ! संछिन्नस्तत्कृतो महान् ।
ऋषयोऽपि हि मुह्यन्ति यत्र नेन्द्रियवृत्तयः ॥ ५७ ॥
कर्माण्यारभते येन पुमानिह विहाय तम्
अमुत्रान्येन देहेन जुष्टानि स यदश्नुते ॥ ५८ ॥
इति वेद विदां वादः श्रूयते तत्र तत्र ह ।
कर्म यत्क्रियते प्रोक्तं परोक्षं न प्रकाशते ॥ ५९ ॥

॥ नारद उवाच ॥

येनैवारभते कर्म तेनैवामुत्र तत्पुमान् ।
भुङ्क्ते ह्यव्यवधानेन लिङ्गेन मनसा स्वयम् ॥ ६० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

न च तद्भजनेऽन्यभजन इव दुःखं भयं चेत्याह । स वा इति । इति यो वेद स एव विद्वान् स गुरुः स एव हरिश्च ॥ ५१ ॥

उक्तमुपसंहरति । प्रश्न इति । एवं भवतः प्रश्नः संछिन्नः परिहृतः तदेवमात्मनो बन्धमोक्षप्रकारे कथारूपेण कथितेऽपि नातिनिर्विण्णचित्तं पुत्रागमनं प्रतीक्षमाणं सन्तं तत्क्षणमेव महाभयकम्पिनसकलगात्रं गृहान्निर्गमयितुं हरिणरूपकमाह अग्रेति । वदतो मे वचः शृणु ॥ ५२ ॥

क्षुद्रमल्पं चरतीति तथा तम् अलुक् सुमनसां पुष्पाणां शरणे आश्रमे वाटिकायां मिथित्वा मिथः परस्परं स्त्रिया सह मिलित्वा तत्रैव रक्तमासक्तं षडङ्घ्रयो भ्रमरास्तेषां गणास्तेषां सामसु गीतेषु लुब्धः कर्णो यस्य तम् परेषामसुभिर्हृतैः स्वीयानसूंस्तर्पयन्तीत्यसुतृपस्तानविगणय्यागणयित्वा लुब्धकस्य बाणेन भिन्नं मृगं मृगयान्वेषय ॥ ५३ ॥

श्लोकं प्रस्तुते योजयन् व्याचष्टे । सुमनोभिः समानो धर्मः परिणामविरसत्वं यासां स्त्रीणां मिथित्वेत्यस्य व्याख्या मिथुनी

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भूय स्त्रीभिः सहेति शेषः । रक्तमित्यस्य व्याख्या तास्वभिनिवेशितं मनो येन असुतृप इत्यस्य व्याख्या आयुर्हरत इति । यान्तमित्यस्य व्याख्या विहरन्तमिति अन्तर्नालिकायां गूढेन शरेण परा विध्यति दूरादेव ताडयति ॥ ५४ ॥

उपदेशसारमाह । स इति । विचक्ष्य विचार्य अन्तर्हृदि चित्तं कर्णयोर्धुनीं नदीमिव बहिर्वृत्ति चित्ते नियच्छ एतच्च सर्वेन्द्रियोपलक्षणार्थमङ्गनाश्रमं गृहाश्रम च जहि । कादृशमसत्तमानामतिकामुकानां यानि यूथानि तेषां गाथा वार्ता यस्मिन् हसानां जीवानां शरणमीश्वरम् एवं क्रमेण सर्वतो विरम ॥ ५५ ॥

अर्थान्तरं प्रष्टुं पूर्वोक्तमर्थमनुवदति । श्रुतमन्वीक्षितं विचारितं च ब्रह्मन् ! हे नारद ! एतत्त्वदुक्तमात्मतत्त्वमुपाध्याया ये मम कर्मोपदेष्टार आचार्यास्ते न जानन्ति ॥ ५६ ॥

अतस्तत्कृत उपाध्यायकृतस्तद्वाक्यविरोधेनासम्भावनारूपो महान् संशयः संछिन्नस्त्वया अत्र तु कश्चित्संशयो वर्तते यत्रेन्द्रियवृत्तीनामप्रवृत्तेर्मुह्यन्ति ॥ ५७ ॥

संशयमाह । द्वाभ्याम् । कर्माणि येन देहेन करोति तमत्रैव विहायामुत्र लोकान्तरे कर्मोपस्थापितेनान्येन देहेन जुष्टान्युपभुक्तानि जीवोऽश्नुते प्राप्नोति ॥ ५८ ॥

इति वादः श्रूयते"प्राप्य पुण्यकृताँल्लोकान्"इति" शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति त्वया चोक्तं शाश्वतीस्तुभूयार्तिमिति एतच्च कर्तृभोक्तृदेहभेदेन कृतनाशाकृताभ्यागमप्रसङ्गाच्च सङ्कटकृत इति भावः । संशयान्तरमाह । प्रोक्तं वेदोक्तं कर्म यत्क्रियते जनैस्तच्चानन्तरक्षण एव परोक्षमदृश्यं सन्न प्रकाशते अतः कर्मणो नष्टत्वात्तद्भोगोऽपि दुर्घट इति भावः ॥ ५९ ॥

प्रथमस्योत्तरम् । येनैवेति । अव्यवधानेन कर्तृभोक्तृदेहविच्छेदं विना स्थूलदेहनाशेऽपि मनः प्रधानस्य लिङ्गदेहस्यानाशान्नोक्तदोषप्रसङ्ग इत्यर्थः ॥ ६० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तत्त्वमुक्तं हितमाह । तस्य भगवत आत्मनो निरुपाधिकशेषिणः पादमूलं शरणं समीहितोपायः इह यतः यत्पादमूलशरणवरणान्नृणां क्षेमः सुखं भवेदित्यर्थः एवं हित उक्तः सद्युपायः पुरुषार्थमाह । स वै भगवांस्तस्य शरणं गतस्य प्रियतमः निरतिशयप्रीतिविषयः "प्रियो हि ज्ञानिनोऽत्यर्थम्"इति भगवदुक्तेः एवं पुरुषार्थं उक्तः निरतिशयसुखमेव हि पुरुषार्थः भगवतो निरतिशयसुखरूपत्वस्यानन्दो ब्रह्मेति व्यजनादित्यादिश्रुत्यावगमात् कोह्येवान्यात्कः प्राण्यादेष आकाश आनन्दो न स्यात् "एष ह्येवानन्दयाति"इत्यानन्दावहत्वश्रवणाद्भगवदनुभव एव पुरुषार्थ इति भावः ॥ ५१ ॥

इत्युक्तविधानान् तत्त्वहितपुरुषार्थान् यो वेद स वै स एव विद्वान् यश्च विद्वान् स एव गुरुः यश्च गुरुः स एव हरिः आचार्यो ब्रह्मणो मूर्तिरित्युक्तेः तत्त्वहितपुरुषार्थज्ञानमेवावश्यमुपादेयमिति भावः "ब्रूहि मे विपुलं ज्ञानं येन मुच्येयबन्धनात्,,इति त्वया कृतस्य ज्ञानविषयप्रश्नस्यैवमेव हरिर्देहभृतामित्युक्तं प्रधानमुत्तरमन्यत्सर्वमेतदुपपादकमित्यभिप्रायेण उपसंहरति । प्रश्न इति । हे पुरुषर्षभ ! भवतः प्रश्न एवं हेयोपादेयज्ञानविषयप्रश्नः तज्ज्ञानविवेचनादत्रोत्तरो इत्यर्थः ॥ ५२ ॥

. तदेवमात्मनो बन्धमोक्षकारणे कथिते अधुनैवं कथितमपि नातिनिर्विण्णचित्तं पुत्रागमं प्रतीक्षमाणं सन्तं ... मेव महाभयकम्पितसकलगात्रं गृहाश्रियोपायिन्तु हरिणं माह । अत्रेति वदतो वचः सुनिश्चितं गुह्यं निशामय किन्तदित्यत्राह । क्षुद्रं चरं क्षुद्रमल्पं चरतीति तथा ... वाहुलकात् खश्प्रत्ययः पूर्वपदस्य मुमागमः क्रियाविशेषणं ... पुष्पायां शरणे आश्रमे वाटिकायां मिथित्वा मिथः परस्परं ... मिलित्वा तत्रैव रक्तं षडङ्घ्रयो भ्रमरास्तेषां गणास्तेषां सामसु ... लुब्धौ कर्णौ यस्य तं परेषामसुभिः क्षीयानसून् तर्पयन् ... सुतृपः तानग्रे स्थितान् वृकानविगणय्यानालोच्य यान्तं चरन् ... लुब्धकस्य वाणेन भिन्नं मृगं हरिणं मृगयान्वेषय विचार्य मृगपक्षेऽर्थः प्रकृतार्थस्तु क्षुद्रं चरं फलभोक्तारं सुमनसां ... शरणे गृहं मिथित्वा मिथुनीभूय षडङ्घ्रिगणसामसु मृग... गायकगीतेषु वृकान् वृकवद्वीषणानहोरात्रादीनसुतृप ... रानविगणय्य पृष्ठे परोक्षे लुब्धकवाणभिन्नं मृत्युपा... मृगसदृशमात्मानं मृगय पर्य्यालोचयेति ॥ ५३ ॥

स्वयमेव श्लोकं प्रस्तुतेऽर्थे योजयन् व्याचष्टे । सुमनस ... सुमनोभिः पुष्पैः समानो धर्मो यासां तासां परिणाम... रिरम्यात् स्त्रीणां शरणे इति प्रतीकः आश्रमे इतिव्याख्या गृह... म इत्यर्थः क्षुद्रं चरमिति व्याचष्टे पुष्पेति पुष्पगतमकरन्द... वदल्पं काम्यकर्मणां परिणामजकामसुखलवं काम्यन्ते ... कामा विषयास्तेषां सुखलेशं जैह्वं जिह्वयास्वादितमौपस्थ ... नेन्द्रियेणास्वादितं चादिर्यस्य तद्विचिन्वन्तं मिथ... व्याख्यानं मिथुनीभूयेति रक्तमित्यस्य व्याख्या तदभि... तमनसामिति तासु अभिनिवेशितं मनो येन तं षडङ्घ्रिग... खिति व्याचष्टे भ्रमरगणानां सामगीतवन्मधुरध्वनिवर्द्धि... रा ये इच्छाविषयस्त्रीजनालापास्तेषु लुब्धकवाणमिति व्याचष्टे ... तरां प्रलोभितौ कर्णौ यस्य तमग्र इत्यादि व्याचष्टेऽग्रे पुर... समूहवदात्मनः स्वस्यायुर्हरानहोरात्रादिकालविशेषानवि... यान्तमितिव्याचष्टे गृहेषु मृगमिव चरन्तं वैषयिकसुख... दिकमनुभवन्तं पृष्ठे इति सप्तम्यन्तं सार्वविभक्तिकस्त... यान्तेनानूद्य व्याचष्टे । पृष्ठतः परोक्षमिति लुब्धकवत्... मितिव्याचष्टे अनुप्रवृत्त इति सामर्थ्यलब्धं लुब्ध इत्यस्य ... कृतान्त इति आत्तः स्वीकृतः शरः मारणरूपो येन इह ... देहिनं परा विध्यति दूरादेव ताडयति मृगयेति व्याचष्टे । तमिमं ... नमात्मानं स्वात्मानं द्रष्टुमालोचयितुमर्हसि तत्र दृष्टान्तः यथा ... उपदेशसारमाह । स इति । स त्वमुक्तविधस्त्वं मृगं ... विचक्ष्यालोच्यात्मनः स्वस्यान्तर्हृदि हृद्गुहायां चित्तं ... यच्छ नियतं कुरु चित्ते च कर्णधुनीं कर्णयोर्धुनीं ... स्थितां ध्वनिता नदीव श्रूयमाणां कर्मसु रुच्युत्पादि... वादात्मिकां श्रुतिं नियच्छ कर्मसु रुचिं त्यजेत्यर्थः ... वृत्तिमिति वा अस्मिन्नपि पक्षे स एवार्थः अङ्गनायाः ... आश्रमं जहि गृहाश्रमं त्यज कीदृशमसत्तमानामतिकामुकानां ... यूथानि तेषां गाथा वार्ता यस्मिन् हंसानां जीवानां शरणं ... रक्षितारं च भगवन्तं वृणीहि वृणु शरणं गच्छ असत्...

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

णमिति पाठेऽसत्तमयूथनाथः निर्वाहको यस्य तमङ्गनाश्रम-
मत्यर्थः विरम सांसारिकप्रवृत्तेरिति शेषः ॥ ५५ ॥

वमुपदिष्टचिदचिदीश्वरतत्त्वः कर्मसमुत्पादितवैराग्यो राजा उक्त-
भिनन्दन् पुनरन्यानि संशयपदान्याविष्कुर्वन्पृच्छति । श्रुतमिति
ग्राभिः । हेब्रह्मन् ! भगवान् भवान् यदभाषत तदान्वीक्षिकमात्मा-
क्षणोपयोगिश्रोतव्यमर्थजातं मया श्रुतमन्वीक्षितमितिपाठे विचा-
रितमित्यर्थः एतद्भवतोपदिष्टमस्मदुपाध्यायाः कर्मोपदेष्टारस्ते
जानन्ति तत्र लिङ्गमाह । यदि विदुस्तर्हि किमर्थं न ब्रूयुरतां-
कथनाञ्च जानन्त्येवातिगुह्यं भवतोपदिष्टमिति भावः ॥ ५६ ॥

अतस्तत्कृत उपाध्यायकृतः तद्वाक्यविरोधेनात्मतत्त्वेऽसम्भा-
नारूपो महान् संशयः संछिन्नस्त्वया अत्र तु कश्चित्संशयोऽ
वर्तते यत्र संसयपदे इन्द्रियवृत्तीनामप्रवृत्तेस्तत्र ऋषयोऽपि
मुह्यन्ति ॥ ५७ ॥

किमत्र संशयपदं तदाह । कर्माणीति । पुमान् येन देहेन कर्माणि
पुण्यापुण्यरूपाणि अत्र लोके आरभते करोति तं देहमिहैव
विहाय कर्मोपस्थापितेनान्येन देहेन ज्युष्टानि सेवितानि विपयी-
कृतानि सुखदुःखान्यसकृत्पुनः पुनर्भुङ्क्ते ॥ ५८ ॥

इत्येवंविधा वेदविदां भवादृशानां वाचस्तत्र तत्र स्मृति-
पुराणादिषु श्रूयन्ते तथाहि "सूत्रं वर्णाश्चाश्रमाश्च स्वकर्मनिष्ठाः
त्य कर्मफलमनुभूय ततः शेषेण विशिष्टकुलजातिरूपायुःश्रुत-
वृत्तसुखमेधसो जन्म प्रतिपद्यन्ते विश्वञ्चो विपरीता नश्यन्ति" इति
भगवताप्युक्तं "गुणाभिमानी स तदा कर्माणि कुरुते ऽवशः । शुक्लं
कृष्णम्" इत्यादिना संशयविषयमुद्घाटयति । कर्मेवेति । प्रोक्तं सुख-
दुःखहेतुत्वेन ब्रह्मवादिभिः प्रोक्तं पुण्यापुण्यरूपं कर्म क्रियते जनैः
तदानन्तरक्षण एव परोक्षमदृश्यं सन्न प्रकाशते न प्रकाशत
इति वर्तमाननिर्देशेन प्राक्तनदेहकृतानां यथास्मिन् देहे न प्रका-
शस्तथैतद्देहकृतानामुत्तरजन्मन्यप्रकाशस्तथा यथैव पूर्वक्षणगोचरा-
णामुत्तरोत्तरक्षणगोचरत्वं तथेति च दृष्टान्तद्वयमभिप्रेतं चकारेण
कर्मणि हेतुभूतं सत्वादिगुणयुक्तं मनस्तद्युक्तं शरीरं च न प्रका-
शत इति विवक्षितं नहि पूर्वदेहकृतकर्माणि तन्निमित्तसत्वा-
दिगुणयुक्तं मनस्तद्युक्तं च शरीरं चेदानीमुपलभ्यते अतस्ते
कर्मगुणमनोदेहाः पूर्वं नासन् अतस्ते नेदानीं सुखादिहेतवः एवं
तत्तद्देहकृतकर्मगुणमनोदेहाः उत्तरजन्मसुखदुःखादिहेतवो न
भविष्यन्ति किन्तु निर्निमित्तमेव सुखदुःखप्राप्तिरिति मे प्रतिभा-
तीत्यर्थः ॥ ५९ ॥

एवमापृष्टो भगवान् नारदस्तत्प्रश्नं परिहरति । येनैवेति ।
तत्र यदुक्तमुत्तरोत्तरजन्मसुखदुःखादिहेतुभूतकर्माश्रयपूर्वदेहानां
विनष्टत्वात्तन्निमित्तं सुखदुःखादिकमनुपपन्नं नह्याशुविना-
शस्वभावं निराश्रयकर्माल्पकालिकसुखादिहेतुः नहि विनष्टानां
कुलालशरीरदण्डचक्रादिव्यापाराणां कालान्तरभाविघटादिहे-
तुत्वमिति येनैव मनसा निमित्तभूतेन पुरुषः कर्म आरभते
तेनैवाव्यवधानेनाविश्लिष्टेन लिङ्गेन पुण्यापुण्यकर्महेतुभूतेन मनसा
स्वस्वकर्मानुगुणं सुखदुःखादिफलममुत्र परलोके भुङ्क्ते स्थूल-
शरीरकर्मणो विनाशोऽपि मनसो लिङ्गभूतस्य साध्वसाधुकर्म-
निमित्तभगवदनुग्रहनिग्रहरूपः पुण्यापुण्यविषयस्य क्षेत्रज्ञस्य च
देहान्तरेऽप्यनुवृत्तेः सुखाद्युपपत्तिरिति भावः पुण्यापुण्ययोर्भग-



वन्निग्रहानुग्रहरूपत्वं तदधिगमाधिकरणे(१)भाष्यादौ स्पष्टमुक्तम् ॥६०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरिरेवंविधश्चेत्ततः किमत्राह । तत्पादेति । यतो यस्मात् क्षेमं
भवेन्नृणां तस्य हरेः पादमूलं शरणं रक्षकं "शरणं गृहरक्षित्रोः"
इत्यभिधानं ननु पित्रादीनां वयसि गते पुत्रादीनामपि शरण-
त्वदर्शनात्किं विशिष्योच्यत इति तत्राह । सवा इति । भगवत्सं-
पर्कात्पुत्रादीनां प्रियत्वात् हरेः प्रियतमत्वं कुत इति तत्राह । यत-
इति । श्रीनारायणचरणारविन्दशरणं गतस्यास्य संसारिणोऽ
यद्यपि भयं नास्ति यतोऽथ तस्माद्धरिः पुत्रादेः प्रेष्ठ इति कृत्वा
पुंसस्तत्पादमूलं शरणमित्यन्वयः एवं वेत्तुरेव विद्वत्तानान्यं विद्
इत्याह । इतीति । इतिशब्दो हेत्वर्थः यस्माद्धरिचरणशरणस्य
मोक्षादिसर्वपुरुषार्थावाप्तिस्तस्माच्च एवं वेद सवा एव विद्वान्
नान्यः कुतः स्वगुरुः स्वापेक्षिताशेषज्ञानोपदेष्टा तत्र हरेः सन्नि-
धानविशेषात्तत्सामर्थ्यमस्येति भावेनाह । हरिरिति । अनेन गुर्वा-
दिशब्दप्रयोगेण देवादीनां मुख्यवित्तेत्याह ॥ ५१ ॥

अत्रेति निशामय शृणु ॥ ५२ ॥ ५३ ॥

स्वाभीष्टप्रकाशनाय स्वयमेव व्याचष्टे । सुमनसामिति । सुम-
नसां समानधर्मणां पुष्पवत्कोमलशरीराणां शरणे आश्रमे
अन्यत्र पुष्पाश्रये वने क्षुद्रं पुष्पमधुगन्धवदल्पं किन्तत्काम्य-
कर्मविपाकजं प्रवृत्तकर्मफलं विषयसुखलेशं जैह्वयोपस्थादिविषयं
चरं चरन्तं भुञ्जानमितस्ततो गत्वा विचिन्वन्तमन्विच्छन्तं तद-
र्थित्वान् मिथुनीभूय तदभिनिविष्टचेतनं षडङ्घ्रिगणसामगानवत्
भ्रमरनिकरसुन्दरगानवदतिमनोहरस्त्रीजनसंलापेषु अतितराम-
त्यन्तं प्रलोभितौ कर्णौ यस्य स तथा तं तदेकमग्रश्रोत्रमित्यर्थः
कुतोऽग्रे वृकान् वृकसधर्मानसुहृत्त असुलक्षणमायुर्हरतोऽहो-
रात्रादिकालविशेषानविगणय्यागणयित्वा यान्तं क्रीडागृहे
विहरन्तमित्यर्थः पृष्ठे परोक्षमवस्थितः उपश्रये स्थितो लुब्ध-
कसमानः कृतान्तः शरसमेनादृष्टेन यमात्मानं पराविध्यति
तमिममात्मानं जीवं भिन्नहृदयं मृगपर्यालोचनयालोच्य च द्रष्टु-
मर्हसीत्यर्थः कथमिव मृगयुहतं मृगं हरिणमिवेति ॥ ५४ ॥

मद्वाक्ये श्रद्धाचेद्धितमुपदिशामीत्याह । स त्वमिति । यः
पूर्वं कर्मठः स त्वं मृगवच्चेष्टितं चेष्टा यस्य स तथा तं मृगस्येव
विषयानन्विच्छतो जीवस्य चेष्टितमिति वा विचक्ष्व पश्य आत्म-
नस्तव चित्तं पूर्वकृतस्मरणसमर्थमन्तःकरणविशेषमन्तःस्थिते
हृदि सर्वपापहरे हृत्स्वान्ते हरौ नियच्छ तत्रैव स्थापय कर्णाधुनीं
कर्णाधारमिव स्थितां चित्तिं बुद्धिं च हरौ स्थापय कर्णादी-
न्द्रियप्रवृत्तिहेतुभूतां वा कर्णाख्यधुनीं वा तत्कथाश्रवणं बुद्धिं
च तद्गुणनिर्णये वा असत्तमानां विपर्ययिणां यूथस्य गाथा विष-
यवार्तावदाकारो यस्मिन् तमङ्गनाश्रमं जहि हंसो निर्दोषः
परमात्मा मम शरणमिति कृत्वा प्रीणीहि तृप्तो भव यद्वा
हंसानां संन्यासिनां शरणं प्रीणीहीति क्रमेण साधनसामग्र्यनु-
सारेण विरम संसाराद्विरतो भूया इत्यन्वयः ॥ ५५ ॥

राजा तावद्दियन्तं कालं मया भावितं तदस्य दृष्टं नाभू-
त्प्रातिवाक्याश्रवणादिति संशयनिरासायाह । श्रुतमिति । श्रुतं श्रुति-
प्रसिद्धमन्वीक्षितं विचारितमात्मयोग्यज्ञानं यद्भगवानभाषत

---

( १ ) तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥
४ ॥ १ ॥ १३ ॥ इति सूत्रे श्रीभाष्यादौ ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नैतन्ममोपाध्याया जानन्ति तत्र हेतुमाह । किंनेति । प्रथमं त्वन्मुखाच्छ्रुतं पश्चादन्वीक्षितमाम्रेडितमिति वा ॥ ५६ ॥

अथ किं तत्राह । संशय इति । अत्रास्मिन्नर्थे मे संशयो न च्छिन्नः अल्पत्वान्मया न छेदित इति नेत्याह । तत्कृत इति । तत्कृते तदर्थविषये महान् संशय इत्यर्थः सूक्ष्मत्वेनाज्ञातविषयत्वात् महत्त्वं न तु स्थूलपरिमाणत्वादिति भावेनाह । ऋषयइति । कुत्र मुह्यन्तीत्यत्राह । यत्रेति । यत्र संशयार्थे चक्षुरादीन्द्रियव्यापारागोचरत्वादित्यर्थः अतस्त्वां पृच्छामीति शेषः ॥ ५७ ॥

कोऽसौ संशयइत्यत्राह । कर्माणीति । इह पुमान् येन देहेन कर्माण्यारभते तस्य प्रारब्धकर्मक्षये तं देहं विहायामुत्र परलोके स पुमान् येन प्रेताख्येन जुष्टानि कर्मफलानि अश्नुत इति यत्कथमन्यः कर्ताऽन्यो भोक्तेत्यकृताभ्यागमादिदोषापत्तेः ॥ ५८ ॥

तदप्रामाणिकमिति च वक्तुं न शक्यमित्याह । इतीति । श्रूयन्त इत्यनेन श्रुतयः स्मृतयोऽपि गृह्यन्ते तेनाबालवृद्धप्रसिद्धिर्द्योत्यते अतो महान् संशय इत्यर्थः अनेन देहव्यतिरिक्तात्मसद्भावे कथमिति संशयो युज्यते स एव नास्ति देहभस्मीभावेन तस्यापि भस्मीभूतत्वादिति मतमपि प्रत्युक्तमागमस्याप्रामाण्ये तद्गुरुवाक्यस्यापि समन्यायः स्यादिति किंच स्वर्गादिकामैर्जनैः कर्म क्रियते तत्परोक्षं पश्चान्न प्रकाशते नष्टत्वादतस्तादृशं कर्मार्थफलं न ददाति नहि मृतः पिता पुत्रायानीय कदलीफलं रातीति युज्यत इत्ययमन्योऽपि संशयः ॥ ५९ ॥

प्रथमप्रश्नं प्रत्याह । येनेति । लिङ्गं शरीरं तस्य मनःप्रधानत्वाल्लिङ्गेन मनसेति सामानाधिकरण्यं मनसा प्रेरितेन येन लिङ्गेन देहेन पुमान् कर्मारभते तेनैवामुत्र स्वर्गादावव्यवधानेन प्रत्यक्षेण कालेन स्वकं कर्म भुङ्क्ते तत्फलं सुखदुःखलक्षणमनुभवतीत्यन्वयः स्थूलशरीरस्य लिङ्गनिमित्तत्वात्तन्नाशेऽपि कर्तुर्लिङ्गस्याविनष्टत्वान्नाकृताभ्यागमादिदोषप्रसक्तिः सूक्ष्मरूपेण सत्त्वात् लिङ्गेन लीनकर्मफलज्ञापकेन मनसा तत्फलानुभवोपपत्तेरिति वा ॥ ६० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मादेवं भूतो गुरुरेवाश्रयणीय इत्युपदिशन् पुरञ्जनोपाख्यानादिविवक्षितमाह । स वै इति सार्द्धेन । वै प्रसिद्धे रूपगुणलीलादिभिर्मनोहरत्वेन स हरिनामा सर्व्वेषां प्रियतमः परमप्रीतानां योग्यः यत एव चात्मा स्वात्मेति पाठे स्वेषां जीवानां रश्मिस्थानीयानां देहभूतां मण्डलस्थानीयः यस्मादेव च यतः सकाशादण्वपि भयं न जायते इति यो वेद स एव विद्वान् स एव गुरुः य एवम्भूतो गुरुः स तु हरिरेवेत्यर्थः ॥ ५१ ॥

प्रश्नेत्यर्द्धकम् अत्रेत्यर्द्धकम् ॥ ५२ ॥ ५३ ॥

सुमन इत्यादिगद्यान्ते द्रष्टुमर्हसीत्यनन्तरं यथा मृगयुहतं मृगमिति क्वचिदधिकं वर्त्तते ॥ ५४—५६ ॥

अत्रश्रीभगवद्धर्मनि तु संशयः छिन्नएव किन्तु कर्ममार्गेत्वेकः संशयावर्त्तते तच्छेदनं च संप्रत्यनुपादेयमपि केवलम् मुहुतस्स्मृत्यापातशान्त्यर्थमेव मृग्यत इत्याशयेनाह । द्वाभ्यां तत्र कर्माणीति सार्द्धकं कर्मेत्यर्धकं येन देहेनारभते तेनैव जुष्टानि सेवितानि निर्व्यूढानि कर्माण्यमुत्रान्येन देहेन समश्नुते हि वेदविदां वादस्तत्त्वनिर्णयः कर्मच तत्क्षणादप्रकटमेव ततश्च स्नानभोजनादिवत्संस्काररूपत्वेनाग्नितन्मात्रादिवत् रूपत्वेनचान्यत्र सञ्चारणासम्भवात् कथमन्येन देहेन तत् संभवतीत्यर्थः ॥ ५७—६३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स हरिरेव प्रियतम आत्मा असौ जीवस्तु प्रिय ... तत्र हेतुः यतो सद्भजनात् अस्य जीवात्मनस्तु स्वर्गादि ... दानरूपाद्भजनाद्दुःखमेव भवतीत्यर्थः । इति विभेदेनैवात्मानं वेद स एव विद्वांस्त्वया ज्ञेयः य एवं विद्वान् स एव गुरुराश्रयणीयः य एवं गुरुः स एव हरिस्त्वयोपा... इत्यर्थः ॥ ५१ ॥

उक्तमर्थमुपसंहरति । प्रश्नः संच्छिन्नः परिहृतः तदं ... ञ्जनोपाख्यानेन वैराग्यभक्तिभ्यामात्मन उद्धारप्रकारमव... प्रस्थाप्यमानैर्दूतैः पुत्रानानीय राज्येऽभिषिच्य प्रव्रजि... मनसि विचारयन्तं राजानमभिमृश्य तं सद्य एव गृहा... रयितुं पुनर्हरिणरूपककथामाह । अत्र वदतो मे गुह्यं शृणु ॥ ५२ ॥

क्षुद्रमिति । मृगं हरिणं मृगय स्वविपत्तिमजानन्त एव मरिष्यन्तमन्वेषय कीदृशं क्षुद्रं दूर्व्वादियवसं च... तथा तं मुमागम आर्षः । सुमनसां पुष्पाणां शरण... मिथित्वा स्त्रिया सह मिथुनीभूय रक्तमासक्तं सामसु ... तेषु अग्रे तं भक्षयितुमेव निलीनान् वृकान् अज्ञानादेव ... गणय्य यान्तं पृष्ठे तु निलीय वर्त्तमानस्य लुब्धकस्य ... भिन्नं भिन्नप्रायमन्वेषय तेन शीघ्रमिमं पुष्पोद्यानादन्य... अन्यथा वृका लुब्धकाश्चैनं हनिष्यन्त्येवेति भावः ॥ ५३ ॥

श्लोकमिमं प्रस्तुतं योजयन् व्याचष्टे । तत्र सुमनसां ... इत्यस्य व्याख्या सुमनःसमधर्म्मणामिति परिणामवि... नवमालिकापुष्पतुल्यानां क्षुद्रं चरन्तमित्यस्य व्याख्या पु... त्यादि मिथित्वेत्यस्य व्याख्या मिथुनीभूय स्त्रीभिः ... शेषः । रक्तमित्यस्य व्याख्या तासु स्त्रीष्वेव अभिनिवेशितं ... असुतृप इत्यस्य व्याख्या आयुर्हरत इति यान्तं ... व्याख्या विहरन्तमिति अतितरामित्यस्यैव विशेषणमन्... अन्तर्नलिकायां गूढेन शरेण अलक्षितेन रमणव्यापारे ... द्रष्टुमर्हसीति दृष्ट्वा च शीघ्रमिममङ्गनाश्रमाद्बहिष्कुरु । ... फहस्तादसौ विच्युतो भविष्यतीति भावः ॥ ५४ ॥

व्यञ्जितमर्थमभिधायापि स्पष्टमाह । स त्वमिति । विचार्य ... विचार्य्य अन्तर्हृदि चित्तं मनो नियच्छ कर्णयोर्धुनिं ... "अपाम सोमममृता अभूम" इत्यादिफलश्रुतिं चित्तं नियच्छ ... कुर्व्विति फलश्रुतेर्विचारासहत्वेन वैयर्थ्यादिति भावः । ... शरणं पर्णशालां भगवन्तं प्रति प्रीणीहि प्रीणयेति वा ... विषयानन्दाद्विरम ॥ ५५ ॥

यद्भवानभापत तच्छ्रुतमनु पश्चादीक्षितं विचार्य्य ... कृतं च ये मुनयोऽत्रत्या मां कर्म्माध्यापयन्ति ते ... जानन्ति यदि च जानन्ति तर्हि किं न ब्रूयुरतोऽस्मात् ... मे गुरुरभूरिति भावः ॥ ५६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

प्रतस्त्वत्कृत उपाध्यायकृतः तद्वाक्यविरोधेन भक्तिज्ञानवैराग्येष्वसम्भावनारूपो यः संशय आसीत् स त्वया विशेषेण प्रकर्षेण सम्यक्प्रकारेण छिन्नः यत्र येषु इन्द्रियवृत्तयोऽपि न प्रभवन्ति ये जितेन्द्रिया इत्यर्थः ते ऋषयोऽपि हि निश्चितं मुह्यन्ति मोहादेव कर्म्म कुर्व्वन्ति मद्विधान् कर्म्म कारयन्ति च तर्हि मद्विधानां का वार्त्तेति भावः ॥ ५७ ॥

किञ्च कर्म्मवर्त्मन्येकः संशयो वर्तते तमपि संछिन्धीत्याह। कर्म्माणि येन देहेन कुरुते पुमान् जीवस्तं देहमिहैव विहाय अमुत्र लोकान्तरे अन्येन देहेन जुष्टानि उपभुक्तानि स्वर्गनरकादीनि अश्नुते प्राप्नोति इति वादः श्रूयते स कथं सङ्गच्छते न ह्यन्येन क्रियतेऽन्येन भुज्यते इत्युचितमिति भावः ॥ ५८ ॥

संशयान्तरमाह। कर्म्म प्रोक्तं वेदोक्तं क्रियते जनैः तच्च समनन्तरक्षण एव परोक्षं स्यात्तज्जन्यमदृष्टं यत्तस्यापि सत्त्वे प्रमाणादर्शनात्तदपि न प्रकाशते अतो लोकान्तरे कथं तत्फलस्य भोग इति ॥ ५९ ॥

प्रथमस्योत्तरमाह। येनैवेति। लिङ्गेन लिङ्गदेहेन मनसा मनःप्रधानेन पापपुण्ययोर्मनःप्रधानैरिन्द्रियैरेव करणात् तत्फलयोः स्वर्गनरकयोरपीन्द्रियैरेव भोगात् न विद्यते व्यवधानं यस्य तेनाव्यवधानेन लिङ्गेनेति स्थूलदेहस्य तत्र व्यवधायकत्वशङ्के: ॥ ६० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स एव अन्येषामज्ञानहरत्वाद्धरिरत एव गुरुः ॥ ५१ ॥

संछिन्नः कृतोत्तरः निशामय शृणु ॥ ५२ ॥

शरणे वाटिकायां मिथित्वा भार्याभिर्मिलित्वा रक्तं सुखासक्तं क्षुद्रंचरम् अल्पं सुखं सेवमानम् मृगय आलोचय ॥ ५३ ॥

श्लोकं स्वयं व्याचष्टे। सुमन इति सुमनःसमधर्मणां सुमनोभिः समानो धर्मः सद्यो विरूपत्वादिलक्षणो यासां तासाम् आश्रमे गार्हस्थ्ये मिथुनीभूय ताभिर्मिलित्वा क्षुद्रतमं कामलवसुखं विचिन्वन्तं तस्मिन्सुखेऽभिनिवेशितं मानसं कृतान्तः कालः अन्तःशरेण अलक्ष्यवेगेन पराविध्यति तमिममात्मानं द्रष्टुमर्हसि ॥ ५४ ॥

स मृगोपमस्त्वमात्मनो मृगचेष्टितं विचक्ष्य विचार्य कर्णाध्वानिम्। कर्णाध्वन्युपलक्षितां कर्णवृत्तिं तदुपलक्षिताः सर्वेन्द्रियवृत्तीश्चित्ते नियच्छ सर्वेन्द्रियवृत्तीश्चित्तेनावरुध्य चित्तं च हृदन्तस्थे श्रीकृष्णे योजयेत्यर्थः। तच्च गार्हस्थ्यत्यागेन संयच्छ इत्याह। जहीति। असत्तमानां यूथस्य गाथा कथा यत्र तज्जहि हंसानां सारग्राहिणां वैष्णवश्रेष्ठानां शरणं श्रीकृष्णं प्रीणीहि एवं क्रमेण विरम संसारादिति शेषः ॥ ५५ ॥

हे ब्रह्मन्! भगवान् यदभाषत तन्मया श्रुतम् अन्वीक्षितं विचारितं च ॥ ५६ ॥

अत्र अस्मिन् तत्त्वे तत्कृतः उपाध्यायाज्ञानकृतः ॥ ५७ ॥

तु शब्देन सूचितं संशयमाह। येनेति द्वाभ्याम्। येन कर्माण्यारभते करोति तं देहं विहाय स कर्ता अमुत्र लोकान्तरे त्यक्तदेहेन यानि जुष्टानि सेवितानि तानि फलत्वेन प्राप्तानि अन्येन देहेनाश्नुते ॥ ५८ ॥

प्राप्य पुण्यकृतान् लोकानिति "शारीरजैः कर्मदोषैर्याति स्थावरतां नर" इतिस्मृतिरूपो वेदविदां वादस्तत्र तत्रास्ति श्रूयते च अन्यन्नवतरं कल्याणतरं रूपं कुरु तेपि त्वस्वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वेति कर्मकालेऽन्यदेहः फलभोगकालेऽन्य इत्येकः संशयः संशयान्तरमाह। यत्प्रोक्तं कार्यत्वेन वा वर्णितं जनेन क्रियते तत्परोक्षमदृश्यं सत् क्षणान्तरे न प्रकाशते तर्हि केनामुत्र भोगसिद्धिरिति ॥ ५९ ॥

स्वयं स्थूलसूक्ष्मदेहद्वयवान् स्थूले गृहवदायतमानः येनैव कर्म आरभते तेनैव मनसा मनःप्रधानेन लिङ्गदेहेन अव्यवधानेन कर्मकाले तत्फलभोगकाले च व्यवच्छेदशून्येन तत्फलं सुकृतकर्मफलं भुङ्क्ते अनेन देहद्वयस्योपयोगित्वमात्रं जीवस्य कर्तृत्वभोक्तृत्वादिधर्मवत्त्वमुक्तम् ॥ ६० ॥

---

भाषाटीका।

श्री हरि सब देह धारियों के अन्तर्यामी हैं जगत्कारण हैं नियन्ता हैं जिन सब मनुष्यों का कल्याण होना है उनको भगवान् के चरणकमल का शरण जाना चाहिये वही सब के प्रियतम आत्मा हैं उनसे किञ्चित भी भय नहीं होती है इस प्रकार जो जानता है सो ही विद्वान् है जो विद्वान है सोई गुरु है सोई हरि है ॥ ५१ ॥

श्री नारदजी बोले हे पुरुषश्रेष्ठ! तुमारे प्रश्न के संशयों को हमने छेदन करदिया अब इस विषय में हम कुछ कहते हैं वह बात निश्चित है तिसको तुम श्रवण करो ॥ ५२ ॥

छोटे से घास आदि को खाने वाला कोई फूलों के वन में स्त्री के साथ मिलकर उसी स्थानादिमें आसक्त है भ्रमरों के गान में कान लगाया हुआ दुसरे के मांसों से शरीर पालने वाले भेडियों को आगे देखकर भी नहीं गिनने वाला पीछे बहेलिया के बाण जिस पर लगे हैं ऐसे मृग को तुम ढूंढो ॥ ५३ ॥

फूलों सरी की जल्दी सूखने वाली स्त्रियों के घर में रहकर फूलों की बाससरी के अति तुच्छ काम्य कर्मों के फल का लेशमात्र को ढूंढने वाला स्त्रियों के साथ में रहकर उन्हींमें मन लगाकर रहने वाला भौंरों के गान सरीक स्त्री पुत्रादिकों के वचनों में कान को लगाने वाला भेडियाके यूथ सरीके अपने आयु के हरने वाले अहोरात्र गण को नहीं गिनकर घरों में विहार करने वाला जो मनुष्य है तिसको विना जनाये पीछे धोके में मारने वाला काल बाण मारता है हे राजन्! इस अपने आत्मा को तुम देखो इस का हृदय बाणों से विधा हुआ है ॥ ५४ ॥ ५५ ॥

सो तुम अब मृगसरीकी अपनी गति जानकर अपने अन्तःकरण में चित्त को रोको श्रवण में जो विषयों का श्रवण होता है तिसको भी रोको असत्पुरुषों की कथा जिसमें होती है ऐसा स्त्री का आश्रम घर को त्यागो जीवों का रक्षक परमात्मा को प्रसन्न करो क्रम से निवृत्त होवो ॥ ५६ ॥

शयानमिममुत्सृज्य श्वसन्तं पुरुषो यथा ।
कर्मात्मन्याहितं भुङ्क्ते तादृशेनेतरेण वा ॥ ६१ ॥
ममैते मनसा यद्यदसावहमिति ब्रुवन् ।
गृह्णीयात्तत्पुमान् राद्धं कर्म येन पुनर्भवः ॥ ६२ ॥
यथाऽनुमीयते चित्तमुभयैरिन्द्रियेहितैः ।
एवं प्राग्देहजं कर्म लक्ष्यते चित्तवृत्तिभिः ॥ ६३ ॥
नानुभूतं क्वचानेन देहेनादृष्टमश्रुतम् ।
कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥ ६४ ॥
तेनास्य तादृशं राजन् ! लिङ्गिनो देहसम्भवम् ।
श्रद्धत्स्वाननुभूतोऽर्थो न मनः स्प्रष्टुमर्हति ॥ ६५ ॥
मन एव मनुष्यस्य पूर्वरूपाणि शंसति ।
भविष्यतश्च भद्रं ते तथैव न भविष्यतः ॥ ६६ ॥
अदृष्टमश्रुतं चात्र क्वचिन्मनसि दृश्यते ।
यथा तथाऽनुमन्तव्यं देशकालक्रियाश्रयम् ॥ ६७ ॥
सर्वे क्रमानुरोधेन मनसीन्द्रियगोचराः ।
आयान्ति वर्गशोयान्ति सर्वे समनसो जनाः ॥ ६८ ॥
सत्त्वैकनिष्ठे मनसि भगवत्पार्श्ववर्तिनि ।
तमश्चन्द्रमसीवेदमुपरज्यावभासते ॥ ६९ ॥
नाहं ममेति भावोऽयं पुरुषे व्यवधीयते ।
यावद्बुद्धिमनोक्षार्थगुणव्यूहो ह्यनादिमान् ॥ ७० ॥

भाषाटीका ।

राजा प्राचीनबर्हि बोले हे ब्रह्मन् ! नारदजी जो आपने कहा है तिस को मैंने श्रवण किया है विचारा भी है इस बात को ये सब उपाध्यायलोग नहीं जानते होंगे यदि जानते होते तो क्यों नहीं कहते ॥ ५७ ॥

इस विषय में उन उपाध्यायों का किया जो सन्देह मेरे को था सो आप के कथन से निवृत्त होगया इस बात में कोई इन्द्रियवृत्ति नहीं प्रवेश हो सकती है ऋषि लोग भी मोहित हो जाते हैं ॥ ५८ ॥

मनुष्य यहांपर जिस शरीर से कर्मों को करता है तिस शरीर को यहां छोड कर उहां दूसरे शरीर से कर्म फलों को भोगता है ॥ ५९ ॥

इस प्रकार से वेदवादियों का वचन सुना जाता है जहां तहां शास्त्रों में परमशास्त्रोक्त कर्म जो किया जाता है सो परोक्ष होने से दीखता नहीं है फलभोग परलोक में कैसे को होता है ॥ ६० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

लिङ्गदेहविशिष्टस्य भोक्तृत्वं स्वप्नदृष्टान्तेन स्पष्टयति । इमिमं जाग्रद्देहं श्वसन्तं जीवं समुत्सृज्य तदभिमानं त्मनि मनसि संस्काररूपेणाहितं कर्म यथा भुङ्क्ते तादृशेन देहसदृशेन कर्मोपस्थापितेन देहेनान्येन वा पश्वादिदेहेन लोकान्तरेऽपीति भावः ॥ ६१ ॥

ननु भवतु नाम लिङ्गविशिष्टस्यानेन दृष्टान्तेन भोक्तृत्वं तु दानप्रतिग्रहादिषु स्थूलदेहविशिष्टस्यैव दृश्यते तत्राह । पुत्रादयोऽसावहं ब्राह्मण इति ब्रुवन्मनसा यद्यदेदं गृही... ततो देहाद्राद्धं सिद्धं कर्म पुमान् गृह्णीयात् येन कर्त्र... ङ्कारगृहीतेन पुनर्भवो भवति अन्यथा जन्मानुपपत्तेः ...

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मन्तुर्मनोविशिष्टस्यैव कर्तृत्वमीभमानविषयस्य तु देहस्य पुत्रादिदेहवद्द्वारमात्रत्वमिति भावः ॥ ६२ ॥

यदुक्तं कर्मणो नष्टत्वाच्चामुत्र भोग इति तत्राह । यथेति । उभयैर्ज्ञानकर्मरूपैरिन्द्रियाणामीहितैः कदाचित्कर्मप्रवृत्तिभिश्चित्तमनुमीयते सत्यपि सर्वेन्द्रियविषयसम्बन्धे युगपज्ज्ञानानुत्पत्तेःतदुक्तमक्षपादेन "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति एवं चित्तवृत्तिभिरपि पूर्वदेहजं कर्म लक्ष्यते तासामपि युगपदनुत्पत्तेः ॥६३॥

इतोऽपि कर्म लक्ष्यत इत्याह । नानुभूतमिति द्वाभ्याम् । अनेन वर्तमानेन देहेन क्व च कुत्रचिदपि यन्नानुभूतमननुभूतमनुपभुक्तमदृष्टं चाश्रुतं च यद्रूपं यदात्मकं यादृक् यत्प्रकारं च तत्कदाचित्स्वप्नमनोरथादिष्वात्मानि मनस्युपलभ्यते ॥ ६४ ॥

तेन हेतुनास्य लिङ्गिनो वासनाश्रयस्य जीवस्य तादृशं तदनुभवादियुक्तं पूर्वदेहसम्भवं श्रद्धत्स्व निश्चयेन मन्यस्व नह्यननुभूतोऽर्थो मनःस्प्रष्टुं मनासि स्फुरितुमर्हति ॥ ६५ ॥

किञ्च मनोवृत्त्यैव पूर्वापराणि शुभाशुभनिमित्तानि शरीराणि ज्ञायन्त इत्याह । मन एवेति । भद्रं त इति सम्यगवधानार्थमाशिषाभिनन्दति भविष्यत उन्नत्वं प्राप्स्यतो न भविष्यतो नीचत्वं प्राप्स्यतोऽपि भावीनि रूपाणि शंसाति मन एवौदार्यकार्पण्यादिवृत्तिभिः पूर्वमप्येवमेवासीत्पश्चादप्येवमेव भविष्यतीति ज्ञापयतीत्यर्थः ॥ ६६ ॥

ननु कदाचिद्दर्शनानर्हमपि स्वप्ने प्रतीयते यथा पर्वताग्रे समुद्रो दिवा नक्षत्राणि स्वसिरश्छेद इत्यादि तत्राह । अदृष्टमिति । अन्यदेशाश्रयं समुद्रादिकं पर्वताग्रे निशाश्रयं नक्षत्रादिकं दिवा अभ्यञ्जनादिक्रियाश्रयं स्वशिरश्छेदनाश्रयम् निद्रादिदोषेण हि तथा प्रतीयत इत्यनुमन्तव्यम् परस्यापि तदनुपपत्तेस्तुल्यत्वादिति भावः ॥ ६७ ॥

ननु दरिद्रः क्वचिदात्मानं महाराजं पश्यति राजा च रंकमात्मानं पश्यति तत्कथमसम्भावितं सङ्गच्छेत तत्राह । सर्वे इति । आयान्ति भोग्यत्वेन प्राप्नुवन्ति यान्ति च भोगानन्तरम् यदि च कश्चिदमना भवेत्तर्ह्येवं न स्यान्न त्वेतदस्तीत्याह । सर्वे समनस इति । अतः सर्वेषां समनस्कत्वान्मनसि च सर्वार्थानां क्रमेण प्रवेशान्नात्यन्तादृष्टचरः कस्यापि कश्चिदर्थोऽस्तीत्यर्थः ॥६८॥

तदेवं सर्वैरपि सर्वेऽर्थाः क्रमेण दृश्यन्त इत्युक्तमिदानीं युगपदपि सर्वदर्शनं कदाचिद्भवतीत्याह । सत्त्वैकनिष्ठे भगवत्पार्श्ववर्तिनि भगवद्ध्यानपरे मनसीदं विश्वमुपरज्य संयोगमिव प्राप्यावभासते प्रतीत्यनर्हस्यापि कदाचित्प्रतीतौ दृष्टान्तः चन्द्रमस्युपरज्य तमो राहुरिव तादिदं शुद्धे मनासि सर्वविषयस्फुरणं योगिप्रत्यक्षमिति प्रसिद्धम् ॥ ६९ ॥

तदेवं स्थूलदेहनाशेऽपि लिङ्गदेहस्यानाशादन्यः कर्ता भोक्तेति दोषो नास्तीत्युक्तम् । तत्रैवं शङ्कते । ननु लिङ्गदेहस्य स्थूलदेहद्वारैव कर्तृत्वभोक्तृत्वे न तु केवलस्य तत्र कदाचित् स्थूलदेहाभावे जीवस्य कर्तृत्वभोक्तृत्वाभावान्मुक्तिः प्रसज्येत तत्राह । अहं ममेति भावः स्थूलदेहसम्बन्धः पुरुषे जीवे न व्यवधीयते न विच्छिन्नो भवति किंपर्यन्तम् बुद्ध्यादीनां व्यूहः परिणामो लिङ्गं यावदस्ति अनादिमाननादिः सन् ॥ ७० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

लिङ्गात्मनोरनुवृत्त्या भोगोपपत्तिं दृष्टान्तेन स्पष्टयति । शयानमिति । शयानमिमं जाग्रद्देहंश्वसन्तं जीवन्तमुत्सृज्य तदभिमानं त्यक्त्वा आत्मनि मनस्याहितं देवोपसादितं कर्म स्वप्नद्रष्ट्रैकानुभाव्यं तत्कालमात्रावस्थायि सुखदुःखादिस्वकर्मफलं यथा पुमान् तादृशेन शयानदेहसदृशेन मनुष्यदेहेनान्येन देवादिशरीरेण वा स्वप्ने भुङ्क्ते लिङ्गात्मनोरनुवृत्तेस्तथा लोकान्तरेऽपीति भावः ॥ ६१ ॥

यदुक्तं कर्मक्रियमाणमनन्तरक्षण एव विनष्टं सत्कालान्तरानुभाव्यफलहेतुः कथमिति तत्राह । ममेति । पुमानसावहं ब्राह्मणोऽहं क्षत्रियोऽहमिति ब्रुवन् देहात्माभिमानयुक्त इत्यर्थः ममेतन्मत्फलसाधनत्वान्मदर्थमिदं कर्मेति मनसा यद्यत्कर्म गृह्णीयात्कुर्यादित्यर्थः तत्तत्कर्मेति राद्धं सिद्धं कर्मणो विनाशेऽपि कर्मणः शक्तिरीश्वरस्य निग्रहानुग्रहरूपा सिद्धैवेत्यर्थः कर्म विशिनष्टि । येन कर्मणा पुनर्भवः पुनर्जन्म भवेत् ॥ ६२ ॥

मनसः कर्मणः पूर्वजन्मनश्च सद्भावे प्रमाणमाह । यथेति । उभयैर्ज्ञानकर्मरूपैरिन्द्रियैर्हितैः कादाचित्कवृत्तिभिर्मनोऽनुमीयते सत्यपि सर्वेन्द्रियविषयसम्बन्धे युगपज्ज्ञानानुपपत्तेः । तदुक्तमक्षपादेन "युगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्गम्" इति एवं चित्तवृत्तिभिरपि पूर्वदेहजं कर्म लक्ष्यते तासामपि युगपदनुपपत्तेरिन्द्रियैर्हितैरित्यपिपाठः तत्र हितैर्गतैर्निवृत्तव्यापारैरिन्द्रियैरुभयैर्ज्ञानकर्मरूपेण द्विविधैर्मनोऽनुमीयते तेषां क्रमव्यापारदर्शनादित्यर्थः एवं चित्तवृत्तिभिः पूर्वदेहकृतं कर्मानुमीयते ॥ ६३ ॥

तदेव विवृणोति । नानुभूतमित्यादिना । यादृगात्मनः मृदात्मको घट इति यदयं निर्देशः यादृशस्य वस्तुनो यद्रूपमनेन देहेनोपलक्षितेन पुंसा कुत्र चिदपि न दृष्टं न श्रुतमिन्द्रियान्तरेण प्रमाणान्तरेण वाननु भूतं तन्न कदाचित् स्वप्नमनोरथादिषूपलभ्यते न बुद्धिस्थ भवेदिह जन्मन्यनुभूतमपि किञ्चित्कदाचिद्बुद्धिस्थं भवति इच्छाविषयतया मनसि वर्तत इत्यर्थः ६४

ततः किमित्यत्राह । तेनेति । अस्य लिङ्गिनः मनोयुक्तस्य पुंसः तेनानुभूतार्थस्यैव मनोरथविषयत्वेन हेतुना हे राजन् ! तादृशं मनोरथाविषयतदर्थानुभवयोग्यं देहसम्भवं श्रद्धत्स्व निश्चयेन मन्यस्व अननुभूतार्थो न मनः स्प्रष्टुमर्हति नह्यननुभूतार्थो मनः मनासि स्प्रष्टुं स्फुरितुमर्हति न पूर्वकालाननुभूतार्थः कालान्तरे मनोरथविषयः स्यादित्यर्थः । अनुभूतार्थ एव मनोरथः इह जन्मन्यनुभूतार्थविषयमनोरथो वासनया सा च पूर्वानुभवादनुभवश्च देहयोगेनेति पूर्वजन्मसिद्धिः । जन्मतारतम्यानिर्हेतुकत्वायोगात्कर्मतारतम्यासिद्धिश्चेत्यर्थः ॥ ६५ ॥

मन एवेति । इदानीं सदसद्वृत्तिविशेषान्वितं "मन एव मनुष्यस्य पूर्वरूपाणि शंसति" प्रकृष्टाप्रकृष्टवासनानिमित्तसत्त्वादिगुणप्रचुरपूर्वदेहयोगाननुमापयति । भविष्यतो देहयोगाच्च भविष्यतः वर्तमानसत्त्वादिगुणप्रचुरदेहयोगांश्च शंसति सानि सत्त्वैकनिष्ठे इति वक्ष्यमाणत्वात् यद्वा न भविष्यतः अभविष्यन वर्तमानमनुष्यरूपाणीत्यर्थः भद्रं ते इति सम्यगवधारणार्थमाशिषाभिनन्दति ॥ ६६ ॥

अननुभूतार्थानां मनोरथाविषयत्वं नानुभूतं क्वचानेनेति व्यतिरेकमुखेनाभिधायान्वयमुखेनाप्याह । अदृष्टमिति । इह जन्मनि क्वचिदप्यदृष्टमश्रुतं च मनसि दृश्यते मनोरथगोचरो भवतीत्यर्थः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

केनाकारेण मनोरथगोचरत्वं पूर्वानुभवश्च तत्राह । यथेति । देशकालक्रियाश्रयं देशाश्रयं कालाश्रयं क्रियाश्रयं च रूपं यथा यथा येन येन प्रकारेण बुद्धिस्थं भवति तत्तथानुमन्तव्यं नत्वेवं भूतमपि कार्त्स्न्येन वक्तुं शक्यं बुद्धिस्थानां रूपाणामानन्त्याद्दित्यर्थः मम निवासदेश ईदृशः स्यादेवंविधः कालो भवेदहमेवं करवाणीति मनुष्याणामसम्भावितमर्थविशेषं प्रति मनोरथसहस्रं यथा रुचि मनसि वर्तते इति यावत् ॥ ६७ ॥

ततः किं पूर्वजन्मनः कर्मणश्च सिद्धावित्यत्राह । सर्वं इति । इह जन्मनि मनोरथविषयभूताः पदार्थाः पूर्वजन्मनि क्रमेणेन्द्रियगोचरा भूत्वा क्रमेणेति मनःसद्भावोऽपि दर्शितः मनसोऽभावे सर्वेन्द्रियसम्बन्धाद्युगपत्सर्वेन्द्रियवृत्तिप्रसङ्गः तत्सद्भावे तु येनेन्द्रियेण मनसः संयोगः तस्यैवेन्द्रियस्य व्यापार इत्युपपत्तिरत्र क्रमेणेन्द्रियगोचरा भूत्वा मनसि वर्तन्ते पूर्वानुभवजनितवासना विशेषेण हि प्रतिपुरुषं रुचिविशेषः न हि विना कारणेन कार्यं भवति एवं मनसि वर्तमानमनोरथसहस्रानुगुणं वासनानुमीयते सा च पूर्वानुभवमनुमापयति इह जन्मनि तादृगनुभवाभावाद्देहान्तरेण तदनुभव इति पूर्वजन्मसिद्धिः जन्मतारतम्यस्य निर्हेतुकत्वायोगाद्विविधादृष्टसिद्धिरिति मनसः कर्मणः पूर्वजन्मनश्चोपादानं कृतं भवति आयान्ति वासनोन्मेषादायान्ति बुद्धिस्था भवन्ति यान्ति वासनाभिभवान्न बुद्धिस्था भवन्ति यदिकश्चिदमना भवेत्तर्ह्ययं न स्यान्नत्वेतदस्तीत्याह। सर्वं इति। अतः सर्वेषां समनस्कत्वान्मनसि च सर्वार्थानां क्रमाद्वासनानुसारेण प्रवेशान्नात्यन्तानुभूतोऽर्थः कस्यापि कश्चिदस्तीत्यर्थः नन्विह जन्मनि जन्मान्तरे वानुभूतार्थ एव मनोरथ विषय इत्युक्तं यद्येवं तर्हि मुक्तानन्दोऽपि मुमुक्षोः कदाचिन्मनोरथविषयो भवेदिति सोऽपि पूर्वमनुभूत एव स्यादस्त्विति चेन्न पुनर्जन्मानुपपत्तेः "न च पुनरावर्तत" इति श्रुतेः "अनावृत्तिः शब्दात्" इत्यादिसूत्रस्य च विरोधप्रसङ्गान्मैवं प्रकृतिपरिणामात्मकदेहानुभाव्यानामेवाननुभूतानां मनोरथविषयत्वासंभवाभिप्रायत्वात्तदुक्तेः अस्तु वा मुक्तानन्दोऽपि मनोरथविषयस्तथापि मनोरथविषयो भवन्मुक्तानन्दः "सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा" इत्यादिवाक्यावगतनिरतिशयानन्दरूपत्वेन परोक्षमेव मनोरथविषयो भवेदनुभवोऽपि पूर्वं शब्दजन्यप्रमितिविषयत्वेन परोक्षमेव स्यादत एव हि यद्रूपं यादृगात्मनः यथायथानुमन्तव्यं देशकालक्रियाश्रयमित्युक्तं यादृग्रूपेण पूर्वमनुभूतं तादृग्रूपेणैव मनोरथविषयो भवतीति हि तदर्थः ततश्चेदानीं मनोरथविषयस्यापि मुक्तानन्दस्य सोऽश्नुते इत्यादिमुक्तानन्दप्रकरणावगतप्रकारवैशिष्ट्येन परोक्षमेव मनोरथविषयत्वात्तस्य पूर्वानुभवोऽपि तादृश एव कल्प्यत इत्यपरोक्षमनुभूयमान एव मुक्तानन्दः पुनर्भवाभावहेतुरिति न श्रुतिसूत्रादिविरोधः न च देशकालादयोऽप्यपरोक्षं न मनोरथविषया इति तेषामपि परोक्षएव पूर्वानुभव इति न कस्यापि साक्षात् पूर्वानुभवोऽनुमीयत इति वाच्यम् अपरोक्षं प्राकृतदेहानुभवयोग्यानामपि परोक्षानुभवकल्पनायां मानाभावात् कल्पकस्य परोक्षविषयमनोरथस्य परोक्षमपरोक्षं वानुभूतवस्तु विषयकत्वदर्शनादिति ॥ ६८ ॥

इदमेवाभिप्रेत्याह । सत्त्वैकनिष्ठ इति । सत्त्वैकप्रचुरे मनसि भगवत्पार्श्ववर्त्तिनि भगवद्भजनोपक्रमं कुर्वाणे सति तम… चन्द्रमस्युदिते सति तमस्तिमिरमिव उपरज्यावभासते … वद्भूत्वावभासते ज्ञानशबलमवभासते चन्द्रोदये हि … य इव न निशेषतमःक्षयः अपि तु ज्योत्स्नामिश्रं तमः एवं … वद्भजनोपक्रमदशायां ज्ञानमज्ञानशबलं वर्तते शास्त्रजन्य… परोक्षरूपत्वाद्ब्रह्मस्वरूपवदानन्दादयः परोक्षमेव विषया … त्यर्थः देहात्मभ्रमस्य देहसम्बन्धाधीनसुखदुःखादेश्चापरो… क्षं साक्षादनुभवविषया एवेति भावः ॥ ६९ ॥

किंवक्तव्यं संसारदशायां ब्रह्मस्वरूपतदानन्दादिकमपरोक्षं … भासत इति यतः स्वात्मस्वरूपमेवापरोक्षं नावभासत इति … तुकमाह । अहमिति । अनादिमान् जीवः अक्षाणीन्द्रि… शब्दादयः गुणाः सत्त्वादिः एतैर्यावद्गूढः आवृतः व्यूह इति … याङ्कुशादयो व्यूहः संगोयस्येत्यर्थः तावदहंममेति भावो … धीयते व्यवधिवदाचर्यते स्वरूपतिरोधायकोऽहं ममाभिमानः … निवर्तते किन्त्वनुवर्तत इत्यर्थः ॥ ७० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कथमिव स्वप्नकाले श्वसन्तं प्राणवृत्तिमन्तं पर्यङ्के … दृष्टिविषयं देहमुत्सृज्य पुरुषो भोक्ता तादृशेन शयने … नशरीरसदृशेन इतरेण पतितदेहविलक्षणदेहेन वात्मनि … हितं सन्निहितं कर्म भुङ्क्ते एतदुक्तं भवति स्थूलदेहस्य … शयनत्वात्स्वप्नभोगनिमित्तकर्मोपार्जितेन देहेन लिङ्गेन एव … भोक्तृत्वमत्राप्येवमिति आत्मन्याहितमित्यनेन द्वितीयः … प्रत्युक्त इति ज्ञायते ॥ ६१ ॥

ननु साक्षात्कर्तृत्वं भोक्तृत्वं मनसो लिङ्गस्योतोभय… वेति सशंयानिरासार्थमाह। ममेति। यः पुमान्ममेदं सुखसा… मनसा सङ्कल्प्य कृष्णमित्रस्याहिताग्नेः पुत्रो ऽसावहं … मित्रो याज्ञिकः कथं स्यामिति वाचा वदन् यद्यत्कर्म कर्तुं … यादुपादत्ते स एव पुमांस्तद्राद्धं सिद्धं कर्म भुङ्क्ते … शेषेण कर्मणा पुनर्भवः पुनरुत्पत्तिर्मर्त्यलोक इति शेषः … रसाक्षात्कर्ता भोक्ता च पुरुष एव तत्र मनसोऽन्तरङ्ग… भावः अनेन जन्मान्तरेऽपि कर्मणः फलदातृत्वप्रतीतेः … परलोक इति दर्शितम् ॥ ६२ ॥

ननु कर्मणो देहाद्यारम्भकत्वं कथं सञ्जाघटीति … नन्तरक्षण एव नष्टत्वादत एव मनसोऽप्यन्तरङ्गत्वाभि… न शक्यं कृष्णचापमुक्तशरवेगसंस्कारवत्कर्मणोऽपि कार्य… क्षमत्वोपपत्तिरन्तरङ्गत्वं मनसोऽन्वयव्यतिरेकसिद्धमि… त्याह । यथेति । उभयेषां ज्ञानकर्मेन्द्रियाणामुभयविधवृत्ति… क्षमन्तःकरणापरपर्यायमस्तीत्यनुमीयते तस्मिन् सति ज्ञानं … चोत्पद्यते असति आलोकादिसाधनसामग्र्यां सत्यामपि … क्षन्नियामकमन्तःकरणं किंचिदस्तीति ज्ञायते यथा तथा … णवृत्तिविषयेषु मनोव्यापारैः प्राग्देहजातं कर्मदृशं शुक्रर… न्यतममिति लक्ष्यतेऽनुमीयते देहवत एवेदृशज्ञानसम्भवा… देहाद्यारम्भकत्वं च युक्तमिति बोद्धव्यम् ॥ ६३ ॥

(१) कथंसंजाघटीतीति पूर्वेणान्वयः

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किञ्च प्राणिनां प्रवृत्तिवैचित्र्यं दृश्यते तदपि वासनावैचित्र्यं विना नच घटत इति भावेनाह । नानुभूतमिति । यद्रूपं यस्य शुक्लादिरूपं तद्रूपं यादृग्यज्ञातिलक्षणं यस्य तद्यादृक् यद्वस्तु स्वात्मनि क्वचित् कस्मिंश्चिद्देशे कदाचित्कालेऽनेनेह-देहेनादृष्टमश्रुतं वानुभूतमननुभूतं वास्मिन मनस्युपलभ्यते तेनोपलम्भेन पूर्वस्मिन् जन्मनि दृष्टं श्रुतमनुभूतमित्युपलभ्येत बुध्येत नत्वन्यथा अनेन देहेन जाग्रदवस्थायामदृष्टमश्रुतमननुभूतं नोपलभ्यते स्वप्ने किन्तु स्वप्ने दृष्टादिकमेव यथा तथा पूर्वस्मिन् जन्मनि दृष्टादिकमनेन देहेन पश्यतीति वा ॥ ६४ ॥

ननु कर्मणो देहाद्यारम्भकत्वं कथमित्यस्य चोद्यस्य परिहारः कथं स्फुटेत इति तत्राह । तेनेति । यतः पूर्वकर्मानुसारेण दर्शनादिकं तेन तदनुसारेणास्य लिङ्गिनो देहसम्भवः तादृशः पूर्वानुस्मृत इति अग्रहस्वाप्ति कुरु कुत इत्यत उक्तमेवार्थं स्मारयति । अननुभूतार्थमिति । यतः पूर्वस्मिन् जन्मन्यननुभूतो योऽर्थस्त मनः स्प्रष्टुं नार्हति इत्यन्वयः ॥ ६५ ॥

ननु देहवन्मनसोऽप्यनेकत्वे कथमेतदुक्तं घटत इत्याशङ्क्यामोचं लिङ्गशरीरवद्वाह्यान्तःकरणमेकमेवेत्यभिप्रेत्याह । मन इति । मनसोऽनेकत्वे पूर्वानुभूतहितादिज्ञापनमनुपपन्नं स्यादित्यर्थः "रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ हितादिषु" इति यादवः स्वानुभवसिद्धः सर्वानुभूतार्थोऽपि कर्मणो देहाद्यारम्भकत्वं युक्त मनसा संयुक्तत्वादित्यतोवाह । मन [१] इति । यथा ते तव मनो भविष्यतस्तथा न भविष्यतः स्ववस्तुनो विषयं भद्रं शंसति ज्ञापयति तथा मनुष्यस्य मनः पूर्वरूपाणि सात्त्विकानि कर्माणि शंसति यथा न भविष्यतो वर्तमानस्य तव मनः पूर्वरूपाणि शंसत्येवं भविष्यतोऽपि तावद्भद्रं ज्ञापयतीति वा ॥ ६६ ॥

ननु यद्वादि पूर्वानुभूतमेव मनःस्प्रष्टुमर्हति नाननुभूतमिति । तदयुक्तं यतः स्वप्नादौ स्वशिरश्छेदनादिकमत्यन्तादृष्टचरं दृश्यते तत्राह । अदृष्टमिति । इह जन्मन्यदृष्टमश्रुतं वा क्वचिन्मनसि दृश्यते तद्यथा घटते तथानुमन्तव्यं घटनीयं कथमत्राह । देशेति । देशकालक्रिया आश्रयो यस्य दर्शनस्य तत्तथा देशान्तरे शिरः कालान्तरे छेदनक्रियां दृष्ट्वा स्वप्ने तयोः सामानाधिकरण्यं भ्रान्त्या पश्यतीति अथवा नानुभूतमित्यनेन यद्वादि तदनेनानुमीयेत अत्र जन्मनि यद्दृष्टादिकं दृश्यते मनसि तद्यथा पूर्वं जन्मनि दृष्टं श्रुतमनुभूतं तथानुमानं कर्तव्यं जाग्रति वाह्यालीप्रदेशे पूर्वाह्णे चरन्तमश्वं दृष्ट्वा स्वप्ने यथा तदवस्थं पश्यति तथा कर्माण्यपि तथार्यावर्ते द्वापरे सम्भूतोऽर्जुनः पश्चात्तामुपेत्य केरलदेशे कलिकाले जातो यदत्रादृष्टादिकं पश्यति करोति वा (२] तदार्यावर्ते द्वापरेऽनुष्ठितमिति ज्ञातव्यं दृष्टश्रुतदर्शनादिमात्र एव दृष्टान्त इति न विरोधः ॥ ६७ ॥

ननु यदि पूर्वदृष्टादिकमेवेदानीं दृश्यते श्रूयते इति मतं तर्हि जन्मनामनन्तत्वादहमहमिकया युगपद्दर्शनादिकं प्रसज्येत तदयुक्तं विरोधादत्राह । सर्व इति । ये सर्वे शब्दादयो विषया बहुजन्मस्विन्द्रियद्वारेण मनसि प्रविष्टा वासनारूपेण स्थितास्ते सर्वेन्द्रियगोचरा विषयाः सुमनसो देवस्य हरेरिच्छयाक्रमानुरोधेन क्रममनुसृत्य मनसि जीवे वशेन आयान्ति जवाद्वेगात् यान्ति च नदीप्रवाहवदित्यन्वयः इन्द्रियद्वारेण मनसि प्रविष्टा इन्द्रियगोचराः शब्दादयः क्रमशो जीवे वशेनः आयान्ति पुनः सुप्तु मनसो वेगाद्यान्ति च सर्वपदार्थानामिह जन्मनि जन्मान्तरे वा मनसीन्द्रियद्वारेण प्रवेशात्संस्काररूपेण स्थिरत्वादिहादृष्टस्य वाश्रुतस्य वानुभवो युज्यते इत्यतोवाह । सर्व इति । दवीयसि देशे काले चानुभूतानामधुनानुभवः कथं घटत इत्यतोवाह । सत्त्व इति । अचिन्त्यानन्तेश्वरशक्तिः प्रयोजकेति संतोष्टव्यम् ॥ ६८ ॥

जीवस्य मनआदेः स्वरूपत्वेऽनेकजन्मानुभूतपदार्थसंस्काराणामेकत्वेन तदनुभवेनैव कालगमनात्कदाचिन्मुक्तानुदयेन यावज्जीवं संसार एव स्यात् अस्वरूपत्वे लिङ्गशरीरादेः स्थूलदेहनाश एव नाशसम्भवेन पूर्वदृष्टादिपदार्थदर्शनाद्यनुपपत्तिरिति तत्राह । सत्त्वैकनिष्ठ इति । सत्त्वो जीवस्तदेकनिष्ठे तद्रूपे भगवत्पार्श्ववर्तिनि भगवद्विषये मनसि इदं लिङ्गशरीरादिकमुपरज्य स्वेच्छया सङ्गमय्यावभासते भिन्नतयेतिशेषः कथमिव चन्द्रमसि तमो राहुरिव मेघान्धकारो वा लिङ्गशरीरादेरस्वरूपत्वेऽपि भगवदपरोक्षज्ञानं विना स्थूलदेहनाश एव नाशाभावाच्चिरायुष्ट्वेन स्थितिसम्भवात्पूर्वकर्मनिमित्तसुखदुःखानुभवो घटत इति भावः यद्वा सत्त्वगुणैकत्वनिष्ठात्मकं यस्मिन्सत्त्वैकनिष्ठं तस्मिन्भगवत्पार्श्ववर्तिनीत्यनेन सत्त्वगुणात्मकं लक्षयति अन्यथा तत्र स्यादेवंविधमनसि इदं दुःखादिकमुपरज्यावभासते प्रतीयते निदर्शनं व्याख्यातार्थम् ॥ ६९ ॥

नन्वेवं तर्हि कियन्तं कालमिदं दुःखादिकमवभासते इति तत्राह । नाहमिति । यावत्पुरुषेऽनादिमानयमहंममेति भावो न व्यवधीयते तिरोहितो नष्टो न भवति तावद्बुद्धिमनोऽक्षार्थगुणव्यूहः संसारोऽपि न तिरोहितो भवतीत्यर्थः "अनादिर्मानिनिर्णयव्यूहः संसारो" "बुद्धिमनोऽक्षार्थगुणव्यूहविशेषणं वा अनेन संसारस्य मिथ्यात्वं निराचष्ट अक्षमिन्द्रियं श्रोत" इत्यभिधानम् ॥ ७० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नानुभूतमिति युग्मकम् ॥ ६४—७३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

लिङ्गदेहेनैव यद्यपि कर्तृत्वभोक्तृत्वे भवतस्तदपि ते स्थूलदेहं विना न सिद्ध्यत इति चेत् सत्यं स तु स्थूलदेहो यः कश्चन कर्मणैवोपस्थाप्यते इति सदृष्टान्तमाह । शयानमिमं जाग्रद्देहं श्वसन्तं जीवन्तमुत्सृज्य तदभिमानं त्यक्त्वा आत्मनि मनसि संस्काररूपेणाहितं कर्म यथा भुङ्क्ते तादृशेन शयानदेहसदृशेन कर्मोपस्थापितेन स्थूलदेहेन अन्येन वा पश्वादिदेहेन तथा लोकान्तरेऽपीति भावः ॥ ६१ ॥

---

[१] यथा मन एव पूर्वरूपाणि शरीराणि शंसति ज्ञापयति तथैव भविष्यतः स्वर्गादिकं गच्छतः नभविष्यतः वर्तमानस्य च ते तव भद्रं पूर्वोत्तरकालगतं पुण्यरूपमदृष्टं मन एव शंसति अस्तीति ज्ञापयति कथमन्यथा तवेदानीं साम्राज्याधिपत्यमुत्तरत्र स्वर्गप्राप्तिः स्यादित्याशयः ॥

[२]स्वस्वप्न इति पाठः ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्थूलदेहे केवलमभिमानमात्रं तेन च यत् सहायकं जीवस्य तद्दर्शयति । ममैते यागाः स्वर्गफला इति इदमहं कर्म करोमीति ब्रुवन् मनसा यद्यद्देहं स्थूलं गृह्णीयादभिमानविषयीकुर्य्यात् ततो देहाद्राद्धं सिद्धं कर्म्मैव सलिङ्गो जीवो गृह्णीयात् न तु तं स्थूलं देहं प्रयोजनाभावादेवेति भावः ततश्च तेन कर्म्मणैवमहङ्कारगृहीतेन पुनर्भवो भवति अन्यथा जन्मानुपपत्तेः ॥ ६२ ॥

यत् पृष्टं कर्म्मणस्तत् काल एव नष्टत्वान्नामुत्र भोग इति तत्राह । यथेति । उभयैर्ज्ञानकर्म्मरूपैरिन्द्रियाणामीहितैर्युगपदनुत्थितैश्चित्तमनुमीयते सत्यपि सर्व्वेन्द्रियविषयसम्बन्धे युगपज्ज्ञानानुत्पत्तेः तदुक्तमक्षपादेन "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्"इति । तस्माद्यदा येनेन्द्रियेण मनसो योगस्तदा तस्येन्द्रियस्यैव विषयज्ञानमिति एवमेव चित्तस्य सर्व्वाभिर्वृत्तिभिर्युगपदनुद्भूताभिः पूर्व्वदेहजं कर्म्म लक्ष्यते । येन येन कर्म्मणा यदा यदा या या चित्तवृत्तिर्युज्यते सा सैव भद्रा अभद्रा वाप्युद्भवतीत्यर्थः । तेन कर्म्मणः समनन्तरक्षण एवोपरतत्वेऽपि तत्संस्कारस्तद्रूपास्तिष्ठेदेवेति सिद्धान्तो दर्शितः ॥ ६३ ॥

ननु स्थूलदेहनाशेऽपि लिङ्गदेहो यन्न नश्यतीत्येतत् कथं प्रतीमस्तत्राह । नानुभूतमिति द्वाभ्याम् । अनेन वर्त्तमानेन देहेन क्वचिच्च कदापि अननुभूतमनुपभुक्तमदृष्टश्चाश्रुतश्च पूर्व्वदेहगतं वस्तु स्वप्नमनोरथादौ उपलभ्येत तच्च यद्रूपं यादृक् यत् प्रकारकञ्च आत्मनि मनसि उपलभ्येत तद्रूपं तादृगेव पूर्व्वदेहसम्भवं लिङ्गिनोऽस्य जीवस्य अद्धतस्त्व निश्चयेन मन्यस्व हे राजन् ! नह्यननुभूतोऽर्थो मनःस्प्रष्टुं मनसि स्फुरितुमर्हति तस्माद्बाल्ये दृष्टश्रुतं वस्तु यथा वार्द्धके स्फुरति तथैव पूर्वपूर्व्वस्थूलदेहगतमेतद्देहस्थे मनसि स्फुरति चेत्तदेवेदं मनो नान्यदिति जानीयादिति भावः ॥ ६४ ॥ ६५ ॥

किञ्च मनोवृत्त्यैव पूर्वापराण्यशुभानि शुभानि च शरीराणि ज्ञायन्त इत्याह । मन एव कर्त्तृ उग्रत्वशान्तत्वादिभिः कार्पण्यौदार्यादिभिश्च मनुष्यस्य पूर्वरूपाणि पूर्व्वपूर्व्वशरीराणि पूर्व्वभवेऽयमेवासीदिति संशति कथयति भविष्यतश्च तस्य भावीनि शरीराणि एवमेवायं भविष्यतीति तथा ज्ञानवैराग्यादिदृष्ट्या पूर्व्वमप्यस्य शमदमाद्यासीत् न भविष्यत इति पुनर्न जनिस्यमाणस्यास्य मुक्तिर्भविष्यतीति मन एव ज्ञापयत्यत एकमेव मनोमयं लिङ्गशरीरं न पुनःपुनर्जातमित्यर्थः भद्रंत इत्येतत् त्वं बुद्ध्यस्वेति कृपया आशीर्वादः ॥ ६६ ॥

ननु कथं कदाचिद्दर्शनानर्हमपि स्वप्ने प्रतीयते यथा पर्व्वताग्रे समुद्रः दिवानक्षत्राणि स्वशिरश्छेद इत्यादीन्यत आह । अदृष्टं दर्शनानर्हमश्रुतं श्रवणानर्हं यथा येन प्रकारेण दृश्यते तथा तेनैव प्रकारेण देशकालक्रियाश्रयं तत्तदनुमन्तव्यं तत्र अन्यदेशाश्रयः समुद्रः पर्व्वताग्रे निशाश्रयं नक्षत्रादिकं दिवा अभ्यङ्गादिक्रियाश्रयं शिरः खलु छेदनक्रियायां धातुवैषम्यप्रयुक्तया स्वप्नगतया भ्रान्त्या प्रतीतम् ॥ ६७ ॥

एकेनैव लिङ्गदेहेन परः सहस्रान् स्थूलदेहान् प्रविश्य भेदेन एक एव यः कोऽपि जीवः सर्व्वानेव विषयभोगान् ... इत्याह । सर्व्वे इति । समनसः सलिङ्गदेहाः ॥ ६८ ॥

तदेवं सर्व्वैरपि सर्व्वेऽर्थाः क्रमेण दृश्यन्त इत्युक्तम् । युगपदपि सर्व्वदर्शनं कदाचिद्भवतीत्याह । सत्त्वे शुद्धसत्त्वे ... भूतावेव एका निष्ठा नितरां स्थितिर्यस्य तथाभूते मनसि ... पार्श्ववर्त्तिनि सति इदं विश्वमुपरज्य संयोगमिव प्राप्य ... भगवान् यथा विश्वं पश्यति तथा तदिच्छावशात्तद्भक्तः पश्यति यथा व्रजेश्वरी मृद्भक्षणलीलायामित्यर्थः । प्रमेयस्यापि कदाचित् प्रतीतौ दृष्टान्तः । चन्द्रमसि उपरञ्जकः राहुरिव ॥ ६९ ॥

तदेवं स्थूलदेहनाशेऽपि लिङ्गदेहस्यानाशादन्यः कर्त्ता भोक्तेति दोषो नास्तीत्युक्तम् । तत्रैवं शङ्कते । ननु लिङ्गं स्थूलदेहद्वारेणैव कर्त्तृत्वभोक्तृत्वे दृश्येते न तु केवलम् ... कदाचित् स्थूलदेहाभावे जीवस्य कर्त्तृत्वाद्यभावान्मुक्तिः ... ज्ञेतेति तत्राह । नाहमिति । अहं ममेति भावः स्थूलदेहसम्बन्धो ... पुरुषे जीवे न व्यवधीयते न विच्छिन्नो भवति किं ... बुद्धिमनोऽन्तार्थरूपो गुणव्यूहो गुणपरिणामो लिङ्गं यावत् ... नन्वयं कदारभ्य प्रवृत्तस्तत्राह । अनादिमान् अविद्या ... कालः ॥ ७० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्तार्थं स्वप्नदृष्टान्तेन स्पष्टयति । शयानमिति । यथेमं देहं शयानं श्वसन्तं सप्राणमेवोत्सृज्य विस्मृत्य ... मनसि आहितं तात्कालिककर्मफलदेनेश्वरेण प्रकाशितं ... कर्मफलं तादृशेन शयानदेहसदृशेनान्येन वा पश्वादिदेहेन ... र्मानुसारीश्वरोपस्थापितेन भुङ्क्ते तद्वल्लोकान्तरेऽपीत्यर्थः ॥ ...

शिष्यबुद्धिवैचित्र्यार्थं देहदेहिपदार्थभेदं दर्शयन् उक्तं देहादिप्राप्तिक्रमं दर्शयति । ममेति । अहमिति ब्रुवन् ... जीवः मनसा लिङ्गेन यद्यत् अहं मम विषयं शरीरं ... गृह्णीयात् येन शरीरादिना भूयो राद्धं सिद्धं कर्म गृह्णाति ... येन कर्मणा निमित्तेन पुनर्भवो भूयो जन्मेति अनेन देहेन ... स्मा मन एव कर्ता इत्यादयो भ्रान्तिविलसिता वादा निराकृताः ॥ ६२ ॥

यदुक्तं कर्मपरोक्षं सद्य प्रकाशतेऽतोऽमुत्र कथं भोग ... तत्राह । यथेति । यत्र चित्तं लग्नं भवति तस्मिन् विषये तस्येन्द्रियस्येहितं चेष्टा भवति एवमिन्द्रियवृत्तिभिश्चित्तमनुमीयते ... आसन्नमपीष्टमपि हित्वा अनासन्नेऽपि अनिष्टेऽपि यदा चित्तं स्यात्तादृशीभिः प्राग्देहजं कर्म लक्ष्यते ॥ ६३ ॥

ननु स्थूलदेहे लिङ्गदेहस्तत्र देही कर्तेति कुतो ... इति शङ्कां निराकर्तुं स्थूलदेहे गृहवदायतनभूते ... लिङ्गदेहं तस्मिन्नपि गृहवदायतनभूतं चेतनं चाह । नानुभूतमिति ... अनेन देहेन क्वचिददृष्टमश्रुतम् नच अनुभूतं स्वर्गादौ ... एवं भूतमपि वस्तु कदाचित्स्वप्नमनोरथादौ आत्मनि ... यद्रूपं पूर्वदेहे अनुभूतं तादृगेवोपलभ्यते ॥ ६४ ॥

तेनापूर्वपदार्थोपलम्भेन अस्य लिङ्गिनः लिङ्गं मनःप्रधानं शरीरं गृहवदस्यास्तीति लिङ्गी जीवस्तस्य तादृशं पूर्व ...

सुप्तिमूर्छोपतापेषु प्राणायनविघाततः ।
नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि ॥ ७१ ॥
गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं तदा ।
लिङ्गं न दृश्यते यूनः कुह्वां चन्द्रमसो यथा ॥ ७२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

...सम्भवहेतुभूतं देहसम्भवं देहाः सम्भवन्त्यस्मादिति स्थूलदेह-...कारणं मनः श्रद्धत्स्व निश्चयेन मन्यस्व अननुभूतोऽर्थो मनःस्प्रष्टुं ...र्हति अनेकस्थूलदेहधारणे कारणभूतं मनस्तत्प्रवर्तको जीवः ...र्तव्यः ॥ ६५ ॥

किञ्च मनुष्यस्य मनःसात्त्विकादिवृत्तिभिः सात्त्विकादीनि ...र्वरूपाणि शंसति तथा भविष्यतो न भविष्यतश्च पदार्थ-...योत्साहानुत्साहादिरूपाभिर्वृत्तिभिः सिद्धिमसिद्धिं च शंसति ...तव मनस्तु भद्रं कल्याणावहमित्यर्थः ॥ ६६ ॥

नन्वग्निशिखोपरि यवाङ्कुरं निशीथे सूर्यमण्डलं भूचरस्य ...गमनं च अदृष्टमश्रुतं च मनसि क्वचित्स्वप्ने दृश्यतेऽतोऽननु-...भूतार्थो न मनः स्प्रष्टुमर्हतीति कथं घटेतेत्यत्राह । अदृष्टमिति । ...दृष्टमश्रुतं च यन्मनसि दृश्यते तद्देशकालक्रियाः आश्रयो ...निमित्तं यत्तत्तादृशं भवति तथाहि देशान्तरेऽनुभूतं यवाङ्कुरं देशा-...न्तरेऽनुभूतायां अग्निशिखाया उपरि मनसि स्वप्नवशात् दृश्यते ...वं सूर्यमण्डलमपि दिवानुभूतं निशीथे दृश्यते एवं खेचराणां ...नुभूतं गमनं भूचरस्य दृश्यते अतो यथा तथानुमन्त-...व्यम् ॥ ६७ ॥

किं बहुना सर्वे इन्द्रियगोचरा अनुभूता एव देवमनु-...ष्यपश्वादयः पदार्था वर्गशः समुदायभावेन क्रमानुरोधेन एकै-...कशः मनसि आयान्ति संयुज्यन्ते यान्ति वियुज्यन्ते च यतः ...सर्वे समनस एव जनाः सर्वे इन्द्रियगोचराः शब्दादयः देवा-...दिषु आयान्ति यान्ति वेति योजना ॥ ६८ ॥

भगवद्ध्यानभाविते मनसि तु सर्वं दृश्यते इत्याह । सत्त्वै-...कनिष्ठे सत्त्वगुणप्रचुरे भगवत्पार्श्ववर्तिनि तद्ध्यानपरे तमः राहु ...श्चन्द्रमसीव इदं विश्वमुपरज्यावभासते विषयतया प्रती-...यते ॥ ६९ ॥

भगवद्ध्यानपरे मनसि विश्वं दृश्यते तन्मनो मुक्तिहेतुरित्य-...र्थोक्तमथ भगवत्पराङ्मुखस्य मनसः देहगेहादावहंममादिवृ-...त्तिमन्मन एव संसारहेतुरिति च दर्शयन् मनोनिमित्तकं संसा-...रनिवृत्तये हरिं भजेत्याह । नाहमिति द्वाभ्यां । अहमिति देहे ...आत्मत्वबुद्धिरूपो भावः ममेति गृहादौ मदीयत्वबुद्धिरूपो ...भावः पुरुषे न व्यवधीयते न वियुक्तो भवति यावत्तावत् ...मनादिमान् अनादितः प्रवृत्तः बुद्ध्यादीनां व्यूहः समूहो यस्मिन् ...संसारः जन्ममरणप्रवाहोऽप्यस्ति ॥ ७० ॥

---

भाषाटीका ।

श्री नारदजी बोले मनुष्य जिस शरीर से कर्म करता है तिसी लिङ्गशरीर से मन के द्वारा वही पुरुष स्वयं भोगता है दूसरा कोई बीच में व्यवधान नहीं होता है जैसे इस लोक मे प्राणी निश्वास लेते हुये पडे इस शरीर को छोडके जाने पर अपने आत्मा में रखे हुये कर्म फल कोस्वप्न देह से अथवा दूसरे देह से मरणानन्तर भोगता है तैसे ही परलोक में ॥ ६१ ॥

मन हीं से मेरे ये सब हैं मैं इनका मालिक हूं ऐसा कहकर उसी कर्म फल को ग्रहण करलेता है तिसी से फिर जन्मादिक होते हैं ॥ ६२ ॥

जैसे ज्ञान कर्म दोनों इन्द्रियों के चेष्टा से चित्त का भान होता है तैसे ही चित्त की अपूर्व वृत्तियों से पूर्वजन्म का कर्म भी जाना जाता है ॥ ६३ ॥

इस देह से जिसका अनुभव नहीं किया है न देखा है न सुना है तिस पदार्थ की कभी भी प्राप्ति नहीं होती है जो जिस प्रकार का पदार्थ हो सो तैसा मालूम देता है ॥ ६४ ॥

तिस हेतु से हे राजन् ! इस लिङ्ग शरीर वाले जीव का पूर्व जन्मथा ऐसी श्रद्धा करो क्यों कि विना जाना पदार्थ मन में कभी नहीं आसक्ता है ॥ ६५ ॥

हे राजन् ! तुमारा कल्याण हो मनुष्य का मन ही शान्ति उग्र आदि भावों से मनुष्य के पूर्व जन्म के रूपों को जनाता है तथा होने वाले को जनाता है तथा मोक्ष होने वाले रूपों को जानता है ॥ ६६ ॥

विना देखी विना सुनी बातें भी कभी स्वप्नादिक में मन में आती हैं जैसी दीखे तैसे देशकाल के व्यतिक्रम से जानी जाती हैं ऐसा जाननाचाहिये जैसे नीचे का समुद्र पर्वत पर दीख जाता है ॥ ६७ ॥

इन्द्रियों के विषय में आने वाले सब पदार्थ क्रिया क्रम के अनुरोध से बहुत से आते जाते रहते हैं तिसीसे नाना प्रकार के मन वाले जीव नाना योनि को प्राप्त होते हैं॥ ६८ ॥

जब जिस का मन सत्त्वगुण में स्थित होता है तब भगवत्संनिकट में पहुंचता है तब सब ही वस्तु का ज्ञान हो जाता है जैसे चन्द्रमा के समीपमात्र राहु के होने से चन्द्रमा में कालापन आजाता है ॥ ६९ ॥

जब पर्यन्त अनादि काल का बना हुआ बुद्धि मन इन्द्रिय समुदायरूप गुणसमूह विद्यमान रहता है तबतक पुरुष का अहङ्कार ममकार नहीं नष्ट होता है ॥ ७० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वापादावहङ्काराद्यभावात्तद्विच्छेदमाशङ्क्याह । द्वाभ्याम् । सुप्त्यादिषु उपताप इष्टवियोगादिदुःखम् । तेष्वहमिति ज्ञानमहङ्कारो नेहते न प्रकाशते प्राणायनानामिन्द्रियाणां विघातात् । इन्द्रियैरिदं कारास्पदवस्तुग्रहणे ह्यहङ्कारः स्फुरति नान्यथेत्यर्थः ॥ ७१ ॥

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ७३ ॥
एवं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तृतम् ।
एष चेतनया युक्तो जीव इत्यभिधीयते ॥ ७४ ॥
अनेन पुरुषो देहानुपादत्ते विमुञ्चति ।
हर्षं शोकं भयं दुःखं सुखं चानेन विन्दति ॥ ७५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अपौष्कल्यादसम्पूर्णत्वात्प्राणायनानामिति शेषः । यूनस्तरुणस्य यदेकादशविधमेकादशेन्द्रियैः स्फुटं लिङ्गमहङ्कारणं तन्न दृश्यते गर्भादाविति सतोऽप्यनभिव्यक्तौ दृष्टान्तः कुहाममावास्यायां चन्द्रमसो लिङ्गं रूपमिव ॥ ७२ ॥

तस्मादहङ्कारास्पदस्य स्थूलदेहस्याविच्छेदाद्वस्तुभूतार्थाभावेऽपि संसृतिर्निवृत्तिर्नास्तीत्याह । अर्थे हीति ॥ ७३ ॥

यावल्लिङ्गं स्थूलदेहाविच्छेदात्संसारानिवृत्तिरित्येतत्प्रपञ्चयति । एवमिति सार्धैस्त्रिभिः । पञ्चविधं पञ्चतन्मात्रात्मकं त्रिवृत्त्रिगुणम् । षोडशविकारात्मना विस्तृतम् ॥ ७४ ॥ ७५ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किमुत संसारिणो जीवस्य बुद्ध्यादिभ्यो विलक्षणं स्वस्वरूपमपरोक्षं नावभासत. इति यतोऽनहमर्थोऽप्यज्ञानादहंबुद्धिविषयत्वेनावभासमानो देहः सुषुप्त्यादौ नावभासत इत्याह । सुप्तीति । उपतापशब्देनातिशयितदुःखसम्भेदो विवक्षितः. मृत्युर्मरणं प्रज्वारो ज्वरः उपलक्षणमेतत् ज्वरादिमूले मरणे चेति यावत् एतास्ववस्थासु प्राणायनस्य प्राणाश्रयस्य जीवस्य विघाततः ज्ञानस्यातिसङ्कोचात् सहि ज्ञानसंकोचापरपर्यायस्तदानीं विघातः संभवति तेनाहमिति ज्ञानं नेहते न स्फुरति देहेऽहंबुद्धिर्नास्तीति देहप्रतिपत्त्यभावादित्यर्थः ॥ ७१ ॥

ननु सुषुप्त्यादावपि ज्ञानकर्मोभयेन्द्रियगुणस्य मनसश्च सद्भावादहमिति ज्ञानं कुतो नेहते तत्राह । गर्भ इति । यूनः तरुणस्य स्फुटं यदेकादशविधं लिङ्गं कर्मेन्द्रियज्ञानेन्द्रियमनआत्मकं लिङ्गं व्यापारहेतुभूतं तद्गर्भे बाल्ये अपिशब्दात् सुषुप्त्यादौ चापौष्कल्यादपुष्कलशक्तित्वान्न दृश्यते नाभिव्यक्तं नष्टप्रायं भवतीत्यर्थः सतोऽप्यनभिव्यक्तौ दृष्टान्तः कुहाममावास्यायां चन्द्रमसो लिङ्गं रूपमिवेति ॥ ७२ ॥

ननु यदि गर्भादौ लिङ्गमेकादशविधमनभिव्यक्तं तर्हि तद्व्यापाराभावात्संसृतिर्न स्यादित्यत्राह । अर्थेति । अनभिव्यक्तशक्तित्वादिन्द्रियाणां तद्व्यापाराभावादर्थे शब्दादिविषये विद्यमानेऽपि शब्दादिविषयानुभवाभावेऽपि विषयान् ध्यायतः वर्तमानसमीपे भूते लट्शत्रादेशः विषयध्यानप्रयुक्तवासनाविशिष्टस्येत्यर्थः संसृतिस्तद्रागानुवृत्त्या संसारोऽनुवर्तते यथा स्वाप्नपदार्थानां प्रबोधदशायामविद्यमानत्वेऽपि स्वाप्नार्थः ज्ञानसूचितसुखदुःखाद्यनर्थागमस्तद्वदित्यर्थः यथा च श्रुतिः "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिंश्च स्वप्नदर्शने" इति अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्तीत्यादिका ॥ ७३ ॥

एवं प्रश्नस्योत्तरमभिधाय पुनरपि स्मरणाय देहाकारं वदन् देहसम्बन्धस्योत्तरोत्तरदेहसम्बन्धप्रकारान्तरमाह । एवमिति । पञ्चविधं पञ्चप्रकारं पञ्चभूतात्मकं त्रिवृत्स्तरमेकादशेन्द्रियं तदाश्रयप्राणादिपञ्चकोपेतं त्रिवृत्त्रिगुणं लिङ्गशरीरमेवं भूतमिति देहाकार उक्तः जीवस्वरूपमाह इति । चेतनया युक्तः एषजानातीति ज्ञानाश्रयतयाऽस्फुरणेऽवभासमानोऽहमर्थो जीव इत्याभिधीयत इत्यर्थः ॥ ७४ ॥

अनेन लिङ्गेन युक्तः तदेदानीमवभासमानः स कर्मवशात् बहुदेहानुपादत्ते विमुञ्चति तत्कृतहर्षशोकादीन् विन्दति आगामिसुखविषयं ज्ञानं हर्षः आगामिदुःखविषयं ज्ञानं भयं तत्र देहानुपादत्ते जीव अनेनोपादीयमानेनोपादानीयदेहेन हर्षं सुखं च विन्दत्यनभिमते न तु शोकं विमुञ्चन् न तु भयं दुःखञ्च विन्दत्युपात्तदेहत्यागस्यानिष्टत्वात् ॥ ७५ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु यद्यहं ममेति भावतिरोभावः पुरुषार्थस्तर्हि तत्सद्भावात्तदनुदयः कथमत्राह । सुप्तीति । सुप्त्यादौ मिन्द्रियाणामयनस्य प्रवृत्तिलक्षणस्य विघाततो विघातादहमिति ज्ञानं नेहते नाभिव्यज्यते तथापि स्वरूपस्यैव सुखमहमस्वाप्समित्युत्तरकालीनानुभवदर्शनात् परामर्शानुपपत्तेः उपतापः पुत्रादिवियोगदुःखानलः मृत्युरपमृत्युरत्र देवदूतैर्नीतस्य किमर्थमानीतोऽयं न वयं नमितिवचनात् प्रत्यानयनदर्शनानुभवात् साक्षाद्देहवियोगलक्षणमरणोऽहमिति ज्ञानं सन्दहेत् प्रज्वारोऽतिरोगावस्था ।

ननु हन्तैवं तर्हि गर्भादेरुत्क्रान्तस्य तत्कालीन स्वपरामर्शादर्शनादत्राह । गर्भ इति । गर्भे वर्तमानस्य बाले स्थितस्यायूनः बालस्य पुंसोऽपौष्कल्यादनुपचितत्वात् मनसः पञ्च पञ्चज्ञानकर्मभेदेन संख्यातानीन्द्रियाणि मनसैकादशविधमेकादशभ्यो विधीयते उत्पाद्यतेऽहंममेति ज्ञानलक्षणं न दृश्यते न ज्ञायते उक्तहेतोरित्यन्वयः यावच्छरीरस्योपचयस्तावदिन्द्रियाणां पौष्कल्यं तस्मिंस्तेषामिति नियमात्तन्निमित्तमहंममेति ज्ञानं तदभावे इति गर्भादौ तदभाव इत्यर्थः अत्रास्पष्टमात्रे दृष्टान्तमाह लिङ्गं शरीरमस इति । यथामावास्यायां चन्द्रमसो लिङ्गं शरीरं तथेति ॥ ७२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु चन्द्रबिम्बावरणनिवृत्तिवदयं गर्भवासादिलक्षणः संसारोऽपि कालेन स्वतो निवर्तेत इति तत्राह । अर्थे इति । अपि सम्भाविते ज्ञानलक्षणेऽर्थेऽविद्यमाने सत्यस्य जीवस्य संसृतिर्न निवर्तते हि यस्मात्तस्मान्निवर्तकमपेक्षितमित्यन्वयः निवर्तकानुदये निमित्तमाह।ध्यायत इति। शब्दादिविषयध्यानं प्रतिबन्धकमित्यर्थः स्वप्ने प्रवर्तमानस्य पुंसः प्रबोधाद्यभावेऽनर्थागमो यथा न निवर्तेत तथेति विषयध्यानेन संसारपरम्परा स्यादित्यभिप्रायेणानर्थागम इत्युक्तं चन्द्रबिम्बावरणानां मेघादीनां वाय्वादिसद्भाव एव कारणं प्रत्यक्षसिद्धमिति ज्ञातव्यम् ॥ ७३ ॥

देहात्मबुद्धेः संसारस्य तत्त्वेन प्रतीतिः कथमित्याशङ्क्य योन्यग्न्योरिव चिदचितोः संयोगलक्षणसम्पर्कादौपचारिकीयं प्रतीतिरित्यभिप्रेत्य तत्स्वरूपं निरूपयति । एकमिति । एकं लिङ्गं लिङ्गशरीरं षोडशविस्तरं कथं त्रिवृत् प्राणेन्द्रियान्तःकरणभेदेन त्रिविधमनेन षोडशविस्तरत्वमवगतं कथं पञ्चविधं त्रिधाभिन्नया पञ्चविधया पञ्च प्राणाः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणीति पञ्चदशविधं मनसा षोडशविधं तदुक्तं "प्राणेन्द्रियान्तःकरणभेदेन त्रिविधं मतम् । पञ्च पञ्चैव ते सर्वे प्राणा बुद्धीन्द्रियाणि च । कर्मेन्द्रियाणि च तथा तस्मात्पञ्चविधं स्मृतम् । लिङ्गं षोडशकं प्राहुर्मनसा सह तत्पुनः„ । इति एष षोडशविस्तारो देहश्चेतनया युक्तो जीवः प्राणीत्युच्यते इतिशब्दोऽत्र समाप्तिवचनः ॥ ७४ ॥

अनेन लिङ्गशरीरेण स्थूलदेहानुपादत्ते अनेन स्थूलदेहेन हर्षादिकमाप्नोति ॥ ७५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

चेतनया जीवाख्यचिच्छक्तिविशेषेण जीवो व्यावहारिकः ॥ ७४-७६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

ननु लिङ्गदेहसद्भावे एव परःसहस्राणां स्थूलदेहानां नाश उद्भवश्च यथा भवति तथा स्थूलदेहसद्भावेऽपि प्रतिसुषुप्ति सूक्ष्मदेहानां नाशं सुषुप्त्यन्ते चोद्भवश्च कथं न ब्रूमस्तत्राह । सुप्तीति द्वाभ्याम् । उपताप इष्टवियोगादिदुःखं सुप्त्यादिषु प्राणानामयनमिन्द्रियेषु सञ्चलनं तस्य विघातात् विघातजन्यादिन्द्रियाणां स्वस्वव्यापारासामर्थ्यात् अहमिति ज्ञानं अहङ्कारः अहममुक इति ज्ञानं नेहते न प्रकाशते तत्र सुषुप्तौ मन आदि सर्व्वेन्द्रियेषु प्राणसञ्चारणाभावः स्वप्ने बहिर्ज्ञानेन्द्रियेष्वेवेति ज्ञेयम् । मृत्युप्रज्वाराभ्यां जनिते कष्टेऽपि सुप्त्यादिषु यथा पूर्वं विघाताधिक्यं ननु लिङ्गस्याभावः ॥ ७१ ॥

अपौष्कल्यात् असम्पूर्णत्वात् इन्द्रियायतनानामिति शेषः यूनस्तरुणस्य यदेकादशविधमेकादशेन्द्रियैः स्फुटं लिङ्गदेहमहङ्कारकारणं तन्न दृश्यते । सतोऽप्यनभिव्यक्तौ दृष्टान्तः । कुहाममावास्यायां चन्द्रमसो लिङ्गं रूपमिव ॥ ७२ ॥

एवं सुषुप्त्यादिषु लिङ्गस्य विघात एव नत्वभावः । ये च सुषुप्तिप्रलययोर्लिङ्गस्य प्रकृतौ लयादभावमाहुस्तन्मतेऽपि जीवस्य तदा न मुक्तिः किन्तु संसार एवेति सदृष्टान्तमाह । अर्थे लिङ्गशरीरे विषयध्यानादनिवृत्तस्य पुंसः स्वप्ने विषयाभावेऽपि विषयग्रहणरूपस्यानर्थस्य यथा आगमनं तथैव सुषुप्तौ लिङ्गलयेऽपि अविद्या तत्संस्काराणामपगमात् न मुक्तिः किन्तु संसार एवेत्यर्थः ॥ ७३ ॥

लिङ्गशरीरमेव किं तत्राह । एवमिति । पञ्चविधं पञ्चप्राणाविधा विदधतश्चेष्टां कुर्वन्तो यत्र तत् त्रिवृत् त्रिगुणं षोडशविकारात्मना विस्तृतं जीवो लिङ्गदेहः ॥ ७४—७५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देहे मनसोऽहं वृत्तेः स्वप्नादिषु सूक्ष्मं रूपमाह । सुप्तीतिद्वाभ्याम् । यथा कुहाममावास्यायां चन्द्रमसो लिङ्गं शरीरं गर्भे बाल्ये च यूनो लिङ्गं शूरत्वादि अपौष्कल्यान्न दृश्यते तथा प्राणायनानामिन्द्रियाणां विघातात् लयात् सुषुप्त्यादिषु अहमिति ज्ञानं देहात्माभिमानरूपमनोवृत्तिरेकादशविधम् अहं देहरूप एव मन्ताश्रोतेत्याद्येकादशभेदवत् नेहते प्रकटरूपेण न प्रकाशते इति द्वयोरन्वयः ॥ ७१ ॥ ७२ ॥

एवं प्रतिपादिते देहात्माभिमाने आत्मनो देहरूपत्वाभावादविद्यमानेऽपि तन्निमित्ता संसृतिर्जन्ममरणप्रवाहो न निवर्तते अस्य मनुष्यत्वेन सतः स्वप्ने विषयान् अनात्मभूतान् मृगादीन् आत्मत्वेन ध्यायतः अनर्थागमः व्याघ्रादिभ्यो वधादिरूपो यथा न निवर्तते तद्वत् ॥ ७३ ॥

जन्ममरणरूपां संसृतिं प्रपञ्चयितुं तदुपयोगिभूतं लिङ्गशरीरं वर्णयति । त्रिवृत् त्रिगुणमयमेकादशेन्द्रियाणि पञ्चप्राणा इत्येवं षोडशविस्तृतं पञ्चविधं पञ्चतन्मात्रात्मकं तदित्थमेकविंशतितत्त्वात्मकम् प्राणानामेकत्वविवक्षया सप्तदशतत्त्वात्मकं प्राणस्यस्पर्शतन्मात्रेऽन्तर्भावात् षोडशतत्त्वात्मकं लिङ्गं लिङ्गशरीरमित्यभिधीयते चेतनया ज्ञातृत्वलक्षणया युक्तः स्वयमपि ज्ञानस्वरूपः एष जीवः कर्ता भोक्ता अभिधीयते जीवस्य लिङ्गशरीरे आत्मत्वाभिमानाल्लिङ्गशरीरस्यापि जीवेति क्वचित्संज्ञास्ति ॥७४॥

संसृतिं प्रपञ्चयति अनेन सूक्ष्मेण लिङ्गदेहेन पुरुषो जावः देहान् स्थूलान् उपादत्ते विमुञ्चति हर्षादिकं चानेन विन्दति अनेन जीवस्य कर्तृत्वं भोक्तृत्वं सूक्ष्मदेहस्य कारणत्वं स्थूलदेहस्य हर्षादेश्च कर्मभूतस्यायतनत्वं भोग्यत्वं च यथायथमुक्तम् ॥ ७५ ॥

---

### भाषाटीका

सुषुप्तिके समय मूर्छा के समय अतिचिन्ता के समय इन्द्रियों के व्याकुल हो जाने से मैं हूं मेरा है ऐसा ज्ञान नहीं होता है ज्वर में मरणमें भी नहीं होता है ॥ ७१ ॥

गर्भस्थ जन्तु का बालक का एकादश इन्द्रियों के विषयों का भान नहीं होता है क्यों कि उस समयमें इन्द्रिय अति सुक्ष्म रहती हैं युवा अवस्था में उसीको सब ज्ञान होता है जैसे कि अमावसको चन्द्रमा रहकर भी नहीं दीखता है ॥ ७२ ॥

विषयों के ध्यान करने से इस पुरुषको कुछ विद्यमान नहीं है तो भी संसार निवृत्त नहीं होता है जैसे की स्वप्न में झुठा ही अनर्थ दुःखदायक होता है ॥ ७३ ॥

यथा तृणजलूकेयं नापयात्यपयाति च ।
न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः ॥ ७६ ॥
यावदन्यं न विन्देत व्यवधानेन कर्मणाम् ।
मन एव मनुष्येन्द्र! भूतानां भवभावनम् ॥ ७७ ॥
यदाक्षैश्चरितान् ध्यायन् कर्माण्याऽचिनुतेऽसकृत् ।
सति कर्मण्यविद्यायां बन्धः कर्मण्यनात्मनः ॥ ७८ ॥
अतस्तदपवादार्थं भज सर्वात्मना हरिम् ।
पश्यंस्तदात्मकं विश्वं स्थित्युत्पत्त्यप्यया यतः ॥ ७९ ॥
( भक्तिः कृष्णे दया जीवेष्वकुण्ठज्ञानमात्मनि ।
यदि स्यादात्मनो भूयादपवर्गस्तु संसृतेः ॥ ० ॥

भाषाटीका ।

इसप्रकार से पञ्चतन्मात्रा एकादश इंद्रिय सहित जो मन है सोई त्रिगुण मय विस्तृत लिङ्ग देह है जोतिस के साथ युक्त चेतना से सहित आत्मा सो जीव संज्ञक है ॥ ७४ ॥

इसी लिङ्ग देहसे पुरुष स्थूल शरीरों को धारण करता है और छोड़ता है इसीसे हर्षशोक भय दुःख सुखको प्राप्त होता है ॥ ७५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेकं देहं विसृज्य देहान्तरप्रवेशात्पूर्वं विदेहता स्यादेवेत्यत आह । यथेति । नापयाति पूर्वंतृणस्यात्यागात् अपयाति च तृणान्तरधारणात् । तथाप्राग्देहाभिमतिं न त्यजेन्म्रियमाणोऽपि ॥ ७६ ॥

अन्यं देहम् कर्मणां प्राग्देहारम्भकाणां व्यवधानेन विच्छेदेन समाप्त्या प्रकरणार्थमुपसंहरति । मन एवेति । भवभावनं संसारहेतुः ॥ ७७ ॥

कथं सति तदाह । यदेति । चरितानुपभुक्तान् यतः कर्मणि सति । नन्वसङ्गस्य कुतः कर्म तत्राह । अविद्यायां सत्यामनात्मनो देहादेः कर्मणि बन्धो भवति ॥ ७८ ॥

विश्वस्थित्यादयो यतो हरेर्भवन्ति ॥ ७९ ॥

हंसयोर्जीवेश्वरयोः ॥ ८० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनिष्टतामेवाह । यथेति । यथेयं प्रसिद्धा तृणजलूका । स्वावष्टम्भतृणं हित्वा नोपयाति तृणान्तरं प्रति न गच्छति किन्तु तदेव तृणमुपयाति दृढतरं संश्लिष्यति एवं म्रियमाणोऽपि जनः मरणे प्राग्देहाभिमतिं न त्यजतीत्यर्थः नापयात्यपयाति चेति पाठे यथैव दैववशादपयाति मनसा त्यक्तुं नेच्छति ॥ ७६ ॥

देहाभिमानपरित्यागस्यावधिमाह । यावदिति । कर्मणा व्यवधानेन कर्मभिस्तिरोधानेन यावद्देहादन्यमात्मानं न विन्देत न त्यजेदित्यर्थः प्रकरणार्थमुपसंहरति । मन इतिहे मनुष्येन्द्र! भवभावनं जन्म हेतुर्मन एव ॥ ७७ ॥

तदेवोपपादयति । अक्षैरिन्द्रियैश्चरितान् पूर्वमुपभुक्तान् यान् यद्येन मनसा ध्यायन् कर्माण्यसकृदाचिनुते करोति कर्मण्यविद्याया बन्धः अविद्याया इति पञ्चमी कर्मणि तत्कृतदेहेनाहङ्कारममरूपाविद्यायाआत्मनो बन्धः स्यात्सर्वो बन्धः कर्मकृतः कर्म च विषयानुभवहेतुः अविद्यया संगाच्चाविद्येत्यनादिः प्रवाह इत्यर्थः ॥ ७८ ॥

तन्मोचनोपायमाह । अत इति । तस्य देहविलक्षणस्य कस्य स्वात्मनः अवबोधार्थं सर्वात्मना करणत्रयेण हरिं भगवन्तं भजस्व आत्मापरोक्षमपि भगवत्प्रसादादेव भवतीति कथम्भूतो जानीयात्तत्राह । विश्वं चिदचिदात्मकं जगज्जगत् पश्यन् विश्वस्य तदात्मकत्वे हेतुं वदन् हरिं विशिनष्टि हरेर्हेतोः विश्वस्य स्थितिरप्ययोनाशश्चेत्यमी भवन्ति विश्वस्य स्थित्यादिकारणत्वाद्धर्यात्मकं विश्वं पश्यतीत्यर्थः स्थित्यादीनां तदात्मकत्वे हेतुत्वं श्रुतं"सर्वं खल्विदं ब्रह्म तज्जलान्

मम्वादमुपसंरति मुनिः । भागवतानां मध्ये मुख्यः नारदो हंसयोर्जीवपरयोर्गतिं स्वरूपं प्रदर्श्य उपदिश्य नृपं नवर्हिषमामन्त्र्यानुज्ञाप्य ततो ब्रह्मलोकमगात् ॥ ८० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु यदानेन संसारी स्थूलदेहानुपादत्ते तदा हर्षादिकं यदा तान्मुञ्चति तदा निवृत्तहर्षादित्वेन मुक्तिः स्यादित्यत यथेति । तृणजलूका कीटविशेषः यावदन्यत्तृणं न विन्देत नोपयाति यावद्विन्दते तावदेवापयाति पूर्वं गृहीतं विसृज्य पश्चात्तृणान्तरं यथा याति तथायं जनो म्रियमाणोऽपि प्राग्देहाभिमतिं नत्यजेद्देहान्तरं प्राप्य पूर्वं त्यजतीत्यर्थः किमिति प्राचीनां नत्यजतीति तत्राह । व्यवधानेनेति । कर्मणां प्राचीनानां

अदृष्टं दृष्टवन्नङ्क्षेद्भूतं स्वप्नवदन्यथा ।
भूतं भवद्भविष्यच्च सुप्तं सर्वरहोरहः ॥ ० ॥ )

॥ मैत्रेय उवाच ॥

भागवतमुख्यो भगवान्नारदो हंसयोर्गतिम् ।
प्रदर्श्य ह्यमुमामन्त्र्य सिद्धलोकं ततोऽगमत् ॥ ८० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ध्यानेन विलम्बफलदातृत्वेन हेतुना अनेकेषां पूर्वेषां कर्मणां सत्त्वेन भगवत्प्रसादमन्तरेण विनाशानुपपत्तेः सर्वदेहवियोगासम्भवेन मुक्त्यनुदय इति भावः ॥ ७६ ॥

अनर्थदर्शनेन जातया विरक्त्या कर्माकरणेन तत्समाप्तेर्देहारम्भककर्माभावेन देहाभावान्निर्वाणोपपत्तिरिति तत्राह। मन एवेति। मनः सम्प्रयुक्तैरन्द्रियैश्चरितं कर्मध्यायंस्तदनुसारेणासक्त कर्मणया चिनुते करोतीति यत्तस्मान्मन एव भूतानां भवं संसारं जन्म वा भावयति उत्पादयतीति भवभावनं मनः प्रधानत्वद्योतनार्थ एवशब्दः "न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति स्मृतेः ॥ ७७ ॥

अविद्यायां विषयेच्छायां सत्यां कर्म भवति तस्मिन्सत्यात्मनो जीवस्य बन्धः "कर्मणयः कर्महेतुक" इति यदतस्तदपवादार्थं कर्मनिवृत्त्यर्थं सर्वात्मना पुत्रादिस्नेहत्यागेन हरिं भजेत्यन्वयः एनं जीवं बन्धयामीतीश्वरेच्छायां वा तस्येच्छाया अपसरणार्थं न बन्धयामीति ॥ ७८ ॥

भजनं नाम गुणोपसंहारस्तदर्थं तद्गुणानाह। पश्यन्निति। यतो हरेर्विश्वस्य स्थित्यादयः स्युस्तद्विश्वं तदात्मकं तद्व्याप्तं तदधीनसत्ताकं पश्यंश्चिन्तयन्निति पूर्वेणान्वयः तत्तदधिकार्युपास्तियोग्यानां गुणानां स्थित्यादावन्तर्भावात्तदर्थं स्थित्यादिग्रहणम् ॥ ७९ ॥

( नन्वेवमुपासीनस्य कदा साधनसामग्र्या मुक्तिः स्यादित्यत्राह । भक्तिरिति । कृष्णे पूर्णानन्दे हरावपरोक्षज्ञानजननी भक्तिः उपलक्षणमेतत् स्वगुरुमारभ्य ब्रह्मान्तेषु स्वोत्तमेषु तत्तद्योग्यतानुसारेण निष्कपटा भक्तिश्च जीवेषु स्थावरेषु याचितस्य द्रवीभावता दया दयदानगतिशोषणेष्विति धातोः तत्त्वविरोधिषु श्रोपणहेतुर्द्वेषश्चात्मनि स्वस्वरूपेऽकुण्ठज्ञानं हरिदर्शनानन्तरं देहादिव्यतिरेकेण ज्ञानानन्दरूपोऽहमित्यव्यवधानेन निरन्तरानुभवलक्षणमितीयं साधनसामग्री यदि यदा स्यात्तदा कालव्यवधानमन्तरेणात्मनस्तव संसारादपवर्गः क्रिया साध्यफलावाप्तिः स्यादित्यन्वयः।

देहादिव्यतिरेकेण चिद्रूपोऽहमिति स्फुटम् ।
सर्वदानुभवो भक्तिर्विष्णौ तद्दर्शनादनु ।
यस्यासौ मुच्यते क्षिप्रं संसारान्नात्र संशयः ।

इत्यनेन हेतुवाचि तु शब्दसूचितेनोक्त एवार्थो नाद्वैतार्थः ॥ ० ॥

ननु प्रथमभाविवैराग्याख्यसाधनमन्तरेण भक्त्यादिना कथं मुक्त्युदय इत्यतः सिंहावलोकनन्यायेन तदाह । अदृष्टमिति । अदृष्टं स्वर्गादिफलं सस्यादिदृष्टफलवन्नङ्क्षत्येवनश्यति भूतमुत्पन्नमिदं सर्वं जगदन्यथाऽनित्यं कथमिव स्वप्नदृष्टपदार्थसमम् नश्वरत्वात्स्वप्नसमं न तु बोधनिवर्त्यत्वात् संसारस्थमिदं सर्वमनित्यत्वाद्वृथा यतः अतः प्राहुः स्वप्नसमं प्राज्ञा जगदिदं ( १ ) मृषेति वचनान्न मिथ्यात्वं प्रपञ्चस्येति अस्तु भूतमनित्यत्वात् स्वप्नसमं भविष्यच्च स्वप्नसमं न स्यादित्याशङ्क्य यथा भूतमनित्यत्वात् स्वप्नसमं तथा भविष्यच्च सर्वमनित्यत्वेन स्वप्नसममित्याह । भूतमिति । स्वप्नशब्दस्य कथं स्वप्नार्थत्वमपर्यायत्वादितीयमाशङ्का "सुषुप्तिस्वप्नयोश्चैव स्वर्गव्योम्नोस्तथैव च । अन्योऽन्यनामता ज्ञेया मनोबुद्ध्योस्तथैव च" इत्यनेन परिहर्तव्येति सर्वमनित्यं श्चेन्नित्यं वस्तु किं तदाह । सर्वं रहो रह इति सर्वं रहः सर्वशास्त्रप्रतिपाद्येषु रहस्यं गुरूपदेशत्वाद्रह इति स्वभक्तदोषात् स्वयं च निर्दोषतया सदा स्थितं रहो ब्रह्म तदुक्तम् ।

रहो ब्रह्म तथा यद्यः स्वःसत्यमिति गीयत इति ।

नित्यनिर्दोषं ब्रह्मेतरत्सर्वमनित्यमसारं चेति विज्ञानं वैराग्यमिति भावः विरक्त्या भक्तिस्तया गुणोपसंहारलक्षणमुपासनं तेनापरोक्षज्ञानं तेन श्रीनारायणप्रसादस्तेन स्वयोग्यमुक्तिरिति क्रममुल्लङ्घ्य वैराग्यस्य सर्वत्रानुसन्धानार्थं पश्चादप्युक्तमिति ज्ञातव्यम् ०॥)

उपसंहरति । भागवतमुख्य इति। हंसयोर्जीवपरमात्मनोर्गतिं सच्चिदानन्दलक्षणां हरेर्जगदुत्पत्त्यादिलक्षणां जीवस्य तदधीनत्वादिलक्षणां वा सिद्धजातिषु नारदस्य प्राधान्यद्योतनाय प्रथमपादस्याक्षराधिक्यम् ॥ ८० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथेति सार्द्धकम् ॥ ७७ ॥

मन इत्यर्द्धकम् ॥ ७८ ॥

अविद्यायां सत्यामिति यया सम्मोहितो जीव इति न्यायेन सङ्गमनयिम अतस्तदपवादार्थमित्यत्र भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य इत्यादिकमुपजीव्यम् ॥ ७९-८१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

देहत्यागदेहान्तरप्रवेशयोर्मध्यक्षणेऽप्यभिमानाविच्छेदमाह । यथेति। नापयाति पूर्वतृणस्यात्यागात् अपयाति च तृणान्तरधारणात् कर्मणामुत्तरदेहारम्भकाणां व्यवधानेन विशेषतो धारणेन ॥ ७६ ॥

प्रकरणमुपसंहरति। मन एवेति। भवभावनं संसारहेतुः ॥ ७७ ॥

केन प्रकारेणेत्यत आह। यदेति । चरितान् उपभुक्तान् पदार्थान् यतः कर्मणि एकस्मिन्नपि बीजरूपे स्थिते सति अविद्यायां सत्यामनात्मनो देहादेः कर्मभिर्बन्धो भवति ॥ ७८—७९ ॥

हंसयोर्जीवेश्वरयोः ॥ ८० ॥

( १ ) वृथा यत इत्येतन्मृषेत्यस्य व्याख्यानम् ।

प्राचीनवर्ही राजर्षिः प्रजासर्गाभिरक्षणे ।
आदिश्य पुत्रानगमत्तपसे कापिलाश्रमम् ॥ ८१ ॥
तत्रैकाग्रमना वीरो गोविन्दचरणाम्बुजम् ।
विमुक्तसङ्गोऽनुभजन्भक्त्या तत्साम्यतामगात् ॥ ८२ ॥
एतदध्यात्मपारोक्ष्यं गीतं देवर्षिणाऽनघ ! ।
यः श्रावयेद्यः शृणुयात् स लिङ्गेन विमुच्यते ॥ ८३ ॥
एतन्मुकुन्दयशसा भुवनं पुनानं देवर्षिवर्यमुखनिःसृतमात्मशौचम् ।
यः कीर्त्यमानमधिगच्छति पारमेष्ठ्यं नास्मिन्भवे भ्रमति मुक्तसमस्तबन्धः ॥ ८४ ॥
अध्यात्मपारोक्ष्यमिदं मयाधिगतमद्भुतम् ।
एवं स्त्रियाश्रमः पुंसश्छिन्नोऽमुत्र च संशयः ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पारमहंस्यां संहितायां वैयासिक्यां श्रीनारदप्राचीनवर्हिःसम्वादे पुरञ्जनोपाख्याने एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लिङ्गे चिरकालस्थायिनि अहम्बुद्धौ नास्ति विवादः स्थूलदेहे आत्मत्वबुद्धेरनुवृत्तिमाह । यथेति । इयं लोके प्रसिद्धा तृणजलूका यदा तृणान्तरं गच्छति तदा तद्ग्रहणं विना पूर्वतृणान्नोपयाति तद्गृहीत्वा तु अपयाति एवमुत्तरदेहे आत्मबुद्धिं विना म्रियमाणोऽपि प्राग्देहाभिमतिं पूर्वशरीरे आत्मत्वबुद्धिं न त्यजेन्नत्यजति ॥ ७६ ॥

देहात्मत्वानुवृत्तेरवधिमाह । यावदिति । व्यवधानेन देहात्मत्वबुद्धिवृत्तिविच्छेदात्मकेन कर्म्मणा वेदान्तश्रवणादिनेत्यर्थः ॥ अन्यं देहेन्द्रियादिविलक्षणमात्मतत्त्वं यावन्न वेद तावन्न त्यजति फलितमर्थमाह । देहात्मत्वबुद्ध्याविनानावृत्तिमन्मन एव भवं जन्ममरणप्रवाहरूपं संसारं भावयतीति तत् ॥ ७७ ॥

भवमेवोपपादयति । यदेति । अविद्यायाम् "अविद्याकर्मसंज्ञान्या तृतीयाशक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्वगा" इति स्मृतेः । अनादितः प्रवृत्ते अविद्यासंज्ञके कर्मणि सत्यपि चरितान् । पूर्वविषयभोगान् ध्यायन् अक्षैरिन्द्रियैर्यैन्धनभूतानि पुनःकर्माण्येवाचिनुते असकृत् जन्मनि जन्मनि न तु अनादिकर्मरूपामविद्यां निराकर्तुं यतते यदा तदा अनात्मनः देहात्मबुद्धेः कर्मणि बन्धः पुनःपुनर्जन्ममरणलक्षणः संसार इत्यर्थः ॥ ७८ ॥

तदपवादार्थं जन्ममरणप्रवाहरूपबन्ध निराकरणार्थमित्यर्थः ७९

हंसयोः जीवब्रह्मणोः ॥ ८०-८१-८२ ॥

भाषा टीका ।

जिस प्रकार से जोंक एक तृण में से दूसरे तृणमें जाता भी है नहीं भी तैसे ही मरनेपर भी पूर्वके देह की अभिमति को नहीं छोडता है ॥ ७६ ॥

जब पर्यन्त अन्यकर्म के व्यवधान होने से अथवा पूर्वकर्म के समाप्त होने से दूसरे देह को नहीं प्राप्त होता है हे मनुष्येन्द्र ! सब प्राणियों का मन ही संसार का कारण है ॥ ७७ ॥

जब अविद्या में रहकर आत्मस्वरूप को भूल जाता शुभाशुभ कर्मों को करता है निरन्तर कर्म के करने से भोग होता है फिर इन्द्रियों से किये कर्मों को ध्यान क फिर उसको बन्धन होता है ॥ ७८ ॥

जिन भगवान् से जगत्की उत्पत्ति स्थिति प्रलय तिनको सब जगत् में व्यापक समझकर सब प्र उनका भजन करो तब तुमारा संसार निवृत्त होगा ।

( श्रीकृष्ण में भक्ति जीवों में दया आत्मा में ज्ञान यदि हो जाय तो संसार से मुक्त होजाय ॥ ० ॥

अदृष्ट जो वस्तु है सो दृष्ट के तुल्य नश्वर है भविष्यत्काल वर्तमान काल मै भी जो दीखता स्वप्न के तुल्य है ॥ ० ॥ )

मैत्रेयजी बोले सब भागवतों में मुख्य भगवान् जीवात्मा परमात्मा की स्थिति को दर्शाकर राजा से लेकर सिद्धों के स्थान को चले गये ॥ ८० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पुत्रानादिश्येति । पुत्राणामादेशं मन्त्रिणामग्रे कथयित्वा लाश्रमं गङ्गासागरसङ्गमम् ॥ ८१ ॥ ८२ ॥ ८३ ॥

आत्मशौचं मनःशोधकं पारमेष्ठ्यं सर्वोत्कृष्टफलद स्त्री बुद्धिस्तत्सहितस्याश्रमोऽहङ्कारश्छिन्नो भवति अमु फलभोगः कथमिति संशयश्छिन्नः ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः प्राचीनबर्हिः प्रजासृष्टौ तद्रक्षणे च स्वपुत्राननुज्ञाप्य स्वयं तपश्चर्तुं कपिलाश्रममगात् ॥ ८१ ॥

तत्र चाश्रमे धीरो वशीकृतेन्द्रियः एकाग्रचित्तः विविक्तो भगवच्चरणाम्बुजं ध्यायंस्तद्भक्त्या तत्साम्यतां तेन साम्यं यस्येति बहुव्रीहिः तत्साम्यवत्तामित्यर्थं इयादगात् तत्सात्मता-मिति पाठे तेन भगवता समानात्मतां समानता तत्साधर्म्यमित्यर्थः श्रवणश्रावणादिफलमाह । एतदिति । हेऽनघ ! देवर्षिणा गीतमेत-दध्यात्मपारोक्ष्यं यः पुरुषः श्रावयेच्छृणुयाद्वा सलिङ्गेन संसृतिहे-तुना मनसा दुःखेन हेतुना बन्धेन वा विमुच्यते मुक्तो भवे-दित्यर्थः ॥ ८२ ॥ ८३ ॥

एतदध्यात्मपारोक्ष्यं मुकुन्दयशसा युक्तमितिशेषः अत एव भुवनं पुनानं पवित्रीकुर्वाणं नारदमुखान्निर्गलितमात्मशौचं मनः शोधकं पारमेष्ठ्यं सर्वोत्कृष्टफलदं कीर्त्यमानं कथ्यमानं यः पुमानधिगच्छति स पुमान्निरस्तसमस्तबन्धः अस्मिन्भवे संसारे न भ्रमति ॥ ८४ ॥

उक्तार्थमुपसंहरति । अद्भुतमिदमध्यात्मपारोक्ष्यमध्यात्म-तत्त्वस्य पारोक्ष्यं परोक्षवादो यस्मिन्नत एवाद्भुतमाश्चर्यम-ध्यात्मस्य पारोक्ष्यं दुःशकमित्यद्भुतमित्यर्थः मया तुभ्यमभिहितं तथा पुंसः क्षेत्रज्ञस्य स्त्रियाश्रमः गृहस्थाश्रमत्वेन रूपितः संसारश्च कथितः अमुत्र परलोके संशयः फलानुभवविषयो भव-दीयः संशयश्च छिन्नः निरस्तः ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे<br>श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्<br>एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"सर्गः स्वभावानर्मोकनिश्चयाध्यायसृष्टिषु" इत्यभिधानात् प्रजानां स्वभावविद्याधर्मादिपुरुषार्थरक्षणे तत्परिपन्थिनिरासेनेति शेषः ॥ ८१ ॥

विमुक्तसङ्गो निष्कामस्तस्य हरेः साम्यतां निर्दोषत्व-लक्षणाम् ॥ ८२ ॥

एतस्येतिहासस्याभ्यासेन किं फलमुदेति येनायमवद्यं ज्ञातव्यः स्यादन्यथा नारदेन बाललीलाकथावह्निनोदार्थमुक्तं फलानुक्तेरिति परीक्षितो हार्दं चोद्यं शुकः परिहरतीत्याह । एतदिति । अधिकात्मनः परमात्मनोऽधिगतात्मनः प्रत्यक्षासिद्धस्य जीवात्मनो वा स्वरूपं पारोक्ष्यं परोक्षतया शब्दलक्षणतया गीतं शब्दितं न साक्षादुक्तं देवप्रियत्वात् "परोक्षप्रिया इव हि देवा" इति श्रुतेरित्यर्थः देवर्षिणेत्यनेन नारदस्य विनोदकथाकथ-नस्वभावो नास्तीति ध्वनयति लिङ्गेन शरीरेण मुच्यते रहितो भवतीत्यनेन तृतीयावचनेन पूर्वमपि स्वरूपाङ्गिममिति ध्वन-यति स्वरूपभूतदेहेन सहसैव गच्छतीति च "सोऽनानन्दाद्वि-मुक्त आनन्दी भवति" इति श्रुतेः ॥ ८३ ॥

न केवलमिदं प्राचीनबर्हिषः प्रयोजनं किन्तु सर्वेषामपीति भावेन पुनरुक्तं विशिनष्टि । एतदिति । मुकुन्दस्य यशसा सहि-तमेतत्पुरञ्जनोपाख्यानमात्मशौचमात्मनो मनसः शुचिता यस्मा-त्तथा पारमेष्ठ्यं परमेष्ठिनः सर्वोत्तमस्य हरेः इदं परममा-ख्यानमधिगच्छति गुरोः सकाशाज्जानाति भवे संसारे यस्मिन् जन्मनि जानाति अस्मिन्निति वा अनेन संसारभ्रम एव निवार्यते न तु तद्बन्ध इति मन्दाशङ्कां निवारयति मुक्तेति ॥ ८४ ॥

शिष्टजनेष्वेकेन मैत्रेयेणाधिगतत्वादेतच्चावश्यमधिगन्तव्य-मिति भावेनाह । अध्यात्मेति । मया मैत्रेयनाम्ना गहनत्वाद-द्भुतमिदं नारदेन प्राचीनबर्हिषे उपदिष्टमध्यात्मपारोक्ष्यमधि-कात् गुरुमुखादधीतमेव तथोपदिष्टमत एव त्वयाप्यतिश्रद्धया-धीत्याभ्यसनीयमिति शेषः नन्वेतदधिगमेन यदि वेदविषयोऽपि संशयश्छिन्नः स्यात्तर्ह्यधिगन्तव्यान्तराभावेन धन्यः स्यामतः कथं निर्णयः स्यादत्राह । एवमिति । यः पुंसो जिज्ञासोस्त्रय्या आश्र-यस्त्रिवेदी विषयः संशयोऽध्यात्मस्वरूपे छिन्न एवामुत्राधिदैवा-दिस्वरूपे च संशयो मम छिन्नोऽत एव तथापि छिन्नः स्या-दिति शेषः अनेन पुरञ्जनोपाख्यानस्य वेदविषयत्वप्रतीतेस्तद-तिश्रद्धया ध्येयमिति सिद्धं यद्वा एतदध्यात्मपारोक्ष्यमधिगन्ते यथा एवं त्रयीचाधिगता एकविषयात् ततः किं फलमत्राह । आश्रय इति । पुंस आश्रय इहामुत्र च संशयच्छिन्नो भवती-त्येतत्फलं भवतीत्यर्थः अतिगहनं जलनिधिवत्क्षुराग्रमिव दुर्ग्रहं निशितं तीक्ष्णं पुरञ्जनोपाख्यानं व्याख्याछलेन मयावतारि तरणि-रिव व्योमतलं पवनात्मज इव पयोराशिं क्षुर (१) धारामिव निग-दतोतारिषमध्यात्मपारोक्ष्यम् ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे<br>श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्<br>एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्साम्यताम् तत्सारूप्यम् ॥ ८२-८३ ॥

मुकुन्दयशसा । तस्मिन्महन्मुखरिता इत्यादिना लक्षणेन तद्यशो महिम्ना ॥ ८४ ॥

स्त्रियाश्रय इति छान्दस इयङादेशः ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे<br>श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य<br>एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुत्रानादिश्येति पुत्राणामादेशं मन्त्रिणामग्रे कथयित्वा पुत्राणां तदा तत्रानागमनात् ॥ ८१ ॥

साम्यतां साम्यं सारूप्यम् ॥ ८२ ॥

एतदुपाख्यानं मुकुन्दयशसा कर्मादिभ्यो भक्त्युत्कर्षरूपेण तस्मिन्महन्मुखरिता मधुभिच्चरित्रेत्यादिना व्यञ्जितेन वा पार-मेष्ठ्यं परमेष्ठिनः कर्म परमेष्ठिनाप्येतच्चित्यं कीर्त्यते इत्यर्थः तत्कृतं वा ॥ ८३—८४ ॥

स्त्री बुद्धिस्तत्सहितस्याश्रयोऽहङ्कारः पक्षे गार्हस्थ्यलक्षणः अमुत्र कर्मफलभोगः कथमिति संशयश्च छिन्नः ॥ ८५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।<br>चतुर्थे एकोनत्रिंशः सङ्गतः सङ्गतः सताम् ॥ २९ ॥

---

(१) क्षुरधाराङ्कोश इवाहमतारिषमिति शोधयन्ति सुधियः केचित् ।

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लिङ्गेन विमुच्यते लिङ्गदेहं हित्वा भगवत्सास्यं प्राप्नोति ॥८३॥

मुकुन्दयशसा युक्तम् । अत एव भुवनं पुनानं विश्वं पवित्रीकुर्वाणमात्मशौचं मनःशोधकम् परमेष्ठी अत्र परमपदवासी वासुदेवस्तत्प्रापकम् यः कीर्त्यमानमधिगच्छति स भवे संसारे न भ्रमति किन्तु मुक्तसमस्तबन्धो भवति ॥ ८४ ॥

अध्यात्मस्यात्मतत्त्वस्य पारोक्ष्यं गोप्यतया वर्णनं यस्मिन्निदं पुरञ्जनोपाख्यानं मयाधिगतं गुरुमुखात् एवमेव श्रुतं तथा क्रिया बुद्ध्या हेतुभूतया पुंसो जीवस्य भ्रमः पुनः पुनर्जन्ममरणलक्षणादिछिन्नः अधिगत इति फलितोऽर्थः श्रुतः यथोपदेशं तत्र सर्वं वर्णितमिति भावः अमुत्र कर्मफलभोगः कथमिति संशयश्च छिन्नः ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोनत्रिंशाध्यायार्थप्रकाशः ॥ २९ ॥

---

भाषाटीका ।

प्राचीनबर्हि राजर्षि भी अपने पुत्रों को प्रजों का रक्षण समर्पण कर के तपस्या करने को कपिल जी के आश्रम को गये ॥ ८१ ॥

उहां पर वीर प्राचीनबर्हि एकाग्रमन होकर मन को हटाकर श्रीगोविन्द चरणकमल को भजने हुये के तुल्य दिव्य ज्ञान स्वरूप को प्राप्त हो गये ॥ ८२ ॥

हे अनघ ! विदुरजी यह परोक्ष अध्यात्मप्रसङ्ग नारदजी ने कहा है इसको जो सुने अथवा सुनावे लिङ्ग देह के बन्धन से छूट जायगा ॥ ८३ ॥

यह आख्यान मुकुन्द भगवान् के यश से युक्त है संसार को पवित्र करने वाला है नारदजी के मुख से निकला है आत्मा का पवित्र करने वाला है इस के कीर्तन करने से जो सुनता है सो परमपद को प्राप्त होकर सब बन्धन से छूट जाता है इस संसार में नहीं भ्रमता है ॥ ८४ ॥

इस अद्भुत अध्यात्मपारोक्ष्य को मैंने अध्ययन किया इस प्रकार से जो बुद्धि से आत्मा का बन्धन है परलोक में ऐसा कर्मफल भोगना होता है उसका संशय छूट गया ॥ ८५ ॥

इति श्रीमद्भागवत चतुर्थस्कन्ध उन्नीशमां अध्याय
का भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ २९ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे एकोनत्रिंशोऽध्यायः समाप्तः ॥ २९ ॥

## ॥ त्रिंशोऽध्यायः ॥

॥ विदुर उवाच ॥

ये त्वयाऽभिहिता ब्रह्मन् ! सुताः प्राचीनबर्हिषः ।
ते रुद्रगीतेन हरिं सिद्धिमापुः प्रतोष्य काम् ॥ १ ॥
किं वार्हस्पत्येह परत्र वाथ कैवल्यनाथप्रियपार्श्ववर्तिनः ।
आसाद्य देवं गिरिशं यदृच्छया प्रापुः परं नूनमथ प्रचेतसः ॥ २ ॥

॥ मैत्रेय उवाच ॥

प्रचेतसोऽन्तरुदधौ पितुरादेशकारिणः ।
जपयज्ञेन तपसा पुरञ्जनमतोषयन् ॥ ३ ॥
दशवर्षसहस्रान्ते पुरुषस्तु सनातनः ।
तेषामाविरभूत्कृच्छ्रं शान्तेन शमयन् रुचा ॥ ४ ॥
सुपर्णस्कन्धमारूढो मेरुशृङ्गमिवाम्बुदः ।
पीतवासा मणिग्रीवः कुर्वन् वितिमिरा दिशः ॥ ५ ॥
काशिष्णुना कनकवर्णविभूषणेन भ्राजत्कपोलवदनो विलसत्किरीटः ।
अष्टायुधैरनुचरैर्मुनिभिः सुरेन्द्रैरासेवितो गरुडकिन्नरगीतकीर्तिः ॥ ६ ॥
पीनायताष्टभुजमण्डलमध्यलक्ष्म्या स्पर्धच्छ्रिया परिवृतो वनमालयाद्यः ।
बर्हिष्मतः पुरुष आह सुतान् प्रपन्नान् पर्जन्यनादरुतया सघृणावलोकः॥ ७ ॥

॥ श्रीभगवानुवाच ॥

वरं वृणीध्वं भद्रं वो यूयं मे नृपनन्दनाः ! ।
सौहार्देनापृथग्धर्मास्तुष्टोऽहं सौहृदेन वः ॥ ८ ॥
योऽनुस्मरति सन्ध्यायां युष्माननुदिनं नरः ।
तस्य भ्रातृष्वात्मसाम्यं तथा भूतेषु सौहृदम् ॥ ९ ॥
ये तु मां रुद्रगीतेन सायं प्रातः समाहिताः ।
स्तुवन्त्यहं कामवरान् दास्ये प्रज्ञां च शोभनाम् ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रसङ्गात्पञ्चभिः प्रोक्तं वृत्तं प्राचीनबर्हिषः ।
वर्ण्यते च पुनर्द्वाभ्यां प्रस्तुतं तत्प्रचेतसाम् ॥ १ ॥
तत्र त्रिंशे तपस्तुष्टादीशाल्लब्धवरास्ततः ।
आगत्य वार्क्षीमुद्वाह्य राज्यं चक्रुरितीर्यते ॥ २ ॥

हरिं प्रतोष्य कां सिद्धिमापुः ॥ १ ॥

हे वार्हस्पत्य ! कस्यां चिद्विद्यायां बृहस्पतेर्मैत्रेयः शिष्य इति ज्ञातव्यम् ते यदृच्छया गिरिशं प्राप्य तस्यैव कैवल्यनाथप्रियस्य गिरिशस्य पार्श्ववर्तिनस्तदनुगृहीताः सन्तो नूनं परं मोक्षं प्रापुरेव ततः पूर्वं त्विहाथ वा परत्र किं प्रापुः ॥ २ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

रुद्रगीतजपरूपेण यज्ञेन तपसा च पुरञ्जनं हरिम् ॥ ३ ॥

तेषां कृच्छ्र तपः क्लेशं रुचा कान्त्या शमयन् शान्तेन शुद्धसत्त्वेन वपुषा आविर्भूतः ॥ ४ ॥

सुपर्णस्कन्धमारूढ इत्यादीनां बर्हिष्मतः सुतानाहेति तृतीयेनान्वयः ॥ ५ ॥

कनकमयेन वर्णवता विभूषणेन भ्राजमानं कपोलं वदनं च यस्य अष्टभिरायुधैः गरुड एव किन्नरस्तेन पन्नखनैर्गीता कीर्तिर्यस्य ॥ ६ ॥

पीनाश्च ते आयता अष्टौ भुजास्तेषां मण्डलं समूहस्तन्मध्ये स्थितया लक्ष्म्या स्पर्धमाना श्रीः शोभा यस्यास्तया वनमालया परिवृत आद्यः पुरुष आह पर्जन्यस्य नाद इव रुतं नादो यस्यास्तया वाचा सघृणोऽवलोको यस्य ॥ ७ ॥

यूयं मे मत्तो वृणीध्वम् सौहार्देन हेतुनापृथग्धर्मो येषां तेषां सम्बोधनं वः परस्परं सौहृदेन तुष्टोऽहम् ॥ ८ ॥

भूतेषु सौहृदं च भविष्यति ॥ ९ ॥

तेभ्यो दास्ये किं पुनर्युष्मभ्यमिति शेषः ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रचेतसां वृत्तमसमाप्यैवावान्तरे प्राचीनबर्हिषो वृत्तान्त उक्त इदानीं तद्वृत्तान्तशेषशुश्रूषया पृच्छति विदुरः । य इति । हे ब्रह्मन् ! मैत्रेय ये प्राचीनबर्हिषः पुत्रास्त्वयाभिहिताः ते रुद्रगीतेन स्तोत्रेण हरिं प्रतोष्य तोषयित्वा कां सिद्धिं फलमापुः प्रापुः ॥ १ ॥

हे बार्हस्पत्य ! मैत्रेय ! कस्यांचिद्विद्यायां बृहस्पतेर्मैत्रेयः शिष्यः यदृच्छया गिरिशं प्राप्य कैवल्यनाथस्य मोक्षाधिपतेर्भगवतो यः प्रियो रुद्रः तस्य पार्श्ववर्त्तिनः तेनानुगृहीताः प्रचेतसः नूनं परं मोक्षं प्रापुरेव ततः पूर्वं त्विहात्र लोके परत्र लोके वा किं प्रापुः ॥ २ ॥

एवमापृष्टो मुनिः प्रचेतसां कथाशेषमाह । प्रचेतस इति । पितुराज्ञाकारिणः अन्तरुदधौ समुद्रजलमध्ये रुद्रगीतजपयज्ञेन तपसा तप आलोचने निदिध्यासनेन च निरञ्जनमपहतपाप्मानं परमपुरुषमतोषयन् ॥ ३ ॥

सनातनः परमपुरुषः दशवर्षशहस्रान्ते दशसहस्रसंख्यातवत्सरपर्यन्ततपश्चर्यान्ते तेषां कृच्छ्रं तपः क्लेशं रुचा कान्त्या शमयन् शान्तेन शुद्धसत्त्वमयेन वपुषा आविरभूत् ॥ ४ ॥

पुरुषं विशिनष्टि । सुपर्णेति सार्द्धद्वयेन । सुपर्णस्य गरुडस्य स्कन्धे आरूढः तमुपलक्षयति मेरोः शृङ्गमम्बुदो नीलमेघ इवेति पीतं पिशङ्गो वासो वस्त्रं यस्य सः मणिः कौस्तुभः ग्रीवायां यस्य सः दिशः वितिमराः प्रकाशबहुलाः कुर्वाणः ॥ ५ ॥

पुनः कीदृशः काशिष्णुनेति कनकमयशोभनवर्णविभूषणेनात एव काशिष्णुना भ्राजिष्णुना प्रकाशस्वभावेनेत्यर्थः भ्राजमानं कपोलं वदनं च यस्य सः प्रकाशमानकिरीटयुक्तः अष्टायुधैः शङ्खचक्रगदापद्मशार्ङ्गशरखड्गखेटैः पद्मस्यायुधानन्तर्भूतत्वेऽपि छत्रिन्यायेनायुधशब्दः प्रयुक्तः परशुपाशाङ्कुशाद्यन्यतमो वाऽष्टमो विवक्षितः अष्टायुधैरित्यनेनाष्टभुज इत्यपि विवक्षितः अनुचरैः पार्षदैः मुनिभिः सुरेन्द्रैर्ब्रह्मादिभिश्च सेवितः गरुड एव ... तस्य वेदात्मकपक्षध्वनिर्गरुडाकिन्नरशब्दविवक्षितः तेन ... कीर्तिर्यस्य सः यद्वा गरुडा गरुडजातीयाः किन्नराश्च तैः ... कीर्तिर्यस्य सः ॥ ६ ॥

पीनाश्च ते आयताश्चाष्टौ भुजास्तेषां मण्डलं समूहः ... ध्ये स्थितया लक्ष्म्या स्पर्धमाना श्रीः शोभा यस्य ... वनमालया परिवृतः आद्य आदौ भवः जगत्कारणभूतः ... प्रपन्नान् बर्हिष्मतः सुतान् प्रति पर्जन्यनाद इव रुतं ... यस्यास्तया वाचा सघृणः कृपायुक्तोऽवलोको यस्य ... आह ॥ ७ ॥

हे नृपनन्दनाः ! यूयं मे मत्तः वरं वृणीध्वं वः ... परस्परसौहृदेनापृथग्धर्मास्तुल्यधर्माणः यूयं वः युष्माकं ... नाहं तुष्टः ॥ ८ ॥

यो नरः अनुदिनं सायं प्रातः शय्यायां युष्माननुस्मरति ... नरस्य भ्रातृष्वात्मसाम्यमात्मना तुल्यं स्वात्मनीव प्रीतिः ... भूतेषु सौहृदं च भविष्यति ॥ ९ ॥

ये नराः सायंप्रातः समाहितचित्ताः सन्तो रुद्र... मां स्तुवन्ति तेभ्योऽप्यहं कामवरान् काम्यन्त इति कामाः ... अभीष्टान् वरान् प्रज्ञां च दास्ये किं पुनः युष्माकम् ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अव्यक्तस्वभावो हरिस्तप आदिसाधनसामर्थ्येन प्रसन्नो ... भवतीत्येतद्रुद्राद्युत्तमत्वं च निरूप्यतेऽस्मिन्नध्याये । तत्र ... प्रसक्तप्रमेयं विस्तरतः श्रोतुकामो विदुरो मैत्रेयं पृच्छति । ... त्वयेति । रुद्रगीतेन सदा शिवोपदिष्टेन स्तोत्रेण हरिं प्र... कां सिद्धिं पुरुषार्थरूपां प्रापुरित्यन्वयः ॥ १ ॥

विष्णुतद्भक्तभक्तानां सिद्धिरस्त्येव सा तु कीदृशीति ... पृच्छतीत्याह । किञ्चेति । "तदेतत्प्रेय" इतिश्रुतेः कैवल्यनाथ... प्रियश्च कैवल्यनाथप्रियस्तस्य कैवल्यनाथप्रियस्य विष्णोः कैवल्य... नाथः कैवल्यनाथस्तस्य कैवल्यनाथस्य प्रियो रुद्रस्तस्य ... पार्श्ववर्तिनः समीपे वर्तमानाः पुरुषा इह लोकेऽथवामुष्मिं... किं पुरुषार्थलक्षणं सुखं नार्हन्ति सर्वमर्हन्ति तत्र प्र... यदृच्छया देवेच्छया गिरिशमासाद्य परमुत्कृष्टं सुखं नूनं ... प्रापुरित्यन्वयः गिरेर्ब्रह्मणः प्रसादेन शं सुखं यस्य स गि... "तं ब्रह्मगिरिरित्याचक्षत" इति श्रुतेः गिरि वाचि शेत इति ... गिरौ कैलासे शेत इति गिरिशः पूर्वत्रालुक्समासः ... प्रत्ययश्च "पृपालनपूरणयोः" इति धातोः परं जगत्पालनं ... लक्षणपूर्णानन्दभुतेति अनेन प्रचेतसो यानि योग्यानि ... यान्यर्हन्ति तेषु किम्मुख्यामापुरिति प्रश्नतात्पर्यार्थः ॥ २ ॥

जगत्पालनादिसर्वाः सिद्धीरापुरिति परिहारं वक्तुमुप... इत्याह । मैत्रेय इति । जपयज्ञेन रुद्रगीताख्यस्तोत्रयज्ञेन पु... शरीराणां जननाज्जन्मना व्यञ्जयितृत्वात्पुरञ्जनो विष्णुः ... अञ्जनात् व्यञ्जनात्पुरञ्जनो जीवः यतस्तपसा पुरञ्जनं ... मानमशोषयंस्तेन पुरञ्जनं विष्णुमतोषयन् प्रसादाभिमुखं ... त्यर्थद्वयद्योतनाय पुरञ्जनपदं प्रायोजीत्यतः पूर्वोक्तः पुरञ्जनो... च्यते "पुरेषु त्वञ्जनाज्जीवः पुरञ्जन इतीरितः । पुराणां जननाद्वि... व्यंञ्जकत्वं द्वयोरपि" इति वचनात्सिद्धमिदमर्थद्वयमिति ...

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

...न्नाः द्युपद्यानां नालिवत्यतस्तकारशकारयोः स्थानसामीप्यात् पूर्यमानीयानामोष्ठावित्युवन्धोकारस्यैकस्थानत्वाच्च वा शोप-प्रतोपयन्निति युज्यते ॥ ३ ॥

प्रचेतसां शान्तेन भगवन्निष्ठया जातयानुग्रहलक्षणया रुचा ...णां कृच्छ्रं दुःखं शमयन् ॥ ४ ॥

मणिग्रीवः कण्ठामुक्तकौस्तुभः वितिमिरा निरस्तान्ध-कारा: ॥ ५ ॥

कान्त्या दीप्तौ भ्राजद्भ्यां राजद्भ्यां कपोलाभ्यां युक्तं वदनं यस्य ... तथा भ्राजदित्युक्त्यात्मनेपदे परस्मै पदित्वं काल्पनिकमिति ...नयति ॥ ६ ॥

पीनानामायतानामष्टानां भुजानां मण्डलस्य मध्ये वक्षसि ...स्थितया लक्ष्म्या सह स्पर्धमानवद्वर्तमाना श्रीर्विकासलक्षणा यस्याः ...सा तथा अश्ववदाचरतीत्यश्वत्रित्यादौ दर्शनादौपचारिकोऽयं ...योगः न हि हरेरपि वक्षसि स्थितयोर्लक्ष्मीवनमालयोरौत्सर्गिकी ...स्पर्धा सङ्घटीति पर्जन्यो मेघस्तन्नादवद्द्रुतं ध्वनिर्यस्याः सा ...या वाचेति शेषः घृणया दयया सह वर्तत इति सघृणस्तादृशोऽ...वलोको यस्य स तथा ॥ ७ ॥

सौहार्देन हेतुनापृथग्धर्मो एकविषयधर्मचारिणः तेन किं तव ...त्राह । तुष्ट इति । अतो वरं वृणीध्वमित्यर्थः ॥ ८ ॥

न केवलं मत्तो युष्माकमेव फलमन्येषां भवदनुस्मर्तॄणा-...मपि फलविशेषो भवतीत्याह । य इति । यथामत्प्रीतिहेतुमे...तोषकरं युष्मदपृथग्धर्मत्वस्मरणमितरेषामपि भ्रातृष्वात्मसाम्य-...फलं स्यात्तथा ॥ ९ ॥

रुद्रगीतेन मां स्तुवद्भ्योऽपि कामवरान् दास्यामीत्याह । ये ...तु मामिति ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सुपर्णेति त्रिकम् । काश्चिष्णुना भ्राजमानेन कनकवर्णेनालौ-...किकत्वान्न तु कनकमयेनेत्यर्थः । तेन विभूषणेन कुण्डलादिना ...पूर्वं श्रीरुद्रोपदिष्टपरमव्योमाख्यमहावैकुण्ठाधिपचतुर्भुज-...त्वेन ध्यानस्यापि श्रीभगवतोऽष्टभुजत्वेनाविर्भावस्याभिप्रायोऽयम् । ...अधुना भवदत्यन्तसिद्धदानार्थमहमाविर्भूतः किन्तु आपात-...सान्त्वनार्थमेवेति ॥ १–७ ॥

स्वाभाविकेन सौहार्देन हेतुना यो युष्माकं मदुपासकाना-...मित्यर्थः सौहृदेन वैशिष्ट्यं प्राप्तेन तेन तुष्टोऽहं यथा न तथा ...मदुपासनयापीत्यर्थः ॥ ८ ॥

भ्रातृषु समवासनं मद्भक्तेषु आत्मसाम्यं आत्मनीव पर-...स्परस्नेहम् ॥ ९–१६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रिंशे प्रचेतसो लब्धवराः स्तुत्वा हरेर्जलात् ।
गत्वा दग्ध्वा तरून् वार्क्षीं लब्ध्वा राज्यं मुदा व्यधुः ॥

प्रचेतसां कथामध्ये एव तत्पितुः प्राचीनबर्हिषो नार-दोपदेशाद्वृत्तान्तमाकर्ण्य पुनस्तेषामेवावशिष्टां कथां शुश्रूषते । य इति । हरिं प्रतोष्य कां स्मार्द्धिमापुः ॥ १ ॥

हे बार्हस्पत्य ! कस्याश्चिद्क्रियायामुद्धवमैत्रेयौ बृहस्पतेः शिष्याविति प्रसिद्धेः प्रचेतसः इह लोके परत्र च किं परं श्रेष्ठं वस्तु प्रापुः किं कृत्वा यदृच्छयैव गिरिशं देवमासाद्य कीदृशः कैवल्यनाथस्य प्रियाः पार्श्ववर्तिनश्च ॥ २ ॥

रुद्रगीतरूपेण जपयज्ञेन पुरञ्जनं हरिम् ॥ ३ ॥

शान्तेन शान्तया रुचा ॥ ४–५ ॥

कनकमयेन वर्णवता नानारत्नजटितत्वेन नानावर्णवता विभूषणेन कुण्डलादिना भुजमण्डलमध्ये लक्ष्मीः शोभा यस्यास्तया स्पर्द्धन्ती स्पर्द्धमाना श्रीर्लक्ष्मीर्यया तया आद्यः पुरुषः पर्जन्यनाद इव इतं नादो यस्यास्तया वाचा आह । सकृपावलोकः ॥ ६–९ ॥

तेभ्यो दास्ये किं पुनर्युष्मभ्यमिति भावः ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रिंशे प्राचीनबर्हिषः पुत्रास्तत्तपः प्रसन्नाद्भगवतो वरं लब्ध्वा वार्क्षीमुद्वाह्य यथोचितं राज्यं चक्रुरित्युच्यते तत्रादौ प्रागु-पक्षितं प्रचेतोवृत्तं पृच्छति । य इति ॥ १ ॥

सिद्धिमेव त्रिधा विभज्य पृच्छति हे बार्हस्पत्य ! बृहस्पति-शिष्य ! प्रचेतसः यदृच्छया गिरिशमासाद्य कैवल्यनाथो मुक्ति-प्रदो हरिस्तस्य प्रियो भक्तः गिरिशस्तस्य पार्श्ववर्तिनः शिष्याः सन्तः नूनं निश्चितं फलं प्रापुस्तत्रैव किं भौमसुखं प्रापुः किं वा परत्र स्वर्गे सुखं प्रापुः अथ वा परं मोक्षम् ॥ २ ॥

जपयज्ञेन गिरिशोपदिष्टस्तोत्रजपेन तपसा च पुरञ्जनं विश्वजनकं सनातनं पुरुषम् ॥ ३ ॥

शान्तेन परमानन्दरूपेण आविर्भूतः किञ्चुर्वन् तेषां कृच्छ्रं संसारतापं रुचा कान्त्या शमयन् अपनयन् ॥ ४ ॥ ५ ॥

काश्चिष्णुना दीप्तिमता कनके आधारभूते वर्णाः स्वर्णीय-वर्णप्रधानाः मणयो यस्मिन् विभूषणे तेन भ्राजत्कपोलं वदनं यस्य स गरुडेन किन्नरैश्च भक्तविशेषैः गीता कीर्तिर्यस्य सः ॥ ६ ॥

पीनायताष्टभुजमण्डलमध्यगतया लक्ष्म्या सह स्पर्धती श्रीर्यस्यास्तया वनमालया परिवृतः सघृणावलोकः कृपार्द्रदृष्टिः पर्जन्यनादवत् मेघध्वनिवत् सन् ध्वनिर्यस्यास्तया वाचया आह ॥ ७ ॥

मे मत्तः अपृथग्धर्माः समानधर्माः ॥ ८–११ ॥

---

भाषाटीका ।

विदुरजी बोले प्राचीनबर्हि के पुत्र जो प्रचेता आपने कहे सो रुद्रगीत से भगवान् को सन्तुष्ट करके किस सिद्धि को प्राप्त भये ॥ १ ॥

हे बृहस्पति के शिष्य ! मैत्रेयजी इस लोक में और परलोक में कैवल्यनाथ विष्णु के पार्श्ववर्ति जो प्रचेता सो दैवयोग से महादेवजी को प्राप्त होकर किस सिद्धि को प्राप्त भये ॥ २ ॥

यद्यूयं पितुरादेशमग्रहीष्ट मुदान्विताः ।
अथो व उशती कीर्तिर्लोकाननुभविष्यति ॥ ११ ॥
भविता विश्रुतः पुत्रोऽनवमो ब्रह्मणो गुणैः ।
य एतामात्मवीर्येण त्रिलोकीं पूरयिष्यति ॥ १२ ॥
कण्डोः प्रम्लोचया लब्धा कन्या कमललोचना ।
तां चापविद्धां जगृहुर्भूरुहा नृपनन्दनाः ! ॥ १३ ॥
क्षुत्क्षामाया मुखे राजा सोमः पीयूषवर्षिणीम् ।
देशिनीं रोदमानाया निदधे स दयान्वितः ॥ १४ ॥
प्रजाविसर्ग आदिष्टाः पित्रा मामनुवर्तता ।
तत्र कन्यां वरारोहां तामुद्वहत मा चिरम् ॥ १५ ॥
अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा ।
अपृथग्धर्मशीलेयं भूयात्पत्न्यर्पिताशया ॥ १६ ॥
दिव्यवर्षसहस्राणां सहस्रमहतौजसः ।
भौमान् भोक्ष्यथ भोगान् वै दिव्यांश्चानुग्रहान्मम ॥ १७ ॥
अथ मय्यनपायिन्या भक्त्या पक्कगुणाशयाः ।
उपयास्यथ मद्धाम निर्विद्य निरयादतः ॥ १८ ॥
गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम् ।
मद्वार्तायातयामानां न बन्धाय गृहा मताः ॥ १९ ॥
नव्यवद्धृदये यज्ज्ञो ब्रह्मैतद्ब्रह्मवादिभिः ।
न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः ॥ २० ॥

भाषाटीका

मैत्रेय जी बोले पिता की आज्ञा करने वाले प्रचेता समुद्र में जब गये तब जपयज्ञ से भगवान् को सन्तुष्ट किये. ॥ ३ ॥

दश हजार वर्ष बीतने पर सनातन पुरुष उनके आगे प्रघट भये दर्शन करने से उनके दुःख निवृत्त होगये ॥ ४ ॥

जैसे मेरु के शिखर पर मेघ होवे तैसे गरुडजी पर विराजे हैं पीताम्बर पहिरे हैं कण्ठमें मणिहै कान्तिसे जगत् में प्रकाश करदिया ॥ ५ ॥

प्रकाशमान सुवर्ण भूषण से मुखारविन्द आपका प्रकाशमान है किरीटों की शोभा होरही है आठ भुजोंसे शोभित हैं सब पार्षद स्तुति करते हैं देवता सेवन करतेहैं गरुडजी तथा किन्नरगण कीर्ति का गान कर रहे हैं ॥ ६ ॥

बडेपुष्ट लम्बे आठ भुजोंके मण्डलके मध्यमें जो लक्ष्मीजी तिनके साथ विवाद करने वाली वनमाला से वेष्टितहैं भगवान् आद्यपुरुष नारायण शरणागत जो प्राचीन बर्हि के पुत्र तिनों से मेघ के नादस्वरी की वाणी से दयायुक्त होकर वचन बोले ॥ ७ ॥

श्री भगवान् बोले हे राजपुत्रो ! तुम लोग मेरे ... गों तुमलोग सुहृदपनेसे सब एक धर्म वाले हो तुम्हारे ... पनेसे मै सन्तुष्ट हुआ हूं ॥ ८ ॥

जो मनुष्य सायङ्काल में आप लोगोंका स्मरण ... उसके भाईयों में अत्यन्त मेल रहेगा प्राणीमात्र में ... होगी ॥ ९ ॥

जो लोग सायंकाल में प्रातःकाल में सावधान ... रुद्रगीत से हमारी स्तुति करेंगे इनको मैं अभीष्ट ... सुन्दर ज्ञान देउंगा ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अग्रहीष्ट गृहीतवन्तः । अथो इति हेतोः लोकान् ... भविष्यति यद्वा लोकाननुभविष्यति द्रक्ष्यति ... त्यर्थः ॥ ११ ॥

आत्मनो वीर्येण सन्तानेन ॥ १२ ॥

पुत्रार्थमादौ भार्यां सम्पादयति । भगवान् कण्डोर्ऋषेः ... तपोनाशार्थमिन्द्रप्रेषितया प्रम्लोचया कण्डुर्नाम ऋषिः ...

श्रीधरस्वामिकृतभावार्थदीपिका ।

रेमे सा च ततः स्वर्गं गच्छन्ती कण्डोर्जातं गर्भं वृक्षेषु त्यक्त्वा जगाम तदेतदुक्तम् अपविद्धां त्यक्ताम् ॥ १३ ॥

स प्रसिद्धो वनस्पतीनां राजा सोमोऽमृतस्राविणीं देशिनीं तर्जनीं रुदत्यास्तस्या मुखे निदधे । अनेनाप्सरोगर्भसम्भवेनामृताहारेण च तस्या लावण्यं क्रमस्वेददौर्गन्ध्यादिराहित्यं चोक्तम् ॥ १४ ॥

मामनुवर्तमानेन पित्रा नियुक्ताः सन्तस्तत्र प्रजाविसर्गे निमित्ते तामुद्वहत ॥ १५ ॥

ननु बहूनां कथमेका भार्या स्यात्तत्राह । अपृथग्धर्मः शीलं येषां तेषां वः पत्नी भूयात् । अर्पितो भवत्सु आशयो यया धर्मशीलयोरैक्यान्मद्वाक्याच्च न दृष्टादृष्टविरोध इति भावः ॥ १६ ॥

महतौजसोऽप्रतिहतबलाः सन्तः ॥ १७ ॥

पक्वगुणो दग्धकामादिमल आशयो येषाम् । अतो लोकद्वयभोगान्निरयप्रायान्निर्विद्य मत्स्थानं प्राप्स्यथ ॥ १८ ॥

ननु गृहेषु प्रविष्टानामस्माकं तदासक्त्या बन्ध एव स्यात्कुतस्त्वद्भक्तिर्निर्वेदो वा तत्राह । गृहेष्विति । कुशलं मय्यर्पितं कर्म येषाम् । मद्वार्तया यातो यामः कालो येषाम् ॥ १९ ॥

त्वद्वार्ताश्रोतृणां गृहैर्न बन्ध इति कुतस्तत्राह । नव्यवदिति । यद्यस्मात्कथाश्रवणात् ज्ञः सर्वज्ञोऽहमीश्वरो ब्रह्मवादिभिः प्रवक्तृभिर्निमित्तभूतैः श्रोतृणां हृत् हृदयं न व्यवत्प्रतिपदं नूतनवत् अये प्राप्नोमि ब्रह्मसाक्षात्कारो भवतीत्यर्थः । ननु त्वत्कथाश्रवणं कथं ब्रह्मसाक्षात्कारस्तत्राह । योऽहमेतदेव ब्रह्म तत्र हेतुः । यतो गताः यं मां प्राप्ताः सन्तो मोहशोकहर्षान्न प्राप्नुवन्त्यतो मत्कथाश्रवणेन नव्यवन्मम हृद्याविर्भावादस्यैव ब्रह्मसाक्षात्कारत्वाद्गृहेषु वसतामपि न बन्ध इत्यर्थः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यस्माद्यूयं पितुरादेशमाज्ञां मुदा युक्ताः सन्तोऽग्रहीष्ट गृहीतवन्तः अतो वः युस्माकमुशती कमनीया कीर्त्तिर्लोकाननुभविष्यति प्राप्स्यति लोकेषु विस्तरिष्यति इत्यर्थः ॥ ११ ॥

कण्डोर्मुनेर्दुहितरं यूयमुद्वहतेति वक्ष्यमाणस्तावत्कण्डुन्तत्कन्यां च प्रस्तौति । भवितेति विश्रुतः विश्रुन्नाम्नः पुत्रः गुणैर्विश्रुतः पितुर्नावमः नन्यूनः विश्रुता समः भविता भविष्यति इत्यर्थः यः वैश्रुत एतां त्रिलोकीमात्मनोवीर्येण सन्तानेन पूरयिष्यति ॥१२॥

वैश्रुतस्य कण्डोः सकाशात् प्रम्लोचया तपोनाशार्थमिन्द्रेण प्रेषितया प्रम्लोचाख्यया अप्सरसा स्त्रिया या कन्या अमललोचना लब्धा तां कन्यामपविद्धां पुनः स्वर्गं प्रतिगच्छन्त्या प्रम्लोचया वृक्षेषु त्यक्तां भूरुहा वनस्पतयः जगृहुः दुहितरममन्यन्त हे नृपनन्दनाः१३।

क्षुधा क्षामायाः पीडितायाः अतो रोदमानायाः तस्याः कन्यायाः मुखे वनस्पतीनां राजा सोम इति प्रसिद्धः अमृतस्राविणीं देशिनीं तर्जनीमङ्गुलीं निदधे निहितवान् अनेनाप्सरसो गर्भसम्भवेनामृताहारेण च तस्या लावण्यं क्रमस्वेददौर्गन्ध्यादिराहित्यं चोक्तम् ॥ १४ ॥

मामनुवर्त्तमानेन पित्रा वर्हिष्मता वः युष्मभ्यं प्रजासर्गे आदिष्टः आज्ञापितः अतस्तत्र प्रजासर्गे यतमाना यूयं तां पतिमाकांक्षन्तीं कन्यामुद्वहत चिरं विलम्बं मा कुरुत ॥ १५ ॥

ननु बहूनां कथमेका भार्या स्यात्तत्राह । अपृथग्धर्मः शीलं येषां सर्वेषां वः युष्माकं पतिषु भवत्सु अर्पितः आशयो यया अपृथग्धर्मः शीलं यस्याः सेयं सुमध्यमा पत्नी भूयात् धर्मशीलयोरैक्यान्मद्वाक्याच्च न दृष्टविरोध इति भावः ॥ १६ ॥

दिव्यानां देवमानपरिच्छिन्नानां वर्षसहस्राणां साहस्रं कालममितौजसः अमितमोज इन्द्रियशक्तिर्येषां ते यूयं भौमान्भोगान्भोक्ष्यथ ॥ १७ ॥

अनन्तरमव्यभिचारिण्या अपिभक्त्या पक्वगुणः धर्मकामादिमलः आशयोऽन्तःकरणं येषां तेऽतो निरयात्संसारान्निर्विद्यनिर्वेदं लब्ध्वा पक्वगुणाशया इति पाठे शान्तसत्त्वादिगुणवासनाः मद्धाम मत्स्थानमुपयास्यथ प्राप्स्यथ ॥ १८ ॥

ननु भौमभोगासक्तानां नस्त्वद्भक्तिः कथं भविष्यति तत्राह गृहेष्वाविशतां प्रविष्टानामपि कुशलमनभिसंहितफलं कर्म येषां मद्वार्त्तायातयामानां मत्कथाक्षपितकालानां गृहाः बन्धाय न मताः बन्धका न भवन्तीत्यर्थः ॥ १९ ॥

त्वद्वार्ताश्रोतृणां गृहैर्नबन्धइति कुतस्त तत्राह । न व्यवदिति । यत् यस्माद्यत्कथाश्रवणात् ज्ञः सर्वज्ञोऽहमीश्वरः ब्रह्मवादिभिः प्रवक्तृभिर्निमित्तभूतैः श्रोतृणां हृत् हृदयं न व्यवत्प्रतिपदं नूतनवद्ये प्राप्नोमि व्यवच्छिद्यते यत्र इति पाठे तु गृहेषु परब्रह्मभूतं मां कथयद्भिः यशो मद्भक्त्यात्मना ज्ञानयशो न व्यवच्छिद्यते विच्छिन्नो न भवतीत्यर्थः यं विशिनष्टि यतो ज्ञानयोगात्मनि गताः प्राकृतैर्मोहादिभिर्युक्ता न भवन्तीत्याह ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्यं च वरं दास्यामीत्याह । यद्यूयमिति । अनेन विमलकीर्तिकामैः पुरुषैर्गुर्वादेशः सर्वथानुष्ठेय इति शिक्षा दर्शिता ॥ ११ ॥

सत्पुत्राभावे किम्प्रयोजनं जन्मना"सोऽयं मनुष्यलोकः पुत्रेणाजय्य" इति श्रुतेस्तत्राह । भवतेति । पुत्रशब्दार्थं ध्वनयति । य एतामिति ॥ १२ ॥

अनुकूलभार्याभावे कथमौरसपुत्रसम्पादित्यतस्तत्प्राप्तिं वक्तुमुपक्रमते । कण्डोरिति । प्रम्लोचयाप्सरसा मातापितृमरणकारणयोगे तज्जातत्वात्तत्परिहारार्थमपविद्धां त्यक्तां भूरुहा वृक्षा जगृहुरित्यन्वयः ॥ १३ ॥

क्षुत्क्षामायाः श्रान्तायाः स सोमः ॥ १४ ॥

प्रजाविसर्गे प्रजानां विविधसृष्टौ ततः किमत्राह । तत्रेति । तत्र तस्मिन् कार्ये कर्तव्ये सति ॥ १५ ॥

बहूनामस्माकमियमेकानुकूला कथं स्यादत्रापि तादृशं वरं दास्यामीत्याह । अपृथग्धर्मशीलानामिति ॥ १६ ॥

दिव्यवर्षसहस्राणामित्यत्र सहस्रशब्दो बहुलवाची प्रतीतर्थोऽस्य प्रमाणविरुद्धत्वादनुपपन्नत्वं तदुक्तम् ।

मनुष्याणां वत्सराणां लक्षद्वादशकं पुरा ।

प्रचेतोभिरियं पृथ्वी पालिताव्याहतेन्द्रियैरिति ॥ १७ ॥

एवमैहिकं वरं दत्वा पारत्रिकं वरं ददाति । अथेति । पक्वः परिपाकं प्राप्तो गुणाशयः प्राकृतान्तःकरणं येषां ते तथा अतो

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निरयादस्मात्संसारात् "अतो निन्दाहेतुविचित्रेषु" इत्यभिधानात् चित्रात्पुण्यपापमिश्रिताद् "चित्रमालेख्यमिश्रयोः" इत्यभिधानात् ॥ १८ ॥

गृहाविष्टचेतस्त्वेन पुत्रमित्रादिस्नेहबद्धानां कथं धाम प्रवेशो ग्रन्त इति तत्राह । गृहेष्विति । मद्वार्तया यातो गतो यामः कालविशेषो येषां ते तथा "गृहाः पुंसि च भूम्नि" इत्यमरः जसि पुल्लिङ्गः ॥ १९ ॥

ननु भवद्वार्ता संसारच्छेदिनी यदि तर्हि सर्वेऽपि किं न मुक्तास्तस्याः सुलभत्वादिति तत्राह । न व्यवह्रियत इति । यतो यस्य हरेः प्रसादाद्गताः सूक्ष्मेण मनसावगच्छन्तो जानन्तो ये विपदि न मुह्यन्ति न शोचन्ति संपदि न हृष्यन्ति तैर्ब्रह्मवादिभिरप्येतद्यज्ञो ब्रह्मविष्णवाख्यं ब्रह्म यथानुभवं न व्यवह्रियत इत्यन्वयः अतो मद्वार्ताया असुलभत्वान्न सर्वेषां मुक्तिरित्यर्थः ब्रह्मवादिभिर्भवद्भिर्गृहेऽपि यज्ञो निजकर्म न व्यवच्छिद्यते यतो भवन्तो मदाज्ञया गृहागता न मोहादिकं कुर्वन्तीत्येवमादिमयोपदिष्टमेतद्रहस्यं तस्मान्मा शोचतेत्यपव्याख्यानं सूक्ष्मेण "मनसा विष्णो वाचा वक्तुं न शक्नुम" इति वचनेन निरस्तमिति ज्ञायेत यज्ञपदस्य निजकर्मार्थत्वं ब्रह्मपदस्य रहस्यार्थत्वं च न व्यवच्छिद्यत इति ग्रन्थव्यत्यासश्च सम्प्रदायापरिज्ञानविजृम्भितं चेति यज्ञो विष्णुर्देवता ब्रह्मविदाप्नोति परमिति सूचनाय ब्रह्मवादिभिरिति प्रसिद्धयज्ञपरिहाराय ब्रह्मेति विप्रादिव्यावृत्तये यज्ञ इति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न व्यवादिति तैर्व्याख्यातम् यज्ञा ज्ञः परमेश्वरोऽहं यन्नव्यवत् हृदये भामि एतदेव ब्रह्मेति ब्रह्मवादिभिरुच्यत इत्यर्थः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

लोकान् अनुलक्ष्यीकृत्य ॥ ११ ॥

गुणैर्ब्रह्मणः सकाशादनवमोऽन्यूनः ॥ १२ ॥

ननु कस्यां भार्य्यायां पुत्रो भवितेत्यत आह । कण्डोरिति त्रिभिः । तपोनाशार्थमिन्द्रप्रेषितया प्रम्लोचया कण्डुर्नाम ऋषिर्बहुकालं रेमे । सा च ततः स्वर्गं गच्छन्ती कण्डोर्जातं गर्भं वृक्षेषु त्यक्त्वा जगामेत्यत आह । अपविद्धां त्यक्तां हे नृपनन्दनाः! ॥ १३ ॥

सोमो वनस्पतीनां राजा स प्रसिद्धः ॥ १४ ॥

पित्रा प्राचीनवर्हिषा मामनुवर्त्तमानेन तत्र गत्वा ॥ १५ ॥

ननु बहूनां कथमेका भार्य्या स्यात्तत्राह । अपृथगिति । भूयादिति मदाशीर्वाद एव दृष्टादृष्टदोषमुपशमयिष्यतीति भावः ॥ १६ ॥

दिव्यानां वर्षसहस्राणां सम्बन्धिनं कालमभिव्याप्य सहस्रमनन्तान् भोगान् भोक्ष्यथेत्यन्वयः । सहस्राणामिति कपिञ्जलानालभेतेति वत् त्रयाणामित्यर्थः ॥ १७ ॥

हे भक्त्या पक्वगुणाशयाः ! अथ भौमभोगान्ते मद्धाम यास्यथेत्यन्वयः । न तु भविष्यन्त्या भक्त्या पक्वगुणाशयाः सन्त एवेति व्याख्येयम् । अपक्वकषायाणां भगवद्दर्शनासम्भवात्तदुक्तम् "अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम्,, इति । अतः इदन्तास्पदत्वात् पारमेष्ठ्यादि पदादपि निरयतुल्यान्निर्विद्य ॥ १८ ॥

ननु तर्हि भौमान् भोक्ष्यथ भोगानित्युक्त्वा निर[illegible] विषयभोगे त्वद्भक्तिप्रतिकूले कथमस्मान्निक्षिपसीति [illegible] गृहेषु आविशतां प्राप्तावेशानामपि कुशलं मत्परिचर्या[illegible] कर्म येषां मत्कथया यातो यामः प्रहरोऽपि येषां प्रहरमध्ये[illegible] येषामवश्यमेव भवतीत्यर्थः । अयमर्थः कर्मजन्यानामेव [illegible] बन्धकत्वं निरयतुल्यत्वं भक्तिप्रातिकूल्यञ्च न तु मदनुग्र[illegible]न्यानामत एव ममानुग्रहाद्भौमान् भोक्ष्यथेति मयो[illegible]न्यत्रापि यत्र विषयभोगेऽपि मद्भक्तेरसङ्कोचः प्रत्युत [illegible] दृश्यते चेत्तदा स विषयभोगो मदनुग्रहजन्य एवानुमे[illegible] बन्धकः । पृथुप्रह्लादध्रुवमन्वादिषु तथा दर्शनात् अविद्या[illegible] येषु तु भक्तेषु मदनुग्रहो भोगव्यावक एव दृष्टव्यो यदुक्तं "यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः" इत्यादि ॥ १९ ॥

तेषां भक्तानां कुतो बन्धदुःखं यतस्तेषां हृदये[illegible] सुखं प्राप्तुं नित्यं वसामीत्याह । नव्येति । एतन्मत्स्वरूपं ब्र[illegible]दिभिर्ब्रह्म उच्यत इति शेषः । यतो यत्र ब्रह्मणि गता [illegible] न मुह्यन्ति मोहशोकहर्षान्न प्राप्नुवन्ति सोऽहं [illegible] यद्यस्मात्तेषां कुशलकर्मणां हृत् हृदयकमलं नव्यवत् [illegible] पदं नूतनवत् अये प्राप्नोमि जानामीति वा तेषां हृदये न[illegible]वदहं भामीति सन्दर्भः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लोकान् अनुलोकस्थितिपर्यन्तान् ॥ ११ ॥

अनवमोऽन्यूनः विश्रुतः विख्यातकीर्तिः आत्मवीर्येण [illegible]न्तानेन ॥ १२ ॥

कण्डोःसकाशाल्लब्धा तत्तपोनाशार्थमागतया तपोनाशान[illegible] कन्यामपविद्धां स्वर्गं गच्छन्त्या प्रम्लोचया त्यक्ताम् भूरुहा जगृहुः ॥ १३ ॥ ॥

यः राजा भूरुहाणामिति शेषः सः सोमश्चन्द्रः ॥ १४ ॥

तत्र प्रजासर्गे निमित्ते ॥ १५ ॥

अपृथग्धर्मशीलानां भवतां समानधर्मशीला मदाज्ञया [illegible]भिरेकभार्यास्वीकारे न कोऽपि दोष इति भावः ॥ १६ ॥

ममानुग्रहादहतौजसः अव्याहतबलाः ॥ १७ ॥

पक्वगुणाः दग्धवासन आशयो येषाम् "एते वै निरया[illegible] लोकस्य परमात्मनः,, इतिस्मृतेः अतो निरयात् प्राकृत[illegible]लात् मद्धाम मदीयं लोकम् ॥ १८ ॥

मद्वार्तया यातो यामः कालो येषांतेषाम् ॥ १९ ॥

ब्रह्मवादिभिर्मद्वार्तो पदेष्टृभिर्देतुभूतैः यज्ञोऽहं येषां हृ[illegible] नव्यवत् प्रत्यहं श्रुतोऽपि अभूतपूर्ववत् अत्यद्भुतत्वात् [illegible] प्राप्नोमि ते मोहादिकं न प्राप्नुवन्ति यतः एतत् मद्धाम [illegible] गताः श्रवणादिना प्राप्ताः ॥ २० ॥

---

भाषाटीका ।

जिस हेतु से कि तुमने आनन्द से पिता की आज्ञा ग्रहण किया है तिससे तुमारी दिव्यकीर्ति लोकों में फैलेगी ॥

गुणों से ब्रह्माजी के तुल्य लोक में विख्यात [illegible] एक पुत्र होगा जो कि अपने सन्तानों से त्रिलोकी को [illegible] करदेगा ॥ १२ ॥

हे राजपुत्रों ! कण्डुमुनि से प्रम्लोचा अप्सरा ने

॥ मैत्रेय उवाच ॥

एवं ब्रुवाणं पुरुषार्थभाजनं जनार्दनं प्राञ्जलयः प्रचेतसः ।
तद्दर्शनध्वस्ततमोरजोमला गिरागृणन् गद्गदया सुहृत्तमम् ॥ २१ ॥

॥ प्रचेतस ऊचुः ॥

नमो नमः क्लेशविनाशनाय निरूपितोदारगुणाह्वयाय ।
मनोवचोवेगपुरोजवाय सर्वाक्षमार्गैरगताध्वने नमः ॥ २२ ॥
शुद्धाय शान्ताय नमः स्वनिष्ठया मनस्यपार्थं विलसद्द्वयाय ।
नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय ॥ २३ ॥
नमो विशुद्धसत्त्वाय हरये हरिमेधसे ।
वासुदेवाय कृष्णाय प्रभवे सर्वसात्वताम् ॥ २४ ॥
नमः कमलनाभाय नमः कमलमालिने ।
नमः कमलपादाय नमस्ते कमलेक्षण ! ॥ २५ ॥
नमः कमलकिञ्जल्कपिशङ्गामलवाससे ।
सर्वभूतनिवासाय नमो युङ्क्ष्महि साक्षिणे ॥ २६ ॥
रूपं भगवता त्वेतदशेषक्लेशसंक्षयम्
आविष्कृतं नः क्लिष्टानां किमन्यदनुकम्पितम् ॥ २७ ॥
एतावत्त्वं हि विभुभिर्भाव्यं दीनेषु वत्सलैः ।
यदनुस्मर्यते काले स्वबुद्ध्याऽभद्ररन्धन ! ॥ २८ ॥
येनोपशान्तिर्भूतानां क्षुल्लकानामपीहताम् ।
अन्तर्हितोऽन्तर्हृदये कस्मान्नो वेद नाशिषः ॥ २९ ॥
असावेव वरोऽस्माकमीप्सितो जगतः पते ! ।
प्रसन्नो भगवान् येषामपवर्गगुरुर्गतिः ॥ ३० ॥

भाषाटीका ।

सुन्दर नेत्र वाली कन्या उत्पन्न हुई है उसको प्रम्लोचा अप्सरा फेंक गई तब वृक्षों ने उसको लेलिया है ॥ १३ ॥

जब वह कन्या भूखसे रोने लगी तब चन्द्रमा ने दया से अमृत वर्षाने वाली तर्जनी अंगुली को उस कन्या के मुख में दिया तिससे वह रूपवती है ॥ १४ ॥

मेरे अनुवर्तन करने वाले राजा प्राचीनबर्हि ने तुमको प्रजा सृष्टि करने की आज्ञा दी है तो उस सुन्दर कन्या का तुम लोग विवाह करो देर मत करो ॥ १५ ॥

तुम सब एक ही शील धर्म वाले हो तब वह कन्या भी तुम सबो में एकही सरीका चित्त रक्खेगी कुछ अन्तर नहीं पड़ेगा ॥ १६ ॥

तुम लोग दिव्य पराक्रम वाले होकर तीन हजार दिव्य-वर्षों तक पृथ्वी को भोगो गे इसमें हमारा अनुग्रह है ॥ १७ ॥

तदनन्तर मेरी एकाग्र भक्ति करके गुण कृत कामादिकों को नष्ट करोगे फिर नरक रूप इस संसार से छूटकर हमारे धाम को आजाओगे ॥ १८ ॥

जो लोग हमारे में सब कर्मों को अर्पण कर देते है और हमारी कथा में दिन गमाते हैं उन लोगों को घर द्वार बन्धक नहीं होते हैं ॥ १९ ॥

मैं सर्वज्ञ जिनलोगों के हृदय में नूतन सा होकर सदा प्राप्तहोता हूं उस प्राप्त होने ही को ब्रह्मवादि लोग ब्रह्म साक्षात्कार कहते हैं जिस ब्रह्मको प्राप्त होने से मनुष्य न शोचते हैं न मोह को प्राप्त होते हैं ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पुरुषार्थं भाजयति प्रापयतीति तथा तम् ॥ २१ ॥
पुरुषार्थं भाजयति प्रापयतीति तथा तम् ॥ २१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नामानि च यस्य मनोवचसोर्वेगादपि पुरोऽग्रतो जवो वेगो यस्य मनोवचसोरगोचरायेत्यर्थः अत एव सर्वेषामक्षाणां मार्गैरगतोऽनवगतोऽध्वा यस्य तस्मै ते नमः ॥ २२ ॥

स्वान्निष्ठया स्वरूपस्थित्या शुद्धाय अतः शान्ताय मनसि निमित्ते सत्यपार्थे स्वयमेव विलसद्विस्फुरितं द्वयं यस्मिन् गृहीता मायागुणैर्विग्रहा ब्रह्मादिमूर्तयो येन ॥ २३ ॥

सत्वस्तु विशुद्धसत्त्वरूपाय संसारं हरति मेधा ज्ञानं यस्य तस्मै ॥ २४ ॥ २५ ॥

अयुङ्क्ष्महि कृतवन्तो वयम् ॥ २६ ॥

यदुक्तं वरं वृणीध्वमिति तन्मनसि निधायाहुः । रूपमिति । समस्तानां क्लेशानां संक्षयो यस्मात् नः आविष्कृतं प्रकटितम् अतोऽन्यत्किमनुकम्पितमनुकम्पा इयमेवास्माकं परमानुकम्पेत्यर्थः ॥ २७ ॥

कुत इत्यत आह । हे अमङ्गलनामङ्गलनाशन ! स्वप्रत्ययोऽत्र न विवक्षितः एतावदेव दीनेषु वत्सलैः प्रभुभिर्भाव्यं कार्यम् किन्तत्तदाह । यदिति । अस्मदीया एत इति बुद्ध्या उचिते कालेऽनुस्मर्यत इति यत् त्वया तु रूपमपि दर्शितमिति भावः ॥ २८ ॥

येनानुस्मरणेन स्मृतानां तेषामुपशान्तिः सुखं भवति किञ्च क्षुल्लकानामपि भूतानामन्तर्हृदयेऽन्तर्हितोऽन्तर्यामित्वेन स्थितो भवानीहितामिच्छन्तां त्वदुपासकानां नोऽस्माकमाशिषः कस्माद्धेतोर्न वेद जानात्येवेत्यर्थः ॥ २९ ॥

तथापि वक्तव्यं चेत्तर्हि येषामस्माकं भगवान् प्रसन्नोऽसावेव वरः भगवत्प्रसाद एवास्माकमीप्सितो वर इत्यर्थः अपवर्गगुरुर्मोक्षमार्गप्रदर्शकः गतिः स्वतश्च पुरुषार्थभूतः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं भगवतोक्ताः प्रचेतसस्तमेव जनार्दनमगृणन्नित्याह । मैत्रेयः एवमुक्तप्रकारेण ब्रुवाणं पुरुषार्थानामाश्रयं सुहृत्तमं जनार्दनं तस्य जनार्दनस्य दर्शनेन ध्वस्तानि कामक्रोधादीनि रजआदिकार्यरूपाणि मलानि येषां ते प्राञ्जलयः बद्धाञ्जलयो गद्गदगिरागृणन् तुष्टुवुः ॥ २१ ॥

आध्यात्मिकादिदुःखानां नाशाय उदारगुणाः यद्याह्वयैः नामभिः निरूपिताः स निरूपितोदारगुणाह्वयः तस्मै मनोवचसोर्वेगादपिपुरोऽग्रतो वेगो यस्य वाङ्मनसागोचरायेत्यर्थः सर्वेषामक्षाणामिन्द्रियाणां मार्गा वृत्तयः तैरगतः अविषयीकृतः अध्वा स्वस्वप्राप्त्युपायः यस्य इन्द्रियद्वारागोचरस्य प्राप्त्युपायायेत्यर्थः ॥ २२ ॥

शुद्धाय कर्मोपाधिरहिताय शान्ताय ऊर्मिषट्करहिताय तत्र हेतुः स्वनिष्ठया स्वस्मिन्निष्ठाऽविच्छेदः अविच्छिन्नस्वानुभूत्याऽपार्थेऽवगतपुरुषार्थे पुरुषार्थभूतस्वरूपज्ञानरहिते मनसि विलसत्परस्पर वैलक्षण्येन स्फुरत् द्वयं देहात्मनोर्द्वयं येषां ते विलसद्द्वयाः स्वस्वरूपज्ञानविधुरेऽपि मनसि भगवत्प्रसादवशाद्देहात्मज्ञानसंपन्ना इत्यर्थः तेषां जीवानामात्मने निरतिशयप्रीतिविषयाय जगतः स्थानलयोदयेषु स्थितिलयोत्पत्तिषु निमित्तभूतासु जगत् स्थित्याद्यर्थं

गृहीता माया सङ्कल्पात्मकं ज्ञानं मायावयुनं ज्ञानमिति श्रु- यत्वान्मायाशब्दस्य गुणौ तमोरजसी एव विग्रहौ पृथ- नहौ यस्य स्थित्यर्थं स्वेच्छोपात्ताप्राकृतदिव्यमङ्गलविग्रहः सृष्ट्यु- मुत्पत्त्यर्थं तु तमोरजःप्रधानरुद्रब्रह्मविग्रहा स्तस्मै इत्यर्थः ।

स्थित्यर्थं विष्णुतनोः प्राकृतत्वशङ्कापरिहाराय शुद्ध- सत्त्वायेति । हरयेवन्धहारिणे हरिमेधसे दुरितहारिमनीषा- यसर्वभूतान्तरात्मने आनन्दकराय सात्वतां भक्तानां प्रभवे ।

कमलं जगदुत्पत्तिस्थानात्मकं नाभौ यस्य कमलमा- स्तीति तस्मै व्रीह्यादित्वान्मत्वर्थीय इनिः अत इनि ठनाविति करणात् कमलवत्पादौ कोमलौ सुगन्धी सुन्दरौ च यस्य दलवद्विशाले अक्षिणी यस्य तस्मै ॥ २५ ॥

कमलकिञ्जल्कवत्पिशङ्गममलञ्च वासो वस्त्रं यस्य सर्वभूता- नामाधाराय सर्वाणि भूतानि निवासः वासस्थानं शरीरं वा यद्यपीदम् विशेषणद्वयं वासुदेवायेत्यनेनैवावगतं तद्विवरणरूपमिदं व्याख्येयं साक्षिणे सर्वसाक्षाद्द्रष्ट्रे तुभ्यं युंक्ष्महि करवाम ॥ २६ ॥

भगवद्दर्शनेनैवात्मनामवाप्तसमस्तपुरुषार्थतामाहुः । आविष्कृ- अशेषाणां क्लेशानां संक्षयो यस्मात्तदेतद्रूपं भवता ताप- राणामस्माकमाविष्कृतं प्रकटीकृतं इतोऽन्यत्किमनुकम्प- इयमेव त्वया कर्तव्यानुकम्पेत्यर्थः अतो नास्माभिर्वर- सीति भावः ॥ २७ ॥

हे अमङ्गलनिरासक ! वत्सलैः प्रभुभिर्दीनेषु भाव्यं एतावदेव किन्तत्तदाह । अस्मदीया एत इति । बुद्ध्या काले‌ऽनुस्मर्यत इति यत्त्वयातु रूपमपि दर्शितमिति भावः ॥

येनानुस्मरणेन क्षुल्लकानां क्षुद्राणामुपशान्तिः दुःखोप- र्भवति किञ्चेहितां कामयमानानां नोऽस्माकमन्तर्हृदये अन्त- स्थितो भवानाशिषः कामान् कस्माद्धेतोर्न वेद जा- त्यर्थः॥ २९ ॥

तथापि वक्तव्यं चेत्तर्हि येषामस्माकं भगवान् प्रसन्न- वेव वरः कुतः यतस्त्वमपवर्गगुरुः मुक्तिसाधनोपदेष्टा वर्गसाधनभूतश्च ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रचेतोभिरेवं भगवतो मतमवाप्य स्वपरहितं किम- तत्राह । एवमिति ॥ २१ ॥

स्तुतिः प्रेक्षावच्चित्तहर्षणी चेदुपादेया स्यादन्यथे- रवदप्रयोजिकीत्यतोऽपि आह्वगुणविशिष्टामाहुरित्याह । नमो इति । निरूपितोदारगुणाह्वयाय निरूपिता उदारगुणा तथा महागुणा आह्वया नामानि यस्य स तथा तस्मै वचोवेगपुरोजवाय वाङ्मनसयोर्वेगादपि पुरःस्थितवेगाय वाङ्मनसवेगमतीत्यवर्तनवेगाय "तद्धावतोऽन्यानत्येति" सर्वाक्षाणां सर्वेन्द्रियाणां मार्गैर्निर्मार्गैरगताध्वने- गाय ॥ २२ ॥

शुद्धायेत्येतदशुद्धाक्षाज्ञेयत्वे लिङ्गं शान्ताय पूर्ण- भावाय अपगतोऽपेक्षितोऽर्थो यस्मात्तदपार्थं तस्मिन् दु- व्यवस्था यस्य नास्ति तत्स्वनिष्ठं संशयात्मकमित्यर्थः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वनिष्ठमनस्तस्मिन् समाधानरहिते मनसि विलसद्द्वयाय प्रकटितस्वतन्त्रवस्तुद्वयाय ।

अनवस्थितबुद्धीनां द्वितीयं दृश्यते हरेः ।
सम्यक्सुस्थितबुद्धीनामिदं सर्वं हरेर्वशः ॥

इतिवचनादुक्त एवार्थो ननु प्रकटितप्रपञ्चरूपायेति नित्यं गृहीताः मायाया गुणाः प्रकृतेः सत्त्वादिगुणाः सत्त्वादिगुणप्रवर्तनानुगुणाः सत्त्वादिगुणरहिता ज्ञानानन्दात्मका विग्रहा ब्रह्मादिशब्दवाच्याश्च येन स तथा तस्मै नित्यं गृहीताः सत्त्वाद्या विग्रहाश्च त्रयः सदा "ज्ञानानन्दात्मकास्ते तु विग्रहा निर्गुणास्तथा । द्वौ तत्र ब्रह्मरुद्रस्थावेको वैकुण्ठधामग" इति वचनान्न प्रकृतिगुणविरचितदेहत्वं हरेरङ्गीकर्तुं युक्तम् ॥ २३ ॥

विशुद्धश्चायं सत्त्वः सर्वगुणात्मकश्च विशुद्धसत्त्वस्तस्मै "हरिः सर्वगुणात्मत्वात्सत्त्व इत्यभिधीयत" इतिवचनात् रजआदिमिश्ररहितसत्त्वगुणायेत्यर्थो नोचितः हरणात् ज्ञानरूपत्वाद्धरिमेधाविभोः स्मृत इत्यतः पापहरणात् ज्ञानरूपत्वाद्धरिमेधाः सृष्टौ रजःसम्पर्कात्कपिलवर्णज्ञान इत्यर्थो न ग्राह्यः "हरिर्ना कपिले त्रिषु" इत्यभिधानात् अतो गदित एवार्थस्तस्मै ॥ २४ ॥ २५ ॥

अयुञ्ज्महि नमस्काराख्यं योगमकार्ष्म ॥ २६ ॥

अनुकम्पया भवताप्येतद्रूपमाविष्कृतमन्यत्किमस्मदनुकम्पां विना न किमपीत्यर्थः ॥ २७ ॥

अभद्ररन्धन ! पापदहन ! ॥ २८ ॥

यदुक्तं हरिणा वरं वृणीध्वमिति तत्राहुरित्याह । येनेति । क्षुल्लकानामल्पकानामपि भूतानामन्तर्हृदये अन्तर्हितस्त्वं तेषामीहितं चेष्टितं चावैषि तस्मान्न आशिषः कस्मान्न वेदापि तु वेदेत्यन्वयः ॥ २९ ॥

त्वत्प्रसादादन्यो वरो न प्रार्थनीय इत्याहुरित्याह । असाविति । येषामस्माकं भगवान् प्रसन्नः असौ भगवत्प्रसाद एवेप्सितो वरो नान्य इत्यन्वयः ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तद्दर्शनात् ध्वस्तानि तमोरजोमलानि यैस्ते ॥ २१ ॥ २२ ॥

स्वस्य तव निष्ठया तन्निष्ठायां जातायां जनानां मनसि अपार्थमेव विलसदाभासमानं द्वयं कारणकार्यात्मकं जगत् किं वा कर्मज्ञानात्मकं साधनं यस्मात् तस्मै जगत् स्थानादिषु निमित्तेषु गृहीता स्वाधिष्ठानीकृता माया गुणाः सत्त्वादयो यैः तादृशा विग्रहाः श्रीविष्णवादयो यस्य तस्मै ॥ २३—२८ ॥

तत्र च सति स्वदौरात्म्यं कथं गोपनीयमित्याहुः । क्षुल्लकानामिति सपादार्द्धेन ॥ २९ ॥

सत्यपि दौरात्म्ये विचारतस्त्विदमुपलभामह इत्याहुः । असाविति । भवत्प्रसाद एवास्माकमीप्सितो वर इत्यर्थः । अपवर्गतो ब्रह्मकैवल्यादपि गुरुर्महती या गतिः फलं तद्रूपः । यद्वा अपवर्गस्य भक्तियोगस्य गुरुरुपदेष्टा तदुचिता गतिश्च ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुरुषार्थानां भाजनं पात्रं ध्वस्ततमोरजसोऽपि यद्दर्शनात् अमलाः अदर्शनदुःखमालिन्यरहिता इत्यर्थः ॥ २१ ॥

निरूपिता वेदैरुक्ता उदारा गुणा आह्वया नामानि च यस्य तस्मै मनोवचसोर्वेगादपि पुरोऽग्रतो जवो वेगो यस्य तस्मै ॥ २२ ॥

मनसि अपार्थं निष्प्रयोजनं विलसत् देदीप्यमानमपि द्वयं द्वैतं यस्मात्तस्मै यं प्राप्तानां मनसि विविधभोगयुक्तमपि जगन्निष्प्रयोजनमेव स्यादित्यर्थः । गृहीता मायागुणमया ब्रह्मेन्द्ररुद्ररूपा विग्रहा येन तस्मै ॥ २३—२५ ॥

नमो युञ्ज्महि कृतवन्तः ॥ २६—२७ ॥

एतावत्त्वं एतावदेव विभुभिः प्रभुभिस्तत्र भवद्भिः यत्काले स्वीयसेवाकाले दासबुद्ध्या स्मर्य्यते हे अभद्रहन्तः ! ॥ २८ ॥

येन त्वत्कर्तृकानुस्मरणेनैव तेषामुपशान्तिः सुखं क्षुल्लकानां क्षुद्राणामपि ईहितां सकामानामपि नोऽस्माकं अन्तर्हृदयमध्ये वर्त्तमानः सन्नस्माकमाशिषः कामान् कस्मान्न वेद कीदृशः अन्तः अन्तःकरणानां हितं शुद्धिर्यस्मात् सः ॥ २९ ॥

तदपि वाचाप्युच्यत इत्याहुः । असाविति । अपवर्गान्मोक्षादपि गुरुस्त्वमेव यदि प्राप्तस्तदा मोक्षपर्य्यन्तैर्वरैरलमिति भावः ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुरुषार्थान् भाजयति प्रापयतीति तथा तं अगृणान् अस्तुवन् ॥ २१ ॥

वेदैर्निरूपिता वर्णिताः उदारा भक्तमनोरथपूरका गुणाः । आह्वया नामानि च यस्य तस्मै मनोवचसो वेगादपि पुरः अग्रतो जवो वेगो यस्य तस्मै सर्वेषां प्राणिनामक्षमार्गेन्द्रियवृत्तिभिरगतोऽसंस्पृष्टः अथवा दर्शनमार्गो यस्य तस्मै "नाहं प्रकाशः सर्वस्य योगमाया समावृत" इति श्रीमुखोक्तेश्च ॥ २२ ॥

स्वनिष्ठया स्वकीये उपास्ये वासुदेवे या निष्ठा तया मनसि उपासकचित्ते अपार्थं निरर्थकं यथा भवति तथा विलसत् द्वयं तदितरोपासनीयसाधनादिकं पुत्रवित्तादिकं च द्वैतं यस्मात् उपास्यात् तस्मै "योऽन्यां देवतामुपासते न स वेद किं प्रजया किं धनेन येषामयमात्मलोक" इतिश्रुतेः गृहीताः प्रकटीकृता मायागुणमया विग्रहा येषां ते मायागुणविग्रहाः । यत्सत्त्वतः सुरगणा रजसः प्रजेशा मन्योस्तु भूतपतयः स भवान् गुणेश इति वक्ष्यमाणाः येन तस्मै यद्वा गृहीतो मायागुणविग्रहो विराड्देहो येन तस्मै ॥ २३ ॥

हरति संसारं मेधा यस्य यद्धिया बुद्धिर्मुक्तिं ददाति तस्मै ॥ २४ ॥ २५ ॥

अयुञ्ज्महि कुर्मः ॥ २६ ॥

वरं वृणीध्वमित्युक्तं तत्र यद्यपि त्वद्दर्शनेनैव कृतार्थानाम् न वराकाङ्क्षा तथापि महत्सङ्गो दीयतामित्याहुः रूपमित्यादिसप्तभिः गृहीताः प्रकटीकृताः ॥ २७ ॥

वरं वृणीमहेऽथापि नाथ ! त्वत्परतः परात् ।
नह्यन्तस्त्वद्विभूतीनां सोऽनन्त इति गीयसे ॥ ३१ ॥
पारिजातेऽञ्जसा लब्धे सारङ्गोऽन्यन्न सेवते ।
त्वदङ्घ्रिमूलमासाद्य साक्षात्किं किं वृणीमहि ॥ ३२ ॥
यावत्ते मायया स्पृष्टा भ्रमाम इह कर्मभिः ।
तावद्भवत्प्रसङ्गानां सङ्गः स्यान्नो भवे भवे ॥ ३३ ॥
तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ३४ ॥
यत्रेड्यन्ते कथा मृष्टास्तृष्णायाः प्रशमो यतः ।
निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥ ३५ ॥
यत्र नारायणः साक्षाद्भगवान्न्यासिनां गतिः ।
संस्तूयते सत्कथासु मुक्तसङ्गैः पुनः पुनः ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे अभद्ररन्धन ! दीनेषु अवनतेषु वत्सलैः विभुभिः एतावत्वं स्वार्थत्वप्रत्ययः । एतावदेव भाव्यं कार्य्यम् यत्काले उचितकाले स्वबुद्ध्या स्वकीयत्वेनानुस्मर्य्यते ॥ २८ ॥

येन भगवतः अवनतजनस्मरणेन भूतानां स्मृतानां शान्तिः सुखं स्यात् किञ्च क्षुल्लकानां भोगार्थं कर्मासक्तानामपि भवान् अन्तर्हृदये अन्तर्हितः अन्तर्यामितया स्थितः आशिषो वेद नोऽस्माकमीहतामुपासनं कुर्वतामाशिषः कस्माद्धेतोर्न वेद जानात्येवेत्यर्थः ॥ २९ ॥

यत्प्रसन्नोऽभूत् प्रसन्नतया दृष्टिगोचरो जात इत्येष त्वत्प्रसाद एव नोऽस्माकमीप्सितो वरः ॥ ३० ॥

---

भाषा टीका ।

मैत्रेय जी बोले धर्मादि पुरुषार्थों को देने वाले जनार्दन भगवान् जब इस प्रकार आज्ञा किये तब भगवान् के दर्शन ही से उन प्रचेतों के मनके सब रजोगुण के मल नष्ट होगये थे फिर सर्व विध सुहृद समझकर गद्गद वचन से स्तुति करने लगे ॥ २१ ॥

प्रचेता बोले हे प्रभो ! आप सब जीवों के क्लेश के नाश करने वाले हो आपके गुण कर्मों को वेद गान करते हैं मनसे वचन से भी आपका बडा वेग है आपके मार्ग को किसी की कोई इन्द्रिय नहीं जान सकी है ऐसे आपके अर्थ नमस्कार है ॥ २२ ॥

अपने स्वरूप में स्थित होने से आप शुद्ध हो शान्त हो जीवों के मनमें अज्ञान होने से आप में भेददृष्टि होती है जगत्की उत्पत्तिस्थिति प्रलय में आप अपनी विचित्र शक्ति से ज्ञानादि गुण युक्त दिव्य विग्रहों को धारण करते हो तिन आपके लिये नमस्कार है ॥ २३ ॥

आपके ज्ञान होने से संसार छूटजाता है आप विशुद्ध मूर्त्ति हो श्रीवासुदेव कृष्ण सब सात्वतों के प्रभु हो आपके अर्थ नमस्कार है ॥ २४ ॥

हे कमल नेत्र ! आपके नाभि से कमल हुआ है कमल की माला है आपके चरण कमल सरीके हैं आपके अर्थ नमस्कार है ॥ २५ ॥

कमल के केसर के तुल्य आपके पीत वस्त्र हैं सं[illegible] में आपका निवास है आप सबके साक्षी हो आपको हम[illegible] स्कार करते हैं ॥ २६ ॥

भगवान् होकर आपने हम दुखित जनों के सब [illegible] नाश करने वाले इस दिव्यरूपको प्रघट करके दर्शन [illegible] इससे और अधिक दया का चिह्न क्या होगा ॥ २७ ॥

हे अमङ्गलनाशक ! प्रभु मालिकों को इतना ही [illegible] कि जो दीनोंपर दयाल होकर सेवादिक समयपर सेवक [illegible] याद मात्र करलेवें ॥ २८ ॥

आपके याद के करते ही मात्र से अति तुच्छ बहिर्मुख [illegible] की भी सब शान्ति होजाती है आपतो सबके हृदय में [illegible] हो तो हमारे मनोरथों को क्यों न जानते होंगे ॥ २९ ॥

हे जगत् के पति ! हम लोगों का यही वर परम [illegible] जो कि आप मोक्ष के दाता हरि भगवान् हमपर [illegible] होगये हैं ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यप्येवं तथापि हे नाथ ! त्वत्तो वरमेकं वृणीमहे [illegible] तात् । परतः कारणादपि परात् । "अक्षरात्परतः परः" इति [illegible] अतो यद्यपि त्वं दातुं समर्थो न च देयानां त्वद्विभूती[illegible] न्तोऽस्ति यतोऽनन्तविभूतित्वादनन्त इति गीयसे ॥ ३१ ॥

तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया ।
भीतस्य किं न रोचेत तावकानां समागमः ॥ ३७ ॥
वयं तु साक्षाद्भगवन् ! भवस्य प्रियस्य सख्युः क्षणसङ्गमेन ।
सुदुश्चिकित्स्यस्य भवस्य मृत्योर्भिषक्तमं त्वाद्य गतिं गताः स्म ॥ ३८ ॥
यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाश्च सदानुवृत्त्या ।
आर्या नताः सुहृदो भ्रातरश्च सर्वाणि भूतान्यनसूययैव ॥ ३९ ॥
यन्नः सुतप्तं तप एतदीश ! निरन्धसां कालमदभ्रमप्सु ।
सर्वं तदेतत्पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथापि यथा सारङ्गो भ्रमरः पारिजाते सुखेन लब्धे सति सुलभमप्यन्यद्वृक्षान्तरं न सेवते तथा वयमपि साक्षात्त्वदङ्घ्रिमूलं प्राप्य किं किं वृणीमहि न किञ्चिदित्यर्थः । यद्वा । किमप्यन्यत्तुच्छं किमर्थं वृणीमहि यद्वा यदि वृणीमहि तर्हि किं किं वृणीमहि अनन्तत्वेन मनोरथानामनवस्थानादित्यर्थः ॥ ३२ ॥

अत एतावदेव प्रार्थयाम इत्याहुः । यावदिति । स्पृष्टा व्याप्ताः भवति प्रकृष्टः सङ्गो येषां तेषां सङ्गोऽस्माकं स्यात् ॥ ३३ ॥

ननु राज्यभोगात् स्वर्गापवर्गौ च विहाय किमिदं प्रार्थ्यते तत्राहुः । तुलयामेति । भगवत्सङ्गिनां सङ्गस्य लवेनापि ॥ ३४ ॥

सत्सङ्गस्य श्रैष्ठ्यं प्रपञ्चयति । यत्रेति त्रिभिः । यत्र येषु यतो याभ्यः कथाभ्यः निर्वैरं वैराभावः उद्वेगो भयम् ॥ ३५ ॥ ३६ ॥

पद्भ्यां पावनेच्छया संसाराद्भीतस्य ॥ ३७ ॥

सत्सङ्गफलमस्माभिरेवानुभूतमित्याहुः । वयं त्विति । तव यः प्रियः सखा तस्य भवस्य । अत्यन्तमचिकित्सस्य भवस्य जन्मनो मृत्योश्च भिषक्तमं सद्वैद्यं त्वां गतिं प्राप्ताः ॥ ३८ ॥

वरान्तरं वृणते । यन्न इति द्वाभ्याम् । नता नमस्कृताः ॥ ३९ ॥ निरन्धसां निरन्नानाम् अदभ्रं बहुकालम् । ते परितोषणाय भवत्विति वृणीमहे ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यप्येवमथापि हे नाथ ! परतो देहविलक्षणादात्मनः पराद्विलक्षणात्स्वत स्वत्तः प्रकृतिपुरुषविलक्षणात्त्वत्त इत्यर्थः वरं वृणीमहे कम्वरं वृणतेइति विवित्सायां त्वदीयानन्तगुणगणानुकथनानुभवपरायणानां भागवतानां सङ्गमितिवक्तुं तावदनन्तत्वमाहुः । यद्यस्मात्त्वद्विभूतीनामन्तो नह्यस्ति अतस्त्वमनन्त इति गीयसे ॥ ३१ ॥

भागवतसङ्गलभ्यत्वाद्गुणानुभवमन्तरेणान्यं न वृणीमह इत्याहुः । पारिजाते मकरन्दनिर्भरे लब्धे सति सारङ्गो भृङ्गोऽन्यं न सेवते एवं त्वदङ्घ्रिमूलं निरतिशयसुखावहमासाद्य किं किं वृणीमहे न किमपीत्यर्थः ॥ ३२ ॥

एतावदेव प्रार्थयाम इत्याहुः । ते तव मायया स्पृष्टा मोहिताः सन्तो वयं स्वकर्मभिरिह संसारे यावद्भ्रमामस्तावद्भवतः प्रसङ्गो येषां तेषां भागवतानां सङ्गं प्रति जन्म नोऽस्माकं स्यादित्येष एव वरोऽस्माभिर्वरणीयः ॥ ३३ ॥

ननु राज्यभोगस्वर्गान् हित्वा किमिदं प्रार्थ्यते तत्राहुः । तुलयामेति । भगवत्सङ्गिनां सङ्गस्य लवेनापि लेशेनापि स्वर्गादिकं न तुलयाम न तुल्यं मन्यामहे किमुत मर्त्यानां मरणशीलानामाशिषः राज्यभोगादिरूपास्तुलयाम इत्यर्थः ॥ ३४ ॥

सत्सङ्गस्य श्रैष्ठ्यं प्रपञ्चयति । यत्रेति त्रिभिः । यत्र भागवतेषु मृष्टाः कर्णरक्षः पापशोधिका मधुरा वा कथा भगवत्कथा ईड्यन्ते प्रस्तूयन्ते यतः याभ्यः कथाभ्यः श्रूयमाणाभ्यः तृष्णाया विषयबुभुक्षायाः प्रशमः प्रशान्तिः यत्र सत्सङ्गे सति भूतेषु निर्वैरं वैराभावः यत्र सत्सङ्गे सति कश्चन उद्वेगः भयं च नास्ति ॥ ३५ ॥

यत्र सत्कथासु मुक्तसङ्गैः साधुभिः पुनः पुनः भगवान्नारायण एव न्यासिनां संन्यासिनां गतिरिति सोपायः प्रस्तूयते ॥ ३६ ॥

तेषां सतां तीर्थानां गङ्गादीनां पावनेच्छया गङ्गादीन् पवित्रीकर्तुमिच्छया पद्भ्यां चरतां तावकानां त्वद्भक्तानां समागमः सङ्गमः संसाराद्भीतस्य किन्न रोचेत रोचेतैवेत्यर्थः ३७ ॥

सत्सङ्गस्य फलमस्माभिरेवानुभूतमित्याहुः । वयं त्विति । हे भगवन् ! त्वत्प्रियस्य त्वत्सखस्य भवरूपमृत्युचिकित्सकस्य भवस्य रुद्रस्य क्षणमात्रसङ्गमेन भिषक्तमं संसृतिरूपरोगनिवारकं त्वां गतिं शरणं गताः प्राप्ताः स्मः ॥ ३८ ॥

एवं सत्सङ्गं वृत्वा वरान्तरं वृणते । यन्न इति द्वाभ्याम् । यदस्मदीयमध्ययनादिकं तदेतत्सर्वं सर्वान्तरात्मनः परमपुरुषस्य तव परितोषणाय वृणीमहे त्वत्परितोषणाय भवत्वित्यन्वयः नोऽस्माभिः प्रसादिताः प्रसादं प्रापिताः ये सन्तः तदनुवृत्त्या गुरवो वृद्धा विप्राश्च प्रसादिताः प्रसादं प्रापिताः आर्याः गुर्वादयो नता नमस्कृताः तथा सुहृदादयः अनसूययैव प्रसादिताः निरन्धसां निरन्नानां नोऽस्माकमदभ्रं बहुकालमप्सु जलेषु यत्सन्तप्तं तपः एतदध्ययनगुर्वादिप्रसादननमस्कारतपआदिकम् ॥ ३९ ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यद्यपि भगवत्प्रसाद एवेप्सितो वरस्तथापि परतः परात्स्वत्सङ्गलक्षणं वरं वृणीम इत्यन्वयः परतः परत्वमुपपादयति । नह्यन्त "नान्तोऽस्ति मम दिव्यानां विभूतीनां परं तप । अन्तो नन्ते न तथा हि लिङ्गं परो मात्रया" इत्यादि प्रमाणात् ॥ ३१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यतस्त्वमेवानन्तोऽतोऽन्यस्मान्मनसा वराभिलाषो नास्त्येवेति भावेनाह । पारिजात इति । लुप्तोपममेतत् यथा पारिजाते पुष्पेऽञ्जसा तत्त्वेन लभ्ये लब्धुं योग्ये सारङ्गो भृङ्गोऽन्यच्चम्पकादिपुष्पं न सेवते तथा साक्षात्त्वदङ्घ्रिमूलमघाप्यान्यदभीष्टं किं किं वृणीमहे न किमपीत्यन्वयः ॥ ३२ ॥

मा भूदन्यतो वराभिलाषोऽस्मत्तः कोऽसौ वर इति तत्राह । यावदिति । भवतः प्रसङ्गो येषां ते भवत्प्रसङ्गास्तेषाम् ॥ ३३ ॥

सत्सङ्गो वाञ्छनीय इतिभावेनाह । तुलयाम इति ॥ ३४ ॥

सत्सङ्गतावेते गुणा लभ्यन्ते इत्याह । यत्रेति ॥ ३५ ॥ ३६ ॥

रुच्यभावे कथं घटत इति तत्राह । तेषामिति । तीर्थानां पावनेच्छया पद्भ्यां तीर्थानि विचरतां तावकानां समागमः संसाराद्भीतस्य पुंसो न रोचते किं रोचत एवेत्यन्वयः संसार-रोगपरिहारौषधपानसम्भवादत्र रुचिर्जायत इत्यर्थः ॥ ३७ ॥

सत्सङ्गफलमनुभवसिद्धं चेत्याहुरित्याह । वयन्त्विति । भगवान् प्रियो यस्य स तथा तस्य तव प्रियस्य सख्युः संसारादौ सह कारिणः शिवस्य मृत्योर्मारकस्य भिषक्तमं वैद्यश्रेष्ठम् ॥ ३८ ॥

वेदाध्ययनादिपुण्यं यत्तत्सर्वं भवत्प्रसादजनकमस्त्विति निवेदयन्तीत्याह । यन्न इति । सुष्ठु अधीतं वेदाध्ययनमनाथा मृत-भर्तृकाः ॥ ३९ ॥

निरन्धसां त्यक्तपितृदत्तान्नानां त्यक्तसर्वथान्नानां वा अद-भ्रमनल्पम् ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परतः सर्व्वश्रेष्ठरूपत्वाद्ब्रह्मतत्त्वादपि परस्तस्मात् ॥ ३१ ॥ ३२ ॥

त्वदङ्घ्रिमूलसान्निध्यन्तु त्वन्मायास्पर्शिन्यां सांसारिकाव-स्थायां न नितरां सम्पद्येत । तस्मादिममेवादेशमधुना वृणीम-हीत्याहुः । यावदिति ॥ ३३ ॥

न चैवमस्य गौणत्वमाशङ्क्यं यतस्तुलयामेति स्वर्गं सांसा-रिकभोगसुखम् ॥ ३४ ॥

तदेवं तस्य सर्व्वतः परमसाधनसाध्यत्वं दर्शितं तदेव दर्शयति । यत्रेति त्रिकेण । तृष्णायाः प्रशम इति । तासां सर्व्वो-परिस्वाद्यत्वात् अत एव निर्व्वैरं वैराभावः सर्व्वोपरिस्वाद्यत्व-मेव दर्शयति । यत्र नारायण इति । एवं परमदुर्लभानामपि तेषां सुलभत्वमाहुः । तेषामिति । पावनेच्छयेत्युत्प्रेक्षा गम्या तीर्थानां या स्वपावनेच्छा तया तदाकृष्टतयैव चरतामिति वा तत्पादलग्नानां तीर्थानां पावनीया इच्छा तत्र तत्र जिगमिषा तयेति वा तीर्थानां पावनो भगवान् तदिच्छया तत्प्राप्तीच्छ-येति वा तत्तीर्थं पावयितुं तत्कर्तृकेच्छयेति वा । तीर्थभूतानां तेषां संसारिपावनेच्छयेति वा । भीतस्यापि किमुत तद्रसज्ञस्ये-त्यर्थः ॥ ३५—३७ ॥

तत्र न वयं भीतत्वेन सत्सङ्गं प्रार्थयामहे किन्तु परमपु-रुषार्थबुद्ध्यैव क्षणिकेनैव सच्छिरोमणिसङ्गलाभेन सर्व्वभयाप-वर्गस्य तव लब्धत्वादित्याहुः । वयन्त्विति । तु शब्दादन्यतो वैशिष्ट्यद्योतनया प्रियस्य सख्युरिति गुर्व्वीश्वरयोर्भेदेश्वरयोश्चा-भेदापदेशोऽपीत्थमेव तैः शुद्धभक्तैर्मतम् ॥ ३८ ॥

अत एव यन्न इति युग्मकं परिपोषणार्थेति स्वविश... पर्य्यौकपरत्वात् प्रीतीजातेः ॥ ३९—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अन्योऽपि कश्चिदेको वरोऽस्माकमीप्सितोऽस्त्यत्र... मिति । हे नाथ ! यस्मात्त्वद्विभूतीनां देयानामन्ता नास्त्य... वरस्त्वयावश्यं देय एवेति भावः ॥ ३१ ॥

म्रियन्तां तर्हि यथेष्टमनेके एव वरा इति चेन्नैवं ... याम्बुजमेवास्माकं वरणीयं तन्माधुर्य्यास्वादप्राप्त्यर्थमेव ... देको वरोऽभीष्टोऽस्ति तं विना बहूनन्यान् वरान ... इत्याहुः । पारीति त्रिभिः । सराङ्गो भ्रमरः अन्यद्वृक्षान्... पारिजातात् कल्पद्रुमादेव प्रकाममभिवाञ्छितान् ... गृह्णातु तत्राह । सारङ्ग इति । सारङ्गस्य मकरन्दमात्रार्थि... स्त्वन्तरेषु वाञ्छैव नोत्पद्यते यथा तथैव त्वदङ्घ्रिमूले... किं किं वृणीमहि अपिच त्वच्चरणमकरन्दं विना न कि... त्यर्थः ॥ ३२ ॥

ईप्सितस्त्वस्माकमेकोऽयमेव वर इत्याहुः । याव... भवत्प्रसङ्गानां भक्तजनानाम् ॥ ३३ ॥

ननु मायया स्पृष्टा इत्युक्त्वा मायाजयार्थं साधुसङ्गं... यध्वे चेन्मोक्षमेव साक्षात् किं न गृह्णीतेत्यत आहुः । तुलयाम... अयमर्थः यावन्तो वरणीया वरास्ते सर्व्वे स्वर्गमोक्षान्ता... एवानुभूताः साधुसङ्गस्य तु स्वर्गमोक्षाभ्यां परमत्वं... कथमवगम्यते यतः साधुसङ्गे सति त्वद्रूपगुणकथा... स्वादो भवेत् स च स्वर्गसुखात् त्वदीयनिर्विशेषस्वरूप... सुखादपि कोटिकोटिगुणाधिको "नाहं वसामि वैकुण्ठे ... हृदये न च । मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ... त्वदुक्त्या सर्व्वसुखदातुस्तवापि परमसुखप्रद इत्यत एव... सङ्ग एव प्रियते इति ॥ ३४—३५ ॥

स च साधुसङ्गः सिद्धभक्तानां साधकभक्तानाञ्च ... सर्व्वथैव परमोपादेय इत्याहुः । यत्र येषु भक्तेषु यतो ... कथाभ्यः तीर्थानां पावनेच्छया स्नानादिभिरस्मान् पुनन्तु... तीर्थकर्तृका या पावनेच्छा तया हेतुभूतया तीर्थानां ... दृष्टवशादेवेत्यर्थः । भक्तानान्तु तीर्थेभ्यः स्वपावनेच्छयैव... जनं सम्मतं क्षेयम् । भीतस्य संसारात् ॥ ३६ ॥ ३७ ॥

एवञ्चाभीष्टवरस्त्वत्प्राप्तिरेव तस्यास्त्वत्प्राप्तेः एवं... सङ्ग एवास्माकं त्वत्प्राप्तेः साधनञ्च साधुसङ्ग एवं... वयन्त्विति । तव यः प्रियः सखा तस्य भवस्य जन्मनः... मरणस्येति रोगद्वयस्य सद्वैद्यं त्वां गतिं प्राप्ताः ॥ ३८ ॥

वयमज्ञास्त्वत्परितोषसाधनं नैव जानीमस्तदपि ... यद्यत् कृतं तेनापि त्वं प्रसीदेत्याशासते । यन्न इति ... ज्ञानाधिका आर्य्या भक्त्यधिकाः भूतानि प्रसीदन्तु... शेषः ॥ ३९ ॥

निरन्धसां निरन्नानामदभ्रमनल्पं कालम् ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तथापि कल्पद्रुमवद्विविधविचित्रफलदो वरदश्रेष्ठो... भूतिपतिस्त्वमस्माकं भ्रमरवत्सारग्राहिणां वाञ्छितं ... जन्मनि जन्मनि देय इत्याहुः वरामात त्रिभिः ॥ ३१—३३ ॥

मनुः स्वयम्भूर्भगवान्भवश्च येऽन्ये तपोज्ञानविशुद्धसत्त्वाः ।
अदृष्टपारा अपि यन्महिम्नः स्तुवन्त्यथो त्वात्मसमं गृणीमः ॥ ४१ ॥
नमः समाय शुद्धाय पुरुषाय पराय च ।
वासुदेवाय सत्त्वाय तुभ्यं भगवते नमः ॥ ४२ ॥
॥ मैत्रेय उवाच ॥
इति प्रचेतोभिरभिष्टुतो हरिः प्रीतस्तथेत्याह शरण्यवत्सलः ।
अनिच्छतां यानमतृप्तचक्षुषां ययौ स्वधामानपवर्गवीर्यः ॥ ४३ ॥
अथ निर्याय सलिलात् प्रचेतस उदन्वतः ।
वीक्ष्याकुप्यन् द्रुमैश्छन्नां गां गां रोद्धुमिवोच्छ्रितैः ॥ ४४ ॥
ततोऽग्निमारुतौ राजन्नमुञ्चन् मुखतो रुषा ।
महीं निर्वीरुधं कर्तुं सम्वर्तक इवात्यये ॥ ४५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सतां माहात्म्यमाहुः । तुलयामेति चतुर्भिः । भगवत्सङ्गिनां भागवतानां सङ्गस्य लवेन स्वर्गं न तुलयाम "उवाह कृष्णो भगवान् श्रीदामानं पराजितः । युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम्" इत्येवं विहारं मुक्तैः सह न करोति भगवत्सङ्गिसङ्गभावितैः स्वानन्यभक्तैः सह तु करोति अतोऽपुनर्भवं मोक्षमपि न तुलयाम इति भावः ॥ ३४ ॥

यत्र सत्सङ्गे ॥ ३५ ॥

न्यासिनां भगवति कृतात्मीयभरन्यासानाम् गम्यते इति गतिः ॥ ३६ ॥

भीतस्य संसारादिति शेषः ॥ ३७ ॥

वयं तु शिवसङ्गेन त्वां प्राप्ता इत्याहुर्वयमिति भवस्य शिवस्य प्रियस्य तवेति शेषः भवस्य जन्मनः मृत्योर्मरणस्य भिषकमं निवारकम् गतिं गम्यं च त्वां गताः ॥ ३८ ॥

वरान्तरमाहुः । यन्न इति द्वाभ्याम् ॥ ३९ ॥

यच्च निरन्धसां निरन्नानामदभ्रं कालं बहुकालम् अप्सु मग्नं तपः तदेतत्सर्वं च पुरुषस्य भूम्नस्तव तोषणायास्तु इति वरं वृणीमहे ॥ ४० ॥

---

भाषाटीका ।

हे नाथ ! तथापि हम आप से वर मांगते हैं सबसे परे जो ब्रह्मादिक तिनसे भी परे आप हो आपकी विभूतियों का अन्त नहीं है तिससे आप अनन्त कहाते हो ॥ ३१ ॥

यदि अनायास से पारिजात का वृक्ष मिल जायतो भौंरा दूसरे वृक्ष को नहीं चाहता है ऐसे आपके चरण मिलने पर भी हम अब क्या क्या मागेंगे ॥ ३२ ॥

जब तक आपकी माया से युक्त इस संसार मे भ्रमते हैं तब पर्यन्त आपके प्रसङ्ग वालों का सङ्ग हमको जन्म जन्म में होता रहै ॥ ३३ ॥

भगवत्सङ्गवाले जो भागवत तिनके सङ्ग का लवमात्र के बरोबर स्वर्ग तथा मोक्ष को भी नहीं तुलना करते हैं तो मनुष्यों की सम्पत्तियों को तो क्या गिनते हैं ॥ ३४ ॥

महात्माओं के जिस सङ्ग में अति मधुर भगवत्कथा की प्रशंसा होती है जहां तृष्णा नष्ट होजाती है जहांपर सब प्राणियों से वैर छूटजाता है जहांपर कोई उद्वेग नहीं होता है ॥ ३५ ॥

जहांपर सन्यासियों के गति देनेवाले साक्षात् भगवान् सत्कथाओं में संसार से छूटे महात्माओं से वारम्वार गाये जाते हैं ॥ ३६ ॥

तीर्थों के पवित्र करने की इच्छासे चरणों से भ्रमण करने वाले ऐसे जो आपके भक्त हैं तिनका सङ्ग संसार से डरने वाले किस पुरुष को नहीं रुचैगा ॥ ३७ ॥

हे भगवन् ! हम तो आपके प्रिय सखा भक्त साक्षात् महादेवजी के क्षणमात्र के सङ्ग होने से अति दुःसाध्य संसार तथा मृत्यु इन दोनों के निवारक जो उत्तम वैद्य आप तिन के शरणागत होगये हैं ॥ ३८ ॥

जो कि हमने सुन्दर वेदाध्यन किया है गुरुन की सेवा की है ब्राह्मण वृद्ध सुहृत भाई तथा संपूर्ण प्राणि इन का अनुवर्तन करके प्रसन्न किये हैं असूया छोड़ कर ॥ ३९ ॥

हे ईश ! जो हमने अन्नछोड़ कर इतने दिन तक जलमें तपस्या की है बहुत सी इस सबका फल केवल आप व्यापक भगवान् का सन्तोष होना मात्र चाहते हैं ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अज्ञानामप्यस्माकं स्वस्तुतिर्नायुक्तेत्याहुः । मनुरिति । यस्य तव महिम्नो न दृष्टं पारं यैस्तेऽपि स्वामात्मसमं स्वमत्यनुरूपं यथा-स्तुवन्ति अथो अतो वयमपि गृणीमः ॥ ४१ ॥

सत्त्वमूर्त्तये वासुदेवाय ॥ ४२ ॥

यानं स्वप्रयाणमनिच्छतामपि सतां स्वधाम ययौ भक्तहृदयं विवेश अनपवर्गवीर्योऽकुण्ठितप्रभावः ॥ ४३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

उदन्वतः सिन्धोः सलिलान्निर्याय निर्गत्य गां स्वर्गं रोद्धुमिवोच्छ्रितैर्द्रुमैर्गां महीं छन्नां वीक्ष्य द्रुमेभ्योऽकुप्यन् तदा हि प्राचीनबर्हिषः प्रव्रजितत्वादराजकं कर्षणाद्यभावात् द्रुमैर्भूमिश्छन्नाभूत् ॥ ४४ ॥

निरस्ता वीरुधोऽपि यस्यास्तथाभूतां कर्तुम् सम्वर्तकः कालाग्निरुद्रः अत्यये प्रलये ॥ ४५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अजानतामप्यस्माकं त्वत्स्तुतिर्नायुक्ता इत्याहुः। मन्वादयः। तत्र भवो रुद्रः तथा ये तपोज्ञानाभ्यां कर्मयोगज्ञानयोगाभ्यां विशुद्धं सत्त्वमन्तःकरणं येषां ते तव महिम्नोऽदृष्टं पारं यैस्ते तथा भूता अपि त्वामात्मसमं स्वमत्यनुरूपं यथास्तुवन्ति तथा वयमपि गृणीम इत्यर्थः ॥ ४१ ॥

एवमात्मनां स्तुत्यर्हतामाविष्कृत्य स्तुवन्तो नमस्कुर्वन्ति समाय सर्वभूतसमाय वैषम्यरहितायेत्यर्थः तत्र हेतुः शुद्धाय विशुद्धायापापविद्धाय पापहेतुकं हि वैषम्यं परमपुरुषाय शुद्धसत्त्वमूर्तये वासुदेवाय नमः ॥ ४२ ॥

एवं प्रचेतोभिरभिष्टुतो भगवान् प्रीतः तत्स्तुत्या तथेत्याह युस्मद्वरणानुसारेण युष्मदिष्टसिद्धिरस्त्वित्याह। स्वलावण्यानुभवेनातृप्तानि चक्षूंषि येषामत एव स्वयानमनिच्छतां प्रचेतसामनपवर्गवीर्यः अपारपराक्रमो भगवान् शरण्यवत्सलः स्वं लोकं प्रति ययौ ॥ ४३ ॥

अथ प्रचेतस उदन्वतः समुद्रस्य जलान्निर्गत्य गां स्वर्गं रोद्धुमिवोच्छ्रितैरुच्चस्तैर्द्रुमैर्गां महीं छन्नां वीक्ष्य द्रुमेभ्योऽकुप्यत् तथापि प्राचीनबर्हिषः प्रव्रजितत्वादराजके कृष्याद्यभावात् भूमिः द्रुमैश्छन्नाभूत् ॥ ४४ ॥

निरस्ता वीरुधः यस्यास्तथाभूतां कर्तुं सम्वर्तके कल्पान्ते अत्यये नाशे उपस्थिते सति यथा तथा हेराजन्! रुषा स्वमुखेभ्यः अग्निवायू अमुञ्चन् ॥ ४५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु ब्रह्मादिवत्परिच्छिन्नत्वे पूर्वोक्तानन्तत्वं न युज्यते अपरिच्छिन्नत्वे स्तुतिर्न घटत इति तत्राह। मनुरिति। तन्महिम्नः परमदृष्टवन्तोऽपि ब्रह्मादयो वेदाद्युक्तानुसारेण यद्यथा त्वां स्तुवन्ति अथो तथा वयमप्यात्मबुद्धिसमं गृणीमह इत्यन्वयः ॥ ४१ ॥

आत्मसममित्युक्त्या प्रचेतसां बुद्धीनामस्मद्बुद्धितो महागुणित्वात् तदुक्तं स्तुतिपदानामनेकार्थत्वेनास्मद्बुद्ध्याविषयत्वेन नास्माभिस्तदर्थकथनाय प्रयत्नः क्रियते किन्तु व्याख्यानप्रतिज्ञाभङ्गपरिहाराय प्रतीतोऽर्थः कथ्यते तथा हि समाय वैषम्यनैर्घृण्यरहिताय सहिता मा लक्ष्मीर्यस्य स समस्तस्मा इति वा "शुद्धाय निरञ्जनाय यदयं पाप्मन उत्सस्तस्मात्पुरुषो नाम" इति श्रुतेः समस्तपापविनाशनाय परायोत्कृष्टाय वासुदेवाय बलज्ञानात्मकमुख्यप्राणप्रवर्तकाय सर्वमाच्छाद्यातिक्रम्य दीव्यतीति वासुदेवस्तस्मै सत्त्वाय पराक्रमरूपाय भगवते सौभाग्य ऐश्वर्यादिगुणवते वा ॥ ४२ ॥

हरेः स्वधामप्रयाणमाह। इतीति। यानं गमनम् विक्रमोऽविनष्टपराक्रमः अनेन कर्मणामपि नित्यत्वम् ज्ञायते ॥ ४३ ॥

इदानीं प्रचेतसां विक्रमविशेषं वक्तुमुपक्रमते। अथेति भूमिम् ॥ ४४ ॥

अप्यये प्रलये साम्वर्तकः प्रलयकालीनोऽग्निरिव ॥ ४५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इदमप्यस्माकं निवेदनमात्मबुद्ध्यनुरूपमेव ननु तत्... त्यवधाय यथायथमेव कृपयोत्पादनीयः तथेत्याहुः। मन्विति ॥ ४१ ॥ ४२ ॥

तत्र तथेति तदनुमोदनं तद्वरश्च श्रेयः। अनिच्छितयानि... विरत्यत्र हेतुः। स्वधामेति। अनन्तानां स्वभक्तानामपेक्षणीयं... दिति भावः ॥ ४३ ॥

अकुप्यन्निति। श्रीभगवदादिष्टराज्यशासनप्रतीघातात... देशपालनञ्च भृत्यानां योग्यत्वात् ॥ ४४—४६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अज्ञानामप्यस्माकं त्वत्स्तुतिर्नायुक्तेत्याहुः। मनुरिति। त्वन्महिम्नो नदृष्टपारा इति परमविज्ञा अपि ते त्वन्महिम्न... एव यथा स्तुवन्ति तथैव वयमप्यज्ञतमा अपि स्वशक्त्यनुरूपमेव स्तुमः ॥ ४१ ॥

सत्त्वाय शुद्धसत्त्वमूर्त्तये ॥ ४२ ॥

अनपवर्गवीर्य्यः अकुण्ठप्रभावः ॥ ४३ ॥

गां पृथ्वीं गां स्वर्गं रोद्धुमावरितुमिव अकुप्यन्... श्रीभगवदादिष्टं राज्यं क करवाम तदाज्ञापालनञ्च कृत्यं... कथं जिहासाम इह पुनरमी वृक्षा एव पृथ्वीमावृत्य... श्चेति जिघृक्षन्ति तर्हि मनुष्याः क स्थास्यन्तीत्यनय... हेतुः ॥ ४४ ॥

राजन्! जितकोपत्वात् भक्त्या विराजमान! हे विदुर... र्युक्तिभिः ॥ ४५–४७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इयता शून्यस्वरूपगुणं त्वां यथा मन्वादिवद्वयमपि... इत्याहुः। मनुरिति। मन्वादयः त्वन्महिम्नोऽदृष्टपारा अपि... समं यथामति स्तुवन्ति। अथो अतो वयमपि... गृणीमः ॥ ४१ ॥

सत्त्वाय अप्राकृतसत्त्वमूर्त्तये ॥ ४२ ॥

अनपवर्गवीर्यः अनन्तप्रभावः ॥ ४३ ॥

गां स्वर्गं रोद्धुमिवोच्छ्रितैः गां भुवं छन्नां वीक्ष्याकुप्यन्॥

अत्यये प्रलये सम्वर्तकोऽग्निः ॥ ४५ ॥

---

भस्मसात्क्रियमाणांस्तान्द्रुमान्वीक्ष्य पितामहः ।
आगतः शमयामास पुत्रान् बर्हिष्मतो नयैः ॥ ४६ ॥
तत्रावशिष्टा ये वृक्षा भीता दुहितरं तदा ।
उज्जह्रुस्ते प्रचेतोभ्य उपदिष्टाः स्वयंभुवा ॥ ४७ ॥
ते च ब्रह्मण आदेशान्मारिषामुपयेमिरे ।
यस्यां महदवज्ञानादजन्यजनयोनिजः ॥ ४८ ॥
चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविद्रुते ।
यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः ॥ ४९ ॥
यो जायमानः सर्वेषां तेजस्तेजस्विनां रुचा ।
स्वयोपादत्त दाक्ष्याच्च कर्मणां दक्षमब्रुवन् ॥ ५० ॥
तं प्रजासर्गरक्षायामनादिरभिषिच्य च ।
युयोज युयुजेऽन्यांश्च स वै सर्वप्रजापतीन् ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पारम-
हंस्यां संहितायां वैयासिक्यां
त्रिंशोऽध्यायः ॥ ३० ॥

---

भाषाटीका ।

मनु महाराज ब्रह्मा भगवान् महादेवजी और भी जो कोई तप ज्ञान से शुद्ध अन्तःकरण वाले जिन आपकी महिमा का पार नहीं भी देखते हैं तौ भी स्तुती करते ही हैं तैसे हम भी आप की स्तुति करते हैं ॥ ४१ ॥

आप सब के वास्ते सम हो शुद्धस्वरूप हो परमपुरुष हो वासुदेव सत्त्व स्वरूप हो भगवान् हो आप के अर्थ नमस्कार है ॥ ४२ ॥

मैत्रेयजी बोले इस प्रकार प्रचेतों के स्तुति करने से भगवान् अति प्रसन्न भये आप शरणागतवत्सल हैं तिससे तथास्तु ऐसा कहकर जाने को तैयार हुये तब प्रचेतों के नेत्र तृप्त नहीं भये सो भगवान् का जाना नहीं चाहते थे तौभी अकुण्ठशक्ति वाले भगवान् उनके हृदय में स्थित हो कर भी अपने वैकुण्ठ धाम को गये ॥ ४३ ॥

इसके अनन्तर समुद्र के जल में से निकल कर प्रचेतों ने देखा कि आकाश पृथिवी दोनों को रोकने सरी के वृक्ष पृथिवी में बढ गये हैं तब उन वृक्षों पर प्रचेतों ने कोप किया ॥ ४४ ॥

हे राजन् ! तदनन्तर प्रचेतों ने पृथिवी को वृक्ष रहित करने की इच्छा से प्रलय समय में कालाग्नि के तुल्य अग्नि तथा पवन को मुखों से प्रकट किया ॥ ४५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नयैर्युक्तिभिः ॥ ४६ ॥

उज्जह्रुः समर्पयामासुः ॥ ४७ ॥

मारिषां वार्क्षीम् अजनयोनिर्ब्रह्मा तस्माज्जातो दक्षः महतः श्रीमहादेवस्यावज्ञानात् पूर्वमजनयोनिजो ब्रह्मपुत्रोऽपि सन् क्षत्रियजातौ यस्यामजनि जातः ॥ ४८ ॥

प्राक्सर्गे पूर्वदेहे कालेन विद्रुते गते दैवेनेश्वरेण चोदितः सन्निष्टाः प्रजाः ससर्ज स दक्ष इति प्रसिद्धः ॥ ४९ ॥

स्वया रुचा प्रभया तेज उपादत्ताच्छादितवान् यं च कर्मदाक्ष्याद्दक्षमब्रुवन् ॥ ५० ॥

तमभिषिच्यानादिर्ब्रह्मा प्रजासर्गरक्षायां युयोज स च दक्षोऽन्यान् मरीच्यादींस्तत्तद्व्यापारेषु नियुक्तवान् ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ताभ्यां द्रुमान्भस्मराशीक्रियमाणान् तान् प्रचेतसश्च वीक्ष्य चतुर्मुखः आगत्य नयैर्युक्तिभिर्बर्हिष्मतः सुतान् शमयामास शान्तानकरोत् ॥ ४६ ॥

तत्र तेषु शान्तेषु सत्स्ववशिष्टा ये वृक्षाः वृक्षाभिमानिदेवता-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भीताः सन्तः स्वयम्भुवोपदिष्टा दुहितरं प्रचेतोभ्य उपजह्रुः समर्पयामासुः ॥ ४७ ॥

ते च प्रचेतसः ब्रह्मण आज्ञया मारिषाख्यां स्त्रियमुपयेमिरे यस्यां मारिषायामजनयोनिजः अजनो ब्रह्मा स एव योनिः तस्माज्जातो महदवज्ञानाद्रुद्रावहेलनाद्धेतोरजन्युत्पादितः प्रचेतोभिरिति शेषः ॥ ४८ ॥

कोऽसावजनयोनिजः यो मारिषायां जातस्तत्राह । चाक्षुषे मन्वन्तरे प्राप्ते पूर्वमन्वन्तरसर्गकालेनोपद्रुते उपसंहृते सति दैवेनेश्वरेण चोदितः सन् इष्टाः प्रजाः यः ससर्ज सृष्टवान् नाम्ना दक्षः ॥ ४९ ॥

तस्मिन् दक्षशब्दस्य प्रवृत्तिनिमित्तमाह । य इति । यो जायमानः स्वया रुचा प्रभया सर्वेषां तेजस्विनां तेजोयुक्तानां तेज उपादत्त आच्छादितवान् तस्माद्दक्षात्परतेजःप्रच्छादनसमर्थत्वात्कर्मणा च निमित्तेन कर्मणि दक्षत्वाच्च दक्षमब्रुवन् लोका इति शेषः ॥ ५० ॥

यं च कर्मदाक्ष्याद्दक्षमब्रुवंस्तमादिर्भगवान् ब्रह्मा प्रजानां सर्गे रक्षायां च युयोजादिदेश स दक्षोऽन्यान्मरीच्यादीन्प्रजापतींस्तद्व्यापारेषु नियुक्तवान् ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मणागत्य क्रियमाणं तत्कोपशमनप्रकारमाह । भस्मसादिति । नयैर्युक्तिभिः ॥ ४६ ॥

प्रीतिकरणं विना केवलं नयैरेव कोपशान्तिः कथमभूदिति तत्राह । तत्रेति ॥ ४७ ॥

प्रतिपक्षभूतैर्वृक्षैर्दीयमानं कन्यादानं निःशङ्कं कथं सङ्गच्छत इति तत्राह । ते चेति । आप्ततमे ब्रह्मणो वचनं कारणमित्यर्थः वन्ध्याचोरिकामित्युपनयनमकार्षुरिति तत्राह । यस्यामिति । न जायत इत्यजनो विष्णुः स एव योनिरुत्पत्तौ कारणं यस्य सोऽजनयोनिर्ब्रह्मा तस्माज्जातोऽजनयोनिजो दक्षः अजनि जज्ञे तामुपयेमिरे इत्यन्वयः महतो रुद्रस्यावज्ञानान्निन्दनात् ॥ ४८ ॥

तज्जन्मप्रयोजनमाह । चाक्षुष इति । प्राक्सर्गे पूर्वसृष्टौ कालेन विप्लुते नष्टायां दैवेन विष्णुना ब्रह्मणा च चोदितः "चुद-प्रेरणे" इति धातुः ॥ ४९ ॥

किन्नामायं जात इति निरुक्तिपूर्वकं तन्नामाह । य इति । स्वयोग्योपात्तदाक्ष्यात्स्वयोगसामर्थ्येन प्राप्तपदत्वात् ॥ ५० ॥

इदं च तन्नामकरणे लिङ्गमिति भावेनाह । तं प्रजेति । अनादिर्ब्रह्मा प्रजेश्वरा मरीच्यादयः युयुजुरन्वाधानलक्षणं योगमकुर्वन्निति ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

वृक्षाः तदधिष्ठातृदेवताः ॥ ४७-४८

प्राक् सर्गे कालविद्रुत इति प्रायः प्राचीनदेवादीनां भोगकर्मक्षयात् पञ्चमे मन्वन्तरावसाने मर्त्यलोकस्य ... तत्वाच्च ॥ ४९-५१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मारिषां वार्क्षीमजनयोनिर्ब्रह्मा तस्माज्जातोऽपि दक्षः ... यजातो यस्यां महतः श्रीमहादेवस्यावज्ञानात् अजनि ... यद्वीर्यतः गर्भवासजस्वदुःखं प्राप पूर्वं यीरक्षाः पुनश्च कालतश्च मरणाद्वयं प्राप्येति ज्ञेयम् ॥ ४८ ॥

पुनश्चाश्रुतोपस्य तस्यैव स्तुत्युत्थादनुग्रहादैश्वर्यं च ... मवापेत्याह । चाक्षुष इति । पञ्चममन्वन्तरावसाने प्राप्ते ... कालतो दैवादेव नष्टे सतीत्यर्थः जन्म त्वस्य स्वायम्भुव ... एव पौर्वकालिकैश्वर्यप्राप्तिकामनया पञ्चममन्वन्तरपर्यन्तं तपः षष्ठे चाक्षुषे मन्वन्तरेऽस्य तपःफलप्राप्तिश्चेया ॥ ४९ ॥

तस्यैश्वर्यमाह । य इति । अजायमानः अजो ब्रह्मा ... स्वया रुचा प्रभया तेज उपादत्त आच्छादितवान् ॥ ५० ॥

अनादिर्ब्रह्मा तं दक्षं प्रजानां सर्गे रक्षायां च युयोज ... दक्षोऽन्यान् मरीच्यादीन् ॥ ५१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रिंशोऽध्यायश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥ ...

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नयैर्नीतिवाक्यैः ॥ ४६ ॥

कण्डुतपोनाशार्थं तत प्रम्लोचोत्पादिता कन्या ... स्वर्गं गच्छन्त्या वृक्षेषु न्यस्तातो दुहितरमित्युक्तम् । ... उद्धृतवन्तः समर्पितवन्त इत्यर्थः ॥ ४७ ॥

मारिषां वार्क्षीम् । अजनयोनिर्ब्रह्मा तज्जो दक्षः महत ... मवज्ञानादपराधात् पुनरजनि जातः ॥ ४८ ॥

कालेन विद्रुते नष्टे ॥ ४९ ॥

रुचा कान्त्या तेज उपादत्त तस्माद्धेतोः कर्मणा ... दक्षमब्रुवन् जना इति शेषः ॥ ५० ॥

अनादिर्ब्रह्मान्तरात्मा भगवान् तमभिषिच्य प्रजानां ... स दक्षः अन्यान् युयुजे ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रिंशाध्यायार्थप्रकाशः ॥ ३० ॥

---

भाषाटीका ।

ब्रह्माजी ने उनको वृक्षों को भस्म करते देखकर आकर- नीति वाक्यों से प्राचीनबर्हि के पुत्रों को शान्त किया ॥ ४६ ॥

तब उनमें जो वृक्ष बचे तिनोंने ब्रह्माजी के कहने से डर के मारे अपनी मारिषा को लेकर प्रचेतों को दे दिया ॥४७॥

उन प्रचेतों ने ब्रह्माजी की आज्ञा से मारिषा के साथ विवाह किया जिसके गर्भ में महादेवजी की अवज्ञा करने से दक्षप्रजापति पैदा हुआ ॥ ४८ ॥

पहिले मे काल वस से नष्ट हो जाने पर चाक्षुषमन्व- न्तर में जिसने ईश्वर की प्रेरणा से प्रजों को पैदा किया है सो ही वहां पैदा गया ॥ ४९ ॥

जिसने पैदा होते मात्र सब तेजस्वियों के तेज को हरण कर लिया अपने तेज से इससे और चतुराइ के कर्म से उसको सब लोग दक्ष कहने लगे ॥ ५० ॥

ब्रह्माजी ने उसको प्रजों की सृष्टि के रक्षा में अभि- सिक्त करके नियुक्त किया उसने और सब प्रजापतियों को नियुक्त किया ॥ ५१ ॥

इति श्रीमद्भागवत चतुर्थस्कन्ध तीसमां अध्याय
का भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ ३० ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे त्रिंशोऽध्यायः समाप्तः ॥ ३० ॥

## ॥ एकत्रिंशोऽध्यायः ॥

॥ मैत्रेय उवाच ॥

तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम् ।
स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन् गृहात् ॥ १ ॥
दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा ।
प्रतीच्यां दिशि वेलायां सिद्धोऽभूद्यत्र जाजलिः ॥ २ ॥
तान्निर्जितप्राणमनोवचोदृशो जितासनान् शान्तसमानविग्रहान् ।
परेऽमले ब्रह्मणि योजितात्मनः सुरासुरेड्यो ददृशे स्म नारदः ॥ ३ ॥
तमागतं त उत्थाय प्रणिपत्याभिनन्द्य च ।
पूजयित्वा यथादेशं सुखासीनमथाब्रुवन् ॥ ४ ॥

॥ प्रचेतस ऊचुः ॥

स्वागतं ते सुरर्षेऽद्य दिष्ट्या नो दर्शनं गतः ।
तव चङ्क्रमणं ब्रह्मन्नभयाय यथा रवेः ॥ ५ ॥
यदादिष्टं भगवता शिवेनाधोक्षजेन च ।
तद्गृहेषु प्रसक्तानां प्रायशः क्षपितं प्रभो ! ॥ ६ ॥
तन्नः प्रद्योतयाध्यात्मज्ञानं तत्त्वार्थदर्शनम् ।
येनाञ्जसा तरिष्यामो दुस्तरं भवसागरम् ॥ ७ ॥

॥ मैत्रेय उवाच ॥

इति प्रचेतसां पृष्टो भगवान्नारदो मुनिः ।
भगवत्युत्तमश्लोक आविष्टात्मा ब्रवीन् नृपान् ॥ ८ ॥

॥ नारद उवाच ॥

तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः ।
नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः ॥ ९ ॥
किं जन्मभिस्त्रिभिर्वेह शौक्लसावित्रयाज्ञिकैः ।
कर्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकत्रिंशे सुते दक्षे धुरं न्यस्य वने सताम् ।
नारदोक्तेन मार्गेण मुक्तिरुक्ता प्रचेतसाम् ॥ १ ॥

ततो दिव्यवर्षसहस्राणां सहस्रस्यान्ते उत्पन्नविवेकज्ञानास्ते उपयास्यथ मद्धाम निर्विद्य निरयादत इत्यधोक्षजभाषितं स्मरन्त आशु प्राव्रजन् ॥ १ ॥

ब्रह्मसत्रेणात्मविमर्शेन दीक्षिताः कृतमङ्गला बभूवुः सर्वभूतेष्वात्मेति मेधा ज्ञानं यस्मिंस्तेन क्व वेलायां समुद्रतटे जाजलिर्नाम ऋषिः ॥ २ ॥

निर्जिताः प्राणमनोवचोदृशो यैस्तान् शान्ताः समाना मूलाधारादारभ्य ऋजवो विग्रहा येषाम् ब्रह्मणि आत्मा यैः सुरासुरैरीड्यो दृष्टवान् ॥ ३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उत्थाय प्रणिपत्य यथादेशं यथाविधि पूजयित्वा ॥ ४ ॥ ५ ॥

आदिष्टमुपदिष्टं यदात्मतत्त्वम् क्षपितं विस्मृतम् ॥ ६ ॥ ७ ॥

इति प्रचेतोभिः पृष्टः ॥ ८ ॥

अहो गृहप्रसक्त्या हरिसेवां विना सर्वं जन्मकर्मादिकं व्यर्थीकृतमिति तान् शोचन्नाह । तज्जन्मेति चतुर्भिः । यतो जन्मादेर्हरिसेवैव फलमतस्तद्विहीनं सर्वं व्यर्थमित्यर्थः ॥ ९ ॥

शुक्लसम्बन्धि जन्म विशुद्धमातापितृभ्यामुत्पत्तिः सावित्रमुपनयेन याज्ञिकं दीक्षया विबुधानामिव दीर्घायुषापि ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तपस्तोषितप्रत्यक्षितपरमात्मानः प्रचेतसो मारिषामुपयम्य तस्यां पुत्रमुत्पादयामासुरित्युक्तमथ भगवदादिष्टदिव्यवर्षसहस्रपर्यन्तानुभूतराज्यभोगा आत्मजारोपितराज्यभाराः प्रविष्टजाजल्याश्रमाः नारदोपदिष्टात्मपरमात्मयाथात्म्या उपासितपरमात्मानस्तत्पदमापुरिति वदन्नुपसंहरति त्रिंशेन मुनिः । तत इति । दिव्यवर्षसहस्राणां सहस्रान्ते उत्पन्नविवेकात्मकज्ञाना अधोक्षजस्य भाषितं वचः स्मरन्तः आत्मजे दक्षे भार्यां विसृज्य भार्यापोषणात्मंजाधीनं कृत्वा गृहात्प्राव्रजन् ॥ १ ॥

ब्रह्मसत्रेण ज्ञानयज्ञेन न्यासविधिना वा दीक्षिताः सङ्कल्पितब्रह्मसत्रा बभूवुरित्यर्थः ब्रह्मसत्रं विशिनष्टि । सर्वभूतात्ममेधसेति । सर्वभूतेष्वात्मा परमात्मा इति मेधा ज्ञानं यस्मिंस्तेन स सर्वात्मकब्रह्मोपासनात्मकज्ञानेनेत्यर्थः प्रथमान्तपाठे प्रचेतसां विशेषणं सर्वात्मकब्रह्मोपासनयुक्ता क दीक्षितास्तत्राह । प्रतीच्यां दिशि वेलायां समुद्रतटे यत्र जाजलिर्नाम ऋषिः सिद्धोऽभूत् मुक्तो बभूव ॥ २ ॥

तान्प्रचेतसः निर्जिताः प्राणमनोवचोदृशो यैस्ते जितमासनं यैस्ते शान्ताः निर्व्यापारः समाना मूलाधारादारभ्य ऋजवो विग्रहाः येषां ते परे ब्रह्मणि योजितः"ओमित्यात्मानं युञ्जीत" इत्युक्तरीत्या समर्पितः आत्मा प्रत्यगात्मा यैस्ते तान् सुरासुरैरीड्यःस्तुत्यो नारदः ददृशे दृष्टवान् ॥ ३ ॥

सम्यगुत्थाय प्रणिपत्य दण्डवत्प्रणम्य अभिवाद्य गोत्रसूत्रनामादिकं सङ्कीर्त्य यथाविधि पूजयित्वा सुखे मृदुले आसने आसीनमब्रुवन्नूचुः ॥ ४ ॥

उक्तमेवाह । स्वागतमिति । हेसुरर्षे ! ते त्वया स्वागतं दिष्ट्या दैववशेन नोऽस्माकं दर्शनं गतः अस्मदीयचक्षुर्विषयो जातः हेब्रह्मन् ! तव चङ्क्रमणं सञ्चरणं लोकानामभयाय मुक्तिसाधनोपदेशेन रक्षणाय न विद्यते भवो यस्मात्तस्मै यथा रवेः चङ्क्रमणं तद्वत् सूर्यस्य चङ्क्रमणं हि समीहितसाधनानुष्ठापनेन लोकरक्षणार्थं तद्वदित्यर्थः ॥ ५ ॥

शिवेनाधोक्षजेन च यदात्मतत्त्वमुपदिष्टं तद्गृहेषु प्रसक्तानां नः क्षपितं विस्मृतम् ॥ ६ ॥

तद्विस्मृतं तत्त्वानामर्थानां प्रकृतिपुरुषेश्वरतत्त्वानामर्थानां पुरुषार्थानां दर्शनं ज्ञानं यस्मिंस्तदध्यात्मज्ञानं नोऽस्मभ्यं प्रद्योतय प्रकाशय येन त्वया प्रद्योतितेनाध्यात्मज्ञानेन दुस्तरं भवार्णवमञ्जसा सुखेन तरिष्यामः ॥ ७ ॥

इत्येवंप्रचेतसा पृष्ट इति प्राधान्यादेकस्य निर्देशः प्रचेतोभिः पृष्ट इत्यर्थः भगवत्यावेष्ट आसक्त आत्मा मनो यस्य स भगवान्नारदः मुनीन्मननशीलान्प्रचेतसः प्रत्यब्रवीत् ॥ ८ ॥

अहो गृहप्रसक्त्या हरिसेवां विना सर्वं जन्मकर्मादिकं व्यर्थीकृतमिति तान् शोचन्नाह । तज्जन्मेति चतुर्भिः । येन जन्मादिना विश्वात्मा हरिः सेव्यते तदेव जन्मकर्मादिकं सार्थकं भगवत्सेवाविधुरं तु व्यर्थमित्यर्थः ॥ ९ ॥

शुक्लं यौनं विशिष्टयोन्युत्पत्तिरूपं सावित्रमुपनयननिमित्तं जन्म याज्ञिकं यज्ञदीक्षया जन्म एभिस्त्रिभिर्जन्मभिर्भगवत्सेवाविधुरैः किं साध्यमस्तीति तथा त्रयीविहितैः कर्मभिः पुंसः विबुधानामिव दीर्घायुषापि ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शास्त्रान्तरेषु बहूनामितरेषां साधनानां मुक्तिसाधनत्वेन कथनस्य सावकाशत्वप्रकाशनायास्मिन्नध्याये पुनरपि मुक्तिसाधनं ब्रह्मज्ञानमेवेति निश्चीयते तत्र तत्साधनमपि मुख्यं चतुर्थाश्रम एव सर्वस्मात्तस्य श्रैष्ठ्यादित्यभिप्रेत्य प्रचेतसां राज्यपालनानन्तरं तमाचष्टे । तत इति । आश्वाविर्भूताधोक्षजभाषितं ततो मानुषगणितद्वादशलक्षकालात्परमुत्पन्नविज्ञानाः वेदान्तविज्ञानसुनिश्चितार्थाः अनेन संन्यासाधिकारे योग्यतां लक्षयति ॥ १ ॥

एतदेव विशिनष्टि । दीक्षिता इति । सर्वभूतात्मनि सर्वभूतस्वामिनि सर्वभूतान्तर्यामिणि वा हरौ मेधा ज्ञानं यत्र तद्ब्रह्मसत्रं सर्वभूतात्ममेधः तेन ब्रह्मसत्रेण दीक्षिताः गृहीतसन्यासाश्रमा इत्यर्थः "पारिव्राज्यं ब्रह्मसत्रं न्यास इत्यभिधीयत" इत्यभिधानात् ब्रह्मविषयेण यागविशेषेणेति नार्थोऽत्र प्राह्यः प्राव्रजन्निति विरोधाच्च "हरिमेधस्तु सन्यासो हरौ मेधा यतो भवेत्"इति वचनेन सन्यासस्य विशेषितत्वाच्च न सर्वभूतानां स्वस्वरूपस्वज्ञानेनेत्यर्थः उत्तरत्रापि तत्त्वं नापुः किन्तु तद्गतिमितिवक्ष्यमाणत्वात् यत्र जाजलस्तस्यापत्यं जाजलिः मुनिः सिद्धो मुक्तोऽभूत्तस्यां प्रतीच्यां दिशि समुद्रवेलायां हरिमुपासीनाः स्युरित्यन्वयः ॥ २ ॥

तत्रापि नारदसङ्गमं तेषामाह । तान्निर्जितेति । शान्तश्च समानश्च विग्रहो देहो येषां ते तथा तान् योजितमेकाग्रतया स्थापितं मनो यैस्ते तथा तान् ॥ ३ ॥

यथादेशं यथोपदेशं देशानुसारेण वा ॥ ४ ॥

चङ्क्रमणं पुनःपुनरागमनं रवेरुदयास्तागमनम् ॥ ५ ॥

सदाशिवाधोक्षजाभ्यां ज्ञानस्योपदिष्टत्वात् न मया पृथगुपदेशाय प्रयतनीयमिति तत्राह । यदादिष्टमिति । क्षपितं नष्टमिति यावत् ॥ ६ ॥

येनात्मज्ञानेन ॥ ७ ॥ ८ ॥

यद्धरिसेवासाधनं जन्मादि तदेव सफलं न तु सत्कुलजन्मादीत्याह । तज्जन्मेत्यादिना । येन जन्मादिना ॥ ९ ॥

किमित्येवं विशिष्य स्तौषीति तत्राह । किं जन्मभिरिति । यत्र जन्मादौ हरिरात्मप्रदो न स्यात्तज्जन्मादिना किं फलमित्यन्वय-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शुक्लं जन्मोभयकुलशुद्धं सावित्रं जन्म उपनयनादि याज्ञीयमग्न्याधानलक्षणं जन्म ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ततो दक्षाभिषेकादनन्तरम् ॥ १ ॥

ब्रह्मसत्रेण परस्परं मिलित्वा सामान्यतः परमतत्त्वविचारेण वेलायां समुद्रतट इति प्रियव्रतकृतसमुद्राणां पूर्व्वजातत्वेन तद्राज्यस्यापि पूर्व्वत्वं गम्यते। तथैव पञ्चमादौ व्याख्यास्यते ॥ २-४ ॥

यथा रवेरिति । यथा रविदर्शनेन चौरादिभयमपगच्छति तथा तव दर्शनेन संसारभयमित्यर्थः ॥ ५ ॥

यदादृष्टमित्यत एवापाततो ब्रह्मानुसन्धानमेव कुर्व्वन्तः स्म इति भावः ॥ ६ ॥

तथैव सामान्याकारेण पृच्छन्ति। तन्न इति ॥ ७ ॥

आविष्टात्मेति। स्वभावत एव वा तत्प्रश्नेन तेषु प्राचीनभगवत्कृपामनुस्मृत्य वा उभयथापि कथमसावन्यथोपदिशेदिति भावः ॥ ८ ॥

तत्र तेषां ब्रह्मनिष्ठां त्याजयितुं श्रीभगवन्निष्ठां प्रशंसति तज्जन्मेति ॥ ९ ॥

तथैव व्यतिरेकेण दर्शयति त्रिकेण ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

एकत्रिंशे तु निर्विद्य राज्याद्गत्वा वनं पुनः।
नारदप्रोक्तया भक्त्या कृष्णं प्रापुः प्रचेतसः ॥

उपयास्यथ मद्धाम निर्विद्येत्यधोक्षजभाषितं स्मरन्तः ॥ १ ॥

ब्रह्मसत्रेण स्वायम्भुवब्रह्मसत्रं जनलोके भमवत्पुरेतिवत् कृतेन वेदतात्पर्य्यविमर्शेन "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः। दीक्षिताः कृतसङ्कल्पाः सर्व्वभूतेष्वात्मन इव मेधा बुद्धिर्यतस्तेन वेलायां समुद्रतटे जाजलिनामा मुनिः ॥ २ ॥

परेऽमले ब्रह्मणि श्रीरुद्रगीतोक्ते स्निग्धप्रावृड्घनस्यामस्वरूपे ददृशेस्म ददर्श ॥ ३ ॥

यथादेशं यथाविधि यथारवेर्दर्शनेन चौरादिभयमपगच्छति तथा तव दर्शनेन संसारभयमिति ॥ ४-५ ॥

ततः क्षपितमिति भक्त्युत्थेन दैन्येनोक्तिः ॥ ६ ॥

अध्यात्मज्ञानमात्मनि यज्ज्ञानमिति विभक्त्यर्थेऽव्ययीभावः जीवात्मनो यज्ज्ञातुमुचितं तदस्माकं ज्ञातमेवासीत् तदेव त्वं प्रद्योतयेत्यर्थः ॥ ७ ॥

प्रचेतसां प्रचेतोभिः ॥ ८ ॥

देहं धृत्वा जीवात्मना यद्यद्वस्तु स्वतः प्राप्तमभूत्तदेव भगवत्सेवायामेव नियुञ्जीतेत्येतदेवाध्यात्मज्ञानमित्याह। तज्जन्मेति त्रयोदशभिः । तदेव जन्म येन हरिः सेव्यते तान्येव कर्म्माणि यैः हरिः सेव्यते इत्येवं सर्व्वत्र योज्यं मनोवच इत्युपलक्षणं बुद्धीन्द्रियबलतपःश्रुतयोगसाङ्ख्यसन्न्यासब्रह्मचर्य्यादीनामप्युत्तरश्लोकार्थदृष्ट्या ज्ञेयं नृणामिति तत्सेवयोपयोगीन्येव जन्मादीनि मनुष्यसम्बन्धीन्युच्यन्ते अन्यथा तु शूकरादिपशुसम्बन्धीनीत्यर्थः ॥ ९

अन्वयं विवृत्य व्यतिरेकं विवृणोति। किमिति त्रि शौक्लं विशुद्धमातापितृभ्यो जन्म सावित्रमुपनयेन दीक्षयेति त्रिविधं ब्रह्म जन्मापि न तन्नृजन्म किं तु [illegible] जन्मैव फलतस्तुल्यत्वात् चाण्डालादिजन्मापि यदि [illegible] सेवानुकूलं स्यात्तदेव साधु नृजन्म भगवत्प्रापक[illegible] कर्म्मादिष्वपि न व्याख्येयम् । त्रयीप्रोक्तैरपि किं पुनर्व्या[illegible] विबुधायुषापि किं पुनः शतायुषा ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एकत्रिंशे प्रचेतसां श्रीनारदोपदेशतो मोक्षं चाह। [illegible] ततो दिव्यवर्षसहस्राणां सहस्रस्यान्ते उत्पन्नविज्ञाना [illegible] योपादेयविवेकाः उपयास्यथ मद्धाम निर्विद्य निरयादत्र [illegible] क्षजभाषितं स्मरन्तः भार्यामात्मजे दक्षे विन्यस्य आशु [illegible] जन् ॥ १ ॥

प्रतीच्यां दिशि तत्रापि वेलायां समुद्रतीरे यत्र जा[illegible] मुनिः सिद्धोऽभूत्तत्र सर्वभूतात्मनि विश्वहेतौ भगवति [illegible] निश्चयात्मिका बुद्धिर्येन तेन ब्रह्मसत्रेण विश्वहेतुविचार[illegible] यज्ञेन दीक्षिताः कृतसङ्कल्पा बभूवुः ॥ २ ॥

क्षान्तोऽमलः समानोऽवक्रो विग्रहो येषां तान् ॥ ३ ॥

यथादेशं यथाविधि ॥ ४-५ ॥

यत्तत्त्वज्ञानमादिष्टमुपदिष्टं तत् क्षपितं विस्मृतत् ॥ [illegible]

अध्यात्ममात्मानं परमात्मानमधिकृत्य वर्तमानं ज्ञानं [illegible] र्थदर्शनं तत्त्वतः परमात्मस्वरूपगुणादिरूपार्थप्रकाशकम् । [illegible]

हरिभजनोपयोगि जन्मादिकं सर्वं सफलं तदनुप[illegible] निष्फलं हरिरेव सर्वात्मा सर्वशक्तिः सर्वहेतुर्भजनी[illegible] कृतज्ञो विसृजेदिति श्रीनारद आह। तज्जन्मेत्यारभ्य [illegible] सृजेत्पुमान् कृतज्ञ इत्यन्तेन ग्रन्थेन ॥ ९ ॥

शुक्ले विशुद्धे वंशे जातं शौक्लम् सावित्रमुपनय[illegible] तम् । याज्ञिकं दीक्षाभावितम् ॥ १०-११ ॥

---

### भाषा टीका ।

तब प्रचेता सब दश हजार वर्ष तक राज्य [illegible] लिये तब उनको ज्ञान उत्पन्न हुआ फिर भगवान् [illegible] को उनने स्मरण किया तब भार्या को अपने पुत्र के [illegible] करके घर में से विरक्त हो कर निकल गये ॥ १ ॥

सर्व भूतों में आत्म बुद्धि हो जिससे ऐसे [illegible] मे दीक्षित हुये जहां जाजलि मुनि सिद्ध भये हैं [illegible] दिशा को चले गये ॥ २ ॥

उनने उहां पर प्राण मन वचन दृष्टि इन [illegible] रोक लिया आसन को जीत लिया शरीर उन के सम[illegible] हो गये निर्मल परब्रह्म में उनने मन लगादिया [illegible] असुरों के पूज्य नारदजीने उनको वहां पर आकर [illegible]

उनको देख कर प्रचेतों ने बडे आनन्दित हो कर [illegible] किया पूजन किया यथायोग्य से सुखपूर्वक जब [illegible] बैठ गये तब प्रचेता उनकी स्तुति करने लगे ॥ ४ ॥

श्रुतेन तपसा वा किं वचोभिश्चित्तवृत्तिभिः ।
बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा ॥ ११ ॥
किम्वा योगेन सांख्येन न्यासस्वाध्याययोरपि ।
किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः ॥ १२ ॥
श्रेयसामपि सर्वेषामात्मा ह्यवधिरर्थतः ।
सर्वेषामपि भूतानां हरिरात्मात्मदः प्रियः ॥ १३ ॥
यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥ १४ ॥
यथैव सूर्यात्प्रभवन्ति वारः पुनश्च तस्मिन्प्रविशान्ति काले ।
भूतानि भूमौ स्थिरजङ्गमानि तथा हरावेव गुणप्रवाहः ॥ १५ ॥
एतत्पदं तज्जगदात्मनः परं सकृद्विभातं सवितुर्यथा प्रभा ।
यथाऽसवो जाग्रति सुप्तशक्तयो द्रव्यक्रियाज्ञानभिदाभ्रमात्ययः ॥ १६ ॥
यथा नभस्यभ्रतमःप्रकाशा भवन्ति भूपा!न भवन्त्यनुक्रमात् ।
एवं परे ब्रह्मणि शक्तयस्त्वमू रजस्तमःसत्त्वमिति प्रवाहः ॥ १७ ॥
तेनैकमात्मानमशेषदेहिनां कालं प्रधानं पुरुषं परेशम् ।
स्वतेजसा ध्वस्तगुणप्रवाहमात्मैकभावेन भजध्वमद्धा ॥ १८ ॥
( निरस्तसंकल्पविकल्पमद्वयं द्वयापवादोपरमोपलम्भनम् ।
अनादिमध्यान्तमजस्रनिर्वृतिम् संज्ञप्तिमात्रं भजतामुया दृशा॥ ० ॥ )
दयया सर्वभूतेषु सन्तुष्ट्या येन केन वा ।
सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥ १९ ॥
अपहृतसकलैषणामलात्मन्यविरतमेधितभावनोपहूतः ।
निजजनवशगत्वमात्मनोऽयन्न सरति छिद्रवदक्षरः सतां हि ॥ २० ॥

भाषाटीका

प्रचेता बोले हे देवर्षि आपका सुन्दर आगमन हुआ आज हमको आपने दर्शन दिया सो बडा मङ्गल हुआ हे ब्रह्मन् ! आप का घूमना है सो सब लोगों के अभय के लिये है जैसे कि सूर्य का भ्रमण सब के हित के लिये है ॥ ५ ॥

हे प्रभो जो सर्वज्ञ शिवजी ने उपदेश किया भगवान्ना-रायण ने जो उपदेश किया वह सब उपदेश गृह मे आसक्त होने से हमारा प्रायः नष्ट हो गया ॥ ६ ॥

तत्त्व के दर्शन कराने वाले हमारे उस अध्यात्म ज्ञान को आप प्रकाश करो जिस ज्ञान से अति कठिन भवसागरको हम तरजांगे ॥ ७ ॥

मैत्रेयजी बोले इस प्रकार से जब प्रचेतों ने पूछा तब मुनि नारदजी का चित्त उत्तम श्लोक भगवान् में प्रविष्ट हो गया फिर उन राजों से बोले ॥ ८ ॥

नारदजी बोले मनुष्यों का वही जन्म है वही कर्म है वही आयु है वही मन है वही वचन है जिस जन्मादिक से इस संसार में विश्वात्मा हरि प्रसन्न हो जांय ॥ ९ ॥

उत्पत्तिसे सुन्दर जन्म उपनयन से जन्म यज्ञादि दीक्षा से जन्म इन्हों से वेदोक्त कर्मों से और मनुष्य को देवता की भी आयु होने से क्याप्रयोजन है शास्त्र से तपस्या से वचनों से चित्त की वृत्तियों से अति निपुण बुद्धि से बल से इन्द्रिय के पुष्टिसे क्या प्रयोजन है योग से सांख्य से सन्यास से वेदाध्ययन से क्या प्रयोजन है जिनमें आत्मा को अर्पण करने वाले हरि की प्राप्ति न होवे ॥ १० ॥ ११ ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वचोभिर्वाग्विलासैः चित्तवृत्तिभिर्नानावधानसामर्थ्यैः । इन्द्रि-याणां राधसा पाटवेन ॥ ११ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

योगेन प्राणायामादिना साङ्ख्येन देहादिव्यतिरिक्तात्मज्ञान-मात्रेण सन्न्यासवेदाध्ययनाभ्यामपि अन्यैरपि व्रतवैराग्यादिभिः श्रेयःसाधनैः ॥ १२ ॥

नन्वेषां नानाफलसाधनानां हरिसेवाभावमात्रेण कुतो वैय-र्थ्यं तत्राह । श्रेयसां फलानामात्मैवावधिः परा काष्ठा अर्थतः परमार्थतः आत्मार्थत्वेनैवान्येषां प्रियत्वादित्यर्थः भवत्वात्मावधि-र्हरेः किमायातं तत्राह । सर्वेषामपीति । आत्मा आत्मदश्चाविद्या-निरासेन स्वरूपाभिव्यञ्जकः ऐश्वर्येणापि रूपेण बलिप्रभृतिभ्य इवात्मप्रदः प्रियश्च परमानन्दरूपत्वात् ॥ १३ ॥

किञ्च । नानाकर्मभिस्तत्तद्देवताप्रीतिनिमित्तान्यपि फलानि हरिप्रीत्या भवन्ति केवलं तत्तद्देवताराधनेन तु न किञ्चिदिति सदृष्टान्तमाह । यथेति । मूलात्प्रथमविभागाः स्कन्धाः तद्विभागा-भुजाः तेषामप्युपशाखाः उपलक्षणं पत्रपुष्पादयोऽपि तृप्यन्ति नतु मूलसेकं विना ताः स्वस्वनिषेचनेन । प्राणस्योपहारो भोजनं तस्मादेवेन्द्रियाणां तृप्तिर्न तु तत्तदिन्द्रियेषु पृथक् पृथगन्नलेप-नेन तथाच्युताराधनमेव सर्वदेवताराधनं न पृथगित्यर्थः ॥ १४ ॥

कुतः सर्वमूलत्वादिति सदृष्टान्तान्तरमाह । यथैव वारो जलानि वर्षा काले सूर्यादुद्भवन्ति ग्रीष्मे तस्मिन्नेव प्रविशन्ति अस्याप्रसिद्धत्वेन दृष्टान्तान्तरमाह । यथा भूतानि भूमाविति गुणप्रवाहश्चेतनाचेतनात्मकः प्रपञ्चः ॥ १५ ॥

ननु हरावेव गुणप्रवाह इत्युक्ते तदाधारत्वेन सोपाधि-कत्वं हरेः स्यादित्याशङ्क्याह । एतदिति । एतद्विश्वं विष्णोस्तस्य वैशाखप्रसिद्धं पदं परं सर्वोपाधिरहितम् तदुत्पन्नत्वान्न ततः पृथगित्यर्थः । तर्हि कथमन्यथा भाति तत्राह । सक्तादिति । सक्तृक दाचिद्विभातं स्फुरितं गन्धर्वनगरवत् यथा सवितुः प्रभा न ततो भिन्ना यथा च जाग्रत्यसव इन्द्रियाणि स्फुरन्ति सुषुप्तौ तु सुप्तशक्तयो भवन्तीत्यर्थः । कथम्भूतोऽसौ हरिः द्रव्यादीनां त्रिविधाहङ्कारकार्याणां तन्निमित्तस्य भेदभ्रमस्य चात्ययो यस्मात्सः यद्वा अजाग्रति सुषुप्तावसवः सुप्ताः शक्तयो येषां ते भवन्ति द्रव्यादेरप्यत्ययो भवति सवितुः प्रभेत्युद्गतौ दृष्टान्त इति ॥ १६ ॥

नन्वसङ्गे हरौ कथं प्रपञ्चोत्पत्तिलयौ तत्राह । यथेति । अभ्र-तमःप्रकाशा आगमापायिनोरजस्तमःसत्त्वस्थानीयाः हेभूपाः ! प्रचेतसः अमूः शक्तय उद्भवन्ति न भवन्ति क्षीयन्ते इत्येव-मयं जगत्प्रवाहः ॥ १७ ॥

तेन सर्वकारणत्वेन हेतुना कालो निमित्तम् प्रधानमुपा-दानम् पुरुषः कर्ता एतत्त्रितयात्मकत्वात्सर्वकारणं परमेश्वर-मद्धा साक्षाद्भजध्वम् कथम् आत्मन एकभावेनाभिन्नत्वेन ॥ १८ ॥

साधनमाह । दयादिभिः शीघ्रं तुष्यति ॥ १९ ॥

ततो न कदाचित् त्यजतीत्याह । अपहता निरस्ताः सकला एषणाः कामा यस्मात्स चासावमल आत्मा मनस्तस्मिन् सतां मनसि निरन्तरं समेधितया भावनयोपहूतः संनिधापितः सन्न-न्तरं हरिश्छिद्रवत्त्वत्याकाशवत्ततो न सरति नापयाति हि किं कुर्वन् आत्मनो निजजनवशगत्वं स्वभक्ताधीनत्वमयन्नवग-च्छन् ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वचोभिर्वाग्विलासैर्निपुणया सूक्ष्मया बलेनमनोदेहबलेनेन्द्रि-राधसा पाटवेन ॥ ११ ॥

योगेन प्राणायामादिना सांख्येन देहादिव्यतिरिक्ता-मात्रेण चतुर्थाश्रमाध्ययनाभ्यां श्रेयःसाधनैरन्यैर्व्रतैश्च "य बलदा" इति श्रुत्युक्तरीत्यात्मपर्यन्तप्रदानचतुरः आश्रित-भगवान् यत्र जन्मादिषु नास्ति यैर्जन्मादिभिर्नाराध्यते तैः वि-जनमित्यर्थः ॥ १२ ॥

ननु जन्मादीनां प्रतिनियतफलानां भगवत्सेवावैधुर्ये कुतो निन्द्यता तत्राह । श्रेयसामिति । अर्थतः यन्नुत षामपि श्रेयसां परमात्मा हरिरवधिः परा काष्ठा हरेरन्य नास्तीत्यर्थः कुतः हि यतो हरिः सर्वेषां प्रियः निरतिशय विषयः निरतिशयानन्दरूपप्रीतिविषय एव हि परमं श्रेयः हेतुरात्मा आत्मा हि निरतिशयप्रीतिविषयः यस्य प्रसा सम्बन्धाद्देहापत्यगृहपश्वादिकं सम्बन्धपारम्पर्येण स्वस्य प्रीतिविषयं तस्याप्यात्मेत्यर्थः न केवलं प्रिय एव स्वात्मपर्यन्तपुरुषार्थप्रदश्च बालिप्रभृतिभ्यः स्वात्मदानं प्रसिद्ध

किञ्च तत्फलसाधनतयेन्द्रादिदेवताराधनमपि भग पर्यवस्यति तस्य सर्वदेवतान्तरात्मत्वादतः साक्षात्तदारा सर्वदेवताप्रीतिद्वारा समीहितपुरुषार्थहेतुरिति सदृष्टान्त यथेति । तरोर्वृक्षस्य मूलनिषेचनेन जलसेकेन स्कन्ध यथा तृप्यन्ति नतु प्रत्येकं स्कन्धादिसेचनेन तत्र स मूलात्पृथग्विभागाः भुजास्तेषां विभागाः उरवस्तेषामपि वि शाखाः तेषामपि विभागाः तदुपरि शाखाः एतदुपलक्ष पुष्पफलादयोऽपि तृप्यन्ति यथा च प्राणोपहारात्प्राणाधा जनादितियावत् सर्वेन्द्रियाणां तृप्तिर्भवति नतु तत्तदि पृथगन्नलेपनेन तथाच्युतेज्यया भगवदाराधनं सर्वार्हणं ता र्हणसाध्यफलं साधयति ॥ १४ ॥

कुतः सर्वकारणत्वात्सर्वान्तरात्मत्वाच्चेति सदृष्टान्तमाह वेति द्वाभ्याम् । यथैव वारः आपः वर्षाकाले सूर्यात् उद्भवन्ति ग्रीष्मे च तस्मिन्नेव प्रविशन्ति अस्याप्रसि दृष्टान्तान्तरमाह । यथाभूतानि स्थावरजङ्गमात्मकानि प्रभवन्ति प्रविशन्ति च तथा गुणप्रवाहः गुणपरिणामरूप हरावेव कारणभूते उद्भवति लीनो भवति च ॥ १५ ॥

एवं सर्वकारणत्वमुक्तमथ सर्वात्मतामाह । तदेतत्त्व परं पदं वासस्थानं गृहादिसाम्यव्यावृत्त्यर्थमाह । सर्व प्रभेति । सवितुः प्रभावत् कृत्स्नं जगत् परमात्मनोऽपृथक् पर्णं शरीरमित्यर्थः जगतोऽनित्यत्वात्तन्निरूपितमा परमात्मन्यनियतमित्याशङ्कां निराकर्तुं जगद्विशिनष्टि । भातं सृष्टिदशायां स्थूलतया सकृद्विभातं सकृद्विभातमित्यनेन हारदशायां सूक्ष्मतया न विभातमिति विवक्षितं स्थूलसू वृत्तत्वेऽपि द्रव्यनित्यत्वमनेनाभिप्रेतमेतदेव स्पष्टयितुं नाभानयोर्दृष्टान्तमाह । यथेति । असुशब्देन प्राणायत्त न्द्रियाणि लक्ष्यन्ते असवः कदाचिज्जाग्रति व्याप्रियन्ते चित्सुप्तशक्तयः निवृत्तव्यापाराः कदेत्यत्राह । द्रव्यं भूतपञ्चकं ज्ञानक्रियाशब्दाभ्यां ज्ञानेन्द्रियाणि कर्म च लक्ष्यन्ते इन्द्रियभूतसंघातरूपदेवमनुष्यादिदेह

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सुषुप्तावित्यर्थः न हि तदानीं देहात्माभिमानः यथा प्राणाः जाग्रति सुतवृत्तयश्च भवन्त्येवं जगत आविर्भावतिरोभावानामेव भाना-भाने नत्वेतावता द्रव्यानित्यताशङ्केति भावः ॥ १६ ॥

एतदेव दृष्टान्तान्तरेण साधयति । यथा न भसीति । यथा नभस्याकाशेऽभ्रतमःप्रकाशा भवन्ति कदाचिद्विभाता भवन्ति कदाचिन्न विभाता भवन्ति नहि भावाभावमात्रेणा-भ्रादीनामसत्ता शङ्कितुं युक्ता एवं हे भूपाः ! प्रवाहः प्रवहमाना रजस्तमः सत्त्वमित्येवं रूपा अमू शक्तयः कार्योपयोग्यपृथक्सि-द्धविशेषणभूताः परे ब्रह्मणि कदाचिद्भवन्ति न भवन्ति च प्रव-हते इति प्रवाहः वेदाः प्रमाणमिति वच्छक्तयः प्रवाह इत्यु-क्तम् ॥ १७ ॥

तेनावस्थानां स्थूलत्वसूक्ष्मत्वादीनामनित्यत्वेऽपि तदाश्रयस्य प्रकृति-पुरुषात्मकद्रव्यस्य नित्यत्वात्तस्य परमात्मानं प्रतिनियतशरीरत्वे-नाशेषदेहिनामेकमात्मानं कालं कालशरीरकं प्रधानं प्रकृतिशरीरकं पुरुषं जीवशरीरकं प्रकृतिसम्बन्धप्रयुक्तसंसारित्वशङ्कां निरस्यति। स्वतेजसा स्वप्रकाशेन ध्वस्तः निरस्तः गुणप्रवाहादयः संसारो यस्य नियन्तृतया प्रकृतिसम्बन्धो ननु जीवस्येव वश्यतयेति भावः एवंभूतं परेषां ब्रह्मादीनामपीशमात्मैकभावेन सर्वात्मकत्वेन सर्वेषामात्मनामेकान्तरात्मेति बुद्ध्याद्धा साक्षाद्भजध्वम् ॥ १८ ॥

कीदृशं तद्ब्रह्मस्वरूपं यद्भजध्वमित्युच्यत इतिविवित्सायां प्रकृति पुरुषविलक्षणम् "सत्यं ज्ञानमनन्तम्" इति स्वरूपशोधकवाक्या-वगतं ब्रह्मस्वरूपं शोधयंस्तद्भजध्वमित्याह। निरस्तेति। निरस्तसङ्क-ल्पविकल्पं मानसबुद्धिसुखदुःखेच्छाद्वेषादिविकल्परहितमित्यर्थः अनेन बद्धजीवव्यावृत्तिः अद्वयं द्वयं द्वयोः समुदायः तदन्यस्वस-जातीयद्वितीयवस्त्वभावात् यथा न तत्समश्चाभ्यधिकश्च दृश्यत इति अद्वितीयमित्यर्थः अनेन मुक्तजीवव्यावृत्तिः तेषां सजाती-यद्वितीयसद्भावात्। द्वयापवादोपरमोपलम्भनम्। द्वयशब्देन द्वैतं विवक्षितं तदेवापवादः ब्रह्मज्ञानबाधकं देवमनुष्यादिभेदापवादविरमे उपलम्भनं यस्य नस्तथोक्तं देहात्मभ्रमनिवृत्तावुपलभ्यमित्यर्थः अजस्रनिर्वृतं नित्यानन्दधर्मकं नित्यानन्दस्वरूपं वा अतोऽपि प्रागु-क्तार्थ उचितः आनादिमध्यान्तमिति नित्यत्वस्य कथितत्वादज-स्रशब्दस्य पुनरुक्तिप्रसङ्गात् संज्ञप्तिमात्रं कचिदप्यजडस्वरूपम-मुया दृशा पूर्वोक्तज्ञानेन भजत निरस्तसंकल्पविकल्पमिति पदेन वि-शोको विजिघत्सोऽपिपासः अस्थूलमनण्वह्रस्वमिति वाक्योक्तप्रकृति-पुरुषवैलक्षण्यवदमलत्वमुक्तम् अनादिमध्यान्तमिति सत्यत्वमुक्तं निर्विकारत्वं हि सत्यत्वं संज्ञप्तिमात्रमिति ज्ञानशब्दार्थ उक्तः अज-स्रनिर्वृतमित्यनेन स एको ब्रह्मण आनन्दः आनन्दो ब्रह्मेत्यर्थ उक्तः समाभ्यधिकराहित्यवाचिना अद्वयशब्देनानन्तत्वमुक्तं साद्वितीयं हि सर्वं देशादिभिः परिच्छिन्नमतोऽद्वितीयत्वादनन्तत्वसिद्धिः ॥ ० ॥

तदेवं सत्यत्वज्ञानत्वानन्दत्वामलत्वविशिष्टं शोधकवाक्यावगतं परमात्मस्वरूपमुक्तममुयेत्युक्ताया दृशः साधनान्याह । दययेति । सर्वभूतावचेषु भूतेषु यथोचितमत्कारो पयोगिन्या दयया येन केन चिद्दैवालब्धेनान्नादिना अन्तर्बाह्येन्द्रियनिग्रहेण चानुगृहीतया-दृशा जनार्दनस्तुष्यति ॥ १९ ॥

ततस्तुष्टो भगवान्न कदाचित्त्यजतीत्याह। अपहतेति। अपहता निर-स्ताः सकला एषणाः कामा यस्मात्सचासावमल आत्मा मनस्त-स्मिन्नेवंविधे सतां मनसि निरन्तरमेधितया भावनया भक्त्या उपहृतः सन्निधापितः सन्नक्षरो हरिः छिद्रवत्पृथक्सिद्धवत्ततो न सरति नापयाति किं कुर्वन्नात्मनो निजजनवश्यत्वं स्वभ-क्ताधीनत्वं यन् गच्छन् ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इन्द्रियराधसा चक्षुग्रहणसामर्थ्येन ॥ ११ ॥

सांख्येन यथार्थज्ञानेन न्यासस्वाध्याययोः क्रिययापि अन्यै-स्तीर्थसेवादिभिः ॥ १२ ॥

इतोऽपि विहितानां पुण्यानां हरेरनुग्रहपर्यन्तमेव फलमित्याह। श्रेयसामिति। यावत्प्रसीदति तावत्पर्यन्तं पुण्यफलमित्यवधेरर्थः ननु सेवितः किं फलं ददाति येन श्रेसामवधिः स्यादित्या-शङ्क्यान्ये सेविता यावत्प्रसीदन्ति तावत्पर्यन्तं पुंसां स्वव्यतिरि-क्तमेव पुण्यफलं प्रयच्छन्ति अयं तु स्वात्मानमेव ददातीत्येता-दृशः कृपासमुद्रःकोऽस्तीत्यभिसन्धायाह। सर्वेषामिति। आत्मानन्द रूपः ॥ १३ ॥

किंवा श्रेयोभिरन्यैरित्यत्र देवादिसेवालक्षणश्रेयांसि कथं निषिध्यन्ते तत्सेवाया अपि तत्तत्फलावाप्तये कर्तव्यत्वादिति तत्राह। यथेति। प्राणोपहारो भोजनलक्षणपूजा इन्द्रियाणां तृप्तिलक्षण-पूजां जनयति अच्युतेज्या सर्वदेवाधर्हणफलं ददाति अत्रैवका-रेण प्राधान्यपूजा निषिध्यते नत्यवान्तरपूजा तस्याविहितत्वेन अच्युतस्य पूजात्वादित्यभिप्रायः परिवारतया ग्राह्या "अपि हेयाः प्रधानत" इत्युक्तेः ॥ १४ ॥

ननु हरिपूजया देवादिपूजाफलं कथं स्यान्नहि देवदत्तभो-जनतृप्त्या यज्ञदत्तस्तृप्यतीति तत्राह। यथेति। उदयकाले आषा-ढादिकाले वा गावो रश्मयो जलानि च सूर्याद्यथा प्रभवन्ति निर्गच्छन्ति उत्पद्यन्ते वा पुनश्च सन्ध्याकाले हेमन्तादिकाले वा तस्मिन् सूर्ये प्रविशन्ति गवां मण्डलप्रवेशो वारिणां मरी-चिपीतत्वमित्येष विशेषः यथा च स्थिरजङ्गमानि भूतानि भूमे-रुत्पद्यन्ते भूमावेव प्रविशन्ति तथायं गुणप्रवाहस्त्रिगुणात्मक-जगल्लक्षणो हरेरुत्पद्यते हर्याधारतया तिष्ठतीत्यन्वयः अनेन हरेः सर्वकर्तृत्वेन स्वतृप्त्या देवादीनां स्वाश्रितत्वेन तृप्तिर्युज्यत इत्येत-त्सूचितमिति ॥ १५ ॥

अस्तु सर्वश्रेयसामात्मावधित्वमेषु सत्सु कथं प्रकाशत इति तत्राह। एतादिति। पूर्वसञ्चीर्णश्रेयस्सु सत्सु यदा सुप्तवृत्तयो विलीन-श्वासादिवृत्तयोऽसुप्तप्रवृत्तयः प्रबुद्धवृत्तयोऽस्य इन्द्रियाणि जाग्रति पुरुषं बोधयन्ति उद्योगे स्थिता वा यदा च द्रव्यक्रियाकार-कविभ्रमात्ययः तदा यत्तदुपनिषद्वेद्यं तदेनजगदात्मनः प्रपञ्च-स्वामिनि हरेः परं पदं यथा सवितुःप्रभा सकलपदार्थप्रकाशिका सूक्ष्मापि तथा सत्काद्विभातं भवति यथा नारदस्य पुनरभ्यासे सर्वत्रैवेत्यन्वयः देहात्मभावभ्रमो द्रव्यभ्रमः अहं कर्तेति क्रियाभ्रमः मदीयानीमानीन्द्रियाणीति कारकभ्रमः मुख्यप्राण-प्रसादेन प्राणशब्दवाच्येष्विन्द्रियेषु ज्ञानार्थं पुरुषोद्बोधनं योगवत्सु जाग्रतो योगिनो ज्ञानोत्पत्त्या द्रव्यादिविभ्रमनिवृत्त्या भगवत्स्वरूपं प्रकाशते इति भावः हरावेव गुणप्रवाह इत्युक्तेः गुणप्रवाहाधारत्वेन सोपाधिकत्वं हरेः स्यादित्यत आह। एत-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्विति । एतदेव विष्णोः पदं तदुत्पन्नं जगदात्मन उपाधेः परमुपाध्यसम्बन्धमाधाराधेयभावो गगनगन्धर्वनगरवत् ज्ञातव्यः तर्हि शून्यं तत्राह । सदद्विभातमिति । प्रज्ञानघनं यथा सवितृप्रभाप्रभातातद्वत्स्थितं यज्ज्ञानात् द्रव्यक्रियाज्ञानाभिदाभ्रमो जगद्भेदभ्रमस्तस्य निवृत्तिर्भवति किं लक्षणो हरिरित्यनेन तल्लक्षणं तज्ज्ञानं चोच्यते ननु प्रज्ञानघनाज्जडस्य जगतः कथमुत्पत्तिरित्याशङ्क्य दृष्टान्तेनोपपादयति । यथेति । यथाऽसत्र इन्द्रियाणि अज्ञांप्रतिसुप्तिकाले सुप्तवृत्तयोपहृतव्यापारा आत्मनि लीनास्ततः प्रबोधे प्रज्ञानघनादप्यात्मनो जायन्ते तद्ब्रह्मणो जगदित्येतदपव्याख्यानम् "आत्मभावः शरीरेषु द्रव्यभ्रम उदाहृतः । क्रियाभ्रमस्त्वहं कर्ता मदीयानीन्द्रियाणि तु । कारकभ्रम इत्युक्तस्त्व एते विभ्रमा यदा । श्वासादिवृत्तिलोपेन प्राणा उद्योगिनस्तदा । विलीयन्ते प्राणभक्त्या नित्यं स्वापवतां स्फुटम् उद्योग एव जाग्रत्स्याद्योगिनां मुक्तिसिद्धय "इत्यनेनैतद्व्याख्यानरूपेण सम्प्रदाय विभ्रमप्रकाशकेन निरस्तमिति ज्ञायते" एको देवः सर्वभूतेषु गूढः "यस्मिन् सर्वाणि भूतानि" इत्यादिष्वेकस्य हरेराधाराधेयभावस्य सत्यत्वावगमात् न हि सुषुप्ताविन्द्रियाणामात्मनि लयः प्रज्ञानघनादुत्पादोऽपि स्वकपोलकल्पितत्वमन्तरेण प्रामाणिक इति ॥ १६ ॥

ननु पङ्किलप्रदेशे प्रवर्तमानदेवदत्तवत् सृष्ट्यादौ गुणपङ्के प्रवृत्तस्य तत्कृतलेपः स्यात् "सचानुपपन्नोऽसङ्गोह्ययं पुरुष" इति श्रुतेरिति तत्राह । यथेति । यथा नभस्यभ्रमतःप्रकाशा आगमापायिनः अनुक्रमेण भवन्ति च न तावताकाशस्य तत्सम्बन्धलोपोऽस्ति एवं परेऽसङ्गे ब्रह्मणि रजस्तमःसत्त्वमित्यमूः शक्तयो भवन्ति तदेकाधीनत्वात् शक्तिशब्दवाच्याः इत्ययं गुणप्रवाहो न तस्मिन्विशेषमापादयतीत्येतत्तुशब्दादवगन्तव्यं ननु शक्तीनां मिथ्यात्वात् शक्तिं प्रकाशयितुं नैपुण्याभावात् ब्रह्मणि लेपाभाव इत्यतोवाह । इतीति । अयं सत्य इति शेषः एतदभिप्रायेण प्रवाह इत्युक्तं यथाग्निप्रतिष्टम्भनसमर्थस्यापि तत्प्रयुक्तदाहदुःखाभावो न स्वप्नेर्मिथ्यात्वादेवं ब्रह्मणो लेपकत्वशक्तिरपि द्रव्याणां भगवदधीनेति विशेषं तुशब्दो वक्तीति वा ॥ १७ ॥

मथितार्थमाह । तेनेति । यत एवं प्रवृत्तिमत्त्वेऽपि तत्कृतदोषलेपाभावस्तेन विष्णुरेक एव पूर्णो न त्वन्य इति लक्षणात्मैक इति भावेन एतमितः प्रेत्याभिसम्भावितास्मीति बुद्ध्या परमात्मानं भजध्वमित्यन्वयः "पूर्णो विष्णुः स एवैक इति भावो य ईरितः । आत्मैकभाव इति तं विदुर्ब्रह्मात्मदर्शिन,, इति वचनादात्मैकभावेनेति नैक्यमुच्यते 'एकमेवाद्वितीयमात्मानमेव लोकमुपासीत प्रधानादिदमुत्पन्नम्,, इत्यादिश्रुतिसप्रमाणीकर्तुमेकमित्यादीनि विशेषणानि बोद्धव्यानि ॥ १८ ॥

इत्थं भावान्तरमाह । निरस्तेति । भक्तानां निरस्तौ सङ्कल्पविकल्पौ येन स तथा हरिप्रसादमन्तरेण तौ निरस्तौ न स्यातां पुंसामित्यर्थः तमद्वयं द्वितीयसमरहितम् ।

> सङ्कल्पश्च विकल्पश्च ऋते विष्णुप्रसादतः ।
> नैव सम्भवतो विष्णोः समाभावात्तु सोऽद्वयः ।

इति वचनं चात्रमानं द्वयस्य पञ्चविधस्य भेदस्यापवादः कुतर्कैर्निरासस्तमुपरमन्ति न कुर्वन्तीति ते द्वयापवादोपरमास्तेपूपलम्भनं दर्शनं यस्य स तथा तं च न आदिमध्यान्त स तथा तमजस्रनिर्वृतिं नित्यानन्दं संज्ञप्तिमात्रं विज्ञानघन यादृशेन दर्शनेन निरस्तसङ्कल्पादिगुणविशेषाः तादृशं पसंहृत्य भजतेत्यन्वयः ॥ ० ॥

साधनान्तरं चाह । दययेति । येन केनचिल्लब्धेनान्नपानादिना सन्तुष्ट्यालंबुद्ध्या ॥ १९ ॥

ननु बहुजन्मचीर्णसुकृतानन्त्येन प्रसाद्य सद्विभात पश्चाप्नेति पंच बहुक्लेशेन साधनानुष्ठानं व्यर्थं पादवितिति तत्राह । अपगतेति । अपगता दूरतो निरस्ताः समस्ता एषणाः पुत्रवित्तादिकामा यस्मात्स तथा अत एवामल अपगतसकलैषणामलात्मा तस्मिन्नेवं विशुद्धान्तःकरणा न्तरमेधितया भावनया भक्त्या आहूत इवागत्यात्मानं सन्निहितो हरिः श्रीनारायणः सतां हृदयान्न सरति न न तिरोभवति तत्र हेतुमाह । निजेति । स्वभक्तवशगतत्वं निति यत्तस्माच्छिद्रवदाकाशवदेतन्निदर्शनकथनेन व्याप्ति र्व्यक्तिरेव विवक्षितेति ध्वनयति पूर्वदेशवियोगलक्षणा त्तरदेशसंयोगसम्भवात् व्याप्तिभङ्गापत्तेरिति न सं स्रवतीत्युत्तरशब्दनिरुक्त्या च भक्तजनहृदयान्नापगच्छतीति नोत्कमचर इति हिशब्देन हरेर्ज्ञानिप्रियत्वं मानदि स्मारयति "ज्ञानीत्वात्मैव मे मत" इति ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तत्र शुद्धजीवात्मब्रह्मात्मनोर्भावनामपि परित्यज्य रावेव निष्ठापयितुमाह । श्रेयसामपीति । सर्वेषां हरि मूलं स्वरूपं शुद्धजीवानां तदीयतटस्थांशत्वात् स्तन्निर्विशेषाविर्भावरूपत्वादिति भावः । अतो वित निजभक्तेभ्यः स्पष्टमप्यात्मानं ददाति ततस्ततोऽपि प्रेमास्पदं भवतीत्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥

एवं कर्मज्ञानकाण्डयोः श्रीहरावेव पर्यवसानमुक्त्वा नाकाण्डस्याप्याह । यथेति ॥ १४ ॥

यथैवेति पद्यस्यान्ते एतत् पदमित्यादिपद्यं सम्बन्ध स्वयोः सम्मतं ननु स्वामिनः ॥ १५ ॥ १६ ॥

परे ब्रह्मणि श्रीभगवति ॥ १७ ॥

आत्मैकभावेन सर्वेषां मूलस्वरूपमित्यर्थभिव नया वा । यद्वा आत्मनो यो भावान्तरामिश्रो भावो दार्ढ्य कृतस्तेन ॥ १८ ॥

तत्रानुकूलान् धर्मानाह । दययेति ॥ १९ ॥

यत् सदैव सङ्गतः सन् ॥ २०-२१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

श्रुतेन वेदान्तादिश्रवणेन वचोभिः शास्त्रव्याख्यान चित्तवृत्तिभिर्नानाशास्त्रार्थावधारण सामर्थ्यैः । इन्द्रियाणां पाटवेन ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

योगेनाष्टाङ्गेन सन्न्यासवेदाध्ययनाभ्याञ्च अन्यैरपि व्रतवैराग्यादिभिः श्रेयः साधनैः यत्र येषु सत्सु हरिरात्मप्रदो न भवतीति योगिप्रभृतयोऽपि योगादिभिः परमात्माद्यनुभवं न प्राप्नुवन्तीत्यर्थः । हरिः खल्वात्मानञ्च भक्त्या विना न प्रददाति येषां भक्तित्वाभावात् भक्तिकारणत्वाभावाच्च वैयर्थ्यमेव । प्रकारान्तरेण भक्तिसद्भावे त्वेषां भक्तिमिश्रत्वेनैव सार्थकत्वं न तु व्रत इति भावः ॥ १२ ॥

हरिभक्तिं विना सर्व्वेषां तु श्रेयःसाधनानां वैफल्ये युक्तिमाह । श्रेयसां फलानामात्मैवावधिः तेषामात्मप्रीत्यर्थकत्वात् सर्व्वभूतानामात्मनां तु हरिरेवात्मा जीवात्मनां तेषां तदीयतटस्थशक्तित्वात् स च हरिः प्रियः केवलया भक्त्या प्रीणाति यदात्मदः “नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्”इति श्रुतेः ॥ १३ ॥

ननु कर्म्मज्ञानादीनां यथा भक्तिमिश्रत्वमावश्यकं तथा भक्तेरपि कर्म्ममिश्रत्वमावश्यकमेव देवर्षिपित्राद्यर्हणलक्षणस्य नित्यकर्म्मणोऽकरणे प्रत्यवायश्रवणादित्यत आह । यथेति । मूलात् प्रथमविभागाः स्कन्धाः तद्विभागा भुजास्तेषामप्युपशाखाः उपलक्षणं पत्रपुष्पादयोऽपि तृप्यन्ति । न तु मूलसेकं विना स्वस्वनिषेचनेन तथैव अच्युतेज्यैव सर्व्वार्हणमच्युतस्य पूजायां सर्व्व एव पूजिताः स्युरित्यर्थः । नन्वशक्तस्यैव भवत्वेतत् भक्तेन तु अच्युतस्य पूजा कर्त्तव्या देवादीनाञ्च यथा मूलस्य स्कन्धादीनाञ्च सेकेन दोषः प्रत्युत गुण एवेत्याशङ्क्य दृष्टान्तान्तरमाह । दृष्टान्तद्वयेन । प्राणस्योपहारो भोजनं तस्मादेवेन्द्रियाणां तृप्तिः नतु तत्तदिन्द्रियेषु पृथक् पृथगनुलेपात् प्रत्युत नयनकर्णादिस्वान्ध्यवाधिर्य्याद्युत्पादनात् दोष एव ॥ १४ ॥

अच्युतस्य सर्व्वमूलत्वं दृष्टान्तद्वयेनाह । यथैव वारः जलानि वर्षाकाले सूर्य्यादुद्भवन्ति ग्रीष्मे तस्मिन्नेव प्रविशन्तीत्युपादानकारणं यथा च भूतानि भूमाविति । गुणप्रवाहः गुणमयः प्रपञ्चः ॥ १५ ॥ १६ ॥

ननु गुणमयस्य विश्वस्य गुणातीतो हरिः कथं कारणं न हि मृन्मयस्य घटस्य मृदतीतं वस्तूपादानकारणं भवितुमर्हति उपादानत्वे च हरेः कथं वा निर्व्विकारत्वमित्यत आह । यथा अभ्रतमःप्रकाशा नभसि दृश्यमानाः सूर्य्यादेव भवन्ति तत्रैव लीयन्ते च सूर्य्यादिति पूर्व्वेणानुषङ्गः । हिमोऽपि सूर्य्यादेव भवति यद्वक्ष्यते प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्य्यमिव मेघहिमोपरागैरिति उपरागशब्देन दुष्टजीवाविष्टं तमःखण्डमेव तत्रोच्यते हे भूपाः ! सूर्य्यो मेघः हिमाद्यतीतोऽपि यथा तेषामुपादानकारणं तदपि यथा निर्व्विकारो भवति तथेत्यर्थः । यथैवाभ्रादिरहितेऽपि सूर्य्ये कारणत्वादभ्रादयः सन्तीत्युच्यते तथैव हरौ गुणरहितेऽपि अमूः शक्तयो रजआद्याः इत्येवं प्रकारेणायं जगत्प्रवाहः तत्र यथाऽभ्रतमसी सूर्य्यस्य शुद्धज्योतिर्मात्रस्य न स्वरूपं दूरवर्त्तिनोर्मलिनः प्रकाशोऽपि न स्वरूपं तथैव हरेः रजस्तमसी शुद्धचिन्मात्रस्य तस्य सत्त्वं च न स्वरूपमित्येवं श्रीनारदस्य मते भगवतो गुणमयजगदुपादानत्वं निर्विकारत्वञ्च सिद्धमत एवात्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि हरसि पासीति देवैर्वक्ष्यते । “यत उदयास्तमयौ विकृतेर्मृदिवाविकृतादिति” श्रुतिभिश्च नमोनमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणायेति गजेन्द्रेण च कारणस्य तदेवाद्भुतत्वं यदुपादानत्वेऽपि निर्विकारत्वं विवर्त्ताङ्गीकारे युक्तिसद्भावादद्भुतत्वं न स्यात् व्याख्यातं तत्रैव स्वामिभिश्च कारणत्वे च मृदादिवद्विकारं वारयति अद्भुतकारणायेति ॥ १७ ॥

तेन सर्व्वकारणत्वेन हेतुना कालो निमित्तं प्रधानमुपादानं पुरुषः कर्त्ता एतत्त्रितयात्मकत्वात् सर्व्वकारणं परमीशमद्धा साक्षादेव भजध्वं तद्भजनेनैव देवपित्रादिसर्व्वभजनं भवेदिति आत्मना मनसा एकभावेन मनस ऐकाग्र्येणेति वा आत्मनो यो भावान्तरामिश्रो भावो दास्यादीनामेकतरस्तेनेति सन्दर्भः ॥ १८ ॥

तत्रानुकूलान् कांश्चन धर्म्मानाह । दययेति ॥ १९ ॥

एवमुक्तप्रकारया भक्त्या भक्तेभ्यो भगवान् स्वात्मप्रदो भवतात् पूर्व्वमुपपादितं तल्लक्षणं विवृणोति । अपहृता निरस्ता सकला एषणाः कामा यस्मात् स चासावमल आत्मा मनश्च यस्मिन् सतां मनसि निरन्तरमेधितया भावनया उपहूतः हे हरे ! गोविन्द ! मत्प्राणवल्लभेति आहूतः सन्निधापितः सन् अक्षरो हरिर्न सरति छिद्रवत् तत्रत्याकाशवत् ततः सकाशान्नापसरति कीदृशमात्मानं स्वस्य स्वभक्तजनवशगत्वम् अयन् जानन् स्वीयां निष्ठां रक्षितुमिति भावः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

योगेनाष्टाङ्गेन सांख्येन तत्त्वविवेकेन न्यासस्वाध्याययोः सन्न्याससब्रह्मचर्य्याभ्याम् अन्यैर्वैराग्यवृत्तादिभिः ॥ १२ ॥

सर्वेषां श्रेयसामुपायानामर्थतो वस्तुतोऽवधिः फलम् आत्मा परमात्मा यतः सर्वेषां भूतानामात्माश्रयः अंशी हरिरेव प्रियश्च आत्मदः आत्मपर्यन्तप्रदः “य आत्मदो धनद„ इति श्रुतेः “अहं भक्तपराधीन” इतिस्मृतेः ॥ १३ ॥

तस्यैव सर्वात्मनः पूजनेन सर्वेषां पूजनं भवतीत्याह । यथेति ॥ १४ ॥

भगवतः सर्वहेतुत्वमाह । यथैवेति । भगवतः असङ्गत्वसूचनाय सूर्योद्वारः प्रभवन्ति तस्मिन्नेव प्रविशन्तीत्युक्तम् सर्वोपादानकारणत्वद्योतनाय भूतानि भूमाविति चोक्तम् गुणप्रवाहः प्रकृतिगुणमयः प्रपञ्चः ॥ १५ ॥

अत्र सूर्योद्वारः यथा प्रभवन्ति तस्मिन्नेव प्रविशन्ति चेत्यनेन जगतोऽब्रह्मात्मकत्वप्रतीतिमागतां निराकरोति यथा सवितुः प्रभा अनतिरिक्तापि परा भवति तथा तत्तस्मात् पूर्णकाद्धरेः एतत्पदं बद्धजीवस्थानं विश्वं परमनतिरिक्तं सत्तिरिक्तं भवति अभिन्नत्वेऽपि भिन्नं भवति सृष्टिसंहारयोस्त्वस्येन्द्रियाणामाविर्भावतिरोभावो यथा तथेत्याह । यथा अस्य इन्द्रियाणि जाग्रति आविर्भवन्ति सुषुप्तौ तु सुसूक्ष्मकार्योऽभावभूता भवन्ति तद्वत्कचित्सृष्टिसमये विभातं प्रलये तु नेति बोध्यम् नन्वेवंभूताद्ब्रह्मात्मकात् प्रपञ्चात् जीवः कुतो विमुच्यते इत्यत्राह । द्रव्यक्रियाज्ञानभिदाभ्रमात्यय इति द्रव्ये देहे गृहादौ च

न भजति कुमनीषिणां स इज्यां हरिरधनात्मधनप्रियो रसज्ञः ।
श्रुतधनकुलकर्मणां मदैर्ये विदधति पापमकिञ्चनेषु सत्सु ॥ २१ ॥
श्रियमनुचरतीं तदर्थिनश्च द्विपदपतीन् विबुधांश्च यत्स्वपूर्णः ।
न भजति निजभृत्यवर्गतन्त्रः कथममुमुद्विसृजेत् पुमान् कृतज्ञः ॥ २२ ॥
( भवतां वंशधुर्योऽभूद्ध्रुवश्चित्ररथः स्वराट् ।
गुरुदारवचोवाणैर्निर्भिन्नहृदयोऽर्भकः ॥ ० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अहमिति ममेति क्रियायामैहिकामुष्मिकसाधने काम्ये कर्मणि इयं परमपुरुषार्थरूपेति ज्ञानमिदाद्यु कपिलकणादबौद्धादिज्ञान-भेदेषु इदं श्रेयस्करमिदं श्रेयस्करमिति च यो भ्रमः-संसारहेतुस्तस्यात्ययस्तस्माद्धरेर्जगदात्मन उपास्यादेव भवति१६॥

असङ्गत्वं ब्रह्मणः सूर्यदृष्टान्तेन सूचितमाकाशदृष्टान्तेन प्रपञ्चयति । यथेति। अभ्रतमःप्रकाशाः रजस्तमःसत्त्वस्थानीयाः नभोऽदूपका एव भवन्ति उत्पद्यन्ते न भवन्ति विलीयन्ते एवं ब्रह्मणि शक्तयस्तच्छक्तिगुणाः भवन्ति विलीयन्ते च किम्बहुना एवं ब्रह्मदूपकः सर्वोऽपि प्रवाहः जगत्सृष्टिसंहारप्रवाहः ॥ १७ ॥

तेन सर्वहेतुत्वेन अशेषदेहिनां ब्रह्मादीनामखिलजीवानामंशभूतानामात्मानमाश्रयमंशिनमेकमेव परेशं परानियन्तारं कालं प्रधानं चेति अचेतनरूपशक्तिद्वयरूपेण पुरुषमिति चेतनभूतांशरूपेण चानेकं स्वतेजसा ध्वस्तगुणप्रवाहम् आत्मन उपासकस्यांशस्य य एकभावः अंशनतिरिक्तस्थित्याद्विमस्वं तेन श्रद्धा भजध्वम् ॥ १८ ॥

शीघ्रं तत्तोपकारणमाह । दययेति ॥ १९ ॥

एवं दयादिगुणयुक्तेन भजनेन तुष्टो भगवान् स्वभक्तं कदाचिन्नत्यजतीत्याह । अपहत इति । अपहताः विगताः सकला एषणा मनोरथाः यस्मात् स चासावमल आत्मा मनस्तस्मिन् सतां मनसि अविरतमेधितया प्रवृद्धया भावनया उपहूतः ध्यातो हरिः आत्मनो निजजनवशगत्वमयन् अवगच्छन् छिद्रवत्त्वत्र्याकाशवत्ततो न सरति न गच्छति ॥ २० ॥

---

भाषाटीका ।

विचार करने से सब फलों का आत्मा मे पर्यवसान है और सब आत्मों का आत्मा प्रिय आत्मसमर्पक हरि ही हैं ॥ १३ ॥

जैसे वृक्ष के मूल में सींचने से बडी छोटी सब शाखा पत्रों की तृप्ति होती है जैसें प्राण के भोजन करने से सब इन्द्रियों की तृप्ति होती है तैसे विष्णु भगवान् की पूजा करने सें सब की पूजा होजाती है ॥ १४ ॥

जैसे सूर्य से जल उत्पन्न होता है फिर ग्रीष्म काल में उसी मे प्रवेश होजाता है जैसे देहादिक पृथिवी से उत्पन्न होते हैं फिर उसी में लीन होते हैं तैसे ही श्री हरि में से सबजगत् उत्पन्न होता है फिर उन्हीं में लीन है ॥ १५ ॥

यह सब जगत् एक साथ प्रकाश होने से [illegible] भगवत् स्वरूप ही है जैसे कि सूर्य का प्रकाश [illegible] भिन्न नहीं है जैसे इन्द्रियादिक जाग्रत अवस्था में प्रकाश रहते हैं सुषुप्ति अवस्था में उनकी सक्ती लीन होजाती ही महाभूत इन्द्रिय अज्ञान इन के भेद भ्रम का नाश होना [illegible]

जैसे आकाश में मेघ अन्धकार प्रकाश ये सब कभी [illegible] कभी क्रम से नष्ट होजाते हैं इसी प्रकार परब्रह्म में [illegible] आदिकों की सक्ती का प्रवाह होता है ॥ १७

तिसी सें सम्पूर्ण प्राणीमात्र के आत्मारूप प्रधान [illegible] परमात्मा अपने तेजसें सब गुणके प्रवाह को नाश [illegible] वाले परमात्मा के एक भावसें साक्षात् भजन करो ॥ १८ ॥

अपने सङ्कल्प के आधीन औरों के सङ्कल्प [illegible] रखने वाले अद्वितिय दूसरे की तुल्यतारहित द्वैत [illegible] निवृत्ति होने से प्राप्त होने वाले द्वितीय रहित [illegible] आनन्द स्वरूप विज्ञान घन स्वरूप ऐसे भगवान् को [illegible] बुद्धि से भजो ॥ ० ॥

सब प्राणीमात्रों में दया करने सें जो कुछ मिलै [illegible] सन्तोष करने सें सब इन्द्रियों की शान्ति [illegible] भगवान् अति शीघ्रही प्रसन्न होजाते हैं ॥ १९ ॥

पुत्र वित्तादिक सब एषणा के नाश होजाने सें [illegible] निर्मल होता है तव निरन्तर भक्ति की वृद्धी होती है तव [illegible] शीघ्रही बुलाय लिये जाते हैं तव अपने आत्मा का [illegible] स्वाधीन होंना जनावते भये आपसरीके सत्पुरुषों के हृ[illegible] सें नहीं निकलते हैं ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सतामेव वश्यो ऽसाधूनां तु पूजामपि न गृह्णाति नेति। कुमनीषिणां कुत्सितमतीनाम् । अधनाश्च ते आत्मधनाश्च [illegible] वद्धनास्ते प्रिया यस्य रसज्ञो भक्तिसुखज्ञः के कुमनीषिण[illegible] श्रुतादिनिमित्तैर्मदैर्ये सत्सु पापं तिरस्कारं कुर्वन्ति ॥ २१ ॥

भक्ताधीनत्वं प्रपञ्चयन्नाह । अनुवर्तमानामपि श्रियं [illegible] सकामान् द्विपदपतीन्नरेन्द्रान्विबुधान् देवानपि यो न [illegible] यतः स्वेनैव पूर्णोऽतः स्वभृत्यवर्गानुरक्त एव एवंभूतम[illegible] दपि कथं परित्यजेत् ॥ २२ ॥

त्यक्त्वा स्त्रैणं च तं गच्छन् दृष्टो मे पथ्युदारधीः ।
पञ्चवर्षो मदादेशैः संराध्य पुरुषेश्वरम् ॥ ० ॥
तत्परं सर्वधिष्ण्येभ्यो मायाधिष्ठितमारुहत् ।
मुनयोऽप्याप्युदीक्षन्ते परं नापुरवाङ्मुखाः ॥ ० ॥
तं यूयं सर्वभूतानामन्तर्यामिणमीश्वरम् ।
रुद्रादिष्टोपदेशेन भजध्वं भवनुत्तये ॥ ० ॥ )

॥ मैत्रेय उवाच ॥

इति प्रचेतसो राजन्नन्याश्च भगवत्कथाः ।
श्रावयित्वा ब्रह्मलोकं ययौ स्वायम्भुवो मुनिः ॥ २३ ॥
तेऽपि तन्मुखनिर्यातं यशो लोकमलापहम् ।
हरेर्निशम्य तत्पादं ध्यायन्तस्तद्गतिं ययुः ॥ २४ ॥
एतत्तेऽभिहितं क्षत्तर्यन्मां त्वं परिपृष्टवान् ।
प्रचेतसां नारदस्य सम्वादं हरिकीर्तनम् ॥ २५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रचेतसः कर्मभूतान् अन्याश्च नूनं सुनीतेरित्यादिध्रुवचरिताद्याः सत्रेऽगायत्प्रचेतसामित्युक्तत्वात् ॥ २३ ॥

तेऽपि प्रचेतसः तद्गतिं विष्णुलोकम् ॥ २४ ॥

प्रचेतसां नारदस्य च सम्वादरूपमेतदाख्यानं तेऽभिहितम् हरेः कीर्तनं यस्मिंस्तत् ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सतां वश्योऽसावसतां पूजामपि न गृह्णातीत्याह । नेति । अधनाश्चात्मधनाश्च भगवद्धनास्ते प्रिया यस्य स च मम प्रिय इति भगवदुक्तेः भक्तसङ्गजन्यानन्दरसज्ञः स हरिः कुमनीषिणां कुत्सितमतीनामिज्यां न भजति न गृह्णाति के कुमनीषिणस्तत्राह । श्रुतादीनां मदाः श्रुतादिनिमित्ता मदास्तैरन्धा अकिञ्चनेषु विरागिषु सत्सु ये पापं तिरस्कारं विदधति कुर्वन्ति ॥ २१ ॥

भक्तपराधीनत्वमेव प्रपञ्चयंस्तं को न भजेदित्याह । श्रियमिति । अनुचरतीमनुवर्तमानामपि श्रियं तदर्थिनः तां श्रियमर्थयन्ते इति तथोक्तान् श्रीकटाक्षलेशकाङ्क्षिणः द्विपदपतीन्नरेन्द्रान्विबुधान् देवांश्च निजभक्तवर्गैरक्तोः भगवान् न भजति नानुवर्तते कुतः यः स्वपूर्णः स्वत एवावाप्तसमस्तकामत्वात् नश्यादीन् भजति एवं भूतममुं भक्तवत्सलं रसज्ञः पुमान् कथमुद्विसृजेत् ॥ २२ ॥

इमं सम्वादमुपसंहरति मुनिः । इतीति त्रिभिः । हे राजन् ! विदुर ! यमाभिप्रायेण राजन्निति सम्बोधनमित्युक्ता अन्याश्च भगवत्कथाः प्रचेतसः प्रति श्रावयित्वा स्वायंभुवो नारदो मुनिः सत्यलोकं ययौ ॥ २३ ॥

ततस्ते प्रचेतसः नारदमुखनिःसृतं सकललोकौघहरं भगवद्यशो निशम्य भगवच्चरणारविन्दं ध्यायन्तस्तल्लोकमापुः ॥ २४ ॥

हे क्षत्तः ! त्वं मां प्रति यत्पृष्टवान् प्रचेतसां नारदस्य च सम्वादव्याजं हरिकीर्तनं तं तुभ्यं मयाभिहितम् ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्यतिरेकमाह । न भजतीति । अकिञ्चनेषु मदहेतुधनरहितेषु सत्सु श्रुतधनकुलकर्मणां मदैश्च ये पापमपराधं विदधति स श्रीहरिस्तेषां कुमनीषिणां पुंसामिज्यां यागादिपूजां न भजति स्वीकृत्य फलं न ददातीत्यन्वयः कीदृशो हरिरधना हिरण्यादिधनरहिताश्चात एवात्मधनाश्चाधनात्मधनास्त एव प्रिया यस्य स तथा तेषां प्रियो वा अस्मिन्नर्थे इदं प्रमाणम् "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय„ इति च प्रियत्वे निमित्तमाह । रसज्ञ इति । भक्तैः क्रियमाणं रसमनुरागं भक्तिं जानातीति रसज्ञः "रसो रागे विषे वीर्ये" इति यादवः "रागोऽनुरागे लाक्षादौ" इति च श्रुतं च धनं च कुलं च कर्माणि च तानि तथा तेषां मदैर्बुद्धिभ्रंशहेतुवृत्तिविशेषैः ॥ २१ ॥

अस्मिन्नर्थेऽर्थवादं प्रमाणयति । श्रियमिति । द्विपदपतीन्मनुष्यप्रधानान् तदर्थिनः श्रीप्रसादप्रार्थनाशीलान् स्वपूर्ण इत्ययं तदपेक्षामन्तरेण स्वापेक्षाभावे हेतुः । निजभृत्यवर्गतन्त्र इति । जयस्तम्भप्रकटनार्थः अन्यथा लक्ष्म्यादीनामभक्तत्वेन पृथक्करणं प्रसज्येत न च तद्युक्तं निजवने तुलसीभिरीशमभ्यर्चतीति लक्ष्म्या अपि मायापटलान्तरभावेऽपि सुखात्मकभक्त्या तत्पूजाविधानात् उद्विसृजेत् उद्विग्नो भूत्वा त्यजतीत्यर्थः ॥ २२ ॥

भवत्पूर्वजाः सर्वेऽपि भगवद्भक्तास्तत्र ध्रुवो विशेषभक्त इति तद्भक्तिफल किञ्चिद्विशिनष्टि । भवतामिति । चित्ररथ इति ध्रुवस्य

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नामान्तरं "भगवत्प्रसादपात्रत्वे कोऽपि चित्ररथानुगः यस्य प्रियश्रवाः कृष्णस्त्वात्मानमपि दत्तवान्„ इति विष्णुपुराणोक्तेः रथगताविति धातोः चित्रा आश्चर्यभूता गतिर्यस्य स इति वा चित्रवस्त्रानावर्णो रथो यस्य स इति वा स्वमात्मानं राजयतीति स्वराट् राजान्तरवर्जितश्चक्रवर्तीत्यर्थः गुरोः पितुर्दारा भार्याशब्दवाच्याः ॥ ० ॥

स्त्रैयां स्त्रीजितं पितरं पूजास्पदम् ॥ ० ॥

सर्वेषां वैमानिकानां धिष्ण्येभ्यः स्थानेभ्यः परमुत्तमम् उत्तमत्वे कारणमाह । मायेति । मायेन सर्वोत्तमेन विष्णुनाऽधिष्ठितं सन्निधाय स्थितमनिर्वाच्यमायाकल्पितमित्यङ्गीकारे सर्वोत्तमत्वाद्विष्णुर्हिमाय इत्येव शब्दित इति स्मृतिविरोधः स्यात् तस्मिन्पक्षे मायाकल्पितमित्येव स्याद्वारवधिष्ठितमिति मुनयो नृपाश्चाचांक्रस्थिता उदीक्षन्तं परं नापुरत्यत्र देवानुत्तममुनीन्विनानुसन्धेयं देवानत्युत्तममुनीन्विना केशैशुमारकं हरेर्गृहं प्रविष्टास्तु ध्रुवो देवाश्च तद्गता इति वचनात् अनेनापि मायाधिष्ठितमित्यत्र पुल्लिङ्ग एवमायशब्दोऽत्र विवक्षितो ननु मायेत्याद्यन्तः ॥ ० ॥

उपसंहरति । तमिति । यस्यानुग्रहात् ध्रुवोऽत्युत्तमस्थानमाप तमीश्वरम् ॥ ० ॥

प्रचेतसामुक्तैव कथा कथिता नारदेन किमन्याश्च कथा उक्ताः सन्तीति तत्राह । इतीनि ॥ २३ ॥

यच्चेतत्कथितं प्रचेतसां मुक्तिप्रापकं स्यात्तर्हितदुपादेयं स्यात्तत्कथमित्याशङ्क्यानेनैवापेक्षितगतिरभूत्तेषामित्याह । तेऽपीति ॥ २४ ॥

हरेः कीर्तनं यत्र स तथा ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रियं जगत्सम्पत्तिरूपामनुचरन्तीं स्वसम्पत्तिवृद्ध्यर्थमनुवर्तमानां न तु भगवल्लक्ष्मीवन्निष्कामां तदर्थिनश्च ब्रह्मादीन् द्विपदपतीन् विबुधान् देवानपि योनानुवर्त्तते यत् स्वरूपवैभवेनैव पूर्णः तथापि निजभृत्यवर्गतन्त्रः भक्तमात्रे दयापरवश इत्यर्थः ॥ २२-२७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सतामेवायं वश्य एवमेव असतां तु पूजामपि न गृह्णातीत्याह । अधनाश्च ते आत्मधना भगवद्धनास्ते प्रिया यस्य सः यद्वा अधना अकिञ्चना निष्कामा एवात्मनो धनानि प्रियाश्च यस्य सः धनपुत्रादिषु ममतां परित्यज्य मय्येव ममताममी दधते इति भक्तानां प्रेमरसं जानातीति रसज्ञः कुमनीषित्वमाह । श्रुतेति । श्रुतधनकुलैर्यानि कर्म्माणि योगादीनि तेषां मदैः पापं निन्दादिकं यद्वक्ष्यते कर्मिणा एवोद्दिश्य सतो विनिन्दन्ति हरिप्रियान् खला इति ॥ २१ ॥

भक्तानां भगवत्येव ममता नान्यत्र यथा तथैव भगवतोऽपि भक्तेष्वेव ममतेति भक्ताधीनत्वं प्रपञ्चयति । श्रियं समष्टिसम्पत्तिरूपामनुचरन्तीं स्वसम्पत्तिवृद्ध्यर्थमनुवर्तमानां तदर्थिनः व्यष्टिसम्पदर्थिनः द्विपदपतीन् नरेन्द्रान् विबुधान् देवानपि न भजति नापेक्षते यतः स्वेनैव पूर्णः स्वरूपत्वेऽपि निज... वर्गतन्त्र इत्यधीनत्वमप्यन्यस्यैवास्य वास्तवं न मो... त्यर्थः । अमुमेवम्भूतम् उत ईषदपि कथं विसृजेत् ... यथा भक्तप्रेमरसज्ञो भगवांस्तथा भक्तोऽपि भगव... रसज्ञ इत्युभावेव जगत्यस्मिन् रसज्ञाविति भावः । ... भक्तस्य भगवद्वशत्वमुचितमेव भगवतोऽपि भक्तवश... एवोपाधिरभूत् । मैवं रसो हि विभावादिसम्वलितः ... स्थायीच प्रेमा रत्यपरपर्य्यायः स च स्वाभाविक... श्रयविषयीभूतभगवत्सुखकामिता भक्ताश्रयैव तस्या ... मित्तत्वात् भगवतश्च सुखपूर्णत्वेऽपि तस्याः सुख... प्रदत्वं श्रुतिस्मृतिप्रसिद्धं निष्कारणमेवातः कथमुपाधि... भगवतः स्वाभाविकमेव प्रेमवश्यत्वमायातं प्रेमा च ... स्वीकारी करोतीति भक्तवश्यत्वञ्च ॥ २२—२८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निजजनवशगत्वं प्रपञ्चयति । नेति द्वाभ्याम् । कुमनीषिणां ... राङ्मुखबुद्धीनाम् अधनाश्च ते आत्मा परमात्मैव धनं ... प्रिया यस्य स हरिः ये श्रुतधनादिमदैः अकिञ्चनेषु ... मवज्ञां विदधति कुर्वन्ति तेषामिज्यां पूजां न भजति ॥ २१ ॥

यो हरिः स्वपूर्णः स्वेन एवावाप्तसमस्तकामः अतः ... तैर्ता श्रियं सकलां सम्पदं तदर्थिनश्च द्विपदपतीन् ... विबुधांश्च न भजति तेषां परतन्त्रो न भवति किन्तु ... भृत्यवर्गतन्त्रो भवति अमुं कृतज्ञः कथमुद्विसृजेत् ॥ २२ ॥

यः प्रिय इति अस्मिन्नध्याये वर्णिताः अन्याः ... त्प्रचेतसामिति पूर्वत्र सूचिता ध्रुवकीर्त्यन्तर्गताः ... प्रचेतसः श्रोतृन् श्रावयित्वा ॥ २३-२४ ॥

उपसंहरति प्रचेतसां नारदस्य सम्यक् वादः ... चनरूपं भाषणं यस्मिन् तत् एतत् हरिकीर्तनं ते ... मयाभिहितम् ॥ २५ ॥

---

भाषा टीका ।

निर्धन होकर परमात्मा को ही धन मानने वाले पुरु... अत्यन्त प्रिय तथा भक्ति रस को जानने वाले जो ... शास्त्र धर्मानुकूल कर्म इनके मदों से जो अकिंचन भगव... का द्रोह करते हैं तिनकी की हुई पूजाओं को वे भगवा... स्वीकार करते हैं ॥ २१ ॥

जिससे कि भगवान् अपने स्वरूपानन्द से ही ... हैं तिसी से सदा सेवा करने वाली लक्ष्मी तथा ... चाहने वाले राजा इनसबों को नहीं चाहते हैं तथापि ... भक्तोंके आधीन रहते हैं ऐसे भगवान् को कृतज्ञ होकर ... त्याग करसक्ता है ॥ २२ ॥

आप लोगों के पूर्वज वंश में श्रेष्ठ चित्ररथ ... ध्रुवजी भये सो बड़े ज्ञानी पिता की स्त्री के ... वाणों से बालकपन में उनका हृदय बेधित हो गया ... तब वे स्त्री के वश पिता को छोड़ कर वनको ... उदार बुद्धि बालक को मार्ग में मैंने देखा फिर ...

॥ श्रीशुक उवाच ॥

य एष उत्तानपदो मानवस्यानुवर्णितः ।
वंशः प्रियव्रतस्यापि निबोध नृपसत्तम ! ॥ २६ ॥
यो नारदादात्मविद्यामधिगम्य पुनर्महीम् ।
भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात्पदम् ॥ २७ ॥
इमां तु कौषारविणोपवर्णितां क्षत्ता निशम्याजितवादसत्कथाम् ।
प्रवृद्धभावोऽश्रुकलाकुलो मुनेर्दधार मूर्ध्ना चरणं हृदा हरेः ॥ २८ ॥

॥ विदुर उवाच ॥

सोऽयमद्य महायोगिन् ! भवता करुणात्मना ।
दर्शितस्तमसः पारो यत्राकिञ्चनगो हरिः ॥ २९ ॥

॥ श्रीशुक उवाच ॥

इत्यानम्य तमामन्त्र्य विदुरो गजसाह्वयम् ।
स्वानां दिदृक्षुः प्रययौ ज्ञातीनां निर्वृताशयः ॥ ३० ॥
१ एतद्यः शृणुयाद्राजन् ! राज्ञां हर्यर्पितात्मनाम् ।
आयुर्धनं यशः स्वस्ति गतिमैश्वर्यमाप्नुयात् ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धेऽष्टादश साहस्र्यां पारमहंस्यां संहितायां वैयासिक्यां प्राचेतसोपाख्यानं नाम एकत्रिंशोऽध्यायः ॥ ३१ ॥

भाषाटीका ।

देशों से पांच वर्ष के होकर भी उनने हरि का आराधन किया ॥ ० ॥

तब सब स्थानों से ऊंचा स्थान जो कि भगवान् के सङ्कल्प से बना है तिसका उनने आरोहण किया जिस स्थान को कि मुनि लोग अब पर्यन्त ऊर्ध्वदृष्टि से देखते हैं परन्तु वहां जा नहीं सके हैं तिस से अवाङ्मुख हो गये हैं ॥ ० ॥

सर्वभूतों के अन्तर्यामि ईश्वर तिन्ही ईश्वर को संसारनिवृत्ति के लिये श्री महादेव जी के उपदेश के अनुसार आप सब भजन करो ॥ ० ॥

मैत्रेयजी बोले हे राजन् ! इस प्रकार से कथा और भी भगवत्कथाओं को प्रचेतों से उपदेश करके स्वयम्भु के पुत्र नारदमुनि चले गये ॥ २३ ॥

वे प्रचेताभी नारदजी के मुख से निकला हुआ लोक के मल का नाशक हरि भगवान् के यश को श्रवण करके भगवान् के चरण को ध्यान करते हुये भगवान् की पदवी को प्राप्त होगये ॥ २४ ॥

हे विदुरजी ! जैसा आपने पूछा तैसा प्रचेतों का तथा नारदजी का हरिकीर्तनरूप सम्वाद मैंने आपके आगे कहा है ॥ २५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यः एष वंशः सोऽनुवर्णितः ॥ २६ ॥
यः प्रियव्रतः ॥ २७—२८ ॥
स्वान् ज्ञातीन् दिदृक्षुः ॥ ३० ॥
राज्ञां चरितमिति शेषः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकत्रिंशोऽध्यायः ॥ ३१ ॥
समाप्तोऽयं चतुर्थः स्कन्धः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्कन्धार्थमुपसंहरन्नुत्तरस्कन्धप्रवृत्तिनिमित्तभूतशङ्कामुत्थाप्याह । एष इति द्वाभ्याम् । मानवस्य मनुपुत्रस्य उत्तानपद एष वंशोऽनुवर्णितः अथ प्रियव्रतस्य उत्तानपादानुजस्य नृपाणां सम्मतं वंशं निबोध शृणु ॥ २६ ॥

१ चरितम्

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तद्वंशावृत्तसारार्यं समासतस्तच्चरितमाह । यः प्रियव्रतः प्रथमं विरक्त्या वनं प्रविष्टो नारदादात्मविद्यामधिगम्य प्राप्य पुनर्महीम्भुक्त्वा परिपाल्य पुत्रेभ्यः पैश्वर्यं राज्यं विभज्य पदं भगवत्पदं समगात्सम्यक्साधनोपसंहारेणागात् ॥ २७ ॥

विदुरमैत्रेयसंवादमुपसंहरति बादरायणिः । इदं त्विति त्रिभिः । कौषारविणामैत्रेयेण उपवर्णितमजितस्य भगवतो वादः गुणानुवादः सतां कथाश्च तत्समाहाररूपमिदं तृतीयतुरीयस्कन्धात्मकं निशम्य विवृद्धेन भावेन स्नेहेन या अश्रूणां कला मात्रास्ताभिराकुलचित्तः चत्ता विदुरः मुनेर्मैत्रेयस्य चरणं मूर्ध्ना हरेश्चरणं हृदा दधार ॥ २८ ॥

ततः हे तात ! महायोगिन् ! करुणात्मना दयालुना त्वया सोऽयं तमसः संसारस्य पारः पारप्राप्तिहेतुः उपायः दर्शितः यत्र तमसः पारे वर्तमानैरकिञ्चनैर्गम्यो भवति हरिः ॥ २९ ॥

इत्येवं वदन्नानम्य प्रणम्य तमनुज्ञाप्य स्वानां ज्ञातीनां दिदृक्षुः शोकेपष्ठी स्वान् द्रष्टुमिच्छुः ज्ञानयोगेन पूर्णान्तःकरणः गजसाहयं हास्तिनपुरं ययौ ॥ ३० ॥

विदुरमैत्रेयसंवादश्रवणफलमाह । एतदिति । हेराजन् ! हरावर्पित आत्मा मनो येषां तेषां राज्ञां स्वायंभुवमन्वादीनामेतच्चरित्रं यः शृणुयात्स आयुरादीन् प्राप्नुयात् स्वस्ति गतिं मुक्तिं तत्र स्वस्तिगतिः प्रधानफलं आयुराद्य आनुषङ्गिकफलानि स्वस्तीति पृथक्पदं वा गतिं मुक्तिं स्वस्ति मङ्गलम् ॥ ३१ ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्याप्रसन्नतरसूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा कृतायां श्रीमद्भागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां चतुर्थस्कन्धे

* एकत्रिंशोऽध्यायः ॥ ३१ ॥

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकायनमः ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र शुको वृत्तानुवर्णनपूर्वकमुत्तरकथां प्रतिजानीते । य एष इति । अनेन शुकेनोक्तमेव विदुरायोक्तं मैत्रेयेणेति ज्ञातव्यम् ॥२६॥

श्रोतृजनतृप्त्यर्थं प्रियव्रतचरितं प्रस्तौति । यो नारदादिति ॥ २७ ॥

मैत्रेयोक्तहरिकथाश्रवणेन विदुरे को विशेषोऽभूदत्राह । इत्थमिति । "नारायणोऽजितपदो वामनो मधुसूदनः । श्रीधरः शङ्कराध्यक्षो ब्रह्माध्यक्षो महानद "इत्यभिधानम् अजितस्य हरेः पादसत्कथां चरणविषयां कथां वा अजितपादानां हरेरंशभूतानां विशेषावेशवतां राज्ञां वा मुनेः चरणं मूर्ध्नि दधार हरेश्चरणं हृदा ॥ २८ ॥

नतेरप्यङ्गत्वं द्योतयितुं मुनिं स्तौति । सोऽयमिति । यत्र तमसः पारे स्थितः ॥ २९ ॥

स्तुत्वा नत्वा पुनः किमकार्षीदत्राह । इतीति । स्वानां ... नामिति कर्मणि षष्ठी निर्वृताशय इत्यनेन ज्ञातव्यांशस्य दर्शयति ॥ ३० ॥

शुक एतस्य श्रोतुरैहिकामुष्मिकं फलमाह । एतद्य इति ।

चतुर्थस्कन्धोऽयं हरिचरितरत्नावलिनिधिः
कथं चिद्व्याख्यातो हरिगुरुमहानुग्रहबलात् ॥
महान्तः प्रीयन्तामनुगुणसुलुब्धाः शुचिधियः
सहन्तां चावद्यं मम विवृतिमार्गे स्खलनतः ॥ १ ॥
सुमनःसुमनोमौलौ लसन्ती मुरभिद्गले ।
पदरत्नावलिर्नाम वनमालेव रोचताम् ॥ २ ॥

इतिश्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजभट्टारक
श्रीमद्भागवतटीकायां पदरत्नावल्याम्
चतुर्थस्कन्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इमां मङ्गलस्वीकाररूपां तेनेत्यत्र तातेति क्वचित्पाठः ... प्रथमस्कन्धोक्तं योजयति । इति निर्वृताशय इति । ... द्वारा श्रीभगवदङ्गीकारानुसन्धानेन इति भावः ॥ ३० ॥

परमानन्देन सकामश्रोतृनप्याशिपयति । एतद्य इति ।

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
एकत्रिंशोऽध्यायः ॥ ३१ ॥
समाप्तोऽयं चतुर्थस्कन्धक्रमसन्दर्भः ।

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

तमसः संसारसमुद्रस्य पारः यत्र हरिरकिञ्चनैः ... किं पुनर्वक्तव्यमाकिञ्चनो हरिं प्राप्नोतीति ॥ २९॥

स्वानां स्वान् ज्ञातीन् ॥ ३०–३१ ॥

न कापि विद्या च न भक्तिगन्धोऽप्यहो न भक्तेष्वपि ...
न मे विरक्तिर्नमनोवशं तन्न वेद्मि टीकां विदधे किमोः ...
शुचौ सौम्यदिने शुक्लपञ्चम्यां यमुनातटे ।
टीकापूरि चतुर्थस्य समीपे कल्पशाखिनः ॥
इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकत्रिंशश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥ ...

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मानवस्य मनुपुत्रस्योत्तानपदः य एष वंशः सोऽनुवर्णितः ... यः प्रियव्रतः आत्मविद्यापरमेश्वरज्ञानमधिगम्य प्राप्य ... पारमेश्वरं पदं स्थानम् ॥ २७ ॥

विदुरमैत्रेयसम्वादं श्रीशुक उपसंहरति । इमामिति । ... वादो वर्णनं यस्यां तां सत्कथां निशम्य श्रुत्वा ... मूर्ध्ना हरेश्चरणं हृदा दधार ॥ २८ ॥

तेन करुणात्मना भवता तमसः अज्ञानस्य पारः ... नात्मपरमात्मविवेकः य हरिः अकिञ्चनैरनन्यशरणैः ... किञ्चनगो भवति ॥ २९ ॥

निर्वृतः सुखित आशयो यस्य सः स्वानां ज्ञातीनां ... क्षुस्तदुद्धाराय तान् द्रष्टुमिच्छुः ॥ ३० ॥

हरौ प्रत्यर्पित आत्मा यैस्तेषां हरिभक्तानां ...

---

यद्यपि एतद्देशे एकत्रिंशाध्याया उपलभ्यन्ते तथापि चतुर्दशपञ्चदशाध्याययोरेकाध्यायत्वेन श्रीवीरराघवाचार्यसंमतत्वेन त्रिंशोध्यायाः श्रीवीरराघवपाठ

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मिति शेषः स्वस्ति सुखम् मोक्षमित्यर्थः गम्यते अनयेति गति-मोंक्षसाधनम् ॥ ३१ ॥

इतिश्रीमद्भगवन्निम्बार्कचरणचिन्तकशुकसुधीप्रणीते चतुर्थस्कन्धीये श्रीमद्भागवतसिद्धान्तप्रदीपे एकत्रिंशाध्यायार्थप्रकाशः ॥ ३१ ॥

---

भाषाटीका ।

श्रीशुकदेवजी बोले हे राजन् ! जो यह मनुका पुत्र उत्तानपाद का वंश हमने वर्णन किया अब प्रियव्रत के वंश को भी श्रवण करो ॥ २६ ॥

जिस प्रियव्रत ने नारदजी से ब्रह्मविद्या को प्राप्त होकर फिर पृथिवीका भोग करके पृथिवी का पुत्रों को भागदेकर ईश्वर पदको प्राप्त किया ॥ २७ ॥

मैत्रेयजी के वर्णन करनेसे भगवान् की कथा के समीचीन सम्वाद को श्रवण करके विदुरजी के भक्तिभाव की वृद्धि हुई नेत्रों में से अश्रुपात होने लगे फिर विदुरजीने मस्तक से मैत्रेयजी के चरणको धारण किया हृदयसे श्रीहरिके चरण को धारण किया ॥ २८ ॥

विदुरजी बोले आज आपने कृपासे मेरे को संसार के पार होने का उपाय मार्ग दिखाया जिस मार्ग में कि अकिञ्चनजनों के प्राप्य हरि का कथन किया गया है ॥ २९ ॥

श्री शुकदेवजी बोले विदुरजी इस प्रकारसे कहकर मैत्रेयजी को नमस्कार करके उनसे आज्ञा मांग कर अतिप्रसन्न होकर अपने बान्धवों की देखने की इच्छासे हस्तिनापुर को चले गये ॥ ३० ॥

हे राजन् ! हरि भगवान् में मनलगाने वाले प्रचेता राजाओं की इस कथाको जो श्रवण करेगा वह पुरुष आयु धन यश कल्याण ऐश्वर्य वैकुण्ठ इन सबोंको प्राप्त होगा ॥ ३१ ॥

दोहा

यहि प्रकार पूरण भयो, स्कन्ध चतुर्थ निदान ।
भाषा याकी कछुक लिखी, लक्ष्मणदास सुजान ॥१॥

इति श्रीमद्भागवत चतुर्थस्कन्ध एकतीसमां अध्याय का भाषानुवाद वृन्दावन निवासी लक्ष्मणाचार्यकृत समाप्त ॥ ३१ ॥

---

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे एकत्रिंशोऽध्यायः समाप्तः ॥ ३१ ॥
स्कन्धश्च समाप्तः । शोधकश्चास्य ग्रन्थरत्नस्य वृन्दावननिवासि लक्ष्मणाचार्यः ।

---

श्रीकृष्णार्पणमस्तु ।

पञ्चम स्कन्धः | पञ्चम खण्ड

श्री १०८ श्रीराधारमणोजयति

# श्रीमद्भागवतम् ।

महर्षिप्रवर श्रीकृष्णद्वैपायन प्रणीतम् ।

श्रीश्रीपाद श्रीधरस्वामिकृत भावार्थ दीपिका श्रीराधारमणदास गोस्वामि विरचित दीपिन्याख्य तट्टिप्पणी श्रीमद्वीरराघवाचार्य्यकृतभागवतचंद्रिका श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी श्रीगौडीय वैष्णवाचार्य्यप्रवर श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भ श्रीमद्विश्वनाथचक्रवर्त्ति कृत सारार्थदर्शिनी तथा श्रीनिम्बार्क सम्प्रदायि श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपाख्य टीका समेतम् भाषानुवादसहितञ्च ।

परमहंस परिव्राजकाचार्य्य श्रीमत् स्वामि प्रकाशानन्दसरस्वती पूज्यपादशिष्य

श्रीनित्यस्वरूपब्रह्मचारिणा

सम्पादितम् ।

वङ्गदेशान्तर्गत ताड़ास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षि राय

श्री वनमालि राय वहादुरस्य

सम्पूर्ण साहाय्येन

प्रकाशितञ्च ।

निगमकल्पतरोर्गलितं फलं, शुकमुखादमृतद्रवसंयुतम् ।

पिबत भागवतं रसमालयं, मुहुरहो रसिका भुवि भावुकाः ॥

श्रीवृन्दावनधामनि

श्रीमद्देवकीनन्दनाख्य स्वकीये यन्त्रे श्रीनित्यस्वरूपब्रह्मचारिणा मुद्रितम्

सम्वत् १९६१

# श्रीमद्भागवतम् ।

## पञ्चमस्कन्धः ।

——(:०:)——

### प्रथमोऽध्यायः।

ओं नमो भगवते वासुदेवाय ।

॥ राजोवाच ॥

प्रियव्रतो भागवत आत्मारामः कथं मुने ! ।
गृहेऽरमत यन्मूलः कर्मबन्धः पराभवः ॥ १ ॥
न नूनं मुक्तसङ्गानां तादृशानां द्विजर्षभ ! ।
गृहेष्वभिनिवेशोऽयं पुंसां भवितु मर्हति ॥ २ ॥
महतां खलु विप्रर्षे ! उत्तमश्लोकपादयोः ।
छायानिर्वृतचित्तानां न कुटुम्बे स्पृहामतिः ॥ ३ ॥
संशयोऽयं महान् ब्रह्मन् ! दारागारसुतादिषु ।
सक्तस्य यत्सिद्धिरभूत्कृष्णे च मतिरच्युता ॥ ४ ॥

॥ श्रीशुक उवाच ॥

गद्यं । बाढमुक्तं भगवत उत्तमश्लोकस्य श्रीमच्चरणारविन्दमकरन्दरस आवेशितचेतसो भागवतपरमहंसदयितकथां किञ्चिदन्तरायविहतां स्वां शिवतमाम्पदवीं न प्रायेण हिन्वन्ति ॥ ५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नमः श्रीमत्परमहंसास्वादितचरणकमलचिन्मकरन्दाय ।
भक्तजनमानसनिवासाय श्रीरामाय ॥

अथातः पञ्चमस्कन्धव्याख्यानेकविशेषवान् ।
प्रियव्रतान्वयो यत्र सप्रपञ्चः प्रपञ्च्यते ॥ १ ॥
षड्विंशत्यधुनाध्यायैः पञ्चमे स्थानमीर्यते ।
लोकद्वीपादिमर्यादापालनाख्यमनेकधा ॥ २ ॥
पृथिव्युपर्यधोलोकैर्मर्यादा त्रिविधा मता ।
पुनश्चैकैकशस्तेषु मर्यादा बहुधा मता ॥ ३ ॥
भुवि द्वीपादिमर्यादाः पाल्यन्ते राजभिः पृथक् ।
भूमेरुपरि देवाद्यैस्ततश्चाधोऽसुरादिभिः ॥ ४ ॥
तत्राध्यायैस्तु विंशत्या प्रियव्रतपुरःसरैः ।
भुवि द्वीपादिमर्यादाः पालिता इति वर्ण्यते ॥ ५ ॥
त्रिभिः सूर्यादिभिर्ज्योतिश्चक्रादिष्विति कीर्त्यते ।
अतलादिषु दैत्याद्यैः पालनं च ततस्त्रिभिः ॥ ६ ॥
तत्र तु प्रथमेऽध्याये ज्ञानिनो राज्यनिर्वृतिः ।
पुनश्च ज्ञाननिष्ठेति प्रियव्रतकथाद्भुता ॥ ७ ॥
वंशः प्रियव्रतस्यापि निबोध नृपसत्तम ! ।
यो नारदादात्मविद्यामधिगम्य पुनर्महीम् ।
भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात्पदम् ।

इति पूर्वस्कन्धान्ते प्रियव्रतस्य प्रथममात्मविद्या ततो गृहाश्रमस्ततः सर्वसङ्गत्यागेन मोक्ष इत्युक्तम् तत्र विस्मितः पृच्छति प्रियव्रतो

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भागवतोऽत एवात्मारामो गृहे कथमरमत ननु रमतां को दोष इति चेदत आह । कर्मणा बन्धः पराभवश्च स्वरूपतिरस्कारो यन्मूलो भवति यद्गृहं मूलं कारणं यस्य ॥ १ ॥

गृहेषु रतिश्च तत्राभिनिवेशात् स्यात्स च भागवतानामात्मारामाणां न सम्भवतीत्याह । न नूनमिति ॥ २ ॥

गृहासक्तिर्हि कुटुम्बादिस्पृहया भवति सा च तेषां नास्तीत्याह । महतामिति । उत्तमश्लोकपादयोश्छाया कामादिसन्तापहारिणी तया निर्वृतं चित्तं येषां तेषां स्पृहायुक्ता मतिर्नास्ति ॥ ३ ॥

दाराद्यासक्तस्य तु मोक्षः श्रीकृष्णेऽस्खलिता मतिश्चाभूदिति यदयं च महान्संशय इत्याह । संशय इति ॥ ४ ॥

अङ्गीकृत्य परिहरति । बाढमभिनिवेशादिकं नास्तीति सत्यमेव तथापि विघ्नवशेन तेषां प्रवृत्तिः पूर्वाभ्यासबलेन पुनर्निवृत्तिश्च सञ्जच्छत इत्याह । भगवतः श्रीमच्चरणारविन्दमकरन्दरूपो यो रसस्तस्मिन्नावेशितं चेतो यैस्तेऽपि केन चिदन्तरायेण विघ्नेन विहतामपि स्वां शिवतमां पदवीं मार्गं न हिन्वन्ति न त्यजन्ति काम भागवता एव परमहंसास्तेषां दयितस्य प्रियस्य श्रीवासुदेवस्य कथाम् ॥ ५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तृतीये "स्वायम्भुवस्यापि मनोर्वंशः परमसम्मतः । कथ्यतां भगवन्यत्र मैथुनेनैधिरे प्रजाः । प्रियव्रतोत्तानपादौ सुतौ स्वायम्भुवस्य च । यथा धर्मं जुगुपतुः सप्तद्वीपवतीं महीम्" इति पृष्टे स्वायम्भुववंशं प्रक्रम्य तद्दुहितृवंशः ज्येष्ठपुत्रोत्तानपादवंशश्च कथितः प्रजाः सृजेत्यादिना चतुर्थस्कन्धान्तेन ग्रन्थेन तावतैव शुश्रूषितं सर्वं श्रुतप्रायमिति मन्वानेन क्षत्रा प्रियव्रतचरित्रं न पृष्टं तत्र चतुर्थस्कन्धान्ते यो नारदादात्मविद्यामधिगम्य पुनर्महीं भुक्त्वेत्यधिगतात्मविद्यस्यापि प्रियव्रतस्य पुनर्भोगानुभव उक्तः तदिदमघटमानं पृच्छति । राजा प्रियव्रत इत्यादिना चतुर्भिः।हे मुने! प्रियव्रतो भागवतः भगवद्धर्मनिष्ठः मुमुक्षुः आत्मारामः प्रकृतिविमुक्तब्रह्मात्मकस्वात्मयाथात्म्यानुभवनिष्ठः कथं गृहेऽरमत गृहशब्दो देहापत्यकलत्रादीनामुपलक्षणमेवंभूतः कथं गृहासक्तोऽभूत् भागवत आत्मारामोऽपि रमतां गृहे को विरोध इति चेत्तत्राह । कर्मबन्धः कर्मरूपो बन्धः तेन पराभवस्तिरस्कारः ज्ञानसङ्कोचश्च यन्मूलः या गृहासक्तिर्मूलं यस्य सः कर्मबन्धान्मुमुक्षोः कर्मबन्धहेतुभूतगृहासक्तिर्विरुद्धा तथासङ्कुचितज्ञानात्मयाथात्म्यनिष्ठस्य ज्ञानसङ्कोचकर्मबन्धनिमित्ता च गृहासक्तिर्न घटत इति भावः ॥ १ ॥

गृहादिष्वासक्तिर्हि तेषां प्रीतिविषयतयाऽदोषदर्शनरूपा तत्त्यागपूर्वकं निरतिशयप्रियस्वात्मपरमात्मस्वरूपमनुभवतां तेषु पुनः कुतः प्रीतिरित्याह । नेति । हे द्विजर्षभ! तादृशानां भागवतानामात्मारामाणां मुक्तसङ्गानां दुःखहेतुत्वानुसन्धानेन त्यक्तदेहापत्यकलत्राद्यभिनिवेशानां पुंसां पुनर्गृहेष्वभिनिवेशः पूर्वदोषदर्शनेन त्यक्ताभिनिवेशः भवितुं नार्हति नूनं निश्चयः ॥ २ ॥

दोषहेतुत्वेऽपि तादात्विकसुखहेतुत्वादस्त्वभिनिवेश इति चेत्तत्राह । महतामिति । हे विप्रर्षे ! उत्तमश्लोकस्य भगवतः पादयोश्छायायाश्छायावत्तापत्रयनिरसनद्वारानन्दहेतुत्वादनुभूतिः छायाशब्देन विवक्षिता भगवत्पादाब्जानुभूत्या निर्वृतं सुखितं येषां महतां कुटुम्बे स्पृहारूपा मतिर्न सम्भवति निरतिशय रूपभगवच्चरणानुभवसुखितचित्तानां दुःखमिश्रात्यल्पसु बन्धनिमित्तेष्वभिनिवेशो न सम्भवतीत्यर्थः ॥ ३ ॥

अस्तु वात्मारामस्य प्राक्तनबलप्रतिबन्धवशाद्गृहासक्ति थापि पुनर्गृहासक्तस्य भगवद्भक्तिस्ततो मुक्तिश्च कथं संशय इति । हे ब्रह्मन्नयं महान्संशयः कोऽसावित्यत्राह । दारगृह धनादिष्वासक्तस्य कृष्णे मतिर्भक्तिस्ततो गार्हस्थ्यधर्म या मुक्तिश्च कथमभूदिति यदयं महान्संशय इत्यर्थः ॥ ४ ॥

एवमापृष्टो बादरायणिः सत्यमात्मारामस्य गृहासक्तिर्गृहास च पुनर्भक्तिश्च न घटत इति आत्मारामस्य भागवतस्यापि ध्विवशाद्गृहासक्तत्वेऽपि प्राचीननिर्वृत्तधर्मानुष्ठानबलात्पुनः योगोपसंहारः संभवत्येवेत्याह । बाढमुक्तमिति । सत्यमुक्तम् गृहासक्तस्य भक्तियोगासंभव इत्यत्रानङ्गीकारः आत्मारा पुनः : गृहाद्यभिनिवेश इत्यत्राङ्गीकारः प्रियव्रतस्य स्वा स्वयंभ्वादिप्रार्थनया गृहाश्रमपरिग्रहः न तु स्वाभिनिवेशेन त्मारामस्य गृहाद्यभिनिवेशो नास्त्येवेत्याभिप्रायः गृहाद्यभिनिवेशो नास्तीति तु सम्यगुक्तमपि तु गृहास पुनर्भक्त्युपसंहारो न घटत इत्यप्युक्तमित्याह । किं त्विति । मैर्ब्रह्मादिभिः श्लोक्यते स्तूयते इत्युत्तमश्लोकः उत्तमः स्तवो यस्येति वा तस्य भगवतः श्रीमतोः श्रिया सेव्यमान णारविन्दयोररविन्दवत्सौगन्ध्यसौकुमार्यलावण्यादिशोभायुक्त श्चरणयोर्यो मकरन्दः मकरन्दवत्प्रवाहः सुखरूपो तस्मिन्नावेशितं चेतो यैस्ते कथं चिदन्तरायेण विघ्नेन विच्छिन्नामपि कथंचिदित्यनेन भागवतैर्भक्तेरविचाल्यत्वं भागवता ये परमहंसा नितरां विशुद्धान्तःकरणाः तेषां तस्य प्रीतिविषयस्य भगवतः कथां कथाश्रवणादि शिवतमां पदवीं मोक्षमार्गभूतां न हिन्वन्ति न त्यजन्ति पूर्ववासनया तामेवानुतिष्ठन्तीत्यर्थः तथा चोक्तम् भगव नैवेह नामुत्र विनाशस्तस्य विद्यते "इत्यादिना । "तत्र तं बुद्धि लभते पौर्वदैहिकम् । यतते च ततो भूयः संसिद्धौ कुरु पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" इत्यनेन अत्र न्तरायविहतामित्यन्वयः भक्तियोगस्य विघ्नबहुलत्वात् प्रायेण न हिन्वन्तीत्यन्वयः "जिज्ञासुरपि योगस्य शब्द वर्त्तते । प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः । अनेक सिद्धस्ततो याति परां गतिम्" इति ब्रह्मजिज्ञासायत्न णापि भक्त्यत्यागाभिधानात् उपक्रान्तभक्तियोगानां तत्त्यागायोगात् ॥ ५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रभवति जगदेतद्यत्कटाक्षेक्षणेन ।
स्थितयति यदुपेक्षालेशतो नाशमेति ।
गतमगतमभिज्ञा जानते यस्य वृत्तम् ।
शरणमिममयेऽहं कालसंज्ञं मुकुन्दम् ॥ १ ॥
गद्यहेमाद्रिमगहनपञ्चमस्कन्धपर्वतम् ।
आम्नायज्ञा महान्तो मे प्रीयन्तामारुरुक्षवे ॥ २ ॥

स्वस्वविहितधर्मसाधनसामग्र्या समुद्भूतेन ज्ञानेन

श्रीमद्विजयध्वजतीर्थकृतरत्नावली ।

मुक्तिमर्थनीत्येतस्मिन्नध्यायेनिरूप्यते । तत्र विशेषविवित्सया परीक्षितुकं पृच्छति । प्रियव्रत इति । जीवात्मनः पराभवः स्वपरमात्माज्ञानलक्षणः यन्मूलः यदहंकलत्रादिलक्षणं मूलं यस्य सः कस्मादित्यत उक्तम् । कर्मेति । दुष्कर्मनिमित्त इत्यर्थः एतादृशे गृहे कथमरमतेत्यन्वयः ॥ १ ॥

न केवलमस्यैवायुक्तं गृहे रमणमन्येषामप्येतादृशानां न युक्तमित्याह । न नूनमिति । मुक्तसङ्गानां फलाभिसन्धिरहितानाम् ॥ २ ॥

अत्र हेतुमाह । महतामिति । ज्ञानलक्षणया छायया ( १ ) संसारसन्तापं परिहरन्त्या आह्लादं जनयन्त्या निर्वृत्तं प्राप्तपरमानन्दं चित्तं येषां ते तथा तेषां कुटुम्बे स्पृहया युक्ता मतिर्न भवतीत्यन्वयः ॥ ३ ॥

सामान्यमुक्त्वा विशिनष्टि । संशय इति । ज्ञानविरोधिषु दारागारादिषु सक्तस्य प्रियव्रतस्य कृष्णे अच्युता निरन्तरमनुवर्तमाना मतिरुपासनलक्षणा च तथा सिद्धिर्मुक्तिलक्षणा चाभूदिति यद्यस्मात्तस्मात्संशयः कुटुम्बासक्तस्य सिद्धावच्युतमतेः प्रयोजिका"उत गृहस्थोऽपि विमुच्यत" इति स्मृतेः"कुटुम्बी शुचौ देशे स्वाध्यायमधीयान" इति श्रुतेश्च चेतसः कुटुम्बभरणलक्षणासक्तिः आहोस्विदुभयमथवा निवृत्तिमार्गोनुपमर्दने तत्सक्तिरविरोधिनीति ॥ ४ ॥

तत्र तुरीयपक्षमङ्गीकृत्य परिहरतिबाढमिति ।उक्तंबाढमोमिति किं तद्वाहाभगवत इति।सकलसौभाग्यनिधेःसदा निर्दोषयशसो हरेःसकलसम्पत्करपदकमलमधुरसे आदितः आवेशितचेतसो जन्मप्रभृतिसंस्थापितान्तःकरणस्य पुरुषस्य गृहस्थाश्रमो निवृत्तिमार्गाविरोधी न स्यात् इति यत्तदिति शेषः तर्हि कस्य विरोध इति चतुर्थाश्रमिण इत्याह । बाढमिति । वेदशिरस्त्वेनोत्तमश्लोकोवेदान्तलक्षणो यस्य स तथा तस्य हरेः श्रीमच्चरणारविन्दमकरन्दरसे निरन्तररतिलक्षणास्वादनोत्सुकान्तःकरणस्य भगवतः सर्वपूज्यस्य सन्यासिनः ।

> स्त्रीभूहिरण्यपशवो यतेर्यस्य परिग्रहाः ।
> तादृशं कश्मलं दृष्ट्वा सचैलो जलमाविशेत् ।

इति यत्निन्दावचनं तद्बाढमिति वा सिद्धावच्युतमतिः प्रयोजिकेति यत्तत्रापीदमेवोत्तरं बाढमिति । तर्हि कुटुम्बासक्तिर्विरुणद्धीति तत्राह । भगवत इति । वायोर्विपमिध हरिचरणैकशरणस्य पुंसः कुटुम्बाभिनिवेशो न मुक्तिपदवीपरिपन्थी किन्तु भूषणमेवेत्यभिप्रायः गृहस्थोऽपि विमुच्यत इत्यत्र भगवदर्पणबुद्ध्या यदि कर्म करोति तर्हि ज्ञानजननद्वारा मुक्तिसाधनमन्यथानर्थ इत्यङ्गीकारश्चेदिदमेवोत्तरं बाढमिति नैष्कर्म्यमप्यच्युतभाववर्जितमिति श्लोकः अनेन तृतीयपक्षोऽपि व्याख्यातः अत्रापि भगवत इत्युक्तिरेव हेतुः कुटुम्बभरणव्यासक्तस्य विक्षेपणादिविघ्नैः भगवदुपासनालक्षणपरिचर्याया विहतिरवश्यम्भाविनीति तत्राह । भागवतेति भागवतश्च परमहंससमाजश्च भागवतपारमहंस्यः तस्य दयितः प्रियो जनः स्वां स्वविहितां शिवतमां शुभतमां पदवीं निवृत्तिलक्षणां विक्षेपणाद्यन्तरायैर्विहतां विच्छेदमुखीमपि प्रायेण [ २ ] बहुल न हिन्वन् न त्यजन् कथास्त इत्यन्वयः अत्यागे कारणं भागवतेति अथवा भगवत उत्तमश्लोकस्येत्येतदत्रापि हेतुत्वेन सम्बध्यते समावेशितचेतस्त्वादिति भगवतः प्रियं परमहंसाश्रमं दयितः प्राप्तोऽपि "दय दानगतिशोषणादिषु" इति धातुः अत्रापि पूर्वोक्त एव हेतुः ॥ ५ ॥

( १ ) ब्रह्मविद्याहरेश्छायेतिनिर्णयितात्पर्यात् ।
( २ ) अस्मदादिव्यावृत्तये प्रायेणेति ।

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

> श्रीकृष्ण कृष्णचैतन्य ससनातन रूपक ।
> गोपाल रघुनाथात्र व्रजजीवक पाहि माम् ॥
> पञ्चमक्रमसन्दर्भे सन्दर्भाणां समाहृतिः ।
> क्रियते यन्निदेशेन स मेऽनन्यगतेर्गतिः ॥
> अथ पञ्चमस्कन्धस्य क्रमसन्दर्भः ।
> स्वामिपादैर्न यद्व्यक्तं यद्व्यक्तं चास्फुटं क्वचित् ।
> तत्र तत्रैव लेखोऽयं सन्दर्भः क्रमनामकः ॥
> वैष्णवापरितोषः स्याद्यत्र यत्र ततस्ततः ।
> लेख्यं वैष्णवसिद्धान्तदाक्षिण्येनैव किञ्चन ॥

भागवत आत्माराम इति भगवदादिवदात्मारामेष्वपि भागवत इत्यर्थः । मुक्तानामपीत्यादिः अत एवाग्रेऽप्यस्य मुख्यं भागवतत्वमेवानुवदिष्यते न तु गौणात्मारामत्वं ततश्चात्मारामस्यैऽपि गृहारामत्वं न संभवति कुतस्तरां भागवतस्येऽपीत्याह । कथमुत इति । ततश्च सुतरां मोक्षमपि न संभवतीत्याह । यन्मूल इति । कर्मणा बन्धः पराभवश्च स्वरूपतिरस्कारो यतो भवति यद्गृहं मूलं यस्य ॥ १ ॥

तदेव स्पष्टयति । न नूनमित्यादि ॥ २ ॥

छाया आश्रयः कान्तिर्वा स्पृहा तावद्यास्त्येव मतिस्तदनुसन्धानञ्च नास्तीत्यर्थः ॥ ३ ॥

सिद्धिर्भगवत्सामीप्यादिरूपा न केवलं तस्यामेव संशयः अपितु तत्साधनरूपायां तादृशतन्मतावपीत्याह । कृष्णेति ॥ ४ ॥

भागवता ये परमहंसा इति पूर्ववत् । शिवतमामन्तरायेष्वपि भगवच्चित्ततापादनेन परमकल्याणरूपामित्यर्थः ॥ ५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

> प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम् ।
> लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥
> गोपरामाजनप्राणप्रेयसेऽति प्रभूष्णवे ।
> तदीयप्रियदास्याय मां मदीयमहं ददे ॥
> त्रिभिः प्रियव्रताग्नीध्रनाभीनां चरितं क्रमात् ।
> आर्षभं त्रिभिरध्यायैर्भरतस्य तथाष्टभिः ।
> गयोपाख्यानमेकेन चतुर्भिर्जम्बुलम्भितः ।
> द्वीपो निरूप्यते द्वीपान्तरशैलनगादिकम् ॥
> एकेन ज्योतिश्चक्रादि द्वाभ्यां ध्रुवपदं ततः ।
> एकेन द्वाभ्यां सूर्याधः अधोपस्थानमुच्यते ॥
> एकेन नरकश्चैव पञ्चमस्कन्धसङ्ग्रहः ।
> अत्र स्थानं तच्च देवादिभिः पालनमुच्यते ॥
> देवासुरनरादीनां मुख्यानामप्यवर्त्तिनाम् ।
> तत्र तु प्रथमे ब्रह्मा गिरं सम्मानयन् व्यधात् ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

राज्यं प्रियव्रतः पश्चाद्विरज्यावाप माधवम् ।
वंशं प्रियव्रतस्यापि निबोध नृपसत्तम ! ।
यो नारदादात्मविद्यामधिगम्य पुनर्महीम् ।
भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात् पदम् ॥

इति पूर्वस्कन्धान्ते प्रियव्रतस्य प्रथममात्मारामत्वं ततो विषयभोग इति श्रुत्वा विस्मितः पृच्छति । प्रियव्रत इति । भागवत इत्यात्मारामत्वेऽपि भवानिवातिविशिष्ट इत्यर्थः । यन्मूलः गृहासक्तिहेतुकः कर्मबन्धो भवति स च शुद्धः शुद्धजीवस्य तस्य पराभवप्रदत्वात् पराभवः ॥ १ ॥

भागवतत्वे सत्यन्यत्रासक्तिर्न सम्भवतीत्याह । न नूनमिति ॥२॥

भगवत्यासक्तेर्हेतुमाह । महतामिति । छाया संसारसन्ताप निवर्त्तिका तयेति येषां चित्तं सदा भगवच्चरणानुगामीति ध्यानमुक्तं भवति स्पृहा सैवामतिरज्ञानम् ॥ ३ ॥

भवतु वा कथञ्चिदपराधवशात् किन्तु तत्रापि तस्य सिद्धिः कृष्णासक्तिश्च न च्युतेति कथम् ॥ ४ ॥

अङ्गीकृत्य परिहरति । वाढमिति । आत्मारामस्य गृहारामता गृहासक्तस्य च कृष्णासक्तिरित्युभे न सम्भवत इति सत्यमेव तद्व्यतिमहतां दुर्वितर्क्यचरितानां क्वापि कादाचित्की विषयासक्तिस्त्वया न विश्वसनीयेत्याह । भगवत इति । आवेशितचेतसो जनाः भागवती भगवतः सम्बन्धिनी चासौ परमहंसानां दयिता प्रियतमा च या कथा तां किञ्चिन्मात्रेण अन्तरायेण विघ्नेन विहतां स्थगितीकृतां न प्रायेण हिन्वन्ति न त्यजन्ति कीदृशीं स्वां शिवतमां पदवीमिति तत्कथैव भक्तानां पदवी सुखमयवर्त्म तयैव गम्यो भगवानित्यर्थः । ननु "त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्द्धसु प्रभो !" इत्याद्युक्तेः भक्तानामन्तरायो नास्त्येव सत्यं कालकर्म्मादिहेतुकोऽसौ नास्त्येव किन्त्वन्तरायो हि भक्तानां द्विविधः महदपराधहेतुको भगवदिच्छाहेतुकश्च । तत्र महदपराधो हि समुचितकष्टभोगेन चिरकालत एव तस्यैव महतः कृपया सद्य एव च शाम्यति । यथा द्विविदादीनां रहूगणादीनाञ्च । भगवदिच्छा च स्वभक्तसदाचारशिक्षणार्था । तदुत्थो विघ्नस्तु प्रेमवर्द्धनार्थं एव यथा भरतादीनां तत्र प्रियव्रतस्यापराधाभावाद्भगवदिच्छानिबन्धन एव विघ्नोऽयं तत्र गुणाबुद्ध्यापि भक्तेः क्वापि ममता न कर्त्तव्येति यथा भरतस्य मृगपोषणप्रदर्शनया स्वभक्ता भगवता शिक्षिताः तथा महदाज्ञा हि भक्त्यनुपयोगिन्यपि भक्तैः प्रतिपालनीयैवेति प्रियव्रतकर्तृकब्रह्माज्ञाप्रतिपालनप्रदर्शनया शिक्षिता इति ज्ञेयम् ॥ ५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीहंसं श्रीकुमारं च देवर्षिं निम्बभास्करम् ।
श्रीश्रीनिवासमाचार्य्यं भाष्यकारं महामुनिम् ॥
सर्वेश्वरं नमस्कृत्य श्रीगुरुं तत्पदाश्रयम् ।
सिद्धान्तद्योतको दीपः पञ्चमे क्रियतेऽधुना ।

अथ क्रमप्राप्तं स्थानम् पड्विंशाध्यायैर्निबद्धेन पञ्चमस्कन्धेन वर्ण्यते । यदुक्तमतिक्रान्तस्कन्धान्ते यो नारदादात्मविद्यामधिगम्य पुनर्महीम् । भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात् तत्र प्राप्तात्मविद्यस्य गृहेष्वभिनिवेशो गृहस्थस्य च त्यागेन मोक्ष इत्यघटमानं मत्वा पृच्छति । प्रियव्रत इति हे मुने ! प्रियव्रतो राजर्षिः भागवतः भगवद्भक्तः अत एव रामः आत्मापरमेश्वरः तत्स्वरूपगुणशक्तिचिन्तनरम यद्गृहं मूलं यस्य सः कर्मभिबन्धः ज्ञानभक्तिसङ्कोच भवश्च भवति तस्मिन् गृहे कथं केन हेतुना अरमत निवेशमकरोत् गृह इत्युपलक्षणं दारापत्यादीनाम् ॥ १ ॥

उत्तमश्लोकस्योत्तमकीर्तेर्विष्णोः पादयोः सर्वार्थ योगात् चरणकल्पद्रुमयोः शरणीक्रियमाणयोः कामा हारित्वगुणयोगादनुस्मृतिश्छाया तया निर्वृतं सुखितं चे तेषां स्पृहायुक्ता मतिर्नास्ति ॥ ३ ॥

हेब्रह्मन् ! दारादिषु सक्तस्य कृष्णे अच्युता दारादि निर्विघ्ना मतिः तया सिद्धिः श्रीकृष्णसाधर्म्यरूपा मुक्ति दिति यत् अयं महान् संशयः प्राप्तविद्यस्यापि यदा द्यासक्तिस्तदा अल्पसंशयः अनादिबद्धस्य जीवस्य हादिसम्भवात् दाराद्यासक्तस्य तत्यागपूर्वकपरमेश्वरा श्चेति तु महान् संशय इति भावः ॥ ४ ॥

उत्तरमाह । वाढमित्यादिना । यद्यपि प्राप्तपरमा गृहासक्तिः गृहासक्तस्य तत्त्यागेन कृष्णे अच्युता मति संशयं जनयतीति भवदुक्तं सर्वं वाढं सत्यमेव तथापि वतः षाड्गुण्यनिधेः उत्तमाः श्रुतिस्मृतिरूपाः प्रति श्लोका यस्य तस्य श्रीयुक्तचरणपद्ममकरन्दभूतो यो तत्रावेशितचेतसोऽपि उत्तममार्गस्था अपि किञ्चिद केनचिद्विघ्नेन विहता उत्तममार्गाच्चालिताः अपि एव परमहंसाः हेयोपादेयविदस्तेषां दयितस्य प्रियस्य कथां स्वां शिवतमां पदवीं मार्गं न हिन्वन्ति किन्तु प्रायग्रहणेन कामात्मा कलत्रापत्यकिङ्करः कृपणः धिकारी किञ्चित्कालं हिन्वतीति द्योत्यते उत्तमाधि गार्हस्थ्यं प्रथमत एव न स्वीकुर्वन्ति किं प्रजया त्यागेनैकेनामृतत्वमानशुरित्यादिश्रुतेः मध्यमाधिकारि स्थ्यं स्वीकृत्यापि त्यजन्त्येव यदहरेव विरजेत्तदहरेव दितिश्रुतेः ॥ ५ ॥

---

भाषा टीका ।

॥ श्रीमते रामानुजाय नमः ॥

दोहा—रामानुज पद वंदि करि. कृष्ण पाद शिरनाय।
पञ्चम की भाषा लिखत. लक्ष्मणदास बनाय॥

श्री परीक्षित् महाराज शुकदेवजी से बोले कि हे प्रियव्रत जी तो महाभागवत हैं आत्माराम हैं वह घर में रत भये क्योंकि घरतो महा दुःख संसार मूल है ॥ १ ॥

हे मुनि श्रेष्ठ ! तिस प्रकार के संसार सङ्ग को वाले महा पुरुषों को इस प्रकार का घरों में होने के योग्य नहीं है ॥ २ ॥

यर्हि वाव ह राजन्! स राजपुत्रः प्रियव्रतः परमभागवतो नारदस्य चरणोपसेवयाञ्जसावगतपरमार्थ-सतत्त्वो ब्रह्मसत्रेण दीक्षिष्यमाणोऽवनितलपरिपालनायाम्नातप्रवरगुणगणैकान्तभाजनतया स्वपित्रोपामन्त्रितो भगवति वासुदेव एवाव्यवधानसमाधियोगेन समावेशितसकलकारकक्रियाकलापो नैवाभ्यनन्दद्यद्यपि तदप्रत्याम्नातव्यं तदधिकरण आत्मनोऽन्यस्मादसतोऽपि पराभवमन्वीक्षमाणः ॥ ६ ॥

अथह भगवानादिदेव एतस्य गुणविसर्गस्य परिबृंहणानुध्यानव्यवसितसकलजगदभिप्राय आत्मयोनिरखिलनिगमनिजगणपरिवेष्टितः स्वभवनादवततार ॥ ७ ॥

स तत्र तत्र गगनतल उडुपतिरिव विमानावलिभिरनुपथममरपरिवृढैरभिपूज्यमानः पथि पथि च वरूथशः सिद्धगन्धर्वसाध्यचारणमुनिगणैरुपगीयमानो गन्धमादनद्रोणीमवभासयन्नुपससर्प ॥ ८ ॥

तत्र ह वा एनं देवर्षिर्हंसयानेन पितरं भगवन्तं हिरण्यगर्भमुपलभमानः सहसैवोत्थायार्हणेन सह पितापुत्राभ्यामवहिताञ्जलिरुपतस्थे ॥ ९ ॥

भगवानपि भारत ! तदुपनीतार्हणः सूक्तवाकेनातितरामुदितगुणगणावतारसुजयः प्रियव्रतमादिपुरुषस्तं सदयहासावलोक इति होवाच ॥ १० ॥

भाषाटीका ।

हे विप्रर्षि ! उत्तमश्लोक भगवान् के चरण कमल की छाया में जिनका चित्त सन्तुष्ट होरहा है तिनको कुटुम्ब में इच्छा बुद्धि नहीं होती है ॥ ३ ॥

हे ब्रह्मन् ! हमको यह बडा सन्देह है जो कि स्त्री पुत्र गृहादि में आसक्त होंने पर भी उनकी मति कृष्ण के विषय में अचल भई और मोक्ष की सिद्धी भी होगई ॥ ४ ॥

श्री शुकदेवजी बोले हे राजन् ! आपने ठीक कहा है परन्तु जिन पुरुषों के चित्त उत्तम श्लोक भगवान् के श्रीमच्चरण कमल के मकरन्द रसमें लगे हैं उन पुरुषों को मध्य में कोई विघ्न आपडते हैं तौ भी अपने कल्याण करने वाली महा भागवत परमहंसों के प्रिय जो श्रीकृष्ण तिनकी कथा को प्रायःकरके नहीं त्यागते हैं तिसी से गृहस्थ होने पर भी प्रियव्रत जी की कृष्ण कथा नहीं छूटी तब कथाही से उनकी मोक्षसिद्धी भी होगई तो कुछ आश्चर्य नहीं है ॥ ५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रियव्रतस्य ब्रह्माशैवान्तरायरूपा बभूवेति सप्रसङ्गमाह । यर्हीत्यादिना । विमुक्तसङ्गः प्रकृतिं भजन्नित्यन्तेन यर्हि वाव ह यदा हि वावेति प्रसिद्धावेतौ ह इति च स स्वपित्रा मनुनाऽवनितलपरिपालनायोपामन्त्रितो नियुक्तो नैवाभ्यनन्दत्तच्छ्रुत्वा अथ ह तदैव भगवानादिदेवो ब्रह्मा स्वभवनादवततारेत्यन्वयः उपामन्त्रणे हेतुः आम्नाता राज्ञां शास्त्रेणोक्ता ये प्रवराः श्रेष्ठा गुणास्तेषां गणस्यैकान्तभाजनतया नियताश्रयत्वेन अनिच्छायां हेतुः परमार्थसतत्त्वमात्मयाथात्म्यमवगतं तथेन स तथा अतो ब्रह्मसत्रेणात्मध्यानेन कार्येण दीक्षिष्यमाणो नियमं अहीप्यन् प्रागपि वासुदेव एव निरन्तरसमाधियोगेन चित्तैकाग्र्येण समावेशितः समर्पितः सकलकारकाणामिन्द्रियाणां याः क्रियास्तासां कलापो येन सः यद्यपि तत्पित्रोक्तं न प्रत्याख्येयं तथापि तदधिकरणे राज्याधिकारेऽसतोऽपि मिथ्याभूतादपि राज्यप्रपञ्चादात्मनः पराभवमालोचयन्नाभ्यनन्दत् ॥ ६ ॥

गुणविसर्गस्य गुणसृष्टेः परिबृंहणं समृद्धिस्तदनुचिन्तया व्यवसितः सकलजगतामभिप्रायो येन सः यथा राज्ञा चार्ममण्डलेश्वराणामभिप्रायो निश्चीयते तद्वत् अखिलैर्निगमैर्मूर्तिमद्भिर्वेदैर्निजगणैश्च मरीच्यादिभिः परिवृतः सत्यलोकादवतीर्णः ॥ ७ ॥

स च ब्रह्मा तत्र तत्रोडुपतिश्चन्द्र इव प्रकाशमानो गन्धमादनस्य द्रोणीं दरीमवभासयन्नुपससर्पेत्यन्वयः अमरपरिवृढैर्देवेन्द्रादिभिः ॥ ८ ॥

हंसयानेनोपलक्षणेनैनं पितरमुपलभमानो मत्पितायमिति लक्षयन्पितापुत्राभ्यां मनुप्रियव्रताभ्यां सह नारदः कृताञ्जलिः सन्सहसैवाभ्युत्थायार्हणेन पूजया सहोपतस्थे तुष्टाव प्रियव्रतं तदा मन्दरद्रोण्यां नारद उपदिशति मनुश्च तं नेतुमागतोऽस्तीति ज्ञातव्यम् ॥ ९ ॥

हे भारत! भगवानादिपुरुषो ब्रह्मापि तं प्रियव्रतमिति होवाचेत्यन्वयः तेन नारदेनोपनीतमर्हणं यस्य सः सूक्तवाक्येन यथोचितवाक्येन अतिशयेनोदिता वर्णिता गुणगणा अवताराः सुजयाः सर्वोत्कर्षाश्च यस्य ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं स्वात्मपरमात्मयाथात्म्यानुभवनिष्ठस्य कथं गृहाद्यभिनिवेश इति तत्परिजिहीर्षुस्तस्य प्रथमं निवृत्तिधर्मनिष्ठां स्वायम्भुवस्वयम्भूप्रार्थनया गृहाश्रमपरिग्रहं चाह । यर्हि-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्यादिना । चावेति निपातसमुदायःप्रसिद्धिद्योतकः यदा हि राज्ञः मनोः पुत्रः स प्रियव्रतः सर्वोत्कृष्टभागवतधर्मनिष्ठः नारदस्य गुरोश्चरणसेवयाञ्जसा सुखेनैव तत्त्वेन सहितः सतत्त्वः तत्त्वग्रहणं हितस्याप्युपलक्षणम् अधिगतः परमपुरुषार्थः सतत्त्वः तत्त्वहिताभ्यां युक्तः येन अधिगततत्त्वहितपुरुषार्थ इत्यर्थः अवगतपरमपुरुषार्थतत्त्व इति पाठेऽप्ययमेवार्थः पुरुषार्थतत्त्वग्रहणस्य उपायस्याप्युपलक्षणत्वात् ब्रह्मसत्रेण ज्ञानयज्ञेन दीक्षिष्यमाणः स्वपरयाथात्म्यविज्ञाननिष्ठो भवेयमिति कृतसंकल्पः भगवति वासुदेव एवाविच्छिन्नध्यानयोगेन समाधियोगेनेति हेत्वर्थे तृतीया हेतुरिह फलमध्ययनेन वसतीतिवत् अव्यवधानसमाधियोगार्थं समावेशितः ब्रह्मार्पणं ब्रह्महविरिति न्यायेन भगवति समर्पितः सकलकारकाणि कर्त्रादीनि षट् तेषां क्रियास्तद्व्यापारास्तासां च कलापः समूहो येन कर्तृकरणत्वादिकं ब्रह्मण्येवानुसंदधत् कारकव्यापाराणां ब्रह्माराधनरूपतां चानुसंदधानः भक्तियोगानुग्राहकत्वेन फलासङ्गकर्तृत्वत्यागपूर्वकमीश्वराराधनैकवेषस्ववर्णाश्रमोचितधर्मानुष्ठानपर इत्यर्थः स्वपित्रा स्वायंभुवमनुना उपामन्त्रणकर्त्रा आम्नाता राज्ञां गुणत्वेन नीतिशास्त्रेषु कथिता ये श्रेष्ठाः गुणास्तेषामेकान्तभाजनतया नियताश्रयत्वेन हेतुना ऽवनितलपालनाय उपामन्त्रित उपच्छन्दितोऽपिप्रार्थितोऽपि नैवाभ्यनन्दन्नैच्छत् अवनितलपालनमिति विभक्तिव्यत्ययेनानुषङ्गः नन्वेतावदेव शुश्रूषा कार्या पितरि पुत्रकैः वाढमित्यनुमन्येत सादरं यद्गुरोर्वच इत्यादिशास्त्रार्थं जानन् सद्गुणाश्रयः कथं नैच्छदित्याशङ्क्य समाधत्ते । यद्यपीति । तत्पित्रोक्तं यद्यपि न प्रत्याख्येयं तथापि तदधिकरणे राज्याधिकरणे सर्वात्मनः अन्यस्मादसतः प्रकृतिपरिणामरूपाद्देहात्तत्प्रयुक्तरागादेश्च पराभवं ज्ञानसंकोचमन्वीक्षमाणः निरूपयन्नाभ्यनन्ददित्यनुषङ्गस्तेनैवान्वयो वा ॥ ६ ॥

अथ पितृप्रार्थनानभिनन्दनानन्तरं इवावेति पूर्वप्रसिद्धिद्योतको निपातसमुदायः देवानामाद्यो भगवानात्मयोनिर्ब्रह्मा गुणपरिणामरूपस्यैतस्य जगतः परिबृंहणं ज्ञानेन परितो व्याप्तिरनुध्यानमनुचिन्तनं ताभ्यामवसितः सकलजगदभिप्रायो येन सः स्वधर्मभूतज्ञानेनाभितो व्याप्य तद्बुद्धिविषयं साक्षात्कृत्य एवंविधोऽस्य लोकस्याभिप्राय इतिकृतनिश्चय इत्यर्थः अखिलैर्निगमैर्मूर्त्तिमद्भिर्वेदैर्निजगणैर्मरीच्यादिभिश्च परिवृतः स्वभवनात्सत्यलोकादवतीर्णः ॥ ७ ॥

अवतरन्तं ब्रह्माणं विशिंषन्प्रियव्रतसमीपं जगामेत्याह। तत्रेति। तत्र तत्र लोके ऽर्वाचीने गगनतले उडुपतिश्चन्द्र इव प्रकाशमानः अनुपदं पदेपदे प्रतिक्षणमित्यर्थः अमरश्रेष्ठैर्देवेन्द्रादिभिरभितः कार्त्स्न्येन पूज्यमानः प्रतिमार्गं वरूथशः संघीभूतैः सिद्धानां गणैः प्रत्येकं सिद्धादिसङ्घाभिप्रायेण गणशब्दः प्रयुक्तः अतो न पौनरुक्त्यमुपसमीपमेत्य गीयमानस्य गन्धमादनस्य गिरेर्द्रोणीं प्रकाशयन्नुपससर्प समीपं गतः ॥ ८ ॥

तत्रह देवर्षिर्नारदः एनमवतरन्तं हंसवाहनेनोपलक्षणेन पितरं भगवन्तं चतुर्मुखमुपलभमानः हिरण्यगर्भोऽयमितिजानन् स आश्वेव पितापुत्राभ्यां मनुप्रियव्रताभ्यां सहोत्थायार्हणेन पूजया सह कृताञ्जलिर्बद्धाञ्जलिरुपतस्थे तुष्टाव तदा मन्दरद्रोण्यां प्रियव्रतस्य ज्ञानोपदेशाय नारद आगत्य स्थित इति बोध्यम् ॥ ९ ॥

हेभारत ! भगवान् हिरण्यगर्भोऽपि तेन नारदेन उपनी[illegible] महंणं पूजनं यस्य सम्यगुक्तेन वाक्येन समीचीनस्तुति[illegible] वाक्येन नितरामुदितः वर्णितः गुणगणावतारः स[illegible] दवरुह्य पृथिव्यामागमः तत्सम्बन्धिसुजयः सर्वोत्कर्षः [illegible] मिति यावत् चतुर्मुखरूपेण भगवदावेशावतारस्तस्य[illegible] सुजयो वा यस्य सदयः दयायुक्तोऽवलोको यस्य सः [illegible] व्रतमिति वक्ष्यमाणं वाक्यमुवाच ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दारादिषु सक्तस्य प्रियव्रतस्य कृष्णविषयाच्युतमत्या [illegible] कथमभूदिति प्रश्नपरिहारः कथमागत इति तद्बुभुत्स[illegible] यहींति। प्रियव्रतोऽप्येष्वेक इति कृत्वा तच्चरितं वक्तुमुप[illegible] इत्यतोवाह । यहींति । यर्हि यदा स राजपुत्रः प्रियव्रतो भु[illegible] क्षणाय स्वपित्रा स्वायम्भुवेनोपामन्त्रितो नियोजितोऽपि [illegible] क्षणलक्षणं पितृवचनं नैवाभ्यनन्दन्नाङ्गीकृतवान् वाव [illegible] तदात्मयोनिर्ब्रह्मा स्वभवनादवततार हेत्यन्वयः अनभि[illegible] किङ्कारणमित्यत उक्तं ब्रह्मेति ब्रह्मसत्रेण सन्यासेन [illegible] ष्यमाणः सन्यासदीक्षां प्राप्नुयामिति मन्वानः ननुः अज्ञात[illegible] संन्यासाधिकारः कथमस्य सम्भवतीत्यत उक्तमवगतेति [illegible] गतं परमार्थसत्तत्त्वं येन सोऽवगतपरमार्थसत्तत्त्वः का[illegible] प्यबाधितब्रह्माख्यतत्त्वज्ञानीत्यर्थः अलौकिकस्य वस्तुनो विज्ञा[illegible] गुरुकटाक्षं विना न घटत इत्यत उक्तं चरणेति गुरोर्गिरि[illegible] एवं विधस्य समग्रानुग्रहकर्ता गुरुः कः येन तत्त्वज्ञानं स[illegible] त्यत उक्तं नारदस्येति नन्वयोग्यश्चेत्तत्त्वज्ञानग्रहणं कथं [illegible] व्यत इत्यत उक्तं परमभागवत इति इदं चानभिनन्दने [illegible] णमित्याह । भगवतीति । अव्यधानो व्यवधानरहितोऽ प्रतिबद्ध[illegible] समाधियोगश्चित्तैकाग्रतालक्षणस्तेन वासुदेवे भगवत्येव स[illegible] शितः समर्पितः सकलानां कारकाणां चक्षुरादीन्द्रियाणां [illegible] कलापो व्यापारसमूहो येन स तथा जीवस्य ब्रह्मार्प[illegible] रीक्षणलक्षणसमाधियोगेन संन्यस्ताहंकर्तृत्वादिसमुदायं [illegible] नन्वज्ञवत् पित्रादेशमुदलङ्घयत्कथमयमिति तत्राह । [illegible] राज्यं कुर्विति यत्पित्रोक्तं तद्वचनमप्रत्याम्नातव्यं न [illegible] निराकर्तुमयुक्तं यदपि यद्यपीति जानाति तथापि [illegible] करणे राज्यरक्षणाधिकारे असतो ऽप्रशस्तादन्यस्मा[illegible] पयादात्मनो मनआदेः पराभवं पुनः पुनः संसार[illegible] पराजयमन्वीक्षमाणः सम्यक् पश्यन् गुरुवचनं चान्[illegible] त्तमिति संपश्यमानः अनेन गुर्वादेशोल्लङ्घनदोषोऽपि [illegible] ( १ ) द्रष्टव्यम् नन्वेवं विधश्लोकिमिति पित्रोपामन्त्रित [illegible] आम्नातेति । आम्नाता नीतिशास्त्रेण परिपठिताः प्रवग[illegible] राज्ञां गुणा अभिगम्यादयो ये तेषामेकान्तभाजनतया [illegible] त्रत्वात् ॥ ६ ॥

नन्वतर्किताभ्यागमने किङ्कारणमिति तत्राह । एत[illegible] सत्त्वादिगुणैर्विविधः सर्गो यस्य तत्तथा तस्यैतस्य [illegible] परिबृंहणं वृद्धिस्तस्यानुध्यानं सदा सञ्चिन्तनं तेन [illegible] निश्चितो ऽखिलजगदभिप्रायो येन स तथा परिबृंह[illegible]

( १ ) गुरूणां वचनमपि मोक्षपरिपन्थिचेत्तदग्राह्यं[illegible]

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तदनन्तरकालीनानुध्यानेनापरांचीकृत इष्टानिष्टप्राप्तिपरिहारोपायलक्षणो जगदभिप्रायो येनेति वा अखिलैर्मूर्तिमद्भिर्निगमैर्वेदादिभिर्मरीच्यादिनिजगणैश्च परिवृत इत्यनेन श्रुतशास्त्रस्य प्रियव्रतस्यात्मयोनिवचनेऽतिविश्वासजननायोक्तमिति दर्शितम् ॥ ७ ॥

तद्वचनस्यग्राह्यत्वे तन्माहात्म्यमाह । तत्र तत्रेति । उडुपतिश्चन्द्र इवेति दृष्टान्तः सौम्यत्वे अमरपरिवृढैर्देवश्रेष्ठैरनुपथमिति वीप्सायां गन्धमादनस्य पर्वतस्य द्रोणीं निम्नं नितम्बप्रदेशं प्रियव्रततपःस्थानं प्रकाशयन्नुपससर्प प्राप बाढमित्याद्येकं वाक्यं वा महान् संशयो म इति यदुक्तं तद्बाढं सत्यमित्यर्द्धाङ्गीकारः कथं मन्दानां सन्देहावकाशो न विदुषां तथा हि प्रियव्रतस्य प्रथमशरीरग्रहणमारभ्य हरिचरणारविन्दमकरन्दरसास्वादनैकचित्तत्वात् कुटुम्बासक्तिर्मुक्तिपरिपन्थिनी न स्यात् त्रिजगद्गुरुवरचतुर्मुखाज्ञाकारित्वेन गुणकरी च एतत्कुत इति तत्राह । भगवतेति । शेषं पूर्ववत् ॥ ८ ॥

ह वा इत्येतौ निपातौ गद्यवाक्यालङ्कारार्थौ इतिहासश्रद्धातिशयजननार्थौ वा तत्र तस्यामवस्थायां हंसयानेन लक्षणेन स्वपितरं चतुर्मुखमुपलभमानः पश्यन्नारदः शिष्यशिक्षणाय पूर्वमुपविष्टः सहसैव झटित्येव पितापुत्राभ्यां नाम्ना स्वयंभुवप्रियव्रताभ्यां सह बद्धाञ्जलिरुपतस्थे उत्थानसेवामकरोत् ॥ ९ ॥

तेन प्रियव्रतेन मनुना चोपनीतमर्पितमर्हणमर्घ्यपाद्यादिपूजनं यस्मै स तथा "हिरण्यगर्भः समवर्त्तताग्र" इत्यादिसूक्तवचनेन स्वागतमुपविशासनमित्यादिप्रियवाक्येन वा नितरामतिशयेनोदितौ प्रकाशितौ गुणावतारौ गुणविस्तारश्च शोभनौ विजयश्च यस्य स तथा दयया सहितो हासः तादृशेन युक्तोऽवलोको यस्य स तथा एवम्विध आदिपुरुषश्चतुर्मुखस्तं प्रियव्रतमिति वक्ष्यमाणप्रकारेणोवाच ह किल प्रत्यारम्भे प्रसिद्धौ च "वार्तासम्भाव्ययोः किल" इत्यभिधानात् सूक्तवाक्येन हितोपदेशसहितवाक्येन वा ॥ १० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

राजपुत्र इति नववयस्त्वं ज्ञापितं तत्र स्वभावत एव परमभागवतः ततो नारदस्येत्यादि । ततो भगवति वासुदेव इत्यादि ततो ब्रह्मसत्रेणेत्यादि ततोऽवनितलपरिपालनायेत्यादि । ततो नैवाभ्यनन्ददिति योज्यम् । तत्र परमार्थसततं भगवत्तत्त्वं कारणानि स्वाभाविकेन्द्रियचेष्टाः क्रियाकलापाश्च शास्त्रोक्ताः तेषां समर्पणञ्च यत् करोषि यदश्नासीत्यादि । ब्रह्मार्पणं ब्रह्म हविरित्यादि श्रीगीतोक्तप्रकारेण ज्ञेयम् । ब्रह्मसत्रेण इनः परं भगवत्तत्त्वमात्रं परस्परं विचारयितव्यम् नान्यत् किमपि कर्त्तव्यमिति सङ्कल्पेन दीक्षिष्यमाणो नियमं कर्त्तुमुद्यत इत्यर्थः ॥ ६—२० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रियव्रतस्यात्मारामत्वमौत्पत्तिकमेव श्रीनारदकृपया परमं भागवतत्वं श्रीब्रह्माज्ञया गार्हस्थ्यञ्चाह । यर्हीत्यादिना । यावेषेवार्थे यर्ह्येव प्रियव्रतः स्वपित्रा अवनितलप्रतिपालनाय उपामन्त्रितो नियुक्तोऽपि तत् नैवाभ्यनन्दत् तदा ब्रह्मा स्वभवनादवततारेत्यन्वयः । अञ्जसा शीघ्रं सततं तत्त्वं ब्रह्मसत्रेण आत्मध्यानेन दीक्षिष्यमाणः दीक्षां प्राप्स्यन् अतः परं सच्चिदानन्दमात्रं यद्वस्तु तदेवानुभवनीयं नतु प्राकृतं किमपीति सङ्कल्पेन नियमं कर्त्तुमुद्यत इत्यर्थः । तस्त्वया एव पित्रा मनुना आम्नाता राज्ञां शास्त्रेणोक्ता ये प्रवरा गुणास्तेषां गणस्य एकान्तभाजनतया निपतनाश्रयत्वेन हेतुना हे प्रियव्रत ! सम्प्रति त्वमवनिं पालय इत्युपामन्त्रितस्तन्नाभ्यनन्दत् स्वस्याभद्रमगमन्यतेति नैच्छदित्यर्थः । कुतः भगवति अव्यवधानसमाधियोगेन निरन्तरचित्तैकाग्र्येण सम्यक् निवेशितः सकलानां कारकाणामिन्द्रियाणां व्यापारसमूहो येन सः यद्यपि तत् पित्रोक्तमप्रत्याम्नानव्यमप्रत्याख्येयम् । तदपि नाहं राज्यं करोमीति प्रत्याख्यातवानेवेत्यर्थः कुतः तदधिकरणे राज्याधिकारे आत्मनः स्वस्य अंशतः असाधुभूतादपि कामक्रोधादेः सकाशात् पराभवं पर्यालोचयन् ॥ ६ ॥

अथ ह ततश्चादिदेवो ब्रह्मा गुणविसर्गस्य जगत्सृष्टेः परिबृंहणं समृद्धिस्तदनुचिन्तया व्यवसितः सकलजगतामभिप्रायो येन सः । यथा राज्ञा चारैः मण्डलेश्वराणामभिप्रायो निश्चीयते तद्वत् अखिलैः निगमैः मूर्त्तिमद्भिर्वेदैः निजगणैश्च मरीच्यादिभिश्च परिवृतः इति प्रियव्रतं प्रत्युपदेष्टव्ये धर्मे प्रमाणीकरणार्थं सत्यलोकादवतीर्णः भूतलमिति शेषः ॥ तत्र प्रियव्रतं बाल्यमारभ्यैव विरक्तं गृहान्निर्विद्य वन एव कृतवासं ज्ञात्वा तदाज्ञया कनिष्ठोऽप्युत्तानपादो राज्यं चकार तद्वंश्याश्च प्रचेतःपर्यन्तं यथा समयं राज्यं चक्रुरेवञ्च स्वायम्भुवमन्वन्तरस्यार्द्धादप्यधिकः कालो गच्छतिस्म । प्राचेतसो दक्षस्तु स्वायम्भुवे मन्वन्तर एव लब्धजन्मा पौनर्भविकैश्वर्यकामनया तपसे जगाम ततश्चाराजकं वीक्ष्य मनुरुपायान्तरमनालोच्य विरक्तमपि प्रियव्रतं वनादानीय राज्यं नेतुं यदा न शशाक तदा ब्रह्मैवागत्य प्रियव्रतं राज्ये प्रवर्त्तयामास । ततश्च पञ्चममन्वन्तरपर्य्यन्तं क्रमेण प्रियव्रतस्य तद्वंश्यानां राज्याधिकारः तृतीयचतुर्थपञ्चममनूनामुत्तमतामसरैवतानां प्रियव्रतपुत्रत्वात् द्वितीयमनोः स्वारोचिषस्यापि तद्वंशपातात् तत्तन्मनुपुत्रपौत्राद्यास्तु प्रैयव्रता एव राज्ये मण्डलमण्डलेश्वररूपा राजानो बभूवुः ततश्च षष्ठस्य चाक्षुषमन्वन्तरस्यादावारम्भे तपसो निवृत्तेन दक्षेण प्रजासृष्टिरेव तस्य साम्राज्यञ्च यदुक्तं "चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे काल विप्लुते । यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदित" इति । चाक्षुषस्य मनोरुत्तानपादवंश्यत्वात्तन्मन्वन्तरपर्य्यन्तमेव स्वायम्भुवमनोरधिकार इति ज्ञेयम् ॥ ७ ॥

भूतलं प्रति तस्यावतरणे शोभामाह । स ब्रह्मा परिवृढैर्मुख्यैः कीदृशैः विमानानामावलिर्येषां तैः ॥ ८ ॥

हंसयानोपलक्षणेन पितापुत्राभ्यां मनुप्रियव्रताभ्याम् ॥ ९ ॥

तदा नारदस्तत्र प्रियव्रतमुपदिशति । मनुस्तं मनुमागतोऽस्तीति ज्ञेयम् । भगवान् ब्रह्मापि प्रियव्रतमुवाच तैर्नारदमनुप्रियव्रतैरुपनीतमर्हणं यस्मै सः उदितौ वर्णितौ गुणगणाः स्वप्रजानुवात्सल्यादिरूपत एव हेतोरवतारः सत्यलोकादवतरणं तत एव सुजयः अत्युत्कर्षो यस्य सः । सदयेति अत्यन्तनाद्भुतभक्ति-

॥ श्रीभगवानुवाच ॥

निबोध तातेदमृतं ब्रवीमि मासूयितुं देवमर्हस्यप्रमेयम् ।
वयं भवस्ते तत एष महर्षिर्वहाम सर्वे विवशा यस्य दिष्टम् ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ज्ञानवैराग्ययोरग्रमेव प्रतिबन्धकोऽभूवं तद्गार्हस्थ्येऽप्यस्य भक्तिर्वर्द्धतामेवेत्याशीर्व्यञ्जकः सदयावलोकः अहं राज्यं न करोमीति तव प्रौढिः त्वामहं राज्यं कारयामीति मम प्रौढिस्तत्र पश्यामः कस्याद्य प्रौढिस्तिष्ठतीति नमरि प्रियव्रते सहासावलोकश्च यस्य सः ॥ १० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

प्रियव्रतस्तु ब्रह्मणैव गार्हस्थ्ये किंचित्कालं नियोजितस्तदाज्ञां पालयित्वा पुनर्निवृत्त इत्याह । यर्हीत्यादिना । नारदस्य पदवीं पुनरेवानुससारेत्यन्वेन वावह इति निपातसमुदायो वाक्यालंकारार्थः यर्हि यदा सः प्रियव्रतः नारदस्य चरणोपसेवया अञ्जसा सुगमेनैव यत्नेन अवगतपरमार्थसतत्त्वः अवगतमुपलब्धं परमार्थमतत्त्वं परमात्मस्वरूपगुणादियाथात्म्यं येन सः अत एव परमभागवतः अत एव ब्रह्मसत्रेण बृहत्स्वरूपगुणादिभगवद्विषयकज्ञानयज्ञेन भगवत्स्वरूपादिश्रवणमनननिदिध्यासनव्यापारेण दीक्षिष्यमाणः पित्रा मनुना आम्नाता राजनीतौ प्रोक्ता ये प्रवराः गुणास्तेषां गणस्यैकान्तभाजनतया अवनितलपरिपालनाय उपामन्त्रितः अनुज्ञातः यद्यपि यत्पितुर्वचनमप्रत्याख्यानानर्हमप्रत्याख्येयं तथापि नाभ्यनन्दत् न प्रशशंस नाङ्गीचकारेत्यर्थः तत्र हेतुमाह । तदधिकरण इत्यादिना तदधिकरणे अवनिपालनाधिकारे आत्मनः जीवस्वरूपतःअन्यस्मात्-नसः असतः असाधुनः यन्धकारणात् पराभवमन्वीक्षमाणः वासुदेवं एव निरन्तरसमाधियोगेन समावेशितः सम्यगर्पितः सकलकारकाणामिन्द्रियाणां याः क्रियास्तासां कलापो येन सःअथानन्तरमेव एतस्य विश्वस्य गुणविसर्गस्य गुणविसृष्टेः परिबृंहणानुध्यानेन व्यवसितः सकलजगदभिप्रायो येन सः अखिलैर्निगमादिभिः परिवेष्टितः स्वभवनादवततार ॥ ६ ॥ ७ ॥

स ब्रह्मा अनुपथं पथि पथि विमानावलिभिरुपलक्षितैः देवश्रेष्ठैः अभिपूज्यमानः पथि पथि च वरूथशः पुञ्जभूतैः सिद्धादिगणैरुपगीयमानः उडुपतिरिव गन्धमादनस्य द्रोणीं-दरीमवभासयन्नुपससार समीपं गतः ॥ ८ ॥

देवर्षिः एनं पितरं हंसयानेनोपलक्षणेन पितैवायमित्युपलभमानः पुत्राभ्यां पितापुत्राभ्यां मनुप्रियव्रताभ्यां सह कृताञ्जलिः अर्हणेन पूजया सहोपतस्थे तुष्टाव ॥ ९ ॥

तेन देवर्षिणा उपनीतं संपादितमर्हणं पूजनं यस्य सूक्तवाक्येन सूक्तानि सुष्ठु उक्तानि वाक्यानि यस्मिंस्तेन स्तोत्रेण अतितरामुदिताः प्रकाशिता गुणगणाः अवताराः शोभना जयाः सर्वोत्कर्षाश्च यस्य सः प्रियव्रतं ह स्फुटमुवाच ॥ १० ॥

———

भाषाटीका ।

हेराजन् ! जब वे राजपुत्र प्रियव्रत परम भागवत ना-रदजी के चरणसेवा से अनायाससे परमार्थतत्त्व ज्ञान ... करके ब्रह्मसत्रयागसे दीक्षाग्रहणकरने को उद्यतभये तब ... वासुदेव के विषय निरन्तर चित्तकी एकाग्रता से सब ... सब इन्द्रियों के व्यापार को भगवान् मे समर्पण ... फिर राजों के कहे जो शास्त्रोक्त श्रेष्ठगुण तिनका पात्र होने-के पिताने जब पृथवी के पालन करने की आज्ञा ... उस बात को अच्छा नहीं समुझा यद्यपि पिता की ... त्यागने योग्य नहीं है तथापि राज्य का अधिकार होने ... असत्प्रपंच में पडनेसे सत् आत्म स्वरूप का ति... होना जानकर राज्यपालन न किया ॥ ६ ॥

इसके अनन्तर इस सब जगत् के गुणत्रयकी ... की वृद्धीकी चिन्ता के होने से सब प्राणियों के ... को जानने वाले भगवान् आदि देव आत्मयोनि ब्रह्माजी ... धारी वेदगण तथा मरीच्यादि ऋषि गण इनोंसे वेष्टि-कर अपने स्थान सत्य लोग से उतरे ॥ ७ ॥

मार्ग में आकाश के मध्य में बडे देव गणोंके विमानों-की पङ्क्तियों से वेष्टित होकर पूजित होते हुये रस्ते में समूहके समूह सिद्ध गन्धर्व साध्य चारण मुनि गणों ... जातेथे इसी प्रकार से गन्धमादन पर्वत की कन्दरा को ... करते हुये प्रियव्रत के समीप आगये ॥ ८ ॥

उहांपर हंसविमानपर बैठे हुये भगवान् हिरण्यगर्भ ... को देखकर अपने पिता होने से पिता पुत्र जो स्वायम्भुव ... प्रियव्रत तिनके सहित आप भी नारदजी हाथ जोडकर ... की अस्तुति करने लगे ॥ ९ ॥

हे परीक्षितजी ! नारदादिकों ने जब ब्रह्माजी की ... और सुन्दर वचनों से अत्यन्त उनके अवतारों ... गुणगणों का गान किया तब बैठकर आदि ... ब्रह्माजी दया से हासयुक्त कृपा दृष्टि से देखकर ... से बोलने लगे ॥ १० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रवृत्तिनिष्ठं मद्वाक्यं प्रतिकूलं गत्वा मय्यसूयां क... ति शङ्कमानो नाहमेवं वदामि किन्तु मन्मुखेन हरिरेव ... ज्ञापयतीति वदन्प्रवृत्तिनिवृत्तिरहस्यमाह । निबोधेति ... ऋतं सत्यमप्रमेयं देवमसूयितुं दोषारोपेण द्रष्टुं ... तव ततस्तात एष त्वद्गुरुश्च महर्षिः दिष्टमादिष्टमाज्ञां ... अस्वतन्त्राः सन्तो वहामः ॥ ११ ॥

न तस्य कश्चित्तपसा विद्यया वा न योगवीर्येण मनीषया वा ।
नैवार्थधर्मैः परतः स्वतो वा कृतं विहन्तुं तनुभृद्विभूयात् ॥ १२ ॥
भवाय नाशाय च कर्म कर्तुं शोकाय मोहाय सदाभयाय ।
सुखाय दुःखाय च देहयोगमव्यक्तदिष्टं जनताङ्ग ! धत्ते ॥ १३ ॥
यद्वाचि तन्त्यां गुणकर्मदामभिः सुदुस्तरैर्वत्स ! वयं सुयोजिताः ।
सर्वे वहामो बलिमीश्वराय प्रोता नसीव द्विपदे चतुष्पदः ॥ १४ ॥
ईशाभिसृष्टं ह्यवरुन्ध्महेऽङ्ग ! दुःखं सुखं वा गुणकर्मसङ्गात् ।
आस्थाय तत्तद्यदयुङ्क्त नाथश्चक्षुष्मतान्धा इव नीयमानाः ॥ १५ ॥
मुक्तोऽपि तावद्बिभृयात्स्वदेहमारब्धमश्नन्नभिमानशून्यः ।
यथानुभूतं प्रतियातनिद्रः किन्त्वन्यदेहाय गुणान्न वृङ्क्ते ॥ १६ ॥
भयं प्रमत्तस्य वनेष्वपि स्याद्यतः स आस्ते सह षट्सपत्नः ।
जितेन्द्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किन्नु करोत्यवद्यम् ॥ १७ ॥
यः षट्सपत्नान्विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्वम् ।
अत्येति दुर्गाश्रित ऊर्जितारीन् क्षीणेषु कामं विचरेद्विपश्चित् ॥ १८ ॥
त्वं त्वब्जनाभाङ्घ्रिसरोजकोशदुर्गाश्रितो निर्जितषट्सपत्नः ।
भुङ्क्ष्वेह भोगान्पुरुषातिदिष्टान्विमुक्तसङ्गः प्रकृतिं भजस्व ॥ १९ ॥

॥ श्रीशुक उवाच ॥

इति समभिहितो महाभागवतो भगवतस्त्रिभुवनगुरोरनुशासनमात्मनो लघुतयावनतशिरोधरो बाढमिति सबहुमानमुवाह ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विवशत्वमेवाह । चतुर्भिः नेति । तस्य कृतं तेन निर्मितं तनुभृज्जीवस्तपआदिभिर्विहन्तुमन्यथाकर्तुं न विभूयात्प्रभुर्न भवेत् मनीषया सामादिबुद्धिबलेन परतो बलवदाश्रयात् ॥ १२ ॥

तत्र देहयोगे तावत्पारतन्त्र्यं प्रसिद्धमित्याह । भवायेति । भवो जन्म भवाद्यर्थमव्यक्तेनेश्वरेण दिष्टं दत्तं देहयोगं जनता जीवसमूहः सदा धत्ते नत्वन्यथा कर्तुं शक्नोति अङ्ग ! हे प्रियव्रत ॥ १३ ॥

कर्मफलयोरपि पारतन्त्र्यमाह । यद्वाचीति । यस्य वाचि वेदलक्षणायां तन्त्यां दामन्यां गुणाः सत्त्वादयस्तत्पूर्वकाणि च यानि कर्माणि तन्निबन्धनैर्दामभिर्ब्राह्मणादिशब्दैः सुदुस्तरैः सुदृढैर्हे वत्स ! वयं सर्वे सुयोजिता निबद्धाः सन्तस्तस्मै ईश्वराय बलिं वहामस्तदिच्छया कर्म कुर्मः नसि नासिकायां प्रोता बद्धाः सन्तश्चतुष्पदो बलीवर्दा यथा द्विपदे पुरुषाय ॥ १४ ॥

भोगेषु पारतन्त्र्यमाह । ईशा ईश्वरेणाभिसृष्टं दत्तमेवाङ्ग हे प्रियव्रतावरुन्ध्महे स्वीकुर्मः यथा स्वामिना दत्तमेव कणशादि बलीवर्दा भक्षयन्ति न स्वेच्छया तद्वत् नचैवं वैषम्यमीश्वरस्य यतो गुणकर्मसङ्गान्नाथो यद्यद्देवतिर्यगादि लक्षणं देहमयुङ्क्त योजितवांस्तत्तदास्थाय स्वीकृत्य यथान्धाश्चक्षुष्मता छायामानपं वा नीयमानाः सन्तस्तत्रैव गच्छन्ति तद्वत् ॥ १५ ॥

नन्वेतत्सर्वमविदुष एव नत्वात्मविद इत्याशङ्क्याह । मुक्तोऽपीति । यावत्प्रारब्धं कर्म तावत् यथा स्वप्नेऽनुभूतं प्रतियातनिद्रो गतनिद्रोऽभिमानशून्य एवानुस्मरति तर्हि भोगवासनया पुनर्जन्म भवेत्तत्राह । किन्तु देहान्तरारम्भकान्गुणान्कर्माणि वासनाश्च न वृङ्क्ते न सम्भजते ॥ १६ ॥

ननु गृहे वर्तमानस्य भोगान्भुञ्जानस्य कुतोऽभिमानाभावो मोक्षो वा अतस्तत्त्यागेन वनवास एव युक्तस्तत्राह । भयं संसारः स्यादेव प्रमत्तस्याजितेन्द्रियस्य वनेष्वपि सङ्गभिया वनाद्वनान्तरं गच्छतोऽपीत्यर्थः सहैव षट् सपत्नाः शत्रवो मनोबुद्धीन्द्रियाणि च यस्य स तथाभूत एव वनेष्वपि यत आस्ते बुधत्वेन जितेन्द्रियत्वादात्मरतेरात्मारामस्यावद्यं रागादिदोषं किन्नु करोति न करोत्येव ॥ १७ ॥

ननु गृहे वसतः पुरुषस्य रागादयः संभवन्ति नतु वन इत्याशङ्क्याह । य इति । यः षट् वैरिणः षडिन्द्रियाणि विजिगीषमाणः स पूर्व गृहेषु स्थित्वा तेषामत्यन्तं निरोधमकुर्वन् जेतुं यतेत क्षीणेष्वरिषु कामं गृहेऽन्यत्र वा विचरेत् यतो बांक

श्रीधरस्वामिकृतभावार्थदीपिका

ऊर्जितारीन्दुर्गाश्रित एवाल्वेति जयति पश्चाद्दुर्गे वान्यत्र वा वर्तेत युध्येतेति पाठे प्रहरेदित्यर्थः ॥ १८ ॥

इदं च गृहदुर्गाश्रयणं प्राकृतानां त्वं त्वब्जनाभस्याङ्घ्रिसरोजकोश एव दुर्गं तदाश्रितो ऽत एव निर्जितषट्सपत्नश्च तथापि पुरुषेणेश्वरेणातिदिष्टान्दत्तान्भोगांस्तावद्भुङ्क्ष्व पश्चाद्विमुक्तसंगः सन्प्रकृतिं स्वरूपं भजस्व आत्मनिष्ठो भवेत्यर्थः ॥ १९ ॥

आत्मनस्ततो लघुतयाल्पतया तच्छासनमङ्गीचकार यद्वा आत्मनो यदनुशासनं तदलघुतया गौरवेण बाढं तथा करिष्यामीत्यवनतकन्धरः सन् जग्राह ॥ २० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तमेवाह । निबोधेति नवभिः । भगवच्छासनमेवाहमुपदेक्ष्याम्यतो मदुपदेशरूपं भगवच्छासनमुल्लङ्घ्य त्वया भगवानसूयितव्य इत्याह । निबोधेति । हेतात ! प्रियव्रत ! इदमृतं तथ्यं वचः कथयामि तन्निबोधावधानेन शृणु अप्रमेयं प्राकृतकरणजन्यप्रमित्यविषयमतीन्द्रियमित्यर्थः अपरिच्छिन्नमिति वा देवं दीव्यमानं निरस्तसमस्तदोषं भगवन्तमसूयितुं दोषयुद्ध्याग्रहीतुं नार्हसि कोऽसावप्रमेयस्तत्राह । यस्य भगवतो ऽदिष्टमादिष्टं शासनं विधशास्तदधीनाः सन्तो भगवान् ते तव ततस्तातः पिता मनुरेष महर्षिर्नारदः वयं मत्प्रभृतयो मरीच्यादय इत्येते सर्वे वहामः कुर्म इत्यर्थः वाङ्मनसापरिच्छेद्यस्वरूपस्वभावः निरस्तनिखिलदोषो भगवान्सर्वस्य वशी सर्वस्येशानः त्वयास्माभिश्च सर्वैरनुल्लङ्घ्यः ॥ ११ ॥

तथाच श्रूयते "एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिकेति भावः एतदेव उपपादयति । नेति । कश्चित्तनुभृद्देहभृत्तनुशब्दः करणानामप्युपलक्षणं यद्दत्तकरणकलेवरभृज्जीवः तस्य भगवतः कृतं भावेक्तः कृतिं प्रशासनात्मिकां कर्माणि वा क्तः तस्येति कर्त्तरि षष्ठी कृतं शासनमित्यर्थः तपआदिभिरुपायैर्विहन्तुमन्यथा कर्त्तुं न विभूयान समर्थो भवेत् तपसाऽनशनादिना विद्यया शास्त्रीयज्ञानेन योगवीर्येणाणिमादियोगबलेन मनीषया विचारक्षमया बुद्ध्यार्थैर्द्धनधर्मैर्यज्ञादिभिः परतः बलवदाश्रयणेन स्वतः तपआदिव्यतिरिक्तेन केन चित्संभावनीयेन स्वीयेनोपायेन वा ॥ १२ ॥

तनुभृदित्यनेन जीवस्य भगवत्संकल्पायत्तं देहभृत्त्वमुक्तं तदेव निवृणंस्तद्दत्तैस्तल्लीलोपकरणैस्तन्वादिभिस्तच्छासनानुवर्तित्वमेव स्वरूपानुगुणमन्यथादण्ड एव स्यादिति सदृष्टान्तमाह । भवायेति द्वाभ्याम् । अङ्ग हे प्रियव्रत ! जनता जनसमूहः अव्यक्तदिष्टं प्राकृतैश्चक्षुरादिभिर्न व्यज्यते इत्यव्यक्तो भगवान् तेन दिष्टमादिष्टं तत्संकल्पायत्तमित्यर्थः देहसंबन्धं धत्ते किमर्थमसावीश्वरो देहयोगमादिशति तत्राह । भवायेति । भवाद्यर्थं कर्मकर्तुमुत्तरोत्तरं जन्मनाशादेर्निमित्तं कर्म कर्तुं प्राक्तनकर्मानुसारेण देहयोगमादिशतीत्यर्थः यद्वा भवाद्यर्थं कर्म च कर्तुमव्यक्तदिष्टं देहयोगं धत्ते तत्र भवो जन्म नाशो मरणं शोकः प्रियार्थविच्छित्तिनिमित्तं दुःखं मोहो देहात्मभ्रमस्वतन्त्रात्मभ्रमादिरूपः भयमागामिदुःखदर्शनजं ज्ञानं सुखदुःखे इष्टानिष्टविषयके अनुकूलप्रतिकूलात्मके प्राचीनकर्मानुसारेण भवाद्यर्थं [illegible] देर्निमित्तं कर्म च कर्त्तुमव्यक्तादिष्टमित्यर्थः सदा [illegible] येति च छेदः मुक्तये इत्यर्थः स्वशासनानुवर्त्तिना [illegible] तदतिवर्त्तिनां निग्रहार्थं च सत्त्वादिप्रचुरदेहयोगमा [illegible] भावः ॥ १३ ॥

हे वत्स ! यस्य भगवतो वाचि वेदादिकायां तन्त्यां [illegible] रज्ज्वौ गुणकर्मदामभिः गुणाः सत्त्वादयः कर्माणि [illegible] कादिभेदेन भिन्नानि स्वस्ववर्णाश्रमोचितानि कर्माणि [illegible] दामानि नामभिरिति पाठे वर्णाश्रमनामानि एव [illegible] ग्रन्थियुतरज्जवः तैर्दृढतरैः सर्वे वयं सुयोजिता नियद्धा [illegible] तस्मै ईश्वराय भगवते बलिं पूजां वहामः कुर्मः यथा [illegible] नासिकायां छिन्नायां प्रोता बद्धरज्जवश्चतुष्पदो बलीवर्दा [illegible] मनुष्याय कुर्वन्ति तद्वत् ॥ १४ ॥

किंच न वयमिष्टानिष्टप्राप्तिपरिहारसाधकाववोध [illegible] हारसमर्था इत्याह । ईशावसृष्टमिति । अङ्ग ! हे प्रियव्रत [illegible] यद्यदयुङ्क्त योजितवान् तत्तद्वर्णाश्रमादिकं जात्यादिकं [illegible] स्थिता वयं तत्तदीश्वरादिष्टं देवतिर्यगादिशरीरमास्थाय [illegible] वयमिति वा गुणकर्मणां सात्त्विकादिभिन्नानां कर्मणां [illegible] बन्धान्निमित्तात्तत्तत्कर्मानुरूपमित्यर्थः अनेनेश्वरस्य [illegible] उक्तः ईशेन भगवताभिसृष्टं दत्तं सुखं दुःखं चा [illegible] प्राप्नुमः ईश्वरस्य हिताहितज्ञत्वे अन्येषामनभिज्ञत्वे [illegible] च दृष्टान्तमाह । यथा चक्षुष्मताऽविप्लुतचक्षुरिन्द्रियेण [illegible] छायामातपं वा नीयमानाः प्राप्यमाणाः अन्धाः [illegible] तद्वत् अतोऽस्माभिरीश्वरादिष्टैः प्रवृत्तिधर्मं एवानुरोद्धव्य [illegible] भावः ॥ १५ ॥

ननु देहात्माभिमानिनः संसारिणां जीवस्य प्रवृत्ति [illegible] वृत्तिर्युक्ता अहं त्वधिकृतात्मविद्यो मुमुक्षुः कथं प्रवृत्ति [illegible] रुणध्मि बन्धकत्वादित्याशङ्कायां तावन्मुमुक्षोरप्यामुक्तेर्दे [illegible] मावश्यकं तदनुबन्धितया प्राप्तेषु केषु चित्प्रवृत्तोऽपि [illegible] इत्याह । मुक्तोऽपीति । प्रतियातनिद्रः निवृत्ताज्ञानः पुमान् [illegible] भूतमनुभूतवज्ज्ञानोदयात् पूर्वमनुभूतकर्मवदज्ञानदशायां [illegible] भवादिति यावत् ज्ञानोदयानन्तरमप्यारब्धं सुखदुःखादि [illegible] नाय प्रवृत्तं पुण्यापुण्यरूपं कर्माश्नन्ननुभवन्नपि तन्निमि [illegible] सुखदुःखाद्यनुभवप्रयुक्तदेहगतस्थूलकार्श्याद्यभिमानमा [illegible] णः यावन्मुक्तो भवेत्तावत्स्वदेहं बिभृयादेव देहात्मा [illegible] हितः आरब्धमश्नन्नपि यावन्मुक्तस्तावत्स्वदेहं बिभृ [illegible] वान्वयः प्रारब्धस्य कर्मणोऽभिगतात्मविद्येनाप्यनुभाव्य [illegible] व्यायत्तत्वाच्छरीरस्य तद्धारणावर्जनीयमित्यर्थः तर्हि [illegible] को विशेषस्तत्राह । किंत्विति । अयं प्रतियातनिद्रः [illegible] देहान्तरारम्भाय निमित्तभूतानि सत्त्वादिगुणप्रयुक्त [illegible] द्भुङ्क्ते न भजति प्रारब्धानुभवो देहधारणं चेत्युभयं [illegible] देहान्तरनिमित्तबन्धककर्माकरणं तु ज्ञानिनो विशेष इति [illegible]

अस्तु मुमुक्षोरपि देहधारणं प्रारब्धानुभवश्चाति [illegible] देहधारणासम्भवाद्वन एवाहं वत्स्यामि गृहाश्रमस्य [illegible] तुल्याचत्राह । भयमिति । प्रमादा प्रमादा वैवहि भयान [illegible] प्रमत्तस्य स्वपरयाथात्म्यविस्मरणेन देहेन्द्रियपारवश्य [illegible] अपिशब्दादगृहेषु च वसतो भयं संसारः स्यादेव ननु [illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देहानुबन्धिनां कलत्रादीनां प्रसह्य प्रवर्त्तयतां ज्ञाननिष्ठाविरोधिना-भावात्सा प्रतिष्ठिता स्याद्गृहे तु विपरीतेत्यत्राह । यतः यस्मात्सः वनवासी सह षट्सपत्नैः सहैव षट्सपत्नाः शत्रवो मनःसहितानि ज्ञानेन्द्रियाणि यस्य तथाभूत एव वने आस्ते "वोपसर्जं" स्यादिति वाग्रहणात्सहस्य सभावाभावः "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते" इति समनस्केन्द्रियवर्गस्य विषयप्रवणस्य ज्ञान-निष्ठाविरोधित्वाद्वनाश्रमिणोऽपीन्द्रियवर्गस्य सहैव विद्यमानत्वाद्भयं स्यादेव अत इन्द्रियवर्ग एव नियन्तव्यः यद्येवं तर्हि किमप-राद्धं गृहाश्रमेणेत्याह । जितेन्द्रियस्यात्मरतेः प्रकृतिविविक्तात्मा-नुभवशीलस्य बुधस्य ब्रह्मनिष्ठस्य पुंसः गृहाश्रमः किन्ववद्यं दोषं करोति न कमपि दोषं करोतीत्यर्थः ॥ १७ ॥

ननु यदीन्द्रियपारवश्यरूपप्रमाद एव भयहेतुस्तर्हि इन्द्रियाणि ज्ञाननिष्ठाविरोधीनि वन एव वसन् जेष्यामीत्यत्राह । य इति । सपत्नान् ज्ञाननिष्ठाविरोधित्वेन शत्रुतुल्यानि षडिन्द्रियाणि यो विजिगीषमाणः विजेतुमिच्छन्सः पूर्वं प्रथमं गृहेषु निर्विश्य गृहाश्रम एव स्थित्वा यतेत इन्द्रियजयार्थं यतेत तथा हि लोके यः कश्चन शत्रून्विजिगीषमाणः विजेतुमिच्छन्प्रथमं दुर्गमाश्रित ऊर्जितान् बलिष्ठान् शत्रूनत्येति जयति ततः क्षीणेषु शत्रुषु बल-हीनेषु सत्सु कामं यथेष्टं दुर्गेऽन्यत्र वा विचरेदेवं विपश्चिद-पीत्यर्थः ॥ १८ ॥

सत्यं प्रथमं दुर्गाश्रित एवारीनत्येति अहमपि भगवच्चरणार-विन्दरूपं दुर्गमाश्रितः शत्रून् जेष्यामि नत्वातिहेयान् गृहानित्यत्राह । त्वं त्विति । यद्यपि त्वमब्जनाभस्य भगवतश्चरणकमलकोशदु-र्गाश्रितः यथा कमलकोशान्तर्गतभ्रमरं बाह्यातपत्रपांद्यो न बाधन्ते तद्वद्भगवच्चरणारविन्दसमावेशितमनसमिन्द्रियाणि न बाधन्त इति ज्ञापनाय कोशशब्दः प्रयुक्तः निर्जितः ज्ञानयोगविरोधिबहि-न्द्रियवर्गो येन तथापि पुरुषेण परमपुरुषेणादिष्टान् भोगान् इह लोके भुक्त्वा ततो विमुक्तसङ्गः भगवद्भक्त्या प्रकृतिं स्वभावमा-विर्भूतापहतपाप्मत्वादिगुणाष्टकस्वभावं भजस्वेति यावत् ॥ १९ ॥

इतीत्थं ब्रह्मणा सम्यगभिहितः उक्तः महाभागवतः त्रिभु-वनहितोपदेष्टुर्भगवतश्चतुर्मुखस्यानुशासनमात्मनः स्वस्य लघु-तया हेतुना भोगाननुभवत एव पुनर्मुक्त्युपायप्रदर्शनात्मक-त्वात्तच्छासनस्य सुकरत्वं यद्वा आत्मनो यदनुशासनं तदलघु-तया गौरवेण बाढं करिष्यामीत्यवनतकन्धरः सन् सः प्रियव्रतः बहुमानं यथा भवति तथा उवाह जग्राहानुष्ठितवानिति यावत् ॥ २० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ऋतं शास्त्रविहितं किंतत्तदाह । मासूयितुमिति । देवेन श्री-हरिणा स्वधर्मो दुष्टदमनं धर्मज्ञानानुपालनमित्यादि स्वोक्तलक्षणा शाराणां विहिता तदाज्ञामुल्लङ्घ्य निवृत्तिमार्गाङ्गीकारे तद्धकारि हरौ दोषाविष्कारलक्षणासूयारोपेण नच महादोषित्वेनाधःपातो दुष्परिहरः स्यादिति देवमसूयितुं मार्हसीत्यन्वयः स्वाप्रमेयस्य-वक्तृवाक्याभिप्रायस्याप्रमेयत्वं सूचितुमप्रमेयमिति तेन तद्वाक्या-भिप्रायापरिज्ञानेन भ्रान्तवद्वर्तसे इत्यर्थोऽपि लभ्यते इयमपि क्रीडेव ननु प्राप्तव्यप्रयोजनार्थितयेति सूचनाय देवाणीति ते तव ततस्तानां मनुः वेर्विष्णोरंशाः "विः पक्षिपरमात्मनोः" इति यादवः दिष्टमाज्ञाम ॥ ११ ॥

ननु तपआदिसामर्थ्योपेतस्तदाज्ञोल्लङ्घनं सुशकं स्यादत्राह । न तस्येति । तस्य हरेराज्ञालक्षणा कृतं शास्त्रात्मना विहितं स्वधर्मं विहन्तुं उल्लङ्घ्य स्वाचाहितं कर्तुं न विभूयात् समर्थो न भवे-दित्यन्वयः परतः सहायैः स्वतः सहायमन्तरेण ॥ १२ ॥

विवशा इत्युक्तं स्पष्टमाह । भवायेति । अङ्गेयं जनता भवा-द्यर्थमव्यक्तेन हरिणा हरिणेरितजडप्रकृत्या वा दिष्टं दत्तं स्वकर्मफलभोगाय कल्पितं लिङ्गं वा देहयोगं भजते पुण्यादि-कर्मभिरिति शेषः "भवो भद्रे हरे प्राप्तौ सत्तासंसारजन्मसु" इति यादवः ॥ १३ ॥

हरेराज्ञालङ्घने विध्यतिक्रमदोषेण प्रत्यवायोऽपि स्यादित्या-शयेनाह । यद्वाचीति । यस्य हरेर्वाचि वेदाख्यायां तन्त्यां गोवृ-षबन्धनदीर्घरज्ज्वां तत्तद्योग्यगुणब्राह्मणादियोग्यकर्मभिर्ब्राह्मण-क्षत्रियादिनामभिश्च गुणकर्मनिमित्तनामभिर्वा स्वदामभिर्दृढपाशैः सुष्ठु योजिता बद्धाः वयमीश्वराय बलिं वहामः ब्रह्मापर्यन्तेन तत्तद्देववाक्यविहितं कर्म कुर्म इत्यर्थः कथमिव नसि नासिकायां प्रोताश्चतुष्पदो गावो द्विपदे मनुष्याख्यस्वामिने गोमयादिकं वहन्ति यथा तथेति पारवश्यमात्रे दृष्टान्तोऽयं न तु बुद्धिपूर्व-कर्तृत्वे ॥ १४ ॥

यथा कारणमीश्वराधीनं तथा फलं च तदधीनमित्याह । ईशेति । ईशावसृष्टं श्रीहरिणा दत्तं यच्छरीरमयुङ्क्त अचीक्लृपत तत्तच्छरीरमास्थायावरुध्महे अङ्गीकृत्य भुञ्ज्महे कथमिव चक्षु-ष्मता नीयमाना अन्धा इव चक्षुष्मद्दर्शितमार्गमभ्युपेत्य तद्दत्तमेव भुञ्जते यथा तथेति ॥ १५ ॥

उत्पन्नज्ञानस्यापि चरमदेहिनो देहपातपर्यन्तं स्वविहितधर्म-कर्तव्यमित्याह । मुक्तोऽपीति । यथोपयातं दैवतः प्राप्तं तदपि प्रारब्धं फलदानायोपक्रान्तं कर्मफलमदन्नभिमानशून्यो देहाभिमानरहितः प्रतियातनिद्रः निवृत्ताज्ञानान्यथाज्ञानी जीवन्मुक्तोऽपि यावत्प्रा-रब्धकर्मनाशः तावत्स्वदेहं बिभृयात् तत्र विहितं राज्यादिपालन-कर्म च कर्तव्यमित्यर्थः तर्हि विद्वदविदुषोः को विशेष इति तत्राह । किन्त्विति । ज्ञानज्ञानिवदन्यदेहाय शरीरान्तरारम्भकान् रागादि-लक्षणान् भूङ्क्ते न स्वीकरोति । तादृशकर्माणि न करोती-त्यर्थः ॥ १६ ॥

ननु कर्दमाक्रान्तस्य कर्दमलेपवत् गृहाश्रमरतस्य तन्निमित्त-भवभयमापद्येत एवातो वनाश्रम एव श्रेयानिति तत्राह । भय-मिति । प्रमत्तस्य विस्मृतस्वकार्यस्य वनेषु निर्जनप्रदेशेषु स्थित-स्यापि पापाद्भयं स्यात् कुत इति तत्राह । यत इति । षट्सपत्नाः षडिन्द्रियाख्याः शत्रवः सह वसन्ति इति यतोऽत इति शेषः तर्हि कथंकारं भवभयाभावः स्यादिति तत्राह । जितेन्द्रियस्येति । अवद्यं दोषं बुधस्य कर्तव्यं जानतः वशीकृतेन्द्रियग्रामस्येन्द्रिय-जयः कथं ज्ञायत इति तत्राह । आत्मेति । आत्मनि हरौ रतिरुपासनालक्षणा यस्य स तथा तस्य ॥ १७ ॥

तर्हीन्द्रियजयोपायः कथमत्राह । य इति । इन्द्रियाख्यषट्शत्रून् जेतुकामो यः सः पूर्वं गृहस्थाश्रमेषु स्थित्वा तदुपभोगेन निर्विद्यालम्बुद्धिं प्राप्य यतेत श्रेयसे इति शेषः यतनप्रकारं वक्ति । युध्यतेति । भगवन्निष्ठालक्षणदुर्गाश्रितः ऊर्जितारीन्विषय-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भोगेषु सन्नद्धेन्द्रियाख्यशत्रून् युध्येत विषयगमनं निरुध्यात्मा-धीनान्कुर्यात् पुनः क्षीणेषूपरतविषयप्रचारेष्विन्द्रियेषु सत्सु विपश्चित्कामं निर्भयो विचरेदित्यन्वयः विपश्चिदित्यनेन ।

न जातु कामः कामानामुपभोगेन शाम्यति ।

हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते म०

इत्येतच्चिरस्तम् ॥ १८ ॥

बह्वालापैरलं किमधुना कर्तव्यमत्राह । त्वमिति । तुना प्रिय-व्रतस्यान्यस्माद्विशेषं सूचयति तमेवाह । अब्जनाभेति । पुरुषा-निग्रहात् श्रीनारायणप्रसादोपनतात् विमुक्तसङ्गः पुत्रादिस्नेह-लक्षणसङ्गरहितः सत्त्वं प्रकृति सच्चिदानन्दलक्षणस्वभावं सन्यासा-श्रमेण मोक्षो नान्याश्रमेणेत्ययं बुद्धिव्यामोह एव "विहितो यस्य यो धर्मो विष्णुना प्रभविष्णुना । तेन मुक्तिर्भवेत्तस्य तं गुरुर्वेद सर्ववित्" इति स्मृतेस्तव विहितेन प्रजापालनलक्षणधर्मेण स्वयो-ग्यमुक्तिरिति विदित्वा ( १ ) तत्र विमुखं त्वामुद्बोध्य तत्कर-णायायासिषमित्यतस्तत्कुर्वित्येतद्वा ( २ ) तुनाह ॥ १९ ॥

अथ प्रियव्रतस्य शिष्टजनशिक्षणाय विरिञ्चस्याज्ञाग्रहणप्रका-रमाह । इतीति । विरिञ्चादात्मनः स्वस्य लघुतयामितमहिमत्वाद-वनतशिरोधरः प्रणतकण्ठः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रवृत्तिनिष्ठं मद्वाक्यं स्वासह्यं मत्वा मय्यसूयां माकृथाः भोः प्रियव्रत ! अहन्तु त्वत्प्रभोरेवाधीनस्तस्यैवाभिप्रेतं वच्मीत्याह । निबोध स्वबुद्ध्यैवेदं परामृशेत्यर्थः । हे तातेति नाहं तव शत्रुर्य त्वां दुःखयामीति भावः । ऋतं सत्यमेव न तु त्वामहं प्रतारयामीति भावः ब्रवीमीत्यहं ब्रह्मा न तु स्वपितेवाहमप्यप्रमाणी कर्त्तव्य इति भावः । किं सत्यं तत्राह । वयमिति । भवो रुद्रोऽपि ते तव तत-स्तातो मनुर्महर्षिर्नारदोऽयं तव गुरुरित्येते वयं यस्य दिष्टमाज्ञा-मेव वहामः स खलु यस्मै यस्मै इदा यद्यदादिशति तथैव चेष्टते इति तदाज्ञयैव त्वामहं राज्ये प्रवर्त्तयामीति भावः । यमहं सर्व्वा-त्मना भजे स प्रभुरेव मां संसारसिन्धौ निमज्जयतीति स्वेष्ट-देवेऽपि दोषदर्शी मा भूरित्याह । मासूयितुमिति । अप्रमेयं प्रमातु-मशक्यं कमपि संसारेऽपि प्रवर्त्य शीघ्रमुद्धरति कमपि वनेऽपि प्रस्थाप्य नोद्धरतीति कस्तस्य चरितं वेदेति भावः ॥ ११ ॥

नचात्र स्वहठं रक्षितुमात्मनस्तपोविद्यायोगबलं प्रदर्शयि-तव्यमित्याह । नेनि । तस्य कृतं तेन निर्मितं तपआदिभिर्विहन्तु-मन्यथा कर्त्तुं तनुभृज्जीवो न विभूयात् न प्रभवेत् ननु त्वद्द्वारा मां राज्ये प्रभुः प्रवर्त्तयति यथा तथा महर्षिद्वारा मां राज्यात् प्रव्राजयति चेन्नि किमत्र निश्चिनोमीति चेत् बुद्धिबलेन मां परमेश्वरं विजिगीषस्वेत्याह । मनीषया वेति । तेनोभयमपि भगव-द्दादिष्टं मत्वा राज्यं कुर्वन्नेव तत्रानासक्त्या प्रव्रज्यामपि कुर्विति भावः । न च यथेष्टद्रव्यदानतः स्वप्रतिमूर्त्तिकल्पनेन राज्यं चिकीर्षस्व नापीमां विपदं बहुधर्म्मैर्बलवदाश्रयेण वा स्वबाहु-बलेन वोत्तितीर्षेत्याह । नैवात्मेत्यादि ॥ १२ ॥

नात्र किमपि शोचनीयं यतो देहधारिण ईश्वराधीना ... भद्रं वा स्वेच्छया परेच्छया वा सर्व्वे सहन्त एवेत्याह । भवे ... भवनाशौ पुनःपुनर्जन्ममृत्यू तदाद्यर्थं जनता जीवस ... अव्यक्तेनेश्वरेण दिष्टं दत्तं देहयोगं सदा धत्ते स्वकर्म्मोपा ... मपि देहमीश्वराज्ञां विना न प्राप्नोति यथा माध्वसाधुक ... पार्ज्जितमपि शालिक्षेत्रकारागारादिकं नृपाज्ञां विना प्र ... प्राप्नोति नृपः खल्वन्यथापि कुर्य्यादित्यतो हेतोः ॥ १३ ॥

देहधारणे पारतन्त्र्यमिव कर्म्मकरणेऽपि पारतन्त्र्यमाह । वाचि च वेदलक्षणायां तन्त्र्यां दामन्यां गुणाः सत्त्वाद्य ... चितानि कर्म्माणि तान्निबन्धनैर्नामभिर्ब्राह्मणादिशब्दैः सुदृढैः हे वत्स ! वयं सर्व्वे सुयोजिताः नियन्त्राः तस्मै ई ... बलिं वहामः तदादिष्टं कर्म्म कुर्म्मः अत्र दृष्टान्तः । नसि ... कायां प्रोता बद्धाः सन्तः चतुष्पदो बलीवर्दा द्विपदे मनुष्ये ... ते यथा मनुष्यदत्तस्य भारस्यावहने गमनागमनक्रियादिषु ... न्त्र्यं च दण्ड प्राप्नुवन्ति तथा वयमपीति भावः ॥ १४ ॥

कर्म्मफलभोगेऽपि पारतन्त्र्यमाह । ईशा ईश्वरेण ... दत्तमेव अङ्ग प्रियव्रत ! अवरुन्ध्महे प्राप्नुमः दुःखं सुखं वेति ... वैषम्यमीश्वरस्येत्याह । गुणेति । तमआदिगुणानुरू ... यानि कर्माणि तेषु सङ्गादासक्तत्वात् यथा स्वीयत्वात् मन्द ... बलीवर्द्देषु मध्ये साध्वसाधुकर्म्मकरणतारतम्यानु ... केभ्यश्चिदुत्तमगृहाभ्यन्तरे स्थापितेभ्यः सघृतदुग्धादि ... तत्स्वामी दत्ते केभ्यश्चन रूक्षयवान्नचणकमा ... केभ्यश्चन कणिशघासादिकं केभ्यश्चन नीहारातपवृ ... मति बहिःस्थले स्थापितेभ्यः साक्रोशदण्डप्रहारं विरसं ... पलालादिकमिति किं कृत्वा अवरुन्ध्महे नाथः स्वामी ... युङ्क्ते अभद्रं भद्रं वा फलं ददौ तत्तद्दास्थाय अस्मदादि ... साङ्गुण्यानुरूपमेव ददाति स्वामिनः कोऽपि दोष इति मनसि ... स्येत्यर्थः । प्रत्युत परमेश्वरस्यात्र गुण एव द्रष्टव्य इति ... न्तेनाह । चक्षुष्मतेति । शीतलमातपतप्तं वा वर्त्म नीयमान ... कदाचित् शीतले वर्त्मनि कण्टककूपादिकं दृष्ट्वा यत्र ... वर्त्म नीयन्ते तेन किमन्धैश्चक्षुष्मानुपालभ्यते अपि तु हितक्र ... मिति विश्वस्य प्रशस्यत एवेति भावः ॥ १५ ॥

नन्वेनत् सर्व्वमविदुषः कर्म्मिण एव ननु कर्म्मग्रन्थिच्छे ... णस्यात्मज्ञानिन इत्याशङ्क्याह । मुक्तोऽपीति । यावत्प्रारब्धं ... तावत् यथा स्वप्नेऽनुभूतं प्रतियातनिद्रो गतनिद्रोऽभिमान ... शून्य एवानुस्मरति तर्हि भोगवासनया पुनर्जन्म स्यात्तत्राह ... अन्य देहाय देहान्तरं प्राप्तुं गुणान् कर्म्माणि वासना ... वृङ्क्ते न संभजते ॥ १६ ॥

ननु तदपीश्वराधीनत्वेऽपि मम सांप्रतिकाद्वनवासात् ... नी गृहे स्थितिरपकारं करिष्यत्येवेत्याशङ्क्याह । भयं संसार ... षट्सपत्नः षडिन्द्रियशत्रुसहितः जितेन्द्रियस्य तत्रा ... रात्मारामस्य तत्रापि बुधस्य वनगृहयोस्तारतम्याभावं बुद्ध्वा ... किमवद्यं रागादिदोषम् ॥ १७ ॥

अजितेन्द्रियो जितेन्द्रियः इन्द्रियजयेच्छुरित्येव ... त्रिविधो जनस्तत्राद्ययोर्गृहाश्रमो न दोष इत्युक्तम् । अन्त्य ... प्रत्युत गुण एवेत्याह । यो विजिगीषमाणः । विजेतुमिच्छति ... गृहेषु स्थित्वा तेषामत्यन्तनिरोधमकुर्व्वन् जेतुं ...

---

( १ ) प्रजापालनकर्मणि ।

( २ ) प्रजापालनं ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

यतो लोक ऊर्जितान् वलिष्ठानरीन् दुर्गाश्रित एवात्येति जयति ततश्च क्षीणेष्वरिपु कामं गृहेष्वन्यत्र वा विचरेत् बुध्येनेति पाठे प्रहरेदित्यर्थः ॥ १८ ॥

त्वन्तु तेषु त्रिषु मध्ये न कोऽपीत्याह । त्वमिति । तुर्भिजोपक्रमे अब्जनाभेति नत्वन्यप्राकृतवद्गृहदुर्गाश्रितः नचान्यांजितेन्द्रियश्च यतो निर्जितेति जितषट्सपत्नेभ्यो निर्गतः तच षडिन्द्रियाणि भगवत्सौन्दर्य्यादिदर्शनसक्तानि परममित्राण्येव नतु शत्रवः अतः पुरुषेण स्वप्रभुणैवातिप्रेयेन दिष्टान् दत्तान् भोगान् इति कर्म्म जन्यानामेव भोगानां बन्धकत्वं नत्वीश्वरदत्तानामिति भावः । प्रकृतिं भजस्वेति पश्चाद्राज्यभारं स्वपुत्रे विन्यस्य वनेऽपि गत्वा तिष्ठ ॥ १९ ॥

आत्मनः स्वस्य लघुतया तत्पौत्रत्वादित्यर्थः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हेतात ! पौत्र ! ते ततः तातः मनुः एव देवर्षिः ते गुरुः भवः वयमिति मरीच्याद्यभिप्रायेण बहुवचनमेते सर्वे विवशाः यस्य दिष्टमाज्ञां वहाम अयमर्थः ज्ञानेन वयसा च त्वत्तोऽधिका वयं यत्र नियोजितास्तत्पराः सन्तः तस्य दुर्ज्ञेयत्वदुर्लभत्वादिकमनादृत्य तमचैव दृष्टवामः अद्यैव प्राप्स्याम इत्येवं नासूयाम इति अतोऽविपक्वकषायस्त्वम् अप्रमेयं निखिलैः प्रमाणैः साकल्येन प्रमातुमशक्यमसूयितुम् अविपक्वकषायाधिकारिसाध्यत्वदोषारोपेण द्रष्टुं नार्हसीत्यर्थः ॥ ११ ॥

यत्र यस्तेन नियोजितस्तस्त्वीकुर्वन् आत्मपरयोर्नियम्यनियन्तृभावमवधार्य शनैः शनैर्मुक्तो भवेदित्याह । न तस्येति पर्ध्याभ. । तस्य तेन परमेश्वरेण कृतं विहन्तुमन्यथाकर्तुं न विभूयात् न प्रभुर्भवेत् ॥ १२ ॥

भवाय मोक्षाय च अव्यक्तदिष्टं दुर्लक्ष्यपरमेश्वरदत्तं देहयोगं जनता मुमुक्षुबुभुक्षुजनसमूहः धत्ते अव्यक्त एव भोगं मोक्षं च यथाधिकारं यथाकालं जनतायै ददाति तदर्थमातुरो न भवेदिति भावः ॥ १३ ॥

भातुरत्वं तु न पुरुषार्थसाधकमित्याशयेनाह । यदिति द्वाभ्याम् । यस्य भगवतः वाचि तन्त्र्यां वेदरूपायां दामनि गुणकर्मनामभिः सत्त्वादिगुणैः पुण्यादिकर्मभिः देवादिनामभिः सुदुस्तरैर्दुर्निवार्य्यैः सुयोजिताः वयं तस्मै बलिं वहामः तत्र दृष्टान्तः नसि नासायां प्रोताश्चतुष्पदो बलीवर्द्दा यथा द्विपदे कर्षकाय बलिं वहन्ति तद्वत् ॥ १४ ॥

गुणकर्मयोगात् अस्माभिः सत्त्वादिगुणवशात्कृतानि यानि कर्माणि तद्योगात् नाथः यद्यद्देहादिकमयुङ्क्त योजितवान् तत्तदाशायाङ्गीकृत्य दृष्ट इतीट् तेनेश नियन्त्रा दुःखं सुखं वा अभिसृष्टं दत्तम् अवरुन्धमहे स्वीकुर्मः तथा च मन्त्रः "ईशा वास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मागृधः कस्य स्विद्धनम्"इति ॥ १५ ॥

एवं सामान्यतः सर्वैरेवेश्वरदत्तमिष्टमनिष्टं वा पारवश्यात्स्वीकार्य्यमेव अथ मुमुक्षुणापि पारवश्यात्प्रारब्धकर्मफलं स्वीकर्त्तव्यमेवेत्याह । प्रतियातनिद्रः प्रतिबुद्धः मुमुक्षुः यथानुभूतं शरीरं तादृशाय अन्यदेहाय गुणान् "ऊर्ध्वं गच्छन्ति सत्त्वस्था" इत्यादिनोक्तान् स्वर्गादिप्रदान् सत्त्वादीन् न वृङ्क्ते न भजति किन्तु यावन्मोक्षः तावत्प्रारब्धमश्नन् देहं बिभृयादेव ॥ १६ ॥

ननु गृहे वसतः पुना रागाद्युत्पत्त्या संसारभयं स्यादत्राह । भयमित्यादिना । सहैव षट् एकं मनः पञ्चज्ञानेन्द्रियाणि च सपत्नाः शत्रवो यस्य सः ॥ १७ ॥

अत्येति जयति ॥ १८ ॥

पूर्वं भोगान् भुङ्क्ष्व पुनर्जितषट्सपत्नः विमुक्तसङ्गः त्यक्तकलत्रादिः सन्प्रकृतिं विश्वहेतुं "कारणं तु ध्येयम्"इति श्रुतेः अनेनाजितेन्द्रियत्वात्तवाधुना न वैराग्याधिकार इति सूचितम् ॥ १९ ॥ २० ॥

---

भाषाटीका ।

श्रीभगवान् ब्रह्माजी बोले हे तात ! हम तुम से सत्य वचन कहते हैं अप्रमेय परमात्मा की असूया नहीं करना जिसपरमात्मा के वश हो कर हम महादेव जी तुमारे पिता यह मनुजी महर्षि नारद सबही जिनकी आज्ञा को ग्रहण करते हैं ॥ ११ ॥

कोई भी देह धारी उस परमात्मा की आज्ञा को तपस्या से या विद्यासे या योग प्रभाव से या बुद्धिसे धर्म अर्थ से दूसरे से या अपने से टाल नहीं सका है ॥ १२ ॥

हे प्रियव्रतजी ! जितना जनसमूह है सो जन्म के लिये मरने के लिये कर्म करने के लिये शोचने को मोहित होने को भ्रान्त होने को भीत होने को सुखी दुःखी होने को ईश्वर के दिये देह को प्राप्त होताहै ॥ १३ ॥

हे वत्स ! जिस परमात्मा के वचन रूप ( वेद ) लंबी रस्सी मे हम लोग गुण कर्मरूप छोटी डोरों मे बधे हुये सब ईश्वर को भेट देते हैं जैसे नाक मे नथे हुये पशु मनुष्यके आधीन होकर काम करते हैं ॥ १४ ॥

सत्त्वादि गुणों के अनुसार जो जो देह ईश्वर की आज्ञा से प्राप्त होता है तिसदेह को धारण करके हम लोग उसी ईश्वर के दिये हुए सुख दुःख को भोगते हैं जैसे कि अंधों को आंख वाला जहां चाहे तहां लेजाता है तैसे हमारे भोग ईश्वर के आधीन हैं ॥ १५ ॥

जिस को जगत् का अहंकार ममकार छूटगया है वहभी अभिमान रहित होकरभी तबतक प्रारब्ध को भोगता हुआ देह को अवश्य धारण करेगा जैसे कि निद्रा छूटने परभी स्वप्न की स्मृति बनी रहती है केवल दूसरे देह के हेतु उस के कर्म नहीं होते हैं ॥ १६ ॥

जोपुरुष अपने कर्तव्यमे कुशल नहीं है तिसको बनमे रहने से भी भयहोगा क्योंकि काम क्रोधादिक छैः शत्रु तो उसके साथही हैं जो मुमुक्षु है जितेन्द्रिय है विवेकी है तिस का तो गृहाश्रमभी क्या विगाड कर सकता है ॥ १७ ॥

जो पुरुष छैः शत्रुओं को जीतना चाहे वह घर मे रह कर उनके जीतने का यत्न करै पहिले जैसे कि किले मे रहनेवाला राजा प्रबल शत्रुओं को जीतता है इसीप्रकार घर मे रहने से कामादिशत्रु यदि क्षीण होजावें तब ज्ञानी होकर यथेष्ट विचरता रहै ॥ १८ ॥

भगवानपि मनुना यथावदुपकल्पितापचितिः प्रियव्रतनारदयोरविषममभिसमीक्षमाणयोरात्म समवस्थानमवाङ्मनसं क्षयमव्यवहृतं प्रवर्तयन्नगमत् ॥ २१ ॥

मनुरपि परेणैवं प्रतिसन्धितमनोरथः सुरर्षिवरानुमतेनात्मजमखिलधरामण्डलस्थितिगुप्तय आस्थाप्य स्वयमतिविषमविषयविषजलाशयाशाया उपरराम ॥ २२ ॥

इति हवाव स जगतीपतिरीश्वरेच्छयाऽधिनिवेशितकर्माधिकारोऽखिलजगद्बन्धध्वंसनपरानुभावस्य भगवत आदिपुरुषस्याङ्घ्रियुगलानवरतध्यानानुभावेन परिरन्धितकषायाशयोऽवदातोऽपि मानवर्धनो महतां महीतलमनुशशास ॥ २३ ॥

अथ च दुहितरं प्रजापतेर्विश्वकर्मण उपयेमे बर्हिष्मतीं नाम तस्यामुहवाव आत्मजानात्मसमानशीलगुणकर्मरूपवीर्योदारान् दश भावयाम्बभूव कन्यां च यवीयसीमूर्जस्वतीं नाम ॥ २४ ॥

आग्नीध्रेध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतोघृतपृष्ठसवनमेधातिथिवीतिहोत्रकवय इति सर्व एवाग्निनामानः ॥ २५ ॥

एतेषां कविर्महावीरः सवन इति त्रय आसन्नूर्ध्वरेतसस्त आत्मविद्यायामर्भभावादारभ्य कृतपरिचयाः पारमहंस्यमेवाश्रममभजन् ॥ २६ ॥

तस्मिन्नुहवा उपशमशीलाः परमर्षयः सकलजीवनिकायावासस्य भगवतो वासुदेवस्य भीतानां शरणभूतस्य श्रीमच्चरणारविन्दाविरतस्मरणाविगलितपरमभक्तियोगानुभावेन परिभावितान्तर्हृदयाधिगते भगवति सर्वेषां भूतानामात्मभूते प्रत्यगात्मन्येवात्मनस्तादात्म्यमविशेषेण समीयुः ॥ २७ ॥

अन्यस्यामपि जायायां त्रयः पुत्रा आसन्नुत्तमस्तामसो रैवत इति मन्वन्तराधिपतयः ॥ २८

एवमुपशमायनेषु स्वतनयेष्वथ जगतीपतिर्जगतीमर्बुदान्येकादशपरिवत्सराणामव्याहताखिलपुरुषकारसारसंभृतदोर्दण्डयुगलापीडितमौर्वीगुणस्तनितविरमितधर्मप्रतिपक्षो बर्हिष्मत्याश्चानुदिनमेधमानप्रमोदप्रसरणयौषिण्यव्रीडाप्रमुषितहासावलोकरुचिरक्ष्वेल्यादिभिः पराभूयमानविवेक इवानवबुद्ध्यमान इव महामना बुभुजे ॥ २९ ॥

यावदवभासयति सुरगिरिमनुपरिक्रामन् भगवानादित्यो वसुधातलमर्धेनैव प्रतपत्यर्धेनावच्छादयति तदा हि भगवदुपासनोपचितातिपुरुषप्रभावस्तदनभिनन्दन् समजवेन रथेन ज्योतिर्मयेन रजनीमपि दिनं करिष्यामीति सप्तकृत्वस्तरणिमनुपर्यक्रामद्द्वितीय इव पतङ्गः ॥ ३० ॥

---

भाषाटीका ।

तुमतो पद्म नाभ भगवान् के चरण कमलरूप किले को आश्रय करके देहस्थित शत्रु ओं को जीतगये हो तौभी भगवान् के दिये अभिकार भोगों को भोगो पीछे आसक्ति छोड कर आत्मनिष्ठ होकर विचरना ॥ १९ ॥

श्रीशुकदेव जी बोले इस प्रकार त्रिभुवन नाथ भगवान् ब्रह्मा जी के वचन को महाभगवत प्रियव्रत जीने अपने को छोटा मान कर मस्तक नवाकर बहुमानपूर्वक स्वीकार किया ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

मनुना सन्तुष्टेनोपकल्पिता पूजा यस्य । प्रियव्रतस्य च शास्त्रारदस्य च शिष्यनाशात्कुटिलमीक्षणं सम्भवति तन्नास्तीत्याह । अविषमं यथा तथा तयोरभिसमीक्षमाणयोः रात्मनः सम्यगवस्थानमवाङ्मनसं वाङ्मनसयोरविषयं निवासं जगाम । पाठान्तरे अवाग्वाचामगोचरं कथंभूतं क्षयं विषयमतोऽव्यवहृतं व्यवहारशून्यं ब्रह्म निवृत्तं प्रवर्तयन् व्यवहाराद्विषयाणः सन् व्यवहारातीतं स्वरूपं चिन्तयन् इत्यर्थः ॥ २१ ॥

पुत्रं राज्येऽभिषिच्य वनं यास्यामीत्येवं यो मनोरथ

श्रीधरस्वामिकृतभावार्थदीपिका ।

परेण ब्रह्मणैव प्रतिसन्धितः सम्पादितो यस्य सः नारदस्यानुमतेन राज्ये स्थापयित्वातिविषमो दुस्तरो यो विषयविषजलाशयो गृहं तस्याशा दिक् प्रवृत्तिवासना भोगेच्छा वा तस्या उपरतोऽभूत् ॥ २२ ॥

यत्पृष्टं गृहे कथमरमत तत्रोक्तमुत्तरमुपसंहरति । इति हवाव । इत्यमेवाहि अभिनिवेशितः प्रापितः कर्माधिकारो यस्य अखिलस्य जगतो बन्धध्वंसनः परोऽनुभावो यस्य तस्य यदङ्घ्रियुगलं तस्यानवरतं ध्यानं तदनुभावेन पारिरन्धितकषायो दग्धरागादिमल आशयो यस्य अतोऽवदातः शुद्धोऽपि महतां ब्रह्मादीनामाज्ञापालनेन मानवर्द्धनः ॥ २३ ॥

उ इति विस्मये ह इति प्रसिद्धौ वावेति निश्चये आत्मनः समानैः शीलादिभिरुदारान्महतो दशपुत्रान् जनयामास ॥ २४ ॥

नानाह । आग्नीध्र इध्मजिह्वो यज्ञबाहुर्महावीरो हिरण्यरेता घृतपृष्ठः सवनो मेधातिथिर्वीतिहोत्रः कविश्चेत्यग्नीनां नामानि येषां ते ॥ २५ ॥

अर्भभावाद्बाल्यादारभ्य ॥ २६ ॥

तस्मिन्पारमहंस्याश्रमे श्रीमच्चरणारविन्दयोरविरतस्मरणेनाविगलितोऽखण्डितो यः परमो भक्तियोगस्तस्यानुभावेन विशोऽधितान्तःकरणाः प्रतीतो यो भगवांस्तस्मिन्नात्मनस्त्वंपदार्थस्य तादात्म्यमविशेषेण विशेषो देहाद्युपाधिस्तदपोहेन प्रापुः । ॥ २७ ॥ २८ ॥

उपशमाश्रयेषु सत्सु दशकोटिभिरेकमर्बुदम् एतादृशानि वर्षाणामेकादशार्बुदानि जगतीं बुभुज इत्यन्वयः राज्ञो धर्मपालनविषयभोगप्रभावैश्वर्यम् तत्रानायासेनैव धर्मपालनमाह । अव्याहता अखिलाः पुरुषकाराः पौरुषाणि यस्मात्तेन सारेण बलेन सम्भृतौ पूर्णौ दोर्दण्डौ तयोर्युगलं तेनापीडित आकृष्टो मौर्वीगुणस्तस्य स्तनितं टङ्कारस्तेनैव युद्धं विना विरमिता निरस्ता धर्मप्रतिपक्षा येन भोगातिशयमाह । बर्हिष्मत्याः स्वभार्याया अनुदिनमेधमानैः प्रमोदादिभिः पराभूयमानविवेक इवात एव विषयासक्त्यात्मानमनवबुध्यमान इव बुभुजे तत्र प्रमोद आयान्तं पतिं दृष्ट्वा हर्षस्ततः प्रसरणमभ्युत्थानादिलीला ततो योषित्त्वं योषित्स्वभावकृतशृङ्गारानुभावप्रकाशनं ततो व्रीडया प्रमुषिताः सङ्कुचिता हासावलोकास्ततो रुचिरक्ष्वेल्यादयः परिहासवाक्यादीनि तैः ॥ २९ ॥

प्रभावातिशयमाह । यावद्वसुधातलं लोकालोकपर्यन्तमवभासयति मेरुं प्रदक्षिणीकुर्वन्नादित्यस्तस्मिन्नर्द्धेनैवोपलक्षितं प्रतपति प्रकाशयत्यर्द्धेन चावच्छादयति तमसा वृणोति तदा द्वितीयः पतङ्गः सूर्य इव पर्यक्रामत् न चेदमसम्भावितम् यतो भगवदुपासनेनोपचितोऽतिपुरुषः पुरुषानतिक्रान्तः प्रभावो यस्य ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ततो भगवान् ब्रह्मापि मनुना स्वायम्भुवेन यथाविधि कृतपूजः प्रियव्रतस्य योगभ्रंशान्नारदस्य शिष्याभावात् कुटिलमीक्षणं सम्भवेत्तत्तु नास्तीत्याह । अविषममकुटिलं यथा भवति तथा प्रियव्रतनारदयोरपि समीक्षमाणयोः सतोरवाङ्मनसत्वं वाक्चमनश्च वाङ्मनसे "अचतुरविचतुर" त्यादिना निपातनात् समासान्तोऽच्प्रत्ययः तयोः क्षय येद्यं "क्षि निवासगत्योः" इति गत्यर्थत्वाद्गत्यर्थस्य ज्ञानार्थत्वाद्वाङ्मनसयोरविषयं न वाङ्मनसत्वयमनेनार्वाचीनलोकापेक्षया वैचित्र्य विवक्षितं विचित्रान्तराह इदमवाङ्मनसगोचरामिति लोके प्रयोगो दृश्यते युक्तं चैतत्परब्रह्मस्वरूपगुणानामेवापरिच्छिन्नत्वेन वाङ्मनसयोरविषयत्वात्कार्य्यवर्गस्य वाङ्मनसविषयत्वात्सत्यलोकस्यापि कार्यत्वादव्यवहितं द्विपरार्द्धावसानपर्यन्तं तत्रत्यानां जन्मजरामरणाद्यभावेन नष्टं जीर्णमित्यादिव्यवहाराविषयं तथाचोक्तं द्वितीये "यद्धे परार्ध्यतदुपारमेष्ठ्यं न यत्र शोको न जरा न मृत्युर्नार्तिर्न चोद्वेग" इत्येवंविधमात्मनः समवस्थानं निवासस्थानं सत्यलोकमगमत् ॥ २१ ॥

मनुः स्वायंभुवोऽपि परेण ब्रह्मणैव प्रतिसन्धितः सम्पादितः मनोरथः राज्ये पुत्रमभिषेचयेयं येन यास्यामीत्येवरूपो मनोरथो यस्य तथाभूतः सन् सुरर्षिवरो नारदस्तस्यानुमतेनानुमत्या भावे क्तः आत्मजं पुत्रं प्रियव्रतं निखिलभूमण्डलमर्यादारक्षणाय स्थापयित्वातिविषमा दुस्तरा ये विषयाः शब्दादयस्त एव विषजलाशयाः विषोदकाशयास्तद्रूपं यद्गृहं तस्मिन्नाशा भोगेच्छा तत उपरतोऽभूत् ॥ २२ ॥

इति हवावेत्थं हि स जगतीपतिः प्रियव्रतः प्रथममात्मनः स्वस्येच्छाया अभिनिवेशितः प्रापितः कर्माधिकारः भगवदाराधनरूपकर्माधिकारः यस्य सः अखिलस्य जगतः बन्धनध्वंसनः बन्धननिवर्त्तकः अत एव उत्कृष्टः अनुभावः प्रभावो यस्य तस्य भगवतः कृत्स्नजगदुदयविभवलीलस्य यदङ्घ्रियुग्मं तस्य यदव्यवच्छिन्नं ध्यानं तस्य प्रभावेण परिरन्धितकषायः दग्धरागादिमलः आशयोऽन्तःकरणं यस्यात एवावदातः निर्मलोऽपि महतां ब्रह्मादीनामाज्ञापालनेन मानवर्द्धनः भूमण्डलमनुशिष्टवान् ॥ २३ ॥

अनुशासनप्रकारमेव विवक्षुस्तावद्दारपरिग्रहमपत्यानि चाह । अथेति । अथ चतुर्मुखादेशानन्तरं निवृत्तनिष्ठोऽपि प्रवृत्तोऽभूदिति विस्मयते । हांति । विश्वकर्मणः विश्वकर्मनाम्नः प्रजापतेर्ब्रह्मणो बर्हिष्मतीं नाम दुहितरमुपयेमे उदवोढ उ इति विस्मये हवावेति प्रसिद्धौ तस्यां बर्हिष्मत्यामात्मसमानैः स्वतुल्यैः शीलादिभिर्गुणैरुदारान्महतः औदार्यानिति पाठे आत्मसमाः शीलादयो येषामिति बहुव्रीहिः तत्र शीलं स्वभावः सद्वृत्तिश्च गुणाः शौर्यादयः कर्मव्यापारः रूपं सौन्दर्यं वीर्यं पराभिभवसामर्थ्यं शौर्यं रणमध्ये स्वगृह इव प्रवेशसामर्थ्यमौदार्यं वदान्यता एवं विधान् दशात्मजान् भायया स्वभूत उत्पादयामास तथा-यवीयसीं दशानामात्मजानामनुजामूर्जस्वतीं नाम कन्यां भावयास्वभूवेति पूर्वेणान्वयः ॥ २४ ॥

पुत्रान्निर्दिशति । आग्नीध्रेति । आग्नीध्रादीनामितरेतरयोगद्वन्द्वः सर्वेऽग्नीनां नामानि येषां तथाभूता ये तेषां दशानां पुत्राणां मध्ये कविर्महावीरः सवन इति त्रय ऊर्ध्वरेतसः जितेन्द्रिया आसन् ते कव्यादयः त्रयः बाल्यादारभ्यात्मविद्यायां कृतः परिचयो यैस्ते पारमहंस्ये परमहंसाः शुद्धान्तःकरणाः तेषां सर्वान्धनमाश्रममभजन् केवलं निवृत्तिधर्मपरायणा अभवन्नित्यर्थः ॥ २५ ॥ २६ ॥

तस्मिन्नुहवा पारमहंस्याश्रमे हि वर्तमानाः उपशम इन्द्रियनिग्रह एव शीलं येषां ते अत एव परमर्षयः

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सकलजीवानां निकायः समूहः स आवासः शरीरं यस्य निकायस्याधारस्तस्येति वा मृत्युभयं संसृतिभयं तेन भीतानां शरणभूतस्य रक्षणोपायभूतस्य रक्षितुश्च भगवतो वासुदेवस्य श्रीमतोऽरणारविन्दयोर्यद्वाविच्छिन्नं स्मरणं तेनाविगलितः अविच्छिन्नः अत्युत्कर्षरूपो यः परमभक्तियोगः तस्य प्रभावेण उपचयेन वा परिभावितं निरस्तरागादिकं निर्मलमिति यावत् गदन्तर्हृदयं मनस्तस्मिन्नधिगते साक्षात्कृते सर्वेषां भूतानामात्मभूते अन्तः प्रविश्य शासनेन धारके प्रत्यगात्मनि प्रत्यग् जीवः आत्मा शरीरं यस्य तस्मिन् प्रतीचः आत्मनीति वा प्रत्यगात्मशरीरक इति वा भूतानामात्मभूते इत्यचैतन्यशरीरकत्वमुक्तं प्रत्यगात्मनीति जीवशरीरकत्वमेवंभूते भगवत्येव वर्तमानस्य भगवदपृथक्सिद्धविशेषणतया साक्षात्कृतस्यात्मनः स्वस्य तादात्म्यं तत्स्वभावतां साधर्म्यमित्यर्थः अविशेषेण जगद्व्यापारवर्जं कार्त्स्न्येन समीयुः मुक्ता बभूवुरित्यर्थः अविशिष्टाः सप्तपुत्राः पित्रधीनाः स्थिता इतिभावः ॥ २७ ॥

तथा अन्यस्यामपि भार्यायां त्रयः पुत्राः जातास्तान् तदधिकारं च निर्दिशति । उत्तम इति ॥ २८ ॥

एवमुपशमायनेषु उपशमो गुणान्तराणामप्युपलक्षणमात्मसमानशीलेति पूर्वमुक्तत्वात् सद्गुणाश्रयेषु सत्स्वत्यर्थः अथ जगतीपतिः प्रियव्रतः अर्बुदः कोटिः अन्यं तु दशकोटिमर्बुदमित्याहुः वत्सराणामेकादशार्बुदानि जगतीं बुभुज इत्यन्वयः राज्ञां धर्मपरिपालनविषयभोगप्रभावैर्भाव्यं तत्रानायासेनैव धर्मपरिपालनमाह । अव्याहता अखिलाः पुरुषकाराः पौरुषाणि यस्य तेन सारेण बलेन संभृतौ पूर्णौ यौ दोर्दण्डौ तयोः युगलं तेनापीडित आकृष्टो यो मौर्वीगुणस्तस्य स्तनितं टङ्कारस्तेनैव युद्धं विना विरामिता निरस्ता धर्मविरोधिनो येन भोगातिशयमाह । बर्हिष्मत्यां स्वभार्यायामनुदिनमेधमानैः प्रमोदादिभिः पराभूयमानविवेक इवात एव विषयरूढ्यानवबुध्यमानः स बुभुजे तत्र प्रमोदः पतिं दृष्ट्वा हर्षः ततः प्रसरणमभ्युत्थानादि लीलाः ततो योषिदयं योषित्स्वरूपकृतश्रृङ्गारादिभावप्रकाशनं ततो व्रीडया मुषिताः सङ्कोचिताः हासावलोकाः ततो रुचिरक्ष्वेल्यादयः मृदुनरपरिहासवाक्यादीनि तैः ॥ २९ ॥

प्रभावातिशयमाह । यावदिति । भगवानादित्यः सूर्यः सुरगिरिं मेरुमनुभ्रमन्परिक्रमन्प्रदक्षिणीकुर्वन् वसुधातलं भूमण्डलं यावदवभासयति अर्द्धेनैव प्रतपत्यर्द्धमेव प्रकाशयन्नर्धमाच्छादयति मेरोश्छायातस्तमसाच्छादयति मेरोः पार्श्वान्तरमवभासयन्नपि पार्श्वान्तरं न प्रकाशयतीत्यालोच्य तद्वसुधातलार्द्धावमानमनभिनन्दन्नसमीचीनं मन्वानः रजनीमपि दिवसं करिष्यामीति यत्सूर्येणानवभातं वसुधातलार्द्धं तदप्यवभासयामीति कृतसङ्कल्पः भगवदुपासनेनोपार्चितोऽतिपुरुषप्रभावः अमानुषप्रभावः यस्य समजवेन सूर्यसमानवेगेन तद्वत्प्रकाशबहुलेन च रथेन द्वितीयः पतङ्गः अपरः सूर्य इवातस्तरणिं सूर्यमनुसृत्य यथा तरणिर्गच्छति तथा मेरोः परितः आक्रामति यदा मेरोर्दक्षिणस्यां दिशि सूर्योऽवभासते तदा स्वयमुत्तरस्यां यदा स उत्तरस्यां तदा स्वयं दक्षिणस्यामित्येव सप्तीचक्रासदित्यर्थः अयमप्यन्यः प्रभावविशेषः सूर्योऽन्तरिक्षे चरन्नवभासयति अयं तु भूम्यां चरन्नुपर्यधश्चाचीचकासदिति ॥ ॥३०॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

स्वाज्ञाग्रहणात्प्रियव्रताय तुष्यन्विरिञ्चः सत्यलोकमा[...] भगवानपीति । मनुना यथावदुपकल्पिता अपचितः पू[...] सः अनिमिषमिति क्रियाविशेषणं पक्ष्मनिवृत्य आत्मप[...] स्वस्थानं सत्यलोकं वाङ्मनसयोः वाचो मनसश्च त्वं [...] कर्तुमशक्यमव्यवहितं सतामिति शेषः रागादिदोषरहितत्[...]

स्वायम्भुवमनोरपि संसारत्यागप्रकारमाह । मनुरपीति [...] विरिञ्चेन सुरर्षिवरानुमतेन देवर्षीणां मध्ये वरः श्रेष्ठः [...] तस्यानुमतेन गुप्ती रक्षा अतिविषमविषय एव वि[...] जलाशयो हृदस्तस्मात् ॥ २२ ॥

प्रियव्रतस्य यथा विरिञ्चोपदेशं क्षितिरक्षणप्रकारं [...] इति हेति । इतिशब्दो हेत्वर्थः यस्माद्गुरूणामनुशासनमनु[...] यमत इति बन्धध्वंसनपरोऽनुभावः प्रभावः सामर्थ्यं [...] तथा तस्य ध्यानानुभावेन ध्यानसामर्थ्येन ध्यानानुस[...] वा कषायः पापं रुधिदाहे रन्धितं दग्धमपि स[...] मिति ॥ २३ ॥

वानप्रस्थाश्रमस्य एवायं राज्यमपालयद्विरक्तत्वान्न [...] श्रमस्य इतिशङ्कां परिहर्तुमाह । अथेति । सात्युभयकुल[...] रीत्याशयेनाह । तस्यामिति । उहवा इति निपाताः प्राक्पुत्रादु[...] सन्तापं पश्चात्सन्तोषं तत्र प्रसिद्धि सूचयन्ति भाव[...] वोत्पादयामास ॥ २४ ॥

तेषां नामान्यमाह । आग्नीध्रेति । यज्ञयाहोरनुजो म[...] घृतपृष्ठानुजः सवनः वीतिहोत्रानुजः कविः ॥ २५ ॥

ऊर्ध्वरेतसो ब्रह्मचर्याख्यव्रतधारिणः अर्भकभावा[...] भृति आत्मविद्यायां परविद्यायां कृतपरिचयाः पूर्वं[...] एवशब्देन मानसपरमहंसाश्रमं व्यावर्तयति ॥ २६ ॥

तस्मिन्नाश्रमे वर्तमानाः स्वयोग्यगुणोपसंहारेण [...] स्यादिनि दर्शयितुं सकलजीवेत्यादिगुणविशिष्टत्वं हे[...] गुणानामियत्तया अविरतस्मृत्या विगलितस्य तैलधा[...] परमभक्तियोगस्यानुभावेन परिभाविते वशीकृतेऽन्तर्हृद[...] ज्ञाने आत्मभूते अतिप्रिये प्रत्यगात्मनि स्वबिम्बेऽन्तर्यामि[...] शेषेण पार्थिवदेहत्यागेन तादात्म्यं तद्रूपसाम्यमेवानु[...] चतुर्बाहव इत्यादेः भगवतीति सप्तमीनिर्देशाच्चैत्य[...] तदधीनत्वं तत्स्वामित्वं वा तदेकचित्तत्वं वा तत्कानि[...] वा विशेषेण स्वातन्त्र्यमन्तरेणेति च ॥ २७ ॥

न केवलमस्यैकैव पत्नी किन्तु द्वितीयाप्यस्ति सापि [...] कपुत्रप्रसूरित्याह । अन्यस्यामपीति । तत्कृत्यमुक्तं मन्वन्त[...] इति ॥ २८ ॥

स प्रियव्रतो राजा कियन्तं कालं राज्यमभुङ्क्तेति त[...] धिमाह । एवमिति । उपशमायनेषु संन्यस्तेषु भगवत्प[...] वायनमाश्रयो येषां ते तथा तेष्विति वा परिवत्सर[...] दशार्बुदानि मौर्वीगुणो ज्याख्यरज्जुस्तस्य स्तनितेन वि[...] प्रमोदप्रसरणमानन्दप्रवाहस्तस्य पोषणं प्रवर्धनं तेन च [...] विशिष्टचेष्टालक्षणया च प्रमुषितहास ईर्षातिरस्कृतहा[...] युक्तोऽवलोको यस्तेन रुचिरा क्ष्वेलना नर्मवाग्यं पूर्वं [...] मानविवेकोऽनाविर्भूतविवेकज्ञानत्वादनवबुध्यमान इ[...] त्यत्र इत्यर्थः महामना इत्युक्तेः ॥ २९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वत्रास्य विषमविषयभोगविशेष एवोक्तो न तु माहात्म्यविशेष इत्यतस्तमाह । यावदिति । अयमादित्यो भगवान्सुरगिरिमनुक्रामन्यावदवभासयतीत्युक्तमेव विवृणोति । वसुधातलमिति । प्रतपति प्रकाशयति पुरुषमानमतिक्रम्य वर्तमानः प्रभावो यस्य स तथा तदादित्यप्रवर्तनमात्मराज्यान्धकारकरणं समजवेन सूर्यरथसदृशवेगेन रजनीं रात्रिमपि दिनं प्रकाशवत् व्यवहारयोग्यं करिष्यामीति मत्वा तरणिमन्वादित्यस्य पृष्ठतः सप्तवारं पर्यक्रामत् मेरोः परिसरभूमिमिति शेषः पतङ्गः सूर्यः।३०।

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अवाङ्मनसं क्षयमिति पाठे क्षयं निवासं ब्रह्मलोकमगमदित्यन्वयः । अवाङ्मनस इत्यादिकं त्वात्मसमवस्थानमित्यस्यैव विशेषणम् । तच्च भगवत्स्वरूपस्फूर्त्तिः तत्प्रियव्रतनारदयोः प्रवर्त्तयन् अगमत् स्वं निवासम् ॥ २१ ॥

मनुरपीत्यादिवाक्येन प्रियव्रतस्य राज्यं पूर्व्वमिति गम्यते तथैव श्रीविष्णुपुराणेऽपि दृश्यते तथैवच तत्पुत्राणां तृतीयचतुर्थपञ्चममनुत्वमुत्तानपादवंशजस्य तु चाक्षुषस्य षष्ठमनुत्वं तद्वंशान्तिमस्य प्राचेतसस्य दक्षस्य च षष्ठमन्वन्तरे राज्यं घटते अन्यथा परिवेत्तृत्वादिकमापद्येत । न च तयोर्ज्येष्ठानुक्रमेणैव राज्यं किन्तु वंशेषु कदाचित् कस्य चित् साम्राज्यमिति वेणमृत्यौ प्रचेतसां तपस्यायां चाराजकत्वासम्भवात् किन्तूत्तानपादस्य चिरकालेनैव सुतोत्पत्तिरिति गम्यते यत्तु चतुर्थे । "प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ । तत्पुत्रपौत्रनप्तॄणामनुवृत्तं तदन्तरम्"इति तदपि तद्वंश्यस्य मनूनामपि तद्ग्रहणेन गृहीतत्वात् स्वारोचिषस्यापि तदन्तःपातात् यच्च श्रीपृथुं प्रति ब्रह्मवचनम् । "न वध्यो भवतामिन्द्रो यद्यज्ञो भगवत्तनुः"इति यज्ञस्येन्द्रत्वेन तद्राज्यस्य स्वायम्भुवसमकालत्वं बोधयति । अत्रापि तदादरायैव तदभेदनिर्द्देशो ज्ञेयः तदंशावेशेनैवान्येषामिन्द्रत्वात् शब्दार्थस्तु तत्रैव दर्शितः तत्र प्रायः प्रियव्रतादिराज्यं तृतीयमन्वन्तरावसानमुत्तानपादादिराज्यन्तु षष्ठावसानम् प्रियव्रतवंश्ययोस्तामसरैवतयोस्तु मनुत्वं राजत्वमतीत्य चरमावस्थायां ज्ञेयं चाक्षुषवत् तस्मात् सर्व्वमेव समञ्जसमतः कथन एव विपर्य्ययो नतु कथनीये । यथा दशमे कुरुक्षेत्रयात्रादौ ॥ २२ ॥

रागादिदोषराहित्येन शुद्धोऽपि महीतलमनुशशास । महतां मानवर्द्धनः सन् तत्रापि तदर्थमेवेत्यर्थः ॥ २३ ॥

अथ अतो हेतोः राज्याद्धेतोरेव ॥ २४—२६ ॥

तादात्म्यं तत्साम्यम् ॥ २७ ॥ २८ ॥

अर्ब्बुदं कोटिपर्य्यायं न्यर्बुदमेवतु दशकोटिः । तथैव षष्ठस्कन्धे बलेः स्वर्गविजये तैर्व्याख्यातम् । तथाचामरकोषे क्षीरस्वामिधृतं प्रमाणवचनम् । "एकं दशशतसहस्रायुतं प्रयुताख्यं लक्ष्यमथ नियुतम् । अर्ब्बुदकोटिन्यर्बुदपद्मे खर्व्वं निखर्व्वमिति दशभिः । गुणानाम महाशङ्कुसमुद्रमध्यान्तमथ परार्द्धञ्च । स्वहतं परार्द्धममितं तद् स्वहतं भूयतोऽसङ्ख्यमिति । प्रयुताख्यलक्षमिति तयोरेकपर्य्यायत्वमित्यर्थः एवमर्ब्बुदकोट्योरपि अर्ब्बुदाख्यकोटिरिति मध्यपदलोपी समासः । तथा च माध्यन्दिनशाखायाम् इमा मेऽग्नयः इष्टका धेनवः सन्त्वेकादश च शतञ्च सहस्रञ्च सहस्रायुतं चायुतञ्चार्ब्बुदञ्च न्यर्ब्बुदञ्च समुद्रमध्यं चान्तञ्च परार्द्धञ्चेत्यादि ॥ २९ ॥

यावदिति प्रजाभ्यः सुखदानेच्छयैव न तु स्पर्द्धयेति ज्ञेयम् । गद्यान्ते एवं कुर्व्वाणां प्रियव्रतमागत्य चतुराननस्तवाधिकारो नास्तीति निवारयामासेत्यधिकं क्वचित् ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यथावदिति तत्कालदेशोचितसपर्य्यया इत्यर्थः । अत्र प्रियव्रतस्य योगभ्रंशात् नारदस्य च शिष्यगतमनोरथध्वंसात् कुटिलमीक्षणं सम्भवति तत्तु नास्तीत्याह । अविषमं यथा स्यात्तथा तयोरभिसमीक्षमाणयोः सतोः आत्मनः परमात्मनः सम्यगवस्थानं स्वरूपं स्वहृदि प्रवर्त्तयन् स्मरन् कीदृशं वाङ्मनसयोः प्राकृतयोरविषयं क्षयं सर्व्वनिवासस्थानत्वादाश्रयतत्त्वमित्यर्थः । पाठान्तरे अवाक् न विद्यन्ते वाचस्त्रैगुण्यविषया विधिनिषेधात्मिकाः श्रुतयो यत्र तथाभूतं यन्मनस्तस्य क्षयं निस्त्रैगुण्यमनोविषयमित्यर्थः अव्यवहृतं व्यवहारशून्यं यद्वा अव्यवहृतं प्रियव्रतं व्यवहारे प्रवर्त्तयन् क्षयं सत्यलोकमगमत् कीदृशान् आत्मनः स्वस्य सम्यगवस्थानं यत्र तत् प्रियव्रतं कीदृशमवाङ्मनसम् आत्मारामम्महाभागवतत्वात् प्राकृतवाङ्मनसशून्यमित्यर्थः ॥ २१ ॥

परेण ब्रह्मणैव प्रतिसन्धितः संपादितो मनोरथो यस्य सः स्थितिगुप्तये मार्य्यादापालनाय विषमविषय एव विषजलाशयः विषसमुद्रस्तत्र या आशा प्रवृत्तिवासना तस्याः सकाशात् ॥ २२ ॥

गृहे कथमरमतेत्यस्योत्तरमाह । इति इवाव इत्थमेवेत्यर्थः । बन्धध्वंसन एव परानुभावः प्रकटप्रभावो यस्य तस्य परिरन्धितकषायो दग्धरागादिमलः आशयो यस्य सः अत एवावदातः परमशुद्धोऽपि महतां ब्रह्मादीनामाज्ञापालनेन मानमादरं वर्द्धयतीति सः ॥ २३ ॥

शीलादिभिरुदारान् भावयाम्बभूव उत्पादयामास ॥ २४ ॥ ॥ २५ ॥ २६ ॥

तस्मिन्नुहवै पारमहंस्याश्रम एव अविगलितो निश्चलो यः परमभक्तियोगः तस्यानुभावेन प्रभावेण परिशोधितं यदन्तर्हृदयं तत्राधिगतः प्रतीतो यो भगवान् तस्मिन् आत्मनस्त्वंपदार्थस्य तादात्म्यं लयमविशेषेण विशेषो देहाद्युपाधिकृतपृथग्भावस्तदपोहेन ॥ २७ ॥ २८ ॥

उपशमाश्रयेषु सत्सु दशकोटिभिरेकमर्ब्बुदमिति श्रीस्वामिचरणाः अर्ब्बुदं कोटिपर्य्यायमिति सन्दर्भः एकादशार्ब्बुदानि परिवत्सरान् जगतीं बुभुजे इत्यन्वयः राज्ञां खलु परियशःसु प्रतापविषयभोगप्रभावैश्वावद्यकेषु मध्ये प्रथमं तस्य प्रतापातिशयं वर्णयति । अव्याहताः अखिलाः पुरुषकाराः पौरुषाणि यस्मात्तेन सारेण बलेन संभृतं पूर्णं यद्दोर्दण्डयुगलं तेन आपीडितः आकृष्टो मौर्व्वीगुणस्तस्य स्तनितं टङ्कारः तेनैव युद्धं विनैव विरमिता निरस्ता धर्मप्रतिपक्षाः शत्रवो येन सः भोगातिशयं वर्णयति । बर्हिष्मत्याः स्वभार्य्याया अनुदिनमेधमानैः प्रमोदादिभिःपराभूयमानविवेक इव तत्र प्रमोद आयान्तं पतिं दृष्ट्वा हर्षः ततः प्रसरणमभ्युत्थानस्वाङ्गवरणविवर्त्तनस्थानान्तरगमनादि

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततो यौपत्यं योषित्स्वाभाविकधर्म्मोऽपाङ्गचालननासामुकोत्तमन-कर्णकण्डूयनादिस्तयं दूरम् । ततः पत्युरौत्सुक्य मालक्ष्य व्रीडया प्रमुदिताः सङ्कोचिता हासावलोकास्ततोऽचराः क्ष्वेल्यादयः परिहासवाक्यादीनि तैः अत एव विषयासक्त्या आत्मानमनव-बुध्यमान इव अत्र इवशब्देन तस्य विवेकज्ञानयोः संपूर्णयोरप्युपग-योरपि वैषयिकलोकैर्दुर्गमत्वं व्यञ्जितं तत्र हेतुर्महात्मनः विषया-सक्तितदभावयोर्योगपद्येन सद्भावाद्दुस्तर्कमनस्तत्त्व इत्यर्थः॥२९॥

प्रभावातिशयं वर्णयति । यावद्वसुधातलं लोकालोकपर्य्यन्त मादित्योऽवभासयति मेरुं प्रदक्षिणं कुर्व्वन् तत्र अर्द्धेन अर्द्धा-वर्त्तेन प्रतपति प्रकाशवतीति द्विधा भवति अर्द्धेन अपरार्द्धा-वर्त्तेन आच्छादयतीति तमसा रात्रिर्भवति तदाहि प्रियव्रत-राज्याधिकारसमय इत्यर्थः । भगवदुपासनेन उपचितः अति-पुरुषः पूरुषानतिक्रान्तः प्रभावो यस्य सः तदनभिनन्दन् अर्द्धे-नाच्छादनमप्रशंसन् तरणिमनुलक्ष्यीकृत्य तरणेरस्ताचलावरो-हसमये स्वयमुदयाचलमारोहन्नित्यर्थः । पतङ्गः सूर्यः पर्य्यक्रा-मत् परिक्रान्तवान् प्रजाश्यः सुखदानेच्छयैव न तु सूर्य्यस्पर्द्धया तेन ज्येष्ठादिमासेषु प्रियव्रताख्यसूर्यस्य चन्द्रादप्यतिशीत-लत्वं मार्गशीर्षादिमासेषु तु सूर्यादपि प्रातःसायङ्कालयोरौ-ष्ण्यमधिकमिति ज्ञेयम् । एवञ्च प्रियव्रतस्य सौभर्य्यादेरिव योग-बलेनैव राजत्वसूर्य्यत्वे कायद्वैतेनैव ज्ञेये ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अभिसमीक्षमाणयोः सतोर्मनुना उपकल्पिता अपचितिः पूजा यस्य स अविषमं सर्वैकरसमवाङ्मनसं वाङ्म-नसयोः कात्स्न्येनाविषयमव्यवहृतं लौकिकव्यवहारातीतम् आत्मसमवस्थानमात्मनि उपासके सम्यगवस्थानं यस्य तम-न्तर्यामिणं प्रवर्त्तयन् चिन्तयन् क्षयं स्वस्थानमगमत् ॥ २१ ॥

अतिविषमः मुमुक्षवननुरूपो यो विषयजलाशयः गृहं तस्य आशा दिक् तस्याः अपि सकाशात् सुरर्षिवरस्य योगाधीशस्य अनुमतेन उपरराम ॥ २२ ॥

अधिनिवेशितः प्रवर्तितः कर्माधिकारो यस्य सः परिरन्धि-तकषायः दग्धरागादिमलः आशयोऽन्तः करणं यस्य सः महतां अक्षमन्वादीनां मानवर्द्धनः तदाज्ञापालनात् ॥ २३ ॥ २४ ॥

अग्नीनां नामानि येषां ते तथा ॥ २५ ॥ २६ ॥

श्रीमच्चरणारविन्दयोरविरतस्मरणेन निरन्तरध्यानेन अवि-गलितः अस्खलितो यः परो ध्रुवानुस्मृतिरूपो भक्तियोगस्त-स्यानुभावेन परिभाविते योग्यतां नीते अन्तर्हृदयेऽधिगते आविर्भूते भगवति सर्वेषां भूतानामचेतनानामात्मभूते आश्रय-रूपे प्रत्यगात्मनि प्रतीचां चेतनानां चात्मनि आश्रये चिदचि-च्छक्तिमतीत्यर्थः आत्मनस्तादात्म्यम् अंशत्वेन भिन्नस्वरूप-स्यापि जीवात्मनः अंशिभिन्नावस्थानाभावादभिन्नत्वं सर्वे अवि-शेषेण समीयुः ॥ २७ ॥ २८ ॥

उपशमायनेषु सत्सु एकदशशतसहस्रायुतं लक्षमयुतकोटीः क्रमशः अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् । जलधि-श्चान्त्यं मध्यपरार्द्धमिति दशगुणोत्तरासंज्ञाः संख्याया व्यवहारार्थं यथाकृताः पूर्वैरिति संख्यावचनात् दशकोटिरर्बुदं भवति एवं विधानि परिवत्सराणामेकादशार्बुदानि जगतीपतिः बर्हिष्मत्याः

अनुदिनमेधमानमनुवेदन् प्रसरणमभ्युत्थानादिरूपाचरणे दर्शयन् योषित्स्वभावानुरूपगुणप्रकाशनेन व्रीडाप्रमुदितैः सङ्कोचितैः हासावलोकैः रुचिरैः क्ष्वेल्यादिभिश्च पराभूयमानविवेक इव अनवबुध्यमान इव च जगतीं बुभुजे इत्यन्वयः । अव्याहताः अखण्डिताः अखिलपुरुषकाराः समर्थसामर्थ्यानि यस्मात्तेन सारेण बलेन सम्भृतयोः पराक्रमयोर्दोर्दण्डयोरापीडितस्य मौर्वीगुणस्य स्तनितेन टङ्कारेणैव विनिर्जिताः त्यक्ताः धर्मव्यापाराः धर्मप्रतिपक्षा अधार्मिका येन सः ॥ [illegible]

आदित्यः सुरगिरिमनुपरिक्रमन् यावत् वसुधातलमवभासयति प्रकाशयति तत्र अर्द्धेन उपलक्षितं यत्र अवशिष्टेनार्द्धेनोपलक्षितं तु अवच्छादयति दूरीभूतत्वेन तमसा पूरयतीत्यर्थः तदाहि तद्वसुधातलस्य अर्द्धं तमोव्याप्तमनभिनन्दन् रजनीमपि दिनं करिष्यामीति द्वितीयः पतङ्गः आदित्य इव सप्तकृत्वः सप्तवारान् तरणिं पर्य्यक्रामत् यतो भगवदुपासनेनोपचितः सुसमृद्धः अतः पुरुषानतिक्रान्तः अतिपुरुषः । तथाभूतः प्रभावो यस्य सः ॥ ३० ॥ ३१

भाषाटीका ।

प्रियव्रतजी का इस प्रकार सद्व्यवहार को देखकर मनुजी को बडा सन्तोष हुआ तब तिनने आनन्द से ब्रह्मा जीका पूजनकिया ब्रह्माजी भी मनु के पूजन को स्वीकार करके प्रियव्रत तथा नारदजी के सामने ही मन वाणी के अगोचर जो अपना धाम सत्यलोक तहां चले गये ॥ २१ ॥

मनुजी भी अपने मनोरथ के सिद्ध होजाने से नारद जीकी अनुमति से सम्पूर्ण पृथिवी मण्डल की रक्षा के पालन के निमित्त अपने पुत्र प्रियव्रत के हाथ मे राज्य देकर दुस्तर विषय वासना रूप जलाशय से निवृत्त हो गये ॥ २२ ॥

यद्यपि भगवान् आदिपुरुष के चिन्तन से सब कर्मों का बन्धन नाश होजाता है तब प्रियव्रत भी उन भगवान् के चरणयुगल के आश्रय करने से रागादिक मलों के नष्ट होजाने से शुद्ध चित्तवाले होगये तथापि ब्रह्माजी की आज्ञा का पालन करने के निमित्त राजा होकर पृथिवी का पालन करते थे फिर विश्वकर्मा नामक प्रजापति की पुत्री बर्हिष्मती केसाथ उनने विवाह किया ॥ २३ ॥

उसी भार्या मे उनने अपने तुल्य शीलगुण कर्मवाले वीरतावाले उदार गुणवाले दश पुत्रों को एक ऊर्जस्वती नामक कन्या को उत्पन्न किया ॥ २४ ॥

हे राजन् ! प्रियव्रत के दशपुत्रों के नाम सुनो आग्नीध्र इध्मजिह्व यज्ञबाहू महावीर हिरण्यरेता घृतपृष्ठ सवन मेधातिथि वीतिहोत्र कवि अग्नि के नाम के समान हैं ॥ २५ ॥ तिन के मध्य मे कवि महावीर सवन तीनों जन ऊर्ध्वरेता थे वे सब बाल्य अवस्था से आत्मविद्या में अभ्यास करके परमहंस आश्रम को धारण करके रहे ॥ २६ ॥

उस आश्रम मे वे तीनो शान्त परम ऋषि होकर भगवान् सब जीवों के निवासभूत हैं संसार से डरने वाले के रक्षक हैं उन भगवान् वासुदेव के चरणारविन्दों के निरन्तर स्मरण करने से निश्चल परमभक्तियोग से

ये वा उह तद्रथचरणनेमिकृतपरिखातास्ते सप्तसिन्धव आसन् यत एव कृताः सप्त भुवो द्वीपाः ३१

जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्करसंज्ञास्तेषां परिमाणं पूर्वस्मात्पूर्वस्माद्दुत्तर उत्तरो यथासङ्ख्यं द्विगुणमानेन वहिः समन्तत उपक्लृप्ताः ॥ ३२ ॥

क्षारोदेक्षुरसोदसुरोदघृतोदक्षीरोददधिमण्डोदशुद्धोदाः सप्त जलधयः सप्त द्वीपपरिखा इवाभ्यन्तरद्वीपसमाना एकैकश्येन यथानुपूर्वं सप्तस्वपि बहिर्द्वीपेषु पृथक्परित उपकल्पितास्तेषु जम्ब्वादिषु बर्हिष्मतीपतिरनुव्रतानात्मजानाग्नीध्रेध्मजिह्वयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्रसंज्ञान्यथासंख्येनैकैकस्मिन्नेकमेवाधिपतिं विदधे ॥ ३३ ॥

दुहितरं चोर्जस्वतीं नामोशनसे प्रायच्छद्यस्यामासीद्देवयानी नाम काव्यसुता ॥ ३४ ॥

नैवंविधः पुरुषकार उरुक्रमस्य पुंसां तदङ्घ्रिरजसा जित षड्गुणानाम्।

चित्रं विदूरविगतः सकृदाददीत यन्नामधेयमधुना स जहाति बन्धम् ॥ ३५ ॥

---

भाषाटीका ।

होकर अपने अन्तःकरण को शुद्ध करते भये तिस से तिनके अन्तःकरणों मे सर्वभूतात्मा भगवान् का प्रकाशहोने से प्रत्यगात्मा में देहादि उपाधियों के नाश होने से दिव्य भगवत्साम्य को प्राप्त भये ॥ २७ ॥

प्रियव्रतजी की दूसरी एकभार्या मे उत्तम तामस रैवत नाम के तीन पुत्र भये वे तीनो मन्वतर के अधिपति भये ॥ २८ ॥

वे तीनों पुत्र शांति के आश्रय करने वाले भये तब बडे उत्साह वाले प्रियव्रत जीने पृथिवी के पति ग्यारा अर्बुद वर्ष पर्यन्त पृथिवी का भोग किया उनके भुजा दोनो अतिशय बलसे परिपूर्ण हैं तिस से धनुष के गुणको आकर्षण करके ध्वनि करते थे तब युद्धके विना भी उस शब्दको सुन कर अधर्मी लोग दूर होजाते थे उनका विषय भोग भी बहुत था अपनी प्रिया बर्हिष्मती के साथ प्रतिदिन बढने वाले आनन्द क्रीडा को करते थे हास्यपरिहासादिकों से विज्ञान विवेक सब छिपगयेथे तिस से आत्म तत्त्वको भूलगये ॥ २९ ॥

सुमेरु की परिक्रमा करते हुये भगवान् सूर्य्यनारायण जहां चलते थे तहां अंधेरा से उजाला होता था आधे मे अंधेरा रहता था तिससे असन्तुष्ट होकर प्रियव्रतजीने प्रतिज्ञा किया कि हम अपने प्रभाव से रातको भी दिन कर देंगे इस विचार से सूर्य्य सरीके तेजवाले रथको लेकर दूसरे सूर्य-सरीके सात वखत सूर्य के पीछे घूमे जैसा दूसरा सूर्य हो तिस प्रकार से ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ये वै उह अतिप्रसिद्धास्तस्य रथचक्राग्रकृताः परिखाता गर्ताः । यतो यैरेव कृताः ॥ ३१ ॥

तानाह । जम्ब्विति । तेषां परिमाणं श्रूयतामिति शेषः पूर्वस्य यद्विस्तारमानमुत्तरस्ततो द्विगुणेन विस्तारमानेनेत्येवं सिन्धुभ्यो बहिः समन्तत उपक्लृप्ता रचिताः ॥ ३२ ॥

यथा सिन्धुभ्यो बहिरेकैकशो द्वीपा एवं द्वीपानामपि बहिः सिन्धव इत्याह । क्षारोदेति । दधिमण्डो मथितं दधि एते सप्त जलधयः सप्तद्वीपानां परिखा इवाभ्यन्तरे तैः समं-स्थिता ये द्वीपास्तैः समाना विस्तारतः बहिर्नान्तः पृथगसङ्कीर्णतया ॥ ३३ ॥ ३४ ॥

अहो आश्चर्यं राज्ञः सामर्थ्यमिति परीक्षिदभिप्रायज्ञो भगवान्बादरायणिराह । नैवमिति । जिताः षड्गुणाः इन्द्रियाणि षडूर्मयो वा यैस्तेषामेवंविधः पुरुषकार इति न चित्रं नासम्भावितम् यतो विदूरविगतोऽन्त्यजोऽपि यस्योरुक्रमस्य नाम सकृदुच्चारयेद्यः सोऽधुना तत्क्षणमेव बन्धं संसारं त्यजतीति पाठेऽप्ययमेवार्थः पाठान्तरे तत्वं चाण्डालत्वम् जहाति शुद्धो भवतीत्यर्थः ॥ ३५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रभावान्तरमप्याह । य इति । ये हि सप्त तस्य प्रियव्रतस्य यद्रथचक्रं तस्य नेमिना कृताः परितो गर्ताः त एव सप्त सिन्धवः सप्तसमुद्रा आसन् यतः यैरेव सिन्धुभिः कृताः सप्तसंख्यकाः भुवो द्वीपाः केऽमी द्वीपा के वा सप्त सिन्धव इति विविस्तायां तावत् द्वीपान्निर्दिशति । जम्ब्विति । तेषां द्वीपानां परिमाणं श्रूयतामिति कथयामीति वा शेषः पूर्वस्मात् लक्षयोजनादिपरिमाणविशिष्टाज्जम्ब्वादिपूर्वपूर्वात्तद्वीपादुत्तरोत्तरः प्लक्षादिद्वीपः यथासंख्येन द्विगुणेन द्विलक्षेण परिमाणेनेत्येवं बहिः पूर्वपूर्वद्वीपाद्बहिः परित उपक्लृप्ताः कल्पिताः ॥ ३१ ॥ ३२ ॥

अथ सिन्धून्निर्दिशंस्तेषां परिमाणं चाह । क्षारोदेति । दधिमण्डो मथितं दधि एते सप्त सिन्धवः सप्तद्वीपानां परिखा इव दृश्यन्ते अभ्यन्तरद्वीपसमानाश्चाभ्यन्तरद्वीपास्तत्समुद्रवेष्टिता द्वीपास्तेषां तत्परिखावद्वर्तमानाः समानपरिमाणाः सप्तद्वीपेषु यथापूर्वमेकैकशः बहिर्नान्तःपृथगसङ्कीर्णमुपकल्पिता इत्यर्थः अयमर्थः प्रथमं जम्बूद्वीपो लक्षयोजनविस्तारस्तत्परिखाभूतः क्षारोदोऽपि लक्षयोजनविस्तारः ( १ ) ततः प्लक्षद्वीपो हि लक्षयोजनविस्तारः तत्परिखाभूतेक्षुरसोदश्च द्विलक्षयोजनविस्तारः ततः शाल्मलिश्चतुर्लक्षयोजनः सुरोदोऽपि चतुर्लक्ष इत्यादिना नन्वल्पपरिमाणो ह्यधिकपरिमाणेन वेष्टितेन समपरिमाणेन कथमेतदुच्यते विस्तारसाम्येऽपि दैर्घ्याधिक्यादुपपत्तिः तेषु जम्ब्वादिषु द्वीपेषु बर्हिष्मतीपतिः प्रियव्रतः अनुवर्त्तिन आग्नीध्रादिसंज्ञकान् सप्तात्मजानेकस्मिन्नेकस्मिन् द्वीपे जम्ब्वादौ यथासंख्येन ज्येष्ठादिक्रमेण एकमेकमेवाधिपतिं विदधे चकार ऊर्जस्वतीं नाम

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुहितरमुशनसे शुक्राय प्रादात् यस्यामूर्जस्वत्यां काव्यस्योशनसः सुता देवयानी नाम कन्यका आसीदुत्पन्नाभूत् ॥ ३३ ॥ ३४ ॥

एवमतिमानुषप्रियव्रतप्रभावं श्रुतवतो राज्ञस्तत्प्रभावविषयासम्भावनामाशङ्कय न केवलमुक्त एव तस्य प्रभावः किन्त्वन्येऽपि सन्तीति यदनन्तविविधविचित्रशक्तिं भगवन्तं सर्वात्मनोपासीनानां विचित्रभक्तानां प्रभावो नासम्भावनीय इत्याह । नैवमिति । उरुक्रमस्य पुंसां तदङ्घ्रिरजसा जितषड्गुणानां पुरुषकारः पुरुषव्यापार एवंविध उक्तविधः चित्रमसम्भावनीय इति न किन्तूक्तविधा अन्येऽपि प्रभावाः सम्भाव्यन्ते एवंति भावः तत्र हेतुः । उरुक्रमस्य त्रिलोकीं पदत्रयेणाक्रान्तवतो विचित्रशक्तेर्भगवतः पुंसां भक्तानां तस्योरुक्रमस्याङ्घ्रिरजसा जिताः षड्गुणाः अशनायापिपासाशोकमोहजमरामृत्यवो यैस्तेषामिति त्रिलोक्याक्रमणादिरूपानितरसाधारणप्रभावशीलं भगवच्चरणारविन्दमुपासीनानामनितरसाधारणप्रभावसम्भावना न कार्येति द्योतनायोरुक्रमस्य तदङ्घ्रिरजसेत्युक्तं किं वक्तव्यं तच्चरणप्रभावोऽनितरसाधारण इति यतस्तन्नामप्रभावो न वाङ्मनसगोचर इत्याह । विदूरविगतः सत्पथादपेतः अन्ये तु विदूरविगतः दूरतः परित्याज्योऽन्त्यज इति व्याचक्षते यस्य भगवतो नामधेयं सकृदप्याददीताभिदध्यात् स विदूरविगतः अधुना तत्क्षणमेव बन्धं संसारं विजहाति मुक्तो भवतीत्यर्थः एवं सामान्येन नामस्मरणस्य मुक्तिसाधनत्वप्रतिपादकमेवंविधं वचनजातमन्तिमस्मरणस्य मुक्तिसाधनत्वपरं द्रष्टव्यं "जन्मलाभः परं पुंसामन्ते नारायणस्मृतिः नामानि येऽसुविगमे विवशा गृणन्ति तेनेकजन्मशमलं सहसैव हित्वा संयान्ति" इतिवचनान्तरानुरोधात् अन्यथा "तमेवं विद्वानमृता इह भवति नान्यः पन्था अयनाय विद्यत" इति वेदनातिरिक्तोपायान्तरनिषेधश्रुतिविरोधापत्तेः अन्तिमस्मरणं तु वेदनरूपतामापन्नं तत्साधनं भवतीति न विरोधः ननु वेदनं हि नाम ज्ञानकर्मयोगानुगृहीता हरहरभ्यासाधेयातिशयमाप्रयाणादनुवर्तमानमसकृदावृत्तिकं विजातीयप्रत्ययान्तराव्यवहितं प्रत्यक्षतापन्नं प्रीतिरूपात्मकं ज्ञानं तत्कथमन्तिमनामस्मरणमात्रमुक्तविधवेदनात्मतामापन्नं भवतीति उच्यते नोक्ताकारा अपि वेदनशब्दवाच्याः किन्तु परमात्मविषयं स्मरणात्मकं ज्ञानमेवान्तिमप्रत्ययरूपं तत्र प्रबलप्रतिबन्धानभ्यासविच्छेदव्यासङ्गान्तरद्वेषोऽपेक्षादिभिरन्तकाले कदाचिन्नाभूदित्यसम्भवपरिहारोपायतया ज्ञानकर्मयोगानुग्रहादय आकारा उपासनप्रकरणेषु कीर्तिताः तत्र भगवत्प्रसादवशाज्जायमानस्वविषयस्मरणात्मकज्ञानस्य नोक्ताकारा अपेक्षिता अत एव हि रागद्वेषभयाद्यात्मकमपि भगवद्विषयमन्तिमं ज्ञानं मुक्तिसाधनमिति वक्ष्यति गोप्यः कामाद्भयात्कंस इति ॥ ३५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ दृश्यमानं तल्लक्षणं किन्तदिति तत्राह । यो वा इहेति । अत्र वा इत्यादिनिपाताः अस्य ग्रन्थस्य वेदतुल्यत्वद्योतनाय अत एव संहितायामिति प्रत्यध्यायमुक्तिरिति इह भूतले तस्य प्रियव्रतस्य रथचरणस्य रथचक्रस्य नेमयः प्रान्तधारास्ताभिः कृताः परिखा दीर्घिकास्ताः सप्तपरिखाः सप्तसिन्धव आसन्नित्यन्वयः वा इत्यनेन समुद्राणां पूर्वसद्भावप्रसिद्धिं ध्वनयति अयं तु तेषां स्थौल्यं कृतवानिति तदुक्तम् ।

पूर्वसृष्टान् रथावृत्त्या स्थूलांश्चक्रे प्रियव्रतः ।
समुद्रांस्तेन तत्कर्तेत्याहुरेनं प्रियव्रतम् ।

इति यतो येभ्यः समुद्रेभ्यः सीमाभूतेभ्य एव मुख्या द्वीपाः कृताः यद्वा एवशब्दः प्रधानभूताः सप्तद्वीपाः अन्येऽपि बहवः सन्तीति विशेषद्योतनार्थः ते सिन्धवः सप्त ...

तेषां नामान्याह । जम्ब्वित्यादिना । तेषां द्वीपानां ... श्रूयन्ते शेषः किमित्यत उक्तं पूर्वस्मादिति पूर्वस्मात् ... दुत्तरोत्तर इत्यान्तराद्वान्तरात् बाह्याद्बाह्य इत्यन्तर्बहिर्भाव्य मानाः द्वीपा यथासंख्यं द्विगुणेन बहिः समन्तत ... प्ताः ॥ ३२ ॥

सिन्धुनामान्याह । लवणेति । अभ्यन्तरद्वीपसमाना इति जम्बू समानो लवणोदधिः प्लक्षद्वीपसमान इक्षुरसोदधिरित्येवं ... तत्राराजकत्वे तत्रत्यानां जनानां मिथो विवादेन विनाशः स्यात् ... कृत्वाग्नीध्रादि सप्त पुत्रांस्तत्पतींश्चक्र इत्याह । नेतिति ॥ ...

परिवर्हदाने सुतानां मिथो विवादः स्यादिति कृत्वा ... दानमपि स्वयमेव चक्र इत्याह । दुहितरमिति । "उशना ... काव्य" इति हलायुधः तत्पुत्र्यपि राजकुलवृद्धिकरीति भावेन ... तामाह । यस्यामिति ॥ ३४ ॥

एषां विक्रमस्योरुक्रमविक्रमसम्बन्धित्वान्मुमुक्षुणा ... दिनावश्यमभ्यसनीय इति भावेनाभिप्रैति । नैवंविध इति ... पुंसां भक्तानामेवंविधः पुरुषकारो माहात्म्यविशेषः ... भवतीति कुत इति तत्राह । तदङ्घ्रिरजसेति । निर्गता ... षड्गुणाः कामादयो आरामादयो वा अशनादयो वा मनसा ... शब्दादयो वा यैरेते जितास्ते तथोक्ताः इतोऽपि चित्रं ... विदूरेति । विप्रविवक्षया विदूरः शूद्रस्तस्मादपि विगतः ... यस्य हरेर्नारायणादि नामधेयं सकृदाददीत सोऽधुना ... संसारलक्षणं बन्धं जहाति त्यजतीत्यन्वयः । तस्योरुक्रम ... यद्वा विदूरविगतः दूराद्दूरङ्गतो दोषनिमित्ताद्बहिष्कृतो ... दोषलक्षणमिति ॥ ३५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ये वै इति । रथोऽयमेकचक्रस्तदिच्छा परिमाणश्च ... अतो बहिर्बहिर्मण्डलस्याधिक्यात्तादृशतदिच्छया ... यानुत्तरोत्तराधिक्यम् ॥ ३२ ॥

बहिर्बहिर्गमनं चान्तचान्तरावकाशनाशाशङ्कया ज्ञेयम् ॥ ३४—३८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ये वै उह अति प्रसिद्धास्तस्य रथचक्राग्रकृताः ... गर्त्ता अत्र समुद्राणां सप्तसङ्ख्यत्वात्तथा अपि ... स्वयोगबलकल्पिता एकचक्राः सूर्यरथादप्युच्चतराः ... लावृत्तिरीत्या भ्राम्यमाणा ज्ञेयाः तत्र च बहिर्बहिर्मण्डल ... धिकप्रमाणत्वात्तथा अपि क्रमेणाधिकप्रमाणा ... इति सन्दर्भः मदीयो दूरस्थोऽपि रथ आर्य्यावर्तगतमदीय ... धानीस्थप्रजानां दृष्टिगोचरो भवत्वितीच्छया पूर्वपूर्वतो ... गुणोच्चताविशालताक उत्तरोत्तरो रथः कृत इत्यन्ये प्राहुः ।

स एव मपरिमितवलपराक्रम एकदा तु देवर्षिचरणानुशयनानुपतितगुणविसर्गसंसर्गेणानिर्वृतमिवात्मानं मन्यमान आत्मनिर्वेद इदमाह ॥ ३६ ॥

अहो असाध्वनुष्ठितं यदभिनिवेशितोऽहमिन्द्रियैरविद्यारचितविषमविषयान्धकूपे तदलमलममुष्या वनिताया विनोदमृगं मां धिग्धिगिति गर्हयाञ्चकार ॥ ३७ ॥

परदेवताप्रसादाधिगतात्मप्रत्यवमर्शेनानुप्रवृत्तेभ्यः पुत्रेभ्य इमां यथादायं विभज्य भुक्तभोगां च महिषीं मृतकमिव सह महाविभूतिमपहाय स्वयं निहितनिर्वेदो हृदि गृहीतहरिविहारानुभावो भगवतो नारदस्य पदवीं पुनरेवानुससार ॥ ३८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एव रथचक्राग्राणामोधकाधिकप्रमाणत्वात्तत्तत्परिखाताः समुद्रा अप्यधिकप्रमाणा दृश्यन्ते तेषु चोत्तरोत्तराधिकप्रमाणेषु सप्तसु रथेषु मध्ये पञ्चविंशत्या दिनैः सार्द्धपञ्चचत्वारिंशद्घटिकाधिकैकरथस्यारोहणमेवं सूर्य्यस्येव दक्षिणायनस्योपक्रममारभ्य प्रियव्रतस्योत्तरदेशतो दक्षिणदेशगमनं पौषपर्य्यन्तं पुनरुत्तरायणस्योपक्रममारभ्य परिसमाप्तिपर्य्यन्तं तावत्सङ्ख्यकदिनैर्व्युत्क्रमेण पुनरपि तत्तद्रथारोहणम् । एवं दक्षिणदेशत उत्तरदेशगमनमाषाढपर्य्यन्तं किन्तु स्वगत्या मेरुं वामावर्त्तेनैव परिक्राम्यतोऽपि सूर्य्यस्य ज्योतिश्चक्राधीनैरेव प्रदक्षिणीकृत्य क्रमेण शीघ्रगमनैर्दक्षिणायने दिनानि मासि मासि ह्रसन्ति उत्तरायणे तु क्रमेण मन्दगमनैर्दिनानि वर्द्धन्ते प्रियव्रतस्य तु सूर्य्यकृत रात्रिलोपार्थं स्वेच्छयैव मेरुं प्रदक्षिणीकृत्य परिक्रामतः स्वेच्छयैव मन्दीकृतैर्गमनैरुत्तरायणे दिनानि वर्द्धन्ते दक्षिणायने तु स्वेच्छाधीनया शीघ्र गत्या दिनानि ह्रसन्तीति ज्ञेयं रथानां योगप्रभावत्वाद्यथा समयं प्राकट्याप्राकट्ये च ज्ञेये तेषां सप्तसङ्ख्यत्वेनैव सप्तकृत्व इति पूर्व्वमुक्तं ज्ञेयं व्याख्येयं सप्तदिनानन्तरं प्रिय्रतस्य स्वयं निवृत्त्यनौचित्यादन्येन केनाप्यनिवर्त्तनश्रवणाच्च नासमञ्जसा यतो येभ्यः सिन्धुभ्य एव हेतुभ्यः ॥ ३१ ॥

परिमाणं शृण्विति शेषः । द्विगुणविस्तारमानेन एकैकस्मात् सिन्धोर्बहिः समन्ततः चतसृष्वेव दिक्षु ॥ ३२ ॥

यथैवैकैकशः सिन्धोर्बहिरेकैकोद्वीपस्तथैकैकस्माद्द्वीपाद्बहिरेकैकः सिन्धुरित्याह । क्षारोदेति । दधिमण्डोमथितं दधि अभ्यन्तरे वर्त्तमाना ये द्वीपास्तैः समाना विस्तारेन एव एकैकशयेनेति एकस्मादेकस्माद्बहिरेकैकः सिन्धुरित्येवं सप्तस्वपि द्वीपेषु यथानुपूर्व्यमानुपूर्व्येण पृथगसङ्कीर्णतया बाह्यबहिरेव नान्तः ॥ ३३—३४ ॥

एवं विधः पुरुषकारः पौरुषः प्रभावो न चित्रं तदङ्घ्रिरजसेति । रजसापि यैर्दुर्जयानि षडिन्द्रियाणि जीयन्ते इति विरोधः यतो विदूरविगतोऽन्त्यजोऽपि अधुना नामोच्चारणक्षण एव बन्धं तन्वं तत्त्वमिति अय एव स्वामिसम्मताः पाठास्तत्र बन्धं कर्म्मबन्धं तन्वं तनुं तत्क्षण एव तनुत्यागादर्शनाद् तन्वारम्भकं कर्म्मेति प्रारब्धकर्म्मक्षय उक्तः तत्त्वं महदादिपृथिव्यन्तं स्थूलसूक्ष्मदेहावित्यर्थः तदापि तद्देहस्थितिर्नाम्न एवाचिन्त्यप्रभावत्वादिति ज्ञेयं गत्यन्तराभावात् ॥ ३५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेषां द्वीपानां परिमाणं वदामीति शेषः पूर्वस्मात् पूर्वस्माल्लक्षयोजनपरिमाणकजम्ब्वादेः उत्तरोत्तरः प्लक्षादिर्यथासङ्ख्यं द्विगुणमानेन बोध्यः इत्येवं समन्ततः जम्बूबहिर्भूतक्षारोदादिभ्यो बहिरुपक्लृप्ताः रचिताः ॥ ३२ ॥

एवं जम्ब्वादिभ्यो बहिः विस्तारतो जम्ब्वादिसमानाः क्षारोदादयः रचिता इत्याह । क्षारोदेति । अभ्यन्तरद्वीपसमानाः स्वस्वावृतद्वीपसमानाः सप्तस्वपि द्वीपेषु बहिः परितः पृथक् न त्वांतःकुण्डलानीवोपकल्पिता इत्यर्थः ॥ ३३ ॥ ३४ ॥

एवंविधः पुरुषकारः पौरुषं चित्रमद्भुतं न भवति एतदेव कैमुतिकन्यायेन दृढीकरोति विदूरं विगतः परित्याज्योऽन्त्यजोऽपि सकृदप्याददीत यः स बन्धं संसारमधुनैव शीघ्रमेव जहाति त्यजति मुक्तो भवति ॥ ३५ ॥

---

भाषाटीका।

प्रियव्रत के रथके चक्रों के चलने से जो सात गढ़ेले भये वेई सात समुद्र होगये जिनसे सात द्वीप कल्पित भये ॥ ३१ ॥

जम्बू प्लक्ष शाल्मली कुश क्रौंच शाक पुष्कर इन द्वीपों के नाम हैं उनका परिमाण एकसे एक बाहिर का द्विगुण बड़ा है चारों ओरसे ॥ ३२ ॥

खारा जल ईखका रस मदिरा घृत दूध दधि भात का मांड शुद्ध जल ऐसे सात समुद्र हैं सो सातों द्वीपों में बर्हिष्मती के पति प्रियव्रत जी ने अपने आज्ञा कारी सात पुत्रों को क्रमसे राजा किया उनके नाम आग्नीध्र इध्मजिह्व यज्ञबाहु हिरण्यरेता घृतपृष्ठ मेधातिथि वीतिहोत्र ॥ ३३ ॥

ऊर्जस्वती नामक पुत्री को शुक्राचार्य को दिया जिसमें शुक्राचार्य की पुत्री देवयानी हुई ॥ ३४ ॥

उत्पत्त्यादि लीला करने वाले उरुक्रम भगवान् के चरण के रजसे सब विषयों को जीतने वाले महापुरुषों को यह कुछ आश्चर्य नहीं है क्योंकि जिन भगवान् के नाम लेने से नीच योनि वाले भी एक बखत में भी संसार बन्ध को छोड़ देते हैं ॥ ३५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य पराक्रममुपसंहरन्निवृत्तिक्रममाह । स एवमिति । देवर्षिचरणयोरनुशयनमुपसत्तिस्तदनुपतितो यो गुणविसर्गो

तस्य ह वा एते श्लोकाः ।

प्रियव्रतकृतं कर्म को नु कुर्याद्विनेश्वरम् ।
यो नेमिनिम्नैरकरोच्छायां घ्नन्सप्त वारिधीन् ॥ ३९ ॥

भूसंस्थानं कृतं येन सरिद्गिरिवनादिभिः ।
सीमा च भूतनिर्वृत्यै द्वीपे द्वीपे विभागशः ॥ ४० ॥

भौमं दिव्यं मानुषं च महित्वं कर्मयोगजम् ।
यश्चक्रे निरयौपम्यं पुरुषानुजनप्रियः ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे प्रियव्रतविजये
पारमहंस्यां संहितायां वैयासिक्यां
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

राज्यादिप्रपञ्चस्तत्संसर्गेण आत्मनि मनसि निर्वेदो यस्य ॥ ३६ ॥

तमाह । मयाऽसाध्वनिष्ठितम् यद्यतोऽभिनिवेशितः ततः अलमलं विषयैः विनोदमृगं मर्कटम् ॥ ३७ ॥

परदेवताया हरेः प्रसादेनाधिगतः प्राप्तो य आत्मप्रत्यवमर्शो विवेकस्तेन नारदस्य पदवीं तदुपदिष्टमार्गमेव पुनरनुससारेत्यन्वयः । किं कृत्वा । अनुगतेभ्यः पुत्रेभ्य इमां पृथ्वीं विभज्य भुक्तो भोगो यस्यास्तां भार्यां महाविभूतिः साम्राज्यसम्पत्तत्सहितां महिषीं मृतशरीरमिव परित्यज्य तत्र हेतुः हृदि निहितो निर्वेदो येन हृदीत्यस्योत्तरत्राप्यन्वयः हृदि गृहीतो निश्चितो हरिविहारस्तेनानुभावस्त्यागसामर्थ्यं यस्य ॥ ३८ ॥

तस्य महिमोपनिबन्धनश्लोकाः पूर्वसिद्धाः कथ्यन्ते यथा वेदे तदव्येव श्लोको भवतीति को नु को नाम कुर्याच्छायां घ्नन् तमो निरस्यन् ॥ ३९ ॥

भूसंस्थानं द्वीपैः कृतम् । सरिद्गिरिवनादिभिः सीमा च येन कृता भूतानां निर्वृत्यै सुखायाविवादाय ॥ ४० ॥

भौमं पातालजं दिव्यं स्वर्गजं मानुषं मर्त्यलोकजं महित्वं वैभवं यो निरयतुल्यं मेने पुरुषानुजना विष्णुभक्तास्त एव प्रिया यस्येति ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदप्युक्तं कथंचिदन्तरायविहताः स्वां शिवतमां पदवीं न प्रायेण हिन्वन्तीति तत्प्रियव्रतदृष्टान्तेन स्पष्टयितुं तस्य तावन्निर्वेदं वदति । स इति । एवमपारौ बलपराक्रमौ यस्य सः प्रियव्रतः देवर्षेर्नारदस्य चरणयोरनुशयः सेवा तदनुपश्चात्पतितः प्राप्तः-गुणविसर्गसंसर्गः -प्रकृतिमार्गसम्बन्धस्तेन स्वात्मानमनिर्वृतमनुचितमिव मन्यमानः इवशब्देन तद्ग्रामभोगानां दुर्लभत्वं तेषु तस्य निरयौपम्यं च सूच्यते तथाचोक्तं "एतं वै निरय... स्थानस्य परमात्मन इति । वासुदेवे मनो यस्य जपार्च... नादिषु । तस्यान्तरायो मैत्रेयः देवेन्द्रत्वादिकं फलम्" इति एवात्मनि मनसि निर्वेदः परितापो यस्य स इदं वक्ष्य... माह ॥ ३६ ॥

अहो इति निर्वेदद्योतको निपातः मयाऽसाध्वसमीचीनमनु... ष्ठितमाचरितं किन्तद्यदसाध्वनुष्ठितं तत्राह । अहं प्रथमं ... निवृत्तिधर्मपरोऽहमिन्द्रियैः प्रमाथिभिरविद्या रचिता प्रकृ... णामरूपा अज्ञानमूलया भोग्यतमबुद्ध्या रचिताः सम्पादिताः ... परिणामविषोपमाः हेया ये विषयाः शब्दादयस्त एवान्ध... तृणावृतकूपः तस्मिन्नभिनिवेशितः पातित इति यत... अलमलं विषयानुभवेन अमुष्या वनितायाः बहिष्मत्या विनो... क्रीडामृगं मां धिग्धिगिति निन्दयामास आत्मानं विग... वान् ॥ ३७ ॥

ततः परदेवतायाः भगवतः प्रसादेन "नेहाभिक्रमनाशोऽस्ति प्रत्य... वायो न । विद्यते स्वल्पमपि इत्याद्युक्तप्रकारेण महा... शीलोपक्रान्तिमात्रनिवृत्तिधर्माराधितभगवत्प्रसादेनाधिगतं ... मात्मनः स्वात्मनः परमात्मनश्च यत्प्रत्यवमर्शनं यथावस्थित... रूपचिन्तनं तेन परिनिर्वृतः निरस्ततापत्रयः नितरां ... अनुगतेभ्यः स्वानुवर्त्तिभ्यः पुत्रेभ्यः इमां समद्वीपामेवं ... यथादायं यथा योग्यं भागं विभज्य यद्वा दायं पितुः ... यथावद्विभज्याग्नीध्रादिप्रतिपुत्रं जम्बादिप्रतिद्वीपं विभज्य ... भुक्तो भोगो यस्यास्तां पञ्चम्यर्थे बहुव्रीहिः महिषीं ... हिष्मतीं मृतकमिव शवमिव मन्यमान इतिशेषः महाविभूतिः ... श्वर्यमपहाय महाविभूत्या सहितां महिषीं मृतकमिवावा... वा स्वयमुपदेशमन्तरेणैव विहितः कृतः निर्वेदः परितापो ... हृदगृहीताः परिशीलिताः हरेर्भगवतः विहाराणां प्रभावाः ... सः भगवतो नारदस्य पदवीं पुनरप्यनुससार गन्धमादने ... श्रीनारदमेव सेवमानः सिद्धिं गत इत्यर्थः ॥ ३८ ॥

तस्य प्रियव्रतस्यैते श्लोकाः तन्महिमोपनिबन्धने पूर्व...

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एव श्लोकाः कथ्यन्ते यथा वेदे तदप्येष श्लोको भवतीति के ते श्लोकाः तत्राह । प्रियव्रतेति । प्रियव्रतेन कृतं कर्म ईश्वरं विनान्यः को नाम कुर्यात् यः प्रियव्रतः छायां तमः प्रणिरस्यन् रथनेमिनिम्नैरेव सप्त वारिधीन् समुद्रानकरोत् ॥ ३९ ॥

येन प्रियव्रतेन भूसंस्थानं द्वीपैर्भुवः संस्थानमवयवविन्यासः कृतं तथा द्वीपे द्वीपे भूतनिर्वृत्यै भूतानां कृत्यै सुखाय वा सरिदादिभिः विभागशः अलङ्घनीया सीमा च कृता ॥ ४० ॥

यः भौमं पातालजं दिव्यं स्वर्गजं मानुषं मृत्युलोकजं सुखं योगरूपकर्मजमणिमादिसिद्धिरूपं महित्वं माहात्म्यं योगस्य मनोव्याररूपत्वेन कर्मत्वव्यपदेशः ।

वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ।
शरीरजैः कर्मदोषैर्यातिस्थावरतां नरः ।

इति मनुनापि मानसैः कर्मदोषैरिति मनोव्यापारे कर्मशब्दः प्रयुक्तः निरयौपम्यं नरकसदृशं चक्रे अनुसंहितवान् "एते वै निरयास्तात स्थानस्य परमात्मन"इत्यादिवचनार्थोऽत्रानुसन्धेयः निरयौपम्यकृतौ कारणमाह । पुरुषस्य परमपुरुषस्यानुजना अनुचरा भक्ता एव प्रिया यस्य सः तेषां हि प्रिय इति वा ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धेश्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं पूर्वानुवादपूर्वकं वैराग्येण [१] तस्य संसारनिन्दाप्रकारं कथयति । स एवमिति । अनुपातितो यदृच्छया प्राप्तो गुणविसर्गः ।

संधिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संशयं च षड्गुणान् कवयो विदुः ।

इत्यादि गुणप्रयोगो गुणकार्यविषयप्रपञ्चो वा तस्य संसर्गेण सम्बन्धेन आत्तनिर्वेदः प्राप्तवैराग्यः ॥ ३६ ॥

किमाहेत्यत्राह । अहो इति । विनोदमृगम् ॥ ३७ ॥

तस्य संसारविरक्त्या सन्न्यासप्रकारं वक्ति । परदेवतेति । परदेवता नारायणः तस्य प्रसादेनाधिगतम् प्राप्तमात्मप्रत्यवमर्शनं प्राप्तपरमात्मज्ञानं तेन परिनिर्वृतो नष्टलब्धचिन्तामणिरिव परमानन्दमाप्तः यथादायं यो योग्यः पितृधनस्य तस्य तथा मृतकं शवमिव महती विभूतिर्यस्याः सा तथा तां नारदस्य पदवीं निवृत्तिमार्गः सन्न्यासलक्षणः ताम् ॥ ३८ ॥

प्रियव्रतचरितश्रवणस्मरणादेरनायासेन मुक्तिसाधनत्वाभिव्यञ्जयाय श्लोकरूपेण संक्षिप्य तच्चरितं कीर्तयति । तस्येति । रथचक्रनेमिकृतनिम्नैः छायां रात्रिकृताम् ॥ ३९ ॥

भूसंस्थानं भुवोऽ ( २ ) वयवविशेषनामभूतनिर्वृत्यै प्राणिनां सुखाय ॥ ४० ॥

महित्वं माहात्म्यं योगकर्मजं योगसामर्थ्यजातं निरयौपम्यं निरयसुखसमम् ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रथस्याकाशमार्गेणैव तन्मण्डलगामित्वं ज्ञेयम् ॥ ३९—४१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
प्रथमोऽध्यायः समाप्तः ॥ १

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

भोगप्रभावमुपसंहरंस्तस्य वैराग्यप्रभावमाह । स एवमिति । देवर्षिचरणयोरनुशयनानि गुरुत्वेन दण्डवत्प्रणामास्ताननुपतित एव गुणविसर्गो राज्यादिप्रपञ्चस्तत्संसर्गेण अनिर्वृतमिवेति यद्यपि राज्येऽप्यनासक्त्यैवान्तर्निर्वृत्तिरासीत्तदपीत्यर्थः ॥ ३६ ॥

विनोदमृगं मर्कटम् ॥ ३७ ॥

परदेवताया हरेः प्रसादेनाधिगतः प्राप्तो य आत्मप्रत्यवमर्शो विवेकस्तेन नारदस्य पदवीं तदुपदिष्टमार्गमेव पुनरनुससारेत्यन्वयः किं कृत्वा अनुप्रवृत्तेभ्यः अनुगतेभ्यः । इत्यादि हृदि गृहीतो यो हरेर्विहारो लीला विलासस्तेनानुभावा अश्रुपुलकादयो यस्य सः ॥ ३८ ॥

श्लोकाः पूर्वसिद्धा एव कथ्यन्ते छायां रात्रिम् ॥ ३९ ॥

भुवः संस्थानं द्वीपैः कृतं सरिदादिभिः सीमा च भूतानां जनपदग्रामाद्यधिपतीनां निर्वृत्यै निर्विवादसुखाय ॥ ४० ॥

भौमं पातालजं दिव्यं स्वर्गजं मानुषं मर्त्यलोकजं महित्वं वैभवम् ॥ ४१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमे प्रथमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं महदाज्ञया प्रवृत्तिमार्गे प्रविष्टस्य कर्मारब्धयुक्त्याथ स प्रवृत्तिमार्गान्निवृत्तोऽभूदिति वक्तुमाह । स इति । देवर्षिचरणयोरनुशयनमनुवर्त्तित्वं तदनुपतितो यो गुणविसर्गः गुणानां प्रारब्धकर्मफलानां विसर्गो विस्तारः साम्राज्याद्यैश्वर्यं तत्संसर्गेणात्मनि मनसि निर्वेदो यस्य सः अनिवृत्तमिव वनितादावसक्तमिव अनिर्भिन्नमिति पाठेऽसुखि तमिव ॥ ३६ ॥

असाध्वनुष्ठितं मये तिशेषः यत् यस्मिन् अविद्यया अचेतनया भगवच्छक्त्या रचित विषमा मुमुक्षुजनानर्हा धिषया यस्मिन् तत्तथाभूतं गृहं तदेवान्धकूपस्तस्मिन् प्रवेशितः तत्तेन गृहेण अलं पर्याप्तम् किञ्च वनितायाः विनोदमृगं क्रीडामर्कटं मां धिग् धिगित्यात्मानं गर्हयाञ्चकार ॥ ३७ ॥

परदेवताप्रसादात्प्राप्तेन आत्मार्थविचारेण नारदस्य स्वगुरोः पदवीं निवृत्तिमार्गं पुनरनुससार कथम्भूतः हृदि गृहीतो यो हरिविहारस्तेनानुभावः सर्वपरित्यागपूर्वकहरिप्रावण्यं यस्य सः अत एव हृदि निहितनिर्वेदः ॥ ३८ ॥

[ १ ] प्रियव्रतस्य ।

[ २ ] सीमाभावे परस्परविवादेन दुःखमेव स्यादिति ।

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वैर्गीता इति शेषः छायां रात्रिरूपां भ्रन् निरस्यन् ॥ ३९ ॥

येन भूसंस्थानं द्वीपविभागरूपं सरिदादिभिः द्वीपे द्वीपे सीमा च भूतसुखाय कृता ॥ ४० ॥

यः पुरुषानुजनाः वैष्णवाः प्रिया यस्य स भौमं भूविवरस्थं तामसं मानुषं राजसं दिव्यं सात्त्विकम् योगजमणिमादिरूपं महित्वं वैभवं कर्म च तत्तत्साधनं काम्यलक्षणम् एतत्साध्यं साधनं च सर्वं निरयौपम्यं चक्रे तस्य माहात्म्यं किमन्यदवशिष्यते इति भावः ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
प्रथमाध्यायार्थप्रकाशः ॥ १ ॥

---

भाषाटीका ।

इस प्रकार के वडे पराक्रम वाले प्रियव्रत जी एक दिन श्री नारदजी के चरण कमल के शरणागति के होने से पीछे आया जो राज्यादि प्रपञ्च तिसके संसर्ग से अपने आत्मा को वहुत असन्तुष्ट मानकर विरक्त चित्त होकर इस वचन को वोलने लगे ॥ ३६ ॥

अहो यह वडा आश्चर्य हुआ जो कि विवेकी होकर मैंने अच्छा नहीं किया जोकि शरीर के अभिनिवेश से इन्द्रिय के हेतु अज्ञान रचित विषम विषय रूप अन्धे कुआ में गि हूं सो अव नहीं करूंगा मेरे को धिक्कार है जो कि मैं इस क्रीडामृग होगया हूं इस प्रकार अपना निन्दा किया ॥ ३७ ॥

पर देवता परमात्मा के प्रसाद से आत्मज्ञान के से अपने अनुवर्तन करने वाले उन पुत्रों को यथायोग्य पृथिवी का भाग देकर भोगी हुई रानी को मरीसी स्वयं महाविभूति को छोडकर हृदय में वैराग्य करके भगवान् के विहार के प्रभाव को स्मरण करके वान् नारदजी के मार्ग को ग्रहण करलिया ॥ ३८ ॥

उन प्रियव्रतजी के ये श्लोक हैं प्रियव्रत के किये ईश्वर विना दूसरा कौन करेगा जिनने कि अंधेरे करने के लिये रथचक्र के खातों से सात समुद्र वनादिये ॥

जिनने सव प्राणियों के सुखके लिये सव द्वीपों में पर्वत नदी वनादिकों से पृथिवी का विभाग करदिया ॥ ४० ॥

जिनने भगवद्भक्तों के प्रिय होकर स्वर्ग मर्त्य पाताल तुष्ठान से भये भोगोंको नरक के तुल्य करके छोडदिया ॥ ४१ ॥

इति श्रीमद्भागवतपञ्चमस्कन्ध प्रथमअध्याय का
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ १ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे प्रथमोऽध्यायः समाप्तः ॥ १ ॥

## ॥ द्वितीयोऽध्यायः ॥

### ॥ श्रीशुक उवाच ॥

एवं पितरि संप्रवृत्ते तदनुशासने वर्तमान आग्नीध्रो जम्बूद्वीपौकसः प्रजा औरसवद्धर्मावेक्षमाणः पर्यगोपायत् ॥ १ ॥

स च कदाचित्पितृलोककामः सुरवरवनिताक्रीडाचलद्रोण्यां भगवन्तं विश्वसृजां पतिमाभृतपरिचर्योपकरण आत्मैकाग्र्येण तपस्व्याराधयाम्बभूव ॥ २ ॥

तदुपलभ्य भगवानादिपुरुषः सदसि गायन्तीं पूर्वचित्तिं नामाप्सरसमभियापयामास ॥ ३ ॥

सा च तदाश्रमोपवनमतिरमणीयं विविधनिविडविटपिविटपनिकरसंश्लिष्टपुरटलतारूढस्थलविहङ्गमिथुनैः प्रोच्यमानश्रुतिभिः प्रतिबोध्यमानसलिलकुक्कुटकारण्डवकलहंसादिभिर्विचित्रमुपकूजितामलजलाशयकमलाकरमुपबभ्राम ॥ ४ ॥

तस्याः सुललितगमनपदविन्यासगतिविलासायाश्चानुपदं खणखणायमानरुचिरचरणाभरणस्वनमुपाकर्ण्य नरदेवकुमारः समाधियोगेनामीलितनयननलिनमुकुलयुगलमीषद्विकचय्य व्यचष्ट ॥ ५ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका।**

द्वितीये प्रोक्तमाग्नीध्रचरित्रं स्त्रैणसम्मतम्।
पत्न्यां हि पूर्वचित्त्यां यो नाभिमुख्यानजीजनत् ॥१॥
अस्मिन्वंशे प्रसिद्धोऽयमाग्नीध्रः स्त्रैणपुङ्गवः।
विहसन्निव तस्येदं चरितं मुनिरब्रवीत् ॥ २ ॥

जम्बूद्वीपमोको यासां ताः प्रजाः पुत्रवत्पालयामास धर्मावेक्षमाणः धर्ममवेक्षमाणो धर्मेणेत्यर्थः ॥ १ ॥

पितृलोककामः पुत्रकामः सुरवराणां वनितास्तासामाक्रीडाचलो मन्दरस्तस्य द्रोण्यामाभृतानि सम्पादितानि परिचर्योपकरणानि पुष्पादीनि येन ॥ २ ॥

तदुपलभ्य ज्ञात्वा ब्रह्माभियापयामास सम्भोगार्थं प्रस्थापयामास ॥ ३ ॥

सा च तदाश्रमोपवनमुपबभ्रामेत्यन्वयः रमणीयत्वमेवाह। विविधाश्च निविडाश्च ये विटपिनस्तेषां विटपा शाखा स्तेषां निकरास्तैः संश्लिष्टाः पुरटलताः स्वर्णवल्लयस्तास्वारूढाः स्थलविहङ्गमा मयूरादयस्तेषां मिथुनैः प्रोच्यमानाभिः श्रुतिभिरुच्चार्यमाणैः षड्जादिस्वरैः प्रतिबोध्यमाना ये सलिलकुक्कुटादयस्तैर्विचित्रं यथातथोपकूजिता नादिता अमला जलाशयास्तेषु कमलानि तेषामाकरमुपवनम् ॥ ४ ॥

सुललिते गमने ये पदविन्यासास्तैर्गतौ विलासो यस्याः चकारस्तस्याश्चेत्येकवाक्यत्वाय अनुपदं प्रतिपदम् खणखणेतिध्वनिं कुर्वतो रुचिरस्य चरणाभरणस्य स्वनमामीलिते नयने एव नलिनमुकुले तयोर्युगलमीषद्विकचय्य किञ्चिदुन्मील्य व्यचष्ट ददर्श ॥ ५ ॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।**

एवं श्रावितप्रियव्रतचरित्रो मुनिस्तत्पुत्राणां चरित्रं विवक्षुस्तावदाग्नीध्रचरित्रमाह। एवमिति। एवमुक्तविधज्ञानपूर्वकं पितरि प्रियव्रते संवृत्ते मुक्ते सति तस्य प्रियव्रतस्यानुशासने अनुपूर्वः शास्तिर्विविच्य ज्ञापने वर्तते तदुपदिष्टहिताहितविवेके वर्तमानः आग्नीध्रः धर्ममवेक्षमाणः धर्मसञ्चयमेव कर्तुमुद्यतः जम्बूद्वीप ओकः स्थानं यासां ताः प्रजा औरसवत्स्वपुत्रवत् परितः सर्वतः सर्वेभ्य उपद्रवेभ्योऽगोपायदरक्षत् जम्बूद्वीपस्य स्वभागत्वाज्जम्बूद्वीपौकस इत्युक्तम् ॥ १ ॥

सः आग्नीध्रः कदाचित्पितृलोकनामः सन्तानार्थं पितृलोकस्य सन्तानवता प्राप्यत्वात्पितृलोककाम इत्युक्तम् पितृलोकप्रापकसन्तानार्थीत्यर्थः "पितरो हि प्रजया पितृभ्य इति श्रुत्युक्तरीत्या सन्तानाय कृतर्णाः प्राप्यन्ते सुराणां वनिताः तासामाक्रीडाचलो मन्दरः आक्रीडन्त्यस्मिन्नित्याक्रीडः ततो अचलपदेन कर्मधारयः तेन सुरवनितापदेन षष्ठीसमासस्तस्य द्रोण्यामाहृतानि सम्पादितानि परिचर्योपकरणानि पूजासाधनानि पुष्पादीनि येन कायिकव्यापारोऽनेनोक्तः चित्तैकाग्र्यरूपेण तपसा विश्वसृजां पतिं ब्रह्माणमाराधयाम्बभूव ॥ २ ॥

तदाराधनमुपलभ्य ज्ञात्वा भगवानादिपुरुषो ब्रह्मा स्वसदने गायन्तीं गानं कुर्वन्तीं पूर्वचित्तिं नाम पूर्वचित्त्याख्यामप्सरसमभियापयामास भोगार्थं प्रस्थापितवान् सन्तानार्थमप्सरः प्रेषणं न तु तपोविघ्नार्थम् ॥ ३ ॥

सा च पूर्वचित्तिस्तस्याग्नीध्रस्याश्रमे यदुपवनं तदुपबभ्राम समीपे चचार आश्रमोपवनं विशिनष्टि। अतिरमणीयं तदेव प्रपञ्चयति। विविधाश्च निविडाः सान्द्राश्च ये विटपिनः

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

वृक्षास्तेषां विटपाः शाखास्तेषां निकराः समूहास्तैः संश्लिष्टाः पुरटलताः स्वर्णवर्णा वल्लयस्तास्वारूढाः स्थिता विहङ्गमाः मयूरादयस्तेषां मिथुनैः स्त्रीपुंसद्वन्द्वैः प्रोच्यमानाभिः उच्चार्य्यमाणाभिः श्रुतिभिः षड्जादिस्वरैः करणभूतैः प्रबोध्यमाना ये सलिलकुक्कुटादयस्तैर्विचित्रं यथा भवति तथोपकूजिता नादिता अमला जलाशयास्तेषु कमलानि पङ्कजानि तेषामाकरमुपवनम् ॥ ४ ॥

तस्या इति सुललिते गमने सुन्दरगतौ ये पदविन्यासास्तैर्गतिविलासो यस्यास्तस्याः पूर्वचित्त्याः खणखणेति ध्वनिं कुर्वतो रुचिरस्य चरणाभरणस्य स्वनं ध्वनिमुपाकर्ण्य श्रुत्वा नरदेवस्य प्रियव्रतस्य कुमारः आग्नीध्रः समाधियोगेन आमीलिते नयने एव नलिनमुकुले तयोर्युगलमीषद्विकचय्य किञ्चिदुन्मील्य व्यचष्ट ददर्श ॥ ५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्त्रीसङ्गं परिहरतः पुंसः करतलस्थैव मुक्तिरित्यभिप्रेत्य तस्यापरिहारार्थत्वं प्रतिपाद्यतेऽस्मिन्नध्याये तत्रादावाग्नीध्रस्य राज्यलक्षणप्रकारमाह। एवमिति । औरसवदात्मपुत्रवत्पर्यगोपायदरक्षत् गुपू रक्षणे ॥ १ ॥

विश्वसृजां पतिं ब्रह्माणं पितृलोककाम इत्यनेन सन्तानार्थित्वं लक्षयति "सोऽयं मनुष्यलोकः पुत्रेण जेय" इतिश्रुतेः सुपुत्रेण पितुः पितृलोकप्राप्तिश्रवणात् आक्रीडः क्रीडास्थानमात्मनोऽन्तःकरणस्यैकाग्र्यं यस्मिंस्तत्तथा तेनात्मैकविषयेण वा॥ २ ॥

अभियापयामास प्रेषयामास ॥ ३ ॥

अतिरमणीया विविधाश्च निविडाश्च सङ्कुचिताश्च विटपिनो वृक्षास्तेषां विटपाःशाखास्तेषां निकटपुटेषु समीपभागेषु या लतास्तासां कुटिलेषु वक्रभागेषु रूढा आरूढाश्च स्थलविहङ्गमाः मयूरकोकिलादयस्तेषां मिथुनैः प्लाव्यमाना श्रुतिः धनुर्मण्डलमात्रप्रदेशव्यापिनी ध्वनिमन्ततिर्येषां तानि तथा तैः प्रबोध्यमानैः प्रतिनादोन्मुखीकरणायेति शेषः जलकुक्कुटादिभिर्विचित्रं यथा तथोपकूजिते निर्मलजलाशये रूढः कमलाकरो यस्मिन् तत्तथा ॥ ४ ॥

सुहितो ललितपदविन्यासः कोमलपदविक्षेपो यया सा ललितपदविन्यासा च गतिर्गमनं तस्या विलासेन श्रृङ्गारलक्षणशोभयानुपदं प्रतिचरणविक्षेपं क्वणक्वणायमाने सिञ्जितध्वनिविशेषं कुर्वाणे रुचिरे शोभने चरणाभरणे नूपुरे ये तयोर्ध्वनिमाकर्ण्य स राजकुमारः समाधियोगेन निमित्तेनामीलितौ नयननलिनमुकुलौ यौ तयोर्युगलमीषद्दलं विकचय्य विकासं कृत्वा आचष्ट अद्राक्षीत् ॥ ५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पितृलोककाम इति तस्य स्त्रिया वन्ध्यात्वं गम्यते ॥ १—२१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्वितीये तपसा प्राप्य पूर्वचित्तिमजिरपत् ।
आग्नीध्रो निजलारूपत्यं पुत्रांश्चास्यामजीजनत् ।

धर्म्म एव अवेक्षणं यस्य सः ॥ १ ॥

पितृलोककामः पुत्रकामः विश्वसृजां पतिं ब्रह्माण तानि संपादितानि परिचर्य्योपकरणानि पुष्पादीनि ये ॥ २-३ ॥

सा च तदाश्रमोपवनमुपवभ्रामेत्यन्वयः विविधाश्च नि ये विटपिनस्तेषु विटपाः स्कन्धाः यासां तासु निकट लतासु आरूढाः स्थलविहङ्गाः कोकिलादयस्तेषां प्रोच्यमानाभिः श्रुतिभिरुच्चार्य्यमाणैः पञ्चमादिस्वरैः प्रबोध्यमाना ये सलिलकुक्कुटादयस्तैर्विचित्रं यथा स्यात्तथा जिता नादिता अमला जलाशया वाप्यादयः कासाराश्च यस्मिंस्तत् ॥ ४ ॥

तस्यां सुललिते गमने ये पदयोर्विन्यासास्तैरेव गति विलासश्च सर्व्वाङ्गगतो यस्याः ॥ ५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वितीये प्रियव्रतपुत्रस्य आग्नीध्रस्य भार्य्यालाभो यश्च वर्ण्यते । एवमिति । संप्रवृत्ते प्रजापालनाभिवृत्ते धर्म आग्नीध्रः धर्मावेक्षमाणः राज्ञां प्रजापालनमेव धर्म इत्येवं मवेक्षमाणः जम्बूद्वीपमोको वासस्थानं यासान्ताः प्रजाः सवत्पुत्रवत् परितः क्षुत्तृड्भ्यो वृत्तिदानेन शत्रुभ्यो रक्ष अगोपायत् अरक्षत् ॥ १ ॥

स आग्नीध्रः पितृलोककामः पुत्रेण लोकान् पितृलोकजयार्थं पुत्रमभिलषन्नित्यर्थः आभृतानि संपू परिचर्य्योपकरणानि पूजासाधनानि येन सः ॥ २ ॥

आदिदेवः विश्वसृड्भ्यः पूर्वो ब्रह्मा तदाराधनमुपलभ्य अभियापयामास पुत्रोत्पादनार्थं प्रस्थापयामास ॥ ३ ॥

सा च पूर्वचित्तिः तदाश्रमोपवनमुपवभ्राम कथं अतिरमणीयम् तद्रमणीयत्वं प्रपञ्चयति । विविधानां पिनां बहुजातिसघनद्रुमाणां विटपनिकरैः स्कन्धसमूहै षासु पुरटलतासु स्वर्णवल्लीषु आरूढानां स्थलविहङ्गानां दीनां मिथुनैः स्त्रीपुरुषद्वन्द्वैः प्रोच्यमानाभिः श्रुतिभिः माद्स्वरैः प्रतिबोध्यमाना ये सलिलकुक्कुटादयस्तैर्विचि भवति तथोपकूजितेषु नादितेषु अमलजलाशयेषु या लानि तेषामाकरमालयम् ॥ ४ ॥

नरदेवस्य कुमारः अनेनारूढसमाधित्वे हेतुरु लिते नयने पद्ममुकुले तद्युगलमीषत् किञ्चिद्विकचय्य तस्या अनुपदं प्रतिपदम् क्वणक्वणायमानस्य रुचिर णस्य स्वनमुपाकर्ण्य व्यचष्ट ददर्श तामिति शेषः सुललिते गमने ये पदविन्यासास्तैर्गतिर्विलासो यस्याः ॥

---

### भाषाटीका

श्रीशुकदेवजी बोले पिता प्रियव्रतके इस प्रकार प्रवृत्त होने पर उनकी आज्ञा मे वर्तमान आग्नी

तामेवाविदूरे मधुकरीमिव सुमनस उपजिघ्रन्तीं दिविजमनुजमनोनयनाह्लाददुघैर्गतिविहारव्रीडाविनयावलोकसुस्वराक्षरावयवैर्मनसि नृणां कुसुमायुधस्य विदधतीं विवरं निजमुखविगलितामृतासवसहासभाषणामोदमदान्धमधुकरनिकरोपरोधेन द्रुतपदविन्यासेन वल्गुस्पन्दनस्तनकलशकबरभाररशनां देवीं तदवलोकनेन विवृतावसरस्य भगवतो मकरध्वजस्य वशमुपनीतो जडवदिति होवाच॥६॥

का त्वं चिकीर्षसि च किं मुनिवर्य! शैले मायाऽसि कापि भगवत्परदेवतायाः।
विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे किम्वा मृगान्मृगयसे विपिने प्रमत्तान्॥७॥
बाणाविमौ भगवतः शतपत्रपत्रौ शान्तावपुङ्खरुचिरावतितिग्मदन्तौ।
कस्मै युयुंक्षसि वने विचरन्न विद्मः क्षेमाय नो जडधियां तव विक्रमोऽस्तु॥ ८॥
शिष्या इमे भगवतः परितः पठन्ति गायन्ति साम सरहस्य मजस्रमीशम्।
युष्मच्छिखा विलुलिताः सुमनोऽभिवृष्टीः सर्वे भजन्त्यृषिगणा इव वेदशाखाः॥ ९॥
वाचं परं चरणपञ्जरतित्तिरीणां ब्रह्मन्नरूपमुखरां शृणवाम तुभ्यम्।
लब्धा कदम्बरुचिरङ्कविटङ्कबिम्बे यस्यामलातपरिधिः क्व च वल्कलं ते॥१०॥

भाषाटीका।

धर्मकी अपेक्षा करते हुये सबप्रजोंकी रक्षापुत्र सरीकी करते थे॥ १॥

सो आग्नीध्र किसी समय मे पितृलोक की कामना करके देवताओं की स्त्रियोंके क्रीडाकास्थान जो मन्दराचल पर्वत तिसकी कन्दरामे जाकर पुष्पादि पूजाकी सामग्री को जोडकर एकाग्र चित्तसे तपस्वी होकर प्रजापतियों के पति ब्रह्माजी का पूजन करने लगे॥ २॥

उस बातको जानकर आदिपुरुष भगवान् ब्रह्माजीने अपनी सभामे गान करती हुई पूर्वचित्ती नामकी अप्सराको भेजदिया॥ ३॥

सो अप्सरा उस आश्रमके उपवनमे जाकर अतिरमणीयस्थान देखा नाना प्रकार के सघन वृक्षों के मूल मे लगी हुई जो सुवर्ण की लताओं मे चढे जो स्थलके पक्षियों के जोडे तिनके उच्चारण किये जो गान्धारादि शब्द तिससे चेतन होते हैं जलके मुरगा कारंडव कलहंसादि पक्षि तिनके नाना प्रकारके शब्दोंसे युक्त सरोवरवाला जो वन तिसमे वह अप्सरा विचरती रही॥ ४॥

उसके सुन्दर ललित चालमे जो पगनकी धरण तथा गतिके विलास तिसके साथ खण खण शब्द करने वाला जो मनोहर चरण के आभरणका शब्द तिनको सुनकर राजपुत्र आग्नीध्रने समाधि योगमे जो किंचित बन्द दोनो नेत्रकमल तिनको कुछ थोडा खोलकर उसकी ओर देखा॥५॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तामेव देवीं मकरध्वजस्य वशमुपनीतः सन् जडवदिति ह वक्ष्यमाणान् दश श्लोकानुवाच जाड्यानुकरणं च वैदग्ध्येन तद्वशीकारार्थम् दिविजानां देवानां मनुजानां च यानि मनांसि नयनानि च तेषामाह्लाददुघैर्गत्यादिभिर्नृणां मनसि कामस्य विवरं प्रवेशद्वारं विदधतीं गतिश्च विहारश्च व्रीडाविनययुक्तोऽवलोकश्च सुस्वरायमक्षराणि वाक्यवाश्च नेत्रादयस्तैः निजमुखाद्विगलितममृतमिव स्वादु आसव इव मादकं च यत्सहासं भाषणं तस्मिन्नामोदो निःश्वासगन्धस्तेन मदान्धा ये मधुकरनिकरास्तैरुपरोध आवरणं तेन भयाद्द्रुतः शीघ्रो यः पदविन्यासस्तेन वल्गु स्पन्दनं किञ्चिच्चलनं स्तनकलशयोः कबरभारे रशनायां यस्यास्तां तस्या अवलोकनेन विवृतावसरस्य दत्तावकाशस्य॥ ६॥

का त्वं शैले गिरावस्मिन्किं चिकीर्षसि मुनिवर्येत्यादिपुंस्त्वेन सम्बोधनादि जाड्यानुकरणार्थम्। हे मुनिवर्य! नूनं भगवतः परदेवताभूतस्य मायाऽसि भ्रुवावालक्ष्याह। हे सुहृत्सखे विज्ये निर्गुणे धनुषी बिभर्षि किमात्मनोऽर्थे तयैवाभ्यां किं कार्यमस्ति किं वा प्रमत्तानजितेन्द्रियान्मृगतुल्यानस्मदादीन्मृगयसे तान्वशीकर्तुं धनुषी धारयसीत्यर्थः॥ ७॥

कटाक्षावालक्ष्याह। बाणाविमौ शतपत्रे नेत्रकमले ते पत्रपत्राणि पिच्छानि ययोः शान्तौ विम्रंशा मन्थरौ पुङ्खाभ्यां विनापि रुचिरौ पत्रतया कल्पितनेत्राभ्यां परभागस्य पुङ्खस्थानीयस्याभावात्। अतितिग्मौ तीक्ष्णौ दन्तावग्रभागौ ययोस्तौ कस्मै प्रयोक्तुमिच्छसीति न विद्मः अतो भयाद्देवतावत्प्रार्थयामहे तवायं विक्रमोऽस्माकं क्षेमायास्तु॥ ८॥

तदङ्गपरिमललोभेनानुगच्छतो भ्रमरानालक्ष्याह। शिष्या इति। अजस्रं सन्ततं युष्मच्छिखातो विलुलिता विगलिताः सुमनसामभितो वृष्टीर्गलितानि कुसुमानि भजन्तीत्यर्थः शुक्लत्वेनोपमा वेदशाखा इवेति॥ ९॥

नूपुरस्वनमाकर्ण्याह। वाचमिति। तुभ्यं तव चरणागतपञ्जरयोर्नूपुरयोस्तित्तिरीणामन्तर्गतरत्नानां परं केवलं वाचं शृणुमः कथम्भूतामरूपा अदृष्टचक्रका मुखरा अति प्रकटा च तां च तां च पीतं परिधानवस्त्रं नितम्बकान्तित्वेन प्रकल्प्याह। कदम्बकुसु

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मस्य रुचिर्दीप्तिरङ्कविटङ्कबिम्बे नितम्बस्य सुन्दरमण्डले क लब्धा पाठान्तरे अङ्गेति सम्बोधनम् मेखलामालक्ष्याह । यस्यामलातपरिधिर्वर्तते यत्र नितम्बकान्तित्वेन प्रकल्प्य वस्त्रमदृष्ट्वेव पृच्छति । क च ते वल्कलमिति ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तामेव देवीमप्सरसं तदवलोकनेन विवृतावसरस्य प्रसक्तावकाशस्य भगवतो मकरध्वजस्य मन्मथस्य वशमुपनीतः प्राप्तः जडवत्स्त्रीणामनभिज्ञ इव इति वक्ष्यमाणश्लोकानुवाचेत्यन्वयः जाड्यानुकरणं वैदग्ध्येन तद्वशीकरणार्थं तदभिप्रायज्ञापनार्थं देवीं विशिनष्टि । अविदूरे समीपे मधुकरीं भ्रमरीमिव सुमनसं पुष्पमुपजिघ्रन्तीं गन्धमुपाददतीं दिविजानां मनुजानां च यानि मनांसि नयनानि च तेषामाह्लाददुघैः सुखकरैर्गत्यादिभिः नृणां मनसि कामस्य विवरं प्रवेशद्वारं विदधतीं गतिश्च क्रीडाविलासाभ्यां युक्तोऽवलोकश्च सुस्वरायचराणि चावयवाश्च नेत्रादयस्तैर्निजमुखाद्विगलितममृतमिव स्वादु आसवमिव मादकं यत्सुहासं सम्भाषणं तस्मिन्नामोदो निश्वासगन्धस्तेन मदान्धा ये मधुकराणां निकरास्तैरुपरोध आवरणं तेन भयादूद्रुतं शीघ्रो यः पदविन्यासस्तेन वल्गु सुन्दरं किञ्चिच्चलनं स्तनयोः कचरभारे रशनायां यस्यास्ताम् ॥ ६ ॥

तद्वचनमेवाह । का त्वमिति । हे मुनिवर्य्य ! पुंस्त्वेन सम्बोधनं जात्यानुकरणं का त्वं कथञ्जातीया शैले गिरौ अस्मिन् किञ्चिकीर्षसि कर्तुमिच्छसि नूनं भगवतः परदेवतारूपस्य मायासीति कृत्स्नां व्यक्तिमालक्ष्य भगवन्मायात्वेन निरूपयति । अथ भ्वाद्यवयवान् प्रत्येकमालक्ष्य धनुरादित्वेन रूपयति तत्र भ्रुवावालक्ष्याह । विज्ये निर्गुणे धनुषी विभर्षि किं सुहृदः मादृशस्य आत्मनो वा अर्थे प्रयोजनाय आभ्यां किं कार्यमस्ति किञ्चाप्रमत्तान जितेन्द्रियान् मृगान् मृगतुल्यानस्मदादीन् मृगयसे कान् विजेतुं किं धनुषी धारयसीत्यर्थः ॥ ७ ॥

कटाक्षावालक्ष्य तांद्ववक्षया प्राह । बाणाविमौ । शतपत्रे नेत्रकमले ते एव पत्राणि पिच्छानि ययोः शान्तौ विभ्रमेण मन्थरावपुङ्खरुचिरौ पुङ्खाभ्यां विनापि रुचिरौ सुन्दरौ पत्रतया कल्पितनेत्राभ्यां परभागस्य पुङ्खस्थानीयस्याभावादपुङ्खरुचिराविरयुक्तमितिग्मौ तीक्ष्णौ दन्ताग्रभागौ ययोस्तौ यद्वा शतपत्रपत्रौ इति नेत्रविवक्षा अपुङ्खरुचिराविति कटाक्षविवक्षा वने चरत्कस्मै युयुङ्क्षसि प्रयोक्तुमिच्छसीति न विद्मः अतो भवादेतत्प्रार्थयामः तवायं विक्रमो जडधियामस्माकं क्षेमायास्तु ॥ ८ ॥

तदङ्गसौरभ्येणानुगच्छतो भ्रमरानालक्ष्य तद्विवक्षयाह । शिष्या इति । इमे परितः अनुगच्छन्तः इति शेषः भगवतस्तव शिष्या भ्रमरध्वनिमाश्रुत्य तद्विवक्षयाह । सरहस्यं सोपनिषत्सामाजस्रमविच्छेदेन पठन्ति ईशेति पुंस्त्वनिर्देशः पूर्ववत् शिखातो विलुलितपुष्पसंश्लिष्टभ्रमरानालक्ष्याह । युष्मच्छिखातो विलुलिताः गलिताः सुमनसामभितो वृष्टीः सर्वे तव शिष्याः भजन्ति तत्र गुरुत्वेनोपमा ऋषिगणा वेदशाखा इवेति ॥ ६ ॥

नूपुरादिचरणाभरणान्तर्गतमणिस्वनमाकर्ण्य तद्विवक्षयाह ।

वाचमिति । तुभ्यं तव विभक्तिव्यत्यय आर्षः पञ्जरा[...]
नीयचरणालङ्कारान्तर्गतानां तित्तिरीणामिति चरणाभर[...]
विवक्षया तित्तिरीशब्दः पक्षिकृजात्यापन्नयुक्तवच[...]
चनः स चाभेदोपात्तमणिपरः तेषां वाच परं केवलं शृण्मः[...]
भूतामरूपमुखरामदृश्यमानवक्तृकां मुखरीमुद्भूतां यद्वा चरणः
तित्तिरीणामिति नूपुरादिचरणाभरणविवक्षेव अस्मिन्पक्षे[...]
पमुखरामित्यस्यानभिव्यक्तवर्णध्वन्यात्मनोद्भूतामित्यर्थः [...]
नितम्बं परिधानवस्त्रं नितम्बकान्तित्वेन प्रकल्प्याह । कदम्ब[...]
मस्य रुचिर्दीप्तिरङ्कविटङ्कबिम्बे अङ्कश्च विटङ्कबिम्बयोः[...]
रतरनितम्बयोश्च तेषां समाहारः प्राण्यङ्गत्वादेकवद्भावः [...]
क लब्धा पाठान्तरे अङ्गेति सम्बोधनं नितम्बमण्डले [...]
रुचिः क लब्धेत्यर्थः मेखलामालक्ष्याह । यस्यां कदम्बरत्न[...]
तपरिधिः वर्तते अलातः साङ्गारकाष्ठं तद्भ्रमणनिमित्तेन [...]
कारेखाकृतिमापन्नोऽग्निपरिधिः वस्त्रं नितम्बकान्तित्वेन [...]
कल्प्य वस्त्रमदृष्ट्वेव पृच्छति । क च ते वल्कलमिति । आश्र[...]
णनिमित्त ऋषित्वव्यपदेशाभिप्रायेण वल्कलशब्दप्रयोगः ॥ [...]

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततः किं तत्राह । तामिति । एवशब्देनान्यदर्शनं नि[...]
अन्यदर्शनाभावे निमित्तमाह । अविदूर इति । सुमनसः पुष्प[...]
दिविजादीनां मनोनयनानामाह्लादं दुहन्तीति मनोनय[...]
ददुघास्तैर्गतिश्च विहारश्चविनयश्च विलोकनं च सुस्वर[...]
चावयवाश्च ते तथा तैः कुसुमायुधस्य कमास्य विवरमव[...]

निजमुखाद्विगलितः स्तनः मदजनकासनः तस्यामोद[...]
तेन मदेनान्धा मधुकरनिकारा ये तैरुत्पन्नेन उपरोधेन वि[...]
क्लेशेन द्रुतपदविन्यासेन वल्गु शोभनं स्पन्दनं [...]
येषां स्तनकलशादीनां ते तथा वल्गु स्पन्दनाः स्तनक[...]
यस्याः सा तथा तां पूर्वचिरस्ववलोकनेन बुद्धिभ्रंशविशे[...]
प्राप्त इत्याह । तदिति । भगवतः योनिलक्षणप्रशस्तस्था[...]
सर्वजनसम्भाव्यस्य वा मकरध्वजस्य कामस्य जडवद्[...]
चारपरिज्ञानशून्य इव इति वक्ष्यमाणप्रकारेण हशब्देन "[...]
मनासि विवेको विदुषामपि शास्त्रमन्भवस्तावत् । प्रपतन्ति
विशिखा यावन्नेन्दीवराक्षीणाम्" इत्यादिप्रसिद्धि [...]
जडत्वमेव दर्शयति । का त्वमिति । मुनिवर्येति पुंलिङ्गेन [...]
का त्वमिति स्त्रीलिङ्गेन प्रश्न इत्यादिविवेकाभावे विह्व[...]
गिरौ किं कर्तुमिच्छसि परदेवतायाः मायासि किं [...]
का मायासि नारी देवी गान्धर्वीत्यादिषु विज्यं मौर्वीरहि[...]
भ्रूलता सुहृदात्मनोऽर्थे सुहृदात्मनो वशीकरणाय [...]
चित्सुहृद आत्मनो वा पालनप्रयोजनाय वा बिभर्षि [...]
रमाह । किञ्चेति । भ्रूयुगलधनुर्भ्यां मृगान्मृगयसे कि[...]
न्वयः ॥ ७ ॥

बाणौ नयनलक्षणौ शतपत्रपत्रौ पद्मदलसदृश[...]
शान्तौ स्निग्धौ अपुङ्खरुचिरौ पुङ्खं विना शोभमानौ [...]
दन्तौ अतितीक्ष्णकटाक्षलक्षणौ एवं विधौ कस्मै पुंसे यु[...]
प्रयोक्तुमिच्छसि ॥ ८ ॥

हस्तवारणलक्षणशिक्षायोग्यत्वाच्छिष्या इति भ्र[...]

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विलुलिता युष्माकं केशपाशच्युताः सुमनोऽभिवृष्टीः पुष्पवृष्टीः ॥ ९ ॥

हे वह्मन् ! तुभ्यं तव चरणपङ्कजतित्तिरीणां चरणपद्मनूपुरान्तर्गतरत्नाख्योपलानां वाचं शब्दमात्रं परं न तु व्यक्तार्थां कथंभूतां रूपं विनापि मुखरीं शब्दवादनशीलामित्यरूपमुखरीं "तित्तिरिर्नूपुरान्तस्थरत्नपक्षिविशेषयोः । वक्रमार्गे यजुर्वेदे सिदयामपि च कथ्यते" इत्यभिधानं कदम्बपुष्पवद्रुचिरस्य सुन्दरस्याङ्कस्य सामीप्यात् कटिप्रदेशस्य विटङ्कबिम्बे उन्नतमण्डले शृङ्गारविशेषयुक्तमण्डले वा वर्तमाना ते तव वल्कला पटः क लब्धा यस्यां वल्कलायां अलातपरिधिः अलातमेवालातः तद्वत्स्थिता परिधिः पदिवेपः काञ्चीलक्षणा च "वल्कं वल्कलमस्त्रियाम्" इत्यभिधानाज्जडत्वाल्लिङ्गव्यत्यासः तथाच यस्य वल्कलस्योपर्यलातपरिधिरस्तीत्यन्वेतव्यम् ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तामेव देवीं मकरध्वजस्य वशमुपनीतः सन् जडवदिति वक्ष्यमाणां दशश्लोकीमुवाच जाड्यानुकरणञ्च वैदग्ध्यविशेषद्योतनार्थं विवरं मनोऽन्तःप्रवेशद्वारं विदधतीं निजमुखाद्विगलितममृतमिव स्वादु आसव इव मादकं यत् सहासं भाषणं तस्मिन् सति य आमोदो गन्धस्तेन मदान्धा मधुकरनिकरास्तैरुपरोध आवरणं तेन भयात् द्रुतः शीघ्रो यः पदविन्यासस्तेन वल्गु स्पन्दनं किञ्चिच्चलनं स्तनकलशयोः कवरभारो रसनायाश्च यस्यास्ताम् ॥ ६ ॥

का त्वमित्युक्त्वा ससम्भ्रममतिवात्यमारभ्यैव तपस्यतो मम स्त्रीपुंविशेषज्ञानं नास्तीति द्योतयन्नाह । हे मुनिवर्य्येति । अहमिव त्वमपि तपोऽर्थमेवात्र तिष्ठसि किमिति भावः किञ्च त्वं मुनिवर्य्यो भूत्वा मुनिं मां यन्मोहयस्यत्र किं कारणमिति च्चणं विभाव्य ज्ञातमित्याह । मायासीति । भगवानेव परदेवता तस्याः मायैव त्वं मुनिवर्य्यरूपेणात्र वर्त्तसे इति भावः किञ्च भ्रुवावालक्ष्याह । विज्ये निर्गुणे धनुषी विभर्षि हे सुहृत् ! सखे ! किमात्मनोऽर्थं स्वस्य कृते तवैताभ्यां किं कार्य्यमस्ति किं वा मृगानस्मदादीनिति गूढोऽर्थः ॥ ७ ॥

कटाक्षावालक्ष्याह । बाणौ शतपत्रे नेत्रकमले एव पत्रे ययोस्तौ शान्तौ विभ्रमेण मन्थरौ पुङ्खाभ्यां विनापि रुचिरौ अतितिग्मौ तीक्ष्णौ दन्ताग्रभागौ ययोस्तौ क्षेमायेति यद्यस्मान् प्रतियोक्ष्यसे तर्ह्यनयोर्ज्वालया नैव जीविष्याम इति भावः ॥ ८ ॥

तस्याः सौरभ्यलोभेनानुगच्छतो भ्रमरानालक्ष्याह । शिष्या भ्रमराः ॥ ९ ॥

नूपुरस्वनमास्वाद्याह । वाचमिति । तुभ्यं त्वामानन्दयितुं तव चरणस्थयोः पञ्जरयोरन्तर्गतास्तित्तिरिपक्षिणो वर्त्तमाना अनुमीयन्ते यस्मादरूपामदृष्टवक्तृकां मुखरां पारस्परिककलहमयीं वाचं शृणुयाम हे ब्रह्मन्निति तव तपोयोगबलाद्विलसितमेवैतदिति भावः परिधानीयातिसूक्ष्मपीतवस्त्रस्य नितम्बलग्नत्वेन लावण्यमास्वाद्याह । अङ्कविटङ्कबिम्बे नितम्बस्य सुन्दरमण्डले कदम्बरुचिः पीतकान्तिर्लब्धा श्यामस्यापि तव नितम्बः पीत इत्याश्चर्य्यमङ्गनितम्बबिम्बे इति पाठे अङ्गेति सम्बोधनं रत्नमेखलां निर्णयाह । यस्यां पीतकान्तौ अलातपरिधिर्ज्वलदङ्गारमण्डलं अहो ते तपस्विव्रतेति भावः क च वल्कलं ते इति किं स्वाश्रम एव वल्कलं अमादेवापहाय मन्निकटं नग्न एवायातोऽसीति भावः भङ्ग्या सुरतप्रार्थना च द्योतिता ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तां नयनगोचरां देवीमविदूरे निकटे सुमनसः उपजिघ्रन्तीं मधुकरीमिव जडवदिति उवाच कथम्भूतः तदवलोकनेन तस्या अवलोकनेन विवृतावसरस्य दत्तक्षणस्य मकरध्वजस्य वशमुपनीतः कथम्भूताम् दिविजादिमनोनयनाल्हादद्ध्योगत्यादिभिर्नृणां मनसि कुसुमायुधस्य विवरं छिद्रं विदधतीं निजमुखाद्विगलितममृतवत् स्वादु आसववन्मादकं यत्सहासं मन्दहसितसहितं सम्भाषणं तस्मात् य आमोदः वहिर्निःसृतो गन्धस्तेन मदान्धमधुकरनिकरैरुपरोध आवरणं तेन भयाद्द्रुतेन शीघ्रेण पदविन्यासेन वल्गु स्पन्दनं किञ्चिच्चलनं स्तनकलशयोः कवरभारे रसनायां च यस्याः ॥ ६ ॥

तद्वचनमेवाह । का त्वमिति दशभिः । मुनिवर्य्येत्यादि पुंस्त्वेन सम्बोधनं भ्र्वादीनां धनुष्ट्वादिकल्पनं च स्वात्मनस्तद्वद्यत्वद्योतकं तस्याः वशीकरणार्थं च भगवतां ब्रह्मादीनां परदेवता उपास्यभूता या देवता तस्याः कापि काचित् मायाऽसि किम् भ्रुवौ धनुष्ट्वेन कल्पयित्वाह । हे सुहृत् ! विज्ये ज्यारहिते विभर्षि किमात्मनोऽर्थे स्वभोजनार्थं वा शब्देन वृथा मांसभक्षणस्य निन्दितत्वात् श्राद्धाद्यर्थमप्रमत्तान् अनवहितानस्मद्विधान् मृगयसे ॥ ७ ॥

कटाक्षौ बाणत्वेन कल्पयित्वाह । बाणाविति । शतपत्रे नेत्ररूपेण संस्थिते कमले ते एव पत्राणि पिच्छानि ययोः अपुङ्खरुचिरौ पुङ्खाभ्यां दीर्घशलाकारूपाभ्यां विनापि रुचिरौ अतितिग्मवन्तौ अतितीक्ष्णाग्रभागौ कस्मै युयुङ्क्षसि प्रयोक्तुमिच्छसीति न विद्मः स्वस्य तल्लुब्धत्वं ज्ञापयन् प्रार्थयते तव विक्रमः अत्र प्रचारः नोऽस्माकं क्षेमायेष्टसिद्धयै अस्तु ॥ ८ ॥

तदङ्गसौरभलोभेन परितो भ्रममाणान् ध्वनिं कुर्वतः मधुकरान् तच्छिष्यत्वेन कल्पयित्वाह । शिष्या इति । सरहस्यं साङ्गं साम पठन्ति अजस्रं सन्ततमीश्वरं गायन्ति च मूर्खं मत्वा त्यक्ष्यतीति शङ्कया तथ्येन मधुकरानेवाह । ऋषिगणाः वेदशाखा इव सुमनोऽभिवृष्टीर्भजन्ति अर्थादेते पुष्पपरिमललुब्धा मधुकरा इत्यर्थः ॥ ९ ॥

नूपुरादीन् पञ्जरादित्वेन कल्पयित्वाह । वाचमिति । हे ब्रह्मन् ! तुभ्यं तव चरणस्थपञ्जरयोः नूपुरयोः तित्तिरीणामन्तर्गतरत्नानाम् अरूपमुखरामरूपा अदृष्टवक्तृका मुखरा प्रकटा तां च वाचं परं केवलं शृणवाम शृणुमः पीतं पटं तत्र कान्तित्वेन कल्पयित्वा पृच्छन्ति अङ्कविटङ्कबिम्बे नितम्बस्य सुन्दरे मण्डले कदम्बकुसुमस्य रुचिः कान्तिः क लब्धा कुत्र प्राप्ता काञ्चीं मेखलाम् अलातपरिधिं प्रकल्प्याह । यस्यां कदम्बरुच्यामलातपरिधिरस्ति नितम्बकान्तित्वेनोक्तां नग्नां प्रकल्प्य पृच्छति च पुनस्ते वल्कलं क्वेति ॥ १० ॥

भाषाटीका ।

थोडे दूरमे जैसें भौंरी फूलों को सूंघती हो तैसे देवमनुष्योंके मनको आनन्द देने वाले गति विहार विनय अव-

किं सम्भृतं रुचिरयोर्द्विज ! शृङ्गयोस्ते मध्ये कृशो वहसि यत्र दृशिः श्रिता मे ।
पङ्कोऽरुणः सुरभिरात्मविषाण ईदृग्येनाश्रमं सुभग ! मे सुरभीकरोषि ॥ ११ ॥
लोकं प्रदर्शय सुहृत्तम!तावकं मे यत्रत्य इत्थमुरसावयवावपूर्वौ ।
अस्मद्विधस्य मनउन्नयनौ बिभर्ति बह्वद्भुतं सरसराससुधादि वक्त्रे ॥ १२ ॥
का वात्मवृत्तिरदनाद्धविरङ्ग ! वाति विष्णोः कलास्यनिमिषोन्मकरौ च कर्णौ ।
उद्विग्नमीनयुगलं द्विजपङ्क्तिशोचिरासन्नभृङ्गनिकरं सर इन्मुखं ते ॥ १३ ॥
योऽसौ त्वया करसरोजहतः पतङ्गो दिक्षु भ्रमन् भ्रमत एजयतेऽक्षिणी मे ।
मुक्तं न ते स्मरसि वक्रजटावरूथं कष्टोऽनिलो हरति लम्पट एष नीविम् ॥ १४ ॥
रूपं तपोधन!तपश्चरतां तपोघ्नं ह्येतत्तु केन तपसा भवतोपलब्धम् ।
चर्तुं तपोऽर्हसि मया सह मित्र!मह्यं किम्वा प्रसीदति स वै भवभावनो मे ॥ १५ ॥

भाषाटीका।

लोकन सुन्दर अक्षरोंके वचनोंसे मनुष्यों के हृदय में कामके बाणों से बेधन कराती हुई निज मुखसे निकला जो अमृतरूप आसव सहित सम्भाषण तिससे जो आमोद तिसके मदसे अन्धे भौंरोंके समूह से जो रुकावट तिससे चलनेमें जो शीघ्र पदन्यास तिससे मनोहर किंचित् चालसे चलाय मान स्तनोंका भार तथा कांधनी जिसकी ऐसी प्रकाश मान जो अप्सरा तिसके देखनेसे अवसर पाने वाले भगवान् मकरध्वज कन्दर्पके वशीभूत होकर जड बुद्धी सा होकर राजा इस वचनको बोला ॥ ६ ॥

मोहित होकर स्त्रीलिङ्ग पुलिङ्गको न समझकर बोलने लगे कि हे मुनिवर्य ! तु कौनसी है क्या करने चाहती है इस पहाडपै क्यों आयी है परदेवता भगवान् की कोई माया है क्या हे सुहृत् विना प्रत्यंचाके दो धनुप ( भौं ) धारण किये हो वे धनुप क्या अपने वास्ते हैं कि वा कोइ हमसे, प्रमादी मृगोंको वनमे ढूंडती हो ॥ ७ ॥

भृकुटी देखकर कहते हैं कि नेत्र कमल ही बाण के पक्ष्म पत्र हैं अतिशान्तहै पुंख बाणके मूलके विना भि अति मनोहर है अति तीक्ष्ण दांत वाले हैं ऐसे दोनों बाणों को किसके ऊपर छोडौगे वनमे विचरते समय आपका पराक्रम हम जड बुद्धि वालों के कल्याणको होवे ॥ ८ ॥

भौंरोंको देखकर कहते हैं कि आपके शिष्यसे सब भगवान् आप ईश्वरको चारों तरफसे रटते हैं और रहस्य सहित सामको गान करते हैं आपके बालोंके शिखों से गिरि फूलोंकी वृष्टि को ये सब ग्रहणकर तहैं जैसे कि ऋषिगण वेद शाखोंको ग्रहण करैं ॥ ९ ॥

हे ब्रह्मन् ! आपके चरण पङ्कज जोतित्तिरि रूप तिनके जो विना रूपके और शब्द वाले वचन को केवल हम सुनते मात्र हैं आपकी कटि हैमनोहर है तिसविम्बमें कदम्ब की नाभि कहां से आई तुमारी कटि पर मेखला मे अग्नि का चक्र-भ्रमताहै आपका वल्कल वस्त्र कहां गयाहै ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

स्तनावालक्ष्याह । शृङ्गयोः स्तनयोः किं सम्भृतं कि मस्ति । मनोहरं किञ्चिदस्तीत्येतावत्तु जानामि । यतो मध्ये ऽपि त्वं कृच्छ्रेण वहसि धारयसि । यत्र च मे दृशिर्दृष्टिः संलग्नास्ति । अन्यथेदं द्वयं न घटत इति भावः । स्तनगतं ममालक्ष्याह । पङ्कोऽरुण आत्मनस्तव विषाणे शृङ्गे ईदृगस्ति कुत इत्यत आह । येन पङ्केनाश्रमं सुरभीकरोषि सुग करोषीति ॥ ११ ॥

लोकं स्थानं यत्रत्यो जन उरसा इत्थमपूर्वावयवौ बि मनस उन्नयनौ । क्षोभकौ पाठान्तरे "इत्थम्भूतलक्षणे" वक्त्रं च बह्वद्भुतं बिभर्ति । किं तदाह । रसो मधुरालापः विलासस्ताभ्यां सहिता सुधा अधरामृतमादिशब्दा नर्मादि ॥ १२ ॥

का वा तव लोके आत्मनो देहस्य वृत्तिराहारः । हे सखे ! अदनाच्चर्वणाद्धविरिति तत्सम्बन्धी गन्धो वात्या इति ताम्बूलाभिप्रायम् । अदनाद्बहिरङ्ग भातीति पाठे ममद जनाद्बहिर्भूतैव वृत्तिर्भातीत्यर्थः । यतस्त्वं विष्णोः क विष्णुश्च नाश्नाति।"अनश्नन्नन्यो अभिचाकशीति"इति श्रुते कलासीत्यत्र हेतुः । तव च कर्णौ विष्णोरिवानिमिषे अनिमिषौ रत्ननेत्रत्वेन निमेषशून्याद्युल्लसन्तौ मकरौ कुण्डले ययोस्तौ । किञ्च । तव मुखं सर इत् सर इव । उद्विग्नं चञ्चलं मीनयुगलमिव नेत्रद्वयं यस्मिन् । दन्तास्तेषां पङ्क्तिः शोचिः शोभा यस्मिन् । सरसि तु राजहंसाः आसन्नो भृङ्गनिकर इव केशस्तोमः परिमल स्तोमो वा यस्मिन् ॥ १३ ॥

पतङ्गः कन्दुको भ्रमतो भ्रमच्चित्तस्य मे अक्षिणी एजयं लतां नयति । वक्रकेशसमूहं मुक्तबन्धनं न स्मरसि न बध्नासि किम् । कष्टो धूर्तोऽनिलो नीवीं हरत्येतन्न किम् ॥ १४ ॥

उपलब्धं प्राप्तम् । मह्यं मम । हे मम मित्र ! मया सह त र्हसि । किञ्च स वै भवभावनः संसृतिविस्तारको ब्रह्मा मे प्र त्वां भार्यां कल्पयतीत्यर्थः ॥ १५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्तनावालक्ष्याह । हे द्विज ! सुन्दरयोः शृङ्गयोः किं सम्भृतं किम्पूर्णमस्ति मनोहरं किञ्चिदस्तीत्येतावत्तु जानामि यतो मध्ये मध्यकाये कृशोऽपि त्वं कृच्छ्रेण शृङ्गद्वयं वहसि अत्र शृङ्गयोर्मे दृशिराश्रिता संलग्नास्ति अन्यथेदं वहनं मम हृदयासञ्जनं च न घटत इति भावः स्तनगतं कुङ्कुममालक्ष्याह । पङ्कोऽरुणः सुरभिरात्मनस्तव विषाणे स्तने ईदृगत्यपूर्वः क्षिप्त इति शेषः कुतः येन पङ्केन सुभगं ममाश्रमं सुरभीकरोषि ॥ ११ ॥

हे सुहृत्तम ! तावकं त्वत्सम्बन्धिनं लोकं स्थानं मे मह्यं प्रदर्शय यत्रत्यः यः तावकलोकस्थः जनः अस्मद्विधस्य मादृशस्य मनउन्नयनौ मनःक्षोभकौ उल्लासकरौ वा उरुवयत्वयलोपाः यलोपस्यासिद्धत्वान्न गुणः इत्थं ईदृशावपूर्वावयवौ शृङ्गरूपौ स्तनौ उरसा बिभर्त्ति वक्त्रे च वहद्भुतं बिभर्त्ति किं तत्सरससरासमुधादि सरसो मधुरालापः रासो विलासस्ताभ्यां सहिता सुधा अधरामृतमादिशब्देन स्मितादिसङ्ग्रहः ॥ १२ ॥

तव लोके आत्मनो देहस्य वृत्तिराहारः का वा अङ्ग ! हे सखे ! अदनाद्यर्वणाद्धविः भक्षणव्यतिरेकेण भक्षणं विनैव तत्रात्मवृत्तिर्जीवनं संभवतीति भाति सा कीदृशी अदनाद्धविर्दातीति पाठे हविः शब्दस्तद्गन्धे उपचाराद्वर्तते अदनाद्यर्वणाद्धविः सम्बन्धि गन्धो वात्यायातीति ताम्बूलाभिप्रायं पूर्वोक्तपाठ एव साधुः विष्णोः कलासीति हेतूक्तेः तथाहि तस्मिन्पाठे तव भोजनाद्वहिर्भूतैव वृत्तिरित्यवभातीत्यर्थः कुतः यतस्त्वं विष्णोः कलांशोऽसि विष्णुर्नाश्नाति "अनश्नन्नन्यो अभिचकाशीति" इति श्रुतेः विष्णोः कलासीत्यत्र हेतुः तव कर्णौ विष्णोरिवानिमिषोन्मकरावनिमेषौ रत्नश्रेष्ठत्वेन निमेषशून्यौ उल्लसन्तौ मकरौ तदाकारे कुण्डले ययोस्तौ किं च तव मुखं सरइत्सर इव तदेवाह । उद्विग्नं चञ्चलमीनयुगलमिव नेत्रद्वयं यस्मिन् द्विजाः दन्तास्तेषां पङ्क्त्योः शोचिः शोभा यस्मिन् शोचिःशब्दः सान्तः सरसि तु द्विजाः हंसाः आसन्नो भृङ्गनिकर एव केशस्तोमः परिमललुब्धभृङ्गस्तोमो वा ॥ १३ ॥

त्वया करसरोजेन हतः योऽसौ पतङ्गः कन्दुकः दिक्षु भ्रमन् भ्रमतः भ्रमितचित्तस्य मेऽक्षिणी एजयते चञ्चलतां नयति वक्रकेशसमूहं मुक्तबन्धनं न स्मरसि न वध्नासि किं कष्टो धूर्त्तः लम्पटो लालसः एष अनिलो वायुः नीवीं हरत्यधराम्बरं हरति एतच्च न स्मरसि किम् ॥ १४ ॥

हे तपोधन!तपश्चरतां तपोविघ्नकरमेतद्रूपं भवता केन तपसोपलब्धं प्राप्तं हे मित्र ! मया सहितस्तपश्चर्तुमर्हसि भवभावनः विश्वस्रष्टा स वै अजो ब्रह्मा किं वा मह्यं प्रसीदति त्वां भार्यां कल्पयतीत्यर्थः ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मध्ये कृश इत्यलुक् कृशमध्यस्त्वं यौ वहसि ते तव तयोः रुचिरयोः शृङ्गयोः शृङ्गवदुन्नतयोः स्तनयोः संभृतं किं चूचुकलक्षणनीलरत्नमिति शेषः यत्र ययोः द्विजेति सम्बोधनं जडत्वात् कुङ्कुमाद्यङ्गरागाभिप्रायेणाह । पङ्क इति । आत्मविषाणे तव स्तनद्वयेऽरुणः पङ्कः कुङ्कुमाद्यङ्गरागः ईदृगीदृशगुणोपेतः कथमत्राह । येनेति ॥ ११ ॥

यत्रत्यः यस्मिन् देशे भूतस्त्वमुरसा अपूर्वौ नूतनौ अवयवौ स्तनलक्षणौ बिभर्षि किं विशिष्टावस्मद्विधस्य मनउन्नयनौ मनस उत्कर्षप्रदौ स त्वं तावकं लोकं प्रदर्शयेत्यन्वयः अन्यदपीत्याह । वहतीति । किं तदत्राह । सरसेति । वक्त्रे रसेन सह वर्तमानः सरसो हासः मन्दहासः तेन युक्तां सुधामधरामृतं च बिभर्षि पानेन सरसहासक्रीडाकरीं सुधामिति वा ॥ १२ ॥

अङ्ग ! तवात्मवृत्तिर्देहयात्रा का अशनमिति चेत्तत्राह । अदनादिति । अदनाद्धविर्भोजनं विनेति मे भाति अन्नभक्षणेनैव वलीपलितदौर्गन्ध्यादिकं स्यात्तत्तव नास्तीति भावना कल्प्यत इति भावः किं च त्वं विष्णोः कलासीति मन्ये अशनाद्यभावात् लक्षणान्तरं चास्तीत्याह । अनिमिषन्मकरावितिं । अनिमिषन्तावुन्मीलन्तौ मकरौ मकरमत्स्यलक्षणौ कर्णौ कुण्डलाख्याकल्पौ विष्णुत्वे लक्षणमिति शेषः इदं चास्मन्मनोहरमित्याह । उद्विग्नमीनेति । ते तव मुखं सरः मुखाख्यं सरः उद्धृतकृष्टमित्यन्वयः कथमुद्विग्न संचलितं मीनयोर्नेत्रयोर्युगलं यस्मिंस्तत्तथा अनवस्थितिलक्षणाव्यभिचारान्नेत्रस्थाने मीनग्रहणं सरःपदोपादानाच्च द्विजानां दन्तवल्लिविडतया स्थितानां पक्ष्मणां पङ्क्तिभिः शोभायमानि द्विजपङ्क्तिशोभि अन्यत्र पक्षिणां पङ्क्तिभिः शोभि आसन्नो भृङ्गाणां निकरो यस्मिन् तत्तथा उभयत्र समं द्विजपङ्क्तिशोचिरिति केचित्पठन्ति ॥ १३ ॥

त्वया करसरोजेन हतो योऽसौ पतङ्गः कन्दुकः दिक्षु भ्रमन् भ्रमतः तवाक्षिणी एजयते चालयतीत्यन्वयः लम्पटो रागी अत एव कृष्णा १ एषः अनिलो वायुः वरो वरणीयश्च वक्रः कुटिलश्च जटानां वरूथः समूहस्ते तव तं हरति नीवीं वस्त्रबन्धं च हरतीत्येतच्च युक्तमित्यन्वयः ॥ १४ ॥

हे तपोधन ! तव यद्रूपं तपः कुर्वाणानां पुंसां तपोघ्नं तपोविघ्नकरमेतद्रूपमिह तपोराशौ केन तपसा त्वया लब्धमित्यन्वयः हे मित्र ! मया सह तपः कर्तुमर्हसीत्यन्वयः "तप ऐश्वर्ये" इति धातो ऐश्वर्यनिमित्तं विषयभोगलक्षणमानन्दं गमयितुमिति वा चरतेर्गत्यर्थत्वात् मह्यं मे त्वं प्रसीदसि किं वा तर्हीति शेषः कुत इति तत्राह । स इति । स भवान्मे भवभावनः सम्पत्करो वा इत्यन्वयः ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

लोकमिति । उन्नयनैरिति पाठे चोन्नयनैरपूर्वत्वप्रकारं प्रापयसीत्यर्थः ॥ १२ ॥

ननु निराहार एवाऽहं तत्राह । अदनाद्यर्वणाद्धेतोः हविर्यद्विषयद्रव्यमिव परमपवित्रं किमपि वाति तत्सम्बन्धिगन्धः प्रसरतीत्यर्थः पूर्वपाठे विष्णोः कलासीति हेतुत्वं तु विष्णोर्यद्धर्मोत्कृत्यादिति ज्ञेयम् इदित्यव्ययमेवार्थः एवार्थश्चात्र सादृश्य इति ज्ञेयम् उदिति तु कल्पितमेव ॥ १३—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ॥

स्तनावालक्ष्याह । हे द्विज!शृङ्गयोः किं सम्भृतं किमद्भुतं बहुमूल्यरत्नं वस्तु धृतं वर्त्तते यन्मद्दृष्टिपातसमय एव मुहुराच्छादयसीति भावः ब्राह्मणो भूत्वापि शृङ्गद्वयं धत्से तत्रापि वक्षसि तत्रापि मनोहरमेव वस्तु धत्से यतो मध्ये कृशोऽपि

---

१ भाविनः

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

कृच्छ्रेणापि वहसि यत्र हशिमंदृष्टिः श्रिता लग्नेति मद्दृष्टिरेवात्र प्रमाणमिति भावः तेनाच्छादनमुद्घाट्य स्वयमेव दर्शयित्वा मत्सन्देहमपाकुरु किं वा आज्ञापयसि चेत् सौहार्देनाहमेवोद्घाटयामि तपस्विनो मम वस्तुनि प्रयोजनं नास्ति केवलं दर्शन एवेति भावः स्तनस्य शृङ्गत्वं तुङ्गत्वातिशयविवक्षया ज्ञेयं स्तनगतं कुङ्कुममालक्ष्याह । आत्मनः स्वस्य विषाणे शृङ्गे ईदृक् पङ्को धृतः कस्य सरोवरस्य सुरभिररुणश्च पङ्कस्तमहमपि वक्षसि धित्सामीति भावः ॥ ११ ॥

अस्मद्देशे मनुष्योऽपि वक्षसि शृङ्गद्वयं धत्त इति चेत्तत्रैव गत्वा तपश्चिकीर्षामीत्याह । लोकमिति । हे सुहृत्तमेति सौहार्देनैवेति भावः नन्वेते शृङ्गे न भवत इत्यत आह । यत्रत्यो जन इत्थमुरसा वक्षसा मनस उन्नयनौ क्षोभकौ उन्नयनैरिति पाठे उत्कर्षेण ग्रहणैः वक्त्रे च बहद्भुतं विभर्त्ति किन्तदाह । सरसो मधुरालापः रासो विलासः ताभ्यां सहिता सुधा अधरामृतम् आदिशब्दादामोदमकरन्दादिकं स्मितनर्म्मादि ॥ १२ ॥

का वा तव लोके आत्मनो देहस्य वृत्तिर्जीविका ताम्बूलगन्धमनुभूतं व्यञ्जयन्नाह । हविरिति । अदनात् भक्षणाद्धेतोः हविरिति तत्सम्बन्धी गन्धो वाति आगच्छति देशान्तरे यलोका हविर्भोजिनः श्रूयन्ते तस्मादेष हविष एव गन्धोऽनुमीयत इति ताम्बूलहविषोः स्वापरिचितत्वं व्यञ्जितम् अदनाद्धविरङ्ग भातीति पाठे भोजनाद्धविर्भूतैव वृत्तिर्भातीत्यर्थः यतस्त्वं विष्णोः कलासि विष्णुश्च "नाश्नात्यनश्नन्नन्योऽभिचाकशीति,,इतिश्रुतेः अत्र लिङ्गं विष्णोरिवानिमिषोन्मकरौ रत्ननेत्रत्वेन निमेषशून्यौ उत्कृष्टमकरौ कुण्डलाकारौ ययोस्तौ किञ्च एवं मुखं सर इव सर इव उद्विग्नमीनयुगलमिव नेत्रद्वयं यत्र तत्र द्विजाः हंसा दन्ताश्च तेषां पङ्क्त्या शोचिः शोभा यस्मिंस्तत् आसन्नो भृङ्गनिकर इवालकसमूहो यस्मिंस्तत् ॥ १३ ॥

कन्दुकक्रीडामालक्ष्याह । पतङ्गः कन्दुकः भ्रमतः भ्रमाश्चित्तस्य मे अक्षिणी एजयते चञ्चलीकरोति वक्रं जटावरूथं केशसमूहं मुक्तं मुक्तबन्धनं न स्मरति कष्टो धूर्त्तः नीवीं हरति एतच्च न स्मरसि किमेतावांस्तव कन्दुकक्रीडायामावेश इति भावः ॥ १४ ॥

तपस्विनो मम तपस्विसङ्गोऽपेक्षित एवेत्याह । रूपमिति । हे तपोधन ! उप आधिक्येन लब्धं मह्यं मां सुखयितुं मया सह तपश्चरितुमर्हसि मे मां पूर्णमनोरथीकर्तुं भवभावनो ब्रह्मा ॥ १५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्तनौ शृङ्गयुग्मत्वेन प्रकल्प्य पृच्छति हे द्विज ! ते त्वया शृङ्गयोः किं रत्नादिकं सम्भृत्तं निहितं यतो मध्ये कृशोऽपि त्वं वहसि यत्र शृङ्गयोर्भृते वस्तुनि शृङ्गद्वये वा मे दृशि दृष्टिः श्रिता अश्रिता न पराकृष्टुं शक्ता इत्यर्थः स्तनस्थकुङ्कुमं पङ्कत्वेन परिकल्प्याह । आत्मविषाणे भवदीयशृङ्गे अरुणः सुरभिश्च ईदृक् पङ्कोऽस्त येन पङ्केन आश्रमं सुरभी करोषि सुगन्धव्याप्तं करोषि ॥ ११ ॥

हे सुहृत्तम ! तावकं त्वदीयं लोकं स्थानं मे महां यत्रत्यो जन इत्थमपूर्वावयवौ विषाणरूपौ उरसा मनस उन्नयनौ हर्षकरौ वक्त्रे च रसस्य मृदुभाषणस्य प्रवर्त्तनं तेन सहितं सुधादि अधरामृतदन्तकान्ति तादि बहु अद्भुतं विभर्ति ॥ १२ ॥

हे अङ्ग ! मित्र ! आत्मनस्तव का वा वृत्तिः आहार जीविका अदनाद्भक्षणात् हविः वाति गन्ध आगच्छति गुणिनोरभेदात् किञ्च विष्णोः कलासि किं च ते पोन्मकरौ कर्णौ भवतः नेत्राकारमणिद्वययुक्ततया हितौ उज्ज्वलौ मकरौ तत्सदृशौ कुण्डले ययोस्तौ किञ्च ते मुखं सर इव मीनहंसभ्रमरादिश्रीयुक्तसर इवासि उद्विग्नं चपलं मीनयुगलमिव नयनयुगलं यस्मिन् द्वि दन्तपङ्क्त्या शोचिरोचिर्यस्मिन् आसन्नो गन्धलोभेन भृङ्गनिकरो यस्य तत् ॥ १३ ॥

भ्रमतः सोद्वेगस्य मुक्तं गतबन्धनं वक्रजटावरूथं न कष्टः धूर्त्तः लम्पटः त्वय्यासक्तः नीवीं वस्त्रं हरति तत्र किम् ॥ १४ ॥

हे मित्र ! स ब्रह्मा ॥ १५ ॥

---

### भाषाटीका

हे द्विज ! आपके सुन्दर दोनों सींगों में क्या रखा है रूप होकर उन सींगों को [ स्तनों ] को धारण करते हो मेरी दृष्टि लग गई है आपके सींग में लाल कीचड इस प्रका है जिससे कि हे सुभग ! हमारे आश्रमको सुगन्धित करते हो

हे सुहृत्तम ! आप अपना लोक हमको दिखाओं जहां रहने पुरुष हमारे मनको हरण करने वाले ऐसे अपूर्व अवयवों छाती से धारण करते हैं और मुख में बहुत अद्भुत सरस अमृत हासादि धारण करते हैं ॥ १२ ॥

हे मित्र ! आपकी आहार की वृत्ति क्या है जिसके सुगन्ध आता है आप तो विष्णु की कला हो और तुम्हारे भी विना निमिष के सुन्दर मकर हैं भय से चलाय मान जिसमें हंसों की पङ्क्ति की शोभा है जिसमें समीप में समूह है जिसमें ऐसा तुम्हारा मुख सरोवर सरीखा होता है ॥ १३ ॥

यह जो तुमने हाथ से फेंक दिया सूर्य ( गेंद ) दिशों में ता है सो मैं भ्रमित हूं मेरी आखों को घुमाता है तुम्हारा का समूह खुला हुआ है तिसको तुम नहीं याद करते दुष्ट पवन तुम्हारे कटि वस्त्रको उडा देता है सो भी तुम नहीं करती हो ॥ १४ ॥

हे तपोधन ! इस रूपको तुमने किस तपस्या से लाभ यह रूप तपस्या करने वाले हम सरीके पुरुषों के तप करने वाला है हे मित्र ! आप तो मेरे साथ तपस्या करते हो अथवा वह जगत्कर्ता ब्रह्मा हम पर प्रसन्न होकर देता क्या ॥ १५ ॥

---

न त्वां त्यजामि दयितं द्विजदेवदत्तं यस्मिन्मनो दृगपि नो न वियाति लग्नम्।
मां चारुशृङ्ग्यर्हसि नेतुमनुव्रतं ते चित्तं यतः प्रतिसरन्तु शिवाः सचिव्यः ॥ १६ ॥

॥ श्रीशुकउवाच ॥

इति ललनानुनयातिविशारदो ग्राम्यवैदग्ध्यया परिभाषया तां विबुधवधूं विबुधमतिरधिसभाजयामास ॥ १७ ॥

सा च ततस्तस्य वीरयूथपतेर्बुद्धिशीलरूपवयःश्रियौदार्येण पराक्षिप्तमनास्तेन सहायुतायुतपरिवत्सरोपलक्षणं कालं जम्बूद्वीपपतिना भौमस्वर्गभोगान् बुभुजे ॥ १८ ॥

तस्यामुह वा आत्मजान् स राजवर आग्नीध्रो नाभिकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान्नव पुत्रानजनयत् ॥ १९ ॥

सा सूत्वाथ सुतान्नवानुवत्सरं गृह एवापहाय पूर्वचित्तिर्भूय एवाजं देवमुपतस्थे ॥ २० ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका।**

द्विजदेवेन ब्रह्मणा दत्तम् दृक् मनश्च लग्नं सन्नापयाति हे चारुशृङ्गि! यतस्ते चित्तं तत्र मां त्वदधीनं नेतुमर्हसि सचिव्यस्तव सख्योऽपि शिवा अनुकूलाः सत्यो मां प्रतिसरन्त्वनुवर्तन्ताम् यद्वा एतावत्पर्यन्तं मे याः सचिव्यः सख्यः शिवाः फेरवस्ताः प्रतिसरन्तु निर्यान्तु यद्वा वनवासे सहचर्यो हरिण्यः शिवाः प्रतिसरन्तु प्रदक्षिणं गच्छन्तु ॥ १६ ॥

ग्राम्येषु वैदग्ध्यं यस्यास्तया परिभाषया वाचा सभाजयामास पूजयामास सम्मुखीचकारेत्यर्थः ॥ १७ ॥

बुद्ध्यादीनां द्वन्द्वैक्यम् ॥ १८ ॥ १९ ॥

सूत्वा प्रसूय उपतस्थेऽभजत् ॥ २० ॥

---

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।**

हे द्विज! देवेन ब्रह्मणा दत्तं त्वां न त्यजामि यस्मिंस्त्वयि नोऽस्माकं दृङ्मनश्च लग्नं सन्न वियाति न ततो गच्छति हे चारुशृङ्गि! यतस्ते चित्तं ततो मां त्वदधीनं नेतुमर्हसि सचिव्यस्तव सख्योऽपि शिवा अनुकूलाः मां प्रतिसरन्त्वनुवर्तन्तां यद्वा एतावत्पर्यन्तं मे याः सचिव्यः शिवाः फेरवस्ताः प्रतिसरन्तु निर्यान्तु यद्वा वनवासेन सह वसन्त्यो हरिण्यः शिवाः प्रतिसरन्तु प्रदक्षिणं गच्छन्तु सरण्य इति पाठे सरन्तीति सरण्यो राज्ञ्यः शिवाः मङ्गलरूपाः सरन्तु गच्छन्तु ॥ १६ ॥

इतीत्थं ललनानुनये ताः स्वाधीनाः कर्तुमित्यर्थः अतिनिपुणो ग्राम्येषु वैदग्ध्यं कौशलं यस्यास्तया परिभाषया तां विबुधवधूमप्सरसं मोहितचित्तः अति सभाजयामास सबहुमानं तामनुकूलामकरोदित्यर्थः ॥ १७ ॥

सा च पूर्वचित्तिः तस्य वीरयूथपतेः वीराणां यूथाः तेषां पतेराग्नीध्रस्य बुद्ध्यादीनां द्वन्द्वैक्यं तेन पराक्षिप्तमासक्तं मनो यस्याः सा जम्बूद्वीपपतिना तेनाग्नीध्रेण सह बहुकालं भौमस्वर्गाः नवखण्डाः तेषु ये भोगास्तान् बुभुजे ॥ १८ ॥

ततः स राजश्रेष्ठः आग्नीध्रः तस्यां पूर्वचित्त्यां नाभिप्रभृतीन्नवात्मजान् पुत्रानजनयत् पुमाख्यान्नरकात्त्रायत इति पुत्र इत्यवयवार्थावगमाय पुत्रशब्दः प्रयुक्तः अतो न पौनरुक्त्यम् ॥ १९ ॥

सा पूर्वचित्तिः प्रतिवत्सरमेकैकं पुत्रमिति नव सुतान् सूत्वा गृह एवापहाय विहाय पुनरजं देवं ब्रह्माणमुपतस्थेऽभजत् ॥२०॥

---

**श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।**

हे द्विज! देवेन विधिना दत्तं यस्मिंस्त्वयि लग्नं मनो लग्ना दृगपि दृष्टिर्वा न वियात्यन्यत्र न गच्छति हे चारुशृङ्ग! सुंदरस्तन! त्वं मां नेतुमर्हसि कुतः मम चित्तं ते तवानुव्रतमनुगतमिति यतः मुग्धो ग्राम्यकाम इवाह। प्रतिसरन्त्विवति। इमाः शिवाः शुभाः सचिव्यो दासीवद्वर्तमाना मधुकर्यः प्रतिसरन्त्वपसरन्तु दूरं गच्छन्तु अधुनाहं त्वां संभोक्तुकाम इति शेषः यद्वा सचिवीवद्वर्तमानाः शिवाः शृगालस्त्रियः प्रतिसरन्तु प्रदक्षिणं गच्छन्त्विति स्वकार्यसिद्ध्ये शकुनं प्रार्थयत इति नन्वत्र कथं विज्ञे इत्यादावनर्था वार्ता संगच्छत इतिचेदुच्यते परिहासादिषु दर्शनात्तद्युक्तम्। परिहासप्रलापादिष्वनर्था वाग्भवेत्कचिदिति। तस्मादाग्नीध्रः कामातुरत्वादेवंविधानि वाक्यानि प्रालपदिति युक्तम् ॥ १६ ॥

विरागिणां श्रोतॄणां कर्णदुःसहायाः इह शाब्दिकानामपहासहेतोरिव स्थिताया ग्राम्यकथाया अथापि समाप्तिर्नास्तीति मन्वान इवोत्तरकथाप्रसंगमाह। इतीति। इतिशब्द आदिवचनः समाप्तिवचनो वा ग्राम्ये विषयभोगकथायां वैदग्ध्यं पाटवं यस्याः सा तथा तया परिभाषया संलापलक्षणवाचया ॥ १७ ॥

यद्यनया परिभाषया वशीकृता स्यात्तर्हि अस्य तत्र वैदग्ध्यमस्तीति वक्तुं युक्तं तत्कथमत्राह। सा चेति। अनया विषयभोगात्सिद्धं वशीकरणम् ॥ १८ ॥

न केवलमियं भोगस्त्री किं तु संतानकरीति भावेनाह। तस्यामिति। पुत्रोत्पत्त्यनन्तरं पूर्वचित्त्या किमकारीति तत्राह। सासूत्वेति। अजं देवं ब्रह्माणम् ॥ १९ ॥२०॥

---

आग्नीध्रसुतास्ते मातुरनुग्रहादौत्पत्तिकेनैव संहननबलोपेताः पित्रा विभक्ता आत्मतुल्यनाम यथाभागं जम्बूद्वीपवर्षाणि बुभुजुः ॥ २१ ॥

आग्नीध्रो राजाऽतृप्तः कामानामप्सरसमेवानुदिनमधिमन्यमानस्तस्याः सलोकतां श्रुतिभिरवा यत्र पितरो मादयन्ते ॥ २२ ॥

सम्परेते पितरि नव भ्रातरो मेरुदुहितॄर्मेरुदेवीं प्रतिरूपामुग्रदंष्ट्रीं लतां रम्यां श्यामां नारीं भद्रां वीतिमितिसंज्ञा नवोदवहन् ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां संहितायां वैयासिक्यामाग्नीध्रवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अयुतायुतं न्यर्बुदम् । नृपत्वे भौमभोगान् देवत्वे स्वर्गभोगांश्च ॥ १८—२० ॥ २१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु त्वया मम किं फलं तदितो यामीत्याशङ्क्याह । न त्वामिति । यतो द्विजदेवेन ब्रह्मणा यस्मिंस्त्वयि लग्नं न वियाति न विगतं भवति हे चारुशृङ्गि ! उन्नतस्तनीति स्त्रीलिङ्गेन सम्बोधनमति कामवैवश्येनावहित्थाया नाशं द्योतयति । यतः यत्र देशे नव चित्तं तत्रैव सचिव्यस्तव सख्योऽपि शिवाः अनुकूलाः सत्यः मां प्रति सरन्तु अनुवर्त्तन्ताम् ॥ १६ ॥

ग्राम्याणामिव वैदग्ध्यं यस्यां तया ॥ १७ ॥

बुद्ध्यादीनां द्वन्द्वैक्यं गाणवमते यकारः अयुतायुतं न्यर्बुदम् ॥ १८—१९ ॥

गृहे राज्ञो भवन एवापहाय अप्सरस्त्वाच्चेषु वात्सल्यमपि पूर्वकृतं त्यक्त्वा ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

हे द्विज! हे चारुशृङ्गि ! यतः यत्र ते चित्तं तत्र त्वं मां नेतुमर्हसि सचिव्यस्तव परिचारिकाः शिवाः कल्याणयः अनुव्रतं भवदीयपरिचर्यायां समासक्तं प्रतिसरन्तु अनुसरन्तु ॥ १६ ॥

ग्राम्येषु वैदग्ध्यं वैशारद्यं यस्यास्तया सभाजयामास आहतवान् ॥ १७ ॥ १८ ॥ १९ ॥

उपतस्थेऽभजत् ॥ २० ॥

भाषाटीका

ब्रह्माजी ने मेरे को आपसे मिलाया है अब मैं आपको नहीं छोडूंगा जिन आपमें मेरे मन तथा नेत्र लगगया है सो हटता नहीं है हे सुन्दर सींग वाली तु मेरे को जहां इच्छा हो तहां ले चल मैं तेरा अनुचर हूं इस मनोरथ सिद्धिके लिये मंगलिक हरिण मेरे दक्षिण ओर से चलें ॥ १६ ॥ "

श्रीशुकदेवजी बोले इस प्रकार से देवतों की सी ... वाला स्त्रियों के वशीकरने मे वडा चतुर आग्नी... ग्राम्यविषयों मे वडी निपुण बोली से उस अप्सरा वडा सत्कार किया ॥ १७ ॥

तदनन्तर वह अप्सरा पूर्वचित्ति भी उस आग्नी... बुद्धिशील रूप शोभा उदारबुद्धि इनों से मोहित ... अर्बुद अयुत परिवत्सर काल पर्यन्त उस जम्बूद्वीप के ... आग्नीध्र के साथ भूमि स्वर्ग के भोगों को ... रही ॥ १८ ॥

उस राजश्रेष्ठ आग्नीध्र ने उस अप्सरा मे क्रमसे ... से नाभि किम्पुरुष हरिवर्ष इलावृत रम्यक ... मय कुरु भद्राश्व केतुमाल नाम के नौ पुत्र ... पैदा किया ॥ १९ ॥

वह पूर्वचित्ति एक एक वर्षमे एक ऐसे नौ ... नौ पुत्रों को पैदा करके उन सबोंको घरही मे ... फिर ब्रह्माजीकी सेवा करने चलीगई ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

औत्पत्तिकेनैव स्वभावेन संहननं दृढाङ्गत्वम् ॥ २१ ॥

कामानां भोगैः अध्यधिकं मन्यमानः श्रुतिभिर्वेदोक्तैः ... अवारुन्ध प्राप मादयन्ते मोदन्ते ॥ २२ ॥

इत्येवम्भूताः संज्ञा यासां ताः परिणीतवन्तः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् । द्वितीयोऽध्यायः ॥ २ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नाभ्यादयः आग्नीध्रसुता मातुरनुग्रहादौत्पत्तिकेन स... संहननं दृढाङ्गत्वं बलं च ताभ्यामुपेताः पित्रा आग्नीध्रेण ... विभागमनतिक्रम्य आत्मतुल्यनामान्यात्मभिः सह ... नामानि जम्बूद्वीपवर्षाणि बुभुजुः भारतवर्षस्यापि भरतस्य ... त्पूर्वमजनाभमिति व्यवहारादात्मतुल्यनामानीत्यस्य न विरोधः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आग्नीध्रो राजाऽतृप्तकामस्तामेवाप्सरसं पूर्वचित्तिमधिमन्यमानः तत्सङ्गनिमित्तानन्तरमधिकं कामयमानः श्रुतिभिः श्रुत्युक्तसाधनैः कर्मभिस्तस्याः सलोकतामवरुन्धे प्राप कोऽसौ लोकस्तत्राह । यत्र लोके प्राप्ताः पितरो मोदन्ते ॥ २२ ॥

पितर्याग्नीध्रे सम्परेते मृते सत्यनन्तरं नव भ्रातरः नाभिप्रभृतयः सुमेरोर्दुहितॄर्मेरुदेवीप्रभृतीः नव उदवहन् विवाहितवन्तः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संहननं देहपुष्टिः आत्मतुल्यनामानि आत्मनामाक्षरतुल्यनामाक्षराणि जम्बूद्वीपे विद्यमानानि वर्षाणि खण्डानि "खण्डोऽस्त्री खण्डिते त्रिषु" इति यादवः ॥ २१ ॥

आग्नीध्रेण पुनः किमकारीत्यत्राह । आग्नीध्र इति । तामभिमन्यमान इति तया सह सुरतोत्सवसुखं चिन्तयन्नित्यर्थः समालोकतामवरुन्धन्प्राप्तुकामः श्रुतिभिः श्रुतिविहितैः साधनैरीजे श्रीहरिमिति शेषः यद्वा एवं विधसाधनेनैव यजन्नप्सरः समालोकतां श्रुतिभिराकर्णनैरवरुन्धन् लोकं विशिनष्टि । यत्रेति । मादयन्ते हृष्यन्ति अनेन पितृलोक एवाप्सरसो लोक इतिध्वनितम् ॥ २२ ॥

सम्परेते मृते मेरोर्दुहितॄः पुत्रीः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यत्र पितर इति तत्र पितॄणामधिकारत्वं वर्त्तत इति ज्ञेयम् ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
प्रथमोऽध्यायः समाप्तः ॥ १

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मातुरनुग्रहात्तदीयस्तनपानात् औत्पत्तिकेनैव स्वाभाविकेन संहननं दृढाङ्गत्वं युभुजुः पालयामासुः ॥ २१ ॥

कामानां कामैः श्रुतिभिः श्रुत्युक्तताहृशकर्म्मभिः अवारुन्ध प्राप मादयन्ते मोदयन्ते मोदन्ते ॥ २२—२३॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वितीयः पञ्चमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥२॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

औत्पत्तिकेन स्वाभाविकेनैव गुणेन ॥ २१ ॥

काम्यन्ते इति कामाः विषयास्तैरतृप्तस्तृतीयार्थे षष्ठी अनुदिनं प्रतिदिनमधि अधिकं मन्यमानः श्रुतिभिर्वैदिकोपायैर्धर्मैः अवारुन्ध प्राप यत्र प्राप्तं पुरुषं पितरो मादयन्ते ॥ २२ ॥

इति उदाहृताः संज्ञा यासां ताः उदवहन् परिणीतवन्तः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वितीयाध्यायार्थप्रकाशः ॥ २ ॥

---

भाषाटीका ।

आग्नीध्र के वे पुत्र सब माता के अनुग्रह से उत्पत्ति के स्वभाव से उत्तम शरीर बलसे युक्त होकर रहे थे पिता के विभाग करके देने से अपने नाम के तुल्य नामवाले जम्बूद्वीप के नौ वर्षोंको भोगने लगे ॥ २१ ॥

आग्नीध्रराजा कामों से तृप्त न होकर उसी अप्सरा को सबदिन अधिक मानता रहा फिर श्रुतियों से उसी अप्सरा के लोकको प्राप्त हुआ जहां पितृलोग आनन्द करते हैं ॥ २२ ॥

पिता आग्नीध्र के परलोक जाने पर नौ भ्रातों ने मेरुकी पुत्री मेरुदेवी प्रतिरूपा उग्रदंष्ट्री लता रम्या श्यामा नारी भद्रा देववीति इन संज्ञावाली नौ कन्यों के साथ विवाह किया ॥ २३ ॥

इति श्री भागवत पञ्चमस्कन्ध दूसरा अध्याय का
भाषानुवाद लक्ष्मणाचार्य कृत
समाप्त ॥ २ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

## ॥ तृतीयोऽध्यायः ॥

॥ श्रीशुक उवाच ॥

नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्माऽयजत ॥ १ ॥

तस्य हवाव श्रद्धया विशुद्धभावेन यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकालमन्त्रर्त्विग्दक्षिणाविधान- गोपपत्त्या दुरधिगमोऽपि भगवान् भागवतवात्सल्यतया सुप्रतीक आत्मानमपराजितं निजजनाभिप्रेता- विधित्सया गृहीतहृदयो हृदयङ्गमं मनोनयनानन्दनावयवाभिराममाविश्चकार ॥ २ ॥

अथ ह तमाविष्कृतभुजयुगलद्वयं हिरण्मयं पुरुषविशेषं कपिशकौशेयाम्बरधरमुरसि विलसच्छ्रीवत्स- ललामं दरवरवनरुहवनमालाच्छूर्यमृतमणिगदादिभिरुपलक्षितं स्फुटकिरणप्रवरमुकुटकुण्डलकटककटिसूत्र- हारकेयूरनूपुराद्यङ्गभूषणविभूषितमृत्विक्सदस्यगृहपतयोऽधना इवोत्तमधनमुपलभ्य सबहुमानमर्हणे- नावनतशीर्षाण उपतस्थुः ॥ ३ ॥

॥ ऋत्विज ऊचुः ॥

अर्हसि मुहुरर्हत्तमार्हणमस्माकमनुपथानां नमोनम इत्येतावत्सदुपशिक्षितं कोऽर्हति पुमान्प्रकृति- गुणव्यतिकरमतिरनीश ईश्वरस्य परस्य प्रकृतिपुरुषयोरर्वाक्तनाभिर्नामरूपाकृतिभी रूपनिरूप- णम् ॥ ४ ॥

सकलजननिकायवृजिननिरसनशिवतमप्रवरगुणगणैकदेशकथनादृते ॥ ५ ॥

परिजनानुरागविरचितशबलसंशब्दसलिलसितकिसलयतुलसिकादूर्वाङ्कुरैरपि सम्भृतया सपर्यया किल परम ! परितुष्यसि ॥ ६ ॥

अथानयापि न भवत इज्ययोरुभारभरया समुचितमर्थमिहोपलभामहे ॥ ७ ॥

आत्मन एवानुसवनमञ्जसाऽव्यतिरेकेण बोभूयमानाशेषपुरुषार्थस्वरूपस्य किन्तु नाथाशिष आशा- सानानामेतदभिसंराधनमात्रं भवितुमर्हति ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तृतीये चरितं नाभेः परं मङ्गलमीर्यते ।
यस्य यज्ञे प्रतीतः सन्पुत्रोऽभूदृषभो हरिः ॥ १ ॥

नाभिराग्नीध्रसुतः अपुत्रया मेरुदेव्या भार्यया सह ॥ १ ॥

प्रवर्ग्यसंज्ञकेषु कर्मसु क्रियमाणेषु द्रव्यादयः सप्त ये योगा उपायास्तेषामुपपत्त्या सम्पत्त्या दुरधिगमो दुष्प्रापोऽपि भागवतेषु कृपालुतया सुप्रतीकः शोभनावयवः सन्नात्मानमाविश्चकार अपराजितं स्वतन्त्रं निजभक्तानां येऽभिप्रेतार्थास्तेषां विधित्सया गृहीतमाकृष्टं हृदयं चित्तं यस्य हृदयङ्गमं सुखकरं यतो मनो नयनान्यानन्दयन्ति येऽवयवास्तैराभिरामं सुन्दरम् ॥ २ ॥

अथ हेत्यादिनिपातबाहुल्यं वाक्यालङ्काराय आविष्कृतम् भुजानां युगलद्वयं चतुष्टयं येन हिरण्मयं तेजोमयं पुरुषेषु विशिष्यत इतितथा पुरुषोत्तममित्यर्थः अर्हणेनार्घ्येण सहोपतस्थुरभजन्नित्यन्वयः विलसन् श्रीवत्स एव ललामं चि- दरवरः शङ्खश्रेष्ठः वनरुहं पद्मम् अच्छूरि चक्रम् अमृतमणि:- एवमादिभिरुपलक्षितम् स्फुटकिरणा ये प्रवरा मुकुट- यानि मुकुटादीन्यङ्गानां भूषणानि तैर्विभूषितं बहुमाने- अधना इवोत्तमधनं निधिम् ॥ ३ ॥

अर्हसीत्यादिना निगदेन स्तुवन्ति हे अर्हत्तम परिपूर्ण त्वमनुपथानां भृत्यानामस्माकमर्हणां मुहुःस्वयमेव ह- र्हसि न तु वयं स्तोतुं शक्ता इत्याहुः । नमोनम इत्येतावत् सद्भिरुपशिक्षितं तद्रूपस्य दुर्ज्ञेयत्वात् तदेवाहुः । कोऽर्हति तिगुणानां व्यतिकरः प्रपञ्चस्तस्मिन्नेव मतिर्यस्यात ए- प्रकृतिपुरुषयोः परस्मात एवेश्वरस्यार्वाक्तनाभिस्तामस- प्रपञ्चान्तर्गताभिर्नाम च रूपं चाकृतिश्चाकारस्ताभिर्नि- रूपणं कर्तुं को नाम पुमानर्हति ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स ह्येतन्मात्रमेवार्हति नाधिकमित्याहुः । सकलजननिकायस्य
जिनं निरस्यन्तीति तथा शिवतमाः प्रवराश्च ये गुणगणास्तेषा-
कदेशस्तस्य कथनाद्विनाधिकं नार्हति ॥ ५ ॥

वाङ्मनसागोचरोऽपि त्वं भक्तानां सुखाराध्य एवेत्याहुः ।
परम ! परिजनैरनुरागेण विरचिता ये शबलसशब्दा गद्गदाक्ष-
स्तुतयः सलिलं च सितांकसलयाश्च शुद्धपल्लवाः शिखेति
ठे शिलं कुशादिमञ्जरी एवमादिभिः सम्भृतया सम्पादितया
जया परितुष्यसि ॥ ६ ॥

अथेति प्रकारान्तरे अन्यथा त्वनयेज्यया यागेनाप्युरुभारभर-
निकाङ्क्षसमृद्धयापि भवतः समुचितमपेक्षितं प्रयोजनं नैव
श्यामः ॥ ७ ॥

अत्र हेतुः । आत्मनः स्वत एवानुसवनं सर्वदाञ्जसा साक्षा-
व्यतिरेकेण समन्वयेन बोभूयमाना अतिशयेन भवन्तो येऽशेषाः
पुरुषार्थास्ते स्वरूपं यस्य परमानन्दस्य नचैवं सत्यपि यागानर्थ-
मित्याहुः । किन्त्विति । सकामानामस्माकमेवैतदुपपद्यते न
त्यर्थः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रियव्रताग्नीध्रचरितमभिधायाग्नीध्रापत्यचरित्रमभि-
त्सुस्तावन्नाभिचरितमाह । नाभिरिति तृतीयेन । अपत्यकामः
न्तानार्थी नाभिराग्नीध्रपुत्रः अप्रजयाविद्यमानसन्तानया
रुदेव्या भार्यया सह समाहितचित्तः यज्ञपुरुषं यज्ञाराध्यं परम-
रुषमयजत् यज्ञैराराधितवानित्यर्थः ॥ १ ॥

श्रद्धया कर्त्तव्यविषयत्वरया विशुद्धान्तःकरणेन च तस्य
भियंजतः सतः प्रवर्ग्यनामकेषु यागेषु प्रचरत्सु प्रवर्त्तमानेष्व-
ष्ठीयमानेषु द्रव्यादयः सप्त योगाः उपायास्तेषामुपपत्त्या
म्पत्त्या दुरधिगमो दुष्प्रापोऽपि भगवान् द्रव्यं हविर्देशः स मे-
ज्ञेतेति विहितः कालो वसन्तादिरूपः विधानं विधिरनुष्ठान-
कारः भागवतेषु वात्सल्यं यस्य तस्य भावः तत्ता तया वत्स-
लतयेति पाठे भागवतेषु दयालुतया निजजनानां भक्तजनानाम-
भिमतार्थे विधित्सयाभिमतार्थनिष्पादनेच्छया हेत्वर्थे तृतीया
ध्ययनेन वसतीति वत् गृहीतहृदयः कृतसङ्कल्पः शोभनाः
ङ्गीकावयवा यस्मिन् तदेव प्रपश्चयति हृदयङ्गमं चित्तापहा-
रिणं तत्र हेतुः मनसां नयनानां च आनन्दयन्तीत्यानन्दनाः
न्द्यादिरवात्कर्त्तरि ल्युः तैरवयवैरभिरामं सुन्दरमपराजितमकर्म-
हृदयमात्मानं दिव्यविग्रहमाविश्चकार प्रकटीचकार ॥ २ ॥

अथानन्तरं हेति विस्मये तमाविर्भूतं भगवन्तं कथम्भूतमा-
प्रच्छन्नं भुजानां युगलद्वयं चतुष्टयं येन हिरण्मयं प्रकाशय-
हिरण्मयं पुरुषे विशिष्यते इति पुरुषविशेषस्तं पुरुषोत्तममित्यर्थः कपिशं
पीतवर्णं कौशेयं कृमिकोशोत्थजन्तुजन्यमम्बरं बिभ्रतमुरसि
विलसच्छ्रीवत्स एव ललाम चिह्नं यस्य सः दरवरः शङ्खः वन-
रुहं पद्मं सूरि चक्रममृतमणिः कौस्तुभः एवमादिभिरुपलक्षितं
स्फुरत्किरणा ये प्रवरा मणयः तन्मयानि यानि मुकुटादीन्य
ङ्गानां भूषणानि तैर्भूषितमुपलभ्य दृष्ट्वा ऋत्विजः सदस्या गृह-
पतिर्यजमानस्तेषामितरेतरयोगे द्वन्द्वः ते निर्धना इवोमत्तं धन-

मुपलभ्य यथा बहुमानयन्ति तथा अर्हणेन पूजापुरःसरमवन
तशीर्षाणः नम्रशिरसः कृतप्रणामा इत्यर्थः उपतस्थुः समीपमेत्य
स्तुतवन्तः धातूनामनेकार्थत्वात्तिष्ठति धातुरत्र स्तुतौ वर्त्तते
मन्त्रकरणकत्वाभावान्नोपान्मन्त्रकरण इत्यात्मनेपदम् ॥ ३ ॥

स्तुतिमेवाह । अर्हसीत्यादिना । परममङ्गलायनगुणकथनोऽसीत्यन्ते
न निगदेन त्वदीयार्हणग्रहणोत्सुकमपरिपूर्णं मां कथं स्तुर्यात
शङ्कामपनुदन्त आहुः । हे अर्हत्तम ! परिपूर्णोऽप्यनुपथानां भृत्या-
नामस्माकमर्हणां मुहुः स्वयमेव स्वीकर्त्तुमर्हसि परिपूर्णस्य तव
नास्मदर्हणग्रहणेन न्यूनतेति भावः न वयं कात्स्न्र्येन भवदी-
यगुणकथने प्रभवामः किन्त्वेकदेशकथन एवेति वदन्तः स्तुवन्ति
नमोनम इत्यादिना ऋत इत्यन्तेन नमो नम इत्यादि तावदेवा-
स्माकं सद्भिरुपशिक्षितं त्वत्स्वरूपस्वभावयोरानन्त्यात्कात्स्न्र्येन
तत्कथनायोगात्केवलं नमो नम इत्येव कथनीयमिति सद्भिरु-
पशिक्षिता वयमित्यर्थः ॥ ४ ॥

एतदेवाहुः । कोऽर्हतीति । प्रकृतेर्गुणाः सत्त्वादयः तेषां व्यति-
करः परिणामः शब्दादिरूपः तद्विषया मतिर्यस्य अत एवा-
नीशः कर्मपरवशः अर्वाक्तनाभिः स्वकार्यभूताभिर्नामादिभिरु-
पलक्षितः तत्र नाम देवमनुष्यादिनामधेयं रूपं संस्थानमा-
कृतिस्तद्द्रव्यजातिःप्रकृतिपुरुषयोः परस्य विलक्षणस्येश्वरस्य
तव स्वरूपनिरूपणं स्वरूपशब्दः स्वभावादेरप्युपलक्षणः कर्त्तुं
को नाम पुमानर्हति सह्येतावन्मात्रमेवार्हति नाधिकमित्याह ।
सकलजनानां निकायः समूहस्तस्य वृजिनं पापं निरस्यन्तीति
तथा शिवतमाः प्रवराश्च ते गुणास्तेषामेकदेशस्तस्य कथना-
द्विना गुणलवकथनमेवार्हति नतु स्वरूपनिरूपणं स्वरूपस्वभा-
वादीनामानन्त्यादिति भावः ॥ ५ ॥

यद्यपि समस्तपुरुषार्थस्वरूपस्य नित्यतुष्टस्य तव नानेन यो
गेनार्थस्तथापि "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति"
इति भक्तिपूर्वकाराधनस्य किञ्चिन्मात्रस्यापि त्वत्प्रीतिकरत्वं
त्वयैव गीतमितीदं यजनं सूर्याय दीप इव किञ्चिदाराधन-
मात्रमित्याहुः । परिजनेत्यादिना अर्हतीत्यन्तेन परिजनैरनुरा-
गेण विरचिताः शबलसंशब्दा गद्गदाक्षरास्तुतयः सलिलं विशुद्ध
जलं शिलं व्रीह्यादिमञ्जरीखण्डः सितेति पाठे सितांकस-
लयाः शुद्धपल्लवाः एवमादिभिः सम्भृतया सम्पादितया पूजया
परितुष्यसि किल ॥ ६ ॥

तस्मादन्योऽर्थो नानयेत्याहुः । अनया इज्यया उरुभारभरयाने-
काङ्क्षसम्भृतया भगवतस्तव समुचितं संमतमपेक्षितमर्थं
प्रयोजनं नैव पश्यामः अत्र हेतुं वदन्तो विशिषन्ति आत्मनः
स्वत एवानुसवनं सर्वदा अञ्जसा साक्षाद्बोभूयमाना अतिशयेन
भवन्तो येऽशेषाः पुरुषार्थास्ते स्वरूपेण यस्य नानपेक्ष्यार्थोऽस्ति
किन्त्विदमाराधनमात्रमित्याहुः । किन्त्विति । हे नाथ ! आशिषः पुरु-
षार्थानाशासानानामभीप्सतामस्माकमेतद्यजनं त्वदीयाराधन-
मात्रं भवितुमर्हति त्वत्सन्तोषजननद्वारासमनुपयोग्येवेति भावः
मात्रचा भगवतोऽननुरूपत्वं विवक्षितम् अननुरूपाराधनप्रकृत्या
परमकारुणिकत्वं च व्यञ्जितम् ॥ ७ ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वभावतोऽव्यक्तोऽपि भगवान् भक्तवत्सलतया प्रत्यक्षोऽपि भवतीत्यतो हरौ भक्तिरेव कर्तव्येति विधीयतेऽस्मिन्नध्याये तत्र नाभिनाम्नो राज्ञोऽपत्यार्थं हरियजनप्रकारमाह । नाभिरिति । न प्रजा अपत्यं यस्याः सा तथा तया सह ॥ १ ॥

शुद्धभावेन शुद्धान्तःकरणेन शुद्धकर्मणा वा प्रवर्ग्येषु कर्मविशेषेषु प्रचरत्सु प्रवर्तमानेषु सत्सु दुरधिगमो दुर्ज्ञेयोऽपि द्रव्यदेशादीनामुपपत्त्या सम्पत्त्या भागवतेषु स्नेहातिशयेन च सुप्रीतो भगवान् गर्भवासादिदुःखैरपराजितं हृदयङ्गमं मनोहरं मनोनयनसुखकरं चारुतरकरचरणाद्यवयवोपेतमात्मानमाविश्चकार प्रत्यक्षीचकारेत्यन्वयः. किङ्कार्यो भगवानित्यत उक्तम् । निर्जेति । योगो ध्यानम् ॥ २ ॥

निराकारं चेत्कथं ध्यानास्पदं स्यादित्यत आह । अथेति । आविष्कृतभुजयुगलद्वयं स्पष्टीकृतचतुर्भुजं हिरण्मयं "सुवर्णवर्णं कौशेयं कृमिकोशोत्थम्"इत्यभिधानम् विलसन् श्रीवत्स एव ललामं चिह्नं यस्य स तथा तं स्फूर्जामृतमणिगणप्रवराः स्फूर्जाः शाणोल्लीढा अमृतवद्धवलाश्च मणिगणश्रेष्ठाः एत एवादिर्येषां ते तथा तैः दरवरादिभिः शाणतेजितधवलमणिगणश्रेष्ठादिभिश्चोपलक्षितं विधिष्टम् मुकुटं शिरस्त्राणं किरीटं मौलिः स्फुटकिरणानि फुल्लरश्मीनि प्रवराणि मणिमयानि मुकुटकिरीटादीनि स्फुटकिरणप्रवरमणिमयमुकुटकिरीटादीनि एतैरङ्गभूषणैर्भूषितमलङ्कृतमधना दरिद्रा उत्तमं धनं रत्नमुपलभ्य स बहुमानमर्हणेन पूजासाधनेन ॥ ३ ॥

अर्हसि मुहुरित्यारभ्येति निगदेनेत्यतः पूर्वतनो ग्रन्थ उपस्थानमन्त्रः हे अर्हत्तम ! अनुपथानां भृत्यानां नोऽर्हणां त्वमर्हसि ग्रहीतुमिति शेषः मुहुरित्यनेनार्हणस्य भूयस्त्वं सूचयति । किन्तद्दर्हणं तदाह । नम इति । तत्र दोषलेशो नास्तीत्याह । सादिति । सद्भ्यः पुरुषेभ्यः उपशिक्षितत्वात्सत्प्रशस्तं नमो नम इत्येतद्व्यतिरिक्तनामादिकीर्तनस्मरणाद्यर्हणं किन्न क्रियत इति तत्राह । कोऽर्हतीति। नामरूपादिवेदनस्य श्रुत्यादिसिद्धत्वात्तत्कथमाक्षिप्यते इति तत्राह । प्रकृतीति । प्रकृतिगुणैः शब्दादिभिः व्यतिरेकः भ्रंशो यस्याः सा तथा तादृशी मतिर्यस्य स तथा अत एवार्वाक्तनमतिः बहिर्बुद्धिः तत्र कारणमनीश इति सर्वेश्वरस्य तव सन्निधौ सामर्थ्याभावात्त्वदीश्वरत्वमनुपहतमिति भावेनाह । प्रकृतीति ॥ ४ ॥

तर्हि किमपि नार्हतीत्यत उक्तम् । सकलेति । सकलजनानां निकायस्य वृजिनं दुःखं निरस्यन्तीति वृजिननिरसनाश्च शिवतमा मङ्गलतमाश्च प्रवराश्च ये गुणगणास्तेषामेकदेशकथनमन्तरेणान्यत्किमपि नार्हतीत्यर्थः ॥ ५ ॥

गुणगणकथनासक्तस्य हरिपरितोषः कया विधया स्यादत्राह । परिजनेति । हे परम ! परिजनैर्भृत्यजनैरनुरागेण विरचितः स्तवः स्तोत्रं तस्य लवः लेशस्तस्य संशब्दः कथनं सलिलं जलं किसलयः पल्लवस्तुलसी च दूर्वाङ्कुरश्च ते स्तवलवादयस्तैः सम्भृतया सम्पादितया पूजया परितोषं यास्यसि किलेत्यन्वयः ॥ ६ ॥

नित्यतुष्टस्य कदाचित्परितोषो भक्तानुकम्पोन्मुखत्वं नत्व-

प्राप्तप्राप्तिलक्षण इत्याह । अथेति । उरुसम्भारलक्षणो ... सा तथा तया सम्भारः साधनं भरः समूहः ॥ ७ ॥

कुतोऽमुष्य नार्थ इति तत्राह । आत्मनइति । स्वत एवा... दाञ्जसामुख्यतो व्यतिरेकेणाभेदेनानुवोभूयमानोऽनव... शेषःपूर्णः पुरुषार्थः सुखमनुवोभूयमानपुरुषार्थः स एव... स तथा तस्य तर्हि किमर्थमाराधनं क्रियत इति तत्राह । ... किन्तु तवार्थो नास्त्येव तथापि हे नाथ ! आशिषः ... कामयमानानामेतत्कर्मलक्षणं यजनं तवाभिसंराधनमा... मनुग्रहलक्षणसिद्धिसाधनं भवितुमर्हति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पितृलोक काम इति तस्य स्त्रिया वन्ध्यात्वं ... वक्ष्यमाणमनोनयनानन्दनावयवाभिरामत्वेऽपि भाग... तया सुप्रतीकः परमसुन्दरः ॥ २—३ ॥

अर्हसीत्यादि गद्यानामिति निगदेनाभिष्टूयमान इति ... गद्येनान्वयः टीकायां निगदेन गद्यात्मकस्तोत्रेण स्तु... वयं स्तोतुं शक्ता इति येन च स्तवेन तदङ्गीकुर्यास्त... मित्यर्थः पन्थानं भक्तिमार्गमनुगतास्तत्सामीप्यमाप... तमेव साक्षात् प्राप्ताः सकामत्वात् । तथा भूता ये ... स्तेषामपि पूजां मुहुरर्हसि स्वीकर्त्तुं योग्योऽसि तव ... देव न तु वयं योग्या इति भावः तवोत्कर्षं विचार्यमा... एवायोग्या इत्याहुः । नमोनम इति ॥ ४ ॥

तर्हि मदुत्कर्षोऽपि वर्ण्यतां तत्राहुः । कोऽर्हतीति । ... नाभिः प्रपञ्चान्तर्गतसादृश्येन स्फुरन्तीभिरित्यर्थः नाम... आकृतिश्च जातिः ताभिस्तव रूपनिरूपणं याथार्थ्य... पादनं कर्त्तुं को नाम पुमान् अर्हति तत्र हेतुः । प्रकृ... प्रकृतिगुणानां व्यतिकर आसङ्गः तदीयनामादीनां ... हेतुः । ईश्वरस्य परस्येति। ननु तादृशत्वमनुसन्धायैव ... तत्राहुः । अनीश इति । रूपनिरूपणं याथार्थ्येन प्रति... तादृशेन ज्ञानेन तन्निरूपणं कीदृशं किं माहात्म्यं वा तत्... देशत्वं यत् किञ्चित्त्वं तदाभास इति यावत् तादृशत्वे... त्यादिमाहात्म्योऽसावित्यर्थः । तस्मादत इति । तदेव ... महतीत्यर्थः । अथवा अर्वाक्तनाभि स्वल्पप्रमाणा... न्तानां स्फुरणासंभवात् रूपनिरूपणं सम्यक् ... दनं किं तर्हि तत्राहुः । सकलेति । यद्वा अर्वा... कर्म्मोपासनाद्यैः तत्तद्देवतासम्बन्धिनीभिरित्यर्थः । ... निरूपणं स्यात् । तत्राहुः सकलेति ॥ ५ ॥ ६ ॥ ७ ॥

अव्यतिरेकेणाविच्छेद राहित्येन वोभूयमाना ... विर्भवन्त इत्यर्थः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तृतीये नाभिनष्टोऽभूद्यज्ञे तुष्टोऽस्य नन्दनः ।
त्वत्समो मे सुतोऽस्त्वेतद्वरं श्रुत्वा हरिः स्वयं ...
नाभिराग्नीध्रस्य प्रथमः पुत्रः ॥ १ ॥

प्रवर्ग्यसंज्ञकेषु कर्मसु प्रचरत्सु संपद्यमानेषु ... सप्तभिः शुद्धैः सह योगः भक्तियोगस्तस्य उपपत्त्या ...

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सुप्रतीकः सुन्दराङ्गः आत्मानं स्वदेहमाविश्चकार अपराजितं अन्यैर्वशीकर्त्तुमशक्यमपि गृहीतहृदय आकृष्टचित्तः मनो नयनानन्दनैरवयवैः श्रीमुखाब्जादिभिरभिराममतिरमणीयम् ॥ १ ॥

हिरण्मयं प्रकाशबहुलं पुरुषेषु विशिष्यत इति पुरुषोत्तम इत्यर्थः । कपिशेति तेन श्यामवर्णमिति बुद्ध्यते । पीतांशुके वक्षसि लाञ्छितं श्रियेत्यत्र पीतांशुकपदेनात्र ध्वन्यते श्यामवर्णतेति भागवतामृतोक्तेः दरवरः शङ्खः वनरुहं पद्ममच्छूरि चक्रममृतमणिः कौस्तुभः ॥ २ ॥

अर्हसीत्यादिगद्यानामिति निगदेनाभिष्टूयमान इत्यनेनान्वयः । त्वं परिपूर्णोऽप्यस्माकमप्यर्हणमङ्गीकर्त्तुमर्हसि तत्र हेतुः अनुपथानां पन्था भक्तियोगस्तमनुवर्त्तमानानां ननु साक्षात्तं प्राप्तानां सकामत्वात् तदपि तव भक्तिसम्बन्धगन्धवत्यपि वात्सल्यादेवेति भावः ३ ॥

अस्माकमनुपथत्वेऽप्येतावदेव लक्षणमस्ति नाधिकमित्याहुः । नमो नम इति । सद्भ्यः सकाशात् शिक्षितं ननु पूजापरिचर्यास्तुत्यादिकं जानीम इति भावः ॥ ४ ॥

ननु विद्वांसो सद्भक्ताश्च यूयं सर्व्वं जानीथैव तत् किं स्तोतुं संकुचथेति तत्राहुः । कोऽर्हतीति । लोके हि मुखाद्यङ्गानां चन्द्राद्युपमाभिः स्तुतिर्भवति । तत्तु अर्व्वाक्तनाभिः प्रपञ्चान्तर्गताभिः नाम इन्द्रनीलमणयादिरूपं तच्छ्यामनाकृतिस्तत्प्रतिमा ताभिः रूपस्य निरूपणमपि कर्तुं कोऽर्हति स्तुतेर्वार्ता तु दूरे वर्ततामित्यर्थः तव कीदृशस्य प्रकृतिपुरुषयोरपि परस्य नहि प्रकृतिपुरुषातीतं रूपं प्रकृतेन्द्रनीलमण्यादिभिः सदृशी कर्तुमुचितमिति भावः । नन्वप्राकृतपदार्थैरेव मद्रूपमुपनयितां तत्राहुः । गुणानां यो व्यतिकरः प्रपञ्चः तस्मिन् एव मतिर्यस्य सः प्राकृतजीवलोकस्याप्राकृतपदार्थेषु बुद्धिप्रवेशासम्भवादिति भावः । अतस्तव भक्तवात्सल्यगुणानां केनाप्यंशेन कीर्तनमात्रं कर्तुमर्हतीत्याहुः ॥५॥ सकलेति । भक्तवात्सल्यमेवाहुः ॥ ५ ॥

परिजनैर्भक्तजनैरनुरागेण विरचिता शवलसंशब्दा गद्गदाक्षरस्तुतयश्च सलिलादयश्च तैरपि सम्पादितया शिलेति पाठे शिलं मञ्जरी हे परम ! ॥ ६ ॥

अस्माकन्तु भक्तिर्नास्तीत्यतः कथं ते परितोषो भविष्यतीत्याहुः । इज्यया यागेन उरुभारभरया अनेकाङ्गसमृद्ध्यापि भवतः समुचितमपेक्षितं प्रयोजनं नोपलभामहे ॥ ७ ॥

तत्र हेतुः आत्मनः स्वतएवानुपचयं प्रतिक्षणमेव अञ्जसा साक्षादेव अव्यतिरेकेण व्यतिरेकं विच्छेदं विनैव वोभूयमाना अतिशयेन भवन्तो येऽशेषाः फलभूता आनन्दास्ते स्वरूपं यस्यनचैवं सत्यपि यागानर्थक्यमित्याहुः । किन्त्विति । सकामानामस्माकमेतदेव सराधनमात्रमिति अस्मत्कर्तृकमेव ननु वस्तुतोभवत्कर्म्मकमित्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आग्नीध्रपुत्रस्य नाभेः यज्ञपुरुषाराधनरूपं कर्म भगवद्रूपं पुरुषं च दर्शयति। तृतीयेन नाभिरिति ॥ १ ॥

तस्य नाभेः विशुद्धेन भक्तिभावेन भावनान्तःकरणेन यजतः सतः प्रवर्ग्याख्येषु कर्मसु प्रचरत्सु क्रियमाणेषु द्रव्याद्युप-

परया दुरधिगमोऽपि दुष्प्रापोऽपि भगवान् भागवतवत्सलतयास्वानन्यजनहितकारित्वेन निजजनाभिमतार्थविधित्सया गृहीतहृदय आकृष्टचित्तः सुप्रतीकः शोभनावयवः सन् अपराजितमभक्तैर्बहुभिः साधनबलैर्द्रष्टुमनर्हमपि मनोनयनान्यानन्दयन्ति ये अवयवास्तैरभिरामं सुन्दरं हृदयङ्गममात्मानमाविश्चकार ॥ २ ॥

अथेति मङ्गलं हेतिद्वयं आविष्कृतं भुजानां युगलं येन हिरण्मयमप्राकृतज्योतिर्मयं पुरुषेषु विशिष्यते इति पुरुषविशेषस्तं पुरुषोत्तमं कपिशकौशेयाम्बरधरं कपिशं पीतं कौशेयाम्बरं बिभ्राणमुरसि विलसत् श्रीवत्स एव ललामं चिन्हं यस्य तं दरवरः शङ्खः वनरुहं पद्ममच्छूरि चक्रम् अमृतमणिः कौस्तुभः एवमादिभिरुपलाञ्छितम् स्फुटत्किरणा ये प्रवराः श्रेष्ठाः मणयस्तन्मयानि यानि मुकुटादीन्यङ्गभूषणानि तैर्विभूषितमधना उत्तमधनं चिन्तामणिमिव उपलभ्य निकटं प्राप्य ऋत्विगादयः अर्हणेन अर्घ्येण सह बहुमानं यथा तथावनतशीर्षाणः कृतप्रणामाः उपतस्थुः स्तुष्टुवुः ॥ ३ ॥

हे अर्हत्तम ! अनुपथानामनुवर्त्तिनाम् अर्हणमर्घ्यं मुहुः अर्हसि स्वीकर्त्तुं योग्योऽसि तव स्वरूपगुणादीनां दुर्ज्ञेयत्वात्सद्भिर्नमो नम इत्येतावदेवोपशिक्षितम् तदेवोपपादयन्ति। कोऽर्हतीति। प्रकृतिगुणानां व्यतिकरः संसारस्तस्मिन् मतिर्यस्य सः अर्वाक्तनाभिः प्रकृतिगुणकार्यभूताभिः नामरूपाकृतिभिरुपलक्षितः अत एव अनीशः प्रकृतिपुरुषयोः मायाजीवयोः परस्य तव स्वरूपनिरूपणं कर्त्तुं कोऽर्हति न कोऽपीत्यर्थः रूपस्येयत्ताशून्यत्वात् तर्हि गुणा एव वर्णनीया अत आहुः । सकलानां देवमनुष्यादीनां जनानां निकायस्य समुदायस्य वृजिनानि पापानि निरस्यन्तीति तथा ते शिवतमाः मङ्गलतमाः प्रवराः श्रेष्ठाश्च ये गुणगणास्तेषामेकदेशः लेशमात्रं तस्य कथनादृते तव स्वरूपनिरूपणं च कर्त्तुं कोऽपि नार्हतीति यावत् ॥ ४ ॥ ५ ॥

एवमनन्तस्वरूपगुणस्त्वं स्वरूपतो गुणतश्च ज्ञातुमशक्योऽपि परिजनैर्भक्तैः अनुरागेण विरचिताः शवलसंशब्दाः गद्गदाक्षराः सम्यक् शब्दाः स्वरपराणि वाक्यानि सलिलानि च शिवाः शुद्धाः किशलयाः पल्लवाश्च एवमादिभिः संभृतया संपादितया सपर्यया पूजया परितुष्यसि भक्तहितार्थं पूजां गृह्णासि स्वप्रयोजनार्थी तु तादृशपूजया कोऽर्थादिकं कुर्यादिति भावः ।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।

इति श्रीमुखवचनमत्रानुसन्धेयम् ॥ ६ ॥

अथेति प्रकारान्तरे उक्तप्रकारादन्यप्रकारे प्रयोजनार्थं पूजाग्रहणपक्षे तु भवतः आत्मनः स्वतएव अनुस्यवनं सर्वदा अञ्जसा साक्षादेव तत्रापि व्यतिरेकेण असाङ्कर्य्येण वोभूयमानाः अतिशयेन भवन्तो ये अशेषाः पुरुषार्थास्तेषां स्वरूपस्य कारणस्य अनया इज्यया उरुभारभरया अनेकाङ्गसमृद्ध्यापि समुचितमपेक्षितमर्थं प्रयोजनं नैव पश्यामः ॥ ७ ॥

किन्तु आशिषः पुरुषार्थान् आशासानानामभीप्सताम् एतत्कर्म अभिसंराधनमात्रमभितः सम्यक् त्वदाराधनमात्रं सर्वपुरुषार्थदातृत्वदनुग्रहे निमित्तमात्रं भवितुमर्हति न तव प्रयोजनार्थमित्यर्थः ॥ ८ ॥

---

तद्यथा बालिशानां स्वयमात्मनः श्रेयः परमविदुषां परमपरमपुरुषप्रकर्षकरुणया स्वमहिमानं च
वर्गाख्यमुपकल्पयिष्यन् स्वयं नापचित एवेतरवदिहोपलक्षितः ॥ ९ ॥

अथायमेव वरो ह्यर्हत्तम! यर्हि बर्हिषि राजर्षेर्वरदर्षभो भवान्निजपुरुषेक्षणविषय आसीत् ॥ १०
असङ्गनिशितज्ञानानलविधूताशेषमलानां भवत्स्वभावानामात्मारामाणां मुनीनामनवरतपरिगुणित
गुणगण परममङ्गलायनगुणगणकथनोऽसि ॥ ११ ॥

अथ कथञ्चित्स्खलनक्षुत्पतनजृम्भणदुरवस्थानादिषु विवशानां नः स्मरणाय ज्वरमरणदशायाम
सकलकश्मलनिरसनानि तव गुणकृतनामधेयानि वचनगोचराणि भवन्तु ॥ १२ ॥

किञ्चायं राजर्षिरपत्यकामः प्रजां भवादृशीमाशासान ईश्वरमाशिषां स्वर्गापवर्गयोरपि भवन्तमुप
वति प्रजायामर्थप्रत्ययो धनदमिवाधनः फलीकरणम् ॥ १३ ॥

को वा इह तेऽपराजितोऽपराजितया माययाऽनवसितपदव्यानावृतमतिर्विषयविषरयानावृतप्रकृ
रनुपासितमहच्चरणः ॥ १४ ॥

यदुहवाव तव पुनरदभ्रकर्तरिह समाहूतस्तत्रार्थधियां मन्दानां नस्तद्यद्देवहेलनं देवदेवार्हसि साम्ये
सर्वान् प्रतिबोढुमविदुषाम् ॥ १५ ॥

भाषाटीका।

श्रीशुकदेवजी बोले नाभिराजाने पुत्रकी कामना से मेरुदेवी भार्या के सहित यज्ञपुरुष विष्णु भगवान् का यजन किया ॥ १ ॥

तिनके अत्यन्तश्रद्धासे निर्मलभाव से यज्ञकरने से प्रवर्ग्य कर्मों के प्रचार होने मे उत्तम द्रव्य देश का मन्त्र ऋत्विग् दक्षिणा विधि योग के संपत्ति से अपने भक्त जनों के मनोरथ सिद्ध करने मे चित्त के वश होजाने से यद्यपि भगवान् दुर्लभ हैं तथापि भागवनों में अतिकृपा होनेसे सुन्दर शरीरको धारण करके भक्तों के मन नयन के मोद करने वाले अवयवों से युक्त अपने शरीर को प्रगट करतेभये ॥ २ ॥

हे महाराज! भगवान् की जो मूर्त्ति नाभिराजा के आगें प्रघट भई उस मूर्त्ति में चार भुजा प्रकाश मान हैं वह मूर्त्ति तेजोमय है और पुरुषाकृति है ऐसे पिङ्गलवर्ण के रेशमी वस्त्र को धारण कीये हुये हैं वक्षस्थलमें श्रीवत्स-का चिन्ह हैं और शङ्ख चक्र गदा पद्म वनमाला कौस्तु-भादि मणि से शोभित हैं बडे तेज वाला मणिका मुकुट है कुण्डल कङ्कण कटिसूत्र हार केयूर नूपुर आदि सब मङ्गल भूषणों से मनोहर कान्ति हो रही हैं इसी से सब शरीर शोभित होरहा है तिसीसे ऋत्विक् सदस्य गृहपति ये सब मनोहर मूर्त्ति का दर्शन करके ऐसे होगये कि जैसे दरिद्रमनुष्य बहुतधन के मिलने से होवे बडा मान कर के मस्तकों को नम्र करके सब सामग्री से पूजन करते भये ॥ ३ ॥

ऋत्विक् कहने लगे हे पूज्यतम! हम लोग आपके भृत्य हैं आप परिपूर्ण हैं तौभी हम लोगों की पूजा को ग्रहण करने को वारम्वार योग्य हो हे प्रभो! हम लोगों का सामर्थ्य नहीं है कि जो आप की स्तुति कर सकें आप का स्वरूप बडा दुर्ज्ञेय हैं तिससे महात्माओं से हम आपको नमस्कार करना मात्र शीखा है हे ईश्वर! पुरुषों का चित्त संसार में आसक्त है वे क्या आप के स्वरूप का निरूपण करसकते हैं प्रकृति दोनों से पर आप ईश्वर हो तिन आप के स्वरूप पण नूतन नाम रूप आकृतियों से कौन पुरु सका है ॥ ४ ॥

सब मनुष्यों के समूह के पापों के नाश करने वाले कारी आपके गुण गणों का एक देश के कथन से कोई नहीं जानता है ॥ ५ ॥

सेवकों के अनुराग सें कीने प्रेम युक्त वचन समेत जल सफेद दूर्वा अङ्कुर तुलसी पल्लव इन्हों से हुई पूजा से भी हे परम! आप सन्तुष्ट होजाते हैं ॥ ६ ॥

और यह सिद्धि जो बडी भारी सामग्री सहित तिस से भी आप का उचित मनोरथ को हम नहीं ते हैं ॥ ७ ॥

अपने स्वरूप ही से आपको सब पुरुषार्थ प्राप्त हो रहे हैं तब हे नाथ! जो लोग स्वयं चाहते हैं वे क्या आपका आराधन कर सकेंगे ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

स्तोपयोगमेव प्रदर्शयन्ति। तद्यथेति। परमेभ्योऽपि हे पर प्रकर्षयुक्तया करुणया।उपकल्पयिष्यन् सम्पादयिष्यन् मितं च नापचितोऽनपचितोऽपूजित एव पूजा मेवोपलक्षितो दृष्टोऽसि इतरवत्सापेक्षवत् ॥ ९ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यपि त्वं वरान् दातुमाविर्भूतोऽसि तथापि हे अर्हत्तम ! राजर्षेर्बर्हिषि यज्ञे निजपुरुषाणां त्वद्भक्तानामस्माकमीक्षणविषयो भवान् यर्हि यदा आसीत्तदा ह्ययमेव वरः सञ्जातः ॥ १० ॥

दर्शनस्य दुर्लभतामाहुः । असङ्गेन वैराग्येण निशितं यज्ज्ञानं स एवानलस्तेन विधूता अशेषा मला येषाम् अतो भवत इव स्वभावो येषाम् । तानेवाहुः । आत्मारामाणामेवम्भूतानां मुनीनामपि परममङ्गलायनं गुणगणकथनमेव ननु दर्शनं यस्य अतस्तैरनवरतं परिगणिता अभ्यस्ता गुणगणा यस्येति सम्बोधनम् ॥ ११ ॥

दर्शनेनैव कृतार्था अपि वरमेकं प्रार्थयन्ते । अथेति । स्मरणाय विवशानां त्वां स्मर्तुमशक्तानां नः ॥ १२ ॥

अन्यच्च प्रार्थनीयमस्तीत्याहुः । किञ्चेति । आशिषामैहिकानां स्वर्गापवर्गयोरपीश्वरं त्वामुपधावति प्रजायामेव पुरुपार्थ इति प्रत्ययो यस्य अधनो यथा फलीकरणं तुषकणादिकमाशासानो धनदमुपधावति ॥ १३ ॥

इदं च नातिचित्रमित्याहुः । इह संसारे तेऽपराजितया मायया अनवसितपदव्याऽलक्षितमार्गया पराजितः को वै न कोऽपि अनन्यथानावृतमतिः कः अत एव विषय एव विषं तस्य रया वेगास्तैरनावृता प्रकृतिर्यस्य स कः यद्यनुपासितमहच्चरणः अतस्त्वन्मायया मोहितस्यैवमाशंसा घटत इत्यर्थः ॥ ॥ १४ ॥

अदभ्रकर्तः ! हे बहुकार्यकारिन् ! अल्पीयसे कार्याय त्वं यद्यस्मादिह समाहूतोऽसि तत्र प्रजायामर्थे धीर्येषां मन्दानां तेषां नो यद्देवहेलनमवज्ञानं तत्सर्वान्प्रति तव साम्येन हेतुना प्रतिबोद्धुं सोढुमर्हसि ॥ १५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव स्पष्टयन्त आहुः । तदिति । हे परमपुरुष ! तत्तदा आराधनसमय एव नापचित एवानुरूपमनाराधित एव प्रकृष्टकरुणया स्वमहिमानं महत्तयैश्वर्यादिरूपं मोक्षाख्यमाविर्भूतगुणाष्टकसम्पत्तिरेव हि मोक्षश्चकारादस्मत्समीहितं च फलमुपकल्पयिष्यन्निर्वर्तयिष्यन् त्वमितरवत्परिपूर्णोऽप्यपरिपूर्ण इव नोऽस्माभिरिह यागे यथा यथावदुपलक्षितः दृष्टोऽसि नः कथम्भूतानामात्मनः स्वस्य परमुत्कृष्टं श्रेयः पुरुषार्थमविदुषामत एव बालिशानाम् ॥ ९ ॥

परमकारुणिकात्समस्तपुरुषार्थस्वरूपाद्भगवतो राज्ञा प्रार्थनीयस्य पुत्रस्य क्षुद्रपुरुषार्थतामाविष्कर्तुमतिदुर्लभस्य भगवद्दर्शनस्यैव कैमुत्यनयेन निरतिशयपुरुषार्थतामाहुः । अथेति । अर्हत्तम राज्ञोऽभिमतान् दातुं यद्यप्याविर्भूतोऽस्यथाप्ययमेव वरःसञ्जातः कोऽसावित्यत्राहुः । यर्हि नाथ । यदा हि राजर्षेर्बर्हिषि यज्ञे वरदश्रेष्ठो भवान्निजजनानां पुरुषाणां त्वद्भक्तानामस्माकमीक्षणविषयः आसीदिति यत् असङ्गेन वैराग्येण निशितं यज्ज्ञानं तदेवानिलस्तेन विधूता अशेषा मलाः येषामात्मारामाणां प्रकृतिविविक्तब्रह्मात्मकस्वात्मयाथात्म्यानुसन्धानपराणां भगवत्स्वभावानां भगवत्समानधर्माणां मुनीनां कर्त्तरि षष्ठी मुनिभिरनवरतं सर्वदा परिगणिताः गुणगणाः यस्य तस्य सम्बोधनमीदृशस्य तव गुणगणकथनमेव परममङ्गलायनं निरतिशयश्रेयःसाधनं किमुत्वद्दर्शनमित्यर्थः ॥ १० ॥ ११ ॥

यतः त्वद्गुणकथनं परममङ्गलायनमतस्तदेवायुक्तास्वपि दशासु नो भूयादिति प्रार्थयन्त आहुः । अथेति । अथ ननु भगवतः क्षुदादिष्वयुक्तदशासु तत्र तत्र स्खलनं चलनं पतनस्यांकत्वात् दुरवस्थानं दुःखितेनावस्थानमादिशब्देनाशुचित्वाद्यवस्थान्तरसङ्ग्रहः तथा ज्वरदशायां मरणदशायां च परवशानामस्माकं श्रीमतस्तव चरणारविन्दस्मरणाय चरणारविन्दं स्मर्तुं सकलानां कश्मलानां निरसनानि निवर्त्तकानि गुणकृतनामानि नामधेयानि कल्याणगुणप्रवृत्तिनिमित्तकानि तव नामानि वचनगोचराणि उच्चारणविषयाणि भवन्तु ॥ १२ ॥

इदमिदानीं राज्ञा प्रार्थनीयमस्तीत्यावेदयन्त आहुः । किञ्चेति । अयं राजर्षिर्नाभिः पुत्रं कामयमानः तत्रापि भवादृशीं त्वत्सदृशीं प्रजामाशासानः आशिषामैहिकपुरुषार्थानां स्वर्गापवर्गयोश्चेश्वरं प्रदातारं भगवन्तं षाड्गुण्यपूर्णं त्वां प्रजायामेव पुरुषार्थ इति प्रत्ययो यस्य सः उपधावति अनुवर्तते भजतीत्यर्थः तत्र दृष्टान्तः यथाधनो दरिद्रः फलीकरणं तुषकणादिकमाशासानो धनदं कुबेरमुपधावति ॥ १३ ॥

इदं च नातिचित्रमित्याहुः । इह संसारेऽनुपासितमहच्चरणो यदि भवेत् उपासितमहच्चरणं जनं विनेत्यर्थः तया अपराजितया कर्मवश्यैरनभिभूतया अनवसितपदव्या अलक्षितमार्गया सत्त्वयतिरोधायिकया मलक्षितः को वै न कोऽप्यतस्तयानावृतमतिकः अत एव विषया एव विषं तस्य रयो वेगः तेनानावृता प्रकृतिर्यस्य सः अतस्त्वन्मायामोहितस्यैवमाशंसा घटत इत्यर्थः ॥१४॥

अतिदुर्लभसमस्तपुरुषार्थभूतेस्तव स्वपुत्रादांसार्थमाह्वानं हेलनमिवातस्तत् क्षन्तुमर्हसीति विज्ञापयन्त आहुः । मदुहवावेति । हे अदभ्रकर्त्तः ! बहुकार्यनिष्पादक ! उदारव्यापारकारिन्नवितथकर्तः सत्यसङ्कल्प इतिवार्थः ऐ देवदेव देवानां ब्रह्मादीनामपि देव हे सर्वात्मन्नल्पीयसे प्रयोजनाय यथस्मादेवाहूतोऽसि ततस्तदर्थधियां तत्र प्रजायामर्थधीः पुरुषार्थबुद्धिर्येषामत एव मन्दानां नोऽस्माकं देवहेलनं देवस्य तव हेलनमाह्वानरूपमवज्ञानं तव साम्येन हेतुना प्रतिबोद्धुं सोढुमर्हसि ॥ १५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्कथमत्राह । तदिति । हे परमपुरुष ! यत्तत्प्रमेयं यथा तथा प्रतिपादयामस्तथाहि परं परमं श्रेयोऽविदुषामजानतामत एव बालिशानां शिशुवत्स्थितानां नः सम्बन्धिन्या प्रकृष्टया कृपया चशब्द एवार्थे अपवर्गाख्यं संसारमोक्षलक्षणं महिमानमुपकल्पयिष्यन् समर्थयमानः स्वयत्नोपचितः स्वानुग्रहलक्षणयत्नायत्त एव इतरवत्परप्रयत्नोपचितवदुपलक्षितः प्रकाशित इति यस्मात् ॥ ९ ॥

अथ तस्मात् हे अर्हत्तम ! परं फलप्राप्त्यनन्तरमपि त्वामर्हयामः त्वद्विषयामर्हणक्रियां प्रार्थयामहे कस्मादेतत्प्रार्थनमित्याशङ्क्य फलदर्शनादित्याहुः । यर्हीति । स्वभक्तानां दृष्टिविषय आसीदिति यर्हि यस्मात्तस्मादिति शेषः बर्हिषि यज्ञे ॥ १० ॥

मुनीनामिति षष्ठी तृतीयार्थे मुनिभिर्नित्यं परिगणितानां

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुणगणानां परममङ्गलायतनं स्वरूपसुखविषयं कथनं कीर्तनं यस्य स तथा असङ्गेन निशितं तेजितं यज्ज्ञानं तदेवानलोऽग्निस्तेन विधूतानि निर्मूलितानि समस्तरागादिमलानि येषां ते तथा तेषां भग [ १ ] वत्स्वभावानां सात्त्विकानाम् ॥ ११ ॥

किमत इति तत्राह । अथेति । यत एवममितमाहात्म्यसमुद्रोऽथ तस्मादस्माकं तव गुणकृतनामधेयानि श्रीमच्चरणारविन्दस्मरणाय वचनगोचराणि भवन्त्वित्यन्वयः ज्ञानानन्दादिगुणाः कंसहननादिकृतानि नारायणादिनामानि च सदा प्रसभवेऽस्येषु सर्वथेति भावेनाहुः । स्खलनेति । न केवलं तात्कालिकफलदानि किन्तु पारत्रिकफलदानीत्याशयेनोक्तम् । ज्वरेति । दुरितसद्भावे कथं पारात्रिकफलदानि स्युरित्यत उक्तम् । मक्षेति । दुःखस्थानं प्रवासादिकम् ॥ १२ ॥

अन्यच्च प्रयोजनमस्तीति विज्ञापयन्ति । किञ्चेति । ऐहिकीनामाशिषामीश्वरं न केवलमासामीश्वरं किन्तु स्वर्गापवर्गयोरपीति उपधावति । शरणमाप्नोति पुरुषार्थप्रदं त्वां प्राप्य प्रजालक्षणं तुच्छफलमाकाङ्क्षितं कथमिति तत्राह । प्रजायामिति । अर्थप्रत्ययः पुरुषार्थबुद्धिः अत्र दृष्टान्तमाह । धनदामिति । फलीकरणं क्षुद्रकणं पललं ( २ ) वा न कोऽपि याचत इत्यर्थः ॥ १३ ॥

तर्हि कीदृश ईहत इति तत्राह । अपराजितेति । हे अपराजित ! हरेः प्रसादं विना त्वपराजितया मायया मोहकशक्त्यानवसितमनिश्चितं यत्पदं स्वरूपं तत्त्वलक्षणं तस्य ध्याने व्यावृत्ता मतिर्यस्य स तथा कुतस्तत्राह । अनुपासितेति । तत्रापि कारणमाह । विषमेति । प्रकृतिः स्वभावः एवं विध ईहत इत्यर्थः अधनो दरिद्रः धनमपेक्षिताशेषपुष्टिं ददातीति धनदः ॥ १४ ॥

तं मुनयः स्वोक्तमधिकमिति मन्वाना भगवत्क्षमां प्रार्थयन्ते । यदुहेति । हे अदभ्रकर्तरनल्पकर्तः दूर्वाङ्कुरा [ ३ ] र्चितस्य हरेरनाद्यनन्तकालीननिर्दोषानन्दरूपमुक्तिदत्वाद्देवदत्तदत्तमेरुस्वर्णस्य विष्णुमित्रस्य काकिणिकाधनदत्वदर्शनाच्चेति राज्ञः पुत्रार्थमेवेह समाहूत इति यत्तदर्थधियां तत्प्रयोजनबुद्धीनां मन्दानां स्तुत्यादावपटूनां राज्ञोऽर्थे यत्तवाह्वानं विष्णुगायाहीति तच्छलनमयज्ञानं साम्येन तत्तद्वस्तुयोग्यतादर्शनेन प्रतिबोद्धुं क्षन्तुमर्हसीत्यन्वयः ज्ञानपूर्वाह्वानञ्चेत्कथं क्षान्तिवचनमित्यत उक्तमविदुषामिति ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वस्य महिमानमैश्वर्यसम्पत्तिम् अपवर्गाख्यमिति तस्यैवापवर्ग इति संज्ञेत्यर्थः । उपकल्पयिष्यन् साक्षात्कारयिष्यन् नापचित एवेति । पूजासम्पादकभक्त्यभावादिति भावः ॥ ९ ॥

अथायेत्यत्र अथ हायेति क्वचित् निजपुरुषेक्षणविषयोऽपि भवानिह बर्हिषि यज्ञमात्रे यर्हि यदासीदयमेव वर इत्यर्थः ॥ १० ॥ ११ ॥

गुणकृतानि च लीलानामधेयानि च ॥ १२ ॥

यजमानस्य स्वापराधमपि निवेदयितुं सङ्कुचन्तः प... यत्वेनाभिप्रायेण च तन्निवेदनीयमेव निवेदयन्ति । किञ्चे... तावत् प्रजामाशासानः आशिषामैहिकानां स्वर्गापवर्ग... त्वामुपधावति यथा फलीकरणमाशासानो धनदमुप... तद्वदिति परममौढ्यं न च तावतैव स्थितिः किन्तु म... माशासान इति धार्ष्ट्यं चेत्यर्थः ॥ १३ ॥

अनुपासितमहच्चरण इति सम्प्रति तेनोपास्यमानं ... तुष्णीं कुर्वन्ति ॥ १४–१९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

ननु तर्हि कथं सन्तुष्टोऽहं युष्मत्प्रत्यक्षीभूतोऽस्मीति ... तत्तस्मात् यथा बालिशानामज्ञानामपि समीपमनाहूतोऽ... तोऽपि विज्ञः कृपावशात्तानुद्धर्तुमायाति तथैव त्वं परेश... परमः पुरुषः प्रकर्षयुक्तया निरुपाधिकया करुणया ... मानं स्वमहैश्वर्यं तदनुभवमित्यर्थः अपवर्ग इत्याख्या ... चकारात् कामितं वस्तु च उपकल्पयिष्यन् दास्यन् स्वं ... चित एवास्मद्भक्त्यभावादपूजित एव इतरवत् यद्वं... दर्शी इतरजन इव ॥ ९ ॥

यथा तथा भवतु यूयन्तु वरं वृणुथेति चेत् ... अथ हायमिति । निजपुरुषाणां स्वभक्तानामीक्षणविषयोऽपि ... यर्हि यदा राजर्षेर्बर्हिषि यज्ञेऽध्यासीत् आविरभूदयमेव व... न्वयः ॥ १० ॥

सर्व्वैरति दुर्लभात् त्वद्दर्शनादप्यधिको वरो वरणीय... मूढानामेव मतं न तु विज्ञानामित्याह । असङ्गेन वैराग्येण ... यज्ज्ञानं स एवानलस्तेन निर्धूताशेषसकामत्वमलानां ... त्वयेव स्वीयो भावो दास्यादिर्येषामत एवात्मनि त्वय्येव ... स्यगेव रममाणानां मुनीनां परममङ्गलायनं गुणगण... मेव न तु दर्शनं यस्य अतस्तैरनवरतं परिगुणिता ... गुणगणा यस्येति सम्बोधनम् ॥ ११ ॥

अस्माकं त्वस्थिरमनसां मन्दानामेतावत्तु भवत्विति ... अथेति । त्वद्दर्शनप्राप्त्यनन्तरमित्यर्थः स्मरणाय विवशा... स्मर्त्तुमसमर्थानाम् ॥ १२ ॥

किञ्चेति । निवेदयितुमयोग्यमप्यावश्यकत्वेनैकं ... एवेत्यर्थः । अयमस्मद्यजमानो राजर्षिरपत्यकामः अपत्यं ... न्तरयजनेनापि भवति तदपि त्वां भगवन्तमुपधावति ... तदप्यहं स्वर्गापवर्गादिकमपि दास्यामीत्याशङ्क्याह ... हिकानां श्वर्गापवर्गयोरीश्वरमप्युपधावति अथ च प्र... अर्थः पुरुषार्थः इति प्रत्ययो नत्वपवर्गादिषु यस्य स इति ... अधनो यथा फलीकरणं तुषकणादिकमाशासानो ... मुपधावतीति तत्रापि प्रजां भवादृशीमाशासान इति ... पश्येति भावः ॥ १३ ॥

नचास्य दोष इत्याहुः । को वा इति । इह संसारे ... जितया केनापि पराजेतुमशक्यया अनवसितपदव्या ... क्षितमार्गया मायया को वा अनावृतमतिः न कोऽपीत्यर्थः ... कीदृशस्य पराजितः मायां पराजयत इति पराजित ... तस्य अनुपासितेत्युपासितमहच्चरण एवैको मायां ... राजर्षिरयन्तु न तादृश इति भावः ॥ १४ ॥

---

( १ ) भगवति स्वयोग्यो भावो भक्तिर्येषान्ते तथा ।

[ २ ] पललं तिलचूर्णे चेतिमेदिनी ।

[ ३ ] अनल्पकर्तृत्वमुपपादयति ।

॥ श्रीशुक उवाच ॥

**इति निगदेनाभिष्टूयमानो भगवाननिमिषर्षभो वर्षधराभिवादिताभिवन्दितचरणः सदयमिदमाह।१६।**

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यजनस्य सकामत्वलक्षणमपराधं क्षमयन्तः स्तोत्रमुपसंहरन्ति। यदि हेति। हे अदभ्रकर्त्तः! अनल्पकारिन् ब्रह्मादिदुर्लभं त्वद्दर्शनमपि सकामेऽप्यस्मभ्यमदा इति भावः। यत् त्वमिह समाहूतस्तत्तेन अर्थधियां सकामानामस्माकं यद्देवस्य तव हेलनमवज्ञानं तत् प्रतिव्योढं सोढुमर्हसि तत्र हेतुः हे देवदेव सर्व्वान् प्रति यत्तव साम्यं तेन॥ १५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अतोऽस्मदाराधनं निमित्तीकृत्य अस्मत्प्रयोजनार्थमाविर्भूतोऽसीत्याहुः। तद्यथेति। हे परम! परमपुरुषः पुरुषोत्तमः भवान् परं मोक्षाख्यं श्रेयोऽविद्युषामतो यथायथावत् बालिशानामसुखे सुखमानिनां बुभुक्षूणामप्यस्माकं तत्तस्मादाराधनमात्रत आत्मनः प्रकृष्टया करुणया अपवर्गाख्यं स्वमहिमानं स्वज्ञानं स्वसाधर्म्यं चकारात्कामितं च स्वयमुपकल्पयिष्यन् सम्पादयिष्यन् नापचितः अस्माभिरनुपकृतः एवेतरवदुपकृतवदुपलक्षितो दृष्टोऽसि॥ ९ ॥

तत्र मुख्यकामितं त्वद्दर्शनमित्याहुः। अथायमिति॥ १० ॥

भगवद्दर्शनस्य दौर्लभ्यमाहुः। असङ्गेति। हे अनवरतपरिगुणितगुणगण! अनवरतैर्नित्योद्युक्तैः परिगुणिता अभ्यस्ता गुणगणा यस्य एवम्भूत! असङ्गेन कुटुम्बादिसङ्गत्यागेन निशितं यज्ज्ञानं तदेवानलस्तेन विधूताशेषमलानां भवति भजनीये स्वभावोऽनन्यनाथत्वलक्षणो येषां तेषामत एव आत्मनि त्वयि भजनीये रमणशीलानामेवं विधानां मुनीनामपि परममङ्गलायनं गुणगणकथनमेव ननु दर्शनं यस्य सोऽसि॥ ११ ॥

हरिनामकीर्तनादीनां भक्तिभेदानां दुर्लभत्वं सूचयन्तो हरिनामकीर्तनरूपां भक्तिं प्रार्थयन्ते। अथ कथमिति॥ १२॥

प्रस्तुतं कामितं प्रार्थयन्ते। किञ्चेति। आशिषामैहिककामानां धनधान्यादीनां स्वर्गापवर्गयोश्चेश्वरं दातारं त्वामुपधावति प्रजायां पुत्रे अर्थः पुरुषार्थः इति प्रत्ययो यस्य सः फलीकरणं तुषकणादिकमाशासानोऽधनो यथा धनदमुपधावति तद्वत्॥ १३॥

त्वन्मायया मोहितानां पुत्रादावर्थप्रत्ययो युक्त एवेत्याहुः। क इति। अनवसितपदव्या दुर्गममार्गया ते मायया गुणमय्या शक्त्या कः अनावृतमतिः अनावृतज्ञानः अत एव अपराजितश्च इति कारणेनावरणो दर्शितः कार्येणावरणं दर्शयति विषयः शब्दादिरेव विषं तस्य रयैर्वेगैरनावृता प्रकृतिर्यस्य स च कः। उपासितमहच्चरणं विना न कोऽपीत्यर्थः॥ १४॥

अल्पीयसि प्रयोजने समाह्वानं तव हेलनं कृतं तत्क्षमस्वेत्याहुः। हे अदभ्रकर्त्तः! अनल्पकारिन्! अल्पीयसे प्रयोजनाय यद्यस्मादिह यज्ञे समाहूतोऽसि तत्र अर्थधियामर्थे पुत्रनाम्नि धीर्येषां तेषां नोऽस्माकं यद्देवहेलनं तत्सर्वान् प्रति तव साम्येन हेतुना हे देवदेव! प्रतिवोढुमर्हसि॥ १५॥

---

### भाषाटीका।

हम लोग मूर्ख हैं अपने परम कल्याण को नहीं जानते हैं हे परम पुरुष परम करुणा से आपकी महिमा मोक्ष नामक फल देने के लिये आप पूजित न होकर भी और सकाम देवता से इहां देख पडे हो॥ ९॥

हे अर्हत्तम यही एक हमारा वर है जोकि आप राजर्षि नाभिके यज्ञ में वर दातों में श्रेष्ठ होकर निज पुरुषों के नेत्र गोचर भये हो॥ १०॥

संसार के वैराग्य से तीक्ष्ण ज्ञानरूपी अग्निसे जिनके सब मल नष्ट होगये हैं आपके सदृश जिनके स्वभाव हैं जो आत्मारामी मे रतहैं ऐसे मुनिगणों के निरन्तर गानकरने के योग्य परममङ्गल दायक गुणों से आपका, गान होता है॥ ११॥

हे प्रभो! अब हम लोगोंको किसीप्रकार ठोकर लगकर गिरने में छींकनेमें जमुहाई में कोई दुर्दशा में परवस होजाने से भी ज्वरमें मरण के समय में भी सब पापों के नाश कर ने वाले आप के गुणों के नाम हमारे वचन के या स्मरण के गोचर होवें यही प्रार्थना है॥ १२

और भी यह नाभिमहाराज पुत्रकी कामनावाले होकर आपसरी के पुत्रको चाहते हैं आपका पूजन करते हैं आप सब संपत्तियों के तथा स्वर्ग मोक्ष के स्वामी हो जैसे कुबेर के पास कोई धान के छिलका मांगे तैसे इन की केवल भोगार्थ में बुद्धि है॥ १३॥

संसार में ऐसा कौन है कि जो महापुरुषों के चरणों के विना उपासना किये विषयरूप विषसे जिसकी बुद्धि भ्रान्त नहोगई हो और जिस के मार्गको कोई नहीं जानसकता है वह सबको जीतने वाली है उस को कोई नहीं जीतसक्ता है उस माया के वस न हुआ ऐसा कौन होगा कोई नहीं है॥ १४॥

हे प्रभो! सकल कर्ता आपको जो हम लोगोंने इहां बुलाया है सो हम लोग प्रयोजन मात्र में बुद्धिरखने वाले हैं यह जो आपकी अवज्ञा है तिसको आप अपनी समदृष्टि से सहन कीजिये हम लोगोंका भार आपको उठाना होगा॥१५॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

इति निगदेन गद्यात्मकस्तोत्रेण वर्षधरो भारतवर्षपतिर्नाभिस्तेनाभिवादिता ये ऋत्विजस्तैरभिवन्दितौ चरणौ यस्य॥ १६॥

॥ श्रीभगवानुवाच ॥

अहो बताहमृषयो भवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितो यदमुष्यात्मजो मया सदृशो भू-यादिति ममाहमेवाभिरूपः कैवल्यादथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव हि मुखं यद्द्विजदेवकु-लम् ॥ १७ ॥

तत आग्नीध्रीयेऽशकलयाऽवतरिष्याम्यात्मतुल्यमनुपलभमानः ॥ १८ ॥

॥ श्रीशुक उवाच ॥

इति निशामयन्त्या मेरुदेव्याः पतिमभिधायान्तर्दधे भगवान् ॥ १९ ॥

बर्हिषि तस्मिन्नेव विष्णुदत्त ! भगवान् परमर्षिभिः प्रसादितो नाभेः प्रियचिकीर्षया तदवरोधायने मेरु-देव्यां धर्मान् दर्शयितुकामो वातरशनानां श्रमणानामृषीणामूर्ध्वमन्थिनां शुक्लया तनुवाऽवततार ॥ २० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे

पारमहंस्यां संहितायां वैयासिक्याम्

तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

असुलभत्वे हेतुः ममाहमेवाभिरूपः सदृशः कैवल्याद्द्वितीयत्वात् द्विजेषु देवा इव ये ब्राह्मणास्तेषां कुलम् ॥ १७ ॥

आग्नीध्रीये नाभौ ॥ १८ ॥

पतिं नाभिम् ॥ १९ ॥

हे विष्णुदत्त! तस्यावरोधायनेऽन्तःपुरे मेरुदेव्यां शुक्लया शुद्धसत्त्वरूपया मूर्त्याऽवततार केषां धर्मान् वातरशनानां दिग्वाससां पाषण्डव्यावृत्त्यर्थमाह । श्रमणानां तपस्विनामृषीणां ज्ञानिनां ऊर्ध्वमन्थिनां नैष्ठिकब्रह्मचारिणाम् ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्येवं निगदेन गद्यात्मकसूक्तेनाभिष्टूयमानो भगवान् देवोत्तमः वर्षधरः भारतवर्षधारको नाभिस्तेनाभिवादितौ ऋत्विग्भिरभिवन्दितौ चरणौ यस्य सः सदयं दयासहितमिदं वक्ष्यमाणं वाक्यमाह ॥ १६ ॥

अहो ऋषयः! अवितथगीर्भिः सत्यवाग्भिर्भवद्भिरसुलभं दुर्लभं वरं प्रत्यहमभियाचितः प्रार्थितः वतेत्याश्चर्ये कोऽसौ दुर्लभो वरस्तत्राह । मया सदृशः आत्मजो भूयादिति कथं तस्य वरस्य दौर्लभ्यं तत्राह । ममाहमेवाभिरूपः सदृशः कुतः कैवल्यात्प्रकृतिपुरुषविलक्षणस्वभावात् "नतत्समश्चाभ्यधिकश्च दृश्यते नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य" इत्युक्तरीत्या प्रकृतिपुरुषविलक्षणसमाभ्यधिकरहितस्य सदृशान्तराभावान्मत्सदृशरूपो वरोऽति दुर्लभ इत्यर्थः यद्यप्ययं वरोऽतिदुर्लभस्तथापि हि यस्माद्द्विजदेवकुलं द्विजा एव देवास्तपोविद्यादिभिर्दीव्यमानास्तेषां कुलं ममैव हि मुखं "ब्राह्मणोऽस्य मुखमासीदिति" उक्तरीत्या मुखं ततो ब्रह्मवादः ब्रह्मकुलस्य मन्मुखभूतस्य वादो वचः मृषा मिथ्या न भवितु[मर्हती]त्यहमेव मत्सदृशमन्यमनुपलभमानः कलयांऽशेनाग्नीध्रे[...]सम्बन्धिनि क्षेत्रे मेरुदेव्यामवतरिष्यामीत्येवं मेरुदेव्याः [...]यन्त्याः शृण्वन्त्या सत्याः तत्पतिं नाभिं प्रत्यभिधाय भगवान् यज्ञपुरुषोऽन्तर्दधेऽन्तर्हितवानित्यर्थः ॥ १७—१८—१९ ॥

हे विष्णुरात ! राजन् तस्मिन् बर्हिषि यज्ञे एवं महर्षिभिः प्रसादितः आराधितो भगवान्नाभेः प्रियमिष्टं कर्तुं निर्व[...]च्छया तदवरोधायने नाभेर्भार्यायां मेरुदेव्यां शुक्लया सत्त्व[...]तन्वावततार किं कर्तुकामः वातरशनानां दिग्वाससां [पाष]ण्डव्यावृत्त्यर्थमाह । श्रमणानां तपस्विनामृषीणां ज्ञानिनां [ऊर्ध्व]मन्थिनां नैष्ठिकब्रह्मचारिणां धर्मान् दर्शयितुकामः अवततारः कपिलः तावन्मात्रकृत ईश्वरत्वव्यपदेशः ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निगदेन महिमाविष्कर्तॄणां स्तुतिवचनेन अनिमिषाणां देवानां श्रेष्ठः वर्षधराभिवन्दितचरणः [१] नाभि[...] श्रीपादः ॥ १६ ॥

किमाहेति । तत्राह । अहो इति । अहो विस्मयोऽयं [...] "अहो हि विस्मय" "इतियादवः" "वताभिमन्त्रणे भूते [...] कृपायां चेति" च हे ऋषयो ! वितथगीर्भिः सत्यवचनैः [...] मया सदृशः आत्मजो भूयादिति यं वरमभियाचित [...] तदसुलभं तत्कुतोऽत्र उक्तम् । ममेति । अभिरूपः प्रतिरूपः [...] कुत इत्यत उक्तम् कैवल्यादिति । अद्वितीयत्वात् [...] मुनित्वं च गतमेतदद्वितीयत्वज्ञानाभावादिति [...]

[१] भरतखण्डाधिपो नाभिः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

लोकज्ञापनपरत्वादर्थनायाः नत्वद्वितीयत्वाज्ञानात्तदुक्तम्। "नास्ति विष्णोः समम्" इति जानन्तोऽप्यृषयः सदा तज्ज्ञापनाय लोकानामन्ये च प्रार्थयन्तु सममिगि अन्ये कश्यपादयोऽपि हरिणा समं पुत्रमर्थयन्त इत्यर्थः एवं चेन्द्रगवदुक्तमपि विद्वदङ्गीकृतमपहासकमिति तत्राह। अथापीति। कर्तव्यत्वे हेतुमाह। ममैवेति। द्विजदेवानां ब्राह्मणश्रेष्ठानाम् ॥ १७ ॥ १८ ॥

निशामयन्त्याः पश्यन्त्याः ॥ १९ ॥

बर्हिषि यज्ञे हे विष्णुरात! हे विष्णुदत्त! परीक्षित्तस्य नाभेरवरोधजने भार्याजने वातरशनानां वायुवस्त्राणां दिगम्बराणामित्यर्थः श्रमणानां परमहंसानां परमहंसाश्रमानुष्ठानवताम् ऊर्ध्वमन्थिनामूर्ध्वरेतसामृषीणां धर्मान् दर्शयितुकामो हरिः शुक्लया शुचं लापयति नाशयति शुकं ज्ञानं लाति ददातीति वा "शुकगतौ" इति धातुः गतिर्ज्ञानमतिशयितसुखज्ञानत्वाद्वा शुक्ला तया तनुवा देहेन ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

वातवसनानां सन्न्यासिनां श्रमणानां वानप्रस्थानामृषीणां तत्तन्मन्त्रदर्शनमययाज्ञिकानां गृहस्थानामित्यर्थः ऊर्ध्वमन्थिनां ब्रह्मचारिणामपि तच्चरिते तस्य तस्य दर्शयिष्यमाणत्वात् ॥ २० ॥

इतिश्रीमद्भागवते महापुराणे तृतीयस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

निगदेन गद्यात्मकस्तोत्रेण वर्षधरो भारतवर्षपतिर्नाभिस्तेनाभिवादिता ये ऋत्विजस्तैरभिवन्दितौ चरणौ यस्य अवितथगीर्भिरमोघवाग्भिः ॥ १६ ॥

अभिरूपः सदृशः कैवल्यादिति अहं खलु जगदीश्वरः नहि जगदीश्वरोऽन्यः कश्चिदस्तीत्यर्थः द्विजेषु देवा इव ब्राह्मणास्तेषां कुलम् ॥ १७ ॥

आग्नीध्रीये अग्नीध्रपुत्रे ॥ १८ ॥ १९ ॥

हे विष्णुदत्त! तदवरोधायने तदन्तःपुरस्थले या मेरुदेवी तस्यां वातवसनानां दिग्वाससो दिग्वाससो बाला अपि भवन्तीत्यत आह। श्रमणानां तपस्विनां तथा भूताः पापण्डिनोऽपि भवन्तीत्यत आह। ऋषीणां शास्त्रोक्तज्ञानवतां तेषां ब्रह्मचर्याद्याश्रमाह, ऊर्ध्वमन्थिनामूर्ध्वरेतसां शुक्लया शुद्धसत्त्वरूपया तनुवा तन्वा ॥ २० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
पञ्चमस्य तृतीयोऽयं सङ्गतः सङ्गतः सताम् ॥ ३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

इत्येवम्भूतेन निगदेन गद्यात्मकस्तवेन अभिपूयमानो वर्षधरेण भारतवर्षपतिना नाभिना अभिवादितैः ऋत्विग्भिरभिवन्दितौ चरणौ यस्य स भगवान् सदयमिदमाह ॥ १६ ॥

कैवल्यात् निःसमानातिशून्यत्वात् द्विजेषु त्रैवर्णिकेषु देवा इव द्विजदेवाः विप्रास्तेषां कुलम् ॥ १७ ॥

ततो हेतोः आग्नीध्रीये वंशे अवतरिष्यामि ॥ १८ ॥

इति भगवद्वचनं निशामयन्त्याः शृण्वन्त्याः पतिं नाभिम् अभिप्रायोक्त्वा ॥ १९ ॥

हे विष्णुदत्त! परीक्षित्! बर्हिषि यज्ञे परमर्षिभिर्भागवतैः ऋत्विग्भिः प्रसादितः तदवरोधायने नाभेरन्तःपुरे मेरुदेव्यां शुक्लया शुद्धया तनुवा तन्वा अवततार किं कर्तुकामः वातरशनानां दिग्वाससां पापण्डिव्यावृत्त्यर्थमाह। श्रमणानां वेदोक्ततपोनिष्ठानाम् ऋषीणां ज्ञानिनाम् ऊर्ध्वमन्थिनां नैष्ठिकब्रह्मचारिणां धर्मान्दर्शयितुकामः ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
तृतीयाध्यायार्थप्रकाशः ॥ ३ ॥

---

भाषा टीका।

श्रीशुकदेवजी बोले इस प्रकार से स्तोत्रसे जब स्तुति किये गये तब देवतों में श्रेष्ठ भगवान् पृथिवीपति तथा विप्रों के चरण वन्दनाकरने पर दयायुक्त होकर यह वचन बोले ॥ १६ ॥

श्रीभगवान् बोले हे ऋषिगण! आपलोग सत्य वचन वाले हो आप लोगोंने मेरेसे अतिदुर्लभ वर माँगा है जोकि हमारे सदृश इस राजाका पुत्र होना चाहिये सोतो कैवल्यदाता होनेसे मेरे सदृशतो मैंही हूं तौभी ब्राह्मणों का वचन मिथ्या नहीं होना चाहिये जिससे कि ब्राह्मण देवता कुलतो हमाराही मुख है ॥ १७ ॥

तिस से अपने सदृश किसी को मैं नहीं देखताहूं तो आग्नीध्रके वंश में अंशकलासे मैंही अवतार लेऊंगा ॥ १८ ॥

श्रीशुकदेवजी बोले इस प्रकार वचनकों सुनती हुई मेरुदेवी के सम्मुख उसके पति को कह कर भगवान् अन्तर्ध्यान होगये ॥ १९ ॥

हे विष्णुदत्त! परीक्षितजी उस यज्ञ में इस प्रकार प्रसन्न करने से भगवान् नाभिराजा के प्रीति करने की इच्छा से उस राजाके रनवास में मेरुदेवी के गर्भ में दिगम्बर सन्यासी ऊर्ध्वरेता ऋषि लोगों के धर्मोंको दिखाने के वास्ते शुद्ध सत्त्वमयरूप से अतीर्ण भये ॥ २० ॥

इति श्रीमद्भागवत पञ्चमस्कन्ध तृतीयअध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ ३ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

## ॥ चतुर्थोऽध्यायः ॥

### ॥ श्रीशुक उवाच ॥

अथ ह तमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं साम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेध-
नानुभावं प्रकृतयः प्रजा ब्राह्मणा देवताश्चावनितलसमवनायातितरां जगृधुः ॥ १ ॥

तस्य हवा इत्थं वर्ष्मणा वरीयसा बृहच्छ्लोकेन चौजसा बलेन श्रिया यशसा वीर्यशौर्याभ्यां
पिता ऋषभ इतीदं नाम चकार ॥ २ ॥

(१)तस्य हीन्द्रः स्पर्द्धमानो भगवान् वर्षे न ववर्ष तदवधार्य भगवानृषभदेवो योगेश्वरः प्रहस्यात्मयो-
गमायया स्ववर्षमजनाभं नामाभ्यवर्षत् ॥ ३ ॥

नाभिस्तु यथाभिलषितं सुप्रजस्त्वमवरुध्यातिप्रमोदभरविह्वलो गद्गदाक्षरया गिरा स्वैरं गृहीतनरलो-
कसधर्मं भगवन्तं पुराणपुरुषं मायाविलसितमतिर्वत्सतातेति सानुरागमुपलालयन् परां निर्वृत्तिमुपगतः ॥ ४ ॥

विदितानुरागमापौरप्रकृति जनपदो राजा नाभिरात्मजं समयसेतुरक्षायामभिषिच्य ब्राह्मणेषूपनि-
धाय सह मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपसा समाधियोगेन नरनारायणाख्यं भगवन्तं
वासुदेवमुपासीनः कालेन तन्महिमानमवाप ॥ ५ ॥

यस्य ह पाण्डवेय ! (२) श्लोकावुदाहरन्ति ।
को नु तत्कर्म राजर्षेर्नाभेरन्वाचरेत्पुमान् ।
अपत्यतामगाद्यस्य हरिः शुद्धेन कर्मणा ॥ ६ ॥
ब्रह्मण्योऽन्यः कुतो नाभेर्विप्रा मङ्गलपूजिताः ।
यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा ॥ ७ ॥

अथ ह भगवानृषभदेवः स्ववर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासो लब्धवरैर्गुरुभिरनु-
ज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयन्त्यामिन्द्रदत्तायामुभयलक्षणं कर्म समाम्नायाम्नातमभियु-
ञ्जन्नात्मजानामात्मसमानानां शतं जनयामास ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्थादित्रिभिः प्रोक्तमृषभस्येहितं महत् ।
लोकार्थं येन सत्कर्म नैष्कर्म्यं च निदर्शितम् ॥ १ ॥
चतुर्थे शतपुत्रस्य राज्यं तस्योपवर्ण्यते ।
यस्य राज्ये जनः सर्वः सन्तोषामृतनिर्वृतः ॥ २ ॥

अभिव्यज्यमानानि भगवल्लक्षणानि पादतलादिषु वज्राङ्कुशादीनि यस्य। महाविभूतिः सर्वसम्पत्तिः साम्यादिभिः सह वर्द्धमानप्रभावम्। प्रकृतयोऽमात्यादयः। जगृधुरभिकाङ्क्षन्ति स्म ॥१॥

वर्ष्मणा देहेन। तस्य विशेषणद्वयम्। वरीयसा श्रेष्ठतमेन। बृहन्तः श्लोकाः पद्यानि कवीनां यस्मिंस्तेन च। ओजस्तेजः वीर्यं प्रभावः शौर्यमुत्साहः एतैर्गुणैरतिश्रेष्ठत्वादृषभः श्रेष्ठ इति चकार ॥ २ ॥

तस्य वर्षे मण्डले ॥ ३ ॥

अवरुध्य प्राप्य। स्वैरमिच्छया गृहीतो नरलोकसधर्मो मनुष्याकारो येन तम्। अतएव मायया स्वपुत्र इति विलसिता मतिर्यस्य ॥ ४ ॥

आपौरप्रकृति पौरान्प्रकृतींश्चाभिव्याप्य विदितोऽनुरागो [illegible] कथम्भूतो नाभिः। जनपदः जनाः पौरादयः पदं प्रमाणं [illegible] सः आत्मजं धर्ममर्यादारक्षणार्थमभिषिच्य ब्राह्मणेषु [illegible] निधाय विशालायां बदरिकाश्रमे। प्रसन्नं परानुद्वेजकं [illegible]

---

(१) यस्य हीति श्रीवीरराघवपाठः।

(२) श्लोका इति श्रीवीरराघवपाठः।

श्रीधरस्वामिकृतभावार्थदीपिका ।

तीव्रं तेन उपासीनः सेवमानः कालेन तन्महिमानं जीवन्मुक्तिमवाप ॥ ५ ॥

नाभेस्तत्प्रसिद्धं कर्म अनु तदनन्तरं को नु पुमानाचरेत् न कोऽपीत्यर्थः ॥ ६ ॥

ब्रह्मण्यैर्दक्षिणाभिः पूजिताः सन्तः ओजसा मन्त्रबलेन ॥ ७ ॥ अन्येषां ग्रहणाय प्रदर्शितो गुरुकुलवासो येन अनुशिक्षमाणोऽनुशिक्षयन् उभयविधं श्रुतिस्मृतिलक्षणं कर्म विधिमभियुञ्जन्ननुतिष्ठन् जयन्त्यां भार्यायामात्मजानां शतं जनयामास ॥ ८ ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं नाभेश्चरित्रमुपवर्णितमुपसंहरँस्त्रिभिरध्यायैर्नाभेः पुत्रस्य ऋषभस्य चरित्रमुपवर्णयति । अथेति । अथ ह्यवतारानन्तरमुत्पत्त्यैव जन्मनैवाभिव्यज्यमानानि भगवल्लक्षणानि पादतलादिषु वज्राङ्कुशादीनि यस्य साम्यं सर्वभूतेषु समत्वमुपशमः अन्तःकरणेन्द्रियनियमः वैराग्यं विषयेष्वनासक्तिः ऐश्वर्यं सर्वभूतनियन्तृत्वं महाविभूतिः सर्वसम्पत्तिः साम्यादिभिः सह वर्द्धमानः अनुभावः प्रभावो यस्य तं निशाम्य दृष्ट्वा प्रकृतयोऽमात्याः प्रजा जना ब्राह्मणा देवताश्च गोबलीवर्दन्यायेन ब्राह्मणदेवतावर्युकमवनितलसमवनाय भूमण्डलपरिपालनायातितरां भृशं गुणैरच्छन् ॥ १ ॥

तस्य जातस्य पुत्रस्य इत्थं सत्त्वप्रधानेन वरीयसा श्रेष्ठेन वर्ष्मणा देहेन बृहत्श्लोकेन विपुलगुणप्रथया ओजसा इन्द्रियबलेन बलेन देहबलेन श्रिया सम्पदा यशसा विपुलचरित्रप्रथया वीर्यं पराभिभवसामर्थ्यं शौर्यं रणमध्ये स्वगृहे इव विजयसामर्थ्यं ताभ्यां चातिशयितप्रभावत्वेन श्रेष्ठत्वादृषभ इति नामधेयं पिता नाभिश्चकार ॥ २ ॥

ऋषभशब्दप्रवृत्तिनिमित्तं प्रभावातिशयमेव संग्रहेणाह । यस्य हीति । यस्य ऋषभस्य वर्षे राज्ये भारतवर्षे स्पर्द्धमानः ईर्ष्याभेण विरोधमाचरन्निन्द्रः नववर्षं वृष्टिं निरुद्धवान् तदिन्द्रकृतं कर्मावसायमवधार्य निश्चित्येन्द्रकृत्यः प्रहस्य भगवानृषभदेवो योगेश्वरः आत्मीयविचित्रशक्त्या स्वयमेवाजनाभवर्षं भारतवर्षस्य प्राक्तनं नामाजनाभमित्यवर्षत् ॥ ३ ॥

नाभिस्तु यथाभिलषितं स्वेच्छानुरूपं सुप्रजस्त्वं शोभना प्रजा यस्य सः सुप्रजाः "नित्यमसिच्प्रजामेधयोः" इत्यसिच् तस्य भावः सुप्रजस्त्वं सुपुत्रत्वमवरुध्य प्राप्य निरतिशयप्रमोदेन विह्वलः गद्गदया गिरा मायया भगवन्मायया स्वपुत्र इति विलसिता मतिर्यस्य सः हे वत्स ! तातेति सानुरागं पुत्रमुपलालयन् परं निर्वृतिमानन्दमुपगतः प्राप्तः कथंभूतं पुत्रं स्वैरं स्वेच्छया गृहीतः नरलोकसधर्मः मनुष्याकारो येन भगवन्तं पाड्गुण्यपूर्णं पुराणं पुरुषं पुरापि नवः पुराणः तं पुरुषं पुरुषशब्दवाच्यं ततो राजा नाभिरात्मपौरप्रकृतिजनपदं पौरान्प्रकृतीर्देशवासिनश्चाभिव्याप्य विदितोऽनुरागो यस्मिन् जनपद इति पाठे आर्षत्वादप्रयोगस्य"नाव्ययीभावादतोऽम्त्वपञ्चम्याः"इत्यमभावोऽव्ययादाप्सुपः इति लुगभावश्च नाभिरात्मजं समयसेतवः वर्णाश्रमधर्ममर्यादास्तेषां रक्षायामभिषिच्य राज्याभिषिक्तं कृत्वेत्यर्थः ब्राह्मणो-

नामुपसङ्क्रान्तं निधाय विशालायां बदरिकाश्रमे मेरुदेव्या स्वभार्यया सह प्रसन्नेन परानुद्वेजकेन निर्विघ्नेन विघ्नानुपहतेन समाधिना साङ्गेन भक्तियोगेन भगवन्तं नारायणाख्यं वासुदेवमुपासीनः कालेन प्रारब्धावसानकालेन तस्य वासुदेवस्य महिमानमवाप प्राप्याविर्भूतगुणाष्टकोऽभूत् मुक्तोऽभवदिति यावत् ॥ ४—५ ॥

नाभेश्चरित्रं निगमयन् तत्प्रभावप्रतिपादकौ श्लोकावुदाहर्तुं तयोः सर्वपरिगृहीतत्वमाह। यस्येति । हं पाण्डवेय ! यस्य नाभेः श्लोकौ "लोपः शाकल्यस्य"इति यस्य लोपे तस्यासिद्धत्वात्स्वरसंध्यभावः उदाहरन्ति आर्षा इतिशेषः तावाह । कोनु इति । राजर्षेर्नाभेस्तत्प्रसिद्धं कर्म को नु पुनानाचरेत्कुर्यान्नकोऽपीत्यर्थः यस्य नाभेः शुद्धेन कर्मणा भगवानपत्यतां पुत्रतामगात्प्राप्तः ॥ ६ ॥

नाभेरन्यः कुतो ब्रह्मण्यः को ब्रह्मण्य इत्यर्थः प्रथमार्थे तसिरार्षः यस्य नाभेर्बर्हिषि यज्ञे ब्रह्मण्यैर्निजाजिनधनादिभिः पूजिता विप्राः ओजसा मन्त्रबलेन यज्ञेशं दर्शयामासुः प्रदर्शितवन्तः ॥ ७ ॥

अथ राज्याभिषेकानन्तरं भगवानृषभदेवः स्ववर्षमजनाभं वर्षं कर्मक्षेत्रं स्वर्गापवर्गसाधनकर्मानुष्ठानयोग्यं स्थानं मन्यमानः अन्येषां ग्रहणाय प्रदर्शितो गुरुकुलवासो येन उपलब्धाः वरा यैस्तैर्गुरुभिरनुज्ञातः गृहमेधिनां गृहाश्रमिणां धर्माननुशिक्षमाणः अनुशिक्षयितुमित्यर्थः समाम्नातं विहितमुभयविधं प्रवृत्तिनिवृत्तिलक्षणं श्रौतस्मार्तरूपं वा कर्माभियुञ्जन्ननुतिष्ठन् इन्द्रेण दत्तायां जयन्त्यां भार्यायामात्मजानां शतं जनयामास येषामात्मजानां मध्ये भरतो नाम ज्येष्ठः पुत्रः श्रेष्ठगुण आसीत् येन भरतेन भरतसम्बन्धेन इदमजनाभं वर्षं भारतमिति व्यपदिशन्ति व्यवहरन्ति ॥ ८—९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

ऋषभनाम्नो हरेर्गार्हस्थ्यधर्मप्रदर्शनव्याजेन देवादीनामवन्यवतारे तत्प्रवर्तकप्रकारो वरीदृश्यतेऽस्मिन्नध्याये तत्रादौ तस्मिल्लोकानुरागप्रकारं कथयति । अथेति ॥ १ ॥

अथ पिता तद्गुणानुविशिष्टं नाम चकारेत्याह । तस्येति ! इत्थं विचिन्त्य कथम्"ऋष ज्ञाने भा दीप्तौ" इति धातुद्वयार्थत्वेन वरीयसा श्रेष्ठेन वर्ष्मणा देहेन ज्ञानप्रकाशदेहत्वादृषभ इति ऋदुरुपायां मूर्धनि स्थानसाम्यादकारेण णकारो लक्ष्यते तेन णकारपकाराभ्यामोजो बले गृह्यते "णकारो बलं पकारः प्राण आत्मा" इति श्रुतेः बृहता श्लोकेन ग्रन्थनिबद्धेन यशसा श्रियं दन्तीति लक्षणेन सामान्यविशेषात्मना वा श्रौतस्मार्तकर्मानुष्ठाननिमित्तप्रसिद्धलक्षणदीप्त्या वा श्लोकेन यशसा श्रिया कान्त्या सर्वमेतद्भकारेण गृह्यते ऋषभ इति समस्तेन वीर्यशौर्ये गृह्येते "ऐश्वर्यस्य समग्रस्य"इति वचनात् शश्वत् षड्गुणवत्त्वाद्वा ऋषभ इति चाभिभ इति वन्मत्वर्थे भः ईदृक् नाम ईदृक् गुणविशिष्टं नाम ॥ २ ॥

अस्माद्धेतोश्चैवेदं नामास्येति भावेनाह । यस्येति । योगमायया स्वरूपसामर्थ्येन अभ्यर्पीश्वर्ययुक्तकार्येति अत्र इन्द्रशब्देनेन्द्रपदे स्थितः यज्ञनामा हरिर्गृह्यते तदुक्तम् ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुष्टानां ( १ ) मोहनार्थाय यज्ञ इन्द्रपदे स्थितः ।
पस्पर्ध ऋषभेणैव स्वरूपेण हरिः स्वयम् ।

इति ॥ ३ ॥

सुप्रजस्त्वं सत्पुत्रत्वं "सुप्रजस्त्वमङ्गिरसो वो ऽस्तु प्रतिगृह्णातमानवं सुमेधस" इति श्रुतेः स्वैरं स्वेच्छया गृहीतो नरलोकधर्मो मेहनादिः काकपक्षादिर्वा चौलादिर्वा वक्ष्यमाणगुरुकुलवासादिर्वा येन स तथा मायया प्रकृत्या विलसिता वशीकृता मतिर्यस्य स तथा मायाविलासमेव वक्ति । वत्सेति । पौरादीनां पुत्रे योऽनुरागः स विदितो येन स तथा समयसेतुरक्षायां "समयस्तु क्रियाकारे सङ्केते चरिते सतां सिद्धान्ते शपथे काले" इत्यभिधानोक्तार्थरक्षणे विशालायां वदरिकाश्रमे नगरीग्रहणं नरनारायणाख्यमित्युक्ति विरुणद्धि कालेन ज्ञानादिसामग्रीलक्षितेन तस्य हरेर्महिमानं जरामरणादिराहित्यलक्षणं नतु स्रष्टृत्वादिलक्षणम् ॥ ४ ॥ ५ ॥

हे पाण्डवेय ! ओजसा तपोजनितेन ॥ ६ ॥ ७ ॥

उपलब्धदक्षिणाख्यवरैः उभयलक्षणं प्रवृत्तिनिवृत्तिलक्षणं समाम्नायाम्नातं समीचीनेषु निर्दोषेषु आम्नायेषु देवेष्वाम्नातमभ्यस्तमभियुञ्जन्प्रयुञ्जानः कुर्वाण इत्यर्थः आत्मसमानानां लक्षणैरिति शेषः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

साम्यादिभिः पूर्वस्यैवान्वयः वर्ष्मादिभिः ऋषभः श्रेष्ठ इति हेतोरिदमृषभ इत्येतन्नाम चकार ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

समयसेतुरक्षायां न तु राजत्वे इति ज्ञेयं सदाहि तदुचितगार्हस्थ्याश्रमपरिग्रहाभावात् राज्याभिषेकस्तु पश्चात् ब्राह्मणैरेव कर्तव्य इति ज्ञेयम् ॥ ५ ॥ ६ ॥

मङ्गलमत्र सुखभावः ॥ ७—१३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चतुर्थे पुत्रशतकं भरतप्रवरं प्रभुः ।
जनयित्वा व्यधाद्राज्यं प्रजानां सार्वकामिकम् ॥ ० ॥

जगृधुरभिचकाङ्क्षुः ॥ १ ॥

वर्ष्मणा देहेनेत्यस्य विशेषणद्वयम् वरीयसा श्रेष्ठेन बृहन्तः श्लोकाः कवीनां यस्मिन् तेन वीर्यं प्रभावः शौर्य्यमुत्साहः । ऋषभ इति श्रेष्ठत्वादित्यर्थः ॥ २ ॥

अजः श्रीऋषभदेवः नाभिस्तत्पिता ताभ्यां रक्षितत्वादजनाभसंज्ञमित्यर्थः वृद्धभाव आर्षः ॥ ३ ॥

अवरुध्य प्राप्य मायया पुत्रज्ञानेन विलसिता मतिर्यस्य सः "स्यान्माया शाम्बरी बुद्धोः" इति त्रिकाण्डशेषः ॥ ४ ॥

[ १ ] स्वायम्भुवमन्वन्तरे ऋषभावतारः तदेन्द्रोऽपि यज्ञनामा भगवानेव अतः कथं स्वेनैव स्वस्य स्पर्धेत्याशङ्क्य प्रमाणेनैव तदुक्तेरभिप्रायमाह ।

आपौरप्रकृति पौरान् प्रकृतींश्चाभिव्याप्य विदितः यस्मिंस्तं कथंभूतो नाभिः जनपदः जनाः पौरादय आत्मजाभिषेके प्रमाणं यस्य सः समयानां सदाचाररूपा या मर्य्यादास्तद्रक्षणाय विशालायां वदरिकाश्रमे प्रसन्नेन प्रसादवता सर्वसुखदेनेत्यर्थः निपुणेन फलसाधनेन तस्यैव महिमा यत्र तं वैकुण्ठम् ॥ ५ ॥

शुद्धेन कर्म्मणा भक्तियोगेन ॥ ६ ॥

मङ्गलं यथास्यात्तथा दक्षिणादिभिः प्रसादिता भक्तवात्सल्यकर्त्री पूजिता इति वा ओजसा भक्तिबलेन ॥ ७ ॥

अनुमन्यमानो जानन् प्रदर्शितेत्यन्येषां ग्रहणायेत्यर्थः लब्धदक्षिणैः अनुशिक्षमाणः शिक्षयन् उभयविधं प्रवृत्तिनिवृत्तिलक्षणमुभयलक्षणमिति पाठः सम्यगाम्नायेन ब्राह्मणेनाम्नातमभ्यस्तमभियुञ्जन् अनुतिष्ठन् "आम्नायो निगमेऽपि ...ऽपि" इतिमेदिनी ॥ ८ ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथेत्याद्यध्यायत्रयेण ऋषभचरित्रं वर्णयति । उत्पत्त्यैव अभिव्यज्यमानानि भगवल्लक्षणानि यस्य तम् प्रकृतयः ... भूतयः अवनितलस्य सम्यगवनाय जगृधुः अभिकाङ्क्षन्ति स्म ॥ १ ॥

वरीयसा अतिशयतो वरेणोत्कृष्टेन बृहन्तः ... श्रेष्ठाः श्लोकाः कवीनां यस्मिन् तेन वर्ष्मणा देहेन ओजसा ... भिश्चातिश्रेष्ठत्वादृषभः श्रेष्ठ इति नाम चकार ॥ २ ॥

तस्य वर्षे अजनाभाख्ये मण्डले ॥ ३ ॥

नाभिर्यथा अभिलाषितं कामितं तथैव सुप्रजस्त्वं ... अवरुध्य प्राप्य अतिप्रमोदभरेण विह्वलः स्वैरं स्वेच्छया ... नरलोकसधर्मः नरलोकसमानो धर्मः वेदोक्तमार्गो ... भगवन्तं वत्स ! तातेति गिरा उपलालयन् परां निर्वृतिं प्राप्तः यतो मायया भगवत्कृपया विलासिता मतिर्यस्य ...

नाभिः जनपदः जनाः पौरादयः पदं प्रमाणं ... पौरादिलक्षणे तन्मतानुसारीत्यर्थः अतः समयसेतुरक्षायां ... कप्रजापालनादिधर्ममर्यादारक्षायाम् आपौरप्रकृति पौरान् ... रूपान् प्रकृतींश्चाभिव्याप्य विदितः अनुरागो यस्मिन् ... अभिषिच्य ब्राह्मणेषु हेयोपादेयरूपसकलव्यवहारशास्त्र... धाय विशालायां नरनारायणाश्रमे प्रसन्ननिपुणेन प्रसन्नं ... निपुणं सुदृढं च तेन तपसा समाधियोगेन भगवद्... रूपेण योगेनोपायेन वासुदेवमुपासीनः तन्महिमानं ... मवाप ॥ ५ ॥

तत्प्रसिद्धं कर्म ॥ ६ ॥

मङ्गलेन श्रद्धार्जवादिना पूजिताः ॥ ७ ॥

उपनयनादारभ्य तच्चरित्रं वर्ण्यते । अथेति । लोकसङ्ग्रहार्थं ... र्शितो गुरुकुलवासो येन अनुशिक्षमाणः अनुशिक्षयन् ... क्षणं जायापतियुग्मानुरूपं समाम्नायाम्नातं सहोभौ ... तामित्यादिवेदप्रोक्तम् अभियुञ्जन् जयन्त्यां पुत्रान् ... मास ॥ ८ ॥ ९ ॥

---

येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद्येनेदं वर्षं भारतमिति व्यपदिशन्ति ॥ ९ ॥

तमनु कुशावर्त इलावर्तो ब्रह्मावर्तो मलयः केतुर्भद्रसेन इन्द्रस्पृग्विदर्भः कीकट इति नव नवतिप्रधानाः ॥ १० ॥

कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः।
आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः॥ ११ ॥

इति भागवतधर्मदर्शना नव महाभागवतास्तेषां सुचरितं भगवन्महिमोपबृंहितं वसुदेवनारदसम्वादमुपशमायनमुपरिष्टाद्वर्णयिष्यामः ॥ १२ ॥

यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकरा महाशालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः ॥ १३ ॥

भगवानृषभसंज्ञ आत्मतन्त्रः स्वयं नित्यनिवृत्तानर्थपरम्परः केवलानन्दानुभव ईश्वर एव विपरीतवत्कर्माण्यारभमाणः कालेनानुगतं धर्ममाचरणेनोपशिक्षयन्नतद्विदां सम उपशान्तो मैत्रः कारुणिको धर्मार्थयशःप्रजानन्दामृतावरोधेन गृहेषु लोकं नियमयत् ॥ १४ ॥

यद्यच्छीर्षण्याचरितं तत्तदनुवर्तते लोकः ॥ १५ ॥

यद्यपि स्वविदितं सकलधर्मं ब्राह्मं गुह्यं ब्राह्मणैर्दर्शितमार्गेण सामादिभिरुपायैर्जनतामनुशशास ॥ १६ ॥

भाषाटीका।

श्रीशुकदेवजी बोले तदनन्तर उत्पत्ति ही से जिन के भगवच्चिह्न विदित होते हैं समता ऐश्वर्य उपशम महा विभूति से जिनका प्रभाव प्रतिदिन बढता जाता है तिन को देखकर सब प्रजा ब्राह्मण देवता उन के पृथिवी पालन की इच्छा करने लगे ॥ १ ॥

उन के शरीर के बडेहोने से बडे यश के होने से बल से शोभा से वीर्य से शौर्य से पितानाभीने ऋषभ ऐसा नाम रक्खा ॥ २ ॥

किसी समय पर इन्द्र भगवान् ने ईर्ष्यासे उन के वर्ष में वर्षा नहीं किया तिस बात को जानकर भगवान् ऋषभदेवजी ने योगेश्वर होने से हँसकर अपनी योगमाया से अपना अजनाभ वर्ष में वर्षा करदिया ॥ ३ ॥

नाभि राजा तो अपनी इच्छा के माफिक पुत्र को प्राप्त होकर अत्यन्त आनन्दित विह्वल होकर गद्गदवाणी से अपनी इच्छा से नरधर्म धारण करनेवाले पुराण पुरुष भगवान् से माया में बुद्धि के मोहित होजाने से हे वत्स ! हे तात, इस प्रकार से प्यार करते हुए बोले ॥ ४ ॥

नाभि राजाने जानलिया कि पुरवासीजन देश के जन सब ऋषभदेवपर अनुराग करते हैं तब राज्य धर्म के मर्यादा के पालन में पुत्र को अभिषिक्त कर के ब्राह्मणों को सौंप कर मेरु देवी के सहित बद्रीनारायण को जाकर अति प्रसन्न मनसे तपस्या कर के समाधि योग से नरनारायण वासुदेव भगवान्की उपासना करके काल आने पर भगवान् की महिमा को प्राप्त होगये ॥ ५ ॥

हे परीक्षित ! जिस नाभि राजा के दोश्लोक कहे गये हैं नाभि राजर्षीके कर्म की तुल्यता कौन पुरुष कर सकेगा जिन के शुद्ध कर्म से हरि भगवान् पुत्र होगये ॥ ६ ॥

ब्राह्मणों का मानने वाला नाभी से दूसरा कौन होगा जिनके मङ्गलाचार से पूजित ब्राह्मणों ने यज्ञमें अपने प्रभाव से भगवान् का दर्शन करादिया ॥ ७ ॥

इसके अनन्तर भगवान् श्रीऋषभदेव जी अपने अजनाभ वर्ष को कर्मक्षेत्र मानकर गुरुकुलवास की ब्रह्मचारी की शिक्षा लोकों को दिखाई फिर गुरुनकी आज्ञापाकर गृहस्थों के धर्मों को शिखाने के निमित्त इन्द्र की दीहुई जयन्ती भार्या में शास्त्र में कहे दोनों प्रकार के कर्म में युक्त होकर अपने तुल्य सौ पुत्रों को उत्पन्न किया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तं भरतमनुकुशावर्तादयो नव पुत्रा नवतेः प्रधाना ज्येष्ठाः ॥ १० ॥ ११ ॥

तदनन्तरं कविप्रमुखा नव भागवतधर्मप्रदर्शकाः वसुदेवनारदयोः सम्वादो यस्मिन् उपरिष्टादेकादशस्कन्धे ॥ १२ ॥

महाशालीना अतिविनीताः ॥ १३ ॥

केवलः शुद्धः विपरीतवदनीश्वरवत्कर्माणि कुर्वन् नियमयन् नियमितवान् पाठान्तरे नितरामरमयत् कर्मकरणे हेतुः अनुग-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तमुत्सन्नं धर्मं स्वयमाचरणेनातद्विदामुपशिक्षयन् कथं धर्मादीनामवरोधेन सङ्ग्रहेण आनन्दो भोगः अमृतं मोक्षः ॥ १४ ॥

शीर्षण्यः श्रेष्ठस्तेनाचरितम् तत्तदनुवर्तते यतः ॥ १५ ॥

सकलो धर्मो यस्मिंस्तद्ब्राह्मं गुह्यं वेदरहस्यं यद्यपि स्वेनैव विदितं तथापि ब्राह्मणान् पृष्ट्वैव करोतीत्यर्थः ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तं भरतमनुपश्चात्कुशावर्त्तादयो नव सङ्ख्याकाः नवतिप्रधानाः प्रथमपुत्रदशके भरतः प्रधानः इतरेषु नवसु दशकेषु प्रत्येकं कुशावर्तादयः प्रधानाः स्वव्यतिरिक्तनवापेक्षया प्रधानाः ज्येष्ठाः कुशावर्त्तादयो नव भरतमनुजाताः तमेवानुसृत्य स्थिता इति वार्थः ॥ १०-११ ॥

तत्र नवतिपुत्राणां मध्ये कव्यादयो नव भागवतधर्मप्रकाशका महाभागवता भगवद्धर्मनिष्ठा अभूवन् तेषां कव्यादीनां सुचरितं भगवन्माहिम्नोपबृंहितं वर्धितं भगवन्महिम्ना युक्तमित्यर्थः अत एवोपशमायनं चित्तशान्तिहेतुकमुपरिष्टादेकादशस्कन्धे वसुदेवनारदसम्वादे वक्ष्यामः कथयिष्याम इत्यर्थः॥ १२ ॥

यवीयांस एकाशीतिसङ्ख्याकाः जायन्तेया जयन्तीपुत्राः पित्राज्ञानुवर्त्तिनो महाशालीना गार्हस्थ्यसम्पत्समृद्धा महाश्रोत्रिया अधीतसाङ्गवेदाः यज्ञानुष्ठानशीलाः कर्मणा सदाचारेण विशुद्धा ब्राह्मणा बभूवुः ॥ १३ ॥

अथ ऋषभसंज्ञो भगवानात्मतन्त्रः स्वतन्त्रः अकर्मवश्यः अत एव नित्यं निवृत्तकर्मायत्ताः सुखदुःखाद्यनर्थपरम्परा यस्य सः केवलदुःखासम्भिन्नो य आनन्दः स्वरूपानन्दः तस्यानुभावो यस्य सः स्वयमीश्वर एव सन् इतरवत्प्राकृतवत्कर्माण्यारभमाणः वर्णाश्रमधर्मरूपाणि कर्माणि कुर्वाणः किं कुर्वन्कालेनानुगतं प्रलीनं धर्ममाचारेणातद्विदां धर्मतदनुष्ठानादिकमजानताम् उपशिक्षयन् किमर्थं धर्माद्यविरोधेन धर्मादिप्राप्त्या हेत्वर्थे तृतीया फलं चात्र हेतुः धर्मादिप्राप्तिरूपफलायेत्यर्थः प्रजानन्दः प्रजार्थो भोगः अमृतमेवं पुरुषार्थचतुष्टयसंग्रहः सर्वभूतसमः उपशान्तः रागाद्यकलुषितचित्तः मैत्रः अपकृष्टेष्वपि भूतेषु स्वसाम्यबुद्धिः कारुणिकः परदुःखासहिष्णुः गृहेषु गृहाश्रमेषु लोकान्नियमयन् नियमयन्नभूदित्यर्थः नियमयादिति वा पाठः आर्षत्वादडभावो वा ॥ १४ ॥

आचारेणोपशिक्षयन्नियमदित्यत्र हेतुः । यद्यदिति । शीर्षण्यः श्रेष्ठः तेन यद्यदाचरितं तत्तदेव हि यस्माल्लोकोऽनुवर्त्ततेऽनुतिष्ठति तथाचोक्तम् ।

> यद्यदा चरति श्रेष्ठस्तत्तदेवेतरो जनः
> स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते

इति लोकसंग्रहार्थमाचारेणोपाशिक्षयदित्यर्थः तथा सकलो धर्मो यस्मिंस्तद्ब्रह्म ब्राह्मं गुह्यं वेदरहस्यं यद्यपि स्वेनैव विदितं तथापि ब्राह्मणान् पृष्ट्वा तैर्दर्शितमार्गेण सामादिभिरुपायैर्जनतां जनसमूहमनुशशास द्रव्यादिभिरुपचितैः सर्वैर्यज्ञैर्यथाविधि शतकृत्व इयाज इष्टवान् तत्र द्रव्यं हविर्देशः समेयजेनेत्युक्तो देशः कालः वसन्तादि वयः जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्युक्तं वयः श्रद्धा

कर्त्तव्यविषया त्वरा विविध उद्देशः इति कर्त्तव्यता ॥ १५-१

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

येन भरतेनाधिकृतत्वाद्भारतमिति नाम्ना कथयन्ति ।

तं भरतमन्वनन्तरं नवतिभ्यः प्रधानाः ॥ १० ॥ ११ ॥

भागवतधर्मान् दर्शयन्तीति भगवतो महिम्नोपबृंहितं ष्टादेकादशस्कन्धे उपशमायनं भगवन्निष्ठाप्रकारदर्शकम् ॥

जायन्तेया जयन्तीपुत्राः महाशालीनाः महाशाला: क्षभोजिनो वा गार्हस्थ्यधर्मप्रदर्शका वा ब्राह्मणाः जनाध्ययनादिविप्रकर्मनिष्ठतत्वेन तच्छब्दवाच्याः ॥ १३ ॥

विपरीतवत् प्राकृतजनवत् आचारेण स्वयमनुष्ठानेन द्विद्वांसं ब्रह्मज्ञानिनं लोकमिति शेषः धर्मार्थादीनामनु तुकूल्येन शीर्षण्येन श्रेष्ठेन "यद्यदाचरति श्रेष्ठ" इति स्मृतेः ॥

यदपि यद्यपि स्वेन विदितं तथापि ब्राह्मणैर्दर्शित प्रकारेण सकलधर्मं जनतामनुशशासेत्यन्वयः ॥ १६ ॥ १७

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कालेन संहारकेण अनुगतमुत्सन्नमित्यर्थः ॥ १४-१५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

तं भरतमनुभरतस्य कनिष्ठा इत्यर्थः । नवतिप्रधानाः ज्येष्ठा इत्यर्थः । पुंस्त्वमार्षम् ॥ १० ॥ ११ ॥

उपरिष्टादेकादशस्कन्धे ॥ १२ ॥

महाशालीना अतिविनीताः ॥ १३ ॥

विपरीतवत् अनीश्वरो जीव इव अतद्विदां द्वितीयार्थे धर्ममविदुष इत्यर्थः धर्मादीनामवरोधेन प्राप्त्या हेतुना मयत् नियमितवान् । न्यरमयदिति च पाठः ॥ १४ ॥

शीर्षण्यः श्रेष्ठः ॥ १५ ॥

सकला धर्मा यस्मिन् तद्ब्राह्मं गुह्यं वेदोक्तं रहस्यं स्वेनैव विदितं तदपि ब्राह्मणैर्दर्शितेनैव ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नवतेः प्रधानाः श्रेष्ठाः ॥ १० ॥

अवशिष्टेषु नवतिसङ्ख्याकेषु नव कविप्रभृतयः भागवतधर्मप्रदर्शका इत्याह । कविरिति ॥ ११ ॥

तेषां वसुदेवनारदयोः सम्वादो यस्मिन् तच्छोभनं चरितमुपरिष्टादेकादशे वर्णयिष्यामः ॥ १२ ॥

महाशालीना विनीततमाः ॥ १३ ॥

नित्यनिवृत्ता रागद्वेषादिरूपा अनर्थपरम्परा यस्मात् केवलानन्दस्य साधनरक्षणाद्युपकरणापेक्षस्य स्वरूपानन्दस्य यस्य स स्वयमीश्वरः इतरवत्प्राकृतवत् कर्माण्यारभमाणः कालेनानुगतमुत्सन्नं धर्ममाचरणेन अतद्विदां धर्माचरणतत्त्वानभिज्ञानामुपशिक्षयन् धर्माद्यवरोधेन सङ्ग्रहेण अध्यवर्त्ततेति वतृतीया धर्मादिप्राप्त्यर्थमित्यर्थः गृहेषु सन्तं लोकं बुभुक्षुं च न्ययमयत् नियमितवान् तत्र गृहस्थेन धर्मार्थयशः प्रजानन्दप्राप्त्यर्थं मुमुक्षुणामृतार्थं कर्म कर्त्तव्यमिति लोकं नियमितवानित्यर्थः ॥ १४ ॥

द्रव्यदेशकालवयःश्रद्धर्त्विग्विविधोद्देशोपचितैः सर्वैरपि क्रतुभिर्यथोपदेशं शतकृत्व इयाज ॥ १७ ॥

भगवतर्षभेण परिरक्ष्यमाण एतस्मिन्वर्षे न कश्चन पुरुषो वाञ्छत्यविद्यमानमिवात्मनोऽन्यस्मात्कथञ्चन किमपि कर्हिचिदवेक्षते भर्तर्यनुसवनं विजृम्भितस्नेहातिशयमन्तरेण ॥ १८ ॥

स कदाचिदटमानो भगवानृषभो ब्रह्मावर्तगतो ब्रह्मर्षिप्रवरसभायां प्रजानां निशामयन्तीनामात्मजानवहितात्मनः प्रश्रयप्रणयभरसुयन्त्रितानप्युपशिक्षयन्निति होवाच ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां संहितायां वैयासिक्यामृषभदेवानुचरिते चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शिर्षयेन श्रेष्ठेनाचरितमनुष्ठितम् ॥ १५ ॥

किञ्च सकलो धर्मो यस्मिन् तद्ब्राह्मं गुह्यं वेदरहस्यं यद्यपि स्वविदितं स्वतोऽनुभूतं तथापि ब्राह्मणैर्दर्शितमार्गेणैव जनसमूहं सामादिभिरनुशशास ॥ १६ ॥

---

भाषाटीका

जिन के मध्य में महा योगी भरतजी वडे हैं श्रेष्ठ गुण वाले भये जिन से यह वर्ष भारत कहाता है ॥ ९ ॥

भरतजी के पीछे कुशावर्त इलावर्त ब्रह्मावर्त मलय केतु भद्रसेन इन्द्रस्पृक् विदर्भ कीकट इन नामों वाले नौ पुत्र भये वे नब्बे पुत्रों के वडे हुयेथे ॥ १० ॥

कविहरि अन्तरिक्ष प्रबुद्ध पिप्पलायन आविर्होत्र द्रुमिल चमस करभाजन एनओं के नाम हैं ॥ ११ ॥

यह सब भागवत धर्मके दर्शन वाले महा भागवत भये उनका चरित्र जो भगवान् के महिमासे युक्त है तिसको वसुदेव नारदजी के संवाद शान्ति का देनेवाले को आगे एका दशस्कन्ध मे वर्णन करेंगे ॥ १२ ॥

छोटे एकाशी जयन्ती के पुत्र भये पिता की आज्ञा करने वाले वडे गृहस्थ वडे वैदिक यज्ञों के करने वाले कर्म काण्ड में निरत ब्राह्मण होगये ॥ १३ ॥

ऋषभनामा भगवान् स्वयं स्वतन्त्र हैं नित्य अनर्थ की परम्परासे निवृत्त भी हैं केवल आनन्द अनुभव स्वरूप हैं ईश्वर हैं तौ भी विपरीत से कर्मों को आरंभ करते काल से प्राप्त धर्म को लोकों को शिखाते भये अज्ञानि जनों को उपदेश करते हुये रहे शान्त स्वरूप सबके मित्र करुणा वाले होकर धर्म अर्थ यश संतति आनंद मोक्ष इनके संग्रह के हेतु से मनुष्यों को गृहस्थ धर्म की शिक्षा देते भये ॥ १४ ॥

जिस जिस कर्म को श्रेष्ठ जन करते हैं तिसी कर्म को सब लोक करते हैं ॥ १५ ॥

यद्यपि ब्राह्मणों का सब धर्म गुप्तभी आप को विदित है तौ भी ब्राह्मणों के बताये सामादि उपायों से प्रजाओं को सिखाते भये ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

द्रव्यादिभिरुपचितैर्यज्ञैरिष्टवान् तत्र वयो यौवनम् युवैव धर्ममन्विच्छेदितिवचनात् विविधोद्देशा नानादेवतोद्देशाः यथोपदेशं यथाविधि ॥ १७ ॥

अन्यस्मात्सकाशादात्मनः कश्चिदपि किमपि कथञ्चनापि न वाञ्छति इच्छानुदये दृष्टान्तः अविद्यमानं खपुष्पादिकमिव नचान्यदीयमवेक्षतेऽपीत्यर्थः भर्तरि ऋषभदेवे प्रतिक्षणमुल्लसितस्नेहोद्रेकं विनान्यन्नवाञ्छति ॥ १८ ॥

अवहितात्मनः संयतचित्तानपि प्रजानुशासनार्थमुपशिक्षयन्निति ह वक्ष्यमाणमुवाच ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका

भगवता ऋषभेणैतस्मिन् वर्षे भारते परिरक्ष्यमाणे सति कश्चन पुरुषो भर्त्तरि ऋषभे अनुसवनं शश्वद्विजृम्भितो यः स्नेहोऽनुरागः तस्यातिशयमन्तरेण विनान्यं पुरुषार्थमात्मनः स्वस्याविद्यमानमन्यस्मात्पुरुषान्तरात्कदाचिदपि किञ्चिदपि केनापि निमित्तेन नापेक्षते ॥ १८ ॥

स भगवानृषभदेवः कदाचिदटमानः ब्रह्मावर्तगतः ब्रह्मर्षिश्रेष्ठानां सभायां प्रजानां निशामयन्तीनां शृण्वन्तीनां सतीनामात्मजान् अवहितात्मनः समाहितचित्तान् प्रश्रयो विनयः प्रणयः स्नेहस्ताभ्यां यत्सुखं तेन यन्त्रितान् वशीकृतानुपशिक्षयन्निति वक्ष्यमाणप्रकारेणोवाच ह ॥१९॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीवीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायां चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अविद्यमानमिव न वाञ्छति आत्मनोऽन्यस्मात् पुंसः किमपि

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नापेक्षत इत्यन्वयः तर्हापेक्ष्यमाणां किन्तत्राह । भर्तरीति ॥ १८ ॥

अटमान इति शानच् ताच्छीलिकार्थः अटितुकामः प्रव्रजिष्यन्नित्यर्थः निशामयन्तीनां शृण्वन्तीनामवहितात्मनः उक्तग्रहणानिरतमनसः प्रश्रयादिगुणैः सुयन्त्रितान् सुष्ठुबद्धान् इतिवक्ष्यमाणप्रकारेण ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य चतुर्थोऽध्यायःसमाप्तः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्रव्यादिभिरुपचितैः वयो यौवनं युवैव धर्ममन्विच्छेदिति वचनात् विविधोद्देशा नानादेवतोद्देशाः ॥ १७ ॥

कश्चन कश्चिदपि पुरुषोऽविद्यमानं खपुष्पमिव कमपि आत्मनः स्वस्य अन्यस्मात् सकाशात् नवाञ्छति भर्त्तरि ऋषभदेवे स्नेहातिशयं केवलमवेक्षते अन्तरेणान्तरात्मना"अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनावहिरवसरमध्येऽन्तरात्मनि च" इत्यमरः ॥ १८ ॥ १९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमस्य चतुर्थोऽयं सङ्गतः सङ्गतः सताम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

किञ्च द्रव्यादिभिरुपचितैः सर्वैर्यज्ञैर्यथोपदेशं यथाविधि शतक्रत्व इयाज इष्टवान् तत्र द्रव्यं पुरोडाशादि देशः पुण्यक्षेत्रं कालो वसन्तादिः वयो यौवनम् श्रद्धाभिरुचिः ऋत्विजः ऋत्विक्कृतानुष्ठानाः विविधोद्देशाः भगवतः सर्वयज्ञभोक्तुः सर्वेश्वरस्य सर्वात्मनः अंशभूताः नाना या देवताः वेदे प्रोक्तास्तदुद्देशकृताः "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति श्रीमुखोक्तेः ॥ १७ ॥

अविद्यमानं खपुष्पादिकमिव कश्चिदपि अन्यस्मात् किमपि न वाञ्छति न चान्यदीयमवेक्षते ॥ १८ ॥

इति वक्ष्यमाणमुवाच ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुर्थाध्यायार्थप्रकाशः ॥ ४ ॥

---

उत्तम द्रव्य उत्तम देश उत्तम काल अवस्था श्रद्धा ऋत्विज विविध विधानों से सब यज्ञों से उपदेश के अनुसार सौ वार भगवान् ने यज्ञ किया ॥ १७ ॥

भगवान् ऋषभजी के रक्षा करने से इस वर्ष में कोई भी पुरुष कोई चीज अपने पास न रही हो तो दूसरे किसी से नहीं मांगता था कभी भी किसी की चीज नहीं चाहता था केवल अपने स्वामी राजा का स्नेह ही सब चाहतेथे ॥ १८ ॥

सो भगवान् ऋषभजी कभी ब्रह्मावर्त में प्राप्त हो ब्रह्मर्षियों के सभा में प्रजाओं के सुनते ही अपने अनुगत अपने पुत्र जोकि प्रेम नम्रता सें युक्त हैं तिनको शिक्षा करते हुये यह वचन बोले ॥ १९ ॥

इति श्रीभागवत पञ्चमस्कन्ध चौथा अध्यायका भाषानुवाद लक्ष्मणाचार्य कृत समाप्त ॥ ४ ॥

---

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

——(:०:)——

## पञ्चमोऽध्यायः ।

॥ ऋषभ उवाच ॥

नायं देहो देहभाजां नृलोके कष्टान् कामानर्हते विड्भुजां ये ।
तपो दिव्यं पुत्रका ! येन सत्त्वं शुद्ध्येद्यस्माद्ब्रह्मसौख्यं त्वनन्तम् ॥ १ ॥
महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥ २ ॥
ये वा मयीशे कृतसौहृदार्था जनेषु देहंभरवार्त्तिकेषु ।
गृहेषु जायात्मजरातिमत्सु न प्रीतियुक्ता यावदर्थाश्च लोके ॥ ३ ॥
नूनं प्रमत्तः कुरुते विकर्म यदिन्द्रियप्रीतय आपृणोति ।
न साधु मन्ये यत आत्मनोऽयमसन्नपि क्लेशद आस देहः ॥ ४ ॥
पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् ।
यावत्क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबन्धः ॥ ५ ॥
एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययाऽऽत्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ॥ ६ ॥
यदा न पश्यत्ययथा गुणेहां स्वार्थे प्रमत्तः सहसा विपश्चित् ।
गतस्मृतिर्विन्दति तत्र तापानासाद्य मैथुन्यमगारमज्ञः ॥ ७ ॥
पुंसः स्त्रिया मिथुनीभावमेतं तयोर्मिथो हृदयग्रन्थिमाहुः ।
अतो गृहक्षेत्रसुताप्तवित्तैर्जनस्य मोहोऽयमहं ममेति ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चमे मोक्षधर्मोपदेशैः पुत्रानुशासनम् ।
उक्तं पारमहंस्यं च तस्य द्वन्द्वातितिक्षया ॥ १ ॥

विड्भुजामपि ये सन्ति तान्कष्टान्दुःखदान्कामान् विषयानर्हति तद्योग्योऽयं मनुष्यदेहो न भवति दिव्यमुत्कृष्टम् येन तपसा यस्माच्छुद्धात्सत्त्वादनन्तं ब्रह्मसुखं भवति ॥ १ ॥

मोक्षबन्धयोर्निदानमाह । महत्सेवामिति । तमसः संसारस्य द्वारं योषितां ये सङ्गिनस्तेषां सङ्गम् महतां लक्षणमाह सार्द्धेन । महान्त इति । साधवः सदाचाराः ॥ २ ॥

मयि ईशे कृतं सौहृदमेवार्थः पुरुषार्थो येषाम् वाशब्देनान्यनिरपेक्षस्यैवास्य लक्षणान्तरं दर्शयति । देहं बिभ्रतीति देहंभरा विषयवार्त्तैव न धर्मविषया येषु तेषु जनेषु जायादियुक्तेषु गृहेषु च रातिर्मित्रं धनं वा पाठान्तरे जायादिमत्सु यावदर्थाश्च यावदर्थमेवार्थो येषामिति मध्यमपदलोपी समासः देहनिर्वाहाधिकस्पृहाशून्या इत्यर्थः ॥ ३ ॥

कामानर्हतीति यदुक्तं तदुपपादयति । नूनमिति । यद्यदा इन्द्रियप्रीतये आपृणोति व्याप्रियते तदा प्रमत्तः सन् विकर्म पापं नूनं कुरुते यतो विकर्मणः प्राचीनादयं क्लेशदो देहो जातस्तस्यैव पुनःकरणं साधु न मन्ये ॥ ४ ॥

देहादेरनश्वरत्वात्कियानयमनर्थ इत्याशङ्क्याह । पराभवो देहादिना स्वरूपाभिभवो ज्ञानकृतस्तावद्भवति तत्र हेतुः यावत्क्रियाः स्युस्तावदिदं मनो हि कर्मस्वभावमेव स्यात् येन कर्मात्मकेन मनसा ॥ ५ ॥

उक्तमुपसंहरति । एवं पूर्वकृतं कर्म कर्तृभूतं मनः कर्मभूतं वशं प्रयुङ्क्ते पुनः कर्मनिष्ठं करोतीति जीवन्मुक्तकर्तव्यावृत्त्यर्थमाह । अविद्ययेति । अविद्यया आत्मनि उपधीयमाने आच्छाद्यमाने सति एवं मनः कर्तृ पुरुषं कर्म वशं प्रयुङ्क्ते इति वा ॥ ६ ॥

न केवलं देहयोगमात्रमनर्थान्तरं चेत्याह । यदा गुणानामिन्द्रियाणामीहां चेष्टामयथा मिथ्या अस्मीया न भवतीति विपश्चिद्विवेकी सन्न पश्यति न तु पश्यतीति पाठे अयथा आत्मा-

श्रीधरस्वामिकृतभावार्थदीपिका ।

यत्वेनेत्यर्थः तत्र तदा सहसा गतस्मृतिः स्वरूपस्मृतिशून्यः सन्नज्ञो मूढो मैथुनसुखप्रधानं गृहं प्राप्य तापान् विन्दति ॥ ७ ॥

ननु यथोपयोगं स्त्रिया मिथुनीभूय सुखमात्रमनुभवतः कुतस्तापाः स्युस्तत्राह । पुंस इति । प्रत्येकं तयोरेकैको हृदयग्रन्थिरस्त्येव एवं मिथः परस्परं स्थूलमन्यं हृदययोर्ग्रन्थि तुमेदं वदन्ति कुत इत्यत आह । अतोऽस्मान्मिथुनीभावात् प्रत्येकं हृदयग्रन्थिना तु देहेन्द्रियमात्रेऽहं ममेति मोहोऽस्मात्तु गृहादिभिर्विषयभूतैर्महान्मोहो भवेदित्यर्थः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तमेवाह । ऋषभ इति । तद्वन्मुक्त्युपायत्वेन भगवदुपासनमुपदेक्ष्यमाणो वैराग्यं विना उपदिष्टोऽपि भक्तियोगो न सम्यक् प्रतितिष्ठतीति तदुत्पत्तये कामान्निन्दति । नायमित्यर्धेन । देहभृतां मध्ये यो नृलोकः मनुष्यस्तस्मिन्सत्ययं मनुष्यदेहः कष्टान्कृच्छ्रसम्पाद्यानन्ततो दुःखरूपान् कामान् यद्वादीन् प्रति नार्हति कामाननुभावितुं नार्हतीत्यर्थः कामोपभोगार्थो नायं नृदेह इत्यर्थः । कुतः ये कामा विड्भुजामपि सूकरादीनामपि सन्ति किन्तु हे पुत्रकाः ! दिव्यं देवस्य विष्णोराराधनरूपं तपश्चर्तुमर्हति किं तत्तपः यदर्हति तत्राह । यस्मात्तपसः शुध्येन्निरस्तसंसारो भवेत् येन च ब्रह्मसुखमपारं भवेत् कामोपभोगेन संसृतिः एवं कामोपभोगः संसृतिहेतुः भगवदुपासनं मोक्षहेतुरित्युक्तम् ॥ १ ॥

एवं भोगोपासनयोर्बन्धमोक्षहेतुत्वमभिधाय तयोर्निदानमाह । महतां सेवां विमुक्तेर्द्वारं मूलं कारणमाहुः तथा योषितां स्त्रीणां ये सङ्गिनः तेषां सङ्गं तमसः संसारस्य द्वारमाहुरित्यनुषङ्गः के ते महान्तः यत्सेवा विमुक्तेर्द्वारं तत्राह । सार्धेन । ये समचित्तत्वादिगुणयुक्तास्ते महान्त इत्यन्वयः समचित्ताः सुखदुःखादिष्वविक्रियमाणचित्ताः सर्वस्य ब्रह्मात्मकत्वज्ञानात् प्रशान्ताः जितबाह्यान्तःकरणाः विमन्यवः तितिक्षवः सुहृदः सर्वभूतहितैषिणः साधवः परोपकारनिरताः ॥ २ ॥

मयीशेऽस्मच्छरीरकेऽस्मदन्तरात्मनि सर्वेश्वरे शास्त्रदृष्ट्या स्वात्मनो भगवदात्मकत्वादेव मुक्तिः यथाह "प्रह्लादः सर्वगत्वादनन्तस्य स एवाहमवस्थित" इति । यद्वा देवश्रेष्ठस्वत्यभिमवाद्भगवदंशोद्भवादेव मुक्तिः कृतं सौहृदं प्रीतिरेवार्थः प्रयोजनं येषां ते देहंभरवार्तिकेषु देहधारणा वार्त्तैव न धर्मविषया वार्त्ता येषु जनेषु गृहेषु च कथंभूते जाया कलत्रमात्मजाः पुत्राः रातिर्मित्रं धनं वा तद्वत्सु प्रीतियुक्ता न भवन्ति ये च लोके यावदर्थाः देहधारणापेक्षामात्रग्राहिणः देहनिर्वाहकाधिक्यार्थस्पृहाशून्या इत्यर्थः ॥ ३ ॥

कामान्नार्हतीति यदुक्तं तदुपपादयति । नूनमिति । प्रमत्त आत्मभ्रान्त्या देहपरवशः अत एव दीनः यदिन्द्रियप्रीतये कर्म आपृणोति व्याप्रियते करोतीति यावत् तत् कर्म साधु समीचीनं न मन्यते कुतः यतः यस्मादिन्द्रियप्रीत्यर्थात्कर्मणः असदप्यस्थिरोऽप्ययं क्लेशदो देहः आस बभूव प्राप्त इति तस्यैव पुनः करणं साधु न मन्य इत्यर्थः ॥ ४ ॥

ननु देहस्यास्थिरत्वात्क्रियानयमनर्थ इत्याशङ्क्याह । इति । यावदात्मनः प्रकृतिविलक्षणस्यात्मनः तत्त्वं याव... यावन्न जिज्ञासते ज्ञातुं नेच्छति न जानातीत्यर्थः तावच्छो... आत्मस्वरूपतिरोभावः आत्मयाथात्म्याज्ञाननिमित्तपराभवः ... पराभवस्तावदिन्द्रियप्रीतये क्रियाः प्रवर्तन्ते यावच्च ... स्तावदिदं मनः कर्मात्मकं कर्म प्रवणं न तु ज्ञानप्रवणं ... कर्मात्मकेन मनसा भूयोऽपि शरीरबन्धः शरीराणां नश्वरत्वे ... पुनःपुनस्तत्सम्बन्धोऽविच्छिन्न इति तन्निमित्तानर्थपरम्परा... विच्छिन्नेति भावः ॥ ५ ॥

एतदेवाह । एवमिति । अविद्यया देवमनुष्याद्यौपाधि... विशिष्टत्वेनाहङ्कारममकाररूपयोपधीयमाने कर्मवासना... संस्तूयमाने सत्यात्मनि मनः कर्मवशं प्रयुङ्क्ते व्यापारयति ... एमिति शेषः अतो यावद्वासुदेवे मयि प्रीतिः प्रीतिरूपा ... नं स्यात्तावद्देहयोगेन न मुच्यते ॥ ६ ॥

न केवलं देहयोगमात्रमपि त्वनर्थान्तरसत्त्वंचेत्याह । यदेति ... स्वस्य पुरुषार्थभूते स्वात्मपरमात्मयाथात्म्यानुसंधानेऽप्रमत्तः ... गुणेहां शब्दादिगुणविषयामिन्द्रियाणां प्रवृत्तिम् यथा ... स्वाभाविकी न भवति किं तु देहसंबन्धप्रयुक्तेति विपश्चिं... सन् यदा सहसा न पश्यति तदासौ पुमान् गता... स्वात्मपरमात्मस्मृतिरहितः अत एवाज्ञः मैथुन्यं मैथुनसुख... गृहं प्राप्य तत्र तापान् विन्दति प्राप्नोति एतदुक्तं ... अनादिकर्मवासनयाहङ्कारममकाररूपाविद्याविद्यया च ... बन्धः देहसंबन्धेन पुनः पुनः कर्म कर्मणस्तापः ताप... कर्मणो विनाशेऽपि तद्वासनाया अनिवृत्तौ पुनरविद्याविद्य... देहसंबन्धद्वारा तापानुभव इत्येवं चक्रवत्परिवृत्तिरिति ॥ ७ ॥

एवं रूपसंसारस्य निदानं वासनैव तन्निवृत्तिरेव मुक्ति... मिति प्रतिपादयितुं तावद्वासनापि मिथुनीभावमूलेत्याह । इति । पुंसः स्त्रिया सह योऽयं मिथुनीभावस्तं प्रत्येकं तयो... ग्रन्थिमाहुः । हृन्मनः तद्गता कर्मवासना दुर्भेद्यत्वाद्ग्रन्थिरि... मिथुनीभावं हृदयग्रन्थिकारणमाहुरित्यर्थः कोऽसौ हृदय... मिथुनीभावमाहुस्तत्राह । यतः हृदयग्रन्थिहेतोः गृहादिभि... भूतैरहं ममेत्यविद्यारूपो मोहो जनस्य भवेत् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

पुत्राणां तत्त्वोपदेशव्याजेन लोकहिताय सकलशास्त्र... तत्त्वं निरूपयत्यस्मिन्नध्याये तत्रादौ विषयसेवामुमुक्षुणा ... वर्जनीयेति भावेनाह । नायमिति । नृलोके देहभाजां ... मयं देहः स्रक्चन्दनादिभोगाय न भवति किन्तु तप... येति शेषः सोऽपि पुरुषार्थैकत्वेन विहितत्वात्कर्तव्य... तत्राह । क इति । ये कामा विड्भुजांच सूकरादीनामपि ... को विवेकी तत्कामान् काम्यन्त इति कामाः विषया... पयानर्हति न कोऽपीति शेषः तर्हि अनेन किञ्चिदर्थं... तप इति । तपोऽर्हथ कर्तुमिमि शेषः इदमेव प्रयोजनं ... पूर्वतनैः साधितत्वादितीममर्थं हिशब्देन वक्ति देव ... सत्त्वमन्तः करणं ततः किन्तत्राह । यस्मादिति । यस्मा... करणादनन्तमन्तत्रयविधुरं सुखं सुष्टु निर्दोषं स्वं ...

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मिन्द्रियं यस्य तत्तथा तद्ब्रह्म सिध्यतीति शेषः हि यस्मात्त-
स्मात्तपश्चरणमेव देहधृतिप्रयोजनमित्यर्थः हिना मय्यनन्तगुण
इति वाक्यं स्मारयतीति वा ॥ १ ॥

अन्वयव्यतिरेकमुखेनेममर्थं द्रढयति । महत्सेवामिति । योषितां
सङ्गिभिः सह सङ्गमित्यनेन कैमुत्यन्यायो दर्शित इति ज्ञातव्यम
निषिद्धस्युपपदं योज्यमन्यथा योषिन्मात्रस्यापि हेयत्वं प्रसज्येत
तच्चानुपपन्नं "न काञ्चन स्त्रियं परिहरेत्"इति श्रुतेरिति भावः द्वे
नित्यमुक्ती तत्रानन्तसुखलक्षणैका नित्यदुःखलक्षणान्येति बोद्धव्यं
महल्लक्षणं ज्ञाते तत्सेवायां श्रद्धातिशयः स्यादिति तल्लक्षण-
माह । महान्त इति । ये समचित्तत्वादिगुणवन्तस्ते महान्त
इत्यन्वयः "मन ज्ञान" इति धातुर्विशेषेण ज्ञानशीलाः मनव्यवहा-
रपर्योचेति धातोर्विशिष्टव्यवहारशीला इति वा समे ब्रह्मणि
चित्तं येषां ते तथा समं तत्तद्योग्यतानुसृतं चित्तं येषां ते तथेति
। साधवः रागादिदोषविधुराः ॥ २ ॥

चार्थे वाशब्दः ये च ईशे मयि कृतं सौहृदमेवार्थः प्रयो-
जनं यैस्ते तथा देहंभराणां देहपोषण एव रतानामुक्तानु-
कवुरुकचिन्तालक्षणं वार्तिकं वार्तासमुदायो वा येषां ते तथा
तेषु जायाचात्मजाश्च रातिर्मित्रं रा अर्थश्च येषां ते तथा तेषु न
प्रीतियुक्तास्ते महान्तः किञ्च लोके जने यावाञ्छरीरयात्रादि-
लक्षणोऽर्थो येषां ते तथा ॥ ३ ॥

इदानीं देहम्भरवृत्तिं कथयति । नूनमिति । जन इन्द्रियाणां
शब्दाद्यनुभवलक्षणप्रीतये यत्कर्म कुरुते नूनं निश्चयेन दीनः
क्षीणः प्रमत्तोऽज्ञः तत्कर्मावृणोति स्वीकरोति कुत इत्यत उक्तम
यत इति । असत्त्वश्वरत्वादमङ्गलोऽपि विण्मूत्रादिपात्रत्वेन जुगु-
प्सितोऽयं देहो यतः कर्मण आत्मनः कर्तुः क्लेशदः संसारा-
ख्यक्लेशद आसेति यतस्तस्मात्कर्म साधु श्रेयः साधनमिति न
मन्ये नूनमिदानीं प्रमत्तः कर्तव्यतामूढोऽत एव दीनोऽयं जनः
इन्द्रियप्रीतये तत्कर्म कुरुते यत्कर्मात्मानमेवावृणोत्याच्छादयति
कथमावृणोतीति तत्राह । यत इति । यतो यस्मात्कर्मण उत्पन्नोऽ
स्वल्पपि असाधुरेवायं देहः आत्मनः क्लेशद आस तस्मादेत-
त्कर्म करणं साधु न मन्य इति वा नूनं प्रायः कर्म कुरुते अत
एव दीनः कथमिन्द्रियप्रीतये आवृणोतीति यत्तदपि कुत इत्य-
त आह । यत इति । आत्मनः क्लेशद आसेति यतस्तस्मान्न साधु
मन्य इति वा ॥ ४ ॥

तस्माज्ज्ञानमेव संसारनिवृत्तिसाधनमित्यभिप्रेत्य तन्निवृत्त्य-
वधिमाह । पराभव इति । यावदात्मतत्त्वं न जिज्ञासते तावत्प-
राभवः क्लेशः किञ्चिदिष्टोऽप्रोभजातः आत्मानात्मतत्त्वाज्ञानोत्पन्नः
क्रियाः क्रियाफलं च तावद्येन कर्मात्मकेन मनसा शरीरबन्धः
स्यात्तत्कर्मवशं बाह्यान्तःकरणलक्षणं मनश्च तावदित्य-
न्वयः ॥ ५ ॥

शरीरबन्धादिकं करोतीत्यत्राह । एवमिति । अत्रात्मपदेन जीव-
परावुभावपि गृह्येते एवमात्मानात्मतत्त्वाज्ञानिनः अविद्यया जीव-
परयोः स्वरूपाच्छादिकया मायया आत्मनि जीवपरयोः स्वरूपे
ऽवधीयमाने आच्छाद्यमाने सति कर्मवशं मनोऽजीवं विषयेषु
मायुङ्क इत्यन्वयः एवं संसरणं कियन्तं कालमत्राह । प्रीतिरिति ।
प्रीतिः स्नेहलक्षणा भक्तिः ॥ ६ ॥

कालतो वा प्रारब्धकर्मनाशतो वा देहावियोगेनानन्दानुभ-
वलक्षणा मुक्तिः स्यात्किम्भक्त्येत्याशङ्क्य बन्धध्वंसि भगवत्प्र-
सादान्तरङ्गभक्तिं विना न कदाप्यभिमतमुक्तिः स्यात्प्रत्युताना-
दिकर्मपरम्परया विषयानुध्यानहेतुभूतया तृणजलूकवत्प्रवर्तमा-
नस्य सन्ताप एव स्यादित्याह । यदेति । स्वतो विपश्चिदज्ञा-
नात्मा यदायथा गुणेहां स्वाभिमतविपरीतेन्द्रियप्रवृत्तिमनुकूलां
पश्यति ममेदं हितमित्यङ्गीकरोति तदा सहसा गतस्मृतिर्न-
ष्टशास्त्रानुसन्धानः स्मरणरहितो वा अतएव स्वार्थे प्रमत्तोऽत एवाज्ञः
पुरुषो मैथुन्यं स्त्रीपुंसबन्धयोग्यमगारं गृहमासाद्य तत्र गृहे
तापान्विन्दतीत्यन्वयः ॥ ७ ॥

केचिद्देवंविधसंसारो मिथ्येति सङ्गिरन्ते तत्राह । पुंस
इति । पुंसः स्त्रिया सहैषः मिथुनीभावः तयोः स्त्रीपुंसयोर्हृदय-
ग्रन्थिं मनोबन्धपाशमाहुरित्यर्थः अर्थक्रियारूपत्वान्न मिथ्येति
शेषः सकलतापानामेतदेव मूलमित्यतो वाह । पुंस इति । सुख-
साधनान्वेषणायासेन तापा एव स्युरित्यर्थः हृदयग्रन्थिविकार-
प्रकारमाह । यत इति । अत एव दुःखं स्यादित्यर्थः । मिथुनी-
भावस्य तापहेतुत्वे कुटुम्बी शुचौ देश इत्याद्युक्त्वा "न च पुन-
रावर्तते" इति कुटुम्बिनोऽपुनरावृत्तिलक्षणमुक्तिवचनात् कथं स
निन्दामर्हतीति चेन्न प्रायिकत्वात्तस्य "ब्रह्माद्या याज्ञवल्क्याद्या
मुच्यन्ते स्त्रीसहायिनः । बध्यन्ते केचनैतेषां विशेषं च विदो
विदुः" इति वचनात् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

महदिति युग्मकम् । तत्र ब्रह्मसौख्यस्य निर्विशेषसविशेषताभेदेन
द्वैविध्यप्रतिपादकं महतां द्वैविध्यमाह । समचित्ताः अभेददर्शिनः ।
तेषां साधनान्याह । प्रशान्ता इत्यादिना । उत्तरेषामपि साधनान्याह ।
जनेष्वित्यादिना । यावानर्थो मत्सौहृदमयभक्तिस्नावान् तदनु-
रूप एव नत्वधिकन्यूनः अर्थो धनं येषां ते ॥ १ ॥ २ ॥ ३ ॥

विकर्मात्र काम्यं कर्म । देहोऽपि मनुष्यदेह एव ॥ ४ ॥ ५ ॥

उपधीयमानं युज्यमाने यद्यप्येवमात्मतत्त्वबोधान्त एव बोध-
स्तथापि मत्प्रीतिं विना सोऽपि न सिद्ध्यतीत्याह । प्रीति-
रिति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

स्वभक्तिं स्वानुपादिश्य विधाय भरतं नृपम् ।
प्रव्रज्य पञ्चमे देवो जडचर्यामदीदृशत् ॥

उपशिक्षयन्नुचाचेत्युक्तं तत्र भक्तियोगे प्रवर्तयितुं प्रथमं
मनुष्यदेहस्य पुरुषार्थसाधनत्वं विषयभोगानौचित्यञ्चाह । नाय-
मिति । कष्टान् कष्टप्रदान् कामान् योषिद्दर्शनस्पर्शनादीन् नार्हते
नैवार्हतीति इति कुतः ये विड्भुजामपि सन्ति कामार्हत्वे मनुष्यदेह-
शूकरदेहयोस्तुल्यत्वापत्तेरिति भावः । तेन शूकर देहादिभि-
र्यश्च लभ्यते तदेव मनुष्यदेहेन लब्धुं यतनीयं तदेव मनुष्यत्व-
चिह्नं किं तत्राह । तप इति । तच्चानाहारवर्षातपसहनादिकं वृक्षा-
दीनामपि वर्तत इति तद्व्यावृत्त्यर्थमाह । दिव्यमप्राकृतं भगवत्-
सम्बन्धीत्यर्थः हे पुत्रकाः । मनुकम्पायां कन् सत्त्वमन्तःकर-
णम् ॥ १ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मनुष्यदेहादेवोद्धारोऽधःपातश्च भवतीति तयोः कारणमपि मनुष्यदेहेऽस्तीत्याह । महदिति । विमुक्तेर्विविधमुक्तेः ब्रह्मसौख्यं ब्रह्मानन्दमिति पूर्वोक्तब्रह्मसौख्यस्य च निर्विशेषसविशेषब्रह्मसम्बन्धित्वेन द्विविध्यान्मुक्तिरपि सायुज्यं भक्तिमत्पार्षदत्वञ्चेति द्विविधा विशब्दाद्व्याख्येया महान्तोऽपि द्विविधा ब्रह्मोपासका भगवदुपासकाश्च तेषां लक्षणं तन्त्रेणैवाह । समचित्ताः अभेददर्शिनः अकुटिलचित्ताश्च प्रशान्ताः प्रशमादियुक्ताः भगवन्निष्ठबुद्धयश्च शमो मन्निष्ठता बुद्धेरिति भगवदुक्तेः विमन्यव इत्यादि विशेषणत्रयमुभयत्र तुल्यार्थं साधवः परदोषाग्राहिणः ॥ २ ॥

उत्तरेषामसाधारणं लक्षणं पुनराह । मयि ईशे कृतं सौहृदं प्रीतिरेव अर्थः पुरुषार्थो येषां मत्प्रीतेरन्यद्वस्तु ये पुरुषार्थं न मन्यन्त इत्यर्थः वाशब्देनान्यनिरपेक्षत्वस्यैव लक्षणत्वं दर्शयतीति श्रीस्वामिचरणाः देहम्भराणां भोजनपानाद्यासक्तानां या वार्त्ता जीविकाः कथा वा ताभिरेव ये दीव्यन्ति तेषु जनेषु जायादियुक्तेषु गृहेषु च विद्यमानेष्वपि न प्रीतियुक्ताः रतिधेन ननु तर्हि किमर्थं तेषु गृहेषु तिष्ठन्तीति तत्राह । यावद्भिरेव धनादिभिरर्थो मत्पादसेवनाद्यात्मिका भक्तिर्भवेत्तावन्त एवोपादेया येषां ते तावदादि पदानां वृत्तावन्तर्भावः ॥ ३ ॥

तमो द्वारात् योषित्सङ्गिसङ्गात् देहिन एवमधःपातः स्यादिति तं दर्शयति शोचति च । नूनमिति । विकर्म परदारादिग्रहणपापम् आपृणोति विकर्मण्येव व्यापृतो भवति यतो विकर्मणः प्राचीनादयं क्लेशदो देहो जातः तस्यैव पुनः करणं न साधु मन्ये देहः कीदृशः आत्मनो जीवस्य असन्नपि वस्तुतो न वर्त्तमानोऽपि ।"असङ्गोह्ययं पुरुष" इति श्रुतेः ॥ ४ ॥

तर्हि पुण्यं कर्त्तव्यमितिचेन्न तस्यापि संसारहेतुत्वेन क्लेशहेतुत्वात् तस्मात् पुण्यपापयोर्निरासकं ज्ञानमेवाभ्यसनीयमेवेत्याह । पराभवः कर्मपारतन्त्र्यं तदेव जीवस्य बन्धः सचाज्ञानकृतस्तावदेव भवति यावन्न जिज्ञासत इति "ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुतेऽर्ज्जुन,,इत्युक्तेः । यावज्ज्ञानं नोद्भवेत् तावत् कर्म्माणि न नश्यन्ति यावत् क्रियाः पुण्यपापकर्म्माणि स्युस्तावदिदं मनो हि कर्म्मात्मकं कर्म्म स्वभावमेव स्यात् येन कर्म्मात्मकेन मनसा ॥ ५ ॥

केन प्रकारेण मनः कर्मात्मकं स्यात्तमाह । एवमिति । कर्म्म प्राचीनमर्वाचीनं वा कर्तृ मनः कर्मभूतं वशं प्रयुङ्क्ते पुनः कर्मनिष्ठं करोति एवमनेन प्रकारेण मनः कर्म्मात्मकं स्यात् यद्वस्तु यदधीनं स्यात् तच्च तदात्मकमेव भवेदित्यर्थः । जीवन्मुक्तकर्मव्यावृत्त्यर्थमाह । अविद्ययेति । आत्मनि जीवे उपधीयमाने युज्यमाने सति उपाधिरूपाधिलिङ्गं तदध्यासात्तद्रूपीक्रियमाण इत्यर्थः किञ्च सर्व्वकर्म्मनिर्मूलीकरणी भक्तिरेवेत्याह । प्रीतिरिति ॥ ६ ॥

एवञ्च भक्तिमिश्रस्य ज्ञानस्य परिपाकदशायामेव नैष्कर्म्यं नत्वपरिपाकदशायामित्याह । यदा गुणेषु शब्दादिष्वर्थेषु ईहां वाञ्छाम् अथवा अनर्थरूपां विपश्चित् ज्ञानवानपि न पश्येत् यदानुपश्यतीति पाठे गुणानामिन्द्रियाणामीहां चेष्टाम् अथवा ममात्मन एवेयं चेष्टेत्यर्थः तत्र तदा सहसा गतस्मृतिः सन् तापान्... मैथुनार्हमगारं प्राप्य त्वतितापानित्यर्थः ॥ ७ ॥

इन्द्रियचेष्टानामात्मीयत्वाभिमननसद्भावेऽपि ... स्ततो यथा मोहस्तथा तद्रहितस्य नेत्याह । पुंस इति ... हृदयग्रन्थि गमेयं स्त्रीत्येकोऽयं ग्रन्थिस्तदुपरि ममाय... द्वितीयो ग्रन्थिस्तेन पुंसा वैराग्येण त्यक्तुमिष्टापि स्त्री... तीति बन्धस्य गाढत्वमुपलक्षणमेवं पिता पुत्रयोरपि ... कुटुम्बराहित्ये तु वस्त्रासनपात्रादिष्वात्मीयत्वेनाभिमन... वेऽपि मिथो ग्रन्थ्यभावान्न तादृशो बन्ध इति भावः मिथो हृदयग्रन्थितो हेतोः गृहादिभिरहं गृही मम गृहं... मोहो भवति ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चमे पुत्रादीन् प्रति मोक्षधर्मान्निरूप्य गृहादिष्वे... भूदृषभ इति वर्ण्यते तत्र तावद्विषयासक्तिर्बन्धहेतुः भगव... तप आसक्तिर्मोक्षहेतुरित्याह । नायमिति । कष्टान् दुःखोदर्कान् विषयान् दिव्यं परदेवसम्बन्धि तत्प्राचरणरूपम् येन तपसा शुद्ध्येत् भूवारमृत्यर्हं भवेत् यस्मात् भूवारमृत्यर्हात् ... ब्रह्मसौख्यं ब्रह्मसाम्यं भवेत् ॥ १ ॥

तपोरुच्युत्पादनद्वारा महत्सेवां विमुक्तेर्द्वारम् विषयस... नद्वारा योषितां सङ्गिसङ्गं तमसः संसारस्य द्वारम् ... मोक्षविद् इति शेषः महल्लक्षणमाह । महान्त इति सार्द्धे... सौहृदमेवार्थः प्रयोजनं येषां ते देहं बिभ्रतीति देहंभराः ... त्यादयस्तत्परा वार्ता येषां तेषु जनेषु जाया आत्मजाः रातिर्... वा तद्वत्सु गृहेषु च न प्रीतियुक्ताः यावदर्थाः यावदर्थमेवार्थं... मिति "शाकपार्थिवादीनामुत्तरपदलोपश्च" इत्यनेन समास... र्वाहो यावता भवेत्तावन्मात्रग्राहिण इत्यर्थः ॥ २ ॥ ३ ॥

महत्सेवां मुक्तेर्द्वारं योषितां सङ्गिसङ्गं संसारद्वारं ... क्रम । अथात्र पञ्चभिः संसारप्रकारं तदनन्तरं षड्भिर्मुक्तिम... प्रपञ्चयति । यद्यदा असत्सङ्गादिना नूनं निश्चितं प्रमत्त इ... तये आपृणोति व्याप्रियते तदा विकर्म पापं कुरुते यतो ... पूर्वकृतात् अयं असत् हरिसेवानर्हः अत एव ... जातः तस्यैव विकर्मणः पुनःकरणं न साधु मन्ये ॥ ४ ॥

पराभवो जन्ममरणप्रवाहलक्षणः संसारप्राप्तिः ... नात्मपरमात्मविवेकस्तस्माज्जातः आत्मनः यद्विज्ञा... विज्ञानं स्यात्तस्य भगवतस्तत्त्वं यावन्न जिज्ञासते ... यावत्क्रियाः विकर्मव्यापाराः तावत्कर्मात्मकं कर्मस्वभावकं ... स्यात् येन कर्मात्मकेन मनसा शरीरैः पुनः पुनर्जीव... यद्वा शरीरादिबन्धाः बन्धनानि यस्मिन् सः संसारः स्यात् ... मरणप्रवाहलक्षणः संसार एव स्यात् ॥ ५ ॥

एवमविद्यया आत्मानात्मपरमात्माविवेकेन आत्मनि ... उपधीयमाने आच्छाद्यमाने सति मनः उपधीयमानमात्म... वशं प्रयुङ्क्ते पुनःपुनरात्मानं कर्मनिष्ठं करोति एवं विधस्य ... यावत्प्रीतिर्न तावन्न देहयोगेन मुच्यते संसार... भवति ॥ ६ ॥

अविपश्चिदविवेकी स्वार्थे मोक्षमार्गे अप्रमत्तः गुदा... गुणकारितामीहामयथामनिष्टां संसारप्रापिकाम् ॥ ७ ॥

यदा मनोहृदयग्रन्थिरस्य कर्मानुबद्धो दृढ आश्लथेत ।
तदा जनः सम्परिवर्ततेऽस्मान्मुक्तः परं यात्यतिहाय हेतुम् ॥ ९ ॥
हंसे गुरौ मयि भक्त्यानुवृत्त्या वितृष्णया द्वन्द्वतितिक्षया च ।
सर्वत्र जन्तोर्व्यसनावगत्या जिज्ञासया तपसेहानिवृत्त्या ॥ १० ॥
मत्कर्मभिर्मत्कथया च नित्यं मद्देवसङ्गाद्गुणकीर्तनान्मे ।
निर्वैरसाम्योपशमेन पुत्रा ! जिहासया देहगेहात्मबुद्धेः ॥ ११ ॥
अध्यात्मयोगेन विविक्तसेवया प्राणेन्द्रियात्माभिजयेन सध्र्यक् ।
सच्छ्रद्धया ब्रह्मचर्येण शश्वदसम्प्रमादेन यमेन वाचाम् ॥ १२ ॥
सर्वत्र मद्भावविचक्षणेन ज्ञानेन विज्ञानविराजितेन ।
योगेन धृत्युद्यमसत्त्वयुक्तो लिङ्गं व्यपोहेत्कुशलोऽहमाख्यम् ॥ १३ ॥
कर्माशयं हृदयग्रन्थिबन्धमविद्ययासादितमप्रमत्तः ।
अनेन योगेन यथोपदेशं सम्यग्व्यपोह्योपरमेत योगात् ॥ १४ ॥
पुत्रांश्च शिष्यांश्च नृपो गुरुर्वा मल्लोककामो मदनुग्रहार्थः ।
इत्थं विमन्युरनुशिष्यादतज्ज्ञान्न योजयेत् कर्मसु कर्ममूढान् ।
कं योजयन्मनुजोऽर्थं लभेत निपातयन्नष्टदृशं हि गर्ते ॥ १५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुंसः स्त्रिया सह मिथुनीभावं तयोः स्त्रीपुंसयोः हृदयग्रन्थि हृदयग्रन्थिमूलमाहुः अतो हृदयग्रन्थितः अहं भोगीत्यादिमोहो गृहादिभिश्च वाक्षैर्गृहादयो ममेत्यादिमोहश्च भवति ॥ ८ ॥

---

भाषाटीका

भगवान् श्रीऋषभदेवजी बोले हे पुत्रो ! इस मनुष्य-लोक में देहधारियों का जो देह है सो कष्टदायक कर्मों के करने को नहीं है जो कि कुत्सितकर्म सूकरादिक भी करते हैं यह मनुष्य देह तो तप करने के योग्य है जिस तप-से अन्तःकरण शुद्ध होता है फिर अन्त में सुखकी प्राप्ती होती है ॥ १ ॥

महत्पुरुषों का सङ्ग मुक्ति का द्वार है स्त्रियों के सङ्गियों का सङ्ग नरक का द्वार है ऐसा शिष्ट जनों का कथन है महत्पुरुष वेही हैं जोकि समान चित्त वाले क्रोध रहित सब के कार्य के साधने वाले हैं ॥ २ ॥

अथवा जो ईश्वर मेरे मे प्रेमरूप प्रयोजन को जानने वाले हैं केवल देह के भरण पोषण वृत्ति वाले स्त्री पुत्र धन घर इनोंमें जिनकी प्रीति नहीं है संसार मे देह निर्वाह मात्र प्रयोजन रखते हैं ॥ ३ ॥

निश्चित है कि मनुष्य प्रमादी होकर इन्द्रियों की प्रीति के वास्ते पाप कर्मों में लगा रहता है तिस बात को मैं ठीक नहीं मानता हूं जोकि देहादि असत्पदार्थ होकर भी क्लेशदाता है ॥ ४ ॥

जब पर्यन्त यह पुरुष आत्मतत्त्व को नहीं जानता है तब पर्यन्त आत्मा का अज्ञान रहता है तब ही तक संसार की क्रिया रहती है जबतक क्रिया है तबतक इस पुरुष का शरीर बन्धनरहता है ॥ ५ ॥

इस प्रकार अज्ञान से आत्मस्वरूप के आच्छादित हो जाने से मन इस पुरुष को अपने आधीन करलेता है जबतक इस वासुदेव में प्रीति नहीं होती है तबतक इसका देहयोग नहीं छूटता है ॥ ६ ॥

विवेकी भी होकर जबतक गुणों की प्रवृत्ति के दोषों को नहीं देखता है तबतक स्वार्थ में प्रमादी होने से शीघ्र ही अपने स्वरूप के भूलजाने पर अज्ञानी होकर मैथुन सुख के हेतु घर मे रहकर तहां दुःखों को भोगता रहता है ॥ ७ ॥

स्त्री पुरुष का परस्परमें जो प्रेम है सो हृदय की ग्रन्थि है ऐसा शिष्टजन कहते हैं इसी से गृहक्षेत्र सुत पुत्र धन इनोंसे पुरुष को अहन्ता ममता रूप मोह होता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कदा तर्हि तस्य निवृत्तिस्तत्राह । यदाऽस्य जनस्य कर्मभिरनुबद्धो दृढो मनोरूपो हृदयग्रन्थिः शिथिलो भवेत्तदाऽस्मान्मिथुनीभावान्निवर्तते ततश्च हेतुमहङ्कारं त्यक्त्वा मुक्तः सन्परं पदं याति ॥ ९ ॥

हेतुमतिहायेत्युक्तं तत्र पञ्चविंशतिसाधनान्याह चतुर्भिः । हंसे मयि गुरौ भक्तिः सेवा अनुवृत्तिस्तत्परता विगततृष्णाया

लोकः स्वयं श्रेयसि नष्टदृष्टिर्योऽर्थान् समीहेत निकामकामः ।
अन्योऽन्यवैरः सुखलेशहेतोरनन्तदुःखं च न वेदमूढः ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वत्र लोकान्तरेऽपि व्यसनावगत्या दुःखानुसन्धानेन ईहानिवृत्त्या काम्यकर्मत्यागेन ॥ १० ॥

मदर्थैः कर्मभिः अहमेव देवो येषां तैः सङ्गात् हेपुत्राः ! देहगेहयोरात्मबुद्धेरहंममेति बुद्धेः ॥ ११ ॥

अध्यात्मयोगेनाध्यात्मशास्त्राभ्यासेन सध्र्यक् सम्यगिति सर्वत्र सम्बन्धः असंप्रमादेन कर्तव्यस्यापरित्यागेन ॥ १२ ॥

सर्वत्र मद्भावो मद्भावना तत्र विचक्षणेन निपुणेन विज्ञानविराजितेनानुभवपर्यन्तेन ज्ञानेन योगेन समाधिना धृत्युद्यमसत्त्वयुक्तो धैर्यप्रयत्नविवेकैर्युक्तः सन्नहङ्काराख्यमुपाधिं व्यपोहेन्निरस्येत् ॥ १३ ॥

ततः साधनादुपरमेदित्याह । कर्माशयाशेरने यस्मिन् योगेनोपायेन यद्यपि फले सिद्धे साधनोपरमः सिद्ध एव तथापि यावद्देहपातं तदभ्यासशङ्कावारणायोक्तम् ॥ १४ ॥

किञ्च पुत्रान्पिता शिष्यान्वा गुरुर्नृपश्च प्रजा एवमनुशिक्षयेत् मम लोकं यः कामयते यद्वा मदनुग्रह एवार्थो यस्य विमन्युः शिक्षितस्याकरणेऽपि कोपशून्यः अतज्ज्ञांस्तत्त्वमविदुषः श्रेयोबुद्ध्या कर्मसु मूढान् अन्यथोपदेशे प्रत्यवायमाह । मनुजः काम्यकर्मसु पुरुषं योजयन् गर्ते संसारकूपे तं पातयति स मनुजः कमर्थं पुरुषार्थं लभेत न कमपीत्यर्थः ॥ १५ ॥

न योजयेदित्येतदुपपादयति । लोक इति त्रिभिः । नष्टदृष्टित्वे हेतुः । य इति । निकाममतिशयेन कामो यस्य ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हृदयग्रन्थिशैथिल्यमेव मुक्तिहेतुरित्याह । यदेति । अस्य पुरुषस्य अढिमा दार्ढ्ययुक्तः कर्मानुबन्धः कर्म अनुसृत्य बध्यते सम्बन्ध्यते इति कर्मानुबन्धः कर्मणि क्रियमाणे तत्पृष्ठभागेन प्राप्तमित्यर्थः यद्वा कर्मानुबध्यते प्राप्यते येन स कर्मानुबन्धः यस्मिन् सति नान्तरीयकं कर्म सकर्मानुबन्ध इत्यर्थः एवं भूतो मनोहृदयग्रन्थिः मनोरूपं यदन्तःकरणं हृदयशब्दस्य हृदयस्थानपरत्वशङ्कानिवृत्तये मन इत्युक्तं तद्गतो ग्रन्थिर्वासनारूपः यद्वा हृदयग्रन्थिशब्दो वासनायां रूढः मनसो यो हृदयग्रन्थिर्यदा श्लथेत शिथिलो भवेत्तदा जनः अस्मात्सम्परिवर्त्तत संसारान्मुक्तः हेतुं कर्मरूपहेतुमतिहाय पुण्यपापे विधूयेत्यर्थः परं परमपुरुषं याति ॥ ९ ॥

इदानीं हृदयग्रन्थिशैथिल्ये साधनान्याह चतुर्भिः । हंसेऽविद्यादोषगन्धरहिते गुरौ हितोपदेष्टरि मयि यद्वा मद्रूपे गुरौ भक्त्या गुरुभक्तेः प्रथमकारणत्वात् अनुवृत्त्या सेवया तत्परतया शब्दादिषु विगततृष्णया द्वन्द्वानां शीतोष्णादीनां तितिक्षया सर्वत्रेहामुत्र च जन्तोर्व्यसनावगत्या दुःखानुसन्धानेन जिज्ञासया हेयोपादेययोर्ज्ञानेच्छया तपसा नाशकेन तपसा ईहानिवृत्त्या वृथाकाङ्क्षानिवृत्त्या ॥ १० ॥

मत्कर्मभिर्मदाराधनरूपैर्वर्णाश्रमोचितकर्मभिः भगव[...] चाहमेव देवो येषां ते भागवतास्तेषां सङ्गात् मद्गुण[...] निर्वैरादीनां समाहारद्वन्द्वः निर्वैरादिभिः हे पुत्राः ! देहगे[...] त्मीयबुद्धेर्जिहासया त्यागेच्छया ॥ ११ ॥

अध्यात्मयोगेन प्रकृतिविलक्षणात्मयाथात्म्यानुभवयोगेन [...] कसेवया । विशुद्धाहारेण सम्यक् प्राणेन्द्रियमनसां [...] सच्छ्रद्धया सदुपायविषयश्रद्धया ब्रह्मचर्येण स्त्रीसङ्गादि[...] शश्वत् सर्वदासम्प्रमादेन कर्तव्यस्यापरित्यागेन वा[...] नियमेन ॥ १२ ॥

सर्वत्र भूतेषु मद्भावविचक्षणेन ब्रह्मात्मकत्वप्रदर्शनेन [...] शास्त्रं तेन विराजितेन उद्दीपितेन ज्ञानेन ध्यानात्मकेन [...] समाधियोगेन नच धृत्युद्यमसत्त्वयुक्तो धैर्यप्रयत्नव्यवसा[...] सत्त्वशब्दो व्यवसायपरः उक्तसाधनकलापे तत्साध्ये च [...] सायस्ततः प्रयत्नस्तत्र धैर्यमेवमुक्तेन साधनज्ञानेन [...] सन्नहमाख्यं देहाहङ्काराख्यं लिङ्गं बन्धहेतुं यद्वाहङ्कार[...] देहेऽहंशब्दो लक्षणया वर्तनेऽहंबुद्धिविषयं लिङ्गं देहं [...] हेदपनुद्यात् उक्तसाधनकलापोपचितया भगवद्भक्त्या इ[...] शैथिल्यापादनद्वारा देहसम्बन्धं व्यपोहेदिति भावः ॥ १३ ॥

तदेवाह । कर्माशयं कर्मवासनारूपं हृद[...] बन्धं कथम्भूतमविद्ययाहङ्कारादिरूपाविद्यया [...] आसादितं प्रमादरहितः यथोपदेशमुपदेशप्रकारमनतिक्र[...] ष्ठितेन योगेन सम्यग्व्यपोह्य योगादुपरमेत् यावत्कर्म[...] व्यपोऽहं योगोऽनुष्ठेय इत्यर्थः ॥ १४ ॥

एवं संसारैकभेषजं योगमुपदिश्य हितोपदेशस्तस्मिन्नेव [...] लोको नियोज्य इत्याह । पुत्रांश्चेति । मल्लोकं मत्सारूप्य[...] मानः मदनुग्रहो यस्यार्थः प्रयोजनतयाभिमतः स मदनु[...] पिता पुत्रान् गुरुः शिष्यान्नृपः प्रजाः विमन्युः शिक्षित[...] रणे कोपशून्यः अतज्ज्ञानुक्तयोगमज्ञानान् इत्थमनुशिक्षये[...] कर्ममूढाननादिपुण्यापुण्यरूपकर्मणा मूढानज्ञान् पुनः कर्मसु [...] येत् ॥ १५ ॥

एतदेवोपपादयति । लोक इति त्रिभिः । लोकः स्वयं श्रे[...] नष्टदृष्टिस्तत्साधनज्ञानशून्यः तत्र हेतुः यो लोकः निकाम[...] शयेन कामो यस्य तथाभूतः सन्नर्थान् शब्दादिविष[...] समीहतेऽनर्थावहार्थसाधनकर्माण्येव कुरुते अतः श्रेय[...] दृष्टिरिति भावः अर्थानामनर्थगर्भत्वेन तत्प्रसाधनं श्रेयो[...] ज्ञतामूलमित्याह । अन्योऽन्येति । सुखलेशानां शब्दादीनां [...] कर्मणः अन्योऽन्यवैरं ततः अनन्तदुःखं च न वेदातो [...] श्रेयसि लोक इत्यर्थः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वदुःखनिवृत्तौ किंकारणमित्यतो हृदयग्रन्थिविनाश[...] त्याह । यदेति । कर्मणामनुबन्धः परम्परा यस्य स क[...] संसारहेतुं हृदयग्रन्थिमतिहाय परं ब्रह्म यातीत्यन्वय[...]

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

(१) भक्त्यादिसाधनसम्पत्त्या सत्यस्यापि बन्धस्य निवृत्तिः सुघटा गरुडध्यानेन विषनिवृत्तिवदित्यभिप्रेत्य तत्साधनमाह। गुराविति। हरौ मयि गुरौ स्थिते हरौ मयीति वा अनुवृत्त्या-दरावति। निरन्तरसेवया सर्वत्र योनिषु व्यसनावगत्या विविधक्लेशोऽस्तीति ज्ञानपूर्वकविचारेण जिज्ञासया वेदान्तवाक्यविचारेण पञ्चाग्नि-मध्यस्थित्यादितपसा ईहा निवृत्त्या आत्मविहितकर्मव्यतिरिक्त-कर्मपरित्यागेन तदुक्तम्।

आत्मनोऽविहितं कर्म वर्जयित्वान्यकर्मणः।
कामस्य वा परित्यागो निरीहेत्याहुरुत्तमाः॥

इति मत्कर्मभिर्मदाराधनलक्षणैः मम पादः स्वरूपं येषु ते मत्पादास्तेषां महतां सङ्गात् मम प्रतिमासेवालक्षणसङ्गाद्वा देवकीनन्दननन्दकुमारेत्यादिगुणनामसङ्कीर्तनात्॥१०॥

भूतेषु निर्वैरेण साम्येनोपशमेन च देहात्मगेहात्मबुद्धेर्जिहा-सया हानेच्छया अध्यात्मयोगेन नाडीशोधनादिलक्षणेन प्राण-स्येन्द्रियाणामात्मनो मनसश्चाभिजयेन वशीकरणेन॥११॥

सत्या प्रशस्तया श्रद्धया असंप्रमादेन इतिकर्तव्यताया अविस्मृत्या वाचामिति पुनर्वागिन्द्रियग्रहणं दुःशास्त्राभ्यासनिवृत्त्यर्थं सर्वदा मौनकरणार्थं वा मद्भावविचक्षणेन सर्वत्र मम सत्तालक्षणव्याप्ति दर्शनेन येन मुक्तिः स्यात्तद्विज्ञानं तेन विराजितेन तेजितेन प्रतिजीवं विष्णुः सर्वस्मादुत्तम इति यत्तेन ज्ञानेन तदुक्तम्।

सर्वस्मादुत्तमो विष्णुरिति ज्ञानमुदाहृतम्।
प्रतिजीवं येन मुक्तिस्तद्विज्ञानं विदां मतम्।

इति यद्वा यद्विष्णोरुत्तमत्वज्ञानं तदेव प्रतिपूरुषं विशेषविषयं तद्विज्ञानं तेन विराजितेन विशेषितेन ज्ञानेन अनयोर्विशेषं च सर्वज्ञो गुरुर्जानाति तदुक्तम्।

ज्ञानं विष्णोरुत्तमत्वे तदेव प्रतिपूरुषम्।
विशेषेण तु विज्ञानं तच्च जानाति सर्ववित्।

इति च स्वस्वयोग्यतानुसारेण सर्वेषामपि सर्वज्ञत्वेन तज्ज्ञा-नमपि विज्ञानं स्यादित्यतो व्यावृत्तलक्षणं वक्तव्यं तत्किमिति चेदुच्यते द्वात्रिंशल्लक्षणाद्युपेत एव सर्वज्ञ इत्युच्यते न तु स्वयो-ग्यतानुसारेण विद्वांस्तदुक्तम्।

द्वात्रिंशल्लक्षणैर्युक्तस्तीक्ष्णदंष्ट्रश्च सौम्यदृक्।
घोरदृक् चेति पुरुषः सर्वज्ञः स उदाहृतः।

इति सर्वज्ञस्य गुरोः प्रत्यक्षलक्षणान्यपि शास्त्रैर्निरूप्यन्ते

षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः।
सप्तपादश्चतुर्हस्तः स देवैरपि पूज्यते।

इत्यादौ न्यग्रोधपरिमण्डलो बाहुद्वयमण्डलमण्डितः "न्यग्रोधमण्डलो व्यामो बाहुन्यग्रोध उच्यते" इतिवचनात्॥१२॥

योगेन ध्यानेन जिह्वोपस्थेन्द्रियजयो धृतिः वैष्णवासिद्धा-न्तादचलनं वा उद्भवसत्त्वं स्पष्टीकृतसत्त्वगुणः ताभ्यां युक्तः धृत्या उद्भवेन उत्कृष्टजन्मना सत्त्वेन ब्रह्मकल्पावध्यनशनेऽध्य-स्थानेन युक्त इति वा अहमाख्यमहङ्कारशब्दवाच्यं लिङ्गं शरीरं व्यपोहेत त्यजेत् किम्विशिष्टं लिङ्गं कर्माण्याशेरतेऽस्मिन्निति कर्माशयं हृदयग्रन्थिं मिथुनीभावलक्षणं बध्नातीति हृदयग्रन्थिबन्धमविद्ययाज्ञानेन प्राप्तम्॥१३॥

अनेनोक्तेन योगेन व्यपोह्य निरस्य पश्चाद्योगादुपरमेत प्रासादात् प्रेक्षत इतिवत्पश्चाद्योगमुपगम्य क्रीडत इत्यर्थः उक्तमतिदिशति। पुत्रानिति। शिक्षाफलमाह। मदनुग्रहार्थ इति। ममानुग्रह एवार्थः प्रयोजनं यस्य स तथा मत्प्रसादलभ्यो मोक्षो यस्येति वा॥१४॥

विमन्युर्ज्ञानशीलः विगतपापो वा निरस्तक्रोधो वा अतज्ज्ञा-नब्रह्मज्ञान् ननु कर्मकरणप्रेरणायां गुरुत्वेन पूजादिलाभात् किमिति न योजयेदित्युच्यते इति तत्राह। कं योजयन्निति। प्रवृत्ति-कर्मणि प्रेरयन् कमर्थं लभते न कमपि प्रत्युतज्ञानचक्षुरहित-स्याधःपातहेतुत्वेन स्वस्यापि नरकपातः स्यादित्यभिप्रेत्याह। निपा-तयन्निति॥१५॥

माभूत्परोपदेशस्तथापि स्वयमेव प्रवर्तमानो जनोऽर्थान् लभ-तामत्राह। लोक इति। नितराङ्कामकामो विषयभोगेच्छा यस्य स तथा अत एव श्रेयसि नष्टशास्त्रदृष्टिः स्वयमुपदेशं विना यो लोको जनोऽर्थानापादयितुं समीहेत इच्छेत्स जनस्तेषामर्थानां मध्ये कं पुरुषार्थं लभते न कमपीति पूर्वेणान्वयः न केवलं पुरुषार्थानवाप्तिरपितु बहुदुःखावाप्तिश्च स्यादित्याह। अन्योऽन्येति। सुखलेशहेतोरन्योऽन्यवैरमनन्तदुःखं च मूढो न वेद॥१६॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

हेतुमतिहायेत्युक्तम्। तत्र च प्रीतिरेव कारणमुक्तं सा च तत्र द्विधा प्रवर्त्तते स्वमात्रपुरुषार्थानां स्वद्वारा मुमुक्षूणान्तु ज्ञान-द्वारेति किन्त्वन्येच्छुत्वात् प्रीत्याभास एवैषां ज्ञेयः तत्रोभय-त्रापि गुरुभक्तिरपेक्षत इत्याह। हंस इति चतुष्केण। तत्र पूर्वेषां साधनान्याह। वितृष्णयेति पञ्च पद्या॥१०॥

अपरेषामाह। निर्वैरेतिद्वाभ्याम्। अतो लिङ्गं व्यपोहेदिति पूर्वैरुत्तरैश्च पृथग् योज्यम् योगेन धृत्युद्यमसत्त्वयुक्त इति तूभय-त्रैव वितृष्णया तृष्णाविगमेनेत्यर्थः। जिज्ञासया शास्त्राद्भगवत्त-त्त्वविचारेण तपसा भगवत्प्रीणनस्वधर्म्मेण ईहा निवृत्त्या ऐहिकपारलौकिककामनान्तरनिवर्त्तनेन ततश्च नित्यं मत्कर्म-भिर्मद्दर्शनपादसेवनलक्षणैरित्यादिब्रह्मचर्य्येण कायमनोवाग्गतेन॥११-१२॥

अत्र प्रीति बीजं विन्यस्यति। सर्व्वत्र मद्भावेति। योगेन उपायेन धृत्यादियुक्तः सन्॥१३॥

अभिनिवेशार्थं तदेव संक्षिप्य पुनराह। कर्म्मेति। अनेन पूर्वो-क्तेन योगेन उपायैकतरेण तेन च न पुस्तकदर्शनमात्रस्वा-त्मप्रेक्षितेन अपितु यथोपदेशं श्रीगुरुशिक्षितप्रकारेणैवेत्यर्थः। उपरमेतेति। प्रीतिपुरुषार्थिना अनुसङ्गमात्रेण तद्व्यपोहकायाः प्रीतेरेव स्वयं सिद्धेः मुमुक्षूणां तद्व्यपोहातिरिक्तसाध्याभा-वात्॥१४—१७॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कदा तर्हि मुक्तिरत आह। यदा मनोरूपो हृदयग्रन्थिरस्य

---

(१) अत्र त्रिभिश्चरणैः श्लोकस्तेन पञ्चदशपर्यन्तं मूलटीकयोः क्रियानस्तिमेदस्ततस्तौल्यम्।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

जनस्य कर्म्मभिरनुबद्धोऽपि ज्ञानवैराग्याभ्यासेन शिथिलो भवेत्तदा अहमानितिगुणीभावान्निवर्त्तते ततश्च हेतुमहङ्काराख्यमुपाधिं त्यक्त्वा मुक्तः सन् परमपदं याति ॥ ६ ॥

भक्तिमिश्रज्ञानेन लिङ्गभङ्गमुक्त्वा ज्ञानमिश्रया च भक्त्या पञ्चविंशत्यङ्गया लिङ्गभङ्गमाह । चतुर्भिः । तत्रापि शुद्धभक्तानां केवलयैव भक्त्या पञ्चदशाङ्गया लिङ्ग भङ्गमाह । प्रथमद्वाभ्याम् । हंसे परमहंसस्वरूपे मयि गुरौ भक्त्येत्यादिभिः अहमाख्यं लिङ्ग लिङ्ग-देह व्यपोहेदित्यन्वयः । वितृष्णया निष्कामतया जिज्ञासया भक्तेर्भजनीयेश्वरस्य चेति शेषः । तपसा एकादशीकार्त्तिकादिव्रतलक्षणेन विष्णुवैष्णवसेवानिबन्धनस्वीयभोजनशयनादिसङ्कोचलक्षणेन च । ईहानिवृत्त्या व्यापारान्तरराहित्येन अहमेव देवः प्रभुर्येषां तैः सङ्गात् निर्वैरमद्वेष्टृत्वम् साम्यमन्यस्य सुखदुःखयोः स्वसुखदुःखसाम्यभावना उपशमः क्रोधशोकादेस्तेषां द्वन्द्वैक्यं तेन देहगेहादिष्वात्मीयत्वबुद्धेस्त्यागासामर्थ्येऽपि त्यागेच्छया असंप्रमादेन कर्त्तव्यव्यापरित्यागेन मद्भावविचक्षणेन मदीयसत्तादर्शनेन विज्ञानविराजितेन विज्ञानजनकेनेत्यर्थः । अनुभवजनकत्वमेव ज्ञानस्य विराजनमिति भावः योगेनाष्टाङ्गेन सत्वमुत्साहः व्यपोहेत् निरस्येत् ॥ १०—१३ ॥

ततश्च लिङ्गभङ्गार्थकसाधनानुपरमेदित्याह । कर्मेति । यथोपदेशं योगेन गुरूपदेशमनतिक्रम्य यो योग उपायस्तेन नतु पाण्डित्यबलात् पुस्तकदर्शनमात्रादेव स्वोत्प्रेक्षितेन कर्म्माशयाशेरते यस्मिंस्तं बन्धं व्यपोह्य निरस्य योगादुपायात् विरमेदिति लिङ्गव्यपोहनार्थमेव विरमेत् नतु तत्पदार्थज्ञानार्थमित्यर्थः । तदर्थस्तु भक्तिं कुर्व्वीतैव यदुक्तम् ।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम् ।
भक्त्या मामभिजानाति यावान् यश्चास्मितत्त्वतः ।

इति तत्पदार्थानुभवसिद्धेऽपि भक्तेः सर्व्वथैवात्याग आत्मारामाश्च मुनय इत्यादिप्रमाणाद्व्याख्येय एवेत्यतो भक्तिमिश्रादुपायाद्विरमेदिति केचिदाहुः ॥ १४ ॥

एवं भक्तेर्गुणभावमन्तर्भूतकैवल्यश्चोक्त्वा भक्तेरुपदेष्टापि कृतार्थः स्यादित्याह । पुत्रानिति । विमन्युः शिक्षितस्याकरणेऽपि कोपशून्यः कर्मसु न योजयेत् कर्म्मैव कुरुतेति नोपदिशेत् । 'जोषयेत् सर्व्वकर्म्माणि विद्वान् युक्तः समाचरन्' इतितज्ज्ञानोपदेष्टृविषयं नतु भक्त्युपदेष्टृविषयमिति ज्ञेयम् ॥ १५ ॥

एतदेवोपपादयति । लोक इति त्रिभिः । अर्थान् भोग्यपदार्थान् इष्टानर्थांश्च निकाममतिशयेन काम एव यस्य सः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुक्तिप्रकारं प्रपञ्चयति । यदेत्यादिना । यदा मनोहृदयग्रन्थिः श्लथयेत शिथिलो भवेत् तदा अस्मात् संसारात् अबोधजात् हेतुमयोधं पूर्वोक्तमतिहाय संपरिवर्त्तते मुक्तो भवति मुक्तश्च परंपरमात्मसाधर्म्यं याति च ॥ ९ ॥

तत्र साधनान्याह । हंसेत्यादिना । हंसे परमहंसे गुरौ मयि च ॥ १० ॥

अहं देवो येषां तेषां सङ्गात् ॥ ११ ॥

सध्र्यक् सम्यक् ॥ १२ ॥

सर्वत्र मद्भावे विचक्षणेन सुदृढेन योगेन ध्यान... धृत्युद्यमसत्त्वयुक्तः धैर्यसाधतेनोद्यमेन साधनानुष्ठान... गात्मबोधयुक्तः अहमाख्यं लिङ्गं तदुपलक्षितं संसारं ... हेत् त्यजेत् ॥ १३ ॥

एतदेवाह । कर्माशयमिति । कर्माणि संसारप्रदान्याशेरते... तत् अनेन योगेन साधनयोगेन सम्यग्व्यपोह्य निरस्य ... युज्यते इति योगः जन्ममरणप्रवाहलक्षणः संसारस्तस्मात् ...

प्रतिदिशति । इत्थं यथा मया पुत्रादयः शिक्षि... अन्योऽपि पिता पुत्रान् गुरुः शिष्यान् नृपः नृप... अनुशिक्षयेत् कर्मसूढाकर्मसु न योजयेत् नतु कर्मसु ... योजयेत्स स्वर्गं गच्छेत्त्वत्प्राप्तिमार्गोपदेशतः किं स्यादित्याह... कामः मदनुग्रह एवार्थः प्रयोजनं यस्य सः ॥ १५ ॥

कर्मसु न योजयेदिति यदुक्तं तदेव द्रढयति । ... निकामकामः अत्यन्तः कामो यस्य सः ॥ १६—१७ ॥

---

भाषा टीका ।

जब कर्मों से बंधे हुये इस पुरुष के मन की ... ग्रन्थि छूट जाती है तब इस मिथुन भावसे छूटकर ... का कारण अहङ्कार को छोडकर मुक्तिमार्ग को ... होता है ॥ ९ ॥

छूट ने के साधन ये हैं विवेककारक हंसमरी केगु... भगवान् मै भक्ति के होने से अनुवर्तनकरने से ... तृष्णा छोडने से सुख दुःखों के सहने से सब ... जीव के दुःख देख ने से तत्त्व विचार से काम ... त्याग से ॥ १० ॥

प्रतिदिन हमारे पूजादिकर्मों से हमारी कथा से ... देवता मानने वाले भक्तों के सङ्ग से हमारे गुणों के ... से निर्वैरता से समता से चित्तकी शान्ति से ... क में जो आत्मबुद्धि तिस के छोडने से ॥ ११ ॥

अध्यात्मयोग से एकान्त सेवासे प्राण इन्द्रिय ... के अच्छीतरह से जीतने से शास्त्र में अच्छी श्रद्धासे ... ब्रह्मचर्यसे सावधानतासे वचनों के नियमन से ॥ १२ ॥

सर्वत्र हमारे भाव के देखने से अनुभव सहित ... होनेसे समाधिसे धैर्यसहित यत्न के करने से ... अहङ्कारनामक लिङ्ग देह छूटजाता है ॥ १३ ॥

अविद्या से प्राप्त हुआ जो कर्मोंका स्थान हृदय... अज्ञान तिसको उपदेश के अनुसार इस उपाय से ... तरह दूरकरके सब उपायों से निवृत्त होजावै ॥ १४ ॥

मेरे अनुग्रह को चाहने वाला मेरे लोकको चाहने ... पुरुष राजा अथवा गुरु अपने पुत्रों को तथा शिष्यों ... क्रोधरहित होकर जो कि अज्ञानी हैं तिनको इस ... शिखावै जो कर्ममे मोहित हैं तिनको कर्म में ... करै काम्यकर्मों में उन को लगाने से मनुष्य को ... लाभ होगा ॥ १५ ॥

कस्तं स्वयं तदभिज्ञो विपश्चिदविद्यायामन्तरे वर्तमानम्।
दृष्ट्वा पुनस्तं सघृणः कुबुद्धिं प्रयोजयेदुत्पथगं यथान्धम्॥ १७॥
गुरुर्न स स्यात् स्वजनो न स स्यात्पिता न स स्याज्जननी न सा स्यात्।
दैवं न तत्स्यान्न पतिश्च स स्यान्न मोचयेद्यः समुपेत मृत्युम्॥ १८॥
इदं शरीरं मम दुर्विभाव्यं सत्त्वं हि मे हृदयं यत्र धर्मः।
पृष्ठे कृतो मे यदधर्म आरादतो हि मामृषभं प्राहुरार्याः॥ १९॥
तस्माद्भवन्तो हृदयेन जाताः सर्वे महीयांसममुं सनाभम्।
अक्लिष्टबुद्ध्या भरत भजध्वं शुश्रूषणं तद्भरणं प्रजानाम्॥ २०॥

### भाषाटीका।

सब लोक स्वयं अपने कल्याण में नष्टज्ञान होगया है क्योंकि अत्यन्त कामी होकर विषयों को चाहता है थोडेसुख के लिये परस्पर मे वैर करता है मूढ होने से अनन्त दुःख को नहीं जानता है॥ १६॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

तमीदृशं कुबुद्धिं दृष्ट्वा तत्रैव कस्तं प्रवर्तयेन्न कोऽपि उत्पथेन गच्छन्तमन्धं यथा तेनैव गच्छेति को ब्रूयात्॥ १७॥

समुपेतः सम्प्राप्तो मृत्युः संसारो येन तं ततो भक्तिमार्गोपदेशेन यो न मोचयेत्सगुर्वादिर्न भवतीत्यर्थः यद्वा यस्तं मोचयितुं न शक्नुयात्स तस्य गुर्वादिर्न स्यादिति निषेधः ततश्च पिता न स्यादिति पुत्रोत्पत्तौ यत्नो न कार्य इत्यर्थः दैवं देवता न स्यादिति पूजा न ग्राह्येत्यर्थः एवमन्यदपि द्रष्टव्यम्॥ १८॥

एवं मोक्षधर्मानुपादिश्य भ्रातृशुश्रूषापालनलक्षणं धर्मं स्पर्द्धादिनिवृत्तये तेषां जन्मकथनपूर्वकमाह। द्वाभ्याम्। इदं मनुष्याकारं शरीरं मम दुर्विभाव्यमवितर्क्यं मदिच्छाविलसितम् नत्वहं प्राकृतो मनुष्य इत्यर्थः मे हृदयं तु सत्त्वं किं तद्धृदयं यत्र धर्मस्तत् शुद्धं सत्त्वमित्यर्थः कुतः यद्यस्मान्मयाधर्मो दूरादेव पृष्ठे कृत उत्सारितः अत एवमामृषभं श्रेष्ठं प्राहुः॥ १९॥

भवन्तश्च हृदयेन शुद्धसत्त्वमयेन जातास्तस्मान्मत्सरं हित्वा महत्तमं सनाभं सोदरं भजध्वम् ननु त्वत्पुत्रत्वात्त्वां वयं भजेम राजपुत्रत्वात्प्रजाश्च पालयामेति चेदत आह। तदेव मे शुश्रूषणं प्रजानां च पालनं भरतानुवृत्त्यैव सर्वं कृतं स्यादिति भावः॥ २०॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

एवमविद्यायामन्तरे वर्तमानमज्ञानान्तरे वर्तमानं कर्ममार्गे एव वर्तमानमिति वा तं श्रेयसि नष्टदृष्टिःपुरुषं दृष्ट्वा स्वयं तदभिज्ञः श्रेयस्तत्साधनाभिज्ञः अत एवविपश्चिद्धेयोपादेयविभागज्ञः सुहृत्प्रेरकः पुमान् कुबुद्धिं तत्र कर्मणि पुनः प्रयोजयेत् अत्र्रुतेत्कर्मणि प्रयोजयेदित्यर्थः तत्र दृष्टान्तः यथानुत्पथेन गच्छन्तमन्धं तेनैव गच्छेति यो ब्रूयात्तद्वदिति॥ १७॥

यस्तूक्तभक्तियोगोपदेशेन संसारान्न मोचयेत्तस्य गुरुत्वादिकमेव नास्तीत्याह। गुरुरिति। यः गुर्वादिर्हितानुपदेष्टापि समुपेतः संप्राप्तो मृत्युः संसारो येन तं पुमांसं योगोपदेशेन संसारान्न मोचयेत्स गुर्वादिरेव न भवतीत्यर्थः॥ १८॥

एवं तावन्मोक्षधर्मानुपदिश्य भ्रातृशुश्रूषापालक्षणं धर्मं स्पर्द्धादिनिवृत्तये तेषां जन्मकथनपूर्वकमाह द्वाभ्याम्। ममेदं शरीरं दुर्विभाव्यमितरसजातीयत्वेन विभावयितुमशक्यमित्यर्थः कुतः हि यस्मात् सत्त्वं मे हृदयं इदं सत्त्वप्रचुरं ममेदं शरीरं रजस्तमःप्रचुरमिति सजातीयत्वेन दुर्विभाव्यमित्यर्थः किन्तत्सत्त्वं यद्धृदयं म इत्यत्रं तत्राह। यत्र सत्त्वे धर्मः अग्रे कृतः यत्र चाधर्म आरात् दूरात् पृष्ठे कृतः भागवतधर्मरोचकं प्रवृत्तिधर्मरोचकं यत्तत्सत्त्वमित्यर्थः यतः सत्त्वप्रचुरं मच्छरीरमतो मामार्या ऋषभं श्रेष्ठं प्राहुः॥ १९॥

हृदयेन सत्त्वप्रधानहृदयेनोपलक्षिताः तस्मात् मच्छरीराज्जाताः भवन्तः सर्वे सत्त्वप्रचुराः अतः सनाभं सोदरं महीयांसं भवतां पूज्यममुं भरतमक्लिष्टबुद्ध्या निष्कपटभावेन भजध्वं ननु त्वत्पुत्रत्वात्त्वां वयं भजेम राजपुत्रत्वाच्च प्रजाश्च पालयाम इति तत्राह। तदेव मे शुश्रूषणं प्रजानां च पालनं भरतभजनेनैव तदुभयं कृतं स्यादिति भावः॥ २०॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तर्हि मूढो वेत्तीत्यायातं तदस्तु ततः किं तत्राह। कस्तमिति। स्वयं तदभिज्ञः प्रवृत्तिधर्मादनन्तदुःखावाप्तिमभिजानन्। को विपश्चित् ज्ञानी पुरुषः अविद्यायामन्तरे अज्ञाननिमित्तसंसारविले वर्तमानं कुबुद्धिं तं दृष्ट्वा सघृणो दयालुः पुनरपि तं पुरुषं प्रवृत्तिधर्मे प्रयोजयेत् न प्रयोजयतीत्यर्थः कथमिव उत्पथगं मार्गं विहाय गच्छन्तमन्धं यथा कुमार्गे न योजयति तथेत्यर्थः॥१७॥

इतोऽपि प्रवृत्तिधर्मस्योपदेष्टॄणां गुरुत्वादिकमपि न स्यादित्याह। गुरुरिति। समुपेतमृत्युमज्ञानादवाप्तसंसारं प्रवृत्तिधर्मस्योपदेष्टरि शिष्येण गुर्वादिबुद्धिरपि न कर्तव्येत्यतोवाद। गुरुरिति। गुरुरिति पूज्यो न स्यादित्याद्युक्तम्॥ १८॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतो गुर्वादिना हरेः स्वरूपमुपदेष्टव्यमित्याशयवानाह । इदं शरीरमिति । दुर्विभाव्यं दुर्निरूप्यम् अपरिच्छिन्नत्वादभौतिकत्वात् ज्ञानात्मकत्वाच्च कुत इत्यत्राह । सत्त्वमिति । मे सत्त्वं बलं ज्ञानसमाहारलक्षणं वस्तुहृदयं हि यस्मात्तस्मात् ज्ञानपूर्वमनुष्ठित एव धर्मः न त्वन्य इत्यभिप्रेत्याह । यत्रेति । यत्र यस्मिन् ज्ञानात्मके हृदये धर्मः स्थितः अनेन ज्ञानपूर्वानुष्ठितो धर्मः नित्यफलप्रद इत्युक्तं भवति प्रसङ्गादधर्मस्थानमाह । पृष्ठ इति । मे पृष्ठे भूत्वा अधर्म आरात्कृतो दूरीकृत इति यद्यस्मात्तस्माज्ज्ञानरूपत्वाद्धर्मादिस्थितिहेतुत्वाच्च ऋषभमाहुः ज्ञानपूर्वकमनुष्ठितं धर्मं हृदये बिभर्तीति के आर्याः शब्दतत्त्वार्थवेदिन इति ॥ १९ ॥

उक्तार्थमुपसंहरन्नेषां योग्यगुणविशिष्टं हरिमुपदिशति । तस्मादिति । भवन्तः सर्वे मम हृदयेन जाता इति यस्मात्तस्माद्यूयं महीयांसं महतोऽपि महान्तं भरतं प्रजाभरणरतं सुनाभं सर्वाधारं हरिभक्तिष्ठबुद्ध्या भजध्वं "नाभिरित्यथ नाम स्याद्धरेः सर्वाश्रयो यत„ इति वचनाद्धरेरिदं यौगिकं नाम अनेन भरतो येषां पूज्य इति ध्वनयति भवच्छुश्रूषणेन भवत्प्रीत्या मुक्तिः करतलगता स्यात् ज्येष्ठानुवर्तनशुश्रूषणलक्षणेन किमित्याशङ्क्य भवद्भिरनुवर्तितेन भरतेन यत्प्रजानां भरणं तत्रस्थस्य मम शुश्रूषणं भवतीत्याह । शुश्रूषणमिति । ज्येष्ठानुवृत्त्या राष्ट्रभेदाभावेन भवद्भिरपि प्रजाभरणमनुष्ठितमिति । अतो भरतं शुश्रूषद्भिर्भवद्भिरपि मम शुश्रूषणं कृतमिति ज्ञातव्यम् ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

व्यावहारिकगुर्व्वादिपरित्यागेऽपि परमार्थपथिकानां न दोष इत्याह । गुरुर्न स स्यादिति टीकायां पुत्रोत्पत्तौ यत्नो न कार्य्य इत्यत्र तेनेति शेषः यत्नं न कुर्य्यादित्यादिकं तु वक्तव्यं कर्त्तृप्रधानेनैव विवक्षितत्वात् ॥ १८ ॥

आवेशावतारतया प्रतीतस्य श्रीऋषभदेवस्यापि विग्रह एवं युज्यते । इदं शरीरमिति । इदं मनुष्याकारं मम शरीरं हि निश्चितं दुर्विभाव्यं दुर्वितर्क्यं यत्तत्त्वं तदेव यत्रैव धर्मो भागवतलक्षणः तत्रैव मे हृदयं मनः यद्यस्मात्तद्विपरीतादिलक्षणो धर्म्मो मया पृष्ठे कृतः ततः पराङ्मुखोऽहमित्यर्थः अत एव वक्तुरस्य श्रीऋषभदेवस्य सर्व्वान्तिमलीलापि व्याजेनान्तर्धापनमेव प्राकृतलोकप्रतीत्यनुसारेणैव तु तथा वर्णितम् आत्मारामनारीतिदर्शनार्थो तदुक्तम् । योगिनां साम्परायविधिमनुशिक्षयन्निति । अतः स्वकलेवरं जिहासुरित्यत्र कलेवरशब्दस्य प्रपञ्च एवार्थः उपासनाशास्त्रे तस्य तथा प्रसिद्धेः ॥ १९ ॥

ननु जायात्मजरातिमतसु न प्रीतियुक्ता इत्यनेन स्वसम्बन्धिभाक्तिः परित्याजितैव पुनः कथमुपदिश्यते तत्राह । महीयांसमिति । महत्सङ्गं द्वारमाहुरित्यादिना तेषां महतां सङ्ग उपदिष्टः तेषामपि मध्ये श्रेष्ठमित्यर्थः अत एवाक्लिष्टबुद्ध्या सुखमेव मत्वेत्यर्थः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तमेतादृशं कुबुद्धिं दृष्ट्वा तत्रैव कस्तं प्रवर्तयेत् न कोऽपि उत्पथेन गच्छन्तमन्धं कः खलु तेनैव गच्छेति वदेत् ॥ ...

एवं भक्तेरुपदेष्टारमभिनन्द्य तदनुपदेष्टॄणां गुरुत्वबन्धु... भावं तद्धेतुकं तेषां त्यागं चाभिव्यञ्जयति । समुपेतः प्राप्तः मृत्युः संसारो येन तं जनं भक्तिमार्गोपदर्शेन यो न मोच... येत् स गुर्व्वादिर्न भवेत् न भवति वाक्यैः शुक्राचार्य्य इव त... त्यजेदेव तस्य प्रणत्यनुवृत्त्याद्यभावेऽपि न प्रत्यवायीस्यादिति भावः एवं विभीषणो रावणमिव तं स्वजनं प्रह्लादो हिरण्यकशिपुमिव तं पितरं श्रीभरतः कैकेयीमिव तां ... खट्वाङ्ग इन्द्रादिमिव तद्दैवं याज्ञिकब्राह्मणी याज्ञिकान्... तं पतिं त्यजेदेवेत्यर्थः यद्वा स्यादिति विधिलिङ् ... मोचयितुं न शक्नुयात् स तस्य गुर्व्वादिर्न स्यात् ... नुवृत्त्यादिकं न गृह्णीयाद्यदि गृह्णीयात्तर्हि प्रत्यवायी स्यात् ... तेन च यदि मोचयितुं न शक्नुयात् तर्हि गुरुर्... मन्यं न शिष्यं कुर्य्यात् स्वजनो भवितुं बन्धुतां न ... पिता भवितुं पुत्रोत्पत्तौ न यतेत जननी भवितुमन्यं ... न दध्यात् दैवं भवितुं पूजां न गृह्णीयात् । पतिर्... पाणिं न गृह्णीयादिति द्योतितम् ॥ १८ ॥

यस्य भक्तिः कर्त्तव्या स क भगवांस्तथा भक्तिप्राप्त्यर्थं ... वत्सेवाचापेक्षणीयेति क वा स भागवत इति युष्माकं ... प्रयासो नास्ति यतो गृह एव भगवानहं वः पिता तथैव ... एव भागवतोऽयं वो भ्राता वर्त्तत इत्याह । इदमिति ... शरीरमिति इदं मनुष्याकारं शरीरं हि निश्चितं दुर्वि... दुर्वितर्क्यं यत्तत्त्वं चिदानन्दरूपं तदेव नत्वहं प्राकृतो ... इत्यर्थः चिद्वस्तुनस्तत्त्वस्य यन्मूर्त्तत्वम् एतदेव दुर्विभाव्यं ... अन्येषां पृथिव्यादीनां तत्त्वानां दुर्विभाव्यत्वाभावादिति ... हि निश्चितं यत्र मे धर्मः मत्प्रापको भक्तियोगस्तत्रैव मे हृदयं ... "साधवो हृदयं मह्यम्" इति मदुक्तेः मे अधर्मः मद्धर्मभिन्नः ... आराद्दूरत एव पृष्ठे कृतः ततः पराङ्मुखोऽहं तत्र मे न मनः ... अतो हेतोर्मामृषभं सर्वश्रेष्ठम ॥ १९ ॥

हृदयेन उरसा जाताः अत एव पुत्रा औरसा उत्पन्नेभ्यः ... सनाभं सोदरं भरतं भजध्वं ननु गृहेषु जायात्मज... मत्सु न प्रीतियुक्ता इत्यनेन कलत्रपुत्रभ्रात्रादिष्वासक्ति... च्चापि पुनस्तां किमित्युपादिशसीत्यत आह । महीयांसं ... ष्वपि श्रेष्ठं महत्सेवां द्वारमाहुर्विमुक्तेरित्यादिना भक्तिं ... महत्सेवाया मयैवोक्तत्वात् अक्लिष्टबुद्ध्येति भ्रातृत्वेन ... रस्माभिः कथमयं भजनीय इति व्यवहार दृष्टिं कार्येति ... ननु तव परमेश्वरत्वात् पितृत्वाच्च त्वां वयं भजामः ... हेतुत्वेन नारदादीन् महतः सेवेमहि महाराजपुत्रत्वात् ... पालयाम इति चेत्तत्राह । तदेव मे शुश्रूषणं प्रजानां च ... भरतानुवृत्त्यैव सर्वं कृतं स्यादिति मन्मतमिति भावः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अथ यः यं जीवं भगवत्प्राप्तिमार्गोपदेशादिना संसारा... यितुं न शक्नुयात् स तं जीवं शिष्यादिकं न कुर्यादित्याह ... समुपेतमृत्युं समुपेतः संप्राप्तः मृत्युः संसारो यं यदि ...

भूतेषु वीरुद्भ्य उदुत्तमा ये सरीसृपास्तेषु सबोधनिष्ठाः।
ततो मनुष्याः प्रमथास्ततोऽपि गन्धर्वसिद्धा विबुधानुगा ये ॥ २१ ॥
देवासुरेभ्यो मघवत्प्रधाना दक्षादयो ब्रह्मसुतास्तु तेषाम्।
भवः परः सोऽथ विरिञ्चवीर्यः स मत्परोऽहं द्विजदेवदेवः ॥ २२ ॥
न ब्राह्मणैस्तुलये भूतमन्यत्पश्यामि विप्राः! किमतः परं तु।
यस्मिन्नृभिः प्रहुतं श्रद्धयाहमश्नामि कामं न तथाग्निहोत्रे ॥ २३ ॥
धृता तनूरुशती मे पुराणी येनेह सत्त्वं परमं पवित्रम्।
शमो दमः सत्यमनुग्रहश्च तपस्तितिक्षानुभवश्च यत्र ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

...त्र मोचयेत् स गुरुर्न स्यात् शिष्यं न कुर्यात् एवमग्रेऽपि ...ोध्यम् ॥ १८॥

अथ भरतानुवृत्तिर्ब्राह्मणभक्तिः सर्वभूतेषु वासुदेवदृष्टिश्च ...वद्भिः कर्त्तव्या दुर्लङ्घ्यशासनस्येश्वरस्य ममाज्ञयेति पुत्रशि-...ार्थं स्वस्येश्वरस्येश्वरत्वमाह। न तु स्वमाहात्म्यसूचनार्थमिद-...ेति इदं मम शरीरं तावद्दुर्विभाव्यं दुर्ज्ञेयं मम स्वरूपस्य ...ु का कथा मे हृदयमन्तःकरणञ्च तत्त्वं शुद्धं यथार्थव्यव-...ारनिष्ठमित्यर्थः यत्र धर्मो वसतीति शेषः यद्येन मे मम हृदयेन अधर्मः ...ूरात्पृष्ठे कृतः अतो मामृषभं श्रेष्ठं प्राहुः ॥ १९ ॥

हृदयेनोक्तलक्षणेन तस्मादुक्तलक्षणाच्छरीराज्जाताः ॥ २० ॥ २१ ॥

———

भाषाटीका।

पण्डित होकर स्वयं उस बात को जानने वाला ऐसा कौन होगा जो कि उसको अविद्या में वर्त्तमान देख करके भी दयालु होकर उस कुबुद्धिपुरुष उत्पथगामी को अन्धे-की तरह उसी मार्ग में चलावेगा ॥ १७ ॥

इस संसार में जन्म मरण रूप मृत्यु को जो नहीं छुटासके सो न किसी का गुरू होवै न स्वजन होवै न पिता होवै न माता होवै न देव होवै न पति होवै उसको कोई जोग्यता नहीं है ॥ १८ ॥

यह हमारा मनुष्याकार शरीर तर्कना करने के योग्य नहीं है जिससे शुद्ध सत्त्वमय हमारा हृदय है जिस हृदय में धर्म है मैंने अधर्म को दूरही से पीठ के तरफ करदिया है इसी से श्रेष्ठपुरुष मेरे को ऋषभ कहते हैं ॥ १९ ॥

हे पुत्रो! तिस हेतु से आप लोग मेरे हृदय से सब भये हौ तो सब मिलकर तुमारे सहोदर तुम से बडे इन भरत को शुद्ध बुद्धि होकर भजो तिसी से तुमारा प्रजापलनरूप धर्म भी होजायगा ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

इदानीं ब्राह्मणाश्च सेव्या इत्याशयेन तेषां सर्वेभ्यः श्रेष्ठत्व-माह पञ्चभिः। भूतेषु चेतनाचेतनेषु विरोहन्तीति वीरुधः स्थावरा उदुच्चैरतिशयेनोत्तमाः तेभ्योऽपि ये सरीसृपाः सर्पन्तीति जङ्ग-मास्ते उदुत्तमा इति सर्वत्रानुषङ्गः तेष्वपि सबोधा निष्ठा स्थितिर्येषां पश्वादीनां ते कीटकादिभ्यः ततस्तेष्वपि मनुष्याः ततोऽपि प्रमथा भूतप्रेतादयः ततोऽपि गन्धर्वाः ततः सिद्धाः ततोऽन्ये विबुधानुगाः किन्नरादयः ॥ २१ ॥

तेभ्योऽसुराः देवा असुरेभ्यः संधिरार्षः देवाश्च मघवत्प्र-धानाः देवेभ्य इन्द्रः श्रेष्ठ इत्यर्थः ततोऽपि ब्रह्मसुता दक्षादयः तेषां मध्ये भवः परः श्रेष्ठः स भवो विरिञ्चवीर्यो विरिञ्चो वीर्यं शक्तिः कारणं यस्य स विरिञ्चवीर्यः अतस्तज्जनकत्वाद्विरि-ञ्चस्ततः पर इत्यर्थः स विरिञ्चो मत्परः अहं परो यस्य द्विज-देवा ब्राह्मणा एव देवाः पूज्या यस्य सोऽहम् ॥ २२ ॥

ब्राह्मणैरन्यद्भूतं न तुलये समं न पश्यामि अतो ब्राह्मणा-त्परं तु भूतं किं पश्यामि न किञ्चित् विप्रा इति तत्रत्यानां ब्राह्मणानां सम्बोधनम् समस्यैवाभावादधिकं कुतस्त्यमित्यर्थः तत्र हेतूनाह सार्द्धाभ्याम्। यस्मिन् ब्राह्मणे श्रद्धया प्रकर्षेण हुतमन्नादि कामं यथेच्छमहमश्नामि ॥ २३ ॥

मे तनूर्मूर्तिर्वेदाख्या येन ब्राह्मणेनेह लोके धृता यत्र च ब्राह्मणे सत्त्वादयोऽष्टौ गुणाः सन्ति ततः परं किं पश्यामीत्य-न्वयः ॥ २४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इदानीं भागवताश्च सेव्या इति वक्तुं तेषां सर्वेभ्यः श्रेष्ठत्वमाह पञ्चभिः। भूतेषु चेतनाचेतनेषु विरोहन्तीति वीरुधः वीरुद्भ्यः ये उत्तमाः सरीसृपा जङ्गमास्तेषु सबोधनिष्ठाः बोधेन सहिता स्थितिर्येषां पश्वादीनां ते कीटादिभ्यः उत्तमाः तेभ्यो मनुष्यास्ते-भ्योऽपि प्रथमास्ततो गन्धर्वाः किन्नरादयः ॥ २१ ॥

तेभ्यः असुरास्तेभ्योऽपि मघवत्प्रधाना इन्द्रप्रभृतयो देवाः देवा-सुरेभ्य इत्यत्र सन्धिरार्षः तेभ्योऽपि दक्षादयो ब्रह्मसुताः तेभ्योऽपि भवो रुद्रः परः श्रेष्ठः स भवः विरिञ्चवर्यः विरिञ्चः ब्रह्मा वर्यः श्रेष्ठो यस्मात्तथा भवस्य जनको विरिञ्चो भवाच्छ्रेष्ठ इत्यर्थः विरिञ्चवीर्य इति पाठे विरिञ्चस्य वीर्यं शक्तिः कारणं यद्विरिञ्चवीर्यः तज्जन-कत्वाद्विरिञ्चस्ततः पर इत्येवार्थः स विरिञ्चः मत्परः अहं परो यस्य तथाभूतः अहं द्विजदेवा ब्राह्मणश्रेष्ठा एव देवा यस्य तथा-भूतः उत्कर्षकाष्ठाभूता द्विजदेवा इति भावः ॥ २२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह। नेति। हे विप्रा! इति तत्रत्यब्राह्मणानां सम्बोधनं ब्राह्मणैरन्यद्भूतं न तुलये सममेव न पश्यामि अतो ब्राह्मणेभ्यः परमुत्कृष्टं भूतं किं पश्यामि न किञ्चित्समस्यैवाभावादधिकं कुत इत्यर्थः तत्र हेतूनाह। सार्द्धेन यस्मिन् ब्राह्मणाग्नौ श्रद्धया प्रकर्षेण हुतमन्नादिकं कामं यथेच्छमहमश्नामि यथा ब्राह्मणान्तर्यामित्वेनाश्नामि तथाग्निहोत्रे नाश्नामि अग्निहोत्रशब्दः कर्मनामधेयवैदिककर्मोपलक्षकः तत्राग्निहोत्रे नाश्नामीत्यर्थः ॥ २३ ॥

किं च तनूशब्दः शमादिगुणपरः वेदपरो वा पुराणी चिरन्तना मे तनूर्मूर्तिर्वेदाख्या येन ब्राह्मणेनेह लोके धृता शमादिगुणपरत्वे तु शमोदम इत्यादिस्तत्प्रपञ्चः यत्र ब्राह्मणे निरतिशयपवित्रं सत्त्वं प्रतिष्ठितमिति शेषः तथा यत्र ब्राह्मणे शमादयः प्रतिष्ठितास्तत्र शमोऽन्तःकरणनिग्रहः बाह्येन्द्रियनिग्रहो दमः अनृतराहित्यं भूतहितं च सत्यम् अनुग्रहः भूतानुग्रहः तप अनशनादिस्तितिक्षा द्वन्द्वसहिष्णुता अनुभवः स्वात्मपरमात्मयाथात्म्यानुभवः ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

तारतम्यज्ञानमेव मुक्तिसाधनं नान्यदिति भावेन तदाह। भूतेष्विति। भूतेषूत्पन्नेषु प्राणिषु मध्ये वीरुद्भ्यः स्तम्बेभ्यो ये सरीसृपा जङ्गमास्त उत्तुत्तमा उत्कृष्टतमा इति ज्ञेयाः तेषु सरीसृपेषु ये सुबोधनिष्ठाः ज्ञानयुक्तास्ते पश्वादय उत्तमा इति सर्वत्र योज्यम् ॥ २१ ॥

ये दक्षादयो ब्रह्मसुताः सनकादयश्च तेषां सकाशादिन्द्रः प्रधान इत्यर्थः अथ इन्द्रानन्तरं विरिञ्चवीर्यो विरिञ्चपुत्रो यो भवः स रुद्र उत्तमः स विरिञ्चस्तस्माद्रुद्रात्परः तस्मादहमेव परो नान्य इत्यत उक्तम् मत्पर इति अहमेव परो यस्य स तथा अनेन मुख्यप्राणस्य विरिञ्चसमत्वं सूचयति राजभिर्ब्राह्मणभक्तिर्विशेषतोऽनुष्ठेयेति वेदयितुमाह । अहं द्विजेति । द्विजदेवानां देवः ॥ २२ ॥

चत्रादीनामैश्वर्यमदेन ब्राह्मणतिरस्कारसम्भवेन कुलनाशः स्यात्सचानुपपन्न इति तेषु श्रद्धातिशयजननार्थमाह। न ब्राह्मणैरिति । ज्ञानपात्रत्वादतः विप्रात्परमुत्तमं मम सन्निधानपात्रं किन्तु न किमपीत्यर्थः कुत एतदत्राह। यस्मिन्निति। मम तृप्तिहेतुत्वादित्यर्थः नन्वग्न्यादेः सम्भवात्किमिविशिष्योच्यत इति तत्राह। न तथेति ॥ २३ ॥

अग्न्यादेर्गुणवैशिष्ट्यादित्याह। धृतास्तनूरिति। पवित्रं सत्त्वं शमादिगुणा अनुभावो ज्ञानं च यत्र येषु ब्राह्मणेषु सन्ति ते ब्राह्मणा मे पुराणीरुशतीः शुद्धास्तनूर्मत्स्यादिलक्षणा वेदाख्या वा धृता धारयन्तीति येन तस्मात् ब्राह्मणेभ्यः परं न किमपीति भावः यद्वा येन ब्राह्मणकुलेनापौरुषेयत्वेन निर्मलाः पुराणीः अनादिनिधनाः मे तनूस्तनवो वेदलक्षणा धृता यत्र ब्रह्मकुले सत्त्वादिगुणाः सन्ति तस्मात्परमुत्तमं न किमपीति ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

भूतेष्वित्यादिकमुत्तरोत्तरशक्ति श्रैष्ठ्यात् द्विजदेवतानान्तु स्वादरणीयत्वाच्छ्रैष्ठ्यं विवक्षितं तच्च स्वोपकारित्वमे[...]वाह। यस्मिन्निति। तद्द्वारैव मम तृप्तिः स्यादित्यर्थः ॥ [...]

सा च कुतस्तत्राह। धृतेति। तद्द्वारेणैव कारणम[...] सत्त्वमन्तःकरणं पवित्रं विशुद्धमनुग्रहोभूतदया तप[...] अनुभवः श्रीभगवतः ॥ २४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

इदानीं ब्राह्मणाश्च सेव्या इत्याशयेन तेषां सर्वेभ्य[...] माह चतुर्भिः। भूतेषु मध्ये विरोहन्तीति विरुधः स्थाव[...] उच्चैरतिशयेनोत्तमाः तेभ्योऽपि सर्पन्तीति सरीसृपा जङ्ग[...] सबोधनिष्ठा स्थितिर्येषां ते पश्वादयः विबुधानुग[...] रादयः तेभ्योऽसुरा देवाः असुरेभ्यः सन्धिरार्पः देवाश्च[...] वत्प्रधानाः देदेभ्य इन्द्रः श्रेष्ठ इत्यर्थः । तत इन्द्रादि[...] सुता दक्षादयः तेषां मध्ये भवः परः श्रेष्ठः स च विरि[...] ब्रह्मपुत्रः पुंस्त्वमार्षं तज्जनकत्वात्ततो ब्रह्मा श्रेष्ठ इत्यर्थः ब्राह्मणभक्तेः प्रक्रान्तत्वात् ब्राह्मण्येनैवांशेन भवादि[...] श्रैष्ठ्यं वैष्णवतया ऐश्वर्येण च भवस्यैव तस्मात् श्रे[...] ज्ञेयम्। स ब्रह्मा मत्परः अहं परो यस्येति ब्रह्मतोऽपि[...] इत्यर्थः द्विजेषु दीव्यन्तीति द्विजदेवा विप्रा एव देव[...] सः मत्तोऽपि पूज्या ब्राह्मणा इत्यर्थः ॥ २१ ॥ २२ ॥

ब्राह्मणैरन्यद्भूतं न तुलये हे विप्राः ! अतो ब्राह्मणेभ्यः [...] पश्यामि नैव पश्यामीत्यर्थः । तत्र हेतुमाह। यस्मि[...] सार्द्धेन ॥ २३ ॥

मम तनूर्वेदाख्या येन इह लोके धृता यत्र च ब्राह्मणे[...] दयोऽष्टौ गुणाः सन्ति ततः परं किं पश्यामीत्यन्वयः ॥ [...]

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

द्विजदेवा देवा यस्य सः तथा ॥ २२ ॥

ब्राह्मणैरन्यद्भूतं न तुलये समं न गणयामि ब्रा[...] णात् परं श्रेष्ठं तु अन्यद्भूतं किं पश्यामि न किञ्चिद[...] इति तत्रस्थानां मुनीनां सम्बोधनं यस्मिन् ब्राह्मणे ॥ [...]

येन ब्राह्मणेन मे तनूर्मूर्तिः वेदरूपा इह लोके [...] ब्राह्मणे सत्त्वादयो गुणाः सन्ति ततः परं किं पश्[...] पङ्कः ॥ २४ ॥

———

भाषाटीका

सब प्राणिमात्र मे वृक्ष उत्तम हैं तिनसे चलने[...] उत्तम हैं उनसे भी ज्ञानवाले पशु आदि उ[...] तिनसे मनुष्य उत्तम हैं तिनसे भूत प्रेतादि उत्तम है[...] गन्धर्व उत्तम हैं तिनसे सिद्ध उत्तम हैं तिनसे [...] उत्तम हैं ॥ २१ ॥

तिन से असुर उत्तम हैं तिनसे देवता उत्तम है[...] से इन्द्र उत्तम है तिससे ब्रह्माजी के पुत्र दक्षादि[...] हैं उनमें भी महादेवजी उत्तम हैं उन से भी ब्रह्मा[...] हैं ब्रह्मा से मैं बडा हूं मेरे भी पूजनीय ब्राह्मण हैं ॥ [...]

मत्तोऽप्यनन्तात्परतः परस्मात्स्वर्गापवर्गाधिपतेर्न किञ्चित् ।
येषां किमु स्यादितरेण तेषामकिञ्चनानां मयि भक्तिभाजाम् ॥ २५ ॥
सर्वाणि मद्धिष्ण्यतया भवद्भिश्चराणि भूतानि सुता ! ध्रुवाणि ।
सम्भावितव्यानि पदेपदे वो विविक्तदृग्भिस्तदुहार्हणं मे ॥ २६ ॥
मनोवचोदृक्करणेहितस्य साक्षात्कृतं मे परिबर्हणं हि ।
विना पुमान् येन महाविमोहात्कृतान्तपाशान्न विमोक्तुमीशेत् ॥ २७ ॥

॥ श्रीशुक उवाच ॥

एवमनुशास्यात्मजान्स्वयमनुशिष्टानपि लोकानुशासनार्थं महानुभावः परमसुहृद्भगवानृषभापदेश उपशमशीलानामुपरतकर्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्ममुपशिक्षमाणः स्वतनयशतज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं धरणिपालनायाभिषिच्य स्वयं भवन एवोर्वरितशरीरमात्रपरिग्रह उन्मत्त इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्तात्प्रवव्राज ॥ २८ ॥

जडान्धमूकबधिरपिशाचोन्मादकवदवधूतवेषोऽभिभाष्यमाणोऽपि जनानां गृहीतमौनव्रतस्तूष्णीं बभूव ॥ २९ ॥

तत्र तत्र पुरग्रामाकरखेटवाटखर्वटशिबिरव्रजघोषसार्थगिरिवनाश्रमादिष्वनुपथमवनिचरापसदैः परिभूयमानो मक्षिकाभिरिव वनगजस्तर्जनताडनावमेहनष्ठीवनग्रावशकृद्रजःप्रक्षेपपूतिवातदुरुक्तैस्तदविगणयन्नेवासत्संस्थान एतस्मिन्देहोपलक्षणे सदपदेश उभयानुभवस्वरूपेण स्वमहिमावस्थानेनासमारोपिताहंममाभिमानत्वादविखण्डितमनाः पृथिवीमेकचरः परिबभ्राम ॥ ३० ॥

---

भाषाटीका।

हे विप्रो ! मै ब्राह्मणके साथ दूसरे प्राणिको तुलना नहीं करता हूं इनसे ज्यादे कोई को भी नही देखता हूं जिन ब्राह्मणों के मुखमे श्रद्धा पूर्वक मनुष्यों का दिया जो अन्नादिक तिसको मै यथेष्ठ भोजन करता हूं तैसा अग्निहोत्र मे नहीं ग्रहण करता हूं ॥ २३ ॥

जिस ब्राह्मणने हमारी प्राचीन वेदरूपी मूर्त्तिको धारण की है तथा परम पवित्र सत्त्व धारण किया है शम दम सत्यदया तप तितिक्षा ज्ञान जिसमे स्थित हैं ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

निःस्पृहत्वमाह । मत्तोऽपि येषां न किञ्चित्प्रार्थनीयमस्ति तेषामितरेण राज्यादिना किमु स्यान्न किमपि ॥ २५ ॥

तदेवं ब्राह्मणसम्मानं विधायेदानीं सर्वभूतसम्मानं विधत्ते हे सुताः ! सर्वाणि जङ्गमानि स्थावराणि च भूतानि मदधिष्ठानतया वो युष्माभिः सम्माननीयानि पदे पदे क्षणेक्षणे विविक्ता पूता मत्सरादिरहिता दृष्टिर्येषां तैः तदेव ममार्हणम् ॥ २६ ॥

सर्वकर्मणामीश्वरार्पणं विधत्ते । मनोवचोदृशामन्येषां च करणानामीहितस्य व्यापारस्य मे परिबर्हणमाराधनमेव साक्षात्कृतं फलम् । येन परिबर्हणेन विना कालपाशाद्विमोक्तुं न ईशेत समर्थो भवेत् ॥ २७ ॥

स्वत एव सुशिक्षितानपि लोकानुशासनार्थमनुशास्य मुनीनां पारमहंस्यधर्ममुपदिदिक्षयिष्यन्भरतमभिषिच्य ऋषभ इत्यपदेशो नाम यस्य स भगवान् ब्रह्मावर्तात्स्वदेशात्प्रवव्राजेत्यन्वयः उर्वरितोऽवशिष्टः शरीरमात्रपरिग्रहो यस्य ॥ २८ ॥

अभिभाष्यमाणोऽपि जनानां मध्ये जडादिवद्वर्तमानस्तूष्णीं बभूव अवधूतस्येव वेषो यस्य ॥ २९ ॥

तत्र तत्र पुरादिष्वनुपथं मार्गे मार्गेऽवनिचरापसदैर्दुर्जनैस्तर्जनादिभिः परिभूयमानोऽपि तदविगणयन्नेवैकचर एकाकी पृथिवीं परिबभ्रामेत्यन्वयः तत्र पुरं पत्तनं ग्रामा हट्टहीनाः आकरः खनिः खेटः कृषीवलग्रामः वाटः पुष्पादिवाटिका खर्वटः पर्वतप्रान्तग्रामः शिबिरं सेनाया वासस्थानम् व्रजो गवां स्थानं घोषो गोपानां स्थानं सार्थो यात्रिकजनसङ्घातः आश्रमा ऋषीणां तर्जनं भयजननं ताडनं प्रहारः अवमेहनमुपरिमूत्रणं ष्ठीवनं फूत्कृत्य श्लेष्मप्रक्षेपः ग्राव्णां शकृतो रजसश्च प्रक्षेपः पूतिवातोऽधोवायुः दुरुक्तं शापः एतैः अगणने दृष्टान्तः मक्षिकाभिरिवेति तत्र हेतुः असति मिथ्याभूते संस्थाने सन्निवेशे देह इत्युपलक्षणमाकारो यस्य सदित्यपदेशमात्रं यस्य तस्मिन्निरभिमानत्वात् केन

श्रीधरस्वामिकृतभावार्थदीपिका ।

हेतुना उभयोः सदसतोर्योऽनुभवस्तत्स्वरूपेण यत्स्वमहिम्न्यव-स्थानं तेन अत एवाखण्डितं मनो यस्य स परिबभ्राम ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथाच निःस्पृहा च यत्रास्तीत्याह । मत्त इति । परस्माद्ब्रह्मादेरपि परतः परस्मात्स्वर्गापवर्गयोरधिपतेर्मत्तोऽपि प्रार्थनीयं येषां ब्राह्मणानां न किञ्चिदस्ति एषामकिञ्चनानां नास्ति किञ्चन प्रार्थनीयं येषां तेऽकिञ्चनाः तेषामपि भक्तिं कुर्वताम् इतरैरैहिकपुरुषार्थैन किमु स्यान्न किमपीत्यर्थः ॥ २५ ॥

एवं भागवतभक्तिं विधायेदानीं सर्वभूतानां ब्रह्मात्मकत्वभावं विधत्ते। सर्वाणीति। हे सुताः ! चराणि ध्रुवाणि स्थावराणि च सर्वाणि भूतानि मद्धिष्ण्यतया मच्छरीरतया प्रकृतिपुरुषेश्वराणां परस्परवैलक्षण्यबुद्धिमद्भिः भवद्भिः पदे पदे क्षणे क्षणे संमाननीयानि तद्भूतसम्भावनमेव ममार्हणं मदाराधनम् ॥ २६ ॥

मदाराधनमेव निरतिशयफलसाधनमित्याह । मन इति । मनो वचोदृशामन्येषां च करणानाम् ईहितस्य व्यापारस्य साक्षात्कृतं दृष्टं फलं मत्परिबर्हणं मदाराधनमेव येन मत्परिबर्हणेन विना पुमान् कालपाशरूपान् महाविमोहान् विमोक्तुं नेशेत न शक्नुयात् मदाराधनमेव मुक्तिसाधनं मदाराधनं च सर्वभूतानां ब्रह्मात्मकतया सम्भावनमेवेति भावः ॥ २७ ॥

एवमिति । स्वयमनुशिष्टान् हेयोपादेयविभागज्ञानव्यात्मजान् लोकानुशासनार्थं लोकस्य विविच्य ज्ञापनार्थमेवमनुशास्य स महाप्रभावः सर्वभूतसुहृद्भगवान् ऋषभ इत्यपदेशो व्यवहारो यस्य सः परमहंसाः ब्रह्मविदस्तेषां धर्मं भक्त्यादिरूपमुपशिक्षयिष्यन् भरतं भूमण्डलपालनायाभिषिच्य ब्रह्मावर्तात् स्वदेशात्प्रवव्राजेत्यन्वयः केषामुपशिक्षयिष्यन्मुनीनां शुभाश्रयमननशीलानां कथम्भूतानामुपरतकर्मणां निवृत्तप्रवृत्तिधर्माणामुपशमशीलानां बाह्यान्तःकरणनियमनशीलानां कथंभूतं भरतं स्वस्य तनयानां पुत्राणां शतज्येष्ठं भगवज्जना भागवतास्त एव परायणा भजनीया यस्य तमत एव परमभागवतं भागवतश्रेष्ठं भगवद्भक्तेः भागवतपर्यन्तत्व एव पूर्तेः स्वयं कथम्भूतःप्रवव्राज गृह एव उर्वरितः अवशिष्टः शरीरमात्रपरिग्रहो यस्य सः परित्यक्तवस्त्रभूषणादिदेहानुबन्ध इत्यर्थः उन्मत्त इवोपलक्षितः गगनमाकाश एव परिधानं यस्य सः दिगम्बर इत्यर्थः प्रकीर्णाः विक्षिप्ताः केशा येन सः आत्मन्यारोपितः आहवनीयो वैदिकोऽग्निर्येन सः उन्मत्त इवेत्यादिना न शास्त्रातिलङ्घित्वमुच्यते किन्तु "जनेनायमतो योगी सिद्धिं च विन्दति"इति न्यायेन योग धर्मकाचमानादिफलकव्रतविशेषा उच्यन्ते ॥ २८ ॥

अभिभाष्यमाणोऽपि जनानां मध्ये जडाविवद्वर्तमानः अवधूतवेषः सर्वैः परिभाष्यो येषां यस्य सः गृहीतं मौनं व्रतं येन सः तूष्णीं बभूव जडान्धारभ्य नाभाषतेत्यर्थः ॥ २९ ॥

तत्र तत्र पुरादिष्वनुपदं मार्गे मार्गे अवनिचरापसदैः दुर्जनैस्तर्जनादिभिः परिभूयमानः मक्षिकाभिर्वनगज इव तदविगणयन्नेव एकचरः एकाकी सम्पृथिवीं परिबभ्रामेत्यन्वयः तत्र पुरं पत्तनं ग्रामो हट्टरहितः आकरः खनिः खेटः कृषीवलग्रामः खर्वटः निषादादिग्रामः वाटी पुष्पादिवाटिका शिबिरं सेनाया आवासस्थानं व्रजो गोनिवासस्थानं घोषो गोपानामावा… सार्थो यात्रिकजनसङ्घातः आश्रमः ऋषीणामाश्रमस्थानं… भयजनकव्यापारः ताडनं प्रहारः मेहनमुपरिमूत्रणं… स्वात्कृत्य श्लेष्मप्रक्षेपणं ग्राव्णां पाषाणानां शकृतो मल… सश्च क्षेपः पूतिवातोऽपानवायुः दुरुक्तं शापः एतैः… दृष्टान्तः । मक्षिकाभिरिव वनगज इति । तत्रैव हेतुः… स्थाने सततपरिणामिनोऽचिद्द्रव्यस्य परिणामरूपे… देहोपलक्षणे देहाकारे सदपदेशे देहात्मभ्रान्तिमतामात्मा… देशविषये शरीर इत्यर्थं उभयानुभवः स्वात्मपरमात्मयाथा… नुभवः स्वरूपेण स्वमहिम्नः अवस्थानेन स्वस्य स्वात्मनो… स्वभावः तस्मिन्नवस्थानेन उभयानुभवरूप एव… स्वस्वभावत्वेनावस्थितिरित्येवमुक्तं स्वमहिमावस्थानेन… देहे तदनुबन्धिनि चानारोपित अहंममाभिमानो येन… भावस्तत्त्वं तस्माद्देहविलक्षणस्वात्मयाथात्म्यानुभवरूपेण… स्थित्या निरस्तदेहात्माभिमानत्वादित्यर्थः अत एवासं… सर्वात्मब्रह्मसाक्षात्कारैकरूपा मतिर्यस्य ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्राह्मणेष्वपि विशेषोऽस्तीत्याह । मत्त इति । येषां म… न किञ्चित्प्रयोजनमस्ति तेषामितरेण स्वर्गाद्याशीर्लक्षणेन पु… र्थेन किमु स्यान्न किमपीत्यन्वयः स्ववचोविश्वासार्थमनन्तादि… विशेषणं भक्तिमन्तरेणान्यन्न किमप्यपेक्षणीयमिति प्रका… किञ्चनानां भक्तिभाजामिति विशेषणद्वयम् ॥ २५ ॥

इदानीं चराचरभूतानि स्वनिवासहेतुत्वेन सम्भाव्यानीत… सर्वाणीति । हे सुताः ! भवद्भिः सर्वाणि भूतानि मद्धिष्ण्य… मम निवासस्थानत्वेन ध्रुवाणि निश्चितानि सम्भावितव्या… त्यन्वयः ननु मम धिष्ण्यतया मम विग्रहत्वेन तत्… सम्भावितव्यानीत्यर्थः किं न स्यादित्याशङ्क्य तस्य तत्… त्वादित्याह । पदे पदे इति । या पदे पदे अनुक्षण… कदृष्टिः जीवानां धिष्ण्यतया परमेश्वरस्य भेददृष्टिः भेद… तदुत तदेव मे अर्हणं भवति प्रीतिजनकं नान्यदित्यर्थः… यद्वा भेददर्शनमेव नार्हणमपि तु भेदप्रतिपादनमप्युतार्थं… तदुक्तम् ।

उपपादयेत्परात्मानं जीवेभ्यो यः पदे पदे ।
भेदेनैव न चैतस्मात्प्रियो विष्णोस्तु कश्चन इति…

"यो हरेश्चैव जीवानां भेदवक्ता हरेः प्रिय" इति च… भेददर्शनात्तत्प्रतिपादनस्य फलाधिक्यं भवतीति… मिति ॥ २६ ॥

भेददर्शनस्य मोक्षसाधनत्वान्नायमर्थ इति तत्राह । म… इति । करणैः कर्मभिः यन्मन आदिना जीवपरयोर्भेद… दिकं यस्य तस्य साक्षात्कृतं मुख्यतः पूर्णं तस्य तद… मे परिबर्हणं पूजनं भवति भवदर्हणेन किं फलमित्यत… मनोवच इति । मन आदिसाधनैर्यन्मदर्हणं तत्साद… साक्षात्कारफलं भवति येनार्हणेन विना पुमान्महाविमो… तपाशादज्ञानलक्षणसंसाराद्विमोक्तुमीशः समर्थो न… न्वयः ॥ २७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यावत्प्रयोजनमनुशासनं चेत्समाप्तमतः परं हरिणा किमर्थं यापि हरिकथया श्रुनयालम्बुद्धिर्न जायतेऽतः सा वक्तव्येत्य शारीरलक्षणो मुनिस्तथ्यरिनशेषमुक्तमाहत्य वक्ति। स वमनुशास्येति। ऋषभापदेश ऋषभनामा भवन एव सर्वं परित्यज्येति शेषः उर्वरितशरीरमात्रपरिग्रहः अवशिष्टशरीरमात्रपरिकरः गगनमेव परिधानं वस्त्रं यस्य स तथादिगम्बरस्यर्थः ॥ २८ ॥ २९ ॥

गृहात्संन्यस्तस्य उत्तरस्थितिप्रकारं कथयति। तत्र तत्रेति। पदं वस्त्रोत्पादनस्थलं कुचिन्दाश्रयः व्रजो गोकुलं घोष आभीरपल्लीर्थः परिपञ्जनः अवनिचरापसदैः भूमिचरेषु दुर्वृत्तैर्नीचैरर्थः निष्ठीवनं थूत्कारः पूतिवातोऽधोवायुः तत्तर्जनादिकविगणयंस्तृणप्रतिप्रत्तिमपि अकुर्वन्नेव स्थितः कुत इति आह। असदिति। अनन्तामगङ्गलानां कुशानां संस्थानं यस्मिन्तस्मिन्नेतस्मिन् देहोपलक्षणे असन्नस्ततन्त्र इत्यपदेशः शब्दो स्य स तथा तस्मिन् जडशब्दवाच्ये देहे अभयानुभवस्वरूपेण सर्वभयशून्यज्ञानस्वरूपेण स्वमहिमावस्थानं यस्मिंस्तेनामवरोपिताहंममाभिमानत्वात्त्यक्ताहंममाभिमानत्वादखण्डितः अपच्छिन्न इति यस्मादिति शेषः यद्वा असतो ब्रह्मणः संस्थानं यस्मिंस्तथा तस्मिन् तर्हि देहदेहिनोर्भेदापत्त्या "नेह नानास्ति किञ्चन" इति श्रुतिव्याकोपः स्यादत्राह। असदिति। सद्ब्रह्मेत्यपदेशो यस्य देहस्य स तथा देहोऽपि ब्रह्म एवेत्यर्थः विज्ञानमानन्दं ब्रह्म" इति श्रुतिः अस्मिन् अत्रैव तदभेदः सूच्यत याह। समवरोपितेति। समवरोपितः सम्यक् ज्ञातः अहम्ममाभिमानस्तस्य भावःसमवरोपिताहम्ममाभिमानत्वं तस्मात् "तद्ब्रह्मैवेदाहं आस्मि" इति श्रुतिश्च तर्हि स्वपरिच्छेद्यत्वेन खण्डितत्वमत्राह। खण्डित इति। अखण्डितस्य खण्डितत्वेन ज्ञानाच्च तत्र कांचमर इत्यर्थः एकचर इत्यनेनादायन्ते चाप्येक एव चरत्यर्थोऽपि गृह्यते इत्यभिप्रायेणोक्तमिति ज्ञायते ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

द्विजदेवत्वे कारणविशेषमाह। मत्त इति। मत्तोऽपि सकाशात् ॥ २५ ॥

वतुह तदपीत्यर्थः ॥ २६ ॥

साक्षात् कृतं पुरतः करणं समपर्णमित्यर्थः ॥ २७ ॥

एवमिति। भक्तिशिक्षात्र भरतद्वारा ज्ञेया ॥ २८ ॥ २९ ॥

असत् संस्थानमित्यादिकं लोकशिक्षणाय व्यञ्जनमात्रमिदं शरीरं मम दुर्विभाव्यं तत्त्वमित्याद्युक्तेः ॥ ३० ॥ ३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ततो मद्भक्ताः श्रेष्ठास्ते सर्वत एवाधिक्येनाराधनीया इत्याह। मत्तः सकाशाद्येषां न किञ्चित् प्रयोजनं प्रार्थनीयमस्ति अनन्ता इत्यत एवानन्तैश्वर्यमाधुर्यगुणोऽहमेव प्रभुर्येषां प्रयोजनत्वेन र्चे इति भावः। इतरेण ब्रह्मादिना अकिञ्चनानामहन्तास्पदममतास्पदयोर्मह्यमेव दत्तत्वान्न विद्यते किञ्चनापि येषामित्यर्थः। पि भक्तिः प्रेमा तामेव भजतां प्रतिक्षणं प्राप्नुवतामित्यर्थः। त एव तथा बुभूर्षुभिस्ते नित्यमाराधनीया इति भावः। तृतीयोऽपि ब्राह्मणेभ्योऽपि सकाशाद्भक्ताः श्रेष्ठा उक्ताः श्रीकपिलदेवेन यथा "तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः। मय्यर्पितात्मनः पुंसो मयि संन्यस्त कर्मणः। न पश्यामि परं भूतमकर्तुः समदर्शनात्" इति ॥ २५ ॥

स्पर्द्धावशादिदोषशान्त्यर्थं सर्वभूतसम्माननं विधत्ते। सर्वाणि भूतानि मद्धिष्ण्यतया मदधिष्ठानतया हे सुताः! ध्रुवाणि स्थावराणि च भवद्भिः सम्भावितव्यानि ध्येयानि विविक्ता मत्सरादिदोषरहिता दृग्दृष्टिर्येषां तैः तदेव हित्वा युष्माभिर्ममार्हणामिति पृथग्वाक्यगतो य इत्यस्य न पौनरुक्त्यम् ॥ २६ ॥

समासेन भक्तेर्लक्षणं तां च विना निस्ताराभावं च वदन्नुपसंहरति। मनो वचोदृशामन्येषाञ्च करणानां यथावदीहितस्य देहव्यापारस्य च मे साक्षात् कृतं साक्षन्मत्सम्बन्धित्वेन यत् करणं प्रवृत्तिस्तदेव मे परिवर्हणमाराधनमित्यर्थः। येन परिवर्हणेन विना ॥ २७ ॥

उपशिक्षमाणः उपशिक्षयिष्यन् उर्वरितोऽशिष्टः शरीरमात्रपरिग्रहो यस्य सः ॥ २८ ॥ २९ ॥

तत्र पुरं पत्तनं ग्रामा हट्टहीनाः आकरः खनिः खेटः कृषीवलग्रामः खर्वटः गिरितटग्रामः वाटः पुष्पादिवाटिका शिबिरं सेनाया वासस्थानं व्रजो गवां घोषो गोपानां सार्थो यात्रिकजनसङ्घातः आश्रमा ऋषीणामवनिचरापसदैः मनुष्याधमैः। तर्जनं भयजननं ताडनं प्रहारः मेहनमुपरिमूत्रणं ष्ठीवनं फूत्कृत्य श्लेष्मप्रक्षेपः ग्रावशकृद्रजसां शिलाविड्धूलीनां प्रक्षेपः पूतिवातोऽधोवायुः दुरुक्तं शापस्तैः परिभूयमानस्तत् परिभवनमगणयन् असति अनित्ये संस्थाने संनिवेशे देह इत्युपलक्षणमाकारो यस्य सदित्यपदेशमात्रं यस्य तस्मिन्निरभिमानत्वात् इति स्वामिचरणाः असत् संस्थानमित्यादिकं लोकशिक्षणाय व्यञ्जनामात्रमिदं शरीरं मम दुर्विभाव्यं तत्त्वमित्याद्युक्तेरिति सन्दर्भः किञ्च श्रीऋषभदेवदेहस्य वक्तृपरोक्षत्वादेतच्छब्दवाच्यत्वं न घटते तस्मादेवं व्याख्येयमेतस्मिन् जगति नश्वरत्वादसत्संस्थाने समष्टित्वेन देहमुपलक्षयतीति जगदपि प्राकृतः स्वदेहस्तस्मिन्निरभिमानत्वादिति तर्जनादिकृज्जनसमुदायवतो जगतः स्वदेहत्वेनाभिमाने हन्त हन्त एतादृशमहदपराधदोषदुष्टो जगदात्मको मद्देह इति खेदेन मनः खण्डितं स्यात् अतः स्वमहिम्नि चिन्मयानन्दे यदवस्थानं तेन हेतुना तत्र देहे निरभिमानत्वात् कीदृशेन उभयोश्चिच्छक्तिमायाशक्त्योः स्वीयस्वरूपास्वरूपत्वाभ्यां योऽनुभवस्तेन यत् स्वमहिमावस्थानं तेन ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

येषां मत्तोऽपि किञ्चित् स्वर्गादिरूपमपि प्रार्थनीयं नास्ति इतरेण दात्रा तद्दत्तेन वा राज्यादिना किमु स्यात् ॥ २५ ॥

मद्धिष्ण्यतया मदाश्रिततया मदुपादानतया ध्रुवाणि कारणान्यानि "सदेवसोम्येदमग्र आसीत् सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्यादिश्रुतेर्वोयुष्माभिः पदे पदे प्रतिक्षणम सम्भावितव्यानि सम्माननीयानि तदेव सर्वभूतसन्माननमेव मम अर्हणं पूजनम ॥ २६ ॥

भ्रात्रादिशिष्टजनभक्ति ब्राह्मणभक्ति सर्वभूतसन्मानं च साधनमुक्त्वाथ सर्वसाधनफलं मन आदिव्यापारफलं च मदाराधन-

अतिसुकुमारकरचरणोरःस्थलविपुलबाह्वंसगलवदनाद्यवयवविन्यासः प्रकृतिसुन्दरस्वभावहास-मुखो नवनलिनदलायमानशिशिरतारारुणायतनयनरुचिरः सदृशसुभगकपोलकर्णकण्ठनासो निगूढस्मि-तवदनमहोत्सवेन पुरवनितानां मनसि कुसुमशरासनमुपदधानः परागवलम्बमानकुटिलजटिलकपि-शभूरिभारोऽवधूतमलिननिजशरीरेण ग्रहगृहीत इवादृश्यत ॥ ३१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मित्युपदिशति। मन इति। मनोवचोदृक्सहितानां करणानां श्रोत्रादीनामीहितस्य व्यापारस्य मे परिबर्हणं ममाराधनं साक्षात्कृतं फलं येन परिबर्हणेन कालपाशात् जनो विमोक्तुमात्मानं विमोचयितुं नेशोऽन्न समर्थो भवेत् ॥ २७ ॥

अथ गार्हस्थ्य त्यक्त्वा जनसङ्ग्रहार्थं विरक्तोऽभूदित्याह। स एवमित्यादिना। स्वयमनुशिष्टानपि लोकानुशासनार्थमेवमनुशास्य मुनीनां मननशीलानां मुमुक्षूणां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यं देहगेहादिविस्मृतिपूर्वकभगवत्प्रावण्ययुक्तः परमहंसस्तस्यानुष्ठेयं पारमहंस्यमुपशिक्षयिष्यन् भरतमभिषिच्य ऋषभ इत्यपदेशो नाम यस्य स भगवान् ब्रह्मावर्त्तात्प्रवव्राज उर्वरितोऽवशिष्टः शरीरमात्रं परिग्रहो यस्य स ननु दण्डादि आश्रमचिन्हापरिग्रहे कोऽभिप्राय इति चेच्छृणु द्विविधा हि आश्रमिणः लोकप्राप्तिकामाः भगवज्ज्ञानभक्तिसम्पन्ना भगवत्प्राप्तिकामाश्च तत्राद्याः।

> अन्तस्त्रिलोक्यां त्वपरो गृहमेधोऽबृहद्व्रतः।
> लोकास्त्रयो वहिश्चासन्नप्रजानां य आश्रमाः।

इति द्वितीये स्कन्धे सूचिताः तेषां लोकप्राप्तिकामानां स्वलोकसिद्धये आश्रमचिन्हधारणमावश्यकमेव ज्ञानभक्तिसम्पन्नानां तुच्छीकृतब्रह्मलोकपर्यन्तफलानां भगवदनुरागिणां धृतोर्ध्वपुण्ड्रमुद्रादिवैष्णवचिन्हानां परमभागवतानां निरभिमानिनां दण्डाद्याश्रमचिन्हधरत्वमनावश्यकम्।

> ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः।
> सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः।

इति वक्ष्यमाणादिति दिक् ॥ २८ ॥

अभिभाष्यमाणोऽपि जनानां मध्ये गृहीतमौनव्रतः जडादिवत्तूष्णीं बभूव ॥ २९ ॥

पुरादिषु अनुपथं प्रतिमार्गम् अवनिचरेष्वपसदैरधर्मैः मक्षिकाभिर्वनगज इव परिभूयमानोऽपि तदविगणयन् एकचर एकाकी पृथिवीं परिबभ्रामेत्यन्वयः तत्र पुरं पत्तनं ग्रामो हट्टहीनः आकरो मण्याद्युत्पत्तिस्थानम् खेटः कर्षकग्रामः वाटः पुष्पादिवाटिका शिबिरं सेनास्थानम् व्रजो गवां घोषो गोपानां सार्थो यात्रिकसमूहः आश्रम ऋषीणाम् कथं भूतः एतस्मिन् संसारे असतां बाह्याभ्यन्तरचारिणां विरोधानां सम्यक् स्थानं यस्मिन् सत्कार्यमपदेशो नाम यस्य तस्मिन् देहोपलक्षणे देह अनित्य उपलक्षणमनित्यतादिदोषद्योतको यस्य तस्मिन् उभययोः हेयोपादेययोः अनुभवो यस्मिन् तेन स्वरूपेण स्वमहिम्नि अवस्थानेन असमारोपितः अहं सम्राट् सर्वममेति अहं ममाभिमानो येन स तस्य भावस्तत्त्वं तस्मात् अखण्डितमनाः ॥ ३० ॥

भाषाटीका

सब देवतों से परमश्रेष्ठ अनन्त मैं हूं स्वर्ग मोक्ष... पति हूं तो भी मेरे में भक्ति करने वाले पुरुषों को भी कुछ प्रयोजन की चाहना नहीं है तो उन... और ऐश्वर्यों से क्या प्रयोजन है ॥ २५ ॥

हे पुत्रो! स्थावर जङ्गम जितने भूतमात्र हैं तिनको... लोग क्षणक्षणमें निर्मल ज्ञानदृष्टि होकर हमारे... स्थान रूप समुझो यही हमारा पूजन है ॥ २६ ॥

मन वचन कर्म की चेष्टा साक्षात् फल हमारा... ही है कैसा वह पूजन है कि जिसके विना जीव... मोह रूप यमपाश से छूटने को समर्थ नहीं होसक्ता ॥ २७ ॥

श्रीशुकदेवजी बोले महानुभाव परमसुहृद ऋषभ... भगवान् सब पुत्र स्वयं शिक्षित हैं तो भी लोकों के... के लिये इस प्रकार से उनको शिखाकर शान्ति स्वरू... सब कर्मों से निवृत्त जो महामुनिजन तिन के ... वैराग्य रूप परमहंस धर्मको शिखाने की इच्छा से ... पुत्रों में बडे जो भरतजी जो परमभागवत हैं भगव... प्रेमी हैं तिनको पृथिवी के पालन में राज्याभिषिक्त कर... घरही में शरीर मात्र से अन्य सब पदार्थों को छोडकर ... होकर दिगम्बर होकर केशों को खोलकर गार्हस्थ्य आश्र... विधि से आत्मामे आरोपण करके सर्व संन्यास वेश... से निकल गये ॥ २८ ॥

जड अन्ध मूक वधिर सरी के पिशाचसरीके ... धारण किये रहे सब मनुष्यों के तिरस्कार करनेपर ... व्रत धारण करके उदासीन होकर रहगये ॥ २९ ॥

तहाँ तहाँ पुरग्राम खान खेतीके ग्राम पुष्पवाटिका ... गउओं के स्थान गोपों के स्थान यात्रावालों का ... आश्रम वन इन सब स्थानों में पुरुषों में अधमलोगोंके ... करनेपर भी जैसे वनकी माखीयों से हस्ति को ... मनुष्यों के तर्जनता उनके ऊपर मूतना थूकना पत्थर... फेंकना अधोवायू का छोडना इत्यादि को कुछ न गिनकर ... स्थितिवाले इस देह मे सत् मात्र व्यवहार होनेका ... स्थूल सूक्ष्म अनुभव से जो अपने स्वरूपमें स्थिति है ... ममाभिमानको छोडनेसे चित्त के क्षोभसे रहित होकर ... पृथिवीमें घूमने लगे ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

स च तदा ग्रहगृहीत इवादृश्यत तत्र हेतुः परा... वलम्बमानाश्च ते कुटिलाश्च ते जटिलाश्च कपिशाश्च केश... भारो यस्य सः अवधूतमनादृतमत एव मलिनं निजशरी...

यर्हि वाव स भगवाँल्लोकमिमं योगस्याद्धा प्रतीपमिवाचक्षाणस्तत्प्रतिक्रियाकर्मबीभत्सितमिति व्रतमाजगरमास्थितः शयान एवाश्नाति पिबति खादत्यवमेहति हदति स्म चेष्टमान उच्चरित आदिग्धोद्देशः ॥ ३२ ॥

तस्य ह यः पुरीषसुरभिसौगन्ध्यवायुस्तं देशं दशयोजनं समन्तात्सुरभिं चकार ॥ ३३ ॥

एवं गोमृगकाकचर्यया व्रजंस्तिष्ठन्नासीनः शयानः काकमृगगोचरितः पिबति खादत्यवमेहति स्म ॥ ३४ ॥

इति नानायोगचर्याचरणो भगवान्कैवल्यपतिर्ऋषभोऽविरतपरममहानन्दानुभव आत्मनि सर्वेषां भूतानामात्मभूते भगवति वासुदेव आत्मनोऽव्यवधानानन्तरोदरभावेन सिद्धसमस्तार्थपरिपूर्णो योगैश्वर्याणि वैहायसमनोजवान्तर्धानपरकायप्रवेशदूरग्रहणादीनि यदृच्छयोपगतानि नाञ्जसा नृप ! हृदयेनाभ्यनन्दत् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्याम्
संहितायां वैयासिक्यामृषभदेवानुचरिते
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

म्भूतोऽप्येवमदृश्यत। अतिसुकुमाराणि करचरणोरःस्थलानि तथा विपुला बाह्वादयस्त एवावयवास्तेषां विशिष्टो न्यासः सन्निवेशो यस्य सः तथा प्रकृत्यैव सुन्दरः स्वभावसिद्धो हासस्तेन शोभनं मुखं यस्य तथा नवनलिनदलवदाचरती ये शिशिरतारे तापहारिकनीनिके अरुणे आयते नयने ताभ्यां रुचिरः तथा सदृशा अन्यूनाधिकाः सुभगाश्च कपोलकर्णकण्ठनासिका यस्य तथा विगूढस्मितं यद्वदनं तस्य महोत्सवेन विभ्रमेण पुराङ्गनानां मनसि काममुद्दीपयन् एवंभूतोऽपि तथा दृश्यतेत्यन्वयः ॥ ३१ ॥

यर्हि यदा लोकं जनं योगस्य प्रतिपक्षमाचक्षाणः पश्यन्बभूव तस्य प्रतिक्रियाकरणं कर्म च निन्दितमित्याचक्षाणस्तदाजगरं व्रतमास्थितः सन् शयान एवाश्नातिस्मेत्यन्वयः आजगरं व्रतं नामैकत्रैव स्थित्वा प्रारब्धकर्मोपभोगः अवमेहति मूत्रयति हदति पुरीषमुत्सृजति उच्चरिते पुरीषे चेष्टमानो विलुठन् तेनैवादिग्धा आलिप्ता उद्देशा देहप्रदेशा यस्य सः ॥ ३२ ॥

बीभत्समिवाशङ्क्याह। तस्येति। पुरीषस्य सुरभिणा गन्धेन सौगन्ध्यं यस्य सः वायुः ॥ ३३ ॥

एवं गवादिचर्यया पानादि करोति स्म तदेवाह। व्रजन्स्थित्वा-दिना। काकमृगगवामिवान्यदपि चरितं वृत्तिर्यस्य ॥ ३४ ॥

नानायोगचर्या आचरतीति तथा लोकयात्रापरिहाराय योगिभिरेवं वर्तितव्यमिति प्रदर्शनाय तथा कृतवान् वस्तुतस्तु भगवान्यतोऽविरतः परममहानुत्तरोत्तरशतगुणत्वेनोक्तो य आनन्दस्तदनुभवस्वरूपः किञ्च वासुदेवे आत्मनोऽव्यवधानेनाभेदेन न विद्यतेऽन्येषामिवान्तरा मध्ये उदरस्य देहोपाधेर्भावस्तेन नित्यनिवृत्तोपाधित्वेनेत्यर्थः स्वत एवासिद्धैः समस्तैरर्थैः फलैः परिपूर्णस्त्वायोगैश्वर्याणि नाभ्यनन्दत वैहायसं खेचरत्वम् मनोजवं मनस इव देहस्य वेगं दूरग्रहणं दूरदर्शनम् हे नृप ! हृदयेन मनसा ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अतिसुकुमाराणां करचरणाद्यवयवानां विशिष्टो न्यासः सन्निवेशो यस्य सः तथा प्रकृत्यैव सुन्दरः स्वभावसिद्धो हासः तेन सुन्दरं मुखं यस्य नवनलिनदलाचरणी शिशिरतारे तापहारिकनीनिके ययोस्ते अरुणे आयते नयने ताभ्यां रुचिरस्तथा सदृशा अन्यूनाधिकाः शोभनाश्च कपोलादयो यस्य तथाविगूढं स्मितं यद्वदनं तस्य महोत्सवेन विभ्रमेण पुराङ्गनानां मनसि कुसुमशरासनं काममुपदधानः उद्दीपयन्नेवम्भूतोऽपि पराक् परित अवलम्बमानाश्च ते कुटिलाश्च कपिशाश्च केशास्तेषां भूरिभारो यस्य अवधूतं दुर्जनैरिति शेषः अत एव मलिनं च यन्निजशरीरं तेन ग्रहगृहीत इव पिशाचग्रस्त इवादृश्यतालक्ष्यत जनैरिति शेषः ॥ ३१ ॥

यर्हि यदा स भगवानृषभः लोकं जनं योगस्याद्धा साक्षात्प्रतीपं विरोधमाचरन्तमाचक्षाणः पश्यन् बभूव तस्य प्रतिकूलं प्रतिक्रियाकरणं च बीभत्सितं निन्दितमित्याचक्षाणः प्रतिक्रियाकरणस्य लोकानर्थावहत्वादिति भावः तदा आजगरं व्रतमेकत्र स्थित्वा प्रारब्धोपभोगरूपं व्रतमाश्रितः सन् शयान एवाश्नाति खादति अशनं भोजनं धानादिचर्वणं खादनं मेहति मूत्रयति स्म हदति पुरीषमुत्सृजति स्म उच्चारितमूत्रमलमुच्चरिते पुरीषे चेष्टमानो विलुठन् तेनैवादिग्धा आलिप्ताः तद्देशा देहप्रदेशा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

यस्य सः वीभत्सितमिदमित्याशङ्क्याह । तस्येति । तस्य ऋषभस्य पुरीषस्य सुरभिणा गन्धेन सौगन्ध्यं यस्य स वायुः समन्तादशयोजनं देशं सुरभीचकार पुरीषस्य सौगन्ध्योक्तिः योगप्रभावातिशयज्ञापनार्था ॥ ३२ ॥ ३३ ॥

एवं गवादिचर्यया यानादि करोति स्म तदेवाह । मृजन्नित्यादिना । काकमृगगवामिवान्यदपि चरितं वृत्तिर्यस्य इतीत्थं नानायोगचर्याचरणः योगिभिरेवं कर्तव्यमिति प्रदर्शनाय नानाविधयोगवृत्तानि कुर्वाणः कैवल्याधिपतिः मोक्षाधिपतिः परमात्मदृष्ट्येदं विशेषणं भगवानृषभः आत्मनि स्वात्मशरीरके तथा सर्वेषामात्मभूते च भगवति वासुदेवे परमात्मदृष्ट्येदं वासुदेवे आत्मनि स्वस्मिन्नित्यव्यवधानानन्तरोदरभावेन व्यवधीयतेऽनेनेति व्यवधानं तिरोधायकं कर्म अव्यवधानेन तिरोधायकाभावेन निमित्तेनाय-मनन्तरोदरभावः तेनान्तरं भेदः उच्छब्दोऽप्यर्थः अरशब्दोऽल्पे वर्तते ईषदपि भेद इत्यर्थः ततो नञ्समासः स्वरूपतिरोधायकाभावाद्भ्यन्तरभूतगवाङ्क्षेदविरहेण तस्याब्रह्मात्मकस्वतन्त्रवस्तुभेदज्ञानस्य किञ्चिन्मात्रस्याप्यभावेनेति यावत् आत्मनः स्वस्य सिद्धाः समस्तार्थाः तैः परिपूर्णः अत एव यदृच्छयानिच्छयापि योगप्रभावादेवानुपङ्क्तिकतया प्राप्तान्यपि वैहायसादीनि खेचरत्वादीनि योगैश्वर्याणि हे नृप ! हृदयेन मनसा नाभ्यनन्दत् मनोजवो मनस इव देहस्य वेगो दूरदर्शनं दूरस्थवस्तुग्रहणं वैहायसादीनां संसृतिनिमित्तत्वेन मुक्तिविरोधित्वात्तानि न परिगृहीतवानित्यर्थः ॥ ३४ ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतिसुकुमारेत्येतद्विशेषणं सर्वत्रानुगमयितव्यं सदृशत्वेनत् न नयनयोः सादृश्यं कपोलादीनामुक्तं किन्तु कपोलकर्णयोस्तथा चान्योऽन्यसदृशौ कपोलौ कर्णौ चेत्यर्थः सम्पद्येत सुभगत्वं कर्णादीनामपि ग्राह्यं विगूढमीपत्स्पष्टं स्मितं यस्य तत्तया कुसुमशरं कामं परागधः ॥ ३१ ॥

यर्हि वाव स भगवान् ऋषभदेव इति मत्वा अजगरस्य विद्यमानं व्रतमास्थितस्तदा शयान एवाश्नात्यशनादिकं करोतीत्यन्वयः इमं लोकं योग्यस्य ध्यानापरपर्यायस्योपासनस्याप्रतीपमप्रतिकूलमिवाचक्षाणः पश्यन्निवशब्दात्प्रतिकूलाप्रतिकूललक्षणस्योभयस्य साधनं पश्यन्नित्यर्थः तस्यायमेवमादेः प्रतिक्रियां प्रक्षालनादिकं कर्म बीभत्सितं योगशास्त्रनिषिद्धमिति उच्चरितेन पुरीषेणादिग्धः उपलिप्तः उद्देशः देहप्रदेशो यस्य सः पुरीषसुरभिगन्धेन सौगन्ध्यं यस्य स तथा ॥ ३२—३४ ॥

लोकशिक्षार्थं योगचर्यान्तरमाह । एवमिति । आत्मभूते आधारभूते आत्मनि स्वामिनि अव्यवधानेनानन्तरोदरभावेन निर्भेदब्रह्मभावेन नित्यसिद्धैः समस्तैरर्थैः पुरुषार्थैः परिपूर्णः वैहायसमनोजवादीनि योगैश्वर्याण्यञ्जसा दर्शयितुं नैवाभ्यनन्ददित्यन्वयः वैहायसमाकाशगमनं दूरग्रहणं दूरस्थितग्रहणं यदृच्छया स्वेच्छया सहसा वा ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

आत्मनि निजांशिनि ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सदृशा अन्यूनातिरिक्ताः अत एव सुभगा मनोहराः [illegible] लादयो यस्य सः ॥ ३१ ॥

प्रतीपं क्षुत्पिपासाशोकोपद्रवाद्यैर्विक्षेपकारणैः प्रति[illegible] इवेत्यारूढयोगानां प्रायः प्रातिकूल्याभावात् आजगरं [illegible] कत्रैव स्थित्वा प्रारब्धकर्मोपभोगः एकत्रावस्थाने सति [illegible] चितत्वादेर्लोकोपद्रवाद्यधिकं न स्यादिति भावः । [illegible] मूत्रयति हदति पुरीषमुत्सृजति उच्चरिते पुरीषे [illegible] विलुठन् तेनैव दिग्धः आलिप्तः उद्देशो देहप्रदेशो यस्य सः [illegible]

तस्य चिन्मयशरीरस्यैतद्वीभत्सितमित्याशङ्क्याह । [illegible] पुरीषस्य सुरभिणा गन्धेन सौगन्ध्यं यस्य सः वायुः [illegible]

काकमृगाणां पशुतुल्यलोकानां गोचरितः तादृश[illegible] त्वेन दृष्टिविषयीभूत इत्यर्थः ॥ ३४ ॥

कैवल्यपतिरित्यन्येभ्योऽपि कृपया यः कैवल्यं ददाति [illegible] योगिजनशिक्षणार्था लीला ध्येयैव नतु अनुचिन्तनीया [illegible] भावः भगवानपि भगवति वासुदेवे वसुदेवनन्दने [illegible] सर्वावताराणामप्याराधनीयत्वात् यदुक्तं भीष्मेण "अयं भगवान् वेदगुह्यतमं शिवः । देवर्षिर्नारदः साक्षात् कपिलो मनुः" इति । ईश्वरबाहुल्यं धारयति आत्मनि [illegible] शित्वात् स्वस्मिन्नेवेत्यर्थः आत्मनः स्वस्याव्यवधानः [illegible] अनन्तः अपारः रोदं रोदनमश्रु राति आददातीति रोदरो [illegible] प्रेमा तेनैव सिद्धैः समस्तैरर्थैः परिपूर्णः वैहायसं [illegible] मनोजवं मनस इव देहस्य वेगं दूरग्रहणं दूरदर्शनं [illegible] हृदयेन ॥ ३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमे पञ्चमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अतिसुकुमारा ये करादयोऽवयवास्तेषां विशिष्टो [illegible] वेशो यस्य सः प्रकृत्या सुखभावेनैव सुन्दरः [illegible] हासेन शोभनं सुखं यस्य सः नवनलिनदलवद्[illegible] शिशिरतापहारिकनीनिके ययोस्ते अरुणे आयते नयने [illegible] रुचिरः सदृशाः समानाः सुभगाश्च कपोलकर्णकण्ठ[illegible] यस्य सः विगूढस्मितवदनस्य महोत्सवेन विलासेन [illegible]

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नां मनसि कुसुमशरासनमुपदधानः एवंभूतोऽपि पराक् परितः प्रवलम्बमानाश्च ते कुटिलाश्च जटिलाश्च कपिशाश्च केशास्तेषां भूरिभारो यस्य सः अवधूतं तपोयुक्तम् यथेष्टभोजनवस्त्राभरणशय्यासनोन्मर्दनादि सकलसुखवर्जितमित्यर्थः अत एव मलिनमसंस्कृतमाशिवत् गूढप्रकाशं निजशरीरं तेन ग्रहगृहीत वादृश्यत ॥ ३१ ॥

स ऋषभो भगवान् यहिं लोकं जनं योगस्य श्रद्धा साक्षात्प्रतीपमिवाचक्षाणः पश्यन् बभूव तत्तस्य लोकस्य प्रतिक्रियाकरणं च बीभत्सितं गर्हितमित्याचक्षाणः तदा आजगरं व्रतमास्थितः सन् शयान एवाश्नाति भोजनं करोति पिबति च खादति चषकादीनां चर्वणं करोति अवमेहति मूत्रयति हदति पुरीषमुत्सृजति उच्चरिते पुरीषे चेष्टमानो विलुण्ठन् तेनैवादिग्धा उद्देशाः शरीरावयवा यस्य सः ॥ ३२ ॥

तस्य भगवतः पुरीषस्य सुरभिणा गन्धेन सौगन्ध्यं यस्य वायुः समन्तात् दशयोजनं तं देशं सुरभीचकार ॥ ३३ ॥

किञ्च गवादिचर्य्यया पिबति खादत्यवमेहति स्म काकमिव मृगगवामिवान्यदपि चरितं यस्य सः ॥ ३४ ॥

इति एवं नानायोगचर्य्या आचरतीति तथा अविरतः अखण्डः परमहानन्दानुभवो यस्य सः आत्मनि परमात्मनि वासुदेवे सर्वावतारमूले आत्मनः अवतारभूतस्य अव्यवधानः अव्युच्छिन्नः न विद्यते अन्तरे मध्ये उदरः फलाभिसन्धिलक्षणं छिद्रं यस्य स चासौ स च तेन भावेन ध्यानेन सिद्धैः समस्तैरर्थैः फलैः परिपूर्णैः योगैश्वर्य्याणि हे नृप! हृदयेन मनसा नाभ्यनन्दत् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चमाध्यायार्थप्रकाशः ॥ ५ ॥

---

भाषाटीका

भगवान्! ऋषभदेवजी का वर्णन है अत्यन्त सुकुमार उनके करचरण वक्षस्थल भ्रू अतिसुकुमार हैं भुजास्कन्ध गला वदन अतिपुष्ट हैं सुन्दर उनका विन्यास है मुखारविन्द में सुन्दर हास स्वभावहीसे सिद्ध हैं नूतन कमल दल सरीके शीतलता वाले लालवर्ण के नयनों से अत्यन्त मनोहर हैं सुन्दर बरोबर कपोल कर्ण नासिका वाले हैं मन्दहासके गुप्त होनेसे मुखमें जो विलक्षण शोभा तिससे पुरस्त्रियों के मनमें कन्दर्प को पैदा करते हैं आगे की तरफ लटकते टेढे जटा बन्धे पिङ्गल वर्ण के केशों का भार धारण किये हैं अवधूत का सा मलिन अपने शरीर से ग्रहों के पकडे से लोगों को दीखपडे ॥ ३१ ॥

जब ऋषभ भगवान् ने देखाकि यहसंसारी लोग योग का विरोधी है और उसके हटाने का उपाय भी बडा खराब है तब अजगर व्रतको धारण किया तिसमें एक ठिकाने सोतेही हुये खाते पीते थे और मलमूत्र करते थे उसीसे शरीर भी उनका सब लिप्त होगया था ॥ ३२ ॥

उनके शरीर के विष्ठाके सुगन्ध से युक्त जो वायु तिसने चारों तरफ दश योजन मात्र देशको सुगन्धित कर दिया ॥ ३३ ॥

इस प्रकार गउ मृग काक की चेष्टासे चलते बैठते खडे होते सोतेकाकगो मृग के तुल्य ही खाते पीते मलमूत्र करते थे ॥ ३४ ॥

निरन्तर परम महा आनन्द अनुभव करने वाले कैवल्यके पति भगवान् ऋषभदेवजी ने सब भूतों के आत्मभूत सब के आत्मा वासुदेव भगवान् मे निरन्तर आत्मा के भाव होने से सिद्ध सब अर्थों से परिपूर्ण होजाने से अपने आपही प्राप्त जो आकाश गमन मनोवेग गमन छिपजाना परकाय प्रवेश दूरदृष्टि इत्यादि योग के ऐश्वर्यों को साक्षात् देखकर भी मन से अच्छा नहीं माना ग्रहण नहीं किया ॥ ३५ ॥

इति श्रीभागवत पञ्चमस्कन्ध पांचवां अध्याय का
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ ५ ॥

---

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

——(:०:)——

## षष्ठोऽध्यायः ।

॥ राजोवाच ॥

न नूनं भगवः! आत्मारामाणां योगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणि पुनः क्लेशदानि भवितुमर्हन्ति यदृच्छयोपगतानि ॥ १ ॥

॥ ऋषिरुवाच ॥

सत्यमुक्तं किन्त्विह वा एके न मनसोऽद्धा विश्रम्भमनवस्थानस्य शठकिरात इव सङ्गच्छन्ते ॥

॥ तथाचोक्तम् ॥

न कुर्यात्कर्हिचित्सख्यं मनसि ह्यनवस्थिते ।
यद्विश्रम्भाच्चिराच्चीर्णं चस्कन्द तप ऐश्वरम् ॥ ३ ॥
नित्यं ददाति कामस्य च्छिद्रं तमनु येऽरयः ।
योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली ॥ ४ ॥
कामो मन्युर्मदो लोभः शोकमोहभयादयः ।
कर्मबन्धश्च यन्मूलः स्वीकुर्यात्कोऽनु तद्बुधः ॥ ५ ॥

अथैवमखिललोकपालललामोऽपि विलक्षणैर्जडवदवधूतवेषभाषाचरितैरविलक्षितभगवत्प्रभावो योगिनां सांपरायविधिमनुशिक्षयन् स्वकलेवरं जिहासुरात्मन्यात्मानमसंव्यवहितमनर्थान्तरभावेनान्वीक्षमाण उपरतानुवृत्तिरुपरराम ॥ ६ ॥

तस्य ह वा एवं मुक्तलिङ्गस्य भगवत ऋषभस्य योगमायावासनया देह इमां जगतीमभिमानाभासेन संक्रममाणः कोङ्कवेङ्ककुटकान्दक्षिणकर्णाटकान्देशान्यदृच्छयोपगतः कुटकाचलोपवन आस्य कृताश्मकवल उन्माद इव मुक्तमूर्धजोऽसंवीत एव विचचार ॥ ७ ॥

अथ समीरवेगविधूतवेणुविकर्षणजातोग्रदावानलस्तद्वनमालेलिहानः सह तेन ददाह ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षष्ठे क्षीनाभिमानस्य देहत्यागक्रमाभिधा ।
प्रदहन्तं दवाग्निं यः पश्यन्नपि न पश्यति ॥ १ ॥

योगैश्वर्याणि नाभ्यनन्ददित्युक्तं तत्र पृच्छति । नेति । भगवः ! हे भगवन् ! योगेन समीरितमुद्दीपितं यज्ज्ञानं तेनावभर्जितानि दग्धानि कर्मबीजानि रागादीनि यैस्तेषां यदृच्छया प्राप्तानि योगैश्वर्याणि पुनः क्लेशदानि भवितुं नार्हन्ति अतः किमिति नाभ्यनन्ददित्यर्थः ॥ १ ॥

अङ्गीकृत्य परिहरति । सत्यमिति । एके बुद्धिमन्तोऽनवस्थानस्य चञ्चलस्य मनसो विश्वासं न सङ्गच्छन्ते न सम्यक् प्राप्नुवन्ति शठः किरातो यथा धूर्तेष्वपि मृगेषु शठे किराते यथा मृगा इति सप्तम्यन्तं वा पाठान्तरं शठो वञ्चकः किरातो वणिग्व्यवहर्तरि यथा तस्मिन्वा व्यवहर्ता विश्वासं न ... इत्यर्थः पाक्षिकोऽपि दोषो वर्जनीय इत्युपदेष्टुं नाभ्य... भावः ॥ २ ॥

तत्र हेतुः यद्विश्रम्भाद्यस्य मनसो विश्वासाच्चिराच्चीर्णं सञ्चितं तपश्चस्कन्द सुस्राव ऐश्वरं विष्णोर्मोहिनीरूपदर्शने ईश्वराणां समर्थानामपि सौभरिप्रभृतीनां तपः ॥ ३ ॥

नित्यमिति । कृतविश्वासो यो योगी तस्य ... कामस्य तमनु येऽरयस्तेषां च च्छिद्रमवकाशं ... यथा कृतविश्वासस्य पत्युः पुंश्चली जाया जारादेः ... दत्त्वा पतिं घातयति तथा मनोऽपि कामादिभ्यो ... तीत्यर्थः ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतीन् कथयन्नुपसंहरति । काम इति । यन्मूलो यन्निमित्तो भवति तन्मनः को नु बुधः स्वीकुर्यात् स्वाधीनमिति मन्येत ॥५॥

प्रासङ्गिकं समाप्य प्रस्तुतमाह । अथेति । अखिलानां लोकपालानां ललामो मण्डनभूतोऽप्युपरता बाधितानुवृत्तिर्यस्मात्स उपरराम देहाभिमानं जहौ विलक्षणैरनेकप्रकारैरवधूतवेषादिभिर्न विलक्षितो भगवत्प्रभावो यस्मिन् सांपरायविधिं देहत्यागप्रकारम् आचारांभियभावव्यावृत्त्यर्थमाह । अनर्थान्तरभावेनाभेदेन उपासनाव्यावृत्त्यर्थमाह । असंव्यवहितम् ॥ ६ ॥

मनसा स्वयं त्यक्तेऽप्यभिमाने केनापि संस्कारेण देहः प्रचलति यथा कुलालचक्रं सोऽयमभिमानाभासस्तेन स च जीवन्मुक्तानामविद्यावासनया भवतीति ततो विशेषमाह । योगमायावासनयेति । कोङ्कादीन् देशान् गतः सन्कयापि वासनयाऽऽस्ये कृतोऽश्मकवलो येन असंवीतो नग्नः ॥ ७ ॥

समीरवेगेन विधूतानां कम्पितानां वेणूनां संघर्षणेन जात उग्रो दावानलः आलेलिहानः सर्वतो ग्रसन् ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं युक्तिविरोधित्वाद्वैहायसादीनि योगैश्वर्याणि नाभ्यनन्ददिति तत्र पृच्छति राजा । नेति । हे भगवन्नात्मारामाणां योगेन समीरितमुद्दीपितं ज्ञानं तेन योगरूपवायुसहकृतब्रह्मसाक्षात्काररूपज्ञानाग्निना भर्जितानि दग्धानि कर्मणां बीजानि वासनारूपाणि येषां हेतुगर्भमिदम् ज्ञानयोगाभ्यां निर्दग्धशेषकर्मबीजत्वादित्यर्थः यदृच्छयोपगतानि ऐश्वर्याणि वैहायसादीनि पुनः क्लेशदानि संसृतिनिमित्तानि भवितुं नार्हन्तीति किमिति नाभ्यनन्ददिति प्रश्नार्थः ॥ १ ॥

उत्तरयति शुकः । सत्यमुक्तमिति । योगैश्वर्यासक्तिनिमित्तज्ञानयोगक्षरणसम्भावनयानभिनन्दनेऽङ्गीकारः पुनः संसृतिनिमित्तानि न भवन्त्यत्रानङ्गीकारः सौभर्यादीनामैश्वर्यस्य संसृतिनिमित्तत्वदर्शनात् यदुक्तं पुनः क्लेशदानि न भवन्तीति तत्रापि तु योगक्षरणद्वारा भवन्त्येवेत्याह । किं त्विति । इह ना एके महामुनयः वशीकृतमनसः पुरुषाः किलानवस्थानस्यातिचञ्चलस्य मनसः श्रद्धा साक्षाद्विस्रम्भं विश्वासं न सङ्गच्छन्ते न प्राप्नुवन्ति न कुर्वन्तीत्यर्थः मनो न विश्वसन्तीति यावत् जितमनस्कानामपि भोगासक्त्या मनःपारवश्ये सत्यव्यवस्थितं मनस्तान् वञ्चयित्वात्माधीनं सत्संसारयेदिति भावः तत्र दृष्टान्तः । शठकिरात इवेति । शठकिरातो वागुरिकः स्वस्मिन् विश्वासपर्यन्तं मृगाधीन इव स्थित्वा वञ्चयन् तान्हन्ति तद्वत् ॥ २ ॥

अत्राभियुक्तोक्तिमुदाहरति । तथाचोक्तमिति । मनस्यनवस्थिते सति कदाचिदपि कस्मिंश्चिदपि जितमनस्कोऽपि मम स्वाधीनमनः किमनर्थमापादयेदिति बुद्ध्या सङ्गं न कुर्यात् यस्य मनसो विस्रम्भाद्विश्वासाच्चिरकालसम्भृतमपि ऐश्वरमीश्वरस्य विष्णोः सम्बधि तपः ध्यानमयम् उपासनात्मकं तपश्चस्कन्देत् स्कन्दे न क्षरेत् ॥ ३ ॥

सङ्गात्कामावसरसम्प्रदाये "सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते" इत्युक्तरीत्या कामस्पृहा भावेन क्रोधादयः प्रादुःष्युरित्याह । नित्यमिति । यो मनःकृतविश्वासो योगी कामस्य छिद्रं योगरूपमैश्वर्यं ददाति काममनुसृत्य जायमाना येऽरयः शत्रुवदनर्थकारिणः क्रोधादयस्ते मनसि कृतमैत्रस्य योगिनो मनश्छिद्रं ददाति यथा कृतविश्वासस्य पत्युः पुंश्चली जाया जाराणामवकाशं दत्वा पतिं घातयति तथेति ॥ ४ ॥

अरीन्कथयन्नुपसंहरति । काम इति । कर्मरूपो बन्धश्च यन्मूलः योगैश्वर्यभोगासक्तिमूलः अतः को नु पुमान् बुधः सन् तत्कामादिमूलं स्वीकुर्यात् अश्नश्चेत् स्वीकुर्यादित्यर्थः ॥ ५ ॥

प्रासङ्गिकं परिसमाप्य प्रकृतमाह । अथेति । अखिलानां लोकपालानां ललामो मण्डनभूतोऽपि विलक्षणैरनेकप्रकारैर्जडवदन्धवदलक्षितः अवधूतवेषादिभिरविलक्षितो भगवत्प्रभावो यस्मिन् योगिनां साम्परायविधिं देहत्यागप्रकारमनुशिक्षयन् स्वशरीरं त्यक्तुमिच्छुरव्यवधानमज्ञानातिरोहितमात्मानं प्रत्यगात्मानमात्मनि परमात्मन्यनर्थान्तरभावेन अर्थान्तरं स्वतन्त्रं वस्तु तस्य भावस्तत्तानञ्समासः परमात्मा पृथक्सिद्धत्वेनान्वीक्षमाणः साक्षात्कुर्वाणः अत एव उपरतानुवृत्तिर्निवृत्तप्रारब्धकर्मानुवृत्तिः उपरराम देहादिति शेषः देहं त्यक्तवानित्यर्थः ॥ ६ ॥

त्यागप्रकारमेवाह गद्यद्वयेन । तस्येति । एवं मुक्तलिङ्गस्य मनसा त्यक्तशरीराभिमानस्य तस्य भगवतो ऋषभस्य देहो विचचारेत्यन्वयः देहो विचचारेत्युक्तिर्देहधारणानादरद्योतनार्था अन्यथा सुषुप्तमूर्च्छितदेहस्येव संचारानुपपत्तेः कथंभूतो विचचार योगमायाया भगवन्मायाया वासनाया मायायास्तीर्णत्वेऽपि तद्वासनामात्रानुवृत्त्यायः अभिमानाभासः देहे आत्मीयत्वाभिमानाभासस्तेन देहात्माभिमानाभासमात्रमेवास्य नतु तत्त्वतो देहात्माभिमानोऽस्तीति ज्ञापनायाभासपदं प्रयुक्तम् इमां जगतीं चङ्क्रममाणः सञ्चरन्नेकदा कर्हिचित्कोङ्कणादिदेशान् यदृच्छयागतः कुटकाचलस्थसमीपवने आस्ये वक्त्रे कृतः निक्षिप्तः अश्मैव कवलो येन उन्माद इव लक्ष्यमाणः मुक्ता विक्षिप्ताः मूर्द्धजाः शिरोरुहा यस्य असम्वीतः नग्न एव ॥ ७ ॥

अथानन्तरं समीरवेगेन विधूतानां कम्पितानां वेणूनां विघर्षणेन संघर्षणेन जातो य उग्रो दवाग्निस्तद्वनं कुटकाचलोपवनमालेलिहानो दहनः तेन ऋषभस्य देहेन सह ददाह दाहासादित्यमत्र विवक्षितम् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

शुभयोगिजनशिक्षार्थमशुभयोगिजनमोहनार्थं तत्प्रभृतिभेदाभेदशास्त्रप्रवृत्तिप्रकाश इत्येतदृषभदेवचरितापदेशेन निरूप्यतेऽस्मिन्नध्याये । तत्रादौ यद्यपि देवादीनामैश्वर्यभोगेन मनःसक्त्यामुक्तिसङ्गानन्दह्रासो नास्ति तथाप्यल्पाधिकारिणां स स्यादित्यादितात्पर्यं ज्ञाप्यते अत्रानन्तरातीताध्यायान्ते योगैश्वर्याणि नाभ्यनन्ददित्युक्तं तत्र राजा शङ्कते । न ननूनमिति । योगेन हरेरुपास्तिलक्षणेन समीरितमुत्पन्नं यत् ज्ञानं तेनावभर्जितं दग्धं कर्मबीजं रागादिलक्षणं येषां ते तथा तेषां परमात्मनिरतानां यदृच्छयानिच्छयोपगतानि योगैश्वर्याणि पुनः पश्चात्क्लेशदानि भवितुं नार्हन्ति नूनं कथं तानि नाभ्यनन्ददित्यन्वयः ॥ १

अर्द्धाङ्गीकारेण परिहरति । सत्यमिति । अनङ्गीकारपक्षमाह ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किन्त्विति । एके महात्मानः घटकिराटे नूतनघटे स्थितस्य जलस्येवानवस्थानस्य विस्रम्भं विश्वासं वा इत्यनेन ।

महैश्वर्यस्वरूपोऽपि भगवानृषभो विराट् ।
नैश्वर्याणि स्वकीयानि ख्यापयामास सर्ववित् ।
उत्तमानां ज्ञापनार्थं धर्मतत्त्वस्य केशवः
तेषामैश्वर्यभोगे हि मनः सक्ति व्रजेद्यदि ॥
आनन्दो मुक्तिगो ह्रासं विकर्मकरणाद्व्रजेत् ।
धर्माधर्मविहीनोऽपि भगवानृषभस्ततः ॥
तेषां धर्मज्ञापनार्थं नाविश्चक्रे परां स्थितिम् ।
देवानां नाशुभाद्ध्रासः शुभात्किञ्चित्सुखोन्नतिः ।
आधिकारिकजीवानामेवमन्येषु तद्द्वयम् ॥
अल्पाधिकारिणां तत्र ह्रासोऽपि भवति ध्रुवम् ।
अशुभाभावजोन्नाहो महाधिकारिणामपि ॥
अशुभे कृते न भवति तारतम्या च सस्मृतः ।
प्रजायाश्च तथा देवा महाधीकारिणः स्मृताः ॥
ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् ।
गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ॥
अल्पाधीकारिणः प्रोक्ता अनधीकारिणः परे इति ।

शास्त्रान्तरप्रसिद्धं तात्पर्यं ज्ञापयति । मठकिराट इति पठित्वा वागुरेति केचिद्व्याचक्षते ते प्रेक्षकाणां परिषद्यसम्प्रदायज्ञा इति परिहसनीया इति ॥ २ ॥

त्रैलोक्यशिक्षार्थं श्लोकसंग्रहेणमुक्तमित्याह । तथाचोक्तमिति । यथा मनोविश्वासे तपआदेर्विस्रंसनं भवति तथा चोक्तमित्यर्थः ऐश्वरमीश्वरविषयम् अनेन सौभर्यादीश्वराणामपि यथा तपः स्कन्दितं तथेति ध्वनयति ॥ ३ ॥

छिद्रमवकाशं तमनु कामानन्तरम् अरयः क्रोधादयः तेषां चच्छिद्रं ददातीत्यर्थः कृतमैत्रस्य मनसा सहेति शेषः पुंश्चली पुरुषमात्राभिगामिनी जाया पत्युररीणामुपपतीनां प्रवेशमिव ॥ ४ ॥

पात्रे प्राप्ते द्रव्यात्यागेच्छा लोभः अतीतदुःखस्मरणनिमित्तचित्तविक्षेपः शोकः वैचित्यं विपरीतज्ञानं मोहः पूर्वस्थितात्स्खलनं भयं कर्मणा संसारबन्धो यन्मनोमूलं यस्य स तथा को नु बुधस्तन्मनो ममेष्टमिति स्वीकुर्यादित्यर्थः ॥ ५ ॥

अधुना प्रासङ्गिकं मोहं परिहृत्य प्रकृतमनुसरति । अथेति ।

विष्णोः कलेवरत्यागो भूत्यागोऽन्यो न विद्यते ।
कलेवरत्यागोऽन्येषां पञ्चत्वं समुदीरितम् ।

इति वचनात्स भगवान् स्वकलेवरं स्वाधीनां पृथिवीं जिहासुः त्यक्तुमिच्छन्नुपरराम विरतव्यापारो बभूवेत्यन्वयः कलेवरशब्दस्य प्रतीत एवार्थः किं न स्यादित्याशङ्क्य वक्ष्यमाणानां विशेषणानां प्राकृतपुरुषेऽसम्भवादुक्तएवार्थ उचित इति भावेनाह । अखिलेति अखिललोकपालानां ललामश्चुडामणिः अनेनाप्राकृतत्वं कथमवगतमित्यतउक्तं विलक्षण इति । लोकविपरीतलक्षणः अस्थूलमनण्वह्रस्वमित्यादेः कथं तर्हि तस्य प्रभावो न लक्ष्यत इत्यत उक्तं जडवदवधूतेति । किमतः प्रयोजनमत उक्तं योगिनामिति । साम्परायविधिं मोक्षसाधनप्रकारम् उपहितस्यास्य शिक्षा कथं मोक्षोपयोगिनी स्यादित्यत उक्तमात्मनीति । आत्मानं स्वस्वरूपमात्मनि ब्रह्मणि अनर्थान्तरभावेन भिन्नो नास्मीति मनसा असं[illegible] व्यवधानरहितमन्वीक्षमाणोऽनुभवन्नुपरतानुवृत्तिः निवृत्त[illegible] नुवृत्तिः निवृत्तमुक्त्यन्यवस्थो वा नित्यमुक्त्यवस्थत्वादिति ।

इदानीं हरेर्देहः सच्चिदानन्दत्वेन तदभिन्न [illegible] तस्य सञ्चरणप्रकारं वक्ति । तस्य इवेति । एकदे[illegible] इमां जगतीं विचचारेत्यन्वयः मुक्तलिङ्गस्य वर्णाश्रमादि[illegible] रहितस्य भौतिकशरीरराहित्यस्य वा योगमाया योगसामर्थ्य[illegible] वसानं काष्ठोत्कर्षो यस्य स तथा देहस्य जडस्य [illegible] कथं घटत इत्यत उक्तमभिमानाभासेनेति । अगितो ज्ञान[illegible] चङ्क्रममाणः पुनः पुनः पादक्षेपं कुर्वाणः ज्ञानात्मकस्या[illegible] नादिक्रियां कुर्वाण इत्यर्थः अनेन देहदेहिनोरभेदोऽपि [illegible] इति कस्मात् कान् देशानुद्दिश्य गमनमित्यत उक्तम् । [illegible] र्णाटकादीति । काङ्कटकर्णाटकाञ्चीमरध्युपपदनदीमातृक[illegible] णकर्णाटकान् सौराष्ट्रादिदेशान् स्वेच्छयोपगतः तत्र नाग[illegible] रपूर्वत उत्तरनदीनामास्ति तस्य निकटे कुटचाचलस्य [illegible] तस्य प्राचीनसानौ विद्यमाने उपवने स्थित आस्यकृता[illegible] मुखान्तर्गतपाषाणग्रासः असम्वीतो वस्त्राद्यावरणरहितः [illegible] सति पुमान्यथा चेष्टते तथेत्यर्थः ॥ ७ ॥

इदानीं तस्य देहत्यागव्याजेन दावाग्निनिविष्टस्य अ[illegible] प्रकारमाह । अथेति । समीरवेगेन विधुता अन्योऽन्यमाक[illegible] वेणवः वंशास्तेषां निकर्षोत्निष्पेषणाज्जातो यो दवानलोऽन्[illegible] या दिवमालेलिहानस्तेनाग्निना साधनेन सह भगवांस्त[illegible] ददाहेत्यन्वयः वनमित्युपलक्षणं जगदपीति शेषः अत्र प्रा[illegible] ङ्गीकृत्यान्यार्थाङ्गीकारे किं प्रमाणमत्रोच्यते ।

ज्ञानानन्दात्मको देह ऋषभस्य महात्मनः ।
तादृशेनैव मनसा क्रमंश्च कुटचाचले ।
दावाग्निमनुविश्याथ तत्रस्थः प्रादहज्जगदिति ।

कालान्तभाविनो विश्वसंहारस्येदानीमयं कर्तेति कथं युज्य[illegible] चेन्न तद्देहित्वेनाग्नेरभिव्यज्य तत्र स्थितस्य तस्य योगात[illegible]

एवमग्नेरभिव्यक्तस्तस्थौ विष्णुः सनातन इति

न केवलं विश्वक्षयपर्यन्तमेव स्थितं किंतु पश्चादपि [illegible] स्वमाहात्म्यं किं न प्रकटितमिति चेन्न भूमाववतारस्य [illegible] णार्थत्वेन धर्माणामप्राकट्यस्य स्वधर्मत्वात् ऋषभत्वेन [illegible] धर्मानद्यापि तत्रगः आस्ते सवासुदेवात्मा वासुदेवोऽ[illegible] सदास्थित इत्यनेन स्वरूपज्ञानस्य कदापि तिरोभावो [illegible] सूचितं निर्लेपेन सर्वज्ञेन सर्वोत्तमेन हरिणा किंप्रयोजन[illegible] चेन्न असुरजनमोहनार्थत्वात् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

टीकायां पाक्षिक इति दोषो भवति नवेति स[illegible] दोषोऽपीत्यर्थः वस्तुतस्तु उत्तरपदस्य साधकमात्र[illegible] तानपि शिक्षयितुमिति भावः अनुशिक्षयन्निति तत्त[illegible] यानुकरणमात्रमिति ज्ञेयम् । अत एवानुकरणेन शिक्षय[illegible] र्थश्च वास्तवार्थोऽयं स्वकलेवरं स्वाधिष्ठानं प्रपञ्चमात्म[illegible] शिनि श्रीवासुदेवे आत्मानं तदंशं श्रीऋषभदेवाख्यमनु[illegible] श्चानुवर्त्तनम् उपरराम तदभिमानं जहौ ॥ १—६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

लिङ्गमपि तदेव योगमायावासनया लीलेच्छासंस्कारेण आस्ये कृताश्मकवलत्वमन्यत् किञ्चिदपि न भोक्तव्यं न वक्तव्य मित्यभिप्रायाभासेन ॥ ७ ॥

अथ समीरेति । वास्तवार्थश्चायं तेन सहेति कर्तृसाहाय्ये तृतीया गौणमुख्यन्यायेन कर्त्तव्येव प्राथमिकप्रवृत्तेः ततश्च दावानलस्तद्वनवर्त्तितदादिजीवानां स्थूल देहं ददाह ऋषभ-देवस्तु सूक्ष्मं देहमिति तस्य सर्वमात्त्वदत्वादनुसन्धेयम् "स ैः स्पृष्टोऽभिहृष्टो वा । संविष्टोऽनुगतोऽपि वा । कोशलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः । इतिवत् ततोऽनलसाधर्म्यं वर्णयित्वा तद्वदन्तर्द्धानमेव तस्येति व्यञ्जितम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मनसश्चाति दौरात्म्यं देहान्तर्द्धापनं हरेः ।
पाषण्डोत्पत्तिरित्येवं षष्ठेऽध्याये निरूप्यते ॥

योगैश्वर्याणि नाऽभ्यनन्ददिति श्रुत्वा पृच्छति । नेति । हे भगवः ! हे भगवन् ! योगेश्वरेण समीरितमुद्दीपितं यज्ज्ञानं तेनावभर्जि-तानि कर्मबीजानि यैस्तेषां यदृच्छयोपगतानीति नह्यकस्मात् प्राप्तेषु भोगेष्वनपकुर्वत्सु विरज्यत इति भावः ॥ १ ॥

सत्यमुक्तमिति । क्लेशदानि न भवन्त्येव तदपि एके सुधियः मनसो विश्वासं न संगच्छन्ते न सम्यक् प्राप्नुवन्ति । कुतः अन-वस्थानस्य प्रतिक्षणमेव प्राक्तनानादशाकस्येत्यर्थः । तेन शुद्धं भूत्वाप्यशुद्धं भवितुं न तस्य विलम्ब इति भावः । शठे धूर्त्ते किराते नीचजातौ च धूर्तो यथा सौहार्द्दं प्रदर्श्य लुण्ठितमेव विश्वासि-तारं हन्ति तथैव मनः खलु कामक्रोधाद्यनभिभवरूपां स्वशुद्धिं प्रदर्श्य स्वनिरोधे शिथिलप्रयत्नं साधकमेकस्मिन् दिने कामाद्यैरे-वाकस्मिकैस्तमधः पातयति यथा च नीचजातिर्मुहुरपि धर्मं-मध्यापितोऽपि साधुतां दधानोऽपि गृहकोपादिषु विश्वस्तः सन् समये दुस्त्यजस्वीयस्वभावप्राप्तं चौर्यमेव करोति तथैव मनः शमदमादिभिः शोधितमपि श्रवणमननादिषु स्थैर्यं दधानमपि विश्वस्तं सदनिरुद्ध्यमानं कस्मिंश्च लक्षणे दुर्विषयेष्वपि निमज्ज विवेकज्ञानादिकमपहरति ॥ २ ॥

यस्य विस्रम्भात् विश्वासात् चिराच्चीर्णं बहुकालसञ्चितं तप-श्चस्कन्द सुस्राव । ऐश्वरं शाम्भवं विष्णोर्मोहिनीरूपदर्शनेन यद्वा ईश्वराणां समर्थानामपि सौभरिप्रभृतीनां तपः ॥ ३ ॥

तत्र हेतुः । नित्यमिति । कृतविश्वासस्य योगिनो मनः कामस्य छिद्रमवकाशं ददाति तं काममनु ये अरयः क्रोधलोभादयस्ते-षाञ्च । यथा कृतविश्वासस्य पत्युः पुंश्चली जाया जाराणामव-काशं दत्त्वा पतिं घातयति तथा मनोऽपि कामादिभिर्योगिनं भ्रंश-यतीत्यर्थः ॥ ४ ॥

अरीन् कथयन्नुपसंहरति । काम इति । यन्मन एव मूलं यस्य सः ॥ ५ ॥

प्रासङ्गिकं समाप्य प्रस्तुतमाह । अथेति । सम्परायविधिं देह-त्यागप्रकारमिति देहत्यागानुकरणेनैव शिक्षयन्नित्यर्थः तद्देहस्य चिन्मयत्वात् वस्तुतस्तु आत्मनि परमात्मनि स्वस्मिन् आत्मानं श्रीऋषभदेवाख्यशरीरमव्यवहितं मायाव्यवधानरहितम् । अत एवानर्थान्तरभावेन अभेदेन अन्वीक्षमाणः प्रतिक्षणं पश्यन् उप-रता अनुवृत्तिरवधूतत्वानुकरणं यस्य सः उपरराम स्वावतार-लीलातो विरराम अत एव स्वकलेवरं जिहासुः स्वकलेवरप्राकट्यं त्यक्तुमिच्छुरिति वास्तवोऽर्थः अत्राग्रेऽपि प्रकटोऽर्थः स्पष्ट एव ॥ ६ ॥

तस्य देहान्तर्धानप्रकारमाह । तस्येति । भगवतोऽपि मुक्तलिङ्ग-स्य त्यक्तभगवच्चिह्नस्य मुक्तानामिव लिङ्गं यस्येति वा यथा योगिनां केनापि संस्कारेण देहः प्रचलति निष्पन्नघटमपि कुलालचक्रमिव सोऽयमभिमानाभासः स च जीवन्मुक्तानामविद्या-भासवासनया भवतीति ततो विशेषमाह । योगमायावास-नया आवधूत्य लीलेच्छासंस्कारेण यथातिबालको यद्यत् प्राप्नोति तदपि स्वमुखे निःक्षिपति तथैव कृताश्मकवलः असं-वीतो नग्नः ॥ ७ ॥

उपररामेत्युक्तं तत्र किं कुर्वन्नुपररामेत्यत आह । अथेति । तेन सह श्रीऋषभदेवसहित एव दावानलस्तद्वनं ददाह । तद्वनवर्त्तितरुमृगादीनां स्थूलं देहं दावानलो ददाह सूक्ष्मं देहन्तु श्रीऋषभ इति तद्वनवर्त्तिनः सर्वे तत्प्रसादान्मुक्ता बभूवु-रित्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीप ।

षष्ठे ऋषभचरितमुपसंहरति पूर्वाध्यायान्ते योगैश्वर्याणि नाऽभ्यनन्ददित्युक्तम् तत्र तदभिनन्दने आत्मारामाणां काह्वानिरि-त्याशयेन पृच्छति । न नूनमिति । हे भगवः ! हे भगवन् ! योगेन ध्यानयोगेन समीरितमुद्बोधितं यज्ज्ञानं तेनावभर्जितानि देहगेहादौ अहम्ममात्मकानि कर्मबीजानि यैस्तेषां योगैश्वर्याणि क्लेशदानि दुःखदानि न भवितुमर्हन्ति अतः किमिति नाऽभ्यनन्ददिति भावः ॥१॥

अनवस्थानस्य दुरवग्रहस्य शठकिराते मृगा इवेति शेषः इह पूर्वस्वभावपरित्यागे मनसो विस्रम्भं न सङ्गच्छन्ते शठकिराते यथा यथा पूर्वस्वभावपरित्यागे विस्रम्भं न सङ्गच्छन्ते इत्यन्वयः ॥ २ ॥

यस्य मनसो विस्रम्भाद्विश्वासात् चीर्णं सञ्चितम् ऐश्वरं माहे-श्वरम् मोहिनीदर्शने चस्कन्द सुस्राव ॥ ३ ॥

कृतं मैत्रं मनसो विश्वासो येन तस्य मन इति शेषः कामस्य च्छिद्रं ददाति तं काममनु ये अरयः मन्युमदादयस्तेषां च यथा कृत-विश्वासस्य पत्युः पुंश्चली जाया जारस्य तदनुवर्तिनां च च्छिद्रं ददाति ॥ ४ ॥

यन्मूलो यन्निमित्तस्तन्मनः कः स्वीकुर्यात्स्वायत्तं मन्येत ॥ ५ ॥

अथोक्तलोकसङ्ग्रहार्थस्वचेष्टितप्रदर्शनानन्तरम् अखिललो-कपालानां ललामोऽलङ्कारभूतः योगिनां साम्परायविधिं देहविन्या-सविधिमनुशिक्षयन् उपरतानुवृत्तिः उपरता निवृत्ता देहाभि-मानरूपा अनुवृत्तिर्यस्मादन्येषां तच्चरितचिन्तकानां सः उपरराम लोकसङ्ग्रहार्थचेष्टितान्निवृत्तोऽभूत् किं कुर्वाणः आत्मानमवतार-भूतमात्मन्यवतारिणि विष्णौ अर्थान्तरभावः नृदेहभावः तद्वि-परीत्येन असंव्यवहितं निर्व्यवधानमन्वीक्षमाणः साक्षात्कु-र्वाणः ॥ ६ ॥

एवं मुक्तलिङ्गस्य त्यक्तनृपलीलस्य तस्य ऋषभस्य देहो युज्यत इति योगः सङ्कल्पस्तेन गृहीता या नृपलीला तस्यास्त्यक्तत्वेऽपि तद्वासनया अभिमानस्य गन्तृत्वाभिमानस्य आभासेन इमां जगतीं चङ्क्रममाणः कोङ्कादीन्देशान् गतः सन् कयापि वासनया-स्ये कृतः अश्मकवलो येन सः असम्वीतो नग्नो विचचार॥ ७॥८॥

---

यस्य किलानुचरितमुपाकर्ण्य कोङ्कवेङ्ककुटकानां राजाऽर्हन्नामोपशिक्ष्य कलावधर्म उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथपाषण्डमसमञ्जसं निजमनीषया मन्दः सम्प्रवर्त्तयिष्यते ॥ ९ ॥

येन हवाव कलौ मनुजापसदा देवमायामोहिताः स्वविधिनियोगशौचचारित्रविहीना देवहेलनान्यपव्रतानि निजनिजेच्छया गृह्णाना अस्नानानाचमनाशौचकेशोल्लुञ्चनादीनि कलिनाऽधर्मबहुलेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाः प्रायेण भविष्यन्ति ॥ १० ॥

ते च ह्यर्वाक्तनया निजलोकयात्रयाऽन्धपरम्परयाऽऽश्वस्तास्तमस्यन्धे स्वयमेव प्रपतिष्यन्ति ॥ ११ ॥

अयमवतारो रजसोपप्लुतकैवल्योपशिक्षणार्थः तस्यानुगुणान् श्लोकान् गायन्ति ॥ १२ ॥

अहो भुवः सप्तसमुद्रवत्या द्वीपेषु वर्षेष्वधिपुण्यमेतत् ।
गायन्ति यत्रत्यजना मुरारेः कर्माणि भद्राण्यवतारवन्ति ॥ १३ ॥

अहो नु वंशो यशसावदातः प्रैय्यव्रतो यत्र पुमान् पुराणः ।
कृतावतारः पुरुषः स आद्यश्चचार धर्मं यदकर्महेतुम् ॥ १४ ॥

को न्वस्य काष्ठामपरोऽनुगच्छेन्मनोरथेनाप्यभवस्य योगी ।
यो योगमायाः स्पृहयत्युदस्ता ह्यसत्तया येन कृतप्रयत्नाः ॥ १५ ॥

इति ह स्म सकलवेदलोकदेवब्राह्मणगवां परमगुरोर्भगवत ऋषभाख्यस्य विशुद्धाचरितमीरितं पुंसां समस्तदुश्चरिताभिहरणं परममहामङ्गलायनमिदमनुश्रद्धयोपचितयाऽनुशृणोत्याश्रावयति वाऽवहितो भगवति तस्मिन् वासुदेव एकान्ततो भक्तिरनयोरपि समनुवर्त्तते ॥ १६ ॥

भाषाटीका

राजा परीक्षित् जी बोले हे भगवन्! निश्चित है कि योगसे उद्दीपित किये ज्ञान रूप अग्नि से जिन के कर्म बीज नष्ट होगये हैं ऐसे आत्माराम योगिजनों को दैवयोग से प्राप्त जो ऐश्वर्य हैं सो तो क्लेशदायक नहीं होते हैं तब ऋषभदेवजीने क्यों उनका त्यागकिया ॥ १ ॥

ऋषि श्रीशुकदेवजी बोले कि आपका सत्यकथन है तथापि यह मन धूर्त किरात सरीका है उत्तम महात्मा लोग इस का विश्वास नहीं करते हैं ॥ २ ॥

तैसा कहा है चञ्चल मनका कभी विश्वास नहीं करना चाहिये जिस के विश्वास करने से चिरकाल से सञ्चित जो तपस्या सो श्रीमहादेवादिकों का नष्ट होगया है ॥ ३ ॥

जैसे कि दुष्ट स्त्री के विश्वास करने वाले पुरुष के मारने को खोटी स्त्री जार पुरुषों को अवकाश बताती है तैसे मन के साथ विश्वास करने वाले योगी को भ्रष्टकरने को मन भी विषय भोग रूप शत्रुओं को अवकाश देतारहता है ॥ ४ ॥

जिसमन के हेतु से काम क्रोध मद लोभ शोक मोह भयादिक कर्म बन्ध इस मनुष्य को होते हैं तिस को कौन पण्डित विश्वास से ग्रहण करेगा ॥ ५ ॥

इसप्रकार से सब लोकपालों के भूषण रूपभी जड अवधूत सरी के विलक्षण वेष भाषा चरितों से स्वप्रभाव को छिपाकर योगियों का देहत्याग विधि दिखाने के वास्ते शरीर के छोडने की इच्छा से सदा अभेद भावसे परमात्मा में भावना को लगाते हुये अभिमान वृत्ति से निवृत्त होगये ॥ ६ ॥

इस प्रकार से मुक्तदेहाभिमान भगवान् ऋषभदेवजी का शरीर, योगमाया की वासनासे अभिमान के आभास से पृथिवी में घूमता हुआ कोंक वेंकट कुटक आदि कर्णाटक देशों में दैवयोग से जाकर कुटकाचल के जङ्गल में प्रमत्त के सरीका केशों को खोलकर मुख में पाषाण को रखकर घूमता रहा ॥ ७ ॥

इस के अनन्तर वायु के वेगसे कम्पायमान बांसों के घिसने से उत्पन्नहुआ जो उग्र दावानल उस वन को हुआ उन के सहित दहन कर गया ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अवधूतवेषेण ऋषभदेवस्तत्र गत इत्येतस्य मुक्त... यस्य किलाश्रमातीतमनुचरितं तद्देशवासिष्य उपाकर्ण्य... ज्ञिति नाम यस्य स राजा स्वयं तदुपशिक्ष्य शिक्षि...

श्रीधरस्वामिकृतभावार्थदीपिका ।

असौ पाषण्डश्च तं निजमनीषया सम्प्रवर्त्तयिष्यत इत्यन्वयः तत्र हेतुः कलाविलादि भवितव्येन प्राग्पूर्वसञ्चितपापफलेन ॥ ९ ॥

येन प्रवर्तकेन मनुजेष्वपसदा निकृष्टाः स्वविधिना नियोगो यस्मिन् शौचचारित्रे तद्विहीना देवावज्ञारूपायस्नानादीनि कुव्रतानि गृह्णाना वेदादीनां विदूषका भविष्यन्ति ॥ १० ॥

तत्फलं चान्धन्तमः प्राप्स्यन्तीत्याह । ते चेति । अर्वाक्तनया अवेदमूलया निजलोकयात्रया स्वेच्छाकृतप्रवृत्त्या आम्नस्ताः कृतविश्वासाः ॥ ११ ॥

ननु तर्ह्यनर्थकारी किमर्थोऽयमृषभावतारस्तत्राह । अयमिति । रजोव्याप्तानां जनानां मोक्षमार्गोपशिक्षणार्थः तस्य कैवल्योपशिक्षणस्यानुरूपात् ॥ १२ ॥

अधि अधिकं पुण्यं यस्मिन् एतद्भारतं वर्षम् ऋषभावतारयुक्तानि कर्माणि ॥ १३ ॥

प्रियव्रतस्य वंशः अवदातः शुद्धः यत्र वंशे यथस्मात् अकर्मोवस्तस्य हेतुं धर्मं चचार ॥ १४ ॥

अपरः को नु योगी अस्य काष्ठां दिशामप्यनुगच्छेत् यो योगी येन ऋषभेणासत्तयाऽवस्तुत्वेनोदस्ता निरस्ता योगमायाः सिद्धीर्वाञ्छति कथम्भूताः कृतः प्रयत्नो यासु तदर्थं प्रयत्नं करोतीत्यर्थः । यद्वा कथम्भूता उदस्ताः कृतप्रयत्नाः सेवितुमुद्यता अपीत्यर्थः ॥ १५ ॥

विशुद्धाचरितं यदीरितं कथितं तत्समस्तं दुश्चरितमभितो हरतीति तथा परममहामङ्गलानामयनं च अर्वाहितः सन् अनयोरपि श्रोतृश्रावयित्रोरविशेषेण भक्तिः सम्यगनुवृत्ता भवतीत्यर्थः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य ऋषभस्याश्रमातीतं चतुराश्रमधर्मानतीत्य वर्त्तमानमनुचरितं कुटकाचलोपदेशवासिभ्य आकर्ण्यार्हन्निति नाम यस्य स राजा विमोहितः ऋषभस्य गोमृगाजगरादिवृत्ताचरणस्य तात्पर्यमजानन् वैदिकधर्मातिलङ्घित्वे बुद्धिं कृत्वाऽकुतोभयं नास्तिकुतोऽपि भयं यस्मात्तत्स्वधर्मम्प्यपहाय स्वयमार्गमं व्रतरूपशिक्षयमाणा उपशिक्षित्वा कुपथश्चासौ पाषण्डश्च तमसमञ्जसमुपधर्मं प्रति मनुजानिजमनीषया मन्दोऽज्ञः स आर्हताख्यग्रन्थप्रणयनेन सम्प्रवर्त्तयिष्यति कथमेतस्य प्रसारणे मनुजाः प्रवर्तन्त इत्यपेक्षायां कलावधर्मे उत्कृष्यमाणे भवितव्येनेत्युक्तभवितव्येन प्राणिनां पूर्वसञ्चितपापमूलकेनाज्ञानेन कलौ युगे अधर्मे उत्कृष्यमाणे उत्कर्षं गते सतीत्यर्थः भवितव्येन युगानुसारेण मनुजानामधर्मबुद्धिभूयस्त्वादार्हन्ते प्रवर्तन्त इत्यर्थः ॥ ९ ॥

मनुजेष्वपसदाः निकृष्टाः पूर्वमेव देवमायया विमोहिताः येनार्हन्तेनोपदेशेन नित्यं मोहिताः सन्तः स्वाविधिना स्वस्य वर्णाश्रमानुरूपधर्मविधिना प्राप्तो यो नियोगो नियमः यस्मिन् शौचचारित्रे तेन शौचचारित्रेति समाहारद्वन्द्वः इतरेतरयोगे तु नियोगोपयोगस्ताभ्यां विहीनाः तत्र शौचं स्नानादिजाता देहशुद्धिः चारित्रं संध्योपासनादिदेवावज्ञारूपायस्नानादीनि कुव्रतानि निजेच्छया गृह्णानाः कुर्वाणाः अधर्मप्रचुरेण कलिनापहृता अभिभूता धियो विवेका येषां ते ब्रह्मादिविदूषकाः प्रायशो भविष्यन्ति अस्नानं स्नानाभावः आचमनाभावः अत एवाशौचं केशलुञ्चनं केशोत्पाटनं ब्रह्म वेदः यज्ञपुरुषो भगवान् लोका लोका भागवताः ॥ १० ॥

तत्फलं चान्धन्तमः प्राप्स्यन्तीत्याह । ते चेति । अर्वाक्तनयाऽवेदमूलयाऽत एवान्धपरम्परया निर्मूलया स्मृत्या चाराणामपि वेदमूलत्वेनैव प्रामाण्यादिति भावः ते निजयाश्रया स्वेच्छाकृतप्रवृत्त्या निजलोकयात्रयेति पाठेऽप्ययमेवार्थः लोकशब्दो देहपरः तयैवार्हतस्मृत्यैवाम्नस्ताः तदुक्तेपूपधर्मेषु कृतविश्वासाः अन्धे तमसि नरकविशेषे स्वयमेव स्वात्मनैव रिपुणा प्रपतिष्यन्ति पतन्तीत्यर्थः ॥ ११ ॥

ननु तर्हि भगवतर्षभेण किमर्थमेव मनुष्ठितं तत्राह । अयमिति । रजसा उपप्लुतानां व्याप्तानां रजःप्रचुराणां कैवल्यस्य मोक्षमार्गस्य योगचार्यभेदस्य शिक्षणार्थोऽयमवतारस्तद्धर्मेव कृतमितिभावः ॥ १२ ॥

आर्षभप्रभावप्रतिपादकान् श्लोकानुदाहरन्ति पठन्ति आर्या इति शेषः के त इत्यत्राह । अहो इति । सप्त समुद्राः अस्यां सन्तीति सप्तसमुद्रवती तस्या भुवः द्वीपेषु मध्ये य उत्कृष्टो जम्बूद्वीपः तस्यापि वर्षेषु नवसु मध्ये एतद्भारतं वर्षमधि अधिकं पुण्यं यथाभूतम् अहो इत्याश्चर्यं कुतः यत्रत्याः भारतवर्षस्था जनाः मुरारेर्भगवतः ऋषभावतारयुक्तानि कर्माणि मद्राणि श्रेयःसाधनानि गायन्ति ॥ १३ ॥

अहो प्रैयव्रतः प्रियव्रतसम्बन्धी वंशः यशसा विशुद्धः विशुद्धविपुलकीर्तिसम्पन्नः यत्र वंशे प्रैयव्रते वंशे पुराणः पुरुषो भगवानृषभरूपेण कृतावतारः बभूव सत्यावतीर्णो आद्यः पुरुषः यतोऽकर्महेतुकं न विद्यते कर्म साधनं तपो यस्य तदकर्म गोचः तस्य हेतुं धर्मं चचार ॥ १४ ॥

अस्य ऋषभस्य काष्ठां निष्ठां दिशं वाऽपरो योगी मनोरथेनापि तस्यानुष्ठानेन कोऽन्वनुगच्छेदनुवर्तेत न कोऽपीत्यर्थः कुतो यो योगी येन ऋषभेण योगमाया मनोजवादयः कृतप्रयत्नः सेवितुं उद्यता अप्यसत्तया हेयतयानादृतास्ताः स्पृहयति हि ॥ १५ ॥

ऋषभचरितश्रवणादिफलमाह । इतीत्थं भूतं हस्मेति प्रसिद्धाश्चर्यद्योतकौ निपातौ सकललोकादीनां परमगुरोर्लोकदेवब्राह्मणानां हितोपदेष्टृत्वाद्गुरुः वेदवैदिकमार्गप्रवर्तकत्वाद्वेदस्य गुरुः गवामपि पूज्यत्वोपदेष्टृत्वाद्गुरुः ऋषभाख्यभगवतः विशुद्धाचरितं यदीरितं कथितं समस्तदुश्चरितमभितो हरतीति तथा परममङ्गलानामयनमाश्रयभिदमनयाक्रमानुपचितया प्रवृद्धयानया अद्धयाऽनुसवनं सर्वदा यः पुमानुत्शृणोत्याश्रावयत्यनुस्मरति अनयोः श्रोतृश्रावयित्रोः भगवति वासुदेवे एकान्ततः एकान्ता अव्यभिचरिता भक्तिः समनुवर्तते भवतीत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमनेन तद्भूदिति तत्राह । यस्येति । जनानुपशिक्ष्य उत्कृष्यमाणे वर्धमाने भवितव्येन विधिना निजमनीषयेत्यनेनार्हस्या-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

असुरत्वमसूचि मन्दो निर्भाग्य इत्यनेन आनन्दात्मपुरुषार्थशून्य इति ध्वनयति भगवन्मततात्पर्यं न जानातीति वा उपाकर्ययेत्यनेन तस्यतत्र स्थितिं तां तु शुभावाहौ दुरात्मवानिति वाक्यं स्मारयति पाखण्डमद्वैतमसमञ्जसं जैनमतमित्यनेन शास्त्रद्वयमनेनाकारीति सूचितम् । तदुक्तम् ।

पूर्वं तु पौण्ड्रको नामा वासुदेवः सुदुर्मतिः ।
जातिस्मरो द्विधा शास्त्रं पाखण्डं निर्ममे नृपः ॥
एकं तु वासुदेवाख्यं वासुदेवोऽहमित्यपि ।
कुत्सितं वासुदेवत्वप्रतिपादकमात्मनः ।

लोकार्थं चापरमिति चकारार्हतनामकमिति ।

अनेनार्हस्य पूर्वजन्मनि पौण्ड्रकाख्यासुरत्वं स्पष्टीकृतं वासुदेवोऽहमित्यात्मनो जीवस्य वासुदेवत्वप्रतिपादकवासुदेवाख्यं कुत्सितमेकं शास्त्रं परमार्हतनामकं लोकार्थमहिंसाधर्मप्रतिपादकमपरं चकारेत्यन्वयः ॥ ९ ॥

शास्त्रस्य प्रचयगमनमाह । येनेति । येन शास्त्रद्वयेन ह वा इति निपातद्वयेन तत्प्रशिष्येण क्रमुणा विरचितेन शास्त्रेणेति स्मारितं तदुक्तम् ।

तत्प्रशिष्यः क्रमुर्नाम न जानंस्तन्मतं परम् ।
वासुदेवात्मतां सर्वजीवानामवदत्कुधीः ॥
एकवाख्यं शास्त्रमकरोद्भेदप्रतिपादकम् ।
कुशास्त्रं सर्ववेदानां विरुद्धं तामसालयम् ॥
तद्दृष्ट्वाद्यापि वर्तन्ते वर्तिष्यन्ति तथा कलौ ।
अंशांचा अव्रताचारा वासुदेवोऽहमित्यपि इति ॥

एतदभिप्रायेणास्नानेत्याद्युक्तं मनुजापसदा मनुष्याभासाः स्वविधिः स्वकीयो वेदः तस्य नियोगं लिङाद्यर्थौ मलवद्वाससा न संवदेतेत्यादिकः तेन विहितः शौचाद्याचारः विष्ण्वादिदेवानां हेलनादीन्यभेददर्शनावज्ञानादीन्यपव्रतानि वेदविरुद्धव्रतानि स्वेच्छया प्रमाणं विना किञ्चास्नानादीनि गृह्णन्तः निमित्तमाह । कलिनेति । देवहेलनादि विशिनष्टि । ब्रह्मेति ॥ १० ॥

तत्फलमाह । तैरपीति । तैर्हेलनादिभिः क्रियमाणयाऽर्वाकनया नीचयान्धपरम्परया निजलोकयात्रया स्वप्रमनोरथकल्पितव्यवहारेण । स्वशरीरजीवनेन वा त एवानास्थाः एकदापि व्यापारमन्तरेण न स्थिताः हि शब्देन" अन्धेनैव नीयमाना यथान्धा" इति श्रुतिं प्रमाणयति ॥ ११ ॥

न केवलमसुरमोहनार्थः किन्तु स्वपादमूलशरणजनस्य मुक्तिसाधनार्थोऽपीत्याह । अयमिति । रजसा गुणेनोपप्लुतस्य उपद्रुतस्य साधुजनस्य कैवल्यशिक्षणार्थो मुक्तिसाधनशिक्षणाभिप्राय इत्यन्वयः कुत इति तत्राह । तस्येति । तस्य कैवल्यसाधनोपदेशस्यानुगुणानुरूपानित्यर्थः ॥ १२ ॥

सप्तद्वीपेषु नवसु वर्षेषु एतद्भारताख्यं खण्डमधिपुण्यमधिकपुण्यसाधनमुपलक्षणमेतत् पापसाधनं चेति तदुक्तम् ।

विशेषाद्भारते पुण्यं चरेयुः पापमन्यथा ।
तथैव भगवद्भक्तिं पृथिव्यां नान्यवर्षगा इति ।

अनेनादृष्टसाधनमेतदन्यानि भोगसाधनानीति विशेष उक्त इति शंसते अवतारवन्ति प्रकाशवन्ति ॥ १३ ॥

प्रैयव्रतः प्रियव्रतसम्बन्धी पुराणपुरुषेणावतीर्णेन ... जनमभूदत्राह । पुरुष इति । अकर्महेतुं मोक्षहेतुं ... धर्मं लोकशिक्षार्थं चचारेति यद्यस्मात्तस्मादिति ... पुरुतत्सनोति ददातीति पूर्णफलं मोक्षं ददातीत्यर्थः ... ड: डप्रत्ययेन टिलोपः ॥ १४ ॥

ऋषभो नाम कश्चिद्योगी न हरिरिति तत्राह । ... अभवाय मुक्तये लोकशिक्षणार्थमेव धर्माचरणं न तु ... पेक्षयेत्याह । यद्योगमायामिति । श्रीहरिप्रेरणया ... महापुरुषाः येनोदस्तां नित्यनिरस्तां योगमायामणि... योगफलं स्पृहयन्तीति यद्यस्मात्तस्माल्लोकशिक्षणार्थं ... तोऽस्य काष्ठां स्वरूपभूतां योगशक्तिं हरिमन्तरेणापरः ... गच्छेन्न कोऽपीत्यन्वयः ।

नित्योदस्ता योगशक्तिरनपेक्ष्यं फलं यतः ।
नित्यस्वरूपभूतापि वहिः फलविवर्जनात् ॥
अकर्मेत्युच्यते यद्वन्मोक्षः फलविवर्जनात् इति ।

वचनात् उदस्तामिति विशेषणाद्योगमायामित्यु... इत्येतन्निरस्तं तस्मादणिमादियोगशक्तिर्नित्यादस्ताः ... क्ष्यमिति यतस्तर्हि हरेः स्वरूपभूताणिमादिशक्तिर्नास्ति ... उक्तं नित्येति यद्यपि स्वरूपभूताणिमादिशक्तिरस्ति ... च्छाविषयाणिमादियोगमाया वहिर्नित्यस्वरूपशक्तेः पृथक् ... वर्जनात्क्रियासाध्यफलानिच्छत्वात्तत्र दृष्टान्तः । अकर्मेति ... मोक्षस्त्वकर्मेति वदन्ति तत्फलानिच्छत्वात् तथात्रेति ॥ १५ ॥

ननु कृष्णादिचरितवदस्य चरितमपि यदि सं... स्यात्तदायमपि श्रीनारायणांश इति निश्चयेन निरूपणीयं स्यात्तत्कथमिति शङ्कां परिहरन्नुपसंहरति । इतीति । ... प्रभृतिवचनः ह स्मेति निपातौ श्रद्धातिशयजननार्थौ न ... रामाद्यवतारवद्दुष्टभञ्जनः किन्तु व्यासाद्यवतारवद् ... देष्टेति ज्ञापनाय परमगुरोरिति विशुद्धाचरित ... शेषः इदमाचरितं विशेषतः शुद्धमेव न तु दुष्टं ... तात्पर्यापरिज्ञानादन्यथा गृहीतवन्त इति न तेनाशुद्ध... व्येति विज्ञापयितुं विशुद्धेति कुत एतदिति तत्राह । ... मिति । दुश्चरिताभिहरणं पापकर्मनाशनं न केवलमेतं ... मन्यच्चास्तीत्याह । परमेति । ननु फलोपयोगित्वे युक्तं ... तत्कथमत्राह । इदमिति । उपचितयानुदिनमेधमानया ... श्रेय इत्यन्तःकरणधर्मविशेषः श्रद्धा अनयोः श्रोतृप्रवक्त्रोः ... शब्दात्पठतः वासुदेवे निर्द्वन्द्वा भक्तिः समनुवर्तेत इत्यन्वयः ...

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अत एव ऋषभदेवाविर्भावस्तृतीयोऽध्याय इत्येवं ... जन्मेति तदेवं सर्वहितमपि तच्चरितं वैदिकवेदाद्यस्य ... रवतां त्वन्यथैव भानमित्याह । यस्येत्यादिना । अन्येषां तु ... रक्तानामपि तद्द्वयश्रवणेनान्वयव्यतिरेकाभ्यां हितावहं तदित्याह ॥ ९—११ ॥

अयमिति ॥ १२—१३ ॥

अहो इति । स्वतः पुराणः पुमानेव यत्र कृतावतारोऽ... त्वं प्राप्तः किन्तु स आद्यः पुरुष एव सन् यत्राकर्महेतुं ...

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कारणं धर्मं चचारेत्यर्थः । यद्यप्येवं ज्ञानपर्यवसानं तच्चरितं तथापि तत् परायां भक्तय एव पर्यवस्यति । तथा स्वभावत्वादित्याह ॥ १४ ॥ १५ ॥

इति ह स्मेति । निवृत्तया तत् स्वरूपया स्वतः पुरुषार्थत्वात् ॥१६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अस्यावतारस्य लीलाश्रवणकीर्त्तनादिभिरेव कलिकालवर्त्तिनः परागदर्शिनो जीवाः कृतार्था भवन्ति नत्वाचरितस्यानुष्ठानेन । कलौ प्रायः प्रत्यग्दर्शनासम्भवात् श्रद्धयापि तदीयकेवलबाह्याचरणमात्रनिष्ठा भ्रष्टा एव भवन्तीत्याह । यस्येति । अर्हन्नामा कलौ जनिष्यमाणो लोकशास्त्रद्वारा ऋषभदेवोत्कर्षं श्रुत्वा तादृशाचरणेन वयमपि तथा भवामेति मत्वा तदीयचेष्टामुपरीक्ष्य आधिक्येन शिक्षित्वा भवितव्येन तादृशादुरदृष्टेन यदवश्यंभवितव्यं तेन हेतुना ॥ ९ ॥

स्वविधिना नियोगो यत्र तादृशेन शौचचारित्र्येण विहीनाः ॥ १०—११ ॥

तेन श्रीऋषभदेवो यदैवाविर्बभूव तात्कालिकैर्ज्ञानिजनैरेव तच्चरितमनुवर्त्तितव्यमित्याह । अयमिति । रजसा रजोगुणेन उपप्लुतं कालेन विनष्टीभूतं यत् कैवल्यं ज्ञानयोगस्तस्योपशिक्षणार्थः यद्वा रजो व्याप्तानामपि जनानां मोक्षमार्गोपशिक्षणार्थः । तेन सत्यादियुगत्रये तदनुवर्त्तितव्यं कलौ तत्कथा श्रोतव्येति व्यवस्थितिः ॥ १२ ॥

वर्षेषु मध्ये एतद्भारतं वर्षमधिपुण्यमधिकपुण्यप्रदम् । कुतः गायन्तीत्यादि ॥ १३ ॥

वंशेष्वपि मध्ये प्रियव्रतवंशो धन्य इत्याह । अहो इति ॥ १४ ॥

योगिष्वपि मध्ये ऋषभदेवो धन्य इत्याह । को नु अपरो योगी अस्य काष्ठां दिशमप्यनुगच्छेत् मनोरथेनापि किमुत कर्मणा अस्य कीदृशस्य अभवस्य नास्ति भवो यस्मात्तस्य यो योगी येन ऋषभेण असत्तया अभद्रत्वेन उदस्तास्त्यक्ताः योगमाया योगाज्जाता मायाः सिद्धीर्वाञ्छति । कीदृशीः कृतः प्रयत्नो यासु तदर्थं प्रयत्नांश्च करोतीत्यर्थः । यद्वा । ऋषभदेवोऽस्मान् स्वीकरोत्विति कृतः प्रयत्नो याभिस्ताः ॥ १५ ॥

किञ्च सत्यादियुगवर्त्तिभ्यो योगिभ्यस्ताच्छिक्षितयोगानुष्ठातृभ्योऽपि सकाशात् कलियुगवर्त्तिनो जनास्तल्लीलाश्रवणकीर्त्तनवन्तो ऽधिकफलभाजो भवन्तीत्याह । इति ह स्मेति । परमगुरोर्हितकारिणः विशुद्धमाचरितं च हरिर्न नायं देहो देहभाजामित्याद्युपदेशवाक्यञ्च । आश्रावयति कीर्त्तयति च अनयोः श्रोतृवक्त्रोरपिकारात् स्मर्त्तुरनुमोदयितुश्च ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्य ऋषभस्य चरितमर्हन्निति नाम यस्य स राजा कुटकाचलोपत्यकासिभ्य उपाकर्ण्य स्वयं तदुपशिक्षित्वा कलावधर्मे उत्कृष्यमाणे भवितव्येन जीवकर्मफलेन विमोहितः उचितादपनीयानुचिते योजितः विमोहमाह । स्वधर्मेत्यादि । कुपथश्चासौ पापण्डश्च तं निजमनीषया संप्रवर्तयिष्यते सम्यक्प्रबन्धेन स्वेच्छया कृतेन लोके स्थापयिष्यति ॥ ९ ॥

येन कुपथपाषण्डप्रवर्तनेन मनुजाधमाः स्वविधिना नियोगो यस्मिन् शौचचारित्रे तेन विहीनाः देवहेलनानि देवावज्ञारूपाणि अस्नानादीनि अपव्रतानि गृह्णानाः वेदादीनां विदूषका भविष्यन्ति ॥ १० ॥

ते मनुजापसदाः चकारात्स अर्हन्नामको राजा च अर्वाक्तनया अवेदमूलया तयैव निजलोकः मनुजापसदानुरूपो लोकः नरकलोकस्तदर्थो यात्रा प्रवृत्तिः उपधर्मविषयकार्हन्निर्मितनिबन्धाध्ययनाध्यापनतदुक्तोपधर्मानुष्ठानादिक्रिया तया अन्धानां ज्ञानचक्षुर्हीनानां मूर्खाणामुपदेष्टृणां परम्परया वंशावल्या आश्वस्ताः कृतविश्वासाः अन्धे तमसि नरके प्रपतिष्यन्ति ॥ ११ ॥ १२ ॥

अवतारवन्ति ऋषभाद्यवतारवन्ति यत्रत्या जनाः गायन्तीत्युपलक्षणं श्रवणादेः तदेतद्भारतं वर्षमधिकं पुण्यं यस्मिन् तदधिपुण्यं भवति ॥ १३ ॥

अवदातः शुद्धः यत् य आद्यः पुमान् स कृतावतारः पुरुषः ऋषभमूर्तिः सन् "नास्त्यकृतः कृतेन इति श्रुत्या अकर्म कर्मालभ्यं ब्रह्म तद्धेतुं तत्प्रपकं पारमहंस्यलक्षणं धर्मं चचार ॥ १४ ॥

कृतप्रायत्नाः स्वतः सेवितुं प्रवृत्ताः अपि योगमायाः योगजा विभूतयः येन असत्तया असाधुतया उदस्ताः उपेक्षिताः यः अपरः योगी स्पृहयति स कोनु अस्य ऋषभस्य काष्ठां दिशमप्यनुगच्छेत् ॥१५॥

विशुद्धाचरितैर्व्यासादिभिरीरितम् ॥ १६ ॥

---

भाषाटीका ।

जिनके चरित्र को श्रवण करके कोंक, वेंक कुटक देशों का राजा अर्हन् नामा उन धर्मों को सिखाकर कलियुग में अधर्म के बढनेसे भाविसमय से मोहित होकर निर्भय अपने धर्म मार्ग को छोडकर खोटे अयुक्त पाखण्ड मार्ग को अपनी दुर्बुद्धि से चलावेगा वह बडा मन्द है ॥ ९ ॥

जिस पाखण्ड मतसे कलियुग में मनुष्याधम लोग देवकी माया से मोहित होकर अपने विधि विहित शौच चरित से रहित होकर देवतों के अपमान कारक खोटे व्रतों को अपनी इच्छा से धारण करते हुये स्नान आचमन शौच का न करना केशोल्लुंचन आदि कर्म करेंगे बहुत अधर्म वाले कलि से मति के भ्रष्ट होने से प्राय करके वेद ब्राह्मण यज्ञ पुरुष परमात्मा के दोष लगाने वाले होजायंगे ॥ १० ॥

वे सब मनुष्य अंधपरम्परा सरी के विना वेद मूल के अपने इच्छा की प्रवृत्तिसे विश्वास करके अपने आपही नरकमें पडते हैं ॥ ११ ॥

भगवान् का यह अवतार रजोगुणी लोगों के शिक्षाके वास्ते है उनके गुणोंके श्लोकों को महाजन गाते हैं ॥ १२ ॥

अहो आश्चर्य है कि सात समुद्रों वाली पृथिवी के सब द्वीपों में यह भारतवर्ष ही अधिक पुण्यवाला है जिसमें रहनेवाले मनुष्य विष्णुभगवान् के अवतारों के चरित्रों को गाते हैं ॥ १३ ॥

यस्यामेव कवय आत्मानमविरतं विविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नापयन्त स्तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः ॥ १७ ॥

राजन् ! पतिर्गुरुरलं भवतां यदूनां दैवं प्रियः कुलपतिः क्व च किङ्करो वः ।
अस्त्वेवमङ्ग ! भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् ॥ १८ ॥

नित्यानुभूतनिजलाभनिवृत्ततृष्णः श्रेयस्यतद्रचनया चिरसुप्तबुद्धेः ।
लोकस्य यः करुणयाभय मात्मलोकमाख्यान्नमो भगवते ऋषभाय तस्मै ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यामृषभदेवानुरिते
षष्ठोऽध्यायः ॥ ६ ॥

भाषाटीका ।

अहो प्रियव्रत का वंश यशसे बडा पवित्र है जिस में आद्य पुराण पुरुष भगवान् ने अवतार लेकर कर्मों के निवृत्त करने वाले धर्म को किया ॥ १४ ॥

जगत् मे दूसरा ऐसा कौन योगी है जोकि मनोरथ से भी ऋषभजी की पदवी को पहुंचे वह योगी बडे यत्नो को करके उन मायाओं को चाहता है कि जिनको ऋषभजी ने असत् मानकर छोडदी हैं ॥ १५ ॥

इस प्रकार से सकल वेद लोक देव ब्राह्मण गऊ इन के रक्षक भगवान् ऋषभदेव का निर्मल चरित हमने कहा यह चरित पुरुषों के सब पापों के नाश करने वाला है अति मंगल दायक है इसको अतिश्रद्धा से जो सुनै या सुनावै साव-धान तासे तो सुनने सुनाने वाले दोनों की भगवान् वासुदेव मे अतिशय भक्ति प्रवृत्त होती है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भक्तेः परमपुरुषार्थत्वमाह । यस्यां भक्तावेव नतु योगादिषु अनुसवनमविरतमात्मानं स्नापयन्तः स्वयमासादितमप्रार्थितं भगवता स्वयमेव दीयमानमपि । अनादरे हेतुः । भगवदीयत्वेनैव परितः समाप्ताः सम्यक् प्राप्ताः सर्वे पुरुषार्थाः यैस्ते ॥ १७ ॥

ननु भगवतोऽतिसुलभत्वदर्शनान्मोक्षस्य चातिदुर्लभत्वादि-यमतिस्तुतिरेवेत्याशङ्क्याह । हे राजन् ! भवतां पाण्डवानां यदूनां च पतिः पालकः गुरुरुपदेष्टा दैवमुपास्यः प्रियः सुहृत् कुलस्य पतिर्नियन्ता किं बहुना क्व च कदाचिद्दौत्यादिषु वः पाण्डवानां किङ्करोऽप्याज्ञानुवर्ती अस्तु नामैवं तथाप्यन्येषाम् नित्यं भजतामपि मुक्तिं ददाति नतु कदाचिदपि सप्रेम-भक्तियोगम् ॥ १८ ॥

वर्णितमृषभावतारं नमस्करोति । नित्यमनुभूतं यन्निजं रूपम् स एव लाभस्तेन निवृत्ता तृष्णा यस्य सः । अतद्रचनया देहाद्यर्थमनोरथेन श्रेयसि विषये चिरं सुप्ता बुद्धिर्यस्य तस्य जनस्य करुणया निर्भयमात्मस्वरूपं य आख्यातवांस्तस्मै नमः ॥

इति श्रीभागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किं भक्त्या साध्यमित्यत्र भगवदनुभवरूपाया भक्तेः परमपुरुषार्थतामाह । यस्यामिति । यस्यां भगवदनुभवस्वरूपायां भक्तौ कवयो विवेकिनः विविधानि वृजिनानि पापानि यस्मिंस्तस्मिन् संसारे ये परितापाः क्लेशास्तैरुपतप्यमानं तप्यमानमात्मानमनुसवनं स्नापयन्तः भगवदनुभवेन वृजिनजानि दुःखान्यपनुदन्त इत्यर्थः तयैव भगवदनुभवजनितया निर्वृत्या आनन्देन परमपुरुषार्थलक्षणमपि स्वयं प्राप्तमप्यपवर्गरूपं फलमात्यन्तिकमत्यन्तं नैवाद्रियन्ते अनादरे हेतुः भगवदीयत्वेनैव परितः समाप्ताः सर्वपुरुषार्था यैस्ते ॥ १७ ॥

भक्तेर्दौर्लभ्यं सनिदर्शनमाह । राजन्निति । हे राजन् ! पाण्डवानां यदूनां च मुकुन्दो भगवान् पतिः पालकः गुरुरुपदेष्टा दैवमुपास्यः प्रियः सुहृत् कुलस्य पतिर्नियन्ता किं बहुना क्व च कदाचिद्दूत्यादिषु वः पाण्डवानां किङ्करोऽप्याज्ञानुवर्ती अस्तु नामैवं तथाप्यङ्ग ! हे राजन्नन्येषां नित्यम्भजतामपि मुक्तिं ददाति इति नतु भक्तियोगमिति भक्तेर्दुर्लभत्वोक्तिः ॥ १८ ॥

ऋषभचरितमुपसंहरन् नमस्करोति । नित्येति । नित्यमनुभूतं निजं ब्रह्मात्मकं स्वरूपं स एव लाभस्तेन निवृत्ता तृष्णा पुनर्जन्मादि यस्य एवंभूतो यः अतद्रचनया अश्रेयसां पापकर्मणां रचनया श्रेयसि विषये चिरं सुप्ता बुद्धिर्यस्य तस्य लोकस्य करुणया अभयमात्मस्वरूपमाख्यादाख्यातवान् तस्मै ऋषभरूपाय भगवते नमः ॥ १९ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वितरेषु साधनेषु सत्स्वयमेव किं विशिष्योच्यत इत्या-
शङ्क्य सामान्यमुक्तेरस्याः परमानन्दहेतुत्वादित्याह । यस्यामिति ।
न्वयो यस्यां भक्त्यां स्वात्मानं मनः स्नापयन्तस्तयैव भक्त्या जातया
रत्योत्कृष्टया निर्वृत्त्यात्यन्तिकमापवर्गिकमपवर्गसम्बन्धिनं पुरु-
षार्थं स्वयं स्वत एव प्राप्तिमपि नैवाद्रियन्ते कुतो नाद्रियन्ते
त्राह । भागवतत्वेनेति । भक्त्या भागवता भगवतो हर्षविशेष-
प्रिया इति भावेनैव परिसमाप्ताः पूर्णाः सर्वार्थाः येषां ते
था स्नापने निमित्तमाह । अविरतेति । अविरतानि निरन्तराणि
विविधानि वृजिनानि दुःखानि यानि तैर्युक्तो यः संसारः जनन-
मरणप्रवाहः तन्निमित्तसन्तापेनोपतप्यमानं दंदह्यमानमनुसवनं
सर्वदा मुक्तेः पूर्वं तस्यामनादरं कुर्वतां पश्चादानन्दोत्कर्षः
स्यादित्येतमर्थं हिशब्देनाह ।

ब्रह्मणोऽन्यस्य नो पूर्णां दद्याद्भक्तिं जनार्दनः ।
मुक्तिं ददाति सर्वेषामुच्चानां को ह्यधीश्वरः ॥

इत्यनेन

नाद्रियन्ते तु ये मोक्षं पूर्वं तेषां परं सुखम् ।
स्वयोग्यं व्यज्यते मुक्तौ तद्योक्ततारतम्ययुक् ॥

इत्यनेन चात्र तात्पर्यमवगन्तव्यम् ॥ १७ ॥

भगवति क्रियमाणाया भक्तेर्निर्वृत्तिजनकत्वेन पुरुषार्थत्वं
तोऽनन्तस्या मुक्तेरप्यतिदौर्लभ्यमाह । राजन्निति । एवं गुरुत्वादि-
कमस्तु तथाप्यविगानेन मुक्तिं प्रयच्छति कर्हिचित् स्म कदापि
प्रार्थनां विना न कस्मैचित्पूर्णां भक्तियोगं प्रयच्छतीत्यन्वयः"ब्रह्म-
णोऽन्यस्य नापूर्णां दद्याद्भक्तिं जनार्दन" इत्यादेः अर्जुनादीनाम्
ज्ञानोपदेष्टृत्वेन गुरुत्वम् ॥ १८ ॥

सिंहावलोकन्यायेनावतारप्रयोजनमाह । नित्येति । अतद्वचनया
श्रेयोविरुद्धकर्मणा श्रेयसि चिरसुप्तबुद्धेः नष्टज्ञानस्य लोकस्य
ज्ञानग्रहणयोग्यजनस्य यो भगवानात्मा लोक्यते दृश्यते इत्यात्म-
लोकं मुक्तिसाधनमाख्यादाचख्यौ तस्मा ऋषभाय नम इत्यन्वयः
ऋषभोक्तार्थे विश्रम्भाय ऋषभं विशिनष्टि । नित्येति । नित्यमनुभूतो-
ऽपरोक्षीकृतो निजलाभः स्वरूपानन्दो यस्तेन निवृत्ता तृष्णा यस्य
सः तथोक्तः अनेन नित्यानन्दज्ञानपूर्णत्वेन नित्यसिद्धाखिलपदार्थ-
विशेषत्वात्तदुक्तावाप्तिः सुतरां संभवतीति ज्ञायते ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तच्छ्रुत्वा तस्यै स्पृहयन्तं राजानं भवतां तु सा परमश्लाघ्ये-
त्याह । राजन्निति । भक्तियोगं प्रेमाणं कर्हिचिदिति तदेतत् फले-
च्छानुसन्धानाभावे वासनान्तराभावे च सतीत्यर्थः ॥ १८ ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भक्तेः परमपुरुषार्थशिरोमणित्वमाह । यस्यां भक्तावेव सुधा-
सरिति आत्मानं स्नापयन्तः स्वयमासादितमप्रार्थितमपि भगवता
स्वयमेव दीयमानमपि अनादरे हेतुः भगवदीयत्वेनैव परितः
सम्यक् प्राप्ताः सर्वेऽर्था यैस्तेतु भगवत्त्वेनेत्यर्थः ॥ १७ ॥

धन्योऽयं प्रियव्रतवंशो यत्र भगवानृषभदेवोऽवतीर्णः उत्ता-
नपादवंशोऽपि धन्यः यत्र पृथुः रघुवंशोऽपि धन्यः यत्र रामः यदु
वंशपुरुवंशयोरैककालिकयोरपि मध्ये यदुवंश एव सुभगः यत्र
कृष्णः अस्मदीयः पुरुवंशस्तु सर्वतोऽतिदुर्भगो यत्र भगवान्नाव-
ततार इति मनोऽनुतापेन विषीदन्तं राजानं सर्वज्ञतयैव ज्ञात्वा
मोक्षाद्भक्तेरुत्कर्षेण प्रतिपादितेनैव तमानन्दयति हे राजन् ! भवतां
पाण्डवानां यदूनाञ्च पतिः पालकः गुरुरुपदेष्टा दैवमुपास्यः
प्रियः प्रीतिकृत् कुलपतिर्नियन्तेति यदुष्ववतरतोऽपि कृष्णस्य
तेषु भवत्सु च तुल्य एव व्यवहारो दृष्टः किञ्च क्व कदाचित् वः
पाण्डवानां दूत्यादिषु किङ्करः न च तथा यदूनामिति यदुभ्योऽपि
प्रेमवत्त्वेन भवतामाधिक्यमेवेति भावः । भवद्भ्यो ह्यभजद्भ्योऽपि
परमप्रेमाधिक्यदानस्य वार्त्ता कियती वक्तव्या सा सर्वोपरि
विराजिता अन्येभ्यो भजद्भ्योऽपि भक्तियोगं भावभक्तिमपि
प्रायो न ददाति किन्तु ततोऽप्यतिनिकृष्टां मुक्तिमेवेत्याह । अस्त्वेवेति
भजतां भजद्भ्यः अत्र कर्हिचिदपीत्यनुक्तेर्मुक्तिमनिच्छद्भ्यः शुद्ध-
भक्तेभ्यस्तु भक्तिमेव ददातीत्यर्थो लभ्यते ॥ १८ ॥

उपाख्यानं समाप्य प्रणमति । नित्यमेव अनुभूतो यो निजः स्वरू-
पानन्दस्तल्लाभेनैव विगततृष्णाः अतद्वचनया देहाद्यर्थचेष्टया
श्रेयसि विषये चिरं सुप्ता बुद्धिर्यस्य तस्य जनस्य अभयं निर्भय-
कारणम् आत्मलोकं श्रीवैकुण्ठं प्राप्यं करुणयोपदिष्टेन भक्ति-
योगेन य आख्यातवांस्तस्मै नमः ॥ १९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठोऽध्यायः पञ्चमस्य सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भक्तिरनुवर्तते इत्युक्ताया भक्तेः परमपुरुषार्थत्वमाह । यस्या-
मिति ॥ १७ ॥

भक्तावात्मानं स्नापयन्तः परमपुरुषार्थं मोक्षमपि तत्रापि
स्वयमासादितं नो एवाद्रियन्ते इति मदुक्तसिद्धान्ते असम्भावना
न कार्येत्याशयेनाह । राजन्निति । हे अङ्ग ! भजतां भक्तानां कर्हिचित्
वरप्रदानकाले मुकुन्दो मुक्तिं ददाति न पुनरिह लोके भक्तिं
हे राजन् ! एवं मदुक्तं भक्तेर्मुक्तितः श्रैष्ठ्यमस्तु यतः भवतां यदूनां
च तदुपलक्षितानां गोपादीनां च वो युष्माकं सर्वेषां भजतां भक्ति-
मतां पतिः पालकः गुरुस्तत्त्वोपदेष्टा दैवमुपास्यः प्रियः सुहृत्
कुलस्य पतिर्नियन्ता च किं बहुना क्व च कस्मिंश्चित्कार्ये कस्यचित्
भक्तस्य किङ्करो भवति यथा श्रीयशोदानन्दयोः श्रीदेवकीवसुदेवयोः
उग्रसेनादीनां युधिष्ठिरादीनां च किङ्करोऽग्रे प्रसिद्धः सर्वान् भक्तान्
प्रति श्रीभगवद्वचनम् "अहम्भक्तपराधनि" इतिश्रुतिश्च भक्तिवशः
पुरुष इति नहि मुक्तौ किङ्करत्वं भगवतोऽतो मुक्तेर्भक्तिर्गरीयसी-
तिसंक्षेपः ॥ १८ ॥

भगवन्तमृषभं प्रणमति । नित्येत्यादिना । अतद्वचनया अनात्म-
भूतदेहाद्यर्थकव्यापारेण श्रेयसि कल्याणे भगवदाराधने चिरं
सुप्ता बुद्धिर्यस्य तस्य लोकस्य जनस्य आत्मनः स्वरूपस्य

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लोकं स्थितिप्रवृत्तिस्थानमभयं वासुदेवं य आख्यात् उक्तवान् तस्मै नमः ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षष्ठाध्यायार्थप्रकाशः ॥ ६ ॥

---

भाषाटीका

वह भक्ति कैसी है कि जिसमें ज्ञानी पुरुष निरन्तर नाना प्रकार के दुःख रूप संसार के तापों से तपाय मान आत्माको सब काल में स्नान करायते हुये अत्यन्त सुख से अत्यन्त परम पुरुषार्थ मोक्षनामा सुख को भी स्वयं प्राप्त होने पर भी आदर नहीं करते हैं क्योंकि वे भगवत्सम्बन्धि होने से सब अर्थों से पूर्ण रहते हैं ॥ १७ ॥

हे राजन् ! भगवान् श्रीकृष्ण यदुन के आप पाण्ड रक्षक हैं गुरु हैं देवता हैं प्रिय हैं कुलपति हैं कहीं पाण्डवों के किङ्कर भी होगये हैं यद्यपि ऐसा है मुकुन्द भगवान् भजने वालों को मुक्ति तो देदेते हैं लक्षणभक्ति योग कभी नहीं देते हैं ॥ १८ ॥

नित्यही अपने स्वरूपानुभव के लाभ से तृष्णा से जो ऋषभ भगवान् तिनके अर्थ नमस्कार है उन ने संसार की रचना के भोग से चिरकाल तक बुद्धि वाले लोक के ऊपर करुणा करके अपने उपदेश किया है ॥ १९ ॥

इति श्रीभागवत पञ्चमस्कन्ध छठवांअध्याय का
भाषानुवादलक्ष्मणाचार्यकृत
समाप्त ॥ ६ ॥

---

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

## सप्तमोऽध्यायः ।

### श्रीशुक उवाच ।

भरतस्तु महाभागवतो यदा भगवताऽवनितलपरिपालनाय संचिन्तितस्तदनुशासनपरः पञ्चजनीं विश्वरूपदुहितरमुपयेमे ॥ १ ॥

तस्यामुह वा आत्मजान्कार्त्स्न्येनानुरूपानात्मनः पञ्च जनयामास भूतादिरिव भूतसूक्ष्माणि ॥ २ ॥

सुमतिं राष्ट्रभृतं सुदर्शनमावरणं धूम्रकेतुमिति अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति ॥ ३ ॥

स बहुविन्महीपतिः पितृपितामहवदुरुवत्सलतया स्वे स्वे कर्मणि वर्तमानाः प्रजाः स्वधर्ममनुवर्तमानः पर्यपालयत् ॥ ४ ॥

ईजे च भगवन्तं यज्ञक्रतुरूपं क्रतुभिरुच्चावचैः श्रद्धयाहृताग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमानां प्रकृतिविकृतिभिरनुसवनं चातुर्होत्रविधिना ॥ ५ ॥

संप्रचरत्सु नानायागेषु विरचिताङ्गक्रियेष्वपूर्वं यत्तत्क्रियाफलं धर्माख्यं परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतया साक्षात्कर्तरि परदेवतायां भगवति वासुदेव एव भावयमान आत्मनैपुण्यमृदितकषायो हविःष्वध्वर्युभिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवास्तान्पुरुषावयवेष्वभ्यध्यायत् ॥ ६ ॥

एवं कर्मविशुद्ध्या विशुद्धसत्त्वस्यान्तर्हृदयाकाशशरीरे ब्रह्मणि भगवति वासुदेवे महापुरुषरूपोपलक्षणे श्रीवत्सकौस्तुभवनमालाऽरिदरगदादिभिरुपलक्षिते निजपुरुषहृल्लिखितेनात्मनि पुरुषरूपेण विरोचमान उच्चैस्तरां भक्तिरनुदिनमेधमानरयाऽजायत ॥ ७ ॥

एवं वर्षायुतसहस्रपर्यन्तावसितकर्मनिर्वाणावसरोऽधिभुज्यमानं स्वतनयेभ्यो रिक्थं पितृपैतामहं यथादायं विभज्य स्वयं सकलसंपन्निकेतात्स्वनिकेतात्पुलहाश्रमं प्रवव्राज ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अध्यायानां त्रयेणैवमृषभाख्यानमीरितम् ।
अष्टभिर्भरताख्यानमतः प्रस्तूयतेऽमृतम् ॥ १ ॥
सप्तमे भरतो राज्ये चिरं यज्ञैर्हरिं यजन् ।
आरब्धकर्मनिर्वाणो हरिक्षेत्रेऽभजद्धरिम् ॥ २ ॥

सञ्चिन्तितः सङ्कल्पेनैव राज्यादौ नियुक्तः ॥ १ ॥

आत्मनोऽनुरूपान् । भूतादिरहङ्कार इव भूतसूक्ष्माणीति सन्ततिवृद्धौ दृष्टान्तः ॥ २ ॥

भारतमिति । स्वनाम्ना व्यापकत्वेन धर्माधतिशयः सूचितः ॥ ३ ॥

बहुवित्सर्वज्ञः ॥ ४ ॥

यज्ञा अयूपाः क्रतवः सयूपास्तद्रूपम् उच्चावचैर्महद्भिरल्पैश्च क्रतुभिः कर्मभिः श्रद्धया ईजे च । तानेवाह । आहृताः स्वाधिकारेणात्मसात्कृताः येऽग्निहोत्रादयस्तेषां प्रकृतिविकृतिभिः अग्निहोत्रादयो द्विविधाः सफलाङ्गयुक्ताः प्रकृतयः विफलाङ्गा विकृतय इति । तैर्द्विविधैरपीष्टवानित्यर्थः । अनुसवनमित्यन्तं वा चातुर्होत्रविधिनेत्यन्तं वा गद्यम् ॥ ५ ॥

किञ्च संप्रचरत्सु प्रवर्तमानेषु नानायागेषु विरचितानुष्ठिताङ्गक्रिया येषां तेषु यदपूर्वं तद्वासुदेव एव भावयमानश्चिन्तयन्स यजमानो यज्ञभाजो ये देवाः सूर्यादयस्तान्पुरुषस्य वासुदेवस्यावयवेषु चक्षुरादिष्वभ्यध्यायत्न तु पृथक्त्वेनेत्यन्वयः । अपूर्वं पदद्वयम मीमांसकानाम् तदानीमेव सूक्ष्मत्वेनोत्पन्नं फलमथापूर्वं कालान्तरफलोत्पादिका कर्मशक्तिर्वेति । तदुक्तम् ।

यागादेव फलं तद्धि शक्तिद्वारेण सिद्ध्यति ।
सूक्ष्म शक्त्यात्मकं वापि फलमेवोपजायत इति ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवाह । क्रियाफलं धर्माख्यमिति च ननु यद्यङ्गं देवताः कर्मप्रधानमिति मतं तर्हि कर्तृनिष्ठमपूर्वं स्यात् । तदुक्तम् ।

कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा ।
योग्यता शास्त्रगम्या या परा सा पूर्वमिष्यत इति ।

अथ देवताप्रधानं कर्म तु देवताराधनार्थं तदा देवताप्रसादरूपत्वादपूर्वस्य देवताश्रयत्वमेव युक्तम् । प्रोक्षणाद्यपूर्वस्येव व्रीह्याद्याश्रयत्वम् । कुतो वा वासुदेवाश्रयमपूर्वं भावयति । उच्यते यदि कर्तृनिष्ठमपूर्वं तर्हि वासुदेवस्यान्तर्यामिणः प्रवर्तकत्वेन मुख्यकर्तृत्वात्तदाश्रयमेवापूर्वं नतु तत्प्रयोज्ययजमानाश्रयम् । "शास्त्रफलं प्रयोक्तरि" इतिन्यायात् अन्यथा ऋत्विजामप्यपूर्वाश्रयत्वप्रसङ्गात् । तदेवाह । साक्षात्कर्तरीति । देवताश्रयत्वेऽपि वासुदेवाश्रयत्वमेवेत्याह । परदेवतायामिति । परदेवतात्वे हेतुः । सर्वदेवतालिङ्गानां तत्तद्देवताप्रकाशकानां मन्त्राणां येऽर्था इन्द्रादिदेवतास्तेषां नियामकतया तस्यैव प्रसादनीयत्वात्फलदातृत्वाच्च युक्तमेवापूर्वाश्रयत्वमित्यर्थः एवं भावनेमेवात्मनो नैपुण्यं कौशलं तेन मृदिताः क्षीणाः कषाया रागादयो यस्य अध्वर्युभिरिति बहुवचनं नानाकर्माभिप्रायेण ॥ ६ ॥

एवम्भूतया कर्मविशुद्ध्या विशुद्धसत्त्वस्य भक्तिरजायतेत्यन्वयः । क अन्तर्हृदये य आकाशः स एव शरीरमभिव्यक्तिस्थानं यस्य तस्मिन् ब्रह्मणि कीदृशे महापुरुषरूपस्योपलक्षणमाकारो यस्य तस्मिन् । किञ्च । श्रीवत्सादिभिरुपलक्षिते निजपुरुषाणां नारदादीनां हृदि लिखितवन्निश्चलतया स्थितेनोक्तेन पुरुषरूपेणात्मनि स्वमनसि विरोचमाने कीदृशी भक्तिः अत्यन्तातिशयेनैधमानो रयो वेगः प्रकर्षो यस्याः ॥ ७ ॥

एवमनुवृत्त्या वर्षाणामयुतानि तेषां सहस्रं तत्पर्यन्तकालेऽवसितो निश्चितः कर्मनिर्माणावसरो राज्यभोगादृष्टसमाप्तिसमयो येन सः अधिकृत्य भुज्यमानं रिक्थं धनं यथाविभागं विभज्य सकलसम्पदां निकेतादाश्रयात् स्वगृहात् पुलहाश्रमं हरिक्षेत्रं प्रवव्राज ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमृषभचरितमुपवर्ण्य इदानीं तत्फलस्यास्य भरतस्य चरित्रमुपवर्णयति षड्भिरध्यायैः । भरत इति । महाभागवतो भरतो यदा भगवता ऋषभेणावनितलपरिपालनाय सञ्चिन्तितः संनियुक्तः तदा तदनुशासनपरः भूतलानुशासनपरः विश्वरूपस्य दुहितरं पञ्चजनीं नामोपयेमे विवाहितवान् ॥ १ ॥

तस्यामुवाच पञ्चजन्यां ह्यात्मनः स्वस्य कात्स्न्र्येनानुरूपान् पञ्चात्मजान् सुमत्यादीनुत्पादयामास यथा भूतादिस्तामसोऽहङ्कारो भूतसूक्ष्माणि शब्दस्पर्शादीनीति सारूप्ये सन्ततिवृद्धौ च दृष्टान्तः ॥ २ ॥

पूर्वमजनाभाख्यमेतद्वर्षं यतो यद्भरताधिपत्यादारभ्य भारतं समुदाहरन्ति स भरतो बहुज्ञः महीपतिः पित्रादिवदतितरां वात्सल्येन स्वस्ववर्णाश्रमोचिते कर्मणि वर्त्तमानाः प्रजाः स्वयमपि स्वधर्ममनुवर्तमानः पर्यपालयत् ॥ ३ ॥

ईजे चेत्यादिप्रकृतिविकृतिभिरित्यन्तमेकं वाक्यं उच्चावचैर्नानारूपैर्यज्ञक्रतुभिः यज्ञो यजनं देवतां प्रति द्रव्यत्यागः क्रतुभिर्यज्ञपुरुषं भगवन्तमीजे इष्टवान् क्रतूनेव प्रपञ्चयति होत्रादीनां प्रकृतिविकृतिभिरिति यत्र पूर्णमङ्गजातं सेष्टिः प्रकृतिः यथा आग्नेयीष्टिः यत्रान्यत्रोक्तमङ्गजातं व्यते सा विकृतिः यथा सौर्येष्टिः ॥ ४ ॥

यजनप्रकारमेवाह । अनुसवनं प्रातरादिसवनत्रये होत्रविधिना चातुर्होत्रं चतुर्भि ऋत्विग्भिः क्रियमाणं कर्म तद्विध्यनुगुणमित्यर्थः विरचिताः अङ्गक्रिया येषु तेषु यागेषु सम्प्रचरत्सु प्रवर्तमानेषु सत्सु तत्र यागेषु योगसाध्यं धर्मं इति व्यपदिश्यमानमपूर्वापरपर्यायं तद्गवति वासुदेवे भावयमानः भगवदनुग्रहरूपमिति क्षणविध्वंसिनो यागादः कालान्तरभाविस्वर्गादिफलस्य नुपपत्त्या तान्त्रिकैर्यदभ्युपेतं यागसत्त्वात्मकमपूर्वं फलसाधनमिति तदपोह्य ।

इष्टापूर्तं बहुधा जातं जायमानं विश्वम्
बिभर्ति भुवनस्य नाभिः तदेवाग्निस्तद्वायुः इति

श्रुत्युक्तरीत्या इन्द्रादिदेवतान्तर्यामितयावस्थितस्य भगवतो ऽनुग्रह एवापूर्वस्थानीय इति भावयमान इत्यर्थः तदेव विशदयति भगवन्तं विशि नष्टि । सर्वदेवतालिङ्गानाम् । उद्देश्यत्वेन मन्त्रगताः देवतालिङ्गानि स्मारकाणि चिह्नानि येषु तेषां मन्त्राणामर्थः तया अर्थोऽभिधेय इन्द्रादिस्तस्य नियामकतयान्तः प्रविश्य त्वेन नियन्तृतया प्रयोजननिर्वाहकतया वा साक्षादेव कर्तरि मन्त्रकृतो वृणीतेतिवदयं निर्देशः यद्वा कर्तरि कर्तरि कर्मणः फलसाधनत्वानुपपत्त्यापि नापूर्वं कल्प्यं रात्रिसत्रप्रतिष्ठाफलवत् त्रिसरावेनामिन्द्रः प्रजया पशुभिः तीति वायुर्वै क्षेपिष्ठा देवतेत्याद्यर्थवादैः फलप्रदतया इन्द्रादिदेवतायास्तदेवाग्निस्तद्वायुरित्युक्तरीत्यान्तर्यामितया एव फलप्रदत्वमित्यास्थेयं तदेवाह । यज्ञपुरुषे इन्द्रादिपुरुषरूपे परब्रह्मणि परदेवतायामिति एवं भावने नैपुण्यं कौशलं तेन मृदिता निरस्ताः कषायाः रागादयो वा यस्य अध्वर्युभिरिति बहुवचनं नानाकर्माभिप्रायेण हविःषु चरुपुरोडाशाज्यादिषु गृह्यमाणेषु होतृशेषः यजमानः स्वयं यज्ञैर्भाज्यन्त आराध्यन्त इति देवा इन्द्रादयस्तान् पुरुषस्य परमपुरुषस्यावयवेषु "यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुः श्रोत्रं लोकपाला भुजेष्वासन्" इत्यादिश्रुतिरूप्यप्रतिपादकशास्त्रे रेणानुसंहितवानित्यर्थः ॥ ५ ॥

एवं भगवदाराधनरूपकर्मयोगाद्यनुगृहीतो भक्तियोगः जायतेत्याह । एवमुक्तविधकर्मविशुद्ध्याशुद्धान्तःकरणस्य भगवत्युच्चैस्तरामतितरां प्रतिदिनमेधमानो वर्द्धमानो रयः यस्याः सा भक्तिरजायतेत्यन्वयः भगवन्तं विशिनष्टि ब्रह्मणि शरीरान्तःस्थितं यद्धृदयं पुण्डरीकाकारं तस्मिन् य अन्तः दहरः सशरीरं रूपं यस्य हृदयपुण्डरीकान्तर्वर्तिदहराकाश रूपे दहराकाशस्य परमात्मत्वात् यद्वा हृदयकोशस्थ शिलापुत्रकस्य शरीरमितिवदयं निर्देशः यद्वात्र हृदय शब्दो हृदयान्तर्वर्तिभूताकाशपरः स शरीरं यस्य हृदि हृदये आकाशते प्रकाशत इति हृदयाकाशो जीवः स

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वस्येति वा ब्रह्मणि स्वरूपेण गुणैश्च निरतिशयबृहति भगवति पाड्गुण्यपूर्णे वासुदेवे सर्वान्तरात्मतया दीव्यमाने महापुरुषरूपमुपलक्षणमाकारो यस्य तस्मिन् श्रीवत्सादिभिरुपलक्षिते अरिश्चक्रं दरः शङ्खः असिः खड्गः निजपुरुषाणां भक्तानां हृदि लिखिते लिखितवन्निश्चलतयेत्यर्थः स्थिते तेनोक्तपुरुषरूपेण स्वात्मनि स्वमनसि विरोचमाने ॥ ७ ॥

एवमुक्तया वृत्त्या वर्षाणामयुतानि तेषां सहस्राणि तेषामन्ते तत्पर्यन्ते कालेऽवसितो निश्चितः कर्मनिर्वाणावसरः राज्यभोगादृष्टसमाप्तिसमयो येन सः अधिकृत्य भुज्यमानं पित्रादिपरम्परया आगतमृक्थं धनं स्वतनयेभ्यो यथा विभागं विभज्य दत्त्वा स्वयं सकलानां सम्पदां निकेतादाश्रयात् स्वनिकेतात्स्वगृहात्पुलहाश्रमं शालिग्रामक्षेत्रं प्रति प्रवव्राज जगाम ॥८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीनारायणप्रसादजनकज्ञानसाधनकर्मकरणप्रकारो निरूप्यतेऽस्मिन्नध्याये । तत्रादावृषभे साक्षान्नारायणावतारे राज्यरक्षणकर्मणो निवृत्ते तत्पुत्रो भरतः किमकार्षीदित्याशङ्क्य भगवद्भक्तकथाया अपि श्रीहरिकथान्तर्भूतत्वात्तत्कथाप्रसङ्गः क्रियते । भरतस्त्विति । तुशब्द इतरराजकथाया अस्य कथाया विशेषं वक्ति संचिन्तितः संमन्त्र्याभिषिक्तः "संमन्त्रणो तु संचिन्तावर्चायामभिषेचन" इत्युत्पलमालायां तस्य ऋषभस्यानुशासनमाज्ञा ॥ १ ॥

पञ्चसंख्यामात्रत्वे दृष्टान्तमाह । भूतादिरिवेति । भूतादिस्तामसाहङ्कारः. भूतसूक्ष्माणि शब्दादीनि चेतनस्य चेतनदृष्टान्तापेक्षायां भूतादिः परमात्मा भूतसूक्ष्मशब्दवाच्यान् शब्दाद्यभिमानिदेवानिव यतो भरतात् ॥ २ ॥ ३ ॥ ४ ॥

आहितः प्रतिष्ठितोऽग्निर्येन स आहिताग्निः अग्निहोत्रादयः प्रकृतयः पशुसोमादयो विकृतयः समग्राङ्गयुक्तानि कर्माणि प्रकृतयः एकदेशाङ्गयुक्तानि विकृतयः पशुभिरेव क्रियमाणा अश्वमेधादयः सोमरसैरेव क्रियमाणाः सोमयागाश्चत्वारो होतारो यत्र तच्चातुर्होत्रं तल्लक्षणविधानेन ॥ ५ ॥

प्रचरत्सु कुर्वाणेषु अध्वर्युषु अत एव नानायोगेषु देवताध्यानलक्षणेषु यजनाद्युपायेषु वा क्रियमाणेषु सत्सु यदपूर्वं क्रियाफलं धर्मसंज्ञं तद्वासुदेवे भावयानः हर्यधीनत्वेन समर्पयन् स यजमानो ये हरेश्चक्षुराद्यवयवेभ्य उत्पन्नास्तान् यज्ञभाजो यज्ञभागाधिकारिणो देवान् सूर्यादीन् पुरुषस्य पूर्णाशनस्य हरेश्चक्षुराद्यवयवेषु तदुत्पन्नास्तदाश्रिता इत्यध्यभावयदचिन्तयदित्यन्वयः कदा अध्वर्युभिर्हविःषु गृह्यमाणेषु सत्सु कर्माङ्गत्वेन वासुदेवे समर्पणं नत्विष्टत्वेनेत्यत उक्तम् । परेति । सर्वदेवतानां लिङ्गभूताः प्रकाशका ये मन्त्रास्तेषां वज्रधरत्वादीनां तन्नाम्नां वा अर्थनियामकतया ऐश्वर्याद्यर्थप्रेरकत्वेन मुख्यकर्तरि अभ्यर्हितत्वाच्चेत्युक्तम् । यज्ञपुरुष इति । न चेदं सगुणफलप्राप्तय इत्याह । परेति । कषायः पापम् ॥ ६ ॥

अधुना कर्मणा साध्यफलमाह । एवमिति । भगवदर्पणेन कर्मणः शुद्धिस्तया शुद्धं सत्त्वमन्तःकरणं यस्य स तथा तस्यान्तर्हृदये आकाशशरीरे सूक्ष्मरूपे ब्रह्मण्यपरिच्छिन्ने महापुरुषस्य हरेरुपलक्षणैः चिह्नैर्महापुरुषं श्रीनारायणोऽयमिति उपलक्षयन्ति ज्ञापयन्ति महापुरुषोपलक्षणैर्वा स्वभक्तानां हृल्लिखितेन स्फुरितेनात्माकारेण कीदृशः स इत्यत आह । पुरुषरूपेणेति । आत्मनि स्वस्मिन्नेधमानरया वर्द्धमानवेगा ॥ ७ ॥

भरतस्य वैराग्योपजृम्भणप्रकारमाह । एवमिति । वर्षायुतसहस्रावसानेऽवसितस्य प्रारब्धकर्मणो निर्वाणावसरः नाशलक्षणो यस्य स तथा रिक्थं राज्याख्यवित्तं सकलसम्पन्निकेतात्सर्वसमृद्ध्याश्रयान्निकेतनात् गृहात् पुलहाश्रमं शालग्रामक्षेत्रं न तत्रान्याधीनत्वेन सन्निधानमित्यभिप्रायेणोक्तमिच्छेति ॥ ८-६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नाभेरेवाजनाभ इति संज्ञा भारतमित्यजनाभाख्यमपीदं वर्षं लोकैस्तस्मिन्ननुरागवैशिष्ट्येन ख्यापितमिति ज्ञेयम् ॥ १—६ ॥

एवं कर्मविशुद्ध्या विशुद्धसत्त्वेति । एवं पूर्वोक्तप्रकारेण कर्मविशुद्ध्या विशुद्धसत्त्वस्य भक्तिः सश्रद्धाश्रवणकीर्त्तना विलक्षणाजायतेत्यन्वयः क भगवति वासुदेवे पूर्णस्वरूपभगाभ्यां सर्वनिवासेन च तत्तन्नाम्ना प्रसिद्धेः अन्तर्हृदये यथाकाशः स एव शरीरं स्वस्यैवाविर्भावविशेषाधिष्ठानं यस्य तस्मिन्नन्तर्यामिणि परमात्माख्ये ब्रह्मणि निर्विशेषतयाविर्भावात् तदाख्ये च भगवतो निराकारत्वं वारयति महापुरुषस्य यद्रूपं शास्त्रे श्रूयते तदुपलक्ष्यते दृश्यते यत्र तस्मिन् किञ्च श्रीवत्सादिभिरपि चिह्निते एधमानरया वर्द्धमानप्रकर्षा सन्निधाप्यते चक्षुषि प्रकटीक्रियते ॥ ७—९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सप्तमे भवने यज्ञैः पत्रपुष्पादिभिर्वने ।
भरतो भक्तिभरतो हरिमीजे दृढव्रतः ॥

ऋषभदेवो भगवान् भरतस्तु भागवत इति तुशब्दार्थः । भूतादिरहङ्कारः ॥ १—२ ॥

अजनाभमिति । नाभेर्ऋषभदेवस्याजस्य चैतद्वर्षं स्वामित्वादित्यर्थः नाभिश्चाजश्चेत्यजनाभी अभ्यर्हितत्वादज इति पदस्य पूर्वनिपातः तयोरिदमजनाभं संज्ञापूर्वकविधित्वाद्वृद्ध्यभावः भारतमिति भरतस्वामिकत्वात् ॥ ३—४ ॥

यज्ञाः अयूपाः क्रतवः सयूपास्तद्रूपं उच्चावचैर्महद्भिरल्पैश्च क्रतुभिः कीदृशैः कर्मिजनानां श्रद्धया आहृताः स्वाधिकारेणाम्नातकृता येऽग्निहोत्रादयो द्विविधास्तेषां प्रकृतिविकृतिभिः अग्निहोत्रादयः सकलाङ्गयुक्ताः प्रकृतयः विकलाङ्गा विकृतय इति तैर्द्विविधैरपीष्टवानित्यर्थः ॥ ५ ॥

ननु "तावत् कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायत" । इति भगवदुक्तेर्भगवत्कथादिषु प्रौढश्रद्धस्य निष्कामस्य शुद्धभक्त्यधिकारिणो भरतस्य कर्मकर्तृत्वं कर्मफलभोक्तृत्वं च कथं सङ्गच्छतामित्यत आह । संप्र-

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चरत्सु प्रवर्त्तमानेषु विरचिता अनुष्ठिता अङ्गक्रिया येषां तेषु यदपूर्वं तत् परे ब्रह्मणि वासुदेवे स्वेष्टदेवे एव भावयमानः अस्य कर्मणो यत् फलं भावि तत्र न मे लिप्सा किन्तु तद्वासुदेवप्रीत्यर्थं वासुदेवायैव समर्पितमिति तत्र न मे स्वत्वमिति चिन्तयन्नित्यर्थः ननु कर्म कर्तृप्रधानं देवताप्रधानं चेति मीमांसकानां पक्षद्वयं तत्राद्ये पक्षे कर्तृनिष्ठमपूर्वं द्वितीये कर्मणो देवताराधनार्थत्वा-द्देवतानिष्ठं तत्र भरतस्य निष्कामत्वादपूर्वस्य देवतानिष्ठत्वे एव युक्ते देवतानां चन्द्रसूर्यादीनां बाहुल्यात् कथमेकस्मिन् वासुदेव एव कर्मफलभावनेत्यत आह । सर्वदेवतालिङ्गानां तत्तद्देवताप्रकाशकानां मन्त्राणां येऽर्थां इन्द्रादिदेवतास्तेषां नियामकतया यज्ञपुरुषे यज्ञफलभोक्तरीत्यर्थः । नन्वेवं भरतस्य मास्तु भोक्तृत्वं कर्मकर्तृत्वं तु तस्य दुर्वारमित्यत आह । साक्षात् कर्त्तरि वासुदेवस्यैवान्तर्यामिणः प्रवर्त्तकत्वेन स्वतन्त्रकर्तृत्वात् साक्षात् कर्त्तृत्वं नतु तत्प्रयोज्यस्य यजमानस्यास्वतन्त्रस्य अन्यथा ऋत्विजामपि साक्षात् कर्तृत्वप्रसङ्गात् "यज्ञभुग् यज्ञकृद्यज्ञ" इति तन्नामस्मृतेश्च तस्य स्वतन्त्रकर्तृत्वेऽप्यज्ञानादहङ्करोमीति स्वस्य स्वतन्त्रकर्त्तृत्वमननमेव कर्त्तृत्वगमकं बन्धकारणञ्च ज्ञेयम् । आत्मनो नैपुण्यमेवं भावनमेव तेन मृदिताः क्षीणाः कषायाः कर्मकरणवासनात्मका येन सः अध्वर्युभिरित्यनेन तथाविधानां भक्तानां कर्त्तृत्वाद्यभिमानशून्यानां कर्मफलत्यागिनां स्वप्रतिमूर्त्तिद्वारा कर्मकरणमपि कर्मणि श्रद्धाराहित्यात् कर्माकरणमेव ज्ञेयमिति इति द्योतितम् ।

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् ।
असदित्युच्यते पार्थ ! न च तत् प्रेत्य नो इह इति ।

भगवद्गीतोक्तेः अत एवाम्बरीषादीनां शुद्धया भगवद्भक्त्यैव यापितायुषामानामपि पितृपैतामहसदाचारपरंपराप्राप्तयज्ञादिकर्माचरणं प्रतिनिधिद्वारैव श्रूयते अर्वाचीनानामपि प्राच्यादिदेशवर्तिनां सुप्रतिष्ठानां गृहस्थमहाभागवतानां विवाहोपनयनादावपि सर्वथैव वर्णधर्माभावे लौकिकादपि साङ्कर्यदोषाद्बिभ्यतां प्रतिनिधिद्वारैव कर्मकरणं दृश्यते च तत एव तावत् कर्माणि कुर्वीतेत्यात्मनेपदप्रयोगादप्यन्तनिर्दिंशाद्यानात्मगामिकफलत्वे सति प्रतिनिधिद्वारा कर्मकरणमपि शुद्धसत्त्वभक्तानां न दूषणं तथैव शुद्धभक्तिलक्षणेऽप्यन्याभिलाषिताशून्यामितिवज्ज्ञानकर्मादिशून्यमित्यनुक्त्वा ज्ञानकर्माद्यनावृतमित्यनावृतपदोपन्यासात् प्रतिनिधिद्वारा कर्मकरणेऽपि स्वीयेन्द्रियैः प्रतिक्षणश्रवणादिभक्त्यवकाशप्राप्त्या भक्तेःकर्मानावृतत्वात् शुद्धत्वमेवेति केचिद्व्याचक्षते । नन्वेवम्भूतत्वेन भरतस्य मास्तु कर्मकरणदोषः यज्ञानां नानादेवताराधनात्मकत्वात् कथमनन्यता तस्योपपाद्यतामित्यत आह । स यजमानो भरतः यज्ञभाजो देवानिन्द्रादीन् पुरुषस्य भगवतोऽवयवेषु बाह्वादिषु अभ्यध्यायत् इन्द्राय स्वाहेत्युक्तेमत्प्रभोर्बाहुपूजेयं सूर्याय स्वाहेत्युक्ते लोचनपूजेयमिति भावयामास । पृथक् पृथग्देवतात्वेन पूजा ह्यनन्यता विघातिनी नतु तदङ्गत्वेनेति ॥ ६ ॥

एवं कर्मकर्तुरन्तःकरणं विशेषतः शुद्धमित्याह । एवमिति । "अक्लिष्टबुद्ध्या भरतं भजध्वम्" इति भगवद्वाक्यादेव उत्पत्तित एव शुद्धान्तःकरणस्य तस्य पिष्टपेषणन्यायेन एवं कर्मविशुद्ध्यापि शुद्धान्तःकरणस्य यद्वा एवमनेन प्रकारेण कर्मणो विशुद्धिर्यस्मिन् स चासौ विशुद्धसत्त्वश्चेति तस्य भक्तिरौत्पत्तिक्येव प्रतिदिनमुच्चैस्तरां वर्द्धमानवेगा गङ्गेव भुवनपावन्यजायतेत्यन्वयः । क वासुदेवे वसुदेवनन्दने कृष्णे य एव परम भगवच्छब्दैरुपासनाभेदेनोच्यते इत्याह । अन्तर्हृदयाकाशे योगिभिर्ध्येयं यस्य तस्मिन् परमात्मनीत्यर्थः "केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तं चतुर्भुजम्" इत्यादिना परमात्मनोऽपि साकारत्वश्रवणात् तथा ब्रह्मणि ज्ञानिभिरुपास्यमाने भगवति भक्तैरुपास्ये वसुदेवपुत्रत्वेऽपि महापुरुषस्य वैकुण्ठनाथस्य यद्रूपं शास्त्रेषु प्रसिद्धं तद्रुप आधिक्येन लक्ष्यते इत्यत आह तस्मिन् श्रीवत्सादिभिरपि चिह्निते निजपुरुषाणां भक्तानां हृदि चित्रपट इव लिखितश्चानिश्चलतया स्थितेन पुनः निराकारस्वरूपेण विरोचमाने क आत्मनि स्वमनसि ॥ ७ ॥

एवं वर्षाणामयुतानि तेषां सहस्रं तत्पर्यन्तकालेऽपि न संनावसितो न निश्चितः कर्मनिर्वाणावसरः राज्यभोगारम्भसमयो येन सः तद्राज्यभोगस्य भक्त्यानुषङ्गिकत्वात् कर्मफलत्वाभावेऽपि कर्मफलत्वमननं दैन्यादेवेति ज्ञेयम् । विरज्यैव हठादेव प्रवव्राज रिक्थं धनम् ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथाष्टभिर्भरताख्यानमाह । तत्र तावद्भरतस्य पित्राज्ञया ... रेण प्रजापालनदेवयजनादिकं कर्म सप्तमेन वर्णयति ... स्त्वति । संश्रिन्तितो ब्रह्मावर्त्ताद्गमनवेलायामयमवनितलं करिष्यतीति मनसैवावनितलपरिपालनाय सङ्कल्पितः ॥ १ ॥

भूतादिरहङ्कारः ॥ २—३—४ ॥

किञ्च स बहुवित् यज्ञक्रतुरूपं यज्ञाः अयूपाः क्रतवः ... तद्रूपमग्न्यादिसर्वदेवादिसंयुक्तसर्वयज्ञरूपमित्यर्थः "यज्ञो वै ... तदेवाग्निस्तद्वायुः" इत्यादिश्रुतेः उच्चावचैर्बृहद्भिः स्वल्पैश्च क्रतुभिः श्रद्धया ईजे इष्टवान् क्रतूनेवाह । आहृताः स्वाधिकारं स्वीकृताः येऽग्निहोत्रादयस्तेषां प्रकृतिविकृतिभिः स्वप्रकरणं ... कलाङ्गयुक्ताभिः प्रकृतिभिः प्रकरणान्तरोक्तैरङ्गैः पूर्यमाणाः ... कृतिभिश्च तैर्द्विविधैरीजे अनुसवनं प्रातरादिषु त्रिषु कालेषु ... हौत्रविधिना चतुर्णां होतृणामृत्विजां कर्म चातुर्होत्रं तद्विधि ...

अथ मीमांसकानां सर्वात्मसर्वकारणभूतभगवदनुग्रह ... कर्मफलमिति सिद्धान्तमजानतां मतं निराचिकीर्षुः भरतस्य ... चिरवं प्रपञ्चयन् "तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति" इति श्रुतिप्रोक्तान् फलदानिन्द्रादीन् देवानतिहाय कथमेक ... मेवेष्टवानित्याशङ्कां निवारयति । सम्प्रचरत्स्विति । सम्प्रचर्यमाणेषु ... ष्ठीयमानेषु विरचिता निष्पादिताः अङ्गक्रिया येषां तेषु ... पूर्वं साध्यं तद्वासुदेवे भावयमानः वासुदेवप्रसाद एव सर्वः ... साध्य इति मन्वान इत्यर्थः स यजमानो भरतो यज्ञभाजो यं देवान् ... पुरुषस्य वासुदेवस्यावयवेषु अभ्यध्यायत् "अग्निर्मूर्द्धा चक्षुषी ... सूर्यौ" इत्यादिश्रुतिभ्यः ।

यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै भगवते नमः ॥
द्यां मूर्द्धानं यस्य विप्रा वदन्ति
खं वै नाभिश्चन्द्रसूर्यौ च नेत्रे ॥
दिशःश्रोत्रे विद्धि पादौ मही च
सोऽचिन्त्यात्मा सर्वभूतप्रणेता ॥

इत्यादिस्मृतिभ्यश्च प्रसङ्गान्मीमांसकानामपूर्वपक्षद्वयं ... क्रियाफलं धर्माख्यं चेति । तदानीमेव सूक्ष्मत्वेनोत्पन्ना क्रियाफल ... कालान्तरफलोत्पादिका क्रियायाः धर्मभूता शक्तिरिति ...

---

१ पर्यन्तनवसित इति मूलपाठेऽयमर्थः ।

यत्र ह वाव भगवान् हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन सन्निधाप्यत इच्छारूपेण ॥ ९॥
यत्राश्रमपदान्युभयतो नाभिभिर्दृषच्चक्रैश्चक्रनदी नाम सरित्प्रवरा सर्वतः पवित्रीकरोति ॥१०॥
तस्मिन् वाव किल स एकलः पुलहाश्रमोपवने विविधकुसुमकिसलयतुलसिकाम्बुभिः कन्दमूलफलोपहारैश्च समीहमानो भगवत आराधनं विविक्त उपरतविषयाभिलाष उपभृतोपशमः परां निर्वृतिमवाप ॥ ११ ॥

तयेत्थमविरतपुरुषपरिचर्यया भगवति प्रवर्द्धमानानुरागभरद्रुतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलक औत्कण्ठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोकनयन एवं निजरमणारुणचरणारविन्दानुध्यानपरिचितभक्तियोगेन परिप्लुतपरमाह्लादगम्भीरहृदयह्रदावगाढधिषणस्तामपि क्रियमाणां भगवत्सपर्यां न सस्मार ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

[illegible]ंसकानां प्रागलभ्यमात्रं वक्तव्यं तु ईश्वरानुवर्तिनां सत्कर्मभिः [illegible]सादित ईश्वरः सर्वपुरुषार्थप्रदो भवतीति भावः ननु यदि [illegible]वताङ्गमात्रं प्रधानं तु कर्म अकर्त्तारं प्रति देवतायाः अकिञ्चि[illegible]करत्वात् तदा कर्त्तृनिष्ठमपूर्वं स्यात् यदि जडस्य कर्मणः कर्म[illegible]रपेक्षस्य जनस्य च इष्टसाधकत्वासम्भवात् देवतैव प्रधानं [illegible]र्हि देवताधीनमपूर्वमेवं सति वासुदेव एव कर्मभिः प्रसा[illegible]नीय इति दुराग्रहो न युक्त इत्यत्राह। साक्षात्कर्त्तरीति। पर[illegible]चनायामिति च। सर्वचेतनप्रेरकत्वेन नियोजककर्त्तरि सर्वदेव[illegible]ांशिनि स कारयति पुण्यमथापि पापमेव सर्वेश्वरः "सर्वस्य [illegible]शी सर्वस्येशानः तं देवतानां परमं च दैवतम्" इत्यादिवाक्य[illegible]द्भवात् परदेवतात्वे हेतुः सर्वदेवतानां लिङ्गभूताः प्रकाशका ये [illegible]न्त्रास्तेषामर्थाः इन्द्रादिदेवतास्तेषां नियामकतया नियन्तृतया [illegible]सुदेवे एवापूर्वंभावयमान इति सम्बन्धः एवं भावनमेवात्मनो [illegible]पुण्यं तेन मृदिताः कषायाः रागादयो यस्य सः हविःषु [illegible]हपुरोडाशादिषु अध्वर्युभिरिति बहुवचनं बहुकर्माभिप्रायम् ॥६॥
अन्तर्हृदये हृदयमध्ये य आकाशः स एव शरीरं वास[illegible]ानं यस्य तस्मिन् महापुरुषरूपमुपलक्षणमाकरो यस्य तस्मिन् [illegible]वत्सादिभिरुपलक्षिते निजपुरुषाणां हृदि लिखितेन सुस्थि[illegible]ाकपुरुषरूपेणात्मनि मनसि विरोचमाने वासुदेवे अनु[illegible]ं प्रतिदिनमुच्चैस्तरामेधमानो रय उत्कर्षो यस्याः सा [illegible]क्तिरजायत ॥ ७ ॥
एवमनया वृत्त्या वर्षायुतानां सहस्रस्यान्ते अवसितो [illegible]क्षितः कर्मनिर्वाणावसरः राज्यभोगादृष्टसमाप्तिसमयो येन स [illegible]क्थं धनम् यथादायं यथाविभागं पुलहाश्रमं हरिक्षेत्रं [illegible]व्राज जगाम ॥ ८ ॥

---

भाषाटीका।

महाभागवत भरतजी को जब भगवान् ने सङ्कल्प से आज्ञा दी [illegible] भगवान् के आज्ञामें तत्पर होकर विश्वरूपकी पुत्री पंचजनी के [illegible]थ विवाह किया ॥ १ ॥
तिस भार्यामे सर्व प्रकारसे अपने सदृश पांच पुत्रोंको पैदा किये [illegible]से तामसाहङ्कार पांच भूतोंको पैदाकरताहै ॥ २ ॥
सुमति राष्ट्रभृत सुदर्शन आवरण धूम्रकेतु ये पुत्रोंके नाम हैं इस वर्षका नाम अजनाभ था भरतजीके पीछे भारतवर्ष इसका नाम होगया ॥ ३ ॥
वे सर्वज्ञ राजा पिता पितामह सरीके कृपा वाले होनेसे अपने अपने कर्ममे वर्तमान सब प्रजाओंको आपभी अपने धर्ममे वर्तमान हो कर रक्षा करने लगे ॥ ४ ॥
यज्ञक्रतुरूप यज्ञपुरुष भगवान् को छोटे बडे यज्ञों से यजन करते भये तिसमे श्रद्धा से किया जो अग्नि होत्र दर्श पौर्णमास चातुर्मास्य पशुसोम आदि यागों के प्रकृतिविकृत भेदोंसे चातुर्होत्र विधि तिस से सब काल मे यजन करते रहे ॥ ५ ॥
नाना प्रकारके ऐसे यागोंके होते सन्ते नानाप्रकार की अङ्गक्रिया का जो फल है तिसको यज्ञपुरुष परं ब्रह्म परदेवता भगवान् वासुदेव जो कि सब देवतों के नाम से विहित मन्त्रों के नियामक होने से साक्षात्कार करने वाले हैं तिनमें अर्पण करते भये आत्मज्ञानकी निपुणता से अन्तःकरण के मल निवृत्त होजाने से यजमान राजा ने ब्राह्मणों के हवि अर्पण करते समय यज्ञ भोक्ता सब देवों को परमात्मा के अङ्गोंमें ध्यान किया ॥ ६ ॥
इस प्रकार विशुद्ध कर्मोंसे अन्तःकरण के शुद्ध होजाने से भरतजीके हृदय मे आकाश शरीर वाले दहराकाश परब्रह्म भगवान् महापुरुषरूपसे उपलक्षित श्रीवत्स कौस्तुभ वनमाला चक्र शङ्ख गदादिकों से शोभित अपने पुरुष नारदादिकों के हृदयमे लिखित सरीके रहने के पुरुषरूप से वासुदेव भगवान जब प्रकाशमान भये तब नित्यप्रति अतिशय वृद्धिको प्राप्त होने वाली भक्ति भगवान् मे उत्पन्न भई ॥ ७ ॥
इस प्रकार राज्य में अयुत हजारों वर्ष जब बीत गये तब भरतजी ने कर्म की समाप्तिका अवसर जान लिया तब अपना भोग राज्य को पुत्रोंको देकर पितृपितामहों का धन यथाभाग उनको देकर सम्पूर्ण सम्पत्ति वाले अपने घर में से स्वयं निकलकर शालग्राम क्षेत्र को गमन किया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

यत्र क्षेत्रे विद्याधरकुण्डे वात्सल्यं कर्तुं तेन सन्निहितः क्रियते। भक्तानामपेक्षितेन रूपेण सन्निहितो भवतीत्यर्थः ॥ ९ ॥

इत्थं धृतभगवद्व्रत ऐणेयाजिनवाससाऽनुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेन च विरोच
सूर्यर्चा भगवन्तं हिरण्मयं पुरुषमुज्जिहाने सूर्यमण्डलेऽभ्युपतिष्ठन्नेतदुहोवाच ॥ १३ ॥

परोरजः सवितुर्जातवेदो देवस्य भर्गो मनसेदं जजान सुरेतसाऽदः पुनराविश्य चष्टे
गृध्राणं नृषद्रिङ्गिरामिमः ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्याम्
संहितायां वैयासिक्यामृषभदेवानुचरिते
सप्तमोऽध्यायः ॥ ७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

आश्रमस्थानान्युभयत उपर्यधश्च नाभिर्येषां तैर्दृषच्चक्रैः शिलामध्यगतैश्चक्रैश्चक्रनदी गण्डकी सरितां श्रेष्ठा पवित्रीकरोति ॥ १० ॥

एकल एकः आराधनं समीहमानः कुर्वाणः विविक्तः शुद्धः अतएवोपरतो विषयाभिलाषो यस्य । उपभृतः संवृद्ध उपशमो यस्य ॥ ११ ॥

प्रवर्धमानानुरागस्य भरेण यद्द्रुतं द्रवीभूतं हृदयं तस्मिन् शैथिल्यमनुद्यमो यस्य । आत्मनि देहे उद्भिद्यमानं रोमपुलककुलं रोमाञ्चवृन्दं यस्य । ककारः समासान्तः । औत्कण्ठ्यात्प्रवृत्तेन प्रणयवाष्पेण निरुद्धोऽवलोको ययोस्ते नयने यस्य सः एवं वर्तमानस्तामपि भगवत्सपर्यां न सस्मारेत्यन्वयः । तत्र हेतुः । निजरमणस्य स्वप्रीतिदातुर्ये अरुणे चरणारविन्दे तयोरनुध्यानेन परिचितः समृद्धो भक्तियोगस्तेन परिप्लुतः सर्वतो व्याप्तः परम आह्लादः परमानन्दो यस्मिन्गम्भीरहृदयह्रदे तस्मिन्नवगाढा निमग्ना धिषणा यस्य ॥ १२ ॥

धृतानि भगवद्व्रतानि येन स भगवन्तं सूर्यमण्डलेऽभ्युपतिष्ठन्नेतदुहोवाचेत्यन्वयः । कीदृशः । एण्या हरिण्या अजिनमैणेयं तदेव वासस्तेनानुसवनाभिषेकेणार्द्राः कपिशाश्च याः कुटिला जटास्तासां कलापेन च विरोचमानः सूर्यप्रकाशिकया ऋचा हिरण्मयं "ध्येयः सदा सवितृमण्डलमध्यवर्त्ती" इत्यादिनोक्तम् उज्जिहाने उद्गच्छति सति । सकरान्तपाठे सन्नन्तात्पचाद्यच् । अर्थस्तु स एव ॥ १३ ॥

परोरजः रजसः प्रकृतेः परं शुद्धसत्त्वात्मकं सवितुर्देवस्य सूर्यस्य भर्गः स्वरूपभूतं तेजः जातं वेदो धनं कर्मफलं यस्मात्तत्कर्मफलदमित्यर्थः । अत्र हेतुः । यन्मनसैवेदं विश्वं जजान ससर्ज पुनश्च अदः इदं विश्वमन्तर्यामिरूपेण प्रविश्य गृध्राणं काङ्क्षन्तं हंसं जीवं सुरेतसा चिच्छक्त्या विचष्टे पश्यति पालयतीत्यर्थः । नृषु सीदत्युपाधितया तिष्ठतीति नृषद्बुद्धिस्तस्यां रिङ्गि रिङ्गणं गतिं राति ददातीति नृषद्रिङ्गिराम् । "वा छन्दसि ॥ ६।१ ॥ १०६ ॥ इत्यमिपूर्वरूपत्वाभावः तद्भर्गः इमः शरणं व्रजामः ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कोऽसौ पुलहाश्रमः यं प्रवव्राजेत्यत्राह । गद्यद्वयेन पुलहाश्रमे भगवान् हरिरधुनापि निजजनानां वात्सल्ये जनविषयकवात्सल्येन स्वेच्छापरिगृहीतरूपेण सन्निधापि हितो भवतीत्यर्थः ॥ ९ ॥

यत्राश्रमस्थानान्युभयतः उपर्यधश्च नाभिर्येषां तैः शिलामध्यगैश्चक्रैर्निमित्तभूतैश्चक्रनद्याख्या सरितां प्रवरा सर्वतः पवित्रीकरोति ॥ १० ॥

तस्मिन् पुलहाश्रमोपवने एकलः असहायः नानाविधैः मादिभिः कन्दादिरूपैरुपहारैर्नैवेद्यैश्च भगवत आराधनं समीहमानः कुर्वाणः विविक्तः विशुद्धाहारः उपरतो विषयेष्वभिलाषो यस्य अत एवोपभृतः समृद्धः उपशमः करणनिग्रहो यस्य सः निर्वृतिं प्रीतिरूपां परामवाप ॥ ११ ॥

एतदेव प्रपञ्चयति गद्यद्वयेन । एवं तयोक्तविधया परमपुरुषपरिचर्यया सर्वान्तरात्मनि भगवति कीर्त्तौ प्रवर्द्धमानो यः अनुरागः प्रेमा तस्य बलेन उत्कर्षेण द्रुतं द्रवीभूतं हृदयं तेन शैथिल्यमनुद्यमो यस्य प्रानन्दातिशयेनात्मनि देहे उद्भिद्यमाने रोमपुलककुल यस्य समासान्तः ककारः औत्कण्ठ्येनातिवृत्तेन प्रणय निरुद्धोऽवलोको ययोस्ते नयने यस्य सः (१) अभिरेमे त्यर्थः एवं वर्त्तमानः तामपि क्रियां भगवत्सपर्यां तत्र हेतुं वदन् विशिनष्टि । निजरमणस्य निरतिशय यस्य भगवतोऽरुणे चरणारविन्दे तयोरनुध्यानेनोपचि यो भक्तियोगः कृत्स्नः शुभाश्रयविषयः तेन परिप्लु व्याप्तः परमाह्लादः परमानन्दो यस्मिन् सः गम्भीरे ह्रदस्तस्मिन्नेव गाढा निमग्ना धिषणा बुद्धिर्यस्य सः ॥ १२ ॥

एवं धृतानि भगवद्व्रतानि येन सः एण्या ऐणेयं तदेव वासस्तेनानुसवनं कालत्रये अभिषेके आर्द्रा कपिशाश्च कुटिलाश्च या जटास्तासां समूहे मानः सूर्यमण्डले उद्गच्छति सति स्वयमुपतिष्ठन् लस्थं हिरण्मयम् "एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृ यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः कप्यासं पुण्डरीकमेवमक्षिणी" इत्यन्तरादित्यविद्यो सूर्यं वा सूर्यान्तर्वर्तिभगवत्प्रकाशिकया ऋचा

(१) अभिरेमेइति मूलेद्दम् ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यजन् भजन् ऋगुक्तप्रकारं ध्यायन्नित्यर्थः एतद्दगात्मकं वाक्यमुवाच ह ॥ १३ ॥

ऋचमुदाहरति। परोरज इति। सवितुः सर्वलोकस्य प्रसवनादुत्पादनात् सविता "सर्वलोकप्रसवनात् सविता स तु कीर्तितः" इतिस्मृतेः यद्वा पू प्रेरणे प्रचोदयिता सविता चात्र विष्णुरेव "विष्णोर्नामसहस्रं मे" इत्युपक्रम्य "सविता रविलोचन" इति सवितृशब्दस्य भगवन्नामतयापठितत्वात् तस्य सवितुर्देवस्य विष्णोर्भर्गस्तेजोमयं रूपम् इमः "इण् गतौ" इत्यस्माल्लट् उत्तमबहुवचने रूपमेतत् शरणं गच्छेम इत्यर्थः भर्गो विशिनष्टि परोरजः रजसः परं लोकं विलक्षणं लोकपरोऽत्र रजःशब्दः "लोका रजांस्युच्यन्ते" इति यास्कोक्तेः यद्वा रजः प्रकृतिमण्डलतः परं "क्षयन्तमस्य रजसः पराके आदित्यवर्णं तमसः परस्तात्" इति श्रुतेः रजसः प्रकृतिमण्डलात्पराके परस्तात् क्षयन्तं निवसन्तमित्यर्थः जातवेदः जातं सततमाविर्भूतं वेदः ज्ञानं यस्य तत् नित्यासङ्कुचितज्ञानमित्यर्थः अत्र सवितृदेवभर्गपदैर्गायत्री प्रत्यभिज्ञाता भवति तत्रापि यथोक्त एवार्थः देवस्य भर्गम् इम इति निर्देशः शिलापुत्रकस्य शरीरमितिवद्द्रष्टव्यः कीदृशोऽसौ देवः यस्य भर्गं इमस्तत्राह। मनसा संकल्परूपज्ञानेनैवाचिद्विदात्मकमिदं जगज्जजान ससर्ज यश्चादः स्वसृष्टजगत् स्वरेतसा स्वस्य रेतः स्वशक्तिः स्वशरीरभूतेन जीवेनाविश्यानुप्रविश्य यद्वा इदं चिदचिदात्मकं जगत् स्वतेजसात्मीयसंकल्परूपेण ज्ञानेन प्रविश्य पूर्वं जीवान्तःप्रविष्टोऽपि पुनः करणकलेवरप्रेरणानुकूलव्यापाराय स्वसंकल्परूपेण ज्ञानेनानुप्रविश्येत्यर्थः हंसं जीवं चष्टे पश्यति हंसं विशिनष्टि। गृध्राणां शब्दादिविषयान् काङ्क्षमाणां नृषद्रिङ्गिरां नृषीदति अवसादयति क्लेशयति संसारयति इति नृषद्बुद्धिस्तस्या रिङ्गिः रिङ्गणं वृत्तिः "रिगि गतौ" इति धातुः बुद्धिवृत्तिरित्यर्थः वया रात्याददाति कर्मफलानि भुङ्क्ते नृषद्रिङ्गिरस्तं नृषद्रिङ्गिरां छान्दसत्वात्। वा छन्दसि। इति पूर्वरूपत्वाभावे सवर्णदीर्घं इति नृषद्रिङ्गिरं हंसमाचष्टे इतिपदैः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति" इति श्रुतिः प्रत्यभिज्ञाता भवति तत्रापि यथोक्त एवार्थः ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तमोऽध्यायः ॥७॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कीदृशमिच्छारूपमित्यतस्तद्विवृणोति। यत्रेति। यत्र चक्रनदीनाम सरित्प्रवरा उभयतो नाभिभिरूर्ध्वाधश्चक्राङ्कितैर्दपच्चक्रैः शिलासमूहैः सर्वतः पवित्रीकरोतीत्यन्वयः ॥ १० ॥

स एकस्तस्मिन्पुलहाश्रमोपवने परां निर्वृतिमवापेत्यन्वयः उपहृतः संहृतः पूर्णः उपशमो भगवदिच्छा यस्य स तथा ॥११॥

प्रवर्द्धमानानुरागभारेण हृतं गतं हृदयशैथिल्यं संशयलक्षणं यस्य स तथा आत्मनि देहे रोमपुलकपुलकः रोमाङ्कुरसमूहः औत्कण्ठ्यमन्तःकरणधर्मविशेषः तेन प्रवृत्तमुत्पन्नं प्रणयबाष्पमानन्दाश्रुतेन निरुद्धावलोकनयनं यस्य स तथा निजरमणारुणचरणारविन्दयोरनुध्यानेनोपचितेन प्रवृद्धेन भक्तियोगेन परिप्लुतपरमाह्लादश्चायं गभीरहृदयावगाढधिषणश्चेति स तथोक्तः गम्भीरहृदये विष्णाववगाढा मग्ना धिषणा बुद्धिर्यस्य स तथा यद्वा परिप्लुतं परमाह्लादं गभीरहृदयं यस्य स तथा अत एव हराववगाढा धिषणा यस्य स तथा ॥ १२ ॥

ऐणाजिनवाससा कृष्णाजिनाख्यवस्त्रेणानुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेन च सूर्य इव विरोचमानः ॥ १३ ॥

एतन्मन्त्रार्थवाचकं पद्यमाह। परो इति। अथोशब्दवत्परोशब्दोऽव्ययं नाम रजसः प्रकृते परो परः उत्तमः निरस्तरजोगुणो वा सवितः जगतः कर्तः जातं सर्वं वेत्तीति जानवेदाः वेदः तस्य सम्बुद्धिर्जातवेदः वेदप्रतिपाद्यत्वाद्वेदस्य गर्भः वेदस्य तनय इत्यर्थः भगवानिदं जगज्जजान जनयामास किमुपकरणमत्राह। मनसेति। अनेन सवितृशब्दार्थो लक्षितः नियन्तृत्वमप्यस्यैवेत्याह। स्वरेतसेति। स्वरेतसा वीर्यगादः ब्रह्मादि जगत्प्रविश्य स्थितः दुःखिजगत्सम्बन्धेन दुःखलेशोऽपि नास्तीत्याह। हंसमिति। सर्वस्य दुःखहन्तृत्वाद्धंसः तं त्वं स्वतन्त्रं गृध्राणां जीवानामृषभं स्वामिनं गृधु अभिकाङ्क्षायाम् इतिधातुः जीवानां सर्वाकाङ्क्षा हि एवंविधं त्वां सङ्गृणीमः स्तुम इत्यन्वयः

परोरजा रजस्कत्वाद्वयीडचत्वाद्वयीसुतः।
गुणात्ययात्तुरीयश्च जातवेदाश्च सर्ववित् ॥
हंसो दुःखादिहानेन जीवेशत्वाच्च गृध्रराट्।
कालःसर्वनियन्तृत्वात्परमात्मा प्रकीर्तितः इति।

वचनात् उक्त एवार्थः परोरजा इत्यनेन ज्ञाताक्षरगायत्रीप्रतिपाद्यो नारायणो ममेष्टदेवतेत्युक्तं परोरजा रजस्कत्वादित्यत्रारजस्कत्वादिति पदच्छेदश्छान्दसत्वादुक्त इतिसन्तोष्टव्यम् ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

नाभिश्चक्रं दृशाश्चक्रैः शालग्रामैः ॥ १०—१२ ॥

तं प्रेमविकारमपि भगवतोऽर्च्चायां विघ्नमेव मत्वा तदुपासनायोग्यं बुद्धिवृत्तिप्रेरकतया तदुपासनान्तरं कृतमित्याह। इत्थमिति ॥ १३ ॥

तत्र गायत्रीसहोदरं मन्त्रमाह। परोरज इति ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

वात्सल्येन कर्त्रा हरिः सन्निधाप्यते सन्निहितः क्रियते केन रूपेण तत्रस्थानां निजभक्तानामिच्छाविषयीभूतेन श्रीकृष्णरामाद्यन्यतमेन रूपेणेत्यर्थः ॥ ६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आश्रमस्थानानि पवित्रीकरोतीत्यन्वयः । उभयत उपर्यधश्च नाभिर्येषां तैर्दृषच्चक्रैः शिलामध्यगतैश्चक्रैरेव चक्रनदी गण्डकी ॥ १० ॥

उपभृतः संवृद्धः उपशमो यस्य सः ॥ ११ ॥

द्रुतं द्रवीभूतं यत् हृदयं तेनैव हेतुना शैथिल्यं नित्यकृत्येऽप्यनुद्यमो यस्य सः आत्मनि देहे उद्भिद्यमाने रोमभिः पुलककुलं यस्य सः कप् समासान्तः । परिप्लुतेन सर्वतो व्याप्तेन परमाह्लादामृतेन गम्भीरो यो हृदयह्रदस्तत्रावगाढा निमग्ना धिषणा बुद्धिर्यस्य सः ॥ १२ ॥

तमपि प्रेमविकारं पूजायां विघ्नमिव मत्वा प्रेमविकारेणापि मे बुद्धिर्नैवखल्वाम्रियतामिति विमृश्य बुद्धिप्रकाशकेन केन च भगवन्मन्त्रेण भगवन्तमुपासितुं प्रवृत्ते इत्याह । इत्थमिति । सूर्यस्थां सूर्यमण्डलस्थभगवत्प्रकाशिकया ऋचा हिरण्मयं "ध्येयः सदा सवितृमण्डलमध्यवर्त्ती" इत्यादिनोक्तम् उज्जिहाने उदयति सति उज्जिहासु इति पाठे सन्नन्तात् पचाद्यच् उदेतुमिच्छति सतीत्यर्थः ॥ १३ ॥

सवितुर्देवस्य भर्गः तन्मण्डलमध्यस्थितम् ।
ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ॥

इत्यादि मन्त्रवाच्यं तेज इमः शरणं प्रजामः कीदृशं परोरजः रजसः प्रकृतेः परं विशुद्धसत्त्वात्मकं जातं वेदो धनं भक्तानामभीष्टं यतस्तत् यद्भर्गः कर्तृ मनसा सङ्कल्पमात्रेणैव इदं जगत् जजान जनयामास स्वरेतसा स्वीयचिच्छक्तितेजसा पुनरपि अदो जगत् आविश्य अन्तर्यामिरूपेण प्रविश्य गृध्राणां दुर्विषयसुखमभिकाङ्क्षन्तं मद्विधं हंसं जीवं चष्टे पश्यति कृपया पालयतीत्यर्थः केन प्रकारेणेत्यपेक्षायां स्वस्मिन् बुद्धिवृत्तिप्रेरणयैवेत्याह । नृषु सीदति उपाधितया तिष्ठतीति नृषत् बुद्धिस्तस्या रिङ्गिं स्वस्मिन्नेव गतिं राति ददातीति तत् अतस्तद्विषयिणी मे बुद्धिः केनाप्याधुना मास्त्विति भावः । वा छन्दसि । इत्यमिपूर्वरूपत्वाभावः ॥ १४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमे सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत्र पुलहाश्रमे वात्सल्यकर्तृत्वेन सन्निधाप्यते सन्निहितः क्रियते स्वेच्छारूपेण स्वभक्तेच्छानुसारिरूपेण ॥ ९ ॥

उभयतो नाभिर्येषां तैः दृषच्चक्रैः शिलामध्यगैश्चक्रैश्चक्रनदी गण्डकी यत्र क्षेत्रे आश्रमपदानि आश्रमस्थानानि सर्वतः पवित्रीकरोति ॥ १० ॥

समीहमानः सम्यक् कुर्वाणः ॥ ११ ॥

तया इत्थमविरतपुरुषपरिचर्यया निरन्तरभगवत्सेवया आत्मनि विश्वात्मनि भगवति प्रवृद्ध्यमानानुरागभरेण द्रुते द्रवीभूते हृदये शैथिल्यं यस्य सः प्रहर्षवेगेन उद्भिद्यमानं रोमपुलककुलकं रोमाञ्चवृन्दं यस्य समासान्तः ककारः औत्कण्ठ्यप्रवृत्तेन प्रणयवाष्पेण निरुद्धावलोके नयने यस्य सः एवम्भूतमानस भगवत्परिचर्यां न सस्मारेत्यन्वयः यतो निजरमण रविन्दयोरनुध्यानेन परिचितः समृद्धो यो भक्तियोगस्तेन प्लुतः सर्वतो व्याप्तः परमाह्लादो यस्मिन् गम्भीरहृदयह्रदे वगाढा निमग्ना धिषणा यस्य सः ॥ १२ ॥

इत्थं धृतानि भगवद्व्रतानि येन सः एणया हरिणया मैणेयं तदेव वासस्तेन अनुसवनाभिषेकेण त्रिकाल आर्द्राः कपिशाश्च याः कुटिला जटास्तासां कलापेन च मानः उज्जिहाने उद्गच्छति सूर्यमण्डले सूर्यान्तर्गतभगवत् कया ऋचा वर्णितं "ध्येयः सदा सवितृमण्डलमध्यवर्ती इत्यादिनोक्तं हिरण्मयं "एषोऽन्तरादित्ये हिरण्मयः पुरुषो हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः" इति श्रुतिप्रसिद्धं पुरुषं पूर्णं भगवन्तं सर्वधीप्रेरकं गायत्र्य पाद्यं श्रीवासुदेवमुपतिष्ठन् एतद्वक्ष्यमाणमुवाच ॥ १३ ॥

विश्वस्य प्रसवनात्सविता भगवान् वासुदेवस्तस्य हिरण्मयं रूपमिमः शरणं प्रजामः कीदृशं परोरजः प्रकृतेः परम् "आदित्यवर्णं तमसः परस्तात्"इति श्रुतेः हिरण्मयं रूपमित्यर्थः जातं वेदो धनं कर्मफलं कीदृशस्य सवितुर्यः इदं विश्वं मनसा सङ्कल्पेनैव ससर्ज यश्च अदः स्वसृष्टं विश्वं स्वरेतसा स्वप्रभावेण प्र गृध्राणां काङ्क्षन्तं हंसं जीवं विचष्टे पश्यति पालयति कथम्भूतं भर्गः नृषद्रिङ्गिरं नृषु सीदति करणत्वेन तिष्ठ नृषद्बुद्धिस्तस्याः रिङ्गिं रिङ्गणं गतिं राति ददातीति नृषद्रि राम् "वाछन्दसि ।६।१।१०६। इत्यमिपूर्वरूपत्वाभावः अयं मं गायत्र्यर्थप्रकाशकः ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तमाध्यायार्थप्रकाशः ॥ ७ ॥

---

### भाषाटीका

जिस क्षेत्र में अभीतक हरि भगवान् उहांवाले अपने भक्तों त्सल्य से इच्छा रूपसे शालिग्राम मूर्ति से रहते हैं ॥ ९ ॥

जहां पर चक्र नदी नामक पुण्य नदी दोनों किनारोंके ङ्कित शिला रूपों से सब देशको आश्रमों को पवित्र हैं ॥ १० ॥

उस पुलहाश्रम के उपवन में नानाप्रकारके पुष्प कोमल तुलसी दल शीतल जलोंसे कंदमूल फलों की सामग्रीसे भग का आराधन करते रहे तिससे विषयाभिलाषसे निवृत्त हो से दिव्य शान्ति प्राप्त होनेसे परम सन्तोषको प्राप्त होगये ॥ ११ ॥

उस भक्ति से इस प्रकार निरन्तर भगवत्सेवा के भगवान् के विषय बढा हुआ जो अनुरागका भार तिससे द्र हृदय होनेसे हृदय उनका शिथिल होगया है आनन्द के देह में पुलकावली का समूह होगया है उत्कण्ठासे प्रवृ प्रेम के आंसु तिनों से दृष्टि नेत्रों की रुकगई है इस प्रकार से अपने पति परमेश्वरके लाल कमल से चरणों ध्यान से बढा जो भक्तियोग तिससे व्याप्त जो परम

भाषाटीका

...मने गम्भीर हृदयरूपी हौद में जिनकी बुद्धि डूब गई हैं तब ...म पूजा को करते थे तिसको भी भूलगये ॥ १२ ॥

इस प्रकार से भगवान् के व्रत धारण करनेवाले भरतजी ...गवर्म के वस्त्र से सब काल में स्नान करने से गीले तथा ...रुड वर्णवाले टेढे जटों के समूह से शोभायमान होकर सूर्य-...मण्डल के उदय के समय हिरण्मय पुरुष भगवान् को सूर्यकी ...चा ( गायत्री ) से स्तुति करते हुये इस श्लोकको ...ते ॥ १३ ॥

प्रकृति से परे वर्तमान वेदोक्त कर्म फलके उत्पन्न करने वाले जिनने संकल्पसे इस जगत्को पैदा किया है जोकि सृज हुये इस संसार को अन्तर्यामी रूपसे प्रविष्ट होकर सुखकी काङ्क्षा करने वाले इस जीवकों देखते हैं तथा मनुष्यों में वर्तमान बुद्धि इन्द्रिय प्राणादिकों की गतिको प्रेरणा करते हैं तिन भगवान् सूर्यनारायण के तेजको हम ध्यान करते हैं ॥ १४ ॥

इति श्रीभागवत पञ्चमस्कन्ध सातमे अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ ७ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे सप्तमोऽध्यायः समाप्तः ॥ ७ ॥



## अष्टमोऽध्यायः ।

श्रीशुक उवाच ।

एकदा तु महानद्यां कृताभिषेकनैयमिकावश्यको ब्रह्माक्षरमभिगृणानो मुहूर्तत्रयमुदकान्त उपविवेश ॥ १ ॥

तत्र तदा राजन् ! हरिणी पिपासया जलाशयाभ्याशमेकैवोपजगाम ॥ २ ॥

तया पेपीयमान उदके तावदेवाविदूरेण नदतो मृगपतेरुन्नादो लोकभयङ्कर उदपतत् ॥ ३ ॥

तमुपश्रुत्य सा मृगवधूः प्रकृतिविक्लवा चकितनिरीक्षणा सुतरामपि हरिभयाभिनिवेशव्यग्रहृदया पारिप्लवदृष्टिरगततृषा भयात् सहसैवोच्चक्राम ॥ ४ ॥

तस्या उत्पतन्त्या अन्तर्वत्न्या उरुभयावगलितो योनिनिर्गतो गर्भः स्रोतसि निपपात ॥ ५ ॥

तत्प्रसवोत्सर्पणभयखेदातुरा स्वगणेन वियुज्यमाना कस्यांचिद्दर्यां कृष्णसारसती निपपाताथ च ममार ॥ ६ ॥

तं त्वेणकुणकं कृपणं स्रोतसाऽनूह्यमानमभिवीक्ष्यापविद्धं बन्धुरिवानुकम्पया राजर्षिर्भरत आदाय मृतमातरमित्याश्रमपदमनयत् ॥ ७ ॥

तस्य ह वा एणकुणक उच्चैरेतस्मिन्कृतनिजाभिमानस्याहरहस्तत्पोषणपालनलालनप्रीणनानुध्यानेनात्मनियमाः सह यमाः पुरुषपरिचर्यादय एकैकशः कतिपयेनाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमे भजतो विष्णुं तस्य कर्मान्तरायतः ।
एणरक्षाप्रसक्तस्य जातमेणत्वमीर्यते ॥ १ ॥
कृपयापि कृतः सङ्गः पतनायैव योगिनः ।
इति प्रदर्शयन्नाह भरतस्यैणपोषणम् ॥ २ ॥

नैयमिकं नित्यनैमित्तिकविधिप्राप्तमावश्यकमर्थप्राप्तं मूत्रोत्सर्गादि कृतमभिषेकादिकं येन । ब्रह्माक्षरं प्रणवं जपन् उदकान्ते नद्यास्तीरे ॥ १ ॥

जलाशयाभ्याशं नद्याः समीपे ॥ २ ॥

पेपीयमाने अत्यासक्त्या पीयमाने सति । तावदेव तत्क्षणमेव अविदूरेण सन्निधौ मृगपतेः सिंहस्य उन्नादो महानाद उद्गतः ॥ ३ ॥

प्रकृत्या स्वभावत एव विक्लवा व्याकुला सुतरां तु हरिभयस्याभिनिवेशेन व्यग्रं व्याकुलं हृदयं यस्याः पारिप्लवदृष्टिः परिभ्रान्तनेत्रा न गता तृषा तट् यस्याः उच्चक्राम नदीमुल्लङ्घितवती ॥ ४ ॥

अन्तर्वत्न्या गर्भिण्याः उरुभयेन स्थानाद्विचलितो योनेर्निर्गतः सन् स्रोतसि प्रवाहे निपतितः ॥ ५ ॥

तत्प्रसवो गर्भपातः उत्सर्पणमुल्लङ्घनं भयं च एतैः खेदेनातुरा पीडिता दर्यां गिरिगुहायां हरिणवधूर्निपपात तदनन्तरं मृता च ॥ ६ ॥

एणकुणकं हरिणबालकमपविद्धं बन्धुभिस्त्यक्तं कृपणत्वादिहेतुभिर्यानुकम्पा तया अनयत् ॥ ७ ॥

कृतो निजः स्वीय इत्यभिमानो येन पोषणं तृणादिना वृकादिभ्यो रक्षणं लालनं चुम्बनादिना प्रीणनं कण्डूयनादि एतैर्यदनुध्यानमासक्तिस्तेनात्मनो नियमाः स्नानादयो यमाः सत्यादयस्तत्सहिता ईश्वरपरिचर्यादयश्च प्रत्यहमेकैकशो वियुज्यमानाः सन्तः कतिपयेनाहर्गणेन सर्वे उत्सन्ना बभूवुः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स भरत एकदा कर्हिचिन्महानद्यां चक्रनद्यां कृताभिषेकः अभिषेकः स्नानं नैयमिकं नियतमावश्यकं नित्यनैमित्तिकं स ब्रह्माक्षरं प्रणवं जपन्नुदकान्ते नद्यास्तीरे मुहूर्तत्रयमुपविष्टवान् ॥ १ ॥

हे राजन् ! तत्र तीरे तदा भरतावस्थानसमये हरिणी पिपासया जलाभ्याशं जलसमीपं प्रत्येकैवासहाया

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तया हरिण्या उदके नितरां पेपीयमाने सति अविदूरे समीप एव नदतो ध्वनिं कुर्वतो मृगपतेः सिंहस्य लोकभयङ्कर उन्नादो ध्वनिरुदपद्यत हरिण्या श्रुतोऽभवदित्यर्थः ॥ २ ॥ ३ ॥

तमुन्नादमुपश्रुत्याकर्ण्य सा मृगस्य वधूर्हरिणी प्रकृत्या स्वभावेनैव विक्लवा व्याकुला सुतरां हरिभयस्य सिंहभयस्याभिनिवेशेन व्यग्रं व्याकुलं हृदयं यस्याः सा अत एव पारिप्लवदृष्टिश्चञ्चलदृष्टिरत एव चकितनिरीक्षणा प्रतिहतनिरीक्षणा अगतानपगता तृषा पिपासा यस्याः साः तथा भूतैव सहसा आशु उच्चक्राम नदीमुल्लङ्घितवती ॥ ४ ॥

उत्पतन्त्या अन्तर्वत्न्याः पूर्णगर्भिण्याः तस्या हरिण्या गर्भं उरुभयेन सिंहभयेनावगलितः स्वस्थानात्प्रच्युतो योनेर्निर्गतः स्रोतसि प्रवाहे निपपात पतितोऽभूदित्यर्थः ॥ ५ ॥

तत्प्रसवो गर्भपातः उत्सर्पणमुल्लङ्घनं भयं चेत्यतैः यः खेदस्तेनातुरा पीडिता स्वयूथेन वियुक्ता कृष्णसारसती कृष्णमृगवधूः कस्यांचिद्दर्यां गिरिगुहायां निपपात अथ पतनानन्तरं ममार मृतवती च ॥ ६ ॥

तत्स्रोतसा प्रवाहेणोह्यमानमेणकुणकमेणस्यापत्यमभिवीक्ष्य राजर्षिर्भरतः मृता माता यस्य तं मृतमातरं बन्धुभिः स्वपित्रादिभिरपविद्धं परित्यक्तमित्यनुकम्पया आदाय हस्ते गृहीत्वा स्वाश्रमस्थानमनयत्प्रापितवान् ॥ ७ ॥

एतस्मिन्नेणशिशौ कृतः निजाभिमानः आत्मीयत्वाभिमानो येन तस्य भरतस्याहरहस्तस्यैणशिशोः पोषणाद्यनुध्यानेन ध्यानेन तत्र पोषणमाहारेण पालनं व्याघ्रादिभ्यो रक्षणं प्रीणनं कण्डूयनादि लालनं करस्पर्शनं चुम्बनादि एतैर्यदनुध्यानमासक्तिस्तेनान्तरायेण भगवत्परिचर्यादयः आत्मनियमाः शौचाचारादयः सह यमाः अहिंसादिभिः सहिताः सर्वं एव धर्माः प्रत्यहमेकैकशो वियुज्यमानाः सन्तः कतिपयेनाहर्गणेनोदवसन्नुत्सन्ना बभूवुः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सत्सङ्गतिमन्तरेणेतरसङ्गतिः संसारहेतुरिति एतन्निरूप्यतेऽस्मिन्नध्याये तत्र भरतस्यैणशावसङ्गत्यानर्थप्रकारं कथयितुमुपक्रमते एकदेति। अभिषेकः स्नानमावश्यकं मूत्रपुरीषोत्सर्जनादि नैयमिकं नित्यकर्म अत्र क्रमस्त्वविवक्षितः एतावत्करोतीति क्रियमाणमनुष्ठानं नैयमिकं सन्ध्यानुष्ठानमावश्यकमिति वा ब्रह्माक्षरं प्रणवः गायत्री वा अघमर्षणसूक्तं वा जलाशयाभ्याशं नदीसमीपं तावत्तदानीं मृगपतिः व्याघ्रः ॥ १—३ ॥

प्रकृत्या स्वभावेन विक्लवा पारवश्योपेता अत एव चलितनिरीक्षणा चञ्चलावलोकना हरेर्व्याघ्रात्भयाभिनिवेशः भयोद्वेगः तेन व्यग्रं भ्रान्तं हृदयं यस्याः सा तथा "हरिर्व्याघ्रे पञ्चमुखे भेके सूर्यसमीरयोः" इति अत एव पारिप्लवदृष्टिः चञ्चलदृष्टिः तृषोत्तिष्ठन्तः उच्चक्रामोत्पपात ॥ ४ ॥

अन्तर्वत्न्या गर्भिण्याः उरुणा भयेनावगलितो निर्गतः स्रोतसि प्रवाहे प्रश्रवणं प्रसार उत्सर्पणमुत्पतनं हरिभयं च खेदश्च एतैरातुरा दर्यां महागर्ते कृष्णसारसती कृष्णमृगप्रिया ॥ ५ ॥ ६ ॥



एणकुणकं मृगबालकमपविद्धबन्धुं त्यक्तबन्धुजनं मृता माता यस्य स तथा तम् ॥ ७ ॥

पोषणं तृणादिदानेन लालनमुत्सङ्गारोपणादिना अनुध्यानं क्षेमचिन्तनं पोषणाद्यनुचिन्तनं वा यमा अहिंसादयः पुरुषपरिचर्यादयो विष्णुपूजादयः उदवसन् उत्सन्ना बभूवुः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

योगारम्भणतो यमनियमादितः स्वारब्धकर्मणा अपराधरूपेण योगभ्रष्टस्तापसो भगवदुपासकः ॥ १—३१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अष्टमे भरतश्चक्रे मृगपालनलालने।
तद्वियोगेन तच्चेताः प्राप तद्देहतामपि ॥
दयामपि त्यजेद्भक्तिबाधिनीमिति दर्शयन्।
तं मृगं पोषयामास कृष्णश्चतुरिमाम्बुधिः ॥
अनुतापाम्बुधौ क्षिप्त्वा स्वप्रेमाब्धौ निमज्जयन्।
तमेनं पोषयन् भक्तवात्सल्यं चाप्यदीदृशत्।

नैयमिकं नित्यनियमप्राप्तमावश्यकं मूत्रोत्सर्गादिकमभिषेकस्नानं च कृतं येन सः अग्न्याजादित्वादल्पाच् त्वाच्च अभिषेकशब्दस्य पूर्वनिपातः। अक्षरमक्षरात्मकं ब्रह्म कृष्णमन्त्रम्। अभिगृणानो जपन् ॥ १ ॥ २ ॥

पेपीयमाने अत्यासक्त्या पीयमाने मृगपतेः सिंहस्य ॥ ३ ॥

सहसा नादसमकालमेव भयात् त्रासात्। उच्चक्राम नद्या धारामुल्ललङ्घ ॥ ४ ॥

अन्तर्वत्न्या गर्भवत्याः ॥ ५ ॥

उत्प्रसव उच्चाकाशादेव गर्भपातः ॥ ६ ॥

एणकुणकं हरिणबालकम्। अपविद्धं बन्धुभिस्त्यक्तम् इति एतैः कृपाकरत्वादिहेतुभिर्या अनुकम्पा तया ॥ ७ ॥

पोषणं तृणादिना पालनं वृकादिभ्यः प्रीणनं कण्डूयनादिना लालनं चुम्बनादिना एतैर्यदनुध्यानमासक्तिस्तेन। उदवसन् उत्सन्ना बभूवुः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अष्टमे दैवादेणरक्षाप्रसक्त्या भरतस्यैणभावो वर्ण्यते। एकदेति। महानद्यां गण्डक्यां कृतमभिषेकादिकं येन सः तत्र अभिषेकः स्नानं नैयमिकं नित्यनैमित्तिकविधिप्राप्तमावश्यकं मूत्रोत्सर्गादि ब्रह्माक्षरं प्रणवं जपन् उपविवेश उपविष्टवान् ॥ १ ॥ २ ॥ ३ ॥

परिप्लवदृष्टिः परिभ्रान्तदृष्टिः उच्चक्राम नदीमुल्लङ्घितवती ॥ ४ ॥

महद्भयेन प्रचलितः अत एव योनितो निर्गतः ॥ ५ ॥

तत्तदा प्रसवोत्सर्पणभयैः गर्भपतननद्युल्लङ्घनसिंहभयैर्यः खेदस्तेनातुरा व्याकुला पपात ममार च ॥ ६ ॥

अहो बतायं हरिणकुणकः कृपण ईश्वररथचरणपरिभ्रमणरयेण स्वगणसुहृद्बन्धुभ्यः परि... शरणं च मोपसादितो मामेव मातापितरौ भ्रातृज्ञातीन् यौथिकांश्चैवोपेयाय (१) नान्यं कञ्चन वेद म... विस्रब्धश्चात एव मया मत्परायणस्य पोषणपालनप्रीणनलालनमनसूयुनाऽनुष्ठेयं शरण्योपे... विदुषा ॥ ९ ॥

नूनं ह्यार्याः साधव उपशमशीलाः कृपणसुहृद एवंविधार्थे स्वार्थानपि गुरुतरानुपेक्षन्ते ॥ १०

इति कृतानुषङ्ग आसनशयनाटनस्थानाशनादिषु सह मृगजहुना स्नेहानुबद्धहृदय आसीत् ।

कुशकुसुमसमित्पलाशफलमूलोदकान्याहरिष्यमाणो वृकसालावृकादिभ्यो भयमाशंसमानो सह हरिणकुणकेन वनं समाविशति ॥ १२ ॥

पथिषु च मुग्धभावेन तत्र तत्र विषक्तमतिप्रणयभरहृदयः कार्पण्यात्स्कन्धेनोद्वहति एवमु... उरसि चाधायोपलालयन् मुदं परमामवाप ॥ १३ ॥

क्रियायां निर्वर्त्यमानायामन्तरालेऽप्युत्थायोत्थाय यदैनमभिचक्षीत तर्हि वाव स वर्षपतिः प्र... स्थेन मनसा तस्मा आशिष आशास्ते स्वस्ति स्ताद्वत्स ! ते सर्वत इति ॥ १४ ॥

अन्यदा भृशमुद्विग्नमना नष्टद्रविण इव कृपणः सकरुणमतितर्षेण हरिणकुणकविरहविह्वलहृ... सन्तापस्तमेवानुशोचन् किल कश्मलं महदभिरम्भित इति होवाच ॥ १५ ॥

अपि बत स वै कृपण एणबालको मृतहरिणीसुतोऽहो ममानार्यस्य शठकिरातमतेरकृतसु... तस्य कृतविस्रम्भ आत्मप्रत्ययेन तदविगणयन् सुजन इवागमिष्यति ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तं तु एणकुणकं मृगदारकमितिशब्दो हेतौ यतः मृतमातरमत्रस्वकं बन्धुः पित्रादिर्यथाभवति तद्वत् आदाय आश्रमस्थानमनयत् ॥ ७ ॥

एतस्मिन् एणकुणके कृतनिजाभिमानस्य तस्य भरतस्य यत्तस्य मृगदारकस्य तृणादिना पोषणेन व्याघ्रादिभ्यः पालनेन कण्डूयनादिना प्रीणनेन चुम्बनादिना लालनेन यदनुध्यानं पुनःपुनश्चिन्तनं तेन पुरुषपरिचर्यादयः आत्मनो नियमाः स्नानादयः सह यमाः अहिंसादियमसहिताः अहरहः प्रातीदिनमेकैकशो वियुज्यमानाः कतिपयेनाहंगणेन सर्वे उदवसन् त्यक्ता बभूवुः ॥ ८ ॥

---

भाषाटीका ।

श्रीशुकदेवजी बोले श्रीभरतजी एक दिन महानदी गण्डकी मे स्नानादि नित्यकर्म को करके ओंङ्कार का जप करते तीन मुहूर्त तक जलके भींतर बैठे रह गये ॥ १ ॥

हे राजन् ! तहांपर तिसीसमय एक हरिणी प्यासी इकेली नदीके पास जलपीने को आई ॥ २ ॥

उसके जल पीने समय थोडे दूरमे गर्जन करते हुये सिंहका महा शब्द सुन पडा ॥ ३ ॥

उस शब्दको सुनते मात्र स्वभावसे डरने वाली वह मृगी चकित होकर देखने लगी अत्यन्त करके सिंहके भयसे ... हृदय कांप उठाहै उसकी दृष्टि चंचल हांगई है तो उसकी ... पीसकी शीघ्रही कूदगई ॥ ४ ॥

वह मृगी गर्भवती थी उसके कूदते समय बडे ... योनिके रस्ते निकला गर्भ नदी के प्रवाह मे गिरगया ॥ ५ ॥

उस गर्भके गिरने तथा कूदने के भयसे दुःखित हो ... यूथसे छूटी वह मृगी किसी कन्दरा मे गिरपडी ... मरगई ॥ ६ ॥

अतिदुःखित पडे हुये जलके प्रवाह मे बहते उस ... के बच्चे को देखकर गिरा हुआ जानकर राजर्षि ... वन्धु सरीके होकर कृपा करके उसकी माता मरी जानकर बच्चेको आश्रममे ले आये ॥ ७ ॥

उस मृगके बच्चे से निज सरीका अभिमान करने से ... प्रति उस के पालन पोषण लालन प्रीणन ध्यानके ... यम नियम भगवत्पूजा आदिकभी एक एक छूटते छूटे ... दिन में सबही छूटगये ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आसक्तिं प्रपञ्चयति । अहो इत्यादिना इति कृतानुषङ्ग... त्पर्यन्तेन ईश्वररथचरणः कालचक्रं तस्य परिभ्रमणवेगेन ... णादिभ्यो विभ्रंशितः मा इति मां च शरणं प्रापितः ...

(१) गोपायनंनान्यमिति श्रीवीरराघव श्रीविजयध्वजतीर्थयोः पाठः

श्रीधरस्वामिकृतभावार्थदीपिका ।

मातापित्रादिवृद्धत्यागेऽप्युपायाय प्राप्तः यौथिकात् यूथलज्ञातिनः । अनसूयुना एतन्निमित्तं मम स्वार्थो भ्रंशयतीति दोषदृष्टिमकुर्वता ॥९॥

तदेवाह । नूनं ह्यति ॥ १० ॥

इत्येवं कृतोऽनुषङ्ग आसक्तिर्येन । मृगजहुना मृगापत्येन सह स्नेहेनानुबद्धं हृदयं येन ॥ ११ ॥

स्नेहानुबन्धमेव प्रपञ्चयति । कुशकुसुमेत्यादिना स्वधयतीत्यन्तेन । सालावृकाः श्वानः यदा भयं शङ्कमानो भवति तदा तेन सह वनं समाविशति ॥ १२ ॥

अतिशयितः प्रणयभरो यस्य तद्धृदयं यस्य सः ॥ १३ ॥

क्रियायां देवपूजादिलक्षणायां वर्षपतिर्भरतः प्रकृतिस्थेन स्वस्थेन स्तात् भूयात् ॥ १४ ॥

अन्यदादर्शने सकरुणं यथा भवत्येवमनुशोचन्निति होवाचेत्यन्वयः । अतितर्षणात्यौत्सुक्येन हरिणकुणकविरहेण विह्वले हृदये सन्तापो यस्य कश्मलं मोहं प्रापितः सन् ॥ १५ ॥

अपीति सम्भावनायां वेतत्यनुकम्पायाम् अहो इति खेदे शठकिरातयोरिव वञ्चनपरा क्रूरा च मतिर्यस्याकृतपुण्यस्य निर्भाग्यस्य मम तच्छाठ्यादिकमगणयन्नचिन्तयन्नागमिष्यति किम् अपराधाचिन्तने हेतुः आत्मप्रत्ययेन स्वचित्तशुद्ध्या कृतविश्वासः सन् सुजनो न यथा गणयति तद्वत् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदासक्तिं प्रपञ्चयति । अहो इत्यादिना इति कृतानुषङ्ग इत्यन्तेन । अयं हरिणकुणकः ईश्वररथचरणं कालचक्रं तस्य परिभ्रमणवेगेन स्वगणादिभ्यो विवर्जित अत एव कृपणो दीनोऽयं मां शरणमासादितः प्राप्तश्च मामेव मातापित्रादिवृद्धा उपेयाय प्राप्तः यूथिकाः सङ्घातिनः मोपेयाय मामेव गोपायनं गोप्तारमधिकं मन्वानः मत्तोऽन्यं कञ्चन गोप्तारं न वेद मय्येवातिविस्रब्धातितरां विश्वासयुक्ता मतिर्यस्य सः अतः कारणादेवं मत्परायणस्य मदेकशरणस्य हरिणकुणकस्य पोषणादिकम् एतस्मान्निमित्तं मम स्वार्थो नश्यतीत्यसूयारहितेन मयावश्यमनुष्ठेयं हि यस्माच्छरण्योपेक्षा शरणागतानादरः विदुषां दोषः प्रत्यवायकरः यद्वा शरणं गन्तव्या शरण्या रक्षकत्वेन विश्वसनीयास्तेषामुपेक्षा शरणागतविषयेष्वनादरः विदुषां दोष इति ॥ ९ ॥

अत एवार्याः साधवः परोपकारशीलाः उपशमस्वभावाः कृपणेषु सुहृदः सौहार्दवन्त एवंविधार्थे शरणागतरक्षणार्थे स्वार्थान् स्वप्रयोजनानि गुरुतरानपि उपेक्षन्ते गुरुतरानपि प्रयोजनमनादृत्यैवंविधशरणागतरक्षणं कुर्वन्ति नूनमित्येवं कृतानुषङ्गः कृत अनुषङ्गः आसक्तिर्येन भरतः आसनाद्यवस्थासु तत्रासनमुपवेशनमटनं सञ्चरणमशनं भोजनं कन्दमूलादीनां मृगापत्येन सह स्नेहस्तेनानुविद्धं हृदयं येन तथाभूत आसीत् ॥ १० ॥

स्नेहानुबन्धमेवाह । कुशकुसुमेत्यादिना । स्वदयन्तीत्यन्तेन कुशादीन्याहरिष्यमाणः यदि मृगेण विना गच्छामि चेत्तर्हीनं वृकादयो भक्षयेयुरिति बुद्ध्या शालावृकादिभ्यो भयमाशङ्कमानः सालावृका अरण्यश्वानः हरिणकुणकेन सहैव वनं प्रविशति पथि पथि च मुग्धभावेन सौकुमार्येण मौग्ध्यगठ्येन वा विषक्तागनिरासक्तमतिर्वा गन्तुमसमर्थो भवति नेच्छति वा मृगस्तदा तं प्रणयस्य स्नेहस्योत्कर्षो यस्मिंस्तद्धृदयं यस्य तथाभूतो भरतः कार्पण्यान्मृगविश्लेषजडः स्वासाद्विष्णुस्वरूपाद्दैन्यात् स्कन्धेनाद्वहति स्कन्धयोरारोप्य गच्छति एवमासनसमये उत्सङ्गे शयनसमये उरसि चाधाय परमां मुदमवाप प्राप्तवान् ॥ ११ ॥ १२ ॥ १३ ॥

क्रियायां नित्यनैमित्तिकादिक्रियायां निर्वर्त्यमानायां क्रियमाणायां सत्यामन्तराले मध्ये क्षणे क्षणे उत्थायोत्थाय यर्हि न मृगमभिचक्षीत पश्यति तर्हि वा तदा हि स वर्षपतिः भरतः प्रकृतिस्थेन मनसा तस्मै मृगाय आशिष आशास्ते आशीराशासनमेवाह । स्वस्तीति । हे वत्स ! ते तुभ्यं सर्वतः सर्वत्र देशे काले च स्वस्ति स्यादिति आशास्ते स्तादिति पाठ एवमेवार्थः ॥ १४ ॥

अन्यथा मृगस्यादर्शने तु सकरुणं यथा भवति तथा एवमनुशोचन्निति वक्ष्यमाणप्रकारेण प्रोवाचेत्यन्वयः कथम्भूत अनुशोचन्नधन इव नितरां भीतमना अतितर्षणौत्सुक्येन हरिणकुणकस्यैव विरहेण विह्वले हृदये सन्तापो यस्य महत्कश्मलं मोहमभिलम्भितः प्रापितः ॥ १५ ॥

किमुवाच तदाह । अपीति । मम तदनार्यत्वादिकमविगणयन् कृतः विश्रम्भो येन तथाभूत एवात्मप्रत्ययेन स्वबुद्ध्या एव सुजन इवागमिष्यत्यपि आगच्छेत् किं क्षेमेण वृकादिभिरनुपहतं तत्र हेतुः दैवेन भगवता गुप्तं रक्षितं मदाश्रमसमीपवने शष्पाणि कोमलतृणानि चरन्तं भक्षयन्तमपि द्रक्ष्यामि ॥ १६ ॥ १७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ईश्वररथचरणस्य कालचक्रस्य परिभ्रमणरयेण गमनागमनवेगेन मा मां गोपायनं गोप्तारं रक्षितारं शरणं प्राप्तस्योपेक्षया महान् दोषो भवतीति दोषविदुषा ॥ ९ ॥

मृगपोषणादिना भगवदुपासनाभङ्ग इति तत्राह । नूनमिति ॥ १० ॥

इत्युक्तप्रकारेण कृतानुषङ्गः कृतस्नेहाभिनिवेशः मृगजहुना मृगबालकेन ॥ ११ ॥

आहरिष्यमाण आनयिष्यन् ॥ १२ ॥ १३ ॥

वर्षपतिः भरतखण्डनाथः प्रकृतिस्थेन स्वस्थेन ॥ १४ ॥

अन्यदा अदर्शने अतितर्षेण अत्युत्कण्ठया कश्मलं विषादम् अभिरम्भित आश्रितः ॥ १५ ॥

आत्मप्रत्ययेन स्वमनःशुद्ध्या तन्ममौदासीन्यमविगणयन्नविचिन्तयन् स्वजनः पुत्र इव ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आसक्तिं प्रपञ्चयति । अहो इत्यादिना इति कृतानुषङ्ग इत्येतत्पर्यन्तेन । ईश्वरस्य रथचरणः कालचक्रं तस्य परिभ्रमणवेगेन परिवर्जितः वियोजितः मा माम् अनसूयुना एतन्निमित्तं मम स्वार्थो

अपि क्षेमेणास्मिन्नाश्रमोपवने शष्पाणि चरन्तं देवगुप्तं द्रक्ष्यामि ॥ १७ ॥
अपि च न वृकः शालावृकोऽन्यतमो वा नैकचर एकचरो वा भक्षयति ॥ १८ ॥
निम्लोचति ह भगवान् सकलजगत्क्षेमोदयस्त्रय्यात्माऽद्यापि मम न मृगवधून्यास आगच्छति

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अश्यतीति दोषदृष्टिमकुर्वता शरण्यकर्तृकोपेक्षायां दोषं जानता ॥ ९ ॥

यत एष एव मे वस्तुतः स्वार्थ इत्याह । नूनमिति ॥ १० ॥

अनुषङ्ग आसक्तिः मृगजहुना मृगापत्येन ॥ ११ ॥

स्नेहानुबन्धमेव प्रपञ्चयति । कुशकुसुमेति । शाला वृकाः कपि-क्रोष्टुश्वानः तदादिभ्यः ॥ १२ ॥

तत्र तत्र महाकर्दमोपरितले कोमलतृणादौ मुग्धभावेन कर्दममध्ये निमङ्क्ष्यामीति ज्ञानराहित्येन विपक्कमासकम् ॥ १३ ॥

क्रियायां भगवत्परिचर्यायामपि अन्तराले मध्येऽपि अभिचक्षीत न जाने क्व गतो मे हरिणबालक इति उत्थाय पश्येत् प्रकृतिस्थेन तद्दर्शनानन्दप्राप्त्यर्थम् ॥ १४ ॥

अन्यदा दैवाददर्शने सतीत्यर्थः । अतितर्षेण तद्दर्शनातितृष्णया कश्मलं मोहमभिरम्भितः प्रापितः ॥ १५ ॥

अपीति सम्भावनायां वतेत्यनुकम्पायाम् अहो इति खेदार्थे आश्चर्ये । अनार्यस्य तत्पालनपोषणादावसावधानत्वान्निर्दयस्यात एव शठकिरातयोरिव क्रूरा मति र्यस्य तत्र हेतुरकृतसुकृतस्य भाग्यहीनस्य मम तन्निर्दयत्वादिकमपराधमगणयन् आगमिष्यति किमपराधागणने हेतुः आत्मप्रत्ययेन आत्मवन्मन्यते जगदिति न्यायेन स्वस्य शुद्धचित्तत्वान्मामपि शुद्धचित्तं प्रतियन्निस्यर्थः । अत एव कृतविस्रम्भः अविश्वास्येऽपि मयि विश्वस्तः सन् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ईश्वरस्य रथचरणः कालचक्रं तस्य भ्रमणवेगेन मोपसादितः ॥ ९ ॥ १० ॥

कृतोऽनुषङ्गोऽनुरागो येन सः ॥ ११ ॥

शालावृकः श्वा ॥ १२ ॥

अति अतिशयितः प्रणयभरो यस्य तद्धृदयं यस्य सः ॥ १३ ॥

प्रकृतिस्थेन स्वभावस्थेन स्तात् स्यात् ॥ १४ ॥

अन्यदा तददर्शने सकरुणं यथा स्यात्तथा तमेवानुशोचन् महत्कश्मलं कष्टमभिरम्भितः प्राप्तः सन् इति वक्ष्यमाणमुवाच ॥ १५ ॥

शठकिरातयोरिव मन्दा निर्दया च मतिर्यस्य मम तदनार्यत्वमगणयन्नागमिष्यति किम् ॥ १६ ॥

---

भाषाटीका ।

भरतजी कहनेलगे अहो आश्चर्य है यह हरिणका बच्चा बडा दुखी है भगवान् के कालचक्र के भ्रमण के वेगसे अपने अपने समूह सुहृत् बन्धुओं से रहित होगया है तब मेरे को प्राप्त हुआ है मेरेही को माता पिता मानता है ज्ञाति यूथ वाले समझकर आया है और कोई को नहीं है मेरे में बडा विश्वास करता है इसी से मेरे में इसका पालन पोषण प्रीणन लालन इस के अवगुणों न देखकर मेरे को करना चाहिये क्योंकि मैं शरण उपेक्षा दोषको जानने वाला हूं ॥ ९ ॥

यह बात निश्चित है कि उत्तम साधु शान्तिशील के दयालु पुरुष इस प्रकार के कार्य मे अपने स्वार्थ को छोडदेते हैं ॥ १० ॥

इस प्रकार से भरतजी आसक्ति करके आसन शयन बैठन समयोंपर मृगबालक के साथ स्नेह से बंधगये ॥

जिसवखत कुशा पुष्प लकडी पत्ता फल मूल जल लेने जाते थे तिस वखत भेडिया गीदड व्याघ्रादिकों से डर कर जब जाते तब हरिण के बच्चेको साथ मे लेजाते

रस्तामें भोलेपने से जहां तहां मृगका बच्चा तृणों में आसक्त होता तब भरतजी बडे प्रेमसे कृपाके मारे को कांधे में उठालेते थे तैसेही गोदमे छातीमें धडे सन्तुष्ट होते थे ॥ १३ ॥

पूजादि क्रियाके समाप्तहोनेपर या मध्यमें ही जब उसको देखते थे तब वे वर्षपति भरतजी निश्चय से उस के वास्ते आशीर्वाद करते कहते कि हे वत्स सर्वत्र कल्याण होवै ॥ १४ ॥

जब किसी दिन मृग स्वभाव से वह चलागया तब दुःखित खोगये धन के बरोबर अति अधैर्य से होने उत्कण्ठा होनेसे मृग के बच्चे के विरह से हृदय मे विह्वल सन्ताप करने लगे महा मोह को प्राप्त होकर बोलने लगे ॥

बोले वह दुखित मृगबालक मरी हुई हरिणी का मेरेपर विश्वास करता था मैं क्षुद्र हूं शठ किरातकी बुद्धि हूं मैंने पुण्य नहीं किये हैं तोभी वह मृगबालक हमारे गुणों को न गिनकर सुजन के माफिक आजायगा क्या

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शष्पाणि कोमलतृणानि ॥ १७ ॥

नैकचरो यूथचरः सूकरादिः । यद्वा । एक एव चरं क्रूरस्वभावो व्याघ्रादिर्न भक्षयति किम् ॥ १८ ॥

सकललोकस्य क्षेमो यस्मात्स उदयो यस्य वेदत्रयी स्वरूपं यस्य सः सूर्यो निम्लोचत्यस्तं याति मृगवधू निक्षेपभूतः ॥ १९ ॥

हरिण एव राजकुमार आगत्य मामपि खिन्नसुवाचि

अपिस्विदकृतसुकृतमागत्य मां सुखयिष्यति हरिणराजकुमारो विविधरुचिरदर्शनीयनिजमृगदारकविनोदैरसन्तोषं स्वानामपनुदन् ॥ २० ॥

क्ष्वेलिकायां मां मृषासमाधिनाऽऽमीलितदृशं प्रेमसंरम्भेण चकितचकित आगत्य पृषदपरुषविषाणाग्रेण लुठति ॥ २१ ॥

आसादितहविषि बर्हिषि दूषिते मयोपालब्धो भीतभीतः सपद्युपरतरास [१] ऋषिकुमारवदवहितकरणकलाप आस्ते ॥ २२ ॥

किंवा अरे आचरितं तपस्तपस्विन्याऽनया यदियमवनिः सविनयकृष्णसारतनयतनुतरसुभगशिवतमाखरखुर [२] पदपङ्क्तिभिर्द्रविणाविधुरातुरस्य कृपणस्य मम द्रविणपदवीं सूचयन्त्यात्मानं च सर्वतः कृतकौतुकं द्विजानां स्वर्गापवर्गकामानां देवयजनं करोति ॥ २३ ॥

अपिस्विदसौ [३] भगवानुडुपतिरेनं मृगपतिभयान्मृतमातरं मृगबालकं स्वाश्रमपरिभ्रष्टमनुकम्पया कृपणजनवत्सलः परिपाति ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न्वयः किं कुर्वन् विविधै रुचिरैर्दर्शनीयैर्निजैर्मृगदारकविनोदैः स्वीयानां खेदमपनुदन् ॥ २० ॥

सम्भवति चैतदित्याह । क्ष्वेलिकायां क्रीडायां मृषा यः समाधिस्तेनामीलिते दृशौ येन तं मां प्रेमसंरम्भेण प्रणयकोपेन पृषज्जलबिन्दुस्तद्वदपरुषेण मृदुना विषाणाग्रेण लुठति सङ्घट्टयति ॥ २१ ॥

आसादितं हविर्यस्मिन्बर्हिषि दर्भे दन्ताकर्षणादिना चापलेन दूषिते सति । दूषित्वेति पाठे बर्हिषि विषये दूषणं कृत्वेत्यर्थः मयाऽधिक्षिप्तः संस्तत्क्षणमेवोपरतक्रीडो निश्चल आस्ते ॥ २२ ॥

इति बहुधा प्रलप्योत्थाय बहिर्निर्गत्य तत्खुरखातभूभागोपलम्भसंभ्रान्तहृदय आह । किंवेति । अरे अहो अनया क्षित्या किंवा तप आचरितं तपस्विन्या सभाग्यया । यद्यस्मादियं सविनयस्य कृष्णसारतनयस्य तनुतराः सुभगाश्च शिवतमाश्चाखराश्च खुरा येषु तेषां पदानां तत्रतत्राङ्कितानां पङ्क्तिभिर्द्रविणं मृगस्तेन रहितस्यात एवातुरस्य दुःखितस्य मम द्रविणमार्गं सूचयन्ती सती स्वात्मानं च ताभिः कृतमण्डनं द्विजानां देवयजनं यज्ञभूमिं करोति । "यस्मिन्देशे मृगः कृष्णस्तस्मिन् धर्मान्निबोधत" इति स्मृतेः ॥ २३ ॥

तावदुदिते चन्द्रे मृगं दृष्ट्वा स्वमृगत्वं संभावयन्नाह । अपिस्विदिति ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वृकः शालावृको वा नैकचरो यूथचरो वराहादिरसहायचरो व्याघ्रादिर्वा अपि न भक्षयति सकललोकानां क्षेमो यस्मात्स उदयो यस्य त्रयी वेद आत्मा स्वरूपं यस्य सः सूर्यो भगवान् निम्लोचत्यस्तं गच्छति किलाद्यापि मम मृगवधून्यासः निक्षेपभूतः मृगो नागच्छति हरिण एव राजकुमारः हरिणसंबन्धिकुमारो वा आगत्य मामपि सुखयिष्यतीत्यन्वयः किं कुर्वन् विविधैः रुचिरैर्दर्शनीयैर्मृगदारकविनोदैः स्वीयानां नः असन्तोषं खेदमपनुदन् ॥ १८—२० ॥

सम्भवति चैतदित्याह । क्ष्वेलिकायां स्वेन सह क्रीडायां मृषा यः समाधिस्तेनामीलिते दृशौ येन तं प्रेमसंरम्भेण प्रणयकोपेन पृषज्जलबिन्दुः तद्वदपरुषेण मृदुना विषाणाग्रेण चकितं चकितं पुनः पुनः प्रतिहतं यथा तथा आवृत्य परितो व्यावृत्य लुठति सङ्घट्टयति ॥ २१ ॥

आसादितं हविर्यस्मिन् बर्हिषि दर्भे दूषिते दन्ताकर्षणादिना चापलत्वेन दूषिते सति मयाधिक्षिप्तः सन् भीतः तत्क्षणमेव उपरतत्रासः निवृत्तक्रीडः अवहितः निश्चलीकृतः करणानामिन्द्रियाणां कलापो येन एवंभूतः ऋषेः कुमारवदास्ते ॥ २२ ॥

इति बहुधा प्रलप्योत्थाय बहिर्निर्गतः सन् खुराघातभूभागोपलम्भसंभ्रान्तहृदय आह । किम्वेति । अरे अहो तपस्विन्या सम्भाव्यमानयाऽनया क्षित्या किं तप आचरितं यद्यस्मादियं क्षितिः सविनयस्य कृष्णसारतनयस्य तनुतराः सुभगाश्च शिवतमाश्च खराश्च कठिनाश्च खुराः येषु तेषां पातानां तत्राङ्कितानां पङ्क्तिभिर्द्रविणं मृगस्तेन रहितस्यात एवातुरस्य दुःखितस्य मम द्रविणमार्गं सूचयन्ती सती स्वात्मानं च ताभिः पङ्क्तिभिः कृतमण्डनं स्वर्गापवर्गकामानां द्विजानां यज्ञभूमिं करोति "यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्मान्निबोधत" इति स्मृतेः ॥ २३ ॥

उदिते चन्द्रे तस्मिन् मृगं दृष्ट्वा स्वमृगत्वं सम्भावयन्नाह । अपिस्विदिति । सिंहभयान्मृता माता यस्य तं मदाश्रमात्परिभ्रष्टं मृगबालकं कृपणजनवत्सलोऽसौ भगवानुडुपतिश्चन्द्रः कृपयाऽपिस्वित्परिपाति ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्षेमेण सुखेन ॥ १७ ॥
नैकचरः अयूपान्मृगविशेषः ॥ १८ ॥

(१) उपरतरभस इति श्रीविजयध्वजतीर्थपाठः । (२) पातपङ्क्तिभिरिति श्रीवीरराघवाचार्यपाठः । (३) भगवानुडुपहति श्रीविजयध्वजतीर्थपाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निम्लोचत्यस्तं गच्छति मृगवधून्यासः मृगीनिक्षेपलक्षणोऽयं ॥ १९ ॥

विविधाश्च रुचिराश्च दर्शनीयाश्च निजाः स्वजातिप्रयुक्ताश्च मृगदारकाणां मृगबालकानां ये विनोदा लीलाविशेषास्तैः ॥२०॥

क्ष्वेलिकया मृगजातिक्रियया नादविशेषक्रियया वा प्रेमसंरम्भेण स्नेहोद्रेकेण प्रणयकोपेन वा सचकितं सभयं पृषतः कृष्णमृगः अपरुषविषाणाग्रेण कोमलशृङ्गमुखेन लुठति परिवर्तयति अभिमुखीकरोतीत्यर्थः उपहन्तीति वा "लुठ उपघात" इति धातुः लुण्ठतीति पाठे अनुष्ठानालस्यं करोति लुठि आलस्ये ॥ २१ ॥

आसादितं अवरोपितं हविर्यस्मिंस्तत्तथा तस्मिन्बर्हिषि भक्षणादिना दूषिते सति उपालब्धो भर्त्सित उपरतरसः शान्ताभिनिवेशः अत एवावहितकरणकलापः संवृतसर्वेन्द्रियव्यापारसमूहः ॥ २२ ॥

अनया भूम्या तप आचरितं तत् किमिति शेषः सविनयस्य कृष्णसारतनयस्य तनुतरा अतिशयेनाणवश्च सुभगाः सुन्दराश्च शिवतमाः सुखतमाश्च खराः परुषाश्च खुरा ये तेषां पदानां निक्षेपचिह्नानां पङ्क्तिभिर्द्रविणविधुरवद्दरिद्रवदातुरस्य न केवलं ममोपकरोति किन्तु द्विजानामपीत्याह । आत्मानमिति । कृष्णसारतनयस्य पदपङ्क्तिभिः कृतकौतुकं कृतमङ्गलमात्मानं द्विजानां देवयजनं च करोति इदं प्रलप्योत्थाय बहिर्गत्वा पश्यतो हि वचनं "यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्मान्निबोधत" इति स्मृतिः ॥ २३ ॥

अधुनेन्दूदयेऽप्यनागतं दृष्ट्वा तत्प्रलापप्रकारमाह। अपिस्विदिति। उडुपश्चन्द्र एनं मृगबालकं परिपालयत्यपि स्विदित्यन्वयः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवेन कृपालुना मदिष्टदेवेनैवं रचितम् ॥ १७ ॥

नैकचरो यूथचरः सूकरादिः एक एवं चरति यः क्रूरो व्याघ्रादिर्न भक्षयति किम् ॥ १८ ॥

निम्लोचति सम्प्रत्यस्तं याति सकलजगतामपि क्षेममुदयादेव यस्य सः केवलं ममैव दुर्भगस्याक्षेममिति भावः । त्रय्यात्मा वेदस्वरूपो वेदप्रवर्त्तको वा केवलमहमेव वेदोक्तदयाधर्मविमुख इति भावः । मृगवध्वा न्यासो निक्षेपभूतः ॥ १९ ॥

प्रेम्णैव तद्गुणमुत्कीर्त्तयन् विलपति । अपिस्विदित्यादिना । सुखयति सुखयिष्यति ॥ २० ॥

क्ष्वेलिकायां क्रीडायां नृपासमाधिनेति रे मूढ ! त्वां पुण्यतो मे स्मरणकीर्त्तनादि निलक्षणं न निर्वहति तत्त्वं मया त्यक्तो यथेष्टमितो याहीति नृपैवाक्रुश्य नृपासमाधिनेति तच्चेष्टितविद्यायाः प्रावल्यात् प्रेमसंरम्भेण प्रणयकोपेन पृषत् जलविन्दुस्तद्वदपरुषेण मृदुना विषाणाग्रेण लुठति सङ्घट्टयति ॥ २१ ॥

आसादितं हविर्यस्मिन् तस्मिन् बर्हिषि दर्भे दन्तस्पर्शेन दूषिते सति दूषित्वेति पाठे बर्हिषि विषये दूषणं कृत्वा स्थितवतीत्यर्थः मयोपालब्धः आः किमरे करोषीत्यधिक्षिप्तः ... क्रीडः अवहितकरणकलापः निश्चलीकृतसर्वेन्द्रियः ॥ २२ ॥

इति बहुधा प्रलप्योत्थाय बहिर्निर्गत्य तत् खुर... गोपलब्ध्या प्रेम्णैवारोपितेन तत्र माहात्म्येन स्वं ... सम्बोध्य विलपति अरे मन्दभाग्य ! भरत ! वृथा तपस्विन् ! ... अवन्या किं तप आचरितं तत्तपस्त्वया न तप्तमिति ... यद्वा विशेषानुक्त्या अरे चतुर्दशलोका ब्रूत रे ब्रूत ... मध्ये अनयेति युष्माकमीदृशं तपो नास्तीति भावः । तनु... त्यादिविशेषणैस्तन्माधुर्यास्वादः स्वस्य व्यञ्जितः । द्रविण... सूचयन्तीति भो दुःखिन् ! भरत ! किं रोदिषि अनयैव सुख... या पदव्या वनं प्रविशन्तं मृगबालकं स्वप्राणधनं प्राप्... कृपया मा माश्वासयतीत्यर्थः । आत्मानं स्वं च ताभिः पद... भिर्मण्डितत्वात् कृतकौतुकं देवयजनं यज्ञस्थलं करोति "यस्मिन् ... मृगः कृष्णस्तस्मिन् धर्मान्निबोधत" इति स्मृतेः ॥ २३ ॥

ऊर्ध्वमवलोक्य तत्रोपलब्धे चन्द्रे स्वमृगं सम्भावयन्नाह । ... स्विदिति । स्वाश्रमात् परिभ्रष्टमिति ममैव पापिष्ठस्यान... दिति भावः भगवानिति भगवत्त्वं विना ईदृशं भाग्यं न ... वेदिति भावः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शष्पाणि बालतृणानि ॥ १७ ॥

नैकचरः यूथचरः वराहादिः एकचरः व्याघ्रादिः ॥ १८ ॥

सकलजगतः क्षेमो यस्मात्स उदयो यस्य त्रय्यात्म... स्तुत्यर्थं प्रोच्यमानायामात्मा मनो यस्य सः वेदत्रयी मात्म... वा यस्य स भगवान् सूर्यः निम्लोचति अस्तं याति मम मृ... न्यासः मृगभार्ययोपन्यस्तः ॥ १९ ॥

हरिणराजस्य कुमारः विविधरुचिरदर्शनीयैर्निजैर्मृग... विनोदैः स्वानामसन्तोषमपनुदन् आगत्य माम् अपिस्वित् ... सुखयिष्यति ॥ २० ॥

क्ष्वेलिकायां बाललीलायां प्रेमसंरम्भेण प्रणयकोपेन च... चकितः अतिक्षुभितः माम् आवृत्य पृषद्वत् जलबिन्दुवत् ... मृदुना विषाणाग्रेण लुठति सङ्घट्टयति ॥ २१ ॥

आसादितं निहितं हविर्यस्मिन् तस्मिन् बर्हिषि दर्भे ... चिद्दूषिते सति मयोपालब्धः सन् सपद्येव उपरतरासः ... क्रीडः ॥ २२ ॥

तदन्वेषणे प्रवृत्तस्तत्खुराङ्कितां भूमिं दृष्ट्वाह । किं... यतः सविनयस्य कृष्णसारतनयस्य तनुतराः सुभगाश्च ... तमाश्च अखराश्च खुरा येषां पदानां तत्र तत्राङ्कितानां ... द्रविणेन धनभूतेन मृगेन रहितस्य अत एवातुरस्य मम ... पदवीं सूचयन्ती स्वात्मानं च ताभिः कृतमङ्गलं द्विजानां ... करोति तथा च स्मृतिः "यस्मिन्देशे मृगः कृष्णः तस्मिन् ध... र्मान्निबो... भत" इति ॥ २३ ॥

चन्द्रे मृगं दृष्ट्वाह । अपीति ॥ २४ ॥

---

किंवाऽऽत्मजविश्लेषज्वरदवदहनशिखाभिरुपतप्यमानहृदयस्थलनलिनीकं मामुपसृतमृगीतनयं शिशिरशान्तानुरागगुणितनिजवदनसलिलामृतमयगभस्तिभिः स्वधयतीति च ॥ २५ ॥

एवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो विभ्रंशितः स (१)योगतापसो भगवदाराधनलक्षणाच्च कथमितरथा जात्यन्तर एणकुणक आसङ्गः साक्षान्निःश्रेयसप्रतिपक्षतया प्राक्परित्यक्तदुस्त्यजहृदयाभिजातस्य तस्यैवमन्तरायविहतयोगारम्भणस्य राजर्षेर्भरतस्य तावन्मृगार्भकपोषणपालनप्रीणनलालनानुषङ्गेणाविगणयत आत्मानमहिरिवाखुबिलं दुरतिक्रमः कालः करालरभस आपद्यत ॥ २६ ॥

तदानीमपि पार्श्ववर्तिनमात्मजमिवानुशोचन्तमभिवीक्षमाणो मृग एवाभिनिवेशितमना विसृज्य लोकमिमं सह मृगेण कलेवरं मृतमनु न मृतजन्मानुस्मृतिरितरवन्मृगशरीरमवाप ॥ २७ ॥

तत्रापि ह वा आत्मनो मृगत्वकारणं भगवदाराधनसमीहानुभावेनानुस्मृत्य भृशमनुतप्यमान आह ॥ २८ ॥

---

### भाषाटीका

क्या कल्याण से इहां आवैगा देवतोंने उसकी रक्षा की होगी मै अपने आश्रमके वनके पास घास चरते हुये उस को देखूंगा ॥ १७ ॥

क्या उसको भेडिया गिद्ड अथवा दूसरा कोई जनावर इकेला या सब के साथ मिलकर उस बच्चे को खाते न होंगे ॥ १८ ॥

सब संसार के कल्याण करने को उदय होनेवाले भगवान् सूर्यनारायण अस्त होते हैं अब तक भी मृगी का धरोहर सा बच्चा नहीं आया है ॥ १९ ॥

अथवा मैने जो बडे सुकृत किये होंगे तो हरिणराजा-का कुमार अपने जनों के दुःखको दूर करने को नाना प्रकार के मनोहर दर्शनीय अपने मृगबच्चा के मनोहर चेष्टा-ओंसे मेरेको सुखित करेगा ॥ २० ॥

जब कभी हम खेल करनेको झूंठी समाधि लगाकर नेत्र बन्दकरलेते थे तब वह बडे प्रेमके विश्वास से चकित-सा होकर आता था फिर जलबिन्दु सरीखे के शीतल शीगों के अग्रभाग से मेरेको धीरे कुरेदता था ॥ २१ ॥

जब जिन कुशोंपर हम हविको रखतेथे तिन कुशों को वह जूठे करदेता था तब हम धमकाते थे तो डरतासराका होकर शीघ्रही खेलको छोडकर सब इन्द्रियों की चेष्टा को छोडकर ऋषिपुत्र सरीखा हो रहता था ॥ २२ ॥

अहो इस तपस्विनी पृथिवी ने क्या तपस्या की है जो कि बडे विनय वाले मृगबालक के अतिसूक्ष्म सुन्दर माङ्ग-लिक कोमल खुरों के चिन्ह की पंक्तियों से मृगरूपी धन-रहित आतुर कृपण मेरे धन मृगकी रस्ता का जनाती हुई पृथिवी चारोंतरफ मृगके कौतुक खुरासे अपने को कौतुकी करके ब्राह्मणों के यज्ञकरनेलायक पवित्र करती है ॥ २३

कि वा यह भगवान् तारापति चन्द्रमा माना जिसकी मरगई है अपने आश्रम से छूटगया है ऐसे मृगबालको देख कर दुःखितों के दयालु होने से सिंहके भयसे इसबच्चे की रक्षा करेंगे क्या ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चन्द्ररश्मिस्पर्शसुखं प्राप्याह । किंवेति । सम्भावनायामात्मजविश्लेषेण ज्वरस्तापः स एव दवदहनस्तस्य ज्वालाभिरुपतप्यमाना हृदयरूपा स्थलनलिनी यस्य जलस्थं पद्मं तापं सोढुं क्षममिति स्थलग्रहणमुपसृतोऽनुगतो मृगीतनयो येन तं मां चन्द्रः स्वधयति शान्तिं गमयति । कैः । शिशिरं च तच्छान्तं च मय्यनुरागेण गुणितं चावर्तितं पुनःपुनः स्रवच्च तद्वदनसलिलं तदेवामृतमया गभस्तयस्तैः लोके हि मन्त्रवादिनो वदनसलिलैस्तापं शमयन्तीति प्रसिद्धम् । उपसृत्य मृगीतनय इति पाठे मनोरथान्तरमेतत् उपसृत्य मृगीतनयः किंवा मां स्वधायिष्यतीति । शेषं समानम् ॥ २५ ॥

मृगदारकवदाभासमानेन भगवदाराधनलक्षणात्कर्मणश्च विभ्रंशितः प्रारब्धकर्मैवात्र हेतुः । कथमितरथेति । साक्षात्स्वपुत्रवत्कथमासङ्गः स्यात् पूर्वं परित्यक्ता दुस्त्यजा औरसा येन । अन्तरायेण विहतं योगारम्भणं यस्य । आत्मानमविगणयत आत्मचिन्तामकुर्वतः तावदेव तीव्रवेगः कालो मृत्युसमयश्चापद्यत ॥ २६ ॥

लोकं देहं मृगेण सहितं विसृज्य प्राकृत इव मृगशरीरमवाप । कथम्भूतः । कलेवरं मृतमनु न मृता न विनष्टा पूर्वजन्मानुस्मृतिर्यस्य ॥ २७ ॥

आह स्वचित्ते ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

चन्द्ररश्मिस्पर्शसुखं प्राप्याह । किम्वेति । सम्भावनायामात्मजविश्लेषेण मृगवियोगेन योऽज्वरस्तापः स एव दहनः तस्य ज्वालाभिरुपतप्यमाना हृदयरूपा स्थलनलिनी यस्य तज्जलस्थं पद्मं तापं सोढुमलमिति स्थलग्रहणं उपसृतोऽनुगतः मृगीतनयो

---

(१)स्वयोगतपस इति श्रीवीरराघवाचार्यपाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

येन मां योऽयं चन्द्रः स्वधयति विश्रान्तिं विगमयति कैः
शिशिरवच्छान्तं च मय्यनुरागेण गुणितं चावर्तितं च पुनः
पुनः स्रवत् यत्सलिलं त एवामृतमया गभस्तयः किरणास्तैः
लोके हि मान्त्रिका मुखसलिलैस्तापं शमयन्तीति प्रसिद्धम् उप-
सृतमृगीतनय इति पाठे मनोरथान्तरमेतत् उपसृतः प्राप्तो
मृगीतनयः किं वा स्वधयतीति शेषं सर्वं समानम् ॥ २५ ॥

इत्युक्तरीत्या एवं शब्दोऽनुक्तमनोरथान्तरद्योतकः उक्ता अनुक्ता-
श्चाघटमानाः ये मनोरथास्तैराकृष्टं हृदयं यस्य स भरतः मृगदार-
काभासेन मृगपुत्रव्याजेन प्रारब्धकर्मणामन्तरायभूतेन योगार-
म्भणतः ज्ञानयोगारम्भात्स्वयोगतपसः स्ववर्णाश्रमोचितकर्म-
योगरूपात्तपसः भगवदाराधनलक्षणाद्भगवद्भक्तिरूपाच्च तपसः
विभ्रंशितो विभ्रष्टोऽभूत् प्रारब्धकर्मत्वे हेतुः कथमितरथेति
इतरथा प्रारब्धकर्ममूलत्वाभावे मृगदारकासक्तिः जात्यन्तरेण-
कुणके साक्षात् स्वपुत्र इव कथमासङ्गः स्यात् श्रेयसः प्रति-
पक्षतया मुक्तिविरोधितया पूर्वं परित्यक्ताः दुस्त्यजाः हृदयाभि-
जाताः औरसा येन तस्यैव पुनरेवंविधेनान्तरायेण विहितो
योगारम्भो यस्य तस्य राजर्षेर्भरतस्य मृगार्भकस्य पोषणादि-
निमित्तेनानुषङ्गेणात्मानमविगणयतः प्रमत्तस्य तावदेव करा-
लरभसः तीव्रवेगः कालः मृत्युकालः दुरतिक्रमः अवर्जनीयः मूष-
कविलं प्रलाहिः सर्प इवापद्यत प्राप्तः ॥ २६ ॥

स भरतस्तदानीमपि मरणसमयेऽपि स्वपार्श्ववर्तिनं मृग-
मात्मजमिवानुशोचन्तमभिवीक्षमाणः आत्मीयाभिमानेन पश्यन्
मृगमिवासक्तमना इमं देहं मृगेण सह विसृज्य कलेवरमन्व-
नुत्सृज्य अमृता अविनष्टा पूर्वजन्मानुस्मृतिर्यस्य तथाभूतः इत-
रवत्प्राकृतवन्मृगशरीरमवाप ।

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय ! सदा तद्भावभावितः ॥

इत्युक्तरीत्या मृगमनुस्मरन्मृगत्वमेवावापेत्यर्थः ॥ २७ ॥

तत्र मृगजन्मन्यात्मनः मृगत्वनिमित्तं पौर्वभवभगवदाराधना-
नुष्ठानप्रभावेण मृगासङ्ग एवेत्यनुस्मृत्य नितरामनुतप्यमानः
आह ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किञ्च रक्षित्वा चाटुकुर्वन्महं प्रयच्छत्यपिक्विदित्याह । एष
इति । उपसृतश्चासौ मृगीतनयः उपसृत्य गभस्तिभिर्मां स्वधयति
लेढ्यपि क्विदित्यन्वयः शिशिराणि शीतलानि च तानि अनुरागेण
गुणितानि बहुलीकृतानि च तानि निजवदननिर्गतसलिलानि
तान्येवामृतगभस्तयश्चन्द्ररश्मयस्तैः किं विशिष्टं मामात्मज
इवात्मजो मृगीतनयस्तस्य विश्लेषनिमित्तो यो ज्वरः सन्तापः
स एव दवदहनः वनाग्निस्तस्य शिखाभिरुपतप्यमानं दह्यमानं
हृदयस्थलनलिनं यस्य स तथा तम् ॥ २५ ॥

सङ्गफलमाह । इतीति इत्यादिप्रलपन् । सः योगतापसो भरतो
योगारम्भणतो भगवदाराधनलक्षणात्कर्मणश्च विभ्रंशितः
परिमोचित इत्यन्वयः केन मृगदारकरूपेणाभासमन्ताद्भासत इति
तेन स्वारब्धकर्मणा मनुष्यस्यैवमघटमानो मृगे मनोरथः स्ने-
हविशेषस्तेनाकुलं हृदयं यस्य स तथा इतरथा प्रारब्ध-
भावे जात्यन्तरेऽस्वजातिविलक्षणमृगजातावासङ्गः स्नेहः
स्यात् योगो ध्यानं तस्य भरतस्य कथम्भूतस्य साक्षा
सस्य प्रतिपक्षतया विघ्नत्वेन हेतुना पूर्वपरित्यक्तास्त्य
क्या हृदयाभिजाता औरसाः पुत्राः येन स तथा तस्य
मृगपोतलालनाद्याकुलचेतसो भरतस्य मरणसमयासन्नि
तस्येति । अन्तरायेण विघ्नेन विहतं योगारम्भणं ध्याने
यस्य स तथा तस्य पोषणादिषु सतानुषङ्गेण निरन्तरा
भिनिवेशेनात्मानं श्रीहरिं स्वं वा विगणयतो चिन्तयतः
रभसो वेगो यस्य स तथा ॥ २६ ॥

इमं लोकं भरतोपाध्युपलक्षितशरीरं मृगेण सह
विसृज्य इतरमृगवन्मृगशरीरमवाप पूर्वकलेवरमनु तस्यानु
न स्मृता जन्मानुस्मृतिर्जातिस्मृतिर्येन स तथा पूर्वदेहत
स्मृतिरित्यर्थः ॥ २७ ॥

भगवदाराधनस्य समीहानुष्ठानं तस्य सामर्थ्येन ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चन्द्रकिरणानां दाहकत्वमनुभूयाहो मदात्मजविरहे
किरणोऽप्ययमुष्णकिरणो भवति हन्त हन्त स किं मे समयो
ष्यति यत्र स मृगीतनयो भूयोऽपि मामुपैष्यति चन्द्रोऽप्ययं
शिशिरयिष्यतीत्यभिलषन्नाह । किञ्चेति । उपसृतो मृगीतन
तथाविधं मां चन्द्रोऽयं सुधयति विरहसन्तप्तस्याङ्गस्य
दलुनीकरणात् सुधावन्तं किं नु करिष्यतीति । "विश्मनोऽहं
मतुपो लुका रूपं कैः शिशिरश्च तत् शान्तमनुग्रं च मय्यनु
गुणितश्च यद्वदनसलिलं पुनः पुनः स्रवत् तदेवामृतमया
यस्तैः । लोके हि मान्त्रिका यथा वदनसलिलैस्तापं
तथैवायमपीत्यर्थः उपसृतो मृगीतनय इति पाठे स एव
प्रेम्णा निजमुखस्पर्शेनेत्यर्थः ॥ २५ ॥

मृगदारकमाभासयति प्रकाशयति यत्तेन स्वारब्ध
प्रारब्धं हि द्विविधं शोभनमशोभनञ्च तत्राद्यं भक्ति
नयनतीव्राञ्जनदानन्यायेन स्वभक्त्युत्कण्ठावर्धनविद्
वतैव स्वेच्छयैव प्रारब्धतुल्यत्वात् प्रारब्धमुपपाद्यते
कों भक्त्युद्रेक एव स्यात्तत् खलूत्पन्नरतीनामपि
द्वितीयन्तु प्राचीनप्राकृतकर्ममयमेव । यदुदक्तो विषया
एव स्यात् अत्र तु शोभनेनारब्धेनेति साक्षात् सुशब्द
स्तः योगेन भक्तियोगेनैव हेतुना तापसः सर्वविद
तपः कुर्वाणः । अप्यर्थे चकारः । यद्यपि भक्तियोगो
कुलो न भवति तदपि भगवदिच्छया भगवदाराधना
इत्यर्थः ॥ २६ ॥

इतरथेति। भगवदिच्छामयं प्रारब्धं यदि न स्याद्धृदयं
याभिजाताः स्वपुत्राः । यद्वा । मृगदारक एवाभासो यस्य
तेन स्वस्यारब्धकर्मणेति प्रारब्धकर्माभासेनेत्यर्थः । य
न्मुक्तानामभिमानाभावेऽप्यभिमानाभासस्तथैव आत
प्रारब्धाभावेऽपि प्रारब्धाभासः । अथवा मृगदारकाभासेन
मृगदारकेण विभ्रंशितः कीदृशेन शोभनमारब्धं कर्म
तस्य मृगदारकस्य सुखप्रारब्धवशादेव भरतस्तं

अहो कष्टं भ्रष्टोऽहमात्मवतामनुपथाद्यद्विमुक्तसमस्तसङ्गस्य विविक्तपुण्यारण्यशरणस्यात्मवत आत्मनि सर्वेषामात्मनां भगवति वासुदेवे तदनुश्रवणमननसंकीर्त्तनाराधनानुस्मरणाभियोगेनाशून्यसकल-यामेन कालेन समावेशितं समाहितं कात्स्न्येन मनस्तत्तु पुनर्ममाबुधस्यारान्मृगसुतमनु परिसुस्राव ॥२९॥

इत्येवं निगूढनिर्वेदो विसृज्य मृगीं मातरं पुनर्भगवत्क्षेत्रमुपशमशीलमुनिगणदयितं शालग्रामं पुलस्त्यपुलहाश्रमं कालञ्जरात्प्रत्याजगाम ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इतरथा यदि मृगस्य सुखप्रारब्धं न स्यात्तदा तस्यापि तत् पिपा-लयिषा न स्यादित्यर्थः । भरतस्य विभ्रंशस्तु "यद्याधनो लब्धधने विनष्टे तच्चिन्तयान्यभिभूतो न वेद" इति भगवदुक्तन्यायेन मृगज-न्मनि ब्राह्मणजन्मनि च भक्त्युत्कण्ठावर्द्धनार्थो भगवतैव निर्मितः । आत्मानमविगणयतः । आत्मचिन्तामकुर्वतः आखुबिलमहिरिव तं भरतं कालो मृत्युः अनुशोचन्तं मृगं लोकं देहं मृगेण सहितं विसृज्य मृगशरीरमवाप । कलेवरं मृतमनु न मृता न विनष्टा पूर्वजन्मानुस्मृतिर्यस्य सः इतरवदितरः प्राकृतः कर्मी तद्वदिति । भरतस्तु कर्मातीत इत्यत एव तस्य प्रारब्धाभावः प्राक् सम-र्थितः ॥ २७ ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किम्वा उडुपतिः आत्मजः मम पुत्रो मृगस्तद्विश्लेषेण वियो-गेन यो ज्वरस्तापः स एव दववहनो दवाग्निस्तस्य ज्वालाभि-रुपतप्यमाना हृदयात्मिका स्थलनलिनी यस्य तमुपसृतः अन्विष्टः मृगीसुतो येन तं शिशिरं शीतलं च तच्छा-न्तमुद्वेगहरं च मय्यनुरागेण गुणितं निरन्तरं प्रवर्तितं यद्वदन-सलिलं तदेवामृतमया गभस्तयः किरणास्तैः मां स्वधयति शान्तिं गमयति ॥ २५ ॥

स भरतः एवम्भूतैरघटमानैर्मनोरथैराकुलं हृदयं यस्य सः योगतापसः योगी ज्ञानयोगभक्तियोगी तल्लाभार्थं यत्तपः तीर्थ-वासभूशयनफलाहारदेहशोषणादिरूपं तद्विशिष्टः मृगदारकाभा-सेन मृगबालकवदाभासमानेन प्रारब्धकर्मणा योगारम्भणातः योगयोः ज्ञानयोगभक्तियोगयोः आरम्भणात्तदुपक्रमणभूता-त्तपसः भगवदाराधनलक्षणात् तदर्चनवन्दनरूपात्साधनभक्ति-योगाच्च विभ्रंशितः इतरथा मृगदारकव्याजेन प्रारब्धकर्मणा स्वधर्मनिष्ठाभ्रंशानङ्गीकारे प्राक्परित्यक्ता दुस्त्यजा हृदयाभिजाताः येन तस्य राजर्षेः साक्षात् पुत्रवत् जात्यन्तरे एणकुणके श्रेयसो मोक्षस्य प्रतिपक्षतया विरोधित्वेन आसङ्गः आसक्तिः कथं घटेतेति शेषः एवमुक्तप्रकारेणान्तरायेण विहतं योगारम्भणं यस्य तस्य राजर्षेः मृगार्भकपोषणाद्यनुपङ्गेण आत्मानमविगणयतः आत्मनः कृतार्थताचिन्तामकुर्वतः तावदेव दुरतिक्रमो दुर्लङ्घ्यः करालरभ-सस्तीव्रवेगः कालः मृत्युसमयश्चापद्यत ॥ २६ ॥

इदानीं मृत्युकालेऽपि अनुशोचन्तमात्मजमिव पार्श्ववर्तिनं मृगमभिवीक्षमाणः इमं लोकं लोक्यन्ते कर्मफलान्यनेनेति देहं मृगेन सहितं विसृज्य मृगे एवाभिनिवेशितमना मृगशरीरमवाप ।

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् !
तं तमेवैति कौन्तेय ! सदा तद्भावभावितः इति

श्रीमुखवचनात् किन्तु भगवदाराधनप्रभावात् कलेवरं मृत-मनु न मृता न विलुप्ता पूर्वजन्मानुस्मृतिर्यस्य सः ॥ २७ ॥

आह स्वचित्ते एव ॥ २८ ॥

भाषाटीका ।

अथवा पुत्रके वियोगसे जो ज्वर वनके अग्नी सरीका तिसकी शिखाओं से तपायमान हैं हृदयरूपस्थल कमल जिसका तथा आश्रय किया है मृगीके तनयको जिसने तिस मेरेको शीतल शान्त अनुराग युक्त निज मुखके अमृत रूप किरणों से मेरं को अमृत से चन्द्रमा तृप्त करेगा क्या ॥ २५ ॥

इस प्रकार से मनके सन्तुष्ट न होने से हृदय आकुल होगया फिर मृगपुत्रके स्वरूप वाले प्रारब्ध कर्मसे योगारम्भ-से भ्रष्ट होगये योगयुक्त तापस वे भरतजी भगवान् के आरा-धनसे भ्रष्ट होगये यदि प्रारब्धमे न होता तो मोक्षके विरोधि जानकर जिनने पहिले निज पुत्रों को छोड दिये थे तिनको-दूसरे जातके मृगबालक मे क्यों आसक्ति होती तब इस प्रकार-से उन राजर्षि भरतजी के विघ्नसे योगारम्भ भ्रष्ट होने से मृग-के बालक के पोषण पालन प्रीणन लालन की आसक्ति से आत्माको न गिननेसे जैसे मूंसेके बिलमे सर्प आजावे तैसे बडे विकराल वेगवाला काल जिसको कि कोइ अति क्रमण नाहि कर सकता है सो आगया ॥ २६ ॥

तिस समयपर भी पास में बैठकर शोचते हुये पुत्रसरीके उस मृगबालक को देखते हुये भरतजी मृगही में मन को प्रवेश-करने से मृग के साथ इस शरीर को छोडकर शरीर के छूटने से भी स्मृति के न छूटने से भगवद्विमुख सरीके मृगशरीर को प्राप्त होगये ॥ २७ ॥

तिस मृगजन्म में भी पहिले भगवान् की आराधना के प्रभाव से अपने मृगजन्म के कारण को स्मरण करके बड़ा अनुताप करते हुये यह वचन बोले ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अहो कष्टं धीराणां मार्गाद्भ्रष्टोऽहम् भ्रंशमेवाह । यद्यनो-विमुक्ताः समस्ताः सङ्गा येन विविक्तं पुण्यारण्यं शरणं यस्य आत्मवतो धीरस्य मम मनः सर्वेषां भूतानामात्मनि वासुदेवे समावेशितं समाहितं च निश्चलं सदाराद्दूरादेव सुस्राव गलितं निःसृतम् । केन समावेशितम् । तस्यानुश्रवणादिष्व-भियोगेनाभिनिवेशेनाशून्याः सकला यामा यस्मिंस्तेन कालेन॥२९॥

निगूढोऽनाविष्कृतो निर्वेदो येन शालवृक्षोपलक्षितं ग्रामम् कालञ्जरात्त्र हरिणो जातस्तस्मात्पर्वतात् ॥ ३० ॥

तस्मिन्नपि कालं प्रतीक्षमाणः सङ्गाच्च भृशमुद्विग्न आत्मसहचरः शुष्कपर्णतृणवीरुधा वर्तमानो मृगत्वनिमित्तावसानमेव गणयन्मृगशरीरं तीर्थोदकक्लिन्नमुत्ससर्ज ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
पारमहंस्यां संहितायां वैयासिक्याम्
भरतचरिते अष्टमोऽध्यायः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मैव सहचरो यस्य एकाकी प्रतीक्षमाणस्यैव प्रपञ्चः मृगत्वनिमित्तेति । तीर्थोदकेन क्लिन्नमार्द्रमर्धोदकस्थमित्यर्थः ॥३१॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह। अहो इति। आत्मविदां ज्ञानिनामनुपथान्मार्गानुसरणादहं भ्रष्टः अहो कथमिति खेदं प्राप्तस्तमेवाह। यद्यस्मात्त्यक्ताः समस्ता देहतदनुबन्धिसङ्गा येन विविक्तं निर्जनं पुण्यारण्यं तदेव शरणं गृहं यस्य आत्मवतः जितेन्द्रियस्य मम सर्वेषां भूतानामन्तरात्मभूते भगवति वासुदेवे तस्य भगवतः अनुश्रवणाद्यभिनिवेशेनाशून्याः सकला यामा यस्मिंस्तेन कालेन सम्यगावेशितं कार्त्स्न्येन सर्वविषयेभ्यः समाहितं प्रत्याहृतं यन्मनस्तदेव पुनरधुना रागान्मृगसङ्गाबुधस्य मम मृगसुतमनुसृत्य परितः कार्त्स्न्येन योगात् सुस्राव भ्रंशितम् ॥ २९ ॥

इत्येवं निगूढः अनाविष्कृतो निर्वेदो येन सः मातरं मृगीं हरिणीं विसृज्य उपशमशीलानां दयितं प्रियं भगवदभिव्यक्तिस्थानं शालग्रामाख्यं पुलहाश्रमं प्रतिकालंजराख्यारण्योत्पत्तिस्थानात्पर्वतादाजगाम ॥ ३० ॥

तस्मिन्पुलहाश्रमे आत्मैव सहचरः सहायो यस्य एकाकी समल्पं कालं मृगदेहावसानकालं प्रतीक्षमाणः सङ्गात्कस्यचिदपि सङ्गान्नितरां भीतः शुष्कपर्णादिना आहारेण वर्तमानः कालं नयन्नात्मनो मृगत्वनिमित्तस्य प्रारब्धस्यावसानमेव गणयन् तीर्थोदके क्लिन्नमार्द्रम् अर्द्धोदकस्थितं मृगशरीरमुत्ससर्ज तत्याज ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमाह। अहो इति। किं कष्टं तदाह। भ्रष्ट इति। आत्मवन्तानुपथात् आत्मा स्वामी ममास्तीति भावयन्त आत्मवन्तः परमात्मज्ञानिन इत्यर्थः तेषां समूहः आत्मवत्ता जनताशब्दवत्तस्यानुपथादनुगमनलक्षणमार्गात् आत्मास्यास्तीत्यात्मवान् तस्य भावः आत्मवत्ता तस्यानुपथादनुसरणात् "पथगतौ" इति धातोः भ्रष्टः आलम्ब्यं मुक्त्वाधः पतितः कुत एतदिति तत्राह। यदिति। सर्वेषामात्मनां चेतनानामात्मनि अन्तर्यामिणि वासुदेवे भगवति कार्त्स्न्येन कालेन समावेशितं समाहितं सन्निधाय [illegible] यन्मम मनः पुनस्तदेव मम मनः रागान्मृगसुतमनुसुस्राव [illegible] मभूदित्यन्वयः तस्मादिति शेषः विविक्तं च तत्पुण्यसाधनं च [illegible] अरण्यं विविक्तपुण्यारण्यं तदेव शरणं यस्य सः तथा [illegible] त्मवतो बुद्धिमतः कथं कार्त्स्न्येनेति विशेषणं सङ्गत्या[illegible] णार्थमन्यप्रसङ्गसम्भवादिति तत्राह। तदिति। तस्य वासुदेवस्य [illegible] श्रवणादिषु योऽभियोग आग्रहलक्षणः प्रयत्नस्तेनाशून्या [illegible] नाभूताः सफलाः सकला यामाः यस्मिंस्तः तथा तेन ॥२९॥

निगूढनिर्वेदोऽन्तर्गतवैराग्यः दयितं प्रियं कालंजरादिति [illegible]

आत्मसहचर एकाकी मृगत्वनिमित्तस्य दुष्कर्मणः प्रा[illegible] स्यावसानं नाशमेव गणयंश्चिन्तयन्संख्यां कुर्वन्निति वा क्लिन्न[illegible] मार्द्रमिति ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टमोऽध्यायः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
अष्टमोऽध्यायः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मवतो धीरस्य आत्मनां जीवानामात्मनि परमा[illegible] तदनुश्रवणादीनामभियोगोऽभिग्रहणं तेन समाहितं निग्रहं [illegible] नस्तत् सुस्राव अधः पपात ॥ २९ ॥

कालञ्जरात् स्वजन्मभूमिपर्वतात् शालग्रामं शालग्राम[illegible] वेत्यम् ॥ ३०--३१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमस्याष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनुपथात् योगमार्गात् अहो कष्टमहं भ्रष्टः तत्प्रकार[illegible] यदिति । यद्यतः विमुक्ताः समस्ताः सङ्गा येन [illegible] विविक्तं ग्राम्यजनशून्यं पुण्यारण्यं तदेव शरणं गृहं [illegible] आत्मा परमात्मोपास्यत्वेन विद्यते यस्य तस्य मम मनः [illegible] चित्पदार्थानामात्मनि सर्वात्मनि वासुदेवे समावेशितं [illegible] निश्चलं च सत् आराद्दूरादेव सुस्राव पद्मपत्राच्चया [illegible]

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रादिःसृतं भवति केन समावेशितं तस्य वासुदेवस्य अनुश्रवणा- घ्यभियोगोऽभिनिवेशस्तेन अशून्याः सकला यामा यस्मिन् तेन कालेन ॥ २९ ॥

इत्येवं नितरां गूढो गुप्तो निर्वेदो यस्य सः कालंजरात् स्वोत्प- त्तिस्थानाद् गिरेः शालग्रामाख्यं भगवत्क्षेत्रं पुनराजगाम ॥ ३० ॥

तस्मिन् भगवत्क्षेत्रे आत्मैव सहचरो यस्य सः कालं मृग- त्वप्रयोगकालं प्रतीक्षमाणः तदेव विवृणोति। मृगत्वनिमित्तायसानं प्रापमिति तदवसाने तीर्थोदकेन क्लिन्नमार्द्रं तीर्थोदके स्नानं कृत्वेत्यर्थः मृगशरीरमुत्ससर्ज ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टमाध्यायार्थप्रकाशः॥ ८ ॥

---

भाषाटीका।

अहो बड़ी खेदकी बात है जो कि मैं आत्मज्ञानियों के मार्ग- भ्रष्ट होगया मैंने सबकी आसक्ति छोडिदी थी एकान्त पुण्य- वनमें वास करता या आत्मज्ञानी था सब आत्माओं के आत्मा भगवान् वासुदेव मे उनके श्रवण मनन कीर्तन आराधन अनु- स्मरण के अभि निवेश से किसी वखत खाली न रखने से सब- प्रकार से समर्पित जो मेरे मूर्खका मन फिर भी शीघ्रही मृग- सुतके पीछे नष्ट होगया ॥ २९ ॥

इस प्रकार से अत्यन्त वैराग्य होने से माता मृगीको छोड- कर शान्त शीलवाले मुनिगणों का प्रिय भगवत् क्षेत्र पुलह पुलस्त्याश्रम शालग्राम क्षेत्रको कालंजर पर्वत से मृग भरतजी चले गये ॥ ३० ॥

तिस क्षेत्रमें भी सङ्गसे अति उद्वेग को प्राप्त होकर केवल आत्माके साथी होकर कालकी प्रतीक्षा करके सूखे पत्ते घास लता इनों से वृत्ति करके मृग पने के समाप्ति को गिनते हुये तीर्थों के जलमें भींजे हुये मृगशरीर को त्याग दिया ॥ ३१ ॥

इति श्रीभागवत पञ्चमस्कन्ध अष्टमाध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ ८ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे अष्टमोऽध्यायः समाप्तः ॥ ८ ॥



## नवमोऽध्यायः ।

### श्रीशुक उवाच ।

अथ कस्यचिद्द्विजवरस्याङ्गिरःप्रवरस्य शमदमतपःस्वाध्यायाध्ययनत्यागसन्तोषतितिक्षाप्रश्रयविद्याऽनसूयात्मज्ञानानन्दयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणा नव सोदर्या अङ्गजा बभूवुर्मिथुनं च यवीयस्यां भार्यायाम् ॥ १ ॥

यस्तु तत्र पुमांस्तं परमभागवतं राजर्षिप्रवरं भरतमुत्सृष्टमृगशरीरं चरमशरीरेण विप्रत्वं गतमाहुः ॥ २ ॥

तत्रापि स्वजनसङ्गाच्च भृशमुद्विजमानो भगवतः कर्मबन्धविध्वंसनश्रवणस्मरणगुणविवरणचरणारविन्दयुगलं मनसा विदधदात्मनः प्रतिघातमाशङ्कमानो भगवदनुग्रहेणानुस्मृतस्वपूर्वजन्मावलिरात्मानमुन्मत्तजडान्धबधिरस्वरूपेण दर्शयामास लोकस्य ॥ ३ ॥

तस्यापि ह वा आत्मजस्य विप्रः पुत्रस्नेहानुबद्धमना आसमावर्तनात्संस्कारान् यथोपदेशं विदधान उपनीतस्य च पुनः शौचाचमनादीन्कर्मनियमाननभिप्रेतानपि समशिक्षयत् अनुशिष्टेन हि भाव्यं पितुः पुत्रेणेति ॥ ४ ॥

स चापि तदु ह पितृसन्निधावेवासध्रीचीनमिव स्म करोति छन्दांस्यध्यापयिष्यन् सह व्याहृतिभिः सप्रणवशिरस्त्रिपदीं सावित्रीं ग्रैष्मवासन्तिकान् मासानधीयानमप्यसमवेतरूपं ग्राहयामास ॥ ५ ॥

एवं स्वतनुज आत्मन्यनुरागावेशितचित्तः शौचाध्ययनव्रतनियमगुर्वनलशुश्रूषणाद्यौपकुर्वाणककर्माण्यनभियुक्तान्यपि समनुशिष्टेन भाव्यमित्यसदाग्रहः पुत्रमनुशास्य स्वयं तावदनधिगतमनोरथः कालेनाप्रमत्तेन स्वयं गृह एव प्रमत्त उपसंहृतः ॥ ६ ॥

अथ यवीयसी द्विजसती स्वगर्भजातं मिथुनं सपत्न्या उपन्यस्य स्वयमनुसंस्थया पतिलोकमगात् ॥ ७ ॥

पितर्युपरते भ्रातर एनमतत्प्रभावविदस्त्रय्यां विद्यायामेव पर्यवसितमतयो न परविद्यायां जडमतिरिति भ्रातुरनुशासननिर्बन्धान्न्यवृत्सन्त ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवमे जडविप्रस्य तस्य रागाद्यभावतः ।
भद्रकालीपशुत्वेऽपि निर्विकारत्वमीर्यते ॥ १ ॥
पितुः प्रासात्मविज्ञानो भरतो मृगतां गतः ।
प्रारब्धकर्मवेगेन तदन्ते जडविप्रताम् ॥ २ ॥

आङ्गिरसगोत्रजानां प्रवरस्य श्रेष्ठस्य शमादियुक्तस्य । त्यागोऽत्रातिथ्यादिभ्योऽन्नदानादि विद्या कर्मविद्या आत्मज्ञानं देहादिव्यतिरिक्तात्मज्ञानमानन्दो धर्मसंपत्तिजः आत्मना सदृशाः श्रुतादयो गुणा येषां ते समानोदरा नव पुत्रा बभूवुः यवीयस्यां कनिष्ठायां च मिथुनं स्त्रीपुरुषयुग्मम् ॥ १ ॥

उत्सृष्टं मृगशरीरं येन तं "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायत„इति स्मृतेः ॥ २ ॥

तत्रापि चान्यसङ्गादात्मनो भ्रंशमाशङ्कमानः उन्मत्तादिरूपेण दर्शयामासेत्यन्वयः किं कुर्वन् कर्मबन्धविध्वंसनं श्रवणं स्मरणं गुणानां विवरणं कथनञ्च यस्य भगवतश्चरणारविन्दयुगलं मनसा विशेषेण धारयन् आशङ्कायां हेतुः अनुस्मृता स्वीयपूर्वजन्मनामावलिर्येन सः ॥ ३ ॥

पुत्रस्नेहेऽनुबद्धं मनो यस्य जडस्य गार्हस्थ्यात्समावर्तनान्तान् संस्कारान् विदधानस्तमुपनीयोपनीतस्य पुनः

श्रीधरस्वामिकृतभावार्थदीपिका ।

र्दांस्तस्यानभिप्रेतानपि शिक्षितवान् । तत्र हेतुः । अनुशिष्टेन हि भाव्यं पितुः सकाशात्पुत्रेणेति ॥ ४ ॥

सोऽपि च पितुः सिक्षानिर्बन्धनिवृत्तये असध्रीचीनमसमीचीनमिव करोति स्म उपाकरणं वेदव्रताचनन्तरं श्रावणादिमासेषु वेदानध्यापयिष्यन्नादौ तावद्व्याहृतिभिः सह प्रणवशिरःसहितां त्रिपदीं चैत्रादिचतुरो मासानधीयानमप्यसमवेतरूपं यथा भवत्येवं ग्राहयामास तावतापि कालेन स्वरानुपूर्व्यां वियुक्तं व्याहृत्यादि तस्य नागतमित्यर्थः ॥ ५ ॥

आत्मभूते स्वतनुजेऽनुरागेणावेशितं चित्तं येन शौचादीनि यान्यौपकुर्वाणकस्य सावधिब्रह्मचर्यव्रतः कर्माणि तेनानभियुक्तान्यनादृतान्यपि तं पुत्रं प्रत्यनुशास्याप्यप्राप्तपुत्रपाण्डित्यमनोरथः स्वयं कालेनोपसंहृतो मृत इत्यर्थः । अनुशासननिर्बन्धं पुनस्तमेव हेतुमाह । अनुशिष्टेन भाव्यमित्यसत्ययोग्य आग्रहो यस्य ॥६॥

सपत्न्यै समर्प्य । अनुसंस्थयाऽनुमरणेन । सप्तम्यन्तपाठोऽप्ययमेवार्थः ॥ ७ ॥

न्यवृत्सन्त निवर्तितुमैच्छन् । निवृत्ता इत्यर्थः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमारब्धभगवद्भक्तियोगस्यापि भरतस्य प्रारब्धकर्मांशमृगासक्त्या मृगत्वापत्तिं प्रारब्धकर्मावसाने मृगत्वनिवृत्तिं चाभिधायेदानीं "नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।

स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् इति ।
नहि कल्याणकृत्कश्चिद्दुर्गतिं तात ! गच्छति ।
प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।
अथवा योगिनामेव कुले भवति धीमताम् ।

इत्युक्तरीत्या तस्य विशिष्टकुलप्रसूतिं देहादिष्वनादरं ततो मुक्तिं चाभिधत्ते । अथेत्यादिना । अथ मृगशरीरत्यागानन्तरमाङ्गिरसस्य यवीयस्यां कनिष्ठायां भार्यायां यन्मिथुनं स्त्रीपुंसयुग्मं समजायत तत्र मिथुने यस्तु पुमान् तं परमभागवतं राजर्षिप्रवरमुत्सृष्टं मृगशरीरं येन तं चरमशरीरेण विप्रत्वं गतमाहुरित्यन्वयः आङ्गिरसप्रवरं विशिनष्टि । द्विजश्रेष्ठस्याङ्गिरसगोत्रोद्भवानां मध्ये प्रवरस्य शमादियुक्तस्य तत्र शमदमावन्तर्बाह्येन्द्रियनिग्रहौ तपोऽनशनादि स्वाध्यायोऽध्ययनं वेदाध्ययनं त्यागो दानं सन्तोषो दैवाल्लब्धेन तितिक्षा द्वन्द्वसहिष्णुता प्रश्रयो विनयः विद्या शास्त्रजन्यज्ञानं अनसूया परेषु दोषानाविष्करणमात्मज्ञानं ज्ञानयोगः आनन्दो ब्रह्मानन्दानुभवरूपो भक्तियोगः आत्मना स्वेन स्वसदृशाः श्रुताद्यः गुणा येषां ते श्रुतं वेदार्थश्रवणं नव सोदरा अङ्गजा आत्मजा बभूवुः ज्येष्ठायां भार्यायामिति शेषः ॥ १ ॥ २ ॥

तत्रापि विप्रजन्मन्यपि स्वजनसङ्गाद्रात्मनः प्रतिघातं भ्रंशमाशङ्कमानस्तत्र हेतुः भगवदनुग्रहेणैवानुस्मृता स्त्रीया पूर्वजन्मनामावलिः परम्परा येन सः आत्मानमुन्मत्तादिरूपेण लोकस्य दर्शयामास किं कुर्वन् कर्मबन्धविध्वंसनं श्रवणं स्मरणं गुणानां विवरणं कथनं यस्य तत्कर्मबन्धविध्वंसनसमर्थश्रवणादियुक्तमित्यर्थः एवंविधं भगवतश्चरणारविन्दं मनसा निदधानः विशेषेण धारयन् ॥ ३ ॥

स विप्रः आङ्गिरसस्तस्य जडादिवेषस्य पुत्रस्य पुत्रस्नेहेनानुबद्धमासक्तं मनो यस्य तथाभूतः सन् समावर्तनं स्नातकं तत्पर्यन्तान् संयतान् संस्कारान् गर्भाधानादीन् यथाविधिकुर्वाण उपनीतस्य तस्यानभिप्रेतान् पूर्वंवासनयाप्रगतत्वात् शिक्षणीयत्वेनानभिप्रेतानपि शौचाचमनादीन् कर्मनियमान्नित्यनैमित्तिकादिभेदेन नियतान् समशिक्षयत् शिक्षायां हेतुमाह । अनुशिष्टेनेति । पितुः सकाशादनुशिष्टेन विविच्य ज्ञापितेनैव पुत्रेण भवितव्यमितीति बुद्धेरित्यर्थः ॥ ४ ॥

सोऽपि च पितुः शिक्षानिर्बन्धनिवृत्तये तत्सन्निधावसध्रीचीनमसमीचीनमिव करोति छन्दांस्यध्यापयिष्यन् "श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीतमासान्विप्रोऽर्धपञ्चमान्" इत्युक्तरीत्या वेदानध्यापयिष्यन् तावदादौ व्याहृतिभिः सह प्रणवशिरःसहितां त्रिपदीं सावित्रीं गायत्रीं व्याहृतयो भूरादयः प्रणवमोङ्कारः शिरः ओमापोज्योतिरित्यादि एवंभूतां सावित्रीं ग्रैष्मवासन्तिकान्मासांश्चतुरो मासानधीयानमप्यध्ययनं कुर्वाणमपि पुत्रमसमवेतरूपं स्वरादिगायत्र्यनुपूर्व्या वियुक्तं न भवति यथा तथा ग्राहयामास तावता कालेनापि स्वरानुपूर्व्यां वियुक्तव्याहृतिसहिता गायत्री तस्य दृढानाभूदित्यर्थः ॥ ५ ॥

एवं स्वात्मजे आत्मनि "आत्मा वै पुत्रनामासि" इति श्रुत्युक्तरीत्या पुत्ररूपे आत्मन्यनुरागेणावेशितमासञ्जितं चित्तं येन सः शौचादीन्यौपकुर्वाणस्य सावधिब्रह्मचर्यव्रतो यानि कर्माणि उपकुर्वाणो गुरुशुश्रूषादिना वेदाध्ययनादि कुर्वाणः ब्रह्मचारी शौचं स्नानाविजन्या शुद्धिः व्रतानि कायड्यतादीनि तान्यभियुक्तान्यविस्मृतवेदस्य तस्याध्ययनानपेक्षत्वादध्यापनाङ्गानि कर्माण्यनुपयुक्तानीत्यर्थः सम्यगनुशिष्टेन पुत्रेण भाव्यमित्यसदाग्रहः दुरभिमानवान् पुत्रमनुशास्यापि शिक्षित्वापि अनधिगतः मनोरथः पुत्रवैदुष्यरूपो येन सः तावदेवाप्रमत्तेन कालेन मृत्युना स्वयं गृहे प्रमत्तः सन्नुपसंहृतः मृत इत्यर्थः ॥ ६ ॥

अथ तदनन्तरं यवीयसी कनिष्ठा द्विजसती द्विजभार्या स्वगर्भजातं मिथुनं सपत्न्या उपसमीपे निधाय सपत्न्यधीनं कृत्वा स्वयमनुसंस्थया अनुसरणप्रक्रियया पतिलोकमगात्प्राप्तवती ॥७॥

पितर्युपरते मृते सति भ्रातरो नव एनं जडमतिरिति बुद्ध्याऽनुशासनरूपान्निर्बन्धान्न्यवृत्सन्त निवर्तितुमैच्छन् शिक्षां नाकुर्वन्नित्यर्थः जडमतिरित्यत्रहेतुंवदन्विशिनष्टि । अतत्प्रभावविदस्तस्य भ्रातुः प्रभावमजानन्तः तत्रापि हेतुः त्रय्यामेव विद्यायां कर्मात्मकवेदविद्यायामेव पर्यवसितमतयः न ब्रह्मविद्यायां वेदान्तविद्यायां पर्यवसितमतयः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रायो वैराग्यसाधनसामग्रीसंपन्नस्यापि ब्राह्मणशरीरस्य सतः पुरुषस्य ज्ञानान्मुक्तिरित्यभिप्रायोऽस्मिन्नध्याये निरूप्यते । तदर्थमु-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्पन्नज्ञानस्यापि भरतस्य विप्रतनुत्वप्राप्तिमाह । अथेति । अथ मृगशरीरोत्सर्जनानन्तरं कल्याणकरभरतकथोच्यत इति वा त्यागो दानं देवतामुद्दिश्य द्रव्यत्यागलक्षणो यज्ञो वा सन्तोषो यदृच्छालाभेनालं बुद्धिः शमाद्यात्मज्ञानान्तं तेषं आनन्दस्तेन युक्तस्य शमादीनामानन्देन समृद्ध्या युतस्येति वा आत्मनः पितुर्गुणा- सदृशश्रुतादिगुणा येषां ते तथा सोदर्या अङ्गजाः एकस्या मातुः उदरजातत्वात् सोदर्याः अङ्गजाः पुत्राः ॥ १ ॥

उत्सृष्टं मृगशरीरं येन स तथा चरमशरीरेणान्त्यदे- हेन ॥ २ ॥

तत्र विप्रजन्मन्यपि लोकस्यात्मानमुन्मत्तादिरूपेण दर्शया- मासेत्यन्वयः उद्विजमानः स्वस्थानप्रच्युतिरिति बिभ्यतः गुण- विवरणं व्याख्यानं विशेषेण दधतः आत्मनः स्वस्य श्रवणादेः प्रतिघातं विघ्नमाशंसमानः निरूपयन् अनुस्मृता स्वस्य पूर्व- जन्मनामावलिः परम्परा येन स तथा ॥ ३ ॥

स विप्रः पिता तस्यात्मजस्यापि लोकविद्विष्टस्यापि समा- वर्तनपर्यन्तं सतः संस्कारान् विप्रजातिविहितान् जातकर्मा- दीन्यथोपदेशं विदधानः कुर्वाणः पुनरुपनीतस्य शौचाचमना- दीन् कर्मनियमाननभीष्टानपि समशिक्षयदित्यन्वयः अनभिप्रेता- श्चेत्किमित्यशिक्षयदिति तत्राह । अनुशिष्टेनेति । हवा इत्येतौ भरतस्यापरोक्षज्ञानित्वेन कामचारो न दोषायेति सूचयतः अत एवासदाग्रह इत्युक्तम् ॥ ४ ॥

यत्पित्रा शिक्षितं तदेव सध्रीचीनं समीचीनं रमणीयमिव किञ्चिदन्यथा हेत्यनेन अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः इत्यादि स्मार्तन्यायमनुसन्दधान इवेति दर्शयति। सह प्रणवेन शिरसा त्रिपदी सप्रणवशिरस्त्रिपदी तामसमवेतरूपं असमञ्ज- सरूपं यथा तथा छन्दांसि वेदान् ॥ ५ ॥

"आत्मा वै पुत्रनामासि,,इति श्रुतेरात्मनीति व्यपदेशः औपकुर्वा- णकानि उपकुर्वाणयोग्यानि उपकुर्वाणो विवाहः भिक्षाटनं वा अतदभियुक्तानि तस्यानपेक्षितानि एवमादीन्यपि कर्माणि ग्राह- यन् पुत्रमशिक्षयदित्यन्वयः अनागतमनोरथः अप्राप्तनिजाभिप्रायः उपसंहृतो मृतोऽभूत् ॥ ६ ॥

अनुसंस्थया अनुमरणेन अग्निप्रवेशलक्षणेन त्रय्यां अग्नि- ष्टोमेन स्वर्गकामो यजेतेत्याद्यायां कर्मप्रतिपादिकायां पर्यवसि- तमतयः पुरुषार्थबुद्धयः "ब्रह्मविदाप्नोति परं तमेवं विद्वानमृत इह भवति,,इत्याद्यायां न निष्णातमतयः अनुशासननिर्बन्धाच्छिक्षा- लक्षणाग्रहात् न्यवृत्सन्त निवर्तितुमैच्छन् ॥ ७ ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भक्तत्वादेवमात्मनो भक्तिप्रतिघातमाशङ्कमानः ॥ १ ॥ २ ॥

स्वजनसङ्गाच्च भृशमुद्विजमान इत्यधिकं चान्यत्र नास्ति स्वाम्यसम्मतश्च दृश्यते । व्यवधानेन योजितत्वात् ॥ ३ ॥

अनुशिष्टेन हि भाव्यं पितुः पुत्रेणेतीत्यस्य पितुर्वाक्यस्य तस्मा- दयमनुशिष्टः कर्त्तव्यः । व्यतिरेकेतु स्वयं दोषावहः स्यादिति तात्- पर्यम् ॥ ४——७ ॥

पितर्य्युपरत इति । एवं जडमतिरिति ज्ञात्वेति योज्यं [illegible] त्यध्याहारात् न परविद्यायामित्यनेन भगवद्भक्तेरथ[illegible] तत्वं परविद्यात्वञ्च दर्शितं तत्रापीत्यादि गद्य तस्य भ[illegible] निष्ठताया दर्शितत्वात् ततश्चैवं परामृश्यते। सोऽयमन्तर्भग[illegible] एवेत्यात्मारामता तु बहिरङ्गा तदावरणाय प्रयुक्ता तस्मा[illegible] रणायोन्मत्तचेष्टेति न्यवृत्सन्निति लुङ्प्रत्ययान्त आर्षः । ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

नवमे जडता तस्य गायत्र्या अप्यशिक्षणम्।
केदारकर्म देव्या अप्युच्चाटनमितीर्यते ॥

आङ्गिरसगोत्रजानां प्रवरस्य श्रेष्ठस्य शमादियुक्तस्य त्याग[illegible] तिथ्यादिभ्योऽन्नदानादि विद्या कर्मविद्या आत्मज्ञानं देहादिव्य[illegible] क्तभोक्तात्मज्ञानमात्मना सदृशाः श्रुतादयो गुणा येषांते समा[illegible] नव पुत्रा बभूवुः ॥ १ ॥ २ ॥

कर्मबन्धविध्वंसनं श्रवणादिकं यस्य तथाभूतं चरणा[illegible] विशेषेण दधत् लोकस्य लोकम् ॥ ३ ॥

अनभिप्रेतानिति शश्वदनुभूयमानभगवत्स्वरूपत्वेन [illegible] कर्मानधिकारमननात् पितुः सकाशात् अनुशिष्टेन ॥ ४ ॥

स भरतः पितुः शिक्षानिर्बन्धनिवृत्तये तत् शौचाचमना[illegible] मसध्रीचीनं विपर्यस्तं मूत्रपुरीषोत्सर्गादेः प्रागेवाचमना[illegible] काशौचादिकं करोति नत्वनन्तरमेवेति तस्य तदपि [illegible] समीचीनमेवेति उपाकरणवेदग्रहणाद्यनन्तरं श्रावणादिमा[illegible] वेदानध्यापयिष्यामि सम्प्रति तु जडमिमं गायत्रीन्तु शिक्ष[illegible] मीति विचार्य चैत्रादिभिश्चतुर्भिरपि मासैर्निरन्तरमपि गाय[illegible] पादत्रयं पाठयन् सम्पूर्णां तां धारयितुं न शशाकेत्याह। [illegible] सीति। असमवेतरूपं यथा स्यात्तथा ॥ ५ ॥

स्वतनुजे पुत्रे आत्मनि स्नेहात् स्वप्राणादप्यधिके [illegible] औपकुर्वाणकस्य सावधिब्रह्मचर्यवतः कर्माणि तेनानभिरु[illegible] अनादृतान्यपि तं पुत्रं प्रत्यनुशास्य अनुशासननिर्बन्धे [illegible] मेव हेतुमाह । स्वयमन्विति उपसंहृतः मृतः ॥ ६ ॥

सपत्न्यै उपन्यस्य सपत्न्यामिति सप्तम्यन्तोऽपि पाठः। [illegible] संस्थया अनुमरणेन सप्तम्यन्तपाठेऽप्ययमेवार्थः ॥ ७ ॥

अनुशिष्टवतीति शेषः एनमनुशिष्टवति पितरि उपरते [illegible] त्यन्वयः । न्यवृत्सन् निवर्त्तितुमैच्छन् लुङिवा रूपं निवृत्ता[illegible] र्थः उभयथाप्यार्षप्रयोगः ननु पितेव तस्मिन्प्रत्या[illegible] इति भावः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भरतस्य जन्म तत्र प्राणबाधे उपस्थितेऽपि निर्विकारत्वं [illegible] यति नवमे । तत्रादौ मृगशरीरत्यागानन्तरम् ।

शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते।
अथवा योगिनामेव कुले भवति धीमताम् इति॥

श्रीमुखोक्तरीत्या द्विजोत्तमगृहे भरतो जात इत्याह। अं[illegible] अङ्गिरसो गोत्रजानां प्रवरस्य शमादियुक्तस्य कस्य विद्द्वि[illegible] आत्मना सदृशाः श्रुतादयो गुणा येषां ते सोदर्याः सम[illegible] नव अङ्गजा बभूवुः यवीयस्यां कनिष्ठायां मिथुनं पुत्रकन्य[illegible] कम् बभूव ॥ १ ॥ २ ॥

स च प्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरेत्यभिभाष्यमाणो यदा तदनुरूपाणि प्रभाषते कर्माणि च कार्यमाणः परेच्छया करोति विष्टितो वेतनतो वा याच्ञया यदृच्छया वोपसादितमल्पं बहुमिष्टं कदन्नं वाऽभ्यवहरति परं नेन्द्रियप्रीतिनिमित्तम्, नित्यनिवृत्तनिमित्तस्वसिद्धविशुद्धानुभवानन्दस्वात्मलाभाधिगमः सुखदुःखयोर्द्वन्द्वनिमित्तयोरसम्भावितदेहाभिमानः ॥ ९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्रापि विप्रजन्मन्यपि स्वजनसङ्गात् चकाराद्देहाभिनिवेशाच्च भृशमुद्विजमानः यतः आत्मनः प्रतिघातं भ्रंशमाशङ्कमानः कर्मबन्धविध्वंसनं श्रवणं गुणविवरणं च यस्य तद्भगवतश्चरणारविन्दयुगलं मनसा विदधत् विधारयन् भगवदनुग्रहेण अनुस्मृता स्वीयपूर्वजन्मनामावलिर्येन सः आत्मानमुन्मत्तादिरूपेण दर्शयामास ॥ ३ ॥

तस्यापि उन्मत्तादिवद्वर्त्तमानस्यापि पुत्रस्नेहेन अनुबद्धं मनो यस्य सः आसमावर्त्तनात् समावर्तनपर्यन्तान् उपनयनादीन् संस्कारान् यथोपदेशं विदधानः यथाविधि कुर्वाणः तमुपनीयोपनीतस्य च पुनः शौचादीन् तस्यानभिप्रेतानपि समशिक्षयत् पितुः सकाशादनुशिष्टेन सुशिक्षितेन पुत्रेण भाव्यमिति हेतोः॥ ४ ॥

सचापि तत् उपादिष्टम् असध्रीचीनमसमीचीनं करोतिस्म स विप्रः उपाकरणवेदव्रताद्यनन्तरं श्रावणादिमासेषु वेदानध्यापयिष्यन् आदौ तावद्व्याहृतिभिः सह प्रणवशिरःसहितां त्रिपदीं चैत्रादिचतुरो मासानधीयानमप्यसमवेतरूपं यथाभवत्येवं ग्राहयामास ॥ ५ ॥

एवमुक्तप्रकारेण समनुशिष्टेन भाव्यमित्यसन् अयुक्त आग्रहो यस्य सः अतएव आत्मनि "आत्मा वै पुत्रनामासि,, इति वाक्यात् आत्मभूते स्वतनुजे अनुरागेणावेशितं चित्तं येन सः शौचादीनि अन्यौपकुर्वाणकस्य सावधिब्रह्मचर्यव्रतः कर्माणि अनभियुक्तानि अनुशासनमीप्सान्यपि पुत्रं प्रत्यनुशास्यापि अनधिगतमनोरथः नाधिगतो न प्राप्तः पुत्रकर्मकौशलमनोरथो येन सः स्वयं यमेनोपसंहृतः ॥६॥

यवीयसी कनिष्ठा द्विजसती विप्रपत्नी सपत्न्यै मिथुनं स्वपुत्रकन्यकायुग्ममुपन्यस्य समर्प्य स्वयमनुसंस्थया अनुमरणेन पतिलोकमगात् ॥ ७ ॥

एनं जडमतिरिति मत्वा अनुशासननिर्बन्धात् न्यवृतसत् निवर्तनमैच्छन् निवृत्ता बभूवुरित्यर्थः । यदारे उन्मत्त ! जड बधिर इत्यभिभाष्यमाणस्तदा तदनुरूपाणि प्रभाषते स परेच्छया कार्यमाणः कर्माणि च करोति ॥ ८ ॥

---

भाषाटीका ।

श्रीशुकदेवजी बोले इसके अनन्तर अंगिरा गोत्र शम, दम, तपः स्वाध्याय अध्ययन त्याग सन्तोष तितिक्षा नम्रता विद्या अनसूया आत्मज्ञान आनन्दयुक्त ब्राह्मण श्रेष्ठ के अपने सदृश शास्त्र शील आचार रूप औदार्य गुणोंवाले नौ पुत्र भये और छोटी भार्या के एक पुत्र एक कन्या दो भये ॥ १ ॥

उन दोनों में जो पुत्र थे वे तो मृगशरीरको छोडेहुये राजर्षि श्रेष्ठ परम भागवत अन्त शरीर में ब्राह्मणता को प्राप्त भये भरतजी हैं ऐसा महात्मा जन कहते हैं ॥ २ ॥

तिस जन्म में भी स्वजन संगसे अत्यंत डरतेहुये भरतजी कर्म बन्धके नाश करनेवाले भगवान् के चरित्रों के श्रवण स्मरण गुणों के वर्णन तथा चरणारविन्द युगल को मनमें धारण करके अपने आत्मा को घात की शङ्का से भगवान् के अनुग्रह होनेसे पूर्वजन्मों के स्मरण होनेसे सब लोकों को पागल अन्धा वहिरा रूपसे अपने को दिखाने लगे ॥ ३ ॥

उनके पिता ब्राह्मण पुत्र के स्नेह में मन के बंधजाने से अपने पुत्र जन्मादिक समावर्तन पर्यन्त संस्कारोंको विधि पूर्वक कराकर उपनयन होनेपर शौच आचमन आदिक कर्म जोकि भरतजी के प्रिय नहीं थे तिन को भी शिक्षा ते भये क्योंकि उनने समझा कि पुत्र को शिखाना पिता का धर्म है ॥ ४ ॥

सो भरतजी पिताके समीपही में किसी शिक्षित आचार को नहीं करते थे पिता उनके वेद पढाने की इच्छा से ओंकार शिरो मन्त्रके सहित गायत्री सावित्री व्याहृति ग्रैष्मवासन्तिक मासों के यागों को अयथार्थ रूपसे भी ग्रहण कराते थे ॥ ५ ॥

इस प्रकार से अपने पुत्र में अनुराग से चित्तके अभिनिवेश होने से पिता अपने पुत्रको शौच अध्ययन व्रत नियम गुरु अग्निका सेवा इत्यादिक अवधि वाले ब्रह्मचारी के लायक कर्म जो कि भरतजी को अभिमत नहीं थे पिताका ऐसा असत आग्रह था कि अवश्य शिखानाही चाहिये इस प्रकार पुत्र को शिखाते थे जब तक मनोरथ नहीं पूरा भया तबही इनके प्रमाद मे रहने के समय अप्रमादी कालने इनको संहार कर दिया ॥ ६ ॥

तब ब्राह्मणकी छोटी भार्या अपने दोनों पुत्र पुत्री को दूसरी सौतिन के पास छोड कर पति के साथ सती होगई ॥ ७ ॥

पिता के चले जाने पर भरतजी के प्रभाव को न जानने वाले और सब भ्राता वेद त्रयी के कर्म मार्गमे निश्चित बुद्धि वाले होने से ब्रह्म विद्या को नहीं जानते थे तिससे भरतजी को अति अज्ञानी समझकर भ्राता के सम्बन्ध से उनको मलग करते भये ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदाभिभाष्यमाणस्तदा तदनुरूपाणि प्रभाषते । मूल्यमन्तरेण बलात्कर्म कार्यते सा विष्टिः । वेतनं मूल्यम् । विष्टयादिभिरुपसादितमन्नमभ्यवहरति परं भुङ्के केवलं नत्विन्द्रियप्रीतये । अत्र हेतुद्वयमाह । नित्यं सदा निवृत्तं निमित्तं यस्मान्स उत्पादकशून्यः स्वसिद्धोऽभिव्यञ्जकशून्यो विशुद्धः केवलो योऽनु-

शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीनः संहननाङ्गः स्थण्डिलसंवेशनानुन्मर्दनामज्जनर... महामणिरिवानभिव्यक्तब्रह्मवर्चसः कुपटावृतकटिरुपवीतेनोरुमषिणा द्विजातिरिति ब्रह्मबन्धुरिति सं... ऽतज्ज्ञजनावमतो विचचार ॥ १० ॥

यदा तु परत आहारं कर्मवेतनत ईहमानः स्वभ्रातृभिरपि केदारकर्मणि निरूपितस्तदपि ... किन्तु न समविषमन्यूनमधिकमिति वेद कणपिण्याकफलीकरणकुल्माषस्थालीपुरीषादीन्यप्यमृ... भ्यवहरति ॥ ११ ॥

अथ कदाचित्कश्चिद्वृषलपतिर्भद्रकाल्यै पुरुषपशुमालभतापत्यकामः ॥ १२ ॥

तस्य ह दैवमुक्तस्य पशोः पदवीं तदनुचराः परिधावन्तो निशि निशीथसमये तमसावृताया... नधिगतपशव आकस्मिकेन विधिना केदारान् वीरासनेन मृगवराहादिभ्यः संरक्षमाणमङ्गिरः... सुतमपश्यन् ॥ १३ ॥

अथ त एनमनवद्यलक्षणमवमृश्य भर्तृकर्मनिष्पत्तिं मन्यमाना बध्वा रशनया चण्डिकागृह... निन्युर्मुदा विकसितवदनाः ॥ १४ ॥

अथ पणयस्तं स्वविधिनाऽभिषिच्याहतेन वाससाऽऽच्छाद्य भूषणालेपस्रक्तिलकादिभिरुप... भुक्तवन्तं धूपदीपमाल्यलाजकिसलयाङ्कुरफलोपहारोपेतया वैशससंस्थया महता गीतस्तुतिमृदङ्ग... वघोषेण च पुरुषपशुं भद्रकाल्याः पुरत उपवेशयामासुः ॥ १५ ॥

अथ वृषलराजपणिः पुरुषपशोरसृगासवेन देवीं भद्रकालीं यक्ष्यमाणस्तदभिमन्त्रितमसिमति... लनिशितमुपाददे ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भवः स एवानन्दरूपः स्वात्मा तस्य लाभ एवंभूतोऽहमिति ज्ञानं तस्याधिगमः प्राप्तिरस्ति यस्य । द्वन्द्वानि सन्मानावमानादीनि तद्धेतुकयोः सुखदुःखयोरकृतदेहाभिमानः तस्मान्नेन्द्रियप्रीतिनिमित्तमभ्यवहरतीत्यन्वयः ॥ ९ ॥

अतएव शीतोष्णादिष्वनावृताङ्गो विचचारेत्यन्वयः कीदृशः पीनः पुष्टः संहननाङ्गः संहन्यन्ते निबिडीभवन्ति स्माङ्गानि यस्य कठिनावयव इत्यर्थः । स्थण्डिलसम्वेशनं भूमिशयनम् अनुन्मर्दनं मर्दनाभावः अमज्जनं स्नानाभावः तैर्यद्रजस्तेनाप्रकटं ब्रह्मवर्चसं ब्राह्मं तेजो यस्य । यथा महामणिरनभिव्यक्ततेजा भवति कुत्सितेन पटेनावृता कटिर्यस्य । उरुमषिणाऽतिमलिनेन । तत्त्वतस्तं न जानन्ति ये तैर्जनैरवमतः सन् ॥ १० ॥

यदा तु परेभ्यः कर्ममूल्येनाहारमपेक्षमाणो भवति तदा केदारकर्मणि शालिक्षेत्रे कर्दमविलोडनादावाहारप्रलोभनेन नियुक्तः सन्करोति किंत्वत्र कर्दमस्य प्रक्षेपे क्षेत्रं समं भवेदिति उद्धरणे विषमं स्यादित्यादि न वेद भ्रातृभिर्दत्तान्कणादीनप्यमृतवद्भुङ्क्ते । कणाश्चूर्णतण्डुलाः । पिण्याकं तैलयन्त्रोद्धृतं तिलकिट्टम् । फलीकरणं तुषाः । कुल्माषाः कीटदष्टा माषाः । स्थालीपुरीषं स्थालीलग्नं दग्धान्नम् ॥ ११ ॥

तस्य रागादिराहित्यमबौल्यं चैवमीरितम् ।
अथान्यच्चरितं प्राह चित्रं मृत्यावसंभ्रमम् ।

वृषलपतिः शूद्रसामन्तश्चोरराजः आलभताऽऽलब्धुं प्रवृत्तः ।

दैवाद्बन्धनविमुक्तस्य पशोः । तमसा व्याप्तायां निशि निशीथसमयेऽर्द्धरात्रावसरे । आकस्मिको दैवनिर्मितः प्रकारस्तेन । वीरासनेनोर्ध्वावस्थानेन ॥ १३ ॥

अवमृश्य ज्ञात्वा ॥ १४ ॥

पणयश्चोराः । अहतेन नूतनेन उपस्कृतमलंकृतम् । ... संस्थया हिंसाविधानेन गीतादिघोषेण सह ॥ १५ ॥

वृषलराजस्य पणिः पुरोहितत्वेन वर्तमानश्चोरः । ... भद्रकालीमन्त्राभिमन्त्रितम् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

यदा स जडविप्रो द्विपद्पशुभिर्हि उन्मत्तजड बधिरत्वं... माणस्तदा तदनुरूपाणि उन्मत्ताद्यनुरूपाणि उन्मान्धत्वा... र्यादिसूचकानि वचांस्याभाषते स्वयं निर्व्यापारोऽपि ... कार्यमाणः कर्माणि करोति मूल्यमन्तरेण बलाद्यत्कर्म... सा विष्टिः वेतनं भृतिः विष्टयादिभिर्यदृच्छया दैवाद्... प्राप्तं तदप्यल्पं बहु वा मृष्टं कदन्नं वाऽभ्यवहरति भुङ्क्ते... केवलं प्रारब्धोपभोगयुक्तदेहधारणार्थं भुङ्क्ते नतु... तयं ॥ ९ ॥

तत्र हेतुं वदन्विशिनष्टि । नित्येति । नित्यं निवृत्तानि ... सुखदुःखनिमित्तानि पुण्यापुण्यकर्माण्यात्मस्वरूपादिरं...

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

यस्मात्स एवंविधो यः स्वसिद्धविशुद्धानुभवानन्दः स्वात्मा नित्यासङ्गरागादिरहितज्ञानानन्दस्वरूप आत्मा तस्याधिगमः याथात्म्यविज्ञानं तन्निरस्तं सदा यस्य द्वन्द्वानि शीतोष्णादीनि निमित्तानि कारणानि ययोस्तयोः सुखदुःखयोरसम्भावितदेहाभिमानः द्वन्द्वनिमित्तसुखदुःखादिप्रयुक्तदेहात्माभिमानसम्भावनामात्ररहित इत्यर्थः अत एव शीतातपादिषु वृष इव बलीवर्द इवा-प्रावृतमनाच्छन्नमङ्गं यस्य सः पीनः परिपुष्टसर्वावयवः संहननानि कठिनान्यङ्गानि यस्य स्थण्डिलसंवेशनं भूशयनम् अनुन्मर्दनं तैलेनाङ्गमर्दनाभावः अमज्जनं मलापनयनार्थं स्नानाभावः पभि-रजः शरीरमालिन्यं तेनानभिव्यक्तमप्रकटं ब्रह्मवर्चसं ब्रह्मतेजो यस्य यथा महामणिर्बाह्यमलेनानभिव्यक्ततेजा भवति कुत्सितेन पटेनावृता कटिर्यस्य उरुमपिणा प्रभूतं मलं यस्य तेनोपवीतेनोपलक्षणेन द्विजातिरित्यादिसंज्ञया वाचकशब्देन व्यवह्रियमाणोऽतज्ज्ञजनैः योगीश्वरचर्यानभिज्ञजनैरवमतः निन्दितः सन् विचचार ॥ १० ॥

यदा तु वेतनाद्धृतेः परेभ्यः आहारमीहमानः इच्छन्भवति वेतनमिति पाठे आहारमित्यस्यानन्तरं लब्धुमिति शेषः आहारमन्नादिकं लब्धुं वेतनमीहमानः कुर्वाणो भवति तदा आहारप्रलोभनेन स्वभ्रातृभिः केदारकर्मणि शालिक्षेत्रकर्दमविलोडनादौ नियुक्तस्तदपि केदारकर्म करोति किं त्वत्र कर्दमस्य प्रक्षेपे क्षेत्रं समम्भवेदित उद्धरणे विषमं स्यादिति न वेद वैषम्यं नैव पश्यति । न्यूनमधिकं वा स्यादिति भ्रातृभिर्दत्तान्नकणादीनप्यमृतवद्भक्षयति कणाश्चूर्णिततण्डुलाः पिण्याकस्तैलयन्त्रोद्धृतं तिलपिष्टं फलीकरणं तुषः कुल्माषा कुलुत्थाः दुष्टा माषाः स्थालीपुरीषं पात्रलग्नं दग्धान्नम् ॥ ११ ॥

एवं तस्य देहानादरमभिधायाथ “कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्” इत्युक्तरीत्या मरणोद्योगेऽप्यसम्भ्रमं वक्तुं तस्याभयंतमत्वमाविष्कुर्वन्नाह । अथेति । हे विष्णुरात ! भरतस्येदं वक्ष्यमाणमद्भुतं कर्म शृणु कश्चिद्वृषलपत्याः शूद्रायाः पतिः पुत्रकामः भद्रकाल्यै पशुं पुरुषपशुमालभमानः पुत्रश्चेन्मम भविता तदा भवत्यै पुरुषपशुमालप्स्ये इति कृतसङ्कल्पोऽभूदित्यर्थः ॥ १२ ॥

तस्यैवं कृतसङ्कल्पस्य पुत्रप्राप्तिरूपसिद्ध्यनन्तरं दैवाल्लब्धं पशुमानयतेत्युक्तास्तदनुचराः शूद्राः दैवाद्विमुक्तस्य आलभ्यस्य पशोः पदवीं प्रति परितो धावन्तः अन्वेषमाणाः तमसा व्याप्तायां निशि रात्रावर्द्धरात्रिसमये अनधिगतः पशुर्यैस्ते आकस्मिको दैवनिमित्तो विधिः प्रकारस्तेन वीरासनेन ऊर्ध्वावस्थानेन केदारान् मृगादिभ्यः संरक्ष्यमाणं गोबलीवर्दन्यायेन वराहशब्दप्रयोगः आङ्गिरसप्रवरस्य सुतं भरतमपश्यन् दृष्टवन्तः ॥ १३ ॥

अथैनमाङ्गिरससुतमनवद्यानि निर्दुष्टान्यङ्गानि यस्य पङ्गुत्वकाणत्वादिरहितमवमृश्य ज्ञात्वा भर्तुः कर्मणः पुरुषपश्वालम्भनकर्मणः निष्पत्तिं मन्यमाना रशनया रज्वा बध्वा मुदा विकसितानि वदनानि येषां ते चण्डिकाया भद्रकाल्या मन्दिरं प्रत्युपनिन्युर्नीतवन्तः ॥ १४ ॥

अथ पणयः चोराः तमाङ्गिरससुतं स्वविधिना विशसनविधिनाभिषिच्य स्नापयित्वाहतेन नूतनेन वाससा वस्त्रेणाच्छाद्यभूषणादिभिरुपस्कृतमलं भुक्तवन्तं धूपादिभिरुपेतया युक्तया वैशससंस्थया हिंसाविधानेन महता स्तुत्यादिघोषेण च पुरुष एव पशुस्तं भद्रकाल्या अग्रे उपवेशयामासुः ॥ १५ ॥

अथ वृषलराजस्य पणिः पुरोहितत्वेन वर्तमानश्चोरः पुरुषपशोरसृग्रक्तमेवासवं मद्यं तेन च भद्रकालीं यक्ष्यमाणः तर्पयिष्यमाणः तदभिमन्त्रितं भद्रकालीमन्त्राभिमन्त्रितमतिभयङ्करं तीक्ष्णधारमसिं खड्गमुपाददे गृहीतवान् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतः परमसौ भरतः किमकरोदत्राह । सचेति । सचैवम् विचचारेत्यन्वयः कथं प्राकृतैरित्यस्य विवरणं द्विपदेति । चतुष्पदः पशोर्द्विपदत्वमेव विशेषः ननु ज्ञानेन तादृशैर्मनुष्यैर्यदाहि उन्मत्तेत्यादिनामभिरभिभाष्यमाणो भवति तदा तदनुरूपाण्युन्मत्तादिवचनानुकूलवचनानि भाषते चेष्टितः कर्तुः कर्मानुकूलद्रव्यक्लृप्तिमन्तरेण कर्मणा वेतनतो मौल्येन कर्मानुकूलद्रव्यक्लृप्त्येत्यर्थः कदन्नं कुत्सितान्नम् अभ्यवहरति भुङ्क्ते परं केवलम् नेन्द्रियप्रीतिनिमित्तं न जिह्वादीन्द्रियतृप्तिकारणमत्र हेतुगर्भविशेषणमाह । नित्येति । नित्यनिवृत्तदुःखस्वसिद्धविशुद्धानुभवानन्दोऽहमिति यः स्वात्मलाभस्तमभिगच्छतीति स तथोक्तः यद्वा नित्यनिवृत्तदुःखत्वादिविशिष्टस्वात्मा परमात्मा स एव लाभः फलं जानातीति स तथोक्तः अत एवासम्भावितोऽनुत्पादितो देहाभिमानो येन स तथा शुष्कजलनारिकेलफलसम इत्यर्थः ॥ ९ ॥

उपलिप्तभूमौ शयित्वा निद्राकरणं स्थण्डिलसंवेशनमनुन्मर्दनं देहमलात्यागः अनुन्मज्जनमस्नानं कर्पटेन पटचीरेण जीर्णवस्त्रेणेत्यर्थः आवृताच्छादिता कटिर्यस्य सः तथा उरुमपिणातिमलिष्ठेन ॥ १० ॥

यदा परतः आहारं प्रतिवेतनतः कर्मेहमानश्चेष्टमानस्तदा स्वभ्रातृभिरपि केदारकर्मणि निरूपितस्तत्कर्मापि करोति अस्य कर्मण इदं मूल्यं सममिदं विषममिदमधिकमिदं न्यूनमिति न वेद कणां पापाणोपेताणुतरतण्डुलं पिण्याकं नीरसतिलपिष्टं फलीकरणमवहततण्डुलतुषं कुल्माषः कीटादिविद्धमाषः वनमाषो वा स्थालीपुरीषं स्थालीतण्डुललग्नं दग्धान्नं यावनालश्यामाकक्षोद्रवादीन्यादिशब्दगृहीतानि आरोचयति मधुरीकरोति ॥ ११ ॥

भक्षितकणादिजीर्णीकरणं नातिशयितमाहात्म्यम् औषधादिनापि तत्सम्भवादित्याशङ्क्य विष्णुमाहात्म्यगर्भितं माहात्म्यान्तरमाह । अथेति । अथान्यमाहात्म्यं वक्ष्यामीति शेषः ॥ १२ ॥

दैवविमुक्तस्य अदृष्टोद्बोधकपरमात्मोपेक्षया क्षीणायुषः निशीथसमये मध्यरात्रिकाले अनधिगतपशवः अप्राप्तपुरुषपशवः केदारान् शालिक्षेत्राणि वीरासनेन मञ्चे स्थित्वा संरक्ष्यमाणं पालयन्तं यत्प्रत्ययस्तु स्वयं हरिणा पालयन् इति द्योतनपरः ॥ १३ ॥

रशनया रज्ज्वा ॥ १४ ॥

पणयो वृषलाश्चोरा वा स्वविधिना स्वागमोक्तमार्गेण अहतेनाच्छिन्नेन धौतेन वा किसलयः पल्लवः अङ्कुरो नवाङ्कुरः वैशससंस्थया हिंसाविधानेन ॥ १५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वृषो धर्मो लीयत एभिरिति वृषलास्तेषां राजा वृषलराजः अत एव पणिश्चोरः वृषलराजेषु चोर इत्यर्थः असृगासवेन रक्ताख्यमद्येन तस्याः भद्रकाल्या मन्त्रेण "गृध्रकर्णिविरूपाचिलम्बस्तनिमहोदरि । हनशत्रुं त्रिशूलेन कुरुस्य पिब शोणितम्" इत्यादिनाभिमन्त्रितं जप्तमसिं खड्गम् ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मूल्यमन्तरेण बलात् यत् कार्यंते सा विष्टिः नित्यं सदैव पूर्वजन्मन्यपि निवृत्तं निमित्तं कर्म यस्य सः स्वसिद्धेन स्वत एव सिद्धेन विशुद्धेनाप्राकृतेन अनुभवानन्देन इष्टेनैव स्वात्मनः स्वेष्टदेवस्य कृष्णस्य लाभाधिगमः लाभप्रतीतिर्यस्मिन् स च स च सः अत एव द्वन्द्वानि सम्माननावमानादीनि तद्धेतुकयोः सुखदुःखयोरकृतदेहाभिमानः अत एव नेन्द्रियप्रीतिनिमित्तमभ्यवहरतीत्यन्वयः ॥ ६ ॥

अपावृताङ्गः अनावृताङ्गः संहननाङ्गः अतिबलिष्ठगात्रः स्थण्डिलसम्वेशनं भूमिशयनमनुन्मर्दनमभ्यङ्गाद्यभावः अमज्जनं स्नानाभावस्तैर्यद्रजस्तेनानभिव्यक्तं ब्रह्मवर्चसं ब्राह्मयं तेजो यस्य सः उरुमषिणा अतिमलिनेन ॥ १० ॥

कर्मवेतनतः कर्ममूल्येन आहारमीहमानो यदा भवति तदा स्वभ्रातृभिरिति सर्वं दिनं कर्म कारयित्वा आहारमात्रं चेदन्ये ददति तर्हि वयमेव तथा कारयामः अप्रतिष्ठा च नस्तावती न भविष्यतीति मत्वेति भावः कर्दमविलोडनादिकर्मणि अत्र कर्दमस्य प्रक्षेपे चेत्रं समं भवेदित उच्चरणे विषमं भवेदित्यादि तु न वेद पिण्याकं तैलयन्त्रोद्धृतं तिलकिट्टं फलीकरणं तुषः । कुल्माषाः कीटविद्धमाषाः स्थालीपुरीषं स्थालीलग्नं दग्धान्नं तदादीनि भ्रातृभिर्दत्तानि ॥ ११ ॥

वृषलपतिः शूद्रसामन्तश्चौरराजः अलभत आलब्धुं प्रवृत्तः ॥ १२ ॥

दैवाद्बन्धनविमुक्तस्य पलायितस्य पुरुषपशोः वीरासनेन ऊर्ध्वावस्थानेन ॥ १३ ॥ १४ ॥

पणयश्चौराणां पुरोहिताः आहतेन नूतनेन वैशससंस्थया हिंसाविधानेन युक्तम् ॥ १५ ॥

वृषलराजस्य पणिः मुख्यः पुरोहितः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विष्टितः बलात्कार्यमाणा क्रिया विष्टिः वेतनतः वेतनं मूल्यं ततः याच्ञया यदृच्छया वोपसादितं लब्धम् तत्राप्यल्पं बहु वा कुत्सितं मिष्टं वा अन्नम् अभ्यवहरति भुङ्क्ते परं केवलं नत्विन्द्रियप्रीतिनिमित्तं तत्र हेतुमाह । नित्येति । नित्यं निवृत्त्यादिहेतुर्यस्मात् सः अत एव स्वसिद्धः स्वायत्तः स्थितिप्रवृत्तिकः विशुद्धः स्वभावतोऽपास्तसमस्तदोषः सर्ववेदैकवेद्यः श्रीवासुदेवः तद्विषयको योऽनुभवः तस्माच्च आनन्दः स एव स्वात्मनो मुमुक्षोर्लाभाधिगमः प्राप्तिरस्ति यस्य सः इत्यन्तरमाह । द्वन्द्वानि ... पुण्यापुण्यकर्माणि निमित्तानि ययोस्तयोः सुखदुःखयोः ... स्भावितदेहाभिमानः अहं सुखी अहं दुःखीत्यकृतदेहाभिमान ...

शीतोष्णादिषु अनावृताङ्गः वृष इव विचचारेत्यन्वयः ... स्भूतः पीनः पुष्टः संहननाङ्गः कठिनावयवः भूशयनादि... स्तेन अनभिव्यक्तमप्रकटं ब्रह्मवर्चसं ब्रह्मतेजो यस्य सः ... मलिनवस्त्रेणावृता कटिर्यस्य सः उरुमषिणातिमलिनेनो... पलक्षणेन द्विजातिरिति संज्ञया अतज्ज्ञजनावमतः ॥ १० ॥

कर्मवेतनतः कर्मवेतनेन कर्ममूल्येन कणा दलितमुद्गादि... पिण्याकं तिलपिष्टं फलीकरणा तुषाः कुल्माषाः कीटवृत्ति... स्थालीपुरीषं स्थालीलग्नं दग्धान्नम् आदिना गतरसादि... एतान्यप्यमृतवद्भुङ्क्ते ॥ ११ ॥

वृषलानां शूद्राणां पतिश्चोरराजः पुत्रकामः भद्रकाल्यै ... पशुमालभत आलब्धुं प्रवृत्तः ॥ १२ ॥

यं पुरुषपशुमालब्धुं प्रवृत्तस्तस्य पुरुषपशोः दैवान्मुक्तस्य ... विमुक्तस्य यथेष्टां दिशं पलायमानस्य पदवीं मार्गं तस्य ... रनुचराः परिधावन्तोऽपि अनधिगतपशवः तं पलायमानं ... प्येत्यर्थः तमसावृतायां निशि निशीथसमये अर्धरात्रावसरे ... स्मिकेन विधिना दैवकृतेन योगेन अङ्गिरःप्रवरसुतमपश्य... वन्तः ॥ १३ ॥

अनवद्यानि शुद्धानि लक्षणान्यङ्गानि यस्य तम... वधार्यं ॥ १४ ॥

पणयश्चोराः स्वविधिनाभिषिच्य आहतेन नूतनेन ... च्छाद्य भूषणादिभिरुपस्कृतमलंकृतं वैशससंस्थया हिंसावि... गीतादिघोषेण च सह पुरतोऽग्रे उपवेशयामासुः ॥ १५ ॥

अथानन्तरं वृषलराजस्य पणिः चोरभूतः पुरोहितः तर्कि... निशितं तैलधौतम् ॥ १६ ॥

---

भाषाटीका ।

उन भरतजी कों दो पैरवाले पशु सरीके मनुष्य पागल है ... है वहिरा है ऐसे कहने लगे तब भरतजी तैसाही ... तैसेही बोलने लगे दूसरे के कराने से काम करते थे ... मजूरीसे मागनें से आपही मिलने से जो कुछ मीठा ... मिले तिसको खालेते कुछ इन्द्रिय प्रीति नहीं करने थे ... सब निमित्तों को छोडदियें तिससे स्वयं सिद्ध निर्मल आन... भय आत्मलाभ के होनेसे सुख दुःख देह निमित्त ... देहाभिमानको छोडदिये ॥ ९ ॥

ठण्ड गरम पवन वर्षा मे बैलके तुल्य उघाडे ही ... खूब शरीर से मोटे ताजी दीखते थे जमीन मे सोनेसे ... करने से शरीर मे रजके भरजाने से जैसे मणि मैला ... रहता है तैसे ब्रह्म तेजको छिपाये रहते थे कमरमें ... वस्त्र रखते बहुत मैला जनेऊ रखते थे तिसी से अज्ञानी ... कहते थे कि यह तो द्विज है अथवा अधम ब्राह्मण है ... ऐसे अपमान पाकर भरतजी पृथिवी में विचरते थे ॥ १० ॥

इति तेषां वृषलानां रजस्तमःप्रकृतीनां धनमदरजउत्सिक्तमनसां भगवत्कलावीरकुलं कदर्थीकृत्योत्पथेन स्वैरं विहरतां हिंसाविहाराणां कर्म्मातिदारुणं यद्ब्रह्मभूतस्य साक्षाद्ब्रह्मर्षिसुतस्य निर्वैरस्य सर्वभूतसुहृदः सूनायामप्यननुमतमालम्भनं तदुपलभ्य ब्रह्मतेजसाऽतिदुर्विषहेण दन्दह्यमानेन वपुषा सहसोच्चचाट सैव देवी भद्रकाली ॥ १७ ॥

भृशममर्षरोषावेशरभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणाटोपातिभयानकवदना हन्तुकामेवेदं महाट्टहासमतिसंरम्भेण विमुञ्चन्ती तत उत्पत्य पापीयसां दुष्टानां तेनैवासिना विवृक्णशीर्ष्णां गलात्स्रवन्तमसृगासवमत्युष्णं सह गणेन निपीयातिपानमदविह्वलोच्चैस्तरां स्वपार्षदैः सह जगौ ननर्त्त च विजहार च शिरःकन्दुकलीलया ॥ १८ ॥

एवमेव खलु महदभिचारातिक्रमः कार्त्स्न्येनात्मने फलति ॥ १९ ॥

न वा एतद्विष्णुदत्त ! महदद्भुतं यदसम्भ्रमः स्वशिरश्छेदन आपतितेऽपि विमुक्तदेहाद्यात्मभावसुदृढहृदयग्रन्थीनां सर्वसत्त्वसुहृदात्मनां निर्वैराणां साक्षाद्भगवताऽनिमिषारिवरायुधेनाप्रमत्तेन तैस्तैर्भावैः परिरक्ष्यमाणानां तत्पादमूलमकुतश्चिद्भयमुपसृतानां भागवतपरमहंसानाम् ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
पारमहंस्यां संहितायां वैयासिक्याम्
भरतचरिते नवमोऽध्यायः ॥ ९ ॥

भाषाटीका।

जब दूसरे से काम करने के मजूरी से आहार की इच्छा करते थे तब उनके भाईयो नें भी जब खेतीके काम मे रखदिया तो उसको भी करते थे परन्तु जमीन कहां पर ऊंची है कहां नीची है इस बात को नहीं जानते थे चामलकी कणी खली भूषा आदि जोकुछ मिलै तिसको अमृत के तुल्य खाते थे ॥ ११ ॥

किसी समय पर किसी शूद्रों के राजाने पुत्रकी कामना से भद्रकाली देवी के वास्ते मनुष्य पशु मारने की तैयारी की ॥ १२ ॥

वह मनुष्य दैव योग से छूटकर भाग गया तब तिसके पीछे राजा के चाकर दौडते गये फिर अन्धेरी रात मे उस पशुके न मिलने से आधीरात बीती तब अकस्मात् दैव योग से मृग सूकर आदिकों से खेत की रक्षा करते हुये वीर आसन पर बैठे अङ्गिरा गोत्री भरत जी को उन दूतों नें देखा ॥ १३ ॥

तब वे लोग भरतजी को निर्दोष पशु जानकर अपने मालिककी कार्यसिद्धको समझकर रस्सीसे बांधकर प्रसन्नमुख होकर चंडिका के मंदिरको ले गये ॥ १४ ॥

इसके अनन्तर वे पुरोहितलोग अपनी विधिसे भरतजी को स्नान कराकर धौत वस्त्र से आच्छादित करके गहना चन्दन माला तिलकादि से युक्त करके भोजन कराकर धूप दीप माल्य खाद्य नये पत्ते अंकुर फल उपहार से युक्त जो हिंसा विधि तिससे बडे भारी गाजा बाजा से उस पुरुष पशुको लेकर भद्रकाली के आगे बैठाते भये ॥ १५ ॥

इसके अनन्तर पुरोहित नामक चोरने पुरुष पशु के रक्त से भद्रकाली देवी को पूजन करने की इच्छा से काली के मन्त्र को पढकर बडा भयंकर तीक्ष्ण तरवार को हाथ में लिया ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

धनमद एव रजस्तेनोत्सिक्तं त्यक्तमर्यादं मनो येषां भगवत्कलायुक्तं वीराणां ब्राह्मणानां कुलं तुच्छीकृत्य यथेच्छं वर्तमानानां यत्कर्म तदुपलभ्य देवी उच्चचाट प्रतिमां त्यक्त्वा बहिर्निर्गता। कथम्भूतमालम्भनम् सूनायामप्यापत्कालेऽनुज्ञातायामपि हिंसायामननुज्ञातम् भद्रकालीत्यन्तं गद्यम् ॥ १७ ॥

अमर्षोऽपराधासहनं रोषश्च वपुषो दाहनं तयोरावेशस्तस्य रभसेन वेगेन विलसित उत्तम्भितो भ्रूकुटिलक्षणो विटपः शाखा कुटिला दंष्ट्राश्चारुणानीक्षणानि च तेषामाटोपः सम्भ्रमस्तेनातिभयानकं वदनं यस्या इदं जगद्धन्तुमुद्यतेव महान्तमट्टहासं सनादं हासं ततः स्थानादुत्पत्य विवृक्णानि छिन्नानि शीर्षाणि येषां गणेन परिवारेण सह शिरांस्येव कन्दुकानि तेषां लीलया विक्रीड च ॥ १८ ॥

ननु कथं देव्याराधकानामेवं विपरीतं फलं तत्राह। एवमेवेति। महत्स्वभिचाररूपोऽतिक्रमोऽपराधः ॥ १९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वसम्भावितमिदमेवं यन्मरणेऽप्यव्याकुलत्वं मारकेषु च क्रोधाभाव इत्यादि तत्राह । न वा इति । विमुक्तो देहाद्यात्मभावलक्षणः सुदृढो हृदयग्रन्थिर्यैः सर्वसत्त्वानां सुहृद आत्मानश्च ये तेषां नच तेषां देहाद्यभिमानसद्भावेऽपि मरणादिभयमस्तीत्याह । साक्षाद्भगवतामिनो रक्ष्यमाणानां केन अनिमिषः कालः स एवारिचक्रं तेन वरायुधेन तैस्तैर्भावैश्चान्तर्यामितया प्रवर्त्यमानैर्भद्रकाल्यादिरूपैः न कुतश्चिदपि भयं यस्मिन् भागवतानां भगवदुपासकानां परमहंसानाम् ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे

श्रीधरस्वामिकृतभावार्थदीपिकायाम्

नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थं तेषां वृषलानां रजस्तमःप्रचुराणां धनमद एव रजस्तेन उत्सिक्तममर्यादं मनो येषां भगवत्कलया युक्तं वीराणां ब्राह्मणानां कुलं कदर्थीकृत्य तुच्छीकृत्य उत्पथे दुर्मार्गे यथेच्छं विहरतां हिंसैव विहारो येषां तेषां यदतिदारुणमालम्भनरूपं कर्म तदुपलभ्य सैव भद्रकाली देवी ब्रह्मभूतस्य ब्रह्मसाम्यमापद्यमानस्य ब्रह्मर्षेराङ्गिरसः सुतस्य सूनायां हिंसायामप्यननुमतस्य दुर्विषहेण सोढुमशक्येन ब्रह्मतेजसातितरां दह्यमानं वपुस्तेन हेतुना सहसा भागूचचाट प्रतिमां त्यक्त्वा बहिर्निर्गताभूदित्यर्थः ॥ १७ ॥

अमर्षोऽपराधासहनं रोषश्च वपुषो दाहस्तयोरावेशस्य रभसेन वेगेन विलसितो विजृम्भितो भ्रुकुटीलक्षणो विटपः शाखा कुटिला दंष्ट्राश्चारुणे ईक्षणे च तेषामाटोपः संभ्रमस्तेनातिभयङ्करं वदनं यस्या इदं जगद्धन्तुकामेव हन्तुमुद्यतेवाट्टहासं सनादं हासं मुञ्चन्ती ततः स्थानादुत्पत्य वृक्णानि छिन्नानि शीर्षाणि शिरांसि येषां तेषामतिगर्वितानां पापिष्ठानां कण्ठात्स्रवन्तं प्रसृतमत्युष्णमसृगासवं रुधिररूपं मद्यं परिवारेण सह निपीयाति अत्यन्तरुधिरपानजमदेन विह्वला परवशा स्वपार्षदगणैः सहोच्चैस्तरां जगौ गानं कृतवती ननर्त च चिशरांस्येव कन्दुकानि तेषां क्रीडया विजहार विहारं कृतवतीव ॥ १८ ॥

ननु भद्रकाल्याराधनमेवं कथं विपरीतफलं तत्राह । एवमेवेति । महत्स्वभिचाररूपः हिंसारूपः हिंसारूपोऽतिक्रमोऽपराधः कार्त्स्न्येना त्मने अभिचारिन्नृणामेव फलति किल ॥ १९ ॥

नन्वेवमसंभावितमेवेदं यन्मरणाद्व्याकुलत्वं मारकेषु द्रोहाभावश्च तत्राह । न चैतदिति । हे विष्णुदत्त ! भागवतपरमहंसानां भागवताश्च ते परमहंसाश्च तेषामेवं विधानां स्वशिरश्छेदे आपतिते प्राप्तेऽपि यदसंभ्रमः यः असंभ्रमः इत्येतन्महदद्भुतमतीवाश्चर्यं न भवति परमहंसशब्दो विरक्तपरः आङ्गिरससुतस्य चतुर्थाश्रमप्रवेशाभावात् असंभ्रमे हेतुं वदन् विशिनष्टि मुक्तस्त्यक्तः देहादिष्वात्मभाव आत्माभिमानरूपः सुदृढो ग्रन्थिर्यैः सर्वेषु भूतेषु सुहृत्सौहार्दयुक्तः आत्मा मनो येषामत एव निर्वैराणां देहा[भि]मानाभावाद्वैराभावाच्च व्याकुलत्वाद्यभाव इति भावः दे[हा]भिमानादिसत्त्वेऽपि न तेषां मरणभयमस्तीत्याह । साक्षाद्भग[वता] रक्ष्यमाणानां केन अनिमिषः कालः स एवारिश्चक्रं तेन वरायु[धेन] प्रमत्तेनानलसेन तैस्तैर्भावैश्च भद्रकालीमारकप्रभृतिप्रवर्त[क]त्वभावैश्चेति ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमद्वीर-

राघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उत्सिक्तमुच्छृङ्खलं मनो येषां ते तथा तेषां भगवत्[स]न्निहिताङ्गिरसकुलं कदर्थीकृत्य वृषलानां ब्रह्मर्षिसुतस्य [आ]लम्भनं हिंसनमतिदारुणं यत्कर्म तदुपलभ्य दृष्ट्वा ब्रह्मतेजसा दहनलक्षणभरतस्य श्रीहरिसामर्थ्येन भृशं दन्दह्यमानेन युक्ता सा भद्रकाली सहसोच्चचाल "सद्योऽर्थः सहसा ..." यादवः ॥ १७ ॥

या यष्टुमाकाङ्क्षिता सैवेत्येवशब्दार्थः [...] सूनायां हिंसायामनभिमतस्यायोग्यस्य सर्वप्राणिहित[स्य] ब्राह्मणहिंसां नानुमन्यन्त इति अमर्षरोषयोर्य आवेशः रभसेन कोलाहलेन विलसितः प्रकाशितः भ्रुकुटिलक्षणो [वि]शाखा तथा कुटिलाभ्यां दंष्ट्राभ्यां चारुणानामीक्षणानां [आटो]पेन चातिभयङ्करं वदनं यस्याः सा तथा इदं जगद्धन्तुकामेव [...] हासं कुर्वती ततः पूर्वस्थानादुत्पत्योत्थायागत्य वृक्णानि छि[न्नानि] शीर्षाणि येषां ते तथा तेषाम् ॥ १८ ॥

महत्स्वभिचारेण योऽतिक्रमः अनिष्टकरणं तदात्मने [...] कार्त्स्न्येनैकदेशमन्तरेण फलति परिपाकं प्राप्नोति ॥ १९ ॥

आश्चर्यमेतद्यदन्तकान्तिकानीतोऽपि ब्राह्मणस्तूष्णीं [...] राजाभिप्रायज्ञो बादरायणिराह । नवा इतीति । हे विष्णु[दत्त] परीक्षित्स्वशिरश्छेदन आपातितेऽप्यसम्भ्रम इति यदेतद्भ[गवत्पर]महंसानामद्भुतं नवै नैवेत्यन्वयः विमुक्तो देहादावात्मभाव[लक्षणः] सुदृढहृदयग्रन्थिर्यैस्ते तथा तेषां सर्वसत्त्वानां सुहृद[आत्मान]श्च सर्वसत्त्वसुहृदात्मानः तेषां सुहृदात्मा मनो तेषां ते तथा [...]मिति वा "साक्षात्प्रत्यक्षतुर्ययो"रित्यभिधानात् साक्षाद्भग[वतो] मूर्त्तेर्हरेरनिमिषारिवरायुधेन कालरूपचक्राख्यश्रेष्ठायुधेन [...]भावैर्भद्रकाल्यादिसंज्ञैः परितो रक्ष्यमाणानामप्रमत्तेनेत्यने[न ...]स्य चैतन्यमुपलक्षयति अत एव वैलक्षण्यसूचनाय [...] अनिमिषेत्यपसन्धिः कृतः ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

नवमोऽध्यायः ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य

नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भगवतः कलानामवताराणां वीराः सेनान्यो ये भक्तास्तेषां कुलं कदर्थीकृत्य दुःखयित्वा स्वैरं विहरतां यत्कर्म तदुपलभ्य देवो उच्चचाट। प्रतिमां भित्त्वा बहिर्निर्जगाम यद्वा सैव प्रतिमारूपा देव्येव उच्चचाट भरततेजसा छिन्नभिन्ना बभूव ननु त्वदीयासिना भरतादिच्छन्नो बभूव इत्येवकारार्थो व्यक्तः सूनायाआपत्काले खरचार्थमनुज्ञातायामपि हिंसायामननुज्ञातं सर्वथैव निषिद्धमालम्भनमित्यर्थः ॥ १७ ॥

अमर्षोऽपराधासहनं तद्धेतुकः कोपश्च तयोरावेशस्य योरभसो वेगस्तेन विलसितो विजृम्भितो भ्रुकुटिलक्षणो विटपः शाखा कुटिला दंष्ट्राश्च अरुणानीक्षणानि च तेषामाटोपेन प्रतापेन अतिभयानकं वदनं यस्याः सा इदं जगदपि तस्यैकस्य जगद्वर्तिनोऽपराधेनेत्यर्थः ॥ १८ ॥ १९ ॥

नन्वसम्भावितमेतद्यन्मरणेऽप्यव्याकुलत्वं मारकेषु क्रोधाभावस्तत्राह। नवेति। हे विष्णुदत्त! परीक्षित् विमुक्तो देहाद्यात्मभावलक्षणः सुदृढो हृदयग्रन्थिर्यैः सर्वेषामेव सत्त्वानां स्वद्रुहामपि सुहृत्स्वरूपाणां न विद्यते निमिषमनवधानं यस्य तादृशमरि चक्रं तेन वरायुधेन करणेन भगवता कर्त्राऽप्रमत्तेन तैस्तैः प्रसिद्धैर्भावैर्भक्तवात्सल्यशिष्टपालनदुष्टनिग्रहाद्यैः ॥ २० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।

पञ्चमे नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इत्थमेवं तेषां रजस्तमःस्वभावानां धनेन यो मदः स एव रजस्तेनोत्सिक्तं निर्मर्यादं मनो येषां तेषां भगवत्कलाभिर्वेदादिभिर्युक्तं वीराणां ब्राह्मणानां कुलं कदर्थीकृत्य तुच्छीकृत्य उत्पथेन दुर्मार्गेण स्वैरं यथेच्छं विहरतां रममाणानां हिंसैव विहारो येषां तेषां ब्रह्मभूतत्वादिगुणवतः यदालम्भनाख्यमतिदारुणं कर्म तदुपलभ्य सैव देवी अतिदुर्विषहेण ब्रह्मतेजसा दंदह्यमानं यद्ब्रह्मपुत्रेण हन्तुना सहसा आशु उच्चचाट प्रतिमां हित्वा बहिर्निर्गतामभूत् कथंभूतमालम्भनम् सूनायामपि आपत्काले अनुज्ञातायामपि प्राणिहिंसायाम् अननुमतमनुज्ञातम् ब्राह्मणवधस्य आपद्यपि निषिद्धत्वमित्यर्थः अतो बुभुक्षितो गरुडः आपदि कश्यपेन निषादग्रामसमूहभक्षणे अनुज्ञातस्तत्र यदि ब्राह्मणस्ते कण्ठं प्राप्स्यति स तदा त्वां दहेत् अतस्त्वया निवारणीय इतिमहाभारते स्थितम् ॥ १७ ॥

तदनन्तरं किंवृत्तमित्यत्राह। भृशमिति। भृशमत्यर्थम् अमर्षो व्यतिक्रमासहनं ततो रोषो व्यतिक्रमोक्तिर्नाशहेतुः क्रोधस्तस्यावेशस्य रभसेन वेगेन विलसित उत्तम्भितो भ्रुकुटिरूपो विटपः शाखापरपर्यायः कुटिला दंष्ट्राश्च अरुणानीक्षणानि च तेषामाटोपेन संभ्रमेणातिभयानकं वदनं यस्याः सा इदं विश्वं हन्तुकामेव महाट्टहासं सनादं विमुञ्चन्ती ततः स्थानादुत्पत्य तेनैवासिना विवृक्णानि विदारितानि शीर्षाणि येषां तेषां गलात्स्रवन्तमसृगासवं गणेन परिकरजनसमूहेन सह निपीय जगौ ननर्त शिरांस्येव कन्दुकानि तेषां लीलया चिक्रीड च भरताग्रे इति शेषः ॥ १८ ॥

महत्सु अभिचारो द्रोहस्तन्निमित्तो नानाविधोऽपराधः ॥ १९ ॥

हे विष्णुदत्त! विमुक्तो देहेन्द्रियाद्यात्मभावलक्षणः सुदृढो हृदयग्रन्थिर्येषां तेषां सर्वसत्त्वानां सुहृत् अनुकूलः आत्मा मनो येषाम् अनिमिषः सर्वमारकः कालः अरिवरं सर्वेभ्योऽरिभ्यश्च-क्रेभ्यो वरं श्रेष्ठं सुदर्शनाख्यं चक्रं ते द्वे आयुधे यस्य तेन भक्तरक्षणे सदैवाप्रमत्तेन साक्षाद्भगवता तैस्तैर्भावैश्चान्तर्यामितया प्रवर्त्यमानैर्भद्रकाल्यादिरूपैः रक्ष्यमाणानाम् स्वशिरश्छेदे आपतिते प्राप्तेऽपि यदसंभ्रम इत्येतन्महदद्भुतं न भवति ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

नवमाध्यायार्थप्रकाशः ॥ ९ ॥

---

भाषाटीका

इस प्रकार से रजोगुण तमोगुण प्रकृतिवाले धन के मद से बडे रजोगुणी हिंसा में विहार करनेवाले उन शूद्रों का तेजस्वी ब्राह्मणों के कुल का अपमान करके मर्यादा को छोडकर इच्छा माफिक विहार करना इत्यादि कठिन कर्म साक्षात् ब्रह्मभूत ब्रह्मर्षि पुत्र निर्वैर सर्व सुहृत भरत जी का हिंसा करना जोकि नहीं करने के योग्य तिसको देखकर अति दुःसह ब्रह्म तेज से देवी का शरीर जलने लगा प्रतिमामें से देवी बाहर हो गई ॥ १७ ॥

तबतो देवी बडे असह्य होने से रोषके आवेश होने से जो वेग तिस से देवी का शाखारूपी भृकुटी खडी होगई और टेढी होगई टेढे भयंकर डाढ निकाल लिये लाल आँखें होगई तिनका जो संभ्रम तिससे बडा भयानक देवीका मुख होगया तब देवी ऐसी मालूम भई जैसे इस संसार को नाश करदेगी बडे ज़ोर से अट्टहास कर उहां से उछलकर उन्हीं के उसी तरवार को लेकर उन्हीं शूद्रों के कटेहुए गलों से गिरते हुये गरम मादक-रक्त का सब गणों के साथ पान करके मदसे अति विह्वल

भाषाटीका ।

होकर पार्षदों के साथ ऊंचे स्वरसे गान करने लगी और नाचने लगी और सूडों की गेंदों से खेलने लगी ॥ १८ ॥

इसी प्रकार से महात्मा को अपमान करै तौ अपने ऊपर पड़ता है ॥ १९ ॥

हे विष्णुदत्त ! परीक्षत जी यह बात कुछ बड़ी अद्भुत नहीं है जो कि अपने मस्तक के छेदन का समय आने से भी जिनके भय नहीं है देहादिक में से आत्मभाव छूटगये हैं जिनकी हृदय ग्रन्थि खुलगई है वे सर्व प्राणिके सुहृद होगये हैं निर्वैर हैं साक्षात् चक्रायुध भगवान् सावधानतासे रक्षा करते हैं तिन तिन भावों से वे रक्षित रहते हैं प्रकार निर्भय भगत्पाद के वे आश्रित हैं परमहंस हैं यह क्या आश्चर्य है ॥ २० ॥

इति श्रीभागवत पञ्चमस्कन्ध नवमाध्यायका भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ ९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे नवमोऽध्यायः समाप्तः ॥ ९ ॥



## दशमोऽध्यायः ।

### श्रीशुक उवाच ।

अथ सिन्धुसौवीरपते रहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना शिबिकावाहपुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्ध एष पीवा युवा संहननाङ्गो गोखरवद्धुरं वोढुमलमिति पूर्वविष्टिगृहीतैः सह गृहीतः प्रसभमतदर्ह उवाह शिबिकां स महानुभावः ॥ १ ॥

यदा हि द्विजवरस्येषुमात्रावलोकानुगतेर्न समाहिता पुरुषगतिस्तदा विषमगतां स्वशिबिकां रहूगण उपधार्य पुरुषानधिवहत आह हे वोढारः! साध्वतिक्रमत किमिति विषममुह्यते यानमिति ॥ २ ॥

अथ त ईश्वरवचः सोपालम्भमुपाकर्ण्योपायतुरीयाच्छङ्कितमनसस्तं विज्ञापयाम्बभूवुः ॥ ३ ॥

न वयं नरदेव! प्रमत्ता भवन्नियमानुपथाः साध्वेव वहामः अयमधुनैव नियुक्तोऽपि न द्रुतं व्रजति नानेन सह वोढुमुह वयं पारयाम इति ॥ ४ ॥

सांसर्गिको दोष एव नूनमेकस्यापि सर्वेषां सांसर्गिकाणां भवितुमर्हतीति निश्चित्य निशम्य कृपणवचो राजा रहूगण उपासितवृद्धोऽपि निसर्गेण बलात्कृत ईषदुत्थितमन्युरविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसावृतमतिराह ॥ ५ ॥

अहो कष्टं भ्रातर्व्यक्तमुरुपरिश्रान्तो दीर्घमध्वानमेक एव ऊहिवान् सुचिरं नातिपीवा न संहननाङ्गो जरसा चोपद्रुतो भवान् सखे! नो एवापर एते संघट्टिन इति बहुविप्रलब्धोऽप्यविद्यया विहितद्रव्यगुणकर्माशयस्वचरमकलेवरेऽवस्तुनि संस्थानविशेषेऽहंममेत्यनध्यारोपितमिथ्याप्रत्ययो ब्रह्मभूतस्तूष्णीं शिबिकां पूर्ववदुवाह ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दशमे क्षिपता राज्ञा शिबिकां स्वां वहन्मुनिः ।
स्वदुर्वादानुवादेन विज्ञायाशु प्रसादितः ॥ १ ॥
एवं भूतविकारित्वमज्ञसर्वज्ञयोः समम् ।
इति सर्वज्ञता सिद्धै रहूगणकथेरणम् ॥ २ ॥

रहूगणो नाम सिन्धुसौवीरदेशयो राजा तत्त्वजिज्ञासुः कपिलाश्रमं यदा गच्छतिस्म तदा यद्वृत्तं तदाह । अथेति । इक्षुमत्या नद्यास्तीरे तेषां शिबिकावाहानां कुलस्य नाथेन एष गौरिव खर इव च भारं वोढुं समर्थ इति धिया पूर्वं ये केचन विष्ट्या बलाद्गृहीतास्तैः सह प्रसभं बलाद्गृहीतः सन् अतदर्होऽपि स महानुभावः शिबिकामुवाहेत्यन्वयः ॥ १ ॥

हिंसा परिहारार्थं इषुमात्रप्रदेशावलोकस्यानु पश्चात् या गतिस्तस्या हेतुभूतायाः पुरुषाणां गतिः न सम्यगाहिता एकरूपा नाभूत् ॥ २ ॥

सोपालम्भं साक्षेपं सामदानभेददण्डेषु उपायेषु चतुर्थाच्छङ्कितचित्ताः ॥ ३ ॥

भवन्नियमानुपथास्त्वदाज्ञानुवर्तिनः न पारयामो न शक्नुमः ४

कृपणानां वचो निशम्य सांसर्गिकः संसर्गनिमित्त एकस्यापि दोषः सर्वेषामेव भवितुमर्हतीति निश्चित्य रहूगण आह इत्यन्वयः । कथम्भूत उपासिता वृद्धा येन सोऽपि स्वभावेन बलात् परवशः कृतः सन् कथम्भूतं प्रत्याह न विस्पष्टं ब्रह्मतेजो यस्मिन् भस्मनाच्छन्नमग्निमिव स्थितम् ॥ ५ ॥

भ्रातरिति सम्बोधनमाक्षेपाभिप्रायं व्यक्तं निश्चितम् उरु अधिकं परिश्रान्तोऽसीत्यादीनि विपरीतार्थानि षड्वाक्यानि । ऊहिवान् प्रापितवान् । तत्रापि सुचिरं जरसा च वृद्धत्वेन । सङ्घट्टिनः सहचरा बहु यथा भवस्येवं विप्रलब्धोऽपि वक्रोक्त्या उपहसितोऽपि तूष्णीमुवाहेत्यन्वयः । तूष्णीम्भावे हेतुः अविद्यया रचिता द्रव्यादयो यस्मिन् तस्मिन् स्वचरमकलेवरेऽनध्यारोपितः मिथ्याप्रत्ययो येन । तत्र द्रव्याणि महाभूतानि गुणा इन्द्रियाणि कर्माणि पुण्यपापानि आशयोऽन्तःकरणं यतो ब्रह्मभूतः ॥ ६ ॥

---

अथ पुनः स्वशिविकायां विषमगतायां प्रकुपित उवाच रहूगणः किमिदमरे त्वं जीवन्मृतो कदर्थीकृत्य भर्तृशासनमतिचरसि प्रमत्तस्य च ते करोमि चिकित्सां दण्डपाणिरिव जनताया प्रकृतिं स्वां भजिष्यस इति ॥ ७ ॥

एवं बह्वबद्धमपि भाषमाणं नरदेवाभिमानं रजसा तमसानुविद्धेन मदेन तिरस्कृताशेषभग त्प्रियनिकेतं पण्डितमानिनं स भगवान् ब्राह्मणो ब्रह्मभूतः सर्वभूतसुहृदात्मा योगेश्वरचर्यायां नाति त्पन्नमतिं स्मयमान इव विगतस्मय इदमाह ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मामनादृत्य भर्तुः स्वामिनो मम शासनमाज्ञामतिक्रामसि ॥७॥ चिकित्सां शास्ति दण्डपाणिर्यमो यथा जनसमूहस्य शास्ति करोति तथा स्वां प्रकृतिम् अप्रमत्तताम् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मृत्युभयासंभ्रममभिधायाथ परापरज्ञानवत्तां प्रपञ्चयितुमाह । अथेति । सिन्धुसौवीरदेशयो राज्ञः रहूगणाख्यस्य कपिलमुनिं प्रष्टुं तत्त्वमिति शेषः तत्त्वजिज्ञासोर्व्रजतो गच्छतः सत इक्षुमत्या नद्यास्तीरे शिविकाया आन्दोलिकाया ये वाहका वोढारस्ते यामन्वेषणसमये तेषां वाहकानां कुलस्य पत्या नाथेन स आङ्गिरससुतो द्विजश्रेष्ठो दैवादुपसादितो लब्धः पीवा पुष्टावयवः युवा संहननाङ्गः सुदृढाङ्गप्रत्यङ्गसन्धिरेष गौरिव खर इव धुरं भारं वोढुमलं समर्थ इतिधिया पूर्वं ये विष्टया बलाद्गृहीतास्तैः सहितः सन्नतदर्होऽपि स महानुभावः शिविकामुवाह ऊढवान् ॥ १ ॥

यदा हि शिविकावाहनसमये द्विजवरस्येषुमात्रप्रदेशावलोकस्यानु पश्चाद्या गतिः कुटिला तस्या हेतुभूतायाः पुरुषाणां गतिर्न सम्यगाहिता एकरूपा नाभूत् इषुमात्रप्रदेशगत्यवलोकनानन्तरद्विजसंबन्धिप्रातिकूल्यगतिनिमित्तवैषम्ययुक्ता पुरुषगतिरभूदित्यर्थः तदा विषमगतां सविषममूह्यमानां स्वशिविकामुपधार्य दृष्ट्वा रहूगणः अभिवहतः वाहकान्पुरुषानाह उवाच उक्तिमेवाह । अहो इति । अहो वोढारः ! हे वाहकाः ! साधु सम्यगतिक्रमत पादविक्षेपान् कुरुत किमिति किमर्थं यानं शिविका विषमं यथा-तथोह्यत इति ॥ २ ॥

अथ एतदुक्त्यनन्तरं ते वोढारः सोपालम्भं साक्षेपम् ईश्वरस्य भर्तुः रहूगणस्य वच आकर्ण्य उपायेषु सामदानविधिभेदेषु यस्तुरीयश्चतुर्थः तस्माच्छङ्कितमनसः निग्रहरूपादुपायाच्छङ्कितचित्ताः अस्मान् दण्डयेदिति बुद्ध्येत्यर्थः तं यानस्य विषमगतिहेतुकं द्विजम् आङ्गिरससुतं विज्ञापयांबभूवुः विज्ञातिपूर्वकं कथयामासुरित्यर्थः विज्ञप्तिपूर्वकत्वमेवाह । नेत्यादिना पारयाम इत्यन्तेन । हे नरदेव ! वयं न प्रमत्ताः किन्तु भवन्नियमानुवर्तिनः साध्वेव सम्यगेव वहामः अयं पुरुषोऽधुनैव नियुक्तोऽप्यस्माभिस्सह द्रुतं नैव गच्छत्यतो वयमनेन सह वोढुं न पारयामः न समर्थाः ॥३॥

इति कृपणानां वचो निशम्य संसर्गनिमित्त एकस्यापि दोषः सर्वेषामपि भवितुमर्हति नूनमिति निश्चित्य रहूगण आहेत्यन्वयः कथम्भूत उपासिता वृद्धा येन सोऽपि स्वभावेन प्राकृतेन बलात्परवशः कृतः रजोगुणव्याप्तचित्तः कुपितमनाः स भूतं प्रत्याह न स्पष्टं ब्रह्मतेजो यस्मिन् रजसा भस्मना प्रच्छन्नं जातवेदसमग्निमिव स्थितम् ॥ ४—५ ॥

उक्तमेवाह । अहो इत्यादिना संघट्टिन इत्यन्तेन । अहो रिति संबोधनमाक्षेपाभिप्रायकं व्यक्तं निश्चितम् उर्वीं श्रान्तोऽसीत्यादीनि विपरीतार्थकानि पद्वाक्यानि एक वान् तत्रापि सुचिरं जरसा वृद्धत्वेन च उपद्रुतः प्राप्तो भवानपरे त्वद्व्यतिरिक्ता एते संघट्टिनः सह वाहका दीर्घाध्वगमनादिकमकृत्वैव सुखिनस्तिष्ठन्तीत्येवं बहुविध भिक्षिप्तोऽपि ब्राह्मणस्तूष्णीं पूर्ववदुवाह तत्र हेतुं वदन् नष्टि । अविद्ययाहंकारममकाररूपया कर्मसंज्ञया वा विरचिताः परिणताः द्रव्याणि पञ्चमहाभूतानि गुणाः दयः ज्ञानेन्द्रियविषयाः कर्माणि वागादिकर्मेन्द्रियविषयाः जल्पादयः गुणकर्मशब्दौ तदिन्द्रियाणामप्युपलक्षणौ करणां वासना वा यस्मिन्नवस्तुनि वसत्येकरूपेणेति वस्तु न्यस्मिन्सततविकारिणीत्यर्थः अवयवविन्यासविशेषरूपे रमकलेवरे तदनुबन्धिनि च अनारोपितः अहंममेत्येवं मिथ्याप्रत्ययो ज्ञानं येन अनहमर्थे शरीरे अहंप्रत्ययः प्रत्ययवत् मिथ्येति मिथ्याप्रत्यय इत्युक्तम् ब्रह्मभूतः स्त्वंमापत्स्यमानः तस्य ब्रह्मभावस्य सान्निध्यात्सिद्धवन्निर्देशः

अथ पुनः शिविकायां विषमं नीयमानायां सत्यां प्रकुपितः पूर्वमीषत्कुपित आह । इदानीं तु प्रकुपित आहेति पितस्यैवोक्तिमाह । किमित्यादिना भजिष्यस इत्यन्तेन । इदं त्याज्ञातिलङ्घित्वं दर्शयति । अरे त्वं भवान् जीवन्नपि मृत कदर्थीकृत्य तुच्छीकृत्य भर्तुर्मम शासनमतिचरस्यतिक्रम ततः प्रमत्तस्य ते चिकित्सां दण्डं करोमि दण्डपाणि जनसमूहस्य यथा त्वं स्वां प्रकृतिं भजिष्यसि समीचीनां तथा चिकित्सां करोमीति ॥ ७ ॥

एवं बहुभिक्रमबद्धमनन्वितमभिभाषमाणं नराणां देवोऽहमिति मानवन्तं तमसानुविद्धेनानुसङ्गतेन रजसा रजोगुणकार्येण तन्मूलभूतमदेन सम्मोहितेन तिरस्कृताशेषभगवत्प्रियनिकेतं वत्प्रियनिकेतनशब्दो भागवतपरः भगवतः प्रियनिकेतना तिरस्कृता अशेषा भगवत्प्रिया निकेतना येन सः एतेषा सर्वेऽपि भागवतास्तिरस्कृतप्राया एवेत्यभिप्रायेणाशेष कं यद्वा तिरस्कृतः अशेषः सम्पूर्णः भगवतः प्रियः येनेति च पण्डितमात्मानं मन्यमानं योगीश्वराणां द्विषदाचरणं तस्यां नात्यन्तव्युत्पन्ना परिचिता मतिः रहूगणं सर्वभूतसुहृदात्मा कृतागस्यपि सौहृदयुक्तमनाः भगवान् जगदुत्पत्त्यादिज्ञानवान् ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

उक्तः स ब्राह्मणः भरतः विगतस्मयो विगताश्चर्योऽपि स्मयमानो हसन्निव अनेन सुप्रसन्नता द्योत्यते इद वक्ष्यमाणमाह ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र पुरुषान्तरसम्वादबाहुल्येन श्रद्धातिशयो भवतीति पुनरपि पञ्चस्वध्यायेषु हरेस्तत्त्वं निरूपयति । तदर्थं ब्राह्मणरहूगणयोः संलापं घटयितुमाह । अथेति । इक्षुमत्या नद्यास्तटे कस्मिंश्चिदाश्रमे स्थितं कपिलं मुनिं द्रष्टुं व्रजतो रहूगणस्यान्दोलिकावाहकपुरुषान्वेषणवेलायां तस्य राज्ञः कुलपतिना प्रधानपुरुषेण दैवेनादृष्टप्रेरकेण हरिणोपसादितः प्रापितः एष पीवा पुष्टः खरवत् धुरं शिबिकां वोढुमलं समर्थ इति निश्चित्य प्रसभं पूर्वविष्टिगृहीतैर्वाहकैः सह गृहीतोऽनदर्हः वहनायोग्यः स ब्राह्मणः शिविकामुवाहेत्यन्वयः किं चित्रमिदमिति तत्राह । स हीति । स ब्राह्मणो महानुभावो हि यस्मात्तस्माद्ब्राह्मणेन वाहयितृत्वमनुपपन्नमिदमस्यात्यन्तायोग्यं महासामर्थ्योपेतत्वादित्यर्थः ॥ १ ॥

युगमात्रप्रदेशस्यावलोको दर्शनं युगमात्रावलोकः तदनुकूला गतिर्गमनं यस्य स तथा तस्य गत्या अन्येषां वाहकानां पुरुषाणां गतिर्न समायुक्ता न भवति यदा तदा रहूगणः अधिवहतो वोढृनाहेत्यन्वयः अतिक्रमत पदं निक्षिपत ॥ २ ॥

सोपालम्भं सतर्जनमीश्वरस्य राज्ञः वचः तुर्यात्सामाद्युपायानाम् मध्ये चतुर्थाद्दण्डात् ॥ ३ ॥

भवतो नियमोऽनुशासनं तस्यानुपथा अनुगुणमार्गाः द्रुतमस्मद्वहनानुगुणं न व्रजति पारयामः पारं गच्छामः ॥ ४ ॥

नूनमिदानीमेकस्य सांसर्गिकः सम्बन्धात्सम्भूतः सम्भावनामात्रं न तु तात्त्विकं विचारासहत्वादितीममर्थमपिना सूचयति अयं दुष्ट इति निसर्गेण निश्चयेन सिन्धुविषयस्याधिपतिरहमित्यभिमानवशात्कृतः पूर्णः स्वभावान्तरं राजसं प्राप्त इति वा अन एवोत्थितकोपः ॥ ५ ॥

अहो कष्टमित्याद्याक्षेपाः विपरीतार्था वेदितव्याः भ्रातः सखे ! इत्याक्षेपे सम्बोधनं ज्ञातव्यं लोके भ्रात्रादिभिः सह विरोधो नान्यैरित्यत एतादृशैः शब्दैः सम्बोधनं कृतमित्यर्थः सङ्कुचितः सह वाहकाः ॥ ६ ॥

इत्येवमित्प्रलब्धोऽपि भर्त्सितोऽपि तूष्णीं भूत्वा शिविकामुवाहेत्यन्वयः तूष्णींभावे कारणमाह । ब्रह्मेति । ब्रह्मभूतः ब्रह्मनिविष्टमना इत्यर्थः अत्रापि कारणमाह । चरमेति । इतः परं भौतिकं शरीरमस्य नास्तीति द्योतनाय चरमेति स्वत्वेनाभिमतेऽन्यदेहे न अध्यारोपितो मिथ्याप्रत्ययो येन स तथा अनात्मनि कर्तृत्वाभिमानो मिथ्याप्रत्ययः तत्त्वनिर्वाच्यलक्षणः कस्माच्छरीरस्य हेयत्वमिति तत्राह । अवस्तुनीति । अवस्तुत्वादनित्यत्वादित्यर्थः तदपि कुत इत्यत्राह । संस्थानेति । अवयवविन्यासविशेषत्वाद्घटवदित्यर्थः केन विन्यासविशेष इत्यत्राह । अविद्ययेति । हरीच्छया प्रेरितया प्रकृत्या विहितानां द्रव्याणां पञ्चभूतानां गुणानां सत्त्वादीनां कर्मणां पुण्यपापलक्षणानामाशयः समूहो यस्मिंस्तत्तथा द्रव्यादीन्याशेरते यस्मिन्निति वा विहितद्रव्यगुणकर्माशयं च स्वचरमकलेवरं चेति विग्रहस्तस्मिन् विचिकित्सया किम्फलमत्राह । यथेति । प्रकृतिं समस्वभावम् ॥ ७ ॥

एवं राज्ञोपालब्धो ब्राह्मणः किमकरोदत्राह । एवमिति । अनुज्ञाभिभाषणे कारणमाह । रजसेति । फलान्तरमाह । तिरस्कृतेति । अशेषा ये भगवत्प्रिया भागवतास्तत्कालभवमनुष्यास्तेषां निकेत आश्रयो विप्रजन्मा यः स भरतोऽशेषभगवत्प्रियनिकेतः तिरस्कृतो धिक्कृतोऽशेषभगवत्प्रियनिकेतो येन स तथा तं मनुष्यपदं प्रक्षिप्य । किमिति समस्यत इतीयं शङ्का तत्कालस्थितभक्तेषु मानुषेष्वपमानत्वः वरोऽपि धिक्कृतो राज्ञा सुहृदा वैष्णवेष्वपीत्यनेन परिहर्तव्येति स्वभूतसुहृदो वैष्णवास्तेष्वात्मा यस्य स तथा अत एव सुहृदा वैष्णवेष्विति तर्हि किमिति धिक्कारः इत्यत उक्तं योगेश्वरेति योगेश्वराणां चर्यायां शुश्रूषायां व्यवहारे वा नातिव्युत्पन्नमतिं नाभ्यस्तबुद्धिं स्मयमान इवेतीवशब्दो मन्दहासस्य स्वरूपभूतत्वं दर्शयति स्मयो नामकश्चन दोषः स विगतो यस्मात्स तथा इदं राज्ञ आक्षेपवचनानामुत्तरम् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अस्य च श्रीभरतस्य भागवतपरमहंसत्वाद्भगवद्गुणसंक्रान्तत्वेन सर्वत्र समस्यापि भक्तवात्सल्यं परमस्त्येव । ननु भजतोऽपि न वै केचिदिति न्यायेनान्येषामात्मारामाणामिव नत्राप्यौदासीन्यमिति महागुणान्तरं दर्शयितुमाह । अथ सिन्धुपति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

परिश्रान्तोऽसीति टीकादृष्टमपि सर्वत्र नास्ति परिश्रान्त इत्येव सर्वत्र पाठः ॥ ६—७ ॥

ब्रह्मभूतः देहद्वयावेशरहितः ॥ ८—१४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वहन्तं शिबिकां स्वीयकटूक्त्यर्थकृतं मुनिम् ।
ज्ञात्वा राजावरुह्याशु तुष्टाव दशमे स्फुटम् ॥

तदेवं श्रीभरतः कणपिण्याकादिभिः स्वपालकेषु भ्रात्रादिषु तत्प्रतिवेषितेषु च कर्मित्वाद्राजसेष्वपि कृपाश्चकारैव यतो बहुकालमपि तेभ्यः स्वदर्शनं ददौ तथैव वृषलराजे दुराचारसक्तत्वादतितामसे स्वघातकेऽपि कृपाश्चकारैव यतस्तेनापि प्रकारेण स्वस्य देवपाश्च साक्षाद्दर्शनं जन्मान्तरेऽपि तन्मुक्तिकारणं कारयामासैव तथैव रहूगणे ज्ञानित्वात् सात्त्विके राजत्वोचितरजसा शिबिकां वाहयत्यपि कृपाश्चकारेति तत्र रजस्तमसोः प्रकाशकत्वाभावात् सत्त्वस्य तु प्रकाशकत्वात् रहूगण एव भरतस्य भक्तिज्ञानादिप्रकाशो न पूर्वयोरिति ज्ञापयन् तदुपाख्यानमारभते । अथेति । परमहंसत्वेन सर्वत्र तस्य साम्यस्यौचित्येऽपि महाभागवतत्वादेव कृपा व्याख्येया भरतस्य भक्तिज्ञानवैराग्यादिकं भगवत्कृपया ज्ञानगुणी बभूवेति एतत् कथं ज्ञायेतेत्येतदर्थं रहूगणोपाख्यानमिमं च केचिदाहुः । सिन्धुसौवीरदेशयोर्नृपस्य तेषां शिबिकावाहानां कुलपतिना पीवा पुष्टाङ्गः संहननाङ्गो बलिष्ठश्च प्रसभं बलात्कृतं यथा स्यात्तथा गृहीतः अलं समर्थ इति मनसि विभाव्येत्यर्थः ॥ १ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हिंसापरिहारार्थमिषुमात्रप्रदेशावलोकनानन्तरमेव या गतिस्तस्या हेतोः पुरुषाणां गतिर्न समाहिता न सम्यगाहिता एकरूपा नाभूत् ॥ २ ॥

ईश्वरस्य राज्ञो वचः सोपालम्भं साक्षेपमुपायेषु सामदानभेददण्डेषु मध्ये तुरीयात् चतुर्थात् दण्डात् ॥ ३ ॥

न वयं प्रमत्ताः किं तु भवदाज्ञानुवर्त्तिन एव ॥ ४ ॥

निसर्गेण राजत्वाद्राजसस्वभावेन बलात्कृतः बलात्कारविपर्यीकृतः जातवेदसमग्निं भस्माच्छादितमिव ॥ ५ ॥

भ्रातरित्याक्षेपाभिप्रायं सङ्घट्टिनः सङ्गिनः विप्रलब्धः विपरीतलक्षणया उपहसितः तेन त्वं न श्रान्तोऽसि यतोऽधुनैवात्र नियोजितः अतिपीवा भवासि दृढाङ्गश्च भवसि युवा चासि एते अन्ये तव सङ्गिनश्च तदपि विरुद्धगत्या वोढुं न शक्नोमीति मयि राजन्यपि दुष्टतां किं प्रकाशयसीत्यर्थः । विप्रलब्धोऽपि तूष्णीमुवाह । तत्र हेतुः अविद्यया मायया रचिता द्रव्यादयो यस्मिन् तत्र स्वचरमकलेवरे न अध्यारोपितो मिथ्याप्रत्ययो येन तत्र द्रव्याणि भूतानि गुणा इन्द्रियाणि कर्माणि पुण्यपापानि आशयोऽन्तःकरणं अवस्तुनि कलेवरस्य प्राधानिकत्वेन वस्तुत्वेऽपि स्वस्य तत्सम्बन्धाभावादेवेति भावः यतो ब्रह्मभूतः यद्यपि भरतस्य तच्छरीरं शुकदेवादीनामिवाप्राकृतत्वादनश्वरं नित्यमेव तदपि तस्य तदानीमुत्पन्नप्रेमत्वादेव भगवन्तं विना अन्यत्र स्वदेहादौ ममत्वासम्भवात् तदानीं तेन देहेन साक्षात् सेवाया अलाभादौत्कण्ठ्यवृद्ध्यातिदैन्येनाहं त्वस्याप्यनर्पणात् सर्वज्ञत्वेऽपि तत्र स्वदेहे प्राकृतत्वभानमेवातस्तत्सम्मत्या श्रीशुकदेवेनापि तत्प्राकृतमिव वर्णितं वस्तुतस्तु स्वसम्मत्या तदप्राकृतमेव व्याख्यातं सा व्याख्या च यथा अविद्यया मायया न विहिता द्रव्यगुणकर्माशया यत्र तथा भूते स्वस्य चरमेऽवशिष्टे पूर्वपूर्वेभ्यो नष्टेभ्यः कलेवरेभ्योऽवशिष्टेऽनश्वर इत्यर्थः । यद्वा सुष्ठु अचरमे अनिकृष्टे कलेवरे कर्मारब्धत्वाभावाद्वस्तुनि परमसत्ये सम्यगवस्थानविशेषो वैकुण्ठलोको यस्य तस्मिन्नपि प्रेमोत्थदैन्योदयादेव प्राकृतदेह इव अहं ममेति न अध्यारोपितो मिथ्याप्रत्ययो येन सः ॥६-७॥

अवद्धमनन्वितमनुविद्धेन ग्रथितेन तिरस्कृतः अशेषः सम्पूर्णो भगवतः प्रियो निकेत आश्रयो भरताख्यो येन तं सर्वभूतसुहृत् स्वरूपः स्वापराधिन्यपि कृपालुरित्यर्थः । पण्डितमानिनमिति तस्य किञ्चिन्मात्रज्ञानित्वं सर्वज्ञत्वेनैव ज्ञात्वेत्यर्थः । योगेश्वराणां चर्या जडादिवदाचरणं तस्यां तज्ज्ञानेइत्यर्थः स्मयमान इत्यसौ स्वं ज्ञानिनं जानात्यथ चाज्ञानिवदुक्तिरिति इवेति तस्य बहिरनिष्क्रमात् विगतस्मयः ज्ञानित्वगर्वरहितः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं द्विजवरस्य शिरश्छेदप्रसङ्गेऽपि निर्विकारत्वमुक्त्वाथ शिविकोद्वहनदुर्वचनश्रवणादावपि निर्विकारत्वं वर्णयति दशमेनाध्यायेन । अथेति । तत्त्वजिज्ञासोः रहूगणस्य कपिलाश्रमं व्रजतः शिविकावाहपुरुषान्वेषणसमये तेषां शिविकावाहानां कुलस्य पतिना स द्विजवर उपलब्धः प्राप्तः पीवा पुष्टः संहननाङ्गः सुदृढावयवः एष गौरिव खर इव धुरं भारं वोढुमलं पर्य्याप्तः इति बुद्ध्या पूर्वं ये विष्टया "विष्टिः कर्मकरे मूल्ये भद्राऽऽ... च"इति हैमकोशात् बलात्प्रेरणेन गृहीतास्तैः स शिविकामु... न्वयः कथंभूतः प्रसभं बलादेव गृहीतः सन् अतदर्होऽपि स... नुभावः ॥ १ ॥

यदा शिविकोद्वहनसमये पिपीलिकादिहिंसापरिहारा... इषुपरिमितप्रदेशावलोकस्यानुपश्चाद्या गतिस्तस्या हेतुभूताया... पायामन्येषां वोढॄणां गतिर्न सम्यगाहिता एकरूपाभूत् तदा... गण आह ॥ २ ॥

ईश्वरस्य प्रजारक्षितुः सोपालम्भं साक्षेपं वचः उपायेषु सा... दानभेददण्डेषु चतुर्थाच्छङ्कितचित्ताः तं द्विजवरं विज्ञापयन्त... ज्ञापितवन्तः ॥ ३ ॥

हे नरदेव ! वयं प्रमत्ताः अनवहिता न किं तु भवन्नियन्तु... पथाः भवदीयाज्ञानुसारिणः द्रुतं शीघ्रं न व्रजति अतोऽनेन स... वोढुं न पारयामः न शक्नुमः ॥ ४ ॥

अथ रहूगणः कृपणानां तेषां वचो निशम्य श्रुत्वा सांसर्गि... संसर्गिनिमित्तः एकस्यापि दोषः सर्वेषां संसर्गिणां... भवितुमर्हतीति निश्चित्य उपासितवृद्धोऽपि रजसावृतमति... र्गेण राजसस्वभावेन बलात्परवशः कृतः न विस्पष्टं ब्रह्म... यस्मिन् तं रजसा भस्मना छन्नं जातवेदसमग्निमिव वर्त... प्रत्युवाच ॥ ५ ॥

तदाह । अहो इत्यादिना । हे भ्रातः ! व्यक्तं निश्चितमुर्वी... परिश्रान्तो दीर्घमध्वानमेक एवोढवान् प्रापितवान् तत्रापि... नातिपुष्टः कृशोऽस्ति भवान् न संहननाङ्गः शिथिला... वश्च जरसा च भवानुपद्रुतः संघट्टिनः सहचराः इत्येवं बहु... भवति तथा विप्रलब्धोऽपि विपरीतार्थैर्वाक्यैरुपहसितोऽपि ... द्यया अचेतनस्वरूपया भगवन्मायया विहिता रचिता द्रव्या... यस्मिन् स्वचरमकलेवरे अवस्तुनि वस्तु आत्मा तद्विशेषे... नविशेषे आकारविशेषे अनध्यारोपितः देहोऽस्मीति मि... प्रत्ययो येन सः शिविकां तूष्णीं पूर्ववदुवाह ॥ ६ ॥

विषमगतायां विषमं नीयमानायां सत्यां भर्तुः स्वामि... शासनमाज्ञामतिक्रामसि चिकित्सां शास्तिम् ॥ ७ ॥

अनुविद्धेन युक्तेन तिरस्कृतः अशेषस्य साङ्गोपाङ्गस्य ... भगवतः प्रियो निकेतो ध्यानरूप आश्रयो येन तं ... अशेषो भगवान् भूतमनुभूतं ध्याने साक्षात्कृतं येन स... मानः स्वभावादेव हसन्निव विगतस्मयो विगतगर्वः ॥ ८ ॥

---

### भाषाटीका ।

श्री शुकदेवजी बोले इसके अनन्तर सिन्धु सौवीर... का पति राजा रहूगण नाम का किसी समय में ... शीखने को कपिलजी के आश्रम को जाता था तब... मती नदी के किनारे पर पालकी ढोने वाले मनुष्यों के ... ने ढुवाने को कोई मनुष्य ढूंढा उस समय ... से श्रीभरतजी मिले तब तिसने इनको देखा कि मोटा... है जवान है दृढ शरीर वाला है तब समुझा कि ... गधा सरीका खूब बोझा ढोवैगा इस बुद्धि से पहि...

॥ ब्राह्मण उवाच ॥

त्वयोदितं व्यक्तमविप्रलब्धं भर्तुः स मे स्याद्यदि वीर ! भारः ।
गन्तुर्यदि स्यादधिगम्यमध्वा पीवेति राशौ न विदां प्रवादः ॥ ९ ॥
स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत्तृड्भयं कलिरिच्छा जरा च ।
निद्रा रतिर्मन्युरहं मदः शुचो देहेन जातस्य हि मे न सन्ति ॥ १० ॥
जीवन्मृतत्वं नियमेन राजन्नाद्यन्तवद्विकृतस्य दृष्टम् ।
स्वस्वाम्यभावो ध्रुव ईड्य ! यत्र तर्ह्युच्यतेऽसौ विधिकृत्ययोगः ॥ ११ ॥
विशेषबुद्धेर्विवरं मनाक्च पश्यामि यन्न व्यवहारतोऽन्यत् ।
क ईश्वरस्तत्र किमीशितव्यं तथापि राजन् ! करवाम किं ते ॥ १२ ॥
उन्मत्तमत्तजडवत्स्वसंस्थां गतस्य मे वीर ! चिकित्सितेन ।
अर्थः कियान् भवता शिक्षितेन स्तब्धप्रमत्तस्य च पिष्टपेषः ॥ १३ ॥

॥ श्रीशुक उवाच ॥

एतावदनुवादपरिभाषया प्रत्युदीर्य मुनिवर उपशमशील उपरतानात्म्यनिमित्त उपभोगेन कर्मारब्धं व्यपनयन्राजयानमपि तथोवाह ॥ १४ ॥

भाषाटीका ।

[illegible]गारीयों के साथ इनको भी पकडलिया यद्यपि ये इस लायक [illegible]हीं थे तथापि जबरदस्ती करने से महानुभाव होने से [illegible]ालकी को ढोने लगे ॥ १ ॥

जब हिंसा के भय से एकबाण के जाने पर्यन्त दृष्टि [illegible]रके जीवों को बचाकर चलने से सबकी चाल उनके [illegible]ाथ नहीं मिली तब पालकी को ऊंची नीची होती देख-[illegible]र ढोने वाले मनुष्यों से रहूगण बोले हे ढोने वाले ! अच्छे [illegible]लो क्यों पालकी को टेढी करते हो ॥ २ ॥

तब तो वे सब लोग राजाके भयानक वचन को सुनकर [illegible]ारने से शङ्कित होकर भरतजी को राजा के आगे बताने [illegible]गे ॥ ३ ॥

वे लोग बोले हे राजन् ! हम लोग प्रमाद नहीं करते [illegible] आपके हुकम पर चलते हैं अच्छें हीं ढोते हैं यह मनुष्य [illegible]भी पकडागया है यह जल्दी नहीं चलता है इस के साथ [illegible]म लोग नहीं ढोसकते हैं ॥ ४ ॥

निश्चित है कि सङ्गका दोष एक का हो तौ भी सब [illegible]ङ्गवालों को लगता है इस प्रकार से उनके दुखित वचनों [illegible]को श्रवण करके रहूगण राजा वृद्धों के उपासना करने [illegible]वाले हैं तौ भी स्वभाव के परवस होने से कुछ कुपित [illegible]होकर रजोगुण की वृद्धि से छिपी हुई अग्नि सरीके छिपे [illegible]ब्रह्मतेजवाले ब्राह्मण श्रेष्ठ भरतजी से बोले ॥ ५ ॥

हे भाइ ! मालूम होता है कि तू बहुत श्रमित होगया [illegible] बडी रस्तातक अकेला ही ढोलाया है बडी देर भई तू तो बड़ा मोटा नहीं है दृढ शरीर वाला नहीं है बूढा होगया है हे सखे। तेरे साथ वाले दूसरे ए लोग तो नहीं ढोते हैं इस प्रकार से बहुत कठोर वचनों के कहने परभी ब्रह्मभूत भरतजी अज्ञान से रचित महाभूत सत्त्वादिगुण इन्द्रिय पुण्य पाप वाले अपने अन्त्य शरीर में तुच्छ होने से मै हूं मेरा है ऐसा मिथ्या प्रतीति को आरोप न करने से चुपही पहिले सरीके पालकी को ढोते रहगये ॥ ६ ॥

तदनन्तर फिर भी अपनी पालकी के विषम होने से कुपित होकर रहूगण राजा बोले ॥ ७ ॥

क्यों रे यह क्या है तू जीते ही मेरे सरी का मेरा अनादर करके मालिक की आज्ञा को नहीं मानता है तू पागल होगया है जैसे यमराज सब मनुष्यों को दण्ड देते हैं तैसे मैं तेरी दवाई करूंगा जिससे तेरी अकल ठिकाने आजावेगी ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र वक्रोक्त्या यदुक्तं त्वं न श्रान्तो न च दीर्घमध्वानमागत इति तत्रोत्तरमाह । त्वया यदुदितमुक्तं श्रमादि नास्तीति तद्व्यक्तं स्फुटं तत्तथैव। अविप्रलब्धं विप्रलम्भो न भवति। तदेवाह। हे वीर! यदि भारो नाम कश्चित्स्यात्स च भर्तुर्वोढुर्देहस्य यदि स्यात् स च मे यदि प्रसक्तः स्यात्तर्हीदानीं भाराभावाद्विप्रलम्भः स्यान्न त्वेतदस्ति भारस्य वोढुश्चानिरूप्यत्वान्मम च तत्संबन्धाभावात् तथा गन्तुरधिगम्यं प्राप्यमध्वा वा यदि स्यात् । अद्धेति पाठे साक्षात्परमार्थतः। तच्च मे यदि स्यादित्यादि योज्यम्। यच्चोक्तं नातिपीवेति तत्राह । चेतनमुद्दिश्य त्वं पीवेति प्रवादो विदां

स चापि पाण्डवेय ! सिन्धुसौवीरपतिस्तत्त्वजिज्ञासायां सम्यक् श्रद्धयाऽधिकृताधिकारस्तद्धृदयग्रन्थि-मोचनं द्विजवच आश्रुत्य बहुयोगग्रन्थसम्मतं त्वरयाऽवरुह्य शिरसा पादमूलमुपसृतः क्षमापयन्निति नृपदेवस्मय उवाच ॥ १५ ॥

कस्त्वं निगूढश्चरसि द्विजानां विभर्षि सूत्रं कतमोऽवधूतः ।
कस्यासि कुत्रत्य इहापि कस्मात् क्षेमाय नश्चेदसि नोत शुक्लः ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विदुषां न भवति किन्तु मूर्खाणाम् । यतोऽयं प्रवादो राशौ भूतसङ्घे देहे एव न त्वात्मनि देह एव पीनो नाहमित्यर्थः ॥ ९ ॥

एतत्प्रपञ्चयति । स्थौल्यमिति । कलिः कलहः । अहङ्कारेण मदश्च देहेन सह तदभिमानेन जातस्य हि भवन्ति मम तु निरभिमानस्य न सन्ति यद्वा । देहे जाते यो जातस्तस्यैव तानि मम तु तथा न जातस्य न सन्ति ॥ १० ॥

यच्चोक्तं जीवन्मृतोऽसीति तत्राप्याह । जीवन्मृतत्वं न केवलं मम किन्तु विकृतस्य सर्वस्यापि परिणामिनो दृष्टम् । यद्यस्माद्विकृतं प्रतिक्षणमाद्यन्तवत् । यदुक्तं भर्तृशासनमतिचरसीति तत्राह । स्वं च स्वाम्यं च तयोर्भावः सत्ता हे ईश ! यत्र पक्षे ध्रुवो यदि व्यवस्थितः स्यादित्यर्थः । तर्हि विधिर्नियोगः कृत्यं कर्म तयोर्योगो ध्रुव उच्यते उचितो भवति । "उच समवाये" इति धातुः यदि तु तव राज्यभ्रंशो मम च राज्यं स्यात्तदा सर्वमेतद्विपरीतं स्यादित्यर्थः ॥ ११ ॥

ननु यावद्राजाहं तावत्तव स्वामी भवाम्येवेति चेत्तत्राह । विशेषो राजभृत्यादिभेदस्तद्बुद्धिर्विवरमवकाशं व्यवहारादन्यत्र पश्यामः । मनाक् च ईषदपि अथापि तवायमभिमानश्चेत्तर्हि ब्रूहि किं ते करवामेति ॥ १२ ॥

यच्चोक्तं प्रमत्तस्य ते चिकित्सां करोमि यथा स्वां प्रकृतिं भजिष्यस इति तत्राह । उन्मत्तादिवद्वर्तमानस्य वस्तुतः स्वसंस्थां ब्रह्मभावं गतस्य भवता कृतेन चिकित्सितेन दण्डेन शिक्षितेन वा कियानर्थः मुक्तस्यार्थानर्थयोरसम्भवात् । यदि पुनरहं न मुक्तः किंतु प्रमत्तः स्तब्धः एव तथापि मम शिक्षादिकं पिष्टपेषणवद्व्यर्थमित्यर्थः नहि जडस्वभावः शिक्षयापि पटूकर्तुं शक्यत इति ॥ १३ ॥

अनुवादरूपया परिभाषया भाषणेन तं प्रत्युत्तरं दत्त्वा उपरतमनात्म्ये देहात्मत्वे निमित्तमविद्या यस्य आरब्धफलं कर्म क्षपयन् ॥ १४ ॥

हे पाण्डवेय ! सम्यक् या श्रद्धा तयैव तत्त्वजिज्ञासायां प्राप्तोऽधिकारो येन । यथा दर्शपूर्णमासाधिकृतस्यैव गोदोहनेन पशुकामस्यापः प्रणयेदिति गुणफलसम्बन्धेऽप्यधिकारः । एवं सात्त्विकश्रद्धायामधिकृतस्यैवाधिकार इत्यर्थः । बहुयोगग्रन्थसम्मतं द्विजस्य तद्वचः श्रुत्वा विगतो नृपदेवोऽधिराज इति स्मयो गर्वो यस्य ॥ १५ ॥

द्विजानां मध्ये कतमः यतः सूत्रमुपवीतं विभर्षि । यद्वा दत्तात्रेयादीनां मध्ये कतमोऽवधूतः । इहापि कस्माद्धेतोः प्राप्तः नोऽस्माकं क्षेमाय चेत् प्राप्तः तर्हि शुक्लः कपिलो मुनिः किम् उतेति वितर्के ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र यदुक्तं वक्रोक्त्या त्वमुरु परिश्रान्तो दीर्घमध्व एतोहिथानित्यादि तत्रोत्तरमाह । त्वयेति । यत्त्वयोक्तं [illegible] स्पष्टमविप्रलब्धं लोकदृष्ट्या सत्यं त्वद्वचसां विपरीतार्थं दीर्घमार्गागमनपरिश्रमस्थौल्ययौवनाद्यभिप्रायकत्वेन [illegible] ह्यलोकदृष्ट्यासत्यमेव तथाप्यन्यगतानामेतेषामन्यत्रारोपे [illegible] त्वात्परमार्थदृष्ट्या सत्यमेवेति भावः तदेव व्यनक्ति । [illegible] भर्त्तुरित्यादिषु तवानुषङ्गेणान्वयः यदि भर्त्तुर्भारः [illegible] श्रमश्च स्यात् स न मे स्यान्मम भरणाभावात् यदि गन्तुरर्थे गन्तव्या भूमिः स्यात्स न मे अद्धा साक्षात्स्यात्साक्षाद्गम[illegible] भावात् पीवा पीन इति वादो राशौ भूतसङ्घाते देहे स्याद् [illegible] दिति विदुषामात्मयाथात्म्यविदां प्रवाद इत्यर्थः ॥ ९ ॥

न मेत्युक्तम् प्रपञ्चयति । स्थौल्यमिति । व्याधयः शारीरा रोगाः आधयः मनःपीडाः भयमागामिदुःखदर्शनजं [illegible] कलहः इच्छा कामः दम्भो वञ्चनं रतिर्विषयासक्तिः [illegible] क्रोधः अहमहङ्कारः अनात्मन्यात्माभिमानहेतुः मदः [illegible] एते बाह्याकारा अन्तराकाराश्च सर्वे देहेन सहजातस्य [illegible] स्वतो न सन्तीत्यर्थः एते देहे एव न जातस्याजातस्योत्पत्ति[illegible] तस्य मे न सन्तीति वार्थः ॥ १० ॥

यदुक्तम् । जीवन्मृत इति तत्राह । जीवन्मृतत्वमिति [illegible] श्वासवत्त्वं मृतत्वं त्यक्तपूर्वावस्थत्वं चैतन्यशून्यत्वं वा [illegible] उभयं हे राजन् ! यदाद्यन्तवदुत्पत्तिविनाशवत्तस्य तस्य देहस्य दृष्टं नत्वात्मन इत्यर्थः यदुक्तं भर्तृशासनमतिचर[illegible] सीति तत्स्वस्वामिभावं प्रतिक्षिपति । स्वस्वामिभावो [illegible] नियतः ईश ! हे राजन् ! तत्र नियतस्वस्वामिभावेऽनु[illegible] विधिकृत्ययोगः विधिर्नियोगः शासनमिति यावत् कृत्यं कर्म [illegible] योगो ध्रुव उच्यते उचितो भवति उच समवाये [illegible] ययोर्जीवेशयोः स्वस्वामिभावसम्बन्धो नियतस्तयोरेव [illegible] प्रयोज्यप्रयोजकभावः त्वं चेन्न नियमेन भर्ता [illegible] तु तव राज्यभ्रंशः मम च राज्यं स्यात्तदा विपर्यय [illegible] अतो न तव प्रशास्तृत्वं स्वतोऽस्ति अतः स्वस्य स्वामि[illegible] भ्रान्तिरित्यर्थः ॥ ११ ॥

त्वं भृत्यः अहं स्वामीति वैषम्यबुद्धेर्विवरमवकाशं [illegible] दपि व्यवहारत उक्तिमात्रादन्यत्र न पश्यामः तत्र [illegible] ईश्वरः किमीशितव्यं न त्वमीश्वरो नाहमीशितव्यः [illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वानिष्ठः अथापि किं कुर्मः अर्थस्थितिरन्यथा कर्तुमशक्येत्यर्थः ॥ १२ ॥

यदुक्त प्रमत्तस्य ते चिकित्सां करोमीति तस्योत्तरमाह । उन्मत्तेति । स्वस्मिन् ब्रह्मात्मके स्वात्मनि संस्थां निष्ठां "ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुतौ संस्थाशब्दस्य निष्ठापरत्वेन प्रयोगान्निष्ठाचोपासनाया अविच्छेदः स्वसंस्थां प्राप्तस्य उन्मत्तादीननुकुर्वतः तर्जनताडनादिपरिभवार्थिनो मम हे वीर ! चिकित्सितेन दण्डेन वा कियानर्थः त्वत्कृतं प्रहरणादिकं नानिष्टं स्यादित्यर्थः यदि पुनरहं न स्वसंस्थां गतः किन्तु प्रमत्तः संसार्येव तथापि स्तब्धस्य प्रमत्तस्य मम शिक्षादिकं पिष्टपेषणवद्व्यर्थमेव ज्ञानरहिते मादृशे संसारिजने यत्त्वया चिकित्सितं दण्डप्रदानं तत्पिष्टपेषो निष्फलः पूर्वमेव संसारव्यसनातुरत्वादित्यर्थः॥१३॥

अनुवादपरिभाषयानुवादरूपभाषणपूर्वकम् एतावत्प्रत्युदीर्य प्रतिवचनं कृत्वा उपशमः अक्रोधादिरेव शीलं यस्य उपरतं निरस्तमनात्मनो देहान्तरस्य निमित्तं येन सः विद्यया निरस्तदेहान्तरसम्बन्धापादकपूर्वोत्तरसञ्चितानभ्युपगतप्रामादिकबुद्धिपूर्वकभेदभिन्नपुण्यापुण्यरूपपापः आरब्धमभ्युपगतप्रारब्धरूपमपि कर्म पुण्यापुण्यरूपम् उपभोगेनानुभवेन उपनयन् स मुनिवरः तथैव पुर्ववद्राजयानमप्यूढवान् ॥ १४ ॥

हे पाण्डवेय ! स चापि सिन्धुसौवीरपती रहूगणोऽपि सम्यक् या श्रद्धा तयैव तत्त्वविजिज्ञासायामधिकृतः प्राप्तोऽधिकारभावो येन अधिकारः प्रस्तावः प्रारम्भ इति यावत् तत्त्वजिज्ञासायां कृतारम्भ इत्यर्थः अज्ञानविमोचनं बहुयोगग्रन्थसम्मतं बहुविधाध्यात्मशास्त्रसम्मतं च द्विजवच आश्रुत्य श्रुत्वा विगतो नराणां देवोऽधिराज इति स्मयो गर्वो यस्य सः शिविकायास्त्वरयावरुह्यावतीर्य तत्पादमूलमुपसृतः द्विजपादमूलं प्रति प्रणतः क्षमापयन् वक्ष्यमाणमुवाच ॥ १५ ॥

तदेवाह । द्विजानां मध्ये त्वं कतमः निगूढः अनभिव्यक्तब्रह्मवर्चसः चरसि नाहं द्विज इति चेन्न यतः । सूत्रमुपवीतम् बिभर्षि अतस्त्वमवधूतः सर्वैः परिभाव्यवेषो ज्ञाननिष्ठः कस्य पितुर्गुरोर्वा असि पुत्रः शिष्यो वासि कुत्र भवः इहापि कस्माद्धेतोः प्राप्तः नोऽस्माकं क्षेमाय चेत्प्राप्तः किं शुक्लः कपिलो मुनिर्भवसि किमु उतेति वितर्के ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उरु परिश्रान्तो दीर्घमध्वानमेक ऊहितवान् सुचिरमिति यदभ्यधायि राज्ञा तत्रोत्तरमाह । त्वयेति । भो वीर ! निरूप्यमाणे सति यद्यहं भर्ता यदि च भर्तुर्मे मम स भारः स्याद्यदि वाहं गन्ता यदि वा गन्तुर्ममाधिगम्यं विषयाख्यं किञ्चित्स्याद्यदि वाध्वा मार्गः कश्चित्स्यात्तर्हि त्वयोदितमिदं सर्वं व्यक्तं स्पष्टमविप्रलब्धं सत्यं भवेत् किन्तु नाहं भर्ता न तरां भारः नाहं गन्ता न तराङ्गन्तव्यं नतमां मार्ग इत्यर्थः स्वस्कन्धे शिविकादण्डस्य प्रत्यक्षसिद्धत्वात् कथमेतद्वचनमित्यत उक्तं व्यक्तमिति "भर्ता सन् भ्रियमाणो बिभर्ति य उ त्रिधातु पृथिवीमुत द्याम्"इत्यादिश्रुतौ भरणादेर्हरेरनियतत्वस्य व्यक्तमुक्तत्वात्तदभिप्रायेण भरतेनोच्यत इत्येतदपि भरणादिकृद्धरिरिति चिन्तयन्नृपमब्रवीदिति स्मृतिसिद्धं यदुक्तम्

नाति पीवेति तत्राह । पीवेति । पञ्चभूतात्मके शरीरे पीवेति यः प्रवादः असौ विदां ज्ञानिनां पक्षे न शोभते देहस्य परिणामित्वेन चेतनस्यापरिणामित्वेन सिद्धत्वात् ॥ ९ ॥

नातिसंहननाङ्ग इत्यादि यदुक्तं तत्राह । स्थौल्यमिति । अत्र हिशब्द एवार्थे स्थौल्यादयो देहेन जातस्य देहाभिमानिनो एव सान्त न मे सन्ति देहाभिमानाभावात् "देहमानी देहजातो विदेहो वर्जित" इति वचनात् देहाभिमानिन एव स्थौल्यादिकानि नान्यस्येति बोद्धव्यमरातिस्तन्द्री अहमहङ्कारः ॥ १० ॥

जीवन्मृतोऽसीत्यस्योत्तरमाह । जीवन्मृतत्वमिति । आद्यन्तवदुत्पत्तिविनाशवतस्तस्य विकृतस्य जडस्य नियमेन जीवन्मृतत्वं दृष्टं तथाहि जीवनं प्राणयोगेन चेष्टावत्त्वं मृतत्वं प्राणत्यागेन रतिलक्षणसुखराहित्यमेतच्छरीरस्याविनाभूतं प्राणयुक्तेररत्या च "जडं जीवन्मृतं स्मृतम्„इति स्मृतेः न चैवं मम चेतनस्य देहयोगवियोगलक्षणजन्ममरणे अन्तरेण स्वतो विकाराभाव नाद्यन्तवत्त्वायोगात् "नित्यो नित्यानां चेतनश्चेतनानाम्"इति श्रुतेः देहस्य सर्वथा नाशादनाशाच्चेतनस्य चेत्यादेश्च अत एव देहेन जातस्येत्युक्तं यच्च मां कदर्थीकृत्य भर्तृशासनमतिचरसीत्युक्तं तत्राकर्णयेति भावेनाह । स्वस्वामीति । यत्र यद्येष स्वस्वामिभावो ध्रुवः सत्य इति त्वयोच्यते तर्ह्यसावच्युते हरौ मुख्य इत्युच्यतां "एष सर्वेश्वर„ इति श्रुतेः ननु त्वयि तवास्मास्वेकत्वात् भृत्यत्वमेव मुख्यं तदुक्तं "स्वामित्वं तु हरेरेव मुख्यमन्यत्र भृत्यतेति एष राजा दण्डनाथ" इतिवचनात् अच्युते मुख्यत्वं कथमत्राहेतीति "मम स्वामी हरिर्नित्यं सर्वस्य पतिरेव च"इति स्मृतेः सन्ध्योपासनवन्मम स्वामी हरिरितीतिकर्तव्यतालक्षणो योग उपासनं हरावेव विहितमिति यस्मात्तस्मादिति शेषः ध्रुव इति विशेषणादन्यत्राध्रुवस्य न्यायप्राप्तत्वाच्च ॥ ११ ॥

"एको रुद्रो न द्वितीयोऽवतस्थ" इतिश्रुतेः रुद्रादीनामपि स्वामित्वप्रतीतेरिति तत्राह । विशेषबुद्धेरिति । मनागीषदपि विशेषबुद्धे रुद्रादौ मुख्यबुद्धेर्विवरमवकाशं स्वामिशब्दप्रवृत्तिनिमित्तं न पश्यामि भरतस्यापरोक्षज्ञानित्वेन करतलामलकवदशेषशब्दप्रवृत्तिनिमित्तस्यापरोक्षत्वात् पश्यामीत्युक्तं तस्मादेतद्दर्शनेन महानिति सूचितं चशब्देन कर्णताडितवच्छ्रूयमाणस्य कथं नादनमिति तत्राह । यद्व्यवहारतोऽन्यदिति व्यवहारतोऽशरूढिलक्षणानाम् यदन्यन्मुख्यं तदिति शेषः अतो देवेषु प्रतीयमानं यत्स्वामित्वं तद्धरिनियतमिति बोद्धव्यं तदुक्तं देवेषु तन्नियत्या चेति अनेन हरिमन्तरेण देवेषु यथा तारतम्यं स्वामित्वं मुख्यमिति च ज्ञानवयम् तर्हि सिन्धुपतिरिति व्यपदेशो मम कथमित्यतो वाह । विशेषेति । सैन्धवैरीशत्वामुद्दिश्य व्यवहारो ननु मुख्य इत्यर्थः एतदप्युक्तं स्वदादेर्व्यावहारिकमिति आदिशब्देन मघवतो देवाधिपतय इति गृह्यते अस्तु व्यावहारिकमतः किं तत्राह । क ईश्वर इति । हरौ देवेषु च स्वामित्वस्मृतेऽन्यत्र मानुषेषु तस्य व्यत्यासात् को विशेषः व्यवहारमात्राभिमूलमिति तत्र तस्मिन्दत्ते स्थिते मनुष्येषु क ईश्वरः स्वामी ईशितव्यं समर्थनीयं च किं न किमपीत्यर्थः तदुक्तम् "मानुषेषु विशेषः को व्यवहारस्तं यद्" व्यत्यासादिति तत्र हरौ देवेषु स्वामित्वं मुख्यतो यथाक्रमं स्थितेऽन्यत्र क ईश्वर इति वा यथा मानुषेषु स्वस्वामिभावस्य व्यत्यासो न तथा देवेष्विति द्योतनाय तत्रेति तदुक्तं नहि देवेषु व्यत्यासः स्वामिता-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृत इति एवं विचार्यमाणोऽन्येभ्यो जीवेभ्यस्तव विशेषाभावेऽपि संभावनार्थं तव स्वामित्वमङ्गीकृत्यास्माभिः किं कर्तव्यं तद्वदेत्यभिप्रेत्याह । अथापीति । विशेषवुद्धेर्यद्विवरं पश्यामि तद्व्यवहारतोऽन्यन्न कुतः मनागल्पमज्ञविषयत्वादिति वान्वयाविशेषः अवशिष्टं पूर्ववत् ॥ १२ ॥

प्रमत्तस्य ते करोमि चिकित्सामिति यदुक्तं तत्र शृणिवत्याह । उन्मत्तेति । उन्मत्तादिस्वरूपस्थितिं स्वतन्त्रे हरौ स्थितिम् वा प्राप्तस्य मे चिकित्सितेन दण्डलक्षणेन भवता शिक्षितेन विहितेन तवार्थः कियान्न कोऽपि तव रोदनादिदर्शनेन मम मनस्तृप्तिर्भवतीति तत्राह । स्तब्धेति । स्तब्धश्चासौ प्रमत्तश्चेति स्तब्धप्रमत्तः तस्य पिष्टपेषणवन्निष्फलं चिकित्सितं शिक्षासहस्रेणापि निर्मुक्तदेहाभिमानस्य मम व्यथानुभवाभावेन रोदनाद्यनुदयादिति द्विगुणितकोपवह्निना दग्धदेहसन्तापमन्तरेणान्यत्प्रयोजनं नास्तीति भावः ॥ १३ ॥

ब्राह्मणः पुनः किमकार्षीदत्राह । एतावदिति । तथा पूर्ववदुवाहेति अनुवादपरिभाषया उक्तस्य पुनर्वचनमनुवादपरिभाषा तया अनूद्यानूद्येत्यर्थः अनात्मा देहस्तत्सम्बन्ध्यनात्म्यं देहान्तरग्रहणं तस्य निमित्तं कारणं तदुपरतं निवृत्तं यस्य तत्तथा तादृशमारब्धं फलदानायोन्मुखं कर्मोपभोगेन व्यपनयन् क्षपयन् यथा देहान्तरोत्पत्तये न स्यात्तथा भुञ्जान इत्यर्थः ॥ १४ ॥

स रहूगणस्तं परित्यज्यान्येन वाहयित्वा विवक्षितगम्यं गतः किं नेत्याह । स चेति । अपिपदेन स्वोक्तस्य गर्हितत्वं सूचयति । अधिकृताधिकारः । उपदिष्टज्ञानग्रहणयोग्यतावान् वहुयोगग्रन्थमतमनेकयोगशास्त्रसिद्धं हृदयग्रन्थिरहङ्कारबन्धस्तं मोचयतीति हृदयग्रन्थिमोचनं तत् ॥ १५ ॥

कः किं जातिविशिष्टः न दृश्यते किं सत्यमित्याह । द्विजानामिति । सूत्रं लक्षणं यज्ञोपवीतमात्रं मलिनं वहुग्रन्थिवरं न दृश्यते अतः संशयः किं चैवं विधा वहवो योगीन्द्रा भवन्ति तेषां मध्ये त्वं कतमोऽवधूतः योगीन्द्रः कस्य योगीन्द्रस्य वंशे जातोऽसि कुत्रत्यः कस्मिन्देशे विद्यमानः इहास्मिन्देशे कस्मात्कारणादभूः चेद्यदि नोऽस्माकं क्षेमायासि तर्हि शुक्लः कपिलः वासुदेवः उत किं स न भवति तल्लक्षणसामग्र्यभावादित्यर्थः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सम्यक् श्रद्धया श्रीगुरुविषयया ॥ १५—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ज्ञानिमानिनमेनं ज्ञानेनैव परास्तीकृत्य कृपयिष्यामीत्यभिप्रेत्याह । त्वयोदितमिति । तत्र विरुद्धलक्षणया यदुक्तं त्वया त्वं न श्रान्तो न दीर्घमध्वानमागत इति तदविप्रलब्धं यथार्थमेव नत्वाक्षेपः यतो भर्त्तुः शिविकावाहकस्य भारो यदि मे मम स्यात्तदा स विप्रलम्भः स्यादिति सम्बन्धः अहं देहाद्भिन्नो वोढेव न भवामीति भावः । एवं गन्तुरित्यादि अधिगम्यं प्राप्यं स्थानादिकमध्वा वा यच्चयोक्तं त्वं पीवा भवसीति तत् राशौ भूतानां राशिरूपे देहे विदां विदुषां प्रवादो न भवति किन्तु सत्यमेव पीवत्वमित्यर्थः । मयि चेतनस्वरूपे तु प्रवादः कलङ्क एवेति भावः ॥ ९ ॥

न केवलं पीवत्वमेव मे नास्त्यपि त्वन्येऽपि देहधर्मा न ... इत्याह । स्थौल्यमिति । देहेन सह यो जातस्तदभिमानी ... स्तस्यैव हि निश्चितं सन्ति नतु मे निरभिमानस्य ॥ १० ॥

यच्चोक्तं जीवन्मृतोऽसीति तत्राप्याह । जीवन्मृतत्वमिति ... त्वया मम देहाभिमानित्वमेव निर्धारितं तदपि जीवन्मृतत्वं ... मेन ममैव केवलं न किन्तु सर्वस्यैव विकृतस्य परि... दृष्टं प्रत्यक्षमेव यद्यस्माद्धिकृतं प्रतिक्षणमेवाद्यन्तवत् ... भर्त्तृशासनमतिचरसीति तत्राह । स्वश्च स्वाम्यं ... तयोर्भावो विद्यमानत्वं स च यत्र यदा ध्रुवः स्थिरः स्यात्तर्हि ... कृत्ये शिविकावहनादिकर्मणि योगः अयं जनो युज्यते ... च्यते कथ्यते उचितो वा भवतीति "उच समवाये" इत्य... यदि तु तव राज्यभ्रंशो मम राज्यं स्यात्तर्हि त्वामप्यहं ... वाहयन् किमिदमरं इत्यादि कथयेयमित्यर्थः ॥ ११ ॥

ननु यावद्राजाहं तावत्तव स्वामी भवाम्येवेति चे... विशेषो राजभृत्यादिभेदस्तद्बुद्धेर्विवरमवकाशं व्यवहार... न पश्यामि मनाक् ईषदपि तथापि तवायमभिमानश्चेत्तर्हि ... किं ते करवामेति ॥ १२ ॥

यच्चोक्तं प्रमत्तस्य ते चिकित्सां करोमीति तत्राह । उन्मत्त... वद्वर्त्तमानस्य वस्तुतस्तु स्वसंस्थामन्तर्निष्ठां गतस्य नि... सितेन कायिकेन वाचिकेन वा दण्डेन कियानर्थः ... तव्यः मुक्तानामर्थानर्थयोरग्रहणात् यदि पुनरहं न मुक्तः ... प्रमत्तस्तब्ध एव तदापि शिक्षितेन त्वद्दत्तदण्डेन पिष्टस्य ... भवति यथा पिष्टं वस्तु प्रहारेणापिष्टं न भवति किन्तु ... पिष्टं भवति तथैव प्रमत्तस्य दण्डनेन प्रमत्तता न शाम्यति ... तिप्रमत्तता स्यात् ॥ १३ ॥

अनु वादरूपया परिभाषया भाषमाणेन उपरतम... देहात्मभावस्य निमित्तमविद्या यस्य सः ननु स्वदेह... विना तद्वचोऽनूद्य सोढुमसमर्थ इव समादधानः कथं तथा... क्तवांस्तत्राह । उपभोगेन राजोचितैश्वर्यभोगेन ज्ञापितं ... गणस्य प्रारब्धं कर्म तदपि व्यपनयन् व्यपनेतुम् अनुवाद... कृपया स्वोपदिष्टतदनुष्ठितया उक्त्यैव तत् प्रारब्धमपि दूरं ... मित्यर्थः । यद्वा प्रेमोत्थदैन्येन स्वस्य भक्तत्वामननात् ... शिविकाभारोद्वहनादिना आरब्धफलं कर्म व्यपनयन् ... मीति मनसि भावयन्नित्यर्थः ॥ १४ ॥

अधिकृतः प्राप्तोऽधिकारो येन सः ॥ १५ ॥

द्विजानां मध्ये त्वं कतमः यतस्त्वं सूत्रं विभर्षि अवधू... दत्तात्रेयोऽसि कस्य पुत्रोऽसि कुत्रत्यः किंदेशजन्मासि ... क्षेमाय प्राप्तश्चेत् शुक्लो नारायणो नासि उत तदवतारः ... नासि ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कापिलानां मते अब्रह्मात्मकप्रधानपरिणामभूतेषु भार... दिषु भारादिरूपेषु च पदार्थेषु ब्रह्मदृष्टिर्न भवति तेषां ब्र... त्वाभावात् स्वमते तु "यतो वा इमानि भूतानि जायन्ते" इत्या... सर्वस्य ब्रह्मकार्यत्वात् "कारणं तु ध्येयः सर्वं खल्विदं ब्रह्म तज्ज... ज्ञान्त उपासीत" इत्यादिश्रुतिभ्यः ।

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केन चित् ।
अनिकेतःस्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ।
वासुदेवात्मकं प्राहुः क्षेत्रं क्षेत्रज्ञमेव च ॥

इत्यादिस्मृतिभ्यश्च सर्वत्र ब्रह्मात्मकत्वदर्शी मुनिः तत्र विपरीतार्थ-भाषणेन यदुक्तं त्वं न श्रान्तो न च दीर्घमध्वानमागतः न चासहाय इति तत्रोत्तरमाह । त्वयोदितमिति । त्वया यदुक्तं श्रमादि नास्तीति तद्व्यक्तं स्फुटम् । अविप्रलब्धमुपहासमात्रं न भवति आन्तरबहु-स्वामिस्वासहायत्वाभावात् परभावापन्नस्य ममेति भावः किं तु यदि भारो भर्तुर्वोढुर्मे स्यात् न चसर्वं भारोपलक्षितं पदार्थजातं ब्रह्मात्मकं स्यात् तदा विप्रलब्धं स्यादिति शेषः यदा तु भारः वोढुर्मेन स्यात्"तत्र को मोहःकः शोकः एकत्वमनुपश्यतः ।"ऐतदा-त्म्यमिदं सर्वम्"इत्यादि श्रुतेः सर्वस्य वोढृत्वादेः ब्रह्मात्मकत्वात्तदा तु त्वयोदितं न युक्तमिति भावः सर्वस्य ब्रह्मात्मकत्वं पश्यतो मे श्रमादि नास्तीति फलितोऽर्थः"द्वितीयाद्वै भयं भवति,,इति श्रुतेः एवं यदि अध्वा गन्तुस्तं अधिगम्यं स्यात्तदा त्वयोदितं विप्रलब्ध तु सर्वस्योक्तश्रुत्या ब्रह्मात्मकत्वानुसन्धाने तु तत्र युक्तमित्यर्थः यदुक्तं नातिपीवेति तदपि राशौ पाञ्चभौतिके देहे युक्तम् । विदा-त्मविदां तु पीवेति प्रवादो न भवति पीवा स्थूलो देह एव न त्वात्मा ॥ ९ ॥

किंच स्थौल्यमिति । कलिः कलहः अहंमदः अहङ्कारेण मदः देहेन सह जातस्य देहात्माभिमानवतो जीवस्य भवन्ति मे मम आत्मयाथात्म्यविदो न सन्ति ॥ १० ॥

यत्त्वयोक्तं जीवन्मृतोऽसीति जीवन्मृतत्वमपि यदाद्यन्तवत् तस्य विकृतस्य परिणामिनो देहादेरेव नियमेन दृष्टं मम नित्य-ज्ञानरूपस्य तु नेत्यर्थः भर्तृशासनमतिचरसीति त्वदुक्तः स्वस्वा-म्यभावः स्वं च स्वाम्यं च तयोर्भावः यत्र उच्यते"यदासीत्तदधीन-मासीत् "प्रधानक्षेत्रज्ञपतिः"इत्यादिश्रुत्या वर्ण्यते तत्र ध्रुवः हे राजन् ! नृप असौ प्रसिद्धोऽपि नृपत्वाविविषयः यत्रास्ति तर्हि विधि-कृत्यस्य विहितकर्मणो योगः फलमध्रुव इत्यर्थः ॥ ११ ॥

अध्रुवत्वमेवाह।यतो विशेषबुद्धेः अहंनरपत्यादिः स्वामी असौ नरादिः सेवक इति विशेषबुद्धेर्विवरमवकाशं व्यवहारतोऽन्यत्र पश्यामि नरपतित्वनरत्वादिव्यवहारापगमं तु क ईश्वरः किमी-शितव्यं च स्यात् अतोऽसौ विधिकृत्ययोगोऽध्रुव इत्यर्थः तथापि हे राजन् ! उच्यतां ते किं करवाम ॥ १२ ॥

यदुक्तं प्रमत्तस्य ते चिकित्सां करोमीति तत्राह । उन्मत्त इति ॥ १३ ॥

अनुवादपरिभाषया अनुवादरूपेण भाषणेन प्रत्युदीर्य प्रति-वचनं दत्त्वा उपरतं निवृत्तमनात्म्ये देहात्मत्वे निमित्तमज्ञानं यस्य सः आरब्धफलं कर्म उपभोगेन व्यपनयन् ॥ १४ ॥

हे पाण्डवेय ! परीक्षित् ! अधिकृतः प्राप्तोऽधिकारो येन सः ॥ १५ ॥

शुक्लः कपिलः ॥ १६ ॥ १७ ॥

---

भाषाटीका ।

इस प्रकारसे बहुत अयुक्त भाषण करने वाले राजा के अभिमान वाले रजोगुण तमोगुण के मदसे सम्पूर्ण भगव त्प्रियों के स्थानरूप भरतजी के तिरस्कार करने वाले पण्डित मानी राजा से वे सर्वभूतों के सुहृत् ब्रह्मभूत सबके आत्मा योगेश्वरों के आचरण में अति निपुण बुद्धि वाले भरतजी गर्वरहित होकर यह वचन बोले ब्राह्मण बोले हे वीर ! तुमारा कथन बुरा नहीं है किन्तु सच्चा ही है उस भारका ढोने वाला मैं होतातो मेरेको दुःखहोता वह तो शरीर है मै नहीं हूं यदि चलने का मार्ग मेरे लेजाने का होता तो मेरे को श्रम होता वहतो देहका है मोटा होना भी शरीर-का धर्म है ऐसा ज्ञानीयों का कथन है तो मेरेको कोई दुःख नहीं है तुमारा कथन ठीकही है ॥ ९ ॥

मोटा पतलापन शरीर के दुःख मन का दुःख क्षुधा तृषा भय कलह इच्छा जरा निद्रा ग्लानि क्रोध अहङ्कार मद शोक ये सब देह के साथ हमको है वस्तुतः हमारे धर्म नहीं है ॥ १० ॥

हे राजन् ! जीवते मरण यहतो नियमसे सबके है क्योंकि जो विकारवान् वस्तु है वह सब आदि अन्त वाला है स्वामी सेवक भाव यदि नियमसे होना हो तो यह नियम से आज्ञाकरना आप का ठीक है सोतो ठीक है नहीं ॥ ११ ॥

हम राजा हैं यह भृत्य है इस बात में केवल बुद्धि व्यवहार को छोडकर और कोई हेतु नहीं है तो कौन स्वामी है कौन सेवक है यद्यपि ऐसा है तथापि हे राजन् ! तुमको हम क्या करैं ॥ १२ ॥

मै तो अपनी स्थिति से पागल सरीका होरहा हूं तब मेरे दण्ड आदि चिकित्सा करने से तुमारा क्या सिद्ध होगा पागल को दंड देना तो पीसेको पीसने के तुल्य है ॥ १३ ॥

श्रीशुकदेवजी बोले उपशान्त स्वभाव वाले देहादि भावसे निवृत्त मुनिवर भरतजी प्रारब्ध कर्म के भोगसे क्षय करने के वास्ते राजाकी पालकी को फिर उसी प्रकार ढोने लगे ॥ १४ ॥

हे परीक्षितजी ! वेभी सिन्धु सौवीर देशके राजा रहूगणजी तत्त्वजिज्ञासामें अच्छे प्रवृत्तथे श्रद्धासे अधिकारीथे तिनने हृदयग्रन्थी के छुटाने वाले बहुत योगग्रन्थ से सम्मत ब्राह्मण के वचनको श्रवण करके तुरत उतरकर मस्तक से चरणमूल में जाकर राजाके अभिमान को छोडकर क्षमा कराने को यह वचन बोले ॥ १५ ॥

अलक्षित होकर विचरनेवाले आप कौन हो अवधूत वेष आप हो ब्राह्मणों का यज्ञोपवीत धारण किये हो किसके पुत्र हो

नाहं विशङ्के सुरराजवज्रान्न त्र्यक्षशूलान्न यमस्य दण्डात् ।
नाग्न्यर्कसोमानिलवित्तपास्त्राच्छङ्के भृशं ब्रह्मकुलावमानात् ॥ १७ ॥
तद्ब्रूह्यसङ्गो जडवन्निगूढविज्ञानवीर्यो विचरस्यपारः ।
वचांसि योगग्रथितानि साधो ! न नः क्षमन्ते मनसाऽपि भेत्तुम् ॥ १८ ॥
अहं च योगेश्वरमात्मतत्त्वविदां मुनीनां परमं गुरुं वै ।
प्रष्टुं प्रवृत्तः किमिहारणं तत्साक्षाद्धरिं ज्ञानकलावतीर्णम् ॥ १९ ॥
स वै भवांल्लोकनिरीक्षणार्थमव्यक्तलिङ्गो विचरत्यपि स्वित् ।
योगेश्वराणां गतिमन्धबुद्धिः कथं विचक्षीत गृहानुबन्धः ॥ २० ॥

भाषाटीका ।

कहां के हो यहां क्यों आये हो यदि हमारे कल्याण को आये हो तो क्या कपिलजी तो नहीं हो ॥ १७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किमनया चिन्तया शिबिकां तावद्वहामीति चेदत आह । नाहमिति । वित्तपः कुबेरः ॥ १७ ॥

यस्माद्भृशं शङ्के तत्तस्मात्कस्त्वमित्यादिप्रश्नानामुत्तरं ब्रूहि । निगूढं पिहितं विज्ञानरूपं वीर्यं प्रभावो येन । अपारोऽनन्तमहिमा । तत्र हेतुः । नो मनसापि भेत्तुं न क्षमं न शक्यम् । किं भेत्तुमित्यपेक्षायामाह । ते वचांसीति । यद्वा मनसा युक्ताः सूक्ष्मदृष्टयोऽपि भेत्तुं न शक्नुवन्तीत्यर्थः ॥ १८ ॥

स्वस्य ज्ञानार्थितां दर्शयति । अहं चेति । इह संसारे यदरणं शरणं तत्किमिति प्रष्टुं प्रवृत्तोऽस्मि । ज्ञानशक्त्यावतीर्णं कपिलम् ॥ १९ ॥

स एव भवान् किं स्विदेवं विचरति । गृहाविष्टः कथं विचक्षीत पश्येत् ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किमनया चिन्तया शिबिकां तावद्वहामीति चेदत आह । नाहमिति । सुरराज इन्द्रः तस्य वज्रादहं न विशङ्के न बिभेमि तथा रुद्रस्य त्रिशूलात् यमस्य दण्डादपि तथाग्न्यादीनामस्त्रादपि तत्र वित्तेशः कुबेरः किन्तु ब्रह्मकुलावमानान्नितरां शङ्के ॥ १७ ॥

तस्मान्मत्प्रश्नानामुत्तरं ब्रूहि असङ्गो निष्परिग्रहः निगूढं पिहितं विज्ञानरूपं वीर्यं प्रभावो येन अपारः दुर्विभाव्याभिप्रायः जडवद्विचरसि तव वचांसि तु योगशास्त्रेण सन्दर्भितानि तत्र हेतुः हे साधो ! नोऽस्माकं मनसापि साक्षाद्दृष्टयापि त्वद्वचो भेत्तुमभिप्रायतोऽवगन्तुं न क्षमं न शक्यम् ॥ १८ ॥

स्वस्य ज्ञानार्थितां दर्शयति । अहञ्चेति । तत्त्वविदां चिदचिदीश्वरतत्त्वविदां मुनीनां मध्ये प्रवरं हितोपदेष्टारं ज्ञानकलया नित्यापरिच्छिन्नज्ञानशक्त्यंशेनावतीर्णं साक्षाद्धरिं योगेश्वरं मुनिं प्रति इह संसारे यदरणं रक्षकं तत्किमिति प्रवृत्तः ॥ १९ ॥

लोकनिरीक्षणार्थं स एव कपिलो भवान् विचरति स्विदेवं कथंभूतः अव्यक्तलिङ्गः अस्पष्टहेतुः गृहासक्तः मन्दबुद्धिर्योगेश्वराणां गतिं कथं विचक्षीत पश्येदित्यर्थः ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु यो वा को वास्तु तव तावच्छिबिकावहनमशं आह । नाहमिति । ब्रह्मकुलस्य ब्राह्मणकुलस्यावमानात् शङ्के तस्माद्ब्राह्मणश्चेत्क्षमापयितुमिच्छया पृच्छामीत्यर्थः ।

यत एवं शङ्के तत्तस्माद्यथा जडस्य सङ्गबुद्धिर्न तवापीत्यसङ्गः निगूढमप्रकाशितं विशिष्टं ज्ञानवीर्यं अत एवापारः अगाधः मादृशानामिति शेषः योगे विषये ग्रथितानि सम्यग्बद्धानि वचनानि मनसा विभेत्तुं नोऽस्माकं न क्षमन्ते न शक्यानीत्यन्वयः मनसा विभेत्तुं किं पुनर्वचनेनेत्यतो मनसेति ॥ १८ ॥

अहमपि कार्यान्तरमुद्दिश्य जनपदान्तरं गमिष्यामि माभूत् किन्तु ज्ञानार्थित्वेन कपिलवासुदेवम् अतो ज्ञानं न मम तत्त्वमुपदेष्टुं योग्यतास्तीत्यभिप्रेत्य विज्ञापयति । अहमपीह संसारे क्लिश्यमानानां जनानां यदरणं शरणं जानात्यनेन तत्त्वमिति ज्ञानलक्षणमरणं इत्यन्वयः कपिलः किमयं श्रोत्रिय उत प्रवक्तेति तत्राह श्रोतुरपेक्षिताशेषश्रोतव्यस्योपदेष्टारं केषां मुनीनां वन्मौनशीलाश्चेन्न प्रवचनेन प्रयोजनमेतादृशशिष्याद् सर्वस्य सुशका चेति तत्राह । तत्त्वेति । तत्तत्पदार्थतत्त्व कानामप्यस्तीत्यत आत्मेति । नचायं कपिलः सांख्य हरिमिति । न चायं शब्दः सावकाश इत्याह । नचास्यान्यत्र व्यापृतत्वे ज्ञानोपदेशानवसर ज्ञानकामधेनुप्रवृत्तयेऽवतीर्णं कलकामधेनावितिधातु इति वा ज्ञानव्याप्तय इति वा अनेन तेन व्यापारो नास्तीति दर्शयति ॥ १९ ॥

दृष्टः श्रमः कर्मत आत्मनो वै भर्तुर्गन्तुर्भवतश्चानुमन्ये ।
(१) यथाऽसतोदानयनाद्यभावात्समूल इष्टो व्यवहारमार्गः ॥ २१ ॥
स्थाल्यग्नितापात्पयसोऽभितापस्तत्तापतस्तण्डुलगर्भरन्धिः ।
देहेन्द्रियास्वाशयसन्निकर्षात्तत्संसृतिः पुरुषस्यानुरोधात् ॥ २२ ॥
शास्ताऽभिगोप्ता नृपतिः प्रजानां यः किङ्करो वै न पिनष्टि पिष्टम् ।
स्वधर्ममाराधनमच्युतस्य यदीहमानो विजहात्यघौघम् ॥ २३ ॥
तन्मे भवान्नरदेवाभिमानमदेन तुच्छीकृतसत्तमस्य ।
कृषीष्ट मैत्रीदृशमार्तबन्धो ! यथा तरे सदवध्यानमंहः ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततः किं प्रकृत इति तत्राह । सवा इति । भवान्स वै कपिलो भगवानेव लोकनिरीक्षणार्थं साध्वसाधुजनपरीक्षणार्थम् अव्यक्तलिङ्गो भूत्वा विचरत्यपि स्वित् किमित्यन्वयः मादृशानां संशयः साध्य इत्याशयेनाह । योगेश्वराणामिति । विचक्षीत जानीयात् अन्धबुद्धित्वे कारणं गृहानुबद्ध इति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नोऽस्माकं मनसा सह योगेनोपायेन युक्त्या ग्रथितान्यपि भेत्तुं न क्षमन्ते तद्ब्रूहि विशदीकुर्वित्यर्थः ॥ १८—२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु शिविकारूढस्य तव किमनेन विचारेण इत्यत आह । नाहमिति । सुरराजादयो वज्रादिभिर्युधि मां हन्तुं यदि प्रयतन्ते तदपि स्वस्य वीरत्वस्वभावात् न शङ्के प्रत्युतोत्साहसुखमेव प्राप्नोमीति भावः यद्वा सुरराजादिषु जातापराधोऽहं तेषां कुपितानां वज्रादिप्रहारादपि न शङ्के इत्यर्थः ॥ १७ ॥

तत्तस्माद्ब्रूहि कस्त्वमित्यर्थः । त्वच्छिविकावाहकोऽस्मीति चेदतः परमपि मद्विडम्बनैस्त्वामहं कमपि महायोगीन्द्रमज्ञासिषमेवेत्याह । वचांसीति । यतो योगग्रथितानि ते वचांसि नोऽस्माकं मनसापि भेत्तुं न क्षमं न क्षमाणि न शक्यानि इत्यर्थः । यद्वा वचांसि योगैर्ग्रथितान्यपि योगेश्वराणामुपदेशवाक्यानि कर्तॄणि नोऽस्मानतिकठोरान् भेत्तुं छिन्नसंशयीकर्तुं न क्षमन्ते न शक्नुवन्ति । कीदृशान् मनसापि सहितान् अवहितमनसोऽप्यादित्येन तानि जिघृक्षूनपीत्यर्थः । तव त्वेतावतापि प्रतिवचनेनैव छिन्नसंशयोऽस्मि सम्वृत्त इति भावः ॥ १८ ॥

योगेश्वराणामतिमुख्य एव मत्संशयं छेत्तुं समर्थ इति द्योतयन्नाह । अहश्चेति । साक्षाद्धरिं श्रीकपिलदेवं ज्ञानस्य कलायै ज्ञापनाय अवतीर्णम् ॥ १९ ॥

स एव भवान् कि स्विदेव विचरति अन्धबुद्धिर्मद्विधः ॥२०॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु मद्रूपादिकं स्वयमेव वेदितुमर्हसीत्यत्राह । नो मनसापि भेत्तुं न क्षमं न शक्यं यत्तत् कस्त्वमित्यादिप्रश्नानामुत्तरं ब्रूहि यतो निगूढं विज्ञानरूपं वीर्यं येन सः अपारः दुर्ज्ञेयाभिप्रायः एवं भूतो विचरसि हे साधो ! त वचांसि योगग्रथितानि ज्ञानयोगभक्तियोगविषयाणि ॥ १८ ॥

इह यदरणं शरणं तत्किमिति प्रष्टुं प्रवृत्तोऽस्मि ज्ञानशक्त्याविर्भूतं कपिलम् ॥ १९ ॥

लोकनिरीक्षणार्थं गूढचिह्नः सन् सः कपिल एव भवान् किं स्विद्विचरति गृहानुबद्धः कथं विचक्षीत पश्येत् ॥ २० ॥

---

भाषाटीका

इन्द्र के वज्रसे मै नहीं डरता हूं रुद्रजी के त्रिशूल से भी नहीं डरता हूं यमके दण्डसे भी नहीं डरता हूं अग्नि सूर्य चन्द्रमा पवन कुबेरास्त्रसे भी नहीं डरता हूं केवल ब्राह्मण कुलके अपमान से अत्यन्त डरता हूं ॥ १७ ॥

तिससे विज्ञान के गुप्त करने को आप जड सरीके निःसङ्ग होकर विचरते हो अगाध हो हे साधो ! योगग्रन्थित आपके वचनों को हम लोक मनसे भी भेद न करने को समर्थ नहीं हैं सो आप अपना हाल कहो ॥ १८ ॥

मैं तो आत्मज्ञानी मुनियों के परमगुरु योगेश्वर ज्ञानकलामें अवतीर्ण साक्षात् हरि कपिलजी को पूछने को प्रवृत्त हुआ हूं कि संसार में शरण करने को क्या वस्तु है ॥ १९ ॥

किंवा वही कपिल रूपही आप छिपकर संसार के देखने को विचरते होंगे हम सरीका गृहादिक में बुद्धिवाला योगेश्वरों की गति को कैसे देख सकेगा ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं तत्स्वरूपं पृष्ट्वा तदुक्तोत्तरगतमाक्षिपति तत्र यदुक्तं मम श्रमो नास्तीति तत्राह । दृष्ट इति । आत्मनो मे अनुमन्ये अनुमिमे अनुमानं चैवं भवान् भारवाहनादिना श्रान्तः

(१) यथा श्रुतोदानायनादिभावाः समूलदृष्टोव्यवहारमार्ग इति श्रीविजयध्वजतीर्थपाठः ।

न विक्रिया विश्वसुहृत्सखस्य साम्येन वीताभिमतेस्तवापि ।
महद्विमानात्स्वकृताद्धि मादृङ्नङ्क्ष्यत्यदूरादपि शूलपाणिः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां जडभरतरहूगणसम्वादे
दशमोऽध्यायः ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्तृत्वात् यः कर्ता स श्राम्यति यथाऽहं युद्धादिकर्तेति । नन्विदं व्यवहारमात्रं न तु सत्यम् । यदुक्तं व्यवहारतोऽन्यत्र पश्यामीति तत्राह । यथेति । व्यवहारमार्गः प्रपञ्चः समूलः सप्रमाणक एव दृष्टः । यथा यथावत् । असता घटादिनोदकानयनादेरभावात् । एवं प्रयोगः । प्रपञ्चः सत्यः अर्थक्रियाकारित्वात् यः पुनरसत्यः नासावर्थक्रियाकारी यथा मिथ्याघटादिरिति ॥ २१ ॥

यदुक्तमुपाधिधर्माः स्थौल्यादयो मे न वस्तुतः सन्तीति तत्रौपाधिकत्वेऽपि सत्यत्वं किं न स्यादित्याह । स्थाल्या अग्निना तापात्तन्मध्यवर्तिनः क्षीरस्य तापः तस्य तापात्तण्डुलानां वहिर्भागस्य ततस्तद्गर्भस्य च रन्धिः पाकः । न चात्र किञ्चिन्मिथ्या एवं देहादिभिः सन्निकर्षात्सम्बन्धात्तन्निमित्ता संसृतिः पुरुषस्य भवति । असवः प्राणाः आशयो मनः अनुरोधादुपाधिधर्मानुवृत्तेः । तथाहि । निदाघादिना देहे तप्ते इन्द्रियाणां तापस्ततः प्राणस्य ततो मनस इत्येवं यथायथमूह्यम् ॥ २२ ॥

यदुक्तं स्वस्वाम्यभावो ध्रुव इति तत्राह । शास्तेति । अध्रुवत्वेऽपि यदा यो नृपतिः स प्रजानां शास्ता गोप्ता च । यच्चोक्तं स्तब्धादेः शिक्षा पिष्टपेष इति तत्राह । योऽच्युतस्य किङ्करः स पिष्टं न पिनष्टि निष्फलं न करोति । स्तब्धत्वाद्यनपगमेऽपि शास्तुरीश्वराज्ञासम्पादनेनैव सफलत्वात्तदाह । स्वधर्मरूपमच्युतस्याराधनं कुर्वन्यस्मादघौघं विजहाति ॥ २३ ॥

यस्मादेवं मम त्वदुक्तं विपरीतं प्रतिभाति तत्तस्मान्नरदेवाभिमानमदेन तुच्छीकृतास्तिरस्कृताः सत्तमा भवादृशा येन तस्य मे मैत्रीदृशं स्नेहयुक्तां दृष्टिं कृपीष्ट करोतु सतामवज्ञारूपं पापं यथा तरिष्यामि ॥ २४ ॥

ननु ममावज्ञाकृतविकाराभावात्कुतः पापं तत्राह । नेति । यद्यपि तव विक्रिया नास्ति । विश्वस्य सुहृच्चासौ सखा च तस्य अतः सर्वत्र साम्येन स्वदेहे विगताभिमानस्य तथापि महतामवमानान्मादृशो विनङ्क्ष्यति अदूरात् क्षिप्रं शूलपाणिरिवातिसमर्थोपीत्यर्थः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तत्स्वरूपं पृष्ट्वा तदुक्तोत्तरमाक्षिपति । तत्र यदुक्तं मम श्रमो नास्तीति तत्राह । दृष्ट इति । देहादन्यत्वेऽपि देहादात्मनो मम कर्मतः युद्धादिकर्मणा श्रमो दृष्टः अतो ... न्तेन भर्तुर्भारस्य गन्तुरध्वनश्च गन्तुर्भवतोऽपि श्रममनु... मिमे भवता श्रान्तेन भवितव्यं भर्तृत्वाद्गन्तृत्वाच्च यथा यु... कर्ताहमित्यनुमिनोमीत्यर्थः । नन्विदं व्यवहारमात्रं न तु ... तत्राह । असता घटादिना उदकाहरणाद्यभावदर्शनात् सता... नाच्च व्यवहारमार्गः प्रपञ्चः समूलः प्रमाणमूलक ... अत्रायं प्रयोगः प्रपञ्चः सत्यः अर्थक्रियाकारित्वात् यः पुन... नासावर्थक्रियाकारी यथा शुक्तिरजतादिरिति ॥ २१ ॥

आत्मनः स्वतो दुःखाद्यभावेऽपि देहसंसर्गा ... भिप्रायेणाह । स्थालीति । स्थाल्यादिगताग्नितापात्तन्म... शिशिरस्य पयसोऽभितापस्तस्य तापात्तण्डुलगर्भवह्निः ... तत्तस्माद्दृष्टान्तदर्शनाद्देहादीनां सन्निकर्षादनुरोधा... वर्जनीयत्वात्तन्निमित्ता पुरुषस्य संसृतिः सुखदुःखाद्यनु... तीत्यर्थः असवः प्राणा आशयो वासना ... वा ॥ २२ ॥

तथाहि निदाघादिना देहे तप्ते इन्द्रियाणां ता... प्राणस्य ततो मनसस्तत आत्मन इत्येवं च सति ... तृत्वादिकमपि सफलमित्याह । शास्तेति । यदाहं ... पतिस्तदा प्रजानामुत्पथवर्तिनीनां शास्ता सन्मार्गवर्ति... गोप्ता ननु पूर्वमेव व्यसनातुरं दण्डयन्पिष्टं पिनष्टि... चेत्तत्राह । अच्युतस्य भगवतः स्ववर्णाश्रमधर्म ... आराधकः भगवदाराधनस्वरूपं स्वस्ववर्णाश्रमप्रयुक्त ... दिकं कुर्वन् पिष्टं न पिनष्टि नैष्फल्यं न प्राप्नोति ... श्रमोचितं कर्म ईहमानः कुर्वाणः अघौघं पापराशिं ... विधुनोति ॥ २३ ॥

तस्मादेवं जिज्ञासुत्वाद्धे आर्तबन्धो ! नरदेवोहमित्य... जमदेनानादृतसज्जनस्य मे मह्यं मैत्रीदृशं स्नेहयुक्तां दृष्टिं ... कुरु यया दृशा सदवज्ञानं सतामवज्ञानरूपमंहः ... तरिष्यामि ॥ २४ ॥

ननु ममावज्ञाकृतविकाराभावात्कुतः पापं तत्राह । ... विश्वसुहृदीश्वरः सखा यस्य स विश्वसुहृत्सखः ... सुपर्णा सयुजा सखाया" इति श्रुतेः तस्य साम्येन सर्व... त्मकत्वभावेन वीता निरस्ताऽभिमतिर्देहात्माभिमतिः ... वस्त्वभिमतिश्च यस्य तव यद्यपि मत्कृतादवज्ञानात् ... नास्ति तथापि महतामवमानात्स्वकृतान्मादृशो जनु ... णिरिवातिसमर्थोऽप्यदूरात् क्षिप्रं नङ्क्ष्यति ...

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्थावरताप्राप्तिरेव हि जीवस्य विनाशो नाम तत्र नितरां चैत-न्यानभिव्यक्तेः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अधुना यत्त्वयोक्तं भर्तुर्मम भारो नास्ति गन्तुः क्रमतः श्रमो नास्तीति तत्राह । दृष्ट इति । यथात्मनो मम भर्तुः कण्ठभुग्नता-हनुभारो गन्तुर्गमनलक्षणात्क्रमतः श्रमः पादवेदनालक्षणो दृष्ट-स्तथा भर्तुर्गन्तुर्भवतोऽद्य वहनगमनादिक्रियादर्शनाच्छ्रमो युक्त इति मन्ये वै सर्वानुभवसिद्ध इति न केवलं दृष्टिः श्रुतिरप्यस्तीत्याह । श्रुतेति । श्रुता उदानयनादिभावा इति प्रयोगमुत्सृज्य एकवचन प्रयोगस्तु छान्दसः उदानयनादिभावा जलाहरणसाधनघटादिपदार्थाः वोढृणां श्रमजनकाः श्रुताः इतीदमपि श्रमसद्भावे प्रमाणमि-त्यर्थः "भावो लीला क्रिया चेष्टा" इत्यभिधानाज्जलानयनादिक्रियाः श्रमहेतव इति वा किमत इति तत्राह । समूल इति । यतो वह-नगमनादिक्रियाः श्रमजनकत्वेन सत्याः तस्माद्धानोपादानादि-व्यवहारमार्गः समूलः सप्रमाणः दृष्टः साक्षिसिद्ध इत्यर्थः केचि-दुदानयनादिभावेति पठन्ति तत्र श्रुतेति पदच्छेदः क्रियावाचिनो भावशब्दस्य टापि कृते स्त्रीलिङ्गत्वं साधु अनेन जीवन्मृतत्वं निय-तेन राजन्नित्यत्र यद्देहस्येति उक्तं तत्प्रत्युक्तं "शतं कुम्भमसिञ्चन्त्सुराया" इति श्रुतेः क्रियायाश्चेतननियतत्वात् ॥ २१ ॥

स्थौल्यादयो न मे सन्तीति यदवादि तत्रोच्यते । स्थालीति । स्थाल्याः भाण्डस्याग्निना तापात् भाण्डस्थपयसो जलस्य तापः तत्तस्य पयसस्तापात्तण्डुलगर्भस्य तण्डुलान्तःसारस्य रन्धिः पाकः संयोगलक्षणसम्बन्धपरम्परयाऽऽश्रयकार्योत्पत्तिर्यथा तथा देहश्चेन्द्रियाणि चासवश्चाशयोन्तःकरणं ते तथा तेषां सन्निक-र्षात्संयोगलक्षणसम्बन्धात् या स्थौल्यादिलक्षणा संसृतिः सा पुरुषस्य भवतीत्यन्वयः कुतः अनुरोधात् अभिमानात् नचाभि-मानो नास्तीति वाच्यं देहसद्भावेऽभिमानस्यावश्यं भावित्वाद-प्रसन्नप्रायोक्तवत् ननु हेयाहेययोः स्वरूपे सामान्यतो ज्ञातेऽत्र प्रश्न-पूर्वकं विशेषतो जिज्ञासा सञ्जाघटीतीति तदभावे स्तम्भसम्बो-धनवद्व्यर्थः स्यादित्यतो वा हेयस्वरूपं निरूपयति । स्थालीति । अर्थस्तूक्त एव आत्मा संसारी संसारान्तः पातित्वादन्तः कर-णवत्स [ १ ] च सत्योऽर्थक्रियाकारित्वादात्मवदित्याद्यूहनी-यम् ॥ २२ ॥

मत्तप्रमत्तस्य च पिष्टपेष इति यदुक्तं तत्राह । शास्तेति । यो नृप-तिर्दुष्टप्रजानां शास्ता शिष्टप्रजनां गोप्ता देवब्राह्मणमुनीनां किङ्करश्च स्वविहितं नित्यनैमित्तिकं कर्माच्युतस्याराधनं स्वधर्मं यदाहमानः कुर्वाणश्च भवति तर्हि स राजा पिष्टं न पिनष्टि निष्फलव्यापारवाञ्च भवति किन्तु सफलव्यापारवानेव एतत्कृतोऽवगम्यत इति तत्राह । विजहातीति । ज्ञानमन्तरेणान्येन न हन्यन्त इत्यज्ञानि दुःखान्याधि-व्याधिनिमित्तानि तेषामोघो यस्मिन् स संसारस्तथा तं विजहाति मुञ्चति मुक्तो भवतीत्यर्थः एवं संसारस्वरूपं निरूप्य राज्ञः स्वधर्मं निरूपयतीत्यतो वाह । शास्तेति ॥ २३ ॥

यत एवं मम ज्ञानं शवलं न शुद्धं फलादर्शनादतः संसार-निर्मूलनकरं ज्ञानमुपदिशेत्याह । तन्म इति । नराणां देवोऽहमित्यभि-माननिमित्तमदेन तुच्छीकृतसत्तमस्य भिक्षुकृतसज्जनोत्तमस्य मे यया दृशा सदवध्यानं सज्जनावज्ञाननिमित्तमंहः पापं तरेयं तीर्णो भवामि तां मैत्रीं मित्रं सर्वस्मादिष्टतमो हरिस्तत्प्रियां दृशं कृपांग अत्र करणं नाम प्रकाशनं विवक्षितं नत्वविद्यमानस्य निर्माणं प्रकाशयेत्यर्थः मुक्तौ मुख्यं साधनं ब्रह्मज्ञानमेवान्यत् सर्वं तत्साधनमिति द्योतनाय वा कृपांगेत्युक्तम् आर्तबन्धो इत्यनेन संसारान्धकूपे पतितानां जनानां दीपिकालक्षणदृष्टिप्रदानेन समु-द्धरणबन्धुभूतस्त्वमेव त्वादृशोऽन्यो नास्तीति स्वाभिप्रायसिद्धये प्रयुक्तमिति ज्ञातव्यं "हि गतौ" इति धातोर्गतज्ञानस्य प्रतिबन्धक-त्वेन पापार्थं अंह इति निपातनात् साधुः ॥ २४ ॥

शिविकावाहनलक्षणयास्मदवज्ञया तव कोपादिविकारो नास्ती-त्याह । न विक्रियेति । विश्वसुहृत् विश्वस्य विश्वात्मना सर्व-प्रकारेण वा सुहृत् श्रीनारायणः स एव सखा यस्य स तथा तस्य ते तव विक्रिया सन्तापलक्षणो मनसि विकारः कोपो वा नास्ति केन हेतुनेत्यत उक्तम् । साम्येनेति । मानावमा-नयोः समत्वकारणेन "मानावमानयोस्तुल्य" इति स्मृतेः तथापि किङ्करणमत्राह । वीताभिमतेरिति । वीता विगताभिमतिरभिमानो यस्य स तथा तस्य सामान्यज्ञानिनोऽपि मनसि विकारो न स्याद्विशिष्टज्ञानिनस्तस्य तव किं वक्तव्यमित्यपिशब्दार्थः वीता-भिमानत्वेन तव मनसि विकाराभावोऽपि सम्भावित इति वा मम तु देहाभिमानो दुस्त्यजो यतोऽतो महदवज्ञाने प्राप्ते शाश्वतः कर्तव्य आत्मदाहो न कृत इत्याशयेनाह । महद्विमाना-दिति । मादृक् पुरुषः स्वकृतान्महतां भवादृशस्य विमानादवज्ञान्ध-ददूरात्तदानीमेवात्मानं धक्ष्यति दहति न केवलं मादृगेवात्मानं दहति किन्तु मत्तोऽभ्यधिकः शूलपाणिः सदा शिवोऽपि स्वतो महदवज्ञानादात्मानं दहति ।

> ब्रह्महत्यासहस्रस्य पापं शाम्येत् कथञ्चन ।
> न पुनस्त्वदवज्ञानं कल्पकोटिशतैरपि ॥
> स्वतो महदवज्ञानाद्रुद्रोऽप्यात्मानमादहेत् ।

इति वाक्यद्वयं हिशब्देनोपात्तमिति ज्ञातव्यमतो भवन्तं प्रार्थय इत्यपिशब्दार्थ इति ॥ २५ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

किङ्करो देवरूपेश्वराज्ञाकारी मादृशो जनः ॥ २३—२५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
दशमोऽध्यायः ॥ १० ॥

---

( १ ) संसारः ।

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कपिलदेवं प्रष्टुं प्रवृत्तोऽहमध्वन्येव तमिमं प्राप्तस्तदेतद्दत्तोत्तरायैव प्रथममाक्षिपन् सर्वमेव स्वजिज्ञास्यमाविष्करिष्यामीति मनसि विचारयन् यदुक्तं मम श्रमो नास्तीति तत्राह । दृष्ट इति । आत्मनो मे अनुमन्ये अनुमिमे अनुमानञ्चैवं श्रमात् भारवाहादिना श्रान्तः कर्तृत्वात् यः कर्ता स श्राम्यति यथाहं युद्धादिकर्त्तेति नचेदं व्यावहारिका एवं जल्पन्ति ननु पारमार्थिका इति वाच्यं व्यवहारमार्गस्यापि निर्मूलीकर्त्तुमशक्यत्वादित्याह । यथेति । घटादिकरणकजलादिकमाहरेत्युक्ते असता घटादिना उदकानयनादेरदृष्टत्वात् व्यवहारमार्गः प्रपञ्चः समूलः सप्रमाणक एवेष्टः । यथा यथावत् एव प्रयोगः प्रपञ्चः सत्यः अर्थक्रियाकारित्वात् यः पुनरसत्यः नासावर्थक्रियाकारी यथा मिथ्या घटादिरिति ॥ २१ ॥

भारोद्वहनादिना देहेन्द्रियादेः श्रान्त्या आत्मा विश्रान्तो भवतीति तत्र दृष्टान्तमाह । स्थाल्या अग्निना तापात् तन्मध्यवर्त्तिनः पयसस्तापः । तस्य तापात् तण्डुलानां वहिर्भागस्य तापः ततस्तद्गर्भस्य रन्धिः पाको यथा तथैव देहादिभिः सन्निकर्षात् सम्बन्धात् तत्संसृतिस्तन्निमित्तकः संसारः पुरुषस्य भवति असवः प्राणाः आशयो मनः । अनुरोधादुपाधिधर्मानुवृत्तेः । यथा निदाघादिना देहे तप्ते इन्द्रियाणां तापः ततः प्राणस्य ततो मनसस्तत आत्मन इति ॥ २२ ॥

यदुक्तं स्वस्वाम्यभावो ध्रुव इति तत्राह । शास्तेति । अध्रुवत्वेऽपि यदा यो नृपतिः स प्रजानां शास्ता गोप्ता च भवत्येव यच्चोक्तं स्तब्धादेः शिक्षा पिष्टपेष इति तत्राह । योऽच्युतस्य किङ्करो मद्विधः स पिष्टं न पिनष्टि यतस्तब्धत्वाद्यनपगमेऽपि शास्तुरीश्वरस्याज्ञासम्पादनेनैव फलवत्त्वात्तदाह । प्रजाशासनलक्षणं स्वधर्मरूपमच्युतस्याराधनं नृप ईहमानः कुर्वन् स्वस्याघौघं प्रत्यवायसमूहं जहाति ॥ २३ ॥

यस्मादेवं मम त्वदुक्तं विपरीतं विभाति । तत्तस्मान्नरदेवोऽहमित्यभिमानेन यो मदो विद्वन्मन्यत्वादिर्मिथ्यागर्वस्तेन तुच्छीकृता इमे किं जानन्तीत्यनादृताः सत्तमाः भवादृशा येन तस्य मे मैत्रीदृशं दुर्जीवोऽयं नरकेऽपि पतिष्यतीति विभाव्य स्नेहयुक्तां दृष्टिं कृपीष्ट करोतु यया सतामवज्ञारूपमंहस्तरिष्यामि ॥ २४ ॥

ननु त्वत्कृतेन तिरस्कारेणास्मादृशां दुःखं नोत्पद्यते कुतस्तत्राघस्तत्राह । नेति । तथापि तव यद्यपीत्यर्थः।तदपि माहक् विनङ्क्ष्यति शूलपाणिसदृशोऽपि यदुक्तं सेर्ष्यं महापुरुषपादपांशुभिर्निरस्ततेजःस्वित्यादि ॥ २५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

पञ्चमे दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्थं तत्स्वरूपं पृष्ट्वाय यदुक्तं मम ब्रह्मात्मकत्वानुसन्धानवतः श्रमो नास्तीति तत्राह । दृष्ट इति । कर्मतः श्रमः सामान्यतः सर्वेषां दृष्टः अतः ब्रह्मात्मकत्वानुसन्धानवतोऽपि भर्तुर्वोढुः गन्तुर्भवतश्च भवतोऽपि अनुमन्ये यदुक्तं विशेषबुद्धेर्धिवरं व्यवहार[illegible] न पश्यामीति तत्राह । यथेति । व्यवहारमार्गः नरदेव[illegible] दिस्वस्वामिभावरूपः समूल इष्टः ब्रह्ममूल इत्यर्थः [illegible] यथावदेव ब्रह्मविचारवदादरणीय इत्यर्थः व्यवहारस्य [illegible] तु न सम्भवतीति हेतुना साधयति । असता निर्मूलेन [illegible] उदानयनाद्यभावादिति ॥ २१ ॥

यच्चोक्तं स्थौल्यादयः देहात्ममानिनः सन्ति न त्वात्म[illegible] तत्राह । स्थालीति । स्थाल्या अग्निना तप्तायास्तद्गतस्य [illegible] तापस्तत्तापतस्तण्डुलगर्भस्य रन्धिः विक्लित्तिः एवं देहा[illegible] सन्निकर्षात्संबन्धात् अनुरोधात्स्वस्वकर्मानुरोधात् तत्तद[illegible] दिसंसर्गिणः अज्ञस्य ज्ञानिनश्च पुरुषस्य संसृतिः सुखदु[illegible] नुभूतिर्भवति असवः प्राणाः आशयोऽन्तःकरणम् ॥ २२ ॥

यदप्युक्तमसौ विधिकृत्ययोगः अध्रुव इति तत्राह । अध्रुव[illegible] यदा यो नृपतिः स प्रजानां शास्ता गोप्ता च भवत्येव[illegible] स्तब्धादेः शिक्षा पिष्टपेष इति तत्र स्तब्धादयो राज्ञा धृत[illegible] स्वर्गं यान्ति राजा च निष्पापो भवतीत्याह । यो ऽच्युतस्य [illegible] यथायथं प्रजाशासनेन आज्ञापालकः पिष्टं न पिनष्टि किन्तु [illegible] शोधयति स्वयं च प्रजाशासनाख्यस्वधर्मरूपमच्युतस्याराध[illegible] हमानोऽघौघं विजहाति ॥ २३ ॥

योगशास्त्रे राजशास्त्रे च स्वकौशलं प्रदर्श्यापराध[illegible] प्रार्थयते । तदिति । तत्तस्यासमीक्ष्यकारिणो मे नरदेवमदेन [illegible] कृतः सत्तमो येन तस्य मैत्रीदृशं स्नेहदृष्टिं कृपाष्टि करोतु [illegible] सदवध्यानमंहः महदवज्ञारूपं पापं तरे तरिष्यामि ॥ २४ ॥

विश्वस्य सुहृच्चासौ सखा च स तथा तस्य साम्येन [illegible] ब्रह्मात्मकत्वानुसन्धानेन वीता अभिमतिरुत्तमत्वाभिमानो [illegible] तस्य तव यद्यपि विक्रिया नास्ति तथापि महतां विमानन[illegible] नात् माहक् नङ्क्ष्यति अदूरात् क्षिप्रं शूलपाणिर्[illegible] पीत्यर्थः ॥ २५ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

दशमाध्यायार्थप्रकाशः ॥ १० ॥

---

भाषाटीका ।

आपने जो कहा मेरे को श्रम नहीं है तिसमें हमारा [illegible] कि मेरे को जैसे युद्धादिक करने से श्रम होता है तैसे [illegible] ढोने से तथा चलने से आपको भी होता होगा जैसे [illegible] से जल नहीं लाया जाता है तैसे मिथ्या सब जगत् हो [illegible] व्यवहार नहीं होगा ॥ २१ ॥

जैसे कि वर्तनमें अग्नि के ताप लगने से जल [illegible] तिसके तपने से चावल के भीतर का अंश पकजाता है [illegible] घामादिकों से देह तपता है फिर इन्द्रिय तपती हैं फिर [illegible] फिर मन इसप्रकार आत्मा को संताप होना सत्य ही है। [illegible]

भाषाटीका ।

राजा तो प्रजों का शासन तथा रक्षा करनेवाला है सो ईश्वर की आज्ञा को करनेवाला है वह पीसे को नहीं पीसता है भगवान् की आज्ञा करना स्वधर्म है वही अच्युत का आराधन है जिसके करने से सब पाप दूर होते हैं ॥ २३ ॥

तिससे हे मुनिवर्य!नरदेव के अभिमान के मदसे आपसरीके महत्पुरुषों के तिरस्कार करनेवाले मेरेपर आप मित्रदृष्टी करो हे आर्तबन्धो ! जैसे सत्पुरुषों के अपमान के पापों से छूटें तैसा उपाय कीजिये ॥ २४ ॥

यद्यपि समदृष्टि होने से अभिमान के छोडने से सबके सुहृद सखा होने से आपके मन में कोई विकार नहीं है तथापि हम सरीका पुरुष तो महात्मों के अपमान करने से रुद्रके तुल्य हो तो भी शीघ्र ही नष्ट होजायगा ॥ २५ ॥

इति श्रीभागवत पञ्चमस्कन्ध दशमाध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ १० ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे दशमोऽध्यायः समाप्तः ॥ १० ॥



## एकादशोऽध्यायः ।

### ब्राह्मण उवाच

अकोविदः कोविदवादवादान् वदस्यथो नातिविदां वरिष्ठः ।
न सूरयो हि व्यवहारमेनं तत्त्वावमर्शेन सहामनन्ति [१] ॥ १ ॥
तथैव राजन्नुरुगार्हमेधवितानविद्योरुविजृम्भितेषु ।
न वेदवादेषु हि तत्त्ववादः प्रायेण शुद्धो नु चकास्ति साधुः ॥ २ ॥
न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन् ।
स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यात् ॥ ३ ॥
यावन्मनो रजसा पूरुषस्य सत्त्वेन वा तमसा वानुरुद्धम् ।
चेतोभिराकूतिभिरातनोति निरङ्कुशं कुशलं चेतरं वा ॥ ४ ॥
स वासनात्मा विषयोपरक्तो गुणप्रवाहो विकृतः षोडशात्मा ।
बिभ्रत्पृथङ्नामभि रूपभेदमन्तर्बहिष्ट्वं च [२] पुरैस्तनोति ॥ ५ ॥
दुःखं सुखं व्यतिरिक्तं च तीव्रं कालोपपन्नं फलमाव्यनक्ति ।
आलिङ्ग्य मायारचितान्तरात्मा स्वदेहिनं संसृतिचक्रकूटः ॥ ६ ॥
तावानयं व्यवहारः सदाविः क्षेत्रज्ञसाक्ष्यो भवति स्थूलसूक्ष्मः ।
तस्मान्मनो लिङ्गमदो वदन्ति गुणागुणत्वस्य परावरस्य ॥ ७ ॥
गुणानुरक्तं व्यसनाय जन्तोः क्षेमाय नैर्गुण्यमथो मनः स्यात् ।
यथा प्रदीपो घृतवर्तिमश्नन् शिखाः सधूमा भजति ह्यन्यदा स्वम् ।
पदं तथा गुणकर्मानुबद्धं वृत्तीर्मनः श्रयतेऽन्यत्र तत्त्वम् ॥ ८ ॥

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

एकादशे तु संपृष्टो रहूगणमहीभृता ।
उपादिशत्परं ज्ञानं स योगीति निगद्यते ॥ १ ॥

अकोविदोऽविद्वानपि त्वं कोविदानां वादा उद्धहणिकास्तत्तुल्यान् वादानेव वदसि अथो अतः अत्यन्तं विदुषां मध्ये श्रेष्ठो न भवसि कुतः हि यस्मात् यं स्वामिभृत्यादिलौकिकव्यवहारं त्वं सत्यमात्थ एनं सूरयस्तत्त्वविचारेण सह न वदन्ति किन्त्वविचारसुन्दरं वदन्ति अतो न सत्यः ॥ १ ॥

वैदिकोऽपि कर्मव्यवहारो न सत्य इत्याह । तथैवेति । उरवो गार्हा गृहसम्बन्धिनो मेधा यज्ञास्तेषां वितानो विस्तारस्तद्विषयासु विद्यासु उरु अधिकं विजृम्भितेषु विलसितेषु वेदवादेषु तत्त्ववादो नु निश्चितं न चकास्ति न प्रकाशते तथाच श्रुतिः "नेह नानास्ति किञ्चन" इत्यादि शुद्धो हिंसादिशून्यः साधु रागादिशून्यश्च प्रायेणेतीश्वरार्पितकर्मणां
फलत्याभिप्रायेणोक्तम् ॥ २ ॥

ननु श्रुतवेदान्तस्यापि पुंसः कर्मसु प्रवृत्तेः
तत्राह । नेति । साक्षाद्यथावत्तत्त्वज्ञानाय वरीयस्योऽपि
वाचस्तस्य न सम्यगासन् बभूवुः स्वप्ने या निरुक्तस्त
दृष्टान्तेन दृश्यत्वादिहेतुना स्वयमेव हेयत्वेनानुमितं
स्यात् ॥ ३ ॥

एवं प्रपञ्चस्य सत्यत्वं तदुक्तं निराकृत्य
तदुक्तां सत्यतां निराकर्तुं तस्य मनोनिमित्ततामाह ।
दित्यादिना यावत्समाप्ति । मनो यावद्रजआदिभिर्गुणैरनु
कृतं भवति तावत्तन्मनो निरङ्कुशं सत्पुरुषस्य कु
मितरमधर्मं वा आतनोति । कैः चेतोभिर्ज्ञानेन्द्रियैः
कर्मेन्द्रियैश्च ॥ ४ ॥

(१) समामनन्तीति श्रीवीरराघवपाठः ।　　(२) वयुनैरिति श्रीवीरराघवपाठः ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ततश्च धर्माधर्मवासनायुक्तं तद्देवानेकदेहादिवैचित्र्यं करोतीत्याह। स इति। पुंस्त्वमात्मशब्दविशेषणत्वेन तन्मन इत्यर्थः वासनात्मक आत्मोपाधित्वादात्मा अतो विषयैरुपरक्तोऽनुविद्धः अतो गुणप्रवाहो गुणैरितस्ततश्चाल्यमानः। अत एव विकृतः कामादिविकारवान् षोडशात्मा षोडशकलासु भूतेन्द्रियरूपासु मुख्यः स्वनामभिः सह पृथग्रूपभेदं देवतिर्यगादिरूपं बिभ्रत्। अन्तर्बहिष्ठमुत्कृष्टत्वं निकृष्टत्वं च पुरैस्तैरेव देहैर्हेतुभूतैस्तनोति। नामभिरित्यत्र रेफलोपे दीर्घाभाव आर्षः ॥ ५ ॥

फलं च तदनुरूपं करोतीत्याह। दुःखं सुखं व्यतिरिक्तं च मोहं तीव्रं दुर्निवारं कालप्राप्तं सर्वतोऽभिव्यनक्ति सृजति ननु जडः कथं सृजति तत्राह। स्वदेहिनमालिङ्ग्य। आलिङ्गने कारणमाह। मायारचितोऽन्तरात्मा जीवोपाधिः। उपाधितामाह। संसृतिचक्रे कूटयति छलयतीति तथा यथा ग्रामकूटक इति ॥ ६ ॥

एवमयं मनोनिबन्धनः संसारो जीवे फलतीत्याह। तावानिति। आविः प्रकाशमानः सदा क्षेत्रज्ञस्य साक्ष्यो दृश्यो भवति। स्थूलसूक्ष्मो जाग्रत्स्वप्नस्वरूपः मनसः संसारहेतुत्वमुपसंहरन् मोक्षस्यापि तदेव कारणमित्याह। तस्मादिति। अदो मनः लिङ्गं कारणं गुणत्वं गुणाभिमानित्वमगुणत्वं तद्राहित्यं तदेव परमवरं च तस्य ॥ ७ ॥

कथमेकमेव विलक्षणयोः कारणमवस्थाभेदादित्याह। गुणेति। नैर्गुण्यं निर्गुणमथो इति कार्त्स्न्येन दृष्टान्तेन स्फुटयति। यथेति। अन्यदा तु घृतक्षये स्वं पदं शुक्लभास्वररूपं महाभूतात्मत्वं वा अन्यत्रान्यदा ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं देहगतानां परिश्रमस्थौल्यादीनां सत्यानामेव देहात्मभ्रान्त्यात्मनि प्रतीयमानानामपि वस्तुत आत्मन्यभावे निराक्षेपं मयाभिहिते सत्ययं प्रपञ्चानित्यत्वं मिथ्यात्वं मयाभिहितमिति भ्राम्यन् क्रियाकारित्वहेतुना घटादीनामिव तेषां सुखदुःखाद्यर्थक्रियाकारित्वेन सत्यतामुपपादयन्न कुशलः असत्यत्वेऽभिहिते सत्यत्वोपपादनं युक्तिमदन्यथान्यत्र गतानामन्यत्र प्रतीतेर्भ्रमरूपत्वे कथिते तेषां सत्यत्वोपपादनवैयर्थ्यात् तथा देहसम्बन्धादात्मनि तेषां प्रतीतिर्न वस्तुत इत्युक्तेः पुनर्देहादिसम्बन्धादात्मनि परिश्रमादिप्रयुक्तसुखदुःखादिप्रतीतिरिति वदन्नयं न निपुणः उक्तस्यैव पुनराक्षेपत्वेनोक्तेः तथा जीवानां मिथः स्वस्वामिभावस्यौपाधिकत्वे कथिते पुनस्तस्य स्वाभाविकत्वाभिमानेन स्वस्य दण्डनेतृत्वं साधयन्नयं न निपुण इत्यभिप्रायेणाह। अकोविद इति। विविक्तात्मपरमात्मयाथात्म्यज्ञानरहित एव त्वं कोविदवादवादान् कोविदवाक्यतुल्यानि वाक्यानि वदस्यथोऽत्यन्तविदुषां मध्ये श्रेष्ठो न भवसि कुतः हि यस्मादेतं व्यवहारं देहात्माभिमानस्वतन्त्रात्माभिमानप्रयुक्तं पीनत्वयुवत्वदूरगन्तृत्वादिव्यवहारमात्मविषयं देहिनां परस्परं स्वस्वामिभावादिव्यवहारमन्यच्च सर्वं सूरयस्तत्त्वयाथात्म्यविदः तत्त्वावमर्शेन तत्त्वविचारमूलकेन न समामनन्ति न सम्यग्वदन्ति न परमार्थत्वेन गृह्णन्तीत्यर्थः सहामनन्तीति पाठे तत्त्वविचारेण सह न वदन्ति किन्त्वविचारितसुन्दरं वदन्ति सूरयो न समामनन्ति इत्यनेन निरन्तरमध्यात्मशास्त्रपरिशीलनवतामात्मपरमात्मयाथात्म्यज्ञाननिष्ठानां अस्मिन्देहात्मभ्रान्त्यादिमूले व्यवहारेऽपारमार्थ्यज्ञानं तद्विपरीतानां त्वस्मिन् पारमार्थ्याभिमानश्चेति सूचितम् ॥ १ ॥

तत्र तेषां तदभिमाने हेतुस्तत्त्वत्रयस्वरूपस्वभावप्रतिपादकवेदान्तशास्त्रार्थापरिशीलनमेवेति वक्तुं तावत् शास्त्रस्तुतयं पूर्वभागस्यातत्त्वावेदकत्वमाह। तथैवेति। तथाहि हे राजन् उरवो बहवः गार्हमेधाः गृहमेधिसम्बन्धिनो वितानाः यज्ञादिकर्मविस्तारास्तद्विषयविद्यया उरु भृशं विजृम्भितेषु विलसितेषु वेदवादेषु वेदरूपेषु उक्तेषु वेदपूर्वभागेषु तत्त्ववादः शुद्धो निर्णयात्मकः अत एव साधुः प्रायेण न चकास्ति न प्रकाशते प्रायेणोक्त्येश्वराराधनत्वेन कर्म कुर्वतां रोचते एवेदमुक्तं देहातिरिक्तस्य फलभोक्तृत्वमात्रं ज्ञायते न तु स्वरूपं शोध्यते इत्यर्थः यद्वा तत्त्वस्य वाद उक्तिर्यस्मिन् स तत्त्ववादः तत्त्ववादीत्यर्थः एवं वेदवादेष्वित्यत्रापि वेदशब्दस्तत्पूर्वभागपरः पूर्वभागवत्तदर्थवादिषु उत्तरभागार्थवादी न सम्यक् प्रकाशत इत्यर्थः कर्मस्वेव रुचिमतां ज्ञाने रुचिं नोत्पादयितुं शक्नुयादिति भावः ॥ २ ॥

श्रुतवेदान्तस्याप्यविरक्तस्य न तैस्तत्त्वावबोध इत्याह। नेति। स्वप्ने स्वप्नपदार्थे निरुक्त्या व्याख्यानेन स्वप्नसुखस्याल्पास्थिरत्वावगमेनान्यदपि गृहमेधिन ऐहिकामुष्मिकसुखं यस्य हेयत्वेनानुमितं न स्यात्तस्य सांसारिकदुःखविरक्तिविरहाद्वा तत्र संसक्तस्य साक्षाद्यथावत्तत्त्वज्ञानाय वरीयसी वरीयस्यः गरीयस्योऽपि वेदान्तवाचः सम्यङ्नासन् वेदान्तैर्न तत्त्वावबोध इत्यर्थः स्वप्नदृष्टान्तेन गृहमेधिसौख्यस्य हेयत्वानुमानं तत्त्वावबोधकारणं क्षुद्रसुखासक्तिमूलकमित्युक्तम् अनेन गृहसौख्यस्य हेयत्वाध्यवसाये तत्त्वज्ञानोदय इति फलितम् ॥ ३ ॥

तत्र गुणत्रयोपरागेण कुशलाकुशलकर्मोत्पादनद्वारोच्चावचदेहसम्बन्धमापादयन्मन एवाल्पास्थिरसुखासक्तिजननद्वारा तत्त्वज्ञानप्रतिबन्धकं संसृतिकारणं तदेव च गुणत्रयाकल्पितं सज्ज्ञानजननद्वारा मुक्तिहेतुश्चेत्याह। यावदिति सार्धैः पञ्चभिः। यावदस्य पुरुषस्य मनो रजआदिभिरनुबद्धम् उपरक्तं भवति तावदनिरङ्कुशं सत्त्वचद्गुणानुसारेण चेतोभिर्ज्ञानेन्द्रियव्यापारैराकूतिभिः कर्मेन्द्रियव्यापारैश्च हेतुभूतैर्ज्ञानेन्द्रियकर्मभिः पुण्यापुण्यरूपैः कुशलमुत्कृष्टमितरं निहीनं वा देहगतं तनोति सम्पादयति ॥ ४ ॥

एतदेव प्रतिपादयति। स इति। पुंस्त्वमात्मशब्दविशेषणत्वेन तन्मन इत्यर्थः सवासनात्मा वासनाधीनस्वरूपः विषयोपरक्तः शब्दादिभिरुपरक्तः गुणैः सत्त्वादिभिः प्रवाहः प्रवृत्तिर्यस्य स गुणप्रवाहः पञ्चभूतैकादशेन्द्रियरूपषोडशकलेष्वात्मा प्रधानः नामभिर्वाचकशब्दैः सह रूपभेदं देवमनुष्यस्थावरजङ्गमसंस्थानरूपाकारभेदं बिभ्रद्देवमनुष्यत्वादिकमात्मनो बहिष्ठं आन्तरं रागादिकं च गुणैः सङ्कल्पविकल्पात्मकैर्ज्ञानैस्तनोति आत्मानं देवोऽहं मनुष्योऽहमिति ज्ञापयतीत्येवं रूपबुद्धिभिश्चोपाध्याकारयुक्तं करोतीत्यर्थः। यद्वा गुणैः सङ्कल्पविकल्पात्मवृत्तिभेदैः रूपभेदमनेकरूपतां बिभ्रत्सवासनात्मान्तर्गतरागादिकं बहिर्गतदेहादिकं नामभिः सह तनोति अत्र पुरैस्तनोतीत्यपि पाठो दृश्यते तदायमर्थः पुरुषस्य मनो यावद्रजआदिभिरनुविद्धं सन्निरङ्कुशं यथा भवति तथा ज्ञानकर्मेन्द्रियैर्गुणानुसारेण पुण्यापुण्यरूपव्यापारमापादयति तावदयं स्वतोऽविकृतोऽपि पुरुषः

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नवासनाधीनस्वरूपान्तःकरणयुक्तः अत एव वासनावशाद्विषयेष्वनुरक्तः विषयासक्तः गुणप्रवाहः गुणैः प्रवाहः प्रवृत्तिर्यस्य गुणानुरूपप्रवृत्तिमान् ततः पञ्चभूतैकादशेन्द्रियरूपषोडशपदार्थानामात्मा धारकः सन् अविश्लिष्टरूपसूक्ष्मदेह इत्यर्थः नामभिः सह देवमनुष्यादिरूपभेदं बिभ्रत्तैः पुरैः शरीरैः पुनरन्तर्गतरागद्वेषादिकं वाहिष्ठं बाह्यं च कर्मगुणानुसारेण पुण्यापुण्यरूपं करोति ॥ ५ ॥

तदनुरूपमीश्वरादिष्टं फलं च प्राप्नोतीत्याह । दुःखमिति । एवंविधं यत्संसृतिचक्रं तस्मिन्कूटवत् पर्वतशृङ्गवदविचाल्यतया वर्तमानः मायारचितान्तरात्मा प्रकृतिपरिणामरूपान्तःकरणवान् स्वदेहिनं स्वशरीरिणं परमात्मानमालिङ्ग्य तमविनाभूयैवान्तःकरणपारवश्यात्स्वदेहिनं परमात्मानमजानन्नपि तच्छरीरतया वर्तमान एवेत्यर्थः । यद्वा स्वः देहो यस्य स स्वदेहस्तमालिङ्ग्येत्यर्थः कालेन दैवादुपपन्नं प्राप्तं दुःखादिकं फलं कर्मफलमाव्यनक्ति आप्नोति व्यतिरिक्तं मोहं तीव्रं दुर्निवारमित्यर्थः अश्निरश्न गत्यर्थः ॥ ६ ॥

यावदेवं तावान् तत्पर्यन्तवानयं स्थूलसूक्ष्मो व्यवहारो व्यवहारस्य स्थूलत्वं सूक्ष्मत्वं च व्यवह्रियमाणाकारस्थूलत्वसूक्ष्मत्वे देवोऽहं मनुष्योऽहं स्थूलोऽहं कृशोऽहमित्यादिबाह्याकारविषयः स्थूलः इच्छामि द्वेष्मि सुख्यहं दुःख्यहमित्याद्यन्तराकारविषयः सूक्ष्मः सदाग्निः क्षेत्रज्ञसाक्ष्यो भवति सर्वदा स्वरूपेणातिरोहितजीवः साक्ष्यो विषयो यस्य तथाभूतो भवति कर्मणा स्वस्वभावसङ्कोचरूपतिरोधाने सत्यपि स्वरूपस्यातिरोधानात्सदाग्निरित्युक्तं सदा आविः स्वरूपेण भासमानो यः क्षेत्रज्ञो जीवः तद्विषय एवायं व्यवहारो देहात्माभिमानात् उक्तमर्थमुपसंहरन्मनस एव बन्धमोक्षकारणत्वं सदृष्टान्तमाह । तस्मादिति द्वाभ्याम् । तस्मान्मनसो गुणानुरक्तादुक्तविधसंसृतिचक्रापत्तेरनुरक्ताच्च तत्त्वज्ञानोदयाद्गुणागुणत्वस्य गुणागुणत्वयोः गुणत्रयसहितत्वतद्रहितत्वयोः संसारमोक्षयोरित्यर्थः "गुणवचनेभ्यो मतुपो लुगिष्टः" इति गुणशब्दो गुणिपरः लिङ्गं हेतुमपि तन्मनो वदन्ति तथा परावरस्य देवादिस्थावरान्तपरावरभावस्य च मन एव लिङ्गं वदन्ति यद्वा । परावरशब्दो व्युत्क्रमेण गुणागुणत्वविशेषणम् अवरं निकृष्टं यद्गुणसहितत्वं परमुत्कृष्टं यद्गुणराहित्यं तयोर्लिङ्गं मन इत्यन्वयः ॥ ७ ॥

तद्विवृणोति । गुणानुरक्तमिति । गुणशब्दस्त्रिगुणपरः त्रिगुणानुरक्तं मनः जन्तोर्व्यसनाय संसाराय नैर्गुण्यममलं मनस्तु क्षेमाय मुक्तये स्यादित्यर्थः निर्गतं गुणान्निर्गुणं तदेव नैर्गुण्यं चातुर्वर्ण्यादेराकृतिगणत्वात्स्वार्थे ष्यञ् मनसो मलिनत्वे विमलत्वे च दृष्टान्तमाह । यथेति । घृतवर्ति घृतावसिक्तां वर्तिमश्नन् प्राप्नुवन् सधूमां शिखां भजति अन्यदा घृतानवसिक्तवर्तिगतः स्वं परं रूपं धूमानाविलं भजति तथा गुणकर्मानुबद्धं गुणानुसारिभिः पुण्यापुण्यकर्मभिः कलुषितं मनः प्रदीपस्थानीयं शिखास्थानीया धूमतुल्या रागद्वेषाद्यावृता वृत्तीर्भजते अन्यत्र गुणत्रयेणाकलुष्ये सति तत्त्वं स्वस्वभावं सत्त्वप्राचुर्यं तां श्रयते प्राप्नोति । यद्वा तत्त्वं श्रयते तत्त्वावभासस्तदा स्यादित्यर्थः ॥ ८ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्मिन्नध्याये हेयत्वेन प्रथमतो वक्तव्यत्वेन संसारं निरूप्य तन्निवर्तकसाधनं निरूपयति प्रथमतस्तदुक्तमाक्षिपति अकोविद इति । राजंस्त्वमकोविदोऽपण्डितः कथं पण्डितवद्वदसि यत्कोविदानां पण्डितानां वादवद्वचनवदप्रमाणवादान् वचनविशेषान् ब्रूष इति यस्मात्तस्मात्स्वधर्मेणा च्युतस्येत्यादिवदतो ममापाण्डित्यं कथमत्राह । नातिविद्भिक्षुकश्रुतगलोपरिवक्तृत्ववद्वक्तृत्वान्नातिविदां दृष्टवक्तत्त्वज्ञानां मध्ये गणनीयत्वेन वरिष्ठः न हि हेतुवादात् प्रपञ्चमिथ्यात्वे प्रयुक्तान् दृश्यत्वादिहेतून् प्रयुञ्जान आत्मकोविदो भवति कुतस्तरां वरिष्ठः कुतो वचसामाभासत्वं न सूरय इति । सूरयः सर्वज्ञाः शब्दतत्त्वज्ञाः एवं व्यवहर्तुर्भवतश्चानुमन्ये । शास्ताधिगोप्ता नृपतिः प्रजानां स्वपारपयसोऽभितापस्तत्तापतस्तण्डुलगर्भरन्धिः" इत्यादिवदर्वमर्शन यथास्थितवस्तुस्वरूपविचारेण सह नामनन्ति देहस्य हि मे न सन्ति विशेषबुद्धेर्विवरं मनाक्च पश्यामीत्यस्यार्थापरिज्ञानाद्विजृम्भितमिति एतद्विशब्देनाह । अतः कटाक्षेणाप्यनभिवीक्षितत्वादुपेक्षणीयस्त्वयं पक्ष इति ।

ननु माभूत्सूरिभिरामननं वेदैः किं न स्यादिति तथेति । यथा सूरिसिद्धान्ते त्वद्व्यवहारो न चकास्ति सं ज्ञलदच्छमणिवदल्पबुद्धीनां वेदानां वादेषु मुख्यमानार्थप्रतिपादकलक्षणेषु वाक्येषु तत्त्ववादः परब्रह्मयज्ञानसिद्धान्तो नानु चकास्ति न प्रकाशते कथं न चका उक्तं शुद्ध इति । „स्वर्गकामो यजेत„इत्यादिकर्मप्रतिपादकानां विदाप्नोति परम्"इति ब्रह्मज्ञानप्रतिपादकानां च वाक्यानां कपत्वं तथा न प्रकाशत इत्यर्थः कस्मात्तथा न प्रकाशनमत्राह गार्हमेधेति । उरु विस्तीर्णे गार्हमेधं गृहस्थसम्बन्धिवितानं तत्प्रतिपादकयां विद्यया उरुधा विजृम्भितेषु सम्यगुद्बोधेष्वल्पबुद्धीनां न प्रतीयते ततो महाबुद्धीनां प्रकाशत इत्यर्थः "न वेदेष्वल्पबुद्धीनां ब्रह्म तत्त्वं समीक्ष्यते । महाबुद्धिस्तु वेदेषु ब्रह्मैव केवलम्"इति वचनात् अल्पबुद्धीनां बाहुल्याभिप्रायेणेति अयोग्यानामयमेवार्थ इत्यस्मिन्नर्थे एवशब्दः "वादो वक्तृत्वं मुखतो वचनं स्मृतम्„इत्यभिधानं कर्मपराणां तत्र विभाग इतरेषामितर एव शुद्धः किं न स्यादिति साध्वीति । एकवाक्यत्वकरणमेव साधु नान्यदित्यर्थः ॥ २ ॥

पुरुषार्थबोधकत्वेन प्रवृत्तस्य वेदस्य सर्वस्य पुरुषसर्वसाधारणस्य केषांचित्तत्त्वप्रकाशकत्वं केषांचिन्नेति वैषम्यादिदोषापत्तेरित्याशङ्क्य पुरुषदोषादिदमित्याह । न वरीयसीः वरीयस्योऽपौरुषेयत्वेन प्रशस्ता वेदान्तगता स्तस्य पुरुषस्य साक्षात्तत्त्वग्रहणाय पुरुषार्थोपयोगि न समासन्न सम्यगभवन्नित्यन्वयः तच्छब्देनोक्तं यच्छब्देनापेक्षितं स्वप्न इति । यस्य पुरुषस्य गृहमेधिसौख्यं स्वप्ने स्वप्नदृष्टान्तेन स्वयमेव स्वत एव हेयत्वेनानुमितं न स्यादित्यन्वयः स्वप्नसुखवज्जाग्रत्सुखं हेयमिति लिङ्गज्ञानं न स्यात् अनेन विषयराग एव वेदान्तवाक्योक्ततत्त्वज्ञानानुदये कारणं नान्यदित्युक्तं भवति ॥ ३ ॥

ननु हेयानुमितत्वे किं कारणमित्यतो रहूगणस्याज्ञानख्यापनाय तन्निरूपितादन्यथा संसारस्वरूपं निरूपयति

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यावत्पुरुषस्य मनो रजआदिगुणैरनुरुद्धं गुणवशत्वेन स्थितं तावत्पर्यन्तं चेतोभिर्बुद्धिवृत्तिभिरत एवाकूतिभिर्विषयसुखेच्छाभिः पूर्वानुभवसंस्कारैर्वा निरङ्कुशः शास्त्रविधिमुत्सृज्य वर्तमानो यः पुरुषः कुशलाकुशलयोरेकतरमातनोतीत्यन्वयः ॥ ४ ॥

कुशलाकुशलकर्मभ्यां किं फलमापादयतीति तत्राह । स वासनात्मेत्यादिश्लोकद्वयेन । स मायारचितान्तरात्मा प्रकृतिनिमित्तं मनः पृथङ्नामभिः स्वपुरैः स्वस्य जीवस्य सुरनरतिर्यगादिदेहे रूपभेदं सुरनरतिर्यगादिदेहभेदं चित्रं बहुविधं तनोति अन्तरात्मानं विशिनष्टि । वासनात्मेति । नानाकर्मवासनामयः गुणानां प्रवाहो यस्मिन् स तथा षोडशात्मा दशेन्द्रियाणि पञ्च प्राणाः स्वयमेकं मन एवं षोडशभेदेन विकृतः अन्तर्बहिष्ठः वासनारूपेणान्तःस्थितं विषयरूपेण बहिःस्थितं संसृतिचक्रस्य कूटं राशिर्यस्मिन् स तथा तं स्वदेहिनमालिङ्ग्य वशीकृत्य सुखं दुःखं वा व्यतिमिश्रं सुखमिश्रं दुःखं दुःखमिश्रं सुखं फलं च व्यनक्ति व्यञ्जयतीत्यन्वयः ॥ ५—६ ॥

यावानहंममेत्यभिमानस्तावानयं व्यवहारः संसारः सुखदुःखलक्षणः अभिज्ञाभिवदनादिलक्षणो वा भवति ननु मनसः प्रवर्तकत्वाङ्गीकारे प्रवृत्तेर्भगवत्कर्तृकत्वं गतं स्यादिति तत्राह । क्षेत्रज्ञेति । क्षेत्रज्ञः श्रीनारायणः साक्षी प्राणः ताभ्यां प्रेरितेन मनसा जीवः संसारमनुभवतीत्यर्थः "क्षेत्रवित्तु हरिः प्राणः साक्षी ताभ्यां पुमान्सरेत्" इति वचनादुक्त एवार्थः स्थूलसूक्ष्मदेहविषयः "मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इत्यभिप्रेत्योपसंहरति । तस्मान्मन इति । यत एवं श्रीहरिकटाक्षाक्षितमनसा संसारस्तस्माददो मनः परावरस्य पूर्वोत्तरकाले वर्त्तमानस्य गुणागुणस्य मुख्यकर्तृ हरेः प्रवृत्तौ गुणभूतस्य स्वतः सत्त्वादिगुणभुक्स्यास्य जीवस्य संसृतौ लिङ्गं हेतुं वदन्ति अयं व्यलीको नेत्याह । सदेति । वा इत्यनेन हेतुभूतं प्रमाणं सूचयति ॥ ७ ॥

एकस्योभयहेतुत्वं कथमत्राह । गुणेति । गुणानुरक्तं विषयाभिनिविष्टं गुणानां विषयाणां समुदायो गुण्यं निर्गतं विषयजाताद्यत्तन्निर्गुण्यं ब्रह्म तत्सम्बन्धि नैर्गुण्यं "केवलो निर्गुणश्च,, इति श्रुतेः सत्त्वादिगुणरहितं तत्सम्बन्धि वा नैर्गुण्यं क्षेमाय मोक्षाय मनोनिमित्तं भवतीत्यर्थः उभयत्रापि दृष्टान्तमाह । यथेति । घृतेन सह वर्तमानां वर्तिमास्थितो ग्रसमानः प्रदीपो यथा सधूमांशिखां शिखालक्षणां भजति धूमसाहित्येन सम्यक् ज्वलतीत्यर्थः अन्यदा घृतवर्त्यभावे स्वरूपं तेजोमात्रलक्षणं निजस्वरूपलाभेन सम्यक् प्रकाशितो भवति घृतवर्तिग्रासाभावे निर्मलीकस्वप्रकाशलक्षणं स्वरूपं भजतीति वा हिशब्देन लोकदृष्टं प्रमाणयति तथा सत्त्वादिगुणैः पूर्वसञ्चितैः कर्मभिश्चानुबद्धं पृष्ठबन्धनग्रासचोरवन्मनो बहिः ( १ ) पदं विषयं शब्दादिलक्षणं श्रयते सेवते पुनः पुनरुत्पन्नप्रवृद्धरागादिदोषान्धीकृतमिदमेव श्रेयो नान्यदिति निर्धार्य वर्तत इत्यर्थः अन्यत्र तुच्छीकृतविषयसंपर्के तत्त्वमनारोपितं ब्रह्मस्वरूपं श्रयते निरस्तरागादिदोषत्वेन निर्मलं मनोऽनादिमत्परं ब्रह्मेति स्मृतिबलादिदमेवानावृत्य नश्वरं श्रेयोऽन्यदनश्वरं दुःखाकरमिति निश्चित्य तदेकनिष्ठं भूत्वा वर्तत इति भावः अतो विरुद्धधर्माक्रान्त्या त्वेकस्य मनस उभयत्र प्रवृत्तिर्न घटत इति दोषो निरस्तो भवत्यनेनेति सिद्धम् ॥८॥

(१) पदत इति पदं विषयमित्यर्थः ।

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वप्ने निरुक्त्येति । भवणात् पूर्वं व्यवहारवैराग्यं तर्कदृष्ट्यापेक्ष्यत इत्यर्थः ॥ १—५ ॥

मायारचितान्तरात्मेति । श्रीवेदव्याससमाधिवाक्यानुसारेण भयं द्वितीयाभिनिवेशतः स्यादित्याद्यनुसारेण च क्षेत्रज्ञ एता मनसोविभूतीत्यस्य वक्ष्यमाणवाक्यानुसारेण व्याख्याय प्रकरणस्यास्य सिद्धान्तक्रमः समाधेयः ॥ ६—८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मनसैव हि संसारो यद्वृत्तीनामनन्तता ।
एकादशेऽत्र तेनैव मोक्षो भक्तियुजादितः ॥

त्वं कोविदो न भवसि अथ च कोविदानां ये वादा उद्ग्राहास्तत्तुल्यानेव वादान् वदसि अथो अत एव अत्यन्तं विदुषां मध्ये श्रेष्ठो न भवसि । यतः सूरयः कोविदा एनं व्यवहारं व्यावहारिकं वस्तु च तत्त्वावमर्शेन तत्त्वविचारेण तत्त्ववस्तुना च सह न आमनन्ति दृष्टान्तादिना नाभ्यस्यन्ति । तयोः परस्परातिवैधर्म्यात् तथाहि स्थाल्यग्नितापात् पयसस्तापस्तत्तापात्तण्डुलताप इति तण्डुलस्य जडस्य स्थाल्यादिभिर्जडैर्वह्निनापि जडेन यथा संसर्गस्तथा देहेन्द्रियादिभिर्जडैर्मुक्तजीवस्य चिद्वस्तुनः संसर्गाभावादेव देहादिधर्मैर्न भ्रमः सिद्ध्यति । बद्धजीवस्य तु जडदेहाध्यासाज्जडत्वेन तैर्भवत्येव भ्रम इति बद्धजीवैर्युष्माभिर्मुक्तजीवानामस्माकं साद्दृश्यासम्भवादनुमानं न घटत इति ॥ १ ॥

ननु मीमांसकाः कर्मफलात् स्वर्गसुखादतिरिक्तं पुरुषार्थं न मन्यन्त इत्यतः किं तत्त्ववादेनेति चेत् सत्यं तेष्वनधिकारिषु तत्त्वोपदेशो नैव समुचित इत्याह । तथैवेति । यथैव भवादृशानां दृष्टफलेषु व्यवहारकर्मसु तथैव उरवो गाढा गृहसम्बन्धिनो मेधा यज्ञास्तेषां वितानो विस्तारस्तद्विषयासु विद्यासु उरु अधिकं विजृम्भितेषु विलसितेषु वेदवादेष्वदृष्टफलेष्वपि कर्मसु नु निश्चितं तत्त्ववादो न चकास्ति न प्रकाशते शुद्धः कुतः हिंसादिशून्यः साधुः रागादिशून्यश्चेति साजात्याभावादेवेत्यर्थः प्रायेणेति ईश्वरार्पितनिष्कामकर्मणां ज्ञानवैराग्यद्वारा परमार्थफलत्वाभिप्रायेणोक्तम् ॥ २ ॥

ननु कर्मिणस्तांस्तत्त्वं ग्राहयितुं का चिन्ता युक्तिरस्मि किम्वा तान्नोपदिशाम इति केवलं प्रौढिवाद एवेत्यत आह । नेति । तस्य जनस्य साक्षाद्यथावत्तत्त्वग्रहणार्थं वरीयस्योऽपि वेदान्तवाचः न सम्यगासन् न समर्था बभूवुः । स्वप्ने भोगानां स्वल्पकालमात्रस्थायित्वं स्वप्नस्य स्वतो विनाशित्वं मिथ्यात्वञ्चेति या निरुक्तिस्तया स्वप्नदृष्टान्तेनेत्यर्थः । स्वयमेव हेयत्वेनानुमितं यस्य न स्यात् कर्मिणां नश्वरमसार्वकालिकं क्षुद्रं वैषयिकमेव सुखं तथा वैषयिकेण सुखेनात्मनो वस्तुतः सम्बन्धाभावात् तत् सुखमात्मनः शशस्य शृङ्गमिव मिथ्याभूतञ्च ज्ञानि-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नान्श्वनश्वरं सार्वकालिकं महद्ब्राह्म सुखमिति वहेवान्तरमित्येवं तत्त्वग्रहणे युक्तिरिति भावः ॥ ३ ॥

नन्वेवं सद्भिः प्रबोधिता अपि प्रायः सर्वे जना वैषयिके सुख एव प्रवर्त्तमानाः कथं दृश्यन्ते तत्राह । यावन्मनो रजआदिभिरनुरुद्धं संबद्धं भवति तावत्तन्मनो निरङ्कुशमत्तमतङ्गजोपमं सत् पुरुषस्य कुशलं धर्ममितरमधर्मं वा आतनोति. कैः चेतोभिर्ज्ञानेन्द्रियैः आकूतिभिः कर्मेन्द्रियैश्च गुणमयं मन एव बलाद्विवेकादिकमपि निगीर्य पुण्यपापकर्मणोः प्रवर्त्तयति पुरुषस्य को दोष इति भावः ॥ ४ ॥

ततश्च सवासनात्मा पुण्यपापवासनायुक्त आत्मा मनः विषयैरुपरक्तोऽनुविद्धः अत एव गुणप्रवाहः गुणैरितस्ततश्चाल्यमानः अत एव विकृतः कामादिविकारवान् षोडशेषु भूतेन्द्रियेषु मुख्यः रूपभेदं देवतिर्यगादिशरीरभेदं बिभ्रत् दधत् पुरैस्तैरेव शरीरैर्देहभिः अन्तर्बहिष्ट्वमुत्कृष्टत्वं निकृष्टत्वञ्च तनोति नामभिरिति रेफलोपे दीर्घाभाव आर्षः ॥ ५ ॥

फलञ्च तदनुरूपं सृजतीत्याह । दुःखं सुखं व्यतिरिक्तं मोहञ्च तीव्रं दुर्निवारं व्यनक्ति सृजति ननु जडः कथं सृजति तत्राह । स्वदेहिनं जीवात्मानमालिङ्ग्य आलिङ्गने कारणमाह । मायया रचितः अन्तरात्मा जीवोपाधिः उपाधितामाह । संसृतिचक्रे कूटयति छलयतीति तथा यथा ग्रामकूटक इति ॥ ६ ॥

एवमयं मनोनिबन्धनः संसार एव व्यवहारपदवाच्य इत्याह । तावानिति । आविः प्रकाशमानः सदा क्षेत्रज्ञस्य साक्ष्यो दृश्यः स्थूलो जागरः सूक्ष्मः स्वप्नश्च तत्त्वपदवाच्यमात्मसुखमपि मनोनिबन्धनमेवेत्याह । तस्माददो मन एव लिङ्गं कारणं कस्य गुणस्य संसारस्य अगुणत्वस्य मोक्षस्य च तौ च संसारमोक्षौ कस्य स्यातामित्यत आह । परावरस्य उत्कृष्टनिकृष्टजनमङ्गस्य पाठक्रमो नात्र विवक्षितः निकृष्टस्य संसारो भवति उत्कृष्टस्य तु मोक्ष इत्यर्थः ॥ ७ ॥

कथमेकमेव विलक्षणयोः कारणमवस्थाभेदादित्याह । गुणेति सार्द्धेन । नैर्गुण्यं निर्गुणमन्यदा घृतक्षये सति निर्वाणो भूत्वा स्वं पदं महाभूतात्मत्वं भजति अन्यत्र अन्यदा । यद्वा घृतवर्त्तिमश्नन्नेवाग्निः सधूमाः शिखा भजति अन्यदा काञ्चनपिण्डमश्नंस्तु स्वपदं निर्धूमतेजःस्वरूपं तथैव मनोऽपि तत्त्वं भगवन्माधुर्यास्वादम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकादशे रहूगणोक्तं बालभाषितमिवानादृत्य प्रसङ्गतो मुनिः बन्धमोक्षयोः कारणं मन एवेत्याह । अकोविद इति । अकोविदः सिद्धान्तानभिज्ञः कोविदवादाः यत् सर्वस्य ब्रह्मात्मकानुसन्धानवत्त्वेन प्रावण्यं तद्विषयकाः शब्दास्तत्तुल्यान् वादान् शब्दान् वदसि अथो अतो विदां मध्ये अतिवरिष्ठो नासि एतं नरदेवनरादिस्वस्वामिभावरूपं व्यवहारं तत्त्वावमर्शेन ब्रह्मविचारेण सह न आमनन्ति ब्रह्मविचारवदादरणीयं न वदन्ति ॥ १ ॥

तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति भगवत्या श्रुत्योक्तो यः परमानन्दसाधने कर्मणस्योपयोगस्तस्मृते सर्वोऽपि कर्मकाण्डोऽनित्यफलविषयः [illegible] हेतुर्नतु तत्त्वप्रस्तावे योजितुं योग्य इत्याह । तथैवेति । उरवो [illegible] गृहसम्बन्धिनो मेधा यज्ञास्तेषां वितानो विस्तारस्तत्र [illegible] विजृम्भितेषु बहुविलसितेषु वेदवादेषु तत्त्ववादः शुद्धः [illegible] स्वरूपतश्च निर्दोषः साधुर्मुमुक्षूपादेयः नु निश्चितं न [illegible] न प्रकाशते प्रायग्रहणं विविदिषावाक्योक्तप्रकारं विनिर्दि[illegible]यति ॥ २ ॥

नन्वध्ययनविध्युपात्ता वेदान्तवाचः सर्वेषां विविदिषो[illegible] [illegible]दिना कुतो न तत्त्वज्ञानदाः स्युरित्यत आह । नेति । यस्य [illegible] स्वप्ने या निरुक्तिः नितरां क्रियमाणानित्यतोक्तिस्तया गृहे[illegible] ख्यं हेयत्वेनानित्यत्वेन हेतुना अनुमितं न स्यात्तस्य साक्षा[illegible] त्त्वग्रहणाय वरीयस्योऽपि वेदान्तवाचः न सम्यगासन् [illegible] गस्तु कर्मफलं गृहमेधिसौख्यमनुपादेयम् अनित्यत्वात् स्वप्न[illegible]दिति ॥ ३ ॥

ननु कस्यचिद्वरीयस्यो वाचस्तत्त्वग्रहणाय न समा[illegible] तस्य संसारित्वं दर्शितं तत्र कः संसारहेतुः अर्थात् यस्य तु [illegible] ग्रहणाय स्युः स मुक्त्यधिकारी तत्र च को मुक्तिहेतुरित्या[illegible] मन एवेत्याह । यावदिति सार्द्धैः पञ्चभिः । रजआदिभिः पुरु[illegible] यावदनुरुद्धं व्याप्तमत एव निरङ्कुशं दुर्निग्रहं सत् तावत् कु[illegible] सत्त्वव्याप्तम् इतरमधर्मं तमोव्याप्तं चकाराद्रजोव्याप्तं [illegible] तोभिर्ज्ञानेन्द्रियैः आकूतिभिः कर्मेन्द्रियैश्च आतनोति समन्ततो [illegible]रयति ॥ ४ ॥

तदेवं धर्मादिवासनायुक्तं नानादेहप्रापकं भवतीत्याह । [illegible] पुंस्त्वमात्मशब्दविशेषणत्वात् वासनानामात्माश्रयः [illegible] सनायुक्त इत्यर्थः विषयोपरक्तो विषयासक्तः गुणप्रवाहः [illegible] श्चाल्यमानः विकृतः अनेकशाखः षोडशात्मा लिङ्गशरीरं [illegible] पृथङ्नामभिः सह पृथक् रूपभेदं देवमनुष्यपश्वादिरूपभेदं [illegible] अन्तर्बहिष्ट्वमुत्कृष्टत्वं निकृष्टत्वं च पुरैस्तैरेव देहैश्च [illegible] विस्तारयति नामभिरित्यत्र "ढूलोपे पूर्वस्य दीर्घोऽणः" इति [illegible] आर्षः ॥ ५ ॥

दुःखादिकं फलं चाव्यनक्ति प्राप्नोति व्यतिरि[illegible] तीव्रं क्रोधादिकं च ननु जडः कथमातनोति तत्राह । [illegible] जीवमालिङ्ग्येति यतः मायारचितः प्रकृतिपरिणामभूतः [illegible] रात्मा अन्तःकरणमेवात्मा जीवेन मायामोहितेनात्म[illegible] तमित्यर्थः अत एव संसृतिचक्रं जन्ममरणचक्रं कूटयति [illegible] हान्तरं गच्छन् छलयतीति तथा एकत्र स्थिरो न [illegible] त्यर्थः ॥ ६ ॥

यावदेष तावान् अयं प्रसिद्धः व्यवह्रियते इति [illegible] संसारः क्षेत्रज्ञसाक्ष्यः जीवस्य दृश्यः जीवभोग्य इत्यर्थः [illegible] सूक्ष्मः सूक्ष्मसंहार्यरूपःकस्य चिन्मुमुक्षोर्मुक्तस्येऽपि अन[illegible] व्याप्तत्वात्सदाविः सर्वदा प्रकाशमानः सृष्ट्यनन्तरस्[illegible] प्रलयानन्तरं सूक्ष्मरूपेण च न केवलं मनः संसारका[illegible] संसारमोक्षयोरुभयोः कारणमित्याह । गुणत्वमुपादेयत्वं [illegible] भावः अगुणत्वमनुपादेयत्वं संसारभावः तयोः सम[illegible] तस्य तद्द्वयं क्रमादाह । परावरस्येति । अदो मनः लिङ्गं [illegible]

गुणानुरक्तं विषयासक्तं व्यसनाय संसाराय निर्गुणं [illegible]

एकादशासन्मनसो हि वृत्तय आकूतयः पञ्च धियोऽभिमानः ।
मात्राणि कर्माणि पुरं च तासां वदन्ति हैकादश वीर ! भूमीः ॥ ९ ॥
गन्धाकृतिः स्पर्शरसश्रवांसि विसर्गरत्यर्त्यभिजल्पशिल्पाः ।
एकादशं स्वीकरणं ममेति शय्यामहं द्वादशमेक आहुः ॥ १० ॥
द्रव्यस्वभावाशयकर्मकालैरेकादशामी मनसो विकाराः ।
सहस्रशः शतशः कोटिशश्च क्षेत्रज्ञतो न मिथो न स्वतः स्युः ॥ ११ ॥
क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचितस्य नित्याः ।
आविर्हिताः क्वापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः ॥ १२ ॥
क्षेत्रज्ञ आत्मा पुरुषः पुराणः साक्षात्स्वयंज्योतिरजः परेशः ।
नारायणो भगवान् वासुदेवः स्वमाययाऽऽत्मन्यवधीयमानः ॥ १३ ॥
यथानिलः स्थावरजङ्गमानामात्मस्वरूपेण निविष्ट ईशेत् ।
एवं परो भगवान् वासुदेवः क्षेत्रज्ञ आत्मेदमनुप्रविष्टः ॥ १४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदेवं नैर्गुण्यं स्वार्थे व्यत्र् क्षेमाय परमपुरुषध्यानपूर्वकतत्पादप्राप्ति-रूपमोक्षाय च मनः स्यात् निर्मलं मनः परमपुरुषध्यानार्हं भवति मनस्तस्य निर्मलं रूपं दृष्टान्तेन स्फुटयति यथा प्रदीपः घृतयुक्तां वर्तिमश्नन् सधूमाः शिखा भजति मलिनवृत्तिमान् भवतीत्यर्थः अन्यदा तु घृतवर्त्तिक्षये स्वं पदं महाभूतावस्थाख्यं शुद्धं रूपं प्राप्नोति एवं विषयसेवनार्थं कर्मासक्तं सत् मलिनाः वृत्तीर्भजते अन्यदा विषयपरित्यागे निर्मलं सत् परमपुरुषध्यानार्हं तत्वं शुद्धं निजरूपं भजते ॥ ८ ॥

भाषाटीका ।

ब्राह्मण श्रीभरतजी बोले तुम पण्डित नहीं हो परन्तु पण्डितों की सी बातें करते हो तिससे तुम ज्ञानियोंमें श्रेष्ठ नहीं हो जो विद्वान् हैं सो तो इस व्यवहार को तत्त्व विचार के साथ नहीं गिनते हैं ॥ १ ॥

हे राजन् ! इसी प्रकार गृहस्थों के करनेयोग्य जो यज्ञ हैं तिनके विस्तार से युक्त जो वेदवाद तिनमें तत्त्ववाद अति शुद्ध होने से भी अति उत्तम प्रायः नहीं प्रकाशित होता है ॥ २ ॥

जिस पुरुष को स्वप्न के तुल्य यज्ञादि जन्य सुख हेय नहीं है उस पुरुष को साक्षात् वेदवचन भी तत्त्व ग्रहण नहीं करा सकते हैं ॥ ३ ॥

जबपर्यन्त पुरुष का मन रजोगुण से अथवा तमोगुणसे या मिश्रित इन कर्मों को करता रहता है तबतक वह मन निरंकुश होकर ज्ञान कर्म इंद्रियोंसे पुण्य अथवा पाप करता है ॥ ४ ॥

वासना सहित वह मन गुणों के साथ बहता हुआ षोडश प्रकार बाबा भिन्न रूपों को धारण करनेवाला होकर वैदिक अधिकारी अनधिकारी पुरुष को करदेता है ॥ ५ ॥

माया से रचित जो मन है सो जीव को आलिङ्गन कर के संसार चक्र में गत हुआ काल से प्राप्तः सुख दुःख वा अतिरिक्त तीव्र मोह फल को प्रकट करता है ॥ ६ ॥

जबतक यह मन इस पुरुष को भ्रमाता है तभीतक जीव का हृदय यह स्थूल सूक्ष्म प्रपञ्च प्रकाशमान रहता है तिसी से भली बुरी योनी का बन्ध मोक्ष का कारण मन ही है ऐसा महापुरुषों का कथन है ॥ ७ ॥

गुणों में आसक्त जो मन है वह बन्ध का हेतु है गुणरहित मन मोक्षका हेतु है जैसे दीपक घृतकी बत्ती के खाने में धुंआं सहित शिखों को निकालता है खाली रहने से केवल अपने शुक्ल रूपसे रहता है ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वृत्तीर्दर्शयति । एकादश वृत्तय आसन् । आकूतयः क्रियाकाराः पञ्च धियश्च ज्ञानाकाराः पञ्च अभिमानश्चेति हे वीर ! भूमीर्निपयान् ॥ ९ ॥

विषयानेवाह । गन्धादयः पञ्च ज्ञानेन्द्रियद्वारा धीवृत्तीनां विषयाः आकृतिः रूपम् । श्रवः शब्दः विसर्गादयः पञ्च कर्मेन्द्रियद्वारा कर्माकारवृत्तीनां विषयाः रतिः सम्भोगः अर्तिर्गतिः पुरस्याभिमानविषयत्वप्रकारमाह । एकादशं पुरम् । स्वीक्रियत इति स्वीकरणम् अयमर्थः शरीरमभिमानस्य न ज्ञेयतया गन्धादिवद्विषयः नापि कार्यतया विसर्गादिवत् किन्तु ममेति भोगायतनत्वेन स्वीकार्यतया विषय इति । एके तु विवेकिनामेव पुरं ममत्वाभिमानविषयो न तु मूढानामतो मूढदृष्ट्या अहमहङ्कारं द्वादशं वृत्त्यन्तरमाहुः । तस्य च पुरमेव शय्यासंज्ञं द्वादशं विषयमाहुः । तत्र हि जीवोऽहङ्कारेण सह शेते यतः पुरि शयनात्पुरुष इत्युच्यते ॥ १० ॥

तासां वृत्तीनामवान्तरभेदैरानन्त्यमाह । द्रव्याणि विषयाः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वभावः परिणामहेतुः आशयः संस्कारः कर्म अदृष्टं कालः क्षोभकः नैमित्तभूतैः प्रथमं शतशस्ततः सहस्रशस्ततः कोटिशः स्युर्न तु मिथः स्युर्न च स्वतः किन्तु क्षेत्रज्ञतः परमेश्वरात् । तस्य चानन्तशक्तित्वादनन्ताः स्युरित्यर्थः । यद्वा । तासां मिथ्यात्वमनेनोच्यते कोटिशो भवन्त्यतस्ताः क्षेत्रज्ञत एव स्युस्तत्सत्तयैव सत्तां लभेरन्न तु मिथो न च स्वत इति । यद्वा । क्षेत्रज्ञो जीवस्तस्माच्च स्युः तस्याविकारित्वात् न मिथः इतरेतराश्रयत्वापत्तेः न स्वतः आत्माश्रयत्वापत्तेः अतो मिथ्याभूता एव ॥ ११ ॥

तदेवं श्लोकत्रयेण गुणकर्मानुबद्धं मनो वृत्तीः श्रयत इति यदुक्तं तत्प्रपञ्चितम् । अन्यदा तत्त्वं श्रयत इति यदुक्तं तदेव तत्त्वमाह । क्षेत्रज्ञ इति । जीवस्य जीवोपाधेः अविशुद्धकर्तुर्मनसः नित्याः प्रवाहरूपेणाविच्छिन्ना जाग्रत्स्वप्नयोराविर्भूताः पश्यति क्वापि सुषुप्तौ तिरोभूताः पश्यति अवस्थात्रयसाक्षी क्षेत्रज्ञ आत्मा तत्त्वमित्यर्थः ॥ १२ ॥

क्षेत्रज्ञो द्विविधः । त्वंपदार्थो जीवः तत्पदार्थ ईश्वरश्च । तत्राद्यो निरूपितः इदानीं तत्राद्यमीश्वरं निरूपयति । क्षेत्रज्ञ आत्मा व्यापी । पुराणो जगत्कारणभूतः । पुरुषः पूर्णः साक्षादपरोक्षः । स च स्वयंज्योतिः न तु ज्ञानस्य विषयत्वेनाश्रयत्वेन वा परोक्षः अजो जन्मादिशून्यः परेषां ब्रह्मादीनामपि ईशः नारं जीवसमूहः सोऽयनं यस्य नियन्तुः भगवानैश्वर्यादिषड्गुणवान् । वासुदेवः सर्वभूतानामाश्रयः स्वाधीनया माययात्मनि जीवेऽवधीयमानोऽवस्थाप्यमानः । कर्मकर्तरि प्रयोगः । तन्नियन्तृत्वेन वर्तमान इत्यर्थः ॥ १३ ॥

एतत्सदृष्टान्तमाह । यथेति । आत्मस्वरूपेण मायारूपेण ईशो नियमयति । इदं विश्वम् ॥ १४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गुणकलुषस्य मनसो वृत्तीः प्रपञ्चयति । एकादशेत्यादिना । मनसः एकादशवृत्तीर्वृत्तय आसन् ताः का इत्यत्राह । आकृतयः कर्मेन्द्रियाणां व्यापारविषयाः पञ्च धियः क्रियाकारा धियः ज्ञानेन्द्रियद्वारेण पञ्चवृत्तयो ज्ञानाकाराः एकादश सद्वारकाः अहंममाद्यभिमानात्वद्वारकैका संभूयैकादश हे वीर ! तासां वृत्तीनां भूमीर्विषया मात्राणि पञ्च कर्माणि पञ्च पुरम् इत्येकमिति संभूयैकादशेति वदन्ति तत्त्वविदः तत्र मात्राणि गन्धादीनि ज्ञानाकाराणाम् वृत्तीनां विषयाः कर्माणि तु विसर्गादीनि क्रियारूपाणां पुरं त्वभिमानरूपाया इति विवेकः पुरमत्र शरीरं तस्याहंममाभिमानविषयत्वादिति ॥ ९ ॥

ज्ञानकर्मोभयेन्द्रियव्यापारविषयाणि मात्राणि कर्माणि प्रपञ्चयति गन्धेति । गन्धः घ्राणेन्द्रियवृत्तिविषयः आकृती रूपं चक्षुरिन्द्रियवृत्तिविषयः स्पर्शः त्वगिन्द्रियविषयः रसो रसनेन्द्रियविषयः श्रवः शब्दः श्रोत्रेन्द्रियस्य विषयः एवं पायूपस्थपादवाक्पाणिवृत्तीनां क्रमेण विसर्गादयः पञ्च विषयाः तत्र विसर्गः पुरीषोत्सर्गः रतिः संभोगः अर्तिर्गमनमभिजल्पो भाषणं शिल्प आदानादिः गन्धादयः पञ्च ज्ञानेन्द्रियद्वारा मनोवृत्तीनामेव विषयाः तथा विसर्गादयः कर्मेन्द्रियद्वारा मनोवृत्तीनामेव पञ्चानां पञ्च विषया इति विवेकः पुरस्याभिमानविषयत्वप्रकारमाह । एकादशमिति । स्वीकरणं शिरः ममाऽयं हस्त इत्याद्यभिमानेन स्वीकरणं स्वीकार्य[...] मभिमानस्य विषयः तदेकादशं वदन्ति अयमर्थः शरी[...] मानस्य न ज्ञेयतया गन्धादिवद्विषयः नापि कार्यतया विष[...] वर्किन्तु ममेति स्वशेषतया स्वीकार्यत्वेन विषय इति [...] नामेव शरीरं ममाभिमानविषयमिति वदन्ति प्रायेण [...] रणं ममाभिमानस्य विषयत्वेनोक्तमविवेकिनां तु शरी[...] भिमानविषयमिति तदभिप्रायेणाह । शय्यामहं द्वादशम[...] इति । एके केचिदहमहङ्कारः अनात्मन्यात्मतादात्म्याभिमान[...] द्वादशीं वृत्तिं तस्या विषयभूतां शय्यां शरीरं द्वादशं [...] चाहुरित्यर्थः जीवो यतः स्वस्वरूपव्यामोहेन शरीरं शे[...] तीति शरीरं शय्याशब्देनोच्यते ननु गन्धादीनां तद्विषया[...] च वृत्तिरूपाणां भेदाद्विषयिविषयभाव उपपन्नः विसर्ग[...] कर्मेन्द्रियवृत्तित्वात्तेषामेव पुनस्तद्विषयत्वमनुपपन्नमिति [...] विसर्गादीनां क्रियात्मकत्वात् क्रियायाश्च फलव्यापारभेद[...] ध्यात्तत्र व्यापारांशस्य वृत्तित्वं फलांशस्य विषयत्वमिति [...] तथाहि उत्सर्गस्त्यागो विश्लेषस्तद्विषयः तदनुकूला [...] वृत्तिरेवं रत्यादिष्वपि बोध्यम् ॥ १० ॥

उक्तानामेकादशानां वृत्तीनामवान्तरभेदैरानन्त्यमाह । [...] पृथिव्यादिभूतपञ्चकं तेषामसाधारणो गुणः स्वभावसं[...] णामकस्वभावो वा तेषां विचित्रपरिणामहेतुर्वा आशयो [...] कर्माणि पुण्यपापानि एतैः पूर्वोक्ता एकादशवृत्तिरूपा [...] विकाराः प्रथमं शतशस्ततः सहस्रशः ततः कोटिशश्च [...] नैते विकाराः केवलस्य मनसः किन्तु क्षेत्रज्ञाधिष्ठितस्य [...] न्तीत्याह । क्षेत्रज्ञाधिष्ठितस्य मनसो भवन्तीत्यर्थः क्षेत्र[...] रपि परस्पराधिष्ठितयोर्न भवन्ति किन्तु क्षेत्रज्ञाधि[...] एवेत्याह । न मिथ इति । तत्रापि न स्वतो भवन्ति [...] कर्मत इत्याह । न स्वत इति कर्माधीना इति भावः [...] शब्दोऽत्र जीवपरः तस्यैव मनोऽधिष्ठातृत्वात्सङ्कोचविक[...] भूतज्ञानाश्रयत्वाच्च यद्यप्यत्र प्रकरणे क्षेत्रज्ञशब्दो नारा[...] देवभगवदादिसामानाधिकरण्येन प्रयुज्यमानः परमात्म[...] ष्यते क्षेत्रं जानातीत्यवयवार्थपौष्कल्यञ्च तत्रैव तथाप्यत्र [...] आश्रयणीय उक्तयुक्तेः क्षेत्रज्ञ एता मनसो विभूतीः [...] आत्मा पुरुषः पुराण इत्यत्र तु परमात्मपरः यद्वा [...] ज्ञशब्दः परमात्मपर एव तस्य सर्वोपादानतया वि[...] त्वाच्चेतनद्वारा तद्धर्मभूतज्ञानसङ्कोचविकासाश्रयत्वात् [...] मनोऽधिष्ठातृत्वसम्भवाच्च ।

> अधिष्ठानं तथा कर्ता करणं च पृथग्विध[म्] ।
> विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ।

इति प्रयोजकतया दैवस्य परमात्मनोऽपि सर्वत्रान्वयस्त[...]

तदेवं मनसो गुणत्रयोपरागानुपरागाभ्यां [...] कत्वे गुणोपरक्तस्य मनसः क्षेत्रज्ञस्याधिष्ठितस्य [...] हिताः एवमचेतनतत्त्वं निरूपितमिदानीं चेतनतत्त्वं नि[...] तावत्प्रधानभूतं परमात्मतत्त्वं शोधयति । क्षेत्रज्ञ इति [...] अत्र क्षेत्रज्ञशब्दो न जीवपरः किन्तु परमात्मपरः [...] पृथङ्निर्देशात् अविशुद्धकर्म कर्तुर्जीवस्य मनसः [...]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मनसः मायारचिताः प्रकृतिमूला एता उक्ताः तत्फलभोक्तुश्च विभूतीः वृत्तिविस्ताराश्नित्याः प्रवाहतो नित्याः कचिज्जाग्रदवस्थायामाविर्भूताः कापि सुषुप्तौ तिरोहिताश्च क्षेत्रज्ञः परमात्मा शुद्धवृत्त्या यतः सुखदुःखादिरूपमालिन्यरहित एव विचष्टे तथाच श्रुति."तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति"इति मायारचितस्येति पाठे मनसो विशेषणं प्रकृतिपारिणामरूपस्य मनसः ॥ १२ ॥

एवं कर्मकर्तृतत्फलभोक्तृजीवसाक्षितया तदभोगेन स्वयंप्रकाशमानतया च वर्तमानः परमात्मेत्युक्तं भवति पुनः प्रकृतिपुरुषयोरसंभावितधर्मविशेषैस्तं विशिनष्टि । क्षेत्रज्ञ इति । अनेनाचेतनव्यावृत्तिर्जीवव्यावृत्तिश्च नहि जीवः क्षेत्रं यादृक् यत्स्वरूपं तथा जानाति किन्तु ममेदमिति सामान्याकारेणात्मा प्रकृतिपुरुषयोरन्तः प्रविश्य नियन्तृत्वेन धारकः पुराणः पुरुषः न जगदादिकारणतया वर्तमानः पुरुषः साक्षात्स्वप्रकाशस्वरूपः स्वयं ज्योतिष्ट्वं जीवेऽपि प्रसक्तं तद्व्युदासतये यत्साक्षादित्युक्तं साक्षादपरोक्षं स्वयंज्योतिः नहि जीवस्वरूपं मनआदिभ्यो विविक्तं बद्धावस्थायामवभासते मुक्तावस्थायामपि तदवभासस्य परमात्मप्रसादायत्तत्वात् निरुपाधिकसाक्षादवभासाभावान्निरुपाधिकसाक्षात्स्वयंज्योतिष्ट्वस्यैवात्राभिप्रेतत्वात् नित्यसिद्धानामपि तथात्वस्य परमात्मनो नित्येच्छायत्तत्वेन निरुपाधिकत्वाभावात् अजः स्वरूपतः स्वभावतश्चोत्पत्त्यादिविकाररहितः अचेतनस्वरूपस्वभावाभ्यामुत्पत्तिमतोः प्रकृतिपुरुषयोर्व्यावृत्तिः जीवस्यापि ज्ञानविकाशरूपस्वभावोत्पत्तेः सत्त्वात् परेषां ब्रह्मादीनामपि ईश्वरः देवताविशेषनिश्चयायोक्तम् । नारायणो भगवान् वासुदेव इति । नारं जीवसमूहस्तस्यायनं प्राप्यं प्रापकमाधारश्चेत्येवं नारायणशब्दो योगरूढिभ्यां विष्णोरेवासाधारणः अत्र निर्वचनानि पूर्वमेवोपन्यस्तानि एवं वासुदेवशब्दोऽपि "वसन्ति यत्र भूतानि भूतात्मन्यखिलात्मनि"इति तत्रैव नियतः स्मर्यते भगवच्छब्दोऽपि भगवत्पराशरादिभिः "संहर्ता च तथा भर्ता" इत्यादिभिरंशतः समुदायरूपेण च तत्रैव नियतः स्मृतः नन्वात्मतया सर्वव्यापकश्चेत्कथमदर्शनमत आह । स्वमायया स्वाधीनमायया आत्मन् जीवे आर्षेत्वात्सप्तम्या लुक् परमे व्योमन्निति वत् व्यवधीयमानः तिरोधीयमानः प्रकृतिवशगैर्द्रष्टुमशक्य इत्यर्थः ॥ १३ ॥

न प्रकृतिवशगैर्दुर्दर्शत्वमात्रेण सर्वव्यापकत्वं भगवतः किन्तु वायुवद्दहय एव सर्वव्याकतया नियमयतीत्याह । यथेति । यथानिलो वायुरात्मस्वरूपेण चराचरभूतानामन्तःप्रविष्ट ईष्टे प्रेरयति । एवं क्षेत्रज्ञः परमात्मा भगवान् वासुदेवोपीदं जगच्चेतनाचेतनात्मकमन्तर्नियन्तृतया प्रविष्टः भगवतो व्याप्तिद्वारा प्रेरकतया चेत्यनिलदृष्टान्तः ततः सिद्धः ॥ १४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रोत्रादीन्द्रियेषु सत्सु मनस एव प्राधान्यं कथमित्याशङ्क्य तत्तदिन्द्रियद्वारा तत्तद्विषयेषु मनसः प्रवृत्तेरित्याह । एकादशेति । अस्य मनस एकादशवृत्तयो वृत्तय आसन्नित्यन्वयः । अयमर्थः श्रोत्रादीनि दश एकं मनः स्वयमित्येकादशेन्द्रियाणि इन्द्रियद्वारेण बही रूपादिषु प्रवर्तमानस्य मनस एकादशवृत्तय इत्युच्यन्ते तदुक्तम् "एकादशेन्द्रियद्वारा स्युरेकादश वृत्तय" इति अत्र कश्चिद्विभागोऽप्यस्ति एकादशधा विभक्तस्य मनस आकूतयः अहं शब्दं शृणवानीत्यादिविषयानुभवेच्छा पञ्चशब्दादीनां च तावत्त्वान्निश्चयलक्षणरूपान्तरमास्थितस्य धियो बुद्ध्यपरपर्यायस्य मनसोऽभिमाना अहं मधुरं शृणोमीत्यादिरूपाश्च पञ्च तदुक्तं "शब्दाद्यास्तदभीमानास्तदिच्छाश्चैव पञ्चश" इति कर्मेन्द्रियाणां स्पर्शान्तर्भावेण एकत्वेन पृथग्विषयाभावेन पञ्च पञ्च सङ्ख्यात्वोपपत्त्या एकादशधापि विभक्तस्य मनस एकादशाकूतयोऽप्यपेक्षिता इति दुराग्रहो निरस्तः "स्पर्शान्तर्भावतः कर्मस्वानां नैव पृथग्गतिः„इति वचनात् । तर्हीन्द्रियचेष्टानामपि पञ्चत्वं स्यादित्याशङ्क्य विषयबाहुल्येन तावत्वं न घटत इत्यभिप्रेत्याह । मात्राणीति । मात्राणि श्रोत्रादिज्ञानेन्द्रियविषयाः शब्दादयः कर्माणि वागादिकर्मेन्द्रियविषया गमनादिव्यापाराः पुरं शरीरं चेत्यतस्तासामिन्द्रियवृत्तीनां भूमिमधिष्ठानमेकादश वदन्ति हेत्यनेनेन्द्रियगणं च भूमिं वदन्ति तदुक्तम् ।

एकादशैव चेष्टाः स्युरिन्द्रियाणां पृथक् पृथक् ।
गोलकास्तदधिष्ठानं चैकादश निगद्यत इति ।

हे वीर ! ज्ञानग्रहणेच्छालक्षणाध्यवसायान्तगामिन् ! मात्राणीत्यादिनोक्ता भूमीः पृथक् पृथक् निदर्शयति ॥ ९ ॥

गन्धेति । आकृती रूपं भर्तिरुपस्थविषयः शिल्पो हस्तविषयः । एकादशमधिष्ठानं ममेति स्वीकरणं सङ्कल्पविकल्पलक्षणं स्वीकारयोग्यमिन्द्रियगणं चाहुः । 'पुरि तनौ शेत'इतिश्रुतेः हृदयलक्षणानाड्यधिष्ठानसम्भवात्कथमेकादशत्वमित्याशङ्क्य संख्यान्तरमाह । मायामिति । मायां नानाधिष्ठानभूतां नाडीमहमित्यभिमन्तव्यं मायां निश्चयज्ञानविषयीं वा तदुक्तम् "एव संसृतिसम्भारो द्वादशैवाथ वा भवेत्„इति एकादशत्वं च प्रसङ्गाद्वक्ति "दशकं विषयाणां च म(१)माहमिति च द्वयम्"इति सर्वान्तर्भावेण द्वयमेव वक्ति द्वयमेव ममाहश्चेति । मायामहमित्यनेनायमर्थो ध्वनितः तथाहि विषयाणां दशकं मायामित्येकमहमित्येकमिति द्वादशमित्यर्थः ममेति वृत्तिविशिष्टमन्तःकरणं मायामिति ज्ञातव्यम् । यद्वा द्वादशसङ्ख्याविशिष्टत्वेनोक्तमहमिति वृत्तिविशिष्टमन्तःकरणमेकमेव संसृतिकारणमिति शेषः तदुक्तं संसृतिस्त्वहमेव चेति ॥ १० ॥

गृह्णग्राहिकयैवाभिव्यक्तिनिमित्तमाह । द्रव्येति । द्रव्यं देहादिः स्वभावो जीवस्यानादियोग्यता आशयः पूर्वानुभवसंस्कारः कर्म-जन्मान्तरकृतं पुण्यपापलक्षणमदृष्टं कालः फलपाचकः एतैरुद्बोधिता अमी मनसः एकादश विकारा जायन्त इति शेषः न केवलं मनस एकादशैव विकाराः किन्तु मन्दमध्यमोत्तमविवक्षेपभेदेन शतश आदिविकाराः सन्तीत्याह । सहस्रश इति । क्रमभङ्गस्तु नियमभङ्गाय ननु देहाद्येवैषां यदि निमित्तं तर्हि जन्मादिसूत्रोक्तमसङ्कोचेन ब्रह्मकारणत्वमनर्थकं स्यादपि च ब्रह्म-वा एतैः कारणैः कारयतीति श्रुतिश्चापहस्तिता स्यादिति तत्राह । क्षेत्रज्ञत इति । क्षेत्रज्ञतो ब्रह्मणो जीवान्तर्यामिणो हरेरेते विकाराः स्युर्जीवस्येति शेषः देहाद्यधिष्ठाय जीवान्तर्यामी हरिः जीवादृष्टमपेक्ष्य तद्भोगार्थमुत्पादयत्यतो देहादेः कर्तृत्वोपचारोऽतो न श्रुतिसूत्रे व्यर्थे इति भावः नन्वन्योऽन्यापेक्षयागदिराद्रव्यवस्थातो वैषामुत्पत्तिः किं न स्यात् किं मध्ये ब्रह्मकल्पनयेति तत्राह । न मिथ इति ॥ ११ ॥

(१) ममेते अहंकर्तेत्यभिमानद्वयम् ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वेषां सत्यत्वे किं मानमिति तत्राह । क्षेत्रज्ञ इति । भोगयोग्यः क इत्यत उक्तं जीवस्येति । उपादानाभावेनेन्द्रजालसृष्टिवत् मिथ्याभूता इति नेत्याह । मायारचिता इति । मायया प्रकृत्या रचिताः "मायां तु प्रकृतिं विन्द्यात्" इति वचनात् नित्यत्वे कथं रचितत्वमित्यत उक्तमनित्या इति नित्यस्य जीवस्यानित्यानामनुभवः कथमित्यत उक्तमाविर्हिता इति जाग्रत्स्वप्नयोराविर्हिताः क्वापि सुप्तौ तिरोहिताः विचष्टे पश्यति दर्शनं साक्षित्वेन नत्वनुभवनम् "अनश्नन्नन्यो अभिचाकशीति" इति श्रुतेः अविशुद्धकर्तुरित्यनेन साक्षिणो हरेर्जीवं व्यावर्तयति॥१२॥

शुद्धाशुद्धत्वविशेषणाभ्यां वैलक्षण्ये ज्ञाते मन्दस्यैकमेव वस्तु शबलनिर्गुणभेदेनोच्यत इति शङ्का स्यादिति तत्परिहाराय क्षेत्रज्ञं विशिनष्टि । क्षेत्रज्ञ इति । आत्मा व्यापी "यच्चाप्नोति यदादत्ते महान्तं विभुमात्मानम्" इत्यादिश्रुतेः व्याप्तस्य नीरूपत्वेनाकाशवत्प्रतिपत्त्यनुपपत्तिरित्यतः पुरुष इति "सहस्रशीर्षा पुरुषः" इतिश्रुतेः पुरि शरीरे निषण्णो भवतीति निरुक्त्या पुरुषश्चेत्तत्परिणामे तत्स्थस्यापि परिणामप्रसङ्ग इत्यतः पुराण इति "शाश्वतोऽयं पुराणः" इति श्रुतेः कतिपयदिनस्थायित्वेनापि पुराणशब्दार्थोपपत्तेरित्यतः साक्षादिति जडप्रकृतेरपि साक्षात् पुराणत्वोपपत्तेरनादित्वादित्यतः स्वयंज्योतिरिति "अत्रायं पुरुषः स्वयंज्योतिर्भवति" इति श्रुतेः स्वयंज्योतिषोऽपि जीववत् जननं किं न स्यादित्यतोऽज इति "अजो नित्य" इति श्रुतेः नन्वयं हिरण्यगर्भः किं न स्यादित्यतः परेश इति । परो हिरण्यगर्भस्तस्येशः "यो ब्रह्माणं विदधाति पूर्वम्" इति श्रुतेः "ब्रह्मणोऽधिपतिः" इति श्रुतेः हिरण्यगर्भेशोऽपि पशुपतिः किं न स्यादित्यतो नारायण इति । नरसमुदायो नारः तस्याश्रय इति कस्यचिद्ग्रामाधिपतेरपि नारायणत्वं स्यादित्यतो भगवानिति ।

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।

वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति इति स्मृतेः

ऋषिस्त्रिकालदर्शी स्यात्तस्माद्देरपि भगवच्छब्दवाच्यत्वोपपत्तेरित्यतो वासुदेव इति । अत्र व्यावृत्तिः पौराणिकरीत्योक्ता नतु न्यायशास्त्रोक्तिमवलम्ब्येति नोपहासविषयोऽयमिति ज्ञातव्यं नन्वेवंलक्षणकः क्षेत्रज्ञश्चेत्किमिति जनैर्न दृश्यत इत्यतः स्वमाययेति । स्वमायया स्वेच्छयात्मन्यात्मनि स्वस्मिन्नेव व्यवधीयमानः तिरोहितत्वेन स्थितः स्वात्माधारः स्वेच्छयैव जीवदृष्टेस्तिरोहितः क्षेत्रज्ञेत्युच्यते विष्णुः जीवस्थः पुरुषोत्तम इति न अतो निर्वाच्याविषयाच्छाद्यमानो न स्यादित्यर्थः "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्" मिति श्रुतेश्च॥१३॥

ननु क्षेत्रज्ञो मनसो विभूतीः पश्यतीत्युक्तं तत्र दर्शनं बहिः स्थित्वोतान्तः स्थित्वा नाद्यः बहिष्ठस्यान्तर्दर्शनायोगात् न द्वितीयः "असङ्गो ह्ययं पुरुष" इति श्रुतेरसङ्गस्य देहान्तः प्रवेशायोगात्तद्योग्यसुखदुःखभोगप्राप्तेश्चेत्याशङ्क्याह । यथानिल इति । यथानिल आत्मस्वरूपेण प्राणस्वरूपेण स्थावरजङ्गमानामन्तर्निविष्टः स्थावरजङ्गमानामीष्टे चेष्टालक्षणमीशनं करोति "अधीगर्थदयेशां कर्मणि" इति द्वितीयार्थे षष्ठी नश्चेत्तावता वायोः सुखादिभोगः श्रुतचरः एवं क्षेत्रज्ञनामा वासुदेवो भगवानिदं जगदात्मस्वरूपेणान्तर्यामिरूपेणान्तः प्रविष्टः एता मनोविभूतीः पश्यतीति पूर्वेणान्वयः सर्वत्रोषित्वा क्रीडत इति … इति वासुदेवपदप्रयोगेन दुर्भगशरीरयोग्यदुःखभोगाभावो… न्तःस्थत्वेन क्षेत्रज्ञशब्दार्थोऽपि दर्शित इति ज्ञायते न नित्य… यस्यासावनिल इत्यतोऽसङ्गस्याप्यन्तःप्रवेशो युज्यत इति ।

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मात्राणि विवृणोति । गन्धाकृतीनि । कर्माणि … विसर्गेति ॥ ९—११ ॥

क्षेत्रज्ञ इति । यः शुद्धोऽपि मायारचितस्य, वक्ष्यमाणपक्षे … ज्ञस्य मायया कल्पितस्य मनसोऽन्तःकरणस्यैताः प्रसिद्धाः … वृत्तीर्विचष्टे विशेषेण पश्यति । पश्यंस्तत्राविष्टो भवति … खल्वसौ जीवनामा स्वशरीरद्वयलक्षणक्षेत्रस्य ज्ञातृत्वात् क्षेत्रज्ञ उच्यते इत्यर्थः तदुक्तं "यया सम्मोहितो जीव आत्मानं … णात्मकम्" इत्यादि । तस्य मनसः कीदृशतया मायारचितस्य … ह । जीवोपाधितया जीवतादात्म्येन रचितस्य ततश्च तदर्थं … र्थमायास्येत्यर्थः ततश्च कीदृशस्य । अविशुद्धं भगवद्बहिर्मुखं … करोतीति तादृशस्य । कीदृशीर्विभूतीः । नित्या अनादित … गताः । तत्र च कदा कीदृशीरित्यपेक्षायामाह । जाग्रत्स्वप्न… विर्भूताश्चेति ॥ १२ ॥

यस्तु पुराणः पुरुषः आद्योऽवतारः पुरुषः परस्येति … द्वितीयस्कन्धादौ प्रसिद्धः साक्षाद्देवं स्वयं ज्योतिः स्वप्र… नतु जीववदन्यापेक्षया अजो जन्मादि शून्यः परेषां ब्रह्मा… मपीश्वरः नारं जीवसमूहः स नियम्यत्वेनायनं यस्य … ऐश्वर्याद्यंशवान् भगवदंशत्वात् । स्वमायया स्वरूपशक्त्या … स्वरूपे । अवधीयमान इति । मायया मायिकेऽप्यन्तर्… प्रविष्टोऽपि स्वरूपशक्त्या स्वरूपस्थ एव नतु तत् संसक्त … वासुदेवत्वेन सर्वक्षेत्रज्ञातृत्वात् सोऽपरः क्षेत्रज्ञः आत्मा … त्मेति । तदेवमपि मुख्यं क्षेत्रज्ञत्वं परमात्मन्येव । तदुक्तं … पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीड इति … श्रीगीतोपनिषत्सु ।

इदं शरीरं कौन्तेय ! क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।
क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत !।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज् ज्ञानं मतं मम इति ।

अत्र खलु क्षेत्रज्ञञ्चापि मां विद्धीति सर्वेष्वपि क्षेत्रेषु क्षेत्रज्ञं विद्धि नतु जीवमिव स्वस्वक्षेत्र एवेत्येवार्थ वदति … जीवेशयोः सामानाधिकरण्येन निर्विशेष चिद्रूपत्वेन … शाति । सर्वक्षेत्रेष्वेकस्य वैयर्थ्यापत्तेः । ज्ञेयं यत्तत् प्रवक्ष्यामि … सर्वतः पाणिपादं तदित्यादिना सविशेषत्वस्यैव निर्दिष्ट… अमानित्वमित्यादिना ज्ञानस्य च तथोपदिष्टत्वात् । किञ्च … चापीत्यत्र तत्त्वमसीतिवत् सामानाधिकरण्येन तन्निर्दिष्टे … विवक्षिते क्षेत्रज्ञेश्वरयोर्ज्ञाने विवक्षिते क्षेत्रज्ञेश्वरयो… वानूद्येत । ननु क्षेत्रक्षेत्रज्ञयोर्ज्ञानमिति । किन्तु क्षेत्र… रित्यस्यायमर्थः द्विविधयोरपि क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं तज्ज्ञानं … मतम् । "अन्यार्थस्तु परामर्शः" इति न्यायेन तज्ज्ञानैक…

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्यर्थः । ज्ञेयस्यैकत्वेन निर्दिष्टत्वात् योग्यत्वाच्च । नच निरीश्वर-सांख्यवत् क्षेत्रक्षेत्रज्ञमात्रविभागादत्र ज्ञानं मतं मामित्यनेने-श्वरस्यापेक्षितत्वात् । नच विवर्त्तवादवदीश्वरस्यापि भ्रममात्र प्रतीतिपुरुषत्वम् । तद्वचनलक्षणसवेदगीतादिशास्त्राणामप्रामा-ण्याद्बौद्धवादापत्तेः तस्यां च सत्यां बौद्धानामिव विव-र्त्तवादिनां तद्व्याख्यानायुक्तेः ॥ १३ ॥

यथेति । श्रुतिश्च

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो

बहिश्चेति काठके ॥ १४—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वृत्तीर्दर्शयति । एकादश वृत्तयः इन्द्रियरूपाः तत्र पञ्च आकृतयः कर्माकाराः पञ्च धियः ज्ञानाकाराः एकोऽभिमानोऽहङ्कारः इत्ये-वमेकादश तासां वृत्तीनां भूर्मीर्विषयानप्येकादशैव वदन्ति वीर! हे ज्ञानवीर राजन्! मात्राणि गन्धादयः पञ्च ज्ञानेन्द्रियाणां विसर्गादिकर्माणि पञ्च कर्मेन्द्रियाणां पुरं देहगेहाद्येकम् अभि-मानस्येत्येकादश ॥ ९ ॥

मात्रादीनि विवृणोति । गन्धेति । पञ्च नासिकादीनां ज्ञानेन्द्रि-याणां विषयाः आकृतिः रूपं विसर्गादयः पञ्च पाय्वादीनां कर्मेन्द्रि-याणामेवं दश आलिङ्गनं स्वीक्रियत इति स्वीकरणम् एकादशं पुरमभिमानस्य विषयमाहुः । एके आचार्याः अभिमानस्य द्वैवि-ध्यात् ममेति ममकारस्य शय्यां विषयं गेहादिकमेकादशम् अह-मिति अहङ्कारस्य शय्यां देहं द्वादशमाहुः ॥ १० ॥

तासां वृत्तीनामवान्तरभेदैरानन्त्यमाह । द्रव्यादिभिर्भेदैरमी विकाराः वृत्तिरूपाः प्रथमं शतशः ततः सहस्रशः लक्षशः कोटि-शश्च स्युः द्रव्याणां चन्दनकस्तूरीकुङ्कुमादीनां स्वर्णरजत-प्रवालादीनाञ्चानन्त्यात् कोऽपि गन्धरूपादिः कस्मैचित् रोचत इति स्वभावानन्त्यात् आशयोऽन्तःकरणं तस्य शिष्टताबुष्टताभ्यां कर्म अदृष्टं तद्वशादपि कालो बाल्ययौवनादिस्तद्वशादपि प्रत्येकमनन्ता एव गन्धादयः स्युरित्यर्थः ननु मिथः स्युर्नापि स्वतः स्युः किन्तु क्षेत्रज्ञतः परमेश्वरात् तस्य चानन्तशक्तित्वा-दनन्ताः स्युरित्यर्थः ॥ ११ ॥

क्षेत्रज्ञो हि द्विविधः परमात्मा जीवात्मा च तयोः प्रथमः पूर्व-श्लोके उद्दिष्ट उत्तरश्लोके वक्ष्यते च द्वितीयश्च द्विविधः बद्धो मुक्तश्च तत्र मनसा आलिङ्गितः तदभिमानी बद्धः तेन अनालि-ङ्गितो निरभिमानी मुक्तः तयोः पूर्वो ज्ञायत एव उत्तरः कीदृशः इत्यादिव्यपेक्षायामाह । क्षेत्रज्ञः एता मनसो विभूतीर्विचष्टे पश्यति जानाति केवलं ननु तदभिमानी सन् भुङ्क्ते । अत एव शुद्धः संसारान्मुक्तः अन्यस्त्वशुद्धः संसारीत्यर्थः मनसः कीदृशस्य जीवस्य जीवोपाधेः यतो मायया रचितस्य अत एवाविशुद्धं भगवद्बहिर्मुखं कर्म करोतीति तस्य । विभूतीः कीदृशीः नित्याः । अनादित एवानुगताः कथं तर्हि सदा न दृश्यन्त इत्यत आह । आविर्हिताः क्वापि जाग्रत्स्वप्नयोः तिरोहिताः क्वापि सुषुप्ति-प्रलययोः ॥ १२ ॥

बद्धजीवस्य व्यवहार एव मद्वैवाच्यभानविषयो यथा तथा मुक्तजीवस्यावधानविषयः क इत्यपेक्षायामाह । क्षेत्रज्ञः क्षेत्रस्य का-र्त्स्न्येन ज्ञाता परमात्मेत्यर्थः । आत्मा व्यापकः पुराणः जगत्कार-णभूतः पुरुषः पुरुषाकारः स्वयंज्योतिः स्वप्रकाशः अजो मायिक-जन्मादिशून्यः परेषां ब्रह्मादीनामपीशः नारायणः कारणार्ण-वशायी भगवान् षडैश्वर्यपूर्णो वैकुण्ठनाथः वासुदेवो वसुदेव-नन्दनः श्रीमथुराधाधिपतिः । सुष्ठु अमायया हेतुना आत्मनि अवधीयमानः मुक्तजीवेन आत्मनि मनसि अवधानविषयीक्रिय-माणः । यद्वा स्वमायया स्वरूपशक्त्या कृपया वा सहितः ॥ १३ ॥

स च भगवान् मुक्त जीवेन सुलभ एवेति सदृष्टान्तमाह । यथेति । आत्मस्वरूपेण ईशेत् ईशीत इदं विश्वम् ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वृत्तयस्तु आकृतयः क्रियाकाराः पञ्च धियश्च ज्ञानाकाराः पञ्च अभिमानश्चेत्येकादश आसन् विषयानाह । मात्राणीति । मात्राणि गन्धादीनि ज्ञानाकाराणां कर्माणि विसर्गादीनि क्रियाकाराणाम पुरं शरीरमभिमानस्य एवमेकादश हे वीर! तासां वृत्तीनां भूर्मीः विषयान् वदन्ति ॥ ९ ॥

विषयानाह । गन्धेति । आकृतिः रूपमर्निर्गतिः गमेति स्वीक्रियत इति स्वीकरणं शरीरं केचित्तु अभिमानो द्विविधः विदुषां मम देहः इति मूढानां तु देहोऽहमिति तत्र देहोऽहमित्यहङ्कारं द्वादशं वृत्यन्तरमाहुः तस्य देहमेव शय्यां विषयमाहुः ॥ १० ॥

एकादशवृत्तीनामवान्तरभेदैर्बाहुल्यमाह । द्रव्येति । द्रव्याणि विषयाः स्वभावः परिणामहेतुः । आशयो वासना कर्म पुण्या-दिकम् कालः क्षोभकः तैर्निमित्तभूतैः अमी पूर्वोक्ता एकादश मनसो विकाराः वृत्तयः प्रथमं शतशस्ततः सहस्रशस्ततः कोटिशः ताः केवलान्मनसो न स्युस्तस्य करणत्वात् न च मिथो न च स्वतश्च स्युः नहि अचेतने करणे एकैकशः मिलित्वा वा वृत्तयो जायन्ते असम्भवात् अतः क्षेत्रज्ञतः मनसि जायन्ते इति सिद्धान्तः ॥ ११ ॥

अथ भजनीयस्य मुक्तौ प्राप्यस्य भगवतः सर्वज्ञत्वादीन् गुणान् क्षेत्रज्ञादीनि बहूनि नामानि चाह । क्षेत्रज्ञ इति त्रिभिः । अविशुद्ध-कर्त्तृबद्धस्य जीवस्य सम्बन्धि यन्मनस्तस्य मायारचितस्य प्रवृत्ति-कार्यस्य प्रवाहरूपेण नित्याः जाग्रत्स्वप्नयोराविर्भूताः क्वचि-त्सुषुप्त्यादौ तिरोहिताः एताः विभूतीर्वृत्तीः क्षेत्रज्ञः सर्वाधिष्ठानि-रूपसर्वशरीरगित् शुद्धः स्वभावतोऽपास्तसमस्तदोषो भगवान् विचष्टे पश्यति ॥ १२ ॥

स्वमायया "मायादम्भे कृपायां च" इति विश्वः स्वकृपया आत्मनि जीवे अवधीयमानः प्रेरकतया वर्त्तमानः ॥ १३ ॥

यथा अनिलो वायुः आत्मस्वरूपेण प्राणरूपेण स्थावरजङ्गमाना-मन्तर्निविष्टः ईशेत् प्रेरयति एवं भगवानपि इदं विश्वमनुप्रविष्टः ईशेत् प्रेरयति ॥ १४ ॥

---

न यावदेतां तनुभृन्नरेन्द्र ! विधूय मायां वयुनोदयेन ।
विमुक्तसङ्गो जितषट्सपत्नो वेदात्मतत्त्वं भ्रमतीह तावत् ॥ १५ ॥
न यावदेतन्मन आत्मलिङ्गं संसारतापावपनं जनस्य ।
यच्छोकमोहामयरागलोभवैरानुबन्धं ममतां विधत्ते ॥ १६ ॥
भ्रातृव्यमेनं तददभ्रवीर्यमुपेक्षयाध्येधितमप्रमत्तः ।
गुरोर्हरेश्चरणोपासनास्त्रो जहि व्यलीकं स्वयमात्ममोषम् ॥ १७ ॥
इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां जडभरतरहूगणसम्वादे
एकादशोऽध्यायः ॥ ११ ॥

भाषाटीका

मनकी वृत्तियां ग्यारह हैं तिनमें पांच क्रिया मय कर्मेन्द्रिय हैं पांच ज्ञानेद्रियहैं एक अभिमान है हे वीर ! कर्मेन्द्रियों के पांच कर्म विषय हैं ज्ञानेन्द्रियों के पांच गन्धादिक विषय हैं मन अभिमान का विषय है ॥ ९ ॥

ज्ञानेन्द्रियों के विषय गन्ध रूप स्पर्श रस शब्द कर्मेन्द्रियोंके विषय मल त्याग रति चलना बोलना करना मेरा है ऐसा स्वीकार करना अभिमान का विषय है कोई लोग शरीर के अभिमान को बारहमा इन्द्रिय कहते हैं ॥ १० ॥

चन्दनादि द्रव्यों के रुचि के स्वभाव अन्तःकरण अदृष्टबाल्यादिकाल आदि के भेदों से मन के भिन्नतासे यही विकार सो हजार कोटि अनंत हो जाते हैं सो विकार न जीवसे हैं न परस्पर से हैं आपहीसे हैं किंतु वृत्ति से कल्पित हैं ॥ ११ ॥

अशुभ कर्मों के करनेवाले मनकी वृभूती जो कि जीव की माया से रचित हैं प्रवाह से नित्य जाग्रत अवस्था में प्रघट स्वप्नावस्था मे अप्रगट इन मनकी वृत्तियों का देखनेवाला जो शुद्ध है वही क्षेत्रज्ञहै ॥ १२ ॥

ईश्वर क्षेत्रज्ञका स्वरूप यह आत्मा है पुराण पुरुष है साक्षात् स्वयं ज्योति है परेश है नारायण भगवान् वासुदेव है जीवों के हृदय मे वर्तमान है ॥ १३ ॥

जिस प्रकारसे पवन बाहिर स्थितहोकर भी स्थावर जंगम प्राणियों के आत्मरूप होकर भीतरभी प्रेरक होता है तैसेही भगवान् वासुदेव क्षेत्रज्ञहोकर जीवों के बाहिर भीतर व्याप्तहो रहे हैं ॥ १४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवमात्मनः शुद्धत्वं संसारस्य च मिथ्यात्वं प्रदर्श्येदानीं तन्निवृत्तिमाह । तनुभृद्देही वयुनोदयेन ज्ञानोत्पत्त्या यावन्मायां विधूयात्मतत्त्वं न वेद तावदिह भ्रमति ॥ १५ ॥

यावच्च विषयानुरक्तं मन एवानर्थहेतुरिति न वेद [illegible] वेदाभावात्परिभ्रमत्येवेत्याह । नेति । आत्मनो लिङ्गमुपाधि[illegible] संसारतापानामावपनं क्षेत्रं यावन्न वेद तावद्भ्रम[illegible] तापावपनत्वे हेतुः । यन्मनः शोकाद्यनुबन्धं ममतां च वि[illegible]

तत्तस्मात् । भ्रातृव्यं शत्रुमध्येधितं संप्रवृद्धं स्वयं [illegible] मिथ्याभूतं तथाप्यात्मानं मुष्णातीति तथा तं गुरोश्च ह[illegible] चरणोपासनमेवास्त्रं यस्य तथाभूतः सन् जहि घातय ।

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रकृतिपुरुषविलक्षणं परमात्मस्वरूपमुपदिश्य [illegible] नया तत्साक्षात्कारापन्नज्ञानपर्यन्तं संसारो न निवर्तत [illegible] नेति । हे नरेन्द्र ! रहूगण ! तनुभृद्देही वयुनोदयेन [illegible] यावदेतां मायामहंममाभिमानरूपां विधूय निरस्य [illegible] सङ्गो देहगेहादिषु येन जिताः षट् सपत्नाः शत्रवो [illegible] इन्द्रियरूपाः येन तथाभूतः सन्नात्मनः परमात्मनः याथात्म्यं न वेद तावदिह संसारे भ्रमति ॥ १५ ॥

कदायं तनुभृदात्मतत्त्वं वेदेत्यत्राह । नेति । यदि [illegible] संसारतापानामाध्यात्मिकादीनामावपनं क्षेत्रमात्मनो जीव[illegible] पूर्वोक्तरीत्या संसृतिमुक्त्योः कारणं मनो याव[illegible] ममतां च न विधत्ते तदा वेद । यद्वा यावच्छोकादि[illegible] तावन्न वेदेत्यन्वयः तत्र मोहः प्रमादः आमयो रोगः [illegible] बन्धः वैरपूर्वकानुस्मरणं शोकादीनां समाहारद्वन्द्व[illegible] शोकादिरूपमनुबन्धमनुबध्यते पृष्ठतः सम्बध्यते [illegible] अग्रतो ममतां तत्पृष्ठभागेन शोकादिकं च याव[illegible] इत्यर्थः कदेदं मनः शोकाद्यविधायकमिति वेदद्या [illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तुरक्तं कदा गुणानुपरक्तमिति चेत्"आहारशुद्धौ सत्त्वशुद्धिः"इत्या युक्तसात्त्विकाहारसत्क्रियादिभिः सत्त्वप्रचुरमित्यन्यदेतत् ॥ १६ ॥

तस्मादेनमन्तःकरणरूपं भ्रातृव्यं सहजशत्रुमुपेक्षयानिग्रहेणात्यन्तमेधितं संवृद्धमत एवादभ्रमनल्पवीर्यं संसारयितृत्वरूपं यस्य अत एव व्यलीकमप्रियकारिणं तत्र हेतुः आत्ममोषमात्मापहारिणं त्वम् अप्रमत्तः अनलसः गुरोर्हरेः गुरुरेव हरिस्तस्य चरणोपासनमेवास्त्रं यस्य तथाभूतः सन् जहि घातय सदाचार्यसेवादिप्रणाड्या स्ववशीकुर्वित्यर्थः॥ १७ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं संसारबन्धस्य श्रीनारायणसाक्षिसिद्धत्वेन सत्यत्वं प्रसाध्याधुना श्रीहरिकटाक्षानुगृहीतस्वापरोक्षज्ञानमन्तरेण तन्निवृत्त्यनुपपत्तेस्तन्निवर्तकसाधनमाह । न यावदिति । तनुभृज्जीवो यावद्यावन्तं कालमहम्ममेति मनोनिगूढामेतां सर्वसाक्षिसिद्धां मायां भ्रान्तिं वयुनोदयेन शास्त्रश्रवणजनितज्ञानोदयेन विधूय भ्रान्तिरेषेति निश्चित्यात्मतत्त्वं सकलवेदान्तविषयीभूतभगवत्स्वरूपं न वेद तावत्पर्यन्तमिह संसारे पूर्वोक्तप्रकारेण भ्रमति पुनः पुनः जननमरणावृत्त्या वर्तते इत्यन्वयः कीदृशस्येदं घटत इत्यत उक्तम् । विमुक्तेति । फलसंकल्परहितः अत्रापि किं कारणमित्यत उक्तम् । जितेति । जिताः षडिन्द्रियशत्रवो येन स तथा पुरुषार्थविरुद्धचेष्टाहेतुत्वादिन्द्रियाणां सपत्नत्वमन्यथा सुहृत्त्वमिति भावः ॥ १५ ॥

ननु भ्रान्तीनामनेकत्वेन प्रत्येकं तन्निवर्तनानुपपत्तेरतः क उपाय इति सुहृद्भावेन पृच्छन्तमाह । न यावदित्यादिश्लोकद्वयेन । यावन्तं कालं जनस्य यदेतन्मनो ममतां विधत्ते ममेदमहमित्यभिमानमुत्पाद्य स्वामिनं संसारयतीत्यर्थः तावन्तं कालं न निवर्तेत इतिशेषः कीदृशमात्मलिङ्गमात्मनो योग्यताज्ञापकं संसारतापकं संसारताप उप्यतेऽनेनेति संसारतापावपनं कीदृशं तापं वपतीत्यत उक्तम् । शोकेति । शोकादीनामनुबन्धो येन तत्तथा शोकादिजनकत्वेन तापावपनमित्यर्थः ॥ १६ ॥

हे राजंस्त्वमेनमात्मनो मनसः उत्पन्नं मोहं विपरीतज्ञानमत एव भ्रातृव्यं शत्रुं जहि नाशयेत्यन्वयः अल्पत्वेन स्वयमेव विरमतीत्यत उक्तमदभ्रेति । अदभ्रं महद्वीर्यं यस्य तत्तथा अदभ्रवीर्यत्वे हेतुमाह । उपेक्षयेति । अतिगर्हितेन पापेनैधितं वर्द्धितं शत्रुहननमस्त्रेणां भाव्यं किमत्रास्त्रमित्यत उक्तं गुरोरित्यादि । उपासनमेवास्त्रं यस्य स तथा प्रमादादवाप्तस्य हनने अप्रमाद एव प्रथमसाधनमित्यभिप्रायेणोक्तम् । अप्रमत्त इति । गुर्वादिचरणसेवादावन्तरङ्ग साधनमनलीकत्वमित्यत उक्तम् । व्यलीकमिति । क्रियाविशेषणमेतद् आत्मनो मोहविशेषणं वा विविधवस्तुविषयमनेनानेकान्यथाज्ञानानीति सूचितं परकीयं चेद्दुःखसाधनं हन्तमत उक्तम् । स्वयमिति । स्वकीयमित्यर्थः अत्रेदमाकूतं द्विविधं मनः चिदचिद्भेदेन तत्र चिन्मनस्तु स्वरूपमभिन्नं मुक्तावानन्दानुभवसाधनं तन्नाशे स्वरूपनाश एव स्यात्तथा च"अविनाशी वा अरे अयमात्मानुच्छित्तिधर्मा" इति श्रुतिव्याकोपः स्यादितरन्मन आदिमं प्रलये लिङ्गशरीरवत्सूक्ष्मं यावन्मुक्ति तदीयतया स्थितं सत्सृष्टावुपचितं स्थूलशरीरवर्तिनश्चेतनस्य ममेदमहमित्यभिमानमुत्पाद्य संसारापादनपटु स्वामिनश्चिदानन्दलक्षणस्य दुःखापादकत्वेन वैरि मनो जहि हन तस्य हननेन तन्निमित्ताभिमानलक्षणमोहनाशेन, व्यलीकं विगताचिन्मनः संसर्गं स्वयं स्वरूपभूतं सच्चिन्मनः स्वयमिति छिरावर्तनीयं सुपूजितमिष्टप्रदं देवं श्रीनारायणाख्यं जहि गमय तद्विषयं कुरु अत्रार्थद्वयाभिप्रायेण "हन हिंसागत्योः" इतिधातुः प्रयुक्त इति ज्ञायते अनेनाहमित्यभिमानः संसारहेतुः तन्मूलाचिन्मनोनाशेन तदभावेन तदभाव इति परिहारः सूचित इति तदुक्तमभिमानादेव संसारोऽन्यथा नेति परिहार इति ॥ १७ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवमविद्योत्तीर्णानां भगवद्वधानलक्षणं ज्ञानं शाश्वतिकमेवेत्युक्तम् । अविद्यापतितानां जीवानामप्यविद्योत्तारणं तदेव साधनमित्याह । नेति । वयुनोदयेन उक्तलक्षणज्ञानोत्पत्त्या विमुक्तसङ्गः सन् यावन्मायां विधूयात्मतत्त्वं न वेद तावदिह भ्रमति ॥ १५ ॥

मायाविधूननञ्च सम्यक्तया कथं ज्ञातव्यमिति चेत् यावद्विषयानुरक्तं मनस्तावन्मायाविधूननमात्मतत्त्वज्ञानञ्च न स्यादित्याह । नेति । आत्मनो लिङ्गमुपाधिभूतं मनः यावन्ममतां विधत्ते तावदात्मतत्त्वं न वेदेत्यनुषङ्गः । कीदृशं संसारतापानामावपनं क्षेत्रं तापानेवाह । यद्यतः शोकादीन्यनुबध्नातीति तत्तदेवं मनः श्रयते अन्यत्र तत्त्वमिति यदुक्तं तत् क्षेत्रज्ञ एता इत्यादिश्लोकपञ्चकेन प्रपञ्चितम्॥१६॥

तस्मान्मन एव निग्रहीतव्यमित्याह । भ्रातृव्यं शत्रुम् उपेक्षयैव जहि निगृहाण तदुपेक्षणमेव तद्वध इति भावः । ननु तद्विषयभोगप्रदानलक्षणया अपेक्षया अनुगृह्णामीत्यर्थः । सर्वथैव तद्वधस्त्वनभिप्रेत एव तस्मान्मनो लिङ्गमदो वदन्ति गुणागुणत्वस्य परावरस्येति श्रूयते अन्यत्र तत्त्वमिति च पूर्वोक्तेः दृष्टान्ते च भ्रातुष्पुत्रस्यावध्यत्वात् । मनः कीदृशमधिकमेधितं स्वप्रवृत्तीः संश्रित्य संवृद्धं ननु बलवन्तमिमं दुर्बलोऽहं कथं निगृह्णामीत्यत आह । गुरोः सकाशात् प्राप्तस्य मन्त्ररूपस्य हरेश्चरणयोरुपासना श्रवणादिनवविधभक्तिरेवास्त्रं यस्य सः । यद्वा गुरुरेव हरिस्तस्य चरणोपासनमेवास्त्रं यस्य सः । व्यलीकमप्रियं यतः स्ववृत्ति-

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सन्दर्शनया सम्मोह आत्मानं परमात्मरूपं सर्वस्वमेव मुष्णातीति तं महाचौरमित्यर्थः ।

भक्त्यसेवया त्याजयित्वा विषयान् स्वमनो यतिः ।
स्वस्ताविद्योऽवधत्ते यः कृष्णं मुक्तः स उच्यते ।
भक्त्यभावान्मनोवृत्तीराश्रयद्वासनामयम् ।
अविद्यां यस्य पुष्णाति स पुमान् बद्ध उच्यते ॥ १७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशः पञ्चमस्य सङ्गतः सङ्गतः सताम् ॥ ११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तनुभृत् जीवः मायैव मम संसारकारणमिति वयुनोदयेन ज्ञानोत्पत्त्या एतां मायां प्रकृतिं विधूय यावत् आत्मतत्त्वं पूर्वोक्तं भगवत्तत्त्वं न वेद तावत् इह संसारे भ्रमति ॥ १५ ॥

किञ्च यत् शोकाद्यनुबन्धं ममतां विधत्ते तदेतन्मनः लिङ्गं सूक्ष्मशरीरभूतं तत्र तस्यैव मुख्यत्वात् जनस्य देहिनः संसारतापानामाध्यात्मिकादीनामावपनं चेत्रं तनुभृत् यावन्न वेद तावदिह भ्रमतीत्यन्वयः ॥ १६ ॥

तस्मादेनं मनोरूपं भ्रातृव्यं शत्रुमुपेक्षितं प्रवृद्धं व्यलीकं मुषम आत्मानं मुष्णातीति तत् श्रीगुरुरेव हरिः तस्य चरणोपासनमेवास्त्रं यस्य तथाभूतः सन् जहि घातय ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकादशाध्यायार्थप्रकाशः ॥ ११ ॥

---

भाषाटीका ।

हे नरेन्द्र ! जब तक मनुष्य ज्ञान को उदय करके इस माया को दूर करके कामादि छः शत्रुओं को जीतकर निःसंङ्ग होकर आत्म तत्व को नहीं जानता है तबतक इस संसार में भ्रमता रहता है ॥ १५ ॥

जब तक आत्माके उपाधिरूप संसार तापों का बढ़ानेवाला मनुष्य का मन शोक मोह रोग प्रीति लोभों की वृत्ति तथा ममता को धारण करता है तावत् मनुष्य भ्रमता है ॥ १६ ॥

तिस हेतु से बड़े बलवाले शत्रु रूप इस मनका उपेक्षा से बढ़ेहुये इस मन को सावधान होकर श्रीहरि गुरु चरणों की उपासना रूप अस्त्रको धारण करके आत्मा के नाश करनेवाले इस मनको नाश करो ॥ १७ ॥

इति श्रीभागवत पञ्चमस्कन्ध एकादशअध्यायका
भाषानुवाद ब्रह्मणाचार्यकृत
समाप्त ॥ ११ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे एकादशोऽध्यायः समाप्तः ॥ ११ ॥



## द्वादशोऽध्यायः।

रहूगण उवाच।

नमो नमः कारणविग्रहाय स्वरूपतुच्छीकृतविग्रहाय।
नमोऽवधूत! द्विजबन्धुलिङ्गनिगूढनित्यानुभवाय तुभ्यम्॥ १॥
ज्वरामयार्तस्य यथागदं सन्निदाघदग्धस्य यथा हिमाम्भः।
कुदेहमानाहिविदष्टदृष्टेर्ब्रह्मन्! वचस्तेऽमृतमौषधं मे॥ २॥
तस्माद्भवन्तं मम संशयार्थं प्रक्ष्यामि पश्चादधुना सुबोधम्।
अध्यात्मयोगग्रथितं तवोक्तमाख्याहि कौतूहलचेतसो मे॥ ३॥
यदाह योगेश्वर! दृश्यमानं क्रियाफलं सद्व्यवहारमूलम्।
नह्यञ्जसा तत्त्वविमर्शनाय भवानमुष्मिन् भ्रमते मनो मे॥ ४॥

ब्राह्मण उवाच।

अयं जनो नाम चलन् पृथिव्यां यः पार्थिवः पार्थिव! कस्य हेतोः।
तस्यापि चाङ्घ्र्योरधिगुल्फजङ्घाजानूरुमध्योरशिरोधरांसाः॥ ५॥
अंसेऽधिदार्वी शिबिका च यस्यां सौवीरराजेत्यपदेश आस्ते।
यस्मिन् भवान् रूढनिजाभिमानो राजास्मि सिन्धुष्विति दुर्मदान्धः॥ ६॥
शोच्यानिमांस्त्वमधिकष्टदीनान् विष्टया निगृह्णन्निरनुग्रहोऽसि।
जनस्य गोप्तास्मि विकत्थमानो न शोभसे वृद्धसभासु धृष्टः॥ ७॥
यदा क्षितावेव चराचरस्य विदाम निष्ठां प्रभवं च नित्यम्।
तन्नामतोऽन्यद्व्यवहारमूलं निरूप्यतां सत्क्रिययाऽनुमेयम्॥ ८॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

द्वादशे पुनरापृष्टः सन्देहेन महीभृता।
स योगी सर्वसन्देहानपानुददितीर्यते॥ १॥

कारणमीश्वरस्तस्यैव लोकसंरक्षणार्थो विग्रहो देहो यस्य स्वरूपेण परमानन्दप्रकाशेन तुच्छीकृतो विग्रहो येन हे अवधूत! योगेश्वर! द्विजबन्धोर्लिङ्गेन वेषेण निगूढो नित्यानुभवो येन तस्मै नमः॥ १॥

विशेषतः प्रष्टुं तद्वाक्यमभिनन्दति। ज्वर एवामयो रोगस्तेनार्तस्य यथा सत्स्वागदमौषधम्। यथा च निदाघेन दग्धस्य सन्तप्तस्य हिमाम्भः शीतलमुदकं गङ्गोदकं वा तथा हे ब्रह्मन्! कुत्सिते देहे यो मानोऽहङ्कारः स एवाहिस्तेन विशेषेण दष्टा दृष्टिर्विवेकलक्षणा यस्य तस्य मे तवेदं वचोऽमृततुल्यमौषधम्॥ २॥

मम संशयविषयमर्थं पश्चात्प्रक्ष्यामि अधुना तावत्त्वदुक्तं वचोऽध्यात्मयोगेन ग्रथितं दुर्बोधं सुबोधं यथाभवत्येवं व्याख्याहि कौतूहलयुक्तं चेतो यस्य तस्य मम॥ ३॥

त्वयोदितं व्यक्तमविप्रलब्धमित्यादिना भारवहनादिक्रिया च तत्फलं च श्रमादिप्रत्यक्षादिभिर्दृश्यमानं सदबाधितमपि व्यवहारमात्रमूलम्। यद्वा। सतोऽबाधितव्यवहारस्य मूलं कारणमपि नह्यञ्जसा तत्त्वविमर्शनाय क्षममिति भवान् यदाह। अमुष्मिन्नर्थे मम मनो भ्रमति॥ ४॥

अबाधितत्वमसिद्धमित्याह। हे पार्थिव! यः पार्थिवो विकारः स एव कस्य हेतोः कस्माद्धिरकारणात्पृथिव्यां चलन्नयं भारवाहकादिर्जनो नाम प्रसिद्धः यस्तु न चलति स पाषाणादिस्तयोस्तावानेव भेदः तस्य च जडत्वान्न भारः श्रमश्च किञ्च। भवेदेवं यदि श्रमस्याश्रयो निरूप्येत नत्वेतदस्ति अवयव-

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यतिरेकेण श्रमास्पदस्यावयविनोऽनिरूपणादित्याशयेनाह । तस्यापि पृथ्वीविकारस्यापि अङ्घ्र्योरध्युपर्युपरि गुल्फादयः उरसः सलोप आर्षः ॥ ५ ॥

शिबिकायामप्यवयवी नास्ति त्वय्यपि नास्ति तदाह । सौवीरराजेत्यपदेशो नाममात्रं यस्य स पार्थिवो विकार आस्ते राजेति सन्धिरार्षः यस्मिन् भवांन्निरूढात्माभिमानः सिन्धुषु राजास्मीति दुर्मदेनान्धः सन् ॥ ६ ॥

शोच्यानिमान्विष्ट्या निगृह्णन्निष्कृपो वर्तसेऽतो मिथ्यैव गोप्तास्मीति श्लाघमानो महतां सभासु न शोभसे यतो धृष्टः ॥ ७ ॥

न चोत्तरोत्तरावयवभारः पूर्वपूर्वावयवानां भवेदिति वाच्यम् तेषामप्यनिरूपणादित्याशयेनाह । यदेति । निष्ठां नाशं प्रभवमुत्पत्तिं विदाम विद्मस्तत्तदा क्षितेरन्यस्य विकारस्याभावान्नाममात्रादन्यद्व्यवहारस्य मूलं कारणमर्थक्रियया सदित्यनुमेयं निरूप्यताम् तथाच श्रुतिः "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"इति ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कारणे परमात्मस्वरूपे चोपदिष्टे देहात्मनोरन्योऽन्यभेदं जिज्ञासुः प्रणत्या तदुक्ताभिनन्दनेन च तं प्रसादयन्पृच्छन्ति रहूगणाः । नमो नम इति चतुर्भिः । कारणविग्रहाय कारणस्य परमात्मनो विग्रहाय शरीरभूताय । यद्वा मादृशलोकरक्षणकारणेन विग्रहो देहो यस्य तस्मै "आचार्यदेवो भव देवमिवाचार्यमुपासीत आचार्यं मां विजानीयात्" इति शास्त्रानुसन्धानकृतेनेश्वरभावेनैवमुक्तं स्वरूपानुसन्धानेन तुच्छीकृतो निरस्तो विग्रहो विरोधः कृतापराधेष्वपि मादृशेषु यस्य अवधूतः सर्वैः परिभाव्यवेषः द्विजबन्धोर्लिङ्गेन वेषेण निगूढो नित्यानुभवः नित्यस्य परमात्मनोऽनुभवः येन ततोऽवधूतशब्देन कर्मधारय एवं भूताय तुभ्यं नमः १॥

ज्वररूप आमयो रोगः तेनार्तस्य पीडितस्य यथा सद्भिशुक्लमगदमौषधं यथा वा निदाघेन ग्रीष्मतापेन तप्तस्य हिमाम्भः पीडानिवर्तकं च तथा हे ब्रह्मन् ! कुत्सितो यो देहस्तस्मिन्मान आत्माभिमानः स एवाहिः सर्पस्तेन विशेषेण दष्टा दृष्टिर्विवेकलक्षणा यस्य तस्य मम ते तव वचः अमृततुल्यमौषधम् ॥२॥

तस्माद्भवन्तं प्रति मम संशयार्थं संशयनिवृत्त्यर्थमर्थशब्दोऽत्र निवृत्तिवाची मशकार्थो धूम इतिवत् तं पश्चाद्वक्ष्यामि अधुना तु यत्तव त्वया उक्तं तदध्यात्मयोगेन ग्रथितमतो दुर्बोधं सुबोधं यथा तथा कौतूहलचेतसः कौतूहलशब्दस्तद्युक्तपरः कौतूहलयुक्तं चेतो यस्य तस्य मे मह्यमाख्याहि कथय॥३॥

तत्र दुर्बोधमर्थमनुवदति । यदाहेति । हे योगेश्वर ! भवान्प्रत्यक्षादिभिर्दृश्यमानं यत्क्रियाफलं दूरगमनक्रियाफलं खेदश्रमादिकं तद्व्यवहारमूलमबाधितव्यवहारहेतुकमुरुपरिश्रान्तोऽसीत्यबाधितव्यवहारस्य मूलं नहि भवतीति यदवादीत्तत्र मे मनः अञ्जसा सुखेन तत्त्वविमर्शनाय भ्रमते भ्राम्यते क्लिश्यति ॥ ४ ॥

तत्र क्रियाफलस्य बाधितव्यवहारमूलत्वं भवतु नहि स्थौल्यकार्श्यादिव्यवहारस्य स्वरूपेणासत्यमुक्तं देहविषयस्य तस्याबाधितत्वात् किन्त्वात्मनि यद्भवता परिश्रान्तं नातिपीवा शास्ताधिगोप्ता पतिरिति व्यवहृतं मित्युच्यते न च मदीयोऽपि व्यवहारः शरीरविषय एवेति तत्त्वमहंत्वंशब्दयोरात्मविषयत्वादभिमुखी कर्तव्यतत्प्रति प्रत्यग्वस्तुनि च चेतने एव तयोर्वृत्तेः अचेतनाशीशानि चेतनविषयत्वेऽपि विशेष्यास्थौल्यादेर्बाधितत्वादिति वेदर रत्यन्तभेदमाह ब्राह्मणः । अयमिति । हे पार्थिव!यः पार्थिवः विकारः स एव कस्य हेतोः कस्माच्चित्कारणा चलत्ययं भारवाहादिजनो नाम प्रसिद्धः यस्तु न चलति पाणादिरित्येनावानेव भेदः कस्य हेतोरित्यनेन कर्म शेष एव एतच्छरीरस्य चराचरत्वयोर्हेतु तस्यापि पृथिवीविकारस्याप्यङ्घ्र्योः पादयोः उपर्युपरि द्वयः उरसः सलोप आर्षः शिरोधरा ग्रीवा अंसौ स्कन्धौ

अंसे च दारुमयी शिबिका तस्यां च सौवीराणां त्यपदेशः अपदिश्यत इत्यपदेशः व्यवहर्तव्यः आस्ते राजेति व्यपदेशो व्यवहारो यस्य स मांसपिण्ड आस्ते वा यस्मिन् सौवीरराजव्यपदेशे भवान् स्वरूपतः तनोऽत्यन्तविलक्षणोऽपि भवान्निरूढतादात्म्याभिमानः सिन्धु राजास्मीति दुर्मदेनान्धः सन् अनेनात्मनि राजत्वबुद्धि रित्युक्तम् ॥ ६ ॥

अत्यन्तं कष्टेन वहनादिजनितदुःखेन दीनानत एव शोच्यान् विष्ट्या बलान्निगृह्णन्निरनुग्रहः निष्कृपो वर्तसे अनेनात्मनि रवबुद्धिप्रयुक्तनिग्रहादिकर्तृत्वस्य च स्वरूपप्रयुक्तत्वबुद्धि रित्युक्तं जनस्य गोप्ता रक्षकोऽस्मीति कत्थमानस्त्वं सभासु देहात्मविवेकिषु न शोभते यतो धृष्टः देहात्म द्धतः ॥ ७ ॥

अस्थिरेषु स्थिरबुद्धिश्च भ्रान्तिरिति दर्शयितुमि माह । यदेति । चराचरस्य देहजातस्य वमुत्पत्तिं निष्ठां नाशं च क्षितौ भूम्यामेव विदाम ब्रह्माण्डपरः "सभूमिं विश्वतो वृत्वा" इति श्रौतप्रयोगात विनाशौ क्षितावेव पश्याम स्थिरत्वं पश्याम इति भ्रा दस्थिरत्वान्नामत अनित्ये नित्यत्वाद्देहात्मभ्रान्तिमूलाभि बाधितत्वात्त्वदुक्तिमात्रादन्यत्सत्क्रियया अबाधितव्यवहा मेयव्यवहारस्यात्मनि राजत्वादिव्यवहारस्य मूलं तन्न किञ्चिदप्यस्ति उक्तत्रिविधस्यभ्रान्तिमूलत्वादित्यर्थः ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जन्माद्यस्य यतोऽन्वयादित्यत्र कारणत्वं हरेरुक्तं हरेरेव नान्यस्येति सयुक्तिकमस्मिन्नध्याये निरूप्यते ब्राह्मणस्तुतिव्याजेन तदन्तर्यामिणं स्तौति । नम इति । महलक्षणकारणाद्विग्रहो यस्य स तथा तस्मै लोकस्य ज्ञानाञ्जनदानाय देहं धृतवत इत्यर्थः स्वरूप नदीपेन तुच्छीकृतो धिक्कृतो विग्रहः पाञ्चभौतिको देहो स तथा तस्मै किमर्थं तर्हि स्वसामर्थ्यं न प्रकाश तत्राह । अवधूतेति । अवधूतश्चासौ द्विजबन्धुर्ब्राह्मणाभि लक्षणेन निगूढः सम्वृतो नित्यानुभवः स्वरूपसामर्थ्यं तथा तस्मै अवधूतद्विजा एव बन्धवो येषां ते तथा तेषां

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नेति वा अवधूत! तुभ्यं नम इति वा तुभ्यं तवान्तर्यामिणे नमः किं विशिष्टाय कस्यानन्दस्यारणं शरणं विग्रहो यस्य कर्मवारणं विग्रहो यस्येति वा स तथा तस्मादानन्दमूर्तय इत्यर्थः क्षितिभारासुरनिरसनलक्षणकारणमुद्दिश्य विग्रहो यस्य स तथा असुरनिरासाय स्वीकृतदेहायेत्यर्थः "यदा यदाहि धर्मस्य ग्लानिर्भवति भारत" इत्यादेः मायया कष्टो रणो येषान्ते कारणा असुराः तैर्विग्रहो विरोधो यस्य स तथा तस्मै "मायाभिरुत्सिसृक्षत इन्द्राद्या मारुक्षतः अवदस्यूंरधूनुथा" इति श्रुतेः स्वरूपेण चिदानन्दलक्षणाकारेण दूरीकृतप्राकृतदेहाय द्विजवन्ध्विति भावप्रधानो निर्देशः द्विजानां बन्धुः तस्य भावो द्विजबन्धुत्वं तदेव लिङ्गं यस्य स तथा नितरां गूढश्छन्नो लोकापेक्षया प्रकृत्यापिहितो नित्यानुभवो यस्य स तथा द्विजबन्धुलिङ्गश्चायं निगूढनित्यानुभवश्च तस्मै ॥ १ ॥

किं फलरत्नमुपलभ्य स्तौषीति तत्राह । ज्वरेति । निदाघेन औष्ण्येन दग्धस्य तप्तस्य कुदेहमानाहिसुनष्टदृष्टेरिति पाठः दुष्टदेहाभिमानाख्यसर्पेण सम्यङ्नष्टज्ञानचक्षुषो मे अमृतममृतकल्पं सरण्ण् उपो दाहो येषां ते औपास्तान् दधाति पुष्णातीत्यौपधम् ॥ २ ॥

किमत इति तत्राह । तस्मादिति । यस्मात्त्वद्वचनामृतं संसाराख्यरोगोन्मूलनकरं तस्मात्संशयार्थं कोटिद्वयारूढमर्थम् । यद्वा संशयनिवृत्त्यर्थं मशकार्थो धूम इति वत् वक्तव्यत्वे निमित्तमाह । पश्चादिति । अधुना त्वत्सन्निधौ सुबोधं पश्चात्त्वत्सन्निधिमन्तरेणासुबोधं ज्ञातुमशक्यं यस्मात्तस्मादितिशेषः किमुक्तार्थे प्रश्न उत्तार्थान्तर इतिविकल्पो मा भूदित्याह । अध्यात्मेति । अध्यात्मयोगेन परमात्मज्ञानेन ग्रथितं बद्धं यत्पुरा त्वयोक्तं वचनं तस्याभिप्रायं ममाख्याहि विस्तृत्य वदेत्यन्वयः ॥ ३ ॥

किं तदुक्तं तदाह । यदाहेति । हे योगेश्वर! दृश्यमानं प्रत्यक्षादिप्रमाणैर्ज्ञायमानं क्रियाफलं भरणागमनक्रियाजनितं भर्तृत्वगन्तृत्वलक्षणं फलं लौकिकम् "अपाम सोमम्" इत्यादिना निरूप्यमाणं सोमपानादिक्रियाजातममृतत्वादिकं फलं वैदिकं च तद्व्यवहारमूलमबाधिताभिज्ञादिव्यवहारकारणमञ्जसा मुख्यया वृत्त्या तत्त्वविमर्शनाय तत्त्वनिर्णयाय न भवति स्थायित्वेनैकनिष्ठं भवतीति यद्वचनं "भर्तुः स मे स्याद्यदि वीर! भारः व्यवहारमेनं तत्त्वावमर्शेन सहामनन्ति" इति उरुगार्हमेधवितानविधेत्यादिरूपं भवानाह । अमुष्मिन्वचसि मे मनो भ्रमते अस्य वचनस्यार्थोऽयमेव नान्य इति स्थिरस्थितिं न लभते सा यथा स्यात्तथाख्याहीति भावः भ्रमत इत्यात्मनेपदप्रयोगेण सकृत्त्विगदितनिगदाभिप्रायापरिज्ञाने नात्मनोऽनुत्तमाधिकारित्वं तत्त्वोपदेष्टृज्ञानिसद्भावे तस्मात् स्वयोग्यं सविशेषं ज्ञातव्यमन्यथानर्थः स्यादिति श्रोतृजनशिक्षार्थं चेति सूचयति ॥ ४ ॥

भर्तुः स मे स्याद्यदि वीर! भार इत्यादिनोच्यमानं भरणादिकमन्तर्यामिहरिनियतमित्येव मुमुक्षुणा स्मर्त्तव्यमेवं परो भगवानित्युक्तेः यत. "अक्षरमम्बरान्तधृतेः" य इन्द्रियातु पृथिवीमुतद्यामेको दधार भुवनानि विश्वा आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चनमिषत्स इमांल्लोकानसृजत" इत्यादिनोच्यमानमूलकारणत्वं हरेरेव नहि मूलं विसृज्यान्यग्रहणं युक्तिमत् अनवस्थानापातात् कथं तदिति शङ्कित्वा विपक्षे बाधकमाह । अयं जन इति । हे पार्थिव! यदि मूलकारणविवक्षा न स्यात्तर्हि यः पृथिव्यामुत्पन्नत्वादत्र विद्यमानत्वाद्वा पार्थिवो नाम सोऽयं जन्यत इति जनो देहो देही वा पृथिव्यामेव चलन् चलतीति व्यवहारः कस्य हेतोः कुतो वर्त्तते प्रत्यक्षसिद्धं कथमपलपितुं शक्यत इति चेत्तत्राह । तस्यापीति । तस्य जनस्यापि पादाद्यवान्तराधाराः सन्तीति यस्मात्तस्मादस्यापि प्रामाणिकत्वात्पृथिव्यामिव पादादिष्वपि चलतीति कस्मान्न भवेन्न चासावस्ति तस्मान्मूलकारणमेकमङ्गीकर्तव्यं तदनङ्गीकारे सर्वस्यापलापः प्रसज्यते अत्राधिशब्द उपर्युपर्यर्थवाचकः तथाह्यङ्घ्र्योरङ्घ्र्युपरि गुल्फौ तयोरुपरि जङ्घे इत्येवं योजना. गुल्फौ च जङ्घे च जानुनी च ऊरू च मध्यं च उरश्च शिरोधरा च अंसौ च ते तथा ॥ ५ ॥

दार्वी दारुमयी यस्यां शिविकायां सौवीरराजेत्यपदेशः शब्दमात्रं नतु रञ्जनाद्राजेत्यर्थो यस्य स तथा पिण्ड आस्ते यस्मिन् पञ्चभूतरचिते देहलक्षणे पिण्डे भवान्वर्तते कथंभूतो भवान् रूढो बद्धमूलो निजत्वेनाभिमानो देहे यस्य स तथा अत एव सिन्धुषु राजास्मीति दुष्टो मदोऽस्ति तेनान्धश्चक्षूरहितः ॥ ६ ॥

एतत्फलमाह । शोच्यानिति । तानिमान् बाह्यकान्विग्रहा निगृह्णन्यस्त्वं निरनुग्रहोऽसि मधुरवचनाद्यनुग्रहरहितोऽसीति यस्मात्तस्मादिहामुत्र च तवाधिरधिकः स्यादित्यन्वयः यथा शिविकाभर्तृत्वं मदन्तर्यामिमूलकारणनिष्ठमेवं जनस्य गोप्तास्मीति त्वयि कल्प्यमानं मूलगोप्तृत्वं च त्वदन्तर्यामिहरिनिष्ठमित्यभिप्रेत्याह । जनस्येति । वृद्धसभासु विद्वत्समितिषु जनस्य गोप्तास्मीति विकत्थमानो बहुभाषमाणो दुष्टोऽयं तत्त्वं न जानातीति श्लाघ्यो न भवतीत्यर्थः ॥ ७ ॥

नन्वेवं तर्हि पृथिव्या मूलाश्रयत्वमापन्नं तथाहि यदि मूलाश्रयविवक्षा न स्यात्तर्हि पृथिव्यां चलतीति व्यवहारो न स्यान्न च तथा तस्मात्पृथिव्या मूलाश्रयत्वं विष्णुविवक्षायामसङ्गतं चेत्याशङ्कां शाखाचन्द्रन्यायेनोक्तमिति परिहरति । यदीति । उत्पत्तिस्थित्योः पृथिव्यां दर्शनात्तस्याः मूलकारणत्वमित्यतो वाह । यदीति । यदि चराचरस्य क्षिताविव निष्ठां स्थितिं तत एव प्रभवमुत्पत्तिं च विद्याम विद्मः अविद्वद्रूढ्येति शेषः तथाप्यालोचने तत्रायमः प्रसिद्धक्षितिनाम्नोऽन्यद्व्यवहारमात्रं क्षितिशब्दव्यवहारयोग्यं सन्निश्रया अबाधितार्थक्रियया "क्षि निवासगत्योः" इति धातोः निवसन्त्यस्यामिति गच्छन्त्यस्यामिति निवासगत्योरप्रतिहताश्रयभूतं यत्तदनुमेयं क्षितिशब्दमुख्यार्थमिति निरूप्यतामित्यन्वयः "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर" इति श्रुतेः क्षितिशब्दमुख्यार्थो हरिरन्यस्याः पृथिव्यास्तन्नियतत्वेन तच्छब्दवाच्यत्वं" तदधीनत्वादर्थवत्" इतिसूत्रादिति सञ्चिन्तनीयमित्यर्थः प्रथितत्वात्पृथुत्वाद्वा पृथिवीति पृथिवीशब्दवाच्यत्वं मुख्यं हरेरेवेति पृथिव्यां चलतीत्युक्तं ननु पृथिव्या मुख्याश्रयत्वविवक्षया अङ्घ्र्याद्याश्रयत्वनिरासाय चेत्यतो नासङ्गदोषोऽपीति उत्पत्तिस्थिती इन्द्रजालवद्यादृच्छिक्यौ किन्तु प्रवाहरूपेण सदातने इत्यतो नित्यमिति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वरूपेण तदनुभवेन तुच्छीकृतो दण्डरूपो विग्रहो येन ॥ १ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

हे ब्रह्मन् ! ते तव वचः कुदेहाभिमानाहिदंशव्याप्तबुद्धिपर्यन्तस्य ममौषधं तत्र दृष्टान्तः। जरेति। कचित्तद्व्यभिचारतर्कात् पुनर्दृष्टान्तः । निदाघेति । तत्राप्यपरितोषात् अमृतमिति लुप्तोपमेयममृतमिवेत्यर्थः ॥ २—४ ॥

तत्र श्रीभगवदाख्यं तत्त्वमेव सर्व्वसाधकं स्वातन्त्र्येण तु किमपि रूपयितुं न शक्यमित्याह । अयमिति सप्तभिः ॥ ५—८ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मिथ्यात्वेऽप्यस्य विश्वस्य सत्याः कृष्णस्य षड्गुणाः ।
द्वादशे कथिता धामभक्त्याद्या अपि ते ततः ॥

कारणमीश्वरस्तस्यैव लोकरक्षणार्थो नित्यो विग्रहो देहो यस्य तस्मै । स्वरूपेण स्वानन्दानुभवेन तुच्छीकृतविग्रहाः शास्त्रकृतां विवादा येन तस्मै हे अवधूत! ॥ १ ॥

कुत्सिते देहे अभिमान एवाहिस्तेन विशेषतो दष्टा दृष्टिर्यस्य तस्य मम हे ब्रह्मन् ! ते वचः अगदमौषधं तत्र दृष्टान्तः। जरेति । कचित्तद्व्यभिचारतर्कात् पुनर्दृष्टान्तः । निदाघेति । तत्राप्यपरितोषात् अमृतममृतमिवेत्यर्थः ॥ २ ॥

मम संशयविषयमर्थं पश्चात् प्रक्ष्यामि अधुना तावत् त्वदुक्तं वचः अध्यात्मयोगेन ग्रथितं दुर्बोधं सुबोधं यथा भवत्येवं व्याख्याहि कौतूहलयुक्तमनसो मम कृते ॥ ३ ॥

हे योगेश्वर ! यद्भवानाह । दृष्टः श्रमः कर्मत इत्यादि मदुक्तौ भारवहनादिक्रिया तत्फलञ्च श्रमादि प्रत्यक्षादिभिर्दृश्यमानं सत् विद्यमानं व्यवहारमात्रमूलं तत्त्वविमर्शनाय दृष्टान्तादिनापि तत्त्वज्ञानमुपकर्त्तुं न क्षममिति । अमुष्मिन् त्वद्वचने भ्रमते स्पष्टस्याभिप्रायस्याप्राप्त्या मनो भ्रमति ॥ ४ ॥

पूर्वं स्वमतेन भङ्ग्या दत्तमप्युत्तरमबुद्ध्वैव पुनः पृच्छन्तं राजानमवजानन्निव भो राजंस्तव व्यवहारोऽयमप्रमाण एवेति मतान्तरमाश्रित्य पुनः प्रत्याह । अयं जनो भारवाहकः नाम प्रसिद्धः पार्थिवः पृथिव्या विकारः कस्यापि हेतोश्चलन् भवति यस्तु न चलति स तु पाषाणादिरित्येतावानेव भेदः । तस्यापि पार्थिवस्य अङ्घ्री पृथिव्या उपरिस्थौ अङ्घ्र्योरधि उपर्युपरि गुल्फादयः उरसः सलोप आर्षः ॥ ५ ॥

अंसे स्कन्धे दार्वी दारुविकारः शिविका यस्यां सौवीरराजः इत्यपदेशो नाम मात्रं यस्य स पार्थिवो विकार आस्ते यस्मिन् भवान् राजास्मीत्यभिमानेनैवास्ते नतु वस्तुतः । अत्र पृथिव्यादीनां शिविकान्तानां भारवहनात् किं सर्वेषां श्रमः उत कस्यचित् कस्यचित् न तावत् सर्वेषां पृथिव्याः शिविकायाश्च श्रमादर्शनात् अङ्घ्र्यादीनां श्रम उपलभ्यते इति चेन्न शिविकाया अभावे गुल्फादिभारवाहिनामपि तेषां श्रमानुपलब्धेः अङ्घ्र्याद्यवयविनः शिविका वहनात् श्रम इति चेत् अवयवेभ्यः पृथगवयविनः श्रमाश्रयस्यानिरूपणात् । नन्वस्तु मास्तु वा अवयवी भारवाहिनः श्रमदुःखमनुभूयत एवेति चेदेतदपि नैकान्तिकं अतिसुकुमार्या अपि रत्नालङ्कारान् वहन्त्याः स्वबालकं च वहन्त्याः श्रमदुःखानुपलब्धेस्तस्मादभिमानविशेषेणैव दुःखं सुखं च यथा राजाऽस्मीति दुर्मदेन दुरभिमानमत्तस्त्वं [illegible] किमपि न पश्यसीत्येतदेव तव सुखं निरभिमानानान्तु [illegible] दुःखसुखे इति भावः ॥ ६ ॥

ज्ञानाभावेऽपि राज्ञः प्रजाशासनं धर्म एवेति यदुक्तं [illegible] शोच्यानिति । दिष्ट्या निगृह्णन्निति ईदृशमेव निर्दयस्य तव [illegible] शासनं धर्म इति धृष्ट एव तदप्यच्युतस्य किङ्करोऽस्मीति [illegible] रस्मीति कत्थस इति भावः ॥ ७ ॥

नन्वभिमानशून्यस्य मुक्तस्यापि प्रारब्धसुखदुःख[illegible] श्रवणात् तवापि भारवहनक्रियाफलस्य श्रमस्य प्रत्यक्षं [illegible] दृश्यमानत्वेनाबाधितत्वाद्व्यवहारस्याप्रामाण्यं त्वदुक्तं न [illegible] चेत् सत्यं मुक्तानां मादृशानां बाधितानुवृत्त्यैव दुःखसुखा[illegible] यथा स्वप्नात् प्रबुद्धस्य जनस्य स्वप्नदृष्टसर्पस्य मिथ्यात्वे[illegible] कियत्क्षणपर्यन्तं भयकम्पादिकिञ्चित्करात्वेव अप्रबुद्ध[illegible] स्वाप्निकः सर्पः सत्य एव भाति यथा युष्माकं व्यवहार[illegible] व्यवहारस्यासत्यत्वं युक्त्या दर्शयामि शृणित्याह । यदेति । [illegible] चरस्य जगतः क्षितावेव निष्ठां नाशं प्रभवमुत्पत्तिञ्च [illegible] विद्धि तस्मात् सर्वेषां विकाराणां क्षितिभिन्नत्वाभावात् [illegible] मात्रादन्यद्व्यवहारस्य मूलं कारणमर्थक्रियया संदृ[illegible] निरूप्यतां यदि ते युक्तिः प्रतिभातीति भावः । तथा च [illegible] "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति । [illegible]

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वादशे रहूगणकृतान् संदेहान् मुनिरपानुदादिति [illegible] हे अवधूत ! तुभ्यं नमः कारणमृषभादिपरमहंसमूर्तिर्विष्णु[illegible] विग्रहो यस्य तस्मै स्वरूपेण भगवत्स्वरूपेण प्रत्यहं येन [illegible] कृतो विग्रहो कृतापराधेष्वपि कलहो येन तस्मै द्विजव[illegible] वेषेण निगूढो नित्यानुभवो येन तस्मै नमः ॥ १ ॥

कुत्सितः देहमानः देहात्माभिमानः स एवाहिस्तेन [illegible] विवेकलक्षणा दृष्टिर्यस्य तस्य ॥ २ ॥

मम संशयविषयमर्थं पश्चात्प्रक्ष्यामि अधुनेदानीन्तु [illegible] योगेन ग्रथितं दुर्बोधं त्वद्वचः सुबोधं यथा भवति त[illegible] हलयुक्तचेतसो मे आख्याहि कथय ॥ ३ ॥

तदेव दुर्बोधमनुवदति । यदेति । अयं सुखी [illegible] इत्यादिव्यवहारस्य मूलं निर्वाहकं क्रियाफलं पुन[illegible] कर्मजन्यं दृश्यमानम् अब्रह्मात्मकतया प्रत्यक्षप्रमाणाव[illegible] वोढव्यादिकं सर्वं त्वयोदितं व्यक्तमित्यादिना भवान् [illegible] ब्रह्मात्मकमेवाह । अमुष्मिन् त्वद्वचसि मे मनो भ्रमति [illegible] तत्त्वविमर्शनाय न भवति अतः यथा सर्वस्य ब्रह्मात्[illegible] भावः स्यात्तथा आख्याहीति भावः ॥ ४ ॥

एवं साङ्ख्यतार्किकादिकुतर्कविमोहितेना ब्रह्मा[illegible] मित्येवं मन्यमानेन राज्ञा पृष्टो मुनिस्तं वेदमार्गं [illegible] सर्वस्य पदार्थजातस्य शक्तिमति वासुदेवे ब्रह्मणि कार[illegible] भावमाह । अयमितिसप्तभिः । हे पार्थिव! पार्थिवः अवयव[illegible] चिद्धेतोः परमेश्वरांशभूतजीवसम्बन्धादित्यर्थः साङ्ख्या[illegible] हितो यथावज्जानाति न वा रहूगणः अतः कस्यचिद्वा[illegible]

एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानात्परमाणवो ये ।
अविद्यया मनसा कल्पितास्ते तेषां समूहेन कृतो विशेषः ॥ ९ ॥
एवं कृशं स्थूलमणुर्बृहद्यदसच्च सज्जीवमजीवमन्यत् ।
द्रव्यस्वभावाशयकालकर्मनाम्नाऽजयाऽवेहि कृतं द्वितीयम् ॥ १० ॥
ज्ञानं विशुद्धं परमार्थमेकमनन्तरं त्वबहिर्ब्रह्म सत्यम् ।
प्रत्यक्प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्ति ॥ ११ ॥
रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा ।
न च्छन्दसा नैव जलाग्निसूर्यैर्विना महत्पादरजोऽभिषेकम् ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

...यं वोढ्रादिरूपः पृथिव्यां चलन् नाम प्रसिद्धः जनो भवति ...स्य पार्थिवस्यापि अङ्घ्र्योः अधि उपरि उपरि गुल्फादयः ...दात्मका इत्यर्थः उरसः सलोप आर्षः ॥ ५ ॥

शिबिकापदार्थश्च पार्थिव एव तत्र सिन्धुराजनामका ...हश्च पार्थिव इत्याह । अंसे इति । सौवीरराजेत्यत्र सन्धि...र्षः ॥ ६ ॥

जीवस्तु सर्वात्मभूतवासुदेवज्ञानहीनः पार्थिवदेहात्माभिमानी ...न्यांश्च तथा विधानुपतापयति सर्वात्मभूतवासुदेवज्ञानवांस्तु ...पतापयति नोपतप्यते चेत्याशयेनाह । शोच्यानिति ॥ ७ ॥

चराचरस्य जङ्गमस्य स्थावरस्य च पार्थिवमात्रस्य क्षितौ ...रणभूतायां सतां क्रियया अन्नोपार्जनतद्भोजनपूर्वकगर्भाधाना...व्यापारेणानुमेयम् अन्नाद्भवन्ति भूतानीत्यादिवचनेन च प्रभव...त्पत्तिं निष्ठां च प्रलयञ्च यदा विदाम तदा तन्नामतः ...तिनामकात् कारणात् अन्यत् पृथक् व्यवहारमूलं क्षिति...व्यवहारकारणं निरूप्यताम् ॥ ८ ॥

---

भाषाटीका ।

रहूगणजी बोले किसी कारण से देहधारण करनेवाले स्वरूप ...अनुभव से सब कलह को दूर करने वाले अवधूत के वेषसे ...ह्मण के चिन्ह को गुप्त करने वाले नित्यस्वरूपके अनुभव ...रूप आपको नमस्कार है ॥ १ ॥

हे ब्रह्मन् ! ज्वर रोग दुःखित पुरुष को जैसे औषध अच्छा ...ता है घाम में जलने वाले को जैसे बरफ का जल होता है इसी ...कार खोटे देहके मान से ज्ञान नष्ट होनेवाले मेरे वास्ते आपका ...चन अमृतमय औषधके तुल्य है ॥ २ ॥

तिससे अपने संशय अर्थ को तो मैं पीछे पूछूंगा इस वखत ...आपके कहे वचनों का जैसे अर्थ मालूम पडे सो कहिये ...रे को बडा कौतुक है ॥ ३ ॥

हे योगेश्वर आपने जो कहा कि दृश्यमान क्रिया फल वर्तमान ...है तौ भी व्यवहार मात्र ही है किन्तु अनायास से तत्त्वज्ञान के ...वास्ते नहीं है सो इस बात में हमारा मन भ्रमता है ॥ ४ ॥

ब्राह्मण बोले हे पार्थिव सबही पृथिवी का विकार है तौभी किसी हेतु से यह पृथिवी में चलता हुआ पृथिवी का विकार पुरुषरूप है तिस पुरुष के भी पैरोंपर गुल्फ पींडुरी घोंटू जांघ कमर छाती कांधा गला शिर ये अवयव हैं ॥ ५ ॥

तिसी कांधेपर काठ की पालकी है जिसपर सौवीरदेश के राजा के नाम से प्रसिद्ध तुमारा शरीर है जिसपर मेरा ऐसा अभिमान करने वाले सिन्धु देश के हम राजा हैं ऐसा माननेवाले दुष्ट मद से अन्धे तुम बैठे रहो ॥ ६ ॥

अधिक कष्ट से दुःखित शोचने के योग्य इन मनुष्यों को वेगार में पकडने वाले तुम निर्दयी हो हम प्रजा के रक्षा करनेवाले हैं ऐसे गप्प मारने वाले धृष्ट हो सो वृद्धोंकी सभा में तुम नहीं शोभित होनेवाले हो ॥ ७ ॥

अब कि सब चर अचर की उत्पत्ति तथा नाश पृथिवीही में नित्य है तो फिर व्यवहार को छोडकर क्रियामात्र है ऐसा अनुमान करने के योग्य और क्या है सो कहो ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तर्हि क्षितेः सत्यता स्यात्तत्राह । एवं क्षितिशब्दस्यापि वृत्तं वर्तनमर्थं विनैव निरुक्तम् । यद्वा । क्षितिशब्दस्य वृत्तं यस्मिंस्तदपि मिथ्यात्वेन निरुक्तमित्यर्थः । कुतः । असत्सु सूक्ष्मेषु परमाणुषु स्वकारणभूतेषु निधानाल्लयात् अतः परमाणुव्यतिरेकेण क्षितिर्नास्तीत्यर्थः । परमाणवस्तर्हि सत्याः स्युः तत्राह । ते मनसा कार्यानुपपत्त्या वादिभिः कल्पिताः । कल्पनाबीजमाह । येषां समूहेन विशेषः कृतस्तेषां समूहः पृथ्व्यादुद्भवात्स्वनामेत्यर्थः अवयविनो निरस्तत्वात्समूहग्रहणम् । तथापि सत्याः स्युः न अविद्यया प्रपञ्चस्य भगवन्मायाविलसितत्वादज्ञानेन कल्पिताः ॥ ९ ॥

एवमन्यमपि कृशत्वादिधर्मकं बुद्ध्या प्रतीतं द्वितीयं द्वैतं द्रव्यादिनाम्नोपलक्षितयाऽजया मायया कृतमवेहि । तत्र कृशं ह्रस्वं स्थूलं तत्प्रतियोगि । अणुबृहतोः पृथगुपादानात् असत्कारणं सत्कार्यं जीवश्चेतनम् अजीवञ्जडम् ॥ १० ॥

तर्हि किं सत्यं तदाह । ज्ञानं सत्यं व्यावहारिकसत्यत्वं व्यावर्तयति परमार्थम् वृत्तिज्ञानव्यवच्छेदार्थानि विशेष-

श्रीधरस्वामिकृतभावार्थदीपिका ।

याति। विशुद्धं तत्त्वाधिकम्। एकं तत्तु नानारूपम् अनन्तरं स्ववहिर्वाह्याभ्यन्तरशून्यं तत्तु विपरीतम्। ब्रह्म परिपूर्णं तत्तु परिच्छिन्नम्। प्रत्यक् तत्तु विषयाकारम्। प्रशान्तं निर्विकारम् तदेवं स्वरूपज्ञानं सत्यमित्युक्तम्। कीदृशं तत्। ऐश्वर्यादिषड्गुणत्वेन भगवच्छब्दः संज्ञा यस्य यच्च ज्ञानं वासुदेवं वदन्ति ॥ ११ ॥

एतत्प्राप्तिस्तु महत्सेवां विना न भवतीत्याह। हे रहूगण! एतज्ज्ञानं तपसा पुरुषो न याति। इज्यया वैदिककर्मणा। निर्वपणाद्न्नादिसंविभागेन। गृहाद्वा तन्निमित्तपरोपकारेण। छन्दसा वेदाभ्यासेन। जलाग्न्यादिभिरुपासितैः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्षितावेवोत्पत्तिविनाशौ चराचरस्य विदाम इत्यनेन क्षितेस्तु नित्यत्वं प्रतीतं तन्निराकुर्वन्नाह। एवमिति। असन्निधानमसतामनित्यानां कार्याणां निधानं लयस्थानं यत्क्षितिशब्दवृत्तं क्षितिशब्दस्य वृत्तं वृत्तिर्यस्मिंस्तत् क्षितिशब्दवाच्यं तदप्येवं निरुक्तं दर्शितं यत्र देहाद्युत्पत्तिः सा क्षितिरप्यनित्येत्यर्थः भूमेरनित्यत्वज्ञापनाय तत्राप्यवयवविभागमवयवानां चानित्यत्वमाह। परमाणव इति। ये परमाणवः भूतसूक्ष्माणि येषां परमाणूनां समूहेन विशेषः कृतः भूमण्डलं कृतं ते परमाणवः मनसाधिष्ठातुरीश्वरसङ्कल्पेनाविद्यया प्रकृत्या कल्पिता ईश्वराधिष्ठितप्रकृतिपरिणामरूपत्वादनित्या एवेति भावः। यद्वा ये परमाणवो नित्यास्ते मनसाविद्यया कल्पिताः शरीराकारेण संहिताः त एवाहंममेत्यविद्यया आत्मत्वेन कल्पिता इत्यर्थः वेदान्तार्थोपबृंहणपरेऽस्मिन् प्रबन्धे परमाणुकारणवादायोगाद्वैशेषिकादिभिस्तेषामविद्याकल्पितत्वानभ्युपगमाच्च यथोक्त एवार्थः असन्निधानादित्यपि पाठो दृश्यते तत्रासत्स्वनित्येषु स्वकारणभूतेषु भूतसूक्ष्मेषु निधानात् लयात् क्षितिशब्दवृत्तमप्यनित्यमित्यर्थः ॥९॥

शरीरा नित्यत्वं निगमयन्स्थौल्यादिकं तद्गतमेवेत्याह। एवामिति। एवं काश्यादिगुणयुक्तं सदसदात्मकं कार्यकारणात्मकमुत्कृष्टापकृष्टात्मकं वा जीवसजीवं जीवभेदभिन्नं चराचरात्मकं द्वितीयमात्मनो भिन्नं शरीरं द्रव्यादिनाम्ना ऽजया प्रकृत्या कृतमिति बुद्ध्या निपुणयावेहि तत्र द्रव्यं पृथिव्यादिपञ्चभूतजातं स्वभावस्तेषां परिणाम आशयोऽन्तःकरणं वासना वा कालः सत्त्वादिगुणक्षोभकः द्रव्यादीनां प्रकृतिप्रपञ्चत्वात् द्रव्यादिनाम्नेत्युक्तम् ॥ १० ॥

एवं देहस्यानात्मत्वमुक्त्वमथात्मस्वरूपं शोधयति। ज्ञानमिति। जडात्मवादव्युदासः विशुद्धं स्वतः कर्मसम्बन्धरहितं रागादिदोषरहितं वा परमार्थं पुरुषार्थभूतमेकं सर्वत्र ज्ञानैकाकारमनन्तरं न वहिरन्तर्वहिः प्रदेशभेदरहितं निरवयवत्वात् ब्रह्म गुणतो व्यापकं सत्यं नित्यं प्रत्यक् स्वस्मै भासमानं प्रशान्तमशनायापिपासाशोकमोहजरामृत्यूर्मिषट्काररहितं साङ्ख्यमतव्यावृत्त्यर्थं ब्रह्मात्मकं सामानाधिकरण्येनाह। भगवच्छब्दसंज्ञं वासुदेवमिति। भगवच्छब्दः संज्ञा यस्य स भगवच्छब्दसंज्ञः

तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः।

इत्युक्तरीत्या भगवच्छब्दो यत्र वासुदेवे मुख्यवृत्तः [illegible] देवं वसुदेवात्मजं वदन्ति कवयः आत्मयाथा[illegible] वदन्ति ॥ ११ ॥

अत्र विशुद्धं परमार्थमित्यादिविशेषणैरचेतनशरीर[illegible] वासुदेवात्मकत्वकथनेन तत्सृज्यत्वपाल्यत्वनियाम्यत्व[illegible] धर्मैः तत्तदाक्षिप्तैस्ततो वैलक्षण्यं सूचितमेवम्भूतप्र[illegible] णस्वात्मपरमात्मयाथात्म्यज्ञानं कथं लभ्येतेत्यपेक्षायां नो[illegible] किन्तु महत्सेवाभगवद्गुणानुश्रवणादिप्रणाड्यैवेत्याह [illegible] हे रहूगण तदात्मपरमात्मयाथात्म्यज्ञानं महतां [illegible] पादरजःसेवां विना तपआदिभिः स्वमनीषापूर्वकैर्न [illegible] प्राप्नोति तत्र तपः कृच्छ्रचान्द्रायणादिरनशनादिर्वा इज्या[illegible] निर्वपणं सत्पात्रनिःक्षेपरूपं दानं गृहं गृहस्थधर्मः छन्दो[illegible] ऽभ्यासः एभिस्तपआदिभिस्तथोपासितैर्जलादिभिश्च [illegible] त्यर्थः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

फलितमाह। एवमिति। यथा प्रथितत्वयोगेन पृ[illegible] वाच्यत्वं हरौ निर्णीयते एवमाश्रयत्वात्क्षितिशब्दवृत्त[illegible] शब्दप्रवृत्तिनिमित्तमपि निरुक्तं निर्णीतं हरावेति शेषः [illegible] शब्दरूपं निर्वचनेन मुख्यं हरावेव दर्शितमिति वा [illegible] क्षितेराश्रयत्वापलापे बाधकं किमित्याशङ्क्य परमाणु[illegible] पृथिव्या आधारत्वानुपपत्तिरेव बाधिकेत्यभिप्रेत्याह। [illegible] मिति। ये परमाणवः पार्थिवा इति शेषः। येषां [illegible] परमाणूनां समूहेन पुञ्जेन विशेषः पृथिवीलक्षणः [illegible] कृतः ते परमाणवश्चराचरस्याश्रया इत्यसन्निधानं [illegible] कस्य चोद्यस्य परिहारः कथमागत इति तत्राह। [illegible] अविद्ययाऽज्ञानेन मनसा मनोरथेनाधारत्वेन कल्पिता [illegible] मुख्याधारा इतिशेषः किमेकैके परमाणवश्चराचरस्या[illegible] मिलिता इत्युभयोरपीदमेवोत्तरमसन्निधानमिति ये पार्थि[illegible] माणवस्तेषां निधानं नितरां स्वातन्त्र्येण धानं धारण[illegible] पपन्नं येषां समूहेन विशेषः कृतस्तेषां [illegible] सामर्थ्यं नास्ति ईश्वरनियतप्रकृतिमन्तरेणेति शेषः तदु[illegible] उक्तम्। अविद्ययेति। मनसेश्वरेच्छाविशिष्टेन तदन्तःकर[illegible] तया अविद्यया प्रकृत्या ते परमाणव आधारत्वेन कल्पि[illegible] स्वतन्त्रा इति वा येषां परमाणूनां द्व्यणुकादि[illegible] काणादाः पुञ्जेनेति बौद्धाः अविद्यया कल्पिता ये [illegible] वस्तेषां समूहेनेति मायावादिनः तेषां सर्वेषां [illegible] परमाणूनां चराचरधारणमसन्निधानं दूरीभूतमिति [illegible] वा ॥ ९ ॥

ननु क्षित्यादिशब्दानां मुख्यार्थो हरेश्चराचरस्यो[illegible] यदि स्यातां तर्हि जगत्यां जगत्पृथिवी वा "इदं सर्वं[illegible] श्रुतेः प्रकृत्यादिवाच्याभावेनाप्रामाण्यमापन्नमिति [illegible] मिति। असत्कारणं सत्कार्यं वाच्याकाशौ वा पृ[illegible] वा जीवं चैतन्यविशिष्टं वस्तु अजीवमन्यदस्वतन्त्रं जडं [illegible] अन्यन्मिथो विष्णोश्च भिन्नमेवं विधं जगद्यया [illegible] धृतं चैवमजया भगवन्नियतया प्रकृत्या द्वितीयकार[illegible] च कृतमवेहीत्यन्वयः अत्रायमाशयः राजादीनां गौ[illegible]

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुमाश्रया भूमेराश्रयकारणत्वे च यो व्यवहारः स उपचारो यतो राजादीनामाश्रयो जनिकर्ता च ब्रह्मा तस्य प्रकृतिस्तस्याः श्रीनारायणो नान्याधारोऽतः सर्वाधारत्वादिकं मुख्यतः सर्वशब्दवाच्यत्वं च तस्यैव तदनुग्रहलेशेन प्रकृत्यादीनां तत्तत्कारकत्वं तत्तच्छब्दवाच्यत्वं शिरआद्यवयवाधारत्ववदाधारत्वं चामुख्यमिति एतदभिप्रायेण द्रव्यादिनान्येत्युक्तं चित्प्रकृतेर्द्रव्याभिमानित्वेनान्यस्याः तदात्मत्वेनेति शेषः

राजा गोप्ताश्रयो भूमिः कारणं चेति लौकिकः ।
व्यवहारो न तत्सत्यं तयोर्ब्रह्माश्रयो विभुः ॥
गोप्ता च तस्य प्रकृतिस्तस्या विष्णुः स्वयं प्रभुः ।
तव गोप्त्री तु पृथिवी न त्वं गोप्ता क्षितेः स्मृतः ॥
अतः सर्वाश्रयश्चैव गोप्ता च हरिरीश्वरः ।
सर्वशब्दाभिधेयश्च शब्दवृत्तेश्च कारणम् ।
सर्वान्तरः सर्वबहिरेक एव जनार्दनः ।
शिरसो धारता यद्वद्ग्रीवायास्तद्वदेव तु ॥
आश्रयत्वं च गोप्तृत्वमन्येषामुपचारतः ।

इत्येतद्वाक्यमस्मिन्नुक्तार्थे जागर्ति अत इदमेव श्रद्धेयं नान्यत्स्वकपोलकल्पितमिति ज्ञायते ॥ १० ॥

ननु हन्त प्रकृत्यादिसर्वजगत्प्रवर्तकस्य हरेः स्वरूपम् कीदृशं येन तदन्तःपतितस्यापि न तन्मलालेप इति तत्राह । ज्ञानमिति । "ज्ञानमनन्तं ब्रह्म" इति श्रुतेर्गुणगुणिनोरभेदाभिप्रायेण गुणव्यपदेशः वृत्तिज्ञानवद्विषयोपरक्तं नेत्याह । विशुद्धमिति । विशुद्धं विषयसंसर्गेऽपि तत्कृतदोषलेशस्पर्शो नास्तीत्यर्थः "असङ्गोऽह्ययं पुरुष" इतिश्रुतेः विशुद्धस्यापि केनचित्पारदवद्बाधः किं न स्यादिति नेत्याह । परमार्थमिति । परमार्थम् उत्तमार्थमबाधितं वस्त्वित्यर्थः "वस्तु हेतुनिवृत्तिषु" इत्यभिधानात् तादृशमन्यदस्तीति नेत्याह । एकमिति । एकम् "आत्मा वा इदमेक एवाग्र आसीत्" इति श्रुतेः लोके साम्याधिक्यदर्शनात् कथमस्य तदभाव इति नेत्याह । अनन्तरमिति । अन्तः स्थित्वा प्रेरको नास्तीत्यनन्तरमन्तरभावे बहिः किं न स्यादिति नेत्याह । न बहिरिति । बहिरपि प्रेरको नेति घटादिवत्परिच्छिन्नं नेत्यतो वाह । अनन्तरं न बहिरिति । यस्मादन्तर्बहिश्च नास्तीति "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इतिश्रुतेः "अणोरणीयान्महतोमहीयान्"इति च किमस्य संक्षेपत उक्तम । ब्रह्मेति । कस्मादस्यान्तर्बहिर्नास्तीत्यतो वाह । ब्रह्मेति । ब्रह्म पूर्णं निरुपमचरितमितिशेषः किमेक एव गुण इति नेत्याह सत्यमिति । सत्यं साधु सुखादिगुणयुक्तं किमिदं चतुर्मुखाख्यमिति नेत्यतो वाह । सत्यमिति । "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः मुख्यं ब्रह्मेत्यर्थः गुणानां साम्येऽपि ज्ञानानन्दयोर्लोकापेक्षया प्राधान्यज्ञापनायावताराणां रामकृष्णयोरिवेत्यतो वाह । सत्यमिति । उत्कृष्टानन्दज्ञानम ।

सच्छब्द उत्तमं ब्रूयादानन्दन्तीति वै वदेत् !
येति ज्ञानं समुद्दिष्टं पूर्णानन्दद्दशिस्ततः ।

इति वचनात् एतद्वस्तु कुत्र सदिति तत्राह । प्रत्यगिति । जीवस्य हृद्यभिमुखं बिम्बरूपमिति यावत् "रूपं रूपं प्रतिरूपो बभूव"इति श्रुतेः क्रुद्धस्वभावं नेत्याह । प्रशान्तमिति । प्रशान्तम् निस्तरङ्गस्तिमितसमुद्रकल्पं"निष्कलं निष्क्रियं शान्तम्" इतिश्रुतेः किमस्माकं कार्यमित्यत्राह । भगवच्छब्दवाच्यमिति । अस्माकं पूज्य इतिशब्देनोच्यते अत्र भगवानिति शब्दो वृद्धैः प्रयुज्यते"भगवान् पूज्य"इति हलायुधः नन्वस्य शब्दस्य तापसमात्रेऽपि प्रयोगदर्शनात् कथं निर्णय इति तत्राह । यदिति । कवयो यद्भगवच्छब्दवाच्यं वस्तु क्रीडित्वा सर्वत्र वसनाद्वासुदेवनाम गृणन्ति तज्ज्ञानादिगुणपूर्णं ब्रह्म प्रकृत्यादिप्रेरकं जानीहीति वाक्यशेषः उक्तानामनुक्तानां सर्वेषां गुणानां फलीकरणेनेति वा भगवच्छब्दवाच्यं तत्प्रतिपादनार्थं वासुदेवपदं वेति बलज्ञानानन्दादयो गृह्यन्ते अश्निति शत्रुनिरासपटीयोवीर्यशौर्यौदार्यादयो देवेति क्रीडाजिगीषाकान्त्यादयः एते यत्र प्रत्येकं पूर्णतयान्योऽन्याविरुद्धतया च विहृत्य वसन्ति तद्वासुदेवसंज्ञं वदन्तीति समुदायार्थं इति वा अज्ञानामपि बुद्ध्यवतारार्थं वसुदेवपुत्रत्वाद्वासुदेवमित्युक्तमिति वा ॥ ११ ॥

एतादृशवस्तुज्ञानप्रापकः कोऽन्तरङ्गोपाय इत्याशङ्क्य वैराग्यरसायनसेवया प्रवृद्धबला भक्तिरेव सा च सुदृढातिविशदा महत्सेवामन्तरेण न स्यात्तपआदयस्तदुपदिष्टा एव तस्या निदानभूतास्तदर्थं तत्सेवैवावश्यं भाविनीत्यभिप्रेत्याह । रहूगणेति । यातिरत्र ज्ञानं गतिं च वक्ति विद्यया शास्त्रविषयया केवलया निर्वसनं संन्यासः छन्दसा ब्रह्मयज्ञेन जलाग्निसूर्यैः सेवितैरितिशेषः "नायमात्मा प्रवचनेन लभ्यो नमेधया न बहुना श्रुतेन इत्यादिश्रुतेः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अविद्ययेति । यस्य समूहरूपस्य विशेषस्यान्यथानुपपत्त्या तद्धेतवः परमाणवः कल्प्यन्ते । तस्याप्यवयविवन्निरूपणाशक्यत्वात्सेऽप्यज्ञानेनैव कल्पिता इत्यर्थः ॥ ९—१० ॥

एवं तर्कमयस्वतन्त्रकारणसमूहवाद्ममायावर्यावखण्डनाय तर्कः प्रयोजितः अथ शब्दमयस्वमतस्थापनाय सर्वत्र परमात्मैकरवावयवित्वं वदंस्तत्र तारतम्येन मतद्वयमाह । ज्ञानमिति । यदेव कवयः पूर्वोक्तनिर्विशेषज्ञानवादिभ्योऽपि शब्दप्रमाणनिपुणा भगवच्छब्दसंज्ञमाहुः श्रुत्या युक्त्या च सशक्तित्वेनैव सिद्धत्वात् । तथैव सर्वाश्रयत्वेन दर्शयति । वासुदेवमिति ॥ ११ ॥

एतद्भगवत्संज्ञं तत्त्वं छन्दसा ब्रह्मचर्येण गृहाद्गार्हस्थ्येन तपसा वानप्रस्थेन निर्वपणात् संन्यासात् । इज्यया तत्र तत्र तत्तद्देवतोपासनया तस्यामपि विशेषः जलाग्निसूर्यैरिति । महत्पादरजोऽभिषेकं विनेति । तस्यैव सर्वशुद्धिहेतुत्वेन योग्यतादेतुत्वात् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तर्हि क्षितेः सत्यता स्यात्तत्राह । एवं क्षितिशब्दस्यापि वृत्तं वर्त्तनं सत्ता नाममात्र एवेत्यर्थः । कुतः असत्सु सूक्ष्मेषु परमाणुषु स्वकारणेषु निधानाद्व्ययात् । ततः परमाणुव्यतिरेकेण

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

च्चितिर्नास्तीत्यर्थः । परमाणवस्तर्हि सत्याः स्युस्तत्राह । अविद्यया अज्ञानेनैव हेतुना मनसा ते कार्यानुपपत्त्या कल्पिता वादिभिस्तो-ऽसत्या एवेत्यर्थः । कल्पनाबीजमाह । येषां समूहेन विशेषः पृथिवी-शब्दवाच्योऽर्थः कृतः । अवयविनो निरस्तत्वात् समूह-ग्रहणम् ॥ ९ ॥

एवमन्यदपि कृशत्वादिधर्मकं द्वितीयं द्वैतं द्रव्याविनाम्नो-पलक्षितयाऽजया मायया कृतमवेहि तत्र कृशं सूक्ष्ममणुरति-सूक्ष्मं बृहत् अतिस्थूलम् असत् कारणं सत् कार्यं जीवं सचेतनम् अजीवमचेतनम् ॥ १० ॥

तर्हि किं सत्यमिति चेत् पूर्वोक्तं तत्त्वमेव शब्दप्रमाणवेद्यं तच्च तत्त्वं "वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्" इति प्रथम-स्कन्धोक्तवदेवाह । ज्ञानं सत्यं कीदृशं विशुद्धं गुणातीतं परमो-ऽर्थो मोक्षादिको यस्मात्तत् एकमद्वयम् अनन्तरमबाह्यं बाह्याभ्य-न्तरशून्यं व्यापकमित्यर्थः । तच्च ज्ञानं "ब्रह्मेति परमात्मेति भग-वानिति शब्द्यत" इत्युक्तवदेवाह । ब्रह्म ब्रह्मशब्दवाच्यं निर्विक-ल्पकं ज्ञानिनामुपास्यं प्रत्यक् प्रशान्तं परमात्मशब्दवाच्यं योगिनामुपास्यं प्रशान्तमिति जीवात्मव्यावृत्त्यर्थं भगवच्छब्दः संज्ञा यस्य तत् भक्तानामुपास्यं यत्त्रिरूपम् इदमपि वासुदेवं वसु-देवनन्दनं वदन्ति पूर्णं ब्रह्म सनातनमिति कृष्णाय परमात्मने इति ततस्तु भगवान् कृष्ण इत्यादिभ्यः तत्रापि ब्रह्मणो हि प्रति-ष्ठाहमिति "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति वासुदेवो भगवतामित्यादिभ्यो वसुदेवनन्दनस्यैव परमपूर्णत्वम् अत्र भगशब्दस्यैश्वर्यवाचित्वादैश्वर्यस्य चेशितव्यापेक्षितत्वा-दीशितव्यानां मायिकानाञ्चोक्तयुक्त्या मिथ्यात्वाद्भक्तास्तद्धा-मवासिन एव ईशितव्या नित्या अवगतास्तेषां तद्धाम्नश्च नित्यसत्यत्वं भगवत इव शब्दप्रमाणसिद्धमेव प्रथमस्कन्धादौ प्रपञ्चितमेव तथैव मत्सेवायां तु निर्गुणेति मन्निकेतन्तु निर्गुणमित्यादिभिरेकादशे भक्तिसम्बन्धिवस्तुमात्रस्यैव नित्य-सत्यत्वं प्रपञ्चयिष्यते च प्रकरणाभिप्रायश्चायं भो राजन् ! युष्माकं प्रत्यक्षादिप्रमाणसिद्धस्यापि व्यवहारस्य मायाजीवस्य मायारचितस्य नित्याः आविर्हिताः क्वापि तिरोहिताश्चेत्यनेन स्वमतेन कालदेशादिपरिच्छिन्नत्वान्नश्वरत्वमङ्गीकुर्वता काल-देशाद्यपरिच्छिन्ने तत्त्वे चिद्घनवस्तुनि व्यवहारो वैजात्यादेव नाश्रीयते इत्युक्तं तदपि व्यवहारमेव पुनः पुनरुत्थापयसि चेदे-नमन्ये वादिनो मिथ्यैवाचक्षत इति तन्मतमुदाहृतम् । शब्दप्रमा-णसिद्धे तत्त्वे तु तेऽपि न विप्रतिपद्यन्त इत्यन्तेन ज्ञानं विशुद्ध-मिति पद्यमुक्तमिति । ननु देहेन्द्रियादिव्यापारः श्रीकृष्णस्यै-कनिष्ठो भक्तिरिति भक्तिर्लक्षिता । तस्याश्च लक्षणं भक्तियोगस्य निर्गुणस्येत्युदाहृतमिति भगवदुक्तेर्निर्गुणत्वमवसीयते तच्च परि-णामवादे कार्यस्य सत्त्वात् । प्राकृतदेहेन्द्रियादीनामेव भक्ति-संसर्गेणाप्राकृतत्वं स्पर्शमणिन्यायेनैव साधु बुद्ध्यामहे । विव-र्त्तवादे तु कार्यमात्रस्यैवासत्त्वात् देहेन्द्रियादीनां मिथ्याभूतत्वा-द्भक्तेः स्थितिरेव नास्ति कुतस्तस्या निर्गुणत्वं घटतां तथाहि निर्गुणां भक्तिमयमुपदेष्टव्य इति गुरूपदेशकाले उपदेष्टव्यजनस्य मिथ्याभूतत्वादाकाशक्षेत्रे बीजवपनमिव गुरूपदेश एव तावन्न भवेत् । कुतः कृष्णभक्तिः कुतस्तरां तदभ्यासेन प्रेमो-दयः कुतस्तमां तेन भगवद्वशीकार इति सत्यं महाचिन्त्य[illegible] भगवति काप्यसम्भावना न भावनीया यदुक्तं स्वयं [illegible] "एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् । यत् सत्य[illegible] मर्त्येनाप्नोति मामृतम्" इति । अस्यार्थः यत् यतः अनृतेन[illegible] भूतेनापि मर्त्येन मर्त्यशरीरेण मामृतं सत्यं परम[illegible] प्राप्नोति । यद्वा मा मामृतं परमानन्दस्वरूपं [illegible] तेनापि मर्त्येन मरणधर्मवता देहेन्द्रियप्राणादिना [illegible] गन्धधूपदीपविविधनैवेद्यच्छत्रचामराद्युपचारेण च [illegible] एषैव बुद्धिमतां बुद्धिरेषैव मनीषिणां परम[illegible] वतां मनीषा विचार इति प्राप्तिप्रकारश्च स्वयं [illegible] वोक्तो यथा । "मर्त्यो यदा त्यक्तसमस्तकर्मा निवे[illegible] विचिकीर्षितो मे । तदामृतत्वं प्रतिपद्यमानो मयात्मभूय[illegible] कल्पते वै,, अस्यार्थः यदा मर्त्यस्त्यक्तसमस्तकर्मा गु[illegible] काले त्यक्तसमस्तवर्णाश्रमधर्मकामनः मयि श्रीगुरुरू[illegible] दितौ आत्मानौ अहन्तास्पदममतास्पदे येन सः । "यदिदं [illegible] यत् किञ्चिदिह लोके परत्र च । तत् सर्वं भवतो नाथ ! [illegible] समर्पितम्" इति व्यवसायवान् भवति तदा स जनो [illegible] भूतोऽपि मे मया विचिकीर्षितः स्यात् विशिष्टः [illegible] स्यात् निर्गुणो मदपाश्रय इति मदुक्ते निर्गुणस्य [illegible] दित्यर्थः स हि मायाकार्यत्वान्न नश्वरः सत्यः नात्यन्त[illegible] त्वान्मिथ्याभूतः किन्तु स्वरूपभूतो मत्कार्यत्वान्निर्गुण[illegible] स्यात् । किञ्च मायाविशिष्टः कृतः स्यादित्यप्रयुज्य [illegible] र्षित इति सन्प्रत्ययप्रयोगान्निर्गुणः कर्तुमारभमाण [illegible] शनैः शनैर्भक्त्यभ्यासवान् निष्ठारुच्यासक्तिरतिभू[illegible] एव सम्यङ्निर्गुणः स्यात्ततो मिथ्याभूतवस्तुभिः [illegible] व्यवहारो न स्यात् तत्पूर्वन्तु यथा योग्यं व्यवहारश्च [illegible] लभ्यते । अयमर्थः अचिन्त्यशक्त्या भक्त्युपदेशकाल एव [illegible] गुणातीतानि देहेन्द्रियमनांसि मया भक्तिमाहात्म्य[illegible] मलक्षितमेव सृज्यन्ते मिथ्या भूतानि तान्यलक्षित[illegible] यान्ति । यथा "नैवंविधः पुरुषकार उरुक्रमस्य पुंसां [illegible] रजसा जितषड्गुणानाम् । चित्रं विदूरविगतः सकृदादद[illegible] मधेयमधुना स जहाति बन्धम्" इति । अस्यार्थः [illegible] प्रियव्रतकर्त्तृकसप्तसमुद्रनिर्माणप्रपञ्च इव पुरुषकारो [illegible] चित्रं खल्वेतदेव यद्विदूरविगतोऽन्त्यजोऽपि यस्योरुक्रमस्य [illegible] सकृदप्याददीत अधुना तत्क्षण एव तन्वं तनुं [illegible] तदानीं तनोर्दृश्यमानत्वेऽपि प्रारब्धकर्मसम्बन्धि[illegible] अलक्षित एवेत्यर्थः । ततश्च तदा अमृतत्वं मरणधर्मान[illegible] पद्यमानः तदानीमेव प्राप्नुवन् मया सह आत्मभूय[illegible] भावाय आत्मनः स्वस्य स्थित्यै [illegible] यत्राहं तिष्ठा[illegible] सोऽपि मत्सेवार्थं तिष्ठतीत्यर्थः । एवञ्च जगत्यस्मिन् या[illegible] वस्तूनि मिथ्याभूतान्युपलभ्यन्ते तेषामेव भक्तिसम्ब[illegible] भूतत्वं प्रविलाप्य भगवता स्वभक्तेच्छानुकूलेन पर[illegible] मेव तत्क्षण एव सृज्यते किमशक्यमचिन्त्यशक्तेर्भगव[illegible] एव मत्सेवायान्तु निर्गुणेति मन्निकेतन्तु निर्गुणमित्या[illegible] भगवद्वाक्यानि सङ्गच्छन्ते । "अचिन्त्याः खलु ये भावा[illegible] र्केण योजयेत् । प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षण[illegible] द्यमपर्यवचनं माध्यकारेणापि धृतं तत्र भावा इति [illegible] नाद्वैतभङ्गो मध्येयस्तेषामैक्यादिति सर्वमवदातम् ॥ ११ ॥

यत्रोत्तमश्लोकगुणानुवादः प्रस्तूयते ग्राम्यकथाविघातः ।
निषेव्यमाणोऽनुदिनं मुमुक्षोर्मतिं सतीं यच्छति वासुदेवे ॥ १३ ॥
अहं पुरा भरतो नाम राजा विमुक्तदृष्टश्रुतसङ्गबन्धः ।
आराधनं भगवत ईहमानो मृगोऽभवं मृगसङ्गाद्धतार्थः ॥ १४ ॥
सा मां स्मृतिर्मृगदेहेऽपि वीर ! कृष्णार्चनप्रभवा नो जहाति ।
अथो अहं जनसङ्गादसङ्गो विशङ्कमानोऽविवृतश्चरामि ॥ १५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतत् प्राप्तिश्च महत्कृपाविर्भूतया भक्त्या विना न भवतीत्याह द्वाभ्याम् । हे रहूगण ! एतदुक्तलक्षणं त्रिविधं ज्ञानं तपआदिभिर्न प्राप्नोति तत्र तपश्चित्तैकाग्र्यमिज्या वैदिकं कर्म निर्वपणमन्नादिसम्विभागः गृहं तन्निमित्तपरोपकारादि छन्दो वेदाभ्यासः । जलाग्निसूर्यास्तत्करणकतपश्चरणानि ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं पार्थिवानां देहादीनां पृथिव्यात्मकत्वं दर्शितम् अथ पृथिव्या भूतसूक्ष्मात्मकतां दर्शयति। एवमिति। क्षितिशब्दस्य वृत्तं वृत्तिर्यत्र तदपि भूतम् असत्सु भूतसूक्ष्मेषु स्वकारणेषु निधानात् लयात् निरुक्तं भूतसूक्ष्मात्मकत्वेन निरूपितं येषां समूहेन विशेषः भूमिपदार्थः कृतस्नानि भूतसूक्ष्माणि ये च परमाणवः अणुपरिमाणकाः प्राणाः पंचादशेन्द्रियाणि च अविद्यया प्रकृत्याख्यया शक्त्या मनसा सङ्कल्पमात्रेणैव वासुदेवेन ब्रह्मणा परमकारणेन कल्पिता रचिताः तदात्मका इत्यर्थः ॥ ६ ॥

किंबहुना एवमन्यत् यत्कृशत्वादिधर्मकं द्रव्यादिनाम्ना उपलक्षितमजया प्रकृत्या सह द्वितीयं कृतं कार्यजातं च तत्सर्वं यद्वासुदेवाख्यं ब्रह्म कवयो वदन्ति तदेव हीत्यन्वयः "सदेव सोम्येदमग्र आसीत् ऐतदात्म्यमिदं सर्वं सर्वं खल्विदं ब्रह्म"इत्यादिश्रुतिभ्यः ।

न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ।
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ।
इन्द्रियाणि मनोबुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च ॥

इत्यादिस्मृतिभ्यः ॥ १० ॥

तदेव ब्रह्म विशिनष्टि । ज्ञानमिति । ज्ञानं "सत्यं ज्ञानमनन्तं ब्रह्म"इति श्रुतेः विशुद्धं हेयगुणशून्यं परमार्थं मुक्तोपसृप्यम् एकं समानातिशयशून्यम् अनन्तरं स्वबहिः सर्वसंनिहितं मद्गतं च ब्रह्म बृहत्स्वरूपगुणशक्ति प्रत्यक् जीवः प्रशान्तो यस्मात्तत् भगवच्छब्दः संज्ञा यस्य तत् ॥ ११ ॥

अथ मम संशयार्थं पश्चात्प्रक्ष्यामीत्युक्तवता राज्ञानापृष्टोऽपि मुनिः स्वयं कृपया तदर्भाष्टार्थंप्रु तं विसंशयं कृत्वा हरि-ज्ञानभक्तिभ्यां मुक्तो भवेति राजानं प्रत्याह । रहूगणेत्यारभ्य "असज्जितात्मा हरिसेवया शितं ज्ञानासिमादाय तरातिपारम्" इत्यन्तेन महतां भागवतानां पादरजोऽभिषेकं विना तच्चरणसेवां विना एतत्सर्वात्मभूतं ब्रह्म पुरुषस्तपआदिभिर्न याति तपसा कृच्छ्रादिना इज्यया वैदिककर्मणा निर्वपणात् अन्नादिसंविभागात् गृहात्पुत्राद्युत्पादनेन छन्दसा वेदाभ्यासेन जलादिभिरुपासितैः ॥ १२ ॥

---

भाषाटीका

इसी प्रकार से पृथिवी शब्द के अर्थ की भी स्थिति है क्यों कि पृथिवी अपने परमाणुओं में लीन हो जाती है जो परमाणु होंगे सोभी नैयायिकोंने युक्तिसे नित्यरूप अज्ञान से कल्पना किये हैं उन परमाणुओं के समूह से ही पृथिवी बनी है ॥ ६ ॥

इसी प्रकारसे पतला मोटा छोटा बडा कारण कार्य जड चेतन और जो कुछ पृथिव्यादि द्रव्य स्वभाव संस्कार काल अदृष्ट इत्यादि नाम से जो पदार्थ प्रसिद्ध है वह सब व्यवहार के लिये भेद कल्पित करके बनाया गया है ॥ १० ॥

विशुद्ध अबाधित एक बाहिर भीतर रहित सत्य एक स्वयं प्रकाशमान प्रशान्त भगवत् शब्दवाच्य ज्ञान स्वरूप ब्रह्म जिनको कविजन वासुदेव कहते हैं सोई सत्य हैं ॥ ११ ॥

हे रहूगण ! इस आत्मतत्त्वको मनुष्य न तपस्या करने से न यज्ञादि कर्मों से न अन्नादि दान से न संन्यास से न वेदाध्ययन से न जल अग्नि सूर्यादिकों की उपासना से प्राप्त हो सका है किंतु महापुरुषों के चरण रजके स्नान होनेही से प्राप्त होता है ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

महत्सेवायास्तत्प्राप्त्युपायतामाह । यत्र येषु महत्सु । ग्राम्यकथानां विघातो यस्मात् ॥ १३ ॥

विषयसङ्गस्तु योगभ्रंशक इति वदन्कस्त्वं निगूढश्चरसीति प्रश्नस्योत्तरमाह । अहमिति द्वाभ्याम । विमुक्तो दृष्टश्रुताभ्यां सङ्गनिमित्तो बन्धो येन हतोऽर्थः प्रयोजनं यस्य ॥ १४ ॥

श्रीकृष्णार्चनं प्रथमप्युद्धरतीत्याह । सेति । जनसङ्गाद्विशङ्कमानः । अविवृतोऽप्रकटः ॥ १५ ॥

तस्मान्नरोऽसङ्गसुसङ्गजातज्ञानासिनेहैव विवृक्णमोहः ।
हरिं तदीहाकथनस्मृतिभ्यां लब्धस्मृतिर्यात्यतिपारमध्वनः ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां ब्राह्मणरहूगणसम्वादे
द्वादशोऽध्यायः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

असङ्गैर्महद्भिर्यः सुसङ्गस्तेन जातं ज्ञानमेवासिः खड्गस्तेन छिन्नमोहः सन् अध्वनः संसारमार्गस्यातिशयितं श्रेष्ठं पारं हरिं याति । यद्वा । पारमति अतिक्रम्य हरिं याति । "अतिरतिक्रमणे च" इति कर्मप्रवचनीयत्वाद्द्वितीया तस्य हरेरीहानां कथनस्मृतिभ्यां लब्धा स्मृतिर्येन सः ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथं महत्सेवया तद्यातीत्यत्राह । यत्र येषु महत्सु ग्राम्यकथानामभिघातो यस्मात्स उत्तमश्लोकस्य भगवतो गुणानुवादः प्रस्तूयते प्रस्तूयतां गुणानुवादः प्रकृते किमायातं तत्राह । अनुदिनं निषेव्यमाणो गुणानुवादः वासुदेवे सतीं मतिं मुमुक्षोर्यच्छति स्वात्मपरमात्मयाथात्म्यविषयं ज्ञानं संपादयतीत्यर्थः ॥ १३ ॥

एवं गृहमेधिसौख्यवैराग्यस्य ज्ञानहेतुत्वमभिधाय विषयसङ्गस्य ज्ञानभ्रंशकरत्वं स्वदृष्टान्तेन वदन् कस्त्वं निगूढ इत्यादिप्रश्नस्योत्तरमाह । अहमिति द्वाभ्याम् । पुरा पूर्वतरस्मिन् जन्मनि अहं भरतो नाम प्रसिद्धः राजाऽभूवं तत्र विशेषेण व्यक्तः दृष्टेष्वैहिकसुखेषु श्रुतेष्वामुष्मिकेषु स्वर्गादिषु च सङ्गरूपो बन्धो येन तथाभूतः सन् भगवत आराधनं कुर्वाणस्तत्र मृगसङ्गाद्धतः विहतः आराधनलक्षणोऽर्थो यस्य तथा भूतो मृगोऽभवं मृगजन्मप्राप्तोऽभूवम् ॥ १४ ॥

हे वीर ! कृष्णार्चनप्रभावाद्भगवदाराधनजा सा भगवद्विषया स्मृतिः मृगदेहेऽपि मां न जहाति नात्याक्षीत् कृष्णार्चनप्रभावविषयको विस्मय अहो इति अधुना जनसङ्गाद्विशङ्कमानः अत एवासङ्गः विवृतः अप्रकटः गूढाद्यप्रविष्टश्चरामि ॥ १५ ॥

तस्मात्सङ्गस्य बन्धकत्वान्नरः असङ्गेषु ज्ञानिषु सङ्गेन जातो यः ज्ञानरूपोऽसिः खड्गस्तेन विशेषेण वृक्णाश्छिन्नः सङ्गो देहतदनुबन्धिषु येन तथाभूतः सन्नध्वनः संसाराटव्यध्वनः पारमत्यन्तमवधिं हरिं भगवन्तं तदीहाकथनश्रुताभ्यां भगवच्चेष्टितकथनश्रवणाभ्यां कथनादिप्रणाड्येत्यर्थः लब्धा स्मृतिर्वद्विषया यस्य स याति प्राप्नोति ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत्र येषां महतां सकाशे प्रस्तूयते प्रसज्ञे प्रस्तूयते वा ग्राम्यकथाविघातः विषयवार्ताप्रसङ्गनाशः ... फलमाह । निषेव्यमाणा इति । भक्तिशाणोल्लीढा सती मतिः ... यच्छतिरत्र भक्तिनिशितज्ञानंदत्वा संसारोपरमं कारयतीत्यर्थः ॥ १३ ॥

इदानीं भरतः श्लोकार्थाभिजननाय कुत्रत्य इतिवाक्... हाराय च स्वरूपं स्वचरितं च वक्ति । दृष्टेषु राजर्षि... श्रुतेषु स्वर्गादिविषयेषु सङ्गबन्धः स्नेहबन्धः दृष्टश्रुत... स विमुक्तो येन स तथा हतार्थः नष्टपुरुषार्थलक्षणप्रयोजनः ।

या पूर्वजन्मनि कृष्णार्चनजाता सा मां नो जहाति त्यजति अधुनापि वर्तेत इत्यर्थः अवधूनो ज्ञातलिङ्गः पुनः ... रसंसारो भवतीति शङ्कया भियावधूतः कम्पितः हृदय... इत्यर्थं इति वा ॥ १५ ॥

उपसंहरति । तस्मादिति । यस्माद्भगवतः पूजैतादृशफला तस्मात् नरः पुरुषः संसारमतीत्याध्वनः संसारमार्गस्य अतिपारं ... न्तरीभूतं हरिं यातीत्यन्वयः केन साधनेन असङ्गानां ... रहितानां सतां सुष्टु सङ्गेन सेवालक्षणेन ज्ञानेन ज्ञान... पत्रिकया विवृक्णाश्छिन्नः सङ्गः स्वर्गादिफलस्नेहो यस्य ... तस्य हरेरीहानां चरितानां कथनेन श्रवणेन च लब्धा ... र्यस्य स तथा संसाराध्वनः पारं विष्णोर्लोकमतियाति ... यातीत्यर्थोऽनुपपन्नः हरिमित्यस्यान्वयानुपपत्तेरतोऽसङ्ग... मर्थइति ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र विशेषमपि वदंस्तत्त्वप्राप्तिसोपानमाह । यत्रेति । मुमुक्षोरद्वयतिरिक्तसर्वपरित्यागेच्छोः ॥ १३—१६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ते च महान्तः कृष्णभक्ता एवेत्यभिव्यञ्जयति । यत्र महत्पादरजोऽभिषेके सति यत्र महत्सु वा गुणानां भक्तवात्सल्यादीनामनुवादः पुनः पुनःकथनं मुमुक्षोर्मोक्षकामस्यापि सतीं मोक्षेच्छाराहित्येन शुद्धां मतिं वासुदेवे वसुदेवनन्दने ॥ १३ ॥

महां त्वापराधिने महापामरायाप्येवं ज्ञानमुपदिशन् परमकृपालुः को भवानित्यपेक्षायामाह । अहमिति । दृष्टे श्रुते च व्यवहारे सङ्गबन्धः आसक्तिलक्षणो बन्धो विमुक्तो येन सः तदपि दैवात्सावधानोऽभवमित्याह । मृग इति ॥ १४ ॥

श्रीकृष्णार्चनं त्वद्यमप्युद्धरतीत्याह । सेति । जनसङ्गाद्विशङ्कमानः अविवृतोऽप्रकटः ॥ १५ ॥

असङ्गो व्यवहारानासक्तिः सुसङ्गः साधुष्वासक्तिस्ताभ्यां जातं ज्ञानमेवासिः तेन छिन्नमोहः अध्वनः संसारमार्गस्य अतिपारं हरिम् ॥ १६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमे द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत्र येषु महत्सु ग्राम्याणां या कथा शिश्नोदरनिमित्ता वार्ता तस्या विघातो यस्मात् स उत्तमश्लोकगुणानुवादः प्रस्तूयते ते महान्त इत्यन्वयः ॥ १३ ॥ १४ ॥ १५ ॥

यस्मात्प्राणिषु मोहः संसारहेतुस्तस्मात् असङ्गैर्महद्भिर्यः सुसङ्गस्तेन जातं ज्ञानमेवासिस्तेन इह गृहादौ विशेषतो वृक्णाद्विच्छिन्नो मोहो येन सः तदीहाकथनश्रुताभ्यां हरिचेष्टितकीर्तनश्रवणाभ्यां लब्धस्मृतिः प्राप्तध्रुवास्मृतिः अध्वनः संसारमार्गस्य अतिपारमतिशयितं श्रेष्ठं पारं हरिं याति ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वादशाध्यायार्थप्रकाशः ॥ १२ ॥

---

भाषाटीका ।

जिन महात्मा ओं में संसारी चर्चाओं का बन्द करनेवाला उत्तम श्लोक भगवान् का गुणानुवाद होता है उस गुणानुवाद के प्रतिदिन सेवन करने से वह गुणानुवाद मुमुक्षुपुरुष की भगवान् वासुदेव में सुन्दर मती को कर देता है ॥ १३ ॥

हम पूर्वजन्म में भरत नाम के राजा थे देखे सुने इस लोक परलोक के सङ्गों के बन्धों से छूटकर रहते थे फिर भगवान् का आराधन करते समय में मृग के साथ स्नेह करने से अपने स्वार्थ से नष्ट होकर मृग होगये ॥ १४ ॥

हे वीर ! श्रीकृष्ण भगवान् की पूजा के प्रभाव से मृग होनेपर भी वह स्मरण मेरे को बना ही रहा था इसी हेतु से सङ्गसे डर कर मैं अब भी छिपकर विचरता हूं ॥ १५ ॥

तिस हेतु से जो मनुष्य सब से विरक्त महापुरुषों के सङ्ग से उत्पन्न भये ज्ञान वैराग्य रूप खड्ग से मोह को छेदन करके भगवान् की कथा और स्मरण से आत्मज्ञान को प्राप्त होता है सो संसार से पार होकर श्रीहरि के शरण को प्राप्त होता है ॥ १६ ॥

इति श्रीभागवत पञ्चमस्कन्ध द्वादश अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ १२ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

---

## ॥ त्रयोदशोऽध्यायः ॥

———:०:———

ब्राह्मण उवाच ।

दुरत्ययेऽध्वन्यजया निवेशितो रजस्तमःसत्त्वविभक्तकर्मदृक् ।
स एष सार्थोऽर्थपरः परिभ्रमन्भवाटवीं याति न शर्म विन्दति ॥ १ ॥
यस्यामिमे षण्नरदेव दस्यवः सार्थं विलुम्पन्ति कुनायकं बलात् ।
गोमायवो यत्र हरन्ति सार्थिकं प्रमत्तमाविश्य यथोरणं वृकाः ॥ २ ॥
प्रभूतवीरुत्तृणगुल्मगह्वरे कठोरदंशैर्मशकैरुपद्रुतः ।
क्वचित्तु गन्धर्वपुरं प्रपश्यति क्वचित्क्वचिच्चाशुरयोल्मुकग्रहम् ॥ ३ ॥
निवासतोयद्रविणात्मबुद्धिस्ततस्ततो धावति भो ! अटव्याम् ।
क्वचिच्च वात्योत्थितपांसुधूम्रा दिशो न जानाति रजस्वलाक्षः ॥ ४ ॥
अदृश्यझिल्लीस्वनकर्णशूल उलूकवाग्भिर्व्यथितान्तरात्मा ॥
अपुण्यवृक्षान् श्रयते क्षुधार्दितो मरीचितोयान्यभिधावति क्वचित् ॥ ५ ॥
क्वचिद्वितोयाः सरितोऽभियाति परस्परं चालषते निरन्धः ।
आसाद्य दावं क्वचिदग्नितप्तो निर्विद्यते क्व च यक्षैर्हृतासुः ॥ ६ ॥
शूरैर्हृतस्वः क्व च निर्विण्णचेताः शोचन्विमुह्यन्नुपयाति कश्मलम् ।
क्वचिच्च गन्धर्वपुरं प्रविष्टः प्रमोदते निर्वृतवन्मुहूर्तम् ॥ ७ ॥
चलन्क्वचित्कण्टकशर्कराङ्घ्रिर्नगारुरुक्षुर्विमना इवास्ते ।
पदे पदेऽभ्यन्तरवह्निनाऽर्दितः कौटुम्बिकः क्रुद्ध्यति वै जनाय ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोदशेऽविरक्ताय वृथा तत्त्वनिरूपणाम् ।
इति वैराग्यदार्ढ्याय भवाटव्युपवर्ण्यते ॥ १ ॥

अध्वनः पारमित्युक्तं तमेवाध्वानं प्रसिद्धमार्गरूपकेण वैराग्याय प्रपञ्चयति । दुरत्यये दुस्तरेऽध्वनि प्रवृत्तिमार्गे रजस्तमःसत्त्वैर्विभक्तानि कर्माणि कार्यतया पश्यतीति तथा स एष प्रसिद्धः सार्थो जीवसमूहोऽर्थपरः सुखार्थः सन् यथा वणिक् सार्थोऽर्थार्जनाय गच्छन्नटवीं याति तद्वत् ॥ १ ॥

अस्याध्यायस्य व्याख्यानरूप उत्तराध्यायोऽस्ति तथापि सुखप्रतिपत्तये किञ्चित्किञ्चिद्व्याख्यायते । यस्यां भवाटव्यामिमे इन्द्रियनामानः षड् दस्यवश्चोराः । कुत्सितो नायकः सारथिर्बुद्धिर्यस्य तं सार्थं विलुम्पन्ति यस्य धर्म्यं धनमुपभोगेन मुष्णन्तीत्यर्थः । गोमायवः शृगालतुल्या दारापत्यादयस्त्वं मे भर्ता पितेत्येवं प्रविश्य प्रमत्तं सार्थिकं सार्थे स्थितं हरन्ति इतस्तत आकर्षन्ति उरणं मेषम् ॥ २ ॥

वीरुधो लतास्तृणानि च गुल्माश्च लतादिजातानि ... तैर्गह्वरे दुष्प्रवेशे क्षेत्रे कठोरैस्तीव्रैर्दंशैर्मशकैश्च ... यथा कश्चिदुपद्रुतो भवत्येवं कामकर्मादिभिर्गह्वरे ... वर्तमानो दुर्जनैरुपद्रुतो भवतीत्यर्थः । गन्धर्वपुरवद्दृश्य... देहादिकं प्रकर्षेण सत्यमेवेदमिति पश्यति । क्वचिच्च... काप्याशुरयोऽतिवेगो य उल्मुकाकारो ग्रहः पिशाच... सुवर्णमुपादेयत्वेन प्रपश्यतीत्यर्थः ॥ ३ ॥

निवासादिष्वात्मा स्वभावो यस्याः सा बुद्धिर्यस्य ... स्ततो धावतीत्युभयत्र तावानेवार्थः । वात्या चक्रवात... मुत्थितः पांसुस्तेन धूम्रा दिशो रजस्वले रजोयुक्ते ... यस्य स यथा न जानाति तथा वात्येव भ्रमयन्ती ... तस्यामुद्भूतैः रागादिभिरप्रकाशमानाः दिग्देवताः ... न जानातीत्यर्थः ॥ ४ ॥

अदृश्यानां झिल्लीनां भृङ्गारिकासंज्ञानां कीटविशेषाणां कर्णयोः शूलं व्यथा यस्य उलूकाः घूकास्तेषां वा... तोऽन्तरात्मा मनो यस्य अत्र च परोदमप्रियवादा...

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तुल्याः प्रत्यक्षमप्रियवक्तारो घूकतुल्याः येषां छायापि पापहेतुस्ते अपुण्यवृक्षास्तत्तुल्यानधार्मिकान्सेवते । मरीचितोयानिति । निष्फलत्वेन विज्ञातानपि विषयान् ॥ ५ ॥

वितोयासु सरित्सु पतितस्य गात्रभङ्गात्सद्यो दुःखं भवति नद्योदकलाभस्तद्वदिह च परत्र च दुःखदान्पाखण्डानभियाति आश्रयते दायादादिभ्योऽन्नादि वाञ्छति । उभयत्रापि स एवार्थः । दावं दावाग्नितुल्यं दुःखदं गृहं प्राप्य शोकाग्निना तप्तो निर्विद्यते विषीदति । तत्र च यक्षराक्षसतुल्यैः राजभिर्हृतमसुवत्प्रेष्ठं धनं यस्य स निर्विद्यते ॥ ६ ॥

अन्यैश्च शूरैर्हृतं स्वं वित्तं यस्य निर्विण्णां विषण्णां चेतो यस्य कश्मलं मूर्छाम् गन्धर्वपुरमिव मनोरथोपगतपितृपुत्रादिसमाजं प्रविष्टः सन् ॥ ७ ॥

कण्टकादिविद्धाङ्घ्रिरिव विघ्नैरभिभूतः सन्नगतुल्यं महत्कर्मारोढुं कर्तुमिच्छुर्विमना इव आस्ते पदे पदे क्षणे क्षणे अभ्यन्तरेण वह्निना जाठरेण ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तत्त्वं निरूपितमपर्यवरक्तस्य न प्रतिष्ठितं भवतीति वैराग्योदयाय संसाराध्वानं लोकप्रसिद्धदुर्गाध्वत्वेन संसारमटवीत्वेन च रूपयति । दुरत्यय इति त्रयोदशेनाध्यायेन ग्राह्मणः । दुरत्यये दुरतिक्रमेऽध्वनि कर्ममार्गेऽजया प्रकृत्या निवेशितः रजस्तमःसत्त्वैर्विभक्तानि कर्माणि कार्यनया पश्यतीति तथा शुभाशुभमिश्ररूपकर्माणि दृष्टिमानित्यर्थः स एवः सार्थो जीवसमूहः अर्थपरः धर्मादिपुरुषार्थत्रयासक्तः भवाटवीं याति कर्मफलं तु प्राप्नोतीत्यर्थः शर्म सुखं न विन्दति न लभते यथा वणिक् अर्थार्जनाय गच्छन्नटवीं याति सुखं च न विन्दति तद्वदित्यर्थः ॥ १ ॥ ॥

यद्यप्यस्याध्यायस्य व्याख्यानरूप उत्तराध्यायः प्रवृत्तस्तथापि सुखप्रतिपत्तये किञ्चिदत्रापि व्याख्यायते तदेवाह । यस्यामिति । हे नरदेव! यस्यां भवाटव्यां षडिन्द्रियनामानः दस्यवो दुष्टजन्तवः चौराः कुत्सितः सन्मार्गानभीष्टः नायकः बुद्धिरूपः नेता यस्य तं सार्थं जीवसमूहं विलुम्पन्ति जीवस्य भगवदाराधनरूपं धनं लुम्पन्तीत्यर्थः यत्र भवाटव्यां गोमायवः शृगालतुल्या दारापत्यादयः प्रमत्तमनवहितसार्थकं त्वं मे भर्तासि पितासीत्येवं प्रविश्य हरन्ति यथोरणां मेषं वृका हरन्ति तद्वत् "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते" इत्युक्तरीत्या आत्मस्वरूपविस्मारकाभिमानजननद्वारा आत्मानमपहरन्तीत्यर्थः ॥२॥

वीरुधो लता गुल्मानि च तैः गह्वरेऽन्धकर्मणीजयत्फलप्ररोहक्षेत्रभूते गृहाश्रम इत्यर्थः कठोरैस्तीव्रैर्दंशैर्मक्षिकाविशेषैर्मशकैश्च यथा कश्चिद्वने उपद्रुतो भवति तथा दंशादिसदृशैः राजभटादिभिरुपद्रुतो भवतीत्यर्थः क्वचिद्गन्धर्वपुरवदस्थिरं मनुष्यशरीरं स्थिरवत् पश्यति गन्धर्वाणां हि पुरं न विद्यते तद्वद्दृश्यापि नित्यत्वमविद्यमानमपि पश्यतीत्यर्थः क्वापि क्वापि आशुरयः अतिवेगो य उल्मुकाकारो ग्रहः तत्तुल्यं सुवर्णमुपादेयत्वेन प्रपद्यतीत्यर्थः असुवर्णोल्मुकग्रहमित्यपि पाठो दृश्यते तत्र प्राणहरोल्मुकपिशाचतुल्यं परकीयं सुवर्णमुपादेयत्वेन प्रपश्यतीत्यर्थः यथा पिशाचगतोल्काज्वलनं प्रकाशार्थं जिघृक्षन् यथा पिशाचहतो भवति एवं दुर्जनसम्बन्धि सुवर्णस्य स्वोपकारकत्वबुद्ध्या जिघृक्षुः दुर्जनैरुपद्रुतो भवतीत्यर्थः ॥ ३ ॥

पिपासतोयद्रविणात्मबुद्धिः पिपासाविषयं तोयं पिपासतोयं पीपासतोयं मृगतृष्णिका पिपासाशब्दस्य "ङ्यापोः संज्ञाच्छन्दसो"रित्यार्षो ह्रस्वः पिपासाविषयतोयतुल्यं द्रविणं वित्तं तस्मिन्नात्मबुद्धिः स्वबुद्धिर्यस्य तथाभूतः क्वचिन्निवासतोयं द्रविणात्मबुद्धिरिति पाठस्तत्र निवासादिष्वात्मभावो यस्याः सा बुद्धिर्यस्येत्यर्थः अटव्यामितस्ततो धावति भ्रमति भो राजन्! वात्या चक्रवातः तत्तुल्या नारी वात्या वात्यया प्रमदया उत्थितो रागादिदोषः पांसुस्तेन धूम्रा आविला दिशः धर्ममर्यादाः रजस्वलाक्षो रजोव्याप्ते अक्षिणी यस्य सः रजोगुणोपहतज्ञानः सन् न जानाति यथा चक्रवातोत्थितधूलिव्याप्तनेत्रो प्राच्यादिदिग्विभागान्न जानाति तद्वद्धर्ममार्गान् स न जानातीत्यर्थः ॥४॥

क्वचिददृश्यानां झिल्लीनां भृङ्गारकासंज्ञानां कीटविशेषाणां स्वनेन ध्वनिना कर्णयोः शूलं व्यथा यस्य सः परोक्षमप्रियभाषिरिपुवाक्यश्रवणजनितकर्णव्यथायुक्तो भवति यथाटव्यां प्रविष्टोऽदृश्यझिल्लीस्वनव्यथितकर्णो इत्यर्थः तथा उलूकानां प्रत्यक्षमप्रियभाषिणां घूकसदृशानां राजभटादीनां वाग्भिर्व्यथितः अन्तरात्मा मनो यस्य तथाभूतः क्वचिद्भवति यथारण्ये उलूकवाग्भिर्व्यथितहृदयो भीतहृदयो भवति इत्यर्थः क्वचित् क्षुधाऽशनायया अर्दितः पीडितः अपुण्यवृक्षान् विषवृक्षसदृशान् अनुपकारकर्माप्रतिग्राह्यधनान् श्रयंत आश्रयति क्वचिन्मरीचितोयानि मरीचिकाजलवत्सुखाभासान् विषयाननुधावति भोग्यबुद्ध्याऽन्वेषयति अभोग्यं हेयं विषयमनुधावतीत्यर्थः ॥ ५ ॥

क्वचिद्विशोयाः जलरहिताः सरितः नदीरभियाति यथा वितोयासु सरित्सु पतितस्य गात्रभङ्गात्सद्यो दुःखं भवति नद्यादकलाभः तद्वदिह परत्र च दुःखदान्निष्फलान् पाखण्डाश्रमानभियाति आश्रयते क्वचिन्निरन्नः परस्परं दायादेभ्योऽन्नादिकं लपते वाञ्छति पुत्रः पितृधनमिच्छति पुत्रार्थमिच्छति पिता निरन्नकतयेत्यर्थः क्वचिद्दावं दावाग्नितुल्यं गृहमभिमतार्थपयशून्यं दुःखदं प्राप्तः प्रविष्टः अग्नितप्तः शोकातुरो भवति क्वचित् यक्षैर्यक्षवत्प्रतिहर्तुमशक्यैः राजभिर्हृतासुरपहृतप्राणतुल्यधनः निर्विद्यते खिद्यते ॥ ६ ॥

तथा शूरैः राजभटादिभिर्हृतं स्वं धनं यस्य सः क्वचित् दुःखितचित्तो भवति हे नृप ! क्व च शोचन् विमुह्यंश्च कश्मलं मूर्छां याति क्वचिद्गन्धर्वपुरमिवास्थिरं बन्धुवर्गं प्रविष्टः निर्वृतवत्सुखितवत् मुहूर्तमात्रं मोदते ॥ ७ ॥

क्वचिन्नगारुरुक्षुः पर्वतवत्दुरारोहगत्ताविकलापं चिकीर्षुः कण्टकैः शर्कराभिः सूक्ष्मपाषाणैश्च दुःखितचरणो यथा पर्वतमारोढुं न शक्तस्तथा कण्टकादितुल्यैर्विघ्नैरभिभूतः गहत्कर्मारोढुं कर्तुमशक्तः सन् विमना इवास्तेऽभ्यन्तरेणेनाग्निना क्वचिच्च क्षणे क्षणेऽभ्यन्तरवह्निना जाठराग्निनाऽर्दितः पीडितः अनाय कलत्रादीन् प्रति क्रुध्यति यतोऽयं कौटुम्बिकः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्मिन्नध्याये संसारविरक्तस्य हरौ सुदृढा भक्तिः स्यात्तया तदपरोक्षज्ञानं जायते तेन स्वयोग्या मुक्तिः स्यादित्यतः संसारस्य हेयत्वज्ञानेन तत्र विरक्तिस्तदर्थं तत्स्वरूपं निरूपयति। दुरत्यय इत्यादिना। दुरत्यये हरिकटाक्षमन्तरेणात्येतुमशक्ये अजया प्रकृत्या रजस्तमःसत्त्वगुणैः विभक्तानि यानि कर्माणि तानि पश्यति ममाहमित्यभिमन्यते इति रजस्तमःसत्त्वविभक्तकर्मदृक् सार्थः परिषज्जनः वणिक् सार्थवदर्थपरः स्वप्रयोजनाभिनिविष्टबुद्धिः भवाटवीं ब्रह्मादिस्तम्बपर्यन्तं संसारवनं याति तत्र शर्म स्वाभिप्रेतसुखं न लभत इत्यन्वयः ॥ १ ॥

स्वार्थालाभे निमित्तमाह । यस्यामिति । षट् दस्यवः श्रोत्रादिज्ञानेन्द्रियाणि मनश्चेति स्वार्थं पुण्यलक्षणं विलुम्पन्ति विषयोपभोगद्वारेणापहरन्ति कुत्सितः कामादिर्नायको यस्मिन्स तथा अन्तःशत्रूनुक्त्वा बाह्यानाह । गोमायव इति । गोमायव इति लुप्तोपमा शृगालसदृशाः पुत्रकलत्रादयः सार्थकं संपद्युक्तं कलभाषणादिना मन आविश्य उरणमजाम् ॥ २ ॥

वीरुधो महत्यो गुल्मान्यणूनि अङ्कुरादीनि समृद्धवीरुत्तृणगुल्मवदपरिपक्वकामवीजः श्रौतस्मार्तकर्मभिर्गह्वरे गृहस्थाश्रमे वर्तमानः कठोरमशकदंशकल्पैः राजभटतस्करादिभिरुपद्रुतो बाधितः अपहृतहिरण्यशाल्यादिकः क्वचित्संसारस्थाने गन्धर्वैः कर्मभिः निर्मितपुरं मनुष्याद्यन्यतमं शरीरं दृष्ट्वाऽऽविश्य च कर्म भुङ्क्ते इत्यर्थः अस्थिरत्वात्प्रसिद्धगन्धर्वपुरसाम्यमसुहरः प्राणहरः उल्मुकग्रहः उल्मुकपिशाचः तत्सदृशशब्दादिविषयं पश्यतीति शेषः ॥ ३ ॥

निवासतोऽन्यत्र यत् यस्मिन्द्रविणे आत्मबुद्धिर्यस्य स तथा ततस्ततस्तत्र तत्र धावति धावनमेवावशिष्यते न तु काचित्कार्यसिद्धिरित्यर्थः अत्र क्वचिच्छब्दा अनवस्थानवाचका इति। वात्योत्थितपांसुधूम्राः मण्डलवायुसदृशस्त्रीनिमित्तरागादिलक्षणपांसुभिश्छन्नाः दिशस्ति स्वाभिमतं प्रयच्छन्तीति दिशः सूर्यादिदेवताः रजस्वलाक्षः अविवेकविज्ञानः ॥ ४ ॥

अतिगहनवनवासिन्यो झिल्ल्यः कीटविशेषाः तेषां शब्दा एव दृश्यन्ते न स्वरूपं दृश्यत इत्यदृश्यानां झिल्लीनां स्वनवद्दुःसहराजचोरादिनिष्ठुरशब्दैः पूरितकर्णमूलः उलूकवाग्भिः दुर्जनतर्जनैः व्यथितान्तरात्मा परिखिन्नहृदयः कदाचित्क्षुधार्दितः विषयतृष्णया क्लिष्टः अपुण्यवृक्षान् कारस्करादिवृक्षवद्दृष्टादृष्टफलशून्यपाखण्डाभमान्मरीचितोयानि मरीच्युदकसदृशशब्दादीन् ॥ ५ ॥

वितोया अधरामृतशून्याः सरितः पुंश्चलीः परस्परं खादयते स्वीकरोति पितृधनं पुत्रो लभते पुत्रधनं पिता च श्ववत् भ्रात्रादिजनोऽन्योऽन्यं शब्दं कुरुते धनविषय इति वा निरन्नोऽशनवसनादिपरिकरशून्यः धुनोतीति दावं प्रयोजकशून्यं वनसमं गृहं शोकाग्निना संतप्तः यक्षग्रहवत्प्रबलराजामात्यादिभिर्हृतासुः अपहृतबहिः प्राणाख्यहिरण्यः तदुक्तं कौर्मे "हिरण्यं हि मनुष्यस्य प्राणा ह्येते बहिश्चराः,, इति ॥ ६ ॥

क्व च संसारे परस्वापहारपटुभिर्ग्रामाधिपातिभिः हृतस्वः अपहृतद्रव्यः तेन विरक्तबुद्धिः देशत्यागकृतमनाः शोकमोहाभ्यां कश्मलं कष्टावस्थां याति क्वापि कर्मविशेषात् गन्धर्व... दिलक्षणालोकमाप्तो यावत्प्रारब्धसमाप्ति सुखमनुभ... भयाद्विवृंतचदित्युक्तमाकस्मिकपितृपितामहादिसंयोगं ...

कण्टकशर्कराङ्घ्रिः कण्टकादिलग्नपाद इवाशक्य... मार्गः कण्टकादियुक्तमार्गगतिशील इव दुःसहकर्ममार्गो ... रत्र गत्यर्थः क्वचिन्नगवत् दुर्गं निवृत्तिमार्गमारु... सन् नष्टगना इव तिष्ठति अत्युच्छ्रितारोहाशक्यपर्वतमरः... हितानेककर्मसंपादनेच्छुस्तदशक्त इव वा अभ्यन्तरवह्नि... राग्निना ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कर्हिस्मेति तानुपहरकान् यदाभियुङ्क्ते इति शेषः ... भिमुख्येन युद्धोद्यमं करोतीत्यर्थः ॥ १—१३ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रयोदशे भवाटव्याः पारं प्रापयितुं नृपम् ।
तां वर्णयित्वा वैराग्यहयमारोहयन्मुनिः ॥

अध्वनः पारमित्युक्तं स एवाध्वा अध्वनीनश्च कीदृ... पेक्षायामाह । दुरत्यये दुस्तरे अध्वनि प्रवृत्तिमार्गे ... अविद्यया रजस्तमःसत्त्वैर्विभक्तान्येव कर्माणि ... पश्यतीति स तथा एषः प्रसिद्धः सार्थः "सार्थो ... समूहे स्यात्"इति मेदिनी । स इव अर्थपर एव ... इत्यर्थः एतदादीनां व्याख्या उत्तराध्याय एवास्ति ... सुखप्रतिपत्तये किञ्चिद्व्याख्यायते ॥ १ ॥

इमे इन्द्रियनामानः कुत्सितो नायकः सारथिर्बुद्धिर्य... विलुम्पन्ति भगवत्सेवार्थविनियुक्तमपि धनं स्व... भोगार्थं मुष्णन्तीत्यर्थः गोमायवः शृगालतुल्या ... दयः त्वं मे भर्ता पितेत्येवं सार्थिकं सार्थभव... सम्पुटं प्रमत्तं परमार्थदृष्टिविमुखमाविश्य तस्य गृह ... करणेऽपि प्रविश्येत्यर्थः उरणं मेषम् ॥ २ ॥

प्रभूतवीरुदादिसदृशैः कामकर्मादिभिर्गह्वरे ... दंशमशकतुल्यैर्दुर्जनैः गन्धर्वपुरवद्घटमानं देहं ... प्रकर्षेण सत्यं स्थिरमेवेदमिति पश्यति क्वापि क्वापि ... अग्निवेगो य उल्मुकाकारो ग्रहः पिशाचः तं तत्तुल्यं सुवर्ण... यत्वेन पश्यति ॥ ३ ॥

निवासादिषु आत्मनो ममैवेदमिति बुद्धिर्यस्य ... सन् ततस्ततस्तत्र तत्र धावतीत्युभयत्र पदे ... वात्या चक्रवातरूपा या स्त्री तदुत्थितैः पांसुभिः ... वेगैर्धूम्रा आच्छन्नीकृता दिशः दिग्देवताः कर्मसाक्षि... जानाति रजस्वलाक्षः कामान्धः ॥ ४ ॥

अदृश्यानां झिल्लीनां भृङ्गारिकाख्यकीटविशे... परोक्षमप्रियवक्तॄणां स्वनैः कटुभाषणैः कर्णयोः ... यस्य सः उलूकानामिव प्रत्यक्षमप्रियवक्तॄणां ... कटुभाषितैर्व्यथितमनाः येषां छायापि पापहेतुस्ताव...

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कदाचिद् अधार्मिकलोकान् भिक्षार्थं सेवते मरीचितोयतुल्यान् अदातृलोकानपि कचिद्भिक्षार्थं गच्छति ॥ ५ ॥

वितोयासु सरित्सु पतितस्य गात्रभङ्गात् सद्यो दुःखं भवति अबोदकखाभस्त्विह च परत्र च दुःखदान् पाखण्डानभियाति आश्रयते अभिलपति निरन्ध इति निरन्धश्चेति पाठद्वयमुभयत्र सौ साम्यं दावं दावाग्नितुल्यं दुःखदं गृहं प्राप्य शोकाग्निना तप्तो निर्विद्यते विषीदति । यक्षराजसतुल्यैः राजभिर्हृतम-सुवत् प्रेष्ठं धनं यस्य सः धिङ्मां धनरहितमिति निर्विद्यते । कदाचित् अन्यैः शूरैः संग्रामे विजयिभिश्च हृतधनः ॥ ६ ॥

गन्धर्वपुरमिव मनोरथोपलब्धं पुत्रकलत्रधनैश्वर्यं प्रविष्टः प्राप्नुवद् ॥ ७ ॥

नगान् दश्क्षुः नगं महापर्वतमिव कन्यापुत्रोद्वाहादियशः आरुरुक्षुः प्राप्तुमिच्छुर्विमनाः कथमेतत् पारं प्राप्स्यामीति भाव-यास्ते । यतः पादुकाद्यभावात् कण्टकादिविद्धाङ्घ्रिः पक्षे सहायाद्यभावात् विघ्नाभिभूतः अभ्यन्तरेण वह्निना जाठरेण॥८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अध्वनोऽतिपारं हरिं यातीत्युक्तं तत्र हरिस्तु प्रागेव निरू-पितोऽध्वानं प्रसिद्धदुर्गममार्गरूपकेण वैराग्याय प्रपञ्चयति । दुरत्यये इति त्रयोदशेनाध्यायेन । दुरतिक्रमे अध्वनि प्रवृत्तिमार्गे अजया जीवमोहिन्या प्रकृत्या निवेशितः रजआदिभिर्विभ-क्तानि कर्माणि कार्यतया पश्यतीति तथा स एव प्रसिद्धो जीवस-मूहः अर्थपरः त्रिवर्गासक्तः भवाटवीं याति शर्म सुखं च न विन्दति न लभते यथा वणिक् सार्थोऽर्थार्जनाय गच्छन् अटवीं याति सुखं च न विन्दति तद्वत् अयमध्याय उत्तराध्या-येन व्याख्यातस्तथापि सुखबोधाय किञ्चिद्व्याख्यायते ॥ १ ॥

इमे पञ्च ज्ञानेन्द्रियाणि मनश्च षट् कुत्सितो नायकः बुद्धि-र्यस्य तम् सार्थं विलुम्पन्ति यस्य परमपुरुषाराधनलक्षणधर्मरूपं धनमुपभोगेन मुष्णन्ति गोमायवः तत्तुल्याः कौटुम्बिकाः सार्थिकं सार्थे स्थितं हरन्ति धर्ममार्गादपकर्षन्ति वृका उरणं मेषम् यथा आकर्षन्ति ॥ २ ॥

वीरुधो लताश्च तृणानि च गुल्मानि लतादिजालानि च प्रभूतैरैतैर्गह्वरे दुष्प्रवेशे कठोरदंशैर्मशकैश्च यथा कश्चिदुपद्रुतो भवति तथा प्रदग्धबीजवत्कर्मचैत्रे गृहाश्रमे वर्तमानः दंश-मशकसदृशैः मनुजापसदैरुपद्रुतोऽपि कचित्तु गन्धर्वपुरवदल्प-कालस्थायि देहादिकं नित्यमिव प्रपश्यति कचिच्च आशुरयः अतिवेगः उल्मुकग्रहः उल्मुकसदृशः पिशाचः तत्सदृशं सुवर्णं मुपादेयतया प्रपश्यति ॥ ३ ॥

निवासादिष्वात्मा स्वभावो यस्या सा बुद्धिर्यस्य सः वात्यायां चक्रवाते उत्थितेन पांशुना धूम्रा दिशः रजस्वले रजसा व्याप्ते अक्षिणी यस्य स न जानाति यथा तथा वात्या-तुल्यायां प्रमदायामुद्गतेन रागादिना प्रकाशमाना दिग्देवताः कर्म-साक्षिभूताः दिग्जाता देवता न जानाति रजोगुणावृतदृष्टिः ॥ ४ ॥

अदृश्यझिल्लीनिभाः परोक्षाप्रियवादिनस्तत्स्वनेन कर्णयोः शूलं पीडा यस्य उलूकनिभाः प्रत्यक्षाप्रियश्रावयितारः तद्वा-ग्भिर्व्यथितोऽन्तरात्मा यस्य अपुण्यवृक्षनिभाः अधार्मिकास्तान्

सेवते मरीचितोयवन्निष्फलतयावगतानपि विषयाभासान् अभि-धावत्यन्वेषयति ॥ ५ ॥

वितोयसरिद्वद्भूता क्लेशदान् पाषण्डानभियाति प्रयाति निरन्धो निरन्नः परस्परमन्योऽन्यतः अन्नादिकमालपते याचति दावं वनानलनिभं गृहमासाद्याधिष्ठाय अग्नितप्तः अग्निवद्दुःसह-शोकसंतप्तः निर्विद्यते विषीदति यद्वैर्यक्षवद्दुर्निवार्यैः राजभि-र्हृतमसुवद्दुस्त्यजं धनं यस्य सः निर्विद्यते ॥ ६ ॥

अन्यैश्च शूरैः राजभटादिभिः गन्धर्वपुरवदस्थिरं पितृपुत्रा-दिसमाजम् ॥ ७ ॥

कण्टकादितुल्यैर्विघ्नैः शिथिलक्रियः सन् नगवद्दुर्लङ्घ्यं महाकार्यं विधित्सुः पदे पदे प्रतिक्षणम् ॥ ८ ॥

भाषाटीका ।

ब्राह्मण बोले रजोगुण सत्त्वगुण तमोगुण में दृष्टि रखनेवाला पुरुष अर्थों का अभिलाषी होकर स्वार्थी वनिया के समूह सरीका जन समुदाय भगवान् की माया से प्रवृत्तिरूप मार्गमे निवेशित हुआ है देवादियोनियों में घूमते २ भवाटवी को प्राप्त होता है सुख नहीं पाता है ॥ १ ॥

हे नरदेव ! जिस भवाटवी में ये छः इन्द्रियनाम के चोर हैं बुद्धिरूप खोटा जिनका नायक है तिस समूह को जबरदस्ती लूटते हैं जिस वन में पैठकर प्रमादी पुरुष को कुटुम्बी सब स्याल सरी के चारों ओर खेंचते हैं जैसे बकरी को भेड़िये खेंचते हैं ॥ २ ॥

बहुत से गुल्म लता तृणों ( कर्मादिको ) से अति कठिन डांस मच्छरों ( दुर्जनों ) से उपद्रवयुक्त होता है कहींपर गंधर्व नगर ( अलक्ष्य मनोरथों ) को देखता है कहींपर बडे वेगवाले अगिया वेताल ( सुवर्ण ) को देखता है ॥ ३ ॥

हे राजन् ! वासस्थान जल धन देह इन में लगी है बुद्धि जिस की ऐसा पुरुष वन में इधर उधर दौडता है कहींपर आंधी के उडने से धूल भरी नेत्रों ( कामादि दृष्टि ) से दिशों को भूल जाता है ॥ ४ ॥

कहींपर अदृश्यझिंगारी ( खोटे वचन कहनेवाले मनुष्यों ) के शब्दों को सुनकर दुखपाता है कहींपर घुग्घू [ राजपुरुषों ] के शब्द से दुःखित होता है कहींपर भूख के मारे बिना छाया के पेडों ( पापी पुरुषों ) का आश्रय करता है कभी मृगतृष्णा [ निष्फल विषयों ] पर दौडता है ॥ ५ ॥

कहींपर बिनाजल की नदी [ पाखण्डमार्गों ] को आश्रय-करता है और अन्न नमिलने से परस्पर में चाहता मारता है कभी दावानल अग्न्यादि प्राप्तहोकर बडी गर्मी [ शोकाग्नि ] के मारे व्याकुल होता है कभी यक्ष [ राजपुरुष ] धन हर-लेते हैं ॥ ६ ॥

कभी प्रबल शूरलोग धन हरलेते हैं तब दुःखित होजा-ताहै शोचकर के मोहित होकर मूर्च्छा को प्राप्त होता है कभी गन्धर्वपुर [ मनोरथों ] में प्रविष्ट होता है सुखित सरीका मुहूर्तभर आनन्दित होता है ॥ ७ ॥

क्वचिन्निगीर्णोऽजगराहिना जनो नावैति किञ्चिद्विपिनेऽपविद्धः ।
दष्टः स्म शेते क्व च दन्दशूकैरन्धोऽन्धकूपे पतितस्तमिस्रे ॥ ९ ॥
कर्हि स्म चित्क्षुद्ररसान्विचिन्वंस्तन्मक्षिकाभिर्व्यथितो विमानः ।
तत्रातिकृच्छ्रात्प्रतिलब्धमानो बलाद्विलुम्पन्त्यथ तं ततोऽन्ये ॥ १० ॥
क्वचिच्च शीतातपवातवर्षप्रतिक्रियां कर्तुमनीश आस्ते ।
क्वचिन्मिथो विपणन्यच्च किञ्चिद्विद्वेषमृच्छत्युत वित्तशाठ्यात् ॥ ११ ॥
क्वचित्क्वचित्क्षीणधनस्तु तस्मिन् शय्यासनस्थानविहारहीनः ।
याचन्परादप्रतिलब्धकामः पारक्यदृष्टिर्लभतेऽवमानम् ॥ १२ ॥
(१)अन्योऽन्यवित्तव्यतिषङ्गवृद्धवैरानुबन्धो विवहन्मिथश्च ।
अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैर्विहरन्विपन्नः ॥ १३ ॥
तांस्तान्विपन्नान्स हि तत्र तत्र विहाय जातं परिगृह्य सार्थः ।
आवर्ततेऽद्यापि न कश्चिदत्र वीराध्वनः पारमुपैति योगम् ॥ १४ ॥
मनस्विनो निर्जितदिग्गजेन्द्रा ममेति सर्वे भुवि बद्धवैराः ।
मृधे शयीरन्न तु तद्व्रजन्ति यन्न्यस्तदण्डो गतवैरोऽभियाति ॥ १५ ॥
प्रसज्जति क्वापि लताभुजाश्रयस्तदाश्रयाव्यक्तपदद्विजस्पृहः ।
क्वचित्कदाचिद्धरिचक्रतस्त्रसन्सख्यं विधत्ते बककङ्कगृध्रैः ॥ १६ ॥

### भाषाटीका

कभी पर्वतोंपर चढने [ शास्त्रोक्त कर्मों को करने ] चाहताहै तब कांटे कंकडों ( विघ्नों ) के मारे दुःखित होता है कभी कभी जठराग्नि से पीड़ित होने से कुटुम्ब वाला होने से अपने पुत्रादिकोंपर क्रोध करता है ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अजगराहिना निद्रारूपेण गिलितो न वेत्ति । विपिने त्यक्तः शव इव दन्दशूकैर्हिंस्रैर्दुर्जनैर्दष्टः पीडितोऽन्धो लुप्तविवेकोऽन्धकूपे मोहे पतितस्तमिस्रे दुःखे शेते लीयते ॥ ९ ॥

क्षुद्ररसान्परयोषादीन्विचिन्वन्गवेषयंस्तन्मक्षिकाभिर्योषादिस्वामिभिर्विमानोऽवज्ञातस्ताडितः सन्व्यथितो भवति । यदि कथंचित्तत्रातिक्लेशेन प्रतिलब्धमानः प्राप्तयोषादिर्भवति तदा बलादन्येऽपहरन्ति तान्यदाऽभियुङ्क्ते तदा ततोऽप्यन्ये हरन्ति ॥ १० ॥

यत्किञ्चिदत्यल्पमपि मिथो व्यवहरन् क्रयादिना गृह्णन् वित्तशाठ्याद्धनवञ्चनात् ॥ ११ ॥

शय्याविहीनः । आस्यतेऽस्मिन्नित्यासनं कम्बलादि । स्थीयतेऽत्रेति स्थानं गृहम् । विहरन्त्यनेनेति विहारो यानादि । याचमानोऽपि यदा परस्मादप्राप्तकामस्तदा परकीये वस्तुनि दृष्टिरभिलाषो यस्य सोऽवमानं प्राप्नोति ॥ १२ ॥

एवमन्योऽन्यं वित्तव्यतिषङ्गेण धनविनिमयेन वृद्धो [illegible] बन्धो यस्य तथाविधोऽपि परस्परं विवहन्विवाहादि [illegible] कुर्वन्नुरुभिः कृच्छ्रैः श्रमैर्वित्तबाधैरुपसर्गैश्च द्वेषादि [illegible] मृतप्रायो भवति ॥ १३ ॥

दुरत्ययत्वमध्वनो दर्शयति । तांस्तान्विपन्नान्मृ [illegible] जातं जातं परिगृह्य विहरन्यतः प्रस्थितस्तं प्रति [illegible] हे वीर ! अध्वनः पारं यो योगस्तं च नोपैति । अत्र सार्थ [illegible] दतिसमर्थोऽपि ॥ १४ ॥

तदेवाह । मनस्विनः शूराः निर्जिता दिग्गजेन्द्रा [illegible] भूर्ममेयमिति भुवि निमित्तभूतायां बद्धं वैरं यैः [illegible] संन्यासी यद्विष्णोः पदमभियाति तत्तु न व्रजन्ति ॥ [illegible]

सिंहावलोकनेन पुनर्भवाटवीमेवानुवर्णयति । प्रसज्ज [illegible] करोति । कीदृशः । लतानां भुजाः शाखास्तद्वत्सुकु [illegible] स्त्रीणां भुजास्तदाश्रयः सन् । तदाश्रया अव्यक्तपदा [illegible] चराः कलभाषिणो ये द्विजाः पक्षिणस्तत्तुल्येषु स्त्रीष [illegible] स्वपत्येषु स्पृहा यस्य तादृशो भूत्वा हरिचक्रं सिंह [illegible] त्तुल्यात्कालचक्रनिमित्ताज्जन्ममरणादेस्संत्रस्तपरिहाय [illegible] शोभितो बकादिवद्वञ्चकैः क्षुद्रैः क्रूरैश्च पाखण्डैः स [illegible] करोति तेषु प्रविशति ॥ १६ ॥

---

(१) इतःपरं श्लोकत्रयं श्रीविजयध्वजतीर्थमते सटीकमष्टादशश्लोकानन्तरं विद्यते तथैवात्रापि टीका स्थापितास्ति अत्र दु [illegible] त्यादित्रयं तन्मते ज्ञेयम् ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्वचिदयं जनः अजगराहिना अजगराख्यसर्पतुल्यया निद्रया निगीर्णो ग्रस्तः किञ्चिदपि न वेत्ति यथा विपिनेऽरण्येऽपविद्ध-स्त्यक्तः शव इव क्व च दन्दशूकैः सर्पतुल्यैर्हिंस्रैर्दुर्जनैर्दष्टः पीडितः अन्धो लुप्तविवेकः अन्धकूपे मोहे शरीरदुःखे वा पतितः तामिस्रे दुःखादिभिर्व्याप्ते ॥ ९ ॥

कर्हिचित् क्षुद्ररसान् विचिन्वन् तन्मक्षिकाभिः रसादि-स्वामिभिर्व्यथितः ताडितः विमानोऽवज्ञातो भवति यदि कथञ्चि-द्यत्नातिक्लेशेन प्रतिलभ्यमानः प्राप्तपरदारादिर्भवति तदा तं धर्षयित्वा बलादन्ये तान् क्षुद्ररसानपहरन्ति एवं तेभ्योऽप्यन्येऽप हरन्तीत्यर्थः ॥ १० ॥

क्वचिच्च शीतादीनां प्रतिक्रियां कर्तुं शीतादिनिवारकवस्त्र-गृहादिकं सम्पादयितुमसमर्थस्तैर्दुःखित आस्ते क्वचिन्मिथः यत्किञ्चिदत्यल्पमपि विपणान् क्रयविक्रयादिभिर्व्यवहारं वाणि-ज्यं कुर्वन्नित्यर्थः वित्तशाठ्याद्धनवाञ्छया विद्वेषं प्राप्नोति ॥११॥

तस्मिन् संसाराध्वनि क्वचित् क्षीणं धनं यस्य सः अत एव शय्यादिभिर्विहीनः रहितः भवति शेतेऽस्यामिति शय्या पर्यङ्कादि आस्यतेऽस्मिन्नित्यासनं कम्बलादि स्थीयतेऽस्मिन्निति स्थानं गृहादि विहरत्यनेनेति विहारो यानादिः याचमानो यदा परस्मादप्राप्तकामः तदा परकीये वस्तुनि दृष्टिरभिलाषो यस्य सोऽवमानमवज्ञां लभते ॥ १२ ॥

एवमन्योऽन्यं वित्तव्यतिषङ्गेण वित्तव्यत्यासेन वृद्धः वैरा-नुबन्धो यस्य सः मिथः विवादं कुर्वन् विवहन्मिथश्चेत्यपि-पाठः तदाभाषालब्धवित्तनियमव्यत्यासेन विवृद्धवैरानुबन्धः वैराविष्टचित्तः परस्परं विग्रहं कुर्वन्नमुष्मिन् दुरत्ययेऽध्वनि एभिः कृच्छ्रैः श्रमैः वित्तनाशैरुपसर्गैश्च द्वेषादिभिर्विपन्नः मृतप्रायो भवति ॥ १३ ॥

दुरत्ययत्वमध्वनो दर्शयति । तांस्तान् विपन्नान् मृतान् पित्रादीन् तत्र विहाय जातं सार्थं पुत्रादिकं परिगृह्याद्याप्यत्रावर्त्तते भ्राम्यति हे वीर ! अध्वनः पारं योगं कश्चिदपि नोपैति अत्र सार्थे कश्चिदतिसमर्थोऽपि ॥ १४ ॥

तदेवाह । मनस्विनः शूरा निर्जिताः दिग्गजेन्द्रा यैस्ते ममेयं भूमिर्ममेयं भूमिरित्यभिमाननिमित्तभूतायां भुवि बद्धं वैरं यैस्ते मृधे युद्धे केवलं शरीरात्प्राणांस्त्यक्तवन्तः नतु तद्व्रजन्ति प्राप्नुवन्ति किं तद् यत्र व्रजन्ति मनस्विनस्तत्राह । न्यस्तदण्डस्त्यक्तभूतदण्डः त्यक्तभूतवैरश्च योगी यद्विष्णोः पदं याति तत्र व्रजन्तीत्यर्थः ॥ १५ ॥

सिंहावलोकनन्यायेन पुनर्भवाटवीमेवानुवर्णयति । प्रसज्ज-तीति । प्रसजत्यासक्तिं करोति कीदृशः लतानां भुजाः शाखाः तानाश्रितः लतातुल्यकामिनीभुजोपधान इत्यर्थः तदाश्रयाः कामिनीलताश्रया येऽव्यक्तपदाः स्वानभिव्यक्तवर्णमधुरवचोभाषिणो द्विजाः पक्षिसदृशाः शिशवः बालाः तेषु स्पृहा यस्य सः तादृशो भूत्वा प्रसज्जतीत्यर्थः क्वचित् हरिचक्रं सिंहसमूहस्त-त्तुल्याद्धरिचक्राद्भगवत्सम्बन्धिनः कालचक्रात् त्रसन् बिभ्यत् कालचक्रनिमित्तजन्मजरामरणादेस्त्रसन् तत्परिहाराय कैश्चित्प्रलो-भिनः बकादितुल्यैः पाखण्डदैवतैः सह सख्यं विधत्ते तेषु भक्तिं करोतीत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अजगराहिना "अजगरः शयुः" इत्यभिधानान्निद्राशीलो महा-सर्पः तद्वन्निद्रया काललक्षणेन वा पिनोतेर्गतिकर्मणोऽर्थुपपदाया-विपरीतार्थायाः क्षा ( १ ) नोपरतिलक्षणारात्रिरित्यर्थः तत्रापविद्धः तिरश्चीनागतशरविद्ध इव दुःखितो दन्दशूकैः पुनः पुनरुपद्र-वशीलैरसज्जनैर्दष्टोऽधिक्षिप्तोऽन्धो विवेकशून्योऽन्धकूपसमानयोनि-विशेषे तमिस्रे नरकवत् दुःखरूपे ॥ ९ ॥

परवनितासङ्गेन क्षुद्ररसानल्पानन्दान् विचिन्वन्नन्वेषणं कुर्वं-स्तन्मक्षिकाभिस्तासां वनितानां समानशीलैरन्योऽन्यवनितालोलैः स्वामिभिर्व्यथितस्ताडितो विमानो विगताभिमानस्तत्रापि परस्त्री-विषयेऽपि कृच्छ्रात्स्वामिवञ्चनायासेन प्रतिलब्धं स्त्रीधनादि अन्ये राजानो बलात् विलुम्पन्ति अपहरन्ति अथ ततः तेभ्यः अन्ये उपपतयस्तं स्त्रीजनमपहरन्तीत्येवमनवस्थाविषयसुखस्य क्षुद्रं रान्तीति क्षुद्राः अल्पत्वेनेति शेषः तान् क्षुद्ररसानल्पलक्षणान् वि-चिन्वंस्तन्मक्षिकाभिस्तद्धनदातृभिरदानेन दुःखितो विमानोऽनाश्रयो भवति तत्र क्वचित्कालान्तरे अत्यायासेन प्रतिनिधिना स्वाम्युक्तकर्म-करणलक्षणेन लब्धं निष्पन्नमन्येऽन्नकाङ्क्षिणो याचका विद्याबला-दपहरन्ति तेभ्यो याचकेभ्योऽन्ये ततोऽप्यधिकविद्याबलेन महामार्गे क्लृप्तं विप्रभोजनमपहृत्य भुञ्जत इति धर्मभोजनस्यासिद्धिः अथ-शब्दः आश्चर्यार्थे इति वा ॥ १० ॥

प्रतिक्रियां परिहारं प्रावरणाद्यभावेनेति शेषः विपणान् क्रयविक्रयलक्षणं व्यवहारं कुर्वन् यत्किञ्चिदपि विक्रेयं रसलव-णादिकमपि ऋच्छति प्राप्नोति ॥ ११ ॥

तस्मिन् व्यवहारे क्षीणधनः नष्टमौल्यः यावद्यदा दरिद्रः परं प्रार्थयते तदा परादन्यस्मादप्रतिलब्धकामः प्रतिग्रहादिधर्मेणा-प्राप्ताभीष्टधनः पारक्यदृष्टिः परकीयद्रव्यस्वीकारेच्छुश्चौर्येणेति शेषः अवमानं बन्धनताडनादिकम् ॥ १२ ॥

(२)लतावत्कोमलभुजाश्रयः अव्यक्तपदमव्यक्तस्य प्रकृतिसंज्ञस्य स्त्रीजनस्य पदं स्थानं प्रसज्जति प्रकर्षेण सक्तो भवति द्विजस्य कुले जातोऽपीति शेषः तदाश्रय इति हेतुगर्भं विशेषणं स्त्रीजनाश्रय-त्वादिति ।

प्रभवति मनसि विवेको विदुषामपि शास्त्रसम्भवस्तावत् ।
निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम् ॥

इति प्रसिद्धिं हशब्देनाह । हरिचक्रतः कालचक्रात् त्रसन् बिभ्यत् "वकभक्षणे" "ककिलौल्ये" "गृधु अभिकाङ्क्षायां" वक-वदिक्षुदण्डादिभक्षणशीलविघ्नेश्वरदेवतया कङ्कवन्मैथुनलोल-चित्तयक्षादिदेवतया रुधिरासवाकाङ्क्षारतभद्रकालीदेवतया च सेवालक्षणं शक्यम् ॥ ० ॥

वञ्चितो विपुलदण्डः अभीष्टफलाभावादिति शेषः हंसकुलं

---

( १ ) विपिनइत्यस्यार्थोऽयम् ।

( २ ) लताभुजाः लतानां शाखाः तदाश्रयः। द्विजस्य पक्षिसमू-हस्य यत् अव्यक्तपदं कलभाषितं । तदाश्रयः तत्रैवासक्तचित्तः । प्रसज्जतिप्रकर्षेणासक्तोभवतीतिवणिक्पक्षे योज्यम् । कामिपक्षे तु लतावत्कोमलायाः स्त्रियोर्योभुजौतदाश्रयः ताभ्यामालिङ्गितः । द्विजस्यलताश्रितपक्षितुल्यस्यस्त्र्याश्रितापत्यादेः यदव्यक्तंपदंकल-भाषितं तदाश्रयः प्रकर्षेणसज्जतीति ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्राह्मणकुलं संन्यासाश्रमं वा हंसानां शीलमुपनयनादिसंस्कारं त्रिपवणस्नानभिक्षावृत्त्यादिकं वा न रोचयन् पथ्यं नेदमिति मन्वानो वानरः वानेन हिंसया रमत इति शूद्रस्वभावं हिंसालक्षणं वानेन रमत इति गमनागमनलक्षणां सेवां वा शूद्रवत्सेवावृत्तिमुपजीव्य वर्तेत इत्यर्थः तज्जातिरासेन शूद्रजातिक्रीडारसेन सुष्ठु निर्वृतानि प्रीतानीन्द्रियाणि यस्य स तथा परस्पराण्वीक्षणविस्मृतावधिः स्त्रीपुरुषयोरन्योऽन्यमुखनिरीक्षणेन विस्मृतविहितकालमर्यादः ॥ ० ॥

द्रुमेष्वैहिकफलभोगयोग्यलक्षणेषु गृहेषु रंस्यन् रतिं कुर्वन् सुतदारेषु स्निग्धो व्यवायेन मैथुनक्रियया दीनः शोच्यां दशामापन्नोऽत एव विवशो वने संसाराख्ये चरन् भवति ततः कदाचित् प्रमादाद्भगवत्तत्त्वापरिज्ञानाद्गिरिकन्दरवद्भयङ्करनरके पतन्वल्लीं जन्मान्तरोपार्जितपुण्यकर्मलक्षणां पाशमवलम्ब्य गजभीतो भयङ्करमृत्युभीतोऽपि ॥ ० ॥

ततः आपदः कथञ्चिन्मुक्तो भूत्वा श्रद्दधानः सार्थं सदाचारोपेतवर्णाश्रमं स्थानं प्रविशति संसाराध्वनि प्रवेशस्य प्रधानकारणमिदमेवेत्याह । अध्वनीति ॥ ० ॥

---

: श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विपन्नः कश्चिन्मृतो भवति ॥ १४—२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अजगराहिना निद्रारूपेण अपविद्धः बन्धुभिरप्रबोधितः दन्दशूकैरिव दुर्जनैः पीडितः अन्धो विवेकहीनः । अन्धकूपे मोहे तमिस्रे तमोवृते पद्बे दुःखमये ॥ ९ ॥

क्षुद्ररसान् परदारान् तन्मक्षिकाभिस्तद्भर्तृश्वश्रूादिभिर्विमानो विगतमानः क्षतो व्यथितो भवति । यदि कथञ्चित्तत्रातिक्लेशेन धनव्ययादिना प्रतिलब्धमानः प्राप्तपरदारसम्भोगस्तदा तान् दारान् अन्ये विलुम्पन्ति ततोऽप्यधिकवित्तव्यये नान्येऽपीत्येवम् ॥ १० ॥

मिथो विपणान् विपणायन् क्रयविक्रयादिना व्यवहरन् वित्तशाठ्यात् धनवञ्चनात् विद्वेषं प्राप्नोति ॥ ११ ॥

परात् परस्मात् याच्यमानादपि अप्राप्तधनो भवेत्तदा परोक्ष्ये परकीये वस्तुनि दृष्टिरभिलाषो यस्य सोऽवमानं प्राप्नोति ॥१२॥

एवमन्योऽन्यवित्तस्य व्यतिषङ्गेण परस्परासक्त्या परस्परजिघृक्षया विवृद्धो वैरानुबन्धो यस्य तथाविधोऽपि परस्परं विवहन् विवाहादिसम्बन्धं कुर्वन् अध्वनि विहरन् विभ्रमन् उरुभिः कृच्छ्रैर्वित्तनाशैरुपसर्गैः रोगादिभिश्च विपन्नो मृतप्रायो भवति ॥ १३ ॥

विपन्नान् मृतान् विहाय जातं जातं परिगृह्य चलन्नद्यापि नावर्तते यतश्चलितस्तं परमेश्वरं प्रतीत्यर्थः । तत्प्राप्तिसाधनयोगमुपायं भक्तिज्ञानादिकं पारं पारप्रापकं न उपैति अत्र सार्थेषु मध्ये कश्चिदपि ॥ १४ ॥

तदेवाह मनस्विनः शूरा निर्जितेत्यतिदूरवर्त्तिनो [illegible]न्द्रानपि निर्जयन्तिस्म नत्वतिनिकटवर्तिन एकादशेन्द्रियाणि नपि इति व्यवहार एव तेषां शौर्यं नतु परमार्थं [illegible] ततो ममेत्यादिपरमार्थतः शूरमाह । न्यस्तेति । गतवैरत्वे[illegible] दण्डत्वमेव शौर्यमिति भावः ॥ १५ ॥

सिंहावलोकेन पुनर्भवाटवीमेवानुवर्णयति । [illegible] लतानां स्त्रीणां भुजान् स्पर्शसुखानाश्रयत इति सः [illegible] लतावलम्बिषु सुप्तत्वादव्यक्तपदेषु द्विजेषु पक्षिषु स्पृहा [illegible] यस्य सः । पक्षे भार्योत्सङ्गवर्त्तिनि अस्फुटाक्षरभाषिणि [illegible] स्त्रीपुंसाभ्यां जातत्वात् द्विजे बालके दर्शनस्पर्शनादिस्पृहा [illegible] तादृशो भूत्वा कदाचित् काले क्वापि देशे स्वयमेव वा [illegible] संसारं तरिष्यसीति दैवात् पाखण्डानां वाक्येन वा [illegible] सिंहसङ्घतुल्यात् कालचक्रात् त्रसन् त्रस्यन् तदर्थं [illegible] तैरेव पाखण्डैरेवं सुखेन तरिष्यसीति प्रलोभितो बकादि[illegible] कुबुद्धिभिः क्रूरैस्तैरेव पाखण्डिभिः सह सख्यं करोति । [illegible]

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अजगराहितुल्यया निद्रया ग्रस्तः विपिने अपविद्ध[illegible] शव इव दन्दशूकैः सर्पसदृशैः हिंस्रैर्जनैः दष्टः मन्यु[illegible] शरैस्ताडितः अन्धो नष्टविवेकः अन्धकूपे मोहे पतितः [illegible] दुःखगर्त्ते शेते लीयते ॥ ९ ॥

क्षुद्ररसान् तत्तुल्यान् परदारादीन् तन्मक्षिकाभिस्तद्[illegible] कृच्छ्रं यथा भवति तथा प्रतिलब्धमानः प्राप्तपरदा[illegible] वति तदा बलाद्विलुम्पन्ति तान्विलुम्पकान् अन्ये विलुम्पन्ति [illegible] विपणान् व्यवहरन् ॥ ११ ॥

तस्मिन् भवाध्वनि शेतेऽस्यामिति शय्या आस्यतेऽ[illegible] त्यासनम् विहरत्यनेनेति विहारः यानादिः परात् याच[illegible] मानः अप्रतिलब्धकामः यदा भवति तदा पारक्ये [illegible] शय्यादौ दृष्टिर्ग्रहणे मतिर्यस्य स अवमानमवज्ञां प्राप्नोति । [illegible]

इत्थं परस्परं धनस्य व्यतिसङ्गेन विनिमयेन [illegible] वैरानुबन्धो यस्य स तादृशोऽपि व्यवहरन् नाना[illegible] कुर्वन् अस्मिन् अध्वनि उरुकृच्छ्रैः नानाक्लेशैः वित्त[illegible] नाशैरुपसर्गैर्द्वन्द्वपादिभिश्च विपन्नो नष्टप्रायो भवति ॥ १३ ॥

हे वीर ! विपन्नान्नष्टान् पित्रादीन् विहाय जाता[illegible] दीन् आदाय अद्यापि अत्रैव भवाध्वनि परिवर्त्ते[illegible] योगं ज्ञानभक्तिलक्षणं साधनम् अध्वनः पारं हरिं [illegible] दपि प्रवृत्तिनिष्ठः नोपैतीत्यन्वयः ॥ १४ ॥

हरिं त्रैवर्गिका नैव यान्तीति वदन् तच्छरणो [illegible] त्याह । मनस्विन इति । मनस्विनस्त्रिवर्गेऽर्पितचित्ताः [illegible] रन् प्राणांस्त्यक्तवन्तः तत्र ये च ममेति बद्धवैराः [illegible] गजेन्द्रा राजानः मृधे शयीरन् ते सर्वेऽपि तदध्वनः [illegible] न व्रजन्ति यत् यं हरिं न्यस्तदण्डः सर्वभूताभयप्रदः [illegible] गतवैरः हरिभक्तः याति "मद्भक्ता यान्ति मामपि" इति [illegible] वचनात् ॥ १५ ॥

क्वापि कदाचित् यदा प्रसज्जति विषयास[illegible] तदा लतायुक्ताः भुजा द्रुमशाखाः तत्सदृशा ये [illegible]

तैर्वञ्चितो हंसकुलं समाविशन्नरोचयञ्छीलमुपैति वानरान् ।
तज्जातिरासेन सुनिर्वृतेन्द्रियः परस्परोद्वीक्षणविस्मृतावधिः ॥ १७ ॥
द्रुमेषु रंस्यन्सुतदारवत्सलो व्यवायदीनो विवशः स्वबन्धने ।
क्वचित्प्रमादाद्गिरिकन्दरे पतन्वल्लीं गृहीत्वा गजभीत आस्थितः ॥ १८ ॥
अतः कथंचित्स विमुक्त आपदः पुनश्च सार्थं प्रविशत्यरिन्दम ! ।
अध्वन्यमुष्मिन्नजया निवेशितो भ्रमन् जनोऽद्यापि न वेद कश्चन ॥ १९ ॥
रहूगण ! त्वमपि ह्यध्वनोऽस्य संन्यस्तदण्डः कृतभूतमैत्रः ।
असज्जितात्मा हरिसेवया शितं ज्ञानासिमादाय तरातिपारम् ॥ २० ॥

राजोवाच ।

अहो नृजन्माखिलजन्मशोभनं किं जन्मभिस्त्वपरैरप्यमुष्मिन् ।
न यद्धृषीकेशयशःकृतात्मनां महात्मनां वः प्रचुरः समागमः ॥ २१ ॥
न ह्यद्भुतं त्वच्चरणाब्जरेणुभिर्हतांहसो भक्तिरधोक्षजेऽमला ।
मौहूर्तिकाद्यस्य समागमाच्च मे दुस्तर्कमूलोऽपहतोऽविवेकः ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रयः सन् तदाश्रयाः अव्यक्तपदाश्च ये द्विजाः अण्डजाः कोकिलादयस्तत्तत्सदृशेषु भार्यासङ्गसाध्येष्वपत्येषु स्पृहा यस्य स तथाभूतो भवति क्वचिच्च हरिचक्रतः सिंहसमूहसदृशात् कालचक्रतस्त्रसन् विभ्यत्तत्परिहाराय बकादितुल्यैः केवलमुदरम्भरैः पाषण्डिभिः सख्यं विधत्ते तद्भक्तो भवतीत्यर्थः ॥ १६ ॥

---

भाषाटीका ।

कहींपर मनुष्य अजगर सर्प ( निद्रा ) से ग्रसित होता है फिर जङ्गल में छोडदिया जाताहै तव कुछभी नहीं जानताहै कहींपर सर्पों ( क्रूरमनुष्यों ) से पीडित होता है तव विना पानीके कुये ( मोह ) में अंधेरे ( दुःख ) में पडता है ॥ ९ ॥

कभी क्षुद्ररस ( परस्त्रीआदि ) को ढूंढता है तव मधुमाखि ( उन स्त्रियों के स्वामि ) आदिकों से दुखित होने से खिन्न हो जाता है यदि कदाचित् उसमें परदारादि प्राप्त होजावें तो तिस से बली उसको लूटकर लेजाते हैं ॥ १० ॥

कहींपर शीत पवन वर्षा इनके निवारण करने में असमर्थ होकर रहता है कहींपर आपसमें मोल लेता वेचता है धनकी शठता से थोडे में वहुत चाहता है ॥ ११ ॥

कहीं कहीं पर तिस वनमें शय्या आसन स्थान विहार से रहित होता है फिर दूसरे से मागता है तौभी कामना नहीं पूरी होतीहै पराई वस्तु में इच्छा करनेसे अपमानको प्राप्त होताहै॥१२॥

आपसमे धनके वदलावदली में वैरके वढने परभी विवाहादिक करता है इस मार्ग में घूमने में वडे कष्टोंसे धनकी वाधासे रोगों स विपत्तिकों प्राप्त होता हैं ॥ १३ ॥

हे वीर ! उन उन दुःखिया मरे मनुष्यों को तहींपर छोडकर नयेको या पैदा होनेवाले को लेकर वह मनुष्य समूह चला जाता है इस प्रकार चलने में भी जहां से यह चलताहै वहां को नहीं जा सकता है और मार्ग के जानेके योगकों भी नहीं प्राप्त होता है ॥ १४ ॥

वडे युद्ध के उत्साही दिग्गजों के जीतने वाले मेरी है करके पृथिवी पर वैर वांधने वाले सव युद्धमें मरगये परन्तु सर्व भूतों के अभय देनेवाले जिस स्थान को जाते हैं तहां न जासकते हैं ॥ १५ ॥

कहींपर लतासरीके स्त्रीभुजों का आश्रय करके उनके आश्रित अव्यक्त भाषण करने वाले पक्षि ( पुत्रादिक ) में इच्छा करता है फिर इनके पोषण में आसक्त होता है कभी कहींपर सिंह के समूह ( जन्ममरणादि कालचक्रसे ) डरकर वचनेः को वक कङ्क गीध ( पाखण्डी ) इनके साथ मित्रता करता है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तैर्वञ्चितस्तत्र फलाभावं ज्ञात्वा हंसानां ब्राह्मणानां कुलं पुनः प्रविशंस्तेषां शीलं प्रायश्चित्तपूर्वकं पुनरुपनयनाद्याचारमरोचयन् प्रियं पश्यन्वानरतुल्यान् भ्रष्टाचारान् शूद्रप्रायानुपैति । तज्जातिरासेन वानरजातिक्रीडया स्त्रिया मिथुनीभूय परस्परमुखोद्वीक्षणेन विस्मृतो जीवितावधिर्मरणकालो येन ॥ १७ ॥

द्रुमवत्केवलस्वार्थेषु गृहेषु व्यवायदीनः सुरतेच्छया कृपणः एवं स्वस्य यद्बन्धनं प्राप्तं तस्मिन्विवशः परिहर्तुमशक्तः । पाठान्तरं तु वने संसारे चरन्नित्यर्थः । गिरिकन्दरवदतिभयानके रोगादिदुःखे पतन्कन्दरस्थगजतुल्यान्मृत्योर्भीतः सन् वल्लीतुल्यं प्राचीनकर्मावलम्ब्यावस्थितो भवति ॥ १८

श्रीधरस्वामिकृतभावार्थदीपिका ।

सार्थं प्रविशति यथा पूर्वं प्रवृत्तिमार्गे रमते न वेद परमपुरुषार्थम् ॥ १९ ॥

त्वमपि अध्वनि निवेशित इत्यनुषङ्गः । अतोऽस्याध्वनः पारमतितर । असज्जितात्मा विषयेष्वनभिनिवेशितचित्तः सन् हरिसेवया शितं तीक्ष्णीकृतम् ॥ २० ॥

अखिलजन्मसु शोभनं नृजन्मैव न परं श्रेष्ठं येभ्यो देवादिजन्मभ्यस्तैरपि किम् अमुष्मिन् स्वर्गेऽपि जन्मभिः किं न किञ्चित् यद्येषु जन्मसु यत्र स्वर्गे वा वो महात्मनां समागमः प्रचुरो न भवति हृषीकेशस्य यशसा कृतः शोधित आत्मा यैस्तेषाम् ॥२१॥

सन्ततमुपासितैस्त्वत्पदाब्जरेणुभिर्हतमंहो यस्य तस्याधोक्षजे निर्मला भक्तिर्भवतीति नैवाद्भुतं यस्य तव मुहूर्तमात्रभवात् समागममात्रादपि दुस्तर्केण बद्धमूलोऽपि ममाविवेको नष्टः ॥ २२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तैर्वञ्चितः स्वयं तान् वञ्चयंस्तैर्वञ्चितः फलाभावं ज्ञात्वा हंसकुलं पुनर्विशुद्धं ब्राह्मणकुलं समाविशन् प्रविशन् तेषां शीलं प्रायश्चित्तपूर्वकं पुनरुपनयनाद्याचाररूपमरोचयन् पूर्ववुर्वासनयाऽप्रियं पश्यन् वानरतुल्यान् भ्रष्टसदाचारान् शूद्रप्रायानुपैति तज्जातिरासेन वानरजातिक्रीडया स्त्रिया मिथुनीभूय रहोभाषणपूर्वकपरस्परमुखनिरीक्षणेन विस्मृतः अवधिर्जीवनावधिर्मरणकालो येन सः ॥ १७ ॥

द्रुमतुल्येषु केवलदृष्टार्थेषु गृहेषु रंस्यन् क्रीडिस्यन् व्यवायेन मैथुनेच्छया दीनः कृपणः सुतेषु दारेषु वत्सलः एवं स्वस्य यद्बन्धनं प्राप्तं तस्मिन् विवशः परिहर्तुमशक्तो भवति कचित्प्रमादान्मृत्युगयाद्गिरिकन्दरवद्भयानके रोगादिदुःखे वर्त्तमानः दूरस्थराजतुल्यमृत्योर्भीतः सन् वल्लीं वल्लीतुल्यां प्राचीनवासनामवलम्ब्यावस्थितो भवति ॥ १८ ॥

ततः आपदः दुःखात् कथंचिदतिप्रयासेन विमुक्तः पुनश्च सार्थं वर्णाश्रमनिष्ठं जनं प्रविशति यथा पूर्वं प्रवृत्तिमार्गे रमते हे अरिन्दम! अस्मिन् संसाराध्वन्यजया भगवन्मायया निवेशितो जनः भ्रमन्नद्यापि पारं न याति ॥ १९ ॥

तस्मात् हे रहूगण ! त्वमपि परित्यक्तः भूतदण्डो येन कृतं भूतेषु मैत्रं येन असज्जितः विषयेष्वनभिनिवेशितः आत्मा येन तथाभूतः सन् हरिसेवया निशितः सेवाऽत्र वर्णाश्रमधर्मैर्भगवदाराधनरूपा तथा निशितं ज्ञानं ज्ञानं भगवदुपासनात्मकं तदेवासिः खड्गस्तमादाय प्रकृतितरुच्छेदनायेति भावः यथा "अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा„ इति अस्याध्वनः पारं वैष्णवं पदं प्रति अतितर अध्वनः पारमिति ज्ञात्वा असेर्विशेषणं वा संसाराध्वनो निस्तरणोपायभूतज्ञानासिमादाय संसारगुणो भवेत्यर्थः ॥ २० ॥

एवमुपदिष्टतत्त्वत्रययाथात्म्यबन्धमोक्षहेतुः संसारासारत्वोपदेशेन उत्पन्नवैराग्यो रहूगणः स्वात्मनः कृतार्थतामाविः कुर्वन् तत्सङ्गतिं तदुक्तीश्चाभिनन्दन्नमस्करोति त्रिभिः श्लोकैः इति । अहो नृजन्म मनुष्यजन्म सुशोभनं परममुष्मिन् परैर्देवादिजन्मभिरपि किं प्रयोजनं येषु देवादिजन्मसु [illegible] शस्य भगवतो यशसा कृतः शोधित आत्मा चित्तं [illegible] महात्मनां त्वादृशानां समागमः प्रचुरो न भवति [illegible] सङ्गविरहितैर्देवादिजन्मभिरपि किं व्यर्थान्येव तानीत्यर्थः ॥

निरन्तरं त्वादृशानामुपासितयोश्चरणाब्जयो रेणुभिः [illegible] पापं यस्य तस्याधोक्षजेऽमला भक्तिर्भवतीति नैवाद्भुतं [illegible] यस्य तव मौहूर्तिकान्मुहूर्तमात्रभवात्समागममात्रान्मे [illegible] बद्धमूलोऽप्यविवेकाऽपहतः विनष्टोऽभवत् ॥ २२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अजा कथङ्करमज्ञानमुत्पादयतीति तत्राह । अन्योन्य [illegible] अन्योऽन्यवित्तव्यतिषङ्गः पररूपरद्रव्यदानादानमस्वन्धभेद [illegible] वैरानुबन्धः वैरपरम्परा यस्य स तथा मिथोऽभिद्रुहन् कुर्वन् कुर्वन् अध्वनि विहरन् क्रीडन्नुरुणा कृच्छ्रेणाप्त यत्र [illegible] बाधोपसर्गैर्नाशलक्षणोपद्रवैर्विपन्नो निपत्ति गतः ॥ ० ॥

स एवंविधस्तत्र तत्र मनुष्यादिजन्मनि तांस्तान् [illegible] न्मृतानापदङ्गतान्वा पित्रादीन् स्वदेहान् वा विहाय [illegible] जातमभिन वं (१) परिगृह्याद्याप्यावर्तेत इत्यन्वयः फलं [illegible] कश्चिदिति । हे वीर ! संसाराध्वनः पारं युज्यनेऽनेनेति योगं [illegible] स्तं नोपैतीत्यन्वयः अत्र करतलामलकवदपरोक्षीकृत [illegible] यथास्वरूपत्वाद्धरतस्येदृशं ज्ञानं युक्तं तदुक्तम् ।

ऋते हैहयवैन्यादीनार्षभस्येह कः समः ।
यस्योपदेशात्सिन्धीशो ददर्श कपिलं प्रभुम् ।

इत्यतो नात्र शङ्का कार्येति ॥ ० ॥

"सोऽध्वनः पारमाप्नोति । योगी परं स्थानमुपैति चाद्यं [illegible] कश्चिदध्वनः पारं नोपैति इति सर्वनिषेधः कथं यु [illegible] स्याशङ्क्य भक्तिहीनपुरुषविषयं मयोक्तमतोऽन्यत्त [illegible] नायं दिग्जयवत्साध्य इति भावेनाह । मनस्विन इति । [illegible] नलम्बुद्धयो राजानः निर्जितादिग्गजेन्द्रा इत्यनेनानु [illegible] स्पष्टयति । किमनेनेति तत्राह । ममेति । भुवि भूमिनि [illegible] महीति दुराग्रहग्राहग्रस्तबुद्धिरत्न मिथोवद्धवैरा अत एव [illegible] रन् शत्रुशरशीर्णशरीराः पञ्चत्वमेवाश्नन्ति न तु मर्त [illegible] न्तीत्यर्थः एते तत्र व्रजन्ति चेत्को व्रजतीति तत्राह । [illegible] दण्ड इति । न्यस्तदण्डो वागादिनिमित्तहिंसारहितो [illegible] योग्यतानुसारेण निरस्तभूतवैरः पुरुषो हरेरंश [illegible] तदित्यन्वयः ॥ ० ॥

एवमुपवर्णितसंसारतरून्मूलनमसुकरमिति न मन्त [illegible] भगवत्सेवा निशितज्ञानासिमाददानस्य तव सुशकमिति [illegible] गणेति । "रहत्यागे" "गणसङ्ख्याने„ इति संसारं रहत [illegible] ज्ञानं यस्य स तथा तस्य सम्बुद्धिः हे रहूगणेति "वह [illegible]

( १ ) शरीरं ।
( २ ) भक्तविषयं त्वन्यत् ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सावुरन्यन्नहिशब्दवदयं शब्दः संसारातिक्रान्तपारं हरिमुद्दिश्य संसारनदीं नरेत्यन्वयः लङ्घा पताति कुंडयाश्वेति वचुपपत्तेः पूर्वोक्तैव योजना ॥ २० ॥

सर्वत्रापि जन्मसु नृजन्मैव श्रेयःसाधनमन्यानि भोगनिमित्तानीत्यभिप्रेत्याह । अहो इति । ननु सर्वस्मात् स्वर्गे जननं शोभन न किं तत्राह । किं जन्मभिरिति । कं गुणं निरीक्ष्याक्षिप्यत इति । तत्राह । अमुष्मिन्निति । अमुष्मिन्स्वर्गे हृषीकेशस्य यशसा कृतः शोधितः आत्मान्तःकरणं येषां ते तथा तेषां महात्मनां वो युष्माकं सङ्गमो न प्रचुर इति यस्मात्तस्मात् ॥ २१ ॥

नन्वस्मत्समागमेन तव किं फलमभूदिति तत्राह । नहीति । मे अधोक्षजेऽमलाभक्तिरभूदित्येतदद्भुतं नहीत्यन्वयः हिशब्दे नानुभाविकार्थमाह । कुत एतदिति । तत्राह । मौहूर्तिकादिति । यस्य तव मौहूर्तिकान्मुहूर्तकालभवात् समागमान्मे अविवेकोऽपहतो नष्ट इत्ययमर्थो ममानुभाविक इत्यर्थः अस्मद्दत्तधनोपजीवनेनास्माञ्छलयोग्या एत इति दुस्तर्कः दुष्टा युक्तिर्मूलं यस्य स तथा दुस्तर्कं मूलयति प्रतिष्ठापयतीति वा "मूलप्रतिष्ठायाम्" इति धातुः ॥ २२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तैर्वञ्चितस्तत्र फलाभावं ज्ञात्वा हंसानां ब्राह्मणानां कुलं प्रविशन् तेषां शीलं प्रायश्चित्तपूर्वकं पुनरुपनयनाद्याचारमरोचयन् स्वानभीप्सितं जानन् वानरतुल्यान् भ्रष्टाचारान् शूद्रप्रायान् लिङ्गिन उपैति तज्जातौ रासेन भोजनपानस्त्रीसङ्गादिस्वाच्छन्द्येन परस्परमुखोद्वीक्षणेन विस्मृतो जीविताऽवधिर्मरणकालो येन सः ॥ १७ ॥

कश्चिदन्यः सार्थो द्रुमतुल्येषु केवलदृष्टार्थेषु गृहे व्यवायदीनः सुरतेच्छुत्वात् स्त्रिया पादेन ताड्यमानः एवं स्वस्य यद्बन्धनं प्राप्तं तस्मिन् विवशः परिहर्तुमशक्तः चरन् वने इति पाठः गिरिकन्दरवदति भयानकरोगादिषु दुःखे पतन् कन्दरस्थगजतुल्यान्मृत्योर्भीतः सन् वल्लीतुल्यं प्राचीनकर्मावलम्ब्यावस्थितो भवति ॥ १८ ॥

पुनश्चेति । यथा पूर्वं प्रवृत्तिमार्गे रमते न वेद न परमेश्वरं जानाति ॥ १९ ॥

त्वमप्यध्वनि निवेशित इत्यन्वयः । अतोऽस्याध्वनः पारमति पार याहि ॥ २० ॥

कथमहमकस्मादेवं कृतार्थोऽभूवमिति साश्चर्यं सवितर्कमाह । अखिलजन्मसु मध्ये अहोऽद्भुतेऽस्मिन् मर्त्यलोके नृजन्मैव शोभनममुत्र स्वर्गे परं श्रेष्ठं येऽप्यस्तैर्देवादिजन्मभिः किं यद्येषु वो महात्मनां समागमो न सम्भवेत् कीदृशानां हृषीकेशस्य स्वभक्तसर्वेन्द्रियाकर्षकस्य इरेर्यशोभिरेव कृता निर्मिता आत्मानो देहमनोबुद्धिप्रयत्नजीवात्मानो येषाम् ॥ २१ ॥

ननु प्रचुर इत्युक्त्वा किं स्वल्पसङ्गस्यानर्थकत्वं ब्रूषे मैवमत्यौत्सुक्यमन्वित एव तथा ब्रवीमीत्याह । नहीति । ब्रह्मेन्द्रादिभिरपि दुर्लभा भगवत्यमला भक्तिर्युष्मच्चरणधूलिप्राप्तिमात्रेणैव भवतीत्येतदपि नाश्चर्यमाश्चर्यं खल्वेतदेव यन्मद्विधानां ज्ञानलवदुर्विदग्धानामतिकुत्सितयुक्तिविप्लुतधियां चेतः परावृत्तभक्तियोगोन्मुखीकरणं तच्च मौहूर्तिकादेव समागमाद् यद्यभूत्तर्हि प्रचुरस्य समागमस्य माहात्म्यं को वक्तुं क्षमतामिति तत्र मया स्वौत्सुक्यमेव व्यञ्जितमिति भावः ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हंससमूहस्य सदृशं सारग्राहिभगवज्जनसमूहम् वानरान् तत्तुल्यान् दुराचारान् हरिविमुखान् ॥ १७ ॥

द्रुमेषु द्रुमवद्दृष्टार्थेषु गृहेषु रमयन् विहरन् स्वबन्धने निर्हर्तव्ये विवशः गिरिकन्दरे तद्वन्मरणान्तभयदे रोगादौ पतन् गिरिकन्दरसंबन्धी गजतुल्यान्मृत्योः भीतः सन् वल्लीवत् देहधारकं कर्मावलम्ब्य आस्थितो भवति ॥ १८ ॥

अतः आपदः कथञ्चिद्विमुक्तः पुनः सार्थं त्रैवर्गिकं जनं प्रविशति यथा पूर्वं प्रवृत्तिमार्गे रमते मायया संसाराध्वनि निवेशितोऽस्मीति न जानाति ॥ १९ ॥

हे रहूगण ! त्वमपि सन्यस्तदण्डः सन् त्यक्तभूतद्रोहः कृतं प्राणिषु मैत्रं येन सः असज्जितः विषयेषु अनभिनिवेशित आत्मा मनो येन सः हरिभक्तिविरोध्यज्ञानद्रुमच्छेदनाय ज्ञानासिमादाय हरिसेवया असितं कृष्णं प्रति अस्याध्वनः पारमतितर भवाटवीमतिलङ्घ्य कृष्णं व्रजेत्यर्थः ॥ २० ॥

अखिलजन्मसु नृजन्मैव शोभनं न परं श्रेष्ठं येऽप्यस्तैरपि अमुष्मिन् स्वर्गे देवादिजन्मभिः किं न किमपि हृषीकेशयशसा कृतः शोधितः आत्मा मनो यैस्तेषां वो युष्माकं महात्मनां यत्र स्वर्गे समागमः प्रचुरो न भवति तत्र महात्मसु श्रीनारदादिषु विचरत्स्वपि तत्रत्यस्वर्गसम्पदा विमोहितमनसो रुचिपूर्वकं प्रचुरं सङ्गं न कुर्वन्तीति भावः ॥ २१ ॥

यैर्युष्मुपासितैस्त्वच्चरणाब्जरेणुभिर्हतमंहो यस्य तस्य अधोक्षजे निर्मला भक्तिर्भवतीति नहि अद्भुतम् यस्य तव मुहूर्तमात्रभवात्समागममात्रादपि दुस्तर्कः अब्रह्मात्मकविश्ववादितर्कः मूलं यस्य स मे मम अविवेकः अपहृतः ॥ २२ ॥

---

भाषा टीका ।

उन बकादिकों ( पाखंडियों ) से जब ठगा जाता है तब हंसों ( ब्राह्मणों ) के समूह में जाता है फिर उनकी चाल आचारादिक जब अच्छे नहीं लगते हैं तब बंदरों ( शूद्रों ) के पास जाता है उहां उनकी क्रीडा से आपस मुखके खी मुखके देखने से अपने मरण के काल को भूल जाता है ॥ १७ ॥

पेडों में ( केवल लौकिक सुखों ) में क्रीडा करता हुआ पुत्र स्त्री इन पर मोह करता है मैथुन के वास्ते दुःखित रहता है जब कभी बंधन होजावे तब छूटनेमें असमर्थ

नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आवटुभ्यः ।
ये ब्राह्मणा गामवधूतलिङ्गाश्चरन्ति तेभ्यः शिवमस्तु राज्ञाम् ॥ २३ ॥

श्रीशुक उवाच ।

इत्येवमुत्तरामातः ! स वै ब्रह्मर्षिसुतः सिन्धुपतय आत्मसतत्त्वं विगणयतः परानुभावः परम रुणिकतयोपदिश्य रहूगणेन सकरुणमभिवन्दितचरण आपूर्णार्णव इव निभृतकरणोर्म्याशयो धर मिमां विचचार ॥ २४ ॥

सौवीरपतिरपि सुजनसमवगतपरमात्मसतत्त्व आत्मन्यविद्याऽध्यारोपितां च देहात्ममतिं वि सर्ज एवं हि नृप ! भगवदाश्रिताश्रितानुभावः ॥ २५ ॥

राजोवाच ।

यो ह्वा इह बहुविदा महाभागवत ! त्वयाऽभिहितः परोक्षेण वचसा जीवलोकभवाध्वा स ह्य नीषया कल्पितविषयो नाञ्जसाऽव्युत्पन्नलोकसमधिगमः अथ तदेवैतद्दुरवगमं समवेतानुकल्पेन नि रूप्यतामिति ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां भवाटव्युपवर्णनं नाम
त्रयोदशोऽध्यायः ॥ १३ ॥

भाषाटीका।

रहता है कभी असावधानता से पर्वत की कंदरों ( रोगों ) में पडजाता है तब उहां के हाथी ( मृत्यु ) से डरकर लता ( निजकर्म ) को आश्रय करता है ॥ १८ ॥

हे राजन् ! इस आपत्ति से जब कभी वह छूटता है तो फिर उसी समूह ( प्रवृत्तिमार्ग ) में पेठता है एसे इस मार्गमें माया के प्रवेश करने से घूमता हुआ पुरुष आज पर्यन्त कोई अपने परम पुरुषार्थ मोक्ष को नहीं जानता है ॥ १९ ॥

हे रहूगण ! तुम भी इसी मार्ग में प्रविष्ट हो सो अब तुम सब प्राणि मात्र से मित्रता करके सब से बैर भाव को छोड कर विषयों में आसक्ति करके श्रीहरि सेवा करने से ज्ञान रूप खड्ग को लेकर इस वन को काटकर इस भवाटवी मार्ग के पार को तरजाओ ॥ २० ॥

राजा रहूगण बोले अहो मनुष्य जन्म सब जन्मों से अच्छा है दूसरे देवादि जन्मों से क्या प्रयोजन है जिस स्वर्ग में श्रीनारायण के यश में चित्त लगाने वाले आपसरीखे महात्माजनों का बहुत समागम नहीं होता है ॥ २१ ॥

अब आपके चरण रजसे पाप नष्ट होजाने से श्रीनारायण के चरणों में मेरी भक्ति होना कुछ आश्चर्य नहीं है क्योंकि जिन आपके मुहूर्त मात्र के समागम होने से कुतर्कों से बधी जड वाला मेरा अविवेक नष्ट है ॥ २२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ब्रह्मविदः केन रूपेण चरन्तीत्यज्ञानात्सर्वे नम इति । ये बटवः क्रीडारतत्वादश्रद्धेयधीरेयास्तान्सर्वे सर्वेभ्यो नम इत्यर्थः । स्वदृष्टान्तेन राज्ञां महदवज्ञां ... राज्ञां शिवमस्त्विति ॥ २३ ॥

उत्तरा माता यस्य हे उत्तरामातः ! विगणयतो ... अवमन्तर्य्यपि परमकरुणाकारत्वेन सिन्धुपतये ... दिश्य । निभृताः शान्ताः करणानामूर्मयो यस्मिन् ... यस्य ॥ २४ ॥

सुजनात्तस्मात्सम्यगवगतं परमात्मसतत्त्वं येन ... संस्तदानीमेव देहे आत्ममतिं च विससर्ज हे नृप ! ... श्रितो भरतस्तदाश्रितो रहूगणो यस्तस्यानुभावः ... हङ्कारत्यागः ॥ २५ ॥

परोक्षेण वणिक्सार्थरूपकेण आर्याणां विवेकिनां ... येव दस्युस्थानीयानीन्द्रियाणि गोमायुस्थानीयान्य... कल्पितविषयः अव्युत्पन्नस्य तु लोकस्य अनस्य ...

श्रीधरस्वामिकृतभावार्थदीपिका।

...मों न भवति। अथ अतस्तदेतदेव भवाध्वरूपं समवेतानुक-...पेन प्रस्तुते तत्तदनुरूपार्थोपकल्पनेन ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ज्ञानिनः केन रूपेण चरन्तीत्यज्ञानात्सर्वान्नमस्करोति। ...म इति। महद्भ्यो नमः तत्रापि शिशुरूपेभ्यो नमः ये युवान-...स्वादृशास्तेभ्योऽपि नमः आवटुभ्यः वटुपर्यन्तेभ्यः वटुर्माणवकः ...टुवत्स्वमाहात्म्यानाविष्करणशीलपर्यन्तेभ्यः इत्यर्थः ज्ञानिनो ...स्वमाहात्म्यानाविष्कारेण तिष्ठन्ति "तस्माद्ब्राह्मणः पाण्डित्यं ...र्विद्य बाल्येन तिष्ठासेत्,, इति श्रुतेः पाण्डित्यं नाम ज्ञाननिष्ठां ...र्विद्य बाल्येन तिष्ठासेदित्यर्थः ये त्वादृशा ब्राह्मणा अवधूतवेषाः ...ं भूमिं चरन्ति तेभ्यः सकाशाद्राज्ञां मादृशानां कृतागसां-...यमस्तु महतां निग्रहो माभूत् ॥ २३ ॥

सम्वादमुपसंहरति शुकः हे उत्तरामातः ! उत्तरा माता ...स्य स उत्तरामाता परीक्षित्तस्येदं संबोधनमुत्तरामातरिति ...विगणयते न विगणयत इत्यविगणयन् तस्मै अवमानं कुर्वा-...य सिन्धुसौवीरपतये रहूगणायाविगणितः परिच्छेत्तुम-...क्यः परमानुभावः प्रभावो यस्य स वै ब्रह्मर्षिसुतः परम-...कारुणिकत्वेन हेतुना आत्मनस्तत्त्वं प्रकृतिविलक्षणब्रह्मात्मकत्व-...गुणज्ञानानन्दत्वप्रकृतशान्तत्वादियाथात्म्यमुपदिश्य सकरुणं ...स्नेहं यथा भवति तथा रहूगणेनाभिवन्दितौ चरणौ पादौ ...स्य सः आसमन्तात्पूर्णः समुद्र इव निभृतानि शान्तानि ...करणानि इन्द्रियाणि ऊर्मयः अशनायादयः आशयोऽन्तःकरणं ...सना वा यस्य सः इमां धरणिं भूमिं विचचार ॥ २४ ॥

सौवीरपतिः रहूगणोऽपि सुजनाद्ब्रह्मर्षिसुतात्सम्यगवगतं पर-...त्मनस्तत्त्वं याथात्म्यं येन तथाभूतः सन् तदानीमेवात्मन्य-...ध्ययाज्ञानेनारोपितां देहात्माभिमतिं विससर्ज जहौ हे नृप ! ...गवदाश्रिता भागवतास्तानाश्रिता भगवद्दासानुदासास्तेषां ...भाव एवंविधो हि भवतीत्यर्थः ॥ २५ ॥

एवं तत्सम्वादे उपवर्णिते वणिक्सार्थाध्वादिरूपेण प्रवृ-...त्तानां परोक्षरूपाणामुक्तीनामाशयजिज्ञासयाह राजा परीक्षि-...ज्जुकं प्रति य इति। हे महाभागवत ! शुक! बहुविदा बहुज्ञेन त्वया ...जीवलोकस्य भवाध्वा पारोक्ष्यरूपेणाभिहितः कथितः स हि ...समादार्याणां विवेकिनां मनीषया बुद्ध्या एव दस्युस्थानीन्द्रि-...याणि गोमायुस्थानीयान्यपत्यादीनीत्येवं कल्पितः विषयो ज्ञानं ...स्य सः कल्पितपदार्थवान् अतोऽञ्जसा सुखेन व्युत्पन्ना विवे-...किनो लोकास्तैः समधिगम्यः नत्वव्युत्पन्नमादृशसमधिगम्यः ...य तस्मात् दुरधिगमं दुःखेनाप्यवगन्तुमशक्यमेतत्परोक्षरूप-...किज्ञातं समवेतानुकल्पेन प्रकृतोपयुक्तार्थसमवेतशब्दप्रयोगेण ...निर्दिश्यतां व्याख्यायतां शब्दार्थयोरपृथक्सिद्धत्वाभिप्रायेण सम-...तशब्दः प्रयुक्तः। यद्वा एतत्प्रसिद्धाध्वत्वेन रूपितं संसाराध्व-...रूपं समवेतानुकल्पेन प्रसिद्धा उत्पत्स्यध्वनि समवेताः समव-स्थिता ये दस्युगोमायुप्रभृतयः तानुद्धृत्य तद्धर्मसाम्येन कल्पाः रूप्यास्तैर्युक्तत्वेन निर्दिश्यतां कथ्यतामित्यर्थः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अतिप्रशंसयास्मानपहससि त्वमित्याशङ्क्यापराधं क्षमापयन्निव नमस्करोति। नम इति। आवटुभ्यः वटुपर्यन्तं गां भूमिं राजभ्य इति चतुर्थीमप्रयुज्य राज्ञामित्यनया षष्ठ्यात्मन एवाशिषमाकाङ्क्षत इति ॥ २३ ॥

रहूगणस्य समग्रानुग्रहं कृत्वा ब्रह्मर्षिसुतेन परं किमकारीति तत्राह। इतीति। इति समाप्य परमात्मसतत्त्व परमात्मनो निर्दोषस्वरूपमविगणितो सङ्ख्यातः परमानुभावो यस्य स तथा निभृतकरणोर्म्याशयः स्तिमितेन्द्रियाख्याभिप्रायः। यद्वा निश्चलेन्द्रियाख्यतरङ्गस्थानः स्ववशीभूतेन्द्रियतरङ्ग इत्यर्थः "स्थानेऽभिप्राय आशय" इति ॥ २४ ॥

सुजनाज्ज्ञानिजनपूजितजन्मनो ब्राह्मणात्समवगतपरमात्मसतत्त्वः सम्यक् ज्ञातपरमात्मस्वरूपः आत्मनि स्वस्मिन् परमात्मविषये वाऽविद्यया अज्ञानेन भगवद्भक्तानामपीदृशमाहात्म्यं किं पुनः श्रीनारायणस्येत्युपसंहारमुखेन नृपमभिमुखीकरोति। एवमिति २५॥

(१) माहात्म्योपलक्षणकीर्तिग्रथितान् श्लोकानित्यर्थः आर्षभस्य ऋषभपुत्रस्य भरतस्यानुवर्त्म लोकशास्त्रयोरनुकूलमार्गम् ॥ ० ॥

हृदिस्पृशं हृदयङ्गमं मलवत् विष्ठावत् ॥ ० ॥

हरिमाहात्म्यप्रकटनाय पुनरुक्तं करोति। यो दुस्त्यजानिति। एतत्सर्वं नैच्छदिति यत्तदुचितं तथाहि मधुद्विषो हरेः सेवायामनुरक्तधियां महतामभवो मोक्षोऽपि फल्गुः अल्प आदरणीयो न भवतीत्यर्थः सेवाया अलंबुद्धयगोचरत्वात् अत्र तात्पर्यांशस्तु "ऋते हैहयवैन्यादीन्"इत्यादिप्रमाणेन पूर्वोक्त इति ॥ ० ॥

यज्ञाय इज्याय धर्मपतये सकलैरनुष्ठीयमानपुण्यस्वामिने विधौ कर्मणि नैपुणाय कुशलबुद्ध्युपेताय योगाय कर्मकरणोपायज्ञाय साङ्ख्यशिरसे उत्तमज्ञानस्वरूपाय शिरसः पूर्वनिपाते

---

(१) तस्येमान् श्लोकान् गायन्ति।

आर्षभस्येह राजर्षेर्मनसापि महात्मनः।
नानुवर्त्मार्हति नृपो मक्षिकेव गरुत्मतः ॥ ० ॥
यो दुस्त्यजान् दारसुतान् सुहृद्राज्यं हृदिस्पृशम्।
जहौ युवैव मलवदुत्तमश्लोकलालसः ॥ ० ॥
यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान् प्रार्थ्यां श्रियं सुरवरैः सदयावलोकैः। नैच्छन्नृपस्तदुचितं महतां मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः ॥ ० ॥
यज्ञायधर्मपतयेविधिनैपुणाययोगायसांख्यशिरसेप्रकृतीश्वराय। नारायणायहरयेनमइत्युदारङ्हास्यन्मृगत्वमपि यः समुदाजहार ॥०॥
इदं भागवतसभाजितावदातगुणकर्मणोराजर्षेर्भरतस्यानुचरितं स्वस्त्ययनमायुष्यन्धन्यं यशस्यं स्वर्ग्यमापवर्ग्यंचानुशृणोत्याख्यास्यत्यभिनन्दति च सर्वाह्येवाशिषआत्मनआशास्ते नकाञ्चनपरतइति ॥ ० ॥

( २ ) एते श्लोका अग्रिमाध्यायस्थानपि श्रीविजयध्वजतीर्थमते अत्रैवमूलवर्तन्ते।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृत्वा सांख्यपदस्य ज्ञानार्थत्वेनायमर्थः सिद्ध्यति अस्यैश्वर्यत्वं स्वत एव नतु कृत्रिमं रुद्रादेरिवेत्यतः प्रकृतीश्वराय लक्ष्मीपतय इति वा नारायणाय हरये नम इति मन्त्रद्वयसूचनाय प्रसिद्धगणोपादानं कृतमपरोक्षज्ञानिनो भरतस्य मृगत्वं घटितघानित्यतो वा योगाय समुदाजहार उत्ससर्ज ॥ ० ॥

आत्मन एव सर्वा आशिष आधास्ते प्राप्तुमिच्छति प्राप्नोति चेति । हिशब्दश्चार्थे इतिशब्दो भरताख्यानसमाप्त्यर्थ इति ॥ ० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

बटवः क्रीडारतत्वादश्रद्धेयब्रह्मविद इत्यर्थः ॥ २३ ॥

उत्तरामातरिति विसर्गोन्तपाठ आर्षप्रयोगो मन्तव्यः । अर्हत्पुत्रार्थे समासान्तविधौ मातुर्मातजादेशविधानात् ततोऽन्यत्र च कप्प्रत्ययविधानात् ॥ २४-२५ ॥

इति राजोवाचेत्यन्वयः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हन्त हन्त शिविकां वहंस्तत्र भवान् त्वं यदि नाज्ञापयिष्यस्तदा ममापराधिनः का गतिरभविष्यदिति सभयं प्रणमति । नम इति । आबटुभ्यः ये बटवः क्रीडारतत्वादश्रद्धेयमहिमानस्तानप्यभिव्याप्य स्वदृष्टान्तेन राज्ञां महदपराधं सम्भाव्याह । राज्ञां शिवमस्त्विति ॥ २३ ॥

हन्त हन्त महाभूरिभाग एव रहूगणो यत्तादृशब्रह्मतेजसि शिविकावाहनादपराद्धोऽपि तदनुग्रहामृतद्रवपयभिषिक्तः कृतार्थी बभूव अहमतिमन्दभाग्यो विप्रगणे सर्पापेक्षापराधात्तदपराधासमापणात्तदभिशापविषदग्धो न जाने किमन्धन्तमो यास्यामीति विषीदन्तं राजानमाश्वासयति । इत्येवमिति । उत्तरा माता यस्येति भो राजन् ! त्वन्मातुर्गर्भे प्रविश्य ब्रह्मतेजसः सकाशात् भगवान् स्वयमेव त्वां ररक्ष त्वं दर्शयामास च पुनरपि साम्प्रतं ब्रह्मतेजसो रक्षितुं मामेतांश्च नारदादिमहामुनीन् भेदे त्वदन्तिकमानीय एतेषामपारकृपामृतेन त्वामभिषिच्य भागवतामृतं मद्द्वारा पाययन् स एव प्रभुर्ब्रह्मतेजोऽपि व्यर्थीचकार इति रहूगणात्तस्माद्भरताच्च मत्तश्च एतेभ्यो महामुनिभ्यश्च त्वद्वीयं सौभाग्यमतिमहत्तमं व्यञ्जयामास तदपि किं विषीदसीति भावः विगणयतः तिरस्कुर्वतोऽपि परोऽनुभावो यस्मात् सः । सिन्धुपतये तस्मै आत्मतत्त्वमुपदिश्य सकरुणं सरोदनं । निभृताः शान्ताः करणानामूर्मयो यस्मिन् स आशयो यस्य सः ॥ २४ ॥

सुजनात् श्रीमद्भरतात् आत्मनि स्वस्मिन् या अविद्या दिता एव प्रवृत्ता तया अध्यारोपितां देहे आत्ममतिं [illegible] भगवदाश्रितो भरतस्तदाश्रितो रहूगणः ॥ २५ ॥

आर्यस्यातिविदुष एव मनीषिकया उत्तमबुद्ध्या [illegible] विषया दस्युस्थानीयेन्द्रियगोमायुस्थानीयापत्यादयो [illegible] दुरधिगमं दार्ष्टान्तिकानामनुक्तत्वात् समवेतेन समुचित [illegible] कल्पेन दार्ष्टान्तिकवाचकशब्देन ॥ २६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोदशः पञ्चमस्य सङ्गतः सङ्गतः सताम् ॥ १३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

महान्तोऽनेकैः रूपैर्विचरन्ति अतः सर्वोऽनमस्कृ [illegible] इति ॥ २३ ॥

उत्तरा माता यस्य हे उत्तरामातः ! विगणयतः [illegible] भिनोऽपि परमकारुणिकतया तस्मै कृतापराधायापि [illegible] आत्मसतत्त्वं परमात्मतत्त्वमुपदिश्य रहूगणेन सकरु [illegible] भवति तथा वन्दितचरणः निभृताः शान्ताः करणा [illegible] यस्मिन् स आशयो मनो यस्य स महीं विचचार ॥ २४ ॥

सुजनात्तस्मादेव समधगतपरमात्मसतत्त्वं येन सः [illegible] ज्ञानेन आत्मनि अध्यारोपितां देह एवात्मेत्येवं [illegible] भगवदाश्रितो मुनिस्तदाश्रितो रहूगणस्तस्यानुभावः [illegible] पूर्वकदेहात्ममतित्यागित्वम् ॥ २५ ॥

हे महाभागवत ! बहुविदा सर्वज्ञेन त्वया यो जीवानां [illegible] ध्वा परोक्षेण वणिक्सार्थकरूपेण अभिहितः कथितः [illegible] विवेकिनां मनीषयैव षट् दस्युस्थानीयानीन्द्रियाणि [illegible] नीयान्यपत्यादीनीत्येवं कल्पितविषयः अल्पबुद्धीनां [illegible] सम्यगधिगमः सुष्ठ्वधिगम्यो न भवति अथ अतः तत्रैव [illegible] दुःखेनाप्यवगन्तुमशक्यं संसाराध्वस्वरूपं समवेतानुरू [illegible] वेते वर्णनीये इन्द्रियादौ दस्युत्वादिकल्पेन निर्दिशतां [illegible]

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोदशाध्यायार्थप्रकाशः ॥ १३ ॥

---

भाषाटीका ।

वृद्धों को नमस्कार है बालकों को नमस्कार है युवा [illegible] नमस्कार है ब्रह्मचारीयों से लेकर सबको नमस्कार है [illegible] अवधूत वेषसे पृथिवी में घूमते हैं उनको नमस्कार है [illegible] कि सब राजों का कल्याण होवै ॥ २३ ॥

श्रीशुकदेवजी बोले हे उत्तरा के पुत्र परीक्षित् ! अप [illegible] करने वाले उस सिंधुपति रहूगण राजा को भी [illegible] जीने परमदयालु होने से इस प्रकार के आत्मतत्त्व [illegible] देश किया फिर रहूगण ने बड़ी दीनता से उन [illegible] में वन्दना की तब बड़े प्रभाव वाले समुद्र [illegible] पूर्ण सब इन्द्रियों की लहर जिसकी शांत हो [illegible] अन्तःकरण वाले, वह भरतजी इस पृथिवी में विच [illegible] लगे ॥ २४ ॥

भाषा टीका ।

सौवीर देशके राजा रहूगणभी सत्पुरुषसे परमतत्त्व के प्रसङ्गोंसे अज्ञानसे आत्मा में आरोपित जो देहात्मबुद्धि तिसको छोडते भये हे राजन्! परीक्षित्! इस प्रकार का भगवद्भक्त के आश्रय करनेवाले राजाका प्रभाव होगया ॥ २५ ॥

राजा परीक्षित जी बोले हे महाभागवत! इहांपर बडे ज्ञानी आपने बडे बुद्धिमानों के विषय कल्पना के योग्य जीवों का भवाटवीमार्ग में छिपे हुये वचन से कथन किया है तिसको अनायास से अल्पज्ञ लोग नहीं जान सकते हैं तिस हेतु-से इस कठिन वचन को समझने लायक व्याख्यान से आप कहिये ॥ २६ ॥

इति श्रीभागवत पञ्चमस्कन्ध त्रयोदश अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ १३ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे त्रयोदशोऽध्यायः समाप्तः ॥ १३ ॥



## ॥ चतुर्दशोऽध्यायः ॥

—:०:—

### ॥ सहोवाच ॥

य एष देहात्ममानिनां सत्त्वादिगुणविशेषविकल्पितकुशलाकुशलसमवहारविनिर्मितविविधदेहाव-लिभिर्वियोगसंयोगाद्यनादिसंसारानुभवस्य द्वारभूतेन षडिन्द्रियवर्गेण तस्मिन्दुर्गाध्ववदसुगमेऽध्वन्यापतित ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्या मायया जीवलोकोऽयं यथा वणिक्सार्थोऽर्थपरः स्वदेहनिष्पा-दितकर्मानुभवः श्मशानवदशिवतमायां संसाराटव्यां गतो नाद्यापि विफलबहुप्रतियोगेहस्तत्तापोपश-मनीं हरिगुरुचरणारविन्दमधुकरानुपदवीमवरुन्धे यस्यामु ह वा एते षडिन्द्रियनामानः कर्मणा दस्यव एव ते ॥ १ ॥

तद्यथा पुरुषस्य धनं यत्किञ्चिद्धर्मौपयिकं बहुकृच्छ्राधिगतं साक्षात्परमपुरुषाराधनलक्षणो योऽसौ धर्मस्तं तु साम्पराय उदाहरन्ति तद्धर्म्यं धनं दर्शनस्पर्शनश्रवणास्वादनावघ्राणसङ्कल्पव्यवसायगृहग्राम्यो-पभोगेन कुनाथस्याजितात्मनो यथा सार्थस्य तथा जितात्मनो विलुम्पन्ति ॥ २ ॥

अथ च यत्र कौटुम्बिका दारापत्यादयो नाम्ना कर्मणा वृकसृगाला एवानिच्छतोऽपि कदर्यस्य कुटुम्बिन उरणकवत्संरक्ष्यमाणं मिषतोऽपि हरन्ति ॥ ३ ॥

यथा ह्यनुवत्सरं कृष्यमाणमप्यदग्धबीजं क्षेत्रं पुनरेवावपनकाले गुल्मतृणवीरुद्भिर्गह्वरमिव भवत्येव-मेव गृहाश्रमः कर्मक्षेत्रं यस्मिन्न हि कर्माण्युत्सीदन्ति यदयं कामकरण्ड एष आवसथः ॥ ४ ॥

तत्र गतो दंशमशकसमापसदैर्मनुजैः शलभशकुन्ततस्करमूषकादिभिरुपरुध्यमानबहिःप्राणः क्वचित्परिवर्त्तमानोऽस्मिन्नध्वन्यविद्याकामकर्मभिरुपरक्तमनसाऽनुपपन्नार्थं नरलोकं गन्धर्वनगरमुपपन्न-मिति मिथ्यादृष्टिरनुपश्यति ॥ ५ ॥

तत्र च क्वचिदातपोदकनिभान्विषयानुपधावति पानभोजनव्यवायादिव्यसनलोलुपः ॥ ६ ॥

क्वचिच्चाशेषदोषनिषदनं पुरीषविशेषं तद्वर्णगुणनिर्मितमतिः सुवर्णमुपादित्सत्यग्निकामकातर इवो-ल्मुकपिशाचम् ॥ ७ ॥

अथ कदाचिन्निवासपानीयद्रविणाद्यनेकात्मोपजीवनाभिनिवेश एतस्यां संसाराटव्यामितस्ततः परिधावति ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्दशे भवारण्यरूपकव्याकृतिः कृता ।
प्रस्तुते तस्य गोमायुमशकाद्यर्थकल्पनम् ॥ १ ॥

यः परीक्षिता पृष्टः स श्रीशुक उवाच हेति सूतोक्तिः । दुरत्य-येऽध्वन्यजया निवेशित इति यदुक्तं तदेव निवेशनप्रकारकथनेन प्रपञ्चयति । य एष प्रसिद्धो जीवलोकोऽयं विष्णोर्मायया दुग-मेऽध्वन्यापतितो भवाटव्यां गतः सन् हरिरूपस्य गुरोश्चरणार-विन्दे ये मधुकराः सेवकास्तेषामनुपदवीं तैरनुष्ठितं भक्तिमार्गं-मद्यापि नावरुन्धे न संप्राप्नोतीत्यन्वयः । मायायाः क... रेण संसारमार्गे पातहेतुत्वमाह । देहात्ममानिनां सत्त्वादि... विशेषैर्विकल्पितानि विभक्तानि यानि कुशलाकुशलानि कर्माणि तैर्विनिर्मिताभिर्विविधदेहावलिभिर्वियोगसंयोगै... नादिः संसारस्तदनुभवस्य द्वारभूतेन षडिन्द्रियवर्गेण ... संसाररूपे दुर्गमार्गवदसुगमेऽध्वन्यापतितो यथा वणिक्... समूहोऽर्थार्जनपरः स्वदेहनिष्पादितानां कर्मणां फल... भवो यस्य विफलाश्च बहुप्रतियोगा बहुविघ्नाश्च ...

श्रीधरस्वामिकृतभावार्थदीपिका।

यस्य सः। तस्यां संसाराटव्यां ये तापास्तेषामुपशमनीं नाशनीम्। यस्यामित्यादि व्याचष्टे। यस्यां भवाटव्याम् ॥ १ ॥

दस्युतुल्यं तेषां कर्म दर्शयति। तद्यथेति। धर्मौपयिकं धर्मकारणम्। तमेव स्वाभिप्रेतं धर्ममाह। साक्षादिति। तं तु साम्पराये परलोकार्थमुदाहरन्ति तद्धर्म्यं धर्मार्हं धनं दर्शनाद्याः पञ्चज्ञानेन्द्रियाणां वृत्तयः सङ्कल्पव्यवसायावन्तःकरणस्य एते गृहे यो ग्राम्य उपभोगस्तेन कुनाथस्य कुबुद्धेरजितात्मनो विलुम्पन्ति यथा चोराः कुपालकस्यानवहितात्मनः सार्थस्य धनं हरन्ति तद्वत् ॥ २ ॥

गोमायवो यत्रेत्येतद्व्याचष्टे। अथ चेत्यर्थान्तरोपन्यासे। कर्मणा ते तु वृकाः सृगालाश्च कदर्यस्यातिलुब्धस्य ॥ ३ ॥

प्रभूतवीरुत्तृणगुल्मगह्वरइत्येतद्व्याचष्टे। यथाहीति। न दग्धानि बीजानि यस्मिन् यद्यस्माद्योऽयमावसथ आश्रम एव कामानां करण्डः यथा कर्पूरभाजने कर्पूरक्षयेऽपि परिमलो न क्षीयते एवमत्र वासनानामक्षीणत्वान्न कर्माण्युत्सीदन्तीत्यर्थः ॥ ४ ॥

दंशमशकतुल्यैरपसदैर्नीचैः शलभादिभिश्चोपरुध्यमानः पीड्यमानो बहिःप्राणो वित्तं यस्य तथाविधोऽप्यस्मिन्नध्वनि परिभ्रमन्नविद्यादिभिरुपरक्तेन मनसा गन्धर्वपुरतुल्यमघटमानं नरलोकं सत्यतया मिथ्यादृष्टिरनुपश्यति ॥ ५ ॥

प्रपश्यतीति। प्रशब्दसूचितमर्थान्तरं दर्शयति। तत्र च गन्धर्वपुरे क्वचिदातपोदकं मृगतृष्णाजलं तत्तुल्यान्विषयाननुपधावतीति ॥ ६ ॥

क्वचित्कचिच्चाशुरयोल्मुकग्रहमित्येतद्व्याचष्टे। क्वचिच्चाशेषाणां दोषाणां निषदनं स्थानं पुरीषविशेषमग्नेर्विष्ठा तस्य पुरीषस्येव लोहितो वर्णो यस्य रजोगुणस्य तेन निर्मिता तद्विषया मतिर्यस्य स सुवर्णमुपादातुमिच्छति अग्निकामेन कातरः परवश उल्मुकसदृशं पिशाचमिव शीतातुरो ह्यरण्येऽग्निवज्ज्वाज्वल्यमानं ततस्ततो धावन्तमुल्मुकपिशाचमभिबुद्ध्याऽनुधावति नतु तं प्राप्नोति कथञ्चित्प्राप्तश्चेत्तर्हि तेन भक्षितः सन् म्रियते एवं सुवर्णमनुधावन्नपीत्यर्थः ॥ ७ ॥

निवासतोयद्रविणेत्येतद्व्याचष्टे। अथेति। निवासादिष्वनेकेष्वात्मन उपजीव्येष्वभिनिवेशो यस्य ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवमापृष्टः शुकः समवेतानुकल्पेन निर्दिशंस्तावद्दुरत्यय इति श्लोकं व्याचष्टे। य इति। य एष जीवलोकः ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्याऽधीनया माययाऽतिदुर्गाध्वनि असुगमे संसाराध्वनि कर्ममार्गे आपतितो मायायाः स्वकार्यद्वारेण संसारमार्गपातहेतुत्वमाह। देहात्माभिमानिनां सत्त्वरजस्तमोभिर्गुणैर्विशेषेण कल्पितानि विभक्तानि सात्त्विकराजसतामसभेदभिन्नानि यानि कुशलानि सुखसाधनानि सात्त्विकानि अकुशलानि दुःखसाधनानि राजसानि मिश्राणि प्रमादालस्यादिसाधनानि रजस्तमोमूलानि कर्माणि तैर्निर्मिताभिरापादिताभिर्विविधदेहावलिभिः।

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधोगच्छन्ति तामसाः।
आत्यन्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे।

धरां रजः स्वभावेन इत्याद्युक्तरीत्या नियतदेशवृत्तिदेवमनुष्यासुरादिदेहपङ्क्तिभिर्यौ वियोगसंयोगौ देहवियोगतत्संयोगौ आदिशब्देन बाल्ययौवनस्थविरादिभावसङ्ग्रहः एतद्रूपोऽनादिः संसारस्तदनुभवस्य द्वारभूतेन षडिन्द्रियवर्गेण स एतस्मिन् दुर्गाध्वन्यसुगमे संसाराध्वनि कर्ममार्गे आपतितः यथा वणिजां सार्थः समूहोऽर्थार्जनपरः तथा स्वदेहनिष्पादितानां पूर्वोक्तानां कर्मणां फलद्वारेणानुभवो यस्य विफलाश्च बहुलप्रतियोगा बहुविघ्नोपहता ईहाश्चेष्टा यस्य सः श्मशानवदमङ्गलरूपायां संसाराटव्यां गतोऽद्यापि तस्यां संसाराटव्यां ये तापा आध्यात्मिकादयस्तेषां शमनीं हरिरेव गुरुस्तस्य हरिगुरोश्चरणारविन्दे ये मधुकरा भ्रमरतुल्या भक्तास्तेषामनुपदवीं तैरनुष्ठितं भक्तिमार्गं नावरुन्धे न प्राप्नोति ॥ १ ॥

यस्यामित्यादिश्लोकं व्याचष्टे। यस्यामुहयेति। यस्यां संसाराटव्यां ये षडिन्द्रियनामान एते कर्मणा दस्यव एव दस्युव्यापारेण दस्युत्वेन पूर्वं निरूपिता इत्यर्थः इन्द्रियनामानः इत्यनेन केवलं नामभेद एव कर्मणा ते दस्यव एवेत्युक्तं दस्यूनामिन्द्रियाणां च धनापहारित्वरूपं कर्म तुल्यमिति दृष्टान्तदार्ष्टान्तिकभावेन दर्शयति। यथेति। यथास्य पुरुषस्यानवहितात्मनः सार्थस्य वणिजादेः धनं बहुकृच्छ्रेणातिदुःखेनार्जितं धर्मौपयिकं धर्मोपयोगार्हं धनस्य धर्म एवोपयोगः सफलो नतु काम इत्यभिप्रायेण धर्मौपयिकमित्युक्तं तथाचोक्तं प्रथमे।

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥

इत्येवम्विधं यत्किञ्चिद्धनं यथा दस्यवश्चोरा अपहरन्त्येवमस्य पुरुषस्य यो भगवदाराधनरूपो धर्मस्तं साम्परायिकं परलोकहितं धनमित्युदाहरन्ति तद्धर्म्यं धर्मोवर्णाश्रमादिधर्मादनपेतं धर्म्यं वर्णाश्रमादिधर्मयुक्तमित्यर्थः। धनं भगवदाराधनात्मकं धनं इन्द्रियाण्यपि दर्शनादिभिः पञ्चभिर्ज्ञानेन्द्रियवृत्तिभिः सङ्कल्पव्यवसायाभ्यामन्तःकरणवृत्तिभ्यां चेत्येतैर्यो गृहेषु ग्राम्यः सांसारिक उपभोगस्तेन कुनाथस्य कुबुद्धेरत एवाजितात्मनः अजितेन्द्रियस्यास्य पुरुषस्य सम्बन्धि विलुम्पन्ति अपहरन्ति ॥२॥

गोमायवो यत्रेति एतद्व्याचष्टे। अथ चेत्यर्थान्तरोपन्यासे नाम्ना दारापत्यादयः कर्मणा तु वृकाः शृगालाश्च एते इत्यर्थः वृकशृगालसाधर्म्यमेवाह। अनिच्छत इति। कुटुम्बिनः गृहाश्रमिणः कदर्यस्यातिलुब्धस्यानिच्छतोऽपि आत्मापहारमितिशेषः बलादिति भावः मिषतः पश्यतः सतः संरक्ष्यमाणमुरणमिव हरन्ति स्वशेषत्वेन कुर्वन्तस्तत्स्वरूपं भगवच्छेषत्वैकरूपमपहरन्तीत्यर्थः ॥ ३ ॥

प्रभूतवीरुत्तृणगुल्मगह्वर इत्येनद्व्याख्यातुं तावद्गृहाश्रमस्य प्रसिद्धक्षेत्रतुल्यतामाह। यथाहीति। अनुवत्सरं प्रतिवत्सरं कृष्यमाणां वृक्षच्छेदपूर्वकं कर्षणेन संस्कृतमपि क्षेत्रमदग्धबीजं न दग्धानि बीजानि द्रुममूलानि यस्मिन् तथाभूतं सत्पुनरावपनकाले बीजावापकाले यथा गुल्मादिभिर्गह्वरमेव भवत्येवं गृहाश्रमरूपं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कर्मक्षेत्रमपि प्रसिद्धक्षेत्रतुल्यं कुतः हि यस्मात् यस्मिन् गृहाश्रमे कर्माणि नोत्सीदन्ति न मूलतो नश्यन्ति कुतो यद्धि यस्माद्यमावसथः गृहं कामकरण्डः कामानां करण्डः यथा कर्पूरभाजने कर्पूरक्षयेऽपि परिमलो न हीयते एवमत्र कर्मनाशेऽपि तद्वासनानामक्षीणत्वात्कामानां पेटिकेत्यर्थः तत्रैवंभूते कर्मक्षेत्रे गृहाश्रमे पतितः दंशमशकतुल्यैरपसदैर्नीचैरुपद्रुत इति शेषः शलभादिभिरुपरुध्यमानः पीड्यमानः बहिःप्राणाः धनधान्यादिरूपा यस्य शलभादिभिरपहृतसस्यधान्यधनवान् भवतीत्यर्थः प्राणवत्प्रियत्वाद्बाह्यत्वाच्च धनस्य बहिःप्राणा इत्युक्तम् ॥ ४ ॥

क्वचिच्च गन्धर्वपुरमित्युत्तरार्द्धं व्याचष्टे । क्वचिदस्मिन्संसाराध्वनि परिवर्तमानः भ्राम्यन्नविद्यादिभिः यदुपरक्तं तेन मनसा तत्राविद्याऽहंममाभिमानकामविषयाभिलाषः कर्म पुण्यापुण्यकर्म वासनाः नरलोकं स्वशरीरं पुत्रादिशरीरं गन्धर्वनगरवदनुपपन्नार्थमनुपपन्नमित्यर्थः नित्यत्वरूपं वस्तु यस्य तं मिथ्यादृष्टिर्नित्ये नित्यत्वरूपमिथ्याभ्रमयुक्तः उपपन्नार्थं नित्यं पश्यतीत्यर्थः ॥५॥

प्रपश्यतीति प्रशब्दसूचितमर्थान्तरमाह । तत्रेति । तत्र तत्र गन्धर्वपुरे क्वचिदातपोदकं मृगतृष्णाजलं तत्तुल्यान्विषयान्पानादिषु लोलुपतयासक्तः सन्नुपधावत्यन्वेषयतीत्यर्थः ॥ ६ ॥

चतुर्थपादं व्याचष्टे । क्वचिच्चेति । क्वचिच्चाशेषाणां दोषाणां निषदनं स्थानं पुरीषविशेषमग्नेर्विष्ठांतस्य पुरीषस्येव लोहितो वर्णो यस्य रजोगुणस्य तेन निर्मिता पुरीषविषया मतिर्यस्य सः सुवर्णमुपादातुमिच्छति सुवर्णस्याग्नेः पुरीषत्वं च वितलवर्णनगद्ये चित्रभानुर्मातरिश्वना समीध्यमान ओजसा पिबति तन्निश्च्युतं हाटकाख्यं सुवर्णमिति वक्ष्यति तत्र दृष्टान्तः अग्निकामेन कातरः परवशः उल्मुकसदृशं पिशाचमिवेति शीतातुरो ऽरण्येऽग्निमिव जाज्वल्यमानं ततस्ततो धावन्तमुल्मुकपिशाचमग्निबुद्ध्यानुधावति न तु तंप्राप्नोति कथश्चित् प्राप्तश्चेत्तेन भर्जितः सन् म्रियते एवं सुवर्णमनुधावन्नपीत्यर्थः ॥ ७ ॥

निवासतोयेति व्याचष्टे । अथेति । निवासादिषु अनेकेष्वात्मन उपजीव्येष्वभिनिवेशो यस्य तथाभूतस्ततोऽस्यां संसाराटव्यां परिधावति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(१)अत्र पूर्वाध्यायोक्तमेव प्रश्नपूर्वकं कथयति। यो ह वा इत्यादिना। यद्गुपूर्णतामाभिति हरेः पूर्णतां वेत्तीति वहुवित्तेन सार्थद्वयं चेदमेव परोक्षत्वेण परोक्षविषयेण वाचो व्यङ्ग्यभङ्ग्या जीवलोकस्य जीवराशेः भवाध्वा संसारमार्गः आर्षमनीषया पण्डितबुद्ध्या कल्पितविषयः निर्णीतार्थः अव्युत्पन्नेन शब्दव्यङ्ग्यार्थपरिज्ञानशून्येन लोकेन जनेन मुख्यतः समधिगतो न भवतीति नाञ्जसा व्युत्पन्नलोकसमधिगतः "परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष,, इति श्रुत्यर्थं ह्वा इत्यनेनाह । एतदेवाह । अथेति । अथ तस्मात्समवेतानुकूल्येन उक्तशब्दार्थवाच्यवाचकरूपेण समवेतं यथा ज्ञातुं योग्यं तथानुकूल्येन पुनः कथनेनेति वा ॥ ० ॥

एवं परीक्षिता पृष्टः श्रीशुकमुनिः किमुवाचेति शौनकप्रश्नं हृदि कृत्वा उवाच (१)सूत इति । सूतः किमुवाचेति ... वाचेति। स श्रीशुकः राजप्रश्नपरिहाराय यदुवाच ... श्नपरिहारार्थं वच्मीत्येतमर्थं हेत्यनेन सूचयति। ... स्याभिप्रायं कथयति । य इति । य एव प्रसिद्धो ... दुर्गमेऽध्वन्यापतित इत्यन्वयः अजयेत्यस्य विवरणं माययेत्य... यमित्याशङ्कानिवृत्तये ईश्वरस्येति आच्छाद्य विक्षिपति ... रमतत्त्वमित्यद्वैतमतनिरासायोक्तं वशवर्तिन्येति माया ... पातयतीत्यत्रोपपत्तिं दर्शयति । देहेति । देहात्ममानिनां ... त्मेति मन्यमानानां सम्बन्धिभिः सत्त्वादिगुणविशेषैर्नि... विभक्तानि यानि कुशलाकुशलमिश्राणि कर्माणि ... विविधाभिर्देहावलिभिरुपलक्षितस्तासां संयोगादिलक्षणः संसारो यस्तदनुभवस्य द्वारभूतेन श्रोत्रादिषडिन्द्रियवर्गेण ... माययाऽध्वन्यापतित इत्यर्थः समवहारो मिश्रं स्वदेहनिष्पाद... त्यनेन रजस्तमः सत्त्वेति व्याख्यातं न शर्म विन्दतीत्यस्या... नाद्यापीति । हरिगुरुचरणारविन्दयोर्मधुकर इव निरन्तरं ... ये तेषामनुपदवीमनुगमनयोग्यमार्गं सेवालक्षणं गाद्यान्... इत्यन्वयः विफलाश्च बहवश्च योगा उद्योगा ये ... सहस्रशो हृत्तापास्तेषामुपशमनीं नाशकरीम् । यस्यामिदं ... स्यार्थं दर्शयति । यस्यामुहवेति ॥ १ ॥

कुनाथस्य तद्धर्म्यं धर्मसाधनं विलुम्पन्तीत्यन्वयः धर्मादि... साधनयोग्यं साम्परायिकं मोक्षोपयोगि । एतदेवाह । यत्संक... विलुम्पन्ति दर्शनेति सङ्कल्पो मनोरथः दर्शनादीनां सत... नित्यसम्बन्धेन गृहे ग्राम्योपभोगो यस्तेन ॥ २ ॥

गोमायवो यत्रेत्यस्यार्थमाह । अथेति ॥ ३ ॥

प्रभूतवीरुत्तृणेत्यस्यार्थमाह । यथा ह्यनुवत्सरमिति । ... काले बीजप्रक्षेपसमये य एव आवसथोऽपकानां कामानां ... करिदन्तनिर्मितपात्रविशेषः तत्रावसथे क्वचिच्च गन्धर्वपुर... स्यार्थमाह । क्वचित्परिवर्तमान इति ॥ ४—६ ॥

क्वचित्क्वचिच्चाशुहरोल्मुकग्रहमित्यस्यार्थमाह । क्वचिदशे... षदोषाणां निषदनं स्थानं (२) पुरुषविशेषं देहलक्षणं पु... विशिष्टस्य तस्य देहस्य वर्णगुणः कान्तिगुणस्तेन ... शाचमुपादित्सति सुवर्णमिव पुरुषविशेषमुल्मुकपिशा... त्सतीति वा अग्निकामवत्कातरः अशेषदोषाणां पात्रीभू... विशेषाकारमुल्मुकपिशाचमाग्निवज्जाज्वल्यमानं ... गम्य सुवर्णबुद्ध्योपादातुमिच्छति शीतार्तोऽग्निमिव ... शीतं स्याच्चदेव मुक्तिरिति भावः पुरुषविशेषं ... भोगार्थं सुवर्णं स्वीकरोति अग्निसेवाकाम उल्मुक... वेति वा ॥ ७ ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तद्यथेति । तद्दस्युत्वं गद्यत्रयेण दृश्यत इत्यर्थः यद्... यत्किञ्चित् पुरुषधनं वर्तते तस्माच्चाद्धर्मौपयिकं ... धर्मस्तत्राह । साक्षात् परमेवेति ॥ १—६ ॥

पुरीषविशेषं सुवर्णमुपादित्सतीत्यनेनाग्निकामेति ... व्य सुवर्णान्तरं याथार्थ्यं दर्शयति । तच्च श्रीभगवद्... ज्ञेयं साक्षाद्धर्मौपयिकमित्याद्युक्तत्वात् ॥ ७—८ ॥

(१) अत्रश्रीविजयध्वजतीर्थमते पूर्वाध्यायान्तस्थो यो ह्वा इति श्लोकःस्थितस्तस्येयं टीका ।

(१) एतन्मतेऽत्र सूतउवाचेतिवर्तते तदनुसारेणाह ।

(२) पुरुषविशेषमित्येतन्मतेमूले ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दस्युक्रोष्टुप्रभृतिभिरुक्तैः सह चतुर्दशे ।
इहेन्द्रियकुटुम्बाद्यास्तद्दार्ष्टान्ता निरूपिताः ॥

स श्रीशुको ह स्पष्टमुवाच स एष प्रसिद्धो जीवलोकः संसाराटव्यां गतः सन्नद्यापि हरिरूपस्य गुरोश्चरणारविन्दे ये मधुकरा गुरुभजनासक्ता इत्यर्थः । तेषामनुकूलां पदवीं नावरुन्धे न प्राप्नोतीत्यन्वयः । तेन श्रीगुरुचरणाश्रयं विना संसाराटव्यां भ्रमत्येवेति भावः । कीदृशः देहात्ममानिनाऽध्वन्यापतितः दुर्गाध्वनि प्रसिद्धदुर्गमार्गे इव सत्त्वादिगुणविशेषैर्विकल्पितानि विभक्तानि यानि कुशलाकुशलविमिश्रकर्माणि तैर्विनिर्मिताभिर्विविधदेहावलिभिर्वियोगसंयोगतदुत्थसुखदुःखरूपस्यानादेः संसारस्य योऽनुभवस्तस्य । ननु जीवसंसारस्य मायाकृतत्वान्मायामेवासौ जीवः प्रपद्यतां सैव प्रसन्ना तं बन्धान्मोचयिष्यति किं हरिगुरुचरणप्रपत्त्या तत्राह । विष्णोर्वशवर्त्तिन्या माययेति । संसारमोचने न तस्याः स्वातन्त्र्यमिति भावः । यदुक्तम् ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।

इति गीतायामत्र श्लोके एवकारेण समुच्चयपक्षोऽपि निरस्तीकृतः विफलाश्च बहुविप्रतियोगा बहुविघ्नाश्च ईहाः चेष्टा यस्य सः ॥ १ ॥

यस्यामिमे इति व्याचष्टे । यस्यामुहेति । यथा पुरुषस्य बहुकृच्छ्राधिगतं धर्मोपयोगि धनं दस्यवो विलुपन्ति तत्तथा इन्द्रियनामानः षडेते कर्मणा स्वस्वव्यापारेण दर्शनादिना अजितात्मनो जनस्य धनं विलुम्पन्तीत्यन्वयः । तत्पदस्य वैयर्थ्याभावाय व्यवहितान्वयः पोढव्यः । धनमेव किमित्यपेक्षायामाह । साक्षादिति । साम्पराये परलोकार्थं तद्धर्म्यं भगवत्सेवार्हमित्यर्थः । सङ्कल्पो मनसः समवसायो व्यवसायः स च बुद्धेर्व्यापारः । यथा कुनायस्य कुनायकस्य अजितात्मनः अवशीकृतात्मीयलोकस्य वणिक्सार्थस्य चौरा हरन्ति तथा ॥ २ ॥

गोमायवो यत्रेत्येतद्व्याचष्टे । अथचेति । अपहरतश्चेत्यर्थः । ईरक्ष्यमाणा अन्नवस्त्रादिभिस्त्वया वयमवश्यं पाल्या एव भवामेति न्यायमिषेण अपहरन्तीत्यस्य कर्मपदं पूर्वोक्तं स्वार्थिकमन्नगुडघृतादिसम्पुटं ज्ञेयम् । अत्र दस्यूनां गोमायूनाञ्च दुर्वारत्वस्याधिक्यन्यूनत्वाभ्यां भेदो ज्ञेयः ॥ ३ ॥

प्रभूतवीरुत्तृणगुल्मगह्वर इत्येतद्व्याचष्टे । यर्थेति । एष आवसथः आश्रमो यद्यस्मात् कामानां करण्ड इति । यथा हिङ्गुक्षयेऽपि गन्धो न क्षीयते एवमत्र वासनानामक्षीणत्वात् न कर्मवयुरसीदन्तीत्यर्थः ॥ ४ ॥

कठोरदंशैरित्येतद्व्याचष्टे । अत्रेति । अपसदैर्नीचैरुपरुध्यमानः पीड्यमानो बहिःप्राणो वित्तं यस्य सः । क्वचिच्च गन्धर्वपुरं प्रपश्यतीत्येतद्व्याचष्टे । क्वचिदिति । परिवर्त्तमानः परावृत्त्य परामृशन् इपरकं यन्मनस्तेन न उपपन्नोऽर्थो वित्तं यतस्तं नरलोकं मत्त्र्यकुपादिकं पश्यन्नि ततश्च तदुपासनया वाञ्छितविद्यादिकमुपलब्धमिति गन्धर्वनगरमिव तमनुपश्यति । क्वचिच्च गन्धर्वपुरं प्रपश्यतीत्येतदुपलक्षितमर्थान्तरं दर्शयति । आतपोदकं मृगतृष्णाजलं तत्तुल्यान् विषयाननुधावति ॥ ५—६ ॥

कांश्चित् क्वचिद्वात्युरयोल्मुकवद्दर्शनीयेत्येतद्व्याचष्टे । क्वचिदिति । पुरीषविशेषमन्नेर्भिष्ठं तस्य पुरीषस्येव लोहितो वर्णो यस्य रजोगुणस्य तेन निर्मिता तद्विषया मतिर्यस्य सः । सुवर्णमिति परकीयद्रव्यमात्रस्योपलक्षणमादातुमिच्छति नरके पतितुमिच्छति इति भावः । शीतादित्राणार्थमरण्ये भ्रमन्नग्निकामेन कातरो यथा उल्मुकतुल्यं पिशाचमग्निबुद्ध्या धावति भर्त्तुमिति भावः ॥ ७ ॥

निवासतोयद्रविणात्मबुद्धिरित्येतद्व्याचष्टे । अथेति ॥८॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

समवेतानुकल्पेन निर्दिश्यतामित्यनेन प्रार्थितो यः स चतुर्दशेनाध्यायेन उवाचेति सूक्तोक्तिः । दुरत्ययेऽध्वन्यजया निवेशित इति यदुक्तं तद्याचष्टे । य एषः प्रसिद्धो वणिक्सार्थोऽर्थपरः अर्थेन हेतुभूतेन अध्वनि दुर्गाध्वन्यापतितो भवति यथा तथा अयमिति जीवलोकः भगवतो वशवर्तिन्या मायया हेतुभूतया श्मशानवदशिवतमायां संसाराटव्यां गतः प्रविष्टः तस्यां संसाराटव्यामाध्यात्मिकादयस्तापास्तेषामुपशमनीं हरिरेव गुरुस्तस्य चरणारविन्दे ये मधुकराः सेवकास्तेषां पदवीं हरिभक्तिद्वारा हरिप्राप्तिरूपामद्यापि नावरुन्धे न प्राप्नोति कथम्भूतः जीवलोकः देहात्ममानिनां सत्त्वादिगुणैर्विशेषेण विकल्पितानि विभक्तानि यानि कुशलाकुशलमिश्राणि कर्माणि तैः ।

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ।

इति श्रीमुखोक्तरीत्या विनिर्मिताभिर्विविधदेवमनुष्यादिदेहावलिभिर्वियोगसंयोगादिर्योऽनादिसंसारस्तदनुभवस्य द्वारभूतेन षडिन्द्रियवर्गेण दुर्गाध्ववदसुगमे संसाराटव्यन्तर्गते त्रिवर्गमार्गे पतितः पुनः कथम्भूतः स्वदेहनिष्पादितानां कर्मणां फलद्वारेणानुभवो यस्य सः पुनः कथम्भूतः विफलाश्च बहुप्रतियोगाः बहुविघ्नाश्चेष्टा यस्य सः ॥ १ ॥

यस्यामित्यादि व्याचष्टे । ते लोके प्रसिद्धाः दस्यवः पुरुषस्य अजितात्मनः असंयतचित्तस्य कुनाथस्य कुबुद्धेः बहुकृच्छ्राधिगतं धर्मौपयिकं धर्मकारणं यत्किञ्चिद्धनं भवेत्तद्यथा विलुम्पति तथा अजितात्मनः साक्षात्परमपुरुषाराधनलक्षणो यः साक्षाद्धर्मः तं तु साम्पराये मुक्तौ साध्यं साधनतया उदाहरन्ति तद्धर्म्यं स्वाश्रमधर्मादनपेतं धनं तस्यां भवाटव्यामेते षडिन्द्रियनामानः कर्मणा दस्यव एव दर्शनादिभिर्यो गृहे ग्राम्योपभोगस्तेन विलुम्पन्ति ॥ २ ॥

गोमायवो यत्र हरन्ति सार्थकमित्येतद्याचष्टे । नाम्ना दारादयः कर्मणा तु वृकादयः कदर्यस्य अतिलुब्धस्य ॥ ३ ॥

प्रभूतवीरुत्तृणगुल्मगह्वरे कठोरदंशैर्मशकैरुपद्रुतः क्वचित्तु गन्धर्वपुरं प्रपश्यतीत्येतद्व्याचष्टे । अनुवत्सरं प्रतिवत्सरं न दग्धानि गुल्मतृणादिबीजानि यस्मिन् यद्यस्माद् योऽयमावसथः आश्रमः एष कामानां करण्डो भाजनविशेषः यथा कर्पूरभाजने कर्पूरक्षयेऽपि परिमलो न क्षीयते एवमत्र वासनानामक्षीणत्वाद् कर्मवयुरसीदन्तीति भावः ॥ ४ ॥

तत्र गृहाश्रमे गतः पतितः दंशमशकसमाश्च ते अपसदा अनाचाराश्च तैर्मनुजैः शलभादिभिश्च क्वचिदुपरुध्यमानः पीड्यमानो बहिःप्राणः धनधान्यादिरूपो यस्य स तथाभूतोऽपि

क्वचिच्च वात्यौपम्यया प्रमदयाऽऽरोहमारोपितस्तत्कालरजसा रजनीभूता इवासाधुमर्यादो रज
स्वोऽपि दिग्देवता अतिरजस्वलमतिर्न विजानाति ॥ ६ ॥

क्वचित्सकृदवगतविषयवैतथ्यः स्वयं पराभिध्यानेन विभ्रंशितस्मृतिस्तयैव मरीचितोयप्रायां
वाभिधावति ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अस्मिन्नध्वनि परिभ्रमन् अविद्यया देहगेहादिषु अहंममाभिमानेन विषयाभिलाषेण कर्मणा कर्मधिवित्सया च उपरक्तेन मनसा गन्धर्वनगरं तत्तुल्यं नरलोकं नरभोग्यं देहगेहादिकमनुपपन्नार्थं न उपपन्नो न मोक्तृनित्यतामुपगतोऽर्थः स्वरूपं यस्य तमनित्यमित्यर्थः तथाप्युपपन्नं मोक्तृनित्यतामुपगतमित्येवं मिथ्यादृष्टिः अनित्ये नित्यत्वदृष्टिः अनुपश्यति प्रपश्यतीति प्रशब्देन सूचितमर्थान्तरमाह । तत्र च गन्धर्वनगरे क्वचिदातपोदकनिभान् मृगतृष्णाजलसदृशान् विषयान् पानादिलालुपः सन् उपधावति ॥ ५ ॥ ६ ॥

क्वचित्क्वचिच्चाशुरयोल्मुकमहमित्येतद्व्याचष्टे । पुरीषविशेषमप्रिमलं तद्वर्णेन सुवर्णवर्णेन लोहितवर्णेन रजोगुणेन निर्मिता सुवर्णमादातुं प्रवर्त्तिता मतिर्यस्य सः सुवर्णमुपादातुमिच्छति उल्मुकसदृशं पिशाचमग्निकामेन कातरः परवश इव उल्मुकपिशाचः उपधावतापि न लभ्यः कथञ्चिल्लब्धस्तु नाशहेतुर्भवति तद्वत्सुवर्णमिति भावः ॥ ७ ॥

निवासतोयद्रविणेत्येतद्व्याचष्टे । निवासादिष्वनेकेषु आत्मनः स्वस्योपजीवनेष्वभिनिवेशो यस्य सः एतस्यां भवाटव्यां परिधावति परिभ्रमति ॥ ८ ॥

---

भाषाटीका ।

वह श्रीशुकदेवजी बोले पहिले अध्याय का खुलासा अर्थ यह है कि जैसे यह जीवलोक भगवान् ईश्वर विष्णु की वशवर्तिनी मायाँसे मोहित सुखार्थी अपने देहसे अर्जन किये जो कर्म तिनका अनुभव करनेवाला है उसकी बहुत विघ्नोंवाली चेष्टा हैं देहात्ममानी पुरुषों के मोह करनेवाले जो सत्वादिगुण विशेष तिनसे जो भले बुरे मिश्रकर्म तिनसे प्राप्त जो देवादिक योनि तिनका जो संयोगवियोगरूप अनादि संसार तिसके अनुभव का द्वारभूत जो छै इन्द्रियों का समूह तिससे बडे दुर्गम संसारमार्गमें पडा हुआ वह जीव आजपर्यन्त भी उसके तापों की नाश करनेवाला जो श्रीहरि गुरुचरणारविन्द के मधुकर ( भक्तों ) का मार्ग तिसको नहीं ग्रहण करता है जिसमें ये छै इन्द्रिय नामा वाले हैं सो कर्म से चोर हैं ॥ १ ॥

तिसी प्रकार दुर्बुद्धिवाले पुरुष का साक्षाद्धर्म का उपयोगी जो धन बहुत कष्टसे प्राप्त हुआ साक्षात् परमपुरुष भगवान् का आराधनरूप जो धर्म है तिसीको परलोक में कथन कहते हैं उस धर्म के उपयोगी जो धन तिसको दर्शन स्पर्श श्रवण आस्वादन आघ्राण सङ्कल्प निश्चय इनों से जो गृहोंका ग्राम्यधर्म तिसके द्वारा खोटे नायकवाले सार्थ सरीके
पुरुष के धनको इन्द्रिय चोर सरीके लूटते हैं ॥ २ ॥

औरभी जिस संसार मार्ग में कुटुम्ब के नाम से
पुत्रादिक हैं कर्मसे वे केवल भेडिया श्यालशरीके मा
देने परभी अति लोभी कुटुम्बी के रक्षा करते पर भी
ही भेडको जैसे भेडिया लेजाता है तैसे धनको हरलेते हैं।

जैसे प्रतिवर्ष खोदने परभी बीज जिस मे नहीं
वह खेत फिरभी बोते समय में गुल्म तृण वीरुधों से
का होजाता है तैसेही यह गृहाश्रम कर्मों का खेत है
कर्म कभी नष्ट नहीं होते हैं क्योंकि यह घर कामनाओं
पिटारी है ॥ ४ ॥

तिस गृह मे डांस मच्छर के तुल्य नीच पुरुषों
चिडिया चोर मूषा इत्यादि को से बाहिर के प्राण
उसका नष्ट होजाता है कभी इसी मार्गमें घूँमता हुआ
कामना वाले कर्मों से युक्त जो मन तिससे गन्धर्व
के अस्थिर इस नरलोक को अपनी अज्ञान दृष्टि होने
सरीका देखता है ॥ ५ ॥

तहांपर कभी खाने पीने मैथुनादि विषयोंमें
मृगतृष्णा सरीके झूंठे विषयों पर दौडता है ॥ ६ ॥

कर्मों से पूर्ण दोषों का स्थान अग्नीका विष्ठा
तिसको रजोगुणी बुद्धिसे जैसे अग्नि को चाहनेवाला
वेताल को पकडता है तैसेही पराये सुवर्ण को
चाहता है ॥ ७ ॥

तदनन्तर कभी निवास स्थान जल धन आदि
उपयोगी पदार्थों में अभिनिवेश करता हुआ इस संसार
इधर उधर दौड़ता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

क्वचिच्च वात्योत्थितेत्येतद्व्याचष्टे । क्वचिदिति ।
तस्मिन्काले यद्रजो रागस्तेन स्वदृष्ट्यावरकेण
भूता इव । ह्रस्वपाठे रजनीभूतस्तमोमय इवातीव
मतिरत एव रजोव्याप्तचक्षुरिव दिक्षु स्थिता मर्या
न्विभूता देवता न जानाति ॥ ९ ॥

अनुपादेयमेवोपादेयतया गृह्णातीति प्रक्रमला
श्लोकचतुर्थपादं प्रथमं व्याचष्टे । क्वचित्सकृदिति ।
दकनिभानित्यत्र मिथ्याविषयेषु लम्पटत्वमुक्तं
तदर्जनप्रयास उक्तः अत्र तु बाधितेष्वपि पुनः

क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपं प्रत्यक्षमपरोक्षं वा रिपुराजकुलनिर्भर्त्सितेनातिव्यथितकर्णमूलहृदयः ॥ ११ ॥

स यदा दुग्धपूर्वसुकृतस्तदा कारस्करकाकतुण्डाद्यपुण्यद्रुमलताविषोदपानवदुभयार्थशून्यद्रविणान् जीवन्मृतान् स्वयं जीवन्म्रियमाण उपधावति ॥ १२ ॥

एकदाऽसत्प्रसङ्गान्निकृतमतिर्व्युदकस्रोतःस्खलनवदुभयतोऽपि दुःखदं पाखण्डमभियाति ॥ १३ ॥

यदा तु परबाधयाऽन्ध आत्मने नोपनमति तदा हि पितृपुत्रबर्हिष्मतः पितृपुत्रान्वा स खलु भक्षयति ॥ १४ ॥

क्वचिदासाद्य दाववत्प्रियार्थविधुरमसुखोदर्कं शोकाग्निना दह्यमानो भृशं निर्वेदमुपगच्छति ॥१५॥

क्वचित्कालविषमितराजकुलरक्षसाऽपहृतप्रियतमधनासुः प्रमृतक इव विगतजीवलक्षण आस्ते१६

श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्यपौनरुक्त्यम् स्वयमेव सकृदवगतं विषयाणां वैतथ्यं विफलत्वं येन पराभिध्यानेन देहाभिनिवेशेन विभ्रंशिता स्मृतिर्यस्य तयैव विभ्रंशितया स्मृत्या स्मृतिभ्रंशादेवेत्यर्थः ॥ १० ॥

अहृदयझिल्लीस्वनेत्येतद्व्याचष्टे । क्वचिदुलूकेति । अतिपरुषो रभस उत्साहस्तेनाटोपः । संभ्रमो यथा भवत्येवं रिपूणां राजकुलस्य च निर्भर्त्सितेनातिव्यथितं कर्णमूलं हृदयं च यस्य ॥ ११ ॥

अपुण्यवृक्षानित्येतद्व्याचष्टे । स यदेति । दुग्धमुपभुक्तं पूर्वसुकृतं येन तदा कारस्करो विषतिन्दुस्तत्प्रमुखा येऽपुण्यद्रुमास्तथाविधा लताश्च विषोदपानाश्च विषकूपास्तत्तुल्यान् दृष्टादृष्टप्रयोजनशून्यधनान् ॥ १२ ॥

क्वचिद्वितोयाः सरित इत्येतद्व्याचष्टे । एकदा क्वचिदसतां प्रसङ्गान्निकृता वञ्चिता मतिर्यस्य सः निरुदकनदीगर्तपाते यथा सद्यः शिरः स्फुटति पश्चादपि तद्वेदनानुवर्तते एवमिह परत्र च दुःखदम् ॥ १३ ॥

परस्परं चालपते निरन्ध इत्येतद्व्याचष्टे । यदा त्विति । अन्धोऽन्नं नोपनमति नोपतिष्ठति । पितृपुत्राणां बर्हिः कुशास्तद्वतः पितुः पुत्राणां वा कुशादितृणमात्रमपि येषु पश्यति तान् भक्षयति बाधत इत्यर्थः पितृपुत्रबर्हिष्मानिति तु पाठः सुगमः ॥ १४ ॥

आसाद्य दावमित्येतद्व्याचष्टे । क्वचिदासाद्येति ॥ १५ ॥

क च यक्षैर्हृतासुरित्येतद्व्याचष्टे । क्वचित्कालेन विषमितं प्रतिकूलतां नीतं यद्राजकुलं तदेव रक्षस्तेनापहृताः प्रियतमधनरूपा असवो यस्य विगतानि जीवलक्षणानि दर्पादीनि यस्य मृतदेहं तस्य इत्यप्यनेनैव व्याख्यातम् ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्वचिच्च वात्येत्यादि व्याचष्टे । क्वचिच्चेति । वात्योपस्थया चक्रवाततुल्यया प्रमदया स्त्रिया यथा वात्या रजःप्रक्षेपेणान्धीकरोत्येवं रजोगुणोत्कर्षकत्वेनाज्ञतामापादयन्ती तत्तुल्या प्रमदेति भावः आरोहमङ्कमारोपितः आरूढस्तस्मिन् काले यद्रजो रागस्तेन कथंभूतेन रजनीभूतेन रात्रिवदप्रकाशकेनाज्ञातवर्णेनेत्यर्थः रजनीभूतइवेत्यपि पाठः तत्र तमोमय इवेत्यर्थः दीर्घपाठे रजन्यां रात्रौ भूता इवेत्यर्थः अतिरजस्वलमतिरतीव रजसाच्छन्नमतिरत एवासाधुमर्यादः अतो रजोव्याप्तचक्षुरिव दिक्षु स्थिता मर्यादातिक्रमसाक्षीभूता देवता न जानात्यनुपादेयमेवोपादेयतया गृह्णाति॥९॥

प्रक्रमसाजात्यादुत्तरश्लोकचतुर्थपादं व्याचष्टे । क्वचिदिति । कदाचित्सकृदवगतं विषयेषु शब्दादिषु वैतथ्यं वैयर्थ्यं पुरुषार्थशून्यत्वं येन तथा भूतोऽपि पराभिध्यानेन देहचिन्तया विभ्रंशितस्मृतिर्विभ्रंशिता स्मृतिरात्मधिषया यस्य तयैव विभ्रंशितस्मृत्या मरीचितोयप्रायान् मरीचितोयतुल्यान् स्वयमपुरुषार्थरूपत्वेऽपि तत्त्वेनावभासमानान् तानेव विषयानभिधावति ॥ १० ॥

पूर्वार्द्धं व्याचष्टे । क्वचिदुलूकेति। उलूकझिल्ल्योः घूककीटविशेषयोर्ध्वनिवदतिपरुषो रभस उत्साहस्तेनाटोपः सम्भ्रमः यथा भवत्येवं रिपूणां राजकुलस्य च निर्भर्त्सितेनात्यन्तं व्यथितं कर्णमूलं हृदयं च यस्य तथाभूत आस्ते तत्र प्रत्यक्षाप्रियवाक्यमुलूकस्थानीयं राजकुलं परोक्षाप्रियवाक्यकृत्झिल्लीस्थानीयं रिपुकुलं विवक्षितम् ॥ ११ ॥

स इति । यथा दुग्धपूर्वसुकृतः अपूर्णपूर्वसुकृतहीन इत्यर्थः तथा कारस्करो विषतिन्दुः तत्प्रमुखा येऽपुण्यद्रुमाः तथाविधा लताश्च विषोदपाना विषकूपाश्च तत्तुल्यानुभयार्थशून्यद्रविणान् दृष्टादृष्टप्रयोजनशून्यानि द्रविणानि धनानि येषां तान् येषां द्रविणं कीर्त्यर्थं दृष्टार्थं च न भवति ते उभयार्थशून्यद्रविणा अत एव जीवन्मृतान्स्वयंजीवन्नपि म्रियमाणः मृतप्रायः जीवन्मृतः उपधावति ॥ १२ ॥

क्वचिद्वितोयाः सरित इत्येतद्व्याचष्टे । एकदेति । कदाचिदसतां वेदवेदब्राह्मणविदूषकाणां प्रसङ्गात्सङ्गान्निकृता वञ्चिता मतिर्यस्य सः व्युदकस्रोतःस्खलनवन्निरुदकनदीपतनवत् यथा निर्जलनदीगर्ते पतितस्य न पिपासाशामकजललाभः प्रत्युत शिरःस्फुटनं च सद्यो भवति पश्चादपि तद्वेदनानुवर्तते एवमुभयत इह परलोके च दुःखदं पाषण्डं पाषण्डाचारमभियाति प्राप्नोति स्वीकरोति । यद्वा पाषण्डकुलं प्राप्नोति तत्र जायत इत्यर्थः ॥ १३ ॥

परस्परं चालपते निरन्न इत्येतद्व्याचष्टे । यदेति । यदान्नुपरपीडया

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्ध अन्नमात्मने स्वस्मै नोपनमति नोपतिष्ठते परपीडयाप्यन्नं न लभत इत्यर्थः तथा पितृपुत्रबर्हिष्ठान् पितृपुत्रादीनां बर्हिः कुशः तद्वतः पितृपुत्राणां कुशादितृणमात्रमपि येषु पश्यति तान् स भक्षयति बाधत इत्यर्थः ॥ १४ ॥

आसाद्य दावमित्येतद्व्याचष्टे । क्वाचिदिति । कदाचिद्दावाग्नितुल्यं प्रियार्थविधुरं भोग्यपदार्थरहितमसुखोदर्कं दुःखपरम्परायुक्तं गृहं प्राप्य शोकाग्निना इष्टालाभादिष्टनिवृत्तिजदुःखेन भृशं दह्यमानः पीड्यमानो निर्वेदं मोहं मया सुकृतं न कृतमतो दुर्भगो मन्दभाग्योऽहमित्येवमुपगच्छति ॥ १५ ॥

क्व च यद्वैद्यहृतासुरित्येतद्व्याचष्टे । कचित्कालेन विषमितं प्रतिकूलतां प्राप्तं यद्राजकुलं तदेव रक्षस्तेनापहृताः प्रियतमधनरूपा असवः प्राणा यस्य विगतानि जीवलक्षणानि हर्षादीनि यस्य अत एव मृतक इवास्तेऽवतिष्ठति ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निवासतोयादित्यस्यार्थमाह । अथेति । गृहाद्यनेकस्वरूपेष्वेकमन्तरेणापि जीवनं नास्तीति दुराग्रहवान् कचिच्च वात्योत्थितेत्यस्यार्थमाह । कचिच्च वात्येति । आरोहमङ्कं तत्कालरजसा विपर्यसेचासमयरागेण ॥ ९ ॥

अदृश्य (१) झिल्लीत्यस्यार्थमाह । कचिदुलूकेति । आटोपः सम्भ्रमः ॥ १० ॥

अपुण्यवृक्षानित्यस्यार्थमाह । स यदेति ॥ ११ ॥

मरीचितोयान्यभिधावतीत्यस्यार्थमाह । कचित्सकृदिति ॥१२॥

कचिद्वितोयाः सरित इत्येतद्विवृणोति । एकदेति । उभयत इह परत्रापि व्युदस्रोतःस्खलनवत् मृगतृष्णिकाजलप्रवाहवत् ॥ १३ ॥

परस्परं खादयत इत्येतत्प्रतिवक्ति । यदा त्विति । भक्षयति पीडयति ॥ १४ ॥

आसाद्य दावमित्यस्यार्थमाह । कचिदासाद्येति ॥ १५ ॥

कचित्कालेत्यादिना क्व च यद्वैरिति विवृतं परैर्हतस्व इत्येतद्वचनेन व्याख्यातम् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रथम पाठे रजन्यां ये भूतास्तत्तुल्यक्रिय इत्यर्थः इवेन समासात् ॥ ९—२९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कचिच्च वात्योत्थितेत्येतद्व्याचष्टे । वात्यया सहौपम्यमुपमा यस्यास्तया आरोहमङ्कं तस्मिन् काले यद्रजः रजस्तुल्यः कामवेगस्तेन स्वदृष्ट्याच्छादकेन स्पष्टा अपि दिग्देवता वह्निसूर्याद्या रजनीभूता अदृश्या इव रजस्वलाक्षोऽन्ध इव रजस्वलमतिः कामान्धीकृतमतिः पश्यन्तीरपि ताः न जानाति रजनीभूत इति पाठे तमोमयः ॥ ९ ॥

अत्र कचित् क्रमेण कचित् क्रमोल्लङ्घनेन कचित् पौनरुक्त्येनापि व्याख्यानं नावगणनीयं न हि महाटव्याः सर्व एव पन्था ऋजूकर्त्तुं शक्य इति मत्र स्वप्रौढिमपहाय यथास्थितमेव व्याख्यायते । मरीचितोयान्यभिधावति कचिदित्येतद्व्याचष्टे । कचिदिति । सकृदेकवारमवगतं विषयाणां वैतथ्यं नैष्फल्यं तदपि तानेव विषयान् मरीचितोयप्रायान् पुनः पुनरभिधावति परामिध्यानेन देहाभिनिवेशेन विभ्रंशिता स्मृतिर्यस्य सः विभ्रंशितया स्मृत्या स्मृतिभ्रंशादेवेत्यर्थः ॥ १० ॥

अदृश्यझिल्लीस्वनेत्येतद्व्याचष्टे । कचिदुलूकेति । रभस उत्साहस्तेनाटोपः सम्भ्रमो यत्र तद्यथा स्यात्तथा … नेन ॥ ११ ॥

अपुण्यवृक्षानित्येतद्व्याचष्टे । स यदेति । दुग्धमुपभुक्तं … येन सः कारस्करो विषतिन्दुकः तत्रमुना येऽपुण्यवृक्षा … विषा लताश्च विषकूपास्तत्तुल्यान् दृष्टादृष्टप्रयोजनशून्य…

कचिद्वितोयाः सरित इत्येतद्व्याचष्टे । एकदा असतां … विकृता वञ्चिता मतिर्यस्य सः निरुदककन्दरागर्तपाते … शिरः स्फुटति पश्चादपि वेदनानुवर्त्तते एवमिह च परत्र च … दम् ॥ १३ ॥

परस्परञ्चालपते निरन्न इत्येतद्व्याचष्टे । परावश्या … प्रदयापि जीविकया अन्धः अन्नं नोपनमति नोपतिष्ठ… पुत्राणां वा कुशादितृणमात्रमपि येषु पश्यति तान् … राजद्वारात् पदातिकानानीय पीडयति ॥ १४ ॥

आसाद्य दावमित्येतद्व्याचष्टे । कचिदासाद्येति ॥ १५ ॥

क्व च यद्वैद्यहृतासुरित्येतद्व्याचष्टे । कचित्कालेति । … जीवनलक्षणानि हर्षादीनि यस्य सः शोकमूर्च्छितो वा ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कचिच्च वात्योत्थितेत्येतद्व्याचष्टे । तत्कालरजसा … लिकेन रागेण रजनीभूतस्तमोमय इव अनिरजस्वलमतिः … रजोव्याप्तबुद्धिः असाधुमर्यादः दिग्देवताः दिक्षु स्थिता … तिक्रमसाक्षिदेवता न जानाति यथा वात्योत्थितरजसा … दिशो न जानाति तद्वत् ॥ ९ ॥

अदृश्यझिल्लीत्युक्तश्लोकस्य मरीचितोयान्यभिधावति … दिति चतुर्थपादं स्त्रीविषयप्रसङ्गात्प्रथमं व्याचष्टे । कचित् … सकृदवगतं विषयेषु स्त्र्यादिमधुरशब्दमृदुस्पर्शादिषु वैतथ्यं … रीत्यममङ्गलत्वं येन तथाविधोऽपि पराभिध्यानेन स्त्र्या… विभ्रंशिता स्मृतिर्यस्य सः दुःखोदर्केषु अमङ्गलेषु विषयेषु … सुखबुद्धिस्तथैव विभ्रंशितया स्मृत्या स्मृतिभ्रंशादेव … यतुल्यान् तानेव विषयानभिधावति ॥ १० ॥

अदृश्यझिल्लीस्वनेत्येतद्व्याचष्टे । उलूकझिल्लीः स्वन… रभसः उत्साहस्तेनाटोपः सम्भ्रमो यथा स्यात्तथा … लस्य च निर्भर्त्सितेनातिव्यथितं कर्णमूलं हृदयं च यस्य … भूतो भवति ॥ ११ ॥

अपुण्यवृक्षान् श्रयत इत्येतद्व्याचष्टे । स यदेति । … प्रविष्टः यदा दुग्धमुपभुक्तं पूर्वसुकृतं येन सः … प्रवर्धितः कारस्करो विषतिन्दुस्तदादयो येऽपुण्यवृक्षाः … लताश्च विषोदपानाः विषकूपाश्च तत्सदृशान् दृष्टादृष्ट… र्जितवित्तानुपधावति ॥ १२ ॥

कचिद्वितोयाः सरितोऽभियातीत्येतद्व्याचष्टे । एकदेति । … कचित् असतां वेदबाह्यानां पाखण्डिनां सङ्गाद्विकृता … मतिर्यस्य सः व्युदकस्रोतःस्खलनवत् यथा निर्जल… जललाभः प्रत्युत सद्यः शिरः स्फुटति पश्चादपि …

(१) अत्र श्रीधरस्वामिपाठापेक्षयाप्येकश्लोकस्यक्रमवैपरीत्यं विद्यते

कदाचिन्मनोरथोपगतपितृपितामहाद्यसत्सदिति स्वप्ननिर्वृतिलक्षणमनुभवति ॥ १७ ॥

क्वचिद्गृहाश्रमकर्मचोदनाऽतिभरगिरिमारुरुक्षमाणो लोकव्यसनकर्षितमनाः कण्टकशर्कराक्षेत्रं प्रविशन्निव सीदति ॥ १८ ॥

क्वचिच्च दुःसहेन कायाभ्यन्तरवह्निना गृहीतसारः स्वकुटुम्बाय क्रुध्यति ॥ १९ ॥

स एव पुनर्निद्राजगरगृहीतोऽन्धे तमसि मग्नः शून्यारण्य इव शेते नान्यत्किञ्चन वेद शव इवापविद्धः ॥ २० ॥

कदाचिद्भग्नमानदंष्ट्रो दुर्जनदन्दशूकैरलब्धनिद्राक्षणो व्यथितहृदयेनानुक्षीयमाणविज्ञानोऽन्धकूपेऽन्धवत्पतति ॥ २१ ॥

कर्हि स्म चित्काममधुलवान्विचिन्वन्यदा परदारपरद्रव्याण्यवरुन्धानो राज्ञा स्वामिभिर्वा निहतः पतत्यपारे निरये ॥ २२ ॥

अथ च तस्मादुभयथाऽपि हि कर्मास्मिन्नात्मनः संसारावपनमुदाहरन्ति ॥ २३ ॥

मुक्तस्ततो यदि बन्धाद्देवदत्त उपाच्छिनत्ति तस्मादपि विष्णुमित्र इत्यनवस्थितिः ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

…ति तथेह परलोके च दुःखदं पाखण्डं पाखण्डिनां मार्गमभि…याति ॥ १३ ॥

परस्परं चालयने निरन्ध इत्येतद्व्याचष्टे । यदा तु परबाध…पि अन्धः अन्नं नोपनमति नोपतिष्ठति तदा पितृपुत्रसम्बन्धि…हिः कुशस्तन्मात्रयुक्तानपि पितॄन् पुत्रांश्च भक्षयति पीडयती…त्यर्थः ॥ १४ ॥

आसाद्य दावमित्येतद्व्याचष्टे । प्रियार्थविधुरमनुकूलार्थरहि…तम् ॥ १५ ॥

क्व यक्षैर्हृतासुरित्येतद्व्याचष्टे । क्वचिदिति । कालेन विषमितं …तिकूलतां नीतं यद्राजकुलं तदेव रक्षस्तेनापहृता प्रियतमाः …नासवः धनात्मकाः असवो यस्य सः विगतानि विनष्टानि …लक्षणानि हर्षादीनि यस्य सः प्रमृतक इवास्ते अनेनैव …देहंनस्त इत्यपि व्याख्यातम् ॥ १६ ॥

---

भाषाटीका ।

कहींपर पवनचक्रसरी की स्त्री जब उसको अपने …ऊपर रखलेती है तब तिस समय के कामवेग से अन्धासा …कर साधु मर्यादा को छोडकर अत्यन्त बुद्धि के नष्ट …जाने से सब दिशाओं की कर्म साक्षी देवतों को नहीं …नता है ॥ ६ ॥

कहींपर एक एक बखत विषयों की अनित्यता जानने पर भी …कर आपही शरीर अभिमान से मतिके भ्रष्ट होने से उसी …प्रमति से उन्हीं मृगतृष्णा सरीके विषयोंपर दौडता ॥ १० ॥

कहींपर झिंगारी घुग्घू सरीके अति कठिन प्रत्यक्ष से अथवा अप्रत्यक्ष से शब्दों को सुनाकर अति सम्भ्रम को प्राप्त करादेने वाले शत्रु या राजपुरुषों के भर्त्सना युक्त शब्दों को सुनकर कानों की तथा हृदय की पीडा को भोगता है ॥ ११ ॥

जब उसके पूर्व सुकृत सब नष्ट होजाते हैं तब कारस्कर काकतुण्ड नाग के कोई खोटे वृक्ष खोटी लता विषैले जलके कुआ जैसे खोटे हैं तैसे इस लोक परलोक दोनों लोक के प्रयोजन से रहित धनी जो कि जीतेही में मरे सरी के हैं उनके पास आप भी जीते ही मरा हुआ सरीका जाता है ॥ १२ ॥

कोई एक बखत असत्पुरुषों के संग से मोहित मति होने से विना जल की नदी में गिरे सरीका होकर दोनों लोक में दुःखदायक पाखण्ड मत में चला जाता है ॥ १३ ॥

जब दूसरे की या काल की बाधा से अपने को अन्न नहीं मिलता है तब पिता अथवा पिता के पुत्रों की वस्तु की इच्छा से उनको पीडा देता है ॥ १४ ॥

कभी जंगल की अग्नि सरी के घरको प्राप्त होकर जिसमें कि प्रियवस्तु नहीं है पीछे भी सुख नहीं होता है तिसको देखकर शोकाग्निसे जलकर बडे दुःख को प्राप्त होता है ॥ १५ ॥

कभी काल के विपरीत होने से कुपित जो राजकुल सोई राक्षस सरीके होते हैं वे जब इसके अतिप्रिय धनरूप प्राणको हर लेते हैं तब जीवित चेष्टा से रहित मृतक सरीका होरहता है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्वचिच्च गन्धर्वपुरं प्रविष्ट इत्येतद्व्याचष्टे । कदाचिन्मनोरथप्राप्तं पित्राद्यसदेव सदिति मत्वा पूर्वं गन्धर्वपुरवद्घटमानदर्शनमुक्तमिदानीं तन्निमित्तसुखासक्तिरुच्यत इति भेदः ॥ १७ ॥

चलन् क्वचिदित्येतद्व्याचष्टे । क्वचिद्गृहाश्रमे याः कर्मचोदनास्तासामतिभरोऽतिविस्तारः स एव गिरिस्तमारुरुक्षन्तदन्तं गन्तुमिच्छन् ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पदेपदेऽभ्यन्तरवह्निनेति व्याचष्टे । कचिच्च दुःसहेनेति ॥ १९ ॥

कचिन्निगीर्णं इत्येतद्व्याचष्टे । स एवेति ॥ २० ॥

दष्टः स्म शेते इति व्याचष्टे । कदाचिदिति । मानो गर्व एव दंष्ट्रा परपीडाकरत्वात् भग्ना मानदंष्ट्रा यस्य अत एव न लब्धो निद्रायाः क्षणोऽपि येन ॥ २१ ॥

कर्हिस्मचित्क्षुद्ररसानित्येतद्व्याचष्टे । कर्हिस्मचित्काममधुलवानिति । यदा निहतो भवति तदा सद्य एव निरये पतति ॥ २२ ॥

प्रसङ्गात्प्रवृत्तस्य कर्मणः संसारहेतुत्वं स्फुटयति । अथ चेति । यस्मादेवं तस्मात् अथ अनन्तरमेव उभयथा इह च परत्र च अस्मिन्प्रवृत्तिमार्गे संसारस्यावपनं जन्मक्षेत्रं कर्माण्याहरन्ति ॥ २३ ॥

तत्रापिकृच्छ्रं प्रतिलभ्यमान' इत्येतद्व्याचष्टे । मुक्त इति । यदि बन्धान्मुक्तो भवति तर्हि ततः सकाशादन्यो हरति तस्मादप्यन्यः नत्वसौ भोक्तुं लभत इत्यर्थः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनेनैव शूरैर्हृतस्व इत्युत्तरश्लोकपूर्वार्द्धं व्याख्यातप्रायमित्यभिप्रेत्य तदुत्तरार्द्धं व्याचष्टे । कदाचिदिति । कचिदसत्कालान्तरानवस्थायित्वेन पुरुषान्तराननुभाव्यत्वेन चासत्स्वप्नद्रष्ट्रैकानुभाव्यं तत्कालमात्रावसायि चेति यावत् मनोरथेन मनोव्यापारेण सङ्कल्पविकल्पात्मकेन उपगतं प्राप्तं स्वप्नदृष्टकर्मानुसारिसङ्कल्पविकल्पात्मकमनोरथानुसारिभगवत्सृष्ट्या प्राप्तमित्यर्थः ईदृशं पितृपुत्रादिसदिति मन्वान इति शेषः कालान्तरावस्थायिपुरुषान्तरानुभाव्यजाग्रद्वस्तुतुल्यमतिरित्यर्थः स्वप्ननिर्वृत्ति स्वप्नपितृपुत्रादिसुखं क्षणमात्रमनुभवति स्वप्नस्य गन्धर्वनगरतुल्यत्वं च तद्वत्तत्कालमात्रावस्थायित्वेनान्यानुभाव्यत्वेन चात्र विवक्षितम् । गन्धर्वा हि क्वचिन्नियतं चिरं न वसन्ति क्वचित् क्षणमवस्थितवन्तोऽपि न परैर्ज्ञायन्ते ततस्तेषां निवासस्थानापरपर्यायं नगरं न कालान्तरावस्थायीतरपुरुषानुभाव्यं चेति भवन्ति च ॥ १७ ॥

चलन्कचिदित्यस्य पूर्वार्द्धं व्याचष्टे । कचिदिति । कदाचिद्गृहाश्रमे याः कर्मणां चोदना विधयस्तासामतिभरो विस्तारः स एव गिरिस्तमारुरुक्षमाणः आरोढुमिच्छन् तदन्तं गन्तुमिच्छन् बहुदिवसानि शरीरायासयज्ञादिकर्माण्यारभ्य यावत्समाप्तिकर्तुंकामस्तावत् लौकिकैर्लोकभयैर्व्यसनैर्दुःखैरन्तरायभूतैः पुत्रवित्तापत्यादिभिः कर्षितमनाः पीडितचित्तः कण्टकशर्कराक्षेत्रं प्रविशन्निव पर्वतमारुरुक्षन्मध्ये कण्टकैः शर्करादिभिः सूक्ष्मपाषाणैश्चाकीर्णं क्षेत्रं प्रविष्ट इव सीदति खिद्यति ॥ १८ ॥

उत्तरार्द्धं व्याचष्टे । कचिच्चेति । कदाचित् दुःसहेन सोढुमशक्येन कायाभ्यन्तरवह्निना शरीरमध्यपरिवर्तिजाठराग्निना गृहीतसारः गृहीतबलः कार्श्यं प्राप्तः स्वकुटुम्बाय भार्यायै क्रुध्यति ॥ १९ ॥

कचिन्निगीर्णं इत्यस्य पूर्वार्द्धं व्याचष्टे । स एवेति । स एव संसाराध्वनि भ्राम्यमाण एव । यद्वा कुटुम्बाय क्रुध्यन्नेव निद्राजगरस्तेन गृहीतः अन्धे तमसि अन्धयतीत्यन्धं स्वपराप्रकाशं तमः अज्ञानं तस्मिन्मग्नः शून्यारण्ये निर्जनेऽरण्य इव शेतेऽन्यत् किञ्चिदपि न वेद किं त्वहमित्येतावन्मात्रमवगच्छन् ब्राह्मणत्वादिबाह्याकारं जानाति तात्कालिकमस्य देहं ... अपविद्धः शवः दूरतः परिहृतः शव इवेति ॥ २० ॥

तस्यैवोत्तरार्द्धं व्याचष्टे । कदाचिदिति । कचित् दुर्जना दन्दशूकाः सर्पादयो दशत्स्वभावास्तैर्भग्नो मानो ... एव दंष्ट्रा यस्यात एवालब्धो निद्रायाः क्षणो येन ... दुःखितं यद्धृदयं तेन क्षीयमाणं सङ्कोच्यमानं विज्ञानं ... अन्धवदन्धकूपे महति दुःखे पततीत्यर्थः ॥ २१ ॥

कर्हिस्मचित् क्षुद्ररसानिति श्लोकं व्याचष्टे । कर्हिचित् ... कामो विषयोपभोगस्तेन ये मधुलवाः सुखलेशास्तान्विचिन्वन् ... पयन्यदा परदारान् परद्रविणानि चावरुन्धानः स्वीकुर्वाणः ... राज्ञा स्वामिभिः परैर्वा निहतो भवति तदाऽपारे निरये ... प्रायकारागृहे निपतति राजादिभिर्निहतः कारागृहं ... भवतीत्यर्थः ॥ २२ ॥

मुक्तस्तु बन्धादित्युक्तेः प्रसङ्गात्प्रवृत्तस्य कर्मणः संसा... स्फुटयति । अथचेति । यस्मादेवं तस्मादथानन्तरमेव ... इह परत्रास्मिन्प्रवृत्तिमार्गे संसारस्यावपनं जन्म क्षेत्रं ... हरन्ति ॥ २३ ॥

तत्रापि कृच्छ्रात्प्रतिलभ्यमान इत्येनद्व्याचष्टे । मुक्त इति ... बन्धान्मुक्तो भवति तर्हि ततः सकाशाद्देवदत्त अन्यद्... अहरति तस्मादपि विष्णुमित्रोऽन्यो हरति इत्यनवस्थितिः ... भोक्तुं लभत इत्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कचिच्च गन्धर्वपुरमित्येतद्व्याख्याति । कदाचिन्म... दिना ॥ १७ ॥

कचिद्गृहाश्रमेत्यादिना चलन् कचिदित्येतद्विवृणोति ... श्रमचोदितकर्माण्येवातिभारा गिरयस्तानारुरुक्षन् ॥ १८ ॥

पदेपदेऽभ्यन्तरवह्निनेत्येतद्व्याख्यातम् । कचिच्च दुःसहेन ... गृहीतसारः गतधैर्यः ॥ १९ ॥

कचिन्निगीर्णो इत्येतद्व्याचष्टे । स एवेत्यादिना । ... इत्येतद्व्याख्याति । कचिद्भग्नमना इत्यादिना निद्राक्षण ... क्षणावसरः ॥ २०—२१ ॥

कर्हिस्मचिदित्यस्यार्थं दर्शयति । कर्हिस्मचित्क्षुद्र... काममधुलवानिति पाठे काम्यन्त इति कामा वि... मधुलवा मकरन्दलेशास्तानित्यर्थः ॥ २२ ॥

तत्रापि कृच्छ्रादित्यस्याभिप्रायमाह । अथ चेति ॥ २३ ...

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कचिच्च गन्धर्वपुरं प्रविष्ट इत्येतद्व्याचष्टे । कदा... मनोरथप्राप्तं पित्रादिकमसत् मृतमपि सत् पुनः ... गतमिति मत्वा स्वप्ने इव निर्वृतिम् ॥ १७ ॥

चलन् कचिदित्येतद्व्याचष्टे । कचिद्गृहाश्रमे या... स्ताभिः प्राप्तो योऽतिभरोऽश्वमेधादिर्विवाहादिर्वा ... लोकानां ... स्तमारुरुक्षन् तदन्तं गन्तुमिच्छन्

**क्वचिच्च शीतवाताद्यनेकाधिदैविकभौतिकात्मीयानां दशानां प्रतिनिवारणेऽकल्पो दुरन्तचिन्तया विषण्ण आस्ते ॥ २५ ॥**

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

व्यसनं तादृशबृहत्कर्माशक्तिस्तेन कर्षितमनाः । एते स्वप्रतिष्ठार्थं बृहत्कर्म कुर्वन्ति अहं कथं न करोमीति विक्षुब्धचित्तः ॥ १८ ॥

पदेपदेऽभ्यन्तरवह्निनेत्येतद्व्याचष्टे । क्वचिद्दुःसहेनेति । गृहीतसारः दग्धधैर्यः ॥ १९ ॥

क्वचिन्निगीर्ण इत्येतद्व्याचष्टे । स एवेति । अपविद्धः स्वजनैस्त्यक्तः ॥ २० ॥

दष्टः स्म शेते इति व्याचष्टे । कदाचिद्भग्नेति ॥ २१ ॥

कर्हिस्मचित् क्षुद्ररसानित्येतद्व्याचष्टे । कर्हिस्मचित् कामेति ॥ २२ ॥

अथ चेति यस्मादेवं तस्मादुभयथापि पापप्रकारेण पुण्यप्रकारेण च कर्म अस्मिन् जगति ॥ २३ ॥

तत्रातिकृच्छ्रं प्रतिलब्धमान इत्येतद्व्याचष्टे । मुक्त इति । बन्धात् तत्स्वामिदत्तबन्धप्रहारादेर्यदि द्रव्यादिव्ययेन मुक्तः सन् तद्दारान् सम्भोक्तुं प्राप्नोति तदा देवदत्तः अन्यः कश्चिल्लम्पटः तत आच्छिद्य भुङ्क्ते तस्मादप्यन्य इति न कोऽपि प्रकामं भोक्तुं लभते ॥ २४ ॥

प्रसङ्गात्प्रवृत्तं कर्म संसारहेतुरित्याह । अथेति । अस्मिन् भवाध्वनि प्रवृत्तिमार्गे उभयत्र इह च परं च संसारापनं जन्मक्षेत्रं कर्मोदाहरन्ति ॥ २३ ॥

तत्रातिकृच्छ्रं प्रतिलब्धमान इत्येतद्व्याचष्टे । मुक्त इति । यदि मुक्तः कारागृहादितो मुक्तो भवति तर्हि ततः सकाशात् देवदत्तस्तस्माद्विष्णुमित्र उपाच्छिनत्ति इत्यनवस्थितिर्भवति नातसौ भोक्तुं लभते इत्यर्थः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्वचिच्च गन्धर्वपुरं प्रविष्ट इत्येतद्व्याचष्टे । कदाचिदिति । मनोरथेन मनोव्यापारेण सङ्कल्पेनोपगतं नित्यं मनसि मत्पित्रादिकमस्तीत्येवं वर्तमानमित्यन्यथाभूतं यत् पितृपितामहादिसत्सुखकरं तद्विपरीतमसदपि सत्सुखकरमिति मत्वेति शेषः स्वप्नानिर्वृत्तिलक्षणं स्वप्नवन्निर्वृत्तिः सुखं यस्मात्तथाभूतम् ॥ १७ ॥

चलन् क्वचित्कण्टकशर्कराङ्घ्रिरित्येतद्व्याचष्टे । क्वचिदिति । गृहाश्रमे याः कर्मचोदनास्तासामतिभरोऽतिविस्तारः स एव गिरिस्तमारुरुक्षमाणः तदन्तङ्गन्तुमिच्छन् लोकव्यसनैः क्षुद्रैर्लौकिकैः कार्यैः कर्षितं मनो यस्य सः कण्टकशर्कराक्षेत्रं प्रविशन् नगमारुरुक्षुर्यथा सीदति तद्वत्सीदति ॥ १८ ॥

पदेपदेऽभ्यन्तरवह्निनेति व्याचष्टे । क्वचिद्दुःसहेन सोढुमशक्येन कायाभ्यन्तरक्रोधाग्निना गृहीतः भस्मीकृतः सारो धैर्यं यस्य सः ॥ १९ ॥

क्वचिन्निगीर्ण इत्येतद्व्याचष्टे । स एवेति ॥ २० ॥

दष्टः स्म शेते क्व च दन्दशूकैरित्येतद्व्याचष्टे । कदाचिदिति । मानो गर्वः एव दंष्ट्रा परपीडाकरत्वात् भग्ना मानदंष्ट्रा यस्य सः अत एव न लब्धो निद्राक्षणो येन सः अन्धकूपे दुःखरूपे गर्ते पतति यथान्धकूपेऽन्धः ॥ २१ ॥

कर्हिस्मचित्क्षुद्ररसानित्येतद्व्याचष्टे । कर्हिस्मचिदिति । कामो विषयोपभोगस्तेन ये मधुलवाः सुखलवास्तान् विचिन्वन् परदारादीन् अवरुन्धानः स्वीकुर्वाणः यदा तत्स्वामिभिः राज्ञा वा निहतो भवति तदापारे निरये कारागृहादौ पतति ॥ २२ ॥

---

भाषाटीका ।

कभी मनोरथ से आये हुये पिता पितामहादिकों को देखकर मरे हुओं कों भी सच्चे आये सरी के मानकर स्वप्न सरी का सुख भोगता है ॥ १७ ॥

कभी गृहस्थाश्रम के कर्मों के विधि के भाररूप पर्वतपर चढने चांहता है तब लौकिक विषयोंकी इच्छामें दुःखित होकर जैसे कांटे कङ्कडोंके खेत में पैठने से होवे तैसे दुःखित होता है ॥ १८ ॥

कहीं तो अतिकठिन पेटकी क्षुधा अग्नि से धैर्य के नष्ट होजाने से अपने कुटुम्ब के मनुष्योंपर कोप करता है ॥ १९ ॥

सो पुरुष निद्रारूपी अजगर से पकड लिया जाता है तब अज्ञानरूप अंधेरे में डूबजाता है शून्य जैसे अरण्य में तैसे सोता है मुरदा सरीका डारा हुआ कुछ नहीं जानता है ॥ २० ॥

कभी मान रूप दान्त के टूटने से दुर्जनरूपी सर्पों से निद्रा के समय को नहीं पाता है तो दुःखित मनसे ज्ञान के क्षीण होने से सूखे कुआ से महा मोह में पडता है ॥ २१ ॥

कभी कामनाओं के मीठे कणिकाओं को ढूंढता हुआ जब दूसरे की स्त्री दूसरे के धन कों लेने चांहता है तब राजा के अथवा उसके मालिक के मारने से नरक में या कैद में पडाता है ॥ २२ ॥

इसी हेतु से पुण्य पाप दोनों प्रकार का कर्म इस संसार में आत्मा के जन्म मरण का हेतु है ऐसा वेद कहते हैं ॥ २३ ॥

उस राजादिबन्धन से यदि छूटता है तो उसी स्त्री या धनकों देवदत्त जबरदस्त लेजाता है उससें भी बली विष्णुमित्र लेजाता है इस प्रकार कोई ठीक नहीं सुख भोगने का होता है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्वचिच्च शीतातपेत्येतद्व्याचष्टे । क्वचिच्चेति । शीतादयोऽनेका आधिदैविकाद्या या दशा दुःखावस्थास्तासाम् ॥ २५ ॥

क्वचिन्मिथो व्यवहरन् यत्किञ्चिद्धनमन्येभ्यो वा काकिणिकामात्रमप्यपहरन् यत्किञ्चिद्वा विद्वे-
वित्तशाठ्यात् ॥ २६ ॥

अध्वन्यमुष्मिन्निम उपसर्गास्तथा सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभमात्-
र्ष्याऽवमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः ॥ २७ ॥

क्वापि देवमायया स्त्रिया भुजलतोपगूढः प्रस्कन्नविवेकविज्ञानो यद्विहारगृहारम्भाकुलहृदय-
श्रयावसक्तसुतदुहितृकलत्रभाषितावलोकविचेष्टितापहृतहृदय आत्मानमजितात्माऽपारेऽन्धे तमसि
णोति ॥ २८ ॥

कदाचिदीश्वरस्य भगवतो विष्णोश्चक्रात्परमाण्वादिद्विपरार्द्धापवर्गकालोपलक्षणात्परिवर्ति-
वयसा रंहसा हरत आब्रह्मतृणस्तम्बादीनां भूतानामनिमिषतो मिषतां वित्रस्तहृदयस्तमेवेश्वरं
चक्रनिजायुधं साक्षाद्भगवन्तं यज्ञपुरुषमनादृत्य पाखण्डदेवताः कङ्कगृध्रवकवटप्राया आर्यसमयपरि-
साकल्येनाभिधत्ते ॥ २६ ॥

यदा पाखण्डिभिरात्मवञ्चितैस्तैरुरुवञ्चितो ब्रह्मकुलं समावसंस्तेषां शीलमुपनयनादिश्रौतस्मा-
र्त्तानुष्ठानेन भगवतो यज्ञपुरुषस्याराधनमेव तदरोचयञ्छूद्रकुलं भजते निगमाचारेऽशुद्धितो यस्य मि-
थुनीभावः कुटुम्बभरणं यथा वानरजातेः ॥ ३० ॥

तत्रापि निरवरोधः स्वैरेण विहरन्नतिकृपणबुद्धिरन्योऽन्यमुखनिरीक्षणादिना ग्राम्यकर्मणैव विस्-
कालावधिः ॥ ३१ ॥

क्वचिद्द्रुमवदैहिकार्थेषु गृहेषु रंस्यन् यथा वानरः सुतदारवत्सलो व्यवायक्षणः ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्वचिन्मिथ इत्येतद्व्याचष्टे । क्वचिन्मिथो यत्किञ्चिद्धनं व्यवहरन्काकिणिकामात्रं विंशतिकपर्दकमात्रं ततोऽपि न्यूनं वा यत्किञ्चिदपहरन्विक्षेपमेति ॥ २६ ॥

अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैरित्युक्तानुपसर्गान्प्रपञ्चयति । अध्वन्यमुष्मिन्निमे उरुकृच्छ्रवित्तबाधादयस्तथा सुखदुःखादयश्च ॥ २७ ॥

व्युत्क्रमैः पुनरुक्तैश्च नानापाठैरतः परम् ।
दुर्गमोऽपि भवाध्वायं सम्प्रदायेन तीर्यते ॥

तत्र प्रसङ्गाति क्वापीत्यादिना सिंहावलोकनन्यायेनोक्तमर्थमपकृष्य क्रमेण व्याचष्टे । क्वापि देवमाययेति । प्रस्कन्नमपगतं विवेकविज्ञानं यस्य यस्याः स्त्रिया विहारगृहं क्रीडागृहं तदारम्भे आकुलं हृदयं यस्य अनेन प्रसज्जतीति व्याख्यातं तदाश्रयेत्यादि व्याचष्टे । तस्या आश्रयेऽवसक्ताः संलग्नाः सुता दुहितरश्च कलत्रं च सैव स्त्री तेषां भाषितादिभिरपहृतं हृदयं यस्य प्रहिणोति प्रक्षिपति ॥ २८ ॥

क्वचित्कदाचिद्धरिचक्रतस्त्रसन्नित्येतद्व्याचष्टे । कदाचिदीश्वरस्येति । परमाण्वादिः द्विपरार्धोऽपवर्गोऽन्तः तदेवोपलक्षणं यस्य तस्मात् कालोपलक्षणादिति पृथक्पदत्वेन पाठे कालस्वरूपादि-त्यर्थः रंहसा शीघ्रेण परिवर्तितेन परिभ्रमणेन वयसा-दिक्रमेण ब्रह्माणमभिव्याप्य तृणस्तम्बादीनि भूतानि [illegible]-क्रतः सकाशाद्वित्रस्तहृदयः सन् पाखण्डदेवता आभिमुख्ये-इत्यन्वयः । अनिमिषतो निमेषमकुर्वतः अप्रमत्तादित्यर्थः प्रतिकर्तुमशक्तानामित्यर्थः कर्मणि षष्ठ्यः कालचक्रं [illegible]-मायुधं यस्य साकल्येन मूलप्रमाणशून्येन पाखण्डागमेन

तैर्वञ्चित इत्येतद्व्याचष्टे । यदात्विति । आत्मना [illegible] अधिकं वञ्चितः सन् तेषां ब्राह्मणानां यच्छीलमुप-तदरोचयन् शूद्रवद्वर्तते । निगमोक्ताचारे अशुद्धि-शुद्ध्यभावात् यस्य शूद्रस्य केवलं मिथुनीभावः कु-च व्यापारो नाग्निहोत्रादिः ॥ ३० ॥

तज्जातिरासंनेत्यादि व्याचष्टे । तत्रापि निरवरोधः रहितः स्वैरेण स्वेच्छया क्रीडन्विस्मृतमृत्युकालः स्व ।

द्रुमेषु रंस्यन्नित्येतद्व्याचष्टे । क्वचिद्द्रुमवदिति । [illegible] मैथुनोत्सवो भवति ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्वचिच्च शीतातपेत्येतद्व्याचष्टे । क्वचिच्चेति । आधि-[illegible]धिदैविकानां भौतिकानामात्मनां च दशा दुःखावस्था [illegible] आधिभौतिका आध्यात्मिकास्तापा इत्यर्थस्तासां [illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

निवारणाय प्रतिक्रियायै अकल्पोऽसमर्थः प्रतिक्रियां कर्तुमसमर्थः अत एव विषण्णः दुःखितः अपारचिन्तायुक्त आस्ते ॥ २५ ॥

क्वचिन्मिथ इत्येतद्व्याचष्टे। कदाचित्परस्परं व्यवहरन् यत्कि-ञ्चनमन्येभ्यः सकाशात् काकिणिकामात्रं विंशतिकपर्दमात्रं ततोऽपि न्यूनं वा यत्किञ्चिदपहरन् वित्तशाठ्येन धनलोभेन विद्वेषं प्राप्नोति ॥ २६ ॥

(१) क्वचित्क्वचित् क्षीणधन इत्येतद्व्याचष्टे। क्वचित्क्षीणं धनं यस्यात एव शय्यासननिवासादिभिरुपभोगैर्भोगोपकरणैर्विहीनः रहितः उपभोगशब्दो भोग्योपलक्षकः क्वचित् यदैवम्विधो भवति तदा यावदप्रतिलब्धमनोरथः अप्राप्तसमीहितः तावत्पर-द्रव्यादानेऽन्यदीयधनग्रहणे व्यवसितमतिः केनापि परवञ्चनोपायेन परकीयं धनं ग्रहीतव्यमिति निश्चययुक्तः ततः परधनादिग्रह-णोद्योगादपमानादीनि प्राप्नोति ॥ २७ ॥

अन्योऽन्यवित्तेति व्याचष्टे। एवं परस्परं वित्तस्य मायावन्ध-नस्य धनस्य व्यतिषङ्गेण व्यत्यासेन निवद्धारूढमूलं यद्वैरं तदनुबन्धो-ऽप्रियकारित्वादिरूपश्च यस्यैवम्भूतोऽपि पूर्ववासनया जात्यभि-मानप्रयुक्तया पूर्ववासनया मिथ उद्वहतः विवाहं कुर्वाणांस्ता-न्वैरविषयानेवोद्वहति। वैरविषयैरेव साजात्याभिमानेन विवा-हादिक्रियया सम्बध्नातीत्यर्थः ॥ २८ ॥

एतस्मिन् संसाराध्वन्येवमुक्तविधैर्नानाविधैः क्लेशैरुपसर्ग-ष्यमाणैः सुखदुःखरागद्वेषादिभिश्च वितते विस्तृतेऽनन्तक्ले-शोपसर्गयुक्ते इत्यर्थः आपन्न आपदं प्राप्तस्तत्र यो यां विपन्नः विपत्तिं प्राप्तः मृत इति यावत्तं तं विपन्नं पित्रादिरूपं विसृज्य नवं जातं पुत्रादिरूपमुपादायात्मीयाभिमतिं कृत्वा पुनर्जात-विपत्तौ शोचन् तेन मुह्यन्विद्यन्प्ररुदन् तत्र शोको मानसी व्यथा खेदो वाचिकी दैन्योक्तिरूपा प्ररोदः कायिकी अश्रुविमो-चनादिरूपा जातान्पुनरन्यस्य जनने संहृष्यन् हाहादिभिरुच्चैर्ध्वनिं कुर्वन् बिभ्यत् जातादीनामागामिदुःखसम्भावनानिमित्तप्रति-कूलज्ञानप्रयुक्तः कदाचिज्जातादीनां गुणान् गायन्मुह्यमानः इदं मोहं प्राप्तस्तेन साधुना कर्मणा वर्जितः नह्यमान इति पाठे बध्यमानः अद्यापि जीवसमूहः आरब्ध उपक्रान्तयोगः संसाराध्वनः पार इतोऽस्मात्संसाराध्वनः सकाशात्तदध्वनः पारं प्रति नैवावर्त्तते नायाति न प्राप्नोतीत्यर्थः किं तदध्वनः पारं यत्प्रतिनावर्त्तते तत्राह। यदिदं योगानुशासनं नाम योगानु-शासनमिति प्रसिद्धं तत्संसाराध्वनः पारमुपदिशन्ति तत्त्वविद इति शेषः योगस्याध्यात्मयोगकर्मयोगानुगृहीतभगवद्भक्तियोगस्या-नुशासनं विविच्य ज्ञानं शिक्षणं वा तदनुष्ठानमिति यावत्तदेव संसाराध्वनः पारमित्यर्थः ॥ २९ ॥

मनस्विनो निर्जितेति श्लोकं व्याचष्टे। न वा इति। उपशम एव शीलं येषामुपरतः निगृहीतः आत्मा मनो यैस्ते मुनयो मननशीला न्यस्तदण्डाः निवृत्तभूतद्रोहाः सर्वभूतसुहृदः सन्त इत्यर्थः यच्छ्रे-ष्ठतमं निरतिशयसुखरूपं परमात्मप्राप्त्युपायं योगानुशासनमुप-

(१) अत्रत्यं सूत्रं तु श्रीधरीयपाठक्रमेण पञ्चत्रिंशच्छ्लोकान-न्तरमेकोनचत्वारिंशत्पर्यन्तमस्ति तदनन्तरमष्टात्रिंशश्लोकोनत्रि-ंशत्पद्ययोर्व्याख्यानम्।

तिष्ठन्ति प्राप्नुवन्ति तच्छ्रेष्ठतमं निर्जितदिग्गजेन्द्रा अमनस्विनः अनिर्जितान्तःकरणा राजर्षयो नैवावरुन्धन्ते न प्राप्नुवन्ति नैव च व्रजन्ति उपायानुष्ठानपूर्वकमुपेयं न यान्ति किम्विषयं पृथिवी ममेत्यभिमानेनैव प्रकृतवैरानुबन्धाः मृधे युद्धे शयीरन् केयं ममाभिमानविषयभूता तत्राह। यां पृथिवीं विसृज्य स्वयमुपसंहृता इत्यर्थः सिंहावलोकन्यायेन बाधोपसर्गैरित्यत्राभिप्रेतमुपसर्गशब्दा-र्थमाह। अध्वनीति। अस्मिन्नध्वनि संसाराध्वनि इमे स्वर्गादयः उपसर्गा इत्यर्थः ॥ ३० ॥

प्रसज्जतीत्येतद्व्याचष्टे। क्वापीति। स्त्रीवेषया देवमायया भग-वन्मायया कस्याः भुजलताभ्यामुपगूढः आलिङ्गितः प्रस्कन्नं गतं विवेकात्मविज्ञानं यस्य। यद्वा। विवेको देहविलक्षणात्मविवेकः विज्ञानं भगवदुपासनात्मकं तद्रहितः यस्याः स्त्रिया विहारगृहं क्रीडागृहं तदारम्भे आकुलं हृदयं यस्य तस्मिन्नाश्रमे वनिता-विहारगृहे आसक्ताः प्रसक्ताः सुतादयस्तेषां भाषितादिभिरपहृतं हृदयं यस्य अत एवाजितेन्द्रियः अन्धे तमसि दुःखे नरके आत्मानं प्रहिणोति प्रक्षिपति ॥ ३१ ॥

पूर्वार्द्धं व्याख्यातमथोत्तरार्द्धं व्याचष्टे। कदाचिदिति। परमा-ण्वादिः परार्द्धेऽपवर्गोऽन्तः स एवोपलक्षणं यस्य कालो-पलक्षणादिति पाठे तु परमाण्वादिपरार्द्धापवर्गरूपं यत्कालस्योप-लक्षणमुपलक्ष्यत इत्युपलक्षणं स्वरूपं तस्मादित्यर्थः रंहसा शीघ्रेण परिवर्त्तितेन परिभ्रमणेन वयसा बाल्यादिक्रमेण ब्रह्म-णामभिव्याप्य तृणस्तम्बादिभूतानां काल्यमानानां लवादिरूपेण गण्यमानायुषामित्यर्थः मिषतां पश्यतामनिमिषतः निमेषमकुर्वत अप्रमत्तादिति वा हरतः आयुरिति द्वितीयान्तस्य शेषः अनि-मिषतः अकाल्यमानाद्विष्णोश्चक्रात् वित्रस्तहृदयो मरणमा-शङ्कमान इति यावत् अमरत्वाय पाखण्डदेवताः साङ्केत्येनाभि-मुख्येन धत्ते। किं कृत्वा कालचक्रं निजं स्वीयमायुधं यस्य तमेव साक्षाद्भगवन्तं यज्ञपुरुषमनादृत्य पाखण्डदेवताः कथम्भूताः कङ्क-गृध्रबकप्रायाः विश्वसन्त्योऽपि वञ्चयन्त्यः आर्याणां वैदिकानां समयात्सिद्धान्ताद्बहिः कृताः साङ्केत्येनेत्यनेन पाखण्डदेवताराधनं पाखण्डसङ्केतनिबन्धनं न तु वैधमित्युक्तम् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

क्वचिच्च शीतातपेत्येतद्विवृणोति। क्वचिच्च शीतातपेत्यादिना ॥२५॥

क्वचिन्मिथो विपणन्नित्येतद्विवृणोति। क्वचिन्मिथ इत्यादिना। विपणिकः वणिक् ॥ २६ ॥

(१) क्वचित्क्षीणधन इत्यस्यार्थमाह। क्वचिच्चेत्यादिना ॥ २७ ॥

अन्योऽन्यवित्तेत्यस्यार्थमाह। एवं वित्तेति ॥ २८ ॥

यत आरब्धो नरलोकसार्थस्तमीश्वरमध्वनः पारमुपदि-शन्ति विद्वांसः ॥ २९ ॥

के तं गच्छन्तीति तत्राह। यदिदमिति। योगमनुशास्तीति योगानुशासनमेतद्ब्रह्म शान्तमं सुखतममुपशमशीला मुनयः उपतिष्ठन्ति प्राप्नुवन्तीत्यन्वयः ॥ ३० ॥

प्रसज्जतीत्यस्यार्थमाह। क्वापि देवमाययेति। प्रस्कन्नविवेकवि-ज्ञानः नष्टविवेकविज्ञानस्तस्याः स्त्रियाः विहारार्थं गृहोपक्रमान्

(१) श्रीवीरराघवव्याख्यानधृतटिप्पणीवदत्रापि श्लोकक्रमो ज्ञेयः।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुतादीनां कलभाषितैरवलोकैर्विचेष्टितैश्चापहृतं हृदयं यस्य स तथा आत्मानमन्धे तमसि प्रहिणोति गमयति "हि गतौ" इति धातुः ॥ ३१ ॥

क्वचित्कदाचिद्धरिचक्रत इत्येतद्व्याख्याति । कदाचिदिति । कदाचित्कस्यां चिदवस्थायामीश्वरस्य चक्राच्छिन्नस्तद्धृदयस्तमीश्वरमनादृत्य पाखण्डदेवताः साकल्येनाभिधत्ते भजतीत्यन्वयः परमाणुद्विपरार्द्धापवर्गकाल उपलक्ष्यतेऽनेनेति । तथोक्तम् । तेन परिवर्तनेन परिभ्रमणेन मिषतां जीवानां वयः आयुर्लवणां हरतश्चक्रादपवर्गोऽवमानं परमाणुकाल आदिर्यस्य स तथा द्विपरार्द्धस्यापवर्गोऽवसानं यस्य स तथा केषां मिषतामाब्रह्मस्तम्बादीनां ब्रह्माणामवधीकृत्य स्तम्बमुपक्रम्य वर्तमानानां कालचक्रं निजायुधं यस्य स तथा तम् ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निगमाचारे या शुद्धिस्तदकरणादित्यर्थः ॥ ३०—३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

क्वचिच्च शीतातपेत्येतद्व्याचष्टे । क्वचिच्च शीतेति । दशानां दुःखावस्थानाम् ॥ २५ ॥

क्वचिन्मिथ इत्येतद्व्याचष्टे । क्वचिन्मिथ इति । यत्किञ्चिदपि धनं मिथो वाणिज्यादौ व्यवहरन् वा काकिणिका विंशतिकपर्दिकास्तन्मात्रं यत्किञ्चित्ततोऽपि न्यूनं च अन्येभ्योऽपहरन् वा विद्वेषमेति ॥ २६ ॥

अध्वन्यमुष्मिन्नुरुकृच्छ्रेति व्याचष्टे । अध्वन्यमुष्मिन्निम इति ॥ २७ ॥

प्रसजति क्वापीति व्याचष्टे । क्वापीति । देवमायारूपया स्त्रिया कऽयाः भुजलताभ्यामुपगूढः सन् लुप्तविवेकविज्ञानो भवति । यस्या स्त्रियाः केलिगृहारम्भे आकुलहृदयो भवेत्तस्या एव आश्रयेऽवसक्ताः संलग्नाः सुता दुहितरश्च कलत्रं तत्सुतवधूः सा च तेषां भाषितादिभिरपहृतं हृदयं यस्य सः ॥ २८ ॥

क्वचित् कदाचिद्धरिचक्रतस्त्रसन्नित्येतद्व्याचष्टे । कदाचिदीश्वरस्येति । चक्रात् परिभ्रष्टहृदयः पाखण्डदेवताः साङ्केत्येन कल्पितेन पाखण्डागमेन अभिधत्ते उपास्यतया व्याचष्ट इत्यन्वयः परमाण्वादिर्द्विपरार्द्धापवर्गोऽन्तो यस्य तेन कालेनैव उप आधिक्येन लक्षणं यस्य तस्मात् द्विपरार्द्धापवर्गात् कालोपलक्षणादिति पाठे कालस्वरूपादित्यर्थः । कीदृशात् परिवर्धितेन वयसा बाल्यादिना रंहसा अतिशैघ्र्येण ब्रह्मादीनामप्यनिमिषतामपश्यतां व्यवहारे प्रमत्तानां भूतानामिति कर्मणि षष्ठ्यः भूतानि हरत इत्यर्थः । यद्वा । आयुरित्यध्याहार्यं तेषामायुर्हरतः अनिमिषतः निमेषमप्यकुर्वतः अप्रमत्तादित्यर्थः । आर्यसमयपरिहृताः शिष्टाचाररहिताः ॥ २९ ॥

तैर्वञ्चित इत्येतद्व्याचष्टे । यदा त्विति । आत्मनैव वञ्चितैः स्वकल्पितकुपथगामित्वात् तैरुरुवञ्चितः कल्पितकिञ्चिन्मात्रापरा-धर्मिषेण धनाद्यपहृत्य स्वगणाभिः सारितः निष्कर्मध्ये या अशुद्धिरुच्यते तयैव यस्य मिथुनीभावः स्वयक्तभवाया वा मूल्यादिप्रदानेन परिणयः ॥ ३० ॥

तज्जातिरासेनेत्येतद्व्याचष्टे । तत्रापि निरवरोधः भिरनवरुध्यमानः विस्मृतमृत्युकालः सन् विहरन् भवति ।

द्रुमेषु रंस्यन्निति व्याचष्टे । क्वचिद्द्रुमेति । रंस्यन् व्यवायक्षणः स्त्रीसङ्गलब्धोत्सवः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्वचिच्च शीतातपेत्येतद्व्याचष्टे । क्वचिच्चेति । शीताद्य-कानामाधिदैविकभौतिकानामात्मीयानां दशानां दुःख-नाम् ॥ २५ ॥

क्वचिच्च मिथ इत्येतद्व्याचष्टे । किंचिन्मिथः धनं व्यवहरन् अन्येभ्यो वित्तशाठ्यात् धनलोभात् काकिण्या विंशतिकपर्दिकामात्रं ततोऽपि न्यूनं वा यत्किञ्चिदपहरन् षमेति प्राप्नोति २६ ॥

अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैरित्युक्तानुपपद्यति । अध्वनीति । अमुष्मिन् अध्वनि संसारमार्गे इमे उरुकृत्तबाधादयस्तथा सुखदुःखादय उपसर्गाः अत्र दुःखैर्जीर्णोपसर्गसंस्मरणजन्यकारुण्याविष्टत्वं पुनरुक्तिश्च नलसत्त्वमभिकोक्तिश्च सर्वज्ञत्वं द्योतयति ॥ २७ ॥

प्रसजतीत्येतद्व्याचष्टे । क्वापीति । स्त्रीरूपया देवमायया भ्यामुपगूढः प्रस्कन्नमपगतं कार्याकार्यविवेकसहितं यकं विज्ञानं यस्य सः यद्विहारगृहारम्भे यस्याः गृहारम्भे आकुलं हृदयं यस्य सः तस्याः आश्रये अवसक्ताः उपश्रिताः सुताश्च दुहितरश्च कलत्राणि भार्यास्तेषां भाषितादिभिरपहृतं हृदयं यस्य सः नरके आत्मानं प्रहिणोति प्रक्षिपति ॥ २८ ॥

क्वचित्कदाचिद्धरिचक्रतस्त्रसन्नित्येतद्व्याचष्टे । कदा-परमाण्वादिद्विपरार्द्धापवर्गात् परमाण्वादिद्विपरार्द्धान्तः पलक्षणात् कालस्वरूपात् रंहसा शीघ्रेण परिवर्ति-भ्रमणेन वयसा बाल्यादिक्रमेण आब्रह्मतृणस्तम्बादीनि षष्ठ्यः कर्मणि आब्रह्मतृणस्तम्बादीनि भूतानि हरत- विष्णोश्चक्राच्छिन्नस्तद्धृदयः भगवन्तमनादृत्य पाख- साङ्केत्येन पाखण्डागमेन अभिधत्ते इत्यन्वयः अनिमि- षमकुर्वतः अप्रमत्तात् कथम्भूतानां मिषतां प्रतिकर्तुं- कथम्भूताः कङ्कादिप्रायाः वञ्चनपराः आर्याणां वैदिका- त्सिद्धान्तात्परिहृताः बहिष्कृताः ॥ २९ ॥

तैर्वञ्चित इत्येतद्व्याचष्टे । आत्मा स्वात्मा वञ्चि- चारेण नरकार्हैः कृतः यैस्तैरुरु अधिकं वञ्चितः स- समाश्रयस्तेषां ब्राह्मणानां यत् शीलमुपनयनादिश्रौत- नुष्ठानेन यज्ञपुरुषाराधनमेव तदरोचयन् शूद्रकुलं मा- माचारे अशुद्धिः स्वस्य शुद्ध्यभावात् यस्य शूद्र- मिथूनीभावः कुटुम्बभरणं च व्यापारः नाभिहितः

तज्जातिरासेन सुनिर्वृत्तेन्द्रिय इत्येतद्व्याचष्टे । तत्- कुलसङ्गत्यापि निरवरोधः निरस्तप्रातिबन्धः विधु-

एवमध्वन्यवरुन्धानो मृत्युगजभयात्तमसि गिरिकन्दरप्राये ॥ ३३ ॥

क्वचिच्छीतवाताद्यनेकदैविकभौतिकात्मीयानां दुःखानां प्रतिनिवारणेऽकल्पो दुरन्तविषयविषण्ण आस्ते ॥ ३४ ॥

क्वचिन्मिथो व्यवहरन्यत्किञ्चिद्धनमुपयाति वित्तशाठ्येन ॥ ३५ ॥

क्वचित्क्षीणधनः शय्यासनाशनाद्युपभोगविहीनो यावदप्रतिलब्धमनोरथोपगतादानेऽवसितमतिस्ततस्ततोऽवमानादीनि जनादभिलभते ॥ ३६ ॥

एवं वित्तव्यतिषङ्गविवृद्धवैरानुबन्धोऽपि पूर्ववासनया मिथ उद्वहत्यथापवहति ॥ ३७ ॥

एतस्मिन्संसाराध्वनि नानाक्लेशोपसर्गबाधित आपन्नविपन्नो यत्र यस्तमुह वावेतरस्तत्र विसृज्य जातंजातमुपादाय शोचन्मुह्यन्बिभ्यद्विवदन्क्रन्दन्संहृष्यन्गायन्नह्यमानः साधुवर्जितो नैवावर्ततेऽद्यापि यत आरब्ध एष नरलोकसार्थोऽयमध्वनः पारमुपदिशन्ति ॥ ३८ ॥

यदिदं योगानुशासनं न वा एतदवरुन्धते यन्न्यस्तदण्डा मुनय उपशमशीला उपरतात्मानः समवगच्छन्ति ॥ ३९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वैरेण स्वेच्छया विहरन् विस्मृतः कालावधिरायुषोऽवसानं येन स आस्ते ॥ ३१ ॥

द्रुमेषु रंस्यन्नित्येतद्व्याचष्टे। क्वचिद्द्रुमवदिति। व्यवाये मैथुने क्षणः उत्सवो यस्य सः ॥ ३२ ॥

---

भाषाटीका।

कहीं पर शीत पवन आदि अनेक आधिदैविक आधिभौतिक आदि अपनी दशाओं के निवारण में असमर्थ होकर बड़ी भारी चिन्ता से खिन्न होरहता है ॥ २५ ॥

कभी आपस में व्यवहार करने में अथवा और से कौडीमात्रभी धन किसी से हरता है तो धनकी शठता से अथवा और किसी बातसे वैरको प्राप्त होजाता है ॥ २६ ॥

इस मार्गमें ये सब उपद्रव हैं जैसे कि सुख दुःख रागद्वेष मान अभिमान प्रमाद उन्माद शोक मोह लोभ मात्सर्य ईर्षा अपमान क्षुधा प्यास मनके दुःखशरीरके दुःख जन्म बुढाई मरण आदिक ॥ २७ ॥

कहींपर देव की माया स्त्री के भुजारूप लता से लिपटा हुआ विवेक विज्ञान से नष्ट होजाता है जिस स्त्री के विहारगृहके बनाने में इसका हृदय व्याकुल होजाता है फिर उस के आश्रय मे लगे जो पुत्र पुत्री पुत्रवधू इनके भाषण अवलोकन चेष्टाओं से उसका हृदय मोहित होजाता है तब मनके न जीतने से आपको नरक में डालता है ॥ २८ ॥

कभी ईश्वर भगवान् विष्णुका परमाणु से लेकर द्विपरार्ध पर्यन्तरूप काल चक्र ब्रह्मासे लेकर तृणपर्यन्त सबकी आयु को बाल्यादि अवस्थाओं से हरने वाला सर्वदा घूमने वाला सब के देखतें ही हर लेने वाला जो काल तिस के डरसे हृदय के कांपने से कालचक्र को अपने आयुध करने वाले उन्हीं भगवान् ईश्वर यज्ञपुरुष को अनादर करके कंक गृध्रवकवट के तुल्य जो पाखण्डदेवता तिन्होंको जो कि उत्तम मार्गसे परित्यक्त हैं तिनको सङ्केत के ग्रन्थो से मानने लगता है ॥ २९ ॥

जब उन पाखण्डियों को आप धन नहीं दे सकता है और वह फिर इसको भुलाकर कुछ नहीं देते हैं तब ब्राह्मणों के समूह मे वास करता है तब उनका जो आचार यज्ञोपवीतादि श्रौतस्मर्त कर्म का अनुष्ठान भगवान् यज्ञपुरुष का आराधन तिससबको जब अच्छा नहीं मानता है तब शूद्रोंको भजता है जिनका कि स्वयं अशुद्ध होने से वेद कर्म में अधिकार नहीं है केवल स्त्री पुरुष के साथ मैथुन और वानरजाति के तुल्य कुटम्बका पोषणमात्र होता है ॥ ३० ॥

तहांपर भी अपनी इच्छासे विहारकरने में अनिरुद्धबुद्धि होनेसे आपसमें स्त्रीपुत्रादिको के मुखदेखनेमें कुत्सित भोगोंमें मृत्युको भूलजाताहै ॥ ३१ ॥

कभी वृक्ष सरीखे इस लोकके भोगोंमें रमण करता हुआ जैसे बन्दर होवें तैसे स्त्री पुत्रोंपर प्रेम करके मैथुन के कार्य में समयको बिताता है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

क्वचित्प्रमादादित्येतद्व्याचष्टे। एवमध्वनि सुखदुःखाद्यवरुन्धानो गिरिकन्दरप्राये तमसि रोगाद्यापदि पततीति शेषः ॥ ३३ ॥

क्वचिच्छीतवातेत्यादिपूर्वस्मादधिकोक्तिः। रोगाद्यापदि पतितः सन् शीतादिभिः क्लिद्यन्नास्त इत्यर्थः ॥ ३४ ॥

यदपि दिगिभजयिनो यज्विनो ये वै राजर्षयः किन्तु परं मृधे शयीरन्नस्यामेव ममेयमि कृतवैरानुबन्धा यां विसृज्य स्वयमुपसंहृताः ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं सिंहावलोकनन्यायेनोक्तमर्थं यथास्थानमपकृष्य व्याख्याय क्रमस्थमनुवर्तयितुं पूर्वोक्तमेवानुवदति । कचिन्मिथ इति । वित्तशाठ्येन कदाचिद्यत्किञ्चिद्धनमुपयाति ॥ ३५ ॥

कचित्कचित्क्षीणधनस्त्विति व्याचष्टे । कचित्क्षीणधन इति । अप्रतिलब्धं यन्मनोरथेनोपगतं वाञ्छितं तस्यादाने स्वीकारे निश्चितमतिः सन् ॥ ३६ ॥

अन्योऽन्यवित्तव्यतिषङ्गेणेत्येतद्व्याचष्टे । एवं वित्तव्यतिषङ्गेति । अपवहति त्यजति ॥ ३७ ॥

अध्वन्यमुष्मिन्नित्यादि व्याचष्टे । एतस्मिन्निति । आपन्नमापदं प्राप्तः विपन्नो विनष्टो वा यत्र यस्तमितरस्तत्रैव विसृज्य । नह्यमानो बध्यमानः साधुवर्जितः साधुव्यतिरिक्तः ॥ ३८ ॥

अनावृत्तौ हेतुमाह । यदिदमिति ॥ ३९ ॥

मनस्विन इत्यादि व्याचष्टे । यदपीति । ये वै राजर्षयस्तेऽपि नावरुन्धन्ते किन्तु परं केवलं मृधे शयीरन् ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

(१) यदा त्विति । आत्मा वञ्चितो यैस्तैरुपवाञ्छितः सन् ब्रह्मकुलं प्रविष्टस्तेषां ब्राह्मणानां शीलमिति प्रतीकोपादानं तैर्वञ्चित इत्येतद्व्याचष्टे उपनयनादीन्याराधनमेवेत्यन्तेन अरोचयन्नभिमन्यमानः उपैति वानरानित्यस्य व्याख्यानं शूद्रकुलं भजत इति तदुपपादयति । निगमोक्ते आचारेऽपरिशुद्धितः स्वस्य शुद्ध्यभावात् यस्य शूद्रकुलस्य मिथुनीभावः कुटुम्बवर्द्धनं केवलदेहव्यापारश्चेत्येवं केवलग्राम्यसुखमेव नादृष्टं यथा वानरजातेरिति तत्र दृष्टान्तः ॥ ३३ ॥

तज्जातिरासेनेत्येतद्व्याचष्टे । तत्रापीति । शूद्रकुलेऽपि निरवरोधः प्रतिबन्धरहितः स्वैरेण स्वेच्छया युक्तदेशकालप्रतीक्षामन्तरेण क्रीडनातिकृपणोऽत्यन्तं व्याकुला बुद्धिर्यस्य योषित्पुरुषयोः परस्परमुखनिरीक्षणादिरूपेण ग्राम्यकर्मणैव विस्मृतः कालावधिरायुषोऽवसानं यस्य स आस्ते ॥ ३४ ॥

द्रुमेषु रंस्यन्नित्येतद्व्याचष्टे । कचिदिति । वृक्षवत्केवलमैहिकसुखप्रयोजनकेषु गृहेषु द्रुमादिवत्केवलमिहैव युज्यन्ते न परत्रेति भावः । यद्वा । द्रुमवद्द्रुम इव यथा वानरः सुतदारवत्सलो मैथुनमेव क्षण उत्सवो यस्य तथाभूतो भवत्येवमयमपि केवलमैहिकार्थेषु गृहेषु रंस्यन् सुतदारवत्सलो व्यवायक्षणः स्वबन्धने विवशो भवतीत्यर्थः ॥ ३५ ॥

कचित्प्रमादादित्येतद्व्याचष्टे । एवमिति । संसाराध्वनि सुखदुःखाद्यवरुन्धानः अनुभवमानः मृत्युरेव गजस्तस्य भयाद्गिरिकन्दरतुल्ये तमसि रोगाद्यापदि पतन् ततः पुनरप्येवं जीवनहेतुभूतां कर्मरूपां वल्लीमवलम्ब्य ततः आपदः रोगाद्युपद्रवरूपाजरकात्केनापि प्रयासेन विमुक्तः पुनरप्येवमुक्तरीत्या संसाराध्वनि वर्त्तमानो नरलोकसार्थं नरशरीरजीवसमूह... त्येवमुपरि गतोऽपि लोकान्तरेषु विद्यमानो देवादि... संसाराध्वन्यटतीत्यर्थः तथाचोक्तं "ते तं भुक्त्वा स्वर्ग... विशालं क्षीणे पुण्ये मृत्युलोकं विशन्ति" इति ॥ ३६-...

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(१)तैर्वञ्चित इत्येतद्व्याचष्टे । यदा तु तानिति । ... तेषां शीलं यत्तदरोचयन् अपथ्यं मन्वानः अनिगमपरिशु... शुद्धिरहितं यस्य शूद्रकुलस्य मिथुनीभावः कुटुम्बभरणं... दितिशेषः निरवरोधः भार्यारहितः अनिवारणा इति वा ॥ ३...

द्रुमेषु रंस्यन्नित्यस्यार्थं दर्शयति । कचिद्द्रुमवदिति । ... ग्राम्यरतिस्तदर्थमेव क्षणः कालो यस्य स तथा ॥ ३४ ॥

कचित्प्रमादादित्येतद्व्याकरोति । एवमध्वन्यवरुन्धान ... ततः कथञ्चिदिति इदं विवृणोति कर्मवल्लीमिति ॥ ३५ ॥

बिभ्यत् भयमापन्नः मनस्विन इत्येतद्व्याचष्टे । यदपीति ...

(२) बाधोपसर्गैरित्यत्रोक्तानुपसर्गानाह । यस्यामिति ॥ ...

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गिरिकन्दरप्राये तमसि रोगाद्या यदि अपतन् मृत्युः... वल्लीतुल्यप्राचीनकर्मावलम्ब्य स्थितो भवतीति शेषः ॥ ३...

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कचित् प्रमादादित्येतद्व्याचष्टे । एवमध्वनीति । ... तमसि महारोगाद्युपशमार्थं कुकर्मणि अवरुन्धानः ... वरुणाद्धि ॥ ३३ ॥

कचिच्च शीतातपेत्येतद्व्याचष्टे । कचिच्छीतवातेति ॥ ...

कचिन्मिथ इति व्याचष्टे । कचिन्मिथ इति ॥ ३५ ॥

कचित् कचित् क्षीणधन इत्येतद्व्याचष्टे । कचित् क्षीणधन इति । यन्मनोरथेनोपगतं वाञ्छितं धनादि ... स्वीकारे निश्चितमतिः सन् ॥ ३६ ॥

अन्योऽन्यवित्तव्यतिषङ्गेत्येतद्व्याचष्टे । एवमिति । ... पुनरुद्वाहं त्यजति च ॥ ३७ ॥

अध्वन्यमुष्मिन्नित्यादि व्याचष्टे । एतस्मिन्निति । ... प्राप्तः विपन्नो मृतः साधुवर्जित इति । वैष्णवं ... तरतीति भावः यतश्च परमेश्वरात् तमेव परमेश्वरं ... प्रापकं तत्र साधुसङ्ग एव हेतुरित्यर्थः ॥ ३८ ॥

अनावृत्तौ हेतुमाह । यद्विदामिति । ... वन्ति ॥ ३९ ॥

मनस्विन इति एतद्व्याचष्टे । यदपि यद्यपि ...

---

(१) अत्र श्रीधरस्वामिपाठक्रमेण त्रिंशत आरभ्य त्रयस्त्रिंशपर्यन्तपाठस्य व्याख्यानम् अन्ये श्लोकास्तु पूर्वं व्याख्याता एव ।

(१) अत्रापि श्रीवीरराघववद्वैपरीत्यं वर्त्तते

(२) अन्नतया अन्ये श्लोकास्तुपूर्वाध्याये गताः

कर्मवल्लीमवलम्ब्य तत आपदः कथञ्चिन्नरकाद्विमुक्तः पुनरप्येवं संसाराध्वनि वर्तमानो नरलोकसार्थमुपयाति एवमुपरि गतोऽपि ॥ ४१ ॥

॥ तस्येदमुपगायन्ति ॥

आर्षभस्येह राजर्षेर्मनसाऽपि महात्मनः।
नानुवर्त्मार्हति नृपो मक्षिकेव गरुत्मतः ॥ ४२ ॥
यो दुस्त्यजान् दारसुतान् सुहृद्राज्यं हृदिस्पृशः।
जहौ युवैव मलवदुत्तमश्लोकलालसः ॥ ४३ ॥
यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान् प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम्।
नैच्छन्नृपस्तदुचितं महतां मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

...विव्यां शरीरन् कीदृश्यां ममेयमिति कृतो वैरानुबन्धो यस्यां ...स्याम इमां विसृज्य स्वयमेव संहृताः मृताः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कचित्प्रमादादित्येतद्व्याचष्टे। एवमध्वनीति असमर्थः ॥ ३३ ॥ ३४ ॥

यत्किञ्चिद्धनमुपयाति परेभ्य इति शेषः ॥ ३५ ॥

कचित्कचित्क्षीणधन इत्येतद्व्याचष्टे। क्वचित्क्षीणधन इति। प्रतिलब्धमप्राप्तं यन्मनोरथेनोपगतं वाञ्छितं तस्यादाने सम्पा...ने ॥ ३६ ॥

अन्योऽन्यवित्तव्यतिषङ्गेत्येतद्व्याचष्टे। एवं वित्तेति। तथापि ...समुद्वहति गृह्णाति अपवहति अर्पयति ॥ ३७ ॥

अध्वन्यमुष्मिन्नित्यादि व्याचष्टे। एतस्मिन्निति। आपन्नविपन्नः ...पद्ग्रस्तो मृतो वा यस्तामितरः विसृज्य जातं जातं पुत्रादिकमु...दाय नह्यमानः बध्यमानः यतः अद्यापि भगवतः सकाशादारब्धः ...साराध्वा तमध्वनः पारमवधिभूतं संसारहेतुं भगवन्तं साधुव...र्तिनः साधुजनभिन्नः एष नित्यबद्धजीवसमूहरूपः नरलोकसार्थः ...द्यावर्त्तेते नैव प्राप्नोति इत्युपदिशन्ति तत्त्वज्ञाः ॥ ३८ ॥

योगानुशासनं भगवत्प्राप्तिसाधनभूतज्ञानभक्त्याद्युपदेशमपि ...गृह्णन्तीत्याह। यदिति। यत् यस्य अद्यापि भगवतः ॥ ३९ ॥

मनस्विन इत्यादि व्याचष्टे। यदपीति ॥ ४० ॥

---

भाषाटीका।

इस प्रकार से इस प्रवृत्तिमार्ग में दुःखों को भोगता ...आ पर्वत कन्दरा सरी के संसार में पड़कर मृत्युरूपी हाथी ...डरता रहता है ॥ ३३ ॥

कहींपर शीतपवन आदि अनेक दैविक भौतिक अध्यात्मिक दुःखों के निवारण में असमर्थ होने से दुःखित होकर ...रहता है ॥ ३४ ॥

कहींपर आपस में व्यवहार करने में कुछ धन को प्राप्त होता है सोभी धन की वञ्चना करने से ॥ ३५ ॥

कभी धन के क्षय होजाने से शयन आसन भोजन आदि भोगों से हीन होता है तब जबतक मनोरथ नहीं मिलता है तबतक उस के यत्न में बुद्धि रखता है तब तहां तहां मनुष्यों से अपमानादिकों को प्राप्त होता है ॥ ३६ ॥

इस प्रकार धन के अदले बदले में वैर के बढने से भी फिरभी पूर्व की वासना से विवाहादि सम्बन्ध करता है फिर कभी छोड़ताभी है ॥ ३७ ॥

इस संसार मार्गमें नानाप्रकार के क्लेशों विघ्नों से बाधित होने से जो जहां मरे या दुखीहो तिसको छोड़कर पैदा होनेवाले को लेकर शोचता हुआ मोहित होताहुआ डरता हुआ विवाद करता हुआ रोता हुआ हर्षित होता हुआ गाता हुआ बंधाहुआ सत्पुरुष से वर्जित ऐसा यह नरलोक समूह जब से आरम्भ हुआ है तब से अभीतक उधर को नहीं लौटा है कि जिस परमात्मा को संसार का पार कहते हैं ॥ ३८ ॥

जो योग भक्तियोगगम्य जिस को सन्यासी मुनि शान्तस्वभाव निवृत्तमानवाले जाते हैं तिस को नहीं प्राप्त होता है ॥ ३९ ॥

जोभी बड़े दिग्गजों को जीतनेवाले राजर्षि वेभी इसी पृथिवी में मेरी ऐसा वैरकर के स्वयं काल के मारे संग्राम में सोजाते हैं पृथिवी को छोड़जातेहैं परन्तु उसपद को नहींजा सकते हैं ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

प्रसज्जतीत्यादिगिरिकन्दर इत्यन्तमपकृष्य व्याख्यातं ग्रन्थमतिक्रम्य वल्लीं गृहीत्वेत्यादि ग्रन्थं व्याचष्टे। कर्मवल्लीमिति। एवमुपरि स्वर्गं गतोऽपि नरलोकसार्थमेवोपयाति ॥ ४१ ॥

तदेवं भरतोक्तिं व्याख्याय तच्चरितसंग्रहश्लोकानाह। तस्येदं कर्म श्लोकैरुपगायन्ति आर्षभस्य ऋषभपुत्रस्य अन्यो नृपोऽनुवर्त्म नार्हति वर्त्मापि गन्तुं न शक्नोति ॥ ४२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र हेतुमाह । य इति । सुहृद्राज्ययोर्द्वन्द्वैक्यम् । यो दुस्त्यजान्दारादीन्विष्ठामिव जहौ तस्यार्षभस्येति सम्बन्धः दुस्त्यजत्वे हेतुः हृदि स्पृशो मनोज्ञान् त्यागे हेतुः उत्तमश्लोके लालसा लम्पटत्वं यस्य ॥ ४३ ॥

तस्यैवं विषयत्यागो न चित्रमित्याह । य एवं भूतोऽसौ नृपः स क्षित्यादीन्नैच्छदिति यत्तदुचितम् सदयावलोकां भरतस्य दया यथा भवत्येवमवलोको यस्या इति परिजनावलोकः श्रियामुपचर्य्यते यतो मधुद्विषः सेवायामनुरक्तं मनो येषां तेषां महतामभवो मोक्षोऽपि फल्गुस्तुच्छ एव ॥ ४४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं पारोक्ष्यरूपमवधूतवचो व्याख्याय तन्माहात्म्यप्रतिपादकान् श्लोकानवतारयति । तस्येदं माहात्म्यमार्षभस्य ऋषभपुत्रस्य महात्मनो महानुभावस्य राजर्षेर्वर्त्म मार्गं मनसाप्यनु अनुसर्तुमन्यो नृपो नार्हति यथा गरुडस्य गतिं मक्षिकेत्यर्थः ॥ ४२ ॥

तत्रैव हेतुमाह । स आर्षभो राजर्षिः स्वाधीनः स्ववशः मनोज्ञानत एव दुस्त्यजान् दुःखेनापि त्यक्तुमशक्यान् पुत्रान् सुहृद्राज्ययोर्द्वन्द्वैक्यं युवैव सन्मलवद्विष्ठामिव जहावत्याक्षीत् त्यागे हेतुमाह । उत्तमश्लोके भगवति लालसः लम्पटः आसक्तचित्त इति यावत् ॥ ४३ ॥

न केवलमत्याक्षीदेवापि तु नैच्छदित्याह । य इति । यो नृप आर्षभः दुस्त्यजान् क्षित्यादीन् क्षितिर्भारतं वर्षं सुताः पुत्रा अर्थं धनं दाराः स्त्रियः इमान् सुरवरैरिन्द्रादिभिश्च प्रार्थ्यां श्रियं सम्पदं कथम्भूतां सदयावलोकां सदयया युक्तः अवलोको राज्ञो यस्यां तां राज्ञो दयया युक्तोऽवलोको मयि प्रसरत्विति प्रार्थयमानामिति भावः नैच्छत् क्षित्यादिषु रागमपि नाकरोदित्यर्थः नैतच्चित्रं किन्तु युक्तं चैतदित्याह । तदुचितमिति । कुतः यतो मधुद्विषः सेवायामनुरक्तमनसां महतामभवो मोक्षोऽपि फल्गुरल्पः भगवत्सेवापेक्षया मोक्षोऽप्यल्प इत्यर्थः॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वर्त्मो गृहीत्वेत्यादि अवशिष्टं ग्रन्थं व्याचष्टे । कर्मवल्लीमवलम्ब्येति । एवमुपरि गतोऽपि स्वर्गी जनोऽपि संसाराध्वनि वर्त्तमानः ॥ ४१ ॥

भरतोपाख्यानमुपसंहृत्य तन्महिमानि प्राचां सम्मतिमाह । तस्य इदं कर्म आर्षभस्य ऋषभपुत्रस्य अनुवर्त्म वर्त्मानुगन्तुं नार्हति योग्यताभावादिति भावः । मनसा मनोरथेनापि किमुत कर्मणा ॥ ४२ ॥

तस्य प्रेमानुभावमाह । य इत्यस्योत्तरवाक्यगतत्वात् तत्पदापेक्षा नीक्षितं यद्यभिरामताधिक इतिवद्दुस्त्यजत्वे हेतुः । हृदि स्पृशः मनोहरान् सुहृद्राज्ययोर्द्वन्द्वैक्यं युवैवेति वार्द्धक्येत्यागिभ्यः प्रियव्रतादिभ्योऽप्युत्कर्षः । मलवदिति । यथा मलस्य एव निर्वृतिः त्यागाभावे कष्टं त्यक्तस्य तस्य स्मरणेऽपि [illegible] दूरगमस्तथैवेति त्यागेऽप्यन्येभ्यो वैलक्षण्यमुत्कर्षः तत्र हेतु [illegible] सर्वोत्कृष्टः रूपगुणलीलामाधुर्यैश्वर्यं यस्य सम [illegible] यशो यस्य तस्मिन् लालसः दर्शनाद्यौत्सुक्यं यस्य [illegible] भगवत्सौन्दर्याघ्राणविष्टसर्वेन्द्रियाणां विरक्तानां [illegible] मलतुल्या भवन्तीति भरतस्योत्तमभक्तत्वं ध्वनितम् [illegible]

उक्तमेवार्थमुल्लासेन पुनरपि स्पष्टीकृत्याह । य इति । [illegible] वलोकां भरतस्य दया यथा भवत्येवमवलोको यस्या [illegible] परिजनावलोकः श्रियामुपचर्य्यत इति श्रीस्वामिचरणाः । [illegible] भरतो वैराग्यार्थं शारीरकष्टं मा स्वीकरोतु मम [illegible] गृह एव तिष्ठत्विति सदयोऽवलोको यस्यास्तामभवो [illegible] फल्गुस्तुच्छस्तत्रापि विरज्यन्तीत्यर्थः ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वर्त्मो गृहीत्वेत्यादिग्रन्थं व्याचष्टे । कर्मवल्लीमिति । [illegible] स्वर्गं गतोऽपि नरलोकसार्थमेवोपयाति ॥ ४१ ॥

इत्थं भरतोक्तिं व्याख्याय तच्चरितसङ्ग्रहश्लोकान् [illegible] द्धान् दर्शयन् तदुपाख्यानमुपसंहरति । तस्येति । तस्य [illegible] स्येदं कर्म श्लोकैरुपगायन्ति आर्षभस्य ऋषभपुत्रस्य [illegible] नार्हति अनुष्ठितं पारमहंस्यं मार्गमनुष्ठातुं न शक्नोति । [illegible]

यो दुस्त्यजान् हृदिस्पृशः मनोज्ञान् मलवज्जौ [illegible] तस्येति सम्बन्धः ॥ ४३ ॥

सदये दयानिधौ भरते अवलोको यस्यास्तां च [illegible] नैच्छत्तदुचितमेव यस्मान्मधुद्विषः सेवायां मनो येषां [illegible] मोक्षोऽपि फल्गुरल्पः ॥ ४४ ॥

भाषा टीका ।

दुःख में या नरक में पड़ाहुआ प्राचीन कर्म [illegible] को आश्रय करके रहता है किसीप्रकार से उस [illegible] से या नरक में से छूटे तौभी फिरभी इसी [illegible] में प्रवृत्त होता है इसी प्रकार से स्वर्ग में [illegible] होता है ॥ ४१ ॥

उन भरतजी के इस माहात्म्य को श्रेष्ठलोग [illegible] हैं ऋषभजी के पुत्र राजर्षि महात्मा भरतजी [illegible] मनसेभी कोई राजा प्राप्त नहीं होसकता है जैसे [illegible] आगे मक्खी होवे ॥ ४२ ॥

जिनने युवाही अवस्था में दुस्त्यज जो स्त्री पुत्र [illegible] के अत्यन्त प्रिय सुहृद राज्य इन सबोंको भगवान् [illegible] मल मूत्र के तुल्य त्यागदिया ॥ ४३ ॥

जिनने अति दुस्त्यज पृथिवी पुत्र स्वजन [illegible] देवतोंकोभी प्रार्थना करने योग्य दया सहित [illegible] राज्यलक्ष्मी उस को नहीं चाहा सो ठाट उनको [illegible]

यज्ञाय धर्मपतये विधिनैपुणाय योगाय सांख्यशिरसे प्रकृतीश्वराय।
नारायणाय हरये नम इत्युदारं हास्यन् मृगत्वमपि यः समुदाजहार ॥ ४५ ॥

य इदं भागवतसभाजितावदातगुणकर्मणो राजर्षेर्भरतस्यानुचरितं स्वस्त्ययनमायुष्यं धन्यं यशस्यं स्वर्ग्यापवर्ग्यं वाऽनुशृणोत्याख्यास्यत्यभिनन्दति च सर्वा एवाशिष आत्मन आशास्ते न काञ्चन परत इति ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां-
संहितायां वैयासिक्यां भरतोपाख्यानंनाम
चतुर्दशोऽध्यायः ॥ १४ ॥

भाषाटीका।

क्योंकि भगवान् की सेवा में निरत महापुरुषों को तो मोक्ष भी तुच्छ होता है तो फिर और क्या है ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य सेवानुरागमेवाह । यज्ञायेति । यज्ञरूपाय धर्मपतये यज्ञादिफलदात्रे विधौ नैपुण्यं यस्य तस्मै धर्मानुष्ठात्रे योगोऽष्टाङ्गस्तस्मै सांख्यं ज्ञानं तच्छिरः प्रधानं फलं यस्य तस्मै योगाय प्रकृतीश्वराय मायानियन्त्रे अत एव नारं जीवसमूहः सोऽयनमाश्रयो यस्य सर्वजीवनियन्त्रे । एवं कर्मज्ञानदेवताकाण्डैः प्रतिपादिताय हरये नम इत्युदारमुच्चैर्यः सम्यगुच्चारितवान् मृगत्वं मृगदेहमपि हास्यन् त्यक्ष्यन् य एवम्भूतस्तस्य तदुचितमिति वा तस्यानुवर्त्म नार्हतीति वा सम्बन्धः ॥ ४५ ॥

भरतचरितश्रवणादिफलमाह । य इदमिति । भागवतैः सभाजिता अवदाताः शुद्धाः गुणाः कर्माणि च यस्य तस्य भरतस्यानुचरितं योऽनुशृणोति स आत्मन एव सकाशात् सर्वा आशिष आशास्ते स्वत एव प्राप्नोति न तु काश्चिदपि परस्मादपेक्षत इत्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीधर-
स्वामिकृतभावार्थदीपिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तस्य मधुद्विट्सेवानुरागातिशयमेवाह । यज्ञायेति। यज्ञानां भोक्त्रे प्रभवे च धर्मपतयेऽवतारैर्वर्णाश्रमधर्माणां गोप्त्रे विधिनैपुणाय धर्मानुवर्त्तिनां रक्षाविधौ नैपुण्ययुक्ताय साङ्ख्यमात्मानात्मविवेकात्मकोऽध्यात्मयोगः स एव शिरः शिरोवत्प्रधानाङ्गं यस्य तस्मै योगाय। विवेकादिसाधनसप्तकानुगृहीतभक्तियोगगम्याय योगशब्दस्तद्गम्ये औपचारिकः प्रकृतीश्वराय मायानियन्त्रे नारं जीवसमूहः अयनमाश्रयो यस्य तस्मै अनेन चिदचिच्छरीरकत्वमुक्तं हरये आश्रितबन्धहराय नम इत्युदारं भृशमुदाजहार उदाहृतवान् किं कर्त्तुमिच्छन् मृगत्वं हरिणशरीरमपि हास्यन् हातुमिच्छन् अत्र मृगत्वं हास्यन् समुदाजहारेति हासोदाहरणयोर्यौगपद्यं प्रतीयते तथापि मृगजन्मनो वैकल्यदशायां समुदाहरणमत्रं विवक्षितमन्यथा चरमदशायामुक्तनामग्रहणे तद्देहावसाने मुक्तेरस्मिन् प्रबन्धे बहुषु स्थलेषूक्तत्वेन पूर्वापरग्रन्थविरोधापत्तेः उदाहरणं चात्राव्यक्तोच्चारणं विवक्षितं मृगजन्मनस्तस्य व्यक्तोच्चारणासम्भवादन्यथा साङ्गभक्तियोगोपसंहारापत्त्या जन्मान्तरविलम्बायोगापत्तेः ॥ ४५ ॥

एतद्भरतचरितश्रवणादिफलमाह। य इदमिति। भागवतैः सभाजिताः संस्तुता अवदाताः शुद्धा गुणा अक्रोधादयः कर्माणि भूतहिताचरणादिरूपाणि च यस्य तस्य राजर्षेर्भरतस्यानुचरितं यशस्यं स्वस्त्ययनं मङ्गलावहमायुस्करं धन्यं धनप्रापकं स्वर्ग्यं स्वर्गसाधनमापवर्ग्यं मुक्तिसाधनं च योऽनुशृणोत्याख्यास्यति कथयति चाभिनन्दति अनुमोदते च स आत्मनः स्वतः एव सर्वा ह्याशिषः समीहितान्याशास्ते प्राप्नोति न तु काञ्चिदप्याशिषं परस्मादपेक्षते इत्यर्थः चरित्रस्य स्वस्त्ययनादिकं च न स्वरूपेणापि तु श्रवणादिविषयत्वेनेति ख्यापनाय शृणोत्याख्यास्यतीत्युक्तं न केवलं स्वस्त्ययनादिकमेवास्य फलमपि त्वनुक्तमन्यत्सर्वमपीत्यभिप्रायेणोक्तं सर्वा ह्येवाशिष आत्मन आशास्ते इत्यादि ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

यज्ञायेति । धर्मरूपाय तत्पालकाय तत्प्रवर्त्तकाय ज्ञानसाधनरूपाय ज्ञानरूपाय मायानियन्त्रे सर्वजगदाश्रयाय ततोऽपि पराय हरये मनोहराय दास्येनात्मानं समर्पयामीत्यर्थः ॥४६॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यज्ञायेति त्रिभिः पादैः क्रमेण कर्मज्ञानभक्तिमार्गाणां यथोत्तरमुत्कर्षो व्यञ्जितः । विधेर्यज्ञविधेर्नैपुण्यं यस्मात्तस्मै हास्यन् त्यक्ष्यन् तेन मरणकाले न उदाजहार तथासति जहदित्युच्येत भगवतैव स्वभक्त्युद्रेकार्थं पुनर्जनयिष्यमाणत्वादिति भावः ॥ ४५ ॥

भागवतैः श्रीभागवतेऽस्मिन् शास्त्रे वा सभाजिताः स्तुता अवदाताः शुद्धा गुणाः कर्माणि यस्य ।आत्मन एवेति सर्ववाञ्छितानि तस्यानायासेनैव स्वतः प्राप्तानि भवन्तीत्यर्थः ॥ ४६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्दशः पञ्चमस्य सङ्गतः सङ्गतः सताम् ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य भगवत्सेवानुरागं स्फुटयति । यज्ञाय"यज्ञो वै विष्णुः"-इति श्रुतेः धर्मपतये धर्मगोप्त्रे विधेर्ब्रह्मणः नैपुण्यं यस्य तस्मै युज्यते भक्तैः स्वानुकूल्ये प्रवर्त्यते इति योगस्तस्मै भक्तवश्याय सम्यक् ख्यायन्ते प्रकथ्यन्ते तत्त्वान्यनया इति संख्या अध्यात्मविद्या तयावधारणीयानि चिदचिद्ब्रह्माख्यानि तत्त्वानि सांख्यानि तेषु शिरःप्रधानं ब्रह्म तस्मै सांख्यशिरसे प्रकृत्योः परापरयोः चेतनाचेतनरूपयोरीश्वराय नारस्य जीवसमूहस्यायनाय स्थितिप्रवृत्तिप्रदाय हरये भक्तक्लेशहारिणे नमः इत्यु[illegible] परममङ्गलं वेदवेद्यत्वयज्ञमूर्त्तित्वधर्मगोप्तृत्वब्रह्मादिनैपुण्य[illegible] स्वभक्तवश्यत्वसर्वतत्त्वप्रधानत्वादि भगवद्गुणविषयकथासं[illegible] मृगभावं हास्यन् त्यक्ष्यन् यः समुदाजहार सम्यगुणा[illegible] तस्यानुवर्त्म नार्हतीति सम्बन्धः ॥ ४५ ॥

भरतचरितश्रवणादिफलमाह । य इति । भागवतैः [illegible] जिताः संस्तुता अवदाताः शुद्धाः गुणाः कर्माणि च [illegible] तस्य राजर्षेर्भरतस्य अनुचरितं योऽनुशृणोति आख्या[illegible] अभिनन्दति च स आत्मनः सकाशात् सर्वा आशिषः पु[illegible] र्थान् आशास्ते प्राप्नोति ननु काञ्चन काञ्चिदपि पर[illegible] क्षते ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्दशाध्यायार्थप्रकाशः ॥ १४ ॥

---

भाषाटीका ।

जिन भरतजीनें यज्ञभगवान् धर्मपति विधिमें नि[illegible] योगलभ्य सांख्य प्रतिपाद्य प्रकृतिके ईश्वर नाराय[illegible] इन के अर्थ नमस्कार है इसप्रकार से कहकर मृग[illegible] का त्यागकिया है उनके चरित्रको कौन राजा पा [illegible] है ॥ ४५ ॥

भागवतजनों से पूजनीय निर्मल गुण कर्म वाले रा[illegible] भरतजी के कल्याण आयु धन यश स्वर्ग मोक्ष देने [illegible] चरित्र को जो सुने कहे प्रशंसा करे उसको आपही [illegible] संपत्ति मिलती है दूसरे से नहीं चाहना पडती है ॥

इति श्रीभागवत पञ्चमस्कन्ध चतुर्दश अध्याय
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे चतुर्दशोऽध्यायः समाप्तः ॥ १४ ॥

## ॥ पञ्चदशोऽध्यायः ॥

:o:

### ॥ श्रीशुक उवाच ॥

भरतस्यात्मजः सुमतिर्नामाभिहितो यमुह वाव केचित्पाखण्डिन ऋषभपदवीमनुवर्तमानं चानार्या अवेदसमाम्नातां देवतां स्वमनीषया पापीयस्या कलौ कल्पयिष्यन्ति ॥ १ ॥

तस्माद्वृद्धसेनायां देवताजिन्नाम पुत्रोऽभवत् ॥ २ ॥

अथासुर्यां तत्तनयो देवद्युम्नस्ततो धेनुमत्यां सुतः परमेष्ठी तस्य सुवर्चलायां प्रतीह उपजातः॥३॥

य आत्मविद्यामाख्याय स्वयं संशुद्धो महापुरुषमनुसस्मार ॥ ४ ॥

प्रतीहात्सुवर्चलायां प्रतिहर्त्रादयस्त्रय आसन्निज्याकोविदाः सूनवः प्रतिहर्तुः स्तुत्यामजभूमानाव-जनिषाताम् ॥ ५ ॥

भूम्न ऋषिकुल्यायामुद्गीथस्ततः प्रस्तावो देवकुल्यायां प्रस्तावान्नियुत्सायां हृदयज आसीद्विभु-र्विभो रत्यां च पृथुषेणस्तस्मान्नक्त आकूत्यां जज्ञे नक्ताद्द्रुतिपुत्रो गयो राजर्षिप्रवर उदारश्रवा अजायत साक्षाद्भगवतो विष्णोर्जगद्रिरक्षिषया गृहीतसत्त्वस्य कलात्मवत्त्वादिलक्षणेन महापुरुषतां प्राप्तः॥ ६॥

स वै स्वधर्मेण प्रजापालनपोषणप्रीणनोपलालनानुशासनलक्षणेनेज्यादिना च भगवति महापुरुषे परावरे ब्रह्मणि सर्वात्मनाऽर्पितपरमार्थलक्षणेन ब्रह्मविच्चरणानुसेवयापादितभगवद्भक्तियोगेन चाभी-क्ष्णशः परिभावितातिशुद्धमतिरुपरतानात्म्य आत्मनि स्वयमुपलभ्यमानब्रह्मात्मानुभवोऽपि निरभिमान एवावनिमजूगुपत् ॥ ७ ॥

तस्येमां गाथां पाण्डवेय ! पुराविद उपगायन्ति ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

एवमष्टभिरध्यायैर्भरतस्योक्तमीहितम्।
ततः पञ्चदशे तस्य कीर्त्यन्ते वंशजा नृपाः ॥ १ ॥

ऋषभपदवीं जीवन्मुक्तमार्गमनुवर्तमानं यं दृष्ट्वेति शेषः। यद्वा सुमतिमवेदसमाम्नातां देवतां कल्पयिष्यन्ति बुद्धोऽयं साक्षा-द्यतीर्ण इति मंस्यन्त इत्यर्थः ॥ १ ॥ २ ॥

तत्तनयो देवताजितः पुत्रः ॥ ३ ॥

आत्मविद्यां वक्तृभ्य आख्याय व्याख्यानेनैव स्वयं संशुद्धो-ऽनुसस्मारापरोक्षतयाऽनुभूतवान् ॥ ४ ॥

प्रतिहर्ता प्रस्तोता उद्गातेति त्रयो यज्ञनिपुणाः सूनव आसन् अजनिषातां जातौ ॥ ५ ॥

हृदयजः पुत्रः जगतो रिरक्षिषया रक्षितुमिच्छया गृहीतं सत्त्वं येन तस्य विष्णोः कलांशः सन् ॥ ६ ॥

महापुरुषत्वमेवाह । स वै इति। धर्मस्तस्य द्विविधः अभि-षिक्तत्वात्प्रजापालनादिरेकः गृहस्थत्वादिज्यादिश्चापरः द्विवि-धोऽपि भगवति सर्वात्मनार्पितः सन् परमार्थलक्षणस्तेन परि-भाविता संस्कृतातिशुद्धा मतिर्यस्य अत एवोपरतमनात्म्यं देहा-द्यहंभावो यस्मिंस्तस्मिन्नात्मनि चित्ते स्वयमेवोपलभ्यमानं ब्रह्म-णयात्मानुभवो यस्य तादृशोऽपि निरभिमान एवावनिमजूगुपत्पा-लयामास ॥ ७ ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं भरतचरित्रमुपवर्ण्य तत्सन्ततिमुपवर्णयति श्रीशुकः। भरतस्य सुमतिर्नामाभिहितः व्यवहृतः यं सुमतिमृषभस्य पदवीं योगचर्यारूपामनुवर्तमानमवलोक्य केचित्पाखण्डिनोऽनार्याः कलौ पापीयस्या स्वमनीषया अवेदसमाम्नातामवेदोक्तां बौद्धदेव-तामिति यावत् कल्पयिष्यन्ति बुद्ध एव साक्षात्सुमतिरूपे-णावतीर्ण इति स्वकुमनीषया पश्यन्तीत्यर्थः ॥ १ ॥

तस्मात्सुमतेः वृद्धसेनायां भार्यायां देवताजिन्नामा पुत्र उत्पन्न आसुर्यां देवताजिद्भार्यायां तत्तनयः देवताजित्पुत्रः देवद्युम्नो नाम्ना भवत्ततो देवद्युम्नात्तद्भार्यायां धेनुमत्यां परमेष्ठीनाम सुतो जातः तस्य परमेष्ठिनस्तद्भार्यायां सुवर्चलायां प्रतीहाख्यः पुत्र उपजातः यः प्रतीहः वक्तृभ्यः आत्मविद्यामाख्याय उपदिश्या-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ध्यानेनैव स्वयं संशुद्धः निर्मलान्तःकरणः परमपुरुषमुपासितवान् अनुस्मृतिरत्र प्रत्यक्षतापन्नमुपासनं विवक्षितं भवति ॥२-४॥

प्रतीहात्सुवर्चलायां जातात्प्रतिहर्त्रादयः प्रतिहर्ता प्रस्तोता उद्गातेति । त्रयोऽपीज्याकोविदा यज्ञनिपुणाः सूनवः पुत्रा आसन् तत्र प्रतिहर्त्तुः स्तुत्यां भार्यायामजभूमानावजौ भूमेति च द्वौ पुत्रावजनिषाताम् उद्भूतां भूम्नोऽजानुजाहर्षिकुल्यायां भार्यायां उद्गीथाख्यः पुत्रः तत उद्गीथाद्देवकुल्यायां भार्यायां प्रस्ताराख्यः पुत्रः प्रस्ताराद्विभ्रकुल्यायां भार्यायां विभुर्नाम हृदयजः पुत्र आसीद्विभो रत्यां भार्यायां पृथुसेनाख्यः पुत्रः तस्मात्पृथुसेनादाकूत्यां भार्यायां नक्तोनाम जज्ञे ततः नक्ताद्द्युतो नाम कृतिपुत्रः कृतौ नक्तस्य भार्यायां पुत्र आसीदित्यर्थः गयं विशिनष्टि । राजर्षीणां मध्ये श्रेष्ठः उदारश्रवा विपुलकीर्त्तिर्जगतो रिरक्षिषया रक्षितुमिच्छया गृहीतसत्त्वस्य उपात्तशुद्धसत्त्वमूर्तेर्भगवतो विष्णोः कला अंशभूतः स्वात्मसवत्त्वं प्रशस्तमनस्कत्वं तत्प्रभृतिना लक्षणेन गुणेन लक्ष्यतेऽनेनेति लक्षणो धर्मः महापुरुषत्वं प्राप्तः ॥ ५ ॥ ६ ॥

महापुरुषत्वमेवाह । स वा इति । स वै गयः प्रजापरिपालनादिरूपेण स्वधर्मेण स्ववर्णधर्मेण तत्र पालनं भयात् पोषणमन्नपानादिना प्रीणनमर्थितप्रदानेन उपलालनं सुतवत् श्लाघनमनुशासनं दुर्मार्गान्निवारणं तथा इज्यादिना पञ्चमहायज्ञादिना स्वाश्रमधर्मेण च इज्याशब्दः पञ्चमहायज्ञपरः आदिशब्दो विवेकविमोकादीनामपि संग्राहकः चशब्द आत्मयाथात्म्यज्ञानयोगसमुच्चायकः इत्यादिकमाश्रमधर्मं विशिनष्टि । भगवति ब्रह्मणि परावरे महापुरुषे सर्वात्मना समर्पितपरमार्थलक्षणेनेति भगवति ब्रह्मणीति भगवद्ब्रह्मशब्दयोरेकविषयत्वमुक्तं भगवत्त्वं परावरत्वे हेतुः परे ब्रह्मादयोऽवरेऽवमा यस्मात्स परावरः तस्मिन् "यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति,, इति तत्क्रतुन्यायेनोपासितुर्महापुरुषत्वापादकं भगवदसाधारणमुपास्यं महापुरुषत्वमुक्तं महापुरुष इति सर्वात्मना सर्वप्रकारेण करणत्रयेणार्पितं समर्पितं परमार्थलक्षणं यत्फलस्वरूपं यस्मिंस्तेन अनभिसंहितफलत्वेनेत्यर्थः भगवत्परमार्थाभिलषितोऽर्थः फलमिति यावत् तल्लक्ष्यते येन सङ्गेनार्पितः परमार्थलक्षणः सङ्गो यस्येति ममेदं फलं न भवतीति तदित्युक्तसङ्गेनेति वार्थः ब्रह्मविद्वरणानुसेवयापादितभगवद्भक्तियोगेनेत्यस्य तत्रायमर्थः अर्पितपरमार्थलक्षणेन ओमित्यात्मानं युञ्जीतेत्युक्तविधात्मसमर्पणरूपशरणागतियोगाङ्गविशिष्टेनेति "तमेव शरणं गच्छ सर्वभावेन भारत ! मामेकं शरणं व्रज" इति भक्त्यङ्गतया शरणागतेः कर्तव्यताभिधानात् ब्रह्मविद्वरणानुसेवयापादितभगवद्भक्तियोगेनेत्यनेन भगवद्भक्तियोगोत्पत्तिः सत्सेवायत्तेत्युक्तं ब्रह्मविद्वरणानुसेवयेत्यनेन "देवमिवाचार्यमुपासीत आचार्यवान् पुरुषो वेद तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इत्यादिश्रुतिविहिताचार्यसम्बन्धोऽप्यभिहितः ब्रह्मविदित्यनेनाचार्यलक्षणयुक्तगुरुसमाश्रयणमस्य सूच्यते स्वधर्मेणेत्यादिना ज्ञानकर्मयोगानुगृहीतेन न्यासयोगाङ्गकेन भक्तियोगेनेत्युक्तं भवति उक्तविधेन भगवद्भक्तियोगेनाभीक्ष्णशः पुनः पुनः परिभाविता विशोधितान एव विशुद्धामतिर्यस्य सः अत एव उपरतमनास्यं देहात्मभ्रमो यस्य स निवृत्तदेहात्मभ्रम इत्यर्थः आत्मेतरशरीरमनात्मा एवम्भूते स्वात्मनि उपलभ्यमान[illegible] तया साक्षात्क्रियमाणं ब्रह्म तदेवात्मा परमात्मा यस्य सः । यद्वा स्वान्तरात्मभूतब्रह्मैव परमात्मा तस्यानुलभ्यते येन तथोक्तः य आत्मनि तिष्ठन्निति प्रयोग[illegible]त्मन्यवस्थितं परमात्मानमुपलभ्यमानमित्यर्थः [illegible] निरभिमान एव देहात्मभ्रमस्वतन्त्रात्मरहित एव [illegible] मजूगुपत् अरक्षत् इत्यर्थः ॥ ७ ॥

गयस्य माहात्म्यप्रतिपादिकां गाथामवतारयति । [illegible] पाण्डवेय ! पुराविदः पूर्वकालिकवृत्तान्ताभिज्ञाः तस्य [illegible] माहात्म्यसूचिकां गाथामुपगायन्ति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

राजसन्ततौ विशिष्टराजज्ञानं भगवन्माहात्म्यज्ञानेन[illegible] स्तज्ज्ञानायावशिष्टवंश्याननुक्रामत्यस्मिन्नध्याये । यमुद्गाते[illegible] वेति चतुर्भिर्निपातैरवैदिकमतस्य वैभाषिकादिचतुर्णां [illegible] अवेदो वेदविरुद्धः आगमस्तत्र प्रतिपादितां पद्मावतीं [illegible] भवतीम् ॥ १ ॥ २ ॥

तस्य देवपादेस्तनयः ॥ ३ ॥ ४ ॥ ५ ॥

हृदयज औरसपुत्रः अभिरक्षया जगद्रक्षाकारणेन [illegible] सत्त्वगुणस्य कलाया अंशस्य आत्मवत्ता मूर्त्तदेहवत्त्वेन [illegible] मानं तस्याभिलक्षणेन विग्रहवत्कलांशेन करचरणा[illegible] न्हेन संवर्णीयमानत्वाद्गयः ॥ ६ ॥

स्वधर्मेणावनिमजूगुपद्धि इत्यन्वयः स्वधर्मेणेत[illegible] प्रजापालनेति । सर्वात्मनेत्यादि च स्वधर्मेणेत्यस्य [illegible] निर्व्याजेन सर्वसमर्पणाख्यचिन्हेन ब्रह्मविदां चरणनि[illegible] वया भक्तिसाधनमेतत् परिभावितं वशीकृतमत एव [illegible] सत्त्वमन्तःकरणं यस्य स तथा उपरतं निवृत्तमनात्म[illegible] धर्मो यस्मिंस्तथा तस्मिन् स्वात्मनि स्वहृदये उप[illegible] अपरोक्षीक्रियमाणो ब्रह्मानुभावो यस्य स तथा [illegible] राज्यपालनं सम्भावितं न भवति तथापीत्यर्थं द्योत[illegible] भिमान इत्यनेनानुपपत्तिं परिहरति ॥ ७ ॥

तस्येमां गाथामित्यनेन गीयमानत्वाद्गयेति शब्दा[illegible] यति पुराविदः पुराणज्ञाः गाथां विषमाक्षरगुरुपादां[illegible] दाहरन्ति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कल्पयिष्यन्ति । अत्रामर्ष एव लृट् नतु भविष्यति । [illegible] भूतत्वात् । तथा च सूत्रं "अनवक्लृप्त्यमर्षयोरकिं[illegible]" इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

सवै इति । उपलभ्यमाने ब्रह्मण्यात्मानुभवोऽप्यस्य गुप्त[illegible] तथापि गोपने हेतुः निरभिमान एव सन्निति ॥ ७-[illegible]

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अथ पञ्चदशे राज्ञो गयस्य महिमोच्यते ।
यः प्रियव्रतवंश्यानामन्त्योऽस्य विरजस्य च ।

गयं नृपः कः प्रतियाति कर्मभिर्यज्वाऽभिमानी बहुविद्धर्मगोप्ता।
समागतश्रीः सदसस्पतिः सतां सत्सेवकोऽन्यो भगवत्कलामृते ॥ ९ ॥
यमभ्यषिञ्चन् परया मुदा सतीः सत्याशिषो दक्षकन्याः सरिद्भिः।
यस्य प्रजानां दुदुहे धराशिषो निराशिषो गुणवत्सस्नुतोधाः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कलौ तस्य चरितं श्रुत्वा तादृशाचारवन्तोऽस्माकं सुमतिरेव देवता यथा बुद्ध इति बौद्धसम्प्रदायाच्छिद्य कल्पयिष्यन्ति ॥ १—३ ॥

अनुसस्मार अनुबभूव प्राप वा ॥ ४ ॥

प्रतिहर्ता प्रस्तोता उद्गातेति त्रयः यज्ञनिपुणाः सूनव आसन् ॥ ५ ॥

हृदयजः पुत्रः कला अंशांशः ॥ ६ ॥

पालनं विपक्षविमर्द्दनादिना पोषणं वृत्तिदानादिना अर्पितः सन् परमार्थलक्षणो भवति यः स्वधर्मस्तेन परि सर्वतो भावेन भाविता भावयुक्तीकृता विशुद्धा मतिर्यस्य सः। उपरतमनात्म्यं देहाद्यहंभावो यस्य सः ॥ ७—८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भरतवंश्या नृपाः कीर्त्त्यन्ते। भरतस्यात्मजेति पञ्चदशेनाध्यायेन। यं सुमतिम् अवेदसमाम्नातां बुद्ध एवायमवतीर्णः इत्येवं बुद्धरूपां देवतां कल्पयिष्यन्ति ॥ १ ॥ २ ॥

ततस्य देवताजितः ॥ ३ ॥

आख्याय व्याख्याय तदधिकारिभ्यः ॥ ४ ॥

प्रतिहर्ता प्रस्तोता उद्गातेति त्रयः अजनिषातां जातौ ॥ ५ ॥

कला अंशः ॥ ६ ॥

प्रजापालनादिलक्षणेनेज्या यज्ञस्तदादिना ब्रह्मविच्चरणानुसेवया च विशेषतया सम्पादितभगवद्भक्तियोगेन कथम्भूतेन परं ब्रह्मादयोऽपि अवरे यस्मात्तस्मिन् सर्वात्मना अर्पितपरमार्थलक्षणेन निवेदितपरमप्रयोजनरूपेण परिभाविताऽतो विशुद्धा मतिर्यस्य सः अतः आत्मनि मनसि स्वयमेवोपलभ्यमाने ब्रह्मणि अंशिनि आत्मनः अंशस्य स्वस्य अनुभवो यस्य स तथाभूतोऽपि निरभिमानः एव अवनीमजूगुपत् ॥ ७ ॥ ८ ॥

---

भाषाटीका।

श्रीशुकदेवजी बोले भरतजी के पुत्र सुमति कहे हैं जिनको कोई पाखण्डी लोग ऋषभजी के मार्ग में चलते जानकर स्वयं आप कुबुद्धि होने से अपनी पापी बुद्धि से कलियुग में वेदों से बाह्य देवता मूर्ति कल्पना करेंगे ॥ १ ॥

उस सुमति से वृद्धसेना भार्या में देवताजित्नाम का पुत्र भया ॥ २ ॥

तदनन्तर देवताजित्की आसुरी नाम भार्या में देवद्युम्न पुत्र भया तिस देवद्युम्न से धेनुमती भार्या में परमेष्ठी पुत्र भया उस परमेष्ठी से सुवर्चला भार्या में प्रतीह नाम का पुत्र भया ॥ ३ ॥

जिस प्रतीह ने बहुतों को आत्मविद्या का उपदेश किया फिर स्वयं शुद्ध होकर महापुरुष का स्मरण करने लगा ॥ ४ ॥

प्रतीह से सुवर्चला में प्रतिहर्त्रादिक तीन पुत्र यज्ञ में बड़े निपुण भये प्रतिहर्ता से स्तुति भार्या में अज भूमा दो पुत्र भये ॥ ५ ॥

भूमासे ऋषिकुल्या में उद्गीथ भया उद्गीथ से देवकुल्या में प्रस्ताव पुत्र भया प्रस्ताव से नियुत्सा में विभु पुत्र भया विभुसे रति में पृथुसेन भया पृथुसेनसे आकूती में नक्तपुत्र भया नक्तसे द्रुति में गय नाम के पुत्र भये वे राजर्षियों में श्रेष्ठ हैं उदारयश वाले हैं जगत्की रक्षा करने के लिये सत्त्वगुण को धारण करने वाले साक्षात् भगवान् के अंशावतार हैं सो आत्म ज्ञानी होकर महापुरुषता को प्राप्त भये ॥ ६ ॥

सो गय महाराज अपने धर्म से प्रजों का पालन पोषण प्रीणन उपलालन अनुशासन रूप धर्म से और यज्ञादि से स्थूल सूक्ष्म रूप महा पुरुष परब्रह्म सर्वान्तर्यामी परमार्थस्वरूप भगवान् मे सब कर्मों को अर्पण करके ब्रह्मज्ञानियों का चरण सेवन करके प्राप्त भया जो भगवद्भक्ति योग तिससे निरन्तर बुद्धिके शुद्ध होने से देहादि वस्तु रहित केवल आत्मा में अपने ब्रह्मानुभवको प्राप्त होकर भी निरभिमान से इस पृथिवी को पालन करते थे ॥ ७ ॥

हे पांडवेय! परीक्षित् जी! उन गय महाराज की इस स्तुति को प्राचीन कथा के जानने वाले गान करते हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

कर्मभिर्गयं कः प्रतियात्यनुकरोति न कोऽपि। अत्र हेतुः। यज्वादिरूपो भगवत्कलां गयभूतेऽन्यः क इत्यनुषङ्गः। अभिमानी सर्वतो मानास्पदं मनस्वीति वा समागता सम्प्राप्ता श्रीर्येन यमिति वा सतां सदसः सभायाः पतिः सतां सेवकः। यद्वा। यज्वादिरूपोऽपि भगवत्कलामृते गयं कोऽन्यः प्रतियातीत्यन्वयः ॥ ९ ॥

सतीः सत्यः सत्या आशिषो यासां ताः दक्षकन्याः श्रद्धामैत्रीदयेत्याद्याः निराशिषोऽपि यस्य प्रजानामाशिषः कामान् धरा दुदुहे तस्य गुणा एव वत्सस्तेन स्नुतमूधो यस्याः पृथिव्याः यज्ञादानां तं गयं कः प्रतियातीति सम्बन्धः ॥ १० ॥

छन्दांस्यकामस्य च यस्य कामान् दुदूहुराजह्रुरथो बलिं नृपाः ।
प्रत्यञ्चिता युधि धर्मेण विप्रा यदाशिषां षष्ठमंशं परेत्य ॥ ११ ॥
यस्याध्वरे भगवानध्वरात्मा मघोनि माद्यत्युरुसोमपीथे ।
श्रद्धाविशुद्धाचलभक्तियोगसमर्पितेज्याफलमाजहार ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

छन्दांसि वेदास्तद्विहितकर्माणि च दुदूहुर्दुदुहुः युधि प्रत्यञ्चिता वार्यैः प्रतिपूजिता नृपा यस्य बलिमाजह्रुरर्पयामासुः । धर्मेण पालनेन दक्षिणादिभिश्च यदा प्रत्यञ्चिता विप्रास्तदा परेत्य लोकान्तरे आशिषां धर्मफलानां षष्ठमंशमाजह्रुः । "पुण्यषड्भागमादत्ते न्यायेन परिपालयन्" इति स्मृतेः ॥ ११ ॥

उरुसोमपीथे बहुसोमपानेऽध्वरे, मघोनि इन्द्रे माद्यति मदं प्राप्नुवति सति श्रद्धया विशुद्धो योऽचलो भक्तियोगस्तेन समर्पितमिज्याफलमाजहार । अर्हणमिव प्रत्यक्षतः स्वीकृतवानित्यर्थः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गाथामेवाह । गयमिति पञ्चभिः । गयं नृपं कः पुमान् कर्मभिः प्रतियाति तत्सजातीयकर्मभिः कोऽपि पुमाननुकर्तुं शक्नोतीत्यर्थः तत्कृतं कर्म पुनरन्यः कर्तुं न प्रभवतीति यावत् तत्र हेतुं वदन्प्रतियानाशक्यधर्मवत्तामाह । यज्वा यावच्छ्रुतिविहितयज्ञानुष्ठाता अभितो मानी सन् मानास्पदः बहुशः वर्णाश्रमधर्माणां गोप्ता समागता सम्प्राप्ता श्रीः सम्पद्येन यस्मिन्निति वा सप्तमी सदसः सभायाः पतिः सतां सेवकश्चान्यो भगवत्कलां गयमृते यं विना यज्वादिगुणाश्रयः कोऽपि नास्तीत्यर्थः । यद्वा । यज्वत्वादिगुणविशिष्टोऽपि भगवत्कलां गयमृते कोऽन्यः प्रतियातीत्यन्वयः अस्मिन् पक्षे भगवत्कलात्वमेव प्रतियानशक्तो धर्मः ॥ ९ ॥

सतीः सत्यः सत्या आशिषो यासां ताः दक्षकन्याः श्रद्धामैत्रीदयाकीर्तिश्रीस्मृतिमेधाधृतितितिक्षाद्याः सरिद्भिः स्वतेजोभिः यमभ्यषिञ्चन् अभिषेकमकुर्वन् यस्य गयस्य निराशिषः निष्कामस्य प्रजानामाशिषः कामान् धरा दुदुहे धरा कथम्भूता तस्य गुणा एव वत्सास्तैः स्नुतमूधो यस्याः सा ॥ १० ॥

छन्दांसि च यस्य कामान्दुदुहुः नृपा युधि युद्धे प्रत्यञ्चिताः वार्यैः प्रतिपूजिता बलिमाजह्रुरर्पयामासुः तथा धर्मेण धर्मपरिपालनेन दक्षिणादिभिश्च प्रत्यञ्चिता विप्राः परेत्य लोकान्तरे आशिषां धर्मफलानां षष्ठमंशमाजह्रुः "पुण्यात्षड्भागमादत्ते राजा न्यायेन पालयन्" इति स्मृतेः ॥ ११ ॥

यस्य गयस्याध्वरे यज्ञे गयकर्तृके यज्ञ इत्यर्थः मघोनीन्द्रे उरुः सोमपीथः यस्य तस्मिन् बहुसोमपानेऽत एव माद्यति मदं प्राप्नुवति सति उरुसोमपीथे इत्यध्वरस्य विशेषणं वा अध्वरात्मा यज्ञशरीरकः स भगवान् श्रद्धया विशुद्धो निष्कपटो योऽचलोऽन्तरायानुपहतो भक्तियोगस्तेन समर्पितमिज्याफलमाजहार भक्तियोगोपपादितं प्रीतिरूपमिज्याफलमर्हणमिव प्र[illegible] स्वीकृतवानित्यर्थः ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गयमित्यादिना अन्यः कः कर्मभिः गयं नृपं प्रतियाति [illegible] निधिर्भवति कीदृशः यज्वेत्यादिगुणकर्मवान् सतां सदृ[illegible] कोऽपि वास्तीति नेत्याह । भगवत्कलामिति । भगवतां [illegible] भाग्यवतां कर्मदेवानां कलामङ्गमेकमन्तरेण तदुक्तम् "[illegible] गयश्चैव कर्मदेवसमौ गुणैः" इति ॥ ॥ ९ ॥

सतीः सत्यः दक्षकन्याः कीर्तिः श्रीर्वाक् स्मृतिर्मे[illegible] क्षमेत्याद्याः स्वयंगुणवत्त्वेन स्नुतमूधो यस्याः सा तथा [illegible] गयस्य राज्ञः सतीनां प्रजानां यथेप्सिताः आशिषो [illegible] इत्यनेन सकलजगद्वशीकरणशक्तिसमुद्रश्रीपुरुषोत्तम[illegible] गय इति सूच्यते ॥ १० ॥

वेदा अपि तदुक्तफलानिच्छत्वेऽपि सर्वाभीष्ट[illegible] त्याह । छन्दांसीति । नृपान्विशिनष्टि । प्रत्याहता [illegible] पराजिता इत्यर्थः विप्रा धर्मे प्रत्याहता धर्माभिमुखीकृताः यस्याशिषो धनलक्षणाः षष्ठमंशमाजह्रुरित्यन्वयः । [illegible] लक्षणाशिषो वा ॥ ११ ॥

उरुसोमपीथे बहुसोमपानेऽध्वरस्य सारमादत्ते [illegible] फलं ददाति चेत्यध्वरात्मा मघोनि देवेन्द्रे माद्यति मदं [illegible] सति श्रद्धया विशुद्धो योऽचलो भक्तियोगस्तेन समर्पि[illegible] फलं यागादिपूजालक्षणकर्मफलमाजहार ददौ ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रतियाति अनुकरोति । अभिमानी सर्वतो मान्यः [illegible] स्वीति वा सतां यत् सदस्तस्य पतिः भगवदंशं विना [illegible] यज्वादिरूपोऽपि गयं प्रतियातीत्यन्वयः ॥ ९ ॥

सतीः सत्यः दक्षकन्याः श्रद्धामैत्रीदयाद्याः सत्या[illegible] मैत्रीदयाद्यास्ते सान्त्विति सत्या आशिषो यासां ताः । [illegible] निष्कामस्यापि यस्य प्रजानामाशिषो धरा दुदुहे । गुण[illegible] तेन स्नुतमूधो यस्याः सा ॥ १० ॥

युधि प्रत्यञ्चिताः वार्यैः प्रतिपूजिता नृपा [illegible] धर्मेण दक्षिणादिभिः प्रत्यञ्चिता विप्रा यदस्त [illegible] न्तरे आशिषां स्वाचरितधर्मफलानां षष्ठमंशमाजह्रुः [illegible] षड्भागमादत्ते न्यायेन परिपालयन्" इति स्मृतेः ॥ [illegible]

यत्प्रीणनाद्बर्हिषि देवतिर्यङ्मनुष्यवीरुत्तृणमाविरिञ्चात् ।
प्रीयेत सद्यः स ह विश्वजीवः प्रीतः स्वयं प्रीतिमगाद्गयस्य ॥ १३ ॥

गयाद्गयन्त्यां चित्ररथः सुगतिरवरोधन इति त्रयः पुत्रा बभूवुश्चित्ररथादूर्णायां सम्राडजनिष्ट ॥ १४ ॥

तत उत्कलायां मरीचिर्मरीचेर्विन्दुमत्यां विन्दुमानुदपद्यत तस्मात् सरघायां मधुनामाऽभवन्मधोः सुमनसि वीरव्रतस्ततो भोजायां मन्थुप्रमन्थू जज्ञाते । मन्थोः सत्यायां भौवनस्ततो दूषणायां त्वष्टाऽजनिष्ट त्वष्टुर्विरोचनायां विरजो विरजस्य शतजित्प्रवरं पुत्रशतं कन्या च विषूच्यां किल जातम् ॥ १५ ॥

तत्रायं श्लोकः ।

प्रैयव्रतं वंशमिमं विरजश्चरमोद्भवः ।
अकरोदत्यलं कीर्त्या विष्णुः सुरगणं यथा ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां संहितायां वैयासिक्यां प्रियव्रतवंशानुकीर्तनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उरु सोमपीथे बहुसोमपानेऽध्वरे मघोनि इन्द्रे माद्यति सति माजहार अर्हणामिव प्रत्यक्षतः स्वीचकार ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवत्कलामृते यज्वादिरूपः कः नृपः गयं प्रतियाति अनुकरोति न कोऽपीत्यर्थः समागता संप्राप्ता श्रीर्यं तथाभूतोऽपि सतां सदसः सभायाः पतिः सतां सेवकोऽपि ॥ ९ ॥

सत्या आशिषो यासां ताः सतीः सत्यः दक्षकन्याः श्रद्धामैत्रीदयाकीर्तिस्मृतिमेधाद्याः सरिद्भिः सह यं मुदा अभ्यषिञ्चन् निराशिषः निष्कामस्यापि यस्य प्रजानामाशिषः कामान् गुणाः गयगुणाः एव वत्सास्तैः स्नुतमूधो यस्याः सा धरा दुदुहे तं कः प्रतियातीति सम्बन्धः ॥ १० ॥

यस्याकामस्यापि छन्दांसि वेदाः कामान् दुदुहुः अर्पयामासुः युधि प्रत्यञ्चिताः धर्मयुद्धेन पूजिताः यस्य बलिमाजह्रुः विप्राः यदा दानमानैः प्रत्यञ्चिताः तदा परेत्य लोकान्तरे आशिषां पुण्यकर्मफलानां षष्ठमंशमाजह्रुः "पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन्" इतिस्मृतेः । यस्य गयस्य उरुसोमपीथे बहुसोमपाने अध्वरे यज्ञे मघोनि इन्द्रे माद्यति मदाविष्टे सति अध्वरस्य आत्मा आश्रयः स्वामी "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति श्रीमुखवचनात् श्रद्धया विशुद्धो निर्मलोऽचलो दृढो यो भक्तियोगस्तेन समर्पितमिज्याफलमाजहार साक्षादाविर्भूय गद्भादरेण गृहीतवान् ॥ ११ ॥ १२ ॥

---

भाषाटीका ।

यज्ञ करनेवाला होवै बडा मानीहोवै शास्त्रज्ञहोवै धर्मरक्षक होवै सब सम्पत्ति को प्राप्त होवै सभापति होवै सत्पुरुषोंका सेवकहोवै तौभी कौन ऐसा राजा है जोकि भगवान् के अंशावतार के विना गय महाराजकी तुल्यता को कर्मोंसे करसकै ॥ ९ ॥

सत्य सम्पत्तिवाली सती दक्षकन्या श्रद्धा मैत्री आदिकों ने परम आनन्द से नदियों के जलों से जिनका अभिषेक किया है जिन गय महाराज के निष्काम होनेपरभी उनके प्रजाओं के मनोरथों को गुणरूपी वछरासे पिहाकर पृथिवी ने पूरण करदिये ॥ १० ॥

जिन राजाके निष्काम होने परभी वेदोंने सब मनोरथ पूरण करदिये और सबराजों ने युद्ध में सन्तुष्ट होकर भेट दे दिया और धर्म से प्रजापालन होनेसे ब्राह्मणादि प्रजोंने परलोक में धर्मका छठमां अंश दिया ॥ ११ ॥

जिनके यज्ञमें बडे सोमके पान करने से इन्द्रके मद होनेपर यज्ञमूर्ति विष्णु भगवान् ने श्रद्धा से विशुद्ध अचल भक्ति भाव से अर्पणकरे हुये यज्ञफल को साक्षात् ग्रहण किया ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्य भगवतः प्रीणनात् देवादीनां छन्देक्यथ । तत्सद्यः प्रीयेत प्रीतिं गच्छेत् स विश्वजीवः सर्वान्तर्यामी स्वयं प्रीतरूप

श्रीधरस्वामिकृतभावार्थदीपिका ।

एव बर्हिषि यज्ञे गयस्य ह स्फुटं प्रीतिमगात्तृप्तोऽस्मीति प्रत्यक्ष प्रीतिमाविष्कृतवानित्यर्थः ॥ १३ ॥ १४ ॥

सुमनसि स्त्रियाम् ॥ १५ ॥

कीर्त्या अतिशयेनालमकरोद्भूषितवान् ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीधर-
स्वामिकृतभावार्थदीपिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव प्रपञ्चयति । बर्हिषि यज्ञे यत्प्रीणनाद्यस्य भगवतः प्रीणनादाचतुर्मुखं देवादि सद्यः प्रीयेत प्रीतं भवेत् देवादीनां ह्यन्वैक्यं कुतः हि यस्मात्स विश्वजीवः विश्वं जीवयतीति विश्वजीवः विश्वस्य प्राणभूतः एवम्भूतो भगवान् स्वयं प्रीतः निरतिशय-प्रीतिविशिष्टः गयस्य प्रीतिमगात्प्राप्तः गयस्य प्रीतिविषयोऽभूदित्यर्थः अदादितिपाठे स्वयं गयविषयकनिरतिशयप्रीतियुक्तो भगवान् तस्यापि स्वविषयां प्रीतिं प्रीत्यात्मिकां बुद्धिमदादित्यर्थः

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
अदान्मे ज्ञानमैश्वर्यं स्वस्मिन् भावं च केशवः ।

इत्यादि वचनजातार्थोऽत्रानुसन्धेयः ॥ १३ ॥

एवं गयस्य महापुरुषतामुपपाद्य प्रस्तुतां सन्ततिमाह । गयादिति । गयाज्जयन्त्यां भार्यायां चित्ररथादयः त्रयः पुत्रा बभूवुस्तेषां मध्ये चित्ररथादूर्जायां भार्यायां सम्राडाख्यःपुत्रोऽजनिष्ट उत्पन्नस्ततः सम्राजः उत्कलायां भार्यायां मरीचिः मरीचेर्बिन्दुमत्यां बिन्दुमान्पुत्र उत्पन्नः तस्माद्बिन्दुमतः सुषेणायां भार्यायां मधुर्नामात्मजोऽभवत् मधोः सुमनसि भार्यायां त्वष्टा नाम पुत्रो जातः ततस्त्वष्टुर्विरोचनायां भार्यायां विरजोऽजायत जातः विरजस्य विरजाद्विषूच्यां भार्यायां शतजित्प्रवरो मुख्यो यस्य तत्पुत्राणां शतं जातं कन्या च जाता किलेति प्रसिद्धौ ॥ १४-१५ ॥

प्रियव्रतसन्तानमुपसंहरति । तत्रेति । तत्र प्रियव्रतसन्तानविषयेऽयं श्लोकः पठ्यते इति शेषः चरमोद्भवः चरमस्य पुत्रशतस्य शतजिदादेः उद्भवः उद्भवस्यस्मादित्युद्भवः जनको विरजः इममुक्तं प्रैयव्रतं वंशं कीर्त्याऽलमकरोदलङ्कृतवान् यथा विष्णुरुपेन्द्रः सुरगणमिन्द्रादिदेवतावर्गमिति ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यस्य हरेः प्रीणनाज्जगत्प्रीयेत प्रीतं स्यात् स्वं[...] प्रीतः ॥ १३ ॥ १४ ॥

शतजिन्नामपुत्रः प्रवरो ज्येष्ठो यस्मात्तच्छतजित्प्रवरा[...] अत्यलमतीवालमकरोत् ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विश्वजीवः सर्वजीवनहेतुः । स्वयं प्रीतः सुखरूपोऽपि[...]

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
पञ्चदशोध्यायः ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यस्य भगवतः प्रीणनात् देवादिकं प्रीयेत स[...] सहित एव स्वयं प्रीतिरूपः सन् तृप्तोऽस्मीति प्रीतिं[...] कार ॥ १३—१६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमेऽयं पञ्चदशः सङ्गतः सङ्गतः सताम् ॥[...]

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्य भगवतः प्रीणनात् प्रसन्नतोत्पादनात् आ[...] विरञ्चिमभिव्याप्य देवादि सद्यः प्रीयेत प्रसन्नं भवे[...] जीवः सर्वान्तर्यामी स्वयं प्रीतः स्वभावतः प्रीतिरूप[...] यज्ञे गयस्य ह स्फुटं प्रीतिमगात् प्राप्तः गयं प्रति प्र[...]त्यर्थः ॥ १३ ॥ १४ ॥

सुमनसि भार्यायाम् ॥ १५ ॥

विरजः प्रैयव्रतं वंशं कीर्त्या अतिशयेनालमकरो[...] विष्णुर्वामनः ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चदशोऽध्यायः ॥ १५ ॥

---

भाषा टीका ।

जिन विष्णु भगवान् के तृप्त होने से यज्ञमें ब्र[...] देवतिर्यङ्‌ मनुष्य लता तृण पर्यन्त शीघ्र तृप्त हो[...] विश्वके पालन करने वाले भगवान् गय महाराज [...] प्रसन्न होगये ॥ १३ ॥

भाषाटीका ।

गय से गयन्ती में चित्ररथ सुगति अवरोधन तीन पुत्र भये चित्ररथ से ऊर्णा में सम्राट् पुत्र पैदा भया ॥ १४ ॥

सम्राट् से उत्कला में मरीचि पुत्र भया मरीचि से बिन्दुमती में बिन्दुमान् उत्पन्नभया बिन्दुमान् से सरघा में मधुनामक भया मधुसे सुमना में वीरव्रत भया वीरव्रत से भोजा में मन्थु प्रमंथु दोभये मन्थु से सत्यामे भौवन भया भौवनसे दूषणा मे त्वष्टा भया त्वष्टासे विरोचना मे विरज भया विरजके विषूची में सौ पुत्र भये तिनमे बड़ा शतजित् भया ॥ १५ ॥

तिस विषय में यह श्लोकहै वंशके अन्त में पैदा होने वाले विरजने प्रियव्रतके वंशको कीर्ति से ऐसा शोभित किया जैसे वामन भगवान् विराजमान होकर देवगणों को शोभित करते थे ॥ १६ ॥

इति श्रीमद्भागवत पञ्चमस्कन्ध पञ्चदशाध्यायका भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पञ्चदशोऽध्यायः समाप्तः ॥ १५ ॥



## ॥ षोडशोऽध्यायः ॥

---:०:---

### राजोवाच ।

उक्तस्त्वया भूमण्डलायामविशेषो यावदादित्यस्तपति यत्र चासौ ज्योतिषां गणैश्चन्द्रमा वा सह दृश्यते ॥ १ ॥

तत्रापि प्रियव्रतरथचरणपरिखातैः सप्तभिः सप्त सिन्धव उपक्लृप्ता यत एतस्याः सप्तद्वीपविशेषविकल्पस्त्वया भगवन् ! खलु सूचित एतदेवाखिलमहं मानतो लक्षणतश्च सर्वं विजिज्ञासामि ॥ २ ॥

भगवतो गुणमये स्थूलरूप आवेशितं मनो ह्यगुणेऽपि सूक्ष्मतम आत्मज्योतिषि परे ब्रह्मणि भगवति वासुदेवाख्ये क्षममावेशितुं तदु हैतद्गुरोऽर्हस्यनुवर्णयितुमिति ॥ ३ ॥

### ऋषिरुवाच ।

न वै महाराज ! भगवतो मायागुणविभूतेः काष्ठां मनसा वचसा वाधिगन्तुमलं विबुधायुषापि पुरुषस्तस्मात्प्राधान्येनैव भूगोलकविशेषं नामरूपमानलक्षणतो व्याख्यास्यामः ॥ ४ ॥

यो वाऽयं द्वीपः कुवलयकमलकोशाभ्यन्तरकोशो नियुतयोजनविशालः समवर्तुलो यथा पुष्करपत्रम् ॥ ५ ॥

यस्मिन्नव वर्षाणि नवयोजनसहस्रायामान्यष्टभिर्मर्यादागिरिभिः सुविभक्तानि भवन्ति ॥ ६ ॥

एषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सर्वतः सौवर्णः कुलगिरिराजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्द्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोडशसहस्रं तावतान्तर्भूम्यां प्रविष्टः ॥ ७ ॥

उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसहस्रपृथव एकैकशः पूर्वस्मात्पूर्वस्मादुत्तर उत्तरो दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पूर्वोक्तद्वीपसिन्ध्वादिमानचिह्नस्वरूपतः ।
स्पष्टं प्रवक्तुमारब्धा पञ्चाध्यायी ततः परम् ॥ १ ॥
षोडशेऽस्मिंस्तथा चोर्ध्वं परितः सन्निवेशतः ।
मेरोः स्थितिर्मही कञ्जकर्णिका चोपवर्ण्यते ॥ २ ॥
प्रियव्रतचरित्रोक्तायुक्ता द्वीपादिकल्पना ।
तद्विशेषविजिज्ञासुः कथान्ते परिपृच्छति ॥ ३ ॥

उक्त इति । किं पर्यन्तमुक्तस्तदाह । यावदादित्यस्तपति यत्र चासौ शुक्लकृष्णपक्षयोर्नक्षत्रगणैः सह चन्द्रमा वा दृश्यते तावत् ॥ १ ॥

यतो येभ्यः सिन्धुभ्यः एतस्या भुवः सूचितः संक्षेपतो दर्शितः ॥ २ ॥

जिज्ञासायाः फलमाह । भगवत इति ॥ ३ ॥

या मायागुणविभूतिस्तस्याः काष्ठामन्तं रूपं संनिवेशः तदु चिह्नम् ॥ ४ ॥

कुवलयं भूमण्डलं तदेव कमलं तस्य कोशाः सप्तद्वीपानि तेष्वभ्यन्तरकोशः प्रथमो जम्बूद्वीपो नियुतयोजनविशालो लक्ष योजनविस्तीर्णः ॥ ५ ॥

नवयोजनसहस्रमायामो येषां आयामोऽत्र विस्तारः एवं भद्राश्वकेतुमालव्यतिरेकेण द्रष्टव्यम् । तयोश्चतुस्त्रिंशत्सहस्रायामत्वात् केचित्तु नीलनिषधयोः संलग्नाग्रयोः समुद्रपर्यन्तमङ्गीकृत्य तयोरपि सङ्कुचितत्वेन नवसहस्रायामत्वं सम्पाद्य संनिवेशश्च वायुनोक्तः ।

धनुर्वत्संस्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम् ॥

...॥ ६ ॥

...नाभ्यां मध्ये द्वीपस्यायामो लक्षयोजनप्रमाणं तावान् समु-
...उच्छ्रायो यस्य मूले षोडशयोजनसहस्रं विततः तावता
...योजनसहस्रमानेन चतुरशीतियोजनसहस्रमानेन च बहि-
...एवं लक्षयोजनोन्नाहः ॥ ७ ॥

उत्तरोत्तरेणेलावृतमिलावृतस्योत्तरोत्तरतः क्रमेण नीलादय-
...मर्यादागिरयः प्रागायताः पूर्वतो दीर्घाः क्षारोद एवाव-
...येषां द्विसहस्रयोजनविस्तीर्णाः दशांशादीषदधिकं योंऽशस्तेन
...एव ह्रसन्ति न तूच्चत्वे पृथुत्वे वा यथोक्तं विष्णुपुराणे
...प्रमाणौ द्वौ मध्ये दशहीनास्तथा पर" इति एतच्च स्थूल-
...तयोरपि यथावन्मध्यमत्वाभावेन लक्षप्रमाणत्वा-
...भावात् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं श्रुतप्रियव्रतसंतानतच्चरित्रो राजा प्रियव्रतचरित्रे संग्रहे-
णाभिहितायां द्वीपादिकल्पनायां विशेषं कथान्ते उक्तानुवादपूर्वकं
पृच्छति । उक्त इति । भूमण्डलस्यायामविशेषः दैर्घ्यविशेषः विशा-
लेति यावत् उक्तः किंपर्यन्त उक्तस्तदाह । यावदादित्यस्तपति
यत्र चासौ शुक्लकृष्णपक्षयोर्नक्षत्रगणैः सह चन्द्रमा वा दृश्यते
...पर्यन्तमादित्यस्तपति चन्द्रमा वा दृश्यते तत्राह । यत्र भूम-
ण्डलविस्तारे एतस्या भुवः सप्तद्वीपानां जम्ब्वादीनां ये विशेषाः
...मानलक्षणादयस्तेषां विकल्पः भेदो भगवन् ! त्वया सूचितः
संग्रहेणोक्तः एतदेव भूमण्डलमखिलं मानतो लक्षणतश्चकारा-
...श्चाहं सर्वं विस्तरतो विजिज्ञासामि ज्ञातुमिच्छामि किं
...जिज्ञासयेत्यत्राह । भगवत इति । गुणमये सत्त्वादिगुणपरिणाम-
...भगवतः स्थूलरूपे आवेशितं मनः हि यस्मादगुणे सत्त्वा-
...गुणरहितेऽप्राकृत इति यावत् सूक्ष्मतमेऽङ्गुष्ठप्रमिते शुद्धसत्त्व-
...रूपे तथात्मज्योतिषि स्वयं प्रकाशे परमात्मस्वरूपे
...भगवद्वासुदेवादिशब्दवाच्ये आवेशितुमासक्तं क्षममलम्
...अतो जिज्ञासामि ततो मम जिज्ञासुत्वाद्ध गुरो ! एतद्भूमण्डल
...लक्षणादिभिरनुवर्णितुमर्हसि ॥ १—३ ॥

इत्यापृष्टो बादरायणिस्तावद्भगवद्विभूतेरनन्तत्वात्कार्त्स्न्येन
वाङ्मनसयोरविषयतां वदन्मानादिभिर्भूमण्डलवर्णनं प्रतिजानीते ।
...इति । हे महाराज ! भगवतो मायागुणानां विभूतिः
...आदिगुणपरिणामानन्तब्रह्माण्डात्मिका लीलाविभूतिस्तस्याः
...विशेषाणां विभूत्यन्तर्गतलोकानामित्यर्थः कात्स्न्येन तं नाम-
...नामरूपाभ्यां मनसा वचसा वाऽधिगन्तुं ज्ञातुं वक्तुं
...पुरुषायुषेणापि पुरुषो नालं न प्रभुः स्थानविशेषाणामान-
...दिति भावः तस्मात् कार्त्स्न्येन वाङ्मनसाविषयत्वात्प्राधा-
...न्येन भूगोलस्य विशेषमवान्तरभेदं नाममानलक्षणैः व्याख्या-
...स्यामः प्रकटयिष्याम इति ॥ ४ ॥

तदेवाह । यो वा इति । प्रसिद्धोऽयं द्वीपो जम्बूद्वीपः कुव-
...यं भूमण्डलं तदेव कमलं तस्य कोशाः सप्तद्वीपाः तेष्वभ्य-
...न्तरः अन्तरवर्ती कोशः जम्बूद्वीप इत्यर्थः स नियुतयोजनवि-
...शालः लक्षयोजनविस्तीर्णः समवर्तुलः समो वर्तुलश्च वर्तुलत्वेन
...न्यूनाधिकभावाभावात्सर्वतः समपरिमाण इत्यर्थः यथा पुष्करस्य पत्रं

कमलपत्राशं समवर्तुलं तथेति यस्मिन् जम्बूद्वीपे वर्षाणि
प्रत्येकं नवयोजनसहस्रमायामो येषां तानि आयामोऽत्र विस्तार
एतच्च भद्राश्वकेतुमालव्यतिरिक्तेषु द्रष्टव्यं तत्सन्निवेशश्चान्यत्रोक्तः
"धनुर्वत्संस्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे । दीर्घाणि तत्र चत्वारि
चतुरस्रमिलावृतम्„ इत्यादिना अष्टभिः समर्पितैः नीलश्वेत-
शृङ्गवन्निषधहेमकूटहिमालयमाल्यवद्गन्धमादनाख्यैः सुष्ठु विभ-
क्तानि असङ्कीर्णानि भवन्ति वर्तन्ते तेषां नवानां वर्षाणां
मध्ये इलावृतं नाम वर्षमभ्यन्तरमन्तर्विद्यते इत्यर्थः यस्य जम्बू-
द्वीपस्य इलावृतवर्षस्य वा नाभ्यां मध्येऽवस्थितः सौवर्णः सुव-
र्णमयः कुलगिरीणां राजा मेरुः द्वीपस्य जम्बूद्वीपस्यायामो
विस्तारः लक्षयोजनप्रमाणस्तावत्समुन्नाहः उच्छ्रायो यस्य तथा-
भूतः कुवलयं भूमण्डलमेव कमलं तस्य कर्णिकाभूत इव
स्थितः तस्य मेरोर्मूर्द्धा उपरिभागः द्वात्रिंशत्सहस्रयोजन-
विस्तीर्णः मूले षोडशसाहस्राणां योजनानां यस्य सः सुमे-
रुरिति विशेष्यानुषङ्गः योजनमिति नपुंसकपाठे तस्य मेरो-
र्मूले षोडशसहस्राणां योजनानां समाहारः षोडशसहस्रयोजनं
परिमाणं वेदितव्यमित्यर्थः पाश्चादित्यशास्त्रीत्वाभावः तावता
षोडशसहस्रमानेन भूम्यामन्तःप्रविष्टः एवं लक्षयोजनोन्नाहः
सुमेरुरिति फलितम् ॥ ५ ॥ ६ ॥ ७ ॥

उत्तरेणेलावृतम् इलावृतवर्षस्योत्तरोत्तरं क्रमेण नीलश्वेत-
शृङ्गवत्संज्ञका रम्यकादीनां त्रयाणां वर्षाणां मर्यादागिरयः सीमा-
पर्वताः प्रागायताः पूर्वतो दीर्घाः उभयतः पूर्वपश्चिमयोः क्षारोदा
लवणसमुद्र एवावधिर्येषां ते लवणोदधिपर्यन्ता इत्यर्थः द्विसहस्र-
योजनविस्तीर्णाः दशांशादधिको योंऽशस्तेन दैर्घ्य एव ह्रसन्ति न
तूच्चत्वपृथुत्वयोः नीलादिषु त्रिषु पूर्वपूर्वापेक्षया उत्तरोत्तरस्य
दैर्घ्यं दशांशादधिकांशेन न्यूनमित्यर्थः द्वीपस्य मण्डलाकारत्वा-
दिति भावः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भूवलयतद्विशेषज्ञानं श्रीनारायणमहिमोपलक्षणत्वात्तदाय-
त्तत्वकं मोक्षोपयोगीत्यतस्तत्परिमाणादि वर्णयति । पञ्चस्वध्यायेषु ।
तत्र परीक्षिद्विशेषतोऽपि ज्ञातुमुक्तानुवादपूर्वकं श्रीशुकं पृच्छति ।
इत्युक्त इति । आदित्यो यावत्पर्यन्तं तपत्यसौ चन्द्रमाश्च यत्र
ज्योतिषां नक्षत्राणां गणैः सह दृश्यते त्वया भूमण्डलायाम-
विशेषस्तावानित्युक्तः ॥ १ ॥

तत्र भूमण्डलेऽपि प्रियव्रतेत्यनेन यो वा इहेत्येतदनुवदति । यत
एतस्या इत्यनेन । यत. एवं कृता इत्येतदनुवदति अयमाशयः प्रिय-
व्रतस्य रथचरणनेमिनिर्मितपरिखाताः सप्त सिन्धव आसन्या-
स्तस्य रथचरणनिशितपर्यन्तसीतोत्थितपर्यस्तमृत्तिकाघनपङ्कवस्त-
त्परिखापर्यवान्तरप्रदेशवर्तिन्यस्ताः सप्त द्वीपा आसन् तेषां
नामानि कथितानीति सूचित इत्यनेन विशेषो नोक्त इति नतः
किं तत्राह । एतदिति । खिलमुर्वरितं यथा न भवति तथा
निखिलमन्तराले एतदुपयोग्येव नान्यदित्यर्थं एवशब्दः मानं
परिमाणं लक्षणं वर्तुलचतुरस्राकारादि न केवलमिदमेव किन्तु
यत्सप्तसागरादिभ्यः परस्तात्काञ्चनभूम्यादिकं तदपि न केवलं
तावतालमपि तु तत्रापि विद्यमानं सर्वमनुवर्णितेत्येतदभिप्रा-
येण पुनश्च सर्वशब्दप्रयोग इत्यर्थः जिज्ञास्यामीत्यनेन
ज्ञानेच्छैव न तु विचार इत्यतः परस्मैपदप्रयोगः अहमित्यनेनना-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न्येषां प्रयोजनसद्भावेऽपि ममातीव प्रयोजनमिति सूचयति । अन्यथा जिज्ञास्यामीति सामान्योक्त्यसम्भवात् ॥ २ ॥

किं तदतीव प्रयोजनमिति विवृत्य दर्शयति । भगवत इति । इतः पूर्वं गुणमये सत्त्वादिगुणविरचिते स्थूलरूपे पातालाद्यचेतनावयवविशिष्टे आवेशितं निधायाभ्यस्तं विशेषस्मरणसमर्थं हि यत्तन्मनोऽगुणेऽपि सत्त्वादिगुणप्रवृत्तिशून्येऽपि सच्चिदानन्दाकारे अत एव सूक्ष्मे अनुग्रहमन्तरेणादृश्ये तर्हि किं तमोरूपं नेत्याह । आत्मज्योतिषि स्वयंप्रकाशे किंनाम्नि परे ब्रह्मणि परब्रह्मसंज्ञे भगवति ऐश्वर्यादिगुणपूर्णे वैदिकमन्तरेण लौकिकं नाम किं तत्राह । वासुदेवाख्ये अनेनात्र किंवदन्तीप्रमाणमिति सूचितमावेशितुं क्षमं समर्थं तदेतदेव हेत्यनेनान्यत्र "नापृष्टः कस्यचिद्ब्रूयात्"इत्यनपेक्षामाह ॥ ३ ॥

मायागुणविभूतेः प्रकृतिगुणप्रवृत्तये यद्विविधं भवनं बहुरूपग्रहणं यस्य स तथा तस्य महिमागुणविभूतेर्वा काष्ठामवस्थानं पूर्णिलक्षणं विवुधाणुपेण द्विपरार्द्धलक्षणेन ॥ ४ ॥

यो जम्ब्वाख्यः पूर्वपश्चिमाभ्यां दक्षिणोत्तराभ्यां पार्श्वाभ्यां सामुद्रं जलं पिवतीति द्वीपः तद् (१) भावे तरणिकिरणसन्तापेन घनीभावं मुक्त्वा परमाणवशेषेण द्वीपस्थितजनस्याधाराभावेन जलमज्जनेन सर्वनाशप्रसङ्गः स्याद्दीर्घः निपातनात्साधुरिति सोऽयं नियुतयोजनविशाल एकादशस्थानादिसंख्याक्रमेण नियुतसंख्यायाः लक्षसंख्यात्वं ज्ञायेत तेन लक्षयोजनेन विस्तार इति परिमाणमुक्तं भवति शृङ्गग्राहिकयैव तत्प्रकारं ज्ञापयति कुवलयं भूमण्डलं तदेव कमलं तस्य कोशस्येतरद्वीपलक्षणस्याभ्यन्तरकोशोऽन्तःस्थितकोशवद्वर्त्तमानः लक्षणमाह । समवर्तुलः अत्र दृष्टान्तमाह । यथा पुष्करपत्रम् अन्तरकोशदलान्यन्तराले विरलानि भवन्ति न तथा पुष्करपत्रमेकत्वेन विच्छेदाभावादित्यरुच्या पद्मपत्रोदाहरणं वा इत्यनेनेदमेव मानादिकं नान्यत्रोक्तमिति विशदयति ॥ ५ ॥

यस्मिन्द्वीपे ॥ ६ ॥

येषां वर्षाणां यस्येलावृतस्य नाभिस्थाने मध्य इत्यर्थः जम्बूद्वीपस्य यावान् लक्षयोजनपरिमित आयामस्तावान् समुन्नाह उच्छ्रायो यस्य स तथा लक्षयोजन उच्छ्रित इत्यर्थः मानमुक्त्वा लक्षणमाह । कर्णिकाभूत इति । भूमण्डललक्षणपद्मस्य कर्णिकास्थानीयः ननु नियुतयोजनविशालो द्वीपो द्वीपायामसमुन्नाह इत्येतत्कथं विशदं स्यात्"चतुराशीति साहस्रयोजनानां समुच्छ्रय"इति पराशरवचनं जागर्तीति चेन्न न तदीदृगिति ध्येयेन वाच्यं न च तर्क्यते "पश्यन्तोऽपि न जानन्ति मेरो रूपं विपश्चित"इति वचनात् पराशरस्यान्यथाज्ञानसम्भवादिन्द्रस्तु वर्तुलाकारं पञ्चकोणं बृहस्पतिरितीन्द्रादीनामप्यज्ञानकथनाच्च"ऋषिस्त्रिकालदर्शी स्यात्"इतिवचनाद्भगवत्प्रसादापन्नज्ञानपराशरवचनस्यान्यथा ज्ञानमूलत्ववचनमिति साहसमिति चेन्न प्रामाणिकत्वाऽपरमात्मानमन्तरेणान्येषां तत्र तत्राज्ञानदर्शनाच्च मन्वेवं निरालक्षणार्थैरमन्तरेणैकवाक्यत्वाङ्गीकारे महान्प्रहर्षः स्यादिति चेद् एवं तर्हि शृणु प्रविष्टः षोडशाधस्तादिति योजनावगमात् ननु तावतान्तर्भूम्यां प्रविष्ट इति मेरोर्लक्षयोजनोच्छ्रायादधिकपरिमाणोक्तेरितिचेन्न भूमिप्रविष्टरूपेण सह लक्षयोजनोच्छ्रायोपपत्तेः वचनलाघवाय मूले षोडशसहस्र इति प्रस्तावे तावतैवृत्त... दूरस्थग्रहणानुपपत्तिपरिहारोपपत्तेः किञ्च चतुराशीति... चतुरशीतीति वक्तव्ये आकारग्रहणात् कश्चिद्विशेषोऽस्तीति ... स भागवतोक्त एव ग्राह्यः न ज्ञानापारवारिधेर्व्यासस्य ... स्यान्यथात्वं शक्याशङ्कं तथाच भागवतोक्तप्रकारेण भु... कोशादिकं ग्राह्यं तथाचोक्तम् ।

यथा भागवते तूक्तं भौवनं कोशलक्षणम् ।
तस्याविरोधतो योज्यं सर्वग्रन्थान्तरस्थितम् ॥
मण्डोद्दे पूरणं चैव व्यत्यासं क्षीरसागरे ।
राहुसोमरवीणाञ्च मण्डलाद्द्विगुणोक्तिताम् ॥
विनैव सर्वमुन्नेयं योजनाभेदतोऽत्र स्थिति ॥ ७ ॥

इलावृतात्खण्डादुत्तरोत्तरेण शृङ्गैः पूर्वस्यां दिशि मु... स्थिताः प्रागायताः द्विसहस्रपृथवः द्विसहस्रयोजनविस्तार... दैर्घ्य एव ह्रसन्ति नोर्ध्वपृथुत्वे ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवतो गुणमयमित्यादौ भगवत्त्वन्तु गुणातीतमित्या... तम् ॥ १—४ ॥

नियुतशब्दोऽत्र दशलक्षवाचकोऽपि कथञ्चिदेकलक्षं ... तत् सन्निहितत्वात् ॥ ५ ॥

टीका दर्शिता मतभेदाः सृष्टिभेदेन ज्ञेयाः ॥ ६—२९ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जम्बूद्वीपस्य वर्षाणां शैलानां मध्यवर्त्तिनः ।
सुमेरोश्च प्रमाणं यत् षोडशे तन्निगद्यते ।

प्रियव्रतचरिते श्रुतस्य द्वीपसमुद्रादेः प्रमाणादिकं तद ... प्रकरणान्ते पृच्छति । उक्त इति । तपति प्रकाशयति तत्पर्य... इत्यर्थः यत्र यत्र चन्द्रमा दृश्यते तावत्पर्यन्तश्च तत्रापि त... इत्यर्थः ॥ १ ॥

यतः सिन्धुभ्यः । एतस्या भुवः सप्तद्वीपानां ये विशे... स्तेषां विकल्पो भेदः प्रभेदः एतत् सिन्धुद्वीपादिकम् ॥ २ ॥

जिज्ञासायाः फलमाह । भगवत इति । अत्र मयेति कर्तृपदगु... तत्रत्यानां भक्तिमिश्रयोगवतां मनोनिधित्सानुरोधेनैव ... पृच्छ्यते मम तु त्वन्मुखकमलस्यन्दमानभगवत्कथा... मकरन्दस्य कर्णाभ्यां पानमेव भगवत्प्राप्तिसाधनमिति ... किञ्च इह भगवतो गुणमये स्थूलरूप इति भेदर्थोधि... षष्ठ्या अगुणे भगवतीत्यभेदबोधकेन सामानाधिकरण्येन च ... वस्तुस्य गुणातीतत्वं बोधितम् । गुरो इति तव सर्वमुनिज्ञ... त्वादवश्यवक्तव्यमेवैतदिति भावः ॥ ३ ॥

काष्ठामन्तं रूपं सन्निवेशः । लक्षणं चिह्नम् ॥ ४ ॥

वै निश्चयेन कुवलयं भूमण्डलं तदेव कमलं तस्य ... मण्डलतया स्थिताः सप्तद्वीपास्तेष्वभ्यन्तरः कोशो योऽयं ... मानो जम्बूद्वीपः स नियुतयोजनविशालः लक्षयोजनविस्तीर्णः ...

नवयोजनसहस्रमायामो येषां आयामोऽत्र विस्तारः ... हिमालयादिभिः सन्निवेशस्तु वायुनोक्तः ।

धनुर्वत्संस्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे ।
दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम् इति ॥

(१) जलपानाभावे ।

एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयोऽयुतयोजनोत्सेधा हरिवर्षकिम्पुरुषभारतानां यथा संख्यम् ॥ ९ ॥

तथैवेलावृतमपरेण पूर्वेण च माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रं पप्रथतुः केतुमालभद्राश्वयोः सीमानं विदधाते ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

उत्तरोत्तरे भारतोत्तरकुरुवर्षे चत्वारि किम्पुरुषहरिरम्यकहिरण्मयानि वर्षाणि नीलनिषधयोस्तिरश्चीनीभूय धनुषोर्विषयोः संलग्नत्वमङ्गीकृत्य भद्राश्वकेतुमालयोरपि धनुष्कांतत्वम्। अतस्तयोर्दैर्घ्यंत एव मध्ये सङ्कुचितत्वेन नवसहस्रायामत्वम्। इलावृतस्य तु मेरोः सकाशात् चतुर्दिक्षु नवसहस्रायामत्वं सम्भवेत् वस्तुतस्त्विलावृतभद्राश्वकेतुमालानां चतुस्त्रिंशत्सहस्रायामत्वं ज्ञेयम् ॥ ६ ॥

नाभ्यां मध्ये द्वीपस्यायामो लक्षयोजनप्रमाणः। तावान् समुच्छ्रायो यस्य सः षोडशसहस्रं वितत इति शेषः भावता षोडशसहस्रमानेन। अतश्चतुरशीतिसहस्रयोजनोच्छ्रितो भूमितो दृश्यते ॥ ७ ॥

उत्तरोत्तरेण इलावृतम् इलावृतस्योत्तरत उभयतः पूर्वपश्चिमयोः पृथुर्विस्तारः एकैकस्माद्विति नीलः किञ्चिन्न्यूनलक्षदैर्घ्येण तस्मात् श्वेतः श्रृङ्गवांश्च दशांशादीपदधिको दशांशेन ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रियव्रतचरित्रवर्णने संक्षेपेण द्वीपादिकं श्रुत्वा तद्विस्तरं श्रोतुं पृच्छति। उक्त इति। ज्योतिषां गणैः सह असौ चन्द्रमा दृश्यते॥१॥ यतो येभ्यः सिन्धुभ्यः ॥ २ ॥

जिज्ञासाप्रयोजनमाह। भगवत इति। गुणमयेस्थूलरूपे विराजि प्रवेशितं मनोऽगुणे प्राकृतगुणरहिते अप्राकृते रूपे तथा आत्मज्योतिषि प्राकृताप्राकृतविग्रहवति आवेशितुं क्षमं स्यात् ॥ ३ ॥

मायागुणविभूतिः भूगोलादिरूपा तस्याः स्थानविशेषाणां लक्षणम् ॥ ४ ॥

अयं प्रसिद्धो यो जम्बूद्वीपः सः कुवलयं भूमण्डलं तदेव कमलं तस्य कोशेषु सप्तद्वीपेषु अभ्यन्तरः कोशो नियुतयोजनविशालः लक्षयोजनविस्तीर्णः ॥ ५ ॥

यस्मिन् जम्बूद्वीपे प्रत्येकं नवयोजनसहस्रमायामो येषां तानि नव वर्षाणि भवन्ति आयामशब्दोऽत्र विस्तारपरः एतच्च क्वचित्प्रायेण पदद्वेव द्रष्टव्यं तन्मध्यगतस्य सप्तमस्य वर्षत्रयात्मकस्य चतुस्त्रिंशद्योजनविस्तारयुक्तत्वं पराणां वर्षाणां मर्यादागिरिसहितानां षट्पञ्चयोजनविस्तारयुक्तत्वमेवं लक्षयोजनानि भवन्ति तदुक्तं वायुनोक्तः।

धनुर्वत्संस्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे।
दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम् इति ॥ ६ ॥

यस्य इलावृतस्य नाभ्यां मध्ये मेरुरवस्थितः द्वीपस्य जम्बूद्वीपस्यायामो लक्षयोजनविस्तारः तावत्समुन्नाह उच्छ्रायो यस्य सः तावता षोडशसहस्रयोजनमानेन ॥ ७ ॥

उत्तरोत्तरेणेलावृतमिलावृतस्योत्तरोत्तरतः ॥ ८ ॥

भाषा टीका।

महाराज! परीक्षितजी बोले आपने भूमण्डल का विस्तार कहा जहां पर्यन्त सूर्यनारायण प्रकाश करते हैं और नक्षत्रादिकों के सहित जहां चन्द्रमा दीखता है ॥ १ ॥

तहांपरभी प्रियव्रतके रथ के पहियों से सात समुद्र कल्पित भये हैं जिससे इस पृथिवी के सातद्वीपों के विशेष का भेद भगवन्! आपने सूचित किया है इसको हम प्रमाणसे और लक्षण से सब जानना चाहते हैं ॥ २ ॥

हे गुरो! गुणमय भगवान् के इस स्थूलरूप में प्रवेश किया जो मन है सोई मन सूक्ष्मतम आत्मज्योति परब्रह्म भगवान् वासुदेव मेंभी प्रवेश करा जासका है इस हेतुसे आप इसबात को वर्णन कीजिये ॥ ३ ॥

ऋषि श्रीशुकदेवजी बोले हे महाराज! मायागुण विभूति वाले भगवान् के अन्त को मनसे या वचनसे जानने को देवताओं के आयु से भी कोई समर्थ नहीं है तिस हेतु से प्रधानता से भूगोल विशेषको नामरूप प्रमाण लक्षणसे हम कहेंगे ॥ ४ ॥

जो यह जम्बूद्वीप है सो कमल रूपी पृथिवी के कली सरीके सात द्वीपों के मध्यमे कली सरीका है सो लक्षयोजन का चौडा है चारों तरफ से गोल है जैसे कमल का पत्र होता है ॥ ५ ॥

जिस द्वीप मे नौ वर्ष हैं सब नौ नौ हजार योजन के विस्तार वाले हैं आठ मर्यादा के पर्वतों से अलग विभाग किये गये हैं ॥ ६ ॥

इन वर्षों के मध्यमे इलावृत नामक बीच का वर्ष है जिसके नाभिमे स्थित चारों ओर से सुवर्णमय सब पर्वतों का राजा जम्बूद्वीप के विस्तारके बरोबर ऊंचा पृथिवी कमलका कर्णिका रूप मेरुपर्वत है शिखरपर बत्तीसहजार योजन चौडा है पृथिवीपर जडमे सोला हजार चौडा है सोला ही हजार योजन जमीन के भीतर पैठा है ॥ ७ ॥

उस सुमेरुके उत्तर मे इलावृत वर्षके आगे नील श्वेत शृङ्गवान् ये तीन पर्वत हैं सो रम्यक हिरण्मय कुरु इन वर्षों के मर्यादा सीमाके पर्वत हैं सो पूर्व पश्चिम दोनो क्षार समुद्र पर्यन्त लम्बे हैं दो हजार योजन चौडे हैं परन्तु पहिले पर्वत से दूसरा तीसरा लम्बाई मे दशमा अंशमे से एक हिस्सा कम हैं ऊंचे तो सब दश हजार योजन के हैं॥८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अयुतयोजन उत्सेध उच्छ्रायो येषाम् अयं चोत्सेधो नीलादीनामपि द्रष्टव्यः नीलादिपृथुत्वं चैषामपि द्रष्टव्यं यथासंख्यं मर्यादागिरय इति शेषः ॥ ९ ॥

मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद इत्ययुतयोजनविस्तारोन्नाहाः मेरोश्चतुर्दिशमवष्टम्भगिरय उपक्लृप्ताः ॥ ११ ॥

चतुर्ष्वेतेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारः पादपप्रवराः पर्वतकेतव इवाधिसहस्रयोजनोन्नाहास्तावद्विटपविततयः शतयोजनपरिणाहाः ॥ १२ ॥

ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजला यदुपस्पर्शिन उपदेवगणा योगैश्वर्याणि स्वाभाविकानि भरतर्षभ ! धारयन्ति ॥ १३

देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति ॥ १४ ॥

येष्वमरपरिवृढाः सह सुरललनाललामयूथपतय उपदेवगणैरुपगीयमानमहिमानः किल विहरन्ति ॥ १५ ॥

मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतन्ति ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आनीलनिषधायतौ उत्तरतो नीलपर्यन्तं दक्षिणतो निषधपर्यन्तं च दीर्घौ पञ्चयतुर्विस्तीर्णौ भवतः तावेव केतुमालभद्राश्वयोर्वर्षयोः सीमानं कुर्वाते नन्वेवं सति पूर्वापररेखायामिलावृतवेष्टितो मेरुर्मध्ये ततः पूर्वापरतो गिरिद्वयं वर्षद्वयं च नातः किञ्चिदस्ति दक्षिणोत्तररेखायां तु तथैवेलावृतवेष्टितो मध्ये मेरुरुभयतस्त्रीणि वर्षाणि गिरयश्च षट् तत्कथं सर्वतो लक्षप्रमाणत्वं जम्बूद्वीपस्य । उच्यते मेरोः षोडशसहस्राणि सर्वतः स्थितत्वादिलावृतस्याष्टादश अन्येषां षण्णां चतुष्पञ्चाशत् गिरीणां षण्णां द्वादशेत्येवं दक्षिणोत्तररेखायां तावल्लक्षं पूर्वापररेखायामपि सुमेरोरिलावृतस्य चतुस्त्रिंशत् गिर्योश्चत्वारि शेषाणि द्विषष्टिसहस्राणि पूर्वापरवर्षयोरासमुद्रं दैर्घ्यं द्रष्टव्यान्यतो न विरोधः ॥ १० ॥

अयुतयोजनप्रमाणौ विस्तारोन्नाहौ येषां विस्तीर्णमूर्ध्नो मेरोरवष्टम्भत्वात्पूर्वपश्चिमौ गिरी दक्षिणोत्तरविस्तारौ दक्षिणोत्तरौ च पूर्वापरविस्तारौ द्रष्टव्यौ सर्वतो दशयोजनसहस्रविस्ताराङ्गीकारे त्विलावृतलोपात्पूर्वोक्तेलावृतमुपपन्नावयतीत्यादिविरोधः स्यात् ॥ ११ ॥

अधिसहस्रमेकादशशतानि उन्नाहो येषां तावत्प्रमाणा विटपविततिर्येषां शतयोजनं परिणाहो विस्तारो येषाम् ॥ १२ ॥

यदुपस्पर्शिनो यत्सेविनः ॥ १३—१४ ॥

ललामो भूषणं सुरललनानां भूषणभूताः श्रेष्ठा याः स्त्रियस्तासां यूथस्य पतयः सह सम्भूय येषु विहरन्ति ॥ १५ ॥

एकादशशतयोजनमुत्तुङ्गो यो देवचूतस्तस्य शिरसः सकाशात् फलप्रमाणमुक्तं वायुपुराणे ।

अरत्नीनां शतान्यष्टावेकषष्ट्यधिकानि च ।
फलप्रमाणमाख्यातमृषिभिस्तत्त्वदर्शिभिः ।

इति ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं दक्षिणेनेलावृतमिलावृतवर्षस्य दक्षिणतः निषधादयः [illegible] पर्वताः क्रमेण नीलादिभिः समपरिमाणा अयुतयोजन [illegible] उच्छ्रायो येषां ते अयं चोत्सेधो नीलादीनामपि द्रष्टव्यः नीला[illegible] पृथुत्वं चैषामिति द्रष्टव्यं हरिवर्षादीनां त्रयाणां यथासङ्ख्यं मर्यादागिरयः ॥ ९ ॥

तथेलावृतमपरेणेलावृतस्यापरेण पश्चात्पूर्वेण पुरस्ताच्च मा[illegible] वद्गन्धमादनावपरेण माल्यवान् पूर्वेण गन्धमादनः इत्येतौ प[illegible] क्रमेणानीलनिषधायतौ उत्तरतो नीलपर्यन्तं दक्षिणतो निष[illegible] पर्यन्तं च दीर्घौ नीलनिषधपर्यन्तोत्तरदक्षिणायामावित्यर्थः [illegible] द्विसहस्रपृथू विस्तीर्णौ इत्यर्थः । तावेव केतुमालभद्राश्व[illegible] वर्षयोः सीमानं मर्यादां विदधाते कुरुतः नन्वेवं सति पूर्वापररे[illegible] यामिलावृतवेष्टितो मेरुर्मध्ये ततः पूर्वापरतो गिरिद्वयं वर्षद्वयं [illegible] नातः किञ्चिदस्ति दक्षिणोत्तरदिशायां च तथैवेलावृतवेष्टि[illegible] मेरुर्मध्ये उभयतस्त्रीणि वर्षाणि गिरयश्च तत्कथं सर्वतो ल[illegible] प्रमाणत्वं जम्बूद्वीपस्य । उच्यते मेरोः षोडशसहस्राणि स[illegible] स्थितत्वादिलावृतस्याष्टादश अन्येषां षण्णां वर्षाणां [illegible] ष्पञ्चाशद्गिरीणां द्वादश चेत्येवं दक्षिणोत्तरदिशि तावल्लक्षं पू[illegible] पररेखायामपि सुमेरोरिलावृतस्य चतुस्त्रिंशत् गिर्योश्च[illegible] शेषाणि द्विषष्टिसहस्राणि केतुमालभद्राश्वयोरित्येवं लक्षं स[illegible] स्थितत्वादिलावृतस्याष्टादश पूर्वापरवर्षयोरासमुद्रं दैर्घ्यं द्रष्टव्यं [illegible] विरोधः ॥ १० ॥

मन्दरादयश्चत्वारो गिरयः प्रागादिक्रमेण मेरोश्चतुर्दि[illegible] वष्टम्भगिरयः मेखला इव अवष्टम्भन्ति प्रतिबध्नन्ती[illegible] स्मात्ते च ते उपक्लृप्ताः विन्यस्ताः कथम्भूता अयुतयो[illegible] प्रमाणौ विस्तारोच्छ्रायौ येषां तथाभूताश्चतुर्ष्वेतेषु मन्दरा[illegible] क्रमेणाम्रजम्बूकदम्बन्यग्रोधाश्चत्वारः पादपश्रेष्ठाः पर्वतानां के[illegible] ध्वजा इवाधिसहस्रमेकादशशतान्युन्नाहो येषां तावत्प्रमा[illegible] विटपानां शाखानां विततिर्येषां शतयोजनपरिणाहो विस्तारो [illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

...ऋतुता इत्यनुषङ्गः ॥ ११ ॥ १२ ॥

तथा चत्वारो ह्रदाश्च क्रमेण क्षीरदधिमधुरसशुद्धजलात्मकाः ...नेव तानेव विशिनष्टि। यदुपस्पर्शिनः तज्जलस्पर्शिनः सिद्धा- ...ः स्वाभाविकान्यष्ट महैश्वर्याणि हे राजन्! धारयन्ति ॥ १३ ॥

देवोद्यानानि देववनानि क्रमेण नन्दनादीनि भवन्ति तान्येव विशिनष्टि। येषु देवोद्यानेषु सुरललनानां सुरस्त्रीणां ललाम भूषणं ...ईप्सिताः सुरवनितानां श्रेष्ठा इत्यर्थः तासां यूथस्य पतयः ताभिः ...सह सम्भूय उपदेवगणैः उपगीयमानः महिमा येषां ते विहरन्ति ...नां क्रीडास्थानानीत्यर्थः ॥ १४ ॥ १५ ॥

...चूतादिप्रभवा नदीराह। मन्दरेति। मन्दरशिखरस्याधस्तात्प- ...देशे एकादशशतयोजनमुत्तुङ्ग उन्नतो यो देवचूतः तस्य शिरसः ...प्रकाशाद्रिशिखरवत्स्थूलानि फलानि फलप्रमाणमुक्तं वायुपु- ...राणे।

अरत्नीनां शतान्यष्टौ एकषष्ट्यधिकानि च।
फलप्रमाणमाख्यातमृषिभिस्तत्त्वदर्शिभिः इति ॥

...अमृतकल्पानि अमृततुल्यानि फलन्ति फलानि फलन्तीति गौरं- ...धयतीतिवत् कृदर्थविशेषणत्वाद्धात्वर्थस्याविवक्षा बोध्या प्राह- ......पकानि भवन्तीत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एवमिलावृताद्दक्षिणेन निषधादयः यथा नीलादयो दैर्घ्येण ...न्ति तथा निषधादयोऽपि अत्रायं विशेषः नीलनिषधौ लक्ष- ...प्रमाणावन्ये दशांशहीनाः। तदुक्तम्। "लक्षप्रमाणौ द्वौ मध्ये ...हीनास्तथापर" इति वैष्णवे।

जम्बूद्वीपप्रमाणेन निषधः परिकीर्तितः।
तस्माच्च दशभागेन हेमकूटः प्रतीयत

...इति वाराहे यथासङ्ख्यं मर्यादागिरय इति शेषः ॥ ९ ॥

तथैवेलावृतमिति। यथेलावृतादुत्तरदक्षिणतो नीलनिषधादय- ...स्तथेलावृतस्यापरेण पश्चिमेन पूर्वेण च माल्यवद्गन्धमादनौ ...यथासङ्ख्यं स्त इति शेषः आनीलनिषधायतौ नीलनिषधपर्यन्त- ...विस्तारौ तत्संबद्धावित्यर्थः सीमानमवधिम् ॥ १० ॥

अवष्टम्भगिरयः पीठस्थानीयपर्वताः ॥ ११ ॥

एतेषु मन्दरादिषु पर्वतकेतवः मन्दरादिपर्वतानां ध्वजा इव ...स्थिताः अधिसहस्रयोजनोन्नाहाः सहस्राद्भिकैकशतयोजनो- ...च्छ्रायाः तदुक्तम् "एकादशशतायामाः पादपा गिरिकेतव" इति ...आयामशब्देनोच्छ्राय उच्यते तावद्विटपविततयः यावदुच्छ्राय- ...योजनसंस्थानं तावत्संस्थानकशाखाविस्ताराः शतयोजनपरि- ...णाहाः परितः शतयोजनस्थूलाः ॥ १२ ॥ १३ ॥

देवोद्यानानि देवानां क्रीडायोग्यस्थानानि अमरललनानां सुरस्त्रीणां मध्ये या ललामभूताः श्रेष्ठास्तासां यूथस्य पतयो ...ः स्त्रियस्ताभिः सहिताः सहामरललनाललामयूथपतयः अमर- ...परिवृढा देवश्रेष्ठाः ॥ १४ ॥ १५ ॥

मन्दरोत्सङ्गे मन्दरपर्वतस्याङ्कस्थानीये तटे देवोपभोगयोग्य- ...देवचूतस्तस्य शिरसोऽग्रदेशात् ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अयुतयोजन उत्सेध उच्छ्रायो येषाम्। अयश्चोत्सेधो नीला- दीनामपि द्रष्टव्यः। नीलादिवत् पृथुत्वं चैषां द्रष्टव्यम्। यथासंख्यं मर्यादागिरय इति शेषः ॥ ९ ॥

अपरेण पश्चिमस्यां दिशि पूर्वेण पूर्वस्यां दिशि आनील- निषधायतौ उत्तरतो नीलपर्यन्तं दक्षिणतो निषधपर्यन्तमायतौ दीर्घौ। चतुस्त्रिंशत्सहस्रायामावित्यर्थः। एवञ्च दक्षिणोत्तररे- खायां भारतकिंपुरुषहरिवर्षाणां त्रयाणां सप्तविंशतिः सह- स्राणि हिमालयहेमकूटनिषधानां षट्सहस्राणि। सुमेरोरिला- वृतस्य च चतुस्त्रिंशत् रम्यकहिरण्मयकुरूणां सप्तविंशतिः नीलश्वेतशृङ्गवतां गिरीणां षडित्येवं लक्षयोजनप्रमाणः पूर्व- पश्चिमरेखायां भद्राश्वस्य एकत्रिंशत् सुमेरोरिलावृतस्य चतु- स्त्रिंशत् केतुमालस्यैकत्रिंशत् गन्धमादनमाल्यवतोश्चत्वारीत्येवं लक्षयोजनप्रमाणो जम्बूद्वीपोऽनुगमितः ॥ १० ॥

अयुतयोजनप्रमाणौ विस्तारोन्नाहौ येषां ते विस्तीर्ण- मूर्ध्नो मेरोरवष्टम्भत्वात् पूर्वपश्चिमौ गिरी दक्षिणोत्तरविस्तारौ दक्षिणोत्तरौ च पूर्वापरविस्तारौ ज्ञेयौ। विस्तारोऽत्र दैर्घ्यं सर्वतो दशयोजनसहस्राङ्गीकारे त्विलावृतलोपात् पूर्वेणेलावृतमुपप्लाव- यतीत्यादिविरोधः स्यात् चतुर्दिशं चतस्रो दिशोऽभिव्याप्य चतु- र्दिक्ष्वित्यर्थः ॥ ११ ॥

अधिसहस्रम् एकादशशतान्युन्नाहो येषां तावत्प्रमाणा विटपविततिर्येषां शतयोजनं परिणाहो विस्तारो येषाम् ॥ १२ ॥ १३ ॥ १४ ॥

परिवृढाः श्रेष्ठा ललामो भूषणम् ॥ १५ ॥

फलानीति फलप्रमाणमुक्तं वायुपुराणे।
अरत्नीनां शतान्यष्टावेकषष्ट्यधिकानि च।
फलप्रमाणमाख्यातमृषिभिस्तत्त्वदर्शिभिः इति ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं नीलादिवत् द्विसहस्रपृथवः निषधादयः हरिवर्षादीनां यथासङ्ख्यं मर्यादागिरयः इत्यन्वयः अयुतयोजन उत्सेधः उच्छ्रायो येषां नीलादयोऽपि अयुतयोजनोत्सेधा इति ज्ञेयम् ॥ ९ ॥

द्विसहस्रं पप्रथतुः विस्तीर्णौ भवतः विदधाते कुर्वाते ॥ १० ॥

किञ्च मन्दरादयश्चत्वारो गिरयः पूर्वादिक्रमेण मेरोश्चतुर्दिश- मवष्टम्भगिरयः उपक्लृप्ता विन्यस्ताः अयुतयोजनप्रमाणौ विस्तारो- न्नाहौ येषां तत्र मन्दरः पूर्वदिशि विन्यस्तः दक्षिणोत्तरविस्तार- स्तद्वदन्येषामपि विस्तारो ज्ञेयो न तु सर्वतः अन्यथा इलावृतसंपो न भवति ॥ ११ ॥

शतयोजनं परिणाहो विस्तारो येषामधिसहस्रं शताधिक- सहस्रमुन्नाहः उच्छ्रायो येषां तावत्प्रमाणा अधिसहस्रप्रमाणा विटपविततिर्येषाम् ॥ १२ ॥

चूता उपक्लृप्ता इति शेषः ॥ १३ ॥ १४ ॥

सुरललनानां ललामभूताः भूषणभूताः याः स्त्रियस्तासां यूथस्य पतयः अमरपरिवृढाः देवश्रेष्ठाः सह सम्भूय विहरन्ति ॥ १५ ॥ १६ ॥

---

तेषां विशीर्यमाणानामतिमधुरसुरभिसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्वेणेलावृतमुपप्लावयति ॥ १७ ॥

यदुपजोषणाद्भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति ॥ १८ ॥

एवं जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन जम्बूनाम नदी मेरुमन्दरशिखरादयुतयोजनादवनितले निपतन्ती दक्षिणेनात्मानं यावदिलावृतमुपस्यन्दयति ॥ १९ ॥

तावदुभयोरपि रोधसोर्या मृत्तिका तद्रसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन सदाऽमरलोकाभरणं जाम्बूनदं नाम सुवर्णं भवति ॥ २० ॥

यदुहवाव विबुधादयः सह युवतिभिर्मुकुटकटककटिसूत्राद्याभरणरूपेण खलु धारयन्ति ॥ २१ ॥

यस्तु महाकदम्बः सुपार्श्वनिरूढो यास्तस्य कोटरेभ्यो विनिःसृताः पञ्चायामपरिणाहाः पञ्च मधुधाराः सुपार्श्वशिखरात्पतन्त्योऽपरेणात्मानमिलावृतमनुमोदयन्ति ॥ २२ ॥

या ह्युपयुञ्जानानां मुखनिर्वासितो वायुः समन्ताच्छतयोजनमनुवासयति ॥ २३ ॥

एवं कुमुदनिरूढो यः शतवल्शो नाम वटस्तस्य स्कन्धेभ्यो नीचीनाः पयोदधिमधुघृतगुडान्नाद्यम्बरशय्यासनाभरणादयः सर्व एव कामदुघा नदाः कुमुदाग्रात्पतन्तस्तमुत्तरेणेलावृतमुपयोजयन्ति ॥ २४ ॥

भाषाटीका ।

इलावृत वर्षके दक्षिणकी ओर निषध हेमकूट हिमालय ए तीन पर्वत पूर्व पश्चिम में खारीसमुद्र तक लम्बे हैं दशहजार योजन ऊंचे हैं दो हजार योजन चौडे हैं क्रमसे हरिवर्ष भारत वर्षों के मर्यादा करते हैं ॥ ९ ॥

तैसेही इलावृत वर्षके पूर्व तरफ माल्यवान् पश्चिम तरफ गन्ध मादन ए दोनों पर्वत नील तथा निषध पर्वतसे लगेहुये हैं दो हजार योजन चौडे हैं केतुमाल भद्राश्व दोनों वर्षोंके सीमा करते हैं ॥ १० ॥

मन्दर मेरुमन्दर सुपार्श्व कुमुद ये चारों दशहजार योजनके ऊंचे मेरुके चारों तरफ मेरुके सहारे के वास्ते रक्खे पर्वत हैं ॥ ११ ॥

इन चारों पर्वतों के ऊपर पर्वतों के ध्वजा सरीके बडे भारी एक हजार एकसौ योजन ऊंचे उतनेही दूर उनकी शाखा हैं सौ योजन मोटे हैं ऐसे आम जामुन कदम्ब वट के चार पेड हैं ॥ १२ ॥

हे भारतश्रेष्ठ!परीक्षित् ! उन चारों पर्वतोंपर दूध मधु इक्षु रस मीठे जलके चार हौद हैं जिनके स्नान पानादिक से उहांके उपदेवतागण स्वभावसिद्ध योग ऐश्वर्यों को धारण करते हैं ॥ १३ ॥

नन्दन चैत्र रथ वैभ्राजक सर्वतोभद्र नाम के चार देवतोंके विहार के वनभी उन चारों पर्वतोंपर हैं ॥ १४ ॥

जिन वनों में उत्तम देवगण देवस्त्रियों को साथ मे लेकर उपदेवगणों के किये अपनी महिमाके गान को सुनते हुये विहार करते हैं ॥ १५ ॥

मन्दराचलके ग्यारा हजार ऊंचे आम्र वृक्ष के शिखरसें पर्वतों के शिखर सरी के बडे अमृत से मीठे आम के फल गिरते हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतिमधुरश्चासौ स्वतः सुरभिश्च सुगन्धिश्च नचान्येषां गन्धैरधिवासितः बहुलश्चारुणश्च रसः स एव उदमुदकं तेन ॥ १७ ॥

यदुपजोषणात् यस्य रसस्य सेवनात् ॥ १८ ॥

अनस्थिप्रायाणामतिसूक्ष्मबीजानां यत्र निपतति तत्प्रभृति आत्मनो दक्षिणतः सर्वमिलावृतं व्याप्य वहतीत्यर्थः ॥ १९ ॥

तावत् सर्वतः रोधसोस्तटयोः ॥ २०—२१ ॥

आयामोऽत्र व्यामः स च "व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्"इत्युक्तलक्षणः पञ्च व्यामाः परिणाहः प्रवाहविस्तारो यासामित्यर्थः । केचित्तु पञ्चव्यामपरिणाहा इत्येवं पठन्ति ॥ २२ ॥ २३ ॥

नीचीना अधोमुखाः ॥ २४—२६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेषां फलानां विशीर्यमाणानामधःपातेन भिद्यमानानामतीव मधुरश्चासौ स्वतः सुरभिश्च सुगन्धिश्च न चान्येषां गन्धैरधिवासितः उपरिष्टात् बहुलश्चारुणश्च रसः स एवोदकं तेनारुणोदानाम

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इति प्रसिद्धा नदी मन्दरशिखरान्निपतन्त्यधोऽधःस्पन्दमाना पूर्वेणावृतमिलावृतवर्षस्य पूर्वं प्रदेशमुपप्लावयति सिञ्चति आत्मानमनुस्पन्दयतीत्यर्थः ॥ १७ ॥

अरुणोदां नदीं विशिनष्टि । यदिति । यस्या अरुणोदाया उपजोषणाद्रसपानादङ्गवान्या अनुचरीणां पुण्यजनानां यातुधानानां या ... तासामवयवसंस्पर्शेन सुगन्धसुरभिर्वातो वायुः समन्तात्सर्वां दिशं दशयोजनमनुवासयति सुरभीकरोति ॥ १८ ॥

एवं जम्बूफलानां मेरुमन्दरोत्सङ्गनिरूढजम्बूफलानामत्युच्चान्मेरुमन्दरात् यो निपातस्तेन विशीर्णानां भिन्नानामनस्थिप्रायाणामतिसूक्ष्मबीजानामिभकायनिभानां गजशरीरसदृशानां रसेन जम्बूनदीतिप्रसिद्धा मेरुमन्दरस्य शिखराद्युतयोजनोच्छ्रायाद्भूतले निपतन्ती दक्षिणेनेलावृतमिलावृतस्य दक्षिणभागं यावदिलावृतमात्मानमनुस्पन्दयति इलावृतस्य दक्षिणं भागं प्राप्य वहतीत्यर्थः ॥ १९ ॥

यावदिलावृतमुपस्यन्दयति तावत्पर्यन्तमुभयोरपि रोधसोः तटयोर्या मृत्तिका तद्रसेन तस्या नद्या रसेनानुविध्यमाना संयुज्यमाना वाय्वर्कसंयोगतो यो विपाकः परिणामस्तेन जाम्बूनदं नाम सुवर्णं सदा निरन्तरममरलोकानामाभरणोपयोगि भवति एतदेवाह । यदुसुवर्णं विबुधादयो युवतिभिः सह मुकुटाद्याभरणरूपेण धारयन्ति ॥ २० ॥ २१ ॥

यस्त्विति । सुपार्श्वस्य पर्वतस्य यः पश्चिमो भागस्तत्र निरूढो यो महाकदम्बस्तस्य कोटरेभ्यो विनिःसृताः पञ्चायामपरिणाहाः सकरयोर्बाह्वोः यत्तिर्यगन्तरं तदत्रायामः पञ्चायामः परिणाहः स्थौल्यं यासां ताः पञ्च मधुधाराः सुपार्श्वशिखरात्पतन्त्यः अपरेणेलावृतस्य पश्चिमं भागं प्रत्यात्मानमनुमोदयन्ति सुरभीकुर्वन्ति स्पन्दन्त इत्यर्थः धारा विशिनष्टि । यास्त्विति । उपभुञ्जानानां धारा उपभुञ्जानानां यो मुखनिर्वासितो मुखस्थेन निर्वासितः नितरां सुरभीकृतो वायुः समन्ताच्छतयोजनं सुरभीकरोति निरतिशयसौरभ्ययुक्ता धारा इत्यर्थः ॥२२-२३॥

एवं कुमुदपर्वते निरूढो यः शतवल्श इति प्रसिद्धो वटस्तस्य स्कन्धेभ्यो विनिर्गताः पयोदधिमधुघृतगुडान्नाद्यम्बरशय्यासनाभरणादीनि गुडान्नादीनि भक्ष्याणि अम्बराणि धार्याणि शय्यासनादीनि भोगस्थानानि आभरणानि च दुहन्तीति दुघाः स च ... कुमुदस्यपर्वतस्याग्रात्पतन्तस्तमुत्तरेणेलावृतमिलावृतस्योत्तरभागमुपजोपयन्ति प्रीणयन्ति इलावृतस्योत्तरभागस्थान् लोकान् सुखयन्तीत्यर्थः एतदेवाह । याञ्चदानुपजुषाणानां सेवमानानां प्रजानां वल्यादयः तापविशेषा न भवन्ति किन्तु यावज्जीवं निरतिशयं सर्वोत्कृष्टं सुखमेव भवति वलिस्त्वग्गतो विकारः पलितं केशपतक्रमः श्रमः आमयो रोगः उपसर्गाः सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मोदशोकमोहलोभमदमात्सर्यप्र्यादयः प्रागुक्ता ज्ञेया इत्यर्थः ॥ २४ ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेषां फलानामतिमधुरादिलक्षणेन रसोदेन रसाख्यजलेन पूर्वेणेलावृतमिलावृतवर्षस्य पूर्वप्रदेशमुपधा (१) वतीति केचित्तत्र "धावु गतिशुद्ध्योः" इतिधातोः शुद्धं करोतीत्यर्थः स्वजलप्रवाहेणेति शेषः ॥ १७ ॥

उपजोपाग्निषेवणात् अनुचरीणां दासीनामनुवासयति सौरभ्ययुक्तं करोति ॥ १८ ॥

अनस्थिप्रायाणां बहुलमनन्तर्बीजानामिभकायनिभानामिति । वृद्ध्यारोहार्थमुक्तं नतु तावत्परिमाणनिश्चयेन

अरत्नीनां शतान्यष्टावेकषष्ट्यधिकानि च ।
फलप्रमाणमाख्यातमृषिभिस्तत्त्वदर्शिभिः ॥

इति वायुपुराणवचनात् तत्प्रमाणमवगन्तव्यमयुतयोजनादिति । शिखरस्यैव तावत्त्वं न किन्तु शिखरादवनितलान्तरालप्रदेशस्य तावत्त्वमित्यवगन्तव्यमिलावृतमात्मानं दक्षिणेन दिग्भागेन यावदुपस्यन्दयति तावत्स्थलमुभयोरोधसोस्तीरयोर्जम्बूफलरसेनानुविध्यमाना प्रतिहन्यमाना या मृत्तिका सा जाम्बूनदं नाम सुवर्णं भवतीत्यन्वयः तत्र हेतुर्वाय्वर्केति ॥ १९ ॥ २० ॥ २१ ॥

कोटरेभ्यः वृक्षविवरेभ्यः "व्यामो हस्तावधिः स्मृतः" इति हलायुधः अपरेण पश्चिमेन ॥ २२ ॥

मुखनिर्वासितः मुखनिर्गतः ॥ २३ ॥

इलावृतस्थजनानुपभोजयन्ति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वतः सुरभिश्चान्येषां गन्धैरधिवासितश्च ॥ १७—१८ ॥

अनस्थिप्रायाणामतिसूक्ष्मबीजानां दक्षिणेन दक्षिणस्यां दिशि यावदिलावृतं तावदात्मानं वर्द्धयन्तीति शेषः । नवयोजनसहस्रपर्यन्तं निःसृत्येत्यर्थः ॥ १९ ॥

तावत् पर्यन्तमेव उभयोरेव रोधसोस्तटयोरनुविध्यमाना युज्यमाना या मृत्तिकास्ताः सुवर्णं भवति ॥ २०—२१ ॥

आयामोऽत्र व्यामः स च । व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरमित्युक्तलक्षणः पञ्चभिर्व्यामैः परिमितः परिणाहः स्थौल्यं यासां ताः । केचित्तु पञ्चव्यामपरिणाहा इति पठन्ति अनुमोदयन्ति तत्र लोकप्रशंसाभिरात्मानं हर्षयन्ति ॥ २२—२३॥

शतवल्शः शतस्कन्धः नीचीनाः अधोमुखाः ॥ २४—२८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेषां फलानामतिमधुरश्चासौ सुरभिश्च सुगन्धिश्च गन्धान्तरानधिवासितः बहुलश्चारुणश्च रसः स पयोदमुदकं तेन हेतुनाऽरुणोदा नाम प्रसिद्धा नदी ॥ १७ ॥

यद्यस्य रसस्योपजोषणात्सेवनात् ॥ १८ ॥

अनस्थिप्रायाणामनष्टिप्रायाणाम् ॥ १९ ॥

तावत्सर्वतः ॥ २०—२३ ॥

स्कन्धेभ्यो नीचीनाः अधः पतमानाः काम्यन्ते इति कामाः पदार्थास्तान् दुहन्तीति तथाभूताः के कामा इत्याकाङ्क्षायामाह । पय इति ॥ २४ ॥

---

भाषाटीका ।

उन आम फलों के गिरकर फटजाने से अत्यन्त मधुर सुरभि सुगन्धवाले लाल रस के जल से भई अरुणोदा नाम की नदी मन्दराचल पर्वत के शिखर से गिरती हुई पूर्वकी ओर इलावृतवर्षके मध्य में बहती है ॥ १७ ॥

(१) पाठान्तरम् ।

यानुपजुषाणानां न कदाचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गन्ध्यजरामयमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा भवन्ति यावज्जीवं सुखं निरतिशयमेव ॥ २५ ॥

कुरङ्गकुररकुसुम्भवैकङ्कत्रिकूटशिशिरपतङ्गरुचकनिषधशिनीवासकपिलशङ्खवैदूर्यजारुधिहंसऋषभनागकालञ्जरनारदादयो विंशतिगिरयो मेरोः कर्णिकाया इव केसरभूता मूलदेशे परित उपक्लृप्ताः ॥ २६ ॥

जठरदेवकूटौ मेरुं पूर्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रं पृथुतुङ्गौ भवतः एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतावेवमुत्तरतस्त्रिशृङ्गमकरावष्टभिरेतैः परिस्तृतोऽग्निरिव परितश्चकास्ति काञ्चनगिरिः ॥ २७ ॥

मेरोर्मूर्धनि भगवत आत्मयोनेर्मध्यत उपक्लृप्तां पुरीमयुतयोजनसाहस्रीं समचतुरस्रां शातकौम्भीं वदन्ति ॥ २८ ॥

तामनु परितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयमानेन पुरोऽष्टावुपक्लृप्ताः ॥ २९ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां भुवनकोशवर्णनं नाम
षोडशोऽध्यायः ॥ १६ ॥

भाषाटीका ।

जिस नदी के जल के सेवन से पार्वतीजी की दासी यक्षोंकी स्त्रीजनों के शरीर का सुगन्धित पवन चारोंओर से दश योजन तक देश को सुगन्धित करता है ॥ १८ ॥

इसीप्रकार से बडे ऊंचे से गिरने से फटे हुये विना गुठली प्राय हाथी के शरीर के बरोबर जामुन फलों के रस से भई जम्बू नाम की नदी दश हजार योजन ऊंचे मेरु मन्दर पर्वत के शिखर से पृथिवीपर गिरतीहुई दक्षिण के तरफ इलावृत वर्ष में बहती है ॥ १९ ॥

तिस नदी के दोनों किनारों में जो मृत्तिका है उस नदी के जलसे भीगीहुई सूर्य पवन दोनों के संयोग से पकजाती है तब देवतों के भूषण पहरनेलायक जाम्बूनद नाम का सुवर्णरूप होजाती है ॥ २० ॥

जिस सुवर्ण को देवादिक अपनी स्त्रियोंके सहित मुकुट कङ्कण कटि सूत्रादि भूषण बनाकर धारण करते हैं ॥ २१ ॥

सुपार्श्व पर्वतपर जमा जो महाकदम्ब का पेड उसके खोंतरों से निकली पांच पुरुषमात्र चौडी पांच मधुकी धारा सुपार्श्व पर्वत के शिखर से गिरतीहुई हैं सो पश्चिम की तरफ इलावृत में बहती हैं ॥ २२ ॥

जिन नदियोंके सेवन करनेवाले जनों के मुखसे निकला पवन चारों ओर सौ योजन देश को सुगन्धित करता है ॥ २३ ॥

इसी प्रकारसे कुमुद पर्वतपर जमा जो शतवल्श नाम का बड है तिसके मध्य स्कन्धों से नीचे मुखवाले सब मनोरथों के देनेवाले दूध दही मधु घृत गुड अन्नादि वस्त्रादि शय्या आसन आभरण इनके बहानेवाले पांच नद कुमुद के ऊपर से गिर उत्तरकी तरफ इलावृत में बहते हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशु मेरुमूलाद्योजनसहस्रं त्यक्त्वाग्रे परितः परिखा इव जठरदेवकूटादयस्तिष्ठन्ति अतोऽष्टादशयोजनसहस्रं प्रमाणमत्रोक्तम् ।

वैष्णवादिपुराणेषु परिमाणादि यत्पुनः ।
अन्यथा वर्णितं तत्तु कल्पभेदाद्यपेक्षया ॥

द्विसहस्रं पृथू च तुङ्गौ च ॥ २७ ॥ २८ ॥

यथादिशं प्राच्यादिदिक्षु यथारूपमिन्द्रादियथानितिकम् तुरीयमानेन सार्धद्विसहस्रप्रमाणेन । नामानि पुराणान्तरात् ज्ञातव्यानि यथोक्तम् ।

मेरौ नव पुराणि स्युर्मनोवत्यमरावती ।
तेजोवती संयमनी तथा कृष्णाङ्गना परा ॥
श्रद्धावती गन्धवती तथा चान्या महोदया ।
यशोवती च ब्रह्मेन्द्रवह्न्यादीनां यथाक्रमम् ॥

इति ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कुरङ्गेति। कुरङ्गादयः पर्वताः कुवलयकमलकर्णिकाभूतस्य मेरोर्मूलदेशे केसरभूता इव परित उपक्लृप्ताः विन्यस्ता भान्तीत्यर्थः॥ २६॥

तथा मेरुं पूर्वेण मेरोः पुरस्तान्मेरुमूलाद्योजनसहस्रं त्यक्त्वा जठरदेवकूटौ पर्वतावष्टादशयोजनसहस्रदीर्घौ द्विसहस्रयोजनपृथुतुङ्गौ च भवतः एवं मेरोरपरभागे पवनपारियात्रौ जठरदेवकूटाभ्यां तुल्यायामपृथुतुङ्गौ भवतः तथा मेरोर्दक्षिणतः कैलासकरवीरौ प्रागायतौ पूर्वतो दीर्घौ एवमुत्तरतस्त्रिशृङ्गमकरौ भवतः एभिः परिस्तृतोऽग्निरिवाष्टभिरेतैर्जठरादिभिः काञ्चनगिरिर्मेरुः परितश्चकास्ति द्योतते॥ २७॥

मेरोर्मूर्धन्युपरिभागे मध्यतः मध्यप्रदेशे उपक्लृप्तां भगवतः आत्मयोनेश्चतुर्मुखस्य पुरीमयुतयोजनविस्तारां समचतुरस्रां शातकौम्भीति प्रसिद्धां च वदन्ति तां शातकौम्भीं पुरीमनुलक्ष्य मेरौ परितोऽष्टदिक्षु यथादिशं पूर्वादिदिक्क्रममनतिक्रममाणानामिन्द्रादीनां लोकपालानामष्टौ पुरः अमरावतीतेजोवतीसंयमनीकृष्णाङ्गनाश्रद्धावतीगन्धवतीमहोदयायशोवतीसंज्ञाः तुरीयमानेन अयुतस्य तुरीयभागेन उपक्लृप्ताः सार्द्धद्विशतसहस्रयोजनविशालाः कल्पिता इत्यर्थः॥ २८॥ २९॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षोडशोऽध्यायः॥ १६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उपसर्गो भूताद्युपद्रवः॥ २५॥

कुरङ्गकुररादिपर्वताः मेरोर्मूलदेशे परित उपक्लृप्ताः मेर्वाख्यपद्मकर्णिकायाः केसरा इव स्थिताः॥ २६॥

अष्टादशयोजनसहस्रं दूरप्रदेशे मन्दरगिरिपूर्वभागे जठरदेवकूटौ स्थितौ भवतः उदगायतौ उत्तरदीर्घौ मेरुपूर्वतः इलावृतमेर्वोर्मध्ये अष्टादशयोजनसहस्रे इति स एवार्थो योजनाभेदेन वा एवमपरेण एवं मेरोः पश्चिमभागस्थितसुपार्श्वगिरेः पश्चिमभागे इलावृतमेर्वोर्मध्ये अष्टादशयोजनसहस्रं दूरे पवनपारियात्रौ गिरी तिष्ठतः तावप्युदगायतौ एवं मेरोर्दक्षिणतः कैलासकरवीरौ मेरुमन्दरगिरेरपि वहिर्भागे स्थितौ पूर्वपश्चिमायतौ एवं मेरोरुत्तरभागे कुमुदपर्वतादपि वहिर्भागे शृङ्गमकरौ नाम गिरी आस्ताम् अष्टादशयोजनानां सहस्रमिति सर्वत्र योज्यं तावपि प्रागायतौ द्विसहस्रपृथूत्तुङ्गत्वं च सर्वत्र समं यथा दर्भैः परिस्तृतोऽग्निस्तथैभिरेतैरष्टभिः पर्वतैः परितः परिस्तृतोऽलङ्कृतश्चकास्ति काञ्चनगिरिरित्यर्थः एवमुक्तगिरिषु आयामाद्याधिक्यं लक्षयां द्विसहस्रपृथूत्तुङ्गमानमवगन्तव्यम्॥२७॥

मेरोर्मूर्धनि द्वात्रिंशत्सहस्रयोजनविततेे तस्य मेरोर्मूर्ध्नो मध्ये आत्मयोनेर्विरिञ्चस्य शतकोटिं नाम पुरीं वदन्ति शातकौम्भीं सुवर्णमयीम्॥ २८॥

तुरीयभागेन विरिञ्चिपुर्याश्चतुर्थांशप्रमाणेन सार्धद्विसहस्रयोजनप्रमाणेनेत्यर्थः पुरः पुर्यः तामनुपरित इत्यस्य विवरणं यथादिशमिति॥ २९॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षोडशोऽध्यायः॥ १६॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
षोडशोऽध्यायः॥ १६॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

यथादिशं प्राच्यादिदिक्षु। यथारूपमिन्द्रादिवर्णानतिक्रमेण तुरीयमानेन सार्द्धद्विसहस्रमानेन नामानि पुराणान्तराज्ज्ञातव्यानि। यथोक्तम्

मेरौ नव पुराणि स्युर्मनोवत्यमरावती।
तेजोवती संयमनी तथा कृष्णाङ्गना परा।
श्रद्धावती गन्धवती तथा चान्या महोदया।
यशोवती च ब्रह्मेन्द्रवह्न्यादीनां यथा क्रमम्।

इति॥ २९॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
पञ्चमे षोडशोऽध्यायः सङ्गतः सङ्गतः सताम्॥१६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वलिस्त्वक्सङ्कोचः पलितं केशधावल्यं क्लमः कार्यषु श्रमः वलयादिभिर्ये उपसर्गास्तदादयस्तापविशेषाः न कदाचिद्भवन्ति॥ २५॥ २६॥

एतैः परिश्रितः आवृतः अग्निरिव चकास्ति॥ २७॥

मध्यतः मध्यप्रदेशे॥ २८॥

तां पुरीमनु अनुलक्ष्य परितः यथादिशं पूर्वादिदिक्क्रमनतिक्रम्य यथारूपमिन्द्रादिवर्णानतिक्रमेण तुरीयमानेन सार्द्धद्विसहस्रप्रमाणेनाष्टौ पुरः उपक्लृप्ताः पुराणां नामानि पुराणान्तराज्ज्ञातव्यानि।

मेरौ नव पुराणि स्युर्मनोवत्यमरावती।
तेजोवती संयमनी तथा कृष्णाङ्गना परा।
श्रद्धावती गन्धवती तथा चान्या महोदया।
यशोवतीव च ब्रह्मेन्द्रवह्न्यादीनां यथाक्रमम्।

इति॥ २९॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षोडशाध्यायार्थप्रकाशः॥ १६॥

---

भाषाटीका

नदोंके जिन पदार्थोंके सेवन करने वाले पुरुषों के कभी भी वृद्धपना ग्लानि पसीना दुर्गन्धी केशों का पकना रोग मरण शीत उष्ण कुरूपता आदि उपद्रव ताप नहीं होते हैं सदाकाल अत्यन्त सुखही रहता है ॥ २५ ॥

कुरङ्ग कुरर कुसुम्भ वैकङ्क त्रिकूट शिशिर पितङ्ग रुचक निषध सिनीवास कपिल शङ्ख वैदूर्य जारुधि हंस ऋषभ नाग कालञ्जर नारद आदि बीस पर्वत मेरुके कर्णिका के केसरसरी के मूलदेश मे चारों और से कल्पित हैं ॥ २६ ॥

जठर देवकूट ए दोनों पर्वत मेरुके पूर्व तरफ अठारा हजार योजन उत्तर दक्षिणकी ओर लम्बे हैं दो हजार योजन मोटे तथा ऊंचे हैं इसी प्रकार पश्चिम के तरफ पवन पारियात्र दोनों पर्वत हैं दक्षिण मे कैलास करवीर दोनों पूर्व पश्चिम में लगे हैं ऐसे ही उत्तर मे त्रिश्रृङ्ग मकर दो पर्वत हैं इन आठ पर्वतों से चारों ओर से वेष्टित सुवर्ण का मेरु अग्नि के तुल्य प्रकाश मान है ॥ २७ ॥

मेरू के शिखर पर बीच में भगवान् आत्मयोनि ब्रह्मा कल्पना की हुई अयुत हजार योजन विस्तार वाली सुवर्ण की पुरी चारों ओरसे बरोबर मनोवती नामकी है ऐसा महात्मा जन कहते हैं ॥ २८ ॥

तिस पुरी के पीछे चारों ओर आठ लोकपालों की दिशा के नियम से यथायोग्य ब्रह्मपुरी के चतुर्थांश विस्तार में आठ पुरी कल्पित हैं ॥ २९ ॥

इति श्रीमद्भागवत पञ्चमस्कन्ध षोडश अध्याय का भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे षोडशोऽध्यायः समाप्तः ॥ १६ ॥



## ॥ सप्तदशोऽध्यायः ॥

—————:०:—————

### श्रीशुक उवाच ।

तत्र भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोर्विक्रमतो वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टा या बाह्यजलधारा तच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरञ्जिताखिलजगदघमलापहोपस्पर्शनाऽमला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोऽभिधीयमानातिमहता कालेन युगसहस्रोपलक्षणेन दिवो मूर्द्धन्यवततार यत्तद्विष्णुपदमाहुः ॥ १ ॥

यत्र ह वाव वीरव्रत औत्तानपादिः परमभागवतोऽस्मत्कुलदेवताचरणारविन्दोदकमिति यामनुसवनमुत्कृष्यमाणभगवद्भक्तियोगेन दृढं क्लिद्यमानान्तर्हृदय औत्कण्ठ्यविवशामीलितलोचनयुगलकुड्मलविगलितामलबाष्पकलयाऽभिव्यज्यमानरोमपुलककुलकोऽधुनापि परमादरेण शिरसा बिभर्ति ॥ २ ॥

ततः सप्तऋषयस्तत्प्रभावाभिज्ञा यां ननु तपस आत्यन्तिकी सिद्धिरेतावती भगवति सर्वात्मनि वासुदेवेऽनुपरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयो मुक्तिमिवागतां मुमुक्षव इव सबहुमानमद्यापि जटाजूटैरुद्वहन्ति ॥ ३ ॥

ततोऽनेकसहस्रकोटिविमानानीकसङ्कुलदेवयानेनावतरन्तीन्दुमण्डलमावार्य ब्रह्मसदने निपतति ॥ ४ ॥

तत्र चतुर्धा भिद्यमाना चतुर्भिर्नामभिश्चतुर्दिशमभिस्पन्दन्ती नदनदीपतिमेवाभिनिर्विशति सीताऽलकनन्दा चक्षुर्भद्रेति ॥ ५ ॥

सीता तु ब्रह्मसदनात्केसराचलादिगिरिशिखरेभ्योऽधोऽधः प्रस्रवन्ती गन्धमादनमूर्द्धसु पतित्वान्तरेण भद्राश्ववर्षं प्राच्यां दिशि क्षारसमुद्रमभिप्रविशति ॥ ६ ॥

एवं माल्यवच्छिखरान्निष्पतन्ती ततोऽनुपरतवेगा केतुमालमभिचक्षुः प्रतीच्यां दिशि सरित्पतिं प्रविशति ॥ ७ ॥

भद्रा चोत्तरतो मेरुशिरसो निपतिता गिरिशिखराद्गिरिशिखरमतिहाय शृङ्गवतः शृङ्गादवस्यन्दमाना उत्तरांस्तु कुरूनभित उदीच्यां दिशि जलधिमभिप्रविशति ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः सप्तदशे गङ्गागमनं तच्चतुर्दिशम् ।
इलावृते च रुद्रेण सङ्कर्षणनिषेवणम् ॥ १ ॥

यज्ञलिङ्गस्य यज्ञैरेव लिङ्गं त्रिविक्रममूर्तिर्यस्य विक्रमतो दक्षिणेन पदा भुवं क्रान्त्वा वामपदमुत्क्षिपतो वामपादाङ्गुष्ठनखेन निर्भिन्नमूर्ध्वमुपरिभागो यस्याण्डकटाहस्य तस्य विवरेणान्तः प्रविष्टा या बाह्यजलधारा सा दिवो मूर्धन्यवततारेत्यन्वयः तस्य यच्चरणपङ्कजं तस्यावनेजनेन क्षालनेनारुणं तद्वर्णं कुङ्कुमं तदेव किञ्जल्कास्तैरुपरञ्जिता अत एवाखिलस्य जगतोऽघमलापहमुपस्पर्शनं यस्यास्तथाप्यमला तन्मलसङ्गशून्या साक्षाद्भगवत्पदीति यदनुपलक्षितं जाह्नवीभागीरथीत्याद्युपलक्षणान्तररहितं वचो नाम तेनाभिधीयमाना तस्मिन् समये भगवत्पदी नाम पश्चात्तामान्तराणि जातानीत्यर्थः कोऽसौ दिवो मूर्ध्ना तमाह यद्विति ॥ १ ॥

किं तद्विष्णुपदं तदाह । यत्रेति । वीरव्रतो दृढसङ्कल्पः अस्मत्कुलदेवतायां हरेश्चरणारविन्दोदकमिति हेतोः परमादरेण बिभर्तीत्यन्वयः कथम्भूतः सन् प्रतिक्षणं वर्धमानेन भगवद्भक्तियोगेन दृढमत्यन्तं क्लिद्यमानमन्तर्हृदयं यस्य अत एवौत्कण्ठ्येन

श्रीधरस्वामिकृतभावार्थदीपिका ।

विवशमामीलितं यल्लोचनयुगलं तदेव कुड्मले ताभ्यां विगलितममलं बाष्पं तस्य कलया सहाभिव्यज्यमानं रोमपुलकानां कुलं यस्य ॥ २ ॥

ततः सप्तऋषयस्तस्याः गङ्गायाः प्रभावाभिज्ञाः सन्तो यां जटाजूटैरुद्वहन्तीत्यन्वयः एतावत्येव नातोऽधिकास्तीत्यभिप्रायवन्तः तत्र हेतुः भगवति सन्ततं भक्तियोगलाभेनैवोपेक्षिता अन्ये पुरुषार्था आत्मज्ञानं च यैः कामिव क इव धारयन्ति । प्रत्यक्षं मुक्तिमिव तामागतां मुमुक्षवो जना इव ते ॥ ३ ॥

ततोऽनेकसहस्रकोटीनां विमानानामनीकैः सङ्कुलेन देवयानेनाकाशमार्गेणावतरन्ती सप्तऋषिभ्योऽर्वागेव प्रायशः कर्मिणां गतिरिति ततोऽर्वागेव सङ्कुलत्वमुक्तम् आधारं आप्लाव्य मेरुमूर्द्धस्थे ब्रह्मसदने निपतति ॥ ४ ॥

अभिस्पन्दन्ती अभितो गच्छन्ती ॥ ५ ॥

केसराचलानां मेरुसमानोच्छ्रायत्वात्प्रथमं तेषामादिशिखरेषु मुख्यशृङ्गेषु पतति ततस्तेभ्योऽधोऽधः प्रस्रवन्ती सती ॥ ६ ॥

माल्यवच्छिखरात्केतुमालाभिमुखं निष्पतन्ती चक्षुःसंज्ञा ॥७॥

गिरिशिखरादिति । कुमुदशिखरादुच्चलिता नीलशिखरं तत उच्चलिता श्वेतशिखरन्तदप्यतिहाय शृङ्गवतः शृङ्गादधः स्रवन्ती ॥८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं जम्बूद्वीपपर्वतवर्षतत्परिमाणादिकमभिधायाथ गङ्गागमनकथनपूर्वकमिलावृतादिवर्षेषु रुद्रादीनां संकर्षणादिभगवन्मूर्त्युपासनाप्रकारमुपद्वीपविन्यासं चाह । सप्तदशादित्रिभिरध्यायैः । तत्र भगवत इति । यज्ञस्य लिङ्गस्य यज्ञमूर्तेस्तत्र भगवतः पूज्यस्य विष्णोर्वामनरूपस्य विक्रमतस्त्रिलोकीं पादत्रयेण क्रममाणस्य सतः तस्य वामपादाङ्गुष्ठनखेन निर्भिन्नमूर्ध्वमुपरिभागो यस्य तस्याण्डकटाहस्य विवरेण रन्ध्रेणान्तःप्रविष्टा या बाह्यजलधारा सातिमहता कालेन दिवो मूर्द्धन्यवततारेत्यन्वयः जलधारां विशिनष्टि । तस्य त्रिविक्रमस्य यच्चरणपङ्कजं तस्यावनेजनेन क्षालनेनारुणं कुङ्कुमं तदेव किञ्जल्कास्तैरुपरञ्जितात एवाखिलस्य जगतोऽघं पापमेव मलं तदपहं निवर्तकमुपस्पर्शनं जलं यस्याः सा तत्र हेतुरमला स्वरूपतो दुरितनिरसनक्षमा यद्वा अखिलजगदघमलापहोपस्पर्शनाऽप्यमला अन्तर्मलसङ्गशून्या साक्षाद्भगवत्पदीति यदनुपलक्षितं जान्हवी भागीरथीत्याद्युपलक्षणान्तररहितं यच्चो नामधेयं तेनाभिधीयमाना भूस्पर्शनात्पूर्वं जान्हव्यादिनामान्तररहिता तथा केवलं भगवत्पदीति नामधेयेनाभिधीयमानेत्यर्थः कोऽसौ दिवो मूर्द्धा यत्रावतीर्णा तत्राह । यत्तदिति । यद्विष्णुपदमाहुस्तत्रेत्यर्थः ॥ १ ॥

किन्तद्विष्णुपदं तत्राह । यत्रेति । ध्रुवमण्डले इत्यर्थः यत्र दिवो मूर्द्धनि धीरव्रतः दृढसङ्कल्पः भागवतश्रेष्ठः औत्तानपादिः ध्रुवः अस्मत्कुलदेवताया भगवतः चरणारविन्दोदकमिति हेतोः परमादरेण यां धारामनुसवनं त्रिकालं शिरसाऽद्यापि बिभर्तीत्यन्वयः यद्वा अनुसवनं प्रतिक्षणं वर्द्धमानो यो भगवद्भक्तियोगः तेन दृढमत्यन्तं क्लिद्यमानं प्रीयमाणमन्तःकरणं यस्यातएवौत्कण्ठ्येन विवशमामीलितं च यल्लोचनयुगलं तदेव कुड्मले ताभ्यां विगलितममलं बाष्पं तस्य कलया सहाभिव्यज्यमानं रोमपुलकानां कुलं यस्य तथाभूतः सन्नित्यर्थः ॥ २ ॥

ततः सप्तर्षयः तस्या गङ्गायाः प्रभावाभिज्ञाः सन्तो नोऽस्माकं तपः सिद्धिफलमियं विष्णुपदी सैवैतावती इतोऽधिकं नास्तीत्येवं मन्वाना अद्यापि बहुमानं जटा एव मुकुटानि तैर्वहन्तीत्यन्वयः तत्र दृष्टान्तः । मुमुक्षवो मुक्तिमिवागताम् इति । हेतुः सर्वात्मनि भगवति वासुदेवेऽविच्छिन्नभक्तियोगलाभेनैव [illegible]क्षिता अनादृता अन्यपुरुषार्था अर्थकामादय आत्मगतिः कैवल्यं च यैस्त इति सप्तर्षिविशेषणम् ॥ ३ ॥

ततोऽनेकसहस्रकोटीनां विमानानामनीकैः संघैः संकुलेन देवयानेनाकाशमार्गेणावतरन्त्यधः प्रस्रवन्तीन्दुमण्डलमावार्याप्लाव्य मेरुमूर्द्धस्थे ब्रह्मसदने निपतति ॥ ४ ॥

तत्र चतुर्द्धा विभज्यमाना सीतादिसंज्ञाश्चतस्रो धाराः सीतादिनामभिरभिधीयमाना चतुर्दिशं नदनदीपतिं समुद्रमभिनिविशति समुद्रे प्रविशति "अभिनिविशश्च" इत्याधारस्य कर्मसंज्ञायाम् द्वितीया । नामान्याह । सीतेति ॥ ५ ॥

तत्र चतसृणां धाराणां मध्ये सीता प्राचीना धारा ब्रह्मसदनात्केसरादिशिखरेभ्यः केसराचलादीनि मेरुसमानोच्छ्रायत्वात्प्रथमं तेषामादिशिखरेषु मुख्यशृङ्गेषु पतति ततस्तेभ्योऽधोऽधः प्रस्रवन्ती गन्धमादनस्य मूर्द्धसूपरिभागे पतित्वान्तरेण भद्राश्वं भद्राश्ववर्षस्य मध्ये च स्यन्दमाना प्राच्यां दिशि क्षारसमुद्रं प्रविशति ॥ ६ ॥

तथा चक्षुःसंज्ञा प्रतीचीना धारा माल्यवच्छिखरे निपतिता ततोऽधः प्रस्रवन्ती अनुपरतः अप्रतिहतो वेगो यस्याः सा केतुमालं वर्षमभितो व्याप्य केतुमालस्य मध्ये स्रवन्तीत्यर्थः प्रतीच्यां दिशि सरितांपतिं समुद्रं प्रविशति आधारस्य कर्मत्वविवक्षयात्र द्वितीया एवमुत्तरत्राप्यभिनिविशश्चेत्यत्रोपसर्ग-सङ्घातपूर्वत्वस्यैव विवक्षितत्वात् ॥ ७ ॥

तथा भद्रासंज्ञा धारा उत्तरतो मेरुशिखरान्निपतन्ती गिरिशिखरात्कुमुदशिखरादुच्चलितोर्ध्वं गच्छन्ती नीलशिखरमुच्चलिता श्वेत् पर्वतस्य शिखरमतिहायास्पृष्ट्वैव शृङ्गवतः पर्वतस्य शृङ्गे पतित्या ततोऽधः स्यन्दमाना उत्तरान् कुरूनभितो व्याप्य उदीच्यां दिशि लवणार्णवं प्रविशति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अयत्नेन भागीरथीजलनिषेवया निर्मलान्तःकरणस्य पुंसो हरौ निरतिशयभक्तिः स्यादिति तन्महिमगर्भः तदवतारो निरूप्यतेऽस्मिन्नध्याये । तत्रेत्यादिना । या बाह्यजलधारा अण्डकटाहाद्बहिःस्थिता जलस्य निरन्तरसम्पातरूपा सा यद्विष्णुपदं शिशुमारात्मनो हरेः स्थानमाहुः तत्र दिवोऽन्तरिक्षस्य मूर्द्धनि ध्रुवलोके अवततार प्रकाशितस्वरूपाभूदित्यन्वयः [illegible] धवला तथाप्यरुणैवेत्याह । तच्चरणेति । यस्य हरेश्चरणारविन्दस्य अवनेजनेन प्रक्षालनेन चरणतलगतरजोमिश्रितत्वात् [illegible] अरुणकरजसोपरञ्जिता रागीकृतेव तर्हि तन्निषेविणां रागजनकत्वेन पापजननी स्यादित्यत उक्तमखिलेति अखिलजगतः पापहरम् उपस्पर्शनं यस्याः सा तथा आचमनमात्रेण सर्वपापहरा

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमुत स्नानादिनेत्यर्थः नामकीर्तनादपि दुरितहरा किमुत स्नानादिनेति भावेनाह । साक्षादिति । अनुपलब्धिभयचोभिः ...वर्णादिवचोभिर्वेदपुराणगतैः शालग्रामशिलाभिषेकज... पादोदकत्वमिवौपचारिकं न भवतीत्यनः साक्षादनुपल... पदद्वयं कल्पभेदाद्वामपादेति व्यत्यस्योक्तं नत्वेकस्मिन् ...यति तदुक्तं "वाराहे वामपादं च तदन्येषु च दक्षिणम् । पादं ...षु भगवानुज्जहार त्रिविक्रम" इति ॥ १ ॥

यत्र ध्रुवलोके ॥ २ ॥

यतो ध्रुवलोकात् उपेक्षिता अन्यार्था अन्यविषया आत्मग... ...स्ते तथा ॥ ३ ॥

ततः सप्तर्षिलोकात् देवयानेन मार्गेण इन्द्रादिपुरसम्बन्धेन ...सदने मेरुमध्यस्थिते शतकोटिनाम्नि पुरे ॥ ४ ॥

तत्र ब्रह्मसदनाङ्गणे नदनदीपतिं समुद्रम् ॥ ५ ॥

चतुर्धा भिन्नाया गङ्गाया गतिभेदमाह । सीतेति । क्षारस... ...द्रं लवणसमुद्रम् ॥ ६ ॥ ७ ॥

मेरुशिरसो व्योम्ना निपतन्ती नीलगिरिशिखरे पतित्वा ...तो नीलगिरिशिखरादाकाशेन श्वेतगिरिशिखरमवस्यन्दमाना ...तदप्यतिहाय अतिक्रम्याकाशेन शृङ्गवतः शृङ्गं प्राप्ता ततोऽपि ...मानोत्तरकुरूनतिक्रम्य निषधस्य गिरेः बहूनि कूटानि ...यतिक्रम्याकाशेन हेमकूटहिमाचलयोर्गिर्योर्मध्ये व्योम्ना ...न्ती कूटान्यतिक्रम्य ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

युगसहस्रेत्यत्र युगं नाम ज्योतिःशास्त्ररीत्या पञ्चवर्षात्मकं ...यम् ॥ १—२ ॥

...यापि अवतारसमयानन्तरं सर्वदापीत्यर्थः ॥ ३—१३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गङ्गानामागमं भूमौ भौमस्वर्गसुखं तथा ।
सङ्कर्षणस्य रुद्रेण सेवां सप्तदशोऽब्रवीत् ॥

सुमेरोः परिधिकेसरादिशोभां वर्णयित्वा सर्वशोभाचूडा... ...मतिदीर्घनरशाखाशिखरहीरकमुकुटविशेषायमाणां तन्मूर्ध्नि ...राजमानां श्रीगङ्गां वर्णयंस्तत्प्रादुर्भावप्रकारमाह । तत्र ...वामनावतारसमये विक्रमतः दक्षिणेन पदा भुवं क्रान्त्वा ...वामपादमुत्क्षिपतः "त्रिसाम्यसदनादुरुकम्पयानम्"इति ब्रह्मोक्तौ ...प्रकृत्यावरणपर्यन्तव्याप्तिश्रवणात् याह्या पृथिव्याद्य... ...वरणेभ्यो बहिर्भूता कारणार्णवसम्बन्धिनी चिन्मयी या ...धारा सा दिवो मूर्द्धनि ध्रुवलोकेऽवततारेत्यन्वयः । तच्चरणा... ...वारवनेजने क्षालनसमर्थं अरुणः चरणतलस्यारुणि... ...किञ्जल्कस्तेनोपरञ्जिताखिलजगदघमलापहमुपस्पर्शनं यस्या... ...प्यमला तन्मलसङ्गशून्या साक्षात् भगवत्पदीति यदनुप... ...क्षितं तस्मिन् काले भागीरथीजाह्नवीत्याद्युपलक्षणान्तर... ...हितं वचो नाम तेनाभिधीयमाना यत् द्यौ दिवो मूर्द्धा तत्र ...क्रमत ॥ १ ॥

यत्र विष्णुपदे वीरव्रतो दृढसङ्कल्पः । उत्कृष्यमाणेन प्रतिक्षणमुत्कर्षं प्राप्नुवता भक्तियोगेन अत एवोत्कण्ठ्येन विवशमामीलितं यल्लोचनयुगलं तद्देव कुड्मले ताभ्यां निर्गलितममलं बाष्पं तस्य कलया सह अभिव्यज्यमानं रोमपुलकानां कुलं यस्य सः ॥ २ ॥

एतावतीति । इतोऽधिकपरिमाणा सिद्धिः कापि नास्तीत्यर्थः भक्तियोगलाभेनैव उपेक्षिता अन्ये पुरुषार्था आत्मज्ञानं च यैरिति श्रीस्वामिचरणाः ॥ ३ ॥

देवयानेन आकाशमार्गेण सप्तर्षिभ्योऽर्वागेव प्रायशः कर्मिणां गतिरुक्त एव ततोऽर्वागेव सङ्कुलत्वमुक्तम् । आयातं आप्लाव्य मेरुमूर्द्धस्थे ब्रह्मसदने ॥ ४ ॥ ५ ॥

केसराचलानां मेरुसमानोच्छ्रायत्वात् प्रथमं तेषामादिशिखरेषु मुख्यशृङ्गेषु पतति ततस्तेभ्योऽधोऽधः प्रस्रवन्ती सती भद्राश्ववर्षस्य मध्ये पतित्वेति इलावृतमुल्लङ्घ्येत्यर्थः ॥ ६ ॥

केतुमालमभिलक्ष्य केसराचलात् तत्र पतित्वेत्यर्थः ॥ ७ ॥

गिरिशिखरादिति । केसराचलशिखराद्वर्धालिता नीलशिखरं ततः श्वेतशिखरं तदप्यतिक्रम्य शृङ्गादधः स्रवन्तीति इलावृतादिवर्षत्रयमुल्लङ्घ्येत्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीगङ्गावतरणाभिलापने श्रीसङ्कर्षणरुद्रयोः सेव्यसेवकसम्बन्धश्च वर्ण्यते । तत्रेति सप्तदशेनाध्यायेन । तत्र पुर्यां गङ्गा आगमेति शेषः एतदेव भगवत इत्यादिना ब्रह्मसदने निपततीत्यन्तेन प्रपञ्चयति । बलियज्ञे लिङ्गं त्रिविक्रममूर्तिर्यस्य साक्षाद्भगवतः विक्रमतः दक्षिणेन पदा भुवं क्रान्त्वा वामपादमुत्क्षिपतो वामपदाङ्गुष्ठनखेन निर्भिन्नमूर्ध्वमुपरिभागो यस्याण्डकटाहस्य तस्य विवरेण छिद्रेणान्तर्ब्रह्माण्डमध्ये प्रविष्टा या बाह्यजलधारा सातिमहता कालेन दिवो मूर्द्धन्यवततारेत्यन्वयः तस्य विष्णोश्चरणपङ्कजं तस्यावनेजनेन क्षालनेनारुणं कुङ्कुमं तदेव किञ्जल्कास्तैरुपरञ्जिता अत एवाखिलजगतः अघं पापमेव मलं तदपहं तन्निर्णोदकमुपस्पर्शनं यस्याः सा तथाप्यमला साक्षाद्भगवत्पदीति यदनुपलक्षितं जाह्नवीभागीरथीत्याद्युपलक्षणान्तररहितं वचो नामधेयं तेनाभिधीयमाना तदानीं भगवत्पदीत्येकेनैव नामधेयेन सङ्कीर्त्यमानेत्यर्थः दिवो मूर्द्धानं दर्शयति । यदिति ॥ १ ॥

यत्र विष्णुपदे वीरे गरुडवाहने व्रतानि यस्य सः अस्मत्कुलदेवताचरणारविन्दजलमितिहेतोः यानद्यसवनं त्रिवार्द्धं परमादरेण शिरसा बिभर्ति कथम्भूतः उत्कृष्यमाणेन भक्तियोगेन दृढं यथा तथा क्लिद्यमानमन्तर्हृदयं यस्य सः अत एवोत्कण्ठ्येन विवशमामीलितं यल्लोचनयुगलं तद्देव कुड्मले ताभ्यां विगलितस्यामलबाष्पस्य कलया सदाभिव्यज्यमानरोमपुलकानां कुलकं यस्य स एवं विध इत्यर्थः ॥ २ ॥

ततस्तदनन्तरं ननु अहो तपसः आत्यन्तिकी निरतिशया सिद्धिः एतावती का इयं विष्णुपदी इति एवं तस्याः प्रभावाभिज्ञा जटाजूटैरद्याप्युद्वहन्ति कथम्भूताः भगवत्यनुपरतभक्तियोगलाभेनैवोपेक्षिताः अन्यार्थात्मगतयः भक्तियोगेतरपदार्थविषयकमनोवेगा यैस्ते ॥ ३ ॥

सुमपटलमावाच्याप्लाव्य ब्रह्मसदने मेरुमूर्द्धस्थे ॥ ४ ॥ ५ ॥

तथैवालकनन्दा दक्षिणेन ब्रह्मसदनाद्बहूनि गिरिकूटान्यतिक्रम्य हेमकूटाद्धैमकूटान्यतिरभसतररंहसा लुठयन्ती भारतमभिवर्षं दक्षिणस्यां दिशि जलधिमभिप्रविशति यस्यां स्नानार्थं चागच्छतः पुंसः पदे पदेऽश्वमेधराजसूयादीनां फलं न दुर्लभमिति ॥ ९ ॥

अन्ये च नदा नद्यश्च वर्षे वर्षे सन्ति बहुशो मेर्वादिगिरिदुहितरः शतशः ॥ १० ॥

तत्रापि भारतमेव वर्षं कर्मक्षेत्रमन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति ॥ ११ ॥

एषु पुरुषाणामयुतपुरुषायुर्वर्षाणां देवकल्पानां नागायुतप्राणानां वज्रसंहननबलवयोमोदप्रमुदितमहासौरतमिथुनव्यवायापवर्गवर्षधृतैकगर्भकलत्राणां तत्र तु त्रेतायुगसमः कालो वर्तते ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

केसराचलाः केसरभूताः कुरङ्गादयः तेषां मेरुसमानोच्छ्रायत्वात्तदादयो येऽन्ये गिरयो मन्दरादयस्तेषां शिखरेभ्यः ॥ ६ ॥

एवं क्रमतो ब्रह्मसदनादधोऽधः प्रस्रवन्ती चक्षुःसंज्ञामाल्यवच्छिखरात्केतुमालाभिमुखं निष्पतन्ती प्रतीच्यां दिशि सरित्पतिं प्रविशति ॥ ७ ॥

भद्रा च गिरिशिखरादुत्पतिता श्वेतशिखरं तदप्यतिहाय शृङ्गवतः शृङ्गादवस्यन्दमाना अधःस्रवन्ती उत्तरान् कुरून् अभितः प्लाव्य लवणार्णवमभिप्रविशति ॥ ८ ॥

भाषा टीका ।

श्रीशुकदेवजी बोले तिस मेरुपर साक्षात् यज्ञमूर्त्ति वामन भगवान् विष्णु के पराक्रम करने के समय दहिने पाद से पृथिवी को आक्रमण करके बामपाद को ऊपर की तरफ फेंकने से अंगुष्ठ के नखसे अण्ड कटाह के उपरि भाग के फूट जाने से कारणसमुद्र की जो छिद्र में पैठी हुई बाहिर की जल धारा तिस से प्रक्षालन करनेसे लाल भया जो कुंकुम जल सोई कमल केसर भये तिनो से संयुक्त सब प्राणियों के पापरूपी मलको नाश करने वाला है स्पर्श जिसका ऐसी स्वयं निर्मल साक्षात् भगवत्पदी इस शब्द से युक्त है उपलक्षणरहित नाम से कथन करने के योग्य जो गंगाजी सो बड़े हजारों युगों से उपलक्षित काल से आकाश के ऊपर ध्रुव लोक में उतरी है जिस स्थान को विष्णु पद करके कहते हैं ॥ १ ॥

जहां पर परम भागवत दृढ सङ्कल्प वाले उत्तानपाद के पुत्र परमभागवत ध्रुवजी हमारे कुल देवता के चरण कमल का जलहै करके निरंतर बढ़ने हुये भगवद्भक्ति योग से अत्यंत हृदय के आर्द्र होने से उत्कण्ठाके परवश होने से किञ्चित् दोनों लोचन कमल जिनके बंद होगये हैं तिनमें आंसुओं की धारा गिरती है सब शरीर में रोमावली खड़ी होगई है सो ध्रुव जी अभी तक भी परम आदर से जिस गंगा को मस्तक से धारण करते हैं सो गङ्गा उतरी हैं ॥ २ ॥

तिसके नीचे श्रीगंगाजी के प्रभाव के जानने वाले सप्त ऋषि हैं निश्चित है कि तपस्या की सिद्धि इतनी ही है जो कि भगवान् वासुदेव सर्वात्मा के विषय निरंतर भक्ति योग के लाभ से उन सप्त ऋषियों ने और सब धर्म तथा मार्ग की भी उपेक्षा करके साक्षात् आई हुई मुक्ति की श्रीगङ्गाजी को मानकर मुमुक्षुरूपीके स्वयं बड़े आदर से अभी पर्यंत अपने जटों से श्रीगङ्गाजी को धारण किया है।

फिर उस सप्तर्षि के स्थान से अनेक हजार विमानों के समूह से शोभित देवतों के मार्ग से उतरती हुई चन्द्र मण्डल को पवित्र करती हुई ब्रह्माजी के स्थान में गिरती हैं ॥ ४ ॥

तहांपर चार भाग होकर चार नामों से चार दिशों को जाती हुई चारों समुद्रों में प्रविष्ट होजाती हैं सो अलकनन्दा चक्षुः भद्रा एनाम है ॥ ५ ॥

सीता तो ब्रह्मस्थान से केसराचलादि पर्वतों के शिखर से नीचे नीचे गिरतीहुई गन्ध मादन पर्वत के मस्तकों में गिरके भद्राश्ववर्ष के मध्यमें होकर पूर्वदिशा में खारीसमुद्र में मिलती है ॥ ६ ॥

ऐसेही चक्षुनदी माल्यवान् पर्वत के शिखर से गिरती हुई बड़े वेग से चलकर केतु मालवर्ष में होकर पश्चिम दिशा के समुद्र में प्रविष्ट होती है ॥ ७ ॥

भद्रा नदी उत्तर की तरफ मेरु के शिखर से गिरकर पर्वत शिखर से दूसरे शिखर जातीहुई शृङ्गवान् पर्वत के शृङ्ग से चलती हुई उत्तर कुरु देशों में होकर उत्तर दिशा के समुद्र में प्रविष्ट होती है ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतिरभसतररंहसा अस्खलिततीव्रतरवेगेन ॥ ९ ॥

बहुशो बहुविधाः । मेर्वादिगिरीणां दुहितरस्तत्प्रसूताः ॥ १० ॥

दिव्यभौमबिलभेदात्त्रिविधः स्वर्गः तत्र भौमस्वर्गस्य स्थानानि व्यपदिशन्ति ॥ ११ ॥

अयुतं पुरुषमानेन आयुर्वर्षाणि येषाम् वज्रवद्दृढं संहननं देहः तस्मिन् बलवयोमोदास्तैः प्रमुदितानि यानि महासौरतानि मिथुनानि तेषां व्यवायापवर्गे सम्भोगावसाने एकवर्षशेषे धृत एको गर्भो यैस्तादृशानि कलत्राणि येषां त्रेतायुगसमः कालः

यत्र ह देवपतयः स्वैः स्वैर्गणनायकैर्विहितमहार्हणाः सर्वर्तुकुसुमस्तवकफलकिसलयश्रिया नम्यमानविटपलताविटपिभिरुपशुम्भमानरुचिरकाननाश्रमायतनवर्षगिरिद्रोणीषु तथा चामलजलाशयेषु विकचविविधनववनरुहामोदमुदितराजहंसजलकुक्कुटकारण्डवसारसचक्रवाकादिभिर्मधुकरनिकराकृतिभिरुपकूजितेषु जलक्रीडादिभिर्विचित्रविनोदैः सुललितसुरसुन्दरीणां कामकलिलविलासहासलीलावलोकाकृष्टमनोदृष्टयः स्वैरं विहरन्ति ॥ १३ ॥

नवस्वपि वर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणां तदनुग्रहायात्मतत्त्वव्यूहेनात्मनाद्यापि सन्निधीयते ॥ १४ ॥

इलावृते तु भगवान् भव एक एव पुमान्न ह्यन्यस्तत्रापरो निर्विशति भवान्याः शापनिमित्तज्ञो यत्प्रवेक्ष्यतः स्त्रीभावस्तत्पश्चाद्वक्ष्यामि ॥ १५ ॥

भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महापुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः सङ्कर्षणसंज्ञामात्मसमाधिरूपेण सन्निधाप्यैतदभिगृणन् भव उपधावति ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुखोत्कर्षात् । कृतयुगे हि सर्वे ध्याननिष्ठाः । द्वापरादौ तु दुःखबहुलाः ॥ १२ ॥

यत्र ह येषु हि वर्षेषु देवपतयः स्वैः स्वैः सेवकगणेषु मुख्यैः कृतमहोपचाराः सन्तः स्वैरं विहरन्तीत्यन्वयः केषु स्थानेषु सर्वेषु ऋतुषु कुसुमस्तवकादीनां श्रिया समृद्ध्यात्यन्तं नम्यमाना विटपास्तदाश्रिता लताश्च येषु तैर्विटपिभिरुपशुम्भमानानि शोभमानानि रुचिराणि काननानि येषु तेष्वाश्रमायतनेषु वर्षगिरिद्रोणीषु च तथा अमलेषु जलाशयेषु विकचानि विकासीनि विविधानि नवानि च यानि वनरुहाणि नीरजानि तेषामामोदेन मुदितै राजहंसादिभिर्मधुकरनिकराणां चाकृतिभिर्जातिविशेषैरुपकूजितेषु कामेन कलिलैः क्षुभितैर्विलासादिभिराकृष्टं मनो दृष्टिश्च येषां ते ॥ १३ ॥

नवस्वपि वर्षेषु ये पुरुषास्तेषां तदनुग्रहाय स चासौ वक्ष्यमाणोऽनुग्रहस्तदर्थमात्मतत्त्वव्यूहेन स्वमूर्तिसमूहेन सन्निधीयते सन्निहितो भवति ॥ १४ ॥

अपरोऽर्वाचीनः पश्चान्नवमस्कन्धे ॥ १५ ॥

भवानी नाथः स्वामिनी येषां तैः स्त्रीगणानामर्बुदसहस्रैरवरुध्यमानः सर्वतः सेव्यमानः आत्मनः प्रकृतिं कारणमात्मसमाधिध्यानं यस्य तेन रूपेण एतद्वक्ष्यमाणं मन्त्रादिकमभिगृणन् जपन् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथैवालकनन्दासंज्ञा धारा मेरौ ब्रह्मसदनाद्दक्षिणतः स्रवन्ती बहूनि गिरिशिखराण्यतिक्रम्य मध्यस्थपर्वतशिखराग्रपृष्ठेन हेमकूटहिमवत्कूटानि हेमकूटहिमवत्पर्वतयोः शृङ्गाण्यतिरंहसा विस्खलितवेगेन लुठन्ती भिन्दन्ती भारतं वर्षमभिप्राप्य दक्षिणस्यां दिशि समुद्रमनुप्रविशति अन्ये च नदा नद्यश्च मेर्वादिगिरीणां दुहितरः तत्प्रसूता वर्षे शतशः सन्ति ॥ ९ । १० ॥

तत्रापि जम्बूद्वीपेऽपि भारतं वर्षमेव कर्मक्षेत्रं कर्मणां सुखदुःखनिमित्तानां पुण्यापुण्यरूपाणां क्षेत्रमनुष्ठानस्थानं व्यपदिशन्तीत्युत्तरेणान्वयः अन्यानि त्वष्टौ वर्षाणि स्वर्गिणां पुण्यकर्मणां पुण्यशेषस्य भुक्तावशिष्टस्य पुण्यकर्मण उपभोगस्थानान्यत एव भौमानि स्वर्गपदानि व्यपदिशन्ति न तु तानि पुण्यापुण्यकर्मक्षेत्राणीत्यर्थः नन्वत्र केवलेष्टापूर्तदत्तकर्मकारिणां धूमादिना पितृयाणेन पथा चन्द्रमसं गतानां तत्र सुखानुभववर्धितपुण्यकर्मणां पुनरत्रागमनं श्रुतं "यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्त इति सम्पतन्त्यनेन स्वर्गं लोकमिति संपातः कर्मोच्यते श्रुत्यन्तरं च ।

प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् ।
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे

इति पुण्यापुण्यकर्मानुष्ठानमित्यर्थः तत्कथं पुण्यशेषावस्थानं कथं अन्तरं तेषां तद्भोगस्थानत्वम् । उच्यते तावदवश्यं भोगावशिष्टानामभुक्तफलानामकृतप्रायश्चित्तानां कर्मणां सद्भावो वक्तव्यः अन्यथेह कर्मनिमित्तस्य जन्मनोऽसम्भवात्पुनरवरोहणानुपपत्तेः तथा च श्रूयते "रमणीयचरणा रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा" इति स्मृतिरपि "वर्णाश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तसुखमेधसो जन्म प्रतिपद्यन्त" इति एवं च भुक्तावशिष्टेन पुण्येन कर्मणातिशयविशिष्टभोगार्थं तद्देशोत्पत्तिः सम्भवतीति ॥ ११ ॥

तान्यष्टौ वर्षाणि वर्णयति । येष्विति । यत्र हेति च गद्यद्वयेन । येष्विति येष्वष्टसु वर्षेषु पुरुषाणां त्रेतायुगसमः कालो वर्तते सुखोत्कर्षात्त्रेतायुगसाम्यमुक्तं कृतयुगे हि सर्वे ध्याननिष्ठाः द्वापरादौ तु दुःखबहुलाः कथम्भूतानां देवतुल्यानां नागायुतबलानां पुरुषाणामयुतं पुरुषमानेनायुर्वर्षाणि येषां वज्रवद्दृढं संहननं शरीरं तस्मिन् यौवनयोनोद्भासैः प्रमुदितानि यानि महान्ति सौरतानि येषां तानि मिथुनानि तेषां व्यवायापवर्गोऽसंभोगावसाने एकवर्षावशिष्टे आयुषि भृत एको गर्भो यैस्तादृशानि कलत्राणि येषाम् ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत्र वर्षे देवपतयः देवश्रेष्ठाः स्वैः स्वैः सेवकगणानां नायकैः-विहितमहार्हणाः कृतमहोपचाराः सन्तः स्वैरं विहरन्तीत्यन्वयः एतेषु स्थानेषु सर्वेषु सत्सु कुसुमस्तवकादीनां श्रिया समृद्धयात्यन्तं नम्यमानाः प्रह्वीभूताः शाखा लताश्च येषां तैर्विटपिभिर्वृक्षैरुपशोभमानानि रुचिराणि काननानि येषु तेष्वाश्रमायतनेषु गिरिद्रोणीषु च तिर्यगन्तरान्तर्भूमिषु तथामलेषु जलाशयेषु च विकचानि विविधानि नवानि वनरुहाणि नीरजानि तेषामामोदेन प्रमुदितैः राजहंसादिभिर्मधुकराणां चाकृतिभिः जातिविशेषैरुपकूजितेषु सत्सु तेषु जलक्रीडायां ये विविधा विनोदास्तैः सुललितानामतिसुन्दरीणां सुरस्त्रीणां कामेन कलिलैः क्षुभितैः विलासादिभिराकृष्टं मनो दृष्टिश्च येषाम् एवम्भूताः सन्तः स्वेच्छापूर्वकं विहरन्तीत्यर्थः ॥ १३ ॥

इलावृतादिषु नवस्वपि वर्षेषु भगवान्नारायणः महापुरुषेण तत्तद्वर्षपतिना सेव्यमानः पुरुषाणां तत्तद्वर्षपुरुषाणां वक्ष्यमाणानुग्रहाय पुरुषाननुग्रहीतुमात्मतत्त्वव्यूहेनात्मना विगत ऊहस्तर्कः व्यूह आत्मतत्त्वस्य जीवतत्त्वस्य व्यूहो यस्मिंस्तेन जीवैर्दृष्टवस्तुसजातीयत्वेन चिन्तयितुमशक्येनात्मनेत्यर्थः। यद्वा । आत्मनः स्वात्मनः तत्त्वं तस्य भावस्तत्त्वं कल्याणगुणास्तेषां व्यूहः समूहो यस्य तेनात्मना समस्तकल्याणगुणविशिष्टेनात्मनेत्यर्थः नरवात्मतत्त्वव्यूहेन सङ्कर्षणादिरूपेणेत्यर्थः हरिवर्षादिषूपास्यानां नरहर्यादिरूपाणां विभवत्वेन व्यूहत्वाभावात् नवस्वपि वर्षेष्वित्यनेन सह विरोधापत्तेः सन्निधीयते सन्निहितो भवतीत्यर्थः ॥ १४ ॥

तत्रेलावृतादिषु क्रमेणोपास्यमानरूपं तदुपासकं चाह । इलावृते वर्षे भगवान् भवो रुद्र एवैकः पुरुषो वसति नापरः पुरुषस्तत्र वसति तत्र हेतुः भवान्याः शापरूपं यन्निमित्तं स्त्रीत्वनिमित्तं तज्जानातीति तथा भवान्याः शापनिमित्तज्ञोऽपरः पुरुषस्तत्र न वसति यदि शापमजानन्नपि तत्र प्रविशति तर्हि स्त्रीत्वमाप्नोतीत्याह । यत्प्रविष्टस्य यत्रेलावृते प्रविष्टस्य स्त्रीभाव आपद्यते तत्र प्रविष्टस्य स्त्रीत्वनिमित्तं शापरूपं पश्चान्नवमस्कन्धे वक्ष्यामीत्यर्थः॥१५॥

तत्र भवानी रुद्राणी नाथः स्वामिनी ईश्वरी येषां तैः स्त्रीणामर्बुदसहस्रैरवरुध्यमानः सेव्यमनः भवो रुद्रः भवानीनाथ इति पृथक्पदं भवविशेषणं वा अनेन भवानीसामीप्यं विवक्षितम् आत्मनः स्वस्य प्रकृतिं कारणभूतां चतुर्मूर्तेर्वासुदेवादिरूपेणावस्थितस्य भगवतो महापुरुषस्य सङ्कर्षणसंज्ञां तुरीयां मूर्तिरूपमित्यर्थः वासुदेवप्रद्युम्नानिरुद्धसङ्कर्षणक्रमविवक्षया तुरीयामित्युक्तं कमलनाद्वरणात् तामसीं तमोऽधिष्ठात्रीं तमःशब्देनात्र प्रधानं विवक्षितम् "तम आसीत्तमसा गूढमग्रे प्रकेतम् अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते" इति प्रयोगात् ज्ञानावरणाच्च तमसो नियन्त्रीमित्यर्थः आत्मनि चित्ते समाधिरेव रूपमाकारो यस्य तेन उपायेनेति शेषः सन्निधाप्य साक्षात्कृत्य एतद्वक्ष्यमाणं मन्त्रात्मकं वाक्यमनुगृणन् जपन्नुपधावति स्तौति भज इत्यादिभिरित्यर्थः ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रभसतरः सम्भ्रमातिशयस्तस्य वेगेनोपर्यधःपाषाणशिखरेषु लुठन्ती स्खलिता परिवर्तमाना ॥ ९ ॥ १० ॥

नवानां वर्षाणां विशेषमाह । अत्रापीति । कर्मक्षेत्रं पु[...] पापलक्षणकर्माचरणस्थानं व्यपदिशन्ति अन्यान्यष्टवर्षाणि स्व[...] पुण्यकर्मणा स्वर्गं प्राप्तानां तत्र स्थित्वा पुण्यफलभोगयो[...] स्वर्गप्राप्त्यवशिष्टपुण्यानुभवस्थानानि व्यपदिशन्तीत्यन्वयः वि[...] मानीत्यत्राह । भौमानीति । भूमिसम्बन्धसुःखदिसंभिन्न[...] नानि ॥ ११ ॥

येषु वर्षेषु वसतां त्रेतायुगसमः कालो वर्तत इत्यन्वयः। नरवर[...] वरोधे राजयोग्यगृहे मिथुनानां यो व्यवायः ग्राम्यधर्मलक्ष[...] रतिस्तस्यापवर्गे अवसाने धृत एकगर्भो यैस्तानि धृतैकगर्भा[...] तानि च कलत्राणि येषां ते धृतैकगर्भकलत्रास्तेषां वज्रवत्[...] संहननं शरीरं बलं वयश्च मोदश्च साधारणं सुखं प्रमुदि[...] प्रमोदः विशिष्टसुखं च येषां ते तथा महत्सौरतं निरन्तरसुर[...] क्रिया तस्यां निरताश्च वज्रसंहननबलवयोमोदप्रमुदिताश्च मह[...] सौरतनिरताश्च नरवरावरोधमिथुनव्यवायापवर्गधृतैकगर्भक[...] त्राश्च ते तथा तेषां बहुगर्भधारणे देहशैथिल्यात् फलत्रतार[...] नाशात् सम्भोगानुपपत्तिभयात्तदवसाने सन्तत्यर्थमेकमेव ग[...] धारयन्तीति किंवदन्ती ॥ १२ ॥

यत्र येषु देवपतयः स्वैरं विहरन्ति किलेत्यन्वयः। केषु स्थाने[...] ष्विति तत्राह । उपशोभमानेत्यादिना। सर्वर्तुसमुद्भूतानां पुष्पस्त[...] कानां फलानां किसलयानां च श्रिया सम्पदा आनम्यमाना भूत[...] नमन्त्यो विटपलता येषां ते तथा ते च आविटपिनः भारतवर्ष[...] वृक्षविलक्षणा वृक्षा ये तैरुपशोभमानेषु रुचिरेषु काननवत्स[...] आश्रमायतनेषु वर्षभवगिरीणां द्रोणीषु पार्श्वद्वयोन्नतमध्यनिम्न[...] लक्षणप्रस्थेषु अमलजलाशयेषु निर्मलसरस्सु विकचानां विविधा[...] वनरुहाणां पद्मानामामोदजन्यगन्धेन मुदितैः राजहंसादिभिः भृङ्ग[...] णामार्तिभिः शब्दैरुपकूजितेषु शब्दितेषु सरोविशेषणमेतत् सु[...] शृङ्गारयुतसुरस्त्रीणां कामेन कलिलैर्विलासादिभिराकृष्टा म[...] दृष्टयो येषां ते तथा मनांसि च दृष्टयश्च मनोदृष्टयः ॥ १३ ॥

न केवलं नववर्षस्थानां व्यवायादिक्रियया कालयापनम[...] तु श्रीनारायणसपर्ययेति भावेनाह । नवस्विति । आत्मनः स्वस्य[...] तत्त्वानामनारोपितरूपाणां व्यूहेन नवसङ्ख्याविशिष्टेन समूहेन[...] वाद्य सन्निध्याप्य पूज्यत इत्यर्थः वर्षस्थैः पुरुषैरिति शेषः ॥[...]

इलावृते तु विशेषोऽस्तीत्याह । इलावृत इति । तत्रेलावृतमार[...] भ्य नववर्षसन्निहितरूपाणि तदुपासकाश्च क्रमेणोच्यतोवाह । इला[...] वृत इति ॥ १५ ॥

भवानी पार्वती नाथा येषां तानि तथा तैः अवरुध्यमान[...] परिवियमाणः वासुदेवादिचतुर्मूर्तेः तुरीयां चतुर्थांशभूतां ताम[...] सीं संहारकारणतमोगुणप्रवर्तनीमात्मनः स्वस्य भवस्य प्रकृ[...] प्रकृष्टकारणभूतामात्मसमाधिरूपेण मनस एकाग्रताकारेण[...] उपधावत्युपास्ते ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

नवस्वपीत्यादिना । सर्वेषामवताराणां नित्यप्राकट्यं दर्शित[...] तत्र चात्मनेति । स्वरूपांशेन नतु प्रतिमारूपेणेत्यर्थः । प्रद्यु[...] विभावे गतिविजासादेरपि वर्णयिष्यमाणत्वात् । अत्रापि स[...] धीयत इति यथाक्रमं नियमेव ज्ञेयम् ॥ १४ ॥ १५ ॥

तामसीं तमोगुणप्रेरिकां प्रलयहेतुत्वात् ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तथैवेति वर्षशतमुल्लङ्घ्य गिरिशिखराद्गिरिशिखरे पतन्त्यर्थः। भारतमभिलक्ष्य पतित्वेति शेषः। अत्र द्वीपमध्यवर्तीनि बहूनि वर्षाणि उल्लङ्घ्योल्लङ्घ्यापि चलन्ती प्राच्यादिषु चतुर्षु समुद्रसमीपवर्त्तिष्वेव वर्षेषु कुलाचलादवरुह्य भूमौ प्रवर्तिता तत् खलु स्वपति समुद्रमभिलक्ष्य लज्जानम्रमुखी चौदर्यं परिहरन्ती चेति ज्ञेयम् ॥ ९ ॥ १० ॥

दिव्यभौमबिलभेदात्त्रिविधः स्वर्गः। तत्र भौमस्वर्गस्य पदानि स्थानानि ॥ ११ ॥

अयुतं पुरुषस्य मनुष्यस्य मानेन आयुर्वर्षाणि येषां दृढं संहननं शरीरं तस्मिन् बलवयोमोदास्तैः प्रमुदितानि यानि महासौरतानि मिथुनानि स्त्रीपुरुषयुगलानि तेषां व्यवायापवर्गे सम्भोगावसाने एकवर्षशेषे आयुषि धृतैकगर्भाणि कलत्राणि येषां तेषाम्। त्रेतायुगसम इति। विषयसुखोत्कर्षात् यतः कृतयुगे हि सर्वे ध्याननिष्ठाः द्वापरादौ दुःखबहुलाः॥१२॥

यत्र ह देवपतयः स्वैरं विहरन्तीत्यन्वयः। सर्वेष्वेव ऋतुषु कुसुमादीनां श्रिया समृद्ध्या अत्यन्तं नम्यमाना विटपाः येषां तैराश्रितविटपिभिरुपशुम्भमानेषु शोभमानेषु रुचिरकाननादिषु तत्र द्रोणियो वर्षस्थानिकरपर्वता राजहंसादिभिर्मधुकरनिकराणाञ्च आकृतिभिर्जातिविशेषैरुपकूजितेषु अभिस्करणे निष्ठा पष्ठचभाव प्राः॥ १३ ॥

पुरुषाणां तदनुग्रहाय स चासौ वक्ष्यमाणोऽनुग्रहश्चेति तस्मै तदर्थम् आत्मतत्त्वव्यूहेन स्वमूर्त्तिसमूहेन सन्निधीयते सन्निहितो भवति। अत्र उपास्यदेवतावर्षेषु भगवन्मूर्त्तयः प्रायः प्रतिमारूपा एव ज्ञेयाः। आविराविर्भवेन्नि प्रह्लादस्योपरिष्टादुक्तेः ॥१४॥

पञ्चाशवमस्कन्धे ॥ १५ ॥

भवानी नाथा येषां तैः अवरुध्यमानः सर्वतः सेव्यमानः तामसीं तमःकार्यभूतस्य संहारस्य प्रवर्त्तयित्रीं वस्तुतस्तु तेषां तमोरजःसत्त्वेभ्योऽपि परां शुद्धचिन्मयीमित्यर्थः। न यस्य मायेत्यादिना त्रिभिर्विहीनामित्यादिना च तथा प्रतिपाद्यमानत्वात् आत्मनः प्रकृतिमंशित्वात् कारणम्। आत्मनः समाधिध्यानं यत्र येन रूपेण आकारेण ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अतिरभसतररंहसा अस्खलिततीव्रतरवेगेन लुठन्ती भिन्दन्ती ॥ ९—१० ॥

कर्मक्षेत्रं भोगमोक्षसाधनानुष्ठानस्थानं दिव्यभौमबिलभेदात्त्रिविधः स्वर्गस्तत्र भौमस्वर्गस्य पदानि स्थानानि व्यपदिशन्ति "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इति कोशात् ॥ ११ ॥

एषु अष्टवर्षेषु पुरुषाणामयुतं पुरुषमानेन आयुर्वर्षाणि येषां देवकल्पानां गजायुतबलानां वज्रसंहनने दृढे शरीरे बलवयोमोदास्तैः प्रमुदितानि यानि महासौरतमिथुनानि महासम्भोगयुक्तस्त्रीपुरुषयुगलानि तेषां व्यवायापवर्गे सम्भोगान्ते भृत एको गर्भो यैस्तानि कलत्राणि येषां तेषां त्रेतायुगसमः कालो वर्त्तते विषयसुखाधिक्यात् कृतयुगे पुरुषाणां ध्यानसुखं द्वापरादौ तु दुःखाधिक्यमतस्त्रेतासम इत्युक्तम् ॥१२॥

यत्र येषु अष्टवर्षेषु स्वैः स्वैर्गणनायकैर्विहितानि रचितानि महार्हणानि महापूजनानि येषां ते देवपतयः सर्वर्त्तुषु कुसुमस्तबकादीनां श्रिया समृद्ध्या आनम्यमानाः विटपाः शाखाः तदाश्रिता लताश्च येषु तैर्विटपिभिः उपशुम्भमानानि शोभमानानि रुचिरकाननानि येषु तेषु आश्रमायतनेषु वर्षगिरिद्रोणीषु च विचित्रविनोदैः स्वैरं विहरन्ति तथैव विविधानि नवानि च वनरुहाणि जलजानि तेषामामोदेन प्रमुदितैः राजहंसादिभिः मधुकरनिकराणां च आकृतिभिर्जातिविशेषैः उपकूजितेषु अमलजलाशयेषु जलक्रीडादिभिश्च स्वैरं विहरन्ति कथम्भूताः सुभ्रूललितानां सुरसुन्दरीणां कामेन कलितैः स्मितैर्विलासादिभिराकृष्टं मनो दृष्टिश्च येषां ते ॥ १३ ॥

पुरुषाणामुपासकानां स चासौ वक्ष्यमाणोऽनुग्रहस्तदर्थम् नवस्वपि वर्षेषु आत्मना स्वत एव कर्मकालयातायातनेत्यर्थः आत्मतत्त्वस्य व्यूहः सङ्कर्षणादिमूर्त्तिसमूहस्तेन संनिधीयते संनिहितो भवति ॥ १४ ॥

परो भगवान् उपास्यः श्रीसङ्कर्षणः सङ्कर्षणापेक्षया अपरः उपासकरूपः भगवान् भवः एक एव पुमान् अस्ति अन्यो भवान्याः शापनिमित्तज्ञो न निर्विशति पञ्चमस्कन्धे ॥ १५ ॥

अवरुध्यमानः परिसेव्यमानः आत्मनः प्रकृतिं कारणभूताम् तामसीं तमोऽधिष्ठात्रीमात्मनि समाधिध्यानं यस्य तेन रूपेण संनिधाप्य साक्षात्कृत्य एतद्वक्ष्यमाणं मन्त्रादिकमभिगृणन् जपन् उपधावति स्तौति ॥ १६ ॥

---

### भाषाटीका।

तैसेही अलकनन्दा ब्रह्मस्थान से दक्षिण की तरफ बहुतसे पर्वत शिखरों को लांघकर हेमकूट में आकर फिर बड़े वेगसे हिमालय के शिखरों पर गिरती हुई दक्षिण दिशा में भारतवर्ष के मध्य में होकर समुद्र में प्रवेश करती है जिस अलकनन्दा भागीरथी गंगा में स्नान के पान के वास्ते जानेवाले पुरुष को एक पगमें अश्वमेध राजसूय आदि का फल कुछ दुर्लभ नहीं है ॥ ९ ॥

और भी नद नदी सब वर्षों में बहुत मेरु आदि पर्वतों की पुत्री सैकड़ों हैं ॥ १० ॥

तिनमें भी भारतवर्ष ही कर्म का स्थान है और आठ वर्ष तो स्वर्ग से गिरे जीवों के पुण्य शेष के भोगने के स्थान हैं पृथिवी के स्वर्ग हैं ऐसा वर्णन किया है ॥ ११ ॥

उन वर्षों में दश हजार वर्ष की पुरुषायुसे अयुतवर्ष की आयु वाले पुरुष होते हैं देवतों के तुल्य हैं दश हजार हाथियों के बरोबर बल वाले वज्र सरीखे शरीर वाले बल अवस्था आनंद प्रमोद महासौरत वाले जो स्त्री पुरुषों के जोड़ा तिनके मैथुन करने के अन्तमें एक वर्ष की अवस्था बाकी रहने पर पुत्रको धारणकरने वाली स्त्री होती हैं तहांपर त्रेतायुग के समान काल सदा रहता है ॥ १२ ॥

## श्रीभगवानुवाच ।

ॐनमो भगवते महापुरुषाय सर्वगुणसंख्यानायानन्तायाव्यक्ताय नम इति ॥ १७ ॥

भजे भजन्यारणपादपङ्कजं भगस्य कृत्स्नस्य परं परायणम् ।
भक्तेष्वलम्भावितभूतभावनं भवापहं त्वा भवभावमीश्वरम् ॥ १८ ॥

न यस्य मायागुणचित्तवृत्तिभिर्निरीक्षतो ह्यण्वपि दृष्टिरज्यते ।
ईशे यथा नोऽजितमन्युरंहसां कस्तं न मन्येत जिगीषुरात्मनः ॥ १९ ॥

असद्दृशो यः प्रतिभाति मायया क्षीबेव मध्वासवताम्रलोचनः ।
न नागवध्वोऽर्हण ईशिरे ह्रिया यत्पादयोः स्पर्शनधर्षितेन्द्रियाः ॥ २० ॥

### भाषाटीका ।

जिन वर्षों में सब ऋतुओं में फूलों के गुच्छे फल पत्ता कोमल डालियों की शोभा से झुकी हुई शाखाओं मे लिपटी लता वाले वृक्षों से शोभायमान सुन्दर वनवाले स्थानो मे वर्षों के मर्यादा वाले पर्वतों की कन्दरों मे निर्मल जल वाले खिले हुये नाना प्रकार के कमल वाले सरोवरों का जो सुगन्ध जिससे आनन्दित जो राजहंस जलमुरगा कारण्डव सारस चकवाचकवी आदि पक्षि. भौंरा आदि शब्द कर रहे हैं उन सरोवरों मे जल क्रीडा के करने से नाना प्रकार के विनोदों से सुन्दर मनोहर जो देवस्त्री तिनका जगा हुआ जो कामदेव जिससे उत्पन्न हुई क्रीडा और हासलीला से जो अवलोकन तिससे जिनका मन और दृष्टि मोहित होगई हैं ऐसे जो देवतों के पति अपने गण देवतों के श्रेष्ठों के द्वारा पूजित होकर इच्छा पूर्वक विहार करते हैं ॥ १३ ॥

सबही वर्षों में भगवान् महापुरुष नारायण भक्तपुरुषों के अनुग्रह के वास्ते आत्मगुण के समूह से मूर्ति धारण करके अभीभी विराजते हैं ॥ १४ ॥

इलावृत में तो भगवान् महादेवजी एकही पुरुष हैं दूसरा नहीं है भवानी के शापका कारण जानकर वहां दूसरा कोई नहीं जाता है जिस स्थानमें प्रवेश होने से स्त्री स्वरूप होजाता है इसका वृत्तान्त पीछे हम कहेंगे ॥ १५ ॥

पार्वतीजी जिनकी स्वामिनी हैं ऐसी, दशहजार से अधिक स्त्रीजनों से सेवित होकर श्रीमहादेवजी चतुर्व्यूह मूर्त्तिवाले भगवान् महापुरुष नारायण की चौथी तामसी मूर्त्ति महादेव जी की कारणरूप संकर्षण नामक मूर्तिको आत्माकी समाधि लगाकर प्रत्यक्षकर के आगे के मन्त्रको कहते हुये स्तुति करते हैं ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वेषां गुणानां संख्यानं प्रकाशो यस्मात् स्वयं त्वव्यक्तायाप्रमेयाय ॥ १७ ॥

हे भजन्य ! भजनीय त्वां त्वा परेमश्वरं भज इत्यन्वयः अरणं शरणं पादपङ्कजं यस्य कृत्स्नस्य भगस्यैश्वर्यादिषाड्गुण्यस्य परमयन... अयं भक्तेष्वलमत्यर्थं भावितं प्रकटितं भूतभावनं स्वरूपं येन भवा... संसारहरम् भक्तेष्वित्यनुषङ्गः भवम्भावयतीति तथा तम् अयं... भक्तेष्विति द्रष्टव्यम् ॥ १८ ॥

ईश्वरत्वमुपपादयंस्तामसत्वेन प्रसक्तमनादरं वारयति । यस्येति । यस्य निरीक्षमाणस्यापि दृष्टिर्मायागुणैर्विषयैश्चित्तवृत्तिभिः कार्यैश्चाण्वपीषदपि नाज्यते न लिप्यते । किमर्थं निरीक्षमाणस्य ईशे ईशनाय नियमनाय ईशनमीट् सम्पदादित्वात् क्विप् अत्र वैधर्म्ये दृष्टान्तः यथा अजितक्रोधवेगानां नोऽस्माकं... रज्यते न तथेति । अत आत्मन इन्द्रियाणि जिगीषुर्जेतुमिच्छुः मुमुक्षुस्तं को न मन्येत नाद्रियेत ॥ १९ ॥

ननु सुरामद्याभ्यां मत्तस्य कुतो दृष्टिर्नाज्यते तत्राह असती दृष्टिर्यस्य तस्य स्वमायया क्षीबा मत्त इव भयङ्करः प्रतिभाति मध्वासवाभ्यां ताम्रलोचन इव... नागवधूविमोहनेन तथा प्रतिभानं युक्तमित्याह । नेति । ... चैतं यस्य पादयोः स्पर्शनेन धर्षितं मोहितमिन्द्रियं मनो ... ता ह्रिया लज्जया अर्हणाद्यर्हणे न ईशिरे न शेकुः कस्तं न मन्येतेति पूर्वेणैवान्वयः ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जप्यमन्त्रमाह । ओं नम इति । ओमिति ब्रह्मणो निर्देश... तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत,, इति वचनात्... तिरिक्तं चिदचिदात्मकं सर्वं जगद्विलाविभूतिं च स्वशे... स्वभावेनैव स्वीकृतवन्त इत्यर्थः भगवत इत्यनेन पूर्णषाड्गुण्यं... वक्तिनं महापुरुषायेत्यनेन निखिलजगदुदयविभवलयलीलत्व... प्रेतं महापुरुषशब्दस्य "वेदाहमेतं पुरुषं महान्तम्" इति पुरुष... र्थपरत्वशिक्षापकत्वात् तत्र च तस्माद्विराडजायतेत्यादिना ... जगत्कारणत्वस्वनिपादनात् जन्मनः सम्भूत इत्यनुवाकेऽ... प्रत्यभिज्ञायते तत्रापि महापुरुषशब्दश्रवणात् अद्भ्यः ... इत्यनुवाकस्य हिरण्यगर्भः समवर्तताग्रे इत्यनेनाद्भ्यो ... सम्भूतब्रह्मा गर्भः इत्यष्टावित्येकवाक्यत्वप्रतिपादनाद्धिरण्य... दिकारणत्वच्छायानुकारिणामपि वैदिकवाक्यानां महापुरुषा... त्वमवगतं सर्वगुणानां चेतनाचेतनयोरसम्भावितानां ...

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वान्तर्यामित्वेनातिनिकटवर्तिनो हरेः स्वरूपज्ञानं सम्यग्ज्ञानिन एव नान्यस्येत्याशयवानाह । असंदृश इति । यो मायया-च्छादकशक्त्यासंदृशः सम्यग्ज्ञानरहितस्य पुंसः वृत्तकोटरजन्यं मधु नारिकेलादिपुष्पजन्य आसवस्तयोरेकतरपानेन ताम्रे लोचने यस्य स तथा दुःशास्त्रश्रवणजनितान्यथाज्ञानलक्षणपरिणामावि-षयमायामधुरसुरासेवानष्टज्ञानस्य स्वयमपि तादृशः क्षीवेव मत्त इति प्रतिभाति अत्र विसन्धिविपरिणामेनार्थकथनं द्रष्टव्यं मध्वा-सवताम्रविलोचनस्य मत्तस्यासंदृशः पुंसो मध्वासवताम्रविलोचनो मत्त इव प्रतिभाति दुष्टेन्द्रियस्य पुंसः स्थाणुः पुरुष इव यथा आभाति तथेति क्षीवेति प्रयोगस्तु छन्दोभङ्गभयाद्वैदिकत्वाद्वा दर्शित इति ज्ञातव्यम् "न संदृशे तिष्ठति रूपमस्य" इति श्रुतेः "विद्यावन्मुग्धवच्चैव केशवो वेदनार्तवत्,, इति स्मृतेश्च इदानीं हेतुकथनव्याजेन मिश्रस्तुति-माह । न नागेति । इन्द्रियधर्षणप्रवृत्तिमरंवाग्मत्तत्वमिति अर्हयां पूजां कर्तुं नेशिरे इत्यन्वयः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीमाधोऽयं दास्यभक्त्योपास्त इत्याह । श्रीभगवानुवाचेति । सङ्कर्षणस्यैव प्रथमपुरुषत्वात् । तद्रूपेणैव स्तौति । ओं नम इति ॥ १७ ॥

भक्तेषु निमित्तेषु भलमत्यर्थम् । भावितं कृतं भूतानां भावनं जननं पालनं वा येन तम् ॥ १८ ॥ १९ ॥

तत्र पातालस्थसङ्कर्षणो सन्दिह्य सिद्धान्तयति । असदिति । वस्तुतस्तु क्षीवत्वादिकं न सुरामधाभ्याम् नागपत्नीषु भय-ङ्करत्वेनास्फूर्त्तेर्रूपकतया सावधानत्वेन स्फूर्त्तेश्च । किन्तु विला-सविशेषेणैव तासां प्रेममोहादित्याह । न नागवध्व इति ॥२०॥२१॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सर्वेषां गुणानां सङ्कुचानं प्रकाशो यस्मात्तस्मै स्वयन्तु अव्य-क्ताय अप्रमेयाय ॥ १७ ॥

नितरामासम्यगेव अरणं शरणं पादपङ्कजं यस्य तं भजे भजे इति हर्षात् द्विरुक्तम् । भगस्य षडैश्वर्यस्य । भक्तेषु अलमलङ्कार-चमत्कारानम् भावितः सृष्टः ध्यानं कारितो वा भूतभावनो ब्रह्मा येन तं त्वा त्वां भवस्य मत्प्रच्छन्नदासस्य भावः प्रेमा यत्र तम् ॥ १८ ॥

अचिन्त्यमैश्वर्यं निवृणोति । न यस्येति । निरीक्षमाणस्यापि यस्य दृष्टिर्मायागुणवृत्तिभिर्मायागुणरूपाभिरिन्द्रियवृत्तिभिर्विषयैर्नाज्यते न लिप्यते । किमर्थं निरीक्षमाणस्य ईशे ऐश्वर्याय ईशनमीट् सम्पदादित्वात् भावे क्विप् तस्मै वैजम्यं दृष्टान्तः यथा अजितको-भवेगानां नोऽस्माकं दृष्टिरज्यते न तथेति । आत्मनो जिगीषुरन्तः-करणानि वशीकर्तुमिच्छुः कस्तं न मन्येत नाद्रियेत ॥ १९ ॥

ननु मदिरामत्तस्य कुतो दृष्टिर्नाज्यते तत्राह । असदृशः कुबुद्धीन् प्रति यो मायया क्षीवेव मत्त इव भाति । यथान्यः क्षीवा मध्वा-सवाभ्यां ताम्रलोचनः विवेकहीनो भवति तथैवेत्यर्थः । वस्तु-तस्तु भवान्न तथाभूतः किन्तु निरानन्दसन्निवेक इति भावः । सौन्दर्येण नारीगणमोहनतामाह । अर्हयै चरणपूजायां न ईशिरे न शेकुः स्पर्शक्षुभितेन्द्रियाः ह्रियेति अस्माकमागस्त्वेन सर्वज्ञत्वादयं जानातीत्यतः सम्प्रति कथं सेवेमहीति भावः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जप्यं मन्त्रमाह । ओमिति । सर्वेषां गुणानां सङ्कुचानं च सर्वज्ञ इत्यादिविवेककर्तृकं कथनं यस्मिन् तस्मै ॥ १७ ॥

स्तोत्रं दर्शयति । भजे इति । हे भजनीय ! अरणं शरणं पाद-पङ्कजं यस्य तम् । भगस्यैश्वर्यादिषाड्गुण्यस्य परमुत्कृष्टमय-माश्रयम् । भावितम् आविष्कृतं भूतभावनं भूतकारणं रूपं येन तम् । भवापहं संसारघ्नम् । भवं मां भावयति उत्पादयतीति तं त्वां भजे ॥ १८ ॥

यथा नो मीलितनेत्राणामप्यस्माकं मायागुणेषु विषयेषु या-वृत्तयस्ताभिः दृष्टिः अज्यते तत्र हेतुः अजितमन्युवेगा-मिति । तथा यस्य तव भगवतस्तु ईशे ईशनाय जननियमना-निरीक्षतोऽपि अयमपि ईषदपि दृष्टिर्नाज्यते न लिप्यते तत्र हेतुः आत्मनः सर्वात्मन इति तं त्वां जिगीषुः संसारं जेतुमिच्छुः को न मन्येत उपास्यतया को नाद्रियेत ॥ १९ ॥

अज्ञस्य तु रागादियुक्त एव भवान्भातीत्याह । असदृश इति । असती स्वस्वरूपगुणादिज्ञानरहिता दृष्टिर्यस्य तस्य जनस्य माधव्या मदिरया मध्वासवाभ्यां ताम्रे लोचने यस्य तथाभूतः क्षीबो मत्त इव यो भाति स्वभावत एवायमेवंविधाद्भुतरूप इत्यसदृक् न जानातीत्यर्थः । अत एव तथाविधं भगवतो रूपं सूचयति । नागवध्वो यस्य पादयोः स्पर्शनेन धर्षितमिन्द्रियं मनो यासां ताः ह्रिया लज्जया भुजाद्यर्हणे न ईशिरे न समर्था बभूवुः तं को न मन्येत इति पूर्वेणान्वयः ॥ २० ॥

---

### भाषाटीका

भागभवान् महादेवजी बोले महापुरुष सर्व गुणों के प्रकाश करने वाले अनन्त अव्यक्त भगवान् के अर्थ नमस्कार है ॥ १७ ॥ आपका चरण कमल भजने वालों का रक्षक है आप भक्तों के योग्यहो ऐश्वर्यादि छैगुणों के आप आश्रय हो भक्तों के वास्ते अतिशय करके आपने स्वरूप प्रकट किया है आप संसार के छुडाने वाले हो जगत्के पालने वाले हो ऐसे आपको हम भजते हैं ॥ १८ ॥

मायाके गुण चित्तकी वृत्तिसे देखतेभी जिनकी अनुराग दृष्टि लिप्त नहीं होय है जैसे हमलोग क्रोध के वेगको जीतने की सामर्थ्य नहीं रखते इस कारण हमको इस संसार सागर से बचना कठिन है आपही अपनी आत्माको जीतकर वशमें रखने हैं इस कारण जो अपनी आत्माको जीतकर रखने की इच्छा करैतो वह कौन पुरुष आपका भजन न करै अर्थात् आपही का करै ॥ १९ ॥

अज्ञानी पुरुषों को आप मदमत्त के समान भयङ्कर मदिरा और आसव से लाल नेत्र किये मायाद्वारा प्रतीत होते हो कारण कि आपके चरणारविन्द के स्पर्श करने से कन्दर्पके

यमाहुरस्य स्थितिजन्मसंयमं त्रिभिर्विहीनं यमनन्तमृषयः।
न वेद सिद्धार्थमिव क्वचित्स्थितं भूमण्डलं मूर्द्धसहस्रधामसु ॥ २१ ॥
यस्याद्य आसीद्गुणविग्रहो महान्विज्ञानधिष्ण्यो भगवानजः किल।
यत्सम्भवोऽहं त्रिवृता स्वतेजसा वैकारिकं तामसमैन्द्रियं सृजे ॥ २२॥
एते वयं यस्य वशे महात्मनः स्थिताः शकुन्ता इव सूत्रयन्त्रिताः।
महानहं वैकृततामसेन्द्रियाः सृजाम सर्वे यदनुग्रहादिदम् ॥ २३ ॥
यन्निर्मितां कर्ह्यपि कर्मपर्वणीं मायां जनोऽयं गुणसर्गमोहितः।
न वेद निस्तारणयोगमञ्जसा तस्मै नमस्ते विलयोदयात्मने ॥ २४ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां सङ्कर्षणस्तोत्रकथनं नाम
सप्तदशोऽध्यायः ॥ १७ ॥

भाषाटीका।

...से लज्जित होकर नागोंकी स्त्रियां आपके पूजन में भी अस
...होजाती हैं ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

...स्य विश्वस्य स्थितिजन्मसंयमहेतुं यमाहुः। अत एव ...भिः स्थित्यादिभिर्विहीनमनन्तं च यमाहुः। ऋषयो मन्त्राः ...नुरोधेन दीर्घपाठे ऋकारो देवमाता लक्ष्मीः सा च ऋषय- ...र्थः। अनन्तत्वं दर्शयति। मूर्द्धसहस्रमेव धामानि स्थानानि ...क्वचिदेकदेशस्थितं भूमण्डलं यो न वेद। सिद्धार्थं सर्षप- ...। तस्मै नम इति चतुर्थेनान्वयः ॥ २१ ॥

तत्र जन्महेतुत्वं महदादिद्वारेण प्रपञ्चयन्ति। यस्य गुण- ...मितो महान्नाम विग्रह आसीत्। विज्ञानं सत्त्वं धिष्ण्यमाश्रयो ...स्य सः तस्य चित्तरूपत्वेन सत्त्वप्रधानत्वात्। स एव किला- ...शो वासुदेवाभेदविवक्षया भगवानजो ब्रह्मा। यत्सम्भवो ...ब्रह्मणः सम्भूतोऽहं रुद्रः। त्रिवृता त्रिगुणेन स्वतेजसा ...विभूतिरूपेणाहङ्कारेण वैकारिकं देवतावर्गं तामसं भूतवर्ग- ...न्द्रियमिन्द्रियवर्गं च सृजे सृजामि ॥ २२ ॥

किञ्च एते वयं महदादयः सर्वे यस्यानुग्रहादिदं ब्रह्माण्डं ...जामः। कथम्भूताः। यस्य महात्मनो वशे स्थिताः सन्तः यतः ...त्रेण क्रियाशक्त्या यन्त्रिताः प्रोताः शकुन्ताः पक्षिण इव ...रिकेण सूत्रेण यथाशिल्युक्तं तानेवाह। महानहङ्कारश्च वैकृता- ...याः पूर्वोक्ताः वर्गाश्च ॥ २३ ॥

स्थितिलयहेतुत्वं दर्शयन्प्रणमन्ति। येन निर्मितामेतां माया- ...मायं जनोऽञ्जसा वेद न तु तन्निस्तारणयोगमुपायं कर्हिचिदपि ...ति स्थितिहेतुत्वं दर्शितम्। कीदृशीं कर्माण्येव पर्वाणि ...फलस्थानानि नयति प्रापयतीति तथा ताम्। प्रलयहेतुत्वमाह।

विलीयतेऽस्मिन्निति विलयः उदेत्यस्मादित्युदयः विलयश्चोदय- श्चात्मा स्वरूपं यस्य तस्मै नमः ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

पुनरैश्वर्यमेव व्यञ्जयन्नाह। यमिति चतुर्भिः। अस्य चिदचि- न्मिश्रस्य जगतः स्थितिजन्मसंयमं स्थित्युत्पत्तिसंहारकारणम् ऋषयो वेदान्ता यमाहुः ऋषय इति दीर्घ आर्षः कारणत्वेऽपि त्रिभिर्गुणैः सत्त्वादिभिर्विहीनं त्रैगुण्यापरवशमनन्तं स्वरूपतः स्वभावतश्च देशकालवस्त्वपरिच्छिन्नमाहुः "स देव सोम्येदमग्र आसी- देकमेवाद्वितीयम् अस्थूलमनण्वह्रस्वं सत्यं ज्ञानमनन्तम्" इत्यादयः श्रुतयोऽत्र ऋषिशब्दविवक्षिताः अनन्तत्वमेवाह। यो मूर्द्धभूतानि सहस्रसंख्याकानि धामानि फणारूपाणि तेषु मध्ये क्वचित् सिद्धार्थमिव सर्षपमिव स्थितं भूमण्डलं न वेद भारत्वेन नानु- सन्धत्ते न जानाति वा यच्छब्दानां कस्तं न मन्येतेति पूर्वेणा- न्वयः ॥ २१ ॥

यस्येति। अपादानस्य सम्बन्धमात्रविवक्षया षष्ठी यस्मात् महा- शरीरेषु महत्त्वाभिमानी विज्ञानधिष्ण्यः जगन्निर्माणाद्युपयुक्तज्ञा- नाश्रयः गुणविग्रहः रजःप्रचुरविग्रहः आद्यः रुद्राद्यपेक्षया आदौ भवः भगवानजो ब्रह्मा आसीत् यत्संभवः यस्माद्ब्रह्मणः सकाशा- त्संभवोऽहं रुद्रः किमर्थं त्रिवृता त्रिविधाहङ्कारेण अध्ययनेन वसतीतिवत् फलस्यैव हेतुत्वविवक्षया तृतीया देहेषु त्रिविधाहङ्कार- प्रवृत्त्यर्थं जातोऽहमित्यर्थः स्वतेजसा स्वस्य संकर्षणमूर्तेस्तेजसा स्वदत्तेनाहङ्कारप्रवर्तनोपयुक्तेन ज्ञानेन वैकारिकं सात्त्विकं तामसमै- न्द्रियकं राजसं सृजे देहेषु त्रिविधाहङ्कारं प्रवर्त्तयामीत्यर्थः ॥ २२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एत इति महान्महत्तत्त्वम् अहमहङ्कारस्तद्विभाभेदमाह वैकृतता-मसैन्द्रियः सात्त्विकाहङ्कारो वैकृतः तामसो भूतादिः ऐन्द्रियो राजसः तथैव ब्रह्मादयो यस्य महात्मनो भगवतो वशे सूत्रे रज्वां यन्त्रिताः बद्धाः शकुन्ता इव सन्तो यस्य भगवतोऽनुग्रहादिदं ब्रह्माण्डं तदन्तर्वर्तिवस्तुजातं च व्यष्टिसमष्ट्यात्मकं यथायथं सृजामः ॥ २३ ॥

एवं सर्वजगत्कारणत्वसत्यज्ञानानन्तत्वसर्वान्तरत्वानन्याधिप-तित्वादिगुणार्णवांशष्टं स्तुत्वा "प्रधानपुंब्रह्मपतिर्गुणेशः संसारमोक्ष-स्थितिबन्धहेतुः" इति बन्धमोक्षहेतुत्वेन स्तुत्वा नमस्करोति । यन्निर्मि-तामिति । येन भगवता निर्मितां कर्मपर्वणीं कर्माख्यग्रन्थिमतीं मायां प्रकृतिं गुणमयसर्गां गुणपरिणामात्मकदेहेन्द्रियादिसम्बन्धेन मोहितः स्वात्मपरमात्मयाथात्म्यज्ञानरहितोऽब्रह्मात्मकत्वस्वतन्त्रात्म-त्वादिभ्रमयुक्तो जनो जन्ममरणादिकसांसारिकधर्मभाक् जीवः न वेद मायास्वरूपमेव न वेद किं तन्निस्तारणोपायं न वेदेतिवक्तव्य-मित्याह । तन्निस्तारणायोगं मायानिस्तारणोपायमञ्जसा सुखेन न वेद तस्मै तद्विलयोदयात्मने तद्विलयः प्रकृतिसंबन्धविलयस्तदुदयः प्रकृतिसंबन्धः तदुभयापादनोपयुक्तमात्मज्ञानं यस्य तस्मै नम इति ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं भगवद्विज्ञानाय तल्लक्षणान्याह । यमाहुरिति । अस्य जगतः स्थितिजन्मसंयमकारणं यतस्तज्ज्ञाने स्थित्यादीनि लक्षणानि इति ज्ञातव्यं स्वयमेतच्छ्रवणजन्यकथनेतल्लक्षणैर्ज्ञेय इत्यत उक्तम् । त्रिभि-रिति । त्रिभिः स्थित्यादिभिर्विहीनं विरहितं जाग्रदाद्यवस्थाविशेषैर्वा कालत्रये अपरिच्छिन्नमहिमत्वाद्युक्तभावेनाह । अनन्तमिति । तदपि कथमत उक्तमीश्वरमिति ईश्वरत्वं विशदयति । न वेदेति । य इत्यध्या-हृत्यान्वेतव्यं मूर्धसहस्रभागस्तु मध्ये कचिदेकस्मिन्मूर्द्धनि सिद्धार्थं सर्षपमिव स्थितं भूमण्डलं न वेद गुरुत्वाभावादित्यन्वयः लाघवात्त-द्गरिमाणं न जानातीत्यनेनान्तःस्थितानन्तनामहरिमहिम्ना शेषस्यापि भूमण्डलधृतिसामर्थ्यमिति बोद्धव्यम् ॥ २१ ॥

पूर्वोक्तसृष्टेः क्रममाह । यस्येति । यस्य तव सकाशात् अजो ब्रह्माद्यः सृज्यपदार्थानामादिभूत आसीत् प्रकृतिस्तुज्यवस्तुषु महत्तत्त्वस्याद्यत्वात्तदभिमानित्वेन ब्रह्मणा आदित्वं युक्तमिति भावेनोक्तम् । महानिति । निर्देहस्याभिमानित्वं कथमित्यत उक्तं गुणविग्रह इति । रजोगुणेन निर्मितो विग्रहो यस्य स तथा देहि-त्वेऽपि ज्ञानलोपोऽस्यदेहिवदस्य नास्तीत्यभिप्रेत्याह । विज्ञानेति । विज्ञानस्य धिष्ण्यं निधानस्थानं धिष्ण्य इतिपाठे विज्ञानमेव स्वरूपं यस्य स तथेत्यर्थः महत्तत्त्वस्य सृष्ट्या सृष्टिक्रमः कथं ज्ञायत इत्यत उक्तं यत्संभव इति । यस्मान्महत्तत्त्वात्संभवो यस्य स तथा अहं त्रिवृता वैकारिकादिभेदेन त्रिधा वर्त-मानेन स्वतेजसा स्वरूपमहिम्ना वैकारिकादिकं तदभिमानिदे-वादिकं च सृज इत्यन्वयः ॥ २२ ॥

अस्मत्सर्जनञ्च श्रीनारायणानुग्रहेण न स्वातन्त्र्येणास्माक... इति । वयमिति के इति तत्राह । महानिति । ब्रह्मप्रभृतय... सूत्रयन्त्रिताः सूत्रबद्धाः शकुन्ताः पक्षिणः वैकृता वैकारि... तामसाः पञ्चभूतदेवाः ऐन्द्रिया इन्द्रियाभिमानिनो... शब्दाद्यभिमानिदेवताश्च ॥ २३ ॥

व्यतिरेकमुखेन संसारतरणोपायमाह । यन्निर्मिता... अयं जनो येन भवता जनं मोहयन्तीति निर्मितां... कर्मपर्वणां विहितनिषिद्धलक्षणानि कर्माणि पर्वाणि... सा तथा तां मायां बन्धकशक्तिमासाद्य कथंपि कदापि... निस्तारणोपायमञ्जसा न वेद तत्र किं कारणमिति तत्राह । ... रिति । गुणेन सर्गो येषां ते गुणसर्गाः शब्दादिविषया... हितः शब्दादिनिमित्तान्यथाज्ञानं कारणमित्यर्थः अनेन... ज्ञानपूर्वकं तज्ज्ञानं संसारतरणोपाय इति ध्वनितमिति... भगवत्प्रीतिकरं सर्वसाधारणमयत्नसाध्यं साधनमिति भावेना... हरति । तस्मा इति । तद्विलयोदयात्मने तस्या मायाया वि... कज्ञानस्वरूपाय अनेन प्रणतिप्रसन्नश्रीनारायणस्वरूपज्ञानं ... निवर्तकमिति सूचितमतो मुमुक्षुणा तज्ज्ञानमापाद्य... भावः ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तदशोऽध्यायः १७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

महान् महत्तत्त्वं चित्ताख्यं गुणमयो विग्रहोऽधिष्ठानं य... विज्ञानाधिष्ण्यः बुद्धिरूपः स एव किल क्रमेण भेदविव... भगवान् वासुदेवः अजो ब्रह्मा च । सृजे सर्गोपयोगितां प्राप्... मीत्यर्थः । अग्निरन्नं पचतीतिवन्मत्कर्तृकमिति भावः । ...

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
सप्तदशोऽध्यायः ॥ १७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जगत्कारणत्वमाह । यमिति । स्थित्यादिहेतुम् अथ च... गुणैर्विभक्त एव तत्त्वज्ञानाद्नन्तं न वेदेति स इति शेषः ... "ऋकारो देवमाता स्याद्"इत्यभिधानात् देवमातरश्च अपव... सिद्धार्थं सर्षपमिव कचित् कस्मिंश्चिन्मूर्द्ध्नि एकदेशे ... मिति यद्यपि चतुस्त्रिंशल्लक्षोनपञ्चाशत्कोटियोजनप्रमाण... भूमण्डलस्य अधस्तादेव स्थितत्वात् तस्मात् सकाशात् ... ताधिक्यस्ताराधिक्यं न युज्यते । तदपि तत्र ... याचिन्त्यशक्त्यैव तन्मूर्ध्नां प्रमाणापरिच्छेद्यत्वं भूमण्डलस्य ... सर्षपायमाणत्वं दृश्यते तच्च वास्तवमेव न तु मायिकमिति... व्येकमङ्कुतमनन्तत्वमिति तथोक्तम् ॥ २१ ॥

तत्र स्वजन्महेतुत्वं महदादिद्वारेण प्रपञ्चयति । यस्य... प्रथमो गुणमयविग्रहो महान् महत्तत्त्वनामा तेन सङ्कर्षणः ...

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

गुणातीतविग्रह इत्यायातं विज्ञानं सत्त्वं धिष्ण्यमाश्रयो यस्य स वासुदेवः ... अजो ब्रह्मा यद्सम्भवो यदुत्पन्नोऽहमहङ्कारात्मको द्वितीयो रुद्रः त्रिवृता सत्त्वादिवृत्तित्रयेण स्वतेजसा स्वशक्त्यैवाहं वैकारिकं देवतावर्गं तामसं भूतवर्गमैन्द्रियमिन्द्रियवर्गञ्च सृजामि ॥ २२ ॥

सर्वनियन्तृत्वमाह । एत इति । सूत्रयन्त्रिताः सूत्रप्रोताः शकुन्ताः पाचणाः शाकुनिकाधीना इवेत्यर्थः । वयमेव के तानाह । महानिति । वैकृतादयः पूर्वोक्ता वर्गाः ॥ २३ ॥

दुर्ज्ञेयत्वं कैमुत्येनाह । येन निर्मितां प्रापितां मायामिमायं जनो न वेद किमुत त्वां कर्मपर्वणीं फर्मग्रन्थिप्रणोत्रीं तस्या अञ्जसा क्लेशेन निस्तारणोपायं भक्तियोगं च न वेद तस्या मायाया विलयो ... उदयस्त्वमकंपु यतः तस्मै आत्मने परमात्मने ॥ २४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।

पञ्चमेऽयं सप्तदशः सङ्गतः सङ्गतः सताम् ॥ १७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सर्वहेतुत्वेन सर्वात्मत्वं दर्शयति । अस्येति । अस्य चिदचिदात्मकस्य विश्वस्य स्थित्यादि यस्मात्तं तथा तमाहुः । त्रिभिः । स्थित्यादिविहीनमनन्तं कालाद्यपरिच्छिन्नं चाहुः ऋषय इति दीर्घसन्धेऽनुरुगंधात् मूर्द्धसहस्रमेव धामानि स्थानानि तेषु कचिदेव स्थितं भूमण्डलं सिद्धार्थं सर्षपमिव यो न वेद तं को न मन्येतेति पूर्वेणैवान्वयः ॥ २१ ॥

विश्वहेतुत्वेन स्तुत्वा ब्रह्मादिजनकत्वादिना भगवन्तं स्तुवन् ब्रह्मादीनां भगवज्जन्यत्वं तदधीनत्वं तन्मायामोहितत्वं च दर्शयन् नमस्करोति । यस्येति त्रिभिः । यस्येति पञ्चम्यर्थे षष्ठी यस्मात् आद्यः अस्मदादिभ्यः पूर्वः अजः ब्रह्मा आसीत् कथम्भूतः गुणविग्रहः रजोगुणप्रधानशरीरः महान् महत्तत्वरूपः बुद्ध्यधिष्ठातुर्ब्रह्मणो बुद्धिकारणेन महत्तत्त्वेन सहाभेदोक्तिः। धिष्ण्यते अनेनेति धिष्ण्यं शब्दब्रह्म धिष्ण्यमाश्रयो यस्य सः यत्सम्भवः यस्मादजात् सम्भूतः अहङ्काररूपः रुद्रः अन्तःकरणभेदरूपाहङ्काराधिष्ठातुः रुद्रस्यान्तःकरणभेदरूपाहङ्कारकारणेन सहाभेदोक्तिः। त्रिवृता त्रिगुणेन तेजसा स्वविभूतिरूपेण वैकारिकं देवतावर्गं तामसं भूतवर्गम् । ऐन्द्रियकमिन्द्रियवर्गम् यत्तेजे सृजामि तस्मै ते नम इत्यन्तिमेन सम्बन्धः ॥ २२ ॥

तथाच महान् अस्मत्पिता ब्रह्मा अहं च सर्वे ब्रह्मपुत्राः मत्स्यप्राद्याः वैकृतादयः एते वयं यस्य वशे स्थिताः इदं यथायथं सृजामः तस्मै ते नमः ॥ २३ ॥

गुणसर्गेण मायागुणकार्येण देहगेहादिना मोहितः जनः कर्माणयेव पर्वाणि ग्रन्थयस्तानि नयतीति तथा तां येन निर्मितां देहेन्द्रियादिरूपेण रचितां मायां तन्निस्तारणयोगं च कर्हिचिदपि न वेद यदनुग्रहं विना न जानातीत्यर्थः तस्मै ते विलीयते अस्मिन्निति विलयः विश्वप्रवेशस्थानम् । उदेत्यस्मादित्युदयः विश्वनिर्गमनस्थानं स च स च तथा तस्य प्रकृत्यादेः कारणजातस्य आत्मा कारणं तस्मै ते नमः ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

सप्तदशाध्यायार्थप्रकाशः ॥ १७ ॥

---

भाषाटीका।

ऋषि और वेदमन्त्र या विश्व की उत्पत्ति पालन नाश करने वाले आपको अनन्त और उत्पत्ति पालन प्रलय से रहित कहते हैं सहस्रों मस्तकों में से किसी एक मस्तक पर सरसों के समान आप भूमण्डल को धारण करते हैं और उसके बोझको कुछ नहीं जानते हैं ऐसे आपके निमित्त नमस्कार है ॥ २१ ॥

जिनके आद्य सत्त्वगुणी महाविज्ञानरूप से वासुदेव होते भये उन से भगवान् ब्रह्माभये जिनसे हम रुद्र भये हैं मैं त्रिगुणात्मक अहंकार से देवता पञ्च महाभूत और इन्द्रियवर्ग को प्रकट करता हूं ॥ २२ ॥

जैसे कि विहङ्ग रस्सी से बंधकर पराये वश में होजाते हैं इसी प्रकार आपके वश में होकर यह हम सब महत्तत्व देवताभूत और इन्द्रियगण होरहे हैं जिनके अनुग्रह से हम सब ब्रह्माण्ड को सृजते हैं और आपको सृजने वाले कहते हैं ॥ २३ ॥

जिनकी कीहुई कर्मों की पर्व रूप धारिणी माया के गुण सर्गो से मोहित होय ये जन अनायास से निस्तारण योग को नहीं जानते ऐसे उत्पत्ति पालन नाश कर्ता भगवान् के अर्थ नमस्कार है ॥ २४ ॥

इति श्रीभागवत पञ्चमस्कन्ध सतरहवां अध्यायका भाषानुवाद स्वरूपाचार्यकृत समाप्त ॥ १७ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे सप्तदशोऽध्यायः समाप्तः ॥ १७ ॥

## ॥ अष्टादशोऽध्यायः ॥

———:०:———

### श्रीशुक उवाच ।

तथा च भद्रश्रवा नाम धर्मसुतस्तत्कुलपतयः पुरुषा भद्राश्ववर्षे साक्षाद्भगवतो वासुदेवस्य प्रियां तनूं धर्ममयीं हयशीर्षाभिधानां परमेण समाधिना सन्निधाप्येदमभिगृणन्त उपधावन्ति ॥ १ ॥

॥ भद्रश्रवस ऊचुः ॥

ओं नमो भगवते धर्मायात्मविशोधनाय नम इति ॥ २ ॥

अहो विचित्रं भगवद्विचेष्टितं घ्नन्तं जनोऽयं हि मिषन्न पश्यति ।
ध्यायन्न सद्यर्हि विकर्म सेवितुं निर्हृत्य पुत्रं पितरं जिजीविषति ॥ ३ ॥
वदन्ति विश्वं कवयः स्म नश्वरं पश्यन्ति चाध्यात्मविदो विपश्चितः ।
तथापि मुह्यन्ति तवाज ! मायया सुविस्मितं कृत्यमजं नतोऽस्मि तम् ॥ ४ ॥
विश्वोद्भवस्थाननिरोधकर्म ते ह्यकर्तुरङ्गीकृतमप्यपावृतः ।
युक्तं न चित्रं त्वयि कार्यकारणे सर्वात्मनि व्यतिरिक्ते च वस्तुतः ॥ ५ ॥
वेदान् युगान्ते तमसा तिरस्कृतान् रसातलाद्यो नृतुरङ्गविग्रहः ।
प्रत्याददे वै कवयेऽभियाचते तस्मै नमस्ते वितथेहिताय ते इति ॥ ६ ॥

हरिवर्षे चापि भगवान्नरहरिरूपेणास्ते तद्रूपग्रहणनिमित्तमुत्तरत्राभिधास्ये तद्दयितं रूपं महापुरुषगुणभाजनो महाभागवतो दैत्यदानवकुलतीर्थीकरणशीलाचरितः प्रह्लादोऽव्यवधानानन्यभक्तियोगेन सह तद्वर्षपुरुषैरुपास्ते इदं चोदाहरति ॥ ७ ॥

ओं नमो भगवते नरसिंहाय नमस्तेजस्तेजसे आविराविर्भव वज्रनख ! वज्रदंष्ट्र ! कर्माशयान् रन्धय रन्धय तमो ग्रस ग्रस ओं स्वाहा अभयमभयमात्मनि भूयिष्ठा ओंक्ष्रौम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टादशे ततो मेरोः पूर्वादिक्रमतस्त्रिषु ।
त्रिषु चोत्तरवर्षेषु सेव्यसेवकवर्णनम् ॥ १ ॥

भद्रश्रवा वर्षपतिः तस्य कुलपतयः सेवकमुख्याश्च ॥ १ ॥

भद्रश्रवस ऊचुरिति । प्राणभृत उपदधातीतिवद्गुणलक्षणया तद्योगादन्येषु लिङ्गसमवायन्यायेन बहुवचनम् ॥ २ ॥

अयं जनो मिषन्नपि पश्यन्नपि घ्नन्तं हिंसन्तं न पश्यति नालोचयतीति भगवद्विचेष्टितमेव तच्च विचित्रम् । अदर्शने चिह्नम् । पुत्रं बालं पितरं वृद्धं मृतं निर्हृत्य दग्ध्वा स्वयं तदुभयधनैर्जिजीविषति जीवितुमिच्छति । पाठान्तरे तु छन्दःसामञ्जस्यम् । किं धर्माचरणं न यर्हि यतोऽसत्तुच्छं विषयसुखं सेवितुं विकर्म पापमेव ध्यायन् ॥ ३ ॥

नन्वविद्वांस पश्यन्ति किमत्र चित्रं तत्राह । नश्वरं वदन्ति स्म शास्त्रतः पश्यन्ति च समाधौ । हे अज ! तथापि मा[...] मुह्यन्ति यत्तत्र तव कृत्यं चेष्टितं सुविस्मितमतिविस्म[...] शास्त्रादिश्रमं विहाय तं त्वामजं नतोऽस्मि ॥ ४ ॥

इदमपरं चित्रवत्प्रतीयमानमपि त्वयि न चित्रमित्याह[...] विश्वोद्भवादिकर्माकर्तुरप्यपगता आवृद्दावरणा यस्मात्[...] स्यापि तेऽङ्गीकृतं वेदेन । त्वयि तत्र चित्रम् । यतो भव[...] सर्वात्मनि कार्यस्य कारणे स्रष्टरि कर्म युक्तम् । वस्तुतः [...] व्यतिरिक्ते निरुपाधावनावृतत्वमकर्तृत्वं च युक्तम् ॥ ५ ॥

परमेश्वरत्वेन स्तुत्वा प्रस्तुतावतारचरितमाह । वेदान्[...] तमसा दैत्यरूपेण तिरस्कृतानपनीतान् ना च तुरङ्ग[...] रङ्गौ तद्रूपो विग्रहो यस्य कवये ब्रह्मणे तदर्थं वितथेहि[...] सत्यसङ्कल्पाय ॥ ६ ॥

उत्तरत्र प्रह्लादचरित्रे महापुरुषस्य गुणानां भाजन[...] दैत्यदानवकुलस्य तीर्थीकरणं शीलमाचरितं च यस्य [...]

श्रीधरस्वामिकृतभावार्थदीपिका ।

...रूपेण व्यवधानशून्यश्चासावनन्यश्चाव्यभिचारी यो भक्तियोगस्तेनोपास्ते सेवते ॥ ७ ॥

तेजसामपि तेजसे आविराविः अतिप्रकटो भव वीप्सा ...कर्माशयान् कर्मवासनाः कर्माश्रयानिति पाठे रागादीन् ...रन्धय निर्दह भूयिष्ठाः भूयाः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिलावृते उपास्यं रूपम् उपासनम् उपासनप्रकारं चाभिधाय भद्राश्ववर्षादिषु तान्याह द्वाभ्यामध्यायशेषेण । तथाश्वेति । भद्रश्रवाः नाम धर्मसुतो भद्राश्ववर्षाधिपतिः तस्य कुलपतयः पुरुषश्रेष्ठाः सेवकमुख्या उपासकमुख्याश्च भद्रश्रवसः पुरुषा भद्राश्ववर्षे मेरोः पूर्वस्मिन्साक्षाद्भगवतो वासुदेवस्य साक्षाच्छब्दः ...मसावादपरोक्षाद्भ्रह्मेत्यादाविव ब्रह्मशब्दस्य भगवच्छब्दस्य च ...मौख्येन प्रवृत्तिनिमित्तवत्परत्वसूचनार्थः प्रियामिति वासुदेवस्य नतु रामकृष्णादितनुभ्योऽस्या हयशीर्षाभिधानायाः प्रीत्यतिशयद्योतनार्थं धर्ममयीं यज्ञोपासनादिधर्मावेदकवेदप्रचुरामित्यर्थः ...धर्ममयत्वं रामादिष्वप्यविशिष्टं तथापि प्राधान्येन विस्तरेण ...यद्धरणतदुपदेशार्थत्वादस्यास्तन्वा धर्ममयीमित्युक्तं हयग्रीवाख्यां ...तनुं परमेण साक्षात्कारपर्यन्तकाष्ठां गतेन समाधिना सन्निधाप्य साक्षात्कृत्येदं वक्ष्यमाणं मन्त्रवचः अभिगृणन्तो जपन्त उपधावन्ति वक्ष्यमाणश्लोकैः स्तुवन्तीत्यर्थः ॥ १ ॥

ओंकारार्थः पूर्ववद्भगवच्छब्दार्थश्च धर्माय पूर्वोत्तरभागात्मकवेदाख्यवेदप्रमेयो धर्मस्तत्र पूर्वभागस्याराध्यस्वरूपशोधनप्रकारावेदकत्वे... आराध्यतात्पर्यकत्वात् ।

ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥

इत्युक्तरीत्या भगवत एव पूर्वभागप्रमेयत्वम्, उत्तरभागप्रमेयं तु ...स्वरूपमेवेति । धर्मायेत्यस्य पूर्वोत्तरभागप्रमेयायेत्यर्थः आत्मविशोधनाय आत्मान्तःकरणं जीवो वा शोध्यते येन स आत्मविशोधनस्तस्मै यत्प्रसादादन्तःकरणं जीवो वा शुद्धिं रजस्तमोऽपगमनिवृत्तरूपां प्रकृतिसम्बन्धराहित्यद्वारा ब्रह्मप्राप्तिरूपां मुक्तिं प्राप्नोति स तथोच्यते अत्र धर्मायेत्यनेन प्रापकव्यापकत्वमुपायत्वमुच्यते आत्मविशोधनायेत्यनेन प्राप्यत्वमुक्तं भगवच्छब्देन तदुभयोपयुक्तगुणवत्त्वं विवक्षितम् ॥ २ ॥

स्तुतिरूपान् श्लोकानाह । अहो इति । तान्भगवन्मायाया दुरत्ययत्वद्योतनाय विस्मयमाना आहुः । अन्तं मृत्युं पित्रादिदृष्टान्तेनायं जनो मिषन् पश्यन्नपि न पश्यति नात्मनोऽनुसंधत्ते इत्येतद्भगवद्विचेष्टितं भगवन्मायावैभवरूपम् एतच्छब्दादिचित्रं विस्मयनीयम् अहो विचित्रमिति निपातसंघात आश्चर्यद्योतकः कथम्भूतो न पश्यति पुत्रं पितरं च मृतं निर्हृत्य दग्ध्वा स्वयं तदुपाजितैर्जिजीविषुर्जीवितुमिच्छुः किमर्थं मरुत्तुच्छं विषयसुखं सेवितुं विकुर्वन् यर्हि यदा विकर्म विरुद्धं कर्मोपायं ध्यायन् ॥ ३ ॥

अन्यविद्वान् पश्यति किमत्र चित्रमत्राह । वदन्तीति । कवयः अधीतवेदान्तविद्या विश्वं जगत् नश्वरं केवलं वदन्ति न त्वनुसन्दधते नश्वात्मयाथात्म्यविदोऽनुसन्दधत एव तत्राह । अध्यात्मविदः अधीतवेदान्तविद्याः विपश्चितः उपासितब्रह्मपरमात्मानः यद्यपीदं विश्वं नश्वरं पश्यन्ति तथापि हे अज ! तव मायया मुह्यन्ति मोहं प्राप्नुवन्ति विपश्चितामपि पुत्रमरणादिनिमित्तशोकदर्शनादिति भावः अत इदं कृतं भगवद्विचेष्टितं सुविस्मयं विस्मयनीयम् ईदृशमोहनिवृत्तये केवलं त्वां प्रपत्स्यामहे इत्याहुः अजं जन्ममरणादिसंसारधर्मप्रतिभटम् त्वां नतोऽस्मि कर्तरि क्तः नमस्कृतवानस्मि प्रत्येकाभिप्रायमेकवचनम् ॥ ४ ॥

ननु किं यदेतच्चित्रं यज्जीवमोहनानुकूलमायाप्रेरणमिति ततोऽप्येतद्विचित्रतरमकर्तुर्मम विश्वसृष्ट्यादिकर्तृत्वमस्ति तच्चावन्धकं चेत्यत्राहुः । विश्वोद्भवेति । अकर्तुः ।

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥

इत्युक्तरीत्या चातुर्वर्ण्यचातुराश्रम्यादिव्यवस्थयातिविचित्रजगत्सृष्ट्यादिकर्तृत्वेऽपि तत्तत्कर्मायत्तदेवादिवैचित्र्यादकर्तुस्ते तव कर्तरि षष्ठी त्वयेत्यर्थः विश्वस्य जगतः उद्भवस्थाननिरोधकर्म सृष्टिस्थितिप्रलयरूपं कर्म अङ्गीकृतं स्वीकृतमिति यत्तद्युक्तमेव ननु त्वयि विचित्रं जीवस्येव न बन्धकमित्यभिप्रायः कुतः यतस्त्वमपावृतः कदाचिदपि पुण्यपापाख्यकर्मणा ज्ञानसङ्कोचरहितः जीवानां तु "अनृतेन हि प्रत्यूढाः तेषां सत्यानां सतामनृतमपिधानम्" इति कर्मरूपाविद्यया ज्ञानसङ्कोचरूपावरणसद्भावात् अविद्यावृतज्ञानैरनुष्ठितानां पूर्वपूर्ववासनानुरूपाणां सुखदुःखादिजननद्वारा बन्धकत्वं युक्तं भगवतो नित्यनिरस्तनिखिलदोषस्य सार्वज्ञादिगुणविशिष्टस्य जगदुदयविभवलयलीलस्य विश्वसृष्ट्यादि कर्म न बन्धकमित्यभिप्रायः अपावृत अपगतावरणः अविद्याकृतावरणप्रतिभटस्तस्यापावृतस्य तवेति षष्ठ्यन्तत्वेन व्याख्येयम् अपावृतमिति पाठे विश्वोद्भवादिकर्माङ्गीकृतमनावरकं तिरोधानद्वारा न बन्धकमिति युक्तं जीवस्येवेत्यर्थः । आवरणद्वारा वैषम्यनैर्घृण्यादिद्वैयापादकं नेति वेत्यर्थः कुतो मम विश्वोद्भवादि कर्म नावरकं तत्राहुः । कार्यकारणयोः कार्यकारणरूपे स्थूलसूक्ष्मावस्थचिदचिद्वस्तुशरीरकत्वेन तद्रूप इत्यर्थः कार्यकारणरूपत्वं च न तादात्म्यनिबन्धनं किं त्वात्मा देवो जात इत्यादितदन्तरात्मप्रयुक्तमित्याशयेन सर्वात्मनीत्युक्तम् एवंभूतेऽपि वस्तुनः प्रकृतिपुरुषाभ्यां विविक्तस्वरूपतः व्यतिरिक्ते साक्षात्कार्यत्वकारणत्वोभयावस्थान्वयरहिते त्वयि न हि कर्तृत्वमात्रेण कर्मणो बन्धकत्वमपि तु कर्मायत्तकर्तृत्वेन अन्यथा मुक्तानामपि जगदादिकर्तृत्वस्य बन्धकत्वापत्तेः अयं भावः यद्यपि विश्वसृष्ट्यादिकर्तृत्वेन विश्वोपादानत्वेन च विश्वगतविकाराश्रयत्वाद्विश्वोद्भवादि कर्म तव बन्धकमिति सम्भाव्येत तथापि विश्वोद्भवादिकर्मणो लीलारूपत्वेन कर्मायत्तत्वाभावात्स्वरूपान्यथाभावस्वभावान्यथाभावरूपविकाराश्रयप्रकृतिपुरुषशरीरकस्यैव कार्यकारणोभयावस्थाश्रयत्वात्सद्वारकावस्थाश्रयत्वेऽपि साक्षात्तदवस्थाश्रयत्वाभावाच्च न विश्वोद्भवादि कर्म बन्धकं यथा जीवस्य शरीराधिष्ठातृत्वमात्रेण शरीरगतकौमारयौवनाद्यवस्थ...मित्यर्थः ॥ ५ ॥

एवं विविधविचित्रशक्तिमत्त्वेन भगवन्तं स्तुत्वा स्वैतद्वर्णनात्प्रयोजनमाविष्कुर्वन्तो नमस्कुर्वन्ति । वेदानिति । युगान्ते कस्मिंश्चिद्दैनंदिनप्रलये तमसा दैत्यरूपेण तिरस्कृतानपनीतान् वेदान् नृतुरङ्गविग्रहः ना च तुरङ्गश्च नृतुरङ्गौ विग्रहौ यस्य स नृतुरङ्गविग्रहः हयशिरोमूर्तिर्यो भगवान् अभियाचते कवये चतुर्मुखाय प्रत्याददे प्रत्यर्पितवान् तस्मै तेऽवितथेहिताय... नमः नमस्कारोऽस्त्विति ॥ ६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ हरिवर्षे भेरोर्दक्षिणे उपास्योपासकोपासनाप्रकारानाह । हरिवर्षे चेति । नरहरिरूपेण नृसिंहरूपेणास्ते सन्निहितो भवति तन्नृसिंहरूपपरिग्रहे निमित्तमुत्तरत्र सप्तमस्कन्धे वक्ष्यामः तत्प्रियतमं रूपं प्रह्लादस्तद्वर्षपुरुषैः सहाव्यवधानानन्यभक्तियोगेन अव्यवधानः अविच्छिन्नः विघ्नानुपहतः अनन्यः न विद्यतेऽन्यत्फलं यस्य सोऽनन्यः प्रयोजनान्तररहितः तेन भक्तियोगेन उपास्ते आराधयतीत्यर्थः । प्रह्लादं विशिनष्टि । महापुरुषो भगवांस्तस्य ये गुणास्तेषां भाजनमाश्रयः भगवद्गुणानमानगुणक इत्यर्थः महाभागवतो भागवतश्रेष्ठः दैत्यानां दानवानां च यत्कुलं तत्पवित्रीक्रियतेऽनेनेति दैत्यदानवकुलतीर्थीकरणम् एवंभूतं शीलमाचरितं शीलरूप आचारो यस्य । यद्वा उक्तविधं शीलं सद्वृत्तिः शौचाचमनसंध्योपासनादिरूपमाचरितमाचारो यज्ञदानहोमादिरूपश्च यस्य इदं वक्ष्यमाणमुदाहरति जपति ॥ ७ ॥

इदमादिष्टमेवाह । ओमिति । ओं भगवच्छब्दार्थौ पूर्ववत् तेजसामपि तेजसे तेजोऽन्तरैरप्रकाश्याय सर्वतेजसां प्रकाशायेत्यर्थः तथा च श्रुतिः ।

न तत्र सूर्यो भाति न चन्द्रतारकम् ।
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।

इति कठवल्लीष्वाम्नायते तद्रूपमेव चाथर्वणे परं ब्रह्माधिकृत्य श्रूयते अतोऽत्र परं ब्रह्मत्वं विवक्षितम् आविराविर्भव आविर्भवाविर्भव आविः शब्दो निपातः प्राकट्यद्योतकः तस्य द्विर्वचनं पुनः पुनः प्रकटीभवेत्यर्थः । अत्र वज्रवदप्रतिहतनखदंष्ट्रेति सम्बोधनं कर्माशयान् कर्मवासनाः रन्धय रन्धय निर्दहेति द्विर्वचनं ये भूयिष्ठा बहुलास्तान् कर्माशयानित्याश्रयविशेषणमध्याहार्यमिति बोध्यम् आत्मने मह्यमभयं भयप्रतिभटं यथा तथाविर्भवेत्यनुषङ्गः । यद्वा भूयिष्ठा इति विभक्तिप्रतिरूपकमव्ययं भूयस्त्वार्थकं भूयः अभयमाविर्भवेत्यर्थः अथवाभयं यथा भयाभावं यथा तथा भूयिष्ठाः भूयांसोऽभयं बहुला वयं भवामेत्यर्थः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनन्तजीवराशेः स्वयोग्यतानुसारेण पूज्या हरेरनन्ताः प्रादुर्भावविशेषाः सन्तीति दर्शयितुमिलावृतवर्षभवैः पूज्यां देवतां निगद्यावशिष्टवर्षभवैः पूज्या देवताः क्रमेणाभ्यामध्यायाभ्यां निरूपयति । तथाचेत्यादिना । तस्य भद्रश्रवसः कुलपतयः धर्मभर्यां ज्ञानोपदेशेन सर्वजगद्वारणप्रधानभूताम् "हयगतौ" इतिधातोः हयन्ति अवगच्छन्ति युद्ध्यन्ते सर्वमिति हयाः सर्वज्ञा ब्रह्मादयस्तेषां शीर्षः प्रधान इति हयशीर्षः ॥ १ ॥

ज्ञानं दत्वात्मानं शोधयतीत्यात्मशोधनस्तस्मै ॥ २ ॥

आत्मशोधनपदार्थमाह । अहो इति । अयं जनो अन्तं स्वमृत्युमिवत् पश्यन्नपि न पश्यति हि यस्मात्तस्माद्विचित्रं भगवद्विचेष्टितमहो कालात्मनो मृत्योश्चरितं निद्रालोरिव पश्यतोऽप्यदर्शने किं कारणमिति तत्राह । ध्यायन्निति । शास्त्रतोऽसदमङ्गलं शब्दादिविषयजातं ध्यायन् विकर्म सेवते यर्हि यस्मात्तस्माद् पापलक्षणाञ्जनप्रतिबद्धचक्षुर्न पश्यतीत्यर्थः अत्र लुप्तोपममाह । स्येति । पुत्रो मृतं पितरं निर्हृत्य दहनादिपितृमेधक्रियां [illegible] जिजीविषुः स्वजीवनमेवेच्छन्नतिपितृमरणाचन्ममापि मरणं [illegible] दिति युक्तिबलाच्चिन्तयन्नपि स्वात्मनो मृत्युं न चिन्तयति [illegible] तथायं जन इति अतस्तव प्रसादेन शुद्धान्तःकरणस्य पुर[illegible] करतलामलकवद्विश्वं प्रकाशत इति भावः ॥ ३ ॥

न केवलं प्राकृतजनमोहकस्त्वं किं तु कवीनामप्यतो नि[illegible] शयमहिम्नस्तव चरितं चित्रमित्यतस्त्वद्भक्तिरेव त्वत्प्रसत्तौ [illegible] न्साधनमित्याशयवानाह । वदन्तीति । अनेन कवीनां परोक्ष[illegible] निनां वचनमध्यात्मविदामपरोक्षज्ञानिनां दर्शनञ्च जगन्मथ्या[illegible] त्वे प्रमाणमुक्तं भवति तथापि ज्ञानसामग्रीमन्तोऽपि त्वदनुग्रह[illegible] न्तरेण तव विषये मुह्यन्ति अनेन मुह्यन्ति यं सूरय इत्येतद्विवृतं [illegible] सुष्ठु विगतः स्मयाख्यो दोषो यस्मात्स तथा तं सुविस्मयो [illegible] भवति तथेति। क्रियाविशेषणं वा यत एवं ज्ञानिनोऽपि [illegible] त्वन्मायया न जानन्ति अतो भवानेक एव तज्ज्ञ इत्याह । इत्थं[illegible] दमिति ॥ ४ ॥

इदं चास्माकं तव चरितं चित्रमित्याह । विश्वेति । जगज्[illegible] र्जनादिलक्षणं कर्तव्यं त्वयैव कर्तव्यं नान्येनेति यदतस्त्वं [illegible] तदभिज्ञ इत्यतो वै तत्प्रतिपादयन्ति विश्वेति "न तस्य [illegible] करणं च विद्यते" इति श्रुतेः कार्यकारणादिरहितस्य हरेः प्रप[illegible] निर्माणादिकं कथं घटत इत्याशङ्क्य महाशक्तित्वादित्यतो [illegible] विश्वेति । अपिशब्द एवार्थे हिशब्दः अकर्तुः कर्तृत्वघट[illegible] तकः हे हरे ! अकर्तुस्तव जगत्सर्जनादिकर्माङ्गीकृतमेव नैतद्[illegible] पाहृतं वेदादिषु प्रकाशितं मृदग्नीदित्यादिवेदसिद्धं मृदादि[illegible] कृत्वं युक्तिविरुद्धत्वाद्यथा नाङ्गीक्रियते तथात्रापीति तत्राह । [illegible] मिति । न हरेः कर्तृत्वमात्रं निषिध्यते किन्त्वायासेन अप्रय[illegible] कर्तृत्वमकर्तृत्वमिहोच्यते "महाशक्तित्वतस्तच्च युज्यते पर[illegible] तु" इति मृदादीनां वक्तृत्वस्य प्रत्यक्षतोऽदर्शनाद्वचानिग्राहक[illegible] णाभावादनुपपत्त्या तन्नाङ्गीक्रियते अत्र तु ज्ञानिप्रत्यक्षसिद्ध[illegible] ङ्कैदिकत्वाच्च युक्तं हीत्यभिप्रायः तथापि निर्विकारस्य हरेर[illegible] कर्तृत्वमन्तरेण तात्त्विककर्तृत्वाङ्गीकरणं चित्रमिति तत्राह । [illegible] चित्रमिति । ज्ञानदौर्बल्यादस्माकमेव चित्रं त्वयि न चित्रं [illegible] न चित्रं कार्यकारणोऽप्याश्चर्यलक्षणकार्यस्यापि कारण[illegible] इतोऽपि नेत्याह । सर्वात्मनि । सर्वस्वामिनि ननु कार्यकारणत्वे [illegible] द्विवत्तदभिन्नत्वमापन्नमिति तत्राह । व्यतिरिक्त इति । निमित्त[illegible] रणत्वेन तद्भिन्नत्वं युक्तमिति चशब्देन ध्वनयति तर्हि दो[illegible] विलक्षणश्चेच्छून्यकल्प इति तत्राह । वस्तुनीति ॥ ५ ॥

धर्मायेति पदस्याभिप्रायमाह । वेदानिति । तमसा मधुना[illegible] दैत्येन तिरस्कृतानपहृतान् प्रत्यादद्वे सृष्टौ दत्तान् पुनश्च [illegible] दैत्यापहृतान् दत्तवानित्यर्थः कवये ब्रह्मणे अवितथेहिता[illegible] नेन भगवत इत्यस्यार्थ उक्तः ऐश्वर्यादिगुणसामग्रीमत [illegible] सत्यकर्मत्वोपपत्तेः "अशक्ताः सत्यदृष्टौ हि मायादृष्टिं वितन्व[illegible] इत्यादेः ॥ ६ ॥

वीर्यशौर्यादयो भक्तिज्ञानादयो वा महापुरुषगुणास्तेषां भा[illegible] पात्रं महापुरुषगुणभाजनः पुल्लिङ्गस्तु छान्दसः तान् भजते[illegible] वा प्रकृष्टो ह्लादः शान्त्यादिगुणो यस्य स तथा दैत्यद[illegible] वकुलस्य तीर्थीकरणं शीलं वाचरितं च यस्य स त[illegible]

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

...कामव्यवधानरहितध्यानन्यः असदृशभक्तियोगस्तेन॥७॥ सूर्यादितेजोऽभ्यधिकतेजोरूपाय तमो दैन्यमज्ञानं वा ग्रस ... भूयिष्ठादित्यन्वयं भावय॥८॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

भद्रश्रवसस्तु अद्भुतमयभक्तिरसेनोपासत इत्याह। भद्रश्रवस इति। समाधिना तदेकावेशेन सन्निधाप्य साक्षात्कृत्य पश्यन्तीति द्रष्टुं प्रवर्तन्त इत्यर्थः न चित्रमित्यचिन्त्यशक्त्येति भावः श्रीप्रह्लादस्तु वीरकरुणाशान्तादिमयभक्तिरसेनोपास्त इत्याह। ओं नम इत्यादि॥१—६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

भद्राश्वादौ तु भद्राश्वादिषु षट्सु निरूप्यते।
भद्रश्रवःप्रभृतिभिर्हयशीर्षादिसेवनम्॥

भद्रश्रवा नाम वर्षपतिस्तस्य कुलपतयः सन्तानमुख्याः॥१॥

भद्रश्रवःशब्देनाजहत्स्वार्थलक्षणया तद्गणोऽप्युच्यते अतः आत्मभूतः उपदधातीतिवल्लिङ्गसमवायन्यायेन बहुवचनम् आत्मनो जीवस्याविद्यामालिन्यदूरीकरणाद्विशोधनाय॥२॥

घ्नन्तं हिंसन्तं मृत्युं मिषन् पश्यन्नपि न पश्यति यतः पुत्रं ... जनितं पितरं स्वस्य जनकञ्च निर्हृत्य मृतं दग्ध्वा तन्मध्यवर्ती जनको जनितश्चापि सन् तदुभयधनैर्जीवितुमिच्छति मुमुर्षी कथं हास्यतीत्यपि नानुसन्धत्त इत्यतिमौढ्यमिति भावः ननु पश्यन्नपि वासरान् जिजीविषा भगवद्भक्त्यर्थं तादृशस्यापि न विगीतेत्यत आह। विकर्म सेवितुं स्त्रीसङ्गादिसुखं कर्तुम् असत् ...विवाहादिकं ध्यायन् यहीति तत्रापि यर्हि पुत्रादिकं निर्हृत्य ...श्यति तर्हि तेभ्योऽप्यधिकं जिजीविषतीति पाठः छन्दोभङ्गाभावादतिसमञ्जसः। ननु भद्राश्वादिवर्षाणां भौमस्वर्गरूपत्वात्तद्वासिनां युगपदेव पितुः पुत्रस्य च मृत्युदर्शनं न घटते सत्यं सर्वा एव वाचो भारतभूमिवर्त्तिनो जनानालक्ष्यैवोच्यन्ते। वयमन्याः स्वकर्मफलं भुञ्जानाः। अत्र भद्राश्वादिवर्षे पशुवद्वर्त्ता...महे ये त्वतिधन्या अपवर्गसाधने भारतभूमण्डले लब्धजन्मानः श्वपचादिजातयोऽपि यत्रानायासेनैव वैकुण्ठपदमपि साधयन्ति तत्रापि कथमेवं मुह्यन्तीति रीत्या॥३॥

...विद्वांस पश्यति किमत्र चित्रं तत्राह। वदन्तीति। ...स्तव सुधिस्मितमत्याश्चर्यमित्यन्वयः। अतः शास्त्रादिश्रमं विहाय तं त्वामजं नतोऽस्मि त्वां भजन्त एव विद्वांस इति भावः॥४॥

ननु विद्वांसोऽपि ममैव मायया मुह्यन्ति चेत्तर्हि मय्येव दोषं प्रसञ्जयसीति तत्र मायायास्तत्कार्यस्य च त्वदीयत्वेऽपि त्वं ततः पृथगेव वर्त्तस इत्याह। विश्वोद्भवेति। अकर्तुरिति गुणानामेव कर्तृत्वादिति भावः। अङ्गीकृतमुक्तं वेदेनेति त्वय्युपचारादिति भावः। न च जीववत् कर्तृत्वाभिमानादित्याह। अपावृतः त्वं गुणैरावृतो न भवसीत्यर्थः। अपगता आवृदावरणं यस्य तस्येति वा एतच्च त्वयि युक्तमेव न तु चित्रं मायायास्त्वच्छक्तित्वात् तत्कार्याणां कार्यत्वे अतः सर्वात्मनि सर्वस्वरूपे मायायाः स्वरूपशक्तित्वाभावात् सर्वतो व्यतिरिक्ते चेति॥५॥

प्रस्तुतावतारचरित्रमाह। वेदानिति। तमसा दैत्य रूपेण तिरस्कृतान् अपनीतान्। ना च तुरङ्गश्च तद्रूपो विग्रहो यस्य सः कथयं ब्रह्मणो तदर्थमवितथेहिताय सत्यसङ्कल्पाय॥६॥

उत्तरत्र। सप्तमस्कन्धे तीर्थीकरणं शीलमाचारश्च यस्य सः ज्ञानकर्माद्यमिश्रत्वादव्यवधानः अन्यदेवोपासनासाहित्याभावादनन्यश्च यो भक्तियोगस्तेन॥७॥

तेजसामपि तेजसे। कर्माशयान् कर्मवासनाः। कर्माश्रयानिति पाठे रागादीन् रन्धय निर्दह अभयं यथा स्यात्तथा आत्मनि मनसि भूयिष्ठाः भूयाः॥८॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अथावर्षे भद्राश्वादिषु षट्सु भगवन्मूर्त्तीस्तत्सेवकसहिताः निरूप्यन्ते। तथा चेति। भद्रश्रवाः तस्यकुलपतयः पुत्रादयः पुरुषाः सेवकमुख्याश्च भगवत इदं मन्त्ररूपमभिगृणन्तः तनुं सन्निधाप्य उपधावन्ति स्तुवन्ति॥१॥

भद्रश्रवसः राज्ञः पुत्रादयः सेवकमुख्याश्च तदीयत्वात्तद्गुणयोगाच्च तद्वाचकेन शब्देन गृह्यन्ते अतो भद्रश्रवस ऊचुरिति बहुवचनम् भद्रश्रवःप्रधानाः ऊचुरित्यर्थः॥२॥

घ्नन्तं मृत्युम् निर्हृत्य दग्ध्वा तदुभयधनेन जिजीविषति जीवितुमिच्छति किं कुर्वन् असदनित्यं विषयसुखं सेवितुं विकर्म विविधं कर्म ध्यायन् एतद्भगवद्विचेष्टितं विचित्रमत्यद्भुतमित्यन्वयः॥३॥

किञ्च विपश्चितो विवेकिनः अध्यात्मविदः आत्मानात्मपरमात्मस्वरूपादियाथात्म्यविदः कवयःक्रान्तदर्शिनः विश्वं नश्वरमनित्यं वदन्ति पश्यन्ति च तथापि हे अज! तव मायया गुणमय्या मुह्यन्ति नित्यसुखे त्वयिप्रेम न कुर्वन्ति किन्तुदेहगेहादिरूपायां मदीयमायायामासक्ताः भवन्ति एतच्च तव कृत्यं विचेष्टितं सुष्ठु चित्रमित्यन्वयः त्वत्कृपां विना शास्त्रश्रमादिभिरपि त्वयि भक्तिर्न जायते इति भावः तथाह भगवान् पूर्वाचार्यः "कृपास्य दैन्यादियुजि प्रजायते यया भवेत्प्रेमविशेषलक्षणा भक्तिर्ह्यनन्याधिपतेर्महात्मन" इति अतस्तं त्वामजं नतोऽस्मि एकवचनमत्र भद्रश्रवसो मुख्यत्वाभिप्रायेण प्रत्येकाभिप्रायेण वा॥४॥

अनादितो विषयप्रावण्यभगवद्बहिर्मुखत्वादिरूपदोषसूचनाय एवं जीवानां स्वभावमुक्त्वाथ भगवद्गुणगणं वर्णयन्तस्तत्स्वभावमाहुः। विश्वोद्भवेति। वस्तुतः अनन्तशक्तियुक्तनिजस्वरूपतएव नान्याश्रयणेन विश्वोद्भवादिकं ते कर्म "तदात्मानं स्वयमकुरुत" इति श्रुतेः अनेनान्यनिरपेक्षत्वविश्वजन्मादिहेतुत्वादयो गुणा दर्शिताः कथंभूतस्य अकर्तुः नास्ति कर्ता यस्य स तथास्य अनेन नित्यसिद्धत्वनिःसमानातिशयत्वादयो गुणा दर्शिताः यद्वा संकल्पमात्रेणैव विश्वजन्मादिहेतुत्वात् भोगार्थकर्तृत्वशून्यत्वात् अकर्तुरिति अनेन सत्यसंकल्पत्वनित्यानन्दनिभिरधादयो गुणा दर्शिताः पुनः कथंभूतस्य अपावृतः अपगतः आवृदावरणं यस्माच्चस्य अनेन स्वरूपतो गुणतश्चापरिच्छिन्नत्वं दर्शितम् तच्च विश्वोद्भवादिकं मुमुक्षुभोगार्थं मुमुक्षुमुक्त्यर्थञ्च वेदेनाङ्गीकृतं गीतमित्यनेन सर्वोपकारित्व-

स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया ।
मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी ॥ ९ ॥
माऽगारदारात्मजवित्तबन्धुषु सङ्गो यदि स्याद्भगवत्प्रियेषु नः ।
यः प्राणवृत्त्या परितुष्ट आत्मवान् सिद्ध्यत्यदूरान्न तथेन्द्रियप्रियः ॥ १० ॥
यत्सङ्गलब्धं निजवीर्यवैभवं तीर्थं मुहुः संस्पृशतां हि मानसम् ।
हरत्यजोऽन्तः श्रुतिभिर्गतोऽङ्गजं को वै न सेवेत मुकुन्दविक्रमम् ॥ ११ ॥
यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कारुण्यवात्सल्यादयो गुणा द्योतिताः तच्च कर्म त्वयि युक्तं न च त्वयि चित्रमित्यनेनोक्तकर्मणोऽन्यत्रासंभवत्वं भगवति किञ्चिन्मात्रत्वं च दर्शितं भवति कथंभूते कार्यकारणे कार्याणि महदादितृणान्तानि तेषां कारणे पूर्वपूर्वरूपेण तत्तज्जनके प्रकृतिमधिष्ठाय महत्तत्त्वमुत्पादयति तदधिष्ठायाहङ्कारमित्येवमुत्तरोत्तरं बोध्यम् अनेन सर्वान्तर्यामित्वादयो गुणा दर्शिताः सर्वात्मनि सर्वेषां चेतनाचेतनपदार्थानामात्मन्याश्रये । ननु सर्वात्मत्वे संसारित्वजडत्वादीनां भगवति प्रसक्तिः स्यादत्राहुः । व्यतिरिक्ते चेति । सर्वे चेतनाचेतनात्मत्वेऽपि संसारित्वाल्पज्ञत्वादिभिश्चेतनधर्मैर्जडत्वादिभिरचेतनधर्मैश्चास्पृष्ट इत्यर्थः अनेन दोषास्पृष्टत्वमुक्तम् ॥ ५ ॥

तमसा दैत्यरूपेण तिरस्कृतान् लोपितान् ना च तुरङ्गश्च नृतुरङ्गौ तयोरिव विग्रहो यस्य सः कवये चतुर्मुखाय यः आददे प्रत्यर्पितवान् तस्मै ते अवितथेहिताय सत्यचेष्टाय नमः ॥ ६ ॥

उत्तरत्र ! सप्तमे स्कन्धे वर्णितं प्रियतमम् महापुरुषगुणभाजनः सद्गुणाश्रयः दैत्यदानवकुलस्य तीर्थीकरणं शीलमाचरितं च यस्य सः अव्यधानः निरन्तरश्चासावनन्योऽव्यभिचारी च यो भक्तियोगस्तेन उपास्ते आराधयति ॥ ७ ॥

तेजस्तेजसे तेजसामपि तेजसे "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इतिश्रुतेः आविराविर्भव प्रकटो भव प्रकटो भवेत्यर्थं छिद्रकिराविनिपातस्य हे वज्रनख ! हे वज्रदंष्ट्र कर्माशयान् कर्मवासनाः रन्धय रन्धय निर्दह निर्दह तमोऽज्ञानं ग्रस आत्मनि अभयमभयं भूयिष्ठाः भूयात् मन्त्रस्य आदौ मध्ये अन्ते च बीजानि गङ्खाद्यर्थानि ॥ ८ ॥

---

भाषाटीका

श्रीशुकदेवजी बोले तैसही भद्राश्ववर्ष में भद्रश्रवानाम का धर्मपुत्र है उसके सन्तान महा पुरुष साक्षात् भगवान् वासुदेवकी धर्ममयी प्रियतनु हयशीर्षनाम की मूर्ति को परम समाधि से सन्निधान करके यह मंत्र बोलते हुये स्तुतिकरतेहैं । १ ।

भद्रश्रवा बोले आत्मा के शुद्ध करनेवाले धर्मरूप भगवान् आप के अर्थ नमस्कार है ॥ २ ॥

अहो भगवान् का चरित्र बडा विचित्र है जोकि यह संसारी जीव मारते हुये मृत्यु को देखता हुआ भी नहीं देखता है जिससे कि असत् पदार्थ का स्मरण करके पाप ही करना चाहता है और अपने पिता तथा पुत्र दोनों को मरने पर जलाकर भी आप जीने चाहता है ॥ ३ ॥

कविलोग संसार को नाशमान् कहते हैं और ज्ञानी पुरुष जगत्को नश्वर देखतेभी हैं तौभी हे अज ! आप से माया से मोहित होजाते हैं ऐसा विस्मयकारक आपका कार्य है आप अजहो आपको मैं नमस्कार करता हूं ॥ ४ ॥

आप माया के आवरण से रहित हो अकर्ता हो आप का जो जगत् का उत्पत्ति आदि अन्त ये वेदने कहा है तिस में कुछ आश्चर्य नहीं है क्योंकि सर्वात्मा होने से आप जगत् के कारण भी हो जगत् रूप कार्य भी हो वस्तुतः सब से अलग भी हो ॥ ५ ॥

जिन आपने प्रलय काल मे ब्रह्मा के निद्रा होने से मधुकैटभ दैत्य के लेगयेहुए वेदों को पाताल से लाकर मागने वाले ब्रह्मा को देदिया तिन सत्य संकल्प आपको नमस्कार है ॥ ६ ॥

हरिवर्ष में भी भगवान् नृसिंहरूप से हैं तिन के अवतार का हेतु आगे कहैं गे उस अत्यंत प्रिय रूप को दर्शनकरके महापुरुष के गुणवाले महाभागवत दैत्यदानवों के कुल के पवित्र करने योग्य शीलस्वभाव वाले प्रल्हाद जी निरन्तर अनन्य भक्तियोग से उस वर्ष के पुरुषों के सहित उपासना करते हैं और इस मन्त्र को जपते हैं ॥ ७ ॥

अग्नि आदिकों के प्रकाशक भगवान् नरसिंह जी आप के अर्थ नमस्कार है हे वज्र सरीके नखोंवाले ! भगवन् ! आप प्रकट होके कर्म वासनाओं का नाश करो अज्ञान को दूर करो तिस से जैसे सब आत्मा में अभय हों तैसे आप होजावो आप में सब कर्मों को समर्पण करते हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विश्वस्य स्वस्तिप्रार्थने खलस्यापि भवेशाच्च साधुद्वेषं विना न स्यात् । अन्योऽन्यममङ्गलं ध्यायतां च भूतानामन्योन्यघातं विना न भवेदित्याशङ्क्याह । खलः प्रसीदतां प्रसीदतु

हरिर्हि साक्षाद्भगवान् शरीरिणामात्मा झषाणामिव तोयमीप्सितम् ।
हित्वा महांस्तं यदि सज्जते गृहे तदा महत्त्वं वयसा दम्पतीनाम् ॥ १३ ॥
तस्माद्रजोरागविषादमन्युमानस्पृहाभयदैन्याधिमूलम् ।
हित्वा गृहं संसृतिचक्रवालं नृसिंहपादं भजताकुतोभयमिति ॥ १४ ॥

केतुमालेऽपि भगवान् कामदेवस्वरूपेण लक्ष्म्याः प्रियचिकीर्षया प्रजापतेर्दुहितॄणां पुत्राणां तद्वर्षपतीनां पुरुषायुषाहोरात्रपरिसंख्यानानां यासां गर्भा महापुरुषमहास्त्रतेजसोद्वेजितमनसां विध्वस्ता व्यसवः संवत्सरान्ते विनिपतन्ति ॥ १५ ॥

अतीव सुललितगतिविलासविलसितरुचिरहासलेशावलोकलीलया किञ्चिदुत्तम्भितसुन्दरभ्रूमण्डलसुभगवदनारविन्दश्रिया रमां रमयन्निन्द्रियाणि रमयते ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

...त्यजतु । भूतानि च मिथः शिवमेव ध्यायन्तु तेषां ...भद्रमुपशमादिकं भजतु नोऽस्माकमपि मतिः अपिशब्दा... ...नां च मतिरहैतुकी निष्कामा सती ॥ ९ ॥

...नः सङ्गः क्वापि मा स्यात् । यदि कथञ्चित्स्यात्तर्ह्यगारा... ...षु मा स्यात्किन्तु भगवत्प्रियेष्वेव अगारादिसङ्गे दोषमाह । ...इति । इन्द्रियप्रियो गृहाद्यासक्तः ॥ १० ॥

भगवत्प्रियसङ्गे गुणमाह । येषां भगवत्प्रियाणां सङ्गा... ...मुकुन्दविक्रमं श्रुतिभिः श्रवणादिभिः संस्पृशतां सेव... ...नां पुंसामन्तर्गतोऽजो मानसं मलं हरति कथम्भूतं विक्र... ...निजमसाधारणं वीर्यं वैभवं प्रभावातिशयो यस्य तीर्थन्तु ...दि मुहुः संस्पृशतामङ्गजं मलं केवलं हरति नतु वासनाः ...को वै न सेवेतेत्यन्वयः ॥ ११ ॥

मानसमलापगमफलमाह । यस्येति । अकिञ्चना निष्कामा ...मुद्धा हरेर्भक्तिर्भवति ततश्च तत्प्रसादे सति सर्वे देवाः ...गुणैर्धर्मज्ञानादिभिः सह तत्र सम्यगासते नित्यं वसन्ति ...द्यासक्तस्य तु हरिभक्त्यसम्भवात्कुतो महतां गुणा ज्ञान... ...यादयो भवन्ति असति विषयसुखे मनोरथेन बहिर्धा... ...नः ॥ १२ ॥

ननु हरिविमुखस्य गृहाद्यासक्तस्यापि लोके महत्त्वं दृश्यते ...दृश्यते तत्तूपहासास्पदमिति सहेतुकमाह । हरिर्हीति । ...झषाणां मीनानामीप्सितं तोयमेवात्मा तेन विना जीव... ...भावात् महानतिप्रसिद्धोऽपि गृहे यदि सज्जते तदा दम्प... ...नां मिथुनानां शूद्रादिष्वपि प्रसिद्धं वयसैव केवलं यन्म... ...तदेव तस्य भवति नतु ज्ञानादिना मिथुनेषु पूज्यमानेषु ...यः पुंसां महत्त्वं बालमिथुनेभ्यश्च वृद्धमिथुनानां महत्त्वं ...र्थः ॥ १३ ॥

यस्मादेवं तस्माद्गृहं हित्वाकुतोभयं नृसिंहपादं भजतेत्य... ...नुपदिशति कीदृशं गृहं रजस्तृष्णा रागोऽभिनिवेशः रज... ...दीनां मूलं कारणमत एव संसृतीनां जन्ममरणादीनां चक्र... ...मण्डलमविच्छेदो यस्मात् ॥ १४ ॥

केतुमालेऽपि कामदेवस्वरूपेणास्त इति शेषः । किमर्थमास्तेऽत आह । लक्ष्म्या इति । प्रजापतिः सम्वत्सरः "सम्वत्सरो वै प्रजापतिः" इति श्रुतेः तस्य दुहितरो रात्र्यभिमानिन्यो देवताः पुत्रा दिवसाभिमानिनो देवास्तेषां च प्रियचिकीर्षया पुरुषायुषा वर्षशतेन यान्यहोरात्राणि तैः परिसङ्ख्यानं गणना येषां षट्त्रिंशत्सहस्राणामित्यर्थः यासां दुहितॄणां महापुरुषस्य महास्त्रं चक्रं तस्य तेजसा ॥ १५ ॥

रमां रमयन् स्वीयानीन्द्रियाणि रमयते केन साधनेन रमयंस्तदाह । अतीव सुललितया गत्या यो विलासस्तेन विलसितो रुचिरो हासलेशो मन्दस्मितं तत्सहितोऽवलोक एव लीला तया किञ्चिदुत्तम्भितमुत्तुङ्गितं सुन्दरं यद्भ्रूमण्डलं तेन सुभगं यद्वदनारविन्दं तस्य श्रिया ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्लोकानाह । स्वस्तीति । विश्वस्य जगतः स्वस्ति मङ्गलं भूयात् । ननु विश्वस्य स्वस्तिप्रार्थने खलस्यापि भवेत्तच्च साधुपीडां विना न स्यादन्योऽन्यमङ्गलम् ध्यायतां भूतानां परस्परं घातं विना न भवेदित्याशङ्क्याह । खलः प्रसीदतां खलो दुर्मतिः प्रसन्नो भवतु क्रोधादिकं परित्यज्य सुमतिर्भवत्वित्यर्थः भूतानि मिथः परस्परं केवलं शिवमेव धिया सुमत्या ध्यायन्तु तेषां भूतानां मनश्च भद्रमुपशमादिकं भजतु नोऽस्माकं मतिरपिशब्दाद्भूतानां च मतिः अहैतुकी फलाभिसंधिरहिता सत्यधोक्षजे भगवत्यावेश्यतामावेशिता भवतु भगवत्प्रवणा भवत्वित्यर्थः ॥ ९ ॥

मेति । नोऽस्माकं सङ्ग आसक्तिः क्वापि मा न स्यात् यदि क्वापि कथंचित्स्यात्तर्ह्यगारादिषु न स्यात्किन्तु भगवत्प्रियेषु भागवतेष्वेव स्यात्तत्रागाराणि गृहाः भवत्वगारादिष्वप्यासक्तिस्तत्र को दोष इत्याशङ्कायां भागवतसङ्गगृहादिसङ्गयोर्गुणदोषावाह । यः पुनानात्मवान् भगवत्प्रियसङ्गेन समाहितमनाः प्राणवृत्त्या प्राणधारणमात्रोपयुक्तवस्तुपरिग्रहेण परितुष्टः यथा सिध्यति भगवत्कथाश्रवणाचार्योपसत्त्यादिप्रणाड्या दूराद्दाशु मुक्तो भवति न तथा इन्द्रियप्रियः इन्द्रियपोषणप्रियः शब्दादिविषयप्रवणचित्तः सिध्यतीत्यर्थः ॥ १० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुनः सत्सङ्गतेः सिद्धिहेतुत्वमेव प्रपञ्चयति । यत्सङ्गेति । येषां भगवत्प्रियाणां ज्ञानिनां सङ्गेनैव लब्धं प्राप्तं निजवीर्यवैभवं मद्धित्तस्य भगवद्ध्यानसामर्थ्यं भगवत्प्रियसङ्गेनैव मया लब्धमित्यर्थः तथा हि तीर्थं गङ्गादितीर्थवत्पवित्ररूपं भगवद्यशः मुहुः संस्पृशतां सकृत्सेवमानानां मानसं श्रुतिभिः श्रोत्रेन्द्रियैरन्तःप्रतिष्ठितो भगवानङ्गजमन्तर्गतमलं हरति निर्मलं च मनः तद्ध्यानसमर्थमिति भावः अतः ईदृशं मुकुन्दस्य विक्रमं यशः को वै पुमान्न सेवेत मुकुन्दविक्रमसेवा च भगवत्प्रियसङ्गायेति सङ्गतिरेव प्रार्थ्यते इति भावः । यद्वा । येषां भगवत्प्रियाणां सङ्गाल्लब्धं प्राप्तं निजवीर्यवैभवं निजशब्दो भगवत्परः भगवद्वीर्यवैभवं मुहुः संस्पृशतां पुंसां श्रुतिभिः श्रोत्रेन्द्रियव्यापारैः श्रवणादिभिरन्तःप्रविष्टो भगवान्मानसं मनःसम्बन्धिमलं हरति तत्र दृष्टान्तः यथा भगवच्चरणाम्बुजातं गङ्गादितीर्थं संस्पृशतामङ्गजं शारीरमलं हरतीति शेषः पूर्ववत् अथवा यत्सङ्गलब्धं निजवीर्यवैभवं निजासाधारणं वीर्यवैभवं प्रभावातिशयो यस्य तथाभूतं मुकुन्दस्य विक्रमं मुहुः संस्पृशतां श्रुतिभिरन्तर्गतोऽजो मानसं मलं हरति यथा तत्पादाम्बुजतीर्थमङ्गजं मलमिति वा योजना अत्र न सेवेतेत्यत्र तं मुकुन्दविक्रममित्यध्याहारः तस्य संस्पृशतामित्यनेनान्वितत्वाद्वावृत्तिर्वा मुकुन्दविक्रममित्यस्याद्ययोजनायां तु तीर्थपदस्य गौण्या वृत्त्या भगवद्यशसि वृत्तिः अङ्गशब्दस्य मनःपरत्वं च द्वितीययोजनायां तु न कोऽपि दोषः एतत्सङ्गतेर्भगवद्यशःश्रवणं ततो मनोनैर्मल्यं ततस्तस्य भगवद्ध्यानसामर्थ्यं ततश्च भगवदुपासना ततोऽपि च सिद्धिरिति प्रणाडी दर्शिता भवति ॥ ११ ॥

इदानीं भगवद्भक्तिं प्रस्तौति । यस्येति । अकिञ्चना नास्ति किञ्चन यस्याः सा अकिञ्चना किञ्चिदैहिकामुष्मिकं च फलमनवलम्बमाना भगवति भक्तिर्यस्य पुंसोऽस्ति तत्र भगवद्भक्तौ सत्यां देवा इन्द्रादयः सर्वैर्गुणैर्धर्मादिभिः शमदमादिभिश्च सह सम्यगासते तमेवानुवर्तन्त इत्यर्थः एवं भक्तस्य सद्गुणाश्रयत्वमुक्त्वाभक्तस्य तदभावमाह । हराविति । हरौ भगवत्यभक्तस्यात एवासति शब्दादौ मनोरथेन बहिर्धावतः विचिन्वतः महद्गुणा महतां भगवद्भक्तानां ये गुणा उक्तास्ते कुतः कस्माद्धेतोः भवेयुः अतोऽभक्तस्य न महद्गुणाश्रयत्वमित्यर्थः ॥ १२ ॥

ननु विषयासक्तोऽपि कश्चिल्लोके महानेव दृश्यतेऽत आह । हरिरिति । यथा झषाणां मीनानामीप्सितं तोयं जलमिवात्मधारकं तेन विना जीवनाभावात् तथा शरीरिणां देहिनां साक्षाद्भगवानेवात्मा धारकः तथाच श्रुतिः "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्,,निरतिशयानन्दरूप आकाशः सर्वप्रकाशकः परमात्मा यदि न स्यान्नोपासितः स्यात्तदा को ह्यन्यादैहिकामुष्मिकसुखसम्पादनेन जीवयेत् को वा प्राण्यादापवर्गिकसुखसम्पादनेनोज्जीवयेत्,,इति श्रुत्यर्थः तथाच स्मरति भगवान् वाल्मीकिः ।

> न च सीता त्वया हीना न चाहमपि राघव ।
> मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ।

इति हि यस्मादेवं तस्मात्तं भगवन्तं महानपि वयोरूपपश्वन्न- पुत्रधनादिसमृद्धोऽपि हित्वा यदि गृहे सज्जते आसक्तो … महान्तमिति पाठे महत्पुरुषं भगवन्तं विहायेत्यर्थः तदा … वयसा महत्त्वं नतु ज्ञानादिभिरित्यर्थः मिथुनीभूतानां … आदिभिर्निर्वृत्तः त्वाणिकोऽन्ततो निरतिशयदुःखहेतुः … तत्कृतमेव तेषां माहात्म्यं न तु निरतिशयानन्दापादक… मात्मयाथात्म्यानुभवकृतमिति भावः ॥ १३ ॥

तस्मादिति । तस्माद्भगवद्भक्तेर्निरतिशयसुखहेतुत्वाद्विष… निरतिशयदुःखहेतुत्वाच्च रजआदीनां मूलं संसृतिच… संसारपरिवृत्तिहेतुं गृहं संसृतिर्जन्ममरणरूपा तस्याश्च… मण्डलमविच्छेदो यस्मात् गृहं हित्वेत्यर्थः नृसिंहस्य … भजतां कुतो भयं दुःखं न तु कुतोऽपि भयमित्यर्थः तत्र रजः … विषयाभिलाषरूपः रागः क्रोधः विषयानुभवविरोधि… विषादः विषयविहतिनिमित्तः शोकः मानोऽहङ्कारः महा… मानहेतुः मन्युस्तज्जन्यः क्रोधः स्पृहा परदारधनादिप्सा … मागामिदुःखे हेतुदर्शनज्ञानजं तच्च दैन्यं मनसोऽप्रसादः आधि… रकृता मनःपीडा ॥ १४ ॥

अथ केतुमाले वर्षे उपास्योपासकादीनाह । केतुमालेऽपी… भगवान्कामदेवरूपेण प्रद्युम्नरूपेण केतुमाले वर्षे आस्त इति … किमर्थं लक्ष्म्याः प्रियं कर्तुमिच्छया किं च प्रजापतेः संवत्स… "संवत्सरो वै प्रजापतिः"इतिश्रुतेः तस्य दुहितरो राज्यभिमानि… देवताः पुत्रा अहरभिमानिनो देवाः केतुमालवर्षाधिपतयः … तेषां च पुरुषायुषा अहोरात्रसंख्यानानां पुरुषस्यायुः पुरुषा… अचतुरविचतुरेत्यादिना निपातनात्समासान्तोऽच्प्रत्ययः एवं पु… युषं वर्षशतमहोरात्रमहोरात्रस्थानीयं परिसंख्यानं गणनं ये… तथोक्ताः अहश्च रात्रिश्चाहोरात्रः"अहःसर्वैकदेशसंख्यातपुण्या… रात्रेः" इति समासान्तोऽच्प्रत्ययः पुरुषायुषपरिमाणकमहो… येषामित्यर्थः षट्त्रिंशत्सहस्रपरिमितायुषामिति … तेषां प्रियचिकीर्षया च यासां प्रजापतेर्दुहितॄणां राज्यभिमानि… नीनां देवतानां कथंभूतानां महापुरुषस्य भगवतो महास्त्र… चक्रराजस्य तेजसा उद्वेजितं भीतं मनो यासां तासां … संवत्सरान्ते गर्भाधानादारभ्य तत्संवत्सरान्ते विध्वस्ता विकृ… अत एव व्यसवः विगतप्राणाः सन्तो निपतन्ति ॥ १५ ॥

अतीवेति । तत्र रमां लक्ष्मीं रमयन् स्वीयानीन्द्रियाणि … केन साधनेन रमयन् तदाह । अतीवसुललितया सुन्दर… गत्या यो विलासस्तेन विलसितो रुचिरो हासलेशो मन्दस्मि… तत्सहितोऽवलोक एव लीला तया किञ्चिदुत्तम्भितमुन्नमितं भ्रू… यद्भ्रूमण्डलं तेन सुभगं यद्वदनारविन्दं तस्य श्रिया शोभया … तस्तन्मायामयं मायाप्रचुरमात्मीयसङ्कल्पेन परिगृहीतविग्र… ज्ञानपर्यायोऽत्र मायाशब्दः रमां लक्ष्मीं देवीं देवस्य भग… सम्बन्धिनीं "पुंयोगादाख्यायाम्"इति ङीप् सम्वत्सरस्य रा… प्रजापतेर्दुहितृभिः राज्यभिमानिनीभिर्देवताभिरुपेता … संवत्सरस्याहस्सु च तद्भर्तृभिः राज्यभिमानिदेवताभर्तृभिरह… भिमानिभिर्देवैरुपेता परमेण समाधियोगेन उपास्ते ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विश्वस्यार्थे स्वस्त्यस्तु नृसिंहः प्रसीदतां हे हरिवर्षं … भद्राण्युद्दिश्य नृहरिं ध्यायन्तु शिवं नित्यशुद्धं गतं … शास्त्रमननेन उपासनालक्षणध्यानेन च मनश्च भद्रं …

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

...कं हरिं भजनात् नोऽस्माकं मतिरप्यधोक्षजे आविश्यताम् ...हैतुकी फलाभिसन्धिरहिता ॥ ९ ॥

...गवदेकविषयत्वे इत्थंभावलक्षणं साधनमाह। ...गारेति। गृहादिषु सङ्गो माभूत् यदि सङ्ग आवश्यकस्तर्ह्य... भगवत्प्रियेषु स्यात् ननु गृहादिसङ्गाभावे जीवनाभा... देहपातलक्षणानर्थः स्यादिति तत्राह। य इति। यः प्राण... प्राणधारणलक्षणजीवनस्थितिमात्रेण परितुष्टः स आत्म... वशीकृतमना अदूराच्छीघ्रं सिद्ध्यति संसारमुक्तो भवति ...था मुक्तसङ्गस्तथेन्द्रियप्रियो मुक्तो न स्यादित्यर्थः ॥ १० ॥

महात्मनां सङ्गात्किं फलं स्यादत्राह। यत्सङ्गेति। येषां भग... ...वत्प्रियाणां सेवालक्षणात् सङ्गाद्धरेर्निजमौत्पत्तिकं वीर्यं माहात्म्यं ...वैभवं विभुत्वं व्याप्तलक्षणं च यस्मिन् तीर्थं तत्तथा तादृशं ...तीर्थं वेदान्तशास्त्रं मुहुर्निरन्तरं संस्पृशतां श्रवणादिनाऽभ्यस्यतां ...पुंसां मानसं विषयसंसर्गगतं मनोगतमंहो हरति अजः कथं ...श्रुतिभिः श्रवणेन्द्रियद्वारेणान्तर्गतः हृदयं प्रविष्टः ततः किं ...एवंविधफलमतः को वै मुकुन्दविक्रमं न सेवेत रसज्ञ ...इति शेषः। यद्वा यस्य हरेः श्रीपादसङ्गाल्लब्धं यस्य तीर्थस्य ...निजवीर्यवैभवं तादृशं गङ्गादितीर्थं मुहुः संस्पृशतां दर्शनस्पर्श... ...आदिना सेवमानानां पुंसां मानसमंहः सोऽज्ञो हरति हि ...तस्मात्तस्मान्मुकुन्दस्य गृहीतवामनाद्यवतारस्य विक्रमं त्रैलोक्य... ...विक्रमलक्षणं चरितं कः पुरुषो न सेवेत यद्यपि बाह्यं स्नाना... ...दिना हरत्यान्तरमंहः कथमित्यत उक्तम्। अन्तरिति। बहुवारं ...श्रोतव्यमित्यभिप्रायेण श्रुतिभिरित्युक्तमिति ॥ ११ ॥

भक्तेरिन्द्रियाधीनत्वेनेन्द्रियाणां च स्वाभिमानिदेवताधीन... ...त्वेन तत्प्रसादमन्तरेण इन्द्रियाणामात्मावशत्वेन भक्तिकरणा... ...नुपपत्तिरित्याशङ्क्य भगवद्भक्त्या देवप्रीतिरपि तदविनाभूतेति ...भावेनाह। यस्येति। व्यतिरेकेणापि हरौ भक्तिः कर्तव्येत्याह। ...हरावितिI महतां गुणा असत्यमङ्गले बहिःशब्दादिविषये धाव... ...तमेवावशिष्यते नत्वात्मसुखमित्यतो धावत इति ॥ १२ ॥

भगवद्भक्त्याभिमानिदेवप्रीतिमुपपादयति। हरिर्हीति। आत्मा ...जीवः अत्रापि व्यतिरेकमाह। हित्वेति। महान्तमनाद्यनन्तका... ...लीनं हरिं हित्वा यदि गृहे सज्जते बहुकालं जीवति तदा ...वयसा आयुषा दम्पतीनां महत्त्वं न गुणतः गुणतो महत्त्वं ...हरिभक्त्यैवेत्यर्थः ॥ १३ ॥

उपसंहरति। तस्मादिति। यस्माद्गृहं रजोरागादिमूलं तस्मा... ...नृसिंहपादं भजतेत्यन्वयः संसृतिचक्रवालं संसारावृत्तिहेतु... ...भूतम् ॥ १४ ॥

कामदेवस्वरूपेण कामदेवसन्निहितप्रद्युम्नाख्यात्मरूपेण प्रजा... ...पतेर्दुहितॄणां केतुमालवर्षपतीनां लक्ष्म्याश्च प्रियचिकीर्षयेत्य... ...नेन हरेर्भक्तवत्सलतैव प्रयोजनं नान्यदिति दर्शितं पुरुषायुषा ...मनुष्यसङ्ख्यानेन यान्यहोरात्राणि तैः षड्त्रिंशत्सहस्रैः ...परिसङ्ख्यानं गणनं यासां तास्तथा तासां महापुरुषो हरिस्तस्य ...महास्त्रतेजसा सुदर्शनचक्रतेजसा व्यसवः गतप्राणाः ॥ १५ ॥

...उत्तम्भितमूर्ध्वं नीतं सुभगं सुन्दरमिन्द्रियाणि रमयते ...ईक्षणानामितिशेषः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

मागारेति। तदेवोपपादयति। यः प्राणेत्यादिलक्षणः स यथा सिध्यति तथेन्द्रियप्रियो न सिध्यति तदेवं तारतम्ये सत्यपि यदि नः सङ्गः स्यात् तदागारादिष्वन्येषु च सर्वथा मा स्यात् किन्तु भगवत्प्रियेषु स्यादेवेत्यर्थः। प्राणवृत्त्या क्षुत्तृणमात्रशान्त्येत्यर्थः। आत्मवान् सङ्गरहितः ॥ १० ॥

यत्सङ्गलब्धं तीर्थभूतं मुकुन्दविक्रमं संस्पृशतां श्रवणेन्द्रियैरन्तर्गतोऽजः मानसं मनो हरति। अकिञ्चनभक्त्युद्रेकेणाकर्षति। अन्यत् टीकया च समम् अङ्कुजं कामं च हरति खण्डयतीत्यन्वयः ॥ ११ ॥

किञ्च। यस्येति। सुरा भगवदादयः सर्वैर्गुणैरिति यदृच्छयैवेत्यर्थः। समासते वशीभूय तिष्ठन्ति ॥ १२ ॥

हित्वेत्ययमर्थः तं हित्वा यदि गृहे सज्जते तदा यदि महानुच्यते तदा दम्पतीनां कामार्थं युग्मीभूतस्त्रीपुंसानां वयसा यौवनमात्रेणापि महत्त्वमादरो दृश्यते। द्वयोर्यूनोः परस्परमादरः स्यात् एकत्र तु एकत्रैवेति अर्थान्तरे तु नृणामादरमात्रेणैव चरितार्थता स्यात् किं दम्पतीग्रहणेन दम्पत्योः पुरुषमहत्त्वे च वयसेत्यनन्वितं स्यात् ॥ १३ ॥ १४ ॥

लक्ष्मीस्तु दास्यसम्वलितशुचिरसेन स्तौतीत्याह। केतुमाल इत्यादिना। एवमग्रेऽप्यनुसन्धेया तत्र पुरुषायुषेति कथनसमकालकलियुगापेक्षयोक्तम् ॥ १५ ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

मन्त्रं जपित्वा प्रार्थयते। स्वस्तीति। विश्वस्य स्वस्तिप्रार्थने खलस्यापि भवेत्। तच्च साधुपीडां विना न स्यादित्यत आह। खलः प्रसीदतां क्रौर्यं त्यजतु साधुमपीडयतामपि परस्परवैराणां भूतानां परस्परघातं विना स्वस्ति न भवेदित्यत आह। ध्यायन्त्विति। तदपि विषयासक्तिमतां विषयभोगं विना स्वस्ति न स्यादित्यत आह। मनश्चेति। भद्रमनासक्तिं तदपि भक्तिं विना भद्रमप्यभद्रमेवेत्यत आह। अधोक्षजे श्रीकृष्णे नो मत्सहितानां विश्वेषामेव मतिरहैतुकी निष्कामा सती आवेश्यतामधोक्षजेनैवेत्यर्थः। अत्र अद्यैवेति युगपदिति पदोपन्यासाभावात् क्रमेण कालतः प्रह्लादवाञ्छितं भगवान् सम्पादयिष्यत्येव न च तर्हि सर्वमुक्तौ ब्रह्माण्डानां शून्यत्वप्रसङ्ग इति वाच्यम्। जीवशक्तिमायाशक्त्योर्नित्यत्वात्तदा तदैव तावतामनन्तानामन्येषां जीवानां प्रसवादिति ॥ ९ ॥

अधोक्षजासक्तेश्च यद्यपि सत्सङ्गदुःसङ्गौ साधकबाधकौ तदपि सत्सङ्गस्य प्राबल्यात् तस्मिन् सति दुःसङ्गः स्वत एवापयातीत्याह। मेति। नोऽस्माकं यदि भगवत्प्रियेषु सङ्गः स्यात्तदा अगारादिषु मैव स्यात् स्वत एव तेष्वासक्तिः शनैरपयास्यतीत्यर्थः। नन्वगारादिराहित्ये भोगासिद्ध्या क्लिष्टदेहः कथं वर्ततेत्यत आह। य इति। प्राणवृत्त्या भिक्षाद्यादिभिरुदरपूर्त्यैव तुष्टः यत आत्मवान् धृतियुक्तः। अदूरादिति। इन्द्रियप्रियस्तु विलम्बेनैवेत्यर्थः। यद्वा यदि भगवत्प्रियेषु सङ्गः स्यात्तदा अगारादिषु सङ्गो मास्तु। यतो युगपदुभयसङ्गे सति शीघ्रं न भगवन्तं प्राप्नोतीत्याह। य इति। यद्वा अगारादिषु सङ्गो मास्तु यदि भगवत्प्रियेषु

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सङ्गः स्यात्तदैव । भगवत्प्रियसंगाभावे सति भक्त्यसिद्ध्या असंगस्य ज्ञानजनकस्यापि वैफल्यमेवेति भावः । ननु तर्ह्यलमसंगेन केवलः साधुसंग एव प्रार्थ्यतां सत्यं तदपि असङ्गरहितः साधुसङ्गः शीघ्रफलप्रदो भवतीत्याह । य इति । लब्धभगवत्प्रियसङ्गः किञ्च यदि सङ्गः स्यात्तदा अगारादिषु मा स्यात् किन्तु भगवत्प्रियेषु स्यादिति व्याख्याने असङ्गादपि भगवत्प्रियसङ्गस्यापकृष्टत्वे व्यञ्जनयावगमिते भक्तिसिद्धान्तापगम उत्तरश्लोकार्थस्यासङ्गतिस्तुलयाम लवेनापीत्यादि वचनञ्च विरुद्ध्यत इत्याद्यवधेयम् ॥ १० ॥

भगवत्प्रियसङ्गस्य माहात्म्यमाह । येषां सङ्गादेव लब्धं निजवीर्यवैभवं श्रीगोवर्द्धनधारणादिप्रभावोत्कर्षं सत्त्वशोधकत्वातीर्थं श्रुतिभिः संस्पृशतां कर्णैराचम्यतां जनानां मानसमङ्गं मनःसम्बन्धिनं कामं वासनामयमजः श्रीकृष्णो हरति दूरीकरोति श्लेषेण मानसं मनश्चाकर्षति । कीदृशः सन् श्रुतिभिः श्रवणेन्द्रियैरेव अन्तर्गतः अतः को मुकुन्दस्य विक्रमं गोवर्द्धनोद्धारणादिवीर्यं न सेवेतेति तस्य च मुकुन्दविक्रमस्य भगवत्प्रियसङ्गं विना दुर्लभत्वात्तस्यैवोत्कर्षः ॥ ११ ॥

मुकुन्दविक्रमसेवनस्य भक्तित्वात्तस्याश्च साधुसङ्गलब्धायाः परमोत्कर्षत्वात्तद्वतो भक्तस्याप्युत्कर्षमाह । यस्येति । अकिञ्चना निष्कामा सर्वैर्धर्मज्ञानवैराग्यादिभिः सह तत्रैव सम्यक्तया आसते वसन्ति सर्वदेवमयः स एव स्यात्तत्सेवैव सर्वदेवसेवेति भावः । यद्वा । सुरा इन्द्रियाधिष्ठातारो रुद्रादयः सर्वैर्गुणैरेव सह नतु दोषैः सहेत्यर्थः । तेन तस्याहङ्कारादीनामिन्द्रियाणां दुरभिमानादयो दोषा नैव भवन्तीति भावः । अभक्तस्य तु महद्गुणा महतो भक्तिसमर्थस्य ये निर्दोषा गुणास्ते कुतः यदि च शास्त्रज्ञत्वादयो गुणाः स्युस्तदा खलशीर्ष्यामत्सरादिदोषसहिता एव स्युः । कुतः असति सद्भिर्निन्द्ये अविद्यमाने वा बहिर्लाभप्रतिष्ठादिसुखे मनोरथेनापि धावतः । यद्वा । समासते इति सुरा इन्द्रियाधिष्ठातारोऽन्यत्र सांसारिकलोके संसारप्रवर्त्तकत्वेन दोषैरेव सहासते ज्ञानिलोके नित्यमध्यात्मादिलयभावनावति न सम्यगासते किन्तु अस्मत्त एव ज्ञानमवाप्य पुनरस्मानेव संजिहीर्षावस्मिन् कृतघ्ने पुंसि स्थिता वयमद्य श्वो वा मरिष्याम एवेति ससयोत्कम्पमेवासते भक्तजने तु प्रतिदिनं भगवन्माधुर्यं एवाध्यात्मादिकं संचारयति सति सर्वैर्गुणैरेव समासते वयं कृष्णाय सजातयः प्राकृता अप्यप्राकृताः कृष्णस्पर्शसंयोगात् कायर्याः प्राप्तदिव्यजातिरूपगुणा नित्यमेव भगवन्माधुर्यामृते विहरन्तोऽत्र पुंसि नूनमतिमृत्यवो भवामेति सानन्दचमत्कारं निश्चलीभवन्तीत्यर्थः अन्यत् समानम् ॥ १२ ॥

ननु भक्ति राहित्यादेव गृहे सक्तानां शास्त्रज्ञत्वादिगुणवतां लोके महत्त्वं दृश्यते सत्यं तत्तु वस्तुत उपहासास्पदमेवेति सहेतुकमाह । हरिर्हीति । तोयमीप्सितमिति कश्चित् झषजातिर्यथा तोयमपि हित्वा बहिस्तटादिषु सुखार्थं प्रचरन् जीवन्मृतो भवति तथैव हरिविमुखो जीवन्मृत एव स नतु महानिति भावः । तदपि यदि लोके महान् स्यात्तदा वयसा यौवनेनैव दम्पतीनां यथा महत्त्वं तथा यूनोर्दम्पत्योर्यथा परस्परमादरस्तथा न वृद्धयोर्नापि बालयोः दम्पतिपूजायाञ्च यौवनविशिष्टावेव दम्पती वस्त्रालङ्कारादिभिरधिकं पूज्येते [illegible] तथा वृद्धाविति ॥ १३ ॥

रजस्तृष्णा रागोऽभिनिवेशः । संसृतेश्चक्रवालं [illegible] गृहमध्य एव संसृतिस्तिष्ठतीति भावः । भजतेत्यसुरान् [illegible] देशः ॥ १४ ॥

कामेन कन्दर्पविलासेन दीव्यतीति कामदेवस्तत्स्वरूपो भगवानास्त इति शेषः । "सम्वत्सरो वै प्रजापतिः" इति [illegible] प्रजापतिः सम्वत्सरात्मकः कालस्तदभिमानी देव एव तस्य [illegible] तृणां पुत्राणाञ्च रात्रिंदिवसाभिमानिनां देवानां प्रियचिकीर्षया पुरुषायुषेति कथनसमकालकलियुगापेक्षयोक्तेर्वर्षशतेन [illegible] होरात्राणि तैः परिसङ्ख्या गणना येषां षट्त्रिंशत्सहस्राणि [illegible] मित्यर्थः । यासां पतिमतीनां दुहितॄणां दिवससहितानां रात्रीणामित्यर्थः । महास्त्रतः कालचक्ररूपात् गर्भाः क्षणलवात्मकाः कालाः । यद्वा । वर्षभोज्यानि लोकानां प्रारब्धकर्मफलान्येव ता रात्रीर्निमित्तीकृत्योद्भूतत्वात्तासामेव गर्भा इत्युक्ताः [illegible] तथा तेषां सम्वत्सरात्मकस्थूलकालान्ते भोगेन क्षय एव [illegible] पातत्वेनोत्प्रेक्षितः । अहोरात्राधिष्ठात्र्यो देवतास्ताः प्राकृत[illegible] वर्त्तिन्यो भगवन्तमुपास्य वैकुण्ठ एव तद्भक्तानामनश्वरप्रेम[illegible] सुखनिमित्तरूपा भविष्यन्तीत्युपासनाफलञ्च द्रष्टव्यम् ॥१५॥

अतीव सुललितो यो गतिविलासः विशेषेण लसितोऽतिरमणीयो रुचिरहासलेशयुक्तोऽवलोकश्च ताभ्यां या लीला तया [illegible] किञ्चिदुत्तम्भितेन सुन्दरचक्रमण्डलेन सुभगं यद्वदनारविन्दं तस्यापि श्रीर्यतः तया स्वीयया रमां रमयन् रमासम्बन्धिन्या तया इन्द्रियाणि स्वीयानि रमयते ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

खलः प्रसीदतां खलतां त्यजतु भूतानि शिवं मङ्गलं परस्परं ध्यायन्तु तेषां मनः भद्रं कल्याणं भजताद्भजतु नोऽस्माकं मतिः अहैतुकी फलाभिसन्धिरहिता सती अधोक्षजे त्वय्येव आवेश[illegible] प्रविष्टा भवतु ॥ ९ ॥

प्राणवृत्त्या यथा लाभेन ॥ १० ॥

यत् येषां भगवत्प्रियाणां सङ्गाल्लब्धं निजमसाधारणं मुकुन्द[illegible] साक्षात्कारकरं वीर्यं बलमेव वैभवं सामर्थ्यं यस्य तन्मुकुन्द[illegible] विक्रमं श्रुतिभिः श्रुतिः श्रवणं बहुवचनेन वागादिसङ्ग्रहः श्रवणवर्णनमननादिभिः संस्पृशतां सेवमानानां जनानाम् [illegible] गतः हृद्गतोऽजः श्रीमुकुन्दः मानसम्मनोगतं सर्वाशुभबीजभूतम् [illegible] हरति तीर्थजलादिरूपन्तु मुहुः संस्पृतामङ्गजमलं केवलं हरति तान् भगवत्प्रियान् को न सेवेत ॥ ११ ॥

अकिञ्चना भगवदितरफलविषयरहिता भगवद्भक्तिर्यस्य तत्र तस्मिन् भगवद्भक्ते सर्वैर्धर्मज्ञानादिसाधनसहितैर्गुणैः [illegible] सह सर्वे सुराः फलदाः सम्यगासते सानुकूला भवन्ति [illegible] सूक्ष्मे स्वप्नादौ बहिर्जागरे धावतः हरावभक्तस्य तु महत्[illegible] गुणा येभ्यस्ते सुराः सर्वैर्गुणैः सह सानुकूलाः कुतः ॥ १२ ॥

झषाणां तोयमिव शरीरिणां हरिरात्माश्रयस्तं [illegible] महानपि यदि गृहे सज्जते तदा दम्पतीनां मिथुनानां [illegible] मिव वयसा महत्त्वं तस्यापि भवति नतु हेयोपादेयविवेक[illegible] दिना ॥ १३ ॥

तद्भगवतो मायामयं रूपं परमसमाधियोगेन रमा देवी सम्वत्सरस्य रात्रिषु प्रजापतेर्दुहितृभिरुपेताऽहस्सु च तद्भर्तृभिरुपास्ते इदं चोदाहरति ॥ १७ ॥

ॐ ह्रां ह्रीं ह्रूं ॐ नमो भगवते हृषीकेशाय सर्वगुणविशेषैर्विलक्षितात्मने आकूतीनां चित्तीनां चेतसां विशेषाणां चाधिपतये षोडशकलाय छन्दोमयायान्नमयायामृतमयाय सर्वमयाय सहसे ओजसे बलाय कान्ताय कामाय नमस्ते उभयत्र भूयात् ॥ १८ ॥

स्त्रियो व्रतैस्त्वां हृषिकेश्वरं स्वतो ह्याराध्य लोके पतिमाशासतेऽन्यम् ।
तासां न ते वै परिपान्त्यपत्यं प्रियं धनायूंषि यतोऽस्वतन्त्राः ॥ १९ ॥
स वै पतिः स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरं जनम् ।
स एक एवेतरथा मिथो भयं नैवात्मलाभादधिमन्यते परम् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

असुरानुपदिशति । तस्मादिति। रजआदिमूलं गृहं हित्वा अकुतोभयं नृसिंहपादं भजतेति ॥ १४ ॥

तस्याः प्रियचिकीर्षया कामदेवरूपेण आस्ते इतिशेषः "सम्वत्सरो वै प्रजापतिः" इति श्रुतेः प्रजापतेः सम्वत्सरस्य दुहितृणां रात्र्यभिमानिनीनां देवतानाम् पुत्राणां दिनाभिमानिनां च प्रियचिकीर्षया यासां दुहितृणाम् महास्त्रं चक्रम् ॥ १५ ॥

अतीव सुखलितगत्या यो विलासस्तेन विलसितो रुचिरो हासलेशो मन्दस्मितं तेन सहितोऽवलोक एव लीला तया किंचिदुत्तम्भितेन सुन्दरभ्रूमण्डलेन सुभगस्य वदनारविन्दस्य श्रिया रमां रमयन् इन्द्रियाणि रमयते ॥ १६ ॥

---

भाषाटीका।

सब संसार का मङ्गल होवै दुष्ट की बुद्धि निर्मल होवै सब प्राणिआपस में मन से सब का भला चाहैं हे अधोक्षज ! हमारा मन शान्ति को प्राप्त होवै हमलोगों की बुद्धि निष्काम होकर परमेश्वर में लगै ॥ ९ ॥

हम लोगों का सङ्ग कभी स्त्री पुत्र धन आदि में मत होवै यदि होवै तो भगवद्भक्तों के साथ होवै जो ऐसा विरक्त है वह प्राणवृत्ति भोजनादि मात्र से सन्तुष्ट होकर आत्मज्ञानी होने से थोडे दिन में सिद्ध होजाता है इन्द्रियों की प्रीतिवाला कभी नहीं सिद्ध होता है ॥ १० ॥

जिन महा पुरुषों के सङ्ग से प्राप्त भगवत चरित्र को वारम्वार चिंतन करने वालों के मन को साक्षात भगवान् कर्णों के द्वारा हृदय में जाकर पवित्र कर देते हैं वह मुकुन्द भगवान् का चरित्र उत्तमतीर्थ है तिसको कौन नहीं सेवन करैगा और पुष्करादि तीर्थ तो देह के मल को ही वारम्वार सेवने से छुड़ाते हैं ॥ ११ ॥

जिस पुरुष की भगवान् में निष्काम भक्ति है तिसकेही पास सबगुणों के सहित सब देवता रहते हैं जो हरि का भक्त नहीं है बाहिर के असत् पदार्थों में मनोरथ को दौडाता है उस के पास महापुरुषों के गुण कहां से आवें गे ॥ १२ ॥

हरिभगवान् तो सब प्राणियों के जीवन के हेतु हैं जैसे कि मछलियों को जलअति प्रिय है तब महात्मा होकर भी उन परमात्मा को छोड कर यदि गृहादि में आसक्त होजावै तौ उन स्त्री पुरुषों का केवल अवस्थाही से बडापन है और गुण कुछ नहीं होंगे ॥ १३ ॥

तिस कारण से अनुराग दुःख क्रोध मान इच्छा भय दीनता मनचिन्ता इन सबों का कारण संसार बढानेवाला जो घर तिस को छोडकर सबप्रकार से निर्भय श्रीनृसिंहजी के चरण को भजो इस प्रकार स्तुति करते हैं ॥ १४ ॥

केतुमाल वर्ष में भी लक्ष्मी की प्रसन्नता के वास्ते और प्रजापती के पुत्र तथा पुत्री जोकि उसवर्ष के छत्तीसहजार संख्या वाले हैं श्रीनारायण के अस्त्र कालचक्र से मन में डर होने से जिन के गर्भ ध्वस्त होकर मरकर सम्वत्सर के पीछे गिरते हैं ऐसे जो रात्रि दिन तिन के वास्ते भी भगवान् कामदेव रूप से विराजते हैं ॥ १५ ॥

अति सुन्दर जो चाल का क्रीडा तिस से जो मनोहर हास का लेश तिस के सहित जो देखना तिस की लीला से कुछ उठाया हुआ जो सुन्दर भ्रूमंडल तिस से सुन्दर जो वदनारविन्द तिस की शोभा से लक्ष्मी को प्रसन्नकरते हुये भगवान् अपनी इन्द्रियों कोभी तृप्त करते हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तद्भर्तृभिर्दिवसाभिमानिभिरुपेता ॥ १७ ॥

सर्वगुणविशेषैः श्रेष्ठवस्तुभिर्विलक्षितो लक्ष्यीकृत आत्मा यस्य आकूतीनां क्रियाणाम् । चित्तीनां ज्ञानानाम् । चेतसां सङ्कल्पाध्यवसायादीनाम् । विशेषाणां तत्तद्विषयाणां षोडशकला अंशा एकादशेन्द्रियपञ्चविषयलक्षणा यस्य । छन्दोमयाय वेदोक्तकर्मप्राप्याय । अन्नमयायाशोपष्टम्भत्वात् । अमृतमयाय परमानन्दाविष्कारत्वात् सर्वमयाय सर्वविषयत्वात् । सहसे ओजसे बलाय तद्धेतुत्वात् ॥ १८ ॥

त्वत्कामेनैव त्वत्सेवकत्वादहं कृतार्थोऽस्मि । अन्यकामनया तु त्वामर्चन्त्यो न परिपूर्णमनोरथाः स्युरित्याह । स्त्रिय इति । स्वत एव हृषीकाणामीश्वरं पतिं सन्तं त्वामाराध्य याः स्त्रियोऽन्यम्

या तस्य ते पादसरोरुहार्हणं निकामयेत्साखिलकामलम्पटा ।
तदेव रासीप्सितमीप्सितोऽर्चितो यद्भग्नयाच्ञा भगवन् ! प्रतप्यते ॥ २१ ॥
मत्प्राप्तयेऽजेशसुरासुरादयस्तप्यन्त उग्रं तप ऐन्द्रियेधियः ।
ऋते भवत्पादपरायणान्न मां विन्दन्त्यहं त्वद्धृदया यतोऽजित ! ॥ २२ ॥
स त्वं ममाप्यच्युत ! शीर्ष्णि वन्दितं कराम्बुजं यत्त्वदधायि सात्वताम् ।
बिभर्षि मां लक्ष्म वरेण्य ! मायया क ईश्वरस्येहितमहितुं विभुरिति ॥ २३ ॥

रम्यके च भगवतः प्रियतमं मात्स्यमवताररूपं तद्वर्षपुरुषस्य मनोः प्राक्प्रदर्शितं स इदानीमपि महता भक्तियोगेनाराधयतीदं चोदाहरति ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पतिं प्रार्थयन्ते पतिकामानां हि कामाराधनं व्रतेषु प्रसिद्धम् तासामपत्यादीनि ते पतयो न पातुं शक्ताः ॥ १९ ॥

अतस्ते पतय एव न भवन्तीत्याह । सवा इति । स चैवम्भूतः पतिर्भवानेक एव नान्यो यो भवानात्मलाभात्परमन्यदधिकं न मन्यते । इतरथान्याधीनसुखस्य न स्वतन्त्रता । स्वतन्त्रनानात्वे च मण्डलेश्वराणामिव मिथो भयं स्यादित्यर्थः ॥ २० ॥

किञ्च । निष्कामभजनेऽप्रार्थिता एव सर्वे कामा भवन्ति सकामभजने तु कामितमात्रमनित्यं चेत्याह । या स्त्री तस्योक्तलक्षणस्य तव पादसरोरुहस्यार्हणं पूजामेव कामयेन्न फलान्तरं साखिलेषु कामेषु लम्पटा सर्वान्कामान्प्राप्नोतीत्यर्थः । ईप्सितमीप्सिनः फलान्तरमाप्तुमपेक्षिनः सन्नर्चितश्चेत्तर्हि तदेवैकं रासि ददासि । किञ्च । यद्यतः फलभोगानन्तरम्भग्ना याच्ञा याचितोऽर्थो यस्याः सा प्रतप्यते दुःखं प्राप्नोति तदेव रासि ननु नित्यम् ॥ २१ ॥

ननु ममार्हणे कुतः सर्वकामप्राप्तिस्त्वमेव कामार्थिभिः सेव्यसेऽत आह । मत्प्राप्तये ब्रह्मादयस्तपस्तप्यन्ते कुर्वन्ति । कथंभूताः । ऐन्द्रिये सुखे धीर्येषाम् अलुक्समासः तथापि भवत्पादपरायणादृते मां न विन्दन्ति मत्कटाक्षविलसिता विभूतीर्न लभन्त इत्यर्थः । यतस्त्वय्येव हृदयं यस्याः साऽहं स्वस्परतन्त्रत्वात्त्वदनुवर्तिनमेव विलोकयामि नान्यमित्यर्थः ॥ २२ ॥

इदानीं कृपा प्रार्थ्यते । स त्वमिति । यद्भजनं विना न कश्चित्पुरुषार्थः स त्वं त्वदिति त्वया यत्कराम्बुजं सात्वतां भक्तानां शीर्ष्ण्यधायि कृपया न्यस्तं तन्ममापि शीर्ष्णि निधेहीति शेषः । कथंभूतम् । वन्दितं सर्वकामवर्षित्वेन सद्भिः स्तुतम् न च मयि तत्रानादरः यतो हे वरेण्य ! मां वक्षसि लक्ष्म बिभर्षि । अहो चित्रमेतत् मयि केवलमादरमात्रं भक्तेषु तु परमा कृपाऽत ईश्वरस्य तव यन्मायया ईहितं तत्को वितर्कयितुं समर्थः ॥ २३—२४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इदं वक्ष्यमाणमन्त्रवाक्यं चोदाहरन्ति जपन्ति बहुवचनं सम्वत्सरदुहितृतत्कर्त्रभिप्रायकं जप्यं मन्त्रमाह । ॐ भगवत्कृष्णार्थः पूर्ववत् हृषीकाणामिन्द्रियाणामीशाय नियन्त्रे सर्वैः प्रकृति[पुरुष]योरसम्भावनीयैर्गुणविशेषैः सत्यज्ञानादिभिः गाम्भीर्यादिभिः "[सर्व]कर्मा सर्वकामः सर्वगन्धः सर्वरस" इत्यादिश्रुतिप्रसिद्धैर्विशि[ष्ट]तमाश्रयत्वेन वक्तुं प्रतिपादयितुमिष्टमात्मस्वरूपं यस्य [त]स्मै कल्याणगुणाश्रयत्वेन वेदान्तैः प्रतिपाद्यमानायेत्यर्थः सर्वार्थं करणार्थोऽत्रानुसन्धेयः आकूतीनां क्रियाणां चित्तीनां ज्ञान[ानां] चेतसां सङ्कल्पाध्यवसायादीनां कर्मेन्द्रियज्ञानेन्द्रियमनो[वृत्तीनां] राशौ विशेषः पृथिवी बहुवचनमाकाशाद्यभिप्रायकं पृथि[वी]प्रभृतिपञ्चमहाभूतानां चाधिपतये नियन्त्रे इदं चाधिपत्यं सत्यपि पृथग्भावे भृत्यनिरूपितनियन्तृभावस्य राज्ञ इव [न] त्वात्मत्वप्रयुक्तमिति द्योतयितुं शरीरात्मभावनिबन्धनसामान[ाधि]करण्यमाह । षोडशकलायेति । षोडशकलाः पञ्चभूतानि मनः[प्राण]ान्येकादशेन्द्रियाणि एतत्स्वरूपाय तच्छरीरकत्वेनावस्थिता[येत्य]र्थः षोडशकला अंशा मूर्तयो यस्येति बहुव्रीहिर्वा पञ्चभूत[ान्ये]कादश इन्द्रियाणि च जगत्कारणत्वमाह । छन्दोमयाय [छन्दः]प्रचुराय "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यद्[ऋग्वेदः]" इति श्रुत्यर्थोऽत्र विवक्षितः एवं समष्टितत्त्वशरीरकत्वमभि[धाय] व्यष्टितत्त्वात्मकत्वमाह । अन्नमयाय अन्नमयशब्दोऽत्र व्यष्टि[तत्त्व]तत्त्वसंघातात्मकदेहपरः तद्रूपाय व्यष्टिशरीरकायेत्यर्थः एवं [व्यष्टि]समष्ट्यात्मकतत्त्वान्तरात्मकत्वमभिधायजीवान्तरात्मकत्वमपि सामा[ना]धिकरण्येनाभिधत्ते । अमृतमयायेति । अमृतशब्दोऽत्र जीववा[ची] परमात्मपर्यन्तः अमृतशरीरकायेत्यर्थः उक्तानुक्ताशेष[...]त्मत्वाभिप्रायेणाह । सर्वमयायेति । सर्वात्मकायेत्यर्थः किं [व]स्तु तद्वस्तुगतशक्तिरूपत्वमेवेत्याह । सहसे मनःसामर्थ्य[रूपाय] ओजसे इन्द्रियशक्तिरूपाय बलाय देहशक्तिरूपाय सहसादी[ना]न्तुल्याद्य तादात्म्यव्यपदेशः कान्ताय निरतिशयप्रीतिविषय[ाय] कामाय स्वीयेषु निरतिशयप्रीतिविशिष्टाय ते तुभ्यमुभ[यतः] पुरस्तात्पृष्ठतश्च नमो नमनं भूयादस्त्वित्यर्थः ॥ १८ ॥

एवमिमं मन्त्रमुदाहरन्ती इति पत्नी लक्ष्मीः पतिश[ब्द]प्रवृत्तिनिमित्तपौष्कल्यविशिष्टस्त्वमेवेत्याह । स्त्रिय इति । [...] हृषीकाणामिन्द्रियाणामधीश्वरमाधिपतिं स्वतःशब्देनाधिप[त्यस्य] निरुपाधिकत्वं व्यज्यते एवंभूतं त्वां व्रतैराराध्य लोके [...] स्त्रियः अन्यं पतिमाशासते कामयन्ते ते चाशास्यमानाः [...] तासां कामयमानानां स्त्रीणां प्रियं प्रीतिविषय[...] पत्यधनायूंषि च न परिपान्ति न रक्षन्ति पातुमसमर्था[...]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

...तत्कृतः यतस्ते पतयः अन्यतन्त्राः कर्मवश्याः तेषां पतित्वं ...कर्मायत्तं न हि कर्मपरवशाः कर्मनिर्हरणे समर्था इति ...एवं निरुपाधिकरक्षकत्वस्यैव पतिशब्दप्रवृत्तिनिमित्तत्वात्ते ...पतय एव न भवन्तीत्यभिप्रायः १६ ॥

एवमन्यत्र पतिशब्दोऽमुख्यवृत्त इत्युक्तं भगवति तु मुख्य-...इत्याह। स वा इति। सः मन्त्रोक्तगुणसम्पन्नः भवान्प-...वैशब्दोऽवधारणे भवानेव पतिरित्यर्थः तथा च श्रुतयः।

एष सर्वेश्वरः एष भूताधिपतिरेष भूतपालः।

पतिं विश्वस्यात्मेश्वरं न तस्य कश्चित्पतिरस्ति लोके।

...सूत्रं चैतद्विषयकम् "अनन्याधिपतिः" इति कुतो मम निरुपा-...धिकपतित्वं तत्राह। अकुतोभयः नास्ति कुतोऽपि भयं यस्य सो-...कुतोभयः अकर्मवश्यत्वेन कर्मकृतपारतन्त्र्याभावान्निरुपाधिकर-...क्षकत्वं त्वय्येवेति भावः अत एव भयातुरं जनं समन्ततः पाति ...सर्वेभ्योऽपि भयेभ्यस्त्रायते स च निरुपाधिकपतिर्भवानेक एव ...त्वया ईश्वरद्वित्वे मण्डलेश्वराणामिव मिथोऽन्योऽन्यं भयं स्यात् ...ऽतो भवानेक एव पतिरत एव भवानात्मलाभात्परमन्यदधि-...कं न मन्यते आत्मनो लाभः परमात्मशेषत्वज्ञानं तस्मिन्नेव ...हि सत्यात्मनः सत्ता इतरथासत्प्रायतैव तन्मात्रमेव चेतन-...सत्त्वयो भवानपेक्षते न तु ततोऽन्यदित्यर्थः ॥ २० ॥

तदेव प्रपञ्चयति। येति। अखिलेषु कामेषु पत्यपत्यधनायुरादिषु ...स्पदा आसक्ता सती या स्त्री तस्योक्तविधस्य ते तव पाद-...सरोरुहयोरर्हणमाराधनं न कामयेन्न कुर्यात्तस्यास्तदेवेप्सितं पत्य-...पत्यादिकं क्षुद्रं फलमर्चितस्त्वं रासि ददासि "रा दाने" इति ...धातुः कथंभूतः त्वमीप्सितः प्रीतिविषयः पुरुषार्थरूपः सर्वविध-...पुरुषार्थरूपं त्वामपुरुषार्थरूपं मत्वा त्वत्तोऽन्यं यत्किञ्चित्पुरुषार्थ-...त्वतः प्रार्थयते तस्यास्तदेव पुरुषार्थाभासं ददासि न तु स्वात्मान-...मित्यभिप्रायः यतस्त्वत्तोऽन्यदपुरुषार्थरूपमत एव भग्ना याञ्चा याचि-...तार्थो यस्यास्तथाभूता सती हे भगवन् ! कामदेव ! प्रत-...प्यते दुःखिता भवति न तु लब्धात्माहमिति नितरां सुख्यतीत्य-...भिप्रायः ईप्सितार्चितमिति पाठान्तरं तदा इष्टत्वेन पूजिते ...त्वमीप्सितमिति यावत् तुच्छपुरुषार्थरूपमपि निरतिशयपुरु-...षार्थरूपत्वेन मन्यमानं पत्यपत्याद्यन्यतमं सांसारिकमेव फलं ...रासीत्यभिप्रायः ॥ २१ ॥

ननु लक्ष्मीर्हि लोके पुरुषार्थत्वेन प्रसिद्धा नत्वहं तत् कथ-...मेवमुच्यते तत्राह। मत्प्राप्तय इति। येन्द्रिये शब्दादौ धीर्येषां ...तथाभूताः कण्ठे कालवदलुक्समासः अजो ब्रह्मा ईशो रुद्रः ...सुरा इन्द्रादयः असुराश्च ये यद्यपि मत्प्राप्तये मां प्राप्तुं भव-...त्पादपरायणादृते भवत्पादारविन्दशरणवरणं विनान्यदुग्रं ...तपः तप्यन्ति पाकं पचतीतिवन्निर्देशः तपः कुर्वन्तीत्यर्थः ...तथापि मां न विन्दन्ति न प्राप्नुवन्ति कुतः हे अजित ! ...यतोऽहं त्वद्धृदया तव हृदया हृद्गमया प्राप्ता त्वद्धृद्गताहं त्वदपृथक्-...सिद्धत्वेन मम त्वदन्तर्गतत्वेनैव पुरुषार्थरूपत्वं नतु पृथगित्यर्थः ...यद्वा। त्वन्निरतिशयपुरुषार्थरूपा त्वं हृदये हृद्गतो यस्यास्तथा-...भूताहं त्वय्येव हृदयं यस्याः सेति निरतिशयपुरुषार्थरूपस्य ...तव नित्यं मद्धृद्गतत्वेनाहमपि पुरुषार्थरूपा भवामि नतु स्वत ...इत्यर्थः अतो ये भवत्पादारविन्दपरायणास्तानेवाहमनुवर्त-...यामीत्यभिप्रायः ॥ २२ ॥

इदानीं तत्कृपां प्रार्थयते। स त्वमिति। यः पुरुषार्थरूपः स त्वं हे अच्युत ! वन्दितं सर्वपुरुषार्थप्रदत्वेन स्तुतं तत्कराम्बुजं मम शिरसि निधेहि कथंभूतं यत्सात्वतामेकान्तिनां शीर्ष्णि अधायि कृपया निहितं मत्पूर्णकृपाविषया त्वमप्यपूर्वं किमिदं प्रार्थयसे तत्राह। हे वरेण्य ! मायया मायामयरूपेण श्रीवत्सेन सह मां चिन्हं वक्षसि बिभर्षि चिन्हरूपेण बिभर्षी-त्यर्थः श्रीवत्सस्य प्रधानात्मकत्वं "श्रीवत्सस्थानमपरमनन्तेन समा-श्रितम्। प्रधानबुद्धिरप्यास्ते गदारूपेण माधवम्" इति भगवता परा-शरेणोक्तं माययेति दृष्टान्तार्थः यथा श्रीवत्सं तथा लक्ष्म तथा-हमपि लक्ष्म अतः सात्वतस्य शिरसि कृपास्त्वयैवेत्यभिप्रायः "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। ज्ञानी त्वात्मैव मे मतम्" इत्युक्तभगवदभिप्रायमालोच्य शीर्ष्णि सात्वतां यदधायीत्युक्तम् अत्र कारणं न कोऽपि वेत्तुं प्रभुरित्याह। ईश्वरस्य तवेहितं चेष्टितमभिप्रेतं वा ऊहितुं कथयितुं को वा प्रभुः समर्थः न कोऽपी-त्यर्थः ॥ २३ ॥

एवं केतुमाले उपास्योपासकादिकमुक्तमथ रम्यके तदाह। रम्यके चेति। प्राग्युगान्तसमये मनो रम्यकवर्षाधिपतेः प्रद-र्शितं यन्मात्स्यं रूपं भगवतः प्रियतमं तदेव रूपं स एव मनुः रम्यके वर्षे इदानीमपि महताविच्छिन्नेन भक्तियोगेनारा-धयन्नास्ते ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मायामयमिच्छामयं रमा देवी भगवतो रूपमुपास्त इत्यस्येदं तात्पर्यमवगन्तव्यं रतिसन्निहिता रमा देवी कामान्तःस्थितं हरेः रूपमुपास्ते रतिस्तु विष्णोः प्रतिमास्थानीयं कामदेवम्

कामदेवस्थितं विष्णुमुपास्ते श्री रतिस्थिता

कामदेवं रतिश्चापि विष्णोस्तु प्राकृतां तनुम्

इति स्मृतेः अनेन मायामयमित्यस्य प्राकृतमित्यर्थः सूच्यते सम्वत्सरस्य रात्रिषु प्रजापतेर्दुहितृभिरहस्सु तासां भर्तृभिरु-पेता ॥ १७ ॥

ये ये सर्वे विशेषा व्यावर्तकधर्मास्तांस्तान् विदन्तीति सर्वविशे-षविदो ब्रह्मादयस्तेषां क्षेत्रमावासस्थानमात्मा देहो यस्य स तथा तस्मै आकूतीनामभिप्रायाणां पूर्वानुभवसंस्काराणां वा चित्तानां स्मरणकारणानामन्तःकरणविशेषाणां चेतसां बुद्धि-वृत्तीनां वृत्तिविशेषाणां चाधिपतये सर्वमयाय सर्वोत्तमाय उभय-त्रान्तर्बहिश्च भूयाद्भवाया इति शेषः ॥ १८ ॥

लोके विद्यमानाः स्त्रियो नानाव्रतैरिन्द्रियस्वामिनं त्वामाराध्य त्वत्तोऽन्यं पतिमाशासते प्रविशन्ति प्राप्नुवन्तीत्यर्थः त्वमनेन व्रतलक्षणाराधनेन हेतुना तासामपत्यं प्रियं भर्तारमुपभोग-साधनं धनान्यायूंष्यहोरात्रगमागमलक्षणानि रक्षसि कुतस्ताः स्त्रियः पतित्वेन वृताः पुरुषाश्चास्वतन्त्रास्तत्पालने शक्तिहीना यतोऽतस्तत्पतित्वं व्यावहारिकमित्यर्थः ॥ १९ ॥

तर्हि मुख्यपतिः क इति तत्राह। स वा इति। यः स्वयमकुतो-भयः सन् भयातुरं जनं समन्ततः पाति स वै स एव पतिः स्यात् नन्वेवं तर्हि बहवः किं न स्युरिति तत्राह। एक इति। भवानिति शेषः इतरथा बहूनां पतित्वे मिथोऽन्योऽन्यं भयं स्यान्मण्डले-श्वराणामिवेति शेषः अतस्त्वमेक एव पतिरित्यर्थः इतोऽपि त्वल्लाभ

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एव पुरुषार्थ इत्याह । भजन्निति । त्वां अजनूपुरुष आत्मलाभात् त्वल्लाभात्परमन्यमभ्यधिकं नैव मन्यते अभावादिति शेषः "एकमेवाद्वितीयम्" इतिश्रुतेः ॥ २० ॥

अतोऽप्यस्यैव पुरुषार्थप्राप्तिहेतुत्वादित्याह । य इति । निरुपमचरितपतिर्यस्तस्य ते तव यः पादसरोरुहयोरर्हणं पूजनं नितरां कामयेत्सोऽखिलकामलम्पटः अपेक्षिताशेषपुरुषार्थप्राप्तिपटुतरः हे ईप्सितप्रेष्ठ ! अतस्त्वदर्चितमेवाभीप्सितं नान्यदर्चनं विशिष्टफलहेतुत्वात् व्यतिरेकमुखेन निर्धारयति । यद्भ्रेति । अयं भावः यत्कामोऽन्यपादार्चनं करोति तस्मात्फलानुदयात् प्रतप्यत इति यद्यस्मात्तस्मादिति चशब्देन पूर्वमर्चितमिदानीमर्च्यते उत्तरत्रार्चिष्यत इति सूचयति ॥ २१ ॥

अन्यपादार्चकस्य भद्रयाञ्चात्वमत्र द्रष्टव्यमित्याह । मत्प्राप्तय इति । ये ऐन्द्रियेभ्यः इन्द्रियविषये धीर्येषां ते तथा शब्दादिविषयरागान्धीभूतबुद्धयः ससुरासुरादय उग्रं तपस्तप्यन्ते ते मां न विन्दन्ति मत्तोऽभीष्टफलं न विन्दन्तीत्यत्र कारणमाह । ऋत इति । भवत्पादपरायणमर्चनमृते त्वच्चरणार्चनाभावः कारणं हेत्वन्तरमाह । अहमिति । अजित ! अहं त्वद्धृदया यतस्तस्मादिति शेषः त्वयि हृदयं यस्याः सा तथा यस्त्वत्पादार्चकस्तस्य मत्प्रसादः यो न तस्य नास्तीति अयं भावोऽसंप्रज्ञातस्तथा मया ज्ञायत इति ॥ २२ ॥

स्वशिरसि नित्यधृतकराम्बुजत्वेऽपि भगवत्पूजकैरेवं प्रार्थनीयमित्याशयवत्याह । स त्वमिति । यत्कराम्बुजं सात्वतां स्त्रीणामिति शेषः शिरस्स्वधायि येन त्वया स त्वं मम मूर्द्धन्यपि तत्कुर्वित्यन्वयः । किञ्च सर्वस्मान्मयि तव प्रसादाधिक्यमस्तीति द्योतयति । बिभर्षीति । हे वरेण्य ! त्वद्वक्षसि मा मां लक्ष्म चिन्हं बिभर्षि यदतो मायेश्वरस्य ईहितमूहितुं को विभुर्न कोऽपि समर्थः ॥ २३ ॥

मनोर्वैवस्वतस्य ॥ २४ ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मायामयं कृपाप्रचुरम् ॥ १७ ॥

षोडशशक्त्यधिष्ठात्रे वेदाधिष्ठात्रे पार्थिवबलदायकभोज्यशक्त्यधिष्ठाने दिविजबलदायकभोज्यशक्त्यधिष्ठात्रे किं बहुना सर्वशक्त्यधिष्ठात्रे अत एव सर्वसहआद्यधिष्ठात्र इति क्रमेण॥१८॥

आत्मनस्तस्य स्वरूपस्यैव लाभात् । परमन्यत् सेवादिकं नाधिकं मन्यते । यथाह श्रीप्रह्लादः । "यस्त आशिष आशास्ते न स भृत्यः स वै वणिक्" इत्यादौ "नान्यथेहावयोरर्थो राजसेवकयोरिव" इति ॥ १९ ॥ २० ॥

अखिलकामलम्पटेति सर्वकामस्यापि कामनीयार्थस्य प्रतिष्ठा हि त्वत्पादसरोरुहमिति ॥ २१ ॥

यद्यजादयोऽपि विषयधियो भूत्वा मत्प्राप्तये मदंशभूतप्राकृतसम्पत्तये तप्यन्ते तदा मां मदंशभूतां सम्पत्तिं न विन्दन्ति किन्तु प्राकृतीमेव विन्दन्तु नाम इत्यर्थः । ऋत इति । यदि तेषु कोऽपि त्वत्पादपरायणो भवति तदा तु स विन्दत्येवेत्यर्थः । त्वद्‌हृदयेति गर्वप्राप्तिः ॥ २२ ॥

स त्वमिति । दैन्योक्तिः यत्त्वया यत् कराम्बुजं स्वीकार... सात्वतानां शीर्ष्णि अधायि तन्ममापि तादृशभक्तिहीन... शीर्ष्णि अधायीत्येकमाश्चर्यम् । किञ्च । स तादृशस्त्वं ... कृपया मा मां वक्षसि लक्ष्मरूपत्वेन बिभर्षीति ततोऽपि ... श्चर्यम् । तस्मात् क ईश्वरस्येति । मत्स्यत्वेनानुवृत्तत्वादिह ... प्रियतममिति । तदपि भगवतः परमस्वरूपमेव जानीयादित्यर्थः ... अथाप्यात्मना सन्निधीयत इति सामान्योक्तेराराधयति... सन्निहितं सन्तमिति ज्ञेयम् ॥ २३ ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मायामयं कृपामयं मायाया जीवाविद्याया आमयो रोगो ... स्तमिति वा रात्रिषु प्रजापतेर्दुहितृभिः रात्र्यभिमानिनीभिर्देवीभिः ... ताभिः सह अहःसु तासां रात्र्यभिमानिदेवतानां पतिभिर्दि... साभिमानिभिर्देवैः सहितेत्यर्थः ॥ १७ ॥

कृपामयत्वमेव विवृण्वती मन्त्रं जपन्ती एतन्मन्त्रोपासको... ऽप्येवं स्वसम्बन्धेन मन्त्रार्थं भावयेदिति व्यञ्जयन्ती प्रणव... कान्ताय मत्पतये कामाय नम इत्यन्वयः । देवपदद्वारुक्तिः ... सम्पूर्णनाम्नोच्चारणानौचित्यात् । अन्यस्तु लक्ष्म्या दासीभावे... वात्मानं ध्यात्वा मन्त्रमिममुच्चारयेदिति सम्प्रदायः । हृषीकेश... स्वसौन्दर्यादिना मन्नेत्रादीन्द्रियाकर्षकाय मन्नेत्राद्रीन्द्रियमात्... सम्भोक्तुं इति वा स्वस्य तथा योग्यतायां हेतुः । सर्वगुणविशि... रप्राकृतैर्गुणैर्विलक्षिता विलक्षणीकृता आत्मानो देहमनोबुद्... दयो भवन्ति यतस्तस्मै हृषीकेशत्वं विवृणोति । आकूत्यै... मम कर्मेन्द्रियाणां चित्तीनां ज्ञानेन्द्रियाणां चेतसां चित्तादृष्टी... बुद्धिमनसां विशेषाणां तत्तद्वृत्तीनां तत्तद्विषयाणां वा ... पतये स्वामिने तत्तन्माधुर्यास्वादिने अन्योपासकपक्षे अधि... तेषामप्राकृतीकरणात् स्वयमेवाधिष्ठाता न तु दिगादिदेवसमूह... इति भावः षोडशकलाय राकाचन्द्रतुल्यत्वात् पूर्णाय छन्दो... मयाय वेदरूपेण स्वभक्त्युपदेष्ट्रे अन्नमयाय अन्नरूपेण ... भक्तप्रतिपालकाय अमृतमयाय अमृतवदास्वाद्यरूपगुणलीला... मोक्षरूपाय च सर्वमयाय मम सर्वस्वरूपाय सहसे ओजसे ... त्वत्सेवायां मच्चित्तेन्द्रियदेहसामर्थ्यप्रदाय उभयत्र इह ... परलोके च ॥ १८ ॥

स्वयं निष्कामा सकामभक्तिमतीरन्या स्त्रीः शोचति । स्त्रिय... इति । स्वत एव हृषीकाणामीश्वरं पतिमपि त्वा ... अन्वयम् ॥ १९ ॥

पतिशब्दार्थमेव ता न जानन्तीत्याह । स वा इति । पातीति प... येऽन्यात्मानमपि पातुं न शक्नोति स कथमन्यान् पातीत्यर्थः अतः ... मकुतोभयः स्यात् स च एको भवानेव इतरथा प्रकारान्त... पतिशब्दव्याख्यायामित्यर्थः । यद्वा । सप्तम्यर्थं एव ... इतरत्र मण्डलेश्वराणामिव स्वप्रजापालकानामपि निर्भयं ... ततश्च प्रजानामपि भयमिति तत्पालनमेव वस्तुत इत्यर्थः ... एवात्मनः परमात्मनस्तव लाभात् आधि अधिकं परं ... मन्यते शास्त्रैरिति शेषः । त्वत्प्राप्तेः सकाशात् अन्यप्राप्ति... वाधिकेति त्वमेव वस्तुतः पतिशब्दवाच्य इत्यर्थः ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च निष्कामभजने अप्रार्थिता एव सर्वे कामा भवन्ति सकामभजने तु कामितमात्रमनित्यञ्चेत्याह । या स्त्री तस्य उक्तलक्षणस्य तव पादपद्मपूजामेव नितरां कामयेत् न तु फलान्तरं अखिलेषु कामेषु लम्पटा सर्वानेव कामान् प्राप्नोतीति अथ च निष्कामपदवाच्या भवेत् । यया तु ईप्सितं प्रति ईप्सितः फलान्तरं प्राप्तुमपेक्षितः सन् अर्चितो भवसि । तस्यै तदेवैकं रासि ददासि यद्यतः फलभोगानन्तरं भग्ना याञ्चा याचितोऽर्थो यस्याः सा प्रतप्यते दुःखं प्राप्नोतीत्यतः सैव निष्कामापि सकामपदवाच्या भवेदित्यतो भगवन्तं कामयमाना भक्ता नैव सकामपदेन वाचनीया इति सिद्धान्तो व्यञ्जितः अत्र ईप्सितान्तरकामायाः परितापः स्खलभावः प्रातिकूल्यदृष्ट्यैव लक्ष्म्या शामधिक्षिपन्त्यैवोक्तः । वस्तुतस्तु सकामभजनादपि कृतार्थत्वमुपरिष्टाद्वक्ष्यते ॥ २१ ॥

केचित् सकामास्तु त्वामप्यपहाय मामेव भजन्ते तेऽपि धूलिमेव लभन्त इति तान् निन्दन्त्याह । मत्प्राप्तये ब्रह्मादयस्तपस्तप्यन्ते कुर्वन्ति । ऐन्द्रिये विषयसुखे एव धीर्येषाम् अलुक्समासः तदपि भवत्परायणाद् ऋते विना मां मत्कटाक्षविलासितां सम्पत्तिरूपां लक्ष्मीं न लभन्ते भवत्परायणाः प्रह्लादध्रुवादय एव विन्दन्ति या तु त्वद्भक्तेष्वपि देवासुरादिषु सम्पद्दृश्यते सा तु गुणमयी प्रतिस्वकर्मफलरूपा मायाशक्तेर्दुर्गाया एव प्रसादाद्धा कामादिरङ्गजनिका कादाचित्की न तु त्वत्स्वरूपभूताया ममेति मम गयात्वाभावात् मत्प्रसादोत्थायाः सम्पत्तेरपि त्वद्वैमुख्यापादकत्वाभावात्तत्र हेतुः । त्वद्धृदया त्वन्मनस्का त्वन्मनस्कानेवावलोकयामि नान्यामित्यर्थः ॥ २२ ॥

तदेवं ब्रह्मादीनामाराध्यापि तव भार्याप्यहं निष्किञ्चनो भक्तो यथा त्वत्तः सौभाग्यं लभते तथा नाहं लभे एवं मे ललाटमित्याह न मद्धृदयनित्यविहारोऽपि त्वं ममापि शीर्ष्णि कराम्बुजं धेहीति भावः । त्वत् त्वया यत् सात्वतां शीर्ष्णि अधायि । वन्दितं कृपासौभाग्यत्रार्पित्वेन सद्भिः स्तुतम् । ननु त्वत्सौभाग्यं सर्वतोऽप्यधिकं यतस्त्वामहं हृदये एव नित्यं दधामीति तत्र सक्षपं साश्रुलमुखारविन्दं सहुङ्कारं नीचैराह । विभर्षीति । हे वरेण्य ! मा मां लक्ष्म कनकरेखाचिन्हतया यद्वक्षसि दधासि तन्माययैव मद्भक्तसौभाग्यं दृष्ट्वा निर्बुद्धिरेषा मय्यसूयां माकार्षीदिति कपटेनैव । ननु कोऽप्येवं न ब्रूते तत्राह । कः खल्वीश्वरस्य तव ईहितमूहितुं वितर्कितुं समः यतः "न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान्" इति तव भक्तं प्रति निभृतोक्तिमहमश्रौषमेवेति ध्वनिः । प्रागिति चाक्षुषमन्वन्तरान्ते प्रलये स वैवस्वतो मनुः ॥ २३ ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

माया वयुनं सङ्कल्पस्तन्मयं स्वसङ्कल्पेनाविष्कृतमित्यर्थः "माया च वयुनं ज्ञानम्" इति कोशात् उदाहरन्तीति बहुवचनं प्रजापतिपुत्राद्यभिप्रायेण ॥ १७ ॥

सर्वगुणविशेषैः "एष सर्वेश्वरः" इत्यादिश्रुतिप्रोक्तैस्तत्तदसाधारणैः सर्वेश्वरत्वादिभिर्विवक्षितः वर्णयितुमिष्ट आत्मा यस्य तस्मै आकूतीनां ज्ञानेन्द्रियव्यापाराणां चेतसामन्तःकरणव्यापाराणां विशेषाणां तत्तद्विषयाणां चाधिपतये षोडशकलाय सूक्ष्मशरीरात्मने छन्दोमयाय वेदात्मने अन्नमयाय स्थूलशरीरात्मने अमृतमयाय नित्यपदार्थात्मने सहसे मनःसामर्थ्यात्मने ओजसे इन्द्रियसामर्थ्यात्मने बलाय देहसामर्थ्यात्मने किं बहुना सर्वमयाय सर्वात्मने "एतदात्म्यमिदं सर्वम्" इतिश्रुतेः कान्ताय प्रियाय काम्यते इति कामः ईप्सिताय भगवते अन्तर्बहिश्च नमः ॥ १८ ॥

स्वत एव हृषीकाणामीश्वरं पतिं सन्तं त्वामाराध्य अन्यं पतिमाशासते कामयन्ते याः स्त्रियः तासां ते अपत्यादिकं न परिपान्ति रक्षन्ति अतस्ते पतयो नेति फलितोऽर्थः ॥ १९ ॥

कस्तर्हि पतिरत आह । स इति । यः आत्मलाभात्परमन्यदधिकं नैव मन्यते स पतिः स्यात् स च भवानेक एव "एष सर्वेश्वरः एषः भूताधिपतिः प्रधानक्षेत्रज्ञपतिः" इत्यादिश्रुतेः इतरथा अनेकेश्वराङ्गीकारे मिथो भयं स्यादित्यन्वयः ॥ २० ॥

या ते पादसरोरुहयोः अर्हणमर्चनमेव निकामयेत् नान्यत् साऽखिलकामानां लम्पटा वशीकरणे कुशला ईप्सितमीप्सितः पत्यपत्यादिकं प्राप्तुमपेक्षितः सन् अर्चितश्चेत्तदा तदेव रासि ददासि यद्यतः भग्ना याञ्चा याचितोऽर्थो यस्याः सा प्रतप्यते ॥ २१ ॥

ऐन्द्रिये मत्प्रसादलब्धविभूतिसुखे धीर्येषां ते कण्ठे काल इतिवदलुक्समासः भवत्पादः परायणं यस्य तस्मादृते मां न विन्दन्ति विभूत्यर्थं मामनुकूलयितुं न शक्नुवन्ति भवत्पादपरायणास्तु मां विन्दति मम पुत्रत्वात् यतोऽहं त्वद्धृदया त्वं हृदये यस्याः सा तथा अत्र गूढोऽभिप्रायः भवदीयाः भवत्पादध्यानामृततृप्ताः ध्यानविच्छेदकरीं मद्दत्तां विभूतिं न वाञ्छन्ति किन्तु मम हृदयस्थं त्वां लब्धुं परां मातरं मत्तादरेण मां भजन्ति अहं च तान् पुत्रवत्सला कदाचिदपि न त्यजामि एवं ते मां विन्दन्तीति ॥ २२ ॥

हे वरेण्य ! स उक्तप्रकारस्त्वं मां लक्ष्म वक्षसि विभर्षि कृतार्थो यद्यप्यहमिति भावः तथाप्यनुग्रहविशेषं कुर्वित्याह । त्वत् इति पञ्चमी तृतीयार्थे त्वया यत्कराम्बुजं सात्वतां भक्तानां शीर्ष्णि मायया कृपया अधायि न्यस्तम् तन्ममापि शीर्ष्णि हे अच्युत ! कृपया निधेहि अत्र हेतुं दर्शयितुं कराम्बुजं विशिनष्टि वन्दितं परानन्ददत्वेन सद्भिः स्तुतम् अथ किं वर्णये तवेहितस्य दुष्पारत्वादित्याह । ईश्वरस्य तवेहितं चेष्टितमूहितुमेतावदिति वितर्कयितुं कः विभुः समर्थः न कोऽपीत्यर्थः ॥२३-२४॥

---

भाषा टीका ।

भगवान् के उस माया मयस्वरूप को लक्ष्मी देवी सम्वत्सर प्रजापती के पुत्रिरात्रियों में दिनों में उन दोनों के देवतों के सहित सेवा करती हैं और यह मन्त्र बोलती हैं ॥ १७ ॥

भगवान् हृषीकेश सब गुण विशेषों से युक्त स्वरूपवाले वागादिकर्मेन्द्रियों के चक्षु आदि ज्ञानेन्द्रियों के अन्तःकरणों के पृथिव्यादि द्रव्यों के पति षोडशकला वाले वेद स्वरूप मनुष्यों

ओं नमो भगवते मुख्यतमाय नमः सत्त्वाय प्राणायौजसे सहसे बलाय महामत्स्याय नम इति ॥ २५ ॥

अन्तर्बहिश्चाखिललोकपालैरदृष्टरूपो विचरस्युरुस्वनः।
स ईश्वरस्त्वं य इदं वशेऽनयन्नाम्ना यथा दारुमयीं नरः स्त्रियम् ॥ २६ ॥
यं लोकपालाः किल मत्सरज्वरा हित्वा यतन्तोऽपि पृथक्समेत्य च।
पातुं न शेकुर्द्विपदश्चतुष्पदः सरीसृपं स्थाणु यदत्र दृश्यते ॥ २७ ॥
भवान्युगान्तार्णव ऊर्मिमालिनि क्षोणीमिमामोषधिवीरुधां निधिम्।
मया सहोरुक्रमतेऽज ओजसा तस्मै जगत्प्राणगणात्मने नम इति ॥ २८ ॥

हिरण्मयेऽपि भगवान्निवसति कूर्मतनुं बिभ्राणस्तस्य तत्प्रियतमां तनुमर्यमा सह वर्षपुरुषैः पितृगणाधिपतिरुपधावति मन्त्रमिमं चानुजपति ॥ २९ ॥

ॐ नमो भगवते अकूपाराय सर्वसत्त्वगुणविशेषणायानुपलक्षितस्थानाय नमो वर्ष्मणे नमो भूम्ने नमोनमोऽवस्थानाय नमस्ते ॥ ३० ॥

यद्रूपमेतन्निजमाययार्पितमर्थस्वरूपं बहुरूपरूपितम्।
संख्या न यस्यास्त्ययथोपलम्भनात्तस्मै नमस्ते व्यपदेशरूपिणे ॥ ३१ ॥
जरायुजं स्वेदजमण्डजोद्भिदं चराचरं देवर्षिपितृभूतमैन्द्रियम्।
द्यौः खं क्षितिः शैलसरित्समुद्रद्वीपग्रहर्क्षेत्यभिधेय एकः ॥ ३२ ॥

---

भाषाटीका।

का भोज्य अन्न देवों का भोज्य अमृत तद्रूप सर्व स्वरूप अन्तःकरण इन्द्रिय देहसामर्थ्यरूप सब के पति आप के अर्थ इस लोक तथा परलोक में नमस्कार होवै ॥ १८ ॥

जगत् मे सब स्त्रियां व्रतों से स्वयं हृषीकेश आपकी आराधन करके अन्यपति को चाहती हैं वे अन्यपति उन स्त्रियों के प्रिय पुत्र धन आयु इन को नहीं रक्षा कर सके हैं जिस से कि वे स्वतन्त्र नहीं हैं ॥ १९ ॥

जो सर्वथा निर्भय है वही पति सब प्रकार से प्रजाओं के भय से रक्षा कर सका है सो आपही हो जोकि आत्मलाभ से अन्य को अधिक नहीं मानते हो अन्यको तो आत्मलाभ न होनेसे सुख नहीं है ॥ २० ॥

जो स्त्री सब कामों की इच्छावाली होकर भी आपके चरण कमल मात्रको चाहती है उसको आप सब देते हो जो अन्य पदार्थों को चाहती है उसको वही चीज देते हो जिसके नाश होने पर फिर दुःख पाती है ॥ २१ ॥

हे अजित! इन्द्रिय के विषयों में जिनकी बुद्धि है ऐसे ब्रह्मा महादेव देवादिक सब यद्यपि मेरे प्राप्ति होने के वास्ते उग्र तपस्या करते हैं तौ भी आपके चरणारविन्द के आश्रय के बिना मेरे को नहीं प्राप्त होते हैं क्यों कि मैं तो आप मे मन लगाने वाली हूं ॥ २२ ॥

हे अच्युत! सब लोगों के प्रशंसा करने योग्य जो [illegible] का हस्त कमल जिसको कि आपने सात्वतयादवों के [illegible] भक्तों के मस्तक पर रक्खा है तिसहस्तको मेरे मस्तक [illegible] रक्खो हे वरेण्य! आप मेरा चिन्ह मात्र बनाकर वक्षस्थल [illegible] धारण करते हो आपकी चेष्टाको जानने को कौन समर्थ होसक्ता है ॥ २३ ॥

रम्यक वर्ष में भी भगवान् की अति प्रिय मूर्ति जो [illegible] उस वर्ष के पति मनु को पहिले दिखाई थी वही मनु इस [illegible] पर भी बडे भक्ति योग से आराधन करते हैं और इस [illegible] को पढते हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सत्त्वाय सत्त्वप्रधानाय। मुख्यतमाय प्राणाय सूत्रात्मने [illegible] उरुः स्वनो वेदात्मको नादो यस्य। य इदं विश्वं [illegible] दिनाम्ना विधिनिषेधालम्बनभूतेन वशेऽनयन्नियमितवान्स [illegible] श्वरः। तथाच श्रुतिः। "तस्य वाक्तन्तिर्नामानि दामानि" इति [illegible] नन्विन्द्रादयो वशं नयन्ति लोकपालत्वात्कुतोऽहं तत्र [illegible] यामिति। मत्सर एव ज्वरो येषां ते। यं हित्वा द्विपदश्चतुष्पदः सरीसृपं जङ्गमं स्थाणु स्थावरं च यदत्र दृश्यते तदिदं [illegible] पातुं न शक्ताः स त्वमेव प्राणरूपेण पालक ईश्वर [illegible] स्त्वम्। तथाच श्रुतिः। "ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मि" इत्यादि ॥ २७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अवतारचरितमाह। भवानिमां क्षोणीं मया मनुना सह समाहितां धृत्वेत्यध्याहारः ऊर्मिमालावति प्रलयार्णवे ओजसा क्रमते विचरति। यद्वा। पातुमित्यस्यानुषङ्गः क्षोणीं पातुं क्रमते उत्सहत इत्यर्थः। यतोऽजः कीदृशीम्। ओषधीनां वीरुधां च निधिमाश्रयभूताम्। तस्मै नमः जगतो यः प्राणगणस्तस्यात्मने नियन्त्रे॥ २८॥

तत्प्रियतमां तां प्रियतमाम्॥ २९॥

अकूपाराय कूर्माय। सर्वः सम्पूर्णः सत्त्वगुणो विशेषणं यस्य न उपलक्षितं स्थानं यस्य वारिचरत्वात्। वर्ष्मणे वर्षीयसे कालानवच्छिन्नाय भूम्ने सर्वगताय अवस्थानायाधाराय॥ ३०॥

निजमायार्पितं प्रकाशितमेतद्दृश्यस्वरूपं दृश्यं पृथिव्यादि यस्यैव रूपं यतः पृथङ्नास्ति। कथम्भूतम्। बहुभीरूपै रूपितं निरूपितम्। यस्य च सङ्ख्या नास्ति। कुतः। अयथा मिथ्यैवोपलम्भनात्। न हि मरीचिजलमेतावदिति सङ्ख्यातुं शक्यते अव्यपदेशरूपिणे निरुक्तप्रपञ्चाकाराय॥ ३१॥

बहुरूपत्वं दर्शयंस्तस्येश्वराद्व्यतिरेकमाह। जरायुजमिति। द्वीपग्रहर्क्षमित्यभिधेयस्त्वमेवैको न त्वद्व्यतिरिक्तोऽस्ति। "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतेरित्यर्थः॥ ३२॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मन्त्रमाह। ओमिति। सत्त्वाय शुद्धसत्त्वमूर्तये मुखे भवः मुख्यः तस्मै प्रथमावतारायेत्यर्थः प्राणाय जीवयित्रे प्राणव्यष्ट्यन्तरात्मने वा ओजसे इन्द्रियशक्त्यधिष्ठात्रे बलाय शरीरशक्त्यधिष्ठात्रे तत्तदवतारासाधारणगुणाः सर्वत्रोपासनार्थं मन्त्रेपूक्ता एवम्भूताय महते दृष्टविसजातीयमत्स्याय नमः॥ २५॥

कृत्स्नचिदचिदात्मकजगन्नियन्तृत्वरक्षकत्वविशिष्टं स्तुवन्ति। अन्तर्बहिरिति। लोकपालैरन्तर्बहिरदृष्टं रूपं यस्य उर्वधिकं स्वनो वेदात्मको नादो यस्य तथाभूतस्त्वमीश्वर एव कोऽसावीश्वर इत्यत्राह। य इदं विश्वं चिदचिदात्मकं कृत्स्नं जगद्विधिनिषेधावलम्बनभूतेन ब्राह्मणादिनाम्ना वशेऽनयन्नीतवान् नयनं चात्र नियमनपूर्वकं रक्षणं यथा दारुमयीं दारुणो विकाररूपां स्त्रियं स्त्रीप्रतिकृतिं नरः स्ववशीकृत्य नाटयति तथेति अनेन कृत्स्नजगन्नियन्तृत्वकथनेन कारणत्वमप्युक्तं कारणत्वनेतृत्वयोरेकगतत्वात् "एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः" इतिश्रवणात् सर्वभूतान्तरात्मेत्यनेन नेतृत्वमेक इत्यनेन कारणत्वश्चोक्तम् "एको ह वै नारायण आसित्" इत्यनेन समानादित्यर्थः॥ २६॥

इदश्च जगन्नियन्तृत्वादिकमनितरसाधारणमित्याह। यमिति। मत्सरज्वरं मत्सरः परैश्वर्यासहिष्णुत्वं स एव ज्वरस्तं हित्वापि पृथक् समेत्य संघीभूयापि वा यतन्तोऽपि लोकपाला इन्द्रादयो यं प्रपञ्चं पातुं रक्षितुं न शेकुः न प्राभवन् प्रपञ्चमियाशिनष्टि। यत्द्विपदादिरूपं चरिष्णु स्थाणु पर्वतादिरूपस्थावरजातं च अत्र प्रपञ्चे दृश्यते यं तु रक्षितवानित्यर्थः॥ २७॥

भवानिति। ऊर्मिमालिनि उच्चतरतरङ्गपङ्क्तियुक्ते युगान्तार्णवे कस्मिंश्चिद्दैनंदिनप्रलयार्णवे ओषधीनां वीरुधां गुल्मानां च निधिमाश्रयभूतामिमां क्षोणीं भूमिं मया मनुना सह धृत्वेति शेषः यो भवानोजसा उर्वधिकं विक्रमते विचरति। यद्वा। पातुमित्यस्यानुषङ्गः क्षोणीं पातुं क्रमते उत्सहत इत्यर्थः यतोऽजस्त्वम्। यद्वा। हे उरुक्रम! तेजओजसा तेजोरूपेण सङ्कल्परूपज्ञानात्मकेन ओजसा बलेन नतु साधनान्तरेणेमां क्षोणीं रक्षितवानित्यध्याहारः उवाह धृतवानित्यर्थः तस्मै जगत्प्राणगणात्मने तुभ्यं नमः जगत्प्राणगणाः प्रतिशरीरं प्राणव्यष्टिगणाः तदन्तरात्मन इत्यर्थः जगत्प्राणगुणात्मन इति पाठे तु जगत्प्राणरूपगुणस्वभावायेत्यर्थः॥ २८॥

अथ हिरण्मयवर्षे उपास्योपासनादीनाह। हिरण्मय इति। भगवान् कूर्मरूपं बिभ्राणो हिरण्मये वर्षे निवसति तस्य भगवतस्तां प्रियतमां कूर्मतनुं पितृगणानामधिपतिरर्यमा तद्वर्षस्थैः पुरुषैः सहोपधावति अनुवर्तते उपास्ते इत्यर्थः शेषं पूर्ववत्॥ २९॥

अकूपाराय कूर्मरूपाय कुत्सिताः स्वल्पा आपो यस्मिंस्तत्कूपं स्वाश्रयतया तद्वात्याद्धाति स्वीकरोतीति कूपारः स न भवतीत्यकूपारः सर्वे सत्त्वा जन्तवः गुणास्तद्गता हेयाः कल्याणाश्च ज्ञानशक्तिबलैश्वर्यादयः ते विशेषणानि सद्वारकाद्वारकाणि च प्रकारभूतानि यस्य तस्मै तत्र सर्वसत्त्वानां कल्याणगुणानां च साक्षाद्विशेषणत्वं सत्त्वगतगुणानां सत्त्वद्वारा विशेषणत्वमिति विवेकः अनुपलक्षितस्थानायान्तःसमुद्रे मन्दरमूले स्थितायेत्यर्थः अवर्ष्मणे प्राकृतदेहरहिताय वर्ष्मणे इत्यप्राकृतदिव्यदेहाय वर्ष्मशब्दो देहिपर्यन्तवृत्तिः वर्ष्मणे श्रेष्ठायेति वा गरीयसे वा गरीयस्त्वं च कालानवच्छिन्नत्वं भूम्ने महिमवतेऽवस्थानायाधारभूताय अधिकरणे ल्युट् गुणभेदाभिप्रायाय नमः पदावृत्तिः॥ ३०॥

विश्वरूपत्वानन्तत्वादिगुणविशिष्टं स्तौति। यद्रूपमिति। एतत् जगत् यस्य रूपं शरीरं तस्मै व्यवसायरूपिणे नम इत्यन्वयः व्यवसायरूपिणे सम्यग्ज्ञानप्रवर्तकायेत्यर्थः। यद्वा। व्यवसायोऽत्र नित्यासंकुचितापरिच्छिन्नं ज्ञानं तदेव रूपमाकारस्तदस्यास्तीति तथा तस्मै नमस्ते व्यपदेशरूपिणे इति पाठान्तरं तत्र व्यपदेशरूपिणे व्यपदिश्यते इति व्यपदेशः वाग्व्यवहारार्हः देवमनुष्यादिनामरूपात्मकः प्रपञ्चः स जगदेव रूपं तदस्यास्तीति तथा न च यद्रूपमित्यनेन पौनरुक्त्यं व्यपदेश्यरूपिण इत्यस्यैवोपपादकत्वात् श्लोकशेषस्य अव्यपदेशरूपिणे इति वा छेदः अव्यपदेशं चेतनसजातीयत्वेन व्यपदेष्टुमशक्यं रूपं तत्स्यास्तीति तथा तस्मै एतच्छब्दनिर्दिष्टं जगद्विशिनष्टि। निजमायार्पितं प्रकृत्या निर्वर्तितम् अर्थरूपं भोग्यत्वेन प्रतीयमानं बहुरूपरूपितं जातिगुणादिनिरूपितं एवंविधं जगत् यस्य रूपं यस्य च संख्यापरिच्छेदो नास्ति कुतः अयथोपलम्भनात् यथावत् साकल्येन उपलम्भाभावात् यस्येत्यनेन जगद्वा परामृश्यते यस्य जगतः संख्या प्रकाशो नास्ति कुतः अयथोपलम्भनादज्ञात्मकत्वेनोपलम्भात् यद्यपि जगत्प्रतीयते एव तथाप्ययिवुपामज्ञात्मकत्वेन तत्प्रतीत्यभिप्रायेण संख्या न यस्यास्तीत्युक्तम्। यद्वा। यस्य जगतः अयथोपलम्भनात्संख्यापरिच्छेदो नास्ति अयथोपलम्भनात्साकल्येन उपलम्भनाभावात् "कोटिशो ह्यण्डराशयः" इति जगतोऽप्यानन्त्यादिति भावः। यद्वास्य जगतः अयथोपलम्भनादयथार्थत्वेनोपलम्भनान्मायार्पितत्वार्थस्वरूपस्य बहुरूपरूपितत्वभगवच्छरीरत्वादिव्यतिरेकेणोपलम्भनात् संख्याप्रकाशो नास्ति जगत उक्ताकारविपरीताकारोपलम्भो भ्रमरूप इत्यर्थः॥ ३१॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं विश्वरूपत्वमनन्तत्वञ्चोक्तं यतो विश्वरूपस्त्वमत एव द्यौः खमादिशब्दैः भवानेवाभिधीयत इत्याह । जरायुजामिति । हे देव ! चराचरभेदेन द्विविधं पुनर्जरायुजादिभेदेन चतुर्विधमेतज्जगत् तव विभूतिभेदं विभूतिविशेषरूपमित्यर्थः अत एव द्यौः खमित्याद्येवमभिधेयस्त्वमेक एव द्यौरादिशब्दैरभिधीयमानस्त्वमेवेत्यर्थः "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवत्" इति श्रुत्युक्तविधया नामरूपतद्बुद्धीनां परमात्मपर्यन्तत्वसिद्धेः द्यौरादीनां परमात्मशरीरत्वाच्छरीरवाचिनां शब्दानां शरीरिपर्यन्ताभिधानस्य गवादिशुक्लादिजातिगुणादिशब्दानां व्यक्तिगुण्यादिपर्यन्ताभिधानवदाकृत्यधिकरणन्यायसिद्धत्वाच्च द्यौः खमित्येवं रूपेण त्वमेव वाच्यो वोध्यश्चेत्यभिप्रायः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उरुर्गुरुः यो नः परमपुरुषः इदं जगद्वशे अनयन्नीतवान् स त्वमीश्वरः साक्षान्नारायणः आत्मा स्वामी । यद्वा । य आत्मा आदानसमर्थः इदं जगद्वशे नयन् वर्तते स त्वमीश्वर ऐश्वर्यादिगुणसमुद्र इति ॥ २६ ॥

लोकपालादिविश्वस्येश्वरवशत्वे तददृष्टरूपत्वं कथमस्येत्याशङ्क्य स्पर्द्धाहेतोरिति भावेनाह । यमिति । चशब्दो विकल्पार्थे यं त्वां हित्वा लोकपालाः पृथग्वा समेत्य वा यतन्तोऽपि द्विपदश्चतुष्पद इत्यादि यत्सरीसृपस्थास्नुचराचरमत्र दृश्यते श्रुतिदृष्टिविषयं तत्पातुं न शेकुरित्यन्वयः अशक्तत्वे निमित्तमाह । मत्सरेति । मात्सर्याख्यज्वरग्रस्तत्वादित्यर्थः "वार्तासम्भावयोः किल" इति वचनादिदं स्पर्द्धालक्षणं मात्सर्यं सम्भावनामात्रं नतु मुख्यमाज्ञानिमित्तं दैत्यावेशनिमित्तं वेति गमयितव्यं तदुक्तम् ।

स्पर्द्धन्त इव देवास्तु हरिणा यत्र कुत्रचित् ।
हरेरेवाज्ञया क्वापि दैत्यावेशाद्यथापि वा ॥

इति अनेन स्पर्द्धाया अन्यनिमित्तत्वेन पालनाशक्तिः स्वरूपकृतेति ज्ञातव्या ॥ २७ ॥

यद्यप्यस्तु मूलरूपस्य हरेर्जगत्पालनशक्तिः स्वरूपभूता तथाप्यवताराणां सा न समास्तीत्याशङ्क्य द्वयोरपि कोऽपि माहात्म्यविशेषो नास्तीति भावेनाह । भवानिति । भवान् युगान्तार्णव इमां क्षोणीमूढे उवाहेत्यन्वयः तस्मै जगत्प्राणगुणात्मने जगच्चेष्टकगुणस्वरूपाय मत्स्याय हरये नम इत्यन्वयः ॥ २८ ॥ २९ ॥

न कूपे आरो गमनं यस्य स तथा तस्मै महासमुद्रनिवासायेत्यर्थः सर्वसत्त्वगुणाः पराक्रमगुणा एव विशेषणं यस्य स तथा तस्मै सर्वसत्त्वगुणा ज्ञानानन्दादिगुणा इति वा नोपलक्षितस्थानाय अज्ञातस्वरूपाय वर्ष्मणे भक्ताभीष्टवर्षणशीलाय प्रमाणाय सम्यग्वक्त्रे वा "प्रमाणं वोधनेयत्ता मर्यादा शास्त्रहेतुषु सम्यग्वक्तरि चाथ स्यात्प्रयाणमरणे गतौ" इति यादवः "वर्ष्म देहप्रमाणयोः" इति च अनेन तिर्यग्योनेरपि सम्यग्वक्तृत्वमाहात्म्यं सूचितम् भूयसे महते "महतो महीयान्" इति श्रुतिः अवस्थानाय जगत्स्थितिहेतवे ॥ ३० ॥

मन्त्रसूचितगुणविशिष्टत्वेन श्रीहरिं स्तौति । यद्रूपमिति । यद्रूपमेतद्विश्वं निजमायया तव स्वरूपेच्छयार्पितं मदाधारतया निर्मितं माययेत्युक्त्यानिर्वाच्याविद्याकल्पितं किं न स्यादित्यतोऽर्थेति अवाधितरूपं जरायुजादिबहुरूपेण रूपितं शब्दितं यस्येयत्तेति सङ्ख्या च नास्ति "परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशय" इति वचनात् यच्चोपलम्भनाद्यथा अद्य यथा दृश्यते श्वस्तथा न तिष्ठति विकारित्वात् उर्वारुकफलादेरन्यथा दर्शनाच्च तावता वैतथ्यं "विश्वं सत्यम्" इत्यादिश्रुतेः अतः प्रवाहरूपेण नित्यमित्येष्टव्यमित्यर्थः रूपं सन्निधानयोग्यप्रतिमास्थानीयमित्यर्थः तस्मै तुभ्यं नम इत्यन्वयः न व्यपदेशो यस्य तदव्यपदेशं तादृशं रूपमस्यास्तीति अव्यपदेशरूपी तस्मै वाङ्मनसागोचररूपत्वादित्यर्थः अनेन सर्वसत्त्वविशेषणाय नोपलक्षितस्थानायेति पदद्वयं विवृतम् ॥ ३१ ॥

सन् घटः सन् पटः इति सदनुविद्धत्वेन प्रतीयमानत्वात् "सर्वं खल्विदं ब्रह्म" इति श्रुतेश्च विश्वस्य ब्रह्मात्मकत्वं मुख्यं किं न स्यादित्याशङ्क्य तत्सृष्ट्वा तदेवानुप्राविशदित्यादेः ।

सर्वान्तर्यामिकत्वात्तु सर्वनामा हरिः स्वयम् ।
नतु सर्वस्वरूपत्वाद्रूपत्वं तूपचारतः ॥

इति स्मृतेश्च सर्वान्तर्यामित्वेन तत्तत्सत्ताप्रदत्वेन तच्छब्दप्रवृत्तिनिमित्तस्य तदधीनत्वेन तत्तन्नामत्वं हरेरित्यभिप्रेत्याह । जरायुजमिति । देवादीनां भेदो यस्मिंस्तत्तथा इतिशब्द आदिवचनः ऋक्षादिनामवानेक एवेत्यनेन "यो देवानां नामधा एक एव" इति श्रुतिं सूचयति "नमो वर्ष्मणे नमो भूयसे" इति मन्त्रावयवस्याभिप्रायः सूचित इति ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

मुख्यतमायेत्यपि पूर्ववत् । सत्त्वादिपरमाश्रयत्वात् सत्त्वादिरूपाय ॥ २५ ॥ २६ ॥

यमित्यस्य टीकायां मत्सर एवेत्यत्र परस्परमिति ज्ञेयम् । याः देवताः अहिंसन्त समत्सरा बभूवुः । तत्र प्रत्येकं स्वाभिमानमाश्रित्याहमस्मि अपि तु न कमपीति श्रुतेरर्थः ॥ २७ ॥

युगान्तोऽत्र मन्वन्तरान्तः क्षोणीमिति धृतनौकारूपामित्यर्थः "नाव्यारोप्य महीमय्याम्" इत्युक्तेः ॥ २८—३० ॥

यस्य तवैतत् कूर्माकारं रूपं निजेषु भक्तेषु मायया कृपया अर्पितं प्रकाशितम् अयथोपलम्भनात् यथावदुपलब्धुमशक्यत्वात् वाङ्मनसातीतत्वादित्यर्थः । यस्य च तव सङ्ख्या नास्ति अव्यपदेशं वक्तुमशक्यं रूपं नित्यमेव विद्यते यस्य तस्मै ॥ ३१ ॥

पूर्ववत् बहुरूपत्वं दर्शितम् । तच्च जरायुजेत्यादिना किञ्चित् सङ्ख्यातम् । यत्तु न यस्य सङ्ख्यास्तीत्युक्त्या तस्यैकत्वात्मकसङ्ख्यादीनामेवासङ्ख्यत्वमानीतं तेषां स्वरूपसिद्धत्वं दर्शयन् सङ्ख्यादिनामारोपितत्वमाह ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

मुख्यतमाय सत्त्वाय शुद्धसत्त्वस्वरूपायेत्यर्थः प्राणादिनियन्तृ-त्व प्राणादिकाय ॥ २५ ॥

सर्वत्रैवान्तर्बहिरपि चरसि। अथ च लोकपालैरपि अदृष्टरूपः ...वान्यैः। ननु तर्हि ममास्तित्वमेव मास्तु तत्राह। उरुर्वेदा-त्मकः स्वनो यस्य सः। वेद एव तवास्तित्वं प्रतिपदमुद्घोषयत ...। अत एव य इदं विश्वं ब्राह्मणादिनाम्ना विधिनिषेधाश्रय-... वशे अनयन्नियमितवान् स त्वमीश्वरः। तथा च श्रुतिः। ... वाक् तन्तिर्नामानि दामानि"इति। स्त्रियं पाञ्चालिकाम् अतो ...वस्य पारतन्त्र्यादपि स्वतन्त्र ईश्वरस्त्वमनुमानेनापि ज्ञाप्यस ...ति भावः ॥ २६ ॥

...मिन्द्रादयो वशं नयन्ति लोकपालकत्वादीश्वराः स्वतन्त्राश्च ...तोऽहं तत्र तेषां लोकपालकत्वादिकं सर्वमौपचारिकमित्याह। ...हित्वा पृथग्भूता वा समेत्य मिलित्वा वा द्विपदः चतुष्पदः ...रीसृपं जङ्गमं स्थास्नु स्थावरञ्च यद्यदत्र दृश्यते तत् पातुं न शक्ताः ...णो मत्सरज्वराः। तथा च श्रुतिः"ता अहिंसन्ताहमु कमस्म्यहमु ...स्मीति"अस्यार्थः। ता देवता समत्सरा बभूवुः। अहम् उ भोः ...धिष्ठ अस्मि वर्त्ते अपि तु न कमपीत्यर्थः। इत्येवामिति स त्वमेव ...रूपेण पालक ईश्वरश्चेत्यर्थः ॥ २७ ॥

...भक्त्या तु त्वं दृष्टरूपः प्रत्यक्षतयाप्युपलभ्यसे तत्र भक्तामासो-...व प्रमाणमित्याह। भवानिति। इमां महीं मया सह धृत्वेति शेषः ...अज! युगान्तार्णवे भवान् क्रमते विहरति जगतां यः प्राणगण-...स्यात्मने नियन्त्रे ॥ २८ ॥

सा चासौ प्रियतमा चेति ताम् ॥ २९ ॥

...कूपाराय कूर्माय। सर्वैः सम्पूर्णः सत्त्वगुणो यत्र तथाभूतं ...लक्षणमाकारो यस्य तस्मै शुद्धसत्त्वमूर्त्तये इत्यर्थः। न उपलक्षितं ...तरद्दृष्टं वैकुण्ठाख्यं स्थानं यस्य तस्मै वर्ष्मणे महाप्रमाणाय ...ने व्यापकाय अनवस्थानाय आधाराय ॥ ३० ॥

एतद्विश्वं यस्य तवैव रूपं किन्तु मायाशक्त्या अर्पितं न तु ...रूपभूतमित्यर्थः। अर्थस्वरूपं वस्तुस्वरूपं न त्ववस्तुभूतं बहुभि-...र्गोपशुपक्षिमनुष्यादिरूपै रूपितं निरूपितं किन्तु सङ्ख्या यस्य ...स्ति कुतः अयथोपलम्भनात् यथावदुपलब्धुमशक्यत्वात् यैः प्रका-...रैः विश्वमभूत्तेषामुपलम्भनाशक्यत्वादित्यर्थः। तथा ह्येकस्य ...तस्य नरजातेरेव प्रतिशरीरं वर्णस्वभावकण्ठस्वरादिभेदा-...त्प्रकारा ज्ञातुमशक्याः सूक्ष्माणां स्वेदजोद्भिज्जादीनां का वार्त्त-...न्तस्य तव शक्तिकार्यस्याप्यानन्त्यमिति भावः। अतस्तव ...रूपभूतस्य रूपस्य सर्वागम्यत्वे कैमुत्यमेवेत्याह। अव्यपदेशं ...मशक्यं नित्यं रूपं यस्य तस्मै ॥ ३१ ॥

...देवमनन्तभेदस्यापि विश्वस्य त्वदेककारणत्वादेकविध-...त्वमित्याह। जरायुजेति। प्रहर्चेत्यार्पम् इत्येषामेकस्त्वमेवा ...भेदः। तथा च श्रुतिः "सर्वं खल्विदं ब्रह्म"इति ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मुख्यतमाय सर्वश्रेष्ठाय ॥ २५ ॥

अन्तर्यामिरूपेणान्तर्नानावतारैर्बहिरपि विचरसि तथापि ...दृश्योऽयं परमात्मेति न दृष्टं निश्चितं रूपं यस्य सः। उरुर्विपुलः स्वनो वेदरूपो नादो यस्य सः ॥ २६ ॥

कुतस्तैरदृष्टरूपोऽस्मीत्यत्राह। मत्सरज्वरा इति। मत्सरः परोत्क-र्षासहनं स एव ज्वरो येषां ते अत एव हित्वा साक्षाद्रूपेण सन्त-मप्यनादृत्य द्विपदादि यदत्र दृश्यते तत् किञ्चिदपि पातुं न शेकुः ॥ २७ ॥

मया सह क्षोणीं पातुमित्यनुषङ्गः अजः भवान् उरु ओजसा क्रमते विचरति जगत्प्राणगणस्य आत्मने आश्रयाय ॥ २८ ॥

तस्य भगवतः तत् तां प्रियतमाम् ॥ २९ ॥

अकूपाराय कूर्माय सर्वैः सम्पूर्णः सत्त्वगुणः नियम्यभूतः विश्वपालनादिहेतुविशेषणमितरव्यावर्त्तकं यस्य तस्मै वर्ष्मणे वर्षीयसे कालानवच्छिन्नाय अनवस्थानाय आधाराय ॥ ३० ॥

स्पर्द्धादिदोषनिवृत्तिपूर्वकभजननिष्ठासिद्धये विश्वरूपेण भगवन्तं वर्णयति। बहुभि रूपैरधिदैवादिभि रूपितं निरूपितम् अर्थस्वरूपम् अर्थः दृश्यमानः पृथिव्यादिपदार्थः स्वरूपं मूर्त्तिर्यस्य तत् निजमा-यया प्रकृत्या स्वशक्त्या अर्पितं स्थापितम् एतद्विश्वम् यस्य रूपं शरीरं यस्य च यथावदुपलम्भाभावात्संख्यावान्तरावयवगणाना नास्ति तस्मै व्यपदिश्यते इदमित्येवं वर्ण्यते इति व्यपदेशः दृश्यपदार्थः स एव रूपं यस्य तस्मै नमः ॥ ३१ ॥

अत एव जरायुजादि तथाशैलसरित्समुद्रद्वीपग्रहर्क्षाभिधेयस्त्व-मेवैकः सर्वस्य त्वदात्मकत्वात् सर्वनामा सर्वरूपः "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतेः ॥ ३२ ॥

---

भाषाटीका

भगवान् सब इन्द्रियों के नियन्ता सत्त्व गुण प्रधान सूत्रात्मा मन बल इन्द्रिय बल देहबल के हेतु महामत्स्य आप के अर्थ नमस्कार है ॥ २५ ॥

आप वही ईश्वर हो जिनने ब्राह्मणादि नामों के कर्मोंसे इस जगत्को वश कर रखा है जैसें कि मनुष्य लकड़ी की पुतली को वशमें रखै आपको सकल लोकपाल नहीं देखते हैं तौभी आप वेद के बड़े शब्द को करते हुये विचरते हो ॥ २६ ॥

जिन आप कों छोड़कर मत्सर के ज्वर से युक्त सब लोकपाल एक एक या मिलकर द्विपाद चतुष्पाद सर्प स्थावर रूप इहां जो यह जगत् दीखता है तिसके रक्षाकरने में समर्थ नहीं होसके ॥ २७ ॥

जो आप प्रलयकाल के लहरों वाले बड़े समुद्र मे सब ओषधियों की आधाररूप इस पृथिवी कों लेकर बड़े वेग से मेरे को साथमे लेकर विचरते थे तिन जगत्प्राणरूप आप के अर्थ नमस्कार है ॥ २८ ॥

हिरण्मय वर्ष में भी कूर्ममूर्ति को धारण करके भगवान् निवास करते हैं उन की उस अति प्रिय मूर्ति को उहां के वर्ष-पुरुषों के सहित अर्यमा पितृगणों का पति स्तुति करता है इस मंत्र कों जपता है ॥ २९ ॥

कूर्म रूप सबप्राणियों से विशिष्ट प्रत्यक्षस्थान से अलक्षित अतिश्रेष्ठ सर्वगत सब के आधाररूप भगवान् आप के अर्थ नमस्कार है ॥ ३० ॥

यस्मिन्नसङ्ख्येयविशेषनामरूपाकृतौ कविभिः कल्पितेयम् ॥
सङ्ख्या यया तत्त्वदृशापनीयते तस्मै नमः साङ्ख्यनिदर्शनाय त इति ॥ ३३ ॥

उत्तरेषु च कुरुषु भगवान् यज्ञपुरुषः कृतवराहरूप आस्ते तं तु देवी हैषा भूः सह कुरुभिरस्खलित भक्तियोगेनोपधावति इमां च परमामुपनिषदमावर्तयति ॥ ३४ ॥

ओं नमो भगवते मन्त्रतत्त्वलिङ्गाय यज्ञक्रतवे महाध्वरावयवाय महापुरुषाय नमः कर्मशुक्ला त्रियुगाय नमस्ते ॥ ३५ ॥

यस्य स्वरूपं कवयो विपश्चितो गुणेषु दारुष्विव जातवेदसम् ॥
मथ्नन्ति मथ्ना मनसा दिदृक्षवो गूढं क्रियार्थैर्नम ईरितात्मने ॥ ३६ ॥

भाषाटीका।

जिन आप का रूप यह जगत् अपनी माया से युक्त है यथार्थ रूप है नानाप्रकार का है यथार्थ विदित न होने से जिसकी संख्या नहीं हो सकती है ऐसे निर्देश के योगरहित रूपवाले आप के अर्थ नमस्कार है ॥ ३१ ॥

[ जरायुज ] मनुष्यादि ( स्वेदज ) खटमल आदि [ अण्डज ] पक्षि आदि [ उद्भिज ] वृक्षादि [ स्थावर ] पर्वतादि ( जङ्गम ) गउ आदि देवता ऋषि पितर भूत इन्द्रिय समूह स्वर्ग आकाश पृथिवी पर्वत नदी समुद्र द्वीप ग्रह तारा नक्षत्र इन नामों के प्रधान वाच्य अर्थ आपही हो और सब आपके शरीर होने से गौण वाच्य हैं इसीप्रकार तत्त्व मसि के अर्थ में भी ईश्वर जीव का अभेद शरीर शरीरि भाव से यथार्थही है ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सप्रपञ्चतामनूद्य तन्निरासेन प्रणमति । यस्मिन्निति । असंख्येया अनन्ता विशेषा येषां तानि नामानि रूपाण्याकृतयश्च यस्य तादृशे यस्मिंस्त्वयि कविभिः कपिलादिभिरियं चतुर्विंशत्यादिसंख्या कल्पिता सती यया तत्त्वदृशा येन तत्त्वज्ञानेनापनीयते तस्मै ते साङ्ख्यसिद्धान्तरूपाय नमः परमार्थज्ञानरूपायेति वा ॥ ३३ ॥

एषा भूरुपधावति हेत्यन्वयः ॥ ३४ ॥

मन्त्रैस्तत्त्वेन लिङ्ग्यते इति तथा तस्मै । यज्ञा अयूपाः क्रतवः सयूपास्तद्रूपाय अत एव महान्तोऽध्वरा अवयवभूता यस्य । कर्मणा शुक्लाय शुद्धाय यज्ञानुष्ठात्रे । त्रियुगाय कृतयुगे यज्ञाभावात् । यद्वा । कलियुगे छन्नत्वात् ॥ ३५ ॥

कवयो विद्वांसो विपश्चितो निपुणा गुणेषु देहेन्द्रियादिषु मथ्नन्ति विचिन्वन्ति । मथ्ना विवेकसाधनेन मनसा । क्रियार्थैः कर्मभिस्तत्फलैश्च गूढमप्रकाशमानं दिदृक्षवः । एवं मथने ईरितः प्रकटित आत्मा स्वरूपं यस्य तस्मै नमः ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवमनन्तविविधविचित्रविभूतिमत्त्वमुक्तम् । ननु मह यस्यास्तीत्यानन्त्यमुक्तं तदयुक्तं पृथिव्यादितत्त्वानां चतुर्विंशति सङ्ख्यावच्छिन्नत्वादत आह। यस्मिन्निति । असङ्ख्येयान्यनन्ता त्परिच्छेत्तुमशक्यानि विशेषणानि विलक्षणानि देवादिनामा रूपाणि चाकृतयश्च यस्य रूपशब्देन पृथिव्यादिद्रव्यं विशे तत्सङ्घातगतसङ्ख्यानमाकृतिशब्देन तद्वाचकशब्दो नामश विवक्षितः असङ्ख्येया विशेषा येषामिति पूर्वत्र बहुव्रीहिः उत्त नामानि रूपाण्याकृतयश्च यस्येति वा एतादृशे प्रकृतिपु कालशरीरकेऽसङ्ख्येयवैभवे त्वयि इयं चतुर्विंशतिः पञ्च तिरित्यादिरूपा सङ्ख्या कविभिः कपिलादिभिः पृथिव्यादि स्वयाथात्म्यविद्भिः कल्पिता मन्दबुद्धीनां सुखग्रहणाय सङ्ग संगृह्य प्रदर्शिता वस्तुतः पृथिव्यादीनामचेतनतत्त्वानाम वान्तरभेदानां च चेतनानां च परमात्मनश्चानन्त्याद यत्वमेवेति भावः । एवं कल्पिता सङ्ख्या यया तत्त्वदृशा यया तात्त्विकबुद्ध्यानन्तवैभवत्वयाथात्म्यबुद्ध्यापनीयते ऽसङ्ख्यातविभूतित्वात्तस्मै सांख्यनिदर्शनाय संख्या बुद्धिस्त यस्मिकां प्रकृतिपुरुषेश्वरयाथात्म्यविषया सैव साङ्ख्यं दृश्यतेऽनेनेति निदर्शनं यस्य साङ्ख्यज्ञानगम्यायेत्यर्थः । भगवद्विभूतिभूतस्य जगत आनन्त्ये कथं भगवत्स्वरूपस्य प्रकृतिपुरुषादिनिरूप्यं हि तस्यानन्त्यं प्रकृतिपुरुष न घटते नान्यथा अत्रोच्यते देशकालवस्तुपरिच्छेदरहित हि तावदानन्त्यं तदेव त्रिविधमानन्त्यं परमात्मनि सुस्थ स्त्यत्र नास्तीदमिदानीमस्ति कल्पान्तरे नास्ति इति देश परिच्छेदयोरभावादिदमिदं न भवतीति वस्तुपरिच्छेदस्यापि वस्तुसामानाधिकरण्याभावरूपस्याभावाद्ब्रह्मणः सर्वात्म सर्ववस्तुसामानाधिकृतत्वव्यपदेशविषयत्वात् जीवानां त्वनु मात्रविषयत्वेऽपि तेषामानन्त्याद्धर्मभूतज्ञानस्य संसार कर्मसङ्कुचितत्वेऽपि वस्तुतस्तदभावान्मुक्तिदशायाम् सर्वान कल्प्यत "इत्यानन्त्यश्रवणाद्ब्रह्मणोऽचेतनात्मत्वं जीव कतया "अनेन जीवेनात्मनानुप्रविश्य" इति श्रवणाज्जीवश नित्यत्वाच्च तेषामप्यानन्त्यं देशतः कालतश्चास्त्येव अचेतन कारणावस्थायां निरतिशयसूक्ष्मदशापन्नत्वेऽपि कार्यावस्था नन्त्यमस्त्येव तर्हि प्रकृतिपुरुषापेक्षया परमात्मन आनन्त्य

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विशेष इति चेदियांस्तु विशेषः यत्कार्यावस्थायां कारणावस्थायाञ्च स्वरूपेण गुणैश्चानन्त्यमितरयोस्तु देशतः कालतश्च धर्मकृतं कालकृतं कारणावस्थाकार्यावस्थयोरिति । ननु ब्रह्मणः स्वरूपस्य सर्वात्मकत्वेन सर्ववस्तुसामानाधिकरण्यात्मकवस्त्वपरिच्छेदसत्त्वेऽपि कथं तद्गुणानां वस्त्वपरिच्छेद इति चेदेवं तर्हि वस्त्वपरिच्छेदः यद्गुणैर्निकर्षः तद्यथा दशवर्णास्वर्णापेक्षया नववर्णास्वर्णस्य पवित्रत्वोज्ज्वलत्वगुरुत्वादिभिर्गुणैर्निकर्षस्तदपेक्षया च कलधौतस्यैवं गुणैर्निकर्षाभावो वस्तुपरिच्छेदो बोध्यः ॥ ३३ ॥

अथोत्तरेषु कुरुषूपास्यादिकमाह । उत्तरेष्विति । कृतं धृतं वराहरूपं येन तादृशो भगवान् पाड्गुण्यपूर्णः यज्ञपुरुषः यज्ञशरीरकः तदाराध्यस्तत्फलदश्चास्ते तं तु वराहरूपं भगवन्तमेषा भूदेवी कुरुभिः कुरुवर्षस्थैः पुरुषैः सहास्खलितभक्तियोगेनाविच्छिन्नभक्तियोगेनोपधावत्यनुवर्त्तते भक्तियोगेनाराधयतीत्यर्थः इमां वक्ष्यमाणां परमां श्रेष्ठामुपनिषदमावर्तयति जपति ॥ ३४ ॥

ओं भगवच्छब्दार्थो पूर्ववत् मन्त्रतत्त्वलिङ्गाय मन्त्रप्रतिपाद्यं वस्तु तदेव लिङ्गं शरीरं यस्य । यद्वा । मन्त्रतत्त्वस्य स्वरूपस्य लिङ्गं ज्ञापको यस्य मन्त्रतत्त्वे मन्त्रतत्प्रतिपादिते लिङ्गे शरीरे ज्ञापके वा यस्येति वा । यद्वा । मन्त्रगतानि तत्त्वानि इन्द्राद्यर्थस्वरूपाणि तानि लिङ्गानि शरीराणि यस्य तस्मै यज्ञक्रतवे असोमकाः यागाः यज्ञाः ससोमाः क्रतवः तदुभयाय तदन्तरात्मत्वात्तदाराध्यत्वात्तत्फलदत्वाच्च तत्तादात्म्यं विवक्षितं महान्तोऽध्वरा अवयवभूता यस्य । यज्ञाध्वरस्यावयवाः स्रुक्स्रुवेडादयः महान्तः अध्वरा अवयवाः स्रुगादयो यस्य स्रुगादिरूपेण यष्टृभिरनुसन्धेया यस्य तस्मै इत्यर्थः तथा चोक्तं तृतीये "स्रुक्तुण्ड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरन्ध्र" इत्यादिना महापुरुषाय "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" इति पुरुषसूक्तप्रतिपाद्यजगत्कारणत्वाद्यनन्तकल्याणमहागुणविशिष्टाय पुरुषाय सर्वान्तरात्मने कर्मशुक्लाय कर्मणा शुद्धाय विशुद्धाय विशुद्धकर्मणे संसृतिप्रतिभटकर्मणा इति यावत्त तु कर्मरहितायेत्यर्थः "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस" इति देवमनुष्यादिसजातीयविजातीयाबन्धकसर्वकर्माश्रयत्वश्रवणात् "निष्क्रियं निष्कलम्" इत्यनेन बन्धककर्मानाश्रयत्वमुच्यते त्रियुगाय कर्मशुक्लायापि त्रियुगाय पाड्गुण्यपूर्णाय त्रीणि युगानि ज्ञानशक्त्यादीनि यस्य तस्मै यद्यपि भगवत इत्यनेनापि पाड्गुण्यपूर्णतोक्ता कर्मशुक्लत्वेनेत्यनेन क्रियाश्रयत्वकथनप्रयुक्तं जीवस्येवाज्ञानादिकं वारयितुं त्रियुगायेत्युक्तमतो न पौनरुक्त्यमरुणाय अरुणवर्णाय श्वेतवराहरूपत्वेऽपि चक्षुषोररुणवर्णत्वात्तदभिप्रायेणारुणायेत्युक्तं भवतीति मन्त्रार्थो ज्ञेयः ॥ ३५ ॥

सर्वान्तरात्मत्वमुमुक्षूपास्यत्वादिकमनुसन्दधाना नमस्करोतीति । यस्येति । कवयः प्रकृतिपुरुषेश्वरयाथात्म्यविदः यस्य विपश्चितःसर्वस्य तथ विविधं पश्यतीति विपश्चित् पृषोदरादित्वात् पश्यच्छब्दस्य स्थाने पकारादेशः "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता,, इति विपश्चिच्छब्दो ब्रह्मणि प्रयुक्तः स्वरूपम् 'सत्यं ज्ञानमनन्तं ब्रह्म, इतिलक्षणावच्छिन्नं गुणेषु गुणपरिणामरूपेषु देवादिशरीरेन्द्रियसंसृष्टेषु भूतेषु क्रियार्थैर्गूढं क्रियार्थैः कर्मफलैर्गूढं तिरोहितं जीवसम्बन्धिक्रियाफलैस्तेषां गूढम् "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्,, इति जीवानां कर्मभिः परमात्मस्वरूपस्य तिरोहितत्वश्रवणात् दिदृक्षवो द्रष्टुं साक्षात्कर्तुमिच्छवः दारुषु जातवेदसमिव मथ्ना विवेकसाधनेन मनसा मथ्नन्ति विविञ्चन्ते पञ्चविंशतितत्त्वेभ्यः पृथक्कृत्य पश्यन्तीत्यर्थः दारुष्विव जातवेदसमित्यनेन दृष्टान्तेन सर्वान्तरात्मत्वमुक्तं दिदृक्षवः कवय इत्यनेनोपास्यत्वमुक्तमीक्षितात्मने कर्त्तरि क्तः ईश्वराय परमात्मने नमः ईरितात्मन इति पाठे ईरिताः प्रेरिताः नियमिता आत्मानो जीवा यस्य तस्मै इत्यर्थः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

असङ्ख्येया विशेषाः व्यावर्तकधर्मा असङ्ख्येयानि नामानि नारायणादीनि शुक्लादीनि रूपाणि यस्याः सा तथा तादृशी आकृतिर्विग्रहो यस्य स तथा तस्मिन्नेवम्विधे यस्मिन् त्वयि दशावतारा इत्यादिकेयं सङ्ख्या कविभिः कल्पिता जगत्स्थितिलक्षणरक्षणायेति शेषः नेयं सङ्ख्या तात्त्विकीत्याह । यथेति । यया दशावतारा इत्यादिकया सङ्ख्यया भवांस्तत्त्वदृशा वस्तु याथात्म्यं पश्यता जातावेकवचनं विनीयते विशेषेण नीयते शिष्यप्रशिष्यादिषूपदिश्य प्रवर्त्यत इति अनेन यथाहं कवयन्तः कवयो न भवन्ति किन्तु अपरोक्षं पश्यन्त इत्युक्तं नचेदं वृत्तिज्ञानं सङ्ख्याप्रणयनस्य विशेषग्रहणस्य व्यर्थत्वापातादतः स्वरूपज्ञानमेवाङ्गीकर्तव्यम् आचार्यैरप्येतदभिप्रायेणोक्तं तज्ज्ञानं तद्रूपमेव हीति जीवस्य तिरोहितं स्वरूपज्ञानं च श्रीनारायणप्रसादेनाविर्भवतीत्यभिप्रायेण तं श्रीहरिं विशिनष्टि । साङ्ख्यनिदर्शनाय साङ्ख्यं यथार्थज्ञानं स्वरूपविषयं निदर्शयति सम्यग् ज्ञापयति प्रदीपग्राहिवत् इति साङ्ख्यनिदर्शनः तस्मै

बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः ।

इति वचनात् स्वरूपज्ञानमस्तीत्यत्र किं निदर्शनमित्यतो वा तत्स्थलमाह । साङ्ख्येति । हरेर्ज्ञानं यथा तद्रूपमेवं जीवज्ञानमित्यर्थः "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः इदं च भगवत्पादाभिप्रेतमिति ज्ञायते तज्ज्ञानं तद्रूपमेव हीति अनेन यथा ब्रह्मज्ञानं ब्रह्मस्वरूपं तथा जीवज्ञानं जीवस्वरूपमेव तत्र ब्रह्मज्ञानं नित्यं प्रकाशितं जीवज्ञानं त्वादृष्टेन तिरोहितं श्रीहरिप्रसादेन प्रकाशितं भवतीति विशेषं हिशब्देन प्रथयति ॥ ३३ ॥

उपनिषदं पट्कर्णागोचरं मन्त्रम् ॥ ३४ ॥

मन्त्रतत्त्वलिङ्गाय मन्त्रतत्त्वमूर्तये मन्त्रार्थज्ञापनाय वा यज्ञक्रतवे यज्ञसङ्कल्पविषयाय कर्मणा क्रियया पराक्रमलक्षणया शुक्लाय शुद्धाय त्रिषु युगेषु अवतारो यस्यासौ त्रियुगस्तस्मै ॥ ३५ ॥

वनगोचरस्य वराहस्य मन्त्रतत्त्वलिङ्गादिकं कथमुपपद्यत इत्याशङ्क्य प्रेक्षावद्भिर्विमृश्यरूपत्वेन पुरुषोत्तमत्वावगमात्तदवतारत्वेनोपपद्यत इत्याह । यस्येति । काव्यकर्तृत्वेन कवय इति नतु वेदान्तवेद्यवस्तुज्ञत्वेनेत्यन्यथा प्रतीतिनिरासाय विपश्चित इति गुणेषु सत्त्वादिकार्येषु शरीरेन्द्रियादिषु नियामकत्वेन सन्निहितं यस्य तव स्वरूपं विपश्चितः कवयो मनसा मथ्ना योनिषु काष्ठेषु जातवेदसमग्निमिव मथ्नन्ति आलोडयन्ति विचार्य जानन्तीत्यन्वयः शरीरादौ सन्निहितश्चेत्कुतो न प्रकाशत इति तत्राह । गूढमिति । "एको देवः सर्वभूतेषु गूढः" विदं ज्योति-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हृदय माहितं यत् „इत्यादिश्रुतिः क्रियार्थैर्यज्ञविषयैरिन्द्राग्न्यादि नामभिरीरितात्मने प्रतिपादितस्वरूपाय ॥ ३६

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्मिन्निति । इयं सङ्ख्या जरायुजादिरूपा कल्पिता । प्रथमोपासनार्थं त्वद्रूपत्वेनारोप्यैवोपदिष्टा । यथापनीयते तस्मै तदेकगम्यायेत्यर्थः । साङ्ख्यानां साङ्ख्यविदां तेषां निदर्शनाय सिद्धान्तरूपाय ॥ ३३—३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च । विश्वस्यास्य नश्वरत्वाज्ज्ञानिभिरनुपादेयत्वमाह । यस्मिन्निति । असङ्ख्येया अनन्ता विशेषा येषां तानि नामानि रूपाण्याकृतयश्च यस्य तत्र इयमुकलक्षणा जरायुजादिरूपा सङ्ख्या कल्पिता सती यया तु तत्त्वदृशा येन तत्त्वज्ञानेनापनीयते तस्मै ते साङ्ख्यनिदर्शनाय ज्ञानस्वरूपाय नमः ॥ ३३ ॥ ३४ ॥

मन्त्रैरेव तत्त्वेन लिङ्ग्यते ज्ञायते यस्तस्मै । यद्वा अयूपाः क्रतवः सयूपास्तद्रूपाय महान्तोऽध्वरा अवयवभूताः यस्य । कर्मभिः स्वीयचरित्रैः सह शुक्लाय शुद्धसत्त्वस्वरूपाय । त्रियुगाय सत्यादियुगत्रय एव प्राकट्यात् कलौ छन्नत्वात् । यद्वा । त्रीणि युगानि युगलानि यस्य तस्मै । षडैश्वर्यायेत्यर्थः ॥ ३५ ॥

कवयो विद्वांसः विपश्चितः भक्तिचतुराः यस्य गुणेषु शब्दरूपादिषु कृष्णरामेति नीलोत्पलदूर्वादलश्यामेत्यादिषु मनसा मथ्ना मथनसाधनेन यस्य स्वरूपं दिदृक्षवो मथ्नन्ति दारुष्विव जातवेदसमिति यथा मथनेनैव जातवेदा वह्निः प्रत्यक्षीभवति तथैवात्र यस्य नामरूपादिषु पुनः पुनर्मनोभिधानमेव मथनं तेनैव यत्स्वरूपं प्रत्यक्षीकुर्वन्तीत्यर्थः । कीदृशं क्रियार्थैः कर्मभिस्तत्फलैश्च गूढं भक्त्यैव नैष्कर्म्ये सत्येव द्रष्टुं शक्यमित्यर्थः । एवमेव ईरितः कथितः आत्मा स्वभावो यस्य यत्नो वा यत्र तस्मै । यद्वा गुणेषु श्रोत्रघ्राणादीन्द्रियेषु यस्य स्वरूपं स्वरूपभूतं नामगुणलीलादिश्रूयमाणकीर्त्यमानादि मनसा मथ्ना मथ्नन्ति मनःसहितश्रवणकीर्तनादिदृढाभ्यासेनैव यं प्रत्यक्षीकुर्वन्तीत्यर्थः । अन्यत् समानम् ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु नानापदार्थानामेकत्वं कथं घटेतेत्यत्र कार्यदृष्ट्या नानात्वं कारणमात्रदृष्ट्यैकत्वं च सुघटमेवेति "उभयव्यपदेशात्त्वहिकुण्डलवत्" इतिन्यायेन जगद्ब्रह्मणोः स्वाभाविकभेदाभेदसम्बन्धमाह । यस्मिन्निति । यस्मिन् कविभिः क्रान्तदर्शिभिर्वेदैः यया तत्त्वदृशा सर्वात्मभूतब्रह्मविषयिण्या दृष्ट्या इयं नाना संख्या अपनीयते "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" इत्येवमपसार्यते तथैव तत्त्वदृशा "यतो वा इमानि भूतानि जायन्ते" इत्येवं कल्पिता तस्मै अत एवासंख्येया विशेषाः येषां तानि नामानि रूपाणि आकृत-

यश्च यस्य तथाभूताय सांख्यनिदर्शनाय सांख्यं सम्यक् ख्यायते ... ख्यते ब्रह्म अनयेति संख्या उपनिषत् तयावधारणीयं सांख्यं तद्रूपं निदर्शनं ज्ञानं यस्य तथाभूताय ते तुभ्यं नमः इत्यन्वयः ॥ ३३ ॥ एषा भूर्भूरूपधिष्ठात्री देवता ॥ ३४ ॥

मन्त्रा एव तत्त्वलिङ्गानि स्वरूपज्ञापका यस्य तस्मै ... अयूपाः क्रतवः सयूपाः तद्रूपाय महान्तो महाध्वराः अवयवा यस्य तस्मै कर्मणा भुवः उद्धरणे शुक्लाय प्रकाशमानाय त्रियुगाय त्रीणि युगानि ।

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ।

इतिस्मृतिप्रोक्तानि यस्मादुपासकानां स तथा यदुपासनया ... प्युक्तषाड्गुण्ययोगाद्भगवान् भवति तस्मै इत्यर्थः ॥ ३५ ॥

यस्य विपश्चितः सर्वज्ञस्य "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति श्रुतिप्रसिद्धस्य ते स्वरूपं क्रियार्थैर्गूढं जीवस्य स्वकृतकर्मफलैः सङ्कुचितज्ञानस्य ह्यप्रकाशमानं गुणेषु सत्त्वादिभूतचतुर्विंशतिप्राकृततत्त्वसहितेषु जीवसहितेषु चाष्टाविंशतिपदार्थेषु वक्ष्यमाणेषु एकोनत्रिंशं मथ्नन्ति विचिन्वन्ति दारुषु जातवेदसमग्निमिव मथ्ना विवेकसाधनेन मनसा इत्येवं यत्ने ईरितः प्रकटितः आत्मा स्वरूपं यस्य तस्मै नमः ॥ ३६ ॥

---

भाषाटीका ।

जिन आप के असंख्य नामरूप आकृति हैं तिन आप के ... कवियों की वर्णन करी जो चतुर्विंशति तत्त्व की संख्या जिन तत्त्वदृष्टि के होने से दूर होजाती है तिन सांख्य प्रतिपादित आप के अर्थ नमस्कार है ॥ ३३ ॥

उत्तर कुरु वर्ष में वराह रूपवाले भगवान् यज्ञ पुरुष हैं ... को यह भूमी देवी अचलभक्ति योग से आराधन करती है ... उपनिषद् मन्त्र को आवर्तन करती है ॥ ३४ ॥

मन्त्रों से तत्त्वों से जानने योग्य यज्ञरूप क्रतुरूप महा ... अवयव वाले महापुरुष कर्मो के शुद्ध फलरूप ऐश्वर्यादि छै गुणों वाले भगवन् आप के अर्थ नमस्कार है ॥ ३५ ॥

कवि विद्वान् आपके जानने की इच्छाकरनेवाले पुरुष कर्म फलों से गुणोंमें गुप्त जिन आपके स्वरूप के साधन भूत निर्मल मनसे निश्चित करते हैं जैसे विवेकी पुरुष काष्ठमें से मथनके अग्नि पैदा करते हैं इस प्रकार जिनका आत्मा प्रगट है उन आपके अर्थ नमस्कार है ॥ ३६ ॥

---

द्रव्यक्रियाहेत्वयनेशकर्तृभिर्मायागुणैर्वस्तुनिरीक्षितात्मने ॥
अन्वीक्षयाङ्गातिशयात्मबुद्धिभिर्निरस्तमायाकृतये नमो नमः ॥ ३७ ॥
करोति विश्वस्थितिसंयमोदयं यस्येप्सितं नेप्सितमीक्षितुर्गुणैः ॥
माया यथाऽयो भ्रमते तदाश्रयं ग्राव्णो नमस्ते गुणकर्मसाक्षिणे ॥ ३८ ॥
प्रमथ्य दैत्यं प्रतिवारणं मृधे यो मां रसाया जगदादिसूकरः ॥
कृत्वाग्रदंष्ट्रे निरगादुदन्वतः क्रीडन्निवेभः प्रणताऽस्मि तं विभुमिति ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां भुवनकोशवर्णनं नाम
अष्टादशोऽध्यायः ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रयत्नमेव दर्शयन्नाह । द्रव्येति । द्रव्यं विषयः क्रिया इन्द्रियव्यापारः हेतुर्देवता अयनं देहः ईशः कालः कर्ताहङ्कारः एतैर्मायागुणैः कार्यरूपलक्षणैर्वस्तुत्वेन निरीक्षितो य आत्मा तस्मै अन्वीक्षया विचारेणाङ्गैर्यमनियमादिभिरतिशयात्मा निश्चयवती बुद्धिर्येषां तैर्निरस्ता मायानिमित्ता आकृतिर्यस्मात्तस्मै ॥ ३७ ॥

तदेवं निर्गुणरूपेण नत्वा परमेश्वररूपेण प्रणमति । करोतीति । यस्येक्षितुर्जीवार्थमीप्सितम् । अत्यन्तानिच्छायामीक्षणायोगात्स्वार्थं तु नेप्सितम् । विश्वस्थित्यादिस्वगुणैर्माया करोति तस्याश्चेतनायाः अपीश्वरसन्निधानात्प्रवृत्तिं दृष्टान्तेनाह । यथायो लोहं ग्राव्णोऽयस्कान्तान्निमित्ताद्भ्रमति तदाश्रयं तदभिमुखं सत् गुणानां कर्मणां जीवादृष्टानां च साक्षिणे तस्मै ते नमः ॥ ३८ ॥

अवतारचरितमाह । प्रमथ्येति । यो जगतामादिः कारणभूतः सूकरो मां पृथ्वीमग्रदंष्ट्रे दंष्ट्राग्रे कृत्वा रसातलादारभ्योदन्वतः प्रलयाम्बुधेः करिवादिभो गज इव निरगात् ततश्च प्रतिगजतुल्यं दैत्यं प्रमथ्य क्रीडन् स्थितस्तं विभुं प्रणतास्मीत्यन्वयः ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गुणशब्दोपलक्षितचिदचिदात्मकजगदन्तरात्मत्वेन तद्वैलक्षण्यमुक्तं तदेव विशदयन्नमस्करोति । द्रव्येति । अङ्गेत्याभिमुखीकरणे हे भगवन्नतिशयात्मबुद्धिभिरतिशयितात्मपरमात्मविषयबुद्धिमद्भिः पुरुषैरन्वीक्षया निपुणनिरूपणेन वस्तुतः परमार्थतः प्रकृतिपुरुषविलक्षणत्वेनेति यावत् निरीक्षितः आत्मा स्वरूपं यस्य निरस्तमायाकृतये निरस्ता मायाकृतिः प्राकृतकार्यं यस्मात्तस्मै ते नमो नम इत्यन्वयः कैः सह कुत्र निरीक्षितं तत्राह । द्रव्यं भूतपञ्चकं क्रियाक्रियाहेतुर्वागादिकर्मेन्द्रियमयनं ज्ञानेन्द्रियमीयतेऽनेनेति ज्ञानसाधनत्वाच्चक्षुरादेर्ज्ञानेन्द्रियस्य एषां समाहारद्वन्द्वः एतत्सङ्घातरूपे शरीरे सकर्तृभिः सपरिपञ्चकैः मायागुणैः सह निरीक्षितात्मने नमः देहभूतेन्द्रियगुणाश्रयजीवात्मभिः सह विविच्य निरीक्षितायेत्यर्थः अनेन पूर्वश्लोके गुणपदं देहाद्यवस्थजीवोपलक्षणमित्यावेदितुम् अन्यथास्मिन् श्लोके जीवोपस्थापककर्तृपदासङ्गतिः स्पष्टैव एवञ्च गुणपदेन देहमात्रमभिप्रेत्य तेषु जीवतादात्म्येन मथ्नन्तीति न भ्रमितव्यम् ॥ ३७ ॥

निरस्तमायाकृतय इत्यनेन मायाकार्यदोषप्रतिभटत्वमुक्तं तदुपपत्तये मायाया ईश्वरवश्यतामाह । करोतीति । यो भवान् यस्य प्रधानस्य गुणैः सत्त्वादिभिः प्रधानाभिप्रायेण यस्येति नपुंसकनिर्देशः विश्वस्य स्थितिसंयमोदयं स्थितिलयोदयं करोति कथं भूतमीप्सितं धर्मार्थकाममोक्षार्थचतुष्टयस्य साधनोपयुक्तकरणकलेवरादिप्रदानेन जीवानुग्रहार्थत्वाज्जगत्सृष्ट्यादेस्तस्येप्सितत्वं जीवार्थत्वेनेप्सितमिति यावत्स्वार्थत्वेनानीप्सितमित्यर्थः तस्माद्वीक्षितुः सङ्कल्परूपज्ञानवतस्तस्य ततः माया सत्त्वादिगुणात्मिका स्वच्छरीरभूता माया यथा ग्राव्णोऽयस्कान्तात्तदाश्रयं तदभिमुखं सदयो लोहं भ्रमति तथा त्वत्सङ्कल्पानुगुणकारिणी भ्रमतीति भावः यद्वा। ईक्षितुः "तदैक्षत बहुस्यां प्रजायेय" इत्युक्तविलक्षणवतः तस्य तव माया यस्येति षष्ठी शरीरशरीरिभावसम्बन्धे त्वच्छरीरभूता माया । यद्वा । तादधीन्ये षष्ठी दृष्टान्तस्य सामर्थ्यात्त्वदधीना माया त्वदाहितशक्तिर्विश्वस्य सृष्ट्यादि करोति इत्यर्थः स्वतोऽशक्ता या कथमनुप्रवेशमात्रेण शक्तिमती स्यात्तत्राह । "यथायो भ्रमते तदाश्रयं ग्राव्णः" इति विश्वसृष्ट्यादिकर्तृत्वस्य परमात्मधर्मत्वेन माया करोतीत्युक्तमिति तदुच्यते भगवदवताररूपाणां ब्रह्मादीनां सृष्ट्यादिकर्तृत्वस्य रजआदिमायागुणप्राचुर्यप्रयुक्तत्वान्माया विश्वसृष्ट्यादिकं करोतीत्युक्तमिति नेप्सितमित्यनेन विश्वस्थित्यादिकं न भगवतो भोगार्थमित्युक्तम् ईप्सितमित्यनेन जीवानुग्रहार्थं लीलार्थं चेति सूचितम् । ननु विश्वस्थित्यादिकं न जीवानुग्रहार्थं किन्तु गर्भजन्मजरामरणादिदुःखहेतुत्वेन जीवनिग्रहार्थमेव स्यात् किञ्चाहितकरणहिताकरणादिप्रयुक्तवैषम्यनैर्घृण्यं च भगवतः प्रसज्येत तत्राह । नमस्ते गुणकर्मसाक्षिण इति गुणानां मायागुणानां सत्त्वादीनां कर्मणां पुण्यपापरूपाणां चादृष्टानां साक्षिणे साक्षाद्द्रष्ट्रे ते नमः जीवगुणकर्मानुसारित्वात् हिताकरणादेर्न वैष-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

म्यनैर्घृण्यदोषप्रसक्तिरिति भावः तथा च सूत्रम् "वैषम्यनैर्घृण्ये न सापेक्षत्वात् । न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" इति अयं भावः भगवान् जगदादौ स्वस्मिन्नुपसंहृतचिदचित्तत्त्वः सर्वज्ञः सर्वशक्तिः परमकारुणिकोऽवाप्तसमस्तकामः स्वस्मिन् प्रलीनमसत्कल्पं चेतनवर्गमालोक्य सर्वेषां सामान्येन धर्मादिपुरुषार्थसाधनत्वाराधनोपयुक्तकरणकलेवराणि प्रदायाराधनप्रकारावबोधि वेदाख्यं शास्त्रं च प्रदर्श्य स्वयं जगत्सृष्ट्यादिलीलः आस्ते ततस्ते जीवाः करणकलेवराणि परिगृह्य प्राचीनकर्मवासनानुसारेण साध्वसाधुकर्माणि कुर्वन्तः स्वस्वकर्मानुसारेण ईश्वरादिष्टं फलं भुञ्जते इति नेश्वरस्य वैषम्यादिप्रसक्तिरिति ॥ ३८ ॥

प्रकृतावतारचरित्रं वदन्ती नमस्करोति । प्रमथ्येति । यो जगतामादिः कारणभूतः सूकरः मां पृथ्वीं दंष्ट्राग्रे कृत्वा निधाय रसातलादारभ्य उदन्वतः प्रलयार्णवादिभो गज इव निरगात्ततश्च प्रतिवारणं प्रतिगजतुल्यं दैत्यं हिरण्याक्षं प्रमथ्य हत्वा क्रीडन् स्थितः तं विभुं प्रणतास्मि ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शरीरादिगूढेश्वरसद्भावे ब्रह्मादिप्रत्यक्षं च प्रमाणमित्याह । द्रव्येति । द्रव्यक्रियाहेत्वयनेशाश्च कर्तारश्चेति तथा ईशशब्दः प्रत्येकमभिसम्बध्यते हेतुः कारणमयनमाधारः द्रव्यादीनामीशैः शङ्करगरुडब्रह्मवायुभिर्जगत्कर्तृभूतैर्मायागुणैर्हरीच्छानुसारिभिर्वस्तु यथा तथा निरीक्षितात्मने साक्षात्कृतस्वरूपाय त्वत्प्रसादयत्नात्त्वत्साक्षात्कारे बुद्धिपाटवं चैषामस्तीत्याह । तत्रेति । तत्र तव स्वरूपे यथा शक्त्याखिलविशेषदर्शनपटुतरबुद्धिभिः यदुच्यते ब्रह्मविवर्तवादिभिर्मायारूपमेव गृह्यते न तात्त्विकमिति तत्राह । निरस्तेति । शङ्करादीनां द्रव्यादीशत्वम्

> द्रव्येशः शङ्करः प्रोक्तः क्रियेशो गरुडः स्मृतः ।
> कारणेशस्तथा ब्रह्मा वायुराधारवान् स्मृतः ।

इति वाक्यसिद्धं यथैषां वस्तुनिरीक्षणं शक्यते । तथेति । एवशब्देनान्येषामेतादृशशक्तिं निवारयति ॥ ३७ ॥

ब्रह्मादीनामपि त्वत्कटाक्षलेशमन्तरेण त्वज्ज्ञानादौ पाटवं नास्ति अतो निर्मातृत्वं च मुख्यं तवैवेत्यभिप्रेत्याह । करोतीति यो विश्वस्य स्थित्यादिकं करोति ब्रह्मादयश्च यस्य तवेप्सितमीक्षितुं नेशते सत्त्वादिगुणैर्मोहितत्वादिति शेषः ब्रह्मादीनामपि तदीप्सितज्ञानशक्त्यभावेऽपि लक्ष्म्याः सास्तु तदनुवर्तमानत्वादित्याशङ्क्याह । मायेति । यदाश्रया यस्त्वमाश्रयो यस्याः सा तथा माया लक्ष्मीर्भ्रमति अनन्तत्वात्त्वद्रूपं न परिच्छिनत्ति अनुवृत्तिरपि न स्वाधीना किन्तु त्वदधीनेत्यत्र दृष्टान्तमाह । यथेति । अयस्कान्तरत्नसन्निधानाद्यथाऽयो भ्रमते चेष्टते तथेयमपि त्वत्सन्निधानात्त्वामनुवर्तत इत्यर्थः त्वत्सन्निधानाभावे जडप्रायेति द्योतनायायोनिदर्शनमिति भावः अनेन त्वत्सन्निहितलक्ष्मीसान्निधानाज्जडप्रकृतिकार्येषु प्रवर्तते तत्रेदं निदर्शनमिति चोक्तं भवति तथा च योजना यस्य तवाश्रया माया जडप्रकृतिर्भ्रमतीति अयस्कान्त-

स्यायश्चेष्टकत्वशक्तिरीश्वरनियतेति ज्ञापनाय यदाश्रयेति अन… प्राप्य इति अयस्कान्ते सन्निधाय द्रव्यान्तरचेष्टाशक्ति… द्विस्वरत्वाद्वा तच्छब्दवाच्याय एतदेव सूचितं गुणकर्मेति… नाचेतनाश्रयगुणकर्मणोः साक्षिणे कर्तृत्वेनेति शेषः ॥ ३८ ॥

प्रतिवारणं प्रतिगजस्थानीयं निरस्तनिवारणं वा … दंष्ट्राग्रे जगदादिः श्रीनारायण एव सूकरः जगदादिश्चायं … रश्च सुष्ठु करोतीति सूकर एव सूकरः शुमित्यनुकारं … करोतीति सूकरो वराहः "वशौ शसाविति प्राच्या" इति … शसयोरभेदः ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

द्रव्यादिभिर्मायागुणैरुपलक्षितं यद्वस्तु शुद्धजीवतत्त्वं … निरीक्षितो य आत्मा परमात्मा तत्स्वरूपाय । अन्वीक्षादि… रस्ता प्रत्याख्याता माया यतस्तथाभूताकृतिर्यस्य तस्मै ॥ ३… तत्स्थापनाय वशीभूतमायां स्वरूपशक्तिं योजयति । … तीति ॥ ३८ ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं स्थूलसूक्ष्ममायिकदेहद्वयसद्भावे एव मन्थनं सम्भवेत … ने च सति तत्स्वरूपं दृश्यं स्यादित्याह । द्रव्यं शब्दादिक्रिया इन्द्रिय… व्यापारः हेतुर्देवता अयनं देहः ईशः कालः कर्ता अहङ्कारः … मायागुणैः श्रवणकीर्तनपरिचरणादिभिर्भजनसाधकैरन्वीक्षणा… कृतेनः पुनः पुनः परामर्शेन च अज्ञानां श्रवणकीर्तनादीना… शये आत्मा यत्नो बुद्धिश्च येषां तैर्वस्तुत्वेन निरीक्षित आत्मा स्व… यस्य तस्मै । तच्च ते स्वरूपं चिन्मयमेवेत्याह । निरस्ता माया … तथाभूता आकृतिराकारो यस्य तस्मै । श्लेषेण निरस्ता … भक्तस्याप्याकृतिर्यतस्तस्मै ॥ ३७ ॥

ननु मत्कार्यत्वात्क्वचिदपि जगन्ममैवाकारो मृद्घटादिव… जगदिदं न वस्तुतस्त्वत्कार्यं किन्तु मायाकार्यमित्याह । करोति… यस्येक्षितुर्जीवार्थमीप्सितमत्यन्तानिच्छायामीक्षणायोगात्स्वा… नेप्सितं विश्वस्थित्यादिकं गुणैर्माययैव करोति । तस्या … त्वेऽपि ईश्वरसन्निधानात्प्रवृत्तिं दृष्टान्तेनाह । यथा लोहं ग्राव… स्कान्तात्क्षेत्रोभ्रमति तदाश्रयं तदभिमुखं सत् अतो गुण… कर्मणां जीवादृष्टानाश्च साक्षिणे तस्मै तुभ्यं नमः ॥ ३८ ॥

अवतारचरित्रं ब्रुवती स्वस्मिन् कृपातिशयं द्योतयति । प्रमथ्य… प्रतिवारणं प्रतियोद्धारं हस्तिनमिव इभो हस्ती रसाया रसात… लक्षितात् गर्भोदात् जगदादिर्जगत्कारणभूतः सूकरः । उद… उदन्वति प्रलयार्णवे ॥ ३९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमे ऽष्टादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वश्लोकं विवृणोति । द्रव्येति । अन्वीक्षया विचारेण अङ्गैर्यमनियमादिभिः अतिशयात्मा निश्चयवती बुद्धिर्येषां तैर्दिहक्षुभिः मुमुक्ष्वादिभिः पञ्चविंशतितत्त्वैः सह त्रिभिर्मायागुणैश्च सह वस्तुतो मायात्मत्वेन निरीक्षितो य आत्मा एकोनत्रिंशः परमात्मा तस्मै नमो नमः तत्र द्रव्याणि महाभूतानि पञ्च क्रियाशब्देन कर्मेन्द्रियाणि पञ्च हेतवः प्रकृतिमहदहङ्काराः पञ्चतन्मात्राणि चेत्यष्टौ प्रकृतयः अयनानि ज्ञानायनानि पञ्च ज्ञानेन्द्रियाणि ईशः इन्द्रियेशः मनः कर्ता जीवः एतैर्मायागुणाः सत्त्वरजस्तमांसि तैश्च सहित इत्यर्थः कथम्भूताय निरस्ता मायानिमित्ता आकृतिर्येनाद तस्मै अप्राकृताकृतय इत्यर्थः ॥ ३७ ॥

एवं चेतनाचेतनब्रह्माख्यानि त्रीणि तत्त्वान्युक्तानि तत्र सेश्वरसांख्यपक्षे प्रकृतिर्येश्वरादत्यन्तभिन्नातः सैव जगत्कर्त्रीति शङ्का प्राप्ता तां वारयन् ब्रह्मणो जगत्कारणत्वमाह । करोतीति यस्य जगत्कारणस्य ईक्षितुः "तदैक्षत बहुस्याम्" इत्यादि श्रुतिप्रसिद्धस्यैव सम्बन्धिनी शक्तिभूतैव माया न तदत्यन्तपृथग्भूता मायास्तीति "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतेः उपलक्षणमेतज्जीवादेरपि न ह्यब्रह्मात्मकश्चेतनो ऽचेतनश्च कश्चित्पदार्थोऽस्ति "सर्वं खल्विदं ब्रह्म तज्जलानिति" इति श्रुतेः सा च माया ब्रह्माधीनास्थितिप्रवृत्तिमतीति दृष्टान्तेनाह । यथा यतो लोहं ग्राव्णोऽयस्कान्ताद्धेतोस्तदाश्रयं तदभिमुखं भ्रमति तद्वन्मायापि स एव मायेशः ईप्सितं बुभुक्षोर्जीवस्य भोगार्थं मुमुक्षोर्मोक्षार्थं स्वार्थं तु नेप्सितं विश्वस्थित्यादिकं गुणैः स्वमायागुणैः करोति तस्मै ते जीवस्य गुणानां सात्त्विकत्वादीनां कर्मणां च गुणानुरूपाणां साक्षिणे नमः ॥ ३८ ॥

प्रतिवारणं विरोधिनमिभमिभ इव मृधे युद्धे दैत्यं प्रमथ्य रसायाः रसातलात् अग्रदंष्ट्रे दंष्ट्राग्रे मां कृत्वा उदन्वतः प्रलयार्णवात् क्रीडन्निव निरगात् तं प्रणतास्मि ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टादशाध्यायार्थप्रकाशः ॥ १८ ॥

---

भाषा टीका

विचार सहित यम नियमादिक अङ्ग इनों से अतिशय युक्त स्वरूपवाली बुद्धिवाले पुरुषोंने विषय इन्द्रिय व्यापार इन्द्रिय देवता देह ईश्वर काल कर्ता माया के गुण इनोंसे जिनके स्वरूप को देखा है ऐसे आत्ममाया को दूर करनेवाले आप के अर्थ नमस्कार है ॥ ३७ ॥

जो आप गुण कर्मों के साक्षी हैं नहीं इच्छा करनेवाले भी जिन आपकी इच्छा गुणों से संसार के उत्पत्ति स्थिति प्रलय को करती है जैसे कि चुम्बक पत्थर के पास में रहने से लोहा घूमता है ऐसी शक्तिवाले आप के अर्थ नमस्कार है ॥ ३८ ॥

जो आप जगत् के आदि में कारण सूकररूप होकर रसातल में गई पृथिवी को दन्त के अग्र भाग में रखकर प्रलय समुद्र के जलमें से निकल आये जैसे कि हस्ति कमल के नाल को लेकर आवे तैसे फिर दूसरे हस्तिसरी के हिरण्याक्ष दैत्य को युद्ध में मारकर स्थित हैं उन प्रभु को मैं नमस्कार करती हूं ॥ ३९ ॥

इति श्रीभागवत पञ्चमस्कन्ध अठारहमे अध्यायका
भाषानुवाद समाप्त ॥ १८ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे अष्टादशोऽध्यायः समाप्तः ॥ १८ ॥



## ॥ ऊनविंशोऽध्यायः ॥

—:०:—

### ॥ श्रीशुक उवाच ॥

किंपुरुषे वर्षे भगवन्तमादिपुरुषं लक्ष्मणाग्रजं सीताभिरामं रामं तच्चरणसन्निकर्षाभिरतः परमभागवतो हनुमान् सह किंपुरुषैरविरतभक्तिरुपास्ते ॥ १ ॥

आर्ष्टिषेणेन सह गन्धर्वैरनुगीयमानां परमकल्याणीं भर्तृभगवत्कथां समुपशृणोति स्वयं चेदं गायति ॥ २ ॥

ओं नमो भगवते उत्तमश्लोकाय नम आर्यलक्षणशीलव्रताय नम उपशिक्षितात्मन उपासितलोकाय नमः साधुवादनिकषणाय नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नम इति ॥ ३ ॥

यत्तद्विशुद्धानुभवमात्रमेकं स्वतेजसा ध्वस्तगुणव्यवस्थम् ।
प्रत्यक् प्रशान्तं सुधियोपलम्भनं ह्यनामरूपं निरहं प्रपद्ये ॥ ४ ॥
मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः ।
कुतोऽन्यथा स्याद्रमतः स्व आत्मनः सीताकृतानि व्यसनानीश्वरस्य ॥ ५ ॥
न वै स आत्मात्मवतां सुहृत्तमः सक्तस्त्रिलोक्यां भगवान् वासुदेवः ।
न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणं चापि विहातुमर्हति ॥ ६ ॥
न जन्म नूनं महतो न सौभगं न वाङ् न बुद्धिर्नाकृतिस्तोषहेतुः ।
तैर्यद्विसृष्टानपि नो वनौकसश्चकार सख्ये बत लक्ष्मणाग्रजः ॥ ७ ॥
सुरोऽसुरो वाऽप्यथवा नरो नरः सर्वात्मना यः सुकृतज्ञमुत्तमम् ।
भजेत रामं मनुजाकृतिं हरिं य उत्तराननयत्कोसलान् दिवमिति ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनविंशे किंपुरुषे भारते चोपवर्ण्यते ।
सेव्यसेवकभावश्च भारतश्रैष्ठ्यमेव च ॥ १ ॥ २ ॥

भर्ता चासौ भगवांश्च तस्य कथाम् ॥ २ ॥

आर्याणि लक्षणानि शीलं व्रतं च यस्मिन् । उपशिक्षितात्मने संयतचित्ताय उपासितोऽनुसृतो लोको येन । साधुवादः साधुत्वप्रसिद्धिस्तस्य निकषणाय निकषाश्मवन्निर्धारस्थानाय परमसीम्न इत्यर्थः ॥ ३ ॥

श्रीरामं परमार्थरूपेण प्रणमति । यदेकं वेदान्तेषु प्रसिद्धं तत्त्वं तत्प्रपद्ये तत्कथम्भूतम् । विशुद्धश्चासावनुभवश्च स एव मात्रा स्वरूपं यस्य विशुद्धत्वे हेतुः प्रशान्तं तत्रापि हेतुः स्वतेजसा स्वरूपप्रकाशेन ध्वस्ता गुणानां त्रिविधा जाग्रदाद्यवस्था यस्मिन् अनुभवमात्रत्वे हेतुः प्रत्यक् दृश्याद्व्यावृत्तं ततः अनामरूपम् । ननु वस्तुत एवम्भूतस्यापि जीवस्येव कर्मभिर्विपर्ययो दृश्यते तत्राह । निरहम् । अहङ्काराभावान्न तथा वैपरीत्यमित्यर्थः । ननु श्रीरामस्य स्वरूपं नैवं प्रतीयते तत्राह । सुधिया पुंसा उपलभ्यते इत्युपलम्भनं शुद्धचित्तेन ब्रह्मत्वेनैवोपलभ्यत इत्यर्थः ॥ ४ ॥

कथं तर्हि दशरथपुत्रत्वं तत्राह । विभोर्मर्त्यावतारस्तु रक्षसां रावणस्य वधाय तस्य मनुष्यादन्यतोऽवध्यत्वात् न केवलमेतावत्किन्त्विह संसारे स्त्रीसङ्गादिकृतं दुःखं दुर्वारमिति मर्त्यानां शिक्षणं च शिक्षार्थमपीत्यर्थः । अन्यथा स्वे स्वरूपे रममाणस्य जगदात्मनः सीताविरहकृतानि व्यसनानीति कुतः स्यात् ॥ ५ ॥

विषयासक्त्यभावेन व्यसनानर्हत्वमुपपादयति । न वै स भगवांस्त्रिलोक्यां क्वापि सक्तः यत आत्मवतां धीराणामात्मा सुहृत्तमः अतो न स्त्रीकृतं मोहं प्राप्नुयात् न लक्ष्मणं चापि देवदूतेन श्रीरामं संमन्त्रयता विज्ञापितमत्रागतस्त्वया वध्य इति यो द्वारि स्थितं लक्ष्मणं दुर्वाससमागतं विज्ञापयितुं प्रविष्टं हनुं यतो वसिष्ठवाक्यात्तत्याज तच्च न युज्यत इत्यर्थः ॥ ६ ॥

अतः श्रीराम एव सर्वैः सेव्य इति वक्तुं न तस्य तोषहेतुः सत्कुलजन्मादि किन्तु भक्तिरेवेत्याह । न जन्मेति । महतः पुरु-

श्रीधरस्वामिकृतभावार्थदीपिका ।

महतः श्रीरामस्येति वा । सौभगं सौन्दर्यम् आकृतिर्जातिः ...भ्यादिभिर्विसृष्टांस्त्यक्तानपि नो वनचरान् वत महो ...स्याग्रजोऽपि सखित्वे कृतवान् ॥ ७ ॥

तस्मात्सुरो वान्यो वा यः कोऽपि श्रीराममेव सर्वप्रकारेण ...। सुकृतमल्पीयस्यापि भजने बहुमानिनम् उत्तरान् कोस-...योध्यावासिनः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिलावृतादिषु वर्षेषु सतपूपास्यादिकमुक्तमथेदानीं किंपु-...रुषे भारते च वर्षे तद्वदन्येषां मध्ये भारतवर्षश्रैष्ठ्यं ...कोनविशेन । तत्रादौ किंपुरुषे उपास्यां भगवत्तनुं तदुपासकं ...मन्त्रं चाह । किंपुरुष इति । आदिपुरुषं जगत्कारणभूतं ...पुरुषं लक्ष्मणस्य सौमित्रेरग्रजं सीताया मैथिल्या अभि-...रामनुरूपं रामं दाशरथिं रामम् ।

रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि ।

इति रामपदेनासौ परं ब्रह्माभिधीयते ॥

इति निरुक्तरामशब्दपुष्कलप्रवृत्तिनिमित्ताश्रयं तस्य श्रीरामस्य ...चरणौ तयोः सन्निकर्षः सान्निध्यं भजनमिति यावत्तस्मिन्न...रत आसक्तो महाभागवतो हनुमानाञ्जनेयः किंपुरुषवर्षस्थैः ...विरता अविच्छिन्ना भक्तिर्यस्य तादृश उपास्ते ॥ १ ॥

भगवतो भर्तुः श्रीरामस्य कथां गन्धर्वैरुपसमीपे गीयमानां ...र्ष्टिषेण किंपुरुषवर्षस्थपुरुषश्रेष्ठेन सह सम्यगुपशृणोति ...मिदं वक्ष्यमाणमनुरांशु गायति जपति ॥ २ ॥

ओंभगवच्छब्दार्थौ पूर्ववत् उत्तमैर्ब्रह्मादिभिः श्लोक्यते स्तूयते ...निरतिशयः श्लोकः यशो यस्येति वा तस्मै आर्याणां लक्षणानि ...नि च शीलानि यस्मिन् उपशिक्षितः संयतः आत्मा चित्तं येन ...भितः लोको येन साधुवादः साधुत्वसिद्धः तस्य निकष-...य निकषाश्मवन्निर्द्धारणस्थानाय ब्रह्मणि कुले साधुः ब्रह्मण्यः ...साधुरिति यत्प्रत्ययः "येचाभावकर्मणोः" इति प्रकृतिभावा-...टिलोपः ।

अप्यहं जीवितं जह्यां त्वां वा सीते ! सलक्ष्मणाम् !

न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥

...रीत्या ब्राह्मणसंरक्षणबद्धैकदीक्षत्वमेवात्र ब्रह्मण्यत्वं स चासौ ...स्वतेजसा दीप्यमानः अस्पष्टप्राकृतदोषस्तस्मै । यद्वा । ब्रह्म ...तत्र साधुः सम्यक् प्रतिपाद्यः सचासौ देवस्तस्मै महा-...पुंसूक्तप्रतिपाद्यजगत्कारणत्वोपयुक्तकल्याणगुणवि-...य परमपुरुषाय महाराजाय ।

राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान् ।

ईश्वरं तं विजानीध्वं स पिता सप्रजापतिः ।

इत्युक्तमहाराजाय नमः पदावृत्तिर्गुणभेदाभिप्राया ॥ ३॥

प्रकृतिपुरुषविलक्षणपरमात्मस्वरूपं विशोध्य तच्छ्रीरामरूपे-...स्थितं नमस्करोति । यदिति । विशुद्धं रागाद्यकलुषितं तदनु-...मात्रं ज्ञानैकस्वरूपं नामचा कचिदप्यजडस्वरूपत्वं विव-...विशुद्धानुभवैकमात्रमनेन स्वरूपं निर्दिश्यते स्वतेजसा ...शेन नित्यासङ्कुचितानन्दस्वरूपविषयकधर्मभूतज्ञानेन ...नित्यं निरस्ता गुणा रजआदयः तत्कृतास्तिस्र उत्प-...स्थितिमरणभूता अवस्था यस्य स्वतेजसा ध्वस्तगुणव्य-वस्थमित्यनेन प्रकृतिसंसृष्टचेतनव्यावृत्तिः सद्यध्वस्तगुण-व्यवस्थः प्रशान्तमशनायापिपासाशोकमोहजरामृत्युरूपोर्मिषट्क-रहितानन्दस्वरूपम् । यद्वा । विशुद्धशब्देनेन्द्रियकानुभवव्यावृत्तिः प्रशान्तशब्देन नित्यं रागाद्यकलुषितत्वमुच्यतेऽनेन मुक्तचेतनव्या-वृत्तिः स हि बद्धावस्थायां रागादिभिः कलुषितः प्रत्यक् स्वस्मै भासमानमनेन पराचोऽचेतनस्य व्यावृत्तिः नह्यचेतनं स्वस्मै अव-भासते किन्तु परस्मै एव सुधिया सम्यग्ज्ञानेनोपलम्भनमुपलभ्यते इत्युपलम्भनम् "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः दृदा मनीषा मनसाभिक्लृप्त„इतिश्रुत्युक्तयोगपरिशुद्धबुद्ध्योपलभ्यमान-मित्यर्थः अनेनैव तत्कारणत्वमप्युपलक्षितम् "कश्चध्येयः कारणं तु ध्येय" इति ध्येयत्वकारणत्वयोरेकनिष्ठत्वश्रवणात् यदि कारणं तर्हि कारणत्वस्य भावावस्थाविशेषवतः प्रागवस्थायोगित्वरूप-त्वाद्देवादिनामरूपाश्रयत्वं स्यात्ततश्च "सत्यं ज्ञानमनन्तं निष्क्रियं निष्कलम्" इत्यादिनिर्विकारित्वश्रवणविरोधस्तत्राह । अनामरूप मिति । न विद्येते स्वमात्रनिष्ठे देवादिनामरूपे यस्य प्रकृतिपुरुषविशि-ष्टस्यैव कारणत्वाद्देवादिनामरूपयोः स्वविशेषणीभूतप्रकृतिपुरुष-गतत्वात्तद्द्वारा सनामरूपत्वेऽपि साक्षादनामरूपमित्यर्थः एवम्भूतं यद्वेदान्तेषु प्रसिद्धं तत्परब्रह्मस्वरूपं नरहरिं पुरुषश्रेष्ठं पुरुषोत्तम-मिति यावत् एवं च "द्वाविमौ पुरुषौ लोके" इत्यारभ्य "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत„इति भगवद्गीतोक्तनित्यमुक्तबद्धनि-विधचेतनव्यावृत्तस्वरूपं विवक्षितं तत्र हि कूटस्थशब्देन मुक्तो नित्यसिद्धश्च चेतन उच्यते उभयोरपि प्राकृतविकाररहित्येनाक्षर-कूटस्थशब्दवाच्यत्वात् यद्यपि प्रशान्तशब्देन मुक्तव्यावृत्तिस्तथापि नित्यसिद्धव्यावृत्तये नृहरिमित्युक्तं निरहमिति पाठे त्वनामरूपत्वे निरहं हेतुः अहमर्थान्निर्गतः अहंशब्देनाहङ्कारः प्रकृतिपरिणा-मविशेषः जीवश्चोच्यते आत्मनोऽप्यहमर्थत्वात्तनश्च निरहं प्रकृतिपुरुष-गतविकारातीतं हि गतस्तस्मादनामरूपमिति योजना बोध्या एवंभूतं प्रपद्ये उपायोपेयभावेनाध्यवस्यामीत्यर्थः ॥ ४ ॥

नन्वस्तु परस्य ब्रह्मणोऽनामरूपत्वं श्रीरामस्य त्वनामरूपत्वमित्य-युक्तं तस्य मनुष्यनामरूपभाक्त्वात्तत्राह । मर्त्येति । विभोः पर-स्यैव ब्रह्मण इह लोके श्रीरामरूपेण मर्त्यावतारः मनुष्यावतारः अवतारो नामाजहत्स्वभावस्यैव रूपान्तरपरिग्रहः एवञ्च परब्रह्म-णाजहत्स्वभावं मनुष्यसजातीयरूपं परिगृहीतमदिति भावः किम-वतारप्रयोजनं तत्राह । मर्त्यशिक्षणं मर्त्यानां संसारदोषज्ञापनेन धर्मसंस्थापनं साधुपरित्राणं प्रयोजनमिति भावः। ननु मर्त्यशिक्षणं नावतारप्रयोजनं किन्तु रावणादिरक्षोवध एवेत्यत्राह। रक्षोवधायैव न केवलमिति । विभोर्मर्त्यावतारो न केवलं रक्षोवधार्थमेवापि तु मर्त्यशिक्षणमेव तस्य प्रधानं प्रयोजनमित्यर्थः तथा चोक्तं भगवता।

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।

धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

इति विनाशाय चेत्यत्र चशब्दोऽन्वाचयपरः शिक्षामष्टगमानर्थंगि यत् दुष्कृतविनाशनमानुषङ्गिकं प्रयोजनमित्यर्थः धर्मो नाम चातुर्वर्ण्यचातुराश्रम्य व्यवस्थयावस्थित ईश्वराराधनरूपयज्ञ-महायज्ञादिः तस्य संस्थापनं संसारदोषज्ञापनेन शिक्षणं दुष्कृत-विनाशनं तु सङ्कल्पमात्रेणाप्युपपद्यते साधूनां शय्यासना-टनभोजनादिषु भगवता सह वर्तमानानां तं विना क्षणमात्रमपि कल्पसहस्रं मन्यमानानां दर्शनस्पर्शनसंभाषणादिभिः परित्राणं सुखीकरणं धर्मसंस्थापनञ्च सङ्कल्पमात्रेणाप्युपपद्यत

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इति भावः यदुक्तं मर्त्यशिक्षणार्थमेवावतार इति तद्रामावतारे निदर्शयति । कुत इत्यादिना । अन्यथावतारस्य मर्त्यशिक्षणार्थत्वाभावं ईश्वरस्य ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।

इत्युक्तसर्वनियन्तुः दारापहर्तृरावणाद्यन्तरात्मतया दारापहरणादिकं कारयितुःस्वे स्वस्मिन्निरतिशयापरिच्छिन्नानन्दस्वरूपे आत्मनि रमतः उक्तविधस्वस्वरूपानुभवेन नित्यसन्तुष्टस्य विषयासक्तिरहितस्य सतिकृतानि सीताविश्लेषादिभिः कृतानि व्यसनानि दुःखानि कुतः कस्माद्धेतोः स्यात् प्रत्येकाभिप्रायं स्यादित्येकवचनं कुतोऽन्यथा स्युः रमत इति पाठस्तु सुगमः सर्वनियन्तुः सर्वान्तरात्मनः स्वानुभवसन्तुष्टस्य श्रीरामस्वरूपेणावस्थितस्य परब्रह्मणःसीताविश्लेषादिकृतव्यसनानुकरणं निरतिशयदुःखावहः संसार इति लोकस्य प्रदर्शयितुमेवान्यथोक्तविधस्य तस्य सीताकृतव्यसनादि न घटन्त इति भावः ॥ ५ ॥

एतदेवोपपादयति । नेति । स श्रीरामरूपेणावस्थितः परमात्मा आत्मवतां प्रशस्तमनसां निर्धूतनिखिलसांसारिकधर्म्माणां सनकादीनामात्मा सुहृत्तमः स्वाश्रितेषु निरतिशयसौहार्दनिष्ठः आश्रितानां निरतिशयप्रीतिविषयश्च भगवान् ज्ञानशक्तिबलैश्वर्यादिषाड्गुण्यपूर्णः वासुदेवः ।

सर्वत्रासौ समस्तश्च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिकीर्तितः ।

इत्युक्तरीत्या सर्वत्रावस्थितोऽपि तद्गतदोषैरसंस्पृष्टः सर्वं स्वधार्यत्वेन स्वशेषत्वेन च परिगृहीतवांश्च त्रिलोक्यां कृत्स्नजगदन्तर्भूते कस्मिंश्चिदपि शब्दादिविषयभूते वस्तुनि न सक्तः वैशब्दोऽवधारणे न सक्त एवेत्यर्थः यतो न सक्तः अत एव स्त्रीकृतं स्त्रीविश्लेषादिकृतं कश्मलं दुःखं नान्वभूत भवतारस्य मर्त्यशिक्षणार्थत्वाभावे स्त्रीकृतं कश्मलमेवम्भूतो न प्राप्नुयादेवान्यथेत्यस्य सर्वत्रानुषङ्गः तथा लक्ष्मणं चशब्दात्सीतां च विहातुं त्यक्तुं नार्हति निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणाद्युपयुक्तशरीरभेदैः शेषत्वं गतस्य भगवतो नित्यानपायिनो न तस्यावतारूपम् ।

भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ।
अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ।
कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ॥
कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ।

इति सर्वावस्थोचिताशेषशेषवृत्तिकरतिकृतनित्यकिङ्करतां प्रार्थयमानं लक्ष्मणम् ।

नित्यैवैषा जगन्माता लक्ष्मीर्नित्यानपायिनी ।
राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि ।
अन्येष्वप्यवतारेषु विष्णोरेषानपायिनी ।

इत्युक्तविधां नित्यानपायिनीं लक्ष्म्यवताररूपां भगवतीं सीतां च मर्त्यशिक्षणमन्तरेण ।

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ।

इति वदन् कथं त्यक्तुमर्हति अतः केवलं मर्त्यशिक्षणार्थं सांसारिकपुरुषचेष्टामनुसृतवानित्यर्थः सीतालक्ष्मणत्यागस्तु श्रीरामायणे उत्तरकाण्डे प्रसिद्धःअत्रात्मवतामात्मेत्यनेन "अमृतस्य तु नाशास्ति न आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" वीतरागोपास्यत्वप्रतिपादकश्रुत्यर्थप्रत्यभिज्ञानात्तस्य सर्वाकालुष्यं सूचितम् अत एव स्त्रीसंयोगवियोगकृतसुखदुःखाभावेदितः भगवानित्यनेन षाड्गुण्यपूर्णत्वोक्त्यावाप्तसमस्तकामत्वलाभात् स्त्रीसङ्गादिनिमित्तसुखानादरश्चोक्तः सुहृत्तम इत्यनेन ।

न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥
कथञ्चिदुपकारेण कृतेनैकेन तुष्यति ।

इत्युक्तरीत्या दोषानवेक्ष्य तारतम्यमनालोच्य उपकाराभावमलब्ध्य स्वाश्रितत्वमात्रेणापरित्यजतो निरतिशयसुहृत्तम मर्त्यशिक्षणमन्तरेण नित्यानपायिनोः सीतालक्ष्मणयोस्त्यागो घटत इत्युक्तं भवति ॥ ६ ॥

तारतम्यमनादृत्य यस्याश्रितत्वमात्रेण निरतिशयप्रीतिविषयत्वरूपं तद्रामावतारे दर्शयति । नेति महतः शरणागतशब्द निहीनजन्मादिविशिष्टं पापीयांसमपि रक्षितुं बद्धदीक्षितस्य श्रीरामेणावस्थितस्य ब्रह्मणः जन्म विप्रादिजन्म न तोषहेतुः तथा सौन्दर्याध्ययनसुबुद्धिजातयो न तोषहेतवः तिर्यक्त्वापि तस्यानुग्रहादिनि भावः तथाहि निरस्तोभावः तैर्यञ्चं तिर्यक्त्वं तेन सृष्टान्वर्त्तवनस्थानस्मान् कपीन् प्रतिलक्ष्मणाग्रजः पूर्वोक्तविधानन्तावतार लक्ष्मणाग्रजो नित्यं तत्सहचरः श्रीरामः सख्यं चकार वने सख्य इति पाठे सख्ये विषये नश्चकारेत्यर्थः तैर्यान्सृष्टान् पाठे यत् यस्मात्तैर्जन्मसौभगादिभिः विसृष्टान्परित्यक्तानपि सख्यं चकार जन्मादिकतारतम्यमनवेक्ष्य संश्रयमात्रेण हीनैः सख्यं कृतवान् यतोऽहोऽस्य सुहृत्तमत्वमेवंविधमिति कुमशक्यमित्यर्थः ॥ ७ ॥

यत एव निरतिशयसुहृत्तमस्ततस्तं मनुजाकृतिं मनुष्य श्रीहरिं सुकृतमुपकाराभिज्ञम्

मय्येव जीर्णतां यातु यत्त्वयोपकृतं कपे ! ।
नरः प्रत्युपकारार्थी विपत्तिमभिकाङ्क्षति ।

इति मां प्रत्युक्तविधोपकाराभिज्ञं पुरुषोत्तमं श्रीरामं सुरासुरमध्ये यः कश्चित्सर्वात्मना सर्वप्रकारेण केनापि नदीयनासम्प्रकारेणेति यावत् भजेत सेवेत कथं तन्मात्रेणैव तमनुगृह्णात्यत्राह । यः श्रीरामः उत्तरकोसलानुत्तरकोसलस्थान् तरुगुल्मलतादींश्च स्वदेशवासित्वमात्रमवलम्ब्य दिवं स्वर्ग प्रापितवान् न केवलं ज्ञानक्रियाभक्तियोगानेवापेक्ष्यानुगृह्णाति यत्किञ्चिद्व्याजमात्रमवलम्ब्यानुगृह्णात्ययं श्रीराम इति तथा चोक्तम् श्रीवत्साङ्कमिश्रैः ।

त्वामामनन्ति कवयः करुणामृताब्धे !
ज्ञानक्रियाभजनलभ्यमलभ्यमन्यैः ॥
एतेषु केन वरदोत्तरकोसलस्थाः पूर्वम्
सद्दूर्वमभजन्त हि जन्तवस्त्वाम् ॥

इति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सीतामभिरामयतीति सीताभिरामस्तम् ॥ १ ॥ भगवत्कथाभिर्युक्तैः कस्यचित्पूज्यस्य कथाभिति तद्व

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ति "सतां सन् बिभ्राणो बिभर्ति" इति श्रुतेरपि सङ्गृहीतानन्ते-
नान्वयम् ॥ २ ॥

मायस्य हरेर्लक्षणं शीलं नित्यनिर्दोषत्वं सत्यजगत्स्रष्टृ-
त्वं व्रतं च यस्य स तथा तस्मै "विश्वं सत्यं मघवानायुवोरि-
दापश्चन प्रमिनन्ति व्रतं वाम्" इति श्रुतिः उपासिना आत्मानो
यस्य स तथा तस्मै लोकानुग्रहायाङ्गीकृतविग्रहायेति वा
उपासना युक्तो लोको यमुद्दिश्य स तथा तस्मै साधुरय-
वादस्य वचनस्य निकर्षणाय सम्यग्विचारकाय । यद्वा ।
साधूनां वादस्य विवादस्य विरोधस्य निकर्षणाय परि-
हारकाय ॥ ३ ॥

अहं तं त्वां शरणं प्रपद्य इत्यन्वयः यत्तत्त्व स्वरूपं विशुद्धा-
नुभवमात्रं प्रकृतिप्राकृतवैकृतसम्बन्धरहितज्ञानात्मकेन्द्रियादि-
स्वतेजसा स्वरूपसामर्थ्येन ध्वस्ता निरस्ता गुणाः सत्त्वादयश्च
जाग्रदाद्यवस्थाश्च येन स तथा तं ध्वस्ता गुणनिमित्ताः
अवस्था येन स तथा तं वा प्रत्यग् जीवाभिमुखावस्थितं
प्रकृष्टसुखपूर्णं प्रसन्नाकारं वा सुधिया शोभनबुद्ध्या-
लभ्यत इति सुधियोपलम्भनं प्रत्यक्षपदार्थवत् प्रत्यक्षप्रमाणेन
लभ्यते प्राकृतनामरूपरहितत्वादित्याह । अनामरूपमिति । अत
एव निरहमहङ्कारशून्यम् ॥ ४ ॥

ननु श्रीरामस्य विशुद्धानुभवादिविशेषणानि कथं सङ्गच्छन्ते
सीतावियोगादिना दुःखाज्ञानादिप्रदर्शनादिति तत्राह । मर्त्येति ।
स्य हरेर्मर्त्यावतारः मर्त्याकाररूपग्रहणं रक्षोवधायैव
न केवलं तावन्मात्रं न भवति किन्तु मर्त्यशिक्षणं यमुद्दिश्य
गुरोराज्ञाकरणं शरणागतपालनमभीष्टदानमित्यादिमर्त्यैः कर्त-
व्यमिति एतत्कुतोऽनेन कृतमिति ज्ञायते इत्याशङ्क्य दशरथाज्ञा-
करणवनाभियानसीतान्वेषणादिप्राप्तव्यसनशरणागतसुग्रीवाभी-
रणविभीषणराज्यदानादिभ्योऽवगम्यत इत्याह । कुत इति ।
आत्मनि स्वस्वरूपे रमतो रममाणस्य भगवतः "कस्मिन्प्रति-
ष्ठित इति स्वे महिम्नि" इति श्रुतेः ॥ ५ ॥

ईश्वरश्चेत् दुःखानुभवी तदनुभवी चेदीश्वर इति तत्राह । नवा
इति । स आत्मा इति पदद्वयेन । "आत्मा वा इदमेकएवाग्र आसीत्"
इति श्रुतिं परामृशति वा इत्यनेन "निरञ्जनो निरवद्य" इति
श्रुतिं प्रमाणयति हिशब्दो हेत्वर्थः कश्मलं सुरतलक्षणमपि
(१) सीतामपीत्याह । अतो भक्तानुकम्पया कृतावतारस्य श्रीरा-
मस्य दुःखभोगाभावेनेश्वरत्वाविरोधात् भक्तिज्ञाने एव तत्प्रा-
जनके न जन्मादिकं वानरासुरादिपापयोनिजातस्यापि भक्ति-
ज्ञानसद्भावे मोक्षस्य सुनियतत्वात्तदुक्तम्

यस्य सम्यग् भगवति ज्ञानं भक्तिस्तथैव च ।
निश्चितस्तस्य मोक्षः स्यात्सर्वपापकृतोऽपि तु ।
यो ममत्वादिना दोषस्सत्वन्यविषयः स्मृतः

अभिप्रेत्याह । न जन्मेति । अन्यविषयस्तदाश्रितदुष्टजीवविषय इत्यर्थः
तो महात्मनो मुक्तियोग्यस्य अङ्ग आर्ष्टिषेण ! कस्माज्जन्मादि-
हेतुर्न भवतीति तत्राह । तैर्यग्विसृष्टानिति । तिर्यक्सम्बन्धि-
योनौ विसृष्टान् जातान् वराहादियोनेर्वानरयोनेर्निकृष्टत्वद्यो-
तनाय वनौकस इति एतदेवाहापि पदेन गर्हितत्ववाचिना
शब्देन कृपाशीलत्वमेव प्रयोजनमित्याह ॥ ६—७ ॥

(१) नं जहातीत्यन्वयः ।

अतः पुरुषार्थी भक्तिज्ञानाभ्यां श्रीराममेव भजेतेत्याह । सुरो-
ऽसुरो वेति । यो मुमुक्षुः स पुरुषः श्रीराममेव भजेतेत्यन्वयः
असुरादिजातेर्ममत्वादिदोषसम्भवेन रामभजनं कथं सम्भाव्यत
इति चेन्न तस्य मुक्त्ययोग्यासुरजातिविषयत्वाद्योग्यस्य तज्ज-
त्वेऽपि तदभावात् "यो ममत्वादिना दोषः सत्वन्यविषयः स्मृत"
इति स्मृतेश्च "महद्देवानामसुरत्वमेकम्" इति श्रुतेः मुक्तियो-
ग्यानामसुरजातित्वमस्तीति ज्ञायते इत्यभिप्रायेणासुर इति । न तु
तमोयोग्यजात्यभिप्रायेणेति न केवलं मूलरूपस्यैव मोक्षदातृत्व-
शक्तिरपि त्ववतारूपस्याप्यस्तीति आशयेनाह । य इति । उत्तरान्
कोसलानयोध्यावासिनो दिवं वैकुण्ठम् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भर्तृभगवत्कथामिति । भर्तृत्वादिमननविशेषेण सुखवै-
शिष्ट्यं दर्शितम् ॥ १ ॥ २ ॥

नमो भगवते इति । अत्र भगवत इत्यैश्वर्यमुत्तमः श्लोकायेति
माधुर्यञ्च दर्शितम् । आर्यत्वं पूज्यत्वम् ॥ ३ ॥

स्वरूपज्ञानमाह । यत्तदिति । यत्तत् प्रसिद्धं श्रीरामचन्द्रस्य
दूर्वादलश्यामलं रूपम् । अत्र प्रकाशैकलक्षणवस्तुनः सूर्यादि-
ज्योतिषः प्रकाशकत्वं शौक्ल्यादिमत्त्वमित्यादि धर्मवत् गुणरूपादि-
लक्षणतत्स्वरूपधर्मस्यापि तदात्मकत्वदृष्ट्या तन्मात्रत्वमुक्तं य
एव धर्मस्वरूपशक्तिरिति भगवत्सन्दर्भादौ स्थापितम् अत एवैक-
मपि तस्याश्च शक्तेर्मायातिरिक्तत्वमाह । स्वतेजसा ध्वस्तगुण-
व्यवस्थमिति । स्वरूपशक्त्या दूरीभूता त्रैगुण्यात्मिका माया-
शक्तिर्यस्मादतः प्रशान्तं सर्वोपद्रवरहितम् । अनुभवमात्रत्वे
हेतुः । प्रत्यक् दृश्यादन्यत् "न चक्षुषा पश्यति रूपमस्य यमेवैष
वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इति श्रुतेः ।
तत् कुतः अनामरूपम् "एतास्तिस्रो देवता अनेन जीवेनात्मनानु-
प्रविश्य नामरूपे व्याकरवाणि" इति प्रसिद्धप्राकृतनामरूपरहितं
तत्र हेतुर्निरहमिति । आत्मशब्देन हि श्रुतावस्यां परमात्मनो
जीवाख्यशक्तिरूपोंऽश उच्यते । अनेनेति । पृथक् निर्देशात्
तद्रूपेण च प्रवेशो नाम देवताशब्दवाच्यतेजोवारिस्थूल-
क्षणोपाध्यभिनिवेशः । स च तस्य जीवस्य तस्य तत्राहन्ताध्या-
सादेव भवति । ततोऽन्तर्यामिरूपेण स्वयं तत्र स्थितस्यापि तदध्यासा-
भावादुपाधिकृतनामरूपराहित्यं युक्तमेवेत्यर्थः । सर्वथाहङ्कार-
राहित्ये सति व्याकरवाणीति प्रयोगस्यानर्हत्वादिति भावः । ननु
श्रीरामरूपं न सर्वैरेवं प्रतीयते तत्राह । सुधियोपलम्भनं शुद्ध-
चित्तेन स्वरूपतयैवोपलभ्यत इत्यर्थः । नातः परम्परम ! यद्भवतः
स्वरूपमित्यादि श्रीब्रह्मवाक्यात् ॥ ४ ॥

नन्वेवं भूतस्य मर्त्येषु प्राकट्ये किं प्रयोजनम् उच्यते गौणा-
न्यपि प्रयोजनान्तरे मुख्यं तु भक्तेषु लीला माधुर्याभिव्यञ्-
जनमेवेत्याह । मर्त्येति । तु शब्द आशङ्कानिवृत्त्यर्थः । मर्त्यलोके
योऽवतार आविर्भावः स तु साधुजनोद्वेजकरक्षोवधायैव केवलं
न भवति किन्तु मर्त्यशिक्षणमपि मर्त्येषु शिक्षणं तत्तदर्थ-
प्रकाशनं यत्तन्मयमपि तत्र बहिर्मुखेषु विषयासक्तदुर्वारता-
प्रकाशनमानुषङ्गिकमुद्दिश्यन्तु स्वभक्तिवासनेषु चित्तार्द्रताकर-
विरहसंयोगमयनिजलीलाविशेषमाधुर्यप्रकाशनम् । ततस्तदर्थ-
मेवेत्यर्थः । अन्यथा यदि केवलं तद्वधायैव स्यात्तदा आत्मनः

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परमात्मत्वेन परिपूर्णस्य ईश्वरस्य सर्वान्तर्यामिणः स्वे स्व-स्वरूपे तदेकरूपे वैकुण्ठे च रममाणस्य सीताकृतव्यसनानीति कुतः स्यात् मनसैव तद्वधे सक्तत्वात्तद्व्यसनासम्भवाच्च । निज-माधुर्यप्रकाशनपक्षे तु तत्तत् सम्भवत्येवेति भावः । अत्र कृपा-रूपं तादृशलीलारूपञ्च माधुर्यमधिकं श्लाघितम् । तत्र श्रीसीता-वियोगदुःखञ्च लीलामाधुर्यान्तर्गतमेवेति न दोष इत्यपि दर्शितम् ॥ ५ ॥

तादृशलीला च न प्राकृतवत् कामादिसक्ततया किन्तु स्वजनविशेषविषयककृपाविशेषेणैवेत्याह । न वै इति । स वै खलु त्रिलोक्यां न सक्तः तत्र हेतुः आत्मा परमात्मा भग-वान् परिपूर्णैश्वर्यादिः वासुदेवः सर्वाश्रयश्चेति । किन्तु आत्म-वतामात्मा स्वयमेव नाथत्वेन विद्यते येषां तेषां स्वविषयक-ममताधारिणां भक्तविशेषाणामित्यर्थः । तेषामेव सुहृत्तमः । तस्माद्यथाऽन्ये स्त्रीकृतं स्त्रीहेतुकं कश्मलमश्नुवते तथा नासावश्नुवीत । अतस्तस्या आत्मवत्त्वेनैव तादृशकश्मलहेतु-तत्प्रीतिविषयतापीति भावः । तथा देवदूतसमयातिक्रमेण आत्मवतोऽपि लक्ष्मणस्य परित्यागो यः स खलु नात्यन्तिक इत्याह । न लक्ष्मणमिति । विहातुमपि नार्हति न शक्नोति अनन्तरं झटित्येव स्वर्गस्थतया स्वागमनं प्रतीक्षमाणैस्तदादिभिः सह स्वधिष्ण्य-मारोहात् अधुनापि तेन सीतादिभिश्च सहैवास्मिन् किंपुरुष-वर्षेऽप्यस्माभिर्दृश्यमानत्वात् । ततो मर्यादारक्षार्थमेव किञ्चित्तद-नुकरणमिति भावः ॥ ६ ॥

पूर्वार्थमेव स्थापयितुं भक्त्येककारणकारुण्यप्रमुखपरम-माधुर्यं सर्वोर्ध्वमाह । द्वाभ्याम् । महतः पुरुषाज्जन्म सौभगं सौन्दर्यं आकृतिर्जातिः यद्यस्मात् तैः जन्मादिभिर्विसृष्टान् त्यक्तान् नोऽस्मान् तदीयपरमभक्तश्रीसीतान्वेषणादिभक्तितुष्टत्वेन अहो बत लक्ष्मणस्य सर्वसद्गुणलक्षितस्य श्रीसुमित्रानन्दनस्या-ग्रजोऽपि सख्यं कृतवान् दास्ययोग्यानपि सह विहारादिना सखी-निव स्वीकृतवानित्यर्थः सुग्रीवमुपलक्ष्य वा तथोक्तम् । तस्मात् सुर इति । पूर्वं स्वरूपज्ञानमयभक्त्या मनुजाकृतावेव परमस्वरूपं दर्शितवान् । सम्प्रति माधुर्यज्ञानमयभक्त्यापि विशिष्य तामेवा-वधारयति । मनुजाकृतिं हरिमिति । तत्रापि श्रीकपिलादिकं व्याव-र्तयति । राममिति । उत्तमसमोर्ध्वगुणं सुकृतज्ञं स्वल्पयापि भक्त्या सन्तुष्यन्तम् ॥ ७ ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

रामः किंपुरुषे नारायणः सेव्यश्च भारते ।
सर्वतो भारतश्रैष्ठ्यमूनविंशे निरूप्यते ॥ ० ॥

भर्त्तुरेव भगवतः कथामित्यनेन नारदादिरिव नावतारान्तर-कथायामनुरज्यतीति द्योतितम् ॥ १ ॥ २ ॥

आर्याणि सर्वैः शिरोधार्याणि वचनानि चरणतलगतध्वज-वज्रादीनि आजानुबाहुत्वादीनि च शीलानि धीरोदात्तादीनि व्रतानि धर्मनिष्ठत्वादीनि यस्य तस्मै उपशिक्षितात्मने गुरुब्राह्म-णादिशिक्षाग्राहिणे उपासितलोकायेति स्वस्य ब्रह्मादुपास्य-त्वेऽपि मर्यादाचरणेन रजकपर्यन्ता अपि लोकाः प्रमाण[illegible] इति विचारवत्त्वाल्लोकानां तदुपासितत्वं साधुवादानां [illegible] त्यसत्यसन्धत्वकृपालुत्वादीनां निरूपणाय परमोत्कर्ष[illegible] काय लोका हि साधुवादैरुत्कृष्यन्ते । रामं प्राप्य साधु[illegible] अप्युत्कृष्टा भवन्तीत्यर्थः । यथा परमोत्कृष्टस्यापि कनकस्य [illegible] प्राप्तस्यैवोत्कर्षो लोके प्रमाणीभवति तद्वदित्यर्थः ॥ ३ ॥

ननु शङ्खचक्रादिमत्त्वगरुडवाहनत्वाद्यैश्वर्यानाविष्क[illegible] वतारस्यास्य ब्रह्मत्वे केचित् संशेरते तत्र ये संशेरते ते सं[illegible] नाम अहन्तु साक्षादिमं परब्रह्मरूपमेवानुभवामीत्याह । यदि[illegible] विशुद्धो मायासम्बन्धशून्यो योऽनुभवस्तन्मात्रमेकं केवलं [illegible] देवेमं प्रपद्ये । ननु शुद्धजीवोऽप्येवं भवति तत्राह । स्वतेजसा स्व[illegible] शक्त्या दूरीभूता गुणव्यवस्थानरूपा माया शक्तिर्यस्मात्तत् [illegible] एव प्रत्यक् दृश्यादन्यत् "न चक्षुषा पश्यति रूपमस्य य[illegible] वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इति श्रुतेः । [illegible] प्रशान्तं सर्वोपद्रवरहितम् । ननु श्रीरामस्य रूपं नैव प्रतीयते तत्रा[illegible] सुधियैव पुंसा उपलभ्यत इत्युपलम्भनं यतो नामरूपम् "एतानि[illegible] स्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" [illegible] प्रसिद्धप्राकृतनामरूपरहितम् । श्रुतौ निरुक्त इति तेजोवारि[illegible] निर्गिन्नयेनाहं प्रपद्ये । यद्वा । अहङ्काररहितं यथा स्यात्[illegible] तत्प्रपत्तिरपि कृपया तेनैव कारितेति युद्धेत्यर्थः ॥ ४ ॥

ननु तर्हि प्रपञ्चलोके कथमेवं प्रकटीभवतीति तत्राह । मर्त्या-वतारः मर्त्याकारस्य प्रपञ्चलोके प्राकट्यं न केवलं रक्षसो रा-वणस्यैव वधाय किन्तु मर्त्यशिक्षणं मर्त्यशिक्षणार्थोऽपि इत्यर्थः । मर्त्या द्विविधाः धर्मवन्तो भक्तिमन्तश्च तेभ्यः क्रमेण स्वस्य धार्मि-कत्वप्रेमवश्यत्वयोः प्रदर्शनया धर्मशिक्षणार्थं प्रेमशिक्षणार्थं इ-त्यर्थः । अन्यथा स्वे स्वरूप एव रममाणस्य परमात्मनः सीताविर[illegible] कृतानि व्यसनानि दुःखानि कुतः स्यात् स्युः किन्तु साध्वी स्वभा[illegible] धार्मिकैः सर्वथैव नोपेक्षितव्या तदर्थं प्राप्तानि दुःखान्य[illegible] सह तैरेवेति शिक्षणार्थं स्वस्मिन्न सन्त्यपि दुःखानि दर्शितानि [illegible] प्रथमे पक्षे द्वितीये तु सीताविरहकृतानि विषादादीनि कुतो दुःखा[illegible] किन्तु प्रेम्णः स्थायिभावस्य विप्रलम्भनरसास्वादनत्वे[illegible] तानि दुःखत्वेन भासमानानि परमसुखान्येव नतु दुःखानीत्यर्थः । [illegible] आत्मारामत्वदुःखित्वयोर्युगपदेकत्र विरोधात् न च सीता[illegible] रममाणस्य कुत आत्मारामत्वमिति वाच्यं सीतायाः स्वरूपशक्ति-त्वेनात्मभूतत्वात् । ननु सीतायाः स्वरूपभूतत्वे कथं तद्विर[illegible] सम्भवेत् उच्यते एकमेव परमतत्त्वं चिच्छक्तिवृत्तिभेदेन मा[illegible] सारेण प्रेमाख्येनानादित एव द्विधा विभक्तं तिष्ठति ह्लादपर्यवसा[illegible] मयं केवलं ह्लादमयं च प्रथमं परमेश्वराख्यं द्वितीयं भक्ताख्यं [illegible] पुनश्च तेनैव प्रेम्णा स्वस्य चतसृभिर्वृत्तिभिर्द्वितीयं तत्त्वं चतुर्धा [illegible] विभक्तं दाससखिपित्रादिप्रेयस्याख्यं प्रथमस्य तदेव तत्त्वस्य [illegible] दास्यादिभावमाश्रितत्वं व्यवस्थापितं प्राकृतेष्वपि जीवेषु दा[illegible] त्कृगैतादृशभक्तिसाधनवत्सु भक्तिपरिपाके स्वयमाविर्भूय दर्श-[illegible] तुष्कमावेश्य तेऽपि दासादित्वेन यथाकालं प्राप्य चतुर्ष्वेव [illegible] समनुगम्यते पुनरपि तेनैव प्रेम्णा स्थायिभावतां प्राप्तेन स्वभक्त[illegible] वाभिर्माविताभिर्विभावादिभिः स्वरसरूपीकृत्य तदेव तत्त्वयुग[illegible] स्वस्य विषयाश्रयीभावमावितं कृत्वा स्वाधीनीकृत्य योनिर्व[illegible] गाभ्यां सुखदुःखायितं स्वमाधुर्यमसाधारणमपारमास्वाद[illegible]

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

...स्यानन्दचमत्कार एव तद्विदां निष्पाद्यते अतद्विदां तु केषा-ञ्चित् रामकृष्णादीनामप्येतावद्दुःखमनिर्वाच्यमिति केषांचिज्जीव-प्रतारणायै मनुकृतमित्येवं व्यामोह एव ॥ ५ ॥

तस्य प्रेमवश्यत्वसत्यघनत्वब्रह्मण्यत्वादिभिरप्राकृतैर्गुणैरेव तदुपपद्यते नान्यथेत्याह। नेति। स वै खलु त्रिलोक्यां न सक्तः यत आत्मा परमात्मा तदपि आत्मवतामात्मा सेव्यत्वेन वर्त्तते येषां तेषां दासादीनां सुहृत्तमः यतो भगवान् पूर्णषडैश्वर्यः अतः ...स्यानङ्गीकारे प्राकृतानामिव स्त्रीकृतं कश्मलं मोहं नाऽन्वीत न प्राप्नुयात् तथैव सत्यघनत्वब्रह्मण्यत्वाद्यनङ्गीकारे लक्ष्मणमपि त्यक्तुं नार्हेत्। तथाहि देवदूतेन श्रीरामं मन्त्रयता विज्ञापितम्। ...गतस्त्वया वध्य इति तदैव द्वारि स्थित लक्ष्मणं दुर्वाससं विज्ञापयितुं प्रविष्टं हन्तुमुद्यतो वशिष्ठवाक्यात्तत्याजेति तस्मादे-...दया लीलया प्रेमाणं धर्मं च शिक्षयामासेति युक्तमुक्तं मर्त्य-शिक्षणमिति ॥ ६ ॥

तत्सर्वगुणाकरस्य तस्य कृपया निरुपाधिं विशिष्याह। ...जन्मेति। महतो वंशाज्जन्म महतः श्रीरामस्येति वा। तैः सज्जन्मा-...लक्षणस्य सर्वसल्लक्षणपरिपूर्णस्य सुमित्रासूनोरग्रजो-...त्वेन तमपि दास्ये विदधानोऽस्मान् सर्वसल्लक्षणरहितान-...सख्ये चकारेति सुग्रीवमुखलक्ष्योक्तिः ॥ ७ ॥

तस्माद्भजनीयेषु सर्वेष्ववतारेषु मध्ये राम एव कृपासिन्धुर-तिशयेन भजनीयो यद्भजने सर्व एवाविशेषेणाधिकारीत्याह। सुर इति। यः कोऽपि सर्वात्मना सर्वप्रकारेण उत्तरान् कोसलान् अयो-ध्यावासिनः सशरीरानेव दिवं वैकुण्ठम् ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एकोनविंशे किंपुरुषे भारते च सेव्यसेवकभावः भारतश्रेष्ठ्यं च वर्ण्यते। किंपुरुषवर्षे इति ॥ १ ॥

आर्ष्टिषेणो गन्धर्वमुख्यस्तेन राजर्षिरप्यार्ष्टिषेणस्तस्यां दिशि महाभारते प्रसिद्धस्तेन सह वा भर्ता चासौ भगवांश्च तत्क-थाम् ॥ २ ॥

आर्याणि उत्तमानि लक्षणानि शीलं व्रतञ्च यस्मिन् तस्मै ...शिक्षितानां सदनुशिष्टानामात्मोपास्यस्तस्मै उपासितः धर्म-...चार्यमनुसृतो लोको येन तस्मै साधुवादस्य साधुत्वप्रसिद्धे-...कषणाय परीक्षास्थानाय धर्मधुरन्धरशिरोभूषणायेत्यर्थः ॥ ३ ॥

उक्तगुणगणनिधिं वेदान्तैकवेद्यं श्रीरामाख्यं ब्रह्मैव मुमुक्षुध्येय-मित्याह। यदिति। यदेकं निःसमानातिशयं वस्तु तत्प्रपद्ये कीदृशं ...शुद्धानां ध्यातॄणामनुभवो ययोस्ते मात्रे नामरूपे यस्य तत् ...प्राकृतनामरूपमित्यर्थः स्वतेजसा ध्वस्ता हेयाः गुणाः रागादयः ...विधा अवस्था च यस्मात्तत् प्रत्यग् जीवः शान्तः यस्मात् स्मर-...णात् सुधिया उपलभ्यते इत्युपलम्भनम्। अनामरूपं प्राकृत-नामरूपशून्यम् अहमेवंभूतोऽस्मीत्यभिमानशून्यम् ॥ ४ ॥

एवंभूतस्य मर्त्येषु अवतारस्तु रक्षोवधाय न केवलं मर्त्यशि-क्षार्थमपि तु मर्त्यचेष्टानुकरणेन मर्त्यैरेवं यथाशक्ति गुर्वाज्ञानुपालन-...परस्त्रीपरिहारधार्मिकाधार्मिकजनानुग्रहादिकं कर्तव्यमिति शिक्षा-र्थमित्यर्थः अन्यथा मर्त्यानुकरणं विना आत्मनः सर्वात्मनः स्वे स्वात्मारामस्य निजानन्दे रमतः सीताविरहकृतानि व्यसनानि कुतः स्युः ॥ ५ ॥

एतदेवोपपादयति। नेति। त्रिलोक्यामनित्यविभूतौ न सक्तः यतो वासुदेवो भगवान् अत एव स्त्रीकृतं सूर्पणखाकृतं कश्मलं सीताविरहादिरूपं नाऽन्वीत लक्ष्मणं विहातुं च नार्हति एवं हि श्रीरामायणे कथा एकदायोध्यायां यथासुखं वर्त्तमानं श्रीराम-मेकान्ते समन्त्रयता देवदूतेन विज्ञापितमत्रागतस्त्वया वध्य इति तदैव द्वारि स्थितं लक्ष्मणं दुर्वाससमागतं विज्ञापयितुं प्रविष्टं दृष्ट्वा सत्यप्रतिज्ञः प्राणादपि प्रियतरं भ्रातरं हन्तुमुद्यतस्तदा बन्धुपरि-त्यागोऽपि वध एवेति लक्ष्मणं त्यक्त्वा सत्यप्रतिज्ञ एवेति नाभिप्रुवा-क्यात्तत्याज तदुभयं नरचेष्टानुकरणमन्तरेण न युज्यतेत्यर्थः ॥ ६ ॥

सौभगं सौन्दर्यम् आकृतिर्जातिः तैर्जन्मादिभिर्विमृशं-स्त्यक्तान् ॥ ७ ॥

अतः सुरादिः यः कश्चित्सुधन्यो वा राममेव भजेदित्यन्वयः उत्तरान् कोसलान् अयोध्यावासिनः ॥ ८ ॥

---

### भाषाटीका

श्रीशुकदेवजी बोले किंपुरुष वर्षमें आदि पुरुष भगवान् लक्ष्मणजी के बडे भ्राता सीताजी के रमाने वाले श्रीराम-चन्द्रजी को उनके चरणारविन्द के समीप में निरत परम भाग-वत श्रीहनुमान्जी किंपुरुषों के साथ में निर्विघ्न भक्ति से उपा सना करते हैं ॥ १ ॥

गन्धर्वों की गाई अपने पति श्रीरामजी की कथा को आर्ष्टिषेण के साथ सुनते हैं आप स्वयं इस स्तुति का गान करते हैं ॥ २ ॥

भगवान् उत्तमश्लोक श्रेष्ठों के लक्षणो से शील आचारों से युक्त अपने मन को वश करने वाले उत्तम लोकों के अनुसरण करने वाले सत्पुरुषों के वाद के परमसीमा ब्रह्मण्य-देव महापुरुष महाराज श्रीरामजी के अर्थ नमस्कार है ॥ ३ ॥

जो वह विशुद्ध अनुभव स्वरूप तत्व है अपने तेज से गुणों की नाना अवस्थों का नाश करने वाला है साक्षी स्वरूप शान्त स्वरूप शुद्ध बुद्धि से प्राप्त होने योग्य प्राकृत नाम रूप अहङ्काररहित सो आप हैं तिनके मै शरणागत हूं ॥ ४ ॥

आपका जो मनुष्य अवतार है सो केवल राक्षसों के वध के ही लिये नहीं है किन्तु मनुष्यों के शिक्षाके के अर्थ है ऐसा न होता तो स्वयं आत्मस्वरूप में रमने वाले ईश्वर को सीताजी के वियोग के दुःख क्यों दीखते ॥ ५ ॥

मनुष्य लीला न होती तो आत्मज्ञानियों के भी आत्मा अति सुहृत् वे भगवान् वासुदेव तीनों लोकों में कहीं आसक्त होने वाले नहीं हैं तो सीताजी के वियोग के दुःख को न प्राप्त होते लक्ष्मणजी को भी नहीं छोडने को योग्य हैं ॥ ६ ॥

श्रीरामचन्द्रजी महापुरुष के सन्तोष का हेतु एक प्रेम छोडकर न उत्तम जन्म है न सुन्दरता है न वचन की मधुरता है न उत्तम जन्म है न उत्तम बुद्धि है न उत्तम जाति है क्योंकि

भारतेऽपि वर्षे भगवान्नरनारायणाख्य आकल्पान्तमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलम्भनमनुग्रहायात्मवतामनुकम्पया तपोऽव्यक्तगतिश्चरति ॥ ९ ॥

तं भगवान्नारदो वर्णाश्रमवतीभिर्भारतीभिः प्रजाभिर्भगवत्प्रोक्ताभ्यां साङ्ख्ययोगाभ्यां भगवदनुभावोपवर्णनं सावर्णेरुपदेक्ष्यमाणः परमभक्तिभावेनोपसरति इदं चाभिगृणाति ॥ १० ॥

ओंनमो भगवते उपशमशीलायोपरतानात्म्याय नमोऽकिञ्चनवित्ताय ऋषिऋषभाय नरनारायणाय परमहंसपरमगुरव आत्मारामाधिपतये नमो नम इति ॥ ११ ॥

गायति चेदम् ॥ कर्तास्य सर्गादिषु यो न बध्यते न हन्यते देहगतोऽपि दैहिकैः ।
द्रष्टुर्न दृग् यस्य गुणैर्विदूष्यते तस्मै नमोऽसक्तविविक्तसाक्षिणे ॥ १२ ॥
इदं हि योगेश्वर ! योगनैपुणं हिरण्यगर्भो भगवान् जगाद यत् ।
यदन्तकाले त्वयि निर्गुणे मनो भक्त्या दधीतोज्झितदुष्कलेवरः ॥ १३ ॥
यथैहिकामुष्मिककामलम्पटः सुतेषु दारेषु धनेषु चिन्तयन् ॥
शङ्केत विद्वान् कुकलेवरात्ययाद्यस्तस्य यत्नः श्रम एव केवलम् ॥ १४ ॥
तन्नः प्रभो ! त्वं कुकलेवरार्पितां त्वन्माययाहंममतामधोक्षज ! ।
भिन्द्याम येनाशु वयं सुदुर्भिदां विधेहि योगं त्वयि नः स्वभावमिति ॥ १५ ॥

भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवो मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूट ऋषभः कूटकः कोल्लकः सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलो वेङ्कटो महेन्द्रो वारिधारो विन्ध्यः शुक्तिमानृक्षगिरिः पारियात्रो द्रोणश्चित्रकूटो गोवर्द्धनो रैवतकः ककुभो नीलो गोकामुख इन्द्रकीलः कामगिरिरिति चान्ये च शतसहस्रशः शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च सन्त्यसङ्ख्याताः ॥ १६ ॥

---

भाषाटीका ।

श्रीलक्ष्मणाग्रजने तो इन सब गुणों से हीन वानरों को सखा बनाया है ॥ ७ ॥

इस हेतु से देवता हो अथवा मनुष्य हो अथवा दूसरी योनि का हो जो जीव अतिकृतज्ञ मनुष्यरूपी सब कोसलवासी जीवों को वैकुण्ठ को लेगये हैं तिन श्रीरामजी को अवश्य भजै ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपचितैर्धर्मादिभिरात्मोपलभ्यते येन तत्तपश्चरति तत्रोपशम इन्द्रियाणां संयमः उपरमो निरहङ्कारता आत्मवतामनुग्रहाय न स्वार्थमीश्वरत्वात् ॥ ९ ॥

भगवदनुभाव उपवर्ण्यते येन पञ्चरात्रेण तत्सावर्णेर्मनोः उपसरति सेवते ॥ १० ॥

उपरतानात्म्याय निरहङ्काराय ॥ ११ ॥

असक्तश्चासौ विविक्तश्च साक्षी च तस्मै नमः असक्तत्वं दर्शयति । अस्य विश्वस्य सर्गादिषु कर्तापि यो न बध्यतेऽहंकर्तेति न मन्यते । विविक्तत्वमाह । देहगतोऽपि दैहिकैः क्षुत्पिपासादिभिर्यो न हन्यते नाभिभूयते साक्षित्वमाह । द्रष्टुरपि सतो दृष्टिर्गुणैर्दृश्यैर्न विदूष्यते न विक्रियते ॥ १२ ॥

योगकौशलं निरूपयन् योगं प्रार्थयते । इदमिति द्वि॰। हे योगेश्वर ! हिरण्यगर्भो यद्योगनैपुणं जगाद इदमेव तत् किम् जन्मप्रभृति भक्त्यान्तकाले पुमांस्त्वयि मनो धारयेदिति यत् कथंभूतः सन् उज्झितं दुष्कलेवरं तदभिमानो येन ॥ १३ ॥

अन्यथा तस्य शास्त्राभ्यासादिश्रमो व्यर्थ इत्याह यथैहिकामुष्मिककामेषु लम्पटो मूर्खः सुतादिषु यांगच्छेमं चिन्तयन् कुत्सितस्य कलेवरस्यात्ययान्मृत्योः शङ्कते तथा विद्वानपि सन् शङ्केत तस्य यत्नः शास्त्रश्रवणादिः श्रम एव ॥ १४ ॥

यस्माद्विदुषोऽपीयमेव दशा तत्तस्मात्त्वं प्रभो! अधोक्षज! स्वांके नो योगं विधेहि । कीदृशम् । त्वयि स्वभावं सहजत्वाननाशः येन योगेन वयं त्वन्मायया नः कुकलेवरेऽर्पितामहंममतां भिन्द्याम त्यजेम । सुदुर्भिदामुपायान्तरैः सर्वथा त्यक्तुमशक्याम् ॥ १५ ॥

इलावृतवदस्मिन्नपि वर्षे सरितः शैलाश्च सन्ति नितम्बप्रभवाः तटेभ्यः सम्भूताः ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ भारते वर्षे उपास्यं भगवद्रूपम् उपासकं जप्यमानं मन्त्रं स्तोत्रं चाह। भारतेऽपीति भारतेऽपि वर्षे भगवान्नारायणाख्यो बदरिकाश्रमे। आकल्पान्तं कल्पपर्यन्तमव्यक्तगतिरेतदर्थमेवं लोकानीतैरविज्ञातचेष्टस्तपश्चरति कथंभूतम् उपचिताः प्रवृद्धा धर्मादयो येन तदुपचितधर्मज्ञानवैराग्यैश्वर्ययोगो। परमात्मोपलम्भनमात्मा उपलभ्यते साक्षात्क्रियते येन तदात्मोपलम्भनं ततः कर्मधारयः। अत्र धर्मः कर्मयोगः ज्ञानमात्मयाथात्म्यज्ञानयोगः वैराग्यं मनोनिग्रहः ऐश्वर्यमणिमादीनि योगः प्राणजयः उपरमो बाह्येन्द्रियजयः किमर्थमेवमनीश्वरवत्तपश्चरतीत्यत्राह। आत्मवतामनुग्रहायात्मवतोऽनुग्रहीतुं मुमुक्षव एवंविधं तपः कुर्युरित्येवं शिक्षयाताननुग्रहीतुमिति यावत् आत्मवत्स्वनुग्रहे तस्य कृपैव कारणमित्याशयेनाह। अनुकम्पयेति। ॥ ९ ॥

तं श्रीमन्नारायणं भगवान् षाड्गुण्यपूर्णः नारदः वर्णाश्रमवतीभिर्वर्णाश्रमधर्मानुवर्त्तनीभिः भारतीभिर्भरतवर्षवासिनीभिः प्रजाभिः सह साङ्ख्यमात्मयाथात्म्यज्ञानयोगः योगोऽसङ्गवर्णाश्रमोचितपञ्चमहायज्ञादिरूपः कर्मयोगः आभ्यां भगवत्प्रोक्ताभ्यां भगवता गीताचार्येण प्रोक्ताभ्याम् "अशोच्यानन्वशोचस्त्वम्" इत्यारभ्य "एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु" इत्यारभ्य चोक्ताभ्यां गीताया वेदवदनादित्वादेवमुक्तं परमभक्तियुक्तेन परमभक्तिरूपेण भावेनाभिप्रायेण उपसरति अनुवर्तते साङ्ख्ययोगज्ञानयोगानुगृहीतनिरतिशयभक्तियोगेनानुवर्तत इत्यर्थः किंभूतः भगवतोऽनुभवः उपवर्ण्यते येन पञ्चरात्रेण तद्भगवदनुभवोपवर्णनं तत्पञ्चरात्रं सावर्णिमनोरुपदेक्ष्यमाणः इदमुदाहरन् ॥ १० ॥

मन्त्रमाह। ओमिति। ॐ भगवच्छब्दार्थौ पूर्ववत् परमं निरतिशयं शीलं स्वभावो यस्य तस्मै सौशील्यविशिष्टायेत्यर्थः महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वं सौशील्यम् अयमाश्रयणसौकर्यापादको गुणः इदं वात्सल्यसौलभ्यस्वामित्वानामप्याश्रयणसौकर्यापादकानामुपलक्षणमुपरतानात्म्यायानात्मा देहेन्द्रियादिः तस्य भावः प्रकारः धर्मः अशनायादिषडूर्मिवर्गः उपरतं निरस्तमानात्म्यं यस्मात्येन वा तस्मै अकिञ्चनवित्ताय नास्ति किञ्चन उपादेयं येषां तेऽकिञ्चना निष्कामा मुमुक्षवस्तेषां वित्ताय निधये ऋषिनारायणरूपेणावतीर्णाय परमहंसाय पर उत्कर्षो मा न विद्यते यस्मिन् हंसो जीवो यस्मात् पृषोदरादित्वात् माशब्दस्य ह्रस्वः अथवा। हन्ति निरस्यति निखिलान् दोषानिति हंसः पृषोदरादित्वात् साधुः "सर्वेद्वर्णागमाद्धंस" इत्यानुशासनिकस्मरणात् परमश्चासौ हंसश्चेति कर्मधारयः परमः निरतिशयकल्याणगुणगणः हंसो निरस्तनिखिलदोषः तस्मै परमगुरवे निरतिशयहितोपदेष्ट्रे आत्मारामाय नित्यासङ्कुचितापरिच्छिन्नानन्दरूपस्वात्मानुभवपरायाधिपतये भूतानामधिपतये "एष भूताधिपतिः" इति श्रवणात् नमस्कारोऽयमसौ गुणभेदाभिप्रायकः ॥ ११ ॥

इदं वक्ष्यमाणश्लोकचतुष्टयं स्तुतिरूपं गायति पठतीत्यर्थः अथवा। इदं वक्ष्यमाणं गुणजातं गायति तानजगत्कारणं चिदचिद्विलक्षणं निरस्तनिखिलदोषं निरस्तसाम्याभ्यधिकं सर्वज्ञं नमस्यति। कर्त्रेति। अस्य कृत्स्नस्य चिदचिदात्मकस्य जगतः सर्गादौ कर्त्तापि यो न बध्यते नाभिमन्यते

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्

इति भगवदुक्तरीत्या कृत्स्नजगत्स्रष्टारमात्मानं तद्गुणकर्मायत्तदेवमनुष्यपशुपादपतारतम्येन कर्त्तारं न मन्यते सृज्यानां देवादिपदार्थानां देवत्वमनुष्यत्वादिनानाविधसर्गकर्मणि सृज्यशक्तीनामेव गुणकर्मणां प्रधानकारणत्वादात्मानं गुणकर्मानुगुणकर्त्तारं मन्यते न तु साक्षाद्वैचित्र्यं प्रतिहेतुं मन्यत इत्यर्थः तथा देहगतोऽपि अन्तरात्मतया देवादिदेहस्थोऽपि दैहिकैर्देहसम्बन्धप्रयुक्तैः सुखदुःखादिभिर्यो न हन्यते नाभिभूयते एवं द्रष्टुर्जीवस्य यद्दृश्यमचेतनं प्रधानं तस्य गुणैः रजआदिभिर्या न दृश्यते न संकुचितज्ञानो भवति कर्तृत्वेऽपि मोहाभावात् देहस्थत्वेऽपि दुःखाभावात् त्रिगुणात्मकप्रधानशरीरकत्वेऽपि गुणकृतज्ञानसङ्कोचाभावाच्च जीवाद्वैलक्षण्यमुक्तं द्रष्टुर्जीवस्य गुणैः संसारित्वादिभिर्दृश्यस्य गुणैर्जात्यादिभिश्च न दूष्यत इति वा योजना एवंचिदचिद्वैलक्षण्यमुक्तमत एवासक्तो रागादिरहितो विविक्तोऽसहायः स्वतुल्याधिकद्वितीयवस्तुरहितः साक्षी सर्वस्य चेतनाचेतनात्मकस्य जगतः द्रष्टा चेत्यसक्तविविक्तसाक्षी तस्मै ते नमः "कर्त्तास्य सर्गादिषु यो न बध्यते" इत्यपि पाठः तत्रास्य जगतः सर्गादौ सृष्टिस्थितिलयेषु कर्त्तापि न बध्यते असक्तत्वाज्जीवस्तु स्वगुणानुगुणपरमात्मायत्तः कर्त्ता स्वकर्मायत्तभोगसङ्गात् स्वातन्त्र्येण कर्त्तास्मीत्यभिमानेन बध्यते संसारी भवति परमात्मा जगत्सर्गादौ निरपेक्षः कर्त्तापि न बध्यते जगद्व्यापारस्य लीलारूपत्वेन सुखदुःखादिफलभोगार्थत्वाभावात्तत्रासक्त्यभावादिति भावः तथा देहगतोऽपि दैहिकैः देहसम्बन्धप्रयुक्तैः सुखदुःखादिभिर्न हन्यते नाभिहतो भवति कुतः विविक्तत्वान्निरस्तनिखिलदोषतया समस्तकल्याणगुणाकरतया च जीवपर्यन्तेभ्यो देहेन्द्रियादिभ्यो विलक्षणत्वाद्विलक्षणस्वस्वरूपावलोकनशीलत्वादिति भावः तथाच शारीरकं सूत्रम्। "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" ३।२।११ इति सर्वत्रावस्थानतोऽपि न परस्य ब्रह्मणोऽपुरुषार्थगन्धः सम्भवति कुतः सर्वत्र श्रुतिस्मृतिषु परं ब्रह्मोभयलिङ्गमुभयलक्षणं निरस्तनिखिलदोषमनन्तकल्याणगुणाकरमभिधीयत इति तदर्थः "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प" इत्यादयः श्रुतयः।

समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥

इत्यादयः स्मृतयः अयं भावः जीवस्य कर्मवश्यत्वात्तत्कर्मानुगुण्येन तत्तद्वस्तुसम्बन्धोऽपुरुषार्थं एव स्यात्परस्य तु ब्रह्मणः स्वाधीन स एव सम्बन्धस्तद्विचित्रनियमनरूपलीलारसायैव स्यादिति दिक्। तथाच श्रुतिः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति" इति तथा द्रष्टुः स्वस्वकर्मानुगुणज्ञानाश्रयस्य "अनृतेन हि प्रत्यूढाः सेषां सत्यानां सतामनृतमपिधानम्" इति श्रुत्युक्तरीत्या कर्मणा तिरोहितज्ञानस्य जीवस्य यद्दृश्यं कर्मायत्तदर्शनविषयं यत्प्रधानं तस्य गुणैः रजआदिभिर्न दूष्यते न गुणपरवशो न भवति कुतः साक्षित्वात्साक्षाद्द्रष्टृत्वात् "साक्षाद्द्रष्टरि संज्ञायाम" इति साक्षिशब्दो व्युत्पादितः साक्षिशब्दोऽवयववृत्त्या समुदायरूढ्या च भगवत्येव मुख्यवृत्तः अव्ययः पुरुषः साक्षीति भगवन्नामसहस्रपाठात् अतः संज्ञायामित्यस्य न विरोधः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्रष्टुरिति दृष्टान्तार्थं यथा द्रष्टा दृश्यगुणैर्दूष्यते तथा साक्षी परमात्मा न दूष्यत इति अयं भावः जीवस्य स्वकर्मानुगुणमेव दृश्यदर्शनं न तु साक्षात्साकल्येनेति गुणैर्दूष्यणं परमात्मनस्तु निरुपाधिकं साक्षाद्दृश्ययाथात्म्यदर्शनमिति न गुणवश्यता किन्तु गुणानामेव परमात्मवश्यतेति एवं भूताय असक्तसाक्षिणे नम इत्यर्थः ॥ १२ ॥

एवं जीवपरयोर्हेयास्पदत्वतत्प्रत्यनीकत्वे उक्ते इदानीं जीवस्य हेयनिरसनोपायो देहाद्यनासक्त्या परमात्मनस्तव भक्तिरेव सैव पुरा चतुर्मुखेन मह्यमभिहितेत्याह । इदं हीति । हे योगेश्वर ! हिरण्यगर्भः योगे यत्नैपुणं कौशलं जगाद तदिदमेव किन्तदित्यत्राह । उज्झितदुष्कलेवरः उपेक्षितशरीरः कलेवरशब्दः तदनुबन्धिनामप्युपलक्षकः उपेक्षितदेहानुबन्धी पुमान् भवात् प्रभृति अन्तकाले अन्तकालपर्यन्तं भक्त्या ध्यानयोगेन त्वयि मनो धारयेत्स्थिरं कुर्यादिति यत् ॥ १३ ॥

एवं देहाद्युपेक्षया परमात्मभक्तिरेव जीवस्यानर्थपरिहारिणीत्युक्तमिदानीमुक्तविधभक्तिरहितस्य केवलशास्त्राध्ययनादिप्रयासो निष्फल इत्याह । यदेति । ऐहिकेषु पशुपुत्रान्नादिष्वामुष्मिकेषु स्वर्गादिषु कामेषु लम्पटः आसक्तः सुतादिषु विषयेषु चिन्तयन् तेषामनपायोपेयत्वं चिन्तयन्नित्यर्थः विद्वानधीतशास्त्रोऽपि कुत्सितस्य कलेवरस्यात्ययान्मृत्योः शङ्केत बिभीयात् तस्य यो यत्नः शास्त्राध्ययनादिरूपः स केवलं श्रम एव निष्फल एव मरणभीतस्य शास्त्रश्रमो निष्फल इत्यर्थः ॥ १४ ॥

यतो विदुषोऽप्ययमेव दशा तत्तस्मात्प्रभो ! हे अधोक्षज ! त्वमेव नो योगं विधेहि सम्पादय त्वत्प्रसादादेव नो योगसिद्धिरिति भावः ईदृशं योगं त्वयि स्वभावजं निरुपाधिकं कामानुपहतमिति यावत् येन योगेन वयं त्वन्मायया नः कुत्सिते कलेवरेऽर्पितामाहितां सुदुर्भिदामुपायान्तरैः सर्वदा त्यक्तुमशक्यामहंममतामहङ्काराममकाररूपामविद्यामाशु भिन्द्याम त्यजेम त्वत्प्रसादायत्तत्वद्भक्तियोग एवानर्थनिवर्त्तक इति भावः ॥ १५ ॥

एवं भारते उपास्यभगवद्रूपादिकमुक्त्वाथास्मिन्नेव वर्षे प्राधान्येन पुण्यतमान् पर्वतान्नदीश्चाह । तत्र प्रथमं पर्वतान् संग्रहेणाह । भारतेऽपीत्यपिशब्दाद्वर्षान्तरेऽप्यनुक्ताः पर्वता नद्यश्च सन्तीति सूचितम् सरितः शैलाश्च सरिच्छैलाः बहवः सन्ति तावच्छैलानुद्दिशति । मलय इत्यादिना । कामगिरिरित्यन्तेन अन्ये च बहवः सन्तीत्याह । अन्ये च शतशः सहस्रशः शैलाः सन्तीत्यनुषङ्गः नदीर्वक्ष्यमाणास्ता तासामुत्पत्तिस्थानं प्रभावञ्चाह । तेषामिति । तेषां शैलानां नितम्बेभ्यस्तटेभ्यः प्रभवाः सम्भूताः नद्यः प्रायेण पश्चिमाभिमुखाः न पूर्वाभिमुखा असङ्ख्याताः सन्ति ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपशमोऽधिकभगवन्निष्ठा उपरमो मनआदीन्द्रियनिग्रहस्तपश्चैतामेवमपेक्षितामिति दर्शयितुं न तु स्वस्य नित्यनिगृहीतेन्द्रियत्वात् आत्मनः स्वरूपस्योपलम्भो नित्यापरोक्षता यस्य स तथा ॥ ९ ॥

साङ्ख्ययोगाभ्यां यथार्थज्ञानतत्साधनाभ्यां भगवतो ... स्तुभावस्य माहात्म्यस्योपवर्णनं प्रतिपादनं यस्मिंस्तत्तथा ... अत्र सावर्णिर्मनोः उपसरत्युपास्ते ॥ १० ॥

उपरतानात्म्याय निवृत्तदेहादिधर्माय आत्मारामाणामधि... पतये ॥ ११ ॥

सर्गादिषु कर्ता तथापि देवदत्तवद्यो न बध्यते देहगतैः ... देहिकैर्देहसम्बन्धिभिर्दोषैः यो न हन्यते न पीड्यते ... यस्य दृग् गुणैर्दर्शनयोग्यरूपादिभिः न दूष्यते दर्शननिमि... पापैर्न सम्बध्यते तस्मै नमः अत्र हेतुगर्भाण्येतानि ... असक्तेति । असङ्गत्वात् विलक्षणत्वात् साक्षित्वात् ... दोषाभाव इत्यर्थः ॥ १२ ॥

बहुजन्मार्जितधर्माद्युपायपाटवमिदमित्याह । इदं हीति ... हिरण्यगर्भो योगनैपुणं योगपाटवमिदमेव जगाद इदं कि... तत्राह । यदिति । निर्गुणे त्वयि भक्त्यान्तकाले मनो निद... दुष्कलेवरमुज्झतीति यत्तदिदमिति भावः "यस्य सम्यक् ... वति ज्ञानं भक्तिस्तथैव च" इत्यादिवाक्यमत्रापि प्रमाणत... योद्धव्यम् ॥ १३ ॥

यत एवं सर्वमनित्यं तस्मात्त्रिविधपादवद्देहत्यागादौ शङ्का ... न कार्येत्याह । यथेति । यथैहिकामुष्मिककामेषु ... रागी सुतादौ नाशं चिन्तयन् शङ्केत मयि मृते सुता... नाशं गमिष्यन्तीति तथा विद्वानपि यदि कुशरीरत्यागा... तर्हि तस्य यः शास्त्रश्रवणादौ प्रयत्नः स केवलं श्रम ... न किञ्चित्फलमित्यर्थः अतो न शङ्कितव्यमित्यर्थः ॥ १४ ॥

यतस्त्वदनुगृहीतमेव सफलमत इमं त्वदनुग्रहजन... यमस्मभ्यं देहीत्याह । तन्न इति । योगं ज्ञानं ध्यानमुपायं ... येन योगेन अहंममतासम्भूतदोषस्य मुक्तिपरिपन्थिन... शाशः प्रार्थ्यते तदुक्तम् । "यो ममत्वादिना दोषः स त्वत्... विषयः स्मृत" इति ॥ १५ ॥

इदानीमस्मिन् भारतवर्षे पर्वततत्तटजा नदीः प्राधान्येन ... भारत इति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नरनारायणाख्य इति द्वयोरभेदो दर्शितः । आत्मवदात्मा... एव भगवान् नाथत्वेन विद्यते येषां तेषां भक्तानामनु... हेतुना तद्विषयकानुकम्पाधीनः सन् तेषां मङ्गलार्थं स्वयमेव ... अस्तीत्यर्थः । अहो एतावानपि तदनुकम्पापरिणाम इति ... तमेव दर्शयति । उपचितेति । स्वयमेव कृतैस्तैस्तैरङ्गैस्त... भगवतः स्फूर्त्तिहेतुकामित्यर्थः । तर्हि लोकैस्तथा नाचर्यते ... अव्यक्तगतिरिति । ईश्वरस्य स्वार्थं तदसम्भवात् । ... रिति वा ॥ ९ ॥

प्रजाभिः सह ताश्च मुनिरूपा एव न तु सर्वाः । भगवता ... नारायणाख्येन प्रोक्ताभ्यां साङ्ख्ययोगाभ्यां सारासार... भगवन्निष्ठाभ्यां यद्भगवदनुभवोपवर्णनं तत्तत्सावर्णि ... ख्याति यः स इत्यर्थः ॥ १० ॥ ११ ॥

(१) परोक्षज्ञानिविषयः ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तस्य परमहंसत्वं दर्शयन् गुरुत्वं योजयति। कर्त्तेति। देहगतोऽन्तर्यामिरूपेण द्रष्टुः परमसाक्षिणः॥ १२॥

अनासक्तत्वं कैमुत्येन स्थापयन् विशेषतो ज्ञेयस्य योगस्य सामान्यतो ज्ञानं तत्कारणञ्चाह। इदं हीति। उज्झितकुष्कलेवर इति। पार्षदकलेवरस्य शोभनत्वमुपादेयत्वं च बोधयति॥१३॥

तज्ज्ञानयोग्यत्वापादकं सारासारविवेकमपि सामान्यतो निवेदयति। यथेति॥ १४॥

प्रमीदमाह। तत्र इति। कुकलेवरेति। खेतरेषां कलेवरापेक्षया प्रोक्तम्॥ १५॥

कोल्लः कोल्लक इति पाठौ। गोवर्द्धनोऽयं शास्त्रलोकप्रसिद्धः श्रीवृन्दावनगतः श्रीकृष्णाक्रीडत्वेन तमनु रैवतोऽपि पठ्यते। अधुना तस्य खल्पत्वादिदृष्टिः काले कालेऽन्तर्द्धानात्॥ १६—१९॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

उपचितैर्धर्मादिभिः सहित आत्मा त्वंपदार्थ उपलभ्यते येन तत्पश्चरति तत्र उपशमः इन्द्रियाणां संयमः उपरमो निरहङ्कारिता आत्मवतां ज्ञानिनामनुग्रहाय तपःशिक्षणरूपायेति तपसि प्रयोजनमनुकम्पयेति तत्र कारणमित्यपौनरुक्त्यम्॥ ९॥

भगवदनुभावो वर्ण्यते येन तद्भगवदनुभाववर्णनं पञ्चरात्रशास्त्रं साङ्ख्ययोगाभ्यां सह सावर्णेः सावर्णिम्॥ १०॥

उपरतानात्म्याय न विद्यते आत्मा ज्ञातव्यत्वेन यस्य सः अनात्मा अनात्मनो भावः आनात्म्यमुपरतमनात्म्यं यस्मात्तस्मै॥ ११॥

आत्मारामचूडामणित्वमाह। कर्त्तेति। न निबध्यत इत्यतस्तेष्वसक्ताय। दैहिकैः क्षुत्पिपासादिभिर्न हन्यते नाभिभूयते इत्यतो देहादिविकाय द्रष्टुरपि सतो दृग् दृष्टिः गुणैर्दृश्यैर्न दूष्यते अत एव असक्तश्चासौ विविक्तसाक्षी अलिप्तसाक्षी चेति तस्मै॥ १२॥

योगाभ्यासिनां रहस्यमाह। इदमिति। यदिति। श्राद्यन्तम् अन्तकाले यद्गच्छत् चपलमिति यावत् मनस्त्वयि दधीत स्थिरीकुर्यादित्यर्थः उज्झितेति वर्त्तमाने निष्ठा॥ १३॥

अन्यथा योगाभ्यासो व्यर्थ एवेत्याह। यथेति। चिन्तयन् चिन्तां कुर्वन् कुकलेवरात्ययात् शङ्कते। मयि मृते सति मत्सुतादयः कथं वर्त्तेरन्निति भावयेत् तथैव विद्वानपि यः शङ्कते तस्य यत्नः श्रम एव॥ १४॥

तस्माद्व्यावेशं त्याजयित्वा त्वयि मनसोऽभिनिवेशं त्वमेव कृपया देहीत्याह। तत्र इति। योगं विधेहि योग एव कस्तत्राह। त्वयि योऽस्माकं स्वस्यात्मनो भावं रतिं यद्वा। यथा विषयेषु स्वभावस्तथैव त्वयि स्वभावो निसर्गोऽस्त्वित्यर्थः॥ १५॥

अपीति। यथा इलावृते तथा अस्मिन्नपि वर्षे इत्यर्थः॥ १६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

उपचितैः समृद्धैर्धर्मादिभिः आत्मा परमेश्वर उपलभ्यते येन तत्तप आकल्पं कल्पपर्यन्तं चरति आत्मवतामात्मा विद्यते येषां तेषामनुग्रहाय शिक्षायै न च स्वार्थमीश्वरत्वेन उपास्यत्वेन उपशमो निरहङ्कारता उपरमः इन्द्रियसंयमः॥ ९॥

भगवदनुभाव उपवर्ण्यते येन तत्पञ्चरात्रं शास्त्रं सावर्णिरुपदेक्ष्यमाणः भगवत्प्रोक्ताभ्यां साङ्ख्ययोगाभ्याम्।

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।

इति श्रीमुखवचनात् साङ्ख्यमात्मज्ञानं योगो निष्कामकर्मयोगस्ताभ्यां सम्वर्द्धितेन परभक्तिभावेन प्रजाभिः सह उपसरति सेवते इत्यन्वयः॥ १०॥

परमहंसानां परमगुरवे उपरतानात्म्याय निरहङ्काराय॥ ११॥

देहगतोऽपि देहेषु अन्तर्यामिरूपेण संस्थितोऽपि दैहिकैः क्षुत्पिपासादिभिः असक्तः सर्वदा पूर्णकामत्वात् विविक्तः सर्वदा सर्वदोषास्पृष्टत्वात् साक्षी सर्वदा सर्वदर्शी स च सः तस्मै॥ १२॥

ज्ञानस्य देहादिविरक्तिपूर्वकं भगवति मनोनैश्चल्यं फलमन्यथा ज्ञानयत्नः केवलं श्रमोऽतस्तं ज्ञानयोगं नो विधेहि येन त्वयि मनोनैश्चल्यं भवेदित्याह। इदमिति त्रिभिः। हे योगेश्वर! हिरण्यगर्भः योगनैपुण्यं योगस्य ज्ञानयोगस्य नैपुण्यं यत् जगाद तदिदमेव किमुज्झितकुष्कलेवरः त्यक्तदुष्टजनदेहसङ्गः सन् भक्त्या त्वयि मनो दधीत धारयेत् किं बहुना अन्तकालेऽपि इतियत्॥ १३॥

यदि यथा ऐहिकामुष्मिककामलम्पटः अविद्वान् सुतादिषु चिन्तयन् योगक्षेममिति शेषः कुकलेवरायां स्वकीयदेहस्य सुतादिदेहानां च अत्ययात्राशात् शङ्कते तथा विद्वानपि सन् यः शङ्कते तर्हि तस्य यत्नः विद्यायत्नः श्रम एव॥ १४॥

तत्तस्मात् हे प्रभो! अधोक्षज! त्वं तद्योगं तादृशं ज्ञानयोगं नो विधेहि येन त्वयि स्वभावं स्वकीयं भावं मनोनैश्चल्यलक्षणं ध्रुवास्मृत्याख्यं प्राप्नुयाम इति शेषः येन च योगेन वयं त्वन्मायया नः कलेवरे अर्पितामहंममतां शीघ्रं भिन्द्याम॥ १५—१६॥

---

भाषाटीका।

भारतवर्ष में श्री नरनारायणबदरीनारायणनाम के भगवान् कल्पपर्यन्त की इच्छा से आत्मज्ञानियों की कृपा से अनुग्रह करने को आप अव्यक्त मार्गवाले होने से भी वृद्धि को प्राप्त आत्मा के लाभ के हेतु धर्म ज्ञान वैराग्य ऐश्वर्य शान्ति के हेतु तपस्या को करते हैं॥ ९॥

भगवान् श्रीनारदजी भगवान्‌का कहा जो सांख्य तथा योग उन दोनों से भगवान् के चरित्र को सावर्णि मनु को उपदेश करने को स्थित हैं वर्णाश्रम धर्म वाली भारत की प्रजाओं को साथ में लेकर परम भक्ति भाव से बदरीनारायणजी का अनुसरण करते हैं इस वचन को उच्चारण करते हैं॥ १०॥

उपशम स्वभाव वाले अहंतादि दुर्गुणों से रहित निर्धन पुरुषों के धनरूप ऋषियों में श्रेष्ठ नर नारायण परम हंसों के परमगुरु आत्मारामों के अधिपति आपके अर्थ नमस्कार है॥ ११॥

इस स्तोत्र का गानभी करते हैं आप इस जगत् के कर्ता हो तो भी सृष्टि आदि कों के कर्मों में नहीं बन्धते हो देह में स्थित होकर भी दैहिक धर्मों से बाधित नहीं होतेहो द्रष्टा होते

एतासामपो भारत्यः प्रजा नामभिरेव पुनन्तीनामात्मना चोपस्पृशन्ति ॥ १७ ॥

चन्द्रवशा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेणी पयस्विनी शर्करावर्ता तुङ्गभद्रा कृष्णा वेण्या भीमरथी गोदावरी निर्विन्ध्या पयोष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती सिन्धुरन्धः शोणश्च नदौ महानदी वेदस्मृतिर्ऋषिकुल्या त्रिसामा कौशिकी मन्दाकिनी यमुना सरस्वती दृषद्वती गोमती सरयू रोधस्वती सप्तवती सुषोमा शतद्रूश्चन्द्रभागा मरुद्वृधा वितस्ता असिक्नी विश्वेति महानद्यः ॥ १८ ॥

अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्यमानुषनारकगतयो बह्व्य आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयन्ते यथा वर्णविधानमपवर्गश्चापि भवति ॥ १९ ॥

योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण यदा हि महापुरुषपुरुषप्रसङ्गः ॥ २० ॥

एतदेव हि देवा गायन्ति ।

अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः ॥ २१ ॥
किं दुष्करैर्नः क्रतुभिस्तपोव्रतैर्दानादिभिर्वा द्युजयेन फल्गुना ।
न यत्र नारायणपादपङ्कजस्मृतिः प्रमुष्टातिशयेन्द्रियोत्सवात् ॥ २२ ॥
कल्पायुषां स्थानजयात्पुनर्भवात्क्षणायुषां भारतभूजयो वरम् ।
क्षणेन मर्त्येन कृतं मनस्विनः संन्यस्य संयान्त्यभयं पदं हरेः ॥ २३ ॥
न यत्र वैकुण्ठकथासुधापगा न साधवो भागवतास्तदाश्रयाः ।
न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वै स सेव्यताम् ॥ २४ ॥

भाषाटीका ।

पर भी आपकी दृष्टि गुणों से दूषित नहीं होती है ऐसे अक्लिष्ट निर्मल साक्षी आपके अर्थ नमस्कार है ॥ १२ ॥

हे योगेश्वर! ब्रह्माजीने हमको उपदेश किया है सो योगकी निपुणता यही है जोकि अन्तकाल में पुरुष अहन्ता आदि शरीर वासनों को छोडकर भक्ति से प्राकृत गुण रहित आप में मनको लगा देवै ॥ १३ ॥

जिस प्रकार इस लोक के पदार्थों में लंपट पुरुष पुत्र स्त्री धन की चिन्ता से मरण समय में शंका करता है तैसे ही विद्वान् होकर भी खोटे शरीर के नाश होने की शंका करे तो उसके सब साधन श्रम व्यर्थ ही हैं ॥ १४ ॥

हे प्रभो! हे अधोक्षज! तिस हेतु से इस खोटे शरीर में अप्रिय हमारी इस अति दुस्तर अहंता ममता रूप माया को जिस योगसे हम शीघ्रही दूर करें ऐसे स्वाभाविक आप के विषय के प्रेमभक्ति योगको विधान करो ॥ १५ ॥

इस भारतवर्ष में भी बहुत नदी तथा पर्वत हैं जैसे कि मलय मङ्गलप्रस्थ मैनाक त्रिकूट ऋषभ कूटक कोल्लक सह्य देवगिरि ऋष्यमूक श्रीशैल वेंकट महेन्द्र वारिधार विन्ध्य शुक्तिमान् ऋक्षगिरि पारियात्र द्रोण चित्रकूट गोवर्धन रैवत ककुभ नील गोकामुख इन्द्रकील कामगिरि और भी सैकडों हजारों पर्वत हैं तिनके नीचे से होने वाले नद नदी असंख्य हैं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मना च देहेनाप्युपस्पृशन्ति ॥ १७ ॥ १८ ॥

लब्धं जन्म यैस्तैः पुरुषैः । सात्त्विकादिना स्वकृतेन कर्मणा दिव्यादिगतय आत्मनो विधीयन्ते साध्यन्ते । हि यस्मात् सर्वा एव गतयः कर्मानुसारेण सर्वेषां भवन्ति यस्य वर्णस्य यद्विधानं मोक्षप्रकारः संन्यासवनस्थत्वादिस्तदनतिक्रमेणास्मिन्नेव वर्षे नृणामपवर्गश्च भवति । एतच्च कर्मादिबहुसाधनसम्भवाभिप्राये-

श्रीधरस्वामिकृतभावार्थदीपिका ।

...तत्रान्यत्रापवर्गाभावेन। तदुपर्यपि बादरायणः सम्भवात् ...।३।२६। इति देवानामपि मोक्षस्य सूचितत्वात् ॥ १९ ॥

अपवर्गस्वरूपमाह । योऽसाविति। अनात्म्ये आत्मनि भव... रागादि तद्रहिते । अनिरुक्ते वाचामगोचरे। अनिलय... ...वारे। अनन्यनिमित्तोऽहैतुको भक्तियोग एव लक्षणं स्वरूपं ... कथं भवति नानागतीनां निमित्तं यो विद्याग्रन्थिस्तस्य ...छेदनं तद्द्वारेण महापुरुषपुरुषा विष्णुभक्तास्तैः प्रकृष्टः ...योगो यदा भवति तदा ॥ २० ॥

एतदेव मानुष्यमेव सर्वपुरुषार्थसाधनं गायन्ति । अमीषामेभिः ...खिल अथवा स्वयमेव साधनं विनैव हरिरेषां प्रसन्नोऽभूत् ...भूतस्य पुण्यस्य दुष्करत्वात् भारताजिरे भारताङ्गणे नः ...दं स्पृहैव यत्र तन्मुकुन्दसेवोपयोगि नृषु जन्म यैर्लब्धम् ॥ २१॥

...स्पृहामेवाहुः। किमित्यादिसप्तभिः । दुष्करैः क्रत्वादिभिर्नः ...ना तुच्छेन द्युजयेन स्वर्गप्राप्त्या किं न किञ्चित्फलम् । कुतः । ...नारायणपादपङ्कजस्मृतिर्नास्ति । प्रत्युतातिशयितादिन्द्रिया... ...सवाद्भोगात्प्रमुष्टाऽभूत् ॥ २२ ॥

क्षणमल्पमेवायुर्येषाम् परत्वे हेतुः मर्त्येनापि देहेन क्षणे... ...कालेन कृतं कर्म संन्यस्य हरेः पदं सम्यग्यान्ति ॥२३॥ ...तो यत्र वैकुण्ठकथामृतनद्यो न सन्ति तदाश्रयाः कथा... ...श्रयाः महान्तो नृत्याद्युत्सवा येषु तादृशा यज्ञेशस्य ... पूजाः स सुरेशस्य ब्रह्मणोऽपि लोको न सेव्यताम् ॥२४॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एतासां नदनदीनाम् आपो जलानि भारत्यः भरत... ...ण्याः प्रजाः कर्म पूर्वसवर्णदीर्घाभाव आर्षः नामभिरेव ...न्ति नामभिरेव पवित्रयन्ति हि ।

गङ्गागङ्गेति यो ब्रूयाद्योजनानां शतैरपि
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।

इत्याद्यभियुक्तस्मरणमत्रानुसन्धेयं या आपो नामभिरेव ...न्ति प्रजास्ता अपः प्रजा आत्मना देहेनापि स्पृशन्ति ...। भारत्यः भरतवर्षस्थपुण्याश्चापो नामभिरेव प्रजाः पुनन्ति ...ताः आपः प्रजा आत्मना देहेनापि स्पृशन्तीत्यन्वयः नदीरुद्दि... ...। चन्द्रमसेत्यादिना। विश्वेत्यन्तेन सिन्धुः शोणश्च नदावि... ...। सिन्धुः शोणश्च नदाविति। कावेर्याः पृथगुक्तत्वान्मरुद्वृधेति ...परः गोबलीवर्दन्यायात् गङ्गा तु पूर्वं प्रपञ्चितैवेत्यत्रानु... ...क्ता बोध्यम् ॥ १७ ॥ १८ ॥

...स्य भारतवर्षस्य प्राशस्त्यप्रतिपादनपरानभियुक्तैर्गीतान् ...नुवदन्नस्य प्राशस्त्ये कारणमाह। अस्मिन्नेवेत्यादिना। प्रसङ्ग... ...गद्येन अस्मिन्नेव वर्षे भारते लब्धं जन्म विप्रादिजन्म ...पुरुषैः शुक्ललोहितकृष्णवर्णैस्त सत्त्वरजस्तमोगुणकल्पितकु... ...रूपेण स्वारब्धेन स्वकृतेन कर्मणा बह्व्यः दिव्यादिगतयः ...शुक्लकर्मणा दिव्यगतिः रजःकर्मणा मनुष्यलोकगतिः तामस... ...णा नारकगतिः तथा च भगवता गीतम् ।

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥

इति अत्रापि तृतीये उक्तम् ।

आत्यन्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे ।
धरां रजःस्वभावेन" इत्यादिना ।

एवं दिव्यादिगतय आत्मनः स्वस्य विधीयन्ते सम्पाद्यन्ते हि यस्मात्सर्वा एव गतयः आनुपूर्व्येण कर्मानुसारेण सर्वेषां भवन्ति सर्वेषामविशेषेण त्रैगुण्यवश्यत्वाद् गुणानां ह्रासोल्लासादिभिः कृतानि कर्माणि दिव्यादिगतीः सर्वाः सर्वेषामापादयन्तीत्यर्थः एवमस्मिन्नेव वर्षे यथावर्णविधानं यस्य ब्रह्मक्षत्रियादेः यद्वि- धानम् ।

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥

इत्यादिविधानं गुर्वनलशुश्रूषा पञ्चमहायज्ञादिरूपविधानं च तदन- तिक्रम्य यथावर्णविधानमनभिसंहितफलस्वस्ववर्णाश्रमोचित- कर्मानुष्ठानानुगृहीतभक्तियोगेनेत्यर्थः अपवर्गो मोक्षश्च भवति एतच्चात्र वर्षे मोक्षसाधनबहुधर्मानुष्ठानसम्भवाभिप्रायेणोक्तं नत्व- न्यत्रापवर्गसाधनधर्मानुष्ठानासम्भवाभिप्रायेण । तदुपर्यपि बाद- रायणः सम्भवात्" इत्युपरितनलोकेष्वपि ब्रह्मविद्याधिकारस्य भगवता बादरायणेनैव सूत्रितत्वात् सूत्रे तदुपर्यपीति रम्यकादि- वर्षाणामप्युपलक्षणम् ॥ १९ ॥

ननु यथा वर्णविधानं कदापवर्गो भवति को वा स्वस्ववर्णा- श्रमोचितो धर्मः साक्षादपवर्गसाधनमुत कस्यचिदनुग्राहकः अनुग्राहकश्चेत् कोऽसावनुग्राह्यः कथं वा अनुग्राहकः अनुग्राह्यश्च कीदृशः अनुग्राह्यविषयश्च कीदृश इत्याशङ्क्याह। योऽसाविति। यदा ह्यविद्याग्रन्थिरन्धनद्वारेणाविद्यापुण्यपापात्मकं कर्म भक्तियोगो- त्पत्तिविरोधिप्राचीनकर्म तद्रन्धनद्वारेण तन्निरसनद्वारेण महा- पुरुषो भगवान् तस्मिन् प्रसङ्गो भवति तदा यथाविधानमपवर्गश्च भवतीत्यन्वयः "धर्मेण पापमपनुदति कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इतिश्रुतिस्मृत्युक्तरीत्या स्वस्ववर्णोचितानभिसंहित- फलकर्मानुष्ठानेनाविद्याग्रन्थिनिरसनं तद्द्वारेण महापुरुषे प्रसङ्गः प्रकृष्टः सङ्गः विजातीयप्रत्ययान्तरात्मवतो ध्यानरूपो मनोव्यापारो भवति तदापवर्गो भवतीत्यर्थः अविद्याशब्दोऽत्र पुण्यपापात्मककर्म- परः तदेव कर्म ।

अविद्यया मृत्युं तीर्त्वा विद्यया मृतमश्नुते ।
इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ॥
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ।

इत्यादिषु मृत्युशब्देनाभिधीयते अविद्यया मृत्युमित्यावावविद्याशब्दे- नानभिसंहितफलं वर्णाश्रमोचितं कर्मोच्यते विद्येतरदन्यथा मृत्यु- तरणोपायत्वश्रवणविरोधात्तत्राविद्याशब्दस्थानीयोऽत्र यथावर्ण- विधानशब्दः तत्रत्यमृत्युशब्दस्थानीयोऽत्राविद्याशब्दः अविद्याशब्दो हि विद्येतरदविद्याकर्मेत्येवं कर्ममात्रे वर्तमानो यथोचितं क्वचि- दनभिसंहितफलं वर्णाश्रमोचितं विहितं कर्माभिदधाति क्वचि- द्बन्धकं कर्मेति विवेकः महापुरुषप्रसङ्गं विशिनष्टि। अनानागति- निमित्तः नानागतिः स्वर्गनरकादिगतिस्तन्निमित्तो न भवतीत्य- नानागतिनिमित्तः स्वर्गादिगतिनिवारकः मोक्षसाधनमिति भावः निमित्ताविद्याग्रन्थीतिपाठे नानागतिनिमित्तेति छेदः स्वर्गनरका-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दिनानागतिनिर्निमित्तभूता याविद्या तद्रूपो यो ग्रन्थिस्तस्य रन्धनद्वारेणेत्यर्थः ग्रन्थिशब्देनाविद्याया दुर्मोचनीयत्वमभिप्रेतं न विद्यते अन्यदैहिकामुष्मिकरूपं निमित्तं फलं यस्य अनन्यनिमित्तः निष्काम इत्यर्थः सचासौ भक्तिलक्षणो भक्तिरूपश्चेति कर्मधारयः एवं यद्वाहीत्यस्योत्तरमुक्तं वर्णाश्रमधर्मस्य भक्तियोगानुग्राहकत्वं तत्प्रकारश्चोक्तः अविद्याग्रन्थिरन्धनद्वारेणेत्यनेन महापुरुषप्रसङ्ग इत्यन्तेन चानुग्राह्यं चोक्तम् अनन्यनिमित्तभक्तियोगलक्षणा इत्यनेनानुग्राह्यप्रकारश्चोक्तः महापुरुष पुरुषप्रसङ्ग इतिपाठे महापुरुषाणां प्रकृष्टः सङ्गो यस्य सः भक्तियोगलक्षणा इत्यर्थः अथानुग्राह्यविषयं महापुरुष इत्यनेनाभिप्रेतं दर्शयति । सर्वभूतात्मनेत्यादिना । यद्यपि सर्वभूतात्मवासुदेवशब्दयो--स्तुल्यार्थता तथापि देवताविशेषं निर्दिधारयिषया वासुदेव इत्युक्तं वासुदेवशब्दावयवार्थप्रदर्शनाय सर्वात्मनीत्युक्तम् । इत्यतो न पौनरुक्त्यं भक्तियोगविषयं चिदचिद्विलक्षणत्वेन विशिष्टमनात्म्ये इति आत्मनो भावः प्रकारः अपृथक्सिद्धविशेषणं शरीरमात्म्यं ततोऽन्यस्मिन् स किं जीवः नेत्याह । अनिरुक्ते देवमनुष्यादिनामरूपाभ्यामनिरुक्ते अनात्म्ये इत्यचेतनव्यावृत्तिः अनिरुक्त इति बद्धजीवव्यावृत्तिः स तर्हि किं मुक्तजीवो नेत्याह । अनिलयने आधारान्तरानपेक्षाय अनेन मुक्तजीवव्यावृत्तिः तेषां हि भगवानाधारः "ब्रह्मभूयाय कल्पते ब्रह्मणो हि प्रतिष्ठाहम्"इत्युक्तत्वात् अत्र ब्रह्मशब्दो मुक्तजीवपर औचित्यात् स तर्हि नित्यसिद्धः नेत्याह । परमात्मनीति । अक्षरशब्दवाच्याभ्यां मुक्तनित्यसिद्धाभ्यां क्षरशब्दवाच्याद्बद्धचेतनाच्च योऽन्यत्वेन गीतः परमात्मा ।

> द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
> क्षरः सर्वाणि भूतानि कूटस्थो क्षर उच्यते ।
> उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

इति तस्मिन्नित्यर्थः । एवंविधे भगवति षाड्गुण्यपूर्णे निरस्तनिखिलदोषे योऽसावनन्यनिमित्तभक्तियोगलक्षणा इत्यन्वयः ॥ २० ॥

एवं स्वर्गापवर्गसाधनभूतबहुविधधर्मानुष्ठानोपयुक्तप्रदेशत्वादस्य वर्षस्य प्राशस्त्यम् अथैतत्प्राशस्त्यप्रतिपादनपरान् श्लोकान् वक्तुं तेषामविगीततां दर्शयति । एतदेव हीति । एतद्वर्षप्राशस्त्यं गायन्ति देवा इति शेषः श्लोकानेवाह । अहो इत्यादिना । अमीषामेभिः कर्तुः सम्बन्धविवक्षया षष्ठी किं शोभनं सुकृतमकारि अहो अपिस्वित् किं स्वयं साधनं विनैव हरिर्भगवान् प्रसन्नः किं निरतिशयसुकृतमेधमेभिः कृतं किम्वा स्वयमेवैषां भगवान् प्रसन्न एवं रूपस्य धर्मस्य दुष्करत्वादिति वितर्क्यते क इमे इत्यत्राह । येर्जातैः भारताजिरे भरतवर्षाङ्गणे भारतप्रदेश इत्यर्थः एवम्भारताजिरस्य तथापि नृजन्मनश्च प्राशस्त्यमुक्तं तत्र कारणं मुकुन्दसेवौपयिकमित्युक्तम् ॥ २१ ॥

वर्षान्तरस्थानां लोकान्तरस्थानां मनुष्याणां भगवत्सेवानुपयुक्ति वदन्तस्ताभिन्दन्ति त्रिभिः । किमिति । दुःखेनापि कर्तुमशक्यैः क्रतुभिस्तपोव्रतैः तपः सहितैर्वा व्रतैः तपः कृच्छ्रचान्द्रायणादिरूपं व्रतं प्राजापत्यादिकं दानं पात्रेषु द्रव्यत्यागात्मकं कृत्वा दिभिस्तत्साध्येन फल्गुनाल्पास्थिरफलेन द्युजयेन स्वर्गप्राप्त्या वा किं न किञ्चित्फलं कुतः यत्र स्वर्गादौ श्रीमन्नारायणस्य पादपङ्कजस्य स्मृतिर्नास्ति प्रत्युतनिरतिशयितादिन्द्रियाणामुत्सवात् सुखात् स्मृतिः प्रणष्टाभूत् अधिकेन्द्रियोत्सव एव भगवत्सेव... धीतिभावः ॥ २२ ॥

कल्पमायुर्येषां पुनर्भवः जन्म यस्य तस्मात्स्थानजयात् ... तत्तल्लोकप्राप्तेः आकल्पानुभाव्यसुखोपरिलोकापेक्षयेत्यर्थः ... लवमायुर्येषां तेषां भारतभूजयः भारतवर्षप्राप्तिर्जये जय ... र्षप्राप्तिः ऊर्ध्वस्थानेषु सुखोत्कर्षप्राप्त्यपेक्षया भारतवर्षे जन्म... पोत्कर्षप्राप्तिरूपो जयो वरं श्रेष्ठ इत्यर्थः भारतभूजयश्रेष्ठे हेतु... अस्थिरेण मर्त्येन मरणशीलेन शरीरेण कृतं क्रियाजातं सं... भगवति समर्प्य मनस्विनः प्रशस्तमनसः भगवदुपासकाः ... हरेरभयं न विद्यते भयं कालकृतं जन्मजरामरणादि... यस्मिन् तत्पदं स्थानं श्रीवैकुण्ठरूपं यान्ति कल्पायुषस्तु ... नन्तरं पुनर्भवमेव यान्तीत्यर्थः ॥ २३ ॥

अतो यत्र वैकुण्ठस्य भगवतः कथारूपाः सुधापगा ... नद्यो न सन्ति तदाश्रया भगवत्कथामृतनदीसेवापराः ... साधूनां लक्षणलक्षिता भागवताश्च न सन्ति यत्र च म... नित्यपक्षमाससम्वत्सरायनाद्युत्सवा येषां ते यज्ञेशमखाः ... शस्य भगवतः"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" भगवदुक्तेः"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति ... नस्य नाभिः"इति श्रुतेश्च तस्य मखा आराधनरूपा यज्ञाः ... सन्ति स सुरेशस्य ब्रह्मणो लोकोऽपि सेव्यतां प्राप्यतां न ... प्राप्यो न भवतीत्यर्थः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मना कायेनान्तरेण उपस्पृशन्ति आचमनस्नानाभ्या... शेषः ॥ १७ ॥ १८ ॥

पुण्यपापार्जनं च सत्त्वादिगुणैः क्रियते तत्फलभूताः ... दिगतयोऽपीत्याह । अस्मिश्चेति । शुक्ललोहितकृष्णवर्णेन सात्त्विक... राजसतामसभेदभिन्नेन स्वारब्धेन स्वफलदानायोपस्थ... स्वर्गादिगतय आनुपूर्व्येण पर्यायेणात्मनः परमात्मनः प्रेरणा... सर्वेषां विधीयन्ते यथावर्णविधानं वर्णाश्रमविहितानुष्ठा... ननुभारतीनां प्रजानां यदि तिस्रो गतयस्तर्हि निजानन्दावि... लक्षणो मोक्षो दुरवस्थः किमिति तत्राह । अपवर्गश्चेति । न ... स्वर्गादिगतयोऽपि तु संसारदुःखनिवारणसमर्थो मोक्षश्चेति शब्दार्थः ॥ १९ ॥

अपिशब्दाद्यदा महतां पुरुषाणां श्रीनारायणपराय... सङ्गतिस्तदा योऽसौ भगवत्यनन्यनिमित्तभक्तियोगलक्षण ... भवतीत्यन्वयः न अन्यदैश्वर्यादिप्राप्तिनिमित्तं यस्य सोऽन... भिराः तादृशो भक्तियोगलक्षणस्तस्मात्स्वरूपानन्दाविर्भाव... मोक्षो भवतीति ज्ञातव्यं केन प्रकारेण तदुच्यते नाना ... पूर्वोक्तानां नाना गतीनां निमित्तहेतुभूतो यः अविद्याग्रन्थि... रन्धनद्वारेण दहनप्रकारेण भक्तियोगोऽप्येवं प्रकारेणान्य... इति दर्शयति सर्वभूतात्मनि भूतभवद्भविष्यत्सर्वजगद्न्तर्यामि... अनात्म्ये जीवधर्मरहिते अनिरुक्ते वेदैरपि सर्वात्मना निर्वक्तु... अनिलयने अनन्याधारे परा प्रकृष्टा मा श्रीर्येषां ते परमा... स्वेषामस्यानन्ददानादिकर्तरि संज्ञामाह । वासुदेव इति । ... नारकूणामपि मुक्तिदानसामर्थ्यमस्तीति द्योतयितुं वा...

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

हे इति द्विशब्दो भक्त्युत्पत्तौ सत्सङ्गतिः प्रयोजिकेति सूचयति भक्त्या मुक्तिर्भवतीत्येतदेव गायन्ति विद्वांसः ॥ २० ॥

एषामिति षष्ठी तृतीयार्थे किं शोभनं कर्म उत स्वित् किं भारतेऽजिरे भारताख्यप्राङ्गणे मुकुन्दसेवायामौपयिकं जन्म-लक्षणोपायस्तत्र स्पृहाऽस्माभिरिच्छामनस्कैः ॥ २१ ॥

क्रतुजयेन स्वर्गजयेन यत्र स्वर्गे श्रीनारायणपादपद्मस्मृतिः मुष्टा कुतः अतिशयेन्द्रियोत्सवाद्विषयभोगातिरेकात् स्वर्गस्थान् कर्मणा उद्दिश्येदं वचनं न देवान् तेषां सन्ततहरिस्मरणस्य प्रमाणसिद्धत्वात् ॥ २२ ॥

भारतलब्धजन्मनामपि पुनर्जन्मसम्भवात् कथं भारतभूजुषो वर इति प्रशस्यत इति तत्राह । क्षणेनेति । मनस्विनः क्षणकालेन मर्त्येन नश्वरेण देहेन कृतं कर्म हरौ संन्यस्य हरेरभयं पुनर्जन्मभयरहितं पदं संयान्तीति यस्मात्तस्मादिति शेषः कल्पायुषामित्यनेन महरादिलोकस्था लक्ष्यन्ते "कल्पायुषो विबुधा च" इति श्लोकैः ॥ २३ ॥

महरादिलोके विशिष्टभोगसम्भवात् कथं नीचीक्रियते भारतखण्डादिति तत्राह । न यत्रेति । यत्र महर्लोकादिषु तदाश्रयाः श्रीनारायणचरणसरसिजस्मरणजनकाः साधवो रागद्वेषादि-दोषलेशशून्या भागवता न सुलभाः यथेहात एव वैकुण्ठकथामृता-पगा अपि न अत एव विष्णुविषययज्ञाश्च न सन्ति तैः प्राप्यफलाभा-वात् पूर्वचीर्णकर्मफलभोगोत्सवेन गच्छत्कालत्वेनावसराभावान्नि-यतूष्णींभावाच्च "ध्यायन्तीव देवमनुष्या" इति श्रुतेः सुरेशस्वामिलोको महरादिः सेव्यतां न याति प्राप्यफलान्तरत्वेनेति शेषः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यथावर्णविधानमिति स्वस्वधर्मार्पणादिक्रमेणेत्यर्थः । एतच्च प्रायिकं यदा हि महापुरुषपुरुषप्रसङ्ग इत्यस्यैव मुख्यत्वेन वक्ष्यमाणत्वात् श्रीनारदजन्मवत् । प्रथम एव तत्प्रसङ्गेन तत्प्रवृत्तेः भक्तियोगलक्षणोऽप्यपवर्गो भवति । किमुतान्य इत्यर्थः ॥२०॥

अहो इति । छत्रिन्यायेन प्राचुर्योक्तिरियम् । तज्जन्मत्वेऽपि केषाञ्चिद्दुष्कर्मत्वतत्प्रसादाविषयत्वदर्शनात् । किं दुष्करैरित्यादि-वक्ष्यमाणाच्च । स्वयमिति यदाहीति पूर्वोक्तरीत्या स्वपुरुषानुसरणस्वभावेन स्वेनैव साधनेनेत्यर्थः ॥ २१ ॥ २२ ॥

संन्यस्य हरावर्पयित्वा ॥ २३ ॥

न यत्रेति । भगवद्भक्तौ भारत भूमिनियमोऽपि खण्डितः तत्-प्राप्तये सर्वस्यापि लोकस्य स्तुत्यत्वेनाभिप्रेतत्वात् । किन्तु भारतभूमौ तत्प्राचुर्यमस्तीति प्रस्तुता स्तुतिरेव ॥ २४ ॥ २५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

आत्मना देहेन च ॥ १७ ॥

अन्धो ब्रह्मपुत्रः ॥ १८ ॥

यस्मिन्नेव वर्षे नान्यत्र तथापि सहस्रयोजनप्रमाणे प्रदेशे सन्ति ज्ञेयम् । यदुक्तं विष्णुपुराणे ।

> भारतस्यास्य वर्षस्य नव भेदान्निशामय ।
> इन्द्रद्वीपः कशेरुश्च ताम्रवर्णो गभस्तिमान् ।
> नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः ।
> अयन्तु नवमस्तेषां द्वीपः सागरसम्भृतः ।
> योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरात् ।

सागरसम्भृत इति समुद्रप्रान्तवर्तीति श्रीस्वामिव्याख्या नवमस्यास्य पृथङ्नामाकथनात् नाम्नोऽपि नवद्वीपोऽयमिति गम्यते विशेषश्च तत्रैव ।

> पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्मृताः ।
> पूर्वे देशादिकाश्चैव कामरूपनिवासिनः ।
> ओड्रा कलिङ्गा मगधा दाक्षिणात्याश्च कृत्स्नशः ।

मारुका मालवाश्च ।

> इत्यादिचत्वारि भारते वर्षे युगान्यत्र महामुने ! ।
> कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न कचित् ।

इति वायवीये च ।

> भारतस्यास्य वर्षस्य नव भेदान्निबोधत ।
> सागरान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ।

इति । शुक्लोहितकृष्णवर्णेन सात्त्विकराजसतामसेन कर्मणा क्रमेण दिव्यादिगतयो बह्वः आत्मनः स्वस्य विधीयन्ते साध्यन्ते हि यस्मात् सर्वा एव गतयः सर्वेषां यथावर्णविधानमिति वर्णानां धर्मस्य अधर्मस्य च करणं सम्भवेदिति तदनतिक्रम्य आनुपूर्व्येण विधीयन्ते । वेदेनेति शेषः तथा अपवर्गश्चेति तस्य विधानुगशक्यत्वात् स स्वयमेव भवतीति चकारेणापवर्गस्य वैरल्यं द्योतितम् ॥ १९ ॥

ननु किंस्वरूपोऽपवर्गः कदा वा भवेदित्यपेक्षायामाह । योऽसाविति । भगवति परमकल्याणसौन्दर्यादिगुणवति अत एव सर्वभूतानामात्मा मनो यत्र माधुर्येण सर्वभूतचित्ताकर्षक इत्यर्थः । अत एवानात्म्ये आत्मनो भाव आत्म्यं न युज्यते प्राप्यत्वेन आत्म्यं आत्मत्वं यत्र तस्मिन् यत्र आत्मसेव्यत्वमेव युज्यते न तु आत्मत्वमात्मैक्यमित्यर्थः । यन्माहात्म्यं प्राकृतरागादिभिर्निर्वक्तुमशक्यमित्याह । अनिरुक्ते महाप्रलयेऽपि यद्रूपगुणादेर्नास्त्यभाव इत्याह । अनिलयने न विद्यते प्राकृतानां तत्त्वानामिव निलयनं लयो यस्य तस्मिन् सर्वेषामात्मा ज्ञातिप्रेमास्पदं ततोऽपि परमत्वात् परमात्मनि विशेषणैरेतैर्भजनीयत्वातिशयो व्यञ्जितः । वासुदेवे वसुदेवनन्दनेऽनन्यनिमित्तोऽहैतुको भक्तियोग एव लक्षणं स्वरूपं यस्य सः । नन्वपवर्गशब्देन रूढ्या मोक्ष एवोच्यते सत्यमविद्याध्वंसरूपस्य मोक्षस्य भक्तावन्तर्भावात् भक्तियोगोऽपि मोक्षादिशब्दवाच्य इत्याह । नाना गतीनां निमित्तं योऽविद्याग्रन्थिस्तस्य रन्धनं ध्वंसस्तद्द्वारेण तद्धेतुत्वेन अपवर्गसंज्ञ इत्यर्थः । कदा महापुरुषस्य विष्णोः पुरुषा भक्तास्तैः प्रकृष्टः सङ्गो यदा तदैव नान्यदा ॥ २० ॥

अमीषाममीभिः शोभनं सुकृतमुत स्विदथवा स्वयमेव साधनं विनैव हरिरेषां प्रसन्नोऽभूदेतादृशभाग्यस्य पुण्यजन्यत्वासम्भवादिति भावः । भारताजिरे भारताङ्गणे । ननु दुरात्मनामपि तत्र जन्म दृश्यते इत्यतो विशिषन्ति । मुकुन्दसेवौपयिकं हि यस्मात्तेऽस्माकं केवलं स्पृहैव यत्र न तु प्राप्तिः ॥ २१ ॥

ननु भवद्भिरपि भारते जन्म प्राप्यैव सत्कर्मभिर्दिवि सुखमुपभुज्यते इति चेदस्माकं तज्जन्म धिक् तानि कर्माण्यपि धिक् तत्प्राप्यं दिवमपि धिक् अत्यन्तं सुलभमपि धिगित्याशयेन ... यन्त आहुः । किमिति क्रतुजयेन स्वर्गप्राप्त्या किं न किञ्चिदपि फलं

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कुतः यत्र दिवि नारायणपादपङ्कजस्मृतिर्नास्ति । प्रत्युत अतिशयितादिन्द्रियाणामुत्सवाद्भोगात् स्मृतिः प्रमुष्टा ॥ २२ ॥

ब्रह्मलोकादपि सकाशात् भारतभूमेरुत्कर्षः खल्वपूर्वं एवेत्याह । कल्पायुषामिति । ब्रह्मलोके द्विपरार्द्धपर्यन्तनिवासादपि सकाशात् भारतभूमौ क्षणमात्र वासोऽपि श्रेष्ठ इत्यर्थः । तत्र हेतुः पुनर्भवात् ब्रह्मलोके तावान् वासोऽपि पुनर्भवप्रद इत्यर्थः भारते तु मर्त्येन मरणधर्मणापि देहेन क्षणेन क्षणमात्रकालेनापि मनस्विनो भगवच्चरणादत्तमनसः हरेः पदमभयं वैकुण्ठं ब्रह्मलोकमूर्द्धन्यपि पादौ निधाय यान्ति कृतं शुभाशुभं सर्वमेव कर्म संन्यस्य परित्यज्य ॥ २३ ॥

तस्माद्विवेकिनामयमेव विवेक इत्याहुः। न यत्रेति। वैकुण्ठकथासुधेव सर्वत आधिक्येन स्वाद्वी तदापगेव भूयसी नतु ज्ञानयोगादिकथेव अल्पा अल्पीयसी च । भागवता भगदालम्बिनः तदाश्रयाः तामेवाश्रयन्तः नतु परमात्मालम्बिनः ज्ञानादिसिद्ध्यर्थं तां किञ्चिन्मात्रीमपेक्षमाणाः यज्ञानां ब्रह्मयज्ञादीनामाङ्गिरसबृहस्पतिसवादीनामप्यन्येषां चेशस्यापि हरेर्मखाः "यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधस„ इति प्रमाणोक्तलक्षणाः सङ्कीर्त्तनबहुलाः परिचरणादिरूपाः महान्तः उत्सवा गीतनृत्यवाद्यभक्ताराधनाद्या येषु ते यत्र न सन्ति सः सुरेशस्य ब्रह्मणोऽपि लोकः न सेव्यतां नाश्रीयताम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नामभिः पुनन्तीनामर्थात् हे गङ्गे ! हे यमुने ! इत्येवं नामोच्चारणमात्रेणैव पवित्रीभूताः प्रजाः अपः आत्मना च देहेनाप्युपस्पृशन्ति ॥ १७–१८ ॥

अस्मिन्नेव वर्षे लब्धजन्मभिः शुक्लादिवर्णेन स्वारब्धेन स्वकृतेन कर्मणा आनुपूर्व्येण स्वकर्मानुसारेण दिव्याद्या गतयः सर्वा एव आत्मनो विधीयन्ते साध्यन्ते किञ्च सर्वेषां वर्णानां यथावर्णविधानं यस्य ब्राह्मणादिवर्णस्य यद्विधानं मोक्षोपायविधानं तदनतिक्रमेणापवर्गो मोक्षश्चापि भवति अस्मिन् वर्षे मोक्षसाधनप्राशस्त्यमिति भावः मुक्त्यधिकारस्तु देवानामपि दर्शितः । तदुपर्य्यपि बादरायणः सम्भवात् इति १-३-२६-३ ॥१९॥

भगवन् ! कोऽसौ उपायः तद्वर्णनं स्वयमेव कृपया कुरु इत्यत्र मोक्षोपायमाह । य इति । नानागतिनिमित्तायाः

अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्वगा ।

इतिस्मृतिप्रसिद्धायाः पुण्यपापरूपायाः अविद्यायाः ग्रन्थिरन्धनद्वारेण भगवति योऽसौ अनन्यनिमित्तो निष्कामः भक्तियोगलक्षणः इत्यन्वयः कथम्भूते नास्ति आत्मयम अरमभवं रागद्वेषादि यस्माद्भजनीयात्तस्मिन्ननिरुक्ते एतावानित्येवं वाचामगोचरे अनिलयने स्वाश्रये स भक्तियोगः यदा महापुरुषस्य भगवतः पुरुषैरंशैः प्रकृष्टः सङ्गो भवेत्तदा भवति ॥ २० ॥

एतदेव । भरतखण्डजानां कृतार्थत्वम् अणीपामेभिः ॥ २१ ॥

फल्गुना तुच्छेन अतिशयेन्द्रियोत्सवात् हेतोः प्रमुष्टा अभूत अतः नारायणपादपङ्कजस्मृतिरप्यत्र नास्ति २२ ॥

क्षणायुषामल्पायुषां क्षणेनाल्पेनायुषा मर्त्येन देहेन कर्म संन्यस्य अभयमपुनर्भवम् ॥ २३—२४ ॥

---

भाषा टीका ।

ये नदी नामहीं लेने से मनुष्यों को पवित्र करनेवाली हैं तहां पर भी भारतवासीजन इनके जलों से स्नान पानादि करते हैं ॥ १७ ॥

उन के नाम चन्द्रवशा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेणी पयस्विनी शर्करावर्ता तुङ्गभद्रा कृष्णा वेण्या भीमरथी गोदावरी निर्विन्ध्या पयोष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती सिन्धु अन्ध शोणनद महानदी वेदस्मृती ऋषिकुल्या त्रिसामा कौशिकी मन्दाकिनी यमुना सरस्वती दृषद्वती गोमती सरयू रोधस्वती सप्तवती सुसोमा शतद्रू चन्द्रभागा मरुद्वृधा वितस्ता असिक्नी विश्वा ए सब महानदी हैं ॥ १८ ॥

इसी भारतवर्ष मे जिनपुरुषों के जन्म भये हैं उन्हींके अपने प्रारब्ध के अनुसार सात्त्विक राजस तामस कर्म से देवता मनुष्य नारकी गति सबों को सब क्रम से विधान की जाती हैं और वर्णाश्रम के अनुसार धर्मों से मोक्ष भी उन को होता है ॥ १९ ॥

जब कभी भागवतों के सङ्गहोंने से सर्वभूतों के आत्मा देह दोष रहित वचन के अगोचर सर्वाधार परमात्मा भगवान् वासुदेव मे नाना प्रकार की गतियों के निमित्त अज्ञान ग्रन्थि का नाश करने वाला निष्काम भक्तियोगरूप भजन होता है वही मोक्ष है दूसरा मोक्ष नहीं ॥ २० ॥

इसी बात को देवता गान करते हैं अहो इन जीवों ने क्या पुण्य किया है किम्बा इन से उपर हरि भगवान् प्रसन्न हैं जिन ने भारत भूमी मे प्राप्त होकर मनुष्यों मे जन्म लिया है जोकि जन्म भगवान् की सेवा के योग्य है जिसमें हम लोगों की इच्छा होती है ॥ २१ ॥

हम लोगों के बड़े कठिन यज्ञों से तपसे व्रतों से अथवा दानादिकों से अतिक्षुद्र स्वर्ग से जय के क्या प्रयोजन है जहां पर की श्रीनारायण चरणारविन्द की स्मृति नहीं होती हैं उलटा और बड़े इन्द्रियों के आनन्द से नारायण स्मरण नष्ट होगया है ॥ २२ ॥

कल्पपर्यन्त आयुवाले ब्रह्मादिकों के स्थान के प्राप्त होने से तो भारत भूमी का प्राप्त होना अच्छा है क्योंकि ब्रह्मादिकस्थानों से तो फिर संसार में आना पडता है और इस भारत भूमी में तो उत्साही पुरुष क्षणभङ्गुर मनुष्य शरीर से सब कर्मों को परमात्मा में समर्पण करके क्षणमात्र हीं में अभय पुनरावृत्ति रहित श्रीहरि के स्थान वैकुण्ठ को चले जाते हैं ॥ २३ ॥

जहां पर श्रीनारायण कथा रूपी अमृत की नदी नहीं बहती हैं अथवा जहां पर भगवान् के आश्रय करने वाले भागवत साधु नहीं हैं जहांपर बड़े नाम संकीर्तनादि उत्सव वाले श्रीभगवान् के पूजनादिक नहीं होते हैं ऐसा तो चाहे ब्रह्मलोक या इन्द्र लोक होवै तो उसमें नहीं रहना चाहिये ॥ २४ ॥

---

प्राप्ता नृजातिं त्विह ये च जन्तवो ज्ञानक्रियाद्रव्यकलापसंभृताम्।
न वै यतेरन्नपुनर्भवाय ते भूयो वनौका इव यान्ति बन्धनम् ॥ २५ ॥
यैः श्रद्धया बर्हिषि भागशो हविर्निरुप्तमिष्टं विधिमन्त्रवस्तुतः।
एकः पृथङ्नामभिराहुतो मुदा गृह्णाति पूर्णः स्वयमाशिषां प्रभुः ॥ २६ ॥
सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत्पुनरर्थिता यतः।
स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम् ॥ २७ ॥
यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनम्।
तेनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्यद्भजतां शं तनोति ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

अमुमुक्षून्निन्दन्ति। प्राप्ता इति। ज्ञानञ्च तदर्थाः क्रियाश्च तदर्थानि द्रव्याणि च तेषां कलापेन सम्भृतां पूर्णामपुनर्भवाय मोक्षाय वनौका इव वनौकसः पक्षिणो यथा लुब्धकामुक्ता अपि पुनर्यदि तस्मिन्नेव वृक्षे प्रमत्ता विहरन्ति तर्हि यथा बध्यन्ते तद्वत् ॥ २५ ॥

अहो भारतवासिनां भाग्यमित्याहुः। यैरिति। "अग्नये जुष्टं निर्वपामि इन्द्राय जुष्टं निर्वपामि" इत्येवं भागशो निरुप्तं पृथक् कृतं कथं विधिना प्रकारेण मन्त्रेण च वस्तुतश्चरुपुरोडाशादिभेदेन चेष्टं देवतामुद्दिश्य त्यक्तं निरुप्तं च ममेदमिति स्वीकृत्य त्यागानन्तरमश्नातीत्यर्थः पृथगिन्द्रादिनामभिराहूत आहूतः आशिषां प्रभुः स्वयं पूर्णोऽपि हरिः ॥ २६ ॥

तत्रापि निष्कामाः कृतार्था इत्याहुः। सत्यमिति। प्रार्थितः सन्नर्थितं ददातीति सत्यं तथापि परमार्थदो न भवत्येव यद्यस्मायतो दत्तादनन्तरं पुनरप्यर्थिता भवति। ननु नार्थितश्चेत्किमपि न दद्यादित्याशङ्क्याहुः। अनिच्छतां निष्कामानां तु इच्छानां पिधानमाच्छादकं सर्वकामपरिपूरकं निजपादपल्लवं स्वयमेव सम्पादयति ॥ २७ ॥

स्विष्टस्य सम्यग्यजनस्य सूक्तस्य प्रवचनस्य कृतस्यान्यस्यापि कर्मणः स्वर्गसुखादुपभुक्तादवशेषितं यदि किञ्चिदस्ति तेनाजनाभे वर्षे नोऽस्माकं जन्म स्यात् कीदृशं स्मृतिमत् हरिरेव सेव्य इत्यनुसन्धानयुक्तम्। यतो हरिर्भजतां शं सुखं तनोति ॥ २८—२९—३०—३१ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं भारतवर्षेऽन्तरस्थान् विनिन्द्याधुना भारतवर्षस्थानपि अमुमुक्षून्निन्दन्ति। प्राप्ता इति। इहास्मिन् भारते वर्षे ये च जन्तवो जीवाः नृजातिं मनुष्यजन्म प्राप्ताः कथम्भूता द्रव्यक्रियाज्ञानकलापसम्भृतां द्रव्यं भूतपञ्चकं क्रिया कर्मेन्द्रियाणि ज्ञानं ज्ञानेन्द्रियाणि च एतेषां कलापेन सङ्घातेन च संभृतां पूर्णां भगवद्गुणकीर्तनार्चनपदक्रमणगुणश्रवणविग्रहावलोकनसमर्पितगन्धस्याघ्राणोपयुक्तस्रग्गन्धवासोऽलंकारचार्चितोच्छिष्टभोजनादिरूपसर्वविधभगवत्सेवोपयुक्तज्ञानकर्मेन्द्रियतदाश्रयभूतसङ्घातपूर्णामित्यर्थः एवम्विधां नृजातिं प्राप्ता अपि यद्यपुनर्भवाय मुक्तये न यतेरन् यत्नं न कुर्युश्चेत्तर्हि भूयः पुनः वनौका इव वने स्थिता ओकाः शकुन्ता इव "ओकः शकुन्तपृशतौ" इति कोशः "उच समवाये" इत्यस्माद्धातोः कप्रत्यये गुणः कुत्वं च "ओकउचः क" इतिसूत्रेण निपात्यते कप्रत्ययस्तु "इगुपधज्ञाप्रीकिरः क" इत्यधिकारे "घञर्थे कविधानम्" इतिवचनेन यद्यपि घञ्यप्येतद्रूपसिद्धिस्तथाप्यन्तोदात्तार्थमिदं निपातनं घञि सति ञित्स्वरेणाद्युदात्तः स्यात् दिवौकसः जलौकस इत्येवमादौ तु असुप्रत्यये "उणादयो बहुलम्" इति वचनात्कुत्वं द्रष्टव्यं यथा शकुन्ता लुब्धकान्मुक्ता अपि पुनर्यदि तत्रैव प्रमत्ताः विहरन्ति तर्हि पुनर्यथा बध्यन्ते तद्वत् ॥ २५ ॥

अहो भारतवासिनां भाग्यमित्याहुः। यैरिति। यैर्भारतवासिभिर्नरैः बर्हिषि यज्ञे श्रद्धया विधिना प्रकारेण मन्त्रेण वस्तुतश्चरुपुरोडाशादिभेदेन चेष्टं देवतोद्देशेन त्यक्तं तथा भागशः "अग्नये त्वा जुष्टं निर्वपामि" इत्येवं भागशो निरुप्तं च हविः अग्नीन्द्रादिरूपेणैक एव स्थितः पृथग्नामभिरग्नीन्द्रादिनामभिराहुतः हुत इति दीर्घाभाव आर्षः पूर्णः स्वतोऽवाप्तसमस्तकामः अविजिघत्सोऽपि इति यावत् हविर्गृह्णातीत्यर्थः पूर्णः किमर्थं गृह्णाति तत्राह आशिषां प्रभुरिति। यत आशिषां पुरुषार्थानां प्रभुर्दाता अतो यष्टॄणामाशिषः प्रदातुं तत्कृताराधनं परिगृह्णातीत्यर्थः तदुक्तं भगवता "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति ॥ २६ ॥

आशिषां प्रभुरित्यनेन धर्मादिचतुर्विधपुरुषार्थेप्सुभिर्भगवान् भारते वर्षे आराध्य इत्युक्तं तत्रापि केवलमुमुक्षून् स्तुवन्ति। सत्यमिति। अर्थितस्तत्तत्पुरुषार्थेप्सुभिः प्रार्थितः सन् भगवानर्थितं याचितं तं पुरुषार्थं दिशति ददातीति सत्यं तथापि नैवार्थदः न परमपुरुषार्थदः अस्थिराल्पपुरुषार्थदो न तु नित्यनिरतिशयमोक्षरूपार्थप्रदोऽभूदित्यर्थः अर्वाचीनपुरुषार्थदानानन्तरमप्यर्थितुर्याञ्चाया अनिवृत्तेरर्थितं दिशन्नपि न दत्तवानिति भावः एतदेवाह। जनः अवाप्तपुरुषार्थोऽपि यतः पुरुषार्थान्तरं पुनरीश्वरं प्रत्यर्थिता याचिता एवमितरपुरुषार्थेप्सूनां नित्ययाचकत्वान्नित्यदरिद्रत्वमुक्तं तथा च वक्ष्यत्येकादशे "दरिद्रो यस्त्वसन्तुष्टः" इति अथानिच्छतां मुमुक्षूणां सर्वपुरुषार्थानां मोक्षान्तर्भावादाढ्यत्वमाहुः अनिच्छतामकामयमानानां भजतां जनानाम्

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इच्छापिधानम् इच्छायाः पिधानमाच्छादकं स्वकीयं पादपल्लवं स्वयमेव विधत्ते समस्तपुरुषार्थरूपं स्वात्मानमेव ददातीत्यर्थः॥२७॥

एवं भारते मुमुक्षून् प्रस्तूयाथ स्वमनीषितमाविष्कुर्वन्तस्तमेव भारतं स्तुवन्ति । यदीति । यदि नः अस्माकं कृतस्य स्विष्टस्य सम्यग्यजनस्य सूक्तस्य प्रवचनस्य स्वर्गसुखावशेषितं स्वर्गसुखेनावशेषितम् अस्माभिः कृतं यागादिरूपं स्वर्गादिसुखं सम्पाद्य किञ्चिच्छोभनं सुकृतमुपभुक्तावशिष्टमस्ति चेदित्यर्थः तेन आचरितेन शुभेन कर्मणा नोऽस्माकमजनाभे भारते वर्षे भगवद्विषयकस्मृतिमज्जन्म नृजन्म स्यात् नृजन्मन्येव भगवद्विषयकस्मृतिसम्भवात् सम्भावितस्मृतिमात्रजीवजन्मना किं स्यादित्याहुः । यतः स्मृतिवशाद्भजतां हरिः शं सुखं मोक्षरूपं सुखं तनोति ददातीत्यर्थः ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि भारतं पुण्यक्षेत्रमाहुरित्याह । प्राप्ता इति इह भारते ये जन्तवः प्राणिमात्रनामानोऽपुनर्भवाय मोक्षाय न यतेरंस्ते भूयो वनौका इव निरयवासिन एव न चैषां पुनरुत्थितिरित्याह । यान्तीति "वनन्तु नरकं विन्द्याद्भजने" इत्यभिधानं ये च नृजातिपुरुषत्वेन जननं प्राप्ताः "जातिः सामान्यजन्मनोः" इत्यभिधानं मुक्तये न यतेरंस्ते सुतरां भूयो वनौका महातमःस्थानयोग्याः एवशब्दवदोकशब्दोऽकारान्तः नानार्थेषु शब्दानामेकान्तत्वेन पाठात् "वर्हिर्नाग्नौ नपुंसक" इत्यादिषु ये च नृनय इतिभातोज्ञानकर्मयोग्यविप्रजातिं प्राप्तास्तेततोऽपि भूयो वनौकाः ॥ २५ ॥

अशेषसाधनत्वेन भारतस्योत्तमत्वमितरखण्डेभ्यो यतोऽत्र क्रियमाणञ्कर्म यज्ञादिलक्षणं श्रीहरिप्रीतिजनकमतः स्तुवन्तीत्याह । यैरिति । भारतवासिभिर्यैः श्रद्धया वर्हिषि यज्ञे निरुप्तं हविराशिषां प्रभुरेकः स्वयम्मुदा गृह्णाति । कथं निरुप्तं विधिमन्त्रवस्तुतो भागशः इदंइन्द्राय निर्वपामि प्रजापतये निर्वपामि, इति पृथङ्निरुप्तम् "इन्द्रं यजाग्निं यज" इति पृथगिदं विधिमन्त्राणामिन्द्रादिविषयत्वेन सिद्धत्वात् कथमेको हरिर्गृह्णातीत्युच्यत इति तत्राह । नामभिरिति । इन्द्रादिनामभिरत्राहुतः विप्रेश्वरादिवत्प्राप्तव्यफलापेक्षी नेत्याह । पूर्ण इति । कुतः आशिषां प्रभुत्वात् ॥ २६ ॥

न केवलं हविरादाय तूष्णीमास्ते हरिः फलं च प्रयच्छतीत्याहुरित्याह । सत्यमिति । अर्थितो हरिस्तेषां यज्वनां नृणाम् अर्थितं स्वर्गादिकं दिशतीति सत्यं शपथेन प्रतिजानीते प्राप्तस्वर्गेरर्थितोऽपि पुनः फलं नैव दिशतीति इदञ्च सत्यम् अर्थिनो मदो भवतीति यत्तस्मात् "अपाम सोमम्" इत्यादेः तस्मात् पुनरार्थितं प्राप्य पुनः प्रार्थयमानस्य प्रार्थितो न दिशतीति । अमद इति । यदिति या तर्हि तत्रत्यानां स्वर्गादिकमेव दिशति न मोक्षमित्याशङ्कामामूदित्याहुरित्याह । स्वयमिति । इच्छाया विधानं यस्मात्तदिच्छाविधानम् अभीष्टं निजपादपल्लवम्भजतां फलमनिच्छतां भक्तिमन्तरेण तेषां स्वयमात्मानं विधत्ते ददाति ॥ २७ ॥

स्वाभिप्रेतमाहुरित्याह । यद्यत्रेति । यत्र यस्मिन् भारतेऽपि वर्षे हरिर्निजपादपद्मं भजतां शं सुखं तनोतीति यद्यस्मात्तस्मात्त्वः स्विष्टादेः स्वर्गसुखावशेषितं स्वर्गसुखमनुभूयावशिष्टं यच्छोभनं तेन पुण्येन नोऽस्माकमञ्जनाभस्मृतिनिमित्तं जन्म स्यादिति प्रार्थयामहे । तदुक्तम् ।

अनधिकारिणो देवाः स्वर्गस्था भारतोद्भवम् ।
वाञ्छन्त्यात्मविमोक्षार्थमुद्रेकार्थेऽधिकारिणः ।

इति वेदैर्गीतमिति ज्ञायते अनेन शास्त्रतात्पर्यार्थोऽपि वि... दिग्ध इति बोद्धव्यम् ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

हर्षपर्याममेव दर्शयति । यैर्नामभिरिदं देवतामुद्दिश्य त्यक्तं ... देव भागशस्तत्तद्देवतामुद्दिश्य निरुप्तं पृथक् कृतं सत् पूर्ण... दिनामभिरप्याहूत एक एव मुदा गृह्णाति तमुद्दिश्यैव तत्... त्यक्तत्वादिति भावः ॥ २६ ॥

सत्यमिति । अर्थितः प्रार्थितः सन् नृणामर्थितं सत्यमेव ... न तत्र कदाचिदपि व्यभिचार इत्यर्थः । किन्तु तथापि तन्मा... यदा न भवति । तन्मात्रं दत्त्वा निवृत्तो न भवतीत्यर्थः । यत ... सकस्तत्रापूर्णत्वाद्भोगच्छये सति यदेव पुनरप्यर्पिता भवति "न ... कामः कामानामुपभोगेन शाम्यति" इत्यादेः । तदेवमभिप्रेत्य सुख... मकारुणिकस्तत् पादपल्लवमाधुर्यज्ञानेन तदनिच्छतामपि ... मिच्छापिधानं सर्वकामसमापकं निजपादपल्लवमेव ... तेभ्यो ददातीत्यर्थः । यथा माता चर्व्यमाणां मृत्तिकां बा... मुखादपसार्य तत्र खण्डं ददाति तद्वदिति भावः । एवमपु... "अकामः सर्वकामो वा मोक्षकाम" इत्यादौ तीव्रत्वं भक्तेः । त... गारुडे ।

यद्दुर्लभं यदप्राप्यं मनसो यन्नगोचरम् ।
तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः इति ॥ २७—...

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तादृशं भारतं प्राप्ता अप्यकृतार्था अतिशयेन शोच्या एव ... लब्धचिन्तामणयोऽपि पूर्ववत् कृपीवला एवेत्याहुः । प्राप्ता ... ज्ञानमधिदैवं क्रिया अध्यात्मं द्रव्यमधिभूतं तेषां समूहैः ... पूर्णा श्रवणादिसर्वेन्द्रियैः पूर्णामिति हरिनामश्रवणकीर्तन... सम्भवेऽपीति भावः । अपुनर्भवाय भक्तियोगाय वनौका इव ... कसः पक्षिणो यथा लुब्धकान्मुक्ता अपि पुनर्यदि तस्मिन्नेव ... प्रमत्ता विहरन्ति तर्हि यथा बध्यन्ते तद्वत् ॥ २५ ॥

अत्र भारते "एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुख... इत्यादिश्रीभगवदुक्तां भगवद्विभूतिबुद्ध्या विश्वरूपोपास... मपि कुर्वाणा धन्या एवेत्याहुः । यैरिति । बर्हिषि यज्ञे ... प्रकारेण मन्त्रेण वस्तुतश्च हविर्यज्ञीयद्रव्यमिदं शुद्धं ... इन्द्राय स्वाहा अग्नये स्वाहा इत्यादि पृथक् कृतं निरुप्तं दत्तं पू... आशिषां प्रभुः हरिस्तेषां भक्त्या गृह्णाति एकोऽपि पूर्ण... दिनामभिराहुतः आहूतः ॥ २६ ॥

शुद्धां भक्तिं कुर्वाणास्तु सकामा अपि कृतार्था नि... भक्ततुल्या एव भवन्तीत्याहुः । सत्यमिति । नृणां भजना... कामितं पदार्थं तैरर्थितः सन् दिशति ददातीति सत्यं ... यद्यथा पुनरर्थिता भोगान्ते याचकत्वं स्यात्तथा ... कथमेवगवगतमित्यत आह । यतः निजपादपल्लवमनिच्छ... भजतां स्वयमेव ध्रुवादीनामिव इच्छापिधानं सर्वकाम...

श्रीशुक उवाच ।

जम्बूद्वीपस्य च राजन्नुपद्वीपानष्टौ हैक उपदिशन्ति सगरात्मजैरश्वान्वेषण इमां महीं परितो निखनद्भिरुपकल्पितान् ॥ २९ ॥

तद्यथा स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्त्तनो रमणको मन्दरहरिणः पाञ्चजन्यः सिंहलो लङ्केति ॥ ३० ॥

एवं तव भारतोत्तम ! जम्बूद्वीपवर्षविभागो यथोपदेशमुपवर्णित इति ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां जम्बूद्वीपवर्णनं नाम
एकोनविंशतितमोऽध्यायः ॥ १९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदैव निजपादपल्लवं विधत्ते कृपया ददाति निजपादपल्लवं स्वयमेव बलाद्दत्वा इच्छायाः पिधानमाच्छादनं विधत्ते करोतीति वा । ततश्चानभीप्सितामपि सितशर्करां पितुः सकाशात् प्राप्य शिशवो यथा मृदि स्पृहां त्यजन्ति तथैव कामानपीत्यर्थः । अत एव "अकामः सर्वकामो वा" इत्यादौ तीव्रेण ज्ञानकर्माद्यमिश्रेण भक्तियोगेन यजेतेत्युक्तम् । अत्र निष्कामाणां सकामानाञ्च भक्तानामन्ततः पादपल्लवप्राप्तावपि नैव सर्वथा ऐकरूप्यं भावनीयम् । न हि जात्यैव शुद्धं बलात् शोधितञ्च वस्तुतुल्यमूल्यं भवत्यतो ध्रुवादिभ्यः सकाशाद्धनुमदादीनामुत्कर्षः परम एव दृश्यत इति ॥ २७ ॥

अत एव प्रार्थयन्ते । यद्यत्रेति ! स्विष्टस्येति स्विष्टादिजन्यात् स्वर्गसुखादुपभुक्तादवशेषितं शोभनं सुकृतमस्ति तेन हेतुना अजनाभे भारते जन्म स्यात् स्मृतिमदिताद्दशौत्सुक्यस्मरणयुक्तम् । ततश्च तत्र साधुसङ्गं कृत्वा हरिं भजिष्यामः यस्माद्भजतां हरिः शं तनोत्येव ॥ २८—३१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नित्यवद्वासिन्दन्ति । प्राप्ता इति । ज्ञानञ्च तत्पूर्विका क्रिया वासुदेवाराधनं तदर्थानि द्रव्याण्याराधनोपकरणानि च तेषां कलापेन संभृतां पूर्णां वनौका वनौकसः ॥ २५ ॥

सकामानामपि भगवद्भक्तानां भारतवासिनामहोभाग्यमिवाहुः । यैरिति । बर्हिषि यज्ञे यैः भारतवासिभिः "अग्नये जुष्टं निर्वपामि इन्द्राय जुष्टं निर्वपामि" इत्येवं भागशो निरुप्तं पृथक् कृतम् अद्धया विधिना प्रकारेण च मन्त्रेण वस्तुतश्च चरुपुरोडाशादिभेदेन द्रव्यं देवतोद्देशेन त्यक्तं पृथगिन्द्रादीनां नामभिः आहूतः आहूतः आशिषां प्रभुः स्वयं पूर्णोऽपि भगवानेक एव हविः गृह्णाति "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति श्रीमुखवचनात् ॥ २६ ॥

निष्कामभक्तास्तु कृतार्था इत्याहुः । सत्यमिति । अर्थितः प्रार्थितः अर्थितं याचितं पुरुषार्थं ददातीति सत्यमथापि अर्थदः पुमपुरुषार्थदो न भवति यद्यस्मायतो दत्तानन्तरं पुनरर्थिता इच्छा भवति अनिच्छतां निष्कामानां भजतां तु इच्छानां पिधानमाच्छादकं सर्वकामपरिपूरकं निजपादपल्लवं स्वयमेव विधत्ते ददाति ॥ २७ ॥

यदि नोऽस्माकं स्विष्टस्य सम्यग्यजनस्य प्रवचनस्य कृतस्य अन्यस्यापि तपोव्रतादेरनुष्ठितस्य स्वर्गसुखादुपभुक्तादवशेषितमवशिष्टं शोभनं पुण्यं यत्किञ्चिदस्ति तर्हि तेन शोभनेन अजनाभे वर्षे नोऽस्माकं जन्म स्यात् कीदृगत्र वर्षे हरिं यजतां भजतां शं सुखं तनोतीति स्मृतिमत् ॥ २८ ॥

भाषाटीका ।

जो जन्तु इस भारतवर्ष में ज्ञानेन्द्रिय कर्मेन्द्रिय पञ्च भूत समूह रूप मनुष्यजाति को प्राप्त होकरभी मोक्ष के वास्ते यत्न नहीं करते हैं वे लोग वन के पक्षी के तुल्य फिर बन्धन में ही प्राप्त होते हैं ॥ २५ ॥

जिन भारत वासिमनुष्यों के विधिपूर्वक मन्त्रों से वस्तुओं द्वारा यज्ञ में पृथक् भाग से प्रदान किये हवि को स्वयं चारों पुरुषार्थों के पति भी एकहोकर भी भगवान् भिन्न नामों से देने परभी परिपूर्ण होकर भी बुलाने पर बड़े हर्ष से ग्रहण करते हैं ॥ २६ ॥

यद्यपि भगवान् उन सकाम पुरुषों को देते हैं सो ठीक है परन्तु तौभी वह देना ठीक नहीं होता है क्योंकि उस के भोग होजाने पर फिर मांगना पड़ता है और निष्काम भक्त सो इच्छा नहीं करते हैं तौभी सब इच्छाओं के दूरकरने वाले अपने चरण के स्मरण को भगवान् दे देते हैं तिस से फिर चाहना नहीं होती है ॥ २७ ॥

यदि इहां पर स्वर्ग सुख से शेष सुन्दर यज्ञ का वा वेदाध्ययन का वा सुकृत का कुछ पुण्य होवे तिस से भारत वर्षमें हरिस्मरण सहित हमारा जन्म होवे जहांपर कि भजन करने वालों का भगवान् कल्याण करते हैं ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।
इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
ऊनविंशोऽध्यायः ॥ १९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं नवखण्डात्मकं जम्बूद्वीपं ससंस्थानं सपर्यतनदिं सवर्णाश्रमधर्मवन्मनुजमुपवर्ण्याथ जम्बूद्वीपस्योपद्वीपानष्टौ आह । जम्बूद्वीपस्येति । हे राजन् ! एके अभियुक्ता अद्धा जम्बूद्वीपस्योपद्वीपान् उपदिशन्ति ते जम्बूद्वीपाः न प्रियव्रतस्य रथचरणनेमिना परिक्लृप्ता इत्याह । सगरात्मजैः यागीयाश्वस्यान्वेषणसमये इमां जम्बूद्वीपात्मिकां पृथिवीं तत्र निखनद्भिरवदारयद्भिरुपकल्पिताः ॥ २९ ॥

तेषामुद्देशं प्रतिजानीते । तद्यथेति । तानुद्दिशति स्वर्णप्रस्थ इत्यादिना ॥ ३० ॥

एवं सोपद्वीपं जम्बूद्वीपमुपवर्ण्योपसंहरति । एवमिति । हेभारतोत्तम ! जम्बूद्वीपस्य ये वर्षा इलावृतादयस्तेषां विभागो यथोपदेशं यथाक्रममनुवर्णितः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एक इति विशेषणाद्विशेषविवक्षवोऽष्टावुपद्वीपानुपदिशन्ति । सामान्यविषक्षवस्तान् समुद्रैकदेशानिति ॥ २९ ॥ ३० ॥ ३१ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।
इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
ऊनविंशः पञ्चमस्य सङ्गतः सङ्गतः सताम् ॥ १९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इमां महीं निखनद्भिरित्यनेन नवसहस्रयोजनविस्तारो भारतखण्डस्तत्र भूखननजलप्रवेशादिनाल्पविस्तारोपलब्धिनं विरुद्धा इति सूचितम् ॥ २९—३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
ऊनविंशाध्यायार्थप्रकाशः ॥ १९ ॥

---

भाषाटीका ।

श्री शुकदेव जी बोले हे राजन् ! कोई मुनि जम्बूद्वीप के आठ उपद्वीप हैं ऐसा कहते हैं जिन को कि घोड़ा के ढूंढने समय में सगर के पुत्रों ने पृथिवी के खोदने से बनाये हैं ॥ २९ ॥

सो जैसे स्वर्णप्रस्थ चन्द्रशुक्ल आवर्तन रमणक मन्दरहरिण पाञ्चजन्य सिंहल लङ्का इनके नाम हैं ॥ ३० ॥

हे भारत ! इस प्रकार से जम्बूद्वीपवर्षोंका विभाग जैसा सुना है तैसा तुम से हमने वर्णन करदिया है ॥ ३१ ॥

इति श्रीभागवत पञ्चमस्कन्ध उन्नीसमें अध्यायका
भाषानुवाद लक्ष्मणाचार्य कृत
समाप्त ॥ १९ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे ऊनविंशोऽध्यायः समाप्तः ॥ १९ ॥

## ॥ विंशोऽध्यायः ॥

———:०:———

॥ श्रीशुक उवाच ॥

अतः परं प्लक्षादीनां प्रमाणलक्षणसंस्थानतो वर्षविभाग उपवर्ण्यते ॥ १ ॥

जम्बूद्वीपोऽयं यावत्प्रमाणविस्तारस्तावता क्षारोदधिना परिवेष्टितो यथा मेरुर्जम्ब्वाख्येन लवणोदधिरपि ततो द्विगुणविशालेन प्लक्षाख्येन परिक्षिप्तो यथा परिखा बाह्योपवनेन प्लक्षो जम्बूप्रमाणो द्वीपाख्याकरो हिरण्मय उत्थितो यत्राग्निरुपास्ते सप्तजिह्वस्तस्याधिपतिः प्रियव्रतात्मज इध्मजिह्वः स्वं द्वीपं सप्त वर्षाणि विभज्य सप्तवर्षनामभ्य आत्मजेभ्य आकलय्य स्वयमात्मयोगेनोपरराम ॥ २ ॥

शिवं यवयसं सुभद्रं शान्तं क्षेममममृतमभयमिति वर्षाणि तेषु गिरयो नद्यश्च सप्तैवाभिज्ञाताः ॥३॥

मणिकूटो वज्रकूट इन्द्रसेनो ज्योतिष्मान् सुपर्णो हिरण्यष्ठीवो मेघमाल इति सेतुशैलाः अरुणा नृम्णाङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरा इति महानद्यः यासां जलोपस्पर्शनविधूतरजस्तमसो हंसपतङ्गोर्ध्वायनसत्याङ्गसंज्ञाश्चत्वारो वर्णाः सहस्रायुषो विबुधोपमसंदर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्यमात्मानं यजन्ते ॥ ४ ॥

प्रत्नस्य विष्णो रूपं यत्सत्यस्यर्तस्य ब्रह्मणः । अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहीति ॥५॥

प्लक्षादिषु पञ्चसु पुरुषाणामायुरिन्द्रियमोजः सहो बलं बुद्धिर्विक्रम इति च सर्वेषामौत्पत्तिकी सिद्धिरविशेषेण(१) वर्तते ॥ ६ ॥

प्लक्षः स्वसमानेनेक्षुरसोदेनावृतो यथा तथा द्वीपोऽपि शाल्मलो द्विगुणविशालः(१)समानेन सुरोदेनावृतः परिवृङ्क्ते ॥ ७ ॥

यत्र ह वै शाल्मली प्लक्षायामा यस्यां वाव किल निलयमाहुर्भगवतश्छन्दःस्तुतः पतत्त्रिराजस्य सा द्वीपहूतये उपलक्ष्यते ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विंशे प्लक्षादिषड्द्वीपस्थितिमाह सहार्णवैः ।
लोकालोकस्थितिश्चान्तर्बहिर्भागादिमानतः ॥ १—१ ॥

तावता लक्षविस्तारेण परिक्षिप्तः परिवेष्टितः । उपास्ते तिष्ठति आकलय्य समर्प्य ॥ २ ॥

अभिज्ञाताः प्रसिद्धाः सन्त्येव अन्ये च पर्वता नद्यश्च सहस्रशः सन्तीत्यर्थः । मानसोत्तरस्य मण्डलाकारत्वोक्तेरेतेषु प्लक्षादिषु द्वीपेषु वर्षाद्रयस्तिर्यग्रेखाकारा उभयतोऽब्धिस्पृश इति गम्यते अन्यथा सप्तभिः सप्तवर्षविभागासम्भवात् वैष्णवे वर्षाणां पूर्वादिक्रमोक्तेश्च ॥ ३ ॥

जलोपस्पर्शनेन विधूतं रजस्तमश्च येषां हंसादयो ब्राह्मणादिस्थानीयाः विबुधोपमं संदर्शनं क्लमस्वेदादिरहितं रूपं प्रजननमपत्योत्पादनं च येषाम् ॥ ४ ॥

विगीता अपि द्वीपमन्त्रा व्याख्यायन्ते प्रत्नस्य पुराणपुरुषस्य विष्णोर्यद्रूपं तं सूर्यमीमहि शरणं व्रजेम कथंभूतम् सत्यादीनामात्मानमधिष्ठातारं तत्र सत्यमनुष्ठीयमानो धर्मः ऋतं प्रतीयमानो धर्मः ब्रह्मणस्तद्बोधकस्य वेदस्य । अमृतस्य शुभफलस्य मृत्योरशुभफलस्य ॥ ५—६—७ ॥

"सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिर" इत्यादिश्रुतेश्छन्दोभिः स्वावयवभूतैः श्रीविष्णुं स्तौतीति छन्दःस्तुत् तस्य गरुडस्य निलयनं स्थानं सा शाल्मली द्वीपस्य हूतये व्यपदेशाय ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं जम्बूद्वीपः सप्रपञ्चमुपवर्णितः अथ प्लक्षादीनां द्वीपानामुपवर्णनं प्रतिजानीते शुकः । अतः परमिति । प्लक्षादीनां ये वर्षा-

---

परिवृत्तेनेति श्रीविजयध्वजतीर्थपाठः । (१) स्वमानेनेति श्रीवीरराघवाचार्यपाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतेषां विभागः प्रमाणं परिमाणं लक्षणं तेषु वसतामायुरिन्द्रियौजःसहोबलबुद्धिविक्रमादीनां स्वभावतो वर्द्धकत्वरूपं संस्थानमनितरासाधारणाकारः एभिरुपवर्ण्यते ॥ १ ॥

तावत् प्लक्षद्वीपमुपवर्णयति । जम्बूद्वीप इत्यादिना जम्ब्वाख्येनेत्यन्तम् । दृष्टान्तार्थं यथा जम्बूद्वीपो यावद्विस्तारः लक्षयोजनविशालः । तावता लक्षयोजनविस्तीर्णेन क्षारोदधिना लवणसमुद्रेण परितो वेष्टित आवृतः यथा च मेरुर्द्वीपमध्यस्थो जम्ब्वाख्येन द्वीपेन परिवेष्टित इत्यनुषङ्गः तथा लवणोदधिरपि ततः लवणोदधेर्द्विगुणविशालेन द्विलक्षयोजनविस्तीर्णेन प्लक्षाख्येन परितः अभितः क्षिप्तः आवृतो जम्बूद्वीपस्याप्यन्नत्यैः साकल्येनादृष्टत्वात् अप्रसिद्धत्वात् दृष्टान्तान्तरमाह । यथा परिखा बाह्योपवनेन परिक्षिप्तेति खिङ्गपरिणामेनानुषङ्गः द्वीपंमध्यस्थः प्लक्षो वृक्षः जम्बूप्रमाणः जम्बूवृक्षतुल्योच्छ्रायः द्वीपस्य आख्यातिराख्यानं यत् प्लक्षेति नामधेयं तत्कर आपादकः हिरण्मयः प्रकाशबहुलः उत्थित ऊर्ध्वं स्थितः यत्र यस्मिन् प्लक्षवृक्षमूले सप्त जिह्वाः ज्वाला यस्य तादृशोऽग्निरुपास्ते तिष्ठति तस्य द्वीपस्याधिपतिरधिपतिरित्यनेन चिरं तद्द्वीपाधिपत्यं कृतवानिति गम्यते प्रियव्रतस्यात्मज आग्नीध्रानुज इध्मजिह्वः तं प्लक्षद्वीपं सीमाबन्धनेन सप्तवर्षात्मकं विभज्य सप्तानां वर्षाणां नामानि तान्येव नामानि येषां तेभ्यः पुत्रेभ्यः सप्त वर्षाणयथाकलप्य समर्प्य स्वयमात्मयोगेन भगवदुपासनात्मकभक्तियोगेनोपरराम उपरतः संसारान्मुक्तोऽभूदित्यर्थः ॥ २ ॥

पुत्रनामानि वर्षाणि निर्दिशति । शिवमित्यादिना । तान्पुत्रानाकलय्येति पूर्वेणान्वयः तेषु वर्षेषु गिरयो नद्यश्च सप्त सप्तैवाभिज्ञाताः प्रसिद्धा आसन्नित्यर्थः तावत्पर्वतान्नामाभिर्निर्दिशति । मणिकूट इति मेघमाल इत्यन्तेन । एत एव वर्षाणां मर्यादागिरय इत्याह । सेतुशैला इति । नदीर्निर्दिशति नामभिः अरुणेत्यादिना विश्वम्भरेत्यन्तेन । इतिशब्देनैतैरेव नामभिस्तत्र तत्र शिवादिवर्षे व्यवह्रियन्त इति सूच्यते नदीर्विशिनष्टि । महानद्य इति । स्वच्छत्वपवित्रत्वविस्तृतत्वादिमहागुणाश्रया इत्यर्थः ॥ ३ ॥

पुनस्ता एव नदीर्विशिंषंस्तेषु प्लक्षद्वीपवर्षेषु चतुरो वर्णान्नामभिर्निर्दिशन्नेषामायुःपरिमाणमुपास्यञ्चाह । यासामिति । यासामरुणादिनदीनां जलस्योपस्पर्शेन स्नानपानादिना विधूतं रजस्तमश्च येषां ते चत्वारो वर्णा हंसादिसंज्ञाः ब्राह्मणादिसंज्ञास्थानीया हंसादिसंज्ञाः सहस्रं वर्षाण्यायुरेषां ते तादृशाः विबुधोपमं संदर्शनं सौन्दर्यं येषां तानि प्रजननान्यपत्यानि येषामेवम्भूताः सन्तस्त्रय्या विद्यया वेदविद्यया वेदोक्तकर्मयोगादिभिः तन्मूलस्मृत्याद्युक्तमार्गैश्च यथायोग्यं त्रयीमयम् ऋग्यजुरादिवेदप्रचुरं तद्वारकत्वात् तदध्यापयितृत्वात्तत्प्रतिपाद्यत्वाच्च तत्प्राचुर्यं योग्यं सूर्यं सूर्यशरीरकमात्मानं परमात्मानं यजन्ते आराधयन्ति ॥ ४ ॥

तेषां जप्यमानमन्त्रमाह । प्रत्नस्येति । प्रत्नस्य पुराणस्यानादेर्जगत्कारणस्येति यावत् सत्यस्य निर्विकारस्य प्रत्नस्येत्यनेन समष्टिजीवव्यावृत्तिः तस्य सादित्वात् सत्यस्येत्यनेन व्यष्टयवस्थचेनाचेतनव्यावृत्तिः तयोर्विकारित्वात्तस्य निरतिशयसुकृतफलस्य धर्मादर्वाचीनसुकृतफलप्रदस्येत्यर्थः ऋतस्य तदधीनत्वादुपचारस्तद्भेदेन निर्देशः ऋतशब्दो हि सुकृतफलपरः "ऋतं पिबन्तौ सुकृतस्य लोके" इति श्रौतप्रयोगात् । यद्वा । ऋतशब्दः पुण्यकर्मणो वाचक उपचारात्तदन्तरात्मतया तत्कारयितरि प्रयुक्तः पुण्यस्य कर्मणः कारयितुरित्यर्थः तत्कारयितृत्वञ्च श्रुतेः "एष ह्येव साधु कर्म कारयति यमुन्निनीषति" इति ऋतशब्दो हि पुण्यकर्मणोऽपि वाचकः "यथा पुण्यस्य कर्मणो दूराद्गन्धो वाति" पुण्यं कर्म प्रस्तुत्य तत्प्रतिसम्बन्धिनो पुण्यस्य कर्मण एवम् "अनृतादात्मानं जुगुप्सेत" इत्यनृतशब्देन निर्देशात्पुण्यस्य कर्मणः ऋतशब्दो वाचक इत्यवगम्यते तथा अमृतस्य च मृत्योश्चेत्यमृतमृत्युशब्दावपि बन्धमोक्षवाचकौ उपचारात्तद्धन्तौ प्रयुक्तौ भगवतश्च बन्धमोक्षहेतुत्वञ्च श्रुतम् "संसारमोक्षस्थितिबन्धहेतुः" इति "उतामृतत्वस्येशानो यदन्नेनातिरोहति" इति च एवम्भूतस्य ब्रह्मणो निष्पांशुशरीरभूतं तत्सूर्याख्यमात्मानं जीवविशेषमीमहि शरणं प्रपद्ये प्रतर्दनविद्यान्यायेनात्र सूर्यजीवशरीरकपरमात्मोपासनमुक्तमित्यवगन्तव्यम् ॥ ५ ॥

प्लक्षादिषु पञ्चसु द्वीपेषु अविशेषेण सामान्येन सर्वेषां पुरुषाणामायुरादिरूपा सिद्धिरौत्पत्तिकी जन्मसिद्धा वर्तते इदमवगन्तव्यं मानसोत्तरगिरेर्मण्डलाकारत्वोक्तेरेतेषु प्लक्षादिषु पञ्चसु द्वीपेषु वर्षाद्रयस्तिर्यक्त्वाकारा उभयतोऽब्धिस्पृशः अन्यथा सप्तभिः सप्तवर्षाणां विभागासम्भवाच्च श्रीवैष्णवे पुराणे वर्षाणां पूर्वादिक्रमेणोक्तेश्चेति ॥ ६ ॥

एवं प्लक्षद्वीपः सवर्षपर्वतनदीसवर्णाश्रमपुरुष उपवर्णितः तद्दृष्टान्तेन शाल्मलीद्वीपमनुवर्णयति । प्लक्ष इति । यथा प्लक्षद्वीपः समानेन स्वतुल्यविशालेनेक्षुरसोदेन द्विलक्षयोजनविशालेनावृतस्तथा शाल्मलीद्वीपोऽपि द्विगुणविशालः प्लक्षद्वीपापेक्षया चतुर्लक्षयोजनविशाल इत्यर्थः स्वमानेन चतुर्लक्षयोजनविशालेन सुरोदधिना अभितो वृत्तेनाकारेणावृतः परिवेष्टितः ॥ ७ ॥

यत्र द्वीपे शाल्मली प्लक्षद्वीपसमानविस्तार आस्ते तां विशिनष्टि यस्यां शाल्मल्यां वाक्किलशब्दो निपातसमुदायः प्रसिद्धि द्योतकश्छन्दस्तुतः छन्दोभिः "सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोमः आत्मा साम ते तनू वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दांस्यङ्गानि धिष्ण्या पारिशफ्या यजूंषि नाम" इत्यादिभिः छन्दोऽवयवत्वेन स्तूयते इति छन्दस्तुत कर्मणि क्विप् तस्य छन्दसामवयवत्तारूपपरिणामाश्रयत्वात् गायत्र्यादीनां तच्चक्षुराद्यवयवत्वं तेषां तच्चक्षुराद्यवयवदृष्ट्योपासनानिबन्धनमित्यवगन्तव्यम् । यद्वा छन्दः सुपर्णोऽसीत्यादिरूपं स्तुतं यस्य गायत्र्याद्यवयवकत्वेन स्तावकं यस्येत्यर्थः एवम्भूतस्य पक्षिराजस्य पक्षिराजस्य गरुत्मतः सौपर्णस्य निलयं नीडम् विपश्चित इति शेषः सा शाल्मली द्वीपहूतये हूतिर्व्यवहारः शाल्मलीद्वीप इति व्यवहारायेत्यर्थः उपलक्ष्यते उपलक्ष्यते इत्यर्थः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्लक्षादिद्वीपप्रमाणादिज्ञानेन श्रीनारायणमाहात्म्यमेव ज्ञायते इति तेऽस्मिन्नध्याये प्रमाणमियत्ता "प्रमाणं [illegible] मर्यादाशास्त्रहेतुषु" इति यादवः लक्षणमेतावद्भिरित्यादि संस्थानं वर्तुलचतुरस्रत्वादिस्वरूपप्रकारः ॥ १ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तावता विस्तारेण लक्षयोजनप्रमाणेन ततो जम्बूद्वीपात् बाह्येन बहिःस्थितेन तत्र दृष्टान्तो यथेति। यत्र द्वीपे यत्र उत्थितः असौ प्लक्षः जम्बूप्रमाणः द्वीपाख्यातिकरत्वेन प्रमाणीकरोति अधिसहस्रयोजनोन्नाह इति वा यत्रे-त्युत्तरत्रापि सम्बद्ध्यते श्रीहरिमितिशेषः आकलय्य दत्त्वा ॥ २ ॥

अभिज्ञाताः प्रसिद्धाः प्रधाना वा ॥ ३ ॥

सेतुशैलाः मर्यादागिरयः विबुधोपमसंदर्शनं प्रजननं पुत्रबलञ्च येषां ते तथा सूर्यात्मानं सूर्यस्वरूपम् ॥ ४ ॥

प्रत्नस्य पुरातनस्य विष्णोर्व्याप्तस्य हरेर्यद्रूपं प्रतिमास्था-नीयं यच्च सत्यंतस्य वाचिककायिकसुकृतप्रेरकस्य ब्रह्मणो विरिञ्चस्य रूपं सान्निधाननिमित्तं यच्चामृतस्यामरसमूहस्य मृत्योर्मारकस्य महेश्वरस्य रूपम् एवं त्रिमूर्तिनिवासयोग्यं तं सूर्यमात्मानमीमहि शरणं प्राप्तुम इति मन्त्रार्थः। ननु सूर्यान्तः स्थितं हरिं शरणं प्रपद्यामह इति व्याख्यानं किं प्रमाणकं प्रतीतार्थं परित्यज्यान्यार्थाङ्गीकारस्य प्रमाणसापेक्षत्वादिती-त्याशङ्का।

सूर्यसोमाग्निवारीशविधातृषु यथाक्रमम्।
प्लक्षादिद्वीपसंस्थासु स्थितं हरिमुपासते ॥

इत्येतेन परिहर्तव्येति ॥ ५ ॥ ६ ॥

परिवृत्तेन वर्तुलेनेत्येतत्सर्वद्वीपसमुद्रेष्वनुसन्धेयम् ॥ ७ ॥

यत्र शाल्मली समुत्पन्ना स द्वीपः शाल्मलः प्लचायामेत्यनेन शाल्मल्याः परिमाणं सम्यङ् न ज्ञातं स्यादित्यतः साध्यर्धेति "सुपर्णोऽसि गरुत्मान्"इत्यादिछन्दोभिर्वेदैः स्तूयत इति छन्दः स्तुतः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

परिवृङ्क्त इति "वृजी वर्जने" रुधादिरुदात्तेत आत्मनेपदमार्षं पृथग् वर्तत इत्यर्थः ॥ १—१९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

प्लक्षद्वीपादिवर्षाब्धिनदीशैलेज्यदेवताः।
लोकालोकाचलश्चापि विंशे प्रोक्ता यथा स्थितम् ॥ ० ॥ १ ॥

परिक्षिप्तः परिवेष्टितः उप आधिक्येनास्ते आकलय्य दत्त्वा ॥ २ ॥

गिरयो हि वर्षसीमाभिव्यञ्जका उभयतोऽब्धिं स्पृशन्तस्तिर्यग्-आकाराः ॥ ३ ॥

हंसादयो ब्राह्मणादिस्थानीयाः विबुधोपमं सन्दर्शनं रूपं प्रजननमपत्योत्पादनञ्च येषां ते ॥ ४ ॥

प्रत्नस्य पुराणपुरुषस्य यद्रूपं तं सूर्यमीमहि शरणं व्रजेम। कीदृशं सत्यादीनामात्मानमधिष्ठातारं सत्यमनुष्ठीयमानो धर्मः ऋतं प्रतीयमानो धर्मः ब्रह्मणस्तद्बोधकस्य वेदस्य। अमृतस्य शुभफलस्य मृत्योरशुभफलस्य "सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिर" इत्यादिश्रुतेश्छन्दोभिः स्वावयवभूतैर्विष्णुं स्तौतीति छन्दस्तुत् यत्र सा शाल्मली द्वीपस्य कृतये नाम्ने ॥ ५—११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

जम्बूद्वीपं निरूप्य ततः परितः संस्थितान् क्षारोदादीन् समुद्रान् प्लक्षादीन् द्वीपांश्च वर्णयति भगवान् शुकः विशेना-ध्यायेन ॥ १ ॥

तावता लक्षयोजनविस्तारेण क्षारोदधिना अयं वेष्टितः परिक्षिप्तः परितः आवृतः द्वीपाख्याकरः प्लक्षद्वीपसंज्ञासम्पादकः जम्बूप्रमाणः जम्बूद्वीपसमानविस्तारः सप्तजिह्वः सप्तशिखः उपास्ते तिष्ठति आकलय्य समर्प्य आत्मनि परमात्मनि यो योगो ध्यानयोगस्तेनोपरराम संसारान्मुक्तोऽभूदित्यर्थः ॥ २ ॥

अभिज्ञाताः प्रसिद्धास्तु सप्तैव अप्रसिद्धाः सहस्रशः इति भावः ॥ ३ ॥

हंसादयः ब्राह्मणादिस्थानीया वर्णाः विबुधोपमं सम्यग्दर्शनं प्रजननञ्च येषां ते सहस्रायुषः सहस्रं सम्वत्सराः आयुर्येषां ते स्वर्गद्वारं स्वर्गप्रापकं त्रयीमयं त्रयीप्रतिपाद्य सूर्यात्मानं सूर्यरूपमात्मानं भगवन्तं त्रय्या विद्यया वेदत्रयो-क्तकर्ममार्गेण यजन्ते आराधयन्ति ॥ ४ ॥

प्रत्नस्य पुरातनस्य जगत्कारणस्य विष्णोर्यद्रूपं तं सूर्य-मात्मानं परमात्मानमीमहि शरणं व्रजेम विष्णोः सर्वात्म-त्वमाहुः। सत्यस्य समदर्शनरूपस्य ऋतस्य सूनृतवाणीरूपस्य ब्रह्मणः शब्दब्रह्मरूपस्य अमृतस्य जीवनहेतोः मृत्योर्मरणहेतोः चकारात्सर्वचराचररूपस्येत्यर्थः ॥ ५ ॥

औत्पत्तिकी सहजा ॥ ६ ॥ ७ ॥

प्लक्षायामः प्लक्षद्वीपवदायामो विस्तारो यस्याः सा अत एव यस्यां विपुलविस्तारायां पतत्रिराजस्य निलयं नीडमाहुः प्राज्ञाः कथम्भूतस्य "सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुस्तोम आत्मा साम ते तनू वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञा यज्ञीयं पुच्छं छन्दांस्यङ्गानि" इत्यादिश्रुतेः छन्दोभिः स्वावयवभूतैः श्रीविष्णु स्तौतीति छन्दस्तुत्तस्य द्वीपस्य कृतये व्यपदेशाय संज्ञासिद्धये इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

---

भाषा टीका

श्रीशुकदेवजी बोले इस के अनन्तर प्लक्षादिद्वीपों का प्रमाण लक्षण स्थितिसे वर्षों का विभाग वर्णन किया जाता है ॥ १ ॥

यह जम्बूद्वीप जितना चौडा है उतनेही चौडे खारी समुद्र से चारों तरफ घिरा है जैसे जम्बूद्वीप से मेरु घिरा है खारी समुद्र भी उस से द्विगुण प्लक्षनामा द्वीप से घिरा है जैसे खाई उपवन से घिरी होवे प्लक्ष गेंठीका पेड जामुन के पेड के बराबर ऊंचा है द्वीप के नाम करनेवाला है जहांपर ऊपर को उठा हुआ सात जिह्वा वाला अग्नि स्थित है उस द्वीप का पति प्रियव्रतका पुत्र इध्मजिह्व जो है तिसने अपने द्वीपके सात वर्ष विभाग करके सात वर्षों के नामवाले पुत्रोंको देकर स्वयं आत्म योगसे निवृत्ति मार्गके ग्रहण किया ॥ २ ॥

शिव यवयस सुभद्र शान्त क्षेम अमृत अभय ये वर्ष हैं तिनोंमेंपर्वत नदीभी सातही हैं मणिकूट वज्रकूट इन्द्रसेन ज्योति-

तद्द्वीपाधिपतिः प्रियव्रतात्मजो यज्ञबाहुः स्वसुतेभ्यः सप्तभ्यस्तन्नामानि सप्त वर्षाणि व्यभजत् सुरो-चनं सौमनस्यं रमणकं देववर्षं पारिभद्रमाप्यायनमविज्ञातमिति ॥ ९ ॥

तेषु वर्षाद्रयो नद्यश्च सप्तैवाभिज्ञाताः स्वरसः शतशृङ्गो वामदेवः कुन्दो मुकुन्दः पुष्पवर्षः सहस्र-श्रुतिरिति( १ ) अनुमतिः सिनीवाली सरस्वती कुहू रजनी नन्दा राकेति ॥ १० ॥

तद्वर्षपुरुषाः श्रुतधरवीर्यधरवसुन्धरेषन्धरसंज्ञा भगवन्तं वेदमयं सोममात्मानं वेदेन यजन्ते ॥११॥

स्वगोभिः पितृदेवेभ्यो विभजन् कृष्णशुक्लयोः ।
प्रजानां सर्वासां राजान्धः सोमो न आस्त्विति ॥ १२ ॥

एवं सुरोदाद्बहिस्तद्द्विगुणः समानेनावृतो घृतोदेन यथा पूर्वः कुशद्वीपो यस्मिन् कुशस्तम्बो देव-कृतस्तद्द्वीपाख्याकरो ज्वलन इवापरः स्वशष्परोचिषा दिशो विराजयति ॥ १३ ॥

तद्द्वीपपतिः प्रैयव्रतो राजन् ! हिरण्यरेतो नाम स्वं द्वीपं सप्तभ्यः स्वपुत्रेभ्यो यथाभागं विभज्य स्वयं तप आतिष्ठत वसुवसुदानदृढरुचिनाभिगुप्तस्तुत्यव्रतविविक्तवामदेवनामभ्यः ॥ १४ ॥

तेषां वर्षेषु सीमागिरयो नद्यश्चाभिज्ञाताः सप्त सप्तैव चक्रश्चतुःशृङ्गः कपिलश्चित्रकूटो देवानीक ऊर्ध्वरोमा द्रविण इति रसकुल्या मधुकुल्या मित्रविन्दा श्रुतविन्दा देवगर्भा घृतच्युता मन्त्रमा-लेति ॥ १५ ॥

यासां पयोभिः कुशद्वीपौकसः कुशलकोविदाभियुक्तकुलकसंज्ञा भगवन्तं जातवेदसरूपिणं कर्म-कौशलेन यजन्ते ॥ १६ ॥

भाषा टीका ।

स्मान् सुपर्णा हिरण्य छीव भेघमाल ये सब सेतु पर्वत हैं अरुणा नृम्णा अङ्गिरसा सावित्री सुप्रभाता ऋतम्भरासत्यम्भरा ए महानदी हैं जिन नदियों के जलके स्नानपानादि से रजोगुण तमो-गुणके छूटजाने से निर्मल मनवाले हंसपतङ्ग ऊर्ध्वायन सत्य संज्ञक चारवर्ण हजारवर्ष की आयुवाले देवता सरीका जिन का दर्शन और प्रजा हैं सो लोग स्वर्ग के द्वार भूत वेद त्रय प्रतिपाद्य भगवान् आत्मा सूर्यनारायण को वेदत्रयी से आराधन करते हैं ॥ ४ ॥

क्रियमाणधर्म प्रतीयमाणधर्म वेद शुभफल अशुभफल रूपपुराण पुरुष साक्षात् विष्णु के रूप सूर्यात्मा भगवान् को हम शरण प्राप्त होते हैं ॥ ५ ॥

प्लक्षादिक पांच द्वीपों मे पुरुषों की आयु इन्द्रिय देह-बल इन्द्रियबल मनोबल बुद्धि पराक्रम सब लोगों को स्वभावही से सिद्धि समान रूप से रहती है ॥ ६ ॥

प्लक्षद्वीप अपने बरोबर ईख के रस के समुद्र से घिरा है जैसे तैसेही शाल्मल द्वीप भी दोगुण विस्तार है अपने बरोबर मदिरा के समुद्र से घिरा हुआ प्रकाशित होरहा है ॥ ७ ॥

जिस द्वीप मे प्लक्ष के बरोबर विस्तार वाली शाल्मली का पेड है जिस मे कि वेदों से विष्णु की स्तुति करने वाले भगवान् पक्षिराज गरुड जीका स्थान है ऐसा कहते हैं वह शाल्मली का पेड उस द्वीप के शाल्मलीद्वीपनाम जानने के वास्ते लक्षित होता है ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वगोभिः स्वरश्मिभिः । अन्धोऽन्नं सोमो नो राजा मा[illegible] आभिमुख्येन भवतु ह्रस्वपाठे त्वविवक्षया सन्ध्यभावः ॥ १२ ॥

एवं सुरोदाद्बहिर्घृतोदेनावृतः कुशद्वीप इत्यन्वयः । स्व[illegible]ष्पाणि स्वकोमलशिखास्तेषां रोचिषा ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य द्वीपस्य शाल्मलस्याधिपतिः चिरं कृताधिपत्यो य[illegible]बाहुः प्रियव्रतस्यात्मजः सप्तभ्यः स्वसुतेभ्यः तन्नामानि स्वपुत्र-तुल्यनामानि सप्त वर्षाणि व्यभजद्विभज्यादादित्यर्थः ॥ ९ ॥

पुत्राणां वर्षाणां च साधारणैर्नामभिर्वर्णाणि निर्दिश[illegible] सुरोचनमित्यादिना । तेषु सुरोचनादिषु वर्षेषु शैलाः सप्त नद्यश्च अभिज्ञाताः प्रसिद्धाः अन्ये च शैला नद्यश्च सन्तीत्यर्थः ताव[illegible]त शैलानाह । स्वरस इत्यादिना । सेतुशैलाः मर्यादागिरयः नदीरा[illegible] अनुमतिरित्यादिना ॥ १० ॥

तद्वर्षपुरुषाणां चतुर्धा वर्णविभागं तेषामाराध्यं भगवन्तं [illegible] जप्यमानमन्त्रंचाह । तद्वर्षेत्यादिना । श्रुतधरादिशब्दाः [illegible]

( १ ) सेतुशैलाइत्यधिकः पाठः श्रीवीरराघवाचार्यमते ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

...नि येषां ते वेदमयं वेदप्रचुरं भगवदात्मकं सोमाख्यं ...मात्मानं जीवविशेषं वेदेन वेदेनोक्तेन तन्मूलस्मृत्या-...स्ववर्णोचितस्वधर्मेण यजन्ते आराधयन्ति ॥ ११ ॥

...भिः स्वकिरणैः शुक्लकृष्णयोः पक्षयोः पितृदेवेभ्योऽन्ध-...शुक्लपक्षे देवेभ्यः कृष्णे पितृभ्यश्चान्नं विभजन् स्वगोभि-...स्य शुक्लकृष्णपक्षविभाजकत्वाभावे उचितकाले पित्रा-...स्वधास्वाहापूर्वकं हविर्दानमेव न स्यादिति भावः यत ...पित्रादीनामप्यसाकूर्येणाऽस्य विभागेन प्रदापयिताऽतो ...स्माकं सर्वासां प्रजानां राजा चन्द्रः सोमः अमृतमस्तु सुख-...प्रसिवति यावत् ॥ १२ ॥

एवं शाल्मलीद्वीप उपवर्णितः अथैतदृष्टान्तेन कुशद्वीप-...वर्णयति। एवमिति। यथापूर्वः शाल्मलः तथा कुशद्वीपोऽपि ...रोदेर्बहिः द्विगुणमानेनाष्टलक्षयोजनविशालेन घृतोदधिना ...वेष्टितः स्वयमप्यष्टलक्षयोजनविशालः यस्मिन् कुशद्वीपे ...ऽस्य कुशद्वीपस्य व्यपदेशकरः अपरोऽग्निरिव प्रकाशबहुलः ...न भगवता ब्रह्मणा निर्मितः स्वशष्पाणां स्वावयवानां कोम-...नां रोचिषा दिशो दश विराजयति प्रकाशयति ॥ १३ ॥

तस्य कुशद्वीपस्याधिपतिः हिरण्यरेतोनाम प्रियव्रतस्य पुत्रः ...सप्तभ्यः स्वपुत्रेभ्यो वस्वादिवर्षनामभ्यः यथाभागं विभज्य ...तप आतिष्ठत तपसा युक्तोऽभूदित्यर्थः ॥ १४ ॥

वर्षनाम्नः सप्तपुत्रान्निर्दिशति । वस्वित्यादिना । वस्वादी-...मितरेतरयोगद्वन्द्वः तेषां वर्षेषु तत्तुल्यनामसीमा गिरयः ...तथा नद्यश्च सप्त बभूवुः शैलान्निर्दिशति। चक्र इत्यादिना। ...शैला मर्यादा गिरयः ॥ १५ ॥

...। रसकुल्येत्यादिना । नदीर्विशिनष्टि । महानद्य इति । ...र्दीर्विशिनष्टि तद्द्वीपस्थानां पुरुषाणां चतुर्णां वर्णविभागं ...पास्यं भगवद्रूपं जप्यमानं मन्त्रमाह । यासामिति । ...रसकुल्यादिनदीनां पयोभिर्जलैर्विधूतमलाः कुशद्वीपो नीडः ...नां येषां ते कुशलकोविदादिसंज्ञाः जातवेदसरूपिणं जातवेदा ...जातवेदसः प्रज्ञादित्वात् स्वार्थिकोऽण्प्रत्ययः स अग्निरेव रूपं ...रं जातवेदसरूपं तदस्यास्तीति तथा तं भगवन्तं कर्मनैपुण्येन ...न्ते आराधयन्ति ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

शुक्लकृष्णयोरुभयोः पक्षयोरपि स्वगोभिः सुधालक्षणैः ...देवानुद्दिश्य सोमलक्षणमन्धोऽन्नं विभजन् राजा चन्द्रान्त-...भिः सर्वासां प्रजानां नोऽस्माकञ्च राजा रञ्जकोऽस्त्विति ...नां नोऽस्मभ्यो विभजन् पित्रादिभ्यः सोमं विभजन् राजा नः ...सुखमाऽस्थति वा ॥ १२ ॥

...या कुशद्वीपसमानेन यथापूर्वः शाल्मलः सुरोदेनावृत-...स्वशष्पाणां निजधाबतृणानां तेजसा ॥१३॥१४॥१५॥१६॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

...गोभिः स्वरश्मिभिः। अन्धोऽन्नम्। सोमो नो राजा ...मुख्येनास्तु। इत्यपाठे त्वविवक्षया सन्ध्यभावः ॥ १२ ॥

सुशष्पाणि सुकोमलशिखास्तेषां रोचिषा ॥ १३--१६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अन्धः अन्नं नोऽस्माकं राजा आ आभिमुख्येन अस्तु ॥ १२ ॥

स्वशष्परोचिषा स्वगतबालतृणकान्त्या ॥ १३-१६ ॥

---

भाषाटीका

उस द्वीपका पति प्रियव्रत का पुत्र यज्ञबाहुने अपने सात पुत्रोंको उनहीं नामवाले वर्षोंका विभाग करके देदिया जिनके सुरोचन, सोमनस्य, रमणक, देववर्ष, पारिभद्र, आप्यायन, अविज्ञातये नाम हैं ॥ ९ ॥

उन वर्षोंके मर्यादा पर्वत तथा नदी भी हैं स्वरस शतशृङ्ग वामदेव कुन्द मुकुन्द पुष्पदन्त सहस्रश्रुति ये पर्वत हैं अनुमति सिनीवाली सरस्वती कुहू रजनी नन्दा राका ये नदी हैं ॥ १० ॥

उस वर्षके श्रुतधर वीर्यधर वसुंधर इषंधर संज्ञावाले पुरुष देवमय सोम आत्मा भगवान को वेदोक्त कर्मसे पूजन करते हैं॥११॥

उनका मन्त्र अपने किरणोंसे शुक्ल कृष्ण दोनों पक्षों में सब प्रजों के अन्नरूपसे पोषण करनेवाले सोमराजा हमारे ऊपर प्रसन्न होवें ॥ १२ ॥

इसी प्रकार मदिरा समुद्र से बाहिर अपने दुगुण प्रमाण घृतके समुद्र से घिरा हुआ कुशद्वीप पहिले सरीका है जिस द्वीप में उस द्वीप के नामको करने वाला परमेश्वर का रचित अग्नि सरीका प्रकाशमान अपने घासोंकी दीप्तिसे सब दिशों को प्रकाश करता हुआ कुशका गुच्छा है ॥ १३ ॥

उस द्वीप के अधिपति हिरण्यरेत नामा राजा प्रियव्रत के पुत्र ने अपने द्वीपको सात अपने पुत्रों को यथा योग्य विभाग देकर आपनी तपस्या में निष्ठा करलीनी ॥ १४ ॥

उनके नाम वसु वसुदान दृढरुचि नाभि गुप्तस्तुत्य व्रत विविक्त वामदेव हैं उनवर्षों में मर्यादाके पर्वत तथा नदी भी सात सात हैं तिनके नाम चक्र चतुःशृङ्ग कपिल चित्रकूट देवानीक ऊर्ध्वरोमा द्रविण ये हैं ॥ १५ ॥

रसकुल्या मधुकुल्या मित्रविन्दा श्रुतविन्दा देवगर्भा घृतच्युता मंत्रमाला ये नदियों के नाम हैं जिनके जलों से कुश द्वीपके वासिजन कुशल कोविद अभियुक्त कुलक संज्ञावाले अग्निरूपी भगवान् को कर्मों की निपुणतासे आराधन करते हैं ॥ १६ ॥

परस्य ब्रह्मणः साक्षाज्जातवेदोऽसि हव्यवाट् ।
देवानां पुरुषाङ्गानां यज्ञेन पुरुषं यजति ॥ १७ ॥

(१) तथा घृतोदाद्बहिः क्रौञ्चद्वीपो द्विगुणः स्वमानेन क्षीरोदेन परित उपक्लृप्तो वृतो यथा कुशद्वीपो घृतोदेन यस्मिन् क्रौञ्चो नाम पर्वतराजो द्वीपनामनिर्वर्तक आस्ते ॥ १८ ॥

योऽसौ गुहप्रहरणोन्मथितनितम्बकुञ्जोऽपि क्षीरोदेनासिच्यमानो भगवता वरुणेनाभिगुप्तो विभयो बभूव ॥ १९ ॥

तस्मिन्नपि प्रैयव्रतो घृतपृष्ठो नामाधिपतिः (२) स्वे द्वीपे वर्षाणि सप्त विभज्य तेषु पुत्रनामसु सप्त रिक्थादान्वर्षपान्निवेश्य (३) स्वयं भगवान् भगवतः परमकल्याणयशस आत्मभूतस्य हरेश्चरणारविन्दमुप जगाम ॥ २० ॥

आमो (४) मधुरुहो मेघपृष्ठः सुधामा (५) भ्राजिष्ठो लोहितार्णो वनस्पतिरिति घृतपृष्ठसुतास्तेषां वर्ष गिरयः सप्त सप्तैव नद्यश्चाभिख्याताः शुक्लो वर्धमानो भोजन (६) उपबर्हिणो नन्दो नन्दनः सर्वतोभद्र इति अभया अमृतौघा आर्यका तीर्थवती (७) वृत्तिरूपवती शुक्लेति ॥ २१ ॥

यासामम्भः (८) पवित्रममलमुपयुञ्जानाः पुरुषऋषभद्रविणदेवकसंज्ञा वर्षपुरुषा (९) आपोमयं देवम् पूर्णेनाञ्जलिना यजन्ते ॥ २२ ॥

आपः ! पुरुषवीर्याः स्थ (१०) पुनन्तीर्भूर्भुवः सुवः ।
ता नः (११) पुनीताममीवघ्नीः (१२) स्पृशतामात्मना भुव इति ॥ २३ ॥

एवं पुरस्तात्क्षीरोदात्परित (१३) उपवेशितः शाकद्वीपो द्वात्रिंशल्लक्षयोजनायामः समानेन च दधिमण्डोदेन परितो यस्मिन् शाको नाम महीरुहः स्वक्षेत्रव्यपदेशको यस्य ह (१४) महासुरभिगन्धस्तं द्वीपमनुवासयति ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे जातवेदस्त्वं साक्षात्परस्य ब्रह्मणो हरेर्हव्यवाडसि अतो देवानां यज्ञेन पुरुषं हरिमेव यज । अङ्गानां नाम्ना दत्तमङ्गिने समर्पयेत्यर्थः ॥ १७ ॥

उपक्लृप्तो वेष्टितः । यथा कुशद्वीपो घृतोदेन वृतः ॥ १८ ॥

गुहस्य कार्तिकेयस्य प्रहरणेनायुधेनोन्मथिता,नितम्बाः कुञ्जानि च यस्य ॥ १९ ॥

स्वयं भगवान् ज्ञानी परमकल्याणं यशो यस्य ॥ २० ॥ २१ ॥

आपोमयमम्भोमयम् ॥ २२ ॥

हे आपः ! पुरुषवीर्या ईश्वराल्लब्धसामर्थ्याः स्थ भवथ अतएव भूर्भुवः स्वस्त्रैलोक्यं पुनन्त्यस्ता भवत्यो नोऽस्माकं स्पृशतां स्पर्शनं कुर्वतां भुवः शरीराणि पुनन्तु । यत आत्मना स्वरूपेणैवाभीवघ्नीः पापहन्त्र्यः ॥ २३ ॥

दध्नो मण्डं रस सः पयोदकं यस्य । यस्य पर्णान्यन्तः खरस्पर्शानि बहिर्मृदुस्पर्शानि स शाको नाम वृक्षः ॥ २४-२५ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे जातवेदः ! त्वं साक्षात्परस्य ब्रह्मणोऽसि तदीयोऽसि तच्छरीरभूतोऽसीत्यर्थः तथा हव्यवाडसि हव्यमिन्द्रादीनां भगवदात्मकानां यज्ञियं हव्यं वहति प्रापयति इन्द्राद्यन्तर्यामिणं भगवन्तं प्रापयति तथा तथाभूतोऽसीत्यर्थः अतो देवानां पुरुषस्य परमपुरुषस्याङ्गानां शरीरभूतानाम् "स आत्मा अङ्गान्यन्या देवताः" इति श्रुतेरात्मशब्दप्रतिसम्बन्धि अङ्गं शरीरमेवम्भूतानामिन्द्रादीनां सम्बन्धिना भगवदात्मकेन्द्राद्याराधनभूतेन यज्ञेन तदन्तरात्मानं परमपुरुषं यज्ञमाराधय तत्प्रीतिं जनय अङ्गेभ्यः समर्पितं हविरङ्गिने समर्पयेत्यर्थः ॥ १७ ॥

(१) तथा बहिः क्रौञ्च द्वीपः कुशद्वीपाद्द्विगुणसमानेन (२) सप्तद्वीपवर्षाणि सप्तधा विभज्य (३) स्वयंभगवतः परमकल्याण (४) मज्यो (५) ऋजिष्ठा (६) उपबर्हणउपभोजना (७) रूपवती पवित्राशुक्लेति (८) पवित्रमुपयुञ्जानाः गुरुऋषभ (९) अम्भो (१०) वीर्याश्च (११) पुनीयुरघघ्नीः (१२) संस्पृशेतात्मना भवः (१३) परितउपक्लृप्तः (१४) महान्सुरभिगन्धः इति श्रीविजयध्वजतीर्थपाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतद्दृष्टान्तेन क्रौञ्चद्वीपमनुवर्णयति । तथेति । यथा कुशद्वीपः घृतोदेन स्वसमविशालेन वेष्टितस्तथा कुशद्वीपाद्बहिः क्रौञ्चद्वीपोऽपि द्विगुणः कुशद्वीपाद्द्विगुणः षोडशलक्षयोजनविशालः स्वमानेन षोडशलक्षयोजनविशालेन दधिमण्डोदेन क्षीरोदधिसमानोदकेन समुद्रेणाभित उपक्लृप्तः परिवृतः यस्मिन् क्रौञ्चे द्वीपे द्वीपस्य नाम क्रौञ्च इति संज्ञा तन्निर्वर्तकः क्रौञ्चो नाम पर्वतश्रेष्ठः आस्ते ॥ १८ ॥

क्रौञ्चपर्वतं विशिनष्टि । य इति । योऽसौ क्रौञ्चो गिरिः पूर्वं गुहस्य कार्तिकेयस्य प्रहरणेनायुधेन उन्मथिता नितम्बाः कुञ्जानि च यस्य तथाभूतः पश्चाद्दधिमण्डोदेनासिच्यमानः दधिमण्डोदे लीनः पश्चाद्भगवता वरुणेनाभिगुप्तः अभयप्रदानेनाभिरक्षितः निरस्तभयो बभूव ॥ १९ ॥

तस्मिन्नपि क्रौञ्चद्वीपेऽपि प्रियव्रतात्मजो घृतपृष्ठो नामाधिपतिः सप्तधा वर्षाणि विभज्य तेषु पुत्रतुल्यनामसु सप्तसु वर्षेषु रिक्थादान् दायादान् सप्त पुत्रान् वर्षाणामधिपतीन्निवेश्य प्रतिष्ठाप्य स्वयं परमकल्याणं निरतिशयमङ्गलरूपं यशो यस्य तस्यात्मभूतस्य स्वान्तरात्मनो भगवतः हरेर्वन्धहारिणश्चरणारविन्दं जगाम भक्त्या प्राप्तः ॥ २० ॥

घृतपृष्ठसुतानाह । अमोघ इत्यादि । तेषाममोघादीनां यानि वर्षाण्यमोघादीनि तेषां गिरयो मर्यादा गिरयः सप्त तथा नद्यः सप्तैवाभिज्ञाताः अन्ये च ते ताश्च सन्तीतिभावः गिरीनाह । शुक्ल इत्यादि । नदीराह । अभयेत्यादिना ॥ २१ ॥

ता विशिंषस्तद्वर्षस्थानां चतुर्धा वर्णविभागं भजनीयं भगवद्रूपं मन्त्रं चाह । यासामिति । यासामभयादीनां निर्मलं पवित्रमम्भ उपयुञ्जानाः स्नानाद्युपयुक्तं कुर्वाणा गुर्वादिचतुर्वर्णनामानः पुरुषाः आपोमयमप्छरीरकं देवं भगवन्तं पूर्णेनापामञ्जलिना जलाञ्जलिना आराधयन्त्यर्घ्यादिप्रदानेनेति भावः ॥ २२ ॥

हे आपः ! यूयं पुरुषस्य भगवतो वीर्याः शक्तिरूपाः तदपृथक्सिद्धविशेषणभूतास्तच्छरीरभूता इति यावत् स्थ भवथ तथा भूर्भुवः स्वः इति भूरादिलोकत्रयं पुनन्त्यः पवित्रयन्त्यः स्थेत्यनुषङ्गः यत एवमतः स्पृशताममीवघ्नीः पापहराः आत्मनो भुवः परमात्मन उत्पन्नाः ताः युष्मान् स्पृशन इति शेषः नोऽस्मान् पुनन्तु भगवत्य इत्यर्थः आत्मना भवमितिपाठे आत्मना देहेन स्पृशताममीवघ्नीर्युष्मान्स्पृशतां नोऽस्माकं भवं जन्म पुनन्त्वित्यर्थः ॥ २३ ॥

एतद्दृष्टान्तेन शाकद्वीपमनुवर्णयति । एवं यथा क्रौञ्चस्तथेतरः दधिमण्डोदात्परतः बहिः उपवेशितः विन्यस्तः शाकद्वीपः द्वात्रिंशल्लक्षयोजनविशालः समानेन द्वात्रिंशल्लक्षयोजनविशालेन मण्डोदधिना परिवेष्टितः यस्मिन् शाकद्वीपे शाकाख्यो महीरुहः स्वक्षेत्रस्य क्षेत्रस्य व्यपदेशकः नामनिर्वर्त्तकः आस्त इतिशेषः तं विशिनष्टि यस्येति । यस्य शाकस्य वृक्षस्य महासुरभिर्गन्धः निरतिशयसुगन्धः तं कृत्स्नं शाकद्वीपमनुवासयति सुरभीकरोति ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे जातवेदः ! सर्वज्ञ ! त्वं साक्षात्परस्य ब्रह्मणः श्रीनारायणाख्यस्य हव्यवाडसि हव्यलक्षणहविषो नेतासि तथा पुरुषशब्दवाच्यस्य हरेरङ्गभूतानां देवानाञ्च हव्यवाडसि स त्वमस्मत्सन्निहितो भूत्वा यज्ञलक्षणेन कर्मणा पुरुषं यज्ञनामानं श्रीहरिं यज याजयास्माभिरिति शेषः ॥ १७ ॥

क्षीरोदेन मण्डोदेन ।

मण्डोदे पूरणश्चैव व्यत्यासं क्षीरसागरं ।
राहुसोमरवीणाञ्च मण्डलाद्द्विगुणोक्तिताम ॥
विनैव सर्वमुन्नेयं योजनाभेदतोऽत्र तु ॥

इति वचनाच्चलासौ ज्ञातव्यः ॥ १८ ॥

गुहस्य षण्मुखस्य प्रहरणेन शक्त्याख्येनोन्मथिनाः पीडिताः नितम्बाश्च कुञ्जलतादिपिहितोदरा अणुतरा गिरिविशेषा मिथुनानां क्रिडायोग्याश्च यस्य स तथा क्षीरोदेन मण्डोदेनाभिषिच्यमानः ॥ १९ ॥

रिक्थादान् दायादान् पुत्रानित्यर्थः ॥ २० ॥ २१ ॥

अम्मयं जलाधिदैवतं देवं क्रीडादिगुणसम्पन्नम ॥ २२ ॥

या आपः पुरुषवीर्याः श्रीनारायणस्य रेतोभूताः "आपो नारा इति प्रोक्ता आपो वै नरसूनवः" इति स्मृतेः भूर्भुवः सुवः एवं त्रैलोक्यमपि पुनन्तीः पुनन्त्यः याश्चाघघ्नीः पापहराः भवे भवाब्धि शुद्धिलक्षणसुखार्थमात्मना देहेन चान्तरेण च संस्पृशेत ता आपः पुनीयुः पुनन्त्वित्यन्वयः ॥ २३ ॥

दधिमण्डोदेन "अनाम्लन्तु दधिक्षीरं क्षीरं साग्रं तथा दधि" इत्यभिधानात् क्षीरोदार्थे दधिमण्डोदशब्दः ॥ २४—२७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मिन्नपीति । स्वयमुपजगामेत्यन्वयः । स्वयं भगवत इति वा भगवान् उत्पत्ति प्रलयश्चेत्यादिलक्षणज्ञानवान् ॥ २०—२३ ॥

तं द्वीपमनुवासयति । तद्द्वीपस्थस्याधारस्वगण्डविशेषमित्यर्थः । सर्वानुवासनेत्यत्रापि तत् स्यात् ॥ २४—२७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हे जातवेतस्त्वं साक्षात् परस्य ब्रह्मणो हरेर्हव्यवाडसि । अतो देवानां यज्ञेन पुरुषं हरिमेव यज । अङ्गानां नाम्ना दत्तमङ्गिने समर्पयेत्यर्थः ॥ १७ ॥

उपक्लृप्तः वेष्टितः वृत इति परत्रान्वितम ॥ १८ ॥

गुहः कार्त्तिकेयः विभयः विगतभयः ॥ १९ ॥

भगवान् उत्पत्त्यादिज्ञानवान् ॥ २० ॥ २१ ॥

आपोमयम् अम्मयम् ॥ २२ ॥

हे आपः ! पुरुषवीर्या ईश्वराल्लब्धसामर्थ्या भवथ । अत एव भूर्भुवः सुवः त्रैलोक्यं पुनन्त्यस्ता यूयं नोऽस्माकं स्पृशतां स्पर्शनं कुर्वतां भुवः शरीराणि पुनीत यत आत्मना स्वरूपेणैव अमीवघ्नीः पापहन्त्र्यः ॥ २३ ॥

दध्नो मण्डं रस एव उदकं यस्य ॥ २४ ॥ २७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे जातवेदः ! देवानां परस्य आत्मनः "स आत्मा अङ्गान्यन्याः देवताः" इति श्रुतेः साक्षाद्ब्रह्मणः हव्यवाडसि देवानामङ्गभूतानां

तस्यापि प्रैयव्रत एवाधिपतिर्नाम्ना मेधातिथिः सोऽपि विभज्य सप्त वर्षाणि पुत्रनामानि तेषु स्वात्मजान् पुरोजवमनोजवपवमानधूम्रानीकचित्ररेफबहुरूपविश्वधारसंज्ञान्निधाप्याधिपतीन् स्वयं भगवत्यनन्त आवेशितमतिस्तपोवनं प्रविवेश ॥ २५ ॥

एतेषां वर्षमर्यादागिरयो नद्यश्च सप्त सप्तैव ईशान उरुशृङ्गो बलभद्रः शतकेसरः सहस्रस्रोतो देवपालो महानस इति अनघाऽऽयुर्दा उभयस्पृष्टिरपराजिता पञ्चपदी सहस्रस्रुतिर्निजधृतिरिति ॥ २६ ॥

तद्वर्षपुरुषा ऋतव्रतसत्यव्रतदानव्रतानुव्रतनामानो भगवन्तं वाय्वात्मकं प्राणायामविधूतरजस्तमसः परमसमाधिना यजन्ते ॥ २७ ॥

अन्तः प्रविश्य भूतानि यो बिभर्त्यात्मकेतुभिः ।
अन्तर्यामीश्वरः साक्षात्पातु नो यद्वशे स्फुटम् ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नाम्ना दत्तं यज्ञियं हव्यं तस्मै वहसि अतो यजेन पुरुषं सर्वदेवाङ्गिनं यज तत्तन्नाम्ना दत्तं तस्मै समर्पयेत्यर्थः ॥ १७ ॥

उपक्लृप्तो वेष्टितः ॥ १८ ॥

गुहप्रहरणेन कार्त्तिकेयायुधेनोन्मथिता भग्नाः नितम्बाः कुञ्जानि च यस्य सः ॥ १९ ॥

भगवान् ।

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ।
इति स्मृत्युक्तचिश्वोत्पत्त्यादिज्ञानवान् स्वयं भगवतः ।
ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चापि षण्णां भग इतीङ्गना ।

इतिस्मृत्युक्तषाड्गुण्याश्रयस्य हरेर्वन्धहारिणश्चरणारविन्दमुपजगाम प्राप्तवान्मुक्तोऽभूदित्यर्थः ॥ २०—२१ ॥

आपोमयमम्मयम् । अपां पूर्णेनाञ्जलिना देवं भगवन्तं यजन्ते "जलं ब्रह्मोपासीत" इतिश्रुतेः ॥ २२ ॥

हे आपः ! पुरुषवीर्याः परमपुरुषशक्तिरूपाः स्थ भवथ अत एव भूर्भुवः स्वः लोकत्रयं पुनन्तीः पुनन्त्यः ताः भवत्यो नोऽस्माकं स्पृष्टानां स्पर्शनं कुर्वतां भुवः शरीराणि पुनीत पुनन्तु यतः आत्मना स्वाश्रयेण पुरुषेण हेतुभूतेन अमीवघ्नीः पापहन्त्यः ॥ २३ ॥

दधिमण्डोदेन दध्नो मण्डं रसः पयोदमुदकं यस्य तेन २४।२७

भाषाटीका।

मंत्र हे अग्निदेव ! आप साक्षात् परब्रह्म विष्णुके हवि ग्रहण करने वाले मुख रूपी हो तिससे परमात्मा के अङ्गभूत जो देवता तिनके यज्ञ से परमात्मा का यजन करो ॥ १७ ॥

तिसी प्रकार से घृत समुद्र के बाहिर अपने से दुगुणे दुग्ध समुद्र से घिराहुआ क्रौंचद्वीप कल्पना किया है जैसे कि कुशद्वीप घृत समुद्र से घिरा है जिसमें क्रौंच नामक पर्वतों का राजा है सो द्वीप के नामको जनाता हुआ है ॥१८॥

जिस पर्वत के कार्तिक स्वामी के शक्ति आयुध से सब ... और कुञ्जभी फूट टूट गये तौभी क्षीरसमुद्र के जलसे सिंचा... से भगवान् वरुणजी रक्षा करने से अभय होकर रहाहै ॥१९॥

तिस मैंभी प्रियव्रत का पुत्र घृतपृष्ठ नाम के मालि... हैं वे भी अपने द्वीप में पुत्रों के तुल्य नाम वाले सात द्वीपों... उनकों विभाग से देकर सातों को धन के मालिक बना स्था... करके आप सब समर्थ होने पर भी परम कल्याण ... वाले अपने आत्मा गुरु श्रीहरि भगवान् के चरण कमल ... प्राप्त होगये ॥ २० ॥

आम मधुरुह मेघपृष्ठ सुधामा भ्राजिष्ठ लोहितार्ण ... रूपति ए घृतपृष्ठ के पुत्र हैं तिन के वर्ष मर्यादा पर्वत ... हैं सातही नदी भी हैं शुक्ल वर्धमान भोजन उपवर्हण ... नन्दन सर्वतोभद्र ए पर्वत हैं अभया अमृतौघा आर्यका ती... वती वृत्तिरूपवती पवित्रवती शुक्ला ये नदीं हैं ॥ २१ ॥

जिन नदियों के निर्मल पवित्र जल को सेवन करते हुए पुरुष ऋषभ द्रविण देवक संज्ञावाले उस वर्ष के पुरुष आप... मयदेव को जलों की भरी अंजुली से यजन करते हैं ॥ २२ ॥

मंत्र हे जलदेव ! आप पुरुषके वीर्यरूपहो परमेश्वरसे सामर्थ्य... प्राप्त भये हो सब के पापों के नाश करनेवाले हो सोभूः भुवः ... तीनों लोकों को पवित्र करते हुये आप तुमारे स्पर्श करनेवाले हम... लोगों के शरीरों को पवित्र करो ॥ २३ ॥

इसी प्रकार क्षीर समुद्र से परे चारों ओर से स्थापि... शाकद्वीपभी बत्तीस लक्ष योजन चौडा है अपने बरा... दहि माण्ड के समुद्रसे घिरा हुआ हैं जिसमें शाक ... का पेड अपने द्वीप के नाम करने वाला है जिसका ... महासुरभि सुगन्ध उस द्वीप को सुगन्धित करता है ॥२४॥

श्रीधरस्वामिकृतभावार्थदीपिका।

आत्मकेतुभिः प्राणादिवृत्तिभिः ॥ २८ ॥

एवमेव दधिमण्डोदात् परतः पुष्करद्वीपस्ततो द्विगुणायामः समन्तत उपकल्पितः समानेन स्वादूदकेन समुद्रेण बहिरावृतो यस्मिन् बृहत् पुष्करं ज्वलनशिखामलकनकपत्रायुतायुतं[१] भगवतः कमलासनस्याध्यासनं परिकल्पितम् ॥ २९ ॥

तद्द्वीपमध्ये मानसोत्तरनामैक एवार्वाचीनपराचीनवर्षयोर्मर्यादाचलोऽयुतयोजनोच्छ्रायायामो यत्र तु चतसृषु दिक्षु चत्वारि पुराणि लोकपालानामिन्द्रादीनां यदुपरिष्टात् सूर्यरथस्य मेरुं[२] परिभ्रमतः सम्वत्सरात्मकं[३] चक्रं देवानामहोरात्राभ्यां परिभ्रमति ॥ ३० ॥

तद्द्वीपस्याप्यधिपतिः प्रैयव्रतो वीतिहोत्रो नामैतस्यात्मजौ रमणक[४]धातकिनामानौ वर्षपती नियुज्य स स्वयं पूर्वजवद्भगवत्कर्मशील एवास्ते ॥ ३१ ॥

तद्वर्षपुरुषा भगवन्तं ब्रह्मरूपिणं[५] सकर्मकेन कर्मणाराधयन्तीदं चोदाहरन्ति ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ज्वलनशिखावदमलानां कनकपत्राणामयुतानामयुतानि यस्य तत् ॥ २९ ॥

देवानामहोरात्राभ्यामुत्तरदक्षिणायनाभ्यामित्यर्थः ३० ॥ ३१ ॥

ब्रह्मरूपिणं कमलासनमूर्तिं सकर्मकेन ब्रह्मसालोक्यादिसाधनेन ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्यापि शाकद्वीपस्याप्यधिपतिर्मेधातिथिर्नाम प्रियव्रतात्मज एव सोऽपि पुत्रतुल्यनामानि वर्षाणि विभज्य तेषु स्वात्मजान् पुरोजवादिसंज्ञानभिधाय प्रतिष्ठाप्य स्वयमनन्तेऽपविद्धध्यानन्दस्वरूपे भगवत्यावेशिता निहित मतिर्येन तादृशस्तपोवनं तपसो योग्यं वनं प्रविवेश तपसा सिद्धोऽभूदित्यर्थः ॥ २५ ॥

अथ शाकद्वीपवर्षविभागं पुत्रनामपूर्वकं पर्वताद्रीनाह । एतेषामिति । तेषु पुरोजवादिषु वर्षेषु सप्त सीमापर्वताः तथा नद्यश्च सप्तैवासन् पर्वतान्नदीश्चाह । ईशानःऽन्य इति । अनघेत्याभ्यां गद्याभ्याम् तद्वर्षस्थाः पुरुषाः ऋतव्रतादिचतुर्वर्णात्मकाः वाय्वात्मकं वायुशरीरकं भगवन्तं परमसमाधिना निरतिशयध्यानयोगेन यजन्ते आराधयन्ति कथम्भूताः सन्तः प्राणायामैः समन्ताद्विधूतं निरस्तं रजस्तमश्च येषां तादृशाः सन्तः ॥ २६ ॥ २७ ॥

यो वायुशरीरकः परमात्मान्तः प्रविश्य मुख्यप्राणरूपेणान्तः प्रविष्टः सन्नात्मनः स्वस्य चिन्हभूताभिः पञ्चभिः प्राणादिभिर्वृत्तिभिः "यः प्राणेन प्राणिति योऽपानेनापानिति" इत्यादिश्रुतिः भूतानि बिभर्ति स साक्षादीश्वरोऽन्तः प्रविश्य नियन्ता अस्मान् पातु यस्य प्राणशरीरकस्य भगवतः वशे इदं जगत्तेन भगवतो वायुशरीरकत्वादन्तर्यामीश्वरसामानाधिकरण्यम् ॥ २८ ॥

अथ पुष्करद्वीपमनुवर्णयति । एवमिति । क्षीरोदधेः परस्तात्पुष्करद्वीपः ततः शाकद्वीपाद्द्विगुणायामः द्विगुणविशालः चतुःषष्टिलक्षयोजनविशालः समन्ततश्चतुर्दिक्षु उपकल्पितः ईश्वरेणेति शेषः यद्वा । प्रियव्रतरथचरणनेमिभिरिति शेषः स्वसमानविशालेन चतुःषष्टिलक्षयोजनविस्तीर्णेन शुद्धोदकेन शुद्धोदकसमुद्रेण बहिः समन्ततः पिहितः परिवृतः यस्मिन् पुष्करद्वीपे बृहद् विपुलं पुष्करं कमलं ज्वलनशिखावदमलानां प्रकाशमानानां कनकपत्राणामयुतानामयुतानि यस्य तद्भगवतः कमलासनस्य चतुर्मुखस्याध्यासनं परिकल्पितं तत्कर्णिकामध्यगतत्वेन तद्वर्षस्थाः पुरुषाः चतुर्मुखमुपासत इत्यर्थः ॥ २९ ॥

अस्मिन् द्वीपे मर्यादागिरिर्मानसोत्तरनामा एक एवेत्याह । तद्द्वीपमध्य इति । पुष्करद्वीपमध्ये एक एव मानसोत्तराख्यो ऽयुतयोजनानि उच्छ्राय औन्नत्यमायामो विस्तारश्च यस्य सः अर्वाचीनपराचीनयोरन्तर्बहिर्वर्तिनोर्वर्षयोर्मर्यादागिरिः यत्र मानसोत्तरे गिरौ चतसृषु दिक्षु इन्द्र प्रदिर्येषां तेषामिन्द्राग्निवरुणकुबेराणां लोकपालानां पुराणि सन्ति यस्य मानसोत्तरगिरेःउपरि स्थितेन्द्रादिलोकपालपुरीणामुपरि मेरुं परिक्रमतः परितो भ्रमतः सूर्यरथस्य यच्चक्रं सम्वत्सरात्मकं तद्देवानामहोराभ्याभ्यामुत्तरायणदक्षिणायनाभ्यां स्वावयवाभ्यां चक्रवत् लौकिकरथचक्रवत्परिभ्रमति ॥ ३० ॥

तस्य पुष्करद्वीपस्यापि पतिर्वीतिहोत्राख्यः प्रियव्रतात्मज एव तस्य वीतिहोत्रस्यात्मजौ पुत्रौ रमणधातकाख्यौ रमणधातकयोर्वर्षयोः पतीकृत्येत्यर्थः अयं वीतिहोत्रः पूर्वजवन्मेधातिथिवद्भगवदाराधनरूपकर्मशील एवास्ते आसीदित्यर्थः ॥ ३१ ॥

तत्पुष्करद्वीपवर्षपुरुषाः ब्रह्मरूपिणं चतुर्मुखशरीरकं भगवन्तं कर्मणा कर्मयोगविशिष्टेन कर्मणा मनोव्यापाररूपेण भगवदुपासनयोगेन कर्मशब्दो हि मनोव्यापाररूपोपासनायांगेऽपि वर्त्तते प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ३।२।२५ इति सौत्रप्रयोगात् प्रकाशादिवत् ज्ञानानन्दादिस्वरूपवन्मूर्त्तामूर्त्तप्रपञ्चविशिष्टताया अपि ब्रह्मगुणत्वाद्वैशेष्यं प्रतीयते "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इत्यादिब्रह्मस्वरूपभूतप्रकाशानन्दादिवच्च तेषां वामदेवादीनां संराधनात्मके कर्मण्यभ्यासादुपलभ्यते तद्वच्चाभ्यस्तसंराधनानां तेषां मूर्त्तामूर्त्तादिना विशिष्टत्वमप्यविशेषेण प्रतीयते इति तदर्थः तथा च ।

(१) पत्रयुतं । (२) परिचङ्क्रमतः । (३) चक्रमहो० इति श्रीविजय० पाठः । (४) रमण इति श्रीवीर० विजयध्वजपाठः । (५) रूपिणमकर्म० इति श्रीविजय० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ।
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ॥

इतिभगवता मनुनापि मानसैः कर्मदोषैरिति मनोव्यापारे कर्मसब्दः प्रयुक्तः अकर्मणा इतिपाठे अकर्मणो कर्मबन्धनिरासाय कर्मणा स्वस्ववर्णोचितकर्मणेत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मकेतुभिः आत्मस्वरूपैः प्राणादिभिर्वृत्तिभेदैर्वा ॥ २८ ॥

दधिमण्डोदात् क्षीरोदात् ज्वलनशिखावदमलानां कनकपात्राणामयुतं यस्य तत्तथा अर्वाचीनपराचीनयोर्वाह्याभ्यन्तरप्रदेशस्थितयोर्यस्य मानसोत्तरपर्वतस्य

अहाक्षिनाभिः सूर्यस्य एकचक्रस्य वै स्मृतम् ।
अराः संवत्सराः पञ्च तेभ्यः षड् ऋतवः स्मृताः ।

इति मत्स्यपुराणे चक्रस्य संवत्सरात्मकत्वमुक्तम् "त्रिणाभिचक्रमजरमनर्वं पञ्चारे चक्र" इत्यादि च ॥ २९—३१ ॥

अकर्मकेण ध्यानलक्षणेन कर्मणा ध्यानस्य चित्तनिरोधलक्षणकर्मसाध्यत्वात् फलाभिसन्धिरहितेन वा ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जम्बूद्वीपदक्षिणदिक्स्थितानामेवोद्देशावगमादन्तः प्रविश्येति स्फुटं व्यक्तं जगदिति यावत् ॥ २८—३१ ॥

सकर्मकेणेति । क्रियते साध्यते इति कर्मफलं तेन सहवर्त्तमानेन ब्रह्मसालोक्यादिसाधनेनेत्यर्थः ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आत्मकेतुभिः प्राणादिवृत्तिभिः ॥ २८ ॥

ज्वलनस्य तेजसः शिखाभिरमलानि यानि कनकवर्णानि पत्राणि तेषामयुतायुतं यस्य ॥ २९ ॥

तद्द्वीपमध्य इति । मानसोत्तरस्य मण्डलाकारत्वात्तत्पार्श्वद्वयवर्त्तिनी द्वे वर्षे अपि मण्डलाकारे एव ज्ञेये इत्याह । अर्वाचीनेति । देवानामहोरात्राभ्यामुत्तरदक्षिणायनाभ्यामित्यर्थः ॥ ३०—३१ ॥

सकर्मकेण । यतः कर्मणः कर्माण्येवोद्भवन्ति न तु कर्मक्षयः तेन सकामेनेत्यर्थः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मकेतुभिः प्राणापानादिवृत्तिभिः ॥ २८ ॥

ज्वलनोऽग्निस्तच्छिखावदमलानां कनकपत्राणामयुतानामयुतानि यस्य तत् ॥ २९ ॥

अहोरात्राभ्यामुत्तरदक्षिणायनलक्षणाभ्याम् ॥ ३० । ३१ ॥

भगवन्तं वासुदेवम् ब्रह्मरूपिणं सकर्मकेण कर्मयोगसहितेन कर्मणा वन्दनस्तवनादिव्यापारेण आराधयन्ति साक्षाद्वासुदेवं न जानन्तीति भावः ॥ ३२ ॥

---

भाषा टीका ।

उस द्वीपका भी पति प्रियव्रत का पुत्र मेधातिथि नामक है सोभी अपने पुत्रों के नाम वाले सातवर्षों का विभाग कर के तिनमें पुरोजव मनोजव पवमान धूम्रानीक चित्ररेफ बहुरूप विश्वधार संज्ञक अपने पुत्रों को राजा करके आपभी अनन्त भगवान् में मनको लगाकर तपोवनको चलागया ॥२५॥

इनके वर्ष मर्यादा पर्वत नदी भी सातही सात हैं ईशान उरुशृङ्ग बलभद्र शतकेसर सहस्रस्रोत देवपाल महानस ये पर्वतों के नाम हैं अनघा आयुर्दा उभयस्पृष्टि अपराजिता पञ्चपदी सहस्रस्रुति निजधृति ये नदी हैं ॥ २६ ॥

उस वर्षमें पुरुष ऋतव्रत सत्यव्रत दानव्रत अनुव्रत नाम वाले हैं सो प्राणायामों से रजोगुण तमोगुण को दूर करके वायु रूप भगवान् को समाधि से यजन करते हैं ॥ २७ ॥

मंत्र जो सब भूतों के भीतर प्रविष्ट होकर अपनी प्राणादि वृत्तियों से सबको पालन करते हैं सबके अन्तर्यामी साक्षात् ईश्वर हैं जिनके वशमें सब जगत् है सो हमारी रक्षा करें ॥२८॥

ऐसेही दहीमण्डके समुद्र से परे पुष्कर द्वीप है उससे द्विगुण विस्तार चारों ओर से कल्पित हैं अपने समान स्वादजल के समुद्र से बाहिर से घिराहै जिसमें बड़ा भारी कमल अग्निकी शिखा सरीके निर्मल सुवर्ण के अयुत पत्रों वाला है वह श्रीभगवान् ब्रह्माजी के आसन रूपसे कल्पित है ॥२९॥

उस द्वीप के मध्यमें मानसोत्तर नाम का एकही पर्वत है पूर्व परके वर्षों का मर्यादा गिरि है दशहजार योजन लम्बा ऊंचा है जहां चारों दिशों में चारों इन्द्रादि लोकपालों के पुर बने हैं जिस के ऊपर मेरुके चारों ओर घूमने वाले सूर्य के रथका सम्वत्सररूप चक्र देवतों के अहोरात्र में घूमताहै ॥३०॥

इस द्वीप का भी पति प्रियव्रतका पुत्रवीतिहोत्र नामक है उसके रमणक धातकि नामक दो पुत्र हैं उन दोनों को दो वर्ष पति बनाकर आप पूर्वज सरीका भगवान् के सेवा में तत्पर होकर रहा है ॥ ३१ ॥

उस वर्ष के पुरुषभी ब्रह्मरूपी भगवान् को अनेक जन्मार्जित कर्मवाले कर्म से आराधन करते हैं और इस मन्त्रको पढते है ॥ ३२ ॥

यत्तत् कर्ममयं लिङ्गं ब्रह्मलिङ्गं (१) जनोऽर्चयेत्।
(२) एकान्तमद्वयं शान्तं तस्मै भगवते नम इति ॥ ३३ ॥

ऋषिरुवाच।

ततः परस्ताल्लोकालोकनामाचलो लोकालोकयोरन्तराले परित उपक्षिप्तः (३) ॥ ३४ ॥

यावन्मानसोत्तरमेर्वोरन्तरं तावती भूमिः काञ्चन्यन्यादर्शतलोपमा यस्यां प्रहितः पदार्थो न कथञ्चित् पुनः प्रत्युपलभ्यते तस्मात् सर्वसत्त्वपरिहृतासीत् ॥ ३५ ॥

लोकालोक इति समाख्या यदनेनाचलेन (४) लोकालोकस्यान्तर्वर्तिनावस्थाप्यते ॥ ३६ ॥

स लोकत्रयान्ते परित ईश्वरेण विहितो यस्मात् सूर्यादीनां ध्रुवापवर्गाणां ज्योतिर्गणानां गभस्तयोऽर्वाचीनांस्त्रींल्लोकानावितन्वाना न कदाचित् पराचीना भवितुमुत्सहन्ते तावदुन्नहनायामः ॥ ३७ ॥

एतावाँल्लोकविन्यासो मानलक्षणसंस्थाभिर्विचिन्तितः कविभिः स तु पञ्चाशत्कोटिश्च (५) गणितस्य भूगोलस्य तुरीयभागो (६) ऽयं लोकालोकाचलः ॥ ३८ ॥

तदुपरिष्टाच्चतसृष्वाशास्वात्मयोनिनाऽखिलजगद्गुरुणाऽधिनिवेशिता ये द्विरदपतय ऋषभः पुष्करचूडो वामनोऽपराजित इति सकललोकस्थितिहेतवः ॥ ३९ ॥

तेषां स्वविभूतीनां (७) लोकपालानां च विविधवीर्योपबृंहणाय भगवान् (८) परममहापुरुषो महाविभूतिपतिरन्तर्याम्यात्मनो विशुद्धसत्त्वं धर्मज्ञानवैराग्यैश्वर्याद्यष्टमहासिद्ध्युपलक्षणं विष्वक्सेनादिभिः स्वपार्षदप्रवरैः परिवारितो निजवरायुधोपशोभितैर्निजभुजदण्डैः संधारयमाणस्तस्मिन्गिरिवरे समन्तात् सकललोकस्वस्तय आस्ते ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

कर्ममयं कर्मफलरूपम्। ब्रह्म लिङ्ग्यते यस्मात्। एकस्मिन्नेव परमेश्वरेऽन्तो निष्ठा यस्य तदत एव वस्तुतोऽद्वैतम् ॥ ३३ ॥

ततः शुद्धोदात्परस्तात्। लोकः सूर्याद्यालोकवान् देशः अलोकस्तद्रहितस्तयोरन्तराले मध्ये। तयोर्विभागार्थमित्यर्थः॥ ३४॥

ततः परस्तादित्युक्तं तदेव कियतान्तरेणेत्यपेक्षायां तदन्तर्वर्तिनीं भूमिमाह। यावन्मानसोत्तरमेर्वोरन्तरं सार्द्धसप्तलक्षोत्तरसार्धकोटिपरिमितं तावती भूः शुद्धोदात्परास्ति तत्र च प्राणिनोऽपि सन्ति ततः काञ्चनी भूमिरन्यास्तीत्यर्थः। सा चैकोनचत्वारिंशल्लक्षोत्तरकोट्यष्टकपरिमिता ज्ञेया एवं हि सति मेरुलोकालोकयोरन्तरं सार्द्धद्वादशकोटिपरिमितं वक्ष्यमाणमुपपन्नं भवति एतदुक्तं शैवतन्त्रेपूक्तम्।

कोटिद्वयं त्रिपञ्चाशल्लक्षाणि च ततः परम्।
पञ्चाशच्च सहस्राणि सप्तद्वीपाः ससागराः॥
ततो हेममयी भूमिर्दशकोट्यो वरानने!।
देवानां क्रीडनार्थाय लोकालोकस्ततः परम्॥

अत्र च दशकोटित्वं पूर्वोक्तभूम्या सह द्रष्टव्यम्। सर्वसत्त्वपरिहृतेति देवव्यतिरेकेणेति विज्ञेयं देवानां क्रीडनार्थायेत्युक्तत्वात् ॥ ३५ ॥ ३६ ॥

लोकत्रयस्यान्ते परितो मर्यादारूपो विहितः। यस्मात्प्रतिबन्धकात्। सूर्यआदिर्येषां ध्रुवोऽपवर्गोऽन्तो येषाम्। आवितन्वानाः समन्तात्प्रकाशयन्तः परतो गन्तुं न शक्नुवन्ति तावदुन्नहनमुत्सेधस्तदनुरूप आयामश्च विस्तारो यस्य। ध्रुवादप्युच्छ्रितत्वात्त्रिलोकीमर्यादाभूत इत्यर्थः ॥ ३७ ॥

सोऽयन्तु लोकालोकाचलस्तुरीयभागश्चतुर्थोऽंशः सार्द्धद्वादशकोट्यः मेरोरेकत इति द्रष्टव्यम् ॥ ३८ ॥

आशासु दिक्षु येऽधिनिवेशितास्ते आसते ॥ ३९ ॥

तेषां दिग्गजानां स्वविभूतीनां स्वांशभूतानां महेन्द्रादीनाञ्च विविधवीर्योपबृंहणाय सकललोकस्वस्तये च भगवांस्तस्मिन्नास्ते इत्यन्वयः। किं कुर्वन्। आत्मनः स्वस्य यद्विशुद्धं सत्त्वं तत्सन्धारयमाण आविष्कुर्वन्। कीदृशं धर्मज्ञानादीन्यष्टमहासिद्धयश्चोपलक्षणं यस्य तत्। दोर्दण्डैरुपलक्षितः सन्महाविभूतेः परमैश्वर्यस्य पतित्वादेकयैव मूर्त्या समन्तादास्ते ॥ ४० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

भेदेन वर्णाश्रमभेदेनोपलक्षितो जनः यद्ब्रह्मणः परस्य लिङ्गं शरीरभूतम्। यद्वा। ब्रह्म वेदस्तदेव लिङ्गं ज्ञापकं यस्य तद्ब्रह्मलिङ्गं वेदाचर्योच्यं कर्ममयं जगत्सृष्ट्यात्मककर्मप्रचुरमादि-

---

(१) जनोऽर्चेति (२) भेदेनैकान्तमद्वैतं (३) उपक्लृप्तः (४) लोकालोकावन्तर्वर्तिना (५) गुणितस्य (६) यावान् (७) महेन्द्रादीनां (८) परमपुरुष इति श्रीविजयध्वज श्रीवीरराघव पाठः।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्षेत्रज्ञत्वाद्ब्रह्मणः परमात्मनो लिङ्गं शरीरमर्चयेदाराधयेत् कथमद्वैतमिति क्रियाविशेषणं देवमनुष्यादिकार्यवर्गं प्रति ब्रह्मणः समष्टिरूपत्वात्कार्यकारणयोरभेदाध्यवसायादद्वैतं यथा भवति तथार्चयेदित्यर्थः यच्चतुर्मुखरूपं केवलवेदावबोध्यं व्यष्टिसृष्टयात्मककर्मप्रचुरं ब्रह्मणः परस्य शरीरभूतमद्वैतं यथा तथार्चयेदिति यावत् तथैकान्तमित्यपि क्रियाविशेषणमेकान्तमव्यभिचरितं यथा तथार्चयेदिति तस्मै भगवते हिरण्यगर्भाय ते नमः ॥ ३३ ॥

एवं शुद्धोदधिपर्यन्तं सप्तद्वीपात्मकं भूमण्डलमनुवर्ण्याथ ततः परमनुवर्णयति । तत इति । ततः शुद्धोदात्परस्ताद्बहिर्लोकालोकाख्यः पर्वत आस्ते इति शेषः तस्य लोकालोक इति नाम्नि प्रवृत्तिनिमित्तमाह । यतो लोकालोकयोरन्तराले मध्ये उपकल्पितः ॥ ३४ ॥

ननु ततः परस्तादित्युक्तं तदेव कियतान्तरेणेत्यपेक्षायां तदन्तर्वर्त्तिनीं भूमिमाह । मानसोत्तरमेर्वोरन्तराले मध्ये यावती भूमिरास्ते मेरोर्मध्यादारभ्य मानसोत्तरपर्यन्तं सार्द्धसप्तलक्षोत्तरसार्द्धकोटियोजनपरिमिता भूमिरास्ते तावती भूमिः शुद्धोदात्परतोऽस्तीत्यर्थः ततोऽन्यामेकोनचत्वारिंशल्लक्षोत्तराष्टकोटियोजनमितां भूमिमाह । काञ्चनीति । काञ्चनी स्वर्णमयी आदर्शतलोपमा दर्पणोदरतुल्या निर्जना भूमिर्लोकालोकशुद्धोदध्योरन्तराले वर्तत इत्यर्थः तन्त्वां विशिनष्टि । यस्यां लोकालोकान्तरालवर्तिन्यां सार्धसप्तलक्षोत्तरसार्द्धकोटियोजनात्मिकायां शुद्धोदाद्बाह्याया भूमेः परस्ताद्विद्यमानायामेकोनचत्वारिंशल्लक्षोत्तराष्टकोटिपरिमितायां भूम्यां निहितः कश्चित्पदार्थः पुनर्नोपलभ्यते दर्पणोदरतुल्यत्वात्तस्या इति भावः । न हि दर्पणोदरे निहितमापादिस्तिष्ठतीति लोकालोकाद्बाह्यमाह । तस्मादिति । तस्माल्लोकालोकपर्वताद्बहिः सर्वैः सत्त्वैर्जन्तुभिः परिहृता रहिता आसीद्भूमिरित्यनुषङ्गः अलोका भूमिरास्त इत्यर्थः इदमेव हि पर्वतस्य लोकालोकसमाख्यायां निमित्तमित्याह । लोकेत्यादिना । स्वपर्यन्ताया अन्तर्भूम्या लोकशब्दवाच्यत्वात्स्वस्माद्बाह्याया अलोकशब्दवाच्यत्वाच्चोभयोरन्तरालवर्तिनानेन पर्वतेन स्वनिष्ठान्तरालवर्त्तित्वेन धर्मेण हेतुना स्वस्मिँल्लोकालोक इति समाख्या व्यवस्थाप्यते व्यवहृतसमाख्योऽयं पर्वतो भवतीत्यर्थः पर्वतं विशिनष्टि । स इति । लोकालोकः भूरादिलोकत्रयमन्तरमन्तर्गतं यस्य तस्मिन्विषये ईश्वरेण परिवृताकारेण निहित इत्यर्थः गर्भस्थलोकत्रयत्वेन लोकालोकयोर्मर्यादात्वेन चेश्वरेणायमचलो निहित इत्यर्थः एतदेव प्रपञ्चयति । यस्मादिति । सूर्यप्रभृतीनां ध्रुवपर्यन्तानां ज्योतिर्गणानां गभस्तयो मरीचयः त्रिलोकान् भूरादीनर्वाचीनानधःस्थान् वितन्वानाः समन्तात्प्रकाशयन्तो यस्माल्लोकालोकपर्वतरूपात्प्रतिबन्धात्कदाचिदपि पराचीनाः परितो व्याप्ताः पर्वताद्बहिः प्रकाशमाना भवितुं नोत्सहन्ते न शक्नुवन्ति तावदुन्नहनमौन्नत्यं तदनुरूप आयामो विस्तारश्च यस्य सः ध्रुवादप्युन्नतत्वाद्गर्भस्थत्रिलोकीत्वाच्च लोकालोकयोर्मर्यादारूपः इत्यर्द्धपर्वताद्बहिः सूर्यादिप्रकाशाद्बाह्यो लोक आलोकस्तद्वान् लोकः आलोकरहितोऽलोक इति च लोकालोकशब्दयोः प्रवृत्तिनिमित्तमुक्तं भवति ॥ ३५ ॥ ३६ ॥ ३७ ॥

तावदुन्नहनायाम इत्युक्तमौन्नत्यं कियद्योजनपरिमितमित्यपेक्षायां तदुक्तं तस्य कृत्स्नभूमण्डलपरिमितेः कथनापेक्षत्वात्तत्परिमाणमाह । एतावानेवेति । लोकस्य कृत्स्नभूमण्डलस्य विन्[...] संस्थानमानादिभिरेतावानिति पञ्चाशत्कोटियोजनपरिमित [...] कविभिः भूमण्डलयाथात्म्यविद्भिः चिन्तितः सम्यग्ज्ञातः [...] स्यौन्नत्यपरिमितिमाह । स त्विति । पञ्चाशत्कोटियोजनविस्तृ[...] भूगोलस्य यस्तुरीयो भागः सार्द्धद्वादशकोटियोजनात्मकः [...] रिमितौन्नत्यवान् तदनुगुणायामश्चेत्यर्थः ॥ ३८ ॥

तस्य लोकालोकस्य गिरेरुपरिष्टाच्चतसृष्वाशासु पूर्वा[...] दिक्षु अखिलजगद्गुरुणा आत्मयोनिना ब्रह्मणा ऋषभादिसंज्ञ[...] त्वारो द्विरदपतयः गजश्रेष्ठा ये निवेशितास्ते सकललोक[...] स्थितिहेतवः क्षेमहेतवः आसते ॥ ३९ ॥

तेषां द्विरदपतीनां स्वांशभूतानामिन्द्रादिलोकपाला[...] नानाविधसामर्थ्याभिवृद्ध्ये सकललोकस्वस्तये भगवान् तस्मि[...] न्पर्वते आस्ते इत्यन्वयः कथम्भूतः परमः सर्वोत्कृष्टः निर[...] शयकल्याणगुणाश्रयः पुरुषः त्रिभूतिद्वयाधिपतिः सर्वान्तरा[...] आत्मनः स्वस्य यद्विशुद्धं सत्त्वं तद्धारयमाणः शुद्धसत्त्वम[...] कर्मवश्यं दिव्यमङ्गलविग्रहं बिभ्राण इत्यर्थः कथम्भूतं शुद्धम[...] धर्मादयः उपलक्षणानि दर्शनसाधनानि यस्य तद्धर्माद्युपलक्ष[...] तत्र धर्मो वर्णाश्रमोचितकर्मयोगः ज्ञानं प्रकृतिविविक्तात्मज्ञा[...] योगः वैराग्यमन्तर्बाह्येन्द्रियनियमः ऐश्वर्यादयः अष्टौ सिद्ध[...] अणिमादयो योगसिद्धयः एभिरुपलक्ष्यते कर्मयोगज्ञानयोगा[...] गृहीतेनाणिमाद्यष्टैश्वर्यसिद्धिपर्यन्तेनोपासनेनोपलक्ष्यमित्यर्थः स्व[...] पदश्रेष्ठैर्विष्वक्सेनप्रभृतिभिः परिवृतः स्वकीयैः श्रेष्ठ[...] दिभिरायुधैरुपशोभिताः दोषः भुजा दण्डाकारास्तैरुपलक्षि[...] तस्मिँल्लोकालोके गिरिवरे सर्वत्र सकलजगतां स्व[...] आस्ते इत्यर्थः कियन्तं कालमास्त इत्यत्राह । आकल्पमिति [...] एष भगवानात्ममायया विरचितो विविधो यो लोकः तस्य [...] यात्रा जीवनं तस्या गोपीथाय रक्षणाय चाकल्पमेवम्भूतं [...] लीलया प्राप्त आस्त इत्यर्थः एवं जम्बूद्वीपादीनां परिमाणकथ[...] नेन शुद्धोदधिपर्यन्तभूमण्डलस्य मेरोर्मूलस्य मध्यादारभ्या[...] शुद्धोदधिपर्यन्तमृजुगमने पञ्चशतसहस्राधिकत्रिपञ्चाशल्लक्षा[...] कोटिद्वययोजनात्मकं परिमाणमुक्तं भवति तथा चोक्तमन्यत्र [...]

> कोटिद्वयं त्रिपञ्चाशल्लक्षाणि च ततः परम् ।
> पञ्चाशच्च सहस्राणि सप्तद्वीपाः ससागराः ॥
> ततो हेममयी भूमिर्दशकोट्यो वरानने ! ।
> देवानां क्रीडनार्थाय लोकालोकस्ततः परम् ।

इति एवं शुद्धोदधेर्बाह्यायाः काञ्चनीभूमेर्गर्भभूतायाः परिमा[...] मपि यावन्मानसोत्तरमेर्वोरन्तरा तावती भूमिरित्यनेन सार्द्धसप्त[लक्षो]त्तरसार्द्धकोटियोजनात्मकमुक्तं यद्यप्यादर्शभूमेर्विशिष्य परि[माणं] नोक्तं तथापि कृत्स्नभूमण्डलस्य पञ्चाशत्कोटियोजनपरिमितत्व[...] क्तेस्तत्र सप्तद्वीपससागरात्मकस्य परिमाणोक्तेरलोकस्य लोक[...] नपरिमाणस्य वक्ष्यमाणत्वाच्च "ततो हेममयी भूमिर्दशकोट्य[...] वचनान्तरानुरोधाच्च परिशेषादेकोनचत्वारिंशल्लक्षोत्तराष्ट[...] योजनात्मकं परिमाणं वेदितव्यं हेमभूमेर्दशकोटियोजन[...] मितत्वकथनं पूर्वोक्तसार्द्धसप्तलक्षोत्तरसार्द्धकोटियोजनस[...] पूर्वोक्तभूम्या सह किञ्चिदूनमस्तीत्यभिप्रायेणेति द्रष्ट[व्यम्] ॥ ४० ॥ ४१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

हे भगवन्! यत्तव लिङ्गं सर्वलक्षणसंपन्नं स्वरूपं कर्मणा यज्ञलक्षणेन मीयते ज्ञायत इति कर्ममयं वेदप्रतिपाद्येषु प्रधानं वा ब्रह्मा चतुर्मुखो लिङ्गं प्रतिमा यस्य तत्तथा जनोऽर्चति कथं भेदेन विरिञ्चात्सर्वजगतश्च वैलक्षण्येन एकान्तं नियमेन अद्वैतं स्वगतभेदवर्जितं यत्तस्मै भगवते तुभ्यं नम इति मन्त्रार्थः विरिञ्चस्य यत्तल्लिङ्गं शरीरं पुण्यकर्मनिर्मितं ब्रह्मणो हरेर्लिङ्गं विशेषसन्निधानयोग्यमेकान्तमवसाने प्रलये केवलं निर्वाणपरम् "एके मुख्यान्यकेवला" इत्यभिधानमद्वैतं मुक्तौ संसारे च श्रीनारायणमत्यभेदेन प्रवर्तमानं "गच्छामि विष्णुपादाभ्याम्"इत्याद्यनुसन्धानवचनात् मुख्याद्वैतं किं न स्यादत्राह। भेदेनेति। विरिञ्चपरमात्मनोर्भेदेन जनः पूजयति तस्मै भगवते पुरुषाय विरिञ्चाय नम इति वा ॥ ३३ ॥

ततः परस्ताद्बहिः ॥ ३४ ॥

मानसोत्तरमेर्वोः पर्वतयोरन्तरमन्तरालं स्थलं यावद्योजनं षोडशलक्षाधिकदशकोटिप्रमितमस्ति तावती भूमिः काञ्चनी ततो हिरण्मयी भूमिरित्यन्यत्र प्रसिद्धिः।

ततो हेममयी भूमिर्दशकोट्यो वरानने!।
देवानां क्रीडनार्थाय लोकालोकस्ततः परः।

इति पराणवतिलक्षमिति केचिदादर्शतलोपमा दर्पणतलसदृशी देवतदनुगव्यतिरिक्तसर्वसत्त्वपरिहृता द्विगुणा काञ्चनी भूमिः सर्वसत्त्वविवर्जितेत्यत्र पूर्वभूमेः सकाशात्काञ्चन्या भूमेर्द्विगुणसुखहेतुत्वं देवान् प्रत्युच्यते न पुनः सङ्ख्याया द्विगुणत्वं ग्रन्थान्तरविरोधात् ॥ ३५ ॥

लोकालोक इति समाख्या सम्यगाख्या अन्वर्थसंज्ञा तत्कथमिति तदाह। यदिति। अनेनाचलेन लोकश्चालोकश्च व्यापयेते विविच्य ज्ञाप्येते अन्तर्वर्तिना लोकालोकयोर्मध्यवर्तिनेति यद्यस्मात्तस्मादिति शेषः असौ लोकालोकाचल इति ॥ ३६ ॥

स लोकालोकाचलो लोकत्रयान्ते लोकत्रयसृष्ट्यनन्तरं मर्यादासिद्ध्यर्थं परित उपक्लृप्तः केन परमेश्वरेण अथवा लोकत्रयान्ते लोकत्रयावसाने। किञ्च लोकत्रयं योजनत एकपञ्चाशल्लक्षतया यावदुच्चं तावानयं चोच्चविस्तृतत्वे सार्द्धपञ्चाशल्लक्ष इति शेषः तावदुच्चहनायाम इति वचनश्च आयामे कथञ्चिदेव तावानिति मानवं स पञ्चाशत्सहस्रश्चेति वचनात् ध्रुवोऽपवर्ग अन्ते येषां ते ध्रुवापवर्गास्तेषां पराचीना उपरिवर्तमानाः ॥ ३७ ॥

एतावाँल्लोकविन्यासः देवमनुष्यादिव्यवहारयोग्यं लोक्यमानप्रदेशस्य स्वरूपस्थितिपरिमाणमेतावत् सार्द्धत्रिकोटियोजनात्मकं स लोकविन्यासश्च पञ्चाशत्कोटिगुणितस्य पञ्चाशत्कोटिविस्तारयोजनात्मकस्य भूगोलकस्य ब्रह्माण्डलक्षणस्य तुरीयभागेन चतुर्थांशत्वेन तिष्ठति ब्रह्माण्डप्रदेशे चतुर्द्धा विभक्त एकांशः सर्वस्मात्प्रान्ते विद्यमानो घनोदकाख्यः द्वितीयस्तत आभ्यन्तरोऽन्धंतम आख्यः तृतीयो लोकालोकाचलाख्यः चतुर्थस्तु काञ्चनीं भूमिमारभ्य मेरुपर्यन्तप्रदेशः अयं चतुर्थभागो लोकशब्दितः अयञ्च यावल्लोकालोकः यत्र लोकालोकाचलस्तिष्ठति तावत्पर्यन्तत्वेन विद्यते योऽन्तर्विस्तारः लोकालोकाचलावधिलोकपरिमाणं सार्द्धत्रिकोटियोजनात्मकमेतेन परिमाणेनालोकपरिमाणं व्याख्यातं भवति लोकालोकाचलाद्बहिः स्थलं तस्यालोकशब्दवाच्यस्य लोकपरिमाणेन व्याख्यातमित्यर्थः- योगेश्वराणामष्टाणिमादिसिद्धानां गतिमदाहरन्ति ॥ ३८--४२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

लिङ्गं मूर्त्तिस्तस्मै लिङ्गरूपाय। तेषामिति धर्माद्यष्टमहासिद्धयः उपलक्ष्यन्ते प्रकाश्यन्ते येन तत् ॥ ३३—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

कर्ममयं "स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति" इत्युक्तेः कर्मप्राप्यं लिङ्गं मूर्तिं ब्रह्म लिङ्ग्यते ज्ञायते येन तत्। भेदेन सेव्यसेवकभावेन अर्चयेत्। एकस्मिन्नेव परमेश्वरे अन्तो भक्तिनिष्ठा यस्य तत्। अत एवाद्वैतं "यो यच्छ्रद्धः स एव सः" इति न्यायेन परमेश्वरादभिन्नम् ॥ ३३ ॥

ततः शुद्धोदाल्लोकः सूर्याद्यालोकवान् देशः अलोकस्तद्रहितः तयोरन्तराले मध्ये तयोर्विभागार्थमित्यर्थः परितोऽष्टदिक्षु मण्डलाकारतयेत्यर्थः ॥ ३४ ॥

ततः परस्तादित्युक्तं तदेव कियदन्तरमित्यपेक्षायामाह। यावन्मानसोत्तरमेर्वोरन्तरं मानसोत्तरमध्यान्मेरुमध्यपर्यन्तं स्थलमित्यर्थः। सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटियोजनपरिमितं तावती भूमिः शुद्धोदात् काञ्चनी ततः परत्र लोकालोको वर्तत इत्यर्थः। सर्वैः सत्त्वैः प्राणिमात्रैरेव परिहृता त्यक्ता ॥ ३५ ॥

समाख्या निरुक्तिः अनेन अन्तर्वर्त्तिना मध्यवर्तिना सता लोकः- आलोकमयो देशः अलोक आलोकाभावमयो देशः व्यवस्थाप्यते तुल्यप्रमाणत्वेन ज्ञाप्यते ॥ ३६ ॥

लोकत्रयं भूर्भुवः स्वस्तदन्ते परितोऽष्टदिक्षु तर्हि तस्य कियानुच्छ्रायो विस्तारश्चेत्यपेक्षायामाह। यस्मात् प्रतिबन्धकाद्धेतोः सूर्यादीनां ध्रुवान्तानां गभस्तयः किरणास्त्रीँल्लोकान् व्याप्य आवितन्वानाः समन्तात् प्रकाशं विस्तारयन्तः परतो गन्तुं न शक्नुवन्ति। तावन्तावुच्चहनायामौ उच्छ्रायविस्तारौ यस्य सः ध्रुवादप्युच्छ्रितत्वात्त्रिलोकीमर्यादाभूत इत्यर्थः ॥ ३७ ॥

स तु लोकालोकस्तु भूगोलकस्य भूसम्बन्धाण्डगोलकस्येत्यर्थः सूर्यस्येव भुवोऽप्यण्डगोलकयोर्मध्यवर्त्तित्वात् खगोलमिव भूगोलमपि पञ्चाशत्कोटियोजनप्रमाणं तस्य तुरीयभागः सार्द्धद्वादशकोटियोजनविस्तारोच्छ्राय इत्यर्थः। भूस्तु चतुस्त्रिंशल्लक्षोनपञ्चाशत्कोटियोजनप्रमाणा ज्ञेया। यथा मेरुमध्यान्मानसोत्तरमध्यपर्यन्तं सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटियोजनप्रमाणं मानसोत्तरमध्यात् स्वादूदकसमुद्रपर्यन्तं पराणवतिलक्षयोजनप्रमाणं ततः काञ्चनी भूमिः सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटियोजनप्रमाणा एवमेकतो मेरुलोकालोकयोरन्तरालमेकादशलक्षाधिकचतुष्कोटिपरिमितमन्यतोऽपि तथेत्यतो लोकाल्लोकालोकपर्यन्तं स्थानं द्वाविंशतिलक्षोत्तराष्टकोटिपरिमितं लोकालोकाद्बहिरप्येकतः एतावदेव अन्यतोऽप्येतावदेव। यद्वक्ष्यते "योऽन्तर्विस्तार एतेन ह्यलोकपरिमाणञ्च व्याख्यातं यद्बहिर्लोकालोकाचलात्"इति एकतो लोकालोकः सार्द्धद्वादशकोटियोजनप्रमाणः अन्यतोऽपि स तथेत्येवं चतुस्त्रिंशल्लक्षोनपञ्चाशत्कोटिप्रमाणा भूः साब्धिद्वीपपर्यन्ता ज्ञेया। अत एवाण्डगोलकात् सर्वतो दिक्षु सप्त

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दशलक्षयोजनावकाशे वर्त्तमाने सति पृथिव्याः शेषनागेन धारणं दिग्गजैश्च निश्चलीकरणं सार्थकं भवेदन्यथा तु व्याख्यान्तरे पञ्चाशत्कोटिप्रमाणत्वाद्ब्रह्माण्डगोलकखण्डत्वे तत्तत् सर्वमकिञ्चित्करं स्यात् चाक्षुषे मन्वन्तरे चाकस्मान्मज्जनं श्रीवराहदेवेनोत्थापनञ्च दुर्घटं स्यादित्यादिकं विवेचनीयम् ॥ ३८ ॥

येऽधिनिवेशितास्ते आसते ॥ ३९ ॥

स्वविभूतीनां स्वांशभूतानां हस्तिनामुपबृंहणं वर्द्धनं तदर्थं धर्माद्युपलक्षयतीति तादृशं शुद्धसत्त्वं धारयमाणः सकललोकस्वस्तये च ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कर्ममयं कर्मसाध्यं लिङ्गं फलं ब्रह्मलिङ्गं वेदशास्त्रमेकस्मिन् प्रजोत्पादने अन्तो निष्ठा यस्य तदद्वयमस्माकमुपासकानामुपास्यान्तरस्याभावाद्यत्तदादिशब्दैर्वेदे वर्णितं तस्मै भगवते नमः॥३३॥

ततः शुद्धोदात् लोकः सूर्यादिप्रकाशितदेशोऽलोकस्तमोव्याप्तो देशस्तयोः ॥ ३४ ॥

शुद्धोदलोकयोरन्तर्गतं भूमण्डलं द्वेधा विभज्य दर्शयति। यावदिति। यावन्मानसोत्तरमेर्वोरन्तरमन्तराले भूमण्डलं तयोरप्यर्द्धमादायेति बोध्यं सार्द्धसप्तलक्षाधिकसार्द्धकोटियोजनपरिमितमित्यर्थः तावती भूरेव सामान्यतोऽस्ति तस्यां केषाञ्चित्प्राणिनां संस्थितिरप्यस्ति "स्वादूदकस्य परितः दृश्यते लोकसंस्थितिः"इतिविष्णुपुराणात् एवं सति पञ्चदशलक्षोत्तरयोजनकोटित्रयं भवति अवशिष्टपुष्करद्वीपस्वादूदकगता पञ्चाशल्लक्षयोजनपरिमिता एवं स एकादशलक्षोत्तरयोजनकोटिचतुष्टयं भवति तदनन्तरमन्या काञ्चनी भूमिरस्ति सा च "द्विगुणा काञ्चनी भूमिः सर्वसत्त्वविवर्जिता"इति श्रीविष्णुपुराणात् एवं सति अधिकत्रिंशल्लक्षोत्तरद्वादशकोट्यः स्युः ततोऽयुतयोजनविस्तारः लोकालोकाचलः "लोकालोकाचलः शैलो योजनायुतविस्तरः" इति श्रीविष्णुपुराणवचनात् काञ्चन्याः परिमाणमत्र नोक्तं तेनायुतोनसप्तदशलक्षयोजनपरिमितभूमिलाभः ; तदित्थं सलोकालोकाचलायाः सार्द्धद्वादशकोटियोजनायामत्वं ज्ञेयं ततः परितः सार्द्धद्वादशकोटियोजनपरिमिता तमोव्याप्ता ज्ञेयेति सत्त्वं समस्तं न प्रत्युपलभ्यते काञ्चनभावं गतत्वात्तस्मात्सर्वैः सत्त्वैः परिहृता परिवर्जिता ॥ ३५ ॥ ३६ ॥

लोकत्रयस्यान्ते मर्यादारूपः परितो विहित उपक्लृप्तः यस्माल्लोकालोकात्प्रतिबन्धात्सूर्यादीनां ध्रुवापवर्गाणां ध्रुवान्तानां गभस्तयः आविनन्वानाः समन्तात्प्रकाशयन्तः कदाचिदपि पराचीना पर्वताद्बहिर्गमनशीलाः भवितुं नोत्सहन्ते स तावदुन्नहनायामः तावदुन्नहनमुत्सेधः तदनुरूपः आयामश्च यस्य सः ॥ ३७ ॥

तावदुन्नहनायाम इत्युक्तं तत्रायामः पूर्वत्र प्रतिपादित उन्नहनमाह । स इति । तुरीयभागः सार्द्धद्वादशकोटियोजनोच्छ्राय इत्यर्थः ॥ ३८ ॥

आशासु दिक्षु अधिनिवेशितास्तिष्ठन्तीति शेषः ॥ ३९ ॥

तेषामृषभादीनां स्वविभूतीनां स्वांशानां महेन्द्रादीनां च विविधवीर्योपबृंहणाय नानासामर्थ्यवृद्धये सकललोकस्वस्तये च भगवांस्तस्मिन् गिरिवरे आस्ते किं कुर्वन् आत्मनः यद्विशुद्धमप्राकृतरूपं श्रीमन्मङ्गलविग्रहं सन्धारयमाणः धर्मज्ञानादीनि अष्टमहाविभूतयश्चोपलक्षणं यस्य तत्। प्राकृतलोकादन्योऽप्राकृतलोकः कस्य यत्रत्यं विग्रहमाविष्कृत्य तस्मिन् गिरौ आस्ते इत्यत आह। महाविभूतिपतिरिति। महाविभूतिः परमव्योमविष्णुपदादिशब्दवाच्यं परमं धाम तद्विषये "योऽस्याध्यक्षः स परमे व्योमन्" इति श्रुतेः वनपर्वणि मुद्गलोपाख्याने ।

> ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम् ।
> शुद्धं सनातनं ज्योतिः परब्रह्मेति यद्विदुः ॥

इति स्मृतेश्च विस्तरस्तु वेदान्तकौस्तुभे सूत्रभाष्ये द्रष्टव्यः दोर्दण्डैः उपलक्षितः सन् ॥ ४० ॥

---

भाषाटीका

यह कर्मनिष्ठावाला ब्रह्म का जनाने वाला एक परमेश्वर मे निरत सर्वोत्तम शान्तरूप है जिसका मनुष्य अर्चन करते हैं तिस मूर्तिवाले भगवान् ब्रह्माजीके अर्थ नमस्कार हैं ॥ ३३ ॥

ऋषि श्रीशुकदेवजी बोले उसके परे लोकालोक नाम पर्वत है लोक अलोक दोनों के मध्य मे चारों ओर से स्थापित है ॥ ३४ ॥

मानसोत्तर पर्वत तथा मेरु इन दोनों के बीचमे जितनी भूमि है उतनी ही भूमि शुद्धोदक समुद्र के आगे है सब सुवर्णमयी दर्पण के समान है जिसमे डाला हुआ पदार्थ फिर किसी प्रकार से मिल नहीं सकता है तिससे सब जन्तुओं से यह भूमि रहित होगई है ॥ ३५ ॥

लोकालोक इसका नाम है जिससे कि बीचमे रहने वाले इस पर्वत से लोक अलोक दोनों की व्यवस्था होती है ॥ ३६ ॥

परमेश्वरने उस पर्वत को तीनों लोकों के अन्तमें चारों ओर से विधान किया है सूर्य से लेकर ध्रुवपर्यन्त जितने तेज वाले हैं तिनके किरण उस पर्वत के इसी तरफके लोकों मे प्रकाश करते हैं कभी भी उसके दूसरी तरफ को नहीं जाते हैं इतना चौडा ऊंचा पर्वत है ॥ ३७ ॥

इतना लोकों का विभाग प्रमाण लक्षण स्थितिसे कविजनों ने निश्चित किया है सो पञ्चाशत् कोटि गणित भूगोल का चौथा हिस्सा केवल लोकालोक पर्वत है ॥ ३८ ॥

तिस के ऊपर चारों दिशों में सब जगत्के गुरु आत्मयोनि ब्रह्माजी के स्थापन किये ऋषभ पुष्करचूड वामन अपराजित नाम के चार हाथी सब लोक की धारणा के हेतु हैं ॥ ३९ ॥

परमैश्वर्य के पति अन्तर्यामी परममहापुरुष भगवान् नारायण धर्मज्ञान वैराग्य ऐश्वर्यादि अष्ट महासिद्धियों से उपलक्षित अपने विशुद्ध सत्त्व मूर्त्ति को धारण करके अपने पार्षदों में श्रेष्ठ विश्वक्सेनादिकों के सहित अपने आयुधों में श्रेष्ठ सुदर्शनादि सहित भुजदण्डों से सुशोभित होकर उस पर्वत के उपर अपनी विभूति लोकपाल तथा हस्ति इनों के विविध पराक्रमों को बढाने तथा सबलोकों के कल्याण करने को विराजमान हैं ॥ ४० ॥

---

(१) आकल्पमेवं वेषं गत एष भगवानात्मयोगमायया विरचितविविधलोकयात्रागोपीथाये-त्यर्थः (२) ॥ ४१ ॥

(३) योऽन्तर्विस्तार एतेन ह्यलोकपरिमाणं च व्याख्यातं यद्बहिर्लोकालोकाचलात् ततः परस्ताद्यो-गेश्वरगतिं विशुद्धामुदाहरन्ति ॥ ४२ ॥

अण्डमध्यगतः सूर्यो द्यावाभूम्योर्यदन्तरम् ।
सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिः ॥ ४३ ॥

मृतेऽण्ड एष एतस्मिन् यदभूत्ततो मार्तण्ड इति व्यपदेशः ।
हिरण्यगर्भ इति यद्धिरण्याण्डसमुद्भवः ॥ ४४ ॥

सूर्येण हि विभज्यन्ते दिशः खं द्यौर्मही भिदा (४) ।
स्वर्गापवर्गौ नरका रसौकांसि च सर्वशः ॥ ४५ ॥

देवतिर्यङ्मनुष्याणां (५) सरीसृपसवीरुधाम् ।
सर्वजीवनिकायानां सूर्य आत्मा दृगीश्वरः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे भुवनकोशवर्णने
समुद्रद्वीपवर्षसन्निवेशपरिमाणलक्षणो
विंशतितमोऽध्यायः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

नन्वन्तर्यामित्वान्तःस्थेनैव सर्वं कर्तुं शक्यं किं तस्य [illegible]द्वैः समन्तादवस्थानेनेत्याशङ्क्य तस्यार्थं स्वयमेव व्याचष्टे। [illegible]त्मनो योगमायया विरचिता या विविधलोकयात्रा तस्या [गो]पीथाय रक्षणाय एष भगवानेवम्भूतमाकल्पं वेषं गतो [त]था प्राप्त इति समन्तादास्त इत्यस्यार्थः ॥ ४१ ॥

[अ]लोकपरिमाणं च मेरोरेकतः सार्द्धद्वादशकोट्यः। ततो [लो]कालोकात् अलोकाद्वा परस्तात् विशुद्धां द्विजपुत्रानयने-[ऽर्जु]नस्य श्रीकृष्णेन प्रदर्शिताम् ॥ ४२ ॥

विस्तरेणोक्तं ब्रह्माण्डमानं सर्वतोऽपि निरूपयति। अण्डमध्य-[ग]तः किं तन्मध्यं तदाह। द्यावाभूम्योः पूर्वोत्तरकपालयोर्य-[दन्त]रं मध्यस्थानं सर्वतः पञ्चविंशतिकोट्यः ॥ ४३ ॥

[अ]ण्डमध्यावस्थाने कारणं तन्नाम निर्वचनेनाह। मृते-[ऽण्डे]ऽचेतने एष सूर्यो वैराजरूपेण यस्मात्प्रविष्टः ॥ ४४ ॥

[सूर्ये]णैव। सूर्येणैव विभज्यन्ते दिशः समन्तरिक्षं भिदा [भेद]स्योऽपि त्रिभागः स्वर्गापवर्गौ भोगमोक्षदेशौ रसौकांस्यतला-[दी]नि ॥ ४५ ॥

उपासनार्थमाह। देवादीनां सूर्य आत्मा दृगीश्वरो नेत्रा-भिष्ठाता च ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
विंशोऽध्यायः ॥ २० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं लोकालोकपर्यन्तस्य लोकस्य मेरोरारभ्य सार्द्धद्वादश-कोटियोजनपरिमाणमुक्त्वाथालोकपरिमाणमाह। अर्थेति। ननु हे राजन्! तेन लोकालोकान्तर्वर्तिनः परिमाणकथनेन लोका-लोकाद्बहिर्वाह्यो देशः तस्य लोकस्य परिमाणमपि व्याख्यात-मलोकोऽपि लोकेन तुल्यपरिमाणः सार्द्धद्वादशकोटियोजनपरि-माण इत्यर्थः अत्रेदमवगन्तव्यं पञ्चाशत्कोटियोजनात्मकभूमण्डले मेरुर्मध्ये वर्तते तस्मादारभ्य चतुर्दिक्षु अण्डभित्तिपर्यन्तमृजुगम-नेन पञ्चविंशतिकोटियोजनानि भवन्ति दक्षिणाण्डभित्तिमारभ्यो-त्तरभित्तिपर्यन्तमृजुगमने तु पञ्चाशत्कोटियोजनानि भवन्ति एवं पश्चिमत आरभ्य पूर्वभित्तिपर्यन्तेऽपि द्रष्टव्यं तत्र मेरो-

(१) आकल्पमेष भगवान् इति श्रीविजयध्वज पाठः। (२) इत्यर्थं इति नास्ति श्रीवीर० पाठे। (३) अथ ननु इत्यधिकः श्रीवीर०। (४) तथेति। (५) सरीसृपतगवीरुधाम् इति श्रीविजय० पाठः।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दारभ्याण्डभित्तिपर्यन्ते पञ्चविंशतिकोटियोजनात्मके भूभागे जम्बूद्वीपविभागः पञ्चाशत्सहस्रयोजनात्मकः ततो लवणोदध्यादयः समुद्राः प्लक्षादयो द्वीपाश्च यथोक्तयोजनपरिमाणाः एवं पञ्चाशत्सहस्रोत्तरपञ्चाशल्लक्षाधिककोटिद्वययोजनपरिमिता सप्तसागरसप्तद्वीपात्मिका भूमिः शुद्धोदधेर्बाह्यभूमिः सार्द्धसप्तलक्षोत्तरसार्द्धकोटियोजनपरिमिता बाह्या नादर्शभूमिरेकोनचत्वारिंशल्लक्षोत्तराष्टकोटियोजनपरिमिता सङ्कलय्य गणनया सार्द्धद्वादशकोटियोजनानि भवन्ति ततो लोकालोकात्परालोकभूमिः सार्द्धद्वादशकोटियोजनपरिमितेति तत्र न लोकानां सञ्चार इत्याह । ततः परस्तादिति । ततो लोकालोकाद्बहिर्विशुद्धां योगप्रभावसिद्धां योगेश्वराणामेव गतिं सञ्चारमुदाहरन्ति कथयन्तीत्यर्थः वस्तुतस्तत्र शुद्धोदधेः पुरस्तात्काञ्चनभूम्यतिरिक्ता भूमिर्न प्रतीयत एव किन्तु काञ्चन्या एव भूमेर्मेरुमानसोत्तरमध्यस्य भूपरिमाणं गम्यते अत एव हि श्रीवैष्णवे पुराणे "स्वादूदकस्य पुरतः दृश्यते लोकसंस्थितिः । द्विगुणा काञ्चनी भूमिः सर्वजन्तुविवर्जिता" इति काञ्चनभूमिरेवोक्ता अत एव हि ।"ततः काञ्चनभूमिस्तु दशकोट्यो वरानने"। इति वचनान्तरमप्युपपन्नं तत्रायमर्थः अथालोकपरिमाणमाह । अथेति । ननु योऽन्तर्विस्तारः लोकालोकपर्यन्तवर्त्तिनो भूमण्डलस्य विस्तारः कथित इति शेषः एतेनान्तर्वर्तिनः परिमाणकथनेनालोकस्य लोकालोकपर्यन्ताद्बाह्यवर्त्तिनोऽपि परिमाणमाख्यातं कथितप्रायं पञ्चाशत्कोटियोजनपरिमिते भूमण्डले लोकालोकान्तर्वर्त्तिनो विस्तारे कथितेऽवशिष्टमलोकस्य परिमाणमपि कथितप्रायमेवेत्यर्थः अत्रेदमवगन्तव्यं पञ्चाशत्कोटियोजनपरिमितं भूमण्डलं मेरोर्मूलमध्यादारभ्याभितश्चतुर्द्धाण्डगोलपर्यन्तं विभजनीयमेवं विभक्ताश्चत्वारो भागा अल्पमूला विपुलाग्रभागास्त्रिकोणाकारा भवन्ति यथा मेरोरारभ्य लवणोदधिविभक्ता भागाः तत्रैकैकस्मिन्भागे मेरोरारभ्याण्डभित्तिपर्यन्तमृजुगमने पञ्चविंशतिकोटियोजनानि भवन्ति तेषामेव भागानामाद्यन्तभागयोः समीकरणेन गणनायां सार्द्धद्वादशकोटियोजनानि भवन्ति यथा च मेरोरारभ्य लवणोदधिपर्यन्तेषु चतुर्षु भागेष्वेकैकस्मिन् भागे मेरुमूलादारभ्य ऋजुगमनेन शुद्धोदधिपर्यन्तं पञ्चाधिकसहस्राधिकत्रिपञ्चाशल्लक्षोत्तरकोटिद्वययोजनात्मकः शुद्धोदादारभ्य लोकालोकपर्यन्तं सार्द्धसप्तलक्षोत्तरसार्द्धकोटियोजनपरिमितः लोकालोकादारभ्याण्डभित्तिपर्यन्तो लोकभागः एकोनचत्वारिंशल्लक्षाधिकाष्टकोटियोजनपरिमितः मिलित्वा सार्द्धद्वादशकोटियोजन एकैको भागो भवति चतुर्णां भागानां मेलनेऽण्डभित्तेर्द्दक्षिणात आरभ्योत्तरभित्तिपर्यन्तमृजुगमने पञ्चाशत्कोटियोजनानि भवन्ति एवं पाश्चात्यामण्डभित्तिमारभ्य पूर्वभित्तिपर्यन्तं गमनेऽपीति बोध्यम् । भागानां समीकारेण गणनायां त्वन्यदेव परिमाणं भवतीति अयमप्यपरो विशेषः सार्द्धद्वादशकोट्यात्मके एकैकस्मिन् भागे योऽयं शुद्धोदधिपर्यन्तः पञ्चाशत्सहस्राधिकत्रिपञ्चलक्षोत्तरकोटिद्वययोजनपरिमित एकैको भागस्तास्मिन्नपि भागे मेरोर्मूलादारभ्य ऋजुगमने लवणोदधिपर्यन्तो जम्बूद्वीपविभागः पञ्चाशत्सहस्रयोजनपरिमितः ततो लवणोदधिभागोऽपि ऋजुगमनेन लक्षयोजनपरिमितः ततः प्लक्षद्वीपो द्विलक्षयोजनात्मकः तत इक्षुरससमुद्रोऽपि द्विलक्ष-योजनात्मकः एवं ततः शाल्मलादयो द्वीपाः सुरोदादयः समुद्राः चतुर्लक्षादिरूपयथोक्तपरिमाणा एव वेदितव्याः एवं शुद्धोदधिपर्यन्तं सङ्कलय्य गणनायां पञ्चाशत्सहस्राधिकत्रिपञ्चाशल्लक्षोत्तरकोटिद्वययोजनात्मकोऽङ्कसङ्ख्या भवतीति ततः काञ्चनी भूमिः सार्द्धसप्तलक्षोत्तरसार्द्धकोटियोजनपरिमिता ततो "द्विगुणा काञ्चनी भूमिः" इति तु श्रीविष्णुपुराणवचनं पूर्वोक्तशुद्धोदधिपर्यन्तया भूम्या सह पञ्चलक्षन्यूनद्विगुणत्वेन तात्पर्यकं दशकोट्य इति वचनं तु लोकादारभ्य पुनर्लोकालोकपर्यन्तमृजुगमनेन चतुर्दशलक्षोत्तरदशकोटियोजनप्रमिता भूमिर्भवतीत्येतदभिप्रायकं द्विगुणत्वदशकोटित्वकथनं · न्यूनाधिकभागावनादृत्येत्यतो न विरोधः ततो लोकालोकाचलः ततोऽन्धकारभूमिः सा च परिशिष्टद्वयशिष्टकोटियोजनपरिमिता एवञ्च मेरोरारभ्य पञ्चविंशतिकोटियोजनानि भवन्तीति द्रष्टव्यम् ॥ ४२ ॥

एवं मेरुमध्यस्थमवधीकृत्य भूमण्डलस्य परिमाणमुक्त्वा ब्रह्माण्डस्य कियत्परिमाणकं वावधीकृत्य परिमातव्यमित्याकाङ्क्षायामाह । अण्डमध्यगत इति । अण्डमध्यगतः अण्डमध्ये स्थितः सूर्यः यथा भूमण्डलस्य मध्ये मेरुः स्थितस्तद्वदित्यर्थः किं तन्मध्यं यत्र स्थितः सूर्यस्तत्राह । द्यावाभूम्योर्यदन्तरं द्यावाभूम्योरूर्ध्वाधःकपालयोर्यदन्तरं मध्यस्थानमित्यर्थः अतः सूर्यमवधीकृत्याण्डस्य परिमाणं कार्यमेवेत्युक्तं भवति सूर्याण्डभित्त्योर्मध्ये पञ्चविंशतिकोट्यः स्युरित्यर्थः सूर्यमवधीकृत्याण्डभित्तिपर्यन्तमूर्ध्वमधस्तात्पार्श्वतश्च पञ्चविंशतिकोटियोजनानि भवन्तीत्यर्थः ॥ ४३ ॥

अण्डप्रसङ्गात्सूर्यचतुर्मुखादीनामण्डसम्बन्धादेव मार्तण्डहिरण्यगर्भादिनामवत्त्वमित्याह । मृतेऽण्ड इति । मृते नश्वरे एतस्मिन्नण्डे यतः स्थितः ततोऽसौ सूर्यो मार्तण्ड उच्यते मृतं तदण्डं च मृताण्डं मृताण्डे भवः मार्ताण्डः शकन्ध्वादित्वात्पररूपं मार्तण्ड इत्यपि साधुः यद्यस्माद्धिरण्ये हिरण्मये समुद्भूतं यस्य स ब्रह्मा हिरण्यगर्भ इत्युच्यते हिरण्याण्डस्य गर्भभूतत्वाद्धिरण्यगर्भ इत्युच्यते इत्यर्थः । यद्वा । हिरण्यगर्भ इति सूर्यस्यैव क्वचिद्व्यपदेशनिर्वाहार्थमेव ॥ ४४ ॥

यदुक्तमण्डपरिमाणे सूर्यस्यावधित्वं तदेव न केवलं किन्तु दिगादिविभागेऽप्यवधित्वं सूर्यस्यास्तीत्याह । सूर्येणेति । दिशः पूर्वादयः एवं खमन्तरिक्षं द्यौः स्वर्लोकः मही भूमिः भिदा अवान्तरविभागः स्वर्गापवर्गौ भोगमोक्षदेशौ नरकाः रसौकांसि अतलादीनि च सर्वशः कृत्स्नशः सूर्येणैव विभज्यन्ते ज्ञायन्त इत्यर्थः ॥ ४५ ॥

न केवलं दिगादिविभाजक एव सूर्यः किन्तु देवादीनां चक्षुरिन्द्रियाधिष्ठाता चेत्याह । देवेति । आत्मा भगवदात्मकः सूर्यो देवादीनां सर्वेषां जीवनिकायानां जीवसमूहानां दृगीश्वरः दृगधिष्ठाता अगानां स्थावराणां वीरुधाश्च चक्षुरिन्द्रियस्याभावेऽप्यस्य भासकत्वाच्च चक्षुरिन्द्रियाधिष्ठातृत्वमप्युक्तम् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
विंशोऽध्यायः ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पञ्चाशत्कोटिगुणितो ब्रह्माण्डकटाह इत्युक्तं तस्य दशदिगपेक्षया मध्यप्रदेशः कियानिति तत्राह। अण्डेति। द्यावापृथिव्योर्यदन्तरमन्तरिक्षं तस्मिन् यत्र स्थितः सूर्यः अण्डमध्यगतः अन्तरिक्षप्रदेशो यः सूर्यमण्डलसञ्चारः सोऽण्डमध्यप्रदेशः सर्वदिगपेक्षया सूर्याण्डगोलयोर्मध्ये सर्वदिक्ष्वपि सम्भूय पञ्चविंशतिकोटियोजनानि स्युरित्यर्थः ॥ ४३ ॥

एष सूर्य एतस्मिन् मृते जीवरहिते अचेतन इति यावदण्डे अभूदचेतनब्रह्माण्डमध्ये वर्तत इति यद्यस्मात्तस्मान्मार्तण्ड इति व्यपदेशः यद्यथा हिरण्याण्डसम्भवो विरिञ्चो हिरण्यगर्भ इत्युच्यते तथेति ॥ ४४ ॥

सूरिप्राप्यत्वात्तदन्तर्यामित्वाच्च सूर्यस्तेन हरिणा दिगादयो विभज्यन्ते यदतः सूर्य आत्मा श्रीनारायणः सर्वेषां दृग् दृष्टिरिति चोदितः ॥ ४५ ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

विंशोऽध्यायः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आकल्पं प्रलयपर्यन्तमेवं समन्तात् स्थितिप्रकारेण गतः तत्र प्राप्त इत्यर्थः । इति स एव मदीयपूर्वोक्तस्याभिप्राय इत्यर्थः ॥ ४१ ॥

योऽन्तरिति । लोकालोकस्तु लोकमलोकं चार्द्धेनार्द्धेन व्याप्य स्थितः अतः काञ्चन्या भूमेः परमागमाक्रान्तः शिवतन्त्रे च "लोकालोकं ततः परम्" इत्युक्तम् । अन्यथा ब्रह्माण्डगर्भस्य पञ्चाशत्कोट्यतिक्रमः स्यादिति विशुद्धान्तर्गतमिति विशुद्धगतिहेतुत्वात् ॥ ४२ ॥ ४३ ॥

एष सूर्य इत्यन्तर्याम्यभेदविवक्षया ॥ ४४—४६ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु किं तस्यैतावता प्रयासेनेत्यतः सकललोकस्वस्त्यय इत्येतत् तमेव व्याचष्टे । आकल्पं कल्पपर्यन्तम् एवमनेन प्रकारेण गतः लोकालोकं प्राप्तः आकल्पं वेधं प्राप्त इति वा आत्मनो योगमायया विरचिता या विविधलोकयात्रा तस्या गोपीथाय रक्षणाय तस्यैव शक्त्या रचितं विश्वं स चेन्न पालयेत्तर्हि कः पालयेदिति भावः ॥ ४१ ॥

अलोकपरिमाणं द्वाविंशतिलक्षोत्तरं कोट्यष्टकं यद्भिः सर्वेषु योगेश्वराणामावरणाद्एकं भिभिद्य मुमुक्षूणाम्। यद्वा। नारदादीनाम् ॥ ४२ ॥

विस्तरेणोक्तमण्डगोलकमानमूर्द्ध्वाधोऽपि निरूपयति । अण्डमध्यगत इति। किन्तन्मध्यं तदाह। द्यावाभूम्योः भुवर्लोकभूर्लोकयोर्यन्मध्यमतः सूर्यश्च अण्डगोलकश्च तयोर्मध्ये सूर्यादूर्ध्वगोलकपर्यन्तं यथा पञ्चविंशतिकोट्यः तथा अधोगोलकपर्यन्तञ्चेत्यर्थः उपपरिस्तूपरिष्टाद्व्याख्येया ॥ ४३ ॥

अण्डमध्यावस्थाने कारणं तन्नाम निर्वचनेनाह । मृते अचेतने एष सूर्योऽभूत् प्रविष्टः ततो मार्त्तण्डः स एव क इत्यत आह । हिरण्यगर्भसमष्टिजीवसूक्ष्मोपाधिरूपः यद्यत एव हिरण्याण्डस्य तदीयस्थूलदेहस्य सम्भवः सम्यग्विद्यमानता ॥ ४४ ॥

भिदा अन्योऽपि विभागः स्वर्गापवर्गौ भोगमोक्षदेशौ रसौकांसि अतलादीनि ॥ ४५ ॥

सूर्य आत्मा आत्मत्वेनोपास्यः ॥ ४६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
विंशोऽध्यायः पञ्चमस्य सङ्गतः सङ्गतः सताम् ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्ववाक्यार्थं व्याचष्टे । एष महाविभूतिपतिः आत्मयोगमायया स्वतया शक्तिविशेषरूपया विरचिता विविधलोकयात्रा तस्याः गोपीथाय रक्षणायैवमाकल्पं वेधं गतः प्राप्तो भवतीत्यर्थः ॥ ४१ ॥

अन्तर्विस्तारः सार्द्धद्वादशकोटियोजनपरिमितः लोकालोकसहितो मेरोरेकतः एतेनैवालोकपरिमाणं व्याख्यातमलोकमेवाह । यल्लोकालोकाद्बहिरिति । ततो लोकालोकात् ॥ ४२ ॥

विस्तरेणोक्तं परिमाणं संक्षिप्यानुवदति । अण्डस्य मध्ये सूर्यो गतः प्रविष्टः किं तन्मध्यमित्यत आह । द्यावाभूम्योः पूर्वोत्तरकपालयोर्यदन्तरं मध्यं स्थानं तदेवम्भूतस्य सूर्याण्डस्य प्रकाश्यतया सूर्यसम्बन्धिनः अण्डस्य लोकाचलमण्डलस्य गोलयोरुभयपार्श्वयोर्मध्ये पञ्चविंशतिः कोट्यः स्युः योजनानामिति शेषः । लोकालोकविस्तारोऽप्यत्रैव ज्ञेयः पूर्वोक्तनिर्णयबलात् ॥ ४३ ॥

अण्डप्रसङ्गात्सूर्यनामान्तरमाह । मृतेऽण्डे प्रकाशशून्ये एषः सूर्यो यतोऽभूदतो मार्त्तण्डः मृतश्च तदण्डं च मृतण्डं सकन्ध्वादित्वात् पररूपं तत्रभवो मार्तण्डः इति व्यपदेशः हिरण्मयस्य हिरण्याण्डस्य गर्भभूतत्वाद्धिरण्यगर्भ इति व्यपदेशः यद्य एव हिरण्याण्डे समुद्भवतीति हिरण्याण्डसमुद्भव इति च व्यपदेशः ॥ ४४ ॥

खमन्तरिक्षं महीभिदा अन्योऽपि भुविभागः स्वर्गापवर्गनरकाः भोगमोक्षयातना रसौकांस्यतलादीनि ॥ ४५ ॥

देवादीनां यथा सम्भवमुपकारकर्तृत्वादात्मा आश्रयः दृगीश्वरः दृगधिष्ठाता च ॥ ४६ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
विंशाध्यायार्थप्रकाशः ॥ २० ॥

---

भाषा टीका

अपनी योगमाया से रचित नाना प्रकार के लोकों के रक्षा करने के वास्ते भगवान् कल्पपर्यन्त इस वेषको प्राप्त होकर रहते हैं ॥ ४१ ॥

मेरुसे लेकर लोकालोकपर्वत के मध्यमे जो विस्तार है उतनाहीं उधर अलोकस्थान का भी विस्तार है जो कि स्थान उसके आगे योगीश्वरों की विशुद्धगति का है ऐसा कहते हैं ॥ ४२ ॥

अण्डके मध्यमे सूर्य प्रांत है आकाश भूमिका जो अन्तर सोई मध्य है सूर्य तथा अण्डगोल के मध्यमें पञ्चाशकोटि योजन का विस्तार है ॥ ४३ ॥

जिस हेतुसे अचेतन इस अण्ड मरेमें सूर्य भये हैं इसीसे मार्तण्ड इनका नाम है हिरण्य अण्डके सम्भव होने से हिरण्यगर्भ ऐसा नाम हुआ है ॥ ४४ ॥

दिशा आकाश पृथिवी और सब भेद स्वर्ग मोक्ष नरक पाताल के स्थान ए सब विभाग सूर्य से ही हुये हैं ॥ ४५ ॥

देवता मनुष्य तिर्यग् जन्तु सर्पादिक लतादिक और सब जीव समूह तथा सब के नेत्र इनके अधिष्ठाता ईश्वर श्रीसूर्यनारायण ही हैं ॥ ४६ ॥

इति श्रीभागवत पञ्चमस्कन्ध वीसमे अध्यायका
भाषानुवाद लक्ष्मणाचार्य कृत
समाप्त ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे विंशोऽध्यायः समाप्तः ॥ २० ॥



## एकविंशोऽध्यायः।

॥ श्रीशुक उवाच ॥

एतावानेव भूवलयस्य सन्निवेशः प्रमाणलक्षणतो व्याख्यातः ॥ १ ॥

एतेन हि दिवो मण्डलमानं तद्विद उपदिशन्ति। यथा द्विदलयोर्निष्पावादीनां ते अन्तरेणान्तरिक्षं तदुभयसन्धितम् ॥ २ ॥

यन्मध्यगतो भगवांस्तपतां पतिस्तपन आतपेन त्रिलोकीं प्रतपत्यवभासयत्यात्मभासा स एष उदगयनदक्षिणायनवैषुवतसंज्ञाभिर्मान्द्यशैघ्र्यसमानाभिर्गतिभिरारोहणावरोहणसमानस्थानेषु यथासवनमभिपद्यमानो मकरादिषु राशिष्वहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते ॥ ३ ॥

यदा मेषतुलयोर्वर्तते तदाहोरात्राणि समानानि भवन्ति यदा वृषभादिषु पञ्चसु च राशिषु चरति तदाहान्येव वर्धन्ते ह्रसति च मासि मास्येकैका घटिका रात्रिषु ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

एवमध्यायविंशत्या भूमर्यादा निरूपिता।
अतः परं द्युमर्यादापालनं त्रिभिरुच्यते ॥ १ ॥
एकविंशे रवेः कालचक्रेण भ्रमतोऽन्वहम्।
स्वगत्या राशिसञ्चारैर्लोकयात्रा निरूप्यते ॥ २ ॥

एतावान्विस्तारेण कोट्यः पञ्चाशत्। उत्सेधेन पञ्चविंशतिः ॥ १ ॥

द्विदलयोर्मध्ये यथैकस्य मानेनापरस्य मानमुपदिश्यते तद्वत् ते अन्तरेण तयोर्मध्ये तदुभयसन्धितं ताभ्यामुभयतः संलग्नम् ॥ २ ॥

उदगयनादिसंज्ञाभिर्मन्दक्षिप्रसमगतिभिर्यथाकालमारोहणादिस्थानेष्वारोहणाद्यभिपद्यमानो मकरादिष्वहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते ॥ ३ ॥

तत्प्रपञ्चयति। यदेति। अत्यन्तवैषम्याभावात्समानानीत्युक्तं सर्वथा साम्यं त्वेकस्यैवाहोरात्रस्य यद्यपि वृषभमिथुनयोरेवाह्नां वृद्धिः कर्कटादिषु ह्रासस्तथापि रात्र्यपेक्षयाधिक्याद्वर्धन्त इत्युक्तम्। एवं रात्रिवृद्धावपि दिनापेक्षया न्हसतीत्युक्तम्। एकैकेति स्थूलदृष्ट्योक्तम्। वृद्धिह्रासयोः प्रतिमासवैषम्यात् ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं कृत्स्नस्य भूमण्डलस्य सन्निवेशं तत्परिमाणञ्चाभिधायाथ दिवोमण्डलपरिमाणं सूर्यगतिञ्च विवक्षुर्वक्ष्यमाणांशसापेक्षत्वादुक्तमनुवदति त्रिभिरध्यायैः। एतावानेवेति। भूमण्डलस्य सन्निवेशः संस्थानं प्रमाणादिभिरेतावानेव पञ्चाशत्कोटियोजनपरिमित एवमाख्यातः एवकारेण उक्ताधिकपरिमाणव्यावृत्तिः वक्ष्यमाणमवतारयति। एतेन। भूमण्डलपरिमाणेन दिवो मण्डलस्यापि मानं परिमाणं तद्विदः दिवोमण्डलमपि पञ्चाशत्कोटियोजनपरिमितमित्येवोपदिशन्ति कथयन्तीत्यर्थः कथमन्यस्य परिमाणकथनेनान्यस्यापि परिमाणं ज्ञातुं शक्यमित्यपेक्षायां दृष्टान्तमाह। यथा द्विदलयोर्निष्पावादीनामिति। निष्पावो गोधूमादिधान्यानि चूर्णयितुं शिल्पिभिर्निर्मितः द्विदलात्मकः पाषाणविशेषः वाद्विदलविशिष्टो धान्यविशेषो निष्पूयन्ते सूर्पादिभिरिति निष्पावः "निरभ्योः पूल्वोः" इतिघञ् निष्पावप्रभृतीनां द्वयोर्दलयोर्मध्येऽधःस्थितस्य दलस्य परिमाणे कथिते उपरितनदलमपि तत्तुल्यपरिमाणमिति कथितं भवति तथेत्यर्थः अस्तु दिवो मण्डलं भूमण्डलेन तुल्यपरिमाणं किन्तद्भूमण्डलद्युमण्डलयोर्मध्यं यत्र स्थितं सूर्यमवधीकृत्य परिच्छेदः कार्य इत्युक्तं तत्राह। तयोरिति। तयोर्भूमण्डलद्युमण्डलयोरन्तरेण मध्येऽन्तरिक्षमन्तरिक्षलोकमुपदिशन्तीत्यनुषङ्गः कथम्भूतं तदुभयसन्धितं ताभ्यां भूमण्डलद्युमण्डलाभ्यामुभयतः अध ऊर्ध्वञ्च सन्धितं संलग्नं सन्नद्धमित्यर्थः यस्यान्तरिक्षस्य मध्यगतो मध्ये स्थितो भगवांस्तपतां पतिः तापं कुर्वतां पतिरग्न्यादीनां मध्ये पतिः श्रेष्ठः तपनः सूर्य आतपेन त्रिलोकीं भूर्भुवः सुव इत्यात्मिकां प्रतपति प्रकाशयत्यात्मनः स्वस्य भासा कान्त्या त्रिलोकीमवभासयति प्रकाशयति स्वस्वकर्मार्हां प्रवृत्तां करोतीत्यर्थः किमयं सूर्य एकत्र स्थित एव त्रिलोकीं प्रतपत्यवभासयति उताटन्नेव यद्यटन्नेव तर्हि सदैकरूपेणाटति उत कदाचित्त्वरया कदाचिच्छनैः कदाचित्समं किमधोर्ध्वमेवाटति अथवा अधः आहोस्विदुभयतः केषु स्थानेष्वटति कथम्वा तद्गतिकृतो भवत्यहोरात्रपरिमाणविभाग इत्याद्यपेक्षायामाह। स एष इति। स एष अन्तरिक्षमध्यगतः सूर्य उदगयनादिसंज्ञाभिर्मान्द्यादिगतिभिरारो-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ह्यणादिस्थानेषु यथाकालमारोहणादिकमभिपद्यमानः मकरादिषु राशिषु वर्तमानः अहानि रात्रीश्च दीर्घह्रस्वसमानानि विधत्ते कुरुते मार्गस्य अल्पीयस्त्वं तावत् "अशीतिमण्डलशतं काष्ठयोरन्तरं द्वयोः। आरोहणावरोहाभ्यां भानोरब्देन या गतिः" इति श्रीवैष्णवपुराणोक्तरीत्या शेषग्रहर्क्षनाराश्च येऽन्तर्मध्यबहिर्वलयत्रयाकारे अशीतिशतकुण्डलाकारे रेखामये अवाक्शिरस्कदक्षिणावर्तकुण्डलीभूतसर्पाकारे भगवदात्मके शिशुमाराख्ये कालचक्रेऽधिश्रित्यारोहणावरोहणसमवस्थानेष्वन्तर्वलयबाह्यवलयमध्यमवलयेषूदगयनादिसंज्ञाभिर्मान्द्यादिगतिभिर्यथा सवनमीश्वराहृष्टकालमनतिक्रम्याभिपद्यमानः प्राप्तः सन्मकरादिषु शिशुमाराख्यस्य मकाराद्याकाररेखामयमण्डलेषु नक्षत्राभिमुखतया चरन्नहरादीनि ह्रस्वानि दीर्घाणि समानानि च कुरुते तत्र बहिर्वलयादन्तर्वलयगमनमारोहणं तदेवोदगयनमारोहे च चिरगतिर्मार्गस्य राशिकृतभूयस्त्वादन्तर्वलयाद्बहिर्वलयगमनमवरोहणं तदेव दक्षिणायनमवरोहे च ह्रस्व इति गतेर्मार्गस्य राशीकृतस्याल्पीयस्त्वात् समवस्थानशब्दनिर्दिष्टेषु मध्यमवलये गमनं समवस्थितिः तदेव विषुवास्थितिः तत्र समगतिर्मार्गस्य राशीकृतस्य साम्यात् आरोहणादिकम्" "ध्रुवेण मुच्यमानेन पुरा रश्मियुगेन तु । तस्यैव वाहनः सूर्यो भ्रमते मण्डलानि च„ इति आरोहणे चिरगत्यैव दिनवृद्धिरात्रिह्रासश्च भवति अवरोहणे द्रुतगमनेऽह्नां ह्रासः त्रिवृद्धिश्च समवस्थितावहोरात्रस्य साम्यमितिभेदः ॥ १—३ ॥

(१) एतदेव प्रातीपिपादयिषुस्तावत्कासु राशिषु चरन्नहोरात्रस्य साम्याधिकं विधत्ते इतिशङ्कायामहोरात्रिकृतसाम्याधिक्यविभागमाह । यदेति । यदा वृषभादिषु वृषभ आदिर्यासां तासु वृषभमिथुनकर्कटसिंहकन्यासु राशिषु पञ्चसु यदा चरति तदाहान्येव वर्द्धन्ते नतु रात्रय इत्यर्थः ॥ ४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"चतुर्भिः साकं नवतिश्च नामभिश्चक्रं न वृत्तं व्यतीं रवीविपत् भीषास्माद्वातः पवते भीषोदेति सूर्य" इत्यादिश्रुतेरखण्डस्वामिनो हरेराज्ञया स्वाधिकारेषु प्रवर्तमानानामिष्टदेवतात्वेन लोकैर्निषेव्यमाणानां तस्यैव विशेषनिवासस्थानानां सूर्यादीनां स्वरूपज्ञानमपि भगवज्ज्ञानोपयोगीत्यभिप्रायेण तन्निरूपयत्यस्मिन्नध्याये। तत्रातीताध्यायार्थानुवादमुखेनैतमध्यायमवतारयति। एतावानिति । भूवलयस्य लोकात्मकस्य सन्निवेशः विस्तारविशेषः ॥ १ ॥

द्विदलनिष्पावादीनां निष्पावराजमाषद्विदलानां सर्वप्रकारेण परिमाणतः समत्वमेवं भूवलयस्य सर्वस्य परिमाणतः समत्वमेव यस्यान्तरिक्षस्य मध्यगतस्तदन्तरिक्षं तयोर्द्यावापृथिव्योरन्तरेण मध्य उपसंधितं स्थापितम् ॥ २ ॥

आत्मनः परमात्मनो भासा "यदादित्यगतं तेज" इत्यादेः एष सूर्य उदगयनमुत्तरायणं तत्संज्ञया गत्या आरोहणसंज्ञेषु मकरादिमिथुनान्तेषु राशिषु यथासवनं तत्तन्मकरादिमासकालमनतिक्रम्य तत्तन्नक्षत्रैश्चोदयमभिपद्यमानो दक्षिणायनसंज्ञया गत्यावरोहणसंज्ञकेषु कर्कटादिधनुःपर्यन्तेषु राशिषु तत्तत्कर्कटादिमासकालमनतिक्रम्य तत्तन्नक्षत्रैश्चोदयमभिपद्यमानस्तथा वैषुवसंज्ञया गत्या समस्थानसंज्ञयोर्मेषतुलयोराशयो-स्तन्नक्षत्राभ्यामुदयं प्राप्नुवन्नहोरात्राणि दीर्घह्रस्वसमानानि करोति ॥ ३ ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भूवलयस्येति भुवः पर्यक् स्थितानां देशानां ग्रहणम् ॥ १ ॥

ते अन्तरेणान्तरिक्षमिति सूर्यमण्डलस्य दलप्रमाण एव देशो ज्ञेयः ॥ २—६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एकविंशे रवेरुक्तं राशिगत्ययनादिकम् ।
उदयास्तमनादीनां व्यवस्था च गतेर्मितिः ॥ ० ॥

एनेन भूगोलकमानेन निष्पावः शूकशिम्बी तदादीनामितरेतरद्वन्द्वसम्विज्ञानबहुव्रीहिणा कलायादीनामित्यर्थः । तेषां यथा द्वयोर्दलयोर्मध्ये एकस्य मानेनापरस्य मानमुपदिश्यते तथैव भूगोलकखगोलकयोर्विस्तारेण तुल्यमेव मानमित्यर्थः ते अन्तरेण तयोर्मध्ये अन्तरिक्षं लक्षद्वयप्रमाणं तदुभयसन्धितं ताभ्यामुभयतः संलग्नम् । यस्य अन्तरिक्षस्य मध्यगतः सः सूर्यः मान्द्यशैघ्र्यसाम्यसमार्थव्यवन्ते उदगयननाम्न्या गत्या मन्दया गत्या आरोहणस्थाने यथा सवनं समयमनतिक्रम्य आभिपद्यमानश्चरन् मकरादिषु षट्सु राशिषु अहानि क्रमेण दीर्घाणि रात्रीश्च ह्रस्वा विधत्ते दक्षिणायननाम्न्या क्षिप्रगत्या अवरोहणे कर्कटादिषु षट्सु राशिषु अहोरात्रान् ह्रस्वदीर्घान् विधत्ते। वैषुवत संज्ञया उत्तरायणदक्षिणायनमध्यवर्त्तिन्या समा समानया गत्या मेषतुलयोः अहोरात्रान् समानान् विधत्ते आभिपद्यमानश्चलन् ॥ १ ॥ २ ॥ ३ ॥

एतत् प्रपञ्चयति। यदेत्यादिना । अत्यन्तवैषम्याभावात् समानानीत्युक्तम् । सर्वथा साम्यं त्वेकस्यैवाहोरात्रस्य यद्यपि वृषभमिथुनयोरेवाह्नो वृद्धिः कर्कटादिषु ह्रासस्तथापि राज्यपेक्षया अधिकत्वाद्वर्द्धन्त इत्युक्तम् एवं रात्रिवृद्धावपि दिनापेक्षया ह्रस्वतेत्युक्तं वस्तुतस्तु मकरादिषु अह्नां वृद्धिक्रमः कर्कटादिषु ह्रासक्रम इत्यग्रे स्पष्टं वक्ष्यते । एकैकेति । स्थूलदृष्ट्योक्तं वृद्धिह्रासयोः प्रतिमासं वैषम्यात् ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं भूर्लोकः वर्णितः

पादगम्यं तु यत्किञ्चिद्वस्त्वस्ति पृथिवीमयम् ।
स भूर्लोकः समाख्यातो विस्तारोऽस्य मयोदितः ।

इति श्रीविष्णुपुराणात् तदुपरि लोकाः सन्ति तत्र भूर्लोकात् सूर्यलोकपर्यन्तो भुवर्लोकः

भूमिसूर्यान्तरं यत्तु सिद्धादिमुनिसेवितम् ।
भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम !।

इति तत्रैवोक्तत्वात् तदुपरि सूर्यमण्डलाद्ध्रुवपर्यन्तः स्वर्लोकः तदुपरि कोटियोजनोच्छ्रायो महर्लोकः तदुपरि द्विगुणोच्छ्रायो जनलोकः तदुपरि तच्चतुर्गुणोच्छ्रायस्तपोलोकः तदुपरि ब्रह्म

(१) इतः परन्दशश्लोकपर्यन्तं श्रीधरस्वामिपाठापेक्षया श्लोकानां क्रमवैपरीत्यं वर्तते तदनुसारेणैव टीकास्ति ।

यदा वृश्चिकादिषु पञ्चसु वर्तते तदाऽहोरात्राणि विपर्ययाणि भवन्ति ॥ ५ ॥

यावद्दक्षिणायनमहानि वर्द्धन्ते यावदुदगयनं रात्रयः ॥ ६ ॥

एवं नव कोटय एकपञ्चाशल्लक्षाणि योजनानां मानसोत्तरगिरिपरिवर्तनस्योपदिशन्ति तस्मिन्नैन्द्रीं पुरीं पूर्वस्मान्मेरोर्देवधानीं नाम दक्षिणतो याम्यां संयमनीं नाम पश्चाद्वारुणीं निम्लोचनीं नाम उत्तरतः सौम्यां विभावरीं नाम तासूदयमध्याह्नास्तमयनिशीथानीति भूतानां प्रवृत्तिनिवृत्तिनिमित्तानि समयविशेषेण मेरोश्चतुर्दिशम् ॥ ७ ॥

तत्रत्यानां दिवसमध्यङ्गत एव सदादित्यस्तपति सव्येनाचलं दक्षिणेन करोति ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कोटयुच्छ्रायः सत्यलोकः ततो यथा सम्भवं नभस्ततो गर्भोदकं ततोऽण्डकटाहः एवं सर्वदिक्षु तमः गर्भोदकञ्च परितो ज्ञेयं तत्परितोऽण्डकटाहः तमसः परिमाणं प्रागुक्तं गर्भोदककटाहमानम्

समस्तसागरमानस्तु गर्भोदस्तदनन्तरम् ।
कोटियोजनमानस्तु कटाहः सम्यगस्थितः ।

इत्यादिवचनादूबोध्यं तथा कटाहादुपरि दशगुणोत्तराणि जलावरणानीति संक्षेपः तत्र भुवर्लोकस्वर्गयोः स्थितिमाह । एतावानित्यध्यायत्रयेण सन्निवेशः संस्थानमेतावानेव पञ्चाशत्कोटियोजनपरिमितः ॥ १ ॥

निष्पूयते वायुनादिनेति निष्पावो द्विदलयुक्तोऽन्नविशेषः "निरभ्योः पूल्वोः" इति घञ् निष्पावस्यान्नविशेषत्वं मार्कण्डेयपुराणे प्रसिद्धम् ।

व्रीहयश्च यवाश्चैव गोधूमाः कंगुणास्तिलाः ।
प्रियङ्गवः कोविदाराः कोरदूषाः सतीनकाः ।
माषा मुद्गा मसूराश्च निष्पावाश्च कुलत्थकाः ।

इति एतच्छब्दीनां द्विदलयोर्मध्ये यथैकस्य मानं वर्णिते अपरस्य मानं वर्णितं भवति तद्वत् ते अन्तरेण तयोर्मध्ये तत्ताभ्यामुभयतः सन्धितं जगत् ॥ २ ॥

तपनः सूर्यः स एव सूर्यः उदगयनादिसंज्ञाभिर्मान्द्यादिगतिभिः आरोहणादिस्थानेषु यथासवनं यथाकालमारोहणादिकर्माभिगच्छमानः मकरादिष्वहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते करोति ॥३॥

समानानि भवन्ति अत्यन्तवैषम्यरहितानि भवन्तीत्यर्थः एकमहोरात्रं तु समं भवति वृषभमिथुनयोरह्नां वृद्धिः कर्कटादिषु तु ह्रासस्तथापि अह्नां रात्रिभ्योऽधिकत्वाभिप्रायेण पञ्चसु वर्द्धन्ते इत्युक्तं रात्रिषु एकैकाघटिका मासि ह्रसतीति स्थूलदृष्ट्योक्तम् । प्रतिमासं वैषम्यात् ॥ ४ ॥

---

भाषाटीका।

श्रीशुकदेव जी बोले इतनी ही पृथिवी मण्डल की रचना प्रमाण लक्षण से कही गई है ॥ १ ॥

इतनेही से आकाश का प्रमाण भी उसके ज्ञाता लोग कहते हैं जैसे चनामादिकोंके दो दल बरोबर होते हैं। उन दोनों के मध्यमें दोनो से मिलाहुआ अन्तरिक्ष लोक है ॥ २ ॥

जिन दोनोंके मध्यमें रहकर सब तेजवालों के पति भगवान् सूर्य अपने तेज से तीनों लोकों को तपाते हैं और अपने प्रकाश से सब को प्रकाशित करते हैं सो यही सूर्यदेव मन्द शीघ्र समान गतियों से उत्तरायण दक्षिणायन वैषुवत संज्ञाओं से ऊपर को जाना नीचे को आना बीचमें रहना इन क्रियों से यथा काल चलते हुये मकरादिक राशियों में अहोरात्रों को बड़ा छोटा मध्यम करते हैं ॥ ३ ॥

जब मेष और तुला राशिपर रहते हैं तब अहोरात्र बरोबर होते हैं जब वृषादि पांच राशियों में घूमते हैं तब दिन ही बढते हैं रातों में एक एक घड़ी कम होती जाती है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विपर्ययाणीति अहानि न्यूनानि रात्रयोऽधिका इत्यर्थः ॥ ५ ॥

तद्वृद्धिह्रासकालमाह । यावदिति ॥ ६ ॥

एवं मन्दादिगतिभिः नव कोटय इति मेरोरुभयतो मानसोत्तरस्यान्तर्विस्तारेण पञ्चदशलक्षाधिककोटिद्वयपरिमितेनेदं परिमण्डलमानमुन्नेयमेवं पञ्चदशभिर्घटिकाभिरित्यादिष्वपि त्रैराशिकगणितेन तत्तन्मानमुन्नेयम् । अत्रापेक्षितो विशेषः पुराणान्तरादवगन्तव्यः । तत्रारोहणादिस्थानानि वायुपुराणे दर्शितानि ।

सर्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः ! ।
स्थानं जरद्गवं मध्यं तथैरावतमुत्तरम् ॥
वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः ।

इति तदेव मध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथीत्रयेण त्रिधा भिद्यते त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैर्नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथी त्रयम् आर्षभी गोवीथी जरद्गवी चेति वैषुवते मध्यममार्गे वीथीत्रयम् । अजवीथी मृगवीथी वैश्वानरी चेति दक्षिणमार्गे वीथीत्रयं तदप्युक्तं तत्रैव ।

अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता ।
रोहिण्यार्द्रा मृगशिरो गजवीथ्यभिधीयते ॥
पुष्याश्लेषा तथादित्या वीथी चैरावती स्मृता ।
एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते ॥
तथा द्वे चापि फाल्गुन्यौ मघा चैवार्षभी मता ।
हस्तश्चित्रा तथा स्वाती गोवीथीति तु शब्दिता ।
ज्येष्ठा विशाखानुराधा वीथी जारद्गवी मता ।
एतास्तु वीथयस्तस्रो मध्यमो मार्ग उच्यते ॥

श्रीमद्वल्लभाचार्यकृतभावार्थदीपिका ।

मूलापाढोत्तरपाढा अजवीथ्यभिशब्दिता ।
अश्विनी च धनिष्ठा च मार्गी शतभिषक्तथा ॥
वैश्वानरी भाद्रपदे रेवती चैव कीर्तिता ।
एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते ॥

इति याम्या भरणी आग्नेया आर्द्रा नक्षत्रैरन्यताका पुनर्वसुः मार्गी मृगवीथी एवं स्थिते उत्तरायणे ध्रुवेण युगाक्षिकोटिनिबद्धवायुपाशद्वयाकर्षणे रथस्याभ्यन्तरमण्डलप्रवेशो गतिमान्द्यं चेति दिनवृद्धी रात्रिह्रासश्च दक्षिणायने च पाशप्रेरणादवरोहणे बहिर्मण्डलप्रवेशेन गतिशैघ्र्यं चेत्यहोरात्रयोर्विपर्ययः वैषुवते तु पाशसाम्यात्समावस्थाने मध्यमण्डलप्रवेशो गतिसाम्यञ्चेत्यहोरात्रयोः साम्यमिति तथा च पुराणान्तरम् ।

आकृष्येते यदा तौ तु ध्रुवेण समधिष्ठितौ ।
तदाऽभ्यन्तरतः सूर्यो भ्रमते मण्डलानि तु ॥
ध्रुवेण मुच्यमानेन पुना रश्मियुगेन तु ।
तथैव बाह्यतः सूर्यो भ्रमते मण्डलानि च ॥

इति तदेतदुक्तम् । यदा मेषतुलयोरित्यादिना । उदयास्तादिकं वक्तुमाह । तस्मिन्मानसोत्तरे मेरोः पूर्वेण ऐन्द्रीं पुरीमुपादिशन्तीत्यनुषङ्गः तासु पुरीषूदयादीन्युपादिशन्ति चतुर्दिशमित्युक्तेः ये मेरोर्दक्षिणे देशे तेषामैन्द्रीमारभ्य पूर्वोदयः ये पश्चिमे तेषां याम्यामारभ्य ये उत्तरे तेषां वारुणीमारभ्य ये पूर्वे तेषां सौम्यामारभ्य ॥ ७ ॥

तत्रत्यानां मेरुस्थानाम् । सव्येनेति । नक्षत्राभिमुखतया आगत्य मेरुं वामतः कुर्वन्नपि प्रदक्षिणावर्तप्रवहाख्यवायुभ्राम्यमाणज्योतिश्चक्रवशात्प्रत्यहं दक्षिणतः करोति अतश्चक्रगतिवशादतिदूरतो भूतलस्थस्यैव दर्शनमुदयः आकाशमारूढस्यैव दर्शनं मध्याह्नः भूमिं प्रविष्टस्यैव दर्शनमस्तमयः ततोऽतीव दूरगमने निशीथ इति समुद्रादिरस्थदृष्ट्या च "अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति" इति श्रुतिव्यवहारो न वस्तुतः तदुक्तं वैष्णवे ।

उदयास्तमये चैव सर्वकालं तु संमुखे ।
दिशास्वशेषासु तथा मैत्रेय ! विदिशासु च ॥
यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः ।
तिरोभावं च यत्रैति तत्रैवास्तमनं रवेः ॥
नैवास्तमनमर्कस्य नोदयः सर्वदा सतः ।
उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः ॥
शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम् ।
विकोणौ द्वौ विकोणस्थस्त्रीन् कोणान् द्वे पुरे तथा ॥

इति अत एव तत्रैवोक्तम् ।

तस्माद्दिश्युत्तरस्यां वै दिवारात्रिः सदैव हि ।
सर्वेषां द्वीपवर्षाणां मेरोरुत्तरतः स्थितिः ॥

इति यतो यत्र यः पश्यति सैव तस्य प्राची तस्य च वामतो मेरुस्तिष्ठतीति ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यपि वृषभमिथुनयोरेवाह्नां वृद्धिः कर्कटादिषु ह्रासस्तथापि राश्यपेक्षयाधिकत्वाद्वर्द्धन्त इत्युक्तं ह्रसन्ति चेति मासि मासि रात्रिषु एकैका घटिका ह्रसति वाहस्सु एकैका घटिका वर्द्धत इत्यर्थः वृश्चिककुम्भकुलीरकरकुम्भराशिषु पञ्चसु वर्तते चरति तदाहोरात्राणि विपर्ययाणि रात्र्यो वर्द्धन्तेऽहानि ह्रसन्तीत्यर्थः पूर्ववन्नात्रेक्षयात्र ह्रसो बाध्यः अत्राप्येकैका घटिका रात्रिषु वर्द्धते अह्नस्सु ह्रसतीत्यवगन्तव्यमिदं च स्थूलदृष्ट्योक्तं वृद्धिह्रासयोः प्रतिमासं वैषम्यादथ नाक्षिक वृद्धिह्रासमाह । यावदिति । दक्षिणायनपर्यन्तमहानि वर्द्धन्ते रात्रयो ह्रसन्ति तत उत्तरायणपर्यन्तमहानि ह्रसन्ति रात्रयो वर्द्धन्त इत्यर्थः एतदेव प्रपञ्चितं श्रीवैष्णवे ।

अयनस्योत्तरस्यादौ मकरं याति भास्करः ।
ततः कुम्भं च मीनं च राशेराश्यन्तरं द्विज ! ॥
त्रिष्वेतेषु च भुक्तेषु ततो वैषुवतीं गतिः ।
प्रयाति सविता कुर्वन्नहोरात्रं ततः समम् ॥
ततो रात्रिः क्षयं याति वर्द्धतेऽनुदिनं दिनम् ।
ततश्च मिथुनस्यान्ते परां काष्ठामुपागतः ॥
राशिकर्कटकं प्राप्य कुरुते दक्षिणायनम् ।
कुलालचक्रपर्यन्तो यथा शीघ्रं प्रवर्तते ॥
दक्षिणप्रक्रमे सूर्यस्तथा शीघ्रं प्रवर्तते ।
अतिवेगितया कालं वायुवेगगतश्चरन् ।
तस्मात् प्रकृष्टां भूमिं तु कालेनाल्पेन गच्छति ॥
सूर्यो द्वादशभिः शैघ्र्यान्मुहूर्तैर्दक्षिणायने ।
त्रयोदशार्द्धमृक्षाणां ह्यहमाचरते द्विज ! ॥
मुहूर्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ।
कुलालचक्रमध्यस्थो यथा मन्दं प्रवर्तते ॥
तथोदगयने सूर्यः सर्पते मन्दविक्रमः ।
तस्माद्दीर्घेण कालेन भूमिमल्पां च गच्छति ॥
अष्टादशमुहूर्तं तु उत्तरायणपश्चिमम् ।
अहो भवति तत्रापि चरते मन्दविक्रमः ॥
त्रयोदशार्द्धमह्ना वै ऋक्षाणां चरते रविः ।
मुहूर्तैस्तावदृक्षाणि रात्रौ द्वादशभिश्चरन् ॥
अतो मन्दतरं नाभ्यां चक्रं भ्रमति वै यथा ।
कुलालचक्रनाभिस्तु यथा तत्रैव वर्तते ॥
ध्रुवस्तथा हि मैत्रेय ! तत्रैव परिवर्तते ।
उभयोः काष्ठयोर्मध्ये भ्रमतो मण्डलानि तु ॥
दिवा नक्तं च सूर्यस्य मन्दा शीघ्रा च वै गतिः ।
एवं प्रमाणमेवैष मार्गं याति दिवाकरः ॥
अहोरात्रेण यो भुङ्क्ते समस्ता राशयो द्विज ! ।
षडेव राशीन् यो भुङ्क्ते रात्रावन्यांश्च षड्दिवा ॥
राशिप्रमाणजनिता दीर्घह्रस्वात्मता ततः ।
तथा निशायां राशीनां प्रमाणैर्लघुदीर्घता ॥
दिनान्ते दीर्घह्रस्वत्वं तद्भागेनैव जायते ।
उत्तरे प्रक्रमे शीघ्रा निशि मन्दा गतिर्दिवा ॥
दक्षिणे त्वयने सैव विपरीता विवस्वतः ।

इति यदा मेषतुलयोर्वर्तते तदाहोरात्राणि समानानि भवन्ति इत्यनेन उत्तरायणे मेषमासे साम्यमहोरात्रस्य दक्षिणायने तुलामासे साम्यमित्युक्तमेतदेव श्रीवैष्णवेऽप्युक्तम् । "तुलामेषगते भानौ समं रात्रिदिनं तु तत्,, इति । एवं सूर्यस्य मन्दादिगतिभिरहोरात्रपरिमाणविभाग उक्तः अथाहोरात्रविभागस्परिमाणविभागार्थम् मानसोत्तरे मेरुं परिभ्रमता सूर्येण

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

योजनानि परिभ्रमिमाणि भवन्तीत्यपेक्षायामाह। ...तीति। एवं मन्दादिगतिभिर्मानसोत्तरगिरिपरिवर्त्तमानस्य ...मोत्तरे मेरुपरिवर्त्तमानस्य योजनानां तेन परिभ्राम्यमाणानां ...नां नवकोटय एकपञ्चाशल्लक्षाणि चेत्युपदिशन्ति इत्यर्थः। ...तदन्तमयादिस्वरूपं विवक्षुरादावुदयास्तं प्रपञ्चयति। ...स्यामित्यादिना विभावरीनामित्यन्तेन। तस्मिन्मानसोत्तरगिरौ पूर्व-...स्मिन् दिशि देवधानीं नाम पुरीं दक्षिणादिशि नाम्ना ...यमनीं पुरीं पश्चिमे वारुणीं नाम वरुणाधिष्ठितां निम्लोचनीं ...उत्तरतः सौम्यां सोमाधिष्ठितां विभावरीं नाम पुरीमुपदि-...शन्तीति पूर्वेणान्वयः। ऐन्द्रीमिति। इन्द्राधिष्ठितामिन्द्रेण रक्ष्यमाणा-...मित्यर्थः तथा याम्यामिति यमेन पाल्यमानामिति ज्ञेयम अथोदया-...दिकमाह। नाडिकेति। तासु देवधान्यादिचतसृषु पुरीषु मेरो-...र्दिक्षु चतुर्दिक्षु समयविशेषेण कालविशेषेण भूतानां ...तत्रत्यानां प्रवृत्तिनिवृत्तिनिमित्तानि व्यापारतदभावनिमि-...त्तानि उदयादीनि भवन्ति तत्रास्तमयास्तानि प्रवृत्तिनिमित्तानि ...उदयादीनि प्रवृत्तिनिमित्तानि निशीथादीनि निवृत्तिनिमित्तानि ...भूतानां सुप्तत्वादिति विवेकः आदिशब्देनापूर्वोत्तरापरभागा ...विवक्षिताः मेरोश्चतुर्दिशामन्यकथायं भावः याति मेरोर्दक्षिणतः ...तेषामैन्द्रीमारभ्य पूर्वादयो दिशस्तु क्रमेण उदया-...स्तमयाचारो भवन्ति याति पश्चिमतः तेषां याम्यामारभ्य याम्यु-...त्तरतस्तेषां वारुणीमारभ्य याति पूर्वतस्तेषां सौम्यामारभ्येति ...मेरौ स्थितानां तु नोदयादिकमस्तीत्याह। तत्रत्या-...नामिति। तत्रत्यानां मेरौ स्थितानां भूतानामादित्यः दिवस ...गतः एव मध्याह्नगत एव सदा तिष्ठन्तः व्यापारयन् ...प्रकाशने किञ्च सर्वेषां द्वीपवर्षाणां मेरुमुत्तरं करोती-...त्याह। सव्येनेति। आदित्यं पश्यतां सव्येन स्थितं मेरुमारभ्य ...दक्षिणभागे स्थितं करोतीत्यर्थः यत्र यः पश्यत्यादित्यं सैव ...प्राची तस्य च वामतो मेरुरित्यप्रतीतिर्भाव्यः समयविशेषे-...ष्वयमभिप्रायः "उदयास्तमने चैव सर्वकालं तु सम्मुखे। दिशा-...स्वशेषासु तथा मैत्रेय! विदिशासु च। यैर्यत्र दृश्यते भास्वान् ...तेषामुदयः स्मृतः। तिरोभावं च यत्रैति तत्रैवास्तमनं रवेः। ...नैवास्तमनमर्कस्य नोदयः सर्वदा स्मृतः। उदयास्तमनाख्यं हि ...दर्शनादर्शनं रवेः। शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम्। विकोणौ ...विकोणस्थश्चीन् कोणान् द्वे पुरे तथा"। इति विष्णुपुरा-...णोक्तरीत्या दक्षिणावर्त्तप्रवहाख्यवायुना भ्रममाणज्योतिश्चक्रव-...शादतिदूरतो भूसंलग्नस्येव कालविशेषे दर्शनमुदय आकाशारूढ-...स्य दर्शनं मध्याह्नः भूमिप्रविष्टस्येव दर्शनमस्तमयः ततोऽति-...गमने निशीथ इति कालविशेषकृताविर्भावादिकमेवोदयादिक-...मेवम् "अद्भ्यो वा एष प्रातरुदेति अपः सायं प्रविशति" इति ...व्यवहारोऽपि समुद्रतीरस्थदृष्टिकृतः मानसोत्तरे भ्रमतो रवे-...स्तु समुद्रेऽस्तमयासम्भवादिति भावः॥ ५—८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

...तदेव विविच्य दर्शयति। यदेति। वृषभादिकन्यान्तेषु वृद्धिश्च ...यत्र भवतः तौ कियन्ताविति तत्राह। मासीति वर्द्धते ह्रसति ...अयं शेषः अत्र वृद्धिह्रासयोरेकैका घटिकेति नियमो नास्ति ...अनुपादिवृद्धिदर्शनात्तर्हि मुहूर्त्तानामपि वृद्धिह्रासौ स्याता-मिति नेत्याह। तुल्यं दिनमसिति। त्रिंशन्मुहूर्तमेव दिवसमाहु-रित्यर्थः कथं तुल्यत्वेन तत्राह। वर्द्धमानानीति। वर्द्धमानान्यहानि भवन्ति तावतीस्तावत्यो वर्द्धमाना रात्रयश्च संक्षीयमाणाः ह्रसन्त्यश्च यास्ताः समुच्चित्य घटिकाभिरेकीकृत्य त्रिंशन्मुहूर्तान्यहोरात्राणि समानानि भवन्ति वृश्चिकादिषु मीनान्तेषु अहोरात्राणि विपरीतानि अहानि ह्रसन्ति रात्रयो वर्द्धन्ते॥ ५॥

मकरादिषु वृश्चिकादिषु मेषतुलयोरिलितेषु कथितं सङ्गृह्याह। यावदिति। अथवा आवहप्रवहोद्वहसंवहविवहपरावहपरिवहना-मानः सप्त वायवो ज्योतिश्चक्रस्य प्रवर्तकास्तत्र ज्योतिश्चक्रा-धिपत्यादित्यगमनस्य तिस्रो वीथ्यो मध्यमोत्तरा दक्षिणा च तदुक्तम्

> सर्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः!।
> स्थानं जारद्गवं मध्यं तथैरावतमुत्तरम्।
> वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः॥

इति तच्च वीथित्रयमेकैकं त्रिधाभिपद्यते अश्विन्यादिनक्ष-त्राणां त्रिभिस्त्रिभिर्नक्षत्रैर्नागवीथी गजवीथ्यैरावतीवीथीत्युत्तरमार्गे वीथीत्रयम् आर्षभी गोवीथी जारद्गवी चेति वैपुत्रे मध्यमार्गे वीथीत्रयं अजवीथी मृगवीथी वैश्वानरी चेति दक्षिणमार्गे वीथीत्रयम् एतद्वा-युपुराणे कथितम्

> अश्विनी कृत्तिका याम्या नागवीथी तु शब्दिता।
> रोहिण्यथार्द्रा मृगशिरो गजवीथ्यभिधीयते॥
> पुष्याश्लेषा तथादित्या वीथी चैरावती मता।
> एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते॥
> तथा द्वे चापि फाल्गुन्यौ मघा चैवार्षभी मता।
> हस्तश्चित्रे तथा स्वाती गोवीथीति तु शब्दिता॥
> ज्येष्ठा विशाखानुराधा वीथी जारद्गवी मता।
> एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते॥

याम्या भरणी आदित्या अदितिदेवताका पुनर्वसुः मार्गी मृगवीथी तत्र च युगाक्षकोटिसम्बद्धवायुपाशद्वयस्य ध्रुवेणा-कर्षणं यदा तदाभ्यन्तरमण्डलगमनाय रथनीडस्यारोहणं वायुपाशशैथिल्ये च बहिर्मण्डलगमनार्थमवरोहणम्।

> आकृष्येते यदा तौ तु ध्रुवेण समधिष्ठितौ।
> तदाभ्यन्तरतः सूर्यो भ्रमते मण्डलानि तु॥
> ध्रुवेण मुच्यमानेन पुना रश्मियुगेन तु।
> तथैव बाह्यतः सूर्यो भ्रमते मण्डलानि च॥

इति तत्र बाह्यवीथ्यां गतस्य शीघ्रगतित्वाद्दिनह्रासो रात्रिवृद्धिश्च अभ्यन्तरवीथ्यां गतस्य मन्दगतित्वाद्रात्रिक्षयो दिनवृद्धिश्च मध्यवीथ्यां गतस्य समानगतित्वादहोरात्रसाम्यमित्यादिविशे-षस्तु कालविशेषवेदिभिरवगम्यत इति तदधिकारित्वादस्माभिरत्र यत्नो न क्रियत इति॥ ६॥

इदानीमेकाहोरात्रगन्तव्यमार्गसङ्ख्यामाह। एवमिति। एवं त्रिविधगतिभिः त्रिविधगतिषु वर्तमानस्यादित्यस्य रथचक्र-स्यैकस्मिन्नहोरात्रे मानसोत्तरशिखरे यत्परिवर्तमानं परितो भ्रमणं तस्य मार्गमेकपञ्चाशल्लक्षाधिकनवकोटय इति व्यपदिशन्ति तन्मार्गज्ञा इति शेषः तस्मिन्मानसोत्तरपर्वते पूर्वस्मान्मेरोः पूर्व-दिक्सूत्रनिपाते दक्षिणत आदित्येवं सौम्या सोमस्य

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विद्यमाना तासु पुरीषु तत्पुरद्वारेष्वादित्यस्य यानि गमनान्युदयादिसंज्ञानि स्युः समयविशेषेण सङ्कुर्निवशेषेण न हि सर्वदा सञ्चरतः उदयादिकमस्ति मेरोश्चतुर्दिशं स्थितानां भूतानां प्रवृत्तिनिवृत्तिनिमित्तानि तत्रोदयमध्याह्नं प्रवृत्तिनिमित्ते अस्तङ्गमनगोपनिवृत्तिनिमित्तम् निशीथगतिरह्वा संचरणाणानां सम्यङ् निवृत्तिनिमित्तभूता निशीथमर्द्धरात्रम् ॥ ७ ॥

तत्रत्यानामिलावृतखण्डनिवासिनां सव्येनाचलमचलस्य मेरुनाम्नो वामपार्श्वगो गच्छन्नचलं दक्षिणेन स्वस्य दक्षिणतः सर्वदा करोति "सर्वेषां द्वीपवर्षाणां मेरुरुत्तरतः स्थित" इति न्यायेन सर्वदिङ्मुखस्यापि मेरोः पूर्वाभिमुखत्वात् सर्वत्र गच्छन् सव्येनैव गच्छत्यादित्य इत्यर्थः गतिघटनोपरि वक्ष्यते च ॥ ८ ॥

—— ——

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एकपञ्चाशल्लक्षाणि चेति विचार्यम् । मण्डलत्रैगुण्येन पञ्चत्रिंशल्लक्षाधिकत्वमेव स्यात् किन्तु मूलमते मानसोत्तरः पुष्करद्वीपार्द्धगतिकस्य लक्षद्वययोजनोपरि स्यात् । टीकायां वायुपुराणमतेन वीथीगणना न तु नक्षत्राणामवस्थितिक्रमेण तेषामन्यत्रान्यत्र दृश्यमानत्वात् । न च भोगक्रमेण । तथा च सति आरोहावरोहाभ्यां रेवत्याश्विन्योर्व्यवहितवीथ्योर्वर्तमानत्वादश्विन्याश्विन्यांश्चैकस्यामेव वीथ्यां गणना स्यात् । तदन्येषां नक्षत्राणां तत्र तत्र सम्बन्धः केनचित् प्रकारान्तरेणैव स्यात् । तत्र तासां तत्तद्वीथ्यधिष्ठातृदेवताम्नैवेति ज्ञेयम् । तथा टीकायामेव तदाभ्यन्तरमण्डलस्थेनेति गतिनाम्नश्चेति । अन्तर्मण्डलस्य स्वल्पभूमित्वात् परिवर्त्तस्य बहुत्वेऽपि सूर्यादिदृष्टिविषयो भवति । सोऽदिमात्रकृत्यत्वात् तद्दर्शनं स्वल्पं भवतीत्यर्थः । मण्डलश्चोर्द्धोर्द्ध्वपर्यन्तमेव गच्छति । उत्तरायणमध्याह्ने मूर्द्धन्येव सूर्यो दृश्यते इति । एवं बहिर्मण्डलस्य बहुभूमित्वादस्तमारभ्य परिवर्त्तस्य स्वल्पांश एव सूर्यादिदृश्यते । सोऽदिविप्रकृष्टत्वात् तद्दर्शनं च दीर्घ्यं भवतीत्यर्थः ॥ ७ । ८ ॥

——

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विपर्ययेणेति । महानि न्यूनानि रात्रयोऽधिका इत्यर्थः ॥ ५ ॥

यावद्दक्षिणायनमिति । उत्तरायणाद्दक्षिणायनपर्यन्तमित्यर्थः एवमग्रेऽपि ॥ ६ ॥

नवकोटय इति । मेरोरुभयतो मानसोत्तरस्यान्तर्विस्तारो यस्तस्य परिमाणं पञ्चदशलक्षाधिककोटित्रयं सूर्यरथवर्त्मनश्च लक्षद्वयमित्येवं सप्तदशलक्षोत्तरकोटित्रयेण त्रिगुणीकृतेनैतत्परिमण्डलमानमुक्तं मेरोः पूर्वस्मात् पूर्वस्यां दिशि यन्मानसोत्तरं तस्मिन्नैन्द्रीं पुरीमुपदिशन्तीत्यनुषङ्गः तासु पुरीषूदयादीन्युपदिशन्ति । चतुर्दिशमित्युक्तेर्ये मेरोर्दक्षिणे देशे वर्त्तेरन् तेषामैन्द्रीमारभ्य पूर्वोदयः ये पश्चिमे तेषां याम्यामारभ्य ये उत्तरे तेषां वारुणीमारभ्य ये पूर्वे तेषां सौम्यामारभ्य अत एव "सर्वेषां द्वीपवर्षाणां मेरुरुत्तरतः स्थित" इति वैष्णवोक्तिः ॥ ७ ॥

तत्रत्यानां मेरुस्थानां सव्येनेति नक्षत्राभिमुखतया स्वगत्या मेरुं वामतः प्रकुर्वन्नपि प्रदक्षिणावर्त्तप्रवर्त्तकप्रवहाख्य... भ्राम्यमाणज्योतिश्चक्रवशात् प्रत्यहं दक्षिणतः करोति ... गतिवशाद्दतिदूरतः भूमेलग्नस्येव दर्शनमुदयः आक... मारूढस्येव दर्शनं मध्याह्नः भूमिप्रविष्टस्येवादर्शनमस्त... ततोऽतिविदूरगमने निशीथ इति अत एव समुद्रतीरस्थ... "समुद्रं वा एष प्रातरुदेत्यपः सायं प्रविशति" इति श्रुति... व्यवहारतो न तु वस्तुतः ॥ ८ ॥

——

### श्रीगच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विपर्ययेणेति रात्रयो वर्द्धन्ते अहःसु एकैका घ... ह्रसन्ति अत्रापि रात्रीणां वृद्धिः मासि मासि घटिका ह्र... पूर्ववदेव ॥ ५ ॥ ६ ॥

एवं मन्दामन्दगतिभिः मानसोत्तरगिरिपरिवर्त्तनस्य नव को... एकपञ्चाशल्लक्षाणि चेत्युपदिशन्ति तस्मिन्मानसोत्तरे मेरोः पू... ऐन्द्रीं देवधानीं नामोपदिशन्तीत्यनुषङ्ग मेरोश्चतुर्दिशं ... पुरीषु समयविशेषेण कार्य्यप्रवृत्तिनिवृत्तिकालभेदेन भू... कार्यप्रवृत्तिनिवृत्त्योः निमित्तानि उदयादीन्युपदिशन्ति च... मित्यनेन मेरोर्दक्षिणादिदेशस्थानामैन्द्र्यादिषु क्रमेणोदयादीनि... रित्युक्तम् । यथोक्तं श्रीविष्णुपुराणे ।

> यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः ।
> तिरोभावं च यत्रैति तत्रैवास्तमनं रवेः ।

इति ॥ ७ ॥

मेरुस्थानां तूदयादिकं नेत्याह । तत्रत्यानामिति । सव्येनापस... गेन करोतीति नक्षत्राणामभिमुखतया स्वगत्या मेरुं स... कुर्वन्नपि प्रदक्षिणावर्त्तप्रवहाख्यवायुप्रचालितज्योतिश्चक्रगतिवशा... दक्षिणेन करोति दक्षिणतः करोति ॥ ८ ॥

——

### भाषा टीका ।

जब वृश्चिकादि पांच राशियों मे रहते हैं सूर्य तब रात्रि... बढने घटने मे विपरीत होजाते हैं ॥ ५ ॥

जब तक दक्षिणायन होता है तबतक दिन बढते हैं... तक उत्तरायण होता है तबतक रात्री बढती हैं ॥ ६ ॥

इस प्रकार से एक कोटि एक पंचाशल्लक्षयोजन... सोत्तर पर्वत का परिमाण कहते हैं तिस मानस... में मेरु से पूर्व देवधानी नामक इन्द्र की पुरी है द... में संयमनी नामक यम की पुरी है पश्चिम में निम्लो... नाम की वरुण की पुरी है उत्तर में विभावरी नाम... कुवेर की पुरी है उन पुरियों में सूर्य का उदय म... अस्त अर्धरात्र क्रमसे समय विशेष से मेरू के... दिशों में होते हैं जिनसे कि सब प्राणियों की प्रवृत्ति नि... होती हैं ॥ ७ ॥

मेरुमे रहनेवालों को मध्य दिनहीमें सदा सूर्य प्रकाशित... हैं बाये तरफके मेरु को भी सूर्य दाहिने तरफ करते हैं ॥ ८ ॥

——

यत्रोदेति तस्य ह समानसूत्रनिपाते निम्लोचति यत्र क्वचन स्पन्देनाभितपति तस्य हैष समानसूत्रनिपाते प्रस्वापयति तत्र गतं न पश्यन्ति ये तं समनुपश्येरन् ॥ ९ ॥

यदा चैन्द्र्याः पुर्याः प्रचलते पञ्चदशघटिकाभिर्याम्यां सपादकोटिद्वयं योजनानां सार्द्धद्वादशलक्षाणि साधिकानि चोपयाति ॥ १० ॥

एवं ततो वारुणीं सौम्यामैन्द्रीं च पुनस्तथाऽन्ये च ग्रहाः सोमादयो नक्षत्रैः सह ज्योतिश्चक्रे समभ्युद्यन्ति सह वा निम्लोचन्ति ॥ ११ ॥

एवं मुहूर्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्तते पुरीषु ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

यथोक्तमुदयास्तमनादिनियमं दर्शयति। यत्रोदेतीत्यादिना। स्पन्देन स्वेदोद्गमेन। प्रस्वापयति निशीथं करोति। ये तं समनुपश्येरन् प्रस्वापसमानसूत्रस्थाः ॥ ९ ॥

साधिकानि पञ्चविंशतिसहस्राधिकानि ॥ १० ॥

सह वा सहैव यद्यपि वस्तुतः सूर्यस्यापि नक्षत्रैः सहैवोदयास्तमयौ तथापि तस्य तत्साहित्यादर्शनात्सोमादीनामेव तत्साहित्यमुक्तम् ॥ ११ ॥

त्रयीमय इत्याद्युपासनार्थम् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यथोक्तमस्योदयास्तमनादेर्नियमं दर्शयति। यत्रोदेतीत्यादिना। यत्र ऐन्द्र्यादिपुरे उदेति उदयं प्राप्नोति दृष्टो भवतीति यावत् तस्य उदयस्थानस्य समानसूत्रनिपाते वारुण्यां निम्लोचत्यस्तं याति न तिर्यग्दर्शनं प्राप्नोतीत्यर्थः यत्र हि याम्यादौ पुरि स्पन्देनाभितपति स्वेदोद्गमेनाभितपति मध्याह्नस्थितो भवतीति तत्रैष भगवान् सूर्यस्तस्य समानसूत्रनिपाते न्यूनाधिकसौम्यादौ पुरे स्थितो प्रस्वापयति याम्यदिक्स्थितानां निशीथं करोतीत्यर्थः ये याम्यदिशि स्थिताः अस्तं गतं सूर्यं पश्येरन् ते तत्र गतं सौम्यदिग्गतं न पश्यन्ति एवं सर्वादिषु पुरीषु उदयादिनियमो द्रष्टव्यः ॥ ९ ॥

एवमुदयादिदेशनियम उक्तः अथैन्द्र्यादिपुर्याः याम्यादिपुरीं कियता कालेन कति योजनानि गच्छतीत्यपेक्षायामाह। यदेति। यदा ऐन्द्र्यादिपुर्याः प्रचलति निष्क्रान्तो भवति तदा पञ्चदशघटिकात्मकेन कालेन त्रैराशिकगणितेन योजनानां सार्द्धद्वादशलक्षाणि साधिकानि पञ्चविंशतिसहस्राधिकानि सपादकोटिद्वयं पञ्चविंशतिलक्षाधिककोटिद्वयं चातिक्रम्येति शेषः याम्यां पुरीमुपयाति ॥ १० ॥

एवं ततो याम्यायाः प्रचलति एवमुक्तकालेन उक्तयोजनानि वारुणीं पुरीं गच्छति एवमुत्तरत्रापि योज्यमेवं सूर्यस्योदयास्तमयादिस्वरूपं तद्देशनियमं कालपरिमाणं योजनपरिमाणं चाभिधायाथ सोमादीनामपि ग्रहाणामभ्युदयादिकमाह। तथेति। ज्योतिश्चक्रेण तारागणेन सह वर्त्तमाना अन्ये सोमादयो ग्रहा अपि नक्षत्रैरश्विन्यादिभिः सह तथा सूर्यवदिन्द्रादिपुरीषु गमनं प्रत्यभ्युद्यन्ति उद्गच्छन्ति उदयं प्राप्नुवन्ति सहैव निम्लोचन्त्यस्तं प्राप्नुवन्तीत्यर्थः यद्यपि वस्तुतः सूर्यस्यापि नक्षत्रैः सहैव उदयास्तमयौ तथापि तत्साहित्यादर्शनात्सोमादीनामेव तत्साहित्यमुक्तमिति भावः ॥ ११ ॥

पञ्चदशघटिकाभिः सपादकोटिद्वयं साधिकानि सार्द्धद्वादशलक्षाणि योजनानि गच्छतीत्युक्तं तत्रैकेन मुहूर्त्तेन कति योजनानि गच्छतीत्यपेक्षायामाह। एवमिति। त्रयीमय इत्युपासनार्थमुक्तं वेदरूपेणोपास्यः सौरो रथ एकमुहूर्त्तेनाष्टशताधिकचतुस्त्रिंशल्लक्षयोजनानि चतसृषु देवधान्यादिषु पुरीषु परिभ्रमते कोऽसौ सौरो रथः एकेन मुहूर्त्तेन यः परिभ्रमते तत्राह। यस्येति। यस्य सौररथस्यैकं चक्रं सम्वत्सरात्मकं समामनन्त्युपासते चक्रं विशिनष्टि। द्वादशारं द्वादश मासा अरा यस्य षडृतवो नेमयो यस्य त्रीणि चातुर्मास्यानि नाभयो यस्य इदमप्युपासनार्थमेवोक्तं मासाद्यादिरूपेण सम्वत्सरेण रूपेण चोपास्यमानमित्यर्थः सौरो रथः परिवर्त्तत इत्युक्तं स किं निरवलम्ब एव एव भ्रमतीत्यत्र विशिनष्टि। यस्येति। यस्य रथस्याक्षो मेरोर्मूर्ध्नि कृतमूलः अक्षशब्दोऽत्रोपचारात्तत्स्थितायां धुरि वर्तते एवं द्वितीयोऽक्ष इत्यत्रापि यत्र रथो मानसोत्तरे कृतोत्तरभागः मानसोत्तरगिरौ लक्षार्द्धोपरि वायुवद्धभूमौ कृतोत्तरभागः वायुना निबद्धोत्तरभागः अन्यथायुतार्द्धमात्रोच्छ्रायत्वान्मानसोत्तरगिरेर्मेरोश्चतुरशीतियोजनोच्छ्रायत्वादतस्तस्य साम्यानुपपत्तेः कोऽसावितरभागः यो मानसोत्तरे कृतमूलः तत्राह। यत्रेति। यत्र इतरभागे प्रोतं तद्रविरथचक्रं तैलयन्त्रवन्मानसोत्तरगिरौ परितो भ्रमति ॥ १२ ॥ १३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यत्रोदेति। तत्समानसूत्रनिपाते पश्चिमभागे निम्लोचति दक्षिणायने किञ्चित्किञ्चिद्दक्षिणभागोदये सति किञ्चित्किञ्चिद्दक्षिणभागे पश्चिमे निम्लोचति एवमुत्तरायणे किञ्चित् किञ्चिदुत्तरतः उदयनिम्लोचौ याति एवमुत्तरत्रादित्य उदयप्रदेशस्थस्तत्र निपातं विहाय यत्र क्वापि न स्पन्दते न चलति

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्योदयस्थस्य समानसूत्रनिपाते विभावरीपुरि द्वारि स्थितोऽन्यजनान् प्रस्वापयति निद्रितान् करोति उद्धृतशृङ्गच्छायापिहितं तत्र विभावर्यां गतं न पश्यन्ति जना इति शेषः ॥ ९ ॥

सार्धद्वादशलक्षाणि साधिकानीति । पञ्चविंशतिसहस्राधिकानि सार्धद्वादशलक्षाणीत्यर्थः ॥ १०--११ ॥

देवधान्या निर्गत्य संयमनीं प्रवेक्ष्यन् पञ्चदशघटिकाभिः कालावयवैः पादोनाष्टत्रिंशल्लक्षोत्तरकोटिद्वयमतिक्रम्य प्रविशति तपनः एवं चतुर्गुणितान्येतानि योजनानि सैकपञ्चाशल्लक्षनवकोटिसङ्ख्यानीति सर्वात्मना ज्ञातव्यम् ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यत्रेति । यद्वीथ्यधोगतदेश इत्यर्थः ॥ ९—११ ॥

मुहूर्त्तेन चतुस्त्रिंशदिति मानसोत्तरमानं नत्वन्यत्र एवं पूर्वत्र वस्तु ज्योतिःशास्त्ररीत्या तत्तद्देशे रव्युदयक्रमविचारेण रविपरिक्रमणीयं मण्डलमिदं स्वल्पमेव प्रतीयते तत् खलु चलता विदूरस्य स्वल्पस्यापि वृक्षादेः समसूत्रता बहुलदेशेन नैव त्यक्तुं शक्यते तथातिदूरं व्योमगतेनापि रविणा स्वल्पभूमिसमसूत्रतेति रविचलनस्य स्वल्पत्वव्यवहारान्न विरुद्धं न च दृष्टिभ्रममात्रमिदं छायापि दृश्यमानतद्गतिमान्द्यमनुकरोति इति ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उदयास्तमयमध्याह्ननिशीथानां वर्षभेदेन व्यवस्थामाह यत्रेति । "यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृत" इति वैष्णवोक्तेः सूर्यस्य प्रथमदर्शनमेवोदयः निम्लोचत्यस्तं गच्छति उदयानन्तरत्रिंशद्घटिकान्ते स्यन्देन आकाशमध्यस्थः सन् प्रस्वेदोद्गमेन तस्य देशस्य समानसूत्रपातविषयीभूते देशे त्रिंशद्घटिकानन्तरं गतः सन्निति शेषः । प्रस्वापयति निशीथं करोति ये अस्तमुदयञ्च अनुपश्येरंस्ते जनास्तत्र गतं सूर्यं न पश्यन्त्यत एव स्वपन्ति तेन च मेरोर्दिक्चतुष्टये स्थितेषु मध्ये यदा यत्र सूर्यस्योदयो दृश्यते तदैव तस्मात् पूर्वे वर्षे मध्याह्नः पश्चिमे वर्षे निशीथः उत्तरवर्षे निम्लोचो ज्ञेयः । एवं मध्याह्नदर्शनसमय एव पूर्ववर्षे निम्लोचः पश्चिमवर्षे उदयः उत्तरवर्षे निशीथश्च ज्ञेयः । अस्तदर्शनसमय एव पश्चिमवर्षे मध्यान्हः पूर्ववर्षे निशीथः उत्तरवर्षे उदयश्च ज्ञेयः । तदेवं सर्ववर्षस्था अपि मेरोर्दक्षिणदेशस्थानेवात्मनो मन्यमानाः स्ववर्षे सूर्यस्योदयमध्याह्ननिम्लोचान् पश्यन्त एवान्येषु तान् पूर्वोक्तविवेकेन जानन्तीति संक्षेपः । विष्णुपुराणे स्थितोऽपि विशिष्योक्तम् ।

> शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम् ।
> विकर्णौ द्वौ विकर्णस्थस्त्रीन् कोणान् द्वे पुरे तथा ॥

इति अस्यार्थः शक्राद्यन्यतमस्य पुरे तिष्ठन् पुरत्रयं युगपत् स्पृशति द्वौ विकर्णौ कोणौ च । तथा हि शक्रपुरे तिष्ठन् शक्रदिग्वर्षे मध्याह्नं दक्षिणदिग्वर्षे उदयमुत्तरदिग्वर्षे अस्तमनं करोतीति पुरत्रयस्पर्शः अग्निकोणवर्षे प्रथमं याममीशानकोणवर्षे तृतीयं यामं करोतीति विकर्णद्वयस्पर्शः । विकर्णस्थः अग्न्याद्यन्यतमकोणस्थः संस्त्रीन् कोणान् द्वे पुरे द्वे दिशौ च स्पृशति । तथा हि अग्निकोणे तिष्ठन् अग्निकोणवर्षे मध्याह्नं नैर्ऋतकोणवर्षे [illegible] मीशानकोणे अस्तमनं करोतीति कोणत्रयस्पर्शः । तथा द[illegible] दिग्वर्षे प्रथमो यामः पूर्वदिग्वर्षे तृतीयो यामः इति पुरद्वयस्प[illegible] दिग्द्वयस्पर्शश्च । एवमन्येषु कोणेषु पुरेष्वपि द्रष्टव्यम् । ९ ।

साधिकानि पञ्चविंशतिसहस्राधिकानि ॥ १० ॥

सह वा सहैव ॥ ११ ॥

त्रयीमय इत्युपासनार्थम् ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत्र स्थाने उदेति उदितो दृष्टो भवति तस्योदय[illegible] समानसूत्रनिपाते निम्लोचति अदृष्टो भवति नच प्रा[illegible] स्थानादुद्गच्छति सायं चाधः स्थाने प्रविशतीति [illegible] "अह्नचो वा एषं प्रातरुदेत्यपः सायं प्रविशति„इति भगवती श्रु[illegible] द्रष्टृजनमत्यनुसारिणीति भावः यत्र क्वचनजनविषये एव [illegible] स्यन्देन स्वेदोद्गमेन प्रतपाति मध्यान्हं करोति अभि[illegible] मुखेन समानसूत्रनिपाते प्रस्वापयत्यर्द्धरात्रं करो[illegible] यावत् ये अस्तं गतं सम्यक् अनुपश्येरन् ते एव त[illegible] स्थिताः न पश्यन्ति सूर्यस्तु सदा वर्तत एव [illegible] भगवान् पराशरः ।

> नैवास्तमनमर्कस्य नोदयः सर्वदा सतः ।
> उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः ॥

इति ॥ ९ ॥

अधिकेन पञ्चविंशतिसहस्रात्मकेन सहितानि ॥ १०[illegible]

एकेन मुहूर्त्तेन कतियोजनानि गच्छतीत्यत आह । एवं[illegible] त्रयीमयः वेदत्रयीत्वेनोपास्यः ॥ १२ ॥

---

### भाषाटीका

जहां पर सूर्य देव उदित होते हैं तिसी के सामने अस्त[illegible] जहां पर मध्यान्ह करते हैं तिसके सामने ही अर्धरात्र करते[illegible] उहां जाने से जो लोग उनको देखते थे सो नहीं देखते हैं। ९[illegible]

जब इंद्र की पुरी से सूर्य चलते हैं तब से पंद्रह घ[illegible] सवा दो करोड साढे बारा लक्ष पचीस हजार योजन दूर [illegible] संयमनी पुरी को जाते हैं तिसके पीछे वरुणपुरी कुबेरपुरी [illegible] पुरी को जाते हैं ॥ १० ॥

और सोमादिक सब ग्रह नक्षत्रों के ज्योतिश्चक्र में [illegible] उदित होते हैं साथ ही अस्त होते हैं ॥ ११ ॥

इस प्रकार से एक मुहूर्त में चौंतीस लाख आठ सौ [illegible] पर्यंत वेदत्रयीमय सूर्य का रथ चारों पुरों में घूमता रहता है[illegible]

---

यस्यैकं चक्रं द्वादशारं षण्नेमि त्रिणाभि सम्वत्सरात्मकं समामनन्ति तस्याक्षो मेरोर्मूर्धनि कृतो मानसोत्तरे कृतेतरभागो यत्र प्रोतं रविरथचक्रं तैलयन्त्रचक्रवद्भ्रमन्मानसोत्तरगिरौ परिभ्रमति ॥ १३ ॥

तस्मिन्नक्षे कृतमूलो द्वितीयोऽक्षस्तुर्यमानेन सम्मितस्तैलयन्त्राक्षवद्ध्रुवे कृतोपरिभागः ॥ १४ ॥

रथनीडस्तु षट्त्रिंशल्लक्षयोजनायतस्तत्तुरीयभागविशालस्तावानूविरथयुगो यत्र हयाश्छन्दोनामानः सप्तारुणयोजिता वहन्ति देवमादित्यम् ॥ १५ ॥

पुरस्तात्सवितुररुणः पश्चाच्च नियुक्तः सौत्ये कर्मणि किलास्ते ॥ १६ ॥

तथा वालखिल्या ऋषयोऽङ्गुष्ठपर्वमात्राः षष्टिसहस्राणि पुरतः सूर्यं सूक्तवाकाय नियुक्ताः संस्तुवन्ति ॥ १७ ॥

तथाऽन्ये च ऋषयो गन्धर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त चतुर्दश मासि मासि भगवन्तं सूर्यमात्मानं नानानामानं पृथङ्नानानामानः पृथक्कर्मभिर्द्वन्द्वश उपासते ॥ १८ ॥

लक्षोत्तरं सार्द्धनवकोटियोजनपरिमण्डलं भूवलयस्य क्षणेन सगव्यूत्युत्तरं द्विसहस्रयोजनानि स भुङ्क्ते ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
ज्योतिश्चक्रसूर्यरथमण्डलवर्णनं नामैक-
विंशतितमोऽध्यायः ॥ २१ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

द्वादश मासा अरा यस्य। षड्ऋतवो नेमयो यस्य। त्रीणि चातुर्मास्यानि नाभयो यस्य। कृत इतरभागो यस्य। मानसोत्तरगिरौ लक्षार्द्धादुपरि वायुबद्धभूमाविति द्रष्टव्यं चक्रं वा तावदुच्छ्रितमिति मन्तव्यम् अन्यथायुतमात्रोच्छ्रायत्वान्मानसोत्तरस्य मेरोश्चतुरशीत्युच्छ्रायत्वादक्षस्य साम्यानुपपत्तेः ॥ १३ ॥

तस्मिन्नक्षे चक्रप्रान्ते कृतमूलो निबद्धपूर्वभागः प्रथमाक्षो मेरुमानसोत्तरायतः सार्धसप्तलक्षाधिकसार्धकोटिप्रमाणस्तस्य तुर्यमानेन सार्धसप्तत्रिंशत्सहस्राधिकैकोनचत्वारिंशल्लक्षमानेन ध्रुवे कृतो वायुपाशेन निबद्ध उपरिभागो यस्य ॥ १४ ॥

नीड उपवेशस्थानं गायत्र्यादिच्छन्दोनामानः अरुणेन योजिताः सन्तो देवं वहन्ति ॥ १५ ॥

पुरस्तात्स्थितोऽपि पश्चात्प्रत्यङ्मुख आस्ते। यद्वा। यत्सूर्यस्य पुरस्तात्तस्य वै पश्चिमत्वात्पश्चादित्युक्तम्। अश्वस्थानं च वायुनोक्तम्।

> सप्ताश्वरूपच्छन्दांसि वहन्ते वामतो रविम्।
> चक्रपक्षनिबद्धानि चक्रे चाक्षः समाहितः।

इति ॥ १६ ॥

सूक्तवाकाय सुभाषिताय ॥ १७ ॥

एकैकशश्चतुर्दश द्वन्द्वशः सप्त गणाः सन्तो मासि मास्युपासत इत्यन्वयः ॥ १८ ॥

गव्यूतिः क्रोशद्वयं सगव्यूत्युत्तरं यथा भवति तथा ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तस्मिन्नक्षे चक्रप्रान्ते कृतमूलः निबद्धपूर्वभागः द्वितीयोऽक्षः प्रथमोऽक्षः मेरुमानसोत्तरायतः सार्द्धसप्तलक्षोत्तरसार्द्धकोटियोजनप्रमाणः तस्य तुर्यमानेन सार्द्धसप्तत्रिंशत्सहस्राधिकैकोनचत्वारिंशल्लक्षयोजनमानेन संमितः परिमितः ध्रुवे कृतः वायुपाशेन बद्ध उपरिभागो यस्य तथाभूतः तं निदर्शयति। तैलयन्त्राक्षवत्तैलयन्त्राक्षदृष्टान्तेन ज्ञातव्य इत्यर्थः ॥ १४ ॥

रथनीडादेः परिमाणमाह। रथनीड इति। नीडो रथिन उपवेशस्थानं षट्त्रिंशल्लक्षयोजनायामः तुरीयभागविशालः नवलक्षयोजनविशालः रविरथयुगोऽपि तावान् षट्त्रिंशल्लक्षयोजनायामः तुरीयभागविशालः। युगं विशिनष्टि। यत्र युगेऽरुणेन सूतेन

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

योजिताः सप्त हया गायत्र्यादिच्छन्दोनामानः देवं द्योतमानमादित्यं वहन्ति गन्तव्यदेशं प्रापयन्तीत्यर्थः अश्वनामानि श्रीवैष्णवे पुराणे उक्तानि ।

> हयाश्च सप्तच्छन्दांसि तेषां नामानि मे शृणु ।
> गायत्री च बृहत्युष्णिग् जगती त्रिष्टुबेव च ॥
> अनुष्टुप्पङ्क्तिरित्युक्तः छन्दांसि हरयो रवेः ।

इति । नन्वेवम् "एकोऽश्वो वहति सप्तनाम" इति श्रुतिविरोध इति चेदुच्यते एक इत्यनेनैकसूर्य उच्यते अश्व इति जात्यभिप्राय एकवचननिर्देशः "एको व्रीहिः सुसम्पन्नः" इत्यादिवत् सप्तनामेत्यादि-सप्तनामान इत्युच्यते तथा चैकरूपा गायत्र्यादिसप्तनामानोऽश्वा वहन्तीति श्रुत्यर्थः उपबृंहणानुसरणादेव हि श्रुत्यर्थनिर्णय इति तेषां गायत्र्यादिनामकत्वं तद्दृष्ट्योपासनार्थमुक्तम् ॥ १५ ॥

अरुणयोजिता देवं वहन्तीत्युक्तं कुत्र स्थितोऽश्वान् योजयति इति तत्राह । पुरस्तादिति । सवितुः पुरस्तात्पुरःस्थितोऽरुणः सौत्ये अश्व-योजनरूपे कर्मण्यास्ते इत्यर्थः पुरस्तात्स्थितोऽपि किं सवितुरभि-मुखतो वर्तते नेत्याह । पश्चाच्च नियुक्तः पुरस्तात्स्थितोऽपि प्रत्यङ्मुख आस्ते यद्वा । यस्सूर्यस्य पुरस्तस्यैव पश्चिमत्वादित्युक्तमेवं वालखिल्या ऋषयोऽपि षष्टिसहस्रसंख्याका अङ्गुष्ठपर्वप्रमिताः सूर्यस्य पुरतो रथे स्थिताः सूक्तवाकाय वाक उक्तिः सूक्तरूपो वाकः सूक्तवाकः तस्मै सुभाषितरूपोक्तये संस्तुतये इति यावन्नियुक्ताः आदिष्टाः सन्तः सूर्यं संस्तुवन्ति ॥ १६ ॥ १७ ॥

तथान्ये ऋष्यादयः सप्त गणा एकैकशः चतुर्दश चतुर्दश छन्दशः मासे मासे पृथङ्नामभिरादित्यमुपासत इत्यन्वयः तत्र ग्रामण्यो यक्षाः कथंभूतमादित्यमात्मानं सर्वेषां दिगधिष्ठातृत्वा-त्मानं भगवदात्मकत्वादात्मानं मासभेदभिन्ननामानं कथं भूताः पृथङ्नामानः परस्परविलक्षणनामानः पृथक्कर्माणि श्री-वैष्णवे प्रपञ्चितानि "स्तुवन्ति ऋषयस्तत्र गन्धर्वैर्गीयते पुरः । नृत्य-न्त्योऽप्सरसो यान्ति तस्य चानु निशाचराः । वहन्ति पन्नगा यक्षैः क्रियतेऽभीशुसङ्ग्रहः । वालखिल्यास्तथैवैनं परिवार्य सहासत" इत्यादिना यद्यप्यत्र मासि चतुर्दश चतुर्दश उपासत इति प्रतीयते श्रीवैष्णवे तु सप्त सप्तेति तथाहि ।

> सप्तभाविर्भाष्ठितो देवैरादित्यो मुनिभिस्तथा ।
> गन्धर्वैरप्सरोभिश्च ग्रामणीयक्षराक्षसैः ॥
> धाता कृतस्थली चैव पुलस्त्यो वासुकिस्तथा ।
> रथकृद्ग्रामणीर्हेतिस्तुम्बुरुश्चैव सप्तमः ॥
> एते वहन्ति वै चैत्रे मधुमासे सदैव हि ।
> मैत्रेय ! स्यन्दने भानोः सप्त मासाधिकारिणः ॥
> अर्यमा पुलहश्चैव रथौजाः पुञ्जिकस्थली ।
> प्रहेतिः कच्छनीरश्च नारदश्च रथे रवेः ।
> माधवे निवसन्त्येते शुकसंज्ञे निबोध मे ।
> मित्रोऽत्रिस्तक्षकः रक्षः पौरुषेयोऽथ मेनका ॥
> हाहारथस्वनश्चैव मैत्रेयैते वसन्ति वै ।

इत्यादि तथाप्येकैकस्मिन्मासाधिकारिणि गणे प्रधानभूताः सप्त वैष्णवे कथिता इत्यतो न विरोधः ॥ १८ ॥

पूर्वं मानसोत्तरं परिवर्तमानस्य लक्षोनसार्द्धनवकोटियोज-नानि भवन्ति इत्युक्तं भवति कियता कालेन कति योजनानि गच्छ-तीत्यत्र उक्तमेव मुहूर्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिका-नीति इदानीं क्षणेन कति योजनानि गच्छतीत्याह । लक्षो-त्तरमिति । नव कोट्यः एकपञ्चाशल्लक्षयोजनपरिमितं सूर्यस्य पारिप्राप्य-मार्गं भूमण्डलं तस्य भ्रमणस्य क्षणद्वयाधिकद्विसहस्रयोज-नानि स सूर्यः क्षणेन कालेन भुङ्क्ते गच्छतीत्यर्थः ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यस्य रविरथस्यैकमेव चक्रं द्वादशमासाभिमानिदेवताभि-मन्यमाना द्वादशाराः यस्य तत्तथा षड् ऋतवभिमानिदेवताभि-मन्यमानाः पर्वनेमयो यस्य तत्तथा चातुर्मास्याभिमानिदेवता-भिमन्यमानास्त्रिनाभयो यस्य तत्तथा स्वयं संवत्सराभिमानि-देवताभिमन्यमानं तस्य रथस्याक्षप्रमाणं सार्धकोटिद्वयं सप्तलक्षाधिकम् ।

> सार्द्धं कोटिद्वयं प्रोक्तं सप्त लक्षाधिकं तथा ।
> रथाक्षस्य रवेर्मेरोर्मानसोत्तरवर्तिनः ॥

इति यत्रेतरभागे रविरथचक्रं प्रोतं यः सूर्यरथाक्षस्य प्रोतेतरभागो मेरुमूर्ध्नि प्रोतैकभागः ॥ १३ ॥

तस्मिन् दीर्घाक्षे चक्रप्रोतैकभागस्तस्मिन् दीर्घाक्षे चक्रप्रोतदेशे कृतमूलः कीलितपृष्ठभागस्तुरीयमानेन सम्मितः दीर्घाक्षचतुर्भागसमानः द्वितीयाक्षोऽस्ति स तु ध्रुवलोके कृतोपरि-भागः रथनीडः सूर्यस्य पीठस्थानीयः तुरीयभागविशालो नवलक्षविस्तारस्तावान् रविरथयुग इति पूर्वप्रस्तुतदीर्घाक्षव-मानः प्रकृते सम्बन्धाभावात् दूरस्थपरामर्शः प्रमाणान्तर-सिद्धत्वाच्च ।

> अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्धयोः ।
> ह्रस्वाक्षस्तद्युगार्धेन ध्रुवाधारो रथस्य वा ।

इति अक्षप्रमाणमक्षयोः दीर्घाक्षह्रस्वाक्षयोः परिमाणमुभयोर्युगार्धयोर्युगं च तदर्धं च युगार्धं तयोर्युगार्धयोर्यथाक्रमं प्रमाणं युगस्योत्तरभागोऽश्वस्कन्धे निवेशितः दक्षिणभागस्तु ध्रुवस्थानादवलम्बमानो वायुपाशेन बद्धः युगार्धस्त्वश्वस्कन्धाश्रितैकदेशगात्रे कीलितः चक्रप्रोतदीर्घाक्षाग्रे कीलितपरभागः तत्र रथस्य यो ह्रस्वाक्षस्तत्रैव कीलितस्तेन युगार्धेन सह ह्रस्वाक्षः ध्रुवाधारो भवति उत्तानपादपुत्रलोके वायुपाशेन बद्ध इत्यर्थः अश्वास्थित्या चायमर्थोऽवगम्यते ।

> सप्ताश्वरूपच्छन्दांसि वहन्तो वामतो धुरम् ।
> चक्रपक्षनिबद्धानि चक्रे चाक्षः समाहितः ॥

इति रविरथनीडविशालसमान इति केचित् तदयमर्थं विजानाति ईषादण्डपरिमाणमपि तदनुसारेणोत्प्रेक्षणीयं युगमध्ये निर्गताग्र ईषादण्डः ॥ १४ ॥ १५ ॥

सवितुः पुरस्तात् अश्वानां पश्चात्पृष्ठे ॥ १६–१७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ग्रामणयस्तत्त्वार्थाः "ग्रामाधिपे तच्छ्रेष्ठे च ग्रामणीः परिकीर्तितः" इति यादवः ॥ १८-१९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अत्र टीकायां चक्रं वा तावदुच्छ्रितमिति पक्षे युगपद्धर्तिद्वयी सम्भवति वैपरीत्येनाकर्षणयोः परस्परस्तम्भभावात् अश्वानां ... वायुचक्रस्यैव रथमतिक्रम्य किञ्चिन्निष्क्रमः स्यात्। ननु रथस्य प्राच्याः ततो रथस्य नक्षत्रान्तरप्राप्तौ सम्भवन्त्यापि देशान्तरप्राप्तिर्न सम्भवति चन्द्रादौ तु प्रत्यहं देशान्तरप्राप्तिश्च दृश्यते कुलालचक्रपिपीलिकादृष्टान्तेन च सा लभ्येत इति विचार्य ततो मानसोत्तरोपरि वायुवद्धभूमिरिव एव पर्यवसितेषु मेरोरुपर्यपि तज्ज्ञेयं किन्तु मानसोत्तरस्योपरि नवतिसहस्रात्मकं मेरोस्तु षोडशसहस्रात्मकमिति ॥ १३ ॥

तस्मिन्नक्षे रविरथस्यैव चक्रप्रान्ते तुर्यमानेन चतुर्थांशेन सम्मितः सम्पातितः अधिक इत्यर्थः ॥ १४ ॥

रथनीडोऽत्र रथाश्रयो रथानुगतवायुमयभूमिः न तु सूर्यावेशरथमध्यपीठं रथस्याल्पप्रमाणत्वात्। यथैव वैष्णवे। "योजनानां सहस्राणि भास्करस्य रथो नव" इति। एवमेव हि दशसहस्रयोजनात्मकं वक्ष्यमाणं तन्मण्डलं घटत इति ॥ १५ ॥

पुरस्तात् पश्चाच्च नियुक्त इति कायव्यूहेनापि घटते ॥ १६ ॥

ऋषयश्चतुर्दश गन्धर्वाश्चतुर्दशेत्येवमेकैकशश्चतुर्दश द्वन्द्वशो निर्दिष्टा इत्यर्थः। समासवाचिद्वन्द्वशब्दवत् तथा सप्त गणाः मासि मास्युपासत इत्यन्वयः ॥ १७ ॥ १८ ॥

लक्षोत्तरमिलादिभूवलयस्येत्यन्तकं गच्छ स सूर्यः ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यस्य रथस्य द्वादश मासा अरा यस्य षड्ऋतवो नेमयो यस्य त्रीणि चातुर्मास्यानि नाभयो यस्य मेरोर्मूर्द्धनि मूर्द्धाधः प्रदेशे ... तथा दृष्टेः। मानसोत्तरे लक्षार्द्धोपरि वायुवद्धभूमाविति श्रीस्वामिचरणाः ततो मानसोत्तरस्यायुतमात्रोच्छ्रायत्वात् षष्टिसहस्रोपरि वर्त्तमानः स च किञ्चिन्न्यूनसप्तपञ्चाशल्लक्षाधिककोटिप्रमाणः ॥ १३ ॥

तस्मिन्नक्षे चक्रप्रान्तवर्त्तिनि कृतमूलः निबद्धपूर्वभागो द्वितीयोऽक्षः। तुर्यमानेन प्रथमाक्षस्य चतुर्थांशप्रमाणेन सप्तत्रिंशल्लक्षाधिककोनचत्वारिंशल्लक्षमानेन सम्मित इत्यक्षोऽयं ... प्रथमाक्षप्रदेशो ग्रथित इति ज्ञेयम्। द्वितीयाक्षस्य प्रथमाक्षादल्पप्रमाणत्वाद्भुवे कृतः वायुपाशेन निबद्ध उपरिभागो यस्य सः ॥ १४ ॥

रथस्य नीडोऽन्तर्गृहं षट्त्रिंशल्लक्षयोजनोच्छ्रितो नवलक्षयोजनविस्तारः। चक्राच्चत्वारिंशत्सहस्रोपरितने स्थाने नीडमध्ये सूर्य उपविष्टो ज्ञेयः। गायत्र्यादिच्छन्दोनामानः अरुणेन सारथिना योजिताः ॥ १५ ॥

पुरस्तात् स्थितोऽपि पश्चात् प्रत्यङ्मुख आस्ते अश्वस्थानं वायुनोक्तम्।

सप्ताश्वरूपच्छन्दांसि वहन्ते वामतो रविम्।
चक्रपक्षनिबद्धानि चक्रं वाक्षः समाहित इति ॥ १६ ॥

सूक्तवाकाय सुभाषिताय ॥ १७ ॥

मासि मासि एकैकस्मिन् मासि द्वाभ्यां द्वाभ्यामृष्यादिभ्यां सप्त गणा भवन्तः। एकैकशः एकैकेन ऋष्यादिना तु चतुर्दश गणा भवन्तो मासि मासि उपासत इत्यन्वयः ॥ १८ ॥

गव्यूतिः क्रोशयुगं स सूर्यः गव्यूति उत्तरं यथा स्यात्तथा ॥१९॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
एकविंशः पञ्चमस्य सङ्गतः सङ्गतः सताम् ॥ २१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यस्य रथस्यैकं चक्रं परिभ्रमयत्संवत्सरात्मकमामनन्ति उपासनार्थं कथम्भूतं द्वादश मासा अरा यस्य तत् षड् ऋतवो नेमयो यस्य तत् त्रीणि चातुर्मास्यानि नाभयो यस्य तत् यस्य रथस्य अक्षः मेरोर्मूर्द्धनि कृतः उत्तरभागो यस्य सः तथा मानसोत्तरे कृत इतरभागो यस्य सः अयुतयोजनोच्छ्रायमानसोत्तरोपरि रविरथचक्रमत्युच्छ्रितं मन्तव्यमन्यथाक्षसाम्यानुपपत्तेः ॥ १३ ॥

तस्मिन्मेरुमानसोत्तरायते सार्धसप्तलक्षोत्तरसार्धकोटियोजनदीर्घे कृतमूलो द्वितीयाक्षः पूर्वाक्षस्य तुर्यमानेन सार्धसप्तत्रिंशत्सहस्रोत्तरैकोनचत्वारिंशल्लक्षमानेन सम्मितः ध्रुवे कृतो वायुपाशेन मानसोत्तरगताक्षाग्रबद्धेन निबद्ध उपरिभागो यस्य सः अत्रेदं बोध्यम् "भूमेर्योजनलक्षं तु सौरं मैत्रेय! मण्डलम्" इति श्रीपराशरवचनात् लक्षयोजने भूमण्डलतो रविस्ततो वक्ष्यमाणप्रकारेणाष्टत्रिंशल्लक्षयोजनान्तरे विष्णुपदं तत्र ध्रुवः एवं सति द्वितीयाक्षस्य यत्किञ्चिदाधिक्यं तद्यथासम्भवमुपर्यधो वा संगतमिति ॥ १४ ॥

गायत्र्यादिच्छन्दोनामानः ॥ १५ ॥

अरुणः सौत्ये सारथ्ये नियुक्तः सवितुः पुरस्तात्स्थितोऽपि पश्चात्प्रत्यङ्मुखः सवितुरभिमुखमास्ते ॥ १६ ॥

सूक्तः सुभाषितः वाको वचनं स्तोत्रमित्यर्थस्तस्मै ॥ १७ ॥

एकैकशश्चतुर्दश द्वन्द्वशः ऋषयो गन्धर्वा अप्सरसः नागाः ग्रामण्यः यातुधाना देवा इति सप्त गणाः पृथक्कर्मभिः पृथङ्नामानं सूर्यं तत्र भगवदुपासनार्थमात्मानं सर्वात्मानं मासि मासि उपासते इत्यन्वयः ॥ १८ ॥

क्षणेन कति योजनानि गच्छतीत्याकाङ्क्षायामाह। लक्षोत्तरमिति तत्र स सूर्यः स गव्यूत्युत्तरं यथा भवति तथा द्विसहस्रयोजनानि क्षणेन भुङ्क्ते गच्छति ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकविंशाध्यायार्थप्रकाशः ॥ २१ ॥

### भाषा टीका

जिस सूर्यदेव के रथ का द्वादश अरा वाला छै नेमिवाला तीन नाभि वाला संवत्सर रूप एक चक्र है ऐसा कहते हैं उस चक्र का धुरा मेरु के मस्तक पर रखा है उसका दूसरा भाग मानसोत्तर पर्वत पर है जिस धुरे में पोहाहुआ सूर्य के रथ का चक्र तेल के कोल्हू सरीका मानसोत्तर पर्वत पर घूमता है ॥ १३ ॥

उस धुराकाष्ठ के ऊपर मूल से रखा हुआ दूसरा अक्ष चालीस लक्ष साढे सैंतीस हजार योजन का लंबा है उसका दूसरा भाग ध्रुवजी में लगा हुआ है ॥ १४ ॥

रथ का नीचा बैठक छत्तीस लाख योजन लंबा नौलाख योजन चौडा है सूर्य के रथ का जुआ भी नौलाख योजन लंबा है जिस जुआ में अरुण के जोडे हुये वेद नाम के सात घोडे सूर्य नारायण को ढोते हैं ॥ १५ ॥

सूर्य के सामने सारथि के कार्य में नियुक्त अरुण हैं सूर्य के सामने मुख करके बैठे हैं ॥ १६ ॥

तैसे ही अंगुष्ठ पर्व के बरोबर साठ हजार वालखिल्य ऋषि सूर्य के आगे वेद पाठके वास्ते नियुक्त हैं सूर्य की स्तुति करते हैं ॥ १७ ॥

तैसे ही और भी ऋषि गन्धर्व अप्सरा नाग यातुधान देवता ये सब सात गण चौदह सङ्ख्या हैं महिना महिना में सब नाना नाम वाले सूर्य को भिन्न नाम वाले होकर साथ में मिलकर करते हैं ॥ १८ ॥

साढे नौ किरोड एक लाख इतने भूमण्डल में क्षण में दो हजार दो कोश योजन प्रमाण से चलते हैं ॥ १९ ॥

इति श्रीभागवत पञ्चमस्कन्ध वीसमे अध्यायका भाषानुवाद लक्ष्मणाचार्य कृत समाप्त ॥ २१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे एकविंशोऽध्यायः समाप्तः ॥ २१ ॥



## ॥ द्वाविंशोऽध्यायः ॥

—:o:—

॥ राजोवाच ॥

यदेतद्भगवत आदित्यस्य मेरुं ध्रुवं च प्रदक्षिणेन परिक्रामतो राशीनामभिमुखं प्रचलितं चाप्रदक्षिणं भगवतोपवर्णितममुष्य वयं कथमनुमिमीमहीति ॥ १ ॥

॥ स होवाच ॥

यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव प्रदेशान्तरेष्वप्युपलभ्यमानत्वादेवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण ध्रुवं मेरुं च प्रदक्षिणेन परिधावता सह परिधावमानानां तदाश्रयाणां सूर्यादीनां ग्रहाणां गतिरन्यैव नक्षत्रान्तरे राश्यन्तरे चोपलभ्यमानत्वात् ॥ २ ॥

स एष भगवानादिपुरुष एव साक्षान्नारायणो लोकानां स्वस्तय आत्मानं त्रयीमयं कर्मविशुद्धिनिमित्तं कविभिरपि च वेदेन विजिज्ञास्यमानो द्वादशधा विभज्य षट्सु वसन्तादिषु ऋतुषु यथोपजोषमृतुगुणान् विदधाति ॥ ३ ॥

तमेतमिह पुरुषास्त्रय्या विद्यया वर्णाश्रमाचारानुपथा उच्चावचैः कर्मभिराम्नातैर्योगवितानैश्च श्रद्धया यजन्तोऽञ्जसा श्रेयः समधिगच्छन्ति ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वाविंशे सोमशुक्रादेः स्थानमाहोत्तरोत्तरम् ।
तच्चक्रत्यनुसारेण इष्टानिष्टे तथा नृणाम् ॥ १ ॥

राशीनामभिमुखमप्रदक्षिणं चोपवर्णितं सव्येन चलन् दक्षिणं करोतीति वदता अमुष्य वयं कथमनुमिमीमहि एतत्कथं [illegible]स्यामो विरुद्धत्वादित्यर्थः ॥ १ ॥

चक्रवशात्स्वतश्च गतिद्वयमविरुद्धमिति परिहारार्थः ॥ २ ॥

तत्तत्कालनियमेन कर्मणां विशुद्धेः साद्गुण्यस्य निमित्तभूतमात्मानं विभज्य विजिज्ञास्यमानो वितर्क्यमाणः । यथोपजोषं यथाकर्मभोगमृतुगुणान् शीतोष्णादीन् ॥ ३ ॥

वर्णाश्रमाचारानुवर्तिनः पुरुषास्त्रय्या आम्नातैः कर्मभिरिन्द्रादिरूपं योगवितानैश्च ध्यानादिभिरन्तर्यामिरूपं पूजयन्तः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पूर्वमादित्यो नक्षत्राभिमुखं मकरादिषु राशिषु चरतीत्युक्तं तथा मेरुं ध्रुवं च परिवर्तत इति चोक्तं तदिदं गतिद्वयं युगपदेकस्याघटमानमुक्तानुवादपूर्वकं पृच्छति राजा । यदिति । यदेतदित्यादिनोपवर्णितमित्यन्तेनोक्तस्यानुवादः अमुष्येत्यादिना प्रश्नः भगवता त्वया यदुपवर्णितं किं तन्मेरुं ध्रुवं च प्रदक्षिणेन परिभ्रमतो भगवत आदित्यस्य पुनः राशीनामभिमुखं नक्षत्राभिमुखतया राशिषु प्रचलनमित्येतत् द्वयं विरुद्धममुष्य सूर्यस्य कथमनुमिमीमहे कथमुपपन्नं भवतीति विश्वसिम इत्यर्थः ॥ १ ॥

एवमापृष्टो बादरायणिराहेत्याह सूतः । सहोवाचेति । शुकोक्तिमाह । यथेत्यादिना राश्यन्तरे चोपलभ्यमानत्वादित्यन्तेन । विरुद्धमप्येकस्य गतिद्वयमुपपन्नमिति सदृष्टान्तमाह । यथेति । भ्रमता कुलालचक्रेण सह भ्रमतां कुलालचक्राश्रयाणां पिपीलिकादीनां गतिरन्यैव दृश्यते दृष्टान्तेऽपि कथं तत्राह । प्रदेशान्तरे चक्रस्यैव प्रदेशान्तरे उपलभ्यमानत्वात् पिपीलिकादीनामित्यनुषङ्गः यदि गतिरनन्या तर्हि प्रदेशान्तरे नोपलभ्येरन् अत उपलम्भाद्गतिरन्यैवेत्यर्थः एवं दृष्टान्ते प्रदर्शितं गतिद्वयं दार्ष्टान्तिके साधयति । एवमिति । एवं तथा नक्षत्रै राशिभिश्च उपलक्षितेन निराश्रयायां नक्षत्रादीनामवस्थानासम्भवात्तदाश्रयं कालचक्रमनुमीयत इत्यभिप्रायेण उपलक्षितेनेत्युक्तं मेरुं ध्रुवं च प्रदक्षिणेन परिभ्रमता कालचक्रेण शिशुमारेण परिभ्रमतां तदाश्रयाणां कालचक्राश्रयाणां सूर्यादीनां ग्रहाणां नक्षत्राभिमुखतया राशिषु गतिरन्यान्या उपपद्यते एव कुतः नक्षत्रान्तरे राश्यन्तरे चोपलभ्यमानत्वादित्यन्वयः ॥ २ ॥

एवं प्रश्नस्योत्तरमभिधायाथ सूर्यरूपेणावस्थितस्य भगवतस्तत्तद्वर्णाश्रमधर्माराध्यत्वं स्वगत्या सम्वत्सरायनर्तुमासपक्षदिवानक्तादिरूपेण कालविभाजकत्वं चाह । स इति । भगवानादि-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुरुषः जगत्कारणभूतो नारायण एव स सूर्यरूपेणावस्थितः "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इति सूर्यस्य भगवदात्मकत्वश्रवणात् शरीरात्मभावनिबन्धनं स एव नारायण इति सामानाधिकरण्यम् एवमादित्यरूपी भगवान्नारायणो लोकानां स्वस्त्ये त्रयीमयं तत्कालनियमनेन कर्मणां विशुद्धेः सादृगुण्यस्य निमित्तं सादृगुण्यार्थमात्मानं द्वादशधा विभज्य वसन्तादिषु षट्सु ऋतुषु यथोपजोषं यथाकर्मभोगमृतुगुणान् शीतातपवातवर्षान् विदधाति करोतीत्यन्वयः तत्र द्वादशधा विभागो नामादित्यस्यचैत्रादे प्रतिमासमृतुगुणविधानोपयुक्तसङ्कल्परूपज्ञानेनानुप्रवेशः ।

मासि मासि रविर्यो यस्तत्र तत्र भिदापरा ।
त्रयीमयी विष्णुशक्तिरवस्थानं करोति वै ॥
विष्णुशक्तिरवस्थानं सदादित्ये करोति सा ।
न केवलं रवेः शक्तिर्वैष्णवी सा त्रयीमयी ॥
एवं सा सात्त्विकी शक्तिर्वैष्णवी या त्रयीमयी ।
अतः सप्तगतोपेतं स्वस्थानमधितिष्ठति ॥
तथा वाधिष्ठितः सोऽपि जाज्वलीति स्वरश्मिभिः ।
ततः समस्तजगतां नाशं नयति चाखिलम् ॥

इति श्रीवैष्णवपुराणोक्तेः त्रयीमयत्वं नाम प्राचुर्येणाध्यात्तनुत्वं तदपि चोक्तं तत्रैव "ऋचः स्तुवन्ति पूर्वाह्ने मध्याह्ने च यजूंषि च । बृहद्रथन्तरादीनि सामान्याहुः क्षये रवेः । त्रयभेषा त्रयी विष्णोः ऋग्यजुः सामसंज्ञिता" इति कथम्भूतो विदधाति वेदेन तज्ज्ञैः कविभिश्च जिज्ञास्यमानो वेदैर्बोध्यमानः कविभिरुपास्यमान इत्यर्थः एतदेवोपपादयति । तमिति । तमेतमादित्यरूपेणावस्थितं भगवन्तमिह लोके पुरुषा वर्णाश्रमाचारानुवर्तिनः त्रय्या विद्यया श्रद्धया यजन्तः त्रय्या यजनमेव प्रपञ्चयति उच्चावचैः कर्मभिराम्नातैर्योगवितानैश्चेति उच्चानुच्चैर्नानाविधैराम्नातैर्वैदिकैः कर्मभिर्यज्ञादिभिः योगवितानैः उपासनविस्तरैश्च आम्नातैरिति पूर्वोत्तराभ्यां सम्बध्यते वैदिकैरुपासकैश्चेत्यर्थः यजन्त आराधयन्तोऽञ्जसा सुखेन आशु वा श्रेयः स्वर्गमोक्षादिरूपं सम्यक् प्राप्नुवन्तीत्यर्थः ॥ ३ ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उक्तैवाध्यायसङ्गतिः राशीनां प्रचलनमपि प्रदक्षिणत इति । यस्माद्यस्मादेतस्यादित्यस्य राशीनामाभिमुख्यप्रचलनमप्रदक्षिणगमनं घटते तदनुपपन्नं भगवता तदभिमुखप्रचलनमुपवर्णितं यस्माद्यस्मादमुष्यादित्यस्याभिमुखतया गमनस्य राशीनां प्रचलनस्याभिप्रायं कथमनुमिमीमहि युक्तिपूर्वकं बुद्ध्यामह इति ॥ १ ॥

प्रदक्षिणतो भ्रमता कुलालचक्रेण सह प्रदक्षिणीक्रियमाणा अपि तद्गताः पिपीलिकादयो यथा स्वप्रयत्नसाध्यगत्या विपरीतं गच्छन्त्येवं प्रदक्षिणेन भ्रमता ज्योतिश्चक्रेण सह प्रदक्षिणीक्रियमाणोऽपि सविता स्वगत्या पूर्वापरीभावतया शीघ्रमन्दमध्यमभेदेन राशीनामभिमुखं चलतीत्यभिप्रायः राहवादयः प्रत्यादित्यं स्वपृष्ठतो गच्छन्तीत्येके बिम्बप्रतिबिम्बवत् ॥ २ ॥

वसन्तादिष्वृतुषु क्रियमाणानां कर्मणां विशुद्धेर्निमित्तं तदर्थत्वेनेति शेषः कविभिः भूतभविष्यद्वर्तमानवेः ब्रह्मविद्भिः यथोपजोषं यथाक्रमम् ॥ ३ ॥

द्वादशधा विभक्तेः कारणमाह । तमेतमिति । वर्णाश्रमा... अनुपथन्ति अनुगच्छन्तीति वर्णाश्रमाचारानुपथाः "पथगतौ" ... धातोः योगवितानैरीश्वरार्पणबुद्धिलक्षणोपायविस्तारैः आम्ना... प्रतिपादितैः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अभिमुखमत्र प्रदक्षिणमित्यर्थः ॥ १ ॥ २ ॥
साक्षान्नारायणः सूर्यरूपो विष्णुः ॥ ३—४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्वाविंशे चक्रसूर्योयोर्गतिभेदव्यवस्थितिः ।
ग्रहाणां स्थानभेपाञ्चेष्टत्वानिष्टत्वमीर्यते ॥

पूर्वाध्याये सव्येन चलन् दक्षिणेन करोतीत्यत्र संश... पृच्छति । यदेतदिति । प्रदक्षिणेन परिक्रमत इति प्रत्यहं दृश्य... त्वात् । राशीनामभिमुखं तु अप्रदक्षिणं प्रचलनममुष्य त्व... वर्णितम् एतत्कथमनुमिमीमहि ज्ञास्यामो विरुद्धत्वादित्यर्थः ॥ १ ॥

स शुकः ह स्पष्टमुवाच । सह भ्रमतां चक्रेवपरीत्येन ... चक्रवशात् स्वतश्चेति गतिद्वयमविरुद्धमिति वाक्यार्थः ॥ २ ॥

स प्रसिद्धः एष कालरूपी भगवान् कर्मणां विशुद्धेर्नि... तेषां तत्तत्कालनियतत्वादित्यर्थः । द्वादशधा विभज्य ... रूपेण षोढा च विभज्य यथोपजोषं यथा कर्मभोगम् ऋतुगुणा... शीतोष्णादीन् ॥ ३ ॥

अनुपथा अनुवर्तिनः त्रय्या आम्नातैः कर्मभिरेनं सूर्ये... इन्द्रादिरूपं योगवितानैश्चाष्टाङ्गैरन्तर्यामिरूपं च यजन्तः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वाविंशे सोमादीनां स्थानानि वर्णयति । तत्र तावत्संशया... दक्षिणेन करोतीति यदुक्तं गतिद्वयं तत्पृच्छति । यदेतदिति । ... ध्रुवं च प्रदक्षिणेन परिक्रामतः आदित्यस्य पुनः राशीनामभिमु... नक्षत्राभिमुखतया अप्रदक्षिणं च प्रचलितं प्रचलनं भगवतोप... र्णितम् इत्येतत् द्वयममुष्य सूर्यस्य वयं कथमनुमिमीमहि ज्ञास्या... विरुद्धत्वात् ॥ १ ॥

परिहरति । यथा कुलालचक्रतः स्वतश्च गतिद्वयमविरुद्ध... फलितोऽर्थः ॥ २ ॥

सूर्ये भगवदुपासनार्थमंशांशिनोर्भेदाभेदसम्बन्धाभिप्राये... साक्षान्नारायण इत्याद्युक्तिः कर्मणां तत्तत्काले क्रियमाणा... विशुद्धेर्निमित्तमात्मानं द्वादशधा विभज्य यथोपजोषं प्राणि... कर्मभोगमनतिक्रम्य ऋतुगुणान् शीतोष्णादीन् विद... करोति ॥ ३ ॥

कर्मभिः पुरुषा मुमुक्षवः यजन्तः श्रेयः स्वर्गसुखं योगविता... ज्ञानभक्त्यादिसाधनविस्तारैर्यजन्तो भगवद्दृष्ट्या यजन्तो मुमुक्ष... श्रेयो मोक्षं समभिगच्छन्ति ॥ ४ ॥

---

अथ स एष आत्मा लोकानां द्यावापृथिव्योरन्तरेण नभोवलयस्य कालचक्रगतो द्वादशमासान् भुङ्क्ते [1] राशिसंज्ञान् सम्वत्सरावयवान् [2] मासः पक्षद्वयं [3] दिवा नक्तं चेति सपादर्क्षद्वयमुपदिशन्ति यावता षष्ठमंशं भुञ्जीत स वै ऋतुरित्युपदिश्यते सम्वत्सरावयवः ॥ ५ ॥

अथ च यावतार्धेन नभो [4] वीथ्यां प्रचरति तं कालमयनमाचक्षते ॥ ६ ॥

अथ च यावन्नभोमण्डलं सह द्यावापृथिव्योर्मण्डलाभ्यां कार्त्स्न्येन स ह [5] भुञ्जीत तं कालं सम्वत्सरं परिवत्सरमिडावत्सरमनुवत्सरं वत्सरमिति भानोर्मान्द्यशैघ्र्य [6] समगतिभिः समामनन्ति ॥ ७ ॥

एवं चन्द्रमा अर्कगभस्तिभ्य उपरिष्टाल्लक्षयोजनत उपलभ्यमानोऽर्कस्य संवत्सरभुक्तिं पक्षाभ्यां मासभुक्तिं सपादर्क्षाभ्यां दिनेनैव पक्षभुक्तिमग्रचारी द्रुततरगमनो भुङ्क्ते ॥ ८ ॥

अथ चापूर्यमाणाभिश्च [7] कलाभिरमराणां [8] क्षीयमाणाभिश्च कलाभिः पितॄणामहोरात्राणि पूर्वपक्षापरपक्षाभ्यां वितन्वानः सर्वजीवनिवहप्राणो जीवश्चैकमेकं नक्षत्रं त्रिंशता [9] मुहूर्तैर्भुङ्क्ते ॥ ९ ॥

य एष षोडशकलः पुरुषो भगवान् मनोमयोऽन्नमयोऽमृतमयो देवपितृमनुष्यभूतपशुपक्षिसरीसृपवीरुधां प्राणाप्यायनशीलत्वात्सर्वमय इति वर्णयन्ति ॥ १० ॥

तत [10] उपरिष्टात्त्रिलक्षयोजनतो नक्षत्राणि मेरुं दक्षिणेनैव कालायन ईश्वरयोजितानि सहाभिजिताष्टाविंशतिः ॥ ११ ॥

तत उपरिष्टादुशना द्विलक्षयोजनत [11] उपलभ्यते पुरतः पश्चात्सहैव वार्कस्य शैघ्र्यमान्द्यसाम्याभिर्गतिभिरर्कवच्चरति लोकानां नित्यदानुकूल एव प्रायेण [12] वर्षयंश्चारेणानुमीयते स वृष्टिविष्टम्भग्रहोपशमनः ॥ १२ ॥

भाषाटीका

राजा श्रीपरीक्षित्जी बोले यह जो आपने कहा कि भगवान् आदित्य मेरु और ध्रुव को दक्षिण तरफ से जब परिक्रमा करते हैं तब राशियों के सन्मुख चलना फिर बायें तरफ कर देना सो इस विरुद्ध कथन को हम कैसे अनुमान करके ठीक समझेंगे ॥ १ ॥

सो श्रीशुकदेवजी बोले जैसे कुम्हार के चक्रके घूंमते समय उसके ऊपर रहने वाले घूंमते हुये चींटी आदि जीवों की चाल दूसरी ही होती है क्यों कि दूसरे ठिकाने फिर वे दीखते हैं इसी प्रकार से नक्षत्र राशियों करके उपलक्षित काल चक्र के साथ ध्रुव तथा मेरु को परिक्रमा क्रमसे कालचक्र के साथ दौडनेवाले तिसके आश्रय रहने वाले सूर्यादिग्रहों की चाल दूसरी ही होती है क्यों कि वे सूर्यादिक दूसरे नक्षत्र मे दूसरे राशीमेंभी दीखते हैं ॥ २ ॥

वैसही आदिपुरुष भगवान् नारायण लोकों के कल्याण के वास्ते सूर्यरूप से अपने स्वरूप को बारह प्रकार के विभाग कर के कर्मों के शुद्धि के निमित्त त्रयीमय जो आत्मा वेदों करके कवियों करके गाया गया है जिज्ञासित भया है तिसी आत्मा से वसन्तादि ऋतुओं को विधान करते हैं ॥ ३ ॥

इन आदित्य को वर्णाश्रम आचारों के मार्ग मे चलने वाले मनुष्य नाना प्रकार के कर्मों से वैदिक योगादिकों से श्रद्धायुक्त होकर यजन करते हैं तब अनायास से सब पुरुषार्थों को प्राप्त होते हैं ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

स एव स्वगत्या मासादिव्यवहारकारणमित्याह । स एष लोकानामात्मा द्यावापृथिव्योरन्तरेण मध्ये यन्नभोवलयमन्तरिक्षं तस्य मध्ये यत्कालचक्रं तद्गतः । राशिभिर्मेषादिभिः संज्ञा येषाम् । चैत्रादिसंज्ञास्तु चान्द्रमासानां मासमाह । पक्षद्वयं मास इति । चान्द्रेण मानेन सपादं महानक्षत्रद्वयं सौरेण दिवा नक्तं चाहोरात्रमिति पित्र्येण षष्ठमंशं राशिद्वयम् ॥ ५ ॥ ६ ॥

(१) तानेव इति वि० (२) मासान् (३) दिवानक्तञ्चेति वि० नास्ति (४) नभोवीथ्या (५) सह इति वि० नास्ति (६) समगतिभिः (७) रुपक्षीयमाणाभिः वि० अ (८) अमराणांक्षीयमाणाभिरि वि० नास्ति (९) त्रिंशन्मुहूर्तैः (१०) उपरिष्टाल्लक्षयोजनतः (११) द्विलक्षयोजनादुपलक्ष्यते (१२) वर्षयंस्थितिद्वारेण।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मण्डलाभ्यां सह भुञ्जीत । स ह स हि सूर्यः । यदा शुक्लप्रतिपदि संक्रान्तिर्भवति तदा सौरचान्द्रयोर्मासयोर्युगपदुपक्रमो भवति स सम्वत्सरः ततः सौरमानेन वर्षे षट् दिनानि वर्धन्ते चान्द्रमानेन षट् हृसन्तीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति एवं पञ्च वर्षाणि गच्छन्ति तन्मध्ये द्वौ मलमासौ भवतः ततः पुनः षष्ठः सम्वत्सरो भवति तदेवमवान्तरभेदेन सम्वत्सरादिपञ्चकं समामनन्ति ॥ ७ ॥

सोमादीनामपि स्थानं कार्यं चाह । एवं चन्द्रमा इति । अर्कगभस्तिभ्यो मण्डलरूपेभ्यः । सपादर्क्षाभ्यां सपाददिनद्वयेन ॥ ८ ॥

सर्वेषां जीवनिवहानां प्राणः अन्नमयत्वादमृतमयत्वाच्च अत एव जीवने हेतुत्वाज्जीवश्च ॥ ९ ॥

तदेवाह । य एष इति ॥ १० ॥

दक्षिणेनैव न तु तेषां पृथगन्या गतिरस्तीत्यर्थः । कालायने कालचक्रे उत्तराषाढाश्रवणसन्धावभिजिन्नक्षत्रं फलविशेषेण पृथक्कल्पितं तेन सह । तथा च श्रुतिः । "अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामधस्ताच्छ्रोणाया,, इति ॥ ११ ॥

पुरतः सूर्येण भोक्ष्यमाणे नक्षत्रे पश्चाद्भुङ्क्ते । सहैव भुज्यमाने चारेण क्रमस्थनक्षत्राद्यतिक्रमेण । वृष्टेर्विष्टम्भः स्तम्भनं यस्माद्ग्रहात्तमुपशमयतीति तथा ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ ननु लोकानामन्तरात्मा भगवानेष आदित्यरूपेणावस्थितो द्यावापृथिव्योर्मध्ये यन्नभोवलयमन्तरिक्षं तस्य मध्ये यत्कालचक्रं शिशुमारं कालचक्रस्थमेषादिराशिषु नक्षत्राभिमुखं चरन्नित्यर्थः द्वादश मासान् भुङ्क्ते सम्वत्सरावयवान् मासाख्यान् द्वादश भुङ्क्तेऽनुभवति मकरादिषु राशिषु द्वादशस्वादित्येषु चरत्सु सत्सु द्वादशमासा भवन्तीत्यर्थः । यानेवादित्यो द्वादश सम्वत्सरावयवान् भुङ्क्ते तानेव राशिसंज्ञान मेषादिराशिसञ्चारनिमित्ता मासादिसंज्ञाः येषां तान् सम्वत्सरावयवान् मासादीन्मानभेदेनवदन्ति तत्र चान्द्रेण मानेन मासः पक्षद्वयमिति वदन्ति तेषामेव चित्रादिनक्षत्रयुक्तपौर्णमासीयुक्तत्वाच्चैत्रादिसंज्ञा भवन्ति सौरेण मानेन सपादमहानक्षत्रद्वयमिति वदन्ति पित्र्येण मानेन दिवानक्तमहोरात्र इति वदन्तीत्यर्थः । एतद्द्वादशभागात्मकस्य सम्वत्सरस्य यावता भागेन मासद्वयात्मकेन षष्ठमंशं राशिद्वयं भुञ्जीत चरेत् आदित्य इति कर्तृपदमध्याहार्यं स वै तावान् काल ऋतुरित्युच्यते स च सम्वत्सरस्य षष्ठोंऽश इत्यर्थः अथ सम्वत्सरस्य यावता षण्मासात्मकेनार्द्धेन कालेन नभोवीथ्यां कालचक्रस्य राशिषट्के प्रचलति तं कालमयनमाचक्षते यावता कालेन मकरादिराशिषट्कं संचरितं भवति तावन्तं कालमयनमाचक्षत इत्यर्थः । अथवा द्यावापृथिव्योर्मण्डलाभ्यां सह सान्वितमिति शेषः यावन्नभोमण्डलं द्वादशराश्यात्मकं कार्त्स्न्येन यावता कालेनायनद्वयात्मकेन भुञ्जीत द्वादशराश्यात्मकं कृत्स्नं नभोमण्डलं भानोर्मन्दादिगतिभिर्यावता कालेन सञ्चरितं भवति तं कालं सम्वत्सरादिकमिति समामनन्ति इत्यर्थः अत्रेदमवधेयं यदा शुक्लप्रतिपदि संक्रान्तिर्भवति तदा सौरचान्द्रमानयोर्युगपदुपक्रमो भवति स सम्व... सौरमानवर्षे षड् दिनानि वर्द्धन्ते चन्द्रमानेन षट् हृसन्तीति ... दिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति एवं पञ्च वर्षाणि ... तन्मध्ये द्वौ मलमासौ भवतः ततः पुनः षष्ठः सम्वत्सरो ... तदेवमवान्तरभेदेन सम्वत्सरपरिवत्सरेडावत्सरानुवत्सरादि... समामनन्तीति ॥ ५ ॥ ६ ॥ ७ ॥

एवं सूर्यस्य गतिभेदस्तत्कृतः कालविभागश्चोक्तः अथ सोम... शुक्रादीनां स्थानानि तद्गतिभेदान् तत्कृतशुभाशुभादिकार्यं च... एवमित्यादिना यावदध्यायम् । अर्कगभस्तिभ्यां मण्डलरूपेभ्यः ... योजनतः उपरिष्टादुपलभ्यमानः द्रुततरगमनोऽत एव उग्रं चारि... त्युग्रचारी सन्नर्कस्य या सम्वत्सरभुक्तिः सम्वत्सरेण द्वादश... शिसञ्चारात्मिका भुक्तिः तां पक्षाभ्यामेव भुक्तं करोति एव... या मासभुक्तिः तां सपादर्क्षाभ्यां पादाधिकाभ्यां नक्षत्राभ्यां ... पादनक्षत्रद्वयाभिमुखगमनेनैव सार्द्धसप्तोत्तरषष्टिमुहूर्त्तात्मकका... लेनेति यावत् पक्षभुक्तिं दिनेनैव त्रिंशन्मुहूर्त्तात्मककालेन... करोतीत्यर्थः ॥ ८ ॥

अथ हे राजन् ! पूर्यमाणाभिः शुक्लपक्षेऽपक्षीयमाणाभिः कृ... पक्षे कलाभिः विभक्ताभ्यां पूर्वपक्षापरपक्षाभ्यां शुक्लकृष्णपक्षा... पितॄणामहोरात्राण्यहोरात्रात्मकमेकं दिनं कुर्वाणः सर्व... जीवसमूहानां प्राणः प्राणाप्यायनकरः अत एव जीवः जी... यतीति जीवः जीवनहेतुः एवंभूत एकमेकं नक्षत्रं त्रिंशता मु... तैर्भुङ्क्ते षोडशकला यस्य स एव पुरुषश्चन्द्रशरीरको ... वान्मनोमयः मानसाधिदेवतात्वादन्नमयः ओषधीशत्वादमृत... सर्वप्राणिजीवनहेतुत्वाद्देवादीनां ये प्राणास्तेषामाप्यायनक... त्वात्सर्वमय इति वर्णयन्ति तत्त्वरूपज्ञा इति शेषः ॥ ९ ॥ ...

ततश्चन्द्रमण्डलस्योपरिष्टात्त्रिलक्षयोजनतः अभिजि... सहाष्टाविंशतिर्नक्षत्राणि भवन्ति तथा च श्रुतिः कालायने का... चक्रे ईश्वरेणान्तरात्मभूतेन चोदितानि प्रेरितानि मेरुं प्रदक्षि... णेनैव न तु तेषां सूर्यादिवत् पृथगन्या गतिरस्तीत्यर्थः उत्तरा... षाढाश्रवणसन्धावभिजिन्नामनक्षत्रं फलविशेषेण पृथक्कल्पितं ते... सहाष्टाविंशतिर्नक्षत्राणि भवन्ति तथा च श्रुतिः "अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानाम्,, इति ॥ ११ ॥

ततो नक्षत्रमण्डलद्विलक्षयोजनत उपर्युशना शुक्रः उप... लभ्यते सचार्कस्य पुरतः पश्चात् पुरतः सूर्येण भोक्ष्यमाणे नक्ष... पश्चाद्भुङ्क्ते सहैव भुज्यमाने तु नक्षत्रे शैघ्र्यादिगतिभिरर्कवच्च... रति स च लोकानां सदानुकूल एव वर्त्तते यस्य शुक्रस्य... चारेण क्रमस्थनक्षत्राद्यतिक्रमेण प्रायशो वर्षं वृष्टिरनुमीयतेऽत... स वृष्टिविष्टम्भग्रहोपशमनः वृष्टेर्विष्टम्भस्तम्भनं यस्माद्ग्रहात्तमु... मयतीति तथा उशनसा शुक्रेणेति प्रकारेण बुधोऽपि बु... तिरपि व्याख्यातेत्यर्थः सूर्यस्य पुरः पश्चात्सहैव वा च... तीति व्याख्यात इति भावः किञ्चिद्विशेषमाह । तत इत्यादि... ततः शुक्रमण्डलाद्द्विलक्षयोजनत उपरि सोमस्य सुतो बु... उपलभ्यमानः लोकानां प्रायेणाशुभकृत् दुःखकृत् अनुभ... चाह । यदार्काद्व्यतिरिच्यतेऽर्केण सह न चरति तदाति... अभ्रप्रायं मेघप्राचुर्यमनावृष्टिरित्यादिरूपं भयमाशंसते सूच... ॥ १२ ॥ १३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अथ स इति तच्छब्देन सूर्योन्तर्यामी नारायणः परामृश्यते लोकानामात्मेत्युक्तेश्च अथशब्दान्नारायणाधिष्ठानभूतः सूर्यो वा द्यावापृथिव्योरन्तरेण मध्ये स्थितस्य नभोवलयस्य मध्यवर्ती कालचक्रगतः भुङ्क्ते वर्तयति राशीनां संज्ञा येषां मासानां ते तथा तान् मेषवृषादीनित्यर्थः सम्वत्सरस्य द्वादशांशो मास इति ज्ञापनाय सम्वत्सरावयवानिति विशेषणं पक्षद्वयमित्यनेन मासपरिमाणं सपादर्क्षद्वयमित्यनेन नक्षत्रनिमित्तमासपरिमाणं त्रियामकालाद्भोक्तृत्वं चेत्यनेनोक्तं कृत्तिकापादयुक्ताश्विनीभरण्यौ मेष इत्यादिक्रमेण बोद्धव्यं पक्षद्वयात्मककालभोगेन सह सपादर्क्षद्वयात्मककालस्य भुज्यमानत्वादुभयं च युज्यत इत्यर्थः सम्वत्सरस्य षष्ठमंशं मासद्वयं यावता कालेन नभोवीथ्या अर्द्धेन प्रचरति तं कालमयनमाहुः । दक्षिणायनमुत्तरायणमुत्तरायणे मन्दगतिर्दक्षिणायने त्वरिता गतिर्विषुवे समाना गतिरिति ॥ ५ ॥ ६ ॥

द्यावापृथिव्योर्मण्डलाभ्यां सह नभोमण्डलं प्रचलति तं काले सम्वत्सरादिपञ्चभेदेन सूर्यस्य मन्दादिगतिभेदाद्वदन्ति तज्ज्ञा इति शेषः ॥ ७ ॥

अर्कस्य सम्वत्सरभुक्तिं द्वादशराशिप्राप्तिं पक्षाभ्यां शुक्लकृष्णसंज्ञाभ्यां भुङ्क्ते मासभुक्तिं सपादर्क्षाभ्यां सकृत्तिकाश्विनीभरणीरूपामित्यादिक्रमेण प्राप्नोति पक्षभुक्तिमेकनक्षत्रसम्मितां दिनेनैव भुङ्क्ते चन्द्र इत्यर्थः अत्र हेतुमाह । अग्रचारीति । नक्षत्राणामग्रणीत्वमग्रचारित्वम् ॥ ८ ॥

सर्वजीवराशिष्वेकः जीवश्च प्राणधारकश्च दिनेन पक्षभुक्तिं स्पष्टयति । एकमिति । त्रिंशन्मुहूर्तैस्त्रिंशद्भिर्मुहूर्तैः ॥ ९ ॥

सर्वजीवनिवहप्राण इत्युक्तं स्पष्टयति । देवेति । उपजीव्यप्रधानत्वात्सर्वमय इत्यर्थः ॥ १० ॥

कालायने तादर्थ्ये सप्तमी कालज्ञापनार्थमीश्वरनियुक्तानि कालचक्र इति वा अभिजिदुत्तराषाढाश्रवणयोः संयोगः अश्विनीरेवत्योः सन्धिरिति केचित् ॥ ११ ॥

यस्योशनसः स्थितिद्वारेण वृष्टिविष्टम्भग्रहोऽङ्गारकः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पक्षद्वयं मास इत्युपदिशन्ति । चान्द्रेण मानेन दिवा नक्तं चेत्युपदिशन्ति पैत्र्येण सपादर्क्षद्वयञ्च मास इत्युपदिशन्ति सौरेण ॥ ५—७ ॥

उग्राचरणशीलत्वादेव द्रुततरगमनः ॥ ८—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सूर्यगत्यैव मासादिव्यवहार इत्याह । अथेति । द्यावापृथिव्योर्मध्ये यन्नभोवलयं तस्य कालचक्रगतः तत्सम्बन्धिज्योतिश्चक्रस्थितः मास एव कस्तत्राह । पक्षद्वयं मास इति । चान्द्रेण मानेन दिवा नक्तमिति पैत्र्येण सपादनक्षत्रद्वयं सौरेण । खगमयस्य नभोमण्डलस्य यावता द्वादशमंशं भुङ्क्ते सूर्यः स कालो मासः तदनुकोऽपि ज्ञेयः षष्ठमंशं मासद्वयम् अर्द्धेन अर्द्धं मासषट्कं

भुङ्क्ते इत्यर्थः ॥ ५ ॥ ६ ॥

द्यावापृथिव्योरिति द्युमण्डलपृथिवीमण्डलयोर्मध्यवर्त्तिना नभोमण्डलेन तुल्यत्वमेव ज्ञापितं नत्वन्यथाधिक्यं सम्वत्सरादिनामभेदः सौरचान्द्रादिकृत्योपयोगित्वेन तृतीयस्कन्ध एव विवृतः ॥ ७ ॥

चन्द्रादीनामपि स्थानं कार्यञ्चाह । अर्कगभस्तिभ्योऽर्कमण्डलं ततः लक्षेति भूतलाद्विलक्ष इत्यर्थः । सपादर्क्षाभ्यां सपाददिनद्वयेन दिनेनैवेति । यद्युग्रचारी कदाचित्स्यात् तदा द्रुततरगमनः सन् दिनेनैव पक्षभुक्तिं भुङ्क्ते अन्यदा तु सार्द्धसप्तघटिकोत्तरेण दिनेन ॥ ८ ॥

आपूर्यमाणाभिरिति शुक्लकृष्णपक्षाभ्यां देवानामहोरात्रौ । शुक्लकृष्णपक्षाभ्यां पितृणामिति देवपितृपूजार्थं दर्शपत्रोरहोरात्रव्यवस्थेत्यर्थः । ओषधीशत्वेनान्नमयत्वात् प्राणः । "अन्नं हि प्राणिनां प्राणाः" इति स्मृतेः । अत एव जीवनहेतुत्वादमृतमयत्वाच्च जीवः ॥ ९ ॥

मनसांऽधिष्ठातृत्वान्मनोमयः ॥ १० ॥

त्रिलक्षेति भूतलात्तु पञ्चलक्षतः दक्षिणेनैवेति तेषां पृथग्गत्यभावात् । कालायने कालचक्रे सहाभिजितेति "अभिजिन्नाम नक्षत्रं उपरिष्टादाषाढानामधस्ताच्छ्रोणायाः" इति श्रुतेः । "उत्तराषाढाशेषार्द्धात् श्रवणादौ लिप्तिकाचतुष्के च अभिजित्"इति ज्योतिषाच्च लिप्तिका दण्डः ॥ ११ ॥

द्विलक्षेति । भूतलात्तु सप्तलक्षतः चारेण सञ्चारेण वृष्टेर्विष्टम्भः स्तम्भनं यस्मात्तमरिष्टमुपशमयतीति सः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूर्य एव खगत्या मासादिव्यवहारहेतुरित्याह । अथेति । लोकानामात्मा परमपुरुषतयोपास्यत्वाद्द्यावापृथिव्योरन्तरेण मध्ये यन्नभोवलयमन्तरिक्षं तस्य मध्ये यत्कालचक्रं तद्गतस्तिराशिभिः संज्ञा येषां तान् मासान् भुङ्क्ते चैत्रादिसंज्ञास्तु चान्द्रमासानां मासमाह । पक्षद्वयं मास इति । चान्द्रेण मानेन सपादं महानक्षत्रद्वयं मास इति सौरेण मानेन दिवा नक्तमहोरात्रं मास इति च पैत्र्येण मानेनोपदिशन्ति मासद्वयं षष्ठमंशं राशिद्वयं भुञ्जीत चरेत् ॥ ५—६ ॥

स हि सूर्यः द्यावापृथिव्योर्मण्डलाभ्यां सह सन्धितं नभोमण्डलं कार्त्स्न्येन यावद्भुञ्जीत तं कालं भानोरेव मन्दादिगतिभिरवान्तरभेदवशात् संवत्सरादिपञ्च समामनन्तीत्यन्वयः । यदा शुक्लप्रतिपदि संक्रान्तिर्भवति तदा सौरचान्द्रयोर्मासयोर्युगपत्प्रक्रमो भवति स सम्वत्सरः ततः सौरमानेन वर्षे षड् दिनानि वर्धन्ते चान्द्रमानेन षड् दिनानि ह्रसन्तीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति एवं पञ्च वर्षाणि गच्छन्ति तन्मध्ये द्वौ मलमासौ भवतः ततः पुनः षष्ठः सम्वत्सरो भवति तदेवमयान्तरभेदेन सम्वत्सरादिपञ्चसमा भवन्ति ॥ ७ ॥

अर्कगभस्तिभ्यो मण्डलरूपेभ्यः सपादर्क्षाभ्यां पादाधिकदिनयुग्मेन ॥ ८ ॥

आपूर्यमाणाभिः शुक्लपक्षे अपक्षीयमाणाभिः कृष्णपक्षे पितृरूपाणाममराणां देवानामहोरात्राणि वितन्वानः सर्वेषां जीवनि-

उशनसा बुधो व्याख्यातस्तत उपरिष्टाद्विलक्षयोजनतो बुधः सोमसुत उपलभ्यमानः प्रायेण शुभकृद्यदा (१) र्कादृयतिरिच्येत तदातिवाताभ्रप्रायानावृष्ट्यादिभयमाशंसते ॥ १३ ॥

अत (२) ऊर्ध्वमङ्गारकोऽपि योजनलक्षद्वितय उपलभ्यमानस्त्रिभिस्त्रिभिः (३) पक्षैरेकैकशो राशीन् द्वादशानुपभुङ्क्ते यदि न (४) वक्रेणाभिवर्त्तते प्रायेणाशुभग्रहोऽघशंसः ॥ १४ ॥

तत उपरिष्टाद्द्विलक्षयोजनान्तरगतो भगवान् बृहस्पतिरेकैकस्मिन् राशौ परिवत्सरं चरति यदि न वक्रः स्यात् प्रायेणानुकूलो ब्राह्मणकुलस्य ॥ १५ ॥

तत उपरिष्टाद्योजनलक्षद्वयात् प्रतीयमानः शनैश्चर एकैकस्मिन् राशौ त्रिंशन्मासान्विलम्बमानः सर्वानेवानुपर्येति तावद्भिरनुवत्सरैः प्रायेण हि सर्वेषामशान्तिकरः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ग्रहानां प्राणः अन्नमयत्वादमृतमयत्वाच्च अत एव जीवयतीति जीवः ॥ ९ ॥ १० ॥

कालायने कालचक्रे सहाभिजितेति उत्तराषाढाश्रवणसन्धौ फलविशेषार्थं पृथक्कल्पितेनाभिजिन्नक्षत्रेण सहाष्टाविंशतिः तथा च श्रुतिः ।

"अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामधस्ताच्छ्रोणायाः" । इति ॥ ११ ॥

चारेण क्रमस्थनक्षत्राद्यतिक्रमेण प्रायेण वर्षयन् वृष्टिं प्रवर्तयँल्लोकानामनुकूलोऽनुमीयते निश्चीयते अत एव स शुक्रः वृष्टेर्विष्टम्भः स्तम्भनं यस्माद्ग्रहात्तमुपशमयतीति तथा ॥ १२ ॥

---

भाषा टीका ।

इस के अनन्तर यही सब लोकों के आत्मा भगवान् सूर्य आकाशपृथिवी के मध्यमे खगोल के काल चक्र मे प्राप्त होकर सम्वत्सर के अवयव राशि संज्ञक बारा महिनों को भोगते हैं महीना पक्ष दिन रात सवादो नक्षत्र जिस मे भोग होते हैं जितने काल मे वर्ष के छठे अंश को भोगते हैं सो काल सम्वत्सर का अव यव ऋतु कहाता है ॥ ५ ॥

और जितने वर्ष के अर्धभाग से आकाश मार्ग मे सूर्य विचरते हैं तिस काल को अयन कहते हैं ॥ ६ ॥

और जितने काल मे आकाश पृथिवी के सहित खगोल को भोगते हैं उस सम्पूर्ण भोग के काल को सम्वत्सर कहते हैं तिसम सूर्य के मन्दशीघ्र समान गति के भेद से संवत्सर परिवत्सर इडावत्सर अनुवत्सर वत्सर ऐसे पांच भेदों को कथन करते हैं ॥ ७ ॥

इसी प्रकार सूर्य के किरणों से ऊपर लाख योजन दीखता हुआ चंद्रमा सूर्य के वर्ष के भोग के काल को दो पक्ष मे मास के भोग को सवादो दिनों में पक्ष के भोग को एक दिन में भोगता हुआ जलदी चलने से आगे चलने वाला भोग करता है ॥ ८ ॥

और भी पूर्ण होती हुई कलाओं से पहिले शुक्ल पक्ष में देवतों के अहोरात्र चन्द्रमा भोग करते हैं औ क्षय होती कलाओं से दूसरे पक्ष मे पितरों के अहोरात्र को विधान करते हैं इस प्रकार सब के जीवन हेतु चन्द्रमा जीवरूप होकर एक एक नक्षत्र को तीस मुहूर्त मे भोगते हैं ॥ ९ ॥

जो यह षोडश कलावाला चन्द्रमा है सो भगवान् सब का मनरूप अन्नरूप अमृत रूप देवता पितर मनुष्य भूत पशु पक्षि सर्प लता इन सबों के पोषण करने मे तत्पर होने से इन को सर्व मय कहते हैं ॥ १० ॥

तिस के ऊपर तीन लक्ष योजन पर नक्षत्र हैं मेरु के प्रदक्षिणा मे काल चक्र मे ईश्वर के नियोजित हैं सो अभिजित् के सहित अट्ठाइस हैं ॥ ११ ॥

उस के ऊपर दो लाख योजन मे शुक्र दीखता है सो अपनी शीघ्र मन्द गति के भेद से कभी सूर्य के साथ कभी आगे कभी पीछे सूर्य सरीका चलता है सो वृष्टि के रोकने वाले ग्रहों का नाश करने वाला होने से वृष्टि कर के सब भूतों के अनुकूल रहता है नक्षत्रों की गति से जाना जाता है ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

बुधो व्याख्यातः पुरतः पश्चात्सहैव वा चरतीति किंचिद्विशेषं चाह । तत इत्यादिना । आशंसते सूचयति ॥ १३ ॥

अघशंसो दुःखसूचकः । यदि न वक्रेणाभिवर्तते तर्हि त्रिभिस्त्रिभिः पक्षैः ॥ १४ ॥

यदि न वक्रः स्यात्तर्हि परिवत्सरम् ॥ १५ ॥ १६ ॥ १७ ॥

(१) यदार्कामतिरिच्येत (२) ततः (३) त्रिभिःना० (४) वक्रोऽतिवर्तते (५) एवं ।

तत उत्तरस्माद्दषय एकादशलक्षयोजनान्तर उपलभ्यन्ते य एव (१) लोकानां शमनुभावयन्तो भगवतो विष्णोर्यत् परमं पदं प्रदक्षिणं प्रक्रमन्ति ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
ज्योतिश्चक्रसूर्यरथमण्डलवर्णनं नाम
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो बुधमण्डलाद्द्विलक्षयोजनतः उपरिष्टादङ्गारक उपलभ्यमान एकैकं राशिं पक्षत्रयेण भुङ्क्ते यदि न वक्रेणाभिवर्तते त्रिभिस्त्रिभिः पक्षैर्यदि न वक्रस्थः स्यात्तर्हि द्वादशराशीन् क्रमेण भुङ्क्ते इति पूर्वेणान्वयः अयं प्रायेणाशुभग्रहोऽघशंसः दुःखसूचको वेत्यर्थः । यद्वा । यदि न वक्रेणाभिवर्त्तते तदानुकूल इति शेषः यदि वक्रेणाभिवर्त्तते तदाघशंसोऽपीत्यन्वयः ॥ १४ ॥

ततोऽङ्गारकमण्डलाद्द्विलक्षयोजनानामन्तर उपरि तेन उपरि भागं यतो भगवान् बृहस्पतिरेकैकस्मिन् राशौ परिवत्सरं परिचरति सोऽपि यदि न वक्रः स्यात्तर्हि ब्राह्मणकुलस्य प्रायशोऽनुकूलः ततो बृहस्पतिमण्डलाद्योजनानां लक्षद्वयादुपरि शनैश्चरः प्रतीयमान उपलभ्यमान एकैकस्मिन् राशौ त्रिंशत्त्रिंशन्मासान् विलम्बमानः शनैः शनैर्गच्छन् सर्वानेव द्वादश राशीन् उपर्येति क्रमेण सञ्चरति तावद्भिः परिवत्सरैर्द्वादशजन्मादिराश्यवस्थानसहचरितत्रिंशत्त्रिंशन्मासानां गणनावशात् सम्पन्नैरनुवत्सरैः प्रायशः सर्वेषामशुभकरः इत्यर्थः ॥ १५ ॥ १६ ॥

ततः शनैश्चरमण्डलादुत्तरस्मादुपरिष्टादेकादशलक्षयोजनानामन्तरे देशे सप्तर्षय उपलभ्यन्ते के ते ये ऋषयः लोकानां शं सुखमेवानुभावयन्तः सम्पादयन्तः विष्णोर्यत्पदं स्थानं परमुत्कृष्टं ध्रुवमण्डलं तत्प्रदक्षिणं यथा तथा परिक्रमन्ति परिभ्रमन्ति ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्रोपशान्तिकृत् शुभग्रहसंयोगे शुभसूचकोऽन्यथाघशंसो दुःखसूचक इत्यतः प्रायेणाशुभग्रह इति ॥ १३—१५ ॥

तावद्भिस्त्रिंशद्भिरनुवत्सरैः सर्वराशीननुपर्येति राशिषु विलम्ब्य सञ्चरणाच्छनैश्चर इति नाम प्रायेणैकादशे शुभकरत्वात् ॥ १६—१७ ॥ (१)

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उशनसा बुधो व्याख्यात इति पुरतः पश्चात् सहैव वा चरतीत्यंशेन तत्तुल्यः द्विलक्षेति भूतलात्तु नवलक्ष इत्यर्थः ॥ १३ ॥

लक्षद्वितीय इति भूतलादेकादशलक्षे । यदि न वक्रेणेति पूर्वेणान्वयः । अघशंसः दुःखसूचकः ॥ १४ ॥

द्विलक्षेति । भूतलात्तु त्रयोदशलक्षे यदि न वक्र इति पूर्वेणान्वयः ॥ १५ ॥

योजनलक्षद्वयादिति । भूतलात्तु पञ्चदश लक्षे ॥ १६ ॥

एकादशलक्ष इति । भूतलात्तु षड्विंशलक्षे परमं पदं ध्रुवलोकम् ॥ १७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वाविंशः पञ्चमेऽध्यायः सङ्गतः सङ्गतःसताम् ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उशनसोपमानभूतेनोपमेयतया बुधः अर्कस्य पुरतः पश्चात्सहैव चरतीति व्याख्यातः किञ्चिद्विशेषं दर्शयति । तत इति । माधंसते द्योतयति ॥ १३ ॥

अघशंसो दुःखद्योतकः यदि वक्रेण नाभिवर्तते अभिवर्तते तदा त्रिभिः त्रिभिः पक्षैः एकैकशो राशीन् भुङ्क्ते ॥ १४ ॥

यदि वक्रो न स्यात्तदा परिवत्सरम् ॥ १५-१७ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वाविंशाध्यायार्थप्रकाशः ॥ २२ ॥

भाषाटीका ।

शुक्र के कथन से बुधका भी कथन होगया तिसके ऊपर दो लाख योजन में जो दीखते हैं सो बुध चन्द्रमा के पुत्र हैं सो प्राय करके सबके शुभ कारक हैं जब सूर्य के सङ्ग से छूटजाते हैं तब अतिचार होनेसे अतिवृष्टि अथवा अनावृष्टि आदि भयको जनाते हैं ॥ १३ ॥

(१) श्रीविजयध्वजतीर्थमते अत्राध्यायसमाप्तिर्नास्ति किन्तु त्रिंशीयाध्यायान्ते एव ।

(१) एवामिति श्रीवि० ।

भाषाटीका

इसके ऊपर मङ्गलभी दोलक्ष योजनके ऊपर है तीन तीन पक्षों से एक एक राशी को भोगता हुआ बारा राशियों को भोगता है यदि वक्री होकर न चले तो यह गति है प्राय करके अशुभ ग्रह है पाप का सूचक है ॥ १४ ॥

उस के दो लक्षयोजन में प्राप्त भगवान् वृहस्पति हैं एक एक राशी में एक परिवत्सर चलते हैं यदि वक्र न होवें तो ये गुरुजी प्राय करके ब्राह्मण कुलके अनुकूल हैं ॥ १५ ॥

तिसके ऊपर दो लक्ष योजन ऊपर प्रतीत होने वाला शनैश्चर है सो एक एक राशि मे तीस महिना तक विलम्ब करता हुआ उतने अनुवत्सरों में सबके ऊपर चलता है प्रायः करके सबको अशान्ति करने वाला है ॥ १६ ॥

तिसके उत्तर में एकादश लक्षयोजन में ऋषिगण दीखते हैं जो ऋषि सब लोगों के कल्याण करते हुये जो विष्णुका परमपद है तिसकी प्रदक्षिणा करते हैं ॥ १७ ॥

इति श्रीभागवत पञ्चमस्कन्ध बाइसमे अध्याय का भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ २२ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे द्वाविंशोऽध्यायः समाप्तः ॥ २२ ॥



## त्रयोविंशोऽध्यायः ॥

——:०:——

### श्रीशुक उवाच ।

अथ तस्मात्परतस्त्रयोदशलक्षयोजनान्तरतो यत्तद्विष्णोः परमं पदमभिवदन्ति यत्र ह महाभागवतो ध्रुव औत्तानपादिरग्निनेन्द्रेण प्रजापतिना कश्यपेन धर्मेण च समकालयुग्भिः स बहुमानं दक्षिणतः क्रियमाण इदानीमपि कल्पजीविनामाजीव्य उपास्ते तस्येहानुभाव उपवर्णितः ॥ १ ॥

स हि सर्वेषां ज्योतिर्गणानां ग्रहनक्षत्रादीनामनिमिषेणाव्यक्तरंहसा भगवता कालेन भ्राम्यमाणानां स्थाणुरिवावष्टम्भ ईश्वरेण विहितः शश्वदवभासते ॥ २ ॥

यथा मेढीस्तम्भ आक्रमणपशवः संयोजितास्त्रिभिस्त्रिभिः सवनैर्यथास्थानं मण्डलानि चरन्त्येवं भगणा ग्रहादय एतस्मिन्नन्तर्बहिर्योगेन कालचक्र आयोजिता ध्रुवमेवावलम्ब्य वायुनोदीर्यमाणा आकल्पान्तं (१) परिचङ्क्रमन्ति नभसि यथा मेघाः श्येनादयो वायुवशाः कर्मसारथयः परिवर्त्तन्ते एवं ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीताः कर्मनिर्मितगतयो भुवि न पतन्ति ॥ ३ ॥

केचनैतज्ज्योतिरनीकं (२) शिशुमारसंस्थानेन भगवतो वासुदेवस्य योगधारणायामनुवर्णयन्ति ॥ ४ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोविंशे ध्रुवस्थानं ज्योतिश्चक्राश्रयं ततः ।
शिशुमारस्वरूपेण हरेश्च स्थितिरुच्यते ॥ १ ॥

यत्तत्प्रसिद्धं विष्णोः पदं यत्र ध्रुव उपास्ते तिष्ठतीत्यन्वयः [...]मकालमेव युज्यन्त इति तथा तैर्नक्षत्ररूपैः ॥ १ ॥ २ ॥

मेढीस्तम्भे बद्धा धान्याक्रमणपशवो बलीवर्दाः कर्म सारथिः [प्र]ापको येषाम् ॥ ३ ॥

ईश्वराधारत्वात्पतनशङ्कैव नास्तीति वक्तुं मतान्तरमाह । [के]चनेति । ज्योतिरनीकं ज्योतिश्चक्रं योगधारणायां स्थितमिति [...]ः ॥ ४ ॥

---

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सूर्यादीनां गतिविशेषास्तत्स्थानविशेषाः कार्यविशेषा[...]काः अथ ध्रुवस्य स्थानं व्यापारं चाह । अथेति । तस्मादृषिमण्ड[लात्]परतस्त्रयोदशलक्षयोजनानां परस्ताद्यत्तत्प्रसिद्धं विष्णोः [...]परमामनन्ति विष्णोरभिव्यक्तिस्थानत्वात्परमं पदमित्युक्तं [...]तत्परमं पदं तत्राह । यत्रेति । यत्र परमे पदे महाभागवतो [औत्]तानपादिः उत्तानपादपुत्रः अग्न्यादिभिः सबहुमानं प्रदक्षि[ण]तः क्रियमाणः उपास्ते तिष्ठति तस्य ध्रुवस्यानुभावः प्रभावः [उप]वर्णितश्चतुर्थस्कन्धे इति शेषः ॥ १ ॥

स हि ध्रुवः भगवदात्मकेनानभिव्यक्तवेगेन कालचक्रेण भ्राम्य[माण]ानां ग्रहाणां सूर्यादीनामश्विन्यादिनक्षत्राणां च सर्वेषां [स्थ]ाणुरिव निश्चलोऽवष्टम्भोऽवलम्ब ईश्वरेण विष्टम्भत्वेन विहितः स्थापितः शश्वत् सदा एकत्रैवावभासते ॥ २ ॥

स्थाणुरिवावष्टम्भ इत्येतदेवोपपादयति । यथा मेढीस्तम्भः त्रिभिस्त्रिगुणितैः सूत्रैः संयोजिता बद्धा धान्यक्रमणपशवो बलीवर्दाः मेढीस्तम्भमवलम्ब्येह मण्डलानि पादविक्षेपस्थानानि चरन्त्येवं नक्षत्रगणाः सूर्यादयो ग्रहाश्च एतस्मिन् कालचक्रे अन्तर्बहिर्योगेन आयोजिताः केचिदन्तर्योजिताः केचिद्बहिर्योजिताः सन्तो ध्रुवमवलम्ब्यैव वायुना वायुपाशेनोदीर्यमाणाः धार्यमाणा आकल्पान्तं परितः भ्रमन्ते कर्मवशाद्वायुपाशबद्धत्वात् ध्रुवावलम्बत्वाच्च भुवि न पतन्तीति भावः एतदेव दृष्टान्तेन स्पष्टयति । नभसीति । यथा मेघाः श्येनादयः पक्षिणश्च वायुपाशवशाः कर्मसारथयः कर्मावलम्बाः नभसि परिवर्तन्ते न तु भुवि पतन्ति एवं ज्योतिर्गणा अपि प्रकृतिपुरुषयोर्यः संयोगः सम्बन्धः कर्माधीनः तेनानुगृहीताः नक्षत्रादिरूपतां प्राप्ता जीवा एव कर्मायत्तप्रकृतिसम्बन्धवशान्नक्षत्रादिशरीरभाज इत्यर्थः अत एव कर्म निमित्तं यासां ता गतयो येषामिति तथा केवलनभःसञ्चारापादककर्मायत्तनभोमात्रगतयो भुवि न पतन्ति कर्मणां तत्परिणामानां च वैचित्र्यादग्नेरूर्ध्वज्वलनवद्वायोस्तिर्यग्गतिवन्नभसि भ्रमणं भुव्यपतनं च उपपद्यत इति भावः ॥ ३ ॥

एवं ज्योतिर्गणानां कर्मायत्तो नभस्सञ्चार उक्तः अथ सर्वाधारस्य भगवत एव शिशुमाराकारेणावस्थितत्वात्तदाश्रयाणां पतनशङ्कैव नास्तीत्यभिप्रयन् ज्योतिर्गणस्य शिशुमाराश्रयत्वं योगिनामुपासनेन सम्पादयति । केचिदिति । शिशुमारसंस्थानस्य शिशुमारशरीरस्य भगवतो वासुदेवस्य कृत्स्नचिदचिदात्मकजगद्धारकस्य योगधारणायां वासुदेवविषयकमन-

(१) परितश्चङ्क्रमन्ति (२) शिशुमारसंस्थानेन । इति श्रीधि० पाठः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

समाधिरूपधारणायामेवैतज्ज्योतिरनीकं ज्योतिजालं केचिद्वेद-भागे योगिनो वर्णयन्ति ज्योतिरनीकाश्रयं शिशुमारं भगवदात्मकमुपास्य बोधयन्तीत्यर्थः ज्योतिरनीकाश्रयं शिशुमारं योगधारणायां विषयीकुर्वन्तीति वार्थः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ध्रुवेण समकालं सायुज्यभाग्भिरुपास्ते श्रीहरिमिति शेषः ॥ १ ॥

अनिमिषयोर्न्मीलितलोचनेनाक्रमणपशवः परिवर्त्तमाना बलीवर्दा मेढीस्तम्भे बद्धास्तामभितो भ्रमन्त इत्यर्थः त्रिभिः सवनैः शैघ्र्यमान्द्यसमसञ्चारैर्यथास्थानं विहितादन्यथा न कचिच्चरन्ति भूमण्डलानि मेढीस्तम्भं परितः स्थानानि आदिशब्दगृहीतास्तारकाः केचिद्ध्रुवस्यान्तर्योगेन केचिद्वाह्ययोगेन सञ्चरन्तीत्यर्थः आवहादिशब्दवाच्येन वायुनोदीर्यमाणाः प्रेर्यमाणाः नन्वेते निरालम्बाः कथं न पतन्तीति तत्राह । यथेति । अयनादिलक्षणं कर्मैव सारथिर्येषां ते तथा औत्पत्तिकवेगाख्यसंस्कारो वा अदृष्टं वा स्त्रीपुरुषसंयोगेनानुगृहीतैरापादितैर्नभःसञ्चरणहेतुभूतैः कर्मभिर्निमित्तगतित्वात् ॥ २ ॥ ३ ॥

शिशुमारसंस्थानस्य शिशुमारावयवोपेतस्य योगबलेन धारणक्रियायां स्थितिमनुवर्तयन्ति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्रिभिः सवनैः पूर्वमध्यापराह्णेषु कृषककर्तृकपरिवर्त्तनेनेत्यर्थः प्रकृतिपुरुषसंयोगानुगृहीताः पुरुषाधिष्ठितमायावशीकृता ॥ १ ॥ २ ॥ ३ ॥

शिशुमारसंस्थानेनोपलक्षितं योगधारणायां विराड्वदुपासनावेशार्थं यथेष्टकल्पनामात्रमयां तस्यामित्यर्थः । अत एव मनसि चन्द्र इति वक्ष्यमाणेन मनोऽपि कल्पयिष्यते स्पष्टमपि वक्ष्यते एतदुह्वेति ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ध्रुवलोकं त्रयोविंशे प्राह विष्णुपदाभिधम् ।
शिशुमाराकारतया ज्योतिश्चक्रञ्च दर्शितम् ॥ ० ॥

अथोच्चेति । भूतलादेकोनचत्वारिंशल्लक्षे समकालमेव युज्यन्त इति तैरग्न्यादिभिर्नक्षत्ररूपैः ॥ १ ॥

स्थाणुरिवेति श्लेषेण कालचक्रेण चालयितुमशक्यत्वात् स एवैकः स्थिर इत्यर्थः । प्रत्युत कालचक्रस्यावष्टम्भः । तेन सर्वे कालचक्राधीनाः ध्रुवस्तु कालचक्रमप्यधीनीकरोतीति ध्वनिः । नन्वीदृशी योग्यता तस्य कथमभूत्तत्राह । ईश्वरेण कर्तुमकर्तुमन्यथा कर्तुमपि समर्थेन विहितः स्वभक्तोत्कर्षख्यापनार्थमिति भावः ॥ २ ॥

—धान्यादयाक्रमणपशवो बलीवर्दाः खलमध्यनिखातस्तम्भो मेढी तत्र संयोजिताः कृषीवलैरित्यर्थः । त्रिभिः सवनैर्मेढीस्तम्भ-निकटमध्यदूरवर्त्तिभिर्विभागैः यथास्थानं स्वस्वस्थान-मनतिक्रम्य चरन्ति दार्ष्टान्तिके त्रिभिः सवनैरुत्तरायण-दक्षिणायनैः समयैः । अन्तरधोऽधः स्थलं बहिरुपर्युपरि तत्र योगेन स्थित्या कालचक्र एव योजिताः । यथा सप्त-धोऽधः स्थित्या आयोजिताः शनैश्चरादयः तथा सूर्यादीनामु-स्थित्या आयोजिताः सोमादयः तत्र तत्र आयोजिताः ई-वायुना तूदीर्यमाणाश्चाह्यमानाः । ननु कथन्तेऽन्तरीक्षे न्ति तत्राह । नभसीति । कर्मसारथयः कर्मसहायाः ॥ ३ ॥

ज्योतिरनीकं ज्योतिश्चक्रम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रयोविंशे ध्रुवस्थानं शिशुमारचक्रं च वर्णयति । अथे-यद्विष्णोः पदं स्थानं वदन्ति तदास्ति अग्न्यादिभिः म-युज्यन्ते इति समकालयुजस्तैर्नक्षत्ररूपैर्बहुमानं यथा भवति दक्षिणतः क्रियमाणः यत्र विष्णुपदे उपास्ते तिष्ठति इह न्महापुराणे उपवर्णितः चतुर्थस्कन्धे उक्तः ॥ १ ॥ २ ॥

आक्रमणपशवो धान्याक्रमणपशवो बलीवर्दाः कर्म सहायो येषां ते तथा प्रकृतिः कार्यकारणरूपा पुरुषो जीव-रनादिसंयोगानुगृहीताः प्रकृतिगुणानत्परिणामदेहेन्द्रियादिषु ज्योतिर्गणभूताः जीवा इत्यर्थ कर्मनिमित्तं यासां ताः येषां ते भुवि न पतन्ति ॥ ३ ॥

किञ्च पतनशङ्कैव नास्तीत्याह । केचिदिति । कार्यात्मदा-इत्यर्थः ज्योतिरनीकं ज्योतिश्चक्रं शिशुमारसंस्थानेन शिशुमार-स्वांशरूपेण या योगधारणा तस्यां स्थितमिति शेषः अनु-यन्ति ॥ ४ ॥

---

भाषाटीका ।

श्रीशुकदेव जी बोले फिर तिस के ऊपर तेरह लाख योजन के ऊपर वह स्थान है जिस को विष्णु का परम पद कहते हैं जहांपर उत्तानपाद के पुत्र महाभागवत ध्रुवजी अग्नि इन्द्र प्रजापति कश्यप धर्म ये सब एकही सं मिलकर बडे सन्मान से उनकी प्रदक्षिणा करते हैं वे ध्रु जी कल्पांतजीवी पुरुषों के आश्रय होकर अभीभी विराजमान हैं उन के प्रभाव को पहिले वर्णन कर आये हैं ॥ १ ॥

जिस की कभी विश्रान्ति नहीं है जिस का वेग ... है ऐसे भगवान् काल से जो ज्योतिर्गण ग्रहनक्षत्र घुमाये जाते हैं उन सबों का रोकनेवाला खम्भरूप जीको ईश्वर ने बना कर स्थापन किया है सो प्रकाश-मान हैं ॥ २ ॥

जैसे धानादिकों के खला में खंभेसे बंधे हुये धान में घुमाये पशु तीन तीन कालों में यथा योग्य मंडलों से घूमते हैं इसी प्रकार सूर्यादिक भगण बाहिर भीतर से इस काल चक्र में युक्त ध्रुवही को अवलम्बन करने से वायु से प्रेरित होते हैं तो भी पर्यन्त घूमते रहते हैं आकाश में जैसे मेघ बाज आदि पक्षि के वश में होकर कर्म के सहायता से घूमते हैं इसी प्रकार

यस्य पुच्छाग्रेऽवाक्शिरसः कुण्डलीभूतदेहस्य ध्रुव उपकल्पितस्तस्य लाङ्गूले प्रजापतिरग्निरिन्द्रो-धर्म इति पुच्छमूले धाता विधाता च कट्यां सप्तर्षयस्तस्य दक्षिणावर्तकुण्डलीभूतशरीरस्य यान्युदगयनानि दक्षिणपार्श्वे तु नक्षत्राण्युपकल्पयन्ति। दक्षिणायनानि तु सव्ये यथा शिशुमारस्य कुण्डलाभोगसन्निवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसंख्या भवन्ति पृष्ठे त्वजवीथी आकाशगङ्गा चोदरतः ॥५॥

पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राश्लेषे च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढे दक्षिणवामयोर्नासिकयोर्यथासंख्यं श्रवणपूर्वाषाढे दक्षिणवामयोर्लोचनयोर्धनिष्ठामूलं च दक्षिणवामयोः कर्णयोर्मघादीन्यष्ट नक्षत्राणि दक्षिणायनानि वामपार्श्ववङ्क्रिषु युञ्जीत तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्ववङ्क्रिषु प्रातिलोम्येन प्रयुञ्जीत शतभिषाज्येष्ठे स्कन्धयोर्दक्षिणवामयोर्न्यसेत् ॥६॥

उत्तराहनावगस्तिरधराहनौ यमो मुखेषु चाङ्गारकः शनैश्चर उपस्थे बृहस्पतिः ककुदि वक्षस्यादित्यो हृदये नारायणो मनसि चन्द्रो नाभ्यामुशना स्तनयोरश्विनौ बुधः प्राणापानयो राहुर्गले केतवः सर्वाङ्गेषु रोमसु सर्वे तारागणाः ॥ ७ ॥

एतदुहैव भगवतो विष्णोः सर्वदेवतामयं रूपमहरहः सन्ध्यायां प्रयतो वाग्यतो निरीक्षमाण उपतिष्ठेत नमो ज्योतिर्लोकाय कालायनायानिमिषां पतये महापुरुषायाभिधीमहीति ॥ ८ ॥

ग्रहर्क्षतारामयमाधिदैविकं पापापहं मन्त्रकृतां त्रिकालम्।
नमस्यतः स्मरतो वा त्रिकालं नश्येत तत्कालजमाशु पापम् ॥ ९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां संहितायां
वैयासिक्यां शिशुमारसंस्थानवर्णनो नाम
त्रयोविंशोऽध्यायः ॥ २३ ॥

भाषा टीका

ज्योतिर्गण प्रकृति पुरुष के संयोग से युक्त होकर कर्म की गति के अनुसार पृथिवी में नहीं गिरते हैं ॥ ३ ॥

कोई महापुरुष इस ज्योतिर्गणको शिशुमार संस्था से भगवान् वासुदेव के योगधारणा में स्थित है ऐसा कहते हैं ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

लाङ्गूले अग्रादधोभागे उदगयनान्यभिजिदादीनि पुनर्वस्वन्तानि चतुर्दश दक्षिणपार्श्वे दक्षिणायनानि पुष्यादीन्युत्तराषाढान्तानि चतुर्दश वामपार्श्वे ॥ ५ ॥

तदेव स्थानविशेषेण विभज्य दर्शयति। पुनर्वसुपुष्यावित्यादिना। पुनर्वसुरुदगयनान्त्यं नक्षत्रं पुष्यो दक्षिणायनस्याद्यमार्द्राश्लेषे तयोर्निरन्तरे अभिजिदुत्तराषाढे उत्तरदक्षिणायनयोराद्यन्तनक्षत्रे श्रवणपूर्वाषाढे तयोरुत्तरपूर्वे धनिष्ठामूलं च तयोरप्युत्तरपूर्वे मघादीनि यान्यनुराधान्तानि दक्षिणायनान्यष्ट तानि वामपार्श्ववङ्क्रिषु वामपार्श्वास्थिषु मृगशीर्षादीनि प्रातिलोम्येन पूर्वाभाद्रपदान्तानि यान्युदगयननक्षत्राण्यष्ट तानि दक्षिणपार्श्ववङ्क्रिषु। शतभिषग्ज्येष्ठे उत्तरदक्षिणायनयोर्ये अवशिष्टे ते स्कन्धयोः ॥ ६ ॥

यमो नक्षत्ररूपः तथा नारायणोऽश्विनी च ककुदि गवपृष्ठशृङ्गे ॥ ७ ॥

ज्योतिषो लोकायाश्रयाय कालायनाय कालचक्ररूपाय नमोऽभिधीमहीति मन्त्रेणोपतिष्ठेत ॥ ८ ॥

मन्त्रकृतां पूर्वोक्तं मन्त्रं जपताम् ॥ ९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एतदेव प्रपञ्चयति। यस्येत्यादिना। यस्य भगवदात्मकस्य कुण्डलीभूतदेहस्य सर्पवत्कुण्डलीभूतो वलयीभूतो देहो यस्य अर्वागधस्ताच्छिरो यस्य अनेनोर्ध्वपुच्छस्येत्यवगम्यते तस्य शिशुमारस्य पुच्छाग्रे ध्रुव उपकल्पितः उपास्यः योगिभिरिति शेषः शिशुमारावयवेषु यत्र यस्यावस्थानं तदाश्रयत्वेन तत्र तस्यावयवस्योपासनं कृतं कैश्चित्तथैवाधुनापि कर्तव्यं तेषामवस्थिति

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्तत्र तत्रैव ज्ञेयेत्यत्र प्रतिपाद्यते पुच्छाग्रे हि ध्रुवो व्यवस्थितः तथाच श्रीवैष्णवे पुराणे ।

उत्तानपादपुत्रस्तु तमाराध्य जगत्पतिम् ।

सतारशिशुमारस्य ध्रुवः पुच्छे व्यवस्थितः ॥

इति तस्य शिशुमारस्य लाङ्गूले पुच्छाग्रादधोभागे प्रजापत्यादयश्चत्वारो व्यवस्थिताः अतः प्रजापत्याद्याश्रयत्वेन लाङ्गूलोपासनं कर्तव्यमित्यर्थः एवमुत्तरत्रापि द्रष्टव्यम् । पुच्छस्य मूले धाता विधाता चोपकल्पित इत्यनुषङ्गः कट्यां सप्तर्षय इत्यत्रापि प्रजापत्यादयश्चैवं व्यवस्थिताः लाङ्गूले प्रजापतिः प्रजापतेरधस्तादग्निस्ततोऽधस्तादिन्द्रः ततोऽप्यधो धर्म इति तस्य दक्षिणावर्तकुण्डलीभूतशरीरस्य दक्षिणपार्श्वे यान्युदगयननक्षत्राण्यभिजिदादीनि पुनर्वस्वन्तानि चतुर्दश उपकल्पयन्ति उपासते यानि दक्षिणायननक्षत्राणि पुष्यादीन्युत्तराषाढान्तानि च तानि वामपार्श्वे उपकल्पयन्ति एतदेव स्थानविशेषेण विभज्य दर्शयितुं दक्षिणोत्तरपार्श्वयोरवयवसाम्यं तावदाह । यस्येति । कुण्डलाकारः सर्पाकारः सन्निवेशो यस्य तस्य शिशुमारस्य उभयोरपि पार्श्वयोर्यथावयवाः समसङ्ख्या भवन्ति तस्य पृष्ठे त्वजवीथी नाम सूर्यस्य दक्षिणायनाख्या शीघ्रगतिमार्गविशेषः उदरे आकाशगङ्गा उपकल्पिता आर्द्रेत्यादि युञ्जीत ॥ ५ ॥

स्थानविशेषेणोभयनक्षत्राणां स्थानविभागकल्पनामाह । पुनर्वस्वित्यादिना । पुनर्वसुरुदगयनान्तं नक्षत्रं पुष्योदक्षिणायनस्यादिस्तावुभौ क्रमेण दक्षिणवामयोः श्रोणयोरुपकल्प्यौ आर्द्रेत्यादियुञ्जीतानुसन्दधीत उत्तरायणनक्षत्रेष्वभिजिदादिषु पुनर्वस्वन्तेषु पुनर्वस्वार्द्राभिजिच्छ्रवणधनिष्ठा दक्षिणश्रोणिपादनासिकालोचनकर्णनासिकास्थानेषु ज्ञेयाः मृगशीर्षरोहिणीकृत्तिकाभरण्यश्विनीरेवत्युत्तराभाद्रपूर्वाभाद्रपद अष्टौ नक्षत्राणि दक्षिणपार्श्वेऽवगन्तव्यानि शतभिषग्दक्षिणस्कन्धे दक्षिणायननक्षत्रेषु पुष्यप्रभृत्युत्तराषाढान्तेषु पुष्याश्लेषोत्तराषाढापूर्वाषाढामूलाख्यानि पञ्च नक्षत्राणि पादनासिकालोचनकर्णस्थानेषु योज्यानि मघादीन्यनुराधान्तानि क्रमेणाष्टौ नक्षत्राणि वामपार्श्वे योज्यानि ज्येष्ठाख्यं वामस्कन्धे योज्यं हनुः कपोलप्रान्तदेशः अगस्त्ययमावपि नक्षत्ररूपेण वर्तेते इत्यभिप्रायः बृहस्पतिः ककुदि गलपृष्ठे केतव इति बहुवचनं केत्वाकारनक्षत्राणां तारासद्भावाभिप्रायेण प्रयुक्तं शेषं स्पष्टम् ॥ ६--७ ॥

एवं प्रतिनियतस्थानग्रहनक्षत्रतारामयं शिशुमारचक्रं नित्यमुपास्यमित्याह । एतदिति । एतदुहैव एतद्वै सर्वदेवतामयं भगवतो विष्णो रूपं शरीरं शिशुमारचक्रम् अहरहः सन्ध्यायां प्रयतः समाहितचित्तो वाग्यतो मौनी सन्निरीक्षमाण उपतिष्ठेत वक्ष्यमाणमन्त्रेण स्तुवीत मन्त्रमेवाह । नम इति । ज्योतिषां लोकाय कालायनाय कालस्याश्रयभूताय कालचक्रस्वरूपाय वा अनिमिषां ब्रह्मादीनामपि पतये तेषामपि कालवश्यत्वान्महापुरुषाय परमपुरुषात्मकाय नमः अभिधीमहीति उक्तरूपं महापुरुषं ध्यायेम इत्यर्थः ॥ ८ ॥

एवं शिशुमाराकृतेर्भगवतोऽनुसन्धाननमस्कारयोः फलमाह । ग्रहर्क्षेति । ग्रहनक्षत्रतारामयमाधिदैविकमधिदैवे वर्तमानं देवेभ्यः उत्कृष्टमित्यर्थः हरे रूपं शिशुमारं त्रिकालं नमस्यतः नमस्कुर्वतः स्मरतो वा त्रिकालं मन्त्रकृतां उक्तमन्त्रं जपतां [illegible] तत्कालजं पापमाशु शीघ्रं नश्येत नष्टं भवेदित्यर्थः तत्काल[illegible]मित्यनेन तत्तद्भूतभविष्यद्वर्तमानकालजं विवक्षितम् ॥ ९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कुण्डलीभूतदेहस्य वक्रीकृतशरीरस्य पुच्छाग्र उपकल्पितो ध्रुवः पुच्छाग्रव्यतिरिक्ते स्थले लाङ्गूले पुच्छमध्य इत्यर्थः यान्युदगयनानीत्यादेर्विस्तरो मघादीनीत्यादिः प्रातिलोम्येन पूर्वाभाद्रपदामारभ्य मृगशीर्षान्तानीति ॥ ५—७ ॥

अनिमिषा देवास्तेषां नाथाय क्विप्प्रत्ययान्तत्वेनानिमीश[illegible] रूपं सिद्ध्यति ॥ ८ ॥

शिशुमाररूपग्रहणप्रयोजनमाह । ग्रहेति । मन्त्रकृतो ज[illegible] नमस्यतो नमस्कारं कुर्वतः पुंस इति शेषः प्रातरादित्रि[illegible] कृतं पापं स्वयं सर्वात्मना नश्यते इत्यन्वयः वा इत्यनेन "नारायणो नाम नरो नराणाम्"इत्यादिवाक्यं प्रमाणयति ॥ ९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र कुण्डलीभूतत्वं पार्श्वतः न तु पृष्ठतः क्रोडतो वा अत एव दक्षिणपार्श्वे उदगयनानि मन्तव्यानि अत्र यद्वैपरीत्यं दृश्यते तत्तु मण्डलत्वेऽपि भिर्यगूर्ध्वाधो बहुधा वक्रत्वं मन्तव्यम् । [illegible] नारायणादीनां हृदयादौ स्थितत्वमिति । अजवीथी दक्षिणमार्गस्य प्रथमो भागः । "मूलाषाढोत्तराषाढा अजवीथीति शब्दिता" इति तन्त्रोक्तेः अग्रे तु यदेषां कर्णादौ स्थितिर्वक्ष्यते तत्र तत्रापि तत्तदङ्गस्य क्रोडभागो मन्तव्यः आकाशगङ्गायाश्च क्रोडसंस्थत्वं तत्रागमनात् ॥ ५ ॥ ६ ॥

अङ्गारकादीनां राश्यन्तरचलनत्वेऽपि तत्तदङ्गस्थितत्वम[illegible] नाश्चलनत्वमननात् ॥ ७—९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य

त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उदगयनानि अभिजिदादीनि पुनर्वस्वन्तानि चतुर्दश दक्षिणपार्श्वे दक्षिणायनानि पुष्यादीनि उत्तराषाढान्तानि चतुर्दश वामपार्श्वे अजवीथी दक्षिणमार्गस्य प्रथमो भागः ॥ ५ ॥

उक्तान्येव नक्षत्रस्थानानि विशेषेण विभज्य दर्शयति । पुनर्वसुपुष्यावित्यादिना । वामपार्श्वस्य वङ्क्रिषु अस्थिषु प्रातिलोम्येन मृगशिरारोहिणीकृत्तिकेत्येवं व्युत्क्रमेण पूर्वभाद्रपदान्तान्यष्ट दक्षिणपार्श्वास्थिषु ॥ ६—८ ॥

मन्त्रकृतां पूर्वोक्तमन्त्रं जपतां पापापहमाधिदैविकं परमेश्वरस्य रूपमिदं नमस्यतः स्मरतो वा पुंसः पापं नश्येतेत्यन्वयः । सूर्यमण्डलादष्टत्रिंशल्लक्षे ध्रुवः ध्रुवात् कोटियोजने महर्लोकः महर्लोकात् कोटिद्वये जनलोकः जनलोकात् कोट्यष्टके तपोलोकः । तपोलोकाद्द्वादशकोटिषु सत्यलोकः । एवं सूर्यात् सत्यलोकपर्यन्तमष्टत्रिंशल्लक्षोत्तरत्रयोविंशतिकोट्यः सत्यलोकात् ऊर्ध्वं लक्षोत्तरायां कोटौ वैकुण्ठस्ततोऽण्डगोलक इति श्रीविष्णुपुराणे दर्शितया दिशा सूर्यात् पञ्चविंशतौ कोटिषु अण्डः । एवं सूर्याल्लक्षे भूतलं ततः सप्तसप्ततिसहस्रेषु सप्त पातालानि ततस्त्रिंशत्सहस्रेषु शेषः एवं सूर्याल्लक्षद्वये गर्भोदः च लक्षद्वयन्यूनपञ्चविंशतिकोटिपरिमितः एवं मिलित्वा ऊर्ध्वाधः पञ्चाशत्कोटि प्रमाणमण्डगोलकमिति ॥ ९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चस्य त्रयोविंशः सङ्गतः सङ्गतः सताम् ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्य शिशुमारस्य लाङ्गूले पुच्छाग्रादधोभागे तस्य दक्षिणपार्श्वे अभिजिच्छ्रवणधनिष्ठाशतभिषापूर्वाभाद्रपदोत्तराभाद्रपदरेवत्यश्विनीभरणीकृत्तिकारोहिणीमृगशिरआर्द्रापुनर्वस्वाख्यान्युदगयनानि चतुर्दश नक्षत्राणि कल्पयन्ति सव्ये वामपार्श्वे तु पुष्याश्लेषामघापूर्वाफाल्गुन्युत्तराफाल्गुनीहस्तचित्रास्वातिविशाखानुराधाज्येष्ठामूलपूर्वाषाढोत्तराषाढाख्यानि दक्षिणायनानि चतुर्दश नक्षत्राणि शिशुमारस्योभयोः पार्श्वयोरवयवा यथा भवन्ति तथा कल्पयन्ति तज्ज्ञा उदरतः उदरे ॥ ५ ॥

उदगयनदक्षिणायननक्षत्राणां स्थानानि विभज्य दर्शयति । पुनर्वसुपुष्यावित्यादिना । पुनर्वसुपुष्यावुदगयनान्त्यं नक्षत्रं पुष्यो दक्षिणायनाद्यम् । आर्द्राश्लेषे तयोर्निरन्तरं स्कन्धयोरिति सूचयन् पादद्वयापेक्षया पश्चिमयोः पादयोः अभिजिदुत्तराषाढे उदगयनदक्षिणायननक्षत्रगणयोराद्यन्ते नक्षत्रे श्रवणपूर्वाषाढे तयोरनुचरणे धनिष्ठामूलं च तयोरप्युत्तरपूर्वे च पुनर्वस्वार्द्राभिजिच्छ्रवणधनिष्ठा पञ्च नक्षत्राणि दक्षिणश्रोणिपादनासिकालोचनश्रोत्रेषु पुष्यादीनि पञ्च वामश्रोण्यादिषु च यथासङ्ख्यं योजनीयाः मघादीनीति मघापूर्वाफाल्गुनी उत्तराफाल्गुनी हस्तचित्रास्वातिविशाखानुराधाख्यानि अष्ट नक्षत्राणि वामपार्श्ववङ्क्रिषु वामपार्श्वास्थिषु युञ्जीत अनुसन्दधीत मृगशीर्षादीनि प्रातिलोम्येन पूर्वभाद्रपदान्तानि मृगशिरोरोहिणीकृत्तिकाभरण्यश्विनीरेवत्युत्तराभाद्रपदपूर्वाभाद्रपदाभिधानि अष्ट नक्षत्राणि दक्षिणपार्श्ववङ्क्रिषु प्रतियुञ्जीत शतभिज्ज्येष्ठे शतभिङ्नक्षत्रम् उदगयनेऽवशिष्टं दक्षिणायनेऽवशिष्टं वामस्कन्धे न्यसेत् ॥ ६ ॥

यमो नक्षत्ररूपः बृहस्पतिः ककुदि गलपृष्ठशृङ्गे ॥ ७ ॥

एतच्छिशुमाराख्यं विष्णोः रूपमुपतिष्ठेतानन्तरमन्त्रेण स्तुवीत मन्त्रमाह । नम इति । ज्योतिषां लोकाय वासस्थानाय कालायनाय कालचक्ररूपाय नमोऽभिधीमहीति ॥ ८ ॥

ग्रहर्क्षतारामयं ग्रहाद्याश्रयमत एवाधिदैविकमधिदैवनियन्तृरूपं शिशुमारचक्रं नमस्यतः स्मरतः मन्त्रकृतामुक्तमन्त्रं जपतां च पापमाशु नश्येत ॥ ९ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

त्रयोविंशोऽध्यायः ॥ २३ ॥

---

भाषा टीका ।

उस शिशुमार चक्र का नीचे को मुख है कुण्डलाकार गोल उसका शरीर है उसके पुच्छ के अग्र भाग में ध्रुव कल्पित हैं उसके लांगूल में प्रजापति हैं अग्नि इन्द्र धर्म ए तीनों पुच्छके मूल में धाता विधाता दोनों कमर में सप्त ऋषीभी उसके दहिने आवर्त कुण्डलाकार देह में उत्तरायण के नक्षत्र दहिने पार्श्व में कल्पित हैं दक्षिणायन के जो नक्षत्र हैं कुण्डलाकार के बांये भाग में हैं ऐसे कल्पना करने से दोनों ओर अवयव समान संख्या के होजाते हैं पीठ में अजवीथी है उदर में आकाश गङ्गा है ॥ ५ ॥

पुनर्वसु पुष्य दोनों दहिने बांये में हैं आर्द्रा अश्लेषा दोनों कटि पार्श्व में हैं दहिने बांयें दोनों पादों में अभिजित् उत्तराषाढा हैं दहिने बांयें नासिका में क्रम से श्रवण पूर्वाषाढा दहिने बांये दोनो नेत्रों में धनिष्ठा मूल हैं दहिने बांयें दोनों कानों में मघादिक आठ नक्षत्र दक्षिणायन के हैं बांयें पार्श्व के अस्थि में युक्त करै ते से ही मृगशिर आदि उत्तरायण नक्षत्रों को दहिने पार्श्वके अस्थि में प्रतिलोमता से युक्त करै शतभिषा ज्येष्ठा दोनों को दहिने बांयें स्कन्ध में न्यास करै ॥ ६ ॥

ऊपर के हनु में अगस्ति हैं नीचे के हनु में यम हैं मुखों में मङ्गल हैं उपस्थ में शनैश्चर हैं गलपृष्ठ में बृहस्पति हैं वक्षस्थल में आदित्य हैं हृदय में श्रीनारायण हैं मन में चन्द्रमा हैं नाभी में शुक्र हैं स्तनों में अश्विनी कुमार हैं प्राण अपान में बुध हैं गले में राहु हैं सब अङ्गों में केतु हैं रोमों में सब तारागण हैं ॥ ७ ॥

यह श्रीविष्णु भगवान् का सर्व देवता मय रूप है इस रूप का प्रतिदिन सायंकाल में सावधान से मौन होकर दर्शन करता रहता हुआ स्तुति करै यह मन्त्र बोले ज्योतियों के

भाषाटीका ।

आश्रय कालचक्र रूप सूर्यादिकों के पति महा पुरुष आपका हम ध्यान करते हैं आपके अर्थ नमस्कार है॥ ८ ॥

जिससे कि यह ग्रह नक्षत्र तारा रूप आधि दैविक परमात्मा का रूप है तिससे तीनो कालों में मन्त्र से स्तुति करने वालों के पापका नाश करने वाला है जो तीनों कालों मे स्मरण करै या नमस्कार करै तिसके उस कालके स नष्ट होजाते हैं ॥ ९ ॥

इति श्रीभागवत पञ्चमस्कन्ध तेईसमे अध्याय का भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ २३ ॥

———

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे त्रयोविंशोऽध्यायः समाप्तः ॥ २३ ॥

———○:०:○———

## ॥ चतुर्विंशोऽध्यायः ॥

## ॥ श्रीशुक उवाच ॥

अधस्तात् सवितुर्योजनायुते स्वर्भानुर्नक्षत्रवच्चरतीत्येके योऽसावमरत्वं ग्रहत्वं चालभत भगवदनुकम्पया स्वयमसुरापसदः सैंहिकेयो ह्यतदर्हः तस्य तात ! जन्म कर्माणि चोपरिष्टाद्वक्ष्यामः ॥ १ ॥

यददस्तरणेर्मण्डलं प्रतपतस्तद्विस्तरतो योजनायुतमाचक्षते द्वादशसहस्रं सोमस्य त्रयोदशसहस्रं राहोर्यः पर्वणि तद्व्यवधानकृद्वैरानुबन्धः सूर्याचन्द्रमसावभिधावति ॥ २ ॥

तन्निशम्योभयत्रापि भगवता रक्षणाय प्रयुक्तं सुदर्शनं नाम भागवतं दयितमस्त्रं तत्तेजसा दुर्विषहं मुहुः परिवर्तमानमभ्यवस्थितो मुहूर्तमुद्विजमानश्चकितहृदय आरादेव निवर्तते तदुपरागमिति वदन्ति लोकाः ॥ ३ ॥

ततोऽधस्तात् सिद्धचारणविद्याधराणां सदनानि तावन्मात्र एव ॥ ४ ॥

ततोऽधस्ताद्यक्षरक्षःपिशाचप्रेतभूतगणानां विहाराजिरमन्तरिक्षं यावद्वायुः प्रवाति यावन्मेघा उपलभ्यन्ते ॥ ५ ॥

ततोऽधस्ताच्छतयोजनान्तर इयं पृथिवी यावद्धंसभासश्येनसुपर्णादयः पतत्त्रिप्रवरा उत्पतन्तीति ॥ ६ ॥

उपवर्णितं भूमेर्यथा सन्निवेशावस्थानमवनेरप्यधस्तात् सप्त भूविवरा एकैकशो योजनायुतान्तरेणायामविस्तारेणोपक्लृप्ताः अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालमिति ॥ ७ ॥

एतेषु हि विलस्वर्गेषु स्वर्गादप्यधिककामभोगैश्वर्यानन्दभूतिविभूतिभिः (१) सुसमृद्धभवनोद्यानाक्रीडविहारेषु दैत्यदानवकाद्रवेया नित्यप्रमुदितानुरक्तकलत्रापत्यबन्धुसुहृदनुचरा गृहपतय ईश्वरादप्यप्रतिहतकामा मायाविनोदा निवसन्ति ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं त्रिभिर्धुमर्यादापालनं वर्णितं तथा ।
अधोभुवनमर्यादापालनं त्रिभिरुच्यते ॥ १ ॥
चतुर्विंशे रवेरर्वाक् स्वर्भान्वादिस्थितिः क्रमात् ।
अतलादिविलस्वर्गमर्यादाः सप्त वर्णिताः ॥ २ ॥

सूर्यमारभ्य ध्रुवान्तं सन्निवेशं निरूप्येदानीं सूर्यादधस्तान्निरूपयति । अधस्तादिति । स्वर्भानू राहुः । अलभत लेभे । सिंहिकायाः पुत्रः ॥ १ ॥

ग्रहणं वक्तुमाह । यददः प्रतपतस्तरणेर्मण्डलम् । अमृतपाने मध्यप्रवेशेन तयोर्व्यवधानं करोतीति तथा । अत एवैताभ्यां सूचितत्वाद्वैरमनुबध्नातीति तथा ॥ २ ॥

भागवतं चक्रं परिवर्तमानं परिभ्रमदाभि अभिमुखं मुहूर्तमवस्थितः सन् इत्येवमन्तरा तद्व्यवस्थानमुपरागं ग्रहणं वदन्ति । तत्र च ऋजुवक्रस्थितिभ्यां सर्वग्रासार्धग्रासौ न तु वस्तुतो ग्रासोऽस्ति दूरान्तरत्वात् ॥ ३ ॥

तावन्मात्रे योजनायुते ॥ ४ ॥

अन्तरिक्षं गृहद्दीनं तस्यावधिमाह । यावद्वायुः प्रवाति तीव्रो वाति । तस्याप्यवधिमाह । यावन्मेघाः ॥ ५ ॥

पृथिव्या उपरि भूर्लोकावधिमाह । यावद्धंसादयः पार्थिवा विकाराः ॥ ६ ॥

योजनायुतान्तरेण प्रत्येकमुच्छ्रिताः आयामो यः पतादस्य तावद्विस्तारेण ॥ ७ ॥

सामान्येन विवराणि वर्णयति । एतेष्वित्यादिना आपातलइत्यतः प्राक्तनेन ग्रन्थेन । एतेषु दैत्यादयो निवसन्तीत्यन्वयः । कथम्भूतेषु । अधिकः .कामभोगश्च ऐश्वर्यानन्दश्च विभूतिश्च सम्पत्तिस्तैः सुसमृद्धा भवनादयो येषु । कथम्भूताः । नित्यप्रमुदिता अनुरक्ताः कलत्रादयो येषां न प्रतिहतः कामो येषाम् । मायया विनोदो येषाम् ॥ ८ ॥

---

(१) भूति इत्येतद्वेघपुस्तकेभ्यः पतितमितिप्रीयते ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सूर्यादारभ्य ध्रुवपर्यन्तं दिवोमण्डलसन्निवेशमनुवर्ण्याथ सूर्यादधस्तात्स्वर्भान्वादिमण्डलमनुवर्णयति । अधस्तादित्यादिना । सूर्यस्याधस्तादयोजनानामयुते स्वर्भानुः राहुर्नक्षत्रवच्चरतीत्येके वदन्ति तं विशिनष्टि । योऽसावितिः। सोऽसौ स्वर्भानुर्भगवत्कृपया-मरत्वं ग्रहत्वं चालभत लेभे केवलभगवत्कृपैव तस्यामर-त्वादौ हेतुः न तु तस्य तद्योग्यतास्तीत्याह । हि यतः सिंहि-कायाः पुत्रः राहुरसुराधमः अत एवामरत्वाद्यनर्हः किं तस्य भगवत्कृपाविषयत्वोपपादकमित्याह । तस्येति । तस्य राहोर्जन्म कर्माणि च उपरिष्टादष्टमस्कन्धे वक्ष्याम नाद्युनेत्यर्थः तत्रैव स्फुटीभविष्यतीति नात्रावसर इति भावः ॥ १ ॥

राहुप्रसङ्गादुपरागस्वरूपं वक्तुमाह । यदद इति । अतपत-स्तरणेः सूर्यस्य यददः यत्तत्प्रसिद्धं मण्डलं तद्विस्तारतो योजना-युतमयुतयोजनविस्तृतमाचक्षते ततः सूर्यमण्डलादुपरितन-सोममण्डलं द्वादशसहस्रयोजनविस्तृतं सूर्यमण्डलादधस्ततो राहोर्मण्डलं तु त्रयोदशसहस्रयोजनविस्तृतमतः सूर्यसोममण्ड-लाभ्यां स्वर्भानोर्मण्डलस्य विस्तृतत्वात्कदाचित्सूर्यसोममण्ड-लाच्छादकत्वं सम्भवतीति भावः । यः स्वर्भानुस्तद्व्यवधानकृद-मृतपानदशायां तयोः सूर्याचन्द्रमसोरभिमुखं धावति ताभ्यां कल-हायाभिमुखं गच्छतीत्यर्थः ॥ २ ॥

तदभिधावनं निशम्य द्वयोरुभयोरपि रक्षणाय भगवता परम-पुरुषेण भागवतं भगवत्सम्बन्धि तत् सुदर्शनाख्यमस्त्रं तेजसा दुर्वि-षहं दुःखेनापि सोढुमशक्यं मुहुर्मुहुः परिभ्रममाणं प्रति मुहूर्त-मभिमुखतयावस्थितो राहुरुद्विजमानो भयमापन्नश्चकितहृदय-श्चञ्चलचित्तः आरादेव दूरादेव निवर्तते तदेवोपरागो ग्रहण-मिति जनाः वदन्ति अभिधावनदशायां यत् स्वमण्डलेन सूर्या-चन्द्रमसोर्मण्डलाच्छादनं तदेव ग्रहणमिति जना उपरागस्वरू-पामिदा वदन्तीत्यर्थः । तत्र ऋजुवक्रस्थितिश्यामार्धग्राससर्वग्रासौ न तु वस्तुतो ग्रासोऽस्तीति दूरान्तरत्वात् ॥ ३ ॥

ततः स्वर्भानोरधस्तात्तावन्मात्र एवायुतयोजनान्तर एव सिद्धादीनां सदनानि स्थानानि ततोऽधस्तात्सिद्धादिसदनेभ्योऽधस्तात् यक्षा-दीनां विहाराजिरं विहारस्थानमन्तरिक्षं ग्रहहीनं वर्तते तस्या-वधिमाह । यावद्वायुः प्रधावति भृशं धावति तस्याप्यवधि-माह । यावन्मेघा उपलभ्यन्त इति ततो यक्षादीनां विहा-रान्तरिक्षादधस्ताच्छतयोजनान्तरेणेयं पृथिवी भूर्लोको वर्तते पृथिव्या उपरि भूर्लोकस्यावधिमाह । यावदिति । यावद्धंसादयः पक्षिश्रेष्ठा पतत्रिणः उत्पतन्त्युद्गच्छन्ति तावद्भूर्लोकमित्यर्थः ॥ ४ ॥ ॥ ५ ॥ ६ ॥

भूमण्डलं तु सप्तप्रश्नमुपवर्णितं प्रागित्याह । उपवर्णित-मिति । यद्भूमेः सन्निवेशेनावयवविन्यासेनावस्थानं तथा तदु-पवर्णितमेव ध्रुवमण्डलादारभ्य भूपर्यन्तो लोकसन्निवेश उक्तः अथ भूमेरधस्तनानां लोकानां सन्निवेशमाह । अवनेरपीत्यादिना उत्तराध्यायान्तेन ग्रन्थेन। अवनेर्भूलोकादधस्तात् सप्तभूविवरा भूम्या-मेवविवराः सन्ति ते चैकशो योजनानामयुतं तेनान्तरा मध्य उच्छ्रितं भावे कः उच्छ्रायः औन्नत्यं योजनायुतान्तरोच्छ्रितमायामो दैर्घ्यं विस्तारश्चायुतयोजनपरिमितस्तेषां समाहारद्वन्द्वः तेन योजनायुतान्तरोच्छ्रितायामविस्तारेण उपकल्पिता विवराणामूर्ध्वं भूमेः योजनायुतोच्छ्रितस्तथा विवानामायामो विस्तारश्चायुतयो-जनपरिमित इत्यर्थः तारतम्येन भोगतारतम्येन चोपक्लृप्ताः भू-कापेक्षया विवरेषु भोगाधिक्यमस्तीत्यर्थः विवराणि सप्त विवि-शति । अतलमित्यादिना । पातालमित्यन्तेन ग्रन्थेन ॥ ७ ॥

तारतम्येनेत्येतदेव सप्तविवरसाधारण्येन दर्शयति । एते-ष्वित्यादिना अथातल इत्यतः प्राक्तनेन ग्रन्थेन । एतेषु बिल-स्वर्गेषु दैत्यादयो निवसन्तीत्यन्वयः कथम्भूतेषु स्वर्गादप्यधिक-कामभोगश्चैश्वर्यानन्दः ऐश्वर्यप्रसक्तिसन्तोषश्च भूतिः सम्पत्ति-विभूतिरीशितव्यवर्गश्चाशीः शब्दस्य नित्यसापेक्षत्वात् समास-अभितः सुसमृद्धानि भवनान्यागाराणि उद्यानानि क्रीडा-स्थानानि विहारस्थानानि च येषु यत्र क्रीडा खेलनं विहार-स्त्रीसम्भोगः कथम्भूताः नित्यप्रमुदिता अनुरक्ताः कलत्र-येषां तथाभूताः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अथाचष्टिप्रातलादिलोकनिवासिनामैश्वर्यं श्रीनारायणाभा-रस्यव्यञ्जकमिति तदिह निरूपयति । तत्रादौ शनैश्चरपर्यन्तानां ग्रहाणां स्थितिं निरूप्य राहोः स्थितिः किमिति न निरूपितेति त्वरितमतेर्मन्दस्याशङ्कां परिहरंस्तां निरूप्य सूर्यादीनां मण्डल-परिमाणं निरूपयति । अधस्तादिति । एके पौराणिकाः स्वर्भानुं नक्षत्रवच्चसोमध्यमण्डले मेरुं परितः प्रादक्षिण्येन चरतीति वदन्ति केचिन्मौहूर्तिकाः मानसोत्तरबहिर्भूतप्रान्तभूमेः पा-समुदेत्य पुनः पश्चिमभागे भूमावेवास्तमित्वा पातालविवरमध्य पूर्वदिशं गत्वा मानसोत्तरे बहिः प्रान्तभूमेरेव पूर्वस्यां दिशि उदेत्य पश्चिमस्यां दिशि भूमावेवास्तमेतीत्येवं संक्रिम्य एव कदाचित्पातालग्रहणमभूदिति च भाषन्ते अपरे मेरोः दक्षिणेन नभोवलये चरन् पश्चिमत उदेत्य पूर्वस्यां दिश-गच्छतीत्याचक्षते अतदर्हः अमरत्वायोग्यः ॥ १ ॥

तरणिमण्डलं दशसहस्रयोजनविस्तृतं ततो द्विगुणं सोमम-ण्डलं विंशतिसहस्रयोजनविस्तृतं द्वादशसहस्रमिति दशसहस्रमि-त्यर्थः सोममण्डलाद्द्विगुणं चत्वारिंशत्सहस्रयोजनेन विस्तृतं राहुमण्डलं त्रयोदशसहस्रमित्यनेन त्रिदशेति युक्त्या त्रिंशत्संख्या लभ्यते पुनश्च दशसंख्या सोममण्डलाद्द्विगुणोक्त्या कुत एवं कल्पना यथाश्रितव्याख्यानमन्तरेणेतिचेन्न ।

"राहुसोमरवीणां तु मण्डलाद्द्विगुणोक्तिताम् ।

विनैव सर्वमुन्नेयम् इति वचनात् ॥ २ ॥

भागवतं भगवतः प्रियं "तदस्य प्रियम्„ इत्यस्मिन्नर्थे अण्प्र-त्ययः परिवर्तमानं मण्डलमिति शेषः चक्राभिमुखमवस्थि-उद्विजमानः वेगेन चलन् आरात् दूरात् ॥ ३ ॥

तावन्मात्रे अयुतमात्रे ॥ ४—५—६ ॥

भूविवराः पातालादयः तारतम्येनोपक्लृप्ताः सुखादिना मान्यविशेषाभ्यामूर्ध्वाधः क्रमेणेति वा ॥ ७ ॥

समृद्धिरुद्रेकः विभूतिः सन्ततिपरम्परा समृद्धभवनोद्यान-क्रीडेषु आविहारो यत्र ते तथा तेष्वाक्रीडः मिथुनक्रीडा-ण्यपर्यन्त आविहारो भूलोकविहारविलक्षणत्वादीश्वर्यादिच्छा-तथात्वं वराद्वा ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एक इति । स्वमते तु अवहाख्यवायुबहिर्भूतत्वान्नक्षत्रवच्चरणं नास्ति । किन्तु स्वगस्यैवेति ॥ १ ॥

तत्रोमण्डलं रथनीडाभ्यन्तरस्थितं तेजश्चक्रम् ॥ २—७ ॥

ईश्वराद समर्थादपि ॥ ८—२८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सूर्यादधोऽधः स्वर्भानुसिद्धादीनां स्थितिं भुवः ।
अतलादीनि सप्तापि चतुर्विंशेऽवदन्मुनिः ॥

न तदमरत्वं ग्रहत्वं चाहृतवान् सः ॥ १ ॥

ग्रहत्वं वक्तुमाह । यदद इति । पर्वणि अमावास्यापौर्णमास्योः तयोर्भूतलस्यजनचक्षुषां व्यवधानं कर्तुममृतपाने मध्यप्रवेशेन तयोर्व्यवधानं पूर्वं कृतवानित्यतः ताभ्यां सूचितत्वाद् वैरमनुबध्नातीति स यथा ॥ २ ॥

उभयत्र सूर्ये चन्द्रेऽपि तद् प्रसिद्धं चक्रं परिवर्तमानं परिभ्रमद् दृष्ट्वेति शेषः । अभि अभिमुखमवस्थितः सन् तदवस्थानमेवोपरागं वदन्ति । तत्र च ऋजुवक्रस्थितिभ्यां सर्वग्रासार्धग्रासौ न तु वस्तुतो ग्रासोऽस्ति अयुतयोजनान्तरत्वाद ॥ ३ ॥

तावन्मात्रे योजनायुते ॥ ४ ॥ ५ ॥

पृथिव्या उपरि भूर्लोकावधिमाह । यावद्धंसादयः पार्थिवा विकाराः ॥ ६ ॥

अधस्ताद् अधोऽधोवयवोऽवित्यर्थः । भूविवरा भुवो विवरभूतान्येवातलादीनीत्यर्थः । योजनायुतान्तरेण योजनायुतावधीत्यर्थः । "अन्तरमवकाशावधि"इत्यमरः । भूतलाद्योजनायुतावधौ अतलं तस्माद्योजनायुतावधौ वितलमित्येव मायामविस्तारेणापि योजनायुतावधिना उपक्लृप्ताः दैर्घ्यविशालताभ्यां तथा एवेत्यर्थः । उच्छ्रितत्वं तु यथा सम्भवं ज्ञेयम् ॥ ७ ॥

सामान्येन विवराणि वर्णयति । एतेष्वित्यादिना । भूतिः प्रभावः विभूतिः सम्पत्तिः । ईश्वरादिन्द्रादेरपि ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ सूर्यादधः स्वर्भान्वादिस्थितिमतलादिस्थितिं चाह । विवरनादित्यादिभिर्स्त्रिभिरध्यायैः । "भूमेर्योजनलक्षे तु सौरं मैत्रेय मण्डलम्"इति श्रीपराशरोक्तिः तत्र सवितुरधस्तात् योजनायुते स्वर्भानू राहुः असदर्होऽपि भगवदनुकम्पया अमरत्वं ग्रहत्वं चालभत तच्च उपरिष्टादष्टमे स्कन्धे ॥ १ ॥

यदो जगत् प्रतपतस्तरणेर्यत्प्रसिद्धं मण्डलं तद्विस्तरतो योजनायुतं योऽमृतपाने मध्यप्रवेशेन तयोः सूर्याचन्द्रमसोर्व्यवधानं कृतवानिति तथा अत एव ताभ्यां सूचितत्वात् वैरमनुबध्नातीति वैरानुबन्धो यः स पर्वणि सूर्याचन्द्रमसावभिधावति ॥ २ ॥

तदभिधावन्तं निशम्य दृष्ट्वा दयितं प्रियतमं भागवतं चक्रं तुर्विषहं सुरासुरैर्दुःखेनापि सोढुमशक्यं सुदर्शनं नामास्त्रमुभयत्र उभयोः रक्षणाय भगवता प्रयुक्तमत एव परिवर्तमानं परिभ्रममाणं निशम्येत्यत्रापि योज्यं तत्तेजसा सुदर्शनतेजसा मुहुरुद्विग्नहृदय अभि तयोरभिमुखे मुहूर्तमवस्थितः सन् आराद्दूरादेव निवर्तते इतीत्थमभिमुखावस्थानात्तदुपरागं लोका वदन्ति तत्र च समविषमावस्थितिभ्यां सर्वग्रासार्द्धग्रासौ प्रतीयेते ॥ ३ ॥

ततः स्वर्भानोः तावन्मात्रे योजनायुते ॥ ४ ॥

ततः सिद्धादिसदनमर्यादातः यक्षादिविहाराजिरमन्तरिक्षमनेनैव सूर्यभूम्योरन्तरस्य योजनलक्षपरिमितत्वं मन्तव्यम् ॥ ५ ॥ ६ ॥

एकैकशो योजनायुतान्तरेण योजनायुतोच्छ्रायेण आयामविस्तारेण वैपुल्यस्य तावता विस्तारेण च उपक्लृप्ताः उपन्यस्ताः ॥ ७ ॥

अतलादिसाधारणगुणान् दर्शयति । एतेष्वित्यादिना । अधिकं काम्यन्ते इति कामाः भोग्यपदार्थास्तेषां भोगश्च ऐश्वर्यानन्दश्च भूतिरनुभूतिर्भोग्यपदार्थसंपत्तिश्च तैः समृद्धा भवनादयो येषु नित्यप्रमुदिता अनुरक्ताश्च कलत्रादयो येषां ते ईश्वराल्लोकेश्वरादिन्द्रादेः न प्रतिहतः कामो येषां ते मायया स्वाविद्याकौशलेन विनोदो येषां ते दैत्यादयो निवसन्ति ॥ ८ ॥

---

भाषाटीका ।

श्रीशुकदेव जी बोले सूर्य देव के नीचे दश हजार योजन पर राहु नक्षत्र सरीका घूमता है ऐसा कोई कहते हैं जोकि स्वयं असुरों मे अधम है तौ भी सिंहिका का पुत्र भगवान् की कृपा से अमर तथा ग्रह होगया है तात! इस का जन्म कर्म सब आगे हम कहैं गे ॥ १ ॥

जो यह तपते वाला सूर्य देव का मण्डल है तिस को विस्तार मे दशहजार योजन कहते हैं बारा हजार योजन चन्द्रमा मण्डल है तेरा हजार योजन राहुका मण्डल है यह राहु समुद्रमन्थने पर अमृत के वास्ते सूर्य चन्द्र के बीच में छिपा तब उनने विष्णु को बतादिया था तिस का बैर बान्धकर पूर्णिमा अमावास्या को चन्द्रमा सूर्य दोनों पर दौडता है ॥ २ ॥

इस बात को जानकर चन्द्र सूर्य दोनों की रक्षा करने की इच्छासे छोडा हुआ जो भगवान् का अति प्रिय भागवत सुदर्शनचक्र अस्त्र तिसके तेजसे बारं बार घूमने से दुःसह तेजको जानकर मुहूर्त भर बडे उद्वेगको प्राप्त होकर बडे चकित हृदय से शीघ्रही निवृत्त होजाता है तिसीको सब लोग ग्रहण कहते हैं ॥ ३ ॥

तिसके नीचे सिद्ध चारण विद्याधरों के स्थान उतनेही दूरपर हैं ॥ ४ ॥

तिसके नीचे जहांतक वायु चलता है जहां तक मेघ मालूम पडते हैं तहांपर यक्ष राक्षस पिशाच प्रेत भूत गणों के विहारका चौगान अन्तरिक्ष लोक है ॥ ५ ॥

तिसके नीचे सौ योजन पर यह पृथिवी है जहां कि हंस भास बाज सुपर्ण आदि बडे पक्षी उडते हैं ॥ ६ ॥

भूमी के स्थापन की स्थितीतो वर्णन करदी है पृथिवी के नीचेभी सात भूछिद्र हैं एक एक दश हजारयोजन के दूरमें लंबे चौडे भूमिके छिद्र हैं अतल वितल सुतल तलातल महातल रसातल पाताल ये सात विवर हैं ॥ ७ ॥

येषु महाराज ! मयेन मायाविना विनिर्मिताः पुरो नानामणिप्रवरप्रवेकविरचितविचित्रभवनप्राकार-गोपुरसभाचैत्यचत्वरायतनादिभिर्नागासुरमिथुनपारावतशुकसारिकाकीर्णकृत्रिमभूमिभिर्विवरेश्वरगृहो-त्तमैः समलंकृताश्चकासति ॥ ९ ॥

उद्यानानि चातितरां मनइन्द्रियानन्दिभिः कुसुमफलस्तवकसुभगकिसलयावनतरुचिरविटपि-विटपिनां लताङ्गालिङ्गितानां श्रीभिः समिथुनविविधविहङ्गमजलाशयानाममलजलपूर्णानां झषकुलोल्ल-ङ्घनक्षुभितनीरनीरजकुमुदकुवलयकल्हारनीलोत्पललोहितशतपत्रादिवनेषु कृतनिकेतनानामेकविहार-कुलमधुरविविधस्वनादिभिरिन्द्रियोत्सवैरमरलोकश्रियमतिशयितानि ॥ १० ॥

यत्र हवाव न भयमहोरात्रादिभिः कालविभागैरुपलक्ष्यते ॥ ११ ॥

यत्र हि महाहिप्रवरशिरोमणयः सर्वं तमः प्रबाधन्ते ॥ १२ ॥

भाषाटीका ।

इतने बिलस्वर्गों में स्वर्ग से भी अधिक काम भोग ऐश्वर्य आनन्द विभूतियों से युक्त बडे भारी मकान बगीचा विहार स्थानों में नित्य मुदित अनुरक्त स्त्री पुत्र बन्धु सुहृद अनुचरों के सहित मालिक होकर ईश्वर से भी जिनको शंका नहीं है ऐसे माया में विनोद करने वाले दानव दैत्य काद्रवेय लोग सब निवास करते हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च । हे महाराज ! येषु मयेन निर्मिताः पुरश्च चकासती-त्यन्वयः । कथम्भूताः नाना ये मणिप्रवरास्तेषां प्रवेका मुख्यास्तै-र्विरचितैर्विचित्रैर्भवनादिभिस्तथा विवरेश्वराणां गृहोत्तमैश्च सम-लङ्कृताः । कीदृशैर्गृहोत्तमैः नागाश्चासुराश्च मिथुनभूताः पाराव-तादयश्च तैराकीर्णाः कृत्रिमा भूमयो येषु तैः । पाठान्तरे नाना स्वनवं मिथुनविशेषणम् ॥ ९ ॥

उद्यानानि चातितराममरलोकश्रियमतिशयितानि येषु चकासती-त्यन्वयः । काभिः श्रीभिः । केषां तेषां कुसुमफलस्तवकाश्च सुभ-गकिसलयानि च तैरवनता रुचिरा विटपा येषां विटपिनां लता-नामङ्गैरालिङ्गितानां श्रीभिः तथा समिथुनाश्चक्रवाकादिमिथुन-सहिता ये विविधा विहङ्गास्तद्युक्तानां जलाशयानां च श्रीभिः कीदृशानाम् अमलैर्जलैः पूर्णानां पुनरपि कैरतिशयितानि झष-कुलोल्लङ्घनेन क्षुभितं यज्जलाशयानां नीरं तस्मिन् यानि नीरजा-दीनि तेषां वनेषु कृतं निकेतनं यैस्तेषामर्थात् पक्षिणामेकोऽखण्डो यो विहारस्तेनाकुलाश्च ते मधुराश्च विविधाः स्वनादयस्तैर्ये इन्द्रियोत्सवास्तैश्च । यद्वा । समिथुनेत्यादेरुत्तरेणैव संबन्धः । मन-इन्द्रियानन्दिभिरिति स्वनादीनां विशेषणं तत्र नीरजं सामा-न्येन कमलं लोहितं शतपत्रं तद्विशेषः ॥ १० ॥

अहोरात्रादिभिर्यद्भयं तन्नोपलक्ष्यते सूर्याद्यभावात् ॥ ११-१२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च हे महाराज ! येषु बिलस्वर्गेषु मायाविनासुरेण मयेन निर्मिता पुरः पुराणि चकासति इत्यन्वयः कथम्भूता नानाविधा ये मणिप्रवरास्तेषां प्रवेका मुख्यास्तैर्विरचितैर्विचित्रैर्भ-वनादिभिस्तथा विवरेश्वराणां गृहोत्तमैश्च समलङ्कृताः कथम्भूतैर्गृ-गृहोत्तमैर्नागाश्चासुराश्च मिथुनीभूताः पारावतादयश्च तैराकीर्णाः सङ्कुलाः कृत्रिमा वेदिकादिरूपा भूमयो येषु तैः नानास्वन मिथुनेति पाठे नानास्वनवं मिथुनीभूतपारावतादीनां विशेष-णम् ॥ ९ ॥

तथा कनकलताभिरालिङ्गितानां संश्लिष्टानां कुसुमस्तवकैः फल-स्तवकैः सुन्दरकिसलयैश्चावनता नम्रा रुचिरा विटपाः शाखा ये-तेषां विटपिनां वृक्षाणामुद्यानानि क्रीडावनानि मनस इन्द्रि-याणां चानन्दिनीभिरानन्दकारिणीभिः श्रीभिर्विवरेश्वरैर-रमरलोकश्रियमतिशयितानि अतिक्रान्तानि येषु विवरेषु चका-सतीत्यन्वयः पुनः कैरमरलोकश्रियमतिशयितान्युद्यानानि चका-सति अमलैः स्वच्छैः जलैः पूर्णानां समिथुनानां चक्रवाकादिमिथु-नसहिता ये विविधा विहङ्गास्तेषां कुलं समूहस्तस्य ... हलो येषु तेषां जलाशयानां सम्बन्धि झषसमूहस्योल्ल-... विहारेण क्षुभितं सञ्चलितं यन्नीरं जलं तस्मिन् यानि नीर-जादीनि तेषां वनेषु कृतं निकेतनं स्थानं येषां पक्षिणां ... शेषः सामर्थ्यान्नानाविधैर्विहारैराकुला मधुरा ये विविधाः स्वरादयः आदिशब्देन गमनेक्षणादयो विवक्षिताः तैः कथम्भूतैः इन्द्रियाणामानन्दजनकैः स्त्रीभिरिति यावत् उक्तविधविटपि-... मुक्तविधानां मनइन्द्रियाणां चानन्दिभिस्त्रीभिरिन्द्रियोत्सवै-उक्तविधानां पक्षिणां चोक्तविधैः स्वरादिभिश्चामरलोकश्रियम-ति-शयितान्युद्यानानि येषु विवरेषु चकासतीत्यर्थः ॥ १० ॥

यत्र हवाव येषु हि विवरेषु कालविभागैः कालावयवैः अहोरात्रादि-भिर्भयं नोपलक्ष्यते तत्रत्यानामायुषो भूयस्त्वादिति भावः यत्र विवरेषु ये महान्तोऽहिप्रवराः सर्पश्रेष्ठास्तेषां ये शिरोमणयः फणामणयः ते सर्वं कृत्स्नं तमोऽन्धकारं प्रबाधन्ते निरस्यन्ति ॥ ११ ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

येषु विवरेषु पुरः पुराणि चकासति बिलस्वर्गेषु ... मायया र्थक्रियाकरणशक्तिलक्षणयोपादानभूतया निर्मिताः नाना-मणीनां प्रवेकैः श्रेष्ठैर्विरचितविचित्रभवनादिभिरुपलक्षिताः ...

न वा एतेषु वसतां दिव्यौषधिरसरसायनान्नपानस्नानादिभिराधयो व्याधयो वलीपलितजरादयश्च देहवैवर्ण्यदौर्गन्ध्यस्वेदक्लमग्लानिरिति वयोऽवस्थाश्च भवन्ति ॥ १३ ॥

न हि तेषां कल्याणानां प्रभवति कुतश्चन मृत्युर्विना भगवत्तेजसश्चक्रापदेशात् ॥ १४ ॥

यस्मिन् प्रविष्टेऽसुरवधूनां प्रायः पुंसवनानि भयादेव स्रवन्ति पतन्ति च ॥ १५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

देवालयमायतनं पापाशायद्वृक्षमूलस्थानं नाना स्वनैः मिथुनतो वर्तमानैः पारावतादिभिराकीर्णाः कृत्रिमभूमयो येषु ते तथा ...धिपेश्वराणां गृहोत्तमैरन्तःपुरश्रेष्ठैः ॥ ९ ॥

येषु विवरेषूद्यानानि चकासति विटपिनां वृक्षाणां मनआदीन्द्रियानन्दहेतुभिर्विटपैः शाखाभिः कृताभिः श्रीभिः समृद्धिभिः ...केति वृक्षविशेषणममृतजलपूर्णानां समिथुनानां विहङ्गकुलानां कोलाहलशब्दयुक्तानां जलाशयानां सरसां सम्बन्धिनां मत्स्यकुलानामुल्लङ्घनेनोत्पत्य पतनेन क्षुभितनीरचञ्चलनीरजादिसमुदायेषु कृतनिवासानामनेकविहाराकुलानां मधुकराणामिन्द्रियोत्सवैर्मधुरस्वनादिभिः स्वर्गश्रियमतिशायितानि अतिशयोपेतान्युद्यानानीति सम्बन्धः नीरजं सामान्येन कमलं कह्लारं सौगन्धिकं शतपत्रं रक्तकमलम् आदिशब्देन पुण्डरीकादयो गृह्यन्ते "पुण्डरीकं सिताम्बुजम्" इत्यभिधानम् ॥ १०—११ ॥

(१) शार्वरं शर्वरीजन्यमिव स्थितं तमः ॥ १२॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

येषु पुरश्चकासतीत्यन्वयः। कीदृश्यः नानाभूतेषु मणिप्रवरेष्वपि ये प्रवेका मुख्याः तैर्विरचिता विचित्रा ये भवनादयस्तैर्देहोत्तमैश्चालङ्कृताः कीदृशैः नागाश्च असुराश्च मिथुनभूताः पारावतादयश्च तैराकीर्णाः कृत्रिमा भूमयो येषु तैः नाना स्वन ...ति पाठः सुगमः ॥ ९ ॥

यासु उद्यानानि अमरलोकश्रियमतिशयितानि अतिक्रान्तानि चकासतीत्यन्वयः। काभिः कुसुमादिभिरवनता रुचिरा विटपा येषां तेषां विटपिनां श्रीभिः मनइन्द्रियानन्दिभिरिति पुंस्त्वमार्षम्। तथा समिथुनाः सस्त्रीपुंसा विविधा विहङ्गमा येषु तेषां जलाशयानां झषकुलोल्लङ्घनैः क्षुभितेषु नीरेषु यानि नीरजादीनि तेषु कृतनिकेतनानामर्थात् पक्षिणामेकोऽखण्डो यो विहारस्तेनाकुला मधुरा विविधाः स्वनादयस्तैर्यं इन्द्रियोत्सवास्तैश्च अत्र लोहितं शतपत्रश्च नीरजविशेषौ लौहित्यदलशतत्वाभ्याम् ॥ १०—१२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

हे महाराज! येष्वतलादिषु मायाविना आश्चर्यप्रकाशकारविद्याचना मयेन विनिर्मिता नानाविधानां मणिप्रवराणां ...मुख्यैर्विरचितानि यानि विचित्राणि भवनादीनि तैः नागासुरैर्मिथुनभूतैः पारावतादिभिराकीर्णाः कृत्रिमा भूमयो येषु ...विवरेश्वरगृहोत्तमैश्च समलङ्कृताः पुरः पुराणि चकासति ॥९॥

किञ्च। येषु कुसुमफलस्तवकैः सुभगकिसलयैश्चावनता रुचिरा विटपा येषां विटपिनां लतानामङ्गैरालिङ्गितानां श्रीभिः तथा अमलजलपूर्णानां समिथुनाः चक्रवाकादिमिथुनसहिता ये विविधा विहङ्गास्तद्युक्तानां जलाशयानाञ्च श्रीभिः झषकुलोल्लङ्घनक्षुभितेषु नीरेषु यानि नीरजादीनि तेषां वनेषु कृतनिकेतनानामर्थाद्भ्रमरादीनामेकोऽखण्डो यो विहारस्तेनाकुलाश्च ते मधुराश्च विविधस्वनादयस्तैर्मनइन्द्रियानन्दिभिः ये इन्द्रियोत्सवास्तैश्च अतितराममरलोकश्रियमतिशयितानि उद्यानानि चकासति यत्र येषु अहोरात्रादिभिर्यद्भयं तन्नोपलक्ष्यते सूर्याद्यभावात् ॥ १०—११ ॥

तर्हि कुतस्तत्र प्रकाश इत्यत आह। यत्रेति ॥ १२ ॥

भाषाटीका

हे महाराज! परीक्षित्‌जी जिन भूमि विलों में माया जाननेवाले मयदैत्य के बनाये पुर हैं सो नानाप्रकार के मणियों में श्रेष्ठ मणियों से रचित विचित्र घर दीवाल गोपुर सभा आयतन गृह अंगना चैत्य इत्यादिकों से युक्त हैं नाग असुर स्त्रियों सहित उनमें हैं कबूतर तोता मैना इनोंसे वे स्थान भरे हैं अच्छी बनी हुई उहांपर जमीन हैं उहां के मालकों के अच्छे घर हैं इन सबों से पातालादिक शोभित होरहे हैं ॥ ९ ॥

जिनों मे अत्यन्त मन इन्द्रियों के आनन्द देनेवाले फूलों के गुच्छे सुन्दर कोमलडाली इनों से झुकते हुये मनोहर शाखा वाले पेड हैं जो कि लताओं के अंगों से आलिंगित हैं औरभी स्त्रियों के सहित नाना प्रकार के पक्षि जिन मे हैं ऐसे तालावों के निर्मल पूर्णजलों की शोभा से वे स्थान युक्त हैं मछलियों के कूदने से चंचल जो तलावों का जल तिसमे जो कमल तिनके वनोंमे स्थान करने वाले पक्षियों का एक अखण्ड जो विहार तिस से व्याकुल जो भौंरा तिन के जो नाना प्रकार के शब्द तिनोंसे जो इंद्रियों के आनंद तिनों से देवतों की संपत्ति को जीत जाने वाले बगीचा उहां पर लगे हुये हैं ॥ १० ॥

जहांपर सूर्य के विना रात दिन न होने से काल के बीतनेका भय नहीं जाना जाता है ॥ ११ ॥

जहां पर बडे भारी सर्पों के मणियों से सब अन्धकार का नाश होजाता है ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

क्लमः श्रमः ग्लानिरनुत्साहः ॥ १३ ॥
कल्याणानां मङ्गलरूपाणाम् ॥ १४ ॥
यस्मिन् भगवत्तेजसि प्रविष्टे पुंसवनानि गर्भाः "आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः" इति स्रावपातौ ज्ञेयौ ॥ १५ ॥

(१) शार्वरन्तम इति मूले।

अथातले मयपुत्रोऽसुरो बलो निवसति येन ह वा इह सृष्टाः षण्णवतिर्मायाः काश्चनाद्यापि मायाविनो धारयन्ति यस्य च जृम्भमाणस्य मुखतस्त्रयस्त्रीगणा उदपद्यन्त स्वैरिण्यः कामिन्यः पुंश्चल्य इति या वै बिलायनं प्रविष्टं पुरुषं रसेन हाटकाख्येन साधयित्वा स्वविलासावलोकनानुरागस्मितसंलापोपगूहनादिभिः स्वैरं किल रमयन्ति यस्मिन्नुपयुक्ते पुरुष ईश्वरोऽहं सिद्धोऽहमित्ययुतमहागजबलमात्मानमभिमन्यमानः कत्थते मदान्ध इव ॥ १६ ॥

ततोऽधस्ताद्वितले हरो भगवान् हाटकेश्वरः स्वपार्षदभूतगणावृतः प्रजापतिसर्गोपबृंहणाय भवो भवान्या सह मिथुनीभूत आस्ते यतः प्रवृत्ता सरित्प्रवरा हाटकी नाम भवयोर्वीर्येण यत्र चित्रभानुर्मातरिश्वना समिध्यमान ओजसा पिबति तन्निष्ठ्यूतं हाटकाख्यं सुवर्णं भूषणेनासुरेन्द्रावरोधेषु पुरुषाः सह पुरुषीभिर्धारयन्ति ॥ १७ ॥

ततोऽधस्तात् सुतले उदारश्रवाः पुण्यश्लोको विरोचनात्मजो बलिर्भगवता महेन्द्रस्य प्रियं चिकीर्षमाणेनादितेर्लब्धकायो भूत्वा बटुवामनरूपेण पराक्षिप्तलोकत्रयो भगवदनुकम्पयैव पुनः प्रवेशित इन्द्रादिष्वविद्यमानया सुसमृद्धया श्रियाऽभिजुष्टः स्वधर्मेणाराधयंस्तमेव भगवन्तमाराधनीयमपगतसाध्वस आस्तेऽधुनापि ॥ १८ ॥

नो एवैतत् साक्षात्कारो भूमिदानस्य यत्तद्भगवत्यशेषजीवनिकायानां जीवभूतात्मभूते परमात्मनि वासुदेवे तीर्थतमे पात्र उपपन्ने परया श्रद्धया परमादरसमाहितमनसा संप्रतिपादितस्य साक्षादपवर्गद्वारस्य यद्बिलनिलयैश्वर्यम् ॥ १९ ॥

यस्य ह वाव क्षुत्पतनप्रस्खलनादिषु विवशः सकृन्नामाभिगृणन् पुरुषः कर्मबन्धनमञ्जसा विधुनोति यस्य हैव प्रतिबाधनं मुमुक्षवोऽन्यथैवोपलभन्ते ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सवर्णे रताः स्वैरिण्यः कामिन्यस्त्वसवर्णेऽपि तत्राप्यतिचञ्चलाः पुंश्चल्यः । बिलायनं बिलायतनम् । साधयित्वा सम्भोगसमर्थं कृत्वा । स्वे ये असाधारणा विलासास्तत्पूर्वकोऽवलोकस्तेनानुरागयुक्तं स्मितं तेन संलाप उपगूहनं च तदादिभिः यस्मिन् हाटकाख्ये रसे उपयुक्ते सेविते ॥ १६ ॥

भवयोर्भवस्य भवान्याश्च चित्रभानुरग्निस्तेन निष्ठ्यूतं फूत्कृत्य त्यक्तम् असुरेन्द्राणामवरोधेष्वन्तःपुरेषु पुरुषीभिः स्त्रीभिः ॥ १७ ॥

सुतले बलिरधुनाप्यास्त इत्यन्वयः कथम्भूतः महेन्द्रस्य प्रियं कर्तुमिच्छता भगवता प्रथमं पराक्षिप्तमपहृतं लोकत्रयं यस्य सः । पुनर्भगवतोऽनुकम्पयैव तत्र प्रवेशितः सन् कीदृशेन योऽदितेः सकाशाद्भूत्वा बटुवामनरूपेण लब्धकायस्तेन ॥ १८ ॥

केचित्तस्य सुतलराज्यं भूमिदानफलं मन्यन्ते तन्निराकरोति । नो एवैतदिति । यद्बिलनिलये बिवरस्थाने ऐश्वर्यमेतद्भूमिदानस्य साक्षात्कारः फलं न भवत्येव कुत इत्यपेक्षायामेवम्भूतस्य दानस्य साक्षादपवर्गहेतुत्वादित्याह । यत्तत्प्रसिद्धं दानं तस्य तदेव भगवत्यशेषजीवनिकायानां जीवभूतश्चासावात्मभूतश्च सर्वान्तर्यन्ता चासावात्मारामश्चेत्यर्थः तस्मिन् सम्प्रतिपादितस्य ॥ १९ ॥

किञ्च यस्य नाम क्षुतादिषु च विवशोऽपि सकृदपि [illegible] कर्मबन्धं विधुनोति । कथम्भूतं यस्य प्रतिबाधनं निवृत्तिं मुमुक्षवोऽन्यथैवोपलभन्ते यन्निवृत्त्यर्थं योगसाङ्ख्यादिक्लेशानुभवन्तीत्यर्थः तं कर्मबन्धं त्यजति ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतेषु विवरेषु वसतामाधयो मनःपीडा व्याधयो [illegible] वलिस्त्वग्गतो विकारः पलितं केशेषु शौक्ल्यमेतद्भयमुक्त [illegible] जरा आदिशब्देन मतिभ्रंशादिर्गृह्यते तथा देहस्य वैवर्ण्यं [illegible] न्तरं दुर्गन्धः पूतिगन्धः स्वेदः खेदः क्लमः श्रमः ग्लानि [illegible] इति एते वयोऽवस्थाश्च दिव्यौषधैरसायनपानैर्दिव्यैरन्नैरन्य [illegible] भिश्च न भवन्ति ॥ १३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तथा तेषां बिलस्थानां कल्याणानां निर्दुःखानां कस्मादपि मृत्युर्न हि प्रभवति कोऽपि तान्मारयितुं समर्थो न भवतीत्यर्थः भवतीति पाठे मृत्युर्मरणं कुतश्चिदपि तेषां नास्तीत्यर्थः नर्हि प्रसक्ते किं तत्राह। विनेति। चक्रापदेशाच्चक्रसंज्ञाद्भगवत्तेजसोऽस्त्ररूपाद्विना सुदर्शनाख्याद्विनान्यस्मान्न मृत्युस्तस्मात्त्वस्त्यैवेत्यर्थः॥ १४॥

तदेवाह। यस्मिन् सुदर्शनाख्ये विवरेषु प्रविष्टे सत्यसुरवधूनां पुंसवनानि गर्भाः प्रायेण चक्रभयात् प्रस्रवन्ति पूर्णाश्चेत्पतन्तीत्यर्थः॥ १५॥

एवं सामान्यतो विवरानुपवर्ण्याथ विशेषेण विवर्णयिषुस्तावदतलं विवरमनुवर्णयति। अथेति। अतलाख्ये विवरे मयस्य पुत्रो बलो नाम निवसति तं विशिनष्टि। येनेति। येन बलेनैव सृष्टा इह षण्णवतिसंख्याका मायाः तासां मायानां मध्ये काश्चन माया अद्यापि केचिन्मायाविनो धारयन्ति यस्य बलस्य विजृम्भमाणस्य सतः तन्मुखात्त्रयः स्त्रीणां गणा उद्बभूवुः गणानेवाह। स्वैरिण्यः कामिन्यः पुंश्चल्य इति स्ववर्णरताः स्वैरिण्यः कामिन्यस्तनसवर्णारताः तत्राप्यतिचञ्चलाः पुंश्चल्यः त्रिविधास्ता विशिनष्टि। या वै स्वैरिण्यादयः स्त्रियो बिलायनं बिवरं प्रविष्टं पुरुषं हाटकाख्येन रसेन रसायनेन साधयित्वा स्ववशीकृत्य बल्लायनमिति पाठे तत्र प्रविष्टं पुरुषं रसेन बल्लायनं साधयित्वा सम्भोगसमर्थं कृत्वा स्वेऽस्नाधारणा विलासावलोकपूर्वको योऽवलोकः अनुरागयुक्तं यत् स्मितं संलापो रहोभाषणमुपगूहनमालिङ्गनमेवमादिभिः स्वैरं रमयन्ति किल हाटकाख्यं रसं विशिनष्टि। यस्मिन्निति। यस्मिन् रसे उपयुक्ते सेविते सत्युपयोक्ता पुरुषः आत्मानमयुतमहादिग्गजबलं मन्यमानो मदान्ध इवाहमीश्वरः सिद्धोऽहमिति कत्थते श्लाघते॥ १६॥

एवमतलाख्यो विवर उपवर्णितः। अथ वितलं वर्णयति। तत इति। ततोऽतलादधस्ताद्वितले विवरे भगवान् हरो रुद्रः हाटकेश्वरः स्वपार्षदैर्भूतगणैः प्रमथगणैः परिवृतः प्रजापतिसर्गः ब्रह्मणादिष्टः सर्गस्तस्योपबृंहणाय वृद्धये भवान्या सह मिथुनीभूयास्ते यदुक्तं हाटकेश्वर इति नाम तस्मिन्निमित्तं स्पष्टयति यत इति। भवानीभवयोर्मिथुनीभूतयोर्वीर्येण हाटकिन्याख्या सरित्प्रवरा यतः प्रवृत्ता तस्माद्भवो हाटकस्य सुवर्णस्य ईश्वर उत्पादकत्वाद्धाटकेश्वर इत्युच्यते इति भावः। ननु हाटकिन्याख्यसरित्प्रवरायाः प्रभवत्वेऽपि न हाटकप्रभवत्वं तत्राह। यत्र हाटकिन्यां सरित्प्रवरायां चित्रभानुरग्निः मातरिश्वना वायुना समिध्यमानः सम्यग्दीप्यमानः ओजसा बलेनापिबत् हाटकिनीं पीतवान् तेनाग्निना निष्ठ्यूतं फूत्कृत्य त्यक्तं हाटकाख्यं सुवर्णमसुरेन्द्राणां विवरवासिनामवरोधेष्वन्तःपुरेषु पुरुषा पुरुषीभिः स्त्रीभिः सह भूषणेनाभरणेन धारयन्ति भूषणानि कारयित्वा धारयन्तीत्यर्थः हाटकिन्या अन्ततो हाटकाख्यसुवर्णरूपेण परिणामात्तत्प्रभवोऽपि हाटकेश्वर इति भावः॥ १७॥

अथ सुतलं वर्णयति। तत इति। ततो वितलादधस्तात्सुतले विवरेऽभ्युरुश्रवा विपुलकीर्तिः पुण्यश्लोकः स्मरतां पुण्यावहकयशःसम्पन्नः महाभागवतो भागवताग्रगण्यः विरोचनस्यात्मजो बलिरधुनाप्यास्ते इत्यन्वयः कथम्भूतः महेन्द्रस्य प्रियं कर्तुमिच्छता प्रथमं दितेः सकाशाज्जात्वा वटुवामनरूपेण लब्धः कायो देहो येन तेन भगवता प्रथमं पराक्षिप्तमपहृतं लोकत्रयं यस्य तथाभूतः पुनर्भगवतोऽनुकम्पयैव सुतले विवरे प्रवेशित इन्द्रादीनामपि दुर्लभया सुसमृद्धया श्रिया सम्पदा जुष्टः सेवितः भयरहितः तमेव भगवन्तं स्वधर्मेण स्वोचितधर्मेणाराधयत्॥ १८॥

एतत् सर्वसम्पत्समृद्धं सुतलाधिपत्यं तद्भूदानफलमिति न मन्तव्यमित्याह। नो एवैतदिति। यद्बिलनिलये विवरस्थाने ऐश्वर्यं तदेतद्भूमिदानस्य साक्षात्कारः फलं न भवत्येव कुत इत्यपेक्षायामेवं भूतस्य दानस्य साक्षादपवर्गहेतुत्वादित्याशयेन भूमिदानं विशिनष्टि। भगवति षाड्गुण्यपूर्णेऽशेषभूतजातानां ये जीवभूताः प्रत्यगात्मानस्तेषामभ्यात्मभूते परमात्मन्यन्तःप्रविश्य धारके वासुदेवे तीर्थतमे पावनतमे पात्र उपपन्ने समीपं प्राप्ते सति तस्मिन् परया निरुपाधिकया श्रद्धया कर्तव्यविषयत्वरया समाहितं मनश्चित्तं येन तेन बलिना सम्प्रतिपादितस्य कृतस्य साक्षादपवर्गसाधनभूतस्य भगवतस्तीर्थतमत्वमेवोपपादयति। यस्येति। यस्य हि भगवतो नाम सकृदपि विवशोऽपि क्षुत्पतनस्खलनादिष्ववस्थास्वपि गृणन् पुरुषः कर्मरूपबन्धनमञ्जसा सुखेन विधुनोति निरस्यति सकृत् स्मरणमात्रेणापि समस्तवृजिननिरासक्षमनामवतो भगवतस्तीर्थतमत्वं कैमुत्यन्यायसिद्धमिति भावः कर्मबन्धं विशिनष्टि। यस्य हवा इति। यस्य हि कर्मबन्धस्य प्रतिबाधनं निरसनोपायमिह मुमुक्षवोऽन्यथा कर्मयोगादिरूपेण उपलभन्ते जानन्ति तत् कर्मबन्धनं धुनोतीति पूर्वेणान्वयः प्रतिसाधनमिति पाठे प्रतिक्षेपसाधननिरसनोपायमित्येवार्थः यथा कर्मयोगादिकं भगवद्भक्तियोगोत्पत्तिप्रतिबन्धकप्राचीनकर्मबन्धनिरसनद्वारा भक्तियोगानुग्राहकत्वेन भक्तियोगद्वारा कृत्स्नपूर्वोत्तराघनिवर्तकमेवं नामस्मरणमपीत्यत्राभिप्रेतोऽर्थः अन्यथा भक्तियोगानर्थक्यापत्तेरित्यवगन्तव्यम् एवं तीर्थतमे सर्वेषामात्मनि भागवतानामात्मदे आत्मपर्यन्तवदान्ये आत्मतमे निरतिशयप्रियतमे भगवति विनियुक्तस्य लोकत्रयस्य न बिलनियमनैश्वर्यं फलमिति पूर्वेणैवान्वयः॥ १९—२१॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

पानसहितस्नानात् आधयो मनोदुःखानि ग्लानिर्मनोबलक्षयः क्लमः शारीरबलक्षयः वयोऽवस्थाः शैशवादिवयोलक्षणाः॥ १३॥ १४॥

यस्मिंश्चक्रे पुंसवनानि गर्भाः॥ १५॥

एवं सामान्येन विवरलक्षणमुक्त्वा विशेषेणाह। अथेति। नाम्ना बलः तासु काश्चन मायाः त्रयो जातिभेदेन स्वैरिण्यः स्वेच्छानुवृत्तयः कामिन्योऽन्तर्गतकामोद्रेकाः पुंश्चल्यः पुरुषमात्रेण सुरतमाकाङ्क्षमाणाः पुरुषदर्शनमात्रेण परिप्लुतेन्द्रिया वा सर्वा अपि नियतपुरुषा न भवन्तीत्याह। या इति। विलायनं विलसनं संलापो मिथोभाषणमुपगूहनमालिङ्गनं चुम्बनादिकमादिपदगृहीतम्॥ १६॥

यस्मिन् रसे भवयोः पार्वतीपरमेश्वरयोर्यत्तद्वीर्यं चित्रभानुरेध्यमानो वर्द्धमानः अवरोधा अन्तःपुराणि तेषु पुरुषीभिः पुरुषवद्बलोपेताभिः स्त्रीभिः॥ १७॥

उरुणः वटुनः शाखस्य श्रवः श्रवणं यस्य स तथा परा-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चितमाकृष्टं स्वाधीनं लोकत्रयं यस्य स तथा प्रवेशितः लोकत्रयेण प्रतिवत्सरं क्रियमाणपूजायामितिशेषः

सर्वस्व जीवराशेराधिकं बलेरैश्वर्यं हरये भूमिदानफलं न तस्य फलं मुक्तिरेव किन्तु पूर्वजन्मार्जितकिञ्चित्पुण्यफलं भवितुमर्हतीत्याह । अधुनापीति । अधुनापि बलेर्बिलनिलये सुतललोके यदैश्वर्यमेतद्भूमिदानस्य साक्षाद्वरो नो एव मुख्यफलं नैव कुतो नेति तत्राह । भगवतीति । परमात्मनि सम्यक् प्रतिपादितस्य स पात्रं न चेत्कथं तदिति तत्राह । पात्र इति । पात्रगुणमाह । तीर्थतम इति । अतिशयेन शुद्धे अतो युक्तमित्याह । उपपन्न इति अन्येषु महात्मसु सत्स्वस्यैवोपपत्तिः कथमिति तत्राह । जीवेति क्षेपामत्राह । अजेपति । जीवभूतत्वे दुःखित्वेनाशुद्धिरापन्नेति तत्राह । आत्मभूत इति । सदा स्वामिनि इदं स्वामित्वं न लोकवत् किन्तु सदातनमित्यतो भूत इति स्वतन्त्रत्वादुःखनिवारणसमर्थ इत्यर्थः आत्मवत्सर्वभूतप्रेष्ठ इति वा तर्हि किं तस्य फलमत्राह । साक्षादिति । ननु"अश्रद्धया हुतं दत्तम्" इत्यादेः श्रद्धया सहितेन दत्तस्यासङ्कल्पत्वादस्यापि तथात्वेन कथं मुक्तिद्वारत्वमिति तत्राह । परयेति । प्रत्यक्षफलदर्शनाच्चायमेव पात्रभूत इत्याह । यस्येति" निर्मयं विष्णुनाम्नैव यथेदं पद्मागतम्" इत्येतदस्मिन्नर्थे प्रमाणमित्याह । हेति । यथा नामसङ्कीर्तनात् कर्मबन्धविध्वंसो भवत्येवं बलेरपीत्यस्मिन्नर्थे वेति"वा विकल्पोपमानयोः"इत्यमरः आदिशब्दात् स्वमादिभयदर्शन इति गृह्यते "तमेवं विद्वानमृत इह भवति" इति श्रुतेर्ज्ञानमन्तरेण नाम्नः कर्मबन्धहानिः कथमत्राह । यस्येति । प्रतिबोधनं ज्ञानं नाम सङ्कीर्तनलक्षणकर्मद्वारा ज्ञानं भवति "कर्मणा ज्ञानमातनोति"इति श्रुतेरित्येतद्धेलनेनाह । अविगानेन सर्वेषां चेतनानामात्मदं ज्ञानजननद्वारा सायुज्यफलप्रदं यदस्मात्तद्भगवन्नाम मुमुक्षुभिरूपसनीयमेवेत्याह । यत्तदिति । तस्मिन् वासुदेव इति पूर्वेणान्वयः ॥ १८—१९—२०—२१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नो एवैतदेतावन्मात्रमित्यर्थः ॥ १९ ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतेषु वसतां दिव्यौषधिरसरसायनयोरशनादेव हेतोरन्नपानादिभिरप्याधिव्याधयो न भवन्ति तथा हि द्विविधा वयोऽवस्थाश्च न तत्र प्रथमा वलिप्रभृतयश्चरमाः द्वितीया देहवैवर्ण्यादयोऽचरमाः क्लमः श्रमः ग्लानिर्हर्षक्षयः ॥ १३ ॥ १४ ॥

पुंसवनानि गर्भाः "आचतुर्थाद्भवेत् स्रावः पातः पञ्चमषष्ठयोः"इति स्रावपातौ ज्ञेयौ सर्वथा रताः स्वैरिण्यः कामिन्यस्त्वसवर्णोऽपि । तत्राप्यतिचञ्चलाः पुंश्चल्यः विलायनं स्वविलरूपमायतनं साधयित्वा स्वसम्भोगसमर्थं कृत्वा यस्मिन् रसे उपयुक्ते सेविते सति चित्रभानुरग्निः पिबति संशोष्य कठिनीकरोति तेन अग्निना निष्ठ्यूतं दाहोत्तीर्णीकृतम् । यद्वा । ताभ्यां भवभवानीभ्यां फूत्कृत्य त्यक्तम् । भूषणेन रत्नालङ्कारेण सह भ्रंशाद्दरात् ॥ १५—१७ ॥

अथो यशः अत एव पुण्यश्लोकाः वर्णनार्थकपद्यानि यस्य सः प्रवेशित इति सुतलमेवेति शेषः ॥ १८ ॥

कैश्चित्तस्य तादृशविलस्वर्गभोगप्राप्तिर्भूमिदानफलं तन्निराकरोति । नो एवैतादिति । यद्विलनिलयैश्वर्यमेतद्भूमिदानस्य साक्षात्कारः फलं न भवति यद्भूमिदानं तदिति प्रसिद्धमित्यत्र भूमिपदेन त्रिभुवनमेवोपलक्षितम् । अत्र वेदविज्ञब्राह्मणाय भूप्रदेशदानादक्षयः प्रसिद्धस्वर्गभोगो लभ्यते इति शास्त्रे भगवति त्रिभुवनदानजन्यफलस्य सुतलैश्वर्यभोग एव पर्यवसानाभावितत्वादपवर्गस्यैव फलत्वं किञ्चास्यानुषङ्गिकस्यापि सुतलैश्वर्यभोगस्य सर्वस्वर्गभोगेभ्योऽपि परम एवोत्कर्षो ध्वनितः भूमिदानस्य कथम्भूतस्य भगवति वासुदेवे प्रतिपादितस्य जीवभूतो जीवनरूपो य आत्मा अन्तर्यामी तद्भूते परमात्मनि "विष्टभ्याहमिदं कृत्स्नमेकांशेन"इत्युक्तेरन्तर्यामिनामप्यंशित्वात् परः सर्वोत्कृष्टश्चासावात्मा चेति तस्मिन्नुपपन्ने परमसमुचिते तीर्थतमे परमपावने फलं न भवतीत्यत्र हेतुः । साक्षादपवर्गेति । पत्रपुष्पादिदानस्याप्यपवर्गफलत्वादत्रातिकैमुत्यमेवेति भावः ॥ १९ ॥

त्रैलोक्यदानस्य का वार्त्ता भक्त्या पत्रपुष्पाद्यर्पणमपि दूरे वर्त्ततां नामाभासोऽपि सुकृतिभिर्दुर्वारं कर्मबन्धमपि अनायासेन ध्वंसयतीत्याह । यस्येति । न च कर्म बन्धोऽपि सुगमप्रतीकार इत्याह यस्य कर्मबन्धस्य प्रतियाधनं सर्वथा ध्वंसनं मुमुक्षव एव भूमिदानादिसुकृतकोटिमन्तोऽपि अन्यथैवेति यन्निवृत्त्यर्थमष्टाङ्गयोगसाङ्ख्यादिक्लेशानुभवन्तीत्यर्थः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आधयः मनोव्यथाः व्याधयः देहव्यथाः वली त्वग्विकारः पलितं केशविकारः क्लमः श्रमः ग्लानिरनुत्साहः ॥ १३ ॥

कल्याणानां तत्तल्लोकानुरूपमङ्गलरूपाणाम् ॥ १४ ॥

पुंसवनानि गर्भाः "आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः" इति स्रावपातलक्षणम् ॥ १५ ॥

स्वैरिण्यः स्वेच्छाचारिण्यः तत्र कामिन्यो मदनमोहिताः तत्रापि पुंश्चल्यः पुंसि पुंसि भ्रमणशीलाः निर्मर्यादा इत्यर्थः साधयित्वा स्वानुरूपं कृत्वा यस्मिन् रसे उपयुक्ते सेविते सति ॥ १६ ॥

भवयोः भवान्याः भवस्य च मातरिश्वना वायुना सन्धुक्ष्यमानः चित्रभानुरग्निस्तेन चित्रभानुना निष्ठ्यूतं धूत्कृत्य त्यक्तम् असुरेन्द्राणामवरोधेष्वन्तःपुरेषु ॥ १७ ॥

ततो वितलादधस्तात् सुतले बलिरधुनाप्यास्ते इत्यन्वयः कीदृशः अदितेर्महेन्द्रस्य च प्रियं चिकीर्षमाणेन वटुवामनरूपेण भगवता प्रथमं पराक्षिप्तमपहृतं स्वलोकत्रयं यस्य स लब्धः नागपाशैर्गृहीतः'कायो देहो यस्य सः पुनश्च भगवतानुकम्पितः तत्र प्रवेशितः किं कुर्वन्नास्ते अपगतसाध्वसो भूत्वा तमेव भगवन्तमाराधयन् ॥ १८ ॥

ननु भगवता भूमिदानफलभोगार्थं तत्र प्रवेशितः किमित्यत आह । नो एवेति । यद्विलनिलये सुतलाख्ये विवरस्थाने ऐश्वर्यं तद्भूमिदानस्य साक्षात्कारः फलं नो एव तत्र हेतुं वदन् भूमिदानं विशिनष्टि । यत् यस्मात् तत् तस्मिन् सर्वलोकैश्वर्यप्रदानं सर्वजीवनिकायानां तीर्थतमे जीवानां क्षेत्रज्ञानां अन्तरात्मा ...

(१) तद्भक्तानामात्मवतां सर्वेषामात्मन्यात्मद आत्मतयैव ॥ २१ ॥

न वै भगवान्नूनममुष्यानुजग्राह यदुत पुनरात्मानुस्मृतिमोषणं मायामयभोगैश्वर्यमेवातनुतेति ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

आत्मभूते उपपन्ने योग्यतातिशयेन प्राप्ते पात्रे श्रद्धादिना सम्प्रतिपादितस्य सम्यगर्पितस्य अत एव साक्षादपवर्गद्वारस्य ॥ १९ ॥

किञ्च। यस्य नाम क्षुदादिषु विवशः ज्वरमरणादिकालेऽपि सकृदपि गृणान् कर्मबन्धनमञ्जसा अनायासेन विधुनोति मुक्तो भवतीत्यर्थः यस्य कर्मबन्धस्य प्रतिबाधनमन्यथा नामोच्चारणविहरिभजनव्यतिरिक्तं कर्म चित्तवृत्तिनिरोधप्रकृतिपुरुषविवेकादिकं मीमांसकपातञ्जलसांख्यादय उपलभन्ते न तु परमपुरुषाराधने परमानन्दसाधने रुचिं कुर्वन्तीत्यर्थः ते मायामोहिता इति भावः।

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययापहृतज्ञाना आसुरं भावमाश्रिताः॥

इति श्रीमुखवचनात्।

येऽन्येरविन्दाक्ष! विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधो नादृतयुस्मदङ्घ्रयः।

इति तेषामधः पतनार्हतायाः वक्ष्यमाणत्वात्।

निरीशैः कर्मभिः केचित् केचिच्छून्यसमाधिना।
पुंप्रकृत्योर्विवेकेन मन्यन्ते कृतकृत्यताम्॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
इत्येवं वादिनो दासा वयं रथर्जुनसारथेः॥ २० ॥

---

भाषा टीका।

इन लोकों मे निवास करने वालों को दिव्य ओषधि रस आदिकों के रसायन वाले अन्नपानादिकों के करने से कोइ आधि व्याधि वृद्धपना वालकपना देह का विवर्ण होनादुर्गंध पसीना श्रम उत्साह नाश अवस्था का वदलना इत्यादिक कुछ-नहीं होते हैं ॥ १३ ॥

एक श्रीनारायण के सुदर्शन चक्र के विना और किसी हेतु से उन मंगलरूपी पुरुषों को मृत्यु नहीं होता है ॥ १४ ॥

उन सुदर्शन जीके तो उसदेशमे प्रवेश होते मात्र भय के मारे असुरों की स्त्रियों के गर्भ स्रवित होजाते हैं गर्भ गिरजाते हैं ॥ १५ ॥

इस के अनन्तर अतल लोक में मय का पुत्र वल असुर निवास करता है जिसकी सृजी हुई छयान्नवे मायाओं को कोई मायावी लोग अवतक भी धारण करते हैं जिसके जमुहाई लेते समय मुखमें से तीन स्त्रीगण उत्पन्न भये हैं स्वैरिणी कामिनी पुंश्चली ये उनके नाम हैं जो स्त्री लोग विल में प्रविष्ट होने वाले पुरुष को हाटक नामक रस से पुष्ट करके अपने विलास अवलोकन अनुराग मन्दहास वोलन आलिङ्गन आदि क्रीडों से यथेच्छ रमण कराती हैं उस रस के सेवन करते मात्र पुरुष अपने को दशहजार वडे हाथियों के वल वाला मान कर मदसे अन्धा होकर अभिमान की वातों को करने लगता है ॥ १६ ॥

तिस के नीचे वितल मे हाटकेश्वर नामक भगवान् हरजी अपने भूतगण पार्षदों के सहित विराजते हैं प्रजापति के सर्ग की वृद्धि के वास्ते भवजी भवानी के साथ संयुक्त होकर रहते हैं जहांसे भव भवानी दोनो के वीर्य से हाटकी नाम की प्रवृत्त हुई श्रेष्ठनदी वहती है जहां पर पवन से वढाया हुआ अग्नि उस नदी के जल को अपने तेज से पान करता है उस के थूक देने से थूक का हाटक नामक सुवर्ण होता है जिस का भूषण वनाकर पुरुष लोग असुरों के अन्तःपुरमे स्त्रियों के सहित आपभी रमण करते हैं ॥ १७ ॥

तिस के नीचे सुतल मे उदार कीर्ति वाले पुण्यश्लोक विरोचन के पुत्र वली महाराज हैं जिनके तीनों लोकोंके ऐश्वर्य को भगवान् ने इन्द्र को प्रसन्न करने की इच्छा से अदिती के इहां अवतार लेकर वटुवामन रूप से मांग कर हरण कर लिया फिर उन्ही भगवान् ने कृपा से इन्द्रादिकों को भी दुर्लभ सम्पत्ति देकर सुखी किया है फिर वे वली महाराज पूजनीय उन्ही भगवान् को पूजन करते हुये अभी पर्यन्त निर्भय होकर रहते हैं ॥ १८ ॥

यह कुछ भूमिदान का फल नहीं है जो कि सव भूतों के समूह के जीवों के अन्तर्यामी परमात्मा सर्व जीवों के नियन्ता आत्माराम परमदान पात्र भगवान् वासुदेव के प्राप्त होने पर वडी श्रद्धासे परम आदर से सावधान चित्त होकर समर्पण किया हुआ जो दान सोतो साक्षात् मोक्षका द्वार है तिससे सुतलका ऐश्वयर्य मिलनां ही फल होगा यह कुछ वलिको वडी वात नहीं है ॥ १९ ॥

जिन भगवान् के नाम को किसी कष्ट मे परवश हो कर एक वखत भी उच्चारण करने से पुरुष मात्र अनायास से संसार वन्ध को नाश कर सकता है जिस संसार वन्ध के छुटाने के वास्ते मुमुक्षु लोग कर्म ज्ञान योगादिक वडे साधनों को करते हैं ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्तस्मिन् भगवति भक्तानां ज्ञानिनां च यथायथमात्मन्यात्मदे ज्ञानदे चात्मतयैव समर्पितस्य भूमिदानस्य न तत्फलमिति पूर्वेणैव सम्बन्धः ॥ २१ ॥

किञ्च। नेदं भगवदनुकम्पाफलमपि किन्त्वेकान्तभक्तस्य तस्यान्तरायमात्रमित्याह। नेति। भगवानमुष्य अमुं नैवानु-

(१) तद्भगवतामात्मवतां आत्मतमे च इति श्रीमज्जीवगोस्वामिपाठः।

यत्तद्भगवताऽनधिगतान्योपायेन याच्ञाच्छलेनापहृतस्वशरीरावशेषितलोकत्रयो वरुणपाशैश्च सम्प्रतिमुक्तो गिरिदर्यां चापविद्ध इति होवाच ॥ २३ ॥

नूनं बतायं भगवानर्थेषु न निष्णातो योऽसाविन्द्रो यस्य सचिवो मन्त्राय वृत एकान्ततो बृहस्पतिस्तमतिहाय स्वयमुपेन्द्रेणात्मानमयाचतात्मनश्चाशिषो नो एव तद्दास्यमतिगम्भीरवयसः कालस्य मन्वन्तरपरिवृत्तं कियल्लोकत्रयमिदम् ॥ २४ ॥

यस्यानुदास्यमेवास्मत्पितामहः किल वव्रे नतु स्वपित्र्यं यदुताकुतोभयं पदं दीयमानं भगवतः परमिति भगवतोपरते खलु स्वपितरि ॥ २५ ॥

तस्य महानुभावस्यानुपथममृजितकषायः को वास्मद्विधः परिहीणभगवदनुग्रह उपजिगमिषतीति ॥ २६ ॥

अथ तस्यानुचरितमुपरिष्टाद्विस्तरिष्यते यस्य भगवान् स्वयमखिलजगद्गुरुर्नारायणो द्वारि गदापाणिरवतिष्ठते निजजनानुकम्पितहृदयो येनाङ्गुष्ठेन पदा दशकन्धरो योजनायुतायुतं दिग्विजय उच्चाटितः ॥ २७ ॥

ततोऽधस्तात्तलातले मयो नाम दानवेन्द्रस्त्रिपुराधिपतिर्भगवता पुरारिणा त्रिलोकीशं चिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत्प्रसादाल्लब्धपदो मायाविनामाचार्यो महादेवेन परिरक्षितो विगतसुदर्शनभयो महीयते ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गृहीतवान् । तत्र हेतुः । यदुतेति । आत्मन ईश्वरस्यानुस्मृतिं मुष्णातीति तथा । तदुक्तम् । "वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय ! देवेन्द्रत्वादिकं फलम्" इति ॥ २२ ॥

तस्यैकान्तभक्तिं सप्रपञ्चामाह । यत्तदिति प्रसिद्धमिति वक्ष्यमाणमुवाच हेत्यन्वयः । कथम्भूतः । अनधिगतोऽन्य उपायो येन तेन भगवता याच्ञाच्छलेनापहृतं स्वशरीरमात्रावशेषितं लोकत्रयं यस्य । सम्यक् प्रतिमुक्तो बद्धः अपविद्धः प्रक्षिप्तोऽपि सन् ॥ २३ ॥

बतेति खेदे । भगवान्विद्वानपि योऽसाविन्द्रो यस्यैकान्तेन बृहस्पतिः सचिवः सहायो यतो मन्त्रार्थं वृतः सोऽपि पुरुषार्थेषु नूनं न निष्णातो न निपुणः यत उपेन्द्रेण द्वारभूतेन तमुपेन्द्रं विहायात्मानं मां लोकत्रयमयाचत तं मन्त्रप्रदं बृहस्पतिमतिहायेति वा । तस्मिन् प्रसन्ने स एव वरणीयो न लोकत्रयं यतस्तदतितुच्छमित्याह । अतिगम्भीरमनन्तं वयो यस्य तस्य कालस्य यन्मन्वन्तरं तेन परिवृत्तं विपर्यस्तं लोकत्रयमिदं कियत् ॥ २४ ॥

प्रह्लादस्त्वेक एवार्थे निष्णात इत्याह । यस्यानुदास्यमिति । स्वपितरि उपरते मृते सति स्वपित्र्यं पदं भगवता दीयमानमपि भगवतः खलु परमन्यदिति कृत्वा नतु जग्राहेत्यर्थः ॥ २५ ॥

ननु त्वमतिवीरः कुतस्तमेव बहुमन्यसे तत्राह । तस्यानुपथमनुवर्त्म । अमृजिता अक्षीणाः कषाया रागादयो यस्य । परिहीणो भगवदनुग्रहो यस्य । स को वा उपगन्तुमिच्छतीति ॥ २६ ॥

अथ शुकोक्तिः । नन्वेवम्भूतश्चेद्बलिस्तर्हि तस्यैव चरितं विस्तरेण कथ्यतां तत्राह । तस्य बलेरनुचरितमुपरिष्टाद्विस्तरिष्यते । यस्य द्वार्यवतिष्ठते निजजनेष्वनुकम्पितं [illegible]नुकम्पं हृदयं यस्य । द्वारपालकर्म दर्शयति । येन श्रीनारायणेन बलेर्द्वारि विशन् दशकन्धर उच्चाटितः । केन । पदा तत्राप्यङ्गुष्ठेनैव ॥ २७ ॥

यथा हरिणा स्वभक्तो बलिः सुतले निहितः सुखमास्ते एवं महादेवभक्तोऽपि मयस्तलातले सुखमास्त इत्याह । [illegible] इति । लब्धं पदं स्थानं येन महीयते पूज्यते ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु यद्येतद्दानमपवर्गद्वारं यदि वा बलिर्महाभागवतः यदि [illegible] भगवानात्मदस्तर्हि तस्यापवर्गमेव प्रदाय किं नानुजग्राहेत्यपेक्षायामभ्युपगतप्रारब्धस्य विद्यया विनाश्यस्यावश्यानुभाव्यत्वादि[illegible]मपवर्गदानेन न तदेवानुजग्राह । किं त्वभ्युपगतप्रारब्धफलविलासि[illegible]यैनैश्वर्यमेवादादित्याह । न वा इति । भगवानमुष्य [illegible] तदेवानुग्रहं न कृतवान् आत्मानुस्मृतिमोषणां स्वविषयस्मृति[illegible] स्वमायया विलसितं भोगरूपमैश्वर्यं भोगनिमित्तं वा [illegible] बिलनिलयमैश्वर्यं तदेवातनुत तेने दत्तवानित्यर्थः ॥ २२ ॥

महाभागवत इत्यनेन भगद्दास्ये एवाभिलाषित्वं विवक्षि[illegible] तत्तस्य तदुक्त्यैव स्पष्टयितुमाह । यदिति । यत्तत्प्रसिद्ध[illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

…मायामुवाचेत्यन्वयः कथम्भूतः अनधिगतः अलब्ध अन्यः …ऽन्तरः उपायो येन तेन भगवता बलेर्भागवतत्वाद्दण्डनानर्ह… उपायान्तराभावादनधिगतान्योपायेनेत्युक्तम् एवंभूतेन भगवता …याञ्चाव्याजेनापहृतं स्वशरीरमात्रावशेषितमुर्वरितस्वशरीरमात्रं …लोकत्रयं तद्यस्य तथाभूतः स्वव्यतिरिक्तभगवदपहृतलोक… इत्यर्थः वरुणपाशैश्च प्रतिमुक्तः प्रतिश्रुतार्थन्यूनतायां वरुण… प्रतिबद्ध इत्यर्थः गिरिदर्यामपविद्धः प्रक्षिप्तोऽपि सन् ॥ २३ ॥

…किमेवाह । नूनमिति । बतेति खेदे भगवान् विद्वानप्यसाविन्द्रः …पार्थेषु नूनं न निष्णातः न कुशलः पुरुषार्थेषु तारतम्यान… इत्यर्थः यस्यैकान्तेन बृहस्पतिः सचिवः सहायो मन्त्रा… …लोचनाय वृतः सोऽपि पुरुषार्थेषु नूनं न निष्णातः अनिष्णा… …मेवाह । तमिति । यतस्तं पुरुषार्थरूपं भगवन्तमतिहाय तद्दास्य… …चतेत्यर्थः तं मन्त्रप्रदं बृहस्पतिमतिहायेति वा उपेन्द्रेणो… …वरजरूपेण श्रीवामनेन द्वारभूतेनेन्द्र एवात्मानं मामात्मनः …स्याशिषः लोकत्रयरूपा याः आशिष अयाचत याचित… …त्वेतस्य भगवतो दास्यमयाचतेत्यर्थः तस्मिन् प्रसङ्गे तद्दा… …मेव याचितव्यं नत्वितरदल्पमित्याह । अतिगम्भीररंहसः निरति… …गम्भीरवेगस्य कालस्य वश्यमिदं मन्वन्तरपरिवृत्तं …न्तरपर्यन्तवर्तिलोकत्रयं लोकत्रयाधिपत्यं कियदत्यल्पमेत… …त्यर्थः अतस्तन्न याचितव्यमिति भावः अत इन्द्रः पुरुषार्थेषु …निष्णातः ॥ २४ ॥

अस्मत्पितामहस्तु प्रह्लादः एक एव पुरुषार्थेषु निष्णात इत्याह । …र्यंति । अस्मत्पितामहः प्रह्लादो यस्य भगवतोऽनुदास्यं दासा… …दासत्वमेव वृतवान्किल नतु स्वपितुर्हिरण्यकशिपोः सम्बन्धि …र्यंस्य प्रवरणहेतुं तस्याभिप्रायं प्रकाशयति । यद्युतेति । भगवता …रिणा स्वपितरि हिरण्यकशिपौ उपरते हते सति भगवता …यमानमपि स्वपित्र्यं न वव्रे कुतः यद्यस्मात्परिमितमिति …मितत्वात्पित्र्यं न वव्रे उतापित्वकुतोभयं पदं वव्रे स्वयं दे… …वसाने मुक्तिं याचितवानित्यर्थः भगवतः परमिति पाठे …वतोऽन्यदिति पित्र्यं न वव्रे इत्यर्थः ॥ २५ ॥

…मांचकेव गरुत्मतो गतिं को वा तस्य प्रह्लादस्य पन्थानम… …गन्तुं शक्नोतीत्याह । तस्येति । को वा अमृदिता अनुपहताः कषायाः …यस्य येन परिक्षीणा अपसृतः भगवदनुग्रहो यस्य तथा… …योऽस्मद्विधो मादृशः पुमान् तस्य महानुभावस्य प्रह्लाद… …नुपथं पन्थानमुपजिगमिषति उपगन्तुमिच्छति इति ॥ २६ ॥

…न्वेवम्भूतश्चेद्बलिस्ततस्तस्यैव चरितं विस्तरेणोच्यतां तत्राह । …बलेरनुचरितमुपरिष्टादष्टमे विस्तरिष्यते विस्तरेण कथयि… …इत्यर्थः कार्त्स्न्येन तत्प्रभावः केनापि वर्णयितुं न शक्य …अभिप्रायेण पुनस्तमेव विशिनष्टि । यस्येति । यस्य बलेर्द्वारि भग… …स्थितस्ते कथम्भूतः स्वयमखिलजगतां गुरुः अनेन द्वारपाल… …नानर्हता सूच्यते नारायणः सर्वेशपरी अनेनापि तदेव सूच्यते …भूतो ह्याश्रितवात्सल्यवशो गदापाणिः सन् गदापाणिं तं …यन्तं विशिनष्टि । येन गदापाणिना बलेर्द्वाःस्थेन भगवता …तां अङ्गुष्ठेन पदा पादावयवेनाङ्गुष्ठेन दिग्विजयसमये स्वसमी… …आगतो दशकन्धरो रावणो योजनायुतानामयुतम् उच्चाटितः …आदने प्रापितः दिग्विजयं कुर्वन् रावणः कदाचिद्बलेर्द्वारि विशन् द्वाःस्थेन गदाभृता भगवता यद्दूरतः क्षिप्त इति श्रीरामायणादौ प्रसिद्धम् ॥ २७ ॥

एवं सुतलमुपवर्ण्याथ तलातलं वर्णयति । तत इति । ततः सुतलादधस्तात्तलातले विवरे मयाख्यो दानवेन्द्रः महीयते तलातलस्थैर्बहुमन्यत इत्यर्थः कथंभूतः प्रथमं त्रिपुराधिपतिर्भूत्वा त्रिलोक्यां शं सुखं कर्तुमिच्छता भगवता त्रिपुरारिणा रुद्रेण निर्दग्धं पुरत्रयं यस्य तस्य पुरारेः प्रसादाल्लब्धं पदं तलातलाख्यं विवरं यस्य स मायाविनामाचार्यो मायातन्त्रोपदेष्टा महादेवेन रुद्रेण परिरक्षितो विगतं सुदर्शनाद्भयं यस्य तथाभूतः सन् सुदर्शनभक्तिमता महादेवेन परिरक्षितत्वाद्विगतसुदर्शनभय इत्युक्तम् ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवन्नामात्मदं चेत्तन्नाम जापिनो मनुष्यान् किमिति नानुजग्राह भगवानित्याशङ्क्य भक्तिज्ञानाद्यतिशयाभावादित्यभिप्रेत्याह । न वा इति । नूनशब्दसामर्थ्यादत्र मनुष्यशब्देन सृनियोग्या गृह्यन्ते मनुष्यानुद्दिश्य नानुजग्राह प्रस्तुतत्वादेतादृशमैश्वर्यमिति शेषः तर्ह्यात्मदानलक्षणमोक्षमनुजग्राह किमित्याह । यदिति । पूर्ववाक्यस्थितनञ अध्याहारः कर्तव्यः यत्पुनरात्मानुसंसृतिमोक्षणं तत् "यदाग्वा अपि सन्देहे को कुन्दस्य तु का कथा,, इति वन्नानुजग्राहेति किमुत तर्हि तन्नामोपासनं व्यर्थं किमिति नेत्याह । मायामयेति । मायामयं प्रकृतिनिर्मितं नश्वरं नत्वनश्वरमित्येवार्थः ॥ २२ ॥

इतो भक्त्याद्यतिशय एवैश्वर्ये निमित्तं यतो राज्यापहरणादिलक्षणापकारिणि हरौ भक्त्यतिशयो दरीदृश्यते बलेर्दैलिवणकारागृहे निवसतस्तेन बद्धप्रमुक्तस्य नहि मनुष्याणामेतादृशमापद्येतादृशी या भक्तिः समस्तगुणोद्भवसूयिनामित्याशयवानाह । यत्तदिति । न अधिगतो भिक्षाव्यतिरेकेणान्यः सुखसाध्य उपायो येन स तथा तेन भगवता याच्ञाव्याजेनापहृतं स्वशरीरावशेषितं लोकत्रयं यस्य स तथा भगवदाज्ञया गरुडेन प्रथमं वरुणपाशैर्बद्धश्चशब्दाद्ब्रह्मादीनां याच्ञया पश्चान्मुक्तः पुनश्च त्वया प्रतिश्रुतं दत्त्वैव गन्तव्यमिति तेन कारागृह इति गिरिदर्यामपविद्ध इव निरुद्धो बलिरिति वक्ष्यमाणप्रकारेण जगादेत्यनेन प्राणात्ययेऽपि भगवद्भक्तिं न मुञ्चामीत्यभिसन्धि दर्शयतीति यद्यस्मात्तस्मान्मनुष्यान्नानुजग्राहेत्युच्यते ॥ २३ ॥

इन्द्रस्य सचिवो बुद्धिसहायभूतो यदा योऽसौ बृहस्पतिरस्मत्सन्धानार्थमिन्द्रेण प्रेषित एकान्ततो मन्त्राय वृतः सन्नस्तदा तमप्यतिहाय सन्धानात्पूर्वमेव समागत्य ममार्थेषु स्वपादसेवनाद्यभिप्रायेषु निष्णातस्तत्सेवनादिकमेव दातुमुद्युक्तोऽयं भगवान् स्वयमुपेन्द्रेण बटुवामनरूपेणात्मने स्वस्मै श्रीणि पदान्यतदर्हं याचनायोग्यं मामयाचत नो एवाशिष इति यत्तस्यायमभिप्रायः इदं लोकत्रयं चतुर्दशभुवनापेक्षया कियदल्पं हि तदपि कालग्राहग्रस्तमित्याह । गम्भीरवेगस्य महतः कालस्य मन्वन्तरलक्षणावयवमितमत एवानित्यं तस्मादैश्वर्यनिमित्तमदो न स्यादित्यस्मै बलये राज्यं न दास्यामीति त्रिपदच्छलेनापहृतं नूनं निश्चितं वन भक्ते मय्यनुकम्पया "यस्यानुग्रहमिच्छामि हरिष्ये तद्धनं शनैः" इत्यादि स्ववचनात् ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेरिममभिप्रायमस्मत्पितामह एव वेत्ति न मादृश इत्याह। यस्येति । स्वपितरि हिरण्यकशिपुनाम्नि विरमिते मृते भगवता दीयमानं स्वपिव्यं पितृधनत्वाद्योग्यमपि यदकुतोभयं निहतकण्टकत्वात् पदं राज्यलक्षणं तन्न वव्रे किन्तु यस्य हरेरनुदास्यं सेवाख्यमेव वव्रे कोऽसावित्यस्मत्पितामहः प्रह्लादः तस्य चास्माकं महदन्तरमस्तीत्याह । तस्येति । तस्य प्रह्लादस्यानुगमनमनुवर्तितुमस्मादृशः पुरुषः को वाळं न कोऽपीत्यर्थः। कीदृशः परिहीणः भगवदनुग्रहो यस्य स तथा अमृदितकषायोऽनिरस्तपापो नाळमिति किं वक्तव्यमित्यर्थः इनिशब्दो वाक्यसमाप्तौ वर्तते २५॥२६॥

तस्य प्रह्लादस्य उत्तरस्मात् सप्तमे इदं श्रीशुकवाक्यं पुनरपि हरेर्भक्तानुकम्पितत्वमाह। यस्येति। वामनाख्यो नारायणः स्वदत्तत्वरात्तथात्वस्थानमिति द्योतयितुमवतिष्ठते इति आत्मनेपदप्रयोगः अखिलजगद्गुरुत्वमुपपन्नं तस्यापदि स्वपादप्रणतजनरक्षकत्वेनेत्यभिप्रेत्याह। येनेति । रावणस्य दिग्विजये उच्चाटितः प्रक्षिप्तः दूरीकृत इत्यर्थः एवंविधस्य हरेर्भक्तजनप्रयोजनार्थितया नापीन्द्रस्य राज्यदानेच्छयास्मद्राज्यापहरणलक्षणं कार्यं नान्यदिति वाक्यशेषः ॥ २७ ॥

यं सुखं महीयते स्वभूत्यैरितिशेषः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तद्भगवतामिति । तत्तु तस्य दानं न चान्यस्मिन् फले निमित्ते तत्र सर्वेषामात्मनि परमात्मनि तथापि ज्ञानिनां विविक्ततया तत्तास्फुरणादात्मतमे भक्तानां स्वारमदे वशवर्त्तितया स्फुरतीति सर्वथा सर्वेषु परमोपकारकस्वभावत्वं दर्शितम् । ततस्तेनैतादृशतुच्छफलदानं न सम्भवतीत्यर्थः। तत्र परमतमनूद्य खण्डयति।न वै इति। यन्मायामयं भोगैश्वर्यमतनु तेति नैवामुं बलिं प्रत्यनुजग्राहेति न किन्तु स्वसान्निध्यदानादिनैवेत्यर्थः तत्र हेतुः आत्मानुस्मृतिमोषणमिति। यद्वा । तन्निन्द्रानुग्रहवादं खण्डयति । न वै इति । अमुष्य इन्द्रस्य तं प्रतीत्यर्थः ॥ २१ ॥ २२ ॥

तत्र श्रीबलिवाक्यमेव प्रमाणयति । यत्तदिति गद्यपञ्चकेन यत्तदति प्रसिद्धम् । इति एतदुवाच श्रीबलिः ॥ २३ ॥

तमुपेन्द्रमतिहाय पुरुषार्थस्येनानाभिलष्य स्वयमुपेन्द्रेणैव द्वारभूतेन आत्मानं मां परमक्षुद्रं लोकत्रयमयाचत । अनुदास्यं नय मां निजभृत्यपार्श्वमित्यनेन तद्दासदास्यम् ॥ २४ ॥

स्वपित्र्यं त्रैलोक्यराज्यं यद्युत अकुतोभयं पदं मोक्षं तत्तत्तु वव्रे । कथं भगवतः परमन्यदिदमिति कृत्वा तदंशमास तदंशमात्रात्मकत्वात्तयोः कदैवं व्यवहृतमित्याशङ्क्याह । भगवतेति ॥ २५ ॥

परिसिद्धतो भावेन हीनस्त्यक्तो नात्यादृतो भगवदनुग्रहो येन सः। अनुग्रहः प्रार्थनादिबन्धनान्तः ॥ २६ ॥ २७ ॥

मयस्तु मायावीति महेशप्रसादाभासेन तलातले व्यवहारसुखेन तिष्ठन्नपि न तु श्रीबलिवत् परमार्थसुखसम्पन्न इति दर्शयितुमाह । ततोऽधस्तदिति । विगतेति । महादेवस्य महाभागवतस्यानुरोधादिति भावः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्तस्मात् सर्वेषामात्मनि परमेश्वरे प्रतिपादितस्य भूमि… न तत्फलमिति पूर्वेणैवान्वयः। कथम्भूते भगवतां नारदादीनां… नामात्मदे वशीभूयात्मानमपि ददत्यति आत्मवतां सनक… ज्ञानिनामात्मतमे परमात्मानुभवरूपे इति क्रमेण प्रेमानन्द… नन्ददायिनस्तस्य तद्विषयानन्दमात्रफलदायित्वं कथं… मतो बलिराजाय स्ववशीकारमयप्रेमानन्दं खलु भूमिदानस्य… ददौ यतः स्वभक्तस्य तस्य स्वयं द्वारपालो बभूवेति भावः ॥…

वस्तुतस्तु भोगैश्वर्यमेकान्तभक्तस्यान्तराय एवेति न त… वदनुकम्पाफलमतो भोगैश्वर्यदानादेवेन्द्रस्यैकान्तिकभक्तत्व… नुमीयत इत्याह । नेति । अमुष्यामुमिन्द्रं तदुक्तम् ।

वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय ! देवेन्द्रत्वादिकं फलम् ॥

इत्यतो वस्तुतस्त्वेकान्तभक्तं बलिमेवानुजग्राहेति भावः ॥ २२ ॥

बलेस्त्वैकान्तिकी भक्तिर्भगवदनुग्रहप्राप्तिश्च तद्वचनैरेव… कीबभूवेत्याह । यद्यस्मात्तददतिप्रसिद्धमिति वक्ष्यमाणमुवाचे… न्वयः। न अधिगतः अन्य उपायो येन तेन भगवता याच्ञा… अपहृतं स्वशरीरमात्रावशेषितं लोकत्रयं यस्य सः। प्रति मुक्तो… “आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्„ इत्यमरः । अर्पित… प्रक्षिप्तः ॥ २३ ॥

भगवान् विद्वानपि यस्य सचिवो बृहस्पतिः सोऽपि पुरु… र्थेषु न निष्णातः यस्मादिन्द्रं प्रति युक्तं नोपदिदेशेति भावः।… उपेन्द्रेण द्वारभूतेन आत्मानं मां लोकत्रयमयाचत तमुपेन्द्रं वि… येति तमेव कथं नायाचत यद्ययाचिष्यत तदा किं स दातुं… रयिष्यत् स्वप्रभुं तं याचकं कथमकरोदिति भावः। तथा… आशिषो विषयसुखानीति परममोहान्ध इव स इति भावः।… तं बृहस्पतिमपहायेति बृहस्पतिं प्रेषयित्वा तेनैव कथं मां नाया… यदि बृहस्पतिर्मामयाचिष्यत तदा तस्मै ब्राह्मणाय त्रिलोकीं… नादास्यं कथं स्वेष्टदेवं तं याचकमकरोदिति भावः कामि… वस्तुतस्तुच्छत्वमाह। अतिगम्भीरमनन्तं रयो वेगो यस्य तस्य का… स्य यन्मन्वन्तरं तेन परिवृत्तं पर्यन्तं लोकत्रयमिदं कियत् ॥ २४ ॥

किश्चात्र जगत्येकः प्रह्लाद एव परमार्थे निष्णात इत्याह। यस्ये… उपरते मृते सति ॥ २५ ॥

ननु त्वमपि प्रह्लाद सदृश एवेति तत्र सत्रपं सदैन्य… तस्येति । अनुपथमनुरूपं वर्त्म ॥ २६ ॥

तस्य बलेः ॥ २७ ॥

महीयते पूज्यते ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्तस्मिन् सर्वेषां चेतनाचेतनानां पदार्थानामात्मनि वि… तिप्रवृत्त्यादिमूले विशेषतो भगवताम् ।

उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

इतिस्मृत्युक्तानां सर्वज्ञानां कथम्भूतानामात्मवतामात्मा उप… त्वेन विद्यते येषां तेषामेवंभूतानां ज्ञानभक्तिसम्पन्नानां मह… भावानामात्मपर्यन्तसर्वपुरुषार्थप्रदे आत्मतमे एव वासुदेवे…

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पितस्य भूमिदानस्य त्रिजगतिलयैश्वर्यं फलं न भवतीति पूर्वेणा-न्वयः॥ २१॥

त्रिजगतिलयैश्वर्यं भगवदनुकम्पाफलमपि न भक्तस्य बलेरन्त-रायमात्रमित्याह। नेति। भगवानमुष्य अमुं नैवानुगृहीतवान् कर्मणः सम्बन्धमात्रविवक्षया षष्ठी यद्यस्मान्मायामयं भोक्तृत्वमो-हकत्वादनित्यत्वादिदोषयुक्तम्। किञ्च। आत्मस्मृतिं भगवद्विषयकं ज्ञानं मुष्णातीति तथा तथैवाह भगवान् पराशरः।

वासुदेवे मनो यस्य जपहोमार्चनादिषु।

तस्यान्तरायो मैत्रेय! देवेन्द्रत्वादिकं फलम् इति

यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः।

इत्यादिभगवद्वचनमप्यत्रानुसन्धेयम्॥ २२॥

बलेरेकान्तभक्तत्वं वर्णयति। यत्तदित्यादिना। यद्यदा तत्तेन वामनेन अनधिगतः अन्य उपायो येन तेन भगवता याच्ञा-च्छलेनापहृतं स्वशरीरमात्रावशेषितं लोकत्रयं यस्य सः सम्प्रति मुक्तः सम्यग्बद्धोऽपि गिरिदर्यामपविद्धः प्रक्षिप्तोऽपि सन् ह स्फु-टम्। इति वक्ष्यमाणमुवाच॥ २३॥

बतेति खेदे भगवान् बहुविदपि अयं प्रसिद्धो योऽसाविन्द्रः यस्यैकान्तेनाव्यभिचारिप्रयत्नेन बृहस्पतिः सचिवः कार्याका-र्यज्ञापकः यतो मन्त्राय वृतः सोऽप्यर्थेषु कार्याकार्येषु नूनं निश्चितं न निष्णातः न कुशलः यतस्तं बृहस्पतिमतिहायोल्लङ्घ्य उपेन्द्रेण इन्द्रस्योपरि वर्त्तमानेन भगवता भक्तवत्सलेन द्वार-स्थेन आत्मानं मां लोकनाथमात्मनः आशिषः लोकानयाचत नो एव तस्योपेन्द्रस्य दास्यमतिगम्भीरमनन्तं वयो यस्य तस्य कालस्य मन्वन्तरं तेन परिवृत्तं विपर्य्यस्तं लोकत्रयमिदं कियत् कियदपि सातिशयत्वादनित्यत्वादिदोषयुक्तत्वादनुपादेयमिति भावः॥ २४॥

अस्मत्पितामहः प्रह्लादः स्वपितरि हिरण्यकशिपौ उपरते मृते सति स्वपित्र्यं पदमनुपादेयमिति हेतोः इतिशब्दः हेतुवाचकः न वव्रे भगवतः पदमकुतोभयं धामापि भगवता दीयमानमपि न वव्रे किन्तु यस्य भगवतोऽनुदास्यमेव वव्रे स अर्थेषु निष्णात इति भावः॥ २५॥

तस्य प्रह्लादस्य अनुपथमनुवर्त्म अमृजिताः कषायाः रागादयो यस्य परिहीणो भगवदनुग्रहो यस्य सः को वा उपजिगमिषति उपगन्तुमिच्छति इतिशब्दो बलिवाक्य-समाप्तिपरः॥ २६॥

तस्य बलेः उत्तरस्मादष्टमस्कन्धे यस्य बलेः येन भगवता दिग्विजये प्रवृत्तो बलिद्वारि प्रविशन् दशकन्धरो रावणः पदा तत्राप्यङ्गुष्ठेनैव॥ २७॥

लब्धपदः प्राप्तस्थानः महीयते पूज्यते॥ २८॥

---

भाषा टीका

तिस हेतु से आत्मग्लानि भक्तों को आत्मा को देने वाले सब प्राणियों के आत्मा भगवान् को आत्मता से जो अर्पण किया तिस का फल मोक्षही है॥ २१॥

वस्तुतः भगवान् ने इन बलि महाराज के ऊपर अधिक अनुग्रह नहीं किया जो कि आत्मा के स्मरण के नाश करने वाले मायामय वैभव को दिया है॥ २२॥

जिन बलि महाराज को छलने का और उपाय नहीं जानकर मागने के छलसे भगवान् ने तीनों लोक के ऐश्वर्य को हरण करलिया केवल शरीर मात्र बाकी छोंडा फिर वरुण पाशों से बांध दिया पर्वत के कन्दरा में डार-दिया तौ भी यह वचन बोले॥ २३॥

यह बात निश्चित है कि इन्द्र भगवान् प्रयोजन में चतुर नहीं हैं और जो बृहस्पति जी उनके मन्त्री भये वे भी प्रयोजन में अत्यन्त चतुर नहीं है जिनोंने कि इन्द्र के सहित मेरा जीतना और धन सम्पत्ति इन सब बातों को माँगा परन्तु भगवान् के दास भाव को नहीं माँगा और यह लोक त्रय का वैभव तो बडे गंभीर वेगवाले काल का मन्वन्तर मात्र ही रहने वाला है इसमें क्या सार है॥ २४॥

जिन भगवान् के दास भाव को हमारे पितामह प्रह्लाद जी ने मांगा है और जो निर्भय अपने पिता का राज्य भगवान् का दिया हुआ भी अपने पिता के मरने के पीछे नहीं ग्रहण किया उनने समुझा कि भगवान् से परे यह नहीं है॥ २५॥

उन महानुभाव प्रह्लाद जी के सदृश करने वाला पाप रहित ऐसा हम सरीका पुरुष भगवान् की कृपा से रहित कौन होगा जो उनके मार्ग में चलने की इच्छा करैगा॥ २६॥

अब उनका चरित्र आगे के अष्टम स्कन्ध में विस्तार से कहेंगे उन बलि महाराज के दरवाजे में सब जगत् के गुरु भगवान् नारायण गदा को हाथ में लेकर अपने भक्त के ऊपर कृपा करके स्थित हैं जिन भगवान् ने दिग्विजय करते समय आये हुए रावण को अपने पावके अंगूठे से अयुत योजन पर्यन्त दूर फेकदिया था॥ २७॥

तिसके नीचे तलातल में मय नामक दानवोंका राजा रहता है तीन पुरों का मालिक होकर है तीनों के कल्याण की इच्छा करने वाले भगवान् महादेवजी ने उसके तीनों पुर जलादिये थे फिर कृपा करके उसको स्थान दे दिया है सब माया वालों का गुरु है श्री महादेव जी उसकी रक्षा करते हैं जिससे श्री सुदर्शन चक्र की भय से रहित होकर रहता है॥ २८॥

---

ततोऽधस्तान्महातले काद्रवेयाणां सर्पाणां नैकशिरसां क्रोधवशोनाम गणः कुहकतक्षककालियसुषेणादिप्रधाना महाभोगवन्तः पतत्त्रिराजाधिपतेः पुरुषवाहादनवरतमुद्विजमानाः स्वकलत्रापत्यसुहृत्कुटुम्बसङ्गेन क्वचित्प्रमत्ता विहरन्ति ॥ २९ ॥

ततोऽधस्ताद्रसातले दैतेया दानवाः पणयो नाम निवातकवचाः कालेया हिरण्यपुरवासिन इति विबुधप्रत्यनीका उत्पत्त्या महौजसो महासाहसिनो भगवतः सकललोकानुभावस्य हरेरेव तेजसा प्रतिहतबलावलेपा बिलेशया इव वसन्ति ये वै सरमयेन्द्रदूत्या वाग्भिर्मन्त्रवर्णाभिरिन्द्राद्बिभ्यति ॥ ३० ॥

ततोऽधस्तात्पाताले नागलोकपतयो वासुकिप्रमुखाः शङ्खकुलिकमहाशङ्खश्वेतधनञ्जयधृतराष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति येषामुह वै पञ्चसप्तदशशतसहस्रशीर्षाणां फणासु विरचिता महामणयो रोचिष्णवः पातालविवरतिमिरनिकरं स्वरोचिषा विधमन्ति ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां संहितायां
वैयासिक्यां राह्वादिस्थितिबिलस्वर्गमर्य्यादानिरूपणं नाम
चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नैकशिरसामनेकफणानां गणोऽस्ति । एतत्प्रपञ्चयति । कुहकेति । महाभोगवन्तो महाकायाः पुरुषवाहाद्गरुडाद्वोद्वेजनात् ॥ २९ ॥

विबुधप्रत्यनीका देवशत्रवः सकलेष्वपि लोकेष्वनुभावो यस्य तस्यैव तेजसा सुदर्शनेन प्रतिहतो बलावलेपो वीर्यमदो येषां बिलेशयाः सर्पा इव इन्द्रदूत्या प्रयुक्ताभिर्मन्त्ररूपाभिर्वाग्भिः एवं हि वैदिकमाख्यानं पणिभिरसुरैर्निगूढां गामन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितां सन्धिमिच्छन्तः पणयः प्राहुः । किमिच्छन्ती सरमेत्यादि सा च सन्धिमनिच्छन्तीन्द्रस्तुतिपूर्वकं तान्प्रति परुषमाह । "हता इन्द्रेण पणयः शयध्वम्"इत्यादि ते च तच्छ्रुत्वा बिभ्यतीति ॥ ३० ॥

महाभोगिनो महाफणाः महानमर्षः क्रोधो येषां पञ्चादिसङ्ख्यानि शीर्षाणि येषां शीर्ष्णामिति वक्तव्ये शीर्षाणामित्यार्षः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ महातलमनुवर्णयति । तत इति । ततः तलातलादधस्तान्महातले बिवरे नैकं शिरो येषां तेषामनेकशिरसामित्यर्थः काद्रवेयाणां कद्रोरपत्यभूतानां सर्पाणां गणः क्रोधवशसंज्ञकोऽस्ति । गणे कांश्चित्प्रधानान्निर्दिशन्विशिनष्टि । कुहकेत्यादिना । कुहकादयः प्रधानाः मुख्या येषां ते महाभोगवन्तः दीर्घकायाः महापुरुषस्य भगवतो वाहनभूतात्पक्षिराजानामप्यधिपतेर्गरुत्मतोऽनवरतं निरन्तरं उद्विजमाना बिभ्यतः स्वकलत्रादिरूपकुटुम्बासक्त्या प्रमत्ताः सन्तः क्वचिद्विहरन्ति ॥ २९ ॥

अथ रसातलमनुवर्णयति । ततो महातलादधस्ताद्रसातले बिवरे दैतेयदानवाः दितेः पुत्राः दनुपुत्राश्च पणय इति प्रसिद्धास्ते च निवातकवचाः कालकेया हिरण्यपुरवासिन इति त्रिविधाः विबुधानां देवानां प्रत्यनीकाः प्रतिपक्षिणः उत्पत्त्यैव महाबलशालिनः महान्तश्च ते साहसिकाः सहसा दर्पेण चरन्तीति साहसिकाः तथाभूताः सन्तः सर्वेषु लोकेष्वनुभावो यस्य तस्य भगवतो हरेस्तेजसैव सुदर्शनाख्येण प्रतिहतः बलावलेपः बलनिमित्तो गर्वो येषां ते तादृशा बिलेशया इव सर्पा इव वसन्ति तानेव विशिनष्टि । य इति । ये वै पणयः इन्द्रदूत्या सरमया देवशुन्या प्रयुक्ताभिर्मन्त्रवर्णभूताभिर्वाग्भिरिन्द्राद्बिभ्यति भयं प्राप्नुवन्ति । एवं हि वैदिकमाख्यानं पणिभिरसुरैर्निगूढां गामन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितां सन्धिमिच्छवः पणयः प्राहुः किमिच्छन्ती सरमे ! इत्यादिना सा च सन्धिमनिच्छन्ती इन्द्रस्तुतिपूर्वकं तान्प्रति धर्षणमाह"हता इन्द्रेण पणयः शयध्वम्" इत्यादि ते च तच्छ्रुत्वा बिभ्यतीति ॥ ३० ॥

एवं रसातलमनुवर्ण्याथ पातालमनुवर्णयति । तत इति । ततो रसातलादधस्तात्पाताले विवरे नागलोकानां सर्परूपाणां जनानां पतयो वासुकिः प्रमुखः प्रधानो येषां ते शङ्खादयो महाभोगिनः फणिनः महाफणिनः महानमर्षः क्रोधो येषां महाक्रोधाः निवसन्ति तानेव विशिनष्टि । येषामुह वै येषां हि पञ्चादिश-

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

...शीर्षाणि येषां शीर्ष्णामिति वक्तव्ये शीर्षाणामित्यार्ष ...फणानां फणानां फणासु आधारस्य सम्बन्धमात्रविव- ...षष्ठी विरचिता धृता ये महामणयो रोचिष्णवः सदा ...शीलाः तेषां स्वरोचिषा पातालविवरं पातालविवर- ...मोजालं विधमन्त्यपनुदन्तीति ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महाभोगवन्तः स्थूलशरीरवन्तः पुरुषोत्तमस्य वाहो वाहनं ...नात् ॥ २९ ॥

पणयो दैत्या दानवा निवातकवचाः कालकन्यापुत्राः काल- ...विबुधप्रत्यनीका देवशत्रवः प्रतिहतावलेपा विनाशितगर्वाः ...दूबिलेशयाः सर्पाकारा ये पणय इन्द्रदूत्या सरमया शुन्यो- ...मन्त्रवर्णाभिर्वाग्भिः "इन्द्रस्य दूतीरिषिता चरामि मह ...पणयो निधी च„ इत्यादिमन्त्रवर्णात्मकगीर्भिः श्रुताभि- ...बिभ्यति भीतास्तिष्ठन्तीति यस्मात्तस्माद्बिलेशयाकारा निव- ...र्थः "सरमा त्वं दूराद्ध्वनो बहिर्गताभिर्जिह्वाभिर्जगुरिः ...पि निगरन्ती किमिच्छन्त्यत्र प्रानद् प्रायासीः" हिमतावितति ...ः अस्यास्तव अस्मे अस्मासु हितिर्गतिः का किं कार्यं- ...गमनं ते तव कापरितक्मूया तस्यार्थं दूतस्यार्थं दूत- ...सीत् त्वं रसायाः पयांसि कथमतर इति पणिभिः पृष्टा ...ब्रूते अहमिन्द्रस्य दूती तेन प्रेषिता चराम्यागतास्मि"व्यत्ययो ...„इति सूत्रात् किमिच्छन्तीत्यस्य परिहारमाह। हे पणयः ! ...महोलक्षणनिधीनिच्छन्ती अपहर्तुमिति शेषः नोऽस्माकमति- ...प्रियसा स्वामिनो भयेन तत्तदावत् आवामागमं तथा ...सायाः पयांस्यतरमिति सरमायाः पणीन्प्रति परिहारवच- ...ति मन्त्रवर्णार्थः ॥ ३० ॥

महाभोगिनः स्थूलशरीरा बहुभोगयुक्ता वा शीर्ष्णामिति ...ये शीर्षाणामितीतरपुरुषशिरोवैलक्षण्यद्योतनाय विगतं ...रचनं येषां ते तथा औत्पात्तिका स्वयं विधमन्ति निर- ...॥ ३१ ॥ (१)

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शीर्षस्य "शीर्षंश्छन्दसि„इति भगवान् पाणिनिः ॥ २९—३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

(१) अत्र श्रीविजयध्वजतीर्थमतेऽध्यायसमाप्तिर्नास्ति ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नैकशिरसामनेकफणानाम् । एतत् प्रपञ्चयति । कुहकेति । पुरुषवाहात् हरेर्वाहनात् ॥ २९ ॥

दैतेयादयोऽसुरभेदाः प्रत्यनीकाः शत्रवः इन्द्रदूत्या प्रयुक्ताभि- र्मन्त्ररूपाभिर्वाग्भिः । एवं हि वैदिकमाख्यानं पणिभिरसुरैर्निगूढा गामन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितां सन्धिमिच्छन्तः पणयः प्राहुः । किमिच्छन्ती सरमेत्यादि सा च सन्धिमनिच्छन्ती इन्द्र- स्तुतिपूर्वकं तान् प्रतिपरुषमाह "हता इन्द्रेण पणयः पलायध्वम्" इत्यादि ते च तच्छ्रुत्वा बिभ्यतीति ॥ ३० ॥

महाभोगिनो महाफणाः ॥ ३१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमस्य चतुर्विंशः सङ्गतः सङ्गतः सताम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

महाभोगवन्तो महाकायाः ॥ २९ ॥

तेजसा सुदर्शनेन प्रतिहतो बलावलेपो वीर्य्यगर्वो येषां ते बिलेशयाः सर्पा इव ये पणयः सरमया प्रयुक्ताभिः "हता इन्द्रेण पणयः शयध्वम्"इत्यादिमन्त्रवर्णाभिः बिभ्यति ॥ ३० ॥

महाभोगिनो बृहत्कायाः महासर्पाः अतिक्रोधवन्तः येषां वासुकिप्रमुखानां पञ्चादिसङ्ख्यानि शीर्षाणि येषां तेषां पञ्चा- दिशीर्ष्णाम् शीर्षाणामित्यार्षः प्रयोगः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्विंशाध्यायार्थप्रकाशः ॥ २४ ॥

---

भाषा टीका ।

तिस के नीचे महातल मे अनेक मस्तकवाले काद्रवेय नामक सर्पो का क्रोधवश नाम का गण है कुहक तक्षक कालिय सुषेण आदि बडे शरीर वाले ये सर्प हैं नारायण के वाहन पक्षिराज गरुड जी से डरते हुये भी अपने स्त्री पुत्र मित्रों के सहित कहींपर प्रमादी हो कर विहार करते हैं ॥ २९ ॥

तिस के नीचे रसातल मे दैतेय दानव पणिनाम वाले निवात कवच कालेय हिरण्यपुरवासी इन नामों वाले देवतों के शत्रु उत्पत्ति सेही बडे तेजवाले बडे साहसवाले केवल सकल लोक विदित प्रभाववाले हरिभगवान् के तेजस से श्री सुदर्शनचक्र सेही डर कर सर्प सरीके वास करते हैं जोकि इन्द्र की दूती सरमा की मन्त्र वर्ण रूपावाणी सुनने से इन्द्र से डरते हैं ॥ ३० ॥

भाषा टीका ।

तिसके नीचे पाताल में नाग लोकों के पति वासुकि आदिक शंख कुलिक महाशंख श्वेत धनंजय धृतराष्ट्र शंखचूड कम्बल अश्वतर देवदत्त आदि बडे सर्प बडे क्रोधवाले निवासकरते हैं वे कोई पांच फणा वाले कोई सात फणा वाले कोई सौ फणा वाले कोई हजार फणा वाले हैं इनों के फणों में स्थित जो महामणि हैं सो बडे प्रकाशमान हैं वे मणि अपने प्रकाश से पाताल विवर के सब अन्धकार को वारण करते हैं ॥ ३१ ॥

इति श्रीभागवत पञ्चमस्कन्ध चौबीसमे अध्याय का भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ २३ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे चतुर्विंशोऽध्यायः समाप्तः ॥ २४ ॥

---

## ॥ पञ्चविंशोऽध्यायः ॥

——:०:——

### ॥ श्रीशुक उवाच ॥

तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तर आस्ते या वै कला भगवतस्तामसी समाख्यातानन्त इति (१) सात्वतीया द्रष्टृदृश्ययोः सङ्कर्षणमहमित्यभिमानलक्षणं यं सङ्कर्षणमित्याचक्षते ॥ १ ॥

यस्येदं क्षितिमण्डलं भगवतोऽनन्तमूर्तेः सहस्रशिरस एकस्मिन्नेव शीर्षणि ध्रियमाणं सिद्धार्थ इव लक्ष्यते ॥ २ ॥

यस्य ह वा इदं कालेनोपसञ्जिहीर्षतोऽमर्षविरचितरुचिरभ्रमद्भ्रुवोरन्तरेण साङ्कर्षणो नाम रुद्र एकादशव्यूहस्त्र्यक्षस्त्रिशिखं शूलमुत्तम्भयन्नुदतिष्ठत् ॥ ३ ॥

यस्याङ्घ्रिकमलयुगलारुणविशदनखमणिषण्डमण्डलेष्वहिपतयः सह सात्वतर्षभैरेकान्तभक्तियोगेनावनमन्तः स्ववदनानि परिस्फुरत्कुण्डलप्रभामण्डितगण्डस्थलान्यतिमनोहराणि प्रमुदितमनसः खलु विलोकयन्ति ॥ ४ ॥

यस्यैव हि नागराजकुमार्य आशिष आशासानाश्चार्वङ्गवलयविलसितविशदविपुलधवलसुभगरुचिरभुजरजतस्तम्भेष्वगुरुचन्दनकुङ्कुमपङ्कानुलेपेनावलिम्पमानास्तदभिमर्शनोन्मथितहृदयमकरध्वजावेशरुचिरललितस्मितास्तदनुरागमदमुदितमदविघूर्णितारुणकरुणावलोकनयनवदनारविन्दं सव्रीडं किल विलोकयन्ति ॥ ५ ॥

स एव भगवाननन्तोऽनन्तगुणार्णव आदिदेव उपसंहृतामर्षरोषवेगो लोकानां स्वस्तय आस्ते ॥ ६ ॥

ध्यायमानः सुरासुरोरगसिद्धगन्धर्वविद्याधरमुनिगणैरनवरतमदमुदितविकृतविह्वललोचनः सुललितमुखरिकामृतेनाप्यायमानः स्वपार्षदविबुधयूथपतीनपरिम्लानरागनवतुलसिकामोदमध्वासवेन माद्यन्मधुकरव्रातमधुरगीतश्रियं वैजयन्तीं स्वां वनमालां नीलवासा एककुण्डलो हलककुदि कृतसुभगसुन्दरभुजो भगवान् माहेन्द्रो वारणेन्द्र इव काञ्चनीं कक्षामुदारलीलो बिभर्त्ति ॥ ७ ॥

य एष एवमनुश्रुतो ध्यायमानो मुमुक्षूणामनादिकालकर्मवासनाग्रथितमविद्यामयं हृदयग्रन्थिं सत्त्वरजस्तमोमयमन्तर्हृदयङ्गत आशु निर्भिनत्ति तस्यानुभावान् भगवान् स्वायम्भुवो नारदः सह तुम्बुरुणा सभायां ब्रह्मणः संश्लोकयामास ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चविंशे ततोऽधस्तादाह शेषस्य संस्थितिम् ।
सञ्जिहीर्षोरिदं काले यत्र रुद्रसमुद्भवः ॥ १ ॥

तस्य पातालस्य कोऽसावनन्तः सात्वतीयाः सात्वततन्त्रनिष्ठा अनुसर्षोपासने सङ्कर्षणमित्याचक्षते तथाख्याने हेतुः द्रष्टृदृश्ययोः सम्यक्कर्षणमेकीकरणं येन तत्कुतः अहमित्यभिमानो लक्षणं चिह्नमधिष्ठातुर्यस्य अहङ्काराधिष्ठानेन द्रष्टृदृश्यसङ्कर्षणात् सङ्कर्षण इत्यर्थः ॥ १ ॥

अनन्तत्वमाह । यस्येदमिति । यच्छब्दानां स एष भगवाननन्त इत्युत्तरेणान्वयः ॥ २ ॥

तामसत्वमाह । यस्येदं विश्वमुपसंहर्तुमिच्छतः अमर्षेण विरचिते कुटिलीकृते रुचिरीकृते भ्रमन्त्यौ भ्रुवौ तयोर्मध्य उत्तम्भयन्नुन्नमयन् ॥ ३ ॥

---

(१) प्रमातारः सात्वतीया इति श्रीवीरराघवाचार्यपाठः ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुभगत्वमाह । यस्याङ्घ्रिकमलयुगलेऽरुणा विशदा नखा एव मणयस्तेषां षण्डः समूहस्तस्य मण्डलेषु परिस्फुरतां कुण्डलानां प्रभया मण्डितानि गण्डस्थलानि येषु तानि॥ ४ ॥

चारुवयकूवलये विलसिताश्च ते विशदाश्च विपुलाश्च धवलाश्च सुभगाश्च रुचिराश्च भुजा एव रजतस्तम्भास्तेष्वगुरुचन्दनकुङ्कुमानां पङ्क एवानुलेपस्तेनावलिम्पमानास्तेषामभिमर्शनेनोन्मथिते हृदये मकरध्वजस्यावेशेन रुचिरं च ललितं च स्मितं यासां ताः तस्यानुरागेण मदेन च मुदितं च तन्मदेन विघूर्णिते प्रचलिते च आ ईषदरुणे करुणावलोकयुक्ते नयने यस्मिंस्तद्वदनारविन्दं विलोकयन्ति ॥ ॥ ५ ॥

अमर्षोऽसहनं रोषः क्रोधः उपसंहृतस्तयोर्वेगो येन ॥ ६ ॥

उपासनार्थमाह । सुरादिभिर्ध्यायमानश्चिन्त्यमानः अनवरतं मदेन मुदितश्चासौ विकृतविह्वललोचनश्च, सुललितेन मुखरिकामृतेन वचनामृतेन स्वपार्षदान् विबुधयूथपानां पतींश्चाप्यायमानो हर्षयन्नीले वाससी यस्य एकमेव कुण्डलं यस्य हलस्य ककुदि पृष्ठे कृतो न्यस्तः सुभगश्च सुन्दरश्च भुजो यन उदारा लीला यस्य सः न परिम्लानो रागः कान्तिर्यस्यास्तस्या नवतुलसिकाया आमोदमध्वासवेन सुरभिमधुरसेन माद्यतां मधुकराणां ये व्रातास्तेषां मधुरगीतेन श्रीर्यस्यास्तां वनमालां कक्षां वरत्राम् ॥ ७ ॥

संश्लोकयामास वर्णयामास ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं पातालान्तान् भूविवरानुवर्ण्याथ पातालपर्यन्तस्य भूमण्डलस्य धारकं रसाया मूले स्थितमनन्तमनुवर्णयति पञ्चविंशेन। तस्य पातालस्य मूलदेशेऽधस्तात्त्रिंशद्योजनसहस्रान्तरे आस्ते का सा या चास्ते तत्राह । या वा इति । अनन्त इति समाख्याता प्रसिद्धानन्तसंज्ञिकेत्यर्थः तामसी तामसाहङ्काराधिष्ठात्री या भगवतः कला अंशरूपा सा इत्यर्थः सैव सङ्कर्षण इत्युच्यते तदाह । प्रमातार इति । सात्वतीयाः सङ्कर्षणप्रोक्तसात्वताख्यपञ्चरात्रनिष्ठाः प्रमातार उक्तभगवत्कलायाथात्म्यविदस्तमनन्तं सङ्कर्षण इत्याचक्षते किमिदं सङ्कर्षणनामाश्वकर्णादिवत्केवलरूढं किंवा पङ्कजादिवद्योगरूढमित्यपेक्षायां योगरूढमित्याह । द्रष्टृदृश्ययोरिति । यतोऽयमनन्तः द्रष्टृदृश्ययोर्ज्ञातृज्ञेययोः सन्निकर्षणं सन्निकृष्यते विषयीक्रियतेऽतीन्द्रियार्थोऽनेनेति सन्निकर्षणमतीन्द्रियार्थविषयकज्ञानसाधनं स्वयं यथातीन्द्रियार्थविषयकज्ञानवानेवमितरेषामप्यतीन्द्रियार्थविषयकज्ञानापादक इत्यर्थः यत एवमनन्तस्ततस्तं सङ्कर्षण इत्याचक्षते सङ्कर्षणत्वमेव स्पष्टयति । अहमित्यभिमानलक्षण इति । अहमिति प्रतीयमानोऽतीन्द्रियो यो जीवस्तद्विषयकोऽभिमानः अहमिति प्रतीतिस्तस्य लक्ष्यतेऽनेनेति लक्षणं कारणं हेतुरिति यावज्जीववर्गाभिमानिदेवतात्वाच्चेपामहमिति बुद्धिप्रवृत्तिहेतुरित्यर्थः ॥ १ ॥

एवमनन्तशब्दोऽपि तस्मिन् योगरूढ इत्याह । यस्येति । यच्छब्दानां स एव भगवाननन्त इत्युत्तरेणान्वयः यस्य भगवतः सहस्रशिरसः अनन्तमूर्तेरेकस्मिन्नेव शीर्षणि ध्रियमाणं धार्यमाणमिदं कृत्स्नभूमण्डलं सिद्धार्थ इव श्वेतसर्षप इव ... दृश्यतेऽतोऽपरिच्छिन्नत्वादनन्त इत्युच्यत इति भावः ॥ २ ॥

यदुक्तं तामसीति तामसाहङ्काराधिष्ठातृत्वं तद्विशदयति यस्य ह वेति । कालेन द्विपरार्द्धावसानरूपकालेनेदं कृत्स्नं ... संजिहीर्षतः संहर्त्तुमिच्छतः यस्य सङ्कर्षणस्यामर्षण क्रोधेन विरचिते कुटिलीकृते रुचिरे भ्रमन्त्यौ भ्रुवौ तयोरन्तरेण मध्ये साङ्कर्षणस्य एकादशानां व्यूहः गण एकादशरुद्रसमुदायरूपः कथम्भूतः ... त्र्यक्षः त्रीण्यक्षीणि यस्य स त्र्यक्षः तिस्रः शिखा यस्य तादृशं शूलमुत्तम्भयन्नूर्ध्वं धारयन्नुदतिष्ठदुद्बभूव तामसाहङ्काराधिष्ठातृत्वाज्जगत्संहर्तृतामसरुद्रगणोत्पादक इत्यर्थः ॥ ३ ॥

सुभगत्वमाह । यस्येति । अहीनां पतयः सात्वतश्रेष्ठैः सह ... सङ्कर्षणस्याङ्घ्रिकमलयुगलेऽरुणा विशदा नखा एव मणयस्तेषां षण्डस्तस्य मण्डलेषु एकान्तभक्तियोगेनाव्यभिचरितभक्तियोगेन ... वनमन्तः प्रणमन्तः उक्तविधेषु नखमणिमण्डलेषु प्रतिबिम्बितानि अतिमनोहराणि परितः स्फुरतां कुण्डलानां प्रभया मण्डितानि गण्डस्थलानि येषु तानि स्ववदनानि प्रमुदितं मनो ... तादृशाः सन्तः सुखं विलोकयन्ति खलु नूनम् ॥ ४ ॥

तथा नागराजानां कुमार्यः आशिषः पुरुषार्थानाशासानाः ... यमानाः यस्य सङ्कर्षणस्य चारुभिः सुन्दरैरङ्गदैर्वलयैः विलसिताः प्रकाशिताश्च ते विशदा निर्मलाश्च विपुला दीर्घाः सुभगाः कोमलाश्च रुचिराः सुन्दराश्च भुजास्त एव रजतस्तम्भास्तेष्वगरुकुङ्कुमचन्दनानाम्पङ्कश्चानुलेपस्तेनावलिम्पमाना लेपनं कुर्वाणास्तेषां भुजानामभिमर्शेन स्पर्शेन उन्मथिते हृदये मकरध्वजस्य कामस्यावेशेन रुचिरं च ललितं च यत्स्मितं तद्युक्ताः तथाभूताः सत्यः तस्य सङ्कर्षणस्यानुरागमदमुदितमदविघूर्णित... तारुणकरुणावलोकनयनवदनारविन्दं सव्रीडं यथा तथा विलोकयन्ति स्वाश्रितेषु मदेन स्वानुभवजनितेन च मुदितं तन्मदेन विघूर्णिते प्रचलिते च ईषदरुणे करुणावलोकने ... यस्मिन् तद्वदनारविन्दमिति तस्यार्थः ॥ ५ ॥

स उक्तविध एव सङ्कर्षणाख्योऽनन्तास्त्रिविधपरिच्छेदरहितः अनन्तकल्याणगुणार्णवः जगत्कारणभूतो ... स्वतेजसा दीप्यमानः उपसंहृतः अमर्षरोषयोर्जगत्संहारविषययोरसहनक्रोधयोर्वेगो येन तथाभूतः लोकानां साधुजनानां स्वस्तये सुखायास्ते तिष्ठतीत्यर्थः ॥ ६ ॥

पुनः कथम्भूतः सुरादीनां गणैर्ध्यायमानः अनवरतं मदेन स्वानुभवजनितमदेन मुदितः स चासौ विकृतविह्वललोचनः विघूर्णिते विह्वले परवशे इव स्थिते लोचने यस्य सः सुललितेन सुन्दरेण भावगर्भेण मितेन मुखरिकामृतेन वचनामृतेन स्वपार्षदान् स्वविबुधयूथानां पतींश्चाप्यायमानः हर्षयन् ... रिम्लानः अक्षीणः रागो रक्तिमा यस्यास्तस्या नवतुलसिकाया नूतनकृष्णतुलस्या आमोदः मधुरूपः आसवश्च ... समाहारस्तेन माद्यतां मधुकराणां व्रातास्तेषां मधुरगीतेन ... स्यास्तां स्वामसाधारणीं वैजयन्त्याख्यां वनमालां ... शेषः बिभर्तीत्यनेन वान्वयः नीले वाससी यस्य एकं कुण्डलं यस्य हलस्य ककुदि पृष्ठे कृतो न्यस्तः सुभगः ... मारश्च सुन्दरो भुजो येन एवम्भूतो भगवान् सङ्कर्षणः ... महेन्द्रसम्बन्धी वारणेन्द्र इव ऐरावत इव शुभ्रः उदारा लीला ...

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

काञ्चनीं स्वर्णमयीं कक्षां रसनां बिभर्ति कक्षे भवा कक्षा वरत्रा चर्ममयी वध्रिका "नध्री वध्री वरत्रा स्यात्" इत्यमरकोशः। तामध्यस्य जान्वोश्चावष्टम्भार्थां योगपट्टिकाख्यां स्वर्णमयीं बिभर्ति इत्यर्थः ॥ ७ ॥

एवं सङ्कर्षणं उपवर्ण्य इदानीमुक्ताविध उपास्यमान उपासकानामन्तर्हृदयं गतः प्रकृतिसम्बन्धं निरस्यतीत्याह । य एष इति । एष भगवाननन्तः एवमनुश्रुतः उक्तविधत्वेन गुरुमुखाच्छ्रुतः अभिध्यायमानः "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्यर्थोऽत्र प्रत्यभिज्ञातः अतः सामर्थ्याच्छ्रवणानन्तरस्मृत इति गम्यते मुमुक्षूणां संसारादात्मानं मोक्तुमिच्छतामनादिकालप्रवृत्ताभिः कर्मवासनाभिर्ग्रथितं सन्दर्भितमविद्यामयं देहात्मभ्रान्तिस्वतन्त्रात्मभ्रान्तिरूपाज्ञानमयं ग्रन्थिं ग्रन्थिवद्दुर्मोच्यं सत्वरजस्तमोमयं सत्त्वादिगुणप्रचुरं गुणत्रयसम्बन्धप्रयुक्तानादिकालप्रवृत्तकर्मवासनाविद्याग्रन्थिरूपं संसारमित्यर्थः ध्यानेन मुमुक्षूणामन्तर्हृदये सन्निहितः आशु भिनत्ति नितरां निरस्यतीत्यर्थः तस्य भगवतः सङ्कर्षणस्येममुक्तमनुभावं प्रभावं तुम्बुरुणा सह स्वयम्भुवः पुत्रो नारदो ब्रह्मणश्चतुर्मुखस्य सभायां संश्लोकयामास वर्णयामास ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्य पातालस्य तामसी तमोगुणप्रवर्त्तनी अनन्तस्य यत्स्वरूपं द्रष्टुश्चेतनस्य दृश्यस्य शरीरस्य सन्निकर्षणं सामीप्यापादकमभेदग्राहकं कथं देहोऽहमिति तर्हि इदं सत्यं किं नेत्याह । अभिमानलक्षणं भ्रान्तिप्रत्यापादकमित्यर्थः तत्स्वरूपं सङ्कर्षणमित्याचक्षते ॥ १ ॥

सात्वतः गुरुतरक्षितिमण्डलं सर्षपलाघववद्धारयतोऽपरिमितबलत्वेनानन्तत्वं युक्तमित्याभिप्रेत्याह । तस्येति । सिद्धार्थः सर्षपः॥२॥

एकादशव्यूहः एकादशधा विभक्तरूपविशेषः उत्तम्भयन्नुत्कम्पयन् ॥ ३ ॥ ४ ॥

तदभिमर्शनेन भुजस्पर्शनेन सव्रीडमिति क्रियाविशेषणम् ॥ ५ ॥

शृङ्गाराद्यनन्तगुणार्णवः ॥ ६ ॥

अपरिम्लानो रागः कान्तिर्यस्याः सा तथा आमोदमध्वासवेन सौरभरूपमधुरसेन हलस्य निलायुधस्य ककुदग्रे कक्ष्यानुरबन्धम् ॥ ७ ॥

संश्लोकयामास पद्यलक्षणवाक्यैः कथयामास ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तामसीति तमोगुणाधिष्ठातृरुद्रस्यान्तर्यामित्वात् । "मूर्त्तिं नः पुरुकृपया बभार सत्त्वं संशुद्धम्" इत्यादिविरोधात् ॥ १ ॥ २ ॥

अमर्षकारणान्तु प्रायः सर्वेषां युगपद्भगवद्बहिर्मुखत्वं ज्ञेयम् ॥ ३—६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पञ्चविंशे तु पातालतले शेषस्य भूभृतः ।
जगत्संहर्तृरुद्रस्याप्यंशिनो वर्णिता गुणाः ॥ ० ॥

तामसी तमःकार्यसंहारप्रवर्त्तयित्री ननु तमोमयी "मूर्त्तिं नः पुरुकृपया बभार सत्त्वं संशुद्धम्" इत्यादिविरोधात् सात्वतीयाः सात्वततन्त्रनिष्ठाः द्रष्टृदृश्ययोर्भोक्तृभोग्ययोः सम्यक्कर्षणं यतः सङ्कर्षण इति तच्च कर्षणमहमस्य भोक्ता इदं मे भोग्यमित्यभिमानलक्षणमेव अभिमन्तुरहन्ताममतयोः शुद्ध्यर्थं तदधिष्ठातृत्वेन यं ध्यायन्तीति भावः ॥ १ ॥ २ ॥

उपसंजिहीर्षत इति । यदैवेदं जगदाधिक्येन संहर्त्तुमैच्छत्तदैव मायायास्तदिच्छाधीनत्वात्तदीयतमःकार्यरोषात्मको रुद्रो भ्रूमध्ये प्रादुरभूदमर्षविरचित इति रुद्रस्य विशेषणं सुलोपः आर्षः । यथा सिसृक्षतो द्वितीयपुरुषस्य नाभिमध्ये रजोगुणात्मकं पद्मं प्रादुर्भवति तद्वत् ॥ ३ ॥

लावण्येन मनोहरत्वमाह । यस्येति । नखमणीनां षण्डः समूहस्तस्य मण्डलेषु दर्पणायमानेष्वित्यर्थः ॥ ४ ॥

यस्य चारुणि अङ्गवलये अङ्गमण्डले विलसितादिविशेषणविशिष्टा ये भुजरजतस्तम्भास्तेषु अगुर्वादिपङ्क एवानुलेपः अनुलेपसाधनं तेन अवलिम्पन्त्यः तदभिमर्शनं तत्समय एव यत्तदङ्गस्पर्शस्तेन उन्मथिते हृदये यो मकरध्वजावेशस्तेन रुचिरं भावसूचकं स्मितं यासां ताः तस्यानुरागमदः साहजिको भक्तविषयकस्तेन मुदिते मदविघूर्णितारुणे च नागकुमारीविषयककरुणावलोकविशिष्टे नयने यत्र तद्वदनारविन्दं सव्रीडं हन्त हन्तास्मद्धृदयविकारं प्रभुरयं ज्ञातवानिति लज्जापर्याकुलं यथा स्यात्तथा ॥ ५ ॥

उपसंहृतेति । स्थितिकाले सम्प्रति रोषस्यानौचित्यादिति भावः । अमर्षोऽसहिष्णुता तदुत्थो रोषः क्रोधः ॥ ६ ॥

सुललितेन मुखरिकामृतेन वचनामृतेन कक्षां वरत्राम् ॥ ७ ॥

संश्लोकयामास पुरुषावतारत्वेन श्लोकैस्तुष्टाव ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीमत्सङ्कर्षणवैभवं वर्णयति पञ्चविंशेनाध्यायेन । तस्येति । तामसी प्रलयनिमित्तभूतरुद्रादिनियन्त्री सात्वतीयाः वेदार्थभूतभगवत्प्रोक्तसात्वततन्त्रनिष्ठाः श्रीमन्नारदादयश्चतुर्व्यूहोपासने यमनन्तं सङ्कर्षण इत्याचक्षते तदाख्याने हेतुं दर्शयंस्तमेव विशिनष्टि । द्रष्टृदृश्ययोः सम्यक्कर्षणमेकीकरणं येन तं पुनः कीदृशमहमित्येवंभूतस्य रुद्रस्य लक्षणं स्वरूपं यस्मात्तम् ॥ १ ॥

यस्येत्यादिवच्छब्दानां स एव भगवाननन्तोऽग्रिमेणान्वयः ॥ २ ॥

इदं विश्वमुपसंहर्तुमिच्छतः अमर्षेण विरचिते कुटिलीकृते रुचिरे भ्रमन्त्यौ भ्रुवौ तयोरन्तरेण मध्ये एकादशव्यूहः एकादशभेदवान् रुद्रः शूलमुत्तम्भयन्नुन्नमयन्नुदतिष्ठत् ॥ ३ ॥

सात्वतर्षभैः सह अहिपतयः प्रपन्नमन्तः यस्य सङ्कर्षणस्य अङ्घ्रिकमलयुगले अरुणाश्च विशदाश्च नखा एव मणयस्तेषां षण्डः समूहस्तस्य मण्डलेषु परिस्फुरतां कुण्डलानां प्रभया मण्डितानि गण्डस्थलानि येषु तानि वदनानि विलोकयन्ति ॥ ४ ॥

उत्पत्तिस्थितिलयहेतवोऽस्य कल्पाः सत्त्वाद्याः प्रकृतिगुणा यदीक्षयासन्।
यद्रूपं ध्रुवमकृतं यदेकमात्मन्नानाधात्कथमुह वेद तस्य वर्त्म ॥ ९ ॥
मूर्तिं नः पुरुकृपया बभार सत्त्वं संशुद्धं सदसदिदं विभाति यत्र।
यल्लीलां मृगपतिराददेऽनवद्यामादातुं स्वजनमनांस्युदारवीर्यः ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

किञ्च यस्य सङ्कर्षणस्य आशिषः सम्पद् आशासानाः चारूणि यान्यङ्गवलयान्यङ्गदानि तद्विलक्षिताश्च ते विशदा विपुलाश्च धवलाः सुभगाश्च रुचिराश्च भुजा एव रजतस्तम्भास्तेषु अगर्वादिपङ्क एवानुलेपस्तेनावलिम्पमानास्तेषामभिमर्शेनोन्माथिते हृदये मकरध्वजस्यावेशेन रुचिरं च ललितं च स्मितं यासां ताः तस्यानुरागमदेन भक्तविषयकस्नेहजानितेन मदेन मुदिते च मदविघूर्णिते स्वानन्दमदेन प्रचलिते च आ ईषदरुणे च करुणावलोकयुक्ते नयने यस्मिन् तच्च तद्वदनारविन्दं विलोकयन्ति ॥ ५ ॥

अपराधासहनममर्षः अपराधिदमनचेष्टा रोषः उपसंहृतस्तयोर्वेगो येन ॥ ६ ॥

सुरादिभिर्ध्यायमानः अनवरतमदेन नित्यनिरूढानन्दद्योतकस्वाङ्गचेष्टाविशेषेण मुदितश्चासौ विकृतविह्वललोचनश्च सुललितेन मुखरिकामृतेन वचनामृतेन स्वपार्षदादीन् आप्यायमानः संहर्षयन् नीले वाससी यस्य एकमेव कुण्डलं यस्य हलस्य ककुदि पृष्ठे कृतो न्यस्तः सुभगश्चासौ सुन्दरो भुजो येन उदारलीलः रुचिरक्रीडः न परिम्लानो रागः कान्तिर्यस्यास्तस्याः नवतुलसिकाया आमोदमध्वासवेन सुरभिमधुररसेन माद्यतां मधुकराणां व्रातास्तेषां मधुरगीतेन श्रीर्यस्यास्तां बिभर्ति कक्षां वरत्रां वारणेन्द्र ऐरावत इव ॥ ७ ॥

तुम्बुरुणा गन्धर्वेण सह संश्लोकयामास ॥ ८ ॥

---

भाषा टीका।

श्रीशुकदेवजी बोले उस पाताल के नीचे तीस हजार योजन के अनन्तर भगवान् की तामसी कला अनन्त नाम से प्रख्यात है तिस को पञ्चरात्र तन्त्रवाले आचार्य चेतन अचेतन दोनों के मिश्रभाव करने से अहं ऐसा अभिमान का लक्षण होने से सङ्कर्षण करके कहते हैं ॥ १ ॥

जिन अनन्त मूर्ति भगवान् के हजारों मस्तकों के मध्य मे किसी एक मस्तक में रखा हुआ यह भूमण्डल सरसों के तुल्य प्रतीत होता है ॥ २ ॥

प्रलय काल मे इस जगत्को संहार करने की इच्छा वाले जिन के क्रोध से रचित भ्रूमण्डल के मध्य मे से एकादशव्यूह वाले तीन नेत्र वाले तीन शिखा के शूल को उठाते हुये साङ्कर्षण नाम के रुद्र प्रगट भये हैं ॥ ३ ॥

जिन सङ्कर्षण भगवान् के चरण कमल दोनों के लाल उज्ज्वल नखों के मणियों के समूह के मण्डलों के समीप मे वडे सर्प सात्वतों मे श्रेष्ठ पुरुषों के सहित एकान्त भक्तियोग से नमस्कार करते हुये चारों तरफ से प्रकाशमान जो कुण्डलों की प्रभा तिस का जो म[ण्]डल तिस मे शोभायमान गण्डस्थलों वाले जो [अति] मनोहर वदन तिन को वडे आनन्दित मन से देखते हैं ॥ ४ ॥

नागराजों की कुमारी अपने मनोरथों की चाहना [करने] वाली होकर उन अनंतजी के मनोहर शरीर मंडल मे शोभा[य]मान अति निर्मल वडे सपेद सौभाग्य वाले सुंदर चांदी [के] खंभासरी के भुजाओं मे अगुरु चंदन कुङ्कुम के पंकका लेप को लगाती हुई लगाते समय मे शरीर के स्पर्श से हृदय [के] क्षुभित होने से कामदेव के वेग से अति सुंदर विलास युक्त मु[स्कान] वाली होकर इनके अनुराग को जानकर मदसे मुदित म[द]से घूमते हुये कुछलाल वर्ण वाले अवलोकन से युक्त भगवा[न्] संकर्षणजी के मुखारविंदको वे नाग कन्या देखती रहती हैं ॥ ५ ॥

सोइ अनंत गुणों के समुद्र भगवान् अनंतजी आदि [दे]व क्रोध अमर्ष के वेगको समेटकर सबलोगों के कल्याणके वा[स्ते] स्थित हैं ॥ ६ ॥

सुर असुर उरग सिद्ध गन्धर्व विद्याधर मुनि गण निरन्[तर] उनका ध्यान करते हैं सर्वदा मदसे मुदित होने से विक[ार] युक्त विह्वल नेत्रों से अनन्तजी हैं सुन्दर मुख भाषण [के] अमृत से देवताओं के पति अपने पार्षदों को आनन्दित कर[ते] हैं नील वस्त्रको धारण किये हैं एक कुण्डल धारण किये [हैं] हलके पृष्ठ भाग में सुन्दर सुभग भुजों को स्थापन किये [हैं] कभी म्लान नहीं होने वाली माला चन्दन लेप तुलसी [के] इनके मधुर सुगन्ध के मदसे मतवाले भौंरों के समूह के मधुर गानकी शोभा से युक्त अपनी वनमाला को धारण किये हैं उससे भगवान् वैसे शोभित होते हैं जैसे कि मनोहर लीलावाला महेन्द्रका हस्ती सुवर्ण की कोंधनी को धारण करा होवे ॥ ७ ॥

इस प्रकार श्रवण किये हुये ध्यान किये भये संकर्षण भगवान् मुमुक्षु जनों की अनादि काल की जो कर्म वासना रूप ग्रन्थि है जोकि अविद्या से भई है सत्व रज तमो गु[ण] है तिस ग्रन्थि को हृदय मे प्रवेश होकर शीघ्र ही भेदन कर देते हैं जिनके प्रभाव को ब्रह्माके पुत्र नारद भगवान् तुंबुरु [गन्धर्व] के सहितु ब्रह्माजी के सभा मे श्लोक बनाकर गान करते हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अस्य जगत उत्पत्त्यादिहेतवो गुणा यदीक्षया कल्पाः स्वस्वकार्यसमर्था आसन् यस्य तु रूपं ध्रुवमनन्तम् अकृतम् ... तत्र हेतुः यदेकमेव सदात्मन्नात्मनि नानाकार्यप्रपञ्चम् ...

यन्नाम श्रुतमनुकीर्तयेदकस्मादार्तो वा यदि पतितः प्रलम्भनाद्वा ।
हन्त्यंहः सपदि नृणामशेषमन्यं कं शेषाद्भगवत आश्रयेन्मुमुक्षुः ॥ ११ ॥
मूर्द्धन्यर्पितमणुवत् सहस्रमूर्ध्नो भूगोलं सगिरिसरित्समुद्रसत्त्वम् ।
आनन्त्यादनिमितविक्रमस्य भूम्नः को वीर्याण्यधिगणयेत् सहस्रजिह्वः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य ब्रह्मरूपस्य वर्त्म तत्त्वं जनः कथमुह वेद नैव वेदेत्यर्थः ॥ ९ ॥

तर्हि कथमसौ मुमुक्षुभिः सेव्यते तत्राह । मूर्तिमिति । यत्रेदं सदसद्विभाति स नोऽस्माकं भक्तानां बहुकृपया संशुद्धं सत्त्वं मूर्तिं बभार स्वजनानां मनांस्यादातुं वशीकर्तुं कृतां यस्य लीलां मृगपतिः सिंह आददे अशिक्षत । यतः उदाराणि वीर्याणि यस्य तस्मादन्यं मुमुक्षुः कमाश्रयेदित्युत्तरेणान्वयः यद्वा । कृपयेत्यत्र हेतुः । यद्यस्मात्स्वजनानां मनांस्यादातुं लीलाआददे मृगपतिरिवोदारवीर्यः । यद्वा । मृग्यन्त इति मृगाः कामप्रदास्तेषां पतिर्मुख्यः ॥ १० ॥

किञ्च । आस्तां तस्य कृपया वपुर्धारणं तद्भजनं वा तन्नामौदार्यमेवातिचित्रमित्याह । यस्य नाम यदि पतितो महापातक्यप्यनुकीर्तयेत्तर्हि स शुद्ध्येदिति किमु वक्तव्यं यतोऽसावेव नृणामशेषमंहः सद्यो हन्ति । कथमनुकीर्तयेत् । अन्यतः श्रुतं वा अकस्माद्वा आर्तो वा सन्प्रलम्भनाद्वा परिहासात् तस्माच्छेषादन्यम् ॥ ११ ॥

गिर्यादिसहितं भूगोलं सत्त्वानि प्राणिनः सहस्रजिह्वोऽपि को गणयेत् ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

प्रथमं वर्द्धणेन स्वस्यानधिकारद्योतनाय तत्स्वरूपस्य दुर्ज्ञेयत्वमभिप्रयन्कारणत्वेन तमुपलक्षयति । उत्पत्तीति । अस्य जगतः उत्पत्त्यादिहेतुभूताः सत्त्वाद्याः प्रकृतिगुणाः सत्त्वरजस्तमोगुणाः क्रमोऽत्राविवक्षितः रजःसत्त्वतमोगुणाः क्रमेण जगदुत्पत्त्यादिहेतुभूता यस्य भगवत ईक्षया सिसृक्षया कल्पाः सृष्ट्यादिसमर्था आसन् बभूवुः गुणत्रयात्मिका प्रकृतिः स्वयं महदादिकार्यवर्गहेतुभूतापि स्वयमसमर्था सती यस्य सिसृक्षारूपेक्षया स्रष्ट्यादिसमर्थाभूदित्यर्थः अनेन जगन्निमित्तकारणत्वमुक्तम् "तदैक्षत बहु स्याम" इति श्रौतस्य कर्तृत्वस्यात्र प्रत्यभिज्ञानात् निमित्तकारणत्वं नाम स्वशरीरभूतप्रकृतिपुरुषकालानां स्वकार्योत्पत्त्यर्थं परिणामोपयुक्तप्रवर्तनाश्रयत्वं यथा कुलालादेः स्वकीयमृत्पिण्डादेर्घटादिरूपपरिणामोपयुक्तप्रवर्तनाश्रयत्वम् अथोपादानकारणत्वेन लक्षयति । यद्रूपमिति । आत्मन्यात्मनि स्वस्मिन्नेवं देवादिनामरूपाद्यभावादविभागेन स्थितं ध्रुवं नित्यम् "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इति गीतोक्तेः कारणावस्थायामेवम्भूतं यद्रूपं प्रकृतिपुरुषात्मकं शरीरं तत्सिसृक्षानन्तरमात्मनि नानाकृतं देवादिनामरूपविभागाविभक्तं कृतमध्याकृतवान् तस्य भगवतः वर्त्म स्वरूपं लोकविलक्षणं कथमुह कथं हि वेद मादृशः इति शेषः पूर्वमात्मन्यविभागेन स्थितमात्मनि नानाकृतं रूपमधादित्यनेनैकत्वनानात्वे आत्मपर्यन्त इति विज्ञायेत इदमेव हि तस्य उपादानत्वं यत्प्रकृतिपुरुषगतदेवादिविभागस्य स्वशरीरभूतप्रकृतिपुरुषद्वारा आत्मपर्यन्तत्वमिति । यद्वा । पूर्वमेकत्वेनात्मनि स्थितं पश्चान्नानाकृतमात्मन्यधादित्यन्वयः धारणं चात्र अन्तः प्रविश्य प्रशासनेन इयमेव हि परमात्मनः कारणता कार्यता च यदविभक्तनामरूपप्रकृतिपुरुषनियमनं विभक्तनामरूपावस्थप्रकृतिपुरुषनियमनं चेति ज्ञातव्यम् ॥ ९ ॥

यद्यप्येवं दुर्ज्ञेयं स्वरूपं तथापि भक्तानुजिघृक्षयैवं साकूपेणं रूपं कृतवानिति कतिपयधर्मैर्वर्णयितुं शक्य इत्याह । मूर्त्तिमिति । यत्र यस्मिन् भगवतीदं परिदृश्यमानं सदसच्चिदचिदात्मकं जगद्विभाति स भगवान्नोऽस्माकं कृपयास्मासु कृपयेत्यर्थः संशुद्धं रजस्तमोभ्यामभिश्रितं यच्छुद्धं सत्त्वं तन्मूर्त्तिं बभार दिव्यमङ्गलविग्रहरूपेण धृतवानित्यर्थः भक्तानां नोऽनुग्रहार्थैव निरतिशयकृपया मूर्त्तिमिमां बभारेति भावः कथमेवं ज्ञायत इत्यत आह । यदिति । यद्यस्मान्मृगपतिः सिंह इवोदारवीर्यः । यद्वा । मृग्यन्तेऽन्विष्यन्त इति मृगा ब्रह्मादयो देवास्तेषामपि पतिः "तं दैवतानां परमं च दैवतं पतिं पतीनां परमं परस्तात्,, इति श्रुतेः ब्रह्मादीनामप्यन्वेषणीय इति भावः अनेन परत्वं सूच्यते उदारवीर्यः जगत्कर्तृत्वादिसामर्थ्ययुक्त एवम्भूतोऽपि स्वजनानामस्माकं मनांस्यादातुं ग्रहीतुं स्ववशीकर्तुमिति यावत् अनवद्यामकर्मनिर्मितां लीलामहिपतिः सात्वतर्षभः नागराजकुमार्यादिमुखाराध्यः सात्वततन्त्रं प्रणयन् भूमण्डलभरणादिरूपां लीलामाददे परिगृहीतवान् सात्वततन्त्रप्रणेतृत्वं महाभारते उक्तम् ।

सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः ।
अस्मात् प्रवक्ष्यते धर्मान् मनुः स्वायम्भुवस्तथा । इति ॥

लीलामादद इत्यनेन सौलभ्यं सूच्यते अनेनैव तद्दर्शने मादृशानामधिकार इति तात्पर्यम् ॥ १० ॥

एवं परत्वसौलभ्ययोगः समाश्रयणीयताहेतुरुक्तः अथ नामप्रभावपर्यालोचनयापि स एव समाश्रयणीय इत्याह । यन्नामेति । आर्तः रोगादिपीडितः महापातक्यपि यस्य भगवतोऽनन्तस्य नाम यद्यनुकीर्तयेदकस्माद्वा प्रलम्भनाद्वा परिहासाद्वा यस्य नाम यदि श्रुतं च वा स्यादार्तेन पतितेन वा तर्हि स एव पतितादिः स्वपातित्यादिभिर्विमुक्त इतरेषामपि नृणामात्मानं स्मरतामशेषमंहो दुरितं हन्ति अतः मुमुक्षोः परम्परयाप्यशेषदुरितनिरसनक्षमनामधेयाच्छेषादन्यं कमाश्रयेदित्यर्थः शेषयति स्वाश्रितमिति नामनिर्वचनमत्राभिप्रेतम् ॥ ११ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् ।
मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥

इत्युक्तरीत्या अनन्तकल्याणगुणगणराशेरनन्तस्य साकल्येन कल्याणगुणान् वर्णयितुं कः प्रभुरित्याशयेनाह । मूर्द्धनीति । गिरिभिः पर्वतैः सहिताः सरितः समुद्राः सत्त्वा जन्तवः यस्मिंस्तद्भूमण्डलं यस्य सहस्रशिरसोऽनन्तस्य मूर्द्धन्यणुवद्र्पितं तस्य भूम्नोऽपरिच्छिन्नस्यानन्त्यादेवेतरैरियत्तयाविदितः विक्रमः प्रकारो यस्य तस्यानन्तस्य वीर्याणि कल्याणगुणरूपाणि सहस्रजिह्वोऽपि को वा गणयेदेतावन्तीति गणयेद्गणानां करोतीति भावः ॥ १२ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेश्चतसृषु मूर्तिषु द्वितीयमूर्तेः शेषे विशेषसन्निधानात्तद्योपपन्नान् गुणांश्छेषस्यैव कीर्तयन्ति । उत्पत्तीति । अस्य जगतः उत्पत्त्यादिहेतवः सत्त्वाद्याः प्रकृतिगुणा यदीक्षया कल्पाः समर्था आसन्नुत्पत्त्यादाविति शेषः । नन्वचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेस्तत्सम्बन्धेन प्रवृत्तौ तस्यापि तद्विकारापत्तिरिति तत्राह । यद्रूपमिति । ध्रुवं शश्वदेकप्रकारं कुतः अकृतमकृत्रिमत्वान्नित्यस्यापि जीवस्य शरीरसम्बन्धेन विकारादकृतस्यापि प्रधानस्य कार्यरूपेण तु तत्त्वदर्शनादस्याकृतत्वमौपचारिकं किं न स्यादिति तत्राह । यदेकमिति । यदेकं केवलं कार्यात्मना तत्सङ्गेन वा विकारि न भवति "सच्चत्यच्चाभवत्"इति श्रुतेः कार्यत्वश्रुतेः कथं न तन्मुख्यं स्यादित्यत्राह । आत्मन्निति । आत्मन्यात्मनि स्वाधारतया नानाविधं जगदधाद्धृतवांस्तु तद्रूपत्वेन "य उ त्रिधा तु पृथिवीमुत द्याम्"इति श्रुतेः किञ्चाचिन्त्यमहिमत्वात्तत्स्वरूपं दुर्ज्ञेयमित्यभिप्रेत्य यच्चक्षौ सम्बध्नाति । कथमिति । तस्य शेषान्तर्यामिणः सङ्कर्षणनामधेयस्य हरेर्भर्तृर्म वर्तनं कथमुह वेद न कथमपीत्यर्थः "मुह्यन्ति यं सूरयः" इति स्मोक्तिं हेत्यनेन स्मारयति ॥ ९ ॥

आत्मन्नानाधादित्येतत्सङ्क्षिप्याह । मूर्तमिति । सत्त्वं बलज्ञानसमाहारलक्षणमत एव संशुद्धं लोकहृष्ट्या मूर्तं परिमितं यत्र रूपे इदं सदसत्कार्यकारणात्मकमधिकरणाधेययोर्नामभेदः शङ्कनीयः मृगपतिः सिंहो यस्य लीलां शौर्यादिलक्षणामादधे अशिक्षत लीलाकरणप्रयोजनमाह । आदातुमिति । अनेनात्मन्नानाधादित्यत्र स्वाभिन्ना मत्स्यादिनानावतारा अप्यकृता इति ज्ञायते ॥ १० ॥

यन्नामस्मरणमात्रेणाशेषजन्मार्जितपापक्षयश्रवणात्तन्नामकीर्तनेनाघक्षयो भवतीति किं वक्तव्यमित्यभिप्रेत्य स्तुवता शेषान्तर्यामी श्रीनारायण एव स्तूयते अजामिलादौ दर्शनाद्यान्यनामकीर्तनेन तादृक्फलादर्शनाच्चेति भावेनाह । यन्नामेति । शेषान्तर्यामिणो हरेरन्यं कं पुरुषं मुमुक्षुरित्यनेन "अहं भोगप्रदो वत्स ! मोक्षदस्तु जनार्द्दनः" इत्युक्तिं स्मारयति ॥ ११ ॥

गुरुगिर्यादिभरधरागोलधृतिरपि शेषस्य हरिसन्निधानादेवान्यकृता नेति भावेनाह । मूर्द्धनीति । विक्रमाणामानन्त्यात्साकल्येनाज्ञातपराक्रमस्य सहस्रजिह्वः शेष इत्यनेन स्पष्टयते ॥ १२ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मृगपतिः श्रीवराहदेवः जहास चाहो वनगोचरो मृग इ[illegible] तत्रापि मृगशब्दप्रयोगाद्यस्य लीलां पृथिवीधारण[illegible] माददे स्वीकृतवानिति परममाहात्म्यं दर्शितम् ॥ १० ॥ ११ ॥

भगवद्विग्रहस्य मध्यमपरिमाणायमानत्वेऽपि विभुत्वाद्[illegible] लस्याणुत्वम् ॥ १२—१५ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कल्पाः स्वस्वकार्यसमर्थाः यदीक्षयैव आसन् यावत्पुरुष[illegible] प्रकृतावीक्षणं नासीत्तावत् प्रकृतिगुणाः सत्त्वाद्या महत्तत्त्वादीना[illegible] मुत्पत्त्यादिषु न समर्था अभूवन्नित्यर्थः । यस्य रूपमाकारः ध्रु[illegible] नित्यं यतोऽकृतमकृत्रिमं चिन्मयत्वादित्यर्थः । किञ्च । यदेकमे[illegible] आत्मनि स्वदेहरोमकूपप्रदेशेषु नानाकार्यप्रपञ्चमधाद्धार पुमा[illegible] तस्य वर्त्म तत्त्वं तत्प्राप्तिमार्गं वा को वेद ॥ ९ ॥

रामकृष्णाद्यवतारत्वेन स्तौति मूर्त्तिं बभार । ननु किं प्रकृ[illegible] न हि न हि संशुद्धं सत्त्वमत एव यत्र यस्यां चिन्मय्यां मूर्तौ स[illegible] सदिदं जगद्विभाति श्रीव्रजेश्वर्यापि दृष्टत्वादिति भावः । यया[illegible] मूर्त्या मृगपतिः सिंह इव अनवद्यां लीलामादद्दे "रुदन्निव हसन्मु[illegible] ग्धबालसिंहावलोकनः" इत्युद्धवोक्तेः किमर्थं स्वजनानां मनांसि हस्तिन इव आदातुमाकृष्य ग्रहीतुं य एव उदारवीर्यः गिरिधर[illegible] रणादिपराक्रमवान् ॥ १० ॥

यन्नामापि पतितपावनमिति किं वक्तव्यं यतः पतितमपि पाव[illegible] नीकरोतीति वदन्नेव शेषरूपत्वेनापि स्तौति । द्वाभ्यां यस्य ना[illegible] सङ्कर्षण इति । पतितो महापातक्यपि यद्यनुकीर्त्तयेत्तर्हि सं[illegible] द्यदिति किं वक्तव्यं यतोऽसावेव स्वदर्शनदानादिना नृणा[illegible] शेषमंहः सद्यो हन्ति कथमनुकीर्त्तयेदन्यतः श्रुत्वा अकस्मा[illegible] आर्त्तो वा सन् प्रलम्भनात् परिहासाद्वा किं पुनः श्रद्धाभ[illegible] भ्याम् ॥ ११ ॥

मूर्द्धनि एकस्मिन्नेव भूगोलमणुवत्तिष्ठति सत्त्वानि प्राणि[illegible] सहस्रजिह्वः सन्नपि को गणयेत् ॥ १२ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य विश्वस्योत्पत्त्यादिहेतवः सत्त्वाद्या गुणा यस्य सङ्क[illegible] णस्येक्षयैव कल्पाः स्वकार्ये समर्था आसन् यस्य रूपं मूर्ति[illegible] ध्रुवं नित्यं यतोऽकृतमनादिसिद्धं यदेकमन्यनिरपेक्षं [illegible] आत्मन्नात्मनि विश्वाधारे नानाकार्यजातं विश्वमधा[illegible] तस्य वर्त्म कथं वेद जन इति शेषः यदनुग्रहं विना न वेदे[illegible] त्यर्थः ॥ ९ ॥

नन्वेकस्य स्वरूपमात्रस्य ब्रह्मणः सदानन्दमयस्य मूर्तिध[illegible] रणे सत्त्वादिना विश्वसृष्ट्यादिलीलायां च किम्प्रयोजनमत्राह । मूर्तिमिति । यत्र भगवति इदं सदसत् स्थूलसूक्ष्मरूपं वि[illegible] विभाति स नोऽस्माकमुपासकानां पुरुकृपया विपुलकरुण[illegible] सम्यक् शुद्धं प्राकृतसत्त्वादिसंसर्गरहितं सत्त्वमप्राकृतं स[illegible] मूर्त्तिं बभार दधार स्वजनानां मुमुक्षूणां मनांसि आदातुं वि[illegible] सृष्ट्यादिलीलामादद्दे विश्वसृष्ट्यादिलीलाभावे मुमुक्षूणां मनां[illegible]

एवं प्रभावो भगवाननन्तो दुरन्तवीर्योरुगुणानुभावः।
मूले रसायाः स्थित आत्मतन्त्रो यो लीलया क्ष्मां स्थितये बिभर्त्ति ॥ १३ ॥

एता ह्येवेह नृभिरुपगन्तव्या गतयो यथाकर्म विनिर्मिता यथोपदेशमनुवर्णिताः कामान् कामयमानैः ॥ १४ ॥

एतावतीर्हि राजन्! पुंसः प्रवृत्तिलक्षणस्य धर्मस्य विपाकगतय उच्चावचा विसदृशा यथाप्रश्नं व्याचख्ये किमन्यत् कथयाम इति ॥ १५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
भूविवरविध्युपवर्णनं नाम
पञ्चविंशोऽध्यायः ॥ २५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

...नि निगृहीतानि न भवेयुरित्यर्थः कथम्भूतामनवद्यां स्वभावतः समस्तदोषशून्याम्। किञ्च। मृगाः मुमुक्षवो जीवा अत्र मृगशब्दवाच्याः तेषामपि पतिः यत् यच्च एव तद्भोगसिद्धयेऽपि विश्वसृष्ट्यादिलीलामादत्ते यदुदारवीर्यः तस्मादन्यं मुमुक्षुः कमाश्रयेदित्युत्तरेण सम्बन्धः ॥ १० ॥

किञ्च। यन्नामेति यस्य नाम श्रुतं गुर्वादितः अकस्माद्वा आर्तो वा सन् प्रलम्भनात्परिहासाद्वा पतितो महापातक्यपि यदि कीर्त्तयेत्तर्हि अशेषमंहो हन्ति तत्रापि सपद्येव न च केवलमात्मन एवांहो हन्ति किन्तु नृणां स्वकीयानामन्येषामपि तस्मात्शेषादन्यं मुमुक्षुः कमाश्रयेत् स्वयं भगवतः उपासनायाः परमपुरुषार्थत्वे का कथा यदंशः सङ्कर्षणो यदंशः शेषस्तन्नामोच्चारणमात्रेणापि पतितोऽपि कृतार्थो भवेदिति फलितोऽर्थः ॥ ११ ॥ १२ ॥

भाषा टीका।

उत्पत्तिस्थिति के हेतु जो सत्त्वादिक प्रकृति के गुण जिन आप के देखने से समर्थ भये हैं जिन आप का रूप ... हैं बिना बना है जो पहिले एकही रहा है अपने स्वरूप में जिनने नाना कार्य को धारण किया है तिनके मार्ग को कोई कैसे जान सकता है ॥ ९ ॥

आपने हमलोगों पर कृपा कर के शुद्धसत्त्वमय मूर्ति को धारण किया है जिसमे यह स्थूल सूक्ष्म जगत् प्रकाशित होता है अपने जनों के मन को वशकरने को जिन आपकी लीला को उदार वीर्य वाले सिंहने सीखा है ॥ १० ॥

दुःखी पुरुष जिन आप के नाम को सुनकर अकस्मात् यदि कीर्तन करै गिरपडनेपर करै अथवा वन्दना से करै तब वह नाम मनुष्यों के सब पापों को नाश करता है तिन शेषजी से और कौन के शरण मे मुमुक्षु प्राप्त होवैगा ॥ ११ ॥

हजार मस्तक वाले जिन भगवान् के मस्तक मे पर्वत नदी समुद्र सब जीवों सहित सब भूगोल अणु सरीखा रहता है अनन्त होने से जिनकी महिमा नहीं जानी जाती है ऐसे विभु आपके वीर्य पराक्रमों को हजार जिह्वा वाला होने से भी कौन गिनती कर सकता है ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दुरन्तं वीर्यं बलं यस्य उरवो गुणा अनुभावश्च यस्य स च स च रसाया भूमेर्मूले स्थितस्तिष्ठति आत्मतन्त्र आत्माधारः१३ उक्तस्य लोकविभागस्योपयोगं वदन्नुपसंहरति। एता ह्येवेह कामान्कामयमानैर्नृभिरुपगन्तव्या इत्यन्वयः ॥ १४ ॥

तस्य प्रपञ्चः। एतावत्यो विपाकगतयः फलभूता गतयस्ताः व्याचख्ये व्याख्यातवानस्मि ॥ १५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

किमिदं भूमण्डलं कर्मवशाद्विभर्त्तीत्याह। एवमिति। एवं प्रभावः उक्तविधापरिच्छिन्नप्रभावः अत एवानन्तः अनन्तपदं पुष्कलप्रवृत्तिनिमित्ताश्रयं दुरन्तमपारं वीर्यं बलं यस्य उरवो गुणास्तेषामनुभावः प्रभावो यस्य स भगवान् सङ्कर्षणः आत्मतन्त्रः स्वतन्त्रः अकर्मवश्य एव सँल्लीलया स्थितयेऽवस्थानाय पालनायेति यावत् पृथ्वीं बिभर्त्ति ॥ १३ ॥

उक्तमुपसंहरति। एता इति। कामान् कामयमानैर्नृभिरुपगन्तव्याः प्राप्याः तत्तत्कर्मानुसारेणेश्वरेण सृष्टाः गतयः फलरूपा लोका इह ब्रह्माण्डे एता एतावत्य एव ताश्च यथोपदेशं सम्प्रदायागतोपदेशमनतिक्रम्यानुवर्णिताः ॥ १४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्तमुपसंहृत्य राज्ञः प्रश्नावसरप्रदानाय उक्ता गतयो नृभिर्द्धर्मैः प्राप्या इति पुनरुपसंहरति । एता इति । हे राजन् ! पुंसः संसारिणः प्रवृत्तिरूपस्य सकामस्य धर्मस्य विपाकगतयः फलरूपा गतयो नानाविधा विसदृशाः सुखदुःखतारतम्येन व्यवस्थिताः एतावत्य एव ताश्च यथाप्रश्नं व्याख्याताः वर्णिता मयेति शेषः ॥ १५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शेषे त्वसम्भावितगुणकर्मकथनपूर्वकं स्तवनमुपसंहरति । एवमिति । दुरन्तवीर्य इत्यनेनानन्तनाम हरेरेव मुख्यं नाम्यस्य "अतोऽनन्तेन लिङ्गमप्यनन्तः" इत्यादिसूत्रस्मृती प्रमाणमिति दर्शयति । स्वगुणानेवानुभवति भुङ्क्त इति कर्मणयणप्रत्ययः देहिदेहस्थितत्वेन दुःखानुभवस्यापि सम्भवात्कथं स्वगुणभोग इत्यत उक्तं आत्मतन्त्र इति भारस्य भर्त्तुः श्रमदर्शनादौपचारिकमिदं स्वातन्त्र्यं किं न स्यादित्यत उक्तं यो लीलयेति ॥ १३ ॥

परीक्षित्प्रश्नपरिहारार्थमुपसंहरति।एता हीति। गम्यन्त इति गतयो लोका उपगन्तव्या धर्मफलत्वेन यथा कर्मनिर्मितास्तारतम्येनेति शेषः एवशब्देन निषिद्धकर्मप्राप्यस्थानमन्तरेणान्यव्यवच्छेदः क्रियते हिशब्दः प्रमाणप्रसिद्धिं वक्ति मुक्तिगतेरन्यस्याः विद्यमानत्वात् कथमेतावत्य इतीयत्तेति तत्राह । कामानिति । मुक्तेरपीच्छाविषयत्वादित्यतः सामान्येनोक्तं विशिनष्टि । प्रवृत्तिलक्षणस्येति । उच्चावचानां सालक्षण्यं नास्तीत्याशयेनोक्तं विसदृशा इति यथाप्रश्नं व्याख्याताः इत्यनेनान्योऽपि वक्तव्यांशोऽस्तीति ज्ञायते तत्र वक्तव्यांशा बहवः सन्ति तेषु किं वक्तव्यं तदाख्याहि तस्यापि परिहारं कथयाम इत्याशयेनाह । किमन्यदिति ॥ १४—१५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
पञ्चविंशोऽध्यायः ॥ २५ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दुःशब्दो नञर्थः ॥ १३ ॥
कामान् कामयमानैर्नृभिः ॥ १४ ॥ १५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमे पञ्चविंशोऽयं सङ्गतः सङ्गतः सताम् ॥ २५ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

दुरन्तमनन्तं वीर्यं बलं यस्य उरवो गुणाः अनुगावाश्च स सच रसाया भूमेर्मूले आत्मतन्त्रः स्वाधीनः सन् [illegible] बिभर्त्ति ॥ १३ ॥

उक्तलोकविभागमीश्वरकृतं सोपयोगं सम्प्रदायतो मयो[illegible] त्याह। एता इति । एताः गतयः विनिर्मिताः कर्माणीति शेषः काम[illegible] कामयमानैर्नृभिर्यथाकर्म उपगन्तव्याः यथोपदेशं मया वा[illegible] र्णिताः नतु स्वबुद्धिमात्रेण ॥ १४ ॥

लोकविभागमुपसंहरति । एतावती एतावत्यः पुंसः प्रवृ[illegible] लक्षणस्य धर्मस्य विपाकगतयः फलभूमयः सन्ति याः व्याख्या[illegible] व्याख्यातवानस्मि ॥ १५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चविंशाध्यायार्थप्रकाशः ॥ २५ ॥

———

भाषा टीका

ऐसे प्रभाव वाले अनन्त पराक्रम वाले बड़े प्रभाव [illegible] अनन्त भगवान् स्वतन्त्र होकर रसातल के नीचे स्थि[illegible] जो कि अनायास से जगत्के पालन के वास्ते पृथिवी [illegible] धारण करते हैं ॥ १३ ॥

इतनी हीं कर्मों के अनुसार निर्मितमनुष्यों के आने [illegible] गति हैं जो सकाम करने वालों को प्राप्त होती हैं सो मैं[illegible] जैसी सुनी हैं तैसी वर्णन करदी हैं ॥ १४ ॥

हे राजन् ! पुरुषके प्रवृत्ति मार्ग वाले धर्मके परिपाक[illegible] ऊंच नीच अनेक प्रकार की इतनी ही गति हैं सो कहिद[illegible] हैं अब और क्या कहैं जो पूछोगे सो सब कहेंगे ॥ १५ ॥

इति श्रीमद्भागवत पञ्चमस्कन्ध पचीसमें अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ २५ ॥

———

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पञ्चविंशोऽध्यायः समाप्तः ॥ २५ ॥

———○:○:○———

## ॥ षड्विंशोऽध्यायः ॥

——:०:——

॥ राजोवाच ॥

महर्ष एतद्वैचित्र्यं लोकस्य कथमिति ॥ १ ॥

॥ ऋषिरुवाच ॥

(१)त्रिगुणत्वात् कर्तुः श्रद्धया कर्मगतयः पृथग्विधाः सर्वा एव सर्वस्य तारतम्येन भवन्ति ॥ २ ॥

(२)अथेदानीं प्रतिषिद्धलक्षणस्याधर्मस्य तथैव कर्तुः श्रद्धाया वैसादृश्यात् कर्मफलं विसदृशं भवति या ह्यनाद्यविद्यया कृतकामानां तत्परिणामलक्षणाः सृतयः सहस्रशः प्रवृत्तास्तासां (३) प्राचुर्येणानुवर्णयिष्यामः ॥ ३ ॥

॥ राजोवाच ॥

नरका नाम भगवन् ! किं देशविशेषा अथवा वहिस्त्रिलोक्या आहोस्विदन्तराल इति ॥ ४ ॥

॥ ऋषिरुवाच ॥

अन्तराल एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्ताद्भूमेरुपरिष्टाच्च जलाशयाद्यस्यामग्निष्वात्तादयः पितृगणा दिशि स्वानां गोत्राणां परमेण समाधिना सत्या एवाशिष आशासाना निवसन्ति ॥ ५ ॥

यत्र हवाव भगवान् पितृराजो वैवस्वतः स्वविषयं प्रापितेषु स्वपुरुषैर्जन्तुषु सम्परेतेषु यथाकर्मावद्यं दोषमेवानुल्लङ्घितभगवच्छासनः सगणो दमं धारयति ॥ ६ ॥

तत्र हैके नरकानेकविंशतिं गणयन्ति अथ तांस्ते राजन्नामरूपलक्षणतोऽनुक्रमिष्यामः तामिस्रोऽन्धतामिस्रो रौरवो महारौरवः कुम्भीपाकः कालसूत्रमसिपत्रवनं सूकरमुखमन्धकूपः कृमिभोजनः संदंशस्तप्तसूर्मिर्वज्रकण्टकशाल्मली वैतरणी पूयोदः प्राणरोधो विशसनं लालाभक्षः सारमेयादनमवीचिरयःपानमिति किञ्च क्षारकर्दमो रक्षोगणभोजनः शूलप्रोतो दन्दशूकोऽवटनिरोधनः पर्यावर्तनः सूचीमुखमित्यष्टाविंशतिर्नरका विविधयातनाभूमयः ॥ ७ ॥

तत्र यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे नरके बलान्निपात्यते अनशनानुदपानदण्डताडनसन्तर्जनादिभिर्यातनाभिर्यात्यमानो जन्तुर्यत्र कश्मलमासादित एकदैव मूर्च्छामुपयाति तामिस्रप्राये ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

षड्विंशे तु ततोऽधस्तान्नरकस्थितिरुच्यते।
पापिनो यत्र दह्यन्ते यमदूतैर्यथायथम् ॥ १ ॥

पुंसो गतय उच्चावचा विसदृशा इति भोगवैचित्र्यमुक्तं तदेतत्कुत इति पृच्छति। महर्ष इति ॥ १ ॥ कर्मणः समानत्वेऽपि श्रद्धावैचित्र्यात्फलवैचित्र्यमिति परिहरति। त्रिगुणत्वादिति। सात्त्विक्या श्रद्धया कर्तुः सुखित्वं राजस्यासुखित्वं दुःखित्वं च तामस्या दुःखित्वं मूढत्वं च। तत्रापि तासां श्रद्धानां तारतम्यात्सुखादितारतम्यं सर्वेषामित्यर्थः ॥ २ ॥

प्रतिषिद्धं प्रतिषेधः स एव लक्षणं प्रमाणं यस्याधर्मस्य कर्तुः श्रद्धावैसादृश्यं तमसस्तारतम्यात् तत्रापि कारणं

---

(१) बहुगुणत्वात इतिश्रीविज०। (२) यथेदानी मिति श्रीवीर०। (३) तास्ताः इतिश्रीवीरर० श्रीविज० पाठः।

## श्रीधरस्वामिकृतभावार्थदीपिका ।

दर्शयन्नाह । अनाद्यविद्याकृतानां कामानां याः सृतयो नरकास्तासां ताः । अथेदानीं ताः प्राचुर्येणानुवर्णयिष्यामः इत्यन्वयः ॥ ३ ॥

किं भूमावेव देशविशेषाः त्रिलोक्या ब्रह्माण्डाद्बहिर्वा आवरणेषु मध्येऽन्तराले वा भूमिव्यतिरिक्ते ॥ ४ ॥ ५ ॥

कर्मदोषमनतिक्रम्य दोषमेव दमं पापफलं दण्डं करोति न उल्लङ्घितं भगवच्छासनं येन ॥ ६ ॥

मतान्तरेणाष्टाविंशतिमाह । किञ्चेति ॥ ७ ॥

पापभेदेन च तत्तन्नरकयातनाभेदं प्रपञ्चयति । तत्र यस्त्वित्यादिना । यात्यमानः पीड्यमानः । एकदैव तदैव ॥ ८ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रवृत्तिलक्षणस्य धर्मस्य विपाकगतय इत्यनेनासां पुण्येन प्राप्यत्वोक्तेः केवलापुण्यगम्या अन्ये लोकाः सन्ति नरका इति सूचितं तानेव पिपृच्छिषुस्तावदनुक्तमेष्वपि लोकेषु सुखदुःखयोर्न्यूनाधिकभावलक्षणं वैचित्र्यमुच्चावचा विसदृशा इति तत्र कारणं पृच्छति राजा । महर्ष इति । हे महर्षे ! त्वया यद्वैचित्र्यं सुखदुःखयोर्न्यूनाधिकभावलक्षणमेषु लोकेषु जीवलोकस्य व्यवस्थितमुक्तं तद्वैचित्र्यं कथमुपपद्यते को वा तत्र वैचित्र्ये हेतुरैकरूप्येणानुष्ठितेन प्रवृत्त्याख्येन धर्मेण भूरादिलोकान् प्राप्तेषु केषाञ्चित्सुखमेव केषाञ्चिद्दुःखमेवान्येषां तु मिश्रमित्येतद्वैचित्र्ये किं कारणमिति प्रश्नाशयः ॥ १ ॥

सर्वेषां भूरादिलोकप्रापकधर्मस्य समानत्वेऽपि कर्तृवैचित्र्याच्छ्रद्धावैचित्र्याच्च सुखादिफलवैचित्र्यमित्युत्तरमाह । त्रिगुणत्वादिति । कर्तुर्जीवस्य त्रिगुणत्वात्सत्त्वादिगुणत्रययुक्तत्वाच्छ्रद्धया सत्त्वादिगुणभेदभिन्नया त्रिविधया श्रद्धया कर्मणां गतयः फलानि पृथग्विधाः सर्वाः श्रद्धादितारतम्यनिमित्ततारतम्येनैव भवन्ति अत्रेदमवगन्तव्यम् ।

> न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
> सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥

इत्युक्तरीत्या सर्वेषां गुणत्रययोगाद्गुणानां ह्रासोल्लासादिरूपेण परिणामेचाविशिष्टे सति प्राचीनकर्मवासनानुगुणगुणत्रयपरिणामवशात् सात्त्विकादिभेदेन धर्मस्य कर्तारो बुद्धयः श्रद्धाः तन्निमित्तानि कर्माणि च त्रिधा भिद्यन्ते तथा च गीतं भगवता ।

> मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
> सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥
> रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
> हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥
> अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
> विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥
> प्रवृत्तिञ्च निवृत्तिञ्च कार्याकार्ये भयाभये ।
> बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ ! सात्त्विकी ॥
> यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
> अयथावत्प्रजानाति बुद्धिः सा पार्थ ! राजसी ॥
> अधर्मं धर्ममिति या मन्यते तमसावृता ।
> सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ ! तामसी ॥
> त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
> सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥

इत्यारभ्य ।

> यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
> प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥

इति श्रद्धायास्त्रैविध्यमुक्तं सात्त्विकाः सात्त्विक्या श्रद्धया युक्ताः

> नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
> अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥
> यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
> क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥
> अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
> मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥

इति एवं स्थिते यः सात्त्विकः कर्ता सात्त्विकीभ्यां बुद्धिश्रद्धाभ्यां धर्माननुतिष्ठति सोऽनन्तसुखं मोक्षाख्यं तारतम्यरहितं प्राप्नोति यश्च राजसो राजसीभ्यां बुद्धिश्रद्धाभ्यां धर्माननुतिष्ठति स भूरादिलोकाननुप्राप्य परिमितसुखं प्राप्नोति तत्रापि श्रद्धातारतम्यकृतं सुखतारतम्यमेव भवति यस्तु तामसः इमान् लोकान् प्राप्यापि केवलं दुःखमेव प्राप्नोति भूरादिलोकप्रापकः प्रवृत्ताख्यो धर्मस्तु राजसतामसयोः कर्त्रोः समानो भवतीति ॥ २ ॥

एवं धर्मस्य कर्त्रादितारतम्यमधर्मदृष्टान्तेनाह । यथेति । यथा धर्मस्य श्रद्धादितारतम्यनिमित्तं सुखरूपफलतारतम्यं तथा प्रतिषिद्धलक्षणस्य प्रतिषिद्धरूपस्याधर्मस्य कर्तुः श्रद्धायाः अधर्मनिमित्तभूतायाः केवलतामस्याः श्रद्धायाः वैसादृश्यात्तारतम्यात्कर्मफलं दुःखरूपं विसदृशं तरतमं भवति श्रद्धावैसादृश्ये कारणं वदन्कर्मफलवैसादृश्यमेवोपपादयति । अनाद्यविद्येति । अविद्या कामशब्दः फलकामनापरः कर्मशब्दः तद्वासनापरः फलकामनायाः अज्ञानफलत्वात् । यद्वा । यागादिरविद्या तत्प्रयुक्तानि यानि कामकर्माणि फलकामनापूर्वकमनुष्ठितानि पापानि वासनारूपेणावस्थितानि तेषां वैसादृश्यादित्यनुषङ्गः तेषां नानात्वेनावस्थितत्वाच्छ्रद्धावैसादृश्यं ततः सृतयो गतयः फलरूपाणि दुःखानीति यावत् तत्परिणामलक्षणाः अविद्याकामकर्मपरिपाकस्वरूपाः सहस्रशः आनन्त्येनावान्तरतारतम्येन च प्रवृत्ता अनुभाव्याः सन्तीत्यर्थः एवमुक्ते सति तर्ह्यानन्त्येन प्रवृत्ताः सृतयस्तदनुभवस्थानानि च साकल्येन वर्णनीयानीति राज्ञः प्रश्नोद्योगमालोच्य केवलनरकगुणमूलकानाद्यज्ञानप्रयुक्तकामकर्मरूपाणां पापानामवान्तरभेदानानन्त्यात्तत्फलरूपाणां दुःखात्मनां गतीनामानन्त्यात्तदनुभवस्थानान्यपि बहूनि सन्तीति तेषां साकल्येन वर्णयितुमशक्यत्वात् प्रभूतदुःखरूपा गतीस्तत्स्थानानि च कानिचिद्वर्णयिष्यामीत्याह । तास्ताः प्राचुर्येणानुवर्णयिष्याम इति ॥ ३ ॥

एवमुक्ते राजा कार्त्स्न्येन तद्वर्णनप्रश्नं विहायाधर्मफलभूतदुःखानुभवस्थानानि नरकाः किं भूमेरेव देशविशेषा उत त्रिलोक्या बहिर्वर्त्तन्ते उतान्तराले कयोश्चिल्लोकयोरन्तराले वर्तन्ते इति पृच्छति । नरका इति । हे भगवन् ! त्रिलोक्या बहिः ब्रह्माण्डावरणेष्वेव ॥ ४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रह्माण्ड एव वर्तन्त इत्याह । अन्तराल एवेति । त्रिजगत्या ब्रह्माण्डस्यान्तराल एव गर्भ एव तत्रापि कस्यां दिशि दक्षिणस्यां तत्रापि च भूमेरधस्तादण्डजलादुपरि वर्तन्त इत्यर्थः तां दक्षिणां दिशं विशिनष्टि । यस्यामित्यादिना गद्यद्वयेन । यस्यां दक्षिणस्यां दिश्यग्निष्वात्तादयः पितृणां गणाः परमेण समाधिना ध्यानयोगेन स्वानां गोत्राणां सत्या आशिष आशासानाः कुर्वाणाः एव पार्श्वं वसतीतिवन्निर्देशः निवसन्ति ॥ ५ ॥

यत्र ह यस्यां हि दिशि पितृराजः पितॄणामधिपतिः वैवस्वतो यमः सम्परेतेषु मृतेषु स्वपुरुषैर्दूतैः स्वविषयं स्वदेशं प्रापितेषु जन्तुषु जीवेषु अनुल्लङ्घितमनतिक्रान्तं भगवतो नारायणस्य शासनं येन तथाभूतः सन् सगणः स्वकीयदूतगणसहितः यथाकर्मावद्यं दोषमवद्यं जुगुप्सितं कर्मेव कर्मावद्यं बहुलग्रहणाद्विशेष्यस्य पूर्वनिपातः यथा कर्मावद्यमिति पदत्रयं वा अवद्यं शास्त्रजुगुप्सितं कर्म प्रतिषिद्धं हिंसादिकर्म यथा जन्तुभिर्निबन्धादिना यथा कृतं तदनुसारेणैव दोषं प्रति दमं दण्डं धारयति कारयति जुगुप्सितकर्मरूपदोषानुसारेणैव दण्डयतीत्यर्थः ॥ ६ ॥

तत्र नरकाः कतीत्यपेक्षायामेके नरकानेकविंशतिं गणयन्तीत्याह । तत्रेति । के त इत्यपेक्षायां तान्नामरूपलक्षणैः क्रमेण गणयामीत्याह । हे राजन् ! तान्नरकान्नामादिभिः तेऽनुक्रमिष्यामः तत्र नामानि वाचकाः शब्दा रूपाणि परस्परविलक्षणदुःखजनकत्वाकाराः लक्षणानि चिन्हानि तत्तद्धिंसादिकर्माणि यानि पानिर्बन्धादीनि तादृशनिर्बन्धादिरूपचिन्हानि एभिरनुक्रमिष्यामः एभिः सह क्रमेण तुभ्यं वर्णयिष्याम इत्यर्थः । तानेव क्रमेण गणनया दर्शयति । तामिस्र इत्यादिना अयःपानमित्यन्तेन गद्येन । अत्र वज्रकण्टकशाल्मलीति एको नरकः तथा अवीचिरित्येकः एवमेकविंशतिनरका भवन्ति केचिदित्यत्रारुचिबीजं त्वन्येषां त्र इति । पुनस्तानेव निर्दिशति । किञ्चेत्यादिना सूचीमुखमित्यन्तेन एते सप्तपूर्वोक्तैस्तामिस्रादिभिः सहाष्टाविंशतिर्भवन्ति ते नरका विविधयातनाभूमयः दुःखानुभवभूमयः ॥ ७ ॥

तानेकैकशस्तदनुभवनिमित्तानि पापानि च वर्णयति । यस्त्विहेत्यादिना यावदध्यायसमाप्ति । यो जन्तुरिह लोके परस्य वित्तादीन्यपहरति स हि यमदूतैरतिभयङ्करैः कालपाशेन यमपाशेन बद्धो बलात्तामिस्राख्ये नरके निपात्यते तामिस्रं विशिनष्टि । तामिस्रप्राये तमःप्रचुरे यत्र तामिस्रे निपात्यमानः जन्तुरनशनापानदण्डप्रहारणतर्जनादिभिर्यातनाभिः यात्यमानः पीड्यमानः कश्मलं मोहमासादितः प्राप्त एकदैव मूर्च्छां प्राप्नोति तामिस्रप्राये इत्यनेन तामिस्रादिनामानि योगरूढानीति ज्ञापितम् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतिबहुलदुःखभोगस्थानत्वेन नरकलोकस्य हेयत्ववर्णनेन संसारस्यातिहेयत्वेन वैराग्यस्य दार्ढ्यातिशयो जायत इति नरकवर्णनमस्मिन्नध्याये । तत्रादौ पूर्वोक्तार्थं प्रश्नमुद्भाव्य परिहृत्य वक्ष्यमाणार्थं प्रतिजानीते । महर्ष इति । अयमर्थः लोकस्य स्वर्गादिनानात्वस्य स्थानस्य विशेषात्तस्य जगदैतत्प्रत्यक्षेण स्ववचनादागमेन च सिद्धत्वात् प्रत्यक्षवदेतदित्युच्यते वैचित्र्यं कस्यचित्सुखित्वं कस्यचिद्दुःखित्वं कस्यचिदुभयरूपत्वं कथं घटते सुखादिसामान्यविशेषहेतुत्वं च सुखे दुःखे चाल्पमहत्त्वभेदेन तारतम्यं च कथमिति किञ्चैता गतयः सर्वाः सर्वेषां भवन्ति किञ्चैकैकस्यैकैका गतिरुतैकस्यानेका गतिरित्येतत्सर्वं परिहरति । बहुगुणत्वादिति । अयमर्थः कर्तुः श्रद्धाया "एवमितः प्रेत्याभिसम्भवितास्मि" इति बुद्धिलक्षणाया बहुगुणत्वाद्बहुविधत्वात्तद्युक्तसत्त्वादिगुणवैचित्र्येण निर्मितत्वाल्लोकवैचित्र्यं यस्मात्सर्वाः कर्मगतयः सर्वस्य भवन्ति ॥ १—२ ॥

अथ तस्माच्छास्त्रनिषिद्धस्याधर्मस्य तथैव कर्तुः श्रद्धायाः वैसादृश्याद्विरुद्धस्वरूपत्वात्कर्मफलमपि विरुद्धं ततः किं तत्राह । याहीति । अनाद्यविद्यया विलसितकामानां प्राणिनां तत्परिणामलक्षणास्तेषामनाद्यविद्याकामानां परिपाकनिमित्तपापकर्मविकारलक्षणा याः सृतयो गतयः सहस्रशः प्रवृत्तास्ताः प्राधान्येनानुवर्णयिष्याम इत्यन्वयः ॥ ३ ॥

पृष्टेनैवोत्तरं वाच्यमित्यतः परीक्षित्पृच्छति । नरका इति । किं केचन देशविशेषाः उत महादुःखानुभवलक्षणशब्दवाच्याः प्रथमे ते त्रैलोक्याद्बहिरन्तर्वा द्वितीये कस्यां दिशि किमधस्तात्कियदुपरीति ॥ ४ ॥

परिहरति । अन्तराल इति । दुःखानुभवसद्भावेऽपि नरकशब्दवाच्याः किन्तु तदधिकरणदेशविशेषास्त्रैलोक्यान्तराले तत्रापि भारतखण्डाद्दक्षिणसूत्रपाते भूमेरधस्तादण्डजलाशयस्य गर्भोदकराशेरुपरिष्टाद्दक्षिणस्यां दिशि निर्धारणार्थमेतद्वचनम् ॥ ५ ॥

यथाकर्मनिर्मितपापमनुल्लङ्घितमनतिक्रान्तं भगवतो हरेः शासनमाज्ञा येन स तथा ॥ ६ ॥

तस्यां दिशि विद्यमानान्नरकानेकविंशतिं संख्याति । तत्र हेति । तत्र हेत्यनेन सप्त प्रधानाः सन्तीति स्मृतिप्रसिद्धिं द्योतयति । नैतावता समाप्तिः किं तथापि सन्तीत्याह । किञ्चेति । तान्देशान्विशिनष्टि । विविधयातनाभूमयः नानाविधदण्डस्थानविशिष्टाः "यातना तीव्रवेदना" इति वचनाद्दुःखासम्भिन्नप्रदेशाः इत्यर्थः ॥ ७ ॥

तत्तन्नरकेषु तत्तद्दुष्कर्मनिमित्तदुःखविशेषानाह । तत्रेति । यात्यमानो दुःखानुभवी क्रियमाणः कश्मलं बहुदुःखमेकदेति विशेषणात्कदाचिन्मूर्च्छां न यातीति विशेषो ज्ञायते यातनाभिः पर्यायेण पीड्यमानत्वादित्यर्थः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

असमानत्वे तावत् फलवैचित्र्यं भवत्येव समानत्वेऽपि तदित्याह । त्रिगुणत्वादिति ॥ १ ॥ २ ॥

प्रतिषिद्धलक्षणस्याधर्मस्य यः कर्ता तस्य तथैव पूर्वोक्तप्रकारेणैव श्रद्धा वैसादृश्यादधर्मलक्षणस्य कर्मणः फलं विसदृशं भवति । तत्र निषेधे प्रतीतावपि सत्यां प्रमादेन तत्करणात्तमसोऽल्पत्वं मोहेन मध्यमत्वं नास्तिकतायां तु पूर्णत्वं ज्ञेयम् । अथातो हेतोर्यास्तत्परिणामलक्षणास्सृतयः सहस्रशः प्रवृत्ताः सन्ति ताः प्राचुर्येण तु वर्णयिष्यामः । केषामादिकारणानां सम्बन्धिन्यस्ता इत्यपेक्षायामाह । अनादीति ॥ ३ ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वानां गोत्राणामिति तत्तयाभिमानादेव तत एव यत् ।किञ्चि-च्छान्तिर्भवतीति सत्या एवाशिष इत्युक्तम् ॥ ५ ॥

दोषमेव दमरूपेण परिणमयतीत्यर्थः । अनुल्लङ्घितेति । भगवा-नत्र ब्रह्मा तथा शासनञ्च विभीषिकयापि जीवान् भगवदन्तर्मुखी-कर्तुमिति ज्ञेयम् । यद्वा । भगवच्छासनशब्देनात्र वेद एवोच्यते ॥ ६ ॥ ७ ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भुवोऽधस्ताज्जलादूर्ध्वं नरकस्थानमुच्यते ।
पञ्चिंशे यत्र दण्ड्यन्ते पापिनो यमकिङ्करैः ॥

पुंसो गतयः उच्चावचाः विसदृशा भोगवैचित्र्यमुक्तं तदेतत् कुत इति पृच्छति । महर्ष ! इति ॥ १ ॥

श्रद्धावैसादृश्यात् फलवैचित्र्यमाह । त्रिगुणत्वादिति । सात्त्वि-क्या श्रद्धया धर्म एव भवेत्तस्माच्च कर्तुः सुखमेव राजस्या धर्मा-धर्मौ ताभ्यां सुखदुःखे तामस्या अधर्म एव तस्माच्च दुःखमोहौ तत्रापि तासां श्रद्धानां तारतम्यात् सुखादितारतम्यं सर्वस्य सर्वा इति नहि कश्चित् सर्वदैव सात्त्विकश्रद्धावानेव तिष्ठति राजसतामसश्रद्धावानेव वा अतः कालभेदेन सर्वविधस्यैव जीवस्य सर्वविधा गतयः ॥ २ ॥

तत्र शास्त्रविहितस्य धर्मस्य फलभूतानि भौमदिव्यविल-स्वर्गसुखानि दर्शितान्यत एवाधर्मस्यापि फलभूतानि नरक-दुःखान्यपि विवक्षितव्यानीत्यत आह । अथेति । प्रतिषिद्धं प्रतिषेध-स्तदेव लक्षणं प्रमाणं यस्य तस्य तथैवेति । धर्मस्य कर्तुर्यथा तथैवाधर्मस्यापि कर्तुरित्यर्थः । श्रद्धाया वैसादृश्यादिति । श्रद्धा-वैसादृश्येऽपि तमस्तारतम्यमेव कारणं तथा हि प्रमादेनाधर्मकर-णात्तमसोऽल्पत्वं ज्ञानेन मध्यमत्वं तथापि नास्तिकत्वेन पूर्णत्वं ज्ञेयं तमस्त्रैविध्यस्यापि कारणं दर्शयन्नाह । या इति । अनाद्यविद्या-सम्बन्धो जीवस्य कदा कथं वेति वक्तुमशक्तेः अनादिर्या तमआदि-त्रैविध्यमयी अविद्या तया कृतानां जीवसम्बन्धित्वेनोपपादि-तानां कामानां वासनानां याः सृतयः कीदृश्यस्तेषां कामानां परि-णामलक्षणाः तासां मध्ये प्राचुर्येण नरकानिति शेषः ॥ ३ ॥ ४ ॥

भूमेः सप्तपातालवत्या अधः जलाद्गर्भोदात् ॥ ५ ॥

स्वविषयं स्वदेशं कर्मावद्यं कर्मदोषमनतिक्रम्य दोषं दोष-रूपदमं दण्डं तादृश्या विभीषिकयापि जीवान् भगवतोऽन्तर्मु-खीकर्तुमिति भावः ॥ ६ ॥

तामिस्रादयः एकविंशतिर्नरकाः मतान्तरेण पूर्वैर्मिलितान-ष्टाविंशतिमाह । किञ्चेति ॥ ७ ॥

यात्यमानः पीड्यमानः तामिस्रप्रायेऽन्धकारबहुले ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

षड्विंशे नरकस्थितिर्वर्ण्यते धर्मस्य उच्चावचविसदृशविपा-कगतय इत्युक्ते भोगवैचित्र्ये कारणं पृच्छति । महर्ष इति ॥ १ ॥

कर्तुर्जीवस्य त्रिगुणत्वात्त्रयो गुणा बन्धनभूताः यस्य स त्रिगुणस्तत्त्वं तस्माच्छ्रद्धया तत्तद्गुणानुरूपया हेतुभू[illegible] कर्मगतयः सात्त्विकादिकर्मविपाकभूमयः पृथग्विधा बोध्याः

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥

इति श्रीमुखवचनात्तत्रापि गुणवृत्तितारतम्यात्सर्वा ग[illegible] सर्वस्य कर्तुर्भवन्ति ॥ २ ॥

प्रतिषिद्धं प्रतिषेधः ब्राह्मणो न हन्तव्यः आचाराद्यप्रमितिरेव[illegible]मित्यादि तदेव लक्षणं ज्ञापकं यस्य तस्याधर्मस्य क[illegible] श्रद्धाया वैसादृश्यात्तमोवृत्तिभेदेन श्रद्धाया अपि भेद[illegible]त्वात् कर्मणोऽधर्मस्य फलं विसदृशं भवति तत्र अ[illegible] ज्ञानेन कृतानां सम्पादितानां कामानां पापानां याः सृतयस्ता[illegible] द्वितीयार्थे षष्ठी ताः अथेदानीं प्राचुर्येण प्राधान्येनानुक्रम[illegible]ष्याम इत्यन्वयः ॥ ३ ॥

नरकान् वर्णयितुं प्रवृत्तं मुनिं नरकाः कुत्र सन्ती[illegible] पृच्छति । नरका नामेति । भूमावेव देशविशेषाः त्रिलोक्याः ब्र[illegible]ण्डाद्बहिर्वा अन्तराले ब्रह्माण्डमध्ये वा ॥ ४ ॥

अन्तराले त्रिजगत्या इति ब्रह्माण्डमध्ये इत्यर्थः अधस्ता[illegible] द्भूमेः जलाद्गर्भोदात्तथाह भगवान् पराशरः

अतलं वितलं चैव नितलं च गभस्तिमत् ।
महाख्यं सुतलं चापि पातालञ्चापि सप्तमम् ।
ततश्च नरका विप्र ! भुवोऽधः सलिलस्य च ।

इति तेभ्योऽप्यधस्तमस्ततो गर्भोदकं ततोऽण्डकटाह इत्यादु[illegible]
यथाकर्मावद्यं कर्मदोषमनतिक्रम्य दोषं यातनालक्षणं [illegible] दण्डं धारयति योजयति ॥ ६ ॥

मतान्तरेणाष्टाविंशतिर्नरका इत्याह । किञ्चेति । त्रिवि[illegible] यातनानाम् "यातना तीव्रवेदना" इति कोशात्तीव्रवेदन[illegible] भूमयः ॥ ७ ॥

यात्यमानः पीड्यमानः एकदैव तत्क्षणमेव ॥ ८ ॥

---

भाषा टीका

राजा परीक्षित्जी बोले हे महर्षे यह विचित्रता [illegible] की कैसे होती है ॥ १ ॥

ऋषि शुकदेवजी बोले कर्ता तीन गुणों वाले हो[illegible] तिस से श्रद्धा के अनुसार कर्मों की गति अनेक प्र[illegible] की होती है सबगती सबों को कमती बढती से होती है ॥ २ ॥

और भी निषिद्ध धर्म करने वाले कोभी कर्ता की श्र[illegible] के अनुसार भेद होने से कर्म का फल भी भिन्नही [illegible] है जो कि अनादि काल के अज्ञान से सकाम पुरुषों [illegible] उन कर्मों के परिणाम रूप मार्ग हजारों प्रवृत्त हैं ति[illegible] जो प्रधान अधर्मों की गती हैं तिनको हम कहेंगे ॥ ३ ॥

राजा बोले हे भगवन् ! नरक नाम जो लोक सो [illegible] देश में हैं क्या पृथिवी ही में कोई देश है अथवा [illegible] लोकों के बाहिर हैं अथवा भीतरही हैं ॥ ४ ॥

ऋषि बोले त्रिलोकी के मध्यही में नरक हैं [illegible] दक्षिण दिशा में सप्त पाताल वाली भूमी के नीचे [illegible]

एवमेवान्धतामिस्रे यस्तु वञ्चयित्वा पुरुषं दारादीनुपयुङ्क्ते यत्र शरीरी निपात्यमानो यातनास्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति यथा वनस्पतिर्वृश्च्यमानमूलस्तस्मादन्धतामिस्रं तमुपदिशन्ति ॥ ९ ॥

यस्त्विह वा एतदहमिति ममेदमिति भूतद्रोहेण केवलं स्वकुटुम्बमेवानुदिनं प्रपुष्णाति स तदिह विहाय स्वयमेव तदशुभेन रौरवे निपतति ॥ १० ॥

ये त्विह यथैवामुना विहिंसिता जन्तवः परत्र यमयातनामुपगतं त एव रुरवो भूत्वा तथा तमेव विहिंसन्ति तस्माद्रौरवमित्याहुः रुरुरिति सर्पादतिक्रूरसत्त्वस्यापदेशः ॥ ११ ॥

एवमेव महारौरवो यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति यः केवलं देहम्भरः ॥ १२ ॥

यस्त्विहवा उग्रः पशून् पक्षिणो वा प्राणत उपरन्धयति तमपकरुणं पुरुषादैरपि विगर्हितममुत्र यमानुचराः कुम्भीपाके तप्ततैले उपरन्धयन्ति ॥ १३ ॥

यस्त्विह पितृविप्रब्रह्मध्रुक् स कालसूत्रसंज्ञके नरके अयुतयोजनपरिमण्डले ताम्रमये तप्तखले उपर्यधस्तादग्न्यर्काभ्यामतितप्यमानेऽभिनिवेशितः क्षुत्पिपासाभ्यां च दह्यमानान्तर्बहिःशरीर आस्ते शेते चेष्टते अवतिष्ठति परिधावति च यावन्ति पशुरोमाणि तावद्वर्षसहस्राणि ॥ १४ ॥

यस्त्विह वै निजवेदपथादनापद्यपगतः पाखण्डं चोपगतस्तमसिपत्रवनं प्रवेश्य कशया प्रहरान्ति तत्र हासावितस्ततो धावमान उभयतो धारैस्तालवनासिपत्रैश्छिद्यमानसर्वाङ्गो हा हतोऽस्मीति परमया वेदनया मूर्च्छितः पदे पदे निपतति स्वधर्महा पाखण्डानुगतं फलं भुङ्क्ते ॥ १५ ॥

यस्त्विह वै राजा राजपुरुषो वा अदण्ड्ये दण्डं प्रणयति ब्राह्मणे वा शरीरदण्डं स पापीयान्नरकेऽमुत्र सूकरमुखे निपतति तत्रातिबलैर्विनिष्पिष्यमाणावयवो यथैवेहेक्षुखण्ड आर्त्तस्वरेण स्वनयन् क्वचिन्मूर्च्छितः कश्मलमुपगतो यथैवेहादृष्टदोषा उपरुद्धाः ॥ १६ ॥

---

भाषा टीका।

जब से ऊपर हैं जिन मे अग्निष्वात्तादिक पितृगण उस दिशा में हैं परम समाधि से भगवान् का ध्यान करते हैं अपने गोत्र वालों को सत्य आशीर्वाद देते हुये निवास करते हैं ॥ ५ ॥

जहां पर वैवस्वत भगवान् पितृराज मरनेपर अपने पुरुष जिन जन्तुओं को अपने पुरमे पहुचादेते हैं तिन को भगवान् की आज्ञा को लंघन नहीं करके कर्म के अनुसार अपने गणों के सहित दण्ड देते हैं तहां पर कोई नरकों की एक बीस गिनती करते हैं ॥ ६ ॥

हे राजन्! अब उन सबों को आप से नाम रूप लक्षण से कथन करेंगे तामिस्र अन्धतामिस्र रौरव महारौरव कुम्भीपाक कालसूत्र असिपत्रवन सूकरमुख अन्धकूप कृमिभोजन सन्दंश तप्तसूर्मि वज्रकण्टकशाल्मली वैतरणी पूयोद प्राणरोध विशसन लालाभक्ष सारमेयादन अवीची अयःपान क्षारकर्दम रक्षोगणभोजन शूलप्रोत दन्दशूक अवट निरोधन पर्यावर्तन सूचीमुख ए अठाइस (२८) नरक नाना प्रकार के दुःखों की भूमि हैं ॥ ७ ॥

तिस में जो दूसरे के धन स्त्री पुत्रों को हरता है तिसको काल पाश में बांधकर अति भयानक यमपुरुष लेजाते हैं तामस नरक में जबरदस्ती डारदेते हैं तर्जना करते हैं बड़ा यातना देते हैं उहां पर वह जन्तु मोह को प्राप्त होकर तामिस्र में एक साथ ही मूर्छित होजाता है ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

पुरुषं पतिं वञ्चयित्वा ॥ ९ ॥

एतच्छरीरमहमिति इदं धनादि ममेति मत्वा स्वं च कुटुम्बमेव पुष्णाति तेनाशुभेन ॥ १० ॥

रुरवो भूत्वेति। कर्मायथेव तथा परिणामं प्राप्येत्यर्थः अतिक्रूरस्य भारण्डज्ञातस्य सत्त्वस्यापदेशः संज्ञा ॥ ११ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्रव्येण निमित्तेन मांसार्थमित्यर्थः ॥ १२ ॥

प्राणतः सजीवान् उपरन्धयति पचति अपकरुणं निष्कृपम् ॥१३॥

खले समे देशे ॥ १४ ॥

स्वधर्महा धर्मत्यागी ॥ १५ ॥

स्वनयन् रुदन्कश्मलं मोहमुपगतो भवति अदृष्टदोषास्तेनोपरुद्धाः सन्तो यथा कश्मलमुपगतास्तद्वत् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । यथा तामिस्रे तद्दुःखानुभवः एवमन्धतामिस्रेऽपीत्यर्थः तदनुभवनिमित्तं पापमाह । यस्त्विति । यस्तु जन्तुः पुरुषं पतिं वञ्चयित्वा तद्दारादीनादिशब्दाद्वित्तापत्यादीनि च उपयुङ्क्ते स्वोपयुक्तान् कुरुते तस्यैवमेवेति पूर्वेणान्वयः तर्हि तामिस्रादन्धतामिस्रे को विशेष इत्यपेक्षायां तामिस्रान्तं विशिनष्टि। यत्रेति । यत्रान्धतामिस्रे शरीरी देही विनिपात्यमानः यातनाभिस्तीव्राभिः पीड्यमानः तीव्रवेदनया नष्टा मतिर्यस्य नष्टा दृष्टिश्च यस्य तादृशो भवति वृश्च्यमानं छिद्यमानं मूलं यस्य तादृशो वनस्पतिर्यथा पततीति दृष्टान्तः अस्मात्कारणात्तमन्धतामिस्रमित्युपदिशन्तीत्यर्थः ॥ ९ ॥

रौरवानुभवनिमित्तं पापं तच्च वर्णयति। यस्त्विह वावेति। यस्तु शरीरी इह लोके एतच्छरीरमहमेतदपत्यकलत्रादिकं ममेत्येवं रूपाभ्यामहङ्कारममकाराभ्यां केवलम्भूतद्रोहेणैव स्वकुटुम्बमेवानुदिनं प्रपुष्णाति स इह लोके तत्स्वकुटुम्बं विहाय स्वयमेक एव तेन पूर्वाचरितेनाशुभेन पापेन रौरवाख्ये नरके निपतति अमुना तेन निपतितेन पूर्वमिह लोके ये च जन्तवो यथा येन प्रकारेण विहिंसितास्त एव जन्तवः रुरवः रुरुसंज्ञका जन्तवो भूत्वा तेनैव प्रकारेण परत्र रौरवे नरके यातनामुपगतं तमेव विहिंसन्ति यतस्तत्र गतं रुरवो हिंसन्त्यतस्तं नरकं रौरवमित्याहुरित्यर्थः के ते रुरवः यत्र गतं हिंसन्ति इत्यत्राह । रुरुरिति। सर्पादप्यतिक्रूरस्य भूरिशृङ्गाख्यस्य सत्त्वस्य जन्तोः रुरुरिति व्यपदेशो व्यवहार इत्यर्थः ॥ १० ॥ ११ ॥

महारौरवमनुवर्णयति । एवमेवेति । यथा रौरवे निपतितं रुरवो हिंसन्ति तथा महारौरवेऽपीत्यर्थः प्रथमान्तपाठे रौरवसदृश एव महारौरव इत्यर्थः सादृश्यं च रुरुभिर्हिंसनेन इयांस्तु ततो विशेष इत्याह । यत्रेति । यत्र महारौरवे निपतितं पुरुषं देहिनं क्रव्यं निपतितस्य मांसमदन्तीति क्रव्यादास्तथाभूताः सन्तो रुरवः क्रव्येण निमित्तेन घातयन्ति निपातितपुरुषस्यापि मांसं भक्षयन्तीत्यर्थः तं क्रव्येणेति विभक्तिव्यत्यय आर्षः अन्यथा "अदिखाद्योर्न"इत्यणौ कर्तुरणौ कर्मत्वनिषेधात्तेनेति तृतीया क्रव्यमिति द्वितीया च स्यात् क्रव्येण निमित्तेन तं खादयन्तीत्यर्थस्त्वसङ्गतः स्यात् क्रव्यादा इत्यनेन पौनरुक्त्याद्यथा क्रव्यादाः क्रव्यादनस्वभावा अत एव क्रव्येण फलस्यैव हेतुत्वविवक्षया तृतीया क्रव्यार्थं तं खादयन्ति "खिदेर्निवृत्तप्रेषणाणिणात्" खदिरत्र दंशनपरः खादयन्ति तं दशन्तीत्यर्थः अनेन पूर्वोक्तनिर्वाहः सूचितः अथ कुम्भीपाकं तदनुभवनिमित्तं पापं च वर्णयति । य इति । यः केवलं देहम्भरः शरीरपोषणमात्रपरः यश्चेह लोके उग्रः क्रूरः पशून् पक्षिणः प्राणतः सजीवान् उपरन्धयति पचति तमपकरुणं निष्कृपं पुरुषादैं राक्षसैरपि विगर्हितममुत्र कुम्भीपाके नरके यमानुचरास्तप्ततैल उपरन्धयन्ति पचन्ति तत्र तैलकुम्भ्यां पच्यन्ते यत्र स कुम्भीपाक इत्यवयवार्थो विवक्षितः ॥ १२ ॥ १३ ॥

अथ कालसूत्रस्थनरकानुभवनिमित्तं दुरितं तं च वर्णयति। यस्त्विह लोके पितृहन्ता ब्राह्मणहन्ता च स कालसूत्रसंज्ञे नरके अयुतं योजनानि परितो मण्डलं यस्य तस्मिंस्ताम्रविकारे खले खलसमदेशे खलो नाम धान्यानि विवेचयितुं कृतः कृत्रिमो भूमिविशेषः उपर्यधस्तादग्न्यर्काभ्यामधस्ताद्वह्निना उपर्यर्केण चाभितप्यमानेऽभिनिवेशितः परितः पातितः क्षुत्पिपासाभ्यामन्तर्बहिश्च दह्यमानं शरीरं यस्य सः दह्यमानशब्दस्य पूर्वनिपातः । यद्वा । शरीराद्बहिः शरीरं "अपपरिबहिरञ्चवः पञ्चम्या"इति समासे वहिःशब्दस्य उपसर्जनत्वात्पूर्वनिपातः अत एव समासविधानाज्ज्ञापकादन्तर्बहिःशब्दयोः सम्बन्धसामान्ये पञ्चमी भवति शरीरसम्बन्धिवहिःप्रदेशे इत्यर्थः अन्तःशब्देन सन्निधानात् शरीरान्तःप्रदेश एव उच्यते दह्यमानमन्तःशरीरान्तःप्रदेशः वहिःशरीरं च यस्येत्यर्थः एवम्भूतः ताम्रमये फलके उपवेश्यमानो याचनादि करोति याच्ञा चात्र हा हतोऽहं मां हापयेति प्रार्थना एवं यावन्ति पशो रोमाणि तावत्सङ्ख्यानि वर्षाणां सहस्राणि तत्रास्ते इत्यर्थः एवं भूयान् दुःखानुभवः कालः सूच्यते ज्ञायते यस्मिन् स कालसूत्र इत्यवयवार्थोऽत्राभिप्रेतः ॥ १४ ॥

एवं कालसूत्रमभिधायाथासिपत्रवनं नरकं तत्प्राप्तिनिमित्तं च वर्णयति । यस्त्विह वा इति । यस्तु देही निजवेदपथात्स्ववर्णाश्रमोचिताद्वेदविहिताद्धर्मादनापद्यपगतः अतिक्रान्तः आपच्च देशकालवैपरीत्यप्रयुक्ता रोगादिनिमित्ता शक्तिः अनापद्यपगत इत्यनेनापदि स्वधर्मत्यागो न दोषावह इति सूचितं पाषण्डमर्यादिकमस्मार्तं च केवल स्वमनीषया कल्पितमत एव कुपथं कुत्सितं मार्गमाभासधर्ममुपगतस्तं देहिनमसिपत्रवनाख्यं नरकं प्रवेश्य प्रविष्टं कृत्वा कशया प्रहरन्ति यमभटा इति शेषः कशा हि नामाश्वादीनां ताडयितुं निर्मितो दण्डाकारो रज्जुविशेषः एवं कशया ताडितः तत्रासिपत्रवने आसादित इतस्ततो धावमानः तीव्रदण्डमसहमानो द्रुततरं गच्छति उभयतो धारैः पार्श्वद्वयेऽपि धारायुक्तैः खड्गस्य त्वेकस्मिन्नेव पार्श्वे धारा एभिस्तूभयतोधारैरित्यर्थः तालवनस्यासिपत्रैः खड्गसदृशैः छिद्यमानानि सर्वाण्यङ्गानि यस्य तादृशः हाहाकारपूर्वकं हतोऽस्मीति वदन् परमया तीव्रया वेदनया पदे पदे मूर्च्छां प्राप्नोति पतति एवं स्वधर्महा स्वधर्मत्यागी पाषण्डानुगतं पाषण्डधर्मं भासानुगुणं फलं दुःखमनुभवति असिसदृशानि पत्राणि येषां वृक्षाणां वनमसिपत्रवनमित्यवयवार्थः ॥ १५ ॥

अथ सूकरमुखाख्यनरकं तत्प्राप्तिनिमित्तं पापं चानुवर्णयति। यस्त्विहेति। इह लोके राजा वा राजपुरुषो वा कश्चिददण्ड्यं दण्डनानर्हं दण्डं दण्डनं प्रणयति कारयति दण्ड्येऽपि ब्राह्मणे शारीरं दण्डं वा कारयति ।

वपनं द्रविणादानं स्थानान्निर्यापणं तथा।

एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः।

इत्युक्तरीत्या दण्ड्येऽपि ब्राह्मणे देहदण्डानर्हे यः शारीरं दण्डं

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

पतवतीत्यर्थः स पापीयान् सूकरमुखे नरके निपतति तत्र नरके सूकरस्येव मुखं येषां तैर्जन्तुभिः नितरां पीड्यमाना अवयवा यस्य तादृशः यथा इभेन गजेनेक्षुदण्डः पीड्यते तद्वदार्तस्वरेण क्वणन् रुदन्मूर्च्छितः कश्मलं मोहमुपगतो भवति यथा इहामिहादण्डदोषा दोषरहितास्तेन उपरुद्धाः पीडिताः सन्तः कश्मलमुपगतास्तद्वदित्यर्थः अवयवार्थस्तु सुव्यक्तः॥ १६॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

वृक्षवनानमूलश्छिद्यमानशिफः यस्मादष्टदृष्टिस्तस्मादन्धतामिस्रमन्धत्वापादकान्धकारयुतमित्यर्थत्वानुपदिशन्ति मूर्च्छया बुद्धिनाशात्तामिस्रे अन्धतामिस्रे तु चाक्षुषज्ञानस्य सर्वात्मना नाशादुभयोः सामान्यविशेषसद्भावाद्विशेषः॥ ९॥

एतच्छरीरमहमिदं क्षितिमण्डलं ममेति भ्रान्त्या तुवै महारतम्यद्योतकौ इतिशब्दौ प्रत्येकं रौरवप्राप्तिनिमित्ते भवत इति द्योतयतः॥ १०॥

प्रकारान्तरेण रौरवं निर्वक्ति। ये चेति। एवं द्वयं कर्त्रन्तरव्यावर्तकं रुरवः मृगाः किंत्वित्याह। रुरुरिति। रुरुरित्यपदेशा व्यपदेशः "मृगा नानाविषमुखा रुरवः परिकीर्तिताः" इत्यभिधानम्॥ ११॥

रौरवाद्विशेषमाह। यत्रेति। देहम्भरस्तथा पततीति शेषः॥ १२॥

उपरुन्धयन्ति अशक्यश्वासमोचो यथा भवति तथोपरोधं कारयन्तीत्यर्थः॥ १३॥

अधस्तादग्निरुपर्यर्कः खले धान्यादिशोषणस्थलस्थानीये न केवलं पित्रादिध्रुक् चतुष्पाद्धिंसकोऽप्येवमित्याह। यावन्तीति॥ १४॥

अनापदीति विशेषणादापदि कश्चनानुग्रहं सूचयति "धाराश्वाग्रेम्बुसन्तत्यां सैन्याग्रेऽश्वगतिष्वपि"; इत्यभिधानात् धाराशब्देन निशितप्रान्तभाग उच्यते तालवनस्य तालसमूहस्यासिवन्निशितधारपत्रैः स्वधर्मः स्ववर्णादिविहितः॥ १५॥

अदण्ड्ये दण्डनायोग्ये शरीरदण्डस्ताडनादिरुपरुद्धः कारागृहे शृङ्खलायां वा निवेशितः दृष्टो दोषश्चौर्यादिलक्षणो यस्य स तथा स दण्ड्यते यथा तथेति॥ १६॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भ।

एवमिति। यस्तु तस्यैवमेव भवतीत्यर्थः॥ ९॥ १०॥

ये त्विति। त एव तद्धिंसाजातकर्माणयेवेत्यर्थः रुरुशब्दस्य स्वयं श्रीशुकेन टीकाविधानाल्लोकेष्वप्रसिद्धोऽयं जन्तुविशेष इति गम्यते॥ ११—१६॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

पुरुषं पतिम्॥ ९॥

एतच्छरीरमहमिति इदं धनादिकं ममेति मत्वा भूतद्रोहेणेति भूतद्रोहं विना तु केवलाहंममकाराभ्यां न रौरवे निपततीति ज्ञायते॥ १०॥

रुरवो भूत्वेति कर्माण्येव तथा परिणामं प्राप्येत्यर्थः अतिक्रूरस्य भारशृङ्गाख्यसत्त्वस्य अपदेशः संज्ञेति श्रीस्वामिचरणाः रुरुशब्दस्य स्वयं मुनिनैव टीकाविधानाल्लोकेष्वप्रसिद्ध एवायमिति सन्दर्भः॥ ११॥

क्रव्येण निमित्तेन मांसार्थमित्यर्थः केवलमिति भूतद्रोहेणेति शेषः॥ १२॥

प्राणात उपरन्धयति सप्राणान् पचतीत्यर्थः॥ १३॥

खले समे देशे॥ १४॥ १५॥

खनयन् रुदन्नदण्डदोषा निर्दोषा उपरुद्धा दण्डिताः॥१६॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पुरुषं दारादिस्वामिनम्॥ ९॥

इह कर्मभूमौ एतच्छरीरमहमिति इदं कुटुम्बादिकं ममेति मोहेन स्वेन देहेन सहितं कुटुम्बमेव केवलं प्रपुष्णाति स तदुभयमिहैव विहाय तेनाशुभेन॥ १०॥

ते एव रुरवो भूत्वेति रुरवः यातनानिमित्तानि सर्पादतिक्रूरसत्त्वानि भूत्वेत्यर्थः अतिक्रूरस्यातिभयङ्करस्य सत्त्वस्य अपदेशः संज्ञा॥ ११॥

यत्र महारौरवे क्रव्येण मांसेन निमित्तेन॥ १२-१३॥

खले समस्थाने॥ १४॥

स्वधर्महा निजधर्मत्यागी॥ १५॥

खनयन् रुदन् यथा तेनोपरुद्धाः कश्मलमुपगतास्तद्वत्॥ १६॥

भाषा टीका।

इसी प्रकारजो अपने मालिक से छिपाकर उस की स्त्री आदि को भोगता है सो अन्धतामिस्र नरक में डाला जाता है जिसमें डाला हुआ शरीरधारी जीव कष्ट के मारे होश को भूलजाता है उस की दृष्टि मारीजाती है जैसे कि जड के कटने से पेड होता है तैसा दुःखित होजाता है तिसी से उस नरक को अंधतामिस्रकहते हैं॥ ९॥

जो मनुष्य इस संसार मे यह चीज मेरी है मैं इसका मालिक हूँ ऐसी बुद्धि से प्राणियों का द्रोह करके केवल अपने कुटुम्ब को प्रति दिन पालता है सो उन चीजों को यहां पर छोडकर उसी पापसे आपही रौरव मे गिरता है॥ १०॥

जिस मनुष्यने यहां पर कोटि जंतु मारे हैं वे जंतु उसके मरे पीछे यमयातना मे जाने पर तिसी हेतु से रुरु होकर तिसी प्रकारसे उसी पुरुष को मारते हैं तिस हेतु से उस नरक को रौरव कहते हैं रुरुनाम से सर्पसे भी बडा क्रूर जंतु का व्यवहार होता है॥ ११॥

इसी प्रकार महा रौरव है जो केवल देह मात्र का पोषक है तिसको उहां डालते हैं जहां गिरते पुरुष को क्रव्यादनामके जंतु मांस खाने के वास्ते उस को मारते हैं॥ १२॥

जो पुरुष इहांपर बडा उग्र होकर पशु वा पक्षियों को प्राण से मारता है वह निर्दयी असुर भी उसकी निन्दा करते हैं उस को परलोक में यम के दूत कुम्भीपाक नरक में गर्म तेल में पकाते हैं॥ १३॥

यस्त्विह वै भूतानामीश्वरोपकल्पितवृत्तीनामविविक्तपरव्यथानां स्वयं पुरुषोपकल्पितवृत्तिर्विविक्तपरव्यथो व्यथामाचरति स परत्रान्धकूपे तदभिद्रोहेण निपतति तत्र हासौ तैर्जन्तुभिः पशुमृगपक्षिसरीसृपैर्मशकयूकामत्कुणमक्षिकादिभिर्ये केचाभिद्रुग्धास्तैः सर्वतोऽभिद्रुह्यमाणस्तमसि विहतनिद्रानिर्वृतिरलब्धावस्थानः परिक्रामति यथा कुशरीरे जीवः ॥ १७ ॥

यस्त्विह वा असम्विभज्याश्नाति यत्किञ्चनोपनतमनिर्मितपञ्चयज्ञो वायससंस्तुतः स परत्र कृमिभोजने नरकाधमे निपतति तत्र शतसहस्रयोजने कृमिकुण्डे कृमिभूतः स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनो यावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानं यातयते ॥ १८ ॥

यस्त्विह वै स्तेयेन बलाद्वा हिरण्यरत्नादीनि ब्राह्मणस्य वापहरत्यन्यस्य वानापदि पुरुषस्तममुत्र राजन्! यमपुरुषा अयस्मयैरग्निपिण्डैः संदंशैस्त्वचि निष्कुषन्ति ॥ १९ ॥

यस्त्विह वा अगम्यां स्त्रियमगम्यं वा पुरुषं योषिदभिगच्छति तावमुत्र कशया ताडयन्तस्तिग्मया सूर्म्या लोहमय्या पुरुषमालिङ्गयन्ति स्त्रियं च पुरुषरूपया सूर्म्या ॥ २० ॥

यस्त्विह वै सर्वाभिगमस्तममुत्र निरये वर्तमानं वज्रकण्टकशाल्मलीमारोप्य निष्कर्षन्ति ॥ २१ ॥

ये त्विह वै राजन्या राजपुरुषा वा अपाखण्डा धर्मसेतून् भिन्दन्ति ते सम्परेत्य वैतरण्यां निपतन्ति भिन्नमर्यादास्तस्यां निरयपरिखाभूतायां नद्यां यादोगणैरितस्ततो भक्ष्यमाणा आत्मना न वियुज्यमानाश्चासुभिरुह्यमानाः स्वाघेन कर्मपाकमनुस्मरन्तो विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसावाहिन्यामुपतप्यन्ते ॥ २२ ॥

ये त्विह वै वृषलीपतयो नष्टशौचाचारनियमास्त्यक्तलज्जाः पशुचर्यां चरन्ति ते चापि प्रेत्य पूयविण्मूत्रश्लेष्ममलापूर्णार्णवे निपतन्ति तदेवातिवीभत्सितमश्नन्ति ॥ २३ ॥

ये त्विह वै श्वगर्दभपतयो ब्राह्मणादयो मृगयाविहारा अतीर्थे च मृगान्निघ्नन्ति तानपि सम्परेतांल्लक्ष्यभूतान् यमपुरुषा इषुभिर्विध्यन्ति ॥ २४ ॥

---

भाषा टीका ।

जो पुरुष इहां पिता ब्राह्मण वेद इनोंका द्रोह करता है सो दशहजारयोजन कालसूत्र संज्ञक नरक मे डाला जाताहै उहां पर गरम करेहुये ताम्बेके खले मे डाला जाता है ऊपर नीचे सूर्य अग्नि से तपायमान होता है फिर उसी मे डार देते हैं क्षुधा प्याससे बाहिर भीतर शरीर उस का जलता रहता है सोता है चलता है खडा होता है दौडता है जितने मारे हुये पशुओं के रोम हैं उतने हजार वर्ष तक उहां दुःख भोगता है ॥ १४ ॥

जो पुरुष इहांपर अपने वेदमार्ग से छूटकर पाखण्ड मतमें विना आफत के समय में भी प्रविष्ट होजाता है तिसको असिपत्र वनमे बैठाकर चाबुक से मारते हैं वहांपर वह इधर उधर दौडता है तब दोनों तरफ धारवाले तरवार सरीके तालों के वन हैं तिससे उसके सब अङ्ग कटते हैं तहां हायमरा ऐसा पुकारता है बडी पीडा से मूर्च्छित होकर पैंड पैंड मे गिरताहै अपने धर्म के नाश करने वाले पाखण्ड मतके फलको भोगता है ॥ १५ ॥

जो कोई राजा या राजपुरुष विना दंड के योग्य को दण्ड देता है अथवा ब्राह्मण को शरीर दण्ड देता है वह बडा पापी सूकरमुख नरक में गिरता है उहां पर बलिष्ठों से उसके शरीर के सब अवयव पिसजाते हैं जैसे कि ऊंखका दंडा पेडने से होजाता है तब आर्त हो चिल्लाता है कहीं मूर्छित होकर मोहको प्राप्त होकर पडता है जैसे कि विना दोष वाले पुरुष उसके दण्ड देने से मूर्छित होते थे ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ईश्वरेणोपकल्पिता मनुष्यरक्तपानादिलक्षणा वृत्तिर्येषां मत्कुणादीनां न विविक्ता विज्ञाता परव्यथा यैरविवेकिभिः स्वयं पुरुषेण ब्राह्मणादिभावेन विधिनिषेधपूर्वकमुपकल्पिता वृत्तिर्यस्य विविक्ता परव्यथा येन विवेकिना अभिद्रुग्धा हिंसिताः तैः विहता निद्रारूपा निर्वृतिर्यस्य न लब्धमवस्थानं येन तमसि परिक्रामति ॥ १७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

यदिकिञ्चन भक्ष्यादिकमुपनतं प्राप्तं तदसंविभज्य न निर्मिताः पञ्चयज्ञा येन अत एव वायसैः संस्तुतः समत्वेन वर्णितः कृमिभोजनः कृमीनेव भुञ्जानः यावन्तस्तावन्ति योजनानि तत्कृमिकुण्डं तावन्ति वर्षाणि यावद्द नपातकमित्यर्थः अप्रत्तमसंविभज्याहुतं चात्तीति तथा सः आनिर्वेशमकृतप्रायश्चित्तम् ॥ १८ ॥

निष्कुषन्ति छिन्दन्ति ॥ १९ ॥

तिग्मया तप्तया सूर्म्या प्रतिमया ॥ २० ॥

सर्वाभिगमः पश्वाद्युपगन्ता ॥ २१ ॥

अपाखण्डाः सत्कुलीनाः सन्तः द्वितीयान्तपाठे सेतुविशेषणं नदीं विशन्ति। विषमूत्रेति ॥ २२ ॥

पशुचर्यां स्वेच्छाचारम् ॥ २३ ॥

अतीर्थे विहितादन्यत्र विध्यन्तीति प्राणनिरोधो दर्शितः ॥२४॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथान्धकूपं तत्प्राप्तिनिमित्तं पापं च वर्णयति। यस्त्विह वा इति। यस्तु देही इह लोके ईश्वरेणोपकल्पिता मनुष्यरक्तपानादिका वृत्तिर्येषामविदिता परस्य व्यथा यैरविवेकिभिस्तेषामपरकृतदुःखानां वा भूतानां मत्कुणमशकादीनां व्यथामाचरत करोति कथम्भूतः स्वयं पुरुषोपकल्पितवृत्तिः परेण परमपुरुषेण उपकल्पिता वर्णाश्रमादिविभागेन विधिनिषेधपूर्विका कल्पिता वृत्तिर्यस्य विविक्ता विविच्य ज्ञाता परस्य व्यथा येन विवेकी सन्नित्यर्थः स एवम्विधो भूतध्रुक् तदभिद्रोहेण भूतद्रोहेण निमित्तेनान्धकूपाख्ये नरके निपतति तत्रान्धकूपे हेति येऽसौ पतितस्तैस्तैः पूर्वं हिंसितैर्जन्तुभिः कांश्चित्तान् दर्शयति। पशुमृगेत्यादिना। तेषामानन्त्यात्सङ्ग्रहाह। ये केचाभिद्रुग्धा हिंसितास्तैः सर्वैः पश्वादिरूपतामापन्नैः सर्वतोऽभिद्रुह्यमाणस्तैरेव विहता निद्रानिर्वृतिः निद्रासुखं यस्य तथा न लब्धमवस्थानं येन तथाभूतस्तमस्यन्धकारे परिभ्रमति। तत्र दृष्टान्तः यथेति कुशरीरे व्याध्याद्युपहते सञ्चारासमर्थे शरीरे जीवो यथाऽलब्धनिद्रः क्लिश्यति तथेत्यर्थः अन्धकारावृतकूपोऽन्धकूप इत्यवयवार्थः ॥ १७ ॥

अथ कृमिभोजनं तदनुभवहेतुं पापं च वर्णयति। तु यस्त्विह वा अपरिविभज्येति यस्तु देही इह लोके यद्धव्यादिकं दैवादुपनतं तदन्नमप्यसंविभज्यातिथिभ्योऽप्रदायेत्यर्थः अश्नाति स्वयं गृहे यथानिर्मितपञ्चयज्ञः अननुष्ठितपञ्चमहायज्ञः स वायससंस्तुतः वायसैः समत्वेन वर्णितः परत्र परलोके कृमिभोजनाख्ये नरकाधमे निपतति तत्र शतसहस्रयोजनपरिमिते कृमिकुण्डे स्वयमपि कृमिभूतः कृमिभिरेव भक्ष्यमाणः कृमिभोजनः कृमीनेव भुञ्जानः यावद्यावन्ति योजनानि कृमिकुण्डं तावन्ति वर्षाणयात्मानं यातयते दुःखयति कथम्भूतं अप्रत्ताप्रहुतादः अप्रत्तं दत्तावशिष्टं प्रहुतं यज्ञावशिष्टं प्रत्तं च प्रहुतं च प्रत्तप्रहुते न प्रत्तप्रहुते अप्रत्तहुते ते अत्तीति अप्रत्तप्रहुतादः एवम्भूतोऽहमित्यकृतनिर्वेशः परितापो येन तमात्मानम् ॥ १८ ॥

अथ संदंशाख्यं नरकं पापं च वर्णयति। यस्त्विह वै स्तेयेनेति। इह यो देही स्तेयेन चौर्येण वा अनापदि ब्राह्मणस्यान्यस्य वा हिरण्यरत्नादीन्यपहरति तं देहिनं परत्र संदंशाख्ये नरके हे राजन्! यमभटाः अग्निवर्णैः सन्तापेनाग्निवर्णतामापन्नैरयस्मयैः लोहमयैः संदंशैः संदशन्त्येभिरिति संदंशाः तैश्छेदनसाधनैः शूलैः निष्कुषन्ति छिन्दन्ति संदंशैः संदशन्ति यत्रेति संदंश इत्यवयवार्थः ॥ १९ ॥

अथ तप्तसूर्मिं तत्प्राप्तिहेतुं दुरितं चानुवर्णयति। यस्त्विह वा अगम्यामिति। यस्तु देही स्वयं पुरुषः सन्नगम्यामनुपेयां स्त्रियमभिगच्छति स्वयं योषित् स्त्री सती अगम्यमुपेतुमयोग्यं पुरुषं चोपगच्छति तं देहिनममुत्र सूर्म्याख्ये नरके कशया ताडयन्तः लोहमय्या तिग्मया तप्तया सूर्म्या स्थूणा सैव स्त्रीरूपेण पुरुषरूपेण चोत्कीर्णा तया सूर्म्या प्रतिमया पुरुषं पापिनमालिङ्गयन्ति स्त्रियं पापिनीं पुरुषरूपया सूर्म्यालिङ्गयन्ति तप्ता सूर्मिर्यस्मिन् स तप्तसूर्मिरित्यवयवार्थः ॥ २० ॥

अथ वज्रकण्टकशाल्मलीमाह। यस्तु इह वै सर्वाभिगम इति। सर्वाभिगमः लोभादसंख्यसेवी पश्वाद्युपगन्तेति केचिद्व्याचक्षते तं सर्वाभिगममत्र निरये वज्रकण्टकशाल्मलीसंज्ञके वर्त्तमानं पतितं वज्रमयानि कण्टकानि यस्य तं शाल्मलीं वृक्षमारोप्यारोप्य निष्कुषन्तीत्यर्थः वज्रकण्टकशाल्मलिर्यस्मिन् स इत्यवयवार्थः ॥ २१ ॥

वैतरणीं वर्णयति। य इति। राजन्याः क्षत्रियास्तेषां पुरुषा वा पाषण्डा वैदिकान् धर्मसेतून् धर्ममर्यादान् भिन्दन्ति नाशयन्ति कथम्भूताः भिन्नमर्यादा अतिक्रान्तधर्ममर्यादाः ते राजन्यादयः अस्यां वैतरण्यां नरकस्य परिखाभूतायां नद्यां यादसाङ्गणैरितस्ततो भक्ष्यमाणा अपि आत्मना देहेन न वियुज्यमाना अत्यक्तदेहा इत्यर्थः तत्र हेतुः असुभिः प्राणैरुह्यमानाः कर्मणाः कर्तृत्वविवक्षायां तृतीयोद्धृतप्राणा इत्यर्थः तत्रापि हेतुमाह। स्वाघेनेति स्वकीयदुरितेनेत्यर्थः स्वकीयदुरितेन कर्मपाकं स्वकीयपापकर्मफलमिदमित्येवं स्मरन्त उपतप्यन्ते क्लिश्यन्ति नदीं विशन्ति। विषमूत्रेति। पूयं दुर्गन्धिविषमूत्ररूपं पूयं विडादीनां वाहिन्यां विडादीनां वाहः प्रवाहः सोऽस्या अस्तीति तथा तस्यां वा नदीरूप एवायं नरक इत्यवयवार्थभेदः ॥ २२ ॥

अथ पूयोदमनुवर्णयति। ये त्विहेति। ये देहिनो इह वृषलीपतयः ब्राह्मणादयः सन्तः शूद्रायाः पतयो नष्टाः त्यक्ताः शौचादयो यैस्ते तत्र शौचं स्नानपर्यन्तं सत्कर्म आचारः सन्ध्योपासनादिनियमः भक्ष्याभक्ष्यादिनियमः अत एव त्यक्ता लज्जा यैस्ते पशुचर्यां स्वेच्छाचारं कुर्वन्ति पाकं पचतीतिवद्भिर्देशः तेऽपि प्रेत्य मृत्वा विडादिभिः पूर्णे अर्णवच्छिस्तरे हृदे निपतन्ति तदेव विडादिकमेवातिहेयमश्नन्त्यदन्ति पूयमुदमुदकं यस्मिन्नित्यवयवार्थः ॥ २३ ॥

अथ प्राणनिरोधं सपापं वर्णयति। ये त्विह वै श्वगर्दभपतय इति। शुनां गर्दभानां च पतयः पालकाः ब्राह्मणा मृगयेव विहारो येषां तेऽतीर्थे मृगान्निघ्नन्ति अतीर्थेषु लोकरक्षणार्थस्याभावात्प्राणिवधो दोषावहस्तीर्थेषु तु प्राणिसञ्चाराय क्रूरो दुष्टसत्त्ववधो न दोषाय भवति यतस्तस्मादतीर्थे इत्युक्तं तानपि श्वगर्दभपतीनपि सम्परेतान् मृतान्वैशसने प्राणाँल्लक्ष्यभूतांल्लक्ष्यीकृत्येत्यर्थः इषुभिर्बाणैर्यमभटा विध्यन्ति ताडयन्ति विध्यन्तीत्यनेन प्राणनिरोधनिमित्ता व्यथाभिप्रेतातोऽस्य नरकस्य प्राणनिरोध इति संज्ञा प्राणानां निरोधो यस्मिन्नित्यवयवार्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अविदितपरव्यथानामज्ञातपरक्लेशानामीश्वरेण विधात्रा कल्पिता सहजत्वेन वृत्तिः मनुष्यादिशरीरभक्षणलक्षणा येषामत्कुणादीनां तानि तथा तेषामपकल्पितवृत्तिः तद्वृत्तिकल्पनासमर्थः पुरुषेण श्रीहरिणोपकल्पिता प्रावरणादिलक्षणा वृत्तिर्यस्य स तथा पीति वा यूकाः शूलमुखाः आदिशब्दात्स्वेदजादयः प्राणिविशेषाः छिद्रादिनिलया गृह्यन्ते कुशरीरे कुष्ठादिदूषितदेहे ॥ १७ ॥

यस्तु यत्किञ्चन प्राप्तमन्नफलादिकमसंविभज्यातिथिभृत्यबालवृद्धादीनभोजयित्वा स्वयं भुङ्क्ते स च यश्चानिर्वृतयज्ञोपायमकृतदेवतापूजालक्षणायागादिश्रेयःसाधनं तदन्नमश्नाति स च यश्चासंस्कृतयाज्याद्युपस्कारेण शून्यं तदन्नमश्नाति सोऽपि कृमिभोजननाम्नि निकृष्टनरके पतति कृमय एव भोजनं यस्य स तथा यावद्यावानप्रमत्तस्यातिथिदेवतादिभ्योऽप्रदत्तस्याकृतस्यासंस्कृतस्य प्रारब्धापरिसमाप्तस्य कर्मणो वा निर्वेशः प्रायश्चित्तलक्षणप्रतिक्रिया तद् तावतात्मानं नरकाद्यातयति उद्धारयति अप्रमत्तेति पाठे यावदप्रमत्तं बुद्धिपूर्वमकृतो निर्वेशो येन स तथा तावत्तमात्मानं नरके पातयति प्रापयतीति वेत्येतत्सर्वमानुकर्षणीयम् ॥ १८ ॥

संदंशैः सूचीविशेषैस्त्वचि निष्कासयन्त्युद्धाटयन्ति ॥ १९ ॥

सूर्म्या लोहादिमयपुत्तल्या ॥ २० ॥

सर्वाभिगमः सर्वाभिः स्त्रीभिः कृतसौरतः सम्वादाभावेऽपि बलाद्गमनमभिगमः शाल्मली कण्टकतरुः ॥ २१ ॥

आत्मना देहेन स्वासुभिः स्वप्राणैश्च ओघेन निरयप्रवाहेण उह्यमाना अपि वियुज्यमाना अपि ते योगं प्राप्यमाणा अम्रियमाणा इत्यर्थः विषमूत्राद्यात्मना स्यन्दमानायाम् ॥ २२ ॥ २३ ॥

अतीर्थे अपात्रमुद्दिश्याविहितकाले वा ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कुशरीरे तिर्यगादिलक्षणे ॥ १७—३८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ईश्वरेण कल्पिता मनुष्यरक्तपानादिलक्षणा वृत्तिर्येषां मत्कुणादीनां न विविक्ता न ज्ञाता परेषां व्यथा यैस्तेषां पुरुषोपकल्पितवृत्तिरीश्वरेणैव विहितानिषिद्धजीविकः । मनुष्यस्त्वाज्ञिज्ञातान्यव्यथः ॥ १७ ॥

यत् किञ्चन भक्ष्यभोज्यादिकमुपनतं प्राप्तं तदसंविभज्य वायसैः संस्तुतः समतया वर्णितः वायसतुल्यचर्यो नरः कृमिभोजनः कृमीनेव भुञ्जानः । अप्रत्तमसंविभक्तमप्रहुतं चाश्नाति तथा सः । यत् पापं यावत्तावदित्यर्थः । अनिर्वेशमकृतप्रायश्चित्तम् ॥ १८ ॥

निष्कुषन्ति छिन्दन्ति ॥ १९ ॥

तिग्मया तप्तया सूर्म्या प्रतिमया ॥ २० ॥

सर्वाभिगमः पश्वादीनप्यभिगच्छति ॥ २१ ॥

आत्मना देहेन ॥ २२ ॥

विषमूत्रेति नदीविशेषणम् ॥ २३ ॥

अतीर्थे विहितादन्यत्र ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न विविक्ता न ज्ञाता परव्यथा यैस्तेषामभिद्रुणाः पीडितः विहता विनष्टा निद्रारूपा निर्वृत्तिः सुखं यस्य सः ॥ १७ ॥

उपनतं लब्धं वायसैः संस्तुतःसमत्वेन वर्णितः यावत्तावत् कृमिकुण्डे अप्रत्तमसंविभक्तमप्रहुतं चाश्नीति तथा अनिर्वेशमकृतप्रायश्चित्तमात्मानं यातयते ॥ १८ ॥

निष्कुषन्ति छिन्दन्ति ॥ १९ ॥

सूर्म्या प्रतिमया ॥ २० ॥

सर्वाभिगमः पश्वाद्युपगन्ता ॥ २१—२२ ॥

पशुचर्य्यो पशुवत्स्वेच्छाचारम् ॥ २३ ॥

अतीर्थे शास्त्रोक्तप्रकारादन्यत्र दृपुभिर्विध्यन्ति प्रायश्चित्तं कुर्वन्तीत्यर्थः ॥ २४—२५ ॥

---

भाषा टीका

जो पुरुष यहां पर ईश्वरने जिन की जो वृत्ति कल्पना करदी है और वे लोग दूसरे के कष्ट को नहीं जानते हैं ऐसे जो कोई हिंसक भी जंतु हैं तिनको देखकर आप मनुष्य होकर परकी पीडा को भी जानने वाला होकर जो पीडा देता है वह मरे पीछे उस द्रोह से अन्धकूप नरक में गिरता है उहां पर वे जन्तु पशु मृग पक्षि सर्प मच्छर जुआं खटमल मक्खि और जिनोंको उसने दुख दिया है वेजानवर सब प्रकार से उसको दुःख देते हैं और अंधेरे में पडा रहता है कभी निद्राका सुख उसको नहीं होता है कभी ठीक स्थिति भी नहीं उसकी होती है जैसे कोई शरीर में जीव घूमा करते हैं तैसे घूमता रहता है ॥ १७ ॥

जो पुरुष घरमें किसी पदार्थ के आने से सबको नहीं देकर खाता है अथवा पञ्चयज्ञ विना किये खाता है वह कौवा के तुल्य है वह मरने पर कृमिभोजन अधम नरक में गिरता है उहां पर सौ हजार योजन के कृमि कुण्ड में कीडा होकर स्वयं कीडों से भक्षित होकर कीडों को खाता हुआ जब तक वे अन्न नहीं देने से होम नहीं करने के प्रायश्चित्त न करने से पाप रहते हैं तब तक उन दुःखों को भोगता है ॥ १८ ॥

जो इहां पर चोरी से या जबरदस्ती सुवर्ण रत्नादिक अथवा ब्राह्मण की कोईभी चीज को हरता है अथवा दूसरे की चीज विना आफतके हरता है ऐसा जो कठोर है है राजन् उसके मरे पीछे यमके पुरुष अग्नि में गरम करे हुये लोहा के गोलों से और चीमटों से उसके शरीर में लगाकर खींचते हैं ॥ १९ ॥

जो इहां पर अगम्य स्त्री को पुरुष गमन करता है अथवा अगम्य पुरुष को स्त्री गमन करती है उन दोनों को उहां पर चाबुकों से मारते हुये बडी गरम करी हुई स्त्री की मूर्ति

ये त्विह वै दाम्भिका दम्भयज्ञेषु पशून् विशसन्ति तानमुष्मिँल्लोके वैशसे [१] नरके पतितान्निरयपतयो यातयित्वा विशसन्ति ॥ २५ ॥

यस्त्विह वै सवर्णां भार्यां द्विजो रेतः पाययति काममोहितस्तं पापकृतममुत्र रेतःकुल्यायां पातयित्वा रेतः सम्पाययन्ति ॥ २६ ॥

ये त्विह वै दस्यवोऽग्निदा गरदा ग्रामान् सार्थान् वा विलुम्पन्ति राजानो राजभटा वा तांश्चापि हि परेत्य यमदूता वज्रदंष्ट्राः श्वानः सप्तशतानि विंशतिश्च सरभसं खादन्ति ॥ २७ ॥

यस्त्विह वा अनृतं वदति साक्ष्ये द्रव्यविनिमये दाने वा कथञ्चित् स वै प्रेत्य नरकेऽवीचिमत्यधःशिरा निरवकाशे योजनशतोच्छ्रायाद्गिरिमूर्ध्नः संपात्यते यत्र जलमिव स्थलमश्मपृष्ठमवभासते तदवीचिमत्तिलशो विशीर्यमाणशरीरो न म्रियमाणः पुनरारोपितो निपतति ॥ २८ ॥

यस्त्विह वै विप्रो राजन्यो वैश्यो वा सोमपीथस्तत्कलत्रं वा सुरां व्रतस्थोऽपि वा पिबति प्रमादतस्तेषां निरयं नीतानामुरसि पदाक्रम्यास्ये वह्निना द्रवमाणं कार्ष्णायसं निषिञ्चन्ति ॥ २९ ॥

अथ च यस्त्विह वा आत्मसम्भावनेन स्वयमधमो जन्मतपोविद्याचारवर्णाश्रमवतो वरीयसो न बहुमन्येत स मृतक एव मृत्वा क्षारकर्दमे निरयेऽवाक्शिरा निपातितो दुरन्ता यातना ह्यश्नुते ॥ ३० ॥

ये त्विह वै पुरुषाः पुरुषमेधेन यजन्ते याश्च स्त्रियो नृपशून् खादन्ति तांश्च ते पशव इव निहता यमसदने यातयन्तो रक्षोगणाः सौनिका इव स्वधितिनावदायासृक् पिबन्ति नृत्यन्ति च गायन्ति च हृष्यमाणा यथेह पुरुषादाः ॥ ३१ ॥

ये त्विह वा अनागसोऽरण्ये ग्रामे वा वैश्रम्भकैरुपसृतानुपविश्रम्भय्य जिजीविषून्शूलसूत्रादिषूपप्रोतान् क्रीडनकतया यातयन्ति तेऽपि च प्रेत्य यमयातनासु शूलादिषु प्रोतात्मानः क्षुत्तृड्भ्यां चाभिहताः कङ्कवटादिभिश्चेतस्ततस्तिग्मतुण्डैराहन्यमाना आत्मशमलं स्मरन्ति ॥ ३२ ॥

---

भाषा टीका।

लोहा की बनाई पुरुष के शरीर में चिपटाते हैं और स्त्री के शरीर में लोहा के पुरुष को चिपटाते हैं ॥ २० ॥

जो कि इहां पर पशु आदि सबका गमन करने वाला है उसको नरक में जाने पर वज्रसे कांटे वाले सेमरके पेड में लगाकर खैंचते हैं ॥ २१ ॥

जो इहां राजवंशी अथवा राजपुरुष आस्तिकवंश मे होकर भी धर्म मर्यादों को तोडते हैं वे लोग मरे पीछे भिन्न मर्यादावाले वैतरणी नदीमें गिरतेहैं वह नदी नरककी खाई है उंहां जलजन्तुओं से इधर उधर से भक्षित होते हैं और प्राण नहीं छूटते हैं शरीर भी नहीं छूटताहै पाप से चलते रहते हैं कर्म फल को स्मरण करके दुःखित होते रहते हैं विष्ठा मूत्र रक्त केश नख हाड मेद मांस वसा इस नदी मे बहते हैं तिससे बडेही दुःख पाते रहते हैं ॥ २२ ॥

जो इहां शूद्र स्त्रियों के पति हैं शौच आचार नियमों को छोडे हैं लज्जा को भी छोडे हैं पशुओं के आचरण करते हैं वे भी मरे पीछे पीव विष्ठा मूत्र श्लेष्म से भरे समुद्र में गिरते हैं उन्ही खराब चीजों को खाते हैं ॥ २३ ॥

जो इहां कुत्ता गधे इन के पति हैं ब्राह्मणादि हो कर भी सिकार खेलने वाले हैं विना यज्ञ के मृगों को मारते हैं उन को भी मरने के पीछे उन पियों को लक्ष्य बना कर यमराज के पुरुष बाणों से वेधन करते हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

निरयपतयो यमपुरुषाः ॥ २५ ॥

लालाभक्षमाह। यस्त्विति। रेतःपानं कारयन्ति ॥ २६ ॥

यमदूता ये श्वानः सरभसं ससम्भ्रमम् ॥ २७ ॥

द्रव्यविनिमये क्रयविक्रयादौ निरवकाशे निरालम्बे अवीचिशब्दार्थमाह। यत्रेति। वीचिस्तरङ्गस्तद्रहितत्वादवीचिः ॥ २८ ॥

यो विप्रस्तत्कलत्रं वा सुरां पिबत्यन्योऽपि वा व्रतस्थः सन् राजन्यो वैश्यो वा सोमपीथः कृतसोमपान इत्यन्वयः तयोः सोमस्थाने फलचमसविधानात्सोमपाननिषेधाच्च तथा च श्रुतिः

---

(१) वैशसे इति श्रीवीरराघवाचार्यपाठः।

श्रीधरस्वामिकृतभावार्थदीपिका ।

"न्यग्रोधस्तम्भीराहृत्य ताः सम्पिष्य दधन्युपमृज्य तमस्मै भक्षं सम्प्रयच्छेन्न सोमम्" इति ॥ २९ ॥

स पूर्वमपि मृतक एव सन्मृत्वा ॥ ३० ॥

पुरुषस्य मेधेन हिंसया भैरवादीन् यजन्ते याश्च स्त्रियो नरमांसम्भक्षयन्ति कामरूपा रक्षोगणा भूत्वा यथेह ते पुरुषादाः सन्तः पूर्वमनृत्यन्त तद्वत् ॥ ३१ ॥

वैश्रम्भकैर्विश्वासोपायैरुपाविश्रम्भय्य विश्वास्य ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ सपापं विशसनं वर्णयति । ये त्विह वै दाम्भिका इति । इह लोके ये वै देहिनः दाम्भिका लोकवञ्चका दम्भयज्ञेषु वयमपि यज्ञानुष्ठानपरा इति लोकान् प्रलोभयितुमारब्धेषु दम्भार्थयज्ञेषु पशून् विशसन्ति हिंसन्ति तान् दाम्भिकानमुष्मिन् वैशसनामाख्ये नरके निपतितान्निरयपतयः यमपुरुषाः घातयित्वा दुःखयित्वा विशसन्ति विहिंसन्ति यस्मिन् स विशसनः विशसन एव वैशसन इत्यवयवार्थः ॥ २५ ॥

सपापं लालाभक्षमनुवर्णयति । यस्त्विह वै सवर्णामिति । इह लोके यो वै द्विजः कामेन मोहितः सवर्णां भार्यां रेतः स्वरेतः पाययति पानं कारयति तं द्विजं पापकृतं रेतःकुल्यायां पातयित्वा रेतः सम्पाययन्ति यमपुरुषा इति शेषः लाला रेतः तस्य भक्षणं यस्मिन् स लालाभक्षः इत्यवयवार्थः ॥ २६ ॥

अथ सारमेयादनं सपापमनुवर्णयति । ये त्विह वै दस्यव इति । इह ये दस्यवो दुष्टसत्त्वाः के ते अग्निदा गृहादीनां दाहका ये च गरदाः विषदाः ये वा राजभटा पुराकरग्रामान् पुराकरग्रामस्थान् आकरः खनिः सार्थान् जीवसमूहान् वा विलुम्पन्ति छिन्दन्ति हिंसन्तीत्यर्थः तान् सम्परेतान् ये वज्रवन्निष्ठुरा दंष्ट्रा येषां ते यमदूताः श्वानः विंशत्यधिकसप्तशतसङ्ख्याकास्ते सरभसं संभ्रमं खादयन्ति खादन्तीत्यर्थः निवृत्तप्रेषणात् खादेर्णिच् सारमेयाणां शुनामदनं सारमेयकर्तृकमदनं यस्मिन्नित्यवयवार्थः ॥ २७ ॥

अथावीचिमन्तं सपापं वर्णयति । यस्त्विह वा अनृतामिति । यस्त्विह लोके देही साक्षिणः कर्म साक्ष्यं तस्मिन् द्रव्यविनिमये वा क्रयविक्रयादिरूपे वाणिज्ये वानृतमसत्यं वदति स वै प्रेत्य कथञ्चिदत्यन्तदुःखेनावीचिमति नरके निरवकाशे निरालम्बे योजनशतपरिमितोच्छ्रयादुन्नतदेशाद्गिरिमूर्द्धसु पर्वतशिखरेष्वधःशिराः निपात्यते अवीचिमच्छब्दस्यावयवार्थमाह । यत्रेति । यत्र नरकेऽश्मपृष्ठरूपं स्थलं जलमिवावभासते तदवीचिमद्वीचिस्तरङ्गः तदस्यास्तीति वीचिमज्जलं न विद्यते वीचिमद्यस्मिन् सोऽवीचिमज्जलरहितमप्यश्मपृष्ठं जलमिवावभासते तदवीचिमदित्यर्थः एवं निपात्यमानः पापी तिलप्रमाणशः विशीर्यमाणं शरीरं यस्य तथाभूतोऽपि न म्रियमाणः मरणमप्राप्तः पुनरपि तथैवारोपितो निपतति ॥ २८ ॥

अथ सदुरितमयःपानं वर्णयति । यस्त्विहवै विप्र इति । यो विप्रस्तत्कलत्रं वा सुरां पिबत्यन्योऽपि वा व्रतस्थः राजन्यो वै वैश्यो वा प्रमदात्सोमपीथः कृतसोमपान इत्यन्वयः तेषां सोमस्थाने फलचसमविधानात्सोमपाननिषेधश्च तथा च श्रुतिः "न्यग्रोधस्तेभिनीराहृत्य ताः सम्पिष्य दधन्युपमृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्" इति स्तेभिनीःफलानि दधनि दधि तेषां विप्रादीनां निरयं प्रापितानामुरसि पदा पादेनाक्रम्य द्रवयामत्यन्ततापेन द्रवीभूतं कार्ष्णायसमयो विशेषं तेषामास्ये मुखे निषिञ्चन्ति अयसः पानं यस्मिन्नित्यवयवार्थः ॥ २९ ॥

अथ सपापं क्षारकर्दममाह । यस्त्विह वात्मसम्भावनेति । यो वै देहीह लोके स्वयं जन्मादिभिरधमः निकृष्ट आत्मनः स्वस्य सम्भावनेनोत्कृष्टत्वापादनेन जन्मादिमतः अत एव वरीयसः श्रेष्ठान्न बहुमन्येत किन्त्ववमन्येतेत्यर्थः स पूर्वं मृतक एव मृत्वा क्षारकर्दमे नरकेऽवाकूशिरा अधःशिराः निपतित अपारयातना अश्नुतेऽनुभवति क्षारः कर्दमो यस्मिन्नित्यवयवार्थः ॥ ३० ॥

अथ रक्षोगणभोजनं सदुरितमाह । ये त्विह वै पुरुषा इति । ये चेह पुरुषाः पुरुषस्य मेधेन हिंसया भद्रकाल्यादिदेवता यजेरन् याश्च स्त्रियः अशास्त्रीयान् शास्त्राविहितान्नृपशून्नररूपान्पशून् घातयन्ति ताश्च ताश्च तान् "पुमान् स्त्रिया" इत्येकशेषः तांश्च पुरुषान् ताश्च स्त्रीः नृपशवस्तैर्निहतास्ते सर्वे यमसदने रक्षोगणा भूत्वा घातयन्ति दुःखयन्ति सौनिका इव सूना नाम पशूनां वधस्थानं तत्र भवाः सौनिका "द्व्यज्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्" इति द्व्यच्त्वाट्ठक् स्वधितिना विदार्य छित्त्वासृग्रक्तं पिबन्ति यथेह ते पुरुषादा हन्यमानाः सन्तः पूर्वमनृत्यन् जगुश्च तद्वन्नृत्यन्ति गायन्ति च रक्षोगणानामसृग्भोजनं यस्मिन्नित्यवयवार्थः ॥ ३१ ॥

अथ शूलप्रोतं तत्प्राप्तिहेतु दुरितं च वर्णयति । ये त्विह वा अनागस इति इह ग्रामेऽरण्ये वा अनागसो निरपराधान् जीवितुमिच्छून् जन्तून् ये वै देहिनो वैश्रम्भकैर्विश्वासोपायैरुपविश्रम्भय्य विश्वास्य शूलसूत्रादिषु प्रोतान् संलग्नान् कृत्वेतस्ततः क्रीडनकतया क्रीडार्थं घातयन्ति दुःखयन्ति तेऽपि च यमयातनासु प्रेत्य सूत्रशूलादिषु प्रोताः संलग्ना आत्मानः देहा येषां ते क्षुत्पिपासाभ्यां पीडिताश्च तिग्मतुण्डैः सूचीमुखवत्तीक्ष्णानि तुण्डानि मुखानि येषां तैः काकादिभिरितस्ततो हन्यमाना आत्मशमलं स्वीयं पापम् अहो एवम्विधमित्येवं स्मरन्ति शूलादौ प्रोता यस्मिन्निति शूलप्रोतमित्यवयवार्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दाम्भिका धर्मध्वजिनः विशसन्ति खण्डशः खण्डयन्ति ॥ २५ ॥

सवर्णां स्ववर्णां समानवर्णाम् ॥ २६ ॥

सार्थान् पान्थान् जनान् ॥ २७ ॥

द्रव्यविनिमये वाणिज्यव्यवहारे साक्ष्ये साक्षिणा वक्तव्ये अवीचिमज्जलं यत्तदश्मपृष्ठस्थलं दूराद्दर्शने जलमिव दृश्यते तस्मिन्नवीचिमति जलशून्ये पाषाणपृष्ठे निरवकाशे निरालम्बने ॥ २८ ॥

सोमपीथाः कृतसोमपानाः विप्राणां नित्यनिषिद्धं राजन्यादीनां सोमपानानन्तरं पूर्वं वीर्यपानलक्षणं वा सुरापानं च पूर्वोक्त सम्भवात्तद्भार्याणां सुरते मधुपानादिविषयामां वेत्यादिविधेः वरिपत्रादिमूर्तिनिमित्तदीक्षालक्षणव्रतस्थानां वगन्तव्यः ॥ २९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

वरीयसः बहुमानयोग्यान् पुरुषान्मृतकः जीवन्मृतः चार-कर्दमे अवयात्मकपङ्के दुरन्तयातना अनवसानदुःखानि ॥ ३० ॥

पुरुषमेधेन पुरुषहत्यालक्षणयज्ञेन यमसादने नरके स्वधितिना विशसनखड्गेनावदाय खण्डयित्वा सौनिका हिंसकाः पशुमारा इत्यर्थः ॥ ३१ ॥

वैस्रम्भकैः विश्वासोपायैः उपविस्रम्भय्य विश्वास्य आदिग्रामाद्गृगुपातनं क्रीडनतया लीलाकरणभावेन यमयातनासु यमेनाधिकृतनरकेषु बलाका दीर्घतुण्डाः श्येनविशेषा दन्दशूकाः सदा दंशनशीलाः सर्पाः उद्वेजयन्ति भयमुत्पादयन्ति उपसृप्य प्राप्य इह लोके यथा बिलेशया अजगराः "बिलेशयस्त्वजगरः शयुर्को मनीषिभिः" इति ॥ ३२—३३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

विशसन्ति घ्नन्ति ॥ २५ ॥

रेतः पाययति वशीकरणकर्मणो विशेषार्थं रेतःपानं कारयति ॥ २६ ॥ २७ ॥

निरवकाशे निरालम्बे अवीचिशब्दार्थमाह । यत्रेति । अवीचिस्तरङ्गहीनं तत्र ॥ २८ ॥

सोमपीथः कृतसोमपानः वह्निना द्रवत् कालायसं लोहम् ॥२९॥

आत्मसम्भावनेन मिथ्याहङ्कारेण ॥ ३० ॥ ३१ ॥

वैस्रम्भकैर्विश्वासोपायैः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

लालासक्षमाह । यस्त्विहेति ॥ २६ ॥

सरभसं ससम्भ्रमम् ॥ २७ ॥

वीचिस्तरङ्गस्तद्रहितत्वादवीचिमत् स्थलं तदेवावीचिसंज्ञो नरकः ॥ २८ ॥

सोमपीथः सोमस्य पीतं पानं यस्य स एवम्भूतो यो विप्रस्तत्कलत्रं वा सुरां पिबति अन्योऽपि वा व्रतस्थो राजन्यो वैश्योऽपि वैश्यश्च तयोः सोमस्थाने फलचमसविधानात् सोमपाननिषेधाच्च तथा च श्रुतिः "न्यग्रोधस्तिमीराहृत्य सम्पिष्य दधन्युपमृज्य तमस्मै भक्ष्यं प्रयच्छेन्नसोमम्" इति ब्राह्मणस्य तु अव्रतस्यापि सुरापाननिषेध आदिपर्वणि।

यो ब्राह्मणोऽद्यप्रभृतीह कश्चिन्मोहात्सुरां पास्यति मन्दबुद्धिः।
अपेतधर्मा ब्रह्महा चैव स स्यादस्मिँल्लोके गर्हितः स्यात्परे च इति॥२९॥

एवं विंशतिनरकानुक्त्वा सप्त नरकानाह । अथेत्यादिना ॥ ३० ॥

रक्षोगणभोजनमाह । ये त्विति । यथेह ये पुरुषाः पुरुषादाः सन्तः मेधेन हिंसया भैरवादीन् यजन्ते सौनिका इव नृपशून् याश्च स्त्रियः खादन्ति तान् तांश्च ते च ते पशवः रक्षोगणा भूत्वा यातयन्तः असृक् पिबन्ति ॥ ३१ ॥

वैस्रम्भकैर्विश्वासोपायैः ॥ ३२ ॥

---

भाषा टीका

जो कोई इहां दम्भ करने वाले दम्भ के यज्ञों मे पशुओं को मारते हैं उन लोगों को उस लोक में वैशस नरक में डाल कर नरक अधिकारी लोग मार करके दुखित करते हैं २५

जो इहां पर अपनी जात की स्त्री को किसी निमित्त से काम से मोहित होकर अपने वीर्य का पान कराता है उस पापी को पर लोक में रेतः कुल्या नदी में डालकर वीर्य का पान खूब कराते हैं ॥ २६ ॥

जो इहां पर चोर वृत्ति से आग लगाते हैं विष देते हैं ग्रामों को जन समूहों को लूटते हैं सो राजा हों या राज पुरुष हों उनको भी मरने पर यमदूत वज्र सरी के दांत वाले सात सौ बीस कुत्ता से बडी जल्दी से कटवाते हैं ॥ २७ ॥

जो इहां गवाही देने मे धनके व्यवहार मे दानमे किसी प्रकार झूठ कहता है सो मरे पीछे अवीची मान् नरक मे नीचे को मुख करके बिना आधारके दश हजार योजन ऊंचे पर्वत के मस्तक पर से गिराया जाता है जहां पर की पत्थरों का स्थान जल सरीखा दीखता है अवीचिमान् नरक में तिल सरीखे उस के शरीरके टुकडे होजाते हैं मरता नहीं है फिर वहां पर चढाया हुआ गिरता है ॥ २८ ॥

जो इहां पर ब्राह्मण अथवा उसकी स्त्री यज्ञव्रत मे स्थित होकर सुरा पान करता है अथवा क्षत्रिय वैश्य होकर यज्ञ मे सोमपान करता है प्रमाद से भी वे नरक से डरते हैं तौभी यम दूत उन के छाती पर पग रख कर उन के मुख मे गला हुआ गरम लोहा डालते हैं ॥ २९ ॥

और भी जो इहां अपने बडे अभिमान से आप अधम होकर भी जन्म तप विद्या आचार वर्णाश्रम वाले श्रेष्ठ पुरुषों को अच्छी तरह नहीं मानता है सो मराही सा है तौभी मरने पर क्षार कर्दम नरक मे नीचे को मत्था करके डाला जाता है फिर कठिन कष्टों को भोगता है ॥ ३० ॥

जो पुरुष इहां पुरुष मेधयज्ञ करते हैं भैरवादिकों के अर्पण करके मनुष्य पशुओं को खाते हैं वे मरेहुये पशु यम पुर मे आकर रक्षोगण होकर घातक सरीखे होकर हथियारों से इस को काट कर उसके रक्त को पीते हैं जैसे यह पुरुष करता था तैसे हर्षित होकर नाचते हैं गाते हैं ॥ ३१ ॥

जो इहां वन में या ग्राम में विश्वास के उपायों से आये हुये उन जीवों को विश्वास देकर जीने की इच्छा वालों को शूलादिकों मे रख कर खेल के तरें से पीडा देते हैं वे भी पीछे यमदण्ड मे शूलादिकों मे चढाये जाते हैं क्षुधा तृषा से दुःखित होते हैं कङ्कवट आदि पक्षी इधर उधर से खेंचते हैं चोंचों से वे मारे जाते हैं तब अपने पापों को स्मरण करते हैं ॥ ३२ ॥

---

ये त्विह वै भूतान्युद्वेजयन्ति नरा उल्बणस्वभावा यथा दन्दशूकास्तेऽपि प्रेत्य नरके दन्दशूकाख्ये निपतन्ति यत्र नृप ! दन्दशूकाः पञ्चमुखाः सप्तमुखा उपसृत्य ग्रसन्ति यथा बिलेशयान् ॥ ३३ ॥

ये त्विह वा (१) अन्धावटकुसूलगुहादिषु भूतानि निरुन्धन्ति तथामुत्र तेष्वेवोपवेश्य सगरेण वह्निना धूमेन निरुन्धन्ति ॥ ३४ ॥

यस्त्विह वा अतिथीनभ्यागतान् वा गृहपतिरसकृदुपगतमन्युर्दिधक्षुरिव पापेन चक्षुषा निरीक्षते तस्य चापि निरये पापदृष्टेरक्षिणी वज्रतुण्डा गृध्राः कङ्ककाकवटादयः प्रसह्योरुबलादुत्पाटयन्ति ॥ ३५ ॥

यस्त्विह वा आढ्याभिमतिरहंकृतिस्तिर्यक्प्रेक्षणः सर्वतोऽभिविशङ्की अर्थव्ययविनाशचिन्तया परिशुष्यमाणहृदयवदनो निर्वृतिमनवगतो ग्रह इवार्थमभिरक्षति स चापि प्रेत्य तदुत्पादनोत्कर्षणसंरक्षणशमलग्रहः सूचीमुखे नरके निपतति यत्र ह वित्तग्रहं पापपुरुषं धर्मराजपुरुषा वायका इव सर्वतोऽङ्गेषु सूत्रैः परिवयन्ति ॥ ३६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

बिलेशयान् मूषकान् ॥ ३३ ॥

सगरेण सविषेण ॥ ३४ ॥

अतिथयोऽज्ञातपूर्वाः अभ्यागता ज्ञातपूर्वास्तान् पापेन वक्रीकृतेन ॥ ३५ ॥

आढ्याभिमतिर्धनगर्वितः अहङ्कृतिः श्रेष्ठोऽहमिति मानी तिर्यक्प्रेक्षणं यस्य सर्वतो गुर्वादेरपि धनं चोरयिष्यन्तीति विशङ्कमानः परिशुष्यमाणं हृदयं वदनं च यस्य अनवगतोऽप्राप्तः तस्यार्थस्योत्पादनादिभिः शमलं गृह्णातीति तथा परिवयन्ति सूत्रप्रोतं कुर्वन्ति ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ दन्दशूकं सपापमाह । ये त्विह वै भूतानीति । ये च जना अत्युल्बणस्वभावाः अत्युग्रस्वभावाः यथा दन्दशूकाः सर्पास्तद्भूतानि उद्वेजयन्ति भीषयन्ति तेऽपि प्रेत्य दन्दशूकाख्ये दन्दशूकसंज्ञके नरके निपतन्ति दन्दशूकं विशिनष्टि । यत्रेति । हे नृप ! दन्दशूके दन्दशूकाः सर्पाः पञ्च मुखानि सप्त मुखानि येषां तादृशाः उपसृत्य समीपमागत्य ग्रसन्ति यथा बिलेशयान् मूषकान् ग्रसन्ति तद्वद्दन्दशूका अस्मिन् सन्तीत्यवयवार्थः अर्शआदेराकृतिगणत्वान्मत्वर्थीयोऽच्प्रत्ययः ॥ ३३ ॥

अथ सपापमवटं वर्णयति । ये त्विह वा बालानिति । इह ये देहिनो बालानन्धान् काणानन्यानि वा चक्षुर्हीनानि भूतान्यवटादिषु अवटो गर्तः यथा निरुन्धन्ति तथा सम्परेतानमुत्रावटनिरोधाख्ये नरके तेष्वेवावटादिष्वेव उपवेश्य सगरेण विषयुक्तेन वह्निना धूमेन वह्निसम्बन्धिना धूमेन निरुन्धन्ति अवटो निरोधोऽस्मिन्नित्यवटनिरोधः निरुध्यते अन्यानस्मिन्निति निरोधः अवटो निरोधो यस्मिन्निति वाऽवयवार्थः ॥ ३४ ॥

अक्षिपर्यावर्तं सदुरितमाह । यस्त्विह वा अतिथीनिति । यश्चेह लोके स्वयं गृहस्वामी सन्नतिथीनज्ञातपूर्वानभ्यागतान् ज्ञातपूर्वानसकृदुपगतमन्युः सञ्जातक्रोधः दग्धुमिच्छुरिव पापेन तिरश्चीनेन चक्षुषा निरीक्षते तस्य च पापदृष्टेः प्रेतस्य निरयेऽक्षिपर्यावर्ताख्येऽक्षिणी नेत्रे वज्रं तुण्डं येषां ते काकादयः प्रसह्य बलादुत्पाटयन्ति अक्ष्णोः पर्यावर्तनमुत्पाटनमस्मिन्नित्यवयवार्थः ॥ ३५ ॥

सूचीमुखं सपापमाह । यस्त्विह वा आढ्याभिमतिरिति । यश्चेह लोके आढ्योऽहमित्यभिमतिरभिमानो यस्य स धनगर्ववानित्यर्थः अहङ्कृतः श्रेष्ठोऽहमिति मानी तिर्यक् प्रेक्षणं यस्य सर्वतः गुर्वादेरपि शङ्की धनं चोरयिष्यतीति शङ्कमानः व्ययो विनियोगेनार्थक्षयः विनाशः समूलतः क्षयः तद्विषयया चिन्तया परिशुष्यमाणं हृदयं वदनं यस्य अतः निर्वृतिं सुखमनुपगतः अप्राप्तः ग्रह इव पिशाच इवार्थं वित्तमभितो रक्षति स चापि प्रेत्य तस्यार्थस्योत्पादनादिभिः शमलं पापं गृह्णातीति तथा उत्पादनं प्रथमतो मूलद्रव्यसम्पादनमुत्कर्षणं तस्य पश्चाद्वृद्ध्यादिना वर्द्धनं रक्षणं पालनम् एतत्प्रयुक्तशमलग्रह इत्यर्थः सूचीमुखाख्ये नरके निपतति सूचीमुखं विशिनष्टि । यत्र हेति । तं वित्तग्रहं धनपिशाचमत एव पापपुरुषाकृतिं धर्मराजस्य यमस्य पुरुषाः तन्तुवायका इव सूत्रयुक्तसूच्या वस्त्रविवेधकारिण इव सर्वेषु अङ्गेषु सूत्रैः परिवयन्ति सूत्रप्रोतान् तस्यावयवान् कुर्वन्तीत्यर्थः नरकावयवार्थः स्पष्ट एव ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अवटं निरुच्छ्वासबिलं कुसूलं व्रीहिगर्तगृहं कारागृहम् ... शब्दात्तज्जलमज्जनं दारुपात्रं वा सगरेण विषसहितेनाग्निकृन्तनम् ॥ ३४ ॥

अपचक्षुषा तिरश्चीनेन नेत्रेण ॥ ३५ ॥

अर्थेषु अभिमतिरभिमानो यस्य स तथा अहङ्कृतिरहङ्काररस्वरूपः व्ययविनाशयोश्चिन्तया ग्रहः ब्रह्मराक्षसादिवद् यथा निधिमन्येभ्योऽभिरक्षति तथेति शेषः तस्यार्थस्य ... दने अर्जने उत्कर्षणे वृद्धीकरणे संरक्षणे च यच्छमलं ...

---

(१) बालान्धानिति श्रीवीर० ।

एवम्विधा नरका यमालये सन्ति शतशः सहस्रशस्तेषु सर्वेषु च सर्व एवाधर्मवर्तिनो ये केचिदिहोदिता अनुदिताश्चावनिपते ! पर्यायेण विशन्ति तथैव धर्मानुवर्तिन इतरत्र इह तु पुनर्भवे त उभयशेषाभ्यां निविशन्ति ॥ ३७ ॥

निवृत्तिलक्षणमार्ग आदावेव व्याख्यातः ।

एतावानेवाण्डकोशो यश्चतुर्दशधा पुराणेषु विकल्पित उपगीयते यत्तद्भगवतो नारायणस्य साक्षान्महापुरुषस्य स्थविष्ठं रूपमात्ममायागुणमयमनुवर्णितमादृतः पठति शृणोति श्रावयति स उपगेयं भगवतः परमात्मनोऽग्राह्यमपि श्रद्धाभक्तिविशुद्धबुद्धिर्वेद ॥ ३८ ॥

श्रुत्वा स्थूलं यथा सूक्ष्मं रूपं भगवतो यतिः ।
स्थूले निर्जितमात्मानं शनैः सूक्ष्मं धिया नयेदिति ॥ ३९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गृह्णातीति तत्सम्पादनोत्कर्षणसंरक्षणाद्यमलग्रहः विवग्रहमयं गुणपिशाचं वायकाः पटचरैः कन्थानिर्माणनिपुणाः क्षुरधाराचितैः सूत्रैः परिवयन्ति ओतप्रोतक्रियया विद्धयन्ति ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विषेशयाद् मूषकाद् ॥ ३३ ॥ ३४ ॥

प्रथितयोऽज्ञातपूर्वो अभ्यागता ज्ञातपूर्वाः ॥ ३५ ॥

आढ्याभिमतिर्धनगर्वितः । अहङ्कृतिरहङ्कारी सर्वतो गुर्वोऽपि धनं मे ग्रहीष्यन्तीत्यभिशङ्की परिवयन्ति सूत्रप्रोतान् कुर्वन्ति इतरत्र स्वर्गे इह भारतभूमौ पुनरपि धर्माधर्मयोर्भेव उत्तरिर्वततस्तसिमद् उभयोर्धर्माधर्मयोः शेषाभ्याम् ॥ ३६ ॥ ३७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विषेशयाद् मूषकाद् ॥ ३३—३४ ॥

पर्य्यावर्तनमाह । अज्ञातपूर्वा अतिथयः ज्ञातपूर्वाः अभ्यागताः ॥ ३५ ॥

तस्यार्थस्योत्पादादिभिः श्यामलं पापं गृह्णातीति तथा ॥ ३६ ॥

भाषा टीका ।

जो इहां सब प्राणियों को उद्वेग करते हैं ऐसे जो क्रूर स्वभाव वाले मनुष्य जैसे कि सर्प होते हैं वे लोग दन्दशूक नामा नरक में गिरते हैं हे राजन् ! जहां पर पांच मुखवाले सर्प हैं सात मुख वाले हैं आकर ग्रास करते हैं जैसे मूषों को ग्रास करैं तैसे ॥ ३३ ॥

जो इहां अंधेरे गढे कोठी गुफादिकों में किसी प्राणिकों रोकते हैं तैसे यमपुर में उन्ही में रखकर विष के सहित आग से धुआं में वे रोके जाते हैं ॥ ३४ ॥

जो इहां पर घरका मालिक होकर अतिथि अभ्यागतों को वारंवार क्रोध करके जलाने सरीका पापी नजर से देखता है उस पापी पाप दृष्टि वालेके आखोंको नरक में वज्र चोंचवाले गीध कङ्क काक वटादिक जबरदस्ती उपाडते हैं ॥ ३५ ॥

जो इहां पर धनी बुद्धिसे अहङ्कार से तेढा देखता है अर्थके नाश होने की चिन्ता से सबसे शङ्का रखता है उसके हृदय मुख सूख जाते हैं कभी सुख नहीं पाता है ग्रह सरीका धन की रक्षा करता है सो भी मर कर उसके उत्पादन खर्च के मोहमें पडके सूची मुख नरक में गिरता है उहांपर धन ग्रह पापी पुरुष को धर्मराज के पुरुष दरजी सरी के सब अंगों में सूतों से सीते हैं ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इतरत्र स्वर्गादौ इह मर्त्यलोके पुनर्भवे पुनर्जन्मनिमित्तम् ।
उभयोर्धर्माधर्मयोः शेषाभ्याम् ॥ ३७ ॥

आदावेव द्वितीयस्कन्धे "वैश्वानरं याति" इत्यादिना उपगेयमौपनिषदं रूपं श्रद्धाभक्तिभ्यां विशुद्धा बुद्धिर्यस्य ॥ ३८ ॥

यथा यथावच्छ्रुत्वा ॥ ३९ ॥

भूद्वीपवर्षसरिदद्रिनभःसमुद्रपातालदिङ्नरकभागणलोकसंस्था ॥
गीता मया तव नृपाद्भुतमीश्वरस्य स्थूलं वपुः सकलजीवनिकायधाम ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां पञ्चमस्कन्धे नरकवर्णनं नाम
षड्विंशोऽध्यायः ॥ २६ ॥

॥ समाप्तोऽयं पञ्चमस्कन्धः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कथम्भूता संस्था सकलानां जीवनिकायानां धाम आश्रयभूतं वपुः ॥ ४० ॥

पञ्चमस्कन्धसम्बन्धिपदभावार्थदीपनैः ।
प्रीयतां परमानन्दनृहरिर्बोधमापितैः ॥ १ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षड्विंशतितमोऽध्यायः ॥ २६ ॥
समाप्तेयं पञ्चमस्कन्धव्याख्या ॥ ५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इदं नरकवर्णनं पापवर्णनं च दिङ्मात्रमित्याह । एवंविधाः उक्तविधा नरकाश्च शतशः सहस्रशो यमालये सन्ति तेषु नरकेषु सर्व एवाधर्मवर्त्तिन अत्रानुक्तबहुविधाधर्मपरा ये चेहोदिता उक्ता अधर्मवर्त्तिनः उक्तेषु नरकेषु निपतेयुस्तेऽपि पर्यायेण तथैव विशन्ति यथोक्तेषु नरकेषु विशन्ति तथा तेष्वपि विशन्तीत्यर्थः । यद्वा । तथेत्युत्तरान्वयी यथा धर्मानुवर्त्तिनो नरकेषु विशन्त्येवं धर्मानुवर्त्तिनः स्वर्गादौ विशन्तीत्याह । तथैवेति । इतरत्र स्वर्गादौ इह लोके विशन्तीत्यत्राह । इह त्विति । पुनर्भवे पुनः पुनः भवो जन्म यस्मिंस्तस्मिन्निह मर्त्यलोकादौ उभयशेषाभ्यां धर्माधर्मशेषाभ्यां भुक्तावशिष्टाभ्यामित्यर्थः विशन्ति जायन्त इत्यर्थः एवं प्रवृत्तिधर्मवर्त्तिनां मार्गः कथितः । अथ निवृत्तिधर्मवर्त्तिनः क्व विशन्तीत्यत्राह । निवृत्तिलक्षणमार्ग इति । निवृत्तिधर्मप्राप्तः मार्गः आदावेव द्वितीयस्कन्ध एव "वैश्वानरं याति विहायसा गतः सुषुम्णया ब्रह्मपथेन„ इत्यारभ्य कथित इत्यर्थः एवं नरके ब्रह्माण्डकोशान्तर्भूतत्वेनैवोपवर्णितेषु सत्सु तर्हि महर्जनादिभुवनानि क्व सन्तीति राज्ञः प्रश्नोद्योगमन्वीक्ष्याह । एतावानिति । अण्डकोश एतावानेवोक्तविधस्त्रिलोक्यात्मक एवेत्यर्थः तर्हि चतुर्दशभुवनात्मकः त्रिलोक्यां व्यवहारः कथमिति शङ्कां [illegible] कुर्वन्नण्डकोशं विशिनष्टि । य इति । योऽण्डकोशः त्रिलोक्यात्म[illegible] पुराणेषु चतुर्दशधा चतुर्दशभुवनात्मकत्वेन विकल्पितः [illegible] दितः उद्गीयते अतलादीनि भुवनानि भूलोके महर[illegible] दिवो मण्डलेऽन्तर्भाव्यान्तरिक्षमण्डलेन सह त्रिलोक्यात्मकाण्ड[illegible] शोऽत्रानुवर्णितः अवान्तरभिदामाश्रित्य पुराणान्तरेषु चतुर्दश[illegible] वर्ण्यत इत्यर्थः एतदण्डकोशवर्णनश्रवणपठनादिफलमनु[illegible] यति । य एतदिति । महापुरुषस्य भगवतो नारायणस्य यत्स[illegible] स्थूलतमं रूपमात्ममायागुणमयं प्रकृतिगुणप्रचुरमनु[illegible] तदाहतो यः तद्वर्णनरूपमिमं प्रबन्धमादरणपूर्वकं यः पठति [illegible] शृणोति श्रावयति वा सोऽयमेव परमात्मन उपगेयमुपनिषद[illegible] शिष्टं सूक्ष्मं सर्वत्र व्यापनस्वभावं दिव्यमङ्गलविग्रहविशिष्टं [illegible] त्मस्वरूपमपि श्रद्धाभक्तिभ्यां विशुद्धा बुद्धिर्यस्य तथाभूत[illegible] वेद स्थूलरूपज्ञानं सूक्ष्मरूपज्ञानफलकमिति स्थूलरूपज्ञान[illegible] द्वकमेतत्प्रबन्धपठनादिकं : परम्परया सूक्ष्मरूपविषयकज्ञान[illegible] कमित्यर्थः ॥ ३७ ॥ ३८ ॥

स्थूलरूपज्ञानस्य सूक्ष्मरूपज्ञानसाधनत्वमेवाह । [illegible] भगवतः स्थूलसूक्ष्मे उभे अपि रूपे यथावच्छ्रुत्वा गुरुमु[illegible] स्थूलरूपे निर्जितमात्मानं चित्तं शनैः सूक्ष्मधिया उक्तविध[illegible] त्मस्वरूपविषयकज्ञानात्मकधिया उक्तविधदिव्यात्मस्वरूपं [illegible] त्यर्थः एवं सति प्रपञ्चस्यापि भगवद्रूपत्वेनानुसंहितत्वात्[illegible] व्याप्रियमाणं चित्तं भगवत्येव विशेष्यभूते व्यवस्थितं भवति [illegible] तत्साधनत्वमिति भावः ॥ ३९ ॥

किं तद्भगवतः स्थूलरूपं यच्चेयत्वेनोच्यते इत्यपेक्षायां [illegible] क्तमुपसंहरति । भूद्वीपेति । भुवः तदवान्तरभेदानां द्वीप[illegible] भूमिष्ठानां सरितां नदीनामद्रीणां तथा नभसोऽन्तरिक्षस्य सम[illegible] पातालपर्यन्तानां भूविवराणां दिशां नरकाणां भागण[illegible] नक्षत्रगणलोकस्य ध्रुवमण्डलस्य च भशब्दस्य दीर्घ आर्षः [illegible] विन्यासविशेषाः हे नृप ! मया तव तुभ्यं गीताः कथिताः [illegible] भ्वादिभगणलोकपर्यन्तं जगत्सकलजीवसमूहस्य धाम [illegible]

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

भूतस्य भगवतः अद्भुतं विचित्रं स्थूलं वपुः शरीरं भवतीत्यर्थः ॥ ४० ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्याप्रसन्नतरसूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा कृतायां श्रीमद्भागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां

पञ्चमस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥

श्रीमते रामानुजाय नमः।

श्रीमते निगमान्तमहादेशिकाय नमः ॥

समाप्तेयं पञ्चमस्कन्धव्याख्या ॥५॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

न इयन्त एव नरकाः किन्त्वेतादृशा अन्ये नरका असङ्ख्याताः सन्तीत्याह। एवम्विधा इति। उत्तरत्र स्वर्गादौ इह मनुष्यलोके पुनर्भवे पुनरुत्पत्तौ उभयशेषाभ्यां धर्माधर्मशेषाभ्याम् ॥ ३७ ॥

चतुर्दशधा लोकप्रकारेण स्थविष्ठं स्थूलतमं वर्णितं सूक्ष्मरूपम् ॥ ३८ ॥

उभयो रूपयोः कस्मिन् रूपे प्रथमप्रतिपत्तिरिति क्रममाह। एतदिति। आत्मानं मनः सूक्ष्मधिया सूक्ष्मरूपोपासनया ॥ ३९ ॥

उक्तार्थमुपसंहरन् प्रतिपत्त्यर्थं सङ्कलय्याह। भूद्वीपेति। सकलजीवानां निकायस्य धाम च आश्रयस्तस्य सफलजीवनिकायो धाम यस्य स तथा वा तस्येश्वरस्याद्भुतं स्थूलं वपुर्मया तव प्रोक्तमित्यन्वयः कीदृशं भूद्वीपादिलोका एव संस्था अवयवाः यस्य तत्तथा तत् ॥ ४० ॥

वारिजवासावारिजयोनित्रिनयनशतमखमुखसुरमुकटश्रेणिविपणिश्रीपदपीठं सललिलसलीलदृगतिरुचिरुचिरम् ॥
सुहासेन्द्वानन्दितलोकं दारितदितिसुततमिदगिरिशिखरम्
कृष्णमकृष्णं चिन्तय चेतः शुचितरमतिगुणयदुकुलतिलकम् ॥१॥
विजयध्वजतीर्थार्यैः रचिता प्रीतये हरेः।
पदरत्नावली नाम पञ्चमस्कन्धसङ्गता ॥ २ ॥

इतिश्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजभट्टारककृतश्रीमद्भागवतटीकायां पदरत्नावल्याम्

पञ्चमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥ (१)

समाप्तेऽयं पञ्चमस्कन्धव्याख्या ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

यथा स्थूलं श्रुत्वा तथा सूक्ष्मञ्च श्रुत्वा स्थूले रूपे आत्मानं निर्जितं कृत्वा शनैः क्रमेण सूक्ष्मं प्रति धिया व्यवसायात्मिकया बुद्ध्या नयेदित्यन्वयः। पाठान्तरन्तु सुगमं सूक्ष्ममत्र भक्तिमात्रगम्यं रूपं "यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोग,, इति द्वितीयोक्तेः ॥ ३९ ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य षड्विंशोऽध्यायः ॥ २६ ॥

इति श्रीभागवतक्रमसन्दर्भे पञ्चमस्कन्धस्य क्रमसन्दर्भः समाप्तः
श्रीमद्भागवतं महामृतनिधिं संमथ्य सन्दर्भतः।
कृष्णं पूर्णतमं प्रकाश्य शशिनं हस्तामलक्यादिवत् ॥
यो जानाति तमो विधूय विधिवत् सन्दर्शयन् स्वाश्रितान्
जीवान् जीवयतीति सद्गुणगणं तं जीवमीशं भजे ॥

समाप्तेयं पञ्चमस्कन्धव्याख्या ॥५॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

आदावेव। द्वितीय तृतीयादिषु "वैश्वानरं याति,, इत्यादिभिःउपगेयमौपनिषदं रूपं ग्रहीतुमशक्यम् ॥ ३८ ॥

यथा यथावत् स्थूले रूपे निर्जितं वशीकृतमात्मानं मनः ।३९-४०।
सहिष्णुतादिव्यसुधाप्रवाहान् साधून् समाकर्ण्य जिजीविषामि।
क्षुधाप्रचण्डुर्वारभुजङ्गदष्टस्याहो गतिर्मे कथमन्यथा स्यात् ॥
इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षड्विंशः पञ्चमे स्कन्धे सङ्गतः सङ्गतः सताम् ॥ २६ ॥
पञ्चमस्कन्धटीका श्रीराधाकृष्णसरस्तटे।
कृष्णषष्ठ्यामपूरीयं फाल्गुणे भौमवासरे ॥ १ ॥

समाप्तेयं पञ्चमस्कन्धव्याख्याः ॥ ५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तथैव धर्मतारतम्यतः इतरत्र स्वर्गादौ पुनर्भवे पुनर्जन्मनि उभयोः धर्माधर्मयोः शेषाभ्याम् ॥ ३७ ॥

आदौ द्वितीये स्कन्धे "वैश्वानरं याति विहायसा गतः,, इत्यादिना भूद्वीपादिमयभगवद्रूपश्रवणादिफलं दर्शयन्नुक्तार्थमुपसंहरति। यत्तदित्यादिना। उपगेयं शास्त्रगम्यमपि रूपं वेद ॥ ३८—३९ ॥

कथम्भूता भूद्वीपादिसंस्था ईश्वरस्य स्थूलं वपुः ॥ ४० ॥

इतिश्रीमद्भगवन्निम्बार्कचरणचिन्तकशुकसुधीप्रणीते पञ्चमस्कन्धीये श्रीमद्भागवतप्रदीपे षड्विंशाध्यायार्थप्रकाशः ॥ २६ ॥

समाप्तेयं पञ्चमस्कन्धव्याख्या ॥ ५ ॥

---

भाषा टीका।

इस प्रकार के नरक यम पुर मे सैकड़ों हजारों हैं उन सबों मे सबही अधर्मी जो इहां कहे न कहे हैं हे राजन्! क्रम से जाते हैं तैसेही धर्मात्मा दूसरे ठिकाने जाते हैं ये दोनों रूप कर्म से इस संसार में फिर आते हैं ॥ ३७ ॥

(१) मध्येऽध्यायद्वयस्थानेऽध्यायद्वयमेव वर्तत इति टिप्पणुक्तमतोऽत्रचतुर्विंशतिरध्यायाः सन्ति।

भाषा टीका ।

निवृत्ति लक्षण का मार्ग तो पहिले ही कह दिया है इतना ही अण्डकोश है जिस का चौदह प्रकार से पुराणों मे भेद गाया जाता है जो यह साक्षात् महापुरुष भगवान् नारायण का स्थूल रूप आत्ममाया, गुण मय वर्णन किया है जो इस को आदर से पढै सुनै सुनावै सो गान करने योग्य भगवान् के अग्राह्य पद को भी श्रद्धा भक्तियुक्त होने से जान जावैगा ॥ ३८ ॥

भगवान् के स्थूल तथा सूक्ष्म रूप को सुन कर त्यागी होवै स्थूल मे पहिले मन को स्थिर कर के फिर सूक्ष्म मे प्रवेश करे ॥ ३९ ॥

हे नृप ! भूमी द्वीप वर्ष नदी पर्वत आकाश समुद्र पाताल दिशा नरक ज्योतिर्गण लोक स्थिति मैंने तुमारे आगे गाये हैं यह ईश्वर का स्थूल शरीर है सम्पूर्ण जीवों के समूह का स्थान है ॥ ४० ॥

॥ दोहा ॥

रामानुज पद वंदि करि कृष्ण चरण चितलाय ।
भाषा पंचम की लिखी लक्ष्मणदास बनाय ॥ १ ॥

इतिश्री भागवत पंचमस्कन्ध छब्बीसमे अध्याय का भाषानुवाद लक्ष्मणाचार्य कृत

समाप्त ॥ २६ ॥

---

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे षड्विंशोऽध्यायः समाप्तः ॥ २६ ॥

स्कन्धश्च समाप्तः ॥

शोधकश्चास्य ग्रन्थरत्नस्य वृन्दावननिवासि लक्ष्मणाचार्यः ॥

---

व्याख्यानयुग्भागवतप्रचारी नित्यस्वरूपः किल ब्रह्मचारी ।
विद्वद्गणेष्वञ्जलियन्प्रचारी चैतत्समाप्तेर्विनिवेदकारी ॥ १ ॥

# श्रीमद्भागवतम् ।

## षष्ठस्कन्धः ।

### प्रथमोऽध्यायः

ॐ नमः श्रीकृष्णाय ।

राजोवाच ।

निवृत्तिमार्गः कथित आदौ भगवता यथा ।
क्रमयोगोपलब्धेन ब्रह्मणा यदसंसृतिः ॥ १ ॥
प्रवृत्तिलक्षणश्चैव त्रैगुण्यविषयो मुने ! ।
योऽसावलीनप्रकृतेर्गुणसर्गः पुनः पुनः ॥ २ ॥
अधर्मलक्षणा नाना नरकाश्चानुवर्णिताः ।
मन्वन्तरश्च व्याख्यात आद्यः स्वायम्भुवो यतः ॥ ३ ॥
(१) प्रियव्रतोत्तानपदोर्वंशस्तच्चरितानि च ।
द्वीपवर्षसमुद्राद्रिनद्युद्यानवनस्पतीन् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीगणेशाम्बिकाभ्यां नमः ।

पुण्यारण्ये नृसिंहैकनामसिंहो विराजते ।
यस्माद्भतः पलायन्ते महापापमपकुञ्जराः ॥ १ ॥
विसर्गसम्भवान् जीवान् स्वमर्यादासु संस्थितान् ।
विष्णुः पात्यखिलै रूपैरित्येवं पञ्चमे स्थितम् ॥ २ ॥
अध्यायैकोनविंशत्या षष्ठे पोषणमुच्यते ।
अतिलङ्घितमर्यादभक्तरक्षणलक्षणम् ॥ ३ ॥
अजामिलो मनुष्येषु महापापी यथाऽवितः ।
विश्वरूपादिघाती च यथा देवेषु वासवः ॥ ४ ॥
अजामिलस्य भक्तत्वं विष्णुदूतैर्निरूपितम् ।
सङ्केतभगवन्नामपुत्रस्नेहानुषङ्गजम् ॥ ५ ॥
इन्द्रोऽपि भगवद्भक्तः सख्येनोपेन्द्रसेवकः ।
तदधीनसुरैश्वर्यशत्रुनिर्जयजीवितः ॥ ६ ॥
तत्रादौ त्रिभिरध्यायैरजामिलकथोच्यते ।
विश्वरूपकथा षड्भिरिन्द्रदोषोक्तये ततः ॥ ७ ॥
इन्द्रस्यैव तु दोषोक्त्यै वृत्राख्यानं ततोऽष्टभिः ।
द्वाभ्यां च मरुदाख्यानमेवं प्रकरणक्रमः ॥ ८ ॥
तत्रादौ प्रथमे विष्णोर्दूतैः पातकिमोचनं ।
तत्पापव्यापनायोक्तं याम्यैर्धर्मादिलक्षणम् ॥ ९ ॥

अथ षष्ठस्कन्धो व्याख्यायते । पूर्वोक्तानुवादपूर्वकं निरन्तरोक्तनरकपरिहारोपायं पृच्छति । निवृत्तिमार्ग इति षड्भिः । आदौ द्वितीयस्कन्धे "वैश्वानरं याति" इत्यादिना भगवता त्वया यथा यथावत् यथेन मार्गेण क्रमेण योगोऽर्चिरादिप्राप्तिस्तेनोपलब्धो ब्रह्मा तेन सहासंसृतिर्मोक्षो भवति ।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदम् ॥

इति वचनात् ॥ १ ॥

त्रैगुण्यं स्वर्गादिसुखं तदेव विषयः प्राप्यं यस्य न लीना प्रकृतिर्यस्य तस्य पुंसः पुनः पुनर्गुणसर्गो भोगार्थो देहारम्भरूपो यो मार्गः स च कथितस्तृतीये ।

(१) प्रियव्रतोत्तानपादौ वंश इति श्रीवीर० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दक्षिणेन पथार्यम्णः पितृलोकं व्रजन्ति ते।

इत्यादिना ॥ २ ॥

अनुवर्णिता निरन्तराध्याये व्याख्यातश्चतुर्थस्यादौ यतो यस्मिन् ॥ ३ ॥

द्वीपादीन् भागतो लक्षणतो मानतश्च धरामण्डलस्य संस्थानं ज्योतिषां विवराणां चेदं संस्थानं विभुर्यथासृजत्तथा व्याख्यातमित्यर्थः ॥ ४—५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

श्रीमते रामानुजाय नमः।

एवं नानाविधनरकेषु तत्प्राप्तिहेतुषूच्चावचेषु पापेषु चोपवर्णितेषु तन्निस्तारोपायं पिपृच्छिषुस्तावदुक्तमनुवदति। निवृत्तिमार्ग इत्यादिभिः पञ्चभिः। भगवता त्वया आदौ द्वितीये निवृत्तिमार्गः यथावत्कथितः निवृत्तिर्निवृत्तधर्मः मोक्षधर्म इति यावत् तस्य कामादिनिवृत्तिपूर्वकत्वात्तेन प्राप्यो मार्गः मुक्तिस्वरूपतदुपायादिकं सर्वं "गृहात्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः" इत्यादिना कथितमित्यर्थः कोऽसौ निवृत्तिमार्ग इत्यत्राह। क्रमयोगेति। क्रमः स्वस्ववर्णाश्रमोचितपञ्चमहायज्ञादिरूपकर्मयोगानुष्ठानक्रमः आत्मयाथात्म्यज्ञानयोगः भगवद्भक्तियोगश्च तन्त्रेण योगशब्देन विवक्षितौ क्रमयोगाभ्यामुपलब्धेन ज्ञानकर्मयोगाभ्यामनुगृहीतेन भक्तियोगेनोपलब्धेन प्राप्तेन ब्रह्मणा हेतुनासंसृतिर्मुक्तिरिति यदेष निवृत्तिमार्ग इत्यर्थः। ब्रह्मण इति षष्ठ्यन्तपाठे ब्रह्मणः क्रमः क्रमयोगोपलब्धेन ज्ञानकर्मयोगाभ्यामुपलब्धेन भक्तियोगेनेति शेषः केचिदत्र क्रमयोगोऽर्चिरादिप्राप्तिस्तेन उपलब्धो ब्रह्मा चतुर्मुखस्तेन सहासंसृतिर्मोक्षो भवति।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदम् ॥

इति वचनादित्याचक्षते तत्र मोक्षेऽथ सम्परस्य इति शरीरपातावधिमात्रविलम्बश्रवणाविरोधापत्तेः ब्रह्मणा सह ते सर्वे इतिवचनस्य "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति श्रुतेश्च विशेषवशाच्चतुर्मुखलोकप्राप्तजीवविषयात्पुण्यवशाच्चतुर्मुखलोकं प्राप्य तत्र निर्वृतोपासनाः ब्रह्मणा सह मुच्यन्त इति तदर्थः ॥ १ ॥

तथा हे मुने! शुक! त्रैगुण्यविषयः प्रवृत्तिलक्षणश्च मार्गः कथितः कापिले त्रैगुण्यविषयत्रैगुण्ययुक्तपुरुषाधिकारः प्रवृत्त्या सुखदुःखादिसाधनधर्मेणालक्ष्यते प्राप्यत इति प्रवृत्तिलक्षणः लक्ष्यतेऽनेनेति लक्षणं प्रवृत्तिर्लक्षणं यस्येति वा कोऽसौ प्रवृत्तिलक्षणो मार्गस्तत्राह। अक्षीणप्रकृतेरविनष्टप्रकृतिसम्बन्धस्य जीवस्य योऽसौ पुनः पुनर्गुणसर्गः सृज्यतेऽनेनेति सर्गः गुणः गुणत्रयं सर्गो यस्य स गुणसर्गः पुनः पुनः सुखदुःखभोगार्थगुणकार्यरूपदेहसम्बन्ध इत्यर्थः देहो हि कर्मफलभूतसुखदुःखादिभोगाय पुण्यापुण्यात्मकप्रवृत्त्याख्यकर्मणा प्राप्यते कर्म हि देहसम्बन्धोपादानद्वारा सुखदुःखादिसाधनं न साक्षादतो गुणसर्गः प्रवृत्तिलक्षणो मार्गो भवतीत्यर्थः ॥ २ ॥

अधर्मः कारणतया लक्षणं येषां ते नानाविधा नरकाश्चानुवर्णिताः तथा स्वायम्भुवसम्बन्धी आद्यो मन्वन्तरो व्याख्यातः ॥ ३ ॥

कोऽसौ स्वायम्भुवः यत्सम्बन्धी मन्वन्तरो व्याख्यातः तत्राह। यतः स्वायम्भुवमनोः प्रियव्रतोत्तानपादौ वंशः सन्ततिरपत्यभूतावि ति यावत् तथा तच्चरितानि प्रियव्रतोत्तानपादयोश्चरितानि च व्याख्यातानीत्यर्थः ॥ ४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्रीमदानन्दतीर्थपादेभ्यो नमः।

श्रीलक्ष्मीनारायणाभ्यां नमः।

भवभयजटां (१) घोरां यस्याभिधानमवच्छिदो।
दलयति नृणां सद्यः सङ्कीर्तितं स्खलनादिषु ॥
(२) अहिरिपुरहेर्हत्याद्यंहो जहौ हि यदर्चया।
शरणमनिशं शान्तं कान्तं नमामि मुरद्विषम् ॥ १॥

अवारूढः पञ्चमस्कन्धशैलादहं षष्ठस्कन्धसिन्धावगाधे। अनुज्ञां वः प्रार्थये स्नातुकामो भवन्तः सन्तो गुणार्थैकलुब्धाः ॥ २ ॥

अस्मिन् स्कन्धेऽतीतस्कन्धार्थोऽध्येतृप्रवक्तृश्रोतॄणां फलाधिक्यप्रकटनाय संक्षिप्य निरूप्यते तत्र प्रारिप्सितेऽध्याये सर्वाधिकारिकं सुखसाध्यं श्रीहरिप्रसादजनकज्ञानसाधनमपि भक्त्या हरेर्नामसङ्कीर्तनं पापपरिहारद्वारावश्यकं मुक्तिसाधनमिति निरूप्यते तदर्थं ज्ञानदरिद्रजनदयालुर्विद्वानपि परीक्षिदेन विना पापविनाशो न स्यात्तदभावे ज्ञानानुदयः तस्मिन्सति मोक्षमात्रमपि न स्यादतस्त्वया तदवश्यं वक्तव्यमितीममेवार्थं वादयितुं(३) द्वितीयस्कन्धोक्तार्थमनुवदति। निवृत्तिमार्ग इति। आदौ द्वितीयस्कन्धारम्भे वरीयानेष ते प्रश्न इत्यादिना निवृत्तिमार्गः स्वस्वरूपानन्दाविर्भावलक्षणमोक्षसाधनविशेषः। ननु साधनविशेषप्रपञ्चनमन्तरेण सृष्ट्यादिकथनं कुत्रोपयोगितया सङ्गच्छत इति तत्राह यथेति। यथावत्सृष्ट्यादिलक्षणेन दोषत्रयरहितेन लक्षितं श्रीनारायणस्वरूपं मुख्यपुरुषार्थोपयोगीत्यभिप्रायेण तत्प्रपञ्चितमिति भावः तस्य फलमाह। क्रमयोगेति। यद्यस्मान्निवृत्तिमार्गादसुखिन्नज्ञानब्रह्मणा सर्वगुणपूर्णेन श्रीनारायणेनासंसृतिः संसाराभावलक्षणं फलं भवति। जीवस्येति शेषः "कर्तृकरणयोस्तृतीया" इति अत उभयथापि मुख्यत्वं श्रीहरेरेवेति प्रकटनाय ब्रह्मणेति तृतीया "अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणाः" इति श्रुतेः गुणपरिपूर्णतया ज्ञात एव पुरुषार्थप्रदः न निर्गुणत्वेन इति ब्रह्मेति पदं प्रायोजि कथं ज्ञातेनेति तत्राह। क्रमेति। क्रमोपलक्षितेन योगेन वैराग्यभक्तिनिरन्तरध्यानज्ञानलक्षणोपायेनोपलब्धेन दृष्टेन प्रथमं स्मरणं पश्चादेकैकावयवध्यानं तदनन्तरं समग्राङ्गध्यानमिति वा क्रमयोगः ॥ १ ॥

"ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम्" इति प्रवृत्तिलक्षणश्च शब्दात्कथितः स किंफल इति तत्राह। त्रैगुण्येति। त्रिगुणात्मकेन्द्रादिदेवतास्थानप्राप्तिफलमित्यर्थः तत्फलं किं नित्यं नेत्याह य इति। योऽसौ प्रवृत्तिमार्गः कामकर्मविदूषितान्तःकरणदोषभञ्जनासमर्थत्वादक्षीणप्रकृतेरविनष्टप्रकृतिशक्तेः पुरुषस्य पुनः पुनर्गु...

(१) शिफाजट इत्यमरः। (२) सर्पं वृत्रासुरे व्याहितम्...
(३) शुकमुखेनानुवादयितुम्।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भूतस्य देहस्य सर्गो यस्मात्स तथा सत्त्वादिगुणैः सर्गो यस्मादिति वा भूयो जननमरणे प्राप्य चक्रवत्परिभ्रमणफलं ददातीत्यर्थः अलीनप्रकृतेर्यो गुणसर्गः सत्त्वादिगुणनिमित्तोत्पत्तिः सआवपि तृतीयस्कन्धादौ कथित इति वा योगविभागः॥ २॥

अधर्मेण लक्ष्यन्ते दृश्यन्ते अनुभूयन्ते पृथक्संज्ञावत्त्वेन क्रियन्त इति वाधर्मलक्षणाः अधर्मं लक्षयन्तीति वा नास्ति गतिः कथञ्चन येषु ते नरका उपवर्णिताः पञ्चमान्त इति शेषः मन्वन्तरो मन्वन्तरविषयो विचारश्चतुर्थारम्भे व्याख्यातः कोऽसाविति तत्राह। आद्य इति। आद्यः प्राथमिकः केन सृष्ट इत्यत उक्तम्। स्वायम्भुव इति। स्वयम्भुवा कल्पितः यतः यस्मिन्मन्वन्तरे स्वायम्भुवो जातो मनुराद्यः सर्वमनूनामाद्यभूत इति वा॥ ३॥

ननु स्वायम्भुव इति सामान्योक्तौ मनुविशेषः कुतो निश्चीयते न च तच्छब्दादिति वाच्यमश्रवणात् न च तेनैव स्वयम्भूजातानां सर्वेषामपि तत्सम्बन्धितया तच्छब्दवाच्यत्वोपपत्तेः न च रूढ्या तदङ्गीकारः किं न स्यादिति वाच्यं विशेषमन्तरेण केवलया निश्चेतुमशक्यत्वात् "स्वायम्भुव! कया वृत्त्या वर्तितं ते परंवपुः" इति अत्र नारदपरत्वेन रूढेरपहाराद्वितीयमाशङ्क्य यतः शब्दमुत्तरत्र सम्बद्ध्य परिह्रियते। यत इति। यतो यस्मात्स्वायम्भुवान्मनोर्जातयोः प्रियव्रतोत्तानपदोर्वंशः तयोश्चरितानि चतुर्थे पञ्चमे च व्याख्यातानीत्यनेन स्वायम्भुवो मनुरेवोच्यत इति निश्चीयत इति द्वीपादयश्च पञ्चमे व्याख्याता इति शेषः॥ ४॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

श्रीकृष्णचैतन्यचन्द्राय नमः।

श्रीकृष्ण कृष्णचैतन्य ससनातनरूपक!।
गोपाल रघुनाथाप्त व्रजजीवक पाहि माम्॥ १॥
षष्ठस्य क्रमसन्दर्भे सन्दर्भाणां समाहृतिः।
क्रियते यन्निदेशेन समेऽनन्यगतेर्गतिः॥ २॥
अथ षष्ठस्कन्धस्य क्रमसन्दर्भः।
स्वामिपादैर्नयद्व्यक्तं यद्व्यक्तं चास्फुटं क्वचित्।
तत्र तत्रैव विज्ञेयः सन्दर्भः क्रमसंज्ञकः॥ ३॥
वैष्णवपरितोषः स्याद्यत्र यत्र ततस्ततः।
लेख्यं वैष्णवसिद्धान्तवाचिपयेनैव किञ्चन॥ ४॥

नरकवर्णनोपयुक्तमेव तत् पूर्वोक्तमनुवदति। निवृत्तीति पञ्चभिः। तत्र परलोकमार्गौ तावद्द्वौ। वेदानुसारेणोक्तस्तदतिक्रमेणान्यः प्रथमोऽत्र द्विविधः। निवृत्तिप्रवृत्तिलक्षणः उत्तरस्त्वेकविधोऽधर्मलक्षणः। तत्र मार्गत्वं नाम क्रमयोगहेतुत्वमित्युक्तं क्रमयोगोपलब्धेनेति ज्ञानभक्ती तु सद्यः प्रापकत्वान्मार्गत्वेन न विवक्षिते। तदेतदभिप्रेत्याह। प्रथमसार्द्धद्वयेन। तत्र निवृत्तीति युग्मकम्॥ १॥ २॥

अधर्मेत्यर्द्धकम्। अधर्मलक्षणास्तज्ज्ञापकाः मन्वन्तरादिकं तु प्रासङ्गिकतयैव वर्णितमित्याह। मन्वन्तरश्चेति सार्द्धद्वयेन। यतो यस्मात् मार्गद्वये॥ ३॥

द्वीपेति सार्द्धकम्। विवरणं चेत्युपलक्षणं नरकाणाम्॥ ४॥ ५॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

श्रीकृष्णचैतन्यचन्द्राय नमः।

प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम्।
लोकनाथं जगच्चक्षुः श्रीगुरुं तमुपाश्रये॥ १॥
गोपरामाजनप्राणप्रेयसेति प्रभुप्रिये।
तदीयप्रियदास्याय मां मदीयमहं ददे॥ २॥
स्वमर्यादास्थितानां यद्भूपातालादिवौकसाम्।
पालनं स्थानशब्दोक्तं पष्ठेऽथ तदुदीरितम्॥ ३॥
भक्तानां धर्ममर्यादोल्लङ्घिनामपि पालनम्।
यद्भवेत्तत्तु वर्ष्णाद्यैः पोषणं परिकीर्त्तितम्॥ ४॥
पापिनोऽजामिलस्यापि नामाभासेन भक्तता।
गुरुद्रोहोऽपि शक्रस्य प्रोक्ताधिकृतभक्तता॥ ५॥
तयोश्च पोषणाच्चित्रकेत्वादीनाञ्च किं पुनः।
अध्यायैकोनविंशत्या भक्तवात्सल्यमुच्यते॥ ६॥
तत्र तु त्रिभिरध्यायैः कथाजामिलसंश्रया।
विश्वरूपाश्रया षड्भिर्वृत्राख्यानमथाष्टभिः॥ ७॥
मरुदाख्यानमध्यायद्वयेन परिकीर्त्तितम्।
यत्रानुवृत्तिरिन्द्रेण दित्यां पुंसवनव्रते॥ ८॥
तत्रेह प्रथमेऽध्याये विष्णुदूतैरजामिले।
मोच्यमाने तदीयाघान्युच्यन्ते यमकिङ्करैः॥ ९॥

नराणां नरकपातयातनाश्रवणेन दयार्द्रहृदयस्तन्निस्तारोपायस्य प्रष्टव्यस्य प्रत्युत्तरवाचनयोग्यतायामुत्साहमुपपादयितुं पूर्वोक्तानुवादेनोपदिष्टार्थावधारणयोग्यतां स्वस्याभिव्यञ्जयति। निवृत्तीति। यथा यथावत्। आदौ द्वितीयस्कन्धे "वैश्वानरं याति"इत्यादिना तथा तृतीये च "ये स्वधर्मान्न दुह्यन्ति" इत्यादिना यत् येन मार्गेण क्रमयोगेन प्राप्तो यो ब्रह्मा तेन सह असंसृतिर्मोक्षो भवति।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥

इति श्रुतेः। प्रवृत्तिलक्षणश्च कथितस्तृतीय एव "येत्विहासक्तमनस" इत्यादिना त्रैगुण्यं स्वर्गादिसुखं तदेव विषयः प्राप्यं यस्य न लीना प्रकृतिर्यस्य तस्य संसारिणः गुणैरेव सर्गः पुनः पुनर्जन्म यतः सः॥ १॥ २॥

यतो यस्मिन्॥ ३॥

द्वीपादीन् यथा असृजत् तथा व्याख्यातमित्यन्वयः। भागतो लक्षणतो मानतश्च धरामण्डलस्य ज्योतिषां सूर्यादीनामिदं संस्थानं यथा असृजत् तथा व्याख्यातमित्यर्थः॥ ४॥ ५॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

श्रीभगवन्निम्बार्काय नमः

श्रीहंसादीन् गुरून्नत्वा षष्ठे सिद्धान्तद्योतकः।
एकोनविंशदध्याययुतो दीपो विरच्यते॥ १॥
पोषणं विष्णुनामादिसत्संसर्गवतामपि।
अजामिलाद्युपाख्यानैः क्रमादिह निरूप्यते॥ २॥

पापफलान्नरकान् श्रुत्वा कृतपापानां हिताय तन्निस्तारं प्रष्टुं गुरुमुखच्युतमनुवदति। निवृत्तिमार्ग इत्यादिना। निवृत्तिमार्गः ऐहिकामुष्मिकलोकप्रापककर्मानुष्ठानादिभ्यो या निवृत्तिस्तत्पू-

धरामण्डलसंस्थानं भागलक्षणमानतः ।
ज्योतिषां विवराणां च यथेदमसृजद्विभुः ॥ ५ ॥
अधुनेह महाभाग ! यथैव नरकान्नरः ।
नानोग्रयातनान्नेयात्तन्मे व्याख्यातुमर्हसि ॥ ६ ॥

श्रीशुक उवाच ।

न चेदिहैवापचितिं यथांहसः कृतस्य कुर्यान्मनउक्तिपाणिभिः ।
ध्रुवं स वै प्रेत्य नरकानुपैति ये कीर्तिता मे भवतस्तिग्मयातनाः ॥ ७ ॥
तस्मात् पुरैवाश्विह पापनिष्कृतौ यतेत मृत्योरविपद्यतात्मना ।
दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक् चिकित्सेत रुजां निदानवित् ॥ ८ ॥

राजोवाच ।

दृष्टश्रुताभ्यां यत्पापं जानन्नप्यात्मनोऽहितम् ।
करोति भूयो विवशः प्रायश्चित्तमथो कथम् ॥ ९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

र्थकः मोक्षधर्मः ।

तस्माद्भारत ! सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छता भयम् ।

इत्यादिना आदौ तत्र तत्र मुमुक्षूपादेयत्वेन यथा यथावत्कथितः यत् येन क्रमयोगोपलब्धेन पूर्वपुण्यार्जितशुभजन्मतीर्थवाससत्सङ्गादिक्रमयोगाल्लब्धेन प्राप्तेन अनुष्ठितेन असंसृतिर्मुक्तिः स चान्येन वक्तुमशक्य इति सूचयितुमाह । ब्रह्मणा ब्राह्मणदेहधारिणा भगवता त्वयेत्यर्थः ॥ १ ॥

प्रवृत्तिलक्षणश्च ऐहिकामुष्मिकलोकप्रापककर्मानुष्ठानादौ प्रवृत्तिरेव लक्षणं स्वरूपं यस्य सः पुरुषार्थत्रयसाधनरूपो धर्मः बुभुक्षूपादेयतया ।

श्रोतव्यादीनि राजेन्द्र ! नृणां सन्ति सहस्रशः ।
अपश्यतामात्मतत्त्वं गृहेषु गृहमेधिनाम् ।

इत्यादिना पुनः पुनस्त्वया कथितः त्रैगुण्यमैहिकामुष्मिकसुखं तदेव विषयः फलं यस्य सः न क्षीना प्रकृतिः सांसारिकः स्वभावो यस्य तस्य बुभुक्षोः गुणै रागादिभिः सर्गो जन्म तदुपलक्षितो जन्ममरणप्रवाहो यतः इमौ श्लोकौ कैश्चिद्वर्चिरादिमार्गद्वयपरत्वेन व्याख्यातौ तदयुक्तम् । निवृत्तिप्रवृत्तिधर्मयोः आदौ स्कन्धचतुष्टयेऽपि वर्णितयोरनुवादसम्भवमार्गद्वयमात्रानुवादानौचित्यान्मार्गद्वयस्य तत्रैवान्तर्भावाच्च ॥ २ ॥

अधर्मस्य लक्षणं फलं येषु ते आद्यः मन्वन्तरः मन्वादिपद्धरूपः व्याख्यातः यतो यस्मिन् मनुश्च स्वायम्भुवो व्याख्यातः प्रियव्रतोत्तानपदोर्वंशस्तच्चरितानि च व्याख्यातानि द्वीपादीन् भागतो लक्षणतो मानतश्च धरामण्डलस्य संस्थानं ज्योतिषां विवराणां च संस्थानम् इदं ब्रह्माण्डं यथा विभुर्विष्णुः असृजत् तथा च त्वमुक्तवानिति सार्द्धश्लोकान्वयः ॥ ३ ॥ ४ ॥ ५ ॥

भाषा टीका ।

॥ दोहा ॥

रामानुज पद वन्दिकर, कृष्ण चरण चितलाय ।
भाषा षष्ठ स्कन्ध की, लक्ष्मणदास बनाय ॥ १ ॥

राजा परीक्षत् जी बोले आपने पहिले निवृत्ति मार्ग का कथन यथार्थ से किया है जिस मार्ग में क्रम से ब्रह्मज्ञान के लाभ होने पर संसारसे मोक्ष होता है ॥ १ ॥

त्रिगुण के विषय स्वर्गादि सुख को प्राप्त होने वाले जिस का प्रकृति सम्बन्ध नष्ट नहीं भया है तिस जीव के वारम्वार गुणों से सृष्टि होने का प्रवृत्ति मार्ग भी आप ने कथन किया है ॥ २ ॥

अधर्म से प्राप्त होने वाले अनेक नरक भी आपने वर्णन किये हैं आद्य मन्वन्तर भी आपने कहा है जिस में स्वायम्भुव मनु भये हैं ॥ ३ ॥

प्रियव्रत उत्तानपाद इन दोनों के वंश और उन के चरित्र भी कहे उस में द्वीपवर्ष समुद्र पर्वत नदी उद्यान वृक्ष इन सवों का कथन किया ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नाना उग्रा यातना येषु तान्नरकान् यथा येनोपायेन नैयात् गच्छेत्तन्मेऽधुना व्याख्यातुमर्हसि ॥ ६ ॥

तत्र तावन्मन्वाद्युक्तं प्रायश्चित्तं विना नरका दुर्निवारा इत्याह । न चेदिति द्वाभ्याम् । मनउक्तिपाणिभिर्मनोवाक्कायैः कृतस्यांहसस्तैरेवेहैवापचितिं प्रायश्चित्तं न कुर्याच्चेत्तर्हि स पुरुषः मृत्वा नरकान् ध्रुवमुपैति मे मया ये भवतः कीर्तिताः तिग्मा दारुणा यातना येषु तान् ॥ ७ ॥

यस्मादेवं तस्मात् पापस्य प्रायश्चित्ते यतेत कदा मृत्योः पुरैव तत्रापि अविपद्यता अक्षीयमाणेनात्मना देहेन । यद्वा । मनिश

क्वचिन्निवर्ततेऽभद्रात् क्वचिच्चरति तत् पुनः ।
प्रायश्चित्तमतोऽपार्थं मन्ये कुञ्जरशौचवत् ॥ १० ॥

श्रीशुक उवाच ।

कर्मणा कर्मनिर्हारो नह्यात्यन्तिक इष्यते ।
अविद्वदधिकारित्वात् प्रायश्चित्तं विमर्शनम् ॥ ११ ॥
नाश्नतः पथ्यमेवान्नं व्याधयोऽभिभवन्ति हि ।
एवं नियमकृद्राजञ्छनैः क्षेमाय कल्पते ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विपत्तिरहितो यावत् यतात्मना संयतेन मनसा तत्राप्याशु अन्यथा "अतीव चिरकाले तु द्विगुणं व्रतमर्हति" इति द्वैगुण्यापत्तेः तत्र च पापस्य महत्त्वमल्पत्वञ्चावेक्ष्य तदनुरूपे प्रायश्चित्ते यतेत रुजां रोगाणां निदानविद्यया वैद्यस्तदनुरूपं चिकित्सेत तद्वत् ॥ ८ ॥

अत्र चोदयति द्वाभ्याम् । दृष्टं राजदण्डादि श्रुतं नरकपातादि ताभ्यामात्मनः पापमहितं जानन्नपि भूयः प्रायश्चित्तानन्तरं करोति अपो अतः कारणाद्द्वादशाब्दादि कथं प्रायश्चित्तं तेन समूलस्य दोषस्यानिवृत्तेः निवृत्तौ वा पुनश्च पापप्ररोहयोगादिति भावः ॥ ९ ॥

किञ्च । कश्चित्कदाचिदभद्रात्पापान्निवर्तते कश्चित्तदेव पुनराचरति यथा कुञ्जरः स्नातोऽपि रजोभिरात्मानं मलिनीकरोति तथा पापस्य पुनर्दुर्निवारत्वेन नरकपातस्यावश्यं भावित्वात्प्रायश्चित्तं व्यर्थमिति मन्ये ॥ १० ॥

परिहरति । कर्मणा कृच्छ्रादिप्रायश्चित्तेन कर्मणः पापस्य निर्हारो नाश आत्यन्तिकः समूलो न हीष्यते अविद्वानधिकारी यस्मिंस्तस्य भावस्तत्त्वं तस्मादतोऽविद्याया नाशाभावान्नष्टेऽपि तस्मिन्पापे तत्संस्कारेण पापान्तरस्य पुनः पुनः प्ररोहो भवत्येव किं तर्हि मुख्यं प्रायश्चित्तं तदाह । प्रायश्चित्तं तु विमर्शनं ज्ञानम् ॥ ११ ॥

तत्तु नियमप्रमत्तः शनैर्लभते नान्य इति सदृष्टान्तमाह । नेति । पथ्यमेवान्नमश्नतः पुरुषान् यथा व्याधयो न बाधन्ते तथा नियमादिकर्ता क्षेमाय तत्त्वज्ञानाय समर्थो भवति ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा द्वीपादीन् भूमण्डलसंस्थानज्योतिषां सूर्यादीनां विवराणामतलादीनां संस्थानं च भागादिभिर्व्याख्यातवानसीति शेषः भागोऽवान्तरविभागः लक्षणमसाधारणं रूपं मानं परिमाणं किं बहुना यथेदं भगवानसृजद्यादृग्विधमिदं जगद्भगवानसृजत् तथैव व्याख्यातमित्यर्थः एवमुक्तानुवादः क्रमानादरेण कृतस्तत्रायं क्रमश्चार्थो विवक्षितः प्रवृत्तिलक्षणो धर्मः "मन्वन्तरञ्च व्याख्यातः आद्यः स्वायम्भुवो यतः" इति च तृतीयस्कन्धार्थोऽनुवादकम् अधर्मलक्षणा इति पूर्वार्धं प्रियव्रतोत्तानपादौ इत्यादिचतुर्थपञ्चमस्कन्धार्थानुवादकमिति ॥ ५ ॥

एवमुक्तमनूद्याथ पूर्वस्कन्धान्तेऽनुवर्णितनरकानिस्तरणोपायं पृच्छति । अधुनेहेति । हे महाभाग ! भागो विवेकात्मको बुद्धिविशेषः विवेको हि हेयमुपादेयं च भज्यतेऽनेनेति भागः करणे घञ् महांश्चासौ भागश्च महाभागः सोऽस्यास्तीति महाभागः अश्रांश्चाद्यच् नानाविधा उग्रास्तीव्रा यातना येषु तान्नरः अधुनैवाशु यथैव नेयात् येन साधनेन न प्राप्नुयात्तत्साधनं मे मह्यं व्याख्यातुमर्हसि ॥ ६ ॥

एवमापृष्टो भगवान् बादरायणिस्तावदकृतनिष्कृतिभिरवश्यं स्वदुरितानुसारेण नरकाः प्राप्यन्त एवेति वदन्नवश्यं दुरितप्रतीकारे यतितव्यमित्याह । न चेदिति द्वाभ्याम् । मनउक्तिपाणिभिर्मनोवाक्कायैः कृतस्यांहसः पापस्यापाचितिं प्रायश्चित्तादिभिः क्षयं यदा इहैव लोके यदि न कुर्यात्तदा स वै अकृतनिष्कृतिर्देही प्रेत्य मृत्वा ध्रुवं तु तान्नरकानुपैति प्राप्नोति नरकान्विशिनष्टि । भयतस्ते तुभ्यं मे मया ये नरकास्तिग्मा तीव्रा यातना येषु तादृशाः कीर्तिताः कथिताः इत्यर्थः ॥ ७ ॥

तस्मादकृतनिष्कृतेर्नरकप्राप्तेर्दुर्निवारत्वात्पुरैव मृत्योर्मरणात्पूर्वमेवाविपद्यता विपत्तिमगच्छता पटुतरेणेत्यर्थः आत्मना देहेनेहैव लोके पापस्य निष्कृतौ नाशे यतेत किं कृत्वा दोषस्य पापस्य गुरुलाघवं भावप्रधानो निर्देशः गौरवलाघवे दृष्ट्वा यथा योग्यं प्रायश्चित्ते यतेतेत्यर्थः तत्र दृष्टान्तः यथा रुजां रोगिणां निदानज्ञो भिषग्रोगानुसारेण चिकित्सितं प्रतीकारं कुर्यात् इति ॥ ८ ॥

एवं प्रतिपदोक्तं प्रायश्चित्तमेव उपाय इत्युक्तं विषयपरवशस्य नरस्य पुनः पुनः पापाचरणशीलत्वात्तेषामानन्त्यात्प्रायश्चित्तानुष्ठानासम्भवात्तत्सम्भवे पुनर्दुरितसम्भावनयाकृतप्रायत्वाच्च नेदं प्रश्नस्योत्तरमिति वदन्नुपायान्तरं पृच्छति राजा । दृष्टश्रुताभ्यामिति द्वाभ्याम् । यद्यस्माद्दृष्टश्रुताभ्यां प्रत्यक्षेण शिष्टगर्हादिना शास्त्रवचनेन चात्मनः स्वस्याहितमनिष्टसाधनमिति जानन्नपि पुनर्विवशः विषयपरवशः पापकृदित्यर्थोऽतः प्रायश्चित्तं कथं व्यवस्थितं सद्दुरितशोधकं कथं भवेदित्यर्थः अभद्रात्पापात्कश्चिन्निवर्तते विषयपरवशः कश्चिदभद्रं पुनश्चरति करोति अथोऽतः कृतमपि प्रायश्चित्तमपार्थं व्यर्थं भवति अत्र दृष्टान्तः कुञ्जरशौचवदिति । यथा कुञ्जरो गजः स्नातोऽपि पुनः स्वशिरसि धूलिं प्रक्षिपति तस्य शौचं स्नानं व्यर्थं तद्वत्कृतमपि प्रायश्चित्तं पुनः पापाचरणाद्व्यर्थं मन्य इत्यर्थः अत उपायान्तरं मे कथयितव्यमिति भावः ॥ ९ ॥ १० ॥

एवमुक्ते निरवद्योपतया दुरितानिवर्तकं विवक्षुस्तावत्प्रायश्चित्तमपि कतिपयदुरितनिवर्तकत्वेनाधिकारिभेदेन व्यवस्थितमन्यथा प्रायश्चित्तविधायकमन्वादिस्मृतिवैयर्थ्यं स्यादि-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्याह भगवान् बादरायणिः । कर्मणेत्यादिना । कर्मणा प्रतिपदोक्तप्रायश्चित्ताख्येन कर्मणा कर्मणः पापकर्मणो निर्हारः आत्यन्तिकः पुनः पापसम्बन्धरहितो नेष्यते यथोपदेशमेव दुरितनिवर्त्तकं प्रायश्चित्तं न तु ज्ञानवदुत्तराघस्यापि साकल्येन विनाशकमिति भावः तर्हि प्रायश्चित्तविधिवैयर्थ्यमत आह । अविद्वदधिकारित्वादविदुषोऽपरमात्मोपासकस्याहङ्कारममकाररागद्वेषादिमतः प्रायश्चित्ते अधिकारित्वाद्विदुष उत्तरपूर्वाघयोरश्लेषविनाशकरस्य वेदनस्यैव सत्वान्न तत्पापनिवृत्तये प्रायश्चित्तापेक्षेति । यद्यपि तद्विधिवैयर्थ्यं तदाप्यविदुषस्तात्कालिकरोगोपशामकौषधादिवत्कतिपयदुरितनिरसनाय प्रायश्चित्तमपेक्षितमिति न तद्विधिवैयर्थ्यमिति भावः अत एवोच्यते । प्रायश्चित्तं विमर्शनमिति । विमृश्यत इति विमर्शनं "कृत्यल्युटो बहुलम्" इति बहुवचनात्कर्मणि घञ् पापविशेषनिवर्त्तकत्वेन प्रायश्चित्तं विमृश्यते न कार्त्स्न्येनेत्यर्थः । यद्वा । विमृश्यते विविच्यते पृथक्कृत्य निवर्त्यतेऽनेन पापमिति करणे घञ् ॥ ११ ॥

एवं प्रतिपदोक्तप्रायश्चित्तान्यधिकारिभेदेन कतिपयदुरितनिरसनक्षमाणि वेदनं तु निःशेषदुरितनिवर्त्तनद्वारा नरकपरिहारकमित्युक्तं तर्हि तादृशं वेदनं कैरुपायैर्निष्पद्यत इत्यपेक्षायां तन्निष्पत्तिप्रतिबन्धकनिरसनोपायैर्नियमैस्तन्निष्पद्यत एवेति सदृष्टान्तमाह । नाश्नत इति । पथ्यमेवान्नमश्नतः पुरुषस्य व्याधयो नाभिभवन्ति न बाधन्ते हि हे राजन् ! एवं नियमकृद्वक्ष्यमाणतथा नियमवान् शनैः क्षेमाय दुःखासम्भिन्ननिरतिशयसुखाय कल्पते क्षमते मुक्तो भवतीत्यर्थः शनैरित्यनेनेयं प्रणाल्यत्राभिप्रेता ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भागतो विभागतो लक्षणतो मानतश्च ज्योतिषां स्वरूपमिति शेषः विवराणामधोभुवनानां संस्थानमिति शेषः विभुरिदं जगद्यथा येन प्रकारेणासृजत्सोऽपि द्वितीयतृतीयादौ कथित इति शेषः ॥ ५ ॥

प्रवक्तुर्व्याख्याने हर्षोद्रेककारणाय स्वस्योक्तार्थग्रहणसामर्थ्यं प्रदर्श्य विवक्षितार्थं पृच्छति । अधुनेति । अधुनेममर्थं भवन्तं पृच्छामीति शेषः । इह जीवलोके दुष्कर्मापि नरो यथा येन साधनेन नानोग्रयातनानरकाशेषान्न गच्छेदधुना दुष्कर्मपरिहारपटीयः साधनं व्याख्यातुमर्हसीत्यन्वयः "यातना तीव्रवेदना" इत्यभिधानात् नानाविधा यातनास्तीव्रवेदना येषु नरकेषु तथा तानिति नरकविशेषणमेतत् ॥ ६ ॥

"न(१)चेदिहावेदीन्महती विनष्टिः,,इति श्रुत्यर्थं पद्यन्प्रवक्ति । न चेदिति । यः पुरुषः मनउक्तिपाणिभि(२)र्मनोवाक्कायैः कृतस्यांहसः अपचितिं प्रायश्चित्तोपलक्षणां नाशमिहैव न कुर्याच्चेत्तर्हि स पापी प्रेत्य नरकानुपैतीत्यन्वयः कीदृशानत्राह । ये कीर्तिता इति । या इत्यनेन पारम्पर्ययोतीममर्थमाह । कथङ्कारमपचितिः स्यादित्यत उक्तम् । यथेति । अंहसो गुरुलाघवं यथा तथा प्रायश्चित्तकरणमित्यर्थः न चेदमौपचारिकं ध्रुवं निश्चितमिति यस्मिन् जन्मन्याचरितं तस्मि-

न्प्रायश्चित्तञ्चेल्लुब्ध्वापि क्षिप्रं गुरुदोषनिवृत्तिलक्षणफलदमित्यनेन दर्शयति ॥ ७ ॥

यस्मादेवमनर्थप्राप्तिस्तस्माद्देहवियोगात्पूर्वमेव कालक्षेपमन्तरेण पापनिष्कृतौ पापपरिहारे यतेत यतनमपि मध्यम वयस्येवेत्यभिप्रायेणोक्तमविपदीति बाल्ये वार्धके वा दौर्बल्यलक्षणविपत्तिसम्भवात्तारुण्ये तद्योगात्समर्थ इत्यर्थः अनेन द्रव्यादिसम्पत्तावेव प्रयतनीयमिति ध्वनितं यथेत्युक्तं विवृणोति । यथात्मन इति । आत्मनो दोषस्य यद्गुरुत्वं लघुत्वं च तद्दृष्ट्वा तदनुसारेणेत्यर्थः अत्रैव दृष्टान्तमाह । यथेति । रुजां रोगाणां "निदानं त्वादिकारणम्" इत्यभिधानान्मूलनिमित्तज्ञानी भिषग्वैद्यो यथा चिकित्सेत चिकित्सते आत्मनो दोषस्य गुरुलाघवज्ञानाभावे तद्विद्वन्मुखादपि ज्ञात्वा कर्तव्यमिति सूचितमनेन दृष्टान्तेन । यद्वा । यद्यावदात्मनो देहस्य मृत्योः सकाशाद्यन्मरणलक्षणविपन्न भवेत् तस्मात्तावत्पुरैव पापस्य गुरुलाघवज्ञानपूर्वकं निष्कृतौ यतेत इममर्थं सदृष्टान्तमाह । दोषस्येति ॥ ८ ॥

राजा निष्कृतेर्वैयर्थ्यं शङ्कते । दृष्टेति । चौर्यादिकारिणो राजदण्डादिदर्शनेन "मृतो नरकमभ्येति ह्यगम्यागमनान्नरः" इति श्रुतेः स चात्मनः पापमहितं दुःखसाधनं जानन्नपि विवशः स्वकर्माधीनः भूयः पश्चादपि पापं करोतीति यद्यस्माद्था तस्मात्प्रायश्चित्तं कथं भवतीत्यन्वयः ॥ ९ ॥

असम्भवं विवृणोति । क्वचिदभद्रात्प्रायश्चित्तेन निवर्तते क्वचित्तत्सदृशमभद्रमाचरतीति यदथो तस्मात्प्रायश्चित्तमपार्थं मन्ये निष्प्रयोजनत्वे कुञ्जरशौचेन स्नानं लक्षयति ॥ १० ॥

प्रायश्चित्तलक्षणं कर्मापार्थमिति वदन् किं केवलं स्वयमुत विद्वद्भिर्विमृश्य विहितमाहोस्विज्ज्ञानपूर्वकमपि क्रियमाणं तदिति तत्राद्यः सम्मत इत्याह । कर्मणेति । प्रायश्चित्तलक्षणेन कर्मणा कर्मनिर्हारः पापकर्मविनाशः आत्यन्तिकश्छिन्नमूलत्वेन नेष्यते उभयोरप्यज्ञानमूलत्वेनाधिकृतत्वात् द्वितीयं न व्यर्थमित्याह । प्रायश्चित्तेति । विद्वद्भिरविदुषोऽधिकृत्य प्रायश्चित्तं कर्म विमर्शनं कृत्वा विहितं कर्म व्यर्थं नेष्यते इति पूर्वेणान्वयः ॥ ११ ॥

(३) तृतीये इदम्पापमिति जानता तदकुर्वाणेन स्वविहितं क्रियमाणमुत मया कृतं पापमिति ज्ञात्वा तस्येदं प्रायश्चित्तमिति जानतेति पक्षद्वयेऽपि क्रियमाणं कर्म व्यर्थं किन्तु सार्थकमिति भावेनाह । नाश्नत इति । एवमिति वचनाद्यथेत्याहर्तव्यं पथ्यमेवान्नमश्नतः पुंसो व्याधयो नाभिभवन्ति यथा देहादिशेषः "अत्यम्बुपानाच्च स एव दोषः तस्मान्नरो वन्हिविवर्धनाय मुहुर्मुहुर्वारि पिबेदभूरि" इत्यादिविधानं हि शब्देनाक्षिप्तं स्पष्टयति एवमिति । नियमकृत्पापकर्माकुर्वन्स्वविहितं कुर्वन् शनैर्बहुजन्मार्जितपुण्यप्रचयेन ज्ञानोत्पत्तौ क्षेमाय कल्पते मोक्षाय समर्थो भवति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रष्टव्यमाह । अधुनेति । लोकानां यथेष्टसाधने ते द्वे ज्ञाने तदनिष्टपरिहारसाधनमपि ज्ञातव्यमिति भावः ॥ ६ ॥

तत्र स्वमतं प्रायश्चित्तं प्रश्नेनोत्पादयितुमन्यमतमनुवदति । नचेदिति ॥ ७ ॥ ८ ॥

(१) इहैव पापप्रायश्चित्तं नावेदीच्चेन्महती हानिरिति श्रुत्यर्थः ।
(२) पाणिर्हस्त इतिख्यातः कदाचिदिह उच्यतद्वलभिधानम् ।

(३) ज्ञानपूर्वकक्रियमाणविषये ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तथैव पृच्छति। हष्टेति ॥ ९ ॥ १० ॥

स्वमतं वक्तुमाह। कर्मणेति ॥ ११—१४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

नाना उग्रा यातना येषु तान् नरकान् यथा न इयात् न गच्छेत् तद् लोकानामिष्टानिष्टसाधने द्वे यथा ज्ञाते तथानिष्टपरिहारसाधनमपि ज्ञातव्यमिति भावः ॥ ६ ॥

तत्र स्वशिष्यस्य परीक्षितः स्वमते व्युत्पत्तिं परीक्षमाणः कर्मिणां मते नरके प्रतीकारमाह। नचेदिति द्वाभ्याम्। इहैव जन्मनि मनोवाक्कायैर्व्यस्तैः समस्तैर्वा कृतस्यांहसः अपचितिं प्रायश्चित्तम् इहैव जन्मनि न कुर्याच्चेत्तदा तिग्मा दारुणाः ॥ ७ ॥

यस्मादेवं तस्मान्मृत्योः पुरैव तत्राप्याशु अन्यथा "अतीव चिरकालेतु द्विगुणं व्रतमर्हति"इति द्वैगुण्यापत्तेः। अविपद्यतात्मसंविं। यावज्जरारोगादिभिर्व्रताद्यसामर्थ्यं न स्यादित्यर्थः। अत्र व्यवस्थापको विद्वान् धर्मशास्त्रतात्पर्यविज्ञो मृग्य इत्याह। दोषस्येति गुरुलाघवं गौरवं लाघवञ्च ॥ ८ ॥

मतमिदमाक्षिपन्न सम्मन्यमान आह। हष्टेति द्वाभ्याम्। दृष्टं राजदण्डादि श्रुतं नरकपातादि ताभ्यामात्मनोऽहितं पापं प्रायश्चित्तानन्तरमपि करोति लोके तथा दृष्टत्वादित्यर्थः। अथो अतः प्रायश्चित्तं कथं पापनाशकमित्यर्थः। तस्य पापनाशकत्वे पुनः पापप्ररोहायोगादिति भावः ॥ ९ ॥

कश्चिद्यौवनादौ अभद्रात् पापान्निवर्त्तते पुनस्तदेव पापं कश्चिद्वार्द्धके चरति अथो अत एव अपार्थं व्यर्थं कुञ्जरशौचवदिति कुञ्जरोहि स्नात्वापि पुनरात्मानं रजोभिर्मलिनीकरोति ॥ १० ॥

परीक्षयोत्तीर्णं परीक्षितं पुनरपि परीक्षिष्यमाणः सिद्धान्तं ज्ञापयति। कर्मणा कृच्छ्रादिप्रायश्चित्तेन कर्मणः पापस्य नाशो नात्यन्तिकः किन्त्वापातत उपशमन इत्यर्थः। अविद्वान् अविद्यावद्वो जीव एवाधिकारी यस्य तस्य भावस्तत्त्वं तस्माद्धेतोरित्यविद्यायाः पापमूलस्य विद्यमानत्वात् पुनः पुनरपि पापप्ररोहादिति भावः किं तर्हि मुख्यं प्रायश्चित्तमित्यतः पुनरपि परीक्षमाणो ज्ञानिनां मतेनाह। विमर्शनं ज्ञानं तस्यैवाविद्यानिवर्त्तकत्वादिति भावः ॥ ११ ॥

ननु तर्हि पापवत्त्वे अन्तःकरणाशुद्ध्यभावस्तस्मिंश्च सति कुतो ज्ञानप्रसङ्ग इति चेत् सत्यं ज्ञानसाधनेनापि पापोपशम इति सदृष्टान्तमाह। पथ्यमेवान्नमश्नतः पुरुषान् यथा व्याधयो न बाधन्ते तथा नियमादिकर्त्ता क्षेमाय पापनाशनाय शनैः शनैरेव समर्थो भवति ॥ १२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नाना बहुप्रकारा उग्राः दुःसहा यातनाः पीडा येषु तान् नैवाश गच्छेन् यथा येन प्रयत्नेन तन्मे मह्यं व्याख्यातुं वर्णयितुं त्वमर्हसि ॥ ६ ॥

"मनुर्यद्ब्रवीत्तद्भेषजम्"इत्यादिश्रुतिसत्कृतमन्वादिमहर्षिप्रणीतस्मृत्यादरार्थमकृतनिष्कृतिरवश्यं नरकं प्राप्नोत्यतो मन्वादिस्मृत्युक्तरीत्या प्रायश्चित्तं पापिना कर्तव्यमित्याह। न चेत् द्वाभ्याम्। मनआदिभिः कृतस्य अंहसः पापस्य यथा यथावत् मन्वाद्युक्तविधिना अपचितिं प्रायश्चित्तं न कुर्याच्चेत् तर्हि तिग्माः तीक्ष्णाः यातना येषु तथाविधा ये मया कीर्तिता नरकाः तान् ध्रुवमुपैति ॥ ७ ॥

तस्मादुक्तकारणान्मृत्योः पुरैव तत्रापि अविपद्विपद्रहितः पापनिष्कृतौ यतेत ॥ ८ ॥

महर्षिभिरुक्ता पापनिष्कृतिः पुण्यपुरुषेण पापभीरुणा दैवात्कृतस्य पापस्य निराकरणार्था भवतु अत्यन्तनो मायामोहितस्य कामक्रोधादिपारवश्येन पापेभ्यो निवर्तितुमशक्तस्यानुच्छिन्नहृद्ग्रन्थेर्दीनस्य प्रायश्चित्तशतेनापि शोधितुमशक्यस्य का गतिरिति दयार्द्रचित्तो महाराजो हृदि निधाय आक्षिपति। दृष्टश्रुताभ्यामिति द्वयेन। दृष्टश्रुताभ्यां पापफलाभ्यां राजदण्डनरकपातादिभ्यां पापमहितं जानन्नपि भूयः कृतेऽपि प्रायश्चित्ते पुनः करोति यतो विवशः कामादिपरवशः अतो अतः प्रायश्चित्तं कथं निष्पापत्वहेतुः स्यादिति शेषः ॥ ९ ॥

अभद्रात्पापादङ्गादिजले कृतस्नानेन कुञ्जरेण स्नानरूपशौचं स्वदेहे प्रक्षिप्तैः रजोभिरपार्थं क्रियते तद्वत्प्रायश्चित्तमपार्थं मन्ये ॥ १० ॥

परिहरति। कर्मणेत्यादिना। कर्मणा प्रायश्चित्तेन कर्मनिर्हारः पापरूपकर्मनाशः आत्यन्तिकः समूलो नेष्यते अविद्वदधिकारित्वादात्मानात्मपरमात्मस्वरूपयाथात्म्यमजानन् देहात्मत्वाभिमानादिरूपं पापमूलमज्ञानं बिभ्राणः प्रायश्चित्तेन पापं नाशयन्नपि अविद्वान् पापमूलमज्ञानं नैव नाशयति किन्तु पुनः पापं देहे आत्मत्वाभिमानेन गृहादौ ममत्वाभिमानेन परमात्मनि पुरुषविशेषत्वभ्रान्त्यापमानेन एवमाद्यज्ञानेन करोतीत्यर्थः अतो मुख्यं प्रायश्चित्तं विमर्शनमात्मानात्मपरमात्मज्ञानं न हि तत्त्ववित् परमानन्दप्राप्त्युपायं पुण्यादिकं हित्वा देहार्थं पापं करोत्यात्मानं नरके पातयितुं किन्तु कचिद्दैवाज्ज्ञातेऽपि पापे यथोक्तप्रायश्चित्तेन केवलेन हरिस्मरणेनापि तन्निराकृत्य निष्पापः यथोक्तमुक्त्युपायेन मुक्तो भवतीति भावः ॥ ११ ॥

इममर्थं दृष्टान्तेन स्फुटीकरोति। नाश्नत इति। नियमकृत् नियतमोक्षसाधनकर्त्ता क्षेमाय मोक्षाय ॥ १२ ॥

———

भाषा टीका।

पृथिवी मण्डल की स्थितिभी भाग लक्षण प्रमाण से कहीही है ज्योतिर्गणों की पातालों की स्थिति जिस प्रकार परमेश्वर ने जगत् सृजा है सो सब आपने कहा है ॥ ५ ॥

हे महाभाग अब आप जिस प्रकार से अनेक उग्र दुःखों वाले नरकों को मनुष्य न जावें सो उपाय मेरे से कहिये ॥ ६ ॥

श्री शुकदेवजी बोले यहां पर जिन पापों के जैसे प्रायश्चित्त कहे हैं शास्त्र मे उन को जब नहीं करता है तब मन वचन कर्म से जो किये पाप हैं तिन के हेतु से जो मैंने तुम से कथन किये हैं बड़े दण्ड के स्थान उन नरकों मे मरे पीछे यह अवश्य ही जाता है ॥ ७ ॥

तपसा ब्रह्मचर्येण शमेन च दमेन च ।
त्यागेन सत्यशौचाभ्यां यमेन नियमेन च ॥ १३ ॥
देहवाग्बुद्धिजं धीरा धर्मज्ञाः श्रद्धयान्विताः ।
क्षिपन्त्यघं महदपि वेणुगुल्ममिवानलः ॥ १४ ॥
केचित्केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कात्स्न्येंन नीहारमिव भास्करः ॥ १५ ॥
न तथा ह्यघवान् राजन् ! पूयेत तपआदिभिः ।
यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥ १६ ॥
सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः ।
सुशीलाः साधवो यत्र नारायणपरायणाः ॥ १७ ॥
प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ।
न निष्पुनन्ति राजेन्द्र ! सुराकुम्भमिवापगाः ॥ १८ ॥
सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥ १९ ॥
अत्र चोदाहरन्तीममितिहासं पुरातनम् ।
दूतानां विष्णुयमयोः सम्वादस्तं निबोध मे ॥ २० ॥

### भाषा टीका

तिस हेतु से मरने से पहिले शीघ्रही देह केवल रहते ही पापों के प्रायश्चित्त करने का यत्न करै तिस मे दोषों का गौर-वलाघव देख कर प्रायश्चित्त करै जैसे कि रोगों के निदान को जानने वाला वैद्य रोग के अनुसार चिकित्सा करता है ॥ ८ ॥

राजा बोले पापके करनेसे राजादिकोंसे दण्डको देखतेहैं शास्त्रसे सुनतेहैं तब अपना अहित जानकरभी स्वभावके परवश होकर फिरपाप करतेहैं तो प्रायश्चित्त कैसे होसक्ताहै ॥ ९ ॥

यह मनुष्य कहींपर पापसे निवृत्त होजाताहै कहीं फिर उसी पापको करताहै तिससे प्रायश्चित्त तो हाथिके स्नानके तुल्य व्यर्थही मालूम पडताहै ॥ १० ॥

श्री शुकदेवजी बोले कर्म से कर्म का नाश कर करना तो अच्छी तरह से नहीं होता है क्योंकि केवल कर्मों से कर्मों का नाश करने का उपाय थोडे ज्ञानी के वास्ते कहा है ज्ञानी के वास्ते तो परमात्माके स्वरूपादि का ज्ञानही प्रायश्चित रूप होजाता है ॥ ११ ॥

जो पुरुष पथ्य पदार्थों को खाता है उसको रोग नही लगते हैं हे राजन् । इसी प्रकार शास्त्रोक्त नियमोंके करने वाला पुरुष कालान्तर में संसार रोग से छूटकर मोक्ष को प्राप्त होजाता है ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एतदेव विशदयति द्वाभ्याम् । तपसा ऐकाग्र्येण ।
"मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः" ।
इति स्मृतेः ब्रह्मचर्येणाष्टाङ्गेन तदुक्तम् ।

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रिया निर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥

इति । शमो मनसो नियमनं दमो बाह्येन्द्रियाणां त्यागो दानं य[illegible]ऽहिंसादिः नियमो जपादिः ॥ १३ ॥ १४ ॥

अस्यातिदुष्करत्वान्मुख्यमेवान्यत्प्रायश्चित्तमाह । केचिदित्यनेन[illegible] एवम्भूता भक्तिप्रधाना विरला इति दर्शयति । केवलया तपआदि[illegible] निरपेक्षया वासुदेवपरायणा इति नाधिकारिविशेषणमेतत्कि[illegible] न्येषां श्रद्धया तत्राप्रवृत्तेरर्थात्तेष्वेव पर्यवसानादनुवादमात्रम् ॥ [illegible]

एतच्च ज्ञानमार्गादपि श्रेष्ठमित्याह । न तथा पूयेत शुद्[illegible] तत्पूरुषनिषेवया कृष्णेऽर्पिताः प्राणा येन ॥ १६ ॥

तत्र हेतुः सध्रीचीनः समीचीनः अयं पन्था भक्तिमा[illegible] यतः क्षेमः क्षेमत्वे हेतुः न कुतश्चिद्विघ्नादेर्भयं यस्मिन् तद्[illegible] सुशीलाः कृपालवः साधवो निष्कामाः यत्र यस्मिन्मार्गे [illegible] निष्ठाः अतो न ज्ञानमार्ग इवासहायतानिमित्तं भयं नापि कर्म[illegible] गेवन्मत्सरादियुक्तेभ्यो भयमिति भावः ॥ १७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

भक्तेरन्यनिरपेक्षत्वमुक्तं कृच्छ्रादीनि तु भक्तिं विना न शोधयन्तीत्याह। प्रायश्चित्तानीति। महतामप्यशोधकत्वे दृष्टान्तमाह। सुराकुम्भमापगा नद्य इवेति ॥ १८ ॥

भक्तिः स्वल्पापि पुनात्येवेत्याह। सकृदिति। तस्य गुणेषु रागमात्रमस्ति न तु ज्ञानं यस्य तन्मनः तावतैव चीर्णं निष्कृतं प्रायश्चित्तं यैः ॥ १९ ॥

इममर्थमितिहासेनोपपादयति। अत्र चेति मे मत्तः ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तावत्तपआदिभिर्नियमैर्वेदनोत्पत्तिप्रतिबन्धकदुरितनिवृत्तिः ततो वेदनस्य निष्पत्तिस्ततो ब्रह्मप्राप्तिप्रतिबन्धकपूर्वोत्तराघविश्लेषौ ततो ब्रह्मप्राप्तिस्ततः क्षेम इति नियमान् दर्शयन् तेषां वेदनोत्पत्तिप्रतिबन्धकदुरितनिवर्त्तकत्वमाह। तपसेति द्वाभ्याम्। तपसानशनादिना "तपसानाशकेन" इति श्रुतेः अनाशकेनेत्यत्यशननिषेधः न तु सुतरामशननिषेधः तथा सति देहधारणासम्भवेनोपासनानिष्पादात् तथा चोक्तं भगवता "युक्ताहारविहारस्य" इति ब्रह्मचर्येण ऋतुव्यतिरक्तकालिकस्त्रीसङ्गादिराहित्येन शमेनान्तरिन्द्रियनिग्रहेण दमेन बाह्येन्द्रियनिग्रहेण त्यागेन सत्पात्रदानेन सत्यशौचाभ्यां सत्यभूतहितकारित्वमनृतावदनं च शौचं सदाचारः यमः कामानभिष्वङ्गः नियमः वर्णाश्रमधर्मः पञ्चमहायज्ञादिस्तेन ॥ १३ ॥

एभिः धीराः शीतोष्णसुखदुःखादिद्वन्द्वसहनशीलाः धर्मज्ञाः निरतिशयसुखसाधनोपासनात्मकधर्मप्रतिपादकशास्त्रजन्यज्ञानवन्तः श्रद्धया स्वचिकीर्षितविषयकत्वरया युक्ताः सन्तः देहवाग्बुद्धिजं करणत्रयजं महदप्यघं वेदनोत्पत्तिप्रतिबन्धकमनलोऽग्निर्वेणुगुल्ममिव क्षपयन्त्यपनुदन्ति एवं तपआदिभिर्वेदनोत्पत्तिप्रतिबन्धकेऽघे निरस्ते तत उत्पन्नया वेदनया ब्रह्मप्राप्तिप्रतिबन्धकमघं निरस्यन्तीत्याह। केचिदिति। "मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये" इत्युक्तरीत्योक्तविद्याधिकारिणां दुर्लभत्वाभिप्रायेण केचिदित्युक्तम् ॥ १४ ॥

ये केचिद्वासुदेवः परमयनं प्राप्यं प्राप्तिसाधनमाधारश्च येषां तादृशाः सन्तः तपआदिभिर्निष्पन्नया केवलया भक्त्योपासनात्मकवेदनया कार्त्स्न्येनाघं वासुदेवप्राप्तिप्रतिबन्धकं भास्करः सूर्यो नीहारं तुहिनमिव धुन्वन्ति निरस्यन्ति केवलयेत्यनेन भक्तेरुत्पत्तावेव तपआद्यपेक्षा तपआदिभिरुत्पन्ना भक्तिरेकैव पापं क्षपयतीत्यभिप्रेतम् ॥ १५ ॥

कार्त्स्न्येन धुन्वन्तीत्येतदेव प्रतिपादयति। न तथेति। हे राजन्! अघवान्पापी तपआदिभिः कृच्छ्रचान्द्रायणादिभिः प्रायश्चित्तैस्तथा न पूयेत न शुद्ध्येत् कथं यथा कृष्णे भगवत्यर्पितः समर्पितः प्राणः जीवात्मा येन तादृशः "ओमित्यात्मानं युञ्जीत" इति श्रुत्युक्तरीत्या भगवच्चरणारविन्दयोः संन्यस्तात्मस्वरूप इत्यर्थः तत्पूरुषाणां भागवतानां निषेवया यथा पूयेत तथा कृष्णार्पितप्राणः कार्त्स्न्येनाघं धुन्वन् पूयेत अघवांस्तपआदिभिस्तु न कार्त्स्न्येन पूयेतेत्यर्थः ॥ १६ ॥

उक्तं निःशेषदुरितक्षपणसमर्थं भगवद्भक्तियोगं विशिनष्टि सध्रीचीन इति। लोके श्रेयःसाधनत्वेन विचार्यमाणे उपायसमुदायेऽयं भगवद्भक्तिरूपः पन्था उपायः सध्रीचीनः समीचीनः कुतः हि यतोऽकुतोभयः कुतश्चिदपि भयरहितः क्षेमः आनन्दो मोक्षात्मको भवति अत एव शोभनाचाराः साधवो नारायणपरायणाः सन्तो यत्र भगवद्भक्त्यात्मके पथि वर्त्तन्त इति शेषः अत्र वासुदेवपरायणा नारायणपरायणा इत्यनयोर्मध्यपठितेन कृष्णार्पितप्राणा इत्यनेनात्मसमर्पणपूर्वकं भगवत्येवोपायोपेयभावानुसन्धानमेव वासुदेवपरायणत्वमिति सूच्यते एवं च न्यासयोगोऽपि निरतिशयक्षेमङ्कर इति सूचितं स च स्वतो वा भक्त्यङ्गतया वेत्यन्यत् ॥ १७ ॥

एवं नानाविधानन्तदुःखावहनरकप्राप्तिनिमित्तदुरितनिस्तरणोपायो भगवद्भक्तियोग एवेत्यभिप्रायः अथ प्रायश्चित्तान्यपि भगवत्पराङ्मुखं न निष्पुनन्तीत्याह। प्रायश्चित्तानीति। चीर्णान्यनुष्ठितानि प्रायश्चित्तानि नारायणपराङ्मुखं कदाचिन्नारायणमस्मरन्तं न निष्पुनन्ति न पवित्रयन्ति यथा सुरया पूर्णभाण्डमापगा गङ्गाजलानि तद्वन्नारायणस्मरणगर्भाण्येव प्रायश्चित्तानि चीर्णानि पुनन्ति न केवलानीति भावः ॥ १८ ॥

एवम् "अधुनैव महाभाग! यथैव नरकान्नरः" इति प्रश्नस्य परिहार उक्तो भवतीत्याह। सकृदिति। यैर्नरैरिह लोके तस्य भगवतो गुणेषु रागि आसक्तं मनः कृष्णपदारविन्दयोः सकृन्निवेशितं ते नराः यमं पाशधारिणो यमभटांश्च स्वप्नेऽपि न पश्यन्ति कुतः हि यस्मात् ते चीर्णनिष्कृताः निष्कृतिर्निष्कृतं भावे क्तः चीर्णं कृतं निष्कृतं सकृत् कृष्णपदारविन्दयोः मनो निवेशनरूपं यैस्तादृशाः सकृन्निवेशितमित्यनेनायमर्थोऽभिप्रेतः निष्पन्नभगवद्भक्तियोगानां निरयप्राप्तिनिमित्तसमस्तवृजिनविधूननेन नित्यनिरतिशयानन्दरूपभगवत्प्राप्तिरिति किमु वक्तव्यं यतस्तद्गुणश्रवणनामस्मरणाद्यन्यतमेनापि मनस्तच्चरणनिवेशनरूपो भक्तियोगारम्भ एव सुतरां यमवश्यतापरिहारक इति तथा चोक्तं भगवता।

> नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
> स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥
> न हि कल्याणकृत्कश्चिद्दुर्गतिं तात! गच्छति।

इत्यादि च ॥ १९ ॥

अथ भक्तियोगारम्भस्यापि कैमुत्यन्यायेन दुरितनिवर्त्तकतां शनैर्मुक्त्युपायतां च वक्तुमन्यापदेशेनापि स्मृतस्य भगवन्नाम्नो भक्तियोगारम्भविरोधिदुरितनिवर्त्तकत्वे दृष्टान्ततयेतिहासं प्रस्तोष्यन् प्रतिजानीते। अत्रेति। आस्तां तावन्निष्पन्नभक्तियोगस्यारब्धभक्तियोगस्य वा न यमवश्यतेत्यन्यापदेशेन नामोच्चारणस्य यमवश्यतापरिहारकत्वं भक्तियोगारम्भकारणत्वञ्चेत्यत्रैव पुरातनमितिहासमुदाहरन्ति दृष्टान्तत्वेन कथयन्ति इतिहासं विशिनष्टि। दूतानामिति। विष्णुयमयोर्ये दूतास्तेषां सम्वादरूपमितिहासं मे कथयतो मत्तो निबोध शृणु ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ज्ञानेन तपआदिप्रायश्चित्तकर्मणा महदघं क्षपयन्तीत्यन्वयः ॥ १३ ॥ १४ ॥

दुर्बलकायादिमतां तपआद्याचरणाशक्तानां केन पापक्षयः स्यादिति तत्राह। केचिदिति ॥ १५ ॥

इदमशक्ताधिकारिकश्चेन्निकृष्टं किं न किन्तु ततोऽप्युत्तममिति

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भावेनाह । न तथेति । कृष्णे अर्पिताः प्राणाः श्रोत्रादयो यस्य स तथा कृष्णार्पितप्राणत्वं केन स्यादत्राह । तत्पूरुषेति । तस्य कृष्णस्य पूरुषाः तेषां निषेवया "भक्त्या त्वनन्यया शक्यः" इत्यादिप्रसिद्धिं हिशब्देन दर्शयति ॥ १६ ॥

अत्र त्रिषु दुष्कृतपरिहारमार्गेषु भक्तिमार्गस्यैव प्राधान्यमित्याह । सध्रीचीन इति । लोके प्रायश्चित्तलक्षणसाधनसमूहे आनन्दरूपत्वात्क्षेम इत्युच्यते । तत्राधिकारिण आह । सुशीला इति ॥ १७ ॥

तपआदीनामपि भक्त्योपचितबलानां पापनिर्हरणहेतुत्वं न केवलानामित्यतोऽपि भक्तेरेव प्राधान्यमित्याह । प्रायश्चित्तानीति १८

ननु केवलभक्त्या पापनिर्हरणप्रकारः कथमत्राह । सकृदिति । पापनिर्हरणं तपआदाविव चिरसाध्यं न भवति किन्तु क्षिप्रसाध्यमित्यतो वा भक्तेः प्राधान्यमित्याह । सकृदिति । कृतपापानुतापपूर्वकं श्रीकृष्णाङ्घ्रिपद्मे सकृन्मनोनिवेशनेन चीर्णनिष्कृताः कृतप्रायश्चित्ताः ॥ १९ ॥

नन्वेवं वैदिकानामस्तु अवैदिकानां स्त्रीशूद्रादीनां पापप्रायश्चित्तं कथं स्यादित्याशङ्क्य भक्त्या तेषां नामसङ्कीर्तनेन दुष्कृतनिष्कृतिः स्यादितीममर्थमितिहासेन दर्शयति । अत्रेति । भक्त्या भगवन्नामसङ्कीर्तनादपि दुष्कर्मनाशः स्यात्किमु वक्तव्यं निरन्तरमेकमनस्कत्वेन श्रीहरिचरणस्मरणादिनेत्यतो वेममर्थमाख्यायिकया दर्शयति । अत्रेति । अत्र वैदिकानामवैदिकानामपि भक्त्या नामसङ्कीर्तनादघचये (१) एवकारेणायोगं व्यवच्छिनत्ति न त्वन्ययोगं तथात्वे पूर्वोक्ता व्यर्थाः स्युरित्यर्थः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

स्वमतमाह । केचिदित्यादिना । तृतीयाध्यायं यावत् । अत्र भक्तिर्द्विविधा । सन्तता कादाचित्की च तत्राद्या द्विविधा आसक्तिमात्रयुक्ता रागमयी च । अन्त्या तु त्रिधा रागाभासमयी तच्छून्यस्वरूपभूता आभासभूता च तत्राभासभूतापि सर्वोत्तमप्रायश्चित्तत्वं दर्शयितुं रागमय्याः कैमुत्यबोधकमासक्तिमय्या माहात्म्यमाह । केचिदिति । कार्त्स्न्येन वासनया सहेत्यर्थः । भास्करदृष्टान्तेन स्वाभाविक्या भाःस्थानीयया भक्त्या नीहारस्थानीयस्यागन्तुकस्य स्पृष्टमात्रकस्य चाघसङ्घस्यानुपङ्क्तिकतयैव सद्यो निःक्षेपधूननमिति ज्ञापितम् ॥ १५—१७ ॥

प्रायश्चित्तानीति निश्चितं न पुनन्ति ॥ १८ ॥

अथ रागाभासमय्यास्ततोऽप्युत्तमत्वमाह । सकृदिति । रागोऽत्र रत्याभासः सकृच्छब्दप्रयोगात् साक्षाद्रतौ सत्यामसकृदेव तन्निवेशः स्यात् "दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान्" इति श्रुतिस्तुतेः अत एव टीकायां तस्य गुणेषु रागमात्रमस्ति न तु ज्ञानमित्युक्तं रागमात्रं यत्किञ्चिद्रागः ज्ञानञ्च याथार्थ्येनानुभव इति अत्रैषां पूर्वेभ्यः उत्तमत्वं भक्तनक्त्वाभासमद्भावेन यमादीनां तद्दृष्टिपथेऽपि गन्तुमशक्यत्वान्महाप्रभावरूपं दर्शितम् ॥ १९ ॥

अथ तत्र तत्र कैमुत्यं दर्शयितुमितिहासमुपक्षिपति । अत्रेति ॥ २०—२३ ॥

(१) अत्रैवोदाहरन्तीति मूलं इदम् ।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतदेव विशदयति द्वाभ्याम् । तपसा भोगराहित्येन ब्रह्मचर्येण स्त्रीप्रेक्षणादित्यागेन शमेन यथाशक्तिमनोनियमेन दमेन बाह्येन्द्रियनिग्रहेण त्यागेन दानेन यमेनाहिंसादिना नियमेन जपादिना ॥ १३ ॥ १४ ॥

अत्रापि वेणुगुल्मानलदृष्टान्तेन पुनरपि पापप्रशमनसं राजानं भक्तानां मतेनाह । केचिदिति । एते पुनर्विरल प्रचारा इति भावः । केवलया कर्मज्ञानादिरहितया सर्वोत्कृष्टगुणीभूतान् कर्मज्ञानादीननपेक्षमाणया च अत्र कार्त्स्न्येन इति प्रयोगान्नीहारभास्करदृष्टान्तेन च पापनिर्मूलनं भक्तेर्नान्यथेति सूचितम् ॥ १५ ॥

अत्रापि पापप्रशमने तुच्छ एव वस्तुनि भक्तिमहाद्रव्यविनियोगोऽनुचित इति भक्तिशास्त्रतात्पर्यविज्ञानां मतेन स्वाभिमतेनान्यमताक्षेपपूर्वकमाह । नेति । कृष्णार्पितप्राणा इति । पापकर्माणं मां समुचितशिक्षाद्यर्थं नरके पातयतु वा पातयतु वा स एव मे गतिस्तस्यैवाहमित्यात्मन एव समर्पणेन नरकप्रतीकारमप्यकुर्वन् शुद्धभक्तिमानित्यर्थः कृष्णार्पितप्राणत्वं कथं स्यादित्यत आह । तत्पुरुषेति ॥ १६ ॥

न च ज्ञानयोगव्रताद्यसमर्थानामेव भक्तियोग इति वाच्यमित्याह । सध्रीचीनः हि निश्चितम् अयमेव सर्वतः श्रेष्ठः न कुतोऽपि विघ्नादेर्भयं यत्र सः सुशीलाः साधव इति ज्ञानमार्गे तु असहायतानिमित्तं भयं न नापि कर्ममार्गवन्मत्सरतादिदुष्टमयमिति भावः ॥ १७ ॥

किञ्चान्वयव्यतिरेकाभ्यां भक्तिरेव पापप्रशमनी दृष्टा न ज्ञानकर्मादीत्याह । प्रायश्चित्तानीति । बहुवचनेन कर्मज्ञानयोगानि सर्वाणीत्यर्थः नारायणपराङ्मुखं भक्तिभक्तोत्कर्षयोः श्रुतयोरपि तत्र श्रद्धाहीनं न पुनन्ति भक्तिस्तु ज्ञानकर्मादिहीनमपि पुनाति केवलया भक्त्येति पूर्वोक्तेः ॥ १८ ॥

नात्र भक्तिभूमाप्यपेक्षणीय इत्याह । सकृदपि किं पुनरसकृत् मनोऽपि किं पुनः श्रोत्रादि तच्च मनो गुणरागि विषयान्तरं किं पुनर्गुणरागरहितं स्वप्नेऽपि किं पुनः साक्षात्तावन्मात्रध्यानेनैवाचीर्णा निष्कृतं प्रायश्चित्तं यैस्ते अत्र सकृदित्यादिपदैः कस्यचिच्छुद्धभक्तस्य दैवात् पापानां पौनःपुन्येऽप्युत्पन्नानां स्फुरगदंशानामिव तेषामकिञ्चित्करत्वात् कुञ्जरशौचवदवर्तनं विपर्ययीभावोऽनुचित एव "अपि चेत् सुदुराचारो भजते माम्" इत्यादिवचनेभ्यः ॥ १९ ॥

अत्रार्थ एवेतिहासमुपक्षिपति । अत्रेति । यः सम्वादस्तं निबोध मे मत्तः ॥ २० ॥ २१ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विस्तरेण प्रोक्तानि मन्वादिभिः प्रायश्चित्तानि संक्षेपेण दर्शयति । तपसेति द्वाभ्याम् । तपसा कृच्छ्रादिना ब्रह्मचर्येण ब्रह्मविदिष्टधर्माचरणेन शमेन देवताध्यानेन दमेनेन्द्रियनिग्रहेण त्यागेन दानेन सत्येन पापप्रख्यापनवाक्येन शौचेन सदाचारादिना यमेन अहिंसादिना नियमेन जपादिना ॥ १३ ॥ १४ ॥

कान्यकुब्जे द्विजः कश्चिद्दासीपतिरजामिलः ।
नाम्ना नष्टसदाचारो दास्याः संसर्गदूषितः ॥ २१ ॥
बन्द्यक्षकैतवैश्चौर्यैर्गर्हितां वृत्तिमास्थितः ।
बिभ्रत्कुटुम्बमशुचिर्यातयामास देहिनः ॥ २२ ॥
एवं निवसतस्तस्य लालयानस्य तत्सुतान् ।
कालोऽत्यगान्महान्राजन्नष्टाशीत्यायुषः समाः ॥ २३ ॥
तस्य प्रवयसः पुत्रा दश तेषां तु योऽवमः ।
बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम् ॥ २४ ॥
स बद्धहृदयस्तस्मिन्नर्भके कलभाषिणि ।
निरीक्षमाणस्तल्लीलां मुमुदे जरठो भृशम् ॥ २५ ॥
भुञ्जानः प्रपिबन् खादन् बालकस्नेहयन्त्रितः ।
भोजयन् पाययन्मूढो न वेदागतमन्तकम् ॥ २६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्तप्रायश्चित्तस्य दुष्करत्वात् वेणुगुल्ममिवानल इत्यनेन पुनः पापप्ररोहद्योतनाद्वासुदेवप्रसादरूपबलहीनत्वाच्चादृढत्वं मन्वानो भगवान् बादरायणिः सुदृढं सर्वपुरुषार्थदं सर्वसाधनाङ्गीभूतं सर्वशास्त्रसारं सर्वदुरितघ्नं श्रीकृष्णभजनमाह । केचिदित्यादिना । केचिदित्यनेन अभाग्यैः लौकिकैरज्ञातप्रभावा इति ज्ञापितं वासुदेवः परमुत्कृष्टमयनमाश्रयो येषां ते केवलया पुरुषार्थसाधने स्वतन्त्रया ॥ १५ ॥

मघवांस्तस्य श्रीकृष्णस्य पुरुषाणां निषेवया हेतुभूतया कृष्णार्पितप्राणः कृष्णेऽर्पितः प्राणः इन्द्रियगणः प्राणोपलक्षित आत्मा च येन सः श्रीकृष्णभजनपरः सन् यथा पूयेत शुद्धयेत् तथा तपआदिभिर्न पूयेत श्रीकृष्णपराङ्मुखत्वात् ॥ १६ ॥

अयं पन्थाः श्रीकृष्णभजनमार्गः सध्रीचीनः समीचीनः ।१७।१८
चीर्णं सम्पादितं निष्कृतं प्रायश्चित्तं येस्ते ॥ १९ ॥

विष्णुयमयोर्दूतानां यः सम्वादस्तदात्मकमितिहासमुदाहरन्ति तं मे मत्तः शृणु ॥ २० ॥

---

भाषा टीका ।

तप ब्रह्मचर्य शम दम त्याग सत्य बाहिर भीतर का शौच अहिंसादि यम जपादि नियम इनों के करने से श्रद्धायुक्त धर्मज्ञ धीर पुरुष मन वचन कर्म के बडे पाप को भी जैसे अग्नि बांसके पेडों को जलाता है तैसे नाश कर देते हैं ॥ १३ ॥ १४ ॥

कोई वासुदेव के भक्त पुरुष तो केवल भगवद्भक्तिमात्र से जैसे सूर्य कुहडी का नाश करै तैसे संपूर्ण पाप को नाश करदेते हैं ॥ १५ ॥

हे राजन् ! तपआदिकों से पापी पुरुष वैसा पवित्र नहीं होता है जैसा कि श्रीकृष्ण चरण कमल में मन लगाकर भगवद्भक्तों का सेवा करने वाला पवित्र होता है ॥ १६ ॥

इस लोक में यही एक सुन्दर सर्वत्र निर्भय मार्ग है जिस भक्तिमार्ग में नारायण परायण सुशील साधुजन चलते हैं ॥ १७ ॥

हे राजेन्द्र ! अच्छे किये प्रायश्चित्त भी नारायण से विमुख पुरुष को पवित्र नहीं करसकते हैं जैसे कि नदी एक भी मदिरा के घडे को नहीं पवित्र करसक्ती हैं ॥ १८ ॥

जिन पुरुषोंने भगवान् के गुणोंके अनुरागयुक्त मनको एक वखतभी श्रीकृष्णचरणारविन्दमें लगायाहै उनके सवप्रायश्चित्त होचुके वे पुरुष स्वप्नमेंभी यमके पुरुषोंको अथवा यमराज को नहीं देखतेहैं ॥ १९ ॥

इसी विषयमें एक प्राचीन इतिहासको कहते हैं जिसमें श्रीविष्णुदूत तथा यमदूत इनों का सम्वाद है तिसको तुम मेरे से श्रवण करो ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कान्यकुब्जे पुरे दास्याः पतिः नाम्ना अजामिलः ॥ २१ ॥

बन्दीग्रहेणाद्यैश्च द्यूतेन कैतवैर्वञ्चनादिभिश्च वृत्तिं जीविकां बिभ्रत् कुटुम्बं यातयामास पीडयामास ॥ २२ ॥

आयुषः सम्बन्धी महान् कालोऽत्यगात् । सपिण्डानित्यपेक्षायामाह । अष्टाशीत्या सङ्ख्यया युक्ताः समाः सम्वत्सराः ॥ २३ ॥

प्रवयसो वृद्धस्य ॥ २४ ॥

बद्धं हृदयं येन जरठो वृद्धः ॥ २५ ॥

एतच्च तदुपलालनादि श्रीनारायणनामोच्चारणमाहात्म्येन तद्भक्तिरेवाभूदिति सिद्धान्तोपयोगित्वेनापि द्रष्टव्यम् ॥ २६ ॥ २७ ॥

स एवं वर्त्तमानोऽज्ञो मृत्युकाल उपस्थिते ।
मतिं चकार तनये बाले नारायणाह्वये ॥ २७ ॥
स पाशहस्तांस्त्रीन् दृष्ट्वा पुरुषान् भृशदारुणान् ।
वक्रतुण्डानूर्ध्वरोम्ण आत्मानं नेतुमागतान् ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका

वक्राणि तुण्डानि मुखानि येषामूर्ध्वानि रोमाणि येषां तान् ॥२८॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रतिज्ञातमितिहासमाह । कान्यकुब्ज इत्यादिना । कान्यकुब्जाख्ये जनपदे कश्चिन्नाम्नाजामिल इतिप्रसिद्धो द्विजः दास्याः शूद्रयाः पतिरासीदिति शेषः स च नष्टः सदाचारः स्ववर्णाश्रमधर्मो यस्य तादृशस्तत्र हेतुर्दास्याः संसर्गेण दूषितः पतितः ॥ २१ ॥

गर्हितामार्गैर्गर्हितां वृत्तिमाश्रितो बन्ध्यैर्सोपावन्धनपूर्वकैर्द्यूतैः कैतवैः शाठ्यैश्च कुटुम्बं बिभ्रत्रित्यमशुचिः यदा बन्द्यचादिभिः कुटुम्बस्यानिर्वाहस्तदा देहिनः प्राणिनो यातयामास पत्तिमृगान् हिंसितवानित्यर्थः ॥ २२ ॥

एवं निवसतो जीवतस्तस्य दास्याः सुतान् स्वोत्पादितान् लालयानस्य लालनं कुर्वतः हे महाराजन् ! समासान्तविधेरनित्यत्वात्"राजाह"इतिटजभावः कालः अभ्यगादतिक्रान्तः कियान् कालोऽतिक्रान्तस्तत्राह । अष्टाशीति । परिमिता आयुषः सम्बन्धिन्यः समाः सम्वत्सराः ॥ २३ ॥

तस्य प्रवयसः वार्द्धक्ययुक्तस्य दश पुत्राः स्थितास्तेषां मध्येऽवमः कनीयान् बाल एव स्थितः स च नाम्ना नारायण इति प्रसिद्धः प्रवयसः पुत्रोत्पत्तिकथनमपि पापातिशयज्ञापनार्थं "दास्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते" इति स्मरणात् स नारायणाख्यः पित्रोर्मातापित्रोर्भृशं नितरां दयितः प्रियः ॥ २४ ॥

स द्विजस्तस्मिन्नर्भे नारायणनाम्नि कलभापिण्यव्यक्तमधुरभाषिणि बद्धहृदयः आसक्तचित्तः तस्यार्भकस्य लीलां चेष्टां निरीक्षमाणः जरठः जीर्णः भृशं मुमुदे हृष्टवान् ॥ २५ ॥

स्वयम्भुञ्जानो बालकमपि तत्स्नेहपरवशो भोजयन् स्वयम्पिबंस्तमपि पाययन्मूढोऽज्ञः सन्नागतं प्राप्तं मृत्युं न वेद ॥ २६ ॥

एवं वर्त्तमानः स द्विजः मृत्युकाले उपस्थिते सत्यज्ञो नारायणाख्ये पुत्र एव मतिं चकार मतिमासक्तामकरोदित्यर्थः ॥ २७ ॥

सोऽजामिलस्त्रीन्पुरुषान् दृष्ट्वाकुलेन्द्रियः व्याकुलचित्तः दूरे क्रीडासक्तं नारायणाह्वयं पुत्रं प्लावितेन प्लुतत्वं नीतेन प्लुतीकृतेनेति यावत् स्वरेणोच्चैरजुहाव नारायणेत्याहूतवान् कथम्भूतान् पुरुषान् पाशो हस्ते येषां भृशदारुणानत्युग्ररूपान् वक्राणि कुटिलानि तुण्डानि मुखानि येषाम् ऊर्ध्वमुखानि रोमाणि येषां तानात्मानं यमालयं प्रति नेतुमागतान् ॥ २८ ॥ २९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अजया प्रकृत्या ज्ञानस्य मीलो मीलनं तिरोभावो यस्य तथा पश्चादजाद्धरेः पूर्वपुण्यसम्पन्नज्ञानस्यामील उन्मीलनं यस्य स तथेत्युभयथा चाजामिलत्वं युक्तं न्हस्वत्वं छान्दसं सम्यक् समीचीन आचारः सदाचारः (१) ॥ २१ ॥

बन्दिग्रहणैश्चैवेदेवनैः "कितवः स्याद्नृतवादी कैतवं तस्य भाषणम्"इत्यभिधानात् असत्यव्यवहारैश्चौर्यैः परस्वापहरणव्यापारैः वृत्तिं वर्तनं जीवनोपायं देहिनं यातयामास मरणगमनाभिमुखमकरोत् शरीरयात्रायुक्तमकृतेति वा ॥ २२ ॥

अष्टाशीत्यायुषो याः समाः ये सम्वत्सराः तत्परिमाणक्षयाः कालः ॥ २३ ॥

अवमः कनिष्ठः ॥ २४ । २५ ॥

अन्तकं मृत्युम् ॥ २६ ॥

मृत्युकाले देहवियोगलक्षणकाले मृत्योः सर्वदोषापहरणे हरेरनुग्रहात् काले दत्तज्ञानलक्षणे उपस्थिते हृदि प्रकाशिते (२) तनये पूर्णाज्ञाने बाले पञ्चवर्षकल्पे प्रादेशमात्रे नारायणाह्वये मूर्तिविशेषे मतिं स्मरणसमर्थं चित्तं चकार भक्त्याऽस्मरदित्यर्थः अजामिलोऽपि स्मरणाद्भक्त्या मृत्योरमुच्यतेत्येतज्ज्ञानं मशेषाघहरं विदुरित्यत्र प्रमाणत्वेन वक्ष्यमाणमत्राप्युपयुज्यमिति ज्ञातव्यम् ॥ २७ ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पित्रोश्च दयित इति मातुरपि कृतार्थत्वमुक्तम् ॥ २४—३१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बन्दीश्रृङ्खलितजनता तथा तदाकर्षणेनेत्यर्थः । अक्षैश्च द्यूतैः कैतवैश्छलनादिभिश्च वृत्तिं जीविकां यातयामास पीडयामास ॥ २२ ॥

आयुषः सम्बन्धी महान् कालोऽत्यगात् स कियानित्यपेक्षायामाह । अष्टाशीत्या सङ्ख्यया युक्ताः समाः सम्वत्सराः ॥ २३ ॥

प्रवयसो वृद्धस्य ॥ २४ ॥

जरठो वृद्धः ॥ २५ ॥

खादन् चर्वयन् ॥ २६ ॥

---

(१) यत्र च ब्राह्मणाभासा मानवा मत्स्यहारिणः । तमब्धेर्निकटं देशं कान्यकुब्जम्वदन्ति हि ।

२ तनुविस्तारे । येतिज्ञानं समुद्दिष्टमिति धातुप्रमाणाज्ज्ञानवत्त्वं सूचितः ।

दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम् ।
प्लावितेन स्वरेणोच्चैराजुहावाकुलेन्द्रियः ॥ २९ ॥
निशम्य म्रियमाणस्य ब्रुवतो हरिकीर्त्तनम् ।
भर्तुर्नाम महाराज ! पार्षदाः सहसापतन् ॥ ३० ॥
विकर्षतोऽन्तर्हृदयाद्दासीपतिमजामिलम् ।
यमप्रेष्यान्विष्णुदूता वारयामासुरोजसा ॥ ३१ ॥
ऊचुर्निषेधितास्तांस्ते वैवस्वतपुरःसराः ।
के यूयं प्रतिषेद्धारो धर्मराजस्य शासनम् ॥ ३२ ॥
कस्य वा कुत आयाताः कस्मादस्य निषेधथ ।
किं देवा उपदेवा वा यूयं किं सिद्धसत्तमाः ॥ ३३ ॥
सर्वे पद्मपलाशाक्षाः पीतकौशेयवाससः ।
किरीटिनः कुण्डलिनो लसत्पुष्करमालिनः ॥ ३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतच्च तदुपलालनादि श्रीनारायणनामोच्चारणमाहात्म्येन सद्गतिरेवाभूदिति सिद्धान्तोपयोगित्वेन द्रष्टव्यमिति श्रीस्वामिचरणाः ॥ २७ ॥

त्रीनिति । अजामिलेन कृतानामनन्तानामपि पापानां कायिकवाचिकमानसत्वेन त्रैविध्याच्चय एव याम्या आगताः नारायणनाम्नश्चतुरक्षरत्वाच्चत्वारो विष्णुपार्षदा आगता इति ज्ञेयम् । ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

कान्यकुब्जे पुरे ॥ २१ ॥

वन्दीप्राणिनिग्रहक्रिया तया अक्षैश्च द्यूतेन कैतवैर्वञ्चनादिभिश्च गर्हितां वृत्तिं जीविकामास्थितः आश्रितः कुटुम्बं बिभ्रद्देहिनः यातयामास यतोऽशुचिः अतो दास्याः संसर्गदूषितः ॥ २२ ॥

तस्य दास्याः सुतान् लालयतः आयुषः सम्बन्धी महान् कालः अत्यगात् तमेवाह । अष्टाशीत्या सङ्ख्यया युक्ताः समाः सम्वत्सराः ॥ २३ ॥

तस्याजामिलस्य प्रवयसो वृद्धस्य भवमः कनिष्ठः ॥ २४ ॥

कलभाषिणि मधुरभाषिणि बद्धं हृदयं येन सः जरठो वृद्धः ॥ २५—२८ ॥

---

भाषा टीका ।

कान्यकुब्ज नाम के नगर में दासी का पति कोई अजामिल नाम का ब्राह्मण था वह दासी के सङ्ग से दुष्ट हो गया था उसके सदाचार सब नष्ट होगये थे ॥ २१ ॥

जुआ खेलने वाले कपटी बंदी चौर इन्होंके साथ खोटी वृत्तिकों करता था अपवित्र होकर कुटुंब के पोषण करने के वास्ते सब प्राणियों को पीडा देता था ॥ २२ ॥

हे राजन् ! इस प्रकार से अपनी दासीके पुत्रों के लाड करके निवास करते हुये उसके वडा भारी काल वीत गया अठासी वर्ष बीत गये ॥ २३ ॥

उस वृद्ध के दश पुत्र थे उनके मध्य में जो छोटा था उस बालक का नारायण नाम था वह माता पिता दोनों का बडा प्यारा था ॥ २४ ॥

मधुर वचन बोलने वाले उस बालक के ऊपर उसका मन बंधा था उसकी लीला को देखकर वह वृद्ध बहुत खुसी होता था ॥ २५ ॥

बालक के स्नेह मे बन्ध कर खाते पीते समय में उस को भी खवावै पिवावै इस प्रकार से उस मूर्खने आवते हुये काल को नहीं जाना ॥ २६ ॥

वह अज्ञानी इस प्रकार वर्तमान होकर रहा था इतने में मृत्यु काल उपस्थित होगया तब नारायण नाम के बालक में उसने मन लगाया ॥ २७ ॥

उसने पाशों को हाथ में लिये हुये बडे कठोर टेढे मुख वाले ऊपर को खड़े रामों वाले अपने लेनेको आये हुये तीन पुरुषों को देखा ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्लावितेन प्लुतत्वं नीतेन ॥ २९ ॥

हरिकीर्तनं निशम्यापतन् । यतस्तद्भर्तुर्नाम ॥ ३० ॥ ३१ ॥

पुरःसरा भृत्याः ॥ ३२ ॥

सर्वे च नूत्नवयसः सर्वे चारुचतुर्भुजाः ।
धनुर्निषङ्गासिगदाशङ्खचक्राम्बुजश्रियः ॥ ३५ ॥
दिशो वितिमिरालोकाः कुर्वन्तः स्वेन रोचिषा ।
किमर्थं धर्मपालस्य किङ्करान्नो निषेधथ ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्य नयनं निषेधथ ॥ ३३ ॥

वयं युष्मान्न जानीम इति न कोपः कार्यो यतोऽलौकिकाद्भुतरूपा यूयमित्याहुः । सर्वे इति सार्धाभ्याम् । स्रजस्व्यः पुष्करमालाः सन्ति येषाम् ॥ ३४ ॥

नूत्नं नवं वयो येषां निषङ्ग इषुधिः धनुर्निषङ्गादिभिः श्रीः शोभा येषां ते ॥ ३५ ॥

विगतं तिमिरमालोकश्चान्यस्य प्रकाशो यासु तथाभूता दिशः कुर्वन्तः भवतामेतदनुचितमित्याहुः । किमर्थमिति ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

म्रियमाणस्य भर्तुर्मुखतस्य मुखेन यद्धरिः कीर्त्यते येन तद्धरिकीर्तनम् इति नामविशेषणं तन्निशम्य श्रुत्वा हे महाराज ! भर्तुर्भगवतः पार्षदाः सहसा त्वरया अभ्यपतन्नाजग्मुरित्ि ॥ ३० ॥

तेऽभिपतिता विष्णुदूता ओजसा बलात्कारेण दासीपतिमजामिलमन्तर्हृदयाद्विकर्षतः यमप्रेष्यान् वारयामासुः ॥ ३१ ॥

एवं निषेधितास्ते वैवस्वतस्य यमस्य पुरः सराः भृत्याः ऊचुः उक्तिमेवाह । क इति । धर्मराजस्य यमस्य शासनमाज्ञां प्रतिषेद्धारो यूयं के ॥ ३२ ॥

कस्य वा सम्बन्धिनः कस्माल्लोकादागता अस्य कस्माद्धुणलेशाद्धेतोः धर्मराजस्य शासनं निषेधथ यूयं किं देवा उत उपदेवा गन्धर्वा अथवा सिद्धश्रेष्ठाः ॥ ३३ ॥

एवं पृष्ट्वा पुनस्तान् वर्णयन्तो यमशासनप्रतिषेधप्रयोजनं पृच्छन्ति । सर्वे इति त्रिभिः । सर्वे यूयं पद्मपलाशे इवाक्षिणी येषां पीतं कौशेयं कृमिकोशोत्थं वासो वस्त्रं येषां किरीटानि येषां सन्ति तथा कुण्डले येषां स्त इति तथा स्रजस्व्यः पुष्करमालाः कमलमाला येषां सन्तीति ॥ ३४ ॥

तथा सर्वे यूयं नूत्नं नवं वयः येषां ते चारवः सुन्दराश्चत्वारो भुजा येषां धनुरादीनां श्रीः शोभा येषां धनुरादिधरा इत्यर्थः तत्र निषङ्गः इषुधिरसिः खड्गः अम्बुजं कमलम् ॥ ३५ ॥

स्वेन रोचिषा दिशो वितिमिरालोका विगतं तिमिरं तमः यस्मात्स आलोकः प्रकाशो यासां तादृशीः दिशः कुर्वन्त इत्यर्थः धर्मराजस्य किङ्करानोऽस्मान् किमर्थं निषेधथ कस्मै प्रयोजनाय निषेधथेत्यर्थः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दूरे अपडाद्बहिः स्थितं जगत्सर्जनादिलीलाविलासोपेतं पुत्रा... नरकात्त्रातारं नारायणनामानमुच्चैः प्लावितेन चतुरादिमात्रा... स्वरेण पूर्वाचरितपुण्यप्रचयेनोत्पन्नया भक्त्याकुलेन्द्रियः ॥ २९ ॥

हरेः कीर्तनं किं (१) गुणरूपं नेत्याह । भर्तुरिति । ... स्वामिनो नारायणेति नामरूपं दोषहरणशीलं कीर्तनं यस्य ... स्तद्धरिकीर्तनं भर्तुर्नाम निशम्येति वा हरिरित्यक्षर... नारायणेत्यक्षरचतुष्टयमनेनोक्तमिति ज्ञापनायानन्वितत्वेनोक्ति... वा अनेन पुत्रस्नेहमन्तरेण प्राचीनादृष्टबलादुद्भूतया भक्त्या भग... नामसङ्कीर्तनं कृतमिति ज्ञायते ॥ ३० ॥

ओजसाऽत्रप्रभमेन बलेन वा "ओजोऽवष्टम्भबलयोः" इति याद... ॥ ३१ ॥ ३२ ॥

निषेधथ अस्य नयनमिति शेषः ॥ ३३ ॥

नूत्नवयसः षोडशवर्षवयसः धनुरादिभिः श्रीर्येषां ... तथा ॥ ३४ ॥ ३५ ॥

वितिमिरालोका इत्यत्र वीत्युपसर्गः प्रत्येकमभिसम्बध्... विगतानि तिमिराणि विगताः आलोकाः अन्यप्रकाशाश्च या... दिक्षु तास्तथा निरस्तान्धकारान्यप्रकाशा इत्यर्थः ॥ ३६ ॥ ३७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्लावितेन प्लुततयं नीतेन ॥ २९ ॥

हरिकीर्त्तनं निशम्यापतन् कथम्भूतस्य भर्तुर्नाम ब्रुवतः ॥ ३० ॥

अजामिलमिमं वैष्णवं मा विकर्षथ रे मा विकर्षथ यदि ... तुमिच्छथेति वारयामासुः ॥ ३१ ॥

पुरःसरा भृत्या अस्य नयनं निषेधथ ॥ ३२—३४ ॥

आकृत्या च यूयं परमशिष्टा एव लक्ष्यध्वे इत्याहुः । सर्वे इति ...

विगतं तिमिरमालोकश्चान्यदीयो यासु ताः कथं ... कथमशिष्टा इत्याहुः । किमर्थमिति ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्लावितेन दैन्याक्रान्तेन ॥ २९ ॥

पार्षदाः भर्तुर्नाम ब्रुवतः साङ्केत्यनामोच्चारणं कृत... हरिकीर्त्तनं निशम्य ज्ञात्वा सहसा आपतन् ॥ ३० ॥

ओजसा बलात्कारेण वारयामासुः ॥ ३१ ॥

वैवस्वतस्य यमस्य पुरःसराः भृत्याः धर्म एव राजा ... राजः अस्याजामिलस्य नयनं कस्मान्निषेधथ ॥ ३२ ॥ ३३ ॥

( १ ) अप्रधानम् ।

॥ श्रीशुक उवाच ॥

इत्युक्ते यमदूतैस्तैर्वासुदेवोक्तकारिणः।
तान् प्रत्यूचुः प्रहस्येदं मेघनिर्ह्रादया गिरा ॥ ३७ ॥

विष्णुदूता ऊचुः ॥

यूयं वै धर्मराजस्य यदि निर्देशकारिणः।
ब्रूत धर्मस्य नस्तत्त्वं यच्च धर्मस्य लक्षणम् ॥ ३८ ॥
कथंस्विद्ध्रियते दण्डः किंवास्य स्थानमीप्सितम्।
दण्ड्याः किं कारिणः सर्वे आहोस्वित्कतिचिन्नृणाम् ॥ ३९ ॥

यमदूता ऊचुः ॥

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः।
देवो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम ॥ ४० ॥
येन स्वधाम्न्यमी भावा रजःसत्त्वतमोमयाः।
गुणनामक्रियारूपैर्विभाव्यन्ते यथातथम् ॥ ४१ ॥
सूर्योऽग्निः खं मरुद्गावः सोमः सन्ध्याऽहनी दिशः।
कं कुः कालो धर्म इति ह्येते दैह्यस्य साक्षिणः ॥ ४२ ॥
एतैरधर्मो विज्ञातः स्थानं दण्डस्य युज्यते।
सर्वे कर्मानुरोधेन दण्डमर्हन्ति कारिणः ॥ ४३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

लसन्त्यः पुष्करमालाः सन्ति येषां ते ॥ ३४ ॥

नूत्नं वयो येषां ते निषङ्गः इषुधिः धनुर्निषङ्गादिभिः श्रीः शोभा येषां ते ॥ ३५ ॥

विगतः तिमिरं आलोक इतरप्रकाशश्च याभ्यस्ताः ॥ ३६-३७ ॥

---

भाषा टीका

सब उसकी इन्द्रियां व्याकुल होगईं तब दूर में खेल में आसक्त नारायण नामक पुत्रको बड़े ऊंचे स्वर से पुकारने लगा ॥ २९ ॥

हे महाराज! मरते समय में हरिनाम लेते सुनकर अपने पति का नाम जानकर हरिकीर्तन मानकर शीघ्रही विष्णु के पार्षद आगये ॥ ३० ॥

शरीर हृदय के मध्य में से दासी के पति अजामिल को खैंचते हुये देखकर यमदूतों को विष्णुदूतों ने अपने तेज से निवारण किया ॥ ३१ ॥

निषेध करते मात्र यमराज के दूत उन विष्णुदूतों से बोलने लगे कि धर्मराज के आज्ञा को निषेध करने वाले तुम कौन हो ॥ ३२ ॥

किसके दूत हो कहां से आये हो क्यों इसका लेजाना निषेध करते हो क्या देव हो अथवा उपदेव हो क्या कोइ सिद्धेश्वर हो ३३ ॥

आप सब कमल सरी के नेत्रों वाले हो पीत रेसम के वस्त्रधारण किये हो किरीट कुण्डल धारण किये हो प्रकाशमान कमलकी माला धारण किये हो ॥ ३४ ॥

सब नई अवस्था वाले हो सब सुंदर चार भुजों वाले हो धनुः तरकस तरवार गदा शंख चक्र कमल इनकी शोभा आपके हाथों में होरही है ॥ ३५ ॥

अपने तेजसे दिशों को अन्धकार रहित अधिक प्रकाश करते हो धर्मराजके किङ्कर हमलोगों को क्यों निषेध करते हो ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अहो दण्ड्यादण्ड्यादिज्ञानशून्या एते चोरा एवास्मद्विषा धर्मराजस्य किङ्करा इत्यनूनं वदन्तीति विस्मयेन प्रहस्य तान् प्रत्यूचुः मेघस्येव निर्ह्रादो ध्वनिर्यस्यास्तया ॥ ३७ ॥

तत्त्वं स्वरूपं लक्षणं प्रमाणम् ॥ ३८ ॥

कथंस्वित्केन प्रकारेण स्थानं विषयः कारिणः कर्मिणः नृणामिति नरा एव न पश्वादयः तेष्वपि कतिचिदेवेत्यर्थः ॥ ३९ ॥

वेदेन प्रणिहितो विहितो धर्मः वेदप्रमाणक इत्यर्थः अनेन

**सम्भवन्ति हि भद्राणि विपरीतानि चानघाः !**
**कारिणां गुणसङ्गोऽस्ति देहवान्नह्यकर्मकृत् ॥ ४४ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यो वेदप्रमाणकः स धर्मो यो धर्मः स वेदप्रमाणक इति स्वरूपं प्रमाणं चोक्तम् । यथाह जैमिनिः "चोदनालक्षणोऽर्थो धर्मः" इति व्याख्यातं च भट्टैः "द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते" इति अपृष्टस्याप्यधर्मस्य स्वरूपं लक्षणं च दण्डस्थानकथनायाहुः । तद्विपर्ययो यो वेदनिषिद्धः सोऽधर्मः निषेधश्च तस्मिन् प्रमाणमित्यर्थः वेदस्य प्रामाण्ये हेतुः वेदो नारायणादुद्भूतः स एव साक्षादित्युपचारः स्वयम्भूरिति च निःश्वासमात्रेण स्वयमेव भवतीति । तथा च श्रुतिः । "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद" इति ॥ ४० ॥

कोऽसौ नारायणस्तत्राहुः । येन स्वधाम्नि स्वस्वरूपेऽमी भावाः प्राणिनो गुणाः शान्तत्वादयः नामानि ब्राह्मण इत्यादीनि क्रियाश्चाध्ययनाद्या रूपाणि वर्णाश्रमादयस्तैर्विभाव्यन्ते विविच्यन्ते यथातथं यथावत् स नारायणः ॥ ४१ ॥

तथाप्यधर्मोऽनेन कृतइति कुतो ज्ञायते तत्राहुः । सूर्य इति । अहनी अहश्च रात्रिश्च कमुदकं कुः पृथ्वी देहस्य जीवस्य यथाहुः

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥

इति ॥ ४२ ॥

स्थानमाहुः । एतैर्निमित्तभूतैर्विज्ञातः दण्ड्यानाहुः । सर्वे इति ।४३।

विपरीतान्यभद्राण्यपि कर्मिणां सम्भवन्ति यतस्तेषां गुणसङ्गोऽस्ति यदि कश्चिदकर्ता स्यात्तर्हि तस्याभद्राणि न स्युर्न त्वेतदस्तीत्याहुः । नहि देहवानकर्मकृदस्तीति अतः सर्वे कर्मिणः कर्मिणां च पापस्यावश्यंभावित्वाच्चे सर्वे दण्डमर्हन्तीत्यर्थः ॥ ४४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्ता विष्णुपार्षदा आहुरित्याह मुनिः । इत्युक्ता इतीत्थं यमदूतैरुक्तास्ते वासुदेवाज्ञाकारिणः पार्षदाः प्रहस्य तान् यमदूतान् प्रतीदं वक्ष्यमाणं गर्जितमेघवद्गम्भीरया गिरा वाचयोचुः ॥ ३७ ॥

उक्तिमेवाह । यूयमिति । धर्मराजस्येति हेतुगर्भं धर्म एव यमरूपेणावस्थित इत्यर्थः तस्य यदि यूयं निर्देशकारिणः शासनकारिणः तर्हि यूयमपि धर्माधर्मस्वरूपज्ञा भवेयुरतो धर्मस्य तत्त्वं याथात्म्यं यदधर्मस्य लक्षणं स्वरूपं तच्च नोऽस्मभ्यं ब्रूथ । यद्वा । धर्मस्याधर्मस्य च तत्त्वं लक्षणं प्रमाणं चेत्यन्वयः ॥ ३८ ॥

तत्र दण्डनस्य प्रकारविषयादिकं पृच्छन्ति । कथं स्विदिति । दण्डः केन प्रकारेण क्रियते नित्यं दण्डस्य स्थानं विषयः किं स्थानमेव विकल्पयन्ति । दण्ड्या इति कारिणः । सर्वे नरा दण्ड्या आहोस्वित्कारिणां नृणां मध्ये कतिचिदेव ॥ ३९ ॥

एवमुक्ता यमदूता आहुः । वेदेत्यादिना । वेदेन प्रणिहितः कर्त्तव्यत्वेन बोधितो धर्मः अधर्मस्तु तद्विपर्ययः अकर्त्तव्यत्वेन बोधितः अनेन वेद एवायं धर्मोऽयमधर्म इत्यत्र प्रमाणमिति उक्त- मुक्तं वेदप्रणिहिततद्विपर्ययावेव धर्माधर्मयोः स्वरूपं चोक्तम् । ननु वेदस्यापि पौरुषेयत्वात्पुरुषस्य च भ्रमविप्रलम्भादि- दोषसम्भवात्कथं वेदस्य धर्मप्रमापकत्वमित्यत आह । वेदो नारायण इति । साक्षान्नारायणादेव वेदः प्रसूतः न पौरुषेयत्व- शङ्केति भावः कारणवाचिनो नारायणशब्दस्य कार्यकारणयो- रभेदात्कार्यभूते वेदे वृत्तिः नारायणाद्वेदस्याविर्भावो "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो" ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत इति च कार्यत्वप्रयुक्तानित्यत्वशङ्कां वारयति । स्वयम्भूरिति स्वयमित्यात्मनेत्यर्थः स्वयमात्मनैवाविकृतरूपेणैवाविप्लुतपूर्वानुपूर्व्यां प्रादुर्भवतीति स्वयम्भूरितिशुश्रुम यमादिभ्य इति शेषः ॥ ४० ॥

कोऽसौ नारायणः यतः प्रादुर्भूतो वेदस्तत्राह । येनेति । येन स्वधाम्नि स्वस्वरूपेऽन्तःप्रविश्य धारकेऽमी भावाः वेददेवमनुष्यादयः पदार्थाः रजआदिगुणत्रयप्रचुराः गुणनामक्रियारूपाणि यथायथं यथाकर्म भाव्यन्ते विभाव्यन्ते सृज्यन्ते स नारायण इत्यर्थः तत्र गुणाः शान्तिक्षमासौन्दर्यादयः नामानि वेदो देवो मनुष्यो ब्राह्मण इत्यादि क्रिया अर्थप्रत्यायनाध्ययनादि रूपाणि शब्दात्मकत्वार्थात्मकत्वादीनि ॥ ४१ ॥

भवतु धर्मे वेदः प्रमाणं वेदप्रणिहितो धर्मः वेदश्च नारायणादुद्भूतो नारायणस्त्वीदृशस्तथापि प्रतिक्षणसंसारिभिरनुष्ठितौ धर्माधर्मौ अनन्तौ कथं ज्ञायेते तत्राह । सूर्य इति । खमाकाशः अहश्च रात्रिश्चाहनी द्विवचननिर्देशसामर्थ्याद्रात्रिर्विवक्षिता कमुदकं कुः पृथ्वी स्वं साक्षाद्धर्मश्च खादयः तदधिदेवताः सूर्याग्निसोमाश्चैते चतुर्दश देहस्य देहस्य कर्म दैह्यं ब्राह्मणादित्वात्कर्मणि ष्यञ् बुद्धीन्द्रियमनःप्राणात्मकेन देहेन क्रियमाणस्य कर्मणः साक्षिणः साक्षाद्द्रष्टारः सूर्यादिमुखेन दैह्यो धर्मो ज्ञायत इत्यर्थः ॥ ४२ ॥

एतैरेवाधर्मोऽपि ज्ञायत इत्याहुः । एतैरधर्मो विज्ञात इति एतैर्ज्ञापितो ऽधार्मिको दण्डस्य विषय इत्याहुः । स्थानं दण्डस्य युज्यत इति दण्ड्याः किं कारिणः सर्वे इत्यस्योत्तरमाहुः । सर्वे कारिणः अतस्ते सर्वे कर्मानुरोधेन दण्डं प्रत्यर्हन्ति धर्मनिष्ठतामपि विषयपरवशत्वादधर्मोऽवर्जनीयः अधर्मफलानुभव- दशायां च ते दण्डमर्हन्तीत्यभिप्रायेण सर्वे कर्मानुरोधेन दण्डमर्हन्तीत्युक्तम् ॥ ४३ ॥

एतदेव प्रतिपादयन्ति । सम्भवन्ति हीति । हे अनघाः ! भद्राणि पुण्यानि विपरीतान्यपुण्यानि च सम्भवन्ति भद्राणि कुर्वताम् अभद्राण्यवर्जनीयतया आपतन्तीत्यर्थः कुतः यतस्तेषां कारिणां गुणेषु शब्दादिविषयेषु सङ्गः व्यासक्तिरस्ति विषयपरवशानां तेषामभद्राण्यपि सम्भवन्तीत्यर्थः धर्माधर्मपरिहारेण तूष्णीं वर्तमाना न दण्डमर्हेयुस्तत्राहुः देहवान्नह्यकर्मकृत् नहि देहवानकर्मकृदस्तीत्यर्थः स्वरूपतः कर्मपरिहारेणावस्थातुं न कोऽपि देही प्रभवेदिति सर्वेऽपि देहिनः कारित्वात्पर्यायेण दण्डमर्हन्तीति भावः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्त्वमनारोपितं रूपं लक्षणं व्यावर्तकधर्मम् ॥ ३८ ॥

कथंस्वित्केन प्रकारेण स्थानं देशः विषयो वा नृणां मध्ये कारिणः कर्मकारिणः सर्वेऽपि दण्ड्याः किमाहोस्वित् कतिचिदेव दण्ड्याः तत्रापि किङ्कारिणो वा किमकारिणो वा इति अत्र ॥ ३९ ॥

यथाधर्मस्य लक्षणमित्यत्राहुरित्याह । वेदेति । वेद एव धर्माधर्मौ मिथो व्यावर्त्य वक्तीत्यनेन प्रमाणं चोक्तं धर्मस्य तत्त्वं ब्रूते-त्यत्रोत्तरमाहुरित्याह । वेद इति । वेदो नारायणवक्तृकः तपःश्रुत्याद्यवेदवक्तृमुनिव्यावृत्त्यर्थं साक्षादिति तदुक्तम् ।

वेदानां प्रथमो वक्ता हरिरेव यतो विभुः ।
अतो विष्ण्वात्मका वेदा इत्याहुर्वेदवादिनः ॥ इति

देवदत्तवन्नारायणोऽपि किमन्यस्मादवाप्तदेह इति नेत्याह । स्वयम्भूरिति । अनेन नारायणवक्तृत्वेऽपौरुषेयत्वेनानारोपितरूपत्वाभावेन तदुक्तधर्माधर्मनिश्चयायोग इत्याशङ्का परिहृता । तेषां स्वयम्भूत्वेनाभिव्यक्तिरेव हरेर्न तु पुराणादिवदन्यथा रचितत्वम् "यावद्ब्रह्म विष्ठितं तावती वाक्" इति श्रुतेः ॥ ४० ॥

नन्वेतावता नारायण इतरस्मात्कथं व्यावृत्ततया ज्ञायत इति तल्लक्षणमाह । येनेति । स्वधाम्नि स्वाधारतया गुणाः शुक्लादयः नामान्यदनमहिषदेवदत्तादीनि क्रियाः पचनिपठनीत्यादयः रूपाणि द्विपाच्चतुष्पादित्यादीनि क्रिया पञ्चविधं कर्मेति वा गुणाः शमदमादयः रूपाणि शुक्लादीनि । यथातथमसाङ्कर्येण विभाव्यन्ते उत्पाद्यन्ते ॥ ४१ ॥

किं चास्य स्थानमीप्सितमित्यत्राहुरित्याह । सूर्योऽग्निरिति । गाव आपः "गौर्भूमिरापः" इतिवचनात् सन्ध्याचाहश्च सन्ध्याह्नी कालाभिमानी देवः स्वयं पापपुण्ययोः कर्ता देवशब्दवाच्यः श्रीहरिः कालः हृदयं मन इति क्ते स्वयमित्यनेन व्याख्याते धर्मस्येत्युपलक्षणम् अधर्मस्यापि साक्षादीक्षन्त इति साक्षिणः ॥ ४२ ॥

धर्माधर्मलक्षणपुण्यपापदर्शिभिरेतैः सूर्यादिभिः न धर्मो यस्य सोऽधर्मः अधर्म इति विज्ञातो यः पुरुषः स एव दण्डस्य स्थानं दण्ड्य इति युज्यते यमस्तु दण्ड एवाधिकृतः कथंस्वित् प्रियते दण्ड इत्यस्योत्तरमाहुरित्याह । सर्व इति । कारिणः पापकारिणः सर्वे क्रमानुरोधेन पापकर्मनारतम्यानुकूल्येन दण्ड्याः किं कारिणः सर्व इत्यत्राहुरित्यतो वा आह । सर्व इति । पापकारिणः सर्वे दण्डमर्हन्तीत्यनेन पापकारिण एव यमेन दण्ड्याः न पुण्यकारिण इति च ग्राह्यम् ॥ ४३ ॥

ननूभयेषामपि दृष्टश्रुतानुपामैहिके सुखदुःखफले जानताम् उभयविधकर्मसम्भवः कथमत्राह । सम्भवन्तीति । विपरीतानि पापविरुद्धपुण्यानि राज्याद्यवाप्तिनिमित्तसुखफलप्रदानि "आचतुर्दशाऽऽरम्भात्कर्माणि नियमेन तु । दशावराणाम्" इत्येतद्विशब्दगृहीतं धर्मस्यापि किं कारणमत्राह । कारणमिति । त्रिगुणसम्बन्ध एव कारणमिति भावः । नन्वेतल्लिङ्गशरीरेणैवैकान्त्यं तस्य कर्माकरणात् इत्याशङ्क्य स्थूलदेहविलक्षणोक्तमिति भावेनाह । देहवानिति । यो गुणसङ्गोऽपि पुण्यवान् कर्म करोति ज्ञानादिति चेत्तत्राह । देहवानिति वा । देही चेदकर्मकृत्वास्त्येव गुणानां तादृशशक्तिमत्त्वात् "कार्यते ह्यवशः" इत्युक्तेः ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वेदे प्रणिहितो विहित इत्यर्थः साक्षादिति स्वयमेवेत्यर्थः । अत एव स्वयम्भूः ॥ ४० ॥

येन परमेण हेतुना ॥ ४१ ॥

साक्षिणः आदित्यचन्द्रावित्यादिमन्त्रमयपरीक्षादौ तत्तद्राभद्रव्यञ्जकाः ॥ ४२ ॥

युज्यते भवतीत्यर्थः ॥ ४३—४५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रहस्येत्यरे धर्ममेव न जानीथ किमित्यस्मद्द्वयेन धर्मराजस्य किङ्करा इति ब्रूथ किन्तु यूयं प्रेतविशेषा एवास्मदुत्सन्नपतिताः कथमद्य जीविष्यथेति भावः ॥ ३७ ॥

ननु वयं धर्मराजस्य दूता भवाम एव के तावदस्माकं परिचिन्वन्तीत्यत आहुर्यूयमिति । निर्देशो निदेशः नोऽस्मान् प्रति तत्त्वं स्वरूपं लक्षणं प्रमाणम् ॥ ३८ ॥

कथमिति । दण्डस्य प्रकारप्रश्नः तिष्ठत्यस्मादिति स्थानमिति दण्डस्य कारणप्रश्नः कारिणः कर्मिण इति विषयप्रश्नः सर्वे इति किं पश्वादयोऽपि किं वा नृणां मध्ये कतिचिदिति तत्र व्यवस्थाप्रश्नः ॥ ३९ ॥

वेदेन प्रणिहितो विहितः वेदविहितत्वं धर्मत्वमिति धर्मस्वरूपं तत्र वेदविधिरेव प्रमाणमिति प्रमाणञ्चोक्तं दण्डकारणप्रश्नेनाधर्मस्यापि पृष्टत्वादधर्मस्य स्वरूपं प्रमाणञ्चाहुः । तद्विपर्ययो यो वेदनिषिद्धः सोऽधर्मः वेदनिषेध एव तस्मिन् प्रमाणमित्यर्थः स्वयम्भूरिति नारायणस्य निःश्वासमात्रेण स्वयमेव भवतीति तथा च श्रुतिः "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदः" इति ॥ ४० ॥

कोऽसौ नारायणस्तत्राहुः । येन स्वधाम्नि वैकुण्ठे स्थितेनैव अमी भावाः प्राणिनः सङ्कल्पमात्रेणैव गुणाः शान्तत्वादयः नामानि ब्राह्मण इत्यादीनि क्रिया अध्ययनाद्याः रूपाणि वर्णाश्रमादीनि तैर्विभाव्यन्ते विविधतया सृज्यन्ते यथायथं यथावत् ॥ ४१ ॥

कोऽपि न जानात्विति पापं पुम्भिर्विविक्ते क्रियते अत्र सूर्यादयो देहस्य जीवस्य साक्षिणो येनैव विभाव्यन्त इति पूर्वेणान्वयः अहश्च रात्रिश्च कमुदकं कुः पृथिवी यथाहुः ।

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मोऽपि जानाति नरस्य वृत्तम्

इति ॥ ४२ ॥

स्थानमाहुः । एतैरिति । दण्ड्यानाहुः सर्वे एव प्राणिनः ॥ ४३ ॥

सर्वेषां दण्ड्यत्वे हेतुः । सम्भवन्तीति । विपरीतान्यशुभानि पापानि यतः कारिणां कर्मिणां गुणसङ्गोऽस्त्येव गुणाश्च सत्त्वाद्याः पुण्यपापहेतव एव यावज्जीवमयं धार्मिकोऽधार्मिको वेति तु भूम्नैव व्यपदेशः । ननु कारिणामेव गुणसङ्ग इत्युच्यते । यदि कश्चिदकारी स्यात् स त्वदण्ड्य एवेति तत्राहुः । देहवानिति । देहधारी नरः अथ च कर्मरहित इति प्रत्यक्षविरुद्धमित्यर्थः ॥ ४४ ॥

---

येन यावान् यथाधर्मो धर्मो वेह समीहितः ।
स एव तत्फलं भुङ्क्ते तथा तावदमुत्र वै ॥ ४५ ॥
यथेह देवप्रवरास्त्रैविध्यमुपलभ्यते ।
भूतेषु गुणवैचित्र्यात्तथान्यत्रानुमीयते ॥ ४६ ॥
वर्त्तमानोऽन्ययोः कालो गुणाभिज्ञापको यथा ।
एवं जन्मान्ययोरेतद्धर्माधर्मनिदर्शनम् ॥ ४७ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किमर्थं धर्मराजस्य किङ्करान्नो निषेधयेत्यत्राहुः । यदि धर्मराजस्य निर्देशकारिणः निदेशकारिणस्तर्हि धर्मस्य तत्त्वं स्वरूपं लक्षणं प्रमाणं च नोऽस्मान् प्रति ब्रूत ॥ ३८ ॥

कथंस्वित् केन प्रकारेण दण्डः ध्रियते इति दण्डप्रकारप्रश्नः अस्य दण्डस्य तिष्ठत्यस्मादिति स्थानं हेतुरिति दण्डहेतुप्रश्नः ईप्सितं स्वरूपप्रमाणाभ्यां ज्ञातुमिष्टं वक्ष्यमाणस्य दण्डहेतोरधर्मस्यानेन स्वरूपप्रमाणप्रश्नः कारिणः कर्मिणः सर्वे दण्ड्याः किमाहोस्विन्नृणां मध्ये कतिचिदिति दण्डविषयप्रश्नः ॥ ३९ ॥

उत्तरमाहुः । वेदेत्यादिना । वेदैः प्रणिहितो विहितो हि धर्मः अनेन वेदविहितत्वं धर्मस्वामिति धर्मस्वरूपं विधिवाक्यं तत्प्रमाणमिति चोक्तम् अधर्मस्तद्विपर्ययः इत्यनेन वेदैर्निषिद्धत्वमिति स्थानस्य स्वरूपं निषेधवाक्यञ्च तत्प्रमाणञ्चोक्तं वेदस्यान्यप्रमाणनिरपेक्षत्वान्नित्यत्वान्नारायणात्मकत्वाच्च प्रामाण्यं प्राहुः वेदस्वरूपमन्यप्रमाणैरनपेक्ष्येण भगवन्निःश्वसितरूपेण भवति नित्यनिष्पन्नपदवाक्यरूपः प्रादुर्भवतीति स्वयम्भूः तथा च श्रुतिः "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतदृग्वेदः । ऋच सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुरजायत" इति । स्मृतिश्च "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति निःश्वासभूतस्य स्वरूपतो भिन्नस्यापि वेदस्य निःश्वासवतः सकाशात् अपृथक्स्थितिप्रवृत्तिमत्त्वेनाभिन्नत्वमाहुः । साक्षान्नारायण इति शुश्रुम इति ॥ ४० ॥

कोऽसौ साक्षान्नारायण इत्याकाङ्क्षायामाहुः । येन स्वधाम्नि सर्वाधारे स्वस्वरूपे अमी भावाः ब्रह्मादिस्तम्बपर्यन्ताः रजआदिप्रचुरास्तत्तदनुरूपैर्गुणादिभिर्यथातथं विविधतया भाव्यन्ते सृज्यन्ते स साक्षान्नारायणः ॥ ४१ ॥

अधर्मो देहिभिः क्रियमाणः केन ज्ञायते इत्यत्राहुः । सूर्य इति । अहनी अहश्च रात्रिश्च कमुदकं कुः पृथ्वी धर्मराजः देहस्य धर्मस्य साक्षिणः साक्षाद्द्रष्टारः ॥ ४२ ॥

एतैः सूर्यादिभिरधर्मोऽभिज्ञातः सन् दण्डस्य स्थानं युज्यते अधर्म एव दण्डपातने हेतुरित्यर्थः दण्डविषयमाहुः । सर्वे इति ॥ ४३ ॥

सर्वेषां दण्डविषयत्वे हेतुमाहुः । सम्भवन्तीति । कारिणां कर्तॄणां भद्राणि पुण्यानि अभद्राणि पापानि च सम्भवन्ति यतो गुणसङ्गो गुणकार्यरूपदेहेन्द्रियसम्बन्धोऽस्ति देहवांश्च अकर्मकृत् कर्मकर्तृत्वरहितो न अतः सर्वेषां गुणकार्यरूपदेहवतां पापकारित्वे सिद्धे तद्धेतुकदण्डविषयत्वमित्यर्थः ॥ ४४ ॥

---

### भाषा टीका ।

श्रीशुकदेवजी बोले इस प्रकार यमदूतों के कहने पर वासुदेव की आज्ञा करने वाले दूत हंसकर के मेघ सरी की गर्जनावाली गंभीर वाणी से उन यमदूतों से बोलने लगे ॥ ३७ ॥

विष्णु दूत बोले आप लोग यदि धर्मराज के आज्ञा करने वाले हो तो जो धर्मका तत्त्व होवे जो धर्मका लक्षण है सो हमसे कहो ॥ ३८ ॥

किस प्रकार दंड दिया जाता है कौन सा उस दंड के पुरुष का योग्य स्थान है क्या पापादि करने वाले सब ही दंड देने योग्य हैं अथवा मनुष्यों में कितने एकही हैं ॥ ३९ ॥

यमदूत बोले वेद में आज्ञा रूप विधि से प्रतिपादित है सोई धर्म है उससे जो विपरीत है वही अधर्म है वेद साक्षात् स्वयंभू होने से नारायण रूप ही है ऐसा सुनते हैं ॥ ४० ॥

जो अपने स्वरूप से रज सत्त्व तमोगुणमय इन प्राणियों को गुण नाम क्रिया रूपों से ब्राह्मणादि अध्ययनादिक क्रिया क्षत्रियत्वादिरूप इन प्रकार से यथा योग्य करते हैं वही श्रीमान् नारायण हैं ॥ ४१ ॥

सूर्य अग्नि आकाश पवन सरस्वती सोम दिन रात दिशा जल पृथिवी काल धर्म इनों के अभिमानी देवता सब जीव मात्र के किये पाप पुण्य के साक्षी हैं ॥ ४२ ॥

इनका जाना हुआ जो अधर्म वही दण्डका हेतु होता है पाप करने वाले सबही कर्मके अनुसार दण्ड योग्य हैं ॥ ४३ ॥

हे अनघो ! हो सबजीवों से भले बुरे कर्म होतेही हैं क्यों कि सब करने वाले गुणों के सङ्गी हैं जो देह धारी है बिना कर्म किये नहीं रहता है ॥ ४४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कथं स्विद्ध्रियते दण्ड इत्यस्योत्तरम् । येनेति । धर्मो वेति... अधर्मानुसारेण दण्डो धर्मानुसारेण सुखवदित्यर्थः ॥ ४५ ॥

मनसैव पुरे देवः पूर्वरूपं विपश्यति ।
अनुमीमांसतेऽपूर्वं मनसा भगवानजः ॥ ४८ ॥
यथाज्ञस्तमसा युक्त उपास्ते व्यक्तमेव हि ।
न वेद पूर्वमपरं नष्टजन्मस्मृतिस्तथा ॥ ४९ ॥
पञ्चभिः कुरुते स्वार्थान् पञ्च वेदाथ पञ्चभिः ।
एकस्तु षोडशेन त्रीन् स्वयं सप्तदशोऽश्नुते ॥ ५० ॥
तदेतत् षोडशकलं लिङ्गं शक्तित्रयं महत् ।
धत्तेऽनु संसृतिं पुंसि हर्षशोकभयार्तिदाम् ॥ ५१ ॥
देह्यज्ञोऽजितषड्वर्गो नेच्छन् कर्माणि कार्यते ।
कोशकार इवात्मानं कर्मणाच्छाद्य मुह्यति ॥ ५२ ॥
नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म गुणैः स्वाभाविकैर्बलात् ॥ ५३ ॥
लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत ।
यथायोनि यथाबीजं स्वभावेन बलीयसा ॥ ५४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न केवलं सूर्यादय एव धर्माधर्मज्ञापकाः किन्त्वर्थापत्तिरपीत्याहुः । यथेति । हे देवप्रवराः ! इह जन्मनि शान्तघोरमूढत्वेन वा सुखदुःखमिश्रत्वेन वा धार्मिकत्वादिना वा त्रैविध्यं भूतेषु यथोपलभ्यते तथान्यत्र जन्मान्तरेऽनुमीयते त्रैविध्यान्यथानुपपत्त्या कल्प्यते ॥ ४६ ॥

वर्तमानजन्मना पूर्वापरजन्मधर्माधर्मज्ञानं भवतीति सदृष्टान्तमाहुः । वर्तमानो वसन्तादिकालः अन्ययोर्भूतभविष्ययोर्वसन्तयोर्ये गुणाः पुष्पफलादयस्तेषामभिज्ञापको यथा एवमेतज्जन्म अन्ययोर्भूतभाविजन्मनोर्धर्माधर्मौ निदर्शयतीति तथा ॥ ४७ ॥

अयं च धर्माधर्मज्ञानप्रकारोऽन्येषां धर्मराजस्तु मनसैव सर्वं पश्यतीत्याहुः । पुरे संयमिन्यां स्थित एव देवो यमो देहे स्थितोऽन्तर्यामी वा जीवस्य पूर्वरूपं धर्माधर्मादियुक्तं विशेषेण पश्यति अन्वनन्तरमपूर्वं रूपं मीमांसते यद्यस्यानुरूपं तद्विचारयति । यतोऽसौ भगवानजः ॥ ४८ ॥

जीवस्त्वीश्वरेणोपस्थापितं वर्तमानं देहं पश्यति न तु पूर्वमपरं चेत्याहुः । यथेति । अज्ञोऽविद्योपाधिर्जीवस्तु व्यक्तमेव प्राचीनकर्माभिव्यक्तं वर्तमानमेव देहाद्युपास्तेऽहमिति मन्यते पूर्वमपरं वा न वेद अत्र हेतुः । नष्टा जन्मनां स्मृतिर्यस्य अत्र दृष्टान्तः तमसा निद्रया युक्तो यथा स्वप्नेऽपि व्यक्तमेव देहाद्युपास्ते न तु जाग्रद्देहादिपूर्वस्वप्नादिगतं वा तद्वदित्यर्थः ॥ ४९ ॥

एवं भूतस्य जीवस्य संसारं प्रपञ्चयति पञ्चभिः श्लोकैः । पञ्चभिः कर्मेन्द्रियैः स्वार्थानुपादानादीन् कुरुते पञ्च शब्दादीन्वेद पञ्चभिर्ज्ञानेन्द्रियैः षोडशेन मनसा सह सप्तदशः षोडशोपाध्यन्तर्गतोऽपि स्वयमेक एव सर्वेन्द्रियविषयप्रतिसन्धानात् त्रीन् ज्ञानकर्मेन्द्रियमनोविषयान् प्राप्नोति ॥ ५० ॥

तदेतल्लिङ्गशरीरं शक्तित्रयं गुणत्रयकार्यं महद्दनादि पुंसि जीवे अन्वनु संसृतिं धत्ते ॥ ५१ ॥

नेच्छन्ननिच्छन्नप्यनेनैव कर्माणि कार्यते कोशकारः कीटविशेषः मुह्यति निर्गमोपायं न जानाति ॥ ५२ ॥

कार्यत इत्यत्रानुभवं प्रमाणयन्ति । नहीति । गुणैर्गुणकार्यैरागादिभिः स्वाभाविकैः पूर्वकर्मसंस्कारोद्भूतैः ॥ ५३ ॥

कर्मवशेन च तदनुरूपो देहो भवतीत्याहुः । लब्ध्वेति । अव्यक्तमदृष्टं निमित्तं लब्ध्वा व्यक्ताव्यक्तं तदनुरूपं स्थूलं सूक्ष्मं च शरीरं भवति यथायोनि मातृसदृशं यथाबीजं पितृसदृशं स्वभावो वासना शुक्रशोणितयोरेकत्वेऽपि कर्मवासनया मातापितृसदृशो देहो भवतीत्यर्थः ॥ ५४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथं स्विद्ध्रियते दण्ड इत्यस्योत्तरमाहुः । येन गुणत्रयसंसृष्टेन जीवेन कर्त्रा यथा स्वस्वगुणोन्मेषानुसारेण धर्मोऽधर्मो वा यावान् देहसमीहितः देहेन बुद्धीन्द्रियमनःप्राणसङ्घातरूपस्य देहेन करणेन समीहितः स कर्ता तावदेव तत्फलं स्वर्गनरकादिरूपं धर्माधर्मफलममुत्र भुङ्क्ते न धार्मिको नरकं न वा अधार्मिकः स्वर्गं नाप्यल्पपापान्महद्दुःखं नाप्यल्पधर्मान्महत्सुखं भुङ्क्ते इत्यर्थः धर्मो यथेति दृष्टान्तो वा तत्रायमर्थः यथा धर्मो यावान् देहसमीहितः तावदेव तत्फलं सुखममुत्र स्वर्गे भुङ्क्ते एवमधर्मोऽपि यावांस्तावदेव तत्फलं दण्डरूपं भुङ्क्ते इति ॥ ४५ ॥

न केवलं परत्रैव कर्मानुसारेण तत्फलभोग अपि त्विहापि लोके

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।**

प्राचीनकर्मानुसारेणैव फलभोग उपलभ्यस्तद्वत्परलोकेऽप्यनुमीयत इत्याहुः। यथेति। हे देवप्रवराः! इह लोके भूतेषु गुणवैचित्र्यात्सत्त्वादिगुणोन्मेषनिमित्तप्राचीनसात्त्विकादिकर्मवैचित्र्यात्त्रैविध्यं सुखित्वदुःखित्वमूढत्वरूपं त्रैविध्यम् उपलभ्यते गुणवैचित्र्यनिमित्तमिदं त्रैविध्यमिति सर्वजनीनं ज्ञायते तथान्यत्र परलोकेऽपि गुणवैचित्र्यात्त्रैविध्यमनुभूयत इत्यर्थः ॥ ४६ ॥

एवं भूतभविष्यद्वर्त्तमानकालत्रयगोचरेषु कालेषु कर्मानुसारेणैव फलभोगः कर्म च धर्माधर्ममिश्ररूपं तच्च सत्त्वादिगुणोन्मेषनिमित्तमिति चोक्तम् इदानीं धर्मादिरूपं कर्म सत्त्वादिगुणोन्मेषनिमित्तमिति कथं ज्ञायत इत्यपेक्षायां कार्येण कारणमनुमीयत इति सदृष्टान्तमाहुः। वर्त्तमान इति। यथा वर्त्तमानः कालः सुखदुःखाद्यनुभवसहचरितः कालः अनयोर्द्धर्माधर्मयोर्गुणाः निमित्तभूताः सत्त्वादयस्तेषां सुखदुःखमोहरूपैः कार्यैरभिज्ञापकः यथा वर्त्तमानकालिकाधर्मादिनिमित्ताः सुखदुःखमोहाः स्वनिमित्तभूतानां धर्मादीनां सत्त्वादिगुणोन्मेषमूलत्वं ज्ञापयन्तीत्यर्थः एवमेतद्वर्त्तमानकालिकं दुःखादित्रयं जन्मान्ययोरन्यजन्मनोः बहुलवचनाद्विशेषणस्य परनिपातः पूर्वापरजन्मनोः धर्माधर्मयोर्निदर्शनं तयोः सत्त्वादिगुणोन्मेषमूलत्वाभिज्ञापकमित्यर्थः सत्त्वादयो हि धर्मादिरूपकर्मोपादानद्वारा तत्फलत्वेन सुखदुःखादीन् जनयन्ति न साक्षादतः सुखादीनां सत्त्वादिकार्यत्वात्कार्यभूतैस्तैः स्वनिमित्तभूतधर्मादीनां सत्त्वादिमूलत्वमनुमीयते कार्येण कारणानुमानादिति भावः ॥ ४७ ॥

येन यावान् यथाधर्म इति कर्मैव स्वानुरूपसुखदुःखादिकारणमित्युक्तं तस्य क्षणिकत्वात्कथं कालान्तरे सुखादिनिमित्तत्वमित्यत आहुः। मनसैवेति। पुरे देहे देवः स्वतेजसा दीप्यमानः न तु जीववत्कर्मणा सङ्कुचितज्ञान इत्यर्थः जीवान्तरात्मतयावस्थितः परमात्मा मनसैव नित्यासङ्कुचितापरिच्छिन्नधर्मभूतज्ञानेनैव पूर्वरूपं प्राक्तनजन्मसम्बन्धिपुण्यपापादिरूपं विपश्यति पुण्यपापादिरूपदर्शनेन चिकीर्षितानुग्रहनिग्रहवान् भवतीति भावः तथाजो भगवान् मनसापूर्वमनु प्राचीनं कर्मानुसृत्यैव मीमांसते तत्फलदानादिप्रकारं चिन्तयति कर्मणः क्षणिकत्वेऽपि तन्निमित्तानुग्रहनिग्रहवान् परमात्मा तदनुसारेण सुखदुःखादिफलदो भवतीति भावः ॥ ४८ ॥

यदि कर्मनिमित्तनिग्रहानुग्रहस्तदनुरोधिफलदः परमात्मा तर्ह्ययं जीवः परमात्मानुग्रहापादकं शुभमेव कर्माचरन् सुखमेव किं नाश्नुत इत्यत्राहुः। यथेति। तमसा युक्तः अन्धकारेणाभिभूतः अत एवाज्ञः यथा व्यक्तं शरीरमेवोपास्ते चिन्तयति न तु पूर्वं पुरः स्थितमपरं पृष्ठतः स्थितं च वेद निद्रया युक्तं स्वप्नेऽभिव्यक्तं देहाद्युपास्ते न तु जाग्रद्देहादि वेदेति वार्थः तथा जीवोऽपि तमसाज्ञानेन युक्तः देहात्माभिमानस्वतन्त्रात्माभिमानयुक्त इत्यर्थः अत एवाज्ञः कर्मणा सङ्कुचितज्ञानः व्यक्तं वर्त्तमानं देहमुपास्तेऽनुसन्धत्ते न तु पूर्वं प्राक्तनमपरं भविष्यच्च शरीरं वेद तत्र हेतुः नष्टा जन्मस्मृतिः पूर्वापरजन्मस्मृतिर्यस्य सः पूर्वापरजन्मविषयकस्मृत्यभावात्केवलवर्त्तमानदेहात्माभिमानशीलत्वाच्च तत्परवशोऽज्ञो जीवः प्रकृतेः देहस्य गुणोचितमेव कर्म करोति न तु परमात्मप्रसादापादकं शुभं कर्मेति भावः ॥ ४९ ॥

एवं जीवानाद्यविद्याकर्मवासनाभिस्तिरोहितस्वरूपाणां सत्त्वादिगुणत्रयसंसृष्टानां स्वस्वगुणोन्मेषनिमित्तधर्माधर्ममिश्ररूपेण कर्मणा सुखदुःखमिश्ररूपफलानुभवाय देवतिर्यङ्मनुष्यरूपेण संसरणं धर्मादिनिमित्तेश्वरानुग्रहहेतुकः सुखाद्यनुभव उक्तः अथेदं संसरणप्रकारं तद्धेतुं च प्रपञ्चयंस्तन्निस्तरणोपायमाहुः। पञ्चभिरित्यादिभिः सप्तभिः। पञ्चभिः कर्मेन्द्रियैः पाण्यादिभिः स्वार्थानुपादानगत्यादीन् पञ्च कुरुते अथ ननु पञ्चभिर्ज्ञानेन्द्रियैः श्रोत्रादिभिः पञ्च शब्दादीन्वेद केन करोति वेद च षोडशेन भूतपञ्चकदशेन्द्रियापेक्षया षोडशं मनः तेन मनःसंयुक्तैः पञ्चभिः कुरुते पञ्चभिर्वेद चेत्यर्थः कथंभूतः स्वयं जीव एक एव शरीरवदनेकद्रव्यसङ्घातरूपत्वाभावादेक इत्युक्तमिति जीवनानात्वमत्र निषिध्यत इति भ्रमितव्यं सप्तदशः उक्तषोडशतत्त्वापेक्षया सप्तदशः त्रीन् सुखदुःखमोहान् भुङ्क्तेऽनुभवतीत्यर्थः ॥ ५० ॥

तदेतत् षोडशकलं षोडश कला अवयवा यस्य तत् षोडशकलं षोडशतत्त्वात्मकं शक्तित्रयं शक्तीनां त्रयं यस्मिन्निति व्यधिकरणपदो बहुव्रीहिः प्रकाशक्रियावरणशक्तिमत्सत्त्वादिगुणत्रयात्मकमविद्याकर्मवासनारूपशक्तित्रयाश्रयं वा महत्कार्यदशायां स्थूलाकारं लिङ्गं सूक्ष्मशरीरं पुंसि जीवे हर्षशोकभयार्तिदानसंसृतिं गर्भजन्माद्यवस्थां परिवृत्तिरूपां धत्ते आपादयति षोडशकलात्मकलिङ्गसम्बन्धनिमित्तो जीवस्य संसार इति भावः ॥५१॥

एवं लिङ्गे संसृतिं पुंस्यादधति सत्ययं देही अज्ञः देहात्माभिमानवानत एवाजितषड्वर्गः अजितषडिन्द्रियकार्यः नेच्छन्नपि बलादित्यर्थः कर्माणि धर्माधर्ममिश्ररूपाणि कार्यते शक्तित्रयात्मकेन लिङ्गेनेति शेषः एवं कृतेन कर्मणा कोशकार इवात्मानं स्वस्वरूपमाच्छाद्य तिरोधाप्य मुह्यति देह एवाहमिति मोहं प्राप्नोति कोशकारः कीटविशेषः स यथा तन्तून् करण्डरूपेण सृष्ट्वा स्वनिर्गमोपायं न जानाति तद्वदिति दृष्टान्तार्थः ॥ ५२ ॥

नेच्छन् कर्माणि कार्यत इत्येतदेव प्रतिपादयति। न हि कश्चिदिति। कश्चिद्देही जातु कदाचिदपि अकर्मकृत् कर्माकुर्वन् तिष्ठति अन्ततस्तृणच्छेदादिकमपि कुर्वन्नेव तिष्ठतीति भावः स्वाभाविकैः स्वभावसिद्धैर्गुणैः सत्त्वादिभिर्बलात्कर्माणि विवशः कार्यते एवेत्यर्थः ॥ ५३ ॥

एवमव्यक्तं संसरता जीवेनाव्यक्तमनभिव्यक्तं निमित्तं संसृतिनिमित्तमवर्जनीयतया कृतं कर्म लब्ध्वा कर्मवासनाश्रयं सत् लिङ्गमिति कर्तृपदमध्याहार्यं व्यक्ताव्यक्तं स्थूलसूक्ष्मरूपं उत्पत्तिदशायां देहरूपेण स्थूलाकारं मरणादशायां सूक्ष्माकारं भवतीत्यर्थः यद्वाव्यक्तं मूलप्रकृतिरूपं प्रधानं कर्तृ तन्निमित्तं उत्सरणनिमित्तं कर्म लब्ध्वाऽवलम्ब्य व्यक्ताव्यक्तं भवति कदाचिद्देवादिदेहाकारेण षोडशकलात्मकत्वेनाव्यक्तं कदाचिद्देवादिदेहाकारेण उत्पत्तिः तस्यैव भवति एकस्य प्रधानस्य स्थूलावस्था उत्पत्तिः तस्यैव सूक्ष्मावस्था मरणमिति हि जन्ममरणयाथात्म्यविद आहुः तथा चोक्तं भगवता।

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत। अव्यक्तनिधनान्येव इति। यद्वा। कर्मानुसारेणैव पिपीलिकादिरूपाः सूक्ष्मा गजादिरूपाः स्थूलाश्च देहा भवन्तीत्यर्थः तद्व्यक्तमपि यथायोनि यथाबीजं स्यादित्याहुः। यथायोनीति। यथायोनि पश्वादियोन्यनतिक्रमेण यथा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कर्मानुसारेण। यद्वा। यथायोनि मातृसदृशं यथाबीजं पितृसदृशं च बलीयसा स्वभावेन सात्त्विकादिकर्मवासनारूपस्वभावेन भवतीत्यर्थः॥ ५४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

किमत इत्यतः फलितमाह। येनेति। अमुत्र परलोके॥ ४५॥

ननु यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥

इति वचनात्स एवामुत्र स्वकृतं भुङ्क्ते इति न घटत इत्यत्राह। यथेति। स्वकृतफलदातारो हरयन्ते प्रमाणात इति शेषः वाक्यप्रामाण्यानङ्गीकारेऽपि प्रत्यक्षगृहीतव्याप्तिकानुमानात्सिद्धमित्याह। त्रैविध्यमिति। सत्त्वादिगुणानां वैचित्र्याद्भूतेषु उत्तमाधममध्यमत्वभेदेन त्रैविध्यमुपलभ्यते यथा प्रत्यक्षेणेति शेषः अन्यत्र जन्मान्तरे परलोके वा॥ ४६॥

अनुमानस्य प्रामाण्यं ग्राहयितुम् एतदर्थं सदृष्टान्तमुपपादयतीत्याह। वर्तमान इति। वर्तमानः प्रतीयमानः वसन्तादिकालः अन्ययोः अतीतैष्यद्वसन्तयोः गुणानां फलपुष्पादिकार्याणामभिज्ञापको यथा एवमेतद्वर्तमानं जन्म धर्माधर्मज्ञापकमनयोरतीतानागतजन्मनोः यौ धर्माधर्मौ तौ नितरां दर्शयति ज्ञापयतीति धर्माधर्मनिदर्शनम्॥ ४७॥

इतोऽप्यनुमानं प्रमाणमिति ज्ञापयितुं जीवसमवेतधर्माधर्मसद्भावे हरेः प्रत्यक्षं प्रमाणयन्तीत्याह। मनसेति। पुरे जीवशरीरे स्थितो देवः श्रीनारायणः जीवस्य पूर्वरूपमपूर्वमनागतरूपं च तत्समवेतधर्माधर्मौ च स्वमनसैव विपश्यति। अपरोक्षीकृत्य वर्तते दर्शनस्य क्वापि बाधो नास्तीति लट्प्रयोगः अन्येषामदर्शनमेव किं नेत्याहुरित्याह। अनुमीमांसत इति। अजः परमेष्ठी भगवान्मनसानुमीमांसते तदनुग्रहेणालोच्य विचार्य पश्यतीत्यर्थः सर्वजीवसाधारणाजशब्दप्रयोगादन्ये देवा अपि यथायोग्यं जानन्तीति ग्राह्यम्। किञ्च जीवात्मनोऽपि धर्माधर्मसमवायपूर्वापररूपे वर्तमानसिद्धे इत्याहुरित्यतो वाह। मनसेति। सुरनरतिर्यगादिपुरे देवः क्रीडन् भगवान्भाग्यगुणोपेतः जीवः पूर्वानुभवसंस्कारसंस्कृतेन मनसैव पूर्वरूपं धर्माधर्मसमवायात्मकं रूपं विपश्यति विजानाति अपूर्वमनागतं मनसानुमीमांसते विचार्यानुमिनोति (१)"अजो ह्येको जुषमाणोऽनुशेते" इति श्रुतेः॥ ४८॥

पूर्वापररूपे जानाति चेत्तर्हि कथमन्यत्र मृतोऽन्यत्र जातोऽहमिति न जानातीत्याशङ्क्य श्रीनारायणानुग्रहमन्तरेण तादृशज्ञानं न सुलभं सर्वेषामित्यभिप्रेत्याह। यथेति। अज्ञोऽविवेकी अव्यक्तं कर्मनिमित्तदेहमेवोपास्ते देहात्मनोरभेदं कल्पयति। व्यक्तमेव पुरःस्थितमेव जानाति न तु पूर्वापरे इति वा। तत्र कारणमाहुरित्याह। तमसेति। विपरीतप्रत्ययापादकतमोगुणयुक्तत्वादत एव पूर्वापरं च न वेद यावज्जीवं सुखं जीवेदिति चार्वाकमतमात्रवर्पितामिति ज्ञायत इति भावः॥ ४९॥

देही चेत्कर्म करोत्येवेत्युक्तं तत्र कर्मकरणप्रकारं दर्शयति।

(१) अजः जीवः एकः कर्म जुषमाणः सेवमानः सन् शरीरे अनुशेते इतिश्रुत्यर्थः।

पञ्चभिरिति। पञ्चभिर्वागादिकर्मेन्द्रियैः स्वार्थान् स्वनिपयानभिवदनाशिल्पगतिविसर्गानन्दाख्यान् पञ्चभिः श्रोत्रादिज्ञानेन्द्रियैः पञ्च शब्दादीन् सप्तदश स्वयमेक आत्मा षोडशेन षोडशभेदयुक्तेन लिङ्गशरीरेण त्रीन् सत्त्वादिगुणैस्त्रिधा विभक्तं सुखं दुःखं मिश्रं च भुङ्क्ते "सत्त्वं सुखे संजयति" इत्यादेः देहात्मनोर्भेदप्रकाशनाय सप्तदश इत्युक्तम्॥ ५०॥

तर्हि कस्मात्संसारोऽस्येति तत्राह। तदेतदिति। षोडश कलाः श्रोत्रादीन्द्रियाणि मनश्च पञ्च भूतानि यस्मिंस्तत्तथा शक्तीनां प्रकाशक्रियाधरणलक्षणानां त्रयं यस्मिंस्तत्तथा सत्त्वादिगुणशक्तियुक्तमित्यर्थः अत एव महापुरुषार्थाभिभवसमर्थं त्रिशक्तियुक्तत्वाद्धर्षादिप्रदं लिङ्गं लिङ्गशरीरं पुंस्यनु स्वकर्मानुकूल्येन संसृतिं धत्त इत्यन्वयः। अधिकरणत्वमात्रप्रदर्शनाय पुंसीति सप्तमी तस्मादभिमाननिमित्तमिदं सर्वमित्यर्थः॥ ५१॥ ॥

आत्मनः संसारप्रकारं निरूपयति। देहीति। अवशीकृतषडिन्द्रियवर्गोऽनिच्छन्नपि कर्माणि कार्यते गुणाधीनषडिन्द्रियैरिति शेषः। विधिगृहीतवद्बलात्कार्यमाणश्चेत्स्वसंपद्विपद्वो वेत्ति किं नेत्याह। कोशकार इति। यथा कोशकारः क्रमिः स्वकर्मणा निर्मितकोशेनात्मानमाच्छाद्य कोश एव वसन्मुह्यति कोशनाशनाशौ न जानाति तथा देह्यपि कर्मणात्मानमाच्छाद्य मुह्यतीत्यर्थः॥५२॥

मोक्षोऽस्यास्तीति कुतो ज्ञायत इत्याशङ्क्य पुनः पुनः कर्मकरणादित्यभिसन्धिमन्तः स्वोक्तार्थे प्रमाणं दर्शयन्तीत्याह। नहीति। ॥ ५३॥

जननमरणे अपि देहस्यैव आत्मनस्तदभिमानादुपचर्यन्ते इत्याहुरित्याह। लब्ध्वेति। संसारनिमित्तमव्यक्तं प्रकृतिकार्यं शरीरं लब्ध्वा व्यक्ताव्यक्तमुत जन्ममरणमपि भवति जीवस्योपचार इति शेषः। "देहस्य सर्वथा नाशादनाशाच्चेतनस्य च" इत्यादेः निमित्तं कारणमव्यक्तं प्रकृतिं लब्ध्वा प्राप्य व्यक्ताव्यक्तं जन्ममरणात्मकं शरीरं भवति जीवस्येति शेष इति वा कथं यथायोनि पश्वादियोनिमनतिलङ्घ्य यथाबीजं कर्मराशिमनतिक्रम्य सत्त्वादिनिमित्तस्वभावेन॥ ५४॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अनुमीयते मरणैरपीति शेषः॥ ४६॥

वर्त्तमानः पूर्वसन्ध्यादिर्वसन्तादिर्वा स यथा पूर्वभागे स्वपूर्वकालस्य रात्र्यादेः शिशिरादेर्वा गुणांशान् व्यञ्जयति। उत्तरभागे च स्वपरकालस्य दिवसादेर्निदाघादेर्वा तथा वर्त्तमानजन्मापि स्वपूर्वजन्मादेरित्यर्थः॥ ४७॥

भगवानज इति यमपेच तद्विभूतित्वाद्भक्त्या तदभेदनिर्देशः॥ ४८—५३॥

लब्ध्वेति अदृष्टेन निमित्तेन ये योनिबीजे प्राप्येते तत्स्वभावानुसारेण देहो भवतीत्यर्थः॥ ५४॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कथं दण्ड इत्यस्योत्तरमाहुः। यावान् यत्प्रमाणकः यथा येन प्रकारेण अधर्मो धर्मो वा कृतः। तत्फलं दुःखं सुखं वा तावत्तत्प्रमाणकं तादृशप्रकारेणैवेति शेषः॥ ४५॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सत्त्वादिगुणसङ्गः प्रत्यक्षमेवोपलक्ष्यतामित्याहुः । इह लोके त्रैविध्यं पुण्यपापमिश्रकर्मत्वेन नृणां त्रैविध्यं यथा तथैवान्यत्र परलोकेऽन्यजन्मनि वा सुखित्वमिश्रत्वदुःखित्वेन त्रैविध्यम् अनुमीयते शास्त्रदृष्ट्यैवेति भावः ॥ ४६ ॥

वर्त्तमानजन्मनैव पूर्वापरजन्मधर्माधर्मज्ञानं भवतीति सदृष्टान्तमाहुः । वर्त्तमानो वसन्तादिकालः अन्ययोर्भूतभविष्यतोर्वसन्तयोर्ये गुणाः पुष्पफलादयस्तेषामभिज्ञापको यथा एवमेतज्जन्मैव अन्ययोर्भूतभाविनोर्जन्मनोर्धर्माधर्मौ निदर्शयतीति तथा ॥४७॥

अयञ्च धर्माधर्मज्ञानप्रकारस्त्वन्येषां प्रायिकः धर्मराजस्तु मनसैव निश्चितमेव सर्वं पश्यतीत्याहुः । पुरे संयमन्यां स्थित एव देवो यमः पूर्वरूपं पूर्वजन्मस्वरूपं धर्माधर्मादियुक्तं पश्यति । अनु अनन्तरमपूर्वं वर्त्तमानं भाविरूपं मीमांसते । यद्यस्यानुरूपं तद्विचारयति भगवान् सर्वज्ञः अजो ब्रह्मतुल्यः ॥ ४८ ॥

जीवस्य तु पूर्वापरज्ञानाभावात् पापादौ प्रवृत्तिर्न चित्रमित्याहुः । यथा तमसा युक्तः पश्वादिर्व्यक्तं वर्त्तमानदेहमेव उपास्ते यथेष्टाहाराद्यैः सुखयति तथैव नरोऽपि नष्टा जन्मनैव स्मृतिर्यस्येति पूर्वापरज्ञानाभावे हेतुः ॥ ४९ ॥

ततश्च पञ्चभिः कर्मेन्द्रियैर्यथेष्टं स्वार्थान् कुरुते पञ्चभिर्ज्ञानेन्द्रियैः पञ्च शब्दादिविषयभोगाननुभवति षोडशेन मनसा इन्द्रियेण तु त्रीन् ज्ञानकर्मेन्द्रियमनोविषयान् अश्नुते प्राप्नोति स्वयं सप्तदशो जीवः ॥ ५० ॥

सप्तदशस्य तस्य तदेतल्लिङ्गशरीरं कर्तृ शक्तित्रयं गुणत्रयकार्यं पुंसि जीवे अनुसंसृतिं धत्ते महत् दुर्निवारम् ॥ ५१ ॥

अनेन लिङ्गेनैव कदाचित् कर्म कर्तुमनिच्छन्नपि बलात् कर्माणि कार्यते ततश्च कोशकारः कीट इव मुह्यति निर्गमोपायं न जानाति ५२

स्वाभाविकैः पूर्वसंस्कारोद्भूतैः ॥ ५३ ॥

एवञ्च निमित्तमदृष्टं लब्ध्वा तत्कर्मानुसारेण व्यक्ताव्यक्तं स्थूलं सूक्ष्मञ्च शरीरं भवति यथायोनि क्वचिन्मातृसदृशं यथाबीजं क्वचित् पितृसदृशं क्वचिदुभयसदृशं स्वभावेन हिंस्रत्वसौम्यत्वेन च युक्तम् ॥ ५४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कथंस्विद्ध्रियते दण्ड इत्यस्योत्तरमाहुः । येनेति । यावान् स्वरूपतो यथा येन प्रकारेण शान्तघोरादिस्वभावेन इह लोके येन धर्मः कृतः स एव तावदेव तथा तेनैव प्रकारेण तत्फलं भुङ्क्ते येनाधर्मो वा यावान् यथा समीहितः स एव तावदेव तथैव तत्फलं भुङ्क्ते एवेत्यन्वयः ॥ ४५ ॥

यावानितिशब्देन तावदितिशब्देन च धर्माधर्मरूपस्य फलस्य च सुखदुःखरूपस्य स्वरूपतस्त्रैविध्यं सूचितं तत्स्फुटतयाहुः । यथेति । भूतेषु प्राणिषु गुणानां सत्त्वादीनां वैविध्यात्त्रैविध्यम् उत्तममध्यमाधमसाधनकर्तृत्वमुपलक्ष्यते तथान्यत्र फलभोगकालेऽपि त्रैविध्यं त्रिविधफलभोक्तृत्वमनुमीयते ॥ ४६ ॥

धार्मिकमधार्मिकं वा वर्त्तमानं जन्म पूर्वापरयोरपि जन्मनोर्धर्ममधर्मं च प्रायः ज्ञापयतीत्याहुः । वर्त्तमान इति । वर्त्तमानः वसन्तादिः कालः अन्ययोर्भूतभविष्यवसन्तादिकालयोः गुणाभिज्ञापकः पुष्पादिसमृद्धिसूचको यथा एवमेतज्जन्म... अन्ययोः पूर्वापरयोः धर्माधर्मौ निदर्शयति ज्ञापयतीति धर्मनिदर्शनम् ॥ ४७ ॥

परमेश्वरस्तु सर्वेषां सर्वदा सर्वं धर्मादिकं जानातीत्याहुः । पुरे तत्तत्प्राणिदेहे वर्त्तमानोऽजः तत्तत्पुरसम्बन्धिजन्मादि... रहितः परमेश्वरः मनसैव स्वसङ्कल्पेनैव पूर्वरूपं धर्मादि... विपश्यति तथा अपूर्वं धर्मादिकमनुमीमांसते स हि धर्मराजादिद्वारा धर्मादिफलं ददाति न तु तत्र विघ्नङ्करोतीति भावः ॥ ४८ ॥

जीवस्तु अनादिमायापरियुक्तरूपत्वात् स्वकृतं धर्मादिकं पूर्वमपरं च न जानाति प्राप्तमप्राप्तं धर्माधर्मफलं सेवते ... कर्मभिः स्वर्गनरकादौ भ्रमतीत्याहुः । यथाज्ञ इति षड्भिः । ... अनादितो मायया सङ्कुचितज्ञानः व्यक्तं वर्त्तमानमेव कर्मफलमुप... निषेवते पूर्वं भूतजन्मसम्बन्धि अपरं भविष्यजन्मसम्बन्धि न ... यतो नष्टा जन्मनां स्मृतिर्यस्य सः यथा तमसा निद्रया युक्तो ... स्वप्ने दृष्टमेव सेवते न तु पूर्वं पूर्वरात्रिगतमपररात्रि... वेद तद्वत् ॥ ४९ ॥

पञ्चशब्देन पञ्चभूतमयो देहोऽत्र गृह्यते तमाश्रित्येति ... पञ्चभिः कर्मेन्द्रियैः पाण्यादिभिः करणैः स्वार्थानादानादीन् कुरुते पञ्चभिः ज्ञानेन्द्रियैः श्रोत्रादिभिः करणैः स्वार्थान् शब्दादीन् वेद षोडशेन मनसा करणेन त्रीन् सुखं दुःखं मध्यमं ... हर्षं शोकं भयञ्चाश्नुते भुङ्क्ते अचेतनानां देहादीनां भोक्तृत्वा... सम्भवात्स्वयमित्युक्तं सप्तदशः तेभ्यो भूतेन्द्रियमनोभ्यो वि... लक्षणः एकस्तेषां स्वामी जीवः ॥ ५० ॥

तदेतत् पूर्वोक्तं षोडश कला अवयवा यत्र तल्लिङ्गशरीरं शक्तित्रयं शक्तीनां सत्त्वादीनां गुणानां त्रयं त्रिगुणमयमित... तन्महद् दृढं पुंसि जीवे अन्वनु संसृतिं धत्ते योजयति ... सृतौ निमित्तं भवतीत्यर्थः ॥ ५१ ॥

अज्ञः अत एव अजितषड्वर्गः नेच्छन्ननिच्छन्नपि कर्माणि कार्यते लिङ्गदेहेनेति शेषः कर्मणा स्वकृतेन कोशकारः कीट... विशेष इवात्मानमाच्छाद्य मुह्यति मुक्त्युपायहरिभजनं हित्वा संसृतिप्रापकाणि कर्माणि करोति ॥ ५२ ॥

एतदेवाहुः । नहीति ॥ ५३ ॥

अव्यक्तं भगवच्छक्तिभूतां प्रकृतिं लब्ध्वानादितोऽव्यक्त... स्वभावेन वासनामयेन यथायोनि यथाबीजं मातृपितृसदृशं ... व्यक्तं मनुष्यादिरूपमव्यक्तं च सूक्ष्मकीटादिरूपं शरीरं ... तत्तच्छरीरतादात्म्यं प्राप्नोति न त्वात्मानं विजानाति एवमनादि... जीवः संसारे भ्रमतीत्यर्थः ॥ ५४ ॥

---

भाषा टीका ।

इहांपर जिसने जितना जैसा धर्म किया होवै अथवा अधर्म किया होवै सोई पुरुष उसी प्रकार के उस पाप पुण्य के फल परलोक मे भोगता है ॥ ४५ ॥

हे देवश्रेष्ठ हो ! इस लोक मे गुणोंकी विचित्रतासे ... तीनप्रकार दीखते हैं सबप्राणियोंमे तैसाही परलोकमें ... फलका अनुमान होता है ॥ ४६ ॥

एष प्रकृतिसङ्गेन पुरुषस्य विपर्ययः।
आसीत् स एव न चिरादीशसङ्गाद्विलीयते ॥ ५५ ॥
अयं हि श्रुतसम्पन्नः शीलवृत्तगुणालयः।
धृतव्रतो मृदुर्दान्तः सत्यवान् मन्त्रविच्छुचिः ॥ ५६ ॥
गुर्वग्न्यतिथिवृद्धानां शुश्रूषुर्निरहङ्कृतः।
सर्वभूतसुहृत्साधुर्मितवागनसूयकः ॥ ५७ ॥
एकदासौ वनं यातः पितृसंदेशकृद्द्विजः।
आदाय तत आवृत्तः फलपुष्पसमित्कुशान् ॥ ५८ ॥
ददर्श कामिनं कञ्चिच्छूद्रं सह भुजिष्यया।
पीत्वा च मधु मैरेयं मदाघूर्णितनेत्रया ॥ ५९ ॥
मत्तया विश्लथन्नीव्या व्यपेतं निरपत्रपम्।
क्रीडन्तमनुगायन्तं हसन्तमनयान्तिके ॥ ६० ॥
दृष्ट्वा तां कामलिप्तेन बाहुना परिरम्भिताम्।
जगाम हृच्छयवशं सहसैव विमोहितः ॥ ६१ ॥
स्तम्भयन्नात्मनात्मानं यावत्सत्त्वं यथाश्रुतम्।
न शशाक समाधातुं मनो मदनवेपितम् ॥ ६२ ॥
तन्निमित्तस्मरव्याजग्रहग्रस्तो विचेतनः।
तामेव मनसा ध्यायन् स्वधर्माद्विरराम ह ॥ ६३ ॥
तामेव तोषयामास पित्र्येणार्थेन यावता।
ग्राम्यैर्मनोरमैः कामैः प्रसीदेत यथा तथा ॥ ६४ ॥

भाषा टीका।

जैसे वर्तमान वसंतादि कालसे वीते तथा आनेवाले वसंतादि कालका पुष्पादिकों का अनुमान होता है तैसे ही वर्तमान जन्मसे भूत भविष्यत् जन्म का अनुमान होता है तैसे उहां के धर्माधर्मों का अनुमान होता है ॥ ४७ ॥

यम अन्तर्यामी देवतो अपने स्थानमे रहकर सब के धर्माधर्म पूर्वरूप को जान जाता है सो अज भगवान् पहिले ही मन से विचार कर लेता है ॥ ४८ ॥

जैसे एकही शरीरमे पशुआदि जीव वर्तमान कालको ही जानता है भूत भविष्यत् नहीं जानता है तैसे यह मनुष्य अपने जन्मों के स्मरण न रहने से दूसरे जन्म को नहीं जानता है ॥४९॥

सोलहसे मन के सहित सतरह वां एक जीव पांच कर्मेन्द्रियों से गमनादि कार्यों को करता है पांच ज्ञानेन्द्रियोंसे पांच शब्दादिकों को जानता है कर्मेन्द्रिय ज्ञानेन्द्रिय मन इन के विषयों को इसी प्रकार भोगता है ॥ ५० ॥

यह इस प्रकार षोडश कला वाला तीन गुण शक्ति वाला अति कठिन यही लिंग शरीर पुरुष को हर्ष शोक भयदुःख देने वाले संसार को प्राप्त करता है ॥ ५१ ॥

जो जीव अज्ञानी है काम क्रोधादि षड्वर्ग को नहीं जीतता है तो नहीं इच्छा करता है तौ भी कर्म कराया जाता है जैसे कोशकार कीडा अपने आप से शरीर को ढांक कर मरता है तैसे कर्मोंसे यह जीव मोहित होकर बंध जाता है ॥ ५२ ॥

कोई भी किसी वखत मे कभी क्षण मात्र भी विना काम किये नहीं रहता है परवश होने से स्वाभाविक गुणों से जबरदस्ती उसको कर्म करना पडता है ॥ ५३ ॥

पुण्य पाप रूप निमित्त को प्राप्त होकर बलवान स्वभाव से माता पिता के बीज योनि के सदृश स्थूलसूक्ष्मरूप को धारण करता है ॥ ५४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

संसारचक्रमुपसंहरन्तो मुक्तिप्रकारमाहुः। एष इति। ईशसङ्गात्परमेश्वरभजनात् ॥ ५५ ॥

तदेवं सामान्यतो धर्मादिनिर्णयमुक्त्वा प्रस्तुतस्याजामिलस्याधर्म

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रपञ्चयन्तो दण्ड्यत्वमाहुः । अयं हीति यावदध्यायसमाप्ति । तत्र द्वाभ्यां तत्पूर्ववृत्तान्तानुवादोऽन्यायातिरेकप्रदर्शनार्थः शीलं सुस्वभावो वृत्तं सदाचारो गुणाः क्षमादयस्तेषामालयः ॥ ५६ ॥

निरहङ्कृतो निरहङ्कारः ॥ ५७ ॥

तत आवृत्तो वनात्परावृत्तः ॥ ५८ ॥

भुजिष्यया भोगस्त्रिया दास्या मैरेयं मधु पैष्टीं सुरां पीत्वा मदेनाघूर्णिते नेत्रे यस्याः ॥ ५९ ॥

विशेषेण श्लथन्ती नीवी यस्यास्तया सह व्यपेतं स्वाचाराद्भ्रष्टम् ॥ ६० ॥

कामेन कामोद्दीपकेन तदङ्गरागेण हरिद्रादिना लिप्तेन ॥ ६१ ॥

सत्त्वं धैर्यं श्रुतं ज्ञानं तद्बलेन स्तम्भयन्नपि मदनेन कम्पितं मनः समाधातुं नियमितुं शक्तोऽ नाभूत् ॥ ६२ ॥

तद्दर्शनमेव निमित्तं यस्य स्मरव्याजग्रहस्य तेन ग्रस्तः विचेतनो गतस्मृतिः ॥ ६३ ॥

यावता समग्रेण ॥ ६४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रपञ्चितं संसरणप्रकारं तद्धेतुं चोपसंहरति । एष इति । पुरुषस्य जीवस्य प्रकृतिसङ्गेन यो विपर्ययः संसारः स एष एवम्विधः अथ संसरणनिस्तरणोपायमाहुः । असदिति । असदस्मीऽर्वाचीनः स एवं विपर्यय एव । यद्वा । असदपुरुषार्थरूपः प्रकृतिकार्यरूपो वा परमार्थतो जीवेऽविद्यमानो वा विपर्ययस्य प्रकृतिसङ्गप्रयुक्तत्वस्यानुपदमेवोक्तत्वादीशसङ्गादीश्वरभक्त्या न चिराद्दाशु विलीयते विलीनो भवति निवर्त्तत इत्यर्थः ॥ ५५ ॥

एवं प्रश्नान् परिहृत्य प्रकृतस्याजामिलस्य दण्ड्यत्वज्ञापनाय तद्वृत्तिं प्रपञ्चयन्ति । अयं त्वित्यादिना यावदध्यायम् । अयमजामिलः तावच्छ्रुतसंपन्नः वेदशास्त्राध्ययनसम्पन्नः शीलं सुस्वभावः वृत्तं सदाचारः गुणाः शान्त्यादयः एषामाश्रयः धृतं व्रतं स्त्रीसङ्गराहित्यात्मकब्रह्मचर्यरूपं येन मृदुः कोमलहृदयः दान्तो जितबाह्येन्द्रियः सत्यवागृतवादी मन्त्रवित्साविद्यादिमन्त्रोपासकः शुचिः सदा पवित्रः ॥ ५६ ॥

गुर्वादीनां शुश्रूषुः सेवकः अनहङ्कृतः । उक्तगुणकृताहङ्काररहितः सर्वभूतानां सुहृत्प्रियकारी साधुः परकार्यसाधकः मितवाग्यथोचितवक्ता अनसूयकः गुणेषु दोषानाविष्कारकः ॥ ५७ ॥

एवम्भूतोऽसौ द्विजः कदाचित्पितुर्निदेशं पित्रा आदिष्टं प्रयोजनं करोतीति तथा वनं प्रति गतः ततो वनात्फलादीनादायावृत्तः ॥ ५८ ॥

पुनर्गच्छन् तत्र वने भुजिष्यया दास्या सह वर्त्तमानं कश्चित्कामिनं शूद्रं दृष्टवान् कथम्भूतया दास्या मैरेयं मधु पैष्टीं सुरां पीत्वा मदेन मैरेयमधुमदेनाघूर्णिते भ्रमन्ती नेत्रे यस्यास्तया ॥ ५९ ॥

मत्तत्वात एव विश्लथन्नीव्या विश्लथन्ती स्रंसमाना नीवी धृतवस्त्रग्रन्थिर्यस्यास्तया कथम्भूतं शूद्रं व्यपेतं सत्पथादपेतं वाह्किमित्यर्थः अत एव निरपत्रपं निर्लज्जमेवम्भूतमनयोक्तविधया भुजिष्यया सहान्तिके समीप एव क्रीडादिकं कुर्वन्तं शूद्रम् ॥ ६० ॥

कामेन गर्वितेन शूद्रेण कर्त्रा बाहुना भुजेन परिरम्भ[...] मालिङ्गितां तां दासीं च दृष्ट्वा हृच्छयस्य मनसिजस्य व[...] जगाम प्राप कथम्भूतः सहसा बलाद्दैवेन स्वकीयदुरदृ[...] विमोहितः ॥ ६१ ॥

यावत्सत्त्वं यावद्बलं यथाश्रुतं गुरुमुखाच्छ्रुतं मनोनिग्रहप्र[...] रमनतिक्रम्यात्मना विवेकेनात्मानं मनः स्तम्भयन्नियमय[...] मदनवेपितं मनः समाधातुं नियन्तुं न श[...] नाशक्नोत् ॥ ६२ ॥

सा दासी निमित्तं यस्य सः स्मर एव व्याजग्रहः क[...] पिशाचस्तेन ग्रस्तः गृहीतः अत एव विचेतनः विगतपूर्वस्मृ[...] तां दासीमेव मनसा चिन्तयन् स्वधर्मात्संध्योपासनादेर्विरत[...] धर्मं तत्याज हेति खेदे अहो एवम्भूतस्येदृशी दशा प्राप्तेति ॥ ६३ ॥

यावता कृत्स्नेन पित्र्येण पितृसम्बन्धिना अर्थेन वि[...] तां दासीमेव तोषयामास तथा ग्राम्यैर्ग्रामेषु साधुभिरभि[...] षितैः कामैर्वस्त्राभरणादिभिर्यथा प्रीयेत सा तथा तां तोष[...] यामास ॥ ६४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं संसारप्रसङ्गमुक्त्वा निवृत्त्युपायमाहुरित्याह । एष इति । य एषः पुरुषस्य विपर्ययः संसारः प्रकृतिसङ्गेनासीत् स ए[...] ईश्वरसङ्गादीश्वरसेवालक्षणान्न चिरात्क्षिप्रं विलीयते समूलं विनि[...] द्यते ॥ ५५ ॥

विद्वत्त्वादिगुणसम्पन्नत्वेन बुद्धिपूर्वकमेव पापकारित्वेन प्राय[...] श्चित्तानधिकारित्वेन नाममात्रोच्चारणस्य प्रायश्चित्तत्वे सर्व[...] मपि मुक्तिप्रसङ्गेन दण्ड्यजनाभावेन युष्मत्स्वाम्याज्ञाकारि[...] यमस्याज्ञालङ्घनदोषप्रसक्त्याधिकारहानिलक्षणानर्थः स्यादित्य[...] यमसकाशं गत्वायं तत्र दण्डेन शुद्धो भवत्वित्याहुरित्याह । अयं चेति । मन्त्रविद्वेदज्ञः ॥ ५६ ॥ ५७ ॥

आवृत्तो निवृत्तः ॥ ५८ ॥

भुजिष्यया दास्या मैरेयाख्यं मधुविशेषम् ॥ ५९ ॥

विश्लथन्ती नीवी वस्त्रग्रन्थिर्यस्याः सा तथा ॥ ६० ॥

स्वेदकम्पादिलक्षणजनकेन कामेनं लिप्तेन वशीकृतेन हृच्छ[...] कामः तस्य वशम् ॥ ६१ ॥

यावत्सत्त्वं यथाशक्ति यथाश्रुतं "शूद्रयां योनौ पतेद्रेत[...]" इत्यादिशास्त्रश्रवणमनुसृत्य मदनवेपितं कामबीजावपनस्य क्षेत्र[...] भूतम्वा ॥ ६२ ॥

स्मर इति व्याजग्रहेण ग्रस्तः विचेतनः शास्त्रविस्मृ[...] ज्ञानः ॥ ६३ ॥

ग्राम्यैः कामभोगसाधनैः काम्यन्त इति कामाः वि[...] यास्तैः ॥ ६४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एष इति । भयं द्वितीयाभिनिवेशतः स्यादितिवत् ॥ ५५ ॥ अत्र प्रकरणे तादृशस्वधर्मनिष्ठयापि पातान्न रक्षितोऽ[...]

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

किन्तु भक्त्याभासेनैव स रक्षित इति यमदूतवाक्यद्वारा श्रीगुरुदेवस्याभिप्रायः॥ ५६—६८॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

एष इति। प्रकृतिपुरुषयोः सङ्गाभ्यामेव बन्धमोक्षौ भवत इत्यर्थः॥ ५५॥

तदेवं धर्माधर्मादिस्वरूपमुक्त्वा प्रस्तुतस्याजामिलस्य दण्डव्यवस्थापनायाधर्मं प्रपञ्चयन्ति। अयं हीत्यादिना। तत्राप्यतिशयानौचित्यं ज्ञापयितुं श्लाघ्यां धार्मिकत्वमाहुः। शीलं सुस्वभावः वृत्तं सदाचारः गुणाः क्षमादयः॥ ५६—५८॥

भुजिष्यया दास्या सम्भुज्यमानया मैरेयं पैष्टं मधु मद्यं व्यपेतं लोकभयरहितमनया सह॥ ५९॥ ६०॥

कामलिप्तेन कामोद्दीपकहारिद्रिरसलिप्तेन॥ ६१॥

आत्मानं मनः सत्त्वं धैर्यं श्रुतं ज्ञानम्॥ ६२॥

विरराम हेति। तादृशस्वधर्मनिष्ठया ज्ञानेन च स तथा पतनाद्रक्षितुं शक्यो नाभूत् किन्तु नाम्न आभासेनापि तादृशाधःपातादपि रक्षित्वा वैकुण्ठं प्रस्थापयामास इति प्रकरणार्थेन धर्मज्ञानभक्तीनां प्रातिस्विकं बलं दर्शितम्॥ ६३॥

यावता अर्थेन स्थितं तावतैव इति शेषः। सा यथा प्रसीदेत तथा प्रचेष्टतेति शेषः॥ ६४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मुक्त्युपायमाहुः। एष उक्तप्रकारः पुरुषस्य जीवस्य विपर्ययः जन्ममरणलक्षणः संसारः ईशे भगवति यः सङ्ग आसक्तिर्भक्तिः तस्माद्विलीयते निवर्त्तते॥ ५५॥

प्रस्तुतमाहुः। अयमित्यादिना। श्रुतसम्पन्नः गुरुमुखाच्छ्रुतेन ज्ञानेन संयुक्तः शीलं सुस्वभावः वृत्तं सदाचारः गुणाः क्षमादयस्तदालयः॥ ५६॥

एवं बहुगुणाढ्योऽपि निरहङ्कृतः गताहङ्कारः॥ ५७॥

ततो वनादावृत्तः परावृत्तः॥ ५८॥

मैरेयं पैष्टं मधु मद्यं पीत्वा भुजिष्यया दास्या सह क्रीडन्तमनुगायन्तं हसन्तं कश्चिच्छूद्रमन्तिके निकटे ददर्शेति शेषोऽन्वयः। मदेनाघूर्णिते नेत्रे यस्यास्तया॥ ५९॥

विशेषतः श्लथन्ती नीवी यस्यास्तया अनया नयरहितया धर्ममर्यादारहितया कथम्भूतं व्यपेतं धर्ममर्यादातो भ्रष्टम्॥ ६०॥

कामलिप्तेन मदनाविष्टेन शूद्रेण कर्त्रा बाहुना करणेन परिरम्भितां दृष्ट्वा सहसैव विमोहितो हृच्छयवशं जगाम मदनाविष्टोऽभूत्॥ ६१॥

आत्मना चित्तेन आत्मानं मनः यावत्सत्त्वं धैर्यं यथा श्रुतं यथोपदेशं स्तम्भयन्नपि मदनेन वेपितं कम्पितं मनः समाधातुं न शशाक॥ ६२॥

तद्दर्शननिमित्तेन स्मरव्याजेन मदनमिषेणाग्रहेण ग्रस्तचेतनो नष्टस्मृतिः स्वधर्माद्विरराम विमुखोऽभूत्॥ ६३॥

पित्र्येण पितृसम्बन्धिना अर्थेन वित्तेन ग्राम्यैः कामुकजनप्रियैः कामैर्धनालङ्कारादिभिर्यया सा प्रसीदेत तथा तामेव तोषयामास॥ ६४॥

---

भाषा टीका।

प्रकृति के संग से जो यह पुरुष का विपर्यय होता है सोई थोड़े काल में ईश्वर के संग से नष्ट होजाता है॥५५॥

यह अजामिल वेद पढ़ा था शील आचरण गुणों वाला था व्रतों का धारण करने वाला था कोमल चित्तवाला था इन्द्रियों को जीतने वाला सत्य बोलने वाला मन्त्रों को जानने वाला पवित्र था॥ ५६॥

गुरु अग्नि अतिथि वृद्धों की सेवा करने वाला अहङ्कार रहित सर्व भूतों का सुहृत साधु थोड़े बोलने वाला निन्दा नहीं करने वाला था॥ ५७॥

एक दिन यह पिता की आज्ञा से वनको गया फल फूल समिध कुशों को लेकर उहां से जब आता था तब॥ ५८॥

मदिरा के पीने से मद के मारे जिसके नेत्र घूमरहे हैं ऐसी एक व्यभिचारिणी स्त्री के साथ क्रीडा करते हुये किसी शूद्र को रस्ते में इसने देखा॥ ५९॥

नीचे का पहिरा वस्त्र जिसका खुलता सा था ऐसी मतवाली व्यभिचारिणी के पास में उसी के साथ क्रीडा करता था गाता था भ्रष्ट आचार वाला था निर्लज्ज था हसता था ऐसे शूद्रको इसने देखा॥ ६०॥

काम उद्दीपन करने वाले चन्दनादि से लिप्त भुजा में आलिङ्गन करी हुई उस स्त्री को देखकर मोहित होगया शीघ्रही काम के वश होगया॥ ६१॥

जितना इसका शास्त्र सुनने का ज्ञान था जितनी बुद्धि थी तिससे मन से चित्तको बहुत रोका तो भी कन्दर्प से कंपित मनको नहीं समाधान कर सका॥ ६२॥

उसके निमित्त से कन्दर्परूपी ग्रह से ग्रसित होगया चेतना नहीं रही मन से उसी नारी का ध्यान करने से अपने धर्म से निवृत्त होगया॥ ६३॥

ग्राम्य मनोरम कामों से और पिता का जितना धन मिला तिस से जैसे उस का सन्तोष होवे तैसे उस नारी को सन्तुष्ट करता था॥ ६४॥

---

विप्रां स्वभार्यामप्रौढां कुले महति लम्भिताम् ।
विससर्जाचिरात् पापः स्वैरिण्यापाङ्गविद्धधीः ॥ ६५ ॥
यतस्ततश्चोपनिन्ये न्यायतोऽन्यायतो धनम् ।
बभारास्याः कुटुम्बिन्याः कुटुम्बं मन्दधीरयम् ॥ ६६ ॥
यदसौ शास्त्रमुल्लङ्घ्य स्वैरचार्यविगर्हितः ।
अवर्तत चिरं कालमघायुरशुचिर्मलात् ॥ ६७ ॥
तत एनं दण्डपाणेः सकाशं कृतकिल्बिषम् ।
नेष्यामोऽकृतनिर्वेशं यत्र दण्डेन शुद्ध्यति ॥ ६८ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां षष्ठस्कन्धे
अजामिलोपाख्याने श्रीविष्णुयमपुरुषसम्वादे
प्रथमोऽध्यायः ॥ १ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

लम्भितां परिणीताम् ॥ ६५ ॥ ६६ ॥
अघरूपमायुर्यस्य मलमेव तदीयमन्नादिकमस्तीति मलात् ॥ ६७ ॥
अकृतनिर्वेशमकृतप्रायश्चित्तम् अस्यैव च हितार्थं नेष्याम इत्याहुः । यत्रेति ।॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अप्रौढामरजःप्रादुर्भावां प्रियां सुन्दरीं महति कुले सत्कुले लम्भितां लब्धां भार्यामचिरादाशु विससर्ज पापः पापाचारः स्वैरिण्या कटाक्षेण करणेन विद्धा विनाशिता धीर्विवेको यस्य सः ॥ ६५ ॥
न्यायतोऽन्यायतो वा यतस्ततो धनमुपनिन्ये आनीतवान् मन्दधीरयमजामिलः कुटुम्बिन्याः पुत्रवत्याः कुटुम्बं पुत्रादिरूपं बभार पुपोष ॥ ६६ ॥
एवं तस्य वृत्तिमभिधायावश्यमस्य दण्डं प्रत्यर्हतास्तीत्याहुः । यद्यस्मादसावजामिलः शास्त्रपथमतिक्रम्य स्वेच्छाचारी आर्यैः शिष्टैर्गर्हितः अघायुः पापाभिवृद्ध्यायुष्कः दासीसङ्गरूपान्मलाच्छिलमशुचिः सन् चिरङ्कालमवर्तत ॥ ६७ ॥
ततः कृतं किल्बिषं पापं येन अकृतः निर्वेशः निष्कृतिर्येन तमेनं दण्डपाणेर्यमस्य सकाशं प्रति नेष्यामः प्रापयिष्यामः सकाशं विशिनष्टि । यत्र दण्डपाणेः सकाशे दण्डेन नरकानुभवरूपेण शुद्ध्यति ॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(१) अप्रौढामनवाप्तयौवनाम् ॥ ६५ ॥ ६६ ॥
स्वैरचारी निरङ्कुशत्वेन वर्तमानः अघायुः पापजीवनः मलद्रागादिदोषात् ॥ ६७ ॥
अकृतनिर्वेशं यावता निर्वेशेन पापशुद्धिः स्यात्तावत्प्रायश्चित्तं न कृतवांस्तं यत्र नीतो यमभटकृतदण्डेन शुद्धो भवति ॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
प्रथमोऽध्यायः ॥ १ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
प्रथमोऽध्यायः ॥ १ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

लम्भितां तस्याः पित्रा विचार्यैव दत्तामित्यर्थः । स्वैरिण्यपाङ्गेति सन्धिरार्षः ॥ ६५ ॥ ६६ ॥
अघरूपमघार्थं वा आयुर्यस्य सः । मलं वेदयोग्यविरुद्धमन्नीति सः अकृतप्रायश्चित्तं यत्र शुद्ध्यतीत्यस्योपकार एव प्रवर्तमानानस्मान् कथं वारयथेति भावः ॥ ६७ ॥ ६८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठस्य प्रथमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १ ॥

(१) अनाप्तयौवना प्रौढा विप्रा चान्यगिचारिणीति प्रमाद

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रौढां किशोरीं लम्भितां परिणीतां स्वैरिणिपापाङ्गेत्यत्र ...धिरार्थः अपाङ्गेन विद्धा धीर्यस्य सः ॥ ६५ ॥

बभार पुपोष ॥ ६६ ॥

स्वैरचारी स्वेच्छाचारी अघरूपमायुर्यस्य सः मलं दास्या ...च्छिष्टमन्नादिकमत्तीति मलाचतः अवर्तत ॥ ६७ ॥

ततो हेतोः अकृतनिर्वेशमकृतप्रायश्चित्तं दण्डपाणेः सकाशं ...षामः यत्र दण्डेन शुद्ध्यति पवित्रो भविष्यतीत्यर्थः ॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

प्रथमोऽध्यायः ॥ १ ॥

---

भाषा टीका।

ब्राह्मणी युवती अपनी भार्या जोकि उत्तम कुल मे प्राप्त है तिसको उस पापी ने व्यभिचारिणी के नेत्रों के देखने मे मन के फसजाने से छोडदिया ॥ ६५ ॥

इस कुबुद्धि ने इधर उधर से न्याय से अन्याय से धन लाकर उस कुटुंबवाली के कुटुंब को पोषण किया ॥ ६६ ॥

जिस हेतु से यह ब्राह्मण शास्त्र के मर्यादा को उल्लङ्घन करके सत्पुरुषों से निंदित होकर यथेच्छाचारी होगया पापी होकर बहुत काल पर्यन्त संसार मे रहा है ॥ ६७ ॥

तिस हेतु से पाप करने वाले इस को दण्ड पाणि यमराज महाराज के पास लेजांयगे इसने प्रायश्चित्त भी नही किया है तब उहां दण्ड से शुद्ध होजायगा ॥ ६८ ॥

इति श्रीभागवत षष्ठस्कन्ध प्रथम अध्यायका

भाषानुवाद लक्ष्मणाचार्यकृत

समाप्त ॥ १ ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे प्रथमोऽध्यायः समाप्तः ॥ १ ॥



## ॥ द्वितीयोऽध्यायः ॥

——०:*:०——

श्रीशुक उवाच ।

(१) एवं ते भगवद्दूता यमदूताभिभाषितम् ।
उपधार्याथ तान् राजन् ! प्रत्याहुर्नयकोविदाः ॥ १ ॥

विष्णुदूता ऊचुः ।

अहो कष्टं धर्मदृशामधर्मः स्पृशते सभाम् [२] ।
यत्रादण्ड्येष्वपापेषु दण्डो यैर्ध्रियते वृथा ॥ २ ॥
प्रजानां पितरो ये च शास्तारः साधवः समाः ।
यदि स्यात्तेषु वैषम्यं कं यान्ति शरणं प्रजाः ॥ ३ ॥
यद्यदाचरति श्रेयानितरस्तत्तदीहते ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ४ ॥
यस्याङ्के शिर आधाय लोकः स्वपिति निर्वृतः ।
स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः ॥ ५ ॥
स कथं न्यर्पितात्मानं कृतमैत्रमचेतनम् ।
विश्रम्भणीयो भूतानां सघृणो द्रोग्धुमर्हति ॥ ६ ॥
अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ ७ ॥
एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ।
यदा [३] नारायणायेति जगाद चतुरक्षरम् ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वितीये वैष्णवैर्याम्यान्नाममाहात्म्यमद्भुतम् ।
श्रावयित्वा द्विजो विष्णोर्लोकं नीत इतीर्यते ॥ १ ॥

नयकोविदाः न्यायनिपुणाः ॥ १ ॥

धर्मदृशां सतां सभामधर्मः स्पृशति तदाहुः । यत्र सभायां यैर्धर्मदृग्भिस्तेषां तां सभाम् ॥ २ ॥

पितरः पितृवत्पालकाः शास्तारोऽनुशिक्षकाः वैषम्यमदण्ड्यदण्डनम् ॥ ३ ॥

एतत्प्रवर्तितमधर्ममन्योऽपि करिष्यतीति महत्कष्टमभूदित्याहुः । यद्यदिति । श्रेयान् श्रेष्ठः ॥ ४ ॥

विश्वस्तघातादपीत्याहुः । यस्येति द्वाभ्याम् । निर्वृतो निश्चिन्तः ॥ ५ ॥

विश्वासेन नितरामर्पित आत्मा येन तं विश्रम्भणीयो विश्वसनीयः सघृणश्चेत् ॥ ६ ॥

नन्वस्य पापिनो दण्डे किमर्थमाक्रोशः क्रियते तत्राहुः । अयं हीति । यद्यस्माद्विवशोऽपि हरेर्नाम व्याजहारोच्चारितवान् केवलम्प्रायश्चित्तमात्रं हरेर्नामापि तु स्वस्त्ययनं मोक्षसाधनमपि

"सकृदुच्चारितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति" ॥

इति स्मृतः ॥ ७ ॥

(१) एतच्च । (२) सताम् । (३) नारायणेति जगादेति श्रीविजय० ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु कर्मसाद्गुण्यकरं हरेर्नामेतियुक्तम् ।

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

इत्यादिवचनात् स्वातन्त्र्येण तदघनिवर्तकं हरेर्नाम कथं स्यात्तत्राहुः । एतेनैवेति । अघोनः अघवतः मघवच्छन्दवद्रूपं यत् आ इति च्छेदः आङ्‌इषदाभासमात्रं चतुरक्षरं यन्नाम जगाद एतेनैव केवलेन चतुरक्षरमित्यनेनाधिक्यं च दर्शितं कथं जगाद नारायण आय आगच्छ इत्येवं विक्रोशरूपेण पुत्राह्वानेन अयं भावः कर्माङ्गत्वेऽपि हरिनाम्नः खादिरत्वादिवत्संयोगपृथक्त्वेन सर्वप्रायश्चित्तार्थत्वं युक्तमेव तथा हि "अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव,,इत्यादिभिः पुराणे तावत्सहस्रशो नाम्नः स्वातन्त्र्यमवगम्यते न चैतेऽर्थवादा इति शङ्कनीयं विधिशेषत्वाभावात् न च विध्यश्रवणादन्यशेषता कल्पनीया "यदाग्नेयोऽष्टाकपालो भवति" इत्यादिवदप्राप्तार्थत्वेन विधिकल्पनोपपत्तेः मन्त्रेषु च "मर्ता अमर्त्यस्य ते भूरिनाम मनामहे विप्रासो जातवेदसः । आस्य जानन्तो नामचिद्विवक्तन" इत्यादिषु नाम्नस्तपोदानादिसर्वधर्माधिक्यमवगम्यते उपपादितं च मन्त्रार्थवादानामपि स्वार्थे प्रामाण्यं देवताधिकरणे तस्माच्छ्रीनारायणनामाभासमात्रेणैव सर्वाघनिष्कृतं कृतं स्यादिति

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं यमदूतैरुक्ता विष्णुदूता आहुरित्याह मुनिः । एवमिति । हे राजन् ! एवं यमदूतैर्विशेषेण भाषितमुपधार्य अवणेन मनसि धृत्वा न्यायनिपुणा भगवद्दूतास्तान् यमदूतान् प्रत्याहुः ॥ १ ॥

उक्तमेवाह । अहो इत्यादिना । "स वेद परमं गुह्यं धर्मस्य भगवान् यमः"इत्यन्तेन अहो कष्टं प्राप्तं किं तद्धर्मदर्शां सभामधर्मः स्पृशते कोऽधर्मस्तत्राहुः । यत्र यमस्य सभायामपापेष्वत एवादण्ड्येषु दण्डः यैर्भवादृशैर्ध्रियते कार्यतेऽयमेवाधर्म इति भावः ॥ २ ॥

धर्माधर्मविभागेन शास्तृणां वैषम्यमनुचितमित्याहुः प्रजानामिति । ये शास्तारो भवादृशाः ते समाः वैषम्यरहिताः साधवः दोषापाकरणरूपपरकार्यसाधका अत एव प्रजानां पितरः हितकारिणः यदि ईदृशेषु भवत्स्वेव वैषम्यं स्यात्तर्हि प्रजाः कं शरणं प्राप्नुवन्ति ॥ ३ ॥

युष्मादृशः श्रेष्ठः कृत्स्नविद्यद्यत्कर्माचरति तत्तदेव कर्मेतरोऽकृत्स्नविदपीहते चेष्टते सः श्रेयान् यदेव शास्त्रं प्रमाणं कुरुते प्रमाणमिति मन्यते तदेवेतरो लोकोऽनुवर्तते अतः श्रेयसां स्वानुष्ठानेन धर्मप्रवर्तकानां वेदानुवर्त्तिनामिदमदण्ड्यदण्डनमनुचितमित्यर्थः ॥ ४ ॥

किञ्च सापराधलोकस्य दण्डयिता यमः न त्वपापिनामिति विश्वासविषय एव प्राकृतवद्वैषम्येणानपराधिनोऽपि दण्डयिता स्यात्तर्हि विश्वस्तघातकतादोषः प्रसज्यत इति लोकपरिपाटीमुखेनाहुः । यस्येति । यस्य विश्वसनीयस्याङ्के उत्सङ्गे शिरः आधाय विन्यस्य यो लोको जनः निर्वृतः सुखितः स्वपिति तमेव लोकं स एव भूतानां विस्रम्भणीयः कृपावांश्च कथं द्रोग्धुमर्हतीत्यन्वयः निर्वृतो लोकः कथम्भूतः यथा पशुः तद्वत् स्वयं धर्ममधर्मं वा न वेद किन्तु केवलं ममायं हितकारीत्येवं वेदेति भावः ॥ ५ ॥

लोकं कथम्भूतं न्यर्पितात्मानं नितरामर्पितः समर्पितः आत्मा देहो येन कृतं भेत्रे विश्वासो येन अचेतनं न विद्यते चेतना विवेको यस्य अकेतनमिति पाठे न विद्यते केतनं शरणमन्यद्यस्य तम् ॥ ६ ॥

नन्वस्य पापिनो दण्डे किमर्थमाक्रोशः क्रियते तत्राहुः । अयं हीति । जन्मनां कोटिभिरर्जितानामंहसां पापानां कृतः निर्वेशः प्रायश्चित्तं येन तथाभूतोऽयं कोऽसौ निर्वेशः तत्राहुः । विवशः परवशोऽपि हरेः स्वस्त्ययनं शुभावहं नाम व्याजहार जगादेति यदसावेव निर्वेश इत्यर्थः ॥ ७ ॥

ननु "नान्यः पन्था अयनाय विद्यते" इति न्यासोपासनव्यतिरिक्तोपायान्तरनिषेधात्कथं पारवश्यकृतस्य सङ्कीर्तितनामोच्चारणस्याखिलांहसो निरसनद्वारेण मुक्तिसाधनत्वमित्यत्राहुः । एतेनैवेत्यादिना यतस्तद्विषया मतिरित्यन्तेन । यदा प्रयाणसमये नारायणायेत्येनच्चतुरक्षरं नाम जगादेति यदेतेनैवास्याघोनः अघानां निष्कृतं कृतं स्यात् ॥ ८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीहरिनामसंकीर्तनमाहात्म्यमस्मिन्नध्याये वक्ति तदर्थं श्रीविष्णुदूता यमदूतान्प्रत्युपोद्धातं रचयन्तीत्याह । बादरायणिरिति (१) नयकोविदाः प्रायश्चित्तशास्त्रोक्तन्यायसूक्ष्मपण्डिताः ॥ १ ।२। ३।

यद्वाक्यं प्रमाणत्वेन करोति तद्वाक्यमनुसृत्य वर्तते लोको जनः ॥ ४ ॥

स्वयं परबोधमन्तरेण पशुः पूर्वापरादिदिगनभिज्ञः ॥ ५ ॥

सः प्रमाणभूतः पुरुषः आत्मन्यर्पित आत्मा सर्वस्वलक्षणो येन स तथा तम् अचेतनमज्ञानिनं विस्रम्भणीयो विश्वसनीयः"घृणा द्रवीभावे,, इति धातोः परक्लेशदर्शने यस्य चित्तं द्रवीभवति स सघृणः ॥ ६ ॥

अकृतनिर्वेशमित्यत्राहुरित्याह । अयमिति । यमदूतान्दृष्ट्वा पुत्रे साङ्केतितमपि नारायणनाम स्मृत्वास्य नाम्नो हरिरेव मुख्यार्थ इति प्राचीनपुण्यनिचयाज्झटिति ज्ञानोदयादुत्पन्नभक्त्या विवश इतीममर्थं हिशब्दो वक्ति ॥ ७ ॥

विश्वासजननार्थं पुनरुक्तार्थं द्रढयति । एतेनेति ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ यत्तु के यूयमित्यादिना यमदूतैः स्वप्रभोर्धर्मराजत्वालोकपालत्वं दर्शितं तदभ्युपगमवादेन तदाक्षिपन्ति । अहो कष्टमित्यादिपञ्चभिः ॥ १—६ ॥

विवशोऽपि अस्तु तावदेनमेव पुत्रमुद्दिश्य पूर्वपूर्वस्फुटोच्चरिततन्नाम्नो महिमेति भावः ॥ ७ ॥

ननु तर्हि तन्नामकरणे प्रथमतन्नाम्नैव जन्मकोट्यंहसां नाशोऽभूत्तदनन्तरं मुहुः कृतपापस्यास्य तत्समाप्तिरनेनैवाभूदिति वक्तुं युज्यते इत्याशङ्क्य पूर्ववाक्याभिप्रायं स्वयमेवाह । एतेनैवेति ।

(१) बादरायणिरुवाचेति मूलदद्म ।

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।**

यदि पूर्वं तन्नोच्चारितवान् तथाऽप्येतेनैव निष्कृतं कृतं स्यादिति हि तत्रार्थं इत्यर्थः। इत्यन्याङ्गत्वं सुतरां परिहृतम् ॥ ८ ॥ ९ ॥

---

**श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।**

द्वितीये नाममाहात्म्याद्यमदूताः पराहताः।
अजामिलस्य निर्वेदो वैकुण्ठारोह उच्यते ॥
नयकोविदा नीतिशास्त्रज्ञा यथा वदन्ति तथा ॥ १ ॥

अरे ज्ञाताः स्थ ज्ञाताः स्थ धर्मराजस्यैव किङ्कराः यूयमलं प्रलापैः किन्तु धर्मराजस्यैव धर्मराजता विपरीतलक्षणयैवेति जानीम इत्याहुः। अहो इत्यस्मत्कर्णपथमद्यावधि वार्त्तेयं नापतदिति भावः। कष्टमित्येतावता अन्यायेन लोकानां का गतिर्भविष्यतीति भावः। ननु के किमेवमाक्षिप्यन्ते तत्र किं ब्रूमः शृणुतरे शृणुतेत्याहुः। धर्मदृशां धर्मदर्शिनामपि सभामधर्म एव स्पृशति धर्मेऽप्यधर्ममेव पश्यन्तीति भावः। यत्र सभायामपापेष्वपि जनेषु अपापत्वाददण्ड्येषु दण्डो ध्रियते इत्येषैवाधर्मदर्शितेति भावः ॥ २ ॥

शृणुतरे प्रजानां पितृत्वं शास्तृत्वं साधुत्वं साम्यञ्च युष्मत्स्वामिनां यत् श्रूयते तत् खलु किं सम्प्रत्यनृतमेवाभूदित्याहुः। प्रजानामिति। वात्सल्यात् पितरः धर्मशिक्षणात् शास्तारः सर्वत्र सुखदुःखसाम्यदर्शनात् समाः। तेषु वैषम्यमिति पितरोऽपि प्रजापीडकाः शास्तारोऽपि स्वकिङ्करानपि धर्मं न शिक्षयन्ति साधवोऽप्यहितकारिणः समा अपि परदुःखानभिज्ञाः कं यान्तीति प्रजानां कष्टदर्शनमेतदस्माभिस्तु दुःसहमेवेति भावः ॥ ३ ॥

तदेवमचिरेण धर्ममार्ग एवोच्छन्नो भविष्यतीत्याहुः। यद्यदिति ॥ ४ ॥

किञ्च विश्वस्तघातादधिकं कमधर्मं ब्रूम इत्याहुः। यस्येति द्वाभ्याम् ॥ ५ ॥

विश्वासेन नितरामर्पित आत्मा येन तं कथं विश्वसिता इत्यत आहुः। भूतानां विश्वसनीयः सदयश्च ॥ ६ ॥

ननु परःसहस्रमहापापकृतमकृतप्रायश्चित्तमजामिलं शोधयितुमेव नरकं निनीषुभिरस्माभिरस्मत्स्वामिभिर्वा किमपराद्धं यदेवमाक्षिपथेति तत्राहुः। अयं हि निश्चितमेव कृतप्रायश्चित्त एव न केवलमेकजन्मकृतपापानामपि तु जन्मकोटीति यद्यस्माद्विवशोऽपि हरेर्नाम व्याजहार

> नाम्नो हि यावती शक्तिः पापनिर्हरणे हरेः।
> तावत् कर्तुं न शक्नोति पातकं पातकी नरः।

इति।

> अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः।
> पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव।

इति स्मृतेः। न केवलं प्रायश्चित्तमात्रं हरेर्नाम अपि तु स्वस्त्ययनं मोक्षसाधनमपि

> सकृदुच्चारितं येन हरिरित्यक्षरद्वयम्।
> बद्धः परिकरस्तेन मोक्षाय गमनं प्रति।

इति स्मृतेः ॥ ७ ॥

ननु हरेर्नामेति बुद्ध्या प्रायश्चित्तत्वेन नाम न गृहीतं किन्त्वस्मद्दर्शनोत्थभयेन स्वपुत्राह्वानमेव कृतमिति चेत् न जानीथरे तत्त्वं बहिर्मुखा न जानीथेत्याहुः। एतेनैव हि निश्चितमेव अघोनः अघवतः अघवच्छब्दवद्रूपं पुत्राह्वानेनैव अघानिष्कृतमपि कृतं स्यादघनिष्कृतानुसन्धानाभावेऽपीत्यर्थः। यदेति। इदानीन्तनेन पुत्राह्वानेन अघनिष्कृतं स्यादिति कियदेतत् किन्तु यदा पूर्वं नामकरणादिसमयेऽपि हे नारायण! आयस्व मातुरङ्कान्ममाङ्कमागच्छेत्यपभ्रंशभाषयापि जगाद तदैवाघनिष्कृतं कृतमभूदित्यर्थः। चतुरक्षरमिति नारायणनाम्न एकद्वयचरेणापि सर्वपातकनाशो भवेदिति भावः ॥ ८ ॥

---

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।**

भगवन्नाममाहात्म्यं निर्णीय भगवत्पार्षदा यमदूतेभ्योऽजामिलममूमुचन् स च कृतभगवदाराधनो भगवत्पदं गत इति वर्ण्यते द्वितीयेनाध्यायेन। नयकोविदाः सिद्धान्ताभिज्ञाः ॥ १ ॥

अहो आश्चर्यमिदं कष्टं दुःखं च तदेवाहुः। धर्मदृशां धर्मदर्शिनामपि सभामधर्मः स्पृशते क्वां केषां यत्र सभायां यैर्धर्मदृग्भिरदण्ड्येषु वृथा दण्डो ध्रियते तां तेषाम् ॥ २ ॥

आश्चर्यं कष्टं च पुनर्दर्शयन्ति। प्रजानामिति। पितरः शास्तारः अनुशिक्षकाः साधवः शुभाचाराः समाः सर्वसुहृदश्च यदि तेषु वैषम्यम् अपितृवत् अशास्तृवत् असाधुवत् विषमवद् विपरीतकारित्वं स्यात्तदा कं शरणं रक्षितारं प्रजा यान्ति श्रेष्ठस्य श्रेष्ठाचारो लोकानां क्षेमकरः अन्यथाचारस्तु नाशहेतुरित्याहुः। यद्यदिति। श्रेष्ठेन धर्मराजेनादण्ड्यदण्डने कृते अन्येऽप्येवं करिष्यन्तीति महत्कष्टमिति भावः ॥ ३-४ ॥

अपापस्य दण्डनं धर्मराजोऽपि न कुर्यादित्याहुः। यस्याङ्क इति द्वाभ्याम्। यथा पशुः धर्ममधर्मं न जानाति तद्वत् स्वधर्ममधर्मं वा न वेद किन्तु अधर्मनाशार्थं गुर्वाद्युपदेशवर्जितो भवति एवम्विधो लोकः यस्य लोकपालस्याङ्के शिर आधाय आत्मानं रक्षणीयतया तस्मिन् समर्प्येत्यर्थः। निर्वृतः सुखितः स्वपिति अस्मद्धर्माधर्मानुसारेण लोकपालः फलं यथार्थं दास्यतीति विश्वस्तो भवति ॥ ५ ॥

स भूतानां विश्रम्भणीयो लोकपालः सघृणः सदयः स्वार्पितात्मानं नितरामर्पित आत्मा रक्षणीयतया येन तं कृतमैत्रं कृतविश्वासमचेतनं पशुवदज्ञातन्त्र्येण धर्माधर्मविवेकहीनं कथं द्रोग्धुमर्हति न कथमपीत्यर्थः ॥ ६ ॥

अजामिलस्तु सर्वथा निष्पाप इत्याहुः। अयमिति षड्भिः। अयं जन्मकोटिपापनिराकरणमात्रेण चरितार्थं किन्तु स्वस्त्ययनं परमपुरुषार्थदम्।

> सकृदुच्चारितं येन हरिरित्यक्षरद्वयम्।
> बद्धः परिकरस्तेन मोक्षाय गमनं प्रति

इति स्मृतेश्च ॥ ७ ॥

अघोनः अघवतः अस्य यत् आ ईषदाभासमात्रं हे नारायण! आय आगच्छेति पुत्राह्वानेन चतुरक्षरं जगाद एतेनैव अघनिष्कृतं स्यात् ॥ ८ ॥

---

स्तेनः सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥ ९ ॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ १० ॥
न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुद्ध्यत्यघवान् व्रतादिभिः।
यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलम्भकम् ॥ ११ ॥
नैकान्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे।
तत्कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्त्वभावनः ॥ १२ ॥
अथैनं मापनयत कृताशेषाघनिष्कृतम्।
यदसौ भगवन्नाम म्रियमाणः समग्रहीत् ॥ १३ ॥
साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ १४ ॥
पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः।
हरिरित्यवशेनाह पुमान्नार्हति यातनाम् ॥ १५ ॥
गुरूणां च लघूनां च गुरूणि च लघूनि च।
प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः ॥ १६ ॥

भाषा टीका।

श्रीशुकदेवजी बोले हे राजन्! श्रीभगवान् के दूत इस प्रकार यमदूतों के भाषण को सुन कर नीति में बडे निपुण होने [illegible]न वचनों को बोले ॥ १ ॥

विष्णुदूत बोले अहो बडे कष्ट की बात है कि धर्म जानने [illegible]ओं के सभा में भी अधर्म का प्रवेश होता है जो लोग कि नहीं [illegible]ने योग निष्पापी पुरुषों के ऊपर दंड व्यर्थ धारण [illegible]ते हैं ॥ २ ॥

जो कि प्रजों के पिता के तुल्य हैं शासन करने वाले हैं [illegible] बुद्धि वाले साधु हैं उन्हीं में यदि वैषम्य होगा तो प्रजा [illegible] के शरण जाँयगे ॥ ३ ॥

श्रेष्ठ पुरुष जिस जिस क्रिया का आचरण करते हैं दूसरा [illegible] उसी क्रिया का आचरण करैगा श्रेष्ठ लोग जिसको [illegible] मानते हैं उसी को सब लोग अनुवर्तन करते हैं ॥ ४ ॥

पशु जैसे अपने मालिक के पालन के विश्वास से रहता [illegible] सब लोक जिसके गोद में मस्तक रख कर निर्भय [illegible]ते हैं स्वयं धर्म या अधर्म नहीं जानते हैं वह श्रेष्ठ पुरुष [illegible] के विश्वास करने के योग्य होकर कृपालु होकर अपने [illegible] को समर्पण कर देने वाले मित्रता करने वाले अज्ञानि [illegible] को कैसे पीडा देने को योग्य है ॥ ५ ॥ ६ ॥

इस अजामिलने तो कोटिन जन्मों के सब पापों का प्रायश्चित्त कर लिया है जो कि परवश होकर भी सर्व मंगल कारक श्री हरि के नाम को इसने उच्चारण किया है ॥ ७ ॥

जो कि इसने नारायण ऐसे चार अक्षर उच्चारण किये हैं इसीसे इस पापी के सब प्रायश्चित्त हो चुके अब कुछ पाप बाकी नहीं रहा है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु कामकृतानां बहूनां महापातकानां सहस्रश आवर्तितानां द्वादशाब्दादिकोटिभिरप्यनिवर्त्यानां कथमिदमेकमेव प्रायश्चित्तं स्यात्तत्राहुः। स्तेन इति द्वाभ्याम् ॥ ९ ॥

सुनिष्कृतं श्रेष्ठं प्रायश्चित्तमिदमेव तत्र हेतुः। यतो नामव्याहरणात्तद्विषया नामोच्चारकपुरुषविषया मदीयोऽयं मया सर्वतो रक्षणीय इति विष्णोर्मतिर्भवति ॥ १० ॥

श्रेष्ठत्वमेवोपपादयन्ति। नेति द्वाभ्याम्। ब्रह्मवादिभिर्मन्वादिभिरुक्तैर्व्रतादिभिर्निष्कृतैस्तथा न शुध्यति उदाहृतैरुच्चारितैर्यथा नामपदैरित्यनेन नमामीत्यादिक्रियायोगोऽपि नापेक्षित इति दर्शितं किञ्च तन्नामपदोच्चारणमुत्तमश्लोकस्य गुणानां चोपलम्भकं ज्ञापकं भवति न तु कृच्छ्रचान्द्रायणादिवत्पापनिवृत्तिमात्रोपक्षीणमित्यर्थः ॥ ११ ॥

नैकान्तिकं नात्यन्तशोधकं तन्निष्कृतं यस्मिन् कृतेऽप्यसत्पथे

श्रीधरस्वामिकृतभावार्थदीपिका

पापमार्गे मनो धावति चेत् कर्मणां पापानां निर्हारमात्यन्तिकं नाशमिच्छतां हरेर्गुणानुवाद एव प्रायश्चित्तं यतोऽसौ खलु सत्त्वभावनश्चित्तशोधकः ॥ १२ ॥

अथ तस्मादेनं मा अपमार्गेण नयत कृतमशेषाणामघानां निष्कृतं येन यद्यस्मात् समग्रहीतसम्पूर्णमुच्चारितवान् नामैकदेशेनाप्यलमिति भावः म्रियमाणः इत्यनेन पुनः पापान्तरासम्भव उक्तो न तु तत्कालत्वमेव विवक्षितं तदानीं कृच्छ्रादिविधिवन्नामोच्चारणविधेरप्यसम्भवात् न च विधिं विना काकतालीयनामोच्चारणं पापापहमिति प्रमाणमस्ति ॥ १३ ॥

नन्वयं पुत्रनामाग्रहीन्न तु भगवन्नाम तत्राहुः । साङ्केत्यं पुत्रादौ सङ्केतितं पारिहास्यं परिहासेन कृतं स्तोभं गीतालापपूरणार्थं कृतं हेलनं किं विष्णुनेति सावज्ञमपि च वैकुण्ठनामोच्चारणम् ॥ १४ ॥

ननु नायं सङ्कल्पपूर्वकं वैकुण्ठनामाग्रहीत्किन्तु पुत्रस्नेहपरवशः संस्तत्राहुः । पतित इति । अवशेनापि यो हरिरित्याह । स यातनां नार्हति पुमानित्यनेन नात्र वर्णाश्रमादिनियम इत्युक्तम् अवशत्वमेवाह । पतितः प्रासादादिभ्यः स्खलितो मार्गे भग्नो भग्नगात्रः संदष्टः सर्पादिभिः तप्तो ज्वरादिना आहतो दण्डादिना ॥ १५ ॥

ननु महतः पापस्य महदेव प्रायश्चित्तं युक्तं नत्वल्पं नामग्रहणमात्रं पापनारतम्येन कृच्छ्रादितारतम्यवत् तत्राहुर्द्वाभ्याम् । गुरूणां पापानां गुरूणि प्रायश्चित्तानि लघूनां च लघूनि तारतम्यं ज्ञात्वा मन्वादिभिरुक्तानि अतस्तत्र तथैव व्यवस्था हरिनाम्नस्तु नेयं व्यवस्थोक्ता ।

"विष्णोः स्मरणमात्रेण मुच्यते सर्वपातकैः" इति वचनात् न च सुराबिन्दुपाने महापातकत्वस्मरणवन्नाम्नस्तत्प्रायश्चित्तत्वस्मरणस्यायमतिभारः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं प्रतिपदोक्तप्रायश्चित्तादिवदन्तिमं नामस्मरणं कतिपयपापानां निष्कृतं किन्तु महापातकोपपातकसंकीर्णादिरूपेण बहुविधानां सर्वेषामपीत्याहुः। स्तेन इत्यादिना। स्तेनः स्वर्णचोरः स्तेनादयो ये महापातकिनः ये च मित्रस्त्र्यादिहन्तार उपपातकिनः अपरे च ये नानाविधाः पातकिनः ॥ ९ ॥

तेषां सर्वेषामप्यघवतामिदमन्तिमं विष्णोर्नामव्याहरणमेकमेव सुनिष्कृतमुत्कृष्टं प्रायश्चित्तं यतः विष्णोर्नामव्याहरणात्तद्विषया विष्णुविषया मतिर्भवति भगवद्विषयकमत्युत्पत्तिप्रतिबन्धिसकलवृजिननिरसनद्वारेण मत्युत्पादकं स्मरणं तत उत्पन्ना च मतिर्भगवत्प्राप्तिप्रतिबन्धकनिरसनद्वारा मुक्तिहेतुरिति "नान्यः पन्था" इत्यस्य न विरोध इति भावः। नन्वेवं नामोच्चारणेनैव मुक्तिसिद्धेरुपासनशास्त्रवैयर्थ्यम्। नैवम् । "यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्" इत्युक्तन्यायेन तत्तदन्तिमस्मरणस्य तत्तद्भावापत्त्यापादकत्वाद्भगवत्स्मरणस्य भगवद्भावापत्त्यापादकत्वे स्थिते भगवदन्तिमस्मरणोपायतया प्रयाणपर्यन्तमुपासनं तत्तच्छास्त्रेण

निधीयते तदेव स्मरणं प्राचीनसंस्कारवशाद्[illegible] कूपरि गङ्गानिपतनन्यायेन पतितं चेत्तेनैव मुक्तिः सति [illegible] वन्तिमस्मरणपर्यन्तायां भक्तेर्नामोच्चारणमभ्यस्तं सत् [illegible] गादिवदनुग्राहकम् अन्तिमे तु तादात्विकस्मरणस्य [illegible] साधनस्यानुग्राहकमिति न कोऽपि विरोधः । ननु जीव[illegible] वृत्तमपि नाम न भक्तिनिर्वर्तकत्वेन दृष्टमिति चेत्तर्हि [illegible] कर्मयोगादयोऽपि तन्निष्पादकत्वेन न दृष्टाः अथ प्रबल[illegible] शास्त्रक्रियोगानधिकाराद्वा विच्छिन्नस्य तद्वदेव नरकपरि[illegible] पुनर्जन्मान्तरे भक्तियोगारम्भापादकत्वं च तदा भक्ति[illegible] ग्राहकत्वाभावेऽपि जन्मान्तरेषु प्राचीनसंस्कारवशादार[illegible] भक्तियोगनिष्पादकाः कर्मयोगादय इति चेत्तर्हि नामो[illegible] मप्येवमेवेत्यवधेयं कर्मयोगादीनामभिसंहितफलानामैश्वर्य[illegible] दिसाधनत्वमनभिसंहितफलानां तु भक्तियोगनिर्वर्तकत्वं [illegible] पृथक्त्वन्यायेन नामोच्चारणस्य तु सति जीवनहेतावसकृद[illegible] भक्तियोगोत्पत्तिप्रतिबन्धनिरसनेनाभिसंहितफलकर्मादियोग[illegible] क्तियोगानुग्राहकत्वम् । इयांस्तु विशेषः असति [illegible] प्रत्ययजनने न स्वतन्त्रन्यासयोगवत्साक्षान्मुक्तिसाधनत्वं[illegible] अलमतिविस्तरेण ॥ १० ॥

"सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्" इत्यनेन कतिपय[illegible] निवर्तकात्प्रतिपदोक्तप्रायश्चित्तात्मकदुरितनिवर्तकत्वेन [illegible] च्चारणस्योत्कृष्टत्वं सूचितं तदेव प्रतिपादयन्ति । नेति [illegible] ब्रह्मवादिभिर्मन्वादिभिरुदितैरुक्तैर्व्रतादिभिः प्राजापत्यकृच्छ्र[illegible] यणादिव्रतादिभिः प्रायश्चित्तैरघवान् पुरुषस्तथा न शुध्य[illegible] यथोदाहृतैर्हरेर्भगवतोनामरूपैः नामपदैः शुद्धेत [illegible] हेतुः तदुत्तमश्लोकगुणानुलम्भकमिति तद्धरेर्नामपदो[illegible] रणमुत्तमश्लोकस्य भगवतः तद्गुणानां चोपलम्भकं [illegible] उत्तमश्लोकतद्गुणविषयकमत्युत्पादकमित्यर्थः जीवद[illegible] नभिसंहितफलकर्मयोगादिभक्तिरूपमत्युत्पादकमन्तिमदशायां साक्षान्मुक्तिसाधनान्तिमस्मरणरूपमत्युत्पादकमिति विवेकः ॥

ब्रह्मवादिभिरुक्तं निष्कृतं नैकान्तिकं नात्यन्तं[illegible] कुतः हि यतः निष्कृते तस्मिन् कृतेऽपि असत्पथे [illegible] पुनर्मनो धावति चेदित्येवकारार्थः निपातानामनेकार्थत्वा[illegible] वेत्यर्थः तत्तस्मात्कर्मणां पापानां निर्हारमात्यन्तिकं ना[illegible] च्छतामभिलसतां भूतानां हरेर्गुणानुवादः स एव प्रायश्चित्तं [illegible] अनूद्यन्ते येन स गुणानुवादः नामव्याहारः स हि [illegible] भावनः सम्यग्ज्ञानहेतुभूतस्सत्त्ववर्द्धकः ॥ १२ ॥

अथ हे यमदूताः ! कृतमशेषाघनिष्कृतं येन तमेनं माप[illegible] माप्रापयत यमालयमिति शेषः कुतः यद्यस्मात्सावज्ञादि[illegible] म्रियमाणो भगवतो नाम सम्यगग्रहीदुच्चचार ॥ १३ ॥

नन्वसौ पुत्रे सङ्केतितं नारायणेति पदमुच्चारित[illegible] तत्पुत्रविषयकमत्युत्पादनद्वारा एनं संसारयेदेन ननु भग[illegible] वयकमत्युत्पादनद्वारा मोचयेदित्यपेक्षायां यदृच्छया भ[illegible] बुद्ध्या वाऽस्पृष्टस्याग्नेर्यदृच्छया पीतस्यौषधस्य दाहक[illegible] ग्यजनकत्ववद्वस्तूनां विलक्षणस्वभावत्वात्सङ्केतितस्या[illegible] तस्य वान्यादृशो भगवन्नाम्नः सर्वाघनिवर्तकत्वं भग[illegible] यकमत्युत्पादकत्वं च स्वाभाविको धर्म इत्याहुः । साङ्केत्यं[illegible] दिना मन्त्रोऽप्युदाहृत इत्यन्तेन ग्रन्थेन । साङ्केत्यं पु[illegible] सङ्केतकृतं पारिहास्यमुच्चारणासमर्थजनपरिहासकृतं [illegible]

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

(१) निरालापकृतम् । यद्वा । भूताविष्टस्य मन्त्रशक्त्यादिभिरालापनं सोमस्तत्कृतमित्यर्थः । हेलनं स्वविरोधिजननिन्दाद्यन्तर्भूतम् । यद्वा । किं विष्णुनेति सावज्ञं हेलनरूपं वा अन्यदपि प्रकारान्तरमापन्नं वैकुण्ठस्य भगवतो नामग्रहणं निःशेषपापहरं विदुः नामसामर्थ्ययाथात्म्यविद इति शेषः ॥ १४ ॥

तथा पतितः प्रासादादेः मार्गे भगवदाज्ञारूपवर्णाश्रमधर्माद्वा स्खलितः भग्नः भग्नपादाद्यवयवः संदष्टः सर्पादिभिः तप्तो ज्वरादिना आहतो दण्डादिना एतदन्यतमावस्थां प्राप्तः पुमान् अवशेनापि हरिरित्याह । तर्हि यातनाः प्रति नार्हति ॥ १५ ॥

ननु महतः पापस्य महदेव प्रायश्चित्तं नत्वल्पं नामग्रहणं पापतारतम्येन प्रायश्चित्ततारतम्यस्य मन्वादिभिरुक्तत्वादन्यथा प्रायश्चित्तशास्त्रवैयर्थ्यं स्यादित्यन्तरा कस्यचिन्मन्दाशङ्कां निराकुर्वन्ति । गुरूणामिति । गुरूणां पापानां गुरूणि प्रायश्चित्तानि लघूनां लघूनि महर्षिभिर्यथावज्ज्ञात्वा यद्यप्युक्तानि ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न केवलं दासांमङ्गप्राप्तपापहरं हरिनामकीर्तनं स्तैन्यादिप्राप्तसर्वपापक्षयकरमित्याहुरित्याह । स्तेन इति ॥ ९ ॥

यतस्तद्विषयेत्यनेन भक्तिपूर्वकत्वमाह ॥ १० ॥

ब्रह्मादिभिर्वेदवादिभिः तन्नाम्न उदाहरणमुत्तमश्लोकस्य हरेः गुणानानन्दादीनुपलम्भयति तत्प्रतिबिम्बभूतान् प्रापयतीति तदुत्तमश्लोकगुणोपलम्भकम् ॥ ११ ॥

हरेर्नामसंकीर्तनेनैव पापनिर्मूलनं न तपआदिभिरित्येतदुपपादयति । नेति । निष्कृते पापप्रायश्चित्ते कृतेऽपि अधवतः मनः पुनरसत्पथे शास्त्रनिषिद्धमार्गे धावति चेत्तत्प्रायश्चित्तमैकान्तिकं नियतम् अव्यभिचारि न भवतीति यस्मात्तस्मात्कर्मनिर्हारमाकाङ्क्षमाणानां हरेर्गुणानामनुवादः ऐकान्तिक एवेत्यन्वयः नन्वनेनापि मनोदोषानाशे पूर्वस्मादविशेषः स्यादिति तत्राह । सत्त्वेति । सत्त्वभावनोऽन्तःकरणशुद्धिहेतुः खलु ॥ १२ ॥

अथ तस्मात् ॥ १३ ॥

नन्वनेन न हरेर्नामाग्राहि किं तु पुत्रनामैवेति तत्राह । सांकेत्यमिति । पुत्रादिसङ्केतादिविषयत्वेन नारायणेत्यादिभगवन्नामसंकीर्तनमशेषाघहरम् तदुक्तमाचार्यैः नारायणोऽयमित्यन्यहेलनविषयत्वेऽप्यघहरणमिति भक्तिपूर्वकमेवोदाहृतं हरिनामाशेषाघहरमिति ज्ञातव्यमत्र बोद्धव्यमेतदप्युक्तं 'सर्वथाघहरं विष्णोर्नाम तद्भक्तिपूर्वकं अभक्त्योदाहृतं नैव फलदातृ भविष्यति । नाम स्वामितया तस्य स्मरणं जायते यतः । भक्तस्यातो नामकीर्तिः संकेतादावपीरिता । अजामिलोऽपि स्मरणाद्भक्त्या मृत्योरमुच्यत' इति स्मरणप्राचुर्यदर्शनाय साङ्केत्यादिस्थलबाहुल्यकथनं संकेते रूढिमात्रेण व्यवहारकालेऽहत्स्मरणासंभवेन परिहासे तस्मात्स्मरणं संभवति चित्तक्षोभकोद्रेकव्यवहारात् ततोऽपि स्तोभे स्मरणं कोपजननाय नर्मवचनं स्तोभः मधुमक्षिकासूदनासमर्थस्त्वं किं मधुं सूदितवान् असौ हरिश्चेन्मधोर्वधान्मधुसूदन इत्युपपन्नमिति ततोऽपि हेलने नामस्वामिहरणं हरेरन्यं नारायणादिनाम्ना पित्रादिभिर्दत्तेनोपचरितं कञ्चनपुरुषं दृष्ट्वा निन्दयेत्साद्यात्पयोधिशयो नारायणः किलेति हरिद्वेषेण हरिनामकीर्तनमघहरं न स्यात् "अभक्त्योदाहृतं नैव फलदातृ भविष्यति„ इत्यादेश्च नामस्वामिस्मरणाभावे देवदत्ते नामपीडितार्थे भवति मधोः सूदनान्मधुसूदन इत्यर्थस्याभावात् हरौ तद्भावादतोऽजामिलेन भक्त्या नाम स्वामिनं स्मृत्वा नामकीर्तनं कृतमिति ज्ञातव्यं तदुक्तं च "नामस्वामितया तस्य स्मरणं जायते यतः" इत्यादि यानि यानि श्रीहरेर्नामानि तानि सर्वाणि पापहरणसामर्थ्योपेतानि भवन्तीति ज्ञापनाय वैकुण्ठनामेति अत्रैव हरिरित्यवशेनाह यः पुमानिति वक्ष्यति स्मरणं च ज्ञानपूर्वकमपेक्षितमित्यतो विदुरिति ॥ १४ ॥

संदष्टः सर्पादिना आहतो लकुटेन यातनां दुःखम् ॥ १५ ॥

ननु नामसंकीर्तनेन पापपरिहारे गुरुलघुपापपरिहारार्थं गुरुलघुप्रायश्चित्तविधानं व्यर्थमित्याशङ्क्य प्रायश्चित्तेन तत्तत्पापपरिहारेऽपि संसारहेतुभूतं पापसंस्कारव्यञ्जकं प्राकृतं लिङ्गं मनो भगवदनुग्रहेण लीयते नान्येनेत्याह । गुरूणामिति ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

यत इति । तस्य विष्णोरनुभवोऽपि यतो भवतीत्यर्थो वा ॥ १० ॥

ब्रह्मवादिभिरिति । ब्रह्मात्र कर्मकाण्डमात्रं मुख्यन्त्याम्नायधादिनः इति वन्नामरूपैः पदैः एकस्य नाम्न एवावान्तरपदैः उत्तमःश्लोकस्य गुणानामुपलम्भकमनुभवहेतुश्च ॥ ११ ॥

न केवलं नामैव तादृक् किन्तु गुणा अपीत्याहुः । नैकान्तिकमिति । गुणानामनुवादोऽपि ॥ १२ ॥

अथैनमिति । म्रियमाणोऽपीत्यर्थः । साङ्केत्यमित्यादिवक्ष्यमाणबलाच्च तत्कालमात्रावश्यकत्वं विवक्षितमिति ॥ १३ ॥

पारिहास्यमिति । परिहासोऽत्र प्रीतिगर्भमन्यपरिभववचनं न तु निन्दागर्भं तत्तूपहास एवोच्यते तस्मान्नर्मोपोद्बलकं यत् किञ्चिद्भगवन्नामोक्तमित्यर्थः । हेलनमत्र हेलया गिरिरुद्धृत इति वद्यत्नराहित्यमयमेवोच्यते न त्ववमानात्मकमिति ज्ञेयं तथा सति येषोऽपि दोषावहत्वं न स्यात् नाम्नो दशापराधं चाश्रद्धानादिकं प्रत्युपदेशेऽपि दोषः श्रूयते अपराधजननेऽपि प्राचीनपापक्षयः स्यादेवेति तु केचित् ॥ १४ ॥

न केवलं साङ्केत्यादिकन्तु प्रस्तुतदुःखदानीच्छयापि तादृशस्यमित्याहुः । अवशेनापीति । पूर्ववत् यातना इति बहुवचनं क्वाचित् ॥ १५ ॥

गुरूणामिति । पद्यत्रयेणैव विवक्षितप्रतिपादनं यानि प्रायश्चित्तान्युक्तानि तैस्तान्यघानि पूयन्ते एव किन्तु दुर्वासना तु ईशानुगत्यैव पूयते तस्माद्यदुत्तमःश्लोकनाम तत्पुनरज्ञानात् ज्ञानाद्वा सङ्कीर्तितं सत् पुम्मात्रस्याघमनल एध इव निःशेषमेव दहेदित्यर्थः ॥ १६—१८ ॥

---

(१) निरालापकृतमिति निरालापैः यथावद्वर्णोच्चारणासमर्थैः मनुष्यान्तिमित्यर्थः यथा नारायणांति वक्तव्ये नाना नेत्युक्तिः शेष श्रीरहस्यत्रयसारप्रभावव्यवस्थाधिकारव्याख्यायामु स्पष्टम् ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु भवतु नाम पातकानां नाशः किन्तु कामकृतानां बहूनां महापातकानां सहस्रश आवर्त्तितानां द्वादशाब्दकोटिभिरप्यनिवर्त्यानां कथमेकेनैव नामाभासेन प्रायश्चित्तं स्यादित्यत आहुः। स्तेनः स्वर्णस्तेयी इदमेव सुनिष्कृतं पापनिर्मूलीकरणाच्छ्रेष्ठं प्रायश्चित्तम्। ननु द्वादशाब्दादिकम् पापनाशकत्वेऽपि पापनिर्मूलनासामर्थ्यात् नाप्येतन्मात्रफलकं यतो नामव्याहरणात् तद्विषया नामोच्चारकपुरुषविषया मदीयोऽयं मया सर्वथा रक्षणीय इति विष्णोर्मतिर्भवतीति स्वामिचरणाः। स्वनाम श्रुत्वैव तदुच्चारकमजामिलं स्मृत्वैव तमानेतुमस्मानादिष्टवानिति किमुत सेव्यत्वेन विष्णुविषयामतिस्तस्य पुरुषस्य यदि स्यादिति भावः। अतः यमदूतान् साक्षाद्दर्शयितुमेवाजामिलस्य तदानींतनं नामव्याहरणं सर्वपापप्रायश्चित्तत्वेन विष्णुदूता ऊचुः। वस्तुतस्तु पुत्रनामकरणसमयमारभ्यैव पुत्राह्वानादिषु बहुशो व्याहृतानां नाम्नां मध्ये यत् प्रथमं तदेव सर्वपापप्रशमकमभूदन्यानि तु भक्तिसाधकानीति व्याख्येयम्। यद्व्याजहारेति परोक्षनिर्देशात् प्रथमं नामोद्दिश्यैवोक्तम्। विवश इति पुत्रस्नेहविवश इति व्याख्येयम्। न च पुनः पुनर्नामव्याहरणानन्तरमपि पुनः पुनरुत्पन्नानां वेश्याभिगमसुरापानादीनां सर्वेषां पापानां प्रशमनार्थमन्तिमसमयोत्थमेव नामव्याहरणमपेक्षितं यदनन्तरं पुनः पापानुत्पत्तिरिति वाच्यम् "वैकुण्ठनामग्रहणमशेषाघहरं विदुः" इत्यत्राशेषपदोपादानात्। "वर्त्तमानञ्च यत् पापं यद्भूतं यद्भविष्यति। तत् सर्वं निर्दहत्याशु गोविन्दानलकीर्त्तनात्। इति। यन्नाम सकृच्छ्रवणात् पुक्कशोऽपि विमुच्यते संसारात् इति चित्रं विदुर विगतः सकृदाददीत यन्नामधेयमधुना स जहाति बन्धम्" इत्यादिषु संसारबन्धादिप्रयोगाच्च तत्र तत्र समयविशेषनियमानभिधानाच्च प्रथमनामग्रहणेनैव सर्वपापानां तद्वासनायास्तन्मूलभूताविद्याया अपि नाशावगतेः पुनः पापप्ररोहासम्भवात्। ननु तर्हि प्रथमनामग्रहणानन्तरमेवाजामिलेन निर्विद्य ततः कथं नापसृतं पापप्ररोहाभावेऽपि तस्यामेव दास्यामासज्य तत्तदेव पापं तावत्कालपर्यन्तं प्रत्युत कृतम् उच्यते संस्कारवशाज्जीवन्मुक्तानां कर्मेव तस्यापि तावत्कालपर्यन्तं तत्तदेव पापं पुनः पुनरुत्पद्यमानमप्युत्खातदंष्ट्रोरगदंशवन्न फलजनकम्। किम्वा मतान्तरोत्थानाभावार्थं भगवतैव पापबीजाभावेऽपि पुनः पापे प्रवर्त्तनं भवेदित्येव व्याख्येयमन्यथा स्तुत्यर्थवादे कल्पनान्तरे वा व्याख्यायमाने "तथार्थवादो हरिनाम्नि कल्पनम्" इति पाद्मोक्तनामापराधप्रसक्तौ। "नाम्नोऽपि सर्वसुहृदो ह्यपराधात्पतत्यधः" इति। "अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः। स पापिष्ठो मनुष्याणां निरये पतति स्फुटम्"। इति। "मन्नामकीर्त्तनफलं विविधं निशम्य न श्रद्दधाति मनुते यदुतार्थवादम्। यो मानुषस्तमिह दुःखचये क्षिपामि संसारघोरविविधार्त्तिनिपीडिताङ्गम्। इति श्रुतिस्मृतिपुराणेषु नाममाहात्म्यवादिषु। येऽर्थवाद इति ब्रूयुर्न तेषां निरयक्षय' इति पाद्मकात्यायनसंहितादिपरःसहस्रवचनादधःपात एव स्यात्। अत एव श्रीविष्णुरातेन। "क्वचिन्निवर्त्ततेऽभद्रात् क्वचिच्चरति तत्पुनः। प्रायश्चित्तमथोऽपार्थं मन्ये कुञ्जरशौचवत्। इति पुनः पापप्रवृत्तिदर्शने प्रायश्चित्तमाक्षिपतापि भक्तिप्रसङ्गे भक्तानामपि कस्य कस्यचित् पुनः पुनः पापप्रवृत्तिदर्शनेऽपि नैवाक्षेपः कृतः। अपि च यथा नामाभासबलेनाजामिलो दुराचारोऽपि वैकुण्ठं प्रापितस्तथैव स्मार्त्तादयः सदाचाराः शास्त्रज्ञा

अपि बहुशो नामग्राहिणोऽप्यर्थवादकल्पनादिनामापराधबलेन घोर संसारमेव प्राप्यन्त इत्यतो नाममाहात्म्यदृष्ट्या सर्वमुक्तिप्र ङ्गोऽपि नाशङ्क्यः। तदेवं भगवन्नाम सकृत्प्रवृत्तमपि सद्य समूलं पापं संहरदपि फलन्नपि वृक्षः काले एव फलतीतिन्याये प्रायः किञ्चिद्विलम्बत एव स्वीयफलाविङ्कं लोके दर्शयित्वा बहिर्मुखशास्त्रमतोच्छेदाभावार्थं क्वचिन्न दर्शयित्वा च सत्याह जनान् स्वापराधरहितान् भगवद्धाम नयतीति सिद्धान्तो वैदि नन्वर्थवादादिनामापराधवतां नामापराधहेतुकोऽधःपातो भवतु नाम तत्र न विवदामहे। नामग्रहणहेतुकः सर्वपापक्षयो भवेत् न वा आद्ये कर्मिज्ञानियोगिभक्तानां तद्भिन्नानामपि नृणां मध्ये पारदारिकपरहिंसादिगम्येषु नरकेषु केनापि न गन्तव्यं द्वितीये कर्मिप्रभृतिभिरिव भक्तैरपि पापभोगार्थं नरकेषु गन्तव्यमेव। अत्रोच्यते यथा महाजनः स्वाश्रितानामाश्रय तारतम्येन पालनतारतम्यं कुर्वन्नपि तानेव नैव पालयति यदि ते तदपराधिनः स्युरिति तस्याप्रसाद एव स्वा तापालने कारणं न तु पालनासामर्थ्यं कल्पनीयम् तेषामेवापराधक्षयतारतम्येन तेषु तस्य प्रसादतारतम्यञ्च सर्वापराधक्षये प्रसाद एव। एवमेव नामोपलक्षितां भक्तिं ये गुणीभावेनाश्रयन्ते कर्म्मादिफलसिद्ध्यर्थं तेषु गुणीभूत भक्तेर्वर्त्तमानत्वेऽपि प्राधान्येन व्यपदेशा भवन्तीति न्यायेन कर्मिज्ञान्यादिशब्देनाभिधीयन्ते। न तु वैष्णवशब्देन च स्वरूपत एवैकनामापराधवन्तः। यदुक्तम्। "धर्म्मव्रतत्या हुतादिसर्वशुभक्रियासाम्यमपि प्रमादः" इति नाम्नो धर्म दिभिः साम्यमप्यपराधः किमुत धर्म्माद्यङ्गत्वेन गुणीभूतत्व त्यर्थः। तदपि तादृशस्वाश्रयेण गुणलेशग्रहणेनैषां कर्म योगादयो मा विफला भवन्त्विति स्वीयदाक्षिण्येन स्वाश स्वीकृत्यापि भक्तिदेवी तेषां कर्म्माद्यङ्गभूतैव कर्म्मादि निष्प्रत्यूहमुत्पादयति यथा तथैव तेषां पापमपि प्रायश्चि ङ्गभूतैव नाशयति नान्यथेत्यनस्तैरेवाकृतप्रायश्चित्तैस्त त्पापफलभोगार्थं तेषु तेषु नरकेषु गन्तव्यमेव न तु वैष्ण यदि च ते पुनरन्यानर्थवादसाधुनिन्दादीन् नामापरा कुर्व्वाणा एव धर्म्मादिकमनुतिष्ठन्ति तदा धर्म्माद्यङ्गभूतापि तत्तत्फलमुत्पादयति। "के तेऽपराधा विप्रेन्द्र! नाम्नो भग कृताः। विनिघ्नन्ति नृणां कृत्यम्" इत्यादिवचनेभ्यः। किञ्च। ते मपि तत्तदपराधेभ्यो निवृत्य तदुपशमकनामकी धर्मफलप्राप्ति पराणां नामापराधक्षयतारतम्येन तम्यं साधुसङ्गवशात् सर्व्वनामापराधक्षये तु भक्ति सम्यक्प्रसादेन। नामफलप्राप्तिरेव निर्विवादा। जामिलस्यापि "अयं हि श्रुतसम्पन्नः" इत्यादियमदूत प्राक्तनं कर्मित्वमवगम्यते। सत्यं मदिरापानाद्ब्राह्मण्यम नष्टमेव किमुत कर्मित्वं यदुच्यते। "एवं स विप्लावित धर्म्मा दास्याः पतिः पतितो गर्ह्यकर्म्मणा" इति। कर्म्माप एव भक्तेर्गुणीभावोऽप्यपगतः पुनश्च स्वपुत्राह्वानादौ नाम नामोच्चारणनिबन्धना केवलानन्यैव भक्तिरस्याभूदिति। कर्म्मज्ञानाद्यङ्गत्वे भक्तिं कुर्वीतेति यदि विधिवाक्यमेवास्ति कुतस्तेषां नामापराधः। उच्यते भक्त्यैव सर्व्वेऽपि धर्म्माः सिद्ध्यन्ति भक्तिलेशेनापि महापातकान्यपि नश्यन्तीत्यादि कर्म्मज्ञानयोरेव तथा ज्ञवाक्येऽप्यविश्वसतां

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भक्तिबहिर्मुखानामशुद्धकुटिलचित्तानामप्यनेनैव प्रकारेण भक्ति-प्रवर्त्तयिति दयामथमेव वेदशास्त्रं धर्म्मज्ञानाद्यङ्गत्वेन भक्ति विधत्त इत्यतो न शास्त्रवाक्यमुपालम्भनीयमिति ततश्च वैधपशु-हिंसाकृतो विधिबलात् स्वर्गप्राप्तावपि यथा तद्धिंसादोषान-पगमस्तथैव भक्तिगुणीभावकरणरूपापराधवतो विधिबलात् कर्म्मफलप्राप्तावपि तदपराधानपगम एव ज्ञेय इति । अथ ये नामापराधिनो वैष्णव्या दीक्षया वैष्णवमेव गुरूकृत्य भक्ति-देवीं कैवल्येन प्राधान्येन वाश्रयमाणाः नामकीर्त्तनादिभिर्भ-गवन्तं भजन्ते । तेषामपि वैष्णवशब्देनाभिधीयमानानां भक्तितारतम्येनैवापराधक्षयतारतम्यं भक्तेर्मुख्यफलोदयतारत-म्यञ्च भक्तिदेव्याः प्रसादतारतम्येनैव । यदुक्तं भगवतैव । "यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः । तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् इति । भक्तिः परेशा-नुभवो विरक्तिः" इत्यादि च शृण्वतां स्वकथाः कृष्णः पुण्य-श्रवणकीर्त्तनः । हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत् सताम्" इत्यादिवचनव्यज्यमानचतुर्द्दशभूमिकारोहश्च क्रमेणैव तेषां ज्ञेयः । एतदर्थमेव तत्र तत्र श्रद्धावृत्त्यादिविधानम् । अत्रापि प्रकरणे" गुणानुवादः खलु सत्त्वभावन" इति अतस्तेषां क्षीणसर्वा-पराधत्वे सत्येव भगवन्तं प्राप्तानां न पुनर्भवः निरपराधानान्तु भगवत्प्राप्तौ नास्ति विलम्बस्तेषां हि भगवन्नामग्रहणं वैकुण्ठा-रोहणञ्चेति । द्वे एव भूमिके यथा अजामिलादीनां यदुक्तम् । "न वासुदेवभक्तानामशुभं विद्यते क्वचित् । जन्ममृत्युजरा-व्याधिभयं वाप्युपजायते इति स्वधर्म्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चितामेति ततः परं हि माम् । अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाहं विबुधाः कलात्यय,, इति निरपराधानामपि केषाञ्चित् प्रेमविशेषसिषाधयिषूणां भगवत्प्राप्तौ किञ्चिद्विलम्बोऽपि । यथैवादिभरतस्य जन्मत्रयमभूत् । किञ्च । सापराधानां मध्ये यदि केचिद्भजनाभ्यासाभावादक्षीणप्राचीनपापाः क्रियमाणपापनामा-पराधाश्च स्युस्तदपि तैर्देहत्यागानन्तरं नरकेषु न गन्तव्यं "स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम् इति नैषां वयो नच वयं प्रभवाम दण्ड,, इत्यादियमवचनेभ्यः । "ग्राहास्मान् यमुनाभ्राता सादरं हि पुनः पुनः । भवद्भिर्वैष्ण-वस्त्याज्यो विष्णुश्चेद्भजते नर" इति पाद्ममाघमाहात्म्यीयदेवदूत-वचनाच्च । किञ्च । नह्यङ्गोपक्रमे ध्वंसो मद्धर्म्मस्योद्धवाण्वपि इति भगवद्वाक्यात् किञ्चिद्भक्त्यङ्कुरस्याप्यनश्वरस्वभावात् पापादिभिर्दुरतिक्रमत्वादमोघत्वाच्चावश्यमेव जनिष्यमाण-पापपुण्याद्यर्थमेव तेषां जन्म भवेत्तु नश्यदवस्थपापपुण्य-निबन्धनम् यदुक्तम् । "न कर्म्मबन्धनं जन्म वैष्णवानाञ्च विद्यत,, इति । अतो जन्मान्तरे तेषां प्राचीनभक्तिसंस्कारो-त्थैर्नामकीर्त्तनाद्यैः पापापराधक्षयान्तभक्तिदेव्याः प्रसादेन भगवत्प्राप्तिः । यदुक्तम् "नवै जनो जातु कथञ्चनाव्रजे-न्मुकुन्दसेव्यन्यवदङ्ग संसृतिम् । स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुन-र्विहातुमिच्छेन्न रसग्रहो जन" इति अत्रान्यवदिति कर्म्मिजनादिवत् संसृतिं पुण्यपापफलभोगमयीं नाप्नोति किन्तु भगवद्दत्तां सुख-दुःखमयीं संसृतिं प्राप्नोतीत्यर्थः । यदुक्तं श्रुत्या । "त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयानिति" तेषां याव-न्नामापराधक्षयाभावस्तावदनष्टानि पापानि अभुक्तफलान्येव तिष्ठन्ति भक्तिवृद्ध्या तदभ्यासेन नामापराधक्षये सति सद्य एव समूलपापक्षयात् भगवन्तं प्राप्नोतीत्यतो भक्तिवृद्ध्यर्थमेकद्वित्रि-जन्मानि वैष्णवा अपि प्राप्नुवन्ति । तेषां दृश्यमानानि वैषयिकसुखानि भक्तिधर्म्मोत्थानि यदुक्तम् । "धर्म्मस्य ह्यापव-र्गस्य नार्थोऽर्थायोपकल्पते । नार्थस्य धर्म्मैकान्तस्य कामो लाभाय हि स्मृतः । कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता" इति दुःखानि तु कानिचित् स्वभक्तभक्तिवर्द्धनचतुरेण भगवता खञ्जन-कटुकौषधपायनादिभिः क्षुधावृद्धिप्रतिपादकेन भिषजेव दत्तानि "यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः" इति तदुक्तेः । कानिचित्तु प्रबलनामापराधफलानि यतो दशसु नामापराधेषु मध्ये अर्थ-वादार्थान्तरकल्पनशुभकर्म्मसाम्यानीति त्रयः साक्षाद्वैष्ण-वताया एव व्याघातकाः । तेभ्योऽन्येषु तु मध्ये द्वावतिप्रबलौ महदपराधनामबलहेतुकपापप्रवृत्ती यतः श्वानि यानि कथ-मु सहते तद्विगर्हामिति "नाम्नो बलाद्यस्य हि पापबुद्धिर्न विद्यते तस्य यमैर्हि शुद्धिः" इति विशेषविभीषिकोक्तिरतस्तौ समुचित-दुःखभोगसहितसन्ततनामकीर्त्तनेनैवोपशाम्यतो नान्यथा । अन्ये नामापराधास्तु सन्ततनामकीर्त्तनादिभिरेव शाम्यन्तीति ये च नामा-पराधिनः कर्म्मज्ञानादरहिताः श्रवणकीर्त्तनादिभक्तिमन्तः किन्त्व-नाश्रितगुरुचरणत्वाददीक्षितास्तेऽपि वैष्णवशब्देनैवाभिधीयन्ते । तथा हि वैष्णव इति "सास्य देवता" इतिसूत्रेणाण "भक्तिः" इति सूत्रेणाण च सिद्ध्यत्यतो ये दीक्षया देवतीकृतविष्णवो ये च भजनेन भजनीयीकृतविष्णवस्ते उभये अपि व्यपदेशान्तररहित्याद्वैष्णवा एवेति तेषामपि न स्यान्नरकपातादि पूर्ववदिति केचिदाहुः । नैतत् सुसङ्गतम् । "यतो नृदेहमाद्यम्"इत्यादौ गुरुकर्णधारमित्युक्तेर्गुरुं विना न भगवन्तं सुखेन प्राप्नुवन्ति अतस्तेषां भजनप्रभावे-णैव जन्मान्तरे भक्त्या भगवत्प्राप्तिर्नान्यथेत्याचक्षते । अथ चानाश्रितगुरोरप्यजामिलस्य सुखेनैव भगवत्प्राप्तिर्दृश्यत एव तस्मादियमत्र व्यवस्था । ये गोगर्द्दभादय इव विषयेष्वे-न्द्रियाणि सदा चारयन्ति को भगवान् का भक्तिः को गुरुरिति स्वप्नेऽपि न जानन्ति तेषामेव नामाभासादि-रीत्या गृहीतहरिनाम्नामजामिलादीनामिव निरपराधानां गुरुं विनापि भवस्येवोद्धारः । हरिर्भजनीय एव भजनं तत्-प्रापकमेव तदुपदेष्टा गुरुरेव गुरूपदिष्टा भक्ता एव पूर्व्वे हरिं प्रापुरिति विवेकविशेषवत्त्वेऽपि नो दीक्षां नच सत्-क्रियां नच पुरश्चर्यां मनागीक्षते मन्त्रोऽयं रसनास्पृगेव फलति श्रीकृष्णनामात्मक इति प्रमाणदृष्ट्या अजामिलादिदृष्टान्तेन च किं मे गुरुकरणश्रमेण नामकीर्त्तनादिभिरेव मे भगवत्प्राप्ति-र्भाविनीति मन्यमानस्तु गुर्व्ववज्ञालक्षणमहापराधादेव भगवन्तं न प्राप्नोति किन्तु तस्मिन्नेव जन्मनि जन्मान्तरे वा तदपराधक्षये सति श्रीगुरुचरणाश्रित एव प्राप्नोतीति । देवतान्तरभक्तानां पापापराधयोः कर्म्मिणामिव व्यवस्थेत्येके । भक्तिदेव्या आश्रयणा-सामान्याभावात्तेऽपि ते न्यूनकक्षायां निविष्टा इत्यपरे । यदुक्तम् । "येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्व्वकम् । अहं हि सर्व्वयज्ञानां भोक्ता च प्रभुरेव च नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते" इति । ये तु केवलमपरा-धिन एव तेषां नैवोद्धारः । यदुक्तं "तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम्" इति । ये तु तेषामपि मध्ये कंसादयस्तेषाम्

कामाद्द्वेषाद्भयात् स्नेहाद्यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥

इत्यादिवचनबलाद्भगवदावेशेनैव नामापराधक्षयान्मुक्तिरिति केचित् । नामान्येव हरन्त्यघमित्युपलक्षणं ध्यानादीनामप्यतो ध्यानपीनः पुन्यमेवावेश इत्यन्ये । कृष्णावतारत्वे तदनैकान्तिकं यतः केचिदावेशरहिता अपि नरकबाणादिकौरवादिसैन्यगतास्तद्धस्तमरणप्रभावात् केचिद्दर्शनमात्रस्यापि प्रभावात्तं प्रापुरिति पूर्वत्रैवोक्तमित्यपरे ॥ ९ ॥ १० ॥

सर्वमहापातकप्रायश्चित्तत्वेऽपि नाम्नः परमवैशिष्ट्यमाहुः । नेति द्वाभ्याम् । ब्रह्मवादिभिर्मन्वादिभिर्नामपदैः साङ्केत्यादिना नाम्नश्चिह्नमात्रैः । यद्वा । नारायणादिनाम्नः एकेनापि पदेन सुबन्तशब्दमात्रेणापि बहुत्वं गौरवेण अर्थापेक्षापि नापेक्षितव्येति भावः उदाहृतैरुच्चारितैरिति मनोनिवेशोऽपि नापेक्षितव्य इति भावः । अघवान् कर्मिप्रभृतिभिन्न एव पापीत्युक्तयुक्त्या व्याख्येयम् । न च नाम समूलपापनिवृत्तिमात्र एवोपक्षीणमित्याहुस्तन्नाम उत्तमःश्लोकस्य गुणानैश्वर्यमाधुर्यसौन्दर्यौदार्यान्युपलम्भयति प्रेम्णा अनुभावयतीति तत् । यद्वा । ननु तपोव्रतादिमहाकृच्छ्रैर्यन्महापातकं निवर्त्यते तन्नाम्नः सुखोच्चारणमात्रेणैव कथं निवर्त्यतामित्यत आहुः । तदिति । उत्तमःश्लोकस्य महायशस्विनो हरेस्तदेव गुणस्य प्रभावस्य ज्ञापकं परमेश्वरस्येयमप्येका परमेश्वरतेत्यर्थः ॥ ११ ॥

द्वादशाब्दादिप्रायश्चित्तानां ततो निकृष्टत्वमाहुः । नैकान्तिकं नात्यन्तशोधकं तत्प्रायश्चित्तं यस्मिन् कृतेऽपि असत्पथे पापमार्गे मनो धावति चेत् तस्मात् कर्मणां निर्हारमात्यन्तिकं नाशमभीप्सतां हरेर्गुणानुवादः नाम्नामिव गुणानामप्यनुवादोऽनुकथनं कस्यचिन्मुखाच्छ्रुतानां तेषां पश्चात्कथनं "पश्चात्सादृश्ययोरनु" इत्यमरः । सत्त्वभावनः वासनाया अपि नाशकत्वात् सत्त्वशोधकः । ननु मनः पुनर्धावतीति प्रायश्चित्तानन्तरं पुनः पापकरणं कथं निन्द्यते तस्यापि संस्कारावीनत्वादुत्खातदंष्ट्रोरगदंशसदृशत्वमस्माभिर्व्याख्येयमिति चेद् भ्रान्ताः स्थः तथा व्याख्यानमस्माकं नाम्नः सवासनपापनाशकत्वप्रतिपादकवचनानुरोधादेव न तु स्वकपोलकल्पितम् । भवतान्तु प्रायश्चित्तशास्त्रे तादृशवचनाभावात् कर्ममार्गे ह्यर्थवादजन्यप्रत्यवायस्याप्यश्रवणात्कथं तथा व्याख्यातुं शक्तिरिति प्रागेवोक्तम् ॥ १२ ॥

अथ यस्मादेवं तस्मादेनं मा अपनयत । कृताशेषेति पुत्रनामकरणसमये प्रथमेनैव नाम्नेत्यर्थः । एतेनाजामिलस्य प्राचीननामापराधराहित्यमवगम्यते । यतो निष्पापत्वादेव म्रियमाणः सन्नाम सम्यगग्रहीत् पापसत्त्वे म्रियमाणस्य जिह्वायां कथं नाम प्रादुर्भवेदिति भावः । यदुक्तं गीतासु "येषां त्वन्तगतं पापम् इत्युपक्रम्य अन्तकाले तु मामेव स्मरन्मुक्त्वा कलेवरम् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः" इति । तेन मृत्युकाल एव नामाभावप्रादुर्भावाभ्यां नामापराधसत्त्वासत्त्वे अनुमेये इति व्याचक्षते ॥ १३ ॥

कीदृशं नाम सर्वपापहरं स्यादित्यपेक्षायां कैमुत्येनाहुः । सांके[illegible] पुत्रादौ सङ्केतः स्वार्थे ष्यञ् सर्वत्र तृतीयार्थे प्रथमा सङ्केता[illegible] दिभिरपीत्यर्थः । पारिहास्यमिति प्रीतिगर्भमेव न तु निन्दागर्भं[illegible] यथा भो विख्यातकीर्त्ते ! कृष्णनाम दृष्टा तव कीर्त्तिर्यतो मां मो[illegible] ढुमशक्तस्त्वमिति स्तोभं कथागीतालापादिपूरणार्थं [illegible] हेलनमत्र हेलया गिरिरुद्धृत इति यत्नराहित्यमेवोच्यते [illegible] आहारविहारनिद्रादावप्यवहेलया एव यावन्ति कृष्णनाम[illegible] न्ययं गृह्णाति न तावन्त्यन्ये प्रयत्नेनापि ग्रहीतुं शक्नुवन्तीति न तु निन्दावज्ञादिकम् । तथा सति "निन्दां भगवतः शृण्वन्" इत्यादिवचनतो निन्दके किम्वा विष्णुनेति तदवमन्तरि वेणादावपि शोधकत्वं न स्यादशेषाघहरं वासनापर्यन्तसर्वपापनाशकम् ॥ १४ ॥

साङ्केत्यादिभ्योऽन्यस्य पञ्चमस्य वैवश्यप्रभेदानाह । पतितः प्रासादादिभ्यः स्खलितो मार्गेण भग्नो भग्नगात्रः संदष्टः सर्पादिभिः तप्तो ज्वरादिना आहतो दण्डादिना पुमान् कर्मि प्रभृतिभ्योऽन्य इति व्याख्यातयुक्त्या ज्ञेयम् ॥ १५ ॥

ननु पापतारतम्येन कृच्छ्रादितारतम्यं शास्त्रे दृश्यते [illegible] मेक एव नामाभासः सर्वमहापातकानि विनाशयेदित्यत आहुः । गुरूणामिति । तेषां परिमितशक्तित्वात्तथा तथैव व्यवस्था नाम्नस्त्वचिन्त्यमहाशक्तेरेकस्यैव महापातकपुञ्जसंहर्तृत्वमंशेनैव यथा साम्बमोचने प्रवृत्तस्य बलभद्रस्यैकस्यैव दुर्योधनादिसर्वकौरवसंहारक्षमत्वमनायासेनैवेति भावः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अपरे हीनप्रतिज्ञत्यक्तव्रतकृतघ्नप्रभृतयः ॥ ९ ॥

सुनिष्कृतं सुष्ठु प्रायश्चित्तं नामव्याहरणात्तद्विषया मतिः नामोच्चारकरक्षणविषया मतिर्हरेर्भवतीत्यर्थः । यद्वा । हरिनामोच्चारकस्य तद्विषया हरिस्वरूपगुणादिविषया मतिर्भवतीत्यर्थः ॥ १० ॥

ब्रह्मवादिभिर्हरेर्नामरूपैः पदैरुदाहृतैरघवान् यथा विशुद्ध्यति तथा कृच्छ्रादिव्रतादिभिर्निष्कृतैः प्रायश्चित्तैः समुदितैः स न शुद्ध्यति तद्धरिनामोच्चारणम् उत्तमकीर्तेर्हरेः गुणानामुपलम्भनं ज्ञापकं भवति हरिनामोच्चारणेन निखिलपापनिर्नाशपूर्वकं हरिनामोच्चारकः सर्वपुरुषार्थं लभते यदि हरिनामोच्चारकस्यापि सर्वपुरुषार्थदं हरिप्रावण्यं न भवत्यपि तु पापकर्मप्रावण्यं भवति तदा तस्य हरिनाम्नि अर्थवादादिकल्पनया नामापराधित्वं ज्ञेयम्

अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः ।
स पापिष्ठो मनुष्याणां निरये पतति स्फुटम् ॥
मन्नामकीर्तनफलं विविधं निशम्य
न श्रद्दधाति मनुते यदुतार्थवादम् ।
यो मानुषस्तमिह दुःखचये क्षिपामि
संसारघोरविविधार्तिनिपीडिताङ्गम् ।

इत्यादिपुराणान्तरेभ्यः नामापराधनिवृत्तिरपि नामोच्चारणादेव भवति ।

नामापराधयुक्तानां नामान्येव हरन्त्यघम् ।
अविश्रान्तप्रयुक्तानि तान्येवार्थकराणि च ॥

इति वचनात् ॥ ११ ॥

तैस्तान्यघानि पूयन्ते तपोदानजपादिभिः।
नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥ १७ ॥
धर्मो योऽयमुपन्यस्तः परमस्तु सनातनः।
क्रियतेऽहरहः शुद्धिरात्मनो वाससो यथा ॥ ० ॥(१)
नैकान्तशुद्धिः स्यात् कर्तुः क्रिययाऽकर्तृना यतः।
अकर्तुरात्मनस्तस्माद्भजेतानीहया हरिम् ॥ ० ॥
अज्ञानादथवाज्ञानादुत्तमश्लोकनाम यत्।
सङ्कीर्तितमघं पुंसो दहेदेधो यथाऽनलः ॥ १८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

यस्मिन्निष्कृतेऽपि मनः असत्पथे पापमार्गे धावति तन्निष्कृ-तमात्यन्तिकमत्यन्ततः शोधकं न भवति तत्तस्मात् कर्मनिर्हा-रमीप्सतां हरेर्गुणानुवाद एव सत्त्वभावनः अन्तःकरणशोधकः मुख्यं निष्कृतमित्यर्थः ॥ १२ ॥

तदेवं धर्मराजनये निष्पापदण्डनासम्भवादस्य च सर्वथा निष्पापत्वाच्च "तत एनं दण्डपाणेः सकाशं कृतकिल्बिषं नेष्याम" इत्येवं मृषावादिनो यूयमेवैनं नेतुं पापित्वभ्रमात्प्रवृत्ताः अतो माऽपनयत ॥ १३ ॥

ननु पुत्रोद्देशेनोच्चारितं तन्नाम कथं निष्पापत्वकारणमत्राहुः। साङ्केत्यमिति। साङ्केत्यमन्यसङ्केतेन कृतं पारिहास्यं परिहासार्थं कृतं स्तोभं गीतालापपूरणार्थं कृतं हेलनं सावज्ञमिति विष्णुनेत्येवं वैकुण्ठनामग्रहणमशेषाघहरं विदुः

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

इत्यादिस्मृतयः तन्मूलभूताः श्रुतयश्च "मर्ता अमर्त्यस्य ते भूरि नाम मनामहे। विप्रासो जातवेदसः आस्य जानन्तो नाम चिद्विवक्तन" इत्याद्याः ॥ १४ ॥

नन्वनेन अवहिततया सङ्कल्पपूर्वकं नामग्रहणं न कृतमतो यातनार्होऽयमित्यत्राहुः। पतित इति। पुमानित्युपलक्षणं स्त्र्यादीनाम्। पतितः उच्चस्थानात् स्खलितः तिक्तस्थानादियोगतः भग्नः शस्त्रादिना खण्डिताङ्गः संदष्टो वृश्चिकादिना तप्तः ज्वरादिना आहतो दुरुक्त्यादिना एवमवशेन अनवहितत्वेन हरिरिति य आह स यातनाः नार्हति ॥ १५ ॥

अत्र यातनाप्रापकाप्रापकाधर्मजहृदयशुद्धिर्हरिनामोच्चारणा-दिरूपेशाङ्घ्रिसेवयैव भवतीति हेतुमाहुः। गुरूणामिति द्वाभ्यां गुरूणां महतां लघूनामल्पानां पापानां महर्षिभिः ज्ञात्वा तत्तद्-नुरूपतया निश्चित्य गुरूणि लघूनि च प्रायश्चित्तानि यान्यु-क्तानि ॥ १६ ॥

---

भाषा टीका।

सुवर्णादि चोरी करने वाला मदिरा पान करने वाला मित्रद्रोही ब्राह्मणघाती गुरुस्त्रीगामी स्त्री को मारने वाला पिता को मारने वाला राजा को मारने वाला और भी जो पातकी हैं संपूर्ण पाप वालों को यही एक उत्तम प्राय-श्चित्त है जो कि भगवान् के ध्यान पूर्वक श्रीविष्णु भगवान् के नाम का उच्चारण किया जाय ॥ ९ ॥ १० ॥

मन्वादिकों के कहे हुये प्रायश्चित्तोंसे पापी पुरुष तैसा पवित्र नहीं होता है जैसा कि उत्तमश्लोक विष्णु भगवान के गुणों के प्रकाश करने वाले नामों के उच्चारण करने मात्र से पवित्र होता है ॥ ११ ॥

वे सब प्रायश्चित्त अत्यन्त शोधक नहीं हैं क्यों कि प्रायश्चित्त करने पीछे भी मन असत् मार्गों मे जाता है तब तो पापों के नाश करने की इच्छा वाले पुरुषों को भगवान् का गुणानुवाद ही करना उत्तम है क्योंकि उसके करने से भगवान् अन्तःकरणको शुद्ध करदेते हैं तब फिर मन खोटेमार्ग मे नहीं जाता है ॥ १२ ॥

इससे इसको मत लेजाओ क्यों कि इसने सब पापों का प्रायश्चित्त करलिया है जिससे कि इसने मरते समय मे भगवान् के नामका ग्रहण किया है ॥ १३ ॥

किसी दूसरे वस्तुके संकेत से अथवा परिहास से अथवा गानके ध्रुवपदादि मे अवलम्ब लेनेको अथवा किसी प्रकार की अवज्ञासे ग्रहण किया जो भगवान् का नाम वही सब पापों का नाश करनेवाला है ऐसा नाम माहात्म्य जानने वाले पुरुष कहते हैं ॥ १४ ॥

गिरने से ठोकरके लगने से शरीर भङ्ग होने से किसी जन्तुके काटने से ज्वरादि ताप होने से दण्डादि आघात होने से परवश होकर भी जो पुरुष हरिः ऐसे दो अक्षर को कहता है सो पुरुष मात्र कोई होवे कभी यम दण्ड को नहीं प्राप्त होता है ॥ १५ ॥

छोटे बडे पापों के दूर करने के वास्ते छोटे बडे प्रायश्चित्त महर्षिजनोंने जान कर निरूपण किये हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च। तैस्तपोदानादिभिस्तान्यघान्येव पूयन्ते नश्यन्ति अध-र्माज्जातं मलिनं तु तस्य पापकर्तुर्हृदयम्। यद्वा। तेषामघानां हृदयं

(१) इमौश्लोकौ सटीको श्रीविजयध्वजतीर्थपाठे।

यथाऽगदं वीर्यतममुपयुक्तं यदृच्छया ।
अजानतोऽप्यात्मगुणं कुर्यान्मन्त्रोऽप्युदाहृतः ॥ १९ ॥
पतिं वः पृच्छत भटा ! धर्मेऽस्मिन् यदि संशयः । (१)
स वेद परमं गुह्यं धर्मस्य भगवान् यमः ॥ ० ॥

॥ श्रीशुक उवाच ॥

त एवं सुविनिर्णीय धर्मं भागवतं नृप ! ।
तं याम्यपाशान्निर्मुच्य विप्रं मृत्योरमूमुचन् ॥ २० ॥
इति प्रत्युदिता याम्या दूता यात्वा यमान्तिके ।
यमराज्ञे यथा सर्वमाचचक्षुररिन्दम ! ॥ २१ ॥
द्विजः पाशाद्विनिर्मुक्तो गतभीः प्रकृतिं गतः ।
ववन्दे शिरसा विष्णोः किङ्करान् दर्शनोत्सवः ॥ २२ ॥
तं विवक्षुमभिप्रेत्य महापुरुषकिङ्कराः ।
सहसा पश्यतस्तस्य तत्रान्तर्दधिरेऽनघ ! ॥ २३ ॥
अजामिलोऽप्यथाकर्ण्य दूतानां यमकृष्णयोः ।
धर्मं भागवतं शुद्धं त्रैविद्यं च गुणाश्रयम् ॥ २४ ॥
भक्तिमान् भगवत्याशु माहात्म्यश्रवणाद्धरेः ।
अनुतापो महानासीत् स्मरतोऽशुभमात्मनः ॥ २५ ॥
अहो मे परमं कष्टमभूदविजितात्मनः ।
येन विप्लावितं ब्रह्म वृषल्यां जायतात्मना ॥ २६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सूक्ष्मं रूपं संस्काराख्यं न शुध्यति तदपीशाङ्घ्रिसेवया कीर्तनादिना शुध्यतीत्यर्थः । अयम्भावः । महान्त्यपि पापानि सकृदुच्चारितेनैव नाम्ना नश्यन्ति सकृत्प्रवर्तितेन दीपेनेव गाढध्वान्तानि तदावृत्त्या तु पापान्तरस्यानुत्पत्तिः दीपधारणा इव तमोऽन्तरस्य ततश्च वासनाक्षयाद्धृदयशुद्धिः एतदर्थमेव तत्र तत्रावृत्तिविधानम् "पापक्षयश्च भवति स्मरतां तमहर्निशम्' इत्यादिषु तद्देवात्राप्युक्तम् "गुणानुवादः खलु सत्त्वभावनः तदपीशाङ्घ्रिसेवया"इति च अतोऽस्य हरिनाम्नैव सर्वपापक्षयो वासनाक्षयस्तु महापुरुषदर्शनादिभिरिति ॥ १७ ॥

तथापि पापप्रायश्चित्तमिदमिति ज्ञात्वा नोच्चारितमिति चेत्तत्राहुः । अज्ञानादिति । बालकेनाज्ञानादपि प्रक्षिप्तोऽग्निर्यथा काष्ठराशिं दहति तद्वत् ॥ १८ ॥

नन्विदमपि पर्षदनुपदिष्टं श्रद्धाहीनं च कथं प्रायश्चित्तं स्यात्तत्राहुः । यथेति । अगदमौषधं वीर्यवत्तममिति वक्तव्ये वीर्यतममित्युक्तं यदृच्छया श्रद्धादिहीनमुपयुक्तं भक्षितं पर्षन्मुखादजानतोऽपि स्वगुणमारोग्यं कुर्यान्मन्त्रोऽपि नामात्मकस्तथा स्वकार्यं कुर्या-देव न हि वस्तुशक्तिः श्रद्धादिकमपेक्षते इत्यर्थः । तदुक्तं विष्णुधर्मेषु ।

> हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
> अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥

इति ॥ १९ ॥

तं विप्रममूमुचन्मोचयामासुः ॥ २० ॥

प्रत्युदिता निराकृताः सन्तो यात्वा गत्वा यमराजाय यद्वृत्तं तत्कथयामासुः ॥ २१ ॥

दर्शनेनोत्सवो यस्य ॥ २२ ॥

विवक्षुं वक्तुमिच्छन्तं ज्ञात्वा ॥ २३ ॥

त्रैविद्यं वेदत्रयप्रतिपाद्यं गुणाश्रयं यमदूतानां धर्मं दूतानां च भागवतं भगवत्प्रणीतं शुद्धं निर्गुणं धर्मं कथयेति योज्यं भक्तिमानासीदित्युत्तरस्यानुषङ्गः ॥ २४ ॥ २५ ॥

अनुतापं प्रपञ्चयति । अहो इति चतुर्भिः । येनात्मना

---

( १ ) अयं सटीकः श्रीवीरराघवश्रीविजयध्वजतीर्थयोः पाठे ।

### श्रीधरस्वामिकृतभावार्थदीपिका

वृषल्यां पुत्रतया जायमानेन ब्रह्म ब्राह्मणजातिर्विप्लावितं नाशितम् ॥ २६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथापि तैस्तैः तपआदिभिः प्रायश्चित्तैरघानि प्रतिनियतनिवर्त्यानि पूयन्ते निवर्त्यन्ते न त्वधर्मजमधर्मं जनयतीत्यधर्मजं हृदयं मनश्चित्तशुद्धिर्न जायत इत्यर्थः तद्धर्मस्य निमित्तं हृदयं येन शुद्ध्यतीत्याहुः। तदपीति। तद्धृदयमपीश्वराङ्घ्रिसेवया नामस्मरणादिरूपया भगवत्सेवया शुद्ध्यतीत्यर्थः ॥ १७ ॥

तस्माज्ज्ञानादिदं भगवन्नामाशेषाघानवर्त्तकमिति ज्ञानाद्वा अज्ञानात्सङ्केतपरिहासादिनिमित्ताद्वा सङ्कीर्तितमुत्तमश्लोकस्य भगवतो नाम पुंसः पापिनोऽघं दहत्येव निवर्त्तयत्येव यथाऽग्निः ज्ञानादज्ञानाद्वा स्पृष्टो दहति तद्वदित्यर्थः ॥ १८ ॥

यथा च वीर्यतममगदमौषधं यदृच्छया ज्ञानादज्ञानाद्वा उपयुक्तं सेवितं सदारोग्यं जनयतीति शेषः तथा भगवन्नामात्मको मन्त्रोऽपि आत्मनः स्वस्य गुणं नाम्नः सामर्थ्यमजानतापि पुरुषेणोदाहृतः उच्चारितः सन्नघं दहत्येवेति पूर्वेणान्वयः वस्तूनां विलक्षणस्वभावत्वादिति भावः ॥ १९ ॥

यदस्मदुक्तार्थे युष्माकं सन्देहस्तर्हि स्वपतिं यमं पृच्छतेत्याहुः। पतिमिति हे भटाः! हे दूताः! यद्यस्मिन्नस्मदुक्ते धर्मे यदि संशयस्तर्हि यो युष्माकं पतिः यमं पृच्छत स तु धर्मं सूक्ष्मं जानातीत्याहुः। स इति। स भगवान्।

> उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।
> वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥

इत्युक्तविधः यमः धर्मस्य भगवद्धर्मस्य गुह्यं रहस्यमत एव परमं श्रेष्ठं वेद जानातीत्यर्थः ॥ ० ॥

एवमुक्ता यमदूताः विप्रं मुमुचुरित्याह मुनिः। त इति। हे नृप! ते यमभटा एवमुक्तविधं भागवतं भगवन्नामोच्चारणरूपं धर्मं विनिर्णीय निःशेषदुरितक्षपणसमर्थं विनिश्चित्य तं विप्रं याम्यपाशान्निर्मुच्य विमुक्तं कृत्वा मृत्योरमूमुचन् मोचितवन्तः मृत्योरमुमुचन्नित्यस्यायमभिप्रायः आयुः क्षयकरात्पापादिक्यात्तस्य मृत्युः प्रसक्तः तत्समये च तमानेतुं याम्याः पुरुषा आजग्मुः तस्मिन्नधिके पापे अन्तिमनामोच्चारणेनाकस्मादापतितेन समूलं विनष्टे सति मृत्योरपि निवृत्तिरित्यत एवं "स एव वर्तमानोऽज्ञो मृत्युकाल उपस्थिते। मतिं चकार तनये" इति पूर्वग्रन्थस्य "द्विजः पाशाद्विनिर्मुक्तो गतभीः प्रकृतिं गतः" इत्युत्तरग्रन्थेन सह न विरोधः अन्यथा यमकमृत्योर्निवारणासम्भवात्पुनर्जीवनकथनं भक्तियोगोपसंहारकथनं च विरुध्येतेति ॥ २० ॥

ततो यमदूता द्विजो विष्णुदूताश्च किमकार्षुस्तत्राह। इतीत्थं प्रत्युदिताः प्रत्याख्याताः याम्या दूताः यमसमीपं यात्वा गत्वा यमराज्ञे यमराजाय समासविधेरनित्यत्वान्न टच् आपेदिरे। हे अरिन्दम! यथासर्वमुक्तं सर्वमतिक्रम्याचचक्षुः कथितवन्तः इति ॥ २१ ॥

द्विजो यमपाशाद्विनिर्मुक्तः गतभीर्निर्भयः प्रकृतिं पूर्वावस्थां गतः प्राप्तः पुनर्जीवितवानित्यर्थः विष्णोः किङ्करान् दर्शनेनोत्सवो दृष्टो यस्य तादृक् शिरसा ववन्दे नमस्कृतवान् हे अनघ ! ॥ २२ ॥

तं द्विजं विवक्षुं किञ्चिद्वक्तुमिच्छुमभिप्रेत्यालक्ष्य महापुरुषस्य भगवतः किङ्कराः सहसा आशु तस्य द्विजस्य पश्यतः सतः अन्तर्दधिरेऽन्तर्हितवन्तः अस्य भगवत्प्राप्त्यपेक्षाजननायान्तर्द्धानम्।

> सर्वज्ञोऽपि हि सर्वेशः सदा कारुणिकोऽपि सन्।
> संसारतन्त्रवाहित्वाद्रक्षापेक्षामपेक्षते ।

इतिह्युक्तम् ॥ २३ ॥

अथ तदन्तर्धानानन्तरमजामिलः यमकृष्णयोर्दूतानां शुद्धं भागवतं धर्ममाकर्ण्य भगवन्माहात्म्यश्रवणाज्जगवद्भक्तिमानासीदित्युत्तरेणान्वयः। तत्र यमदूतानां त्रैविध्यं गुणाश्रयं धर्ममाकर्ण्य कृष्णदूतानां शुद्धं भागवतं धर्ममाकर्ण्येत्यन्वयः त्रिविधो वेदः ऋग्यजुःसामात्मकत्वात्तद्विहितं त्रैविध्यं पूर्वभागविहितं कर्म गुणाश्रयं गुणत्रयवद्वयजनाधिकारं शुद्धं सत्त्वगुणप्रधानजनाधिकारं भागवतं भगवतः सम्बन्धिनं भगवत्पार्श्वेति पाठे आसीदिति क्रियापदाध्याहारः आकर्ण्येत्यस्याकर्णितं मनस्यवधार्येत्यर्थः अन्यथा तिरोधानात्पूर्वमेवाकर्णितत्वात्तेत्यनेन सह विरोधापत्तेः अथेत्यस्य नन्विति वार्थः ॥ २४ ॥

आत्मनः स्वस्याशुभं पापं स्मरतस्तस्य महाननुतापः परिताप आसीत् ॥ २५ ॥

तस्यानुतापप्रकारमेवाह। अहो इति। अविजित आत्मा मनो येन तस्य मे मम महत्कष्टमहो अभूत्किं तद्वृषल्यां शूद्रायां जायमानेन येनात्मना मया ब्रह्म ब्रह्मत्वं विप्लावितं विनाशितम् इति यत् "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुत्यर्थमभिप्रेत्य जायतात्मनेत्युक्तम् ॥ २६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हृदयं लिङ्गं मनः ॥ १७ ॥

अजामिलस्यापि सकृन्नामकीर्तनेन वृषलीसङ्गाद्यमपापहरणे देहवियोगलक्षणमृत्योर्मुक्तिः न तु संसारात्तदर्थं तन्नामोच्चारणादिमेवाहरहः कर्तव्येति विधीयते। धर्म इति। धर्मो नामसङ्कीर्तनलक्षणः आत्मनः शुद्धिः अचिन्मनोनाशेन चिन्मनसः कैवल्यलक्षणा शुद्धिर्भवति यासतो निर्णोजनेनेति शेषः ॥ ० ॥

नन्वीश्वरसेवया यथा मनःशुद्धिस्तथा निरन्तरप्रायश्चित्तक्रिययापि सा किं न स्यादिति तत्राह। नैकान्तशुद्धिरिति। अकर्तुः स्वकर्तृतारहितस्यात्मनः जीवस्य प्रायश्चित्तकर्मकर्तुः प्रायश्चित्तक्रियया एकान्तशुद्धिर्मनःशुद्धिपूर्विका शुद्धिर्न स्यात् अकर्तृता स्वतन्त्रकर्तृत्वं नास्तीति यतः तस्मादनीशया निषिद्धकर्णोपरमेण निरन्तरहरिनामकीर्तनलक्षणक्रियया हरिं भजेतेत्यन्वयः ॥ ० ॥

नामसङ्कीर्तनस्य कर्तव्यतामर्थवादरूपेणोपसंहरति। अज्ञानादिति। अज्ञानादित्यनेन सर्वात्मना ज्ञानाभावोऽपि न विवक्ष्यते किन्तु अविरुद्धस्वाचाराः गुणाः तेषामाश्रयो नारायणः इत्यायर्थविषयवेदनाभावः अन्यथा हरेः सर्वशब्दवाच्यत्वेन घटपटादीनां तन्नामत्वेऽपि तान्विहाय नारायणादिनामकीर्तनानुपपत्तेः अत उपचारमात्रमिदमिति ज्ञातव्यम् ॥ १८ ॥

सर्वशब्दानां भगवन्नामत्वेऽपि (१) तदातुरतापि फलानुदयात्

(१) घटादिनाम्नामातुरता।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नारायणादिनाम्ना तदुदयोपलम्भादुभयेषां विशेषः कस्मादित्याशङ्क्य मन्त्रोऽगदवदित्याहुरित्याह । यथेति । अजानत इत्यत्रापि उपदेशादिना सामान्यज्ञानमस्त्येव सूपयुक्तमित्यस्योपदेशापेक्षितत्वाद्यथेतरस्नम्यमूलशब्दमात्रेभ्यः मन्त्रौषधयोः वैशिष्ट्यफलत्वं चेश्वरक्लृप्तदेवतासन्निधानात्तथात्रापीति भावः ॥ १९ ॥

भवद्भिरस्मदुक्तार्थो विस्रम्भणीयः युष्मत्पृष्टस्वाम्युक्तार्थस्यैकत्वोपपत्तेरित्याशयेनाहुरित्याह । पतिं च इति ॥ ० ॥

मृत्योर्देहवियोगलक्षणात् ॥ २० ॥

विष्णुदूतैः सदुत्तरीकृताः याम्याः पुनः किमकुर्वन्निति तत्राह । इतीति ॥ २१ ॥

अजामिलेन मुक्तमृत्युना पुनः किमकारीति तत्राह । द्विज इति । प्रकृतिं गतः सात्त्विकावस्थां प्राप्तः ॥ २२ ॥

मर्त्यदेहस्थेन तेन द्विजेन संलापायोगाद्विष्णुदूतैः किं कृतमत्राह । तं विवक्षुमिति ॥ २३ ॥

प्रकृतिं गत इत्युक्तं विवृणोति । अथेति । त्रैविद्यं त्रिवेदविहितं धर्ममेतदेव स्पष्टयति । गुणाश्रयमिति ॥ २४ ॥

स्वर्गादिविषयं श्रुत्वा पथिकवदुदासीनोऽभूत्किमत्राह । भक्तिमानिति । अभूदिति शेषः कृतदोषप्रायश्चित्ताभावे हरौ भक्तिः सुदृढा न स्यादित्यतस्तत्प्रायश्चित्तक्रियाप्रकारमाह । अनुताप इति ॥ २५ ॥

ब्रह्म ब्राह्मण्यं विप्लावितं विनाशितं जायता रेतोरूपेण जायमानेन ॥ २६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथागदमिति । मन्त्रशब्देनात्र नामोक्तिः मन्त्रस्य तथा प्रभावे श्रद्धाद्यपेक्षत्वादस्य तु तदनपेक्षत्वादत्रैव मन्त्रशब्दस्य मुख्या प्रवृत्तिरित्यभिप्रायेण ज्ञेया । पूर्वपद्यस्य दृष्टान्तान्तर एव वा सर्वं पद्यम् ॥ १९ ॥

सुविनिर्णीयेति । यद्यपि यमदूतास्तदानीं तत्र सम्यग्बुद्धवन्तस्तथाप्यात्ममध्ये सुष्ठु विनिर्णीयानुवादं कुर्वेत्यर्थः । अत्र साङ्केत्यमित्यादौ सकृन्नामाभासेनापि यन्निःशेषाघधूननोक्त्या वासनापर्यन्तत्वय उच्यते । गुणानुवाद इत्यादौ तु भक्त्यावृत्त्यैवेति यत्तत्तु यथाक्रमं नामापराधशून्यतद्युक्तभजनापेक्षया ज्ञेयम् ।

नामापराधयुक्तानां नामान्येव हरन्त्यघम् ।
अविश्रान्त प्रयुक्तानि तान्येवार्थकराणि यत् ॥

इति पाद्मात् तदेवं नाम्नः सर्वत्र स्वातन्त्र्येऽपि कर्मादेः पूर्वार्थं तदङ्गत्वेन कृतमप्यपराध एव हुतादिसर्वशुभक्रियासाम्यमपि पाद्मदशापराधेषु गणितं तस्मात् तदंशाशङ्कानिरसनायेत्येतदपि तादृशापराधशान्त्यर्थमेव ज्ञेयम् । नन्वेवं चेन्म्रियमाणोऽयं नामाग्रहीत्तर्हि कथं सद्य एव पार्षदैर्वैकुण्ठं न निन्ये श्रूयते हि

यस्यावतारगुणकर्मविडम्बनानि
नामानि येऽसुविगमे विवशा गृणन्ति ।

तेऽनेकजन्मशमलं सहसैव हित्वा
संयान्त्यपावृतमृतं तमजं प्रपद्ये ।

इति । अत्रोच्यते श्रीभगवन्नामग्रहणं खलु द्विध[ा]
भवति केवलत्वेन स्नेहसंयुक्तत्वेन च । तत्र पूर्वमपि प्रापयत्येव सद्यस्तल्लोकं तन्नाम । परेण च तत्सामीप्यमपि प्रापयति । "मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते । दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापन" इति तद्वाक्यात् । किन्तु "नाहं तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तिवृत्तये" इति तद्वाक्यदिशा विलम्बेन प्रापयति । स्नेहस्त्वमीषामनुवृत्तिर्मदनुसेवनवृत्तिर्जीवनहेतुस्तदर्थमित्यभिप्रायो दर्शितः । तदेवं सत्यजामिलोऽप्ययमारोपिततन्नाम्नः पुत्रस्य संबन्धेन तन्नाम्नापि स्निह्यतिस्म तस्मिंश्च स्वनाम्नि श्रीभगवतोऽप्यभिमानसान्द्रो दृश्यते । यतस्तद्विषया मतिरित्यत्र । यतः पार्षदानामपि महानेव तत्रादरो दृष्टः तस्मात् स्नेहसंवलनया गृहीतस्वनाम्नि तस्मिन्नुत्कण्ठापूर्वकसाक्षान्निजकीर्त्तनादिद्वारा साक्षान्निजस्नेहं प्रकृष्टं दृष्ट्वा नेतुमिच्छति प्रभुरिति ज्ञात्वा सहसास्माभिः सह तं नीतवन्त इति सर्वं समञ्जसम् ॥ २०--२२ ॥

तं विवक्षुमिति । तेन सहसम्भाषणामुत्कण्ठां वर्द्धयित्वा सम्यग्भक्तत्वापादनार्थं तदर्थमेव हि त्यागो बुध्यते ॥ २३ ॥ २४ ॥ २५ ॥

उत्कण्ठापूर्वकसाक्षात्तद्भजनमेव दर्शयति । अहो इत्यादिना धास्ये मनो भगवति शुद्धं तत्कीर्त्तनादिभिरित्यन्तेन ॥ २६--२९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च तैस्तथाविधैरपि पूयन्ते नश्यन्ति पूञ् विनाशे अधर्मांशानि अघानां हृदयं मूलं सूक्ष्मं रूपं तु न पूयते न नश्यति तदपि ईशाङ्घ्रिसेवया हरिचरणयोर्भक्त्या नवानां भक्तीनां मध्ये एकया प्राकरणिक्या कीर्त्तनरूपयापि वासनापर्यन्तपापक्षयात्तद्वांश्[छ]ुद्धयति ॥ १७ ॥

तथापि प्रायश्चित्तमिदामीति ज्ञात्वा नोच्चारितमिति चेत्तत्राह । अज्ञानादिति । बालकेनाज्ञानादपि प्रक्षिप्तोऽग्निर्यथा काष्ठराशिं दहति तद्वत् ॥ १८ ॥

न केवलमघदहनमेव करोति नाम किन्तु भगवत्प्रेमप्राप्त्यादिकञ्चेत्यतो दृष्टान्तान्तरमाहुः । यथा अगदमौषधं वीर्यवत्तममिति वक्तव्ये वीर्यतममित्युक्तम मतुप्लोपाद्वीर्यशब्दोऽयं अाद्य[न्तो] जन्तो वा यदृच्छया अकस्मादज्ञानेनापि इत्यर्थः उपयुक्तं भक्षितं सदात्मगुणं नैरुज्यं बलपुष्ट्यादिकञ्च करोति मन्त्रोऽपि अत्र द्रूपस्तथैव नामेत्यर्थः । यद्वा । नामात्मकोऽयं मन्त्रस्तथा स्वकार्यं कुर्यादेव न हि वस्तुशक्तिर्ज्ञानादिकमपेक्षत इत्यर्थः ॥ १९ ॥ २० ॥

प्रत्युदिताः प्रत्याख्याता यमराज्ञे यमराजाय ॥ २१ ॥ २२ ॥

अन्तर्दधिरे इति । तस्यायुःशेषसत्त्वेऽपि पार्षदैर्य यदायुः मायुः क्षयं ज्ञात्वा यमदूतैराकर्षणोपक्रमः कृत इति स एव मरणकालत्वेनोपचरितः वस्तुतः पापक्षयादायुर्भङ्गाभावादिति ज्ञेयम् ॥ २३ ॥

यमदूतानां कृष्णदूतानाञ्च धर्ममाकर्ण्य कृष्णदूतानां धर्मं शुद्धं गुणातीतं भागवतं भगवत्प्रणीतं यमदूतानान्तु त्रैवेदं वेदत्रयप्रतिपाद्यं गुणाश्रयमशुद्धम् ॥ २४ ॥ २५ ॥

धिङ्मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम्।
हित्वा बालां सतीं योऽहं सुरापामसतीमगाम् ॥ २७ ॥
वृद्धावनाथौ पितरौ नान्यबन्धू तपस्विनौ।
अहो मयाधुना त्यक्तावकृतज्ञेन नीचवत् ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

आत्मना मया वृषल्यां जायता पुत्रतया जायमानेन ब्रह्म ब्राह्मणत्वं विप्लावितं नाशितम् ॥ २६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तैस्तपआदिभिः तान्येवाघानि पूयन्ते अधर्मजमधर्माज्जातं मलिनं तेषामघानां हृदयं सूक्ष्मरूपं तु न पूयते न शुद्धयति तदपीशाङ्घ्रिसेवया हरिकीर्त्तनादिना शुद्धयतीत्यर्थः ॥ १७ ॥

ज्ञानिना अज्ञानिना वा कृतं हरिनामकीर्त्तनादिरूपं हरिसेवनं स्वभावत एव सफलम्भवतीति सदृष्टान्तमाहुः। अज्ञानादिति द्वाभ्याम्। अजानता वा केनचित्प्रक्षिप्तोऽनलः एधो दहेदेव तद्वत् ॥ १८ ॥

यथा वीर्यतमम् अमृतरसायनादि अगदमौषधं यदृच्छयोपयुक्तं सेवितमजानतोऽप्यात्मगुणं कुर्यात्तथा मन्त्रोऽपि हरये नम इत्यादिः आत्मगुणं सर्वपापनिर्नाशपूर्वकं परानन्दप्राप्तिलक्षणं मोक्षं कुर्यादेवेत्यर्थः ॥ १९ ॥

भागवतं धर्मं भगवन्नामोच्चारणादिरूपं धर्मं सुष्ठु विनिर्णीय तं याम्यपाशान्निर्मुच्य मृत्योः अमूमुचन् मुक्तो भविष्यतीति सङ्कल्पमात्रेण जन्ममरणादिप्रवाहलक्षणात् संसारान्मोचयामासुरित्यर्थः ॥ २० ॥

प्रत्युदिताः प्रत्याख्याताः यमयति नरान् इति यमस्तस्य सम्बोधने हे यम! हे नृप! राज्ञे धर्माय आर्षत्वाट्टजभावे तु यमराज्ञे इत्येकं पदं यमान्तिके यात्वा यथावत् कथयामासुः ॥ २१ ॥

प्रकृतिं गतः स्वस्थः दर्शनेन तेषां दर्शनेनोत्सवो यस्य सः ॥ २२ ॥

विवक्षुं वक्तुमिच्छन्तमभिप्रेत्य तस्य पश्यतः अन्तर्दधिरे ॥ २३ ॥

यमदूतानां त्रैविध्यं विहितनिषिद्धमिश्रभेदात्त्रिविधं स्वार्थे यत्र स्वर्गादिफलकं गुणाश्रयं सत्त्वादिगुणा आश्रयो निमित्तं यस्य तं गुणमयदेहाभिमानिजीवकर्तृकमित्यर्थः। कृष्णदूतानां शुद्धं शुद्धाधिकारिविषयं भागवतं भगवत्प्राप्तिफलकं च धर्मं आकर्ण्य भगवति भक्तिमानासीत् आत्मनः अशुभं स्मरतस्तस्यानुतापश्चासीत् ॥ २४—२५ ॥

अनुतापं तमेष्टथैव प्रपञ्चयति। अहो इति चतुर्भिः। वृषल्याम् आत्मना पुत्ररूपेण जायता मया ब्रह्म ब्रह्मत्वं विप्लावितं लोपितम् ॥ २६ ॥

भाषा टीका।

उन तप दान जपादिकों के सेवन से पाप सब नष्ट हो जाते हैं परन्तु उन पापों का सूक्ष्म अंश नष्ट नहीं होता है सो भी परमेश्वर के नामोच्चारण चरणसेवनादि से नष्ट होजाताहै ॥ १७ ॥

जो यह परम सनातन धर्म कहा है इस से प्रति दिन आत्मा की शुद्धि होती है जैसे धोने से वस्त्र की शुद्धि होती है ॥ ० ॥

आत्मा जो स्वयं अकर्ता है उसकी अत्यंत शुद्धि केवल क्रिया मात्र से नहीं होती है इससे निष्काम होकर हरि का भजन करै ॥ ० ॥

अज्ञान से अथवा ज्ञानसे कीर्तनक्रिया जो भगवान् का नाम सोई पुरुष मात्र के पाप को नाश कर देता है जैसे कि अग्नि लकडी को जलदी जलाय देता है ॥ १८ ॥

जैसे कि उत्तम गुण कारक औषध किसी प्रकार भी सेवित हो जाने से नहीं जानने वाले पुरुष को भी अपना गुण दिखा देताहै जैसे गरुडादिकों का मंत्र सर्प विष को नाश करदेता है तैसेही नाम भी उच्चारण मात्र से अपने फल को कर देता है ॥ १९ ॥

हे दूतो हो यदि इस धर्म मे संदेह हो तो तुमारे पति यमराज जी से पूंछो वे धर्मराज भगवान् धर्म के रहस्य को जानते हैं ॥ ० ॥

श्रीशुकदेवजी बोले हे नृप! उन विष्णु पार्षदोंने इस प्रकार से भागवत धर्म का निर्णय करके उस ब्राह्मण को यमपास से छुडा कर मरने से भी बचा दिया ॥ २० ॥

हे राजन् इस प्रकार से विष्णु दूतों के निषेध करने से यमके दूत यमराज के समीप मे गयें जाकर यमराज से जैसा हाल सब कहते भये ॥ २१ ॥

ब्राह्मण अजामिल तो पाशमे से छूट गया भय के निवृत्त होने से अपने होस में आगया विष्णुपार्षदों के दर्शन से उस को आनंद भया फिर उनको उसने नमस्कार किया ॥ २२ ॥

हे अनघ! विष्णुपार्षदों ने जब जाना कि यह कुछ कहना चाहता है तब उसके देखते ही वहीं पर अदृश्य होगये २३

अजामिलने भी श्रीकृष्ण के दूत तथा विष्णुके दूत इनके संवाद में यमदूतों से. वैदिकत्रिगुणधर्म को सुना विष्णुदूतों से शुद्ध भागवत धर्म को सुना ॥ २४ ॥

फिर श्री हरि के माहात्म्य श्रवण करने से श्रीभगवान् मे उसकी भक्ति होगई और अपने अशुभों को स्मरण करने से उसको बडा भारी पश्चात्ताप हुआ ॥ २५ ॥

अहो मैने अपने मन को नहीं जीता अब बडा कष्ट और हानी करी जो कि मैंने शूद्री में अपने को पुत्र रूप से उत्पन्न करके ब्रह्म तेज को नष्ट कर दिया ॥ २६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दुष्कृतं दोषकर्तारं कुलस्य कज्जलं कलङ्कम् ॥ २७ ॥

नास्त्यन्यो बन्धुः पुत्रादिर्ययोः तपस्विनौ सन्तप्तौ अधुना तत्क्षणमेव ॥ २८ ॥ २९ ॥

सोऽहं व्यक्तं पतिष्यामि नरके भृशदारुणे ।
धर्मघ्नाः (१) कामिनो यत्र विन्दन्ति यमयातनाः ॥ २९ ॥
किमिदं स्वप्न आहोस्वित् साक्षाद्दृष्टमिहाद्भुतम् ।
क्व याता अद्य ते ये मां व्यकर्षन् पाशपाणयः ॥ ३० ॥
अथ ते क्व गताः सिद्धाश्चत्वारश्चारुदर्शनाः ।
व्यमोचयन्नीयमानं बध्वा पाशैरधो भुवः ॥ ३१ ॥
अथापि मे दुर्भगस्य विबुधोत्तमदर्शने ।
भवितव्यं मङ्गलेन येनात्मा मे प्रसीदति ॥ ३२ ॥
अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः ।
वैकुण्ठनाम ग्रहणं जिह्वा वक्तुमिहार्हति ॥ ३३ ॥
क्व चाहं कितवः पापो ब्रह्मघ्नो निरपत्रपः ।
क्व च नारायणेत्येतद्भगवन्नाम मङ्गलम् ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इदानीं तस्य विमर्शपूर्वकं मोक्षक्रममाह । किमिदमित्यष्टभिः । साक्षात्प्रत्यक्षमिह जाग्रतैव दृष्टम् ॥ ३० ॥

ये मां व्यमोचयंस्ते च क्व गताः ॥ ३१ ॥

यद्यप्यहमस्मिन् जन्मनि दुर्भगः पापीयानथापि जन्मान्तरे नूनं पुण्यवानित्याह । विबुधोत्तमदर्शन इति निमित्तसप्तमी तेषां दर्शनार्थं पूर्वेण मङ्गलेन महता पुण्येन भवितव्यं येन दर्शनेन ॥ ३२ ॥

अन्यथा पूर्वपुण्यं विना कथम्भूतं वैकुण्ठनाम गृह्यते वशीक्रियते चित्तमनेनेति ग्रहणम् ॥ ३३ ॥

ब्रह्मघ्नो विप्रत्वनाशकः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सद्भिरार्यैर्धिक्शब्देन गर्हितं मां धिक् "उभसर्वतसोः कार्या धिगुपर्यादिषु" इति सम्बन्धसामान्ये षष्ठ्यपवादिका द्वितीया धिगिति निन्दाद्योतकमव्ययं मां मम धिक् निन्दा निन्द्योऽहमित्यर्थः कथम्भूतं मां दुष्कृतं दुष्टं कृतवान् दुष्कृतं कुलकज्जलं कुलकलङ्कं किञ्च सतीं विशुद्धां बालां योषां स्त्रियं हित्वा सुरापां सुरां पिबतीति तामत एवासतीमगामगच्छम् ॥ २७ ॥

वृद्धौ अवयसावनाथौ रक्षकरहितौ न विद्यतेऽन्यो बन्धुः पुत्रादिर्ययोस्तौ तपस्विनौ तपन्तौ पितरौ मातापितरावकृतघ्नेन कृतघ्नेन मयाधुना तत्क्षणमेव नीचेनेवाहो त्यक्तौ ॥ २८ ॥

स एवम्विधोऽहं नूनं नितरां दारुणे नरके पतिष्यामि यत्र नरके धर्मघ्नाः यमादयः सन्ति कामिनो मादृशाश्च यमयातना विन्दन्ति लभन्ते ॥ २९ ॥

एवं तस्य परितापमनुवर्ण्येदानीं विमर्शपूर्वकं मुक्तिसाधनधर्मानुष्ठानक्रममाह । किमित्यादिना ब्रह्मण्यनुभवात्मनीत्यन्तेन । किमिदं यमकृष्णदूतागमनतत्सम्भाषणादिदर्शनं स्वप्नः आहोस्विदुत साक्षाज्जाग्रता मया महाद्भुतं दृष्टमद्याधुना दूताः क्व याताः ये पाशपाणयः सन्तो मामाकृष्टवन्तः ॥ ३० ॥

अथ ते चत्वारः प्रियदर्शनाः सुन्दराः सिद्धाः क्व गताः येषां बध्वाधो भुवः नरकान्प्रति नीयमानं मां मोचितवन्तः ॥ ३१ ॥

यद्यप्यहं मन्दभाग्यस्तथापि मे दुर्भगस्यापि विबुधोत्तम[...] दर्शने निमित्तसप्तमी दर्शनेन निमित्तेनेत्यर्थः मङ्गलेन भवित[...] किं तद्येन मङ्गलेन शुभकर्मणा ममात्मा मनः परमात्मा [...] प्रसीदति ॥ ३२ ॥

अन्यथा यदि मङ्गलेन न भवितव्यं पुण्येन विने[...] वृषलीपतेरत एवाशुचेर्म्रियमाणस्य मर्तुमुद्यतस्य मम जि[...] वैकुण्ठस्य नाम ग्रहणं गृह्यते वशीक्रियते चित्तमनेनेति ग्रह[...] नामरूपं ग्रहणं वक्तुं नार्हति ॥ ३३ ॥

कितवो मूर्खो ब्रह्मघ्नः विप्रत्वनाशकः ब्रह्मोज्झ इति [...] त्यक्तवेदः निर्लज्जोऽहं क्व मङ्गलावहं नारायणेत्येतद्भगवन्नाम [...] ईदृशस्य ममान्तकाले तन्नामोच्चारणं पुण्येन विना कथं सम्भ[...] वेदित्यर्थः ॥ ३४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कुलकज्जलं ब्राह्मणकुलमषीभूतम् ॥ २७—३० ॥

भुवोऽधः नरकम् ॥ ३१ ॥

यत्किञ्चित्पुण्यमस्ति चेद्विष्णुदूतसंदर्शनसाधनं तत्स्वार[...] प्रार्थ्यते । अथापीति । येन पुण्येनात्मा मनः ॥ ३२ ॥

अन्यथा पूर्वचीर्णपुण्याभावे ॥ ३३ ॥

ब्रह्मोज्झः त्यक्तब्राह्मण्यः ॥ ३४ ॥ ३५ ३६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

सोऽहं व्यक्तं पतिष्यामीति । स्वदोषमात्रदृष्ट्यैव नाममा[...] दृष्ट्या तु वक्ष्यते । अन्यथा म्रियमाणस्येति ॥ २९—३१ ॥

(१) धर्मघ्ना इति श्रीवीर०

सोऽहं तथा यतिष्यामि यतचित्तेन्द्रियानिलः ।
यथा न भूय आत्मानमन्धे तमसि मज्जये ॥ ३५ ॥
विमुच्य तमिमं बन्धमविद्याकामकर्मजम् ।
सर्वभूतसुहृच्छान्तो मैत्रः करुण आत्मवान् ॥ ३६ ॥
मोचये ग्रस्तमात्मानं योषिन्मय्यात्ममायया ।
विक्रीडितो ययैवाहं क्रीडामृग इवाधमः ॥ ३७ ॥
ममाहमिति देहादौ हित्वा मिथ्यार्थधीर्मतिम् ।
धास्ये मनो भगवति शुद्धं तत्कीर्त्तनादिभिः ॥ ३८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अपापीत्यनेन प्राचीनास्य भक्तिरस्ति किन्तु केनाप्यपराधे-नावृतासूदिति गम्यते ॥ ३२—३८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दुष्कृतं पापरूपं दोषकर्त्तारं वा ॥ २७ ॥

अधुना अत्र जन्मनि ॥ २८—३० ॥

भुवोऽधः नरकं प्रति नीयमानम् ॥ ३१ ॥

विबुधोत्तमानां दर्शने विषये कारणत्वेन केनापि मङ्गलेन तच्च कस्यचिन्महतस्य कारुण्यमेवानुमेयं तेन विना तत्र भक्तिबीजवप-नासम्भवात् । यत एव स्वपुत्रस्य नारायण इति नाम चकार ॥३२॥ वक्तुं कर्त्तुम् । यद्वा । वैकुण्ठनाम कीदृशं गृह्यते प्राप्यते अनेनेति वैकुण्ठप्रापकमित्यर्थः ॥ ३३—३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दुष्कृतं दुष्कर्माणं कुलकज्जलं वंशदूषकम् ॥ २७ ॥

नान्यो बन्धुः पुत्रादिर्ययोस्तौ तपस्विनौ मन्निमित्ततापयुक्तौ अधुना अस्मिन् विवेकार्हजन्मनि नीचवदविवेकिवदवि-नितेत्यर्थः त्यक्तौ ॥ २८ ॥

व्यक्तं निश्चितम् ॥ २९ ॥

अद्भुतं यमकृष्णपार्षददर्शनादिकं संस्मृत्याह । किमिदमिति । इद-मद्भुतं मया दृष्टं किं स्वप्नः आहोस्वित्साक्षाज्जाग्रतैव ये मां व्यकर्षन्पाशहस्तास्ते क्व याताः ॥ ३० ॥

ये भुवोऽधो नरकं नीयमानं मां व्यमोचयन् विमोचितव-न्तस्ते च क्व गताः ॥ ३१ ॥

अस्मिन् जन्मनि दुर्भगस्य पापीयसोऽपि मे विबुधोत्तमदर्शने जाते केनचिन्मङ्गलेन जन्मान्तरीयेण पुण्येन भवितव्यं येन दर्श-नेन मे आत्मा प्रसीदति ॥ ३२ ॥

अन्यथा जन्मान्तरीयपुण्याभावे वैकुण्ठनाम गृह्यते येन तद्वै-कुण्ठनामग्रहणं वाच्यम् मत्सुचेमें जिह्वा कथं वक्तुमर्हति ॥ ३३ ॥

ब्रह्मघ्नः विप्रत्वघातकः ॥ ३४ ॥

भाषा टीका ।

मै अपने कुलको काला लगाने वाला भया सत्पुरुष मेरी निंदा करते हैं मेरे को धिक्कार है जिस मैंनेकि छोटी अवस्था वाली स्त्री को छोडके मद्य पान करने वाली दुष्ट स्त्री का संग किया ॥ २७ ॥

जिनके कोई बंधु नही थे ऐसे अनाथ पिता माता को मै अकृतज्ञ ने छोड दिया मेरे छोडने से इस बखत वे बडे तपस्वी होकर भी दुखी होगये मैं बडा नीच हूं ॥ २८ ॥

निश्चित है कि सो मै अति कठिन नरक मे गिरूंगा जहाँ पर कि धर्म नाश करने वाले कामी पुरुष यम दंड को भोगते हैं ॥ २९ ॥

क्या आज यह स्वप्न मैंने देखा है अथवा साक्षात मैंने यह क्या अद्भुत देखा जोतीन हाथ में पाश लेकर मो को खैंचते थे वे दूत कहां चले गये ॥ ३० ॥

और वे सुंदर दर्शन वाले चार सिद्ध कहां गये जिनोंने कि पाशों से बँधिकर पृथि के नीचे नरकमें लेजाते समय मेरे को छुडाया है ॥ ३१ ॥

तो भी अब तो उन देवतों के दर्शन होने से मेरे को दुर्भागी होने पर भी मंगल ही होगा क्योंकी मेरा मन बडा प्रसन्न है ॥ ३२ ॥

यदि ऐसा न होता तो अति अपवित्र शुद्री का पति मेरे मरने समय मेरी जिव्हा कभी भी नारायण के नाम को कहने को योग्य न होती ॥ ३३ ॥

मै पापी ब्रह्मघाती निर्लज्ज कपटी कहां और सर्व मंगलरूप श्री भगवान् का नारायण ऐसा नाम कहां उसको मैंने उचा-रण किया तो भलाही होगा ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अमिथ्याभूतेऽर्थे धीर्यस्य तथाभूतः सन् देहादौ ममाहमिति मतिं हित्वा मनो धास्ये ॥ ३८ ॥

श्रीशुक उवाच ॥

इति जातसुनिर्वेदः क्षणसङ्गेन साधुषु ।
गङ्गाद्वारमुपेयाय मुक्तसर्वानुबन्धनः ॥ ३९ ॥

स तस्मिन् देवसदन आसीनो योगमाश्रितः ।
प्रत्याहृतेन्द्रियग्रामो युयोज मन आत्मनि ॥ ४० ॥

ततो गुणेभ्य आत्मानं वियुज्यात्मसमाधिना ।
युयुजे भगवद्धाम्नि ब्रह्मण्यनुभवात्मनि ॥ ४१ ॥

यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत् पुरुषान् पुरः ।
उपलभ्योपलब्धान् प्राग्ववन्दे शिरसा द्विजः ॥ ४२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मुक्तं सर्वमनुबन्धनं पुत्रादिस्नेहो येन सः ॥ ३९ ॥

प्रत्याहृत इन्द्रियग्रामो येन ॥ ४० ॥

गुणेभ्यो देहेन्द्रियादिभ्य आत्मानं वियुज्य विशोध्य आत्मसमाधिना चित्तैकाग्र्येण भगवतो धाम्नि स्वरूपे ॥ ४१ ॥

तस्मिन् भगवद्धाम्नि उपारता निश्चला धीर्यस्य स तस्मिन्कालेऽद्राक्षीदिति वा पुरः पुरतः ततश्च प्रागुपलब्धानेव तानुपलभ्य प्रत्यभिज्ञाय ववन्दे ॥ ४२ ॥ ४३ ॥ ४४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सोऽहं सिद्धदर्शनवैकुण्ठनामग्रहणादिसूचितधर्मयुक्तोऽहं यत्ताः नियमिताः चित्तादयो येन तथाभूतः सन् तथा यतिष्यामि यत्नं करिष्यामि कथं यथा भूयः पुनरात्मानमन्धे तमसि नरके न मज्जये मग्नं न कुर्याम् ॥ ३५ ॥

किं कृत्वा अविद्या देहात्माभिमानमूलमज्ञानं कामः शब्दादिविषयाभिलाषः कर्म एभिर्जातं तमिमं बन्धं गर्भजन्माद्यवस्थापरिवृत्तिरूपं संसारं विमुच्यापोह्य कथम्भूतः सर्वेषु भूतेषु सुहृत् शान्तः निगृहीतान्तरिन्द्रियः करुणः सर्वभूतेषु कृपावानात्मवान् प्रशस्तमनस्कः ॥ ३६ ॥

योषिन्मयाजया भगवन्मायया ग्रस्तमात्मानं मोचये तां विशिनष्टि । यथैवाहमधमो ज्ञानशून्यः क्रीडामृग इव क्रीडितः ॥ ३७ ॥

देहे आदिशब्दात्तदनुबन्धिन्यहंममेति या मिथ्यार्थधीर्मतिर्मिथ्याश्रययाथार्थ्यधीर्देहाद्यर्थविषया धीस्तद्रूपा मतिस्ताम् । अनहमर्थदेहाद्यर्थविषयकाहंधियो विपरीतरूपत्वान्मिथ्यार्थधीरित्युक्तं मोहार्थधीरिति पाठान्तरं तत्रापि मोहात्मिकामहन्त्वेन देहादिरूपार्थधीरूपामित्येवार्थः हित्वा त्यक्त्वा भगवति तत्कीर्तनादिभिः शुद्धं मनो धास्ये आधास्ये ॥ ३८ ॥

इतीत्थं जात उत्पन्नः सुष्ठु नितरां निर्वेदो यस्य तादृशः साधुषु क्षणमात्रसङ्गेन मुक्तं सर्वानुबन्धनं पुत्रादिस्नेहो येन सः गङ्गाद्वारं हरिक्षेत्रम् उपेयायोपगतवान् ॥ ३९ ॥

सोऽजामिलः तस्मिन् देवसदने देवो भगवान् सीदति सन्निहितो भवत्यस्मिन् गङ्गाद्वारे उपविष्टः योगं भगवद्भक्तियोगमाश्रित आरभतेत्यर्थः प्रत्याहृतः विषयेभ्यः इन्द्रियग्रामः अन्तर्बाह्येन्द्रियसङ्घो येन तादृशः प्रथममात्मानं प्रत्यगात्मानं गुणेभ्यः गुणपरिणामेभ्यः विविच्य पृथक्त्वेनानुसन्धाय तस्मिन्नात्मनि प्रत्यगात्मनि मनो युयुजे ॥ ४० ॥

तत आत्मनः जीवान्तर्यामिणः परमात्मनः समाधिना ध्याने तस्मिन् ब्रह्मणि स्वरूपेण गुणैश्च निरतिशयबृहत्यनुभवात्मनि ज्ञानस्वरूपे भगवद्धाम्नि भगवच्छब्दवाच्ये तेजसि युयुजे स्थिरीकृतचित्तः सन् यर्हि यदोपरता शब्दादिभ्यो निवृत्ता धीर्यस्य तादृशस्तस्मिन् काले पुरोऽग्रे पुरुषान् पूर्वदृष्टान् भगवत्पार्षदानद्राक्षीत्ततः प्रागुपलब्धान् प्राप्तान् पुरुषानुपलभ्याभिज्ञाय द्विजः शिरसा ववन्दे ॥ ४१ ॥ ४२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्ममायया हरेरधीनया लोकमोहनशक्त्या यथा यथावत् ॥ ३७ ॥ ३८ ॥

गङ्गाद्वारं नाम तीर्थविशेषम् ॥ ३९ ॥

प्रत्याहृतो वशीकृत इन्द्रियग्रामो येन स तथा तस्योपास्तिप्रकारं वक्ति । युयोजेति । आत्मनि हरौ ॥ ४० ॥

गुणेभ्यः शरीरेन्द्रियादिभ्यः आत्मानं स्वस्वरूपं भगवद्धाम्नि भगवत्स्वरूपे ब्रह्मणि व्याप्ते अनुभवात्मनि ज्ञानात्मनि ॥ ४१ ॥

यर्हि यस्मिन् काले उपारतधीः बाह्यविषयान्निवृत्य हराववेव निरतबुद्धिरभूत्तस्मिन् काले पुरः स्वस्याग्रभूमौ प्रागुपलब्धान् दृष्टान् ॥ ४२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं साधुसङ्गमपर्यन्तं नाम्नः फलमुक्त्वा साधुसङ्गस्य च फलविशेषमाह । इतीति । जातः सुष्ठु भगवद्भक्त्युत्पादनपूर्वत्वेन निर्वेदो यस्य सः ॥ ३९ ॥

हित्वा कलेवरं तीर्थे गङ्गायां दर्शनादनु ।
सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्त्तिनाम् ॥ ४३ ॥
साकं विहायसा विप्रो महापुरुषकिङ्करैः ।
हैमं विमानमारुह्य ययौ यत्र श्रियः पतिः ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र सति धास्ये मन इत्यादिना यद्विचारितं तत्र कृतैस्तत्कीर्त्तनादिभिः शुद्धेन तल्लब्धस्फुरणविशेषेण च मनसा पुनरिदं विचारितम् । ईदृशस्यापि मनसो भगवत्पर्यन्ता गतिर्न स्यात् । "ब्रह्मणो हि प्रतिष्ठाहम्" इति न्यायेन परात् परा हि सविशेषावस्थितिः तस्मान्निर्विशेषतत्प्रकाशलक्षणब्रह्मानुभवार्थमेव प्रयतिष्ये । तदग्रिमवार्त्ता तु महाकृपालुना श्रीभगवतैव निर्वाहयिष्यते तदेतद्विचार्य तेन यत्कृतं तद्दर्शयति । स तस्मिन्निति द्वाभ्याम् ॥ ४० ॥

यर्ह्युपारतेत्यनेन ब्रह्मानुभवानन्तरमपि श्रीवैकुण्ठवैभवाविर्भाव इति समर्थ्यते ॥ ४१ ॥ ४२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यथैव क्रीडामृग इवाधमो लोको भवति तथैवाहमुत्तमो विप्रोऽप्यनया विक्रीडितः ॥ ३७ ॥

देहादौ मिथ्याभूता एवामी अर्था इति धीर्यस्य तथाभूतश्च सन् ममाहमिति मतिं हित्वा ॥ ३८ ॥

मुक्तसर्वानुबन्धनः त्यक्तस्त्रीपुत्राद्यासक्तिः ॥ ३९ ॥

योगं भक्तियोगमात्मनि हरौ ॥ ४० ॥

गुणेभ्यो विषयेभ्यः वियुज्य वियुक्तीकृत्य आत्मसमाधिना चित्तैकाग्र्येण भगवद्धाम्नि भगवत्स्वरूपे ॥ ४१ ॥

तस्मिन् भगवद्धाम्नि उपारतधीः निश्चलबुद्धिः पुरोऽग्र एव पूर्वपरिचितान् ॥ ४२—४५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ ममोद्धारार्थमुपायं करिष्यामीत्याह । सोऽहमित्यादिना । अन्धे तमसि संसारे यथा न मज्जये ॥ ३५ ॥

तमिमम् अविद्याकामकर्मजम् अज्ञानहेतुकसकामकर्मजं बन्धं देहाद्यवहंममाभिमानं विमुच्य ॥ ३६ ॥

आत्मनः परमेश्वरस्य मायया योषिन्मय्या आत्मानं मोचये ॥ ३७ ॥

मिथ्या अर्थः अहं मनुष्योऽस्मि स्थूलोऽस्मि गृहादिकं ममैवेत्येवंभूतः विषयो यस्याः सा धीर्यस्य सः देहादौ देहे अहमिति गृहादौ ममेति च मतिं मिथ्यार्थां धियं हित्वा भगवदंशभूतः ज्ञानरूपः देहादिविलक्षणः भगवदीयमायामयदेहगेहादिभ्यो विरक्तः सन् भगवति तन्नामकीर्तनादिभिर्मनो धास्ये इत्यन्वयः ॥ ३८ ॥

तस्य कृत्यमाह । इतीत्यादिना । इत्येवं साधुषु क्षणसङ्गेन जातः सद् निर्वेदो देहगेहादौ वैराग्यं यस्य सः अतो मुक्तं सर्वमनुबन्धनं पुत्रादिस्नेहो येन गङ्गाद्वारमुपेयाय ॥ ३९ ॥

तस्मिन् गङ्गाद्वारे देवसदने भगवदालये प्रत्याहृतः इन्द्रियग्रामो येन सः आत्मनि चेत्रज्ञे मनो युयोज ॥ ४० ॥

गुणेभ्यः विषयेभ्यः ततः चेत्रज्ञाच्च आत्मानं मनो वियुज्य भगवद्धाम्नि भगवत्स्वरूपे ब्रह्मणि बृहति अनुभवात्मनि परज्ञानस्वरूपे युयुजे ॥ ४१ ॥

यर्हि यदा तस्मिन् भगवत्स्वरूपे उपारता धीर्यस्य सः तदा पुरः अग्रे पुरुषान् अद्राक्षीत् तदनतरं प्रागुपलब्धानुपलभ्य प्रत्यभिज्ञाय शिरसा ववन्दे ॥ ४२ ॥

---

### भाषा टीका ।

सो अब मैं मन इन्द्रिय प्राण को रोककर ऐसा यत्न करूंगा कि जिससे यह मेरा आत्मा नरक में न गिरने पावै ॥ ३५ ॥

अज्ञान काम कर्म से होने वाले इस बंध को मै छोडूंगा सर्व भूतों का सुहृत् शांत होकर मित्र करुणा वाला होकर आत्मज्ञानी होऊंगा ॥ ३६ ॥

स्त्री रूपी परमेश्वर की माया जो है जिसने मो अधम को क्रीडा मृगसा बनाकर मेरा आत्मा को ग्रस लिया है सो मै अब छुटावूं गा ॥ ३७ ॥

मै इसका मालिक हूं यह मेरी वस्तु है इस प्रकार से देहादि को मैं झूठी यथार्थ बुद्धि को छोडकर भगवान् के दर्शनादि को से शुद्ध कर मन को भगवान में लगाऊंगा ॥ ३८ ॥

क्षणमात्र भागवतों के संग होने से इस प्रकार सुंदर वैराग्यको प्राप्त होने से सब बंधनों से छूटकर हरिद्वारक्षेत्र को अजामिल चला गया ॥ ३९ ॥

शुकदेवजी बोले वह अजामिल उस देव स्थान मे स्थित होकर योगका आश्रय करके सब इंद्रियो को एकाग्र करके मन को परमात्मा में लगाता गया ॥ ४० ॥

तदनन्तर आत्मसमाधि द्वारा सब गुणों मे से मन को रोककर अनुभव स्वरूप परब्रह्म भगवत्स्वरूप में उसने संयुक्त किया ॥ ४१ ॥

उसी स्थान पर सब तरफ से उसकी चित्तवृत्ति जब रुक गई तब जिन विष्णु पुरुषों को पहिले देखा था उनको ही उसने फिर देखा तब उनको प्राप्त होकर उसने मस्तक से प्रणाम किया ॥ ४२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

उपसंहरति । एवमिति द्वाभ्याम् । विप्लाविताः सर्वे धर्मा येन हतं व्रतं स्वदारनियमादि यस्य ॥ ४५ ॥

एवं स विप्लावितसर्वधर्मा दास्याः पतिः पतितो गर्ह्यकर्मणा ।
निपात्यमानो निरये हतव्रतः सद्यो विमुक्तो भगवन्नाम गृह्णन् ॥ ४५ ॥
नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्त्तनात् ।
न यत् पुनः कर्मसु सज्जते मनो रजस्तमोभ्यां कलिलं ततोऽन्यथा ॥ ४६ ॥

य एवं परमं गुह्यमितिहासमघापहम् ।
शृणुयाच्छ्रद्धया युक्तो यश्च भक्त्यानुकीर्तयेत् ॥ ४७ ॥
न वै स नरकं याति नेक्षितो यमकिङ्करैः ।
यद्यप्यमङ्गलो मर्त्यो विष्णुलोके महीयते ॥ ४८ ॥
म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम् ।
अजामिलोऽप्यगाद्धाम किं पुनः श्रद्धया गृणन् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
षष्ठस्कन्धेऽजामिलोपाख्याने
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्मनिबन्धस्य पापमूलस्य कृन्तनं छेदकमतःपरं नास्ति कस्मात्परं तीर्थपदस्यानुकीर्तनात् तत्र हेतुः यद्यतोऽनुकीर्तनात् ततोऽनुकीर्तनादन्यथा प्रायश्चित्तान्तरे रजस्तमोभ्यां कलिलं मलिनमेव तिष्ठति यत्तन्मनः कर्मसु पुनर्न सज्जते ॥ ४६ ॥ ४७ ॥

न चेक्षितो भवति ॥ ४८ ॥

म्रियमाणोऽवशत्वेन श्रद्धाविहीनोऽपि ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दर्शनादनु दर्शनादनन्तरं गङ्गायास्तीर्थे कलेवरं त्यक्त्वा गङ्गायामिति पाठे तीर्थे गङ्गाद्वारे क्षेत्रे गङ्गायां त्यक्त्वेत्यर्थः सद्यः भगवत्पार्श्ववर्त्तिनां पार्षदानां स्वरूपं तत्समानं रूपं जगृहे गृहीतवान् ॥४३॥

स विप्रोऽजामिलः महापुरुषकिङ्करैः साकं हैमं विमानमारुह्य विहायसा आकाशमार्गेणाचिरादिनेत्यर्थः ययौ गतः क्वेत्यत आह । यत्र श्रियः लक्ष्म्याः पतिरास्ते वैकुण्ठे इत्यर्थः भगवत्पार्श्ववर्त्तिस्वरूपग्रहणमूर्ध्वक्रमेण वैकुण्ठगमनानन्तरं वेदितव्यं तत्र गतस्य तत्सायुज्यत्वादिति भावः ॥ ४४ ॥

उक्तमितिहासमुपसंहरन् भगवन्नामकीर्त्तनात्तद्विषयमत्यापादकमुपायान्तरमुत्कृष्टं नास्तीत्याह । एवमिति द्वाभ्याम् । एवमित्थं स द्विजः विप्लावितः विनाशितः सर्वः स्ववर्णाश्रमोचितः धर्मो येन दास्याः पतिरत एव पतितः स्वधर्माच्च्युतः गर्ह्यं निन्दितं कर्म यस्य हतं व्रतं अयं तु श्रुतसम्पन्नः शीलवृत्तगुणालय इत्यादिनोक्तं यस्य अत एव नरके निपात्यमानः यमभटैरिति शेषः तथाभूतोऽपि भगवन्नाम गृह्णन्नुच्चरन् सद्यः विमुक्तोऽभूदित्यर्थः ॥ ४५ ॥

मुमुक्षतां संसारबन्धनान्मोक्तुमिच्छतां तन्मूलकर्मरूपबन्धस्य निकृन्तनं कृत्यते छिद्यतेऽनेनेति कृन्तनमतस्तीर्थपदस्य भगवतोऽनुकीर्त्तनात्परमन्यन्नास्ति यद्यस्मादनुकीर्तनाद्रजस्तमोभ्यां कलिलं कश्मलं मनः कर्मसु संसृतिहेतुषु पुनर्न सज्जते न सङ्गं भवत्यन्यथोपायान्तरेण न च न सज्जते इति न किन्तु संसृतिहेतुषु कर्मसु सज्जत एवेत्यर्थः ॥ ४६ ॥

अथेतिहासश्रवणादिफलमाह । य इति । परममतीव गुह्यं गोप्यमघापहं पापहरमिममितिहासं यः पुमान् श्रद्धया युक्तः शृणुयाद्यश्च भक्त्यानुकीर्त्तयेत्कथयेत् ॥ ४७ ॥

स पुमान्नरकं न याति नैव प्राप्नोत्येव यमकिङ्करैरीक्षितोऽपि न भवति यद्यप्यमङ्गलः पापवानपि मर्त्यः श्रवणादि कुर्वन्विष्णुलोके श्रीवैकुण्ठे महीयते पूज्यते भगवद्विषयकस्मृत्युत्पत्तिद्वारा भगवल्लोकं प्राप्य तत्रस्थैर्बहुमन्यत इत्यर्थः ॥ ४८ ॥

एवं श्रवणकीर्त्तनादिभक्तियोगारम्भस्य कैमुत्यन्यायेन बन्धहेतुतापरिहारकत्वं वक्तुं कथितमितिहासमजामिलवृत्तान्तं येन तद्वदुपसंहरति । म्रियमाण इति । अजामिलो म्रियमाणः पुत्रोपचारेण अमुख्यया वृत्त्या प्रयुक्तमुपचारितमेव हरेर्नाम गृणन्

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

...हरेः स्थानमगात् प्राप्तः किमुत श्रद्धया हरेर्गुणान् गुणप्रतिपादकनारायणादिशब्दान् कीर्तयन्नित्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवत्पार्श्ववर्त्तिनां मुक्तानां स्वरूपं निर्दोषत्वादिलक्षणम् ॥ ४३ ॥ ४४ ॥

नामसङ्कीर्तने श्रद्धातिशयं जनयन्नुपसंहरति । एवमिति । दास्याःपतिरित्याक्रोशो षष्ठी अजामिलनाम मुक्त्वा दास्याः पतिरित्याहुर्यति लोक इत्यर्थः ॥ ४५ ॥

अन्यथा तीर्थपदानुकीर्तनं विना ॥ ४६ ॥ ४७ ॥

अमङ्गलो यद्यपि तथापि ॥ ४८ ॥

दासीसङ्गादवाप्तपापमुक्तिकरी अन्ते नारायणस्मृतिरिति ज्ञापयन्नजामिलोऽपि मुक्तकर्मतयोपलब्धया नित्याभ्यासेन मरणसमयेऽपि नामस्मरणार्थं पुत्रोपचारितं कृत्वा श्रद्धया पुत्राह्वानव्याजेन कीर्तयन्मुक्तिमगात् ननु पुत्रस्नेहेन भगवति श्रद्धया "भक्तियोगो भवति तन्नामग्रहणादिभिः" इत्युत्तरत्र वक्ष्यमाणत्वात् पुत्रादिसाङ्केतिकं नाम उक्त्वा मुक्तकर्मत्वेन श्रीहरिनामकीर्तयन् किमुत श्रद्धयेत्युच्यते अस्य फलाधिक्यं च दर्शयितुं पृथगेवोक्तिरिति ज्ञातव्यम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सद्यो विमुक्तो जीवन्मुक्तो बभूव ॥ ४३ ॥ ४४ ॥

नामापराधयुक्तापेक्षयाह । य एवमिति द्वाभ्याम् । अमङ्गलो नामापराध्यपि ॥ ४५—४८ ॥

यतो म्रियमाण इति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यतोऽनुकीर्त्तनात् कर्मसु मन एव न सज्जते अन्यथा प्रायश्चित्तान्तरैस्तु कलिलं मलिनमेव ॥ ४६—४८ ॥

प्रकरणमुपसंहृत्यापि पुनः सर्वथा प्रतीत्यर्थमेकेनैव वाक्येन नाममाहात्म्यसिद्धान्तमाह । म्रियमाण इति । म्रियमाणत्वादेव अश्रद्धयापि गृणन् किं पुनः श्रद्धयेति म्रियमाणोऽपि किं पुनर्जीवन्निति पुत्रोपचारितमपि किं पुनः साक्षादेव अजामिलो महापातक्यपि किं पुनर्निष्पाप इत्यवधारणचतुष्टयम् ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठस्कन्धे द्वितीयोऽयं सङ्गतः सङ्गतः सताम् ॥ २ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य मुक्तिमाह । हित्वेति द्वाभ्याम् ॥ ४३ ॥ ४४ ॥

नामोच्चारणादिरूपया भगवद्भक्त्या पतितोऽपि मुक्तो भवतीति प्रकरणार्थमुपसंहरति । एवमिति द्वाभ्याम् । विप्लाविताः सर्वे धर्मा यस्य सः हतानि व्रतानि यस्य सः अतएव गर्ह्यकर्मणा पतितः निरये पात्यमानो भगवन्नाम गृह्णन् सद्यो विमुक्तः ॥ ४५ ॥

मुमुक्षतां मुक्तिमिच्छताम् अतः पूर्वत्र वर्णितप्रभावात् तीर्थपदस्य श्रीकृष्णस्यानुकीर्त्तनात् परमन्यत् कर्मरूपनिबन्धस्य कृन्तनं छेदकं नास्ति यत् यतः तीर्थपदानुकीर्त्तनात् मनः पुनः कर्मसु न सज्जते ततः तीर्थपदानुकीर्तनात् अन्यथा प्रायश्चित्तान्तरैः रजस्तमोभ्यां कलिलमेव तिष्ठति पुनः कर्मसु सज्जते इत्यर्थः ॥ ४६ ॥

अस्येतिहासस्य श्रवणादिफलमाह । य इति द्वाभ्याम् ॥ ४७ ॥

यमकिङ्करैरीक्षित एव न भवति नरकं न यातीति किमु वक्तव्यम् । किन्तु अमङ्गलो यद्यपि पूर्वं तथापि इतिहासश्रवणादिना सुमङ्गलो भूत्वा विष्णुलोके महीयते आद्रियते ॥ ४८ ॥

एतदेवाह । म्रियमाणः अस्वस्थमनस्कत्वेन श्रद्धाविहीनस्तत्रापि पुत्रोपचारितं हरेर्नाम गृह्णन् अजामिलोऽपि तद्धामागात् इतिहासश्रवणादिना जातया श्रद्धया गृणन् हरेर्नामोच्चारयन् विष्णुधाम यातीति किं वक्तव्यमित्यर्थः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वितीयाध्यायार्थप्रकाशः ॥ २ ॥

---

भाषा टीका

उनके दर्शन मात्र ही से गङ्गाजी में उसने शरीर का त्याग किया फिर शीघ्र ही भगवान् के पार्षदों के रूपको धारण किया ॥ ४३ ॥

तब वह ब्राह्मण दिव्य विमान पर बैठकर आकाश मार्ग में होकर उन विष्णु पार्षदों के सहित जाकर जहां पर लक्ष्मिकान्त भगवान् हैं तहां पँहुचा ॥ ४४ ॥

इस प्रकार सब धर्मों को नाश करने वाला वह दासी का पति निन्दित कर्म से पतित होकर भी व्रत के नाश होने से नरक मे गिराया जाता था सो भगवान् के नाम ग्रहण मात्र से छूट गया ॥ ४५ ॥

भाषा टीका ।

मोक्ष चाहनेवाले को श्रीनारायण नाम कीर्तन से दूसरा उपाय कर्मबन्ध छुटाने वाला कोई नहीं है इस कीर्तन के करने से मन अन्यत्र नहीं लगता है और प्रायश्चित्तों के तो करने पर भी मन रजोगुण तमोगुण से लिप्त होजाता है ॥४६॥

जो पुरुष इस पापहारी इतिहास को सुनै अथवा श्रद्धा से सुनावे यत्नवान् होवै भक्तियुक्त होवै ॥ ४७ ॥

वह पुरुष कभी नरक में नहीं जावैगा न यमपुरुष उसको देखेंगे यद्यपि पापी मनुष्य होवै तो भी विष्णु लोक में प्रतिष्ठित होवेगा ॥ ४८ ॥

मरते समय में पुत्र के निमित्त से हरिनाम ग्रहण करने से ऐसा पापी अजामिल भी हरिधाम को चला गया तो जो मनुष्य श्रद्धा से नाम लेंगे वे क्यों नहीं वैकुंठ को जाँयगे ॥ ४९ ॥

इति श्रीभागवत षष्ठस्कंध दूसरे अध्याय का भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ २ ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

## ॥ तृतीयोऽध्यायः ॥



राजोवाच।

निशम्य देवः स्वभटोपवर्णितं प्रत्याह किं तान् प्रति धर्मराजः।
एवं हताज्ञो विहतान् मुरारेर्नैदेशिकैर्यस्य वशे जनोऽयम् ॥ १ ॥
यमस्य देवस्य न दण्डभङ्गः कुतश्चनर्षे ! श्रुतपूर्व आसीत्।
एतन्मुने ! वृश्चति लोकसंशयं न हि त्वदन्य इति मे विनिश्चिम् ॥ २ ॥

श्रीशुक उवाच।

भगवत्पुरुषै राजन् ! याम्याः प्रतिहतोद्यमाः।
पतिं विज्ञापयामासुर्यमं संयमिनीपतिम् ॥ ३ ॥

यमदूता ऊचुः।

कति सन्तीह शास्तारो जीवलोकस्य वै प्रभो !।
त्रैविध्यं कुर्वतः कर्म फलाभिव्यक्तिहेतवः ॥ ४ ॥
यदि स्युर्बहवो लोके शास्तारो दण्डधारिणः।
कस्य स्यातां न वा कस्य मृत्युश्चामृतमेव वा ॥ ५ ॥
किं तु शास्तृबहुत्वे स्याद्बहूनामिह कर्मिणाम्।
शास्तृत्वमुपचारो हि यथा मण्डलवर्तिनाम् ॥ ६ ॥
अतस्त्वमेको भूतानां सेश्वराणामधीश्वरः।
शास्ता दण्डधरो नृणां शुभाशुभविवेचनः ॥ ७ ॥
तस्य ते विहतो दण्डो न लोके वर्ततेऽधुना।
चतुर्भिरद्भुतैः सिद्धैराज्ञा ते विप्रलम्भिता ॥ ८ ॥
नीयमानं तवादेशादस्माभिर्यातनागृहान्।
व्यमोचयन् पातकिनं छित्त्वा पाशान् प्रसह्य ते ॥ ९ ॥
तांस्ते वेदितुमिच्छामो यदि नो मन्यसे क्षमम्।
नारायणेत्यभिहिते माभैरित्याययुर्द्रुतम् ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तृतीये तु यमेनापि वैष्णवोत्कर्षवर्णनैः।
सान्त्वयित्वा स्वदूतास्ते वैष्णवे फिङ्करीकृताः ॥ १ ॥

विष्णुदूतैर्निर्णीतं शास्त्रार्थं यममुखेन द्रढयितुं तृतीयाध्यायारम्भः। तत्र यदुक्तं यमराजे यथा सर्वमाचचक्षुरिति ततः किं तत्र वृत्तमिति पृच्छति। निशम्येति। मुरारेर्नैदेशिकैः किङ्करैः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

देवं विहतान् अत एव हता आज्ञा यस्य । यस्य वशवर्त्ययं जनः सोऽपि तान् प्रति किमाह ॥ १ ॥

अत्याश्चर्यमेतदित्याह । यमस्येति । हे ऋषे ! यमस्य दण्डभङ्गः कुतश्चन कस्माच्चिदपि श्रुतपूर्वो नासीत् एतदेतस्मिन्नर्थे । यद्वा न श्रुतपूर्वः एतद्यमदूतनिराकरणं चासीत् अतः सर्वस्यापि लोकस्य संशयो वर्तते तं त्वत्तोऽन्यो न छिनत्तीति मे निश्चितमतः कथयेति शेषः ॥ २ ॥

भगवतः पुरुषैः प्रतिहत उद्यमो येषां ते याम्याः पुरुषाः ॥ ३ ॥

कति सन्तीत्याक्षेपोक्तिः त्रैविध्यं त्रिविधं स्वार्थे ष्यञ् । यद्वा त्रैविध्यं यथा भवति तथा कर्म कुर्वतः तथा कर्मफलस्याभिव्यक्तिहेतवः कति सन्तीति ॥ ४ ॥

सन्तु बहवः को बाधस्तत्राहुः । यदीति । मृत्युर्दुःखममृतं सुखं तेषां विप्रतिपत्तौ ते उभे अपि कस्य स्यातां न कस्यापि परस्परविरोधेनोभयोरपि प्रतिबन्धात् ऐकमत्ये तु कस्य वा न स्याताम् एकः सुखं कर्तुमिच्छति दुःखं चान्यः ऐकमत्ये च तयोः परस्परकार्यानुमोदनेनोभयोरपि प्राप्ते कस्य वा ते उभे अपि न स्याताम् इत्यर्थः ॥ ५ ॥

ननु बहूनां कर्मिणां व्यवस्थया बहवः शास्तारो भवन्तु तथा सति नायं दोषः स्यात्तत्राहुः । बहूनां कर्मिणां व्यवस्थया शास्तृबहुत्वे शास्तृत्वं स्यात् घटेत किन्तु तदा यत्सर्वशास्तरि मुख्यं शास्तृत्वं तदेकदेशे उपचारमात्रमेव स्यात् यथा चक्रवर्तिन एव मुख्यं शास्तृत्वं मण्डलवर्तिनामुपचारमात्रं निरङ्कुशत्वाभावात् ॥ ६ ॥

यस्मादेवं शास्तृबहुत्वं न घटतेऽतस्त्वमेक एव शास्ता शुभाशुभे विविनक्तीति तथा ॥ ७ ॥

विप्रलम्भिता वञ्चिता लङ्घितेत्यर्थः ॥ ८ ॥

तदेवाहुः । नीयमानमिति ॥ ९ ॥

ते त्वत्तः यदि नोऽस्माकं क्षमं हितं मन्यसे अन्यथा ज्ञानतस्तदवज्ञाने तवाप्यनर्थः स्यात् अतर्क्यो हि तेषां प्रभावो यतो नारायणेति केवलमभिहिते माभयङ्कुर्विति वदन्तः शीघ्रमागताः ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमितिहाससमुखेनाकर्णितभगवन्नाममाहात्म्यः राजा "यांति वः पृच्छन् इति धर्मेऽस्मिन् यदि संशयः । स वेद परमं गुह्यं धर्मस्य भगवान् यम" इति भगवत्पार्षदैरासनमरणेनाभिहितयममुखेन नाममाहात्म्यं प्रथयितुं पृच्छति व्यास्याम । निशम्येति । एवमित्थं देवो धर्मराजः स्वभृत्यैर्निवेदितं निशम्याकर्ण्य मुरारेर्भगवतो नैदेशिकैराज्ञाकारिभिः किङ्करैर्विहतान् निराकृतान् तान् किङ्करान् प्रति स्वयं विहता निराकृता आज्ञा यस्य तादृशः किमुक्तवान् धर्मराजं विज्ञापयन्ति । यस्य धर्मराजस्य वशेऽयं जनः यद्वशवर्ती अयं सांसारिकजनः स किमाहेत्यर्थः ॥ १ ॥

हे ऋषे ! देवस्य यमस्य एतादृशो दण्डस्य भङ्गः कुतश्चिदासीदिति न श्रुतपूर्वः न श्रुत इत्यर्थः एतास्मिन्नर्थे सर्वस्यापि संशयो वर्तत इति शेषः हे मुने ! तमिमं लोकस्य मादृशस्य संदेहं त्वदन्यः न हि वृश्चति न छिनत्ति इति मे मया सुनिश्चितम् ॥ २ ॥

उत्तरमाह मुनिः । भगवत्पुरुषैरिति । हे राजन् ! भगवत्किङ्करैः प्रतिहतः उद्यमो येषां ते याम्या यमभटाः पतिमधिपतिं संयमिन्याः पुर्याः पातिं यमं प्रति विज्ञापयामासुः ॥ ३ ॥

विज्ञप्तिप्रकारमेवाह । कतीत्यादिना आययुर्द्रुतमित्यन्तेन । हे प्रभो ! यम इह लोके त्रैविध्यं त्रिविधमेव त्रैविध्यं स्वार्थे ष्यञ् पुण्यपापतदुभयमिश्ररूपेण त्रिविधं कर्म कुर्वतो जीवलोकस्य शास्तारः फलस्य सुखादिरूपस्य याभिव्यक्तिः प्रादुर्भावः तस्या हेतवः कति सन्तीत्याक्षेपः ॥ ४ ॥

सन्तु बहवः को बाधस्तत्राहुः । यदीति । बहवः यदि दण्डधारिणः शास्तारः दण्डरूपशासनकारिणः दण्डपूर्वकशिक्षाकारिणो वा बहवः स्युस्तर्हि मृत्युर्दुःखममृतं सुखं च कस्य वा न स्यातां कस्याप्युभे स्यातामित्यर्थः अयं भावः अन्योन्यविरोधिशास्तृबहुत्वे सति शास्त्रन्तराधीनस्य सुखदुःखादेः शास्त्रन्तरेण निवारणसम्भावनया कस्याप्युभे न स्यातां किन्तु भयपरिहारेणोदासीनो लोकः स्यादिति ॥ ५ ॥

परस्परविरोधिशास्तृबहुत्वे यद्यप्युभे स्यातां तथापि शास्तृत्वमुख्यं स्यादित्याहुः । किन्त्विति । धर्मिणां कर्मिणां यत् शास्तृभिराप्यमानं सुखादि स्यादेव किन्तु शास्तृत्वमुपचारः तेषां शास्तृत्वममुख्यं हि स्याद्वा यथा मण्डलवर्त्तिनामल्पजनपदाधिपतीनां शास्तृत्वं यथा न मुख्यं निरङ्कुशत्वाभावात् ॥ ६ ॥

तस्य स्वच्छाशनं तु निरङ्कुशं दृष्टमतः शास्तृबहुत्वं न घटेतेत्यभिप्रेत्य त्वमेक एव शास्ता स्वच्छासनं चेदानीं निहतमित्याहुः । शास्तेति । दण्डधरः पापिनां नृणां दण्डं धारयति कारयतीति तथा शास्ता हिताहितयोर्विविच्य ज्ञापयिता शुभाशुभे पुण्यापुण्ये विविनक्ति विभजतीति शुभाशुभविवेचकः । नन्द्यादित्वात्कर्तरि ल्युः ॥ ७ ॥

तस्यैवम्भूतस्य ते तव दण्डः शासनं लोके क्वाप्येतत्पर्यन्तं विहतो न वर्तते किन्त्वविहत एवाधुना त्वच्छनरूपैश्चतुर्भिः सिद्धैस्ते तवाज्ञा विप्रलम्भिता वितथीकृता ॥ ८ ॥

कथं विप्रलम्भितेत्यत्राहुः । नीयमानमिति । तवादेशादस्माभिर्यातनागृहं नरकं प्रति नीयमानं पातकिनं ते सिद्धा व्यमोचयन् किं कृत्वा प्रसह्य बलात्तं पाशान् छित्त्वातः तान् विद्वांसेदितुं तद्बलतदधिपतिनामादिप्रभावादिकं सर्वं वेदितुमिच्छाम इत्यर्थः नोऽस्माकं क्षमं हितं यदि मन्यसे तर्हि कथयेति शेषः । तान्विशिषन्ति । नारायणेत्येतस्मिन्नच्छब्देऽभिहिते उच्चारिते सति द्रुतमाश्वाययुराजग्मुः ॥ ९ ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिपूर्वकं नामसङ्कीर्तनं मुक्तिसाधनमित्यनेनास्मिन्नध्यायेऽभिधीयते तत्र राजा पृच्छति । निशम्येति । हता आज्ञा यस्य स हताज्ञः । मुरारेर्नैदेशिकैराज्ञाकारिभिः किङ्करैरित्यर्थः विहतान् प्रतिहतान् स्वामिनिर्देशकरणाशक्त्या पीडितानित्यर्थः अयं जनः यस्य यमस्य वशे वर्तते ॥ १ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

दण्डभङ्गः आज्ञाभङ्गः वृश्चति छिनत्ति ॥ २ ॥

"वाचं यमे प्रेतपतौ यमने च यमः स्मृतः" इत्य-
भिधानात् संशयनिराकरणाय संयमनीपतिमिति ॥ ३ ॥

फलाभिव्यक्तिहेतवः फलदातारः कति सन्तीत्यस्यायमर्थः।
एकः शास्ताऽथवा बहवः। तत्रापीयन्त इति नियमोऽस्ति किं वा
न ॥ ४ ॥

द्वितीयं प्रत्याहुरित्याह। यदि स्युरिति। इयन्त इति सङ्ख्याना
भावः मृत्यमृतयोः दानसमार्थौ उत न न द्वितीय इत्याहुरि-
त्याह। कस्येति। मृत्युलक्षणो बन्धः अमृतलक्षणो मोक्षश्च कस्य
स्यातामिति वक्तव्यं न कस्यापि स्यातां दातृत्वे सामर्थ्याभा-
वात् प्रथमं परिहरन्तीत्याह। न चेति। तौ कस्य न स्यातां सर्वेषा-
मपि स्यातां सामर्थ्यात् ॥ ५ ॥

नचैतद्युक्तमसम्भवात् मिथो विरोधापातादित्याहुरित्याह। किं-
त्विति। मण्डलवर्त्तिनां मण्डलेश्वराणाम् ॥ ६ ॥

यत एवं बहुत्वे दोषः अतः एकः शास्ता सचैकस्त्वमेवेति
पक्षोऽभिमत इत्याहुरित्याह। अत इति। शुभाशुभविवेचनः
शुभाशुभविवेककर्त्ता ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

लोकसंशयमिति। स्वस्य तु न संशय इति भावः ॥ १—९ ॥

अथ तेषां ज्ञानाय किञ्चिद्विशिष्टादिकमुच्यतां तत्राहुः। नारायण
इति ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तृतीये तु यमं प्राहुर्दूतास्ते स्वावमाननम्।
स च तान् शिक्षयामास भक्तेरैश्वर्यमद्भुतम् ॥
कृष्णभक्तैः स्वभक्तैश्च यमो यद्यपि धिक् कृतः।
न चुकोप प्रत्युत स्वाशिक्षणादनुतप्तवान् ॥ ०

दूतैर्निर्णीतं शास्त्रार्थं यममुखेनापि द्रढयितुं तृतीयाध्याय-
मवतारयते। तत्र यदुक्तं यमराज्ञे यथासर्वमाचचक्षुरिति तत्र ततः
किं वृत्तमिति पृच्छति। निशम्येति। नैदेशिकैर्हरेराज्ञाकारिभिरेवं
विहतान् तान् स्वपक्ष्च हताशः ॥ १ ॥

कुतश्चन हे प्रभो! कस्मादपि न श्रुतपूर्वः एतत् एतम् ॥२॥३॥
सर्वलोकपराभवप्रदा वयमद्येवं पराभवं सहामहे तदद्य तेषां
कोटीं चतुर्भुजानां शास्ति कारयित्वा तानेवाजामिलं नरकमेवा-
नेतुं यदानेतुं न शक्नुमस्तर्हिस्य खद्योतस्य तुल्यमेवातः परं
सर्वं इत्यन्तःकोपगद्गदाक्षरं साक्षेपमाहुः। कतीति। त्रैविध्यं
त्रिविधम् ॥ ४ ॥

ननु बहवस्तत्र को बाध इत्यत आहुः। यदीति। कर्मफलं हि
द्विविधं मृत्युर्नरकमसृतं स्वर्गः तयोर्द्वयोरेव स्वत्वमारोपयितुमिच्छतां
मध्ये कस्य ते द्वे स्यातामपि तु विरोधे सति न कस्यापी-
त्यर्थः। दैवादैकमत्येन तेषामविरोधे सति कस्य वा न स्यातामपि
तु सर्वं सर्वस्य स्यातां नत्वेकं विनिगमनाभावादिति पुन-
रेक एव भवेदिति भावः ॥ ५ ॥

ननु बहूनां कर्मिणां व्यवस्थयैव बहवः शास्तारो भवन्तु तथा
सति नायं दोषः स्यात्तत्राहुः। किन्त्विति। सर्वशास्तत्वैव शास्तृत्वं
मुख्यमेकदेशे तूपचार एव। यथा चक्रवर्त्तिनः एव मुख्यं शास्तृत्वं
मण्डलवर्त्तिनां कर्मिणां त्वौपचारिकं निरङ्कुशत्वाभावात् ॥ ६ ॥ ७ ॥

विप्रलम्भिता वञ्चिता खण्डितेत्यर्थः ॥ ८ ॥

केन प्रकारेणेत्यत आहुः। नीयमानमिति। तेन तानत्रानीय यदि
तदपराधदण्डं दातुं त्वं पारयिष्यसि तदैव त्वं शास्ता अस्माक-
मपि दुःखाग्निर्निर्वातीति भावः ॥ ९ ॥

ननु ते स्वप्रभुस्थानं गताः सम्प्रति के तानत्रानयन्तु यतो दण्ड-
यामीति चेत्तत्राहुः। तांस्ते त्वत्तो महासर्वज्ञत्वात् वेदितुमिच्छामः
कस्य ते दूताः क वसन्तीति आनेष्यामस्तु बलाद्वयमेवेति भावः।
यदि नः क्षमं हितं मन्यसे अन्यथा पराभवासहिष्णुतया वयं मरि-
ष्याम एवेति भावः। तान् ज्ञातुं तेषां चेष्टितं किमपि ब्रुवन्ति चेदहो
हन्ताद्भुतं तेषां भाषणमित्याहुः। नारायणेतीति। नामैवापीरिति
पापिनमप्यूचुरहो अन्याय इति भावः ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हरिपार्षदवाक्यैर्भगवद्भक्तैः सर्वपापनिवर्तकत्वं सर्वपुरुषार्थ-
दत्वं चोक्त्वाथ श्रीशुकः यममतेन स्वमतेन च श्रीभगवद्भक्तैः
सर्वपापनिष्कृतित्वं सर्वपुरुषार्थप्रदत्वं चाह तृतीयेनाध्यायेन।
यमराज्ञे तथासर्वमाचचक्षुरित्युक्तं तदनन्तरं यमराजः किमुक्त-
वानिति पृच्छति। यस्य वशे अयं सर्वोऽपि जनः स एवमुक्त-
प्रकारेण मुरारेर्नैदेशिकैः हता आज्ञा यस्य सः स्वभटोपवर्णितं
श्रुत्वा मुरारेर्नैदेशिकैर्विहतान् स्वभटान् प्रति किं प्रत्याह प्रत्यु-
त्तरमाह ॥ १ ॥

हे प्रभो! यमस्य दण्डभङ्गः कुतश्चन कस्मादपि श्रुतपूर्वो
नासीत् एतदेनं मे मम सर्वस्य लोकस्य च संशयं
त्वदन्यो न हि वृश्चति छिनत्ति अतः कथयेति शेषः ॥ २ ॥

प्रतिहतः उद्यमो येषां ते ॥ ३ ॥

त्रैविध्यं त्रिविधं स्वार्थे ष्यञ् विहितं निषिद्धं मिश्रं कर्म
कुर्वतः जीवलोकस्य फलानां सुखादीनामभिव्यक्तेर्निष्पत्तेर्हेतवः
शास्तारः शिक्षकाश्च कति सन्ति ॥ ४ ॥

एवं क्षुभिताः कति शास्तारः सन्तीत्याक्षिप्य किञ्चिद्वै-
र्यमवलम्ब्य बहुशास्तृसम्भवकथनपूर्वकमेकस्यैव धर्मराजस्य
शास्तृत्वं स्वयमेवाहुः। यदीति त्रिभिः। यदि बहवः शास्तारः
लोके स्युः तर्हि मृत्युर्नरकममृतं जन्मचेत्युभे कस्य शास्तु-
राज्ञया वा स्यातां कस्य वा नैव स्यातामित्यन्वयः लोके
यदा बहूनां शास्तृणां पृथक् पृथक् बुद्धयः बहूनि च प्राणि-
कर्माणि तत्र कस्य चिच्छास्तुः किञ्चित्कर्मविशेषमवलम्ब्य
प्राणिजन्ममरणे कस्मिंश्चिद्देशे काले संमते अन्यस्यान्यत्कर्म-
विशेषमवलम्ब्यान्यस्मिन् देशे काले संमते तत्र कस्याज्ञया ते
स्यातां कस्य नेत्यर्थः अतो बहवः शास्तारो न सम्भवन्त्येक
एव सम्भवतीति भावः ॥ ५ ॥

किंतु इह कर्मलोके बहूनां कर्मिणां शास्तृबहुत्वे शास्तृ-
त्वमुपचार औपचारिकं स्यात् मुख्यं तु शास्तृत्वमेकस्यैव
सम्भवति यथा मण्डलवर्तिनामौपचारिकं सार्वभौमस्य मुख्यं
शास्तृत्वं सुप्रसिद्धम् ॥ ६ ॥

॥ श्रीशुक उवाच ॥

इति देवः स आपृष्टः प्रजासंयमनो यमः ।
प्रीतः स्वदूतान् प्रत्याह स्मरन् पादाम्बुजं हरेः ॥ ११ ॥

॥ यम उवाच ॥

परो मदन्यो जगतस्तस्थुषश्च ओतं प्रोतं पटवद्यत्र विश्वम् ।
यदंशतोऽस्य स्थितिजन्मनाशा नस्योतवद्यस्य वशे च लोकः ॥ १२ ॥
यो नामभिर्वाचि जनान्निजायां बध्नाति तन्त्यामिव दामभिर्गाः ।
यस्मै बलिं त इमे नामकर्मनिबन्धबद्धाश्चकिता वहन्ति ॥ १३ ॥
अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चिः ।
आदित्यविश्वे वसवोऽथ साध्या मरुद्गणा रुद्रगणाः ससिद्धाः ॥ १४ ॥
अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः ।
यस्येहितं न विदुः स्पृष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये ॥ १५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतो हेतोः सेश्वराणाम् ईश्वरैर्नानानियन्तृभिः सहितानां त्वमेक एव शास्ता नियन्ता ॥ ७ ॥

अधुना ते आज्ञा विप्रलम्भिता लङ्घिता ॥ ८ ॥

ते प्रसह्य बलात् पाशान् छित्त्वा पातकिनं व्यमोचयन् विमोचितवन्तः ॥ ९ ॥

यदि नो क्षमं योग्यं तद्वेदनं मन्यसे तर्हि ते त्वत्तो वेदितुमिच्छामः ॥ १० ॥

---

भाषा टीका ।

राजा बोले जिस यमराज के वशमे यह सब जनमात्र है नारायण के दूतों ने जब उनके दूतों को हटा दिया तब यमराजकी आज्ञा भङ्ग होगई फिर अपने दूतों के वचनों को सुन कर धर्मराज ने उन दूतों से क्या कहा सो आप मेरे से कहिये ॥ १ ॥

हे महर्षिजी ! यमदेव के दंड का भंग होना कभी कहीं किसी से नहीं सुना था हे मुने ! लोक के इस संशय को आप के बिना दूसरा कोई दूर नहीं कर सकता है यह बात मेरे को निश्चित है सो आप कहिये ॥ २ ॥

श्री शुकदेव जी बोले हे राजन् ! भगवान् के पार्षदों ने जब यमराज के दूतों का उद्यम नष्ट कर दिया तब अपने मालिक संयमिनी पुरी के पति को यमदूतों ने उस बात का निवेदन किया ॥ ३ ॥

यमदूत बोले हे प्रभो ! जीव लोक के शासन करनेवाले कितने पुरुष हैं जो कि तीन गुणों के किये कर्मों के फल के प्रगट करने वाले हैं ॥ ४ ॥

यदि लोक मे बहुत से दंडधारी शासन कर्ता होंगे तब तो किस पुरुष को सुखदुःख नरक स्वर्ग होगा किस को होगा ॥ ५ ॥

और भी बहुत दंड देने वाले होंगे तो कर्म [illegible] वाले मनुष्यों का शासन करने मे किसी दंडधारी को [illegible] मानना होगा जैसे कि चक्रवर्ति के नीचे छोटे राजा होते हैं ॥

इस से सब देवादिकों के भी ईश्वर आप एकही हो [illegible] करने वाले मनुष्यों के शुभाशुभ विवेचन करने वाले हो ॥

तिन आपका दंड इस वखत नष्ट होगया लोक में नहीं क्यों कि चार अद्भुत सिद्धों ने तुह्मारी आज्ञा को भ्रष्ट कर दिया है ॥ ८ ॥

आपकी आज्ञा से हम जब एक पुरुष को दंडस्थान को आने लगे तब उन चारों ने आकर हमारे पाशों को काट कर पापी को भी छुटा लिया ॥ ९ ॥

यदि आप हमसे कहने का उचित समझें तो उनको [illegible] जानना चाहते हैं जो कि चार पुरुष नारायण के [illegible] आगये थे ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रजाः संयमयतीति तथा ॥ ११ ॥

मत्तोऽन्यो जगतस्तस्थुषश्च परोऽधीश्वरोऽस्ति । अहं तु [illegible] नामेव तत्रापि नृणामेव तत्रापि पापिनामेव तन्नियन्ता सर्वा[illegible] तु सर्वेश्वरः कोऽसौ यत्र यस्मिन्विश्वमोतं प्रोतं [illegible] पटवत् यस्य स्वांशेभ्यो विष्णुब्रह्मरुद्रेभ्योऽस्य स्थित्यादयो [illegible] यस्य च वशे लोको वर्त्तते नसि नासिकायां प्रोतबलीवर्द[illegible]

एतत्प्रपञ्चयति । ब्राह्मणादिनामभिर्वाचि निजायां [illegible] दामन्यां जनान् यो बध्नाति दामभिर्गा बलीवर्दानिव त[illegible]

यं वै न गोभिर्मनसासुभिर्वा हृदा गिरा वासुभृतो विचक्षते ।
आत्मानमन्तर्हृदि सन्तमात्मनां चक्षुर्यथैवाकृतयस्ततः परम् ॥ १६ ॥
तस्यात्मतन्त्रस्य हरेरधीशितुः परस्य मायाधिपतेर्महात्मनः ।
प्रायेण दूता इह वै मनोहराश्चरन्ति तद्रूपगुणस्वभावाः ॥ १७ ॥
भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि ।
रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च ॥ १८ ॥
धर्मं तु साक्षाद्भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः ।
न सिद्धमुख्या असुरा मनुष्याः कुतश्च विद्याधरचारणादयः ॥ १९ ॥
स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः ।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नामकर्मभिर्निबन्धैर्दृढबन्धसाधनैर्बद्धा यस्मै बलिं वहन्ति यदधीनाः कर्म कुर्वन्तीत्यर्थः ॥ १३ ॥

यस्य च लीला दुर्विभाव्येत्याह । अहमिति द्वाभ्याम् ॥ १४ ॥
न स्पृष्टं रजस्तमश्च यैः ईहितमभिप्रेतं चेष्टितं वा न विदुः सृष्टमाया मायया स्पृष्टाः ततस्तेभ्योऽन्ये न विदुरिति किं पुनर्वक्तव्यम् ॥ १५ ॥

तन्मायया विमोहितत्वान्न जानन्तीत्युक्तमविषयत्वाच्च तस्येत्याह । यमिति । गोभिरिन्द्रियैर्हृदा चित्तेन न विचक्षते न पश्यन्ति । "यद्वाचानभ्युदितं यं मनो न मनुते" इत्यादिश्रुतेः आत्मनां जीवानामात्मानं द्रष्टारम् आकृतयो रूपाणि चक्षुर्यथा कर्मभूतं न जानन्ति ततः परमाकृतीनां प्रकाशकं न हि प्रमाता प्रमाणस्य विषय इति भावः एवम्भूतः परमेश्वरो मदन्योऽस्तीति पूर्वेणैव सम्बन्धः ॥ १६ ॥

भवत्वेवं भूतोऽन्यः परमेश्वरो ये पुनरस्मान्निर्भर्त्स्य पापिनं रक्षितवन्तस्ते के तानाह । तस्येति द्वाभ्याम् । तस्येव रूपं गुणाः प्रभावादयः स्वभावो भक्तवात्सल्यादिर्येषान्ते ॥ १७ ॥

विष्णोर्भूतानि भृत्याः दुर्दर्शानि द्रष्टुमप्यशक्यानि लिङ्गानि रूपाणि येषां तानि तद्भक्तिमतो विष्णुभक्तान् परेभ्यः शत्रुभ्यो मत्तः सर्वतोऽन्यादिभ्यश्च रक्षन्ति ॥ १८ ॥

ननु विष्णुभक्ताश्चेत्कथमधर्मपक्षपातं कृतवन्तस्तत्राह । धर्ममिति । ऋषयो भृग्वादयः ॥ १९ ॥

ननु केऽपि चेन्न जानन्ति तस्य सर्वे किं प्रमाणं तत्राह । स्वयम्भूरिति । कुमारः सनत्कुमारः वयमित्यात्मानमेव बहुमन्यमानो निर्दिशति ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

एवमापृष्टो यमस्तान् प्रत्याह इत्याह मुनिः । इतीत्थमापृष्टः प्रजानां संयमनः संयमयति शास्तीति तथा । कर्तरि ल्युः यमो देवः प्रीतः सुदर्शनेन हृष्टः हरेः पादाम्बुजं स्मरन् स्वदूतान् प्रत्याह ॥ ११ ॥

उक्तिमेवाह । पर इत्यादिना पुरुषाय भूम्न इत्यन्तेन । मन्मत्तः पर उत्कृष्टोऽन्योऽस्ति न केवलं मत्तः परः किन्तु जगतः जङ्गमात्स्थुषः स्थावराच्चराचरात्मकादाब्रह्मस्तम्बपर्यन्ताज्जगतः उत्कृष्टोऽन्योऽस्तीत्यर्थः अतो भवन्त इव तच्छासनकारिणोऽस्माकं मुख्यं प्रशास्तृत्वमिति भावः कोऽसौ यत्र यस्मिन्निदं विश्वं तन्तवः पट इवोतं प्रोतमायामतो विस्तरतश्च स्यूतं सर्वतो व्याप्तमित्यर्थः यस्य चांशतः अंशादेवास्य जगतः जन्मादयो भवन्ति नस्योतवन्नासिकायामोतवत् प्रोतबलीवर्द्दवद्यस्य वशेऽयं लोकः यद्वशवर्त्ययं लोक इत्यर्थः ॥ १२ ॥

एवं सर्वाभ्यधिकत्वसर्वव्यापकत्वसर्वजन्मादिकारणत्वसर्वप्रशास्तृत्वधर्मयुक्तो भगवानन्योऽस्तीत्युक्तम् अथान्यांश्च भगवतो धर्मान् प्रपञ्चयति । य इति । यो भगवान्निजायां वाचि वेदात्मिकायां तन्त्यां दामन्यां नामभिर्वर्णाश्रमनामभिर्जनं दामभिग्रन्थिमद्रज्जुभिः स्थूलतन्त्यां गाः बलीवर्द्दानिव बध्नाति नामभिरित्यनेन ब्राह्मणब्रह्मचार्यादिवर्णाश्रमनामनिर्देशपूर्वकं वेदोक्ता वर्णाश्रमधर्माः विवक्षिताः तैरीश्वराज्ञारूपायां तन्तुलक्षणे दण्डनापादिकायां वाचि बध्नाति वागधीनानि करोतीति यावत् । यस्मै च त इमे नामकर्मभिर्निबन्धः कृतः बन्धो येषां तादृशाः प्रतिनियतनामकर्माणः चकिता बिभ्यतः बलिं पूजां वहन्ति कुर्वन्तीत्यर्थः ॥ १३ ॥

अहं यमः प्रचेता वरुणः ईशानो रुद्रः अर्कः सूर्यः अब्जयोनिर्ब्रह्मा आदित्या अदितेः पुत्रा विश्वावसुप्रभृतयः उपदेवाः विश्वसृजः दक्षादयः अस्पृष्टं रजस्तमश्च यैः सत्त्वप्रधाना अपि यस्येहितमभिप्रायं न विदुः तत उक्तेभ्योऽन्ये न विदुरिति किं वक्तव्यम् । अवेदने हेतुः स्पृष्टा माया यैस्ते मायामोहितत्वादित्यर्थः ॥ १४ ॥ १५ ॥

असुभृतः प्राणभृतः यं गोभिरिन्द्रियैर्मनसासुभिः प्राणायामैर्हृदा चित्तेन गिरा वा कौशलेन यं न विचक्षते न पश्यन्ति न जानन्तीत्यर्थः । कथम्भूतमात्मनां जीवानामात्मानमन्तरात्मानमन्तर्हृदि सन्तं न विचक्षते तत्र दृष्टान्तः । चक्षुरिति । आकृतयः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रूपाणि , ततः परमाकृतिभ्यो विलक्षणमाकृतीनां प्रकाशकं चक्षुरिन्द्रियं न विचक्षते तद्वदिति ॥ १६ ॥

एवं सर्ववशित्वसर्वाराध्यत्वसर्वाधिज्ञाताभिप्रायत्ववाङ्मनसागोचरापरिच्छिन्नस्वरूपस्वभावत्वसर्वान्तरात्मत्वादयो धर्मा उक्ताः एभिरन्यैश्च कल्याणगुणैश्चिदचिदात्मकजगतो विलक्षणस्य स्वतन्त्रस्य मायाधिपतेरधीशितुः सर्वेश्वरस्य महात्मनो निरतिशयप्रभावस्य हरेर्मनोहराः दूताः भगवत इव गुणरूपस्वभावा येषां तादृशा इह लोके चरन्ति ॥ १७ ॥

विष्णोर्भूतानि किङ्करात्मकानि भूतानि सुरैर्ब्रह्मादिभिः पूजितानि दुर्दर्शान्युज्ज्वलानि लिङ्गानि स्वरूपाणि येषां तानि महाद्भुतानि दृष्टविसजातीयानि भगवद्भक्तिमतो जनान् मत्तो मृत्योश्चान्येभ्यश्च सर्वेभ्यः रक्षन्ति ॥ १८ ॥

तद्भक्तिमतो रक्षन्तु नामायं त्वजामिलो निरतिशयदुष्कृद्भक्तिशून्यश्चेति कथमेनं रक्षितवन्तस्तत्राह । धर्ममिति । साक्षाद्भगवता प्रणीतमभिहितं धर्मम्रृषिप्रभृतयस्ते विदुर्भागवतधर्मप्रभाव ईदृश इति भावः ॥ १९ ॥

यदि केऽपि न विदुस्तर्हिस्तद्धर्मः शशविषाणवदसत्कल्पः स्यात्तत्राह । स्वयम्भूरिति । वयमहम् "अस्मदाद्वयाश्च" इति बहुवचनमेकत्वे वेदितव्यम् । स्वयम्भूर्ब्रह्मा शम्भुः रुद्रः कुमारः सनत्कुमारः मनुः स्वायम्भुवः वैयासकिः शुकः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यमः स्वदूतान् प्रति वक्तीत्याह । इतीति ॥ ११ ॥

यदुक्तं भवद्भिस्त्वमेक एव शास्तेति तदनालोच्य कथितं मदन्यस्यात्युत्तमस्य सत्त्वादित्याह । पर इति । मदन्यो जगतो जङ्गमस्य तस्थुषः स्थावरस्य च शास्तास्ति स क इत्यत उक्तम् । पर इति "परोऽरिपरमात्मनोः" इत्यभिधानात् स शास्ता परः परमात्मा तस्य लक्षणमाह । ओतमिति । अयमर्थः पटवद्यथा कन्था पटः सूत्रे तन्तौ दीर्घतया ओतः तिरश्चीनतया प्रोतः तन्त्वाधारत्वेन स्थितः तथेदं विश्वं यत्र परमात्मनि ओतप्रोतधर्मेण तदाधारत्वेन स्थितं "यस्मिन्निदं सं च विचैति सर्वं" यथा (१) कन्था पटाः सूत्र ओताः प्रोताश्च संस्थिताः एवं विष्णाविदं विश्वमोतं प्रोतं च संस्थितमित्यादिश्रुतिस्मृतिबलादेतल्लक्षणमव्याप्त्यतिव्याप्त्यादिदोषरहितं यद्यस्य धारको न स्यात्तर्हि पतिष्यति वेगाख्यसंस्काररहितशरवदित्यादितर्काच्च लक्षणान्तरं चाह । यदंशत इति । यस्यांशतो वासुदेवादिस्वरूपांशैर्भिन्नांशैर्ब्रह्मादिभिरस्य जगतः स्थितिजन्मसंहाराः भवन्तीति शेषः "यतो वा इमानि भूतानि जायन्त" इत्यादिश्रुतेः ।

> यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !
> अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।

इत्यादेर्व्यासरूपेणापि धारकत्वं तस्यैवेति निश्चयाय चशब्देन पुनर्ग्रहणं जन्मनाशावेव लक्षणान्तरे इति जातपक्षपाति-

(१) कन्थानिर्माणाय छिन्नाः पटाः यथा त्रिगुणीकृतसूत्रे ओताः प्रोताश्च तथा ब्रह्मणि विश्वम् ओतप्रोतम् । तथा च मूले पटशब्देन त्रिगुणीकृतसूत्रस्य विवक्षितत्वेनभेदाशङ्का नास्ति ॥

वत् पुनरस्याधीनं न स्यादिति नेत्याह । नसीति । नसि नासिकायामोताः गाव इति च ॥ १२ ॥

हरेः शास्तृत्वं नाम दण्डधरस्य दण्डेनैव न किन्तु वेदलक्षणया वाचेत्याह । य इति । य ईशः निजायां स्वस्मादभिव्यक्तायां वाचि वेदलक्षणायां नामभिर्ब्रह्मादिलक्षणैर्बध्नाति "नित्यमात्मीयनित्ययोः" इत्यभिधानं बन्धनेन किं प्रयोजनमत्राह । यस्य इति । नामकर्मणामानन्त्यप्रकटनाय बहुवचनमन्यथा नामकर्मभ्यामित्यलं दृढं बन्धो निर्बन्धस्तेन बद्धाः ॥ १३ ॥

लोकतः सर्वज्ञानामस्माकं स्वविषयज्ञानजनकत्वमाहात्म्यं च श्रीहरिलक्षणमित्याह । अहमित्यादिना ॥ १४ ॥

न स्पृष्टा रजस्तमोभ्यामस्पृष्टरजस्तमस्काः शुद्धसात्त्विका इत्यर्थः ततो भृग्वादिभ्यो अन्ये मन्वादयः सत्त्वप्रधाना इत्यनेन सत्त्वं प्रचुरमन्ये रजस्तमसी च किञ्चित् स्त इति ज्ञायते कुत इत्यत उक्तं स्पृष्टेति ईहितमिच्छाविषयमभिप्रायम् ॥ १५ ॥

तत्प्रसादमन्तरेणादृष्टलक्ष्यवेधवच्चक्षुरादीन्द्रियाविषयत्वेन तद्रूपं ज्ञानं दुष्करमित्याह । यं वा इति । गोभिश्चक्षुरादीन्द्रियैः असुभृतो जीवाः आत्मनां जीवानामात्मानमन्तर्यामिणं स्वरूपान्तरं चाह अन्तर्हृदि सन्तं अथवात्मनामन्तर्हृदि सन्तम् आकृतयो रूपाणि स्वप्रकाशं चक्षुरिन्द्रियमनेन निकटवर्तिनां चक्षुरादीन्द्रियाभिमानिनां देवानामपि तद्विषयज्ञानाभाव उक्त इति ज्ञातव्यं स्वरूपत्वेन नाकृतयः पश्यन्तीति चेत्तत्राह । तत इति । ततः आकृतिभ्यः परं विलक्षणं भिन्नमित्यर्थः इदमपि हरिलक्षणं स पर इति पूर्वेणान्वयः ॥ १६ ॥

तांस्तु वेदितुमिच्छाम इत्यस्योत्तरमाह । तस्येति । मायाधिपतेः लक्ष्मीपतेः आत्मतन्त्रत्वलक्ष्मीपतित्वे पूर्वोक्तलक्षणसाधके इति ज्ञातव्यं प्रायेणेति कथितार्थनिर्धारणाय तस्य हरेः रूपं श्यामवर्णं गुणाः विप्रप्रियत्वादयः स्वभावो नित्यनिर्दोषत्वं येषां ते तथा ॥ १७ ॥

तेषां किं कृत्यमिहेति तत्राह । भूतानीति । विष्णोर्भूतानि पार्षदाः दुर्दर्शलिङ्गानि दर्शनायोग्यलक्षणानि तद्भक्तिमतः विष्णुभक्तिमतः ॥ १८ ॥

विष्णुदूताश्चेत्तर्हि पातकिनं किमित्युदमूमुचन्निति तत्राह । सर्वैरिवति । तुशब्दात्सूक्ष्मज्ञानं युष्माकं नास्तीत्याह ॥ १९ ॥

तर्हि के विदुरिति तत्राह । स्वयम्भूरिति ॥ २० ॥ २१ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

प्रीत इति । श्रीनारायणपुरुषत्वनिर्णयात् पूर्वं त्वन्यदीयज्ञाने दुःखं जातमासीदिति ॥ ११—१५ ॥

यं वै इति । श्रीभगवद्रूप एव वागाद्यगोचरतया श्रुतिभिर्वर्ण्यते इति व्यज्य तस्य स्वप्रकाशत्वं व्यञ्जितम् न विचक्षते न विषयीकुर्वन्ति ॥ १६-२० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्मरन् प्रीत इति । नारायणनामश्रवणमात्रादेवेति भावः ॥ ११ ॥

किमरे अपराधिनः ! प्रलपथ तत्त्वं शृणुतेत्याह । पर इति । वं लोकशास्तारं जानीथ तस्मान्मत्तोऽपि मदुपलक्षितेभ्य इन्द्रादिभ्योऽपि

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नन्वत्र श्रेष्ठोऽधीश्वरोऽस्ति । अहन्तु जङ्गमानामेव तत्रापि पापिनामेव तत्रापि तदकिङ्करः सन्नीश्वरः सतु सर्वेश्वरः । कोऽसौ यत्र यस्मिन् विश्वमोतं प्रोतञ्च । ऊर्ध्वतिर्यक्तन्तुषु पटवत् । यदंशेभ्यो विष्णु-ब्रह्मरुद्रेभ्यः नस्योतवन्नसि प्रोतबलीवर्द्दवत् ॥ १२ ॥

एतदेव प्रपञ्चयति । य इति । वाचि वेदलक्षणायां नामानि ब्राह्मणादीनि कर्माणि यजनादीनि तैरेव निबन्धैर्नियन्धकैर्बद्धाः ॥ १३ ॥

न केवलं स मद्विधेभ्यः पर एव किन्तु वयं विरिञ्चिपर्यन्ताः सर्वथा अपि स कदा किं कुर्यादित्यपि न विद्म इत्याह । अहमिति । ईदृशं चिकीर्षितं यदुक्तं । "नाहस्य कर्हिचिद्राजन् ! पुमान् वेदविधित्सितम् । यद्विजिज्ञासया युक्ता मुह्यन्ते कवयोऽपि हि„ इति ॥१४॥

असृष्टरजस्तमस्का अपि सृष्टा सत्त्वमयी माया यैर्यतः सत्त्वप्रधानाः ॥ १५ ॥

तस्यातीन्द्रियत्वात् सुतरामेव न जानीम इत्याह । यमिति । गोभिर्ज्ञानेन्द्रियैः मनसा सविकल्पतया असुभिः कर्मेन्द्रियैः हृदा चित्तेन निर्विकल्पतया च न विचक्षते न जानन्ति आत्मनां जीवानामनेकेषाम् एकमेवात्मानमन्तर्यामिणमाकृतयो रूपाणि चक्षुर्यथा स्वमूलं ततः प्रकाश्येभ्यः परं प्रकाशकम् ॥ १६ ॥

ननु भवत्स्वेवं भूतः परमेश्वरस्तं न जिज्ञासामहे ये त्वस्मान्निजस्य पातकिनं ररक्षुस्ते के इत्यत आह । तस्येति । प्रायेण मनोहरा इति युष्माकन्तु न मनोहरा इति भावः ॥ १७ ॥

सुरपूजितानीति । रे मूर्खास्तान् अपूजितवन्तो यूयमपराधिन इति भावः । तद्भक्तिमतो विष्णुभक्तान् मत्तश्चाति यूयं के वराका इति भावः ॥ १८ ॥

नन्वेवञ्चेत्तर्हि ते कथमधर्मपक्षपातिन इति चेद्धर्मतत्त्वं युष्मद्विधा मूढाः कुतो ज्ञास्यन्ति महाविद्वांसो मुनयोऽपि न जानन्तीत्याह । धर्ममिति ॥ १९ ॥

ननु केऽपि चेन्न जानन्ति तर्हि तस्य सत्त्वे किं प्रमाणं तत्राह । स्वयम्भूरिति । विजानीम इति । ननु निजकृतस्मृतिशास्त्रेष्वपि स्पष्टं कथयाम इत्यर्थः । तत्र हेतवः गुह्यं परमतत्त्वत्वात् संवृत्यैव स्थाप्यं राजविद्याराजगुह्याध्याये "सर्वगुह्यतमं भूयः शृणु मे" इत्यत्र तेनैव इष्टत्वात् विशुद्धं गुणातीतं सगुणस्मृतिशास्त्रेषु वक्तुमशक्यत्वात् दुर्बोधं कर्मिभिरर्थवादादिदोषकलुषान्तःकरणैर्दुर्ज्ञेयत्वात् ॥ २० ॥ २१ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्थं हरिस्मारकवाक्येन पृष्टः अत एव हरेः पादाम्बुजं स्मरन् प्रीतः प्रसन्नः सन् संयमयतीति संयमनः स्वदूतान् आह ॥ ११ ॥

जगतो जङ्गमतस्तस्थुषः स्थावरात् परः श्रेष्ठः यतः सर्वोत्पत्त्यादिहेतुरित्याह । यत्रोर्ध्वतिर्यक्तन्तुषु पटवत् विश्वमोतं प्रोतं च यस्यांशेभ्य इन्द्रब्रह्मरुद्रेभ्यः अस्य स्थित्यादयः यस्य वशे नसि नासिकायामोतपशुवत् सर्वोऽपि लोकः स सर्वेश्वरः । सर्वेश्वरः मदन्यः अहमपि तदधीन इत्यर्थः ॥१२॥

दामभिर्गोः बलीवर्द्दानिव नामभिर्ब्राह्मणादिशब्दैः निजायां वेदलक्षणायां वाचि तन्त्यां जनं बध्नाति त इमे जनाः नामकर्मनिबन्धबद्धा वाचि स्वस्वाधिकारानुरूपाणि वहन्ति यस्मै ... मदन्य इति पूर्वेण सम्बन्धः ॥ १३ ॥

ये बलिं वहन्ति ते के इत्याकाङ्क्षायां तान् वदन् सर्वे एते तस्य चेष्टितं न जानन्तीत्याह । अहमिति द्वाभ्याम् ॥ १४ ॥

येऽसृष्टरजस्तमस्काः सत्त्वप्रधाना यस्येहितं न विदुः ततस्तेभ्यः सत्त्वप्रधानेभ्योऽन्ये रजस्तमःप्रधानाः सृष्टमायाः क्षुद्राधिकारिणो न विदुरिति किं वाच्यम् ॥ १५ ॥

आत्मनामखिलजीवानामात्मानमन्तर्हृदि सन्तम् "अन्तः प्रविष्टः शास्ता जनानाम्" इति श्रुतेः गोभिर्वाग्भिः मनसा च असुभिरन्यैरिन्द्रियैश्च न विचक्षते कार्त्स्न्येन नैव पश्यन्ति इयत्तानवच्छिन्नत्वात् "यद्वाचा नभ्युदितं यन्मनो न मनुते" यस्यामतं तस्य मतं मतं यस्य न वेद सः" इत्यादिश्रुतेः हेतुगर्भितं विशेषणं ततः परं गवादिभ्यः परं चक्षुः प्रकाशकं तत्प्रकाश्यरूपाकृतयो यथा न विचक्षते तद्वत् सर्वथा निषेधस्तु नास्ति "तं त्वौपनिषदं पुरुषं पृच्छामि मनसैवानुद्रष्टव्यः सदा पश्यन्ति सूरयः" इत्यादिश्रुतिभ्यः स मदन्य इति पूर्वेणैवान्वयः ॥ १६ ॥

भवतु त्वदन्यः सर्वेश्वरः सर्वनियन्ता ये पाशान् छित्त्वा पापिनं विमोचितवन्तस्ते के इत्यतस्तानाह । तस्येति द्वाभ्याम् । तस्य आत्मतन्त्रस्य स्वतन्त्रस्य तद्रूपगुणस्वभावाः तस्येव रूपं गुणाः स्वभावश्च येषां ते इह चरन्ति ॥ १७ ॥

भूतानि पार्षदरूपाणि दुर्दर्शानि द्रष्टुमप्यशक्यानि लिङ्गानि रूपाणि येषां तानि तद्भक्तिमतः विष्णुभक्तियुक्तान् ॥ १८ ॥

ननु यदि ते विष्णुपार्षदास्तर्हि धार्मिकरक्षां कुतः कृतवन्तस्तत्राह । धर्ममिति । ऋष्यादयोऽपि यदा न विदुस्तर्हि असुरादयः कुतो विदुः ॥ १९ ॥

एते तु भगवदनुग्रहतो जानन्तीत्याह । स्वयम्भूरिति ॥ २० ॥

---

### भाषा टीका ।

श्रीशुकदेवजी बोले कि प्रजाओंके नियम न करने वाले यमराज देव से जब इस प्रकार दूतों ने पूछा तब यम धर्मराज बड़े प्रसन्न होकर श्रीहरिचरणारविन्द को स्मरण करके अपने दूतों के प्रति यह वचन बोले ॥ ११ ॥

यमराज बोले स्थावर जङ्गम सब लोक से और मेरे से भी बड़े ईश्वर और हैं जिन में यह सब जगत् जैसे सूतों में कपड़ा सीधा तिरछा पुहा रहता है तैसे पोहा है जिनके अंश से इस जगत की स्थिति नाश होती है और सब लोक जिस परमात्मा के वश में हैं ॥ १२ ॥

जो भगवान् निज वेद लक्षण निज वाणी रूप बड़ी रस्सी में ब्राह्मणादि नाम रूप छोटी रस्सियों से गऊसरी के जीवों को बाँध रहते हैं ये सब जीव चकित होकर नाम कर्म बन्ध नियम से बंधे हुये जिन भगवान् को भेट पूजा समर्पण करते हैं ॥ १३ ॥

हम महेन्द्र निर्ऋति वरुण सोम अग्नि महादेवजी पवन सूर्य ब्रह्माजी आदित्य देवतागण विश्वे देव वसु साध्य मरुद्गण रुद्रगण सिद्धगण ॥ १४ ॥

और जो संसार की सृष्टि करने वाले देवेश रजोगुण तमोगुण से रहित जो भृगु आदिक माया स्पर्श होने से सत्त्व गुण वाले होकर भी जिन भगवान् के कर्तव्य को नहीं जानते हैं तो तिन से दूसरे तो कैसे जान सकते हैं ॥ १५ ॥

द्वादशैते विजानीमो धर्मं भागवतं भटाः ! ।
गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वाऽमृतमश्नुते ॥ २१ ॥
एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥ २२ ॥
नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ! ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥ २३ ॥

एतावताऽलमघनिर्हरणाय पुंसां सङ्कीर्त्तनं भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम् ॥ २४ ॥
प्रायेण वेद तदिदं न महाजनोऽयं देव्या विमोहितमतिर्बत माययाऽलम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि युज्यमानः ॥ २५ ॥
एवं विमृश्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम् ।
ते मे न दण्डमर्हन्त्यथ यद्यमीषां स्यात् पातकं तदपि हन्त्युरुगायवादः ॥ २६ ॥
ते देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः ।
तान्नोपसीदत हरेर्गदयाऽभिगुप्तान्नैषां वयं (१) न च वयः प्रभवाम दण्डे ॥ २७ ॥
तानानयध्वमसतो विमुखान् मुकुन्दपादारविन्दमकरन्दरसादजस्रम् ।
निष्किञ्चनैः परमहंसकुलैरसङ्गैर्जुष्टाद्गृहे निरयवर्त्मनि बद्धतृष्णान् ॥ २८ ॥
जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदाऽपि तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ २९ ॥
तत्क्षम्यतां स भगवान् पुरुषः पुराणो नारायणः स्वपुरुषैर्यदसत्कृतं नः ।
स्वानामहो न विदुषां रचिताञ्जलीनां क्षान्तिर्गरीयसि नमः पुरुषाय भूम्ने ॥ ३० ॥

भाषा टीका ।

जिन भगवान् को प्राणिमात्र मन वचन कर्म से हृदय से प्राणों से भी सब आत्माओं के आत्मा होकर हृदय में रहने पर भी नहीं जानते हैं जैसे कि घट पटादि रूपादिक चक्षु को नहीं देखते हैं तिस प्रकार सब से परे होने से उन परमात्मा को कोई नहीं जानता है ॥ १६ ॥

वे परमात्मा हरि स्वतन्त्र हैं सब के आधीश सब से परे हैं माया के अधिपति हैं महात्मा हैं उनके दूत उनके ही स्वभाव रूप गुणवाले इस जगत् में प्रायः करके विचरते रहते हैं ॥ १७ ॥ कोई जिनके स्वरूप को देख नहीं सकता है देवतों से जो सदा पूजित हैं वे महा अद्भुत ऐसे श्रीविष्णु भगवान् के भृत्यजन विचरते हुये भगवद्भक्तिमान् मनुष्यों को अन्यदुष्टों से तथा मेरे दंड से भी रक्षा करते हैं ॥ १८ ॥

साक्षात् भगवान् नें प्रवृत्त किया जो धर्म है तिसको ऋषि अथवा देवता उत्तम सिद्ध असुर सिद्ध चारणादिक भी नहीं जानते हैं तो मनुष्य तो कहां से जान सकेंगे ॥ १९ ॥

ब्रह्माजी नारदजी श्रीमहादेवजी सनत्कुमारजी मनुजी प्रह्लादजी जनकजी भीष्मजी बलि महाराज श्रीशुकदेवजी हम ॥ २०॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे भटाः ! ॥ २१ ॥

तमेव धर्ममाह । एतावानिति ॥ २२ ॥

न चात्र प्रमाणं वक्तव्यं दृष्टत्वादित्याह । नामोच्चारणेति । केवलेन सकृदुच्चारितेन ॥ २३ ॥

ननु नामाभासेन कथं सर्वपापक्षयः स्यात् । श्रद्धाभक्त्यादेरपि विधानात् तथाहि "सायंप्रातर्गृणन् भक्त्या दुःखग्रामाद्विमुच्यत" इति अनुदिनमिदमादरेण शृण्वन्निति । "श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः । जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम्"। इत्याद्यस्मिन्नेव पुराणे तत्र तत्र पठ्यते पुराणान्तरे च "पापक्षयश्च भवति स्मरतां तमहर्निशम्" इति ।

(१) भयामिति श्रीवीरराघवः

## श्रीधरस्वामिकृतभावार्थदीपिका।

...वेव च।

तस्मात्सङ्कीर्तनं विष्णोर्जगन्मङ्गलमंहसाम्
महतामपि कौरव्य ! विद्ध्यैकान्तिकनिष्कृतम्।

...दिता सम्यक्कीर्तनादेव मुच्यते। किञ्च। तथा सति किमिति मन्वा... द्वादशाब्दादीनि स्मरेयुः तस्मादिदमनुपपन्नमिव तत्राह। एता... । भगवतो गुणानां कर्मणां च नाम्नां च सम्यक्कीर्तनमिति ...वना पुंसामघनिर्हरणाय पापक्षयमात्रायालमुपयोगो नास्ति ...दोऽत्र वारणं। यथाहामरसिंहः "अलं भूषणपर्याप्तिश-... वाचकम्" इति उपयोगाभावमेवाह। अजामिलो ...पातकयपि नारायणेति विक्रुश्य न तु सम्य-... त्वा तत्र पुत्रं विक्रुश्य न तु हारम् अघवानशुचिरपि ...माणोऽस्वस्थचित्तोऽपि मुक्तिमवाप न त्वघनिर्हरणमात्र-... नामाभासेनापि सर्वपापक्षय इत्येव तत्त्वमावृत्तिश्रद्धादि-... विषयस्तु पापवासनाक्षयार्था इत्युक्तमेव हरेर्गुणानुवादः खलु ...भावन इत्यत्र ॥ २४ ॥

यदुक्तं व्यर्थं तर्हि द्वादशाब्दादिस्मरणमिति तत्राह। प्राये-... । महाजनो मन्वादिः। अयम्भावः। यथा मृतसंजीवनौषधि-... ज्ञानो वैद्या रोगनिर्हरणाय त्रिकटुकनिम्बादीनि स्मरन्ति ...था स्वयम्भूशम्भुप्रमुखद्वादशव्यतिरेकेणायं महाजनोऽतिगुह्यमि-... त्वा द्वादशाब्दादिकं स्मरतीति। किञ्च। मायया देव्या अलं ...मोहितमतिरयं जनो मधु मधुरं यथा भवत्येवं पुष्पितायां पुष्प-... र्थवादैर्मनोहरायां त्रय्यां जडीकृता अभिनिविष्टा ...र्यस्य अतो महत्येव कर्मणि श्रद्धया युज्यमानो नाल्पे ...ते दृश्यते हि प्राकृतस्य लोकस्य महति मन्त्रादौ श्रद्धा ...वाश्रद्धा तस्मादस्य ग्राहको नास्तीति तैर्नोक्तम्। यद्वा। स्वाधी-... मिहोऽस्त्येनागता श्वसृगालादिनिवारणाय तं यथा न प्रयु-... तथाऽतितुच्छत्वात्पापस्य न तन्निरसनाय परममङ्गलं हरेर्नाम ...न्ति। यद्वा। नाममाहात्म्यज्ञाने सर्वमुक्तिप्रसङ्गादित्येषा दिक् ...विस्तरभयात्तु नातिप्रपञ्च्यते ॥ २५ ॥

...भावयोगं भक्तियोगममीषां पातकं न स्यादेव यदि ... उरुगायस्य वादः कीर्तनम् ॥ २६ ॥

तदेवं धर्मतत्त्वं निर्णीय भृत्याननुशास्ति। त इति। ये भगवन्तं ...स्ते दैवैः सिद्धैश्च परिगीतपवित्रगाथा वर्णितपवित्रकथा ...ोपसीदत तत्समीपमपि न गच्छत वयः कालोऽपि ...भवति ॥ २७ ॥

के तर्हि दण्डार्थमानेया इत्यत्राह। तानिति द्वाभ्याम्। असतो ... नानेत्याह। मुकुन्दपादारविन्दयोर्यो मकरन्दरूपो रसस्त-... ...मुखान् कथम्भूतात् निष्किञ्चनैरजस्रं जुष्टात् तेषां ज्ञाप-... । निरयवर्त्मनि स्वधर्मशून्ये गृहे बद्धा तृष्णा यैस्तान् ॥ २८ ॥

किञ्च। जिह्वेत्यादि। यद्येषां जिह्वेत्याद्यन्वयः न कृतं विष्णु-... भगवद्व्रतं यैः ॥ २९ ॥

भगवन्तं क्षमापयति। सादिति। अयं भावः। नः स्वपुरुषैरस्म-... ...न स्थितैः स्वीयैरेव पुरुषैर्यस्मादसदन्याय्यं कृतं तत्त-... ...त्स्वयमेव क्षम्यतां सहतां स्वानां स्वीयानां भक्तानां ...स्माकं न विदुषामज्ञानाम्। अहो गरीयसि तस्मिन् क्षान्ति-

युक्तैव। महत् इति पाठे स्वीयानां माहात्म्यमविदुषां नः क्षमां करोत्वित्यर्थः ॥ ३० ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एते वयं द्वादश हे भटाः ! भागवतं धर्मं जानीमः तत्प्रभावं जानीम इत्यर्थः कथम्भूतं गुह्यं गोप्यं विशुद्धं केवलसत्त्वप्रधानाधिकारं दुर्बोधमितरैर्दुर्विज्ञेयं यं धर्मं ज्ञात्वामृतं मुक्तिमश्नुते प्राप्नोति ॥ २१ ॥

कोऽसावीदृशो धर्मः कियान् वा तत्राह। एतावानेवेति। भगवति तन्नामग्रहणादिभिरनुगृहीतो यो भक्तियोगः स एव पुंसां लोके पर उत्कृष्टो धर्मः लोके पुरुषैः साध्य उत्कृष्टो धर्मः भगवद्भक्तियोग एव सचैतावानेवाविच्छिन्नप्रेमपूर्वानुध्यानपर्यन्त एव"प्रेमपूर्वमनुध्यानं भक्तिरित्यभिधीयत" इति वचनार्थमभिप्रेत्य भक्तिशब्देनैवार्थलाभादेतावानेवेत्युक्तम् ॥ २२ ॥

आस्तां भगवद्भक्तियोगप्रभावस्तावन्नामोच्चारणप्रभावमेव पश्यतेत्याह। नामेति। हे पुत्रकाः ! हरेर्नामोच्चारणमाहात्म्यं पश्यत येन नामोच्चारणमाहात्म्येनाजामिलोऽपि अपिशब्दस्तस्य सुतरां मुक्त्यनर्हतां सूचयति। मृत्युपाशात् संसारपाशान्मुक्तोऽभूत् ॥ २३ ॥

अतः पुंसामघस्य निर्हरणाय निःशेषक्षपणाय एतावतैवालं कियता भगवतो गुणकर्मप्रतिपादकनाम्नां सङ्कीर्त्तनमितीयता कुतः यद्यस्मादघवान् पाप्यपि अजामिलो म्रियमाणः पुत्रं नारायणेति विक्रुश्याहूय मुक्तिमुपैत्यगादित्यर्थः ॥ २४ ॥

नन्वेवं विधं नाममाहात्म्यादिकं स्वयंभ्वादिवदन्येऽप्यधीतशास्त्रा अपि किं न जानीयुस्तत्राह। प्रायेणेति। महाजनः शास्त्रज्ञोऽप्ययं जनः तदिदं नाममाहात्म्यादिकं प्रायशो न वेद तत्र हेतुः देववेद्यस्य भगवतः संबन्धिन्या माययालमत्यर्थं विमोहिता मतिर्यस्य तादृशः तं प्रति खिद्यति वेत्ति। किञ्च। मधुपुष्पितायां मधु मधुरं यथा भवति तथा पुष्पितायां पुष्पस्थानीयक्षुद्रस्वर्गादिफलप्रकाशकार्थवादैर्मनोरमायामित्यर्थः एवंभूतायां त्रय्यां जडीकृताभिनिविष्टा मतिर्यस्य अत एव वैतानिके महत्येव कर्मणि युज्यमानः भगवन्मायामोहितत्वादर्थवादाश्रयणं कर्मासक्तचित्तत्वाच्च न वेदेत्यर्थः ॥ २५ ॥

एवं विदित्वा ये भगवन्तं भजन्ति न तेषामस्मद्दण्ड्यत्वमित्याह। एवमिति। सुधियः कुशलाः ये जना एवं नाममाहात्म्यादिकं विमृश्यानन्ते त्रिविधपरिच्छेदरहिते षाड्गुण्यपूर्णे भगवति भावयोगं भक्तियोगं विदधते कुर्वते खलु ते मम दण्डं प्रति नार्हन्ति तेषां पातकाभावादित्यर्थः यदि किञ्चित्तेषां पातकं स्यात्तर्हि तदपि पातकमुरुगायस्य भगवतो वादः गुणानुवादात्मकनामग्रहणादिरूपो हन्ति क्षपयति ॥ २६ ॥

एवमाक्षेपस्योत्तरमभिधायाधुना स्वभृताननुशास्ति। त इति त्रिभिः। ये जनाः साधवः साधुगुणयुक्ताः समदृशः समं भगवदात्मकत्वेन सर्वं पश्यन्तीति तथा भगवत्प्रपन्नाः उपायोपेयभावेन भगवन्तं शरणं गताः ते दैवैः सिद्धैश्च परितो गीताः पवित्राश्च गाथा येषां तादृशास्तान्नोपसीदत न तत्समीपं गच्छतेत्यर्थः तत्र हेतुं वदंस्तान्विशिनष्टि। हरेर्गदयाभितो गुप्तान् रक्षितानतएवैषां भयं संसृतिभयं नास्ति नच

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेषां दण्डे वयं प्रभवामः समर्था भवेम ॥ २७ ॥

तर्हि क आदेयास्तत्राह । तानिति । तानानयध्वं कानजस्रं सन्ततं निष्कामैः परमहंसानां ज्ञानिनां कुलैः सङ्घैः रसज्ञैः जुष्टात् सेवितान्मुकुन्दस्य पादारविन्दयोर्मकरन्दतुल्यो रसः तस्माद्विमुखानत एवासतः पापिष्ठान्नरकद्वारे गृहे बद्धतृष्णान् कृताभिलाषान् ॥ २८ ॥

किञ्च । येषां जिह्वा चेतः शिरांसि भगवन्नामधेयचरणारविन्दवचनस्मरणनमस्कारान्न कुर्वन्ति तानानयध्वमित्याह । जिह्वेति । भगवतो गुणप्रतिपादकं नामधेयं यस्य जिह्वा न वक्ति यस्य चेतः भगवतश्चरणारविन्दं न स्मरति यस्य च शिरः सकृदपि श्रीकृष्णाय नो नमति तान्न कृतं विष्णोः कृत्यमाराधनं यैस्तानत एवासतः दुष्टानानयध्वम् ॥ २९ ॥

एवं स्वदूतानादिश्य दूतकृतापराधभिया भगवन्तं क्षमापयति । तदिति। स्वपुरुषैरस्मद्भटैर्यदसत्कृतमपराद्धं तत्पुराणः पुरुषो भगवान्नारायणः क्षाम्यतां दिवादित्वात्कर्त्रर्थे सार्वधातुके श्यन् स्वानां स्वभक्तानामज्ञानां कृताञ्जलीनां नोऽस्माकं क्षान्तिरस्मद्विषया क्षान्तिरित्यर्थः अहो गरीयसी गुरुतरा बहुला भगवति वर्त्तत इति भावः तस्मै भूम्ने सर्वान्तर्यामिणे नमः "अञ्जलिः परमा मुद्रा क्षिप्रं देवः प्रसीदति" इत्युक्तत्वप्रसादनिमित्ताञ्जलिबन्धनेन नमस्करोतीति भावः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किञ्च । धर्मस्वरूपं निवेदयतु भवानित्याशङ्क्य उत्तमं धर्मं वदामीत्यभिप्रायेणाह । एतावानिति । तस्य हरेर्नामग्रहणादिभिर्भगवति यो भक्तियोगः एतावानुत्तमः परो धर्मः स्मृत इत्यन्वयः "एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः" इति स्मृतावुक्तम् ॥२२।२३॥

नारायणेत्यादिगुणनाम्नां मधुसूदनेत्यादिकर्मनाम्नां गुणानां कर्मणां नाम्नां वा यत्सङ्कीर्तनमेतावता पापनिर्हरणावालं साधनान्तरं नापेक्षितमित्यन्वयः आक्रुश्य आहूय ॥ २४ ॥

देव्या बहुविधविलासोपेतया मधुपुष्पितायां स्वर्गादिपुष्पप्रकाशिकायां वैतानिके वेदविहिते यज्ञसम्बन्धिनि वा युज्यमानः प्रेर्यमाणः ॥ २५ ॥

भावयोगं भक्तियोगमुरुगायवादः भगवन्नामकीर्तनम् ॥ २६ ॥

गाथाः सङ्कीर्तनानि वेदादिभिर्नित्यगीतसङ्कीर्तनाः गदया कौमोदक्या ॥ २७ ॥

असतः लोकनिन्दितकर्मनिरतान् निरयवर्त्मनि नरकद्वारे गृहे भार्यादौ ॥ २८ ॥

अकृतविष्णुकृत्यान् अननुष्ठितविष्णुपादार्चनादिकर्मणः ॥२९॥

[1]कृष्णाङ्घ्रिपद्ममधुलिड् कृष्णपादारविन्दमकरन्दं संसेवमानः पुमान् स्वकर्मनिर्मितेषु मायागुणेषु विषयेषु न रमते पुरुषार्थबुद्धिं न करोति यतः कर्मणः पुनः रजः रागः स्यात्तादृशं कर्म तुशब्देन कर्दमजलेन कर्दमप्रक्षालनमिवेति दर्शयति ॥ ३० ॥

---

( १ ) इतः परमध्यायसमाप्तिपर्यन्तं श्रीधरस्वामिपाठापेक्षया श्लोकानां क्वचित्संख्यावैपरीत्यं विद्यते ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

विजानीम एव नतु निजस्मृत्यादौ स्पष्टं कथयाम इत्यत्र हेतुः । गुह्यं लोकमर्यादारक्षणाय गोप्यम् । किञ्च । साधारणैर्दुर्बोधश्च । दुर्बोधत्वे हेतुः विशुद्धं नहि शुद्धाः शुद्धं ... गुह्यत्वे हेतुविशेषः । यामिति । हे भटा ! इति तस्माद्यूयं तु सुतरां न जानीथेत्यर्थः ॥ २१ ॥

लोकेऽस्मिन्निह जगतीत्यर्थः तन्नामग्रहणादिभिरिति ... प्रकृत्याभिरूप इतिवत् ॥ २२ ॥ २३ ॥

एतावतेत्यस्य टीकायां पापवासनाच्छयार्थां इत्यत्र तथापि ...दपराधाद्यालम्बनेन तिष्ठति या पापवासना तस्याः क्षयार्थां ... मरणे तु निरपराधस्यैव सतो मुखे नामाविर्भावः स्यादिति भावः । इत्थमेव द्वितीये "एतावान् साङ्ख्ययोगाभ्याम्" इत्यत्र व्याख्यातम् । अन्ते तु परमो लाभ इति । तदुक्तम् । कृष्णः कृष्णः कृष्ण इत्यन्तकाले जल्पन् जन्तुर्जीवितं यो जहाति । आद्यः शब्दः कल्पते तस्य मुक्त्यै व्रीडानम्रौ तिष्ठतोऽन्यावृणस्थौ" इति । मुक्तिमियायेति जीवन्मुक्त्यपेक्षया ॥ २४ ॥

महाजनो द्वादशेतरमुन्यादिः । स एव देव्या विमोहितमतिरित्यादिलक्षणः ॥ २५ ॥

एवं पूर्वोक्तभगवद्भक्तिमहिमप्रकारम् । सर्वात्मनेति । नित्यनैमित्तिकपरित्याग उक्तः तथापि दण्डं नार्हन्ति । तत्र यदि दैवात्... पिद्धाचरणेन पातकं स्यात्तदपि यथा कथञ्चित्तत्कीर्तनमात्रं हन्तीत्यर्थः ॥ २६ ॥

तेषामेव माहात्म्यानुवादपूर्वकं शिक्षयति । ते देवेति । गोपनं... दतेति । तन्निकटे पातक्यपि चेद्व्रजति तदापीति भावः ॥ २७ ॥

अस्तु तावत्तेषां वार्त्ता यतो जिह्वा नवक्तीति । यदस्य जिह्वा श्रीभगवतो गुणाञ्च नामधेयञ्च वा एकदा जन्ममध्ये यदा कदाचित् न वक्ति जिह्वाया अभावे चेतश्च तच्चरणारविन्दमेकदापि न स्मरति चेतसो विक्षिप्तत्वे शिरश्च कृष्णाय कृष्णं लक्ष्यीकृत्य नो नमति "शाठ्येनापि नमस्कारं कुर्वतः शार्ङ्गधन्वने । शतजन्मार्जितं पापं तत्क्षणादेव नश्यति" इति स्कान्दोक्तमहिमानं नमस्कारं न करोति तानानयध्वम् । तत्र हेतुः असतः असत्त्वे हेतुः । अकृतविष्णुकृत्यान् यथा च स्कान्दे रेवाखण्डे श्रीब्रह्मोक्तौ । स कर्त्ता सर्वधर्माणां भक्तो यस्तव केशव ! । स कर्त्ता सर्वपापानां यो न भक्तस्तवाच्युत ! ॥ पापं भवति धर्मोऽपि तवाभक्तैः कृतो हरे । निःशेषधर्मकर्त्ता वाप्यभक्तो नरके हरे । सदा तिष्ठति भक्तस्ते ब्रह्महापि विमुच्यते । श्रीमत्... मन्त्रिमित्तं कृतं पापमपि धर्माय कल्पते । मामनादृत्य धर्मोऽपि पापं स्यान्मत्प्रभावत" इति । युक्तञ्च तत् । श्रवणं कीर्त्तनञ्चास्य ... दिना सर्वेषां मदुपासनमित्यादिना सर्वे विधिनिषेधाः स्युः ... दिना च परमनित्यत्वादिप्रतिपादनात् एवं सङ्कीर्त्तनादीनां ... णामति सुकराणामभावे परेषां सुतरामेवाभावो भवेदिति ... न्यैव विष्णुकृत्यरहितत्वमुक्तम् । जिह्वादीनां करणभूतानां ... कर्तृत्वेन निर्देशः । पुरुषानिच्छयापि यथोचितकीर्त्तनादिकं ... चरणारविन्दमिति विशेषाङ्गनिर्देशः यमस्य भक्तियापक... नतु तन्मात्रस्मरणनियामकः अत्राभक्तानामानयनेन ... नानयनमेव विधीयते "आनयनस्योत्सर्गसिद्धत्वात्" ... नजानाम्" इति श्रुतेः "सकृन्मनः कृष्णपदारविन्दयोः" इत्यादौ ...

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

...ति विशेषणं तु तेषां तद्दृष्टिपथगमनसामर्थ्यस्यापि घातकं ...तत्स्मरणस्य प्रभावविशेषमेव बोधयतीति ज्ञेयम् । यथैव ...र्शितं ।

अहममरगणार्च्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः । हरिगुरुविमुखान् प्रशास्मि मर्त्यान् हरिचरणप्रणतान् नमस्करोमि ।

...ति । तथैवामृतसारोद्धारे स्कान्दवचनम् ।

न ब्रह्मा न शिवाग्नीन्द्रा नाहं नान्ये दिवौकसः ।
शक्तास्तु निग्रहं कर्त्तुं वैष्णवानां महात्मनाम् ।

...ति ॥ २९ ॥

...स्वपुरुषैर्द्वारभूतैर्यज्ञोऽस्माभिरसत्कृतम् ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तर्हि तमेव धर्ममस्मान् सेवकान् शिक्षयित्वा त्रायस्वेत्यत ...ह । एतावानेव । प्रभेदबाहुल्येऽपि वस्तुतस्त्वयानेवेति भावः । पर ...ति । परशब्दविशेष्यत्वेनोच्यमानः तन्नामग्रहणादिभिरिति ...र्पणलक्षणः सगुणयोगो व्यावृत्तः एतदेव श्रीभागवतस्याभि...तत्त्वम् । यदुक्तं शास्त्रारम्भ एव "धर्मः प्रोज्झितकैतवोऽत्र ...रम" इति "स वै पुंसां परो धर्म" इति ॥ २२ ॥

न चात्र प्रमाणमन्वेष्टव्यं साक्षाद्दृष्टत्वादित्याह । नामेति ॥२३॥

ननु सकृदुच्चरितेनैव नामाभासेन कथं सर्वपापक्षयः । ...नामग्रहणादिभिरिति त्वयाप्यादिपदोपादानात् कीर्त्तनश्रव...णादङ्गकभक्तियोगेन परमधर्मेण सर्वपापक्षयपूर्वकमोक्षप्राप्ति...युक्तत्वादित्यत आह । एतावतेति । भगवतो गुणानां कर्मणां ...नाम्नश्च सम्यक् कीर्त्तनमित्येतावता पुंसामघनिर्हरणाय पाप...क्षयमात्राय अलमुपयोगो नास्ति अलंशब्दोऽत्र वारणे नामादी...नामेकतरस्यापि असम्यक् कीर्त्तनादपि सर्वाघनिर्हरणसिद्धेरिति ...यतः यद्यतो विक्रुश्यैव नतु सम्यक् कीर्त्तयित्वा तत्र नारा...यणेति नाम्ना पुत्रं विक्रुश्य नतु हरिम् अघवानशुचिरपि ...नतु शुचिः सन् अजामिलोऽप्यतिप्रसिद्धमहापातक्यपि नत्वन्यः ...स्वल्पपापी म्रियमाणो मरणदुःखविवशोऽपि नतु सुस्थचित्तः मुक्ति...मेवाप प्राप नतु पापनिर्हरणमात्रं तस्मात्तन्नामग्रहणादिभि...रिति "श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्मणः । जन्मकर्म...गुणानां च तदर्थेऽखिलचेष्टितम्" इति "तस्मात् सङ्कीर्त्तनं विष्णोः" ...इति "अनुदिनमिदमादरेण शृण्वन्" इत्यादिषु भक्तेरनेकेषामङ्गानां ...आवृत्तिसम्यक्त्वादेरपि यद्विधानं तन्निरपराधानां प्रेमवृद्ध्यर्थं ...सापराधवतां तु नामापराधक्षयार्थञ्च । "श्रद्धामृतकथायां मे" इत्यु...पक्रम्य "एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि सञ्जायते ...भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यत" इति अत्र भक्तिशब्देन प्रेम...लक्षणः कोऽन्य इत्यनेन मोक्षस्य निराकरणात् "नामापराधयुक्तानां ...नामान्येव हरन्त्यघम् । अविश्रान्तिप्रयुक्तानि तान्येवार्थकराणि ...च" इति । "पापक्षयश्च भवति स्मरतां तमहर्निशम्" इत्यत्रतु चका...रान्नामापराधक्षयः प्रेमभक्तिश्चेति व्याख्येयमिति पापतद्वासना...तन्मूलाविद्याक्षयः सायुज्यसालोक्यादिकन्तु नामाभासस्यैक...देशस्य फलमित्येतदुपाख्यान एव दृष्टम् ॥ २४ ॥

...नन्वेवमखिलधर्मश्रेष्ठं मुक्तिसाधनमतिसुगमं नामसंकीर्त्तनादि भगवद्भजनं प्रायेणानुपदिशन्तः किमिति विद्वांसः कर्मयोगमेवोपदिशन्ति कुर्वते च तत्राह । प्रायेणेति । महाजनो जैमिन्यादिरिदं न वेद ननु शास्त्रकृत् कथं न वेद तत्राह । देव्या परमेश्वर्या । अविदुषो मोहने खलु न किमप्यैश्वर्यमतो विद्वांसमधिकं मोहयेदिति भावः अत एव मधु मधुरं यथा स्यात्तथा पुष्पितायामर्थवादः पुष्पाणि सञ्जातानि यस्यास्तस्यां त्रय्यां जडीकृता अत्यभिनिवेशाद्विवेकरहितीकृता मतिर्यस्य सः । अत एव वैतानिके द्रव्यानुष्ठानमन्त्रादिविस्तारवति कर्मणि महति दर्शपौर्णमासादियागे च बह्वायासवति लौकिकप्रतिष्ठादिहेतौ युज्यमानो युक्तोऽल्पायासे नाम कीर्त्तनादौ न रज्यतीत्यर्थः ॥ २५ ॥

अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि "जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन्" इति ब्रह्मोक्तेः शास्त्रज्ञा अपि भगवत्तत्त्वानभिज्ञाः स्युरनधीतशास्त्रा अपि भगवदनुगृहीताः शुद्धबुद्धयः सन्तो विवेकिनो भगवन्तं भजन्त्येवेत्याह । एवमिति । सर्वात्मना सर्वेणैव मनसा नतु नित्यनैमित्तिककर्माद्यनुष्ठानार्थम् । मनसः कमप्यंशं परित्यज्येत्यर्थः । दण्डं नित्यकर्माकरणप्रत्यवायजनितम् । यदि दैवात् पातकं निषिद्धाचरणलक्षणं स्यादुरुगायवादः कीर्तनम् ॥ २६ ॥

तस्मादेतावद्दिनपर्यन्तं यत्कृतं तत्कृतमेव भाग्येनैव रक्षिता अभूत यतः परन्तु यदि यदुपदिशामि तच्छृणुतेत्याह । ते इति । गाथाः कथाः समदृशः स्वस्य परस्य च सुखदुःखादिकं समं पश्यन्तः गदयाभिगुप्तानिति सकृदद्यतनो युष्माकमपराधो विष्णुदूतैः क्षान्त इत्यहं मन्ये यदि पुनरपि भक्तानां समीपं यास्यथ तदा हरेरेव गदया तेषां हस्तस्थितया चूर्णीभविष्यथेति भावः यूयं खलु वराकाः के तावत् वयं मत्सहिता ब्रह्माद्या अपि वयः कालो ब्रह्मादेर्नियन्तापि ॥ २७ ॥

तर्हि कीदृशानानेष्यामस्तत्राह । तानसतः असाधून् असाधूनां लक्षणमाह । मुकुन्दपादारविन्दयोर्मकरन्दरसात् तत्प्राप्तिसाधनात् भक्तियोगाद्विमुखान् तादृशभक्तियोगमकुर्वाणानित्यर्थः । ननु तेषां वैमुख्यादेव स खलु मकरन्दरसो न लिप्सनीय इत्यतो मकरन्दरसं विशिनष्टि । निष्किञ्चनैः केवलभक्तिमद्भिः परमहंसकुलैश्च प्रधानीभूतभक्तिमद्भिर्जुष्टात् सेवितात् अत एव निरयवर्त्मनि नरकप्रापके गृहे बद्धतृष्णान् ॥ २८ ॥

किञ्च । मुकुन्दस्य सकृदपि कीर्त्तनस्मरणादिकं तत्प्राप्तिसाधनं भवतीति तद्वन्तोऽपि सच्छब्देनाभिधीयन्त इत्यतस्तद्भिन्ना एवानेतव्याः इत्याह । जिह्वेति । जिह्वाया अभावे चेतश्चेत्यादि चेतसां विचित्रत्वे कृष्णायेत्यादि एकदापीति सर्वत्रान्वेति तान् कैवल्येन प्राधान्येन वा अकृतविष्णुकृत्यान् विष्णोः किमपि कृत्यमकृतवन्तः अत एव असतः अवैष्णवान् । अत्र जन्ममध्ये वर्षमध्ये दिनमध्ये वेति यथा स्वमतं व्याचक्षते इत्यर्थः ॥ २९ ॥

भृत्यापराधेन स्वामिनो दण्ड इति न्यायेन स्वस्यापराधित्वं भावयन् सविनयं प्रणमति । तत्तस्मात् क्षम्यतां क्षाम्यन् नः स्वपुरुषैः सुष्ठु अपुरुषैः कुपुरुषैरित्यर्थः । असत् अन्याय्यं कृतं नः कीदृशानां स्वानां तत्र विदूराणामहो इत्याश्चर्यं नदपि न विदुषाम् अतोऽज्ञत्वादेव रचिताञ्जलीनाम् । ननु दण्डयितुं समर्था एव क्षमन्ते तत्राह । क्षान्तिर्गरीयसि महामहत्तमे तदपि क्षमैव युक्ता स्वानां मह इति पाठे विष्णुदूतानां यन्महो माहात्म्यं तदजानताम् ॥ ३० ॥

## तस्मात् सङ्कीर्तनं विष्णोर्जगन्मङ्गलमंहसाम् ।
## महतामपि कौरव्य ! विद्ध्यैकान्तिकनिष्कृतम् ॥ ३१ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भागवतं धर्ममर्थाद्भगवदनुग्रहादेव विजानीमः ॥ २१ ॥

यतस्तस्य विष्णोर्नामग्रहणादिभिरङ्गैः सहिता भक्तिर्भवति एतावान् धर्मः तथोक्तम् "प्रथमे स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे" इति ॥ २२ ॥ २३ ॥

भगवतो गुणानां कर्मणां नाम्नां च सङ्कीर्तनं पुंसामघनिर्हरणाय दुरितक्षयमात्राय भवतीति एतावता एतावन्मात्रेण फलकथनेन अलं वारणं फलसङ्कोच इत्यर्थः अलं वारणे "अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इति कोशात् यतः अघवान् अजामिलः नारायणेति पुत्रं विक्रुश्य मुक्तिमियाय अवाप ॥ २४॥

भगवन्मायामोहिताः महाजनत्वेन प्रसिद्धाः अपीदं न जानन्तीत्याह । प्रायेणेति । त्रयीं कर्मप्रतिपादकवेदत्रय्यां मधुरं यथा भवति तथा पुष्पितायां पुष्पं तत्तुल्यैरर्थवादैः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिवाक्यैर्मनोहरायां जडीकृताभिनिविष्टा मतिर्यस्य सः अत एव वैतानिके वेदप्रोक्ते महति कर्मणि युज्यमानः अयं कर्मनिष्ठो महाजनः इदं भगवन्नामकीर्तनादिरूपायाः भक्तेर्माहात्म्यं प्रायेण न वेद यतो देव्या देवमाययालमत्यर्थं विमोहितमतिस्तत्तस्मात् प्राचीनबर्हिषत्केचिन्महदुपदेशेन जानन्त्यपीति प्रायेणेत्युक्तम् ॥ २५ ॥

भावयोगं भक्तियोगं विदधते कुर्वते उरुगायस्य बहुधा गीयमानस्य भगवतो वादो नामकीर्त्तनादिरूपो हन्ति यदि किञ्चित्पातकं स्याद्वस्तुतस्तु तेषां तन्नास्तीत्यर्थः ॥ २६ ॥

भृत्यान् प्रति धर्मतत्त्वमुपदिश्यादण्ड्यान् दण्ड्यांश्चाह । त इति त्रिभिः । तान्नोपसीदत तत्समीपं न गच्छत वयः कालश्च न प्रभवति ॥ २७ ॥

परमहंसानां कुलैः समूहैर्जुष्टात् सेवितान्मुकुन्दपादारविन्दयोः मकरन्दरसस्तद्भक्तिरसस्तस्मादजस्रं सततं नित्यं विमुखास्तद्भक्तियोगरहितास्तान् ॥ २८ ॥

तानेवाह । जिह्वेति । यद्येषाम् ॥ २९ ॥

भगवन्तं क्षमापयति । नः स्वपुरुषैः अस्मदीयैः सुष्ठु अपुरुषैर्निर्विवेकिभिर्यद्स्तत्कृतागयुक्तं कृतं तस्स दीनवत्सलत्वेन प्रसिद्धो भगवान् क्षमयतां सहनामहो नामसंकीर्त्तनादिमाहात्म्यं न विदुषामविदुषां स्तानां रचिताञ्जलीनां भृत्यानां विषयिणी क्षान्तिर्गरीयसि स्वामिनि युक्तैवेति शेषः सर्वमङ्गललाभाय प्रणमति । नम इति ॥ ३० ॥

---

### भाषा टीका ।

हे दूत हो यह बारह भक्त अति गुप्त विशुद्ध दुर्बोध भागवत धर्म को जानते हैं जिस धर्म को कि जान कर मनुष्य मुक्ति को प्राप्त हो जावै ॥ २१ ॥

इस जगत् मे इतनाही पुरुषों का परम धर्म है भगवान् के नारायण आदि नाम को ग्रहणादि करके भगवान् मे भक्तियोग होता है ॥ २२ ॥

हे पुत्रो ! नारायण के नामोच्चारण के माहात्म्य को आप लोग देखो ऐसा पापी अजामिल भी जिससे मृत्यु पास मे से छूट गया ॥ २३ ॥

मनुष्यों के पापों के नाश करने को इतनाही बहुत है और भगवान् के गुण कर्म नामों का कीर्तन करना है जिन भगवान् के संबंध से ऐसा पापी अजामिल भी अपने पुत्र के पुकारने मे नारायण ऐसा कह कर मुक्ति को प्राप्त हो गया ॥ २४॥

प्राय करके भगवान् की माया देवी से अत्यंत मति के मोहित हो जाने से यह जीव खोटी पुष्प सरी की वेद की वाणी से जड होकर बडे भारी यज्ञादि कर्म में लग जाता है सो भक्ति नहीं करता है ॥ २५ ॥

इस प्रकार विचार करके बुद्धिमान् लोग सब प्रकार से भगवान् में परम भाव से नाम संकीर्तनादिक करते हैं वे पुरुष मेरे दण्ड के योग्य नहीं होते हैं यदि उनके कोई पातक भी होवें तो भगवान् का गुणानुवाद ही उस पातक को नाश करदेता है ॥ २६ ॥

जो समदृष्टि वाले हैं भगवान् के भक्त हैं वे साधु हैं देवता सिद्ध जन उनकी पवित्र कथाओं को गाते हैं श्री हरि के गदा से वे रक्षित रहते हैं उनके पास तुम लोग मत जाना उनके दण्ड देने में हम ब्रह्मादिक तथा काल कोई समर्थ नहीं है ॥ २७ ॥

उन पुरुषों को तुम ले लाओ जोकि नरक के मार्ग घर में तृष्णा को बांधे हैं तथा निष्किञ्चन परमहंस रसज्ञों के समूह से सेवित जो मुकुन्द भगवान् का चरण कमल रस तिस से निरन्तर विमुख हैं ॥ २८ ॥

और उनको ले आओ जिनकी जिह्वा भगवान् के गुण नामधेयको नहीं कथन करती है जिन का चित्त कभी भगवान् के चरणारविन्द को नहीं स्मरण करता है जिन का मस्तक एक बार भी श्रीकृष्णचरण मे नम्र नहीं होता है इसप्रकार जो विष्णु भगवान् के सेवा नहीं करने वाले हैं तिन असत्पुरुषों को तुम ले आओ ॥ २९ ॥

अपने नौकरों के द्वारा जो हमने भगवान् का अपराध किया है सो हम नहीं जानते थे अब हाथ जोडते हैं वे श्रीनारायण पुराण पुरुष भगवान् हमारे ऊपर क्षमा करें श्रेष्ठ पुरुषों में तो क्षमा रहती है इसी से हम उन भूमा पुरुष के अर्थ नमस्कार करते हैं ॥ ३० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मादित्यादिः शुकोक्तिः जगतोऽपि मङ्गलरूपम् ॥ ३१ ॥

शृण्वतां गृणतां वीर्याण्युद्दामानि हरेर्मुहुः ।
यथा सुजातया भक्त्या शुद्ध्येन्नात्मा व्रतादिभिः ॥ ३२ ॥

कृष्णाङ्घ्रिपद्ममधुलिण्न पुनर्विसृष्टमायागुणेषु रमते वृजिनावहेषु ।
अन्यस्तु कामहत आत्मरजः प्रमार्ष्टुमीहेत कर्म यत एव (१)रजः पुनः स्यात् ॥ ३३ ॥

इत्थं स्वभर्तृगदितं भगवन्महित्वं संस्मृत्य विस्मितधियो यमकिङ्कगरास्ते ।
नैवाच्युताश्रयजनं प्रतिशङ्कमाना द्रष्टुं च बिभ्यति ततः प्रभृति स्म राजन् ! ॥ ३४ ॥

इतिहासमिमं गुह्यं भगवान् कुम्भसम्भवः ।
कथयामास मलय आसीनो हरिमर्चयन् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे पारमहंस्यां संहितायां
वैयासिक्याम् अजामिलोपाख्यानं नाम
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऐकान्तिकत्वमेवाह । शृण्वतामिति । व्रतादिभिस्तथा न शुद्ध्येत् ॥ ३२ ॥

एतदुपपादयति । कृष्णाङ्घ्रिपद्मयोर्मधु लेढि आस्वादयतीति तथा मधुलिट् अतितुच्छत्वेन विसृष्टा ये मायागुणा विषयास्तेषु पुनर्न रमते अन्यस्तु तन्मध्वास्वादरहितोऽत एव कामाभिभूतः सन्नात्मनो रजः पापं प्रमार्ष्टुमपि कर्मैव प्रायश्चित्तरूपमीहेत यतः कर्मणः पुनरपि रजः पापं स्यादेव कुञ्जरशौचवत् सत्त्वशोधकत्वाभावात् ॥ ३३ ॥

नैव विस्मितधियो बभूवुः किं तु सत्यमुक्तमित्येव मेनिरे ततः प्रभृति प्रतिशङ्कमाना अस्मानेवैष हन्यादिति शङ्कां वहन्तस्तं द्रष्टुमपि बिभ्यति स्म पाठान्तरे तु विस्मितधियो जाताः ते च ततः प्रभृति बिभ्यति स्मेत्यर्थः ॥ ३४ ॥

कुम्भसंभवोऽगस्त्यो मलये पर्वते आसीनोऽव्यग्रो हरिमर्चयन् पुनः पुनर्विश्वासार्थं हरेः पादौ स्पृशन्नित्यर्थः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रत्याह किं तान् प्रति धर्मराज इति पृष्टां यमोक्तिमभिधाय तामुपसंहरिष्यमाणोऽन्तरा राज्ञः प्रश्नस्य यथैव नरकान्नरः नानोपयातना नेयादित्यस्योत्तरं सङ्क्रमयति मुनिः । तस्मादिति त्रिभिः । हे कौरव्य ! तस्मादितिहासमुखेन नाममाहात्म्यस्य श्रुतत्वाद्-मोक्त्वा सम्वादितस्याच्च विष्णोः सङ्कीर्तनं जगतो मङ्गलावहं महतां विपुलानामप्यंहसां पापानामैकान्तिकनिष्कृतिं मुख्यं प्रायश्चित्तं विद्धि जानीहि ॥ ३१ ॥

व्रतादिकं तु न मुख्यमित्याह । शृण्वतां हरेरुद्दामानि विपुलानि वीर्याणि यशांसि मुहुर्मुहुः शृण्वतां गृणतां कथयतां चात्मा चित्तं भगवति श्रवणादिना सञ्जातया भक्त्या यथा शुद्ध्यति तथा व्रतादिभिर्न शुद्ध्यति ॥ ३२ ॥

कृष्णस्याङ्घ्रिपद्मयोर्यन्मधु रसस्तं लेढ्यास्वादयतीति तथा पुनर्वृजिनावहेषु दुरितापादकेषु विसृष्टेषु प्रकृतिकार्यगतशब्दादिषु न रमते न सज्जते अन्यस्तु कृष्णाङ्घ्रिपद्ममध्वनभिज्ञस्तु कामैः शब्दादिभिर्हतोऽभिभूतः आत्मनः स्वस्य रजः पापं प्रमार्ष्टुमपनेतुं कर्म प्रायश्चित्तरूपमीहेत कुर्यादित्यर्थः कर्म विशिनष्टि । यतः कर्मणोऽनन्तरं पुनः रजः पापं स्यात् सम्भाव्येत पुना इति रेफलोपे दीर्घः ॥ ३३ ॥

यमोक्तिमुपसंहरति । इत्थमिति । हे राजन्नित्थं भर्त्रा यमेन गदितं "कर्तृकरणे" इति समासः भगवतो महित्वं माहात्म्यं संस्मृत्य प्रत्यभिज्ञाय विष्णुदूतोक्तिरीत्या एवं ज्ञात्वा विस्मिता धीर्येषां ते यमकिङ्कराः तेन यमशासनेनाच्युताश्रयजनं प्रति शङ्कमानाः तत्समीपगमनेनास्माकं भर्तृदण्डनं स्यादिति शङ्कमानाः तत आरभ्य तं द्रष्टुं च बिभ्यति भयं प्राप्नुवन्तीत्यर्थः ॥ ३४ ॥

उक्तस्य प्रामाण्यज्ञापनाय तस्याप्तप्रणीततामाह । इतिहासमिति । मलये पर्वते आसीनो भगवान् कुम्भसम्भवोऽगस्त्यः हरिमाराधयन्निमं गुह्यमितिहासं कथयामास कथितवान् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

(१) पुनारजः स्यात् इतिश्रीवीर० ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत् स्वपुरुषैरसत्कृतं नोऽस्माकं तत् क्षम्यतामित्यन्वयः न विदुषां हरेर्माहात्म्यमजानताम्। ननु क्षान्त्यर्थं को दण्ड इति तत्राह। रचितेति। किमनेनानायासेनेति तत्राह। नम इति। द्रव्यादिलक्षणदण्डमन्तरेण कथं क्षान्तिरिति तत्राह। क्षान्तिरिति। वरीयसि वरतरे परतमे पुरुषाय नमः इत्येतावता द्रव्यादिदानाधिकेन क्षान्तिर्भवतीति शेषः "भूयिष्ठान्ते(१)नम उक्तिं विधेम" इतिश्रुतेः सर्वदा सन्निहिता सन्तिष्ठते महति क्षमेति सप्तमी ३१।३२

अंहसां पापानामैकान्तविनिष्कृतं नियतं प्रायश्चित्तं न केवलं स्त्रीशूद्रादीनां नामसङ्कीर्तनं विधीयते अन्येषामपीति भावेनाह। महतामिति ॥ ३३ ॥

सर्वाणि साधनान्यनुष्ठीयमानान्यपि भक्तिसहितानि बलवन्तीत्यभिप्रेत्याह। शृण्वत इति ॥ ३४ ॥

कुम्भसम्भवोऽगस्त्यः मलये पर्वते ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजकृतपदरत्नावल्याम्
तृतीयोऽध्यायः ॥ ३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मादित्यादिश्रीशुकोक्तिः तस्मात् सङ्कीर्तनन्तु जगतां सापराधनिरपराधानां सर्वेषामेव महतामंहसामपराधपर्यन्तानाम् ॥३१॥

सुष्ठु जातया रतिरूपया भक्त्या तु यथा मुक्तिपर्यन्तस्य किमुत पापमात्रस्य वासनाक्षयप्रकारेणात्मा मनः शुद्ध्येत् तथा व्रतादिभिर्नेत्यर्थः ॥ ३२ ॥

तदेव व्यनक्ति। कृष्णाङ्घ्रीति। अन्यः भक्तिमात्रहीनः ॥३३।३४॥

कुम्भसम्भवोऽगस्त्योऽपीत्यर्थः संहिताध्ययने श्रीद्वैपायनाच्छ्रुतवान् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
तृतीयोऽध्यायः ॥ ३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विष्णुदूतानां यमस्य च वाक्यप्रामाण्येन यदि यत्किञ्चित् कीर्त्तनेनैव सर्वपापक्षयस्तदा किमुत सम्यक्कीर्त्तनेनेत्याह। तस्मादिति श्रीशुकः ॥ ३१ ॥

श्रवणकीर्त्तनाद्यभ्यासवतां भक्तानां सापराधानामपि भक्तिरेव पूर्णा स्याद्युक्तम्नामापराधयुक्तानां नामान्येव हरन्त्यघम्। अविश्रान्तिप्रयुक्तानि तान्येवार्थकराणि इति। तस्यां सत्यान्तु जीवात्मैव शुद्ध्येत्। किं पुनर्मन इत्याह। शृण्वतामिति। आत्मा जीवः अविद्यामालिन्याद्यथा शुद्ध्यति न तथा व्रतादिभिः कर्मकृतैः प्रायश्चित्तैः पापक्षये सत्यपि पापबीजस्याक्षयान्मनः किञ्चिन्मात्रमेवापाततः शुद्ध्यतीत्यर्थः। तेन भो राजन्! "प्रायश्चित्तमथोऽपार्थं मन्ये कुञ्जरशौचवत्" इति यत्त्वयाक्षिप्तं तत् सत्यमेव मूलपापक्षयो भक्तानां भक्त्यैव तेषामेव नरकगमनाभावो भगवत्प्राप्तिश्च तदभावात् कार्मिणान्तु पापपुण्यवशान्नरकस्वर्गयातायातं पुनः पुनरित्युपाख्यानेन सिद्धान्तः प्रतिपादित इति द्योतितम् ॥ ३२ ॥

तदेवं सापराधा निरपराधा वा भक्ता भक्तिमेव कुर्वीरन् न तु प्रायश्चित्तं भक्तावविश्वस्ताः स्मार्त्तास्त्वर्थवादादिकुतर्ककर्कशमतयः प्रायश्चित्तमेव। ननु नामकीर्त्तनमित्यतः प्रायश्चित्तशास्त्रमपि सार्थकमित्याह। कृष्णाङ्घ्रिपद्मयोर्मधुलिड्भ्रमरः स यथा गोगनुष्पादिभक्ष्येषु घासौदनादिषु क्षुधा म्रियमाणोऽपि न विषज्जते तथैव भक्तः पूर्वदशायां दुर्विषयरतोऽपि भक्तत्वे सति विसृष्टा ये मायागुणास्तेषु न रमते रमधातुप्रयोगात् यद्यपि कनिष्ठभक्तस्तान् सेवते तदपि "जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन्" इत्युक्तरीत्या तेषु नैव रमते। अन्यः स्मार्त्तस्तु आत्मनो रजः पापं प्रमार्ष्टुं कर्म ईहेतैव प्रायश्चित्तं कुर्वीतैव यत एव रजः पापं कुञ्जरशौचवत् पुनः स्यादेव नामापराधवत्त्वादिति भावः ॥ ३३ ॥

अच्युताश्रयजनं प्रति नैव गच्छन्तीति शेषः। तेनाच्युतेति पाठे ते विस्मृतधियो बभूवुः पुनस्ते च विभ्यतीति ॥ ३४ ॥

कुम्भसम्भवोऽगस्त्यो मलयपर्वत आसीनोऽव्यग्रो हरिमर्चयन् पुनः पुनर्विश्वासार्थं हरेः पादौ स्पृशन्नित्यर्थं इति श्रीस्वामिचरणाः ॥ ३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षष्ठस्कन्धे तृतीयोऽयं सङ्गतः सङ्गतः सताम् ॥ ३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जगतां मङ्गलं सर्वपुरुषार्थप्रदं विद्धि महतामंहसां महापापानामप्यैकान्तिकनिष्कृतिं च विद्धि ॥ ३१ ॥

संकीर्त्तनादिरूपाया भक्तेः सर्वांहसामैकान्तिकनिष्कृतित्वमाह। शृण्वतामिति। हरेर्वीर्याणि शृण्वतां सुजातया भक्त्या यथा आत्मा सर्वपापमूलरूपवासनायुक्तं मनः शुद्ध्येत्तथा व्रतादिभिः कृच्छ्रचान्द्रायणादिव्रतैः आदिना तपोयज्ञादिभिश्च नेत्यर्थः ॥ ३२ ॥

मनसः शुद्धिर्निर्वासनत्वं तत् कृष्णभक्त्यैव भवति नान्यथेत्याह कृष्णेति। कृष्णाङ्घ्रिपद्मयोर्यन्मधु रसस्तल्लेढ्यास्वादयतीति स तथा कृष्णभक्तः वृजिनावहेषु दुःखप्रदेषु मायागुणकार्येषु विषयेषु विसृष्टेषु त्यक्तेषु पुनर्न रमते तद्वासनारहितमनस्कत्वादन्यस्तु कृष्णाभक्तस्तु आत्मनो मनसः रजः विषयवासनात्मकं पापं प्रमार्ष्टुं प्रक्षालयितुं यतः पुनः राग एव स्यात्तत् कर्म यज्ञतपोव्रतादिकमीहेतेत्यन्वयः ॥ ३३ ॥

तदनन्तरं यमदूतानां चेष्टितमाह। इत्थमिति। इत्थं स्वभर्तुर्गदितं भगवन्महित्वं संस्मृत्य सत्यमेवोक्तमिति मत्वा नैव विस्मृतधियोऽभवन् ततः प्रभृति प्रतिशङ्कमानाः आत्मानं प्रति विष्णुपार्षदादिदर्शनं

---

(१) वयं ते तुभ्यं भूयिष्ठां महतीं नम इत्युक्तिं विधेम न तु स्वत्प्रीतिं कर्तुं शक्नुम इति ।

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

...पुरुषाः अच्युताश्रयं जनं द्रष्टुं च बिभ्यति स्म ॥ ३४ ॥

कुम्भसम्भवोऽगस्त्यः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

तृतीयाध्यायार्थप्रकाशः ॥ ३ ॥

---

भाषा टीका ।

तिस हेतु से हे परीक्षितजी ! जगत् का मङ्गलकारक तथा ...अपराधों का नाशक श्रीविष्णु के नाम संकीर्तन सब पापों ...अत्यन्त प्रायश्चित्त है ऐसा जानो ॥ ३१ ॥

और श्रीहरिके मनोहर चरितों के वारम्वार सुनने वालों ...कथन करने वालों के हृदय में अच्छी उत्पन्न हुई भक्ति ...आत्मा शुद्ध हो जाता है व्रतादिकों से तैसा शुद्ध नहीं ...ता है ॥ ३२ ॥

श्रीकृष्ण चरण कमल का भ्रमर पुरुष तो स्वयं छोड़े हुये पाप दुःखके देने वाले माया कृत गुणों में रत नहीं होता है अन्य पुरुष तो कामनाओं से हत होने से आत्मा के रजको दूर करने को प्रायश्चित्तादि कर्म की चाहना करता है जिस के कि करने से फिरभी रजोगुण ही उत्पन्न हो जाता है ॥ ३३ ॥

हे राजन् ! इस प्रकार से अपने पति का कहा भगवान् का जो माहात्म्य तिसको स्मरण करके बुद्धि से विस्मित होकर ये यमराज के किंकर उस दिन से शंका कर के नारायण भक्त के प्रति नहीं जाते हैं भगवद्भक्तों को देखकर भी डरजाते हैं ॥ ३४ ॥

इस पवित्र इतिहास को अगस्त्य भगवान् ने मलयाचल पर्वत के ऊपर भगवान् की पूजा करते समय में हमसे कहा है ॥ ३५ ॥

इति श्रीभागवत षष्ठस्कन्ध तीसरे अध्याय का
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ ३ ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

## ॥ चतुर्थोऽध्यायः ॥



राजोवाच ।

देवासुरनृणां सर्गो नागानां मृगपक्षिणाम् ।
सामासिकस्त्वया प्रोक्तो यस्तु स्वायम्भुवेऽन्तरे ॥ १ ॥
तस्यैव व्यासमिच्छामि ज्ञातुं ते भगवन् ! यथा ।
अनुसर्गं यया शक्त्या ससर्ज भगवान् परः ॥ २ ॥

सूत उवाच ।

इति संप्रश्नमाकर्ण्य राजर्षेर्बादरायणिः ।
प्रतिनन्द्य महायोगी जगाद मुनिसत्तमाः ! ॥ ३ ॥

श्रीशुक उवाच ।

यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः ।
अन्तःसमुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृताम् ॥ ४ ॥
द्रुमेभ्यः क्रुद्ध्यमानास्ते तपोदीपितमन्यवः ।
मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया ॥ ५ ॥
ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह ! ।
राजोवाच महान् सोमो मन्युं प्रशमयन्निव ॥ ६ ॥
मा द्रुमेभ्यो महाभागाः ! दीनेभ्यो द्रोग्धुमर्हथ ।
विवर्द्धयिषवो यूयं प्रजानां पतयः स्मृताः ॥ ७ ॥
(१) अहो प्रजापतिपतिर्भगवान् हरिरव्ययः ।
वनस्पतीनोषधीश्च ससर्जोर्जमिषं विभुः ॥ ८ ॥
अन्नं चराणामचरा ह्यपदः पादचारिणाम् ।
अहस्ता हस्तयुक्तानां द्विपदां च चतुष्पदः ॥ ९ ॥
यूयं च पित्रान्वादिष्टा देवदेवेन चानघाः ! ।
प्रजासर्गाय हि कथं वृक्षान्निर्दग्धुमर्हथ ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्थादिभिर्विश्वरूपजन्मविवक्षया ।
प्रचेतःसुतदक्षस्य वंशस्तावत् प्रतन्यते ॥ १ ॥
चतुर्थे तु प्रजासृष्ट्यै दक्षेणाराधनं हरेः ।
तपसा हंसगुह्याख्यस्तोत्रेण च निरूप्यते ॥ २ ॥
प्रसक्तानुप्रसक्तेन स्वायम्भुवसुतान्वयं ।
नामप्रभावमाकर्ण्य वंशव्यासं बुभुत्सते ॥ ३ ॥
देवासुरेति द्वाभ्याम् । सामासिकः संक्षिप्तो यः प्रोक्त[ः] [तृ]तीयस्कन्धे ॥ १ ॥

(१) आदौ प्रजापतिरिति श्रीवीर० श्रीविजय० ।

श्रीधरस्वामिकृतभावार्थदीपिका।

व्यासं विस्तारं ते त्वत्तो यया शक्त्या यथा ससर्ज तां तत्प्रकारं च ज्ञातुमिच्छामि अनुसर्गमनुवृत्तं सर्गम् ॥२॥३॥

...दिरूपेण ससर्जेति वक्तुं दक्षजन्मप्रकारमाह । यदेति । प्राचीनबर्हिषः पुत्रा यदा समुद्रमध्यादुन्मग्ना निर्गतास्तदा गां भूमिं द्रुमैर्वृतां ददृशुः नारदोपदेशतः प्राचीनबर्हिषो निवृत्त्या अराजके सति कृष्याद्यभावात् ॥ ४ ॥

तपसा दीपितो मन्युर्येषां ते तेषां द्रुमाणां दग्धुमिच्छया ॥५॥ ताभ्यां वाय्वग्निभ्यां दह्यमानांस्तान् द्रुमान् वनस्पतीनां राजा सोम उवाच मा द्रुमेभ्य इति नवभिः ॥ ६ ॥

हे महाभागाः ! विवर्धयिषवो विशेषेण वर्धयितुमिच्छवः ॥ ७ ॥

प्रजापतीनां तद्भक्ष्यभोज्यदाहोऽनुचित इत्याह । अहो इति त्रिभिः । ऊर्जं भक्ष्यम् इषमन्नम् ॥ ८—१० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमाकर्णितस्वायंभुवतत्पुत्रोत्तानपादप्रियव्रतसंसतिचरित्रस्त-संगात्पृष्टभूगोलभगोलेषु तत्संस्थानतत्प्रसंगात्पृष्टनरकनिस्तारो-... श्रुतपरिहारश्च पूर्वं संक्षेपेण श्रुतं मनुसर्गं विस्तरेण बुभुत्सुः पृच्छति राजा । देवासुरेति द्वाभ्याम् । स्वायंभुवे मन्वन्तरे ... देवादीनां सर्गः सामासिकः संक्षिप्तः त्वया प्रोक्तः ॥ १ ॥

हे भगवन्मुने ! तस्यैव सर्गस्य व्यासं विस्तरं त्वत्तो ज्ञातुमिच्छामि । कोऽसौ विस्तरस्तत्राह । भगवान् परः सृज्यमानप्रकृति-पुरुषविलक्षणः यया शक्त्या यथानुसर्गं यं यं व्यष्टिसर्गं ससर्ज तद्वेद ॥ २ ॥

एवमापृष्टो मुनिराहेत्याह सूतः । इतीति । हे मुनिसत्तमाः ... राजर्षेः परीक्षितः तं प्रश्नमाकर्ण्य प्रतिनन्द्य साधुपृष्टमिति प्रतिनन्द्य बादरायणिर्महायोगी जगाद ॥ ३ ॥

यदितमेवाह । यदेत्यादिना । तत्र भगवान् बादरायणिर्विस्तरेण ... मनुसर्गं विवक्षुस्तावच्चतुर्थस्कन्धान्तोक्तं प्राचीनबर्हिषः पुत्राणां ...मुपोद्घातत्वेन प्रस्तौति । यत आपूरिताश्च इत्यन्तेन । ...तः प्राचीनबर्हिषो दश पुत्राः यदा अन्तःसमुद्राद् समुद्र-मध्यादुन्मग्नाः निर्गतास्तदा गां भूमिं ददृशुः कथंभूतां द्रुमैः ... नारदोपदेशात् प्राचीनबर्हिषो निवृत्त्याऽराजके कृष्याद्यभावात् ...वृतामिति भावः ॥ ४ ॥

द्रुमेभ्यः क्रुध्यमानास्तपसा उद्दीपितः मन्युः क्रोधो यैस्ता-... तेषां वृक्षाणां दिधक्षया दग्धुमिच्छया मुखाद्वायुमग्निं च ...सृजत्पादितवन्तः ॥ ५ ॥

ताभ्यां वाय्वग्निभ्यां नितरां दह्यमानांस्तान् द्रुमानुपलभ्य दृष्ट्वा ...इह ! महान् सन् सोमो राजा चन्द्रः मन्युं तत्क्रोधं ...मिव प्रशमयितुमित्यर्थः उवाच बोधितवान् ॥ ६ ॥

...याचेत्यपेक्षायां तदेवोक्तमाह । मा द्रुमेभ्यः इत्यादिना प्रति-...मित्यन्तेन । हे महाभागाः ! दीनेभ्यो द्रोग्धुं नार्हथ कुतः यतो ... विवर्धयिषवः लोकान् वर्द्धयितुमिच्छवः प्रजानां पतयश्च स्मृताः उक्ताः विवर्द्धयिषूणां प्रजापतीनामिदं वनस्पतिदाहनमनुचितमिति भावः ॥ ७ ॥

सत्यं विवर्द्धयिषवः प्रजापतयश्च किं द्रुमैः प्रयोजनमित्यत्राह । आदाविति । प्रजापतीनां ब्रह्मादीनामपि पतिर्विभुर्हि अखिल-द्रुमेष्वन्तरात्ते तथाप्यव्ययः असंस्पृष्टतद्गतविकारः भगवान् हरिः आदौ जगदादिकाले वनस्पतीनोषधीश्च ससर्ज तान् ताश्च विशिनष्टि । ऊर्जमिषमिति । ऊर्जं पितॄनुद्दिश्य दीयमानमन्नम् इषं देवानुद्दिश्य दीयमानम् इषोर्जरूपा वनस्पतय इत्यर्थः । अयं भावः । देवपितृयज्ञावशिष्टान्नेन प्रजानां जीवनं विहितम् "यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः" इति स्मरणात् भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्" इति यज्ञानवशिष्टान्नभक्षणनिन्दनाच्च एवं देवाद्युपजीव्यान्नरूपेण परिणममानान् वनस्पत्यादीन्निर्द्रोग्धुं नार्हथेति ॥ ८ ॥

एतदेवोपपादयति । अन्नमिति । यावत् पादचारिणां चराणां भूतानामपादचारिणोऽचराः अन्नमन्नाः अचरेषु भूतेष्वन्नत्वभावो नास्ति किंतु तेषामुपभोग्यत्वाकार एक एवेति भावः चरेषु त्वाकारद्वयमस्तीत्याह । अहस्ता इति । हस्तयुक्तानां द्विपदाम-हस्ताः चतुष्पदः अन्नमदनीयाः सामान्याभिप्रायकमेकत्वं क्लीबत्वं च । चरेषूभयाकारकथनं व्यतिरेकदृष्टान्तार्थम् । यथा चरेषु केषाञ्चिदत्तृत्वमन्येषामदनीयत्वं न तथाचरेषु किं त्वदनीयत्वमेवेति सर्वोपभोग्यत्वान्निरपराधत्वाच्च तद्द्रोहः न कार्य इति तात्पर्यम् ॥ ९ ॥

किञ्च । हे अनघाः ! यूयं पित्रा प्राचीनबर्हिषा देवदेवेन तपसा तोषितेन भगवता च प्रजासर्गाय निर्दिष्टाः हि यतः एवमतः कथं वृक्षान्निर्दग्धुमर्हथ ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुह्यन्ति सूरय इत्यत्र यं यदुक्तं ब्रह्मादिज्ञेयमाहात्म्यं हरेस्त-ज्जन्माद्यस्य यत इत्यत्र च यः सर्गविशेषः प्रतिज्ञातः सोऽपि भगवदेकनिष्ठ इति प्रतिपाद्यतेऽस्मिन्नध्याये । तत्र तृतीयादौ कथितः सर्गो भगवदेकनिष्ठ उतान्यनिष्ठः आहोस्विदन्यनिष्ठोऽपि भगवत्प्रसादायत्त इत्यभिप्रेत्य राजोक्तार्थमनूद्य तद्विस्तरं ब्रूहीत्याह । देवेति । सामासिकः संक्षिप्तः ॥ १ ॥

व्यासं प्रपञ्चं ते तव सकाशादनुसर्गम् अवान्तरसर्गम् ॥ २ ॥

शुकेन राजप्रश्नमाहत्य परिहार उक्त उतागतस्त्वान्यकथान्तर-मवादि श्रुत्वा स्मित्वा तूष्णीं स्थितं किमिति शौनकादीनां हार्दं प्रश्नं परिहरति सूत इत्याह । इतीति । अनेन सूतशौनकसंवादो न समाप्तः किञ्च । शौनकादिप्रश्नोऽप्ययमेव अयमेव परिहारोऽपीति ध्वनितम् ॥३॥

भगवत्प्रसादायत्तत्वान्मन्दहष्ट्याऽन्यनिष्ठत्वप्रतीयमानोऽपि तदे-कनिष्ठ इति लक्षणस्य नातिव्याप्तिरिति दर्शयितुं प्रकृतार्थानुवाद-पूर्वकमुपक्रमते । यदेति । प्रचेतस इति । तुदयनामानः प्राचीनबर्हिषः दश पुत्राः यदान्तःसमुद्रादुत्थिताः द्रुमैर्वृतां गां भूमिं ददृशुः ॥४॥

तदा क्रुधितो वायुमग्निं च ससृजुरित्यन्वयः । तेषां वृक्षाणां दिधक्षया दहनेच्छया ॥ ५ ॥

तत्र चन्द्रेण तत्कोपशान्तिप्रकारं कथयति । ताभ्यामिति । ताभ्याम् अग्निवायुभ्याम् ॥ ६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमोहेति तत्राह । मा द्रुमेभ्य इति । क्रुधद्रुहेत्यादिना चतुर्थी तत्र हेतुमाह । विवर्धयिषव इति । विवर्धयिषवः प्रजावृद्धिं करिष्यावः यूयं पतयः पातारः स्मृता इति यदतो द्रुमेभ्यो द्रोग्धुं नार्हथेत्यन्वयः ॥ ७ ॥

दाहे नारायणानुग्रहदूरत्वं भवतां स्यादित्यभिप्रेत्याह । अद्वाविति । ऊर्जं पित्रन्नम् इषं देवान्नम् ॥ ८ ॥

वनस्पत्योषधीनामूर्जाख्यान्नत्वं कथमत्राह । अन्नमिति । अचराश्चराणामन्नम् इत्याद्यन्वेतव्यम् ॥ ६ ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सामासिकः षष्ठादिमन्वन्तरजातविस्ताराकथनात् ॥ १ ॥

व्यासं तन्मन्वन्तरजातदक्षानन्तरशाखोपशाखारूपम् ।

पूर्वसर्गस्य केनचित् कारणेन नष्टप्रायत्वादनुसर्गम् ॥ २ ॥ ३ ॥

यदेति । उत्तानपादवंशान्तमारभ्य कथनं तस्यैवान्तिमराज्यत्वात् ॥ ४—८ ॥

ऊर्जमन्नातिरिक्तं भक्ष्यम् । अन्नमिति सबलानां दुर्बलानन्नमसृजदित्यर्थः ॥ ९—२२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुनश्च पोषणं वाच्यमिन्द्रस्याचार्यघातिनः ।
सचाचार्यो विश्वरूपो दक्षकन्यासुतोद्भवः ॥ १ ॥
दक्षस्यातश्चतुर्थान्ते संक्षेपेणोक्तजन्मनः ।
कथाध्यायत्रयेणेह स्कन्धे वाच्या सविस्तरम् ॥ २ ॥
राजापि सृष्टेः प्रस्तावे स्वायम्भुवसुतान्वयौ ।
सप्रसङ्गौ समाकर्ण्य भूयः पप्रच्छ तत्पुनः ॥ ३ ॥
चतुर्थे तु प्रचेतोभ्यः जातो दक्षः प्रजाः सृजन् ।
हंसगुह्यस्तवेनेशं तुष्टावेति निरूप्यते ॥ ४ ॥

देवासुरेति द्वाभ्याम् । सामासिकः संक्षिप्तः यः प्रोक्तस्तृतीयस्कन्धे व्यासं विस्तारम् । ते त्वत्तः अनुसर्गमनुवृत्तं सर्गम् । यया शक्त्या यथा ससर्ज तां शक्तिं तं प्रकारञ्च परो ब्रह्मा ॥ १—३ ॥

दक्षादिरूपेण ससर्जेति वक्तुं रुद्रापराधाच्छागमुखस्य दक्षस्यावमानदुःखेन देहं त्यक्तवतः पुनर्जन्मप्रकारमाह । यदेति । गां पृथ्वीं द्रुमैर्वृतां ददृशुः । नारदोपदेशतः प्राचीनबर्हिषि विरज्य वनं गते सत्यराजकत्वेन कृष्याद्यभावात् ॥ ४ ॥

तपोदीपितेति । तपसः कोपाधिष्ठानत्वात् ॥ ५ ॥

सोमो वृक्षाधिष्ठाता स एव वृक्षाणां राजा प्रशमयन्निवेति प्रथमं साम्नोपायेन मन्योरपगमासम्भवादिति भावः ॥ ६ ॥ ७ ॥

ऊर्जमन्नातिरिक्तं फलादि भक्ष्यं वनस्पतिहेतुकम् । इषमन्नं गोधूमाद्योषधिहेतुकम् । चराणां पक्षाभ्यां चरतां भ्रमरादीनाम् अचराः पुष्पलताद्या एवान्नम् । पादचारिणां पद्भिश्चरतां गोमहिषादीनाम् अपदो घासाद्या एवान्नं तेष्वेव हस्तयुक्तानां व्याघ्रादीनाम् अहस्ताः गवादयः द्विपदां पद्भ्यां चरतां मनुष्याणां चतुष्पदो हरिणादयः चकारात् अचरा धान्यगोधूमाद्याश्च ॥ ८—१० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं पापकारिणो रक्षणमुक्त्वाथ चतुर्थे दक्षजन्मानुवादपूर्वकं दक्षकर्तृकं भगवदाराधनं वर्णयन् पुण्यकारिणो दक्षसेष्टसम्पादनेन रक्षणं वर्णयति । तत्र तावत् संक्षेपतः उक्तां देवादिसृष्टिं श्रुत्वा तां विस्तरतो बुभुत्सुः राजर्षिः पृच्छति । देवेति द्वयेन । सामासिकः संक्षिप्तस्तृतीये स्कन्धे त्वया यः प्रोक्तः ॥ १ ॥

हे भगवन् ते त्वत्तः तस्यैव सर्गस्य व्यासं विस्तरं वेदितुमिच्छामि को विस्तर इत्यत्राह । भगवान् मुख्यो विश्वहेतुः यया शक्त्या येन नियोज्यकर्त्रा यथा अनुसर्गमनुकृतं ससर्ज तत् श्रोतुमिच्छामीति योजना ॥ २ ॥ ३ ॥

दक्षेण नियोज्यकर्त्राऽनुसर्गमकरोदिति वक्तुं तज्जन्मानुवदति यदेत्यादिना । उन्मग्ना निर्गताः गां भुवम् ॥ ४ ॥

तद्दिधक्षया द्रुमाणां दग्धुमिच्छया ॥ ५ ॥

हे कुरूद्वह ! परीक्षित् वनस्पतीनां राजा सोमः ताभ्यां वाय्वग्निभ्यां नितरां दह्यमानान् तान् द्रुमानुपलभ्य ज्ञात्वा मन्युं प्रचेतसां क्रोधमुपशमयन्नुवाच ॥ ६ ॥

तदुक्तिमेवाह । मेति नवभिः । हे महाभागाः ! द्रुमेभ्यः द्रोग्धुं द्रोहं कर्तुं मार्हथ यतो यूयं विवर्द्धयिषवः प्रजाः वर्द्धयितुमिच्छवः प्रजानां पतयः स्मृताः ॥ ७ ॥

प्रजावृद्धिकामानां प्रजापतीनां तद्भक्ष्यभोज्यदाहो न [illegible] इत्याह । अहो इति त्रिभिः । ऊर्जं भक्ष्यमिषमन्नं ससर्ज ॥८॥ ९॥

भाषा टीका ।

राजा परीक्षित्‌जी बोले देवता असुर मनुष्य नाग [illegible] पक्षी इनों की सृष्टि संक्षेप से आपने कही है जोकि स्वायंभुव मन्वन्तर में भई है ॥ १ ॥

हे भगवन् ! उसीका विस्तार मैं सुनने चाहता हूं [illegible] भगवान् ने अनुसर्गको जैसे जिस शक्ति से सृजा है सो मैं सुनने चाहता हूं ॥ २ ॥

श्रीसूतजी बोले राजर्षि परीक्षित् के ऐसे प्रश्न को [illegible] करके मुनिसत्तम बादरायण पुत्र श्री शुकदेवजी परीक्षित् की प्रशंसा करके फिर बोले ॥ ३ ॥

श्रीशुकदेवजी बोले जिस समय में प्राचीन बर्हि राजा के पुत्र दश प्रचेतस समुद्र में से निकले तब उन्होंने सब पृथ्वी को पेडों के मारे भरी हुई देखा ॥ ४ ॥

अन्नके न होने से वे बडे क्रोध से दीपित होगये [illegible] पर उनने बडा कोप किया तब उन वृक्षों के जलाने की इच्छा से मुखमें से अग्नि तथा वायु दोनों को पैदा किया ॥ ५ ॥

हे कुरूद्वह परीक्षित् जी ! उन अग्नि वायु से वृक्षों को जलते देखकर उनके क्रोधको शान्त करने को सोम राजा प्रचेतस से बोलते भये ॥ ६ ॥

आतिष्ठत सतां मार्गं कोपं यच्छत दीपितम् ।
पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः ॥ ११ ॥
तोकानां पितरौ बन्धू दृशः पक्ष्म स्त्रियाः पतिः ।
पतिः प्रजानां भिक्षूणां (१) गृह्यज्ञानां बुधः सुहृत् ॥ १२ ॥
अन्तर्देहेषु भूतानामात्मास्ते हरिरीश्वरः ।
सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो ह्यसौ ॥ १३ ॥
यः समुत्पतितं देह आकाशान्मन्युमुल्बणम् ।
आत्मजिज्ञासया यच्छेत् स गुणानतिवर्तते ॥ १४ ॥
अलं दग्धैर्द्रुमैर्दीनैः खिलानां शिवमस्तु वः ।
वार्क्षी ह्येषा वरा कन्या पत्नीत्वे प्रतिगृह्यताम् ॥ १५ ॥
इत्यामन्त्र्य वरारोहां कन्यामाप्सरसीं नृप ! ।
सोमो राजा ययौ दत्त्वा ते धर्मेणोपयेमिरे ॥ १६ ॥
तेभ्यस्तस्यां समभवद्दक्षः प्राचेतसः किल ।
यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः ॥ १७ ॥
यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः ।
रेतसा मनसा चैव तन्ममावहितः शृणु ॥ १८ ॥
मनसैवासृजत् पूर्वं प्रजापतिरिमाः प्रजाः ।
देवासुरमनुष्यादीन्नभस्थलजलौकसः ॥ १९ ॥
तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः ।
विन्ध्यपादानुपव्रज्य सोऽचरद्दुष्करं तपः ॥ २० ॥

भाषा टीका।

हे महाभाग प्रचेता हो दुखित वृक्षोंपर कोप मतकरो तुमतो प्रजाओं के पतिहो प्रजावृद्धि करने वालेहो ॥ ७ ॥
अहो प्रजापतियों के पति भगवान् ईश्वर ने वनस्पति ओषधियोंको पितरों का अन्न देवतों का अन्न रूप सृजा है ॥ ८ ॥
चर जीवों के अचर जीव आहार हैं पादचारी जीवों के आहार बिना पादचारी जीव हैं बिना हाथवाले जीव हाथ वालों के आहार हैं चार पांव वाले जीव दो पांववालों के आहार हैं ॥ ९ ॥
हे अनघ हो भगवान् ने और आप के पिताने तो आप लोगों को सृष्टि के वास्ते आज्ञादिया है आप लोक कैसे वृक्षों का द्रोह करते हो ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

मन आतिष्ठत आश्रयत सतां मार्गमुपशमं पित्रादिभिर्जुष्टम् ११

प्रजानां प्रजापतिरेव बन्धुरतस्तज्जीविकानाशो न कर्तव्य इति दृष्टान्तपञ्चकेनाह । तोकानां बालानां मातापितरौ अज्ञानां ज्ञानदो बुध एव सुहृत् ॥ १२ ॥
ईश्वराधिष्ठानत्वाच्च भूतद्रोहो न युक्त इत्याह । अन्तर्देहेष्विति । वो युष्माभिः ॥ १३ ॥
आकाशाद्देहे समुत्पतितमाकस्मिकमित्यर्थः । आत्मविचारेण यो नियच्छेत् ॥ १४ ॥
खिलानां शेषाणां वो युष्माकं च शिवमस्तु वृक्षरक्षणार्थं तदीयां कन्यां ददाति वार्क्षी वृक्षैः पालिता ॥ १५ ॥
आमन्त्र्य सान्त्वयित्वा आप्सरसीमप्सरसः प्रम्लोचायाः सुताम् ॥ १६ ॥ १७ ॥
दुहितृवत्सल इति । तस्य कन्यावंश एवेत्युक्तं मम मत्तः ॥ १८ ॥
प्रजापतिर्दक्षः ॥ १९ ॥
अबृंहितमसंवृद्धं विन्ध्यस्य पादान् सन्निहितपर्वतान् ॥ २०-२१ ॥

(१) गुह्यज्ञानामिति श्रीधरः ०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सतां साधूनां मार्गमातिष्ठताश्रयत । कथंभूतं वः युष्माकं पित्रा प्रचेतसा पितामहेन तत्पित्रा ये च वः युष्माकं प्रपितामहादयः तैश्च जुष्टं सेवितम् । पित्राद्याचरितमेव सन्मार्गमाश्रयतेत्यर्थः । दीपितं कोपं यच्छत उपसंहरत ॥ ११ ॥

किञ्च । भगवतः सर्वरक्षकस्य शरीरत्वाद्वनस्पतिषु क्रोधोऽयुक्त इत्याह । तोकानामिति । तोकानां बालानां पितरौ यथा बन्धू रक्षकौ यथा दृशः पक्ष्म बन्धुः यथा च स्त्रियाः पतिर्बन्धुः तथा प्रजानां नृपः यथा च भिक्षूणां भिक्षेत्यध्याहारः यथा गुह्यज्ञानां प्रयोगकुशलानां बुधः मीमांसाभिज्ञः तथा भगवान् रक्षकः सुहृच्च भूतानामन्तर्देहेषु हृदयेष्वात्मेश्वरः अन्तः प्रविश्य नियन्ता हरिरास्तेऽतः सर्वं जगत् अस्य भगवतो धिष्ण्यमेवमीक्षणेऽसौ भगवान् वः युष्माकं तोषितो भवति । यद्वा । प्रतिनियतरक्षकत्वव्यवस्थामुल्लङ्घ्य कथं द्रोग्धुमर्हथेत्याह । तोकानामिति । पित्रादय इव प्रजानां चराचरात्मकानां नृपः बन्धुः रक्षकः सुहृच्च । किञ्च । भगवच्छरीरत्वाच्च न द्रोहः कार्य इत्याह । अन्तर्देहेष्विति । उक्त एवार्थः गुह्यज्ञानामिति भिक्षुविशेषणं वा गुह्यं रहस्यभूतं परमात्मस्वरूपादिकं ज्ञातुमिच्छूनां बुध इव तदुपदेष्टा विद्वानित्यर्थः रक्षणं च सर्वत्रानिष्टपरिहारेष्टप्रापणात्मकमेव ॥ १२ ॥ १३ ॥

किञ्च । क्रोधोपशमस्याभ्युदयहेतुत्वाच्च तमुपसंहरतेत्याह । य इति । देहे आकाशात् समुत्पतितं यदृच्छयोत्पन्नमित्यर्थः । यद्वा । देहे आकाशाद्धृदयविवरात् समुत्पतितमुल्बणं दुःसहं मन्युं क्रोधमात्मजिज्ञासया स्वात्मपरमात्मयाथात्म्यविचारणेन यच्छेदुपसंहरेत् स पुमान् गुणान् सत्त्वादीनतिवर्त्तते क्रमेण संसारबन्धान्मुक्तो भवतीत्यर्थः ॥ १४ ॥

अतो दग्धैरत एव दीनैः द्रुमैरलं दीनद्रुमदाहनेनालमित्यर्थः खिलानामवशिष्टानां द्रुमाणां वः युष्माकं च शिवमस्तु । वार्क्षी वृक्षैः पालिता एषा वरा सुलक्षणा कन्या मारिषाख्या पत्नीत्वेनेत्यर्थः । प्रतिगृह्यतां युष्माभिरिति शेषः ॥ १५ ॥

इतीत्थमामन्त्र्य सान्त्वयित्वाप्सरसमप्सरोदेहादाविर्भूतामृषिवीर्यसंभूतां वरारोहां वरैरारोढुमुद्वोढुं योग्यां कन्यां तेभ्यो दत्त्वा सोमो राजा ययौ गतः ततस्ते प्रचेतसः सर्वे धर्मेण तामुपयेमिरे विवाहितवन्तः । धर्मेणेत्यनेन "अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा । अपृथग्धर्मशीलेयं भूयात् पत्न्यर्पिताशया" इति भगवदुक्तत्वाद्बहुभिरेकस्याः पाणिग्रहो दोषावह इति शङ्का न कार्येति सूचितम् ॥ १६ ॥

तेभ्यः प्राचेतसेभ्यः तस्यामाप्सरस्यां हे राजन् ! दक्षः प्रजापतिः प्राचेतसोऽभूदुत्पन्नः पूर्वं ब्रह्मणोऽङ्गुष्ठाज्जातो दक्षाध्वरे रुद्रापराधवशात्तं देहं विहायास्यां मारिषायां प्राचेतसनामाजायतेत्यर्थः तथाचोक्तं चतुर्थे "यस्यां महदवज्ञानादजन्यजनयोनिजः" इति प्राचेतसं विशिनष्टि । यस्येति । यस्य प्राचेतसस्य दक्षस्य प्रजासर्गेण त्रयो लोका आपूरिताः प्रायशो लोकत्रयस्थाः प्रजास्तत्सन्तानरूपा इत्यर्थः ॥ १७ ॥

दक्षः प्राचेतसः दुहितृषु वात्सल्ययुक्तः रेतसा वीर्येण मनसा सङ्कल्पेन चेमाः प्रजाः ससर्ज काः देवादींस्तथा नभ एव स्थलं येषां जलमेवौकः स्थानं येषां तान् ॥ १९ ॥

तमेवं मनसा क्रियमाणं प्रजासर्गमबृंहितमवृद्धमालोक्य स प्रजापतिः प्राचेतसः विन्ध्यस्य पादान् प्रत्यन्तपर्वतानुपव्रज्य उपागत्य दुश्चरमितरैः कर्त्तुमशक्यं तप आचरत् हृ-वान् ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मार्गं विशिनष्टि । पित्रेति ॥ ११ ॥

अनन्यशरणानां वृक्षाणां दाहे शरणागतवधदोषोऽपि युष्माकं स्यादित्याशयवानाह । तोकानामिति । तोकानां बालानां पितरौ मातापितरौ बन्धू इत्येतत् सर्वत्रान्वेतव्यं गृही गृहस्थः भिक्षूणामज्ञानां ज्ञानदानाख्यजीवनेन ॥ १२ ॥

किञ्चानेनेश्वरद्रोहोऽपि स्यादित्याशयवानाह । अन्तरिति । भूतानामिति विशेषणाद्वृक्षदाहेनेश्वरदाहः कथं स्याद्भूतदाहाकरणादिति तत्राह । सर्वमिति । तस्य हरेर्धिष्ण्यं निवासस्थानम् अनेन किं फलं स्यादत्राह । एवमिति । असौ हरिः ॥ १३ ॥

इतोऽपि कोपो न कार्य इत्याह । यः समुत्पतितमिति । देहे आकाशाद्धृदयाकाशादुत्पतितमुज्ज्वलितं मन्युं यो यच्छेत् कथमात्मनः परमात्मनः जिज्ञासया विचारेण "अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" इति श्रुत्यर्थपर्यालोचनया भूतद्रोहेण श्रीनारायणद्रोह एव स्यादिति चिन्तया स पुमान् गुणान् संसारहेतुभूतांस्तरतीत्यन्वयः ॥ १४ ॥

वार्क्षी वृक्षदुहिता वरा वरणीया ॥ १५ ॥

वरः श्रेष्ठः आरोहो नितम्बप्रदेशो यस्याः सा तथा ताम् आप्सरसीम् अप्सरोजातिमतीम् ॥ १६ ॥

यस्य दक्षस्य ॥ १७ ॥ १८ ॥

पूर्वमादिसृष्टौ इमाः प्रजाः मनसैवासृजत् प्रजापतिर्ब्रह्मा ॥ १९ ॥

यो ब्रह्मणा कृतः प्रजासर्गः तमबृंहितमपूर्णं दृष्ट्वा ब्रह्मणः आज्ञया विन्ध्यगिरेः पादान् प्रत्यन्तपर्वतानुपगम्य तपोऽचरत् स प्राचेतसो दक्षः यो मनसासृजत् स तपोऽचरदित्येकवाक्यं वा ॥ २० ॥ २१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पित्रादिभिर्जुष्टं सतां मार्गम् । उपशममातिष्ठत ॥ ११ ॥

यूयं हि प्रजापालकाः द्रुमादयः प्रजाः प्रजोपजीव्याश्चेत्येताः पालयत । नहि पालकानां नाशकत्वं दृष्टमित्यत्र दृष्टान्तपञ्चकमाह । तोकानां बालानां स्त्रियाः पतिर्भर्त्ता प्रजानां पतिर्नृपः ॥ १२ ॥

ईश्वराधिष्ठानत्वाच्च भूतद्रोहो न युक्त इत्याह । अन्तरिति । ... वो युष्माभिरयं सर्वभूतदययैव असावीश्वरस्तोषित इति ... न स्मरथेति भावः ॥ १३ ॥

ननु कोपकाले कुत एतावान् विचारस्तत्राह । य इति । आकाशादिव देहे समुत्पतितमाकस्मिकमित्यर्थः । आत्मनो जिज्ञासया विचारेण यच्छेत् उपशमयेत् स गुणानिति अन्यथा यूयं गुणैरेव ग्रस्ता भविष्यथेति सामोक्त्या भेदश्च ध्वनितः ॥ १४ ॥

भेदेनाप्युपशमाभावमालक्ष्य दानमाह । अलमिति । खिलानां शेषाणां वार्क्षी वृक्षैः पालितत्वाद्वृक्षकन्या ॥ १५ ॥

तत्राघमर्षणं नाम तीर्थं पापहरं परम्।
उपस्पृश्यानुसवनं तपसाऽतोषयद्धरिम् ॥ २१ ॥
अस्तौषीद्धंसगुह्येन भगवन्तमधोक्षजम्।
तुभ्यं तदभिधास्यामि कस्यातुष्यद्यतो हरिः ॥ २२ ॥
॥ प्रजापतिरुवाच ॥
नमः परायावितथानुभूतये गुणत्रयाभासनिमित्तबन्धवे।
अदृष्टधाम्ने गुणतत्त्वबुद्धिभिर्निवृत्तमानाय दधे स्वयम्भुवे ॥ २३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

आप्सरसीम् अप्सरसः प्रम्लोचायाः सुताम् ॥ १६ ॥
समभवादिति दक्षस्य स्वायम्भुवमनुवंश्यत्वात् स्वायम्भुवे मन्वन्तरे जन्म यस्य प्रजाविसर्गेणेति प्रजाविसर्गस्तस्य चाक्षुष न्तरे

चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविद्रुते।
यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः ॥

इति चतुर्थोक्तेः। तस्मान्मध्ये मन्वन्तरपञ्चकमभिव्याप्यास्य तप एव पौर्वकालिकैश्वर्यप्राप्त्यर्थकमवगम्यते ॥ १७ ॥
दुहितृवत्सलः इति पुत्रवंश्याभावः सूचितः ॥ १८ ॥ १९ ॥
प्रजापतिर्दक्षः विन्ध्यस्य पादान् प्रत्यन्तपर्वतान् ॥ २० ॥ २१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यो युष्माकं पित्रादिभिर्जुष्टं सेवितं सतां मार्गमुपश्रमात्मक- मास्थित आश्रयत दीपितं कोपं यच्छतोपसंहरत ॥ ॥ ११ ॥
लोकानां बालानां बन्धुः सहायः सुहृत् सखा ॥ १२ ॥
भगवत्परितोषार्थं सर्वेषु भगवदधिष्ठितेषु सहायभाव एव भूतेभ्यो न द्रोह इत्याह। अन्तरिति। वो युष्माभिः ॥ १३ ॥
यः आकाशाद्धृदयाकाशात् देहे समुत्पतितं मन्युं नियम्योपसंहरेत् स आत्मजिज्ञासया परमेश्वरोपासनया गुणान् निवर्तते त्रिगुणं प्रपञ्चमतिक्रम्य मुक्तो भवतीत्यर्थः ॥ १४ ॥
खिलानामवशिष्टानां वो युष्मत्तः शिवमस्तु वार्क्षी वृक्षैः पालिता युष्माभिः पत्नीत्वे प्रतिगृह्यताम् ॥ १५ ॥
इत्येवमामन्त्र्य सान्त्वयित्वा आप्सरसीं प्रम्लोचासुतां दत्वा ययौ स्वस्थानमगात् ॥ १६ ॥ १७ ॥
रेतसा वीर्येण मनसा सङ्कल्पमात्रेण मम मत्तः ॥ १८ ॥
प्रजापतिर्दक्षः पूर्वं मनसैवासृजत् ॥ १९ ॥
तं प्रजासर्गमबृंहितमसंवृद्धमालोक्य विन्ध्यस्य पादान् प्रत्यन्तभूतान् पर्वतान् ॥ २० ॥

---

भाषा टीका।

सत्पुरुषों के मार्गमे स्थिति करो प्रदीपित कोपको शान्त करो तुमारे पिता पितामह प्रपितामहने जिस मार्ग का सेवन किया है तिसी मार्ग को तुम सेवन करो ॥ ११ ॥
बालकों के बन्धु मातापिता होते हैं नेत्रके बन्धु पलुना होते हैं स्त्री का बन्धु पति होता है प्रजाओं का बन्धु नृप होता है भिक्षुकों का बन्धु गृहस्थ होता है अज्ञानियोंका बन्धु ज्ञानी होता है ॥ १२ ॥

सब देहों के भीतर मे ईश्वर हरि आत्मा हैं सब जीवों को भगवान् का स्थान जानोगे तब भगवान् सन्तुष्ट हो जांयगे ॥ १३ ॥

जो पुरुष देह आकाश के मध्यमे से उत्पन्न भये क्रोध को आत्मज्ञान से निवारण करदेता है उस के तीनों गुणो के दोष छूट जाते हैं ॥ १४ ॥

अब इन वृक्षों को मत जलाओ ये अतिदुखी हैं बांकी जो बचे हैं इन से आप का भी कल्याण होगा इन वृक्षों की एक सुन्दर कन्या है तिसको तुम पत्नी रूप से ग्रहण करो ॥ १५ ॥

हे नृप ! इस प्रकार से उनको कहकर उत्तम रूपवती अप्सरा की कन्या को उन्हे देकर सोम राजा चले गये उनने धर्मकी रीति से उसका विवाह किया ॥ १६ ॥

उन प्रचेतों मे से तिस कन्या मे दक्ष नामक पुत्र उत्पन्न भया जिसके प्रजासृष्टि करने से तीनों लोक भर गये ॥ १७ ॥

जिस प्रकार से पुत्रियों के प्रेमी दक्ष ने सब भूतों को पैदा किया वीर्य से या मन से तिसको तुम सावधानता से सुनो ॥१८॥

प्रजापति ने पहिले मनहीं से इन प्रजाओं को सृजा है देवता असुर मनुष्य आकाशचारी पृथिवीचारी जलचर इन सबों को पैदा किया है ॥ १९ ॥

प्रजापतिने उस प्रजा की सृष्टि को नहीं बढती हुई देख कर विन्ध्य पर्वत के नीचे स्थल मे जाकर अतिकठिन तप का आरंभ किया ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

हंसगुह्याख्येन स्तोत्रेण कस्य दक्षस्य ॥ २२ ॥

पराय सर्वोत्तमाय नमो दधे नमनं करोमि। परत्वे हेतुः। अवितथा अनुभूतिश्चिच्छक्तिर्यस्य अतो गुणत्रयाभासो जीवो निमित्तं माया च तयोर्बन्धवे नियन्त्रे एवमपि गुणेषु तत्त्व- बुद्धिर्येषां तैर्जीवैरदृष्टं धाम स्वरूपं यस्य। तत्र हेतुः। निवृत्तं मानं यस्मात् पाठान्तरे निवृत्तं निरस्तं मानमवधिश्च यस्मात्

न यस्य सख्यं पुरुषोऽवैति सख्युः सखा वसन् संवसतः पुरेऽस्मिन् ।
गुणो यथा गुणिनो व्यक्तदृष्टेस्तस्मै महेशाय नमस्करोमि ॥ २४ ॥
देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् ।
सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे ॥ २५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तर्हि कथं तस्य सिद्धिरत आह । स्वयम्भुवे स्वप्रकाशाय ॥ २३ ॥

अदृष्टधामत्वं दर्शयन्नाह । नेति । पुरुषः सखा जीवोऽस्मिन् पुरे देहे वसन्नप्यन्यैव संवसतः सख्युर्यस्य सख्यं करणप्रवर्तकत्वादिकं नावैति न जानाति तस्मै कुतः व्यक्तदृष्टेः प्रपञ्चद्रष्टुः न हि द्रष्टा दृश्यो भवतीति । प्रथमान्तपाठे व्यक्ते प्रपञ्च एव दृष्टिर्यस्य सः गुणो विषयो गुणिनो विषयिण इन्द्रियादेः सख्यं प्रकाशकत्वं यथा न वेत्ति तद्वत् ॥ २४ ॥

ननु गुणो जडत्वान्न जानातीति जीवस्तु चेतनः किमिति न जानात्यत आह । देह इति । देहश्चासवश्च प्राणा अक्षाणीन्द्रियाणि मनवश्चान्तःकरणानि भूतानि च मात्राश्च तन्मात्राण्यात्मानं स्वरूपं दृश्यमन्यमिन्द्रियवर्गं तयोः परं देवतावर्गं च न विदुः पुमान् जीवस्तु सर्वमेतत्त्रयं वेद गुणांश्च तन्मूलभूतान् वेद तज्ज्ञोऽपि सन् यं सर्वज्ञं न वेद तमनन्तमीडे स्तौमि ॥२५॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र विन्ध्यपादेषु त्रिकालमघमर्षणाख्यं पापहरं पुण्यं तीर्थमुपस्पृश्य तत्र स्नात्वेत्यर्थः तपसा हरिमतोषयदाराधितवान् ॥२१॥

तथा भगवन्तमधोक्षजं हंसगुह्याख्येन स्तोत्रेणास्तौषीत्तदेव स्तोत्रं तुभ्यमभिधास्यामि स्तात्र विशिनष्टि । यतो येन स्तोत्रेण हरिः कस्य प्रजापतेर्दक्षस्यातुष्यत्तुष्टोऽभूत् । प्रसन्नोऽभूदित्यर्थः ॥ २२ ॥

हंसगुह्याख्यं स्तोत्रमुपदिशति । नमः परायेत्यादिना । स ईश्वरो मे कुरुतान्मनोरथमित्यन्तेन ग्रन्थेन । तत्र प्रथमं प्रकृतिपुरुषविलक्षणं सत्यसङ्कल्पं प्रकृतेर्नियन्तारमपरिच्छिन्नं प्रमाणशून्यावधिं सर्वकारणं नमस्करोति । पराय चिद्विलक्षणाय तावच्चिद्व्यावर्तकधर्मयोगमाह । अवितथानुभूतये इति । अवितथाऽमोघाऽनुभूतिः सङ्कल्परूपात्मकं ज्ञानं यस्य सत्यसङ्कल्पायेत्यर्थः । जीवस्त्वसत्यसङ्कल्प इति ततः तेनास्य व्यावृत्तिः अचिद्व्यावर्तकधर्ममाह । गुणत्रयाभासनिमित्तबन्धवे गुणत्रयाभासः सत्त्वादिगुणत्रयोन्मेषस्तस्य निमित्तं कारणं प्रकृतिः तस्या बन्धवे आश्रयभूताय प्रकृतिशरीरकाय तन्नियन्त्रे इत्यर्थः अनेनाचितोऽस्य व्यावृत्तिः एवं पदद्वयेन चिदचिद्व्यावृत्तिः । नन्वयं प्रजापतिवाक्योदिताविर्भूतसत्यसङ्कल्पः प्रकृतिविमुक्तः किं मुक्तो जीवः नेत्याह । गुणतत्त्वबुद्धिभिर्गुणत्रयकार्यभूतपृथिव्यादितत्त्वविषयबुद्धिभिरदृष्टमनुपलक्षितं धाम स्वरूपं यस्य मुक्तस्तु संसारदशायां पृथिव्यादिसङ्घातपरिणामभूतशरीरविषयबुद्धिभिर्देवोऽयं मनुष्योऽयमित्युपलक्षित इति ततोऽस्यतेनैव व्यावृत्तिः तर्हि किं नित्यसिद्धः नेत्याह । निवृत्तं मानं यस्मान्निवृत्तमानः तादृशोऽवधिरियत्ता यस्य स तथोक्तः प्रमाणशून्यावधये निरवधिपरिच्छेदरहितस्वरूपायेत्यर्थः । नित्यसिद्धस्तु जीवः स्वरूपपरिच्छिन्नः इति ततः तेनास्य व्यावृत्तिः स्वयम्भुवे स्वय[म्] कारणान्तरशून्याय सर्वकारणायेति भावः ॥ २३ ॥

गुणत्रयाभासनिमित्तबन्धवे इत्यनेनाचिदाश्रयत्वमुक्त[मथ] चेतनबन्धुत्वमाह । न यस्येति । पुरे देहे संवसतः अ[न्त]न्तरात्मतया वसतः सख्युर्हितैककारिणः । यस्य परमात्म[नः] सख्यं तच्छेषभावं पुरुषो नावैति । गुणिनो रत्नादेर्गुण[...] प्रभादिवत् अपृथक्सिद्धप्रकारभूतो वसन् तद्धार्यत्वेन व[...] सखा तद्गतातिशयाधानैकस्वरूपतया मित्रमयं पुरुषः नावै[ति] नानुसन्धत्ते इत्यर्थः । तत्र हेतुरव्यक्तदृष्टिः । देहगोचरज्ञानः त[स्मै] सख्ये परमपुरुषाय नमस्करोमि । "द्वा सुपर्णा" इति श्रुत्यर्थो[ऽत्र] विवक्षितः ॥ २४ ॥

नावैतीत्येतत् प्रपञ्चयति । देह इति । देहश्चासव इन्द्रियाणि प्राणा वा मनसः मनोवृत्तयः ज्ञानेन्द्रियाणि वा भूतानि पृथिव्या[...]दीनि मात्रा गन्धादीनि तद्ग्राहकाणि कर्मेन्द्रियाणि वा ए[...] आत्मानं स्वस्वरूपं परं स्वेभ्यः विलक्षणमन्यं जीवात्मानं न वि[दुः] पुमान् जीवस्तु यत् सर्वं देहादिकं तद्वेद जानातीत्यर्थः एवं त[ज्ज्ञो] ऽपि देहाद्यभिज्ञोऽपि जीवः देहादिकं स्वगुणान् स्वात्म[...] च जानाति तं भगवन्तं सर्वज्ञं तद्गुणांश्च न वेद तमनन्तमप[रि]च्छिन्नमीडे स्तौमि देहादयो दृष्टान्तार्थमुपात्ताः यथा देहा[दयः] स्वस्वरूपं तस्माद्विलक्षणं जीवात्मानं च न विदुरेवं पुमान् दे[हा]द्यभिज्ञोऽपि सर्वज्ञं तद्गुणांश्च न वेदेत्यर्थः ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नाम्ना हंसगुह्येन स्तोत्रेण कस्य दक्षस्य यतो येन ॥ २२ ॥

सर्वनामसंज्ञाभावाल्लोकवैलक्षण्यप्रदर्शनाय पराय [...] इत्यन्वयः परत्वमुपपादयति । अवितथेत्यादिना । अवितथा य[...] काप्यप्रतिहतानुभूतिर्यस्य स तथा तस्मै सत्यज्ञानाय "स[त्यं] ज्ञानम्" इति श्रुतेः गुणत्रयेणाभासः सृष्टिस्तन्निमित्तयोः प्र[कृति]पुरुषयोर्बन्धुभूताय तत्र स्थित्वा ताभ्यां सृष्टौ प्रवर्तमानाय गु[ण]त्रयप्रतीतिनिमित्ताव्यक्ताश्रयाय वा [१] "सतो बन्धुम[सति] निरविन्दन्" इति श्रुतेः गुणेषु शब्दादिविषयेषु यथार्थबुद्धि[...] ते तथा तैर्बहिर्मुखैरदृष्टधाम्ने ऽज्ञातस्वरूपाय "न चक्षुषा प[श्यति] कश्चिदेनम्" इति श्रुतेः निवृत्तो मानावधिः परिमाणलक्षणो[...] यस्मात् स तथा तस्मै "अनन्तं ब्रह्म" इति श्रुतेः जन्मादिमतः [...] मनन्तत्वमिति तत्राह । स्वयम्भुव इति । स्वयम्भुवे स्वतः सिद्धा[य] "स भगवान् कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इति श्रुतेः [...]

[ १ ] सतः मुख्यप्रमाणस्य बन्धुं हरिं असति प्रलये नि[...] प्रापुरिति श्रुत्यर्थः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

गुणात्मत्वबुद्धिभिरदृष्टधाम्न इत्येतदुपपादयति। न यस्येति। अयं पुरुषो यस्य सख्यं न वेत्ति तस्मै महेशाय शिवाद्युत्तमाय नमस्करोमीत्यन्वयः कीदृशस्य अस्मिन् पुरे शरीरे संवसतः स्वयं च सहैव वसन् "तद्दूरे तदन्तिके,, इतिश्रुतेः सख्युः सखेत्येतदेकस्मिन् पुरे वर्तमानत्वादुभयोः समम्। "द्वा सुपर्णा सयुजा सखाया समानं वृक्षम्" इति श्रुतेः। अत्र दृष्टान्तमाह। गुण इति। यथा कश्चित्पुरतःस्थितोऽपि गुणभूतो भृत्यः गुणिनः प्रधानभूतस्य राज्ञो ममासौ सखेति गम्भीरेण यद्वा चिन्तितं सख्यं न वेत्ति। कुतोऽत्राह। अव्यक्तेति। अस्पष्टदृष्टिः भृत्यस्य स्थूलज्ञानत्वात् राज्ञः। सूक्ष्मदृष्टित्वादित्यर्थः गुणो रूपादिर्गुणिनो द्रव्यस्य सम्बन्धं यथा न वेत्ति। कुतः अव्यक्तदृष्टिः दृष्टिरहितत्वाज्जडत्वादित्येतदपव्याख्यानम्

यथा राज्ञः प्रियत्वं तु भृत्यो वेद न चात्मनः।
तथा जीवो न यत्सख्यं वेत्ति तस्मै नमोऽस्तु ते॥

इत्यनेनापहस्तितमिति ज्ञातव्यम्॥ २४॥

मुह्यन्ति यं सूरय इति यदुक्तं तदधुना स्पष्टयति। देह इति। "ता आप ऐक्षन्त" इत्यादिवद्देहादीनां जडानां ज्ञातृत्वादिधर्मानुपपत्त्या तद्व्यतिरिक्तः कश्चित् ज्ञानाश्रयोऽङ्गीकर्तव्यः जीवस्य ज्ञानाश्रयत्वेऽपि सम्यक्स्वपरवेदनासामर्थ्यस्य प्रत्यक्षत्वेन तस्य हरेस्तज्ज्ञानाविषयत्ववर्णनेन माहात्म्यमाविर्भूतं न स्यादिति कश्चिद्विशिष्टः सर्वज्ञोऽपेक्षितस्तस्य सर्वज्ञत्वविशिष्टासद्भावे घटते तेनान्यैश्च सम्भूयाप्यवेद्यमहिमा हरिरित्यनेन हरेर्निरतिशयमाहात्म्यं विज्ञातं स्यादिति तदर्थं देहादिशब्देन तदभिमानित्वेन ते लक्ष्यन्ते संबन्धात्तथाहि प्रधानाभिमानित्वाद्वैश्रवणादयो देहादय इति समानाधिकरण्येनोच्यन्ते तु तादात्म्यात् देहः अभिमानी वैश्रवणः असवः प्राणाभिमानिनो मरुतः अक्षा इन्द्रियाणि तदभिमानिनः इन्द्राग्निप्रमुखादय मनव इति मनसोऽन्तःकरणस्य वृत्तिबाहुल्याद्बहुवचनं तदभिमानी रुद्रः भूतानामभिमानिनः पृथिव्याद्याः सुपर्णाद्याः तन्मात्राः शब्दादयः तद्देवताः रुद्रसूनवः सौपर्णाद्या वा इत्येते देवाः वैश्रवणाद्याः आत्मानं स्वस्वरूपमन्यं स्वव्यतिरिक्तं प्रपञ्चं न विदुः यदुभयस्मात् परमुत्तमं ब्रह्म तन्न विदुरिति किमुत तत्स्वान्तरेणेति शेषः पुमान् जीवाभिमानी ब्रह्मा स्वात्मानं प्रपञ्चं च सर्वं वेद न केवलं तावदेव किन्तु तत्तद्वस्तुसमवेतगुणांश्च तत्संनिवेशांश्च क्रियादींश्च वेद तर्हि परमात्मानं वेद किं न वेदेत्यत्र इति। तानि सर्वाणि जानातीति तज्ज्ञोऽपि ब्रह्मा तं हरिं न वेद यथासौ हरिः स्वात्मानं स्वव्यतिरिक्तं सर्वं च वेत्ति नवेति शेषः तर्ह्यसौ स्वपरिच्छेद्यत्वेन परिमितः किं न स्यात्। अनन्तमिति। अनन्तमात्मानमपरिच्छेद्यत्वेन ज्ञातारं तस्य ज्ञानस्य यथार्थत्वादतः स एव सर्वमुख्यः सर्वज्ञो न ब्रह्मेति "तदात्मानमेवावैत् अहं ब्रह्मास्मि" इति श्रुतिः विष्णोर्नु कं वीर्याणि इति च एवंविधं परमात्मानमीड इत्यन्वयः एतत् सर्वं

(१) देहाभिमानी वैश्रवणो मरुतः प्राणमानिनः।
इन्द्राद्या इन्द्रियात्मानो रुद्रोऽन्तःकरणात्मकः।

(१) देहादयो न विदुरित्यत्र देहादीनां जडत्वेन तत्र ज्ञानप्रसक्तेरभावे न विदुरिति असङ्गतमित्यतोऽत्र देहादिशब्दविवक्षितार्थप्रमाणमाह। देह मानीत्यादिना।

नैते विदन्ति स्वात्मानं परं चापि विमोहिताः
जीवाभिमानी ब्रह्मा तु सर्वं वेद प्रजापतिः।
सोऽपि वेद हरिं नैव सम्यक्सैव हि सर्ववित्।

इत्यनेन सिद्धम्॥ २५॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

परापरकामेन निष्कामेण वा परमेश्वर एव भजनीयो नान्यस्तस्य मायाजीववशीकारिशक्तित्वादन्यस्य तन्मायाधीनतुच्छशक्तित्वादिति। स्वयाच्ञासिद्धिवैमुख्यं दर्शयंस्तदर्थं स्तुतिविशेषेणोपतिष्ठते। नम इति। अवितथेत्यव्यभिचारज्ञानेच्छाशक्ती दर्शिते। गुणत्रयेति। तादृशक्रियाशक्तिर्दर्शिता जीवमायानियन्तृत्वात्तासां तादृशशक्तीनां तत्तदतीतत्वेन स्वरूपभूतत्वं च तथापि गुणेषु सत्त्वादिष्वेव तत्त्वबुद्धिः कारणज्ञानं येषां तैरदृष्टं तर्कयितुमशक्यं किमुतानुभवितुमशक्यं धाम तादृशशक्तिप्रकाशोऽपि किमुत स्वरूपतत्पूर्णशक्तिर्यस्य तस्मै सर्वत्र हेतुः स्वप्रकाशायेति। गुणत्रयरूपाभासः स्वाज्ञानेनारोपो यस्मिन् स जीव इति जीवस्य चिद्रूपत्वे तदुदज्ञानस्पृष्टत्वाभासतो निकर्ष एव व्यक्तीकृतः। रश्मिस्थानीयत्वात्तस्य॥ २३—२४॥

देहेति। अन्यं देवतावर्गं परं पुमांसञ्च॥ २५॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

हंसगुह्येन स्तोत्रेण पूर्वसिद्धेनैव निगमेन न तु दक्षकृतेनेत्यर्थः कस्य दक्षस्य॥ २२॥

पराय जीवमायोभयाधिकेभ्य इत्यर्थः। कुतः अवितथानुभूतये सत्यानुभवाय गुणत्रयाभासो जीवः निमित्तं माया तयोर्बन्धने एवमपि गुणेषु तत्त्वबुद्धिर्येषां तैर्जीवैरदृष्टस्वरूपाय। तद्भिन्नैरपि सम्यगनवगम्यधामेत्याह निवृत्तो मामावधिः परिमाणसीमा यस्य तस्मै नहि तावद्गुणरूपैश्वर्यकः परमेश्वर इति कोऽपि वक्तुं शक्नोतीति भावः। यदुक्तं ब्रह्मणा "गुणात्मनस्तेऽपि गुणान् विमातुं हितावतीर्णस्य क ईशिरेऽस्य" इति। निवृत्तमानाय दधे इति पाठे मानं ज्ञानं दधे करोमि तदा नम इति कर्म पदं तर्हि कथं तस्य सिद्धिस्तत्राह। स्वयम्भुवे स्वप्रकाशाय॥ २३॥

अदृष्टधामत्वमुपपादयति। नेति। यस्य परमात्मनः सख्यं कारणप्रवर्त्तकत्वादिकं पुरुषो जीवो नार्थेति न जानाति अस्मिन्नेव पुरं देहे वसतोऽपि सख्युरपि आत्मारामत्वेऽपि सख्यादेव तत्कामितान् विषयान् भोजयितुः स्वयं सखापि तस्य तत्तत्सख्यमनुभवन्नपि अत्रैव देहे वसन्नपि नैव वेद व्यक्तदृष्टेरिति षष्ठ्यन्तपाठे बुद्धीन्द्रियादिप्रकाशादेव यद्विषयकं ज्ञानं व्यक्तमेव तस्यापीश्वरस्य प्रथमान्तपाठे तस्मादेव हेतोर्यत्कर्तृकं ज्ञानं व्यक्तमेव सोऽपि जीवः गुणः शब्दस्पर्शादिर्यथा गुणिनः श्रोत्रादेरिन्द्रियस्य सख्यं स्वमाधुर्यादिज्ञापनलक्षणं न वेत्ति तद्वत्॥ २४॥

ननु गुणो जडत्वान्न जानातु जीवस्तु चेतनः कथं न जानाति तत्र सर्वत्र चेतनोऽपि परमेश्वरे त्वचेतन एवेत्याह। देहश्च तत्स्था असवः प्राणाश्च अक्षा इन्द्रियाणि च मनयोऽन्तःकरणानि च भूतानि पृथिव्यादीनि च मात्राः शब्दादयश्च आत्मानं

यद्योपरामो मनसो नामरूपरूपस्य दृष्टस्मृतिसंप्रमोषात् ।
य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिसद्मने नमः ॥ २६ ॥
मनीषिणोऽन्तर्हृदि संनिवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः ।
वह्निं यथा दारुणि पाञ्चदश्यं मनीषया निष्कर्षन्ति गूढम् ॥ २७ ॥
स वै ममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः ।
स सर्वनामा स च विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः ॥ २८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वस्वरूपम् आत्मनां मध्ये अन्यमन्यस्वरूपम् आत्मभ्यः सर्वेभ्य एव परं जीवस्वरूपञ्च न विदुः । पुमान् जीवस्तु चेतनत्वात् स्वयम् आत्मानं देहादीन् गुणान् सत्वादीन्मूलभूतांश्च वेद जीवन्मुक्तप्वदशायां तं परमात्मानञ्च जानातीति तज्ज्ञः । तदपि सर्वज्ञं परमेश्वरं न वेद । ननु तज्ज्ञ इति ब्रूये तदपि न वेत्तीति कुतस्तत्राह । अनन्तम् अप्राकृतगुणानामनन्तानामज्ञानात्तदप्यज्ञानमेव यदुक्तम् "द्युपतय एव ते न ययुरन्तमनन्ततया" इति ॥ २५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तत्र विन्ध्यपादेषु ॥ २१ ॥

तद्धंसगुह्याख्यं स्तोत्रं यतो येन स्तोत्रेण कस्य दक्षस्य अनुष्यत्तुष्टोऽभूत् ॥ २२ ॥

पराय चेतनाचेतनेभ्यो विलक्षणाय नमः तत्राचेतनेभ्यः प्रकृतिकालादिभ्यः वैलक्षण्यमाह । गुणत्रयाभासनिमित्तबन्धये इति । गुणत्रयस्य आभास उन्मेषो यस्मात्तत् प्राधानं निमित्तं कालस्तयोः प्रकृतिकालयोर्बन्धवे नियन्त्रे अणुपरिमाणकेभ्यश्चेतनेभ्यो वैलक्षण्यमाह । निवृत्तमानावधये इति । निवृत्तो मानावधिः स्वरूपगुणपरिमाणसीमा यस्मात्तस्मै मुमुक्षुभ्यो ज्ञानप्रदोऽयमित्याह । अवितथा सत्यफला अनुभूतिरुपासकस्य यस्मात्तस्मै "ददामि बुद्धियोगन्तं येन मामुपयान्ति ते" इति श्रीमुखवचनात् नित्यबद्धानां बुभुक्षूणां दुर्ज्ञेयोऽयमित्याह । गुणतत्वबुद्धिभिः गुणाः विषया एव तत्वमिति बुद्धिर्येषां वैरदृष्टधाम्ने दुर्ज्ञेयस्वरूपाय अनन्यसिद्धत्वमाह । स्वयम्भुवे इति ॥ २३ ॥

बुभुक्षुजीवस्य कृतघ्नत्वमाह । पुरुषो भगवद्बहिर्मुखो जीवः पुरे देहे वसन्नपि यस्य अस्मिन्नेव पुरे सम्यग् वसतः सख्युर्हितकारिणः सख्यं हितकारित्वं स्थितिप्रवृत्त्यादिप्रदत्वं नावैति तस्मै नमस्करोमि कुत इत्यत्र हेतुगर्भविशेषणं व्यक्तदृष्टिः व्यक्ते संसारे एव दृष्टिर्यस्य सः यथा गुणो गुणकार्य्यो देहः गुणिनः देहिनः धारकत्वप्रकाशकत्वादिकं नावैति तद्वदयं भावः यथा देहस्य जडत्वाज्जीवस्वरूपगुणादिज्ञाने सर्वदायोग्यता तथा नित्यबद्धस्य संसारासक्तस्य जीवस्य चेतनत्वेऽपि भगवत्स्वरूपगुणादिज्ञानेऽयोग्यतेति ॥ २४ ॥

एतदेव वर्णयन्नित्यबद्धजीवदुर्ज्ञेयं भगवन्तं सर्वज्ञतया स्तौति । देह इति । सर्वज्ञमीडे स्तौमि मद्या इन्द्रियाणि मनवः मनोबुद्धिचित्ताहङ्काराः भूतान्याकाशादीनि मात्राश्च शब्दादितन्मात्राणि ।

आत्मानं स्वस्वरूपं न विदुः अन्यं स्वविलक्षणं परं देहेन्द्रियादिभ्यः श्रेष्ठं ज्ञानस्वरूपं यत्तत्वं जीवाख्यं तत्कुतो विदुः अचेतनत्वादेव विदुरित्यर्थः । पुमान् गुणतत्वबुद्धिर्नित्यबद्धो जीवः यतो ज्ञः ज्ञाता तत्तत्सर्वं सुखदुःखादिकं गुणान् विषयांश्च वेद अनन्तं परमात्मानं न वेद अहो तस्याभाग्यम् ॥ २५ ॥

---

### भाषा टीका ।

वहां पर पाप नाश करने वाला अघमर्षणनामक तीर्थ है तीनों काल वहां स्नानादि करके तपस्या से दक्षजी ने भगवान् का स्तुति किया ॥ २१ ॥

अधोक्षज भगवान् को हंसगुह्य स्तोत्र से उनने स्तुति किया सो हम तुमसे कहेंगे जैसें कि भगवान् दक्ष प्रजापति पर सन्तुष्ट भये हैं ॥ २२ ॥

दक्ष प्रजापति बोले यथार्थ ज्ञानवाले तीनो गुणों के आभास निमित्त जीव माया इनों के बन्धु आपके अर्थ नमस्कार है गुणविषयों में यथार्थ बुद्धि रखने वाले आपके स्वरूप कों नहीं जानते हैं आप सब परिमाणों से रहित हैं आप स्वयंभू हैं आपके अर्थ नमस्कार है ॥ २३ ॥

इस शरीर में निवास करने वाला सखा जीव जिस परमेश्वर सखा के सखाभाव को नहीं जानता है जैसें कि रूपादिक प्रकाशक चक्षु आदि के प्रकाशकपन को नहीं जानते हैं जो प्रपंच के देखने वाले हैं तिन आपके अर्थ नमस्कार है ॥ २४ ॥

देह प्राण इंद्रिय अंतःकरण पंचभूत तन्मात्रा ए सब अपने को भी नहीं जानते हैं दूसरं को भी नहीं जानते हैं पुरुष जीव है इन सबों को जानता है परंतु वह जीव भी जिनको नहीं जानता है तिन सर्वज्ञ अनंत आपको मैं स्तुति करता हूं ॥ २५ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अदृष्टधामत्वमुक्त्वा स्वप्रकाशत्वमाह । यदा मनस उपरमः समाधिर्न तु सुषुप्ताविवलयो न च जाग्रत्स्वप्नयोरिव विक्षेपः तत्र नामरूपे रूप्येते येन तत्तया तस्य उपरामे हेतुः दृष्टं दर्शनं स्मृतिस्तयोः सम्प्रमोषाल्लयात् तदा यः केवलेन स्वरूपज्ञानेन प्रतीयते तस्मै हंसाय शुद्धाय शुचि शुद्धं मनः सद्म प्रतीतिस्थानं यस्य तस्मै नमः ॥ २६ ॥

एवम्भूतः केषां प्रतीयत इत्यपेक्षायामाह । मनीषिण इति ।

यद्यन्निरुक्तं वचसा निरूपितं धियाक्षभिर्वा मनसा वोत यस्य ।
माभूत् स्वरूपं गुणरूपं हि तत्तत् स वै गुणापायविसर्गलक्षणः ॥ २९ ॥
यस्मिन् यतो येन च यस्य यस्मै यद्यो यथा कुरुते कार्यते च ।
परावरेषां परमं प्राक् प्रसिद्धं तद्ब्रह्म तद्धेतुरनन्यदेकम् ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्याम् । विवेकिनो यं निष्कर्षन्ति विविच्य ध्यायन्ति स निर्वाणानुभूतिर्मम प्रसीदतामिति द्वयोरन्वयः । एवं निष्कर्षतां प्रतीयत इति भावः । किमिति निष्कर्षन्ति स्वशक्तिभिर्गूढमप्रकाशमानं कतिभिर्नवभिः पुनश्च त्रिवृद्भिः त्रिगुणाभिः सप्तविंशत्युपाधिभिर्गूढमाविश्य निष्कर्षन्तीत्यर्थः । यद्वा नवभिः प्रकृतिपुरुषमहदहङ्कारपञ्चतन्मात्ररूपाभिः । त्रिवृद्भिस्त्रिगुणात्मिकाभिः चकारात्षोडशविकाररूपाभिश्च । कथम्भूतं निष्कर्षन्ति मनीषयान्तर्हृदि सन्निवेशितं निश्चलीकृतं पाश्चदद्यं पञ्चदशसामिधेनीमन्त्रैः प्रकाश्यमलौकिकं वह्निमिवाहङ्कारास्पदादात्मनोऽन्यं परमात्मानं निष्कर्षन्तीत्यर्थः ॥ २७ ॥

अशेषा विशेषा यस्यास्तया मायया निषेधेन निर्वाणानुभूतिर्यस्य अप्रसक्तनिषेधासम्भवात्प्रसक्तिमाह । स एव सर्वनामा स एव विश्वरूप इति । तद्रूपत्वेऽपि वास्तवत्वाभावान्निषेधः सम्भवतीत्याह । अनिरुक्ता आत्मनि शक्तिर्माया यस्य सः ॥२८॥

ननु यदि केवलया स्वसंस्थया प्रतीयते तर्हि सर्वनामत्वं विश्वरूपत्वं चानुपपन्नं वागाद्यगोचरत्वादित्याशङ्क्य सर्वनामनिर्वाच्यं प्रत्यक्षादिद्वयं च तस्य स्वरूपं वस्तुतो माभूत्तथापि मायया घटत इति श्लोकत्रयेणोपपादयन्नमस्करोति । यद्यदिति । यद्वचसा निरुक्तमभिहितं धिया निरूपितं व्यवसितमक्षभिर्वा इन्द्रियैर्निरूपितं गृहीतमुतापि मनसापि निरूपितं सङ्कल्पितं यस्य स्वप्रकाशत्वं तस्य तत्स्वरूपं माभूत् स्वरूपत्वाभावे हेतुः हि यस्मात्तद्गुणानामेव रूपं पाठान्तरे गुणैर्वर्धितम् स तु गुणव्यतिरिक्तः । यतो गुणानामपायविसर्गाभ्यां प्रलयोत्पत्तिभ्यां लक्ष्यत इति तथा चेतनाधिष्ठानं विना तयोरसम्भवात् । यद्वा । यस्य स्वरूपं माभून्न भवति तस्मै नम इति तृतीयेनान्वयः॥२९॥

तदेवं वस्तुतो गुणस्वरूपत्वाभावमङ्गीकृत्यानिरुक्तात्मशक्तिनिर्देशेन द्योतितं मायया सर्ववाच्यत्वेन विश्वरूपत्वमाह । सम्बन्धिकरणे यतोऽपादानाद्येन करणेन यस्य सम्बन्धि यस्मै सम्प्रदानाय यदीप्सिततमं यः कर्ता कुरुते स्वतन्त्रः कार्यते चान्येन प्रयोज्यकर्त्रा तद्ब्रह्मेति प्रत्येकं सम्बन्धः अत्र च यथेत्यन्तैः सप्तविभक्त्यर्था दर्शिताः यथेति च क्रियाप्रकारसम्बन्धप्रकारवाचिनामव्ययानामर्थाः कुरुते कार्यते चेति कर्तृकारकक्रियान्वयश्च सर्वेषां दर्शितः । चशब्देन भावकर्मादिविविधान्यर्थाः सङ्गृहीताः । तद्ब्रह्मैवेति कुतस्तत्राह । तद्धेतुः तेषां कारणं तत्कुतः सर्वेभ्यः प्राक्प्रसिद्धम् । ननु प्रधानादयस्तथा भूतेभ्योऽपरे च दृश्यन्ते तत्कथं ब्रह्मैव तद्धेतुरित्यत आह । परेषां चावरेषां हेतूनां परमं कारणम् । ननु सर्वकारणत्वे तस्य किं नाम कारणं भवेत्तदानीमन्यस्याभावात् सत्यं निरपेक्षमेव तत्कारणमित्याह । अनन्यद्विजातीयशून्यम् एकं सजातीयशून्यं च तस्मै नम इत्युत्तरेणान्वयः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वज्ञमित्यनेनाभिप्रेतं परमात्मनः सर्वज्ञत्वं जीवस्य परमात्मनां संश्लेषदशायामपि तदनभिज्ञतां चोपपादयति । यदेति । नामरूपरूपस्य देवमनुष्यब्राह्मणादिनामरूपकस्य मनसो यदादृष्टिस्मृतिसंप्रमोषादृष्टस्य स्मृतिः स्मरणं स्वप्नावस्थोच्यते तस्याः संप्रमोषान्निवृत्त्योपरामः सुषुप्तिः तदा यः परमात्मा ईयते प्राप्यते जीवेन समन्वितो भवति "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चनवेद नान्तरम् एष सुप्तेषु जागर्ति" इति श्रुत्यर्थोऽत्र विवक्षितः जीवस्याप्रबोधेऽपि परमात्मा प्रबुद्ध इत्यर्थः सर्वथा दुर्ज्ञेयत्वेऽनुपास्यत्वं स्यादिति शङ्कां वारयति । यदेति । केवलया इत्यनुषज्यते यश्च केवलया रागादिकालुष्यरहितया स्वसंस्थया स्वाभाविकज्ञानेनेयतेऽवगम्यते प्राप्यते वा तस्मै हंसाय शुद्धाय शुचिसद्मने शुद्धान्तःकरणसद्मने उपासनविशुद्धान्तःकरणे संनिहितायेत्यर्थः । यद्वा । केवलया स्वसंस्थया हंसाय विशुद्धाय रागाद्यकलुषितेनापरिच्छिन्नानन्दरूपविषयकानित्यासङ्कुचितापरिच्छिन्नधर्मभूतज्ञानेन विशुद्धायास्पृष्टचिदचिद्धर्माय शुचिसद्मने उपासनया परिशुद्धमन्तःकरणं सद्म अभिव्यक्तिस्थानं यस्य तस्मै इत्यर्थः "हंसः शुचिषद्" इति श्रुत्यर्थोऽत्राभिप्रेतः ॥ २६ ॥

शुचिसद्मन इत्येतदेव प्रपञ्चयति । मनीषिणा इति । त्रिवृद्भिः त्रयाणां वृद्वर्त्तनं यत्र तास्त्रिवृत्त्रिकमित्यर्थः तद्रूपाभिस्त्रिकत्रयमापन्नाभिरिति यावत् नवभिः शक्तिभिः । "श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया । विद्ययाविद्यया शक्त्या मायया च निषेवितम्" इति वक्ष्यमाणाभिः शक्तिभिः कार्योपयोग्यपृथक्सिद्धविशेषणरूपाभिः शक्तिभिः सहान्तर्हृदि संनिवेशितं स्वेच्छया संनिविष्टं गूढं बाह्यैः करणैरग्राह्यम् अनेन "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा" इति श्रुत्यर्थोऽत्र विवक्षितः दुर्दर्शं मनसा ग्रहीतुमशक्यं गुहायां हृदये निहितं गह्वरे जीवे निष्ठतीत्यन्तरात्मतयेति तथा यं मनीषिणः परमात्मयाथात्म्यविवेचनकुशलाः मनीषया योगपरिशुद्धया धिया निष्कर्षन्ति प्रकृतिपुरुषाभ्यां विविच्य पश्यन्तीत्यर्थः यथा मथना मथनसाधनेनोत्तरारणिना दारुणधस्तनारणौ पाश्चदश्यमग्निं निष्कर्षन्ति तद्वत्पाश्चदश्यं पञ्चदशीयकर्मसंबन्धिनं दर्शपूर्णमासानुष्ठानं हि पञ्चदश्युपक्रममग्न्याधानमपीति वैदिकोऽग्निः पाश्चदश्य इत्युच्यते यं निष्कर्षन्ति स धा इत्युत्तरेणान्वयः ॥ २७ ॥

एवमुक्तविधं परमात्मानमन्येद्य तदसाधारणैर्धर्मैर्विशिंष्टं स्तवन्ननुग्रहं प्रार्थयते । स वा इति । स वै उक्तविधो भगवानशेषाः सर्वे विशेषा विकारा यस्यास्तया मायया निवृत्त्या याश्रैवा-

## श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका

णासुखं दुःखासंभिन्नं मोक्षसुखं तस्मिन्ननुभूतिरनुभवो यस्य मुक्तानामनुभवविषय इत्यर्थः य ईदृशः स एव सर्वनामा सर्वैः शब्दैर्वाच्य इत्यर्थः सर्वशब्दनाम यस्येति वा "सर्वः शर्वः शिवः स्थाणुः" इतिनाम पाठात् सर्वशब्दप्रवृत्तिनिमित्तपौष्कल्याश्रय इत्यर्थः सर्वनामत्वे हेतुः स च विश्वरूप इति विश्वशरीरकत्वात् सर्वशब्दवाच्य इति भावः। विश्वान्तर्गतवस्तुवाचिनः शब्दास्तच्छरीरं तमेवाभिदधति शरीरवाचिनां शब्दानां शरीरिपर्यन्तबोधनशक्तेः यद्वा। सर्वशब्दस्य कृत्स्नजगद्वाचित्वात् तस्य च तच्छरीरत्वात्प्रवृत्तिनिमित्तपौष्कल्येन तमेवाभिधत्त इति भावः। ननु विश्वरूपत्वं परगतधर्मासंस्पर्शनं चेति कथमुभयं तत्राह। अनिरुक्तात्मशक्तिः वाङ्मनसापरिच्छेद्याः स्वाभाविक्यः शक्तयो यस्य सः विचित्रशक्तित्वात्तदुभयोपपत्तिरिति भावः। एवंभूतो भगवान् मम प्रसीदतां मामनुगृह्णात्वित्यर्थः ॥ २८ ॥

ननु यदि विश्वं तस्य शरीरं न तु स्वरूपं तर्हि केन लक्ष्यते इत्यत्राह। यद्यदिति। यद्यद्वचसा निरुक्तं शब्देनाभिहितं जातिगुणादिकं प्रवृत्तिनिमित्तीकृत्य शब्देन बोधितं तथा धिया निरूपितं व्यवसितमक्षभिरिन्द्रियैर्गृहीतमुतापि मनसा निरूपितं सङ्कल्पितं यद्यपि यस्य स्वरूपं माभून्न भवति किन्तु शरीरमेवेति भावः। वचआदिभिर्निरुक्तादेस्तत्स्वरूपत्वाभावे हेतुः गुणरूपहेत्विति गुणरूपाः सत्त्वादिगुणात्मका हेतवो यस्य तद्गुणरूपहेतु सत्त्वादिगुणत्रयकार्यं सत्त्वादिगुणगतमेव न तु तत्स्वरूपगतोऽसाधारणो धर्मो येन तदुपलक्ष्यं परमात्मस्वरूपं स्यात् गुणरूपं हि तदिति पाठे हि यस्मात्तद्गुणानामेव रूपं गुणरूपं वर्द्धितमिति पाठान्तरे गुणरूपैः सत्त्वादिगुणगतैरसाधारणाकारैर्वर्धितमारब्धमित्यर्थः तथाप्यसौ परमात्मा गुणापायविसर्गलक्षणः गुणकार्यभूतप्रपञ्चस्य संहारसर्गौ लक्षणं यस्य तथोक्तः अपायविसर्गाभ्यां स्थितिरपि लक्ष्यते यद्यपि कार्यात्मकं जगन्न परमात्मनो लक्षणं तथापि कार्यप्रपञ्चगतोत्पत्तिस्थितिप्रलयकारणत्वं परमात्मनोऽसाधारणो धर्म इति तेन तत्स्वरूपमुपलक्ष्यते इत्यर्थः। प्रपञ्चजन्मादिकारणत्वमपि न परमात्मनः स्वरूपविशेषणतया लक्षणं कारणत्वस्य चिदचिद्विशिष्टब्रह्मनिष्ठत्वेन विशेष्यभूतब्रह्मस्वरूपनिष्ठत्वाभावात्। किं तु चन्द्रादेः शाखाग्रादिवत्तदुपलक्षणतया लक्षणमिति बोध्यम् ॥ २९ ॥

ननु देवमनुष्यादिशरीरनिर्वर्त्यं कर्म तदात्मभूतजीवकर्तृकं तद्बन्धकं च दृष्टं यत्तस्य सुखदुःखादिवच्चेतनधर्मत्वादेवं कृत्स्नं चिदचिदात्मकं जगत् परमात्मनः शरीरञ्चेत्तद्व्यापारोऽप्यनेककारकनिर्वर्त्यः परमात्माश्रय एव स्यादिति तथा सति स बध्येत तथा च "निष्क्रियं निष्कलम्" इत्यादिश्रुतिविरोधः। किञ्चैकस्य चेतनस्यैकदैकमेव शरीरं दृष्टमतः कथमेकस्य परमात्मनो देवमनुष्याद्यनेकानि शरीराणीति न विश्वरूपत्वं परमात्मनः सम्भवति यद्यसौ कारणत्वात् कार्यभूतविश्वरूपः कार्यकारणयोरभेदादित्युच्यते तर्हि वचआदिभिर्निरुक्तादिकं तस्य स्वरूपमेव स्यात् परिणामिकारणस्याधिष्ठात्रपेक्षत्वदर्शनात्तस्याप्यधिष्ठात्रपेक्षेति पूर्वोक्तपरत्वविरोध इत्याद्याशङ्कां निराकरोति। यस्मिन्निति। तावदनेककारकनिर्वर्त्यस्य व्यापारस्य परमात्मायत्तत्वमभ्युपगम्यत एतेभि न तच्चोदनीयमित्याह। यस्मिन्निति पूर्वार्धेन। तत्र यस्मिन्नित्यादिभिर्विभक्तिभिरधिकरणोपादानकरणसम्प्रदानकर्मकर्तृशक्तयो विवक्षिताः यस्येति षष्ठ्या तु सम्बन्धसामान्यं कुरुते इति प्रयोजककर्तृशक्तिः कार्यत इति प्रयोज्यकर्तृशक्तिः यदेत्यनेन कालः उक्तशक्तीनां कालोपाधिकत्वात्। यथेति पाठे तूक्तकारकशक्तिगताः प्रकारविशेषा विवक्षिताः क्रियते कार्यते चेति कृञ्धातुना तत्कारकनिष्पाद्या क्रिया विवक्षितेति तत्तत्कारकाश्रयत्वकृताः क्रियागतविशेषा वा निर्दिश्यन्ते यस्मिन्नित्यादीनां तु तदित्युत्तरेणान्वयः सप्तम्यादिविभक्तिप्रकृतिभूतैर्यच्छब्दैरधिकरणादिकारकशक्त्याश्रयाणि वस्तूनि विवक्षितानि कुरुते कार्यते चेत्यत्र लकारेण प्रयोज्यप्रयोजककर्तृशक्त्याश्रयं द्रव्यमपि विवक्षितं लकाराणां कृतिमत्येव शक्तिरित्यन्यत्र विस्तरः। सुप्तिङन्तस्थले च प्रकृत्यर्थविशेष्यकः शाब्दबोधः। एवं च तत्तद्व्यापारनिर्वर्तकाधिकरणादिशक्त्याश्रयाणि द्रव्याणि सम्बन्धसामान्याश्रयत्वं च तद्ब्रह्मेत्यर्थः शक्त्याश्रयवस्तूनां परमात्मशरीरत्वेन विशेषणत्वात्तस्यैव मुख्यत्वेन कारकशक्त्याश्रयत्वादाधारशक्त्याश्रयत्वात् सर्वस्य व्यापारस्य तदायत्तत्वमुपपन्नमिति भावः। नन्वेवं कारकशक्त्याश्रयत्वप्रयुक्तं परमात्मनः सक्रियत्वं तत्प्रयुक्तं कार्यत्वं तत्प्रयुक्तमनित्यत्वं च प्रसज्येत तथाच "निष्क्रियं निष्कलं नित्यं विभुम्" इत्यादिश्रुतिविरोधः अत आह। प्राक् प्रसिद्धमिति। हेतुरिति च। हेतुः प्राक्प्रसिद्धमित्यनेन कार्यास्थायाः पूर्वं कारणत्वेनावस्थितत्वमुच्यते। अयं भावः। तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इत्यादिप्रमाणवशात् कार्यस्य जगतः चिदचिदीश्वरात्मकत्वमभ्युपेत्यं कार्यसजातीयत्वाच्च कारणस्य तदपि तत्त्वत्रयात्मकमेव युक्तिबलात् "सदेव सोम्येदमग्र आसीत् प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इत्यादिप्रमाणबलाच्चाभ्युपगन्तव्यं तत्र कार्यावस्थायां कारणावस्थायां च "यः आत्मनि तिष्ठन् यः पृथिव्यां तिष्ठन् योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं योऽव्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरम् "इत्यादिप्रमाणबलादात्मत्वेन परमात्मनो विशेष्यत्वं चिदचितोः शरीरत्वेन विशेषणत्वं चेषितव्यम्। एवं च कारणत्वेनावस्थितं ब्रह्म सूक्ष्मचिदचिद्विशिष्टं कार्यावस्थायां स्थूलचिदचिद्विशिष्टत्वेनावस्थितमिति कारकशक्त्याश्रयत्वस्य तस्य तस्मिन् शरीरभूतचिदचिदात्मकत्वात्तत्प्रयुक्तं सक्रियत्वादिकमपि सद्वारकमेवेति विशेष्यभूते तस्मिन्न तस्य साक्षात् प्रसङ्गः निष्क्रियत्वादिश्रवणं तु विशेष्यभूतब्रह्मस्वरूपाभिप्रायकमिति न तद्विरोधः। कार्यावस्थकारणावस्थयोस्तस्य चिदचिच्छरीरकत्वादेव विश्वरूपत्वमप्युपपन्नम्। "एषोऽणुरात्मा" इदिश्रुतिवशाज्जीवस्याणुपरिणामत्वावगमात्तस्यैकदानेकशरीरान्तःप्रवेशासम्भवेऽपि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुत्या तत्स्वरूपस्यापरिच्छिन्नत्वावगमात्तस्यानेकशरीरेषु जीवान्तःप्रवेशेन नियमनं सम्भवतीत्यनेकशरीरकत्वोपपत्तिः कार्यावस्थायां कारणावस्थायां च चिदचिच्छरीरकत्वाद्विश्वरूपत्वमपि तस्योपपन्नम्। ननु विश्वरूपत्वं नाम विश्वं रूपं शरीरं यस्य तस्य भावस्तत्त्वमिति न विवक्षितं तथा सति "सर्वं खल्विदं ब्रह्म" ऐतदात्म्यम् इत्यादिजगद्ब्रह्मतादात्म्यश्रवणविरोधापत्तेः। किं तु विश्वरूपत्वं नाम विश्वानन्यत्वमेव एवं च नमः परायेत्युपक्रान्तपरत्वविरोधस्तत्राह। अनन्यदिति। विश्वानन्यदित्यर्थः विश्वरूपत्वं विश्वानन्यात्मकत्वेऽपि न विरोधः। यत्प्राक् प्रसिद्धं कारणं सूक्ष्मचिदचिद्विशिष्टं तदेव कार्यावस्थायां स्थूलचिदचिद्विशिष्टमिति कस्यैवावस्थाद्वययोगित्वेन कारणावस्थकार्यावस्थयोरैकद्रव्य-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

त्वेन विश्वानन्यत्वोपपत्तेः अनेनासत्कार्यवादव्युदासः तथाच शारीरकं सूत्रम्। तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ २ ॥ १ ॥ १५॥ इति।

उपक्रान्तं परत्वं तत्प्रयुक्तं निःसमाभ्यधिकत्वं च विशेष्यनिष्ठमित्यभिप्रायेण परमं परावरेषामिति चोक्तं परावरेषां ब्रह्मादिजीवानामपि परं कारणमात्रस्याधिष्ठात्रपेक्षत्वशङ्कां वारयति। एकमिति। निस्समाभ्यधिकमेकमेव प्राक्प्रसिद्धमित्यर्थः इदं चैकत्वं स्वरूपनिष्ठमिति विशेष्याकारेण निमित्तत्वं विशिष्टाकारेण उपादानत्वमित्युक्तं भवति। लोके मृत्कुलालयोर्जडत्वादसर्वशक्तित्वाच्च तयोर्निमित्तोपादानयोर्भेदः परमात्मनस्तु चिदचिद्विशिष्टस्य सर्वशक्तित्वाज्जगदाकारेण परिणामस्य सर्वज्ञत्वान्निमित्तत्वस्य चोपपत्तिरित्यभिप्रायः। यद्वा। तद्धेतुरित्यनेन निमित्तकारणत्वमुच्यते एकमित्यनेनैकमेवाद्वितीयमित्यादावविभक्तनामरूपसूक्ष्मचिदचिद्विशिष्टत्वमुच्यते प्रपञ्चस्यानेककारकात्मत्वेन बहुत्वस्य पूर्वमुक्तत्वात्तस्य च नामरूपविभागनिबन्धनत्वात्तत्प्रतिसम्बन्धिनामरूपविभागाभावनिबन्धनैकत्वस्यैकपदग्राह्यत्वौचित्यात् तथाचैकमविभक्तनामरूपत्वेन सूक्ष्मचिदचिद्विशिष्टं ब्रह्म प्राक्प्रसिद्धमित्यर्थः ब्रह्मेत्यनेन निमित्तत्वोपादानत्वोपयुक्तसार्वज्ञ्यसत्यसङ्कल्पत्वादिगुणानन्त्यरूपनिरतिशयबृहत्त्वमुच्यते ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अनुमानतोऽपि तज्ज्ञानं सुकरमित्याह। यदेति। यदा स्वप्नसुषुप्त्यादौ नामरूपरूपस्य नामरूपात्मकप्रपञ्चापादकस्य मनसो ऽस्मृतिसंप्रमोषाच्चाक्षुषस्मरणलक्षणज्ञाने प्रमुष्णापहृत्योपरामः निर्व्यापारावस्था तदा यः केवलया स्वसंस्थया ईयते जीवस्वातन्त्र्यात् स्वप्नावबोधादिदर्शनाच्च जीवेच्छाराहित्येन शुद्धया स्वरूपसत्तया स्वप्नादिनियामकत्वेन जीवादन्य ईश्वरोऽस्तीति ज्ञायत इत्यन्वयः। तस्मै हंसाय नित्यशुद्धाय ब्रह्मरूपाय वा नम इत्यविद्याधिष्ठानेन च भाव्येति अतस्तद्भावमाह। शुचिसद्म इति। शुचिर्वायुरेव सद्म निवासस्थानं यस्य स तथा तस्मै नामरूपात्मकप्रपञ्चविषये जीवस्य चाक्षुषमानसाज्ञानापहाराद्वा।

> यदोपरामो मनसः स्वप्नसुप्त्यादिषु।
> तदावस्थाप्रबोधादिकारणत्वेन केशवः ॥
> अस्वातन्त्र्यात्तु जीवस्य विद्यतेऽन्यो नियामकः।
> जीवप्रवृत्त्यनुकूल्याज्ज्ञायतेऽसौ सदा विभुः ॥

स्वप्रमाणानुगृहीतव्याप्तिकत्वाल्लिङ्गमव्यभिचारीति भावः ॥२८॥

विश्वस्य स्वानुगृहीतत्वाच्च लिङ्गं बलिष्ठमित्याशयेनाह। मनीषिण इति। मनोनियमनसमर्थाः मनीषिणः मनीषयान्तर्हृदि सन्निवेशितं सन्तं निष्कृषन्ति निष्कृष्य जानन्तीत्यन्वयः कथमिव अग्निविदो दारुणि गूढं वह्निं निर्मथ्य जानन्ति यथा तथा इह जीवराशिष्वन्तर्हितमिति शेषः। त्रिवृद्भिः इच्छाज्ञानक्रियात्मना त्रिधा नवाभिव्यञ्जिभिर्विमलोत्कर्षणीज्ञानक्रियेत्याद्विनवत्वसंख्याविशिष्टैः स्वरूपभूताभिः शक्तिभिर्लक्षितामिति शेषः। दशेन्द्रियमनोबुद्धिप्राणप्रधानाख्यानि चतुर्दशतत्त्वानि तेभ्य उत्तमत्वेन पञ्चदशाश्रयत्वात्पाञ्चदश्यं मनोबुद्ध्यहङ्कारचित्तचेतनभेदेन तत्प्रेरकतया स्थितत्वाद्वा। तदुक्तम् "इच्छादित्वेन त्रिविधा विमलाद्यास्तु शक्तयः" इति चशब्दात्तद्भिन्नास्तज्जाताश्चान्याः सन्तीति ग्राह्यं तदप्युक्तम्—

> विष्णोः स्वरूपभूतायास्ताभ्यस्तन्नामिकाः पराः।
> जायन्ते तत्प्रसादेन ताश्च पीठेऽभिपूजयेत् ॥
> तद्भिन्नजीवास्तस्यैव प्रसादात्तत्समीपगाः।

इति अनेन नवभिः नवद्वाराभिव्यक्ताभिः त्रिवृद्भिः गुणत्रयात्मभिरित्येतन्निरस्तम्। दशेन्द्रियाद्याश्रयत्वेन पाञ्चदश्य इति व्याख्यातं तत्र किं मानमितीयमाशङ्का।

> दशेन्द्रियाणि च मनोबुद्धिप्राणप्रधानकाः।
> चतुर्दशेषां परमः पाञ्चदश्यो हरिः स्मृतः ॥
> बुद्धिभेदेन चैतेषु पाञ्चदश्योऽथ संस्थितः।

इत्यनेन परिहर्तव्या। अनेन पञ्चदशीति सङ्ख्यातिथौ वर्तमानत्वात्पाञ्चदश्यमित्येतदपव्याख्यानं निरस्तमिति ज्ञातव्यम् ॥ २७ ॥

यो मनीषिभिर्निर्मथ्य ज्ञातः स हरिर्मम प्रसीदतामित्यन्वयः किमन्येभ्यो विशिष्य अस्य प्रसादः प्रार्थ्यते "प्रजापते! न त्वदेतान्यन्य" इत्यादिश्रुतेः अन्येषामप्यतिशयितमाहात्म्यप्रतीतेरित्याशङ्क्य "एष ह्येव शतानन्दः" इत्यादिश्रुतेः इतरेषामानन्दादेरियत्ताविशिष्टत्वात् "एतस्यानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति न ते विष्णो! जायमानः" इत्यादिश्रुतेः। अस्यापरिच्छिन्नानन्दानुभवरूपत्वादित्याह। अशेषेति। अशेषो विशेषः इयत्ताख्यः अशेषविशेषः स च मायाप्रकृतिश्च ते अशेषविशेषमाये तयोर्निषेधो यस्य तत्तथा तच्च निर्वाणमशरीरभोग्यं च यत् सुखं तस्याशेषविशेषमायानिषेधनिर्वाणसुखस्यानुभूतिः एतादृशानन्दोऽहमिति स तथा अपरिमिताप्राकृतशरीरभोग्यानन्दानुभवरूप इत्यर्थः।

> इयत्ता तु विशेषः स्यादानन्दादौ तदुज्झितः।
> सर्वैर्विशेषै रहित उच्यते हरिरव्ययः ॥
> अप्राकृतस्वरूपत्वान्निर्मायश्चेति कथ्यते।

इति अतोऽयमेवार्थ इति ज्ञायते प्रजापत्यादिशब्दमुख्यार्थोऽपि अयमेवेति भावेनाह। स सर्वनामेति। अनेनोपन्यस्ता (१) श्रुतिः सावकाशेति ज्ञातव्यम् "यो देवानाम्" इति श्रुतेश्च नीरूपस्य सर्वनामत्वं कथमित्यत उक्तं स चेति विश्वानि रूपाणि यस्य स तथा विश्वस्य रूपमिव रूपं यस्येत्यत्र विश्वरूपसदृशो विश्वरूप इति अन्यथा योज्यम्। ननु प्रतीतार्थं परित्यज्य अप्रसिद्धार्थकल्पने किं कारणमित्यतश्चशब्दसूचितायाः।

> तद्रूपसदृशं रूपं यतः सर्वस्य सर्वदा।
> सर्वरूपो यतः शब्दमुख्यार्थः सर्वनामकः ॥

इति स्मृतेः समाख्यानं कारणं स स इति तच्छब्दद्वयेन तत्तच्छब्दमुख्यसर्वनामत्वसर्वरूपत्वे परामृशति। नन्वदृष्टत्वादेकस्य सर्वनामत्वादि कथं युज्यते न च श्रौतत्वाद्युक्तिमत्। श्रुतीनामनन्तत्वेनैकत्रान्यथोक्तिसम्भवादिति तत्राह। अनिरुक्तेति। "विचित्रशक्तिः पुरुषः पुराणः" इति श्रुतेः "गतिसामान्यात्" इति सूत्रेण श्रुतीनामेकविषयत्वेन ज्ञानोत्पादनधर्मत्वस्य निर्णीतत्वात्। ननु हरेः सर्वनामत्वे "अवचनेनैव प्रोवाच" इत्यादिश्रुतेः का गतिरित्यतो वाह। अनिरुक्तेति। सर्वात्मनेति शेषः। अनिर्वाच्या स्वकीया ज्ञानशक्तिः।

---

(१) प्रजापते न त्वदित्यादि।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इत्येतच्छ्रुतेर्गुणाविर्भावलक्षणायाः दोषाविष्कारोक्त्यसम्भवेना-सङ्गतं स्यादिति अलौकिकत्वाच्चो विष्णुरनिरुक्तो निरूपितः तथापि वेदैरुक्तत्वादुक्तो रूपी स एव चेतिवाक्यविरुद्धत्वाच्चोक्त एवार्थः॥ २८॥

स च विश्वरूप इति विश्वरूपोक्तिं विशदयति। यद्यदिति। वचसा घटत इति निरुक्तं धियाऽक्षभिर्मनसा निरूपितं यद्यत्तत्तदस्य हरेः स्वरूपं माभूत्र भवति कुतः (१) सत्त्वादिगुणसमूहेन वर्धितत्वात्तर्हि स कीदृश इति तत्राह। स वा इति। सत्त्वादिगुणानामपायः राहित्यमेव निसर्गलक्षणं स्वाभाविकलक्षणं यस्य स तथा वा इत्यनेन "केवलो निर्गुणश्च" इति श्रुतिं प्रमाणयति अनेन जगद्रूपं त्रिगुणात्मकं भगवद्रूपमप्राकृतमिति निरणायि माभूदित्यनेन जगत् साक्षाद्भगवद्रूपं न जानीहीत्यर्थोऽपि सूचित इति ज्ञातव्यम्॥ २९॥

कालकारणत्वं च ब्रह्मणः स्वरूपलक्षणमित्याह। यस्मिन्निति। यस्मिन्नधिकरणभूते काले इदं वर्तते यतो यस्मादपादानभूतात्कालाद्भूयेन कारणभूतेन कालेन जायते यस्य सम्बन्धभूतस्य कालस्याधीनमिदं यस्मै संप्रदानभूताय कालाय कल्पते यं कर्मभूतं कालं प्रतीक्षते यः कर्तृभूतः कालः प्रेरयति यथा येन प्रकारेण पुरुषः कर्म कुरुते स्वयं वापरेण कार्यते तत्तस्य सप्तविभक्त्यर्थस्य कालस्य प्रकाराणां प्रेरकस्य च यत् परावरेषां ब्रह्मादीनां सकाशात् प्राक्पूर्वं स्वसिद्धं कार्यकारणात्मकप्रपञ्चव्यतिरिक्तत्वेन स्वत एव सिद्धम्। अत एव परममत्युत्तमम् अनन्यदन्यसादृश्यरहितम्। एकमवतारादिरूपाभिन्नं तद् ब्रह्म हेतुः कारणमित्यन्वयः। तत्तत्कालस्य सदातनसत्ताप्रदत्वमस्यैव नान्यस्येति द्योतनाय सप्तविभक्त्यर्थत्वेन कालो विशेषितः। अन्यथा कालस्य कारणं ब्रह्मेति कृतं स्यादिति तदुक्तम्"सर्वसत्ताप्रदत्वतः"इति तत्तत्कालीनसर्ववस्तुसत्ताप्रदत्वाद्वा कुतस्तत्कल्प्यत इति चेत् विभक्त्यर्थस्य कालस्य प्रकाराणां च कारणम्। एक एव परो विष्णुः" इति स्मृतेः अयमेवार्थो न तु यस्मिन्नित्यादिना क्रियमाणकारकफलरूपेण ब्रह्मैवावस्थितमिति "अनन्यः सदृशाभावादेको रूपाद्यभेदतः" इति वचनादनन्यदेकशब्दयोरुक्त एवार्थः॥ ३०॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

स्वसंस्थया स्वरूपशक्त्या॥ २६॥

मनीषिण इति युग्मकम्। निवृत्तनवशक्त्यतीतत्वे सति कथं स्वतो निःशक्तिक एवाहं नेत्याह। अशेषेति। अनुभूतिरवश्यं मन्तव्या तां विना पुरुषार्थस्यासिद्धेः। तस्यां च मन्तव्यायां तल्लक्षणाखण्डापि स्वरूपशक्तिः सिद्धचत्येवेति भावः। तथैवाह। प्रसीदतामिति। ननु ताभ्यो निष्कृष्टश्चेत् कथं तन्मयसर्वनामरूपः तत्राह। अनिरुक्तेति। अचिन्त्यशक्तित्वादित्यर्थः॥ २७॥ २८॥

ननु मम यन्निर्वाणसुखैकरूपं ब्रह्माख्यं स्वरूपं तस्यानुभूतिकमेव भवतीतिनिवृत्तनवशाक्तिकं भवतु। यत्तु गुणरूपबृंहितं स्वरूपं तत्तु तन्मयमेव भवेत्। जगत् सादृश्यात्तत्राह। यद्यदिति त्रिकेण। गुणैरूपैश्च बृंहितम् असमोर्ध्ववृहत्तमं यत् स्वरूपं तदपि। वचनादिगोचरो यद्यद्वस्तु तन्न भवति तत्र हेतुः। स वै इति। सगुणरूपबृंहितस्वरूपस्त्वं गुणप्रलयसृष्टिभ्यां लक्ष्यते तर्क्यत एव नत्वनुभूयत इति। यद्वा। गुणानामपायोऽपगमो यस्मात्तस्मिन् विसर्गे नित्यसिद्धे वैकुण्ठे लक्ष्यते तदधिष्ठातृत्वेन दृश्यत इति॥२९॥

तदेव दर्शयति। यस्मिन्निति। यदिति यत्र विवदमानानां सत्ताश्च वादिनां तत्सद्भावेऽपि तादृशवस्तुतर्कतच्छक्तय एव कारणत्वेनोपस्थिता इत्याह। यच्छक्तय इति। अत एवानन्तगुणत्वं भूमत्वं च तस्येत्यर्थः॥ ३०॥ ३१॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ननु तज्ज्ञोऽपि न वेदेति यदुक्तं तत्र तदेव वेद्यं वस्तु द्विविधं सुज्ञेयं दुर्ज्ञेयं च। तत्र सुज्ञेयं निर्विशेषस्वरूपमाह। यदेति। यदा मनस उपरामः उपरामातिशयः समाधिः। ननु सुषुप्ताविव लयः। नच जाग्रत्स्वप्नयोरिव विक्षेपः कीदृशस्य नामरूपे रुध्येते येन तस्य। उपरामातिशये हेतुः दृष्टं दर्शनं स्मृतिश्च तयोः सम्प्रमोषात् सम्यक्तयैव नाशात् तदा यः केवलया स्वस्य संस्थयैव निर्विशेषज्ञानगम्यतया वस्तुमात्रत्वेनेत्यर्थः। ईयते प्रतीयते तस्मै हंसाय शुद्धाय शुचि शुद्धं चित्तं सद्म प्रतीतिस्थानं यस्य तस्मै। एतत् स्वरूपस्य सुज्ञेयत्वमुक्तं ब्रह्मणा यथा। "तथापि भूमन् महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलान्तरात्मभिः" इति॥ २६॥

दुर्विज्ञेयं सविशेषस्वरूपमाह। मनीषिणः शुद्धभक्ताः गृहं अन्तर्हृदि सन्निवेशितं "प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्" इत्युक्तरीत्या श्रवणभक्त्या अन्तर्हृदि प्रवेशितं पुनर्मनीषया प्रेमभक्त्युत्थया निष्कर्षन्ति। अन्तर्हृदयान्निष्कृष्य चक्षुरादिभिरिन्द्रियैः सौन्दर्यादिमाधुर्यमास्वादयन्तीत्यर्थः। कीदृशं सन्तं निष्कर्षन्ति स्वशक्तिभिश्चिच्छक्तिभिः सहितं कतिभिर्नवभिर्विमलाद्याभिः तत्रापि त्रिवृद्भिश्चिच्छक्तेरेव तिसृभिर्वृत्तिभिः ह्लादिनीसन्धिनीसम्विद्भिश्च सहितम्। यदुक्तम्। विष्णुपुराणे "ह्लादिनी सन्धिनी सम्वित् त्वय्येका सर्वसंश्रये। ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते"इति। यथा दारुणि काष्ठे पावकदृश्यं पञ्चदशसामिधेनीमन्त्रैः प्रकाश्यमलौकिकं वह्निं निष्कर्षन्ति स प्रसीदतामित्युत्तरेणान्वयः। अस्य सविशेषस्वरूपस्याप्राकृतानन्तगुणस्य दुर्विज्ञेयत्वं भक्तिहीनैरनुभवितुमशक्यत्वात् भक्तैरनुभूयमानत्वेऽपि माधुर्यैश्वर्ययोः पाराज्ञानात्। यदुक्तं ब्रह्मणैव। "गुणात्मनस्तेऽपि गुणान् विमातुं हितावतीर्णस्य क ईशिरेऽस्य। कालेन यैर्वा विमिताः सुकल्पैर्भूपांशवः खे मिहिका द्युभासः" इति॥ २७॥

यत्तु तस्य मायिकं सविशेषं रूपं तद्व्यतिरिक्तं ममोपास्यमित्याह। स मम प्रसीदताम्। अशेषा विशेषा यस्मात्तस्या मायाया निषेधेन यन्निर्वाणसुखं वाणी इन्द्रियाणि आध्यात्मिकादिदुःखशराः केऽपि न सन्ति यत्र तस्मिन्नेव सुखं अनुभूतिर्यस्य सः "ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते" इति वैष्णवोक्तेः। अप्रसक्तनिषेधासम्भवात् प्रसक्तिमाह। स एव सर्वनामा स एव विश्वरूप इति ब्रह्मादितृणान्तानां यानि नामानि मायिकविश्वरूपाणि तानि तस्यैवेत्यर्थः। मायायास्तच्छक्तित्वेन मायिकस्यापि तद्रूपत्वात् तस्य स्वरूपभूता शक्तिस्तु मायातत्कार्याभ्यां विश्वस्माद्भिन्नैवेत्याह। अनिरुक्ता मायिकवाङ्मनसाभ्यामुक्तिविषयीभूता आत्मभूता शक्तिर्यस्य सः॥ २८॥

(१) हेतुगर्भविशेषणमित्यभिप्रायः।

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वाग्बुद्ध्यादिकन्तु सर्वं मायिकमेव तेन निरूपितमपि सर्वं
मायिकमेव भवेत् । तत्तु न तत्स्वरूपमित्याह । यद्यदिति । यद्यद्व-
चसा निरुक्तमभिहितं धिया निरूपितं व्यवसितम् अक्षभिर्वा इन्द्रियै-
र्निरूपितं गृहीतम् उत अपि मनसापि निरूपितं सङ्कल्पितं तत्तत्
सर्वं यस्य स्वरूपं माभूत् न भवति तस्मै नम इति तृतीयेनान्वयः ।
यतस्तद्गुणानामेव रूपम् गुणावृंहितं हि तदिति पाठे गुणो-
पबृंहितं स तु गुणव्यतिरिक्त इत्यर्थः । यतः गुणानाम् अपाय-
विसर्गाभ्यां प्रलयोत्पत्तिभ्यां लक्षणं यस्य सः । यः सृष्टिप्रलयौ
करोति स ईश्वर इत्यतः सृष्टेः पूर्वञ्च प्रलयात् परत्र च तस्य सत्त्व-
निर्देशः । अत्र "दृश्यते त्वग्र्यया बुद्ध्या" इति "मनसैवानुद्रष्टव्य"
इति "तमेव विदित्वा अतिमृत्युमेति" इति "आत्मा वा अरे मन्तव्यः"
इत्यादि "तस्मात् सर्वात्मना राजन्! भगवान् हरिरीश्वरः। श्रोतव्यः
कीर्तितव्यश्च" इति परस्सहस्रश्रुतिस्मृतिवाक्यविरोधादीश्व-
रानुगृहीतैरेव वचआदिभिरिति व्याख्येयम् । अत एव श्रुताव-
[illegible]ति विशेषणम् ।"अतः श्रीकृष्णनामादि न भवेद्ग्राह्यमिन्द्रियैः ।
सेवोन्मुखे हि जिह्वादौ स्वयमेव स्फुरत्यदः" इत्यभियुक्तवचनं च ।
किन्तु कात्स्न्र्येन निरूपणाभावान्न निरूपितमित्याहुः । "यतोऽप्राप्य
निवर्त्तन्ते वाचश्च मनसा सह" इत्यत्रापादाननिर्देशात् वाङ्मनसा-
प्राप्तं निवर्त्तन्त इति अन्तालाभाद्वाङ्मनसागम्यत्वञ्चेति
[illegible]त् ॥ २६ ॥

ननु गुणमयं रूपं यदि तत्स्वरूपं न भवति तर्हि तस्यापू-
र्णत्वं प्रसज्जेतेत्यत आह । यस्मिन्नधिकरणे यतोऽपादानाद्येन
करणेन यस्य सम्बन्धिनः यस्मै सम्प्रदानाय यदीप्सिततमं यः
कर्त्ता कुरुते स्वतन्त्रः कार्यते वा अन्येन प्रयोज्यकर्त्रा तद्ब्रह्मेति प्रत्ये-
केनान्वयः । अत्र सप्तभिर्यच्छब्दैः सप्तविभक्त्यर्था दर्शिताः । यथेति
क्रियाकारकसंबन्धप्रकारवाचिनामव्ययानामर्थाः कुरुते कार्यते
चेति स्वार्थपरार्थक्रियान्वयश्च दर्शितः । चशब्देन च भावकर्मादिवि-
हितप्रत्ययार्थाश्च संगृहीताः । तद्ब्रह्मेवेति कुतस्तत्राह । तद्धेतुस्तेषां
कारणम् । कारणत्वं कुतः । प्राक्प्रसिद्धम् । ननु ब्रह्मादयस्तद्धेतवः
परे अवरे च दृश्यन्ते तत्राह । परेषामवरेषां च परमं तेषां कार-
णानामपि कारणत्वात् परमं कारणमित्यर्थः । ननु सर्वकारणत्वे
तस्य किं नाम सहकारि भवेत्तत्राह । एकम् अन्यनिरपेक्षमेव तत्
कारणमित्यर्थः । ननु चिच्छक्तीनां विमलाद्यानां नवविधानां
[illegible]र्द्धिकवृत्तीनां ह्लादिन्यादीनां त्रिविधानां तद्विलासानां वैकुण्ठ-
[illegible]दादीनां वासुदेवसङ्कर्षणादीनां च नित्यसिद्धत्वश्रवणात्
मायाजीवादृष्टानान्तु जगत्कारणत्वस्य च श्रवणात् कथ-
मेकमुच्यत इत्यत आह । अनन्यत् न विद्यते अन्यद्यतस्तच्छ-
क्तीनां तद्विलासानां च तत्स्वरूपभूतत्वाद्वासुदेवादीनां तदं-
शत्वात् । कालमायादीनामस्वरूपभूतत्वेऽपि तच्छक्तित्वात्तदनन्य-
त्वमित्यर्थः ॥ ३० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

[illegible]णां तु सुज्ञेय इत्याह । यदेति द्वाभ्याम् । नामरूपरूपस्य
[illegible]णि देवमनुष्यादीनि रूप्यन्ते चिन्त्यन्ते अनेनेति तथा ।
[illegible]रस्मृतेः दृष्टोपलक्षितदृष्टश्रुतमायिकपदार्थस्मृतेः प्रमो-
षाद्यदा उपरामः भगवत्स्वरूपगुणादिध्यानसुख-
[illegible] तदा केवलया निरतिशयया स्वकीयया संस्थया

ईयते मुमुक्षुभिर्ध्यायते यस्तस्मै हंसाय शुचिसद्मने शुद्धचित्ता-
लयाय अप्राकृतलोकाय वा नमः ॥ २६ ॥

एतदेव स्पष्टयताह । मनीषिण इति । यथा पाश्चदश्यं पञ्चदश-
सामिधेनामिन्त्रैः प्रकाश्यं दारुणि गूढं वह्निं निष्कर्षन्ति उपायतः
प्रत्यक्षं कुर्वन्ति तद्वन्मनीषिणः विमलबुद्धयस्त्रिवृद्भिः धारणा-
ध्यानसमाधिभिरुपायैः नवभिः स्वशक्तिभिः सह अन्तर्हृदि सन्नि-
वेशितं सम्यक् स्थापितं मनीषया निष्कर्षन्ति । चराचरपदार्थवि-
लक्षणतया यं पश्यन्तीत्यर्थः । तमीडे इति पूर्वेणान्वयः । नवशक्त-
यस्तु "श्रिया पुष्ट्या गिरा कान्त्या कीर्त्त्या तुष्ट्येलयोर्जया । विद्य-
याऽविद्यया शक्त्या मायया च निषेवितम्" इति वक्ष्यमाणा ज्ञेयाः ।
यद्वा । अस्तीति बुद्धिरूपया मनीषया अन्तर्हृदि सन्निवेशितम्। स्वश-
क्तिभिः स्वानुष्ठिताभिर्भक्तिरूपाभिः शक्तिभिः। त्रिवृद्भिस्त्रिगुणाभिः
नवभिः श्रवणादिरूपाभिर्निष्कर्षन्ति प्रत्यक्षं कुर्वन्तीत्यर्थः ॥ २७ ॥

बुभुक्षूणां दुर्ज्ञेयत्वेन मुमुक्षूणां सुज्ञेयत्वेन यो वर्णितः स
मम प्रसीदताम् । कथंभूतः । अनिरुक्ताः असङ्ख्याताः स्वरूपतश्च
वक्तुमशक्याः आत्मशक्तयः स्वकीयाः शक्तयः नत्वागन्तुका यस्य
सः । स्वाभाविकानन्तशक्तौ प्रसन्ने सति ममेष्टसिद्धिः स्यादेवेति
भावः । चेतनाचेतनात्मकं सर्वं विश्वं तदीयचिदचिच्छक्तिमय-
तया तदनतिरिक्तमतस्तदनुग्रहकामेन सर्वत्र स्पर्द्धासूयादिदोष-
त्यागवता विश्वाकारतयापि भजनीय इत्याशयेनाह । स सर्वनामा
स च विश्वरूप इति । स्वरूपतस्तु विश्वविलक्षणः परमानन्दरूप
इत्याह । अशेषाः निखिला विशेषाः महदादितृणान्ता विकारा
यस्या मायायाः निषेधे नेति नेतीति निराकरणे सति अन्ते यत्
प्रोक्तमानन्दमयं निर्वाणं निर्गताः वाणा बाणवद्दुःखदाः सर्वे
आध्यात्मिकादयस्तापाः यस्मात् । तस्मिन् सुखे अनुभूतिर्यस्य सः
विश्वविलक्षणपरमानन्दस्वरूप इत्यर्थः ॥ २८ ॥

पूर्वश्लोकस्यार्थः प्रपञ्च्यते । यद्यदिति द्वयेन । तत्र अशेषविशे-
षमायानिषेधनिर्वाणसुखानुभूतिरित्येतस्य प्रपञ्चः । यदिति । यत्
वचसा निरुक्तं वर्णितं धियाक्षिभिरिन्द्रियैः उत मनसा निरू-
पितं विषयीकृतं तत्सर्वं हि निश्चितं यस्य रूपं माभूत् न
भवति। स प्रसीदतामित्यन्वयः। "सत्यं ज्ञानमनन्तं ब्रह्म" "तं त्वौपनि-
षदं पुरुषं पृच्छामि सर्वे वेदा यत्पदमामनन्ति नमाम सर्वव-
चसां प्रतिष्ठा यत्र शाश्वती" इत्यादिवचसा निरुक्तस्य "दृश्यते
त्वग्र्यया बुद्ध्या सदा पश्यन्ति सूरयः मनसैवानुद्रष्टव्यः" इत्यादिषु
बुद्ध्यादिषु विषयीकृतस्य स्वरूपस्य व्यावृत्त्यर्थमाह । गुणाव-
र्द्धितं प्रकृतिगुणमयमित्यर्थः । यतः गुणानामपायविसर्गाभ्यां संहा-
रोद्भवाभ्यामुपलक्षणमेतत् स्थितेरपि विश्वसृष्टिस्थितिसंहारैर्ल-
क्षणं यस्य सः । लक्षणं तु विश्वजन्मादिहेतुत्वे सति प्रकृतितद्गु-
णविलक्षणत्वे सति सत्यत्वादिमत्त्वं ब्रह्मत्वम् इति ॥ २९ ॥

स सर्वनामा स च विश्वरूप इत्येतस्य प्रपञ्चः । यस्मिन्निति ।
यस्मिन्नधिकरणे यतोऽपादानात् येन करणेन यस्य सम्बन्धि यस्मै
संप्रदानाय यदीप्सिततमं यः कुरुते कार्यते चेति प्रयोजक-
प्रयोज्यभेदेन द्विविधः कर्त्ता । अत्र षड्भिर्यच्छब्दैः षट् कार-
काणि दर्शितानि यस्येत्यनेन संबन्धसामान्यं दर्शितं कुरुते कार्यते
चेति स्वार्थपरार्थक्रियान्वयो दर्शितः । यथेति च क्रियाकारक-
संबन्धप्रकारवाचिनामव्ययानामर्थाः सङ्गृहीताः । चशब्देन भावक-
र्मादिविहितप्रत्ययार्थाः सङ्गृहीताः यतस्तद्धेतुस्तेषां कारणं यतः

यच्छक्तयो वदतां वादिनां वै विवादसम्वादभुवो भवन्ति ।
कुर्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने ॥ ३१ ॥
अस्तीति नास्तीति च वस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः ।
अवेक्षितं किञ्चन योगसाङ्ख्ययोः समं परं ह्यनुकूलं बृहत्तत् ॥ ३२ ॥
योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननन्तः ।
नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं परमः प्रसीदतु ॥ ३३ ॥
यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति ।
यथानिलः पार्थिवमाश्रितो गुणं स ईश्वरो मे कुरुतान्मनोरथम् ॥ ३४ ॥

॥ श्रीशुक उवाच ॥

इति स्तुतः संस्तुवतः स तस्मिन्नघमर्षणे ।
आविरासीत् कुरुश्रेष्ठ ! भगवान् भक्तवत्सलः ॥ ३५ ॥
कृतपादः सुपर्णांसे प्रलम्बाष्टमहाभुजः ।
चक्रशङ्खासिचर्मेषुधनुष्पाशगदाधरः ॥ ३६ ॥
पीतवासा घनश्यामः प्रसन्नवदनेक्षणः ।
वनमालानिवीताङ्गो लसच्छ्रीवत्सकौस्तुभः ॥ ३७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्राक्प्रसिद्धं यतः परेषां प्रकृतिपुरुषकालादीनामवरेषां महदादीनां च ब्रह्मादीनां च परममाश्रयमनन्यत् विजातीयशून्यं एकं सजातीयशून्यं स्वगतभेदस्त्वस्त्यतो हि स्वभावत एव द्वैताद्वैतमित्यर्थः । तद्ब्रह्म प्रसीदतामिति सम्बन्धः ॥ ३० ॥

भाषा टीका ।

जिस दशा में दर्शन स्मरण दोनों के नाश होनेपर मन की भी निवृत्ति होजाती है उस समय पर भी केवल स्वसंस्था से जो स्थित रहते हैं ऐसे जो शुद्ध मनके मध्य में निवास करने वाले आप तिनके अर्थ नमस्कार है ॥२६॥

मनके नियमन करनेसे समर्थ विवेकी योगी जन तीन गुणोंवाली शक्तियों से सहित अपने हृदय में विराजमान जिनको पृथक् करते हैं जैसे कि याज्ञिक लोग अरणि में स्थित पञ्चदश सामिधेनी मंत्र से प्रकाश करने योग्य गुप्त अग्निको मथनसे प्रघट करते हैं ॥ २७ ॥

अनेक विशेष वाली जो माया तिसके निषेध होने से निर्वाण सुख अनुभव रूप जो हैं सब नामों वाले हैं विश्वरूप हैं जिनकी शक्ति आत्मा में कथन नहीं करी जाती हैं वे परमेश्वर मेरेपर प्रसन्न होवें ॥ २८ ॥

जो कुछ पदार्थ वचन से निरूपण किया जाता है बुद्धि में इन्द्रियों से मनसे जो निरूपण किया जाता है वह सब सत्वादि गुणों का विस्तार है वह आप का स्वरूप नहीं है सो आप गुणों की उत्पत्ति स्थिति नाश से वर्जित होते हो ॥ २६ ॥

जिस आधार में जिस अपादान से जिस करण करके [illegible] का संबन्धि जिस संप्रदान के अर्थ जिसका कर्म किया [illegible] है और जो कर्ता है कार्य कारण सब से जो पूर्व है और [illegible] प्रसिद्ध है सो ब्रह्म उन सबों का कारण सदृश द्वितीयरहित [illegible] ही परब्रह्म है सो आपहो ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेवं ब्रह्म चेद्विश्वस्य हेतुस्तर्हि न कदाचिदनीदृशं जगदि[illegible] वन्दतो मीमांसकाः कुतोऽत्र विवदन्ते तैश्चान्ये स्वभाववा[illegible] सम्वदन्ते ते च ते च तत्त्वविद्भिर्बोधिता अपि कुतः पुनः [illegible] मुह्यन्ति तत्राह । यस्य मायाविद्याद्याः शक्तयो विवाद[illegible] क्वचित्सम्वादस्य भुवः स्थानानि भवन्ति तस्मै नमः ॥३१॥

ननु किन्तद्ब्रह्म यस्य शक्तयो विवादादिभुवो भवन्ति तत्रा[illegible] अस्तीति । योग उपासनाशास्त्रं तत्र हि विराड्रूपेणोपास[illegible] पातालपादादिकमस्तीत्युपास्यत्वेन विधीयते । नास्तीति [illegible] [illegible] ज्ञानशास्त्रं तत्र ह्यपाणिपादः अचक्षुरश्रोत्रमिति . [illegible] नास्तीति निषिध्यते तयोर्योगसाङ्ख्ययोः [illegible] मानमवेक्षितं प्रतीतं तद् बृहद् ब्रह्म विवादास्पदं [illegible] स्फुटयति । ननु अस्ति नास्तीत्येवम्भूतौ विरुद्धौ धर्मौ [illegible] स्तयोर्भिन्नविषयत्वेऽपि विरोधो न स्यादित्येकस्थयोरित्युक्तं [illegible] विषययोः । कुतो वस्तुनिष्ठयोः पादादिविधिप्रतिषेध[illegible] रेकवस्तुनिष्ठत्वात् । समत्वे हेतुः । परं हि यतो विधिप्रतिषेध[illegible] विषयस्तयोः पादादिविषयत्वात् । तथा तयोर्विषयस्य [illegible]

महाकिरीटकटकः स्फुरन्मकरकुण्डलः।
काञ्च्यङ्गुलीयवलयनूपुराङ्गदभूषितः ॥ ३८ ॥
त्रैलोक्यमोहनं रूपं बिभ्रत्त्रिभुवनेश्वरः।
वृतो नारदनन्दाद्यैः पार्षदैः सुरयूथपैः।
स्तूयमानोऽनुगायद्भिः सिद्धगन्धर्वचारणैः ॥ ३९ ॥
रूपं तन्महदाश्चर्यं विचक्ष्यागतसाध्वसः।
ननाम दण्डवद्भूमौ प्रहृष्टात्मा प्रजापतिः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किं प्रमाणं तदाह। अनुकूलमधिष्ठानं विना पादादिकल्पनायोगात्। अवधिं विना तन्निषेधायोगाच्च। तयोरुपपादकत्वेन सिद्धमित्यर्थः। तस्मै नम इति पूर्वस्यानुषङ्गः ॥ ३२ ॥

ननूदासीनस्य समस्य नमस्कारे को लाभस्तत्राह। य इति। पादमूलं भजतामनुग्रहार्थं प्राकृतनामरूपरहितोऽपि जन्मभिरवतारैर्विशुद्धोर्जितसत्त्वानि रूपाणि कर्मभिर्नामानि च यो भेजे। अप्राकृतः। भगवानचिन्त्यैश्वर्यः स मह्यं प्रसीदतु ॥ ३३ ॥

ननु त्वादृशाः सकामा गणेशादीन् प्रार्थयन्ते त्वं तु तान्विहाय किमिति भगवन्तमेव प्रार्थयसे तत्राह। प्राकृतैरर्वाचीनैर्ज्ञानपथैरुपासनामार्गैर्यथाशयं तत्तदुपासनानुसारेण यो देहगतोऽन्तर्यामी तत्तद्देवतारूपेण विविधो भाति यथा वायुः पार्थिवं गुणं चम्पकादिगन्धभेदमाश्रित्य नानागन्धवानिव भाति रेणूनां गुणं धूम्रत्वादिकमाश्रित्य नानारूपवान् प्रतीयते तद्वत्तस्यैव तत्तद्देवतारूपेण फलदातृत्वात् स ईश्वर एव मे मनोरथं सत्यं करोतु। किमन्तर्गतवद्भिर्देवतान्तरैरित्यर्थः। तदुक्तं गीतासु।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हि तान् इति ॥
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।

इति चेति ॥ ३४ ॥

संस्तुवतो वचस्य स भगवान् प्रत्यक्षोऽभूत् ॥ ३५ ॥

तं वर्णयति सार्द्धैश्चतुर्भिः। सुपर्णस्यांसे स्कन्धे कृतौ पादौ येन। प्रलम्बा अष्टौ महान्तो भुजा यस्य। चक्राद्यष्टायुधधरः ॥३६॥

प्रसन्ने वदनमीक्षणे च यस्य। वनमालया निवीतं कण्ठादिपादान्तव्यापसमङ्गं यस्य। लसन्तौ श्रीवत्सकौस्तुभौ यस्य ॥ ३७ ॥

महान्ति किरीटकटकानि यस्य। स्फुरती मकरकुण्डले यस्य। काञ्च्यादिभिर्विभूषितः। वलयमत्र पादभूषणं पृथक्कटकस्योक्तत्वात् ॥ ३८ ॥

त्रैलोक्यमोहनं श्रीपुरुषोत्तमाख्यं सुरयूथपैर्लोकपालैः ॥३९-४०॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ननु विश्वं परमाणुकारणकमीश्वरस्तु निमित्तमिति वैशेषिकादयः। प्रधानकारणकं पुरुषातिरेकेणेश्वरः स्यान्न वा पुरुषस्तु निमित्तमात्रमिति साङ्ख्यादयो वदन्ति। किञ्च। सर्वमपि वस्तु नित्यमनित्यं च भिन्नमभिन्नञ्चेति। तथा सदसत् सदसदात्मकञ्चेति वदन्ति। अतः कथं कृत्स्नस्य जगतः ब्रह्मैककारणत्वं तदनन्यत्वञ्चोच्यते इतीमां शङ्कां परिहरन्नमस्करोति। यच्छक्तय इति। वदतां ग्रन्थनिबन्धनेन स्वशास्त्रमुपदिशतामित्यर्थः। वादिनां वादं कुर्वतां वैशेषिकादीनां यस्य परमात्मनः शक्तयः पृथिव्यादयः विवादसम्वादयोः परस्परविरुद्धाविरुद्धयोः वादयोः भुवः विषयभूता भवन्ति। शक्तिशब्देन पृथिव्यादय उच्यन्ते। तेषां भगवतः कार्योपयोग्यपृथक्सिद्धविशेषणत्वात्तथा च भगवान् पराशरः "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्" इति जगदात्मकान् पृथिव्यादीन् शक्तिशब्देन व्यपदिष्टवान्। ननु सर्वैरपि पृथिव्यादिस्वरूपाभ्युपगमान्नानेकविवादभुवस्तत्राह। कुर्वन्तीति। यस्य शक्तयः पृथिव्यादयः आत्ममोहं स्वविषयकमोहं तेषां वादिनां कुर्वन्ति। पृथिव्यादिस्वरूपाभ्युपगमेऽपि परमाणुकारणकत्वनित्यानित्यत्वभिन्नाभिन्नत्वसदसत्त्वादिप्रकारविप्रतिपत्तिं कुर्वन्ति। प्रधानकारणकत्वविप्रतिपत्तिविषयप्रकारवत्यः शक्तयो भवन्ति इत्यर्थः। तस्मै अनन्तगुणायासङ्ख्येयकल्याणगुणगणाय भूम्ने स्वरूपतोऽपि बृहते नमः यद्यप्येवं वादिनां विवादास्तथापि पृथिव्यादीनां परमात्मशरीरत्वतत्कारणकत्वयोः पृथिव्याद्यवस्थाया अनित्यत्वेऽपि द्रव्यस्य नित्यतायाः तस्य सततपरिणामत्वेनासदात्मकत्वानादेश्च श्रुतिस्मृत्यादिबहुप्रमाणप्रतिपन्नत्वेनावैदिकानां केवलं विप्रतिपत्तिरेवाविभावः। श्रुतयस्तु "यस्यात्मा शरीरं यस्य पृथ्वी शरीरं यस्याक्षरं शरीरं यस्याव्यक्तं शरीरमात्मन आकाशः सम्भूतः तोयेन जीवान् विससर्ज भूम्यां नासदासीन्नो सदासीत्तदानीं तम आसीत्" इत्यादयः स्मृतयश्च "विष्णोः सकाशादुद्भूतम् अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। यदम्बु वैष्णवः कायस्ततो विप्र! वसुन्धरा। पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता। वदनदचयं नित्यं जगत् स्थावरजङ्गमम्। प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि। सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्" इत्यादयोऽनुसन्धेयाः। अनन्तगुणायेत्यनेन निर्गुणत्ववादो भ्रममूलक इति सूचितम्। "यः सर्वज्ञः सर्ववित्" इत्यादिबहुश्रुतिभिः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कल्याणगुणाकरत्वस्य सम्प्रतिपन्नत्वात्। भूम्न इत्यनेन जीवानाममूमत्वं ज्ञापितम्। एवं पृथिव्यादिस्वरूपाभ्युपगमेऽपि तत्प्रकाराविप्रतिपत्तिरुक्तेति ॥ ३१ ॥

इदानीं परमात्मरूपप्रतिपत्तिं वदन् वादिविप्रतिपत्तीनां शास्त्रानुसारेण परिहारार्थमाह । अस्तीति । घटपटादिवस्तुनिष्ठावस्तित्वनास्तित्वधर्मौ दृष्टौ योगसाङ्ख्ययोर्मतयोः । तावकस्थावीश्वरविषयौ चेद्विरुद्धौ स्याताम्। एवमस्तित्वनास्तित्वयोर्भिन्नयोर्विरुद्धयोर्धर्मयोर्व्यवह्रियमाणयोः सतोरप्यकिञ्चनापेक्षितं वेदान्तवाक्यमपेक्षितम्। अतीन्द्रियेश्वरविषयकास्तित्वनास्तित्वयोः प्रमाणजिज्ञासायामनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यमानदोषगन्धं वेदान्तवाक्यमेव प्रमाणमपेक्षितमित्यर्थः। तच्च वेदान्तवाक्यं "सत्यं ज्ञानम्" इत्यादि। तद्रूपं च सममेकरूपमनुकूलमानन्दरूपं परं सर्वविलक्षणं बृहदपरिच्छिन्नमतो वेदान्तवाक्यरूपं प्रमाणं विहाय केवलास्तित्वनास्तित्वविवादो भ्रममूलो व्यर्थ इति भावः। यद्वा। अनन्तगुणार्यत्वेन गुणा न सन्तीति वादो भ्रममूल इति सूचितम्। तदेवोपपादयति। अस्तीति। "यः सर्वज्ञ" इत्यादिभिर्गुणजातमस्तीत्यवगम्यते निष्क्रियं निष्कलमित्यादिभिर्निर्गुणत्वं तौ चास्तित्वनास्तित्वधर्मावुभावेकवस्तुनिष्ठौ चेद्विरुद्धौ । तयोश्च भिन्नाधिकरणयोर्विरुद्धयोर्द्धर्मयोर्वस्तुनिष्ठयोरेकस्थयोः सतोरेकस्मिन् वस्तुनि तयोर्विरोधे सतीत्यर्थः। तत्रान्यतरव्यवस्थापकं किञ्चिद्ब्रह्मस्वरूपशोधकं वेदान्तवाक्यं प्रमाणमपेक्षितम्। एवं साङ्ख्ययोगयोरपि समं तुल्यं तयोरपीश्वरस्वरूपसद्भावाभावयोर्विरोधे सत्यन्यतरव्यवस्थापकं किञ्चित्प्रमाणमपेक्षितमित्यर्थः। तच्च वाक्यं "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिकं तद्वाक्यप्रतिपन्नं च वस्तु परमनुकूलं बृहच्च। परत्वानुकूलत्वबृहत्त्वादिगुणयुक्तमिति निर्गुणवादो निरीश्वरवादश्च भ्रममूलक इति भावः। योगसाङ्ख्ययोरिति दृष्टान्तार्थं तयोर्मध्ये यथा निरीश्वरवादस्तथागुणासत्त्ववादोऽपीति। अत्र परशब्देन प्रकृतिपुरुषविलक्षणवाचिना सत्यशब्दार्थो विवक्षितः। अनुकूलशब्देन ज्ञानशब्दार्थो व्याख्यातः। आनन्दरूपज्ञानस्यैवानुकूलत्वात् बृहत्पदेनानन्तशब्दार्थः। स्वरूपेण गुणैश्चापरिच्छिन्नं हि बृहच्छब्दार्थः। सङ्कोचकप्रमाणाभावात् ॥ ३२ ॥

एवं वादिनां विप्रतिपत्तिविषयत्वेन ब्रह्मस्वरूपतद्गुणतच्छक्तीनां दुर्ज्ञेयत्वमुक्तम्। अथैवं दुर्ज्ञेयस्वरूपगुणशक्तिरप्याश्रितसुलभ इति वदन् तदनुग्रहं प्रार्थयते। यो भगवान् स्वपादमूलं भजतामनुग्रहार्थं स्वयमनामरूपः। कर्मकृतनामरूपरहितोऽपि जन्मकर्मभिरवतारचेष्टितैः सह नामानि दुरितक्षपणक्षमाणि रामकृष्णादिनामानि रूपाणि स्वेच्छोपात्तान्यप्राकृतानि शरीराणि च भेजे आत्मानं दर्शयितुं परिगृहीतवान्। स परमः निःसमाभ्यधिकः मह्यं प्रसीदताम् ॥ ३३ ॥

एवं स्वेच्छोपात्ताप्राकृतदिव्यमङ्गलविग्रहविशिष्टो भक्तानुग्रहार्थमवतीर्णस्तैरुपलभ्यत इत्युक्तम्। विश्वरूपेणापि तैरुपलभ्यत इत्याह। यः प्राकृतैरिति। प्राकृतार्थगोचरैर्ज्ञानपथैरिन्द्रियैर्यथाशयं मनोवृत्त्यनुगुणमिन्द्रियाणां मनोवृत्त्यनुगुणप्रवृत्तेः देहगतः स्वदेहशरीरे दृष्टे राजा दृष्टो भवति एवं जगतः परमात्मशरीरत्वात् जगदाधारस्यविद्भिर्जगद्दर्शने सति परमात्मा दृष्टो भवतीति। जगद्विलक्षणस्याप्यस्य विशिष्टतया प्रकाशे दृष्टान्तमाह। यथा निल इति। स्वयं पृथिवीविलक्षणो वायुः पार्थिवगुणमभि[illegible] पार्थिवपुष्पपरागसंस्पृष्टो गन्धवह इति प्रकाशते। तद्वज्जगद्वि[illegible] लक्षणोऽपि जगच्छरीरकत्वात्तन्मात्ररूपभाक्तया परमात्माव[illegible] इत्यर्थः। "काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः" इ[illegible]त्युक्तम् ॥ ३४ ॥

एवं तुभ्यमुपदिष्टेनानेन स्तोत्रेणाभिष्टुतो भगवान् प्राचे[illegible] तस्य प्रसन्नोऽभूदित्याह मुनिः । इतीति । हे कुरुश्रेष्ठ! इतीत्थं स्तुतो भगवान् तस्मिन्नघमर्षणे तीर्थे संस्तुवतो दक्षस्य प्रादु[र्]आसीत् प्रत्यक्षोऽभूत् पुरत इतिशेषः। तत्र हेतुः भक्तवत्सलः ॥ ३५ ॥

प्रादुर्भूतं भगवन्तं वर्णयति। कृतपाद इति। सुपर्णस्य गरु[डस्य] उन्नतेंऽसे स्कन्धयोः कृतौ विन्यस्तौ पादौ येन। प्रलम्बा आजानु[ल]म्बिनः अष्टौ महाभुजा यस्य। शङ्खाद्यायुधधरः। तत्रासिः खड्गः चर्म खेटः ॥ ३६ ॥

पीते वाससी यस्य सः। घन इव श्यामः प्रसन्नं वदनमीक्षणं च यस्य सः। वनमालया निवीतमङ्गं यस्य सः। लसन् श्रीवत्सः कौस्तुभश्च यस्य सः ॥ ३७ ॥

महान्ति किरीटं स्फुरन्ती कटके च यस्य सः। मकराकारे कुण्डले यस्य काञ्च्यादिभिर्भूषितः अलङ्कृतः। तत्र काञ्ची कटिमेखला वलयमत्र पादभूषणं कटकस्योक्तत्वात् ॥ ३८ ॥

त्रैलोक्यं मोहयतीति त्रैलोक्यमोहनं नन्द्यादित्वाल्ल्युः। श्रीपुरुषोत्तममन्त्रोपास्यं श्रीपुरुषोत्तमाख्यं तद्रूपं बिभ्रत् त्रिभुवनेश्वरः। नारदादिभिः पार्षदैः सुरश्रेष्ठैश्च परिवृतः। अनु पृष्ठतो गार्श्वे [illegible] सिद्धादिभिरनुवृतः अनुसृतः एवम्विधः प्रादुरासीदिति पूर्वेणान्वयः ॥ ३९ ॥

तन्महदाश्चर्यं भगवतो रूपमवलोक्य गतसाध्वसः वीतभयः प्रजापतिः प्राचेतसः प्रहृष्टचित्तो भूमौ दण्डवन्नमस्कृतवान् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अनिरुक्तात्मशक्तिरित्येतद्विवृणोति । यच्छक्तय इति। विवादसम्वादभुवः विप्रतिपत्तिसंप्रतिपत्त्योर्भुवो विषयाः वदतां वादं कुर्वतां वादिनां मतमज्ञाननिमित्तमित्याह। कुर्वन्तीति ॥ ३१ ॥

विवादसम्वादौ च कथंकारं स्यातामिति तत्राह। अस्तीति। यद्विषयोर्विरुद्धयोर्धर्मयोरपेक्षितं विषयः क्रियाकारयोर्मध्य [illegible] ईश्वरोऽस्ति नास्तीति वादिभिः प्रतिपाद्यमानयोः। भिन्नत्वावि[रु]रुद्धत्वे कथमत्राह। वस्त्विति। भिन्नवस्तुनिष्ठत्वात् एकस्मिन्वस्तुनि स्थितयोरित्यङ्गीकारे विरुद्धयोः। यद्यप्येकस्य स्वरूपेण सत्त्वं परस्वरूपेणासत्त्वमिति द्वौ धर्मौ स्तः तथापि नैतादृशौ एते सत्त्वासत्त्वे स्वरूपस्यैवेति यत इति द्योतनार्थेति पदद्वयं यच्च किञ्चनालौकिकं यच्च साङ्ख्ययोगयोः समं कर्मानुष्ठानलक्षणयोगप्रतिपादककर्मकाण्डे तत्फलदातृत्वेन प्रतिपाद्यं साङ्ख्यं च यथार्थज्ञानसाधनं वेदान्ते विचारितं तथानुकूलं सर्वेषां प्रियतमं तत्तद्वादिनां तत्तद्बुद्धिजनकत्वेन तत्तदनुरूपफलदातृत्वेन वर्तमानं वा तत्परं बृहत् परं ब्रह्म प्रपद्य इति वाक्यशेषः सर्वदा वर्धमानं न कदाप्यन्यथा

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यस्मिन्नतो वृहदिति अस्तित्वपक्ष एव श्रेयानित्यतरः । तस्य तत्त्वादिति विशदीकरणाय साङ्ख्ययोगयोरिति विशेषणं "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतिं हिशब्देन सूचयति । अस्ति हरिर्वस्त्विति निष्ठा साङ्ख्ययोगयोः नास्ति तद्वैतं वस्त्व-न्यमेवेति निष्ठासुरीत्यतो वा हीति । तदुक्तम् "मदन्यो नास्ति सर्वेश इति विद्ध्यासुरं मतम् । अस्तीति दैवमुभयोर्हरिरेव हि वेदितः । निषेधविध्योर्विषयः फलदाता च केशवः । तादृग्बुद्धेः कारणं च ध्यानयोश्चोत्तमनीचयोः" इति (१) ॥ ३२ ॥

इतोऽपि मदन्य ईश्वरोऽस्तीति पक्ष एव श्रेयानित्याभिप्रेत्याह । योऽनुग्रहार्थमिति । योऽनन्तो भगवान् पादमूलं भजतामनुग्रहार्थं जन्मकर्मभिर्नामानि रूपाणि च भेजे स परमो मह्यं प्रसीदतामि-त्यन्वयः । अलौकिकत्वेन तं विशिनष्टि । अनामरूप इति । देवदत्तक-लेवरीयकर्मणामप्रत्यक्षत्वाद्विष्णुभिन्नरूपवदीशरूपाणामदर्शनाद-नामरूपः । न तु स्वरूपकर्मोज्झितत्वात् "यदा पश्यः पश्यते रुक्म-वर्णं कर्तारमीशम् अथैनमाहुः सत्यकर्मेति सर्वकर्मा सर्वनामा सर्वरूपः" इत्यादिश्रुतेः । अवतारैर्नामकर्मणां दर्शनाच्च । तदुक्तं "तत्क-र्मणामदृष्टत्वादनामा चाप्यदर्शनात् । अरूपस्त्ववतारेण रूपकर्माणि दर्शयन् । नित्यरूपो नित्यकर्माप्यव्यक्तत्वमवेक्ष्य तत् । अरूपकर्मे-त्युदितो रूपकर्मोज्झितेन तु" इति । किञ्च । भगवद्व्यतिरिक्तपुरुषानु-क्तसार्थवाचि नाम यस्य सोऽनामा यथा मुक्तानां परमा गतिः कम-लाकान्त इति कंसादिनिग्रहाद्वासं कंसारिः मुरारिरित्यादि-नामपार्थसमत्वात् सर्वं नामा मूलरूपस्यात्यन्तमव्यक्तत्वादरूपः अनामासोऽधिकार्थत्वादव्यक्तत्वादरूपकः । कंसारित्वादिसाम्यार्थो व्यक्तरूपोऽवतारगः" इति "लोकदृष्ट्याधिकार्थानि मूलनामानि केशवे । अथ दामोदरादीनि लोकदृष्ट्या समानि तु ।

आनन्दोऽव्यक्तरूपस्तु मूलरूपमुदाहृतम् ।
स एव व्यक्तिमापन्नः प्रादुर्भाव उदाहृतः ॥

इति अनेन उक्तस्मृत्यर्थोऽपि स्पष्टीकृत इति ज्ञातव्यम् ॥ ३३ ॥

यथाधिकारं स्वविषयज्ञानस्य तारतम्यजनकत्वेन प्रमाण-सिद्धत्वान्मदन्यो नास्तीश्वर इति मतमासुरमित्याशयेनाह । यः प्राकृतैरिति । यो भवान् प्राकृतैर्ज्ञानपथैर्जनानां स्वबुद्ध्यनुसृतसिद्धा-न्तेन विभाति स ईश्वरो मे मनोरथं कुर्यादित्यन्वयः । क तत्र इत्यत उक्तम् । देहेति । अयं भावः । अधमानां जनानां जीव-देहगतो जीवः तदभिन्न इति प्रतीयते । अहं ब्रह्मास्मीति मध्य-मानां जनानां देहगतः सन् देहगतोऽनिर्णीत इति यावज्जीवस्त-दन्यो वा हरिरिति उत्तमानां जीवानां प्रकर्षेणाप्राकृतेनो-पचितेन ज्ञानेन देहगतो देहगाज्जीवाद्भिन्न इति शेषः । ईश्वरः पूर्णानन्दादिगुण इति प्रकाशते तत्रोदाहरणम् । यथेति । यथाऽनिलो

वायुः पार्थिवं पृथिवीकार्यं गुणं सुखदुःखभोगसाधनं शरीर-माश्रितः प्रकृतिविकृतैर्ज्ञानसाधनैरिन्द्रियैः प्राकृतानां श्वास इति मध्यमानां शारीरः प्राण इति अप्राकृतानामुत्तमानां सर्व-देवोत्तमः सूत्रात्मेति प्रतिभाति तथेति । "स्वदेहस्थं हरिं प्राहु-रधमा जीवमेव तु । मध्यमाश्चाप्यनिर्णीतं जीवाद्भिन्नं जनार्दनम् । पूर्णानन्दादिगुणकं सर्वजीवविलक्षणम् । उत्तमास्तु हरिं प्राहु-स्तारतम्येन तेषु च । बुद्धिशुद्ध्यनुसारेण यथा प्राणं शरीरिणाम् । श्वासमात्रं जनाः प्राहुरनिर्णीतं च मध्यमाः । देवदेवेश्वरं सूत्रमानन्दं प्राणवेदिनः" इति स्मृतिसमाख्यासिद्धत्वात्त्रैविध्येना-र्थकथनं युक्तमिति भावः ॥ ३४ ॥

नेयं स्तुतिर्जिह्वाग्रगुडवत् स्तुत्ये चित्तद्रवविकारहेतुरिति । भावेनाह । इतीति ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

नेदं रूपं मायाकल्पितं किन्तु निजमेव अर्थक्रियाकारित्वा-दित्याशयेनाह । रूपमिति ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र विवादावसरे तादृग्गुणरूपबृंहितस्वरूपमपि सिद्धय-तीत्याह । अस्तीति । योगः स्थूलोपासनाशास्त्रम् । तत्र हि भगवतो नामरूपित्वं श्रूयते । तत्र दृष्टकल्पनालाघवात् घटपटादिलक्षणा-खिलनामधेयत्वं पातालपादादिकत्वं चेति विधीयते । नास्तीति साङ्ख्यं ज्ञानशास्त्रम् । तत्र हि निषेधश्रुतिभिस्तस्य नामरूपित्वं यन्नि-षिध्यते तत् प्रापञ्चिकनामरूपित्वस्य कल्पितत्वात् सर्वथैव नास्तीति निश्चीयते । तदुक्तमुभयमतमस्यैव प्राक् । "स सर्वनामा स च विश्वरूप" इत्यादिना । "यद्यन्निरुक्तं वचसा निरूपितम्" इत्यादिना च । अस्तीति नास्तीति वस्तुनिष्ठा ययोः । तमेव विवादं स्फुटयति भिन्नौ अस्तीति नास्तीत्येवम्भूतौ विरुद्धौ धर्मौ ययोस्तयोः । नन्वा-स्तामनयोर्विभिन्नविषयत्वं नेत्याह । एकस्थयोः समानविषययोः तदेवं विवादे सति तयोर्यत्किञ्चित् समं समञ्जसत्वेनैव । अपेक्षितं प्रतीतं वस्तु तद्द्वयोरपि वृहत् । वृहदनुकूलं भवति । किं तत् समञ्जसं यत् परं नाम रूपादत्यन्तं तदभावाच्च विलक्षणं यत्र युग-पन्नामरूपित्वमनामरूपित्वमपि वक्तुं शक्यते तद्विलक्षणं किमपि नामरूपलक्षणमेव वस्त्वित्यर्थः । एतदुक्तं भवति । एकस्मिन्नेव वस्तुनि नामरूपित्वविधिनिषेधाभ्यां परस्परं श्रुतयः पराहतार्थाः स्युः । अत्र तु परत्वेनोभयत्रापि प्राक्तनयुक्त्या समञ्जसमप्राकृत-नामरूपित्वमेव विधिनिषेधश्रुतितात्पर्येणोपस्थाप्यत इति तत्त-न्मतं विवादमात्रम् । इत्थमेव श्रीध्रुवेण निर्विवादत्वमुक्तम् । तिर्यङ् नगद्विजसरीसृपदेवदैत्यमर्त्यादिभिः परिचितं सदसद्विशेषम् । रूपं स्थविष्ठमज ते महदाद्यनेकं नातः परं परम वेद्मि न यत्र वादः" इति ॥ ३२ ॥

तदेव व्यनक्ति । यो नाम रूपरहित एव नामानि रूपाणि भेजे प्रकटितवान् । जन्मकर्मभिः सहितानि च प्रकटितवानित्यर्थः । व्यति-रेके दोषमाह । अनन्तः यदि तस्मिन्नामरूपित्वादिकं नास्ति तर्हि तच्छक्तिमत्त्वं प्रति सान्तत्वमेव प्रसज्जयेनेति । तदुक्तं प्रचेतोभिः ।

नह्यन्तो यद्विभूतीनां सोऽनन्त इति गीयते इति ।

तत्तत् प्रकाशने हेतुः । भगवान् अगात्मकशक्तिमान् तस्याः शक्तेर्मायात्वं निषेधति । परमः पराख्यशक्तिरूपा मा लक्ष्मीर्यस्मिन् । अन्यथा परत्वव्याघातः स्यादिति भावः । "तस्माच्च मायया सर्वं सर्वमैश्वर्यसम्भवम् । अमायो हीश्वरो यस्मात्तस्मात्तं

---

(१) अस्तीति नास्तीति श्लोकस्यायमर्थः । भिन्नविरुद्ध-धर्मयोः भिन्नविरुद्धधर्मप्रतिपादकयोः । एकस्थयोः एक-वस्तुविषयकयोः अस्तीति नास्तीति च वस्तुनिष्ठयोः मद-न्यदिति शेषः मदन्यदीश्वराख्यं वस्तु अस्तीति दैवं मतं मदन्यद्वस्तु नास्तीति आसुरं मतं तयोर्मतयोरित्यर्थः संस्थितं तन्मतं विषयः किञ्चन लोकविलक्षणसमनुध्यानीयस्या-धिकारियोग्यफलप्रदम् अनुकूलं तादृशमतभेदेन द्विविधबुद्धिजनकं साङ्ख्ययोगयोः ज्ञानयोगकर्मयोगयोः परं मुख्यतात्पर्यविषयं यत् तत् वृहत् ब्रह्मेति

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परमं विदुः” इत्युक्तेः । ननु सर्वनामविश्वरूपत्वे तद्राहित्ये च सन्त्येव तत्तदुपासकाः प्रमाणाम् । अत्र के स्युरित्याशङ्क्याह । पादमूलं भजतामनुग्रहार्थमिति । योगसांख्ययोस्तत्तत्त्वं न सम्यक् प्रकाशते किन्तु भक्तावेव “भक्तिरेवैनं दर्शयति” इत्यादिश्रुतेः । तस्माद्यदुक्तं तयोर्विवादमात्रत्वमिति भावः । अत एव लक्ष्यतेऽनन्तरमेव इतीत्यादौ प्रादुरासीत् कुरुश्रेष्ठ ! भगवान् भक्तवत्सलः । कृतपादः सुपर्णांस इत्यादि । पादमूलं भजतामित्यनेन तान् प्रति रूपप्राकट्यात् पूर्वमपि रूपमस्त्येवेति व्यञ्जितम् । “चरणं पवित्रं विततं पुराणम्” इत्यादिश्रुतेः । भेज इत्यतीत निर्देशः प्रामाण्यदाढर्यायानादित्वं बोधयति । अनन्तपदस्य च नामानि रूपाणि चानन्तान्येवेति भावः । अत्र प्राकृतनामरूपरहितोऽपीति टीका च ॥ ३३ ॥

ननु विभूतिकामस्य तव तत्तद्विभूतिसम्वलितगणपत्याद्युपाधित्वेनैव ममोपासना युक्ता कथं सर्वात्मना निरुपाधित्वेन स्तौषि । तत्राह । यः प्राकृतैरिति । तत्र तत्रानिलवत् स्वकार्यकरत्वं भवत एव नतूपाधेरिति स्थिते किमुपाधिभावनयेति भावः ॥ ३४ ॥

इतीति सार्द्धपञ्चकम् ॥ ३५—४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यस्मन्मते सजातीयविजातीयस्वगतभेदासहिष्णवोऽन्येऽद्वैतवादिनो विवदन्ते तैश्चान्ये नैयायिकाः षोडशपदार्थवादित्वात् द्वैतवादिनो विवदन्ते तैश्चान्ये वैशेषिकाः सम्वदन्ते । तैः सर्वैश्चान्ये न कदाचिदनीदृशं जगदिति वदन्तो मीमांसका विवदन्ते तैश्चान्ये स्वभाववादिनः सम्वदन्ते ते च तत्त्वविद्भिर्बोधिता अपि कुतः पुनर्मुह्यन्तीति तत्राह । यच्छक्तयः । यस्य मायाशक्तिवृत्तयो वदतां समादधतां वादिनां तत्राक्षेपकृतां विवादस्य क्वचित् सम्वादस्य च मुव उत्पत्तिहेतवो भवन्ति प्रयोजनमाह । आत्ममोहमिति । आत्मानं जिज्ञासमानानामपीत्यर्थः । मुहुरिति । तत्राविच्छेदः सूचितः । अनन्तगुणायेत्यनन्तशब्दस्यानेकार्थत्वेनागणनीयत्वात् गुणानामनश्वरत्वं निःसीमत्वं चोक्तम् “इमे चान्ये च भगवन्नित्या यत्र महागुणाः” इति पृथिव्युक्तौ नित्या इति पदेन “नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः” इति सूतोक्तौ च अगुणस्येति योगेश्वरा इति पदाभ्याम् “ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः” इति पराशरोक्तौ च विना हेयैरित्युपन्यासेन च तदीयगुणानामप्राकृतत्वावगमेऽप्यवास्तवत्वमाचक्षाणास्तेऽपराधिनः कथमपि यथा न मुह्यन्तीति भावः ॥ ३१ ॥

ननु ते शास्त्रज्ञाः किमिति निन्द्यन्ते शास्त्राणामेवैकमत्याभावेन परस्परविरोधादिति चेन्मैवं वादीरित्याह । अस्तीति । योगसाङ्ख्ययोः योगो भक्तियोगशास्त्रं साङ्ख्यं ज्ञानशास्त्रं तयोस्तत् प्रसिद्धं परं सर्वोत्कृष्टं बृहद्ब्रह्म सममनुकूलं च यथा स्यात्तथा अवेक्षितम् । परस्परविरुद्धयोस्तयोर्द्वयोरेव शास्त्रयोरवेक्षणे किमपि वैषम्यं प्रातिकूल्यं च नास्तीत्यर्थः । तयोः कथम्भूतयोः अस्तीति नास्तीति भिन्नविरुद्धधर्मयोः । योगशास्त्रे हि “कृष्णं पिशङ्गाम्बरमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम्” इत्यादिना नामरूपगुणपाणिपादाद्यङ्गोपाङ्गपार्षदधामादि अस्तीत्युपास्यत्वेन विधीयते । शाङ्ख्यशास्त्रे त्वनामरूपगुणमपाणिपादमचक्षुरश्रोत्रमेकमद्वितीयमपि नामरूपादिकं नास्तीति निषिद्ध्यते इत्येवं भूतौ भिन्नौ परस्परविरुद्धौ च धर्मौ ययोस्तयोर्भिन्नविषयत्वे विरोधो न स्यादित्येकस्थयोः एकस्मिन् ब्रह्मण्येव तिष्ठत इत्येकं ब्रह्मैव विषयीकुर्वतोरित्यर्थः । ननु तर्हि कथमैकमत्यमप्रातिकूल्यं वा तत्राह । वस्तुनिष्ठयोः वस्तुनि वास्तववस्तुन्येव निष्ठा प्रतिपादकत्वलक्षणा ययोः । तेन भक्तिशास्त्रं विधिना वास्तवं वस्त्वेव प्रतिपादयति नत्ववास्तवम् । तथा ज्ञानशास्त्रं निषेधेन वास्तवं वस्त्वेव प्रतिपादयति नत्ववास्तवम् । तेन भक्तिशास्त्रेण परमेश्वरस्य रामकृष्णादिमूर्त्तेर्नामरूपादिकवस्तुप्रतिपादने सिद्धे ज्ञानशास्त्रमपि स्वस्य वस्तुनिष्ठत्वादेव तस्य नामरूपादिकं नैव निषेधति किन्तु तस्य मायिकमूर्त्तेर्विराज एव अत एव पुनर्भक्तिशास्त्रमपि ज्ञानशास्त्रेनिषिद्धं विराड्रूपमुपास्यत्वेन नोपादत्ते । यदुक्तम् ।

> अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते ।
> उभे अपि न गृह्णन्ति मायासृष्टे विपश्चितः ।

इति विराड्रूपस्यापि धारणायामुपादानं तु कस्यचिदेव प्रथमदशायामेव चित्तशुद्धयर्थमेव नतु सततोपासनार्थमिति भक्तिज्ञानशास्त्रयोर्वस्तुतस्त्वविरोध एवेति शास्त्राविरोधेऽपि विवदमानाः शास्त्रतात्पर्यमविद्वांसो दार्शनिका एव विगीता इति भावः ॥ ३२ ॥

अतो नामरूपादिविधिनिषेधाभ्यां शास्त्रद्वयाविरोधं व्यञ्जयन् भक्तवत्सलस्य भगवतः स्वस्मिन्ननुग्रहं प्रार्थयते ! य इति । अनामरूपः प्राकृतनामरूपादिरहितोऽपि जन्मभिरवतारैर्विशुद्धोर्जितसत्त्वानि रूपाणि कर्मभिर्नामानि च भेजे इति स्वामिचरणाः । भेजे प्रपञ्चे प्रकटीचकार ॥ ३३ ॥

तदेवं न यस्य सख्यमित्यनेन “सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे” इत्यनेन च जीवेश्वरयोरल्पज्ञत्वसर्वज्ञत्वाभ्यां वास्तवमेव पार्थक्यमवधारितमेव । ततश्च “यदोपरतो मनस” इत्यनेन मनीषिणोऽन्तर्हृदीत्यनेन च तस्यैवेश्वरस्यैकस्यापरोक्षिकनिर्विशेषसविशेषज्ञानगम्यत्वेन निर्विशेषं सविशेषस्वरूपञ्च यथामति व्यञ्जितम् । पुनश्च स वै ममाशेषेति श्लोके मायिकवस्तूनां तद्रूपत्वेऽपि तत्स्वरूपभूतत्वाभाव उक्तः । पुनरस्तीति नास्तीति द्वयेन भक्तिशास्त्रज्ञानशास्त्रयोरविरोधो गूढोऽपि स्पष्टीकृतः । इदानीं ये जीवेश्वरयोः पार्थक्यमुपाधिकृतमेव न वास्तवमित्याचक्षते तेषां ज्ञानिमानिनामसमञ्जसपथगामित्वं व्यञ्जयन् स्वमनोरथसिद्धिं प्रार्थयते । यः प्राकृतैरर्वाचीनैर्ज्ञानमार्गैर्जनानां देहगतः यथाशयम् आशयमन्तःकरणं दुष्टं शिष्टं वा अनतिक्रम्य तद्धर्माक्रान्त एव विभाति जीवरूपेण भासते यथा वायुः पार्थिवं दुष्टं शिष्टं वा गन्धमाश्रितो नाना गन्धवान् भवति नतु वस्तुतः ॥ ३४ ॥

संस्तुवतो दक्षस्य ॥ ३५—३६ ॥

कटकः पादकटकः वलयं हस्तस्थम् ॥ ३७—४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु ब्रह्मैव विश्वहेतुश्चेत्तर्हि प्रधानकारणवादिभिः सह प्रधानपरमाण्वादिकारणवादिनः कुतो विवदन्ते इत्यत्राह । यदिति । यस्य ब्रह्मणः शक्तयः प्रकृत्याद्याः अज्ञाततया वादिनां पूर्वपक्षिणां वदतां साङ्ख्यादीनां विवादस्य पूर्वपक्षस्य ज्ञातत्वा च

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वेदान्तिनां सिद्धान्तिनां सम्वादस्य सिद्धान्तस्थापनस्य भुवो भूमयः निमित्तानि भवन्ति। एषां वादिनां भगवच्छक्त्यनभिज्ञानां मुहुरात्ममोहं च कुर्वन्ति तस्मै भूम्ने ब्रह्मणे नमः। अथ प्रधानादीनां विश्वहेतुत्वे अयोग्यतां ब्रह्मणस्तत्र योग्यतां च दर्शयति। अनन्तगुणायेति। सृज्यमानविश्वे च यत्सृजननियमनधारणपालनादयः अवाध्याः नित्या गुणा यस्मिन् तस्मै। ते च "अनन्तकल्याणगुणात्मकोऽसौ" इत्यादिश्रुतिषु प्रसिद्धाः "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः।" इति श्रीपराशरेणोक्ताश्च। अत्रापि "इमे चान्ये च भगवन्नित्या यत्र महागुणाः" इत्यादिषु प्रसिद्धाः। अचेतनानां प्रधानादीनामीक्षितृत्वादिगुणहीनानां न जगत्कारणत्वमिति भावः॥३१॥

तेषां मोहितत्वं दर्शयन् वेदप्रमाणकं ब्रह्मैव विश्वकारणमित्याह। अस्तीति। एकस्थमीश्वरभावनिष्ठं योगशास्त्रम् नास्तीति एकस्थमीश्वरसाङ्ख्यशास्त्रम्। एकस्थं च एकस्थं च एकस्थे तयोः विरुद्धधर्मिणोः अन्योऽन्यभिन्नौ विरुद्धौ च धर्मौ प्रतिपाद्यौ यौ ययोस्तयोः वस्तुतः तदभिमतं जगत्कारणं तन्निष्ठयोः योगसाङ्ख्ययोः किमपेक्षितमहो किं विचारितं न च विरोधि इत्यर्थः। अयमर्थः। साङ्ख्ये प्रोक्तमीश्वरो नास्ति प्रधानमस्य जगतः कारणं न ब्रह्मेति तदयुक्तम् "यतो वा इमानि भूतानि जायन्ते" इत्युपक्रम्य "तद् ब्रह्म तद्विजिज्ञासस्व" इति श्रुतिविरोधात् योगे चोक्तमीश्वरोऽस्ति निमित्तमात्रं जगदुपादानकारणं तु प्रधानमिति तदप्ययुक्तं "तदात्मानं स्वयमकुरुत" "बहु स्याम्" इत्यादिश्रुतिविरोधात्। तत्तस्मात् बृहद्ब्रह्मैव जगत्कारणमनुकूलं ध्यातॄणां हितं भवति। यतः सर्वात्मभूतमित्यर्थः "कारणं तु ध्येयम्" इतिश्रुतेः सर्वात्मभूतब्रह्मध्यानेनैव मुक्तिर्भवति न प्रधानाद्यनात्मध्यानेनेति फलितोऽर्थः। एवं सर्वे वेदविरुद्धवादिनो भगवन्मायामोहिता इति बोधितम्॥३२॥

एवं मायामोहितैरज्ञातोऽपि यः पादमूलं भजतामनुग्रहार्थं स्वाभिः रूपाणि मूर्तीः कर्मभिर्नामानि च भेजे स मह्यं प्रसीदताम् तानि रूपाणि नामानि चाप्राकृतानीति द्योतयितुं नामरूपे व्याकरोति श्रुतिप्रसिद्धेः अनित्यप्राकृतनामरूपसंबन्धाभावं भगवतः। अनामरूप इति ॥ ३३ ॥

यः परायावितथानुभूतये इत्यादिना परत्वसर्वात्मत्वमायामोहकत्वसर्वविभुत्वसर्वात्मत्वसर्वप्राकृतनामरूपविलक्षणत्वादिगुणैः स्वरूपतो जीवविलक्षण एव भगवानित्युक्तम्। अत्र तु देहे जीवः स एवेति जानन्तीत्याह। प्राकृतैः प्रकृतिमोहितैः ज्ञानमार्गैः जनानां यथाशयमाशयमन्तःकरणमनुसृत्य यो देहगतो विभाति जीवधारकोऽपि जीवो विभाति एष जीवः "अन्तः प्रविष्टः शास्ता जनानां द्वा सुपर्णा सयुजा" इत्यादिश्रुतिगणव्याकोपात्तत्र दृष्टान्तमाह। यथा पार्थिवं गन्धं श्रितः तद्धारकः न तु पार्थिवगुणस्वरूपः अनिलः तथापि गन्धमिति जनानां विभाति तद्वदित्यर्थः। स मे मनोरथं कुरु अभिलषितप्रदानेन रक्षतु ॥ ३४ ॥

एवमुक्तप्रकारेण संस्तुवतो दक्षस्य स भगवानाविः प्रत्यक्षः ॥३५॥ ३६ ॥ ३७ ॥

महान्ति किरीटकटकानि शिरश्चरणगतानि यस्य सः काञ्च्यादिभिर्भूषितश्च वलयं हस्तभूषणं कटकस्योक्तत्वात् ॥ ३८ ॥ ३९॥ आगतसाध्वसः। आनन्दातिशयाज्जातसंभ्रमः ॥ ४० ॥

---

भाषा टीका।

जिन परमेश्वर की अनेक विचित्र शक्तियों को देखकर शास्त्रज्ञ लोगों के परस्पर में अनेक वाद विवाद उत्पन्न होते हैं फिर भी वे कुछ निश्चय नहीं कर सकते हैं उनको मोह ही वारंवार होता है उन अनन्त गुण वाले व्यापक परमात्मा के अर्थ नमस्कार है ॥ ३१ ॥

परमात्मारूप एक वस्तु मे गुणादिकों का निषेध करने वाला साङ्ख्यशास्त्र है गुणादिकों का विधान करने वाला योग शास्त्र है इन दोनों में एक वस्तु मे कथन किया जो अस्ति नास्ति ये विरुद्ध धर्म प्रतीत होता है सो भी उसके विचार से देखने पर विरोध नहीं होता है क्यों कि निषेध प्राकृत गुणों का है विधान दिव्यगुणों का है इस प्रकार धर्म वाले सर्वत्र व्याप्त सबके अनुकूल समरूप परब्रह्म हैं ॥ ३२ ॥

जो परमात्मा प्राकृत नाम रूप रहित भी हैं तौ भी चरण कमल भजने वालों के अनुग्रह से अनन्त भगवान् होनेसे दिव्य जन्म कर्मों को करके नाम रूपों को धारण करते हैं वे परम ईश्वर मेरे अर्थ प्रसन्न होवें ॥ ३३ ॥

जो ईश्वर सब प्राणि मात्र के देह गत होने पर भी प्राकृत बुद्धि के अनुसार अनेक ज्ञान मार्गो से अनेक देवतारूप प्रतीत होते हैं जिस प्रकार से धूली को उड़ाने वाला पवन धूली के वर्ण से गिना जाता है ऐसी जिन की महिमा है सो ईश्वर मेरे मनोरथ को पूरा करें ॥ ३४ ॥

श्रीशुकदेवजी बोले हे कुरुश्रेष्ठ ! इस प्रकार स्तुति करने से उस अघमर्षण तीर्थमे भक्तवत्सल भगवान् स्तुति करने वाले दक्ष के सन्मुख प्रगट भये ॥ ३५ ॥

श्रीभगवान् गरुडजी के कांधे पर बिराजे हैं उनके लंबायमान महा आठ भुजा हैं चक्र शङ्ख तलवार ढाल बाण धनुष पाश गदा इन आयुधों को भगवान् ने धारण किया है ॥ ३६ ॥

पीत पीतांबर को धारण किये हैं मेघ सरी के श्यामहैं मुखार विन्द औ नेत्र भगवान के प्रति प्रसन्न हैं वनमाला से शरीर भूषित है श्रीवत्स कौस्तुभ से अति शोभायमान हैं ॥ ३७ ॥

बडे भारी किरीट कङ्कण इन से शोभित हैं मकरकुण्डल प्रकाशमान हो रहे हैं कटि मेखला मुद्रिका कडा नूपुर बाजूबन्द इनों से भूषित हैं ॥ ३८ ॥

तीनों भुवनों के ईश्वर भगवान् तीनों लोकों के मोहन करने के रूप को धारण किये हैं नारदजी नन्दादी देवतों के यूथपति पार्षदों से भगवान सेवित हैं ॥ ३९ ॥

गान करते हुये सिद्ध चरणादिक भगवान के गान करते हैं और करते हैं बडे आश्चर्य युक्त ऐसे रूप को दर्शन करते मात्र भय भीत सा होकर नमस्कार दक्ष करने लगे ॥ ४० ॥

---

न किञ्चनोदीरयितुमशकत्तीव्रया मुदा ।
आपूरितमनोद्वारैर्ह्रदिन्य इव निर्झरैः ॥ ४१ ॥
तं तथावनतं भक्तं प्रजाकामं प्रजापतिम् ।
चित्तज्ञः सर्वभूतानामिदमाह जनार्दनः ॥ ४२ ॥

॥ श्रीभगवानुवाच ॥

प्राचेतस ! महाभाग ! संसिद्धस्तपसा भवान् ।
यच्छ्रद्धया मत्परया मयि भावं परं गतः ॥ ४३ ॥
प्रीतोऽहं ते प्रजानाथ ! यत्तेऽस्योद्बृंहणं तपः ।
ममैष कामो भूतानां यद्भूयासुर्विभूतयः ॥ ४४ ॥
ब्रह्मा भवो भवन्तश्च मनवो विबुधेश्वराः ।
विभूतयो मम ह्येता भूतानां भूतिहेतवः ॥ ४५ ॥
तपो मे हृदयं ब्रह्मंस्तनुर्विद्या क्रिया कृतिः ।
अङ्गानि क्रतवो जाता धर्म आत्मासवः सुराः ॥ ४६ ॥
अहमेवासमेवाग्रे नान्यत् किञ्चान्तरं बहिः ।
संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः ॥ ४७ ॥
मय्यनन्तगुणेऽनन्ते गुणतो गुणविग्रहः ।
यदासीत्तत एवाद्यः स्वयम्भूः समभूदजः ॥ ४८ ॥
स वै यदा महादेवो मम वीर्योपबृंहितः ।
मेने खिलमिवात्मानमुद्यतः सर्गकर्मणि ॥ ४९ ॥
अथ मेऽभिहितो देवस्तपोऽतप्यत दारुणम् ।
नव विश्वसृजो युष्मान् येनादावसृजद्विभुः ॥ ५० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आपूरितानि मनोद्वाराणि इन्द्रियाणि तैः । यथा ह्रदिन्यो नद्यो निर्झरैरापूर्यन्ते तथा महानन्दपूर्णत्वेनावृत्तिकत्वाद्वागादीनां न किञ्चिदुक्तुं शक्तोऽभूदित्यर्थः ॥ ४१ ॥

यद्यप्यसौ नावोचत्तथाऽपि चित्तज्ञ इदं वक्ष्यमाणमाह ॥ ४२ ॥

भावं भक्तिं गतः प्राप्तः ॥ ४३ ॥

यद्यदस्ते तपोऽस्य विश्वस्योद्बृंहणं वृद्धिकरमतस्तेऽहं प्रीतः मत्तपसो लोकसमृद्ध्यर्थत्वे त्वत्प्रीतेः किं कारणं तत्राह । ममेति । भूतानां विभूतयः समृद्धयो भूयासुरिति यदेष एव मम कामः अतो मत्कामपूरणादेवाहं प्रीतोऽस्मीत्यर्थः ॥ ४४ ॥

भूतिविस्तारप्रयत्नश्च तवोचित एवेत्याह । ब्रह्मेति । भवन्तः प्रजापतयः भूतेरुद्भवस्य हेतवः ॥ ४५ ॥

विश्ववृद्ध्यर्थेन त्वत्तपसाहं प्रीत इत्युक्तं तदेव तपः स्तुवन् प्रसङ्गादन्यान्यपि लोकवृद्धिकराणि विद्यादीनि स्तौति । तपो यमनियमादिसहितं ध्यानं मे हृदयम् विद्या साङ्गमन्त्र... ध्यानं तनोतीति तनुर्देहः क्रिया ध्यानादिविषयः पुंध्या... भावनाशब्दवाच्यस्तेन हि ध्यानादिकमाक्रियत इत्याकृतिः... जाताः सुनिष्पन्नाः क्रतवोऽङ्गानि शिरो वा "एतद्यस्य... ग्रीवा उपसदश्चक्षुषी आज्यभागौ" इत्यादिश्रुतेः धर्मः ... द्यपूर्वमात्मा मनः हृदयाश्रयत्वात् । सुरा यज्ञभुजस्तपसा... प्राणाः सन्तर्पणीयत्वात् ॥ ४६ ॥

तपसः सन्तानवृद्धिहेतुत्वं दर्शयितुं द्वितीयतृतीयोक्ता... हासमाह चतुर्भिः । अहमेवेति । वस्त्वन्तरव्यावृत्तिः भास... क्रियान्तरव्यावृत्तिः आन्तरं ग्राहकं बहिर्ग्राह्यं संज्ञानमात्र... न्यमात्रमव्यक्तमिन्द्रियवृत्तिभिरनभिव्यक्तम् अत एव प्रसुप्त... विश्वतः सर्वत्र ॥ ४७ ॥

गुणतो मायातः गुणमयो विग्रहो ब्रह्माण्डं तत... अजोऽयोनिजः ॥ ४८ ॥

खिलमसमर्थमिव ॥ ४९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

मे मया तप तपेत्यभिहितः सन्। येन तपसा ॥ ५० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तीव्रया निरतिशयया मुदा आपूरितानि मनोद्वाराणीन्द्रियाणि येषां ह्रदिन्यां नद्यो निर्झरैरापूर्यन्ते तथा महानन्दापूर्णस्वान्मनो-द्वाराणां तैर्युक्तो न किञ्चिदपि मनीषितं कर्तुं शक्तोऽभूदि-त्यर्थः ॥ ४१ ॥

तथा निरतिशयया मुदा स्वमनीषितविज्ञानेऽप्यशक्तमवनतं भूतं प्रजाः कामयमानं भक्तं प्रजापतिं दक्षं प्रति सर्वेषां सत्त्वानां भूतानां चित्तज्ञः अभिप्रायज्ञो भगवान् जनार्दनः इदं ...माणमुवाच ॥ ४२ ॥

उक्तमेवाह। प्राचेतस इति। हे महाबुद्धिमन्! प्राचेतस! भवान् ...सा संसिद्धः। यत् यस्मात् परया श्रद्धया मयि परमुत्कृष्टं भावं भक्तिं गतः प्राप्तवान् ॥ ४३ ॥

हे प्रजानाथ! ते तुभ्यमहं प्रीतः। कुतः। यस्मात्ते तव तपः अस्य जगत उद्बृंहणं वर्द्धकं जगद्वर्द्धकत्वात्तपसस्तेनाहं प्रीत इति ...तः। एतदेवोपपादयति। ममेत्यर्द्धेन। ममायमेव कामः कोऽसौ ...मतआह। यद्भूतानां भूतयः समृद्धयो भूयासुः भवेयुरिति ...गमनीषितं जगद्वृद्धिकरत्वात्स्वस्तपसस्तेनाहं प्रीत इत्यर्थः ॥४४॥

...ण्यनुभवेन भूतावस्तारप्रयत्नश्च तवोचित एवेत्याह। ...त्रयेण श्लोकेन। ब्रह्मा चतुर्मुखः भवो रुद्रः भवन्तः प्रजापतयः ...वः स्वायम्भुवादयः विभुधेश्वरा इन्द्रादयश्च ये ते सर्वे ...विभूतयः अंशाः। भूतानां भूतिहेतवः समृद्धिहेतवः पाति ...ति पाठे पतयश्च हेतवश्चेत्यर्थः ॥ ४५ ॥

विश्ववृद्धिकरत्वात्तपसाहं प्रीत इत्युक्तं तदेवस्तुवन् प्रसङ्गा-...नापि लोकवृद्धिकराणि स्तौति। तप इति। हे ब्रह्मन् तपः ...मम हृदयं विद्या मन्त्रजपः तनुः शरीरं क्रियाः स्मार्त्तक्रिया ...तिः संस्थानं क्रतवो यज्ञाश्च ममाङ्गान्यवयवाः। सोमसाध्या यज्ञाः ...पुरोडाशादिसाध्या यज्ञा इति भेदः। क्रतयो ज्ञाता ...पाठे क्रतवो ममाङ्गानि ज्ञाता इत्यर्थः। धर्मः स्मार्त्तो दाना-...आत्मा मनः असवः प्राणाः। तपआदीनां स्वहृदयत्वेन ...तत्तुल्यत्व स्वस्य जगदुत्पत्तिस्थितिलयहेतुत्वाज्जगत्कारण-...त्वेन रूपयो हि तपआदीनां स्तुतिः सम्पन्ना भवति। ...हृदयतन्वाकृत्यङ्गात्मासूनां लोके प्रीतिविषयित्वदर्शना...तपआदयो नितरां प्रीतिविषया इति ज्ञापनाय हृदया-...रूपन्ते ॥ ४६ ॥

...तपोपबृंहितत्वमेव वक्तुं तावज्जगदुत्पत्तेः प्राक्कारणस्य ...स्थानप्रकारमाह। अहमेवेति। अग्रे सृष्टेः प्रागहमेवासम-...विभक्तनामरूपचिदचिच्छरीरकोऽवस्थित इत्यर्थः। तदे-...ति। अन्यद्वान्तरं चिद्रूपं बहिरचिद्रूपं किञ्चिन्नासीत् कार्या-...चिदचित्त्वं किञ्चिन्नासीदित्यर्थः। तदा जीवप्रकृतिस्वरू-...स्थायुरवस्थामाह। संज्ञानमात्रमिति। संजानातीति संज्ञानं ...कर्तरि ल्युः। तदेव तन्मात्रं मात्रशब्देन देवमनुष्यादि-...विभागस्यावृत्तिः। नामरूपविभागरहितं ज्ञानं तथा विभ्यतः ...प्रसुप्तं अलीनं सूक्ष्ममव्यक्तं प्रधानं च प्रसुप्तमिवेतीव शब्देन तस्य लीनत्वेऽपि जगदात्मना परिणामशक्तिस्तस्या-नपगतेति सूच्यते ॥ ४७ ॥

अनन्तकल्याणगुणाकरे स्वरूपतोऽप्यनन्ते मयि आसीदिति क्रियापदविपरिणामेनान्वयः। मयि शरीरत्वेनावस्थितमासीदित्यर्थः। एवं सूक्ष्मचिदचिच्छरीरकत्वेनावस्थितस्य मम शरीरभूताद्गुणत्र-यात्मकप्रधानान्महदादिक्रमेण गुणविग्रहः त्रिगुणपरिणामरूपो ब्रह्माण्डात्मको विग्रहो मम देहः यदासीत्तदा ततो गुणविग्रहाद्दे-वाद्यः समष्टिपुरुषः स्वयम्भुरयोनिजः अजो ब्रह्मा आसीत् ॥ ४८ ॥

स वै महादेवो ब्रह्मा मम वीर्येण सङ्कल्परूपज्ञानेन उप-बृंहितः अनेन जीवेनात्मनानुप्रविश्येत्युक्तरीत्या सङ्कल्परूपज्ञानेन व्याप्त इत्यर्थः। तदा सर्गकर्मणि जगत्सृष्टिकर्मणि उद्युक्तोऽपि खिन्नमसमर्थमिवात्मानं स्वात्मानं मेनेऽमन्यत ॥ ४९ ॥

अथासमर्थत्वेनात्मनो मनसो मननानन्तरं मे मयाभिहितः तप तपेत्यभिहितः दारुणं दुष्करं तपोऽतप्यताकरोत्। स च तप्ततपा विभुर्ब्रह्मा येन तपोबलेन विश्वसृजः प्रजापतीन् युष्मान् दक्षादीनसृजदतस्तप एव विश्वस्योपबृंहणमित्यभि-प्रायः ॥ ५० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ह्रदिन्यः ह्रादिनीभवो जलनिर्गमः ॥ ४१ ॥

इदमपि निजरूपत्वसाधकमित्याशयेनाह। तं तथेति ॥ ४२ ॥

भावं भक्तिम् ॥ ४३ ॥

बृंहणं प्रजापूरणयोजनं कामोऽभिप्रायः ॥ ४४ ॥

विभूतयः मम विशेषेण सन्निधानस्थानभूताः। "विशेषव्य-क्तिपात्रत्वाद्ब्रह्माद्यास्तु विभूतयः। तदन्तर्यामिणश्चैव मत्स्याद्या विभवा इति" इति वचनात् ॥ ४५ ॥

ब्रह्म पूर्णं तपो मे हृदयं प्रियं कुतस्तपोऽभिमानी रुद्रः मम हृदयाज्जातः तदाश्रितश्चेत्येवं व्याख्येयं विद्या मम तनुः स्वरूपं विद्याभिमानिन्युमा तनोर्जाता तदाश्रिता क्रियाभिमानी त्विन्द्रो हरेराकृतिः शृङ्गाराद्याकाराज्जातस्तदाश्रितश्च क्रतवो यज्ञाः सङ्कल्पा वा तदाश्रिताश्च अभिमानी च पूर्वोक्त एव। धर्मो धर्म-राजः हरेरात्मा मध्यदेहाज्जातः तदाश्रितश्च। सुराः सुष्ठोभमा-नमेव राः (१) कुल्यान्नं यस्य स सुराः वायुश्चित्तगतः हरेरति-प्रियः असवो हरेः प्राणाज्जातस्तदाश्रितश्च। असव इति बहु-वचनमप्शब्दवत् (२)। ब्रह्माद्याः सुराश्च हरेरसुशब्दवाच्येभ्यः श्रोत्रादीन्द्रियेभ्य उत्पन्नाः। तदाश्रिताश्चेति द्विरावृत्त्या व्याख्येयम्।

> तपोऽभिमानी रुद्रश्च विष्णोर्हृदयमाश्रितः।
> विद्यारूपा तथा चोमा विष्णोस्तनुमुपाश्रिता ॥
> शृङ्गाराद्याकृतिगतः क्रियात्मा पाकशासनः।
> अङ्गेषु क्रतवः सर्वे मध्यदेहे च धर्मराट् ॥
> प्राणो वायुश्चित्तगतो ब्रह्माद्याः स्वेषु देवताः।

---

(१) राशब्दस्य कुल्यान्नवाचित्वात्कुल्यान्नमित्युक्तम् कुल्यान्नं ख्यातव्यकुलयोरयान्नम्।

(२) अप्शब्दवदित्यनेन अप्शब्दो नित्यं बहुवचनान्त इति सूच्यते "पुंसि भूम्न्यसवः प्राणा" इत्यभिधानम् सुराः सुरायौ सुराय इति रूपम्।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतिवचनादुक्तएवार्थो ग्राह्यः। रुद्रादीनां हरेस्तदङ्गशब्दवाच्यत्वम् "यदाश्रयं यद्भवति तत्तन्नामकमीरितम्"इत्यभिधानात् सिद्धम्॥४६॥

अत्राद्वैतवादिनो निर्गुणं वाङ्मनसागोचरं जगत्कारणं सगुणमिति द्विविधं कल्पयन्ति तन्मतनिराकरणायाह । अहमेवेत्यादिना । "सप्तसु प्रथमा"इति सूत्रात् । अहं मम यदिदं स्वरूपं त्वया तपसा दृष्टं तदेवाग्रे सृष्टेः प्राक् लये आस अन्यद्वाङ्मनसागोचरं नास "सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा" इतिश्रुतेः । असति प्रलये कीदृशमन्तर्बहिः सर्वान्तः स्थितं सर्वस्माद्बहिरपि स्थितम्" अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतेः । तपसा दृष्टं प्राकृतं चेदुक्तार्थोनुपपत्तिरित्यत उक्तं सज्ज्ञानमात्रमिति समित्येनेन ज्ञानस्य स्वरूपाभेदं ध्वनयति मात्रशब्देन प्रकृतिप्राकृतरूपराहित्यमवताररूपाणां च तदात्मत्वं सूचयति"सत्यं ज्ञानम्"इति श्रुतेः । अत एवाव्यक्तमतिसूक्ष्मम् "तदव्यक्तमाह हि"इति सूत्रात् । हरेः स्वापवचनमपि लोकव्यामोहनार्थमिति भावेनाह । प्रसुप्तमिवेति। कृतचक्षुर्निमीलनमात्रं नत्वज्ञानात्मकनिद्रया युतं श्रियं विनावस्थितं स्वापावस्थाभागित्यर्थः। सर्वं हरौ लीनं चेन्मुख्यतस्तदविशेष एव किं न स्यादित्यत उक्तं विश्वत इति । विश्वस्माद्भिन्नमिति, शेषः । अनेन हरेर्नानावर्णत्वं तथा करचरणाद्यवयवत्वं श्रियमन्तरेणावस्थानं ध्वनितं तत्कथं युज्यत इतीयमाशङ्का "नानावर्णो हरिस्त्वेको बहुशीर्षभुजोरुपात् । प्रासील्लये तदन्यत्तु सूक्ष्मरूपं श्रियं विना । प्रसुप्तः सुप्त इव च मीलिताक्षो यवेद्धरिः । अन्यज्ञानाद्वराच्छ्रीश्च विष्णौ लीनेव कथ्यते । सूक्ष्मत्वेन हरौ स्थानाल्लीनमन्यदपीष्यते" । इत्यनेन परिहर्तव्येति । सृष्टौ स्वीकृतनानावर्णो ज्ञानात्मकावयवं यद्रूपं दृष्टं तदेव प्रलये स्वोदरलीनप्रपञ्चनित्यप्रबुद्धमपि स्वलीनवस्थितं श्रीतत्वेन मीलिताक्षमपरिच्छिन्नं श्रीहरिरूपमिति भावः ॥ ४७ ॥

जयमुक्त्वा सृष्टिमाह । मयीति । मयि मत्सम्बन्धिनाभेः यत्पद्ममासीत् ततः पश्चादेव स्वयम्भूः समभूदित्यन्वयः । कोऽसौ स्वयम्भूरित्यत उक्तमज इति"अजा विष्णुहरच्छागा"इत्यतः कथं निर्णय इत्यत उक्तमाद्य इति। जगदादौ भूतश्चतुर्मुख एवेत्यर्थः । "अजः पितामहो ब्रह्मा" इत्यभिधानाच्च । कीदृशे मयि अनन्तगुणे असङ्ख्यातज्ञानादिगुणे गुणतोऽनन्ते प्रत्येकशोऽप्यसङ्ख्याते अनन्तविग्रहे असङ्ख्यातरूपे "प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते । अनन्तत्वं तु गुणतस्तेऽप्यनन्ता हि संख्यया । अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव च" इति वचनं चात्रमानम् ॥ ४८ ॥

महादेवः देवेभ्यो महानुत्तमः । स ब्रह्मा अकल्पमशक्तं स्रष्टुमिति शेषः ॥ ४९ ॥

अथ तदा मे मया येन तपसा ॥ ५०—५२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तीव्रया नितान्तया मुदा स्वात्मस्थितत्प्रेमरूपया । आपूरितैः सर्वथाप्यंशेन पूरितैः सन्निर्मनोद्वारैः ज्ञानेन्द्रियैरिति तच्चदावेदनात् स्वात्मनः सर्वांशेन पूरितैर्निर्झरैर्जलनिर्गमैर्हृदिन्य इवेति ॥४१—४४॥

नन्वकामस्य तव कथमभूतविभूतिकामना । उच्यते । भक्तसम्बन्धात्तद्वात्सल्यैर्भवेत्याह । ब्रह्मेति । ब्रह्मादयो भक्ता हि मत्कृते मम विभूतयः ते चान्येषां भूतिहेतव इति ॥ ४५ ॥

यतो भक्तिः खलु ममान्तरङ्गा शक्तिरित्याह । तप इति ॥ ४६ ॥

तत्र भक्त एव मम सृष्ट्यादिसम्बन्धे हेतुरिति दर्शयितुमाह । अहमिति । पद्ममिदं जगदाधिकृत्य ननु वैकुण्ठमधिकृत्येति ज्ञेयम् ॥ ४७ ॥

भक्तमेव दर्शयति । मयीति ॥ ४८ ॥

वीर्योपबृंहितः वीर्याज्जातः ॥ ४९ ॥

तस्य च भक्तिं दर्शयति । अथेति । तस्माद्भवतोऽपि भूतिविभूतिहेतुत्वं भक्तत्वादेवेति ॥ ५०—५२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यथा ह्रदिन्यो निर्झरैरापूर्यन्ते तथा मुदा आनन्देन आपूरितानि मनोद्वाराणि चक्षुरादीन्द्रियाणि तैर्हेतुभिः किञ्चन उदीरयितुं वक्तुं द्रष्टुं श्रोतुं वा नाशकत् ॥ ४१—४२ ॥

मयि परं भावं परमात्मैवायमिति श्रेष्ठां भावनाम् ॥ ४३ ॥

अस्य विश्वस्य उदयुंहणं वृद्धिकरं यत्ते तपोऽभूत् तत् ममैव कामः । मदिच्छयैव तव तपः सिद्धं बभूवेत्यर्थः । ननु किमर्थं कारस्ते काममत्राह । भूतानां विभूतयः समृद्धयो भूयासुरिति यद्व एवेति ॥ ४४ ॥

ननु भवादृशा निकृष्टा एवेत्याह । ब्रह्मेति ॥ ४५ ॥

कर्मयोगे समुचितं मे रूपं श्रृणुवित्याह । तपः यमनियमादिकं मे हृदयम् । विद्या साङ्गमन्त्रजपो मे तनुः । क्रिया नित्यनैमित्तिकाद्या ममाकृतिः आकारः । क्रतवो ममाङ्गानि शिरो... "एतद्यत् प्रवर्ग्यं उपसदश्चक्षुषी आज्यं भागौ"इत्यादि श्रुतेः जाता अभूवन् । धर्म्मः क्रत्वाद्यपूर्वं ममात्मा मनः । ममासवो देवाः सच्चिदानन्दस्वरूपस्य मम हृदयादिविभूतयस्तपआदयः इति ।

भक्तियोगे समुचितं मे स्वरूपं श्रृणुवित्याह । अहमेवेति त्वया दृष्टमेतद्रूपपद्मशङ्खचक्रवाहनपार्षदादिविशिष्टं एतत् सृष्टेः पूर्व्वमासमेव । तथैवाग्रे महाप्रलयानन्तरमपि भविष्यामि वेत्यग्रे इत्यस्य पूर्व्वोत्तरकालवाचित्वाल्लभ्यते । साम्प्रतं त्वन्नेत्रवेद्यस्य स्वत एव प्राप्तिरिति स्वस्य त्रैकालिकी सत्ता दर्शिता । किञ्च । ममान्तरं बहिश्च अन्यत् किमपि नास्ति । परिच्छिन्नस्यापि मत्स्वरूपस्य व्यापकत्वादिदत्यचिन्त्यशक्तिमत्त्वञ्च दर्शितम् । यच्छ्रूयते "न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् । पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः । तं मत्वात्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम् । गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा" इति । ज्ञानयोगे समुचितं स्वरूपं श्रृणुवित्याह । सज्ज्ञानमात्रं चैतन्यमात्रम् । अव्यक्तमिन्द्रियवृत्तिभिरग्राह्यं विश्वतः सर्वत्र ॥ ४७ ॥

स्वस्वरूपसत्यमुपदिश्य सृष्टौ प्रवर्तयितुमितिहासमाह । मयीति । गुणतो मायातः । गुणविग्रहो ... ब्रह्माण्डे ... स्तन्मध्य एव स्वयम्भूर्युष्माकमाद्यः ॥ ४८ ॥

खिन्नमसमर्थमिव ॥ ४९ ॥

मे मया तप तपेत्युक्तः सन् येन तपसा ॥ ५० ॥

---

एषा पञ्चजनस्याङ्ग ! दुहिता वै प्रजापतेः ।
असिक्नी नाम पत्नीत्वे प्रजेश ! प्रतिगृह्यताम् ॥ ५१ ॥
मिथुनव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः ।
मिथुनव्यवायधर्मिण्यां भूरिशो भावयिष्यसि ॥ ५२ ॥
त्वत्तोऽधस्तात् प्रजाः सर्वा मिथुनीभूय मायया ।
मदीयया भविष्यन्ति हरिष्यन्ति च मे बलिम् ॥ ५३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निर्झरैरिव नद्य इव मुदा आपूरितमनोद्वारैरानन्दितान्तःकरणबहिरिन्द्रियैः किञ्चनाप्युदीरयितुं नाशकत् ॥४१॥ ४२ ॥

भावं भक्तिम् ॥ ४३ ॥

यद् यस्मात्ते तपः अस्योद्बृंहणं वृद्धिकरमतस्ते तुभ्यं प्रीतोऽहं प्रीतिमेव दर्शयति । भूतानां विभूतयः समृद्धयो भूयासुर्मेधेयुरिति स्वेव ममैव कामः ॥ ४४ ॥

भूतिहेतवो विभूतिवृद्धिकराः तपसेति शेषः ॥ ४५ ॥

प्रस्तुतं स्वप्रीतिजनकं तपः स्तुवंस्तद्वद्विद्यादीन्यपि स्वप्रीतिजनकानि स्तौति । तप इति । हृदयं मनः । तनुर्देहः क्रिया सदाचारः । आकृतिः आकारः । जाताः स्वनुष्ठिताः क्रतवः मखानि आत्मा स्वरूपम् ॥ ४६ ॥

ननु यस्तपसा प्रीतोऽभूत् यस्य च ब्रह्मादयो विभूतयः स त्वं कः कुतश्च ते तव विभूतय इत्यत्र अहं सर्वहेतुर्ब्रह्मादयो मत्कार्यत्वान्मद्विभूतय इति सूचयन् पुनस्तपस्तौति । अहमिति चतुर्भिः । अग्रे सृष्टेः पूर्वम् अहं सर्वबीजभूतं ब्रह्मैव आसमेव अन्यत्ततः पृथगान्तरं भोक्तृत्वं बहिर्भोग्यवस्तु किञ्चन किञ्चनापि नासीत् । सर्वस्य सूक्ष्मरूपेण मदन्तर्गतत्वात् । कथम्भूतम् । संज्ञानमात्रं सम्यग् ज्ञानमात्रं ज्ञेयस्य विश्वस्य स्वस्मिन्नुपसंहृतत्वादिरर्थः । मत एवाव्यक्तं विश्वाकारं व्यक्ताविर्भावरहितम् । विश्वतः सर्वतः प्रसुप्तमिव ॥ ४७ ॥

गुणतः शक्तिगुणेभ्यः । गुणविग्रहो ब्रह्माण्डाख्यो मम देहः । ततस्तदनन्तरम् आद्यः प्रजानां पूर्वः अजोऽयोनिजः ॥ ४८ ॥

स महादेवो ब्रह्मा मम वीर्येणोपबृंहितः उत्पादितः । सर्गकर्मणि उद्यतः आत्मानं खिन्नमसमर्थमनाथमिव मेने नाथे मयि विद्यमानेऽपीति द्योतयितुमिवशब्दः ॥ ४९ ॥

दारुणं दुष्करं बिभ्रुर्विपुलयोधः ॥ ५० ॥

---

भाषा टीका ।

दक्ष प्रजापतिने पृथिवी में दंड की नाईं गिरकर भगवान् को प्रणाम किया बडे भारी आनन्द के होने से मुख से वचन निकालने से समर्थ नहीं होसके ॥ ४१ ॥

जैसे झरनाओं से नदी भरजाती हैं तैसे प्रजापति के मन इन्द्रियद्वार सब आनन्द से भरगये स्तोत्र के फलरूप प्राप्त परमात्मा को नमस्कार करते रहगये ॥ ४२ ॥

प्रजाओं की कामना करने वाले तिस प्रकार से नम्र प्रजापति को देखकर सब के चित्त को जानने वाले जनार्दन भगवान् इस वचन को बोले ॥ ४३ ॥

श्रीभगवान् बोले हे महा भाग ! प्राचेतस ! तुम अब तपस्य से सिद्ध होगये जिससे कि परमश्रद्धा से मेरे में परम प्रेम को करते हो ॥ ४४ ॥

हे प्रजानाथ ! मैं तुमारे ऊपर प्रसन्न हूं जो तुमने प्रजावृद्धिके लिये तप किया है सो हमारे को भी अभिमत है क्योंकि हम चाहते हैं कि संसार मे सबकी विभूति बढे ॥ ४५ ॥

ब्रह्मा महादेवजी आप मनु लोग इन्द्र यह सब हमारी विभूती हैं जोकि प्रजाओं की विभूतियों के हेतु हैं ॥ ४६ ॥

सृष्टिके पूर्वकालमें केवल मैंहीं रहा और भीतर अन्तःकरण से बाहिर चक्षु आदि कों से जानने लायक कुछ नहीं था सब जगत् सोया सरीका होगया था केवल ज्ञानमात्र ही था ॥ ४७ ॥

अनन्तगुणवाले अनन्त मेरे विषै गुणों से सत्वादि गुणरूप भारी गुणोंकी मूर्तिवाला सबका आद्यस्वयम्भू अज ब्रह्मा भया॥४८॥

वह ब्रह्मा जब हमारे वीर्यसे वृद्धिको प्राप्त भया तब भी सृष्टि के कर्म में उद्यत होने पर अपने को ब्रह्मा ने असमर्थ समुझा ॥ ४९ ॥

तब उस देव ब्रह्माने मेरे कथन से अति कठिन तप किया जिस तपके करने से समर्थ होकर ब्रह्माने आदि में आप दक्षादि नौ प्रजापतियों को सृजा है ॥ ५० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सन्ततिवृद्ध्युपायमाह । एषेति । अङ्ग ! हे दक्ष ! पञ्चजनाख्यस्य प्रजापतेः ॥ ५१ ॥

मिथुनस्य यो व्यवायो रतिः स एव धर्मो यस्य स त्वम् । तथाभूतायां तस्याम् ॥ ५२ ॥

॥ श्रीशुक उवाच ॥

इत्युक्त्वा मिषतस्तस्य भगवान् विश्वभावनः ।
स्वप्नोपलब्धार्थ इव तत्रैवान्तर्दधे हरिः ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां षष्ठस्कन्धे प्रचेतसां दक्षोत्पत्ति-
वर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मायया निमित्तभूतया । स्त्रिया सह मिथुनीभूय भविष्यन्ति पुत्रादिरूपेणोत्पत्स्यन्ते ॥ ५३ ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सन्ततिवृद्ध्युपायमाह । एषेति । अङ्ग हे दक्ष ! पञ्चजनस्य प्रजापतेर्योऽसिक्नी नाम दुहिता सैषा हे प्रजेश ! पत्नीत्वे भार्यात्वेनेत्यर्थः । प्रतिगृह्यतां त्वयेति शेषः ॥ ५१ ॥

मिथुनस्य यो व्यवायो रतिः स एव धर्मो यस्य सः त्वं मिथुनव्यवायधर्मिण्यामसिक्न्यामिमं प्रजासर्गं भूरिशो भावयिष्यसि वर्द्धयिष्यसीत्यर्थः । उभयोरपि मिथुनव्यवायधर्मविशेषणं परस्परसानुकूल्यसूचनार्थम् ॥ ५२ ॥

त्वत्तोऽधस्तादर्वाचीनाः प्रजाः सर्वाः मदीयया मायया मत्सङ्कल्पेन मिथुनीभूय भविष्यन्ति । मिथुनीभूता भविष्यन्ति मिथुनकर्मणोत्पत्स्यन्त इत्यर्थः । त्वत्तोऽधस्तात् प्रजा इत्यनेन प्राचेतसात्पूर्वं केवलसङ्कल्पादिभिरपि प्रजानामुत्पत्तिरासीत् सूचितम् । तथा मे मह्यं च बलिं हरिष्यन्ति । मदाराधनरूपं यज्ञादिकर्म कारिष्यन्तीत्यर्थः ॥ ५३ ॥

इतीत्थमुक्त्वा विश्वस्य भावन उत्पादको भगवान् हरिस्तस्य प्राचेतसस्य मिषतः पश्यतः सतः स्वप्नोपलब्धार्थ इवेति विस्मयनीयत्वे विपद्दशित्वे च दृष्टान्तः । यथा "रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम्" इति ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्र-
चन्द्रिकायां चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मदीयया मत्स्वरूपया मायया स्त्रीरूपिण्या अधस्तादर्वाचीनाः । बलिं मे हरिष्यन्ति दास्यन्ति ॥ ५३ ॥

मिषतः पश्यतः ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मिथुनीभूयेति केवलं मिथुनीभूयैवेत्यर्थः ॥ ५३—५४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्वमपि सर्व्वरूपे पैतृके धर्म्मे यतस्वेत्याह । एषेति ॥ ५१ ॥

मिथुनस्य स्त्रीपुंसयोर्यो व्यवायः रतिः स एव धर्मो यस्य स त्वम् । तथा भूतायां तस्यामिति तादृशहंसगुह्यस्तवेन स्तुतेनापि दत्तनिजश्रीमूर्त्तिदर्शनप्रसादोऽपि उपदिष्टनिजतत्त्वोऽपि दक्षो भगवता यत् कर्म्ममार्गगम्ये विषयभोगे निःसीमके निक्षिप्तो नतु स्वप्रेमामृतसिन्धौ । तत्खलु स्वमहाभक्तश्रीरुद्रापराधस्योपस्याभङ्गुरत्वेन हेतुना इति गम्यते । अतएवानन्तराध्याये श्रीमुनीन्द्रेणापि विष्णुमायोपबृंहित इत्याख्यास्यमानो दक्षो नारदमप्याक्षेप्स्यतीति पुनरप्यस्य महदपराधः फलिष्यति । न च कर्द्दमोऽपि भगवता विषयभोग एव निक्षिप्त इति वाच्यम् । तस्यैव सकामत्वमालक्ष्यैव भगवता सावधिक एव विषयभोगवरोदत्तः । नतु निरवधिक एव । यदुक्तं तत्रैव "त्वञ्च सम्यगनुष्ठाय निदेशं मे उशत्तमः । मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यसे" इति । स च कर्द्दमोऽपि अनुग्रहायास्त्वयीत्यादिना भक्तिमेवान्ते प्रार्थयामास । एवं सकामा अपि सर्व्व एव भक्ता ध्रुवादयो भक्तिमेवाकाङ्क्षुरेव दक्षस्त्वजं भक्तिं नाकाङ्क्षति स्म भगवानपि तां नददावित्येतदेवापराधस्योपस्यास्तित्वे लक्षयामिति ॥ ५२ ॥

भविष्यन्ति पुत्रादिरूपेण जनिष्यन्ते ॥ ५३-५४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठस्कन्धे चतुर्थोऽयं सङ्गतः सङ्गतः सताम् ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

कुरुतान्मे मनोरथामिति तद्वाञ्छितं प्रजावृद्ध्युपायमाह । ...तीति । ॥ ५१ ॥

मिथुनस्य स्त्रीपुरुषयुग्मस्य यो व्यवायो रतिः स एव धर्मो ...स्य । स त्वं तथाभूतायां प्रजासर्गं भूरिशः बहुप्रकारं भाव...यिष्यसि ॥ ५२ ॥

...तः अधस्तात्पश्चात् । मिथुनीभूय द्वन्द्वीभूय भविष्यन्त्यपत्य...र्मेऽवपरस्यन्ते ॥ ५३ ॥

...मिषतः पश्यतः ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्री । शुकदेवकृतसिद्धान्तप्रदीपे
चतुर्थाध्यायार्थप्रकाशः ॥ ४ ॥

---

भाषा टीका ।

अब हे प्रजेश ! दक्ष ! यह पञ्चजन प्रजापति की पुत्री असिक्नी नाम की है इसको तुम पत्नी रूपसे ग्रहण करो ॥ ५१ ॥

स्त्रीपुरुष के सङ्गसे रति करनेवाले तुम होवो यह भी मिथुन धर्मवाली है इसमें तुम फिर बहुत प्रजाओंकी उत्पत्ति करोगे ॥५२॥

हमारी माया से तुमारे से नीचे के सब प्रजा मैथुन धर्मवाले होकर पैदा होंगे और मेरी सेवा करेंगे ॥ ५३ ॥

श्रीशुकदेवजी बोले विश्वपालक भगवान् हरि इस प्रकार कहकर दक्ष के देखते ही देखते स्वप्नमे मिले पदार्थ सरीके उसी ठिकाने अन्तर्धान होगये ॥ ५४ ॥

इति श्रीभागवत षष्ठस्कन्ध चौथे अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ ४ ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

## ॥ पञ्चमोऽध्यायः ॥

---

॥ श्रीशुक उवाच ॥

तस्यां स पाञ्चजन्यां वै विष्णुमायोपवृंहितः ।
हर्यश्वसंज्ञानयुतं पुत्रानजनयद्विभुः ॥ १ ॥
अपृथग्धर्मशीलास्ते सर्वे दाक्षायणा नृप ! ।
पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशम् ॥ २ ॥
तत्र नारायणसरस्तीर्थं सिन्धुसमुद्रयोः ।
सङ्गमो यत्र सुमहन्मुनिसिद्धनिषेवितम् ॥ ३ ॥
तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ।
धर्मे पारमहंस्ये च प्रोत्पन्नमतयोऽप्युत ॥ ४ ॥
तेपिरे तप एवोग्रं पित्रादेशेन यन्त्रिताः ।
प्रजाविवृद्धये यत्तान् देवर्षिस्तान् ददर्श ह ॥ ५ ॥
उवाच चाथ हर्यश्वाः ! कथं स्रक्ष्यथ वै प्रजाः ।
अदृष्ट्वान्तं भुवो यूयं बालिशा वत पालकाः ॥ ६ ॥
तथैकपुरुषं राष्ट्रं विलं चादृष्टनिर्गमम् ।
वहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिम् ॥ ७ ॥
नदीमुभयतोवाहां पञ्चपञ्चाद्भुतं गृहम् ।
क्वचिद्धंसं चित्रकथं चौरपव्यं स्वयं भ्रमिम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चमे नारदेनाथ वाचःकूटैस्तु नाशितान् ।
सुतानाकर्ण्य दक्षोऽमुं शशापेति निरूप्यते ॥ १ ॥ १ ॥

अपृथग्धर्मशीला एकाचारस्वभावाः ॥ २ ॥

तत्र प्रतीच्यां दिशि सिन्धोर्नद्याः समुद्रस्य च यत्र सङ्गमस्तत्रस्थं नारायणसरोनाम तीर्थं प्रययुरित्यन्वयः । सुमहदतिविस्तीर्णम् ॥ ३ ॥

विनिर्धूतो मलो रागादिर्यस्मात् स आशयो येषाम् ॥ ४ ॥

तान् शुद्धसत्वानपि पित्रादेशजाड्येन प्रजाविवृद्धयं यत्तानुशुक्तान् ददर्श ॥ ५ ॥

अहो कष्टं मोक्षमार्गाधिकारिणः सन्त एते प्रवृत्तिनिष्ठैः कर्मभिर्नश्येरन्निति कृपया तान्निगूढार्थैर्वाक्यैरुपादिशति स्म । तदाह । उवाचेति चतुर्भिः । पालकाः सन्तोऽपि बालिशा अज्ञा यूयं कथं प्रजाः स्रक्ष्यथ । वतेति खेदे । पालका इति पाठे बालिशत्वे हेतुः ॥ ६ ॥

एक एव पुरुषो यस्मिंस्तद्राष्ट्रमदृष्ट्वेत्यनुषङ्गः । विलञ्चेत्यादि द्वितीयान्तानामविज्ञाय कथं सर्गं करिष्यथेति तृतीयेनान्वयः ॥ ७ ॥

पञ्च पञ्चानां पञ्चविंशतेरद्भुतं गृहं क्षौरपव्यं क्षुरैः पविभिर्वज्रैश्च निर्मितमिवातितीक्ष्णं दृढं चेत्यर्थः । स्वयं स्वतन्त्रं भ्रमिं भ्रमणस्वभावम् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः प्राचेतसः किमकरोदित्यत्राह मुनिः । स इति । विष्णुमायोपवृंहितः भगवत्सङ्कल्पेन व्याप्तः स विभुर्दक्षः तस्यां पाञ्चजन्यां पञ्चजनस्य दुहितरि हर्यश्वसंज्ञानयुतं पुत्रानजनयत् ॥ १ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तांस्त्विति । हे नृप ! सर्वे दाक्षायण्याः दक्षस्य पुत्राः । तरापत्ये फणार्थः । अपृथग्धर्मशीलाः समानधर्माचरणशीलाः । प्रजासर्गे निमित्ते पित्रा प्राचेतसेन प्रोक्ताः आदिष्टाः प्रतीचीं दिशं प्रययुः ॥ २ ॥

सिन्धुसमुद्रयोर्यत्र सङ्गमः यत्र नारायणसरआख्यं सुमहत्पुण्यमत एव मुनिभिः सिद्धैश्च निषेवितं तीर्थं वर्त्तते तत्र ययुरित्यर्थः ॥ ३ ॥

तस्य तीर्थस्योपस्पर्शनादेव विनिर्धूतमलः निरस्तमल आशयोऽन्तःकरणं येषां तादृशास्ते । पारमहंस्ये धर्मे । परमहंसानां कर्म पारमहंस्यं तस्मिन्निवृत्तिधर्मे प्रोत्पन्ना मतिर्येषां ताश्चाभवन् ॥ ४ ॥

एवंभूता अपि पित्रादेशेन प्राचेतसाज्ञया यन्त्रिता वशीकृताः उग्रं तप एव तेपिरे चक्रुः । पारमहंस्यधर्मपरा अपि पित्रादिष्टप्रजावृद्धिविधानोपयुक्तं तप एव चक्रुरित्यर्थः । एवं प्रजाभिवृद्धये यत्तान् प्रजाभिवृद्ध्युपयुक्तयत्नं कुर्वाणांस्तान् हर्यश्वान् देवर्षिः श्रीनारदो ददर्श । हेति देवर्षेर्दर्शनस्य दौर्लभ्यं द्योतयति ॥ ५ ॥

हर्यश्वान् प्रत्युवाच उक्तमेवाह । कथमित्यादिना सर्गं करिष्यथेत्यन्तेन । हे बालकाः ! यूयं बालिशा अज्ञाः सन्तः प्रजाः कथं स्रक्ष्यथ प्रसृतामेवाह । अदृष्ट्वेति । भुवोऽन्तमदृष्ट्वा कथं स्रक्ष्यथेत्यन्वयः यद्यपि भुवोऽन्तज्ञानादिकं सृष्ट्यनुपयोगीव प्रतिभाति तथापि न सृष्ट्यनुपयोगित्वेनोच्यते । तस्य भूः क्षेत्रमित्यादिभिः सृष्टिप्रतिबन्धकत्वावगमात् । किन्त्वदृष्ट्वा सर्गं कर्तुमुद्यताः दृष्ट्वा तु भवन्तः सर्गोद्योगान्निवृत्ता एव भवेयुरित्यत्रोच्यते । कथंशब्देन भुवोऽन्तज्ञानाभावे सर्गोद्योगस्य सम्भावना द्योत्यते । अविज्ञाय कथं चिरसर्गं कर्तुमुद्यताः विज्ञाय सुतरां तदुद्योगान्नि भवन्तः भवेयुरित्यर्थः । भुवः पार्थिवस्य देहस्यान्तमवसानमदृष्ट्वानालोक्येत्यर्थः ॥ ६ ॥

एकः पुरुष ईश्वरो यस्मिंस्तद्राष्ट्रम् ईश्वरनियाम्यं जगत् राष्ट्राणां हिनीशान्तानामविज्ञायेत्यनेनान्वयः । अदृष्टनिर्गममविज्ञाननिर्गमोपायं जीवात्मस्वरूपस्याधिष्ठानं हृदयबिलं बहुरूपामनेकरूपां स्त्रियं बुद्धिरूपां पुंश्चल्या व्यभिचारिण्याश्चपलाया बुद्धेः पतिं संसृष्टजीवस्वरूपम् ॥ ७ ॥

उभयतोवाहां सृष्टिबन्धकरीं नदीं मायारूपां पञ्चपञ्चाद्भुतं पञ्चविंशतितत्त्वात्मकं गृहं सजीवशरीररूपम् । चित्रकथं चित्रपदं हंसं बन्धमोक्षहेत्वापादनात्मककथारूपाभ्यां विचित्रपक्षाभ्यां युक्तं परमात्मानि भावः । क्षौरपव्यम् क्षुरैः पविभिर्वज्रैश्च निर्मितं तीक्ष्णं इदं चेत्यर्थः । एनं विभ्रं स्वयं भ्रमणशीलं कालचक्रमिति भावः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानमन्तरेण केवलकर्मणां परमश्रेयःसाधनत्वं निषिध्यतेऽस्मिन्नध्याये । तत्रोपोद्घातं रचयति । तस्यामिति । पाञ्चजन्यां पञ्चजनदुहितरि प्रजापतेः पुत्राः विष्णुमायया विष्णुमाहिम्ना ॥ १ ॥ २ ॥

यत्र प्रतीच्यां सिन्धुसमुद्रयोः सङ्गमोऽस्ति यत्र सङ्गमे नारायणसरोनाम तीर्थं चास्ति सुमहान्तो मुनयश्च सिद्धाश्च सुमहन्मुनिसिद्धाः तैर्निषेवितम् ॥ ३ ॥

तस्य तीर्थजलस्य स्नानाचमनादिना विनिर्धूतमलः आशयो येषां ते तथोक्ताः ॥ ४ ॥

यत्तान् सन्नद्धान् ॥ ५ ॥

हे हर्यश्वाः ! सर्जनलक्षणं कर्म प्रयोजनेन (१) भवितव्यं (२)तत्कथं सेत्स्यति न कथमपि (३) ज्ञानाभावात् । तच्चात्मानात्मविवेकलक्षणं वा इत्यनेन सूचयति "परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः" इति श्रुतेः । इतरेषां दुर्बोधाय हर्यश्वानामौत्सर्गिकज्ञानसद्भावप्रकटनाय च परोक्षवचनेन ज्ञानाभावं दर्शयति । अदृष्ट्वेति । यस्माद्बालकाः अतएव च बालिशा इत्युपचारमात्रवचनम् ॥ ६ ॥ ७ ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उवाच चेति चतुष्कम् । पञ्च गुम्फिताः पञ्च आश्चर्यरूपा यत्र तद्गृहमाश्रयरूपमद्भुतम् ॥ १—१४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वाचः कूटेन हर्यश्वानज्ञांश्चाकृत वैष्णवान् ।
पञ्चमे नारदः शप्तः स दक्षेणेति वर्ण्यते ॥ १—२ ॥

तत्र । दिशि नारायणसरस्तीर्थं महद्वर्त्तते । यत्र सिन्धोर्नद्याः समुद्रस्य च सङ्गमः ॥ ३—४ ॥

यत्ताद् । उद्यताम् ॥ ५ ॥

शुद्धान्तःकरणा एते मोक्षधर्माधिकारिणः । अनुरोधात् पितुः कस्मादत्र मज्जन्ति कर्मणि । तदिमान् मोचये तत्त्वमुपदिश्यैव गूढवाक् । इति कारुणिको वाचः कूटांस्तानाह नारदः । हे हर्यश्वाः ! भुवोऽन्तमदृष्ट्वा प्रजाः कथं स्रक्ष्यथ व्याख्यान्येषां स्वयमेवाग्रे करिष्यत इति न व्याख्यायन्ते । तस्माद् यूयं बालिशा मूर्खा एव यतो बालकाः पालका इति पाठे प्रजानां पालका अपि यूयं बालिशा एव । बतेति विस्मये । एक एव पुरुषो यत्र तद्राष्ट्रमित्यादिद्विनवान्तानामविज्ञाय कथं सर्गं करिष्यथेति तृतीयेनान्वयः । उभयतोवाहाम् । उभयदिक्प्रवाहवतीं पञ्चपञ्चानां पञ्चविंशतितत्त्वानामद्भुतं गृहं विष्णुं परमसाद्गुण्यप्रदत्वात् भक्तानां तानि तत्रैव स्थातुमर्हन्तीति भावः । क्षुरैः । पविभिर्वज्रैश्च निर्मितमतितीक्ष्णं किमपि वस्तु । विपश्चितः सर्वज्ञस्य ॥ ६-९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पञ्चमे श्रीनारदरूपिणा हरिणा हर्यश्वादिपोषणं कृतमित्याच्यते विभुर्विपुलप्रभावः ॥ १ ॥

अपृथक्धर्मः शीलं स्वभावश्च येषां ते ॥ २ ॥

---

(१) ज्ञानाख्यप्रयोजनेन । (२) नतु सर्जनम् ।
(३) ज्ञानाख्यप्रयोजनाभावात् ।

कथं स्वपितुरादेशमविद्वांसो विपश्चितः ।
अनुरूपमविज्ञाय अहो सर्गं करिष्यथ ॥ ९ ॥
श्रीशुक उवाच ॥
तन्निशम्याथ हर्यश्वा औत्पत्तिकमनीषया ।
वाचः कूटं तु देवर्षेः स्वयं विममृशुर्धिया ॥ १० ॥
भूः क्षेत्रं जीवसंज्ञं यदनादिनिजबन्धनम् ।
अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत् ॥ ११ ॥
एक एवेश्वरस्तुर्यो भगवान् स्वाश्रयः परः ।
तमदृष्ट्वाभवं पुंसः किमसत्कर्मभिर्भवेत् ॥ १२ ॥
पुमान्नैवैति यद्गत्वा बिलस्वर्गं गतो यथा ।
प्रत्यग्धामाविद इह किमसत्कर्मभिर्भवेत् ॥ १३ ॥
नानारूपात्मनो बुद्धिः स्वैरिणीव गुणान्विता ।
तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ॥ १४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्र प्रतीच्यां दिशि यत्र सिन्धोर्नद्याः समुद्रस्य च सङ्गमः तत्र सुमहन्नारायणसरस्तीर्थं प्रययुरिति पूर्वेणान्वयः ॥ ३ ॥

तस्मिन् सरसि उपस्पर्शनात् स्नानात् विनिर्धूतमल आशयोऽन्तःकरणं येषां ते ॥ ४ ॥

पित्रादेशेन प्रजाविवृद्धये यत्तानपि पारमहंस्ये धर्मे प्रोत्पन्नमतितया मोक्षाधिकारिणो ज्ञात्वा देवर्षिस्तान् ददर्श ॥ ५ ॥

अथ दर्शनानन्तरमुवाच मोक्षोपायं दशभिर्गूढार्थैर्वाक्यैस्तान् प्रत्युपदिष्टवान्। हे हर्यश्वाः हे पालकाः ! प्रजापतिपुत्राः भुवोऽन्तमदृष्ट्वा अतएव बालिशाः अज्ञा यूयं कथं प्रजाः स्रक्ष्यथ ॥ ६ ॥

तथा राष्ट्रादिकमविज्ञाय अहो कथं सर्गं करिष्यथेति त्रयाणामन्वयः ॥ ७ ॥

पञ्चपञ्चानां पञ्चविंशतितत्त्वानामद्भुतं गृहमाश्रयम्। क्षुरैः पविभिश्च निर्मितम् ॥ ८ ॥

---

### भाषा टीका

श्रीशुकदेवजी बोले उन दक्षजी ने विष्णु की माया से संयुक्त होकर उस पांच जनी भार्या मे हर्यश्व नामक दश हजार पुत्रों को उत्पन्न किया ॥ १

हे नृप दक्ष प्रजापति के वे पुत्र सब एक स्वभाव वाले ये उनको पिता ने प्रजा सृजने की आज्ञा दी तब वे सब पश्चिम दिशा को चले गये ॥ २ ॥

उस पश्चिम दिशा मे सिंधु नाम की नदी तथा समुद्र के संगम मे जहां सिद्धों से सेवित बडा भारी नारायण सरोवर नाम का तीर्थ है ॥ ३ ॥

तहां उस तीर्थ मे स्नान पान करते मात्र उनके मनके कल्म[illegible] सब दूर होगये तिस से उन सबों की परम हंस धर्म[illegible] बुद्धि उत्पन्न होगई ॥ ४ ॥

पिता की आज्ञा के परवश होकर प्रजाओं की वृद्धि[illegible] निमित्त उग्रतपस्या को करने लगे उन को उस प्रकार यत्न यु[illegible] होने पर देवर्षि नारदजी ने जाकर देखा ॥ ५ ॥

उन से नारदजी बोले हे हर्यश्वो हो तुम जगत पाल[illegible] होने पर भी अज्ञानी हो क्योंकि पृथवी के अन्त को न देखकर [illegible] प्रजाओं की सृष्टि करोगे ॥ ६ ॥

तैसे ही एक पुरुष वाले राज्य को न देखकर [illegible] पीछे नहीं निकलने लायक बिलको न देखकर बहुत [illegible] वाली स्त्री को न देखकर पुंश्चली स्त्री के पति पुरुष [illegible] न देखकर दोनों तरफ को बहने वाली नदी को न देख[illegible] पच्चीस वस्तुओं के अद्भुत घरको न देखकर विचित्र [illegible] वाले हंसको न देखकर छुराओं से वज्रों से बने हुये [illegible] वाले पदार्थ को न देखकर कैसे सृष्टि करोगे ॥ ७ ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विपश्चितः । सर्वज्ञस्य स्वपितुरादेशमात्मनोऽनुरूपमवि[illegible] सोऽजानन्तः पूर्वोक्तं चैकपुरुषं राष्ट्रमित्याद्यविज्ञायाहो कथं [illegible] करिष्यथेत्यन्वयः ॥ ९ ॥

वाचः कूटम् परोक्षवादेनार्थान्तरमिव प्रतीयमानं वचन[illegible] औत्पत्तिकी सहजा मनीषा विचारशक्तिर्येषां तस्तया [illegible] स्वयमेव विममृशुर्विचारितवन्तः ॥ १० ॥

तत्सङ्गभ्रंशितैश्वर्यं संसरन्तं कुभार्यवत् ।
तद्गतीरबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १५ ॥
सृष्ट्यप्ययकरीं मायां वेलाकूलान्तवेगिताम् ।
मत्तस्य तामविज्ञस्य किमसत्कर्मभिर्भवेत् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नारदोक्तदशवाक्यानां तैर्विमृश्य निर्णीतानर्थानाह दशभिः । भूम्यन्तं भुव इत्यत्र भूशब्दार्थमाह । भूरिति । क्षेत्रं तच्चात्र जीवसंज्ञं लिङ्गशरीरं यदनादिजबन्धनमात्मनो बन्धकारणम् । अन्तशब्दार्थमाह । निर्वाणं नाशम् । असद्भिर्मोक्षानुपयोगिभिः कर्मभिः किं भवेन्न किमपि ॥ ११ ॥

एकपुरुषमित्यस्यार्थमाह । एक एवेति । तुर्यः सर्वसाक्षी । स्वाश्रयः स्वाधारः । अभवं नित्यमुक्तम् । असद्भिरीश्वरासमर्पितैः कर्मभिः ॥ १२ ॥

बिलश्चादृष्टनिर्गममित्यस्यार्थमाह । पुमान् यद्गत्वा प्राप्य बिलस्वर्गं पातालं गत इव नैवैति नावर्तते तत् प्रत्यग्धाम ज्योतीरूपं ब्रह्माविदोऽविदुषोऽसद्भिर्नश्वरस्वर्गादिसाधनैः कर्मभिः ॥ १३ ॥

बहुरूपां स्त्रियमित्यस्यार्थमाह । नानारूपेति । स्वैरिणीव पुंश्चलीव विमोहकैः रजआदिगुणैरन्विता । तन्निष्ठां तस्या अवसानं विवेकमगतस्याप्राप्तस्य । असद्भिरशान्तैः ॥ १४ ॥

पुमांसं पुंश्चलीपतिमित्यस्यार्थमाह । तस्याः सङ्गेन भ्रंशितमैश्वर्यं स्वातन्त्र्यं यस्य । कुत्सिता भार्या यस्य तद्वत् । तस्याः गतीः सुखदुःखलक्षणाः । संसरन्तं गच्छन्तं जीवमबुधस्याजानतः । असद्भिरुदयविवेकप्राप्तैः ॥ १५ ॥

नदीमुभयतोवाहामित्यस्यार्थमाह । सृष्ट्यप्ययौ करोतीत्युभयतः प्रवाहो दर्शितः । वेलाकूलं प्रवाहपतितानां निर्गमस्थानं विवेकादि तस्यान्ते समीपे वेगितां निर्गमप्रतिबन्धाय क्रोधाकारादिभिः कृतवेगां मत्तस्य तद्वेगेन विवशस्यात एव तां मायामविज्ञस्याविचारयतः । असद्भिर्मायिकैः । यद्वा । वेलाकूलं लोकस्य व्यवहारस्थानं तस्य समीपे समुद्रवृद्धिह्रासाभ्यां यथोपान्तेऽन्तर्वेगैः कृतवेगा नदी भवत्येवं समुद्रतुल्यस्यात्मनो व्यवहारस्थाने देहे जन्ममरणादिभिः कृतवेगामित्यर्थः । वेगिनीमिति पाठे वेगवतीम् ॥ १६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नारदेनतः सर्वज्ञस्य स्वपितुरनन्तजन्मसु हितोपदेशेन रक्षकस्य स्वसंदेशमनुशासनमनुकूलमविज्ञाय यूयं कथंचित्सर्गं करिष्यथ तु न यतिष्यथेति भावः ॥ ॥ ९ ॥

स्वाभिप्रायेशरूपाणि देवर्षेर्वचांस्याकर्ण्य तानि हर्यश्वाः विमम्रुशुरित्याह मुनिः । तदिति । तद्देवर्षेर्वचो निशम्याकर्ण्य औत्पत्तिकमनीषया स्वभावसिद्धा मनीषा विचारसमर्थतया बुद्ध्या । देवर्षेर्वाचः कूटं कूटमयोक्तत्वाद्दुर्ज्ञेयः कूटं प्रच्छन्नाभिप्रायं वाक्यमित्यर्थः । विमम्रुशुः विचारपूर्वकमभिप्रायं निश्चितवन्तः ॥ १० ॥

कथं विमम्रुशुरित्यपेक्षायां तैर्विमृश्य निर्णीतानर्थानाह । भूरित्यादि दशभिः । तावद्भूशब्दार्थमाह । भूः क्षेत्रमिति । जीवति प्राणान् धारयतीति जीवः सप्राणः । स एव संज्ञा यस्य तत्सप्राणशब्दवाच्यमित्यर्थः । यद्वा । जीवः प्रत्यगात्मैव तेन सम्यग्ज्ञायते इति तज्जीवसंज्ञं बाहुलकात्कर्मणि कः । जीवेन ज्ञेयमित्यर्थः । "एतद्यो वेत्ति तम्" इति शरीरस्य जीवेन ज्ञेयत्वगानात् । अनादिनिजबन्धनमनादिपुण्यपापकर्मनिबन्धनं यत्क्षेत्रं तद्भूशब्दार्थ इति विमम्रुशुरित्यर्थः । अन्तशब्दार्थं तैर्निर्णीतं वदन् समुदायाभिप्रायमाह । अदृष्ट्वेति । तस्य भूशब्दस्य विवक्षितस्य क्षेत्रस्य निर्वाणमन्तशब्दविवक्षितं प्रकृतौ देहस्य प्रलयमदृष्ट्वाऽनालोच्यासत्कर्मभिः किं भवेत् जन्मजरामरणादिमद्देहापादककर्मानिबन्धमनिवर्तयद्भिः प्रत्युत संसृत्यापादकैः कर्मभिः न कोऽपि पुरुषार्थोऽस्तीत्यर्थः । अत्र सर्वत्र विचारश्लोकेषु किमसत्कर्मभिर्भवेदिति चतुर्थः पादो ज्ञेयः ॥ ११ ॥

तथैकपुरुषं राष्ट्रमित्यस्य तैर्निश्चितमर्थमाह । एक इति । तुर्यः जागराद्यवस्थात्रयातीतः स्वाश्रयः अनन्याधारः परः प्रकृतिपुरुषविलक्षणः भगवान् षाड्गुण्यपूर्णो निरस्तनिखिलदोष एक एवेश्वरः अन्तः प्रविश्य धारणेन नियन्ता तमेवं भूतमभवं भवप्रतिभटमविदित्वानुपास्य । एक एवेश्वर इत्यनेन पुरुषशब्दार्थ उक्तः । अनेनेश्वरप्रतिसम्बन्धीशितव्यं जगद्राष्ट्रमिति फलितम् । ईशितव्यानामीश्वरानुवर्तनस्यैवोचितत्वादाराध्येश्वराननुरूपैरीश्वरवैमुख्यापादकैः कर्मभिः किमित्यर्थः ॥ १२

बिलं चादृष्टनिर्गममित्यस्यार्थमाह । पुमानिति । बिलस्वर्गं पातालं गत इव पुमान् जीवः यद्गत्वा यद्धृदयबिलं प्राप्य "हृदयगारा प्रतिष्ठितः" इतिवचनान्नैवैति नावगच्छति । यथा बिलस्वर्गं गतो निरन्तरभोगासक्तो मदान्धः स्वस्वरूपादिकं न विविनक्ति ततो न निर्गच्छति च तथा प्रत्यगात्मस्वरूपं प्रकृतिवियुक्तं यत्र हृदयेऽवस्थितं नावगच्छति तज्जीवस्वरूपस्याधिष्ठानं हृदयं बिलं चादृष्टनिर्गममित्यनेन विवक्षितमित्यर्थः । समुदायाभिप्रायमाह । प्रत्यग्धाम हृदयबिलस्थं प्रत्यक् स्वप्रकाशं धाम ज्योतिः जीवात्मस्वरूपमविदुषः अजानतः असत्कर्मभिः देवमनुष्यादिशरीरहृदयबिलावस्थापादकैः कर्मभिः किं भवेत् किमपि श्रेयो नास्ति प्रत्युतानर्थ एवेति भावः ॥ १३ ॥

बहुरूपामित्यस्यार्थमाह । नानेति । आत्मनो जीवस्य या नानारूपा बहुगुणात्मिका स्वैरिणीव पुंश्चलीव रागादिभिर्गुणैरन्विता बुद्धिः सैव बहुरूपां स्त्रियमित्यनेनाभिप्रेतेत्यर्थः । तस्या निष्ठामवसानं विवेकमगतस्याप्राप्तस्येह लोकेऽसत्कर्मभिः किं भवेत् प्रत्युत संसाररूपानर्थ एवेति भावः ॥ १४ ॥

पुमांसं पुंश्चलीपतिमित्यस्यार्थमाह । तत्सङ्गेति । तस्या बुद्धेः पारवश्येन भ्रंशितैश्वर्यमकर्मवश्यत्वं यस्य तमत एव कुभार्यवत्

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भार्या यस्य । तेन तुल्यं कुभार्यवत् । भार्याभिलषितवस्त्राभरणाद्यर्जना-यासदुःखिनमिव सरन्तं जन्मजरामरणादिपरिवृत्तिरूपसंसारमनु-भवन्तं संसृष्टजीवस्वरूपम् । तद्गतीः । बुद्ध्यायत्तस्वर्गनरकादिगतीश्चा-बुधस्याजानतः । असत्कर्मभिः स्वर्गनरकादिगत्यापादकैः कर्मभिः किं भवेन्न किमपि श्रेयः सम्भवति । प्रत्युत दुःखमेव स्यादिति भावः ॥ १५ ॥

नदीमुभयतोवाहामित्येतद्विवृणोति । सृष्टयप्ययकरीमिति । जन्ममरणकरीमनेनोभयतः प्रवाहो दर्शितः । वेलाकूलशब्दौ तीर-द्वयपरौ तयोरन्तेऽवसाने वेगितां संजातवेगाम् । इहलोकपरलोकौ वेलाकूलत्वेन रूपितौ । वेगेनेहलोकपरलोकप्राप्तिकरीमित्यर्थः । एवम्विधां मायां तदविज्ञस्य तत्त्वेनाविज्ञस्य तथाभूतामविज्ञ-स्याविचारयतः । तत्र हेतुः । मत्तस्य मायापरवशस्यासत्कर्मभि-रिहपरलोकप्राप्तिहेतुभिः कर्मभिः किं भवेन्न किमपि प्रत्युता-नर्थः स्थावरत्वादिप्राप्तिरूपोऽनर्थ एवेति भावः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनुरूपमात्मानात्मविवेकलक्षणाम् ॥ ९ ॥

औत्पत्तिकमनीषया स्वाभाविकज्ञानसम्पन्नया धिया विचार-विशुद्धया बुद्ध्या वाचः कूटं वचनसमूहं गुह्यभाषात्मकत्वेन कूटमिव प्रतीयमानं वा अल्पबुद्धिभिर्दुर्बोधं वा स्वयं परोपदेशं विना विमम्रृशुः विचार्यालोच्य निश्चितवन्त इत्यर्थः । "मननेच्छा मनीषा स्यादज्ञानं बुद्धिर्मतिस्तथा" इत्यभिधानम् । "कूटं तु कैतवं ज्ञेयं समूहो मेलनं तथा" इति च औत्पत्तिकमनीषया निरूप्योक्तं धिया विमम्रृशुरिति वा ॥ १० ॥

कथं निश्चिक्युरिति तत्राह । भूः क्षेत्रमिति । भुवोऽन्तमित्यत्र भूशब्देन क्षेत्रं सूक्ष्मशरीरं लिङ्गशब्दवाच्यमुच्यते । कस्य विद्य-मानमत्राह । बीजेति बीजसंज्ञस्य जीवस्य यच्छरीरमनादिकाल-मारभ्य जीवं नितरां बध्नातीति अनादिनिबन्धनम् । अस्मिन् काले प्रारब्धमित्यनियमादनादि (१) अनेन लिङ्गशरीरस्य भूशब्दवा-च्यत्वं युक्तम् "भूसत्तायाम्" इति धातोः . सत्तायास्तथात्वात् (२) तस्य शरीरस्यान्तं निर्वाणं सर्वात्मना नाशमदृष्ट्वानेनोपायेन नाशो भवतीत्यज्ञात्वासत्कर्मभिरात्मानात्मविवेकाजनकैः सर्जनलक्षणैः कर्मभिः किं फलं न किमपीत्यर्थः ॥ ११ ॥

तथैकपुरुषं राज्यमित्यस्य विमृष्टार्थमाह । एक एवेति । तुर्यो-ऽवस्थात्रयातीतः । अभवं न भवः संसारः उत्पत्तिर्वा यस्य स तथा तं नित्यमुक्तमित्यर्थः । अदृष्टाविज्ञाय पुरुषस्य पशुहिंसालक्षणैः भगवदर्पणबुद्धिशून्यैः यागादिकर्मभिः किं नित्यं फलं भवेन्न स्या-दित्यर्थः । पुंसोऽभयं मुक्तिप्रदं वा ॥ १२ ॥

बिलं चादृष्टनिर्गममित्यस्यालोचितार्थमाह । पुमानिति । पुमान्

यत्प्रत्यगात्मना सर्वात्मनानुगतं ब्रह्मस्वरूपं गत्वा नावर्तते तद्बि-यितबलात्मकत्वाद्बिलशब्दवाच्यं ब्रह्माविदोऽज्ञानतः पुंस इह जी-लोके नित्यनैमित्तिकाद्यसत्कर्मभिः इतरविषयैः बिलं सर्वा-व्यतिरेकदृष्टान्तः । अनेन अदृष्टनिर्गममित्यस्य पुनरावृत्तिशून्यो-इतरत्रानिष्क्रमणार्थ इति सूचितम् ॥ १३ ॥

बहुरूपामित्यस्य युक्तार्थमाह । नानारूपेति । आत्मनो जीवस्य या बुद्धिः चिदचिदात्मिका सत्त्वादिगुणैरुपरक्ता विकृता अत एव नानारूपा "अजामेकां लोहितशुक्लकृष्णाम्" इति श्रुतेः । ना-विधसंस्काराधिवासितत्वात्स्वैरिणी स्वच्छन्दवर्तिनी स्त्रीव तस्या तस्याः बुद्धेश्चेतनायाः निष्ठां भगवत्परतामचिदात्मिकायाः ना-मगतस्य भगवद्भक्त्यादिसामग्रीमकुर्वतः पुरुषस्य बुद्धिदोषना-समर्थैः दानादिलक्षणैः कर्मभिः ॥ १४ ॥

पुमांसं पुंश्चलीपतिमित्यस्य विवक्षितार्थमाह । तत्सङ्गेन तस्याः रजस्तमःप्रकृतेर्बुद्धेः सङ्गेन वशवर्तिलक्षणेन भ्रंशि-विस्रस्तं नष्टमैश्वर्यं भगवज्ज्ञानलक्षणशमदमादिलक्षणं वा यस्य स तथा तम् । अत एव संसरन्तं सुखदुःखे भुञ्जानं जीवं तद्गतीः तस्य जीवस्य गतीः स्वर्गनरकादिलक्षणाश्चाबुधस्याजानतः पुंसः असद्भिः भगवदनुद्देशेन प्रसक्तैः कर्मभिः तीर्थस्नानादिलक्षणैः दुःखनिवृत्तिः फलं भवेत् किम् । कुत्सिता शास्त्रलोकनिन्दिता भार्या पुंश्चली यस्य । स तथा तस्य या नरकादिगतिः तद्वत् अनेन पुंश्च-लीपतिशब्दार्थ उक्तः ॥ १५ ॥

नदीमुभयतोवाहामित्यस्याभिमतार्थमाह । सृष्टीति । वेलाकूल-शब्दाभ्यां सृष्टिसंहारौ लक्ष्येते । तयोरन्तयोर्वाहशब्दोपलक्षितवेगयु-स्थितौ शनैः प्रवर्तमानां तथोक्तां(२)क्रमव्युत्क्रमतः उभयतो वाह-एवम्विधामीश्वरमायां मत्तस्य विषयरागेण विस्मृतस्य भग-तदविज्ञानात्तद्विषयज्ञानाभावादसद्भिः कर्मभिः अश्रद्धया कृतैः पश्वादिलक्षणैः मायाविनिवर्तकं फलं प्रसिद्धनद्याश्च सृष्टि-साम्याभुभयतो वाहत्वं सिन्धुसङ्गमे दृष्टं नदीमातृकं सस्यादिसंहारे च ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्सङ्गभ्रंशितैश्वर्यमिति । जीवस्य स्वज्ञानादिरूपं स्वरूप-सामर्थ्यं दर्शितम् ॥ १५-१६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वाचः कूटं परोक्षवादेनार्थान्तरमिव प्रतीयमानं वचनम् ॥ ९ ॥ नारदोक्तानि दश वाक्यानि सुखबोधार्थं स्वयमेव व्याचष्टे दशभिः । तत्र अदृष्टान्तं भुव इति व्याचष्टे । भूरिति । क्षेत्रं तत्र जीवसंज्ञं लिङ्गशरीरमनादि आदिशून्यं निजस्य जीवस्य बन्धनं यतस्तत्तस्य निर्वाणम् अन्तं ज्ञानेन नाशमिति असत्कर्मभिः अचास्तवैः कर्ममार्गैस्तेन कर्मनिर्वाण-मेव प्रत्युत यतध्वमिति भावः ॥ ११ ॥

तथैकपुरुषं राष्ट्रमित्येतद्व्याचष्टे । एक इति । तुर्यः विश्वतैजस-प्राज्ञेभ्यो भिन्नश्चतुर्थः । राष्ट्रं जगादीति ज्ञेयम् । अभवं न वि-

---

(१) अनादिशब्देन ।

(२) अनादित्वात् ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भवः संसारो भक्तानां यतस्तम् । मद्द्वा भजनैरप्रत्यक्षीकृत्य । तेन तमेव भजतेति भावः ॥ १२ ॥

बिलञ्चादृष्टनिर्गममिति व्याचष्टे । पुमानिति । यत् प्रत्यग्धाम प्रतीचो भगवतो धाम वैकुण्ठं गत्वा प्राप्य न पुनरेति न पुनरावर्त्तते । बिलस्वर्गं पातालं गतो यथा तत्रैवासज्य तिष्ठतीत्यर्थः । अविदः अविदुषो जनस्य तेन वैकुण्ठप्राप्तये यतध्वमिति भावः ॥ १३ ॥

बहुरूपां स्त्रियमित्येतद्व्याचष्टे । नानेति । स्वैरिणीव कुविपर्य्योन्मुखी न तु कृष्णाविपर्य्योन्मुखी गुणाः सौन्दर्य्यवैदग्ध्यादयः । पाणिडत्यादयश्च तैरन्विता । तस्या निष्ठां भद्राभद्रप्रवृत्तिमगतस्य अजानतः अविचारवत इत्यर्थः । अतो विवेकेन बुद्धिं कृष्णोन्मुखीं कुरुतेति भावः ॥ १४ ॥

पुमांसं पुंश्चलीपतिमिति व्याचष्टे । तदिति । कुत्सितभार्य्यं गृहस्थमिव संसरन्तं जीवमबुधस्य अजानतः षष्ठ्यभाव आर्षः । तस्य गतीः स्वर्गनरकाद्या अप्यजानतः स्वेनात्मानमात्मनैवोद्धरतेति भावः ॥ १५ ॥

नदीमुभयतो वाहामिति व्याचष्टे । सृष्टयप्ययौ करोतीति । तां सृष्टिकाले पूर्व्वपूर्व्वतत्तत्स्थानि निःसरन्ति अप्ययकाले उत्तरोत्तरतः पूर्व्वं पूर्व्वं प्रविशन्तीत्युभयतः प्रवाहो दर्शितः । वेलाकूलस्यान्तं समीपं "वेला स्वाम्बीरनीरयोः" इत्यभिधानात् । संसारप्रवाहपतितानां निर्गमस्थानं तपोविद्यादि तत्रैव वेगिनीं निर्गमप्रतिबन्धाय तपोविद्यादिमत्सु दृष्टैः क्रोधाहङ्कारादिभिः कृतवेगां वेगितामिति च पाठः । मत्तस्य तत्तद्वेगेन विवशस्य । अत एव तां तथाभूतामविज्ञस्य अविचारवतः । तेन लौकिकप्रतिष्ठादिकमपि परित्यज्य पारं व्रजतेति भावः ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विपश्चितः । सर्व्वज्ञस्य आदेशमाज्ञामविद्वांसः अजानन्तः ॥ ९ ॥

औत्पत्तिकी स्वाभाविकी मनीषा यथावदर्थचिन्तनरूपा बुद्धिवृत्तिस्तया धिया वाचः कूटं गूढार्थं वाक्यं विममृशुः विचारितवन्तः ॥ १० ॥

ते कथं विममृशुरित्याकाङ्क्षायां श्रीनारदोक्तदशकूटानां तैर्विमृश्य निर्णीतानर्थानाह । भूरिति दशभिः । तत्र तावत् मद्द्वान्तं भुव इत्यस्यार्थमाह । क्षेत्रं संसारप्रापककर्मोदयस्थानं जीवति प्राणान् धारयतीति जीवः । स एव संज्ञा यस्य तज्जीवसंज्ञं लिङ्गशरीरम् । तस्य निर्वाणं बाधोपायमदृष्ट्वा असद्भिः सुद्रैः पितृलोकादिफलकैः मोक्षप्रतिबन्धकैः कर्मभिः किं स्यात् ॥ ११ ॥

तथैकपुरुषं राष्ट्रमित्यस्यार्थमाह । एक इति । तुर्यो जागराद्यवस्थात्रयरहितः । ननु अवस्थात्रयसाक्षी जीवः किमित्यत आह । आश्रयः स्वतन्त्रः परः क्षराक्षरभिन्नस्वरूपः । नास्ति भवः संसारो यस्मात्तमदृष्ट्वा अनर्थं असद्भिस्तदर्चनानुपयोगिभिः कर्मभिः किं भवेत् किमपीत्यर्थः ॥ १२ ॥

बिलं चादृष्टनिर्गममित्यस्यार्थमाह । पुमानिति । बिलस्वर्गं पातालं गतो यथा नैति तथा यद्धाम्या ज्ञात्वा नैवैति देहादिकमात्मत्वादिना नैव जानाति तत्प्रत्यग्ज्योतिःस्वयं धाम स्वरूपमविद् अजानतः । असद्भिः प्रत्यक्तत्त्वस्मरणानुपयोगिभिः ॥ १३ ॥

बहुरूपां स्त्रियं चापीत्यस्यार्थमाह । नानेति । गुणान्विता त्रिगुणान्विता तन्निष्ठां तस्याः निष्ठां संसारप्रदां ब्रह्माणि तत्साधर्म्यप्रदामगतस्य अजानतः असद्भिः संसारप्रापकैः ॥ १४ ॥

पुमांसं पुंश्चलीपतिमित्यस्यार्थमाह । तदिति । तस्या बुद्धेः सङ्गात् भ्रंशितमैश्वर्यं ज्ञानं यस्य तं तस्याः बुद्धेर्गतीः संसारप्रापकान् मार्गान् । संसरन्तं सम्यगनुसरन्तमात्मानमबुधस्य असद्भिः बुद्धिपारवश्यकृतैः ॥ १५ ॥

नदीमुभयतो वाहामित्यस्यार्थमाह । सृष्ट्यप्ययकरीमिति । सृष्टिसंहारकरीत्यनेनोभयतः प्रवाहो दर्शितः । वेलाकूलं जलनिधेः प्रान्तिकरं तटं तद्वदिह वेलाकूलं परमानन्दनिधेः प्रान्तिकरं भजनं तस्मिन् अन्तो निष्ठा यस्य । तस्माद्रयडाद्बूयालीव वेगितां विद्रुतामविज्ञस्य असत्कर्मभिः भगवद्भजनानुपयोगिभिः मायाप्रापकैः ॥ १६ ॥

---

### भाषा टीका ।

विद्वान् अपने पिता की अपने अनुकूल योग्य आज्ञाको न जानकर अहो किस प्रकार तुम सृष्टिकरोगे ॥ ९ ॥

श्रीशुकदेवजी बोले वे हर्यश्वगण नारदजी की उस अप्रकट वाणी को सुनकर स्वभावसिद्ध अपनी बुद्धि से उस वाणी के अर्थ को विचारने लगे ॥ १० ॥

उस के अर्थ को कहते हैं कि अपना जो लिङ्गशरीर है सोई भूमी है यही जीव के बन्धन का कारण है उस शरीर को छुटा कर मोक्ष होने का उपाय नहीं जाना तो असत् कर्मों से क्या होगा ॥ ११ ॥

जाग्रत् आदि अवस्थाओं से परे एक ईश्वर पर अपने ही आश्रित रहने वाला है अजन्मा है उस ईश्वर को नहीं जानने से पुरुषको असत्कर्मों से क्या काम होगा ॥ १२ ॥

जहां जाने पीछे पाताल को गया सरीका पुरुष फिर नहीं आसक्ता है उस ज्योतिरूपस्थानको न जान ने से असत् कर्मों से मनुष्यको क्या होगा ॥ १३ ॥

जीवकी बुद्धि गुणों से युक्त होने से नाना रूपवाली व्यभिचारिणी स्त्री सरीकी होजातीहै उसको यथार्थ जाने विना असत्कर्मों के करने से पुरुष को क्या होगा ॥ १४ ॥

उस बुद्धि के सङ्ग से जिसका दिव्यज्ञानादि ऐश्वर्य नष्ट होगया है खोटी स्त्री वाले की नाई दुःख पाताहै संसार में घूमता है उस बुद्धिकी गतियों को जाने विना असत्कर्मों से इस पुरुषको क्या होगा ॥ १५ ॥

उत्पत्ति संहार करने वाली मोक्ष को जाने वालों को भुला कर रोकने वाली भगवान् की मायाको न जानकर प्रमाद से रहने वाले पुरुषको असत्कर्मों से क्या प्रयोजन सिद्ध होगा ॥ १६ ॥

---

पञ्चविंशतितत्त्वानां पुरुषोऽद्भुतदर्पणम्।
अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १७ ॥
(१) ऐश्वरं शास्त्रमुत्सृज्य बन्धमोक्षानुदर्शनम्।
विविक्तपदमज्ञाय किमसत्कर्मभिर्भवेत् ॥ १८ ॥
कालचक्रं भ्रमिस्तीक्ष्णं सर्वं निष्कर्षयज्जगत्।
स्वतन्त्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १९ ॥
शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम्।
कथं तदनुरूपाय गुणविस्रम्भ्युपक्रमेत् ॥ २० ॥
इति व्यवसिता राजन्! हर्यश्वा एकचेतसः।
प्रययुस्तं परिक्रम्य पन्थानमनिवर्त्तनम् ॥ २१ ॥
स्वरब्रह्मणि निर्भातहृषीकेशपदाम्बुजे।
अखण्डं चित्तमावेश्य लोकाननुचरन्मुनिः ॥ २२ ॥
नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम्।
अन्वतप्यत कः शोचन् सुप्रजस्त्वं शुचां पदम् ॥ २३ ॥
स भूयः पाञ्चजन्यायामजेन परिसान्त्वितः।
पुत्रानजनयद्दक्षः सवलाश्वान् सहस्रशः ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

पञ्चपञ्चेत्यस्यार्थमाह। पञ्चविंशतितत्त्वानां पुरुषोऽन्तर्यामी अद्भुतदर्पणमाश्चर्यरूप आश्रयः अध्यात्मं कार्यकारणसंघाताधिष्ठातारं तमबुधस्य। असद्भिर्मिथ्यास्वातन्त्र्यकृतैः ॥ १७ ॥

कश्चिद्धंसमित्यस्यार्थमाह। ऐश्वरमीश्वरप्रतिपादकं विविक्तं पदं चिज्जडरूपं वस्तु येनेति हंसपदव्याख्यानम्। बन्धमोक्षावनुदर्शयतीति तथा। अनेन चित्राः कथा यस्येति व्याख्यातं तदुत्सृज्यानभ्यस्य अज्ञायाविदुषः। असद्भिर्बहिर्मुखैः ॥ १८ ॥

क्षौरपव्यमित्यस्यार्थमाह। कालचक्रमिति। भ्रमिर्भ्रमणात्मकम्। तीक्ष्णमिति निष्कर्षयदिति च क्षौरपव्यपदं व्याख्यातम्। तदबुधस्यानपेक्ष्य फलस्य नित्यबुद्ध्या काम्यकर्मानुष्ठाने वैगुण्यबाहुल्यादसद्भिः ॥ १९ ॥

स्वपितुरादेशमित्यस्यार्थमाह। शास्त्रस्य स्वपितुर्द्वितीयजन्महेतोः। तदनुरूपाय(२)निवृत्त्यनुरूपाय निवर्तकमादेशं यो न वेद स कथं गुणविस्रम्भी गुणमयप्रवृत्तिमार्गविश्वासवान् सन्नुपक्रमेत् कृष्यादौ प्रवर्तेत। "मोक्षशास्त्रप्रबुद्धीनां जायमानान्तरात्मनाम्। शास्त्रकारोपदेशानामज्ञाने किमु कर्मभिः" इति वाचः कूटसंग्रहश्लोकः ॥ २० ॥

इति व्यवसिता एवं निश्चितवन्तः। एकचेतस ऐकमत्ययुक्ताः। तं नारदं प्रदक्षिणीकृत्यापुनरावृत्तिमार्गं प्रययुः ॥ २१ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

निर्भातः साक्षात्कृतो यो हृषीकेशस्तस्य पदाम्बुजे अनुचरदन्वचरदित्यर्थः ॥ २२ ॥

नाशमदर्शनं स्वधर्मभ्रंशं वा। शीलेन शालन्ते शोभन्त इति तथा तेषाम्। को दक्षः। सुप्रजस्त्वं सत्पुत्रवत्त्वं शुचां शोकानां स्थानम् ॥ २३ ॥ अजेन ब्रह्मणा। सहस्रशः सहस्रसंख्यान् ॥ २४ ॥ २५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

पञ्चपञ्चाद्भुतं गृहमित्येतद्विवृणोति। पञ्चविंशतीति। पञ्चविंशतितत्त्वानां जीवपर्यन्तानां सङ्घातरूपं यत्पुरुषस्य परमपुरुषस्याद्भुतं दर्पणं शरीरमात्मन्यध्यात्मं परमपुरुषधार्यत्वेनावस्थितमबुधस्याविचारयतः। असत्कर्मभिर्देहात्मभ्रमस्वतन्त्रात्मभ्रमापादकैः कर्मभिः किं भवेन्न किमपि प्रत्युत देहात्मादिभ्रमप्रयुक्तोऽनर्थ एवेति भावः ॥ १७ ॥

क्वचिद्धंसं चित्रकथमित्येतद्व्याचष्टे। ऐश्वरमिति। अनेन हंसशब्दार्थ उक्तः। हन्ति दोषानिति हंसः निरस्तनिखिलदोषः। तमीश्वरं शास्त्रं शास्त्रैकवेद्यं बन्धमोक्षानुदर्शनं बन्धमोक्षावनुदर्शयति बन्धमोक्षहेतुप्रवृत्तिनिवृत्तिधर्मानुष्ठापनेन तौ दर्शयतीति तथा। कर्तरि ल्युः। अनेन चित्रकथशब्दार्थ उक्तः। विविक्तं पदं यस्य तं विविक्तस्थानवर्तिनं हृदयकुहरे स्थितमित्यर्थः। अनेन क्वचिच्छब्दार्थ उक्तः। उत्सृज्य त्यक्त्वा अज्ञाय उक्तविधं तमनालोच्य

(१) ईश्वरम् इति श्रीवीरराघवाचार्यपाठः। (२) निवृत्त्यनदायेति क्वचित्पाठः।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

ऐश्वरं शास्त्रमिति पाठान्तरम् । तत्रैश्वरमीश्वरप्रतिपादकमध्यात्म-शास्त्रमुपसृज्यानर्थस्य बन्धमोक्षानुदर्शनं विविक्तपदमीश्वरमविज्ञा-यानुपालयेत्यर्थः । ऐश्वर्यमिति पाठे तु ईश्वरस्य सम्बन्धि ऐश्वरं ईश्वरावेदकं तदेवैश्वर्यं स्वार्थे ष्यञ् । ईश्वरस्वरूपरूपगुणप्रतिपादक-मित्यर्थः । अत्रापि परशब्देन हंसशब्दार्थ उक्तः । असत्कर्मभिरी-श्वरवैमुख्यापादकैः कर्मभिः किमपि न अपित्वात्मनाशरूपोऽनर्थ एवेति भावः ॥ १८ ॥

क्षौरपव्यमित्येतद्व्याचष्टे । कालचक्रमिति । यत्सर्वमाब्रह्म-स्तम्बपर्यन्तं जगन्निष्कर्षयन्निष्काषयन्नोटयदित्यर्थः । अनेन पव्य-शब्दार्थ उक्तः । तीक्ष्णं गर्भजन्मजरामरणादिनिमित्तत्वेन दुःसह-मनेन क्षौरशब्दार्थ उक्तः । भ्रमत्परिवर्त्तमानं स्वतन्त्रमपरवशं कालचक्रं तद्बुधस्याविचारयतः असत्कर्मभिः कालवश्यतापादकैः न किमपि प्रत्युत तापत्रयाभिहतिरेवेति भावः ॥ १९ ॥

स्वपितुरादेशं विद्वणोति । शास्त्रस्य पितुः शास्त्रमेव हि सर्वस्य पिता हितोपदेष्टृत्वात्तस्यादेशं विविच्य ज्ञापनरूपम-नुशासनं निवर्त्तकं प्रवृत्तिधर्मानुष्ठानानिवृत्तिज्ञापकं यः पुमान् वेद स गुणविस्रम्भी गुणमयशब्दादिविषयविश्वासवान् । तदनुरू-पाय तदादेशानुकूल्याय कथं सृष्ट्यादावुपक्रमेत् । सृष्ट्याद्युपक्रमस्य पित्रादेशप्रतिकूलत्वात्तदुपरम एव । तदादेशानुकूलः पित्रादेशानु-वर्ती न सृष्ट्यादौ यतेतेति भावः ॥ २० ॥

एवं यावः कूटं विमृश्य किमकुर्वन्नित्यत्राह मुनिः । इतीति । इति राजन्नितीत्थं व्यवसिताः निश्चयवन्तः । व्यवसायो व्यवसितं तदेषां सोऽस्त्येषामिति व्यवसिताः अर्शआदित्वान्मत्वर्थीयोऽच् । ऐकमत्याः सर्वे एकचेतसः एकमतयः तं नारदं परिक्रम्यानिवर्त्तनं न विद्यते निवर्त्तनं निवृत्तिः यस्मात्तं पन्थानं प्रययुः परब्रह्मोपासनेन मुक्ता भगवन्तं प्रापुरित्यर्थः ॥ २१ ॥

मुनिर्नारदस्तु स्वरब्रह्मणि ब्रह्मसान्निध्यापादकवल्लकीस्वरे निर्भातः साक्षात्कृतो यो हृषीकेशः तस्य पदाम्बुजे चित्त-मनपायमविच्छिन्नं यथा तथावेश्य लोकाननुचरत् अन्वचरत् इत्यार्षः ॥ २२ ॥

ततः को दक्षः । शीलशालिनां सुशीलानां पुत्राणां नारदा-न्नाशं निशम्य सृष्ट्युद्योगनिवृत्तिपूर्वकमुक्तिं निशम्याकर्ण्य शोच-न्नत्यन्तानुःखयत् । सुप्रजास्त्वं शुचां पदमिति लोकोक्तिप्रकारः सुप्रजस्त्वं सत्पुत्रवत्त्वं शोकानां स्थानमिति हि किं वदन्ती-त्यर्थः । अत्र प्रजाशब्देन प्रजाविपत्तिरुपलक्ष्यते ॥ २३ ॥

स दक्षोऽजेन ब्रह्मणा परिसान्त्वितः समाहितः पुनः पाञ्चज-न्यां शबलाश्वसंज्ञान् सहस्रसंख्याकान् पुत्रानजनयत् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पञ्चपञ्चेत्यस्य विमर्शप्रकारमाह । पञ्चेति । पञ्चविंशतितत्त्वाना-मेकत्वेन स्थित इत्यद्भुतदर्शनः गृहस्थानीयो यः पुरुषस्तम-ध्यात्मानमधिकृत्य वर्तमानमिन्द्रियं चानुभवस्याजानतः पुरुष-स्य कर्मभिः "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्" इतिस्मृ-त्युदितविषयैर्योगाभ्यासादिलक्षणैः वायुप्रसादादिः फलम् । अनेन प्रत्येक पञ्चकत्रयं ग्राह्यमिति सूचितम् ॥ १७ ॥

कचिद्धंसं चित्रकथमित्यस्यार्थं दर्शयति । ऐश्वरमिति । ईश्वर-प्रतिपादकं समाध्यादिभाषात्रयेण चित्राः कथाः यस्मिंस्तत् बन्धमोक्षावनुदर्शयतीति बन्धमोक्षानुदर्शनम् । अत एव हंसं विवि-क्तपदं विविक्तं सर्वतः सारभूतं पद्यते प्राप्नोति अनेन पुरुष इति । हंसो यथा सारं क्षीरमेव गृह्णाति तथेदमिति लुप्तोपमम् । एवम्विधं भारतादिशास्त्रमुपसृज्याज्ञात्वासत्कर्मभिर्बौद्धादिशास्त्र-श्रवणलक्षणैः ज्ञानलक्षणं फलम् ॥ १८ ॥

क्षुरान्तं स्वयं भ्रमिमित्यस्यानुरूपार्थमाह । कालचक्रमिति । भ्रमि-मित्यनूद्य सर्वं जगन्निष्कर्षयेदिति व्याख्याति "भ्रामयन्सर्वभूतानि" इति स्मृतेः । क्षुरान्तमित्यस्यार्थस्तीक्ष्णमिति । क्षुरान्तः क्षुरधारा तद्व-त्तीक्ष्णमित्यर्थः । स्वयमित्यस्यार्थः स्वतन्त्रमिति । एतैरर्थैः किं लक्ष्यत इति तदाह । कालचक्रमिति । द्वादशमासादिदलान्वित-त्वाच्चक्रव्यपदेशः । तत्स्वरूपमप्यजानतः पुंसस्तत्तत्कालविहिता-विषयैः कालजयलक्षणं फलम् ॥ १९ ॥

कथं स्वपितुरादेशमित्यस्यानुगुणार्थमाह । शास्त्रस्येति । "मातेव रक्षति पितेव हिते नियुङ्क्ते" इति वचनात् पितेव हितोपदेष्टृत्वात् पितृशब्देन शास्त्रमुपलक्ष्यते "प्रातरुत्थाय यथा सन्ध्यामुपासीत" इत्यादेः अनुरूपं संसारनिवर्तकं शास्त्रलक्षणं पितुरादेशं यो न वेद स गुणविश्रम्भी गुणविश्वासी पुरुषस्तदनुरूपाय शास्त्रवि-धानानुगुणाय कथं सत्कर्म उपक्रमेदज्ञानादिति शेषः ॥ २० ॥

इति ऋषेरभिप्रायं व्यवसिताः निश्चितवन्तः एकमेधसः एक-बुद्धयः । अनिवर्तकं पन्थानं संन्यासलक्षणं मार्गं सन्न्यासानन्तरं पुनराश्रमान्तराभावादनिवर्तकं वा न निवर्तकं यस्य स तथा तम् ॥ २१ ॥

स्वरब्रह्मणि षड्जादिस्वरलक्षणब्रह्मणि गान्धर्वे नितरां भाते प्रकाशिते यथा अखण्डं निरन्तरं भवति तथा निर्भातमिति-पाठे चित्तविशेषणं निष्णातमित्यर्थः ॥ २२ ॥

को दक्षः । सुप्रजास्त्वं शोभनसन्ततिमत्त्वं शुचां शोकानां पदं स्थानमिति सञ्चिन्त्य । सुप्रजास्त्वमङ्गिरसो यो असितेति छन्दोऽ नुकारिप्रयोगः ॥ २३ ॥

सहस्रं सङ्ख्यैषामस्तीति सहस्रिणः ॥ २४-२६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

लोहानामिव पञ्चविंशतितत्त्वानां सङ्घातरूपः पुरुषोऽद्भुतो दर्पणः आत्मनः आभास आश्रयो मुक्तवेरिव । ऐश्वरं भगवल्ली-लात्मकं । चित्रकथमित्युक्तत्वात् । विविक्तानि पदानि सर्वेऽप्यर्था यस्मात् ॥ १७-१९ ॥

तदनुरूपाय निवृत्त्यनुरूपाय ज्ञानाय । तद्वेदने तत्रैव वक्ष्य-तेति भावः ॥ २०—२१ ॥

नारदस्य च चेष्टेयं सर्वतद्बहिर्मुखीकरणेच्छामयेन श्रीभग-वदनुरागेणैवेत्याह । स्वरब्रह्मणीति । उत्तमस्वरजातिस्वभावोऽयम् । यः सामान्यतः स्वश्रोतृपाठविषयं स्मारयति विशेषतो भक्तानां भगवन्तमित्यनुभवः ॥ २२-२६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पञ्चपञ्चाद्भुतं गृहमित्येतद्व्याचष्टे । पञ्चेति । पुरुषो विष्णुः अद्भुतदर्पण इति । भक्ता हि स्वचित्तादीनि पञ्चविंशतितत्वानि विष्णावेवार्पयन्ति तानि च विष्णुगतानि भूत्वा निर्म्मलान्यप्राकृतानि नित्यानि प्रतिबिम्बतां परित्यज्य विष्णुरूपदर्पणधर्म्माण्येव भवन्तीति विष्णुरूपदर्पणस्याद्भुतत्वम् । अन्यदर्पणगतं मुखादिकन्तु यथास्थितरूपं यत्तत् प्रतिबिम्बमेव भवेन्न तु दर्पणगतनैर्म्मल्यग्राहीत्यर्थः । तं पुरुषं विष्णुम् अध्यात्म आत्मन्येव वर्त्तमानम् । अबुधस्य सेव्यत्वेनाजानतः । तस्माद्देहात्मानौ हरये समर्पयतेति भावः ॥ १७ ॥

कचिद्धंसं चित्रकथमिति व्याचष्टे । ऐश्वरमीश्वरप्रतिपादकं बन्धमोक्षौ विचित्राभिः कथाभिरनुदर्शयतीति । चित्रकथमिति व्याख्यातं क्षीरनीरमिव विविक्तमात्मानात्मवस्तु येनेति हंसपदं व्याख्यातम् । विविक्तानि विचारयुक्तान्येव पदानि सुप्तिङन्तानि यत्रेति तत्रैवास्तिक्यमुचितमतो मोक्षार्थमीश्वरं भजतेति भावः ।१८।

चौरपव्यं स्वयं भ्रमीति व्याचष्टे । कालचक्रमिति । क्षुरपविभ्यामिव निवृत्तमिति, भयप्रदत्वात् चौरपव्यं भ्रमणात्मकत्वाद्भ्रमि । तीक्ष्णत्वात्तीक्ष्णं निष्कर्षयत् विनाशयत् । तेन श्वः परश्वो वा मरिष्यथ किमिति हरिं न भजथेति भावः ॥ १९ ॥

कथं स्वपितुरादेशमविद्वांस इति व्याचष्टे । शास्त्रस्येति । नह्याधानकर्त्तैव पिता किन्तु शास्त्रमेव तस्य पितुरादेशोऽपि निवर्त्तक एव न तु प्रवर्त्तकः । अतो यथादेशं निवर्त्तकं न वेद तदा तदनुरूपाय आदेशानुरूपं कर्त्तुं कथमुपक्रमेत् । यतोऽयं गुणे प्रवृत्तिमार्गे एव विस्रम्भी अयमेवादेश इति विश्वासवान् अतः शास्त्रस्य शास्त्रानुसारिणः पितुश्च निवृत्तिधर्म्मे या आज्ञा सेवा वास्तवी तामेव पालयेदिति ध्वनिः । अतः शास्त्रतात्पर्य्यप्रतिकूलमादिष्टुर्दक्षस्य पितृत्वाभावात्तदाज्ञाया अपालने वो नास्ति प्रत्यवाय इत्यनुध्वनिः । तस्मान्मत्त एव विष्णोर्मन्त्रं गृहीत्वा कचिदेकान्त उपविश्य तं विष्णुमेव भजतेति सर्व्वानुध्वनिः ॥ २० ॥

इति विशेषेण अवसितं निश्चितं यैस्ते एकचेतसः ऐकमत्यवन्तः परिक्रम्येति । गुरूकरणचरणामृतग्रहणदण्डवत्प्रणमनादयोऽप्युपलक्ष्यन्ते ॥ २१ ॥

हन्त हन्त एतावन्तो जीवा नरकादुद्धृतास्तत् प्रभोर्यश उपवीणयामीति नारदस्यानन्दसमुद्रे निमज्जनमाह । स्वराः षड्जादय एव यद्ध तत्र निर्भातस्य वीणागानेन साक्षात् कृतस्य हृषीकेशस्य सर्व्वेन्द्रियाकर्षकस्य कृष्णस्य चरणकमले ॥ २२ ॥

नाशं वैष्णवत्वमेव गृहस्थानां मते नाशस्तम् । को दक्षः । अन्वतप्यत । हन्त हन्त तादृशा मे पुत्रा नारदेन भ्रंशिता इति विषमाद सुप्रजस्त्वं सत्पुत्रवत्त्वं शुचां पदं शोकानां स्थानं शोकदुःखादृष्टवन्त एव लोकाः सुप्रजसो भवन्तीति विललाप॥२३॥

सबलाश्वान् सबलाश्वसंज्ञान् सहस्रिणः सहस्रसङ्ख्याकान् ॥ २४ ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चपञ्चाद्भुतं गृहमित्यस्यार्थमाह । पञ्चेति । पञ्चविंशतितत्त्वानां जीवसहितस्य चतुर्विंशतिप्राकृतपदार्थमयस्य देहस्येत्यर्थः । पुरुषः अन्तर्यामी अद्भुतदर्पणः सर्वधारकत्वेऽपि सर्वदोषास्पृष्टत्वेनाश्चर्यरूपः आश्रयः तमध्यात्मं सर्वप्रेरकतयात्मनि तिष्ठन्तमपि अबुधस्य नियन्तृत्वेनाजानतः असद्भिः मयैव स्वातन्त्र्येण कृतानीति वृथास्वातन्त्र्यकृतैः ॥ १७ ॥

कचिद्धंसं चित्रकथमित्यस्यार्थमाह । ऐश्वरमिति । ऐश्वरमीश्वरसम्बन्धि शास्त्रमुत्सृज्य अत एव तदर्थभूतं विविक्तपदं कार्यकारणप्रकृतिभिन्नं पदं स्थानं मुक्तगम्यं स्वरूपं वाविज्ञाय असद्भिस्तत्पदाप्रापकैः कर्मभिः किं भवेत् ॥ १८ ॥

चौरपव्यमित्यस्यार्थमाह । कालचक्रमिति । भ्रमि स्वयं भ्रमणशीलं तीक्ष्णं क्षुरवत् स्वतन्त्रं वज्रवद्दुर्निवारं निष्कर्षयत् विनाशयदबुधस्यासद्भिस्तन्निवारणानर्हैः ॥ १९ ॥

स्वपितुरादेशमविद्वांस इत्यस्यार्थमाह । शास्त्रस्येति । पितुः हितोपदेष्टुः शास्त्रस्यादेशं विधिवाक्यं निवर्त्तकं निषेधवाक्यं च यो न वेद स तदनुरूपाय स्वानुकूल्याय कथमुपक्रमेत् । हिते अहिते वा केन प्रकारेण प्रवृत्तो निवृत्तो वा भवेत् । यतः स्वभावतो यावत् गुणविस्रम्भी इन्द्रियार्थेषु विश्वासवान् विपर्यायकर्म कुर्वन् संसारे भ्रमेन्नतु मुक्तो भवेदिति भावः ॥ २० ॥

इत्येवं विशेषतो अवसितं निश्चितं यैस्ते तं श्रीनारदं परिक्रम्य नास्ति निवर्तनं संसारे पुनः पतनं यस्मात्तं भगवत्प्राप्तिप्रदं पन्थानं प्रययुः ॥ २१ ॥

"स्वतो रञ्जयति श्रोतुश्चित्तं स स्वर उच्यते" इत्येवं लक्षणः षड्जादिस्वर एव ब्रह्मदृष्ट्योपास्यमानत्वात् तस्मिन्वल्लक्या प्रवर्त्यमाने निर्भातो गुणगानेन साक्षात्कृतो यो हृषीकेशस्तस्य पदाम्बुजमखण्डमविच्युतम् अनुचरत् अन्वचरत् अडभाव आर्षः ॥२२॥

को दक्षः । शीलेन शालन्ते शोभन्ते इति तथा तेषां नारदहेतुभूतात् नाशं प्रवृत्तिमार्गाद्भ्रंशं निशम्य श्रुत्वा शोचन्नतप्यत । तत्र हेतुमाह । सुप्रजस्त्वमिति शुचां शोकानां पदं स्थानं किं पुनर्दुष्प्रजस्त्वमिति भावः ॥ २३ ॥

सहस्रशः सहस्रसङ्ख्याकान् ॥ २४-२५ ॥

---

भाषा टीका ।

पच्चीस तत्वों का अन्तर्यामी पुरुष है सो आश्चर्य रूप है [illegible] अध्यात्म को जो नहीं जानता है उस के असत् कर्मों के करने से क्या होगा ॥ १७ ॥

बन्ध मोक्षके जनाने वाले अध्यात्म शास्त्रको जड चेतन के भेदको न जानने से असत्कर्मों से क्या होगा ॥ १८ ॥

सब जगत् के खैंचने वाले भ्रमण करने वाले स्वतन्त्र काल चक्रको नहीं जानने वाले को असत्कर्म से क्या होगा ॥१९॥

शास्त्र रूपी पिताकी निवर्तनकी आज्ञाको जो नहीं जानता है सो गुणों का विश्वास करने वाला निवृत्ति मार्गको कैसे प्राप्त होगा ॥ २० ॥

तेऽपि पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः ।
नारायणसरो जग्मुर्यत्र सिद्धाः स्वपूर्वजाः ॥ २५ ॥
तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ।
जपन्तो ब्रह्म परमं तेपुस्तेऽत्र महत्तपः ॥ २६ ॥
अब्भक्षाः कतिचिन्मासान् कतिचिद्वायुभोजनाः ।
आराधयन्मन्त्रमिममभ्यस्यन्त इडस्पतिम् ॥ २७ ॥
ओं नमो नारायणाय पुरुषाय महात्मने ।
विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि ॥ २८ ॥
इति तानपि राजेन्द्र ! प्रतिसर्गधियो मुनिः ।
उपेत्य नारदः प्राह वाचःकूटानि पूर्ववत् ॥ २९ ॥
दाक्षायणाः ! संश्रृणुत गदतो निगमं मम ।
अन्विच्छतानुपदवीं भ्रातृणां भ्रातृवत्सलाः ॥ ३० ॥
भ्रातॄणां प्रायणं भ्राता योऽनुतिष्ठति धर्मवित् ।
स पुण्यबन्धुः पुरुषो मरुद्भिः सह मोदते ॥ ३१ ॥
एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः ।
तेऽपि चान्वगमन्मार्गं भ्रातॄणामेव मारिष ! ॥ ३२ ॥

भाषा टीका ।

हे राजन् ! वे हर्यश्व ऐसा निश्चय करके नारदजी को परिक्रमा करके भगवन्मार्ग को चले गये ॥ २१ ॥

श्रीनारदजी स्वर ब्रह्म मे प्रकाशमान जो हृषीकेशभगवान् तिन के चरणकमल मे मन को लगाकर लोकों मे विचरने लगे ॥ २२ ॥

सुन्दर स्वभाव वाले पुत्रों का विरक्त होकर नाश होजाना सुनकर दक्षप्रजापति ने बहुत शोच किया क्योंकि सुन्दर पुत्रों का होना शोच का हेतु है ॥ २३ ॥

उनके पीछे ब्रह्माजीने उनको शान्त किया तब फिर दक्षजीने पांचजनी भार्या में शवलाश्व नाम के हजार पुत्रों को उत्पन्न किया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

परमं ब्रह्म प्रणवं वक्ष्यमाणमन्त्रं वा ॥ २६ ॥

इडस्पतिं वाचां मन्त्राणां पतिं विष्णुमाराधयामासुः ॥ २७ ॥

विशुद्धसत्त्वाश्रयाय परमहंसाय नमो धीमहि ॥ २८ ॥

प्रतिसर्गे धीर्येषां तान् । वाचःकूटानि अदृष्टान्तंभुव इत्यादीनि पूर्वोक्तानि प्राह ॥ २९ ॥

हे दाक्षायणाः ! संश्रृणुतेत्यादि पुनरन्यदपि प्राह । निगममुपदेशम् । अन्विच्छतावलोकयत ॥ ३० ॥

प्रायणं प्रकृष्टं गमनम् । पुण्यमेव बन्धुर्यस्य मरुद्भिर्भ्रातृवत्सलैर्देवैः ॥ ३१ ॥

अमोघं दर्शनं यस्य हे मारिष ! आर्य ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेऽपि सबलाश्वाः पित्रा दक्षेण प्रजासर्गे निमित्ते सम्यगादिष्टाः धृतं व्रतं पित्रादेशकारणरूपं यैस्ते नारायणसरआख्यं तीर्थं ययुः । यत्र नारायणसरसि स्वपूर्वजाः हर्यश्वाः सिद्धा बभूवुः ॥ २५ ॥

तस्य नारायणसरस्तीर्थस्योपस्पर्शनादेव विनिर्धूतं निरस्तं मनसो मलं वासनारूपं येषां तादृशाः परममुत्कृष्टं ब्रह्म प्रणवं जपन्तः महत्तपस्तेपुश्चक्रुः । ब्रह्मशब्दो वक्ष्यमाणमन्त्रस्याप्युपलक्षकः । तस्य प्रणवघटितत्वादिति भावः ॥ २६ ॥

महत्तप एव प्रपञ्चयति । अब्भक्षा इति । अप एव भक्षयन्तीति तादृशाः कतिचिन्मासान् कतिचिच्च मासान् वायुं भुञ्जन्तीति वायुभोजनाः कर्त्तरि ल्युः । इमं वक्ष्यमाणं मन्त्रमभ्यस्यन्तः इडस्पतिमीड्यते स्तूयतेऽनेनेतीडो मन्त्रः । आर्षत्वाद्ध्रस्वः पारस्करादित्वात्सुट् । तस्य पति-

**सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः ।**
**नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव ॥ ३३ ॥**

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मधिदैवतं भगवन्तमाराधयामासुः आङ्पूर्वोद्राधयतेर्लङ् आङाटोः सवर्णदीर्घः ॥ २७ ॥

मन्त्रमाह । ओमिति । नारस्य जीवसमूहस्यायनाय प्राप्याय प्रापकाधाराय च पुरुषाय हृदयकमलस्थाय परमात्मनेऽन्तः-प्रविश्य नियन्त्रे विशुद्धमुपासनेन निर्मलं सत्त्वमन्तःकरणं धिष्ण्यमभिव्यक्तिस्थानं यस्य । यद्वा । शुद्धं रजस्तमोऽस्पृष्टमनुविद्धं सत्त्वं धिष्ण्यं स्थानं यस्य तस्मै । परमव्योमनिलयायेति भावः । महांश्चासौ हंसस्तस्मै महाकल्याणगुणैर्महान् हंसो निरस्त-निखिलदोषः । एवंभूताय नमः उक्तविधं धीमहि ध्यायेम ॥ २८ ॥

इतीत्थं मन्त्रं जपतः प्रजासर्गे धीर्येषां तान् सबलाश्वानपि हे राजेन्द्र ! मुनिर्नारद उपेत्य पूर्ववद्वाचः कूटान्यदृष्टान्तं भुवो यूयमित्यादीनि प्राहोक्तवान् ॥ २९ ॥

पूर्वोक्तात्किञ्चिद्विशेषमाह । हे दाक्षायणाः ! गदतो ब्रुवतो मम निगममुपदेशं संशृणुत भ्रातॄणामग्रजानामनुपदवीं मार्गानु-सरणमन्विच्छत । अनुगता पदवी अनुपदवी "कुगतिप्रादय" इति समासः । यतो यूयं भ्रातृषु वत्सलाः ॥ ३० ॥

भ्रातॄणां प्रायणं प्रकृष्टमनुवर्तनं भ्राता धर्मविदनुतिष्ठति करोति स पुण्यमेव बन्धुर्यस्य तादृशो मरुद्भिर्देवैः सह मोदते ॥ ३१ ॥

अमोघं दर्शनं यस्य स परमार्थदर्शी नारदः । एतावदिय-दुक्त्वा प्रययौ । तेऽपि मारिषा दाक्षाः मारिषेति पाठे राज्ञः सम्बो-धनं मारिष इति तस्य नामान्तरं भ्रातॄणामग्रजानामेव मार्गं परब्रह्मोपासनरूपमन्वगमननुसृतवन्तः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अभ्यसन्तः अभ्यस्यन्तः । इडस्पतिं इलापतिम् ॥ २७ ॥

विशुद्धसत्त्वधिष्ण्याय विशुद्धसत्त्वगुणाश्रयाय निर्दोषबल-ज्ञानस्वरूपाय वा महाहंसाय सारग्राहिश्रेष्ठाय ॥२८॥२९॥३०॥

प्रायणं प्रयाणमाश्रमप्राप्तिलक्षणं पुण्यमेव बन्धुर्यस्य स तथा मरुद्भिर्देवैः ॥ ३१-३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ब्रह्म परमं वक्ष्यमाणं मन्त्रम् ॥ २६—२९ ॥

निगममुपदेशम् ॥ ३० ॥

प्रायणं प्रव्रज्यं मरुद्भिर्भ्रातृवत्सलैर्देवैः । अयं दृष्टान्त एवोक्तः । यूयं तु वैकुण्ठगामिभिरग्रजैः सह मोदिष्यध्वे इति भावः ॥ ३१ ॥

मारिष हे मार्ष ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

ब्रह्म वक्ष्यमाणं मन्त्रम् ॥ २६ ॥

इडस्पतिं मन्त्राणां पतिं भगवन्तमाराधयामासुः॥ २७ ॥

मन्त्रमाह । ओमिति ॥ २८ ॥

प्रजासर्गे धीर्येषां तान् । अलुक् समासः । पूर्ववत् वाचः कूटानि अदृष्टान्तं भुव इत्यादीनि प्राह ॥ २९ ॥

अन्यदपि प्राह । हे दाक्षायणाः ! गदतो मम निगममुपदेशं शृणुत भ्रातॄणामनुपदवीमन्विच्छत अवलोकयत ॥ ३० ॥

प्रायणं प्रकृष्टमयनमनुवर्तनम् ॥ ३१ ॥

मारिष ! हे मार्ष ! ॥ ३२ ॥

---

### भाषा टीका ।

वे पुत्र भी पिता की आज्ञा पाकर दृढ व्रत को धारण करके उहां गये जहां कि अपने से पूर्वज सिद्ध भये हैं ॥ २५ ॥

उस नारायण सरोवर के स्नान पान करने से उनके मन के मल नष्ट हो गये तब वे परं ब्रह्म प्रणव को जप करके भारी तप को करने लगे ॥ २६ ॥

कितनेक महिनों तक जल पान करके रहे कितने महिने वायु भोजन करके रहे इस मंत्र का जप करके भगवान का आराधन करते रहे ॥ २७ ॥

उस मंत्र का अर्थ यह है कि पुरुष महात्मा विशुद्ध सत्त्व के स्थान महा हंस श्रीमन्नारायण आप के अर्थ नमस्कार है ॥२८॥

हे राजेंद्र ! इस प्रकार से रहते हुये उन दक्ष पुत्रों को प्रजा सर्ग के मनोरथी जान कर नारदजी पासमे आकर पहिले सरीखे के कूट वचनों को कहने लगे ॥ २९ ॥

नारदजी बोले हे दक्ष पुत्र ! हो कहने से मेरी आज्ञा को तुम श्रवण करो तुम तो भ्राताओं के प्रीति करने वाले हो तो भ्राताओं की पदवी का अनुसरण करो ॥ ३० ॥

जो धर्मज्ञ भ्राता अपने भ्राताओं के मार्ग का अनुष्ठान करता है वह पुरुष पुण्यवान् होता है देवतों के सहित आनंद करता है ॥ ३१ ॥

इतना कह कर सफल दर्शन देने वाले नारदजी चले गये हे श्रेष्ठ राजन् ! वे कुमार भी अपने बडे भ्राताओं के मार्ग मे चलने लगे ॥ ३२ ॥

---

### श्रीभरस्वामिकृतभावार्थदीपिका ।

सध्रीचीनं समीचीनम् । प्रतीचीनम् । प्रत्यग्वृत्तिलभ्यं अनुपथम् अनुगुणं पन्थानम् । पश्चिमा यामिनीर्गता रात्रय इव ॥ ३३-३४ ॥

एतस्मिन् काल उत्पातान् बहून् पश्यन् प्रजापतिः ।
पूर्ववन्नारदकृतं पुत्रनाशमुपाशृणोत् ॥ ३४ ॥
चुक्रोध नारदायासौ पुत्रशोकविमूर्च्छितः ।
देवर्षिमुपलभ्याह रोषाद्विस्फुरिताधरः ॥ ३५ ॥

॥ दक्ष उवाच ॥

अहो असाधो ! साधूनां साधुलिङ्गेन नस्त्वया ।
असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ॥ ३६ ॥
ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम् ।
विघातः श्रेयसः पाप ! लोकयोरुभयोः कृतः ॥ ३७ ॥
एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः ।
पार्षदमध्ये चरसि यशोहा निरपत्रपः ॥ ३८ ॥
ननु भागवता नित्यं भूतानुग्रहकातराः ।
ऋते त्वां सौहृदघ्नं वै वैरङ्करमवैरिणाम् ॥ ३९ ॥
नेत्थं पुंसां विरागः स्यात्त्वया केवलिना मृषा ।
मन्यसे यद्युपशमं स्नेहपाशनिकृन्तनम् ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पुत्राणां पारमहंस्यनिष्ठामुपश्रुत्य दक्षोऽपि प्रायशो विरक्तः स्यादिति तदनुग्रहार्थं देवर्षिस्तत्पार्श्वं गतस्तदा तमुपलभ्य दक्ष आह ॥ ३५ ॥

सांधोरिव लिङ्गं वेषो यस्य तेन त्वया नोऽस्मदीयानामर्भकाणामसाध्वकारि कृतं तदेवाह । साधूनां स्वधर्मे प्रवृत्तानां भिक्षोर्यो मार्गः स प्रदर्शितः ॥ ३६ ॥

ननु सन्न्यासिनो मार्गः साधुरेव मोक्षहेतुत्वात् । सत्यम् । ऋणापाकरणं विना तु महाननर्थ एवेत्याह । ऋणैरिति । "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासि" इतिश्रुतेः । ऋणैरमुक्तानां न मीमांसितानि न विचारितानि कर्माणि यैः तेषां तावदृणविमोको नास्ति तदुत्तरकालाविस्याद्य पुत्रोत्पादनयज्ञानुष्ठानयोरभावेन पितृदेवर्षिऋणामुक्तिश्च नास्ति । अतो हे पाप ! विषयभोगत्यागादिह लोके श्रेयसो विघातः कृतः । मोक्षानधिकारित्वाच्च परलोकेऽपि श्रेयसो विघातः कृत इत्यर्थः । तथा च मनुः ।

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः" ॥

इति ॥ ३७ ॥

बालानां मतिं पुत्रादिविषयां भिनत्तीति तथा एवं निरनुक्रोशो निर्घृणो हरेर्यशोनाशकः संस्तत्पार्षदानां मध्ये कथं चरसि ॥ ३८ ॥

निर्लज्जत्वमेवाह । नन्विति । ननु त्वामृते भागवताः सर्वे भूतानुग्रहपरवशास्त्वं तु भूतविप्रियं कुर्वन् कथं न लज्जस इति भावः ३९ ॥

ननु वैराग्यादुपशम उपशमाच्च भूतस्नेहपाशच्छेदनं भवति न च विरक्तस्य ऋणत्रयापाकरणमावश्यकम् "यदहरेव विरजेत्तदहरेव प्रव्रजेत् यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" इत्यादिश्रुतेः । अतो वैराग्योपदेशेन तेषां मयानुग्रह एव कृत इति चेत्तत्राह । नेति । यद्यपि त्वमेवं मन्यसे तथापि मृषा केवलिना ज्ञानं विनावधूतवेषेण त्वयेत्थं मतिचालने कृतेऽपि पुंसां विरागो नैव स्यात् । नच विरागं विनोपशमो न च तेन विना स्नेहपाशनिकृन्तनमित्यर्थः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्ते सध्रीचीनं सहाश्चति गच्छतीति सध्र्यङ् आतिवाहिकैः सह गन्ता जीवः तेन गम्यं सध्रीचीनं प्रतीचीनं स्वस्मै भासमानेन ब्रह्मात्मकस्वात्मयाथात्म्यसाक्षात्कारवता गम्यं प्रतीचीनं परस्य परमपुरुषस्यानुबन्धमनुकूलमर्चिरादिमार्गं गता अद्यापि न निवर्त्तन्ते न पुनरावर्त्तन्ते "एतं देवयानं पन्थानमापद्य न पुनरावर्त्तत" इति श्रुत्यर्थोऽत्र विवक्षितः । न पुनरावृत्तौ दृष्टान्तः । यामिनीरिव पश्चिमा इति । पश्चिमा अतीता यामिन्यो यामिन्योरात्रयो यथा न पुनरावर्त्तन्ते तथेत्यर्थः ॥ ३३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतस्मिन् काले । नारदोपदेशेन सवलाश्वानां मुक्तिप्राप्तिकाले प्रजापतिर्दक्षः बहूनुत्पातान्पुत्रनाशप्रयुक्तानपश्यत्ततः पूर्ववन्नारदोपदेशकृतं पुत्राणां नाशमुपाश्रृणोत् ॥ ३४ ॥

पुत्राणां निवृत्तिधर्मनिष्ठया मुक्तिमुपश्रुत्य दक्षोऽपि प्रायशो विरक्तः स्यादिति तदनुग्रहार्थं देवर्षिस्तत्पार्श्वं गतः । तदासौ दक्षो देवर्षिमुपलभ्य पुत्रनाशनिमित्ताद्विमूर्च्छितः उत्थाय नारदाय चुक्रोध क्रुद्धवान् ॥ ३५ ॥

क्रोधमेवाह । अहो इति । साधोरिव लिङ्गं वेषो यस्य तेन त्वया नोऽस्मदीयानामर्भकाणामसाध्वकारि कृतं तदेवाह । स्वधर्मे प्रवृत्तानां यः संन्यासिनां मार्गः स प्रदर्शितः ॥ ३६ ॥

ननु संन्यासिनां मार्गः साधुरेव मोक्षहेतुत्वात्सत्यम् । ऋणत्रयानपनोदनं पितुर्महदनर्थं एवेत्याह । ऋणैस्त्रिभिरमुक्तानां न मीमांसितान्यविचारितानि कर्माणि यैस्तेषामृण्यविमोचनं नास्ति तदुत्तरकालभावित्वाच्च पुत्रोत्पादनयज्ञानुष्ठानयोरभावेन पितृदेवऋणमुक्तिश्च नास्त्यतः हे पाप ! विषयभोगत्यागादिह लोके श्रेयसो विघातः विषयभोगपूर्वकस्य मोगस्याभावान्मोक्षानाधिकारित्वात्परलोकेऽपि श्रेयसो विघातः कृतः इत्यर्थः ॥ ३७ ॥

बालानां मतिभिद्बुद्धिविचालकः एवं निरनुक्रोशो निर्घृणः हरेर्यशोनाशकः सन् तत्पार्षदानां मध्ये निर्लज्जः कथं चरसि ॥३८॥ निर्लज्जत्वमाह । नन्विति । ननु हे नारद! अवैरिणां वैरंकरं सौहृदघ्नं त्वां विना भागवताः सर्वे भूतानुग्रहपरवशाः त्वं तु भूतविप्रियं कुर्वन् कथं न लज्जसे इति भावः ॥ ३९ ॥

न विषयभोगाद्विराग उत्पद्यते किन्तु विषयभोगस्य हेयत्वोपदेशेनैवेत्यत आह । नेत्थमिति । यद्यपि त्वं विषयभोगस्य हेयत्वोपदेशेन स्नेहपाशनिकृन्तनं विषयासक्तिरूपस्नेह एव पाशस्तस्य निकृन्तनं छेदकमुपशमं विरागं मन्यसे । तथापि मुधा मृषा केवलेन ज्ञानं विना साधुवेषेण त्वयेत्थं मतिचालनं कृतेऽपि पुंसां विरागो नैव स्यादित्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सध्रीचीनं शोभनं प्रतीचीनमाभिमुख्येन वर्तमानं परस्य परमात्मनः अनुपथमनुगुणं पन्थानं पश्चिमाः यामिनीः यामिन्यः अतीता रात्रय इव ॥ ३३ ॥

प्रजापतिर्दक्षः ॥ ३४ ॥ ॥ ३५ ॥

साधोरिव लिङ्गं जटायज्ञोपवीतशमदमादिलक्षणं यस्य स तथा तेन त्वया नः साधूनामर्भकाणां भिक्षोः संन्यासिनः मार्गः प्रदर्शित इति यदनोऽसाध्वमङ्गलमकारीत्यन्वयः ॥ ३६ ॥

ननु भिक्षुमार्गस्य "संन्यासेन तनुं त्यजेत्"इत्यादिना विहितत्वात्कथममङ्गलं कृतमित्युच्यत इति तत्राह । ऋणैरिति । "ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति श्रुतेः । त्रिभिः ऋणैरमुक्तानामननुष्ठानादिति शेषः । अमीमांसितानि अविचारितानि कर्माणि यैस्तथा तेषां पुत्राणामुभयोर्लोकयोरवासिद्धतोः श्रेयसो विघातो विघ्नः कृत इत्यन्वयः । रोषनिमित्तं हे पापेति सम्बोधनं न तु तदर्थयुक्तत्वात् ॥ ३७ ॥

एवं विचार्यमाणे सति बालानां कृत्याकृत्यविवेकज्ञानशून्यानां मतिभिद्बुद्धिभेदकृद्यशसो हानिर्यस्मात्स तथा यशो नाशं कृतवान् वा निरनुक्रोशः निर्गता अनुकम्पा यस्मात्स तथेति॥ ३८॥

एतदेवाह । नन्विति । सौहृदघ्नमित्यस्य विवरणं वैरङ्करमिति खश्प्रत्ययेन दक्षस्य कोपोद्रेकं दर्शयति । एतदेव विस्फुरिताधर इत्यनेनाप्यसूचि ॥ ३९ ॥

विषयप्रसक्त्या रागोद्रेकसम्भवेन संसारानिवृत्तिः स्यादतो वैराग्याय मयाहितमुपादेशीति तत्राह । नेत्थमिति । केवलेन सन्ध्योपासनादिकर्मशून्येन भागवताभिमानिना त्वया विना इत्थं बोधनेन पुंसो विरागो न स्यादित्यन्वयः । ननु विषयस्नेहाद्रागः उपशमात् स्नेहनिवृत्त्या रागनिवृत्तिरिति चेत्तत्राह । मन्यस इति । यद्युपशमं स्नेहनिवर्तकं मन्यसे तथापि स व्यर्थ इति मन्य इति शेषः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीनारदे दक्षापराधोऽयं प्राचीनशिवापराधदुःसंस्कारेण ॥ ४०—४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सध्रीचीनं समीचीनं प्रतीचीनं प्रत्यग्वृत्तिलभ्यं परस्य परमेश्वरस्य अनुपथम् अनुकूलं भक्तिमार्गं पश्चिमा यामिनीर्गता रात्रय इव ॥ ३३ ॥ ३४ ॥

देवर्षिमुपलभ्येति । स्वायम्भुवस्य मनोर्वंशाः प्रियव्रतोत्तानपादध्रुवादयः सर्वे मद्द्वारैव भगवता आत्मसात्कृताः । महाकर्मजडः प्राचीनबर्हिरप्युद्धृतः । तस्य पुत्रा दश प्रचेतसः पौत्रा दश सहस्राणि हर्यश्वाः सहस्रं सवलाश्वाश्चोत्तीर्णाः । कथमेकस्तन्मध्यवर्त्ती दक्ष एव गृहान्धकूपे स्खलतीति तमप्युद्दिधीर्षामीति विमृश्य साम्प्रतञ्च पुत्राणां पारमहंस्यनिष्ठां श्रुत्वा स्वयंशोचन् दक्षः प्रायो गृहे निर्विषण्ण एव वर्त्तते तत्तमनुग्रहीतुं मयमेव समयः साधुः । यद्यपि साम्प्रतमपि स मां नान्विष्यति तदप्यहमेव तस्य गृहं यामीति विचार्य तत्रागतवन्तं नारदमुपलभ्याह ॥ ३५ ॥

साधोरिव लिङ्गं वेशो यस्य तेन त्वया मद्गृहादाभिर्भकं नत्वर्थं । साधोस्तव दं साधूनामस्माकमिति गौरवेण बहुवचनम् । मम [illegible] स्वप्नेऽप्यकुर्वतस्त्वया असाधु अभद्रमकारीत्येतावत्तापकारी तव महदपराधो जात इति भावः । ननु किमसाधु [illegible] तत्राह । अर्भकाणां मद्बालकानां गार्हस्थ्यसुखभोगम [illegible] मत्सरेण त्वया भिक्षोर्भिक्षुकलोकस्य । अर्भकाणामित्यर्भ [illegible] ते सरलास्तव कपटिनोऽप्युपदेशं जगृहुरिति भावः । अ [illegible] साधुर्यतः हे तथाभूत ! साधुलिङ्गेन साधूनि लिङ्गानि दर्शित [illegible] यस्य तेन न विद्यते साधुर्यतस्तथाभूतं यथा स्यात्तथापि [illegible] सरस्वत्यभिप्रेतोऽप्यर्थो ज्ञेयः । एवमग्रिमेषु श्लोकेष्व [illegible] रभयात्र विवृतः ॥ ३६ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ननु भिक्षोर्मार्ग एव संसारतारणक्षमो न तु गृहस्थानां युष्माकमिति चेत्तत्राह। ऋणैरिति। "जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते। ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासि" इत्यादिश्रुतेः। ऋणैरमुक्तानां न मीमांसितानि न विचारितानि कर्म्माणि यत्पप्प तावदपि ऋणविमोक्षो नास्ति तदुत्तरकालभावित्वाच्च पुत्रोत्पादनयज्ञानुष्ठानयोरभावेन पितृदेवर्णविमुक्तिश्च नास्ति अतः हे पाप! हे विश्वस्तघातिन्! विषयभोगत्याजनादिहलोके श्रेयसः विघातः। मोक्षानधिकारेऽपि वैराग्यप्रवर्त्तनात् परलोकेऽपि विघातः कृत इत्यर्थः। तथा च मनुः।

> ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
> अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः।

इति ॥ ३७ ॥

त्वां दुष्टं किं ब्रवीमि त्वया सेवकेन भगवतोऽपि दुर्यशोऽर्जितमित्याह। एवमिति। निरनुक्रोशो निर्दयः। मतिं शास्त्रविहितकर्म्मनिष्ठां बुद्धिं भिनत्तीति सः। हरेर्यशोहा त्वमभूस्तेन हरावपि तवापराधः पार्षदमध्ये इति वैष्णवेष्वपीत्येवमस्माद्विधेषु महत्सु भगवति भागवतेषु च तवापराधो जातो दुर्व्वार एव विश्वस्तघातित्वादीनां दुष्कृतानान्तु वार्त्ता दूरे एवेति भावः ॥ ३८ ॥

किञ्च मत्सम्मुखमायातस्त्वं कीदृशं मुखं दर्शयितुमतो धिक् त्वां निर्लज्जमित्याह। नन्विति। अत्रे त्वामिति त्वन्तु भूतमात्रद्रोहीति भावः। सौहृदघ्नमिति सौहृदकारिणामप्यस्माकमिति भावः। वैरङ्करमित्यस्माकं प्रकटमेव वैरं कृत्वापि पुनः केन मुखेन प्रत्यक्षीभवसीति सत्यं निरपत्रप एवासि कति पुनरहं त्वां न लज्जयामीति भावः ॥ ३९ ॥

ननु मत्प्रवर्त्तिताद्वैराग्यादेव तेषामुपशमस्तस्माच्च स्नेहपाशनिकृन्तनं वृत्तमेव। अद्यापि तव पितुरपि पार्श्वानागमनादेवानुमितं तत्कथं तेषां मोक्षेऽनधिकारः न च विरक्तस्य ऋणत्रयापाकरणमेवावश्यकम्। "यदहरेव विरज्येत तदहरेव प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" इत्यादिश्रुतेः। अतो वैराग्योत्पादनेन तेषां मयानुग्रहः कृत एवेति चेत् तत्राह। नेति। सत्यं महापुरुषाणां कृपया विरागः स्यादेव त्वया तु मृषा केवलिना ज्ञानमात्रधूनेन अनन्यवैष्णवम्मन्येन वा इत्थं मतिचालने कृतेऽपि कदाचित्सरान् विरागो भवन्नपि नान्ततो वास्तवो विरागः स्यात्। यद्यपि त्वमुपशमं मन्यसे तदपि नैव स्यात् तव महापुरुषत्वाभावादिति भावः ॥ ४० ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सध्रीचीनं मुक्तिमार्गत्वात्समीचीनं प्रतीचीनं प्रतीच्या अन्तरात्मना भगवद्ध्याननिष्ठेन लभ्यम्। परस्य मुक्तगम्यस्य भगवत्स्वरूपमनुगुणमर्चिरादिमार्गम्। पश्चिमा यामिनीः गता रात्रय इव अद्यापि न निवर्त्तन्ते "एतं देवयानं पन्थानमापद्य न पुनरावर्त्तन्ते" इति श्रुतेः ॥ ३३ ॥ ३४ ॥

सर्वज्ञो भगवान् देवर्षिः दक्षशान्त्यर्थं तत्समीपमागतस्तमुपलभ्य समीपगं दृष्ट्वा आह ॥ ३५ ॥

"यदहरेव विरजेत्तदहरेव प्रव्रजेत् किं प्रजया किं धनेन त्यागेनैकेनामृतमानशुः" इत्यादि प्रसिद्धम्

"कौमार आचरेत्प्राज्ञः धर्मान् भागवतानिह।

देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्!
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्त्तम्। इति वक्ष्यमाणमुत्तमाधिकारिविषये श्रीनारदादिमतं प्रजापत्यभिनिवेशेन त्यक्त्वा

> ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
> अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥

इति मन्वादिवाक्यं मन्दाधिकारिविषयं गृहीत्वा श्रीनारदं निन्दति। अहो इत्यादिना। हे असाधो! साधुलिङ्गेन त्वया साधूनामर्भकाणां यद्भिक्षोर्मार्गः प्रदर्शितस्तदिदमसाधु अयुक्तमकारि ॥ ३६ ॥

न मीमांसितानि कर्माणि यैस्तेषाम्। अर्थाच्छन्दाध्ययनपुत्रोत्पादनयज्ञानुष्ठानरहितानामत एव ऋषिपितृदेवानामृणैरमुक्तानां "पुत्रेणेह लोकः" इति श्रुतेः पुत्रानुत्पादनेनेह लोके कर्मानाचरणेन पितृलोके श्रेयसो विघातः हे पाप! त्वया कृतः ॥ ३७ ॥

निरनुक्रोशो निर्दयः। तत्र हेतुः। बालानां मतिमुभयलोकसुखदकर्माचरणपुत्रोत्पादनादिबुद्धिं भिनत्तीति तथा। निरपत्रपो निर्लज्जः। तत्र हेतुः। हरेर्यशोहापि तत्पार्षदानां मध्ये चरसि ॥ ३८॥

हरियशोघ्नत्वमुपपादयति। त्वां सौहृदघ्नमवैरिणां वैरंकरमृते भागवताः नूनं निश्चितं भूतानुग्रहे कातरा व्यग्राः ॥ ३९ ॥

विषयसेवनेन विषयेषु भूय आसक्तिः स्यादतः "त्यागेनैकेनामृतत्वम्" इति इति श्रुतेः प्रथमत एव विषयान् सोपायान् परित्यजेन्मुक्तिकामः इति देवर्षिमतमनादृत्य भुक्तेभ्यो विषयेभ्यो दृष्टदोषेभ्यो वैराग्यं संभवति नान्यथेत्याह। नेत्थमिति द्वाभ्याम्। स्नेहपाशस्य विषयासक्तेर्निकृन्तनमुपशमं वैराग्यं यन्मन्यसे नन्वित्थं मृषा केवलिना मिथ्याविरक्तेन त्वया कारितः पुंसां विरागो न स्यात् ॥ ४० ॥

---

## भाषा टीका।

सब के अन्त मे प्राप्त होने लायक अति सुन्दर मार्ग को वे चले गये सो आज पर्यन्त नहीं लौटे हैं जैसे कि पिछली रात नहीं लौटती है ॥ ३३ ॥

इतने ही काल मे प्रजापति ने अपशकुन से बहुत उत्पात देखे फिर पहिलेसरीके नारदजी के किये पुत्रों के नाश को सुना ॥ ३४ ॥

पुत्रों के शोक मे युक्त होकर दक्षप्रजापति ने नारदजी के ऊपर बडा कोप किया इतने मे नारदजी दक्ष के पास गये तब क्रोध के मारे ओठों को फरका कर दक्ष बोले ॥ ३५ ॥

दक्ष बोले अहो तू बडा असाधु है तैंने साधुओं के

नानुभूय न जानाति पुमान् विषयतीक्ष्णताम् ।
निर्विद्येत स्वयं तस्मान्न तथा भिन्नधीः परैः ॥ ४१ ॥
यन्नस्त्वं कर्मसन्धानां साधूनां गृहमेधिनाम् ।
कृतवानसि दुर्मर्षं विप्रियं तव मर्षितम् ॥ ४२ ॥
तन्तुकृन्तन ! यन्नस्त्वमभद्रमचरः पुनः ।
तस्माल्लोकेषु ते मूढ ! न भवेद्भ्रमतः पदम् ॥ ४३ ॥

श्रीशुक उवाच ।

प्रतिजग्राह तद्बाढं नारदः साधुसम्मतः ।
एतावान् साधुवादो हि तितिक्षेतेश्वरः स्वयम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां षष्ठस्कन्धे नारदशापोनाम
पञ्चमोऽध्यायः ॥ ५ ॥

भाषा टीका ।

चिन्ह को धारण करके बडा असाधु पना किया जो कि बालकों को भिक्षुक मार्ग दिखादिया ॥ ३६ ॥

हे पापी ! जिन बालकों ने देवऋण पितृऋण ऋषिऋण को नहीं दूर किया है जिनोंने कर्म का विचार नहीं किया है उन के दोनों लोकके पुण्य सुखका तैंने नाश करदिया ॥ ३७ ॥

तू इस प्रकार का निर्दयी है बालकों की मति बिगाडने वाला है यश के नाश करने वाला है निर्लज्ज है श्रीहरि के पार्षदों के मध्यमे घूमता है ॥ ३८ ॥

क्यों रे भक्तजन तो नितही लोगों के अनुग्रह करने मे व्यग्र रहते हैं एक तूही विना बैर वालों से बैर करने वाला सुहृदपन के नाश करने वाला है ॥ ३९ ॥

विना ज्ञान के विरक्त होने वाले तेरे कहने से इस प्रकार से झूंठ से किसी को वैराग्य नहीं होगा जो कि तू जानता है स्नेह रूपी पास छूट जाय और शान्ति होजाय सो नहीं होना है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्थं विरागो न स्यादित्यत्र हेतुमाह। नानुभूयाननुभूय विषयाणां तीक्ष्णतां दुःखहेतुत्वं न जनाति। तस्माद्विषयानुभवेन तीक्ष्णत्वज्ञानात् ॥ ४१ ॥

अतस्त्वयास्माकमप्रियमेव कृतं तथापि वयं न कुर्म इत्याह। यन्निति । कर्मसन्धानां कर्ममर्यादानाम् । कर्तुमन्धानामिति पाठे विप्रियं कर्तुमजानतामित्यर्थः। दुःसहं यत्त्वं कृतवानसि तन्मर्षितं सोढम् ॥ ४२ ॥

तथापि तवाभद्रं भविष्यत्येवेत्याह । तन्तुकृन्तन ! सन्तानच्छेदक । यद्यस्मादभद्रं पुत्राणां स्थानभ्रंशमचरस्तमात्तव लोकेषु भ्रमतः पदं स्थानं न भवेदिति स्तुवच्छलेन शापः ॥ ४३ ॥

बाढं तथेति स्वीकृतवान् । ईश्वरोऽपि प्रतिशप्तुं समर्थोऽपि तितिक्षेत सहेतेति यदेतावानेव ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कुतः । यतः पुमान्नानुभूय मननुभूय विषयाणां तीक्ष्णतामन्तो दुःखरूपतां न जानाति । यथा विषयाननुभूय स्वयमेव तस्मान्निर्विद्येत विरज्येत । तथा परैर्भिन्नधीर्भ्रान्तिधीर्न निर्विद्येत ॥ ४१ ॥

यस्त्वं कर्मसन्धानां कर्मण्यासक्तचित्तानां कर्तुमन्धानामिति पाठे प्रातिविप्रियं कर्तुमजानतां गृहस्थानां साधूनामस्माकं दुर्मर्षं सोढुमशक्यं विप्रियं कृतवानसि तदप्रियममर्षितमस्माभिरिति शेषः । न मृष्यतेऽस्माभिरित्यर्थः ॥ ४२ ॥

एवं नारदाय क्रुद्धवान् दक्षः शशाप । तन्त्विति । हे तन्तुकृन्तन ! सन्तानच्छेदक ! यस्मात्त्वमभद्रं पुत्रविनाशमचरः कृतवानसि चरतेर्लङ् मध्यमैकवचनं हे मूढ ! तस्मात्सर्वेषु लोकेषु भ्रमतस्तव पदं स्थानं न भवेत्क्वचिदपि भवान् चिरमवतिष्ठेत्किन्तु भ्रामयत्विति शापः ॥ ४३ ॥

तं च शापं साधूनां सम्मतो नारदो बाढं तथैवास्त्विति प्रतिजग्राह स्वीकृतवान् । कुतः हि यस्मादीश्वरोऽपि स्वयं प्रति-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

...र्तुं समर्थोऽपि तितिक्षेत सहेतेति यदेतावानेव साधूनां वादः ...न तु प्रतिशापप्रदानवाद इति भावः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कुतो व्यर्थं इति तत्राह । नेति । नानुभूयाननुभूय विषयसेवाम...इत्यर्थः । विषयतीक्ष्णतां संसारापादनपटुताम् । तज्ज्ञानाद्वैराग्यं स्यात्किमिति तत्राह । निर्विद्येत इति । यथा विषयभोगेन तत्तीक्ष्णत्वं ज्ञात्वा स्वयं परोपदेशमन्तरेण तस्माद्विषयग्रामान्निर्विद्यते विरक्तो भवति तथा परैर्भिन्नधीः प्रबोधितबुद्धिः न विरक्तो भवति अज्ञातविषयतीक्ष्णत्वादिति शेषः ॥ ४१ ॥

गालीवचनमन्तरेण क्रोधफलमाह । यदिति । त्वं दुर्मर्षं दुःसहं विरोधं कृतवानसीति यत्तन्मर्षितं सोढमेवेत्यन्वयः ॥ ४२ ॥

तर्हि किं मर्षितमिति तत्राह । तन्त्विति । हे मूढ ! अस्मदभिमतविरुद्धबोधक ! तन्तुकृन्तन सन्ततिकराणां नः तनयानामभद्रं वैदिकसुखानुभवविरोधिरूपमचरः । पुनः यस्मात्तस्माल्लोकेषु भ्रमतस्ते पदमेकत्र निवासलक्षणं स्थानं न भवेदित्यन्वयः ॥ ४३ ॥

स्वयं शोभनदेवो नारद ईश्वरः प्रतिशप्तुं समर्थोऽपि न शशाप दक्षशापं तितिक्षेत सहेत हि यदेतावान् साधूनां वादः स्वभावलक्षणः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मात्त्वमनभिज्ञो राजमार्गे गत्तः शृगिवत्याह । नेति । विषयाणां तीक्ष्णतां दुःखप्रदत्वमननुभूय न जानाति । अतस्तस्माद्विषयभोगोत्थादेव तत्तीक्ष्णत्वज्ञानात् स्वयमेव निर्विद्येत यथा न तथा परैस्त्वादृशैर्भिन्नधीः विदीर्णमतिः ॥ ४१ ॥

एवं त्वया यथा मम निर्हेतुकं वैरं कृतं तस्य प्रतिफलमहमपि समनुगुणं स्वयमेव दातुं शक्नोम्येव तथापि न ददामीति स्व गृहस्थानामप्यस्माकं तितिक्षामित्याह । यदिति । कर्मण्येव कर्ममार्गे एव सन्धा मर्यादा येषां तेषां कर्तुमन्धानामिति पाठे परेषां विप्रियं कर्तुमजानतामित्यर्थः । दुर्मर्षं दुःसहमपराधमेव ज्ञानभक्तिमर्यादाभ्रष्टस्य परं विप्रियं कर्तुं चक्षुष्मतः । असाधोः परमहंसाश्रमिणः मर्षितं क्षान्तम् ॥ ४२ ॥

तथापि तवाभद्रन्तु भविष्यत्येवेत्याह । तन्तुकृन्तन ! सन्तानच्छेदक ! अभद्रं मत्पुत्राणां स्थानभ्रंशम् अचरः अकरोः पदं स्थानम् ॥ ४३ ॥

प्रतिजग्राह । वाढं तथेति स्वीचकार साधूनां सम्मत इति । साधव एवमेव सहन्त इत्यर्थः । प्रसिद्धस्य साधुवादशब्दस्यार्थमेव निरुक्तिरित्याह । एतावानिति । ईश्वरः प्रतिशप्तुं समर्थोऽपि । ननु दक्षमनुग्रहीतुमागतो नारदो दक्षेण बहुशस्तिरस्कृतस्तत्र तांस्तिरस्कारान् श्रुत्वा नारदेन तत्समीपात् कथं नापसृतम् । उच्यते । नारदस्यायमभिप्रायः । क्रोधवशोऽयं बहुशस्तिरस्कारानपि करोतु शापञ्च ददातु । ततश्च "क्रोधस्यैतत्फलोदयान्" इत्युक्तेर्यदा क्रोधः शाम्येत् माञ्च प्रति तिरस्कारादिकमकुर्वाणं सर्वमेव सहमानमालोक्य हन्त हन्त भगवद्भक्तोऽयं तिरस्कृतः शप्तश्चेति वैकुण्ठगतानां सनकादीनामिवानुतापश्च यदा भविष्यति तदा भक्तिबीजवपनयोग्यत्वं श्रीभूतेऽस्मिन् शुद्धभक्तिबीजमुप्त्वा यास्यामीति बुद्ध्या तावत्क्षणपर्यन्तमपि स्थितम् । दक्षस्य तु तत्तदृष्ट्वा अहो चन्द्रार्द्धमौलेरपराधशेषप्राबल्यमिति स्मृत्वा ततोऽपसृतम् ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठस्य पञ्चमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नानुभूय विषयानुभवमकृत्वा विषयाणां तीक्ष्णतां दुःखोदर्कतां न जानाति तस्माद्विषयानुभवेन तत्तीक्ष्णत्वज्ञानात्स्वयमेव निर्विद्येत विषयेभ्यो विरज्येत परैस्त्वादृशैर्भिन्नधीस्तु तथा न विरज्येत ॥ ४१ ॥

कर्मणि कर्ममार्गे सन्धा निष्ठा येषां नोऽस्माकं दुःसहमप्रियं कृतवानसि यत्तत्तव मर्षितं क्षान्तं मया ॥ ४२ ॥

इदं तु तव मदप्रियकारिणः भविष्यत्येवेत्याह । हे तन्तुकृन्तन ! वंशघ्न ! यद्यतस्त्वं नोऽस्माकमभद्रमप्रियमचरस्तस्मात्ते भ्रमतः पदं स्थानं न भवेत् ॥ ४३ ॥

तच्छापं वाढं तथास्त्विति प्रतिजग्राह स्वीकृतवान् । ईश्वरोऽपि प्रतिशप्तुं समर्थोऽपि तितिक्षेतेति यदेतावानेव साधुवादः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चमाध्यायार्थप्रकाशः ॥ ५ ॥

---

भाषा टीका ।

पुरुष विना अनुभव किये विषय की तीक्ष्णताको नहीं जान सकता है जानने से स्वयं उससे निवृत्त हो जायगा तैसा दूसरों के बुद्धि भेदन से नहीं निवृत्त होगा ॥ ४१ ॥

वैदिक कर्म के सङ्कल्प वाले गृहस्थ साधु हम लोगों का वडा दुःसह अप्रिय तैंने किया है सो हमने एक वखत सह लिया ॥ ४२ ॥

हे सन्ताननाशक ! तैंने जो हमारा फिर भी बुरा किया है हे मूर्ख ! तिस से तेरे को संसार मे घूमते घूमते कहीं स्थिरता नहीं मिलैगा ॥ ४३ ॥

श्रीशुकदेवजी बोले साधुओं के संमान्य श्रीनारदजी ने तिस शाप को तथास्तु करके ग्रहण कर लिया जो कि समर्थ होकर भी सह लेना है इतनाहीं साधुका साधुपना है ॥ ४४ ॥

इति श्रीभागवत षष्ठस्कन्ध पांच मे अध्यायका
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ ५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥



## ॥ षष्ठोऽध्यायः ॥



श्रीशुक उवाच ।

ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयम्भुवा ।
षष्टिं संजनयामास दुहितॄः पितृवत्सलाः ॥ १ ॥
दश धर्माय कायेन्दोर्द्विषट् त्रिणव दत्तवान् ।
भूताङ्गिरःकृशाश्वेभ्यो द्वे द्वे तार्क्ष्याय चापराः ॥ २ ॥
नामधेयान्यमूषां त्वं सापत्यानां च मे शृणु ।
यासां प्रसूतिप्रसवैर्लोका आपूरितास्त्रयः ॥ ३ ॥
भानुर्लम्बा ककुब्जामिर्विश्वा साध्या मरुत्वती ।
वसुर्मुहूर्ता सङ्कल्पा धर्मपत्न्यः सुताञ्छृणु ॥ ४ ॥
भानोस्तु देव ऋषभ इन्द्रसेनस्ततो नृप ! ।
विद्योत आसील्लम्बायास्ततश्च स्तनयित्नवः ॥ ५ ॥
ककुभः सङ्कटस्तस्य कीकटस्तनयो यतः ।
भुवो दुर्गाणि जामेयः स्वर्गो नन्दिस्ततोऽभवत् ॥ ६ ॥
विश्वेदेवास्तु विश्वाया अप्रजांस्तान् प्रचक्षते ।
साध्यो गणस्तु साध्याया अर्थसिद्धिस्तु तत्सुतः ॥ ७ ॥
मरुत्वांश्च जयन्तश्च मरुत्वत्यां बभूवतुः ।
जयन्तो वासुदेवांश उपेन्द्र इति यं विदुः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षष्ठे दक्षेण सृष्टायां कन्याषष्ट्यां प्रकीर्तिताः ।
पृथग्वंशा यतो जातो विश्वरूपोऽदितेः सुतात् ॥१॥

नारदात्पुत्राणां नाशमाशङ्कमानो दुहितॄर्जनयामास ॥१॥ काय कश्यपाय द्विषट् द्विगुणाः षट् द्वादश यासु ताः । त्रयोदशेत्यर्थः । इन्दोः सोमाय त्रिणव सप्तविंशतिं तार्क्ष्याय अपरं प्राप्ताय कश्यपायैव अपरा अवशिष्टाश्चतस्रः ॥ २ ॥ सापत्यानामपत्यसहितानाम् । मे मत्तः शृणु । प्रसूतिप्रसवैः पौत्रादिभिः ॥ ३ ॥ ४ ॥ ततो देवऋषभात् ॥ ५ ॥ यतः कीकटाद्भुवो दुर्गाणि दुर्गाभिमानिनो देवाः । जामेयो जामेः पुत्रः स्वर्गस्ततः स्वर्गान्नन्दिः पुत्रोऽभवत् ॥ ६ ॥ तत्सुतः । साध्यानां सुतः ॥ ७ ॥ ८ ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नारदात्पुत्रनाशमाशङ्कमानो दक्षः पुत्रोत्पादनयत्नाद्विरम्य तूष्णीमवस्थितो ब्रह्मणा परिसान्त्वितस्ततो दुहितॄरजनयदित्याह मुनिः । तत इति । प्राचेतसो दक्षः स्वयम्भुवानुनीतः अनुमान्त्वितोऽसिक्न्यां भार्यायां दुहितॄः पितृवत्सलाः षष्टिसङ्ख्याकाः सञ्जनयामास ॥१॥

तासां मध्ये दश कन्यकाः भानुलम्बाद्याख्या धर्मायादात् काय कश्यपाय द्विषडेकाः च त्रयोदशेत्यर्थः । अदितिदितिदनुकाष्ठारिष्टासुरसेलामुनिक्रोधवशाताम्रासुरभीसरमातिरश्या इति यस्य-मायाख्या अदात् । इन्दवे सोमाय त्रिणव त्रयाणां नवानां समाहारस्त्रिणवं सप्तविंशतिसङ्ख्याकाः कृत्तिकारोहिण्याद्याख्या नक्षत्ररूपा अदात् । भूतो रुद्रः भूताङ्गिरःकृशाश्वेभ्यः त्रिभ्यः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्वे द्वे कन्ये अदात्तत्र रुद्रस्य सरूपा अन्या च प्रसिद्धेति द्वे भार्ये अङ्गिरसस्तु स्वधा सती चेति द्वे कृशाश्वस्य त्वर्चिर्धिषणा चेति द्वे इति विवेकः । अपराश्चशिष्टाश्चतस्रो दुहितॄः तार्क्ष्याय तार्क्ष्यो नाम कश्चिद्देवः तस्मै अदादित्यर्थः ॥ २ ॥

अमीषां दक्षस्य दुहितॄणां सापत्यानां पुत्रपौत्रादिसहितानां नामधेयानि मे मत्तः शृणु ताः विशिनष्टि । यासां दक्षकन्यानां प्रसूतिप्रसवैः पुत्रपौत्रादिभिः त्रयो लोका आपूरिताः ॥ ३ ॥

तावद्धर्मस्य दश भार्या निर्दिशति । भानुरिति । भान्वादयः सङ्कल्पान्ताः दश धर्मस्य भार्याः तासां सुतान् क्रमेण शृणिवत्यर्थः ॥ ४ ॥

तत्रैकैकस्याः सन्तानं क्रमेणाह । भानोस्त्विति । भानोर्धर्मभार्यायां देवः ऋषभ इति द्वौ पुत्रौ तत ऋषभादिन्द्रसेनः हे नृप ! लम्बायां विद्योतः पुत्र आसीत्ततो विद्योतात्स्तनयित्नवः विद्युत्स्तनयित्नुशब्दौ तदभिमानिदेवतापरौ ॥ ५ ॥

ककुभः भार्यायाः कीकटस्तनयः यतः कीकटात्सङ्कटः तनयोऽभवदित्यन्वयः । जामेयाः जाम्याः पुत्राः भूमेर्दुर्गाणि दुर्गाभिमानिनो देवाः ततः जामेयेभ्यः स्वर्गो नन्दिश्चाभवत् ॥ ६ ॥

विश्वायां धर्मस्य भार्यायां विश्वेदेवाख्याः पुत्रा बभूवुः । तान् विश्वेदेवानप्रजानपुत्रान् प्रचक्षते कथयन्ति । साध्यायां साध्यगणाः बभूवुः तत्सुतः साध्यगणसुतस्त्वर्थसिद्धोऽभूत् ॥ ७ ॥

मरुत्वत्यां तु मरुत्वान् जयन्तश्चेति द्वौ पुत्रौ बभूवतुः । तत्र जयन्तो वासुदेवस्य भगवतोंऽशभूतः यं जयन्तमुपेन्द्र इति विदुः वसोर्वंशस्य भूयस्त्वादन्ते निर्देशः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सदसज्जननारतम्यज्ञानं च भगवन्माहात्म्यज्ञानोपयोगीत्याभिप्रेत्य दक्षपत्न्यसिक्निप्रसूतिप्रसरं प्रपञ्चयत्यस्मिन्नध्याये । ततः प्राचेतस इत्यादिना ॥ १ ॥

कालस्य नयने ज्ञापने युक्ताः योग्याः सप्तविंशतिं ददाविति शेषः अपराः षट्पञ्चाशत्सङ्ख्या ताभ्यः शिष्टाश्चतस्रः कन्यास्तार्क्ष्याय ददाविति शेषः ॥ २ ॥

सापत्यानामपत्यतदपत्यादिभिः सहितानां प्रसूतिप्रभवैः पुत्रपौत्रादिभिः भान्वादीनां सपुत्राणां नामधेयं मे मम सकाशादिति शेषः ॥ ३ ॥ ४ ॥

ततो वेदर्षभात् । ततः । इन्द्रसेनात् ॥ ५ ॥

यतः सङ्कटात् जामीपुत्राः जामेयाः । दुर्गाण्ययगम्यस्थानाभिमानिनः ॥ ६ ॥

अप्रजान् पुत्ररहितान् । तत्सुतः साध्यगणसुतः ॥ ७ ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

धर्मादयोऽप्येते पूर्वदक्षजामातृभ्योऽन्ये इति ज्ञेयाः ॥ १–९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

षष्ठे दक्षस्य कन्यानां वंशाः पृथगुदीरिताः ।
यत्रादितेः सुतास्त्वष्टुर्विश्वरूपोऽप्यजायत ॥

पुत्रशोकेन निर्विण्णः पुनर्ब्रह्मवचनाद्गार्हस्थ्यं कुर्वन् नारदो मयि वैरं न हास्यतीति मत्वा तस्मात् पुत्राणां नाशमाशङ्कमानः कन्या एव जनयामासेत्याह । तत इति । असिक्न्यां भार्य्यायाम् ॥ १ ॥

काय कश्यपाय द्विषट् द्विगुणिताः षट् द्वादशेति न्यूनसङ्ख्या व्यवच्छिन्ना तेन त्रयोदश इत्यर्थः । इन्दवे सोमाय त्रिषट् त्रिगुणिता नव सप्तविंशतिं द्वे द्वे इति । भूताय द्वे आङ्गिरसे द्वे कृशाश्वाय द्वे । अपरा अवशिष्टाश्चतस्रः तार्क्ष्याय तार्क्ष्यनाम्ने कश्यपायैव ॥ २–५ ॥

यतः । कीकटात् भुवो दुर्गाणि दुर्गाभिमानिनो देवाः यामेयः याम्याः पुत्रः स्वर्गः ॥ ६ ॥

तत्सुतः । साध्यानां सुतः ॥ ७ ॥

यं विदुरित्यदित्याः पुत्र उपेन्द्र इव जयन्तोऽप्युपेन्द्रसंज्ञ इत्यर्थः ॥ ८–११ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ दक्षकन्योद्भवेन्द्रादिपोषणं वक्तुं दक्षकन्यावंशानाह षष्ठेनाध्यायेन । ततस्तदनन्तरमनुनीतः सान्त्वितः ॥ १ ॥

ता भर्तृभिर्योजितवानित्याह । दुहितॄः धर्माय दश कश्यपाय द्विषड् द्विगुणाः षड् द्वादश यासु ताः त्रयोदश । इन्दोश्चन्द्रस्य त्रिणव सप्तविंशतिं भूतादिभ्यो द्वे द्वे । अपराः शेषाः चतस्रः तार्क्षाय नामान्तरं गताय कश्यपायैव दत्तवान् ॥ २ ॥

मे । मत्तः प्रसूतिप्रसवैः पुत्रपौत्रादिभिः ॥ ३ ॥

ततो वेदऋषभतः ॥ ५ ॥

दुर्गाणि । तदभिमानिनो देवाः ॥ ६ ॥

तत् । तेषां साध्यानाम् ॥ ७ ॥ ८ ॥ ९ ॥

---

### भाषा टीका ।

श्रीशुकदेवजी बोले तिसके पीछे ब्रह्माजी के समझाते हुए दक्षप्रजापति ने असिक्नी भार्या में पिता के बड़े प्रेम करने वाली साठ पुत्री उत्पन्न कीनी ॥ १ ॥

तिन में से दश तो धर्मदेव को दीं तेरा कन्या कश्यपजी को दीं सत्ताईस चन्द्रमा को दीनी भूतको अङ्गिरा को और कृशाश्व को दो दो दीं बांकी जो बची सो कश्यप ही को देदीनी ॥ २ ॥

अब पुत्र सन्तानों के सहित इन सब कन्याओं के नामों को तुम सुनो जिनके सन्तान के होने से तीनो लोक भरगये ॥ ३ ॥

भानु लम्बा ककुप जामि विश्वा साध्या मरुत्वती वसु मुहूर्ता सङ्कल्पा ए दश धर्म की पत्नी हैं अब इन के सन्तानों को सुनो ॥ ४

मौहूर्तिका देवगणा मुहूर्त्तायाश्च जज्ञिरे ।
ये वै फलं प्रयच्छन्ति भूतानां स्वस्वकालजम् ॥ ९ ॥
सङ्कल्पायाश्च सङ्कल्पः कामः सङ्कल्पजः स्मृतः ।
वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु ॥ १० ॥
द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः ।
द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः ॥ ११ ॥
प्राणस्योर्जस्वती भार्या सह आयुः पुरोजवः ।
ध्रुवस्य भार्या धरणिरसूत विविधाः पुरः ॥ १२ ॥
अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः ।
अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः ॥ १३ ॥
स्कन्दश्च कृत्तिकापुत्रो ये विशाखादयस्ततः ।
दोषस्य शर्वरीपुत्रः शिशुमारो हरेः कला ॥ १४ ॥
वसोराङ्गिरसी पुत्रो विश्वकर्माकृतीपतिः ।
ततो मनुश्चाक्षुषोऽभूद्विश्वे साध्या मनोः सुताः ॥ १५ ॥
विभावसोरसूतोषा व्युष्टं रोचिषमातपम् ।
पञ्चयामोऽथ भूतानि येन जाग्रति कर्मसु ॥ १६ ॥

भाषाटीका

हे नृप! भानु के देव ऋषभ दो पुत्र भये उस के इन्द्रसेन भया लम्बा के विद्योत भया तिस के मेघ भये ॥ ५ ॥

ककुभ के सङ्कट भया उस का पुत्र कीकट भया तिस से पृथिवी के दुर्ग स्थानों के अभिमानी देवता भये जामि का पुत्र स्वर्ग भया तिस से नन्दी भया ॥ ६ ॥

विश्वा के विश्वेदेवा भये वे विश्वेदेवा अपुत्रही रहगये साध्या के साध्यगण भये उन साध्यों का पुत्र अर्थसिद्धिनामक भये ॥ ७ ॥

मरुत्वती के मरुत्वान् जयन्त दो पुत्र भये जयन्त वासुदेव का अंश है जिस को उपेन्द्र कहते हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

वसोर्वंशस्य भूयस्त्वादन्ते निर्देशः । मे मत्तः ॥ १० ॥

अभिमतिर्नाम पत्नी तस्या हर्षादयः पुत्राः ॥ ११ ॥

सहश्चायुश्च पुरोजवश्च पुत्राः । पुरः पुराणि ॥ १२ ॥ १३ ॥

स्कन्दश्च कृत्तिकासुतोऽग्नेः पुत्रः षाण्मातुर इत्यग्निभूरिति च प्रसिद्धः । ततः स्कन्दात् ॥ १४ ॥

आकृतीपतिः शिल्पाचार्यः । ततो विश्वकर्मणश्चाक्षुषो मनुरासीत् ॥ १५ ॥

विभावसोरुषानाम भार्या । अथ आतपात्पञ्चयामो दिवसो जातः । अत एव रात्रिस्त्रियामा प्रदोषप्रत्यूषयोर्दिवसस्यावयवत्वात् ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मुहूर्त्तायां भार्यायां मौहूर्त्तिका मुहूर्त्ताभिमानिनो देवगणा उद्बभूवुः । तान् विशिनष्टि । ये वै मौहूर्त्तिकाः स्वस्वमुहूर्त्तकालजं सुखदुःखादिरूपं फलं भूतानां देहिनां प्रयच्छन्त्यर्पयन्ति ॥ ९ ॥

सङ्कल्पायाः सङ्कल्पस्तनयोऽभूत् । कामस्तु सङ्कल्पाज्जात इति स्मृतः । वसोः पुत्रास्त्वष्टौ वसवः । तेषां नामानि मे मत्तः शृणु ॥ १० ॥

द्रोणादयो विभावस्वन्ता अष्टौ वसवः । तत्र द्रोणादीनां सन्तानमाह क्रमेण । द्रोणस्येति । द्रोणस्याभिमितिः पत्नी तस्या हर्षादयस्तनया बभूवुः ॥ ११ ॥

प्राणस्य तु ऊर्जस्वती भार्या तस्याः पुत्रा आयुःसहपुरोजवाः ध्रुवस्य धरणिर्भार्या सा च विविधाः पुरः पुराणि पुराभिमानिनो देवानसूत ॥ १२ ॥

अर्कस्य तु भार्या वासना तस्यास्तर्षादयः पुत्राः । अग्नेस्तु भार्या वसोर्धारा तस्यास्तनयास्तु द्रविणकादयः ॥ १३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्कन्दः कुमारस्त्वग्नेरेव कृत्तिकासु जातः पाण्मातुर इत्यग्निभूरिति च प्रसिद्धेः । ये विशाखादयस्ते तनः स्कन्दाज्जाताः दोषस्य तु भार्या शर्वरी तस्याः पुत्रः शिशुमारः । स च हरेः कलांशभूतः ॥ १४ ॥

वसोराङ्गिरसी भार्या तस्याः पुत्रो विश्वकर्मा स च कृतीपतिः शिल्पाचार्यः ततो विश्वकर्मणः चाक्षुषाख्यो मनुरभून्मनोश्चाक्षुषस्य विश्वे साध्याः सुता बभूवुः ॥ १५ ॥

विभावसोर्भार्या उषा सा च व्युष्टं रोचिषं चातपं च पुत्रानसुत प्रसूतवती अथातपात्पञ्चयामः दिवसः । अत एव रात्रिस्त्रियामा प्रदोषप्रत्यूषयोः पूर्वोत्तरदिवसावयवत्वात्पञ्चयामशब्दः तदभिमानिदेवपरः । तं विशिनष्टि । येन पञ्चयामेन भूतानि प्राणिनः कर्मसु स्वस्वव्यापारेषु जाग्रति जागरूकाणि भवन्तीत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मौहूर्तिकाः मुहूर्ताभिमानिनः । यथाफलं यथोचितं फलं स्वस्वमुहूर्तजम् ॥ ९ ॥ १० ॥

अभिमतिः अभिमानदेवता हर्षादयः हर्षाद्यन्तःकरणदेवताः ॥ ११ ॥

सहआयुःप्रभृतयः पुत्राः । पुरः पुराभिमानिदेवताः ॥ १२ ॥

वसोः पुत्रस्याग्नेर्भार्या धारा स्वाहापरपर्याया द्रविणकादय स्तत्पुत्राः ॥ १३ ॥

स्कन्दश्चाग्निपुत्रः धात्रीत्वेन कृत्तिकापुत्रः उपचारमात्रमेतत् मुख्यतस्तु सदाशिवपुत्रः ये विशाखादयस्ते ततः स्कन्दाज्जाताः । दोषभार्या शर्वरी तत्पुत्रः शिशुमारः । कोऽसावितितत्राह । हरेरिति ॥ १४ ॥

वसोर्भार्याङ्गिरसी तत्पुत्रः विश्वकर्मा कृतिपतिः कृतीनां शिल्पानाम् इरिच्छा तस्याः पतिः शिल्पिनां कुलाचार्य इत्यर्थः । कृत्याः देव्याः पतिरिति वा ततो विश्वकर्मणः ॥ १५ ॥

अथ पञ्चयामो दिवसाभिमानी आतपाज्जात इति शेषः । येन पञ्चयामेन ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वसोर्वंशस्य भूयस्त्वादन्ते निर्देशः मे मत्तः ॥ १० ॥

अभिमतिर्नाम पत्नी तस्या हर्षादयः ॥ ११–१४ ॥

ततो मनुरित्यर्द्धकम् । अयं ध्रुववंशेऽपि पूर्वं जातोऽपि दक्षवशिष्ठादिवत् पुनरत्र जात इति गम्यते ॥ १५–४२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ऊर्जस्वतीति सप्तम्यर्थे प्रथमा ॥ १२ ॥

कृत्तिकास्वग्नेर्भार्या ॥ १३ ॥ १४ ॥

आकृत्याः पतिः ततो मनुश्चाक्षुष इति ध्रुववंशजोऽप्यसौ दक्षवशिष्ठादिवदत्रापि जात इति गम्यते ॥ १५ ॥

अथ आतपात् पञ्चयामः । प्रदोषप्रत्यूषयोर्दिवसावयवत्वात् पञ्चयामो दिवसः । अत एव रात्रिस्त्रियामा ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मे मत्तः ॥ १० ॥

अभिमतिः पत्नी तस्याः ॥ ११ ॥

प्राणस्योर्जस्वती भार्या सहआदयः सुताश्च ॥ १२ १३ ॥

कृत्तिकापुत्रः कृत्तिकासु जातः स्कन्दश्चाग्नेः पुत्रः ततः स्कन्दात् दोषस्य शर्वरीपुत्रः शर्वर्यां जातः शिशुमारः पुत्रः ॥ १४ ॥

वसोराङ्गिरसीपुत्रः आङ्गिरस्यां जातो विश्वकर्मा स च कृतीपतिः शिल्पाचार्यः ततो विश्वकर्मणश्चाक्षुषो मनुस्तत्र मनोर्विश्वे साध्याः पुत्राः अभूवन् ॥ १५ ॥

विभावसोः सकाशादुषा व्युष्टादीन् त्रीनसुत तत्रातपात् पञ्चयामो दिवसो जातः । प्रदोषप्रत्यूषयोः रात्रिगतयोरपि स्नानादिक्रियार्थं दिवसे गृहीतत्वादतो रात्रिस्त्रियामेति वस्तुतस्तु "यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे" इति मुख्यो व्यवहारः प्राक् प्रदर्शित एव ॥ १६ ॥

---

भाषा टीका ।

मुहूर्ता के मौहूर्तिक देवगण भये जोकि सब भूतों को अपने अपने काल के फल को देते हैं ॥ ९ ॥

सङ्कल्पा के सङ्कल्प भया सङ्कल्प मे से काम भया वसु के पुत्र आठ वसु भये अब उन वसुओं के नाम मेरे से सुनो ॥ १० ॥

द्रोण प्राण ध्रुव अर्क अग्नि दोष वसु विभावसु । द्रोण की भार्या अभिमति के हर्ष शोक भय आदिक भये ॥ ११ ॥

प्राणकी ऊर्जस्वती भार्या भई उसके सह आयु पुरो जव तीन पुत्र भये ध्रुवकी भार्या धरणी भई उसने नानापुराभिमानी देवतों को पैदाकिया ॥ १२ ॥

अर्क की भार्या वासना भई उस के पुत्र तर्षादिक भये अग्नि की भार्या वसुधारा भई उस के पुत्र द्रविणकादिक भये ॥ १३ ॥

अग्नि से कृत्तिका का पुत्र स्कन्द उस के विशाखादि पुत्र भये । दोष की भार्या शर्वरी है उस का पुत्र शिशुमार है सो श्रीहरिका अंश है ॥ १४ ॥

वसु का आङ्गिरसी मे विश्वकर्मा पुत्र भया उस की भार्या आकृती है उस से चाक्षुष मनु भया मनु के पुत्र विश्वे और साध्य हैं ॥ १५ ॥

सरूपासूत भूतस्य भार्या रुद्रांश्च कोटिशः ।
रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ॥ १७ ॥
अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ।
रुद्रस्य पार्षदाश्चान्ये घोरा भूतविनायकाः ॥ १८ ॥
प्रजापतेरङ्गिरसः स्वधा पत्नी पितॄनथ ।
अथर्वाङ्गिरसं वेदं पुत्रत्वे चाकरोत् सती ॥ १९ ॥
कृशाश्वोऽर्चिषि भार्यायां धूम्रकेशमजीजनत् ।
धिषणायां वेदशिरो देवलं वयुनं मनुम् ॥ २० ॥
तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनी इति ।
पतङ्ग्यसूत पतगान् यामिनी शलभानथ ॥ २१ ॥
सुपर्णासूत गरुडं साक्षाद्यज्ञेशवाहनम् ।
सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः ॥ २२ ॥
कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारत ! ।
दक्षशापात् सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः ॥ २३ ॥
पुनः प्रसाद्य तं सोमः कला लेभे क्षये दिताः ।
शृणु नामानि लोकानां मातॄणां शङ्कराणि च ॥ २४ ॥

---

भाषा टीका

विभावसुकी भार्या ऊषा भई उसने व्युष्ट रोचिष आतप-
[illegible] पुत्रों को पैदा किया। आतप से पञ्चयामदिवसाभिमानी
[illegible] भया जिस से सब प्राणि कामों मे जाग्रत रहते हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भूतस्य द्वे भार्ये तयोर्वंशमाह । सरूपेति ॥ १७ ॥
महानित्येवमेकादशरूपस्य रुद्रस्य पार्षदाः प्रेतादयोऽन्ये-
[illegible]स्यां जाताः ॥ १८ ॥

[illegible]ाङ्गिरसः स्वधा सती चेति द्वे भार्ये तयोर्वंशमाह । प्रजाप-
[illegible] । स्वधा नाम पत्नी पितॄन् पुत्रत्वेऽकरोत् । अथ सती चाथ-
[illegible]रसं नाम वेदम् ॥ १९ ॥

कृशाश्वस्यार्चिर्धिषणेति द्वे भार्ये तयोर्वंशमाह । कृशाश्व
[illegible] । २० ॥ २१ ॥

[illegible]पर्णा विनता अनूरुमरुणम् ॥ २२ ॥

[illegible]हिण्यामेव प्रेमातिशयेनान्यासामुपेक्षणात्कुपितस्य दक्षस्य
[illegible]यक्ष्मग्रहार्दितः क्षयरोगपीडितः संस्तास्वनपत्योऽभूत् ॥ २३ ॥
[illegible]नं दक्षं प्रसाद्य केवलं कला एव लेभे न त्वपत्यानि । कथम्भूताः

क्षये कृष्णपक्षे दिताः खण्डिताः सतीः पाठान्तरे क्षये सति
पुनरेधितास्तेनैव वर्धिताः सतीः ॥ ॥ २४ ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं धर्मभार्याणां सन्तानमभिधायाथ कश्यपसोमयोः सन्तानं भूयस्त्वाद्वक्ष्यमाणो भूतस्य तावत्सन्तानमाह । सरूपेति चतुर्भिः । भूतस्य शम्भोर्भार्या सरूपा सा च रुद्रान् कोटिशः असूत प्रसूतवती । तत्र प्रधानानेकादश रुद्रान् गणनायकानाह । रैवत इति सार्धेन । यद्वा । रैवतादिरूपेणैकादशधाभिन्नस्य रुद्रस्य पारिषदा घोररूपा प्रेतादिरूपेणानेकविधा अन्येऽन्यस्यां भार्यायां च बभूवुरित्यन्वयः ॥ १७ ॥ १८ ॥

अथाङ्गिरसः सन्तानमाह । प्रजापतेरिति । आङ्गिरसः प्रजापतेः पत्नी स्वधा सती च । तत्र स्वधा पितॄन् सती त्वथर्वाङ्गिरसं नाम वेदं वेदाभिमानिनं पुरुषं पुत्रत्वेनाकरोत् ॥ १९ ॥

अथ कृशाश्वसन्तानमाह । कृशाश्वः अर्चिषि भार्यायां धूम्रकेशं पुत्रमजीजनत् । धिषणायां पत्न्यां तु वेदशिरसं देवलञ्च वयुनं मनुं चेति पुत्रानजीजनत् ॥ २० ॥

अथ तार्क्ष्यस्य सन्तानमाह । तार्क्ष्यस्य विनताद्याश्चतस्रो भार्याः । तत्र पतङ्गी पतगान् पक्षिणः असूत । यामिनी तु शलभानसूत ॥ २१ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सुपर्णेति । विनताया एव नामान्तरम् । सा तु साक्षाद्यज्ञेशस्य विष्णोर्वाहनभूतं गरुडं सूर्यस्य सूतमनूरुमरुणं चासूत कद्रूस्त्वनेकशो नागान् सर्पानसूत ॥ २२ ॥

अथ सोमस्य पत्नीराह । इन्दोः सोमस्य पत्न्यस्तु कृत्तिकादीनि नक्षत्राणि सप्तविंशतिः हे भारत ! स च इन्दुः दक्षशापात् रोहिण्यामेव प्रेमातिशयेनान्यासूपेक्षारूपान्निमित्ताद्दक्षस्य शापाद्यक्ष्मग्रहेण राजयक्ष्मरोगेण पीडितः सन् तासु कृत्तिकादिष्वनपत्योऽभूत् ॥ २३ ॥

तं दक्षं पुनः प्रसाद्य प्रसन्नं कृत्वा केवलं कला एव लेभे न त्वपत्यानि । कथम्भूताः क्षये कृष्णापक्षे आर्दिताः खण्डिताः क्षयैधिता इति पाठे क्षये सति पुनरेधिता वर्द्धिताः । अथ लोकमातॄणां कश्यपपत्नीनां लोकस्य शं सुखं कुर्वन्तीति तथा तानि नामानि शृणु लोकानां मातृत्वे हेतुः इदं जगद्यत्प्रसूतं याभिः कश्यपपत्नीभिः प्रसूतम् । ता निर्दिशति । अदितिरिति । ॥ २४ ॥ २५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भूतस्य सन्ततिमाह । भूतस्य भार्या नाम्ना भूता भार्या एकादश रुद्रानसूत तस्यान्या सुरूपा भार्या कोटिशो रुद्रानसूत तथा रुद्राणां पार्षदानसूत । तथा प्रेतान् विनायकांश्च प्रधानरुद्ररूपाणां नामान्याह । रैवत इति ॥ १७ ॥ १८ ॥

आङ्गिरसः प्रजापतेः नाम्ना स्वधा पत्नी पितॄनसूत । अथ तस्यैवान्या भार्या अथर्वाङ्गिरसं वेदं पुत्रत्वेऽकरोत् ॥ १९ ॥

वेदशिरा इति कृशाश्वस्य नामान्तरम् ॥ २० ॥

पुत्राणां जातिभेदसूचनाय यामिनी इति सन्धिकार्याभावः ।२१।

अनूरुम् । ऊरुरहितमरुणमित्यर्थः ॥ २२ ॥

यक्ष्मग्रहार्दितः क्षयरोगार्तः । कीदृश्यः कलाः कृष्णपक्षे क्षयाः क्षीणाः शुक्लपक्षे एधिताः वर्धिताः वृद्ध्यभावः छान्दसः । अथ एधवृद्धाविति धातोः । अथवा इन्धिदीप्ताविति धातुः निष्ठायां नुमो लोपे इधिता इति रूपं सिद्ध्यति । तस्य गुणः । शङ्कराणि सुखकराणि ॥ २३ ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भूतस्य द्वे भार्ये तयोर्मध्ये सरूपा ॥ १७ ॥

रैवताद्य एकादश रुद्राः महानिति विशेषणम् । अन्ये रुद्रस्य पार्षदा अन्यस्यां साध्वीयाम् ॥ १८ ॥

आङ्गिरसः स्वधा सती चेति द्वे भार्ये तयोर्मध्ये स्वधा ॥ १९ ॥

कृशाश्वस्यार्चिर्धिषणेति द्वे भार्ये तयोर्मध्ये आर्चिषि ॥ २० ॥

तार्क्ष्यस्य तार्क्ष्यनाम्नः कश्यपस्य ॥ २१ ॥

सुपर्णा विनता अनूरुमरुणम् ॥ २२ ॥

रोहिण्यामेव प्रीत्यातिशयेनान्यासामुपेक्षणात् कुपितस्य दक्षस्य शापात् । यक्ष्मग्रहार्दितः क्षयरोगपीडितः सन् तास्वनपत्योऽभूत् ॥ २३ ॥

कला एव लेभे न त्वपत्यानि ! कीदृशीः क्षये कृष्णपक्षे दिताः खण्डिताः सतीः । क्षयैधिता इति पाठे क्षये सति पुनरेधिताः नैव वर्द्धिताः सतीः ॥ २४ ॥ २५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

धर्मपत्नीवंशमुक्त्वा भूतपत्नीवंशमाह । सरूपेति । तत्र मुख्यमुख्या रैवतादयः सप्त । अजैकपादश्चमः अहिर्बुध्न्यो नवमः बहुरूपो दशमः एकादशो महानित्येकादश रुद्राः । अन्ये अन्यस्यां जाताः रुद्रस्य पार्षदाः ॥ १७ ॥ १८ ॥

आङ्गिरसो भार्यावंशमाह । स्वधा पितॄन् पुत्रत्वे सती च अथर्वाङ्गिरसं नाम वेदं पुत्रत्वे अकरोत् ॥ १९ ॥

कृशाश्वभार्यासन्ततिमाह । कृशाश्व इति ॥ २० ॥

तार्क्ष्यपत्नीवंशमाह । तार्क्ष्यस्येत्यादिना ॥ २१ ॥

सुपर्णा विनता सूर्यसूतम् । अपक्वाण्डभेदनेन अनूरुमरुणं तदनन्तरं बहुकालपक्वाण्डभेदनेन कनिष्ठं साक्षात् यज्ञेशवाहं गरुडं चासूतोत्पादितवती ॥ २२ ॥

चन्द्रपत्नीसन्तत्यभावमाह । कृत्तिकादीनीति । स चन्द्रः सर्वासु समो भवेति दक्षेणोक्तोऽपि रोहिण्यामत्यन्ततः प्रीतिमान् भूत्तन्निमित्ताद्दक्षशापात् यक्ष्मग्रहार्दितः क्षयरोगपीडितः तासु अनपत्योऽभूत् ॥ २३ ॥

क्षयैधिताः क्षये सति एधिताः तेनैव वर्द्धिताः सतीः कला लेभे अथ कश्यपपत्नीनां शङ्कराणि कल्याणकराणि नामानि शृणु । यतः याभ्यः इदं जगत् प्रसूतमुत्पन्नम् ॥ २४ ॥ २५ ॥

---

### भाषा टीका ।

भूत की भार्या सरूपा ने कोटिन रुद्रों को पैदा किया । रैवत अज भव भीम वाम उग्र वृषाकपि ॥ १७ ॥

अजएकपाद अहिर्बुध्न्य बहुरूप महान् एग्यारह रुद्र हैं इनके के पार्षद और भी प्रेत भूत विनायक हैं ॥ १८ ॥

प्रजापति अंगिरा की स्वधा पत्नी है उस ने पितरों को पैदा किया अथर्वांगिरस वेद को उनकी सती ने पैदा किया ॥ १९ ॥

कृशाश्व ने आर्चि भार्या मे धूम्रकेश को पैदा किया धिषणा भार्या ने वेदशिरा देवल वयुन मनु इन पुत्रों को पैदा किया ॥ २० ॥

तार्क्ष्य की भार्या विनता कद्रू पतङ्गी यामिनी ए चार भई तिनों मे पतङ्गी ने पतिङ्गान को पैदा किया यामिनी ने शरभों को पैदा किया ॥ २१ ॥

सुपर्णा ने गरुडजीको पैदा किया जोकि साक्षात् विष्णु भगवान् के वाहन हैं । और सूर्य के सारथि अनूरु को भी सुपर्णा ने पैदा किया । कद्रू ने अनेक नागों को पैदा किया ॥ २२ ॥

हे भारत ! चन्द्रमा की पत्नी कृत्तिकादिक हैं सो चन्द्रमा की रोहिणी मे आसक्त होने से दक्ष ने शाप दिया तब

अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत् ।
अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला ॥ २५ ॥
मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः ।
तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः ॥ २६ ॥
सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप ! ।
ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः ॥ २७ ॥
दन्दशूकादयः सर्पा राजन् ! क्रोधवशात्मजाः ।
इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः ॥ २८ ॥
अरिष्टायाश्च गन्धर्वाः काष्ठाया द्विशफेतराः ।
सुता दनोरेकषष्टिस्तेषां प्राधानिकाञ्छृणु ॥ २९ ॥
द्विमूर्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः ।
अयोमुखः शङ्कुशिराः स्वर्भानुः कपिलोऽरुणः ॥ ३० ॥
पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः ।
धूम्रकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः ॥ ३१
स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल ।
वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो वली ॥ ३२ ॥

भाषा टीका ।

[चन्द्र]मा को क्षयरोग की पीडा भई तिस से उन नक्षत्रों मे [क]ोई संतान नहीं भये ॥ २३ ॥

फिर चन्द्रमा ने दक्ष को प्रसन्न किया तब जो कला [क्ष]य होते थे सो लब्ध होगये । अब लोकों के माताओं के [ना]मों को तुम सुनो जो कि मनुष्यों के कल्याण करने [वा]ले हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

[सु]गमत्वेन सुगमत्वाद्यथायथं व्युत्क्रमेण तासां वंशानाह । [तिमे]रित्यादिना ॥ २६ ॥ २७ ॥

सौरसाः सुरसायाः पुत्राः ॥ २८ ॥

[प्र]धानिकान् मुख्यानष्टादश शृणु ॥ २९—३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

[सुग]मत्वेन सुगमत्वाद्यथायथं व्युत्क्रमेण तासां वंशानाह । तिमेरिति । तिमेः कश्यपस्य भार्यायाः यादोगणाः आसन् । सरमायाः सुताः श्वापदाः श्वानः व्याघ्रमार्जारादयश्चासन् । सुरभेः पुत्रास्तु महिषा गावश्चान्ये द्विशफाश्चासन् । हे नृप ! ताम्रायाश्च पुत्राः श्येनाः गृध्राः आदिशब्देन श्येनादिसदृशा बलिनः पक्षिणो विवक्षिताः । मुनेः सुतास्त्वप्सरसां गणाः हे राजन् ! क्रोधवशाया आत्मजास्तु दन्दशूकादयः दंशनस्वभावादयः सर्पा आसन् । इलायास्तु सर्वे भूरुहाः आत्मजाः । सौरसाः सुरसायाः अपत्यानि सर्वे यातुधानाः । अरिष्टायास्त्वात्मजा गन्धर्वाः । काष्ठायास्तु द्विशफेतराः एकशफाः अश्वगर्दभाः बभूवुः । दनोः सुतास्त्वेकषष्टिस्तेषां मध्ये प्राधानिकानष्टादश पुत्रान् शृणु ॥ २६ ॥ २९ ॥

द्विमूर्धा च शम्बरश्च अरिष्टश्च हयग्रीवश्च विभावसुश्च अयोमुखश्च शङ्कुशिराश्च स्वर्भानुश्च कपिलश्चारुणश्च पुलोमा च वृषपर्वा च एकचक्रश्च सुतापनश्च धूम्रकेशश्च विरूपाक्षश्च विप्रचित्तिश्च दुर्जयश्चैतेऽष्टादश ॥ ३० ॥ ३१ ॥

एषां मध्ये स्वर्भानुः नमुचेः कन्यां दुहितरं सुप्रभामुवाह उपयेमे स्वर्भानुरत्रान्यो दनुजः नतु राहुः तस्योत्पत्तेर्वक्ष्यमाणत्वात् । वृषपर्वणस्तु कन्यां शर्मिष्ठां नाहुषो नहुषात्मजो बलवान् ययाती राजोवाह ॥ ३२ ॥

---

वैश्वानरसुता याश्च चतस्रश्चारुदर्शनाः ।
उपदानवी हयशिरा पुलोमा कालका तथा ॥ ३३ ॥
उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप ! ।
पुलोमां कालकां च द्वे वैश्वानरसुते तु कः ॥ ३४ ॥
उपयेमेऽथ भगवान् कश्यपो ब्रह्मचोदितः ।
पौलोमाः कालकेयाश्च दानवा युद्धशालिनः ॥ ३५ ॥
तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता ।
जघान स्वर्गतो राजन्नेक इन्द्रप्रियङ्करः ॥ ३६ ॥
विप्रचित्तिः सिंहिकायां शतं चैकमजीजनत् ।
राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागतः ॥ ३७ ॥
अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः ।
यत्र नारायणो देवः स्वांशेनावतरद्विभुः ॥ ३८ ॥
विवस्वानर्यमा पूषा त्वष्टाथ सविता भगः ।
धाता विधाता वरुणो मित्रः शक्र उरुक्रमः ॥ ३९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्रापि ।मिथो वैलक्षण्यद्योतनाय सन्धिकार्याभावः ॥ २५ ॥

सूचीकटाहन्यायेन प्रातिलोम्येन सन्ततिमाह । तिमेरिति । ॥ २६ ॥ २७ ॥

भूरुहाः वृक्षाः । सुरसायाः पुत्राः सौरसाः ॥ २८ ॥

द्विशफेतराः एकशफाः । प्राधानिकं प्रधानविषयसङ्ख्यानम् ॥ २९ ॥ ३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सूचीकटाहक्रमेण तासां वंशानाह ।· तिमिरित्यादिना । ॥ २६—३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तासां संततीर्वर्णयति । तिमेरित्यादिना । यादोगणाः जलचरगणाः ॥ २६ ॥ २७ ॥

सौरसाः सुरसासुताः ॥ २८ ॥

प्राधानिकान् मुख्यान् शृणु ॥ २९ ॥ ३१ ॥

प्राधानिकानुक्त्वा तन्मध्ये केषाञ्चिद्वंशानाह। स्वर्भानोरिति ॥३२॥

---

भाषा टीका ।

जोकि कश्यपजी की पत्नी हैं जिनसे यह सब जगत् पैदा भया है अदिति दिति दनु काष्ठा अरिष्टा सुरसा इला ॥ २५॥

मुनि क्रोधवशा ताम्रा सुरभी सरमा तिमि तिमि से यदोगण भये सरमा के सुतश्वापद भये ॥ २६ ॥

सुरभी के गउभैंस भये हे राजन् ! और भी जो दो खुर वाले हैं वेभी सुरभी के भये । ताम्राके श्येन गृध्र आदि भये मुनीके अप्सरा गण भये ॥ २७ ॥

हे राजन् दन्द शूकादिक क्रोध वशाके पुत्र हैं इलाके सब वृक्षादिक भये सुरसा के सब यातुधान गणभये ॥ २८ ॥

अरिष्टा के गन्धर्व भये काष्ठा से एक खुर वाले जीव भये दनु के सुत एक षठि हैं तिनों मे प्रधानों को सुनो॥ ॥ २९ ॥

द्विमूर्धा शंबर अरिष्ट हय ग्रीव विभावसु अयोमुख शंकुशिरा स्वर्भानुः कपिल अरुण ॥ ३० ॥

पुलोमा वृष पर्वा एक चक्र अनुतापन धूम्रकेश विरूपाक्ष विप्रचिति दुर्जय ये हैं ॥ ३१ ॥

स्वर्भानु की सुप्रा नामकी कन्या को नमुची ने विवाहा वृष पर्वा की कन्या शर्मिष्ठा से नहुष के पुत्र ययाति ने विवाह किया ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वैश्वानरो दनोः पुत्रस्तस्य सुताः ॥ ३३ ॥

कः । प्रजापतिः कश्यपः उपयेम इत्यन्वयः ॥ ३४ ॥

विवस्वतः श्राद्धदेवं संज्ञासूयत वै मनुम्।
मिथुनं च महाभागा यमं देवं यमीं तथा।
सैव भूत्वाथ वडवा नासत्यौ सुषुवे भुवि ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

दानवीपरिणयने हेतुः। ब्रह्मणा चोदित इति ॥ ३५ ॥

तयोः षष्टिसहस्राणि निवातकवचाः पुत्रा जातास्तांश्च स्वर्गतः संस्ते पितामहोऽर्जुनो जघान ॥ ३६ ॥

राहुर्ज्येष्ठो यस्य ॥ ३७—३८ ॥

प्रसूयताजनयत्। भुवि वर्तमाना ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उपदानवीहयशिरापुलोमाकालिकाख्याः ॥ ३३ ॥

तासां मध्ये उपदानवीं हिरण्याक्ष उदवहत् हयशिरां तु क्रतुः प्रजापतिः द्वे वैश्वानरस्य सुते पुलोमाकालकाख्ये तु कः कश्यपः उपयेमे दानवीपरिणयने हेतुः। ब्रह्मणा चोदित इति। तयोः पुलोमाकालकयोः षष्टिसहस्राणि पौलोमास्तेषामेव निवातकवचा इति नामान्तरम्। तथा कालकेयाश्च युद्धशालिनो दानवा जाताः तांश्च दानवान् यज्ञघ्नान् ते तव पितुः पितार्जुनः सशरीरेणैव स्वर्लोकं गतः इन्द्रस्य प्रियङ्करो भूत्वा जघान हतवान् ॥ ३४—३६ ॥

विप्रचित्तिः सिंहिकायां भार्यायां शतं चैकमेकशतं दानवानजीजनत् तत्रैकशतमध्ये राहुर्ज्येष्ठः इतरे शतं तु केतवः राहुज्येष्ठमिति पाठे राहुर्ज्येष्ठो यस्य तत्केतुशतमित्यर्थः। कोऽसौ राहुर्यं ज्येष्ठमजीजनत्तत्राह। यो ग्रहत्वमुपागतः प्राप्तः स्वयं दानवाधमोऽपि भगवदनुग्रहवशात् ग्रहत्वमुपागत इत्युक्तं पञ्चमे ॥ ३७ ॥

अथ तिम्यादीनां वंशश्रवणानन्तरमतस्तासां वंशस्य श्रुतत्वाददितेर्वंशः श्रूयताम्। मया कथ्यमान इति शेषः। दितेर्वंशस्त्वष्टादशाध्याये वक्ष्यते। अदितेर्वंशं विशिनष्टि। यत्र वंशे विभुर्नारायणो देवः स्वांशेनावतरत् ॥ ३८ ॥

विवस्वदादयः पुत्रास्तत्रोरुक्रमो भगवान् साक्षादवतीर्णः ॥ ३९ ॥

तत्र विवस्वतः भार्या संज्ञाख्या श्राद्धदेवं यमं यमीं चेति मिथुनं च यमयमीरूपं च मिथुनमसूयत असूत। हे महाभाग! सैव संज्ञैव वडवा भूत्वा भुवि वर्तमाना नासत्यावश्विनौ सुषुवे ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ते तव पितुरभिमन्योः पितार्जुनः ॥ ३६—३९ ॥

भुवि वर्तमानेति शेषः। नाम्ना वडवा ॥ ४०—४२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

वैश्वानरो दनोः पुत्रस्तस्य सुताः ॥ ३३ ॥ ३४ ॥

दानवीपरिणये हेतुर्ब्रह्मणा चोदित इति ॥ ३५ ॥

तयोः षष्टिसहस्राणि निवातकवचा जाताः। तांश्च स्वर्गं गतः सन् तव पितामहोऽर्जुनो जघान ॥ ३६-३९ ॥

नासत्यावश्विनीकुमारौ ॥ ४० ॥ ४१ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

या वैश्वानरस्य दनुपुत्रस्य सुतास्ताः शृण्विति शेषः ॥ ३३ ॥ ॥ ३४ ॥

दनुपुत्रकन्यास्वीकारे कारणमाह। ब्रह्मणोदित इति। तयोः पुलोमाकालिकयोः षष्टिसहस्राणि यज्ञघ्ना असुरा जाता इति शेषः। ते च पौलोमाः कालिकेयाश्च दनुदौहित्रत्वाद्दानवाः। तांश्च ते पितुरभिमन्योः पिता अर्जुनः जघान। इन्द्रस्य गुरोः विद्यासमाप्तौ दानववधेन प्रियङ्करः। असूयत अजनयत् विवस्वद्भयात् वडवा भूत्वा तत एवाश्वरूपिणः शकाशात् नासत्यौ सुषुवे ॥ ३५—४० ॥

---

### भाषा टीका।

वैश्वानर जो दनु का पुत्र है तिसके चार पुत्री उत्तम रूपवाली भई उपदानवी हय शिरा पुलोमा कालका ये चार हैं ॥३३॥

उपदानवी को हिरण्याक्ष ने व्याहा क्रतु ने हय शिरा को व्याहा पुलोमा कालका दोनो वैश्वार की पुत्रियों को ब्रह्मा जी के कहने से भगवान कश्यप जी ने विवाह किया पुलोमा कालका के पुत्र पौलोम कालकेय बड़े युद्धशाली भये सो साठ हजार हैं यज्ञों के नाश करने वाले हैं हे राजन् उनों को तुमारे पिता ने स्वर्ग मे जाकर इन्द्र के प्रीति के वास्ते मारा है ॥ ३४ ॥ ३५ ॥ ३६ ॥

सिंहिका मे विप्रचि ने एकसौ एक पुत्र उत्पन्न किये तिन मे सौ तो केतु भये जेष्ठ राहु भया जोकि ग्रह होगया है ॥ ३७ ॥

अब क्रमसे अदिति के वंश को सुनो जहां पर नारायण विभु अंश सहित अवतीर्ण भये हैं ॥ ३८ ॥

विवस्वान् अर्यमा पूषा त्वष्टा सविता भग धाता विधाता वरुण मित्र शक्र उरुक्रम ए अदिति के पुत्र भये ॥ ३९ ॥

विवस्वान् से संज्ञाने श्राद्धदेव मनुको पैदा किया और उस महाभागी ने यम और यमुना दोनों को उत्पन्न किया उसीने फिर एवडवा होकर अश्विनीकुमारों को पृथिवी मे पैदा किया ॥ ४० ॥

छाया शनैश्चरं लेभे सावर्णिं च मनुं ततः ।
कन्यां च तपतीं या वै वव्रे सम्वरणं पतिम् ॥ ४१ ॥
अर्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः ।
यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ॥ ४२ ॥
पूषानपत्यः पिष्टादो भग्नदन्तोऽभवत् पुरा ।
योऽसौ दक्षाय कुपितं जहास विवृतद्विजः ॥ ४३ ॥
त्वष्टुर्दैत्यानुजा भार्या रचना नाम कन्यका ।
सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान् ॥ ४४ ॥
तं वव्रिरे सुरगणा दौहित्रं द्विषतामपि ।
विमतेन परित्यक्ता गुरुणाङ्गिरसेन यत् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे पारमहंस्यां संहितायां
वैयासिक्यां प्रियव्रतवंशानुकीर्तनं नाम
षष्ठोऽध्यायः ॥ ६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ततो विवस्वतः ॥ ४१ ॥

चर्षणयः कृताकृतज्ञानवन्तः पश्यतिकर्मत्वेन निघण्टावुक्तेः । यत्र येषु आत्मानुसन्धानविशेषेण मानुषीजातिश्चोपकल्पिता तथाच श्रुतिः "पुरुषत्वेचाविस्तरामात्मा" इति ॥ ४२ ॥

कुपितं हरमितिशेषः । विवृतद्विजः प्रकटितदन्तः सन् ॥ ४३ ॥ ४४ ॥

यद्यदा विमतेनावज्ञातेन बृहस्पतिना परित्यक्तास्तदा द्विषतां शत्रूणां भागिनेयमपि विश्वरूपं पौरोहित्ये वृतवन्तः ॥४५॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा छाया भूत्वा शनैश्चरं सावर्ण्याख्यं मनुश्रेष्ठं च लेभे सुपुत्रे । तथा तपतीं तपत्याख्यां च लेभे । या कन्या संवरणं पतिं वव्रे ॥ ४१ ॥

अथार्यम्णो वंशमाह । अर्यम्णः पत्नी मातृकाख्या तयोरर्यममातृकयोः कर्त्तरि षष्ठी ताभ्यामित्यर्थः । चर्षणयः कर्मशीलाः जनाः कृता उत्पादिताः । के ते चर्षणयस्तत्राह । यत्र येषु मानुषी जातिर्ब्रह्मणोपकल्पिता मानुषजात्याश्रयादि सदा व्यापारिणो भवन्तीत्यतस्ते चर्षणयः कृषेरौणादिक इनिप्रत्ययः ॥४२॥

पूषात्वनपत्यः अपुत्रः पूर्वं भग्नदन्तः पिष्टादः पिष्टभुगभवत् भग्नदन्तत्वे हेतुं वदंस्तं विशिनष्टि । योऽसौ पूषा दक्षाय कुपितं रुद्रं विवृतद्विजः प्रकटितदन्तः सन् जहास प्रहसितवान् । चतुर्थे चैतद्वृत्तान्तः अभिव्यक्तः ॥ ४३ ॥

त्वष्टुर्दैत्यानामनुजा रचना नाम कन्यका भार्या तयोस्त्वष्टृरचनयोः संनिवेशात् समावेशाद्विश्वरूपो वीर्यवान् जज्ञे जातः ॥ ४४ ॥

तं विश्वरूपं द्विषतां दैत्यानां स्वस्रीयं भागिनेयमपि देवाः यद्यदा विमतेनावज्ञानेनाङ्गिरसः पुत्रेण गुरुणा बृहस्पतिना परित्यक्तास्तदा वव्रिरे वृतवन्तः पुरोहितं कृतवन्तः इत्यर्थः ४५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् ।
षष्ठोऽध्यायः ॥ ६

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विवृतद्विजः प्रकाशितदन्तः दक्षाय कुपितं हरमिति शेषः ॥ ४३ ॥

तथा रचनया त्वष्टुः सन्निवेशो नाम सुतो जज्ञे विश्वरूपश्चाभूदिति शेषः ॥ ४४ ॥

तं विश्वरूपं रचना देवानामपि स्वसा उभयेषां कश्यपपुत्रत्वेन मिथो भ्रातृत्वाद्देवानां स्वस्रीयं स्वसुः पुत्रं द्विषता-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

...पुण्यामपि क्षत्रीयमित्यर्थः। देवैः सहेन्द्रेण विमतेनावज्ञाते-...ङ्गिरसेन गुरुणा बृहस्पतिना परित्यक्ता अभूवन्निति यदतोऽ...त्वार्य विश्वरूपं वव्रिरे इत्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

पुरा पूर्वजन्मनि ॥ ४३–४५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य

षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

...तयोरर्यममातृकयोः चर्षणयः कृताकृतज्ञानवन्तः। यत्र ...आत्मानुसन्धानविशेषवस्तु मानुषीजातिश्चोपकल्पिता। ...त्र श्रुतिः "पुरुषत्वे चाविस्तरामात्मा" इति ॥ ४२ ॥

कुपितं रुद्रमिति शेषः। विवृतद्विजः प्रकटितदन्तः ॥४३॥

दैत्यात्मजा रचना नाम कन्या त्वष्टुर्भार्य्या। तयोस्ताभ्याम्॥४४॥

...वत्। यदा विमतेनावज्ञातेन। बृहस्पतिना त्यक्तास्तदा ...न्तरामावाद् द्विषतां दैत्यानां दौहित्रमपि पौरोहित्येन ...रे॥ ४५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।

षष्ठस्कन्धस्य षष्ठोऽयं सङ्गतः सङ्गतः सताम् ॥६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

...छाया संज्ञानिर्मिता ततो विवस्वतः ॥ ४१ ॥

...तयोरर्यममातृकयोः चर्षणयः कृताकृतविशेषज्ञानवन्तः सुताः। यत्र येषु "पुरुषत्वे चाविस्तरामात्मा" इति श्रुतेः परमात्मज्ञानोपयोगित्वेन ब्रह्मणा मानुषीजातिरुपकल्पिता: ॥ ४२ ॥

यः पुरा दक्षाय कुपितं शिवं जहास स अनपत्योऽभूत् ॥४३॥

त्वष्टुर्भार्या रोचना नाम सा कन्यका दैत्यात्मजा तयोस्ताभ्याम् ॥ ४४ ॥

द्विषतां दैत्यानां दौहित्रं तं विश्वरूपं सुरगणाः पौरोहित्येन वव्रिरे। तत्र हेतुः। यद्यतः विमतेनावज्ञातेनाङ्गिरसेन आङ्गिरसः पुत्रेण गुरुणा त्यक्ताः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

षष्ठाध्यायार्थप्रकाशः ॥ ६ ॥

---

भाषा टीका।

सूर्य की भार्या छायाने शनैश्चर को पैदा किया फिर सावर्णि-मनु को पैदा किया फिर तपती कन्या को पैदा किया उसने सम्वरण पति को वरण किया ॥ ४१ ॥

अर्यमा की मातृका पत्नी है उन दोनों के चर्षणी पुत्र भये जिनमें ब्रह्माजी ने मानुषीजाति कल्पना की है ॥ ४२ ॥

पूषा विना पुत्र का है सतुआके खाने वाला है जिसने पहिले दक्ष पर कोप करते महादेवजीको दांत खोलकर हंसाया वह विना दांत का है ॥ ४३ ॥

दैत्यों की अनुजा त्वष्टा की भार्या है उसका नाम रचना है तिन दोनों में से सन्निवेश वीर्यवान् विश्वरूप भया ॥ ४४ ॥

वह यद्यपि शत्रुओं का भेवता है तो भी देवतों ने पुरोहितपना में उसको वरण किया था जबकी बडे दोष से बृहस्पति ने देवतों को छोड दिया था ॥ ४५ ॥

इति श्रीभागवत षष्ठस्कन्ध के छठे अध्याय का

भाषानुवाद लक्ष्मणाचार्यकृत

समाप्त ॥ ६ ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे षष्ठोऽध्यायः समाप्तः ॥ ६ ॥



## ॥ सप्तमोऽध्यायः ॥

॥ राजोवाच ॥

कस्य हेतोः परित्यक्ता आचार्येणात्मनः सुराः ।
एतदाचक्ष्व भगवञ्छिष्याणामक्रमं गुरौ ॥ १ ॥

॥ श्रीशुक उवाच ॥

इन्द्रस्त्रिभुवनैश्वर्यमदोल्लङ्घितसत्पथः ।
मरुद्भिर्वसुभी रुद्रैरादित्यैर्ऋभुभिर्नृप ! ॥ २ ॥
विश्वेदेवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः ।
सिद्धचारणगन्धर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥ ३ ॥
विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः ।
निषेव्यमाणो मघवान् स्तूयमानश्च भारत ! ॥ ४ ॥
उपगीयमानो ललितमास्थानाध्यासनाश्रितः ।
पाण्डुरेणातपत्रेण चन्द्रमण्डलचारुणा ॥ ५ ॥
युक्तश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः ।
विराजमानः पौलोम्या सहार्धासनया भृशम् ॥ ६ ॥
स यदा परमाचार्यं देवानामात्मनश्च ह ।
नाभ्यनन्दत सम्प्राप्तं प्रत्युत्थानासनादिभिः ॥ ७ ॥
वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् ।
नोच्चचालासनादिन्द्रः पश्यन्नपि सभागतम् ॥ ८ ॥
ततो निर्गत्य सहसा कविराङ्गिरसः प्रभुः ।
आययौ स्वगृहं तूष्णीं विद्वान् श्रीमदविक्रियाम् ॥ ९ ॥
तर्ह्येव प्रतिबुध्येन्द्रो गुरुहेलनमात्मनः ।
गर्हयामास सदसि स्वयमात्मानमात्मना ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तमे विश्वरूपोऽसौ पौरोहित्ये वृतः सुरैः ।
गुरुणा सम्परित्यक्तैः पौरोहित्यमथाकरोत् ॥ १ ॥

कस्य हेतोः कस्माद्धेतोरात्मनः शिष्याः सुराः परित्यक्ताः अक्रममपराधम् ॥ १ ॥

स इन्द्रो यदा सम्प्राप्तं वाचस्पतिं नाभ्यनन्दत नाद्रियत [illegible] स आङ्गिरसस्ततो निर्गत्य तूष्णीं स्वगृहमाययावित्यष्टानामन्वयः [illegible] अनादरे हेतुं मदं दर्शयितुं तं विशिनष्टि । त्रिभुवनैश्वर्यमदेन [illegible]ङ्घितः सतां पन्था येन सः ॥ २ ॥

परिश्रितः परिवृतः ॥ ३ ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आस्थानं सभा तस्मिन्नध्यासनं सिंहासनं तदास्थितः ॥ ५ ॥

पारमेष्ठ्यैर्महाराजचिह्नैः । आसनस्यार्धे स्थितया पौलोम्या सह विराजमानः सन् ॥ ६ ॥

प्रत्युत्थानादिना नाभ्यनन्दत नादृतवान् ॥ ७ ॥

न चचाल आसन एव स्थितोऽपि किञ्चिन्न चलितवान् ॥ ८ ॥

श्रीमदेन या विक्रिया तां विद्वान् जानन् ॥ ९ ॥

प्रतिबुध्यानुस्मृत्य ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देवाः विमतेन गुरुणा परित्यक्ताः विश्वरूपं विवव्रिरे इत्युक्तं तदेव सप्रपञ्चं बुभुत्सुः पृच्छति राजा । कस्येति । कस्माद्धेतोराचार्येण गुरुणा आत्मनः शिष्याः सुराः परित्यक्ताः हे भगवन्मुने एतदाचक्ष्व कथय तथा शिष्याणां गुरौ विषये अक्रममपराधं वाचक्ष्व ॥ १ ॥

एवमापृष्टो मुनिर्देवानां गुरौ कृतमपराधं वक्तुमुपक्रमते । इन्द्र इति । इन्द्रो यदा सम्प्राप्तं वाचस्पतिं नाभ्यनन्दत नादृतवान् तदाङ्गिरसः ततो निर्गत्य तूष्णीं स्वगृहमाययौ इत्युत्तरान्वयः । अनादरहेतुं मदं दर्शयितुमिन्द्रं विशिनष्टि । त्रिभुवनैश्वर्यमदेनोल्लङ्घितः सतां पन्था येन । हे नृप ! मरुद्गणादिभिः परिश्रितः परिवृतः ब्रह्मवादिभिर्वेदान् पठद्भिर्मुनिभिः सिद्धादिभिश्च यथायथं निषेव्यमाणः स्तूयमानश्च ॥ २ ॥ ३ ॥ ४ ॥

ललितं यथातथोपगीयमानश्च भगवानिन्द्रः आस्थानं सभा तस्मिन्नध्यासनं सिंहासनं तदास्थितः अधिष्ठितः हे भारत ! चन्द्रमण्डलवच्चारुणा सुन्दरेण पाण्डुरेण श्वेतेनातपत्रेण छत्रेण ॥ ५ ॥

तथा पारमेष्ठ्यैर्महाराजलिङ्गैश्चामरादिभिर्युक्तः । अर्धासनया आसनस्यार्द्धे स्थितया पौलोम्या शच्या सह नितरां विरोचमानः ॥ ६ ॥

स इन्द्रो यदा देवानामात्मनः स्वस्य च परमं पूज्यमाचार्यं सुरासुरवन्दितं मुनिश्रेष्ठं बृहस्पतिं सम्प्राप्तं प्रत्युत्थानासनादिभिर्नाभ्यनन्दत नादृतवान् न चचाल किं तु सभागतं परस्वध्यासन एव स्थित इत्यर्थः ॥ ७ ॥ ८ ॥

तूष्णीं तदा कविर्विद्वान् प्रभुः समर्थ आङ्गिरसो बृहस्पतिः श्रीमदेन या विक्रिया तां विद्वान् जानन् तूष्णीं स्वगृहं प्रति ययौ ॥ ९ ॥

तर्ह्येव इन्द्र आत्मनः स्वस्य गुरुहेलनं प्रतिबुद्धयानुस्मृत्य आत्मना स्वेनैवात्मानं सदसि सभायां गर्हयामास निन्दितवान् ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुरुद्वाराप्रसादकृदहं स्विति वचनाद्गुरुप्रसाद एव बलीयान् धर्मज्ञानादिसमुद्रेकसिद्धये तदभावः सर्वोऽनर्थपरम्पराहेतुरतो ज्ञानार्थिना पुरुषेण स्वप्नेऽपि गुरुर्नावमन्तव्यः । किन्तु निरन्तरं स बहुमानं प्रसादसमृद्धये निषेवणीय इत्येतस्मिन्नध्याये निरूप्यते । तत्र राजा पृच्छति । यस्येति । यस्य कस्य आत्मनः आचार्येण शिष्याणां पुत्राणामक्रममपराधम् ॥ १ ॥

राजप्रश्नं परिहर्तुमुपक्रमते । इन्द्र इति ॥ २ ॥ ३ ॥ ४ ॥

आस्थानं सभा तत्राध्यासनं सिंहासनमाश्रितः ॥ ५ ॥

पारमेष्ठ्यैः श्रेष्ठैः ॥ ६ ॥

नाभ्यनन्दत सन्तुष्टया नापूजयत् ॥ ७ ॥

प्रत्येकशः पूजाहेतव इति द्योतनाय वाचस्पत्यादिविशेषणबाहुल्यम् ॥ ८ ॥

श्रीनिमित्तमदस्य विक्रियां विकारम् ॥ ९ ॥

तर्ह्येव तदानीमेव गुरोर्हेलनमवज्ञानम् ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इन्द्र इति सार्द्धसप्तकम् ॥ १—२३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सप्तमे गुरुणा त्यक्तैर्देवैर्दैत्यपराजितैः ।
विश्वरूपो गुरुत्वेन वृतो ब्रह्मोपदेशतः ॥

आत्मनः शिष्याः सुराः ॥ १ ॥

इन्द्रो यदा सम्प्राप्तं वाचस्पतिं नाभ्यनन्दत् तदा स स्वगृहमाययाविस्यग्रानामन्वयः ॥ २ ॥ ३ ॥ ४ ॥

आस्थानं सभा तस्मिन्नध्यासनं सिंहासनमाश्रितः ॥ ५ ॥

पारमेष्ठ्यैर्महाराजचिह्नैः । पौलोम्या शच्या । अर्द्धमासनमेवासनं यस्यास्तया सह सुगलोचनेति बद्धासनपदस्य वृत्तावन्तर्भावः ॥ ६ ॥

आचार्यं बृहस्पतिम् ॥ ७ ॥

अप्रत्युत्थानमेवं स्पष्टयति । वाचस्पतिमिति । आसनादासनमारुह्य स्थितोऽपि किमपि न उच्चचाल न पस्पन्दे ॥ ८ ॥

ततः । सभातः कविः एवं भविष्यतीति भाविकार्यविज्ञः । प्रभुः शास्तौ समर्थः । विद्वान् गुरुर्वमानं हेतुत्वेन जानन् ॥ ९ ॥

प्रतिबुद्ध्य श्रीमदमदिरानिद्रात इत्यर्थः ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुरुणा परित्यक्ताः सुरगणा विश्वरूपं वव्रिरे इत्युक्तं तत्प्रपञ्चबुभुत्सुः पृच्छति । यस्येति । यस्येति षष्ठी पञ्चम्यर्थे । यस्माद्धेतोः आचार्येण आत्मनः स्वकीयाः सुराः परित्यक्ताः अस्वकीयाः कृताः एतत् एवम्भूतं गुरौ शिष्याणामक्रमं व्यतिक्रममाचक्ष्व कथयत्यन्वयः ॥ १ ॥

अहो वत ममासाधु कृतं वै दभ्रबुद्धिना ।
यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ॥ ११ ॥
को गृध्येत् पण्डितो लक्ष्मीं त्रिविष्टपपतेरपि ।
ययाहमासुरं भावं नीतोऽद्य विबुधेश्वरः ॥ १२ ॥
ये पारमेष्ठ्यं धिषणमधितिष्ठन्न कश्चन ।
प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः ॥ १३ ॥
तेषां कुपथदेष्टॄणां पततां तमसि ह्यधः ।
ये श्रद्दध्युर्वचस्ते वै मज्जन्त्यश्मप्लवा इव ॥ १४ ॥
अथाहममराचार्यमगाधधिषणं द्विजम् ।
प्रसादयिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन् ॥ १५ ॥
एवं चिन्तयतस्तस्य मघोनो भगवान्गृहात् ।
बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उत्तरमाह । इन्द्र इत्यादिना । इन्द्रः यदा देवानामात्मनश्च परमाचार्यं वाचस्पतिं प्रत्युत्थानादिभिः नाऽभ्यनन्दतेति तु किं वाच्यं सभागतं पश्यन्नपि आसनान्नोच्चचाल तदा प्रभुरपि तथाशं कर्तुं समर्थोऽपि ततः स्वगृहं तूष्णीमाययावित्यन्वयः । त्रिभुवनैश्वर्यमदेनोल्लङ्घितः सतां पन्था येन सः ॥ २ ॥

परिश्रितः परिवृतः ॥ ३—४ ॥

आस्थाने सभायां यदद्ध्यासनं सिंहासनं तदास्थितः ॥ ५ ॥

पारमेष्ठ्यैः महाराजचिह्नैर्युक्तः पौलोम्या पुलोम्नोऽपत्यभूतया अर्धे वामभागे आसनं यस्यास्तया सह विराजमानः ॥ ६ ॥ ७ ॥ ८ ॥

ततः । समातः ॥ ९ ॥ १० ॥

---

भाषा टीका ।

राजा परीक्षितजी बोले बृहस्पतिजी ने अपने देवतों को किस हेतु से छोडा हे भगवन् ! इस बात को आपकहो जैसे कि शिष्यों ने गुरुका अपराध किया हो ॥ १ ॥

श्रीशुकदेवजी बोले त्रिभुवन के ऐश्वर्य के प्राप्त होने से इंद्र को मदभया तब उसने सत् मार्ग का त्याग कर दिया तब हे नृप ! उनचास पवन आठवसु एकादश रुद्र द्वादश आदित्य ऋभु देवता ॥ २ ॥

विश्वेदेवा साध्य अश्विनी कुमार सिद्ध चारण गंधर्व ब्रह्मवादि मुनि इनों से इंद्र सहित थे ॥ ३ ॥

हे भारत ! विद्याधर अप्सरा किन्नर पतग उरग ए सब इंद्र की सेवा करते थे और स्तुति करते थे ॥ ४ ॥

बडे ऊंचे सिंहासन पर इंद्र बैठे थे और सब उनका गान करते थे चंद्र के मंडल सरी का सफेद छत्र उनके मस्तक पर लगा था ॥ ५ ॥

और भी चामर पंखा आदि सब पदार्थों से सेवित थे अर्ध आसन में इंद्राणी बैठी थी इस प्रकार से विराज मान थे ॥ ६ ॥

तिसी समय पर सब देवतों के और अपने भी परमाचार्य देव दानवों के वंदनीय वाचस्पति मुनीश्वर को सभा में आये हुये देखकर भी इंद्रने प्रत्युत्थान आसन आदि से सन्मान नहीं किया आसन से उठा भी नहीं ॥ ७ ॥ ८ ॥

तब तो बृहस्पति भगवान् शीघ्र ही उहां से निकल कर धनी के मद के विकार को जानकर चुप चुप अपने घर को चले आये ॥ ९ ॥

तिसी समय में इंद्र ने जब अपने से हुई गुरू की अवज्ञा को जाना तब उसी सभा के मध्य में अपने को आपही निंदा करने लगा ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मम कृतं कर्म अहो असाधु यद्यस्माद्दभ्रबुद्धिनाऽल्पमतिना मया कात्कृतः तिरस्कृतः ॥ ११ ॥

विबुधानां सात्त्विकानां देवानामीश्वरोऽप्यहम् ॥ १२ ॥

ननु सिंहासनस्थो राजाऽभ्युत्थानं न कुर्यादिति वृद्धा वदन्ति तत्राह । ये इति द्वाभ्याम् । धिषणमासनम् ॥ १३ ॥

कुपथं दिशन्त्युपदिशन्तीति कुपथदेष्टारस्तेषां वचः । अश्ममयः प्लवो येषां ते यथा मज्जन्तं प्लवमनु मज्जन्ति तद्वत् ॥ १४ ॥

अगाधा गम्भीरा धिषणा यस्य तम् । निशठः शाठ्यहीनः सन् ॥ १५ ॥

अधिकया आत्ममायया ॥ १६ ॥

गुरोर्नाधिगतः संज्ञां परीक्षिन् भगवान् स्वराट्।
ध्यायन् धिया सुरैर्युक्तः शर्म नालभतात्मनः ॥ १७ ॥
तच्छ्रुत्वैवासुराः सर्व आश्रित्यौशनसं मतम्।
देवान् प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः ॥ १८ ॥
तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नाङ्गोरुबाहवः।
ब्रह्माणं शरणं जग्मुः सहेन्द्रा नतकन्धराः ॥ १९ ॥
तांस्तथाभ्यर्दितान् वीक्ष्य भगवानात्मभूरजः।
कृपया परया देव उवाच परिसान्त्वयन् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

गुरोः संज्ञां ज्ञानोपायं परीक्षमाणोऽपि नाधिगतोऽप्राप्तः सन् ॥ १७ ॥

आततायिन उद्यतास्त्राः ॥ १८ ॥

निर्भिन्नान्यङ्गान्युत्तमाङ्गानि शिरांसि ऊरवो बाहवश्च येषाम् ॥ १९—२० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

गर्हाप्रकारमाह। अहो इति पञ्चभिः। अहो बताहो मम कष्टं प्राप्तम्। असाधु कर्म मया कृतं वै यद्यस्मादृभ्रबुद्धिनाल्पमतिना ऐश्वर्यमत्तेन मया सदसि गुरुः कारकृतः तिरस्कृतः ॥ ११ ॥

पण्डितो विद्वान्नित्यानित्यविवेकसम्पन्नश्चेदित्यर्थः। को वा पुमान् त्रिविष्टपपतेः त्रीँल्लोकान्पातीति त्रिविष्टपं तस्य पतेः सत्यलोकाधिपतेरपि लक्ष्मीं गृध्येदभिकाङ्क्षेत्किन्तु तुच्छं मन्येतेत्यर्थः। विदुषानां सात्त्विकानामीश्वरोऽप्यहमासुरं भावं मोहमिति यावत् नीतः प्रापितः ॥ १२ ॥

ननु सिंहासनस्थो राजा प्रत्युत्थानादिकं न कुर्यादिति वदन्ति स्मृतास्तत्राह। य इति द्वाभ्याम्। पारमेष्ठ्यं धिषणं परमेष्ठी महाराजस्तत्सम्बन्ध्यासनं धिषणं तदधितिष्ठन् कञ्चन प्रति नोत्तिष्ठेदिति ये ब्रुयुस्ते परं केवलं धर्मं न विदुः ॥ १३ ॥

किञ्च। तेषां कुपथदेष्टॄणां कुमार्गोपदेष्टॄणामत एवाधस्तमसि नरके पततां वचः ये जनाः श्रद्दध्युस्तेऽश्मप्लवाः बृहत्पापाणमयुप्लवारूढा इव मज्जन्त्यधो यान्ति ॥ १४ ॥

अथातः अहममराणामाचार्यमगाधा धिषणा बुद्धिर्यस्य तं कृतापराधमगणयन्तं द्विजं वाक्पतिं प्रसादयिष्ये प्रार्थये अमृतः निशठः निर्गतशाठ्यः सन्। तस्य गुरोश्चरणौ शीर्ष्णा स्पृशन् ॥ १५ ॥

एवं तस्य मघोन इन्द्रस्य चिन्तयतः सतः भगवान् बृहस्पतिरध्यात्ममायया योगप्रभावेण गृहाददृष्टां गतिं गतः अदृश्योऽभूदित्यर्थः। ततो भगवान् स्वराडिन्द्रः गुरोः संज्ञां दर्शनोपायं परीक्ष्य विचार्य्यापि नाधिगतः न प्राप्तः धिया ध्यायन् दर्शनोपायं चिन्तयन् शुचा शोकेन युक्तः आत्मनः स्वस्य शर्म सुखं नालभत न प्राप ॥ १६ ॥ १७ ॥

तदिन्द्रस्य गुर्वपराधप्रयुक्तक्लेशचिन्तादिकं श्रुत्वा तदैव औशनसम्मतमुशनसा मन्त्रितमाश्रित्य सर्वेऽसुराः दुर्मदा अनिवार्यमदाः आततायिनः जिघांसवः देवान् प्रत्युद्यमं युद्धोद्योगं चक्रुः ॥ १८ ॥

तैरसुरैर्विसृष्टैः प्रयुक्तैस्तीक्ष्णैरिषुभिर्निर्भिन्नान्यङ्गान्युत्तमाङ्गानि शिरांसि ऊरवो बाहवश्च येषां ते इन्द्रसहिता देवा नम्रशिरसो ब्रह्माणं शरणं ययुः ॥ १९ ॥

अभ्यर्दितान् तदा पीडितांस्तान् देवान् वीक्ष्य भगवानात्मभूः परमात्मजः अजो ब्रह्मा परयाधिकया कृपया युक्तस्तान् सान्त्वयन्नुवाच ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सदसीत्यनेनावज्ञानस्योद्रेकतामाह। दभ्रबुद्धिनाल्पबुद्धिना कारकृतः धिक्कृतः ॥ ११ ॥

को गृद्ध्येदिति "गृधु" अभिकाङ्क्षायाम् ॥ १२ ॥

राजयोग्यसिंहासनमधिष्ठितो न प्रत्युत्तिष्ठेदिति शास्त्रकारवचनात्कथमासुरं भावं नीत इति चेत्तत्राह। य इति। पारमेष्ठ्यधिषणं सिंहासनस्थानमधितिष्ठन् राजा कञ्चन नोत्तिष्ठेदिति प्रत्युत्थानं न कुर्यादिति ये पण्डितंमन्या ब्रूयुस्ते परमं धर्मं न विदुरित्यन्वयः ॥ १३ ॥

तादृशानां वाक्ये विश्वासेन प्रवर्तमानस्यानर्थफलहेतुत्वाद्बुद्धिमता न कर्तव्यमित्यभिप्रेत्याह। तेषामिति। अश्मना कृताः प्लवाः नावोऽश्मप्लवाः ॥ १४ ॥

यत एवमनर्थोऽथ तस्मादगाधधिषणं गम्भीरबुद्धिम् ॥ १५ ॥

अध्यात्ममायया योगसामर्थ्येन अदृष्टां गतिमदृश्यलक्षणां स्थितिम् ॥ १६ ॥

संज्ञां स्वरूपविषयज्ञानं स्वराडिन्द्रः ॥ १७ ॥ १८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निर्भिन्नान्यङ्गानि शरीराणि ऊरवश्च बाहवश्च येषां ते तथा ॥ १९ ॥

आत्मनः परमात्मनो भवतीत्यात्मभूः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कात्कृतः तिरस्कृतः ॥ ११ ॥

स्वसम्पत्तिमेव तिरस्कारहेतुत्वेन ज्ञात्वा निन्दति । को गृध्येत् वाञ्छेत् ॥ १२ ॥

ननु "सिंहासनस्थो राजा कमपि नाभ्युत्तिष्ठेत्" इति नीतिशास्त्रज्ञा आहुः । सत्यं ते भ्रान्ता एवेत्याह । ये इति । पारमेष्ठ्यं धिषणं परमेष्ठिनोऽप्यासनम् ॥ १३ ॥

अश्ममयः प्लवो येषां ते यथा मज्जन्तं प्लवमनुमज्जन्ति तथेति राजनीत्युपदेष्टृषु पुंस्वल्पश्येषु कोपो व्यञ्जितः ॥ १४ ॥

तस्मादस्यां विपत्तौ कः खलूपायः चयं विमृश्य स्वयमेवाह । अथाहमिति । निशठः शाठ्यहीनः सन् ॥ १५ ॥

चिन्तयतः । चिन्तयन्तमघवन्तमनादृत्य । अधिकया आत्मनो मायया ॥ १६ ॥

संज्ञां ज्ञानोपायं परीचन् परितः ईक्षमाणोऽपि नाधिगतः अप्राप्तः सन् ॥ १७-२१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दभ्रबुद्धिना अल्पमतिना कात्कृतः कदर्थीकृतः ॥ ११ ॥

गृध्येदभिकाङ्क्षेत् ॥ १२ ॥

पारमेष्ठ्यं महाराजसंबन्धिधिषणमासनमधितिष्ठन् कंचन प्रति नोत्तिष्ठेदिति ये ब्रूयुः ते परं धर्मम् ।

> आयान्तमग्रतो गच्छेत् गच्छन्तं तमनुव्रजेत् ।
> आसने शयने चापि न तिष्ठेदग्रतो गुरोः ।

इत्यादि शास्त्रोक्तं न विदुः ॥ १३ ॥

कुपथं कुत्सितं मार्गं दिशन्त्युपदिशन्तीति कुपथदेष्टारस्तेषाम् अत एवाधस्तमसि नरके पतताम् ये वचः श्रद्दध्युः ते अश्मप्लवा इव अश्मा पाषाणः तन्मयः प्लवो येषां तद्वत् मज्जन्ति उपदेष्टृभिः सहिताः अधस्तमसि पतन्तीत्यर्थः ॥ १४ ॥

निशठः नितरां शठः कृतापराधः ॥ १५ ॥

एवं चिन्तयतः सतः अध्यात्ममायया अधिका या आत्मनो माया अन्तर्धानशक्तिस्तया ॥ १६ ॥

धिया ध्यायन् सुरैर्युक्तश्च परीक्षन् परितः ईक्षमाणोऽपि गुरोः संज्ञां दर्शनोपायं नाधिगतः अलभमानः सन् आत्मनः स्वस्य शर्म सुखं नालभत ॥ १७ ॥

औशनसं मतम् "आपदि शत्रुः सपदि धर्षणीयः" इति उशनसः शुक्रस्य नीतिम् । आततायिनः गृहीतशस्त्राः ॥ १८ ॥

निस्तृंशैः खड्गैर्निर्भिन्नान्यङ्गानि उत्तमाङ्गादीनि ऊरवो बाहवश्च येषां ते शरणं रचितारम् ॥ १९ ॥

अभ्यर्दितान् पीडितान् ॥ २० ॥

---

भाषा टीका ।

अहो मैं अल्प बुद्धि वाला हूं मैंने बडा खोटा काम किया जो कि मैंने ऐश्वर्य में मत्त होकर सभा में गुरू का अपमान किया ॥ ११ ॥

तीनों लोकों के पति की लक्ष्मी को पण्डित होकर कौन चाहना करैगा जिस लक्ष्मी ने देवेश्वर होने पर भी मेरे को असुर भाव को प्राप्त कर दिया ॥ १२ ॥

जो कोई पुरुष राजा के किसी स्थान को आश्रय करके सिंहासन में स्थित रहने वाला किसी के वास्ते नहीं उठे ऐसा कहते हैं वे लोग परमधर्म को नहीं जानते हैं ॥ १३ ॥

कुमार्ग दिखाने वाले उन लोगों के वचन पर जो श्रद्धा करते हैं वे लोग पत्थर की नौका में चढे सरीखे डूब जाते हैं ॥ १४ ॥

अब मैं अमरों के गुरु अगाधबुद्धि वाले ब्राह्मण गुरुजी को प्रसन्न करूंगा कपट छोडकर उनके चरण का स्पर्श करूंगा ॥ १५ ॥

इस प्रकार से इन्द्र के विचारते तक बृहस्पति भगवान् अपनी विद्या के प्रभाव से अदृश्य गति को प्राप्त होगये ॥ १६ ॥

इंद्र भगवान् ने ढूंढने पर भी बृहस्पति का पता नहीं पाया देवतों के सहित बुद्धि से चिन्ता करते रह गये मन में शान्ति नहीं प्राप्त भई ॥ १७ ॥

इस बात को सुनते मात्र ही सब असुरों ने शुक्राचार्य के मत को आश्रय करके बडे अभिमान से शस्त्रधारी होकर देवतों के जीतने का उद्यम किया ॥ १८ ॥

उनके चलाये हुये तीक्ष्ण बाणों से देवतों के मस्तक और बाहु कट गये तब इंद्र सहित सब देवता मस्तकों को नम्र करके श्रीब्रह्माजी के समीप में गये ॥ १९ ॥

आत्म भू अज भगवान् ब्रह्माजी ने देवतों को तिस प्रकार पीडित देखा तब ब्रह्म देव परम कृपा युक्त होकर उनके सान्त्वना करते हुये यह वचन बोले ॥ २० ॥

---

ब्रह्मोवाच ।

अहो वत सुरश्रेष्ठाः ! ह्यभद्रं वः कृतं महत् ।
ब्रह्मिष्ठं ब्राह्मणं दान्तमैश्वर्यान्नाभ्यनन्दत ॥ २१ ॥
तस्यायमनयस्यासीत् परेभ्यो वः पराभवः ।
प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां च यत्सुराः ! ॥ २२ ॥
मघवन् ! द्विषतः पश्य प्रक्षीणान् गुर्वतिक्रमात् ।
सम्प्रत्युपचितान् भूयः काव्यमाराध्य भक्तितः ।
(१) आददीरन्निलयनं ममापि भृगुदेवताः ॥ २३ ॥
त्रिविष्टपं किं गणयन्त्यभेद्यमन्त्रा भृगूणामनुशिक्षितार्थाः ।
न विप्रगोविन्दगवीश्वराणां भवन्त्यभद्राणि नरेश्वराणाम् ॥ २४ ॥
तद्विश्वरूपं भजताशु विप्रं तपस्विनं त्वाष्ट्रमथात्मवन्तम् ।
सभाजितोऽर्थान् (२) स विधास्यते वो यदि क्षमिष्यध्वमुतास्य कर्म ॥ २५ ॥

श्रीशुक उवाच ।

त एवमुदिता राजन् ! ब्रह्मणा विगतज्वराः ।
ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् ॥ २६ ॥

देवा ऊचुः ।

वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते ।
कामः सम्पाद्यतां तात ! पितॄणां समयोचितः ॥ २७ ॥
पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम् ।
अपि पुत्रवतां ब्रह्मन् ! किमुत ब्रह्मचारिणाम् ॥ २८ ॥
आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ।
भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात्क्षितेस्तनुः ॥ २९ ॥
दयाया भगिनी मूर्तिर्धर्मस्यात्मातिथिः स्वयम् ।
अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चात्मनः ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

[...]र्युष्माकं कृतं करणं महदभद्रम्। तदाह। ब्रह्मिष्ठमिति। नाभ्य-[...]न नाभिनन्दितवन्तः ॥ २१ ॥

परेभ्यः शत्रुभ्यो वः पराभव इति यदयं तस्यानयस्या-[...]यस्य सम्बन्धी फलरूप आसीत्। उक्तं च

ब्राह्मणं कुलसम्पन्नं भक्तं विष्णोर्महात्मनः ।
आयान्तं वीक्ष्य नोत्तिष्ठेत्स दुःखैः परिभूयते ॥

[...] स्वयमेव वैरिणो हन्तारो येषां तेभ्यः ॥ २२ ॥

गुरुनिरस्कारसत्काराभ्यामेवापचयोपचयकारणमित्यसुरदृष्टान्ते-नाह। मघवन्निति। द्विषतः शत्रून्। काव्यं भार्गवं गुरुमेवासे-व्योपचितान्। उपचितत्वमेवाह। आददीरन् गृह्णीयुः ॥ २३ ॥

अभेद्यो मन्त्रो येषाम्। अनुशिक्षितार्थाः शिष्याः। यतो विप्रा गोविन्दो गावश्चेश्वरा अनुग्राहका येषां तेषामेवाभद्राणि न भवन्त्यन्येषां तु भवन्ति ॥ २४ ॥

तत्तस्मात्। अथानन्तरमेव भजत। अस्य कर्म सुरपक्षपातम् ॥२५॥

उदिता उक्ताः ॥ २६—२७—२८ ॥

अतिथीनां पितॄणां च प्रशंसार्थमाहुः। आचार्य उपनीय वेदा-ध्यापकः। ब्रह्मणो वेदस्य मूर्तिः ॥ २९ ॥

---

(१) (अद्य श्वो वा परश्वो वा इस्तास्ते वलशालिनः) अत्रायमधिकः पाठः श्रीवीरराघवाचार्यमते। (२) स भावितार्थान् इति श्रीवि०र०

### श्रीधरस्वामिकृतभावार्थदीपिका ।

धर्मस्यात्मा मूर्तिरतिथिः । स्वयं साक्षात् । आत्मनः श्रीविष्णोः । यद्वा । आत्मनः स्वस्य सर्वभूतेष्वात्मदृष्टिः कर्तव्येत्यर्थः ॥ ३० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह । अहो इत्यादिना क्षमिष्यध्वमुतास्य कर्मेत्यन्तेन । हे सुरश्रेष्ठाः ! अहो बत महत्कष्टं वः प्राप्तं महदभद्रमसाधु युष्माभिः कृतम् । किं तद्ब्रह्मिष्ठमतिशयेन ब्रह्मज्ञानसंपन्नो ब्रह्मिष्ठस्तं ब्राह्मणं दान्तं जितेन्द्रियमैश्वर्योन्मदान्नाभ्यनन्दत नाभिनन्दितवन्तः ॥ २१ ॥

हे सुराः ! परेभ्यः शत्रुभ्यः पराभव इति यदयं तस्यानयस्य संबन्धी फलरूपः आसीत्कथम्भूतानां वः प्रचीयोभ्यः पैश्वर्यरहि तेभ्यः सपत्नेभ्यः समृद्धानां सम्पन्नानाम् ॥ २२ ॥

गुरुतिरस्कारसत्कारावेवापचयोपचयकारणमित्यसुरदृष्टान्ते- नाह । मघवन्निति । हे मघवन् ! द्विषतः शत्रूनसुरान् गुर्वतिक्रमा- द्धेतोः प्रक्षीणान् संप्रति तु काव्यं शुक्रं भक्तितः आराध्य उपचितान् समृद्धान् पश्य गुर्वाराधनाद्युष्मान् बाधन्त इति किं वक्तव्यम् । यतो मत्स्थानमपि गृह्णीयुरिति सम्भावयति । अद्येति । अद्यास्मिन्नहनि श्वः परस्मिन्नहनि परश्वः ततः परस्मिन्नहनि वा बलशालिनोऽत एव हताः गर्वितास्ते मम निलयं मम स्थानमपि आददीरन् गृह्णीयुः यतस्ते भृगुः शुक्रः काव्य एव देवता येषां तादृशाः ॥ २३ ॥

अभेद्यो मन्त्रो येषां ते भृगूणां भृगुकुलप्रभवाणामनुशि- क्षितार्थाः शिष्याः त्रिविष्टमपि किं गणयन्ति न गणयन्त्येवेत्यर्थः । विप्राः गोविन्दो भगवांश्च गावश्चेश्वरा अनुग्राहकाः पूज्या वा येषां तेषामेव अभद्राणि न भवन्ति इतरेषामीश्वराणामपि न भवन्तीति न किन्त्वभद्राणि भवन्त्येवेत्यर्थः ॥ २४ ॥

तत्तस्मादद्यानन्तरमेवाशु त्वष्टुः पुत्रमात्मवन्तं जितेन्द्रियं तपस्विनं विश्वरूपाख्यं द्विजं भजत यूयमनुवर्त्तध्वं तत्पौरो- हित्ये वृणुतेत्यर्थः । स विश्वरूपो वः युष्मान् साधितार्थान् भावितः निष्पादितः अर्थोऽभिलषितं प्रयोजनं येषां तादृशान् विधास्यते करिष्यति । अस्य विश्वरूपस्य कर्मासुरपक्षपातादिरूपं यूयमुत क्षमिष्यध्वं यदि क्षमिष्यध्वे तर्हि सविधास्यते इत्यर्थः । यद्वा । उत अपि तु तस्य कर्म क्षमिष्यध्वं सर्वथा तस्य कर्म युष्माभिः क्षन्तव्यमित्यर्थः ॥ २५ ॥

एवमुक्ता धिश्वरूपं प्रार्थयितुं देवा ययुरित्याह मुनिः । त इत्यादिना । हे राजन् ! ते देवा ब्रह्मणैवमित्थमुदिता उक्ता धिगतः ज्वरः आधिर्येषां ते त्वाष्ट्रमृषिं विश्वरूपमुपव्रज्य उपेत्य परिष्वज्यालिङ्ग्य पुत्रत्वात् परिष्वज्येत्युक्तं न तु नमस्कृत्येति इदं वक्ष्यमाणमब्रुवन् ॥ २६ ॥

उक्तिमेवाह । वयमिति । वयं ते तवातिथयः प्राप्ताः ते तवा- श्रमं भद्रमशून्यमस्तु आतिथ्याभावे आश्रमः शून्य इति व्यप- दिश्यत इति भावः । नथा तव पितॄणामस्माकं समयोचितः तत्कालोचितः कामः इच्छाविषयोऽर्थः सम्पद्यतां त्वत्तः संपन्नो भवतु ॥ २७ ॥

हे ब्रह्मन् ! पुत्रवतामपि सतां पुत्राणां पितृशुश्रूषणं परो धर्मः ब्रह्मचारिणां सतां पुत्राणां पितृशुश्रूषणं परो धर्म इति किमुत किमु वक्तव्यम् । त्वन्तु ब्रह्मचारी पुत्रश्चेति अस्मच्छुश्रूषण- मत्यन्तोचितमिति भावः ॥ २८ ॥

किंचाचार्यो ब्रह्मणः परब्रह्मणो मूर्त्तिरीश्वरदृष्ट्या आचार्य आराधनीय इति भावः । पिता तु प्रजापतेर्विरिञ्चस्य मूर्त्तिः भ्राता तु मरुत्पतेरिन्द्रस्य मूर्त्तिर्माता साक्षात्क्षितेर्भूमेस्तनुर्मूर्त्तिः ॥ २९ ॥

भगिनी तु दयाया मूर्त्तिरात्मा स्वयं तु धर्मस्य मूर्त्ति- रतिथिस्तु स्वयमेव स्वात्मनो मूर्त्तित्वेन द्रष्टव्यः । सजातीयस्तेन द्रष्टव्य इति यावत् । अभ्यागतस्त्वग्नेराहवनीयादेर्मूर्त्तिः सर्वभूतानि चात्मनो मूर्तिरात्मतुल्यत्वेन द्रष्टव्यानीत्यर्थः । यद्वा । परमूर्तिः ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व इति षष्ठी तृतीयार्थे युष्माभिरित्यर्थः ॥ २१ ॥

तस्यानयस्यान्यायस्य परिपाकः कोऽसाविति तत्राह । परेभ्य इति ॥ २२ ॥

काव्यं शुक्रं निलयनं युष्मदधिकृतं स्वर्गमिति शेषः । भृगुरेव देवता येषान्ते भृगुदेवताः जनः ममापि अभेद्यं निलयनमाददीरन् दारयन्तीति वा ॥ २३ ॥

अनुशिक्षितः सम्यक्साधितोऽर्थो यैस्ते तथा भृगूणां मन्त्रा त्रिविष्टपमभेद्यं गणयन्ति किं नैव ब्राह्मणशक्तिरचिन्त्यविभवेत्याह । न विप्रेति । विप्राश्च गोविन्दश्च गावश्च ईश्वराः येषां ते तथा तेषां विप्रभक्तिर्गोविन्दगोभक्तयविनाभूतेति दर्शनाय सहैवोक्तं सापि तारतम्योपेता शुभदेत्यतो नवीति ॥ २४ ॥

तत्तस्मात्तपस्वित्वादिगुणाधिको गुणोऽप्यस्तीत्याह । अथेति । आत्मवत्त्वादपरः कल्याणगुणो नास्तीत्यनोऽथेति । नैक पदार्थे- नेन किन्त्वपेक्षिताशेषार्थोऽप्यस्तीत्यतोऽर्थानिति नेदानीमुत्तरत्राप्य- यमेवालमित्यतो विधास्यत इति । तत्रेतिकर्तव्यतामाह । यदीति । उतापीत्यर्थः ॥ २५ ॥

ते देवाः ॥ २६ ॥

पितॄणां नः समयोचितः एतत्कालयोग्यः । काम्यत इति कामोऽर्थः ॥ २७ ॥

सतां पुत्राणां ब्रह्मचारिणामपुत्रवतां पुत्राः उभयेषामपि शुश्रूषणं कुर्वन्तीत्यर्थः ॥ २८ ॥

पित्रादिशुश्रूषणेन रुद्रादिदेवताशुश्रूषणमपि कृतं स्यात्तेषां तेषु विशेषसन्निधानादित्याह । आचार्य इति । ब्रह्मणश्चतुर्मुखस्य मूर्त्तिः सन्निधानस्थानम् । प्रजापतेः रुद्रस्य "प्रजापतिः शिवः स्थाणुरीशो वृषवाहन" इत्यभिधानात् । मरुत्पतेरिन्द्रस्य अतिथिः स्वयं धर्मस्यात्मा मूर्त्तिः अभ्यागतः प्रादुर्णाकः । आत्मनः सर्वभूतानि मूर्त्तिः "एको देवः सर्वभूतेषु गूढः" इति श्रुतेः ॥ २९ ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

त्रिविष्टपमिति। अत्र गोविन्देति दृष्टान्तेनोपन्यस्तम् ॥ २४--४०॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

परेभ्यः अन्येभ्यः सकाशात् केभ्यः स्ववैरिभ्यः ॥ २२ ॥

गुरुतिरस्कारसत्कारावेव विपत्सम्पदोः कारणमित्यसुरदृष्टान्तेनैवाह। मघवन्निति। अद्यैषां तथा बलं दृश्यते यथा ममापि निलयनं सत्यलोकमाददीरन्। तत्र हेतुः। भृगुदेवताः गुरुभक्ताः ॥ २३ ॥

अत्र सामदानदण्डा उपायाः न सम्भवन्तो दृश्यन्ते। भेदोऽप्यशक्य इत्याह। न भेद्यः मन्त्रो मन्त्रणा येषां ते सर्वत्र हेतुः। भृगूणां शुक्राचार्याणामनुशिक्षितमेव अर्थः पुरुषार्थत्वेनोपादेयो येषां ते। ननु तर्हि किं वयं मरिष्याम एवेति तत्र साश्वासमाह। न विप्रेति। विप्रा गोविन्दो गाव ईश्वरा अनुग्राहका येषां तेषाम् ॥ २४ ॥

तत्तस्मादयमेव सम्प्रत्युपाय इत्याह। विश्वरूपं गुरुत्वेन भजत। यतस्य विश्वरूपस्य कर्म्मासुरपक्षपातम् ॥ २५-२८ ॥

आचार्यो वेदाध्यापकः। ब्रह्मणो वेदस्य। मरुत्पतेरिन्द्रस्य अतिथिस्तु धर्म्मस्यात्मैव मूर्त्तिरिति किं वक्तव्यमिति भावः। आत्मनः परमेश्वरस्य ॥ २९-३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यो युष्माभिः महदभद्रममङ्गलं कृतं तदेवाह। ब्रह्मिष्ठं ब्रह्मसंपन्नं दान्तं ब्राह्मणमैश्वर्य्यात् प्रमुत्वमदात् नाभ्यनन्दत नाभिनन्दितवन्तः ॥ २१ ॥ २२ ॥

आदौ गुर्वतिक्रमात् प्रक्षीणान् सम्प्रति काव्यं गुरुमाराध्य भूय उपचितान् द्विषतः शत्रून् पश्य गुरुतिरस्कारसत्कारौ विपत्संपदोर्हेतुरित्यर्थः। यद्वि ममापि निलयनं स्थानमाददीरन् गृह्णीयुः यतो भृगुदेवताः भृगवः भृगुवंश्याः शुक्रतत्पुत्रादयो देवता येषां ते गुरुभक्ताः ॥ २३ ॥

तदा अभेद्यो मन्त्रो येषां ते तथा भृगूणामनुशिक्षितार्थाः शिष्याः त्रिविष्टपं किं गणयन्ति न किमपीत्यर्थः। अत्यन्ततो भीतानाशस्य तच्छरणं सूचयति। नेत्यर्धेन ॥ २४ ॥

विशेषतः आश्रयणीयमाह। तदिति। तत्तस्मात् समाजितः सेवितः अस्य विश्वरूपस्य कर्म मातामहकुलपक्षपातं यदि क्षमिष्यध्वम् क्षमिष्यध्वे ॥ २५ ॥

ते देवा एवमनेन प्रकारेणोदिता उक्ताः उपव्रज्य तन्निकटं गत्वेदमब्रुवन् ॥ २६ ॥

समये अभिमतापरकाले उचितः ॥ २७ ॥ २८ ॥

आत्मनोऽतिथित्वं पितृत्वं च तं प्रति निर्दिश्यायातिथीनां पितृणां पूज्यत्वं बहुभिर्दृष्टान्तैराहुः। आचार्य इति द्वाभ्याम् ॥ २९॥

धर्मस्य आत्मा मूर्तिरतिथिः आत्मनो जगत्कारणस्य भगवतो मूर्तिः सर्वभूतानि ॥ ३० ॥ ३१ ॥

---

भाषा टीका।

ब्रह्माजी बोले हे! देवश्रेष्ठ हो तुम लोगों ने बडा बुरा काम किया जो कि इन्द्रियों को दमन करने वाले ब्राह्मण वृहस्पति का तुमने ऐश्वर्य के मारे सन्मान नहीं किया ॥ २१ ॥

तिसी अन्याय से तुमको शत्रुओं से पराभव भया है पहिले तुमारे वैरी क्षीण होगये थे तुम बलवान् होगयेथे अब उस अन्याय से तुमको दुःख की उत्पत्ती भई है ॥ २२ ॥

हे इन्द्र! अपने शत्रुओं को तुम देखो गुरु के अतिक्रम करने से क्षीण होगये थे वेही असुर अब भक्तिपूर्वक शुक्राचार्य की आराधना करने से अब मेरे स्थान को भी लेने के लायक होगये हैं ॥ २३ ॥

भृगुओं के सिखाने से अभेद्य मंत्रवाले होगये हैं सो स्वर्ग को ए क्या गिनते हैं जो कोई भी ब्राह्मण गुरुगोविन्द को ईश्वर मानते हैं तिन पुरुषों को कभी अमङ्गल नहीं होता है ॥ २४ ॥

इस हेतु से अब तुम लोग त्वष्टाके पुत्र आत्मज्ञानी तपस्वी ब्राह्मण के शरण जाओ उसकी सेवा करके उसके असुर पक्षपात रूप कर्म को तुम सहते रहोगे तब वह विश्व रूप तुम्हारे सब मनोरथों को पूरा करदेगा ॥ २५ ॥

श्रीशुकदेवजी बोले इस प्रकार ब्रह्माजी के कहने से देवता शोक रहित होगये फिर विश्वरूप ऋषि के पास जाकर आलिङ्गन करके इस वचन को बोले ॥ २६ ॥

देवता बोले हम लोग तुमारे अतिथि होकर तुमारे आश्रम में आयेहैं तुमारा कल्याण होगा हे तात! हम पिता लोगोंके समय के अनुसार मनोरथ को पूरा करो ॥ २७ ॥

सत् पुत्रों का परमधर्म यही है कि जो पिताओं की सेवा करना यदि पुत्र वालों का यही धर्म है तो फिर ब्रह्मचारियों का होवे इसमें क्या कहना है ॥ २८ ॥

आचार्य ब्रह्माकी मूर्ति है पिता प्रजापति की मूर्ति है बडा भ्राता इन्द्र की मूर्ति है माता तो साक्षात् पृथिवी की मूर्ति है ॥ २९ ॥

बहिन दया की मूर्ति है अतिथी धर्म की मूर्ति है पहिचान का जो अभ्यागत वह अग्नि की मूर्ति है सब भूत मात्र भगवान् की मूर्ति हैं ॥ ३० ॥

---

तस्मात्पितॄणामार्त्तानामार्त्तिं परपराभवम् ।
तपसापनयंस्तात ! सन्देशं कर्तुमर्हसि ॥ ३१ ॥

वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम् ।
यथाञ्जसा विजेष्यामः सपत्नांस्तव तेजसा ॥ ३२ ॥

न गर्हयन्ति ह्यर्थेषु यविष्ठाङ्घ्र्यभिवादनम् ।
छन्दोभ्योऽन्यत्र न ब्रह्मन् ! वयो ज्यैष्ठ्यस्य कारणम् ॥ ३३ ॥

ऋषिरुवाच ।

अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः ।
स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा ॥ ३४ ॥

विश्वरूप उवाच ।

विगर्हितं धर्मशीलैर्ब्रह्मवर्च उपव्ययम् ।
कथं नु मद्विधो नाथा ! लोकेशैरभियाचितम् ।
प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते ॥ ३५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

परेभ्यः पराभव एवार्तिस्ताम् ॥ ३१ ॥

सन्देश्यमाहुः । वृणीमह इति ॥ ३२ ॥

ननूपाध्यायत्वे कनिष्ठस्य ममाभिवन्दनं कारिष्यथ तच्च गर्हितं तत्राऽऽहुः । नेति । अर्थेषु प्रयोजननिमित्तं यविष्ठानामभिवादनं न निन्दन्ति । किञ्च । छन्दोभ्यो मन्त्रेभ्योऽन्यत्र वयो ज्यैष्ठ्यस्य कारणं न तु मन्त्रेषु अतोऽस्मभ्यं मन्त्रदातृत्वेन त्वमेव ज्येष्ठो भविष्यसि । यद्वा । छन्दोभ्योऽन्यत्र वेदान्विहाय वय एव ज्यैष्ठ्यस्य कारणं न भवति । किन्तु । वेदा एव मुख्यं कारणं तत्साम्ये तु वयः । वेदज्ञत्वाच्च त्वमेव ज्येष्ठ इत्यर्थः ॥ ३३—३४ ॥

निन्दितमपीदं युष्मद्याच्ञाभङ्गभयेन करिष्यामीत्याह सार्द्धेन । विगर्हितं पौरोहित्यं धर्मशीलैः अधर्महेतुत्वात् । किञ्च । ब्रह्मवर्चं उपव्ययं पूर्वसिद्धस्य ब्रह्मवर्चसो व्ययकरम् । प्रत्याख्यातुं च मादृशो नार्हतीत्याह । कथं न्विति । तेषां शिष्यः शिक्षणार्हः । स एव । प्रत्याख्यानाभाव एव हि शिष्यस्य स्वार्थ उच्यते ॥ ३५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्माद्धेतात ! त्वत्पितॄणामार्तानां पीडितानामस्माकं शत्रुभ्यः पराभवरूपामार्तिं तपसा तपःप्रभावेणापनयन्नस्माकं सन्देशं कर्तुमर्हसि योग्यो भवसि ॥ ३१ ॥

सन्देश्यमेवाहुः । वृणीमह इति । ब्रह्मिष्ठं ज्ञानिनं तत्रापि ब्राह्मणमत एव सर्ववर्णानां गुरुं त्वामुपाध्यायं वृणीमहे यथा येन प्रकारेणाञ्जसा सुखेनैव तव तेजसा ब्रह्मतेजसा सपत्नान् शत्रून्विजेष्यामः तथानुगृहाणेति शेषः ॥ ३२ ॥

ननूपाध्यायत्वे कनिष्ठस्य ममाङ्घ्र्यभिवादनं कथं कारिष्यथ तत्तु गर्हितं तत्राहुः । न गर्हयन्तीति । स्वार्थेषु स्वप्रयोजननिमित्तं यविष्ठाङ्घ्र्यभिवादनं न गर्हयन्ति । हे ब्रह्मन् ! छन्दोभ्योऽन्यत्रैव वेदाध्ययनादेरन्यत्रैव कर्मणि वयः ज्यैष्ठ्यस्य कारणं छन्दोभ्यो मन्त्रेभ्योऽन्यत्र वयो ज्यैष्ठ्यस्य कारणं न तु मन्त्रेष्वतोऽस्मभ्यं मन्त्रदातृत्वेन त्वमेव ज्येष्ठो भवसीति वार्थः । यद्वा । छन्दोभ्योऽन्यत्र वेदान्विहाय वय एव ज्यैष्ठ्यस्य कारणं न भवति । किन्तु । वेदा एव मुख्यं कारणं तत्साम्ये तु वयः अतो वेदज्ञत्वात्त्वमेव ज्येष्ठ इत्यर्थः ॥ ३३ ॥

एवमुक्तो विश्वरूपो देवानुवाचेत्याह मुनिः । अभ्यर्थित इति । एवं सुरगणैः पौरोहित्यं पुरोहितस्य कर्म प्रति प्रार्थितः । स महातपाः विश्वरूपः प्रहसन् श्लक्ष्णया मृद्व्या गिरा तान् देवानाह ॥ ३४ ॥

उक्तिमेवाह सार्द्धैस्त्रिभिः । विगर्हितमिति । धर्मशीलैर्विगर्हितं तावद्धर्मशीलाः पौरोहित्यं विगर्हयन्तीत्यर्थः । किञ्च । तत्पौरोहित्यं ब्रह्मवर्चसस्य व्ययकरम् । आर्षत्वात् "ब्रह्महस्तिभ्यां वर्चसः" इति समासान्ताभावः । एवं पौरोहित्यस्य विगर्हितत्वं स्वधर्मनाशकत्वं चाभिधायाधुना तदप्रत्याख्येयं चेत्याह । कथमिति । लोकेशैर्युष्माभिरभियाचितो मद्विधः पितृसेवकः कथं नु तत्प्रत्याख्यास्यति नाम न प्रत्याख्यास्यत्येवेत्यर्थः । मद्विध इत्यनेनाभिप्रेतं विवृदयति । तच्छिष्य इति । तेषां शिष्यः शिक्षणार्हः शिष्योऽपि प्रत्या-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

...तत्राह। स एव। प्रत्याख्यानाभाव एव हि शिष्यस्य स्वार्थ ...त्वे मद्विधो नाथ इत्येकवचनपाठे नाथो याचितनाथत्वेन ...त्वेन याचितः स एव स्वार्थः इति लोकेशैः शिष्यैर्नियु- ...इति यतः स एव स्वार्थः परमो लाभ इत्यर्थः॥ ३५॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

...लोकवाक्यस्य कर्तव्यत्वे हेतुमुक्त्वा निगमयन्ति। तस्मादिति। ...शत्रुभ्यः प्राप्तपराभवलक्षणामार्तिमपनयन्॥ ३१॥ ...त्वा त्वाम्॥ ३२॥

...त्वहं युष्मदुपाध्यायश्रेरकनिष्ठस्य मम पादाभिवन्दनं निन्दितं ...मिति तत्राह। नेति। अर्थेषु प्रयोजनेषु यविष्ठस्य कनि- ..."आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयति सर्वो ...वेदविदि ब्राह्मणे निवसन्ति" इत्यादिश्रुतेः। वेदाभिज्ञानमेव ...कारणं न वय इत्याह। छन्दोभ्य इति। अत्र छन्दोभ्य ...तदभिज्ञानं लक्ष्यते। वेदाभिज्ञानमन्तरेण ज्येष्ठ्यकारणं ...न भवति तज्ज्ञानमेतत्त्वास्ति तस्मात्त्वदङ्घ्रिवन्दनं न ...तं पौरुषादौ पाषण्डवादीनां इवत्वादित्यर्थः॥ ३३॥ ॥ ३४॥

...धर्मशीलैर्विगर्हितम् (१) पौरोहित्यमिति शेषः। कस्मादिति ...। ब्रह्मेति। ब्रह्मवर्चसः उपव्ययो नाशो यस्मात्तत्तथा पौरोहित्ये ...नः उपगतव्ययं प्राप्तनाशं स्यादिति यत्तस्माद्धर्मशीलै- ...गर्हितमिति वा योजना। तर्हि तन्न शक्यमित्युच्यतामितिचेत्त- ...। कथं न्विति। हे नाथाः! लोकेशैः अभियाचितो मद्विधो ...कथं तु प्रत्याख्यास्यति कथमपि न निराकरोतीत्यर्थः। ...करणे दोषापत्तेरित्यभिप्रेत्याह। तच्छिष्य इति। परकार्यत्वेन ...कार्यमिति तत्राह। स एवेति॥ ३५॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

...एवं धर्मोपदेशस्तुतिभ्यां विवक्षितं सूतेत्यत आहुः ...दिति॥ ३१॥

...त्वां गुरुं गुरुत्वेन वृणीमहे। प्रयोजनमाहुर्यर्थेति॥ ३२॥

...नु मां गुरुं कुरुथेति चेत् भ्रातुष्पुत्रत्वेन कनिष्ठस्य कथं ...वादनं करिष्यथेति तत्राहुः। नेति। छन्दोभ्योऽन्यत्र अर्थेषु ...लौकिककृत्येषु यविष्ठाङ्घ्र्यभिवादनं न गर्हयन्ति न अपि तु ...। यतो वय एव ज्येष्ठत्वस्य कनिष्ठत्वस्य च कारणम्। अधिक- ...ज्येष्ठः। अल्पवयस्त्वे कनिष्ठ इति। छन्दस्तु वैदिककृत्येषु ...छन्दोज्ञत्वमेव ज्येष्ठत्वस्य कारणमित्यर्थः। तस्मात्त्व वेदज्ञ-

त्वाधिक्यात् त्वमेवास्माकं पौरोहित्यं कुर्वन् मन्त्रप्रदो गुरुर्भवेति भावः॥ ३३॥ ३४॥

धर्मशीलैर्मुनिभिः पौरोहित्यं विगर्हितं यतो ब्रह्मवर्चसः ब्रह्मतेजस उपव्ययोऽधिकव्ययो यतस्तत्। किञ्च। तदपि सम्प्रति मम तत् कर्तव्यमेवाभूदित्याह। कथमिति। हे नाथाः! लोकेशैर्यु- ष्माभिः तच्छिष्यः तेषां युष्माकं शिष्यः। तस्मात्। स एव। प्रत्या- ख्यानाभाव एव शिष्यस्य स्वार्थः॥ ३५॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

त्वा त्वाम्॥ ३२॥

हे ब्रह्मन्। छन्दोभ्योऽन्यत्र वेदाध्ययनादिव्यवहारव्यतिरिक्ते लौकिके व्यवहारे अर्थेषु प्रयोजनेषु यविष्ठाङ्घ्र्यभिवादनं न गर्ह- यन्तीतिन अपि तु गर्हयन्ति हि यतः ज्यैष्ठ्यस्य कारणं वयो भवति वयसैव ज्येष्ठः स्वीक्रियते। वेदाध्ययनादिव्यवहारे तु यविष्ठाङ्घ्र्य- भिवादनं न गर्हयन्ति अतः पितॄणामपि वैदिकव्यवहारनिर्वा- हाय पुत्रोऽपि त्वं गुरुर्भवितुमर्हसीति फलितोऽर्थः॥ ३३॥

अभ्यर्थितः प्रार्थितः श्लक्ष्णया बहुगुणयुक्तया॥ ३४॥

ब्रह्मवर्च उपव्ययं ब्रह्मतेजोनाशकम्। स एव। प्रत्याख्यानाभाव एव शिष्यस्य स्वार्थ उच्यते॥ ३५॥

---

भाषा टीका।

हे तात! तिस हेतु से पितर हम लोगों को पराये से पराभव होने से जो दुःख है तिसको तुम तपस्या के प्रभाव से दूर करने को हमारी आज्ञा को करने के योग्य हो॥ ३१॥

अब हम लोग अंहिष्ठ ब्राह्मण तुमको उपाध्याय गुरु करके वरण करते हैं जिससे कि तुमारे तेज से शत्रुओं को जीतेंगे॥ ३२॥

हे ब्रह्मन्! छोटे के चरणका वन्दन सब व्यवहार कार्यों में निन्दित है तौ भी वैदिक कर्मों में निन्दित नहीं है तुम वेद ज्ञानी उत्तम हो तिस से तुमारा चरण वंदन हम करेंगे॥ ३३॥

ऋषि श्रीशुकदेवजी बोले इसप्रकार से पुरोहित कर्म में देवतों के वरण करने से बड़े तपस्वी विश्वरूप प्रसन्न होकर सरल वाणी से बोले॥ ३४॥

विश्वरूप बोले यद्यपि पुरोहित कर्म धर्मात्मा पुरुषों से निन्दित है क्योंकि उसमें ब्रह्म तेज का नाश होता है तौ भी आपलोगों के वचन को मैं कैसे नहीं मानूंगा मैं तौ आपका शिष्य हूं मेरे को तो यही स्वार्थ है॥ ३५॥

---

...पौरोहित्यं चार्चकत्वं माठापत्यं तथैव च॥ यः करोति स ...श्वानयोनिं समश्नुते इतिकर्मविपाकोक्तेः।

अकिञ्चनानां हि धनं शिलोञ्छनं तेनेह निर्वर्त्तितसाधुसत्क्रियः ।
कथं विगर्ह्यं नु करोम्यधीश्वराः ! पौरोधसं हृष्यति येन दुर्मतिः ॥ ३६ ॥

तथापि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत् ।
भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ॥ ३७ ॥

श्रीशुक उवाच ।

तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः ।
पौरोहित्यं वृतश्चक्रे परमेण समाधिना ॥ ३८ ॥

सुरद्विषां श्रियं गुप्तामौशनस्यापि विद्यया ।
आच्छिद्यादान्महेन्द्राय वैष्णव्या विद्यया विभुः ॥ ३९ ॥

यया गुप्तः सहस्राक्षो जिग्येऽसुरचमूर्विभुः ।
तां प्राह स महेन्द्राय विश्वरूप उदारधीः ॥ ४० ॥

( यां प्रविश्यासुराञ्छश्वत् कक्ष्यां नारायणात्मिकाम् ।
अजैषीद्वृषभस्तात सिंहः क्षुद्रमृगानिव ॥ ० ॥ )

इति श्रीमद्भागवते महापुराणे वैयासिक्यां पारमहंस्यां संहितायां
षष्ठस्कन्धे विश्वरूपोपाख्यानं नाम
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु पौरोहित्येन धनलाभाद्धर्मः सिद्ध्येदन्यथा निर्धनस्य कुतो धर्मः । अत एव तेन लोको हृष्यति तत्राह । अकिञ्चनानां शिलोञ्छनं हि धनम् । क्षेत्रे स्वाम्युपेक्षितकणिशोपादानं शिलम् । हट्टादौ पतितव्रीह्यादेरुपादानमुञ्छनम् । इह गृहाश्रमे । तेनैव निर्वर्तिता साधूनां सत्क्रिया येन ॥ ३६ ॥

कियदेतत्प्रार्थितमल्पमेव । अभ्यधिकमपि करिष्यामीत्याह । भवतामिति ॥ ३७ ॥

परमेण समाधिना परमोद्यमेन ॥ ३८ ॥

वैष्णव्या श्रीनारायणकवचात्मिकया ॥ ३९ ॥

असुरचमूर्दैत्यसेनाः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु पौरोहित्ये धनलाभात्स्वधर्मः सिध्येदन्यथा निर्धनस्य कुतो धर्मः अत एव तेन लोको हृष्यतीत्यत्राह । अकिञ्चनानामिति । अकिञ्चनानां निष्कामानां शिलोञ्छनम् "उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्" एतदन्यतरवृत्तिसम्पाद्यमेव हि धनं तेनैव उक्तान्यतरेणैव निर्वर्तिताः निष्पादिताः सत्क्रियाः पञ्चमहायज्ञादिरूपाः [illegible] यैस्तादृशा भवन्ति यतो हे अधीश्वराः ! विगर्हितं पौरोहित्यं [illegible] हितकर्माहं कथं नु करोमि येन पौरोहित्येन दुर्मति [illegible] तुष्यति पौरोहित्यं दुर्मतेस्तोषहेतुरकिञ्चनस्य तु शिलोञ्छनमेव [illegible] भावः ॥ ३६ ॥

तथापि पौरोहित्यस्य गर्हितत्वेऽपि न प्रतिब्रूयां प्रत्याख्यास्यामि [illegible] यद्यस्माद्गुरुभिः पितृभिर्युष्माभिः प्रार्थितं कियदिति भावः । [illegible] तत्प्रार्थितम् इतोऽधिकमपि करिष्यामीति भावः । अतो भवतां [illegible] प्रार्थितं धर्मैस्तपआदिभिः प्राणैश्च साधये प्राणपर्यन्तं यथा [illegible] साधय इत्यर्थः ॥ ३७ ॥

एवमुक्तैर्देवैर्वृतः पौरोहित्यमकरोद्विश्वरूप इत्याह [illegible] तेभ्य इति । इतीत्थं तेभ्यो देवेभ्यः प्रतिश्रुत्य प्रतिज्ञाय [illegible] विश्वरूपः देवैर्वृतः पौरोहित्यं सावधानेन चित्तेन कृतवान् ॥ [illegible]

---

( १ ) अयमधिकः श्रीविजयध्वजतीर्थपाठेऽस्ति ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पौरोहित्यकरणमेवाह । सुरद्विषामिति । औशनस्या उशनसः सम्बन्धिन्या विद्यया गुप्तां रक्षितामपि सुरद्विषां श्रियं वैष्णव्या नारायणवर्मात्मिकया मन्त्रविद्यया आच्छिद्य तेभ्य आकृष्य विभुर्विश्वरूपः महेन्द्राय प्रादात् ॥ ३९ ॥

वैष्णव्या विद्यया आच्छिद्यादादित्येतदेवं विशदयति । ययेति । सहस्राक्ष इन्द्रो यया वैष्णव्या विद्यया गुप्तो रक्षितः अत एव विभुः समर्थो भूत्वासुरसेना जग्ये हतवान् तां विद्यामुदारधीर्धिषणमतिर्विश्वरूपो महेन्द्राय प्राह विश्वरूपोपदिष्टवैष्णवविद्यापरिरक्षितः शक्रः शत्रून्निहत्य श्रियं लब्धवानित्यर्थः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेव स्पष्टमाह । अकिञ्चनानामिति । लूनसस्ये केदारे स्वामिना च परित्यक्ते एकैकावशिष्टमञ्जरीग्रहणं शिलं तादृशे क्षेत्रे एकैकव्रीहिग्रहणमुञ्छनं शिलं चोञ्छनं यत्तेनैव न प्रतिग्रहादिना निर्वर्तिताः साधूनां सत्यः क्रिया अग्निहोत्रलक्षणा यस्य स तथा एवंविधो विगर्हितं पौरोधसं कथं करोमि । दुर्मतिः दूषितमतिः विषयाकृष्टचित्त इत्यर्थः । येन पौरोहित्येन प्राप्तेन हृष्टो भवति तदिति शेषः ॥ ३६ ॥

गुरुभिः प्रार्थितं कियदिति धिक्कृत्य न करोमीति न वच्मीति किं तर्हि निर्णय इति तत्राह । भवतामिति ॥ ३७ ॥ ३८ ॥

औशनस्या उशनसः शुक्रस्य विद्यमाना औशनसी तया आच्छिद्य स्वीकृत्य विष्णुर्देवता अस्या इति वैष्णवी तया ॥ ३९ ॥ ४० ॥

कवचलक्षणां रक्षाम् ॥ ० ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य

सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु पौरोहित्येन धनलाभाद्धर्मः सिद्ध्येत् । अन्यथा निर्धनस्य कुतो धर्मस्तत्राह । अकिञ्चनानां शिलोञ्छनमेव धनम् । क्षेत्रे स्वाम्युपेक्षितकणिशोपादानं शिलम् । हट्टादौ पतितव्रीह्यादेरुपादानमुञ्छनम् । येन पौरोधसेन दुर्मतिः पुमानेव हृष्यति न तु सुमतिः । यद्वा । दुष्टा मतिरेव स्वानुकूल्यात् हृष्यति ॥ ३६ ॥

न प्रतिब्रूयां न प्रत्याख्यास्ये कियदेतत् प्रार्थितमत्यल्पमेव अभ्यधिकमपि करिष्यामीत्याह । भवतामिति ॥ ३७ ॥

समाधिना चित्तैकाग्र्येण ॥ ३८–३९ ॥

तां वैष्णवीं विद्याम् ॥ ४० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठस्य सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अकिञ्चनानां शिलोञ्छनं शिलं क्षेत्रे पतितकणिशोपादानं उञ्छनं हट्टादिपतितव्रीह्याद्युपादानं च धनम् । तेनैव निर्वर्तिताः साधु सम्यक् सत्क्रिया येन सोऽहं कथं नु विगर्हितं पौरोधसं पौरोहित्यं करोमि येन पौरोहित्येन दुर्मतिर्हृष्यति धनलोभेन तुष्यति ॥ ३६ ॥ ३७ ॥

तैर्वृतः समाधिना चित्तैकाग्र्येण पौरोहित्यं चक्रे ॥ ३८ ॥ ३९ ॥

यया गुप्तः विभुः समर्थः सहस्राक्षः सुरचमूः जिग्ये तां महेन्द्राय सहस्राक्षाय प्राह उदारधीरिति पदेन सा गोपनीयेति सूच्यते ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

सप्तमाध्यायार्थप्रकाशः ॥ ७ ॥

---

भाषा टीका ।

हे अधीश्वर हो ! अकिंचन ब्राह्मणों का धन तो खेतों में से वाल दूकानों में से दाना बीनना मात्र है उसीसे वह सुन्दर क्रियाओं को करता रहता है जिस पुरोहित पना में खोटे पुरुषको हर्ष होता है तिसको मैं कैसे करूंगा ॥ ३६ ॥

तो भी गुरु लोगों के प्रार्थितको मैं निषेध नहीं करूंगा क्योंकि यह कितनी बडी बात है आपके प्रार्थना किये हुये सब बातों को मैं प्राणों से और धनों से सिद्ध करूंगा ॥ ३७ ॥

श्रीशुकदेवजी बोले उस महातपस्वी विश्वरूप ने वरण करणे से सावधान से पौरोहित्यको स्वीकार किया ॥ ३८ ॥

देवतों के शत्रु असुरों ने शुक्राचार्य की विद्या से जो लक्ष्मी

भाषा टीका ।

संपादन की थी उस संपत्ति को वैष्णवी विद्या से छीन कर महेन्द्र को विश्व रूप ने दे दिया ॥ ३९ ॥

जिस विद्या से रक्षित होकर इंद्र ने असुरों की सेना को जीता था उसी विद्या को उदार बुद्धि वाले विश्वरूप ने महेंद्र के अर्थ कथन किया ॥ ४० ॥

जिसनारायण कवच नामकी कथ्या को धारण करके इन्द्रने जैसे सिंहश्रुद्रमृगोंको जीतता है तैसे असुरोंको जीत लिया था सो वही विद्या है ॥ ० ॥

इति श्रीभागवत षष्ठस्कन्ध सातवें अध्याय का भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ ७ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

## ॥ अष्टमोऽध्यायः ॥

राजोवाच

यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ।
क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥
भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ।
यथाततायिनः शत्रून् येन गुप्तोऽजयन्मृधे ॥ २ ॥

श्रीशुक उवाच

वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ।
नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥

विश्वरूप उवाच

धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः ।
कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ ४ ॥
(१)नारायणमयं वर्म सन्नह्येद्भय आगते ।
(२) पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ ५ ॥
मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ।
ॐ नमो नारायणायेति विपर्ययमथापि वा ॥ ६ ॥
करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया ।
प्रणवादियकारान्तमङ्गुल्यङ्गुष्ठपर्वसु ॥ ७ ॥
न्यसेद्धृदय ओङ्कारं विकारमनुमूर्द्धनि ।
षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् ॥ ८ ॥
वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ।
मकारमस्त्रमुद्दिश्य मन्त्रमूर्त्तिर्भवेद्बुधः ॥ ९ ॥
सविसर्गं फडन्तं तत् सर्वदिक्षु विनिर्दिशेत् ।
ॐ विष्णवे नम इति ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमे विश्वरूपस्तु वर्म नारायणात्मकम् ।
इन्द्राय प्राह येनेन्द्रो गुप्तो दैत्यानथाजयत् ॥ १ ॥

त्रिलोक्याः सम्बन्धिनीं श्रियम् ॥ १ ॥ २ ॥ ३ ॥

मन्त्राभ्यामष्टाक्षरद्वादशाक्षराभ्यां कृतः स्वाङ्गेषु करयोश्च न्यासो येन ॥ ४ ॥

नारायणमयं वर्म सन्नह्येद्बध्नीयात् । तत्राष्टाक्षरेण पादाद्यष्टाङ्गेषु न्यासमाह । पादयोरिति सार्धेन ॥ ५ ॥

---

(१) नारायणपरं वर्म) इति श्रीमच्छुकदेवपाठः ।
(२) दैवभूतात्मकर्मभ्यो नारायणमयः पुमान् ) इति श्रीवीररा० श्रीविजयध्वज० मतेऽयमाधिकः पाठः ।

## श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रणवसम्पुटितमोङ्काराद्येकैकमक्षरं विन्यसेत् । विपर्ययं यथा भवत्येवं शिरआदिपादान्तं वा विन्यसेत् । उत्पत्तिन्यासं संहारन्यासं वा कुर्यादित्यर्थः ॥ ६ ॥

द्वादशाक्षरस्योद्धारः प्रणवादियकारान्तमिति । प्रणवसम्पुटितमेकैकमक्षरं दक्षिणतर्जनीमारभ्य वामतर्जनीपर्यन्तमङ्गुलीषु परिशिष्टमक्षरचतुष्टयमङ्गुष्ठयोराद्यन्तपर्वसु न्यसेत् ॥ ७ ॥

मन्त्रान्तरन्यासमाह । न्यसेदिति । षकारणकारयोर्विश्लेषेण षडक्षराणि हृदयादिषु न्यसेत् ॥ ८ ॥

मकारमस्त्रमुद्दिश्य ध्यात्वा ॥ ९ ॥

तन्मकारास्त्रं मः अस्त्राय फडित्येवं दिग्बन्धे विनिर्दिशेत् ॥ १० ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वैष्णवीं विद्यां जिघृक्षुः पृच्छति राजा । ययेति द्वाभ्याम् । सहस्राक्षो यया वैष्णव्या विद्यया गुप्तः वाहनैः सहितान् रिपूणां सैनिकान् क्रीडन्निव विनिर्जित्य त्रिलोक्याः सम्बन्धिनीं श्रियं बुभुजे अनुबभूव ॥ १ ॥

तन्नारायणात्मकं नारायणरूपं मन्त्रदेवतयोरभेदाध्यवसायेन नारायणात्मकमित्युक्तम् । यद्वा । नारायण आत्मा प्रतिपाद्यो यस्य सः । अर्थो हि मन्त्रस्यात्मा मम मह्यं हे भगवन् ! आख्याहि उपदिश येन वर्मजापेन यथा आततायिनो जिघांसून् शत्रून्मृधे युद्धेऽजयदिन्द्रः ॥ २ ॥

एवमुक्तो मुनिर्धर्मोपदेष्टुमुपक्रमते । वृत इति । त्वाष्ट्रो विश्वरूपः पुरोहितत्वेन देवैर्वृतः अनुपृच्छते इन्द्राय यन्नारायणाख्यं वर्म नारायणवर्माख्यं मन्त्रमाह उपदिदेश तद्धर्मैकमनाः समाहितचित्तस्त्वं शृणु उपदिशाम्यहमिति शेषः ॥ ३ ॥

उपदेक्ष्यमाणमन्त्रजपस्याङ्गभूतशौचन्यासकथनपूर्वकं विश्वरूपोपदिष्टक्रमेण मन्त्रमुपदिशति । धौतेति । शुचिः कृतस्नानादिकः धौताङ्घ्रिपाणिः प्रक्षालितपादपाणिः पुमान् सदर्भपवित्रकर उदङ्मुख उपविश्याचम्य वाग्यतः नियमितवाक् मन्त्राभ्यां नारायणाष्टाक्षरवासुदेवद्वादशाक्षराभ्यां मन्त्राभ्यां कृतः स्वस्याङ्गन्यासः करन्यासश्च येन तादृशः मन्त्राभ्यामिति विष्णुषडक्षरस्याप्युपलक्षणम् । तन्न्यासस्यापि वक्ष्यमाणत्वात् ॥ ४ ॥

दैवभूतात्मनां कर्मभ्य आधिदैविकाध्यात्मिकेभ्यो भये आगते सति स्वयं नारायणध्यानप्रचुरः नारायणमयं नारायणप्रतिपादनप्रचुरम् । यद्वा । नारायणादुपदेशक्रमेणागतं नारायणमयम् "तत आगत" इत्यधिकारे "मयट् च" इति मयट् । वर्म कवचं वर्मवद्रक्षकत्वाद्वर्मेत्युक्तम् । सन्नह्येदधीयाज्जपेदित्यर्थः । कृतस्वाङ्गकरन्यास इत्युक्ताङ्गन्यासकरन्यासावाह । पादयोरिति । यद्यप्यत्र ऋषिच्छन्दोदैवतबीजानि नोक्तानि तथाप्यस्य वर्मणो नारायणमन्त्रत्वादष्टाक्षरसम्बन्धीन्येव तान्यूह्यानीति संप्रदायः ओमित्यादि योऽयं नारायणाष्टाक्षरो मन्त्रस्तस्योङ्कारादीन्यष्टाक्षराणि क्रमेण पादद्वयजानुद्वयोरुद्वयोदरहृदयोरोष्ठमुखशिरःस्वष्टसु स्थानेषु सबिन्दुकानि प्रणवसम्पुटितानि नमोऽन्तानि विन्यसेत् अथापि वा । यद्वा विपर्ययं न्यसेच्छिरःप्रभृतिपादान्तेष्वष्टसु स्थानेषु क्रमेणोङ्कारादीन्यष्टौ न्यसेदित्यर्थः । यद्वा । अथापिवेति निपातसमुदायः पुनरर्थकः । प्रथमं यकारादीन्यष्टाक्षराणि पादादिशिरःपर्य्यन्तेषु स्थानेषु संहारक्रमेण विन्यस्य पुनः शिरःप्रभृतिषु पादान्तेष्वोङ्कारादीनि सृष्टिक्रमेण विन्यसेदित्यर्थः । एवमङ्गन्यासं विधाय ततः करन्यासं द्वादशाक्षरविद्यया कुर्यात् । द्वादशाक्षरस्य चतुर्थस्कन्धे उक्तत्वादक्षरस्वरूपानुक्तिः । कथं कुर्यात्करन्यासमित्यत्राह । प्रणवादीति । प्रणवादियकारान्तानि द्वादशाक्षराणि हस्तयोरङ्गुलिषु तर्जन्यादिषु चतुर्षु अङ्गुष्ठयोर्द्वयोर्द्वयोः पर्वणोश्च न्यसेदित्यर्थः । तदित्थम् ओं ओं नमः तर्जन्या दक्षिणाङ्गुष्ठप्रथमपर्वणि । ओं नं नमः तदङ्गुष्ठान्त्यपर्वणि । ओं मों नमः तदङ्गुष्ठेन तर्जनीमध्यमपर्वणि । मन्त्राक्षरमाद्यन्तयोः पर्वणोस्तु प्रणवनमःपदैः एवमुत्तरत्रापि द्रष्टव्यम् । ओं भं नमः मध्यमाङ्गुलौ । ओं गं नमः अनामिकाङ्गुलौ । ओं वं नमः कनिष्ठिकाङ्गुलौ । ओं तें नमः वामाङ्गुष्ठाद्यपर्वणि तत्तर्जन्या । ओं वां नमः तदन्त्यपर्वणि । ओं सुं नमः तर्जन्यां तदङ्गुष्ठेन । ओं दें नमः तन्मध्यमायाम् ओं वां नमः तदनामिकायाम् । ओं यं नमः तत्कनिष्ठिकायामिति यथायथमूह्यम् ॥ ५—७ ॥

अथ विष्णुषडक्षरन्यासमाह । न्यसेदिति । प्रत्येकं वर्णन्यासकथनेनैव मन्त्रस्वरूपमप्युक्तप्रायमिति पृथक्तदनुक्तम् । षकारणकारयोर्विश्लेषेण षडक्षराणि प्रणवादीनि नकारान्तानि तानि हृन्मूर्द्धभ्रूमध्यशिखानेत्रसर्वसन्धिस्थानेषु षट्सु विन्यसेत् ततोऽवशिष्टं मकारं सविसर्गं फडन्तम् ओं नमः फडिति कृत्वा सर्वदिक्षु प्रागाद्यष्टसु दिक्षु ऊर्ध्वाधरयोश्च विनिर्द्दिशेत् तर्जन्यङ्गुष्ठयोश्छोटिकया दिक्षु न्यसेदित्यर्थः । एवंविधे न्यासे कृते सति बुधो मन्त्रजापकः मन्त्रमूर्त्तिर्मन्त्रावृत्तियोग्यदेहो भवतीत्यर्थः । यद्वा । मन्त्रत्रयमूर्त्तिर्भवेदुक्तमन्त्रत्रयभावितान्याहशमूर्त्तिर्भवेदितिवार्थः ॥ ८ ॥ ९ ॥ १० ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"अकामः सर्वकामो वा मोक्षकामो यजेद्धरिम्" इत्युक्तं प्रपञ्चयत्यनेनाध्यायेन । तत्र राजातीताध्याये संक्षिप्य कथितं नारायणकवचनामस्तोत्रं लोकोपकाराय विस्तरतः श्रोतुं पृच्छति । ययेति । गुप्तो रक्षितः रिपुसैनिकान् शत्रुसेनानायकान् ॥ १ ॥

तदित्युत्तरलिङ्गानुसारेण यथाततायिनः इतीत्थं भावेन श्रोतुं पुनर्वचनम् । यया येनेत्थंभावेन तमित्थंभावं त्वमाख्याहीति शेषः ॥ २ ॥ ३ ॥

धौतौ प्रक्षालितावङ्घ्री पाणी च यस्य स तथा धौतेत्यारभ्य ओं विष्णवे नम इत्यन्तेन ग्रन्थेन तद्धर्मधारणे इत्थम्भावं वक्ति । कृतः स्वाङ्गे करयोश्च न्यासो येन स तथा ॥ ४ ॥

सन्नह्येदुपध्नीयात् दैवाद्भये अनावृष्टिलक्षणे भूतेभ्य उन्मादादिलक्षणे आत्मकर्मणः कुष्ठभगन्दरादिलक्षणे ॥ ५ ॥

आनुपूर्व्यात्संप्रदायक्रमात् विपर्ययं शिरआदिर्वा करन्यासं संक्षिप्योक्तं विस्तारार्थमाह । करन्यासमिति । ओं नमो भगवते वासुदेवायेतीयं द्वादशाक्षरविद्या ॥ ६ ॥ ७ ॥

न्यसेद्धृदय इत्यादिना षडङ्गान्याह । न्यसेदिति । अनु ओङ्कारन्यासानन्तरं प्रत्येकमोङ्कारमनुगतं कुर्वीत वा ललाटोपरि वा तुना वर्णदेवतास्मरणं सूचयति । शिखया शिखायां मुकुटप्रदेशं ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अक्षमसुरनिरासमुद्दिश्य कुर्यादिति शेषः। मन्त्रमूर्तिः मन्त्रदेवतासन्निधानयुक्तदेह इति विसर्गेण सहितं फडित्यक्षरावसानमन्त्रम् अन्तं रक्षसां नाशकरं फडक्षरं वा तं मकारं स्वाहाविसर्जनीयसहितं फडक्षरं चेति वा (१) व्यत्यस्योक्त्या विष्णवे नम इत्यन्यथा प्रतीतिनिरासाय प्रतीकं पठति। ओं विष्णवे नम इतीति। मन्त्रान्तरं ध्येयदेवताप्रकारं निरूपयति। आत्मानमिति। परमात्मानं विप्रतिपत्तिनिरासायोक्तं ध्येयमिति। ऐश्वर्यादिपड्शक्तिभिः उमाहप्रमुमन्त्रज्ञानक्रियेच्छाशक्तिभिर्वा तपो नाम शत्रुसन्तापनशक्तिर्यत्र वा इमं मन्त्रमिति वक्ष्यमाणमोमिति॥ ६–११॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यथेति युग्मकम्। यया धर्मरूपया विद्यया यथा अजयत् तं प्रकारञ्चाख्याहि॥ १—१७॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

नारायणात्मकं वर्म विश्वरूप उपादिशत्।
शक्रं येनाजयद्दैत्यान् स इत्यष्ठम उच्यते॥

मन्त्राभ्यामष्टाक्षरद्वादशाक्षराभ्याम्॥ १॥ ४॥

अष्टाक्षरेण पादाद्यष्टाङ्गेषु न्यासमाह। पादयोरिति सार्द्धेन। प्रणवसंपुटितमोङ्काराद्येकैकाक्षरं विन्यसेत्। विपर्ययं यथा भवत्येवं शिरआदिपादान्तं वा विन्यसेत्। प्रक्रमेण सृष्टिन्यासं व्युत्क्रमेण संहारन्यासं वा कुर्यादित्यर्थः॥ ५—६॥

प्रणवादीति। प्रणवसंपुटितमेकैकमक्षरं दक्षिणतर्जनीमारभ्य वामतर्जनीपर्यन्तमङ्गुलीषु परिशिष्टमक्षरचतुष्टयम् अङ्गुष्ठयोरायन्तपर्वसु न्यसेत्॥ ७॥

मन्त्रान्तरेणापि हृदयादिन्यासमाह। न्यसेदिति॥ ८॥

मकारमस्त्रमुद्दिश्य ध्यात्वा तन्मकाराख्यं मः अस्त्राय फडिति एवं सर्वदिग्बन्धे विनिर्दिशेत्॥ ९॥ १०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नारायणवर्म अष्टमेनाध्यायेन प्रकाश्यते। तत्र तावत् नारायणवर्म बुभुत्सुः पृच्छति। ययेति। यया नारायणवर्मरूपया विद्यया त्रिलोक्यां या श्रीः संपत्ताम्॥ १॥

नारायणात्मकं नारायण आत्मा विषयो यस्य तत्। मम महाभागाख्याहि कथय॥ २॥

नारायणः आख्यायते कथ्यते येन तत्॥ ३॥

शुचिः कृतस्नानः पुनर्धौताङ्घ्रिपाणिः उदङ्मुखः आसने उपविष्ट इति शेषः। सपवित्रः गृहीतकुशः आचम्य विधिवत्कृताचमनः मन्त्राभ्यामष्टाक्षरद्वादशाक्षराभ्यां कृतः स्वीयेषु अङ्गेषु करयोश्च न्यासो येन सः। नारायणपरं नारायण एव परः

साध्यांऽर्थो यस्मान्नारायणप्रापकमित्यर्थः। अनेनैतद्धारणफलं नारायणप्राप्तिरिति गम्यते। वर्म कवचं संनह्येत्। फलान्तरं दर्शयति। भय आगते इति। अङ्गेष्वष्टाक्षरेण न्यासं कुर्यादित्याह। पादयोरिति सार्द्धेन। प्रणवाद्येकैकमक्षरं पादयुग्मादिशिरोऽन्तेष्वङ्गेषु अनुक्रमेण विन्यसेत्। विपर्ययं यथा भवति तथा शिरआदिपादयुग्मान्तं वा विन्यसेत्। अत्र केवलानामक्षराणां न्यास उक्तः। ऋषिच्छन्दआदिकं च नोक्तम्। यथोक्तस्यैव सर्वपुरुषार्थप्रदत्वात्तथापि यथारुचि यथाशास्त्रं सानुस्वारं प्रणवसम्पुटितं वा नमोऽन्तं वा एकैकमक्षरं तत्र विन्यसेत्। नारायणमन्त्रसम्बन्धि ऋष्यादिकं च ज्ञेयम्। मन्त्रमाह। ॐ नम इति॥ ४—६॥

द्वादशाक्षरेण करयोर्न्यासं कुर्यादित्याह। करन्यासमिति। द्वादशाक्षरं मन्त्रमाद्यन्ताभ्यामक्षराभ्यां सूचयति। प्रणवादियकारान्तमिति। एकैकमक्षरं दक्षिणतर्जनीमारभ्य वामतर्जनीपर्यन्तमङ्गुलीषु परिशिष्टानि चतुरक्षराणि अङ्गुष्ठयोराद्यन्तेषु पर्वसु च विन्यसेत्॥ ७॥

मन्त्रान्तरन्यासमाह। न्यसेदिति द्वाभ्याम्। षकारणकारयोर्विश्लेषेण न्यासमाह। षकारं भ्रुवोर्मध्ये णकारं शिखया शिखायां वेकारं नेत्रयोर्युञ्ज्यात् नकारं सर्वसन्धिषु करचरणसन्धिषु तदनन्तरं मः अस्त्राय फडित्येवं सविसर्गं मकारं फडन्तमस्त्रमन्त्रमुद्दिश्य ध्यात्वा सर्वदिक्षु विनिर्दिशेत् तर्जन्यङ्गुष्ठाग्रयोगरूपया छोटिकमुद्रया दिग्बन्धनं कुर्यात्। एवं मन्त्रमूर्तिर्भवेदित्यर्थः। मन्त्रमाह। ॐ विष्णवे नम इति॥ ८—१०॥

---

भाषा टीका।

पष्ठस्कन्धके आठ वें अध्याय में श्रीनारायण कवच का कथन है तिस में बडे छन्दवाले मिलकर ४३ श्लोक हैं अनुष्टुप ४८ श्लोक हैं महाराज श्रीपरीक्षितजी प्रश्न करतेहैं कि हेभगवन् शुकदेवजी! जिस विद्या मन्त्र से रक्षित होने से इन्द्र ने शत्रुओं के सेनापतिओं को वाहनोंके सहित खेलते सरीके जीतकर तीनों लोकोंकी सम्पत्ति का भोग किया है जिससे रक्षित होकर युद्धमें शस्त्रधारि शत्रुओं को इन्द्र ने जीतलिया है उस नारायण कवचको मेरे से कथन करो॥ १॥ २॥

श्रीशुकदेवजी बोले हे राजन्! विश्वरूपको जब देवतों ने पुरोहितपनामें वरण किया तव इन्द्र के पूछने से इन्द्र के अर्थ विश्वरूप ने नारायण कवचका उपदेश किया है मेरे कहनेसे एकाग्रमनहोकर इहांपर तुम सुनो॥ ३॥

विश्वरूपबोले जिस समय में मनुष्यको भयप्राप्तहो तिस समय में पुरुष स्नानादि नित्यकर्मों से पहिले निवृत्त होकरभी हाथ पैरों को धोवे फिर दहिने हाथकी अनामिका अंगुली में कुश या तामा आदि का पवित्रा धारण करे फिर कुशा मृगचर्मादि के आसनपर उत्तरको मुखकरके बैठे काम क्रोधादि वासनाओं को छोडकर भीतरकी शुद्धि करे मौनव्रत धारण करे फिर अष्टाक्षर द्वादशाक्षर दोनों मन्त्रों से अङ्गन्यास करन्यास दोनों करे॥ ४॥

(१) न्यासमये षकारणकारयोः पृथगुक्त्या।

आत्मानं परमं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम् ।
विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥ ११ ॥
ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ।
दरारिचर्मासिगदेषुचापपाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥ १२ ॥
जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ।
स्थलेषु मायावटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १३ ॥
दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ १४ ॥
रक्षत्वसौ माध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ।
रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजोऽस्मान् ॥ १५ ॥
मामुग्रधर्मादखिलात् प्रमादान्नारायणः पातु नरश्च हासात् ।
दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥ १६ ॥
सनत्कुमारोऽवतु कामदेवाद्धयशीर्षा मां पथि देवहेलनात् ।
देवर्षिवर्यः पुरुषार्चनान्तरात् कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥
धन्वन्तरिर्भगवान् पात्वपथ्याद्द्वन्द्वाद्भयादृषभो निर्जितात्मा ।
यज्ञश्च लोकादवताज्जनान्ताद्बलो गणात् क्रोधवशादहीन्द्रः ॥ १८ ॥
द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाखण्डगणात् प्रमादात् ।
कल्किः कलेः कालमलात् प्रपातु धर्मावनायोरुकृतावतारः ॥ १९ ॥
मां केशवो गदया प्रातरव्याद्गोविन्द आसङ्गवमात्तवेणुः ।
नारायणः प्राह्ण उदात्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥ २० ॥

---

भाषा टीका ।

फिर नारायणमय कवचको शरीर के अवयवों में धारण करै तिससे पहिले नारायण मन्त्रके ओङ्कारआदि अक्षरों को दोनो पादों मे दोनो पीडियोमे दोनो जांघों मे उदर में हृदय में वक्षस्थल में न्यास करै ॥ ५ ॥

बाकी दो अक्षरों को मुखमे और मस्तक मे न्यास करै इन आठ स्थानों मे जिस मन्त्र के अक्षरों का न्यास करना है सो मन्त्र विपरीत ऐसा है "यणायरानामोनङोम्" इस मन्त्र के अक्षरों का उलटे से अथवा सीधे से न्यास करै ॥ ६ ॥

तिसके पीछे द्वादशाक्षरवासुदेव मंत्र से छै छै अक्षरों का अंगूठा तर्जनी मध्यमा अनामिका कनिष्ठा करतलकरपृष्ठ इनों मे न्यास करै फिर हृदय शिर शिखा कवच नेत्र अस्त्र इन स्थानों मे छै अक्षरों का न्यास करै ॥ ७ ॥

षडक्षर विष्णु मन्त्र के ओङ्कार को हृदय में विकार को मस्तक मे षकार को भौं के मध्यमें णकार को शिखा मे न्यास करै ॥ ८ ॥

वेकार को नेत्रों मे नकार को सर्व सन्धियों में न्यास करैमकार का अस्त्र उद्देश करके साधक पुरुष मन्त्र मूर्तिवाला होजावै ॥ ९ ॥

विसर्ग के सहित फट् इस अक्षर को सब दिशों में न्यास करै उस मन्त्र का स्वरूप "ॐ विष्णवे नमः" इस प्रकारका है ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ध्येयमीश्वररूपमात्मानं ध्यायेत् । षड्शक्तिभिरैश्वर्यादिभिर्भगशब्दवाच्याभिः । विद्या च तेजश्च तपश्च मूर्तिर्यस्य तम् । इमं वक्ष्यमाणं श्रीमन्नारायणकवचाख्यम् ॥ ११ ॥

अष्टगुणोऽणिमाद्यष्टैश्वर्ययुक्तः ॥ १२ ॥

यादसां गणा एव वरुणस्य पाशास्तस्मात् ॥ १३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अटवी आजिमुखं सङ्ग्रामोपक्रमश्च आदिर्येषां तेषु सङ्कटस्था-नेषु ॥ १४ ॥

असौ प्रसिद्धो वराहो मामध्वनि रक्षतु। यज्ञैरवयवरूपैः कल्प्यते कल्प्यत इति तथा। उन्नीता उद्धृता धरा येन सः। अद्रिकूटेषु गिरिशिखरेषु रामो जामदग्न्यः ॥ १५ ॥

उग्रधर्मादभिचारादिलक्षणात्। हासाद्गर्वान्नरोऽवतु। दत्तो दात्रेयः। अयोगाद्योगभ्रंशात् ॥ १६ ॥

पथि यद्देवानां हेलनं नमस्कारमकृत्वा गमनं तस्मात्। पुरुषा-र्चनस्यान्तराद्देवपूजाच्छिद्राद्द्वात्रिंशदपराधरूपान्नारदः ॥ १७ ॥

लोकाज्जनापवादाद्यशः जननिमित्तो योऽन्त उपघातस्तस्मा-द्बलभद्रोऽवतात्। कृतान्तादिति पाठे कृतान्तात्कालाद्रक्षतु क्रोध-वशात्सर्पाणां गणात् अहीन्द्रः शेषः ॥ १८ ॥

कालमलभूतात्कलेः कल्किः धर्मावनाय धर्मरक्षणायोरुधर्म-वान् कृतोऽवतारो येन ॥ १९ ॥

दिनस्य षट्सु भागेषु क्रमेण प्रातरादिसंज्ञेषु रात्रेश्च प्रदोषा-दिसंज्ञेषु रक्षा प्रार्थनम्। मां केशव इति त्रिभिः। आसन्नं सङ्ग-मितिश्राप्य ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं कृतस्वाङ्गकरन्यासः परमात्मानं ध्यायन् मन्त्रमावर्त्तयेदि-त्यात्मानमिति। परमात्मानं ध्यायेत् कथम्भूतं ध्येयं ध्यातुं योग्यं ... विग्रहविशिष्टस्य ध्यानेन मनः प्रसन्नं भवेत्तादृशमित्यर्थः। ... शक्तिभिर्ज्ञानशक्तिबलैश्वर्यवीर्यतेजआत्मिकाभिः शक्तिभिरपृथक्-... प्रकारभूताभिः कार्योपयोगिनीभिर्युतं यावत्स्वसत्तं युक्तमेवंविधं ... आत्मानं ध्यात्वा इमं वक्ष्यमाणं नारायणवर्माख्यं मन्त्रमुदा-... पठेत् मन्त्रं विशिनष्टि। विद्यातेजस्तपोमूर्त्तिं विद्या ज्ञानं तेजः ... तपः सत्कर्म विद्यादीनां मूर्त्तिराश्रयः तं विद्यादयो मूर्त्तिः ... यस्येति वार्थः। सर्वज्ञानानां तेजसां तपसां चैतन्मन्त्राय-... सर्वज्ञानादिसन्ततिरूपोऽयं मन्त्र इत्यर्थः ॥ ११ ॥

... ओमिति। "स्रवत्यनोङ्कृतं पूर्वम्" इति न्यायेन मन्त्रादावोङ्कारः। ... शरणागतगजेन्द्ररक्षणायावतीर्णं हर्यवताररूपं श्रीनारायणं ... दुःखपीडितस्वरक्षणाय प्रार्थयते। हरिरिति। हरत्याश्रितानां ... नीति हरिः। मम सर्वतो रक्षां विदध्यात्कुर्यात्। मन्त्र एव ... पुरुषगतं प्रार्थयितृत्वं स्वस्मिन्नारोप्य प्रार्थयते। कथम्भूतः ... गरुत्मतः पृष्ठे न्यस्ते अङ्घ्रिपद्मे अङ्घ्री पद्मे इव अङ्घ्रिपद्मे ...। दरः शङ्खः अरि चक्रं चर्म खेटः असिः खड्गः दरादीन् ... बिभ्रत् अष्टौ गुणा अणिमादयो यस्य नित्याविर्भूत-... विकारापहतपाप्मत्वाद्यष्टगुणाको वा अष्टौ बाहवो यस्य ...॥

... सामान्यतो रक्षाविधानं प्रार्थ्याथ जलस्थलादिप्रदेश-... योपयुक्तमत्स्यादिमूर्त्तिधरं श्रीमन्नारायणं प्रार्थयते। ...। यादसां जलजन्तूनां गणा एव वरुणस्य पाश-स्तस्माज्जलचरदुष्कृत्प्रतिभटः मत्स्यमूर्त्तिर्भगवान् जलेषु मां रक्षतु स्थलेषु निर्जलप्रदेशेषु मायावटुर्वामनः स्वसङ्कल्पोपात्तव-टुवामनरूपः स्थलजदुष्कृतां शास्ता मामव्याद्रक्षतु खेऽन्तरिक्षे त्रिविक्रमः त्रयो विक्रमाः पदविन्यासाः लोकत्रयसंग्राहका यस्यात एव विश्वरूपः कृत्स्नविश्वव्याप्तरूपः खसञ्चरिष्णुदुष्कृतां शास्ताऽवतु रक्षतु॥ १३ ॥

अटव्यरण्यमाजिमुखं युद्धोपक्रमश्चादिर्येषां तेषु दुर्गेषु सङ्क-टस्थानेषु प्रभुः समर्थोऽसुरसेनानायकानामरिर्नृसिंहः स्वभट-प्रतिभटनिरसनशीलः पायात् रक्षतु। नृसिंहं विशिनष्टि। यस्य नृसिंहस्य महान्तमट्टहासं विमुञ्चतः सतः दिशो विनेदुः प्रति-दध्वनुः गर्भाश्च न्यपतन् सस्रंसिरे ॥ १४ ॥

असौ प्रसिद्धो वराहमूर्त्तिः मार्गेऽभिमुखमागतदुष्टहिर-ण्याक्षस्य हन्ता मामध्वनि रक्षतु। कथम्भूतः यज्ञकल्पः यज्ञैः कल्प्यत इति तथा यज्ञावयवकत्वेनोपास्यः स्वदंष्ट्रया करणेन उन्नीतोद्धृता धरा भूमिर्येन अद्रिकूटेषु पर्वतशिखरेषु रामो जामदग्न्योऽद्रिकूटस्थदुष्कृतां हन्ता रक्षत्वित्यनुषङ्गः। विप्रवासे परदेशगमनदशायां सलक्ष्मणो भरताग्रजो दाशरथी रामः देशान्तरस्थरावणादीनां हन्ताव्यात् ॥ १५ ॥

उग्रधर्मादभिचारादेरखिलात्प्रमादान्नारायणः अभिचारादि-निरसनक्षमनामवान्मूर्त्तिपुत्रः पातु हासान्नरो नरः गर्वप्रति-भटः मूर्तिपुत्रः पातु दत्तो दत्तात्रेयः योगविरोधिनिरसनक्षमो योगाद्योगविरोधिवर्गात्पातु। अथेति प्रार्थनानन्तरारम्भद्योतकम् योगनाथः योगेश्वरो गणानां सिद्धगणानामीशः कपिलः ज्ञान-प्रदानेन कर्मबन्धनिरासकः कर्मबन्धात् दुरितकर्मबन्धात्पायाद्-व्यात्। गणयन्तीति गणाः प्रकृतिमहदादितत्त्वानां याथात्म्यवि-वेचनं गणयितारस्ते सांख्यास्तेषामीश इति वार्थः ॥ १६ ॥

कामदेवान्मदनात्सनत्कुमारोऽस्पृष्टकामः अवतु पथि देव-हेलनात् देवानां हेलनं परिहासस्तस्माद्धयशीर्षः वेदापहरणा-दिना चतुर्मुखादिदेवहेलनं कुर्वतां मधुकैटभादीनां हन्ता माम-वतु पुरुषस्य भगवतोऽर्चनमाराधनं तस्यान्तराच्छिद्राद्देवर्षिवर्यः नारदः अविच्छिन्नभगवदाराधनपरः पातु। अशेषान्निरयान्नर-कात्कूर्मो हरिराश्रितार्तिहा अधस्तान्मग्नानामुद्धारकः ॥ १७ ॥

अपथ्याद्धन्वन्तरिः भिषग्श्रेष्ठः पातु। द्वन्द्वाच्छीतोष्णादेः ऋषभः निर्जितः आत्मा मनो येन जितान्तर्बाह्येन्द्रियः शीतोष्णादिवचनावृ-तस्तत्सहिष्णुः पातु। लोकाज्जनापवादात् यज्ञः विष्णुः "यज्ञो वै विष्णुः" इति श्रुतेः। सर्वजनान्तरात्मा पातु। उत अपि तत्कृतान्तात् तेन जनेन कृतोऽन्तः उपघातस्तस्माद्बलो बलभद्रः दुर्जनकृतोपघाताद्धा पातु। नः कृतान्तादिति पाठे तु कृतान्तात्मृत्योर्बलभद्रो मृत्युहा नः पात्वित्यर्थः। क्रोधवशात् सर्पाणां गणादहीन्द्रः शेषः पातु ॥ १८ ॥

अप्रबोधादज्ञानाद्भगवान् द्वैपायनो ज्ञानदः पातु। अत्र नर-दत्तसनत्कुमारदेवर्षिवराहीन्द्रद्वैपायना अंशावताराः जामदग्न्य-कपिलधन्वन्तरिऋषभास्त्वावेशावतराः इतरे पूर्णाः। जीवविशेषे आविर्भाव आवेशः केश्चिद्गुणैः साक्षादाविर्भावोंऽशः प्रमादा-न्मोहजनकात्पाखण्डानां गणाद्बुद्धः जगन्मोहपाखण्डगणाहा काल-मलभूतात् कलेः कल्किः कालमलकलिहा प्रपातु। काल्किं विशिनष्टि। धर्मावनाय धर्मरक्षणाय उरुधर्मवान् कृतः अवतारो येन सः ॥ १९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ प्रातरादिकालेषु दिनस्य षट्सु भागेषु केशवादिमूर्त्तिभ्यो रक्षां प्रार्थयते । मामिति । केशवः गदया युक्त इति शेषः। प्रातर्मामव्यात् आत्तः धृतः वेणुर्येन स गोविन्दः आसङ्गवं सङ्गवकालमभिव्याय सङ्गव उदयानन्तरकालःउदात्ता उद्धृता शक्तिरायुधविशेषो येन सः श्रीमन्नारायणः प्राह्णे पूर्वाह्णे अरीन्द्रश्चक्राजः स पाणौ यस्य सः विष्णुः मध्यन्दिने मध्याह्ने पातु रक्षतु ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरिर्विदध्यादित्यादिना नारायणाख्यं कवचमुच्यते अणिमाद्यष्टगुणो वा व्याप्तगुणो वा अशूङ्व्याप्ताविति धातुः शुभलक्षणं गुणमेव भुङ्क्ते नत्वशुभलक्षणं दुःखमिति वाष्टगुणः अश्भोजन इति धातुः "शुभं पिवत्यसौ नित्यं नाशुभं स हरिः पिवेत्"इत्यादेः ॥ १२ ॥

"यादांसि जलजन्तवः" इत्यतो वरुणपाशस्य यादोगणान्तर्भूतत्वेऽपि तद्ग्रहणस्य मरणाविनाभूतत्वेन तत्परिहारार्थं पृथग्ग्रहणं मथ्नाति हिंसतीति मदसुरस्तं स्यति नाशयतीति मत्स्यः "मथि" हिंसायां शिरो ममन्थ तरसेतिप्रयोगाच्च इतरस्तु मथित्वा विलोड्य सरतीति मत्स्यः "मन्थविलोडने" इति धातुः सृगतावित्यस्मात् ड्यप्रत्ययः । मायेच्छया गृहीतवटुवामननाममूर्त्तिर्विश्वरूपः स्थूलरूपः ॥ १३ ॥

अटवी च आजिश्च मुखश्चादिर्येषां तानि तथा तेषु गर्भो असुरस्त्रीणामिति शेषः ॥ १४ ॥

अध्वनि मा मां स्वदेहेन यज्ञं कल्पयतीति यज्ञकल्पः यज्ञो विष्णुस्तत्समः स एवेत्यतो वा रामः परशुरामः विविधप्रवासे भरताग्रजः दाशरथी रामः ॥ १५ ॥

छन्दःसाम्यद्योतनाय उप्रधन्वा अखिलप्रमादादित्युक्तम् । नरनामा विष्णुः हासादुन्मादकृतहासात् प्रयोगान्नारायणस्मरणानुपायवैकल्यात् ॥ १६ ॥

सनत्कुमारो ब्रह्मचारिवपुः ब्रह्मपुत्रंसनत्कुमाराविष्टः ।

सनत्कुमारनामा तु ब्रह्मचर्यवपुर्हरिः ।
सनत्कुमारमपरं ब्रह्मपुत्रं विवेश यः ।
स मां योग्येतरात्कामात्पातु विश्वेश्वरः प्रभुः ।

इतिवाक्यमत्रमानं कामानयोग्यान् मद्यादिविषयान् देवयति गमयति आत्मनीति देवः तस्माद्देवर्षिवर्यः महिदासः पुरुषान्तरार्चनात् विष्णोः परिवारत्वमन्तरेण प्राधान्येनान्यदेवतार्चनाद्दोषात् ।

महिदासस्तु देवर्षिः पातु मां विष्णुरव्ययः ।
तदनर्पितकर्मभ्यस्तदस्मरणातस्तथा इति ।

अनेन हर्यनर्पितार्चनालक्षणकर्मणः तथा तस्यास्मरणपूर्वकार्चनाच्च "महिदासस्तु देवर्षिः पातु मां विष्णुरव्ययः । तदनर्पितकर्मभ्यस्तदस्मरणातस्तथेतिवाक्यद्योतनाय महिदासेति प्रसिद्धनाममुक्त्वा देवर्षिवर्यं इत्यवधि अनेन वैष्णवानामेवात्राधिकारो नान्येषां तेषामेव विशेषस्मरणाज्ञानपूर्वैरिति सूचितम् । केचित्पुरुषार्चनान्तरादित्यनूद्यान्तरायणाचित्वमन्तरशब्दस्योचुस्तच्चिन्त्यम् "अन्तरं परिधानीये वाह्ये स्वीयेन्तरात्मनि"इत्यादौ एवं प्रयोगात् ॥ १७ ॥

शरीररोगजनकादपथ्यद्रव्यान्निर्जितात्मा वशीकृतेन्द्रियग्रामः तत्कृताद्यज्ञकर्मोपादितादनित्यफलात्स्वर्गादेर्यज्ञनामा यागप्रवर्तको विष्णुः । वलः वलभद्रः स एवाहीन्द्रशेषनामा।"शेषदेवः सहस्राङ्घ्रिः सहस्राङ्घ्रिशिरोभुजः" इत्यादेः"वलं शक्तौ वलो रामे वलिष्ठे च वलस्तथा,,इत्यभिधानात् वलिष्ठोऽहीन्द्र इति वा ॥ १८ ॥

धर्मावनाय धर्मपरिपालनाय उरु प्रपातु भूयो भूयो रक्षत्वित्यर्थः ॥ १९ ॥

प्रातरारभ्य पञ्चभिः पञ्चभिर्घटिकाभिः अहोरात्रविभागं कृत्वा तेष्वेकैकां मूर्तिं सङ्कल्प्याह । मां केशव इति । गोष्ठान्निर्गत्य यदैकत्र गावः संयुज्यन्ते स काल आसङ्गवस्तस्मिन्काले ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यज्ञश्च लोकादिस्तत्र वलदेवस्य शेषादन्यत्र कृतान्तादधिकशक्तित्वं दर्शितम् । जनान्तादिति पाठे जनानामन्तात् ... दिति स एवार्थः ॥ १८ ॥ १९ ॥

मां केशव इति सार्द्धकम् । अनेन मथुरावृन्दावननाथस्य नित्यप्रकाशत्वं दर्शितम् । प्रातरादयः काला एवं युज्यन्ते । ... स्तावत् प्रथमभागः प्रातःसङ्गवौ तु तस्यैवांशौ मध्याह्नो मध्यभागः । तृतीयभागस्त्वपराह्णः सायंसन्ध्याऽभ्यामवान्तरभेदभिन्नः रात्रौ च प्रदोषः प्रथमभागः मध्यभागो निशीथः अर्द्धरात्रस्तु तत्रापि मध्यमघटिकाद्वयम् । अपररात्रस्तु तृतीयभागः । तस्यैवान्तिमांशद्वयं प्रत्यूषप्रभातसंज्ञम् । यथा सन्ध्ये तदवान्तरभेदा अपि पृथगरायन्त इति । क्रमगणनायां तु मध्याह्नव्यतिक्रमापत्तेः प्राह्णस्तु स्मृतौ न भिन्नत्वेन गण्यते । तथा हि "... त्रितयं प्रातस्तावानेव तु सङ्गवः । मध्याह्नस्त्रिमुहूर्त्तोऽथ अपराह्णोऽपि तादृशः । सायाह्नस्त्रिमुहूर्त्तः स्यात् सर्वकर्मसु ..." इति ॥ २०—३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ध्येयमीश्वररूपमात्मानं ध्यायेदित्यन्यैरभ्यूह्यत्व कामवता ... अहोपासना । विद्या तेजस्तपांसि मूर्त्तिर्यस्य तमिमं मन्त्रं ... यणकवचाख्यम् ॥ ११ ॥

समुद्रेण सह नदीनदादिवत् ध्येयरूपेण सहैक्यं प्राप्य ... पृथग्भूयापि तिष्ठन् स्वरक्षाप्रार्थनमन्त्रमुदाहरेदित्याह । हरिः ... अष्टगुणः अणिमाद्यष्टैश्वर्यसंयुक्तः ॥ १२ ॥

सामान्येन सर्वतो रक्षां प्रार्थ्य देशविशेषेषु तत्तदधिष्ठातृस्वरूपेण भगवतो रक्षामन्त्रानाह । जलेष्विति त्रिभिः । ... गणा एव वरुणस्य पाशास्तस्मात् ॥ १३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आजिमुखं युद्धसम्मुखप्रदेशः ॥ १४ ॥

यज्ञकल्पः यज्ञस्वरूपः स्वार्थिकः कल्पप् । यद्वा । यज्ञाः कल्पाः समर्था यतः सः । रामो जामदग्न्यः ॥ १५ ॥

स्वपरोद्भवेभ्यः उपद्रवेभ्यः । रक्षामन्त्रानाह चतुर्भिः । उग्रधर्मादभिचारादेः । हासात् गर्वात् । अयोगात् योगभ्रंशात् ॥ १६ ॥

कामदेवात् कन्दर्पवेगात् । पथि यद्देवहेलनं नमस्कारमकृत्वैव गमनम् । पुरुषार्च्चनस्यान्तरात् देवपूजाच्छिद्रात् द्वात्रिंशदपराधरूपादित्यर्थः ॥ १७ ॥

लोकाज्जनापवादात् जनान्तात् जनहेतुकोऽन्त उपघातस्तस्मात् कृतान्तादिति च पाठः । क्रोधवशात् सर्पाणां गणात् महीन्द्रः शेषः ॥ १८ ॥

कालमलरूपात् । कलेः कलिकः कीदृशः धर्मावनेत्यादि ॥१९॥

कालविशेषेषु तत्तदधिष्ठातृस्वरूपेण भगवतो रक्षामन्त्रानाह । मामिति त्रिभिः । केशवो मथुराधिपतिः । प्रातर्दिनस्य पञ्चमघटिकापर्यन्तम् । गोविन्दो वृन्दावनाधिपतिः । आसङ्गवं षष्ठघटिकामारभ्य दशमघटिकापर्यन्तम् । एकादशघटिकामारभ्य पञ्चदशघटिकापर्यन्तः प्राह्णस्तत्र । षोडशघटिकामारभ्य विंशतिघटिकापर्यन्तं मध्याह्नं तत्र । अरीन्द्रपाणिः चक्रहस्तः एकविंशतिघटिकामारभ्य पञ्चविंशतिघटिकापर्यन्तमपराह्णस्तत्र । षड्विंशतिघटिकामारभ्य त्रिंशद्घटिकापर्यन्तं सायं तत्र । त्रयः संविदानन्दा धामानि यस्य सः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मानमंशभूतं परममंशिनं ध्यायेत् । अंशभूतोऽहमंशिरूपरूस्तिग्रद्रूपत्वाभावात्तदभिन्नोऽस्मीति चिन्तयेत् । परमं विशिनष्टि । ध्येयमुपास्यम् । षड्भिः ।

> ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
> ज्ञानवैराग्ययोश्चापि षण्णां भग इतीङ्गना ॥

इति स्मृतिप्रोक्ताभिर्युतं विद्यादयो मूर्त्तयः शरीरवत् प्रियास्तःइमं श्रीनारायणकवचरूपं मन्त्रमुदाहरेदावर्त्तयेदित्यर्थः॥११॥

अष्टौ अणिमादिरूपा गुणा यस्य सः । मम रक्षां विदध्यात् करोतु ॥ १२ ॥

एवमात्मनः सामान्यतो रक्षणं प्रार्थ्य जलस्थलादिषु तत् प्रार्थयते । जलेष्वित्यादिभिस्त्रिभिः । मायया भक्तविषयिण्या कृपया वटुवामनः वामनस्वरूपः ॥ १३ ॥

समरेषु आजिमुखेषु युद्धाग्रभागेषु आदिना अग्न्याद्यापत्तिषु ॥ १४ ॥

कल्पाः फलदाने समर्थाः यस्मात्सः । यज्ञैः साहश्येनोपासनार्थं निरूप्यते इति वा यज्ञकल्पः ॥ १५ ॥

स्वपरहेतुकोपद्रवेभ्यो रक्षणं प्रार्थयते । मामिति चतुर्भिः । उग्रधर्मादभिचारादिरूपात् । प्रमादात् अनवधानतः । हासात् गर्वात् अयोगात् योगविघ्नात् ॥ १६—१८ ॥

प्रमादात् बुद्धिमोहात् यः पाषण्डगणः प्रवर्त्तते तस्मात् । सप्तम स्कन्धे ॥ १९ ॥

कालभेदेषु रक्षां प्रार्थयते । मां केशव इति त्रिभिः । तत्र दिवसस्य षड् भागाः प्रातरादिशब्दार्थाः । तत्र प्रातः केशवः अरीन्द्रपाणिः चक्रपाणिः ॥ २० ॥

---

भाषाटीका

छै ऐश्वर्य वाली शक्तियों से सहित विद्या तेज तप इनों की मूर्तिवाले ध्यान के योग्य भगवान् का ध्यान करें फिर इस मन्त्र का उच्चारण करें ॥ ११ ॥

शङ्ख चक्र ढाल तरवार गदा बाण धनुष पाश इन आयुधों को धारण किये आठ भुजों के सहित अणिमादिक आठ ऐश्वर्यों के सहित भगवान् गरुड़जी के पीठ पर चरण कमल को स्थापन किये हुये श्री हरि मेरी सब प्रकार से रक्षा करें ॥ १२ ॥

जलों के मध्य में जलचर जन्तुओं से वरुण के पास से मत्स्यमूर्ति भगवान् मेरी रक्षा करें स्थलों में माया से वटुवामन मेरी रक्षा करें आकाश में विश्वरूप त्रिविक्रम रक्षा करें ॥ १३ ॥

जिनके अट्टहास के छोड़ने से सब दिशा शब्दाय मान होगई और असुर स्त्रियों के गर्भ गिर पड़े वे प्रभु असुरों के यूथ के पति हिरण्यकशिपु के विदारण करने वाले नृसिंह भगवान् पर्वतादि दुर्गम स्थानों में तथा युद्धों में मेरी रक्षा करें ॥ १४ ॥

अपने डाढ़ों पर पृथिवी को उठा लाने वाले यज्ञ मूर्ति ए भगवान् वाराहजी मार्ग में मेरी रक्षा करें पर्वतों के शिखरों पर परशुरामजी रक्षा करें परदेश में भरतजी के बड़े भ्राता श्री रामचन्द्रजी लक्ष्मणजी के सहित हमारी रक्षा करें ॥१५॥

सम्पूर्ण मन्त्रादि द्वारा मारण करने से और सब प्रमादों से नारायण मेरी रक्षा करें अभिमान के पाप से नर भगवान् रक्षा करें योग के भ्रष्ट होने से योगनाथ दत्तात्रेयजी मेरी रक्षा करें कर्म बन्ध से गुणों के ईश कपिल भगवान् रक्षा करें ॥ १६ ॥

काम के वेग से सनत्कुमार मेरी रक्षा करें भगवन्मन्दिर के सामने नमस्कार नहीं करके रस्ता में चलेजाने के पाप से हयग्रीव भगवान् रक्षा करें नारायण के पूजन में अपराधों से नारद भगवान् रक्षा करें सम्पूर्ण नरकों से कूर्म भगवान् मेरी रक्षा करें ॥ १७ ॥

अपथ्य पदार्थों के भक्षण से धन्वन्तरि भगवान् मेरी रक्षा करें शीतोष्णादि दुःखों से शरीर मन के जीतने वाले भगवान् ऋषभदेव जी रक्षा करें लोकापवादसे यज्ञ भगवान् रक्षा करें मनुष्यों के आघात से बलदेव भगवान् रक्षा करें क्रोध वश सर्पादिकों के गण से शेष भगवान् रक्षा करें ॥१८॥

अज्ञान से व्यास भगवान् रक्षा करें पाखण्ड बुद्धि से प्रमाद से बुद्ध भगवान् रक्षा करें कालों में मलिन कलिके दोष से कल्कि भगवान् रक्षा करें जिनोंने कि धर्म की रक्षा करने के निमित्त बहुत अवतार धारण किये हैं ॥ १९ ॥

देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामावतु माधवो माम् ।
दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥
श्रीवत्सधामापररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ।
दामोदरोऽव्यादनुसन्ध्यं प्रभाते विश्वेश्वरो भगवान् कालमूर्तिः ॥ २२ ॥
चक्रं युगान्तानलतिग्मनेमि भ्रमत् समन्ताद्भगवत्प्रयुक्तम् ।
दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २३ ॥
गदेऽशनिस्पर्शनविस्फुलिङ्गे ! निष्पिण्ढि निष्पिण्ढ्यजितप्रियासि ।
कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥ २४ ॥
त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ।
दरेन्द्र ! विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥ २५ ॥
त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि ।
चक्षूंषि चर्मन् ! शतचन्द्र ! छादय द्विषामघोनां हर पापचक्षुषाम् ॥ २६ ॥

यन्नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च ।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा ॥ २७ ॥
सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्त्तनात् ।
प्रयान्तु संक्षयं सद्यो ये नः श्रेयःप्रतीपकाः ॥ २८ ॥
गरुडो भगवान् स्तोत्रस्तोभश्छन्दोमयः प्रभुः ।
रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥ २९ ॥
सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ।
बुद्धीन्द्रियमनःप्राणान् पान्तु पार्षदभूषणाः ॥ ३० ॥

---

भाषा टीका ।

प्रातः काल में केशव भगवान् गदा से मेरी रक्षा करैं दूसरे आसंगव भाग मे वेणु धारण किये गोविन्द भगवान् मेरी रक्षा करैं तीसरे प्राह्ण काल में शक्ति को धारण किये नारायण मेरी रक्षा करैं दिन के मध्य भाग में चक्रधारी विष्णु भगवान् मेरी रक्षा करैं ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रिधामा ब्रह्मादित्रिमूर्तिः श्रीमाधवः । दोषे प्रदोषे । अर्धरात्रे अर्धरात्रिपर्यन्ते । काले निशीथे चैक एव पद्मनाभोऽवतु ॥ २१ ॥

अपररात्रे ईशः श्रीवत्सधामावतु । प्रत्यूष ईशः श्रीजनार्दनः । श्रीदामोदरः प्रभाते । श्रीविश्वेश्वरोऽनुसन्ध्यं प्रतिसन्ध्यम् ॥ २२ ॥

युगान्तानलवत्तिग्मा तीक्ष्णा नेमिर्यस्य तच्चक्रं भगवता प्रयुक्तं सदरिसैन्यं दन्दग्धि दन्दग्धि अतिशयेन दहति । तस्याय स्वभाव एव न तु तस्मात्प्रार्थनीयमित्यर्थः । यद्वा । दन्दग्धीति लोटमध्यमपुरुषः । अत्र त्वमेवंभूतं चक्रमिति स्वरूपमुक्त्वा सम्बोध्य प्रार्थ्यतेऽतिशयेन दहेति । कक्षं शुष्कतृणम् ॥ २३ ॥

अशनिवत्स्पर्शो येषां ते विस्फुलिङ्गा यस्यास्तस्याः सम्बोधनं हे गदे ! त्वमजितस्य प्रियासि । अहमच्युतस्य दासः । अतः कूष्माण्डादीन्निष्पिण्ढि निष्पिण्ढि सञ्चूर्णय सञ्चूर्णय । अरींश्च चूर्णय चूर्णय । सर्वत्र वीप्सातिशीघ्रत्वाय ॥ २४ ॥

हे दरेन्द्र पाञ्चजन्य ! त्वं यातुधानादीन्विद्रावय विप्रग्रहा ब्रह्म- राक्षसा येऽन्ये च घोरदृष्टयस्तान् ॥ २५ ॥

तिग्मा धारा यस्य हे तिग्मधार असिवर खड्गश्रेष्ठ ! त्वं ममारिसैन्यं छिन्धि छिन्धि । शतं चन्द्राकाराणि मण्डलानि यस्मिन् हे शतचन्द्र चर्मन् ! अघोनामघवतां द्विषां चक्षूंषि छादय पाप- चक्षुषां चोग्रदृष्टीनां चक्षूंषि हर ॥ २६ ॥

यत् । येभ्यो भयम् । अंहोभ्यः पापेभ्यः ॥ २७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

श्रेयःप्रतीपका इष्टव्याघातकाः ॥ २८ ॥

स्तोत्राणि बृहद्रथन्तरादिसामानि तैः स्तोभ्यते संस्तूयत इति स्तोत्रस्तोमः छन्दोमयो वेदमूर्तिः "सुपर्णोऽसि गरुत्मान्" इत्यादिश्रुतेः। पंक्तपत्रपाठे स्तोभा गीतिपूरकाक्षराणि स्तोत्रस्तोभेति पाठे सामाधारभूत ऋक् स्तोमः ॥ २९ ॥

नामानि च रूपाणि च यानानि च वाहनानि आयुधानि च नो बुद्ध्यादीन् पान्तु पार्षदभूषणाः पार्षदमुख्याश्च पान्तु॥ ३० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उग्रं धनुर्यस्य स मधुहा मधुसूदनः स्वतेजसा दीप्यमानः अपराह्णे त्रीणि धामानि तेजांस्यभिव्यक्तिस्थानानि यस्य "नामानि ब्राह्मणं चैव त्रीणि तेजांसि न स्पृशेत्" इत्युक्त्रीणि तेजांस्यत्र विवक्षितानि । यद्वा । योगिहृदयक्षीराब्धिरूपाणि त्रीणि धामानि स्थानानि यस्य सः। माधवः सायङ्काले मामवतु। दोषे प्रदोषे हृषीकेशः । अर्द्धरात्रपर्यन्तकाले निशीथे चैकः पद्मनाभोऽवतु ॥ २१ ॥

अपररात्रे श्रीवत्सचिन्हः ईशेश्वरीस्तस्या ईशः श्रीधरः पातु प्रत्यूषे असिवरः खड्गधरो जनार्दनः पातु। अनुसन्ध्यं प्रतिसन्ध्यं दामोदरः पातु। प्रभाते भगवान् कालशरीरको विश्वनियन्ता पातु। अत्र केशवादिद्वादशमूर्त्तीनां मध्ये वामनत्रिविक्रमयोर्मायावटुवामनोऽव्यात् त्रिविक्रमः खेऽवत्विति रक्षकत्वेन प्रार्थितत्वात्तयोरनुक्तिः । नारायणमूर्तेरुक्तत्वेऽप्यायुधविशेषविशिष्टस्यात्र विवक्षितत्वं प्रार्थ्यत इति न पौनरुक्त्यम्। क्रमस्त्वविवक्षितः। प्रातःप्रत्यूषप्रभातशब्दा भूतभविष्यद्वर्त्तमानादिनावयवप्रातःकालपराः ॥ २२ ॥

अथ भगवतोऽस्त्रायुधस्यारिष्टनिरासकत्वेन प्रार्थयते । चक्रमित्यादिना । युगान्तानलनिवत्तीक्ष्णा नेमिर्यस्य तच्चक्रं भगवता भ्रमितं सदरीणां सैन्यं दन्दग्धि अतिशयेन दहति । अरिसैन्यदाहकत्वं तस्य स्वभाव एवेति न तत् प्रार्थनीयमिति प्रथमपुरुषनिर्देशः। दहने दृष्टान्तः। वायुसखोऽग्निः कक्षं शुष्कं तृणं यथेति ॥ २३ ॥

अशनिवत् स्पर्शो येषां ते विस्फुलिङ्गाः यस्यास्तस्याः सम्बोधनं हे गदे! त्वमजितस्य भगवतः प्रियासि अहं च तस्य दासः। अतः कूष्माण्डादीन् निष्पिण्ढि निष्पिण्ढि आभीक्ष्ण्ये द्विर्वचनमतिशीघ्रत्वद्योतनाय वीप्सायां वा । पुनःपुनर्निष्पेषयेत्यर्थः। तथारीन् शत्रून् पुनः पुनश्चूर्णय ॥ २४ ॥

हे दरेन्द्र! शङ्खराज! पाञ्चजन्य! त्वं कृष्णेन भगवता पूरितः सन् भयङ्करः स्वनो ध्वनिर्यस्य तादृशः शत्रोर्हृदयानि कम्पयन् यातुधानादीन् ग्रहविशेषान् येऽन्ये च घोरदर्शनाः तान् विद्रावय पलायितान् कुरु ॥ २५ ॥

तिग्मा तीक्ष्णा धारा यस्य सचासावसिवरश्च तस्य सम्बोधनं हे ईशेन भगवता प्रयुक्तः ममारिसैन्यं छिन्धि छिन्धि शतं चन्द्राकाराणि मण्डलानि यस्मिन् हे शतचन्द्र! चर्मन् खेट!

भगवतां द्विषां चक्षूंषि छादय पापचक्षुषामुग्रदृशीनां चक्षूंषि हर ॥ २६ ॥

ग्रहादिभ्यो यद्भयं नोऽस्माकमभूत्तानि सर्वाणि भयानि भगवतो नामरूपायुधानामस्त्राणि तेषां कीर्त्तनात्। यद्वा। कीर्त्तनं स्मरणस्याप्युपलक्षणम्। भगवतो नाम्नां कीर्त्तनाद्रूपाणां दिव्यमूर्तीनामस्त्राणां च स्मरणात् । संक्षयं नाशं सद्य एव यान्तु प्राप्नुवन्तु । तत्र केतवो धूमकेत्वादयः। नरश्चौरादयः सरीसृपाः सर्पगणस्वभावाः दंष्ट्रिणः श्वापदादयः अघानि पापस्वभावानि भूतानि तथा येऽन्ये श्रेयस इष्टस्य प्रतीपकाः विघातकाः तेऽपि संक्षयं यान्तु ॥ २७ ॥ २८ ॥

स्तोत्राणि बृहद्रथन्तरसामादीनि तैः स्तोभ्यते स्तोत्रावयवत्वेन स्तूयत इति तथा । छन्दोमयः छन्दःप्रचुरः प्रभुः समर्थो भगवान् गरुडः स्तोभस्तोत्रछन्दोमय इति पाठे स्तोभानि गीतपूरकाक्षराणि तद्युक्तानि स्तोत्राणि छन्दांसि बृहदादीनि गीत्याधारभूतानि छन्दांसि तत्प्रचुरः तदवयवकत्वमाधुर्येणानुसन्धेय इत्यर्थः। अशेषकृच्छ्रेभ्यः अशेषापद्भ्यो रक्षतु स्वनामभिर्विष्वक्सेनो रक्षतु ॥ २९ ॥

तथा हरेर्नामानि रूपाणि च यानानि वाहनानि च तथा पार्षदप्रवरा भूषणानि च मम बुद्ध्यादीन् पान्तु ॥ ३० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

दोषे रात्रिभोजनकाले रात्रिसामान्यविवक्षायां दोषाशब्दोऽव्ययवाची स्त्रीलिङ्गो वा रात्रिविशेषकालविवक्षायां पुल्लिङ्गः। निशीथात्पूर्वयामोऽर्धरात्र उच्यते तस्मिन् काले निशीथे पञ्चदशघटिकातुलिके एकः पद्मनाभ एवावतु ॥ २१ ॥

प्रत्यूषे अरुणोदयप्रारम्भे अनुसन्ध्यं सन्ध्यानिकटे प्रभाते सूर्योदयासन्नसमये ॥ २२ ॥

युगान्तेऽग्निवत्तिग्मा तीक्ष्णा नेमिर्यस्य तत्तथा । स्वरूपमुक्त्वा सम्बोधयति। दन्दग्धीति। हे सुदर्शन! अरिसैन्यमाशु दन्दग्धि अतिशयेन दह अनेन।

सुदर्शन! महाज्वाल! कोटिसूर्यसमप्रभ!
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय। इति

मन्त्रोऽर्थत उद्धृतः ॥ २३ ॥

"स्पृश उपतापे" इति धातोः स्पर्शनं तपनम् अशनिवाग्निर्घातवत्स्पर्शनात्तापकरा विस्फुलिङ्गा अग्निकणा यस्याः सा तथा अशन्योर्वज्रयोः स्पर्शनेन सङ्घट्टनेन जाता ये विस्फुलिङ्गा यस्याः सा तथा इति वा सम्बन्धेन अशनिशब्देन मेघपङ्क्तिर्लक्ष्यते तस्य स्पर्शनवद्दुःसहा विस्फुलिङ्गा यस्याः सा इति वा तस्याः सम्बुद्धिः अशनिस्पर्शनविस्फुलिङ्गे हे गदे! निष्पिण्ढि नितरां पिष्टं कुरु निष्पिण्ढीति पाठे"पिषि पेषणे" इत्यस्य रूपम् ॥ २४ ॥

दरेन्द्र शङ्खश्रेष्ठ! यातुधानादिदृष्टिवत् (१) घोरा दृष्टिर्येषां ते तथा तान् अरीन् विद्रावयेत्यन्वयः अनेन।

(१) ब्रह्मराक्षसादि।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पाञ्चजन्यनिजध्याननिध्वस्तपातकमञ्चय !
पाहि मां पापिनं घोरं संसारार्णवपातिनम्

इत्ययं मन्त्रः सूचितः ॥ २५ ॥

मम छिन्धीति तुगागमो विकल्पेनेति वक्तव्यम् । द्विषां चक्षूंषि छादय नोऽस्माकमघं हरेत्यन्वयः । शतचन्द्रेति चर्मणो नाम ॥२६॥

केतुभ्य इत्यनेन उल्कापाता गृह्यन्ते केतोर्ग्रहेभ्य, इत्यनेन गतार्थत्वात् अघेभ्यो व्यसनेभ्यः ॥ २७ ॥

श्रेयःप्रतीपकाः श्रेयोविरोधिनस्ते चासुराः ॥ २८ ॥

स्तोत्राणां स्तोमः समूहः स्तोत्रस्तोमः तल्लक्षणश्छन्दः सामवेदस्तन्मयस्तत्प्रधान इत्यर्थः । भगवान् पूज्यः विष्वक्सवंत्र सेना यस्य स तथा । स्वस्य स्वामिनो नामभिः (१) । विष्वक्सेनश्च हरेर्निवेदिताशनः ॥ २९ ॥

यानं रथः पार्षदाश्च भूषणाश्च पार्षदभूषणाः भूषणानामपि ज्ञानाश्रयत्वज्ञापनाय पुल्लिङ्गप्रयोगः "तत्कण्ठगं कौस्तुभमास भाता"इत्यादेः ॥ ३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

षोढा विभक्तां दिवसरक्षामुक्त्वा पञ्चधा विभक्तरात्रिरक्षामाह । दोषे रात्रेश्चतुर्थघटिकापर्यन्तं प्रदोषस्तत्र । पञ्च घटिकामारभ्य चतुर्दशघटिकापर्यन्तमर्द्धरात्रमन्तभागस्यार्द्धरात्रत्वात् तत्र । पञ्चदशषोडशघटिके निशीथस्तत्र ॥ २१ ॥

श्रीवत्सो धामनि शरीरे यस्य निशीथादूर्द्ध्वमरुणोदयात् प्राक् अपररात्रः । प्रत्यूषे रात्रिशेषघटिकाचतुष्टये । अनुसन्ध्यं दिनरात्रिसन्ध्ययोः ॥ २२ ॥

भगवदस्त्रैश्च रक्षामन्त्रानाह । चक्रमिति चतुर्भिः । युगान्तानलवत् तिग्मा तीक्ष्णा नेमिर्यस्य तत् । हे समन्तात् भ्रमत् ! भ्रमणशील ! त्वं चक्रं भगवत्प्रयुक्तं सत् अरिसैन्यं दन्दग्धि अतिशयेन दह । कक्षं शुष्कतृणम् ॥ २३ ॥

अशनिवत् स्पर्शनं येषां ते विस्फुलिङ्गाः यतः । हे गदे ! निष्पिण्ढि निष्पिण्ढि चूर्णय चूर्णय ॥ २४ ॥

दरेन्द्र ! हे पाञ्चजन्य ! ॥ २५ ॥

हे तिग्मधार ! हे असिवर ! हे खड्गश्रेष्ठ ! हे शतचन्द्र ! शतचन्द्राकारयुक्त ! चक्षूंषि हर आच्छादय च ॥ २६ ॥ २७ ॥

श्रेयसः प्रतीपकाः प्रतिकूलाः ॥ २८ ॥

स्तोत्राणि बृहद्रथन्तराणि सामानि तैः स्तोभ्यते संस्तूयत इति स्तोत्रस्तोभः । वेकपद्यपाठे स्तोभा गीतिपूरकाक्षराणि स्तोत्रस्तोभेति पाठे सामाधारभूतऋक्समुदायः स्तोमः ॥ २९ ॥

पार्षदभूषणाः पार्षदमुख्याः ॥ ३० ॥

---

(२) अयं विष्वक्सेनः पार्षदः ।

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रीणि ऊर्द्ध्वाधो मध्यलोकाख्यानि धामानि यस्य सर्वलोकस्य इत्यर्द्धरात्रश्च षड् भागाः दोषादिशब्दवाच्याः तत्र दोषे प्रदोषे हृषीकेशः निशीथे अर्द्धरात्रे चेति विभागद्वयेऽपि पद्मनाभः ॥ २१ ॥

दामोदरः प्रभाते उत कालानामनुसन्ध्यं प्रतिसन्ध्यं विश्वेश्वरः ॥ २२ ॥

एवं भगवन्तं रक्षार्थं प्रार्थ्य तदायुधानि रक्षार्थं प्रार्थयते । चक्रमिति चतुर्भिः । युगान्तानलवत्तिग्मा नेमिर्धारा यस्य तदीदृक् चक्रं त्वं भगवत्प्रयुक्तं समन्तात् भ्रमत् सत् अरिसैन्यम-स्मच्छत्रुसमूहं दन्दग्धि द्विरुक्तिः शीघ्रत्वाय शीघ्रं दहेत्यर्थः। कक्षं शुष्कतृणम् ॥ २३ ॥

अशनिर्वज्रं तद्वत् स्पर्शो येषां ते विस्फुलिङ्गा यस्यास्तस्याः सम्बुद्धौ हे अशनिविस्फुलिङ्गे ! हे गदे ! त्वमजितप्रियासि । अतोऽजितभजने विघ्नकरान् कूष्माण्डादीन् निष्पिण्ढि शीघ्रं पेषयेत्यर्थः ! ममारींश्चूर्णय चूर्णय ॥ २४ ॥

हे दरेन्द्र ! शङ्खराज ! विग्रग्रहा ब्रह्मराक्षसाः ॥ २५ ॥

हे तिग्मधार ! तीक्ष्णधार ! हे असिवर ! खड्गराज ! त्वमीशप्रयुक्तो ममारिसैन्यं छिन्धि छिन्धि शतचन्द्राकाराणि मण्डलानि यस्मिन् हे शतचन्द्र ! हे चर्मन् ! खेट अघोनामघवतां मम द्विषां चक्षूंषि छादय तत्र पापचक्षुषामतिक्रूरदृष्टीनां तु चक्षूंषि हर उत्पाटयेत्यर्थः ॥ २६ ॥

अंहोभ्यः पापेभ्यः ॥ २७ ॥

श्रेयसां पुरुषार्थानां प्रतीपकाः घातकाः ॥ २८ ॥

स्तोत्रैर्बृहद्रथन्तरादिसामभिः स्तोभ्यते इति स्तोत्रस्तोभः छन्दोमयो वेदप्रचुरः । प्रभुः समर्थो भगवान् गरुडः विष्वक्सेनो हरिश्च स्वनामभिः अशेषकृच्छ्रेभ्यो रक्षतु ॥ २९ ॥

हरेर्नामादीनि पार्षदभूषणाः पार्षदश्रेष्ठाश्च सर्वोपद्रवेभ्यो नोऽस्माकं बुद्ध्यादीन् पान्तु ॥ ३० ॥

---

उग्रधनुषवाले मधुसूदन देव अपराह्न कालमें मेरी रक्षा करें सायं काल में ब्रह्मादि तीनों मूर्ति वाले माधव मेरी रक्षा करें प्रदोषकाल में हृषीकेश रक्षा करें अर्धरात्र में और निशीथ काल मे पद्म नाभ भगवान् रक्षा करें ॥ २१ ॥

पीछली रात में श्रीवत्स चिन्हवाले भगवान् मेरी रक्षा करें प्रत्यूष कालमें खड्गधारी जनार्दन भगवान् रक्षा करें प्रभात समय में दामोदर भगवान् रक्षा करें प्रातः सायं की सन्धियों में विश्वंभर भगवान् कालमूर्ति रक्षा करें ॥ २२ ॥

प्रलय काल के अग्नि सरीके तीक्ष्ण किनारों वाले भगवान् के प्रयोग करने से चारों तरफ घूमते हुये श्रीसुदर्शन चक्र बड़ी शीघ्रता से जैसे वायुके साथमें अग्नि सूखे तृण को जलावै तैसे शत्रुओं के सैन्यको दहन करो ॥ २३ ॥

हे गदे वज्रके स्पर्शसरी के अग्निकण वाली आप तो अजित भगवान् की बड़ी प्रिया हो सो कूष्माण्ड विनायक

यथा हि भगवानेव वस्तुतः सदसच्च यत्।
सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥ ३१ ॥
यथैकात्म्यानुभावानां विकल्परहितः स्वयम्।
भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥ ३२ ॥
तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः।
पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३३ ॥
विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः।
प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३४ ॥
मघवन्निदमाख्यातं वर्म नारायणात्मकम्।
विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥ ३५ ॥
एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा।
पदा वा संस्पृशेत् सद्यः साध्वसात् स विमुच्यते ॥ ३६ ॥
न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत्।
राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥ ३७ ॥
इमां विद्यां पुरा कश्चित् कौशिको धारयन् द्विजः।
योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥ ३८ ॥

भाषा टीका।

सब राक्षस भूत ग्रहों को औ शत्रुओं को पीसो औ चूर्ण करो ॥ २४ ॥

हे पाञ्चजन्य शङ्ख! आप कृष्ण भगवान् के मुख के वायु से पूर्ण होकर बडे भयंकर शब्द से शत्रुओं के हृदय को कंपाते हुये यातुधान प्रमथ प्रेत मातृ पिशाच विप्रग्रह घोरदृष्टि वालों को दूर भगाओ ॥ २५ ॥

हे असिवर! खङ्गश्रेष्ठ आप तीक्ष्णधारा वाले हो सो भगवान् के प्रयोग करने से मेरे शत्रुओं के सैन्य को वारम्वार छेदन करो हे चर्मन्! ढाल! आप शतचन्द्र के तुल्य हो सो शत्रुओं के नेत्रों को ढांक देवो पाप दृष्टि वाले के शत्रुओं के नेत्रों को हरण करो ॥ २६ ॥

जो हम को ग्रहों से भय होवै जो भय उल्कापात से होवै जो भय दुष्ट मनुष्योंसे होवै जो सर्पादिकों से होवै जो भय दांत वाले व्याघ्रादिकों से होवै जो भय पापों से होवै ॥ २७ ॥

ए सब भय भयकारक जितने हमारे घातक हैं वे सब भगवान् के नाम रूप अस्त्र के कीर्तन करने से शीघ्र नष्ट हो जावैं ॥ २८ ॥

बृहद्रथंतरादिक स्तोत्रों से स्तुति करने योग्य साक्षात् वेदमय प्रभु गरुड भगवान् हमको संपूर्ण कष्टों से रक्षित करें और विश्वक्सेन भगवान् भी अपने नामों के ग्रहण करने से हमारी रक्षा करैं ॥ २९ ॥

श्रीहरि के नाम रूप वाहन आयुध तथा भगवान के श्रेष्ठ पार्षद हम लोगों के बुद्धि इंद्रिय मन प्राणों की रक्षा करैं ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सच्च असच्च मूर्तामूर्तं यत्तत्सर्वं जगत् ॥ ३१ ॥

ऐकात्म्यस्यानुभावोऽनुध्यानं येषां तेषाम्। विकल्पो भेद-स्तद्रहितोऽपि ॥ ३२॥

सत्यमानेन सत्यभूतेन प्रमाणेन ॥ ३३ ॥

पुनरपि श्रीनृसिंह एव प्रार्थ्यते। विदिक्ष्विति। पात्वित्यनुषङ्गः यद्वा। नारसिंहः प्रह्लादः स्वनेन श्रीनृसिंहनामगर्जनेन स्वतेजसा स्वप्रभावेण ग्रस्तानि समस्तानि दिग्गजविषशस्त्रजलवाय्वग्न्या-दीनां तेजांसि प्रभावाः येन सः ॥ ३४॥

दंशितः कवचितः ॥ ३५ ॥

सोऽपि साध्वसाद्भयाद्विमुच्यते ॥ ३६ ॥

तस्य तु भयं न भवेदेव ॥ ३७ ॥

एतद्विद्याप्रभावमितिहासेनाह। इमामिति सार्धैस्त्रिभिः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मरुधन्वनि निरुदके देशे । अनेन विद्यायाः क्षेत्रतीर्थानपेक्षत्वं दर्शितम् ॥ ३८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं भगवन्नामरूपास्त्रभूषणपार्षदादीनिष्टप्रापकत्वेनानिष्टनिवर्त्तकत्वेन च सम्प्रार्थ्य तन्नामरूपादिवत्तद्विभूत्यादिवञ्च तद्विषयकप्रार्थनायाः सत्यत्वं प्रतिजानीते । यथेति त्रिभिः । यथा च यत् सदसच्चिदाचिदात्मकं जगद्वस्तुतो भगवानेव भगवदात्मकमेवात्र न तु विप्रतिपत्तिः "यस्य पृथिवी शरीरं यस्यात्मा शरीरं तदनुप्रविश्य सच्च त्यच्चाभवत्" इति श्रुतेरितिभावः । तथानेन सत्येन सत्यभूतेनाबाधितेन दृष्टान्तेन तद्विषयकप्रार्थनया नोऽस्माकमुपद्रवाः तस्य जगदात्मकत्ववत्तद्विषयप्रार्थनापि न मिथ्या भवितुमर्हतीति भावः ॥ ३१ ॥

यथा च भगवानैकात्म्यानुभावेन कृत्स्नचिदचिदात्मकजगदेकान्तरात्मत्वकृतभावेन विकल्परहितः । प्राकृतदेवमनुष्यादिनामरूपात्मकभेदरहितः स्वमायया स्वसङ्कल्पज्ञानेन स्वयमात्मनैव स्वेच्छया न तु जीववत्कर्मवशेत्यर्थः । भूषणादीन् धत्ते बिभर्त्ति अत्र लिङ्गानि दिव्यविग्रहा आख्याः रामकृष्णादीनि नामानि यथा भूषणादीनि सत्यान्येव बिभर्त्ति तथा स्वविषयामपि प्रार्थनां सत्यां कृत्वा तेनैव सत्यमानेन सत्यभूतेन मीयते प्रमीयतेऽनेनेति मानं दृष्टान्तस्तेन सर्वस्वरूपेणास्त्रपार्षदादिस्वरूपेण सर्वदा सर्वकालेषु सर्वत्र सर्वेषु देशेषु सदा सर्वावस्थासु च पातु ॥३२।३३॥

एवं प्रार्थनायाः सत्यतां प्रतिज्ञाय पुनः सिंहावलोकनन्यायेन श्रीनृसिंहं त्रातारं प्रार्थयते । विदिक्ष्विति । विदिक्ष्वाग्नेयादिषु दिक्षु ऐन्द्र्यादिषु ऊर्ध्वायामधश्च दिशि शरीरस्यान्तर्बहिश्च भगवान्नारसिंहः पात्वित्यनुषङ्गः । तं विशिनष्टि । स्वनेन महाट्टहासेन ध्वनिना लोकस्य स्वमक्तलोकस्य भयं प्रहापयन्नपनुदन् स्वतेजसा ग्रस्तान्याच्छादितानि समस्तानि तेजांसि सूर्यादितेजांसि येन सः "न तत्र सूर्यो भाति न चन्द्रतारकम्" इति श्रुत्यर्थोऽनेनाभिप्रेतः ॥ ३४ ॥

एवमिन्द्रायेदं नारायणवर्मोपदिश्यैतन्मन्त्रप्रभावेण शत्रून् विजेष्यसीति वदन्नन्यमपि तत्प्रभावमाह विश्वरूप इत्याह । मघवन्निति । हे मघवन् ! इदं नारायणात्मकं वर्म तुभ्यमाख्यातं मयेति शेषः । कथम्भूतं येन नारायणवर्मणा दंशितः कवचितः अञ्जसा सुखेनैवासुरयूथपान् शत्रून्विजेष्यसि ॥ ३५ ॥

एतत्कर्म धारयमाणः अनुसन्दधत्पुमान् यं यं भीतं पुरुषं चक्षुषा पश्यति पदा वा संस्पृशेत्स भीतः साध्वसात्भयाद्विमुच्यते॥ ३६ ॥

विद्यां नारायणवर्मरूपमन्त्रविद्यां धारयतः पुंसः कुतश्चिदपि कर्हिचिदपि राजादिभ्यो व्याघ्रादिभ्यश्च भयं न विद्यते निर्भयो जायत इत्यर्थः ॥ ३७ ॥

एतद्विद्याप्रभावसूचकं कञ्चिदितिहासमाह । इमामिति सार्द्धैस्त्रिभिः । पूर्वस्मिन् काले कश्चित्कौशिकगोत्रजो द्विजः इमां विद्यामधारयत् स च योगधारणया "स्वपार्ष्ण्यापीड्य गुदम्„ इत्यादिना द्वितीयस्कन्धोक्तया स्वशरीरं मरुधन्वनि निरुदके देशे जहौ तत्याज ॥ ३८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"सर्वं खल्विदं ब्रह्म" इति श्रुतेः । भगवानेव यत्सदसद्वस्तु तत्तन्नियामकतया तद्रूप उच्यत इति यथा सत्यम् "तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवत्" इति श्रुतिविहितत्वादव्यभिचरितेन सत्येन "द्रव्यं कर्म च कालश्च स्वभावो जीव एव च" इत्यादि वाक्यं चशब्दगृहीतम् । एवशब्देन "सत्येनानेन मां देवः पातु विष्णुश्चतुर्भुजः" इति स्मारयति ॥ ३१ ॥

भूषणादीनामचेतनत्वेन चेतनवत्प्रार्थितदातृत्वं कथमित्याशङ्क्य तेषु हरेस्तत्तत्कार्यक्षमशक्तिस्वरूपेणावस्थानं यथा सत्यं तेन सत्येन हरिः पात्वित्याह । यथेति । ऐकात्म्यानुभावेन तत्तद्वस्तुस्थितरूपाणामेकात्मत्वापरोक्षज्ञानेन विकल्परहितः स्वगतभेदवर्जितोऽपि स्वमायया स्वरूपसामर्थ्येन स्वयमेव भूषणादिसंज्ञाः (१) स्वाधीनत्वाच्छक्तिशब्दवाच्या धत्त इति यथा यत्सत्यं तेन सत्येन अनेन सत्याख्यप्रमाणेन यथार्थेन सर्वज्ञत्वमपि सत्यत्वे प्रमाणमिति द्योतनाय विशेषणीकृतम् ॥ ३२ ॥

न केवलमायुधादिष्वेव सन्निहितत्वं किन्तु सर्वत्रापीति भावेनाह । सर्वैरिति ।

> एक एव परो विष्णुर्भूषाहेतिध्वजेष्वजः ।
> तत्तच्छक्तिस्वरूपेण स्वयमेव व्यवस्थितः ॥
> सत्येनानेन मां देवः पातु सर्वेश्वरो हरिः इति ॥

अतो भूषणादिषु विशेषतः सन्निहितत्वादुच्यत इति ज्ञातव्यम् ॥ ३३ ॥

मूलरूपस्य सर्वगतत्वं नावतारस्येति शङ्कां परिहरन् सर्वगतत्वं यथा सत्यं तेन सत्येन तथा नारसिंहः पात्विति तात्पर्याद्विशिष्याह । विदिक्ष्विति । प्रहापयन्निति स्वार्थे णिच् परिहरन्नित्यर्थः । स्वतेजसा ग्रस्तानि अभिभूतानि समस्तानि तेजांसि सूर्यादीनि येन स तथा ॥ ३४ ॥

मघवन् ! धनवन् ! दंशितः कवचितः ॥ ३५ ॥

साध्वसाद्भयात् ॥ ३६ ॥ ३७ ॥

कौशिकः । कुशिकगोत्रे विद्यमानः । योगधारणया योगाभ्यासेन । मरुधन्वनि निर्जलप्रदेशे ॥ ३८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथा येन प्रकारेण ॥ ३१ ॥

यथेति युग्मकम् । ऐकात्म्यानुभावानां केवलपरमस्वरूपशक्तिपराणां विकल्परहितः परमानन्दैकरसपरमस्वरूपतया स्फुरन्नपि यथा येन प्रकारेण स्वेषु स्वस्वामितया भजत्सु माया कृपा तया हेतुना स्वयं विचित्रशक्तिमयेन स्वस्वरूपेण

(१) भूषणास्त्रिलातच्छब्दवाच्याः ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सत्यभूतेन भूषणाद्याख्यया: शक्तीः शक्तिमयाविर्भावान् धत्ते प्रोवरयति । तेनैव विद्वदनुभवलक्षणेन सत्यप्रमाणेन तद्यदि सत्यं स्यादित्यर्थः । तैरेव भूषणादिलक्षणैः सर्वैः स्वरूपैर्विचित्र-स्वरूपाविर्भावैर्नः पातु अत एव विष्णुधर्मे बलिकृतचक्रस्तुतौ "यस्य रूपमनिर्देश्यमपि योगिभिरुत्तमैः" इत्याद्यनन्तरञ्च । भ्रमत-स्तस्य चक्रस्य नाभिमध्ये महीपते । त्रैलोक्यमखिलं दैत्यो ददृशवान् पुर्वविक्रम" इति तद्वेचमेव नवमे श्रीमदम्बरीषेणापि चक्रमिदं स्तुतमस्ति ।लिङ्गानि गरुडाकारध्वजादीनि अनेन यत् क्वचिदाक-स्मिकत्वमिव श्रूयते तदपि श्रीभगवदाविर्भाववज्ज्ञेयम् । अत्र तृतीये "चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे" इत्यपि सहायम् । अतो द्वादशेऽपि "कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः" इत्यादिकं विराडङ्गत्वेनोपासनार्थमभेददृष्ट्या दर्शितमेव यथा-श्रवं साक्षाच्छ्रीविग्रहगतत्वेनाप्यनुसन्धेयम् ।:तथाहि श्रीविष्णु-पुराणे "आत्मानमस्य जगतो निर्लेपमगुणामलम् । बिभर्ति कौस्तुभमणिस्वरूपं भगवान् हरिः" इति ॥ ३२——३६ ॥

तर्हि कथं विद्याधारिणः फलं नास्तीत्याशङ्कयाह । न कुतश्चि-दिति ॥ ३७—४२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यत् सदसद्रूपं जगत् तद्वस्तुतो भगवानेव तस्यैव बहिरङ्ग-मायाशक्तिकार्यत्वात् । सत्येन शपथेनानेन इति यद्येवंभूतो भग-वान् सत्यः स्यात् तदास्माकमुपद्रवा नश्यन्तु । "यदि वेदाः प्रमा-णम्" इतिवत् ॥ ३१ ॥

ऐक्यात्म्यं चिन्मयत्वादेकस्वरूपत्वमनुभावो लक्षणं यासां तासां भूषणादीनां शक्तीनां विकल्परहितः स्वस्य तासाञ्च चिद्रूपत्वात्तेभ्यो भेदरहितोऽपि भूषणाद्याख्यास्ताः शक्तीः यथा धत्ते तथा तेनैव सत्यमानेन नः पात्वित्यन्वयः । तत्र भूष-णानि कौस्तुभादीनि आयुधानि चक्रादीनि लिङ्गानि चतुर्भुज-त्वादीनि आख्या नामानि यासां ताः शक्तीः स्वरूपशक्तिवृत्ती-र्धत्ते । स्वमायया स्वरूपशक्त्या स्वरूपभूतया नित्यशक्त्या माया-ख्यया युतः "अतो मायामयं विष्णुं प्रवदन्ति मनीषिणः" इति माध्वभाष्यप्रमाणितश्रुतेः । तेनैव सत्यमानेन सत्यरूपप्रमाणेन भूषणायुधादीनि चतुर्भुजत्वादीनि च स्वरूपशक्तिमयत्वात् स्वेना-त्मनैव भगवान् धत्त इति यदि सत्यं स्यात्तदा सर्वैः "हरिर्विद-धात्" इत्यादिमन्त्रोक्तैः स्वरूपैः सर्वत्र देशे काले च सर्वगः सन् नः पातु इत्यस्मिन् मनोगतमास्तिक्यं भगवानेव जानातीति शपथो ज्ञापितः ॥ ३२ ॥ ३३ ॥

एवं नानास्वरूपैः स्वरक्षां समाप्यापि पुनरपि सर्वेषां प्रति-निधिना श्रीप्रह्लादेनैकेनैव नृसिंहस्वरूपेण स्वरक्षामन्त्रमेकमाह । विदि-क्षु दिक्षु । पात्वित्यनुषङ्गः । यद्वा । नारसिंहः नरसिंहभक्तः प्रह्लादः अन्ये श्रीनृसिंहनामगर्जनेन स्वतेजसा ग्रस्तानि समस्तानां त्रैलोक्यपदस्थजलवाय्वग्न्यादीनां तेजांसि प्रभावा येन सः॥३४॥

दंशितः कवचितः ॥ ३५ ॥

सोऽपि साध्वसाद्विमुच्यते किमुत देहे तद्धारयिता-मायः ॥ ३६—३८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत्ते सदसच्च स्थूलं सूक्ष्मं च जडमजडं तत्सर्वं भगवानेव सर्वचेतनाचेतनस्य तदंशत्वाविना तत्पृथक्स्थितिप्रवृत्त्याद्यभा-वात् ॥ ३१ ॥

ऐकात्म्यं स्वस्य भगवदंशत्वेन तदनतिरिक्तत्वं तस्यानुभा-वोऽनुचिन्तनं येषां विकल्पो भेदः पृथगवस्थानं तद्रहितः सत्य एव यथा स्वयं च सर्वात्मा सत्य एव यथा भूषणानि कौस्तु-भादीनि आयुधानि सुदर्शनादीनि लिङ्गानि नृसिंहादीनि आख्या ब्रह्मनारायणादीनि नामानि शक्तीः प्रकृतिकालाद्याः सत्या एव धत्ते यथा ॥ ३२ ॥

तथा तेनैव सत्यभूतेन मानेन प्रमाणेन सर्वैः स्वरूपैः स्वकी-येषु दासेषु या माया कृपा तया नोऽस्मान् पातु ॥ ३३ ॥

एकैकस्वस्वरूपस्य नाममात्रं येन केनाप्युच्चारितं लोकस्य यस्य कस्यापि संसारभयं सदा सर्वत्र निराकरोतीति द्योतयितुं पुनरपि नृसिंहः प्रार्थ्यते । विदिक्ष्विति । विदिक्ष्वादिषु देशेषु समन्तात्कालयोगतः सर्वेषु कालेषु इत्यर्थः । अन्तः शुचिजन्मादौ बहिरशुचिजन्मादौ च लोकस्य वर्णाश्रमादिनिरपेक्षस्य भयं भय-मात्रं सर्वभयगर्भं संसारभयं स्वनेन हरिः इत्येवमादिना विभ-क्त्यादिसम्बन्धवर्जितेनापि कुतश्चिन्निर्गतेनापि प्रहापयन् विराजते इति शेषः ॥ ३४ ॥

वर्म कवचं येन कवचेन दंशितः कवचितः ॥ ३५ ॥

साध्वसाद्भयात् ॥ ३६ ॥ ३७ ॥

मरुधन्वनि निरुदके देशे ॥ ३८ ॥

———

भाषा टीका ।

यथार्थ से सत् असत् जो कुछ है सो भगवान् ही जैसे हैं तिसी सत्य से सब उपद्रव नाश को प्राप्त होवैं ॥ ३१ ॥

जैसे सब जगत् को ब्रह्म भावना करने वालों को लौकिक पदार्थों के भेद से रहित होने परभी स्वयं भूषण मूर्ति आयुध नाम की शक्तियों को अपनी ज्ञान माया से धारण करते हैं ॥ ३२ ॥

तिसी सत्य प्रमाण से सर्वज्ञ भगवान् हरि सर्वगामी सदा सर्वत्र अपने सब स्वरूपों से हमारी रक्षा करें ॥ ३३ ॥

विदिशाओं मे दिशाओं मे ऊपर नीचे चारों ओर बाहर भीतर नारसिंह भगवान् अपने तेजसे सब के तेजों के ग्रसन करने वाले शब्द से लोक भय को नाश करने वाले हैं सो हमारी रक्षा करें ॥ ३४ ॥

हे इन्द्र ! यह नारायण स्वरूप कवच मैंने तुम्हारे आगे

तस्योपरि विमानेन गन्धर्वपतिरेकदा ।
ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३९ ॥
गगनान्न्यपतत् सद्यः सविमानो ह्यवाक्शिराः ।
स वालखिल्यवचनादस्थीन्यादाय विस्मितः ।
प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥ ४० ॥

श्रीशुक उवाच ।

य इदं शृणुयात् काले यो धारयति चादृतः ।
तं(१) नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥ ४१ ॥
एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ।
त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां षष्ठस्कन्धे नारायणवर्म नामा-ऽष्टमोऽध्यायः ॥ ८ ॥

भाषा टीका ।

कहा है जिस को पहरकर तुम असुर यूथपतियों को अनायास से जीतोगे ॥ ३५ ॥

इस कवच को धारण करके नेत्र से जिस जिस को देखे या जिस जिस को पाद से छूवै सो पुरुष शीघ्रही सब भयों से मुक्त होजाता है ॥ ३६ ॥

इस विद्यास्तोत्र को जो पुरुष धारण करै तिस से उस पुरुष को कहीं से भी राजा चोर ग्रहादि व्याघ्रादि इनों से कभी भी भय नहीं होता है ॥ ३७ ॥

पूर्व काल मे कोई कौशिक नामा ब्राह्मण इस विद्या को धारण करता था फिर योग धारणा से उसने निर्जल देश मे शरीर का त्याग किया ॥ ३८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यत्र द्विजस्य क्षयो देहत्यागस्तस्योपरि ॥ ३९ ॥

सद्यस्तत्क्षणादेव गगनान्न्यपतत् । पाठान्तरे अङ्गनाभिः सह । वालखिल्योपदेशात्तस्यास्थीनि प्रास्य प्रक्षिप्य विस्मितः सन् स्वं धाम गन्धर्वलोकं जगाम ॥ ४०—४१ ॥

अधिगतः प्राप्तः सन् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् अष्टमोऽध्यायः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य त्यक्तस्य देहस्योपरिष्टाच्चित्ररथाख्यः कश्चिद्गन्धर्वपतिः स्त्रीभिः परिवृतः विमानेन कदाचिद्ययौ यत्र द्विजस्य क्षयो देहत्यागस्तत्र चित्ररथो विमानसहितो गगनादवाक्शिरा अधोमुखः सद्यो न्यपतत् । पुनरुत्थाय वालखिल्यऋषेः वचनात्कौशिकस्यास्थीन्यादाय शल्यानि गृहीत्वा प्राचीसरस्वत्यां नद्यां प्रास्य प्रक्षिप्य स्नात्वा विस्मितः अहो एतद्विद्याप्रभाव ईदृश इति विस्मितः । स्वं धाम स्थानमन्वगादिति ॥ ३९ ॥ ४० ॥

एवंविधानेकप्रभावशालिनो वर्मणः श्रवणधारणाभ्यां न कुतश्चिद्भयं भवतीष्टप्राप्तिश्च भवतीत्याह मुनिः । य इति द्वाभ्याम् । यः पुमानिदं वर्म काले भयागमनकाले शृणुयाद्यश्चादृतः कर्णिकः आदरयुक्तः धारयति वा तं सर्वाणि भूतानि कूष्माण्डादीनि न पश्यन्ति सर्वतो भयान्मुच्यते ॥ ४१ ॥

शतक्रतुरिन्द्रो विश्वरूपादेतां विद्यामधिगतः प्राप्तः सन् युद्धेऽसुरान्दानवान् विजित्य निर्जित्य त्रैलोक्यलक्ष्मीं बुभुजे अनुबभूव ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् अष्टमोऽध्यायः ॥ ८

( १ ) न पश्यन्ति इति श्री वीर० ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

द्विजचयः द्विजमरणम् ॥ ३९ ॥

प्रास्य निरस्य ॥ ४०—४१ ॥

एतद्धारयमाण इत्यादिना यत् फलमुच्यते तस्य कस्माद्वैलक्षण्यदर्शनमिति चेदुच्यते गुरुशिष्ययोर्मिथो योग्यतावैकल्यात् योग्यत्वेऽपि "नासम्वत्सरवासिने प्रब्रूयात्" इति विधेर्गुरुकुलवासापूर्त्या गुरुप्रसादाभावेन लोकोपकारादिना वा गुरोः प्राप्ता विद्या शिष्यस्य यथोक्तफलदा न स्यात्।

गुरुशिष्ययोरयोग्यत्वाद्गुरुसद्वृत्तेरपूर्तितः।
अप्रसादाद्गुरोर्विद्या न यथोक्तफलप्रदा ॥

इत्युक्तेः। तर्हि गुरूपदेशमन्तरेण यथालिखितपाठादिना प्राप्ता फलदा स्यादिति चेन्न। गुरोः प्राप्ताया फलप्रदत्वात् "विद्या कर्माणि च सदा गुरोः प्राप्ताः फलप्रदाः। अन्यथा नैव फलदाः" इत्युक्तेः तस्मात्प्रसन्नगुरुदत्ता यथोक्तफलदा इति मन्तव्यम् "प्रसन्नोक्ताः फलप्रदाः" इति वचनात्। अत उक्तफलसाकल्याहष्टया नाशङ्क्यमिति भावः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

द्विजस्य चयो देहत्यागः ॥ ३९ ॥

प्राचीसरस्वत्यामिति' पुंवद्भावाभाव आर्षः। स्वं धाम सविमानोऽन्यथा गन्तुं नैवापारयिष्यदिति भावः ॥ ४०—४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षष्ठेऽयमष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

द्विजस्य कौशिकस्य चयो देहत्यागः ॥ ३९ ॥

वालखिल्यस्य वचनादाज्ञातः प्रास्य प्रक्षिप्य स्वं धाम गन्धर्वलोकम् ॥ ४०—४२ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टमाध्यायार्थप्रकाशः ॥ ८ ॥

---

भाषा टीका।

तिसी के ऊपर होकर एक समय पर चित्ररथ नामा गन्धर्वों का पति स्त्रियों के सहित विमान पर बैठकर जहां पर ब्राह्मण का शरीर नष्ट हुआथा उहां होकर गया ॥ ३९ ॥

तब वह गन्धर्व विमान सहित नीचे को मस्तक होकर तत्काल गिरपडा फिर वालखिल्य ऋषि के वचन से उस ब्राह्मण के अस्थियों को लेजाकर प्राची सरस्वती नदी में डाल कर स्नान किया तब विमान पर बैठ अपने लोक को गया ॥ ४० ॥

श्रीशुकदेवजी बोले किसी काल में भी इस स्तोत्रको जो सुनै और आदर से धारण करै उस पुरुष को सब भूत नमस्कार करते हैं सब भयों से वह मुक्त होजाता है ॥ ४१ ॥

इन्द्र ने विश्वरूप से इस विद्या को प्राप्त होकर युद्ध में असुरों को जीतकर तीनों लोककी लक्ष्मी का भोग किया ॥४२॥

इति श्रीभागवत षष्ठस्कन्ध आठमे अध्याय का
भाषानुवाद लक्ष्मणाचार्यकृत
समाप्त ॥ ८ ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे अष्टमोऽध्यायः समाप्तः ॥ ८ ॥

## ॥ नवमोऽध्यायः ॥

—○:※:○—

### श्रीशुक उवाच ।

तस्यासन् विश्वरूपस्य शिरांसि त्रीणि भारत ! ।
सोमपीथं सुरापीथमन्नादमिति शुश्रुम ॥ १ ॥
स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः ।
अवदद्यस्य पितरो देवाः सप्रश्रयं नृप ! ॥ २ ॥
स एव हि ददौ भागं परोक्षमसुरान् प्रति ।
यजमानोऽवहद्भागं मातृस्नेहवशानुगः ॥ ३ ॥
तद्देवहेलनं तस्य धर्मालीकं सुरेश्वरः ।
आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा ॥ ४ ॥
सोमपीथं तु यत्तस्य शिर आसीत् कपिञ्जलः ।
कलविङ्कः सुरापीथमन्नादं यत् स तित्तिरिः ॥ ५ ॥
ब्रह्महत्यामञ्जलिना जग्राह यदपीश्वरः ।
संवत्सरान्ते तदघं भूतानां स विशुद्धये ।
भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः ॥ ६ ॥
भूमिस्तुरीयं जग्राह खातपूरवरेण वै ।
ईरिणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते ॥ ७ ॥
तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः ।
तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते ॥ ८ ॥
शश्वत् कामवरेणांहस्तुरीयं जगृहुः स्त्रियः ।
रजोरूपेण तास्वंहो मासि मासि प्रदृश्यते ॥ ९ ॥
द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् ।
तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवमे विश्वरूपे तु हते शक्रेण कोपतः ।
त्वष्ट्रा चोत्पादिते वृत्रे भीतैर्देवैर्हरेः स्तुतिः ॥ १ ॥

सोमस्य पीथं पानं यस्मिन् । एवं सुरापीथम् । अन्नमत्तीत्यन्नादम् । अत्र "विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्" इत्यादिश्रुतिरनुसन्धेया ॥ १ ॥

तस्यासुरपक्षपातमाह । स वा इति द्वाभ्याम् । प्रत्यक्षं प्रकटं यथा भवति तथा सविनयं देवेभ्यो हविर्भागमिन्द्रायेदमग्नय इदमित्युच्चैरवदत् । अत्र हेतुः । यस्य पितरो देवाः सः ॥ २ ॥

असुरेभ्यस्तु परोक्षं गुप्तं भागं ददौ । तदेवाह । देवान् यजमानोऽसावसुरान् प्रति भागमवहत् केनाप्युपायेन प्रापयामास । यतो मातृस्नेहवशेनासुराननुगच्छति ॥ ३ ॥ ४ ॥ ५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तां वारयितुं समर्थस्तथापि जग्राह। सम्वत्सरं तथैव स्थित्वा सम्वत्सरान्ते भूताक्रोशभीतः सन् भूतानां मध्ये विशुद्धये लोकापवादपरिहाराय स हरिरिन्द्रो भूम्यादिभ्यस्तदघं व्यभजद्विभज्य ददावित्यन्वयः॥ ६॥

तुरीयं चतुर्थं भागम्। खातस्य गर्तस्य पूरः पूरणं तेन वरेण यदि खातपूरणं खत एव भविष्यति तर्हि ग्रहीष्यामीत्येवं वरेण सम्बन्धेन जग्राहेत्यर्थः॥ ७॥

ईरिणमूषरम्। अत एवोपरेऽध्ययनादि निषिद्ध्यते छेदे सति पुनःरोहः प्ररोहो भवत्विति वरेण। निर्यासरूपेण ब्रह्महत्याया दृश्यत्वान्निर्यासो न भक्ष्यः॥ ८॥

शश्वत्कामवरेण यावत्प्रसवं गर्भानुपघातेनैव सम्भोगवरेण। रज इति। अत एव रजोदर्शने तत्सङ्गादि न कार्यम्॥ ९॥

द्रवभूयोवरेण यस्मिन्द्रव्ये क्षीराद्यापो मिश्रा भवेयुस्तस्य द्रव्यस्याधिक्यं स्यादिति वरेण। यद्वा। स्वस्यैव निर्झरोद्गमादिना द्रवभूयस्त्ववरेण। द्रवभूय इति पाठेऽप्ययमेवार्थः। यद्वा। द्रवभूयस्त्वं सांसिद्धिकद्रवत्वं तेन वरेण। अस्य विभागस्य "विश्वरूपो वै त्वाष्ट्रः" इत्यस्यां श्रुतावुक्तः। तद्विभागफलमाह। तत्पापं हरति प्रकाशयतीति कः। क्षिपन्। बुद्बुदादिजलाद् बहिः प्रक्षिपन्नित्यर्थः। यद्वा क्षिपद्। जलं पापं हरति आहरति गृह्णातीत्यर्थः। "अयं च ... पापं न परिचक्ष्याः" इत्यादिश्रुत्यर्थ उक्तः। पाठान्तरे हरिरिति क्षिपमिन्द्रपापम्॥ १०॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं देवैः पुरोहितत्वेन वृतस्तत्प्रियं कुर्वन्नपि विश्वरूपोऽसुरपक्षपातं "यदि चमिष्यध्वमुतास्य कर्म" इति ब्रह्मणा ... अकरोदिति वक्तुमुपक्रमते मुनिः। तस्येति। तस्य विश्वरूपस्य हे भारत! त्रीणि शिरांस्यासन् बभूवुः। तत्रैकं शिरः सोमपीथं सोमपीथाख्यं सोमस्य पीथः पानं यस्य सोमं पिबतीति वा सोमपीथमित्यन्वर्थं नाम। तथा सुरापीथमन्यच्छिरः। अन्नमत्तीत्यन्नादमिति तृतीयं शिर इति शुश्रुम। वेद इति शेषः। तथा च श्रुतिः "विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्स्वस्रीयोऽसुराणां तस्य त्रीणि शीर्षाण्यासन् सोमपानं सुरापानमन्नादम्" इति॥ १॥

स विश्वरूपो बर्हिषि यज्ञे प्रत्यक्षं प्रकटं यथा भवति तथा सविनयं देवेभ्यो हविर्भागमिन्द्रायेदमग्नय इदमित्युच्चैरवदत्। तस्य पितरः। यस्य विश्वरूपस्य पितरो देवाः॥ २॥

स विश्वरूपः यद्यसुरान्प्रति परोक्षं यथा तथा भागं ददौ। स्नेहादित्याह। देवान् यजमानोऽसौ विश्वरूपो मातृप्रयुक्तो यः स्नेहो मातृस्नेहः तद्वशं गतः असुरान्प्रति भागमवहत्प्रापयत्॥ ३॥

तद्विश्वरूपस्य देववञ्चनात्मकमलीकं कपटं कर्मालक्ष्य ... सुरेश्वर इन्द्रस्तरसा आशु भीतस्तस्य विश्वरूपस्य ... शिरांसि क्रोधेनाच्छिनच्चिच्छेद॥ ४॥

तस्य यत्सोमपीथाख्यं छिन्नं शिरस्तत्कपिञ्जलः पक्षिविशेषः आसीत्। सुरापीथाख्यं तु कलविङ्काख्यः पक्षी आसीत्। यदन्नादाख्यं तत्तित्तिरिः पक्षी आसीत्॥ ५॥

यद्यपि, पद्यपीश्वरः ब्रह्महत्यां वारयितुं समर्थोऽपि ब्रह्महत्यां तन्मूर्तिभूतं पापमञ्जलिना जग्राह। स हरिः इन्द्रः वत्सरपर्यन्ते हे ब्रह्महन्निति सम्बोधयतां भूतानां जनानां मध्ये आत्मनो विशुद्धये भूताक्रोशनिवृत्तये। भूतांशमाविशुद्धय इति पाठान्तरं तत्राप्ययमेवार्थः। भूम्यादिभ्यस्तत्पापं चतुर्धा व्यभजत्। चतुर्धा विभज्य भूम्यादिषु चतुर्ष्वेकैकं भागं निहितवानित्यर्थः॥ ६॥

तत्र ब्रह्महत्यायास्तुरीयं चतुर्थं भागं भूमिः खातपूरवरेण जग्राह। खातस्य गर्तस्य पूरः पूरणं तेन वरेण। यदि मे खातः स्यात्तर्हि खत एव पूरणं भवत्विति एवं रूपेण वरग्रहणपूर्वकं जग्राहेत्यर्थः। भूम्या यद् ब्रह्महत्याया रूपं तदीरिणमूषरम् ऊषररूपेण दृश्यत इत्यर्थः॥ ७॥

तथा ब्रह्महत्यायाश्चतुर्थमंशं द्रुमाश्छेदरोहेण वरेण जगृहुः। छिन्नप्रदेशस्य पुनः प्ररोहणरूपेण वरेणेत्यर्थः। तेषु द्रुमेषु निर्यासरूपेणापि ब्रह्महत्या प्रदृश्यते॥ ८॥

स्त्रियो योषितः शश्वत्कामवरेण आप्रसवाद्भोगयोग्यत्ववरेण अंहसः ब्रह्महत्यायाः तुरीयं चतुर्थं भागं जगृहुः। तासु स्त्रीषु रजोरूपेण रुधिररूपेणांहः पापं मासि मासि प्रदृश्यते॥ ९॥

आप अम्बूनि द्रवभूयोवरेण द्रवाधिक्यरूपेण वरेण हत्यायास्तुरीयं मलं पापं जगृहुः। तास्वप्सु तद्धरेरिन्द्रस्य किल्बिषं बुद्बुदफेनाभ्यां बुद्बुदफेनरूपेण दृष्टं दृश्यत इत्यर्थः॥ १०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ब्रह्माद्यन्यनामरापरिहार्यं यत्तत्परिहर्तृत्वमहिमा यया तेन हरावभिवृद्धनिशितभक्तिकुठारस्य योग्याधिकारिकरगतस्य संसारतरुनिर्मूलनपटुत्वाभिप्रायतेऽस्मिन्नध्याये। तत्रादौ बीजदोषस्वभावो दुःसह इति प्रकटयितुं विश्वरूपस्य वितत्नेऽपि रचनाजनितत्वेन दोषित्वेनासुरपक्षपातं तावदाह। तस्येति। सोमं सुरां पिबतीति सोमपीथं सुरापीथम्॥ १॥

भागं हविर्भागम्। यस्य विश्वरूपस्य॥ २॥

परोक्षमज्ञातवन्मातुः रचनायाः स्नेहस्य वशः॥ ३॥

धर्मालीकं धर्मदोषं धर्मकपटं वा भयमात्मानमपि हन्तीति भीतः॥ ४॥ ५॥

यदपि यद्यपि इन्द्रो ब्रह्महत्यादोषनिवारणे ईश्वरः समर्थः। तथाप्यञ्जलिना ब्रह्महत्यां जग्राहेत्यन्वयः। भूतांशमाविशुद्धये लोकापवादपरिहाराय भूतहिंसापापशोधनार्थमिति वा हरिरिन्द्रः तद्दत्तो विष्णुर्वा॥ ६॥

खातस्य खन एव पूर्तिः स्यादिति खातपूरवरस्तेन हारदत्तेन ईरिणम् ऊषरं लवणोपस्करम् इत्यर्थः॥ ७॥

छेदे रोहः पुनर्वर्धनं तेन वरेण॥ ८॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शश्वत् कामेन निरन्तरविषयसंवाभिलाषलक्षणेन वरेण रजोरूपेण रागरूपेण ॥ ९ ॥

द्रव्याणां पञ्चानां भूतानां मध्ये स्वभूयस्त्वलक्षणेन वरेण "तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः" इत्युक्तेः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्य शीर्षाण्यच्छिनदिति वृहस्पत्यतिक्रमेण देवगणद्रोहेण सर्वशक्तिहानात् ॥ १—४ ॥

कपिञ्जलश्चेति तित्तिरिः ॥ ५ ॥

ब्रह्महत्याभित्यर्द्धकम् । यद्यपीश्वरस्तथापि अञ्जलिना साक्षात् स्वापराधस्वीकारेण जग्राह । तादृशपापस्य तादृशेनाप्यपहरणीयत्वात् । भूतानां विशुद्धय इत्यन्तस्तु सूक्ष्मरूपेण स्थितमेवेत्यर्थः । यदेतत् वृत्रहत्यामपि जनयिष्यतीति भावः ॥ ६ ॥

खातपूरवरेणेति यद्यपि तत्र पूर्वमपि वृष्ट्यादिना मृत्तिकादिपातेन पूरणं सम्भवति तथापि वरेणानेन स्वतो वृद्ध्यापीति ज्ञेयम् ॥ ७—९ ॥

द्रव्यशब्देनात्र द्रव एवोच्यते भावे कृत्यप्रयोगात् स्वार्थे तद्धिताद्वा । टीकायां मिश्रा इति । इतः पूर्वं मिश्रा एव न भवेयुरिति गम्यम् । निर्झरोद्गमेति । इतः पूर्वं निर्झरोद्गमाविकमेव नासीदिति गम्यम् । द्रवभूय इति पाठे सांसिद्धिकद्रवत्वमिति । इतः पूर्वं किञ्चिद्घनमासीदिति लक्ष्यते ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विश्वरूपमहन् शक्रस्त्वष्ट्रा वृत्तमजीजनत् ।
देवैस्तुतो हरिर्वज्रप्राप्तिं नवम ऊचिवान् ॥ ० ॥

सोमस्य पीथं पानं यस्मिन् तत् । अन्नमत्तीति अन्नादम् । अत्र "विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्" इति श्रुतिरनुसन्धेया ॥ १ ॥

तस्यासुरपक्षपातमाह । स वा इति द्वाभ्याम् । प्रत्यक्षं प्रकटं यथा भवति तथा सविनयं हविर्भागं इन्द्रायेदमग्नये इदमिति उच्चैरददत् । तत्र हेतुः । यस्य पितरो देवाः ॥ २ ॥

परोक्षं देवानां दृष्टिं वञ्चयित्वा छिन्नचारं नीचैरित्यर्थः । ददौ दत्त्वा च भागमवहत् परोक्षमेव प्रापयामासेत्यर्थः । अत्र हेतुः । मात्रिति । यस्यासुरा मातामहा इत्यर्थः । भीतः असुरवलोद्भवं विभाव्येत्यर्थः ॥ ३—५ ॥

आकस्मिकाभ्यां क्रोधभयाभ्यां तं हत्वैवाहो हन्त महापापं वुद्धिपूर्वकमेवाकरवं महानीचो न जाने कुत्र वा नरके पतिष्यामि तदेतत् समुचितं फलं शीघ्रमेव लभेयेत्यनुतापपुञ्जे निममज्जेत्याह । ब्रह्मेति । स्वतेजसा मां ज्वालयेति भावः । यद्यस्मात् आधिअधिकृतभक्त ईश्वरविभूतिरूपस्तस्मात् कथमेवं विक्रमेणानुतापं न कुर्यादिति भावः । एवमनुतापेन क्षीणपापवेगः सम्वत्सरपर्यन्तं तथैव विगीत एव स्थित्वा तदन्ते भूतानां सर्वेहस्त्यै भूतानां पृथिव्यप्तेजोवायूनां ब्रह्महत्यैवापविश्रीकृतानां विशुद्धये तदर्थं चतुर्द्धा व्यजभत् । आकाशस्यापाविद्व्यासम्भवात् चतुर्णामेव भूतानां शुद्धये चतुर्द्धेति न्यायः । तेनान्तःकरणमघन्तु सूक्ष्मरूपेण तस्थावेव । यदेव वीजं पुनरपि वृत्रवधेन ब्रह्महत्यां जनयिष्यतीति भावः ॥ ६ ॥

तुरीयं चतुर्थभागं खातस्य गर्त्तस्य पूरः पूरणं तेन वरेण यदि खातपूरणं स्वत एव भविष्यति तर्हि ग्रहीष्यामीत्येवं भावबन्धेन जग्राहेत्यर्थः । ईरिणमूषरमत एवोपरे अध्ययनादि निषिध्यते ॥ ७ ॥

छेदे सति पुनर्विरोहः प्ररोहो भवत्विति वरेण । निर्यासोऽत एव निर्यासोऽभक्ष्यः ॥ ८ ॥

शश्वत्कामः बहुसम्भोगेऽप्यलम्बुद्ध्यभावः । गर्भवत्या अपि गर्भानपकारकसंभोगश्च स एव वरस्तेन । रज इति । अत एव रजस्वला अव्यवहार्य्या ॥ ९ ॥

द्रव्याणां क्षीरादीनां भूयः भूयस्त्वं तस्मात् सम्पर्केण बहुतरत्वमेवास्माकं वरस्तेन द्रवभूय इति पाठे द्रवभूयस्त्वं सांसिद्धिकद्रवत्वं तेन तास्वप्सु बुद्बुदफेनाभ्यां तन्मलं दृश्यम् । अत एव तत् बुद्बुदादिकं क्षिपन् दूरीकुर्वन् एव हरति आहरति । न तु बुद्बुदादियुक्ता इत्यर्थः । यदि च तद्युक्ता एव अपः कश्चिदाहरति तदा पापमेव हरतीति भावः ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इन्द्रेण स्वाहिताय पौरोहित्ये वृतस्य विश्वरूपस्य किञ्चिदहितकर्तृत्वं धस्तद्वधसन्तप्तेन त्वष्ट्रा इन्द्रवधाय वृत्र उत्पादितस्तद्भयनिवृत्तये देवैर्विष्णुः प्रार्थित इति नवमेऽध्याये वर्ण्यते । तस्येति । सोमस्य पीथं पानं यस्मिन् तत् । अन्नमत्तीति तत् ॥ १ ॥

बर्हिषि यज्ञे देवेभ्यो हविर्भागं प्रत्यक्षं प्रकटमुच्चैरददत् ॥ २ ॥

स एव हि असुरान् प्रति तु परोक्षमप्रकटं हविर्भागं ददौ तदेव हेतुप्रदर्शनपूर्वकमातृस्नेहवशानुगः यजमानश्च अतो भागमवहत् असुरानपि प्रापयामासेत्यर्थः ॥ ३ ॥

धर्मालीकं धर्मे कपटम् ॥ ४ ॥ ५ ॥

ईश्वरः समर्थोऽपि जग्राह समर्थेनापि ब्रह्मवधफलं भोक्तव्यमेवेत्यर्थः ॥ ६ ॥

खातस्य गर्त्तस्य पूरणं स्वतो भवत्विति वरेण तुरीयं चतुर्थभागं जग्राह ॥ ७ ॥

छेदेऽपि पुनर्विरोहो भवत्विति वरेण ॥ ८ ॥

शश्वत् कामवरेण अनृतावपि भोगानुच्छेदवरेण अंहः पापम् ॥ ९ ॥

द्रवभूयोवरेण द्रवस्य शैल्येन लोपितस्य भूयः पुनर्भूयस्त्वं तद्वरेण तुरीयं भागमापः जगृहुः । तन्मलं तासु बुद्बुदफेनाभ्यां दृष्टं दृश्यते । अत एव तत् बुद्बुदादिकं ब्रह्महत्याविकृतत्वात् क्षिपन् अपसारयन् अपहरति गृह्णाति जलं जन इति शेषः १०॥

---

हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे ।
इन्द्रशत्रो ! विवर्धस्व मा चिरं जहि विद्विषम् ॥ ११ ॥
अथान्वाहार्यपचनादुत्थितो घोरदर्शनः ।
कृतान्त इव लोकानां युगान्तसमये यथा ॥ १२ ॥
विष्वग्विवर्धमानं तमिषुमात्रं दिने दिने ॥ १३ ॥
दग्धशैलप्रतीकाशं सन्ध्याभ्रानीकवर्चसम् ।
तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् ॥ १४ ॥
देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी ।
नृत्यन्तमुन्नदन्तं च चालयन्तं पदा महीम् ॥ १५ ॥
दरीगम्भीरवक्त्रेण पिबता च नभस्तलम् ।
लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम् ॥ १६ ॥
महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः ।
वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश ॥ १७ ॥
येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना ।
स वै वृत्र इति प्रोक्तः पापः परमदारुणः ॥ १८ ॥

भाषा टीका ।

श्रीशुकदेवजी बोले हे भारत परीक्षितजी ! उस विश्वरूप के तीन मस्तक थे एक सोमपीथ एक सुरापीथ एक अन्नाद ऐसा हमने सुना है ॥ १ ॥

हे नृप ! वह विश्वरूप यज्ञ करते समय में अपने पितर देवतों को ऊँचे स्वर से पुकार कर भाग निवेदन करता था और विनय करता था ॥ २ ॥

उसी ने माता के स्नेह के वश होकर देवतों के यजन करने के समय में भी छिपा कर धीरे से असुरों को भी भाग अर्पण करदिया ॥ ३ ॥

इन्द्र ने उस विश्वरूप के कपट सहित देवतों की अवज्ञा को जानकर असुरों के बढने से डर कर शीघ्र से क्रोध करके उस के मस्तकों को काटदिया ॥ ४ ॥

उस का जो सोमपीथ मस्तक है सो कपिञ्जल पक्षी होगया जो सुरापीथ सो कलविङ्क पक्षी होगया जो अन्नाद था सो तित्तिरि पक्षी होगया ॥ ५ ॥

यद्यपि इन्द्र सब समर्थ हैं तौभी ब्रह्महत्या का उन को अञ्जलि से ग्रहण करना पडा फिर एक वर्ष में शुद्धि होने के वास्ते उस पाप के चार भागकर के इन्द्र ने पृथिवी जल वृक्ष स्त्री इन को बांट दिया ॥ ६ ॥

जमीन के गढेलों के भरजाने के वर माग कर पृथिवी ने पाप का चौथा हिस्सा लेलिया सोई पृथिवी के ऊपर भूमि मे ब्रह्महत्या का चिन्ह दीखता हैं ॥ ७ ॥

कटे घाव के भरजाने के वर से वृक्षों ने चौथा भाग लिया उस ब्रह्महत्या का रूप वृक्षों मे गोंद रूप से दीखता है ॥ ८ ॥

निरन्तर काम भोग की इच्छा के वर मांग कर चतुर्थ भाग को स्त्रियों ने ग्रहण किया सो स्त्रियों मे महिना महिना मे रज रूप से ब्रह्महत्या दीखती है ॥ ९ ॥

पदार्थ को बढा देने के वरसे चौथे भाग को जलों ने ग्रहण किया सो जल में फेन बबूला रूप से ब्रह्महत्या दीखती है ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इन्द्रायेन्द्रं हन्तुम् । शत्रवे शत्रुरूपाय । तदाह । इन्द्रशत्रो विवर्धस्वेति । अत्र चेन्द्रशत्रुपदस्याद्युदात्तत्वात् "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इति स्मृतेर्बहुव्रीहिलक्षणापत्त्या इन्द्र एव तस्य शत्रुरभूत् । तदुक्तं श्रुत्या । "यदब्रवीत्स्वाहेन्द्रशत्रुर्वर्धस्व इति तस्मादस्येन्द्रः शत्रुरभवत्" इति । तथा च शिक्षायाम् ।
मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥
इति ॥ ११ ॥

अन्वाहार्यपचनाद्दक्षिणाग्नेः तं वीक्ष्य वित्रस्ता लोका दश

तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः ।
स्वैः स्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत्तानि कृत्स्नशः ॥ १९ ॥
ततस्ते विस्मिताः सर्वे विषण्णा ग्रस्ततेजसः ।
प्रत्यञ्चमादिपुरुषमुपतस्थुः समाहिताः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दिशो विदुद्रुवुरिति पञ्चमेनान्वयः ॥ १२ ॥

कथम्भूतम् । विष्वक्समन्तत इषुविक्षेपमात्रं प्रतिदिनं वर्धमानम् ॥ १३ ॥

दग्धशैलप्रतीकाशं कृष्णवर्णम् । सन्ध्याभ्रानीकवद्वर्चो दीप्तिर्यस्य तं तप्तताम्रवच्छिखाः श्मश्रूणि च यस्य । मध्याह्नार्कवदुग्रे लोचने यस्य ॥ १४ ॥

रोदसी आरोप्येवेत्यर्थः ॥ १५

दरीवद्गम्भीरेण वक्त्रेण मुहुर्मुहुर्जृम्भमाणमित्यन्वयः । कथम्भूतेन । नभस्तलं पिबता ऋक्षाणि जिह्वया लिहता भुवनत्रयं ग्रसता ॥ १६ ॥

महता विस्तीर्णेन रौद्रा दंष्ट्रा यस्मिन् ॥ १७ ॥

वृत्रनाम निर्वक्ति । येनावृता इति । त्वाष्ट्री मूर्तिर्यस्य तमसस्तेन तथा च श्रुतिः "स इमाँल्लोकानावृणोत्तद्वृत्रस्य वृत्रत्वम्" इति ॥ १८ ॥

अग्रसद्भक्षितवान् ॥ १९ ॥

ग्रस्तं तेजो येषां प्रत्यञ्चमन्तर्यामिणं त्रिभुवनस्य तेन व्याप्तत्वात्क्वापि गमनासम्भवात्तत्रैव स्थित्वा तुष्टुवुरित्यर्थः ।

महाभये परित्राणमन्यतो न भवेदिति ।
हरिमेव प्रपद्यन्ते सुराः शरणमातुराः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्त्वष्ट्रा इन्द्रेण हतः पुत्रो यस्य तादृशः इन्द्राय शत्रवे जुहाव इन्द्रायेति तादर्थ्ये चतुर्थी तदर्थश्चात्र तन्निवृत्तिरर्थशब्दस्य निवृत्तेरपि वाचकत्वात् । यथा मशकार्थो धूमः मशकेभ्यो धूम इति । इन्द्रविनाशार्थमजुहोदित्यर्थः । हुत्वैवं प्रार्थितवानित्याह । इन्द्र शत्रो इति । इन्द्रस्य शत्रो माचिरमाशु विवर्धस्व स्वविद्विषमिन्द्रं जहि विनाशयेति ॥ ११ ॥

अथ होमानन्तरमन्वाहार्यपचनाद्दक्षिणाग्नेर्घोरदर्शनोऽसुर उत्थितः उदितः तं विशिनष्टि । यः लोकानां युगान्तसमये प्रलये कृतान्तो मृत्युरिव स्थितः ॥ १२ ॥

तमसुरं दिने दिने प्रतिदिनमिषुमात्रम् इषुप्रमाणं विश्वक्सर्वतो विवर्धमानम् । दग्धः साङ्गारो यः शैलः पर्वतः तत्प्रतीकाशं तदुपमम् । सन्ध्याभ्राणामनीकस्य समूहस्येव वर्चो यस्य । तप्तताम्रवच्छिखाग्रभागो येषां तादृशानि श्मश्रूणि यस्य । मध्यान्हे योऽर्कः सूर्यः तद्वदुग्रे लोचने यस्य देदीप्यमानास्तिस्रः शिखा यस्मिंस्तस्मिन् शूले रोदसी द्यावापृथिव्यौ तदन्तर्वर्तिपदार्थजातमित्यर्थः । आरोप्य नृत्यन्तम् उन्नदन्तमुच्चैर्ध्वनन्तम् । पद्भ्यां पादेन महीं चालयन्तं कम्पयन्तम् ॥ १३-१५ ॥

दरीवत्पर्वतद्रोणीवद्गम्भीरवक्त्रेण किम्भूतेन नभस्तलं पिबतेव स्थितेन किञ्च जिह्वया ऋक्षाणि नक्षत्राणि लिहता आस्वादनं कुर्वता भुवनत्रयं ग्रसता ॥ १६ ॥

रौद्रा भयङ्करा दंष्ट्राः यस्मिन्महता विपुलेनैवम्भूतेन वक्त्रेण मुहुर्मुहुर्जृम्भमाणं वीक्ष्य विशेषेण त्रस्ता भीताः सर्वे लोका दश दिशो दुद्रुवुः ॥ १७ ॥

त्वाष्ट्री मूर्तिर्यस्य तेन त्वाष्ट्रमूर्त्तिभूतेन तपसा । त्वष्टुस्तपसा येनेमे लोका आवृतास्तेन लोकावरणरूपप्रवृत्तिनिमित्तेन वृत्र इति प्रोक्तः । वृत्रशब्दवाच्यः सोऽभूदित्यर्थः । तथा च श्रुतिः "स इमाँल्लोकानावृणोत्तद्वृत्रस्य वृत्रत्वम्" इति वृत्रस्य वृत्रशब्दाभिधेयस्य वृत्रत्वं वृत्रशब्दप्रवृत्तिनिमित्तम् । तल्लोकावरणमेवेत्यर्थः । स च पापः धर्मप्रतिपक्षः । लोकपालविरोधित्वादिति भावः । परमदारुणः दुःसहः ॥ १८ ॥

तं वृत्रमभिद्रुत्याभिमुखमागत्य सगणाः ससैन्या विबुधर्षभा इन्द्रादयः स्वैः स्वैर्दिव्यानामस्त्राणां शस्त्राणां च ओघैः सङ्घैर्निजघ्नुः प्रजह्रुः । तानि दिव्यान्यस्त्रादीनि स वृत्रोऽग्रसीत् ॥ १९ ॥

ततस्ते देवा विस्मिताः अहो एतस्य दुर्जयत्वमिति विस्मिताः ग्रस्तं वृत्रेणापहृतं तेजो येषां ते । अत एव विषण्णाः खिन्नाः प्रत्यञ्चं प्रत्यगात्मशरीरकं प्रत्याग्दिग्गतं वा प्रतीच्यां दिश्याविर्भूदिति तत्रैवाविर्भावस्यं वक्ष्यमाणत्वात् । आदिपुरुषं जगत्कारणभूतं परमात्मानं समाहितचित्ताः सन्तः उपतस्थुस्तुष्टुवुः । त्रिभुवनस्य तेन व्याप्यत्वादन्यत्र गमनाभावात्तत्रैव स्थित्वा स्वान्तरात्मानं तुष्टुवुरिति भावः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इन्द्रशत्रव इत्यादिना "त्वष्टा हतपुत्रोऽपीन्द्रं सोममाहरत्" इत्यादिवेदवाक्यं सूचयति । इन्द्रः शत्रुर्यस्य वृत्रस्य स इन्द्रशत्रुः इन्द्र एव तस्य सम्बुद्धिरिन्द्रशत्रो ! इति अनेन यजमानस्यानभिप्रेतार्थोऽपि सूच्यत इति ज्ञातव्यम् ॥ ११ ॥

अन्वाहार्यपचनाद्दक्षिणाग्नेः लोकानां क्षयाय ॥ १२-१३ ॥

सन्ध्याकालाभ्रमालावत्कपिशं वासो यस्य स तथा तं तप्तताम्रवच्छिखा श्मश्रूणि च यस्य स तथा तम् ॥ १४ ॥

तिस्रः शिखाः शिरांसि यस्य तत्तथा तस्मिन् ॥ १५ ॥

दरीगम्भीरवक्त्रेण गुहावद्गाधमुखेन ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

रौद्ररूपे दंष्ट्रे यस्य तत्तथा तेन मुखेन जृम्भयन्तं व्याददानम् ॥ १७ ॥

निरुक्तिपूर्वकं नाम निर्दिशति। येनेति। त्वाष्ट्रलक्षणया मूर्तिर्यस्य तत्तथा तेन तमसा आवृता इति येन ततः सोऽसुरो वृत्र इति ख्यातः "वृत्रं जघन्वाँ अपतद्ववार" इति श्रुतेः "दैत्यभेदे ध्वान्तकारे वृत्रशब्दः प्रयुज्यते" इत्यभिधानाच्च। पातीति पः ततः परमात्मा धर्मो वा तस्मादपगतः पापः पतदेव …यति। परमदारुणा इति ॥ १८ ॥ १९ ॥

श्रीनारायणानुग्रहमन्तरेण वृत्रजयो दुःसाधन इति कृत्वा देवानां हरिशरणप्रकारं वक्ति। तत इति। प्रत्यञ्चं प्रत्यगात्मानं …पुरुषं सुरेरादौ भक्तानुग्रहाय गृहीतपुरुषरूपम् ॥ २० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इन्द्रशत्रो! विवर्द्धस्वेति शत्रुः हन्ता तत्र तत्पुरुषे वृत्रस्य …त्वम्। बहुव्रीहौ सतीन्द्रस्य हन्तृत्वमायाति तत्र च तत्पुरुषत्वं "समासस्य" इत्यनेन समासान्तस्वरस्यान्तोदात्तविधिना व्यज्यते। बहुव्रीहित्वं तु तद्बाधकेन "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इत्यनेन पूर्वपदे …विद्याद्युदात्तस्थापकेन व्यज्यते। इन्द्रशब्दो ह्याद्युदात्तः "इदि परमैश्वर्ये" इत्यस्योदात्तगणापठितत्वात्। तदेवं दैवादाद्युदात्तपाठेन वैपरीत्यं जातमिति इन्द्र एव तस्य शत्रुरभूत् ॥११-१४॥

तत्र शूले आरोप्यैवेति द्यावापृथिवीस्थलोकैस्तस्मिन् शूले …तानिष्पत्तिमननात् ॥ १५--१७ ॥

येनेति तैः। त्वाष्ट्रमूर्त्तिनेति मूर्त्तिः स्वरूपं त्वाष्ट्रसम्बन्धेनैव …स्वरूपं मासत इत्यर्थः ॥ १८——२१ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

संवत्सरान्ते तदघमिति पूर्वोक्तेराश्विनमासारम्भे इन्द्रो … ब्रह्महत्यातो विमुक्तो बभूव तदैव तपोवनादागत्य स्वीय…सनं पालयितुं प्रवृत्तः। त्वष्टा स्वपुत्रवधं श्रुत्वा क्रोध… इन्द्रवधोपायं चकारेत्याह। हतपुत्र इति। इन्द्राय शत्रवे … शत्रुं हन्तुं तत्र मन्त्रमाह। इन्द्रशत्रो! विवर्द्धस्वेति। इन्द्रस्य … विवर्द्धस्वेति तत्पुरुषसमासस्य विवक्षितत्वेऽपि इन्द्र… बहुव्रीहावेव दैवादापतितः स्वरव्यतिक्रमात्। … हि "इदि परमैश्वर्ये" इत्यस्योदात्तगणापठितत्वादिन्द्रशब्दो …दात्तः। तत्र "समासस्य" इति सूत्रेण समासमात्र एवान्तो… तत्पुरुषे शेषम् "अनुदात्तम्" इत्यनेन इन्द्रशत्रो इत्य… अनुदात्तत्वम् "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इति तद्बाधकसूत्रेण … स्वमात्रांसिद्धस्वरस्थापनाद्बहुव्रीहावेन्द्रशत्रो इत्य… उदात्तत्वम्। त्वष्ट्रा तु दैवादाद्युदात्तस्वरत्वेन पाठादिन्द्र एव … शत्रुर्येना अभूत्। तदुक्तं श्रुत्या "यदब्रवीत् स्वाहेन्द्रशत्रो! विवर्द्धस्वेति तस्मादस्येन्द्रः शत्रुरभवत्" इति। तथा च शिक्षायाम्।

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्या प्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्
इति ॥ ११ ॥

अथ तदनन्तरमेव स्वीयपाठव्यतिक्रमेऽवगते सति अन्वाहार्यपचनात् स्वभावप्राप्ताद्युदात्तत्वज्ञितबहुव्रीहिपठनानन्तरं आहार्यताप्राप्ताद्यनुदात्तत्वज्ञित तत्पुरुषपाठाद्धेतोः स घोरदर्शन उत्थितः स्वाभाविकपाठादिन्द्रोऽस्य हन्ता भविष्यति पश्चादाहार्यपाठादिन्द्रोऽप्यनेन हतो भविष्यति सवाहनस्यापि तस्यानेन निगिलिष्यमाणत्वादिति भावः। अन्वाहार्यशब्दस्य पार्वणमासिकश्राद्धवाचित्वाद्व्याख्यान्तरं न घटते ॥ १२ ॥

तं वीक्ष्य वित्रस्ता लोका दश दिशो विदुद्रुवुरिति पञ्चमेनान्वयः। कीदृशं विष्वक्समन्ततः स्वस्य ऊर्ध्वाधो दशदिक्षु इषुविक्षेपमात्रं प्रतिदिनं वर्द्धमानम्। आरोप्य आरोप्येत्यर्थः। पिबता पिबतेव ॥ १३—१७ ॥

त्वाष्ट्री त्वष्टृसम्बन्धिनी मूर्त्तिर्यस्य तेन वृत्रेण इमे लोका आवृता इत्यर्थः ॥ १८ ॥ १९ ॥

प्रत्यञ्चं प्रत्यग्भूतमन्तर्यामिणमित्यर्थः ॥ २० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ततस्तदनन्तरं हतः पुत्रो यस्य सः। इन्द्राय शत्रवे जुहाव "तादर्थ्ये चतुर्थी" मरकुशोभ्यो धूम इतिवत् इन्द्ररूपशत्रुवधार्थं जुहावेत्यर्थः। तत्र मन्त्रमाह। इन्द्रशत्रो! विवर्द्धस्वेति। अन्त्याद्युदात्तं पदं पठितं तेनानिष्टं जातम्। तथा हि तत्पुरुषविवक्षया पठितेऽपि तत्पुरुषे शेषम् "अनुदात्तम्" इत्यनेन आद्यनुदात्तत्वे प्राप्ते इन्द्रशत्रुपदस्याद्युदात्तत्वात् "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इत्यनेन बहुव्रीहिलक्षणापत्त्या इन्द्र एव तस्य शत्रुर्जातः। तथोक्तं शिक्षायाम्।

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

इति "यदब्रवीत्स्वाहेन्द्रशत्रो विवर्द्धस्वेति तस्मादस्येन्द्रः शत्रुरभवत्" इतिश्रुतिरप्यनेनोपबृंहिता ॥ ११ ॥

अथ होमानन्तरमन्वाहार्यपचनाद्दक्षिणाग्नितः ॥ १२ ॥

तं वीक्ष्य लोका वित्रस्ता दश दिशो दुद्रुवुरित्यनेन सम्बन्धः। विश्वक्सर्वदिक्षु इषुविक्षेपमात्रं दिने दिने विवर्द्धमानं दग्धशैलप्रतीकाशं कृष्णवर्णम्। सन्ध्याभ्रसमूहवद्वर्चः कान्तिर्यस्य तं तप्तताम्रवदरुणा शिखा श्मश्रूणि च यस्य मध्याह्नार्कवदुग्रे दुर्दर्शे लोचने यस्य तम् ॥ १३। १४। १५ ॥

शूले रोदसी आरोप्येत्यनेन शूलस्यापि अस्वत्वं दृढत्वं सूच्यते दरीवद्गम्भीरेण वक्त्रेण मुहुर्मुहुः जृम्भमाणमित्यन्वयः। कथम्भूतेन नभस्तलं पिबता अतिविपुलेन जिह्वया ऋक्षाणि लिहता दीर्घजिह्वेन भुवनत्रयं ग्रसता दुष्पूरेणेत्यर्थः ॥ १६ ॥ १७ ॥

त्वाष्ट्रः त्वष्टुरपत्यभूतः अन्वाहार्यपचनादुत्थितो यः कृष्णवर्णः पुरुषः स एव मूर्तिर्यस्य तपसस्तेन पुरुषाकारेण त्वष्टुः तपसेत्यर्थः। इमे लोका आवृताः अतो वृत्र इति प्रोक्तः। अनेन "स इमाँ लोकानावृणोत्तद्वृत्रस्य वृत्रत्वम्" इति श्रुतिरुपबृंहिता ॥ १८ ॥ १९ ॥

विषण्णाः खिन्नाः प्रत्यञ्चमन्तर्यामिणमुपतस्थुस्तुष्टुवुः ॥ २० ॥

———

॥ देवा ऊचुः ॥

वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजन्तः ।
हराम यस्मै बलिमन्तकोऽसौ बिभेति यस्मादरणं ततो नः ॥ २१ ॥
अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम् ।
विनोपसर्पत्यपरं हि बालिशः श्वलाङ्गुलेनातितितर्ति सिन्धुम् ॥ २२ ॥
यस्योरुशृङ्गे जगतीं स्वनावं मनुर्यथाबद्ध्य ततार दुर्गम् ।
स एव नस्त्वाष्ट्रभयाद्दुरन्तात्त्राताश्रितान् वारिचरोऽपि नूनम् ॥ २३ ॥
पुरा स्वयम्भूरपि संयमाम्भस्युदीर्णवातोर्मिरवैः कराले ।
एकोऽरविन्दात् पतितस्ततार तस्माद्भयाद्येन स नोऽस्तु पारः ॥२४॥
य एक ईशो निजमायया नः ससर्ज येनानुसृजाम विश्वम् ।
वयं न यस्यापि पुरः समीहतः पश्याम लिङ्गं पृथगीशमानिनः ॥ २५ ॥
यो नः सपत्नैर्भृशमर्द्यमानान् देवर्षितिर्यङ्नृषु नित्य एव ।
कृतावतारस्तनुभिः स्वमायया कृत्वात्मसात्पाति युगे युगे च ॥ २६ ॥
तमेव देवं वयमात्मदैवतं परं प्रधानं पुरुषं विश्वमन्यम् ।
व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा ॥ २७ ॥

श्रीशुक उवाच ।

इति तेषां महाराज ! सुराणामुपतिष्ठताम् ।
प्रतीच्यां दिश्यभूदाविः शङ्खचक्रगदाधरः ॥ २८ ॥

---

भाषा टीका ।

विश्वरूप पुत्र के मरजाने पर त्वष्टा ने शत्रु इन्द्र के मरने के वास्ते होम किया तिस होम में इस मन्त्र का उच्चारण किया कि इन्द्रशत्रु बढ देर मत कर शत्रुको जीत ॥ ११ ॥

इंद्रशत्रु शब्द में स्वरके फरक होजाने से इन्द्र जिसका शत्रु होवे ऐसे अर्थ होजाने से उस कुंण्ड में से जो एक पुरुष उत्पन्न भया सो बडा भयङ्कर रूपवाला प्रलय काल में सब के नाश करने वाला काल सरीका मालूम पडा ॥ १२ ॥

वह पुरुष रोज रोज एक बाण के बरोबर बढने लगा जले पर्वत सरी का सन्ध्या काल की मेघमाला सरी का लाल तांबे सरीके जिसके केश और मूँछ हैं ॥ १३ ॥

मध्यान्ह काल के सूर्य सरी के उग्र उसके नेत्र हैं तीन शिखावाले प्रकाशमान त्रिशूल को उठाकर आकाश पाताल के मध्य में नाचता था और गर्जकर पृथिवी को कंपाता था ॥ १४ ॥ १५ ॥

बडे भारी गम्भीर कन्दरा सरीके मुख से आकाश पाताल को ग्रसता सा था जीभ से नक्षत्रों को चाटता सा था जैसे कि तीनों भुवनों को ग्रास करैं ॥ १६ ॥

बडे भयङ्कर दांतों से बारम्बार जमुहाई लेता था तिसके उसको देखकर सब लोग दशों दिशाओं को भगने लगे ॥ १७ ॥

त्वष्टा के पुत्र उस स्वरूप अन्धकार मूर्ति से सब लोक व्याप्त होगये तिससे उस परम दारुण का नाम वृत्र रक्खा गया ॥ १८ ॥

अपने गणों के सहित देवता लोग उसके पास जा दौडकर मारने लगे अपने अपने जितने अस्त्र शस्त्रों से मारे उन सब अस्त्रादिकों को उसने ग्रास कर लिया ॥ १९ ॥

तिसके अनन्तर सब देवता उसके तेज से ग्रसित होकर तब विषाद युक्त होकर विस्मित होकर अन्तर्यामि आदि पुरुष नारायण की स्तुति करने लगे ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वाय्वादीनि पञ्च महाभूतानि तैर्निर्मितास्त्रयो लोकास्तेषाम् अधिपतयो ब्रह्मादयश्च ततोऽर्वाचीना वयं च सर्वे यस्मै कालाय कालायोद्विजन्तः सन्तो बलिं हराम असावपि यस्माद्बिभेति ततः परमेश्वरादेव नोऽस्माकमरणं शरणं रक्षकमस्तु ॥ २१ ॥

आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ ।
पर्युपासितमुन्निद्रशरदम्बुरुहेक्षणम् ॥ २९ ॥
दृष्ट्वा तमवनौ सर्वे ईक्षणाह्लादविक्लवाः ।
दण्डवत् पतिता राजन् ! शनैरुत्थाय तुष्टुवुः ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत एवेत्यशरणत्वे हेतुमाहुः । अविस्मितं निरहङ्कारं कुतूहलशून्यं वा । कुतः । प्रशान्तं रागादिशून्यम् । तच्च कुतः । स्वेनैव लाभेन परिपूर्णकामम् । तच्च कुतः । सममुपाधिपरिच्छेदशून्यम् । एवंभूतं परमेश्वरं विना परं यः शरणार्थमुपसर्पति स बालिशोऽज्ञः यतोऽसौ शुनो लाङ्गूलेन पुच्छेन समुद्रमतितितर्ति अतितर्तुमिच्छतीत्यर्थः । यथा तेन समुद्रतरणं न भवति तथा निरीश्वराश्रयेण व्यसनार्णवतरणं न भवतीति भावः ॥ २२ ॥

महाभये स एव रक्षक इति दृष्टमित्याहुः । यस्येति द्वाभ्याम् । यस्य महाशृङ्गे जगतीं पृथ्वीमेव स्वनावं बद्ध्वा मनुः सत्यव्रतो व्यापदुर्गं सङ्कटं ततार स एव वारिचरो मत्स्यमूर्तिर्नोऽस्मान् व्याश्रितान् सतो नूनं त्राता रक्षिष्यति ॥ २३ ॥

संयमाम्भसि प्रलयोदके उदीर्णोरुद्रतैर्वातैर्ये ऊर्मयस्तेषां रवैः कराले भयङ्करे अरविन्दाक्षाभिक्रमणात् पतितप्राय एकोऽसहाय स्तस्माद्भयाद्येन ततार स एव नः पारस्तारकोऽस्तु ॥ २४ ॥

किञ्च । वयं भगवतैव सृष्टाः पालिताश्च बहुशोऽतस्तमेव शरणं व्रजामेत्याहुः । य एक इति त्रिभिः । येनानुगृहीताः सन्तो विश्वं सृजामः । ननु यूयमेव स्रष्टारो नान्यो युष्माकमनुग्राहकोऽस्ति तस्यादर्शनात्तत्राहुः । अस्मत्तः पुरः पूर्वमेवान्तर्यामितया समीहमानस्यापि यस्य लिङ्गं रूपं न पश्यामः । तत्र हेतुः । पृथक् पृथगीशा इत्यभिमानिनः ॥ २५ ॥

देवादिपूपेन्द्रपरशुराममत्स्यरामादितनुभिः कृतावतारः सन्नात्मसात्कृत्वा पाति च ॥ २६ ॥

आत्मभूतं दैवतं कुतः विश्वं विश्वात्मकम् । तथापि विकारं धारयन्ति । अन्यम् । विश्वात्मत्वे हेतुः । परं कारणम् । ननु प्रधानं पुरुषश्च विश्वस्य कारणं तत्राहुः । प्रधानं पुरुषं च तदात्मकमपि स एवेत्यर्थः । स एव नः शं विधास्यति ॥ २७ ॥

प्रतीच्यां दिशि हृदि प्रथममाविरभूत् ॥ २८ ॥

पुनश्च तं पुरो दृष्ट्वा ईक्षणाह्लादेन विवशा अवनौ दण्डवत्पतिताः सन्तः शनैरुत्थाय तुष्टुवुरित्यन्वयः । कथम्भूतम् । श्रीवत्सकौस्तुभौ विना स्वतुल्यैः षोडशभिः सुनन्दादिभिः परितः सेवितम् । उन्निद्रशरदम्बुरुहवदीक्षणे यस्य तम् ॥ २९—३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपस्थितिमेवाह । वाय्वित्यादिना । तावत् "भीषास्माद्वातः पवते एतस्य वाक्षरस्य प्रशासने गार्गि ! द्यावापृथिव्यौ विधृते तिष्ठतः एतस्य वाक्षरस्य प्रशासने गार्गि ! प्राच्यो नद्यः स्यन्दन्ते" इत्यादिश्रुत्युक्तरीत्या सर्वस्य प्रशासितुः परमात्मनः शासनानुवर्तिनामात्मनां तदनन्यशरणत्वं वदन्तः स्तुवन्ति । वाय्विति । वायुश्चाम्बरं चाग्निश्चापश्च क्षितिश्च तास्तथा त्रिलोकाः लोकत्रयान्तर्गता ब्रह्मादयश्चतुर्मुखप्रभृतयो ये च ते सर्वे वयमुद्विजन्तः बिभ्यतः सन्तो यस्मै परमपुरुषाय बलिं तच्छासनानुरूपमाराधनं वहामः प्रापयामः कुर्मः असौ प्रसिद्धोऽन्तको मृत्युरपि यस्माद्बिभेति तस्मात्परमपुरुषादन्यः कः अरणं शरणं रक्षकोऽस्माकम् ॥ २१ ॥

अथ शरण्यत्वौपयिकगुणपूर्णत्वात्तस्यैव शरण्यत्वं तदितरस्याशरण्यत्वं च वदन्तःशरणं ययुः । अविस्मितमिति । अविस्मितं स्वमहिम्नः स्वाभाविकत्वाद्विस्मयरहितं परिपूर्णकाममवाप्तसमस्तकामम् । लभ्यते इति लाभः स्वाभाविकेनैव लाभेन स्वानुभवानन्देन उपलक्षितं समं रागादिरहितं प्रशान्तमूर्मिषट्करहितं एते हि शरण्यत्वोपयुक्ता गुणाः एतेन समस्तसोपाधिकमहिम्नोऽपरिपूर्णसमस्तकामस्यौपाधिकानन्दयुक्तस्य रागद्वेषादिप्राकृतगुणयुक्तस्योर्मिषट्कपीडितस्य शरणागततुल्यत्वेनाशरण्यत्वं सूचितम् । न हि शृङ्खलितस्तादृशमन्यं शरणं व्रजति । एवमीश्वरं शरण्यं त्वां विना परमन्यं क्षुद्रं देवं यो बालिशोऽज्ञः सन्नुपसर्पत्यनुवर्तते सः श्वलाङ्गूलेन प्लवमानस्य शुनः पुच्छेन साधनेन, सिन्धुं समुद्रमतितर्ति अतीव तरितुमिच्छति श्वलाङ्गूलेन सिन्धुं तितीर्षुरिव नेष्टं प्राप्नोति प्रत्युत विहतो भवति इत्यर्थः ॥ २२ ॥

यथा मनुचतुर्मुखादयः शरण्यमापन्नाः त्रातारं भक्तवत्सलं भगवन्तमाश्रित्यैवापदोऽत्यवर्त्तन्त तथा वयमपि तमेवापन्निवृत्तये शरणं व्रजाम इत्याहुः । यस्येति द्वाभ्याम् । यस्य महामत्स्यस्योरुशृङ्गे महाशृङ्गे जगतीं पृथ्वीमेव स्वां नावमावध्य बद्ध्वा मनुः सत्यव्रताख्यो दुर्गं सङ्कटं ततार । अष्टमस्कन्धेऽयमितिहासः स्फुटीभविष्यति स एव वारिचरो मत्स्यमूर्तिर्भगवानाश्रितान् शरणं गतानस्मान् दुरन्तादपारात्त्वाष्ट्रस्य वृत्रस्य भयान्नूनं त्राता रक्षिता भविष्यति अतस्तमेव शरणं प्रजाम इति भावः ॥ २३ ॥

तथा पुरा जगदादौ स्वयम्भूर्ब्रह्मापि संयमाम्भसि प्रलयसंबन्धिनि जले कथम्भूते उदीर्णः प्रचण्डो यो वातः पवनस्तेन ये ऊर्मयस्तरङ्गास्तेषां रवैः ध्वनिभिः कराले भयङ्करे संयमाम्भस्यरविन्दाक्षाभिक्रमणात् पतितः पतितप्रायः एकः असहायो येन भगवता साधनभूतेन तस्माद्भयात्ततार स एव नोऽस्माकं पारः पारयतीति पारः पालकोऽस्तु ॥ २४ ॥

किञ्च । वयं भगवता सृष्टाः पालिताश्च स इदानीमप्यस्मान्रक्षिष्यत्यतस्तमेव शरणं व्रजाम इत्याहुः । य एक इति त्रिभिः । एकोऽ-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्वितीयः स्वसमाभ्यधिककारणान्तरानपेक्षो निजमायया आत्मीयसङ्कल्परूपज्ञानेन यः परमपुरुषो नोऽस्मान् ससर्ज येन भगवतानुगृहीताः सन्तो वयं विश्वं व्यष्टिवर्गं सृजामः यच्छन्दानां तमेवेति तृतीये नान्वयः । यस्य च पुरः हृदयकुहरे समीहतः अन्तरात्मतया नियमयतः लिङ्गं दिव्यावग्रहं न पश्यामः । तत्र हेतुः । पृथगीशमानिभः यतः पृथगीश्वरा इत्यभिमानिनो वयम् ॥ २५ ॥

यश्च सपत्नैः शत्रुभिः भृशं नितरामभ्यर्द्यमानान् पीडितान्नोऽस्मान् पाति अरक्षत् । कथम्भूतः । नित्य एव सदा अस्मानात्मसात्कृत्वा स्वकीयत्वेन मन्यमानोऽस्मद्रक्षणाय युगे युगे प्रतियुगं स्वमायया स्वकीयसङ्कल्परूपज्ञानेनैव न तु कर्मणेति भावः । तनुभिरुपेन्द्रपरशुराममत्स्यकूर्मवराहरामकृष्णादितनुभिर्देवादिषु कृतावतारः धृतावतारः सन् ॥ २६ ॥

तमेव भक्तवत्सलमात्मनामस्माकं दैवतं प्रधानं पुरुषं कारणावस्थचिदचिच्छरीरकमन्यं चिदचिद्विलक्षणं परमुत्कृष्टमत एव शरण्यं शरणमर्हतीति शरण्यः तं सर्वं वयं देवाः शरणं व्रजाम रक्षकत्वेनाध्यवस्यामः । एतावदेवास्मत्कृत्यमिति भावः । तत्र शरण्यकृत्यं प्रकाशयन्तः शरणागत्यङ्गमात्मनां महाविश्वासं दर्शयन्ति । स्वानामिति । स्वीयत्वेन परिगृहीतानां नोऽस्माकं शं सुखं शत्रुनिरसनद्वारकं नूनं धास्यति स तु महात्मा कृतस्वभक्तरक्षादीक्षः । एवं रक्षिष्यतीति विश्वासः प्रपत्त्यङ्गभूतो दर्शितः । स नोऽस्तु पार इत्यनेन गोप्तृत्ववरणम् । आत्मदैवतं प्रधानं पुरुषं विश्वं शरणं व्रजामेत्यनेन चिदचिच्छरीरकत्वकथनाच्छरीरस्य शरीरिशेषित्वैकस्वरूपत्वादात्मनः परमात्मैकशेषत्वानुसन्धानरूपात्मनिक्षेपः । न पश्यामः लिङ्गं सपत्नैर्भृशमर्द्यमानानित्यनेन च ज्ञानशक्तिबलाद्यभावरूपमात्मनां कार्पण्यमपि प्रदर्शितम् । तं विनोपसर्पत्यपरं हि बालिश इत्यनेनोपायान्तरनिष्ठत्वादिरूपप्रातिकूल्यवर्जनं प्रदर्शितम् । कृत्स्नचिदचिच्छरीरकत्वकथनेनैव "चराचराणि भूतानि सर्वाणि भगवद्वपुरतस्तदानुकूल्यं मे" इत्युक्तरीत्या भगवच्छरीरभूतसर्वभूतानुकूल्यमप्यात्मनां प्रदर्शितम् । न च सर्वभूतानुकूल्यस्याभिप्रेतत्वे शत्रुनिरसनप्रार्थनानुपपत्तिः । अस्याः प्रपत्तेर्मोक्षार्थत्वाभावात् तस्या एव हि सर्वभूतानुकूल्यरूपमङ्गमपेक्षितं अस्यास्तु शत्रुनिरसनार्थत्वात्तद्व्यतिरिक्तभूतानुकूल्यसङ्कल्पमात्रेणैवोपपत्तिरित्युत्पश्यन्तु विचक्षणाः ॥ २७ ॥

एवं सुरैः प्रपद्यमानो भगवानाविरभूदित्याह मुनिः । इतीति । हे महाराज ! इतीत्थं सुराणां देवानामुपतिष्ठतां प्रपदनपूर्वकं स्तुवतां सतां शङ्खचक्रगदाधरो भगवान् प्रतीच्यां प्रत्यगात्मसन्निधिन्यां दिशि हृदये "हृदि ह्ययमात्मा प्रतिष्ठितः" इति श्रुतेः प्रथमं हृद्याविरभूत्ततः पुरत आविरभूदित्यर्थः । यद्वा । प्रतीच्यां पश्चिमायां दिशि इत्यर्थः । देवानां पृष्ठत इति यावत् ॥ २८ ॥

तमाविर्भूतं भगवन्तं विशिनष्टि द्वाभ्याम् । श्रीवत्सकौस्तुभौ विना आत्मना सह तुल्यैः श्रीवत्सकौस्तुभमात्ररहितैरित्यर्थः । तयोः प्रधानपुरुषतत्त्वाभिमानित्वाज्जीवेनाधार्यत्वादिति भावः । षोडशभिः सुनन्दादिभिः पर्युपासितम् । यद्वा । भगवानाविरभूच्छङ्खचक्रगदाधरः तमाविर्भूतं प्रतीच्यां दिशि पृष्ठतः श्रीवत्सकौस्तुभमात्ररहितैरात्मतुल्यैः षोडशभिः पर्युपासितमित्यन्वयः । उन्निद्रे विकसिते शरदम्बुरुहे इवेक्षणे नेत्रे यस्य ॥ २९ ॥

तं दृष्ट्वा ईक्षणेन यः आह्लादस्तेन विक्लवाः ईषत्परवशाः सर्वे देवाः भूमौ दण्डवत्पतिताः प्रणेमुः । हे राजन् ! शनैरुत्थाय तुष्टुवुः ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वाय्वाद्यभिमानिनो ब्रह्मादयो ये त्रिलोकाः ते वयं यस्मै बलिं हराम त्रिलोकीबहिष्ठं लक्ष्मीतत्त्वं तदनियतं स्वतन्त्रमस्तीति शङ्कामाभूदित्याह । अन्तक इति । असावन्तकः मृत्युः कृतिर्दुर्गादिनामभिर्भिन्ना यस्मान्महान्तकाद्धरेर्बिभेति भीतेव तद्वशे वर्तते यतस्ततः स हरिर्नः अस्माकमरणं शरणमस्त्वित्यन्वयः । ननु ब्रह्मादयो वयं यस्मै बलिं हराम यस्मादसावन्तकोऽपि बिभेति ततस्तस्मात्परमेश्वरादरणं क्षेमो भवत्विति प्रतीतार्थः कस्मादपलप्यत इतिचेन्न ।

> कालोऽन्तकः प्रधानं च मृत्युरव्यक्तमित्यपि ।
> उच्यते प्रकृतिः सूक्ष्मा श्रीर्भूर्दुर्गेति नामभिः ॥
>
> सैव ब्रह्मादिभयदा विष्णोस्तु वशवर्तिनी ।
> अभयापि बिभेतीव तद्वशत्वादुदीर्यते ॥

इति स्मृतिविरोधात् वायुश्च अम्बरं च अग्निश्च आपश्च क्षितिश्चेति वाय्वम्बराग्न्यप्क्षितयः ॥ २१ ॥

एवं स्थिते शिवाद्यन्यतमस्य शरणमिच्छन् बालिश इत्याह । अविस्मितमिति । यो ब्रह्माद्युपात्तपूजस्तं स्वेनैव लाभेन स्वरूपानन्दानुभवेनैव परिपूर्णकामम् अत एवाविस्मितं कुतूहलबुद्धिरहितं सममेकप्रकारं प्रशान्तं समुद्रवत् स्तिमितं विना योऽपरं रुद्राद्यन्यतममुपसर्पति श्वलाङ्गूलेन तरीस्थानेन सिन्धुं समुद्रमतिपिपर्ति पारमतिक्रामति तदुचितमित्याह । हीति । बालिशो हि यस्मात्तस्मादुचितमित्यर्थः ॥ २२ ॥

ननु यस्य कस्यचिच्छरीरिशरणमुपगतस्यापदर्णवसन्तरणं दृष्टपूर्वं चेत्तमन्तरेणान्यं शरणं गच्छन् बालिशत्वेन श्वलाङ्गूलेनापारमकूपारं तितीर्षतीति परिहास्यः स्यात् तदेव कथमिति तत्राह । यस्येति । मनुर्यस्य हरेरुरुणि शृङ्गे जगतीं महीमयीं स्वनावं स्वस्य मनोरथेन क्लृप्तां तरीं यथा यथावद्दृढमाबध्य दुर्गमन्योपायेन ततुमशक्यं प्रलयार्णवलक्षणं क्लेशं ततार नूनमिदानीमपि स वारिचरो मत्स्यावतारो हरिराश्रितान् दुरन्तात्त्वाष्ट्रभयात्त्रातास्त्वित्यन्वयः । यथा ततार तथा तरणायाश्रितानिति वा ॥ २३ ॥

इतोऽपि श्रीहरिप्रसादादृते एतद्भयतरणं दुःसाधनमिति भावेन स्तुवन्तीत्याह । पुरेति । पुरादिसृष्टौ संयमाम्भसि प्रलयोदके स्थितादरविन्दात्प्रकृत्यात्मनः पद्मात्पतितः स्वयम्भूर्यं ततार स हरिर्नस्त्वाष्ट्रभयार्णवस्य पारः पारप्रदर्शकोऽस्त्वित्यन्वयः । तत्रत्या वायुरपि प्रकृत्यात्मा अन्यथा नेदृशं बलमन्यस्य स्यादित्यन्तस्तल्लयजलं विशिनष्टि । उदीर्णेति । उदीर्णेन वातेन प्रकृत्यात्मना

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वायुनोन्नमितानामूर्मीणां रवेः कराले भयङ्करे पद्मादीनां प्रकृत्यात्मत्वं कस्माद्विशिष्योच्यत इति शङ्का माभूत् यत्र वायूद्गमादिरूपेण प्रकृतिः स्थिता ।

एकस्तत्र विभेदुब्रह्मा विचार्य भयमल्पगात् ।
अन्तर्गतो हरिस्तस्य ध्यातो भयमपानुदद्त् इत्युक्तेः ॥

भयनिमित्तमाह । एक इति । एकाकित्वात् द्वितीयवस्तुनोऽनुत्पन्नत्वात् "सोऽबिभेत्स द्वितीयमैच्छत्" इति श्रुतेः । ननु किमर्थं ब्रह्मणा भयमदर्शि यत उक्तमपीति स्वसृज्यजनानां भयादिस्वभावसम्भावनार्थम् । "भविष्यतां जनानां तु स्वभावानां प्रसिद्धये" इत्युक्तेः । अपि सम्भावन इति च सम्भावनामन्तरेण स्वाभाविकं किं न स्यादित्यपीदमुत्तरमपीति अज्ञानाद्धि भयमुत्पद्यते ब्रह्मणस्तु तथास्ति "ज्ञानादिगुणपूर्णस्य ब्रह्मणोऽपि" इत्युक्तेः । तर्हि कियन्तं कालमनुवर्तत इत्यस्यापीदमुत्तरं पूर्णज्ञानस्य चिरकालीनं भयादिकं गर्हितं "चणार्धगाः भयादिका भवन्तीथ कथं तस्मिन् चिरालयाः" इत्युक्तेः । स्वसृज्यजनभयस्वभावप्रदर्शनमन्तरेणान्यलिकप्रयोजनमित्यस्यापीदमेवोत्तरमपीति । भयप्रदर्शनेन भगवत्प्रीतिलक्षणमन्यदपि विद्यत इत्यर्थः । "भगवत्प्रीतये नित्यं ब्रह्मणो वै भयादयः । न वृथा तस्य भावः स्यात्क्वचित्सोऽपि चणार्धगाः" इत्युक्तेः । भयादिकमपि किमेकवारं बहुवारमुतेत्यस्यापीदमुत्तरं नैकवारं किन्तु बहुवारमस्तीत्यर्थः

अज्ञानं तु चतुर्वारं द्विवारं भयमेव च ।
शोकोऽपि तावान्नान्यत्र कदाचिद्ब्रह्मणो भवेत् इत्युक्तेः ॥

इदमपि हरिप्रीतिजनकत्वेनोन्नतिकारणम् । तत्रापि भगवत्प्रीत्या तत्त्वस्यैवास्य तद्भवेत्" इत्युक्तेः ॥ २४ ॥

किञ्चास्माकं स्पष्टत्वेन सम्बन्धत्वादपि निजस्वरूपं न बुद्ध्यामहे किन्तु लक्षणमेव पश्यामः अतो वयं तमेव शरणं याम इत्याहुः । य एक इति । एकः केवल ईशः ऐश्वर्यादिगुणपूर्णः यो निजमायया स्वाधीनया प्रकृत्या नः ससर्ज येन वयं प्रेरिताः विश्वमनुसृजाम यस्य पुरोऽग्रतः स्थिताः समेताः सङ्गता अपि वयं लिङ्गं लक्षणमेव पश्याम न तु स्वरूपं तत् स्पष्टत्वेन तदनुपहीतकर्तृत्वेन वाचिन्त्यवैभवमेव लक्षणं बुद्ध्यामहे न सच्चिदानन्दादिस्वरूपम् । अदर्शने कारणमाह । पृथगिति । पृथक् पृथगभिमानित्वात् । अयं च कादाचित्क एव न तु सनातनः तदुक्तम् ।

कदाचिदभिमानस्तु देवानामपि सन्निव प्रायः ।
कालेषु नास्त्येव तारतम्येन सोऽपि तु इति ॥

अनेन पृथगित्यनेनाभिमानस्य तारतम्यं ध्वनयति । हे ईश ! अभिमानिनो वयं पृथक्तारतम्योपेता इति वार्थः सम्पद्यते ॥ २५ ॥

करचरणादिदेहवत्त्वेऽपि देवदत्तवदनित्यदेहो नास्ति अतः अभिमतसिद्धौ संप्रार्थनीय इतिभावेनाहुः । यो न इति । तनुभिर्मत्स्यादिषु कृतावतारोऽपि नित्य एव निर्विकार एव न तु अविकृतदुःखादिमान् न केवलमनुयुगं रक्षति हरिः किं तु अन्यथापीत्यर्थः चशब्दः ॥ २६ ॥

बहुचन्द्रैरेवोक्तावशिष्टगुणैर्विशिष्य तं शरणं प्रार्थयन्ते । तमेवेति । अन्ययोगव्यवच्छेदार्थ एवशब्दः । देवा इत्यनेन देवानां शरणं हरिरेव नान्य इत्येवशब्दार्थो विवृतः । वयमित्यनेन हरेः स्वेषां च मिथो भेदाभिमानं ध्वनयति । न केवलमिष्टदेवतात्वेन शरणं यामः अपि तु सर्वोत्तमत्वादिगुणविशिष्टत्वाच्चेति भावेनाह । परं प्रधानमिति । प्रकृतिः किं नेत्याह । पुरुषमिति । तर्हि जीवः किं नेत्याह । विश्वमिति । न प्रपञ्च इत्याह । आद्यमिति । प्रपञ्चस्याविर्भूतम् "वासुदेवो वा इदमग्र आसीत्,, इति श्रुतेः नृशंस स्वभावश्चेत्कथमयमिष्टः स्यादित्याहुः । शरण्यमिति । शरणप्राप्यत्वान्नृशंसो न भवतीत्यर्थः । नास्मिन्नस्मासु विप्रतिपत्तिरित्याह । स्वे इति । शरणं प्राप्तावपि उदासीनो न भवति किं तु यदाम्यदभीष्टं ददातीत्याहुः । स्वानामिति ॥ २७ ॥

स्तुतिफलमाह । इतीति ॥ २८ ॥

प्रत्यग्धीभूतं तं भगवन्तं संदृश्य देवाः किं चक्रुरिति तत्राह । आत्मतुल्यैरिति । अनेन दर्शनावस्थायां किं गुणविशिष्ट इति शङ्कापर्यहारि आत्मतुल्यैः आत्मनो मूर्तैः अत एव आत्मतुल्यैः मूलभूतस्य हरेः सदृशैः सामर्थ्यादिगुणैरन्तैः षोडशभिर्वासुदेवादिदामोदरान्तैः पर्युपासितं तेषां मध्यस्थावृत्तिरूपेण स्थितं मूलरूपस्याप्राकृतत्वात्प्रादुर्भावानां शुक्रशोणितसम्पर्केण जातत्वात्कथमन्योऽन्यतुल्यत्वमिति तत्राह । विनेति । श्रीवत्सकौस्तुभौ विना प्रकृतिपुरुषाभ्यां विना प्रकृतिपुरुषातीतत्वेन तदनिर्मितशरीरैरित्यर्थः । अनेन सप्तदशरूपाण्यपि गुणक्रियादिना विशेषरहितानीत्युक्तं भवति । श्रीवत्सकौस्तुभरहितैरात्मतुल्यैः षोडशभिः पार्षदमुख्यैरुपासितमित्यङ्गीकारस्तु "श्रीवत्सः प्रकृतिर्ज्ञेया ब्रह्माख्यः कौस्तुभः पुमान् । तदतीतैः षोडशभिः स्वरूपैरप्युपास्यते" इतिप्रमाणविरोधादप्रामाणिकः । तेषां तद्रूपत्वादन्यलक्षणतुल्यं चाप्रामाणिकम् । अतः प्रकृतिपुरुषानधीनत्वेनान्योऽन्यतुल्यत्वं वासुदेवादीनामेव । तदुक्तम्

अपुंप्रकृत्यधीनत्वाद्वासुदेवादिका हरेः ।
तुल्याश्च केशवाद्याश्च न च भिन्नाः कथञ्चन । इति

अनेन मूलरूपस्यावताराणां मिथो भेदराहित्यमुक्तमिति ज्ञातव्यम् । हरेः प्रकृतिपुरुषराहित्यं च न कादाचित्कं किं तु सनातनम् "श्रीवत्सकौस्तुभाभ्यां तु विना भावं प्रदर्शयेत् । पुंप्रकृत्यात्मकाभ्यां स धत्ते नित्यं जनार्दनः,, इतिवाक्यात् । प्रकृतिपुरुषराहित्यं च तदतीतत्वं तदवशत्वं च । तदुक्तम् "यदस्याऽभावमतीतत्वं यद्वशो नानयोर्हरिः,, इति "श्रीवत्सकौस्तुभाभ्यां तु विनाभावः स एव च" इति इयंचोपासिका भक्तानुकम्पित्वेन हरेः परं क्रीडैव "आत्मैव सप्तदशधा स्वयं भूत्वा जनार्दनः । मध्यस्थावृत्तिरूपेण क्रीडते पुरुषोत्तमः" इत्युक्तेः संवीतश्चतुरात्मभिः स्वसदृशैः श्रीकेशवाद्यैरतश्चक्राद्यैरितैरश्वीश्वरमुखैर्गंजादिभिस्तत्परम् । "संसेव्यं स्वयमन्तराम्बुजमहापीठे विराजन् हरिर्भूयं श्रीपुरुषोत्तमो भवतु यः श्रीवल्लभः सन्ततम्" इति तन्त्रान्तरोक्तमन्त्रानुसंधेयम् ॥ २९ ॥

पूर्वं हरेः प्रत्यक्षायाधुना स्वाभिप्रेतार्थसिद्ध्यर्थं स्तुतिरिति विशेषः ॥ ३० ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अविस्मितं ततोऽन्यस्यापूर्वस्य वस्तुनोऽसद्भावाद्विस्मयरहितं अतः स्वेनैव स्वीयेनैव स्वस्यैव कर्मभूतस्य क्रियाभूतेन लाभेन परिपूर्णकामं नान्यस्येत्यर्थः। अतः सर्वत्र समम्। अतः प्रशान्तं विक्षेपदोषरहितम्। तथोक्तम् "रजस्तमः प्रकृतयः समशीला भजन्ति वै" इत्यादि अत उक्तं श्रीसत्यव्रतेन"

न यत्प्रसादायुतभागलेशमन्ये न देवा गुरवो जनाः स्वयम्। कर्त्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं वै शरणं प्रपद्ये। श्रीमहाभारते च।

यस्तु विष्णुं परित्यज्य मोहादन्यमुपासते।
स हेमराशिमुत्सृज्य पांशुराशिं जिघृक्षति। इति

तदिदं भक्तिसन्दर्भे विशेषेण विवृतमस्ति ॥२२—२८॥

आत्मेति युग्मकम्। इच्छयाह्लादेति वस्तुस्वाभाव्यात् स्वाभीष्टसिद्धिनिश्चयाच्च ॥ २९—३१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अस्माद्वृत्रजनिताद्भयात् परमेश्वरं विना न कोऽपि रक्षितुं प्रभविष्यतीति मत्वा तमेव शरणमाश्रयन्ते। वायवित। वाय्वाद्युपलक्षितानि त्रयोविंशतितत्त्वानि तथा वाय्वादिभिः निर्मितास्त्रिलोकास्तथा तेषामधिपतयो ब्रह्मादयस्तथा ततोऽर्वाचीना वयं च ये सर्वे यस्मान्मृत्योरुद्विजन्तो भीताः। असावन्तको मृत्युरपि यस्माद्बिभेति ततस्तस्मात् अरणं शरणं रक्षणमस्तु ॥ २१ ॥

तदन्यस्तु सुधिया नैवाश्रयणीय इत्याहुः। अविस्मितमिति। तं विना अपरं देवतान्तरं कर्मयोगं ज्ञानयोगमपरयोगं वा शरणार्थं बालिशो महामूर्ख एवोपसर्पति। नं तु विज्ञः यथा शुनः पुच्छेन सिन्धुमतितर्त्तुमिच्छति स श्वा एव सिन्धुं तर्तुं न शक्नोति किमुत तत्पुच्छग्राहिणं स श्वा एव दृष्ट्वा प्रथमं समुद्रमध्ये क्षिपति निमज्जतीति भावः। भगवदाश्रयी तु संसारसिन्धुं यत्तरति तत् किमपि नाद्भुतमित्याह। अविस्मितमिति। न विद्यते विस्मितं किमप्यद्भुतं यत्र तं विना दुर्लङ्घ्यस्यापि संसारसिन्धोस्तारणे अन्यत्रातिविस्मयोऽपि तत्र न कोऽपि विस्मयः। सद्य एव तस्य गोष्पदीकरणसामर्थ्यादिति भावः। स्वेनैव स्वस्वरूपेणैव यो लाभः सौन्दर्यादिमाधुर्यसप्तकस्य प्राप्तिस्तेन सर्वं सह परिपूर्णाः कामाः स्वीयह्लादिनीशक्तिदत्ता भोगा यस्य तम्। प्रशान्तमत्युग्रं सेवापराधे जातेऽपि भक्तवात्सल्यत्वात् क्षन्तारम् ॥ २२ ॥

वयन्त्वतिनिकृष्टाः सकामा अप्यस्मिन्महाभय एव शरणं याम्तोऽपि तेन रक्षणीया एव यथापूर्वं इत्याहुः। यस्येति द्वाभ्याम्। यस्य मत्स्यरूपस्य जगतीं पृथ्वीं यथा ततारेति वयमपि तथा तरेमेति भावः। वारिचरोऽपि वारिण्येव चरन्नपि तत्रैव स्थित्वा जगतीस्थानस्मानीश्वरत्वाद्रक्षतु ॥ २३ ॥

संयमाम्भसि प्रलयजले अरविन्दात् नाभिकमलात् पतितः पतितप्रायः येन हेतुना सः ॥ २४ ॥

स खलु सर्वत्र च वर्त्तमानोऽप्यस्माकं बहिर्मुखेन्द्रियाणामदृश्योऽपि कृपयैव दृश्यो भूत्वा रक्षत्वित्याहुः। य इति त्रिभिः। पुरोऽस्माकमग्र एव मगहिमानस्य रामकृष्णादिरूपेण लीलां कुर्वतोऽपि तस्य लिङ्गं न पश्यामः। तत्र हेतुः। पृथगिति ॥ २५ ॥

तनुभिः उपेन्द्रपरशुरामादिस्वरूपैः स्वस्य मायया कृपया चिच्छक्त्या वा नोऽस्मानात्मसात्कृत्य पातीत्यत एव सम्प्रति स्वरक्षणार्थं निवेदनेऽपि न सङ्कुचाम इति भावः। तमेवेति। विश्वं मायाशक्त्या विश्वरूपम्। स्वरूपशक्त्या अन्यं विश्वस्माद्भिन्नम् ॥ २६ ॥ २७ ॥

प्रतीच्यां दिशि पश्चिमसमुद्रकूले देशान्तरस्योरामस्य दैत्याक्रान्तत्वात् तत्र देवैः स्थातुमशक्यत्वात्। तत्रैव विविक्ते उपविश्य स्तुतत्वात् ॥ २८ ॥

श्रीवत्सकौस्तुभौ विना चतुर्भुजत्वादिस्वचिह्नवत्त्वादात्मतुल्यैः सुनन्दादिभिः परित उपासितम् ॥ २९ ॥ ३० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यस्मै अन्तकाय वाय्वाद्युपलक्षितानि लोककारणानि तत्त्वानि त्रिलोकाः ब्रह्मादयो लोकनाथाः ये वयं तत्प्रजाभूताः उद्विजन्तः सन्तो बलिं हरामः असावन्तकः कालोऽपि यस्माद्बिभेति ततो हेतोः सः नोऽस्माकमरणं शरणमस्तु भवत्वित्यन्वयः ॥ २१ ॥

अथ भगवतोऽविस्मितत्वपूर्णकामत्वादिगुणान् दर्शयन्तस्तदितरं जनं निन्दन्ति। अविस्मितमिति। उपसर्पति शरणं गच्छति यः स बालिशोऽज्ञः भवार्णवात्तरणोपायं न जानातीत्यर्थः। यथा श्वलाङ्गूलेन यः सिन्धुमतिसितर्ति तर्तुमिच्छति स बालिशो भवति तद्वत् ॥ २२ ॥

तस्य स्वभक्तरक्षकत्वं सुप्रसिद्धं सः अस्माकमप्यापद्भ्यस्तारकोऽस्त्वित्याहुः। यस्येति द्वाभ्याम्। यस्योरुशृङ्गे महच्छृङ्गे मनुः स्वनावं जगतीं यथावद्बद्ध्वा दुर्गं सङ्कटं ततार स एव वारिचरो मत्स्यमूर्तिः त्वाष्ट्रभयात् वृत्रभयात् नूनं निश्चितं त्राता रक्षिष्यति ॥ २३ ॥

पुरा लीकरचनातः प्राक् उदीर्णवातेन ये ऊर्मयस्तरङ्गास्तेषां रवैः कराले संयमाम्भसि प्रलयजले एक एव स्वयम्भूः अरविन्दात्पतितः पतितप्रायः येन भगवता तस्माद्भयात्ततार स नोऽस्माकं पारस्त्वाष्ट्रभयात्तारकोऽस्तु ॥ २४ ॥

येन वयं सृष्टा यश्च अस्मान्नानावतारैः पाति स एवास्मान् सुखयिष्यतीत्याहुः। य इति त्रिभिः। निजमायया निजवयुनेन य एक ईशः सर्वेश्वरः नोऽस्मान् ससर्ज येन नियुक्ताः यस्य पुनः पूर्वमेवं समीहितः विश्वम् सृजतोऽपि तत्सृष्टमेन विश्वम् मनुपश्यस्सृजामः यस्य लिङ्गं भगवतैव वयं सृष्टाः तेनैव सृष्टं तन्नियुक्ताः किञ्चित्करवामेति तद्गुणज्ञापकम् चिह्नमपि न पश्यामः एवम्भूता अज्ञा वयमित्यर्थः। अत एवाज्ञानेन वयं पृथगीशमानिनः ॥ २५ ॥

यो नोऽस्मान् देवादिषु वामनजामदग्न्यमत्स्यदाशरथ्यादितनुभिः कृतावतारः सन् स्वमायया स्वकृपया आत्मसात्कृत्वा पाति च ॥ २६ ॥

प्रधानं प्रकृत्याख्यशक्तिरूपं पुरुषं जीवात्मकांशरूपं विश्वं तदुभयात्मकप्रपञ्चरूपं शक्तितद्वतोः अंशांशिनोश्च स्वाभाविकभेदाभेदसम्बन्धात् "उभयव्यपदेशात्त्वहिकुण्डलवत्" इति पारमर्षसूत्रात्। ननु तर्हि सर्वे दोषाः ब्रह्मणि प्रसज्जेरन्नाहुः। अन्यमिति सर्वदोषास्पृष्टस्वरूपम्। प्रकृतिपुरुषतदुभयात्मकजगद्विलक्षण-

देवा ऊचुः ।

नमस्ते यज्ञवीर्याय वयसे उत ते नमः ।
नमस्ते ह्यस्तचक्राय नमः सुपुरुहूतये ॥ ३१ ॥
यत्ते गतीनां तिसृणामीशितुः परमं पदम् ।
नार्वाचीनो विसर्गस्य धातर्वेदितुमर्हति ॥ ३२ ॥

ओं नमस्तेऽस्तु भगवन्नारायण ! वासुदेवादिपुरुष ! महापुरुष ! महानुभाव ! परममङ्गल ! परमकल्याण ! परमकारुणिक ! केवल ! जगदाधार ! लोकैकनाथ ! सर्वेश्वर ! लक्ष्मीनाथ ! परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिना परिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारे चित्तेऽपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान् ॥ ३३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वरूप मित्यर्थः । यतः परं पूर्णं शरण्यं शरणागतहितकरं शरणं व्रजामः रक्षितारं जानीम इत्यर्थः । स एव नः शं सुखं धास्यति त्वाष्ट्रभयनिराकरणेनेति शेषः ॥ २७ ॥

प्रतीच्यां दिशि तथा सुखं भजनार्थमाश्रितायां पाश्चिमायामुपतिष्ठतां स्तुवतामाविरभूत् ॥ २८ ॥

आत्मतुल्यैः सारूप्यं प्राप्तैः पार्षदैः पर्युपासितं दृष्ट्वा अवनौ दण्डवत्पतिताः पुनः शनैरुत्थाय तुष्टुवुः स्तुतवन्त इति द्वयोरन्वयः ॥ २९—३० ॥

---

भाषा टीका ।

देवता बोले वायु आकाश अग्नि जल पृथिवी तीनों लोक ब्रह्मादिक हम सब लोग सदा उद्विग्न होकर जिस काल के वास्ते भेट पूजा देते हैं सो काल भी आप से डरता है तिन आप के हम शरण में प्राप्त हैं सो आप हमारे रक्षक होवैं ॥ २१ ॥

आप अपने स्वरूपानन्द के लाभ से परिपूर्णकामना वाले हो अहङ्कार रहित हो शान्त स्वरूप हो ऐसे आपकों छोड कर जो दूसरे के शरण जाता है सो मूर्ख कुत्ता की पूंछ को पकड कर समुद्र के पार जाना चाहता है ॥ २२ ॥

जैसे मत्स्यमूर्ति आप के बडे शृङ्ग में पृथिवी रूपी अपनी नौका को बांधकर सत्यव्रत मनु प्रलयकाल के महाभय को तरगये तैसेही सोइ जलचर रूपवाले आप शरणागत हम लोगों की रक्षा करोगे यह बात निश्चित है ॥ २३ ॥

पूर्व में सृष्टि के समय में अति प्रबल शब्दवाले पवनों से कराल प्रलय समुद्र में ब्रह्माजी कमल के ऊपर से गिरने लगे तब जिन भगवान् के सहायता से ब्रह्माजी भयको तरगये सोइ भगवान् हमारे पार करने वाले होवैं ॥ २४ ॥

जिन एक ईश्वर ने अपनी माया से हम सबों को पैदा किया है जिन के अनुग्रह से हम लोग संसार को सृजते हैं पहिले सृष्टि करनेवाले जिन भगवान् के चिन्ह को हम अलग अपने को ईश्वर मानने वाले होने से नहीं जानते हैं तिन के हम शरण प्राप्त हैं ॥ २५ ॥

शत्रुओं से अत्यन्त पीडित हम लोगों को देवता ऋषि मनुष्यों में अवतार लेकर दिव्यमूर्तियों के द्वारा अपनी कृपा से हम को अपना बनाकर जो भगवान् युग युग में रक्षा करते हैं ॥ २६ ॥

कारण प्रधान पुरुष विश्वरूप दैव आत्मदैवत तथा अन्य उन्हीं भगवान् के हम शरण जाते हैं सो महात्मा अपने भक्त हम लोगों के कल्याण को विधान करेंगे ॥ २७ ॥

श्रीशुकदेवजी बोले हे राजन् ! उन देवतों के इस प्रकार से स्तुति करने पर शङ्ख चक्र गदा पद्म धारण किये भगवान् पश्चिमदिशा मे प्रगट भये ॥ २८ ॥

श्रीवत्स तथा कौस्तुभ इन दोनों के विना और सब प्रकार से अपने सदृश सुनन्दादिषोडश पार्षदों से भगवान् चारों ओर से सेवित हैं शरद ऋतु के खिले कमल सरीके नेत्रों से सुशोभित हैं ॥ २९ ॥

हे राजन् इस प्रकार के भगवान् का दर्शन कर के सब देवता दर्शनके आनन्द के मारे विह्वल होगये फिर पृथिवी में नमस्कार के वास्ते दण्डसरीके गिरपडे फिर धीरे से उठकर स्तुति करने लगे ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यज्ञो वीर्यं स्वर्गादिफलजननाय सामर्थ्यं यस्य तस्मै नमः । वयसे उत तत्फलपरिच्छेदककालात्मनेऽपि । तद्विघातकेषु दैत्येष्वस्तं प्रक्षिप्तं चक्रं येन । एवम्भूतैः प्रभावैः सुपुरुहूतये शोभनयशसे ॥ ३१ ॥

दुरवबोध इव तवायं विहारयोगो यदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हरसि ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु मम गुणातीतं रूपं विहाय गुणोपाधिकं यज्ञवीर्यत्वादि किमिति वर्ण्यते तत्राहुः। यत्तव गुणत्रयस्येशितुर्नियन्तुस्त्रिगुणात्मिकानां तिसृणां मतीनां परमं पदं निर्गुणस्वरूपं तद्विसर्गस्यार्वाचीन इदानीन्तनो हे धातर्वेदितुं नार्हति। अतः केवलं तस्मै ते नमोऽस्तु ॥ ३२ ॥

मिताक्षराणि पद्यानि न मीयन्ते हरेर्गुणाः।
इति पद्यैरतुष्यन्तः सद्यो गद्येन तुष्टुवुः ॥

भक्त्युद्रेकेण बहुधा सम्बोधयन्तो दुर्ज्ञेयत्वं प्रपञ्चयन्ति। भगवन्नित्यादिना। परमं मङ्गलं शुद्धो धर्मो यस्मिन्। आत्मयोगेनाष्टाङ्गेन यः समाधिश्चित्तैकाग्र्यं तेन परिभावितः सुशीलितः परिस्फुटो यः पारमहंस्यधर्मो भगवद्भजनं तेनोद्घाटितं तमोरूपं कपाटं यस्मिंस्तस्मिन् द्वारभूते चित्ते अपावृते प्रकट आत्मलोके प्रत्यग्रूपे स्वयमेवोपलब्धमभिव्यक्तं यन्निजसुखं तदनुभवरूपो भवान् ॥ ३३ ॥

ननु केवलानुभवरूपत्वे मम सृष्ट्यादिकर्तृत्वं कथं तत्राहुः। दुरवबोध इव तवायं विहारयोगो यद्यस्मादशरणो निराश्रयः। इदं विश्वम्। अनवेक्षितोऽस्माकं समवायो मेलनं साहाय्यं येन सः ॥ ३४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्तुतिमेवाह। नम इत्यादिना। तावत्सर्वस्य स्रष्टारमायुःप्रदं त्रातारं प्रणतरक्षाविलम्बासहिष्णुं नाममात्रस्मरणनिरस्तमहाभयं स्वर्गापवर्गादिप्रदं वाङ्मनसापरिच्छेद्यस्वभावं नमस्कुर्वन्तः स्तुवन्ति। नमस्त इत्यादिद्वाभ्याम्। यज्ञः वीर्यं सृष्टिहेतुः सामर्थ्यं यस्य "यज्ञाद्भवति पर्जन्यः" इत्युक्तप्रकारेण यज्ञमुखेन प्रजाः सृजत इत्यर्थः। यद्वा। वीर्यशब्दोऽर्शआद्यजन्तः। यज्ञो वीर्यवान् यस्मात् यदाराधनरूपत्वे यज्ञस्य सारवत्ता अनन्तस्थिरफलसाधनता भवतीत्यर्थः। अन्यथाल्पास्थिरफलसाधनतेति भावः। वयसे स्वाराधनभूतयज्ञाद्यनुष्ठानोपयुक्तायुःप्रदाय ऊतये यज्ञादिफलदानेनानिष्टनिवारणेन च रक्षाकराय आत्तचक्राय प्रणतरक्षणाविलम्बासहनेन सदा धृतसुदर्शनाय पुरुहूतये स्मरणमात्रनिरस्तमहद्भयोदारनाम्ने नमःपदावृत्तिर्गुणभेदाभिप्रायः ॥ ३१ ॥

तिसृणां स्वर्गापवर्गनरकाणामीशितुः निर्वाहकस्य दातुस्ते तव परमं प्रकृतिपुरुषविलक्षणमुत्कृष्टं पदं स्वरूपं विसर्गस्यार्वाचीनः सृष्टेः पाश्चात्यः कार्यभूतः त्वत्सृष्टस्त्वदाहितज्ञानशक्तिमांश्च यः पुमान् हे धातः! वेदितुं ज्ञातुं नार्हति ॥ ३२ ॥

अथ पुरुहूतय इत्यनेनाभिप्रेतैर्भगवत्साधारणैर्नामभिस्त्वं सम्बोधयन्तो नार्वाचीनोऽर्हति वेदितुमित्युक्तं दुर्ज्ञेयत्वनिमित्तानाश्रयणीयत्वशङ्कां योगपरिशुद्धमनोग्राह्यत्वकथनेन निराकुर्वन्तो यज्ञवीर्यायेत्यनेनोक्तजगद्व्यापारस्य मृत्कुलालादिव्यापारवैजात्यं लीलारूपतां चाभिदधतः कारणान्तरानपेक्षसृष्ट्याद्युपयुक्तगुणयोगित्वं च वदन्तस्तुवन्ति। ॐ नमःइत्यादिना। पासि हरसि चेत्यन्तेन गद्येन ॐ इत्यसाधारणं भगवतो ब्रह्मणो नाम "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति भगवद्गीतेः तथा भगवन्नारायणादयः शब्दा अपि भगवन्! षाड्गुण्यपूर्ण! नारायण! नारं जीवसमूहस्तस्यायनं प्राप्यं प्रापक आधारश्च तस्य सम्बोधनं नारायणशब्दश्च योगरूढिभ्यां विष्णवसाधारणः न च केवलयोगेन रुद्रादिपरत्वमपि शङ्कितुं युक्तम्। रूढ्यभावेन "पूर्वपदात्संज्ञायामगः" इति णत्वाभावप्रसङ्गाच्च विष्णुपरत्वाङ्गीकारेण संज्ञापरत्वाभावात्त्वन्मतेऽपि न णत्वमिति वाच्यम् "भृजोऽसंज्ञायाम्" इति सूत्रभाष्ये यदेतत्संज्ञया विधीयते तत्र न संज्ञायामभिधेयायामित्यर्थः। किं तर्हि तत्कार्यविशिष्टेन चेत्संज्ञा गम्यत इत्यर्थः। इत्युक्तमत एव रघुनाथरामानुजादिशब्देषु न णत्वं न हि तत्र करणत्वेन संज्ञावगतिः। किं तर्ह्यकृतणत्वेन "किञ्चानादिविनियुक्तसंज्ञास्थले तु यथाविनियुक्तानामेव साधुत्वम्" इति रघुनाथादौ णत्वाभावः अध्वपरिमाणसंज्ञाभूतगव्यूतिशब्दे च न ऽलोपः। अन्यथा संज्ञात्वभङ्गापत्तेरित्यन्यत्र विस्तरः। वासुदेव! सर्वभूताधार! आदिपुरुष! जगत्कारणपुरुष! महापुरुष! पुरुषोत्तम! महानुभाव! अचिन्त्यप्रभाव! परममङ्गल! स्वयं मङ्गलरूप! परमकल्याण! अन्येषां मङ्गलावह! परमकारुणिक! स्वार्थनिरपेक्षपरदुःखासहिष्णो! केवलजगदाधार। इतरानपेक्षजगदाधार! स्वसमानरहितलोकनाथ! सर्वेषां ब्रह्मादीनामपीश्वरनियन्तः लक्ष्मीनाथ! श्रियःपते! परमहंसाः ज्ञानिनः परिव्राजकाः संन्यासधर्मनिष्ठाः ज्ञानयोगकर्मयोगनिष्ठा इत्यर्थः। तैः परमेणोत्कृष्टेनात्मसमाधियोगेन परमात्मविषयकध्यानयोगेन परिभावितः संदीपितः अत एव परिस्फुटः प्रत्यक्षतापन्नो यः पारमहंस्यधर्मो भगवद्भक्तियोगरूपो धर्मः तेनोद्घाटितं निर्मूलितं तमःकपाटं तमः अनाद्यविद्यात्मकमज्ञानं तदेव कपाटं परमात्मदर्शनविरोधि यस्य तद्द्वारं परमात्मदर्शनसाधनं चित्तं यस्मिंस्तस्मिन्नात्मलोके आत्मैव लोकः लोकनीय इति लोकः परमात्मापृथक्सिद्धत्वेन जीवस्यापि लोकनीयत्वात्तस्मिन्नात्मलोकेऽपावृतः आवरणरहितः उपलब्ध इत्यर्थः। कथमपावृतः स्वयमुत्थः स्वस्मात्मनैव उत्थः नित्योदितो यो निजसुखानुभवः निजानन्दरूपोऽनुभवो ज्ञानं तद्रूपः नित्यनिरुपाधिकाविर्भूतापरिच्छिन्नज्ञानानन्दानुभवरूपत्वेनापावृत इत्यर्थः। एवंभूतोऽसि। एवम्भूतस्य भगवान् तव विहारयोगः लीलारूपो योगः जगद्व्यापाररूपो योगः जगत्सङ्कल्पमात्रनिष्पाद्यत्वज्ञापनाय जगद्व्यापारस्य समाधिरूपसङ्कल्पापरपर्याययोगपदं प्रयुक्तम्। जगद्व्यापारस्य कर्मायत्तकेवललीलारूपत्वख्यापनाय विहारपदम्। स एव विहारयोगो दुःखबोध इव लोकदृष्टमृत्कुलालादिव्यापारजातीयत्वेन बोद्धुमशक्य इव वर्तते इवशब्देन सर्वज्ञस्य सर्वशक्तेस्तव उपपन्न एवेति सूच्यते। दुःखबोधकत्वमेव विशदयन्ति। यत्त्वमिदं विश्वमशरणमनपेक्षितस्वव्यतिरिक्ताभ्य-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यथापि कुलालादिर्घटादीन् सृजन्नस्तु भूतलादिरूपः कश्चिदाधारोऽपेक्षित इति भावः । त्वं तु स्वस्मिन्नेवाधारभूते सृजसीति भावः । किञ्च । यथा त्वमनपेक्षिताऽसमवायसहायः असहायश्च दण्डादिसहकारिसमुदायनिरपेक्षः । कुलालादिस्तु सहकारिसमवायसापेक्ष इति भावः । किञ्चागुणः गुणत्रयरहितः कुलालादिस्तु सत्त्वादिगुणयुक्त इति भावः । ननु विशिष्टस्य कारणत्वाङ्गीकारात्कथं कुलालादिवैलक्षण्यापादकमगुणत्वमुच्यत इति चेन्न । विशिष्टस्य उपादानत्वाभ्युपगमेऽपि प्रकृतिपुरुषाभ्यामुत्कृष्टस्य विशेष्यस्य ब्रह्मणो निमित्तत्वाभ्युपगमाद्विशेष्यांशे च सत्त्वादिगुणत्रयाभावाभिप्रायं कुलालादिवैलक्षण्यापादनमेव । एवं कुलालादिनिमित्तकारणवैलक्षण्यमुक्तम् । अथ मृदाद्युपादानवैलक्षण्यमाहुः । आत्मनैवाविक्रियमाणेन सगुणमिति "तदात्मानं स्वयमकुरुत" इति श्रुत्यर्थोऽभिप्रेतः । आत्मनेत्यनेन स्वयंशब्दार्थ उक्तः । सगुणमित्यनेनात्मानमित्यस्यार्थः । गुणशब्दश्चात्रापृथक्सिद्धविशेषणवाची तथाचापृथक्सिद्धविशेषणभूतचिदचिद्विशिष्टमात्मानं स्वेनैव सृजसि पासि रक्षसि हरसि च सूक्ष्मचिदचिद्विशिष्टमात्मानमेव स्थूलचिदचिद्विशिष्टावस्थाविभ्याकारेण परिणमयसीत्यर्थः । निर्विकारश्रुतिविरोधपरिहारायात्मानं विशिनष्टि । अविक्रियमाणेनेति विकाराणां विशेषणभूतचिदचिद्गतत्वादविक्रियमाणेनैवात्मना सृजसीत्यर्थः । मृत्पिण्डादिकं तु स्वाभिन्नेन कुलालादिना घटादिरूपेण सृज्यत इति ततो यस्य वैलक्षण्यसिद्धिः । आत्मनैवात्मानं सृजसीत्यनेन विशिष्टस्यैव विशेष्यविशेषणाकाराभ्याम् उत्पादनत्वं निमित्तत्वं चैकस्योक्तं भवति । अविक्रियमाण इति सप्तम्यन्तपाठे स्वस्मिन्विकारशून्येऽविक्रियमाणे स्वरूपस्वभावाभ्यामविक्रियमाणे सत्येव विशिष्टमात्मानं स्वेनैव सृजसीत्यर्थः । नन्वेकस्यैव पदार्थस्य निमित्तत्वमुपादानत्वं च परस्परविरुद्धमिति चेन्नैकस्योभयविधकारणत्वाभ्युपगमात्प्रतिक्षेपकैरपि क्वचित्क्वचिदेकस्मिन्नेव तदुभयविधकारणत्वाभ्युपगमात् यथा स्वज्ञानचिकीर्षाप्रयत्नादिकं शास्त्राभ्यासादिभिः स्वयमेव करोति जीवः तेन तत्र कर्तृत्वेन निमित्तकारणं भवति तथापि च स्वयमेव समवायिकारणं भवति ज्ञानादीन्प्रति कार्यं यत्र समवैति तत्समवायिकारणम् इति समवायिकारणलक्षणस्य स्फुटोपलम्भात् । किञ्च । ईश्वरोऽपि स्वव्याप्तस्य स्वस्य सर्वैरपि परमाण्वादिभिः संयोगं स्वयमेव सृजति सर्वकार्यहेतुत्वात्तथा च तत्र कर्तृत्वेन निमित्तकारणं भवति समवायिकारणत्वमपि तत्प्रतीतस्य दृश्यते परमाण्वादिसंयोगस्येश्वरसंयोगापेक्षत्वात्तेन यथा कर्तृत्वं समवायिकारणत्वं चेश्वरनिष्ठमेव भवन्मते भवति । तथास्मत्सिद्धान्ते निमित्तत्वमुपादानत्वञ्चैकवस्तुनिष्ठमिति । नन्वेवमपि न ब्रह्मण उपादानत्वं क्वापि दृष्टमिति चेन्न ऊर्णनाभिप्रभृतीनामेव दृष्टान्तत्वात् । न ह्यूर्णनाभेर्देहस्यैवावस्था प्राप्तिर्नापि आत्मन्यपि तु देहविशिष्टात्मनीति लोकोपलम्भः । श्रुतिश्च "यथोर्णनाभिः सृजते गृह्णते च" इत्यूर्णनाभिदृष्टान्तत्वेन दर्शयति ॥ ३४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्तुतेः प्रतीकं गृह्णाति । नमस्त इति । यज्ञस्य वीर्यं रेतः स्पष्टेत्यर्थः । तस्मै यज्ञो वीर्यं यस्य सः तथाभिव्यक्तय इति शेषः । तस्मै हे यज्ञ ! वीरेषु स्थित्वा वीरत्वप्रदायेति वा । उत किं तु वयसे बन्धकशक्त्या जीवानां संसारे बन्धकाय "वय बन्धने" इति धातोः "वयः सर्वस्य वयनाद्भगवान् पुरुषोत्तमः" इति वचनात् वयशब्दोऽत्र बन्धवचनः "मा तन्तुश्छेदि वयतो धियं मे मा मात्राशार्यपसः पुरा ऋतोः" इति श्रुतेश्च " अतो वयो विहङ्गो विहगो विहङ्गमः" इत्यभिधानेऽपि प्रकृतानुपयुक्तत्वान्न पक्ष्यत्र ग्राह्यः श्रुतेरयमर्थः । देवे धियं वयतो बध्नतो मे तन्तुः सन्ततिर्माच्छेदि उत्सन्नो माभूत् । ऋतोः पुरा ज्ञानोत्पत्तेः पूर्वं अपसः कर्मणः मात्रा मानं परिमाणं माशारि: "शॄ हिंसायाम्" इति धातोः फलदानेन नष्टं माभूत् "कर्माणि ज्ञानमात्मनोऽनि" इति श्रुतेः ज्ञानमनुत्पाद्य न नश्यत्वित्यर्थः । स्वकृतं बन्धनं स्वयमेव हन्तुं शक्तो नान्य इति ज्ञापनाय सन्धिकार्याभावः । चक्राय पुनः सृष्ट्यादिकर्म करोतेर्यङ्लुगन्तं शब्दरूपम् । सर्वहन्त्रे चरतेर्भक्षणार्थरूपं वा । सर्वविपत्परिहर्तृसुदर्शनाख्यावताराय वा । अत्राप्यनन्यसाध्यकरणशक्त्यादिमत्त्वप्रदर्शनाय सन्ध्यभावः । पुरवो बहवो हूतयो नामानि यस्य सः तथा तस्मै "नामानि सर्वाणि यमाविशन्ते" इति श्रुतेः "इन्द्रायाहि चित्रभानो" इत्यादिबहुवेदहूतिर्यस्य सः तथा तस्मै वा "शुचिः शुचिव्रतः शुद्धः पुरुहूः शुद्धिरुच्यते" इत्यभिधानात् । पुरुहूः शुद्धा ऊतिर्यस्य सः तथा तस्मै वा ॥ ३१ ॥

ईशितुस्ते तव यत्त्रिगुणां गतीनां देवलोकपितृलोकनिरयसंज्ञानां सकाशात्परमुत्कृष्टं वैष्णवं पदं वैकुण्ठादिस्थानं तद्धातुर्ब्रह्मणो विसर्गस्य विविधसृष्टेरर्वाचीनोऽनन्तरकालीन इदानीन्तनो मनुष्यो वेदितुं लब्धुं प्राप्तुं नार्हति न योग्यो विद्वानेव योग्य इत्यन्वयः ।

> देवलोकात्पितृलोकान्निरयाच्चापि यत्परम् ।
> तिसृभ्यः परमं स्थानं वैष्णवं विदुषां गतिः ॥

इति वचनात् "विदूल् लाभे" इति धातुः "पद्लृ गतौ" इति च अनेन वैष्णवपदप्राप्तौ ज्ञानमेव प्रयोजकं न कर्मादिकमिति सूचयति ॥ ३२ ॥

हरेः प्रसन्नतायां गुणोत्कर्षप्रकाशिका स्तुतिरेव प्रयोजिकेति पद्यैर्ग्रथिताः कतिपयगुणा एव प्रकाशन्ते न इत्यतोऽवशिष्टानाशेषगुणप्रकाशनार्थं गद्यैः स्तुवन्ति । नमस्त इति । भगवदादिशब्दैराविष्कृतगतये ते तुभ्यं नम इत्यन्वयः । परिव्राजकाश्चतुर्विधाः कुटीचकबहूदकहंसनिष्क्रिया इति तेषां मध्ये परमहंसाख्यपरिव्राजकैः परमेणोत्तमेनात्मयोगेन परमात्मध्यानेन यः समाधिश्चित्तैकाग्रता तेन परिभावितः प्रवर्धितः परिस्फुटितश्च प्रकाशितो यः पारमहंस्यनामा धर्मः ज्ञानाख्यः तेनोद्घाटितं तमःकपाटद्वारं मज्ञानाख्यकपाटद्वारं येन सः । तथा तेनापावृते प्रकाशिते आत्मलोके वैकुण्ठादिनाम्नि स्वयमुपलब्धः अप्रयत्नेन दृष्टः यो भगवान् स्वरूपसुखानुभवस्तस्य तव विहारयोगः जगज्जन्मलयादिहेतुभूतक्रीडोपायो दुरवबोध इव त्वदनुग्रहमन्तरेण दुर्बोध एवेत्यर्थः । कुतो दुर्बोध इति तत्राह । यदशरणा इति । अशरणोऽधिष्ठानरहि-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तोऽशरीरो ज्ञानसाधनशरीररहितोऽप्राकृतत्वादनपेक्षितोऽस्मत्समवायः साहाय्यलक्षणो येन स तथा अगुणो निर्गुणः स्वयं स त्वमविक्रियमाणेन स्वतः परतो वा विकाररहितेनात्मनैव स्वभावेनैव भोगादिप्रयोजनमन्तरेणेदं जगत्सृजसि रक्षसि संहरसीति यद्यस्मात्तस्मात्कुलालादिविलक्षणत्वादिति भावः ॥ ३३ ॥ ३४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु प्रत्यक्षतोऽनुभूयमानमिदं मद्रूपं विहाय गुणोपाधिकं यज्ञवीर्यत्वादिकं किमिति वर्ण्यते तत्राहुः । यत्त इति ॥ ३२ ॥

आत्मलोके स्वस्वरूपे लोके वैकुण्ठाख्ये ॥ ३३ ॥

तदेवं वैकुण्ठविहारो दुर्दर्शोऽपि युक्तिसिद्ध एव गुणातीतत्वादिना तव योग्यत्वात् । प्रपञ्चविहारस्तु युक्त्यतीतः । सगुणत्वादिना वैपरीत्यादित्याहुः । दुरवबोध इति । कुलालादिर्हि सगुणः किञ्चित् स्थानं समवायान्तरं चावलम्ब्य स्वशरीरञ्च प्रवर्त्य मृदादिवस्त्वन्तरेण सगुणं घटादिकं करोति पाति हरति त्वं त्वगुणश्चाविक्रिय एव च तत्तदवलम्बनादिकं विनैवेच्छामात्रेणात्मनैव च सगुणं प्रपञ्चमित्यर्थः । अशरण इत्यादिकं हि तदभिप्रायेणैवोक्तम् । इत्थेत्यचिन्त्यशक्तित्वादेव तदपि नातियुक्त्यगम्यमिति भावः ॥ ३४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वेषामीश्वरमन्यतामात्रं व्यञ्जयन्तो यज्ञैरस्मदाद्युपासकानां फलप्राप्तिविघातयोर्भवानेव हेतुरित्याहुः । नम इति । यज्ञस्य वीर्यं स्वर्गादिफलोत्पादनलक्षणः प्रभावो यस्मात्तस्मै स्वर्गादिफलप्रापकायेति भावः । उत पुनः वयसे कालाय स्वर्गादिफलनाशकाय च तथा अस्तचक्राय असुरेषु चक्रं क्षिप्त्वा तेषां निग्राहकाय अस्माकं पालकाय च । एवं स्वर्गादिप्रापक इति स्वर्गादिनाशक इति असुरसंहारक इति देवपालक इत्यादिनामभिः सुपुरुहूतिर्यस्य तस्मै ॥ ३१ ॥

ननु नश्वरतुच्छस्वर्गपदप्राप्त्यर्थमेव स्तुवध्वे न त्वनश्वरनित्यसुखमयवैकुण्ठार्थमत्र को हेतुस्तत्राहुः । यत्त इति । तिसृणां देवमनुष्यतिर्यग्गतीनामीशितुः प्रापकस्य तव यत् परमं पदं वैकुण्ठधाम तत् विसर्गस्यार्वाचीनोऽस्मादृशो जनो वेदितुमनुभवितुं नार्हति । न हि घासतुषादिकं विना पशुरन्यत् क्षीरादिकं वाञ्छति लभते वा कुतश्चिदिति भावः ॥ ३२ ॥

पुरुहूतय इत्युक्तमतो बहुभिर्नामभिः सम्बोध्य स्तुवते । नम इति । हे भगवन् ! षडैश्वर्यपरिपूर्ण ! परिपूर्णत्वमेवाहुः । हे नारायण ! त्वमेव स्वांशाधिक्यक्रमेण व्यष्टिसमष्टिप्रकृत्यन्तर्यामित्वेन क्षीरोदगर्भोदकारणार्णवशायी भवसीत्यर्थः । ततोऽपि पूर्णत्वात् हे वासुदेव ! व्यूहानामादिभूत ! ततोऽपि परिपूर्णत्वात् हे आदिपुरुष ! परमव्योमनाथ । ननु कथमेवमवगम्यते तत्राहुः । महापुरुषेषु तत्तद्भक्तेषु महान्तोऽनुभावा अनुरूपमहाप्रभावा एव यस्य सः ।

ननु महाप्रलये मद्भक्तमद्धाममदाकाराणां का वार्ता तत्राहुः । मङ्गलानि प्राकृतानि परममङ्गलानि अप्राकृतमङ्गलवस्तूनि त्वद्भक्तधामादीनि तेषां परमकल्याणं कुशलित्वं यतः । तेषां कालनियम्यत्वाभावादिति भावः । किञ्च । अपारैश्वर्यमाधुर्यसिन्धोस्तव करुणामेव बहिर्दर्शिनो वयं कालग्रस्यमाना आश्रयाम इत्याहुः । हे परमकारुणिक ! अन्तर्दर्शिभिस्तु भवाननुपलब्धनिजसुखानुभव एव भवति । कदा । आत्मयोगैर्यमनियमादिभिर्यः समाधिस्तेनैकाग्र्यं तेन परि सर्वतो भावेन भावितः । कुतः । परिस्फुटः परमहंस्यधर्मो भक्तियोगस्तेन उद्घाटिततमःकपाटं द्वारं यस्य तथाभूते चित्ते चित्तमन्दिरे अपावृतः अपगतावरणः आत्मलोके वैकुण्ठधामनि वर्त्तमानः । चित्तस्यैतादृशत्वे सति तन्मध्य एव सह वैकुण्ठलोको भवान् स्फुरतीति भावः ॥ ३३ ॥

किञ्च । स्वीयवैकुण्ठलोके सदा विहरन्नात्मारामो गुणातीतोऽपि प्रपञ्चलोके अस्मदादिदुर्ज्ञेयप्रकारैः सृष्ट्यादिभिर्विहरसीत्याहुः । दुरवबोध इति । विहारयोगः क्रीडायुक्तत्वं दुरवबोध इवेति त्वद्भक्तविज्ञैः सुबोधोऽप्यन्यैर्दुर्बोध इत्यर्थः । कुतः यद्यशरणो निराश्रय एव अशरीरः शारीरचेष्टारहित एवेति । सृष्टिकर्त्ता हि साकार एव "सहस्रशीर्षा" इत्यादिश्रुतेः । न अवेक्षितम् अस्माकं इन्द्रादीनां हस्ताद्यधिष्ठातृणां समवायः साहाय्यं येन सः । आत्मना स्वेनैव आत्मन उपादानत्वेऽप्यविक्रियमाणेनैव विवर्तवादाङ्गीकारे त्वविक्रियमाणत्वं न चित्रं चित्रं खलु तदनङ्गीकार एव अत एव वक्ष्यते गजेन्द्रेण "नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय" इति कारणस्याद्भुतत्वमुपादानत्वेऽपि निर्विकारत्वमेवेति । अगुणः सन् सगुणं विश्वं सृजसि कुलालादिर्हि किञ्चित् स्थानमवलम्ब्य स्वशरीरं च प्रवर्त्य ससहायो मृदादिवस्त्वन्तरं विक्रियमाणेनैव सगुण एव सगुणं घटं सृजतीति दृष्टमितीदृशं दुर्ज्ञेयत्वं सृष्टौ ॥ ३४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

साक्षाद्भगवन्तं सर्वकर्मफलदं सर्वशक्तिं सर्वनामानं दृष्ट्वा कर्मफलादिकमीश्वरनैरपेक्ष्येण सुखादिहेतुं मन्यमाना वाचा इति स्तुवन्तो भगवन्तं प्रणमन्ति । नम इति । यज्ञस्य वीर्यं फलदानसामर्थ्यं यस्मात्तस्मै वयसे तत्फलाभिव्यञ्जककालशक्तये तत्फले च प्रतीपेषु अस्तं क्षिप्तं चक्रं येन तस्मै सुपुरुहूतये शोभनबहुनाम्ने ॥ ३१ ॥

ननु यज्ञवीर्याय नम इत्यादिना यज्ञफलभूतस्वर्गार्थिनो वयमिति सूचितं ननु मुक्तगम्यं मम धाम भवद्भिर्मत्तः प्रार्थितमित्यत्राहुः । तिसृणां स्वर्गापवर्गनरकगतीनामीशितुः प्रापकस्यापि तव यत्परमं पदं मुक्तगम्यं स्थानं विसर्गस्य विशेषतः सृज्यते स्वर्गादिमूलप्राप्तिकामेषु तुच्छीकृतैहिकामुष्मिकपदार्थेषु इति विसर्गः पुण्यवलोकः तस्य अर्वाचीनः पाश्चात्यः अविषयमादृशो बुभुक्षुर्लोको हे धातः ! तत्प्रेप्सायास्तु का कथा वेदितुमपि नार्हतीत्यर्थः । अत्र भगवल्लोकः भगवत्कृपावलोकाविषयैर्दुर्ज्ञेय इत्युक्तमथ विश्वसृष्ट्यादिरूपा भगवल्लीलापि तैर्दुर्ज्ञेया भगवत्कृपावलोकविषयैस्तु नित्यं हार्दि निजलोकसहितो भगवान् सुज्ञेय एव विश्वसृष्ट्यादिलीला च सुज्ञेयेति वदन्तः नमः सुपुरुहूतये इत्यत्र सूचितम्

अथ तत्र भवान् किं देवदत्तवदिह गुणविसर्गपतितः पारतन्त्र्येण स्वकृतकुशलाकुशलं फलमुपाददात्याहोस्विदात्माराम उपशमशीलः समञ्जसदर्शन उदास्त इति ह वाव न विदामः ॥ ३५ ॥

न हि विरोध उभयं भगवत्यपरिमितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाश्रयदुरवग्रहवादिनां विवादानवसर उपरतसमस्तमायामये केवल एवात्ममायामन्तर्धाय को न्वर्थो दुर्घट इव भवति स्वरूपद्वयाभावात् ॥ ३६ ॥

समविषममतीनां मतमनुसरसि यथा रज्जुखण्डः सर्पादिधियाम् ॥ ३७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

बहूनां नाम्नां मध्ये कैश्चिन्नामभिः सम्बोध्य स्तुवन्ति। ॐ नमस्ते इत्यादिना हरसीत्यन्तेन गद्येन। हे भगवन्! ते तुभ्यं नमः कथंभूताय ॐ सर्ववेदबीजभूतप्रणववाच्याय प्रणवस्य परब्रह्मवाचकत्वात् "ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति श्रीमुखवचनात्। नमोयोगाच्चतुर्थ्यन्तोऽत्र प्रणवः अव्ययत्वाच्चतुर्थ्या लोपः भगवन्नित्यादीनि भगवन्नामानि स्पष्टार्थानि तत्र तत्र यथोपयोगं व्याख्यातानि च आत्मनः स्वस्य लोके "योऽस्याध्यक्षः स परमे व्योमन्। एते वै निरयास्तात! लोकस्य परमात्मनः" इत्यादिश्रुतिस्मृतिप्रसिद्धे अपावृते निरावरणे स्वयमुपलब्धः श्रुतः स चासौ निजसुखानुभवश्च स तथाभूतो यो भवान् स एव परमहंसपरिव्राजकैः परमहंसाः बहुजन्मकृतवर्णाश्रमोचितधर्मपूर्वकनामामोक्षसाधनविमलमतित्वेन भगवद्ध्यानसमुद्रनिमग्नतया विस्मृतवर्णितरकृत्याः परिव्राजकाः चतुर्थाश्रमिणो हरिभक्ताः परमहंसाश्च परिव्राजकाश्च तैश्चित्ते दृष्ट इति शेषः। कथम्भूते परमेयोगरूपेण आत्मनि भगवति युज्यते इति योगः स चासौ समाधिविवेकाख्यं च तेन परिभावितः स्वनुष्ठितः परिस्फुटः प्रशस्तः परमहंसानां योग्यः पारमहंस्यो धर्मः सर्वात्मना भगवत्प्रावण्यं तेनोद्घाटितं तमो मालिन्यरूपं कपाटं यस्य तदेव द्वारं भगवद्दर्शनकरणं तस्मिन् ॥ ३३ ॥

अथ "यतो वा इमानि भूतानि जायन्ते स ऐक्षत बहुस्यां तदात्मानं स्वयमकुरुत अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते"। इत्यादिश्च प्रतिज्ञादृष्टान्तानुपरोधात् १।४।२४। इत्यादिश्रुतिस्मृतिसूत्रसिद्धं भगवतो जगदभिन्ननिमित्तोपादानकारणत्वमाहुः। दुरवबोध इति। तव अयं विहारयोगः विश्वसृष्ट्यादिलीलो योगः दुरवबोधः दुर्ज्ञेयः। इवशब्देन भवत्प्रसादेन तु सुज्ञेय इति द्योत्यते। यद्यत आत्मनैव स्वेनैव स्वरूपेण अविक्रियमाणेन निर्विकारेण ऊर्णनाभिर्यथा निर्विकारेण स्वरूपेणैव तन्तुमयं स्वगृहं सृजति तद्वदिदं सगुणं विविधविचित्रगुणयुक्तं विश्वम् "देवात्मशक्ति स्वगुणैर्निगूढां प्रधानक्षेत्रज्ञपतिर्गुणेशः" एवं परस्य शक्तिः "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्"इत्यादिश्रुतिस्मृतिप्रसिद्धाभ्यां प्रकृतिभ्यां सृजसि पासि हरसि कुलालदेवदत्तादयो गृहादियुक्ताः कायिकव्यापारवन्तः अवेक्षितभार्यादिसमवायाः रजआदिगुणवन्तः अनात्मकेन मृत्पिण्डतन्त्वादिना घटपटादिकं सृजन्ति त्वं तु अशरणः आयतनानपेक्षः अशरीरः शारीरव्यापारानपेक्षः नावेक्षितोऽस्मत्समवायः साहचर्यं येन सः अगुणः रजआदिभिः निखिलैः प्राकृतैर्गुणैश्च रहितः ॥ ३४ ॥

भाषा टीका।

देवता बोले यज्ञ फल के हेतु काल स्वरूप आपके अर्थ नमस्कार है दुर्षोंपर चक्र चलाने वाले अनेक नाम वाले आप के अर्थ नमस्कार है ॥ ३१ ॥

हे विधाता! तीनों गुणों की गतियों के प्रेरक आप हो आपकी सृष्टि के पीछे पैदा होने वाला पुरुष हम सरी का आप की गति को नहीं जान सकता है ॥ ३२ ॥

हे नारायण! भगवन् वासुदेव आदिपुरुष महानुभाव परममङ्गल परमकल्याण परमकारुणिक केवल जगदाधार लोकैकनाथ सर्वेश्वर लक्ष्मीनाथ, परमहंस परिव्राजक जन बड़े भारी आत्मसमाधियोगसे निर्मल किये हुये अन्तःकरण में प्रकाशमान जो पारमहंस्यधर्म तिस से हृदय में अन्धकार रूपी जो कपाट द्वार हैं तिन को खोल कर आत्मा के देखने योग्य जो चित्त तिस में स्वयं प्राप्त सुख स्वरूप आप का अनुभव करते हैं ॥ ३३ ॥

आपका यह क्रीडा का विहार बडा आश्चर्य जनाने वाला है जिस से कि आप विना प्राकृत शरीर वाले हो विना आश्रय के हो इन्द्रियों के अधिष्ठाता हम देवतों के समूह को भी नहीं चाहते हो और किसी विकार को नहीं प्राप्त होकर भी स्वयं अपने स्वरूपही से प्राकृत गुण रहित होकर भी गुणमय संसार को सृजते हो पालते हो नाशकरते हो ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दुर्ज्ञेयान्तरमाहुः। अथ तत्रेति। यथेह देवदत्तो गृहादि निर्माय तत्र स्वकृतशुभाशुभयोः फलमुपादत्ते एवं भवान् ब्रह्मस्वरूपो जीवरूपेण गुणविसर्गे पतितः सन्नुपाददाति। यद्वा। समञ्जसमप्रच्युतं दर्शनं चिच्छक्तिर्यस्य स भवानुदास्ते उदासीनः साक्षितया वर्तत इति ॥ ३५ ॥

**स एव हि पुनः सर्ववस्तुनि वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारणभूतः सर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः ॥ ३८ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं विरोधेन दुर्ज्ञेयत्वमुक्त्वा तत्परिहारेण ज्ञानप्रकारमाहुः । न हीति । विरुध्यत इति विरोधः । उभयं न विरुद्धमित्यर्थः । न ह्यन्यदृष्टान्तेन त्वयि विकल्पो युज्यतेऽतर्क्यैश्वर्यत्वादित्याहुः । भगवतीति । अपरिमिता गुणगणा यस्य तस्मिन्नीश्वरे स्वतन्त्रेऽनवगाह्यमतर्क्यं माहात्म्यं यस्य तस्मिन् । विकल्प एवं वा एवं वेति वितर्कः किमत्र युक्तमिति विचार इत्थमेवेति तत्र प्रमाणाभासास्तदनुग्राहकाः कुतर्काश्चार्वाचीना वस्तुस्वरूपासंस्पर्शिनो ये विकल्पादयस्ते येषु शास्त्रेषु तैः कलिलं व्याकुलमन्तःकरणमाश्रयो यस्य दुरवग्रहस्य तेन वादिनां विवादस्यानवसरेऽगोचरे । ननु श्रद्धामात्रमेतत् । युक्तिरुच्यतां तत्राहुः । उपरतो मायामयः संसारो यस्मिंस्तस्मिन् केवलेऽन्यात्ममायां मध्ये निधाय को न्वर्थः कर्तृत्वादिर्न सम्भवति यदि वस्तुतः कर्तृत्वादि भवेत्तर्हि विरोधः स्यान्न तु तदस्तीत्याहुः । स्वरूपद्वयाभावादिति ॥ ३६ ॥

अनुग्रहनिग्रहादिकं तु तत्तन्मतिभेदेन त्वन्मायया त्वयि स्फुरतीत्याहुः । समा विषमा च मतिर्येषां तेषां मतमभिप्रायम् । सर्पादिविषया धीर्येषां तेषां यथा रज्जुखण्डस्तथा तथा भाति । यद्वा । तमेवाविरोधं पुरुषमतिभेदेन दर्शयन्ति । समविषमेति ॥३७॥

तदेवं विरोधं परिहृत्य निश्चितं परमार्थमाहुः । स एव हि नानारूपेण प्रतीतः । वस्तुस्वरूपः सद्रूपः सर्वेषां गुणानां विषयाणामाभासैः प्रकाशैरुपलक्षितः । ननु तैर्जीव एवोपलक्ष्यते । न । सर्वप्रत्यगात्मत्वात्सर्वजीवान्तर्यामित्वात् । जडतादात्म्याध्यासेन जीवस्यापि जडप्रायत्वान्न तेन विना प्रकाश इति भावः । पर्यवशेषितो "नेति नेति„ इत्यादिश्रुतिभिः ॥ ३८ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु सत्यमीश्वरः सृष्ट्यादिकर्तेत्युक्तं स किं कर्मनिष्ठचेतनो यथा कुशलाकुशलमिश्रकर्माणि कृत्वा तत्फलानि सुखदुःखमोहात्मकानि भुङ्क्ते तथा सृष्ट्यादिकर्माणि गुणत्रयप्रयुक्तानि कृत्वा तत्फलानि भुङ्क्ते । किं वा ज्ञाननिष्ठचेतनवदुदासीन एवास्ते । नाद्यः भोक्तृत्वेन संसारित्वापातात् । न द्वितीयः उदासीनस्य कर्तृत्वानुपपत्तेः । अथोदासीनत्वं कर्तृत्वं चोच्यत इति चेन्न । परस्परविरुद्धत्वादनयोरित्याशङ्कते । अथेत्यादिना उदास्त इत्यन्तेन गद्येन । अथ ननु तत्र जगत्सृष्ट्यादिकर्तृत्वे सति हे भगवन् ! किंशब्द आक्षेपद्योतकः । आहोस्विच्छब्दश्च प्रश्नस्वरूपपरमपि वाक्यद्वयमाक्षेपगर्भम् । किं भवान् देववदसत्कर्मनिष्ठसंसारिजीववदिह गुणविसर्गे त्रिगुणकार्यरूपे प्रपञ्चे पतितः स्वातन्त्र्येण कर्तृत्वेन हेतुना स्वेन कृतानि कुशलाकुशलानि सात्त्विकराजसादीनि कर्माणि तेषां फलमुपादत्ते स्वीकरोति भुङ्क्ते इति यावत् । आहोस्विदिति किम्वा आत्माराम इवात्मयाथात्म्यानुभवनिष्ठ इव उपशमस्वभावः निवृत्तान्तर्बाह्येन्द्रियव्यापारः । अत एव समञ्जसदर्शनः अबाधिततत्तद्वस्तुयाथात्म्यज्ञान उदास्त इति परिहारं प्रतिजानीते । इतीति । इतीत्थमिह त्वयीश्वरे न विद्मः न जानीमः कर्मनिष्ठचेतनतुल्यतां ज्ञाननिष्ठचेतनतुल्यतां च न विदाम इत्यर्थः । किन्तूदासितृत्वं कर्तृत्वञ्चोभयमपि त्वयि विदाम इति भावः ॥ ३५ ॥

ननु परस्परविरुद्धमुभयमेकस्मिन् कथमुपपद्यते इत्यत्राहुः । न हि विरोध इति । न विरोधः अपि तूभयं भवति सम्भवति । कर्मभावनया ब्रह्मभावनया चान्वितानां सर्वेषां चेतनानामन्तरात्मभूते तद्विलक्षणे विविधविचित्रशक्तिमति त्वयि सर्वमविरुद्धमित्यभिप्रायः । अविरोधापादकगुणजातेन तं विशिंषन्तो वादिविप्रतिपत्त्यविषयताञ्च वदन्तोऽविरोधमुपपादयन्ति भगवतीत्यादिना । भगवतीत्यादिभिः सप्तम्यन्तैः पदैः कर्मब्रह्मोभयभावनान्वितचेतनेभ्यो वैलक्षण्यमुच्यते भगवति पूर्णषाड्गुण्येऽपरिगणिता असङ्ख्याता गुणानां कल्याणगुणानां गुणा यस्य ईश्वरे भावनाद्वयान्वितचेतनानामन्तरात्मन्यनवगाह्यं कर्मादिभावनान्वितचेतनसजातीयत्वेन दुर्बोधं माहात्म्यं यस्य अर्वाचीना इदानीन्तनाः विकल्पः संशयः तन्मूलको वितर्कः एवं वा एवं वेति वितर्कः तत्र यो विचारः किं युक्तमिति विचारः तदन्यतरपक्षसाधकाः ये प्रमाणाभासाः प्रमाणवदाभासमानाः तन्मूलकं यदुपाधितत्तर्कात्मकं शास्त्रं तदभ्यासेन कलिलं दूषितमन्तःकरणं तेनाधिकरोतीत्यधिकरणः नन्द्यादित्वात्कर्त्तरि ल्युः प्रारभमाण उत्पन्न इति यावत् । स दुरवग्रहो दुराग्रहो येषां तेषां वादिनां विवादानवसरे विवादाविषयभूते उपरताः निरस्ताः समस्ता मायामयाः प्राकृतदोषा यस्मिन् । प्रलयदशायामुपसंहृतकार्यवर्गेऽत एव केवले एकरूपे मायां प्रति स्वयमन्तर्धाय तिरोभूय स्थिते को न्वर्थो दुर्घट इव भवति कर्तृत्वकारयितृत्वसाक्षित्वानुमन्तृत्वफलित्वफलप्रदत्वोदासितृत्वादिरूपः कोऽप्यर्थो न दुर्घट इत्यर्थः । कुतः । स्वरूपद्वयाभावात् । स्वरूपं द्वयस्य विरुद्धाकारद्वयस्याभावात् कर्तृत्वोदासितृत्वयोः परमात्मस्वरूपे विरोधाभावादित्यर्थः । अयं भावः । तावज्जगत्सृष्ट्यादिव्यापारेषु स्वातन्त्र्यरूपं कर्तृत्वं प्रयोज्यकर्तुर्जीवस्य कारयितृत्वात्प्रेरकत्वरूपं प्रयोजककर्तृत्वं चेश्वरस्योपपन्नम् । न च कर्तृत्वसमनियतभोक्तृत्वापत्तिः तादृशकर्तृत्वस्य कर्मायत्तत्वात्प्रशास्त्रन्तराभावाच्च सर्वस्य शासितुरीश्वरस्येश्वरान्तराभावेनानिष्टकर्तुरभावान्न च स्वानिष्टापादकं कर्म स्वयमेव करोतीति वक्तुं युक्तमुन्मत्तत्वापातात्तथा लोके यथा सर्वाङ्कुराणां साधारणकारणं सलिलं विशेषकारणं बीजं दृष्टमेवं सर्वेष्वपि कार्येषु समानत्वादुदासीनः । नन्वदासितृत्वं नाम न साधारणकारणत्वमपि तु कर्तृत्वाकर्तृत्वोभयपरिहारेणावस्थानं कर्तृत्वमिति चेन्न । जगद्विषयकोदासितृत्वानभ्युपगमात् । तत्र कर्तृत्वमेव हि साक्षादभ्युपगतमस्माभिः । तर्हि यद्विषयकमुदासितृत्वमीश्वरेऽभ्युपगतमिति चेदुच्यते साक्षात्सुखदुःखादिसाधनभूत-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुण्यापुण्यकर्मस्वकर्तृत्वेन तत्कर्तृत्वपरिहारात् तेष्वेव कर्मसु प्राचीनवासनानुसारेण जीवप्रेरकत्वेनाकर्तृत्वपरिहाराच्च तद्विषयकमुदासितृत्वमिति । एवं सर्वावस्थायां सर्वस्य द्रष्टृत्वात्साक्षी कर्मसु प्रवृत्तस्य जीवस्योत्तरोत्तरं प्रवर्तकत्वादनुमन्ता सर्वस्वामित्वेन समाश्रितसंरक्षणरूपफलस्यापि स्वफलत्वात्फली फलमत उपपत्तेः ।३।२।३९। इति न्यायेन फलप्रद इति जीवस्तु क्लेशकर्मादिहेयाकरत्वात्कर्मवश्यत्वान्मायामोहितत्वादविद्यया तिरोहितस्वभावत्वाच्च कुशलाकुशलफलमुपादत्त इति ॥ ३६ ॥

ननु विवादानवसरश्चेदहमीश्वरः तर्हि कथं विवादानामुदयस्तत्राहुः । समेति । समा विषमा च मतिर्येषां तेषां मतमाभिप्रायमनुसरन्ति वादिविप्रतिपत्तीरप्रतिषिध्य तूष्णीं भवसीत्यर्थः । अप्रतिषेधे दृष्टान्तमाहुः । यथेति । यथा सर्पादिधियां सर्पादिभ्रान्तिमतां मतं रज्जुखण्डोऽनुसरति न प्रतिषेधते एवं त्वं चापि नानाविधवादिविप्रतिपत्तिसाक्षी तूष्णीमास्से इत्यर्थः ॥३७॥

एवं जगत्स्रष्टृत्वरूपनिमित्तकारणत्वे जीववत्संसारित्वादिशङ्का परिहृता अथोपादानकारणत्वे स्वरूपे विकाराश्रयत्वशङ्कां परिजह्रुः । स एवेति । योऽयं निमित्तकारणभूतः स एव त्वं सकलजगदुपादानकारणभूतोऽपि सर्ववस्तुषु देवादिपदार्थेषु स्थितोऽपि वस्तुस्वरूपः निर्विकारस्वरूपः यथोक्तम् "यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसम्भूतां तद्वस्तु नृप ! तच्च किम्" इति कुतः सर्वप्रत्यगात्मत्वात्सर्वे प्रत्यगात्मानः शरीरं यस्य तस्य भावस्तत्त्वं तस्माच्चेतनविशिष्टसर्वजीवशरीरकत्वाच्छरीरभूतचिदचिद्गतत्वाद्विकाराणां न स्वरूपे प्रसङ्ग इति भावः । अत एव सर्वगुणाभासः सर्वैश्चिदचित्कार्यादिभिरपृथक्सिद्धविशेषणैरवभासत इति सर्वगुणावभासः साक्षादवस्थाश्रयचेतनाचेतनविशिष्टत्वेनोपलक्षित इति भावः । समस्तपाठे गुणैः सत्त्वादिभिरवभासन्त इति गुणावभासाः गुणकार्यदेहेन्द्रियादयः तैरुपलक्षितः तद्विशिष्टत्वेनोपलक्षितः इत्यर्थः । अतस्त्वमेक एव पर्यवशेषितः एक एव समाभ्यधिकरहितः पर्यवशेषितः एवं विधो नान्य इति निर्णीत इति भावः ॥ ३८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवत्स्वरूपनिर्धारणार्थं पूर्वपक्षयन्ति । अथेति । सृष्ट्यादिकर्मणि प्रवर्तमानो भगवान् अथेह गुणविसर्गपतितः संसारान्तःपाती देवदत्तवत्परवशतया स्वकृतपुण्यापुण्यफलमुपादत्ते उतावोदास्ते नोपादत्ते किम् । कुतः । आत्मारामः स्वमहिम्नि स्थितः उपशमशीलः पूर्णानन्दानुभवः समञ्जसदर्शनः शुद्धज्ञानः एते प्रत्येकं हेतवोऽनुपादाने भवन्तीति न विदामो ह वाव शुश्रुमहे ह वाचेत्येताभ्यमज्ञानित्व एवं वदन्तीति सूचयन्ति अज्ञानित इति । कस्मिन् सति किं स्यादिति तत्राहुः । न हीति । कुशलाकुशलस्योपादानमनुपादानं चेत्युभयमितरत्र विरुद्धमत्र न हि विरोधः । कथं तत्राहुः । भगवतीति । भगवति को नु दुर्घट इति भवति सर्वः सुघट एवेत्यन्वयः । सौघट्यं बहुभिर्विशेषणैरुपपादयन्ति । अपारगणितेति । न परिगणिताः गुणानां गणा यस्य स तथा तस्मिन् कुत इत्यत्राहुः । ईश्वर इति । अघटितघटकत्वशक्तिमत्त्वाद्युक्तमित्यर्थः । इतोऽपि गुणानाम् अगणितत्वं युक्तमित्याहुः । अनवगाह्येति । अपरिच्छेद्यमहिमत्वात् अयमीशः ( १ ) स्वेतरवृत्तित्वानाक्रान्तपरिच्छिन्ननिष्ठाधिकरणं मेयत्वाद् घटवदित्यादिमहाविद्यालक्षणवितर्केण देवदत्तवदयं कुशलाकुशलभोक्ता न वेति विकल्पेन । अत्र कर्मणः पुरुषार्थहेतुत्वसमर्थनादस्ति शास्त्रादिसङ्गतिरित्यादिलक्षणमीमांसया यद्यस्मिन् गुल्मे व्याघ्रोऽदर्शीत्यादिविद्यमानेन प्रमाणवदवभासमानेन यदीशो दुर्गमशरीरे स्थितस्तर्हि देवदत्तवत्तद्गतदुःखभोगः प्रसज्येत इत्यादिकुतर्केण (२) चावगाह्यमाहात्म्यत्वादिति (३) तत्राहुः । अर्वाचीनेति । अर्वाचीना व्याप्त्यादिरहिताः विकल्पादयो येषु तानि तथोक्तानि तैः शास्त्रैः वैशेषिकादिभिः कलिलेन व्याकुलितेनान्तःकरणेन मनसा दुरवग्रहा येषां ते तथा ते च वादिनस्तेषां विवादानवसरे विप्रतिपत्त्यगोचरं इतोऽपि विवादाविषय इत्याहुः । उपरतसमस्तेति । केवलस्वात्ममायाम अद्वन्द्वरूपसामर्थ्यमन्तर्धायावष्टभ्योपरतसमस्तमायामये प्राकृतस्वभाववर्जिते एवम्विधेऽपि पुण्यापुण्यभोक्तृत्वं वयं न विद्महे । ये वदन्ति ते मूढाः असुरप्रकृतय इत्यभिप्रेत्य स्वयमेव समादधते । स्वरूपेति । "एकमेवाद्वितीयं निरन्निष्ठो निरवद्यः" इत्यादिश्रुतेः । सुखी दुःखीत्यादिस्वरूपद्वयानुपपत्तेः न चायं संशयः सुराणां स्वतन्त्रः परतन्त्रो वाज्ञो ज्ञो दुःखी सुखी नु किं इत्यादिसंशयः क स्याज्ज्ञानिनां पुरुषोत्तम इति विरोधात्तर्हि ज्ञानिनः कथं वदन्ति चेदुच्यते । अनन्तगुणत्वात्पूर्णशक्तित्वाच्च स्वातन्त्र्यादिकमेव जानन्ति । तदुक्तम् ।

> तस्यानन्तगुणत्वाच्च पूर्णशक्तित्वतो हरेः ।
> स्वातन्त्र्यादिकमेवास्य विद्वां जानन्ति निश्चयात् ।

इति निरवयवस्य जीवस्य पुण्यापुण्यभोक्तृत्वं युज्यते ।

> घटकत्वाद्दुर्घटस्य दुर्ज्ञेयत्वाच्च सर्वशः ।
> तच्छक्तेरविद्वा जीवं परतन्त्रं वदन्त्यमुम् ।
> एवं दुर्घटया शक्त्या ज्ञोऽज्ञानां परमेश्वरः ॥

इति वचनात् । यद्वा । पारतन्त्र्येण कुशलाकुशलादिकमनुभवति किम् उत स्वातन्त्र्येणोदास्त इति संशयं न विद्मः किं त्वनन्तशक्तेरनन्तगुणस्य हरेः पारतन्त्र्यादिकं कुतो घटत इति निश्चिनुमः अस्मिन्नर्थे च स्वतन्त्रः परतन्त्रो वाज्ञो ज्ञो दुःखी सुखी नु किम् इत्यादिमानमनुसन्धेयमितोऽपि न घटत इत्याहुः । न हीति । विरोधो हि यस्मात्तस्मादुभयमेकस्य न युक्तमित्यर्थः । ननु निर्गुणस्य हरेः गुणित्वम अकिञ्चनस्येशितृत्वं

---

(१) अत्रसाध्ये स्वपदद्वयं बुद्धिस्थात्मपरमेव । परिच्छिन्ने निष्ठा आधेयता यस्येति व्युत्पत्त्या परिच्छिन्नत्वसमानाधिकरण इत्यर्थः । अनाक्रान्तेत्यन्तमस्य विशेषणं तथा च आत्मवृत्तित्वात्मेतरवृत्तित्वैतदुभयाभाववान् यः परिच्छिन्नत्वसमानाधिकरणो धर्मः तदधिकरणत्वं साध्यमिति दृष्टान्ते घटत्वादिधर्ममादाय साध्यसत्त्वनिर्वाहः । पक्षे आत्मत्वादिधर्ममादाय साध्यसिद्धावपि तस्य परिच्छिन्नत्वासिद्धेः तत्सामानाधिकरण्यस्य निवेशः ।

(२) परिच्छेद्यमाहात्म्यत्वात् ।

(३) तद्गुणानामपरिच्छिन्नत्वं कथमित्यपेक्षायाम् ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वव्यतिरिक्तरहितस्य माहात्म्यम् अवाङ्मनसगोचरस्य विचारविषयित्वम् अकर्तुः कर्तृत्वमित्यादिसर्वं दुर्घटमिति तत्राहुः । भगवतीति । तर्हि उपाधिभेदाद्दौर्घट्यपरिहारोऽस्त्विति तत्राहुः । स्वरूपेति । ननु "मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा" इत्यादि कथं सङ्गच्छन इति चेत्तत्राहुः । समेति । सममतीनामनन्तं सच्चिदानन्दलक्षणं ब्रह्मेति यथार्थबुद्ध्यानुसरसि तथात्वेन प्रकाशस इत्यर्थः । विषममतीनामसुरप्रकृतीनां मतमभूतिरित्यसुरा इति मिथ्याबुद्ध्या दुःखी छिन्नो विद्ध इत्याद्याकारेण दृश्यस इत्यर्थः । अत्र दृष्टान्तमाहुः । यथेति । यथा रज्जुखण्डः सर्पोऽयमिति मन्दान्धकारे मन्दितेन्द्रियस्य ज्ञानं स एव पुनरालोकादिना लोकिते स्थले निर्दुष्टेन्द्रियस्य रज्जुखण्ड एव इति तदुक्तम् ।

> यथा रज्जुः सर्पधिया रज्जुबुद्ध्यावगम्यते ।
> तथा यथार्थबुद्ध्या वा मिथ्याबुद्ध्यावगम्यते ॥
> स्वेच्छयैव महाविष्णुः फलदश्चानुसारतः ।

इति तथा स एव पुनर्भगवान् सर्ववस्तुषु वस्तुस्वरूपोऽप्रतिहतस्वरूपः "वासनाद्वासयेद्वस्तु नित्याप्रतिहतत्वतः" इत्यादेः तादात्म्यं किं न स्यादत्राहुः । सर्वेश्वर इति । प्रत्यगात्मत्वेन सर्वेश्वरत्वं हरेरेवेत्याहुः । सकलेति । ननु कुलालादिवद्ब्रह्मकारणत्वमस्तु नान्तः परिच्छिन्नत्वापत्तेः । तथा च सकलकारणकारणत्वमयुक्तमत्राहुः सर्वप्रत्यगिति । सर्वेषामपि प्रत्यगात्मत्वेनान्तर्यामित्वेन तत्तद्वस्तुतत्तच्चेष्टादिकारणत्वेन अपरिच्छिन्नस्यापि आकाशवदुपपत्तेः तदन्तःस्थस्य तत्तद्दृष्टप्राप्यदौर्भाग्यप्राप्तिः स्यादत्राहुः । सर्वेति । सर्वगुणानामाभासेन सम्यक्प्रकाशेनोपलक्षितो ज्ञानिभिः सम्यग्दृष्ट इतरैरनुमीयत इत्यर्थः । न च स्थानभेदात्तस्य भेद इत्याहुः एक इति । "स वा एष आत्मा नेति नेति" इत्यादिपारिशेषलक्षणप्रमाणात् एक एवेति निश्चिन इत्यर्थः । महतामनुभवापरपर्यायसाक्षिप्रत्यक्षं हरेरेकत्वे निर्दोषत्वे संसारनिवर्तकमहामहिमत्वे प्रमाणमाहुः । अथेति । विप्लुषा बिन्दुना असक्तलीढया निरन्तरसेवितया नितरां स्यन्दमानेन निरवरतेन निरन्तरेण स्वरूपसुखेन हे मधुमथन ! यस्मात्त्वं सर्वोत्तमः शर्वगुणपूर्णः सर्वात्मना निर्दोषः सर्वान्तर्यामी अथ तस्मादेकान्तिनो हरावर्पितशरीरेन्द्रियप्राणसर्वस्वाः भागवताः ये एते कथं त्वच्चरणाम्बुजसेवां विसृजन्ति एवेत्यन्वयः । ह वाव इत्येतैर्निपातैः "परमः परार्ध्यः" इति श्रुतेः महिम्नः परमपरार्ध्यत्वं सूच्यते सर्वभूतप्रियाः संन्यासिनोऽज्ञातशात्रवस्तेषां सुहृत् सर्वभूतानां परेणाभीष्टकर्तृत्वात् प्रियश्च सुहृच्च परेयं प्रियनामेति वचनात् निरन्तरं सन्तुष्टमनसः अविसर्जने कारणमाहुः । स्वार्थेति । यत्र त्वच्चरणाब्जसेवायां परिवर्तः परिभ्रमणं स्वाभिप्रायं विज्ञापयितुमुपोद्घातमाहुः । त्रिभुवनेति । त्रिभुवनमेवात्मभवनं यस्य स तथा त्रिभुवनस्य य उपद्रवः सोऽवश्यं परिहर्तव्य इति द्योतनार्थं विशेषणमिति ज्ञातव्यम् । एवमेवोत्तरविशेषणानि अभिप्रायगर्भाणि त्रीणि नयनानि यस्य स तथा नृसिंह इत्यर्थः "विष्णोर्नृसिंहनामानि त्रिनेत्रोग्रादिकानि तु,, इति वचनात् नृसिंहसुदर्शनादयस्त्रिनेत्रादिनामानः त्रयो लोकास्त्रिलोकविषयाः ज्ञानलक्षणाः प्रकाशाः यस्य स तथा सर्वज्ञ इत्यर्थः । त्रिलोकस्य त्रिलोकनिवासिनो जनस्य मनोहरोऽनुभावो यस्य स तथेति वा "मायागुणव्यतिकराद्यदुरुर्विभासि" इति वचनाद्विभूतय इत्युच्यन्ते देवादयो न तु स्वरूपत्वात् अपिशब्दान्मत्स्यादय एव साक्षाद्विभूतय एव गम्यन्ते "विविधभावस्य पात्रत्वात्सर्वं विष्णोर्विभूतयः,, इति च ये विभूतिशब्दवाच्या दितिजादयोऽभूवन् तेषामनुपक्रमसमयः क्षयप्रारम्भकालोऽयमिति मत्वा स्वात्ममायया स्वरूपभूतेच्छया स्वमहिम्ना शुक्रशोणितसम्बन्धमन्तरेण वा सुराद्याकृतिभिरवतीर्य यथापराधं त्रैलोक्यापहरणादिलक्षणापराधमनुसृत्य बल्यादीनां धृतवानसीत्यन्वयः । मिश्रिताकृतिभिर्नरसिंहादिभिः सुराद्याकृतिभिरित्यनेन विभूतित्वं विवृतमिति ज्ञातव्यम् । किं बहूक्तेनापेक्षितं वक्तव्यमिति तत्राहुः । एवमिति । यदि मन्यसे कर्तव्यं तर्हीति शेषः । किं तत्कर्तव्यमिति प्रार्थयन्ते । अस्माकमिति । हृदयनिगडानां हृदयाख्यशृङ्खलानां चक्रशङ्खादिलाञ्छनानां स्पष्टतया धारणात्मसात्कृतानां तद्भक्तानामनुकम्पया रञ्जितं स्निग्धं च विशदं निर्मलं च रुचिरं चारु च शिशिरं शीतलं च यत्स्मितं तेन युक्तेनावलोकनेन निरीक्षणेन विगलितं निर्गतं च मधुरं च मधुरितं मुखरितं मन्द्रं च यद्वचस्तेनामृतकलया युक्तेनेति शेषः । वचोलक्षणयामृतकलयेति वा बुभुक्षितबालवत्सर्वेशस्य तव हृदयमावर्तिरेकादुत्क्वथितमिव यद्विज्ञापनमस्मदीयं तदस्मद्ग्लानिनिमित्तमित्यभिप्रेत्याहुः । अर्थेति । दिव्यमायया स्वरूपेच्छया विनोदो लीला यस्य स तथा निकायानां राशीनां ब्रह्मस्वरूपेण वहिः प्रत्यगात्मस्वरूपेणेति यथा देवादिक्रियाविशेषणं तेषां देशकालादीनामुपादानोपलम्भकतया कारणत्वप्रापकत्वेनोपादानत्वेनोपालम्भकत्वेनेति वा सर्वमनुभवतः आकाशशरीरस्याकाशवत् सूक्ष्मरूपस्य "आकाशशरीरं ब्रह्म" इति श्रुतेः लिङ्गशरीरस्य व्यावृत्त्यर्थं परब्रह्मण इति मुक्तजीवस्य व्यावृत्त्यर्थं साक्षादिति । साक्षात्परब्रह्मत्वं चित्प्रकृतेरप्यस्तीत्यतः परमात्मन इति । हिरण्यरेतसोऽग्नेः महाप्रकाशस्य विस्फुलिङ्गादिभिरल्पप्रकाशैरग्निकणैः खद्योतैश्च यतस्त्वमस्माकं सर्वापदां परिहर्तासि अतो वयं यत्नेन त्वाष्ट्रहननलक्षणवाञ्छया तव पादकमलच्छायामुपगताः तदुपसन्नानाम् "अधीहि भगवो ब्रह्म,, इति समित्पाणिशिष्यवच्छरणागतानामस्माकं तत्कार्यमुपकल्पय समर्थस्त्वेत्यन्वयः । बहुप्रार्थनयैव स्वाभीष्टफलप्राप्तिः स्यादिति दर्शयितुमेवं गद्येन विज्ञापितमेव पद्यप्रबन्धेन विज्ञापयन्ति । अथो इति । तेजांसि सामर्थ्यलक्षणानि ॥ ३५—४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

किन्त्विदं तु निर्णेतुं न शक्नुम इति बहिर्मुखानाक्षेप्तुं सोल्लुण्ठमाहुः । अथेति । तत्र सृष्ट्यादौ कर्माणि देवदत्तवत् संसारिजीवविशेषवदविद्यया गुणविसर्गपतितः सन् स्वकृतशुभाशुभकर्मफलं देवतिर्यगाद्यवतारसरूपमुपादत्से । आहोस्विदथवा तत्तद्वस्तुरूपत्वेऽपि विद्ययात्मारामः सन्नित्यादि ॥ ३५ ॥

यत्र विद्या सम्भाव्यते तत्राविद्यापि सम्भाविता स्यादिति मायाशक्तिवृत्तिविद्याशक्तिमयेश्वरवादिनामुपहासार्थमिदमुक्तम् । उभयमपि स्वमतं पुनः स्फूर्त्तिमभिनयन्त इवाहुः । न हीति ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यदिदं विरुद्धं भगवति नैव विद्यते। तत्र हेतुः। स्वरूपद्वयाभावात्। संसारिजीववद्द्वयद्वन्द्वमुक्तत्वावस्थाविशेषाभावात्। बद्धत्वे हि मुक्तत्वं तथा दिव्यातिदिव्यतत्तदवतारादिलक्षणोऽन्यथार्थो गुणो न भवति। यतः आत्ममायां निजेच्छाशक्तिमन्तर्धाय मध्ये निधाय तत्र तत्र सहायत्वेन सम्पाद्य तिष्ठति सतीत्यर्थः। उभयत्र हेतवो भगवतीत्यादयः ॥ ३६ ॥

तर्हि कथमन्यथा प्रतीतिर्बहिर्मुखानां तत्राहुः। समेति। अनिश्चितबुद्धीनामित्यर्थः। तदेव स्थापयितुं जीवन्मुक्ताद्वैलक्षण्यमाहुः। स एव हीति ॥ ३७ ॥ ३८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

शिष्टानां पालनं हि दुष्टानां संहारं विना न भवतीत्यन्तर्भूतसंहारस्य पालनस्यापि दुर्ज्ञेयत्वमाहुः। अथेति। देवदत्तः प्राकृतजीवो यथा गृहादिकं निर्माय तत्र मित्रशत्रूदासीनादिगहने संसारे प्रविश्य स्वकृतधर्माधर्मफलं सुखदुःखं भुङ्क्ते तथैव तत्र भवानित्यादरे त्वमपि गुणेभ्यः सत्त्वरजस्तमोभ्यो त्रिविधः सर्गो येषां तेषु गुणविसर्गेषु देवासुरराक्षसादिषु परस्परविघातिषु मध्ये पतितः उपेन्द्रकृष्णरामाद्यवतारेषु शिष्टपालनदुष्टनिग्रहयोः प्रवृत्तः भोगैश्वर्यसुखं सङ्ग्रामादिश्रमदुःखञ्च तत्र प्राप्तोऽपि तत् किं पारतन्त्र्येण कर्माधीनत्वेन स्वकृतयोः पुण्यपापयोः कुशलाकुशलं सुखदुःखमुपाददाति स्वीकरोति आहोस्वित् किं वा समञ्जसदर्शनः अप्रच्युतचिच्छक्तिकः उदास्ते साक्षित्वान्न सुखं दुःखं स्वीकरोतीति न विद्मः तत्त्वं न विद्मः ॥ ३५ ॥

विरोधमुक्त्वा भक्तानां मते तस्य परिहारमाहुः। नहीति। विरुद्धगति विरोधः। उभयम् आत्मारामत्वमप्राकृतसुखदुःखित्वं च त्वयि न विरुद्धमित्यर्थः। नह्यन्यदृष्टान्तेन त्वयि विकल्पो युज्यते अतर्क्यैश्वर्यत्वादित्यविरोधे हेतूनाहुः। भगवतीत्यादि। प्रथमं सुखदुःखित्वं भगवतीत्यादिपदद्वयेनाहुः। भगवतीति "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" इति वैष्णवोक्तेरप्राकृतज्ञानादिषडैश्वर्यवत्त्वेनाज्ञानमूलकं कर्मैव प्राकृतं सुखदुःखं त्वयि नास्तीत्यवगतम्। ननु तर्ह्यन्ये सुखदुःखे मयि कुतस्त्ये तत्राहुः। अपरिगणितगुणानां प्रेमवश्यत्वभक्तवात्सल्यादीनां गणा यस्मिन् तेन ह्यसुरराक्षसादिभ्यस्त्वद्भक्तानां प्रह्लादविभीषणादीनां पाण्डवयादवादीनां नित्यपार्षदानां साधकभक्तानामप्यनन्तानां भक्ताभासानामस्मदादिदेवानाञ्च कष्टे वृत्ते सति तद्दुष्टसंहारार्थं विविधप्रयासज्ञापितस्य स्वीयदुःखस्य तथा तेषामेव तद्विपद्दुस्तीर्णानामवग्रहजाज्वल्यमानसस्यानां कादम्बिनीवृष्यमाणामृतसिक्तानामिव लब्धत्वद्दर्शनानां परमसुखे वृत्ते सत्युद्भूतस्य तव सुखस्य च भक्तवात्सल्यप्रेमवश्यत्वैकनिदानत्वादप्राकृते एव ते सुखदुःखे भवतः। तत्र। सुखदुःखे अपि ते चिन्मयसुखरूपे एव प्रेमाख्यचिच्छक्तिवृत्तित्वात्। किं पुनर्व्रजदेव्यादीनां वैदेह्याश्च सम्भोगविप्रलम्भजनिते सुखदुःखे ते तु प्रेमपरमकाष्ठामयत्वात् परमसुखरूपे एव स्तः। ततश्च चित्स्वरूपस्य तव चित्स्वरूपयोः सुखदुःखयोः रममाणस्यात्मारामत्वं सुखदुःखवत्त्वमैक्यादविरुद्धमेव प्रतिपादितम्। नन्वेवं कैरपि दार्शनिकैर्नाहं निरूप्ये तत्राहुः। ईश्वरे त्वयि ईशितव्यानां तेषां निरूपणायोग्यता युक्तैवेति भावः। यतोऽनवगाह्यम् "भक्त्याहमेकया ग्राह्यः" इति त्वद्वचनात्तेषां भक्तिहीनानामवगाहनानर्हं माहात्म्यं यस्मिन्। ननु युष्मत्प्रतिपादिते मत्षडैश्वर्याणां प्रेम्णश्च चिन्मयत्वे तैर्बहव एवानुपपत्तयः उद्गृह्यन्ते तत्राहुः। अर्वाचीना वस्तुस्वरूपासंस्पर्शिनो विकल्पादयो येषु शास्त्रेषु तैः कलिलं व्याकुलं यदन्तःकरणमाशयः तत्र आशेरते सदैव शयित्वा तिष्ठन्ति ये दुरवग्रहाः दुराग्रहास्तैरेव वादिनां नानावादोद्ग्राहवतां विवादस्यानवसरे अगोचरे तत्र विकल्प एवं वा एवं वेत्याकारः वितर्कः किमत्र युक्तमिति निश्चयः विचार इत्थमेवेति निश्चयः। तत्र प्रमाणाभासाः कुत्सितास्तर्का इति। नन्वनुपपत्तौ सत्यां कुतो विवादाभावस्तत्राहुः। उपरताः समस्ता मायामयाः मायिकाः पदार्था यत्र तस्मिन्निति विवादादीनां मायाशक्तिकार्यत्वात् तव तु माया मायिकपदार्थातिरिक्तवस्तुत्वात् कुतो विवादप्रसक्तिसम्भावनापीत्यर्थः। ननु तदपि युष्मत्साहाय्यार्थं समुद्रमन्थनादौ पाण्डवसाहाय्यार्थं सारथ्यदूत्यादौ यादवपालनार्थं जरासन्धाद्युपद्रवोत्थभयपलायनादौ कर्माणि प्रत्यक्षत एव सर्वैर्दृश्यमानं मदीयदुःखं कथं चिन्मयं सुखरूपं भवेदित्यत आहुः। केवल एवेत्यादि। त्वयि मायाशक्तिविनाभूते सत्येव या आत्ममाया अचिन्त्ययोगमाया तामन्तर्धाय मध्ये कृत्वा को न्वर्थो दुर्घट इति त्वदनुभवे सुखमये कः प्रवेष्टुं शक्नुयादिति नात्र प्रत्यक्षादिप्रमाणं प्रवर्त्तत इति भावः। "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" इति वचनात्। नन्वलमचिन्त्यशक्तिस्वीकारेण मम भगवत्स्वरूपेण भक्तवात्सल्योत्थसुखदुःखादिमत्त्वञ्च ब्रह्मस्वरूपेण सर्वत्र ताटस्थ्यादात्मारामत्वमिति स्वरूपद्वयस्य क्रमेण धर्मद्वयमस्तु तत्राहुः। स्वरूपद्वयाभावादिति। एकस्यैव भगवतस्तव निर्विशेषज्ञानगम्यत्वमेव ब्रह्मत्वमलौकिकविशेषज्ञानगम्यत्वमेव भगवत्त्वमिति दूरवर्त्तिभिर्ज्ञानिभिरलौकिकविशेषग्रहणासमर्थैस्त्वमेव ब्रह्म समीपवर्त्तिभिर्भक्तैरलौकिकविशेषग्रहणसमर्थैर्भगवानिति त्वमेवोच्यसे इत्यर्थः। तत्र कृपायाः परमाणुत्वपरममहत्त्वे एव दूरत्वसमीपत्वयोर्हेतू ज्ञेयौ ॥ ३६ ॥

किञ्च। तदपि संसारपरम्परासिद्ध्यर्थं तेषामभक्तानां मतं नैवोच्छिन्नीकरोषीत्याहुः। समा ब्रह्मविषयत्वात् विषमा तत्प्रातिकूल्यवत्त्वाच्च मतिर्येषाम्। यद्वा। स्वरूपभूताभ्यां ब्रह्मत्वभगवत्त्वाभ्यां समेऽपि एकरूपेऽपि त्वयि विषमा मायातीतस्य ब्रह्मण एव माया शाबल्ये सति भगवत्त्वमित्येवं वैषम्यवती मतिर्येषां तेषां मतमनुसरसि प्राज्ञोऽपि मतमेवाहुः। सर्पादिधियां रज्जुखण्ड इव ब्रह्मण्यात्मारामत्वमेव सत्यं भक्तवात्सल्यादीनां तु मायाप्रत्यायितत्वात्तन्मूलकं सुखदुःखादिकमलौकिकमेवेति नैवास्ति विरोध इति ॥ ३७ ॥

यस्मादेवं तस्मात् सर्वज्ञमतमपहाय त्वद्भक्तसम्मतमतमेव वयमनुसराम इत्याहुः। स एव पूर्वोक्तभगवत्त्वादिविशेषणविशिष्ट एव वस्तुस्वरूपः। वास्तववस्तुस्वरूपः सर्वेषां प्रत्यगात्मत्वात् इन्द्रियागोचरत्वादप्रत्यक्षोऽपि सर्वेषां गुणानां बुद्धीन्द्रियादीनामाभासैः प्रकाशैरेव आधिक्येन लक्षितः ज्ञातः

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनुमित इत्यर्थः । यदुक्तम् "गुणप्रकाशैरनुमीयते भवान्" इति । पर्यवशेषितः मायामायिकवस्तुमात्रनिषेधेन "नेति नेति" इत्यादिश्रुतिभिरिति भागवतामृतदृष्टाः "विना शारीरचेष्टत्वं विना भूम्यादिसंश्रयम् । विना सहायांस्ते कर्माविक्रियस्य सुदुर्गमम्" इत्याद्याः कारिकाः अनुसृत्य दुरवबोध इत्यादीनि गद्यानि व्याख्यातानि॥३८॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवद्धामादिकं भगवत्कृपां विना न जानन्तीत्युक्तम् । अथ कुशास्त्रविमोहितजीवानुग्रहचिकीर्षया स्वोक्तविश्वहेतौ भगवति सर्वात्मनि स्वभावतोऽपास्तसमस्तदोषे केचिदासक्तमन्येऽनासक्तं पुरुषविशेषमीश्वरमपि वाह्या मन्यन्ते तन्मतद्वयविरोधमारोप्य निराकुर्वन्ति । अथेति । तत्र स्वकृते विश्वस्मिन् देवदत्तवत् यथा देवदत्तः पारतन्त्र्येण विषयपारवश्यतया गृहादिकं विधाय तत्र स्वकृतशुभाशुभं फलं भुङ्क्ते तद्वद्भवान् गुणैर्विविधतया सृज्यन्ते इति सर्गाः देवमनुष्यादिदेहास्तेषु पतितः प्रविष्टः स्वकृतकुशलफलमुपाददाति तर्हि स्वतोऽवाप्तसमस्तकामत्वेन विश्रुते त्वयि इदं बुभुक्षुलक्षणं विरुद्धं स्यादिति भावः । आहो स्वित् देवदत्तवदित्यत्रापि योज्यम् । यथा देवदत्तः मुमुक्षुः सन् आत्मारामः स्वरूपानन्दतृप्तः उपशमशीलोऽन्तर्दृष्टिः समञ्जसदर्शनः उदास्ते भोगादुदासीनो भवति तद्वद्भवानस्ति तर्हि सर्वनियन्तृत्वसर्वात्मत्वमुक्तोपसृप्यत्वादिना विश्रुते त्वयि इदमात्मारामत्वोपशमशीलत्वादिकं मुमुक्षुलक्षणमपि विरुद्धं स्यादिति भावः इतिशब्दः पूर्वपरामर्शपरः इति पूर्वोक्तं विरोधद्वयं न विदामः त्वयि न विद्मः ॥ ३५ ॥

तदेवाहुः । नहीति । ईश्वरे बुभुक्षुमुमुक्षुसर्वजीवनियन्तरि स्वकृतकुशलभोक्तृत्वेन बुभुक्षुत्वम् आत्मारामत्वोपशमशीलत्वादिना मुमुक्षुत्वञ्चेत्युभयं नास्ति स्वरूपद्वयाभावात् स्वरूपे ईश्वरस्वरूपे तद्द्वयस्याभावात् ईश्वरांशभूतजीवधर्मत्वाद्बुभुक्षुत्वमुमुक्षुत्वद्वयस्येत्यर्थः । हि हेत्वर्थः । अतो हेतोर्न विरोधः इति नकारस्योभयत्र योगः । ईश्वरे बहुभिर्विशेषणैः बुभुक्षुत्वमुमुक्षुत्वाभावमेवोपपादयन्ति भगवति "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणैर्नृप" इति सच्छास्त्रोक्तेः । अपरिमिताः अनन्ताः स्वाभाविकाः गुणगणा यस्य तस्मिन् उप समीपे आधेयत्वनियम्यत्वकार्यत्वादिना रताः स्वस्थावस्थां प्राप्ताः समस्ता मायामया तच्छक्तिमयाः महदादयः सृष्टिवेलायां यस्मात्तस्मिन् संहारवेलायां च आत्ममायां प्रकृतिमात्मशक्तिमन्तर्भाव्य आकृष्य केवले कारणे को न्वर्थो भोगमोक्षादिरूपो दुर्घटः न कोऽपीत्यर्थः । स्वतोऽवाप्तसमस्तकामत्वात् अथार्वाचीना आधुनिकाः विकल्पाः ये येषु इदमेव मुख्यं प्रमाणमित्येवं प्रमाणतया भासमानेषु कुत्सिता वेदविरुद्धाः तर्क्यन्ते प्रतिपाद्यन्ते इति तर्काः विषमा येषां तैः शास्त्रैः कलिलं मलिनं यदन्तःकरणं तदाश्रया ये दुरवग्रहाः दुराग्रहास्तैरेव वादिनां विवादस्य नास्त्यवसरोऽवकाशो यस्मिन् तत्र विकल्पः ईश्वरो नास्ति अस्ति वेति वितर्को वेदविरुद्धो विविधपदार्थवादः विचारो वेदविरुद्धस्वकल्पितपदार्थचिन्तनम् ॥ ३६ ॥

सर्वेश्वरकोऽपि शान्सन्मार्गे न नियोजयसि प्रत्युत तदनुरूपं तानधोगतौ पातयितुं तन्मतमनुसरसीत्याहुः । समविषममतीनामिति । समे सर्वात्मनि सर्वकारणकारणे सर्वेश्वरे त्वस्मिन् विषममतीनां तेषामन्यशास्त्रनिष्ठानां मतं त्वपराङ्मुखत्वापादकं सिद्धान्तमनुसरसि "यमेभ्यो लोकेभ्य उन्निनीषति तं साधु कर्म कारयति यमेभ्यो लोकेभ्योऽधो निनीषति तमसाधु कर्म कारयति" इत्यादिवाक्यान्यत्रानुसन्धेयानि । तत्र दृष्टान्तमाहुः । यथा सर्पोऽयमिति धीर्येषां तेषां मतं सर्पतया भासमानो रज्जुखण्डः अनुसरति तद्वत् ॥ ३७ ॥

एवमन्यशास्त्रविमोहितविवादाविषयत्वं भगवत उपपाद्य स्वतः प्रमाणभूतश्रुत्युक्तरीत्या भगवन्तं स्तुवन्ति । स एवेति । स एव सकलजगत्कारणभूतः सर्वस्मिन् वस्तुनि कार्यमात्रे वस्तुस्वरूपस्तत्तद्वस्त्वाकारः सर्वेषां प्रत्यञ्चानां जीवानां स्वांशानामात्मा आश्रयः स्थितिप्रवृत्तिप्रदस्तस्य भावस्तत्त्वं तस्मात्सर्वेश्वरः सर्वे सत्त्वादयो गुणा आभासन्ते प्रतीयन्ते येषु ब्रह्मादिमत्कृत्यान्तेषु तैर्धार्यत्वप्रेर्यत्वादिस्वासाधारणगुणयुक्तैः सर्वाधारत्वप्रेरकत्वादिस्वासाधारणगुणयुक्तः लक्षितः ज्ञापितः । एवं सकलजगत्कारणत्वात्सर्वचेतनाचेतनपदार्थगर्भोऽपि एकः सजातीयपदार्थान्तरशून्यः एवकारेण विजातीयपदार्थान्तरशून्यः पुनर्भूयो भूयः पर्यवशेषितः परितः सर्वश्रुतिसमन्वयेन सर्वविरोधपरिहारेण च अवशेषितः सर्वकारणत्वेन वर्णित इत्यर्थः ॥ ३८ ॥

---

### भाषा टीका ।

और भी एक संदेह है किसी एक संसारी देवदत्त के तुल्य इस संसार में पड के आप भी परतंत्र होकर अपने कर्मों के सुख दुःखों को भोगते हो अथवा आत्माराम शम दम शील स्वभाव वाले दिव्य ज्ञान वाले होकर संसार से उदासीन रहते हो इस बात को हम लोग नहीं जानते हैं ॥३५॥

तथापि भगवान् आप में इन दोनों बातों के होने का विरोध नहीं है क्योंकि भगवान् तो असंख्यात गुण वाले हैं ईश्वर हैं उन के माहात्म्य को कोई नहीं जान सकता है तो नवीन नैयायिकादिकों के विकल्प वितर्क विचार दुष्प्रमाण कुतर्क शास्त्र आदिकों से जिन के अंतःकरण भ्रांत होगये हैं तिन आग्रह वालों के विवाद के अवसरसे दूर हैं समस्त माया प्रपंच से दूर हैं केवल स्वरूप हैं आत्ममाया को अपने में धारण किये हैं तिनको कौन सा अर्थ दुर्घट होसकता है क्योंकि आप तो कर्ता अकर्ता दोनों अभिमान स्वरूप से रहित हैं ॥ ३६ ॥

ज्ञानी अज्ञानी दोनों को आप दोनों प्रकार दीखते हो जैसे कि रस्सी का टुकडा भ्रांत को सर्प सा दीखता है और को रस्सी दीखता है ॥ ३७ ॥

फिर विचार करने से वेही आप सब वस्तु में वस्तुस्वरूप हो सर्वेश्वर हो सब संसार के कारण के कारण हो सब जीवों के अंतर्यामी होने से सब बुद्धि आदि गुणों के प्रकाशक होने से जाने जाते हो एक आपही सब के होपने गिने जाते हो ॥ ३८ ॥

---

अथ ह वाव तव महिमामृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निरन्तरं निर्वृतमनसः कथमु ह वा एते मधुमथन ! पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति न यत्र पुनरयं संसारपर्यावर्त्तः ॥ ३९ ॥

त्रिभुवनात्मभवन ! त्रिविक्रम ! त्रिनयन ! त्रिलोकमनोहरानुभाव ! तवैव विभूतयो दितिजदनुजादयश्चापि तेषामनुपक्रमसमयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधं दण्डं दण्डधर ! दधर्थ एवमेनमपि भगवन् ! जहि त्वाष्ट्रमुत यदि मन्यसे ॥ ४० ॥

अस्माकं तावकानां तव नतानां तत ! ततामह ! तव चरणनलिनयुगलध्यानानुबद्धहृदयनिगडानां स्वलिङ्गविवरणेनात्मसात्कृतानामनुकम्पानुरञ्जितविशदरुचिरशिशिरस्मितावलोकेन विगलितमधुरमुखरसामृतकलया चान्तस्तापमनघार्हसि शमयितुम् ॥ ४१ ॥

अथ ह भगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिकायानामन्तर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्मस्वरूपेण प्रधानरूपेण च यथादेशकालदेहावस्थानविशेषं तदुपादानोपलम्भकतयानुभवतः सर्वप्रत्ययसाक्षिण आकाशशरीरस्य साक्षात् परब्रह्मणः परमात्मनः कियानिह वा अर्थविशेषो विज्ञापनीयः स्याद्विस्फुलिङ्गादिभिरिव हिरण्यरेतसः ॥ ४२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतस्त्वद्भक्तिरेव परमपुरुषार्थ इत्याहुः । अथ हेत्यादिपर्यावर्त्त इत्यन्तेन । यस्मादेवम्भूतस्त्वं परमेश्वरः । अथ ह वाव अत एव हि । हे मधुमथन ! परमभागवता एते त्वत्पादाम्भोजानुसेवां कथं मुहुर्मुहुर्विसृजन्तीत्यन्वयः । हि यस्मात्स्वार्थे पुरुषार्थे कुशला निपुणाः । अत एव आत्मा त्वमेव प्रियः सुहृच्च येषां ते साधवो रागादिशून्याः । तत्र हेतुः । तव महिमैवामृतरससमुद्रस्तस्य विप्रुषा बिन्दुमात्रेण सकृदवलीढया आस्वादितया स्वमनसि निष्यन्दमानमतिशयेन स्रवद्यन्निरन्तरं सुखं तेन विस्मारिता दृष्टश्रुतविषयाः सुखलेशाभासा येषां ते । अत एव भगवति त्वयि नितरां निरन्तरं निर्वृतं च मनो येषां ते । यत्र यस्यामनुसेवायां सत्याम् ॥ ३९ ॥

प्रस्तुतं विज्ञापयन्ति । त्रिभुवनेत्यादिना यावत्समाप्ति । त्रिभुवनमात्मा स्वरूपं भवनं च यस्य त्रिभुवनस्यात्मा भवनं चेति वा त्रयो विक्रमा यस्य त्रींल्लोकान्नयतीति तथा त्रयाणां लोकानां मनोहरोऽनुभावो यस्य । एवं चतुर्धा सम्बोध्याहुः । तेषामनुपक्रमसमय उद्यमकालो न भवतीति मत्वा । हे दण्डधर ! पूर्वं यथा दण्डं दधर्थ धृतवानस्येवमेतं त्वाष्ट्रमपि जहि यदि मन्यसे हन्तुं शक्नोषीति वा ॥ ४० ॥

प्रथमं तावत्त्वदीयानामस्माकमन्तस्तापं शमयितुमर्हसि । तावकानामित्यत्र हेतुः । हे पितः ! हे पितामह ! तव चरणनलिनयुगलध्यानेनानुबद्धो हृदये निगडः शृङ्खला येषाम् । स्वलिङ्गविवरणेन स्वमूर्तिप्रकटनेन स्वीकृतानाम् । केन । अनुकम्पयानुरञ्जितं सानुरागं च तद्विशदं रुचिरं शिशिरं च स्मितं तत्सहितेनावलोकेन तथानुकम्पयैव विगलितो मधुरो मुखरसः प्रियवाक् सैवामृतकला तया च ॥ ४१ ॥

किञ्च । अस्मदभिप्रायस्त्वया ज्ञायत एव किमत्रास्माभिर्विज्ञापनीयमित्याहुः । अथ हे भगवंस्तवास्माभिरिह कियानर्थविशेषो विज्ञापनीयः स्यादित्यन्वयः । यथा हिरण्यरेतसोऽग्नेस्तदंशभूतैर्विस्फुलिङ्गादिभिः प्रकाशो न क्रियते तथा त्वदंशैरस्माभिः कार्यार्थप्रकाशनं न कार्यमित्यर्थः । अत्र हेतुगर्भाणि विशेषणानि । अखिलजगतामुत्पत्त्यादिषु निमित्तायमानया दिव्यमायया विनोदो यस्य । अत एव सर्वजीवनिकायानामन्तर्हृदयेषु ब्रह्मस्वरूपेण प्रत्यगात्मान्तर्यामी तद्रूपेण च बहिरपि प्रधानरूपेण देशकालदेहावस्थानविशेषाननुलक्ष्य चानुभवतः । कथम् । तेषामुपादानतयोपलम्भकतया च उपादानस्योपलम्भकतयेति वा । अत एव सर्वेषां प्रत्ययानां बुद्ध्यादीनामपि साक्षिणः । साक्षित्वे हेतुः । आकाशवदलिप्तं शरीरं स्वरूपं यस्य । अलिप्तत्वे हेतुद्वयम् । साक्षात्परब्रह्मणो निरुपाधेः परमात्मनः शुद्धसत्त्वमूर्तेश्च ॥४२॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत एव भवाननितरसाधारणोदारवृत्तियोगपरिशुद्धमनोग्राह्यो नित्यनिरुपाधिकापरिच्छिन्ननिजानन्दानुभवरूपो जगत्सृष्टिस्थितिसंहृतिलीलः सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यपरिमितगुणसागरोऽ-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नितरसाधारणविविधविचित्रशक्तिरशेषचिदचिच्छरीरकः सर्वेश्वरः सर्वसमोऽत एव त्वच्चरणारविन्दमधुरसास्वादनशीलास्त्वामविस्मरन्तोऽनन्तस्थिरफलरूपमुक्तिं प्राप्नुवन्तीत्याहुः। अथेत्यादिना पर्यावर्त्तत इत्यन्तेन गद्येन। अथ ह्वाव ननु भगवानत एव हीति वार्थः। हे मधुमथन! परमभागवता एकान्तिनोऽनन्यप्रयोजनाः त्वत्पदाम्बुजसेवां कथमुद्वा विसृजन्तीत्यन्वयः। हि यस्मात्ते स्वार्थकुशलाः पुरुषार्थनिष्कर्षकुशलाः अतः कथम्भूताः आत्मा त्वमेव प्रियः सुहृच्च येषां साधवः साध्नुवन्ति परेषामभीष्टमिति साधवः रागादिरहिताश्च। तत्र हेतुः। तव महिमैवामृतरससमुद्रस्तस्य विप्रुषा विन्दुमात्रेण कथम्भूतया सकृदवलीढयास्वादितया स्वमनसि निष्यन्दमानमतिशयेन स्रवन्निरन्तरं सन्ततं सुखं तेन विस्मारिताः दृष्टाः ऐहिकाः श्रुताः आमुष्मिकाश्च विषयाः सुखलेशाभासा येषां ते सर्वभूतानां प्रिये सुहृदि च सर्वान्तरात्मनि भगवति त्वयि निर्वृतं सुखितं मनो येषां ते चरणाम्बुजसेवां विशिंषन्ति। यत्र त्वच्चरणाम्बुजसेवायां मुक्तिपर्यन्तायां सत्यां पुनरयं संसारो न पर्यावर्त्तते न परिवृत्तिं प्राप्नोति निवर्त्तत इत्यर्थः ॥ ३९ ॥

एवमभिष्टूयाथ प्रस्तुतं विज्ञापयन्ति। त्रिभुवनेत्यादिना। हे त्रिभुवनात्मभवन। त्रिभुवनस्यात्मान्तःप्रविश्य नियन्ता भवनमाश्रयश्च तस्य सम्बोधनम्। एवमग्रेऽपि। त्रयो विक्रमा यस्य सर्वान्तरात्मनस्तवाविदितमन्तरं नास्ति त्रिविक्रमस्य तवासाध्यमपि नास्तीति भावः। हे त्रियनयन! त्रयश्चन्द्रसूर्याग्नयो नयनानि यस्य वाह्यमप्यविदितं नास्तीति भावः। त्रयाणां लोकानां मनोहरोऽनुभावो यस्यास्मदभिलषितमपि तव कर्त्तव्यमेवेति भावः। एवं सम्बोध्य विज्ञापयन्ति यद्यपि दितिजा दनुजाश्च तवैव विभूतयोऽतस्तेषां वधोपायचिन्तनमनुचितं तथापि तेषामनुपक्रमोऽयमित्यभ्युदयकालोऽयं न भवतीति मत्वा पूर्वं यथा स्वात्ममायया आत्मसङ्कल्पेनैव उपात्ताभिः सुरादिसंमिश्रितैर्जलचराकृतिभिः सुराद्यवतारैर्मत्स्यकूर्माद्यवतारैश्चेत्यर्थः। तत्र सुराकृतिरुपेन्द्रावतारः। नराकृतिः रामकृष्णादिः मृगाकृतिर्वराहादिः यथापराधमपराधानुसारेण दण्डं विरोधिनिरसनरूपं दधर्थं कृतवानसि। एवं हे भगवन्! एनं त्वाष्ट्रं वृत्रमपि जहि यद्युपमन्यसे हन्तुं यदीच्छसि ॥४०॥

एवं प्रस्तुतं विज्ञाप्य स्वानुग्राहकं तद्वाक्यं श्रोतुकामास्तं प्रार्थयन्ते। अस्माकमिति। हे तत! रक्षक! पितामहेति वार्थः। तावकानां त्वदीयानाम्। तत्र हेतुः। स्वलिङ्गविवरणेन आत्मीयविग्रहप्रकाशनेन आत्मसात्कृतानामात्मीयत्वेन परिगृहीतानां तव चरणयुगलध्यानेनैव अनुबद्धं वशीकृतं हृदयं तदेव निगलो येषां तेषां नः अनुकम्पास्माद्विषया कृपा तयानुरञ्जितं सानुरागं च ताद्विशदं रुचिरं च स्मितं तत्सहितेनावलोकनेन तथानुकम्पयैव निगलितो मधुरो मुखरसः प्रियवाक्सैवामृतकला तयान्तस्तापं शमयितुमर्हसि ॥ ४१ ॥

अपारमहिमशालिनस्तवास्माभिर्विज्ञाप्यमेतदिक्यदित्याहुः। अथेत्यादिना हिरण्यरेतस इत्यन्तेन। अथ। ननु हे भगवन्! अस्माभिर्विज्ञापनीयस्तव कियानर्थः प्रयोजनं स्यात्। तत्र दृष्टान्तः। विस्फुलिङ्गादिभिरिव हिरण्यरेतस इति। विस्फुलिङ्गादिभिरिवाग्नेः कार्यभूतैर्हिरण्यरेतसः कारणभूतस्याग्नेरिव त्वत्कार्यभूतैरस्माभिर्विज्ञापनीयः कारणभूतस्य तव कियानर्थं इत्यर्थः। कार्यकारणभावमात्रपरोऽयं दृष्टान्तः। उभयोरप्यचेतनत्वे विज्ञप्तितदवधृत्योरसम्भवात्। यद्वा। अग्नेर्विस्फुलिङ्गादिभिः कियान् प्रकाशः कियान्। तथास्माभिर्विज्ञाप्योऽर्थस्तव कियानित्यर्थः। यद्वास्माभिः कथम्भूतैरित्यत्र दृष्टान्तः। यथा विस्फुलिङ्गा अग्न्यायत्तसत्तास्थित्यादिमन्तस्तथा त्वदायत्तसत्तादिमद्भिरिति। कथम्भूतस्य। तवाखिलजगतामुत्पत्तिस्थितिलयेषु निमित्तायमाना विक्रयमाणा या दिव्या माया सैव विनोदः परिकरो यस्य सकलजीवसमूहानामन्तर्हृदये ब्रह्मप्रत्यगात्मस्वरूपेण प्रत्यग्जीव आत्मा शरीरं यस्य तत्स्वरूपेण ब्रह्मशब्दवाच्येन जीवशरीरकत्वेन स्वरूपेणेत्यर्थः। वहिः प्रधानं प्रकृतिः [illegible] यस्य प्रधानशरीरकत्वेन "यस्यात्मा शरीरं यस्य पृथिवी शरीरम्" इति श्रुतेः। देशकालदेहावस्थानविशेषाननुलङ्घ्यानतिक्रम्यानुभवतः व्याप्तस्य। यद्वा। तेषामुपादानोपलम्भकतयानुभवत इत्यन्वयः। तेषां देशकालदेहादीनामुपादानं स्वीकारः एतस्मिन् देशे काले देहे एतत्सुखदुःखादिकमुपादेयमित्येवं रूपमुपादानं तस्योपलम्भकतया अभिज्ञापकतया निदानेन सह सर्वज्ञानजनकतयानुभवतः व्याप्तवत इत्यर्थः। सर्वप्रत्ययसाक्षिणः सर्वजीवानां चित्तवृत्तिसाक्षिणः आकाशशरीरस्याकाशो दहराकाशः स एव शरीरं मूर्तिर्यस्य आसमन्तात्प्रकाशते प्रकाशयति वाकाशः स्वप्रकाशं सर्वस्य प्रकाशमपरिच्छिन्नं ज्ञानं तदेव शरीरमाकारो यस्येति साक्षात्परब्रह्मणः मुख्यवृत्त्या परब्रह्मशब्दवाच्यस्य परमात्मनः लोकत्रयमन्तःप्रविश्य धारकस्य ॥ ४२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं वहिर्मुखानाक्षिप्य तद्भक्तान् स्तुवन्ति। अथ हेति ॥३९-४१॥

अथ भगवन्निति सम्बोध्य ब्रह्मपरमात्मरूपत्वेऽपि भगवद्रूपत्वस्यैव श्रेष्ठ्यमभिप्रेतमतः प्रधानरूपेण चेति सर्वश्रेष्ठरूपेणेति भगवदाख्येन चेत्यर्थः। आकाशशरीरस्येति आ सर्वतः काशते विराजते यत्तत् परं ब्रह्मैव शरीरं यस्येत्यर्थः ॥ ४२ ॥ ४३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदेवं वहिर्मुखानाक्षिप्य तद्भक्तान् स्तुवन्ति। अथ हेति। सकृदप्यवलीढया आस्वादितया जनितेन सुखेन प्रेमानन्देन एकान्तिनः त्वत्सेवैकतानमानसत्वात् देवर्ष्यादीन् अनुपासीनाः। तदपि देवर्ष्यादयस्तेषु वहुतरमेव प्रसीदन्तीत्याहुः। सर्वेषां भूतानां प्रिये सुहृदि सर्वेषामात्मनि चेति। त्वत्सेवायां सत्यां [illegible] सर्वेऽपि सेविता एव वभूवुरिति भावः। स्वार्थकुशला इति। [illegible] त्वत्सेवात्यागिनः कुयोगिप्रभृतयः स्वार्थघातिन एवेति भावः ॥ ३९ ॥

त्वद्भक्तेषु मध्ये सकामत्वाद्वयमेवातिनिकृष्टा इति द्योतयन्तः प्रस्तुतं विज्ञापयन्ति। त्रिभुवनमात्मभवनं यस्य त्वद्भक्ता देवमनुष्यादयो यत्र स्थित्वा त्वां सेवन्ते तदिदमसुराक्रान्तमभूदिति

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भावः। त्रिभिर्विक्रमैस्त्रीँल्लोकान् नयसीति। यदेव त्रिभुवनं वामनावतारे त्रिभिरेव पादैः प्रतिगृह्य बलेः सकाशादानीया-स्मभ्यं दास्यसीति भावः। त्रिलोकीति। सम्प्रत्यपि त्रिलोकस्था जनास्तवानुभावं पश्यन्तु। दैत्यं संहरति भावः। ननु पराहिंसां समुद्दिश्य मां यजध्वे तत्राहुः। तवैव विभूतयो यद्यपि तदपि तेषामुपक्रमसमयो नायमिति ज्ञात्वा निवेदयाम इति भावः। तस्मात् हे दण्डधर! पूर्वं यथा दण्डं दधर्थ एवमधुनापि उप समीपकाल एव ॥ ४० ॥

एवं स्तुत्वा कृपात्रलोकमधुरमाश्वासवागमृतं प्रार्थयन्ते। अस्माकमिति। हे तत! तात! ततामह! हे पितामह! तव चरणनलिनयुगलमेव ध्यानानुबद्धहृदयस्य निगडः शृङ्खला येषां त्वच्चरणा-रविन्दात्मनोऽपगमाकृष्टुं न शक्नुम इत्यर्थः। स्वलिङ्गविवरणेन निजमूर्त्तिप्रकटनेन विगलितः मुखचन्द्रात्क्षितः मधुरो मुखरसः प्रियवाक् स एवामृतकला तया च ॥ ४१ ॥

तव त्वयि कियानर्थविशेषो विज्ञापनीय इत्यन्वयः। प्रत्यगात्मा अन्तर्यामी तद्रूपेण बहिरपि विषयेषु प्रधानं माया इन्द्रियादिकं तद्रूपेण देशश्च कालश्च देहस्यावस्थानविशेषो बाल्यादिश्च ताननतिक्रम्य अनुभवतः। तेषां देवादिजीवनिकायानाम् उपादानतया कारणत्वेन उपलम्भकतया प्रकाशकत्वेन च हृद्गतं विज्ञापनीयं जानत इत्यर्थः। आकाशवद्गौरलिप्तं शरीरं यस्य हिरण्यरेतसो वह्नेर्विस्फुलिङ्गादिभिस्तत्कणभूतैरिवास्माभिः ॥ ४२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अथ "कारणं तु ध्येयम्" इति श्रुतिमुपबृंहयन्तः संसारनिवृत्तये तद्भजनमेव कर्तव्यमिति सूचयितुं शिष्टाचारमाहुः। अथेति। हे मधुमथन! तव महिमामृतरससमुद्रस्य विप्लुषा बिन्दुना सकृदवलीढया एकवारमप्यास्वादितया स्वमनसि निष्यन्दमानेन प्रवर्तमानेन अनवरतं न अश्रान्तेन सुखेन विस्मृताः दृष्टश्रुता ऐहिकामुष्मिका विषयसुखलेशाभासा यैस्ते भगवति नितरां निरन्तरं निर्वृतं मनो येषां ते। अत एव स्वार्थकुशलाः आत्मा परमेश्वरो भवान् प्रियः सुहृच्च येषां ते। त्वच्चरणाम्बुजानुसेवां कथं विसृजन्ति नैव विसृजन्तीत्यर्थः। यत्र सेवायां सत्यामयं संसारपर्यावर्तः जन्ममरणप्रवाहः पुनर्न भवति ॥ ३९ ॥

एवमपराधिरूपेन त्वद्भक्तेषु निकृष्टा इति सूचयन्तः प्रस्तुतं विज्ञापयन्ति। त्रिभुवनेत्यादिना हे त्रिभुवन! विराड्रूप! आत्मनैव त्रिभुवनं यस्य हे तथाभूत! त्रिषु कालेषु विविधः क्रमः पराक्रमो यस्य हे तथाभूत! कालानवच्छिन्नपराक्रमः त्रिपु कालेषु अनीदृशोऽनुभावो यस्य हे कालानवच्छिन्नानुभाव! यद्यपि दितिजादयोऽपि तवैव विभूतयः तथापि यतस्तदुपक्रमस्य दैत्येश्वरादेर्योयमस्यायं कालो नास्ति इति हेतोः। हे दण्डधर! यथा स्वकीयेषु भक्तेषु वा आत्मनस्तव माया कृपा सुरनराकृतिभिर्यथापराधं दण्डं स्वभक्तप्रतिकूलेषु धृतवानसि एवमेनं त्वाष्ट्रमपि यदि उत मन्यसे हन्तुमिच्छसि तर्हि जहि ॥ ४० ॥

अतिदैन्ययुक्ताः शीघ्रं कृपां प्रार्थयन्ते। हे तत! पितः! हे ततामह! तव चरणनलिनयुगलध्यानमेवानुबद्धं हृदये निगडो येषां तेषाम्। स्वलिङ्गविवरणेन स्वमङ्गलमूर्त्याविष्कारेण स्वयात्मसात्कृतानामनुकम्पया रञ्जितः विशदो विपुलो रुचिरो यः स्मितावलोकः तेन विगलितया मधुरया मुखामृतरसकलया चान्तस्तापं हे अनघ! प्रत्युपकारादिवासनारूपाघशून्य! शमयितुमर्हसि ॥ ४१ ॥

सर्वात्मनि सर्वज्ञे त्वयि अस्माभिः किं विज्ञापनीयमिति सदृष्टान्तमाहुः। अथेति। हे भगवन्! यथा हिरण्यरेतसः अग्नेस्तदंशभूतैर्विस्फुलिङ्गादिभिः प्रकाशो न क्रियते तथास्माभिरंशभूतैरिह तव कियानर्थविशेषो विज्ञापनीय इत्यन्वयः। तत्र हेतुगर्भाणि विशेषणानि अखिलजगतामनन्तकोटिब्रह्माण्डानामुत्पत्त्यादिषु निमित्तायमानया परमकारणेन त्वया महदादिभावं नीयमानया दिव्यमायया विनोदो यस्य सकलाः सपरिकराः जीवनिकाया जीवसमूहा येषु तेषामखिलानां जगतामनन्तकोटिब्रह्माण्डानामन्तर्हृदयेषु बहिरपि ब्रह्मप्रत्यगात्मरूपेण ब्रह्म च तत्पदार्थलक्षणं प्रत्यगात्मस्वरूपं च पदार्थलक्षणं तयोः समाहारद्वन्द्वैक्यम्। ब्रह्मरूपेण स्वांशभूतजीवरूपेण स्वशक्तिरूपेण च तेषां सकलजीवनिकायानामुपादानतया उपलम्भकता प्रकाशकता तया च देशादिकमनतिक्रम्येति यथादेशकालदेहावस्थानविशेषमनुभवतः अतएव सर्वप्रत्ययसाक्षिणः आकाशवन्निर्मलमप्राकृतं यस्य शरीरं तस्य ॥ ४२ ॥

भाषा टीका

हे मधुमथन! इसी हेतु से जो आपकी महिमा रूपी अमृत रस का समुद्र है उसके एक बिन्दु मात्र से एक बारभी आस्वादन करी भक्ति से हुआ जो अपने मन में अचल निरन्तर सुख तिस से देखे सुने सब विषय सुखों के लेशमात्र भूल जाते हैं जिन के ऐसे एकान्तिपरमभागवतजन सब भूतों के सुहृद सर्वात्मा भगवान् में अतिशय से निरन्तर लगे हुये मन में सुखी होकर यदि ये स्वार्थ मे चतुर होवें तो अपने सुहृद आपकी चरण कमल की सेवा को क्यों छोडेंगे जिस मे कि फिर यह संसार का भ्रमण नहीं होता है ॥ ३९ ॥

हे भगवन्! तीनो भुवन आपके स्थान हैं तीनों लोक में आप काही प्रभाव है तीनों लोकों मे आपकी लीला है दनुज दैत्य ए सब आप की ही विभूति हैं तथापि यह उनके उपद्रवका काल नहीं है इसलिये अपनी माया से देवता मनुष्य मृग नृसिंह हयग्रीव जलचर आकृतियां धारण कर के अपराधके अनुरूप दण्ड देते हो तिसी प्रकार इस वृत्रासुर को भी मारो यदि आपकी इच्छा होतो कृपा कीजिये॥४०॥

हे तात! हे पितामह! हे अनघ! हम आपके दास हैं आप के चरणोंमें नम्र हैं आपके चरण कमल युगल में ध्यान से हमारी शृङ्खला बंधी है आपने अपनी मूर्ति का दर्शन कराकर हम लोगों को अपना बनाया है सो आपके कृपा अनुराग युक्त अति निर्मल अति सुन्दर अति शीतल तारा युक्त नेत्रों के अवलोकन से तथा मन्दहास से तथा मुख से

अत एव स्वयं तदुपकल्पयास्माकं भगवतः परमगुरोस्तव चरणशतपलाशच्छायां विविधवृजिन-
संसारपरिश्रमोपशमनीमुपसृतानां वयं यत्कामेनोपसादिताः ॥ ४३ ॥

अथो ईश ! जहि त्वाष्ट्रं ग्रसन्तं भुवनत्रयम् ।
ग्रस्तानि येन नः कृष्ण ! तेजांस्यस्त्रायुधानि च ॥ ४४ ॥

हंसाय दह्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय ।
सत्सङ्ग्रहाय भवपान्थनिजाश्रमाप्तावन्ते परीष्टगतये हरये नमस्ते ॥ ४५ ॥

श्रीशुक उवाच ।

अथैवमीडितो राजन् ! सादरं त्रिदशैर्हरिः ।
स्वमुपस्थानमाकर्ण्य प्राह तानभिनन्दितः ॥ ४६ ॥

श्रीभगवानुवाच ।

प्रीतोऽहं वः सुरश्रेष्ठाः ! मदुपस्थानविद्यया ।
आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि ॥ ४७ ॥

किं दुरापं मयि प्रीते तथापि विबुधर्षभाः ! ।
मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्त्ववित् ॥ ४८ ॥

न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक् ।
तस्य तानिच्छतो यच्छेद्यदि सोऽपि तथाविधः ४९ ॥

स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म हि ।
न राति रोगिणोऽपथ्यं वाञ्छतो हि भिषक्तमः ॥ ५० ॥

---

भाषा टीका ।

विगलित जो मधुर वचन अमृत तिसके लेश से हम लोगों के भीतर का जो वृत्रासुर के भयरूप ताप तिसको आप शान्त करने के योग्य हो ॥ ४१ ॥

अब हम लोग आपको किसबात का विज्ञापन करसक्ते हैं क्यों कि सम्पूर्ण संसार की उत्पत्ति स्थिति प्रलय की निमित्त जो दिव्यमाया सो आपका खेलमात्र है और आप सब जीवों के हृदय के भीतर ब्रह्म रूपसे अन्तर्यामी रूप से रहते हो बाहिर मे प्रधानरूप से रहते हो इसीसे देशकाल देह तिनके विशेषोंके उनके उपादान कारण होने उनके उपलम्भक होनेसे आप अनुभव करते हो सबकी बुद्धिके सची हो आकाशादि सब तत्त्व आपके शरीर हैं आप साक्षात् परब्रह्म हो परमात्मा हो सो जैसे अग्नि के आगे चिनगारी कुछ गिनतीमे नहीं आती हैं तैसे हम आपसे कुछ जनाने नहीं सकते हैं ॥ ४२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत एव सर्वज्ञत्वादेव वयं यत्कामेन यस्य कार्यस्य कामेनोपसादिताः प्रापितास्तदस्माकं कार्यं स्वयमेवोपकल्पय सम्पादयेति । चरणमेव शतपलाशं कमलं तस्य छायां विविधैर्वृजिनैर्यः संसारपरिश्रमस्तस्योपशमकरीमुपसृतानां प्राप्तानाम् ॥४३॥

पूर्वं भक्तेरुत्कर्षोक्तिस्तत्कामशङ्का माभूदिति स्वकामं कथयन्ति । अथोऽनन्तरमेव ॥ ४४ ॥

शीघ्रं तल्लाभाय पुनः प्रणमन्ति । हंसाय शुद्धाय हरये आर्तिहराय ते नमः । शुद्धत्वे हेतवः । दह्रनिलयाय हृदयाकाशनिकेताय । निरीक्षकाय । बुद्ध्यादिसाक्षिणे । कृष्णाय सदानन्दरूपाय ।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥

इति निरुक्तेः । आर्तिहरत्वे हेतवः । मृष्टं रुचिकरं यशो यस्य । निरुपक्रमायादिशून्याय । सद्भिः सङ्गृह्यत इति तथा तस्मै । भवपान्थो भवरूपे पथि वर्त्तमानस्तस्य जनस्य निजाश्रमाप्तौ स्वचरणप्राप्तौ सत्यां संसारस्यान्ते परीष्टा सर्वतः पूजिता उत्तमा गतिः फलं यस्तस्मै ॥ ४५ ॥

## श्रीधरस्वामिकृतभावार्थदीपिका ।

अभिनन्दितः सन्तोषितः ॥ ४६ ॥

मदीयमुपस्थानं स्तोत्रं तत्संहितया विद्यया ज्ञानेन । आत्मन ऐश्वर्यमसंसारित्वं तस्य स्मृतिर्यया । न हि विरोध उभयमित्यादिना । कर्तृत्वभोक्तृत्वादेर्मायिकत्वोक्तेः भक्तिश्च यया भवति ॥४७॥

अथ ह भगवंस्त्वित्यादिना भक्तेः सर्वोत्कर्षोक्तेर्भक्तमभिनन्दन्ति । किमिति ॥ ४८ ॥

यदुक्तं देवैः स्वयं तदुपकल्पयास्माकमित्यादि तत्सम्पादनं कृपालोर्ममानुचितमित्याशयेनाह । न वेदेति द्वाभ्याम् । गुणेषु विषयेषु तत्त्वदर्शी । तान् विषयान् । तथाविधोऽज्ञ एव ॥ ४९ ॥

कर्म न वक्ति । प्रवृत्तिमार्गं न वक्ति हि । अपथ्यं यथा न याति न ददाति भिषक्तमः सद्वैद्यः ॥ ५० ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत एवं वयमग्नेर्विस्फुलिङ्गा इव त्वदायत्तसत्तादिमन्तः अत एवास्माकं तदुपकल्पय तत्कार्यमुपकल्पय सम्पादय किन्तत् तत्कामेन यत्प्रयोजनकामेन वयमुपसादिताः । ननु दितिजदनुजानामपि त्वदायत्तसत्तादिमत्त्वात्किं विशेषेण स्वकार्यं साधयेत्युच्यते इत्याशङ्कां निराकुर्वन्तः स्वात्मनो विशिंषन्ति । परमगुरोर्भवतश्चरणाम्बुजशतपलाशे कुशेशये तयोश्छायामुपसृतानामाश्रितानां प्रपन्नानामिति भावः । कथम्भूतां छायां विविधैर्वृजिनैः पापैर्यः संसारस्य परिश्रमः तस्य उपशमनीम् उपशमयन्त्यनयेत्युपशमनीं ताम् ॥४३॥

तदुपकल्पयेत्येतदेव विशदयन्ति । अथो इति । अतः हे ईश ! भुवनत्रयं ग्रसन्तं त्वाष्ट्रं वृत्रं जहि येन त्वाष्ट्रेण हे कृष्ण ! योऽस्माकं तेजांस्यस्त्राण्यायुधानि च ग्रस्तानि ॥ ४४ ॥

तद्वधाय पुनः प्रणमन्ति । हंसायेति । हंसाय निरस्तनिखिलदोषाय प्रणतार्त्तिहन्त्रे वा दह्रं हृदयपुण्डरीकं तदेव निलयं यस्य तस्मै अस्मदीयदुःखाभिज्ञायेति भावः । निरीक्षकाय चित्तवृत्तिसाक्षिणे न कापट्येनास्माभिर्विज्ञापितमिति भावः । कृष्णाय भारापहरणेन भूमेः सुखकराय मृष्टयशसे विशुद्धकीर्तये प्रपन्नार्तिहरणेन न तवापकीर्त्तिरपि तु निष्कलङ्का कीर्त्तिरेवेति भावः । निरुपक्रमः निर्गतः उपक्रमः अस्मदुद्योगो यस्मात्तस्मै त्वत्प्रपत्तिव्यतिरेकेण नास्माकमुद्योगोऽस्तीति भावः । सतां स्वशासनानुवर्त्तिनां सङ्ग्रहाय स्वीयत्वेनानुग्राहकाय भवपान्थाः संसाराध्वगास्तेषां निजाश्रमाय स्वगृहभूताय यथा "पान्थः स्वशरणं यथा" इत्युक्तरीत्या स्वगृहं प्राप्य सुख्यति तथा भवपान्थानां निजाश्रमाय न केवलमैहिकसुखदाय अपि त्वामुष्मिकसुखदाय चेति भावः । शश्वत्सदा गरिष्ठा गतिः फलं तद्रूपाय निरतिशयपुरुषार्थरूपाय हरये तुभ्यं नमः प्रपन्नानामनेकाध्यात्मिकाधिदैविकाधिभौतिकादिदुःखहरणशीलाय तुभ्यं नमः ॥ ४५ ॥

एवं देवैः संस्तुतो विज्ञापितश्च भगवानुवाचेत्याह मुनिः । हे राजन् ! त्रिदशैर्देवैः सादरमेवमीडितः स्तुतो भगवान्स्वं स्वीयमुपस्थानं स्तोत्रमाकर्ण्याभिनन्दितः तान्प्रत्याह ॥ ४६ ॥

उक्तिमेवाह । प्रीत इत्यादिना यावदध्यायपरिसमाप्ति । हे सुरश्रेष्ठाः ! मदुपस्थानविद्यया स्तुत्यात्मिकया विद्ययाहं वो युष्मभ्यं प्रीतः विद्यां विशिनष्टि । यया अमुया ययानया विद्यया पुंसां तावन्मद्भक्तिस्तत आत्मैश्वर्यस्मृतिर्देहातिरिक्तात्मनोपहतपाप्मत्वादिगुणा एकरूपात्मैश्वर्यस्मृतिश्च भवति ॥ ४७ ॥

यद्यपि मयि प्रीते सति हे विबुधर्षभाः ! किं दुरापं किं दुर्लभं न किमस्ति सर्वमपि वाञ्छितं सुलभमेवेति भावः । तथापि मय्येकान्तमतिरनन्यप्रयोजनविषया मतिर्यस्य । अत एव तत्त्वविन्मत्तोऽन्यत्किञ्चिदपि न वाञ्छति मां प्रसाद्य प्रतिपक्षजयकामा यूयमतद्विदो मन्दबुद्धय इति भावः ॥ ४८ ॥

एतदेवोपपादयति । नेति । गुणेषु शब्दादिविषयेषु वस्तुदृक् पुरुषार्थदृष्टिरत एव कृपणः इन्द्रियवद्यः पुमानात्मनः स्वस्य श्रेयो निरतिशयपुरुषार्थरूपं न वेद एवं तान् शब्दादीनिच्छतः तस्य पुंसः तान् शब्दादीनीशोऽपि निरतिशयपुरुषार्थप्रदानसमर्थोऽपि यः पुमान् यच्छेद्दद्याद्यदि सोऽपि तादृश एव कृपणः कृपणेन श्रेयोऽनभिज्ञेन क्षुद्रं पुरुषार्थं प्रार्थितेऽपि स्वयं परमपुरुषार्थप्रदानसमर्थोऽपि क्षुद्रफलं प्रयच्छन्कृपण एवेति भावः ॥ ४९ ॥

एतदेव दृष्टान्तमुखेन विशदयति । स्वयमिति । निःश्रेयसं निरतिशयपुरुषार्थं तत्साधनं च विद्वान् स्वयमविज्ञाय परमपुरुषार्थतत्साधनज्ञानरहिताय केवलकर्मासक्तिदुःखिताय कर्मैव कुर्विति न वक्ति न बोधयति तथाहि भिषक्श्रेष्ठः वाञ्छतः कामयमानस्यापि रोगिणः अपथ्यं न राति न ददाति ॥ ५०

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हंसवत्सारग्राहिणे दभ्रनिलयाय हृदयाकाशनिवासाय "तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम्" इति श्रुतेः निरीक्षकाय चेतनकर्मसाक्षिणे कृष्णाय "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः" इत्यतः सन्ततपूर्णानन्दाय कृतौ पूर्णौ पणौ बलप्राणौ यस्य स तथा तस्मै निरुपक्रमाय श्रमजनकप्रयत्नमन्तरेण जगत्कर्त्रे "निरुपक्रमो हरिर्नित्यमप्रयत्नो ह्युपक्रमेत्" इत्यतः सतां संग्रहो यस्य स तथा तस्मै भवपान्थाः संसारमार्गे वर्तमानाः तेषां निजाश्रयाय "निजमात्मीयनित्ययोः" इत्यभिधानं शश्वदेकप्रकारा वरिष्ठा धर्मादिरत्युत्तमा गतिर्मुक्तिलक्षणा यस्मात्स तथा तस्मै हरये आपत्परिहरणशीलाय ॥ ४५ ॥

स्वमुपस्थानं स्वविषयां स्तुतिम् ॥ ४६ ॥

मदुपस्थानलक्षणया विद्यया पुंसामात्मैश्वर्यस्मृतिर्माहात्म्यस्मृतिः मयि भक्तिश्च भवतीत्यन्वयः ॥ ४७ ॥

प्राप्ते प्रत्यक्षे तथापि फलप्राप्त्यनायासेऽपि भक्तिज्ञानप्रसादेभ्योऽन्यत् । अत्र हेतुस्तत्त्वविदिति । अनेनायमधिकारिषु सुखाधिक्यप्राप्तियोग्य इति ज्ञायते ॥ ४८ ॥

तत्त्ववित्तथास्त्वभिलाषकस्य किं फलमिति तत्राह । नेति । यः कृपणः कामानभिलषन् स्वस्य मोक्षणं श्रेयो न वेद । कुतः । गुणवस्तुदृक् स्वर्गादिगुणानां शब्दादिविषयाणां वस्तुदृक् अप्रतिहतत्वदर्शी नित्यत्वज्ञानीत्यर्थः । अहमिच्छतोऽभिलाषकस्य तस्य

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तान् कामान् यच्छे दद्यां त्वां भजमानस्य तथाविधफलदातृत्वं तव कथं युक्तमिति तत्राह । यदीति । यदि स मां भजमानोऽपि तथाविधः नश्वरफलस्वीकारयोग्यः उत्तमाधिकारी न स्यात्तर्हि तस्मै ऐहिकान् कामान् दद्यां यश्च त्रैविद्योऽत्युत्तमो न स्यात् तस्मै स्वर्गादिकामान् दद्यामिति विशेषमभिप्रेत्याचार्यैरुत्तमो न भवति चेदिति व्याख्यातम् । यच्छेदिति पाठेऽयमर्थः । त्वद्भक्तादन्यः कथमिति तत्राह । नेति । गुणवस्तुदृक् त्रिगुणजन्यशरीरादिवस्तुत्वज्ञानी दीनोऽथ मुग्धः श्रेयो मोक्षाख्यं न वेद तद्विगान्वद्वाञ्छेच्च तस्य सेवकस्य सेव्योऽपि तथाविधोऽत्युत्तमो न भवति चेत्तर्हि तादृशान् कामान् यच्छेद्दद्यात् मत्प्रेरित इति शेषः ॥ ४९ ॥

कथमत्युत्तमो न भवतीति तत्राह । स्वयमिति । विद्वांस्तत्त्वज्ञोऽयमुक्तिविशेषं जानन्नत्युत्तमः स्वयमज्ञाय अज्ञानिने पुंसे कर्मभिर्निःश्रेयसं न वक्ति नोपदिशति किं तु "तमेवं विद्वान्"इति श्रुतेः । ज्ञानेनैव यथा पथ्यमेव अभिविश्चति ददाति नापथ्यमित्यल्लोपेन भिषक् भिनत्ति रोगं सिञ्चति आप्याययति प्राणमिति वा वैद्यः पानीयं वाञ्छतो ज्वरादिरोगार्तस्यापथ्यं पानीयादिद्रव्यं न राति न ददाति तस्मादनीदृश उत्तमो न भवतीत्यर्थः । ननु कृपणाः कर्मणा सिद्धिकामित्वाद्धि नात्युत्तम इत्यभिप्रेतं तत्कथमुच्यते ॥

> लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि ।
> यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ॥

इत्यादौ भगवतैव कर्मविधानादत्राह । स्वयमिति । मादृशो विद्वान् स्वयं केवलैः कर्मभिरज्ञाय अज्ञानिने निःश्रेयसं न वदति किं तु ज्ञानद्वारा शुद्धान्तःकरणाय यथा भिषगपि केवलफलकामिन एव तादृशफलं दीयते अतः साकल्यफलस्वीकारयोग्य इति नियम्यते तर्हि किमर्थं तस्मै तादृशमपि दीयत इति चेन्न । युष्मद्भक्तत्वेन फलदानस्य युष्मदिष्टत्वात्तदेव मम प्रियं युष्मत्कामाभावे तत्फलं न दद्यां भवतां च मत्प्रियकामित्वादेतदाचार्यैरुक्तम् । युष्मत्कामो मत्प्रिय एवान्यथा न दद्यामिति भावः ॥

> विष्णोः प्रियं कामयन्ति देवा नैवाप्रियं क्वचित् ।
> यद्यप्रियं कामयन्ति न रातीशो हितो यतः ।

इति । ननु यदि पुरुषेण निष्कामेण भवितव्यं तर्ह्यस्मत्कामो निष्फलो भवतोऽनिष्टत्वादिति शङ्का माभूत् त्वाष्ट्रहननस्य ममेष्टत्वान्मदिष्टमेव युष्माभिः कामितमित्यतो वाचार्यैः युष्मत्काम इत्याद्युक्तम् ॥ ५० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उत्कण्ठया पुनः स्फुटमेव निवेदयन्ति । अथो इति ॥४४-४६॥

आत्मा जीवश्च ईश्वरश्च आत्मेश्वरौ । तयोर्भावः आत्मैश्वर्यम् उभयपदवृद्धिः । तस्य स्मृतिर्विवेको यस्याः अथ तत्र भवान् । किं देवदत्तवदित्यादेः ॥ ४७-४९ ॥

स्वयमिति । तस्मान्न बुद्धिभेदं जनयेदित्यादिकम् । असमर्थोपदेष्टृविषयं ज्ञेयम् ॥ ५० ॥ ५१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत एव सर्वज्ञत्वादेव वयं यत्कामेन यस्य कामनया चरणपद्मच्छायामुपसादिताः स्वयं त्वयैव प्रापिताः । तत्कार्यं स्वयमेव उपकल्पय सम्पादय । छायां कीदृशीमुपसृतानां भक्तानां परिश्रमोपशमनीम् ॥ ४३ ॥

सर्वत्रैव स्तुतिषु शुद्धभक्तेरुत्कर्षकथनात् कदाचिद्भक्तिमेव ददाति भगवांस्तथा सति प्रेमाश्रुकम्पादिमन्तो वयं स्वर्गीयसुखेषु वैमुख्योदयात् पृथिव्यामेव पर्यटिष्यामोऽस्मद्वैरिणा एतामरावतीमध्यास्य विराजिष्यन्त इत्याशङ्कया गाम्भीर्याभावेन च स्पष्टमेव काममाहुः । अथो इति ॥ ४४ ॥

तव चरणयोः पतामः शीघ्रं जहीति वैक्लव्येन श्रीकृष्णरूपिणं तं सर्वमेव स्वाभिलषितमभिव्यञ्जयन्तः प्रणमन्ति । हंसाय सारासारौ विमृश्य सारग्राहिणे । दह्रनिलयाय अस्मद्धृदयसरोनिकेताय । निरीक्षकाय तत्रास्मद्धृदयेषु प्रस्तुतं काममपि निरीक्षमाणाय । ततश्च मृष्टयशसे । अस्मन्महाविपज्ञायकत्वलक्षणम् यशस्ते लोका गायन्तीति भावः । निरुपक्रमाय अस्मन्निवेदितक्लेशोपक्रमं विनैव तत्सम्पादनसमर्थाय । किं तु सतां भक्तानामेव प्रयासेनापि सङ्ग्रहो न चान्यवस्तूनां यस्य तस्मै "नमोऽकिञ्चनवित्ताय"इतिवचनात् । किञ्च । भववर्त्मनि ये पान्थास्तेषामस्मदादीनां दुर्जीनानां शुद्धभक्तिरहितानामपि निजस्याश्रमस्य प्राप्तौ अविद्यातीर्थां स्वानन्दाधिगमे सतीत्यर्थः । संसारस्य अन्ते परि सर्वतो भावेनेष्टा वाञ्छिता गतिः सायुज्यं सालोक्यं दास्यादिप्रेमा च यतस्तस्मै ॥ ४५ ॥ ४६ ॥

गमोपस्थानं स्तोत्रमेव विद्या तया । आत्मैश्वर्येति । ये मामनया स्तुवन्ति तेषां मदैश्वर्यस्मृतिर्भवेत् । आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि हरसि पासीत्यतत्कर्यैश्वर्योक्तेः ॥४७॥

अहो दौर्भाग्यं मूर्खता च युष्माकमनया विद्यया मां स्तुत्वापि भक्तिं न प्रार्थयध्वे इत्याह । किमिति ॥ ४८ ॥

यद्यपि यूयं मूर्खा विषयानभिलसन्तः स्वभद्राभद्रं न जानीथ तदप्यहन्तु विज्ञस्तान् कथं युष्मभ्यं ददामि । न हि माता सुतेभ्यः स्वहस्तेन विषं ददातीत्याह । नेति । गुणान् विषयानेव वस्तुपुरुषार्थं पश्यतीति सः । आत्मनः श्रेयो न वेद । तस्य तस्मै तावद्यो विज्ञोऽपि यच्छेत् सोऽपि अज्ञ एव ॥ ४९ ॥

कर्म न वक्ति । प्रवृत्तिमार्गं नोपदिशति अपथ्यं यथा न राति न ददाति भिषक्तमः सद्वैद्यः ॥ ५० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतो वयं यत्कामेन यस्य प्रयोजनस्य सङ्कल्पेन तव चरणशतपत्रपलाशच्छायामुपसादिताः प्रापिताः तदस्माकमुपसृतानां शरणागतानां स्वयमुपकल्पय सम्पादय विविधैर्वृजिनैर्यः संसारपरिश्रमस्तस्य शमनीमिति विशेषणेन धिगस्माकं कामं प्रति देव मुक्तिदां तव चरणकमलपत्रच्छायां तुच्छप्रयोजनकृते गीतावन्तमिति द्योत्यते ॥ ४३ ॥ ४४ ॥

दह्रो हृदयाकाशः निलयो यस्य तस्मै । हृद्विध्येयाय निरीक्षकाय सर्वसाक्षिणे निर्गतः उपक्रम उत्पत्तिर्यस्मात्तस्मै । नित्यसिद्धाय

मघवन् ! यात भद्रं वो दध्यञ्चमृषिसत्तमम् ।
विद्याव्रततपःसारं गात्रं याचत मा चिरम् ॥ ५१ ॥
स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम् ।
यद्वा अश्वशिरोनाम तयोरमरतां व्यधात् ॥ ५२ ॥
(१) दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्माभेद्यं मदात्मकम् ।
विश्वरूपाय यत् प्रादात्त्वष्टा यत्त्वमधास्ततः ॥ ५३ ॥
युष्मभ्यं याचितोऽश्विभ्यां धर्मज्ञोऽङ्गानि दास्यति ।
ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्मितः ॥ ५४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सद्भिः साधुभिः ऋषिभिर्मन्त्रैर्वा सङ्गृह्यते इति तथा तस्मै भवे जन्ममरणप्रवाहलक्षणे संसारे पथि वर्तमानो भवपान्थस्तस्य जन्ममरणप्रवाहपतितस्यान्ते संसारनिवृत्तिकाले निजाभमाप्तौ निजधामप्राप्तौ परीष्टा परित इष्टा गम्यते अनया इति गतिर्यः स्वधामप्रापक इत्यर्थः तस्मै ॥ ४५ ॥

त्रिदशैः सादरमीडितः स्तुतः नन्दितः सन्तोषितश्च समुपस्थानं स्तोत्रम् ॥ ४६ ॥

मदुपस्थानविद्यया मदीयस्तुतिरूपया आत्मैश्वर्यस्मृतिर्मदीयैश्वर्यज्ञानम् ॥ ४७ ॥

मयि प्रसन्ने कोऽपि पुरुषार्थो दुर्लभो नास्ति तथापि मद्भक्तेन मत्पदद्वन्द्वजनमेव प्रार्थनीयमहमपि मद्भक्तेभ्यः प्राकृतान् विषयान् दातु नोत्सहे तथापि भवद्भिः स्वेष्टसिद्धये इदमनुष्ठेयमित्याह । किं दुरापमिति चतुर्भिः ॥ ४८ ॥

गुणेषु वस्तुदृक् दृष्टिः तान् गुणानिच्छतः तानेव यच्छेत् यदि तर्हि सोऽपि गुणादानसमर्थोऽपि तथाविधोऽविवेकी ॥ ४९ ॥

निःश्रेयसम् । निवृत्तिमार्गम् । कर्म । प्रवृत्तिमार्गम् ॥ ५० ॥

---

### भाषा टीका ।

इससे भगवान् परमगुरु आपके चरणकमलकी छाया जो कि नानाप्रकारके दुःख संसार परिश्रमको नाशकरने वाली है तिसके हम शरण आये हैं सो जो हमारा मनोरथ है तिसको आप पूरा करो ॥ ४३ ॥

हे ईश्वर ! इससे आप इस वृत्रासुरको मारो जिसने कि तीनों भुवनको तथा हमारे तेजों को अस्त्र आयुधों को ग्रस लिया है ॥ ४४ ॥

हंसस्वरूप श्रीहरि हृदय मे निवास करनेवाले बुद्ध्यादि के साक्षी निर्मल यशवाले श्रीकृष्ण आदिअन्तरहित सत्पुरुषों के सङ्ग्राहक हो तिन आपके अर्थ नमस्कार है ॥ ४५ ॥

श्रीशुकदेवजी बोले हे राजन् ! इस प्रकारसे जब देवतों ने भगवान्की स्तुति की तब अपनी स्तुतिको सुनकर हर्षित होकर उनसे बोले ॥ ४६ ॥

श्रीभगवान् बोले हे देवश्रेष्ठ हो ! मेरी स्तुतिरूपविश्वास से मैं तुम पर प्रसन्न हुआ हूं जि स्तुति से कि मनुष्यों को हमारा ऐश्वर्य हमारी स्मृतिः अथावा मेरेमे भक्तिर्भी होती हैं ॥ ४७ ॥

हे देवता ! हो मेरे प्रसन्न होनेपर कोई पदार्थभी दुर्लभ नहीं है तौ भी मेरेमे एकान्त भक्ति करने वाला पुरुष मेरे से और कुछ लेने नहीं चाहता है ॥ ४८ ॥

गुणोंमे यथार्थबुद्धि करने वाला पुरुष अपने कल्याण-को नहीं जानता है यदि जो वह चांहता है तिसीको यदि प्रभु देवै सो भी अज्ञानी ही होगा ॥ ४९ ॥

जो स्वामी स्वयं कल्याणमार्ग को जानता है सो अज्ञानी सेवकको बन्ध कर्मको नहीं सिखावैगा जैसे कि उत्तम वैद्य रोगिके इच्छाकरने पर भी कुपथ्य पदार्थ नहीं देता है ॥ ५० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं तत्त्वकथनेनानौचित्यं परिहृत्य तदभिप्रायमनुसरन्नाह । मघवन्निति । विद्यया व्रतैस्तपसा च सारं दृढं गात्रं शरीरं याचत याचध्वम् ॥ ५१ ॥

तत्र तदीयविद्यातिशयमाह । स वा इति द्वाभ्याम् । एवं ह्यत्र प्रसिद्धा कथा ।

निशम्याथर्वणं दक्षं प्रवर्ग्यब्रह्मविद्ययोः ।
दध्यञ्चं समुपागम्य तमूचतुरथाश्विनौ ॥
भगवन् ! देहि नौ विद्यामिति श्रुत्वा स चाब्रवीत् ।
कर्मण्यवस्थितोऽद्याहं पश्चाद्वक्ष्यामि गच्छतम् ॥
तयोर्निर्गतयोरेव शक्र आगत्य तं मुनिम् ।
उवाच भिषजोर्विद्यां मावादीरश्विनोर्मुने ! ॥
यदि मद्वाक्यमुल्लङ्घ्य ब्रवीषि सहसैव ते ।
शिरश्छिन्द्यां न सन्देह इत्युक्त्वा स ययौ हरिः ॥
इन्द्रे गते तथाऽभ्येत्य नासत्यावूचतुर्द्विजम् ।
तन्मुखादिन्द्रगदितं श्रुत्वा तावूचतुः पुनः ॥

---

(१) दध्यङ्ङाथर्वणामिति श्रीविजयध्वजतीर्थपाठः ।

येन वृत्रशिरो हर्ता मत्तजउपबृंहितः।
तस्मिन् विनिहते यूयं तेजोऽस्त्रायुधसम्पदः।
भूयः प्राप्स्यथ भद्रं वो न हिंसन्ति च मत्परान् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
पारमहंस्यां संहितायां वैयासिक्यां भगवदुपदेशोनाम
नवमोऽध्यायः ॥ ९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

आवां तव शिरश्छित्वा पूर्वमश्वस्य मस्तकम्।
सन्धास्यावस्ततो ब्रूहि तेन विद्यां च नौ द्विज! ॥
तस्मिंश्चिन्द्रेण संछिन्ने पुनः सन्धाय मस्तकम्।
निजं ते दक्षिणां दत्त्वा गमिष्यावो यथातथम् ॥
एतच्छ्रुत्वा तथोवाच दध्यङ्ङाथर्वणस्तयोः।
प्रवर्ग्यं ब्रह्मविद्यां च सत्कृतोऽसत्यशङ्कितः ॥

इति। ततश्चायमर्थः। दध्यङ् निष्कलं शुद्धं ब्रह्माधिगतो ज्ञातवान् पाठान्तरे तु निष्कृतं नितरां कृतं भवति धनं येन तं प्रवर्ग्यं चाधिगतो ज्ञातवान्। ततोऽश्विभ्यां प्रादादित्युत्तरस्यानुषङ्गः। उपदिदेशेत्यर्थः। कथम्भूतं ब्रह्म। यद्वै अश्वशिरसा प्रोक्तत्वादश्वशिरोनाम प्रसिद्धम्। तयोरमरतां जीवन्मुक्तत्वं व्यधात्। तथा च श्रुतिः। "अश्वस्य शीर्ष्णा प्रपदीमुवाच" इति ॥ ५२ ॥

मदात्मकं वर्म श्रीनारायणकवचं चाधिगत इति पूर्वस्यानुषङ्गः। तत्र हेतुः। यदस्मात्त्वष्ट्रे प्रादात्। किं तत्। त्वष्टा विश्वरूपाय पुत्राय प्रादात्। कीदृशम्। यत्त्वं ततो विश्वरूपाद्धृतवानसि। तदेवं विद्यया सारं गात्रं याचध्वमित्यर्थः ॥५३॥

ननु श्रेष्ठं देहं कथं दास्यति तत्राह। युष्मभ्यमङ्गान्यस्थीनि याचितः सन् दास्यति यतो धर्मज्ञः। विशेषतोऽश्विभ्यां शिष्यप्रीत्या दास्यति। अस्थीनीत्यनेन देयत्वं दर्शितम्। तैरस्थिभिर्विश्वकर्मणा विनिर्मित आयुधश्रेष्ठो वज्रो भविष्यतीति शेषः॥५४॥

येन भवान् वृत्रशिरो हर्ता हरिष्यति मम तेजसा उपबृंहितः सन्। तेजश्चास्त्राणि चायुधानि च सम्पदश्च भूयः प्राप्स्यथ। महाकायस्त्रिभुवनग्रासी स एवास्मान् हन्यादिति शङ्काकुलचित्तान् प्रत्याह। मत्परांश्च केऽपि न हिंसन्त्यतो युष्माकं भद्रमेवेति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यद्यप्येवं परिपाटिस्तथापि हे मघवन्निन्द्र! ऋषिसत्तमं दध्यञ्चं प्रति यात गच्छत वो युष्माकं भद्रमभिलषितं भविष्यति कथमित्यत्राह। विद्यादिप्रभावेण प्रवर्ग्यकर्मणा युष्मदपेक्षितार्थदानशीलं गात्रं शरीरं याचत याचध्वं विलम्बं मा कुरुत ॥ ५१ ॥

दधीचो गात्रस्य सारवत्त्वमेवाह। स वा इति। अनेया प्रसिद्धा कथावगन्तव्या। अथर्वणो दध्यङ्नाम ऋषिः कश्चित्प्रवर्ग्याख्यधर्मविद्याब्रह्मविद्याभ्यां समर्थोऽभूत्तं च विद्याप्रभावशालिनं विद्यास्याश्विनौ विद्याजिघृक्षया तमुपेत्योचतुः नौ विद्यामुपदिशेति तेन दधीचाधुना कर्मण्यासक्तोऽहं पश्चादुपदेक्ष्यामीत्युक्तावश्विनौ ययतुः। तत इन्द्र आगत्य न कस्मैचिदपीमां विद्यामुपदिश यद्युपदिशेस्तव शिरः छिन्द्यामित्युक्त्वा ययौ ततः पुनरश्विनावागत्योचतुः उपदिशेति स च ताभ्यामिन्द्रोक्तमुक्तवान् ततोऽपि पूर्वमेव तव शिरश्छित्त्वाश्वशिरः सन्धास्यावः अतो नौ उपदिशेति स तथैव ताभ्यामभिसन्धितेनाश्वशिरसा विद्यामुपादिशदिति। तथा चोक्तम्।

दध्यङ्ङाथर्वणो दक्षः प्रवर्ग्यब्रह्मविद्ययोः।
इति ज्ञात्वाश्विनौ देवौ गत्वा तमिदमूचतुः ॥
ब्रह्मविद्यां प्रवर्ग्यं च वेद त्वं साम्प्रतं द्विज!।
तदावाभ्यां प्रवक्तव्यमागतौ त्वां तदर्थिनौ ॥
दध्यङ्ङपि तदा प्राह तौ पश्चात्तद्ब्रवीम्यहम्।
कर्मण्यवस्थितोऽद्याहमधुना न तु साम्प्रतम् ॥
तच्छ्रुत्वा तौ तथेत्युक्त्वा जग्मतुः स्वालयं किल।
एतस्मिन्नन्तरे शक्रो विद्यातिशयमात्मनः ॥
असहन् त्वरितो गत्वा दध्यञ्चमिदमब्रवीत्।
प्रवर्ग्यं ब्रह्मविद्यां न कस्मैचिद्वक्तुमर्हसि ॥
शिरश्छिन्द्यां यदि ब्रूया रागलोभादिना तव।
तथा वहुतिथे काले नासत्यावुपजग्मतुः ॥
ऊचतुश्चाप्यथर्वाणं ब्रूहि पूर्वोक्तमावयोः।
इन्द्रेणाहं निषिद्धोऽस्मीत्याह वै द्विजसत्तमः ॥
यदि वक्ष्ये शिरश्छिन्द्यादिन्द्रो मे नात्र संशयः।
पूर्वमेव शिरश्छित्वा तदश्वशिरसं तव ॥
सन्धास्यावस्त्वमधुना ब्रूहि तेन प्रवर्ग्यकम्।
तच्चेदिन्द्रश्छिनत्त्याशु स्वकीयं शिरसं ततः ॥
सन्धाय दक्षिणां चैव दास्याव इति चोचतुः।
एवमुक्तोऽथ दध्यङ् तु तयोस्तदुभयं जगौ ॥
प्रवर्ग्यब्रह्मविद्याभ्यां स तदा वीर्यवान् यतः। इति

सत्त्वा अधिगत इत्यादिना एषा कथा सूचिता। तत्रायमर्थः। स दध्यङ् ऋषिसत्तमः निष्कलं विशुद्धं ब्रह्म अधिगतः यथावज्ज्ञातवान् प्रवर्ग्यं चाधिगतः निष्कृतमिति पाठे तु नितरां कृतमनुष्ठितं प्रवर्ग्यं चाधिगत यद्वावदयं वक्ष्यामीत्यश्विभ्यां प्रतिज्ञातमित्यर्थः। तदेव निष्कलं ब्रह्म विशिनष्टि। यद्वा। अश्वशिरोनामेति अश्वशिरसा प्रोक्तत्वादश्वशिर इति यत्प्रसिद्धं ब्रह्मेत्यर्थः। अश्विभ्यामित्यत्र ततोऽदादित्यस्यानुषङ्गः। ततोऽश्विभ्यामश्वशिरो ब्रह्म प्रवर्ग्यं चाददादुपदिदेश उपदिश्य तयोरमरतां मरणराहित्यं व्यवहारं करोदित्यर्थः ॥ ५२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथाथर्वणो दध्यङ् मदात्मकं मद्देवताकमत एवाभेद्यं वर्म नारायणाख्यं येनाधिगतं त्वष्ट्रेऽदादनेन च तद्गात्रस्य सारवत्त्वं सापेक्षितप्रदत्वं च दर्शितम् । किं तद्वर्म यत्त्वष्टा स्वपुत्राय विश्वरूपायादात् यत्वं ततः विश्वरूपाद्धृतवानसि ॥ ५३ ॥

एवं दधीचो गात्रस्य सारवत्त्वमभिधायावश्यं याचितो गात्रं स्वीयं दध्यङ् दास्यतीत्याह । युष्मभ्यमिति । धर्मज्ञ इन्द्रादिदेवतारूपधर्मज्ञः दध्यङ्याचितः सन् युष्मभ्यमवश्यमङ्गानि दास्यति । ददातु किं तैरस्माभिः कार्यं तत्राह । तत इति । दधीचाङ्गैः । विश्वकर्मणा विनिर्मित आयुधश्रेष्ठो भविष्यति ॥ ५४ ॥

येनायुधश्रेष्ठेन मत्तेजसोपबृंहितः आहितशक्तिरिन्द्रो वृत्रस्य शिरो हर्ता भविष्यति । तस्मिन्वृत्रे हते सति यूयं तेजांस्यस्त्राणि चायुधानि च पूर्ववद्भूयः प्राप्स्यथ त्रिभुवनत्रासी स कस्मात् हन्यादिति शङ्काकुलचित्तान् प्राह । मत्परांश्च न केऽपि हिंसितुं क्षमन्ते वो युष्माकं भद्रमेव भविष्यति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतत्कुत इत्याशङ्क्य त्वाष्ट्रहननोपायमाह । मघवन्निति । गात्रं गात्रं त्रायत इति गात्रं गतिसाधनत्वाद्वा ॥ ५१ ॥

अगतो धारकत्वाद्धाधि ब्रह्म तदञ्चति गच्छतीति दध्यङ् सोऽधिगतोऽधिकज्ञानत्वाच्च प्रख्यातः "दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्रयदीमुवाच" इति श्रुतिः एतदेवाह । अश्विभ्यामिति । यस्माद्दधीचोऽश्विनौदेवताभ्यां ब्रह्मविद्यालक्षणं नितरां कृतमापादितं स्वीकृतमिति यावत्स इति । यद्वा । निष्कृतं प्रवर्ग्याख्यं कर्म ब्रह्म चाश्विभ्यामुक्तवानिति शेषः । यद्वा । ॐ ब्रह्माश्विनौदेवताभ्यामुक्तवान् । किमिति । निष्कृतं सत्यप्रतिपालननिमित्तं दधीचा ब्रह्म दास्यामीति प्रतिज्ञातत्वात् तदनुपदेशोऽनृतत्वमेवं स्यात् तत्रामाह । अश्वशिरमिति । यद्दधीचाश्विभ्यामुपदिष्टं तत्र तयोर्वैद्यावित्युक्त्वा देवैर्दुर्लभीकृतामृतयोरश्विनोरमरतां सम्पादितं त्वभावात्तद् ब्रह्माश्वशिरं नाम । अत्रेति हासमाचष्टे । अथर्वणो दध्यङ् प्रवर्ग्यब्रह्मविद्ययोर्वेत्ता इति तं विज्ञायात्मनोरमरत्वं कामयमानावश्विनौ देवौ दधीचमुपागम्य त्वं प्रवर्ग्यब्रह्मविद्याविशारद इत्याकर्णयोगताभ्यां तदर्थिभ्यामावाभ्यां ते वक्तव्ये इति याचयाञ्चक्रतुः । कर्मकाण्डोक्तकर्मणि प्रवृत्तेन मया तत्समाप्त्यनन्तरे वक्ष्येते इति तेनोदितौ तौ निजसदनं याजग्मतुः । एतदन्तरे आत्मनोऽन्यस्य विद्यातिशयमसहमानः सुरपतिस्तमृषिमुपसृत्य त्वया प्रवर्ग्यब्रह्मविद्ये कस्मैचित्र वक्तव्ये रागलोभादिना वदसत्र शिरश्छिन्द्यामिति तमनुशशास एवं बहुतिथे कालेऽतिक्रान्ते नासत्याभ्यामागत्य पूर्वोक्तविद्ये वक्तव्ये इत्युक्तो मुनिरहमिन्द्रेण निषिद्धोऽस्मीत्यजीगदत् तत्रोपायमाकलय्य निजशिरश्छेदात्प्रागेव तव शिरश्छित्त्वान्यत्र निधाय कस्यचिदश्वस्य शिरश्छित्त्वा गले सन्धाय तेन ते विद्ये ब्रूहि यदीन्द्रस्तदश्वशिरश्छिनत्ति तर्हि स्वकीयशिरः पूर्ववद्गले संयोज्य तुभ्यं दक्षिणां च दास्यावः इति ताभ्यां देवचिकित्सकाभ्यामुक्तो दध्यङश्वशिरसा ते विद्ये तयोरुपदिदेश इत्यतोऽश्वशिरंनामेति प्रख्यातमभूदिति "आथर्वणायाश्विनौ दधीचेऽश्विनं शिरः प्रत्यैरयतं स वां मधु प्रवोचदृतायं त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वाम" इति श्रुतिं चात्रोदाहरन्ति । हेऽश्विनावाथर्वणाय दधीचेऽश्वसम्बन्धि शिरः प्रत्यैरयतं प्रतिसंहितमकुरुतं स दध्यङ् वां मधु ब्रह्मविद्यालक्षणं प्रवोचत्प्रावोचत् हे दस्रौ ! त्वष्ट्रा विश्वरूपाय प्रोक्तं त्वाष्ट्रं कक्ष्यं नारायणकवचं च वामुवाच । कीदृशं ऋतायन् यथातथं विद्यां जानन् विद्यां वक्ष्यामीति वचनं सत्यं सम्पादयन्निति वा ॥ ५२ ॥

किञ्च । नारायणकवचधारणाच्च दधीचोऽङ्गं वीर्यवदित्यभिप्रेत्याह । कृत्स्नश्चेति । मदात्मकं वर्म नारायणाकवचमाथर्वणमाथर्वणेन दधीचाधीतत्वात् कृत्स्नम् अङ्गोपाङ्गसहितेनानूनं त्वाष्ट्राय विश्वरूपाय प्रादात् यच्च त्वं विश्वरूपादधाः ततस्तस्मात्त्वाष्ट्रं त्वष्टुर्विद्यमानत्वात्तत्सामर्थ्यात्तस्य विश्वरूपस्य विद्यमानत्वाच्च तथा ॥ ५३ ॥

युष्माकं याच्ञाभङ्गभयं माभूदित्याह । युष्मभ्यमिति । अङ्गानीत्यवयवसाहित्यविवक्षया बहुवचनं किञ्चिदपि नावशेषयतीत्यर्थः । याचितोऽश्विभ्यामिति पाठे अश्विभ्यां याचितो यथा ताभ्यां विद्यां प्रादात्तथा युष्मभ्यमप्यङ्गानि ददातीत्यर्थः । तैरङ्गैर्विश्वकर्मणा निर्मित आयुधश्रेष्ठो भवत्विति शेषः । येनायुधश्रेष्ठेन मत्तेजसोपबृंहितो भवान् तेजोऽस्त्रायुधसम्पदः तेन भर्ता इति शेषः । मत्परान् हिंसन्ति केऽपीति शेषः । अत्र दधीचाकारित्वेन मुन्यादियाच्ञया न देवानां सामर्थ्यन्यूनतेति दोषः "समर्था अपि याचन्ति देवा मुन्यादिकान् क्वचित् । आश्चर्यैव एरेतेषां यशोऽर्थमपि नान्यथा" इति वचनात् ॥ ५४ ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

नवमोऽध्यायः ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निष्कल मायातीतम् ॥ ५२-५५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य

नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदपि यदि देहारामत्वाद्विषयान् विना म्रियध्वे तर्हि तत्रोपायं श्रृणुतेत्याह । मघवन्निति । विद्यया व्रतैस्तपसा च सारं दृढं गात्रं शरीरं याचत याचध्वम् ॥ ५१ ॥

तदीयं विद्यातिशयमाह । स वा इति द्वाभ्याम् । एवं ह्यत्र प्रसिद्धा कथा । निजाभ्यामथर्वणा वद प्रवर्ग्यब्रह्मविद्ययोः । दध्यङ्ङं समुपागम्य

(१) विद्यालक्षणम् ।

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तमूचतुरश्विनौ । भगवन् ! देहि नौ विद्यामिति श्रुत्वा स चाब्रवीत् । कर्मण्यवस्थितोऽद्याहं पश्चाद्वक्ष्यामि गच्छतम् । तयोर्निर्गतयोरेव शक्र आगत्य तं मुनिम् । उवाच भिषजोर्विद्यां माऽवादीरश्विनोर्मुने ! । यदि मद्वाक्यमुल्लङ्घ्य ब्रवीषि सहसैव ते । शिरश्छिन्द्यां न सन्देह इत्युक्त्वा स ययौ हरिः । इन्द्रे गते तथाऽभ्येत्य नासत्यावूचतुर्द्विजम् । तन्मुखादिन्द्रगदितं श्रुत्वा तावूचतुः पुनः । आवां तव शिरश्छित्त्वा पूर्वमश्वस्य मस्तकम् । सन्धास्यावस्ततो ब्रूहि तेन विद्याञ्च नौ द्विज ! तस्मिंश्छिन्नेऽन्द्रेण संछिन्ने पुनः सन्धाय मस्तकम् । निजं ते दक्षिणां दत्त्वा गमिष्यावो यथागतम् । एतच्छ्रुत्वा तथोवाच दध्यङ्ङाथर्वणस्तयोः । प्रवर्ग्यं ब्रह्मविद्याञ्च सत्कृतोऽसत्यशङ्कितः । इति । ततश्चायमर्थः । दध्यङ् निष्कलं शुद्धं ब्रह्म अधिगतः ज्ञातवान् । निष्कृतामिति पाठे कृतादनित्यपदार्थान्निष्क्रान्तम् । ततोऽश्विभ्यां प्रादादित्युत्तरस्यानुषङ्गः । ब्रह्म कीदृशं यद्वै अश्वशिरसा प्रोक्तत्वादश्वशिरोनाम तयोरमरतां जीवन्मुक्तत्वं व्यधात् । तथा च श्रुतिः "अश्वस्य शीर्ष्णा प्रयतीमुवाच" इति ॥ ५२ ॥

मदात्मकं वर्म श्रीनारायणकवचं त्वष्ट्रे प्रादात् यत् कवचं त्वष्टा विश्वरूपाय स्वपुत्राय प्रादात् । ततो विश्वरूपात्त्वं यत् अधा धृतवानसि अत एव विद्यया सारं गात्रं याचध्वमित्यर्थः ॥ ५३ ॥ नन्वेवं को दाता यः स्वगात्रमपि दद्यात्तत्राह । युष्मभ्यमिति । विशेषतोऽश्विभ्यां शिष्यप्रीत्या दास्यति । अश्विभ्यां हेतुभ्यामिति वा तैरङ्गैरस्थिभिः भविष्यतीति शेषः ॥ ५४ ॥

ननु सर्वग्रासिना वृत्रेण सार्द्धं योद्धुं न शक्नुमस्तस्मात्तं हन्तुं स्वयमेव यतस्वेत्यत आह । न हिंसन्तीति । वृत्रस्तद्वशीभूता असुराश्च मत्परान् युष्मान् न घ्नन्ति वृत्रस्य परमभक्तत्वेन मदर्थं स्वदेहमपि जिहासोर्वस्तुतो युष्मासु द्वेषो नास्त्येव यथा युष्माकं तस्मिन्निति भावः ॥ ५५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठस्य नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे मघवन् ! ऋषिसत्तमं दध्यञ्चं प्रति यात गच्छत । वो भद्रं वाञ्छितं भविष्यति । तत्र गात्रं याचत याचध्वम् ॥ ५१ ॥

ऋषेर्विद्यावत्त्वसत्यप्रतिज्ञत्वादीन् गुणानाह । स वा इति द्वाभ्याम् । इयं ग्रन्थान्तरे प्रसिद्धा कथा ।

निशाम्याथर्वणं दक्षं प्रवर्ग्यब्रह्मविद्ययोः ।
दध्यञ्चं समुपागम्य तमूचतुरथाश्विनौ ॥
भगवन् ! देहि नौ विद्यामिति श्रुत्वा स चाब्रवीत् ।
कर्मण्यवस्थितोऽद्याहं पश्चाद्वक्ष्यामि गच्छतम् ॥
तयोर्निर्गतयोरेव शक्र आगत्य तं मुनिम् ।
उवाच भिषजोर्विद्यां माऽवादीरश्विनोर्मुने ! ॥
यदि मद्वाक्यमुल्लङ्घ्य ब्रवीषि सहसैव ते ।
शिरश्छिन्द्यां न सन्देह इत्युक्त्वा स ययौ हरिः ॥
इन्द्रे गते तथाऽभ्येत्य नासत्यावूचतुर्द्विजम् ।
तन्मुखादिन्द्रगदितं श्रुत्वा तावूचतुः पुनः ॥
आवां तव शिरश्छित्त्वा पूर्वमश्वस्य मस्तकम् ।
सन्धास्यावस्ततो ब्रूहि तेन विद्यां च नौ द्विज ! ॥
तस्मिंश्छिन्नेऽन्द्रेण संछिन्ने पुनः सन्धाय मस्तकम् ।
निजं ते दक्षिणां दत्त्वा गमिष्यावो यथागतम् ॥
एतच्छ्रुत्वा तथोवाच दध्यङ्ङाथर्वणस्तयोः ।
प्रवर्ग्यं ब्रह्मविद्यां च सत्कृतोऽसत्यशङ्कितः ॥

इति । श्लोकान्वयस्तु स वै दध्यङ् यद्वै अश्वशिरसो यदिदमश्वशिरोनाम ब्रह्म निष्कलं नितरामनुष्ठेयं प्रवर्ग्याख्यं कर्म च ब्रह्मविद्यां प्रवर्ग्याख्यं कर्मविद्यां च अधिगतः ज्ञातवान् । तत् अश्विभ्यां प्रादादिति क्रियापदेनान्वयः । तथा च श्रुतिः "अश्वस्य शीर्ष्णा प्रयतीमुवाच"इति तया ब्रह्मविद्यया तयोरमरतां ब्रह्म[illegible] व्यधात् ॥ ५२ ॥

स एव दध्यङ् यन्मदात्मकं कवचं त्वष्ट्रे प्रादात् स च त्वष्टा विश्वरूपाय प्रादात् ततस्त्वष्टुः सकाशात् यत् त्वमधा धृतवानसि ॥ ५३ ॥

युष्माभिः विशेषतोऽश्विभ्यां च याचितः धर्मज्ञः अङ्गानि अस्थीनि युष्मभ्यं दास्यति । तैः अस्थिभिः आयुधश्रेष्ठो वज्रो भविष्यति हर्ता हरिष्यति । तेन वृत्रशिरो हर्ता हरिष्यति मत्तेजसा उपबृंहितः सन् तस्मिन् वृत्रे विनिहते यूयं पुनस्तेज आदिकं प्राप्स्यथ । तदनन्तरं वो युष्माकं भद्रं मङ्गलमेव भविष्यति । ये तु विशेषतो मत्परास्तांस्तु सर्वदा केऽपि न हिंसन्तीत्याशयेनाह । नेति । अहं परः पूज्यो येषां तान् केऽपि न हिंसन्तीति योजना ॥ ५४ ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
नवमाध्यायार्थप्रकाशः ॥ ९ ॥

---

भाषा टीका ।

हे इन्द्र ! आपका भला होगा तुम लोग उत्तम ऋषि दधीच के पास जाओ फिर विद्या व्रत तपस्या से दृढ उनके शरीरको जल्दी मांगो ॥ ५१ ॥

वह दधीच मुनि निष्कल ब्रह्म को जानते हैं जिस ब्रह्म ज्ञान का अश्व शिर नाम है उस विद्या को अश्विनी कुमार को देकर उनने उन दोनों को अमर कर दिया है ॥ ५२ ॥

जिस दधीचने मेरा स्वरूप नारायण कवच को त्वष्टाके लिये

भाषा टीका ।

उपदेश किया है उस त्वष्टाने विश्वरूप को दिया है विश्वरूप ने तुमको दिया है ऐसी विद्या वाले दधीच हैं ॥ ५३ ॥

तुमारे साथ मे रहने वाले अश्विनीकुमार के मांगने से दधीच ऋषि अपने शरीरको देवेंगे तिससे विश्वकर्मा के बनानेसे हमारे तेजसे युक्त होनेसे विश्वकर्मा का बनाया वज्र आयुध वृत्रासुरके शिरको काटेगा तब तुम लोग आयुध अस्त्र सम्पत्तिसे युक्त होकर फिर अपने स्थान को प्राप्त होवोगे क्यों कि मेरे भक्तों को कोई नहीं मार सकता है ॥ ५४ ॥ ५५ ॥

इति श्रीभागवत षष्ठस्कन्ध के नवमें अध्यायका

भाषानुवाद लक्ष्मणाचार्यकृत

समाप्त ॥ ९ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे नवमोऽध्यायः समाप्तः ॥ ९ ॥

## ॥ दशमोऽध्यायः ॥

॥ श्रीशुक उवाच ॥

इन्द्रमेवं समादिश्य भगवान् विश्वभावनः ।
पश्यतामनिमेषाणां तत्रैवान्तर्दधे हरिः ॥ १ ॥
तथाभियाचितो देवैर्ऋषिराथर्वणो महान् ।
मोदमान उवाचेदं प्रहसन्निव भारत ! ॥ २ ॥
अपि वृन्दारका ! यूयं न जानीथ शरीरिणाम् ।
संस्थायां यस्त्वभिद्रोहो दुःसहश्चेतनापहः ॥ ३ ॥
जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः ।
क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे ॥ ४ ॥

॥ देवा ऊचुः ॥

किं नु तद्दुस्त्यजं ब्रह्मन् ! पुंसां भूतानुकम्पिनाम् ।
भवद्विधानां महतां पुण्यश्लोकेड्यकर्मणाम् ॥ ५ ॥
ननु (१) स्वार्थपरो लोको न वेद परसङ्कटम् ।
यदि वेद न याचेत नेति नाह यदीश्वरः ॥ ६ ॥

॥ ऋषिरुवाच ॥

धर्मं वः श्रोतुकामेन यूयं मे प्रत्युदाहृताः ।
एष वः प्रियमात्मानं त्यजन्तं सन्त्यजाम्यहम् ॥ ७ ॥
योऽध्रुवेणात्मना नाथाः ! न धर्मं न यशः पुमान् ।
ईहेत भूतदयया स शोच्यः स्थावरैरपि ॥ ८ ॥
एतावानव्ययो धर्मः पुण्यश्लोकैरुपासितः (२) ।
यो भूतशोकहर्षाभ्यामात्मा शोचति हृष्यति ॥ ९ ॥
अहो दैन्यमहो कष्टं पारक्यैः क्षणभङ्गुरैः ।
यन्नोपकुर्यादस्वार्थैर्मर्त्यः स्वज्ञातिविग्रहैः ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दशमे केशवादिष्टदध्यङ्ङस्थिजवज्रभृत् ।
इन्द्रोऽयुध्यत वृत्रेण सासुरेण स निर्जरः ॥ १ ॥ १ ॥

तथेति । मोदमान एव तन्मुखाद्धर्मं श्रोतुकामः प्रत्याचक्षाण इवोवाच अपीति द्वाभ्याम् । हे वृन्दारकाः ! अपि किं संस्थायां मृत्यौ योऽभिद्रोहो दुःखं तं न जानीथ ॥ २ ॥ ३ ॥

आत्मा देहः । वयं जानीम एव किं तु श्रीविष्णुरस्मत्सुखं याचत इति चेत्तत्राह । याचते विष्णवेऽपि दातुं क उत्सहेत ॥ ४ ॥

---

(१) नूनमिति श्रीवीरराघवविजयध्वजचक्रवर्त्तिनां पाठः (२) उपाहित इति श्रीवीरराघवाचार्यपाठः ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पुण्यश्लोकैरीड्यानि कर्माणि येषाम् ॥ ५ ॥

याचको यदि वेद तर्हि न याचेत यदीश्वरो दानसमर्थ-स्तर्हि सोऽपि नेति नाह । अतो यथा तव सङ्कटं स्वार्थपरा वयं न जानीम एवं प्रत्याचक्षाणस्त्वमस्मत्सङ्कटं न जानासीति भावः ॥६॥

ये मया प्रत्युदाहृताः प्रत्युक्ताः । मां त्यजन्तं त्यक्त्वा यान्त-मात्मानं देहम् ॥ ७ ॥

अध्रुवेणात्मना देहेन हे नाथाः! ॥ ८ ॥

भूतानां शोकेन शोचति हर्षेण हृष्यति य आत्मा स्वयं तस्य यो धर्म एतावानेवाव्यय इत्यर्थः ॥ ९ ॥

पारक्यैः श्वसृगालादिभक्ष्यैः अस्वार्थैरात्मोपयोगशून्यैः स्वं वित्तम् । ज्ञातयः।पुत्रादयः विग्रहो देहः । तैर्नोपकुर्यादिति यत्॥१०॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हरिरेवमादिश्यान्तर्दधाविल्याह मुनिः । इन्द्रमिति । एवमित्थमिन्द्रं समादिश्याज्ञाप्य विश्वस्य सुखकरो भगवाननिमेषाणां देवानां पश्यतां सतां तत्रैवान्तरधीयतान्तर्हितवान् ॥ १ ॥

हे भारत ! भगवदुक्तप्रकारेण देवैरभियाचितो दध्यङ्ङाथ-र्वणः अथर्वणः पुत्रः मुनिः परब्रह्ममननशीलः महान् "कृत-कृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्" इत्युक्तविधगुण-सम्पन्नः अत एव मोदमानः हृष्टचित्तः प्रहसन्निव परिहासं कुर्वन्निवेदं वक्ष्यमाणमुवाच ॥ २ ॥

उक्तिमेवाह । अपीत्यादिना विष्णव इत्यन्तेन । तावत्तेषां विवक्षितं श्रोतुकामः प्रत्याचिख्यासुरिवाह दध्यङ् । अपीति । हे वृन्दारकाः ! शरीरिणां संस्थायामन्तकाले यो दुःसहः सोढुमशक्य-श्चेतनापहः चैतन्यहरः अभिद्रोहः क्लेशस्तमपि किं न जानीथ ॥ ३ ॥

इह लोके जीवितुमिच्छूनां जीवानामात्मा देहः प्रेष्ठः प्रिय-तमः । अत एवेप्सितः इष्टस्तं प्रेष्ठं देहं भिक्षमाणाय विष्णवेऽपि दातुं को वा उत्सहेतोत्साहं कुर्यात् । न कोऽप्युत्सहेतेत्यर्थः । विष्णव इत्यनेन "अभ्यागतः स्वयं विष्णुः" इति प्रकारेण विष्णुरूपाय याचमानायेत्यर्थ उक्तः ॥ ४ ॥

एवमुक्ता देवास्तमाहुः । किं न्विति । हे ब्रह्मन् ! पुण्यश्लोकै-रीड्यानि कर्माणि चरित्राणि येषाम् । पुण्यश्लोकेति सम्बुद्ध्यन्तं वा अत एव महतां भूतान्यनुकम्पयन्तीति तथा तेषां भूतानु-कम्पाशीलानां भवादृशानां पुंसां किं नु तद्दुस्त्यजमात्मपर्यन्त-वस्तूनां न किमपि दुस्त्यजमस्तीति भावः ॥ ५ ॥

यदुक्तमभिद्रोहं किं न जानीथ इति तत्राहुः । नूनमिति । स्वार्थपरः स्वप्रयोजनासक्तः पुमान् परस्य सङ्कटं नूनं न वेद यदि परसङ्कटं वेद तर्हि न याचेतैव यदि याच्यमान ईश्वरः दानसमर्थस्तर्हि नेति न दास्यामीति नाह न ब्रूते अतो यथा तव सङ्कटं वयं स्वार्थपराः न जानीमस्तथा प्रत्याचक्षाणस्त्वमप्य-स्मत्सङ्कटं न जानासीति भावः ॥ ६ ॥

एवमुक्तो दध्यङ् स्वाभिप्रायमाह । धर्ममिति चतुर्भिः । वो युष्माकं धर्मं श्रोतुकामेन मया प्रकृतं प्रत्युदाहृताः प्रत्या-ख्याताः आत्मानं मां त्यजन्तं प्रारब्धभङ्गात्स्वयमेव त्यजन्तं तमेतं वः युष्माकं प्रियं देहमहं सन्त्यजामि सम्यगहङ्कारापो-हेन त्यजामि ॥ ७ ॥

हे नाथाः ! यः पुमानध्रुवेणात्मना देहेन धर्मं यशो वा भूतदयया नेहेत न साधयेत् स पुमान् स्थावरैरपि शोच्यः । स्थावरा अपि हि स्वविनाशेनापि परैरुपयुज्यन्ते । अतोऽनुपकारकस्ते-भ्योऽपि निकृष्ट इत्यभिप्रायः ॥ ८ ॥

अव्ययोऽक्षयिष्णुः धर्मः पुण्यश्लोकैरेतावानेव उपासितः उपार्जितः कियान् । भूतानां शोकेन शोचति हर्षेण हृष्यति यः आत्मा स्वयमिति यः एतावानेव ॥ ९ ॥

मर्त्यैः कर्तृभिः पारक्यैः श्वसृगालादिभक्ष्यैः क्षणभङ्गुरैर-स्थिरैरस्वार्थैरात्मोपयोगशून्यैः स्वज्ञातिभिर्विग्रहैर्देहैश्च साधनै-र्नोपकुर्यादिति यदेतदहो कष्टमहो दैन्यं च ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शत्रुनिग्रहोऽपि भगवत्प्रीतिजनकत्वेन मुक्तिसाधनं स्यादि-त्यभिप्रेत्य कतिपयैरध्यायैर्वृत्रवासवयोर्युद्धं निरूप्यते । अत्रादौ सतामभीष्टमवश्यं कर्तव्यं पुरुषेणेति देवेभ्यो दधीचेः स्वाङ्गदानप्र-कारं वक्तुमाह । इन्द्रमिति । "सुरमत्स्यावनिमिषौ"इत्यमरः ॥१॥२॥

संस्थायाम्(१)चेतनापहो बुद्धिभ्रंशकरो यो द्रोहः दुःखलक्षण उपद्रवः तं वृन्दारका देवा अपि यूयं न जानीथेत्यन्वयः । सर्व-प्राणिनां बुद्धिवृत्तिसाक्षित्वाद्भवतामित्यर्थः । अभिद्रोहस्य सर्व-विषयज्ञाननाशकत्वात् ॥ ३ ॥

"आत्मा देहे शरीरे च संसारिणि हरौ तथा"इत्यभिधानात् इह प्रियेषु वस्तुषु देहः प्रेष्ठः प्रियतमः ईप्सिततम इति । यस्मात् कः पुमान् भिक्षमाणायातिथिरूपेण याचमानाय विष्णवेऽपि तं देहं दातुमुत्सहेत प्रयतेत ॥ ४ ॥

पुण्यश्लोकैः पुरुषैरीड्यानि स्तुत्यानि कर्माणि देहदानादीनि येषां ते तथा तेषाम् ॥ ५ ॥

नूनं प्रायः परसङ्कटं परदुःखं दातुमशक्यं दातव्यं चेति वा परसङ्कटं वेद तर्हि न याचेत । सामान्यमुक्त्वा विशेषमाहुः । नेतीति । अशक्यमपि दातुं यदीश्वरः समर्थस्तर्हि याचितः सन् असौ दास्यामीति नेति नाह न वक्तव्यं ते जानन्तोऽपीदृशो याचनीय इति जानन्तो वयं दातुं समर्थं भवन्तं याचामहे इत्यभिप्रायः । न चात्र देवानां स्वात्मनो नीचमाथर्वणं याच-मानानामपि मानलक्षणतेजःक्षतिः शङ्कनीया । कार्यगौरवविवक्षया तद्भावस्य प्रामाणिकत्वाद्भयाशाकारत्वाच्च ।

> आशयैव महाविष्णोः कार्यार्थमपि च क्वचित् ।
> नीचानपि तु याचन्ते स्वात्मनो गुणवत्तराः ॥
> नीचवाक्यं वदेयुश्च सुरा नैतावता क्वचित् ।
> तेजःक्षतिर्भवेदेषां जनकस्य यथार्भकः ॥

इति वचनात् ॥ ६ ॥

(१) मरणे ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रत्युदाहृताः निराकृता इत्योक्ताः । त्यजन्तं त्यक्ष्यन्तम् ॥ ७ ॥ अध्रुवेणात्मना अनित्येन देहेन हे नाथाः ! स्थावरैः स्तब्धैर्विवेकशून्यैरित्यर्थः ॥ ८ ॥ ९ ॥

पारक्यैः परेषां श्वसृगालादीनां भक्ष्यभूतैः अस्वार्थैः परप्रयोजनैः स्वज्ञातिजनैः स्वविग्रहैः स्वदेहैश्च ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दशमोऽध्यायस्य क्रमसन्दर्भो नास्ति ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दधीचो याचितात् प्राप्तैरस्थिभिर्वज्रनिर्मितिः ।
दशमेऽभूज्जयश्चाजौ देवानामसुरैः सह ॥०॥

मोदमानोऽपि प्रहसन्निव याच्ञाप्रत्याख्यानेन तान् तिरस्कुर्वन्निव ॥ १ ॥ २ ॥

संस्थायां मृत्यौ ॥ ३ ॥

आत्मा देहः वयं जानीम एव किन्तु विष्णुरेवास्मन्मुखेन याचते इति चेत्तत्राह । विष्णावेऽपि दातुं क उत्सहेत ॥ ४ ॥ ५ ॥

ऋषिराह । नूनमित्यादि न याचेतेत्यन्तम् । देवाः प्रत्याहुः । नूनमित्यादिपद्यमेव न याचेतेति चतुरक्षरविनाभूतम् । ततश्चार्थान्तरन्यासस्यात्र विशेषतोऽप्यमर्थः । याचको लोकः नूनं स्वार्थपरः स्वर्गाद्यैश्वर्यभोगपरः । परस्य दातुः सङ्कटं स्वदेहास्थिप्रदाने पीडां न वेद । यदि देवत्वेन विवेकवत्त्वाद्वेद तर्हि न याचेतेति । तेन युष्माकं विवेकाभावाच्च देवत्वं किन्तु व्याघ्रादिपशुतुल्यत्वमिति । ऋषिणोक्तं श्रुत्वा देवैः प्रत्युक्तं दाता लोकोऽपि नूनं स्वार्थपरः देहेन्द्रियादिषु ममत्वे चिरजीवित्वसुखपरः । परेषां याचकानां सङ्कटं घोरशत्रूपद्रवादिदुःखं न वेद । यदि ऋषित्वेन विज्ञानविवेकदयाद्रिमत्त्वाद्वेद तर्हि नेति नाह न दास्यामीति न ब्रूयात् । यद्यस्मादीश्वरः तद्दानसमर्थः तेन तथापि विज्ञानाद्यभावाच्च ऋषित्वम् । प्रत्युत शोकमोहादिसद्भावाद्वृकादिपशुतुल्यत्वमिति भावः ॥ ६ ॥

धर्मं वः श्रोतुकामेनेति । स धर्मो युष्मत्प्रत्युत्तरेणैव श्रुतः । यद्वा । ध्वनिरयं वक्रोक्त्यैव धर्मो न श्रुतः । किन्तु । वाक्चातुर्यं श्रुतम् । भवतु तावत् स्वाभिप्रायं ज्ञापय इत्यत्राह । एष इति । आत्मानं देहं त्यजन्तं सम्यक् त्यजामीति स देहो यावन्मां न त्यजति तावदहमेव तं त्यजामि युष्मदर्थं ददामीत्येतावद्भाग्यं मम भवत्विति भावः ॥ ७ ॥

हे नाथाः ! ॥ ८ ॥

आत्मा मनः ॥ ९ ॥

अदातारमाक्षिपति । अहो इति । पारक्यैः शृगालादिभिर्भक्ष्यैः स्वं वित्तं ज्ञातयः पुत्रादयः विग्रहा देहास्तैः ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्थं लब्धवज्रस्य सदेवस्येन्द्रस्य सासुरेण वृत्रेण सह युद्धं वर्णयति । इन्द्रमिति दशमेन । अनिमिषाणां देवानाम् ॥ १ ॥

भगवता ममास्थीनि भिक्षितुमेते प्रेषिता इति कथञ्चिज्ज्ञात्वा मोदमानः धर्मं श्रोतुमिदमुवाच । स्वार्थपरा एवंविधेऽपि कर्मणि न लज्जन्ते इति तान् प्रति प्रहसन्नित्युक्तवान् ॥ २ ॥

अहो हे वृन्दारकाः ! संस्थायां मरणे योऽभिद्रोहो दुःखं तमपि किं यूयं न जानीथ ॥ ३ ॥ ४ ॥

पुण्यश्लोकैः पवित्रकीर्तिभिरपि दुस्त्यजानि कर्माणि येषां तेषाम् ॥ ५ ॥ ६ ॥

वो धर्मं श्रोतुकामेन मे मया प्रत्युदाहृताः प्रत्याख्याताः । मां त्यजन्तं प्रारब्धकर्मक्षयात् पतन्तं वो युष्माकं प्रियं वाञ्छितमात्मानं देहं त्यजामि ॥ ७ ॥

हे नाथाः ! देवाः ! आत्मना देहेन ॥ ८ ॥

यः आत्मा पुरुषः भूतानां शोकेन शोचति हर्षेण हृष्यति यत एतावानेव धर्मः अव्ययः मोक्षपर्यवसायी पुण्यश्लोकैरुपासित आहतः ॥ ९ ॥

अस्वार्थैः आत्मोपयोगरहितैः क्षणभङ्गुरैरनित्यैः पारक्यैः मातृपितृश्वपश्वाग्न्यादीनां ममतास्पदैः स्वज्ञातिविग्रहैः धनबन्धुशरीरैः यन्नोपकुर्यादिति यदेतदहो दैन्यमहो कष्टं च ॥ १० ॥

---

### भाषा टीका ।

श्रीशुकदेवजी बोले हे भारत ! विश्वपालन करने वाले भगवान् इन्द्र को इस प्रकार आज्ञा देकर देवतों के देखतेही वहींपर अन्तर्धान होगये ॥ १ ॥

हे भारत ! देवतों के इस प्रकार मागने से महात्मा अथर्वण दधीच जी आनन्दित होकर हसते सरीके इस वचन को बोले ॥ २ ॥

यद्यपि आपलोग देवता हो तो भी नहीं जानते हो कि देहधारियों को मरने में मूर्च्छा कर देने वाला जो दुःख होता है ॥ ३ ॥

जीनेकी इच्छावाले जीवों को इस संसार में आत्मा बडा प्रिय है उस आत्मा को यदि विष्णु भी मांगे तो कौन देने को चाहेगा ॥ ४ ॥

देवता बोले हे ब्रह्मन् ! भूतों पर दया करने वाले आप सत्कीर्ति वालों से कीर्तन करने योग्य कीर्ति वाले आप सरीके महात्माओं को कौनसी बात नहीं त्यागने योग्य है ॥ ५ ॥

दधीच जी बोले यह लोक सब बडा स्वार्थ वाला है सो दूसरे के सङ्कट को नहीं जानता है यदि जानता होता तो नहीं मांगता देवता बोले यदि देनेवाला देने में समर्थ होवे तो मांगने पर निषेध नहीं करता है ॥ ६ ॥

ऋषिबोले आपसे धर्म सुननेकी इच्छा से मैंने आपको

॥ श्रीशुक उवाच ॥

एवं कृतव्यवसितो दध्यङ्ङाथर्वणस्तनुम् ।
परे भगवति ब्रह्मण्यात्मानं संनयन्न् जहौ ॥ ११ ॥
यताक्षासुमनोबुद्धिस्तत्त्वदृग्ध्वस्तबन्धनः ।
आस्थितः परमं योगं न देहं बुबुधे गतम् ॥ १२ ॥
अथेन्द्रो वज्रमुद्यम्य निर्मितं विश्वकर्मणा ।
मुनेः शुक्तिभिरुत्सिक्तो भगवत्तेजसान्वितः ॥ १३ ॥
वृतो देवगणैः सर्वैर्गजेन्द्रोपर्यशोभत ।
स्तूयमानो मुनिगणैस्त्रैलोक्यं हर्षयन्निव ॥ १४ ॥
वृत्रमभ्यद्रवच्छेत्तुमसुरानीकयूथपैः ।
पर्यस्तमोजसा राजन् ! क्रुद्धो रुद्र इवान्तकम् ॥ १५ ॥
ततः सुराणामसुरै रणः परमदारुणः ।
त्रेतामुखे नर्मदायामभवत् प्रथमे युगे ॥ १६ ॥
रुद्रैर्वसुभिरादित्यैरश्विभ्यां पितृवह्निभिः ।
मरुद्भिर्ऋभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिम् ॥ १७ ॥
दृष्ट्वा वज्रधरं शक्रं रोचमानं स्वमायया ।
नामृष्यन्नसुरा राजन् ! मृधे वृत्रपुरःसराः ॥ १८ ॥
नमुचिः शम्बरोऽनर्वा द्विमूर्द्धा ऋषभोऽम्बरः ।
हयग्रीवः शङ्कुशिरा विप्रचित्तिरयोमुखः ॥ १९ ॥
पुलोमा वृषपर्वा च प्रहेतिर्हेतिरुत्कलः ।
(१) दैतेया दानवा यक्षा रक्षांसि च सहस्रशः ॥ २० ॥

भाषा टीका ।

प्रत्युत्तर दिया है यह देह यद्यपि प्रिय है तौ भी कभी आत्मा को छोडनेही वाला है सो तिसको मैं आपके वास्ते छोडता हूं ॥ ७ ॥

हे नाथ हो ! जो पुरुष इस अनित्य शरीर से धर्म या यश को नहीं करता है और भूतों की दया नहीं करता है सो पुरुष सबके शोचने योग्य है उसका स्थावर जीवभी शोच करते हैं ॥ ८ ॥

उत्तम पुरुषों का अनुष्ठान किया इतनाहीं बडा धर्म है जो कि भूतों के सुख सें सुखपाना और भूतों के दुःखसे दुःखित होना ॥ ९ ॥

प्राणिमात्र को यही बडा कष्ट है यही बडा दैन्य है जो कि कुत्ता शृगालादिकों के भक्ष शरीर तथा धन बन्धु आदिकों से पराया उपकार नहीं करता है ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृतं व्यवसितं निश्चयो येन । आत्मानं क्षेत्रज्ञं सन्नयन्नेकीकुर्वंस्तनुं जहौ ॥ ११ ॥

यता अक्षादयो येन । तत्त्वं पश्यतीति तथा । ध्वस्तानि बन्धनानि यस्य ॥ १२ ॥

अथेन्द्रोऽशोभतेत्युत्तरेणान्वयः । मुनेः शुक्तिभिरस्थिभिर्निर्मितम् । उत्सिक्त ऊर्जितः मुनेरस्थिभिरिति वा पाठः ॥ १३ ॥ १४ ॥

असुरानीकानां यूथपैः पर्यस्तं परिवृतम् ॥ १५ ॥

[ १ ] व्योमकेशो विरूपाक्षः कपिलोऽथ विभावसुः अयमधिकपाठः श्रीविजयध्वजतीर्थमते ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

रणः संग्रामः । प्रथमे चतुर्युगे त्रेतायुगस्य मुखे आरम्भे ॥ १६ ॥ १७ ॥

नामृष्यन्नासहन्त ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं कृतनिश्चयो देहं तत्याज दध्यङ्ङित्याह मुनिः । एवमिति । एवम् इत्थं कृतव्यवसितः कृतव्यवसायः आथर्वणो दध्यङ् परब्रह्मणयात्मानं प्रत्यगात्मानं सन्नयन् समर्पयंस्तनुं देहं जहौ तत्याज ॥ ११ ॥

कथम्भूतस्तत्याज यता नियता असवः इन्द्रियाणि येन । शोभनं विषयेभ्यः प्रत्याहृतं मनो बुद्धिश्च यस्य । तत्त्वं प्रत्यगात्मशरीरकपरब्रह्मयाथात्म्यं पश्यतीति तत्त्वदृक् । ध्वस्तानि बन्धनानि पुण्यपापात्मकानि यस्मात् । परमम् " स्वपार्ष्णिना पीड्य" इत्यादिना द्वितीयस्कन्धोक्तं देहोत्क्रमणयोगमाश्रितः जहाविति पूर्वेणान्वयः । ततो गतं देहं न बुबुधे ॥ १२ ॥

अथ मुनेर्दधीचोऽस्थिभिः शल्यैर्विश्वकर्मणा विनिर्मितं वज्रमायुधमुद्यम्य उद्धृत्य भगवत्तेजसान्वितः अत एव उत्सिक्तः ऊर्जित इन्द्रः ॥ १३ ॥

सर्वैः देवगणैः परिवृतो गजेन्द्रस्य ऐरावतस्योपरि पर्यशोभत । ततो मुनिगणैः स्तूयमानो लोकत्रयं हर्षयन्निव शत्रोरहतत्वाद्धर्षयन्निवेति इवशब्दः प्रयुक्तः ॥ १४ ॥

असुरसैन्यानां नायकैः पर्यस्तं परिवेष्टितं शत्रुं वृत्रमभ्यद्रवदभिमुखमगात् यथा प्रलयकाले क्रुद्धो रुद्रः अन्तगं प्रति अन्तमवसानं गच्छतीति अन्तगः प्रपञ्चः तं प्रति । अन्तक इति पाठे अन्तं करोतीत्यन्तकः "अन्येभ्योऽपि दृश्यते" इति डः प्रत्ययः । जगद्विनाशकृदित्यर्थः । अन्तकमिति द्वितीयान्तपाठे त्वन्तकं मृत्युं प्रति वेत्यभूतोपमेयम् ॥ १५ ॥

ततोऽसुरैः सह सुराणां परमदारुणो रणः सङ्ग्रामोऽभूत् । कदा क तत्राह । प्रथमे चतुर्युगे त्रेतामुखे त्रेतायुगारम्भे प्रथमेऽन्तरे इति पाठे प्रथमे कृतत्रेतयोरन्तरालकालेप्रथममन्वन्तरे वा । नर्मदायां नद्याम् ॥ १६ ॥

हे राजन् ! मृधे युद्धे रुद्रादिभिः परिवृतं वज्रायुधधरं श्रिया प्रभया रोचमानं मरुत्पतिमिन्द्रं दृष्ट्वा वृत्रप्रभृतयोऽसुराः नामृष्यन्नासहन्त ॥ १७ ॥ १८ ॥

नमुच्यादयः ॥ १९ ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मानं मनो ब्रह्मणि सम्यङ् नयन् आत्मानं देहम् ॥ ११ ॥ यथा इन्द्रियप्राणमनोबुद्धयो येन स तथा हरेस्तत्त्वं रूपं पश्यन् योगम् ( १ ) मूलाधारमारभ्य द्वादशान्तपर्यन्तं प्राणोन्नयनलक्षणम् ॥ १२ ॥

(१) नासाग्रमारभ्य द्वादशाङ्गुलान्तब्रह्मरन्ध्रलक्षणतुर्यस्थानपर्यन्तम् ।

उत्सिक्तः उन्नद्धः ॥ १३ ॥ १४ ॥

पर्यस्तं परिवृतम् ॥ १५ ॥

ननु कस्मिन् काले कस्मिन् देशे वृत्रवासवयोर्युद्धमभूदिति तत्राह । त्रेतामुख इति । अन्तरे अस्मिन्वर्त्तमाने वैवस्वताख्यमन्वन्तरे तत्रापि प्रथमे युगे प्रथमचतुर्युगे तत्रापि त्रेतामुखे त्रेतायुगस्यादौ नर्मदायां नर्मदातीरे गङ्गायां घोष इतिवत् तत्र तत्र लक्षणोक्त्या प्रथमरणस्तु नर्मदातीरे । द्वितीयरणस्तु सृतिकाले समुद्रतीर इति विशेषो ग्रन्थान्तरेण च ज्ञातव्यः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ ० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आत्मानं मनः ॥ ११ ॥

योगं समाधिम् । गतं स्वस्माद्विच्युतम् ॥ १२ ॥

शुक्तिभिरस्थिभिः शक्तिभिरिति च पाठः ॥ १३ ॥ १४ ॥

पर्यस्तं परिवृतम् अन्तकमिवेति रुद्रो हि यममपि संहर्त्तुमुद्योतीत्यभिप्रायेण । यद्वा । सिंहः सिंहमिवेतिवदयं दृष्टान्तः ॥ १५ ॥

त्रेतामुखे त्रेतारम्भे । प्रथमे युगे वैवस्वतमन्वन्तरस्य प्रथमे चतुर्युगे"स्यात् शतघ्नी चतुर्हस्ता लोहकण्टकसञ्चिता । भुशुण्डी सर्वतो लोहकण्टकाङ्कुक्रमोन्नता" इत्यभिधानम् ॥ १६—२३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृतव्यवसितः कृतनिश्चयो ब्रह्मणि अंशिनि तत्पदार्थे आत्मानं तदंशभूतं त्वंपदार्थं सन्नयन् अर्पयन् तनुं जहौ तत्याज ॥ ११ ॥

यतान्यक्षाणीन्द्रियाणि असवः प्राणाः मनो बुद्धिश्च येन । तत्त्वे ब्रह्मणि आत्मार्पणस्थाने दृग् दृष्टिर्यस्य ध्वस्तानि बन्धनानि यस्य सः । परमं योगं ब्रह्मणि चित्तैकाग्र्यमाश्रितः देहं गतं न बुबुधे न ज्ञातवान् ॥ १२ ॥

शुक्तिभिः अस्थिभिर्निर्मितमुद्यम्य उत्सिक्तः इन्द्रः अशोभतेत्युत्तरेण सम्बन्धः ॥ १३ ॥ १४ ॥

पर्यस्तं परिवृतं रुद्रः अन्तकं लोकनाशकं त्रिपुरमिव मृत्युमिवेति वा । आत्मारामत्वात् ॥ १५ ॥

एतन्मन्वन्तरस्य प्रथमे चतुर्युगे त्रेतायुगस्य मुखे उपक्रमे ॥ १६ ॥

रुद्रादिभिर्युतं मरुत्पतिम् ॥ १७—२३ ॥

---

### भाषा टीका ।

श्रीशुकदेवजी बोले दधीचजी ने इस प्रकार से विचार करके परब्रह्म भगवान् में मनको लगाकर अपने शरीर को त्यागदिया ॥ ११ ॥

इन्द्रिय मन बुद्धि इन सबों को रोककर तत्वदृष्टि से बन्धन में से छूटकर परमयोग को धारण किया तब उनने जाते हुये शरीर को नहीं जाना ॥ १२ ॥

(१) इल्वलो वल्वलश्चैव दन्दशूको वृषध्वजः ।
कालनाभो महानाभो भूतसन्तापनो वृकः ॥ ० ॥
सुमालिमालिप्रमुखाः कार्त्तस्वरपरिच्छदाः ।
प्रतिषिध्येन्द्रसेनाग्रं मृत्योरपि दुरासदम् ॥२१॥
अभ्यर्दयन्नसम्भ्रान्ताः सिंहनादेन दुर्मदाः ।
गदाभिः परिघैर्बाणैः प्रासमुद्गरतोमरैः ॥ २२ ॥
शूलैः परश्वधैः खड्गैः शतघ्नीभिर्भुशुण्डिभिः ।
सर्वतोऽवाकिरञ्छस्त्रैरस्त्रैश्च विबुधर्षभान् ॥ २३ ॥
न ते दृश्यन्त संछन्नाः शरजालैः समन्ततः ।
पुङ्खानुपुङ्खपतितैर्ज्योतींषीव नभोघनैः ॥ २४ ॥
न ते शस्त्रास्त्रवर्षौघा ह्यासेदुः सुरसैनिकान् ।
छिन्नाः सिद्धपथे देवैर्लघुहस्तैः सहस्रधा ॥ २५ ॥
अथ क्षीणास्त्रशस्त्रौघा गिरिशृङ्गद्रुमोपलैः ।
अभ्यवर्षन् सुरबलं चिच्छिदुस्तांश्च पूर्ववत् ॥ २६ ॥
तानक्षतान् स्वस्तिमतो निशाम्य शस्त्रास्त्रपूगैरथ वृत्रनाथाः ।
द्रुमैर्दृषद्भिर्विविधाद्रिशृङ्गैरविक्षतांस्तत्रसुरिन्द्रसैनिकान् ॥ २७ ॥
सर्वे प्रयासा अभवन् विमोघाः कृताः कृता देवगणेषु दैत्यैः ।
कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः ॥ २८ ॥

भाषा टीका ।

इसके अनन्तर विश्वकर्मा के बनाये उस वज्रको हाथ में ग्रहण करके मुनि की अस्थि के वज्र से बलिष्ठ होकर भगवान् के तेज से भी इन्द्र युक्त होगये ॥ १३ ॥

इन्द्र सब देवतों के साथ युक्त होगये गजेन्द्र के ऊपर शोभित भये मुनिगण उनकी स्तुति करने लगे तीनों लोकों को हर्षातेसे इन्द्र दीखने लगे ॥ १४ ॥

हे राजन् ! इस प्रकार तेज से युक्त होकर यम को मारने को क्रुद्ध हुये रुद्र के तुल्य होकर असुरों के सेना पतियों से युक्त वृत्रासुर के मारने को उद्यत भये ॥ १५ ॥

तब सत्ययुग के अन्त त्रेता युगके आदि में नर्मदा के किनारे देवता असुरों के साथ में बडा भयङ्कर संग्राम भया ॥ १६ ॥

रुद्र वसु आदित्य अश्विनीकुमार पितर अग्नि उञ्चास पवन ऋभु साध्य विश्वेदेवा इनों से संयुक्त वज्रधर अपनी माया से प्रकाश मान इन्द्र को युद्ध मे देखकर वृत्र आदिक असुर नहीं सह सके ॥ १७ ॥ १८ ॥

नमुचि शम्बर अनर्वा द्विमूर्धा ऋषभ अम्बर हयग्रीव शङ्कुशिरा विप्रचित्ति अयोमुख पुलोमा वृषपर्वा प्रहेति हेति उत्कल दैतेय दानव यक्ष राक्षस हजारों इल्वल वल्वल दन्दशूक वृष ध्वज कालनाभ महानाभ भूतसन्ताप न वृक सुमाली माली आदिक सब दैत्यादि सुवर्णादि से भूषित होकर मृत्युसे भी अति भयङ्कर इन्द्र की सेनाको निषेधकरने लगे ॥ १९ २० ॥२१॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

शतघ्नी च चतुर्हस्ता लोहकण्टकसञ्चिता ।
भुशुण्डी सर्वतो लोहकण्टकानुक्रमोन्नता ॥

इत्यभिधानम् ॥ २३ ॥

पुङ्खो मूलदेशः एकस्य मूलदेशमनु तत्संलग्नोऽपरस्य पुङ्खो यथा भवति तथा नभःस्थैर्घनैर्ज्योतींषीवेत्यनेन तेषां तत्प्राप्तिः सूचिता ॥ २४ ॥

तामेवाह । न त इति । शस्त्राणामस्त्राणां च यानि वर्षाणि तेषामोघाः नासेदुर्न प्रापुः सिद्धपथे आकाशे ॥ २५ ॥

क्षीणा अस्त्राणां शस्त्राणां च ओघा येषां गिरिशृङ्गैर्द्रुमैरुपलैश्च ॥ २६ ॥

[ १ ] अयंपाठःतैलङ्गभिधरीये श्रीवीरराघवविजयध्वजीयादिपुचनिर्दिष्टोदृश्यते ।

ते स्वप्रयासं वितथं निरीक्ष्य हरावभक्ता हतयुद्धदर्पाः ।
पलायनायाजिमुखे विसृज्य पतिं मनस्ते दधुरात्तसाराः ॥ २९ ॥
वृत्रोऽसुरांस्ताननुगान् मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत् ।
पलायितं प्रेक्ष्य बलं च भग्नं भयेन तीव्रेण विहस्य वीरः ॥ ३० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तानिन्द्रसैनिकान् शस्त्राणामस्त्राणां च पूगैः समूहैरक्षतान् क्षतशून्यान् स्वस्तिमतः सुखिनो द्रुमादिभिश्चाविक्षतान्निशाम्य दृष्ट्वा । वृत्रो नाथो येषां ते तत्रसुर्भीताः ॥ २७ ॥

कृताः कृताः पुनः पुनः कृताः । कृष्णोऽनुकूलो येषां तेषु देवगणेषु । रुशतीः रुशत्यः । अकल्याण्यो रूक्षाः परुषा वाचो यथा महत्सु क्षोभकर्यो न भवन्ति तद्वत् ॥ २८ ॥

हतो युद्धे दर्पो येषां ते । आत्तः परैर्गृहीतः सारो धैर्यं येषां ते अतिप्रसिद्धा अपि ते दैत्याः एवं ते इत्यस्यापौनरुक्त्यम् । आजिमुखे युद्धारम्भे पतिं विसृज्य पलायनाय मनो दधुः यतो हरावभक्ताः ॥ २९ ॥

प्रधावतः पलायमानान् प्रेक्ष्य आदावेव तीव्रेण भयेन पलायितं भग्नं च तद्बलं सैन्यं तच्च प्रेक्ष्य एतद्वक्ष्यमाणं बभाषे ॥३०॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा सुमालिप्रभृतयश्च सर्वे कात्तस्वरपरिच्छदाः सुवर्णमयाः परिच्छदाः परिकरा येषां ते मृत्योरपि दुरासदं दुष्प्रापमिन्द्रसेनाग्रमिन्द्रसेनाया अग्रं पुरोभागं प्रतिषिध्यावरुध्य ॥ २१ ॥

असम्भ्रान्ता अपरवशाः सन्तः दुर्मदा सिंहनादेनाऽभ्यद्रवन् गदादिभिः शस्त्रैश्च विबुधर्षभान् सुरान् सर्वतोऽवाकिरन् तत्र शतघ्नी चतुर्हस्ता लोहकण्टकसंयुक्ता ॥ २२ ॥ २३ ॥

पुङ्खे मूलदेशः एकस्य पुङ्खमनु तत्संलग्नोऽपरस्य पुङ्खो यथा भवति तथा समन्तात्पतितैः शरजालैः संछन्नान्ते देवा न दृश्यन्त यथा नभोघनैर्नभःस्थैर्मेघैराच्छन्नानि ज्योतींषि इत्यनेन तेषां तदप्राप्तिः सूचिता ॥ २४ ॥

तामेवाह । नत इति । ते शस्त्राणामस्त्राणां च यानि वीर्याणि तेषामोघाः सङ्घाः सुरसैनिकान्नासंस्तु ते प्रापुः किन्तु । लघुहस्तैर्हस्तलाघववद्भिर्दिविस्थैर्देवैः सहस्रधा सिद्धपथे आकाशे छिन्ना बभूवुः ॥ २५ ॥

अथ तीक्ष्णादिछिन्ना अस्त्रशस्त्राणामोघा येषां ते दानवा गिरिशृङ्गैर्द्रुमैरुपलैः पाषाणैश्च सुराणां बलमभ्यवर्षन् तान् गिरिशृङ्गादीन् पूर्ववद्देवाश्चिच्छिदुरच्छिन्दन्तः ॥ २६ ॥

अथ वृत्रो नाथो येषां ते ऽसुराः सर्वे स्वशस्त्राणां पूगैः सङ्घैरक्षताननाडितानत एव स्वस्तिमतः सुखिनः तथा द्रुमैर्दृषद्भिः पाषाणैर्विविधैरद्रीणां शृङ्गैश्चाक्षतानिन्द्रसैनिकान्निशाम्य दृष्ट्वा सर्वेऽसुरास्तत्रसुः भीताः ॥ २७ ॥

देवगणेषु दैत्यैर्ये कृताः प्रयासास्ते सर्वे विमोघा व्यर्था अभवन् तत्र हेतुं वदन् देवगणान्विशिनष्टि । कृष्णानुकूलेष्विति । कृष्णोऽनुकूलो येषां तेषु तत्र दृष्टान्तमाह । यथेति । क्षुद्रैः प्रयुक्ताः रुशती रुशत्योऽकल्याण्यः रूक्षाः परुषा वाचो यथा महत्सु विमोहकाः क्षोभका न भवन्ति तथेति ॥ २८ ॥

हरौ भगवत्यभक्ताः अत एवान्तःसुरैर्गृहीतः सारो बलं येषाम् अत एव हतः युद्धे दर्पो गर्वो येषां तेऽसुरा वितथं व्यर्थं स्वप्रयासं निरीक्ष्य अधुनास्माकं सर्वे प्रयासाः व्यर्थाः एवेत्यालोच्य ते ऽतिप्रसिद्धा अपि दैत्या एवं ते इत्यस्यापौनरुक्त्यमाजिमुखे युद्धारम्भे पतिं वृत्रं विसृज्य पलायनाय मनो दधुः चक्रुः ॥ २९ ॥

अथ धीरो वृत्रः प्रधावतः तीव्रेण भयेन पलायमानांस्ताननुगान् भृत्यान् प्रेक्ष्य तथा किञ्चिद्भग्नमवशिष्टं पलायितं बलं च प्रेक्ष्य विहस्येदं वक्ष्यमाणं बभाषे ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कात्तस्वरपरिच्छदाः सुवर्णालङ्काराः ॥ २१ ॥ २२ ॥

अवाकिरन् अवर्षन् ॥ २३ ॥

प्रावृषि वर्षाकाले ॥ २४ ॥

लघुहस्तैः शीघ्रवेधिभिः देवैः सिद्धपथे व्योम्नि स्वप्राप्तेः पूर्वं मध्यमार्ग एव छिन्नाः ॥ २५ ॥ २६ ॥

वृत्रो नाथो येषां ते तथा दृषद्भिः पाषाणैः ॥ २७ ॥

प्रयासाः प्रहारलक्षणाः प्रयत्नाः कृष्णोऽनुकूलोऽनुग्रहाभिमुखो येषां ते तथा तेषु रुशतीः हिंसनाः "रुशरिश हिंसायाम्" इति धातुः महत्सु दुर्वासः प्रभृतिषु यतिषु क्षुद्रैः हिंसशिशुपालादिजनकल्पैः ॥ २८ ॥

पतिं वृत्रम् अस्तसाराः निरस्तबलाः ॥ २९ ॥

मनस्वी प्रशस्तमनाः ॥ ३० ॥ ३१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ते देवाः पुङ्खः शरस्य मूलदेशः एकस्य पुङ्खमनु पतितो यः शरस्तस्य पुङ्खमन्वेवं पतितैः । नभःस्थैर्घनैर्ज्योतींषीवेत्यनेन तेषां तदप्राप्तिः सूचिता ॥ २४——२६ ॥

निशाम्य दृष्ट्वा तत्रसुर्भीताः ॥ २७ ॥

कृताः कृताः पुनः पुनः कृताः यथा महत्सु वैष्णवेषु रुशतीः

कालोपपन्नां रुचिरां मनस्विनामुवाच वाचं पुरुषप्रवीरः ।
हे विप्रचित्ते ! नमुचे ! पुलोमन्!मयानर्वन् ! शम्बर ! मे शृणुध्वम् ॥ ३१ ॥
जातस्य मृत्युर्ध्रुव एष सर्वतः प्रतिक्रिया यस्य न चेह क्लृप्ता ।
लोको यशश्चाथ ततो यदि ह्यमुं को नाम मृत्युं न वृणीत युक्तम् ॥ ३२ ॥
द्वौ सम्मताविह मृत्यू दुरापौ यद्ब्रह्मसन्धारणया जितासुः ।
कलेवरं योगरतो विजह्याद्यदग्रणीर्वीरशयेऽनिवृत्तः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां षष्ठस्कन्धे वृत्रासुरयुद्धंनाम-
दशमोऽध्यायः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततः यूयं शीघ्रं म्रियध्वमित्यकथयाथयः । रूक्षाः परुषा वाचः रे रे अधमा ! इत्याद्याः ॥ २८—३१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकस्य पुङ्खं मूलदेशमनुवर्तमान इतरपुङ्खो यथा भवति तथा पतितैः नभोघनैः नभःस्थमेघैः यथा ज्योतींषि न दृश्यन्ते इत्य-दर्शनमात्रे दृष्टान्तः ॥ २४ ॥

ते शस्त्रास्त्रवर्षौघाः यतो देवैः सिद्धपथे आकाशे संछिन्ना अतः सुरसैनिकान् नासेदुः प्रापुः ॥ २५ ॥

उपलैः पाषाणैः ॥ २६ ॥

तानिन्द्रसैनिकान् शस्त्रास्त्रपूगैरक्षतान् द्रुमादिभिश्चाविक्षतान् स्वस्तिमतो निशाम्य दृष्ट्वा वृत्रनाथाः तत्रसुः ॥ २७ ॥

कृताः कृताः भूयोभूयः कृताः प्रयासाः विशेषतः मोघाः निष्फला अभवन् रुषतीः रुषत्यः रोषवत्यः रूक्षवाचः रूक्षाः नीरसाः वाचः ॥ २८ ॥ २९ ॥ ३० ॥

---

भाषा टीका ।

उन मद वाले असुरों ने सिंहनाद करके देवतों को गदा-ओंसे परिघों से बाणों से प्रास तोमर मुद्गरों से त्रिशूलों से फरसाओं से तरवारों से तोपों से भुशुण्डियों से चारों ओर से देवतों को अस्त्र शस्त्रों से प्रहारकिया ॥ २२ ॥ २३ ॥

जैसे आकाश में मेघ में चन्द्रादि ज्योति ढकजाती हैं तैसे बाणों की वृष्टि से सब देवता ढक गये सो नहीं दीखे ॥ २४ ॥

असुरों के वे शस्त्र अस्त्रों के समूह देवतों के नहीं लगे देवतों ने बडे सफाइ के हाथ से जो शस्त्र चलाये तिनसे वे शस्त्र आकाश में कटगये ॥ २५ ॥

इसके अनन्तर असुरों के अस्त्र शस्त्र जब क्षीण होगये तब पर्वतों के शिखर पत्थर आदिकों से देवतों के सैन्य को मारने लगे तब देवतों ने पहिले सरी के सब शस्त्रादि काट दिये ॥ २६ ॥

फिर तो वृत्रासुर के संग वाले दैत्यों के जब पर्वतादिकों से भी देवतों को कुछ नहीं भया और बडे शस्त्र अस्त्र पेड पत्थर भी व्यर्थ होगये तब इन्द्र सेनापतियों को देखकर असुर बडे त्रास को प्राप्त भये ॥ २७ ॥

देवगणोंमें दैत्यो नें जो प्रयास किये सो सब व्यर्थ होगये जैसे श्रीकृष्ण भक्तों को क्षुद्र लोगों के परुष वचन कोई बाधा नहीं करते हैं ॥ २८ ॥

श्री हरि में अभक्त वे दैत्य अपने प्रयास को व्यर्थ देख-कर युद्ध के गर्व के नष्ट होने से धैर्यसे छूट गये तब समर को छोडकर भगने के वास्ते मन में निश्चय करते भये ॥ २९ ॥

अपने बलको भगते देखकर और भगते देखकर अपने अनुगामी भागते हुये असुरों को देखकर बडा उत्साही वृत्रासुर बोला ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेव विशिनष्टि । कालोपपन्नामवसरोचितां मनस्विनां रुचिरां हे मय ! हे अनर्वन् ! मे वाचं शृणुत ॥ ३१ ॥

ततो मृत्योरिह यशो लोकः स्वर्गश्च यदि स्यात् । अथ नहि अमुं मृत्युं युक्तं समीचीनं प्राप्तं वा ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रह्मसन्धारणया कलेवरं जह्यादिति यत्स एको मृत्युः वीरशये रणभूमावनिवृत्तोऽपराङ्मुखः सन् जह्यादिति यत्स एकः । तौ द्वाविह शास्त्रे सम्मतौ मृत्यू । तथा च स्मृतिः

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ।

इति ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे

श्रीधरस्वामिकृतभावार्थदीपिकायाम्

दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतद्भाव इत्येतदेव प्रपञ्चयति । पुरुषश्रेष्ठः मनस्वी प्रशस्तमनस्कः वृत्रः कालोचितां मनस्विनां रुचिरां च वाचमुवाच । उक्तमेवाह । हे विप्रचित्ते ! इत्यादिना यावदध्यायपरिसमाप्ति । हे मय ! हेऽनर्वन् ! मे वाचं शृणुध्वम् ॥ ३१ ॥

सर्वतः सर्वस्य जातस्य जन्तोरेव मृत्युर्ध्रुवः निश्चितः मृत्युं विशिनष्टि । यस्य मृत्योरिह लोके प्रतिक्रिया प्रतीकारः न कृता नास्ति । किञ्च । शत्रुभ्यो मृत्युभयनिमित्तात्पलायनादयशस्करात्परलोकहानिकराच्चेभ्यो मृत्युरेव स्वर्गसंपादकः कीर्त्तिकरश्च श्रेयान् सङ्ग्रामे शत्रुभ्यो मृत्युर्दुर्लभश्चातस्तमेव वृणीतेत्याह । लोक इति द्वाभ्याम् । अथ हे दानवाः ! ततः सङ्ग्रामे मृत्योर्यदि लोकः वीरस्वर्गः यशश्च स्यात्तर्ह्यमुं मृत्युं युक्तं प्राप्तं को नाम न वृणोति किन्तु वृणुयादेव ॥ ३२ ॥

दुरापौ दुर्लभौ द्वौ मृत्यू इह लोके शास्त्रसम्मतौ कौ तौ तावज्जितासुर्जितान्तर्बाह्येन्द्रियप्राणो योगासक्तः ब्रह्मसन्धारणया ब्रह्मविषयकधारणायोगेन कलेवरं त्यजेदिति यत्स एकः तथा वीरशये रणभूमौ अनिवृत्तोऽपराङ्मुखः कलेवरं जह्यादिति यत् सोऽपरो मृत्युः तथा चोक्तम् ।

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ।

इति ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यस्य मृत्योः प्रतिक्रिया परिहारः अथ यदि (१) यस्माल्लोको यशश्च स्यातां ततस्तर्हि कः क्षत्रियादिकल्पः युद्धमूर्ध्नि प्राप्तं मृत्युं न वृणीत नामेत्यन्वयः ॥ ३२ ॥

इतोऽपि युद्धमरणं प्रशस्तमित्याहुः । द्वाविति । योगरतो जितप्राणश्च यो ब्रह्मसन्धारणया ब्रह्मध्यानेन कलेवरं विजह्यादिति । यद्युद्धादनिवृत्तोऽग्रणीः । यो वीराणामग्रतो गत्वा वीरशये युद्धाङ्गणे शरीरंजहातीति । यच्च मरणम् । तयोर्द्वावेतौ मृत्यू दुष्प्रापौ सम्मतौ शास्त्रविहिताविल्यन्वयः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततो मृत्योरिह यशः स्वर्गश्च यदि स्यात् अथ तर्हि अमुं मृत्युं युक्तं समुचितम् ॥ ३२ ॥

वीरशये सङ्ग्रामे अनिवृत्तः अभिमुखस्थः ॥ ३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठस्य दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कालोपपन्नां तत्कालोचिताम् ॥ ३१ ॥

जातस्योत्पन्नस्य मृत्युर्ध्रुवः आवश्यकः । यदि तत आवश्यकादपि इह यशः लोकः स्वर्गश्च स्यात् । अथ तर्हि अमुं मृत्युं युक्तं योग्यं को न वृणीत ॥ ३२ ॥

इह लोके द्वौ मृत्यू सम्मतौ योग्यौ तौ च दुरापौ दुर्लभौ । यत्तासुः यत्ता असवः प्राणा इन्द्रियाणि येन । योगरतो भगवज्ज्ञानभक्तिनिष्ठः स ब्रह्मसन्धारणया कलेवरं जह्यात् इत्येकः । यश्चाग्रणीः सन् वीरशये सङ्ग्रामे निवृत्तो मृत इति द्वितीयः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

दशमाध्यायार्थप्रकाशः ॥ १० ॥

---

भाषा टीका ।

उस काल के उचित और उत्साही पुरुषों को रुचिकर वचन को वह पुरुषों मे वीर वृत्रासुर बोला कि हे विप्र चित्ति !

---

( १ ) मृत्योः ।

भाषाटीका।

हे नमुचि हे पुलोमन्! हे मय! हे अनर्वन्! हे शम्बर! आप लोग मेरे वचन को सुनो ॥ ३१ ॥

पैदा होने वाले का अवश्य सब प्रकार से मरण होना है जिस के कि निवारण का कोई भी उपाय नहीं है तब तो युद्ध मे मरने वाले को ब्रह्म लोक और यश होता है तो ऐसे मृत्यु को कौन नहीं चाहेगा ॥ ३२ ॥

इस संसार मे दो मृत्यु बड़े दुर्लभ हैं जिस की सब शास्त्र प्रशंसा करते हैं एकतो पवन को जीत कर ब्रह्म धारणा से प्राण त्यागना दूसरा युद्ध मे नहीं हट कर सन्मुख मे मरजाना ॥ ३३ ॥

इति श्रीभागवत षष्ठस्कन्ध के दशमे अध्यायका भाषानुवाद लक्ष्मणाचार्यकृत समाप्त ॥ १० ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे दशमोऽध्यायः समाप्तः ॥ १० ॥

































## ॥ एकादशोऽध्यायः ॥

### ॥ श्रीशुक उवाच ॥

त एवं शंसतो धर्मं वचः पत्युरचेतसः ।
नैवागृह्णन् भयत्रस्ताः पलायनपरा नृप ! ॥ १ ॥

विशीर्यमाणां पृतनामासुरीमसुरर्षभः ।
कालानुकूलैस्त्रिदशैः काल्यमानामनाथवत् ॥ २ ॥

दृष्ट्वातप्यत संक्रुद्ध इन्द्रशत्रुरमर्षितः ।
तान्निवार्यौजसा राजन् ! निर्भर्त्स्येदमुवाच ह ॥ ३ ॥

किं व उच्चरितैर्मातुर्धावद्भिः पृष्ठतो हतैः ।
न हि भीतवधः श्लाघ्यो न स्वर्ग्यः शूरमानिनाम् ॥ ४ ॥

यदि वः प्रधने श्रद्धा सारं वा क्षुल्लका ! हृदि ।
अग्रे तिष्ठत मात्रं मे न चेद्ग्राम्यसुखे स्पृहा ॥ ५ ॥

एवं सुरगणान् क्रुद्धो भीषयन् वपुषा रिपून् ।
व्यनदत् सुमहाप्राणो येन लोका विचेतसः ॥ ६ ॥

तेन देवगणाः सर्वे वृत्रविस्फोटनेन वै ।
निपेतुर्मूर्च्छिता भूमौ यथैवाशनिना हताः ॥ ७ ॥

ममर्द पद्भ्यां सुरसैन्यमातुरं निमीलिताक्षं रणरङ्गदुर्मदः ।
गां कम्पयन्नुद्यतशूल ओजसा नालं वनं यूथपतिर्यथोन्मदः ॥ ८ ॥

विलोक्य तं वज्रधरोऽत्यमर्षितः स्वशत्रवेऽभिद्रवते महागदाम् ।
चिक्षेप तामापततीं सुदुःसहां जग्राह वामेन करेण लीलया ॥ ९ ॥

स इन्द्रशत्रुः कुपितो भृशं तया महेन्द्रवाहं गदयोरुविक्रमः ।
जघान कुम्भस्थल उन्नदन् मृधे तत्कर्म सर्वे समपूजयन्नृप ! ॥१०॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकादशे तु वृत्रस्य युध्यमानस्य वज्रिणा ।
भक्तिज्ञानवचोदर्काश्चित्रा वाचोऽनुवर्णिताः ॥ १ ॥

शंसतः कथयतः पत्युर्वचः ॥ १ ॥

कालानुकूलैः कालानुवर्तिभिः। काल्यमानां विद्राव्यमाणाम् ॥२॥

अमर्षितोऽसहमानस्तांश्छिद्रशान्निवार्य निर्भर्त्स्य चेदं वक्ष्यमाणमुवाच ॥ ३ ॥

तदेवाह द्वाभ्याम् । मातुरुच्चरितैः पुरीषप्रायैः । प्रथमान्तपाठे देवानां सम्बोधनम् । पृष्ठतो हतैर्दैत्यैः किञ्चित् न यशो नापि धर्मः । तदेवाह । नहीति ॥ ४ ॥

प्रधने सङ्ग्रामे । सारं धैर्यं हृदि चेत्तर्हि हे क्षुल्लकाः ! क्षुद्राः ! मात्रं क्षणमात्रमग्रे तिष्ठत । न चेदिह लोकभोगे स्पृहास्ति ॥ ५ ॥

सुरगणान् रिपून् । सुमहान् प्राणो बलं यस्य । येन विचेतसो बभूवुः ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वृत्रस्य विस्फोटनेन नादेन ॥ ७ ॥

उद्यतं शूलं येन । नालं वनं नलानां वनम् उद्धतो मदो यस्य स यूथपतिर्गजो यथा मर्दयति ॥ ८ ॥ ९ ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं वृत्रेण प्रतिबोधितानपि पलायमानानसुरान् वीक्ष्य स वृत्रस्तान्निवार्य युयुत्सुरिन्द्रं प्रत्युवाचेत्याह मुनिः । त इति । एवं हे नृप ! पत्युर्वृत्रस्य धर्म्यं धर्मादनपेतं वचः शंसतः कथयतः सतोऽपि भीताः । अत एव पलायनासक्ताः अत एवाचेतसोऽतिभयेन युद्धानासक्तचित्तास्ते असुराः नैवागृह्णन् पत्युर्वचो नाऽभ्यनन्दन् ॥ १ ॥

ततोऽसुरर्षभो वृत्रः कालोऽनुकूलो येषां तैस्त्रिदशैर्दैवैर्विशीर्यमाणां विशेषेण पीड्यमानामत एवानाथवत् काल्यमानां विद्राव्यमाणामासुरीं पृतनाम् सेनाम् ॥ २ ॥

दृष्ट्वामर्षिणोऽसहमानः संक्रुद्धः नितरां क्रुद्धः हे राजन् ! तां पृतनामोजसा स्वबलेन निवार्य निर्भर्त्स्य चेदं वक्ष्यमाणं देवान् प्रत्युवाच ॥ ३ ॥

तदेवाह द्वाभ्याम् । मातुः स्वस्य जनन्या उच्चरितैः पुरीषप्रायैरसुरैः प्रथमान्तपाठे देवानां सम्बोधनम् । धावद्भिः पलायमानैरपि पृष्ठतो हतैर्हन्यमानैरसुरैः किं प्रयोजनम् । न तद्वधेन यशो न स्वर्गश्चेति भावः । तदेवाह । न हीति । भीतस्य वधः शूरमात्मानं मन्यमानानां न हि श्लाघ्यः । नापि स्वर्ग्यः स्वर्गहेतुश्च ॥ ४ ॥

अतो हे क्षुल्लकाः ! अल्पकाः ! वो युष्माकं हृदि प्रधने युद्धे श्रद्धा सारं बलं वा यद्यस्ति विषयभोगेच्छा नो चेत्तर्हि मात्रं क्षणमात्रं ममाग्रे तिष्ठत ॥ ५ ॥

एवं क्रुद्धो वृत्रः सुरगणान् रिपून् वपुषा देहेन भीषयन् महान् प्राणो बलं यस्य तादृशो व्यनदत् । नादं विशिनष्टि । येन नादेन लोका जनाः विचेतसः मूर्च्छिता बभूवुः ॥ ६ ॥

तेन वृत्रस्य विस्फोटनेन नादेन सर्वे देवगणाः मूर्च्छिताः सन्तो भूमौ निपेतुः पतितवन्तः यथाशनिना हताः जनाः पतन्ति निपतन्ति तद्वत् ॥ ७ ॥

भातुरं मूर्च्छितमत एव निमीलिताक्षं सुरसैन्यमोजसा बलेन पद्भ्यां ममर्द मर्दितवान् । यथोन्मदो यूथपतिर्गजः नालं नलानां सम्बन्धि वनं मर्दयति । कथम्भूतो ममर्द रणरङ्गे दुर्निवारो मदो यस्य । उद्यतं शूलं येन । क्ष्मां पृथिवीं कम्पयन् ॥ ८ ॥

एवं स्वसैन्यं मर्दयन्तं वृत्रं विलोक्य वज्रधर इन्द्रोऽत्यमर्षिणोऽभिमुखं द्रवते आगच्छते शत्रवे महतीं गदां चिक्षेप प्रयुक्तवान् । स च वृत्रस्तामापतन्तीं दुःसहां दुःखेनापि सोढुमशक्यां गदां वामेन करेण लीलया सुखेन जग्राह गृहीतवान् ॥ ९ ॥

तया च गृहीतया गदया भृशं नितरां क्रुद्ध इन्द्रशत्रुर्वृत्रः उपहसतीव नदन् उरवो विक्रमाः पादविन्यासाः यस्य तादृशो महेन्द्रवाहमैरावतं जघान । कमवधयं तत्राह । कुम्भस्थलम् मृधे युद्धे तस्य वृत्रस्य कर्म तद्गदया तद्वाहनताडनरूपं कर्म सर्वे द्रष्टारः समपूजयन् बह्वमन्यन्त ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अचेतसो बुद्धिमत्प्रवृत्तिस्मरणारहिताः ॥ १ ॥

काल्यमानां विद्राव्यमाणाम् ॥ २ ॥

ओजसा राजन् दीप्यन् स वृत्रः तां स्वपृतनां निवार्य द्रावयतो देवान्निर्भर्त्स्येदं वाक्यमब्रवीत् ह किल ॥ ३ ॥

हे देवाः ! यूयं मातुरदितेरुच्चारिताः अधमेहनद्वान्निर्गताः किम् उभयेषामपि देहान्निष्क्रान्तत्वाविशेषात् कुतोऽस्माकमत्राह । धावद्भिरिति । पृष्ठतो हतैर्धावद्भिः असुरनाथकैः वः युष्माकं किं प्रयोजनम् अधर्मत्वात् अयमपि कुतोऽत्राह । नहीति । स्वर्ग्यः स्वर्गप्राप्तियोग्यः ॥ ४ ॥

हे क्षुल्लकाः ! अल्पाः ! देवाः ! युष्माकं हृदि सारं धैर्यं चास्ति मात्रं क्षणकालं ग्राम्यसुखे विषयभोगजनितानन्दे ॥ ५ ॥

विचेतसो मूर्च्छिताः ॥ ६ ॥

एतदेव स्पष्टयति । तेनेति । विस्फोटनं प्रकाण्डताडनम् ॥ ७ ॥

नालं नलसमुदायलक्षणं वनं यूथपतिर्गजः ॥ ८ ॥

अभिद्रवते अभ्यागच्छते ॥ ९ ॥

महेन्द्रवाहमैरावतम् ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अस्पृष्टवह्नि समदन्तीति क्रोधेनैवासम्भवोक्तिः ॥ १—२४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकादशे तु संग्राममध्ये वृत्रस्य वर्णिताः ।
शौर्यमय्यो गिरः काश्चित् प्रेममय्यश्च काश्चन ॥

अनाथवत् अनाथानिव तांस्त्रिदशान् ॥ १—३ ॥

प्रथमान्तपाठे सम्बोधनं हे मातुरुच्चरिताः ! पुरीषतुल्या देवाः ! पृष्ठतो हतैर्दैत्यैः किम् । न यशो नापि धर्मः । तृतीयान्तपाठे दैत्यानां विशेषणम् । भीतानां वधो न श्लाघ्यः । कर्तृकर्मणोरुभयोरपि यशोधर्माभावव्यञ्जकत्वात् जुगुप्सित इत्यर्थः ॥ ४ ॥

प्रधने युद्धे सारं धैर्यं हे क्षुल्लकाः ! क्षुद्राः ! ॥ ५ ॥ ६ ॥

धे इति चार्थं विस्फोटितम् ऊरुगण्डयोः करतलाघातस्तेन च ॥ ७ ॥

आतुरत्वादेव मुद्रितनेत्रम् । नलानां वनं नालम् । यूथपतिर्हस्ती ॥ ८ ॥

अभिद्रवते सम्मुखमागच्छते ॥ ९ ॥ १० ॥

---

ऐरावतो वृत्रगदाभिमृष्टो विघूर्णितोऽद्रिः कुलिशाहतो यथा।
अपासरद्भिन्नमुखः सहेन्द्रो मुञ्चन्नसृक् सप्तधनुर्भृशार्तः ॥ ११ ॥
न सन्नवाहाय विषण्णचेतसे प्रायुङ्क्त भूयः स गदां महात्मा।
इन्द्रोऽमृतस्यन्दिकराभिमर्शवीतव्यथः क्षतवाहोऽवतस्थे ॥ १२ ॥
स तं नृपेन्द्राहवकाम्यया रिपुं वज्रायुधं भ्रातृहणं विलोक्य।
स्मरंश्च तत्कर्म नृशंसमंहः शोकेन मोहेन हसन् जगाद ॥ १३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इन्द्रेण युध्यमानस्य वृत्रस्य पूर्वजन्मगतहरिभक्तत्वसूचकानि वाक्यानि वर्णयति। त एवैकस्मिकादशेनाध्यायेन। धर्मं युद्धधर्मं शंसतः कथयतः ॥ १ ॥

कालानुकूलैरसुरपराभवकालानुसारिभिः। अनाथवत्काल्यमानां विद्राव्यमाणाम् ॥ २ ॥

अमर्षितः त्रिदशपराक्रममसहमानः तान् निवार्य निर्भरस्थैर्येदं वक्ष्यमाणां सुरान् प्रत्युवाच ॥ ३ ॥

यो युष्माकं मातुरुच्चरितैर्मलनिभैः देवैः पृष्ठतो हतैर्दैत्यैः किं न किमपि यशोधर्मादिकम्। यतो भीतवधः शूरमानिनां श्लाघ्यो न भवति। हे क्षुल्लकाः! क्षुद्राः! यदि वः प्रधने युद्धे श्रद्धा हृदि सारं धैर्यं च ग्राम्यसुखे स्पृहा च न चेत्तर्हि मे अग्रे मात्रं क्षणमात्रं तिष्ठत। सुमहान् प्राणो बलं यस्य सः। येन नादेन लोकाः विचेतस आसन् ॥ ४ ॥ ५ ॥ ६ ॥

तेन नादेन विस्फोटनेन हस्ताभ्यामूरुप्रताडनेन च ॥ ७ ॥

भयान्निमीलिताक्षम्। नाडं नलवनम्। यूथपतिः गजराजः ॥ ८ ॥ ९ ॥ १० ॥

---

भाषा टीका।

श्रीशुकदेव जी बोले हे नृप! अपने मालिक वृत्रासुर के उसप्रकार कथन को भी बेहोस होकर भय से त्रस्त होकर भगने में तत्पर होकर उन असुरों ने नहीं ग्रहण किया ॥ १ ॥

अनाथ सरीकी भगाई बिखरती हुई अपनी सेना को देखकर काल के अनुकूल होने से देवतों के बल को देख कर वृत्रासुर बोला ॥ २ ॥

हे राजन्! इन्द्र का शत्रु वृत्रासुर नहीं सह कर क्रोधित होकर दुर्वाद कह कर निवारण करके देवतों से यह वचन बोला ॥ ३ ॥

तुम लोग केवल माता के मलरूप हो दौडकर भगने वाले दैत्यों को मारते हो जो लोग अपने को शूर मानते हैं उनको तो भयभीत का मारना न यश कारक हैं न स्वर्ग दायक है ॥ ४ ॥

यदि तुम लोगों को युद्धमे श्रद्धा है हे क्षुद्र हो! तुमारे हृदयमे यदि बल हो और यदि विषय भोगों में इच्छा न होवै तो मेरे आगे खडे मात्र रहो ॥ ५ ॥

इस प्रकार क्रोधित होकर शत्रु देवतों को डराता हुआ घोर शब्द को करने लगा जिस से तीनों लोक बेहोस होगये ॥ ६ ॥

तिस वृत्रासुर के शब्द से सब देवता वज्र से मारे पर्वत सरीके मूर्छित होकर भूमि में गिरने लगे ॥ ७ ॥

तबतो युद्ध में बडा मदवाला वृत्रासुर आंख मीच कर बडे दुःखित देव सेना को दोनों पावों से मर्दन करने लगा पृथिवी को कपावने लगा अपने बल से त्रिशूल को उठा कर ऐसा मर्दन करने लगा जैसे मत वाला हस्ती नरशल के वन को टोड डालै ॥ ८ ॥

उस को देखकर वज्रधारी इन्द्र बडा क्रोधित भया दौडते हुये अपने शत्रु के अर्थ बडा गदा का प्रहार करता भया आती हुई उस गदा को वृत्रासुर ने सहज से बामे हाथ से बडी कठिन उस गदा को पकडलिया ॥ ९ ॥

बडे विक्रम वाले उस इन्द्र शत्रु वृत्रासुर ने कुपित होकर इन्द्र के वाहन ऐरावत के ऊपर उसी गदा को चलाया सो उस से ऐरावत के कुम्भस्थल को मारा उस कार्य को देखकर सबों ने बडा आश्चर्य माना और बल की प्रशंसा करी ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सप्तधनुःप्रमाणं देशम् ॥ ११ ॥

सन्नोऽवसन्नो वाहो यस्य तस्मै न प्रायुङ्क्त। अमृतस्यन्दी अमृतस्रावी यः स्वकरस्तेनाभिमर्शः स्पर्शस्तेन वीतव्यथो गतदुःखः क्षतो वाहो यस्येन्द्रस्य स तथाभूतोऽवतस्थे ॥ १२ ॥

स वृत्रः हे नृपेन्द्र! आहवकाम्यया युद्धेच्छयावस्थितम्। भ्रातृहणं भ्राता विश्वरूपस्तस्य हन्तारम्। नृशंसं क्रूरं तदेवांहः पापं तस्य कर्म स्मरन् ॥ १३ ॥

**वृत्र उवाच**

दिष्ट्या भवान् मे समवस्थितो रिपुर्यो ब्रह्महा गुरुहा भ्रातृहा च ।
दिष्ट्यानृणोऽद्याहमसत्तम ! त्वया मच्छूलनिर्भिन्नदृषद्धृदाचिरात् ॥ १४ ॥
यो नोऽग्रजस्यात्मविदो द्विजातेर्गुरोरपापस्य च दीक्षितस्य ।
विश्रभ्य खड्गेन शिरांस्य वृश्चत् पशोरिवाकरुणः स्वर्गकामः ॥ १५ ॥
ह्रीश्रीदयाकीर्तिभिरुज्झितं त्वां स्वकर्मणा पुरुषादैश्च गर्ह्यम् ।
कृच्छ्रेण मच्छूलविभिन्नदेहमस्पृष्टवह्निं समदन्ति गृध्राः ॥ १६ ॥
अन्येऽनु ये त्वेह नृशंसमज्ञा ये ह्युद्यतास्त्राः प्रहरन्ति मह्यम् ।
तैर्भूतनाथान् सगणान्निशातत्रिशूलनिर्भिन्नगलैर्यजामि ॥ १७ ॥
अथो हरे ! मे कुलिशेन वीर ! हर्त्ता प्रमथ्यैव शिरो यदीह ।
तत्रानृणो भूतबलिं विधाय मनस्विनां पादरजः प्रपत्स्ये ॥ १८ ॥
सुरेश ! कस्मान्न हिनोषि वज्रं पुरःस्थिते वैरिणि मय्यमोघम् ।
मा संशयिष्ठा न गदेव वज्रं स्यान्निष्फलं कृपणार्थेव याञ्चा ॥ १९ ॥
नन्वेष वज्रस्तव शक्र ! तेजसा हरेर्दधीचेस्तपसा च तेजितः ।
तेनैव शत्रुं जहि विष्णुयन्त्रितो यतो हरिर्विजयः श्रीर्गुणास्ततः ॥ २० ॥

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

यो ब्रह्महा ब्राह्मणं हतवान् विशेषतः स्वगुरुं मम च भ्रातरं स भवानग्रतः समवस्थितः एतद्दिष्ट्या भद्रं जातम् । दिष्ट्येत्यव्ययमानन्दार्थे । हे असत्तम ! मम शूलेन निर्भिन्नं दृषत्तुल्यं हृत् हृदयं यस्य तेन त्वया निमित्तभूतेनाद्याचिरादेव भ्रातुरनृणोऽहं स्यामेतच्च दिष्ट्या ॥ १४ ॥

स्वर्गकामो यो भवानवृश्चत् ; स्वर्गकामो याज्ञिकः पशोरिवेति ॥ १५ ॥

तं त्वामस्पृष्टवह्निमदग्धदेहं समदन्ति । वर्तमानसामीप्ये वर्तमानवन्निर्देशः ॥ १६ ॥

अन्येऽपि ये अज्ञा इह त्वा त्वां नृशंसमनु मह्यमुद्यतास्त्राः सन्तो यदि प्रहरन्ति तैर्भूतनाथान् भैरवादीन् यक्ष्यामि । कथंभूतैः । निशातं तीक्ष्णीकृतं यन्मम त्रिशूलं तेन निर्भिन्नो गलो येषां तैः ॥ १७ ॥

अथो अथवा । हरे ! भो इन्द्र ! यदि भवानेव मम शिरो हरिष्यति तत्र तथा सत्यनृणो विमुक्तकर्मबन्धः सन् शेषो बलिं देहेन विधाय मनस्विनां पादरजः प्रपत्स्ये धीराणां गतिं प्राप्स्यामि ॥ १८ ॥

जीविताद्वपि मृत्युरेव ममाभिमत इत्याशयेनाह । सुरेशेति । न हिनोषि न हि क्षिपसि । गदेव विफलो यास्यतीति संशयं मा कार्षीः । कृपणादर्थः प्रयोजनं यस्याः सा याच्ञा यथा निष्फला तथा न स्यात् ॥ १९ ॥

अमोघत्वे हेतुं वदंस्तं प्रोत्साहयति । नन्विति । तेजितस्तीक्ष्णीकृतः । शत्रुं मां जहि । विष्णुना यन्त्रितः प्रेरितः ॥ २० ॥

---

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।**

एवमैरावतो वृत्रस्य गदयातीव विह्वलस्ताडितो वज्राद्युधाहतोऽद्रिरिव विघूर्णितो भ्राम्यमाणः भिन्नं मुखं यस्य सः । नितरामार्त्तः असृग्रक्तं मुञ्चन् सहेन्द्रः सप्तधनुःप्रमाणमपासरत्पश्चादगच्छत् ॥ ११ ॥

स वृत्रो महात्मा युद्धधर्माभिज्ञः । अत एव सन्नवाहाय सन्नः अवसन्नः दुःखितो वाहो यस्य तस्मै दुःखितचित्तायेन्द्राय पुनर्गदां न प्रायुङ्क्त । तत इन्द्रः अमृतस्राविस्वकराभिमर्शेन विगता व्यथा यस्य । तथास्वेन कृतो वाहो यस्य । तथाभूतोऽभितष्ठौ स्तवाह इति पाठे पूर्वं हतो वृत्रेण ताडितो यो वाहो गजः येनेन्द्रेणामृतस्यन्दिकराभिमर्शेन वीतव्यथः गतव्यथः अमृतस्यन्दिकराभिमर्शवीतव्यथः । हतो वाहो यस्येत्यर्थः । अभितष्ठौ अभिमुखं स्थितः ॥ १२ ॥

हे नृपेन्द्र ! स वृत्रः आहवकाम्यया युद्धेच्छया अवस्थितं वज्रम् आयुधं यस्य तम् । भ्रातृहणं भ्रातरं विश्वरूपं हतवन्तं रिपुमिन्द्रं विलोक्य तस्येन्द्रस्य कर्म भ्रातृहननरूपं नृशंसं क्रूरमंहः पापं शोकेन हेतुना स्मरन्पश्चान्मोहेन हसन् जगादेन्द्रं प्रत्युवाच ॥ १३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गदितमेवाह । दिष्ट्येत्यादिना यावदध्यायसमाप्ति । यो भवान् रिपुः दिष्ट्या दैववशान्ममाग्रतः समवस्थितः प्राप्तः कथंभूतः यस्त्वं ब्रह्महा :ब्राह्मणं हतवान् । तत्रापि स्वगुरुं मम च भ्रातरं हतवान् । हे असत्तम मच्छूलेन निर्भिन्नं दृषत्तुल्यं हृदयं यस्य तेन त्वया निमित्तभूतेनाद्याचिरान्मम भ्रातुर्विश्वरूपस्यानृणोऽहं दिष्ट्या भविष्यामि ॥ १४ ॥

करुणारहितः यो भवान्नोऽस्माकमग्रजस्य द्विजातेस्तत्रापि ब्रह्मविदः गुरोरपापस्य पुनर्दीक्षितस्य यज्ञीयदीक्षायामवस्थितस्य विश्वासस्य शिरांसि खड्गेनाहृश्चिच्छेद यथा स्वर्गकामो याज्ञिकः पशोः शिरश्छिनत्ति तद्वत् । द्विजातित्वादीनि विशेषणान्यवध्यत्व-सूचकानि ॥ १५ ॥

अतो ह्रिया लज्जया श्रिया सम्पदा दयया कीर्तिभिर्यशोभि-श्चोज्झितं परित्यक्तं निकृष्टेन स्वकर्मणा पुरुषादैः पिशाचैरपि गर्ह्यं निन्द्यं त्वामद्य मच्छूलेन विभिन्नो देहो यस्य । अस्पृष्टव-न्हिमदग्धदेहमित्यर्थः । गृध्राः सम्यगदन्त्यदस्यन्ति "वर्त्तमान-सामीप्ये वर्त्तमानवद्वा" इति लट् ॥ १६ ॥

अन्ये अपि च नृशंसं त्वामनुसृत्य ये देवा अज्ञाः मूढाः सन्तः इह युद्धे उद्यतास्त्राः मह्यं यदि प्रहरन्ति । तर्हि तैर्निशातेन तीक्ष्णेन त्रिशूलेन निर्भिन्ना गलाः कण्ठा येषां तैः । गणान् भूत-नाथान् यजामि यक्ष्यामि ॥ १७ ॥

एवं स्वपौरुषानुरूपमुक्त्वाथ युद्धे स्वं देहं जिहासुर्मां जहीति शक्रं प्रार्थयते । अथो इति । अथवा हे हरे ! इन्द्र ! हे वीर ! भवानेव इह युद्धे कुलिशेन वज्रेण यदि मम शिरो हर्त्ता हरि-ष्यति तत्र तथा सति मद्देहेन भूतेभ्यो बलिं विधायानृणः विमुक्तकर्मबन्धस्सन् मनस्विनां पादरजः प्रपत्स्ये पादरजः-सहचरितं मार्गं प्रपत्स्ये ज्ञानिनां गतिं प्राप्स्यामीत्यर्थः ॥ १८ ॥

हे सुरेश ! इन्द्र ! अग्रतः स्थिते वैरिणि तव शत्रौ मय्यमोघ-मप्रतिहतं वज्रं कस्माद्धेतोर्न हिनोषि न मुञ्चसि न प्रयुङ्क्षे इत्यर्थः । गदावन्निष्फलो भविष्यतीत्याशङ्कया न प्रहिणोमीत्यत्राह । गदेव गदावत्कृपणार्थो कृपणपुरुषादर्थः प्रयोजनं यस्याः सा याच्ञेव च वज्रो न निष्फलः स्यादतो मा संशयिष्ठाः संशयं मा कुरु किन्तु प्रहिणिवत्यर्थः ॥ १९ ॥

अनिष्फलत्वे हेतुं वदन् तं प्रोत्साहयति । ननु इति । हे शक्र ! तव वज्रः हरेर्भगवतस्तेजसा दधीचो मुनेस्तपसा च तेजि-तस्तीक्ष्णीकृतः । अतः कारणात्तेनैव वज्रेण विष्णुना यन्त्रित आदिष्टो मां शत्रुं जहि मारय । हरिर्भगवान् यतो यस्मिन् पक्षे ततस्तस्मिन् पक्षे श्रीः राज्यसम्पद्विजयः गुणाः प्रभुत्वादयो गुणाश्च भवन्ति ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वृत्रगदाभिमृष्टोऽभिहतोऽपासरत् । तिर्यक् पृष्ठगो वा गतः ॥११॥ सन्नवाहाय विह्वलितवाहनाय पुनः गदां न प्रायुङ्क्त अमृत-स्राविणा करेण कृतेन अभिमर्शेन स्पर्शलक्षणेन वीतव्यथः वीता गता व्यथा यस्य सः । क्षतः वाहो यस्य स तथा ॥ १२ ॥

भ्रातृहणं विश्वरूपस्य हन्तारमंहः पापरूपं मोहेन भ्रा-नेन ॥ १३ ॥

ब्रह्महत्यादिकमेकं विश्वरूपमपेक्ष्योच्यते । अनृणो भ्रातृमरण-प्राप्तर्णेन हीनः दृषद्धृदा पाषाणवत्कठिनहृदयेन ॥ १४ ॥

स्वर्गकामो यजमानः विस्रभ्य विश्वस्य ॥ १५ ॥

ह्रीश्रीदयाकीर्तिभिरुज्झितं रहितं समदन्तु भक्षयन्तु । अस्पृष्ट-वह्निमित्यनेन निःशेषनाशं सूचयति ॥ १६ ॥

त्वानु त्वामनु ॥ १७ ॥

हरे ! इन्द्र ! इह युद्धे तत्र तर्हि इहास्मिन् जन्मन्येव मन-स्विनां पूर्वं वीरस्वर्गगतानां पादरजः प्रपत्स्ये तेषां लोकं गमि-ष्यामीत्यर्थः ॥ १८ ॥

हिनोषि मुञ्चसि मा संशयिष्ठाः संशयं माकार्षीः । भगवद्-भाग्यानां सम्पदां देवनाथदातर्या अहल्याजारेति निन्दां वा सूच-यति । प्रयुक्तं वज्रं नितरां फलतीति निष्फलं प्रयोजनवत् स्यात् किन्तु । कृपणार्था दरिद्रविषया याच्ञा व्यर्था भवति यथा तद्वत् न स्यादित्यर्थः ॥ १९ ॥

हे शक्र ! य एष तव वज्रः हरेस्तेजसा दधीचेस्तपसा च तेजितो निशितः तेनैव शत्रुं मां जहीत्यन्वयः । विष्णुयन्त्रितो विष्णुवशो यतो यत्र हरिस्ततस्तत्रापि जयादिगुणाः स्युः ॥२०॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भिन्नमुखः विदीर्णवक्त्रः सप्तधनुरष्टाविंशतिहस्तमात्रम् ॥११॥ सन्नोऽवसन्नो वाहो यस्य तस्मै । अमृतस्यन्दी अमृतस्रावी य-स्वकरस्तस्याभिमर्शेन स्पर्शेन गतव्यथः ॥ १२ ॥

नृशंसं क्रूरम् ॥ १३ ॥

मच्छूलेन निर्भिन्नं दृषत्तुल्यं हृदयस्य तथाभूतेन सता अद्याहं अनृणोऽभूवम् ॥ १४ ॥

स्वर्गकामो याज्ञिको भवांश्च ॥ १५ ॥

समदन्तीति "वर्त्तमानसामीप्ये वर्त्तमानवत्" इति लट् ॥ १६ ॥

अन्ये ये त्वा त्वामनुगताः तैर्यज्ञाग्नि यक्ष्यामि । असुरद्वारेण तेन चासुरान् असुरैर्देवान् भूतनाथांश्च प्रीणयामीत्यर्थः ॥१७॥

अथो अथवा । भूतेभ्यः शृगालादिभ्यो बलिं स्वदेहेनातिस्थूलेन विधाय दत्त्वा अनृणः शोधितऋणः सन् मनस्विनां श्रीनारदादि-भक्तानां पादरजः प्राप्स्यामि ॥ १८ ॥

त्वं यथा जीवित्वा स्वर्गीयविषयभोगमभिलषसि तथैवाहं मृत्वा वैकुण्ठे भगवतः साक्षाच्चरणसेवामभिलषामीति तव च मम चाभीष्टं सिध्यतु किमिति मद्वधे विलम्बसे इत्याह । सुरेशेति । वज्र-क्षेपस्यैवस्भूतं लक्ष्यं कदा प्राप्स्यसीत्याह । पुर एव केवलं स्थितं न तु कमपि प्रतीकारं कुर्वतीत्यर्थः । ननु महासत्त्वे त्वयि कदाचिद् वज्रक्षेपो निष्फलः स्यादिति शङ्कां तत्राह । अमोघममोघत्वम् । गदा यथा मदीयैव त्वत्पार्श्वगता मम पीडाकरी साक्षादेवाभूत्

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तथैव च यदि वज्रोऽपि स्यात्तदाहं किं करिष्यामीत्यत आह । मेति । कृपणादर्थ-प्रयोजनं यस्याः सा याच्ञा यथा निष्फला तथा वज्रं निष्फलं न स्यात् ॥ १९ ॥

अमोघत्वे हेतुं वदन् प्रोत्साहयति । नन्विति । हरेर्भगवत-स्तेजसा दधीचस्तपसा च तेजितस्तीक्ष्णीकृतः । विष्णुना यन्त्रितः प्रेरितः यतो यत्र पत्ते ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गदया अभिसृष्टः ताडितः भिन्नमुखो विदीर्णवक्त्रः सप्तधनुः परिमितं देशम् ॥ ११ ॥

स महात्मा महामनाः सखोऽवसन्नो वाहो यस्य तस्मै । विषण्णा-चेतसे भूयो गदां न प्रायुङ्क्त । अमृतस्यन्दी पीयूषस्रावी यः करस्ते-नाभिमर्शः स्पर्शस्तेन वीता व्यथा क्षतं च यस्य स वाहो यस्य सः इन्द्रः अवतस्थे ॥ १२ ॥

तस्येन्द्रस्य नृशंसं क्रूरं कर्म तदेवांहः पापम् ॥ १३ ॥

यो मे भ्रातृहा अतो रिपुः ब्रह्महा गुरुहा च अतः हे असत्तम ! भवान् दिष्ट्या भद्रं समवस्थितः । दिष्ट्या अद्य मच्छूलेन भिन्नं हृषदा पाषाणेन सदृशं हृत् यस्य तेन त्वयाहमचिरा-दनृणः भविष्यामि भ्रातुरिति शेषः ॥ १४ ॥ १५ ॥

अस्पृष्टवन्हिमलब्धदाहक्रियम् । समदन्तीति वर्तमानसामीप्ये वर्तमानवद्"इति लट् ॥ १६ ॥

येऽन्ये अज्ञाः नृशंसं क्रूरं त्वामनु यद्युद्यतास्त्राः मह्यं मां प्रति प्रहरन्ति तदा तीक्ष्णीकृतेन त्रिशूलेन भिन्नो गलो येषां तैः । सगणान् भूतनाथान् यजामि ॥ १७ ॥

अथो अथवा । हे हरे ! इन्द्र ! यदि भवानिह कुलिशेन प्रमथ्य मे शिरो हर्ता हरिष्यति तत्र तदा अनृणः यदर्थमुत्पादितः पित्रा तत्कृते मृतस्य ऋणित्वाभावात् देहेन स्वकीयेन भूत-बलिं क्रव्यादानां भोजनं विधाय मनस्विनां पादरजस्तैः प्राप्तां गतिं प्रपत्स्ये प्राप्स्यामि ॥ १८ ॥

मा संशयिष्ठाः संशयं मा कार्षीः ॥ १९ ॥

दधीचस्तपसा हरेस्तेजसा च तेजितः तेन शत्रुं मां विष्णुना यन्त्रितः प्रचर्तितो जहि । यतो यस्मिन् पक्षे हरिस्त-त्रतस्मिन् पक्षे विजयः श्रीः गुणाः सर्वादरणीयत्वाद्यश्च स्युः ॥ २० ॥

---

भाषा टीका ।

वृत्रासुर के गदा लगने से ऐरावत अति दुःखित होकर घूमने लगा जैसे कि वज्र के मारने से पर्वत होवे वैसा मुख को मोड कर रक्त को गिराता हुआ इन्द्र के सहित अठाईस हाथ पीछे हट गया ॥ ११ ॥

उस महात्मा वृत्रासुर ने इन्द्र के वाहन ऐरावत के दुःखित होने से इन्द्र के चित्त मोहित होने के समय में धर्म युद्ध मान कर गदा नहीं चलाई थोडी देर में अपने हाथ के अमृत झरने से व्यथा के मिट जाने से इन्द्र उठ खडे भये ॥ १२ ॥

हे नृपेन्द्र ! युद्ध की इच्छा से वज्र को धारण कर के खडे हुये भ्राता के मारने वाले इन्द्र को देखकर वृत्रासुर ने इन्द्र के पाप को स्मरण करके शोक मोह से युक्त होकर यह वचन कहा ॥ १३ ॥

वृत्रासुर बोला आज ब्राह्मण के मारने वाला गुरु के मारने वाला भ्राता के मारने वाला तू शत्रु मेरे आगे खडा है सो अच्छा हुआ हे असत्तम ! मेरे त्रिशूल से पत्थर सरीके तेरे हृदय को भेदन कर के आज मैं अपने भाई के ऋण से जल्दी तर जाऊंगा ॥ १४ ॥

जिस प्रकार से स्वर्ग कामना वाला पुरुष निर्दयी होकर पशु के मस्तक को काटता है तैसे तैंने ब्राह्मण गुरु निष्पाप दीक्षित आत्मज्ञानी हमारे बडे भ्राता विश्वरूप के मस्तकों को विश्वास से काटा है ॥ १५ ॥

शोक लज्जा लक्ष्मी दया कीर्ति इनसे तू रहित है अपने कुकर्मों से राक्षसों के भी निन्दा के योग्य है मेरे त्रिशूल के लगने से बडे कष्ट से तू मरेगा तेरा अग्निसंस्कार भी नहीं होगा इहां पर गीध तेरे देह को खांयगे ॥ १६ ॥

तेरे से निर्दयी के साथ रहने वाले और जो ए सब अज्ञानी हैं शस्त्र लेकर मेरे को मारते हैं उनके गलाओं को तो तीक्ष्ण त्रिशूल से काटकर प्रेतादिगणों के सहित भैर-वादिकों को मैं पूजोंगा ॥ १७ ॥

हे वीर ! इन्द्र ! अथवा यदि जबरदस्ती से तू ही मेरे मस्तक को काटेगा तब तो मैं अपने शरीर से मांस भक्षक प्राणि-योंको बलि देकर भ्राताके ऋण से छूट कर महात्मा नारदादिकों के चरण रज को प्राप्त हूंगा ॥ १८ ॥

हे सुरेश ! मैं वैरी आगे खडा हूं तब मेरे पर वज्र क्यों नहीं छोडता है तु संशय मतकर जैसे कि लोभी से मांगना वृथा हो जाता है तैसे गदा सरीका यह तेरा वज्र व्यर्थ नहीं होगा यह वज्र तो सफल है ॥ १९ ॥

यह बात निश्चित है तेरा यह वज्र तो विष्णु के तेज से और दधीची के तपसे तेजयुक्त है सो विष्णु की आज्ञा को मानकर तिस वज्र से मो शत्रु को तू मार क्यों की जिधर श्रीहरि होंगे उधर ही लक्ष्मी और सब गुण रहते हैं और वहांही विजय होती है ॥ २० ॥

---

अहं समाधाय मनो यथाह सङ्कर्षणस्तच्चरणारविन्दे ।
त्वद्वज्ररंहोलुलितग्राम्यपाशो गतिं मुनेर्याम्यपविद्धलोकः ॥ २१ ॥
पुंसां किलैकान्तधियां स्वकानां याः सम्पदो दिवि भूमौ रसायाम् ।
न राति यद्द्वेष उद्वेग आधिर्मदः कलिर्व्यसनं सम्प्रयासः ॥ २२ ॥
त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र ! ।
ततोऽनुमेयो भगवत्प्रसादो यो दुर्लभो किञ्चनगोचरोऽन्यैः ॥ २३ ॥
अहं हरे ! तव पादैकमूलदासानुदासो भवितास्मि भूयः ।
मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक्कर्म करोतु कायः ॥ २४ ॥
न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा समञ्जस ! त्वा विरहय्य काङ्क्षे ॥ २५ ॥
अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष ! दिदृक्षते त्वाम् ॥ २६ ॥
ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ।
त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ ! भूयात् ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां षष्ठस्कन्धे वृत्रवाक्ये
एकादशोऽध्यायः ॥ ११ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हननेन मम पीडा स्यादित्यपि मा संशयिष्ठा इत्याह । अहमिति । सङ्कर्षणो मत्पतिर्यथाह तथा तदीयचरणारविन्दे मनः समाधाय मुनेर्योगिनो गतिमहं यास्यामि तव वज्रस्य रंहसा लुलितश्छिन्नो ग्राम्यपाशो विषयभोगलक्षणो यस्य । अपविद्धलोकस्त्यक्तदेहः ॥ २१ ॥

तर्हि भगवान् सङ्कर्षणः स्वभृत्याय मह्यमेव स्वर्गादिसम्पदो दास्यतीत्यपि मा संशयिष्ठा इत्याह । पुंसामिति । स्वर्गे भूमौ रसातले च याः सम्पदस्ताः किल निश्चितं न राति न ददाति । तत्र हेतुः । यद्याभ्यो द्वेषादयो भवन्ति ॥ २२ ॥

तर्हि स्वभक्तस्य किं विधत्ते तत्राह । त्रैवर्गिको धर्मार्थकामविषयो य आयासस्तस्य विघातं विधत्ते तत आयासोपरमादनुमेयो न त्वैश्वर्यादिना अतः स्वपरभगवत्प्रसादाभावात्तव सम्पदो भविष्यन्तीति भावः ॥ २३ ॥

एवमिन्द्राय स्वाभिप्रायं निवेद्य भगवन्तं प्रार्थयते । अहमिति । तव पादावेव एकं मूलमाश्रयो येषां तेषां दासानामनुदासो भूयो भवितास्मि भविष्यामि भवेयमसुपतेः प्राणनाथस्य तव गुणान्मम मनः स्मरतु वागपि तानेव कीर्तयतु कायस्तवैव कर्म करोतु ॥ २४ ॥

ननु किं दास्येन तुभ्यं महाफलानि दास्यामि तत्राह । नाकपृष्ठं ध्रुवपदं ब्रह्मलोकादिकं च हे समञ्जस ! निखिलसौभाग्यनिधे ! त्वा त्वां विरहय्य पृथक्कृत्य न कांक्षे नेच्छामि ॥ २५ ॥

तर्हि किमिच्छसि तदाह । अजातपक्षाः खगा घूकादिभिः पीडिता यथा मातरं यथा च दाम्ना बद्धा बालवत्साः स्तन्यं यथा च व्युषितं दूरदेशगतं प्रियं कामेन विषण्णा प्रिया तथा मे मनस्तापत्रयपीडितं कर्मभिर्बद्धं च कामादिभिर्विषण्णं च त्वां दिदृक्षते द्रष्टुमिच्छतीत्यर्थः ॥ २६ ॥

उत्तमश्लोकस्य तव जनेषु भक्तेष्वेव सख्यं भूयात् त्वन्मायया देहादिष्वासक्तचित्तस्य भूयोऽपि तेष्वासक्तिर्न भूयात् ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम् ॥

इत्युक्तरीत्या नरकोदर्कस्वगरणार्थं किं मां प्रार्थयसे तत्राह । अहमिति । अहमसुरोऽपि नरकं न यास्यामि किन्त्वस्मद्दैवतं गुरुश्च सङ्कर्षणो भगवान् यथाह उपदिदेश । मच्चरणारविन्दे मनो निश्चलं निधेयमिति । तथा तच्चरणारविन्दे मनो निधाय तव वज्रस्य वेगेन लुलितः छिन्नः ग्राम्येषु विषयेषु रागरूपः पाशो यस्य । देहलक्षणद्वारा ग्राम्यपाशोऽपि लुलितो भवतीति भावः । अपविद्धः त्यक्तः लोकः स्वर्गादिलोको येन तादृशः मुनेर्गतिं मुनीनां गतिं मोक्षं यामि यास्यामि असुरोऽप्यहं भगवत्सङ्कर्षणोपदिष्टतत्त्वो मुक्तिमेव यास्यामि न त्वर्वाचीनलोकानिति भावः । यथाह सङ्कर्षणा तत्त्वेन वृत्रः सङ्कर्षणोपदिष्टतत्त्व इत्यवगम्यते ॥ २१ ॥

किञ्च भगवाननन्यभावेनात्मानं भजतां स्वीयामेव गतिं नूनं दास्यति नत्वर्वाचीनामित्याह । पुंसामिति सार्द्धेन । एकान्तिनां प्रयोजनान्तररहितमतीनामनन्यप्रयोजनानामित्यर्थः । स्वकानां स्वभक्तानां पुंसामस्मत्पतिर्भगवान् सङ्कर्षणः दिवि स्वर्गादौ भूमौ रसायामतलादिलोके च याः सम्पदो विभवाः ताः न ददाति । कुतः यतः तासु सम्पत्सु द्वेषः परस्परमसहिष्णुत्वम् उद्वेगो विनाशभयं तत्प्रयुक्त आधिर्मनःपीडा मदः विषयभोगनिमित्तो मदः तत्त्वज्ञानोदयप्रतिबन्धकः कलिः विषयभोगविरोधिभिः सह कलहः व्यसनमभिमतविषयालाभनिमित्तं दुःखं प्रयासः क्षुद्रसुखाय प्रकृष्टो यत्नश्चैव भवन्ति । यतः परमकृपालुर्भगवानात्मभक्तानां मुक्तिमेव दास्यतीत्यर्थः ॥ २२ ॥

तर्हि स्वकानां किं विधत्ते तत्राह । त्रैवर्गिकेति । हे शक्र ! त्रैवर्गिको धर्मार्थकामविषयो य आयासस्तस्य विघातं विधत्ते अल्पास्थिरांत्रिवर्गकर्मायासपरिहारेणानन्तस्थिरफलरूपमुक्तिं दास्यतीत्यर्थः । ननु । प्रसन्नो भगवानस्माकमपि स्वकानां त्रैवर्गिकायासविघातमेव विधत्ते नेत्याह । तत इति । यो भगवत्प्रसादो यत अकिञ्चनगोचरः निष्कामस्वभक्तविषयः अकिञ्चनानामेव नितरां भगवान् प्रसन्नो भवतीत्यर्थः । ततोऽन्यैर्विषयभोगपरायणैरर्थमेव भजद्भिर्भवादृशैः स भगवत्प्रसादोऽनुमेयः अभिलषितार्थविषयकत्वेनानुमेयः । यद्वा । योऽकिञ्चनगोचरो भगवत्प्रसादः सोऽन्यैर्भवादृशैस्ततोऽनन्यप्रयोजनभजनादनुमेयः । वयमप्यनन्यप्रयोजना यदि भजेम तर्ह्यकिञ्चनगोचरो भगवत्प्रसादोऽस्मद्विषयको भविष्यतीत्येवं भवादृशैरनुमेय एव न तु सिद्धः । इदानीं विषयभोगपरायणत्वादिति भावः । तथैव ह्युक्तं भगवता "मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्त्ववित्" इत्यादिनेति चेतिभावः ॥ २३ ॥

अथ मनसानुसंहितं वज्राग्रे दृष्टं तदनु प्रविष्टं भगवन्तमभिमुखीकृत्याह । अहमिति । हे हरे ! भगवन् ! तव पादावेवैकं मूलमाश्रयो येषां दासानामनुदासोऽहं भूयो भवितास्मि । मदीयं मनोऽसुपतेर्मत्प्राणनाथस्य तव गुणानेवानुस्मरतु । वागपि तवैव गुणान् गृणातु कीर्त्तयतु । कायो देहस्त्वाराधनरूपं कर्मैव करोतु ॥ २४ ॥

ननु किं मद्दास्येन तुभ्यं महदैश्वर्यमैहिकमामुष्मिकं च दास्यामीत्यत्र त्वद्दास्यं विनान्यन्न काङ्क्षामीत्याह । नेति द्वाभ्याम् । नाकपृष्ठं वैकुण्ठं न काङ्क्षे तथा पारमेष्ठ्यं चतुर्मुखैश्वर्यं न सार्वभौमं कृत्स्नभूम्याधिपत्यं न रसाधिपत्यं पातालादिलोकाधिपत्यं योगसिद्धीरणिमादीनपुनर्भवं कैवल्यं च न हि हे समञ्जस ! सकलसौभाग्यनिधे ! त्वां विरहय्य पृथक्कृत्य विनेत्यर्थः न काङ्क्षे न वाञ्छामि ॥ २५ ॥

किं तु हे अरविन्दाक्ष ! अजातपक्षाः खगाः पक्षिशावकाः मातरमिव क्षुधा आर्ताः पीडिताः वत्सतराः स्तन्यं दुग्धमिव व्युषितं विप्रोषितं दूरदेशगतं प्रियं विषण्णा दुःखिता प्रियेव मनस्त्वां दिदृक्षते द्रष्टुमिच्छति ॥ २६ ॥

अत एव मामनुगृहाणेत्याह । ममेति । उत्तमश्लोकस्य तव जनेषु दासेषु एव मम सख्यं भूयात् । त्वन्मायया आत्मादिष्वासक्तचित्तस्य स्वकर्मभिः संसारचक्रे भ्रमतो मम पुनः तेष्वात्मादिष्वासक्तिर्न भूयादेवमनुगृहाणेति भावः । तत्रात्मा देहः ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वृत्रे सात्त्विकचेतनांशस्वभावं दर्शयितुमाह । अहमिति । सङ्कर्षणो भगवांस्तन्मनःसमाधानं यथाह । तथा मनस्तस्य सङ्कर्षणस्य चरणारविन्दे समाधाय तव वज्रवेगेन लुलितः छिन्नो ग्राम्यपाशो विषयभोगलक्षणः पाशो यस्य स तथा । अपविद्धः परित्यक्तो लोको देहो येन स तथा "अस्माल्लोकात्प्रेत्य" इति श्रुतेः परिभ्रष्टैतल्लोकस्थितिरिति वा अहं मुनेर्ज्ञानिनो गतिं लोकं वैकुण्ठादिलक्षणां यामीत्यन्वयः । संन्यासलक्षणां वा ॥ २१ ॥

ननु परत्र सुखं वा दुःखं वा न निश्चितम् । तवात्र चाखण्डैश्वर्यं दरीदृश्यते एतल्लोकत्यागे तदपि त्यक्तं स्यात्तस्मात्तव शोको न स्यात्किमित्याशङ्क्य सर्वस्येश्वराधीनत्वेन तद्दत्तमेव स्थिरतरं नान्यत् । किञ्च । स्वभक्तेभ्यः स्वर्गादिकमपि न ददाति किमुत ऐहिकम् अतो न शोको ममेत्याशयेनाह । पुंसामिति । स लोकनाथः स्वर्गादौ याः सम्पदः सन्ति ताः स्वकानां पुंसां न राति किञ्च तासां सकाशाद्द्व्यादिकमुत्पद्यत इति यस्मात्तस्मादिति शेषः ॥ २२ ॥

इतो नु हरेर्भक्तानुकम्पित्वं पश्येत्याशयेनाह । त्रैवर्गिकेति । अस्मत्पतिर्भगवान् पुरुषस्य भक्तस्य तेन धर्मार्थकामपरिश्रमनाशेन "यस्यानुग्रहमिच्छामि हरिष्ये तद्धनं शनैः" इत्यादेः ॥ २३ ॥

अधुना "अहं समाधाय मनः" इत्यत्र कथितमनःसमाधानप्रकारं निरूपयति । अहमिति । मनः आत्मपतेः आत्मपतिं स्मरेत् "अधीगर्थदयेशां कर्मणि" इति षष्ठी । नो वाक् तद्गुणान् गृणीत कायः कर्म प्रणामादि करोतु ॥ २४ ॥

मम वीरस्वर्गोऽपि वैकुण्ठादिरित्याशयेनाह । न नाकपृष्ठमिति । सार्वभौममित्यनेन भूमौ चक्रवर्तिपदमाह । योगसिद्धीः अणिमादि-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

लक्ष्म्याः अपुनर्भवं पुनरुत्पत्तिमात्रशून्यत्वेन सुखपूर्त्यभावलक्षणं मोक्षं समञ्जसं वैपरीत्यनैर्घृण्यबुद्धिशून्यं विरहय्य विहाय ॥२५॥

स्तन्यं स्तनच्युतं पयः वत्सतराः अतिशयेन बालाः स्तनंधयाः प्रिया नवोढा भार्या अध्युषितं प्रोषितमन्यतः स्थितमित्यर्थः ॥ २६ ॥

श्रीहरिदर्शनसाधनमाह । ममेति । न भूयात्सख्यमिति शेषः ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सार्वभौमं श्रीप्रियव्रतादीनामिव महाराज्यम् । रसाधिपत्यं पातालादिस्वाम्यमपुनर्भवं मोक्षमपि अत्र नाकपृष्ठादिचतुष्टयस्यानुक्रमश्च न्यूनत्वविवक्षया । ततश्चोत्तरोत्तरं कैमुत्यमपि । ध्रुवपदस्य श्रेष्ठ्यं विष्णुपदसन्निहितत्वात् । योगसिद्ध्यादिद्वयं तु सार्वत्रिकमिति पश्चान्निर्दिष्टम् । अनयोस्तूत्तरश्रेष्ठ्यम् ॥ २५ ॥

अजातपक्षा इत्यनेनानन्याश्रयत्वं तदनुगमनासमर्थत्वं तथा तत्सहितेन मातरमित्यनेनानन्यस्वाभाविकदयालुत्वं तदीयदयाधिक्यञ्च व्यञ्जितम् । तेन च मातरि तेषामपि प्रीत्यतिशयो दर्शितः । ततस्तत्साम्येऽपि तद्वदात्मनोऽपि भगवति प्रीत्याधिक्यहेतुका दिदृक्षा व्यञ्जिता । तथापि तन्मात्रा यद्वस्त्वन्तरमुपह्रियते तदेव तेषामुपजीव्यमास्वाद्यं चेति केवलतन्निष्ठत्वाभावादपरितोषेण दृष्टान्तान्तरमाह । स्तन्यमिति । अत्र दिदृक्षायोजनार्थं मातरमित्येवानुवर्तयितव्ये स्तन्यमित्युक्तिस्तस्यास्तैस्तदंशप्राचुर्यभावनया वस्तुतस्तस्य तदीयशरीरांशतया च तदभेदविवक्षायां ततः स्तन्यं स्तन्यरूपतदंशमयीं मातरमित्येव लब्धे तादृशी मातैव तैरुपजीव्यते आस्वाद्यते चेति पूर्वतः श्रेष्ठ्यं दर्शितम् । तथा वत्सतरा अत्यन्तबालवत्सास्तत एव स्वामिबद्धतया तदनुगताघसमर्था इति साधारण्येऽपि बहुसमयातिक्रमात् क्षुधार्त्ता इत्यनेन पूर्वतो वैशिष्ट्यम् । तथा गोजातेः स्नेहातिशयस्वाभाव्येन च तदनुसन्धेयम् । अथ तथाप्युत्तरदृष्टान्ते स्तन्यगवोः कार्यकारणभावेन भेदं वितर्क्य दृष्टान्तद्वयेऽप्यजातपक्षत्वादिविशेषणैरायत्यां तादृशप्रीतेरस्थिरतां चालोक्य दृष्टान्तान्तरमाह । प्रियमिति । सत्स्वपि वाचकान्तरेषूभयोः प्रियशब्देनैव निर्देशात् स्वाभाविकाव्यभिचारिप्रीतिमन्तावेव तौ गृहीतौ । यत्र बाल्येऽपि सह विहारादिकं दृश्यते तत्र स्नादृशी कापि प्रिया यथा तादृशं प्रियं व्युषितं विदूरप्रोषितं सन्तमनन्योपजीवित्वेन विषण्णा सती विचष्टे । लोचनद्वारा तदास्वादाय भृशमुत्कण्ठते तथा मम मनोऽपि त्वामित्यर्थः । अत्र दार्ष्टान्तिकेऽपि स्वकर्तृकत्वमनुक्त्वा मनःकर्तृकोल्लेखनाद्बुद्धिपूर्वकप्रवृत्तिप्राप्तौ प्रीतेः स्वाभाविकत्वेनाव्यभिचारित्वं व्यक्तम् । तथारविन्दाक्षेति मनसो भ्रमरतुल्यतासूचनेन भगवतः परममधुरिमोल्लेखेन च तस्यैवोपजीव्यत्वमास्वाद्यत्वञ्च दर्शितम् ॥२६॥

अथ तद्दर्शनमार्ग्यं स्वस्यासम्भावयन्निवमपि मम स्यादिति सवाष्पमाह । ममोत्तमेति । तदेतच्छुद्धप्रेमोद्गारमयत्वेनैव श्रीमद्वृत्रवधोऽसौ विलक्षणत्वाच्छ्रीमद्भागवतलक्षणेषु पुराणान्तरे गण्यते । "वृत्रासुरवधोपेतं तद्भागवतमिष्यते" इति ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अयमेवं मां प्रबोध्य पुनः पराक्रमाविष्कारेण वज्रञ्च निष्फलय्य पुनरपि मां हनिष्यतीति मा मंस्थाः । अहं यत् करोमि तदेकाग्रमनाः शृण्वित्याह । अहमिति । सङ्कर्षणो नोऽस्माकं प्रभुः यथा तथा तच्चरणारविन्दे मनः समाधाय मुनेर्योगिनो गतिमहं यास्यामि । त्वद्वज्रस्य रंहसा लुलितः खण्डितः ग्राम्यपाशाकार एव देहो यस्य सः । अपविद्धलोकः त्यक्तत्रिलोकैश्वर्यः ॥ २१ ॥

तर्हि त्वद्भक्तितोषितः सङ्कर्षणस्तुभ्यमेव स्वर्गाद्यैश्वर्यं दास्यतीति मा वादीः शृणु रे शक्र ! । मत्प्रभोस्त्वञ्च भक्तोऽहं च भक्तस्तत्र तुभ्यमेव भोगैश्वर्यं ददाति न तु मह्यमित्यत्र कारणं मत्प्रभोः स्वभावमेव शृण्वित्याह । पुंसामिति । याः सम्पदः ता एकान्तभक्तेभ्यः पुंभ्यो न राति न ददाति कुतः यद्यतः सम्पन्नचो द्वेषादयो भक्तिसुखे विक्षेपका भवन्तीत्यतः ॥ २२ ॥

मां स्वपार्श्वे शीघ्रमेव नेतुं वज्रेण मद्वधोपायमुक्त्वा यत्तुभ्यं मत्प्रभुर्भोगसम्पदं ददाति एतेनैव त्वमात्मनि तस्यानुग्रहाभावं मन्यस्वेत्याह । त्रैवर्गिको धर्मार्थकामविषयो य आयासस्तस्य विघातं विध्वंसं पुरुषस्य स्वान्तरङ्गभक्तस्य तत आयासोपरमादेव भगवत्प्रसादः अनुमेयः । नन्वेवमननुभवे तु न मानि तत्राह । स आकिंचनगोचर एव अन्यैर्दुष्प्राभिस्तु दुर्लभो दुष्प्रापस्तत्राह । गोचर एवेत्यतस्त्वयि तस्य सम्यक् प्रसादाभावात् तत्र सम्पदो भविष्यन्तीति विश्वस्तो भूत्वा शीघ्रं वज्रं निक्षिपेति भावः ॥ २३ ॥

तदपि वज्रनिक्षिपन्तमिन्द्रं दृष्ट्वा हन्त हन्त वराकमिमं शक्रं बहिर्दर्शिनं किमिति ब्रवीमि स्वप्रभोश्चरणारविन्द एव किं न निवेदयामीति ध्यानाविर्भूतं भगवन्तमवलोकयन्नाह । अहमिति । तव पादैकमूलाश्रयो येषां तेषां दासानामनुदासो भूयः पुनरपि भविताऽस्मि भविष्यामि किं तत्र कियान् विलम्बो वर्त्तते तं हरे कथय । उत्कण्ठया जर्जरीभूतोऽस्मीति भावः । नन्वविलम्बेन त्वामहमेव एवात्मसात् करोमि स्वामीणान् वराद् वृणीष्व तत्राह मनो मम असुपतेः प्राणनाथस्य तव प्राणनाथं त्वां स्मरतु वाक् गुणान् कीर्त्तयतु कायः कर्म त्वत्पादसम्वाहन व्यजनताम्बूलप्रदानादिकं करोत्विति कायवाङ्मनसां मे प्रार्थना ॥२४॥

ननु तुभ्यं स्वर्गापवर्गादीनि सर्वाण्येव फलानि ददामि गृहाणेति तत्र सशिरोधूननं न नेत्याह । नेति । नाकपृष्ठं स्वर्गपदं त्वां विरहय्य त्यक्त्वा त्वद्विरहेण मम प्राणा ज्वलन्ति । स्वर्गादि

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

हे मे सुखयिष्यन्तीति ध्वनिः। त्वत्संयोगे मम पूर्वश्लोकोक्तं त्रयं भवेत्तदा तदेव मे स्वर्गापवर्गादिसर्वसुखतमम्। किमेतै-र्दूरीतैरित्युध्वनिः॥ २५॥

किञ्च। अत्युत्कण्ठावतोऽपि मम त्वत्प्राप्तिस्त्वदधीनैव। न च तत्र मे स्वतः कापि शक्तिरस्तीत्यत्र दृष्टान्तत्रयमाह। अजातपक्षाः खगः खगबालकाः घूकादिभिस्त्रस्ताः क्षुत्पीडिताश्च मातरं कदा द्रक्ष्याम इति प्रतिक्षणं विहगमाताः पत्रेऽपि संचलति आयाता मातेति बुद्धया कोमलं कलं कूजन्तश्चञ्चून् प्रसारयन्ति। ननु र्हि तन्माता यथा आगत्य घूकादिभ्यो रक्षन्ती स्वतः पृथग्भूतै-रानीतैः क्षुद्रकीटैस्तच्चञ्चुमध्ये निहितैस्तेषां क्षुधामुपशम-यति तथैवाहमपि त्रिविधतापेभ्य इन्द्रादिशत्रुभ्यश्च त्वां रक्षन् स्वर्गपारमेष्ठ्यादिभोगैर्दत्तैस्त्वदभीष्टं पूरयामीति। तत्र त्वन्मा-तृर्वं विना मम नान्यत् किमप्यभीष्टमिति तथा त्वत्प्राप्तिप्रतिकूलं स्थूलसूक्ष्मदेहद्वयबन्धनं विना मम नान्यत् किमपि प्रयत्नमित्यतो दृष्टान्तान्तरमाह। स्तन्यं वाञ्छन्तीति शेषः। वत्स-तरा अल्पवयस्का वत्सा गृहस्थगृहे दामबद्धाः क्षुधाया मातुरेव दुग्धपानैकतानमनस्कत्वादार्त्ताः। अत्रापि वत्सतरा मातु-र्दुग्धादेव स्वसुखमभिलषन्तोऽपि मातुः कामपि सेवां नाभिलषमाना इत्यपरितोष्य दृष्टान्तान्तरमाह। प्रियं प्रीतिमन्तं पतिं व्युषितं सुदूर-देशस्थं प्रिया प्रेमवती विषण्णा तद्विरहजर्जरिता दिदृक्षते सा यथा स्वीयसर्वेन्द्रियव्यापारैः सेवमाना प्रियं सुखयितुं प्रियस्यैव सौन्दर्यसौस्वर्यादिभिर्गुणलीलावैदग्ध्यादिभिश्च स्वसर्वेन्द्रियाणि सुखयितुमिच्छति तथैवाहमपि त्वां सेवेयेत्यत एव "मनः स्मरेता-सुपतेर्गुणानां गृणीत वाक् कर्म करोतु कायः" इति वरत्रयमवाञ्छ-मिति भावः। किन्तु सा दास्यसख्यश्रृङ्गारैः प्रियं सुखयेदहन्तु केवलेनैव दास्येन त्वां सुखयेयमित्येतावानेव भेदः॥ २६॥

अथ तत्क्षण एवातिदैन्यभावोदयेन हन्त हन्त ममाधमस्य कथमेतावत् सौभाग्यं सम्भवेदत एतदस्त्विति प्रार्थयते। मम उत्तमश्लोकजनेषु त्वद्भक्तेषु सख्यं भूयात् किन्तु त्वन्मायया आत्मात्मजदारादिष्वासक्तस्य जनस्य कस्यापि मयि सख्यं न भूयात् यथैतज्जन्मनि असुराणां मयि सख्यमभूत् मम च, त्वद्भक्तेषु सख्यं नाभूदित्यपारं दुःखमन्वभूवमिति भावः॥ २७॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।

षष्ठे एकादशोऽध्यायः सङ्गतः सङ्गतः सताम्॥ ११॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

त्वङ्गरंहसा लुलितदिक्चक्रः ग्राम्यपाशः भोगानुरागो यस्य सः। अपविद्धस्त्यक्तः लोको बद्धजीवलोको येन सः। मुनेः मननशीलस्य भगवद्ध्याननिष्ठस्य गतिं गम्यते इति गति-र्भगवांस्तम्॥ २१॥

यथाऽस्य द्वेषादयो जायन्ते॥ २२॥

असमत्पतिर्भगवान् पुरुषस्य त्रैवर्गिकार्थे य आयासस्त-द्विघातं विधत्ते ततो विघातात् अकिञ्चनगोचरः भगवदनन्यजन-विषयः अन्यैर्दुर्लभो भगवत्प्रसादोऽनुमेयः॥ २३॥

इन्द्रं प्रति स्वहार्दमुक्त्वाथ भगवन्तं प्रार्थयते। अहमिति। हे हरे! तव पादावेवैकं मुख्यं मूलमाश्रयो येषां तेषां दासानुदासः भविता भवेयम्। असवः प्राणाः इन्द्रियाणि तत्पतेः हृषीकेशस्य तव गुणान् मम मनः स्मरेत वागपि तान् गृणीत किं बहुना सकल-करणयुक्तः कायस्तत्करणानुरूपं कर्म पूजनादिकं करोतु॥ २४॥

हे समञ्जस! सर्वसौभाग्यसम्पन्न! त्वा त्वां विरहय्य विहाय नाकपृष्ठं ध्रुवलोकं पारमेष्ठ्यं चतुराननलोकं सार्वभौमं सर्वभूमि-राज्यं रसाधिपत्यं बिलस्वर्गसुखं योगसिद्धीरणिमादिरूपाः अपुनर्भवं जीवस्वरूपप्राप्तिलक्षणं मोक्षं परवैकुण्ठप्राप्तिरूपां मुक्तिं वा न काङ्क्षे नेच्छामि॥ २५॥

तर्हि किमिच्छसि तदाह। अजातपक्षा इति। स्तन्यं दुग्धम्। विषण्णा दुःखिता दिदृक्षते द्रष्टुमिच्छति॥ २६॥

दर्शनाधिकारस्तु सत्सङ्गाद्भवति अतः सत्सङ्गं मम भूया-दित्याह। ममेति। उत्तमकीर्त्तेस्तव जनेषु दासेषु सख्यं भूयात् त्वन्मायया आसक्तचित्तस्य अत एव संसारचक्रे स्वकर्मभिः भ्रमतः आत्मा देहस्तदादिषु सख्यं न भूयात्॥ २७॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकादशाध्यायार्थप्रकाशः॥ ११॥

---

भाषा टीका।

मैंतो सब स्वर्गादि लोकों की इच्छा को छोड कर स्थित हूं सो जिस प्रकार से सङ्कर्षणजीने मेरे को उपदेश किया है तैसे भगवान् के चरणारविन्द में मन को लगाकर तुमारे वज्र से विषय पाशसे मुक्तहोकर मुनियों की गति को प्राप्त होजाऊंगा॥ २१॥

एकान्तबुद्धिवाले अपने भक्तों को भगवान् स्वर्ग मर्त्य पाताल की सम्पत्तियों को नहीं देते हैं जिस से कि द्वेष उद्वेग आधि मद कलि दुःख प्रयास ये सब दोष सम्पत्ति मे होते हैं॥ २२॥

हे शक्र! हमारे पति श्रीनारायण धर्म अर्थ काम इनहोंकों नाश कर देते हैं जब ऐसा अपने भक्तको भगवान् करदेवें तब भगवान् की कृपा का अनुमान करना चाहिये जो प्रसाद अकिञ्चन पुरुषों को प्राप्त है अन्यलोग उस को नहीं जानते हैं॥ २३॥

वृत्रासुर भगवान् से प्रार्थना करते हैं कि हे श्रीहरि मैं आप के चरणारविन्द के दासों का दास फिर भी होऊंगा मेरा मन प्राणनाथ आप के गुणों को स्मरण करै मेरी वाणी आप के गुणों का कथन करै मेरा शरीर आपकी सेवा को करै यह वर दीजिये॥ २४॥

भाषा टीका ।

हे प्रभो ! हे सर्वगुणनिधे ! आप को छोड कर मैं न स्वर्ग को चाहता हूं न ब्रह्मपद को चाहता हूं न पृथिवी के चक्रवर्त्ति राज्य को चाहता हूं न पाताल के राज्य को चाहता हूं न योग सिद्धियों को चाहता हूं न मोक्ष को चाहता हूं ॥ २५ ॥

जैसे विना पंखवाले चिडिया के बच्चा अपनी माता को चाहते हैं जैसे बछरा क्षुधित होने से माता को चाहते हैं जैसे परदेश को गये हुये पति को प्यारी स्त्री चाहती है तैसे मेरा मन आप ही के दर्शन करने को चाहता है ॥ २६ ॥

हे नाथ ! मेरे को उत्तमश्लोक जनों के साथ सख्यभाव होवे अपने कर्मों के वश होकर संसार चक्र मे भ्रमने से आपकी माया से देह स्त्री पुत्र गृहादिकों मे आसक्ति मत होवे यही वर दीजियें ॥ २७ ॥

इति श्रीभागवत षष्ठस्कन्ध के ग्यारमें अध्यायका

भाषानुवाद लक्ष्मणाचार्यकृत

समाप्त ॥ ११ ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे एकादशोऽध्यायः समाप्तः ॥ ११ ॥

## ॥ द्वादशोऽध्यायः ॥

ऋषिरुवाच ।

एवं जिहासुर्नृप ! देहमाजौ मृत्युं वरं विजयान्मन्यमानः ।
शूलं प्रगृह्याभ्यपतत् सुरेन्द्रं यथा महापुरुषं कैटभोऽप्सु ॥ १ ॥
ततो युगान्ताग्निकठोरजिह्वमाविध्य शूलं तरसासुरेन्द्रः ।
क्षिप्त्वा महेन्द्राय विनद्य वीरो हतोऽसि पापेति रुषा जगाद ॥ २ ॥
ख आपतत्तद्विचलद्ग्रहोल्कवन्निरीक्ष्य दुष्प्रेक्ष्यमजातविक्लवः ।
वज्रेण वज्री शतपर्वणाच्छिनद्भुजं च तस्योरगराजभोगम् ॥ ३ ॥
छिन्नैकबाहुः परिघेण वृत्रः संरब्ध आसाद्य गृहीतवज्रम् ।
हनौ तताडेन्द्रमथामरेभं वज्रं च हस्तान्न्यपतन्मघोनः ॥ ४ ॥
वृत्रस्य कर्मातिमहाद्भुतं तत् सुरासुराश्चारणसिद्धसङ्घाः ।
अपूजयंस्तत् पुरुहूतसङ्कटं निरीक्ष्य हाहेति विचुक्रुशुर्भृशम् ॥ ५ ॥
इन्द्रो न वज्रं जगृहे विलज्जितश्च्युतं स्वहस्तादरिसन्निधौ पुनः ।
तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादकालः ॥ ६ ॥
युयुत्सतां कुत्रचिदाततायिनां जयः सदैकत्र न वै परात्मनाम् ।
विनैकमुत्पत्तिलयस्थितीश्वरं सर्वज्ञमाद्यं पुरुषं सनातनम् ॥ ७ ॥
लोकाः सपाला यस्येमे श्वसन्ति विवशा वशे ।
द्विजा इव शिचा बद्धाः स काल इह कारणम् ॥ ८ ॥
ओजः सहो बलं प्राणममृतं मृत्युमेव च ।
तमज्ञाय जनो हेतुमात्मानं मन्यते जडम् ॥ ९ ॥
यथा दारुमयी नारी यथा यन्त्रमयो मृगः ।
एवं भूतानि मघवन्नीशतन्त्राणि विद्धि भोः ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशेऽति विपर्ययेन स्वयमुत्साहितेन तु ।
महेन्द्रेण महायुद्धे वृत्रस्य वध ईर्यते ॥ १ ॥

महापुरुषं श्रीविष्णुम् । अप्सु प्रलयोदके ॥ १ ॥

युगान्ताग्निवत्कठोरा जिह्वा शिखा यस्य तत् । आविध्य भ्रामयित्वा ॥ २ ॥

तत् खे आपतदागच्छत् । विचलत्परिभ्रमत् । ग्रहश्चोल्का च ग्रहोल्कं तद्वद्दुष्प्रेक्ष्यम् । शतं पर्वाणि यस्य तेन । उरगराजो वासुकिस्तस्य भोगो देहस्तदाकारम् ॥ ३ ॥

हनौ कपोलप्रान्ते । अमरेभमैरावतं च ॥ ४ ॥ ५ ॥

पुनश्च तमाह वृत्रः । हे हरे ! इन्द्र ! ॥ ६ ॥

सदा जयो नैव किं तु कुत्राचिज्जय एकत्र कुत्रचिन्नैव । यद्वा कुत्रचिदपि युयुत्सतां सदा जयो नैव किं त्वेकत्रैव कदाचिदे-

श्रीधरस्वामिकृतभावार्थदीपिका ।

वेत्यर्थः । परो देह आत्मा येषां पराधीनात्मनामिति वा । आद्य-मनादिम् । सनातनं नित्यम् ॥ ७ ॥

पराधीनतामेवाह । लोका इति सप्तभिः । यस्य वशे स्थिताः स्वयं विवशाः सन्तः श्वसन्ति चेष्टन्ते । द्विजाः पक्षिणः । शिचा जालेन कालः कलयतीति भगवान् इह जयादौ कारणम् ॥८॥

ओजआदिरूपं कालं तं हेतुमज्ञायाविज्ञाय जडं सन्त-मात्मानं देहं हेतुं मन्यते ॥ ९ ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमभिलषितभगवदेकदास्यो निरयोपमाभिमानविषयै-श्वर्यकैवल्यो जिहासितस्वकलेवरो वृत्रो युयुधे इत्याह मुनिः । एवमिति । हे नृप ! स्वकलेवरं हातुमिच्छुरत एवाजौ युद्धे जयान्मृत्युमेव वरं श्रेष्ठं मन्यमानः शूलं गृहीत्वा सुरेन्द्रं मघ-वन्तं प्रति अभ्यपतत्तदभिमुखमगात् । यथा महापुरुषं भगवन्तं प्रत्यप्सु प्रलयोदके कैटभाख्योऽसुरस्तद्वत् ॥ १ ॥

ततोऽसुरेन्द्रो वीरो वृत्रः प्रलयकालवह्निवत्कठोरा दुःसहा जिह्वा शिखा यस्य तच्छूलमाविध्य भ्रामयित्वा क्रोधेन महेन्द्राय क्षिप्त्वा विनद्य सिंहनादं कृत्वा हे पाप ! हतोऽसीति जगाद ॥ २ ॥

ततो वज्री इन्द्रः खे आकाशे आपतदागच्छद्विचलत्परिभ्र-मच्च ग्रहोल्कवत् दुष्प्रेक्ष्यं दुर्निरीक्ष्यं च यच्छूलं ग्रहश्च उल्काश्चेति द्वन्द्वाद्वतिः ग्रहः सूर्यः उल्का अङ्गाराः तच्छूलं तथा तस्य वृत्रस्य उरगराजभोगं वासुकिदेहाकारं भुजं चाजातविक्लवः अनुद्वितधैर्यः सन् शतं पर्वाणि यस्य तेन वज्रेणाच्छिनत् अक्लृनं यथा भवति तथेति क्रियाविशेषणं शूलविशेषणं भुजाविशेषणं वा ॥ ३ ॥

ततो वृत्रः छिन्नः एकः बाहुर्यस्य सः अत एव संरब्धः नितरां क्रुद्धः गृहीतवज्रमिन्द्रमासाद्य समीपमागत्य परिघेणायुध-विशेषेण तताड । अथामरेभमैरावतं च तताड । एवं ताडितस्य तस्य मघोन इन्द्रस्य हस्ताद्वज्रमायुधं न्यपतद्विगलितमभूत् ॥ ४ ॥

तद्वृत्रस्य महदद्भुतं च कर्म निरीक्ष्य सर्वे सुरादयः अपूजय-न्नहो एतस्य पराक्रम इति बहुमन्यन्त । तथा पुरुहूतस्येन्द्रस्य सङ्कटं निरीक्ष्य भृशं हाहेति विचुक्रुशुर्भृशमिति सङ्कटविशेषणं वा ॥ ५ ॥

तत इन्द्रः स्वहस्ताच्छत्रुसन्निधौ च्युतं वज्रायुधमत एव लज्जितो वज्रं पुनर्न जगृहे न गृहीतवान् । तमगृहीतवज्रमिन्द्रं वृत्र आह यभाषे । उक्तिमेवाह । हर इत्यादिना अमुष्य पराजय इत्यन्तेन । हे हरे ! इन्द्र ! पुनर्गृहीतवज्रस्त्वं स्वशत्रुं मां जहि । अयं विषादकालः शोककालो न भवति ॥ ६ ॥

ननु पराजये न लज्जितोऽहं योद्धुं नोत्सहे तत्राह । युयुत्सता-मिति । आततायिनां जिघांसतां योद्धुमिच्छूनां पुंसां सदा सर्वत्र च जयो न वै न भवति । किन्तु कुत्रचिदेव कस्मिंश्चि-द्देशे कालेएव जयो भवतीत्यर्थः । तत्र हेतुं वदन् पुंसो विशिनष्टि । परात्मनामिति । परः परमपुरुष आत्मान्तः प्रविश्य तत्तत्कर्मानुसारेण नियन्ता येषां कर्मवश्यत्वात् परम-पुरुषनियाम्यत्वाच्च तत्तद्देशकालकर्मानुरूपसुखदुःखादिफलानुभ-वाय जयापजयावीश्वरकारितावेति न तत्र लज्जाशोकौ कर्तव्यौ इति भावः । सर्वस्य नियन्तुरकर्मवश्यस्य परमपुरुषस्य तु सर्वत्र सर्वदा जय एव भवतीत्याह । विनेति । एकं परमपुरुषं विनान्येषां पुंसां सर्वत्र सर्वदा जय एव न भवति परमपुरुषस्य तु भवती-त्यन्वयः । तत्र हेतुं वदस्तं विशिनष्टि । जगदुत्पत्तिस्थितिलयाना-मीश्वरं कर्त्तारं तदुपयुक्तो गुणा उच्यते । सर्वज्ञमिति । अनेन कर्म-सङ्कुचितज्ञानजीवव्यावृत्तिः अनेनाकर्मवश्यत्वमप्युक्तं भवति । तत्त-जीवकर्मानुसारेणोत्पत्त्यादिकर्त्रन्तरविरहादकर्मवश्यत्वाच्च तस्य देशकालनिमित्तकर्मायत्तकर्त्रन्तरप्रयुक्तजयापजयौ न स्तः । किन्तु सर्वदा सर्वत्र जय एवेति भावः । यदि जगदुत्पत्त्यादिकर्त्ता परम-पुरुषस्तर्हि किमुपादानकारणं जगतस्तत्राह । आद्यमिति । आदौ भवमाद्यं कारणत्वेनावस्थितमुपादानकारणमपि स एवेति भावः । लोके पटाद्युपादानकारणस्य तन्त्वादेरपि कारणान्तरदर्श-नात्कारणस्यापि तस्य कारणान्तरं सम्भाव्येतेत्याशङ्कां निराकुर्वन् विशिनष्टि । सनातनमिति । नित्यमित्यर्थः । कार्यं ह्यनित्यं स तु नित्यः कारणान्तररहित इत्यर्थः ॥ ७ ॥

तस्याकर्मवश्यत्वेन यत्स्वातन्त्र्यमुक्तं तदेवोदाहरणमुखेन प्रपञ्चयति । लोका इति । सपालाः पालकैर्ब्रह्मादिभिः सहिताः सर्वे लोकाः विवशाः परमपुरुषवशं गता यस्य परमपुरुषस्य वशे वश इच्छा "वश कान्तौ" इति धातुपाठात् वशे इच्छायां निमित्तभू-तायां श्वसन्ति स्वतन्त्रतस्तदिच्छानिमित्तजीवना इत्यर्थः । तथा च श्रुतिः "को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" इति यथा शिचा पाशेन बद्धा द्विजाः पक्षिणः बन्धयितुर्वशे श्वसन्ति तद्वत्स एव कालरूप ईश्वरः इह जयापजयादिषु कारणं हेतुभूतः ॥ ८ ॥

न केवलं जयापजययोरेव हेतुरपि त्वोजआदीनामपि निर्वाहक इत्याह । ओज इति । ओजः प्रवृत्तिसामर्थ्यं सहो वेगः बलं धारणसा-मर्थ्यं प्राणो जीवनममृतं मोक्षं मृत्युः संसारः ओजआदिरूपिणं तं परमात्मानं हेतुमज्ञायाविज्ञाय आर्षत्वात्प्रयोगस्यानञ्पूर्वं इति न प्रतिषेधः अतोल्यप् । परमात्मानमेव ओजआदीनां कारणमज्ञात्वा ओजः केवलं परमात्मा स्वात्मानमेव कारणं मन्यतेऽतो यं जडः अज्ञो जन इत्यर्थः । जडमिति पाठे जडमज्ञः स्वात्मानम् एव कारणं मन्यतेऽयं जन इत्यर्थः ॥ ९ ॥

एवं परमात्मनो जयापजयाद्यभावे हेतुतया सर्वस्य वशित्वं कारणत्वम् ईशितृत्वं चोक्तमथ जीवस्य तद्विपर्ययमाह । यथेति सार्द्धद्वयेन । हे मघवन्प्रभो ! इन्द्र ! विभो ! परमात्मवदर्थं सम्बोधनं दारुमयी दारुणो विकारभूता नारी यन्त्रमयः यन्त्रयलादागतः यन्त्रेण गृहीतो मृग इत्यर्थः । यथा पुरुषतन्त्र आद्यमप्राणिदृष्टान्ताभिप्रायकम् । द्वितीयं तु प्राणिदृष्टान्ताभि-प्रायकमिति वेदितव्यम् । एवं सर्वाणि भूतानीश्वरतन्त्राणीत्यभि-रतन्त्राण्येवेश्वरवश्यान्येवेत्यर्थः । वादित्यव्ययमिवकारादे-चादेराकृतिगणत्वात् । एवं जीवस्य पारतन्त्र्यमुक्तम् ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

वृत्रवासवसंवादच्छलेन हरेर्जीवेनाभेदज्ञानं तमःसाधनमित्येतन्निरूप्यतेऽस्मिन्नध्याये तत्रादौ वृत्रवासवयोर्युद्धशेषं वक्ति एवं जिहासुरिति विजयं विजयात्मकं परं सुखं मन्यमानः ॥ १ ॥ २ ॥

भोगवत् भोगः पुष्टिर्यस्य स तथा तं "भोगः सुखे स्त्र्यादिभृतौ पीनसर्पशरीरयोः" इत्यभिधानात्। भोगो विषयसेवायामहिवर्ष्मणि पालने। वर्तुले स्थूलतायाञ्च जन्मन्याखादने तथेति वररुचिः ॥ ३ ॥

इन इन्द्रः परिवृढः पतिरध्यक्षवल्लभावित्यतः स्वामिमात्रेपीनशब्दप्रयोगात्ततो विशिष्योक्तममरेशमिति ॥ ४ ॥ ५ ॥

हरे! स्वशत्रुं मामिति शेषः ॥ ६ ॥

ननु हनने तव पराजय इत्याशङ्क्य पराजयापराजयौ न नियतौ किन्तु दैवकृतावित्याह - युयुत्सतामिति। युयुत्सतां युद्धशीलानां मध्ये कुत्रचिद्युद्धे दैवप्रकृतेरेकस्य सदा जय इतरस्य सदा पराजय इति तत्राभिभविनस्तत्र स्थितावपि देहवियोगलक्षणो क्षयः प्रतिक्षणमस्तीति दर्शयितुम् उत्पत्त्यनन्तरं क्षयपदोपादानम् ॥ ७ ॥

हरेरेव सदा जय इत्ययं नियमः कुत इति तत्राह। लोका इति। यस्य वशे स्थिताः श्वसन्ति श्वसप्राणन इति धातुः सत्तावित्यर्थेनेति विज्ञायते शिचा जाललक्षणा तन्त्या द्विजाः पक्षिणः यथा इत्युक्तिं विना विदुषामपि व्याकृतत्वा नियतत्वमस्तीति द्योतनाय द्विजा इत्युक्तम् इह जीवराशौ स्थितयोर्जयपराजययोः कारणम् ॥ ८ ॥

ओज आद्याधिक्यानाधिक्ये (१)उभयोर्हेतुत्वेन सिद्धे हरेरधीनत्वं कुतः सङ्गच्छत इति तत्राह। ओज इति। जडो जनः ओजस्त्वादिगुणमूर्तिमन्तं भगवन्तमज्ञात्वा (२) तयोर्हेतुमात्मानं स्वं मन्यत इत्यन्वयः स वै बलं बलिनां चापरेषामिति श्लोकैः ओज आदिषु स्थित्यौजस्त्वादिगुणप्रवर्तकोऽयमित्यजानन् जनो जड इत्युच्यते ओजस्त्वादि हेतुमिति वा ॥ ९ ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यत् शौर्येण गतोत्साहः शक्रोऽभूत्तेन बोधितः तं संस्तूय महायुद्धेऽहनिति द्वादशो कथा मामयमिति कर्त्तव्यमूढो नहन्ति तद्दैन्यवक्तशौर्यं दर्शयन्निममुत्साहयानि कोपयानि च यतो मामयं शीघ्रं निहन्यादित्याशयेन पुनर्योद्धुं प्रवृत्त इत्याह। शूलमिति। अप्सु प्रलयोदके ॥ १ ॥

जिह्वा शिखा आविध्य भ्रमयित्वा ॥ २ ॥

आपतत् आगच्छत् ॥ ३ ॥

हनौ कपोलप्रान्ते ॥ ४ ॥

पुरुहूत इन्द्रः ॥ ५ ॥ ६ ॥

आततायिनां शस्त्रयतां कुत्रचित् शत्रुषु सदा जयः एकत्र शत्रौ न जयश्च। यथा युष्माकं असुरेषु सदा जयः। मयि तु न जय इत्यर्थः। यतः परः अनात्मात्मीयः अस्वाधीन आत्मा परमेश्वरो येषां परमेश्वरस्य तु सदैव जय इत्याह। विनैकमिति। तेन स्वाधीनीकृतपरमेश्वराणामर्ज्जुनादीनामिव न युष्माकं सदा जय इति भावः ॥ ७ ॥

तस्मात् युष्माकं कर्माधीनानां तु शुभाशुभादृष्टानुकूलः काल एव जयपराजययोः कारणमित्याह। लोका इति। यस्य वशे स्थिताः श्वसन्ति चेष्टन्ते द्विजाः पक्षिणः शिचा जालेन ॥ ८ ॥

ओज आदि रूपं तं कालं हेतुमज्ञाय अविज्ञाय जडं सन्तमात्मानं देहं हेतुं मन्यते ॥ ९ ॥

किञ्च तस्य कालस्यापि वशयिता यः पुरुषः सोपि यस्य वशे स स्वयं भगवानेव सर्वकारणकारणमिति सदृष्टान्तमाह। यथेति द्वाभ्यां। ईशतन्त्राणि तस्येश्वरस्याधीनानि ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इन्द्रः वृत्रभयात्प्रथमं गतोत्साहः पुनर्वृत्रेणोत्साहितस्तं वृत्रं संस्तुत्य युद्धे हतवानिति द्वादशेनाध्यायेन वर्णयति। एवमिति। आजौ रणे देहं जिहासुः विजये विष्णुप्राप्तौ विलम्बो भवेदतस्तस्मान्मृत्युं वरं श्रेष्ठं मन्यमानः अप्सु प्रलयोदकेषु कैटभो महापुरुषं विष्णुमिव ॥ १ ॥

तदनन्तरं युगान्ताग्निवत् कठोरो जिह्वाग्रभागो यस्य तत् आविध्य भ्रामयित्वा महेन्द्राय क्षिप्त्वा विनद्य हे पाप! गुरुघ्न! हतोसीति जगाद ॥ २ ॥

तच्छूलं ग्रहश्चोल्का च ग्रहोल्कं तद्वच्चलत् परिभ्रमत् खे आपतत् आगच्छत् दुष्प्रेक्ष्यं दुर्निरीक्ष्यमपि निरीक्ष्य शतं पर्वाणि यस्य तेन वज्रेणाऽऽच्छिनत् उरगराजभोगं वासुकिदेहसदृशं भुजञ्च चिच्छेद ॥ ३ ॥

संरब्धः क्रुद्धः हनौ कपोलप्रान्ते ॥ ४ ॥

पुरुहूतस्येन्द्रस्य सङ्कटं निरीक्ष्य भृशमत्यर्थं हा हेति विचुक्रुशुः ॥ ५ ॥

हरे! हे इन्द्र! विषादस्य शोकस्यायं कालो नास्ति ॥ ६ ॥

आततायिनां शस्त्रपाणिनां परात्मना परे उत्कृष्टे पदार्थे आत्मा मनो येषाम् अत एव तदर्थं युयुत्सतां सदा जयः कुत्रचिदपि न भवति किन्तु एकत्र कदाचिदेव आद्यं विश्वबीजं विना तत्र हेतुगर्भं विशेषणमेकं स्वस्वरूपप्रतिभटशून्यं सनातनं नित्यम् ॥ ७ ॥

स एवैकः अन्येषां जयपराजययोर्हेतुरित्याह। लोका इति। शिचा जालेन कालः सर्वलोकहेतुर्भगवान् "ज्ञः कालकालः" इति श्रुतेः। इह जयादौ ॥ ८ ॥

ओजआदिरूपश्च स एवैक इत्याह। ओज इति। जडमसमर्थम् आत्मानं हेतुं जयादि हेतुं मन्यत जानाति ॥ ९ ॥ १० ॥

---

(१) जीवेश्वरयोः। (२) आधिक्यानाधिक्ययोः।

पुरुषः प्रकृतिर्व्यक्तमात्मा भूतेन्द्रियाशयाः ।
शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहात् ॥ ११ ॥
अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम् ।
भूतैः सृजति भूतानि ग्रसते तानि तैः स्वयम् ॥ १२ ॥
आयुः श्रीः कीर्तिरैश्वर्यमाशिषः पुरुषस्य याः ।
भवन्त्येव हि तत्काले यथाऽनिच्छोर्विपर्ययाः ॥ १३ ॥
तस्मादकीर्त्तियशसोर्जयापजययोरपि ।
समः स्यात्सुखदुःखाभ्यां मृत्युजीवितयोस्तथा ॥ १४ ॥
सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ।
तत्र साक्षिणमात्मानं यो वेद न स बद्ध्यते ॥ १५ ॥
पश्य मां निर्जितं शक्र ! वृक्णायुधभुजं मृधे ।
घटमानं यथाशक्ति तव प्राणजिहीर्षया ॥ १६ ॥

भाषा टीका ।

ऋषि उवाच । हे नृप ! ऐसे कहकर संग्राम में देह त्यागने की इच्छा करता असुरेन्द्र विजय से मृत्यु को उत्तम मानता शूल लेकर सुरेन्द्र पर दौड़ा जैसे प्रलयकाल के जल में कैटभ दैत्य महापुरुष भगवान् पर दौड़ा था ॥ १ ॥

तदनन्तर असुरेन्द्र ने प्रलयकाल की अग्नि के समान कठोर जिह्वा ( अनी ) वाला शूल हाथ में उभोलन कर बड़े वेग से महेन्द्र पर चलाया और चलाकर उस वीरने गर्जकर बड़े क्रोधसे यह कहा हे पाप ! तू मरा ॥ २ ॥

वज्रधारी इन्द्र ने चलते हुए ग्रह और उल्का के समान दुर्निरीक्ष्य और आकाश में चले आते उस शूल को शत पर्व वज्र से मध्य ही में काटदिया और अविक्लव होकर सर्पराज के अंगके समान वृत्रासुर की भुजा को भी छेदन करदिया ॥ ३ ॥

क्रोधी वृत्रासुर ने एक बाहु कटजाने पर भी निकट आकर वज्रधारी इन्द्र को परिघ से हनू ( कपोलके पास ) में ताडन किया और ऐरावत को भी ताडन किया । तब मघवा इन्द्र के हाथ से वज्र छूटकर गिरपड़ा ॥ ४ ॥

वृत्रासुर के इस महा अद्भुतकर्म को सुर, असुर, चारण, सिद्ध आदिक सब प्रसंशा करने लगे और पुरुहूत [ इन्द्र ] के इस सङ्कट को देखकर सब हा ? हा ?? करते आक्रोश करने लगे ॥ ५ ॥

अरिकी सन्निधी में अपने हाथ से गिरे वज्र को लिज्जित इन्द्र फिर नहीं ग्रहण करना चाहता था तब वृत्रासुरने कहा हे हरे ? वज्र ग्रहण करो और अपने शत्रु को ( मुझे ) विनाश करो यह काल विषाद करने का नहीं है ॥ ६ ॥

क्योंकि युद्ध करने वाले आततो ( शस्त्रधारी ) पुरुषों में सदा ही का जय हो यह नहीं है यह सब जीव परतन्त्र हैं । इस जगत् की उत्पत्ति लय और स्थिति के ईश्वर सर्वज्ञ, सनातन, आदिपुरुष का ही जय निश्चय है उनके बिना औरों का कहीं जय भी होता है कहीं पराजय भी होता है ॥ ७ ॥

लोकपालों के सहित ये समस्त लोक विवश होकर जिसके वश में शिवा ( जाल ) बद्ध पक्षियों के समान परतन्त्र होकर जीवित हैं वही काल रूप भगवान् जय पराजय का कारण है ॥ ८ ॥

ओज ( इन्द्रिय शक्ति ) सह ( मनःशक्ति ) बल ( शरीर शक्ति ) प्राण अमृत और मृत्यु स्वरूप कालको न जानकर यह जन जड़ देहको जय पराजय का हेतु मानता है ॥ ९ ॥

हे मघवन् ! जैसे काठ की नारी ( पुतली ) और यन्त्र मय ( कलका ) मृग पराई इच्छा से क्रिया करते हैं ऐसे ही इन सब भूतों को ईश्वर परतन्त्र जानो ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु स्वारम्भकप्रधानपुरुषादितन्त्राणीति युक्तं तत्राह-पुरुष इति । व्यक्तं महत्तत्त्वम् आत्माऽहङ्कारः ॥ ११ ॥

ननु स्वकर्मद्वारा जीव एव सृष्ट्यादिहेतुरितिमीमांसका मन्यंते तत्राह एवमविद्वाननीशमेवात्मानमीश्वरं स्वतन्त्रं मन्यते ननु पित्रादयः स्रष्टारो दृश्यन्ते व्याघ्रादयस्तु हन्तारस्तत्राह भूतैरिति स्वयमीश्वरः ॥ १२ ॥

ननु त्वया पराजितस्य मम जयादिशङ्कैव नास्ति किमर्थं मां वधायुद्धे प्रवर्तयसि तत्राह । आयुरिति । तत्काले जयादिकाले विपर्ययाः अकीर्त्यादयः ॥ १३ ॥

प्राणग्लहोऽयं समर इष्वक्षो वाहनासनः।
अत्र न ज्ञायतेऽमुष्य जयोऽमुष्य पराजयः॥ १७॥

॥ श्रीशुक उवाच ॥

इन्द्रो वृत्रवचः श्रुत्वा गतालीकमपूजयत्।
गृहीतवज्रः प्रहसंस्तमाह गतविस्मयः॥ १८॥

॥ इन्द्र उवाच ॥

अहो दानव! सिद्धोऽसि यस्य ते मतिरीदृशी।
भक्तः सर्वात्मनात्मानं सुहृदं जग[1]दीश्वरम्॥ १९॥
भवानतार्षीन्मायां वै वैष्णवीं जनमोहिनीम्।
यद्विहायासुरं भावं महापुरुषतां गतः॥ २०॥

श्रीधरस्वामिकृतभावार्थदीपिका।

यस्मादेवं सर्वमीश्वराधीनं तस्मात्समः स्याद्धर्षविषादहीनो भवेत्॥ १४॥

समत्वोपायमाह। सत्त्वमिति। हर्षादिभिर्न बध्यते॥ १५॥

हर्षविषादनिवृत्त्यै तवाहमेव गुरुरित्याह। पश्येति। वृक्णमायुधं भुजश्च यस्य॥ १६॥

अनियतत्वं द्यूतरूपकेणोपसंहरति प्राण एव ग्लहः पणो यस्मिन् इषव एवाक्षाः पाशका यस्मिन् वाहनान्येवेतस्ततश्चालनान्यासनानि फलकानि यस्मिन्॥ १७॥

गतालीकं निष्कपटम्॥ १८॥

भक्तः सेवितवानसि॥ १९॥ २०॥ २१॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

पुरुषः जीवः प्रकृतिः प्रधानं चित्समष्टि संसृष्टमचेतनं व्यक्तं तत्त्वमात्माऽहङ्कारः भूतान्याकाशादीनि इन्द्रियाणि ज्ञानकर्मात्मकानि दशेन्द्रियाण्यथान्तःकरणम् एते यस्य भगवतोऽनुग्रहाद्विना तदनुप्रवेशरूपानुग्रहमन्तरेणास्य विश्वस्य सर्गादौ उत्पत्तिस्थितिलयेषु न शक्नुवन्ति न प्रभवन्ति एषां तदनुग्रहकार्यत्वादिति भावः। प्रकृत्यादिग्रहणं दृष्टान्तार्थं यथा प्रकृत्यादयोऽस्य सर्गादौ न शक्नुवन्ति तथा पुरुषश्चतुर्मुखादिरपि तदनुग्रहं विनाऽस्य सर्गादौ न शक्नोति तत्कार्यत्वादित्यर्थः॥ ११॥

एवं कार्येषु मुक्तमप्यानीशत्वमाह। अविद्वानिति। इमं परमपुरुषस्य पारतन्त्र्यमविमन्तं तत्परतन्त्रमत एवानीश्वरमात्मानमविद्वानीश्वरं मन्यते स्वात्मानमीश्वरं मन्यते जन इति शेषः "प्रकृतिरर्थकम्" इति व्यष्टिसृष्ट्यादौ परमपुरुषस्य प्रयोजकत्वं प्रकृत्यादीनां तत्कार्याणां प्रयोज्यकर्तृत्वं चोक्तं तदेव प्रपञ्चयति। भूतैरेव। स्वयमात्मनाप्रयोजककर्त्रा स्वेनेत्यर्थः भूतैः पृथिव्यादिभिः स्वानुग्रहीतैः भूतगृहीतैः भूतग्रहणं प्रकृत्यादीनामप्युपलक्षणं प्रकृत्यादिभिः स्वानुप्रवेशादिसशक्तिभिः भूतानि देवमनुष्यादिव्यष्टिभूतानि सृजति तथा तैरेव भूतानि ग्रसते च व्यष्टिसृष्टेः संहारकत्वकथनेन समष्टिसृष्टेरहारकत्वमपि सूचितम् "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्" इति श्रुत्यर्थोऽत्रानुसन्धेयः॥ १२॥

अस्त्वेवं तथापि पराजितोऽहं पुनरात्मनो न जयं सम्भावयामीत्यत्राह। आयुरिति। हि यस्मादीश्वरायत्ता स्वकर्मानुगुणा देवमनुष्यादिसृष्टिस्तस्मादायुरादयोऽपि तदायत्तानि यतः देशकालपरिणामकर्मानुगुणाः पुरुषस्य या आशिषस्ताः सर्वास्तत्काले उचितकाले तत्तत्कर्मफलानुभवदशायामित्यर्थः भवन्त्येव तत्र दृष्टान्तः। यथेति यथाऽनिच्छोः मरणदारिद्र्यादिकमनिच्छोरपि पुंसः तद्विपर्ययाः आयुरादिविपर्ययाः मरणदारिद्र्यापकीर्तिप्रभृतयोऽपि भवन्ति तथा आयुरादयोऽपीत्यर्थः तत्रायुर्जीवनं श्रीः सम्पत् ऐश्वर्यं प्रभुत्वं यद्वैश्वर्यं सम्पत् श्रीस्तेजः भगवत्सहायस्य तेऽधुना आयुरादयो भवेयुरेवेति भावः॥ १३॥

यत एव सर्वमीश्वरायत्तं कर्मानुगुणं चात एव न विक्रियेत विवेकीत्याह। तस्मादिति। यस्मात्सर्वमायुरादिकम् ईश्वरायत्तं कर्मानुगुणं विपर्ययश्च भवति तस्माद्विवेकी कीर्त्यकीर्त्योर्जयपराजययोस्तथा मरणजीवनयोश्च निमित्तयोर्यं सुखदुःखे ताभ्यां कीर्त्यादिनिमित्तसुखादिना विकारं न प्राप्नुयादित्यर्थः॥ १४॥

किञ्च भगवत्प्रकरीत्या मदुक्तरीत्या च मुक्तेरेव निरतिशयपुरुषार्थत्वादनभिसंहितफलसङ्गकर्तृकस्य युद्धादि कर्मणा आयुराद्यानुषङ्गिकफलप्राप्तिद्वारा तत्साधनत्वाभावोक्तविजयमुद्धर्षं कुर्वन्देहावसाने मुक्तोऽपि भवसीत्याह। सत्त्वमिति। सत्त्वादयो गुणाः नात्मनः जीवस्य किन्तु प्रकृतेरेव गुणा इति निर्विचारं तत्र सत्त्वादिगुणपरिणामरूपे देहे स्थितमात्मानं यः पुमान्साक्षिणं द्रष्टारं मन्यते तत्कर्तृत्वं देहगतं मत्वा आत्मानं कर्तारं मन्यत इत्यर्थः स तु न बध्यते किन्तु संसारबन्धान्मुच्यत इति भावः॥ १५॥

अस्मिन्नर्थे मामेव दृष्टान्तभूतं पश्येत्याह। पश्येति।

(1) हरिमिति वी० पाठान्तरम्॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे शक्र ! मृधे युधे वृक्णां छिन्नमायुधं त्रिशूलं भुजश्च यस्य तं निर्जितं पराजितमपि पुनस्तव प्राणान्हर्तुमिच्छया यथाशक्ति घटमानं यतमानं युयुत्सुं मां पश्य ॥ १६ ॥

यदि नूनं मम जयो भवेत्तर्हि योत्स्यामीत्याशङ्कमानं प्रवदन्समरं द्यूतत्वेन रूपयति । प्राणग्लह इति । गृह्यत इति ग्लहः जितेन गृह्यमाणाः पणाः प्राणा एव ग्लहो यस्मिन् वाहनानि हस्त्यश्वरथादीन्येवासनानि अस्यन्ते क्षिप्यन्ते इतस्ततश्चाल्यंत इत्यसनानि फलका यस्मिंस्तिथवः शरा एवाक्षाः देवनाक्षा यस्मिंस्तोयं द्यूतसदृशः संग्रामः अत्र द्यूततुल्ये संग्रामे कस्य जयः कस्य वा पराजय इति न ज्ञायते द्यूत इव जयपराजयौ तावदुर्ज्ञेयौ इत्यर्थः इत्थं तु लोकदृष्ट्योक्तं मया नूनं भगवत्सहायस्य तव जय एव निश्चित इति भावः ॥ १७ ॥

एवं तत्त्वकथनेन युद्धाय प्रोत्साहितः उपात्तवज्रः शक्रः तमाहेत्याह मुनिः । इन्द्र इति । गताळीकं निष्कपटं अत्रस्य वचः श्रुत्वाऽपूजयदहमभ्यस्तस्वीकृतवज्रायुधःशक्रो विगतस्मयःश्लानिनामियं रीतिरित्याश्चर्यरहितः प्रहसन् सावधानं स्ववचः समाकर्णनाय प्रहसंस्तं वृत्रमुवाच ॥ १८ ॥

उक्तमेवाह । अहो इत्यादिना सातकोदकैरित्यंतेन । हे दानव,त्वं सिद्धोसि कृतकृत्योसि सिद्धोहं इति कथं त्वया ज्ञातस्तत्राह । यस्य ते तव ईदृशी मतिर्वर्तते किञ्च सिद्धत्वापादिकानन्था भगवद्भक्तिरेव सा च तवास्तीत्याह । भक्त । इति त्वं सर्वात्मनोपायोपेयादिभावेन जगदीश्वरमन्तरात्मानमत एव सुहृदं निरतिशयप्रियं भगवन्तं भक्त आर्पत्वात्कर्तरिक्तः सेवितवान् ॥ १९ ॥

किञ्च जनान्मोहयतीति तथा तां वैष्णवीं मायां भवानतार्षीः कुतः यद्यस्माद्भ्रात्रासुरं भावं तामसत्वं विहाय महापुरुषतां श्रेष्ठपुरुषतां सत्त्वोत्तरपुरुषतां इति यावत् गतः प्राप्तवानसि ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हिरण्यगर्भादीनामोज आदिगुणप्रदिहेतुत्वेन सत्त्वाज्जयपराजययोरपि तन्निमित्तत्वमपि किमपराद्धमिति तत्राह–पुरुष इति । "हिरण्यगर्भः पुरुष आत्मा वायुरुदाहृतः शेषोऽव्यक्तस्तथैवेन्द्र आशयः समुदाहृतः" इत्यतः पुरुषादिशब्देन न संसार्यादिसामान्यानि वस्तूनि गृह्यन्ते किन्तु विशिष्ट एव क्रमेण इत्येवं शास्त्रनिर्णये सति हिरण्यगर्भादयो यदनुग्रहं विनाऽस्य जगतः सर्गादौ न शक्नुवन्ति तमात्मानमन्तःस्थितमा दानादिकर्तारं श्रीहरिमनीशं जीवं मन्यते व्याहतमिदमित्याह - ईश्वरमिति । कोसाविति तत्राह अविद्वानेवेति । अज्ञानादेवं मन्वानस्य निरय एवावस्थानं नान्यत्रेत्यस्मिन्नर्थे एव शब्दः

"अनीशं जीवरूपेण परमात्मानमीश्वरम् ।
ये मन्यंते तान्समीक्ष्य क्रोहन्निरयमाग्भवेत्" इति ॥

वचनात् ॥ ११ ॥

ननु तत्सृष्ट्ये ब्रह्मा रुद्रेन्द्रादिरूढिः कथमिति । तत्राह - भूतैरिति ॥ १२ ॥

देवं दिनसृष्टिसंहारावपि तदधीनावित्याह । आयुरिति । पुरुषस्योत्पन्नस्य या आयुराद्याशिषो भवन्ति ते भावाः काले कालात्मनो हरेराराधनोपयोगाय भवन्ति हि यस्मात्तस्मात्कीर्त्यादेः समः स्यादित्यन्वयः यथा दुःखाद्यनुभवेच्छारहितस्यापि विपर्ययाः दुःखादिलक्षणा दृश्यंते तथेति शेषः अनेन सर्वे भावाः नारायणाधीना इति निरणायि ॥ १३—१४ ॥

दुःखाद्यागमे प्रकृतिपुरुषविवेकाज्ञानं कारणमित्याह । सत्त्वमिति । आत्मनो जीवस्यात्मानं परमात्मानम् ॥ १५ ॥

श्रीहर्यधीनत्वेन जयादिकं तथापि प्रत्यक्षमित्याह । पश्येति । प्राणा एव ग्लहः पणो यस्य स तथा इषवः शरा एव अक्षा यस्य स तथा हस्त्यादिवाहनान्यासनं फलकत्वं यस्य स तथा द्यूतकल्पः संग्रामः अत्र द्यूतलक्षणे समरे ॥ १७ ॥

गताळीकं निर्व्याजम् ॥ १८ ॥

सिद्धः जीवन्मुक्तः "जीवन्मुक्ते जातिभेदे सिद्धः स्यात्साधितेपि च" इति आत्मानं श्रीहरिं भक्तः भजमानः ॥ १९ ॥

ग्रामं गत इतिवत् महापुरुषतां प्रति गतः । भक्तिज्ञानादिगुणसंपन्नत्वेन महत्त्वम् ॥ २०॥२१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वाहनानि हस्त्यादीन्येव आसनानि सारि स्थानीयानां बोधनामाधारभूताः फलका यस्मिन् ॥ १५ ॥

गतविस्मयः प्राप्तविस्मयः ॥ १६—३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुरुषो महत्स्रष्टा स्वांशोपि किमुत प्रकृत्यादय इत्यर्थः । सत्त्वं महत्तत्त्वमात्मा अहङ्कारः । एते यस्यानुग्रहाद्विना सर्गादौ न शक्नुवन्ति । न च पुरुषस्य स एव कथं तदनुग्राह्य इति वाच्यं । परब्रह्मणोपि तदनुग्राह्यत्व श्रवणात् यथा "मदीयं महिमानञ्च परब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि" इति ॥ ११ ॥

ननु स्वकर्मद्वारा जीव एव सृष्ट्यादि हेतुरिति मीमांसका मन्यन्ते तत्राह एवमविद्वान् । अनीशमेयात्मानं जीवं ईशं मन्यते । ननु पित्रादयः स्रष्टारो दृश्यन्ते व्याघ्रादयस्तु हन्तारस्तत्राह भूतैरिति ॥ १२ ॥

ननु त्वया पराजितस्य मम जयादि शंकैव नास्ति किमिति वक्षान्मां युद्धे प्रवर्तयसीति तत्राह-आयुरिति । तत्काले मदनुकूले काले अतस्तथायं जयकालस्त्वं जेष्यसीति भावः विपर्ययाः मृत्युदारिद्र्यादयः ॥ १३ ॥

समः समभावनावान् स्यात् सुखदुःखयोः ॥ १४ ॥

जयपराजयाद्याः गुणकार्याः एव आत्मा तु गुणव्यतिरिक्त एवेति विवेकेन हर्षविषादौ न कुर्यादित्याह । सत्त्वमिति । न बध्यते संसारबन्धं न प्राप्नोति ॥ १५ ॥

अत्रार्थे अहमेव ते गुरुरित्याह । पश्येति ॥ १६ ॥

युद्धमिदं द्यूत क्रीडनमेव । दोषयुद्धारागिभिरपि स्वयुद्धमशक्यमित्याह प्राणएव ग्लहः पणो यत्र । इषव एवाक्षाः पाशका यस्मिन् । वाहनानि हस्त्यश्वादीन्येव आसनानि फलका यस्मिन् ॥ १७ ॥

गतविस्मय इति हन्त हन्त कथमसुरस्याप्येतावन्ति भक्तिज्ञानवैराग्याणीति प्रथमम् विस्मितो हास्यरहित एवाऽऽसीत् ततः प्रह्लाद बलिप्रभ्रातिस्मृत्या भक्तिरस्मादृशेभ्योऽपि कोटिगुणिता

खल्विदं महदाश्चर्यं यद्रजःप्रकृतेस्तव ।
वासुदेवे भगवति सत्त्वात्मनि दृढा मतिः ॥ २१ ॥
यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे ।
विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैः ॥ २२ ॥
श्रीशुक उवाच ।
इति ब्रुवाणावन्योन्यं धर्मजिज्ञासया नृप ! ।
युयुधाते महावीर्याविन्द्रवृत्रौ युधाम्पती ॥ २३ ॥
आविद्ध्य परिघं वृत्रः कार्ष्णायसमरिन्दमः ।
इन्द्राय प्राहिणोद्घोरं वामहस्तेन मारिष ! ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वनसुरेष्वपि संभवेदेवेति विस्मयापाये तस्य प्रहर्षहेतुको हास आभूदित्यर्थः ॥ १८ ॥

भक्तः सेवितवानसि ॥ १९ ॥ २० ॥

महदाश्चर्यमिति । पुनरपि विस्मयोदयः । रजःस्वभावस्य तव कथं दृढा भक्तिः प्रह्लादादौ तु नारदादिमहदनुग्रहेणैव रजःस्वभावापगमात्तत्रोचितैव भक्तिरिति भावः । सत्त्वात्मनि शुद्धसत्त्व मूर्त्तौ ॥ २१ ॥

तव स्वर्गादिभोगापेक्षा युक्तैवेत्याह-यस्येति । खातकोदकैः गर्त्तादिजलोपमैः स्वर्गादिभिः किम् अस्माकन्तु भक्त्यभावादेतैरेव निर्वृतिरिति भावः ॥ २२ ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुरुषो जीवः व्यक्तं महत्तत्त्वं आत्माहङ्कारः भूतानि च इन्द्रियाणि आशयोन्तःकरणञ्च ते तथा यदनुग्रहाद्विना सर्गादौ न शक्नुवन्ति यत्प्रवेशरूपमनुग्रहं विना सर्गादिकं कर्तुं न प्रभवन्तीत्यर्थः ॥ ११ ॥

अनीशं स्वातन्त्र्येण किमपि कर्तुमसमर्थमीश्वरमिदं मयैव कृतमिति समर्थं मन्यते यतो यः स्वयं भूतैर्भूतानि सृजति तैस्तानि संहरति च ॥ १२ ॥

यथा पुरुषस्यानिच्छोरेव विपर्ययाः आयुराद्यभावाः भवन्त्येव तथा आयुराद्योपि भवन्त्येव ॥ १३ ॥

सुखदुःखाभ्यां सुखदुःखयोश्च समः स्यात् ॥ १४ ॥

समत्वसाधनं गुणसाक्षिभूतात्मज्ञानमित्याह - सत्त्वमिति ॥१५॥

वृक्णं छिन्नमायुधं भुजश्च यस्य तम् ॥ १६ ॥

जयपराजययोरनियतत्वं द्यूतरूपकेण दर्शयति-अयं समरः प्राणाः ग्लहः पणो यस्मिन् तथाभूतः द्यूत एव इषूपलक्षितान्यायुधान्येव अक्षाः पाशाः यस्मिन् वाहनानि आस्यन्ते क्षिप्यन्ते इत्यास्यानि फलका यस्मिन् ॥ १७ ॥

गतमलीकं मिथ्याभाषणं यस्मात्तद्वचः श्रुत्वा ॥ १८ ॥

त्वात्मानं परमात्मानं प्रति भक्तोसि ॥ १९ ॥

महापुरुषाः भागवतास्तत्ताम् ॥ २० ॥ २१ ॥

---

भाषाटीका ।

पुरुष, प्रकृति, ( व्यक्त ) महत्तत्त्व पञ्चभूत इन्द्रिय और अन्तःकरण ये सब विना जिसके अनुग्रह के विना सृष्ट्यादिकमें समर्थ नहीं होसक्ते हैं ॥ ११ ॥

ऐसे ईश्वर परमात्माको अविद्वान पुरुष अनीश असमर्थ मानता है, वह तो भूतों के द्वारा भूतों को रचकर उनहीं के द्वारा उन भूतों को आप ग्रसता है ॥ १२ ॥

पुरुष इच्छा न करे तो भी उस समय पर जैसे आयु श्री, कीर्त्ति, और आशिष ये सबही विपरीत हो जाते हैं ॥ १३ ॥

तिसीसे अयश और यश, जय और पराजय तथा मरण और जीवन में भी सुख दुःख समान माने ॥ १४ ॥

सत्व, रज, तम ये तीनों प्रकृति के गुण हैं आत्मा के नहीं । तिनमें जो आत्मा को साक्षी जानता है सो बन्धको नहीं प्राप्त होता ॥ १५ ॥

हे इन्द्र ? मोकूं तूनें जीत भी लिया और मेरा आयुध तथा हाथभी कट गया है तौभी उत्साह से तेरे प्राण हरने की चेष्टा करताहूं तू देख ॥ १६ ॥

ये समर नहीं एक जुआ है इसमें बाण ही फेकने के पाशे और वाहन ही चलने का घर है औरप्राणों की बाजी लगती है । इसमें किसकी जीत किसकी हार यह नहीं जाना जाता ॥ १७ ॥

श्री शुकदेवजी बोले ॥ इन्द्रने वृत्रासुर का सत्यवचन सुनकर बडी श्लाघा की इन्द्रभी विस्मयको छोड वज्र हाथ में ले हँसकर बोला ॥ १८ ॥

इन्द्र बोले । हे दानव ! तुम सिद्ध हो जो तुमारी ऐसी मति है सर्व के सुहृद और आत्मा जगदीश्वर के तुम सर्व प्रकार से भक्त हो ॥ १९ ॥

तुम जनों के मोहने वारी वैष्णवी माया को तर गये जो तुम आसुरभावको छोडकर महापुरुष के भाव को प्राप्त भये हौ ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य तव खातकोदकैर्गर्त्तादिजलोपमैः स्वर्गादिभिः किम् ॥२२॥

युधां संग्रामाणां पती मुख्यौ ॥ २३ ॥

स तु वृत्रस्य परिघं करं च करभोपमम् ।
चिच्छेद युगपद्देवो वज्रेण शतपर्वणा ॥ २५ ॥
दोर्भ्यामुत्कृत्तमूलाभ्यां बभौ रक्तस्रवोऽसुरः ।
छिन्नपक्षो यथा गोत्रः खाद्भ्रष्टो वज्रिणा हतः ॥ २६ ॥
कृत्वाधरां हनुं भूमौ दैत्यो दिव्युत्तरां हनुम् ।
नभोगंभीरवक्त्रेण लेलिहो[1] ल्बणजिह्वया ॥ २७ ॥
दंष्ट्राभिः कालकल्पाभिर्ग्रसन्निव जगत्त्रयम् ।
अतिमात्रमहाकाय आक्षिपंस्तरसा गिरीन् ॥ २८ ॥
गिरिराट्पादचारीव पद्भ्यां[2] निर्जरयन्महीम् ।
जग्रास स समासाद्य वज्रिणं सह वाहनम् ॥ २९ ॥
महाप्राणो महावीर्यो महासर्प इव द्विपम् ।
वृत्रग्रस्तं तमालक्ष्य सप्रजापतयः सुराः ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे मारिष श्रेष्ठ राजन् ! ॥ २४ ॥

उत्कृत्तं मूलं ययोस्ताभ्यां रक्तं स्रवतीति तथा गोत्रः पर्वतः ॥ २५ ॥

कृत्वाधरामित्यादेर्जग्रासेति तृतीयेनान्वयः नभोवद्गम्भीरेण वक्त्रेण लेलिहः सर्पस्तद्वदुल्बणया जिह्वया ॥ २७ ॥

कालकल्पाभिः कालतुल्याभिर्दंष्ट्राभिर्ग्रसन्निव आक्षिपन् चालयन् ॥ २८ ॥

निर्जरयन् चूर्णयन् ॥ २९ ॥

महाप्राणो महाबलः महावीर्यो महाप्रभावः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्चेदं महदाश्चर्यं खलु किं तत् भद्रजःप्रकृतेः राजसस्वभावस्य तव सर्वात्मनि षाड्गुण्यपूर्णे वासुदेवे निश्चयमतिरवस्थितेति यत् ॥ २१ ॥

अत एव न तवैश्वर्यकैवल्यादिषु मतिरित्याह–यस्येति । निःश्रेयसेश्वरे मोक्षाधिपतौ आश्रितानां संसृतिबन्धहारिणि भगवति यस्य पुंसो भक्तिस्तस्य अमृताम्भोधौ ब्रह्मानन्दसमुद्रे विक्रीडतः विहरतः पुंसः क्षुद्रैरल्पैः खातकोदकैर्गर्तोदकतुल्यैरैश्वर्यकैवल्यादिसुखैः किं तानि तव तुच्छानीति भावः ॥ २२ ॥

एवं परस्परं ब्रुवाणौ इन्द्रवृत्रौ युयुधातेइत्याह मुनिः-इतीति । इतीत्थं धर्मजिज्ञासया भगवद्धर्मविचारेण तत्पूर्वमित्यर्थः एवं ब्रुवाणौ भाषमाणौ युधां योद्धॄणां पती मुख्यौ अपारवीर्यौ इन्द्रवृत्रौ हे नृप ! युयुधाते युद्धङ्कृतवन्तौ ॥ २३ ॥

तदेवाह-आविध्येति । अरिन्दमो वृत्रः कार्ष्णायसं कृष्णलोहमयं घोरं परिघं वामहस्तेनाविध्य भ्रामयित्वा इन्द्राय प्राहिणोत् प्रचिक्षेप हे मारिष श्रेष्ठराजन् ! ॥ २४ ॥

स देवः इन्द्रस्तु वृत्रस्य परिघं करभोपमं दिग्गजशुण्डातुल्यं करं वामहस्तं च युगपदेव शतपर्वणा वज्रेण चिच्छेद छिन्नवान् ॥ २५ ॥

उत्कृत्तं छिन्नं मूलं ययोस्ताभ्यां बाहुभ्यां रक्तं स्रवतीति रक्तस्रवोऽसुरो वृत्रः बभौ रराज यथा गोत्रो गिरिर्वज्रिणेन्द्रेण छिन्नौ पक्षौ यस्य तादृशः खादाकाशाद्भ्रष्टो गलितो हतस्सन् भाति तद्वत् ॥ २६ ॥

स दैत्यो वृत्रः अधरां हनुं भूमौ उत्तरां हनुं दिवि कृत्वा निधाय नभोवद्गम्भीरेण वक्त्रेण लेलिहस्सर्पः पुनः पुनरतिशयेन वा लेढि लेलिहः यङ्लुगन्तात्पचाद्यच् तद्वदुल्बणया क्रूरया जिह्वया सवाहनमैरावतसहितं वज्रिणं इन्द्रमासाद्य प्राप्य जग्रास निगीर्णवान् कथंभूतस्सन् कालकल्पाभिर्मृत्युतुल्याभिर्दंष्ट्राभिर्जगत्त्रयं ग्रसन्निवातिमात्रोच्छ्रितो महादेहो यस्मात एव तरसा बलेन गिरीनाक्षिपन् इतस्ततश्चालयन् पादचारी पर्वतराडिव पद्भ्यां महीं निर्दरयंश्चूर्णयन् पद्भ्यां गिरीनाक्षिपन्महीं निर्दरयंश्चेति वान्वयः महाप्राणो महाबलः महावीर्योऽतिप्रभावस्सर्पो द्विपं गजमिव जग्रासेति दृष्टान्तीभूतः ॥ २७ ॥ २८ ॥ २९ ॥

वृत्रेण ग्रस्तं तमिन्द्रमालक्ष्य दृष्ट्वा ब्रह्मादिभिर्मरीचिभिश्च सहिताः सर्वे सुराः हा अद्येन्द्रस्य कष्टं प्राप्तं इति निर्विण्णाश्चिन्ताक्रान्ताश्चुक्रुशुः असुरेन्द्रेण वृत्रेण निगीर्णोऽपीन्द्रो न ममार न मृतः किन्तूदरं प्रविष्टो महापुरुषेण भगवता सन्नद्धो रक्षितः महापुरुषेण नारायणकवचात्मकेन सन्नद्धो दंशितो वा भगवन्मायाबलेन योगमायाबलोपबृंहितेनेत्यर्थः ॥ ३० ॥ ३१ ॥

( १ ) लिलेहेति विजयध्वज सम्मतः पाठः । ( २ ) निर्दरयन् । इति वी० पाठान्तरम् ।

हा कष्टमिति निर्विण्णाश्चुक्रुशुः समहर्षयः।
निगीर्णोऽप्यसुरेन्द्रेण न ममारोदरं गतः।
महापुरुषसन्नद्धो योगमायाबलेन च ॥ ३१ ॥
भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद्विभुः।
उच्चकर्त्त शिरः शत्रोर्गिरिशृङ्गमिवौजसा ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

खातकोदकैः कूपतटाकादिजलैः तत्प्रायैः स्वर्गादिभिः ॥ २२ ॥

धर्मजिज्ञासया धर्मविचारेण युक्तौ युध्यतीति युधो योधाः ...नां पती युधसंप्रहार इति धातुः अनपुंसकाद्युपपदे क्विप् ...वयः पुंशब्दवत् ॥ २३ ॥ २४ ॥

"कलिभिक्काधः करभः करिपोतेऽपि तस्कर" इत्यभिधानात् अत्र ...करभशब्दस्य युक्तोर्थो ग्राह्यः ॥ २५ ॥

भूधो भ्रंशितः ॥ २६ ॥

लिलेह नभ इति शेषः ॥ २७ ॥

कालकल्पाभिः यमसदृशीभिः ॥ २८ ॥ २९ ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

आविध्य भ्रामयित्वा मारिष हे मान्य ! ॥ २४—२५ ॥

गोत्रः पर्वतः ॥ २६ ॥

नभोवद्गम्भीरेण वक्त्रेण लेलिहः सर्पस्तद्वदुल्बणया जिह्वया ...रयन् जीर्णीकुर्वन् तरसा जग्रासेत्यन्वयः ॥ २७—२८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यस्य निःश्रेयसेश्वरे मुक्तिप्रदे हरौ भक्तिः स्यात्तस्य क्षुद्रैः ...र्गादिसुखैः किं प्रयोजनम् यथाऽमृताम्भोधौ क्षीराब्धौ विक्री-...तः खातकोदकैः किम् ॥ २२ ॥ २३ ॥

हे मारिष श्रेष्ठ ! ॥ २४ ॥ २५ ॥

यथा वज्रिणा हतः खाद्भ्रष्टः पतितच्छिन्नपक्षो गोत्रो गिरि-...स्तद्वत्। असुरः उरुकृत्तं मूलं ययोस्ताभ्यां रक्तं स्रवतीति तथा ...भूतः ॥ २६ ॥

दैत्यः दैत्यपक्षपातित्वात् न तु दिव्यपत्यत्वात्। अधरां हनुं ...उत्तरां हनुं दिवि च कृत्वा नभ इव गंभीरवक्त्रेण उल्बणा-...जिह्वया च लेलिहत्सर्प इव प्रतीयमानः। वज्रिणं जग्रासेति ...सम्बन्धान्वयः ॥ २७ ॥

कालकल्पाभिः कालतुल्याभिः जगत्त्रयं ग्रसन्निव अतिमात्रः ...अतिमात्रः महान्कायो यस्य स तरसा वेगेन गिरीन् आक्षि-...प चर्वयन् ॥ २८ ॥

निर्जरयन् जर्जरीकुर्वन् ॥ २९ ॥

महाप्राणो विपुलबलः महावीर्यो विपुलपराक्रमः सर्पो द्विपं गजमिव ॥ ३० ॥

भाषाटीका।

यह बडा आश्चर्य है जो रजोगुण की प्रकृति वाले तुमारी शुद्धसत्वस्वरूप भगवान् वासुदेव में दृढ मति भई ॥ २१ ॥

जिस की मोक्ष के भी ईश्वर, हरि, भगवान् में भक्ति है। उस अमृतसमुद्रके गोता लगाने वाले को खोदके निकाले हुए कूपादि के पानी से क्या प्रयोजन है ॥ २२ ॥

श्रीशुकदेवजी बोले ! हे राजन् ! संग्रामके पती धर्मकी जिज्ञासा से परस्पर यों बोलते हुये बडे बली इन्द्र और वृत्रासुर दोनों युद्ध करने लगे ॥ २३ ॥

हे राजन् ! शत्रु के दमन करने वाले वृत्रासुरने फट्कारके लोहेका एक घोर परिघ बायें हाथ से चलाया ॥ २४ ॥

इन्द्रनेभी उस परिघ और वृत्रासुर के हाथको ( शतपर्व ) वज्रसे एकही वार काट दिया ॥ २५ ॥

मूलसे कटे हुये हाथों से रक्त बहाता हुआ वृत्रासुर ऐसा मालूम पडा कि जैसे इन्द्रके वज्र से कटे पक्षवाला आकाश से गिरा हुआ पर्वत हो ॥ २६ ॥

वृत्रासुर नीचे का होठ पृथ्वी में ऊपरका होठ आकाश में करके आकाश के सदृश गंभीर मुखसे सर्प के नाई उल्बण जिह्वा से और काल के सदृश डाढों से तीनों जगत्को ग्रसतासा बहुत ही भारी शरीर वाले वेग से पर्वतों को चबाता हुआ पांवसे चलने वाले बडे पर्वत सरीका पृथ्वी को चूर्ण करता हुआ इन्द्र के पास पहुंच कर वाहन सहित इन्द्र को ग्रस लिया ॥२७॥२८॥२९॥

महाबल महाप्रभाव वाला सर्प हाथी को जैसे ग्रस ले। वैसे वृत्रासुर के ग्रसे हुए इन्द्र को देख देव, प्रजापति और महर्षि, ये सब ही अहो ? बडा कष्ट हुआ यों दुःखितहो कर आक्रोश करते हुए। इन्द्र को तो वृत्रासुर ने निगल लिया तो भी वह नारायण कवच रूप महापुरुष से कवचित होने के कारण और योग माया बल के कारण उदर में जाकर भी मरा नहीं ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

महापुरुषेण कवचरूपेण श्रीनारायणेन सन्नद्धो दंशितः योगबलेन मायाबलेन च ॥ ३१ ॥

वज्रस्तु तत्कन्धरमाशुवेगः कृन्तन्समन्तात्परिवर्तमानः ।
न्यपातयत्तावदहर्गणेन यो ज्योतिषामयने वार्त्रहत्ये ॥ ३३ ॥
तदा च खे दुन्दुभयो विनेदुर्गन्धर्वसिद्धाः समहर्षिसङ्घाः ।
वार्त्रघ्नलिङ्गैस्तमभिष्टुवाना मन्त्रैर्मुदा कुसुमैरभ्यवर्षन् ॥ ३४ ॥
वृत्रस्य देहान्निष्क्रान्तमात्मज्योतिररिन्दम ! ॥
पश्यतां सर्वलोकानामलोकं समपद्यत ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां वृत्रवधोनाम
द्वादशोऽध्यायः ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वज्रभिदिन्द्रः उच्चकर्त्त चिच्छेद ॥ ३२ ॥

तस्य कन्धरं कन्धराम् आशुवेगोऽतिवेगवान् ज्योतिषां सूर्यादीनाम् अयने दक्षिणोत्तरगतिरूपे संवत्सरे योऽहर्गणः षष्ठ्युत्तरशतत्रयात्मकस्तावताऽहर्गणेन वार्त्रहत्ये वृत्रवधयोग्ये काले न्यपातयत् यद्वा स्वार्थे तद्धितः वृत्रहत्यायां वृत्रहननार्थं परिवर्तमान इत्यर्थः ॥ ३३ ॥

वार्त्रघ्नलिङ्गैर्वृत्रहन्तुर्वीर्यप्रकाशकैः "वार्त्रहत्याय शवसेपृतनाषाह्याय च" इत्याद्यैस्तमिन्द्रमभिष्टुवाना अभिष्टुवन्तः ॥ ३४ ॥

अलोकं लोकातीतं भगवन्तम् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वज्रेण तस्य वृत्रस्य कुक्षिं भित्वा विभुः वज्रभिदिन्द्रः कुक्षेः बहिर्निर्गत्य शत्रोर्वृत्रस्य शिरः पर्वतस्य शृङ्गमिव उच्चकर्त चिच्छेद ॥ ३२ ॥

अति विपुलां वृत्रस्य कन्धरां कियता कालेन चिच्छेदेत्यत्राह–वज्रस्त्विति आशुवेगस्तीक्ष्णधारो वज्रो 'वज्रायुधं तस्य वृत्रस्य कन्धरं कण्ठं पुंस्त्वमार्षं समन्तात्कन्धरायाः अभितः परिवर्तमानः कृन्तन् छिन्दन् वार्त्रहत्ये वृत्रहत्यासम्बन्धिनि ज्योतिषामयने संवत्सरे योऽह्नां षष्ठ्युत्तरत्रिशतसंख्याकानां गणः तेन तावता कालेनेत्यर्थः न्यपातयच्छिरो भूमौ पातितवानित्यर्थः ज्योतिषां सूर्यादीनामयनं दक्षिणोत्तरगतिः तदात्मके संवत्सर इत्यर्थः वार्त्रहत्ये इत्यनेन कार्त्स्न्येन संवत्सरसम्बन्धित्वं वृत्रहत्यायाः सूचितम् ॥ ३३ ॥

तदा वृत्रशिरश्छेदनानन्तरं खे दिवि देवदुन्दुभयो दध्वनुः महर्षीणां सङ्घैः सहिता गन्धर्वास्सिद्धाश्च वार्त्रघ्नलिङ्गैः वृत्रहंतुरिन्द्रस्य प्रकाशकैर्मन्त्रैस्तं इन्द्रमभिष्टुवन्तः मुदा हर्षेण कुसुमैरभ्यवर्षन् ॥ ३४ ॥

हेऽरिन्दम ! वृत्रस्य देहान्निर्गतमात्मज्योतिःज्योतिरूपःस्वप्रकाशरूप आत्मा सर्वलोकानां पश्यतां सतां अलोकं प्राकृतलोकविलक्षणं श्रीवैकुण्ठं समपद्यत स्वं लोकमिति पाठे मुक्तानां स्वप्राप्तं स्थानमित्यर्थः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महापुरुषेण भगवता सन्नद्धः सहितो रक्षित इति वा नारायणकवचाख्यविद्यया समुद्धृतो वा योगमायाबलेन आत्मादिमहिमबलेन उपायलक्षणमायाबलेन वा ॥ ३१ ॥ ३२ ॥

अकृत्रिमो योगो यस्य स तथा योऽयमहर्गण आदित्यादिज्योतिषामयने दक्षिणोत्तरायणसंज्ञे संवत्सरे संभवति तावताहर्गणेन षष्ठ्युत्तरशतत्रयलक्षणेन वार्त्रहत्ये वृत्रहननसम्बन्धिनि समरे काले वा तावत्कालं समन्तात्कृन्तन् परिवर्तमानो अमन्यकृतं न्यपातयदित्यन्वयः । अत्रेतिहासं पठंति । प्रथमं युद्धं नर्मदातीरे द्वितीयं तु समुद्रतीरे तत्र वृत्रेण केनचित्संकेतेन संधिं इन्द्रः सख्यंप्राप्तस्य तस्य स्निग्धतया करं प्रगृह्य फेनेनास्य वधं कर्तुं विचरन्फेनेन मां जहीति विनोदवचनं वृत्रेण वादयित्वा तेन पादस्पर्शलक्षणं ताडनं कृत्वा युद्धाय सन्नद्ध एकसंवत्सरकालं युद्धं कृत्वा विष्णुशक्तियुक्तं वज्रं फेने निवेश्य तस्मै विसृज्य श्रीनारायणं ध्यायतस्तस्य शिरः प्राहरत् "सन्धितः समर्थेनेन्द्रो वृत्रेणाथो करग्रहः । समुद्रतीरे विचरन् फेनेन वधमस्य तु । नर्मदां जहि फेनेन वाचयित्वा सुरेश्वरः पादस्पर्शं विवादं च कृत्वा युद्धाय दंशितः । फेने वज्रं समावेश्य विष्णुयुक्तं व्यसर्जयत् । अपानुदच्छिरस्तस्य ध्यायतो वस्तोर्विष्णुं सः" इतिवाक्यमत्रमानं करं गृह्णातीति करग्रहः ॥ ३३ ॥

वृत्रघ्नस्येन्द्रस्य संबंधीनि लिङ्गानि लक्षणानि स्तम्भितजलनिर्गमनादीनि तानि येषु मन्त्रेषूच्यन्ते ते वार्त्रघ्नलिङ्गास्तैर्मन्त्रैः "दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः अपां बिलमपिहितं यदासीद्वृत्रं जघन्वान् । अपतद्ववार" इत्यादिलक्षणैः ॥ ३४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मज्योतिर्जीवाख्यं तेजः खलोकं खेनाधिकृतं विद्या-लोकम् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वादशोऽध्यायः ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न ममारेत्यत्र हेतुमाह-महापुरुषेण विश्वरूपोपदिष्टनारायण-वर्मणा सन्नद्धः। ननु गुरुवधेपि सा विद्याऽस्फुरदिति शास्त्रविदाम-सम्मतं तत्राह- योगेति । सम्प्रतिलब्धेन भगवच्छक्तिबलेनेत्यर्थः। वकारस्तद्बलेन पूर्वशक्तेरप्युद्भवो गमितः ॥ ३१—३४ ॥

वृत्रस्येति आत्मज्योतिराविर्भूतपार्षददेहात्मकम्। अलोकं भग-वल्लोकम् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पञ्चस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भस्य
द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

महापुरुषेण श्रीनारायणकवचेन सन्नद्धो दंशितः योगबलेन मायाबलेन च तत्र योगोऽष्टाङ्गः। माया अन्तर्द्धाय पवनादि-रूपेण स्थितिः ॥ ३१ ॥

वधकर्त्ते चिच्छेद ॥ ३२ ॥

आशुवेगोपि समन्तात् परिवर्त्तमानः कन्धरायाः सर्वतो दिक्षु भ्रमणेन कृन्तन् न त्वेकतो दिशः । कन्धराया महासारत्वादिति भावः। तावता अहर्गणेन कर्त्तित्वा भूमौ न्यपातयत् योऽहर्गणः ज्योतिषां सूर्य्यादीनां सम्बन्धिनी अयने द्वे दक्षिणोत्तरे अभि-व्याप्य भवेदित्यर्थः । अयने कीदृशे वार्त्रहत्ये वृत्रहत्यायोग्ये वृत्रवधदिवसप्रत्ययान्तात् स्वार्थिके नाना तत्र भावार्थे नाना वा रूपम् ॥ ३३ ॥

वार्त्रघ्नलिङ्गैः"वार्त्रहत्याय शवसे पृतनासाह्याय च"इत्याद्यैर्मन्त्रै-स्तमिन्द्रमभिष्टुवानाः ॥ ३४ ॥

अत्र यदैव वृत्रः सवाहनमिन्द्रं जग्रास तदैव मम हन्ता अन्यः कोपि नास्तीति निश्चित्य योगबलेनैव देहं त्यक्त्वा कथं न शीघ्रं भगवत्पार्श्वे यामीति विभाव्य समाधिश्चकार तदैवेन्द्रोऽचेतनस्य वृत्रदेहस्य कुक्षिं विदार्य्य निःसृत्य शिरश्छेदे प्रवृत्त इति गिरि-शृङ्गमिव चकर्त्तेति दृष्टान्तात् ज्ञेयम्। आत्मज्योतिः पार्षददेहात्मकः प्रकाशः वृत्रदेहात् पृथग्भूतः । अलोकं लोकातीतं श्रीसङ्कर्षण-वैकुण्ठम् ॥ ३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चस्य द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

महापुरुषेण वर्मरूपेण श्रीनारायणेन सन्नद्धः दंशितः इन्द्र-रक्षार्थं भगवत्प्रयुक्तमायाबलेन च न ममार ॥ ३१ ॥

बलभिदिन्द्रः तस्य कुक्षिं भित्वा विदार्य ततो निष्क्रम्य निर्गत्य शत्रोः वृत्रस्य शिरः उच्चकर्त अच्छिनत् ॥ ३२ ॥

आशुवेगः शीघ्रगतिर्वज्रः कन्धरायास्समन्तात् । परिवर्तमानः परिभ्रममाणः तस्य कन्धरं पुंस्त्वमपि कन्धरां कृन्तन् छिन्दन् वार्त्रहत्ये वृत्रहत्यायोग्ये ज्योतिषां सूर्यादीनामयनं दक्षिणोत्तर-गतिस्तदात्मके संवत्सरे योऽहर्गणः षष्ठ्यधिकशतत्रयदिवस-समूहस्तावता अहर्गणेन न्यपातयत् ॥ ३३ ॥

वार्त्रघ्नलिंगैः वृत्रहन्तुरिन्द्रस्य वीर्यप्रकाशकैः ।"वार्त्रहत्याय शवसेपृतनासाह्याय च इन्द्रत्वावर्तयामसि" इत्याद्यैर्मन्त्रैः । तमि-न्द्रमभिष्टुवानाः । कुसुमैरभ्यवर्षन् ॥ ३४ ॥

आत्मज्योतिः जीवाख्यज्योतिः । अलोकं अकारार्थस्य वासुदेवस्य लोकं वैकुण्ठं समपद्यत ॥ ३५ ॥

इतिश्रीमद्भागवते महापुराणे पञ्चस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वादशोऽध्यायः ॥ १२ ॥

भाषाटीका ।

इन्द्रने भी वज्र से वृत्रासुर की कुक्षि को फाड़कर बाहर निकल के पराक्रमसे गिरिशिखर के सदृश शत्रु के शिर को काट दिया ॥ ३१ ॥ ३२ ॥

इन्द्र का वज्र भी वृत्रासुर के मारने के लिये अति वेग से चारों तरफ भ्रमता हुआ उतने दिनों में वृत्रासुर के कंधर को गिरासका कि जितने में सूर्यादिक फिरते हैं अर्थात् एक वर्ष में गिराया ॥ ३३ ॥

उस समय आकाश में दुन्दुभि बाजने लगी गन्धर्व, सिद्ध और महर्षियों के समूह वृत्रासुरके मारने वाले इन्द्र के वीर्य को प्रकाश करने वाले मंत्रों से इन्द्र की स्तुति करते हुये कुसुमों की वर्षा करते भये ॥ ३४ ॥

हे राजन्! वृत्रासुर के देह से निकली जोति सबों के देखते २ साक्षात् भगवान को प्राप्त होगई ॥ ३५ ॥

इति श्रीमद् भागवत महापुराण पञ्चस्कन्ध
की भाषा टीका में द्वादश अध्याय समाप्त ।

इति श्रीमद्भागवते महापुराणे पञ्चस्कन्धे द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

## ॥ त्रयोदशोऽध्यायः ॥

—❧❧:※:❧❧—

श्रीशुक उवाच ।

वृत्रे हते त्रयो लोका विना शक्रेण भूरिद! ।
सपाला ह्यभवन्सद्यो विज्वरा निर्वृतेन्द्रियाः ॥ १ ॥
देवर्षिपितृभूतानि दैत्या देवानुगाः स्वयम् ।
प्रतिजग्मुः स्वधिष्ण्यानि ब्रह्मेशेन्द्रादयस्ततः ॥ २ ॥

राजोवाच ।

इन्द्रस्यानिर्वृतेर्हेतुं श्रोतुमिच्छामि भो मुने! ।
येनासन्सुखिनो देवा हरेर्दुःखं कुतोऽभवत् ॥ ३ ॥

श्रीशुक उवाच ।

वृत्रविक्रमसंविग्नाः सर्वे देवाः सहर्षिभिः ।
तद्वधायार्थयन्निन्द्रं नैच्छद्भीतो बृहद्वधात् ॥ ४ ॥

इन्द्र उवाच ।

स्त्रीभूजलद्रुमैरेनो विश्वरूपवधोद्भवम् ।
विभक्तमनुगृह्णन्द्भिर्वृत्रहत्यां क्व माज्र्म्यहम् ॥ ५ ॥

श्रीशुक उवाच ।

ऋषयस्तदुपाकर्ण्य महेन्द्रमिदमब्रुवन् ।
याजयिष्याम भद्रं ते हयमेधेन मा स्मभैः ॥ ६ ॥
हयमेधेन पुरुषं परमात्मानमीश्वरम् ।
इष्ट्वा नारायणं देवं मोक्ष्यसेऽपि जगद्वधात् ॥ ७ ॥
ब्रह्महा पितृहा गोघ्नो मातृहाऽऽचार्यहाऽघवान् ।
श्वादः पुल्कसको वाऽपि शुद्ध्येरन्यस्य कीर्त्तनात् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोदशे तु वृत्रस्य ब्रह्महत्यामहाभयात् ।
चिरं नष्टोऽचितः शक्रो विष्णुनेति निरूप्यते ॥ १ ॥
अनिर्वृतं शक्रमपृष्ट्वा स्वयमेव प्रतिजग्मुः ॥ २ ॥
हरेरिन्द्रस्य ॥ ३ ॥

तस्य दुःखहेतुं वक्तुं प्रस्तावकथामाह-वृत्रविक्रमेत्यादिना । आर्थयन् प्रार्थयन् बृहद्वधात् ब्राह्मणवधाद्भीतः सन् ॥ ४ ॥ एनः पापं विभक्तं विभज्य गृहीतं मार्ज्मि शोधयामि ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं वृत्रवधेन सर्वे निवृत्तास्स्वस्वलोकान् जग्मुरित्याह मुनिः वृत्र इति द्वाभ्यां । हे भूरिद ! एवं वृत्रे हते सति शक्रं विना सर्वे लोकपालैः सहिताः लोकाः सद्य एव विज्वराः विगतभयः अत एव निर्वृतानि सुखितानि इन्द्रियाणि अन्तर्बाह्यानि येषां तादृशाः अभवन् बभूवुः ॥ १ ॥

ततो देवाश्च ऋषयश्च पितरश्च भूतानि च तथा दैत्याः देवाश्च तदनुगाश्च तथा ब्रह्मा चतुर्मुखश्च ईशो रुद्रश्च इन्द्रश्च आदिशब्दादन्ये च स्वस्वस्थानानि प्रति स्वयं जग्मुः ॥ २ ॥

यदुक्तं यच्छक्रेण विना सर्वे लोकाविज्वरा निर्वृतेन्द्रियाः अभवन्निति तत्रेन्द्रस्यानिर्वृतौ देवानांनिर्वृतौ च कारणं पृच्छति राजा-इन्द्रस्येति । हे महामुने ! इन्द्रस्यानिर्वृतौ हेतुं कारणं श्रोतुमिच्छामि वृत्रवध एवेति चेत्तर्हि तेनैव देवानामप्यनिर्वृतिर्भवेदिदं तु कुतः देवानां निर्वृतिरिन्द्रस्य दुःखमितिपृच्छति-येनेति । येन वृत्रवधरूपेण हेतुना देवाः सुखिनः आसन् तस्मादेव हेतोरिन्द्रेणापि सुखिना भवितव्यं कुतः कस्माद्धेतोर्हेतोरिन्द्रस्य दुःखमभूदित्यर्थः ॥ ३ ॥

एवं पृष्टो मुनिरिन्द्रस्यानिर्वृतौ देवानां निर्वृतौ च हेतुं वक्तुं तावद्वृत्रवधोद्योगकालिकं देवानां वृत्तान्तमाह मुनिः । इत्यादिना यावदध्यायसमाप्ति । वृत्रस्य पराक्रमेण भीताः सर्वे देवा ऋषिभिस्सह वृत्रवधार्थम् इन्द्रमार्थयन् प्रार्थयन्त परस्मैपदमार्षम् एवं प्रार्थितोपीन्द्रो ब्रह्मवधाद्ब्रह्मवधात्पूर्वं कृताद्विश्वरूपवधात्कारिष्यमाणावृत्रवधाद्वाभीतः सन्नैच्छत् ॥ ४ ॥

एतदिन्द्रोक्तिमुखेन विशदयति-स्त्रीति । विश्वरूपवधोद्भवमेनः एनं मामनुगृह्णद्भिः स्त्रीभूमिजलद्रुमैश्चतुर्भिर्विभक्तं विभज्य स्वीकृतमधुना वृत्रहत्यां क्व कुत्र मार्ज्मि संशोधयेयं वृत्रहत्योत्थं पापं कावलम्ब्याहं शुद्धो भवेयं न कायप्यतस्तं न हन्यामित्यर्थः ॥ ५ ॥

एवमिन्द्रेणोक्ता ऋषयस्तं प्रत्यूचुरित्याह मुनिः । तदिन्द्रस्य वच उपाकर्ण्य ऋषयो महेन्द्रं प्रतीदं वक्ष्यमाणं वाक्यमब्रुवन् ऋषीणामुक्तिमेवाह-याजयिष्याम इत्यादिना स्वनिग्रहेणोक्तेन । हयमेधेनाश्वमेधेन यागेन करणेन त्वया कर्त्रा वयं याजयिष्यामः भगवन्तमिति शेषः । त्वं मास्मभैर्भयं माकार्षीः ते तव भद्रमेव भविष्यति ॥ ६ ॥

नन्वश्वमेधमात्रेण मत्पापं कथं निवर्तिष्यत इति शङ्कमानं प्रत्याहुः-हयमेधेनेति । परमात्मानं लोकत्रयमन्तः प्रविश्य भर्तारमीश्वरं सर्वस्य प्रशासितारं स्वतेजसा दीप्यमानं परमपुरुषं नारायणं हयमेधेनेष्ट्वा आराध्य कृत्स्नजगद्वधनिमित्तादपि पापान्मोक्ष्यसे किमुत वृत्रवधनिमित्तात्पापान्मोक्ष्यस इतीत्यर्थः

"नाम्नोऽस्य यावती शक्तिः पापनिर्हरणे हरेः ।
तावत्कर्तुं न शक्नोति पातकं पातकी नरः" ॥

इत्युक्तरीत्या स्मरणमात्रमहापातकनिवर्तनशीलत्वादिरूपमाहात्म्यशालिनोऽनन्तनाम्नो भगवतः साक्षादाराधनेन धर्मप्रतिबन्धकवृत्रवधमात्रनिमित्तं पापं न निवर्तेत किमित्यभिप्रायेण पूर्वं परमात्मानमित्याद्यनेकनाम्नामुपादानम् ॥ ७ ॥

उक्तमेव विशदमाहुः । ब्रह्महेतिद्वाभ्यां । यस्य भगवतो नाम्नः कीर्तनादेव पितृहन्त्रादयः शुध्येरन् श्वादः श्वपाकः पुल्कसः पापजातिः ॥ ८ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अश्वमेधादिकर्मज्ञानप्रतिबन्धदुष्कर्मपरिहारत्वेन तत्साधनमित्येतदस्मिन्नध्याये प्रतिपाद्यते । भूरिद बहुप्रद ! स्वर्णप्रदेति वा "स्वर्णं भूरिहिरण्यञ्च पुरटं निष्कहेमनि" इत्यभिधानाद्धिरण्यादिद्रव्यप्रद ॥ १ ॥

ततः समुद्रतीरात् ॥ २ ॥

हरेरिन्द्रस्य "अर्कमर्कटमण्डूकविष्णुवासववायवः तुरङ्गसिंहशीतांशुयमाश्च हरयो दश" इत्यभिधानम् ॥ ३ ॥

अर्थयन्नित्युभयपदी अर्थप्रातिपदिकात् कृदन्तात्तत्करोतीति णिचि कृते रूपं साधु वृद्धवधात् ब्राह्मणवधात् ॥ ४ ॥

एनो ब्रह्महत्यापापं मार्ज्मि संशोध्य परिहरामि ॥ ५ ॥

मास्म भैः भयं माकार्षीः स्म ॥ ६ ॥ ७ ॥

यन्नामसङ्कीर्तनादेते शुद्धा भवन्ति किं वक्तव्यं तद्यजनेनेति भावेनाह-ब्रह्महेति ॥ ८ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वृत्रविक्रमेत्यादि वृत्रवाक्यश्रवणानन्तरमेव ज्ञेयम् ॥१॥२॥३॥४॥

अथ यथा वृहस्पत्यवज्ञात्मकं पापं विश्वरूपवधात्मकपापान्तरस्य जनकं जातं । तथाच तच्च लोकमात्र दृष्ट्या विभक्तमपि वृत्रवधात्मकपापान्तरजनकत्वेनावशिष्टमेव दृष्ट्वा इन्द्रः स्वयमपि तदवशेषमनुभूयान्तर्भीत एव वहिस्तान् प्रत्याचक्षाणस्तमपि पूर्ववल्लोकसंग्रहार्थमपलपति-स्त्रीति ॥ ५ ॥

ऋषयस्तु जगत्स्वास्थ्याय तस्याप्यासुरभावनाशाय श्रीभगवदाज्ञाबलेन संप्रयोजितवन्त इत्यभिप्रेत्याह—ऋषय इति ॥ ६ ॥

अतो दोषाभासत्वात् प्रायश्चित्ताभासमप्युद्भावयन्ति-हयेति । तत्र वीर्यातिशयाधानज्ञापनार्थमाहुः । नारायणमिष्ट्वेति । कैमुत्यार्थमाह ब्रह्महेति । आचार्यो वेदगुरुः । कीर्तनमात्रात् । किं पुनरसकृन्नामोच्चारणमयतद्यजनादित्यर्थः ॥ तत्र स्वप्रभावमपि दर्शयन्ति अस्माभिरिति । तत्र भगवत इव स्वाभिप्रायमपि व्यञ्जयन्ति स्वखेति जगतस्तद्दयच भङ्गीभावाजाभ दोष इति ॥ ५—६ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ब्रह्मेशेन्द्रादय इति इन्द्रस्य स्वधिष्ण्यगमनं नोपपद्यते वृत्रवधक्षण एव ब्रह्महत्योपद्रवप्राप्तेः । तस्माच्चत इत्यनेन मानससरोवरादागत्य प्रवर्तितादश्वमेधात् परत इति व्याख्येयम् ॥१॥२॥

हरेरिन्द्रस्य ॥ ३ ॥

तस्य वृत्रस्य वधाय आर्थयन् प्रार्थयन्त सचेन्द्रो हन्तुं नैच्छत । वृद्धवधात् ब्राह्मणवधाद्भीतः सन् ॥ ४ ॥

एनः पापं मार्ज्मि शोधयामि ॥ ५ ॥

मास्मभैः माभैषीः ॥ ६—९ ॥

तमश्वमेधेन महामखेन श्रद्धाऽन्वितोऽस्माभिरनुष्ठितेन ।
हत्वा हि सब्रह्मचराचरं त्वं न लिप्यसे किं खलनिग्रहेण ॥ ९ ॥

॥ श्रीशुक उवाच ॥

एवं (१) सञ्चोदितो विप्रैर्मरुत्वानहनद्रिपुम् ।
ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम् ॥ १० ॥
तयेन्द्रः स्मासहत्तापं निर्वृतिर्नामुमाविशत् ।
ह्रीमन्तं वाच्यतां प्राप्तं सुखयन्त्यपि नो गुणाः ॥ ११ ॥
तां ददर्शानुधावन्तीं चाण्डालीमिव रूपिणीम् ।
जरया वेपमानाङ्गीं यक्ष्मग्रस्तामसृक्पटाम् ॥ १२ ॥
विकीर्य पलितान्केशांस्तिष्ठ तिष्ठेति भाषिणीम् ।
मीनगन्ध्यसुगन्धेन कुर्वतीं मार्गदूषणाम् ॥ १३ ॥
नभो गतो दिशः सर्वाः सहस्राक्षो विशाम्पते ! ।
प्रागुदीचीं दिशं तूर्णं प्रविष्टो नृप! मानसम् ॥ १४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वृत्रहत्याभिभूतस्येन्द्रस्य विष्णुना रक्षा कृतेति त्रयोदशेनाध्यायेन वर्णयति–वृत्रे हते इति ॥ १ ॥

स्वर्गमिति तमिन्द्रमपृष्ट्वैव देवादयः स्वयं स्वधिष्ण्यानि प्रति जग्मुः ॥ २ ॥

येन वृत्रवधेन देवाः सुखिन आसन् हरेरिन्द्रस्य दुःखं कुतोऽभूत् ॥ ३ ॥

तस्य वृत्रस्य वधार्थमयम् प्रार्थितवन्तः प्रार्थितोपि सः वृद्धवधाद्ब्राह्मणवधाद्भीतः सन् नैच्छत् ॥ ४ ॥

विश्वरूपवधोद्भवमेनः पापं स्त्र्यादिभिरनुगृह्णद्भिर्विभक्तं विभज्य स्वीकृतम् वृत्रहत्यां क्व मार्ज्मि प्रक्षालये ॥ ५ ॥

गाहम भैः भयं मा कुरु ॥ ६ ॥

जगद्वधादपि विमोक्ष्यसे किं पुनः वृत्रवधात् ॥ ७ ॥

यस्य नारायणस्य ॥ ८ ॥

---

भाषा टीका ।

श्रीशुकदेवजी बोले । हे बड़े दानी हे राजन् ! वृत्रासुरके मरने पर इन्द्र के बिना लोकपालों सहित तीनों लोक तत्काल ज्वर रहित और सुखितइन्द्रियोंवाले होगये ॥ १ ॥

देवता ऋषि पितृ भूत देवोंके पीछे जाने वाले दैत्य और ब्रह्मा॰ महादेव इन्द्रादिक सब अपने २ गृहको जाते भये ॥ २ ॥

राजाबोले । हे मुने ! इन्द्रकी ( अनिर्वृति ) अर्थात् असुख के हेतुको मैं श्रवण करनेकी इच्छा करता हूं । जिससे सब देवता सुखी होगये इन्द्रको दुःख क्यों भया ॥ ३ ॥

श्रीशुकदेवजीबोले । वृत्रासुर के विक्रमसे उद्विग्न ऋषियों सहित सब देवता उसके वधार्थ इन्द्रसे याचना किये पर ब्राह्मण के वधसे भयभीत होकर इन्द्रने इच्छा नहीं की ॥ ४ ॥

इन्द्रबोले । विश्वरूपके वधसे भया जो पाप उसको अनुग्रह करके स्त्री भूमि जल और वृक्षोंने बांटलिया वृत्रकी हत्याको कहां शुद्ध करूंगा ॥ ५ ॥

श्रीशुकदेवजी बोले । ऋषियों ने ऐसा सुन महेन्द्रसे कहा कि तुम मत डरो तुमारा मंगल होय हम तुमको अश्वमेध यज्ञ से यजन करावेंगे ॥ ६ ॥

• अश्वमेध से परमपुरुष, परमात्मा, नारायण, देव का यजन करके जगत के वध से भी निमुक्त होसक्ते हो ॥ ७ ॥

जिन हरिके कीर्त्तन से ब्रह्महत्या वाला, पितृघाती, गोघ्न, मातृहन्ता, गुरुहत्यारा, पापी, श्वभक्षी, वा पुल्कस जाती, वे भी सब शुद्ध हो जाते हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वृषाकपिमिन्द्रम् ॥ १० ॥

तया देवादिभिः कारितया स्मेत्यश्वमेधे इन्द्र एव तापं सहत् नान्यः अमुमिन्द्रं निर्वृतिर्नाविशत् ननु, धैर्यादिगुणयुक्तस्य कुतोऽनिर्वृतिस्तत्राह–ह्रीमन्तं लज्जावन्तं वाच्यतां निन्द्यताम् ॥ ११ ॥

यक्ष्मग्रस्तां क्षयरोगव्याप्ताम् ॥ १२ ॥

मीनस्येव गंधो यस्य स मीनगन्धिः सचासावसुश्च प्राणवायुस्तस्य गन्धेन ॥ १३ ॥

प्रागुदीचीं दिशं गतः संस्तूर्णं मानसं सरः ॥ १४ ॥

(१) सम्बोधित इति पाठान्तरम् ॥ टी॰

स आवसत्पुष्करनालतन्तूनलब्धभो[१]गो यदि ह्यग्निदूतः ।
वर्षाणि साहस्रमलक्षितोऽन्तः स चिन्तयन्ब्रह्मवधाद्विमोक्षम् ॥ १५ ॥
तावत्त्रिणाकं नहुषः शशास विद्यातपोयोगबलानुभावः ।
स सम्पदैश्वर्यमदान्धबुद्धिर्नीतस्तिरश्चां गतिमिन्द्रपत्न्या ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स इन्द्रः सहस्रं वर्षाणि पुष्करनालस्य तन्तूनावसत् कथंभूतः न लब्धो भोगो येन सः कुतः यद्यस्मादिह जले वसन्नग्निदूतश्च स्वयम् अग्नेश्च स्वदूतस्य हविर्भागानेतुर्जलप्रवेशासम्भवादलब्धभोग इत्यर्थः अलब्धभागइति पाठान्तरे न लब्धो यज्ञभागो येन सः ॥ १५ ॥

त्रिणाकं न अकं दुःखं यस्मिन्निति नाकः पुण्यलोकः तृतीयं नाकं स्वर्गं । ननु, मनुष्यस्य कुतः स्वर्गराज्यं तत्राह विद्यादिभिरनुभावः स्वर्गपालनसामर्थ्यं यस्य सः तर्हि तस्मिन्सति कथमिन्द्रस्य पुनः स्वर्गप्राप्तिस्तत्राह स नहुषः सम्पदैश्वर्याभ्यां यो मदस्तेनान्धा बुद्धिर्यस्य स इन्द्रपत्न्या शच्या तिरश्चाङ्गतिं सर्पयोनिं नीत उपायेन प्रापितः एवं ह्याख्यायते नहुषः किल कदाचिदिन्द्राणीमुवाच इन्द्रस्तावदहमतस्त्वं मां भजेति तया चावेदितवृत्तान्तो बृहस्पतिस्तामुवाच ब्राह्मणवाह्यशिबिकायामारुह्यागतं त्वां भजिष्यामीति ब्रूहि ततोऽसौ ब्रह्मशापात्पतिष्यतीति तया च तथोक्तो नहुषोऽगस्त्यादीन् शिबिकां वाहयामास तदा शीघ्रंसर्पसर्पेत्यगस्त्यं पदा पस्पर्श तेन कुपितेन सर्पोभवेतिशप्तो महासर्पोऽजगरोऽभूदिति ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तं महामहिमशाल्यनंतनामानं भगवन्तमस्माभिरनुष्ठितेनानुष्ठापितेन । अश्वमेधाख्यमहायागेनास्मदाज्ञयमाणविस्रंभयुक्तस्त्वं ब्रह्मणः शरीरभूतं चराचरात्मकं जगद्धत्वाऽपि पापेन न लिप्यसे किं खलस्य दुरात्मनो वृत्रस्य निग्रहेण वधप्रयुक्तेन पापेन लिप्यसे किं न लिप्यस एवेत्यर्थः ॥ ९ ॥

एवं विप्रैः सञ्चोदितः शक्रस्ततो वृत्रं जघान स च तद्वधनिमित्तेन पापेन दुःखितश्चाभूदित्याह मुनिः—एवमिति । एवं विप्रैः ऋषिभिः सञ्चोदितः प्रेरितः सम्बोधित इति पाठे सम्बोधितः मरुत्वानिन्द्रो रिपुं वृत्रमहनद्धतवान् तस्मिन्वृत्रे हते सति ब्रह्महत्या वृत्रस्य ब्राह्मणत्वाद्ब्रह्महत्येत्युक्तं वृषाकपिमिन्द्रमाससाद अन्वपद्यत ॥ १० ॥

तया देवादिभिः चारितया ब्रह्महत्यया स्मेत्यच्चारयो इन्द्र एव तापमसहदसहत नान्यस्तत अमुं इन्द्रं निर्वृतिः सुखं नाविशदिन्द्रः सुखी नाभूत्किन्तु दुःखमेव प्रापेत्यर्थः ननु, धैर्यादिगुणयुक्तस्य कुतो न निर्वृतिस्तत्राह—ह्रीमन्तं लज्जावन्तं वाच्यतां निन्द्यतां प्राप्तं गुणा धैर्यादयो न सुखयन्ति हि हि शब्देन लोकपरिपाटिः प्रदर्श्यते ॥ ११ ॥

एवमिन्द्रस्यानिर्वृतिकारणमभिधायाथ तत्पापनिस्तारप्रकारं वक्ष्यमाणस्तत्पापनिमित्तदुःखानुभवप्रकारमाह - तामिति । ततस्तां हत्यां इन्द्रो ददर्श कथंभूतामनुसृत्य पृष्ठतो धावन्तीं चाण्डालीमिव तद्वद्दवस्थितां रूपिणीम् मूर्तिभूतां जरया वेपमानानि कम्पमानानि शिरःपाण्याद्यङ्गानि यस्यास्तां यक्ष्मग्रस्तां क्षयरोगव्याप्तामसृक्पटां रजोरक्तवस्त्राम् ॥ १२ ॥

पलितान्केशान्विकीर्य क्व गच्छसि तिष्ठ तिष्ठेति भाषमाणां मीनस्य मत्स्यस्येव गन्धो यस्य स मीनगन्धिः स चासावसुश्च प्राणवायुः तस्य गन्धेन मार्गदूषणं कुर्वन्तीम् ॥ १३ ॥

ततः सहस्राक्षः इन्द्रः नभः सर्वा दिशश्च गतः भ्रमन् क्वापि विश्रान्तिमलभमान इत्यर्थः प्रागुदीचीम् ऐशानीं दिशं प्राप्य तत्रापि मानसं सरः प्रविष्टः ॥ १४ ॥

स इन्द्रः पुष्करनालतन्तून्मानससरोवरस्थकमलनालतंतूनावसत्सूक्ष्मरूपेणाश्रित्योवासेत्यर्थः कथम्भूतः अलब्धोभागो यज्ञीयभागो येन तादृशः कुतः यद्यस्मात्स्वयमग्निदूत अग्निरेव दूतः हविर्भागप्रापको यस्य तादृशः स्वदूतस्याग्नेर्हविर्भागप्रापकस्य जले प्रवेशाभावादलब्धभाग इत्यर्थः अन्तः पद्मनालस्यान्तः अलक्षितः ब्रह्महत्ययाऽलक्षित अदृष्टः ब्रह्मवधनिमित्तात्पापान्मोक्षं मोक्षोपायं विचिन्तयन् सहस्रं वर्षाण्यवसदित्यन्वयः ॥ १५ ॥

यावदिन्द्रः पद्मनालतन्तूनावसत्तावन्नहुषो राजा विद्यातपोयोगैर्महाननुभावः इन्द्राधिपत्यप्रापकं सामर्थ्यं यस्य तादृशस्त्रिणाकं स्वर्गं शशासेन्द्रलोकाधिपत्यं कृतवानित्यर्थः अकं दुःखं न विद्यते यस्मिंस्स नाकः भोगदेशः भौमपातालान्तरिक्षभेदेन त्रिविधाः सुखानुभवदेशाः तत्र तृतीयो नाकः स्वर्लोकः तर्हि तस्मिन्सति कथमिन्द्रस्य पुनः स्वर्गप्राप्तिस्तत्राह - स नहुषः सम्पदैश्वर्याभ्यां भोग्यभोगोपकरणादिसमृद्धीन्द्राधिपत्याभ्यां यो मदस्तेनान्धा विवेकशून्या बुद्धिर्गतिर्यस्य तादृशः इन्द्रपत्न्या शच्या हेतुभूतया तिरश्चाङ्गतिं सर्पयोनिं नीतः प्रापितः अत्रेदमाख्यानमवगन्तव्यं स्वर्गाधिपत्यं कुर्वन्नहुषः कदाचिदिन्द्राणीमुवाच इन्द्रस्तावदहमतस्त्वं मां भजेति । ततस्तयावेदितवृत्तान्तो बृहस्पतिस्तामुवाच इन्द्रवद्विप्राहशिबिकामारुह्य मद्गृहानागच्छसि चेत्तर्हि त्वां भजिष्यामीति ब्रूहि ततोसौ ब्रह्मशापात्पतिष्यतीति । ततः सा तं तथैवोवाच ततः स नहुषोऽगस्त्यादिऋषीन् यथादानीय स्वेनारूढां शिबिकां तैर्वाहयामास तदा स शीघ्रं सर्पसर्पेत्यगस्त्यं पदा पस्पर्श तेन च सर्पो भवेतिशप्तो नहुषो महासर्पोऽजगरोभूदिति ॥ १६ ॥

( १ ) भाग इति पाठः वीर० ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सब्रह्मेति चराचरात्पृथग्ग्रहणं ब्रह्महननदोषाधिक्यसूचनाय ॥ ९ ॥

वृषाकपिरिन्द्रः "वृषाकपिर्हरे शक्रे हरितकपौ जनार्दने" इत्यभिधानम् ॥ १० ॥

समं हत्यैतौ ब्रह्मवधस्य लोके जुगुप्सितत्वेन स्मृतावपि नात्र तथा इतीममर्थं सूचयतः सर्वस्य सुखस्य हेतुत्वात् तर्हि किमर्थमस्य निर्वृतिर्नाभूत् सुखहेतूनां शौर्यादिगुणानामुन्मीलितत्वाच्छत्रुहननेनेति तत्राह—ह्रीमन्तमिति । यद्यपि शत्रुवधसूचकशौर्यादिगुणाः सुखहेतवस्तथापि ते ब्रह्महत्यया तप्तस्य नो सुखयन्ति कुतः लज्जाकरत्वात् इन्द्रादिदेवानां तदानीन्तनं कर्म प्रारब्धकर्मणा प्राप्तदुःखस्य सूचकम् "प्रारब्धकर्मणैवैषां क्लृप्त दुःखस्य सूचकम् । तदानीन्तनकर्मस्याद् व्रणहेतुर्यथा रणः ॥ देवादीनां स्थितप्रभावान्नैवान्यथा भवेत् । प्रारब्धमपि तु क्वापि किञ्चिद्विघटितं भवेत्" इति ॥ ११ ॥

असृक्पटां रक्तरञ्जितपटां रजस्वलामिव ॥ १२ ॥

मीनगन्धिनः चीर्णमीनधारिण्यश्च चण्डाला दाशादयो ये तेषां यो दुर्गन्धः तादृशेनासुगन्धेनासुरभिणा ॥ १३ ॥

ततः सहस्राक्षस्तां परिहर्तुं सर्वा दिशो गत्वा विहायसा नभो गतः समर्थयेक्षया प्रागुदीचीं दिशं दृष्ट्वा तां प्रविष्टो मानसं नाम सरः प्रापेत्यन्वयः ॥ १४ ॥

तन्तूनावसदित्युपान्वध्याङ्वसइति सप्तम्यर्थे द्वितीया अग्निर्दूतो यस्य सोऽग्निदूतः यावदिन्द्रः सरसि पुष्करनालतन्तुष्ववसत्तावन्नहुषस्त्रिणाकं स्वर्गं भूम्यन्तरिक्षं स्वर्गस्थानं वा शशासेत्यन्वयः अत एव त्रैलोक्यपालनलब्धसर्वैश्वर्यभोगरहितः ब्रह्मवधाद्रूपसद्दोषमोक्षं तावच्च नाकमिति केचित्पठन्ति अत्र चशब्द एवार्थे नहुष इत्यनेन सम्बद्ध्यते अन्ययोगव्यवच्छेदार्थः तिरश्चाङ्गतिम् आजगरीं स्थितिम् ॥ १५ ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

एवं तस्यात्मनि पापस्य नात्युपपत्तावपि साभिमाना तदधिष्ठात्री तु तमभिभवितुमुद्यतेत्याह-ब्रह्महत्येति ॥ १० ॥

ततश्च तया सन्निहितया हेतुभूतया यस्तापस्तद्पीन्द्रोऽसहत् तेन परामर्थं न प्राप्तवान् । तदेवमपि निर्वृतिस्त्वमुं नाविशत् । तत्र हेतुः ह्रीमन्तमिति ॥ ११—१३ ॥

ततस्तत् सङ्कीर्णाय नभ आकाशं गतः । सर्वाश्च दिशो गतः । तूर्णं तदनुद्रव विदूरं यथा स्यात् ॥ १४ ॥

अग्निदूतस्तत् सहायोऽयं । तस्मात् जले न तिष्ठेदित्यलक्षितस्तया सर्वैरन्यैश्च अतस्तत्रास्तित्वासम्भावनया तमुद्दिश्य हविर्भागादानादलब्धभोगश्चेत्यर्थः ब्रह्मवधात्तदधिष्ठात्र्यास्तस्याः सकाशान्मोक्षं तदुपायं श्रीभगवन्तमित्यर्थः । अतम्भरध्यानेति पश्य मायात् ॥ १५ ॥

नहुषः शशासेति वृत्रवधवृत्तं सप्तममन्वन्तरगतमिति लक्ष्यते । तथापि षष्ठमन्वन्तरहतानां नमुच्यादीनां कीर्त्तनं तत्प्रतिनिधिरूपत्वेन तन्नाम्ना केषाञ्चिदपेक्षयेति ज्ञेयम् ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मिन् वृत्रे हते सति वृषाकपिमिन्द्रम् । अत्र प्रायश्चित्तत्वेन पापाचरणात् पूर्वतोऽपीयमतिप्रबला दुःखभोगेन विना केवलेन प्रायश्चित्तेन न शाम्येदित्यत एव ते तदानीमश्वमेधेन तं नैव याजयामासुरिति ज्ञेयम् । ते ऋष्यादयोऽपि प्रायश्चित्तत्वेन पापप्रवर्त्तनाज्जन्यस्यापराधस्य फलं चिरकालव्यापिनीं दुरवस्थामिन्द्रपदारूढेन नहुषेण तदानीमेव प्रापिता इति च ज्ञेयम् ॥ १० ॥

असहत् असहत निर्वृतिरानन्दः अमुं इन्द्रं । ननु, धैर्यादिगुणयुक्तस्य तस्य कुतोऽनिर्वृतिस्तत्राह—ह्रीमन्तं जनं वाच्यतां ब्रह्मघातीति प्रवादम् ॥ ११ ॥

यक्ष्मा महारोगः ॥ १२ ॥

मीनस्येव गन्धो यस्य स मीनगन्धिः स चासावसुः श्वासवायुस्तस्य गन्धेन ॥ १३ ॥

प्रथमं नभ आकाशं गतः तत्रापि तामनुधावन्तीं दृष्ट्वा सर्वा दिशो गतः । तत्र तत्रापि तथा दृष्ट्वा प्रागुदीचीम् ऐशानीं गतः सन् तत्र तूर्णं मानसं सरः प्रविष्टः ॥ १४ ॥

पुष्करस्य कमलस्य नाले ये तन्तवः तत्र अलक्षितोऽलक्षितामस्थः अलब्धभोगः यद्यतोऽग्निदूतः अग्नेः स्वदूतस्य हविर्भागानेतुः जले प्रवेशासम्भवादिति भावः । यद्यप्यग्निना जलं न दुष्प्रवेशं तदन्तः स्थिताय वरुणायापि हविर्वहनात् तदपि तदीयं जलं दुष्प्रवेशमेव रुद्रानुचरैः रक्ष्यमाणत्वात् अत एव सर्वत्राभिगामिनी ब्रह्महत्यापि तत्र गन्तुं न शशाकेति ज्ञेयं । साहस्रं सहस्रं वर्षाणि उपाप्य अलक्षितः सर्वैरदृष्टः ॥ १५ ॥

त्रिनाकं तृतीयं नाकं स्वर्गं । ननु, मनुष्यस्य कुतः स्वर्गराज्यं तत्राह — विद्यादिभिरनुभावः सर्वतेजोहरणसामर्थ्यं स्वर्गपालनसामर्थ्यञ्च यस्य सः तस्मिन् सति पुनरिन्द्रस्य कुतः स्वर्गप्राप्तिस्तत्राह—स नहुषः सम्पदैश्वर्याभ्यां यो मदस्तेनान्धा बुद्धिर्यस्य स इन्द्रपत्न्या तिरश्चाङ्गतिं सर्पयोनिं नीतः उपायेन प्रापितः । एवं ह्युपाख्यायते नहुषः 'कदाचिदिन्द्राणीमुवाच इन्द्रस्त्वहमतस्त्वं मां भजेति । तयाचावेदितवृत्तान्तो वृहस्पतिस्तामुवाच ब्राह्मणवाह्यशिविकामारुह्यागतं त्वामहं भजिष्यामीति ब्रूहि । ततोऽसौ ब्रह्मशापात्पतिष्यतीति । तयाच तथैवोक्तः नहुषः अगस्त्यादीन् शिविकां वाहयामास तदा शीघ्रं सर्पसर्पेत्यगस्त्यं पदा पस्पर्श । तेन च कुपितेन शप्तोऽजगरोऽभूदिति ॥ १६ ॥

---

### श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

तं नारायणम् ॥ ९ ॥

तस्मिन् वृत्रे हते याजकैर्ब्राह्मणैर्यदुत्पादितः तस्य वृत्रस्य ब्राह्मणत्वात्तद्वधजा ब्रह्महत्या वृषाकपिमिन्द्रमाससाद अन्ववर्तत ॥ १० ॥

इन्द्रस्तया ब्रह्महत्यया तापमसहत् अतोऽमुमिन्द्रं निर्वृतिर्नाविशत् स सुखितो नैवाभूत् । ननु, बहुगुणयुक्त एकेन दोषेण कुतः सुखितोनाऽभूदत्राह—ह्रीमन्तं वाच्यतां निन्द्यतां प्राप्तं गुणा न सुखयन्ति ॥ ११ ॥

ततो गतो ब्रह्मगिरोपहूत ऋतम्भरध्याननिवारिताघः।
पापस्तु दिग्देवतया हतौजास्तं नाभ्यभूदवितं विष्णुपत्न्या ॥ १७ ॥
तं च ब्रह्मर्षयोऽभ्येत्य हयमेधेन भारत !।
यथावद्दीक्षयाञ्चक्रुः पुरुषाराधनेन ह ॥ १८ ॥
अथेज्यमाने पुरुषे सर्व (१) देवमयात्मनि।
अश्वमेधे महेन्द्रेण वितते ब्रह्मवादिभिः ॥ १९ ॥
स वै त्वाष्ट्रवधो भूयानपि पापचयो नृप !।
नीतस्तेनैव शून्याय नीहार इव भानुना ॥ २० ॥
स वाजिमेधेन यथोदितेन वितायमानेन मरीचिमिश्रैः।
इष्ट्वाऽधियज्ञं पुरुषं पुराणमिन्द्रो महानास विधूतपापः ॥ २१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यक्ष्मणा क्षयरोगेण ग्रस्ताम् असृक्पटां रक्तवसनाम् १२॥ पलितान् शुक्लान् मीनस्येव गन्धो यस्य स मीनगन्धिः श्वासावसुर्निश्वासवातश्च तस्य गन्धेन मार्गदूषणां कुर्वन्तीम् ॥१३॥ तद्दर्शनानन्तरं नभः सर्वा दिशश्च गतः प्रागुदीचीं गतस्तत्रापि मानसं सरः प्रविष्टः ॥ १४ ॥

तत्र तु स इन्द्रः पुष्करनालतन्तून् सहस्रमेव साहस्रं वर्षाणि यावसत् सूक्ष्मरूपेण तत्तन्तून् आश्रित्योवास कथम्भूतः अलब्धः अग्निदूतः अग्निसहायस्तथापि अलब्धभोगः विष्णुध्यानोत्थितयोगनिष्ठत्वात्स्वकभोग इत्यर्थः यद्यतो ब्रह्मवधान्मोक्षं स्यात्तन्मरश्च चिन्तयन् ध्यायन् ॥ १५ ॥

यावदिन्द्रः कं सुखं तद्विपरीतमकं दुःखं नास्त्यकमस्मिन्निति नाकः तस्माद्दिवसलोपाभावस्तृतीयो नाकस्त्रिनाकस्तं त्रिनाकं शशास। तावद्विद्यादिभिरनुभावः स्वर्गपालनसामर्थ्यं यस्य स नहुषः शशास तदा सम्पदैश्वर्याभ्यां यो मद अहमेवेन्द्र इति तेनान्धा लुप्तविवेका इन्द्राणी मां भजत्विति दर्शयन् दोषवती सोऽयं स इन्द्रपत्न्या तज्ज्ञशोपायद्वयाऽऽगस्त्यशापद्वारा तिर्यग्गतिं सर्पभावं नीतः ॥ १६ ॥

---

भाषाटीका।

इस परमात्माको हमलोगों से अनुष्ठित महामख अश्वमेध यजन करके ब्राह्मणों सहित चराचर जगत कोभी मार पापसे लिप्त न होंगे, फिर खलके निग्रहसे तो कहना ॥ ९ ॥

श्रीशुकदेवजी बोले ॥ इस प्रकार ब्राह्मणों के प्रेरणासे वृत्रको मारा ॥ वृत्रके मरते ही ब्रह्महत्या भी इन्द्रको गई ॥ १० ॥

इस हत्यासे इन्द्रने ताप सहा सुख इन्द्रको नहीं प्राप्त क्योंकि लज्जावान जो निन्द्यता को प्राप्त हो जाय तो गुण भी उसको सुख नहीं देते ॥ ११ ॥

जरावस्थासे कम्पित गात्र वाली, क्षयरोगसे ग्रस्त, रुधिर लिप्त वस्त्रवाली, सफेद केशोंको छोड़कर रूपवती चाण्डालिनी के सदृश इन्द्रके पीछे दौड़ती हुई खड़ारह २ ऐसे कहने वाली, मीनके गंध सदृश दुर्गन्धसे मार्गका दूषण करने वाली, उस हत्याको इन्द्रने देखा ॥ १२ ॥ १३ ॥

फिर इन्द्र आकाश और सर्व दिशाओं में प्राप्तहोकर अतिशीघ्र (प्रागुदीची) पूर्वोत्तर दिशामें जाकर मानससरमें प्रविष्ट हुआ ॥ १४ ॥

वह इन्द्र सहस्र वर्ष तक कमल की नालीके भीतर तन्तुनमें वास करता भया वहां इन्द्रको अपना भाग नहीं मिलता रहा क्योंकि इसका भाग लेजाने वाला दूत तो अग्नि है उसका जलमें प्रवेश कहां ? इसप्रकार अलब्धान्न हो कर रहा और सदा यही चिन्ता रही कि इस ब्रह्म वधसे कैसे छूटेंगे ॥ १५ ॥

तब तक अपने विद्या तप योग बलके प्रभावसे नहुष राजाने स्वर्ग का राज्य किया। राजा जब सम्पत्त ऐश्वर्य से मदान्ध बुद्धि हो गया तब इन्द्रकी पत्नीने तिर्यग् गति को अर्थात् सर्पपना को प्राप्त किया ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तत इन्द्रः स्वर्गं गतः प्राप्तः कथम्भूतः ब्रह्मगिरा ब्राह्मणाध्यादेशेनोपहूतः सन् ऋतंभरः सत्यपालको हरिस्तस्य ध्यानेन निवारितमघं येन प्रागपि तु पापो ब्रह्मवधस्तमिन्द्रं नाभ्यभूत् तस्याभिभवं नाकरोत् कुतः दिग्देवतया प्रागुदीच्यां दिशि स्थितया श्रीरुद्रेण अवितं रक्षितं सन्तम् ॥ १७ ॥

पुरुषस्य हरेराराधनं यस्मिंस्तेन ॥ १८ ॥

सर्ववेदमयात्मनीति वा पाठः ब्रह्मवादिभिर्विततेऽनुष्ठितेऽश्वमेधे महेन्द्रेणेज्यमाने पुरुषे सति ॥ १९ ॥

तेनैव पुरुषेणैव शून्याय नीतः नाशित इत्यर्थः ॥ २० ॥

---

(१) सर्व इति, विजय० पाठान्तरम्। वेद इति च० श्रीधर पाठान्तरम्।

इदं महाख्यानमशेषपाप्मनां प्रक्षालनं तीर्थपदानुकीर्तनम् ।
भक्त्युच्छ्रयं भक्तजनानुवर्णनं महेन्द्रमोक्षं विजयं मरुत्वतः ॥ २२ ॥
पठेयुराख्यानमिदं सदा बुधाः शृण्वन्त्यथो पर्वणि पर्वणीन्द्रियम् ।
धन्यं यशस्यं निखिलाघमोचनं रिपुञ्जयं स्वस्त्ययनं तथाऽऽयुषम् ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां इन्द्रविजयोनाम
त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अधिकृता यज्ञा येन तम् ॥ २१ ॥

पाठादिविधातुमाख्यानं स्तौति-इदमिति । प्रक्षाल्यतेऽनेनेति प्रक्षालनं तीर्थपदस्यानुकीर्तनं यस्मिन् भक्तेरुच्छ्रयो यस्मिन् भक्तजनानामनुवर्णनं यस्मिन् महेन्द्रस्य मोक्षो यस्मिन् मरुत्वतो विशेषेण जयो यस्मिन् ॥ २२ ॥

इन्द्रियं तत्पाटवकरम् इन्द्रसम्बन्धीति वा आयुषमायुष्यम् ॥२३॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत इन्द्रः स्वर्गं गतः प्राप्तः कथम्भूतः ब्रह्मगिरा ब्राह्मणवाक्येन उपहूतः सन् ऋतम्भरः सत्यस्य भर्त्ता श्रीमन्नारायणः तस्य ध्यानेन निवारितमघं ब्रह्महत्यारूपं यस्य तादृशः तमागच्छन्तं दिग्देवतया प्रागुदक्स्थितमानसरोवरस्थपद्मस्थया देवतया विष्णुपत्न्या श्रीमहालक्ष्म्याश्रितं रक्षितं पद्मतन्तुषु वसन्तं इन्द्रमत एव हतमोजो बलं यस्य तादृशः पापो ब्रह्मवधः नाभ्यभूत्पद्मस्था लक्ष्मीर्भगवद्ध्यानपरत्वादिन्द्रं पापाद्ररक्षेत्यर्थः ॥ १७ ॥

अथ हत्यानिस्तारप्रकारमाह-तमित्यादिनाविधूतपाप इत्यन्तेन। तमागतम् इन्द्रमृषयोऽभ्येत्यागत्य हे भारत ! पुरुषाराधानेन परमपुरुषाराधनरूपेण हयमेधेन यथाविधि दीक्षयाञ्चक्रुः हयमेधं कर्तुन्दीक्षितं कृतवन्त इत्यर्थः हेतिहर्षखेदेचाहो इन्द्रस्येयंविधापत्स्येति ॥ १८ ॥

अथ ब्रह्मवादिभिर्वेदवादिभि ऋषिभिरार्त्विज्यकृतैर्वितते विस्तृते यथावत् क्रियमाणेऽश्वमेधे इन्द्रेण यजमानेन सर्वदेवतानामन्तरात्मभूते सर्वस्यप्रशासितरि परमपुरुषे इज्यमाने आराध्यमाने सति ॥ १६ ॥

भूयानपि स त्वाष्ट्रवधः वृत्रवधनिमित्तः पापः हे परन्तप ! तेनैवाश्वमेधेन शून्याय नीतः प्रापितः शून्यतां प्राप्त इत्यर्थः यथा भानुना सूर्येण नीहारः शून्यतां प्राप्यते तद्वत् ॥२०॥

मरीचिमिश्रैः मरीचिसहितैः तत्प्रभृतिभिरित्यर्थः वितायमानेन अनुष्ठीयमानेन यथोक्तेन हयमेधेनाऽधियज्ञं यज्ञेषु प्रधानतया वर्त्तमानं पुराणं पुरुषं इष्ट्वाराध्य स वै इन्द्रः विधूतं निरस्तं वृत्रहत्या रूपं येन तादृशः महाविष्णुप्रतिपक्षः अवाप्तराज्यसम्पच्चासीत् ॥ २१ ॥

उक्तं वृत्रवधाख्यानपठनश्रवणादिफलं वदन् तद्विशिनष्टि-इदमिति द्वाभ्यां । महेन्द्रस्य मोक्षः ब्रह्मवधनिमित्तात्पापान्मोक्षप्रतिपादनं यस्मिन्मरुत्वत इन्द्रस्य विशेषेण जयः तत्प्रतिपादनं यस्मिन् तादृशं तदिदं महाख्यानं गुणवत्तरं तदेवाह अशेषाणां पापानां प्रक्षालनं शोधकं निवर्त्तकं तत्र हेतुस्तीर्थपदस्यानुकीर्त्तनं यस्मिंस्तादृशं किञ्च भक्त्युच्छ्रयं भगवद्भक्तेरुच्छ्रयोऽभिवृद्धिर्यस्मात्तथाभूतं तत्र हेतुः भक्तजनानां भगवद्भक्तजनानामनुवर्णनं यस्मिन् तत् ॥ २२ ॥

किञ्चेन्द्रियं इन्द्रस्य लिङ्गमिन्द्रियम् इन्द्रः प्रत्यगात्मा तस्य लिङ्गं ज्ञापकं तद्याथात्म्यप्रतिपादनयुक्तत्वादस्येति भावः यद्वा इन्द्रस्येदमिन्द्रियं इन्द्रियमिन्द्रलिङ्गमिति सूत्रे इति करणादर्थान्तरे तन्निपातनाभ्युपगमात् यद्वा इन्द्रियशब्दस्तद्वलसम्पादके उपचारात् इन्द्रियवृद्धिकरमित्यर्थः यद्वा इन्द्रः परमेश्वरः इदिपरमैश्वर्ये इति धातुपाठात् तेन जुष्टं प्रीतिविषयत्वेन परिगृहीतं श्रवणादिद्वारा भगवत्प्रीत्यापादकमित्यर्थः धन्यं धनप्राप्तिसाधनं यशस्करं निखिलानामघानां मोचनं यस्मात्तथाऽशेषपाप्मनां प्रक्षालन मित्यनेन पापविनाशकत्वमुक्तम् अखिलाघमोचनमित्यनेन तु पापाश्लेषकरत्वमुक्तमित्यतो न पौनरुक्त्यं स्वस्त्ययनं मङ्गलावहं तथा आयुष्करं सर्वाण्येतानि फलानि श्रवणपठनादिना भवन्ति न स्वरूपेणेत्यतोऽवश्यमुक्तिफलार्थिभिः तदाख्यानपठनादिकं कार्यमित्युक्तं पठेयुरित्यर्द्धेन यत एतत्फलमथोऽतो बुधाः सदा पठेयुः पर्वणि पर्वणि प्रतिपर्व शृण्वन्त्यथो शृणुयुरित्यर्थः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपहूत ऋतम्भरेति ब्रह्मगिरा विरिञ्चवाक्येनोपहूतः बृहस्पतिवाक्येन वा अग्न्याख्यदूतमुखेनेत्यर्थः ततः मानससरसः ऋतम्भरस्य सत्यपालकस्य नृसिंहस्य ध्यानेन निवारितमंहो येन स तथा सर्वगतः श्रीनारायण इति प्रह्लादोक्तवचनं सत्यं कर्तुं स्तम्भादाविरभूदिति यदतो हरिर्ऋतम्भर इति वेदवादिभिरुपहृतत्वाद्धरेस्तन्नाम नन्विदानीमृतम्भरध्यानेन निरस्तं गच्छेत् पूर्वं तेनाभिभूत इन्द्रः किं तत्राह—पापश्चेति । पापो ब्रह्महत्याख्यो जीवश्च तमिन्द्रं नाऽभ्यभूदभिभूतं नाकरोदित्यन्वयः अत्र हेतुगर्भविशेषणमाह—दिग्देवतयेति । इन्द्रहितकारिण्या दिग्देवतया हृतमोजो बलं यस्य इन्द्रमन्विष्य सर्वदिक्षु भ्रमतः स तथा कस्मात् गङ्गाजलपरिप्लुतमानससरसि प्रविष्टत्वेन विष्णुपत्न्याऽवितं रक्षितं तस्माच्चेति ॥ १७ ॥

ऋतम्भरध्यानादिनाभिभवाभावे तदभिभवः स्यात्स्वरूपतो नाशाभावादिति तत्राह—तमिति । भगवदविपर्ययेणाऽश्वमेधेन स्वरूपनाशश्च कथं स्यादित्यत उक्तं पुरुषेति । अत्र पुरुषशब्देन विष्णुरुच्यते "सहस्रशीर्षा पुरुष" इति श्रुतेः- इत्यनेन श्रीहरिमाहात्म्यज्ञानपूर्वकं तत्करणाभावेन तत्फलं स्यादिति विपक्षे बाधकं सूचयति "अहं हि सर्वयज्ञानां भोक्ता च" इति स्मृतेः ॥ १८ ॥

यत एवं साङ्गो यज्ञः अथ तस्मान्महानपि त्वाष्ट्रवधस्तेन यज्ञेन शून्याय नीत एव सर्वात्मना नष्टोऽभूत्क्रियाया विशिष्टत्वादित्यन्वयः कथं विशिष्टत्वमित्यतस्तत्पर्याप्तुकमेव विशिनष्टि—इज्यमान इति । ब्रह्मवादिभिर्वितते विस्तृते अश्वमेधे यज्ञे इन्द्रेण सर्वभूतानां प्रधानाश्वान्तर्यामी च सर्वभूतमयात्मा तस्मिन्यज्ञपुरुषे इज्यमाने । सर्वदेवमयात्मनीति पाठे स एवार्थः वा इत्यनेन "ज्ञानाग्निः सर्वकर्माणि" इति वचनाद्भगवतः ज्ञानेन सर्वात्मना पापस्य नाशोऽप्यश्वमेधेनेन्द्रस्य महत्त्वातिशयो भवतीति सूचयति ॥ १९—२० ॥

तत्कुतोऽवगम्यत इत्यत्राह—स वाजीति । मरीचिमिश्रैर्मरीचिमुख्यैः । ज्ञानाद्विधूतपापोपि इष्ट्वा महानासेत्यर्थः ॥ २१ ॥

नेदमिन्द्रेण स्वार्थतयाऽनुष्ठितं किं तु लोकोपकारकत्वेन । यतोऽस्येन्द्रस्य पापं नष्टं तच्चरितस्य श्रवणादिना सर्वाभीष्टानि सिद्ध्यन्तीति । तत्स्तौति—इदमिति । तीर्थपदस्य हरेरनुकीर्तनं यस्मिंस्तत्तथा भक्तेरुच्छ्रयो यस्मात्तत्तथा भक्तजनस्यानुवर्णनं यस्मिन् तत्तथा महेन्द्रस्य पापन्मोक्षो यत्र तत्तथा मरुत्वतो विशिष्टजयो यस्मिंस्तत्तथा ॥ २२ ॥

इन्द्रियमिन्द्रियाणां शक्तिप्रदं किं विषयमाख्यानमित्यतो इन्द्रियं इन्द्रसम्बन्धि वेत्युक्तम् ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोदशोऽध्यायः ॥ १३ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पापस्तदधिष्ठातृरूपस्तु तद्दिग्देवताहृतौजाः न पुनस्तदनुदृशा समर्थो बभूव । तत्र हेतुः । विष्णुः पतिरर्चीष्टदेवो यस्या ईशानरूपायास्तादृश्येति । कृत भगवदाश्रयोऽयं कथमनेनाभिभाव्येतेतिभावः ॥ १७ ॥

ततो लोकापवादायत्त्वेऽपि यस्तद्पाप प्रचारः सोऽपिब्रह्मर्षिभिर्नाशित इत्याह ते चेति त्रिभिः ॥ १८ ॥

तत्र यथेति युग्मकम् ॥ १९—२३ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भस्य
त्रयोदशोऽध्याय ॥ १३ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ब्रह्मणो ब्राह्मणानाञ्चगिरा त्वामश्वमेधेन याजयिष्याम इति वाक्येनोपहूतः सन् ततोमानसात् सरसः सकाशात् स्वर्गं गतः ऋतम्भरः सत्यपालको विष्णुः । अघं प्रायश्चित्तवर्जनेन पापाचरणलक्षणोऽपराधः । पापः ब्रह्महत्या लक्षणं पापं पुंस्त्वमपि ईशानदिग्देवतया श्रीरुद्रेण विष्णुपत्न्या मानस सरसः कमलवनस्थितया लक्ष्म्या ॥ १७—२१ ॥

भक्त्युच्छ्रयं भक्त्युत्कर्षयुक्तं । मरुत्वत इन्द्रस्य विशेषेण जयो यत्र तत् इन्द्रियं इन्द्रियपाटवकरं आयुष्यमायुष्करम् ॥ २२—२३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठे त्रयोदशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १३ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विष्णुपत्न्या दिग्देवतया विष्णुभक्तेन दिक्पालेन श्रीरुद्रेणावितं तमिन्द्रं हृतौजाः सन् पापो नाऽभ्यभूत् ध्यानार्हं न कृतवान् ततस्तदनन्तरम् ऋतम्भरस्य विष्णोर्ध्यानेन निवारितमघं ब्रह्मवधरूपं पापं येन सः ब्रह्मगिरा ब्राह्मणवाक्येन अभिप्रापितेनोपहूतो गतः स्वर्गं प्राप्तः ॥ १७ ॥

एवं विष्णुध्यानेन निष्पापोपीन्द्रः कर्मानुष्ठानेन प्रत्यक्षप्रायश्चित्तेन लोकसंग्रहार्थं मुनिभिर्निष्पापः कृत इत्याशयेनाह—तमित्यादि । पुरुषस्य विष्णोराराधनं यस्मिन् तेन ॥ १८ ॥

सर्वदेवमय आत्मा यस्य तस्मिन् सर्वदेवान्तर्यामिनीत्यर्थः ॥ १९ ॥

त्वाष्ट्रवधः अपि अन्योपि भूयान् पापचयः तेनैव पुरुषेणैव शून्याय नीतः ॥ २० ॥

अधियज्ञं यज्ञेषु भोक्तृतया वरदत्वेन च वर्तमानम् ॥ २१ ॥

प्रक्षालयतेऽनेनेति प्रक्षालनं तीर्थपदस्य हरेरनुकीर्तनं यस्मिन् भक्तेरुच्छ्रयो यस्मिन् भक्तजनानामनुवर्णनं यस्मिन् महेन्द्रस्य मोक्षो यस्मिन् मरुत्वतो विशेषेण जयो यस्मिन् एवं भूतमिदं महाख्यानम् ॥ २२ ॥

बुधाः सदा पठेयुः श्रृण्वन्ति श्रृण्वन्तु अथो नित्यमवकाशाभावे पर्वणि पर्वणि पठेयुः श्रृण्वंतु च कथंभूतमिन्द्रियमिन्द्रसम्बन्धि इन्द्रपोषणविषयमित्यर्थः आयुष्यमायुष्यम् ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रियोदशोध्यायार्थप्रकाशः ॥ १३ ॥

———

भाषा टीका ।

पश्चात् हरि ध्यान से निवृत्त पापवाला इन्द्र ब्राह्मण वाक्यसे स्वर्गको गया । ब्रह्मवध का पाप तौ श्रीरुद्रकी कृपा से नष्ट पराक्रम वाला रहा । इन्द्रका पराभव न करसका क्योंकि इन्द्रकी रक्षा श्रीलक्ष्मीजीने करी रही ॥ १७ ॥

हे भारत ! ब्रह्मर्षि लोग इन्द्रके पास आकर इन्द्रको भग वदाराधन रूप अश्वमेधकी दीक्षा कराते भये ॥ १८ ॥

तदनन्तर ब्रह्मवादियों ने अश्वमेधका विस्तार किया । इन्द्रको सर्वदेवमय परम पुरुष श्रीनारायणका यजन करने से हे राजन् ! वह वृत्र का वध बडा भारी पाप का ढेर भी रहा तौभी उसी यजनसे जैसे सूर्यसे कुहर नष्ट होजावै तैसे नष्ट होगया ॥ १९ ॥ २० ॥

इस प्रकार मरीचि आदि महर्षियोंके कराये हुये अश्वमेध यज्ञसे अधियज्ञ पुराण पुरुष श्रीनारायणका यजन करके इन्द्र विगत पाप वाला होगया ॥ २१ ॥

यह महाख्यान संपूर्ण पापों का प्रक्षालन करने वाला है इसमें तीर्थपाद श्रीहरिका कीर्तन है भक्तिका उल्लास है भक्तजनों का वर्णन है इन्द्रके दुःख का मोक्ष तथा इन्द्रका विजय है ॥ २२ ॥

जो बुधजन इस आख्यान को सदा पर्व२ में पढेंगे सुनेंगे उनको धन यश स्वस्ति आयुका देने वाला है तथा उनके पापों को हटाने वाला है और शत्रुओं को जिताने वाला है ॥ २३ ॥

इति श्रीमद्भागवत षष्ठस्कन्ध

की भाषाटीकामें त्रयोदश अध्याय

समाप्त ॥ १३ ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे त्रयोदशोऽध्यायः समाप्तः ॥ १३ ॥



## ॥ चतुर्दशोऽध्यायः ॥

परीक्षिदुवाच ।

रजस्तमःस्वभावस्य ब्रह्मन्वृत्रस्य पाप्मनः ।
नारायणे भगवति कथमासीद्दृढा (१) मतिः ॥ १ ॥
देवानां शुद्धसत्त्वानामृषीणां चामलात्मनाम् ।
भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते ॥ २ ॥
रजोभिः समसङ्ख्याताः पार्थिवैरिह जन्तवः ।
तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः ॥ ३ ॥
प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तमाः ।
मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिध्यति ॥ ४ ॥
मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ! ॥ ५ ॥
वृत्रस्तु स कथं पापः सर्वलोकोपतापनः ।
इत्थं दृढमतिः कृष्ण आसीत्सङ्ग्राम उल्वणे ॥ ६ ॥
अत्र नः संशयो भूयान् श्रोतुं कौतूहलं प्रभो ! ।
यः पौरुषेण समरे सहस्राक्षमतोषयत् ॥ ७ ॥

सूत उवाच ।

परीक्षितोऽथ संप्रश्नं भगवान्बादरायणिः ।
निशम्य श्रद्दधानस्य प्रतिनन्द्यवचोऽब्रवीत् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वृत्रस्य ध्यानभक्त्यादि श्रुत्वा पृष्टः परीक्षिता ।
हेतुमाह चतुर्भिस्तत्प्राग्जन्मचरितोक्तिभिः ॥ १ ॥
चतुर्दशे तु सहसा कृच्छ्रलब्धे सुते मृते ।
चित्रकेतोररतिस्नेहादतिशोको निरूप्यते ॥ २ ॥

रजश्च तमश्च स्वभावो यस्य ॥ १ ॥ २ ॥

भक्तेर्दुर्लभत्वं प्रपञ्चयति-रजोभिरिति त्रिभिः । पार्थिवै रजोभिः परमाणुभिः समाः सङ्ख्याताः अनन्ता इत्यर्थः जन्तवो जीवाः तेषां मध्ये ये केचन कतिपये श्रेयो धर्ममीहन्ते कुर्वन्ति ॥ ३ ॥ मुच्येत गृहादिसङ्गाद्विमुच्यते सिध्यति तत्त्वं जानाति ॥ ४ ॥ ५ ॥ ६ ॥

न चेन्द्रभिया कृष्णं शरणं गत इत्याह—यः पौरुषेणेति ॥ ७ ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

“अहं समाधाय मनो यथाह सङ्कर्षणस्तच्चरणारविन्दे” इत्यनेन वृत्रवाक्येन तस्य सङ्कर्षणोपदेशावगतस्वात्मपरमात्मादियाथात्म्यवत्त्वमुक्तं तदेव विस्तरेण शुश्रूषुः पृच्छति राजा—रज-

---

(१) रतिरिति पाठान्तरम् ॥ विज०

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्यादिना सद्स्त्वमतोपपादित्यन्तेन । हे ब्रह्मन् ! रजस्तमश्च स्वभावो यस्यात एव पाप्मनः पापकारिणः भासुरत्वादिति भावः भगवति नारायणे दृढा निश्चला सिद्धिपर्यन्ता मतिर्भक्तिः हे महामुने ! कथमासीत्तदुपदेशेऽप्यासुरस्वभावस्य सिद्धिपर्यन्ता भगवद्भक्तिर्दुर्लभेति भावः ॥ १ ॥

भक्तेर्दौर्लभ्यमेव प्रपञ्चयति—शुद्धसत्वानां केवलसत्वप्रचुराणां देवानां तादृशाममलचित्तानामृषीणामेव प्रायशो मुकुन्दचरणे भक्तिर्नजायते तेषामपि दुर्लभा कथमस्य सञ्जातेति भावः ॥२॥

"मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानांकश्चिन्मां वेत्ति तत्वतः" ॥

इत्युक्तरीत्या तावत्पृथिव्या रजोभीरेणुभिः सह समसंख्याकाः जन्तवः तद्वदसंख्याकाः जन्तवः तेषां जन्तूनां ये केचन मनुष्यादय एव शास्त्रोक्तधर्माधिकारिणस्तावन्मनुष्यादिजन्म दुर्लभमेवेति भावः ॥ ३ ॥

तेषामपि केचित्प्रायशस्त्रिवर्गरूपश्रेयःप्रवणा मुक्तये न यतन्ते तावन्मुमुक्षुतैव दुर्लभेति भावः देवान्मुमुक्षूणां केषांचित्सहस्रेषु कश्चिन्मुच्येत रागादिदोषैर्मुच्येत सिध्यति लब्धयोगो भवति ॥४॥

मुक्तानामपि सिद्धानां कोटिष्वपि हे महामुने ! नारायणपरायणः प्रशान्तात्मा रागाद्यकलुषितचित्तः सुतरां दुर्लभः ॥५॥

प्रश्नार्थमुपसंहरन् तस्योत्तरदानाय मुनिं प्रेरयति--वृत्रस्त्विति द्वाभ्यां । तु शब्देनोक्तविपरीतमसत्वप्रधानत्वं द्योत्यते रजस्तमःप्रचुरो वृत्रः सर्वलोकोपतापनः सर्वलोकदुःखकारी अत एव पापः इत्यमुक्तप्रकारेण कृष्णे भगवति दृढा मतिर्यस्य तादृशः कथमासीत्कथं वा उल्बणे दुःसहे ग्राम्ये शब्दादिविषये दृढमतिः नासीदिति यत् ॥ ६ ॥

अस्मिन्नर्थे नोऽस्माकं भूयान्संशयो वर्त्तते भो मुने, संशयं विशिनष्टि--हि यस्मात्संशयाच्छ्रोतुम् उत्तरं श्रोतुं कौतूहलमस्माकं अस्ति नन्विन्द्रभयाद्वृत्रः कृष्णं शरणङ्गत इत्यत्राह—यः पौरुषेणेत्यर्धेन । यो वृत्रः पौरुषेण सहस्राक्षमिन्द्रमतोपयत्तस्य इन्द्राद्भयमस्तीति भावः ॥ ७ ॥

एवं राज्ञा पृष्टो मुनिरित्याहेत्याहसूतः - परीक्षित इति । अथ राज्ञः प्रश्नानन्तरम् अथ ननु हे शौनकादयः ! इति वार्थः परीक्षितः समीचीनं प्रश्नमाकर्ण्य प्रतिनन्द्याहाहो साधुपृष्टमित्यभिनन्द्य कथं भूतस्य परीक्षितः श्रद्धधानस्य उत्तरश्रवणविषयकत्वरायुक्तस्य उत्तरं विस्रम्भयुक्तस्य वा इदं वक्ष्यमाणमब्रवीत् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र चित्रकेतुविषयेतिहासश्रवणादिना संसारविरक्तिभूयिष्ठतया श्रीनारायणचरणारविन्दे भक्तिर्जायते इति तदर्थं परीक्षित्प्रश्नपूर्वकं पूर्वकथाशेषत्वेन निरूपयितुमाह—रज इति । दृढा रतिनिरतिशयभक्तिरित्यर्थः ॥ १ ॥

देवादीनामपि श्रीकान्ताङ्घ्रिभक्तिर्दुर्लभा किमुतासुरप्रकृतेरिति भावेन वक्ति—देवानामिति । शुद्धसत्वगुणनिर्मितशरीराणां शुद्धान्तःकरणानाम् अमलात्मनां तपोभिर्निर्धूतमनोमलानां च प्रायेणोपजायत इत्यस्यायमर्थः निरन्तरभक्तिकरणयोग्यैरसुरावेशात्क्रियमाणस्य द्वेषस्य कादाचित्कत्वेनाल्पत्वेऽपि महत्त्वोपचारोऽन्यथा शुद्धसत्वानामित्यादिविशेषणविशिष्टानां देवानां गुणलिङ्गानाम् इत्यादिनोच्यमानमात्यन्तिकभक्तिलक्षणमसङ्गतं स्यादतः प्रायशब्दस्य बाहुल्यार्थत्वेऽप्यत्रापि एवार्थोपिकतयोः प्रकृतप्रमाणानुरोधाद्भक्तिकरणं दुर्लभमित्यतो वा तयोक्तं न तु तेषां तदभावात् । भक्तबाहुल्यस्यादृष्टत्वाद् भक्तेस्तारतम्यप्रदर्शनाय वा ॥ २ ॥

एतदेवाह । रजोभिरिति । इह कर्मभूमौ जन्तवः पार्थिवैः रजोभिः समसंख्याता यावन्ति भूमेः रजांसि सन्ति तावन्तः शरीरिणो जीवाः सन्ति अन्येपि निःशरीरा अनन्ताः सन्ति"परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः" इति श्रुतेः । न तेषामिहमानं क्रियते किन्तु गृहीतदेहानामेव तेषां मध्ये ये केचन मनुजादयः श्रेयः स्वर्गादिलक्षणमुद्दिश्य प्रवर्तन्ते वा इत्यनेन मनुष्याणां सहस्रेष्वित्यादिवाक्यं सूचयति ईहमानेष्वपि विशेषं वा ॥ ३ ॥

स्वर्गादीनां क्षणभङ्गुरसुखपरत्वं सन्दिश्य चेष्टमानानां मध्ये केचिदेव मुमुक्षवः मोक्षेच्छवः तेषां मुमुक्षूणां मध्ये केचिदेव प्रयतन्ते तेषु प्रयतमानेषु सहस्रेषु कश्चिदधिकारिणामु मुच्येत संसारान्मुक्तो भवति तत्रापि संसारान्मुक्तेष्वपि संसारायप्राप्तिज्ञानादिपूर्तिशून्यमुक्तराशौ कश्चिदेव पूर्णज्ञानी सिद्धपति आनन्दादिपूर्णो भवति ॥ ४ ॥

सिद्धानामानन्दादिपूर्णानां मुक्तानां मध्ये नारायणायनो दुर्लभः नारायणायनानां कोटिष्वपि प्रशान्तात्मा प्रकृष्टभगवन्निष्ठायुक्तमनाः अक्षुण्णानन्दरूपो वा नारायणपरायणः सुदुर्लभः ब्रह्मणामेकमन्तरेणात्यन्तदुर्लभ इत्यर्थः अधिकारिणां तारतम्यविवक्षयैतद्वचनम् ॥ ५ ॥

ततः किं प्रकृतमिति तत्राह - वृत्रस्त्विति । तु शब्देनात्यन्तानुपपत्तिं सूचयति ॥ ६ ॥

पौरुषेण परमात्मविषयश्लेहेन अहो दानवसिद्धोऽसीत्युक्तत्वात् ॥ ७—१० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवानामित्यादि यद्यपि "सत्वात् सञ्जायते ज्ञानम्"इत्यादिना "कैवल्यं सात्विकं ज्ञानम्"इत्यादिना "सत्वं यद्ब्रह्मदर्शनम्"इत्यादिना च सत्वस्य ज्ञानकारणत्वमुक्तं तथापि देवानां शुद्धसत्वानामित्युक्त्वा मुक्तानामपि सिद्धानामित्युक्त्वा सद्भावेऽपि भगवज्ज्ञानस्याप्यभावात् । रजस्तमः स्वभावस्येत्यनुक्त्वा तदभावेऽपि सद्भावात् न सत्वस्यगत् कारणत्वं । किन्तु तदुत्तरत्वेन तत्सद्भावात् पूर्वजन्मनि श्रीनारदादिसङ्कवर्णनया "नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः । महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीतयावत्"इत्युक्त्वा च भगवत्कृपापरिमलपात्रभूतस्य श्रीमतो महतः सङ्ग एव कारणं । तस्तङ्गस्तुलयामलवेनापि न स्वर्गं नापुनर्भवम् भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ।

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

इत्युक्त्या निर्गुणावस्थातोऽप्यधिकत्वात् । परमनिर्गुण एव सप्तमे च । समः प्रियः सुहृद्ब्रह्मन्नित्यादौ सगुणो देवादौ तत्कृपा वास्तवी न भवति । किन्तु श्रीमत्प्रह्लादादिष्वेवेति प्रतिपादनाम्महतां निर्गुणत्वाभिव्यक्त्या तत्सङ्गस्यापि निर्गुणत्वं व्यक्तम् ॥ १ ॥ २ ॥ ३ ॥

मुच्येत जीवन्मुक्तो भवेत् ततश्च सिद्ध्यति "येऽन्येऽरविन्दाक्ष विमुक्तमानिन." इत्यादि व्याख्यानरीत्या जीवन्मुक्तानामपि पातश्रवणात् । तत्रापि कश्चिदेव निर्विघ्नतां प्राप्नोतीत्यर्थः । मुक्तानां प्राकृतशरीरवत्त्वेपि तदभिमानशून्यानां सिद्धानां प्राप्तसाक्षोप्यादीनाञ्च कोटिष्वपि मध्ये नारायणसेवामात्रकाङ्क्षी सुदुर्लभः प्रशान्तात्मा सर्व्वोपद्रवरहितः ॥ ४—२० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चतुर्द्दशे चित्रकेतोर्व्विविक्ते कृपया सताम् ।
सुखञ्च दुःखञ्च सुतस्योत्पत्त्या मृत्युनाभवत् ॥

शुद्धसत्त्वानां शुद्धान्तःकरणानां प्रायेणेति अन्तःकरणशुद्धौ ज्ञानं यथा स्वतः स्यात्तथा न भक्तिः तस्याः साधुसङ्गाविनाभावित्वात् ॥ १ ॥ २ ॥

येषां मध्ये ये केचनैव मनुजदेवगन्धर्वादयो भवन्ति न तु सर्वे । तेषामपि मध्ये ये केचनैव श्रेयो धर्म्मादि ॥ ३ ॥

मुच्येत जीवन्मुक्तो भवेत् ॥ ४ ॥

मुक्तानामपि मध्ये कश्चिदेवसिद्ध्यतीति—तथैतदुक्तं भवति मोक्षसाधनवन्तोऽपि बहवो मुक्ता न भवन्ति किन्तु केचिदेव । मुक्ता अपि सर्वे सिद्धा न भवन्ति किन्तु केचिदेव । "जीवन्मुक्ता अपि पुनर्बन्धनं यान्ति कर्म्मभिः । यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः" इत्याद्युक्तेः ते च सिद्धाः सन्निहितसायुज्या एवोच्यन्ते तेषां मध्ये नारायणपरायण इति निर्द्धारणानुपपत्तेः षष्ठीयं पञ्चम्यर्थ एव ततश्च मुक्तेभ्यः सिद्धेभ्यश्च सकाशात् नारायणपरायणः श्रेष्ठत्वात् सुदुर्लभः । यद्वा अयमत्र विवेकः ज्ञानं हि द्विविधं केवलं भक्तिसहितञ्च तत्र केवलज्ञानेन स्थूलतुषावघातिन इव मुमुक्षवोपि न मुच्यन्ते । भक्तिसहितं ज्ञानञ्च द्विविधं भगवदाकारे मायाबुद्ध्या अनादरेपि तद्भक्तिसहितन्तया विनैव तदादरे सति तद्भक्ति सहितञ्च । तत्राद्ये खलु मुक्ता न भवन्ति किन्तु मुक्ताभिमानिन एव । तादृश्या भक्त्या अविद्यां सम्यङ्निरस्य विद्याञ्च सम्यक् सम्पाद्य स्वयं पलान्तर्द्धानात् तया विनाच तत्पदार्थज्ञानाभावाच्च ब्रह्मणि लीयन्ते । तत्र येऽन्येऽरविन्दाक्षेत्यादौ अनादृतयुष्मदङ्घ्रय इति प्रमाणं भगवद्गीता च "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् । मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतसः राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीं श्रिताः" अनयोरर्थः । मानुषीं तनुमाश्रितं मां मूढा अवजानन्ति सार्वज्ञिक्या मानुष्याकारोऽमायिकत्वदर्शनात् मदीयाया अपि मानुष्यास्तनोर्मायिकत्वकल्पनमेव ममावज्ञा मम मानुषीं तनुं कीदृशीं परं भावं श्रेष्ठं सत्त्वं विशुद्धं सत्त्वमित्यर्थः । कीदृशं भूतमहेश्वरं । भूतानां ब्रह्मादितृणान्तजीवानां महेश्वरं परमकारणं मम मानुषी तनुरेव स्वीकृता प्राकृतसर्व्ववस्तुकारणमित्यर्थः । मोघाशा इति यदि तेमन्भक्ताः स्युस्तदा ते मोघाशा मत्प्राप्त्याशा तेषां व्यर्था स्यात् यदि ते कर्म्मिणस्तदा ते मोघकर्म्माणःस्युस्तेषां स्वर्गो न स्यात् । यदि ते ज्ञानिनस्तदा मोघज्ञानास्तेषां मोक्षो न स्यात् । तर्हि तेषां किं स्यादित्यत आह—राक्षसीमिति राक्षस्यादियोनौ जन्म स्यादित्यर्थः । द्वितीये तु अविद्याविद्ययोरुपरामेप्यनुपरतया ज्ञानशावल्यहारितया भक्त्या तत् पदार्थं ज्ञात्वा ब्रह्मसायुज्यं प्राप्नुवन्ति । यदुक्तं "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" इति । किञ्च तेषां सिद्धानां मध्ये कोपि भक्त्या तत्पदार्थानुभवारम्भसमये यदि कस्यचिच्छुद्धभक्तस्य कृपया पूर्णां शुद्धां भक्तिं प्राप्नोति तदा तन्माधुर्यलाभात् सायुज्यमरोचयित्वा नारायणपरायणः स्यादिति निर्द्धारणषष्ठ्यपि व्याख्येया । तत्रानुग्राहकभक्तस्य शान्तत्वे शान्तभक्त इति दासादित्वे दासादिरिति । अस्यातिविरलत्वेन दौर्लभ्यात् प्रक्रान्तसहस्रशब्दमप्रयुज्य कोटिष्वपीत्याह स्म ॥ ५ ॥

एवं परमदुर्लभा त्रिगुणातीता, भक्तिस्त्रिगुणान्धे असुरे वृत्रे कथमवर्त्ततेति पृच्छति—रजस्त्वयेति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमिन्द्रपोपयाख्यानमुक्त्वाथ नारदादिमुनिभिर्भगवता यथा चित्रकेतुपोपणं कृतं तदुच्यते—चतुर्भिरध्यायैः । तत्र वृत्रस्य पूर्वजन्मनि चित्रकेतुरूपस्य पुत्रार्थं क्लिश्यतः पुत्रप्राप्तिस्तस्मिन्पुत्रे मृते सति शोकश्च वर्ण्यते-रजस्तम इति चतुर्दशेनाध्यायेन । वृत्रस्य भगवद्भक्तिः केन हेतुनासीदिति पृच्छति—रज इति । पाप्मनः देवद्रोहरूपपापयुक्तस्य रजस्तमश्च स्वभावो यस्य तस्य ॥ १ ॥

भक्तेर्दुर्लभत्वं संस्मृत्य वर्णयति--देवानामिति चतुर्भिः ॥ २ ॥

जन्तवो जीवाः पार्थिवै रजोभिः समसंख्याताः असंख्येयाः इत्यर्थः तेषां मध्ये ये केचनैव श्रेयो धर्मादित्रिवर्गं ईहन्ते कुर्वन्ति ॥ ३ ॥

मुमुक्षवः अपवर्गेच्छवः तेषां सहस्रेषु कश्चिदेव मुच्येत मुमुक्षाघातकात् गृहादिसङ्गात् तेषां गृहादिसङ्गान्मुक्तानामपि मध्ये कश्चिदेव सिद्ध्यति आत्मानात्मपरमात्मविवेकरूपां सिद्धिं प्राप्नोति ॥ ४ ॥

मुक्तानां मध्ये ये सिद्धास्तेषां कोटिषु नारायणः परमयनमाश्रयो भजनीयो यस्य सः ॥ ५ ॥ ६ ॥ ७ ॥

वचोऽब्रवीदुत्तरमब्रवीत् ॥ ८ ॥

---

## श्रीशुक उवाच ।

शृणुष्वावहितो राजन्नितिहासमिमं यथा ।
श्रुतं द्वैपायनमुखान्नारदाद्देवलादपि ॥ ९ ॥
आसीद्राजा सार्वभौमः शूरसेनेषु वै नृप ! ।
चित्रकेतुरिति ख्यातो यस्यासीत्कामधुङ्मही ॥ १० ॥
तस्य भार्यासहस्राणां सहस्राणि दशाभवन् ।
सान्तानिकश्चापि नृपो न लेभे तासु सन्ततिम् ॥ ११ ॥
रूपौदार्यवयोजन्मविद्यैश्वर्यश्रियादिभिः ।
सम्पन्नस्य गुणैः सर्वैश्चिन्ता वन्ध्यापतेरभूत् ॥ १२ ॥
न तस्य सम्पदः सर्वा महिष्यो वामलोचनाः ।
सार्वभौमस्य भूश्चेयमभवन्प्रीतिहेतवः ॥ १३ ॥
तस्यैकदा तु भवनमङ्गिरा भगवानृषिः ।
लोकाननुचरन्नेतानुपागच्छद्यदृच्छया ॥ १४ ॥
तं पूजयित्वा विधिवत्प्रत्युत्थानार्हणादिभिः ।
कृतातिथ्यमुपासीदत्सुखासीनं समाहितः ॥ १५ ॥
महर्षिस्तमुपासीनं प्रश्रयावनतं क्षितौ ।
प्रतिपूज्य महाराज ! समाभाष्येदमब्रवीत् ॥ १६ ॥

---

### भाषाटीका ।

श्रियैनमः ॥ परीक्षित उवाच ॥ हे ब्रह्मन् ! रज तम स्वभाव वाले पापी वृत्रासुर की षड्गुण युक्त श्रीमन्नारायण में कैसे दृढ मति हुई ॥ १ ॥

प्रायः करके मुकुन्द के चरणारविन्दमें शुद्ध सत्त्वगुणी देवताओं की तथा निर्मलान्तःकरण वाले ऋषियों की भी भक्ति नही होती है ॥ २ ॥

इस संसार में पृथिवी के रज के कणों के तरह जीवभी अनन्त हैं । उनमें से कोई मनुष्यादिक अपने श्रेय की चेष्टा करते हैं ॥ ३ ॥

हे द्विजोत्तम ! उनमें भी कोईक मुमुक्षु होते हैं । हजारों मुमुक्षुवों में भी कोई एक गृहादिक सङ्गसे छूटकर तत्त्वको जानता है ॥ ४ ॥

हे महामुने ! उन तत्त्वज्ञानी मुक्तजन और सिद्धजनों में भी शान्त स्वभाववाले नारायण परायण तो कोटानकोट जनोंमें भी अत्यन्त दुर्लभ है ॥ ५ ॥

फिर सर्व लोक को ताप देने वाला पापी जो वृत्रासुर उसकी घोर संग्राम के बीचमें कृष्णमें ऐसी दृढ मति कैसे हो गई ? ॥ ६ ॥

हे प्रभो ! इस विषय में हमको बडा संशय है। और श्रवण करने का भी बडा कुतूहल है । क्योंकि जिसने रण में इन्द्र को सन्तुष्ट करदिया ॥ ७ ॥

॥ सूत उवाच ॥

तदनन्तर श्रद्धालु परीक्षित के प्रश्न को सुनकर अभिनन्दन करके व्यास नन्दन भगवान् श्रीशुकदेवजी बोले ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यथा यथावत् शृणु ॥ ९ ॥ १० ॥

भार्यासहस्राणां दश सहस्राणि कोटिरित्यर्थः सान्तानिकः स्वयं सन्तानार्होऽपि पुत्रोत्पादनसमर्थोऽपि तासु सन्ततिं न लेभे सर्वास्ता वन्ध्या एव दैवयोगेन मिलिता इति भावः ॥ ११ ॥

तदेवाह-वन्ध्यापतेरिति ॥ १२ ॥ १३ ॥ १४ ॥

उपासीदत्तस्य समीपमुपविवेश समाहितः संयतः ॥ १५ ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेवाह मुनिः-शृणुष्वेत्यादिनाऽध्यायत्रयेण। तावद्वृत्रस्य भगवद्भक्तिर्न तज्जन्मना लब्धा किन्तु पूर्वजन्मनैवेति वक्तुं तावत् तस्य पूर्वजन्मवृत्तान्तं वक्ष्यन् तच्छ्रवणाय राजानमाज्ञापयति-शृणुष्वेति! हे राजन्! इमं वक्ष्यमाणमितिहासं अवहितस्समाहितचित्तो यथा यथावच्छृणु कथंभूतं द्वैपायनमुखादस्मत्पितुस्सकाशान्नारदाद्देवलाच्च श्रुतं मयेति शेषः यथा द्वैपायनादिभ्यः श्रुतं तथा कथयतो मत्तः शृणुष्वेति वान्वयः श्रुतं द्वैपायनादित्यादिनाऽस्येतिहासस्याप्तप्रणीतत्वसूचनात्केवलास्मद्बुद्धिपरिकल्पितत्वशंकामूलकोऽस्मिन्नानादरः कार्य इत्युक्तं भवति॥ ९॥

तदेवेतिहासमाह-आसीदित्यादिना। हे नृप! इन्द्रेण हतो यो वृत्रः स पूर्वस्मिन् जन्मनि चित्रकेतुरिति प्रसिद्धः सार्वभौमः कृत्स्नभूमेरधिपतिः शूरसेनेषु जनपदेष्वासीत् तं विशिनष्टि-यस्य चित्रकेतोरियं मही कामधुक् काम्यन्त इति कामा इष्टार्थास्तान् दोग्धि प्रपूरयतीति तथासीत्॥ १०॥

तस्य चित्रकेतोर्भार्यासहस्राणां दश सहस्राण्यभवन् कोटिसंख्याका भार्या अभवन्नित्यर्थः स च नृपश्चित्रकेतुः सान्तानिकः सन्तानार्थ्यपि तासु भार्यासु सन्ततिं प्रजां न लेभे न प्राप्तवान् यद्वा सान्तानिकः स्वयं सन्तानार्होऽपि पुत्रोत्पादनशक्तिमानपि तासु सन्ततिं न लेभे सर्वास्ता वन्ध्या एव दैवयोगेनोत्पादिता इति भावः॥ ११॥

रूपेति। रूपादिभिः सर्वैर्गुणैर्द्धर्मैः संपन्नस्य युक्तस्यापि तस्य वन्ध्यानां सन्तानरहितानां भार्याणां पत्युरत एव चिन्ता पुत्रालाभप्रयुक्ता अभूत् तत्र रूपं लावण्यमौदार्यं सत्पात्रे द्रव्यविनियोगशीलत्वं वयो यौवनं जन्म सत्कुलप्रसूतत्वं विद्या शास्त्रजन्यं ज्ञानं ऐश्वर्यं सार्वभौमत्वं श्रीर्भोग्यभोगोपकरणादिसम्पत् एते चिन्तारहितप्रीतिहेतवः अथाप्यपुत्रत्वमेकं सदा चिन्ताहेतुरासीदिति भावः॥ १२॥

तदेवाह-नेति। तस्यापुत्रत्वप्रयुक्तचिन्ताक्रान्तस्य सार्वभौमस्य चित्रकेतोः सर्वाः सम्पदः वामलोचनाः सुन्दरलोचनाः लोचनग्रहणमन्येषामप्यवयवानामप्युपलक्षणं महिष्यश्चेयं कृत्स्ना भूमिश्च प्रीतिहेतवो नाभवन्॥ १३॥

एवं सर्वसम्पत्सु प्रीतिरहितस्य केवलं पुत्रार्थमेव चिन्तयतस्तस्य चित्रकेतोर्भवनं गृहं प्रति भगवानङ्गिरा ऋषिः सिद्धः ज्ञानकाष्ठां प्राप्तः अत एव यदृच्छया लोकाननुचरन् कदाचिदुपागतः प्राप्तः॥ १४॥

तमागतमाङ्गिरसं यथाविधि प्रत्युत्थानार्घ्यपाद्यादिभिः संपूज्यातिथ्यं कृत्वा भोजनादिभिः सत्कृत्येत्यर्थः सुखासनोपविष्टमङ्गिरसमुपासिवत् तस्य समीप उपविष्टवान् कथंभूतस्सन् समाहितः संयतचित्तः सन्॥ १५॥

उपासीनमुपविष्टं चितौ प्रश्रयेणावनतं नम्रं तं चित्रकेतुं प्रतिपूज्य अहो तव विनयादिसम्पत्तिरिति बहुसंमान्य समाभाष्य सम्भाषणाभिमुखं कृत्वा महर्षिरंगिरा इदं वक्ष्यमाणमब्रवीत्॥ १६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सान्तानिकः सन्तानार्थी। कस्यामपीति शेषः॥ ११—१५॥

चितावुपासीनम्॥ १६॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भार्यासहस्राणां दश सहस्राणि कोटिरित्यर्थः। सान्तानिकः सन्तानप्रयोजनकः न केवलं विषयभोगार्थमेव तावत्यो भार्या इति भावः॥ ११॥

वन्ध्यापतेरिति सर्वास्ता वन्ध्या एव दैवयोगेन मिलिता इति भावः॥ १२॥ १३॥ १४॥ १५॥ १६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मया यथा द्वैपायनादिभ्यः श्रुतं तथा मत्तस्त्वं शृणुष्व॥ ९॥

सार्वभौमः सर्वभूमिपतिः कामधुक् सर्वकामदा॥ १०॥

तस्य चित्रकेतोः भार्यासहस्राणां दश सहस्राणि अभवन् कोटिसङ्ख्याकाः भार्या आसन्नित्यर्थः स नृपः सान्तानिकः सन्तानोत्पादनार्होऽपि सन्ततिं न लेभे॥ ११॥ १२॥ १३॥ १४॥

तं पूजयित्वा समाहितः संयतः उपासीदत् उपविवेश॥ १५॥

चितौ उपासीनम्॥ १६॥

---

भाषाटीका।

॥ श्रीशुक उवाच॥

हे राजन्! सावधान होकर इस इतिहास को सुनो। जैसे हमने (द्वैपायन) व्यासजीके मुखसे तथा नारद और देवल महर्षिसे भी सुना है॥ ९॥

हे नृप! शूरसेन देश में चित्रकेतु नामसे ख्यात सार्वभौम राजा रहे जिनकी सब कामों को परिपूरण करने वाली भूमि रही॥ १०॥

उन चित्रकेतु महाराजके एक (कोटि) किरोड़ रानी रहीं। राजा सन्तान के योग्यभी रहा तौभी उन रानियों में से राजाको सन्तान की प्राप्ति न भई॥ ११॥

रूप, उदारता, अवस्था, कुल, विद्या, ऐश्वर्य, इत्यादि गुणों से सम्पन्न भी रहे तौभी उन बांझों के पति महाराज चित्रकेतु को बड़ी चिन्ता भई॥ १२॥

उन राजाके सर्व सम्पत् तथा मनोहर नेत्रवाली रानी तथा सर्व भूमिका राज्य यह सबही कुछप्रीतिके जनक नहीं भये॥ १३॥

एक समय इच्छा से इन लोकों में विचरते भये भगवान अंगिरा ऋषि उन चित्रकेतु महाराज के भवन में आये॥ १४॥

### आङ्गिरा उवाच ।

अपि तेऽनामयं स्वस्ति प्रकृतीनां तथाऽऽत्मनः ।
यथा प्रकृतिभिर्गुप्तः पुमान् राजापि सप्तभिः ॥ १७ ॥
आत्मानं प्रकृतिष्वद्धा निधाय श्रेय आप्नुयात् ।
राज्ञा तथा प्रकृतयो [१] नरदेवाहिताधयः ॥ १८ ॥
अपि दाराः प्रजाऽमात्या भृत्याः श्रेण्योऽथ मन्त्रिणः ।
पौरा जानपदा भूपा आत्मजा वशवर्तिनः ॥ १९ ॥
यस्यात्माऽनुवशश्चेत्स्यात्सर्वे तद्वशगा इमे ।
लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः ॥ २० ॥
आत्मनः प्रीयते नात्मा परतः स्वत एव वा ।
लक्षयेऽलब्धकामं त्वां चिन्तया शबलं मुखम् ॥ २१ ॥
एवं विकल्पितो राजन्विदुषा मुनिनाऽपि सः ।
प्रश्रयावनतोऽभ्याह प्रजाकामस्ततो मुनिम् ॥ २२ ॥

### चित्रकेतुरुवाच ।

भगवन्किं न विदितं तपोज्ञानसमाधिभिः ।
योगिनां ध्वस्तपापानां बहिरन्तःशरीरिषु ॥ २३ ॥
तथापि पृच्छतो ब्रूयां ब्रह्मन्नात्मनि चिन्तितम् ।
भवतो विदुषश्चापि चोदितस्त्वदनुज्ञया ॥ २४ ॥

---

#### भाषा टीका ।

राजा ने भी विधिवत् उठकर सामग्री से उनकी पूजा की आतिथ्य स्वीकार करके सुख पूर्वक महर्षि जब बैठे तब राजा भी विनय पूर्वक समीप बैठगया ॥ १५ ॥

हे राजन् ! भूमि में विनय से नम्र अपने समीप बैठे हुए राजा को महर्षि भली भांत बोल कर यह वचन बोले ॥ १६ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि किम् अनामयमारोग्यम् स्वस्ति शुभम् । प्रकृत्यधीनमेव हि राज्यमिति सदृष्टान्तमाह—यथा महदाद्याभिः सप्तभिः प्रकृतिभिः पुमान् जीवो नित्यं गुप्तो न तु तद्व्यतिरेकेण क्षणमपि तिष्ठति तथा राजाऽपि सप्तप्रकृतिभिः "स्वाम्यमात्यौ जनपदा दुर्गद्रविणसञ्चयाः । दण्डो मित्रं च तस्यैताः सप्त प्रकृतयो मताः" इत्युक्तलक्षणाभिर्नित्यं गुप्तः सन् स्वामी गुरुः स्वयं वा ॥ १७ ॥

आत्मानं प्रकृतिष्वद्धा साक्षान्निधाय तदनुवर्तिनं कृत्वा श्रेयो राज्यसुखं प्राप्नुयादित्यर्थः प्रकृतीनां च सुखं राजाधीनमेवेत्याह—हे नरदेव ! तथा प्रकृतयोऽपि राज्ञा आहिताधयो निहितनिक्षेपाः धनैः समृद्धा भवन्ति पाठान्तरे आ समन्ततो हताधयो निरस्तमनोदुःखा भवन्तीत्यर्थः ॥ १८ ॥

प्रजाश्च श्रेणयश्च समयविशेषेण सङ्घशो वर्तमाना वणिक्प्रभृतयः पौराः पुरवासिनः जानपदास्तत्तद्देशाधिकारिणः मन्त्रसहायो मन्त्री कर्मसहायोऽमात्य इति भेदः ॥ १९ ॥

तव मनः स्ववशे वा न वेत्यर्थात्पृच्छति यस्याऽऽत्मा मनोऽनुवशोऽनुवर्ती अधीनः स्यात्तस्य वशगा इमे सर्वे भवन्ति किञ्च लोकाश्च तस्य बलिं यच्छन्ति ॥ २० ॥

आत्मा भवान् आत्मनो न प्रीयते न तुष्यति तत् किं परतो वा ऽलब्धकामं स्वतोवा त्वां लक्षये ॥ २१ ॥

---

(१) नरदेवाहताधय इति पाठान्तरम् ।

श्रीधरस्वामिकृत भावार्थदीपिका।

विदुषा सर्वज्ञेनापि ॥ २२ ॥

अलब्धकामत्वं कथयन्पुत्रं याचते—भगवन्निति चतुर्भिः ॥ २३ ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेवाह—अपीति। अपि शब्दः कुशलप्रश्नद्योतकः ते तवानामयमारोग्यमप्यस्ति किमिति प्रश्नः आत्मनां स्वसम्बन्धिनीनां प्रकृतीनां स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलात्मकानां सप्तानामपि स्वस्ति-नतु? सर्वस्मिन्सति विशेषेण प्रकृतीनां स्वस्ति कथं पृच्छतीत्य-त्राह—यथेति सप्तभिः। प्रकृतिभिर्महदहङ्कारतन्मात्रैर्यथा पुमान् जीवः गुप्तः रक्षितो भवति प्रकृत्यायत्तस्सुखी भवति ॥ १७ ॥

तथा राजापि स्वाम्यादिषु सप्तसु प्रतिष्ठाप्याऽऽत्मानं साक्षा-न्निधायात्मानं प्रकृत्यधीनं कृत्वेत्यर्थः श्रेयः सुखं प्राप्नुयात् राज्यभारं प्रकृतिषु निधाय निर्भरः सुखान्यनुभूयादित्यर्थः अतः प्रकृतीनामेव तावत्स्वस्ति पृच्छामीति भावः एवं राज्ञः श्रेयः प्रकृत्यधीनमित्युक्तम् अथ प्रकृतीनां श्रेयो राजाधीनमित्याह-राज्ञेति। हे नरदेव, तथा प्रकृतयोऽपि राज्ञा हेतुना हितादयः हित-मिष्टमादिशब्दादनिष्टपरिहारश्च येषां तादृशा भवन्ति अहता-घय इति पाठे वा समन्ताद्धता आधयः येषां निरस्तमनोदुःखा भवन्तीत्यर्थः ॥ १८ ॥

एवं राज्ञः प्रकृतीनां चान्योन्यश्रेयःप्रापकत्वमुक्तं। ननु, यदि राज्ञः श्रेयः प्रकृत्यधीनं तर्हि राज्ञः स्वातन्त्र्यभङ्गस्तत्राह-अपीति। यस्य राज्ञो दाराः भार्याः प्रजाः अमात्याः कर्मस-हायाः भृत्यः ताम्बूलिकादयः मन्त्रिणः मन्त्रेषु सहायभूताः मित्राणि पौराः पुरवासिनः जानपदा देशान्तराधिपतयो भूपा आत्मजाश्च वशवर्तिनः वशङ्गताः स एव प्रकृतिष्वात्मानं निधाय श्रेयः आप्नुयादित्यर्थः ॥ १९ ॥

कस्यैते वशवर्तिनः स्युस्तत्राह—यस्येति। यस्य राज्ञः आत्मा मनोऽनुवशः वशङ्गतः न तु विषयपरस्तस्याजितेन्द्रियस्येति भावः तस्यैव वशङ्गताः सर्वे इमे पूर्वोक्ता दारादयः पालकैः सहिताः सर्वे लोकाश्चातन्द्रिताः जागरूकास्सन्तो बलिं हरन्ति। यद्वा यस्यात्मानुवशस्तस्यैवेमे सर्वे दारादयो वशङ्गताः यस्यैमे-दारादयो वशङ्गतास्तस्यैव सर्वे लोकाः सपाला बलिं हर-न्तीतिवान्वयः उपायनसमर्पणद्वारा सेवन्त इत्यर्थः ॥ २० ॥

स्वतुष्टरीत्या जितेन्द्रियस्य मम सर्वं वशे वर्तत इति चेत्तर्ह्यसन्तोषस्तव कुत इत्याह—आत्मन इति। आत्मनः स्वस्य तवात्मा मनः न प्रीयते न तुष्यति तत्किं परतो वा स्वतो वा हेतोः कथमसन्तोषो ज्ञायते ममेत्यत्राह—अलब्धकाममप्राप्ता-भिलषितं त्वां लक्षयेऽनुपश्यामि तत्कुतः यतश्चिन्तया तव मुखं वदनं विच्छायमनाह्लादमुपलक्ष्यते ॥ २१ ॥

एवमङ्गिरसा पृष्टश्चित्रकेतुः स्वमनीषितं विज्ञापितवानि-त्याह मुनिः—एवमिति। विदुषा चित्रकेतोरभिप्रेतज्ञानतापि मुनिना एवं इत्थं विकल्पितः स्वतः परतो वा तवासन्तोष इत्येवं विकल्पपूर्वकं पृष्टः चित्रकेतुः प्रजाकामः पुत्रं कामयमानः तावत्प्रश्रयेण विनयेन नम्रः मुनिमङ्गिरसमाह ॥ २२ ॥

तदेवाह—भगवन्नित्यादिना, न हिघोऽहि न इत्यन्तेन। हे भगवन्, तपोज्ञानसमाधिभिः कर्मयोगज्ञानयोगभगवद्भक्तियोगैः ध्वस्तं नि-रस्तं पापं ज्ञानावरकं पुण्यपापात्मकं कर्म यैस्तेषां भवादृशा-नां योगिनां देहिष्वन्तर्बहिश्चाविदितं किं न्वस्ति शरीरिणाम-न्तर्बाह्यगतं च भवद्भिः सर्वं विदितमेवेत्यर्थः ॥ २३ ॥

तथापि सर्वज्ञस्य ज्ञातत्वेपि हे ब्रह्मन्, आत्मनि मदन्तः-करणे चिन्तितमर्थं पृच्छतस्तव ब्रूयां कथयामि कथंभूतः विदु-षा चापि मदभिप्रेतं जानताऽपि भवता चोदितोऽभिप्रेतकथनाय प्रेरितः त्वदनुज्ञया ब्रूयां यदनुज्ञापयसि तर्हि ब्रूयामिति स्वस्य विनयादिसम्पत्तिस्सूचिता ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ते तवानामयमपि दुःखं नास्ति हि तथात्मनस्तव प्रकृतीनां स्वस्ति किमित्यन्वयः प्रकृतिविषयकुशलप्रश्नेन किं प्रयोजनम-त्राह - यथेति। यथा सप्तभिः प्रकृतिभिः महदहङ्काराभ्यां पृथि-व्यादिभिः पञ्चभिर्भूतैर्गुप्तः पुमान् जीवः ॥ १७ ॥

प्रकृतिषु देहहेतुषु आत्मानमद्धा निधाय श्रेयः प्राप्नोति तथा राजा च प्रकृतिशब्दवाच्ये राजजने रक्षितः तेषु राज्यभारं निधाय विहितं श्रेय आप्नुयादित्यन्वयः। तथा प्रकृत्यादयो यस्य राज्ञो वशवर्तिनः स्युः आत्मा मनश्चानुवशश्चेत्तर्हि ते सर्वे लोकास्तस्य राज्ञो वशगाः तस्मै बलिं यच्छन्तीत्यन्वयः आत्मा स्वयं प्रकृत्यादेर्वशवर्ती चेत् प्रकृत्यादेरात्मवशत्वाभावेन अनर्थस्य कारणभूता भवन्तीत्याह - अहितादय इति। अतो वशीकर्तव्या इत्यर्थः आहितादय इति वा आहित एव हितकर्तृत्वेन निहिताः अनेन प्रकृत्यादीनां गुणो दर्शितः। —

"स्वाम्यमात्यौ जनपदो दुर्गं द्रविणसञ्चयः।
दण्डो मंत्री च सप्तैतास्तस्य प्रकृतयः स्मृताः" इति॥

बुद्धिसहायो मंत्री कर्मसहायोऽमात्यः यथा प्रकृतिगुप्तो राजा सुखमश्नुते तथा राज्ञा सन्तोषिताः प्रकृतयः राज्ञः सन्तोषदं-तयो भवन्ति अन्यथाऽहितादयः अहितस्यासन्तोषस्य आदयः कारणभूता भवन्तीति योगविभागो वा ॥ १८ ॥

हे राजन्! दारसुतादयश्च तव वशवर्तिनोऽपि अनुकूलतया वर्तन्ते किं? आत्मा मनश्च वशवर्ति किम्? ॥ १९ ॥

मनसो वशवर्तित्वे किं फलमत्राह - यस्येति। मनसः स्ववश-वर्तित्वे भृत्यादयोऽपि स्ववशा भवन्ति अन्यथा कोपलोभाद्यधी-नस्य तव क्रोधादिना विमनसीकृता भृत्यादय उपकारिणो न भवन्ति अतो मनसश्च वशवर्तित्वं कोपाद्यभावफलं क्रोधाद्य-करणे भृत्यादिवशीकरणम् ॥ २० ॥

किञ्च प्रपञ्चोऽपि भवदायत्त इत्याह - आत्मन इति। आत्मा

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

प्रपश्च्चोपि आत्मनस्तव प्रीतये स्यादित्यन्वयः । अस्त्वेवमिदं सर्व भवन्मनसि किं प्रतीयत इति तत्राह - परत इति । अहं त्वां स्वतः परतो वाऽलब्धकाममप्राप्तकामं त्वां लक्षये पश्यामि केन खिन्नेनेत्यत उक्तं चिन्तयेति शबलमलच्छायम् ॥ २१ ॥

एवं विकल्पितः सन्ततिनिमित्तं दुःखं विदुषा प्रश्रयलच्चणगुणेनावनतः प्रह्वः ॥ २२—२३ ॥

आत्मनि मनसि ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

यतस्तव मुखं चिन्तया शबलं लक्ष्यते ॥ २१ ॥

विकल्पितो विविधकर्म्मणा विपर्यीकृतः ॥ २२—२३ ॥

यतश्चोदितो नोदितस्ततस्त्वदनुज्ञया ब्रूयाम् ॥ २४—२६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अपि किमनामयमारोग्यं स्वस्ति शुभं प्रकृतीनाममात्यादीनां राज्ञः सुखममात्यादिसुखाधीनमेव अमात्यादिसुखमपि राजसुखाधीनमिति सदृष्टान्तमाह-यथा महदादिभिः प्रकृतिभिः सप्तभिः पुमान् जीवो नित्यं गुप्तो भवति न तु तद्व्यतिरेकेण चणमपि तिष्ठति तथा राजापि सप्तभिः स्वाम्यमात्यसुहृत् कोशराष्ट्रदुर्गबलैः स्वाम्यत्र गुरुः ॥ १७ ॥

राजा आत्मानं स्वप्रकृतिषु निधाय आत्मसर्व्वभावं निक्षिप्य इत्यर्थः । श्रेयः राज्यसुखम् नरदेवे राजन्येव आहितः अर्पितः आधिः धनतुरगहस्त्यादितृष्णामूला मनःपीडा यैस्ते राज्ञा गुप्ता आहताधय इति पाठे नरदेवेन नाशितमनोदुःखाः श्रेय आप्नुयुः ॥ १८ ॥

किञ्च राज्ञोपि यथाज्ञाकारिणः सर्वजनाः स्युस्तदेव सुखमित्याह-अपीति । अश्वयस्तैलिकताम्बूलिकादयः ॥ १६ ॥

तव मनः स्ववशं न वेत्यर्थात् पृच्छति-यस्येति । अनुवशः अनुवर्त्ती अधीनः ॥ २० ॥

तदप्यशुधायां राजानं पुनराह-तव आत्मनो देहस्यात्मा स्वत एव वा परत एव हेतोर्वा न प्रीयते सुखमेवास्मीति चेन्नहीत्याह-लक्षय इति ॥ २१ ॥

विकल्पितः विविधविकल्पविपर्यीकृतः विदुषा सर्व्वज्ञेनापि तन्मुखादेव तद्दुःखं श्रोतुमिति भावः ॥ २२ ॥

शरीरिष्वस्मद्विधेषु ॥ २३ ॥

पृच्छतो भगवतोऽहमाज्ञाकारीत्यर्थः । आत्मनि मनसि चिन्तितं चिन्ताम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः ।

अपि किं तवात्मनः प्रकृतीनां चानामयमारोग्यमस्ति यथा पुमान् जीवः महदहङ्कारतन्मात्ररूपाभिः देहादिरूपेण परिणताभिः सप्तभिः प्रकृतिभिर्गुप्तः स्वस्ति सुखं प्राप्नोतीति शेषः तथा राजा च "स्वाम्यमात्यौ जनपदा दुर्गद्रविणसञ्चयाः । दण्डो मित्रं च तस्येमाः सप्त प्रकृतयो मताः" इति सप्तप्रकृतिभिर्गुप्तः स्वस्ति प्राप्नोतीत्यन्वयः ॥ १७ ॥

आत्मानं प्रकृतिषु अद्धा साक्षान्निधाय श्रेयः राज्यसुखादिकं स्वेष्टमाप्नुयात् तथा प्रकृतयोपि राज्ञा आहताधयो बाधितमनोव्यथाऽऽस्तत्यः श्रेयः प्राप्नवन्ति ॥ १८ ॥

अपि किं दाराद्यो वशवर्तिनस्तवेति शेषः ॥ १६ ॥

यस्य आत्मा मनोऽनुवशोऽनुगच्छेत्स्यात् तस्य सर्वे हि पूर्वोक्ता वशगा भवन्ति सपालाः लोकास्तस्मै बलिं यच्छन्ति भवदीयं मनो वशे वर्तते न वेति भावः ॥ २० ॥

आत्मनस्तव आत्मा चित्तं यत्र प्रीयते न तुष्यति तर्हि स्वतः परतो वा यस्त्वाम् अलब्धकाममप्राप्तमनोरथं लक्षये तत्र हेतुः तव मुखं शबलं निष्प्रभमस्ति ॥ २१ ॥

विदुषा तदूहत्वज्ञेनापि एवं विकल्पितः तन्मुखेन तद्वृत्तोद्घाटनार्थम् प्रजाकामः पुत्रकामः ॥ २२ ॥

यच्छरीरिणां बहिरन्तस्तद्योगिनां भवतां किं न विदितं सर्वं विदितमेवेत्यर्थः ॥ २३ ॥

आत्मनि मनसि ॥ २४ ॥

---

भाषाटीका ।

अंगिरा उवाच ॥

हे राजन् ! तुम और तुमारी प्रजा का आरोग्य और मंगल तो है, जैसे जीव महदादिक सप्त प्रकृति से रक्षित रहता है ऐसे ही राजा भी अमात्यादि सात प्रकृति से रक्षित रहते हैं ॥ १७ ॥

राजा अपने को प्रकृति के अनुकूल करदे तौ ( श्रेय ) सुख को प्राप्त होता है ॥ हे नरदेव ! ऐसे ही ( प्रकृति ) प्रजा भी राजा के अनुकूल होने से सुख को प्राप्त होवे हैं ॥ १८ ॥

हे राजन् ! जिसका मन स्वाधीन है, उसके दारा, प्रजा, दीवान, सिपाही, धनीलोग, मंत्री, पुरवासी, देश वासी और पुत्रादिक सबही वश में रहते हैं और लोकपाल भी जाग्रत् होकर उसको ( बलि ) भेट देते हैं ॥ १९ । २० ॥

राजन् ! तुम अपने से प्रसन्न नहीं हो । आप से अथवा और से तुमको मनोरथ नहीं प्राप्त हुआ ऐसा हमको जान पड़ता है, क्योंकि ? तुमारा मुख चिन्ता से व्याप्त है ॥ २१ ॥

श्री शुकदेव जी बोले । कि हे राजन् ! विद्वान मुनि भी अंगिरा जी ने राजा से जब ऐसे पूछा तब राजा भी ( प्रजा ) संतान की कामना करके विनय से नम्र होकर मुनि से बोला ॥ २२ ॥

लोकपालैरपि प्रार्थ्याः साम्राज्यैश्वर्यसम्पदः ।
न नन्दयन्त्यप्रजं मां क्षुत्तृट्कामामिवाऽपरे ॥ २५ ॥
ततः पाहि महाभाग ! पूर्वैः सह गतं तमः ।
यथा तरेम दुस्तारं प्रजया तद्विधेहि नः ॥ २६ ॥

श्रीशुक उवाच ।

इत्यर्थितः स भगवान् कृपालुर्ब्रह्मणः सुतः ।
श्रपयित्वा चरुं त्वाष्ट्रं त्वष्टारमयजद्विभुः ॥ २७ ॥
ज्येष्ठा श्रेष्ठा च या राज्ञो महिषीणां च भारत ! ।
नाम्ना कृतद्युतिस्तस्यै यज्ञोच्छिष्टमदाद्द्विजः ॥ २८ ॥
अथाऽऽह नृपतिं राजन् ! भवितैकस्तवाऽऽत्मजः ।
हर्षशोकप्रदस्तुभ्यमिति ब्रह्मसुतो ययौ ॥ २९ ॥
साऽपि तत्प्राशनादेव चित्रकेतोरधारयत् ।
गर्भं कृतद्युतिर्देवी कृत्तिकाऽग्नेरिवात्मजम् ॥ ३० ॥
तस्या अनुदिनं गर्भः शुक्लपक्ष इवोडुपः ।
ववृधे शूरसेनेशतेजसा शनकैर्नृप ! ॥ ३१ ॥
अथ काल उपावृत्ते कुमारः समजायत ।
जनयन् शूरसेनानां शृण्वतां परमां मुदम् ॥ ३२ ॥

भाषा टीका ।

चित्रकेतुरुवाच ॥

हे भगवन् ! तप ज्ञान समाधि से नष्ट पाप वाले मुनियों को जीवों के बाहर और भीतर का कौनसा समाचार नहीं विदित है ॥ २३ ॥

हे ब्रह्मन् ! आप जानते हो तौ भी आपके पूंछने से जो मेरे मन में चिंता है सो आपकी आज्ञा से प्रेरित होकर कहता हूं ॥ २४ ॥

जन्मना हर्षं मरणेन च शोकं प्रददातीति तथा इत्येवमुक्त्वा ययौ ॥ २९ ॥ ३० ॥

शूरसेनानामीशस्य तेजसा वीर्येण यो गर्भः स ववृधे ॥ ३१ ॥ ३२ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

अप्रजमपुत्रं क्षुत्तृड्भ्यामन्नपानकाममपरे स्रक्चन्दनादयो यथा न सुखयन्ति ॥ २५ ॥

पूर्वैः पित्रादिभिः सह गतं प्राप्तं तमो नरकं प्रजया यथा तरेम तत्तथा विधेहि ॥ २६ ॥ २७ ॥

यज्ञोच्छिष्टं यज्ञशेषम् ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तावत् स्वस्य पुत्रालाभप्रयुक्तायाश्चिन्ताया नितरामनिवृत्तिहेतुत्वं वदंश्चिन्तितमाह-लोकपालैरिति । लोकपालैरपि प्रार्थ्यास्तेषामपि दुर्लभा इति भावः साम्राज्यं सार्वभौमत्वं तद्रूपं यदैश्वर्यं तत्प्रयुक्ताः सम्पदः भोग्यभोगोपकरणादिसमृद्धयः अप्रजमपुत्रं मां न नन्दयन्ति न सुखयन्ति यथा क्षुत्तृड्भ्यामन्नपानादिकं कामयमानमितरे स्रक्चन्दनवनितादयो न सुखयन्ति तद्वत् ॥ २५ ॥

तत्तस्मात् हे महाभाग ! पूर्वैरस्मत्पित्रादिभिः सह मया गतं प्राप्तं दुस्तारं तमो नरकं यथा प्रजया पुत्रेण हेतुना यथा तरेम तथा विधेहि तथाऽनुग्रहाणेत्यर्थः "अपुत्रस्य गतिर्नास्ति" इति किंवदन्तीमनुसृत्य पूर्वैः सह गतं तम इत्युक्तं "प्रजया

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पितृभ्यः" इति श्रुत्युक्तरीत्या प्रजाया अभावे पितृऋणानिवृत्तेरप्रजस्य तमः प्राप्तिं सिद्धवत्कृत्वा गतमित्युक्तम् ॥ २६ ॥

एवमुक्तोऽङ्गिरास्तमनुगृह्णन्पुत्रकामेष्ट्या याजयित्वा यज्ञोच्छिष्टं हविर्भार्यायै प्रदाप्य ययावित्याह मुनिः—इतीति । इतीत्थं चित्रकेतुनाऽभ्यर्थितो याचितस्स भगवान् ब्रह्मणः चतुर्मुखस्य सुतो विभुरङ्गिराः कृपालुस्त एव त्वाष्ट्रं त्वष्टृदेवताकं चरुं श्रपयित्वा पाचयित्वा तेन चरुणा त्वष्टारमयजत् अयाजयत् स्वयमार्त्विज्यकरणेनेत्यर्थः ततो हे भारत, राज्ञश्चित्रकेतोर्भार्याणां मध्ये या ज्येष्ठा श्रेष्ठा च नाम्ना कृतद्युतिरिति प्रसिद्धा भार्या तस्यै यज्ञोच्छिष्टं यज्ञशिष्टं हविः विप्रोऽङ्गिरा अदाद्दत्तवान् ॥ २७ ॥ २८ ॥

अथाङ्गिरा नृपतिं चित्रकेतुमाह--उवाच तदेवाह हे राजन् चित्रकेतो, तव पुत्रो भविता जनिष्यते कथम्भूतः तुभ्यं हर्षशोकप्रदः जन्मना हर्षं मरणेन शोकं च प्रददातीति तथा इत्येवमुक्त्वा ब्रह्मणः सुतोऽङ्गिरा ययौ गतः ॥ २९ ॥

ततः सा कृतद्युतिश्चित्रकेतोर्भार्या तस्य यज्ञावशिष्टस्य प्राशनाद्भक्षणादेव हेतोश्चित्रकेतोः सकाशात्पुत्ररूपं गर्भमधारयद्धृतवती यथा कृत्तिकाऽग्नेः सकाशाद्गर्भं कुमाररूपं दधार तद्वत् ॥ ३० ॥

तस्यां कृतद्युतावनुदिनं शुक्लपक्षे उडुपश्चन्द्र इव शूरसेनानां ईशस्य चित्रकेतोस्तेजसा वीर्येण गर्भः शनैर्ववृधे पथामास ॥ ३१ ॥

अथ काले दशमासात्मके काले उपावृत्ते गते सति कुमारः पुत्रः समजायत कथम्भूतस्सन् राज्ञः पुत्रोत्पत्तिं शृण्वतां शूरसेनदेशस्थानां जनानां परमां मुदं हर्षं जनयन्नुत्पादयन् सन् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अपरे स्रक्चन्दनवनितादयः ॥ २५ ॥

पालनप्रकारमाह-पूर्वैरिति । पूर्वैः पूर्वजैः सह गतं प्राप्तं तमो नरकं यया यया प्रजया तरेम तत्तादृशं प्रजालक्षणं वस्तु यद्वा यथा येनोपायेन तरेम तत्तोऽस्माकं विधेहि स क उपाय इति चिन्ता माभूदित्याह - प्रजयेति ॥ २६ ॥

त्वाष्ट्रं त्वष्टृदैवतम् ॥ २७—२९ ॥

प्राशनात्स्वीकारात् ॥ ३० ॥

शूरसेनस्य चित्रकेतोः ॥ ३१ ॥

शूरसेनानां विषयाणाम् ॥ ३२—३४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पुत्रदानमिषेण वैराग्योत्पादनद्वारा भगवदभिमुखीकरणेच्छुत्वात् कृपालुः तथा च वक्ष्यते स्वयमेव । "तदैव ते परं ज्ञानं ददामि गृहमागतः । ज्ञात्वान्याभिनिवेशन्ते पुत्रमेव ददाम्यहम्" इति ॥ २७ ॥ २८ ॥

निजदोषप्रख्यापनार्थं हर्षशोकप्रद इत्युक्तम् ॥ २९—६० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

क्षुत्तृड्भ्यामन्नजलयोः कामो यस्य तं अपरे स्रक्चन्दनादयः ॥ २५ ॥

पूर्वैः पित्रादिभिः सह गतं प्राप्तं तमः नरकं प्रजया यथा तरेम तथा विधेहि ॥ २६ ॥

त्वाष्ट्रं त्वष्टृदेवताकम् ॥ २७ ॥

प्रथमव्यूढत्वेन ज्येष्ठा सौभाग्यातिशयेन च श्रेष्ठा यज्ञोच्छिष्टं यज्ञशेषं चरुम् ॥ २८ ॥

हर्षशोकप्रद इति केन प्रकारेण हर्षप्रदः केन प्रकारेण शोकद इति सम्प्रत्यहं किं ब्रवीमि जन्ममृत्युभ्यां राजैवायत्यां ज्ञास्यति किञ्चेयमप्रियोक्तिरपि सम्प्रत्यवश्यवाच्यैवाग्रे राज्ञा दास्यमानस्योपालम्भनस्य प्रत्युत्तरार्थमिति मनसि विमृश्य तत्त्वं स्पष्टमनुक्त्वा ययौ । पुत्रो मे बहुगुणान्वितो भविष्यतीति हर्षदस्तदपि ऐश्वर्याधिक्याच्च मे वचस्करो भविष्यतीति शोकद इति भवतु तद्दुःखं मया सोढव्यमिति मनसि विचार्य राजात्वानन्देवेति ज्ञेयम् ॥ २९ ॥

अग्नेः सकाशात् कृत्तिका स्वात्मजमिवेत्यर्थः ॥ ३०—३४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्षुत्तृड्भ्यां कामः अन्नोदकाभिलाषा यस्य तमितरे स्रक्चन्दनादयो यथा न नन्दयन्ति न सुखयन्ति तथा अप्रजमनपत्यं मां साम्राज्यैश्वर्यसम्पदो न नन्दयन्ति ॥ २५ ॥

ततस्तेनाप्रजत्वेन तमो नरकभयं पूर्वैः सह गतं प्राप्तं मां पाहि । हे महाभाग ! दुस्तारं तमः प्रजया यथा तरेम तद्विधेहि कुरु ॥ २६ ॥

त्वाष्ट्रन्त्वष्टृदेवताकं चरुं श्रपयित्वा त्वष्टारमयजत् ॥ २७ ॥

ज्येष्ठा सर्वाभ्यः प्राक्परिगृहीता श्रेष्ठा गुणाधिका यज्ञोच्छिष्टं यज्ञशेषम् ॥ २८ ॥

अथ ब्रह्मसुतः आङ्गिरा नृपतिमाह । हे राजन् ! तव एक आत्मजः भविता स च तुभ्यं हर्षशोकप्रद इति तदनन्तरं ययौ ॥ २९ ॥

प्राशनाद्भोजनात् ॥ ३० ॥

शूरसेनेशस्य चित्रकेतोस्तेजसा वीर्येण यो गर्भः स शुक्लपक्षे उडुप इव ववृधे ॥ ३१ ॥

उपावृते प्राप्ते ॥ ३२ ॥

---

हृष्टो राजा कुमारस्य स्नातः शुचिरलङ्कृतः।
वाचयित्वाऽऽशिषो विप्रैः कारयामास जातकम् ॥ ३३ ॥
तेभ्यो हिरण्यं रजतं वासांस्याभरणानि च।
ग्रामान्हयान्गजान्प्रादाद्धेनूनामर्बुदानि षट् ॥ ३४ ॥
ववर्ष काममन्येषां पर्जन्य इव देहिनम्।
धन्यं यशस्यमायुष्यं कुमारस्य महामनाः ॥ ३५ ॥
कृच्छ्रलब्धेऽथ राजर्षेस्तनयेऽनुदिनं पितुः।
यथा निःस्वस्य कृच्छ्राप्ते धने स्नेहोऽन्ववर्धत ॥ ३६ ॥
मातुस्त्वतितरां पुत्रे स्नेहो मोहसमुद्भवः।
कृतद्युतेः सपत्नीनां प्रजाकामज्वरोऽभवत् ॥ ३७ ॥
चित्रकेतोरतिप्रीतिर्यथा दारे प्रजावति।
न तथाऽन्येषु सञ्जज्ञे बालं लालयतोऽन्वहम् ॥ ३८ ॥
ताः पर्यतप्यन्नात्मानं गर्हयन्त्योऽभ्यसूयया।
आनपत्येन दुःखेन राज्ञोऽनादरणेन च ॥ ३९ ॥
धिगप्रजां स्त्रियं पापां पत्युश्चागृहसम्मताम्।
सुप्रजाभिः सपत्नीभिर्दासीमिव तिरस्कृताम् ॥ ४० ॥

भाषा टीका।

लोकपालों को प्रार्थनीय साम्राज्यैश्वर्य और संपदा बिना पुत्र के हमको सुख नही देती, जैसे भूखे प्यासे को स्रक् चंदनादिक ॥ २५ ॥

हे महाभाग! तिस कारण से पितृ पितामहादिकन सहित हम संतान के द्वारा जैसे दुस्तर नरक को तरजावें ऐसा आपही उपाय करो ॥ २६ ॥

श्री शुक उवाच ॥

परम कृपालु ब्रह्मपुत्र भगवान अंगिरा से जब राजा ने ऐसे प्रार्थना करी तब उनने त्वाष्ट्र चरु बना कर त्वष्टा का यजन किया ॥ २७ ॥

हे भारत! रानियों में जो जेठी और श्रेष्ठ नाम से कृत-द्युति रानी रही ऋषिने यज्ञ का उच्छिष्ट उसी को दिया ॥ २८ ॥

अनंतर ऋषि राजा से बोले कि तुमारे हर्ष और शोक देने वाला एक पुत्र होगा ऐसा कह कर ऋषि चले गये ॥ २९ ॥

कृत द्युति रानी भी चरु के प्राशन करने से कृत्तिका अग्नि कुमार के नाईं चित्रकेतु के गर्भको धारण करती हुई ॥३०॥

रानी का भी (शूरसेन) राजा के वीर्य से जो गर्भ रहा सो शुक्ल पक्ष में चंद्र के नाईं धीरे २ बढने लगा ॥३१॥

पश्चात् समय होने पर राजकुमार उत्पन्न भया। जिसको सुनकर शूरसेन देश के लोगों को आनंद हुआ ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

जातकं जातकर्म ॥ ३३ ॥

अर्बुदं दशकोटयः. भेदे तु कोटिरेवार्बुदम् नियुतं च प्रयुतं चार्बुदंचेति प्रयुतानन्तरं निर्देशात् ॥ ३४ ॥

धन्यं धनकरम् आयुष्यमायुष्करम् महामना अत्युदारः ॥ ३५ ॥ ३६ ॥

मोहस्य समुद्भवो यस्मिन् प्रजाकामरूपो ज्वरस्तापः ॥ ३७ ॥

दार इत्येकवचनमार्षम् ॥ ३८ ॥

आनपत्येनापुत्रत्वनिमित्तेन ॥ ३९ ॥

न गृहे सम्मतां न बहुमतां यद्वा गृहिण्येव गृहं न भार्येति सम्मतामित्यर्थः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः हृष्टो हर्षयुक्तो राजा चित्रकेतुः सद्य एव स्नात्वा शुचिरुदारमनाः वस्त्रादिभिरलंकृतश्च कुमारस्य विप्रैराशिषो वाचयित्वा जातकं जातकर्म कारयामास ॥ ३३ ॥

ततस्तेभ्यो विप्रेभ्यो हिरण्यादीन् धेनूनां पडर्बुदानि च प्रादात् प्रदत्तवान् तत्र हयां अश्वा अर्बुदं दश कोटयः शतकोटि वाऽर्बुदं "प्रयुतं चार्बुदं च" इति प्रयुतानन्तरं निर्देशात् तथान्येभ्योपि वन्धुभृत्यादिभ्यः कामानिष्टार्थान्पर्जन्य इव ववर्ष धनकरं यशस्करं पुत्रस्यायुष्करञ्च यथा भवति तथा ववर्षेति क्रियाविशेषणान्येतानि ॥ ३४ ॥ ३५ ॥

अथ कृच्छ्लब्धे बहुप्रयासलब्धे तनये पितूराजर्षेश्चित्रकेतोः स्नेहोऽन्ववर्द्धत अन्वैधत यथा निःस्वस्य निर्द्धनस्य पुंसः कृच्छ्रात्ते कष्टलब्धे धने स्नेहोऽन्ववर्द्धते तद्वत् ॥ ३६ ॥

तथा मातुरपि कृतद्युतेस्तनये ऽतितरां नितरां मोहसमुद्भवः स्नेह अन्ववर्द्धत मोहात्समुद्भवो यस्य मोहसमुद्भवः मोहस्य समुद्भवो यस्मादिति वा तदा कृतद्युतेः सपत्नीनां प्रजाकामज्वरः पुत्राभिलापरूपसन्तापो ऽभवत् ॥ ३७ ॥

तदाऽनुदिनं पुत्रं लालयतश्चित्रकेतोः प्रजावति पुत्रवत्यां दारे भार्यायां कृतद्युतौ यथाऽतिप्रीतिस्तथैतरेषु दारेषु प्रीतिर्नासीद ॥ ३८ ॥

ततस्तावत् सपत्न्यः आत्मसु राज्ञोऽनादरेणानपत्येन अपुत्रत्वनिमित्तेन दुःखेन च पुत्रवत्यां सपत्न्यां कृतद्युतावभ्यसूयया आत्मानं निन्दयन्त्यः पर्यतप्यन् परितप्ता बभूवुः ॥ ३९ ॥

गर्हापूर्वकपरितापं तासां दर्शयति—धिगिति द्वाभ्यां । अप्रजामपुत्रवतीमत एव पापां मादृशीं स्त्रियं धिक् मादृशी स्त्री निन्द्येत्यर्थः निन्द्यत्वे हेतुम्वदन्त्यः स्त्रियं विशिंषन्ति पत्युश्चागृहसम्मतां गृहे सम्मतेष्टा गृहसम्मता तथा न भवतीत्यगृहसम्मता पत्युर्गृहेऽसम्मताम् इत्यर्थः किञ्च सुप्रजाभिः शोभनापत्यवतीभिः सपत्नीभिर्दासीमिव तिरस्कृतां तुच्छीकृताम् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कीदृशं कर्मोफरोदत्राह । धन्यमिति । धन्यं स्वधनादिसम्पत्करम् ॥ ३५ ॥
निःस्वस्य दरिद्रस्य ॥ ३६—३७ ॥
प्रजावति पुत्रवति ॥ ३८—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

धन्यमुत्तमं कामं ववर्ष। नत्वधन्यं महामनाः अत्युदारः ॥३५॥ ३६॥
प्रजाकामरूपोज्वरस्तापः ॥ ३७ ॥ ३८ ॥ ॥ ३९ ॥
अगृहं गृहभिन्नं वनं तत्रैव सम्मतां पत्युरपि वनवासदानार्हामित्यर्थः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कुमारस्य आशिषो वाचयित्वा जातकं जातकर्म कारयामास ॥ ३३ ॥

षडर्बुदानि षष्टिकोट्यः ॥ ३४ ॥

कुमारस्य धन्यं धनकरं यशस्यं यशोवर्द्धनम् आयुष्यमायुष्करम् यथा स्यात्तथा देहिनां यथा कामं पर्जन्य इव ववर्ष ॥ ३५ ॥

निःस्वस्य निर्धनस्य ॥ ३६ ॥

मातुश्च मोहस्य अहं पुत्रवती अयं मे पुत्र इत्येवं भूतस्य संसारपदस्य समुद्भवो यस्मात्स स्नेहोऽतितरामन्ववर्द्धतेति पूर्वेणान्वयः कृतद्युतेः सपत्नीनां तु प्रजाकामरूपो ज्वरस्तापो ऽभवत् ॥ ३७ ॥

प्रजावति दारे भार्यायां यथा चित्रकेतोरतिप्रीतिस्तथान्येषु दारेषु न सञ्जज्ञे ॥ ३८ ॥

ता आत्मानं गर्हयन्त्य आनपत्येन अपुत्रत्वनिमित्तेन दुःखेन राज्ञोऽनादरेण च अभ्यसूयया सर्वत्र दोषारोपेण च पर्यतप्यन् परितप्ताः आसन् ॥ ३९ ॥

पत्युः अगृहसम्मतां न गृहेसम्मतां गृहाद्विहानान्निःसारयितुं योग्यामित्यर्थः माहशीमप्रजां धिक् ॥ ४० ॥

---

भाषा टीका ।

राजा भी हर्षित हो स्नान से पवित्र होकर अलंकृत होकर ब्राह्मणों से स्वस्ति वाचन करा कर कुमार का जात कर्म करवाता हुआ ॥ ३३ ॥

उन ब्राह्मणों को राजा ने सोना चांदी वस्त्र आभूषण ग्राम हाथी घोडा दिये और छै अर्बुद गायें दीं ॥ ३४ ॥

राजा ने उदार चित्त होकर अन्य प्राणियों को भी यथेष्ट मेघ के नाई वर्षा करी कि जिससे कुमार का धन यश और आयु होय ॥ ३५ ॥

पीछे राजा के बडे दुःख से प्राप्त उस पुत्र में प्रति दिन स्नेह बढा जैसे दरिद्री को दुःख से प्राप्त हुए धन में ॥ ३६ ॥

माता का तो मोह से उत्पन्न होने वाला पुत्र में अत्यन्त ही स्नेह भया ॥ और कृतद्युति रानी की सपत्नियां ( सौतों ) को तो पुत्र कामना रूप ज्वर होगया ॥ ३७ ॥

बालक को खिलाते २ दिन प्रति राजा की जैसी पुत्रवाली रानी में प्रीति भई । उस प्रकार और रानियों में नहीं हुई ॥ ३८ ॥

अन्य रानिये असूया से अपने को निन्दित समुझ कर अपुत्रिपने के दुःख और राजा के निरादर से बहुत दुःख पाने लगी ॥ ३९ ॥

और कहने लगी कि पापिन विनासन्तान वाली स्त्री को धिक्कार है । सुन्दर सन्तान वाली सपत्नियों से वह सदा दासीके सदृश तिरस्कृत रहती है ॥ ४० ॥

---

दासीनां कोनु सन्तापः स्वामिनः परिचर्यया ।
अभीक्ष्णं लब्धमानानां दास्या दासीव दुर्भगाः ॥ ४१ ॥
एवं सन्दह्यमनानां सपत्न्याः पुत्रसम्पदा ।
राज्ञोऽसम्मतवृत्तीनां विद्वेषो बलवानभूत् ॥ ४२ ॥
विद्वेषनष्टमतयः स्त्रियो दारुणचेतसः ।
गरं ददुः कुमाराय दुर्मर्षा नृपतिं प्रति ॥ ४३ ॥
कृतद्युतिरजानन्ती सपत्नीनामघं महत् ।
सुप्त एवेति सञ्चिन्त्य निरीक्ष्य व्यचरद्गृहे ॥ ४४ ॥
शयानं सुचिरं बालमुपधार्य मनीषिणी ।
पुत्रमानय मे भद्रे ! इति धात्रीमचोदयत् ॥ ४५ ॥
सा शयानमुपव्रज्य दृष्ट्वा चोत्तारलोचनम् ।
प्राणेन्द्रियात्मभिस्त्यक्तं हतास्मीत्यपतद्भुवि ॥ ४६ ॥
तस्यास्तदाकर्ण्य भृशातुरं स्वरं घ्नन्त्याः कराभ्यामुर उच्चकैरपि ।
प्रविश्य राज्ञी त्वरयाऽऽत्मजान्तिकं ददर्श बालं सहसा मृतं सुतम् ॥ ४७ ॥
पपात भूमौ परिवृद्धया शुचा मुमोह विभ्रष्टशिरोरुहाम्बरा ॥ ४८ ॥
ततो नृपान्तःपुरवर्तिनो जना नराश्च नार्यश्च निशम्य रोदनम् ।
आगत्य तुल्यव्यसनाः सुदुःखितास्ताश्च व्यलीकं रुरुदुः कृतागसः ॥ ४९ ॥
श्रुत्वा मृतं पुत्रमलक्षितान्तकं विनष्टदृष्टिः प्रपतन्स्खलन्पथि ।
स्नेहानुबन्धैधितया शुचा भृशं विमूर्छितोऽनुप्रकृतिर्द्विजैर्वृतः ॥ ५० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दास्या दासी यथा तथा वयं दुर्भगाः ॥ ४१ ॥

न सम्मता वृत्तिर्जीवनं यासाम् ॥ ४२ ॥

विद्वेषेण नष्टा मतिर्यासां ताः गरं विषं दुर्मर्षा असहमानाः ॥ ४३ ॥ ४४ ॥

धात्रीं स्तनदायिनीम् ॥ ४५ ॥

उद्गते तारके कनीनिके ययोस्ते लोचने यस्य तम् ॥ ४६ ॥ ४७ ॥

विभ्रष्टाः शिरोरुहा अम्बरञ्च यस्याः सा ॥ ४८ ॥

ताश्च सपत्न्योऽपि ॥ ४९ ॥

अलक्षितोऽन्तको मृत्युहेतुर्यस्य तम् अनुगता प्रकृतयोऽमात्यादयो यस्य सोऽनुप्रकृतिः ॥ ५० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च दास्यपेक्षयाप्यपुत्रा नारी निन्द्येत्यात्मनो गर्हयन्ते--दासी नामिति। दासीनां को नु सन्तापः न कोपि सन्तापोऽस्ति तत्र हेतुः परिचर्यया सेवया स्वामिनः सकाशादभीक्ष्णं पुनः पुनः लब्धः काम इष्टार्थो याभिस्तासां स्वामिनः परिचर्यया लब्धकामानामिति वान्वयः अतो वयं दास्याः दासीव दुर्भगाः ॥ ४१ ॥

एवं सपत्न्याः कृतद्युतेः पुत्रसम्पदा नितरां दह्यमानचित्तानां राज्ञश्चित्रकेतोर्न सम्मता वृत्तिर्जीवनं यासां तासां बलवान् विद्वेषोऽभूत् ॥ ४२ ॥

ततो नृपतिं चित्रकेतुं दुर्मर्षा असहमानास्तद्विद्वेषेण नष्टविवेकाः क्रूरचित्ताः स्त्रियः कुमाराय गरं विषं ददुः ॥ ४३ ॥

सपत्नीनां महदघं गरदानरूपमजानती कृतद्युतिः केवलं कुमारं वीक्ष्य सुप्त एवेति मत्वा गृहे व्यचरत्सञ्चचार ॥ ४४ ॥

कुमारं सुचिरतरं सुप्तमुपधार्य विज्ञाय मनीषिणी पुत्रलालन-

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विषयकबुद्धिमती कृतद्युतिः हे भद्रे ! मे पुत्रमानयेति धात्रीं स्तन्यदायिनीमचोदयत् ॥ ४५ ॥

सा धात्री शयानं सुतं तम् उपव्रज्य कुमारसमीपङ्गत्वा उत्तारे उद्गते तारके कनीनिके ययोस्ते लोचने यस्य तादृशं प्राणैरिन्द्रियैरात्मना जीवेन च त्यक्तं दृष्ट्वा हा हतास्मीति क्रोशन्ती भुव्यपतत् ॥ ४६ ॥

कराभ्यामुच्चैरतितरां उरो घ्नन्त्यास्ताडयन्त्यास्तस्या धात्र्याः नितरामातुरं दुःखयुक्तं दीनं स्वरमाकर्ण्य राज्ञी कृतद्युतिः त्वरया आत्मजस्यान्तिकं प्रविश्य सहसा सर्वथा मृतमेव बालं सुतं ददर्श ॥ ४७ ॥

ततः भूमौ पपात तथा परिवृद्धया एधमानया शुचा शोकेन मुमोह विचित्ताऽभूत् । मोहमेव दर्शयितुं तां विशिनष्टि--विभ्रष्टशिरोरुहाम्बरा विभ्रष्टाः विलुलिताः शिरोरुहाः केशा अंबरे च यस्याः सा ॥ ४८ ॥

ततः नृपस्यान्तःपुरवासिनो जनाः हे नृपेति सम्बोधनं वा जनानेवाह--नरानार्यश्चेति । नरा नार्यश्च सर्वे जना रोदनमाकर्ण्य कुमारसमीपमागत्य राज्ञा सह तुल्यदुःखाःसुदुःखिता बभूवुः । तदा कृतागसः गरदानेन कृतापराधा अपि ताः सपत्न्यः समागत्य व्यलीकं निष्कपटमिव यद्वा सकपटं यथा तथा मिथ्या वा रुरुदुः स्वाऽपराधं प्रच्छादयितुमिति भावः ॥ ४९ ॥

न लक्षितः मृत्युहेतुर्यस्य तं मृतं सुतं श्रुत्वा स चित्रकेतुः दुःखितोभूदिति शेषः । तदेवाह—विनष्टदृष्टिरिति पुत्रे स्नेहानुबन्धः तेनानुबद्धस्तेन हेतुना एधितया वर्द्धितया शुचा शोकेनातीव पीडितः अत एव विनष्टदृष्टिः विनष्टा दृष्टिर्यस्या ऽत एव पथि क्वचित्प्रपतन् क्वचिच्च स्खलन् क्वचिद्विमूर्छितः स राजराजः चित्रकेतुरनुसृत्य गच्छद्भिः प्रकृतिभिरमात्यादिभिः द्विजैश्च परिवृतः ॥ ५० ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वामिनः स्नेहाभावे दासीत्वमप्रयोजकमित्याह । दासीनामिति ॥ ४१—४२ ॥

गरं विषं ॥ ४३--४४

धात्रीं स्तनदात्रीम् ॥ ४५ ॥

उत्तारलोचनम् उन्नततारायुक्तनेत्रम् ॥ ४६—४९ ॥

अनुप्रकृतिः सप्रकृतिजनः ॥ ५०—५२ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दास्या दासीव कस्याश्चिद्दुर्भगाया दास्या इव वयं दुर्भगा इत्यर्थः ॥ ४१ ॥

राज्ञोऽसम्मता वृत्तिश्चरित्रं यासाम् ॥ ४२ ॥

दुर्मर्षा असहमानाः ॥ ४३—४६ ॥

बालमेव सुतं तं मृतं ददर्शेत्यन्वयः ॥ ४७ ॥ ॥ ४८ ॥

ताश्च सपत्न्योऽपि ॥ ४९ ॥

अलक्षितोऽन्तको मृत्युर्यस्य तम् अनुप्रकृतिः अनुगतामात्यसुहृदादिकः द्विजैर्वृतः पपातेति अमात्यादयो ब्राह्मणादयश्च पेतुरित्यर्थः ॥ ५० ॥ ५१ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दास्या दासीव दुर्भगा वयमिति शेषः ॥ ४१ ॥

राज्ञो न सम्मता वृत्तिर्जीवनं यासाम् ॥ ४२ ॥

विद्वेषेण नष्टा मतिर्यासां ताः नृपतिं प्रति दुर्मर्षा क्रुद्धाः॥४३॥

महदघं विषदानरूपं पापम् ॥ ४४ ॥

धात्रींस्तनदायनीमचोदयत् ॥ ४५ ॥

उद्गते तारे कनीनिके ययोस्ते लोचने यस्य तम् प्राणैः इन्द्रियैः आत्मना जीवेन च त्यक्तं मृतं दृष्ट्वा ॥ ४६ ॥

कराभ्यामुच्चकैरुरः घ्नन्त्या भृशातुरं स्वरमाकर्ण्य सहसा बालमेव सुतं मृतं ददर्श ॥ ४७ ॥

विभ्रष्टाः शिरोरुहाः अंबरे च यस्याः सा पपात मुमोह च ॥ ४८ ॥

तदनन्तरं नृपान्तःपुरवासिनो जनाः तुल्यव्यसनाः अतः एव सुदुःखिताः रुरुदुः ताश्च कृतागसः सपत्न्यो व्यलीकं मृषैव रुरुदुः ॥ ४९ ॥

न लक्षितोऽन्तको मृत्युहेतुर्यस्य तम् मृतं श्रुत्वा विनष्टा दृष्टिर्यस्य स स्नेहानुबन्धेनैधितया वर्द्धितया शुचा शोकेन भृशं विमूर्च्छितः अनु अनुगताः प्रकृतयोऽमात्यादयो यस्य सः ॥ ५० ॥

---

## भाषा टीका ।

दासियों को क्या दुःख है क्योंकि उनको तो स्वामी की सेवा से सदा मान ही मिलता है भाग्यहीन स्त्री तो दासियों की भी दासी के सदृश हैं ॥ ४१ ॥

इस प्रकार सपत्नी की पुत्ररूप सम्पत् से जलने वाली और राजाके असम्मत वृत्ति वाली उन रानियों को बड़ाभारी विद्वेष पैदा हुआ ॥ ४२ ॥

एक तो जात की स्त्री आप ही दारुण चित्तवाली हूं, तिसरे विद्वेष से उनकी मति नष्ट होगई तब राजा के ऊपर अमर्ष करके पुत्रको विष दे दिया ॥ ४३ ॥

रानी कृतद्युति सपत्नियों के भारी कपट को न जान कर, सोता है ऐसे विचार कर देखकर के भी घर में विचरती रहा ॥ ४४ ॥

पपात बालस्य स पादमूले मृतस्य विस्रस्तशिरोरुहाम्बरः।
दीर्घं श्वसन्बाष्पकलोपरोधतो निरुद्धकण्ठो न शशाक भाषितुम् ॥ ५१ ॥
पतिं निरीक्ष्योरुशुचाऽर्पितं तदा मृतं च बालं सुतमेकसन्ततिम्।
जनस्य राज्ञी प्रकृतेश्च हृद्रुजं सती दधाना विललाप चित्रधा ॥ ५२ ॥
स्तनद्वयं कुङ्कुमगन्धमण्डितं निषिञ्चती साञ्जनबाष्पबिन्दुभिः।
विकीर्य केशान्विगलत्स्रजः सुतं शुशोच चित्रं कुररीव सुस्वरम् ॥ ५३ ॥
अहो विधातस्त्वमतीव बालिशो यस्त्वात्मसृष्ट्यप्रतिरूपमीहसे।
परेऽनुजीवत्यपरस्य या मृतिर्विपर्ययश्चेत्त्वमसि ध्रुवः परः ॥ ५४ ॥
न हि क्रमश्चेदिह मृत्युजन्मनोः शरीरिणामस्तु तदाऽऽत्मकर्मभिः।
यः स्नेहपाशो निजसर्गवृद्धये स्वयं कृतस्ते तमिमं विवृश्चसि ॥ ५५ ॥
त्वं तात! नार्हसि च मां कृपणामनाथां त्यक्तुं विचक्ष्व पितरं तव शोकतप्तम्।
अञ्जस्तरेम भवताऽप्रजदुस्तरं यद्ध्वान्तं नयाह्यकरुणेन यमेन दूरम् ॥ ५६ ॥
उत्तिष्ठ तात! त इमे शिशवो वयस्यास्त्वामाह्वयन्ति नृपनन्दन! संविहर्तुम्।
सुप्तश्चिरं ह्यशनया च भवान्परीतो भुङ्क्ष्व स्तनं पिब शुचो हर नः स्वकानाम् ॥ ५७ ॥
नाहं तनूज! ददृशे हतमङ्गला ते मुग्धस्मितं[1] मुदितवीक्षणमाननाब्जम्।
किं वा गतोऽस्यपुनरन्वयमन्यलोकं नीतोऽघृणेन न शृणोमि कला गिरस्ते ॥ ५८ ॥

भाषाटीका।

बुद्धिमती कृतद्युति ने बहुत काल से पुत्रको सोया समुझकर धाय से कहा कि हे भद्रे! मेरे पुत्रको ले आ ॥ ४५ ॥

वह धाय सोते हुए बालक के निकट जाकर हाय? मर गई ऐसे कह कर धरती पर गिरपडी ॥ ४६ ॥

उससमय दोनों हाथों से छाती कूटने वाली उस धाय के ऊंचे स्वर को सुन कर बडी जल्दी रानीने पुत्रके समीप जाकर एका एकी मरे हुये बालक को देखा ॥ ४७ ॥

बस उस बढे हुये शोक के मारे रानी भी धरती पर गिर पडी और केश और वस्त्र खुल गये और मूर्च्छा को प्राप्त होगई ॥ ४८ ॥

तब तो राजा की रनिवास के नर और नारी सबही परिजन रोना सुन कर जल्दी आकर तुल्य दुःख वाले थे तो भी और अति दुःखित होकर रोने लगे। और जिनोने विषदिया था वो भी सब आकर मिथ्या रोने लगी ॥ ४९ ॥

राजा भी विनाकारण मालूम भये पुत्र को मरासुन कर अन्धा सा होगया और मार्ग में गिरते पडते स्नेहानुबंध से अति मात्र बढे हुये शोक के मारे मूर्च्छितहोता हुआ अमात्य ब्राह्मणादि कों सहित बालक के पास जाकर मरे भये बालक के पाउन में पडगया। उस वखत केश और वस्त्र सब खुल गये बडी २ श्वास लेता था और आंशुओं के मारे कंठ रुक गया और कुछ भी बोलने को समर्थ न हुआ ॥ ५०--५१ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

बाष्पकलाभिरश्रुबिन्दुभिरुपरोधतः संवृतत्वेन निरुद्धः कण्ठो यस्य ॥ ५१ ॥

उरुशुचार्पितं बहुशोकेन व्याप्तम् एकमेव सन्ततिरूपम् ॥ ५२ ॥

विगलन्त्यःस्रजो येभ्यस्तान् केशान् ॥ ५३ ॥

आत्मसृष्टेरप्रतिरूपमननुरूपं चेष्टसे तदेवाह—नु अहो परे वृद्धे जीवत्यपरस्य बालस्य या मृतिस्तत् तदा हि वृद्धस्य सृष्टिसामर्थ्याभावे बाले च मृते सति तव सृष्टिर्नष्टा स्यादित्यर्थः। ननु, साम्प्रतं स्वसृष्टेर्विपरीतोऽस्मीति चेत्तत्राह—विपर्ययो विपरीतोऽसि चेत्तर्हि त्वं प्राणिनामतिदुःखकारित्वात् ध्रुवो नित्यः परः शत्रुरसि न तु कृपालुरित्यर्थः ॥ ५४ ॥

ननु, जीवकर्मानुसारेण जन्मादि कुर्वतो मम कोऽपराधस्त-

(१) मृदितवीक्षणमिति पाठान्तरम्। वीर०

### श्रीधरस्वामिकृतभावार्थदीपिका ।

आह—नहीति । पुत्रे जीवत्येव पिता म्रियते पितरि जीवत्येव पुत्रो जायत इति क्रमो नास्ति कर्माधीनत्वादिति चेत्तर्ह्यात्मकर्मभिरेव तज्जन्मादिकमस्तु किं त्वया कृत्यं ? ननु, मयेश्वरेण विना जडैः कर्मभिरिदं कथं सिध्येत् ? भवतु नाम तथाऽपि निजसर्गवृद्धये ते त्वया यः स्नेहपाशः कृतस्तमिमं स्वयमेव विवृश्चसि छिनत्सीत्यादिक्रोशति न ह्येवं विधं दुःखं दृष्ट्वा कश्चिदपि पुत्रादिषु स्नेहं करिष्यतीति भावः ॥ ५५ ॥

अप्रजदुस्तरमप्रजानां दुस्तरम् अकरुणेन सह ॥ ५६ ॥

अशनया क्षुधा ॥ ५७ ॥

तनूज हे पुत्र ! नाहं प्रथमं त्वत्पार्श्वमागता सती तव मुग्धस्मितं वक्त्रं ददर्श दृष्टवत्यस्मि इदानीमपि गिरो न शृणोमि तर्हि किमपुनरन्वयं पुनरागमनं यथा न भविष्यति तथा गतोऽसि ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

मृतस्य बालस्य पादमूले पपात कथम्भूतः विभ्रष्टा शिरोरुहा अंबरे च यस्य दीर्घं यथा तथा श्वसन् श्वासं मुञ्चन् बाष्पकलाभिरश्रुबिन्दुभिरुपरोधनः सम्भृतत्वेन निरुद्धः कण्ठो यस्य तादृशः भाषितुं किंचिदपि वक्तुं न शशाक नाशक्नोत् ॥ ५१ ॥

तद्गोरुशुचा महता शोकेनार्पितं व्याप्तं पतिं तथैकमेव सन्ततिरूपं मृतं बालं पुत्रं च निरीक्ष्य जनस्य राज्ञः प्रकृतेरमात्यादेश्च हृद्रुजम् मनःपीडां दधाना पुष्णन्ती सती कृतद्युतिः राज्ञीति पाठे सती राज्ञीजनस्य प्रकृतेश्च हृद्रुजं दधाना सती चित्रधाऽनेक प्रकारं विललाप ॥ ५२ ॥

चित्रधा विलापमेव प्रपञ्चयति--स्तनद्वयमित्यादिना, कलगिरस्त इत्यन्तेन तावत्कुंकुमगंधेन कुङ्कुममिश्रहरिचन्दनेन मण्डितं भूषितं स्तनद्वयमञ्जनयुक्तैर्बाष्पार्द्रैर्बिन्दुभिरश्रुबिन्दुभिर्निषिञ्चन्ती विगलन्ती स्रक् येभ्यस्तान्केशान्विकीर्य कुररीव पुत्रंप्रति सुस्वरं चित्रंयथा तथा शुशोच ॥ ५३ ॥

हे विधातस्त्वमहो बालिशः मूर्खः निष्कृपो वा कुतः यस्त्वमात्मसृष्टेः स्वकर्तृकसृष्टेः पित्रादिक्रमनिबद्धाया अप्रतिरूपम् अननुरूपम् ईहसे चेष्टसे तदेवाह—परे प्राक्कालजाते पित्रादौ अनुजीवति सत्यपरस्य पश्चात्कालजातस्य पुत्रादेर्या मृतिर्मरणमिति तदेतदप्रतिरूपमित्यर्थः विपर्ययश्चेद्यदुक्तविपर्यय एवस्यात्पुत्रादौ जीवति पित्रादेरेव मृतिः स्यादित्यर्थः तर्हित्वं ध्रुवं नूनं परः सर्वोत्कृष्टो भवेः नियमेन तदभावात्त्वं बालिश एवेति भावः । यद्वा ननु सृष्टिस्तु पित्रादिक्रमेणैव मृतिस्त्वनियतेति चेत्तर्हि त्वं ध्रुवं नूनं परः सर्वोत्कृष्टोऽसीत्यधिक्षेपः ध्रुव इति प्रथमान्तपाठे तु त्वं नित्यः शत्रुरसीत्यर्थः ॥ ५४ ॥

ननु, तत्तत्कर्मानुसारेण उत्पत्तिमरणे स्तः न चात्र क्रमोऽस्ति न वा ममात्रापराधोऽस्तीत्यत्राह— न हीति । इह प्रकृतिमये खशरीरिणां मृत्युजन्मनो उत्पत्तिमरणयोः क्रमो नास्ति चेत् पश्चाज्जाते पुत्रे जीवत्येव पिता पूर्वं जातो म्रियत इत्येवंविध-क्रमो नास्ति चेदित्यर्थः उत्पत्तिक्रमेणैव मृतिक्रमो नास्ति चेत्यर्थः जन्मग्रहणं दृष्टान्तार्थम् यथा जन्मनि क्रमोऽस्ति तथा मृतौ क्रमो नास्तीतिचेत्तर्ह्यात्मकर्मभिः स्वस्वकर्मभिरेव तत्तदुत्पत्तिमृत्यादिकं सर्वमस्तु किमीश्वरेण त्वया कृत्यमस्ति ? कर्मानुसारेण फलप्रापकोऽहमिति चेत्तत्राह—य इति निजसर्गवृद्धये ते त्वया यः स्नेहपाशः पुत्रादिषु स्नेहरूपः पाशः कृतस्तमिमं स्वयमेव विवृश्चसि आर्षत्वात्प्रार्थनायां लट् छिन्धीत्यर्थः ॥ ५५ ॥

एवं दैवं प्रत्याक्रुश्याथ मृतं बालकं प्रति विललाप-त्वमिति । हे तात पुत्र ! मामनाथामेतद्दुःखसागरादुद्धर्तृरहितां दीनां दुःखितां त्यक्तुं त्वं नार्हसि तव शोकेन तप्तं पितरं चित्रकेतुं विचक्ष्व पश्य यद्यस्मात्त्वत्कर्तृकादवलोकनादप्रजदुस्तरमनपत्यत्वप्रयुक्तादपि क्लेशात् दुस्तरम् अप्रजत्वक्लेशस्तु यथाकथञ्चित्सोढुं शक्यः अयं तु नितरां सोढुमशक्य इति भावः ध्वान्तं शोकं तरेम यदि न पश्यसि तर्ह्यकरुणेन निर्घृणेन यमेन करणभूतेन मामपि दूरं नय मामपि यमसमीपं नयेत्यर्थः ॥ ५६ ॥

हे तात पुत्र ! त्वमुत्तिष्ठ इमे वयस्यास्त्वत्समानवयसः शिशवो बालाः हे नृपनन्दन ! त्वया सह संविहर्तुं त्वामाह्वयन्ति किञ्च त्वाश्चिरं सुप्तः अशनया क्षुधा च परीतो व्याप्तः अतः स्तन्यं दुग्धं पिब स्वकानां नोऽस्माकं शुचो दुःखमपनुद ॥ ५७ ॥

हे तनूज पुत्रक ! ते तवाननाब्जं मुखकमलमहं न ददर्श न दृष्टवती कथम्भूतं मुग्धं सुन्दरं स्मितं यस्मिन् मृदितवीक्षणं मृदिते चलत्पक्ष्मणी नेत्रे यस्मिन् तादृशं अत एव हतमङ्गला हतं मङ्गलं यस्याः साऽहमिदानीमपि तव कला मधुरा गिरः न शृणोमि नाश्रौषं तर्हि किमपुनरन्वयं पुनरागमनरहितमन्यलोकं लोकान्तरं प्रत्यघृणेन निष्करुणेन दैवेन नीतः प्रापितः गतोऽसि किं चेत्यर्थः ॥ ५८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भ्रातॄणां चित्रवाचा वदन्ती शुशोचेति ॥ ५२ ॥ ५३ ॥

शोकलक्षणं वाक्यं दर्शयति—अहो इति । अतीव बालिशः जडाज्जडः कथं मम जाड्यमापाद्यत इति तत्राह—यत्त्विति । यस्त्वमात्मसृष्टेरप्रतिरूपं प्रतिकूलं विरुद्धमीहसे तु एव "तुःस्यात्भेदेऽवधारणे" इत्यभिधानात् कथमियं विरुद्धचेष्टाऽभूदत्राह-परइति परे पूर्वतने पितरि मातरि वा जीवत्यपरस्य पश्चादुत्पन्नस्य पुत्रस्य या मृतिः सा त्वयाऽऽपाद्यते यस्मात्तस्मादिति शेषः यद्यपि संहारेऽयं क्रमस्तथापि स्थितावनुपपन्नोऽयमिति सूचयति तुनेति वा । उक्ताधिकं तर्हि जाड्यपरिहार इति तत्राह—विपर्यय इति । उक्तविपर्ययोऽन्यथा पूर्वतनस्य पूर्वं मृतिः पश्चात्तनतस्य पश्चान्मृतिः यदि तर्हि ध्रुवं निश्चितं त्वं परोसि जडादन्यः प्राज्ञोसि सर्वेषानुसारिचेष्टत्वादित्यर्थः ॥ ५४ ॥

सन्तापकोपरागादिष्वनर्थंवचः क्वचिदितिवचनात्सन्तापा-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतश्चितमित्याह—नहीति । शरीरिणां मृत्युजन्मनोः क्रमो नास्ति चेत्तदा तर्हि आत्मकर्मभिः स्वकर्मानुकूल्येनास्तु ते त्वया स्वयं निजसर्गवृद्धये यः स्नेहपाशो मोहपाशो मम पुत्रोऽयमिति स्नेहानुबन्धः कृतस्तमिमं स्नेहपाशं विवृश्चसि भिनत्सीति न सम्यक्करोषि । ५५ ।

त्वमकरुणेन यमेन दूरं न याहीत्यन्वयः इदं क्रोधं कटाक्षीकृत्योक्तमिति ज्ञातव्यम् ॥ ५६ ॥

अशनयाऽशनेच्छया भवानित्यनर्थकवचः स्पष्टं प्रतीयते ॥ ५७ ॥

इदमपि रागनिमित्तमितिभावेनाह—नाहमिति मुदिते प्रसन्ने वीक्षणे यस्य तत्तथोक्तं क्रोधं ध्वनयन्ती शोचति । किंचेति अपुनरन्वयं पुनः सम्बन्धशून्यं अघृणेन यमेनेति शेषः ॥ ५८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एकश्चासौ सन्ततिर्वंशरूपश्च तं हृद्रुजं दधाना पुष्यन्ती सती ॥ ५२ ॥ ५३ ॥

अस्माकमेतादृशस्य दुःखस्य कारणं विधातैव । तस्य च कारणत्वं तदीयनृशंसत्वादेवेति निश्चित्य स न पुनरेवं क्वापि करोत्विति द्विषन्तीव तमेव प्रबोधयन्त्याह—अहो इति । बालिशत्वमेवाह यत्त्वम् आत्मनः सृष्टेः अप्रतिरूपं असदृशमनुचितं यथास्यात्तथा इत्यर्थः । ननु, किमनौचित्यं तत्राह परे वृद्धे जीवति नरस्य बालस्य या मृतिस्तत् तदा हि वृद्धस्य सृष्टिस्वाग्यभावे बाले च मृते सति तव सृष्टिलोप एव स्यादित्यर्थः विपर्ययश्चेत् संप्रति स्वसृष्टेर्विपरीतोऽस्मीति मन्यसे चेदित्यर्थः । तर्हि त्वमेवास्माकं परः शत्रुर्ध्रुवो निश्चित एव । स्वस्यापकारमपि कृत्वा अस्मान् दुःखयन् शत्रुत्वमेव व्यक्तीकरोषीत्यर्थः ॥ ५४ ॥

ननु जीवस्य कर्म्मानुसारेण जन्मादिकुर्वतो मम कोऽपराधस्तत्राह—नहीति । पुत्रे जीवत्येव पिता म्रियते पितरि मृते एव पुत्रो म्रियते इति क्रमो नास्ति कर्म्माधीनत्वादिति चेत् तर्हि आत्मकर्म्मभिरेव तज्जन्मादिकमस्तु किं त्वया कृत्यं ननु मयेश्वरेण विना जडैः कर्म्मभिरिदं कथं सिद्ध्येत् सत्यं त्वयैव सिद्ध्यतु तदपि निजसर्गवृद्धये यः स्नेहपाशस्ते त्वया स्वयमेव कृतस्तमिमं विवृश्चसि छिनत्सि स्नेहे एतादृशं दुःखं दृष्ट्वा पुत्रादिषु कोपि स्नेहं न करिष्यति स्नेहाकारणे पुत्रादयः कथं जीविष्यन्तीति सृष्टिलोपात् त्वं मूर्ख एवेति भावः यद्वा लोकार्थं न छिन्धीत्यर्थः । स्नेह एव सुखदुःखयोर्हेतुः । स्नेहाभावे पुत्रापत्यानां म्रियतां वा नैव स्यातां सुख दुःखे इति भावः ॥ ५५ ॥

पालितेन विधात्रा सह किमित्यहं संलपामि स्वपुत्रमेव निष्कृत्ये किमिति नाश्वासयामीति विमृश्याह त्वमिति हे तात ! त्वया एवेषा अप्रजानामपुत्राणां दुस्तरं यद् ध्वान्तं नरकं तत्तरेण । ननु यमो मां स्वपुरं नयति अहं किं करोमि तत्राह—न याहि अकरुणेन सह ॥ ५६ ॥

एवं सुप्तं मत्वाह—उत्तिष्ठेति । अशनया क्षुधा ॥ ५७ ॥

हे तनूज ! तव मुग्धस्मितं मुखपद्मं नाहं दृशे न दृष्टवत्यस्मि यस्त्वं न जागर्षि तेन किंवा अन्यलोकं परलोकं गतोऽसि । अपुनरन्वयं पुनरागमनशून्यं तव को दोषः यतोऽघृणेन निष्करुणेन यमेन नीतः । अत एव कला मधुरा स्फुटा गिरस्ते न शृणोमि ॥ ५८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मृतस्य बालस्य पादमूले पपात बाष्पकलाभिरश्रुबिन्दुभिर्य उपरोधस्तेन निरुद्धः कण्ठो यस्य सः भाषितुं न शशाक ॥ ५१ ॥

बालमेव सुतं मृतं निरीक्ष्य एकां सन्ततिं च निरीक्ष्य जनस्य प्रक्रोशश्च हृद्रुजं दधाना सती राज्ञी चित्रधा विललाप ॥ ५२ ॥

विगलन्त्यः स्रजो येभ्यस्तान् केशान् विकीर्य सुतं प्रति सुस्वरं यथा स्यात्तथा शुशोच ॥ ५३ ॥

अहो विधातस्त्वं नु निश्चितं अतीव बालिशोऽसि कुतः आत्मनः सृष्टेः सृज्यत इति सृष्टिः अस्मदादिजनता तस्याः अप्रतिरूपमननुरूपमीहसे स्वयं जननां सृष्ट्वा तद्विनाशं करोषि । ननु, विनाशाभावे जनताया नित्यं वर्द्धमानायाः क्व स्थितिस्यादित्याह - परे पितरि मातरि च जीवति अपरस्यापत्यस्य या मृतिः सा तद्बालिशत्वसूचिकेति भावः । ननु, बालिशः इमां विचित्रां सृष्टिं कथं कुर्यादतो नास्मि बालिश इत्यत्राह—विपर्ययश्चेत् बालिशो नास्ति किन्तु विचक्षणश्चेत् तर्हि त्वं ध्रुवो निश्चितः परः शत्रुरेवासि अयमर्थः बाल्यादप्रियं कुर्वन् स्वबन्धुः परो न भवति ज्ञानवान् अप्रियं कुर्वन् तु सर्वथा शत्रुरेवेति ॥ ५४ ॥

किञ्च अपत्ये जीवत्येव पिता म्रियते पितरि जीवत्येवापत्यं जायत इति शरीरिणां मृत्युजन्मनोः क्रमः इहेश्वरसद्भावे न हि चेत् तर्हि आत्मनो जीवस्य कर्मभिरेव तज्जन्मादिकमस्तु किमीश्वरप्रयोजनम् ? ननु, सर्वथाऽस्वतन्त्रस्य जीवस्य कर्मानुष्ठाने तत्फलभोगादौ च स्वातन्त्र्येण प्रवृत्तिर्निवृत्तिश्च नैव जायतेऽतो मयैव तत्तत्कर्मानुसारेण तत्तज्जन्मादिकमनादितः प्रवर्तितं । नैव पितृपुत्रादिसम्बन्धो नित्यः किन्तु सृष्टिवृद्ध्यर्थं कमत्कृतस्नेहपाशनियद्धा जना बिभुज्ञ्जीत्यत्राह—य इति विवृश्चसि छिनत्सीत्यर्थः ॥ ५५ ॥

अप्रजानां दुस्तरं यद् ध्वान्तं तमस्तद्भवता वयमङ्गोऽनायासेन तरेमातोऽकरुणेन यमेन सह दूरं न याहि ॥ ५६ ॥

अशनया क्षुधा परीतः अभिभूतः ॥ ५७ ॥

हे तनूज पुत्र, अहं इतानि मङ्गलानि यस्याः सा प्रथमं त्वत्सनीपमागता सती तव मुग्धस्मितं मुदितवीक्षणमाननाब्जं न दृष्टवत्यस्मि अधुना च ते कला मधुरा गिरो न शृणोमि अपुनरन्वयं पुनरागमनं यथा न भवति तथा अघृणेन निर्दयेन

## श्रीशुक उवाच ।

विलपन्त्या मृतं पुत्रमिति चित्रविलापनैः ।
चित्रकेतुर्भृशं तप्तो मुक्तकण्ठो रुरोद ह ॥ ५९ ॥
तयोर्विलपतोः सर्वे दम्पत्योस्तदनुव्रताः ।
रुरुदुः स्म नरा नार्यः सर्वमासीदचेतनम् ॥ ६० ॥
एवं कश्मलमापन्नं नष्टसंज्ञमनायकम् ।
ज्ञात्वाङ्गिरानाम मुनिराजगाम सनारदः ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां चित्रकेतूपाख्याने
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यमेन अत्र विशेषयोग विशेष्याध्याहारः एवं वृथावृतमहाशनेरित्यत्र महाशनशब्देन कयमघासुरशब्दाध्याहार इति यङ्का गिरस्ता नीतः अन्यलोकं गतोसि ॥ ५८ ॥ ५९ ॥

---

भाषाटीका ।

रानी भी उस समय पति को भारी शोक में डूबा हुआ देखकर और एकही संतान ऐसे उस मरे भये बाल पुत्रको देखकर रनिवास और प्रजा के दुःख को धारकर बहुत प्रकार विलाप करती हुई ॥ ५२ ॥

कुंकुम चंदन से लिप्त दोनो स्तनों को कजरारे आंसुओं से अत्यन्त सींचती हुई। पुष्पों की माला जिन से गिर गई ऐसे केशों को बिखेरकर कुररी पची के तरह पुत्रका बहुत ही शोक करती हुई ॥ ५३ ॥

हे विधता! तू बडाही मूर्ख है जो तू अपनी सृष्टि के भी प्रतिकूल चेष्टा करे है। वृद्धों के जीवते बालक की जो मृत्यु होवे है एसे विपरीत करने वाला जो तू है तौ अवश्य तूं सदांका वैरी है ॥ ५४ ॥

यदि इस संसार में प्राणियों का जन्म और मरण यदि क्रमसे न होता होवै तौ अपने कर्म से होता होगा परंतु अपनी सृष्टि के बढने को जो तूंने स्नेह रूप फांसी बनाई फिर उस को आपही क्यों काटता है ॥ ५५ ॥

हे पुत्र! मैं बडी दीन और अनाथ हूं तू मोकूं छोडनेके योग्य नहीं है शोक तप्त अपने पिता को तौ देख निपुत्रियो से दुस्तर जो नम है सो तेरे सों हम सब बिना श्रम बातमें तरजांयगे तुम निर्दय यमराज के द्वारा दूरमतजाओ ॥ ५६ ॥

हे तात! तुम उठो ये सब बालक तुमारे सखा हैं हे नृपनन्दन! ये खेलने को तुमको बुलाते हैं बहुत देर के तुम सोये हो भोजन करो स्तनपान करो हमारे शोक को हरो ॥ ५७ ॥

हे पुत्र! नष्ट मङ्गल वाली मैंने तुमारो मोरो मुसक्यातो प्रसन्न दृष्टि वालो मुख कमल नहीं देख पायो क्या तुम निर्दयने जहां से फिर न लोटे ऐसे लोक को पहुचादिये हो क्योंकि तुमारी वाणी नहीं सुन पडती ॥ ५८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं दम्पत्योरन्येषु च भृशं शोकाविष्टेषु सनारदः पुनरङ्गिरास्तत्रायया इत्याह मुनिः—विलपन्त्या इति । मृतं पुत्रं प्रति चित्रविलापनैः प्रलपन्त्यास्तस्याश्चित्रकेतुरपि नितरां शोकेन तप्तोऽत एव मुक्त उच्चैः स्वरयुक्तकण्ठो रुरोद हेति ॥ ५९ ॥

तयोर्दम्पत्योरेवं विलपतोस्सतोस्तदनुव्रताः सर्वे नरा नार्यश्च रुरुदुः इतरत्सर्वजनजातमचेतनप्रायमासीच्चित्रप्रार्पिता इव बभूवुरित्यर्थः ॥ ६० ॥

एवं कश्मलं महद्दुःखमापन्नमत एव नष्टसंज्ञं विवेकरहितम्

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनायकं तत्त्वोपदेष्टृरहितं समुदायं ज्ञात्वा श्रीनारदेन देवर्षिसहितोऽङ्गिरानाममुनिराजगामागतवान् ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

इयमेवैष विलपन्त्यभून्नान्य इत्यतः पूर्वोक्तविलापं स्पष्टयति—विलपन्त्यामिति ॥ ५९ ॥

अचेतनं बुद्धिशून्यं अश्मवत्प्रवृत्तिशून्यं पुरं वा ॥ ६० ॥

अनायकं बोधकरहितं अस्मिन्नवसरे सुहृदोंगिरस आगति वक्ति—ज्ञात्वेति । अनेन ऋषिशिक्षकाऽवदर्शीति स्पष्टितम् ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनायकं शोकनिवर्तकशून्यं राजानमिति शेषः ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भस्य
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विलपन्त्या सह ॥ ५९ ॥ ६० ॥

एवं सर्वनगरम् अचेतनमेव नष्टसंज्ञं ज्ञात्वा चित्रकेतोश्च मृततुल्यत्वादनायकम् ॥ ६१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठे चतुर्दशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वं तत्रत्यप्राणिजातम् अचेतनं नष्टसंज्ञम् ॥ ६० ॥

सनारदः नारमज्ञानं द्यति खण्डयतीति नारं ज्ञानंवा ददातीति नारदस्तेन सह ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्दशाऽध्यायार्थप्रकाशः ॥ १४ ॥

---

भाषा टीका ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले कि रानी मृत पुत्र को ऐसे विचित्र तरह विलाप करती रही और अत्यन्त तप्त चित्रकेतु राजा भी कपट खोल कर रोने लगा ॥ ५९ ॥

इन दोनों के विलाप करने में उनके पीछे और भी सब नर और नारी रोने लगे सर्व अचेतन प्राय होगया ॥ ६० ॥

ऐसे दुःख को प्राप्त और नष्ट संज्ञा वाले राजा को असहाय जानकर नारद जी को साथ लेकर अंगिरा नाम के ऋषि राजा के समीप आये ॥ ६१ ॥

इति श्रीमद् भागवत महापुराण षष्ठस्कन्ध
कीभाषा टीका में चतुर्दश अध्याय
समाप्त ॥ १४ ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे चतुर्दशोऽध्यायः समाप्तः ॥ १४ ॥

## ॥ पञ्चदशोऽध्यायः ॥

श्रीशुक उवाच ।

ऊचतुर्मृतकोपान्ते पतितं मृतकोपमम् ।
शोकाभिभूतं राजानं बोधयन्तौ सदुक्तिभिः ॥ १ ॥
कोऽयं स्यात्तव राजेन्द्र ! भवान्यमनुशोचति ।
त्वं चास्यकतमः सृष्टौ पुरेदानीमतःपरम् ॥ २ ॥
यथा प्रयान्ति संयान्ति स्रोतोवेगेन वालुकाः ।
संयुज्यन्ते वियुज्यन्ते तथा कालेन देहिनः ॥ ३ ॥
यथा धानासु वै धाना भवन्ति न भवन्ति च ।
एवं भूतेषु भूतानि चोदितानीशमायया ॥ ४ ॥
वयं च त्वं च ये चेमे तुल्यकालाश्चराचराः ।
जन्ममृत्योर्यथा पश्चात्प्रागेवमधुनाऽपि भोः ॥ ५ ॥
भूतैर्भूतानि भूतेशः सृजत्यवति हन्त्यजः ।
आत्मसृष्टैरस्वतन्त्रैरनपेक्षोऽपि बालवत् ॥ ६ ॥
देहेन देहिनो राजन् ! देहाद्देहोऽभिजायते ।
बीजादेव यथा बीजं देह्यर्थ इव शाश्वतः ॥ ७ ॥
देहदेहिविभागोऽयमविवेककृतः पुरा ।
जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पितः ॥ ८ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

ततः पञ्चदशे चित्रकेतोः शोकापनोदनम् ।
कृतं तत्त्वोपदेशेन नारदेनाङ्गिरोयुजा ॥ १ ॥

मृतकोपान्ते शवसमीपे ॥ १ ॥

त्वं चास्य बन्धूनां मध्ये कतमः सृष्टौ प्रजारूपायां अयं पुत्रोऽहं चास्य पितेति चेत्तत्राऽऽहतुः—पुरेति । ये पूर्वजन्मनि पित्रादिरूपेण संयुक्ता आसन् त एव मरणेन वियुक्ताः सन्तो वर्तमानजन्मनि कदाचित्तस्यैवान्यस्य वा पुत्रादयो भवन्ति ते जन्मान्तरे तस्यैवान्यस्य वा कलत्रादयः शत्रुमित्रादयो वा भवन्त्यतो नायं नियम इति भावः ॥ २ ॥

तमेवाभिप्रायं प्रकटयति—यथेति । स्रोतसः प्रवाहस्य वेगेन यथा प्रयान्ति वियुज्यन्ते संयान्ति संयुज्यन्ते तथा कालवेगेन देहिनो जीवा अपि ॥ ३ ॥

तथाप्येतावन्तं कालं मम पुत्रो नाभूद्वार्धके जातो मृत इति दुःखमितिचेत्तत्राहतुः—यथा धानासु बीजेषु धाना बीजान्तराणि भवन्ति कासुचित्कदाचिन्न भवन्ति नोत्पद्यन्ते नश्यन्ति च न तु भवन्त्येव तिष्ठन्त्येवेति वा नियमः एवमेव भूतानि पुत्रादिरूपाणि भूतेषु पित्रादिषु । अतो धानानां अन्यजनकत्वेऽपि यथा पितृपुत्रादिभावो नास्त्येवमत्रापीति न शोकः कार्य इति भावः ईश्वमायाप्रेरितानामेव भवनमभवनं न वस्तुतः ॥ ४ ॥

तस्य च सर्वसाधारणत्वान्न पुत्र एव शोचनीय इत्याहतुः—

### श्रीधरस्वामिकृत भावार्थदीपिका।

वयश्चेति । तुल्यकालाः वर्तमानकालीनाः जन्मनः प्राङ्मृत्योः पश्चाच्च यथा न सन्त्येवमधुनापि न सन्ति भो राजन्, आद्यन्तयोरसत्त्वात्स्वप्नवदित्यर्थः ॥ ५ ॥

असत्त्वे कथं प्रतीतिः कथं वाहमस्य जनक इत्याद्यभिमानस्तत्राहतुः—भूतैरिति। ईश्वरेण मायया सृष्टत्वात्प्रतीतिर्निमित्तमात्रत्वेनैव च भूतानामयमभिमान इति भावः नन्वीश्वरस्य सृष्ट्यादिभिः साध्यमस्ति चेत्तर्ह्यपूर्णकामता प्राप्ता नास्ति चेत्कुतः प्रवृत्तिस्तत्राहतुः—अनपेक्षोऽपि बालवत् लीलया करोतीति ॥ ६ ॥

ननु जन्मादिव्यवहारो देहानामेव नत्वात्मन इत्याहतुः देहिनः पितुर्देहेन देहिनः पुत्रस्य देहो मातुर्देहिनो देहादभिजायते यथा बीजादेव बीजं जायते देही तु शाश्वत एव अर्थो भूम्यादिर्यथा तद्वत् ॥ ७ ॥

ननु नश्वरदेहप्रतियोगित्वाद्देह्यपि न शाश्वतः स्यात्तत्राऽऽहतुः- देहदेहिनोरयं परस्परप्रतियोगिविभागः पुराऽनादिरविवेककृतोऽज्ञानकल्पितः जातिः सामान्यं व्यक्तिर्विशेषस्तयोर्विभागो यथा वस्तुनि सन्मात्रे कल्पितः परस्परापेक्षसिद्धत्वेनानिरूप्यत्वात्तद्वदिति ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं तत्रागतावङ्गिरोनारदौ शोकापनयनाय तमूचतुरित्याह मुनिः—ऊचतुरिति। मृतकोपान्ते शवसमीपे पतितं मृतकोपमं शवसदृशं तत्र हेतुः शोकेनाभिभूतं तिरस्कृतविवेकं राजानं चित्रकेतुं सदुक्तिभिः प्रकृतिपुरुषेश्वरयाथात्म्यवेदिनीभिरुक्तिभिर्बोधयन्तौ विवेकमुत्पादयन्तावूचतुः ॥ १ ॥

सदुक्तिभिर्बोधनप्रकारमेवाह—क इत्यादिना, वस्तुनि कल्पित इत्यन्तेन। तावज्जीवानां परस्परं निरुपाधिकसम्बन्धाभावादौपाधिकसम्बन्धप्रयुक्तशोकमोहभयादेर्निमित्तसम्बन्धस्यैव निवृत्तेर्न शोकहेतुरस्तीत्यूचतुः—कोयमिति—हे राजेन्द्र, यं प्रति भवाननुशोचति सोऽयं प्रवाहरूपायां सृष्टौ पुरा भूतकाले इदानीं वर्तमानकाले इतःपरं भविष्यत्काले वा तव कः स्यात् त्वमप्यस्य शोच्यमानस्य कतमः? यदि जीवात्मानं प्रति शोचसि तर्हि शोच्यस्य जीवस्य तव च कस्सम्बन्धः? कालत्रयेपि नानेन तव सम्बन्ध इत्यर्थः ॥ २ ॥

देहद्वारकपितृपुत्रसम्बन्धेनानुशोचामीत्यत्रोचतुः—यथेति । स्रोतोवेगेन प्रवाहवेगेन यथा वालुकाः सिकताः कदाचित्संयान्ति संयुक्ता भवन्ति कदाचिच्च प्रयान्ति विप्रयुक्ताश्च भवन्ति तथा कालेन निमित्तेन देहिनोऽप्यन्यैर्देहिभिः सह संयुज्यन्ते वियुज्यते च देहिनां परस्परं कालकर्मायत्तदेहद्वारकसम्बन्धस्यौपाधिकत्वादुपाधिविलये तत्प्रयुक्तसम्बन्धस्यापि विलयाद्विलीनसम्बन्धप्रयुक्तः शोको न कार्य इति भावः ॥ ३ ॥

ननु, पितृपुत्रत्वादि सम्बन्धो न केवलमात्मगतः नापि देहमात्रगतः अपि तु विशिष्टगतः अतो विशिष्टं प्रत्येवाहं विशिष्टरूपः शोचामीति चेदेवमपि न शोकः कार्य इत्याहतुः—यथेति। यथा धानासु बीजेषु जातिगुणादिविशेषणविशिष्टेषु ताहृश्यो धाना बीजान्तराणि ईश्वरसङ्कल्पेन भवन्त्युत्पद्यन्ते अपादानस्यैवाधिकरणत्वविवक्षया सप्तमी न भवन्ति नश्यन्ति च तथा भूतेभ्यः भूतान्तराण्यपीश्वरमाययोत्पद्यन्ते नश्यन्ति च । अप्राणिभ्योऽप्राणिनामिव प्राणिभ्यः प्राणिनामप्युत्पत्तेर्मृतेश्चेश्वरसङ्कल्पायत्तत्वात्तद्वत्प्राणिभिरपीश्वरमायावैभवमनुसन्दधाद्भिस्तूष्णीमेव स्थेयं न तु शोकः कार्यः किञ्च विशिष्टे विशेष्यांशस्य जीवस्य गतत्वाच्च न शोकः कार्य इति भावः ॥ ४ ॥

ननु, गच्छतु विशेष्यांशो जीवः साक्षात्सम्बन्धापादकमवस्थितं देहं प्रत्यनुशोचामीत्यत्राहतुः वयश्चेति । वयं त्वं चान्ये इमे चराचराश्च सर्वे तुल्यकालाः वर्तमानकालीनायथा जन्ममृत्योः प्राक्पश्चाच्च न सन्ति जन्मनः प्राक् नासन्मृत्योः पश्चाच्च भविष्यन्ति भो राजन्, अधुनाऽयमप्येवमेवनास्ति विशरणायारब्धमिमं देहमप्यसन्तं पश्येत्यर्थः ॥ ५ ॥

यदीशमायया भूतेभ्यो भूतानि भवन्ति न भवन्ति तर्हि तस्य स्वातन्त्र्यरूपमीश्वरत्वमेव न स्यात्तज्जीवविशेषापेक्षया सुखदुःखप्रदत्वेन वैषम्यनैर्घृण्यप्रसङ्गात्तयोश्च कर्मवश्यजीवधर्मत्वाज्जीववत्कर्मवश्यत्वप्रसङ्गादित्यत्रोचतुः—भूतैरिति । भूतेशः सर्वाद्वयप्यात्मनावस्थितानां सर्वेषां भूतानामीशः अन्तःप्रविश्य तत्तज्जीवकर्मानुसारेण प्रशास्ता आत्मना स्वेन सृष्टैरत एवास्वतन्त्रैः सृजतीत्यनेन तस्य स्पृष्टसकलेतरविलक्षणत्वं, सर्वार्थशक्तियुक्तत्वम्, अज इत्यनेन कर्मफलाननुभवाय तदायत्तोत्पत्त्यादिराहित्योक्त्याऽवाप्तसमस्तकामत्वमप्युक्तं भवति । नन्वेवंभूतः सृजतयापि जगत्सृष्ट्यादेः केनचित्प्रयोजनेन भवितव्यं निष्प्रयोजनस्य प्रवृत्त्यसम्भवात् तत्र बुद्धिपूर्वकारिणामारम्भे हि द्विविधं प्रयोजनं स्वार्थः परार्थो वा ? न हि परस्य ब्रह्मणः स्वभावत एवावाप्तसमस्तकामस्य जगत्सर्गेण किञ्चन प्रयोजनमनवाप्तमवाप्यते. नापि परार्थः। अवाप्तसमस्तकामस्य परार्थता हि परानुग्रहेण भवति नचेदृशगर्भजन्मजरामरणनरकादिनानाविधानन्तदुःखबहुलं जगत्करुणावान् सृजतीत्याशङ्कमानं प्रत्याहतुः—निरपेक्षोपि बालवदिति। प्रयोजननिरपेक्षोऽपि बालवत्सृजतीत्यर्थः दृष्टान्तस्वारस्येन जगत्सृष्ट्यादेस्तल्लीलैकप्रयोजनत्वमुक्तं निरपेक्षोपीत्यनेन लीलाव्यतिरिक्तप्रयोजनान्तरनिरपेक्षत्वं चोक्तम् अतोऽनाप्तकामत्वभङ्गः नापि प्रवृत्त्यसम्भवः केवललीलैकप्रयोजनानां कन्दुकाद्यारम्भाणां बालमहाराजादिषु दर्शनात् नन्वेवमपीश्वरस्य देवतिर्यङ्मनुष्यस्थावरात्मनोत्कृष्टमध्यमापकृष्टसृष्ट्या पक्षपातः प्रसज्येत अतिघोरदुःखयोगकरणान्नैर्घृण्यं चावर्जनीयमिति शंकमानं प्रत्युक्तं भूतेश इति. अयं भावः एवं स्रष्टुरपि न वैषम्यादिदोषप्रसक्तिः सर्वभूतानां तत्तत्कर्मानुसारेण नियन्तृत्वात्क्रियमाणसृष्टेः सुखदुःखादेश्च देवादिवैषम्यस्य कर्मसापेक्षत्वादिति भावः तथा च श्रुतिः "साधुकारी साधुर्भवति पापकारी पापोभवति पुण्यः पुण्येन कर्मणाभवति पापः पापेन कर्मणा" इति तथाचोक्तं भगवता पराशरेणापि देवादिवै-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चित्र्ये हेतुः सृज्यानां क्षेत्रज्ञानां प्राचीनकर्मशक्तिरेवेति—

"निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥
निमित्तमात्रमुक्त्वैव नान्यत्किंचिदपेक्षते ।
नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तुवस्तुताम्" इति ॥

स्वशक्त्या स्वकर्मणैव वस्तु क्षेत्रज्ञवस्तु वस्तुतां देवादिवस्तुतां प्राप्यत इत्यर्थः ॥ ६ ॥

किञ्च देहस्य जन्ममरणादिस्वभावत्वादपुरुषार्थस्वरूपत्वादात्मनस्तु तद्विपरीतस्वभावत्वाच्च न देहसम्बन्धप्रयुक्तशोकः कार्य इत्याहतुः—देहेनेति । हे राजन् ! देहिनो जीवस्य देहः देहेन पितृशरीरेण देहान्मातृशरीरादभिजायते यथा बीजादेव भूमौ निहिताद्बीजान्तरं जायते तद्वत् 'दिह उपचये' इति धातुपाठादुपचयार्थकाद्दिहधातोर्निष्पन्नो देहशब्द उपचयापचयादिषड्भावविकारवद्वाचकः प्रयुक्तः तस्य तत्स्वाभाव्यसूचनाय एवं चाग्नेरौष्ण्यं प्रतीव जलस्य शैत्यं प्रतीव देहस्य मृतिंप्रति शोको मुधेति भावः आत्मनो देहविपरीताकारत्वमुक्तं देह्यर्थ इव शाश्वत इति देही जीवः शाश्वतः नित्यः सततैकरूपश्चात्मपदार्थः पुरुषार्थरूपः आनन्दरूपः आनन्दो हि पुरुषार्थः । इति शब्द एवकारार्थः निपातानामनेकार्थत्वात् पुरुषार्थरूप एवेत्यर्थः नित्यत्वसततैकरूपत्वानन्दरूपत्वादिस्वभावात्मानुदर्शनं विहाय तद्विपरीतं देहं प्रत्यनुशोको व्यर्थ इति भावः ॥ ७ ॥

देहिनो देहो जायते देह्यर्थः इव शाश्वत इति च नित्यसम्बन्धार्थकमत्वर्थीयप्रत्ययान्तेन जीवो निर्दिष्टः तत्र यद्यनन्तदुःखाकरदेहसम्बन्धो जीवस्य नित्यश्चेदपुरुषार्थनित्यसम्बन्धिनोऽप्यपुरुषार्थरूपतैव स्यान्न तु पुरुषार्थरूपत्वमिति शङ्कां निराकुर्वन्तावाहतुः — देहीति । पुरा योऽयमविवेकः अनादिसिद्धो देहात्मभ्रमस्वतन्त्रात्मभ्रमरूपः परमार्थकर्ममूलकस्तेन कृतो देहदेहिविभागः न स्वरूपतः अयं देहोऽयं देहीति विभागरहिते आत्मनि देवमनुष्यादिदेहंप्रति सम्बन्ध्ययमात्मा तदात्मप्रतिसम्बन्ध्ययं देह इतिविभागः केवलदेहात्मादिभ्रममूलकः सञ्जात इत्यर्थः यथाऽवस्तुनि रजतत्वजात्याश्रयरजतव्यक्तिभिन्ने शुक्त्यादिवस्तुनि इदं रजतमिति रजतत्वतदाश्रयव्यक्त्योर्विभागः परमार्थसादृश्यादिदोषमूलकेन भ्रमेण कल्पितस्तद्वत् यद्यपि दृष्टान्ते रजतत्वतदाश्रयरूपजातिव्यक्त्युभयभिन्ने शुक्त्यादौ जातिव्यक्तिविभागः कल्पितः स च विभागः प्रतीतिमात्रविषयः न तु प्रमितिविषयः अत एव नेदं रजतमिति तत्र बाधप्रवृत्तिः दार्ष्टान्तिके तु देहं प्रत्याश्रयभूत एवात्मरूपे वस्तुनि देहदेहिविभागः स च प्रमितिविषयश्च अत एव हि तत्र नायं देहः नायं देहीति पाश्चात्यबाधनादर्शनं चेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं तथाप्युभयत्र जातिव्यक्तिविभागदेहदेहिविभागयोर्भ्रममूलकत्वस्य भ्रमकारणयोः सादृश्यकर्मणोः पारमार्थिकत्वस्य च साम्याद्दृष्टान्तदार्ष्टान्तिकभाव उपपन्नः न हि दृष्टान्तदार्ष्टान्तिकभावे सर्वसाधर्म्यमपेक्षितम् अन्यथा तयोस्तादात्म्यापत्त्या दृष्टान्तदार्ष्टान्तिकभावस्यैव काप्यसङ्गतत्वापत्तेः अविवेककृत इत्यनेनाविवेकं प्रति निमित्तभूते पुण्यपापात्मके कर्मणि परमात्मोपासनेन निःशेषं निरस्ते सति तन्निमित्तदेहात्मभ्रमादेरपि निवृत्तावपुरुषार्थसम्बन्धात्मस्वरूपमनुभूतं भवतीति सूचितं यथा दृष्टान्ते सादृश्यस्य दोषत्वनिश्चयेन निवृत्ते भ्रमे जातिव्यक्तिविभागानर्हशुक्त्यादियाथात्म्यमनुभूतं भवति तद्वत् देहीति इति प्रत्ययो न नित्ययोगेऽपि तु सम्बन्धमात्र इति भावः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र संसारो नित्यस्तदुच्छेदो ज्ञानेनैव तदपि निरंतरोपासितश्रीनारायणानुग्रहादुत्पद्यत इति एतत्सर्वं निरूप्यतेऽस्मिन्नध्याये तत्राङ्गिरोनारदावागत्य किं चक्रतुरित्याशङ्कायामाह-अशुक इति । मृतकोपान्ते शवसमीपे ॥ १ ॥

यमनु शोचति अयं तव कः स्यात्कीदृशो बन्धुः स्यादिदानीं पुत्र इति भ्रान्तिश्चेत्तर्हि विरिञ्चिसृष्टौ पुराऽतीतकाले त्वमस्य बन्धूनां मध्ये कतमो बन्धुः पिता मातुलो वा सहोदरो वा अतः परं पश्यति काले च कतमो बन्धुरिति शेषः अयञ्च पूर्वापरकालयोस्तव कतम इति योज्यं यथा पूर्वोत्तरकाले युवयोर्न कोपि सम्बन्धस्तथेदानीमपि भ्रान्तिमन्तरेणेत्थं शोको न कार्य इति भावः ॥ २ ॥

ननु, तर्हीदं सर्वं मायाकल्पितमस्त्विति तत्राह—यथेति । यथा वालुकाः सिकताः स्रोतोवेगेन नदीप्रवाहवेगेन यान्ति संयान्त्येकत्र संयुज्य राशीभवन्ति तथा 'कल ज्ञाने' इति धातोः कालेन ज्ञानमूर्तिना देहिनः संयुज्यन्ते सम्बध्यन्ते 'कल द्रावणे' इति धातोः कालेन संहारमूर्तिना वियुज्यन्ते ॥ ३ ॥

ननु, त्यक्तदेहाः पुनर्देहान्तरमाप्नुवन्ति उत शून्यतां आहोस्विदनिवृत्तिलक्षणामवस्थामिति तत्राह—यथेति । धानासु बीजेषु अङ्कुरादिसमृद्ध्या परिपक्वेषु सत्सु ततो धानान्तराणि बीजानि कचित् भवन्ति कचित् प्रतिबन्धान्न भवन्ति यथा, तथाभूतेष्वपि ईशमायया नारायणेच्छया चोदितानि प्रेरितानि पुत्रादिव्यवहारयोग्यतयोत्पद्यन्ते । कचिद्भर्जनादिलक्षणकर्मप्रतिबन्धानि बीजानि अङ्कुरादिकार्यं न जनयन्ति यथा, तथा ज्ञानाग्निभर्जितसंसारबीजानि भूतानि पुनरावृत्तिशून्यावस्थां मुक्तिलक्षणामाप्तानि नोत्पद्यन्त इतीमं विशेषं वा इत्यनेन दर्शयति ॥ ४ ॥

इतोपि पुत्राद्यात्मना सम्बन्धः एवमित्याह—वयमिति । अस्मिन् क्षणे एव तुल्यकालत्वम् अन्ययोः द्वयोः यथा नास्ति । देहनाशात् । तथा प्रकृतेरपीति भावः । ननु, देहनाशानाशाभ्यां सदा तुल्यकालत्वाभावश्चेत्तर्हि सर्वदा तुल्यकालत्वं कस्येति तत्राह - जन्ममृत्योरिति । जन्ममृत्योः पूर्वापरकालयोः यथा सृष्ट्यादिकं करोति तथाऽधुनाप्येवमेवेति, अनेन हरेर्देहेन सदातनत्वमुपवर्णितम् अस्य चैतन्यसदातनत्वेपि देहस्य नास्तीति विशेष इत्यभिप्रायः "देहस्य सर्वथा नाशादनाशातनस्यतु" इति स्मृतेः ॥ ५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

केनोद्भूतैर्भूतैरिति तत्राह–आत्मेति । भूतानि स्वयमेव सृजन्तीति किं न स्यादिति तत्राह - असक्तैरिति. न चार्थार्थी सृजत्ययम् अनपेक्ष इति. अथास्मात्सर्जनात्प्रयोजनापेक्षा न स्यात्कथं तर्हीदं सर्जनं प्रयोजनमन्तरेण प्रवृत्त्यदर्शनादित्यत्राह--बालवदिति. यथा बालः क्रीडनं क्रीडति तथा "लोकवत्तु लीला कैवल्यम्" इति सूत्रात् ॥ ६ ॥

भूतैरुपकरणैरीश्वरः कथं सृजतीत्यतस्तं प्रकारं दर्शयति--देहेनेति । पितुर्देहेन संयुक्तान्मातुर्देहाद्देहिन उत्पत्स्यमानस्य पुत्रलक्षणजीवस्य देहोऽभिजायते न तु चेतनः तस्य नित्यत्वात्. 'दिह उपचये' इति धातोः देहशब्दोपलक्षितपूर्वकर्मणा फलदानायेश्वरप्रेरितेन देहिनः पितृमातृशब्दवाच्यस्य देहादुपादानभूताद्देहः पुत्रस्येति शेष इति वा अभीत्युपसर्गेणानेकमुखपरम्परासृष्टिमुपलक्षयति अत्र दृष्टान्तमाह—बीजादिति, बीजात्पनसादिलक्षणाज्जलतेजआदिसाधनसामग्रीसंवृतादङ्कुराख्यं वृक्षजीवशरीरं तेन सह जायते तस्माद्युक्तजलाद्यात्तसारात्पनसादिबीजान्तरमुत्पद्यते तस्माच्चेति यथा कार्यपरम्परा नचैवमनवस्था मूलकार्यस्य प्रकृत्यात्मकत्वात् तथा पितृमातृविकारशुक्रशोणितसम्बन्धात्कलिलादिलक्षणं कार्यमभिमानि जीवेन सह जायते तस्मात्परिणतावयवात्स्त्रीपुरुषभूताद्देत आदिक्रमेण कार्यान्तरं जायत इत्यनेन क्रमेण भगवान् भूतैः सृष्टिं करोतीति स्थितिसंहारयोरेवमूह्यं तददृष्टेश्वरेच्छावशादिति ग्राह्यं "अथातो रेतसस्सृष्टिः" इति श्रुतेः तस्मात्सर्वाणि कार्याणि कानि चिद्साक्षात्सात्मना नारायणायनानि कानिचित्परम्परया तधीनानि तत्रापि विशेषस्तु प्रमाणादवगन्तव्यः तदुक्तश्च—

"नारायणायना देवा ऋष्याद्यास्तत्परायणाः ।
ब्रह्माद्याः केचनैवं स्युः सिद्धो योग्यं सुखं लभेत्" ॥

अत्रापि कियन्त इतीयमाशङ्का च ।

"नव कोट्यस्तु देवानामृषीणां शतकोटयः ॥
नारायणायनाः सर्वे येकेचित्तत्परायणाः" इति ॥

एतद्वाक्यद्वयं सर्वस्य नारायणाश्रयेण वक्तव्यत्वात् "मुक्तानामपि सिद्धानां नारायणपरायणः" (१) इत्यादौ नोदाहृतं उभयत्रापीदमेव प्रमाणमिति सन्तोष्टव्यं । ननु, देहनाशवद्देहिनाशे पुरुषार्थानुपपत्तिरत्राह–देहीति, देहदेहिनोर्मध्ये देही शाश्वतः अभिमानमन्तरेण जन्मनाशरहिततया कालत्रयेऽप्येकप्रकारः कथमिव अर्थ इव मोक्षलक्षणपुरुषार्थ इव शब्दार्थ इव वा तर्हि ब्रह्मसाम्यमायातमित्यस्याप्येतदेवोत्तरं देह्यर्थः जीवाख्यः पदार्थः शाश्वत इव नित्य इव "द्रव्यं कर्म च कालश्च" इत्यादेः जीवनित्यत्वस्य श्रीनारायणाधीनत्वेनोपचरितत्वाद्धरेरेव निरुपचरितनित्यत्वमतस्तयोर्न साम्यमित्यर्थः केचिदेवं व्याचक्षते अर्थः नरत्वादिजातिमात्रमिव यथा जातेर्नित्यत्वं तथा जीवस्यापीत्येतच्चिन्त्यं "कुतो भस्मत्वमासस्य नरत्वं पुनरिष्यते" इति वचनात् तत्त्वरत्वादेस्तत्तन्नाशेन नाशसम्भवान्नित्यत्वानुपपत्तेः ॥ ७ ॥

कृशोऽहं स्थूलोऽहमित्यभेदानुभवाद्देहिनो नित्यत्वं देहस्यानित्यत्वमित्ययं विशेषः कथं घटत इति तत्राह--देहेति । अविवेककृतोऽज्ञाननिर्मितः नचायमाधुनिकः शुक्तिरजतवदित्यत उक्तं पुरेति पुरा पुरातनः अनादिमानित्यर्थः अनेन ज्ञानेनाज्ञाने नष्टे उक्तविशेषो घटत इत्युक्तं भवति अत्र दृष्टान्तमाह—जातीति, यथा गवादिवस्तुनि गोत्वगवादिपिण्डानां विभागो भेदः कणादादीनामज्ञानेन कल्पितः न तु वास्तवः अज्ञानकृतत्वमात्रे दृष्टान्तोयं तस्माद्भेदाभेदत्वे अप्रयोजके इति कणादादीनामपि तमोयोग्यत्वप्रकटनाय तन्मतोदाहरणं वस्तुनि हरौ गोपालत्वादिजातिव्यक्तिविभागो यथा कल्पितः आरोपितस्तथेति वा ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

शुद्धात्मनो वस्तुतो देहित्वं नास्ति ततो नच तस्य देह इत्येयम् । तत्र दृष्टान्तः यथा न वस्तुनि सर्वकारणे परमात्मनि जातिर्व्यक्तिविभाग इति ॥ १—९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अथ पञ्चदशे भूपमुद्दधार मुनिद्वयम् ।
शोकान्मग्नन्तूपदिष्टुं नारदः किञ्चिदब्रवीत् ॥ १ ॥

अयं तव को भवेत् पुत्र इति चेत् सत्यं त्वमस्य कतमः पितेति चेत् तत्राह, पुरा सृष्टौ पूर्वजन्मनि किंवा इदानीं किंवा अतःपरं भाविनि जन्मनीत्यर्थः ये पूर्वजन्मनि पुत्रादिरूपेण संयुक्ता आसन् त एव मरणे ततो वियुक्ताः सन्तः वर्त्तमानजन्मनि कदाचित् तस्यैवान्यस्य वा पुत्रादयो भवन्ति ते जन्मान्तरे तस्यैवान्यस्य वा कलत्रादयः शत्रुमित्रादयो वा भवन्तीति भावः ॥ २ ॥

तमेवार्थं प्रकटयति—यथेति । स्रोतसः प्रवाहस्य वेगेन वालुका यथा प्रयान्ति वियुज्यन्ते संयान्ति संयुज्यन्ते तथा कालवेगेन देहिनो जीवा अपि ॥ ३ ॥

नन्वहमस्य पिता वा पुत्रो वा एतस्मिन् जन्मनिअन्यस्मिन्जन्मनि भवामि न भवामि वेत्यादि जिज्ञासया सम्यक्त्वलमेव किन्त्वस्य परमप्रेमास्पदस्य विच्छेददुःखमहं केनापराधेनानुभवामि तदब्रूतमिति चेत्तत्र कोऽप्यपराधः किन्त्वत्र काल एव कारणमित्याहतुः यथेति, तद्प्येतावन्तं कालं मम पुत्रोनाभूत् वार्द्धके जातो मृत इति महद्दुःखमिति चेत्तत्राहतुः धानासु यवेषु धाना यवान्तराणि भवन्ति कदाचिन्न भवन्ति नश्यन्ति च एवम्भूतानि पुत्रादीनि भूतेषु पित्रादिषु । अतो यवानां जन्य जनकत्वेऽपि यथा पितृपुत्रादिभावो नास्ति एवमत्रापि न शोकः कार्य्यं इति भावः 'धाना भ्रष्टयवे स्त्रियः' इत्यभिधानात् । ईशवेग यथा धानासु भ्रष्टयवेषु धाना न भवन्ति, एवम्भूतेषु ईश्वरेषु भवद्विधेषु अपत्यजनकादृष्टरहितेषु भूतानि अपत्यानि न भवन्ति किन्तु हे देव !

---

(१) एतत्स्कन्धीयचतुर्दशाध्यायस्यपञ्चमश्लोकोयम् ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

राजन् ! मायया प्रेरितानि भवन्ति चेत्यहमङ्गिरा एव त्वत्प्रबोधार्थं मायया त्वत्पुत्रोऽभूवमिति भावः ॥ ४ ॥

शोचनीयश्चेत् न केवलं मृतः पुत्र एव अपि तु दारामात्यस्वजनादयः सर्व्वे वर्त्तमाना अपि शोच्या एवेत्याहतुः—वयञ्चेति । तुल्यकाला एककालस्थिता जन्मतः प्राक् मृत्योः पश्चाच्च यथा न सन्ति एवमधुनापि न सन्ति न ह्यनैककालिकं वस्तु वास्तवमुच्यते नह्यवास्तवं वस्तु भव्यैर्गणनायामुपादीयते इत्यतस्तत् सत्यमप्यसत्यायमानमेवेति भावः ॥ ५ ॥

नच मयायं पुत्रो जनितः केनाप्यलक्षितेन दारुणेनायं नाशित इति स्वस्मिन् जनकत्वलक्षणो गुणः परस्मिंस्तु नाशकत्वलक्षणो दोषप्रसञ्जनीय इत्याहतुः । भूतैः पित्रादिभिः सृजति—राजादिभिरवति, सर्पादिभिर्हन्ति आत्मसृष्टैरिति पित्रादीनामीश्वरसृष्टत्वादीश्वराधीनत्वाच्चेत्यर्थः । ननु, पूर्णकामस्येश्वरस्य किं सृष्ट्यादिभिस्तत्राह—अनपेक्षोऽपि बालवल्लीलया करोतीति ॥ ६ ॥

सत्यमुक्तमीश्वरसृष्टेन पित्रा मया जनितः पुत्रोऽयं मृत इत्यतः शोचामीति तत्राहतुः—देहेन पितुर्देहेन देहिनः पुत्रस्य देहो मातुर्देहादभिजायते यथा बीजादेव वीजं जायते अतस्त्वया जनितस्य पुत्रदेहस्य तवात्र एव वर्त्तमानत्वात् त्वं कथमधुना शोचसीति भावः । नन्वत्र संप्रति देहि जीवात्मा नास्तीति शोचामीति तत्राहतुः, देही जीवोनाम अर्थस्तु शाश्वत एव न स त्वया जनित इति तेन सह न कोपि ते सम्बन्धोऽस्तीति भावः ॥ ७ ॥

ननु, नश्वरदेहप्रतियोगित्वात् देह्यपि न शाश्वतः स्यात्तत्राहतुः । देहदेहिनोरयं परस्पर प्रतियोगि विभागः पुरा अनादिः अविवेककृतः अज्ञानकल्पितः जातिः सामान्यं व्यक्तिर्विशेषः तयोर्विभागो यथा वस्तुनि सन्मात्रे कल्पितः परस्परापेक्षसिद्धित्वेनागिरूप्यत्वात् ॥ ८ ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीनारदाङ्गिरोभ्यां यथोपदेशो राजानं प्रतिकृतस्तथोच्यते—ऊचतुरिति पञ्चदशेन ॥ १ ॥

भवान् यमनुशोचति सोयम् पुरा सृष्टौ पूर्वजन्मनि इदानीं वर्त्तमाने जन्मनि अतःपरं भविष्ये जन्मनि च तव कः स्यात्त्वञ्चास्य कतमः नायं तव कोपि न त्वं चास्य कतमो पीत्यर्थः पितृपुत्रादिसम्बन्धस्यानियतत्वादस्थिरत्वाच्च ॥ २ ॥

यथा स्रोतसः प्रवाहस्य वेगेन वालुकाः प्रयान्ति वियुज्यन्ते ते संयान्ति संयुज्यन्ते तथा देहिनः पितृपुत्रादयः कालेन कर्मफलभगवच्छक्तिभूतकालवेगेन वियुज्यन्ते संयुज्यन्ते च ॥ ३ ॥

धानासूपादानभूतेष्वन्नबीजेषु यथा तत्तज्जातिगुणादियुक्ता धाना अन्नानि भवन्ति च तथैवस्य मायया वयुनेन सङ्कल्पेन तत्तज्जीवकर्मानुसारिणा भूतेषु पित्रादिषु सुतान्यपत्यानि भवन्ति न भवन्ति च पितृपुत्रादिसम्बन्धो नित्यो नास्त्यतो मम पुत्रो मृत इति शोकोऽयुक्त इति भावः ॥ ४ ॥

किञ्च सर्वभूतेषु शरीरस्यानित्यत्वेपि प्रकृतिरूपेणानित्यत्वं जीवस्य तु सर्वथा नित्यत्वमेवेति वस्तुनाशाभावाच्छोकोऽयुक्त इत्याहतुः वयं च त्वं चेमे तुल्यकालाश्चराचराः सर्वे यथाधुना सद्रूपाः भवन्ति एवं जन्मनः प्राक् नासन् अपि तु आसन्नेव मृत्योः पश्चात्त भविष्यन्त्यपि तु भविष्यन्त्येवेत्यन्वयः "सदेव सौम्येदमग्र आसीत्"।

नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
नचैव न भविष्यामः सर्वे वयमतः परम्" ॥

इत्यादि श्रुतिस्मृतयोप्यत्रानुसन्धेयाः ॥ ५ ॥

पाञ्चभौतिकेभ्यो भूतेभ्यो चराचरेभ्यो भूतानि चराचराणि भगवान् सृजति अवति हन्ति च बालवत् निरहङ्कारः ॥ ६ ॥

देहिनः पुत्रदेहगतस्य जीवस्य देहेन पितृदेहेन देहान्मातृदेहात् देह एव जायते देही जीवस्तु शाश्वतो ध्रुवः अयं इव सर्वशास्त्रार्थभूतपरमात्मैव ॥ ७ ॥

नन्वेवं भूतो देहिदेहविभागबोधः "तरति शोकमात्मवित्" इत्यादि श्रुतिप्रामाण्यात् शोकसागरनिस्तारको मम कुतो न प्रागासीत्तत्राहतुः—पुरा उपदेशात् देहिदेहविभागबोधात् पूर्वमयं देहिदेहविभागः अविवेकेनाऽबोधेन कृतः छिन्नः 'कृतिर्छेदने' यथा वस्तुनि पदार्थे मनुष्यादौ कल्पितः प्रजापतिना रचितः सत्योपि जातिव्यक्तः मनुष्यत्वतयाऽवयव्यस्त्वोर्विभागोयं पुरा मनुष्यत्वतदाश्रयव्यक्त्योर्बोधात्पूर्वं अविवेकेनाबोधेन छिन्नो भवति तद्वदित्यर्थः ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीरमणो जयति ॥

श्री शुकउवाच ॥

अंगिरा और नारद यह दोनों ऋषि शोक से व्याप्त और उस मृतक बालक के समीप पड़े हुये राजा को श्रेष्ठ वाणी से बोध कराने लगे ॥ १ ॥

हे राजेन्द्र ! जिसका तुम शोच करते हो इस सृष्टि में यह पूर्व में तथा इस समय में और इस से आगे तुमारा कौन होता है, और तुम इसके कौन होते हो ॥ २ ॥

जैसे प्रवाह के वेग से वालू मिलती है और अलग होजाती है, उसी प्रकार काल के वेग से जीव भी संयोग और वियोग को प्राप्त हुआ करते हैं ॥ ३ ॥

जैसे अन्नादिक बीज से बीज होताहै किसी समय नहीं भी होता, ऐसे ही ईश्वर की माया से प्रेरित, प्राणियों के पुत्रादि रूप प्राणि होते हैं, कभी नहीं भी होवे ॥ ४ ॥

हम तुम और वर्त्तमान समय में जो चराचर प्राणि हैं

श्रीशुक उवाच ।

एवमाश्वासितो राजा चित्रकेतुर्द्विजोक्तिभिः ।
प्रमृज्य पाणिना वक्त्रमाधिम्लानमभाषत ॥ ९ ॥

राजोवाच ।

कौ युवां ज्ञानसम्पन्नौ महिष्ठौ च महीयसाम् ।
अवधूतेन वेषेण गूढाविह समागतौ ॥ १० ॥
चरन्ति ह्यवनौ कामं ब्राह्मणा भगवत्प्रियाः ।
मादृशां ग्राम्यबुद्धीनां बोधायोन्मत्तलिङ्गिनः ॥ ११ ॥
कुमारो नारद ऋभुरङ्गिरा देवलोऽसितः ।
अपान्तरतमो व्यासो मार्कण्डेयोऽथ गौतमः ॥ १२ ॥
वसिष्ठो भगवान् रामः कपिलो बादरायणिः ।
दुर्वासा याज्ञवल्क्यश्च जातूकर्ण्यस्तथाऽरुणिः ॥ १३ ॥
रोमशश्च्यवनो दत्त आसुरिः स पतञ्जलिः ।
ऋषिर्वेदशिरा बोध्यो मुनिः पञ्चशिरास्तथा ॥ १४ ॥
हिरण्यनाभः कौसल्यः श्रुतदेव ऋतध्वजः ।
एते परे च सिद्धेशाश्चरन्ति ज्ञानहेतवः ॥ १५ ॥
तस्माद्युवां ग्राम्यपशोर्मम मूढधियः प्रभू ।
अन्धे तमसि मग्नस्य ज्ञानदीप उदीर्यताम् ॥ १६ ॥

---

भाषा टीका ।

ये जन्म और मरण के पहिले और पीछे जैसे न रहे इस समय में भी वैसेही जानों ॥ ५ ॥

ईश्वर निरपेक्ष भी होकर बालक के तरह अपनें सृजे हुये अस्वतंत्र प्राणियों के द्वारा प्राणियों को सृजता है पालन करता है और संहार करता है ॥ ६ ॥

हे राजन्! देही (पिता) के देह से माता के देह में यह पुत्र का देह उत्पन्न होता है, जैसे बीज से बीज उत्पन्न होता है। तिसमें भी देही (जीव) तौ शाश्वत (नित्य) है ॥ ७ ॥

यह देह है और यह देही है इस प्रकार का विभाग (भेद) प्रथम अविवेक से है जैसे घट पटादि वस्तुओं में जाति व्यक्ति का विभाग कल्पित है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आधिम्लानं वक्त्रम् ॥ ९ ॥ १० ॥

उन्मत्तस्येव लिङ्गं येषां ते ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

मम प्रभू रक्षकौ बोधे समर्थाविति वा अतो युवाभ्यां ज्ञानदीपः प्रवर्त्यताम् ॥ १६ ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमृषिभ्यां बोधितश्चित्रकेतुर्जातविवेकः स्तावुवाचेत्याह मुनिः। एवमिति । द्विजयोरङ्गिरोनारदयोरुक्तिभिरेवमाश्वासितः परिसान्त्वितो राजा चित्रकेतुराधिना पुत्रशोकेन म्लानं म्लानं वक्त्रं पाणिना प्रमृज्य विशोकयाभाषतोवाच ॥ ९ ॥

तदेवाह—कौ इत्यादिना, ज्ञानदीप उदीर्यतामित्यन्तेन । अवदृष्टपूर्ववेषौ तौ युवां कौ इति पृच्छति—काविति, ज्ञानसम्पन्नौ अत एव पूज्यानामपि पूज्यौ युवां तावत्कौ ? पश्यन्नपि किं पृच्छसीत्यत्राह-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अवधूतेन क्षुद्रेण वेषेण गूढौ तिरोधापितस्ववेषौ इह समागतौ युवामन्यथा क्षुद्रस्यैतादृशज्ञानसम्पत्तिर्दुर्लभेति भावः ॥१०॥

"विष्णोर्भूतानि लोकानां मङ्गलाय चरन्ति हि" इत्युक्तरीत्या लोकानुग्रहार्थमेवावधूतवेषा ज्ञानिनश्चरन्तीत्याह – चरन्तीति । ब्राह्मणा भगवद्भक्ता उन्मत्तस्यैव लिङ्गं येषां तादृशाः सन्तो ग्राम्यबुद्धीनां विषयासक्तानां संसारिणां मादृशानां बोधाय ज्ञानोत्पादनायावनौ भूमौ कामं यथेच्छं चरन्ति हि यस्माद्भगवत्प्रिया उन्मत्तलिङ्गिन एव मादृशां बोधाय चरन्त्यतो युवां कौ इति वान्वयः ॥११॥

ब्राह्मणान् भगवत्प्रियानुन्मत्तलिङ्गेन चरत एव दर्शयति–कुमार इति चतुर्भिः । कुमारः सनत्कुमारः ॥ १२ ॥

रामो भार्गवः ॥ १३ ॥

दत्तो दत्तात्रेयः स प्रसिद्धः पतञ्जलिर्महामुनिर्भरद्वाजः मुनिरुचथ्यः वेदशिरोचथ्य इत्यत्र सन्धिरार्षः वेदशिरो बौध्य इति पाठे बोधस्य गोत्रापत्यं बौध्यः आङ्गिरसः "कपिबोधादाङ्गिरसे" इति यञ् ॥ १४ ॥

एते कुमारादयः तथा ऽपरे च ज्ञानमेव सम्पद्येषां ते सिद्धेशाश्चरन्ति ॥ १५ ॥

युवां यौ कौचिद्वा भवेतं तावद्यद्यस्माद्युवां प्रभू मादृशस्य बोधोत्पादने दक्षौ तस्माद्युवाभ्यां मम ज्ञानमेव दीपः स उदीर्यतां दीप्यतामित्यर्थः कथम्भूतः अन्धे तमस्यज्ञानरूपे मग्नस्यात एव मूर्खधियः अत एव ग्राम्यपशोः ग्रामे भवो ग्राम्यो नरः स एव पशुस्तस्य ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देहदेहिविभागप्रतीतेरनुभवात्कथं नानात्वाद्रिप्रतीतिभ्रान्तिरित्यत आह—नानात्वमिति । अतद्धर्मो यो जीवस्तस्मादन्यस्य देहस्य धर्मः सुरो नरो इमित्यादिनानात्वादयो द्रष्टुर्जीवस्य विद्यमाना इति भ्रान्तिः क्रियाफलमिति हेतुगर्भविशेषणं कर्मफलत्वात् अग्निना दाह्यस्येन्धनस्य विक्रियाः वृद्धिक्षयादिविकारा अग्नेरिति भ्रान्तिः भ्रान्त्येन्धनसमृद्धौ समृद्धोऽग्निस्तद्धासे क्षीण इत्यादयो द्रष्टुर्ज्ञानिनो हरेरतद्धर्मा इत्येव भान्ति "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुतेर्नैदन्दर्शनम्भ्रान्तमते न देहिदेहभेदे प्रमाणमुक्तं भवतीति वा ॥ ९ ॥

इदमेव विवृणोति । त इम इति । ये ये प्रत्यक्षादिप्रमाणसिद्धा जन्मनाशादयस्त इमे जीवस्य देहसंयोगादात्मनि जीवे मनसि वा भान्ति कुतोऽसद्ग्रहादेहोहमित्यभिमानात् अत्रो दाहरणमाह—स्वप्न इति जाग्रद्दृष्टसर्पव्याघ्रादिसंस्कारवशात्स्वप्नेपि यथा तद्दर्शनात्सर्वं भयमित्याद्यनर्थजातं भवति तथाऽनादिकालीनमिथ्याभिमानादनर्थकरः संसारः स्यादिति यद्यस्मा-

त्तस्मात्तन्निवृत्त्युपायमाह—नान्यादिति, अन्यदनर्थकरं न ध्याये-दित्यन्वयः ननु, शुक्तिकाधिष्ठाने रजतं यथा प्रतीयते तथा जन्मादिकं किमधिष्ठानमित्येतां मन्दाशङ्कां वा परिहरति—न इति आत्माधिष्ठानं शुक्तिरजतवज्जन्मादिकं मिथ्याभूतं भवेदित्यतः स्वप्न पदार्थानामर्थक्रियाकारित्वाद्यथासत्यत्वमंगीकर्तव्यं तथा जन्मादीनामित्यभिप्रेत्याह—स्वप्न इति, अन्यद्देहात्मत्वम् ॥ १० ॥

अनन्यध्यानफलं सदृष्टान्तमुपपादयति—प्रसुप्तेति । प्रकर्षेण सुप्तस्य प्रकर्षेणासुप्तेर्मरणात्परपर्यायत्वात्तन्निवृत्त्यर्थं जीवतोपि धृतप्राणस्यापि ज्ञानपूर्वं बाह्यप्रवृत्तिशून्यस्य पुरुषस्यानहम्मानाहेतुत्वाद्भ्रान्तिज्ञानराहित्याद्यथा घोरा संसृतिर्न भाति तद्वत्तथा विमुक्तस्य सा न भाति । कुतः ? विमुक्ताहम्भावबुद्धित्वादेव नानन्यध्यानेन कैवल्यप्राप्तिः सूचिता भवतीति ॥ ११ ॥

फलितमाह—तस्मादिति । यतोऽनहम्मानिनो घोरसंसारनिरन्वयः तद्भावश्च तस्मादन्यत्पुत्रादिकं मनोमात्रं मनोगतरागद्वेषजनितपुण्यपापनिमित्तम् एतदुक्तं भवति अहम्मानेन मनसो रागद्वेषौ स्यातां तयोः पुण्यपापे भवतः ताभ्यां च पुत्रादिकमुत्पद्यते "मनसो द्वेषरागाभ्यां पुण्यपापसमुद्भवः । पुत्रादिपुण्यपापाभ्यां तस्मात्सर्वं मनो भवम्" इति वचनात् अनेन पुत्राद्दीर्घायुष्यादिकं पुण्यपापनिमित्तं भवतीति सूचितमिति ननु, तदस्तु ततः किं प्रकृत इति तत्राह—जहीति । तद्धननोपायमाह—वासुदेव इति आत्मनि विश्वभूते देहस्थितत्वेपि तद्दृगतदुःखाद्यस्पर्शे समर्थे इति द्योतनायेश्वर इति मनोधारणायोत्पन्नतत्प्रसादोद्भूतज्ञानासिना तमोऽहम्ममतालक्षणं निर्मूलयेत्यर्थः ॥१२॥

आधिना ज्ञानम् ॥ १३ ॥

अवधूतेन वेषेण धूलिरूपिताकारेण ॥ १४ ॥

उन्मत्तस्य लिंगमेषामस्तीति तथा ॥ १५ ॥

मार्कण्डेयगौतमयोर्मध्येऽन्यो नास्तीति द्योतनायाथशब्दः ॥१६॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अवधूतेन वेषेणेति निजाच्छादनार्थं तदाकृतत्वात् ॥ १० ॥

भगवतो विशेषतो भक्तवत्सलस्य सामान्यतोपि ब्रह्मण्यदेवस्य प्रियाः ॥ ११ ॥

कुमार इति चतुष्कं । व्यासबादरायणयदीनां तदानीमनाविर्भूतानामपि गणना शाश्वद्दर्शनेनेति ॥ १२—१७ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अवधूतेन वेषेणेति स्वगोपनार्थं ताभ्यां तथा कृतत्वात् ॥ १०—१७ ॥

———

❀ ( नानात्वजन्मनाशश्चक्षयो वृद्धिःक्रियाफलम् ।
द्रष्टुश्चभान्त्यतद्धर्मायथाग्नेर्दाह्यविक्रियाः ॥ ० ॥
तद्वमेदेहसंयोगादात्मन्याभान्त्यसद्ग्रहात् ।
स्वप्नेयथा तथानान्यद्ध्यायेत्सर्वम्भयश्चयत् ॥ ० ॥
प्रसुप्तस्यानहम्मानान्नाघोरा भाति संसृतिः ।
जीवतोपियथातद्वद्विमुक्तस्यानहम्मतः ॥ ० ॥
तस्मादन्यन्मनोमात्रजह्यहम्ममतातमः ।
वासुदेवे भगवति मनो धेह्यात्मनीश्वरे ॥ ० ॥ )

अङ्गिरा उवाच ।

अहं ते पुत्रकामस्य पुत्रदोऽस्म्यङ्गिरा नृप ! ।
एष ब्रह्मसुतः साक्षान्नारदो भगवानृषिः ॥ १७ ॥
इत्थं त्वां पुत्रशोकेन मग्नं तमसि दुस्तरे ।
अतदर्हमनुस्मृत्य महापुरुषगोचरम् ॥ १८ ॥
अनुग्रहाय भवतः प्राप्तावावामिह प्रभो ! ।
ब्रह्मण्यो भगवद्भक्तो नावसीदितुमर्हति ॥ १९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आश्वासितः प्रतिबोधितः आधिम्लानं वक्त्रं पाणिना प्रमृज्याभाषत ॥ ९ ॥

महिष्ठावतिमहान्तौ ॥ १० ॥

उन्मत्तस्येव लिङ्गं भापणाचिन्हं येषां ते कामं यथेष्टम् ॥ ११ ॥ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

मम प्रभू ज्ञानोपदेशेन संसाराद्रक्षकौ अतो युवाभ्यां ज्ञानमेव दीपः अज्ञाननाशक उदीर्यतामुद्दीप्यताम् ॥ १६ ॥ १७ ॥

---

भाषाटीका ।

श्रीशुकउवाच ॥

राजा चित्रकेतु इस प्रकार के ब्राह्मणों के वचनों से आश्वासन को प्राप्त होकर मनकी व्यथा से मलिन मुख को हाथ से पोंछ कर बोला ॥ ९ ॥

राजोवाच ॥

ज्ञान से पूर्ण और बड़ों में बडे आप दोनों अवधूत के वेश में छिपे हुए कौन यहां आये हैं ॥ १० ॥

हमारे सदृश ग्राम्य बुद्धियों को ज्ञान देने के लिये उन्मत्त के चिन्ह को धारण कर भगवत्प्रिय ब्राह्मण लोग पृथिवी में विचरतेही रहते हैं ॥ ११ ॥

सनत्कुमार नारद ऋभु अंगिरा देवल असित अपान्तरतम व्यास मार्कण्डेय और गौतम ॥ १२ ॥

वसिष्ठ भगवान् परशुरामजी कपिलदेव शुकदेव जी दुर्वासा याज्ञवल्क्य जातूकर्ण्य और आरुणि ॥ १३ ॥

रोमश च्यवन दत्तात्रेय आसुरि पतंजलि और वेदशिरा-ऋषि तथा पञ्चशिरा मुनि ॥ १४ ॥

हिरण्यनाभ कौशल्य श्रुतदेव ऋतुध्वज ये सब और भी बहुत से ज्ञान के हेतु ( देनेवाले ) सिद्धेश्वर विचरतेहैं ॥ १५ ॥

तिसी से आप दोनो समर्थ हो अज्ञान रूप अन्धकार में डूबा हुआ मूढबुद्धि ग्राम्य पशु ऐसे मुझको ज्ञान रूप दीपक का प्रकाश कीजिये ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

महापुरुषगोचरं हरिभक्तं त्वाम् ॥ १८ ॥ १९ ॥

❀ एते चत्वारःश्लोका विजयध्वजरीत्या अधिकतया विद्यन्ते एतेषां व्याख्याः २४४ पृष्ठे नृपादित्वादत्यक्तान्तं द्रष्टव्याः ।

तदैव ते परं ज्ञानं ददामि गृहमागतः ।
ज्ञात्वान्याभिनिवेशं ते पुत्रमेव ददाम्यहम् ॥ २० ॥
अधुना पुत्रिणां तापो भवतैवानुभूयते ।
एवं दारा गृहा रायो विविधैश्वर्यसम्पदः ॥ २१ ॥
शब्दादयश्च विषयाश्चला राज्यविभूतयः ।
मही राज्यं बलं कोशो भृत्यामात्याः सुहृज्जनाः ॥ २२ ॥
सर्वेऽपि शूरसेनेमे शोकमोहभयार्तिदाः ।
गन्धर्वनगरप्रख्याः स्वप्नमायामनोरथाः ॥ २३ ॥
दृश्यमाना विनार्थेन न दृश्यन्ते मनोभवाः ।
कर्मभिर्ध्यायतो नानाकर्माणि मनसोऽभवन् ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदैव यदा पूर्वमागतोऽस्मि ॥ २० ॥

रायः अर्थाः ॥ २१ ॥

चला अनित्याः किञ्च महीति ॥ २२ ॥

हे शूरसेन, इमे सर्वेऽपि शोकादिप्रदाः किञ्च आगमापायित्वेन गन्धर्वनगरतुल्याः गन्धर्वनगरं ह्यकस्मादेव क्वचिदायात्यपयाति चेति प्रसिद्धं तदेवमनित्यत्वं शोकादिहेतुत्वञ्चागमापायित्वञ्चोक्तं मिथ्यात्वमप्याह—स्वप्नश्च माया च मनोरथश्च यथा, तद्वत् ॥ २३ ॥

एते मनोभवाः मनोमात्रविजृम्भिताः अत्र हेतुः अर्थेन तात्त्विकस्वरूपेण विनैव दृश्यमानाः, तत्कुतः ? यस्मात्क्षणान्तरे न दृश्यन्ते तात्त्विकत्वे हि क्षणान्तरे बाधो न स्यात् अतो मनोमात्रविजृम्भितत्वेन स्वप्नादिवन्मिथ्याभूता इत्यर्थः । नन्वेते पुण्यापुण्यकृत इति मीमांसकाः प्राहुस्तत्कुतो मनोभवत्वं ? तत्राह कर्मभिः कर्मवासनाभिरर्थान् ध्यायतः पुंसो मनस एव निमित्तात्कर्माण्यभवन् पाठान्तरे कर्म ईप्सिततममभिध्यायत इत्यर्थः कर्मणोऽपि मनोभवत्वात्तत्साध्या अर्था अपि मनोभवा एवेति भावः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुभावपि पृष्टौ तत्र तावदङ्गिरा आत्मानौ स्वागमनप्रयोजनञ्च वदंश्चित्रकेतोर्वैराग्यमुत्पादयति—अहन्त इत्यादिनोपशममाविशेत्यन्तेन । हे नृप ! पूर्वं पुत्रं कामयमानस्य तव पुत्रदो योऽङ्गिराः सोऽहमस्मि एष द्वितीयस्त्वयं साक्षाद्ब्रह्मणः सुतो भगवान्नारद ऋषिः ॥ १७ ॥

किमर्थमागताविस्यत्राह—इत्थमिति । पुत्रशोकेनेत्थं दुस्तरे तमस्यज्ञाने मग्नमतदर्हं शोकानर्हं महापुरुषगोचरं उत्कृष्टपुरुषैरनुग्राह्यं त्वामनुस्मृत्य प्रत्यभिज्ञाय भवतोऽनुग्रहाय भवन्तमनुगृहीतुमिह आवां प्राप्तौ हे प्रभो ! ब्रह्मण्यः ब्रह्मणि ब्रह्मकुले साधुर्ब्राह्मण्यः तत्रापि भगवद्भक्तः त्वादृशोऽवसीदितुं दुःखितुं नार्हति ॥ १८ ॥ १९ ॥

यथा पूर्वमागतस्तथा त्वद्गृहं प्रत्यागतोऽहं ते तुभ्यं परं ज्ञानं ददामि भगवद्भक्तः इत्यत्रादिकर्मणि क्तः आरब्धभगवद्भक्तियोगः भक्तियोगारम्भभूतायाः सत्सङ्गतेः कृतत्वादिति भावः तर्हि पूर्वमेव ज्ञानं किं नाददास्तत्राह—ज्ञात्वेति, अन्याभिनिवेशं पुत्राभिलाषं ज्ञात्वा ते तुभ्यं पुत्रमेवाहं ददौ दत्तवानास्मि ॥ २० ॥

ननु, ममान्याभिनिवेशे सत्यपि तस्य दुःखोदर्कतां ज्ञापयित्वा ज्ञानमेव किं न दत्तवानित्यपेक्षायामभिलषितपुत्रप्रदानमन्तरेण दत्तमपि ज्ञानं न सुप्रतिष्ठितं भवति पुत्रोत्पत्तिविपत्तिभ्यामनुभूतसुखदुःखस्य तद्दृष्टान्तेनेतरेषामपि वैषयिकसुखानां सुखोदर्कतामनुमन्यमानस्य । सञ्जातवैराग्यस्य तु दत्तं ज्ञानं सुप्रतिष्ठितं भवतीत्यालोच्य न दत्तवानस्मीत्यभिप्रायतः । पुत्रदृष्टान्तेनेतरेषामप्यन्ततो दुःखहेतुत्वं निदर्शयति - अधुनेति । यथैव भवता पुत्रिणां तापोऽधुनानुभूयते एवं दारादयोऽपि सर्वे. हे शूरसेनश ! शोकमोहभयार्तिदास्सन्त एवानुभविष्यन्ते भवतैव भवतेवेति पाठे अधुना भवतेव त्वयेव सर्वेषामेव पुत्रिणां तापोऽनुभूयते सर्वैरपि पुत्रिभिस्तापोऽनुभूयत इत्यर्थः यथा पुत्रः शोकमोहादिप्रदः तथा दारादयोऽपीत्यन्वयः तत्र आरामा विहारवनानि विविधा ऐश्वर्यसम्पदः प्रशास्तृत्वप्रयुक्ताभोगोपकरणादिसमृद्धयः ॥ २१ ॥

तथा हे राजन्, भोगाः शब्दादयो विषयाश्च विभूतयोऽणिमादयः मही राज्यं राज्ञः कर्मभावो वा राज्यं स्वामित्वं महाराज्यं महीराज्यं सार्वभौमत्वमित्यर्थः बलं चतुरङ्गयुक्तं कोशो धनसञ्चयः ॥ २२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वे चैते गन्धर्वनगरप्रख्याः गन्धर्वनगरेण तुल्यं प्रख्यायन्ते प्रसिध्यन्ते इति तथा गन्धर्वनगरोपमत्वेन प्रसिद्धाः गन्धर्वाणां हि नगरमावासस्थानं न नियतं तद्वदेतेप्यनियताश्चञ्चलाः अनित्या इति यावत् प्रसिद्धं दृष्टान्तान्तरमाह—स्वप्नमायामनोरथा इति, स्वप्ने ये मायामनोरथाः मायाशब्द आश्चर्यवाची,आश्चर्यरूपा मनोरथाः सङ्कल्पविकल्पात्मकमनोविषयाः देशान्तरगमनराज्याभिषेकशिरश्छेदादयः तेचाश्चर्यभूता एव तत्तत्पुरुषानुभाव्यत्वेन चाल्पकालानुभाव्यपुण्यपापात्मककर्मफलत्वेन चेश्वरसृष्टानां जागृदवस्थानुभाव्यपरार्थेभ्यो विलक्षणत्वात्स्वप्नमायामनोरथवदनित्या इत्यर्थः ईयांस्तु विशेषः स्वप्नमायामनोरथाः तत्कालमात्रावस्थायिनः एते तु तदपेक्षया किञ्चिच्चिरकालावस्थायिन इत्यनित्यत्वं तत्त्वं तत्तज्जीवकर्मानुसारेण सृष्टत्वं मनःप्रभवत्वं सुखमात्राहेतुत्वं चोभयत्राप्यविशिष्टम् ॥२३॥

तदेवाह—दृश्यमाना इति । अर्थेन परमपुरुषार्थेन निरतिशयानन्देन विना दृश्यमानाः न दृश्यन्ते कालान्तरेष्वपि न दृश्यन्ते जाग्रत्स्वप्नावस्थाद्वयानुभाव्याः पदार्थाः मनोभवाश्च ननु, स्वाप्नपदार्थो मनोभवा इति तु प्रयुक्तं तेषां यथास्य स्वप्नदृष्टुः कर्मानुसारेण मनःसङ्कल्पविकल्पौ करोति तदनुसारेणेश्वरसृष्टत्वेन मनोनिमित्तकत्वाज्जाग्रदवस्थानुभाव्यानां तु पुत्रदारादीनां कथं मनःप्रभवत्वं ? तत्राह—कर्मभिरिति कर्मभिरनादिवासनारूपैः कर्मभिर्यान्विषयान्मनसा ध्यायतः पुंसस्तावत्कर्माणि मनसा अभवन् अनादिकर्मवासनावासितमनस्संयुक्तैरिन्द्रियैर्विषयान् ध्यायंस्तावत्कर्माणि करोतीत्यर्थः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुर्वासयाज्ञवल्क्ययोर्विशेषद्योतकश्च शब्दः ॥ १६ ॥ क ॥

यो महाभाष्यकर्ता स पतंजलिनाम्ना बोध्यः ॥ १६ ॥ ख ॥

ज्ञानहेतवो लोकानामिति शेषः "ब्राह्मणा भगवत्प्रियाः" । "सिद्धेशा ज्ञानहेतवः" इत्येतैर्विशेषणैर्विशिष्टत्वस्य प्रतिपाद्यमानत्वादेतेषां सर्वेषां साम्यं "नारायणपरा देवा मनुष्यास्तत्परायणाः" इत्यादिस्मृत्या अवान्तरविशेषस्य ज्ञायमानत्वात् । नारायणपरा देवा इत्यादिवाक्यं मुक्तानामपि सिद्धानां नारायणपरायण इत्यत्र ब्राह्मणा भगवत्प्रिया इत्यत्र च प्रमाणार्थमस्मिन्नध्याये उदाहृतं ॥ ब्रह्म अर्णांति अर्यंते आश्रयंते ब्रह्मणैवेति ब्राह्मणाः इति व्युत्पत्त्या देवद्वारा नारायणायनत्वं लब्धं, योग्यसुखत्वमेवोभयं सिद्धं, ते च कियंत इत्याशंकोपत्रयकोटयस्तु देवानां ऋषयः शतकोटयः, इत्यादिकया परिहर्तव्या ॥ ॥ १६ ॥ ग. घ. ॥

युवां युवाभ्याम् ॥ १७ ॥

महापुरुषगोचरं भक्तिस्मरणादिमत्वेन श्रीविष्णुविषयम्॥ १८ ॥

नावसीदतुमर्हति पुत्रनिमित्तशोकेन नष्टो माभूदिति ॥ १९ ॥

तर्हि तदानीं पुत्रः किमिति दत्त इति तत्राह—तदेति । तदा पूर्वागमनकाले ज्ञानमेव ददामीति गृहमागतोहं तवान्याभिनिवेशं पुत्रविषयाग्रहं ज्ञात्वा ते पुत्रं तुभ्यं पुत्रमेवा ददामिदानीं ज्ञानं ददामीति शेषः ॥ २० ॥

इदानीं दातुमवसर इत्याह--अधुनेति । न केवलं पुत्रवतामेव तापः किन्तु दारादिमतामप्यविनाभूतोयमित्याह – एवमिति ॥ ॥ २१ ॥ ॥ २२ ॥

स्वप्नमायामनोरथवदनित्यत्वेन दृश्यमानाः प्रतीयमानाः अर्थेन पुरुषार्थाख्यप्रयोजनेन विना दृश्यन्त इति यो नियमः स नास्तीत्यध्याहृत्यान्वेतव्यं तथाहि, योग्यतानुसारेण कदाचित्पुरुषार्थहेतुत्वेन दृष्टत्वात्कदाचिन्नेति नियमात्कुतो मनोभवाः मनसो भव उत्पत्तिर्येषां ते तथा तेन कल्पितत्वात्. एतदेव विवृणोति कर्मेति. निरन्तरं कर्म चिन्तयतः पुंसो मनसो मनःक्षोभान्नानाकर्माणि निरयमानुषस्वर्गमुक्तियोग्यानि कर्माण्यभवन् भवंतीति यस्मात्तस्मात्तदनुसारेण दारादिसंभवात्सदा पुरुषार्थहेतुत्वादिनियमो नास्तीति भावः ॥ २३ ॥ ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इत्थमिति युग्मकं । महापुरुषो गोचरोऽनुभव विषयो यस्य तम् । भगवद्भक्त इति पुर्व्वमेव तत्सङ्गप्रभावेन भक्तिबीजोदयात् ॥ १८ ॥ १९ ॥

ददामि अदास्यमित्यर्थः । पुनश्च ददामि अददामित्यर्थः तिङातिङो भवन्तीति छान्दसोऽत्र लट् ॥ २०—२६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

महापुरुषाः परमर्षयो भगवद्भक्ताश्च गोचराः मनोनेत्रादिविषयाः यस्य तं अत एव ब्राह्मणवैष्णवसेवित्वाद्ब्राह्मणो भगवद्भक्तश्चोक्तः न तु वस्तुतस्तद्भक्त इत्यर्थः ॥ १८—१९ ॥

ददामि अदास्यं पुनश्च ददामीत्यस्य अददामित्यर्थः । तिङां तिङो भवन्ति इति वचनात् ॥ २०—२२ ॥

तदेवं दारादीनामनित्यत्वमवास्तवत्वस्तुत्वं शोकादिहेतुत्वमागमापायित्वञ्चोक्तं । येतु दारादिभ्यः अन्येऽपिशोकमोहभयार्तिदाः अर्थाः स्वप्नादुत्थास्तेनुमिथ्याभूता एवेत्याह । गन्धर्वेति स्वप्नश्च मायाया इन्द्रजालं च मनोरथश्च ते तदुत्थाः पदार्थाः ॥ २३ ॥

अर्थेन व्याघ्रसर्पादिना विनैव दृश्यमानाः स्वप्नादिभङ्गे सति न दृश्यन्ते तदेवं दारादयोऽवास्तववस्तुभूताः स्वप्नादयोऽवस्तुभूताश्च सर्वे मनोभवाः मनोवासना जन्यत्वान्मनोभवाः मनोभवत्वमेवाह कर्मभिः, कर्मवासनाभिर्यान् ध्यायतः पुंसो मनसएव निमित्तत्वात् कर्माण्यभवन् कर्मभिर्ध्यायत इति पाठे कर्मा ईप्सिततममभिध्यायत इत्यर्थः । कर्मणांऽपि मनोभवत्वात्तत्साध्या अर्था अपि मनोभवा एवेति भावः ॥ २४ ॥

---

अयं हि देहिनो देहो द्रव्यज्ञान क्रियात्मकः ।
देहिनो विविधक्लेशसन्तापकृदुदाहृतः ॥ २५ ॥
तस्मात्स्वस्थेन मनसा विमृश्य गतिमात्मनः ।
द्वैते ध्रुवार्थविश्रम्भं त्यजोपशममाविश ॥ २६ ॥
( भोजोनामनृपः स्वप्ने शत्रुग्रस्तान्नभोजनः ।
दुःस्वन्दुर्विषहंप्राप्तः शोकमोहभयार्तिदम् ॥ ० ॥
केचिद्विलुलुपुर्भोगानपरेऽवाधिषुःश्रितान् ।
पूर्ववैरग्रहैर्जाया अन्य आत्मशिरोहरन् ॥ ० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतदर्हं शोकानर्हम् महापुरुषगोचरं विष्णुकृपादृष्टिविषयं पात्रमित्यर्थः ॥ १८ ॥ १९ ॥

पूर्वमपि ज्ञानमेव दातुमागतस्तव निर्बन्धं दृष्ट्वा पुत्रं दत्तवानित्याह–तदैवेति । परं ज्ञानं ददामि अदास्यम् पुत्रं ददामि दत्तवान् ॥ २० ॥ २१ ॥ २२

हे शूरसेन ! इमे सर्वेपि शोकादिप्रदा गन्धर्वनगरप्रख्याः गन्धर्वनगरवत् प्रख्यायन्ते इति तथा गन्धर्वनगरं गन्धर्वेच्छयैव कांचिदायाति अपयाति च न दृष्टजनेच्छामनुसरति तद्वदिमे ईश्वरेच्छामनुसरन्ति न दृष्टजनेच्छामित्यर्थः किञ्च स्वप्ने या मायाः सूक्ष्मरूपाः विभूतयः मनोरथाश्च कर्मविशेषफलदानाय भगवतैव सृष्टाः शोकादिप्रदाः गन्धर्वनगरप्रख्याश्चेत्यन्वयः ॥ २३ ॥

किञ्च जागरेपि मनोभवाः पुत्रकलत्रादिपदार्थाः अकस्मादेव मनसि हर्षकाले शोकदाः रोदितव्ये हर्षदाः प्रसिद्धपुत्रकलत्रादिविलक्षणाः स्वप्नमायामनोरथविलक्षणाश्चेश्वरेण प्रवर्तिताः ते च केचिदर्निष्टा अर्थेन प्रयोजनेन विनैव दृश्यमानाः मनसि प्रस्फुरमाणाः केचिदिष्टाः नैव दृश्यन्ते अतस्तेपि शोकादिप्रदाः, गन्धर्वनगरप्रख्याश्चेति पूर्वेणान्वयः किञ्च मनसा कर्मभिर्ध्यायतः एवं स्वहितमेव करिष्यामीति चिन्तयतः नानाहितानि अहितानि मिश्राणि च कर्माण्यभवन् तान्यपि शोकादिप्रदान्येव जानामीत्यर्थः मनसा इति पाठे मनसो निमित्तभूतान् अभवन्नित्यन्वयः ॥ २४ ॥

---

भाषा टीका ।

॥ अङ्गिरा उवाच ॥

हे नृप ! पुत्र कामना वाले तेरे पुत्र का देने वाला मैं अङ्गिरा ऋषिहूँ । और ये दूसरे साचात् ब्रह्मा के पुत्र भगवान नारद ऋषि हैं ॥ १७ ॥

हे प्रभो ! इस प्रकार पुत्र के शोक से दुस्तर अन्धकार मे डूबेहुओ और इस दुख के अयोग्य एसे हरि भक्त तुमको जानकर तुमारे ऊपर अनुग्रह करनेके लिये हम दोनों यहां प्राप्त हुये हैं क्योंकि ब्रह्मण्य भगवद्भक्त दुःख पानेके योग्य नहीं होते हैं ॥ १८—१६ ॥

जब हम पहिले तुमारे गृह आये रहे तब ज्ञान ही देने को आये रहे परञ्च तुमारी अन्य में आसक्ति देख कर उस समय हमने तुमको पुत्र ही दिया ॥ २० ॥

इस समय पुत्र वालों को जो दुःख होता है सो तुमही जानते हो । एसेही स्त्री गृह द्रव्य और नाना प्रकार के ऐश्वर्य और सम्पद, और शब्दादिक विषय, राज्य की विभूति, पृथिवी राज्य सेना कोश ( खजाना ) नोकर मंत्री और सुहृज्जन, हे शूरसेन ! ये सबही शोक मोह और भयके देने वाले हैं और गन्धर्व नगर के तुल्य, स्वप्न, माया और मनोरथ के तुल्य चल ( अनित्य ] और आगमापायी अर्थात् मिलने बिछुरने वाले हैं ॥ २१—२३ ॥

और ये सब विना अर्थ के देख पडते है और कालांतर में नहीं देख पडते हैं क्योंकि ये सब मनके संकल्प से हुये हैं । और कर्म की वासना से ध्यान करने वाले पुरुष के मनही से कर्म भी हुये हैं ॥ २४ ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

तदेवं ममतास्पदानां पुत्रादीनां दुःखादिहेतुत्वमुक्तं तत्र देहसम्बन्धो मूलमित्याह—अयं हीति । हीत्यवधारणे अयं द्रव्यज्ञानक्रियात्मकः अधिभूताधिदैवाध्यात्मरूपो देह एव देहिनो देहोऽहमिति मन्यमानस्य देहिनो जीवस्य विविधान् क्लेशान्स्तापांश्च करोतीति तथा ॥ २५ ॥

स्वस्थेनाव्यग्रेण गतिं तत्त्वं ध्रुवोऽयमर्थ इति विश्रम्भं विश्वासं प्रणयं वा त्यज ततश्चोपशममाविश आश्रय ॥ २६ ॥

इत्यन्दुरन्तदुःखौघादुत्थितस्तदनुस्मरन् ।
तावद्भृशं सुनिर्विण्णो निर्जगाम ततो गृहात् ॥ ० ॥
दर्शयन्नात्मनात्मीनं निःसङ्गः शान्तविग्रहः ।
प्रविष्टो ब्रह्मनिर्वाणं कुलायन्नाविदच्चतम् ॥ ० ॥ )

नारद उवाच ।

एतां मन्त्रोपनिषदं प्रतीच्छ प्रयतो मम ।
यां धारयन्सप्तरात्रात् द्रष्टा सङ्कर्षणं प्रभुम् ॥ २७ ॥

यत्पादमूलमुपसृत्य नरेन्द्र ! पूर्वे शर्वादयो भ्रममिमं द्वितयं विसृज्य ।
सद्यस्तदीयमतुलानधिकं महित्वं प्रापुर्भवानपि परं न चिरादुपैति ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे पारमहंस्याम्
संहितायां वैयासिक्यां चित्रकेतूपाख्याने
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

अङ्गिरसोपदिष्टं तत्त्वं परमेश्वरप्रसादं विना न प्राप्यत इति तत्प्रसादाय मन्त्रविद्यां नारद उपदिशति—एतामिति । उपनिषदं परं श्रेयोऽस्यामित्युपनिषत् मन्त्र एवोपनिषत्तां प्रतीच्छ गृहाण द्रष्टा द्रक्ष्यति भवान् ॥ २७ ॥

अतुलं च तदनधिकं च समानाधिकशून्यं परं महिमानं प्रापुः उपैत्युपैष्यति ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्तत्कर्मफलानुभवायास्य देहिनः द्रव्यज्ञानक्रियात्मकः द्रव्यं भूतपञ्चकं ज्ञानानि ज्ञानेन्द्रियाणि क्रियाः कर्मेन्द्रियाणि एतदात्मकः एतत्सङ्घातरूपः अयं देहोऽस्यदेहिनः विविधक्लेशरूपसन्तापं करोतीति तथा क्लेशसन्तापशब्दौ वैषयिकसुखदुःखपरौ वा वैषयिकसुखस्यान्ततः क्लेशात्मकत्वात्तौ करोतीति विविधक्लेशसन्तापकृत्त्वदाहृतः प्राप्त इति कथित इत्यर्थः प्रथममनादिवासनावासितेन मनसा विषयचिन्तना तयाच विषयलाभोपयुक्तानि पुण्यपापात्मकानि कर्माणि कर्मभ्यः क्लेशसंतापकृद्देहः तेन च पूर्वजन्मकृतकर्मफलशब्दादिविषयमनुभवतः पुनर्विषयचिन्तना पुनस्तया कर्मणीत्येवमियं परिवृत्तिः वासनावासितमनोमूलिकेति सर्वे मनःप्रभवा इति भावः ॥ २५ ॥

तस्मात्पुत्रदारादीनां सर्वेषां स्वाप्नकल्पत्वादस्थिरत्वेन विक्षेपरहितेन मनसा आत्मनः प्रत्यगात्मनो गतिं स्वरूपं विमृश्य बुद्धीन्द्रियमनःप्राणादिभिन्नत्वेन ज्ञानानन्दादिस्वरूपस्वभावत्वेन परमात्मशरीरत्वेन च विमृश्य द्वैते उक्तविधप्रत्यगात्मगतदेवमनुष्यादिभेदभिन्नेऽस्थिरे शरीरे ध्रुवार्थविस्रम्भं ध्रुवार्थं आत्मा तद्विस्रम्भमात्माभिमानं त्यज उपशमं वैराग्यमाविश्य विरक्तो भवेत्यर्थः ॥ २६ ॥

एवमङ्गिरसोत्पादितविवेकाय चित्रकेतवे भगवान्नारदो मन्त्रविद्यामुपदिदिक्षुस्तावत् तत् प्रभावमाह—एतामिति । एतामुपदेक्ष्यमाणां मन्त्रोपनिषदं मन्त्ररूपामुपनिषदं प्रयतः समाहितचित्तस्त्वं मम उपदेक्ष्यतो मत्तः प्रतीच्छ स्वीकुरु यां मन्त्रोपनिषदं धारयमाणो भवान् सप्तरात्रादूर्ध्वं भगवन्तं सङ्कर्षणं द्रष्टा द्रक्ष्यति ॥ २७ ॥

सङ्कर्षणं विशिंषंस्तस्य तत्साक्षात्कारफलमाह—यदिति । हे नरेन्द्र ! यस्य भगवतः सङ्कर्षणस्य पादमूलमुपसृत्याश्रित्य पूर्वे रुद्रादयः द्वितयं द्वावयवौ यस्य द्वितयं द्विदलात्मकं भ्रममाद्यज्ञात्मकत्वस्यतज्ज्ञात्मकत्वरूपदलद्वयात्मकं भ्रमं विसृज्यातुलानधिकं निःसमाभ्यधिकं तदीयं सङ्कर्षणसम्बन्धिमहत्वं माहात्म्यं प्रापुः तथा भवानप्यचिरादाशु परं महामाहात्म्यमुपैष्यति ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

## श्रीमद्विजयध्वजतीर्थकृत पदरत्नावली ।

देहादेरर्थक्रियाकारित्वान्न मिथ्यात्वं वक्तुमुचितं गन्धर्वनगरादिवदतो नश्वरत्व एव दृष्टांत इत्यभिप्रेत्याह—अयं हीति। देहिनोऽयं देहो देहिनो जीवस्य विविधक्लेशसंतापकृदुदाहृत इत्यन्वयः हिशब्दो हेतौ अभिमानाच्चेतनस्य सुखादिभोगः न तु देहस्येति द्योतनाय देहिन इति पुनर्वचनम् अयमित्युक्त्या स्थूलदेहसिद्धावपि स्पष्टत्वायाह—द्रव्येति. द्रव्यात्मकः पञ्चभूतात्मकः स्थूलदेहः गंडशैलादीनां स्थूलत्वेपि भोगायतनत्वाभावात्कथमेतादृगि तत्राह - ज्ञानेति. ज्ञानेत्यनेन श्रोत्रादिपञ्चकम् एवं मनश्च गृह्यते क्रियापदेनापि वागादिपञ्चकं कर्म च लक्ष्यते ज्ञानेन्द्रियकर्मेन्द्रियमनआत्मकत्वेन वैलक्षण्याद्भोगायतनत्वमुपपद्यते इन्द्रियकार्यज्ञानक्रियाशब्दाभ्याम् इन्द्रियोक्तिः कार्यकारणयोरेकशब्दव्यवहृतिर्भवेदित्यतो युज्यते "असन्नपि क्लेशद आस देह" इत्यादौ सिद्धत्वादुदाहृत इत्युक्तम् अनेनासदुपासनं क्लेशकरं देहवदित्ययमर्थोऽपि ध्वनित इति ज्ञातव्यम् ॥ २५ ॥

यत एवं नानाक्लेशदो देहस्तर्हि कथंकारं तं निवर्तत इति तत्राह—तस्मादिति। तस्माद्देहस्य क्लेशकरत्वात् द्वैते देहे ध्रुवार्थविस्रंभं त्यजेत्यन्वयः अन्यापेक्षारहितत्वाद्धरिरद्वैतम् अदृष्टाद्यन्यापेक्षाप्राप्तत्वात् द्वैतं देहादि तत्रैते पदार्था ध्रुवत्वान्नित्या इति विश्वासं त्यज "अनन्यापेक्षतस्त्वेको हरिरन्यद्वयं स्मृतम्। अन्यापेक्षत्वतस्तेन प्राप्तत्वाद्वैतमुच्यते" इतिवचनात् देहिनो यत्किञ्चित्साधने द्वितीयत्वेन प्राप्तत्वाद्द्वैतशब्दवाच्यो देह इत्यर्थः। नैतावता पूर्यत इत्याह—उपशममिति, अहंकर्तेत्यभिमानोपशममाविशेत्यन्वयः किं च हरौ निरन्तरनिष्ठालक्षणामुपशमं उक्तार्थदार्ढ्यायाह विमृश्येति आत्मनो हरेर्गतिं स्वातंत्र्यादिलक्षणामात्मनो जीवस्यास्वातंत्र्यादिलक्षणाञ्चेति। केनेत्यत उक्तं मनसेति। तस्य प्रागपि सद्भावात् कुत ईदृशविचाराभाव इति तत्राह—स्वस्थेनेति ॥ २६ ॥

शास्त्रश्रवणमननशाणालीढेन भक्त्यादिसाधनसामग्रीसम्पादनेन गृहादिसंगत्यागः प्रथमसाधनमित्यत्रेतिहासमाह—भोजो नामेति। शत्रुणा ग्रस्तं कवलितं यद्यं तदेव भोजनं यस्य स तथा शत्रूच्छिष्टभागभक्षण इत्यर्थः ॥ ० ॥

पूर्वं पुरातनं वैरं गृह्णातीति पूर्ववैरग्रहास्तैः कर्मभिः पूर्ववैराद्यग्रहैः ॥ ० ॥

दुरंतदुःखानामोघो यस्मिन्स तथा तस्मात्स्वप्नाच्चस्वप्नानुभूतं तावत्तदानीमेव ॥ ० ॥

आत्मानं उन्मत्तादिवद्दर्शयन्नात्मना मनसा आत्मानं दर्शयन्नालोचयन्निति वा निर्वाणं अशरीरेणाजन्मानन्दपूर्णं ब्रह्म श्रीनारायणाख्यं प्रविष्टो मनसेति शेषः यस्मिन्कुणपे देहे स्थितः तं कुणपं नाविदन्न बुबुधे च शब्दो हेत्वर्थः असंप्रज्ञातसमाधिस्थत्वाद्वा ॥ ० ॥

ममाप्येवंविधोपायावस्थामाप्तुं क उपाय इति तत्राह—इमामिति। मन्त्राख्योपनिषदचिरकालेन साध्यसाधिका च तत्किमनयेत्यश्रद्धां माकार्षीरित्याह—यामिति, "रुद्राद्याः शेषदेहस्थं विष्णुं संकर्षणाभिधम्। शेषान्तर्यामिणं ज्ञात्वा स्वपदं प्रापुरञ्जसा" इति वचनान्न शेषः संकर्षणोऽत्र गृह्यते किंतु तदंतर्यामी द्वितीयमूर्तिरन्यस्य वंधानमूलनादिसामर्थ्याभावात् इति ॥ २७ ॥

संकर्षणं शेषस्यासंभावितैर्विशिनष्टि—यत्पादेति। पूर्वं शर्वादयो यत्पादमूलमुपसृत्योपास्य महित्वं प्रापुरित्यन्वयः महित्वं नाम कीदृशं ? येन हरिप्रसादप्राप्तं स्यादित्यत उक्तं अतुलेति अतुलं च तदनधिकं चेति तथोक्तं साम्याधिक्यवर्जितमित्यर्थः ननु, तर्हीदं भगवन्माहात्म्यविनाभूतं स्यादिति तत्राह—तदीयमिति, तेषां रुद्रादीनां योग्यं ननु, स्वकीयप्राप्तौ क्लेशसाध्यायाः किमन्योपासनायाः प्रयोजनं ? स्वतः सिद्धत्वात्तस्येत्यस्याप्येतदेवोत्तरं तत्प्रसादलभ्यत्वात्तदीयमिति। तदीयं तस्य हरेरधीनं। तदुक्तं। "तेषां तेषां पदान्येव वैष्णवानि पदानि तु। तेषां महित्वं च तथा हरेस्तद्वशगं यतः" इति। भगवन्महित्वादन्यमहित्वस्य साम्याधिक्यस्य वर्जनं कथं घटत ? इत्यस्यापीदमुत्तरं तस्मादिन्द्रादिपदाद्रुद्रादिप्राप्यशेषादिपदस्य साम्याधिक्यवर्जनं युक्तं किंच शेषादिप्राप्यशेषादिपदस्य मौक्तिकस्य संसारे शेषादिपदमपेक्ष्यातुल्यानाधिक्यं च युक्तिमत् "अतुल्यानधिकं चैव तस्य तस्यैव मुक्तिगम्। तस्यैव पूर्वमाहात्म्यमपेक्ष्य" इति वचनात् ननु "परमं साम्यमुपैति" इति श्रुतेः हरेरेवातुल्यानधिकमहित्वं प्रापुरित्यर्थः किं नस्यादत्रापीदमेव प्रतिवचनं तस्य विद्यमानं पदमापुर्नहरेर्विद्यमानं निजमहित्वं तदुक्तञ्च। "न हरेः क्वचित्, माहात्म्यमन्यप्राप्यं स्यान्न ते विष्णोः" इति श्रुतेरिति। रुद्रादिप्राप्यं न चेत् ब्रह्मादिप्राप्यं किं न स्यादितिचेन्न "ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैवशक्यते तद्यत्स्वभावःकैवल्यं सभवान्केवलोहरिः" इति प्रमाणविरोधात्। अत्रोपास्त्याविर्थंभावमाह भ्रममिति इमं देहाद्यहंममाभिमानलक्षणं भ्रमं विहाय आचार्यैरप्येतदुक्तम् 'देहादावहंममाभिमानो भ्रमः,' इति बंधस्य त्यागमन्तरेण तत्प्राप्तिःकथं युक्तिमती तत्राह—तद्द्वितीयमिति, कार्यकारणयोरेकशब्दव्यवहृतिर्भवेदितिन्यायात्कारणेन कार्यं लक्ष्यते द्वितीयेनान्यथाज्ञानेन निर्मितं बन्धं पुत्रादिस्नेहलक्षणं विसृज्य सम्यक् त्यक्त्वा तदुक्तम् "द्वैतेन बन्धसंत्यागाद्वैतत्यागीभवत्युत" इति द्वैतेनोत्पन्नबन्धसंत्यागादित्यर्थः। अनेन मुक्तावपि शेषादिप्राप्यं पदमिति ध्वनितमिति ज्ञातव्यं साधनसामग्र्यां कालक्षेपो नास्तीत्याह—सद्य इति, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येथ संपत्स्यत' इति श्रुतेः। अनेन चित्रकेतोःकिमागतमत्राह—भवानपीति भवानपि तमनन्तमुपास्य दृष्ट्वा तत्प्रसादेन नचिरात्स्वकर्मनिर्मितचरमशरीरपातानन्तरं तत्प्रसादलभ्यत्वात्तदीयमपि तेन पूर्वमहिम्ना तुल्यमनधिकं च परमन्यद्रुद्रादिमहित्वविलक्षणं निर्दुःखानन्दानुभवलक्षणं स्वयोग्यमाहात्म्यमुपैतीत्यन्वयः

"यद्येषो परतादेवामाया वैशारदी मतिः।
सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते" ॥

इति स्मृति वचनात् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदेवं यदङ्गिरसोपदिष्टं तत्रापरितुष्टः श्रीनारद उवाच। सप्तरात्रमतिक्रम्य दिनकतिपयानन्तरमित्यर्थः॥ २७॥ अथोपदेशे वैशिष्ट्यमाह यदिति॥ २८॥

इतिश्रीमद्भागवते महापुराणे पञ्चस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य।
पञ्चदशोऽध्यायः समाप्तः॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तदेवं ममतास्पदानां दुःखहेतुत्वमुक्त्वा अहन्तास्पदस्यापि देहस्याह अयमिति। द्रव्यज्ञानक्रियात्मकः अधिभूताधिदैवाध्यात्मिकः देहिनः देहोहमिति मन्यमानस्य जीवस्य॥ २५॥

स्वस्थेनाऽव्यग्रेण गतिं तत्त्वं। द्वैते अहंतास्पदममतास्पदबहुले इदन्तास्पदे जगति ध्रुवो वास्तवघस्तुभूतोऽयमर्थ इति विस्रम्भं विश्वासं प्रणयं वा त्यज तस्य वस्त्ववस्तुमयत्वात् "शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः" इत्यमरः। ततश्चोपशममाविश आश्रय॥ २६॥

ननु, तर्हि ध्रुवोऽर्थ एव कः? तमेव महां कृपया कथयेत्यपेक्षायामाङ्गिरसा प्रेरितो महाभागवतत्वान्नारद एवाह--एतामिति। मन्त्ररूपाम् उपनिषदं प्रतीच्छ गृहाण॥ २७॥

भ्रमयति भवन्तमिति भ्रमन्तं द्वितयं द्वैतं उपैति उपैष्यति॥२८॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षष्ठे पञ्चदशोऽध्यायः सङ्गतः सङ्गतः सताम्॥

———

श्रीमच्छुकदेवकृत सिद्धान्तप्रदीपः।

किञ्च द्रव्यज्ञानक्रियात्मकः भूतोभयेन्द्रियादिरूपो देहोपि विविधक्लेशसन्तापकृदुदाहृतः न तु केवलसुखकृदुदाहृतः॥ २५॥

यस्मादेवं तस्मात् स्वस्थेन निश्चलेन मनसा आत्मनो जीवस्य गतिं भगवत्पादपद्मं विमृश्य द्वैते पूर्वोक्ते पुत्रकलत्रादौ दैहिके देहे च ध्रुवार्थविस्रम्भम् एते देहदैहिकाः अर्थाः ध्रुवा नित्या इति विश्वासं त्यज उपशममाविश आश्रय॥ २६॥

एतां वक्ष्यमाणां मंत्ररूपामुपनिषदं मम मत्तः प्रतीच्छ स्वीकुरु॥ २७॥

यस्य सङ्कर्षणस्य पादमूलमुपसृत्याश्रित्य पूर्वे शर्वादयः शिवादयः द्वितयं देहदैहिकादिद्वैतं तत्र भ्रमं ध्रुवत्वभ्रान्तिम् देहे अहमिति दैहिकेषु ममैवैते इति च भ्रान्तिं विसृज्य सद्यस्तदीयं महित्वं तत्साधर्म्यमवापुः भवानपि परं तत्साधर्म्यमुपैत्यपैष्यति॥ २८॥

इति श्रीमद्भागवते महापुराणे पञ्चस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चदशोऽध्यायार्थप्रकाशः॥ १५॥

———

भाषाटीका।

यह पुरुष का द्रव्यज्ञान क्रियात्मक जो देह है सो जीव के नाना प्रकार के क्लेश और संताप करने वाला कहा गया है॥ २५॥

तस्मात् स्वस्थमन से आत्मा की गति को विचार कर यह सांसारिक अर्थ नित्य हैं एसा विश्वास छोड कर शांति का आश्रय लो॥ २६॥

नारद उवाच॥

हे राजन्! तुम सावधान होकर इस मंत्र रूप उपनिषद् [वेदभाग] को हम से ग्रहण करो। जिसके धारण करने से सप्त रात्रि में संकर्षण भगवान के दर्शन करोगे॥ २७॥

जिनके चरणारविन्द के शरण जाकर पहिले शिव ब्रह्मादिक इस अहंता ममता के भ्रमको छोडकर तत्काल भगवान की असमाऽभ्यधिक महिमा को प्राप्त हो गये। तुमभी उसी महिमा को थोडे काल में प्राप्त होगे॥ २८॥

इति श्रीमत् भागवत महापुराण पञ्चस्कन्ध
कीभाषा टीका में चतुर्दश अध्याय
समाप्त॥ १४॥

———

इति श्रीमद्भागवते महापुराणे पञ्चस्कन्धे पञ्चदशोऽध्यायः समाप्तः॥ १५॥

## ॥ षोडशोऽध्यायः ॥

——○:*:○——

श्रीशुक उवाच ।

अथ देवऋषी राजन् ! सम्परेतं नृपात्मजम् ।
दर्शयित्वेति होवाच ज्ञातीनामनुशोचताम् ॥ १ ॥

नारद उवाच ।

जीवात्मन् ! पश्य भद्रं ते मातरं पितरं च ते ।
सुहृदो बान्धवांस्तप्ताञ्शुचा त्वत्कृतया भृशम् ॥ २ ॥
कलेवरं स्वमाविश्य शेषमायुः सुहृद्वृतः ।
भुङ्क्ष्व भोगान् पितृप्रत्तानधितिष्ठ नृपासनम् ॥ ३ ॥

जीव उवाच ।

कस्मिञ्जन्मन्यमी मह्यं पितरो मातरोऽभवन् ।
कर्मभिर्भ्राम्यमाणस्य देवतिर्यङ्नृयोनिषु ॥ ४ ॥
बन्धुज्ञात्यरिमध्यस्थमित्रोदासीनविद्विषः ।
सर्व एव हि सर्वेषां भवन्ति क्रमशो मिथः ॥ ५ ॥
यथा वस्तूनि पण्यानि हेमादीनि ततस्ततः ।
पर्यटन्ति नरेष्वेवं जीवो योनिषु कर्तृषु ॥ ६ ॥
नित्यस्यार्थस्य सम्बन्धो ह्यनित्यो दृश्यते नृषु ।
यावद्यस्य हि सम्बन्धो ममत्वं तावदेव हि ॥ ७ ॥
एवं योनिगतो जीवः स नित्यो निरहङ्कृतः ।
यावद्यत्रोपलभ्येत तावत्स्वत्वं हि तस्य तत् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षोडशे तत्सुतोक्त्यैव विशोकीकृत्य तं नृपम् ।
आदिदेश महाविद्यां नारदः शेषतोपयीम् ॥ १ ॥

आदौ तावत् तत्पुत्रमुखेनैव पितृपुत्रादिसम्बन्धो मिथ्येति दर्शयितुं योगबलेन तमेव ज्ञातीनां दर्शयित्वा जीवात्मन्नित्याद्युवाच ॥ १ ॥ २ ॥

शेषमवशिष्टमायूरस्ति अपमृत्युना मृतत्वादित्यर्थः ॥ ३ ॥

तदेव कलेवरं प्रविश्योत्थितो जीव उवाच यद्वा अन्तराले प्रेतशरीरे स्थित्वेति ज्ञेयम् ॥ ४ ॥

मयि मृते पुत्रदृष्ट्या शोकश्चेत् शत्रुदृष्ट्या हर्षः किं न क्रियते? इत्याशयेन सम्बन्धस्यानियतत्वमाह-बन्धवो विवाहादिभिः सम्बन्धिनः ज्ञातयः सपिण्डाः अरयो घातकाः मित्राणि रक्षकाः मध्यस्था उभयव्यतिरिक्ताः साधारणाः विद्विषो द्रव्यादिनिमित्तेन द्वेपिणः उदासीनास्तद्व्यतिरिक्ता इति भेदः ॥५॥

कर्मभिर्भ्राम्यमाणत्वे दृष्टान्तः यथा पण्यानि क्रयविक्र-

## श्रीधरस्वामिकृतभावार्थदीपिका।

याद्यर्हाणि कर्तृषु व्यवहर्तृषु परिभ्रमन्ति एवं जीवोपि योनिषु जनकेषु ॥ ६ ॥

एकस्मिन्नपि जन्मनि सम्बन्धस्यानियतत्वं सदृष्टान्तमाह द्वाभ्यां, नित्यस्य जीवतोपि अर्थस्य पश्वादेः अनित्यः अनियतः विक्रयादिना सम्बन्धनिवृत्तेः ॥ ७ ॥

एवं योनिगतः पित्रादिसम्बन्धं प्राप्तोऽपि स जीवो नित्यः देहजन्मादिना तस्य जन्माद्यभवात् अत एव वस्तुनो निरहङ्कृतः अहमस्य पुत्र इत्यभिमानशून्यः यत्र पित्रादौ सम्बन्धिनि यावदुपलभ्येत कर्मवशेन वर्तेत तावदेव तस्य पित्रादेस्तत्तस्मिन् स्वत्वं न तु विक्रयादुत्तरकालमपि अथवैवं सम्बन्धः यदुक्तं कलेवरम् स्वमाविश्येति तत्र तस्मिन् कलेवरे ममेदानीं स्वत्वं निवृत्तमिति सदृष्टान्तमाह, नित्यस्य चिरकालावस्थायिनः सुवर्णादेः योनिगतो देहप्रविष्टः यत्र देहे तस्य जीवस्य तत्रास्मिन् देहे स्वत्वम् न तु मरणोत्तरकालमपीत्यर्थः शेषं समानम् ॥ ८ ॥

———

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवमुपदेक्ष्यमाणमंत्रोपनिपद्ग्रहणे तस्य रुचिमुत्पाद्याङ्गिरसोपदिष्टेषु वैराग्यापादकेष्वर्थेषु चित्रकेतुप्रभृतीनां विस्रम्भयोत्पनाय मृतके पुनर्जीवं स्वयोगमहिम्नाऽऽवेश्य तन्मुखेनाङ्गिरसोपदिष्टानर्थानवीवदद्भगवान्नारद इत्याह मुनिः—अथेति। हे राजन्, स देवर्षिर्नारदः सम्परेतं मृतं नृपात्मजमनुशोचतां ज्ञातीनां चित्रकेत्वादीनां दर्शयित्वा योगप्रभावेनाविष्टजीवं प्रदर्श्य इति वक्ष्यमाणाम् उवाच हेत्याश्चर्ये अहो भगवतो नारदस्य प्रभावो यन्मृतमपि पुनरजीवयदिति ॥ १ ॥

उक्तमेवाह—जीवात्मन्निति द्वाभ्यां। हे जीवात्मन्! भद्रं प्रविष्टशरीरस्य ते तव मातरं पितरं सुहृदो बान्धवांश्च त्वन्निमित्तया शुचा भृशान्तप्तान्पश्य बान्धवास्तप्ता इति प्रथमान्तपाठे मातरं पितरं च पश्य बान्धवाः सुहृदश्च त्वत्कृतया शुचा भृशं तप्ताः अतस्तानपि पश्येत्यन्वयः ॥ २ ॥

शेषमवशिष्टमायुर्जीवनं यस्य तत्कलेवरं समाविश्य, अपमृत्युना मृतत्वाच्छेषमायुरित्युक्तं सुहृद्भिः परिवृतस्त्वं नृपासनमधितिष्ठन् पितृप्रत्तान् पित्रादत्तान् भोगान् भुङ्क्ष्व ॥ ३ ॥

भुङ्क्ष्वेत्युक्तो जीवस्तत्कलेवरमाविश्याचदित्याह-कस्मिन्नित्यादिना हरीश्वर इत्यन्तेन, तावत्पितृपुत्रत्वादिसम्बन्धस्यानियतत्वमाह—कस्मिन्निति। देवतिर्यङ्मनुष्ययोनिषु कर्मभिः पुण्यपापरूपैः भ्राम्यमाणस्य जायमानस्य अत एव तत्र तत्र तत्तत्पुरुषविशेषान्प्रति तत्तन्निरूपितबन्ध्वादिभावं प्राप्तस्य मह्यं मम विभक्तिव्यत्यय आर्षः अमी चित्रकेत्वादयः कस्मिन् जन्मनि पितरः मातरश्चाभवन्? न सर्वेषु जन्मस्वभवन्, किन्त्वेतस्मिन्नेव. अतः पितृपुत्रत्वादिसम्बन्धो न नियत इति भावः यद्वा कस्मिन् जन्मन्यमी पितरो मातरश्चाऽभवन् ॥ ४ ॥

ननु, सर्वेष्वपि जन्मस्वभवन्नित्यत आह—बन्धिवति। सर्वे जीवाः सर्वेषां जीवानां क्रमशः जन्मपरम्पराभिः मिथ अन्योन्यं बन्ध्वादयो भवन्तीत्यन्वयः तत्र बन्धवो विवाहादिभिः सम्बन्धिनः ज्ञातयः सपिण्डाः अरयो घातुकाः मित्राणि रक्षकाः मध्यस्था उभयव्यतिरिक्ताः विद्विषो द्रव्यादिनिमित्तेन द्वेषिणः उदासीनास्तद्व्यतिरिक्ता इति भेदः ॥ ५ ॥

कर्मभिर्भ्राम्यमाणत्वे दृष्टान्तमाह—यथेति। यथा पण्यानि क्रयाद्यर्हाणि हेमादीनि हेमविकाररूपादीनि कटकाङ्गुलीयकादीनि वस्तूनि कर्तृषु व्यवहर्तृषु नरेष्वितस्ततः पर्यटन्ति एवं जीवा अपि देवतिर्यङ्मनुष्ययोनिषु भ्रमन्ति संसरन्ति ॥ ६ ॥

एकस्मिन्नपि जन्मनि सम्बन्धस्यानियतत्वं सदृष्टान्तमाह—नित्यस्येतिद्वाभ्यां। नित्यस्याविप्लुतस्य जीवत इति यावत् तस्य पश्वादेरर्थस्य अनित्यः अनियतः सम्बन्धो नृषु दृष्टः विक्रयादिना पूर्वस्वामिसम्बन्धस्य निवृत्तेरुत्तरस्वामिसम्बन्धदर्शनादेकस्मिन्नपि जन्मनि सम्बन्धो न नियत इति भावः तदेवोपपादयति - यावदिति, यस्य पुंसो येन पश्वादिना यावत्सम्बन्धः क्रयादिनिमित्तसम्बन्धोऽस्ति तस्य ममत्वं स्वामित्वादिसम्बन्धस्तावदेव हीत्यनेन लोकप्रसिद्धिं द्योतयति ॥ ७ ॥

एवं दृष्टान्ते उपपादितमर्थं दार्ष्टान्तिके दर्शयति - एवमिति। स प्रसिद्धो निरहंकृतिः वस्तुतो देहात्माभिमानरहितोऽपि जीवः कर्मणा योनिगतदेवादिशरीरेष्वनुप्रविष्टस्सन्यत्र देवादिशरीरे नित्योऽपरित्यक्तदेहो यावदुपलभ्यते तावदेव तस्य स्वत्वं स्वीयत्वं, तावदेव हि तस्य पित्रादयः स्वीयाभवन्ति, तावदेव तस्येतरैः पितृपुत्रत्वादिसम्बन्ध इति यावत् तत्तस्मात्तत्रोपलभ्यमानत्वादित्यर्थः यद्वा यत्र शरीरे यावदुपलभ्येत तस्य शरीरस्य तावन्तं कालं जीवात्मानंप्रति स्वत्वं तत्तस्मात्तत्रोपलभ्यमानत्वादित्यर्थः अनुपलम्भे तु आत्मनिरूपितस्वत्वस्यैव शरीरेऽभावाच्छरीरनिरूपितपितृपुत्रत्वादिसम्बन्धो दूरादपेत इति भावः ॥ ८ ॥

———

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

संसारस्य पुत्रमित्रादिलक्षणनियतत्वं संसारिचेतनस्य हरिनियतनित्यत्वं परमचेतनस्य परमनित्यत्वं तज्ज्ञानमेव पुरुषार्थसाधनमित्यादिकमस्मिन्नध्याये निरूप्यते, अत्र नारदो योगमाहात्म्यं विद्योतयन् राजकुमारमुत्थाप्येदं वक्तीत्याह—श्रीशुक इति ॥ १ ॥ २ ॥ ३ ॥

एवं जीवात्मना किमवादि? इत्यत आह, कस्मिन्निति ॥ ४ ॥ ५ ॥

पण्यानि विक्रेयाणि नरेषु विक्रेतृषु रेतस्सेककर्तृषु पित्रादिषु योनिषु मातृषु कर्तृष्विति वा ॥ ६ ॥

ननु, तर्हि हाटकादिवदनित्यत्वमापतितं जीवस्येत्याशङ्क्य सम्बन्धस्यैवानित्यत्वं न तु जीवात्मन इत्याह--नित्यस्येति, यथा सम्बन्धस्यानित्यत्वं तथा ममपुत्रोयमिति ममत्वमप्यनित्यमित्याह यावदिति, हि शब्दाभ्यां प्रत्यक्षादिप्रमाणसिद्धत्वं दर्शयति एव शब्देनायोगव्यवच्छेदं करोति ॥ ७ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निरहंकृत इति स्वभावाख्यानं यत्र योनिषु स्वत्वं स्वकीयत्वम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

संपरेतमतिवाहिकदेहं प्राप्तं । दर्शयित्वा योगबलेनाविर्भाव्य ॥ १ ॥ २ ॥

टीकायामपमृत्युनेति तत्कारणकोचितपापविशेषो भवति । यतएव पूर्णमायुर्ह्रासयतीति ॥ कलेवरं स्वमाविश्येति विरोधात् पक्षान्तरमाह यद्वेति ॥ ३ । ४ ॥

मध्यस्थाः तास्मिन् तादृशेच मिलन्तः । उदासीना तयोरपि न मिलन्तः ॥ टीकायामथ नैवंसम्बन्ध इत्यत्र श्लोकद्वयस्येति शेषः ॥ ५—८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

षोडशे मृतपुत्रोक्त्या प्रबुद्धो नारदान्मनुम् ।
प्राप्य संस्तूय शेषन्तन्मुखाज्ज्ञानं नृपोऽध्यगात् ॥ १ ॥

ज्ञातीनामिति द्वितीयार्थे षष्ठी ॥ १ ॥

तदपि शोकमोहयोः शैषं दुर्व्वारमभिलक्ष्य मृतपुत्रमुखेनैव तं प्रबोधयितुमाह--जीवेति शुचा शोकेन ॥ २ ॥

शेषमवशिष्टमायुर्व्याप्येत्यपमृत्युना मरणं राजानमूहयति. । वस्तुतस्तु तस्य नास्त्येवायुर्मायिकत्वात् पितृप्रत्तान् पित्रा दत्तान् ॥ ३ ॥

जीव उवाचेति तदेव कलेवरं प्रविष्टो ऋषिर्जीवन्निव जीव इत्यर्थः मह्यं मम ॥ ४ ॥

मयि मृते पुत्रदृष्ट्या शोकश्चेत् क्रियते, शत्रुदृष्ट्या हर्षः किं न क्रियते ? इत्याशयेन सम्बन्धस्याऽनियतत्वमाह—बन्धवो विवाहादिसम्बन्धिनः ज्ञातयः सपिण्डा अरयो घातकाः मित्राणि हितैषिणः, मध्यस्थाः बहिरन्तर्मैत्रीवैरवन्तः । उदासीना मैत्रीवैरशून्याः । विद्विष उत्कर्षासहिनः ।· क्रमश इति जन्मान्तरे शत्रुरप्यस्मिन् जन्मनि पुत्रोभवतीत्यर्थः । यस्तु पुत्रः सद्गुणोभूत्वा म्रियते स तु दुःखाधिक्यप्रदत्वाच्छत्रुरेवेति लोकोक्तिः ॥ ५ ॥

ननु, यदि शत्रुरपि पुत्रः स्यात्तर्हि तत्रात्मीयत्वेन स्नेहः कथं ? स्यात्तत्र दृष्टान्तेन समादधाति यथेति । पण्यानि क्रयविक्रयार्हाणि हेमादीनि हेममुद्रिकादीनि यैव हेममुद्रा शत्रुगृहस्थिता स्ववध प्रयोजिका सैव दैवादात्मगृहमागता प्रेमास्पदीभूना भोगप्रयोजिकाच भवति । एवमेव जीवयोनिषु मनुष्यगोगर्द्दभादिषु ये कर्त्तार उत्पादकाः पितरो मातरश्च तेषु प्रविशन्ति ॥ ६ ॥

मम जीवस्य चित्रकेतुपुत्रत्वमेतावन्तं कालमासीत्तावदसौ स्नेहमकरोदेव अतः परमन्यपुत्रत्वं प्राप्स्यामि स एव स्नेहं करिष्यतीत्यर्थान्तरन्यासेनाह नित्यस्यार्थस्य स्वर्णमुद्राया एकस्या अपि क्रयविक्रयादिव्यवहारैर्यौकस्मिन्नपि दिने अन्य जनहस्तगताया ममेयं ममेयं नान्यस्येति सम्बन्धो ह्यनित्यः तत्र च यावदितिस्पष्टम् ॥ ७ ॥

वस्तुतो निरहङ्कृत एव यत्र पित्रादौ तस्य पित्रादेः । यद्वा निरहङ्कृत एव जीवो यावद्यत्र देहे उपलभ्येत तावदेव तस्य तस्मिन् जीवस्य देहे स्वत्वं नान्यदा अतोऽस्मिन् देहे सम्प्रति मम स्वत्वाभावात् कथमत्राहङ्कारं करोमीति तस्मात् कलेवरं स्वमाविश्येति त्वत्प्रार्थितं न घटत एवेति भावः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मंत्रोपनिषदि अत्यन्ततो विशोकस्याधिकारस्तदर्थमुक्तोपदेशेन विशोकस्यापि राज्ञः पुनरत्यन्ततो विशोकत्वासिद्धये तत्पुत्रमुखेनापि पितृपुत्रादिसम्बन्धस्यानित्यता तदनन्तरं मन्त्रोपनिषच्च वर्ण्यते—षोडशेनाध्यायेन अथेति सम्परेतं नृपात्मजं योगबलेन ज्ञातीनां दर्शयित्वा जीवात्मन्नित्याद्युवाच ॥ १ ॥

हे जीवात्मन् ! ते भद्रं भवतु ते मातरं पितरं तथा त्वत्कृतया त्वदर्थकृतया शुचा शोकेन भृशं तप्तान् सुहृदो बान्धवांश्च पश्य ॥ २ ॥

ते शेषमवशिष्टमायुरस्ति अपमृत्युना मृतत्वात् अतः कलेवरमाविश्य नृपासनमधितिष्ठ पितृप्रत्तान् पित्रा दत्तान् भोगान् भुङ्क्ष्व ॥ ३ ॥

अमी चित्रकेत्वादयः पितरो ममैव नियमेन कस्मिन् जन्मनि अभवन् पितृपुत्रादि सम्बन्धोऽनित्य इत्यर्थः ॥ ४ ॥

तदनित्यतामेवाह—बन्ध्वाति । सर्वे एव सर्वेषां क्रमशो बन्ध्वादयो भवन्ति ॥ ५ ॥

पण्यानि क्रयविक्रयार्हाणि हेमादीनि यथा कर्तृषु व्यवहर्तृषु इतस्ततः पर्यटन्ति एवं जीवो योनिषु देवमनुष्यादिषु पर्यटति ॥ ६ ॥

नित्यस्य प्रत्यहं व्यवहारार्हस्य ग्रामभृत्यादेरेकस्य नृषु एकस्मिन् दिने यन्नदतस्य भृत्यस्तेनैवान्नादिना क्रीतत्वात् एवमन्यस्मिन्नन्यस्यापरस्मिन्नपरस्येति अनित्यः सम्बन्धो दृश्यते यस्य यावत्सम्बन्धः, स्वामित्वं तावदेव तस्य ममत्वं मदीयोयं भृत्यादिरितिधीः ॥ ७ ॥

एवं यो नित्यः शाश्वतो निरहंकृतः जाते ज्ञाने पुत्रत्वाद्यहंकाररहितोपि यद्वा पितृपुत्रादिसम्बन्धानुपलम्भे अहं पितायंपुत्र इत्याद्यहंकाररहितोपि सः योनिगतः पुनः पुनर्जन्मप्राप्तः संसारे प्रविष्ट इत्यर्थः यावत् यत्र पित्रादौ पुत्रादिकं गतः पित्रादेः पेण उपलभ्येत तावदेव तत् तस्मिन् पुत्रादौ तस्य पित्रादेः स्वत्वं स्वकीयत्वम् ॥ ८ ॥

---

एष नित्योऽव्ययः सूक्ष्म एष सर्वाश्रयः स्वदृक् ।
आत्ममायागुणैर्विश्वमात्मानं सृजते प्रभुः ॥ ९ ॥
न ह्यस्यातिप्रियः कश्चिन्नाऽप्रियः स्वः परोपि वा ।
एकः सर्वधियां द्रष्टा कर्तॄणां गुणदोषयोः ॥ १० ॥
नादत्त आत्मा हि गुणं न दोषन्न क्रियाफलम् ।
उदासीनवदासीनः परावरदृगीश्वरः ॥ ११ ॥

श्रीशुक उवाच ।

इत्युदीर्य गतो जीवो ज्ञातयस्तस्य ते तदा ।
विस्मिता मुमुचुः शोकं छित्त्वाऽऽत्मस्नेहशृङ्खलाम् ॥ १२ ॥
निर्हृत्य ज्ञातयो देहं तथा कृत्वोचिताः क्रियाः ।
तत्यजुर्दुस्त्यजं स्नेहं शोकमोहभयार्तिदम् ॥ १३ ॥
बालघ्न्यो व्रीडितास्तत्र बालहत्या हतप्रभाः ।
बालहत्याव्रतं चेरुर्ब्राह्मणैर्यन्निरूपितम् ।
यमुनायां महाराज ! स्मरन्त्यो द्विजभाषितम् ॥ १४ ॥

भाषा टीका ।

श्रीरुक्मिणीरमणाय नमः ।

श्रीशुकउवाच ।

अनन्तर हे राजन् ! देवऋषी ( नारद ) जी मरे भये राज पुत्र को शोक करने वाले ज्ञातियों के आगे बोले ॥ १ ॥

नारद उवाच ।

हे जीवात्मन् तुमारा मंगल हो तुम अपने माता और पिता को देखो । और तुमारे शोके से अति तप्त, तुमारे सुहृद और बन्धुवो को देखो ॥ २ ॥

अपने कलेवर में प्रवेश करके और शेष जो आयु है उसमें पिता के दिये हुए भोगों को भोगो और राज्यसिंहासन् का अधिकार लो ॥ ३ ॥

जीव उवाच ॥

जीव बोलाकि देव तिर्यक-और मनुष्ययोनि में कर्मों से भ्रमते हुए मेरे कौन जन्म में ये माता पिता हुए हैं ॥ ४ ॥

बन्धु, जातिवाले, वैरी, बीच के, मित्र उदासीन, और कारण से द्वेष करने वाले, ये सब ही के सब कोई परस्पर क्रम हुआ करते हैं ॥ ५ ॥

जैसे क्रय विक्रय के योग्य सुवर्णादि वस्तु अलग २ मनुष्योंके समीप भ्रमती है इसी प्रकार जीव भी अनेक योनियों में भ्रमता रहता है ॥ ६ ॥

मनुष्यों में विद्यमान वस्तु का भी सबन्ध अनित्यदेख पडता है। जब तक जिस वस्तु में जिसका सम्बन्ध है तबही तक उस में उसका ममत्व रहता है ॥ ७ ॥

एसे ही नित्य निरभिमानी जीव भी जब तक जिसयोनि में देख पडता है तब तक ही उस में उसयोनि के माता पिताओ का सत्व रहता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

जीवस्य नित्यत्वं साधयति, एष नित्यः तत्र हेतुः अव्ययः अपक्षयशून्यः तत्कुतः ? सूक्ष्मः जन्मादिशून्यः तत्र कुतः ? सर्वाश्रयः जन्मादिमतो देहादेराश्रयः न तु देहादिरूपः यतः स्वदृक् स्वप्रकाशः सर्वाश्रयत्वमुपपादयति आत्मनो मायाया गुणैरात्मानमेव विश्वं विश्वात्मकं सृजति "तदात्मानंस्वयमकुरुत"इति श्रुतेः उपादानकारणत्वात्सर्वाश्रय इत्यर्थः जीवस्य वस्तुतो ब्रह्मत्वात् ब्रह्मण एव चिच्छक्तिर्विशिष्टस्येश्वरत्वेन सृष्टत्वाज्जीवः सृजतीति वाचोयुक्तिः। यद्वा स्वकर्मद्वारा सृष्टिनिमित्तत्वेन सृष्टत्वं भोग्यस्य च सर्वस्य भोक्त्राश्रयत्वात्सर्वाश्रयत्वं बोध्यमिति द्रष्टव्यम् ॥ ९ ॥

यदुक्तं सुहृन्न इति सुहृदो बान्धवांस्तप्तानिति च तद्दूष्याह नह्यस्येति तत्र हेतुः एकः सुहृदादिसङ्गरहितः तत्कुतः गुणदोषयोर्हिताहितयोः कर्तॄणां मित्रादीनां याः सर्वाधियोः विचित्रा बुद्धयः तासां द्रष्टा साक्षी ॥ १० ॥

स इत्थं प्रतिबुद्धात्मा चित्रकेतुर्द्विजोक्तिभिः ।
गृहान्धकूपान्निष्क्रान्तः सरःपङ्कादिव द्विपः ॥ १५ ॥
कालिन्द्यां विधिवत्स्नात्वा कृतपुण्यजलक्रियाः ।
मौनेन संयतप्राणो ब्रह्मपुत्राववन्दत ॥ १६ ॥

श्रीधरस्वामिकृत भावार्थदीपिका ।

यच्चोक्तं भुंक्ष्व भोगानित्यादि तत्राप्याह--नादत्त । इति गुणं सुखं दोषं दुःखं क्रियाफलं च राज्यादिकम् उदासीनत्वे हेतुः परावरदृक् कारणस्य कार्यस्य च साक्षी न तु भोक्ता यत ईश्वरः देहादिपारतन्त्र्यशून्यः अत एवम्भूतस्य मम च युष्माकं च सम्बन्धाभावाच्छोकं मा कुरुतेति वाक्यार्थः ॥ ११ ॥ १२ ॥ १३ ॥

द्विजभाषितमङ्गिरसा प्रोक्तं पुत्रादीनां दुःखहेतुत्वं स्मरन्त्यः पुत्रकामनाशून्या निर्मत्सराः सत्य इति भावः ॥ १४ ॥

निबिडपङ्कतुल्यं गृहं विहाय निष्क्रमणमतिधीरस्य तस्यैव योग्यं नान्यस्येति सदृष्टांतमाह स इत्थमिति सरसः पङ्कात् द्विपो गज इव ॥ १५ ॥

कृताः पुण्यजलक्रियाः पितृतर्पणाद्या येन संयतप्राणो नियतेन्द्रियः ॥ १६ ॥ १७ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तर्हि कीदृशं तस्य स्वरूपं ? यत्स्वरूपगतो न भवत्यनियतः पितृपुत्रत्वादिसम्बन्ध इत्यत्राह-एष इति । एष जीवो नित्यः आद्यन्तरहितः कुतः ? अव्ययः नाशरहितः तत्कुतः ? सूक्ष्मः निरतिशयसूक्ष्मः विनाशकैरव्याप्यः निरतिशयसूक्ष्मत्वात् विनाशकाहि जलाग्निविषशस्त्रादयो विनाश्यं व्याप्य विनाशयन्ति अस्य तु निरतिशयसूक्ष्मतया सर्वान्तःप्रवेशनस्वभावत्वेनाव्याप्यत्वादव्ययः एकः ज्ञानैकाकारः "एको व्रीहिः सुसम्पन्नः" इतिवज्जात्यभिप्रायकत्वकथनं न तु जीवस्वरूपैकत्वाभिप्रायकं तत्स्वरूपनानात्वस्य बहुप्रमाणप्रतिपन्नत्वात् सर्वाश्रयः सर्वेषां बुद्धीन्द्रियमनःप्राणादीनामाश्रयो धारकः स्वमात्मानं पश्यतीति स्वदृक् प्रत्यग्रूपः यद्वा स्वेनैव दृश्यत इति स्वदृक् स्वयंप्रकाशः अस्त्वीदृशं तस्य स्वरूपं किमयं स्वानर्थावहं देवमनुष्यादिशरीरं स्वयमेव सृष्ट्वा तत्र प्रविष्टोऽनर्थमनुभवति उत स्वकीयकर्मणा सृष्टे प्रविष्टोऽनुभवतीत्यत्राह--आत्मेति, न स्वानर्थावहं शरीरं स्वयं सृजति नापि केवलं कर्म, अपि तु परः परमपुरुषः आत्मनः स्वस्य मायया तस्य गुणैः सत्त्वादिभिरात्मानं प्रत्यगात्मानं विश्वं देवमनुष्यादिविश्वाकारं सृजति ॥ ९ ॥

ननु, कोसौ परः पुरुषः यदि कश्चित्सिध्यति तर्हि सोपीदृशदेवादिविषमसृष्टिं गर्भजन्मजरामरणाद्यनंतदुःखगर्भी कुर्वन्वैषम्यनैर्घृण्ययुक्तः संसृष्टजीवान्नातिरिच्येत ? तत्राह - नहीति । अस्य परमपुरुषस्य कश्चिदतीव प्रीतिविषयः कश्चिदप्रियः स्वीयः परकीयो वा नास्ति किंतु सर्वेषु समदर्शिरिति भावः तर्हि कथं विषमं सृजति ? तत्राह एक इति, गुणदोषयोः पुण्यपापयोः कर्तॄणां जीवानां सर्वबुद्धिवृत्तीनां एक एव सन् द्रष्टा भवति । तस्य सामान्येन स्रष्टृत्वेपि देवादिवैषम्यतत्तज्जीवसम्बन्धिपुण्यपापमूलकत्वान्न तस्य वैषम्यादिदोषप्रसक्तिरिति भावः सर्वधियां द्रष्टेत्यनेन तस्य सर्वज्ञत्वं पुण्यपापकर्तृत्वं, तत्फलभोक्तृत्वं चाभिप्रेतम् ॥ १० ॥

तदेवाह--नादत्त इति । आत्मा परमपुरुषो गुणदोषौ नादत्ते न स्वीकरोति गुणदोषकर्तृत्वमात्मनि न मन्यते अत एव क्रियाफलं सुखदुःखादिकम् नादत्ते किन्तूदासीनवदासीनः उदासीनवज्जीवान्तरात्मतया स्थितः बत्करणेनात्यन्तोदासीनत्वमपि नास्तीत्याविदितं गुणदोषयोस्तस्य प्रयोजककर्तृत्वात्साक्षात्कर्तृत्वाभावादुदासीनत्वं तत्तत्पूर्वं पूर्वं कर्मवासनानुसारेण प्रयोजयितृत्वाच्चानुदासितृत्वमपि विषयभेदादुभयोरेकस्मिन्न विरोध इति भावः । ननु, जीवस्यापि न गुणदोषयोः साक्षात्कर्तृत्वं तस्य निष्क्रियत्वाद्देहस्यैव साक्षात्कर्तृत्वात् किन्तु देहेन्द्रियादिनियमनरूपमेव तस्य कर्तृत्वम् एवञ्च प्रयोजयितृत्वं जीवपरयोरुभयोरप्यविशिष्टमिति कथमन्यतरस्य क्रियाफलोपादानमन्यतरस्य नेति विभागस्तत्राह—परावरदृगीश्वर इति, स्वयमीश्वरो जीवप्रभृतिदेहेन्द्रियमनःप्राणपर्यन्तानां नियन्ता सन् परावरदृक् परं प्रकृतिपुरुषाभ्यां विलक्षणं स्वस्वरूपमपरं जीवस्वरूपं प्रकृतिस्वरूपं च एतत्त्रितयं यथावत्पश्यतीति परावरदृक् जीवस्तु कर्मणा तिरोहितस्वभावः प्रकृतिमेवात्मानं मत्वा तद्गतं कर्तृत्वं साक्षात्स्वस्मिन्मनुत इति स क्रियाफलभोक्ता भवति परमात्मा तु नित्यासङ्कुचितापरिच्छिन्नानुभूत्या स्वपरयाथात्म्यवित्वाद्देहात्मभ्रमाभावेन क्रियाफलभोक्तेति भावः नहीत्यादिश्लोकद्वयं जीवपरतयापि वर्णयितुंशक्यं तथा हि, पूर्वप्रस्तुतं जीवस्वरूपमेव विशोधयति--नहीति, अस्य जीवस्य स्वतः प्रियाप्रियो न भवतः अपि तु कर्मकृतावित्यर्थः तथा स्वपरविभागोपि न, एकः एकरूपः ज्ञानैकाकारः देहगतविकारैरस्पृष्टत्वेन सदैकरूप इति वा गुणदोषयोः कर्तॄणां हेतुभूतानां सर्वधियां द्रष्टा आश्रयः नादत्त इति विवेकज्ञानवान् आत्मा गुणदोषान्वयं नाभिमन्यत इत्यर्थः ईश्वरः देहादिनियमनपरः परावरदृक् स्वस्वरूपप्रकृतिस्वरूपयोर्द्रष्टेत्युक्तवानाविष्टो जीवः ॥ ११ ॥

तत उपरितनं वृत्तान्तमाह मुनिः--इतीति । इतीत्थमुदीर्योक्त्वा पुनर्जीवः कलेवराद्विनिष्क्रम्य गतः तस्य मृतस्य ये ज्ञातयः ते तथा विस्मितास्सन्तः आत्मनां स्वेषां यः पुत्रादि-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विषयकः स्नेहः स एव शृङ्खला तां छित्त्वाऽपोह्य शोकं मुमुचुः ॥ १२ ॥

ततो ज्ञातयः तं शवमग्नौ निर्हृत्य दग्ध्वा उचिताः मृतोद्देशेन कर्तव्याः क्रियाः कृत्वा शोकमोहादिप्रदं दुस्त्यजं स्नेहमनुरागं तत्यजुः ॥ १३ ॥

ततो बालघ्न्यः याः गरलदानेन बालं हतवत्यः तास्सर्वाः द्विजेनाङ्गिरसा भाषितं स्मरन्त्यो व्रीडिताः लज्जिताः बालहत्यया-हृताः प्रभाः यासां ताः यद्बालहत्याव्रतं बालहत्यापनोदकं व्रतं ब्राह्मणैर्निरूपितं कर्त्तव्यत्वेन चोदितं तद्यमुनायां हे महाराज, चेरुरनुष्ठितवत्यः ॥ १४ ॥

ततः स चित्रकेतुः इत्थं द्विजोक्तिभिरङ्गिरस उक्तिभिः जीवेन संवादिताभिर्नारदोक्तिभिश्च प्रतिबुद्धः उदितः आत्मविवेको यस्य तादृशः सरसः पङ्काद्गज इव गृहमेवान्धकूपस्तस्माद्वि-निष्क्रान्तः निर्गतः ॥ १५ ॥

कालिन्द्यां यमुनायां विध्युक्तप्रकारेण स्नात्वा कृताः पुण्याः जलक्रियाः पितृतर्पणाद्यो येन तादृशः मौनेन परमात्मस्वरूप-संशीलनेन हेत्वर्थे तृतीया मौनार्थं संयतप्राणः नियमितान्त-र्बाह्येन्द्रियः इतरैः सम्भाषणराहित्यरूपेण मौनेन वा; ब्रह्मपुत्रौ नारदाङ्गिरसौ अवन्दत दण्डवन्ननाम ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, तर्हि केन सहास्य नित्यसम्बन्धः ? इति तत्राह - एष इति । य आत्ममायागुणैः स्वाधीनप्रकृतिगुणैर्विश्वं परावरं जग-त्सृजति, आत्मानं चावताररूपेण व्यनक्ति स एव सर्वाश्रयः सर्वैर्नित्यसम्बद्ध इत्यन्वयः । अनित्यत्वात्कथं घटत इत्यत उक्तं नित्य इति, कोऽर्थ इत्यतो व्यय इति अनेन नित्यशब्दो व्या-ख्यातः अनुपलब्धौ हेतुमाह--सूक्ष्म इति, न चायं जीववद्बहुत्व-संख्योपेत इत्याह-एक इति मुख्यत एकत्वसंख्याविशिष्ट इत्यर्थः सृष्टौ प्रवर्तमानस्य सृज्यसम्बन्धेन ज्ञानलोपो नास्तीत्याह - स्वद-गिति, स्वरूपभूतज्ञानस्यापि प्रबलप्रतिबन्धकेनाभिभवः किं न स्यादित्यत आह-प्रभुरिति, अनेन हरिणा नित्यसम्बन्धः पित्रा-दिभिरनित्य इति ज्ञापितम् "अनित्यसम्बन्धयुताः पित्राद्या नित्ययु-ग्घरिः"इति वचनात् ॥ ९ ॥

एवंविधस्य हरेर्योग्यतानिरेकेण न कावपि प्रियाप्रियौ स्त इत्याह-नहीति । कुतोऽतिप्रियाद्यभावः ? इति तत्राह सर्वेति, गुणदोषयोः कर्तॄणां पुरुषाणां स्त्रीणाञ्च सर्वासां धियां कु-शलाकुशलसाक्षित्वेन तदनुसारेण फलदातृत्वादतिप्रियाद्यभाव इत्यर्थः द्वितीयसद्भावे तद्भयात्कस्मिंश्चिदतिप्रियत्वादि संभवति न हि हरेस्तादृशोऽस्तीत्यभिप्रेत्याह एक इति ॥ १० ॥

साक्षित्वं स्पष्टयति-नेति । आत्मा परमात्मा कथं गुणाना-दानं हरेः "षाड्गुण्यं जिघ्रति षड्गुणोऽयं" इत्युक्तेरत उक्तं हीति हि शब्दो हेतौ गुणोपभोगेन लोकवद्बन्धरूपभावो गुणानादा-नस्यार्थो न तु सर्वात्मनाऽभोक्तृत्वं तथात्वे "भोक्ता सद्गुणभो-क्तृत्वाच्च भोक्ता तद्वद्वृद्धितः । अचिन्त्यशक्तितस्तच्च युज्यते परमे-शितुः" इति स्मृतिविरोधः स्फुटः उदासीन इव सर्वस्मादुत्त-मत्वेन स्थित, एवं भोक्तृत्वाभोक्तृत्वे लोकविरुद्धे हरेः कथं घटेते इत्यत उक्तमीश्वर इति परावरदृक्त्वश्रुतीनामप्यस्तीत्यत उक्तमुदासीन इति तद्वस्तुषु बाह्याभ्यन्तरवृत्त्या तिष्ठन्नेव परावरदृगित्यर्थः ॥ ११ ॥

ज्ञातयस्तस्मिन् जन्मनि सपिण्डाः आत्मनां स्वेषां तस्मिन्पुत्रे स्नेहाख्यशृङ्खलां छित्त्वा ॥ १२ ॥

ज्ञातेः सपिण्डस्य तस्य देहं निर्हृत्य दग्ध्वोचिताः क्रियाः श्राद्धादिलक्षणाः ॥ १३—१४ ॥

तत्र चित्रकेतुः किं चकारेति तत्राह । स इत्थमिति ॥ १५ ॥

कृताः पुण्यजलैः क्रियास्तर्पणादिलक्षणाः येन स तथा ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं जीवस्य पारतन्त्र्यमुक्त्वा तद्विलक्षणं परमपि दर्शयति - एष इति त्रिभिः, एष प्रत्यक्ष एव श्रुतियुक्तिसिद्धः परमेश्वरः पुनरुक्तिर्निर्द्धारणार्था सूक्ष्मो दुर्ज्ञेयः ॥ ९ । १० ॥

आत्मा परमात्मा ॥ ११—१३ ॥

बालघ्न्यश्च इति सार्द्धकम् ॥ १४—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं जीवस्य पारतन्त्र्यादनैश्वर्याच्च ततोऽन्यः कश्चित् स्वतन्त्रः ईश्वरोऽस्तीति प्रतीयते स एव कीदृश इत्यपेक्षायामाह—एष इति । जीवस्य मायया आवरणादपरोक्षस्यापि परोक्षायमाणत्वात् तच्छब्दवाच्यत्वमुक्तम् । ईश्वरस्य मायया अनावरणात् प्रयो-क्तुरङ्गिरसोऽपि जीवन्मुक्तत्वेनाविद्यावरणराहित्यादपरोक्षत्वेनैत-च्छब्दवाच्यत्वमुच्यते एष इति, तत्र नित्यत्वमव्ययत्वं सूक्ष्म-त्वमिति साधारणधर्मत्रयमीश्वरस्य. पारतन्त्र्यमनैश्वर्यमिति त्वसाधारणधर्मद्वयं जीवस्य पूर्वमेव दर्शितम् ईश्वरस्याप्य-साधारणान् सर्वाश्रयत्वादीन् धर्मान् वक्तुं पुनरप्येतच्छब्दमु-पन्यस्यति एष इति । आत्मशक्तिमयत्वादात्मानम् ॥ ९ ॥

जीवस्य बन्धुशत्रुत्वादिमध्यस्थादयः अज्ञाननिबन्धा. नत्वीश्वर-स्येत्याह नह्यस्येति । यत्तु भक्तोऽतिप्रियः स्वश्च भक्तद्वेषी अप्रियः परः शत्रुश्च इति तच्च "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति च मां भक्त्या मयि ते तेषु चाप्यहम्" इति । "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्" इति गीतोक्तेर्भक्तव-त्सलस्य भूषणमेव न तु दूषणं किञ्च जीवा बहवः ईश्वर-स्त्वेक एव गुणदोषयोर्हिताहितयोः कर्तॄणां मित्रादीनां याः सर्वधियः विचित्रा बुद्धयस्तासां द्रष्टा साक्षी ॥ १० ॥

जीवो हि मित्रामित्रयोर्गुणदोषौ गृह्णाति यतः क्रियाफलं

अथ तस्मै प्रपन्नाय भक्ताय प्रयतात्मने ।
भगवान्नारदः प्रीतो विद्यामेतामुवाच ह ॥ १७ ॥
ॐ नमस्तुभ्यं भगवते वासुदेवाय धीमहि ।
प्रद्युम्नायाऽनिरुद्धाय नमः सङ्कर्षणाय च ॥ १८ ॥
नमो विज्ञानमात्राय परमानन्दमूर्त्तये ।
आत्मारामाय शान्ताय निवृत्तद्वैतदृष्टये ॥ १९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सुखं दुःखञ्च भुङ्क्ते ईश्वरस्तु नैवेत्याह—नादत्त इति । अत एव उदासीनवत् सर्वान्तर्यामित्वेनासीनः परावरे भद्राभद्रे साक्षित्वेन पश्यतीति सः उदासीन इवेत्यरिमित्रादिप्रतियोग्युदासीनस्तु नैवेत्यर्थः अत ईश्वरमायानियन्त्रितानामेषां चित्रकेत्वादीनां महदनुग्रहमूलामीश्वरप्रपत्तिं विना शोकमोहादिमयोऽयं संसारो दुस्तर एवेति किं मया बहुवक्तव्यमिति प्रकरणार्थः ॥ ११ ॥ १२ ॥ १३ ॥

बालहत्याहतप्रभा इति हतप्रभत्वेनैव लक्षणेन बालघ्न्यः एता एवेति यदा सर्वे विदितवन्तस्तदा व्रीडितास्ताः स्वयं वयमेव पापिष्ठा बालमहन्मेति वचसा निष्कपटीभूयाङ्गिरःप्रभृति ब्राह्मणोपदिष्टं प्रायश्चित्तमाचेरुः ॥ १४ ॥ १५ ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, योनिशब्दनिर्दिष्टः संसारः केन सृष्टः यत्र प्रविष्टो जीवः पण्यवत् पुनःपुनः पारवश्यं प्राप्नोतीत्यत्र परमात्मानमाह—एष इति त्रिभिः, सर्वाचेतनपदार्थाश्रयः आत्ममायागुणैः स्वप्रकृतिगुणैः आत्मानमेव आत्मशक्तिपरिणामात् विश्वं सृजति "तदात्मानं स्वयमकुरुत" इतिश्रुतेः ॥ ९ ॥

सर्वेषां ब्रह्मादिमत्कुणान्तानां जीवानां धियां गुणदोषयोश्च द्रष्टा ॥ १०—११ ॥

विस्मिताः सन्तः आत्मनः स्नेहशृंखलां छित्वा शोकं मुमुचुः ॥ १२ ॥

दुस्त्यजमपि स्नेहं तत्यजुः ॥ १३ ॥

द्विजभाषितं पुत्रादीनां दुःखहेतुत्वमङ्गिरसा प्रोक्तं स्मरन्त्यः व्रीडितास्सत्यः यमुनायां यमुनातीरे बालहत्यायाः व्रतं प्रायश्चित्तं चेरुः इति सार्द्धश्लोकान्वयः ॥ १४ ॥

सरःपंकात्सरसः कर्दमात् द्विपो गज इव ॥ १५ ॥

कृताः पुण्यजले पुण्यप्रदे कालिन्दीजले क्रिया आचमनतर्पणाद्या येन सः संयता वशीकृताः प्राणा इन्द्रियाणि येन सः ॥ १६ ॥

---

### भाषाटीका ।

यह आत्मा नित्य अव्यय और सूक्ष्म है । और यह सर्व देव मनुष्यादि देह के आश्रय और स्वयं प्रकाश है । और आत्ममाया गुणों से विश्वात्मक अपने को स्वयं समर्थ होकर सृजता है ॥ ९ ॥

न इसका कोई प्रिय न अप्रिय न कोई अपना न पराया यह एक ही गुण दोष की करने वाली सर्व बुद्धियों का द्रष्टा [ देखने वाला ] है ॥ १० ॥

यह आत्मा किसी के गुण दोष को नहीं ग्रहण करता और परावर ( कार्य कारण ) का देखने वाला और ईश्वर ( समर्थ ) है ॥ ११ ॥

श्रीशुक उवाच ॥

ऐसे कहकर जीव तो चला गया उस समय उसके सब ज्ञाति लोगों ने विस्मित होकर अपनी स्नेह रूप सांकर को तोड़कर शोक छोड़दिया ॥ १२ ॥

ज्ञाति लोगों ने भी उस देह को ले जाकर अन्त समय के उचित संस्कार करके, शोक मोह भय और आर्ति ( दुःख ) के देने वाला जो दुस्त्यज स्नेह रहा उसे छोड़ दिया ॥ १३ ॥

हे राजन् ! बालहत्या से नष्टकान्तिवाली बालहत्यारी अन्य रानियों ने भी वहां लज्जित होकर, जो ब्राह्मणों ने बतलाया उस बाल हत्या के व्रत को अङ्गिरा के वाक्य का स्मरण कर के यमुनाजी तीर में किया ॥ १४ ॥

इस प्रकार ब्राह्मणों की उक्ति से बोधको प्राप्त होकर वह चित्रकेतु तलाव के पंक से जैसे हस्ती, इस प्रकार गृह रूप अन्धकूप से निकलकर । कालिंदी में विधिवत् स्नान कर जलाञ्जलिदेकर । मौन हो श्वास रोककर दोनों ब्रह्म पुत्रों ( अङ्गिरा नारद ) को प्रणाम करता हुआ ॥ १५ ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नमो धीमहि ध्यामेम मनसा नमस्याम इत्यर्थः ॥ १८ ॥

निवृत्ता द्वैतदृष्टिर्यस्मात् ॥ १९ ॥

आत्मानन्दानुभूत्यैव न्यस्तशक्त्यूर्मये नमः ।
हृषीकेशाय महते नमस्ते विश्वमूर्त्तये ॥ २० ॥
वचस्युपरते प्राप्य य एको मनसा सह ।
अनामरूपश्चिन्मात्रः सोऽव्यान्नः सदसत्परः ॥ २१ ॥
यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते ।
मृण्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः ॥ २२ ॥
यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः ।
अन्तर्बहिश्च विततं व्योमवत्तं नतोऽस्म्यहम् ॥ २३ ॥
देहेन्द्रियप्राणमनोधियोऽमी यदंशविद्धाः प्रचरन्ति कर्मसु ।
नैवान्यदा लोहमिवाप्रतप्तं स्थानेषु तद्द्रष्टृपदेशमेति ॥ २४ ॥

### श्रीधरस्वामिकृत भावार्थदीपिका ।

न्यस्ता निरस्ताः शक्त्यूर्मयो मायानिमित्ता रागद्वेषादयो येन ॥ २० ॥

मनसा सह वचस्यप्राप्योपरते सति य एक एव प्रकाशते वचसीति सर्वेन्द्रियोपलक्षणम् सोऽस्मानव्यात्सदसत्परः कार्यकारणयोः कारणम् ॥ २१ ॥

तदेवाह—यस्मिन्निति । यस्मिन्निदं कार्यकारणं तिष्ठति अप्येति च यतः यतश्च जायते मृण्मयेषु घटादिषु मृज्जातिर्मृण्मात्रमिव सर्वानुस्यूतं यत् तस्मै ॥ २२ ॥

ननु, सर्वानुस्यूतं चेन्मृज्जातिवत्प्रतीयेत तत्कथं मनोवचसोरप्राप्तिस्तत्राह । यद्ब्रह्म व्योमवद्विततमपि असवः प्राणाः क्रियाशक्त्या न स्पृशन्ति मन आदीनि च ज्ञानशक्त्या न विदुः तद्ब्रह्म नतोऽस्मि ॥ २३ ॥

तेषां तदज्ञाने हेतुमाह—देहेन्द्रियादयोऽमी यदंशविद्धा यच्चैतन्यांशेनाविष्टाः सन्तः कर्मसु स्वस्वविषयेषु प्रचरन्ति जाग्रत्स्वप्नयोः अन्यदा सुषुप्तिमूर्च्छादौ नैव प्रचरन्ति यथा अप्रतप्तं लोहं न दहति अतो यथा लोहमग्निशक्त्यैव दाहकं सदग्निं विना न दहति एवं ब्रह्मगतज्ञानक्रियाशक्तिभ्यां प्रवर्तमाना देहादयस्तन्न स्पृशन्ति न विदुश्चेति भावः जीवस्तर्हि द्रष्टृत्वात् जानातु नेत्याह स्थानेषु जाग्रदादिषु द्रष्टृपदेशं द्रष्टृसंज्ञां तदेवैति प्राप्नोति 'नान्यो जीवो नामास्ति 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतेः यद्वा द्रष्टृपदेशं द्रष्टृसंज्ञं जीवमपि तदेव एति जानाति न तु जीवस्तज्जानातीत्यर्थः तदुक्तं हंसगुह्यस्तोत्रे 'देहोऽसवोऽक्षाः' इत्यादि ॥ २४ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्तस्मै प्रपन्नाय यथाविधि गुरूपसत्तिं कृत्वा स्थिताय भक्ताय गुरुभक्तियुक्ताय प्रयतात्मने श्रवणादियुक्तप्रयतमनस्काय भगवान्नारदः प्रीतः शिष्यलक्षणैर्हर्षितः एतां वक्ष्यमाणां विद्यां मन्त्रोपनिषदमुवाचोपदिदेश ॥ १७ ॥

नारदेनोपदिष्टां विद्यामेवाह—नम इत्यादिना, परमेष्ठिने नमस्त इत्यन्तेन । तावत्सकलेतरविलक्षणं परमात्मानं विशोध्य प्रणमति वासुदेवादिचतुर्व्यूहात्मनावस्थिताय तस्मै तुभ्यं भगवते नमः एवंभूतं त्वां धीमहि ध्यायेमहि ॥ १८ ॥

विज्ञानमात्राय क्वचिदपि जाड्यरहिताय निरतिशयानन्दस्वरूपाय आत्मारामायात्मन्येव रममाणाय सुखान्तरनिरपेक्षायेत्यर्थः शान्ताय रागादिरहिताय निवृत्तद्वैतदृष्टये स्रष्टिरुदयः निवृत्ता द्वैतसृष्टिः जात्यादिकल्पना यस्य तस्मै जात्यादिकल्पनारहितायेत्यर्थः निवृत्तद्वैतदृष्टय इति पाठे निवृत्ता द्वैतदृष्टिः स्थूलत्वाणुत्वादिभेददर्शनं यस्मिन् तथा च श्रूयते "अस्थूलमनण्वह्रस्वमदीर्घमगोत्रमचक्षुःश्रोत्रं तदपाणिपादम्" इत्यादि एवं भूताय भगवते षड्गुणपूर्णाय नम इत्यर्थः ॥ १९ ॥

स्वात्मानन्दानुभवेनैव न्यस्ताः निरस्ताः शक्त्या स्वबलेन ऊर्मयः अशनायापिपासाशोकमोहजरामरणरूपाः षडूर्मयो यस्य तस्मै हृषीकाणामिन्द्रियाणां तदधिपतेश्च ईशाय नियन्त्रे करणाधिपायेत्यर्थः महते स्वरूपेण गुणैश्च निरतिशयबृहते विविधविचित्रानन्तशक्तये तुभ्यं नमः ॥ २० ॥

एवं नमनं विधायाथ तस्मात्स्वरक्षां प्रार्थयते—वचसीति । मनसा सह वचसि उपरते निवृत्ते सत्यवधेरभावाद्वाङ्मनसयोर्निवृत्तयोस्सतोः यः प्राप्यः अपरिच्छिन्नतया अनुसन्धेयः अत एवैकः निःसमाभ्यधिकः प्राप्यल्यबिभक्तिकपाठे अप्राप्येति छेदः

## श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तदा मनसा सहाप्राप्यावधि वचस्युपरते सति यः अपरिच्छिन्नानन्दरूप इति शेषः वाङ्मनसापरिच्छेद्यापरिच्छिन्नानन्दरूप इत्यर्थः चिन्मात्रः ज्ञानैकाकारः अत एवैकः निःसमाभ्यधिकः कर्मकृतनामरूपरहितः सदसत्परः चेतनाचेतनाभ्यां विलक्षणः सः प्रसिद्धः भगवान्सोऽस्मान् रक्षतु. अत्र प्रतिपदमुपनिषदर्था अभिप्रेताः विज्ञानमात्राय परमानन्दमूर्त्तय इत्यनेन "विज्ञानमानन्दं ब्रह्म" इति श्रुत्यर्थः आत्मारामायेत्यनेन "सर्वैश्वर्यसम्पन्नः शम्भुराकाशमध्यगः" इति निवृत्तद्वैतदृष्टये इत्यनेन अनामरूपश्चेत्यनेन च "अस्थूलमनणु" इति आत्मानन्देत्यादिना "योऽशनाया पिपासे शोकमोहौ जरामृत्यू अत्येति" इति हृषीकेशायेत्यनेन "स कारणं करणाधिपाधिपः" इति महत इत्यनेन "सत्यं ज्ञानमनन्तं ब्रह्म" इति अनन्तशक्तय इत्यनेन "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति वचस्युपरत इत्यादिना "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणः" इति एक इत्यनेन "न तस्य कार्यं करणं च विद्यते न तत्समश्चाऽभ्यधिकश्च दृश्यते" इति सदसत्पर इत्यनेन "भोक्ता भोग्यं प्रेरितारं च मत्वा, क्षरात्मानावीशते देव एकः, योऽव्यक्तमन्तरे सञ्चरन्यस्याव्यक्तं शरीरं, योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरम्" इतिश्रुत्यर्था अभिप्रेताः ॥ २१ ॥

एवं सकलेतरविलक्षणमौपनिषदं ब्रह्म विशोध्य प्रणम्य ततः स्वानिष्टनिवृत्तिं प्रार्थ्य अथ तदेव ब्रह्म जगज्जन्मादिकारणत्वेनोपलक्ष्य प्रणमति यस्मिन्निति। सदसत्पर इत्यस्योदाहृतश्रुत्यर्थप्रत्यभिज्ञापकतया उक्तविधस्वरूपस्य परस्य ब्रह्मणश्चिदचिच्छरीरकत्वप्रत्यभिज्ञापितोपनिषद्भिरेव प्रतिपन्नमित्यभिप्रेत्य चिदचिद्विशिष्टस्य जगत्कारणत्वलक्षणमत्रोच्यते, इदं स्थूलचिदचिदात्मकं जगत् यतः सूक्ष्मचिदचिद्विशिष्टाद्ब्रह्मणो जायते यस्मिन्नप्येति लीयते यस्मिन्नुक्तविधे ब्रह्मस्वरूपे तिष्ठति आधेयतया वर्त्तते "ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः" इति श्रुत्युक्तरीत्या आधारोऽपि ब्रह्मैवेति भावः तत्र दृष्टान्तः मृण्मयेष्विव मृज्जातिरिति मृज्जातिशब्दो मृज्जातीयपरः यथा मृण्मयेषु मृज्जातीयघटशरावादिकारणभूतेषु मृद्विकाररूपमृत्पिण्डेषु मृज्जातीयो घटादिर्जायते अपादानस्याधिकरणत्वविवक्षया सप्तमी मृण्मयेभ्यो यथा मृज्जातिर्जायत इत्यर्थः यद्वा मृण्मयेष्विति निमित्तसप्तमी निमित्तमत्रोपादानकारणं तथा च मृण्मयेभ्यो मृत्पिण्डेभ्य उपादानभूतेभ्यो मृज्जातीयो घटादिर्जायत इत्यर्थः, अथवा मृण्मयेष्विति पदमेव मृद्विकारघटादिपरं मृज्जातिर्मृत्पिण्डः मृण्मयेषु घटादिषु कारणतयाऽनुस्यूतः अथवा यस्मिन्नधितिष्ठतीत्यत्रैव दृष्टान्तः मृण्मयेषु घटादिषु मृज्जातिर्मृत्त्वमधितिष्ठति अपृथक्सिद्धप्रकारतया वर्त्तते तद्वदिदं विश्वं चिदचिदात्मकमपृथक्सिद्धप्रकारतया यस्मिन्वर्त्तते तस्मै ब्रह्मणे नमः अत्रापि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्ति" इत्यादि श्रुत्यर्थोऽनुसन्धेयः ॥ २२ ॥

एवं प्रतिपदमौपनिषदर्थं प्रत्यभिज्ञापनेन उपनिषदेकगम्यं परं ब्रह्मेति सूचितं तदेव दृढीकर्त्तुं तदितरप्रमाणाविषयत्वं वदन्प्रणमति-यन्नेति । "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुत्युक्तरीत्या कृत्स्नं जगदन्तर्बहिश्च विततं व्याप्य स्थितमपि व्योम व्योमशरीरकम् "आकाशशरीरं ब्रह्म" इति श्रुतेः यं मनोबुद्धीन्द्रियासवो न स्पृशन्ति न विदुः तत्र कर्मेन्द्रियाण्यसवः प्राणाश्च क्रियाशक्तिप्रधाना न स्पृशन्ति न विषयीकुर्वन्ति मनश्च बुद्धिश्च चक्षुरादीनि ज्ञानेन्द्रियाणि च यं न विदुरित्यन्वयः बुद्धीन्द्रियाद्यविषयत्वेन तन्मूलकप्रत्यक्षादिप्रमाणाविषयमिति भावः अतीन्द्रियत्वे हेतुः व्योमेति व्योमशरीरकत्वेन तदन्तप्रवेशयोग्यतया ततोऽपि सूक्ष्मत्वादिन्द्रियाविषयमिति भावः तद्ब्रह्म त्वामहं नतोऽस्मि ॥ २३ ॥

किञ्च मन आदयः तदाहितज्ञानक्रियादिशक्तिमत्त्वेन तं न विषयीकुर्वन्तीति सदृष्टान्तमाह—देहेति । अमी देहेन्द्रियादयः यदंशाविद्धाः यस्य "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्युक्तज्ञानक्रियादिशक्तिमतो ब्रह्मणोऽशेन ज्ञानक्रियादिशक्तिलेशेन अनुविद्धाः व्याप्ताः कर्मसु स्वस्वव्यापारेषु प्रचरन्ति प्रवर्तन्ते अन्यथा यदंशेनानुविद्धास्तु न प्रचरन्ति तेषामचेतनपरिणामरूपत्वेन वस्तुतो ज्ञानशक्तिविरहादिति, भावः तत्र दृष्टान्तः लोहमिति यथा प्रतप्तं लोहं दहति दाहकशक्तिनाग्निनानुविद्धमेव लोहमितरद्दहदप्यग्निं न दहति अग्निनानुविद्धन्तु इतरदपि न दहति तद्वत्परमात्मनाहितज्ञानक्रियाशक्तयो देहेन्द्रियादयः स्वस्वविषयेषु प्रचरन्ति न परमात्मनि अनाहितशक्तयस्तु स्वस्वकर्मस्वपि न प्रचरन्तीत्यर्थः ननिवन्द्रियाणि स्वतो ज्ञानशक्तिविरहात्तं मा विषयीकुर्वन्तु जीवस्तु स्वभावतो ज्ञानशक्तिमत्त्वात्तं विद्यादित्यत्राह स्थानेष्विति, तत्तेन जीवोऽपि स्थानेषु द्रष्टृव्यपदेशमेति द्रष्टृत्वव्यपदेशमेति गच्छति ईश्वरसङ्कल्पादेव जीवस्य ज्ञानविकास इत्यर्थः ॥ २४ ॥

———

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ तयोर्ब्रह्मपुत्रयोर्मध्ये नारदः हेत्यनेनाधिकारगुणसम्पन्नस्य विद्योक्तफलं साकल्येन फलतीति ध्वनयति ॥ १७ ॥

चित्तसन्निहितं सम्बोध्य तुभ्यं नम इति वक्ति भगवन्नित्यादिविशेषणानि गुणसामग्रीद्योतकानि यथा सम्भवमूह्यानि ॥ १८ ॥

नित्यं निवृत्ता द्वैतदृष्टिः स्वावतारादौ भेददर्शनं येन स तथा तस्मै निवृत्तद्वैतवृत्तये इति पाठे निवृत्तेन द्वैतेनान्यथाज्ञानेन वृत्तिर्वर्तनं यस्य स तथा, तस्मै नित्यनिवृत्तदेहाद्यहंममाभिमानायेत्यर्थः ॥ १९ ॥

सम्यक् त्यक्ताः षडूर्मयो यस्येति तस्मै । यद्वा अशनायादिषडूर्मिरहिताय "योऽशनाया पिपासे शोकं मोहं जरां मृत्युमत्येति" इति श्रुतेः ॥ २० ॥

मन्त्रमुपदिशन्ध्यानप्रकारमाह । वचसीति वाह्यमनसा सह वचस्युपरते नष्टे चिन्मात्रमनसा सह प्राप्यः सदसत्परः स्थूलसूक्ष्मप्रपञ्चविलक्षणः ॥ २१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अलौकिकवस्तुनो लक्षणमन्तरेण तज्ज्ञानं दुःसाध्यमिति तल्लक्षणमाह—यस्मिन्निति। इदं जगद्यस्मिंस्तिष्ठत्यप्येति च यतश्च जायते अत्र दृष्टान्तमाह—मृण्मयेष्विति "जातिः सामान्यजन्मनोः" इत्यभिधानात्। मृद्रूपोजातिर्जन्म वृक्षादेः स तथा यथा वृक्षादिरायिर्मृण्मयेषु मृद्विकारेषु पृथिवीपर्वतादिषु तिष्ठत्यप्येति तेभ्यो जायते च तथा मृज्जातिर्मृत्वं मृण्मयेषु घटादिष्विवानुगतमित्यर्थो ब्रह्मणो बहुत्वाभावात् "एकमेवाद्वितीयम्" इति श्रुतेः

"पृथिवी पर्वताश्चैव मृण्मयाः समुदीरिताः।
तेषु मृज्जातयः सर्वे जायन्ते स्थावरादयः" ॥

इत्यनेन विरुद्धत्वाच्चानुपपन्नः ॥ २२ ॥

मनोबुद्धीन्द्रियासवः मनआदिशब्दवाच्याः रुद्रादयो देवाः॥२३॥

भगवदनुग्रहभावाभावौ तद्विषयकज्ञानाज्ञानकारणमित्युक्तं तत्स्वरूपमाह - देहेति। यस्य हरेरंशैर्विद्धाः प्रेरिता देहेन्द्रियाभिमानिनो देवा ज्ञानादिकर्मसु प्रचरन्ति प्रवर्तन्ते अन्यदा यदंशप्रेरणाभावे नैव प्रवर्तन्त इत्यन्वयः कथमिव प्रतप्तमन्तर्निहितवह्निसामर्थ्याल्लोहं दाहकार्यं प्रवर्तते अप्रतप्तं न हि नहं तद्ब्रह्म शरणमेमि. कीदृशं? देहेन्द्रियादिस्थानेषु स्थितं द्रष्टृपदेशं साक्षिणाम ॥ २४—२८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तत्र श्रीभगवत्त्वेन नमस्यति—भगवत इति। तद्व्यूहत्वेन वासुदेवायेति सङ्कर्षणस्यान्ते पाठः स्वोपास्यत्वेन तत्रैव विश्रान्तेः ॥ १८ ॥

ब्रह्मत्वेन नमस्यति—विज्ञानमात्रायेति। अत्र मूर्तिः स्वरूपं निवृत्तद्वैतदृष्ट्य इति यस्मिन् दृष्टे अन्यत्र दृष्टिर्नेभवतीत्यर्थः। तच्चाद्वैतवादतो विविच्य दर्शयति, आत्मानन्देति। स्वरूपानन्दस्यानुभवेन न्यस्ताः नानुसंहिताः शक्त्यन्तरपरम्परा येन तस्मै अनुभवस्य स्वरूपाभिन्नत्वेऽपि तृतीयार्थाभिधानात् स्वरूपशक्तिरेव सिध्यति. परमात्मत्वेन नमस्यति-हृषीकेशायेति. विश्वकारणत्वेन, महत इति. विश्वत्वेनानन्तमूर्तयेति ॥ १९।२० ॥

पुनर्मेणयन्तं ब्रह्मस्वरूपत्वेन विशेषतःस्तौति—वचसीति द्वाभ्याम ॥ २१ ॥ २२ ॥

परमात्मत्वेन स्तौति--यस्येति द्वाभ्याम ॥ २३ ॥

देहेन्द्रिय इति। अत्राद्वैतशारीरकेऽपि सांख्यमाक्षिप्योक्तं यथा, अथ पुनः साक्षिनिमित्तमीक्षितृत्वं प्रधानस्य कल्पेत यथाग्निनिमित्तमयःपिण्डादेर्दग्धृत्वं. तथा सति यन्निमित्तमीक्षितृत्वं प्रधानस्य तदेव सर्वज्ञं मुख्यं जगतः कारणमिति। श्रुतिश्चात्र "तदेव भान्तमनुभाति सर्वं। कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" इत्याद्या इति। टीकोत्थापितश्रुतौच, जीवोनामतो नान्यः स्वयं सिद्धो नास्ति परन्तु तदात्मक एवेत्यर्थः। तथातोऽन्यो द्रष्टा नास्ति सर्वद्रष्टुस्तस्यापरो द्रष्टा नास्तीत्यर्थः इति व्याख्येयम् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

एतां तुं नमस्तुभ्यमित्यादि परमपरमेष्ठिप्रमस्त इत्यन्तां। तुभ्यं धीमहि त्वां प्रसादयितुं ध्यायेम ॥ १७ ॥ १८ ॥

परमात्मत्वेन जीववैलक्षण्यमाह—नवभिर्विशेषणैः। विज्ञानं चिच्छक्तिरेव मात्रापरिच्छेदो यस्य तस्मै जीवस्त्वविद्यापरिच्छिन्न इत्यर्थः। "मात्रा कर्णविभूषायां वित्ते माने परिच्छदे" इति मेदिनी परमानन्दमयी मूर्तिर्यस्य जीवस्तु पाञ्चभौतिकमूर्तिः। आत्मानन्द एव रममाणाय. जीवस्तु विषयानन्दे रमते। निवृत्तद्वैते मायिकप्रपञ्चे दृष्टिरासक्तिमयी यस्य जीवस्तु मायिकप्रपञ्चे आसजते ॥ १९ ॥

न्यस्ताः नितरामस्ताः शक्त्यूर्मयो मायानिमित्ता रागद्वेषादयो यत्र जीवस्तु प्राप्तरागद्वेषादितरङ्गः। हृषीकेशाय सर्वेन्द्रियनियन्त्रे जीवस्तु इन्द्रियनियम्यः महते जीवस्तु क्षुद्रः अनन्ता अविनाश्या मूर्तयो यस्य जीवस्तु विनाश्यशरीरः ॥ २० ॥

निर्विशेषब्रह्मत्वेन प्रणमति—वचसीति ॥ २१ ॥

जगत्कारणत्वेन यस्मिन्निदं जगत्तिष्ठति यतो जायते यस्मिन्नप्येति लीयते। मृण्मयेषु घटादिषु मृज्जातिः यथा कारणमित्यर्थः ॥ २२ ॥

इन्द्रियाद्यगम्यत्वेन प्रणमति-यदिति। क्रियाशक्त्या न स्पृशन्ति ज्ञानशक्त्या न विदुः। तस्य विदूरवर्तित्वादिति चेत्तत्राह, अन्तर्देहादीनामन्तरपि बहिरपि च ॥ २३ ॥

तेषां तदज्ञाने हेतुमाह—देहेन्द्रियेति। यदंशविद्धाः यच्चैतन्यांशेनाविष्टाः सन्तः कर्मसु स्वस्वविषयेषु चरन्ति जाग्रत् स्वप्नयोः अन्यदा सुषुप्तिः मूर्च्छादौ नैव प्रचरन्ति - यथा अग्नितप्तं लोहं न दहति अतो यथा लोहमग्निशक्त्यैव दाहकं सदग्निं न दहति। एवमेव ब्रह्मशक्त्यैव स्वस्वविषयेषु प्रवर्त्तमाना देहादयो ब्रह्म न स्पृशन्ति नापि जानन्तीति भावः जीवस्तर्हि द्रष्टृत्वाज्जानातु तत्राह - स्थानेषु, जाग्रदादिषु द्रष्टृपदेशं द्रष्टृसंज्ञं जीवस्य द्रष्टृत्वसिद्ध्यर्थं स्वीयः किञ्चिच्चैतन्यप्रापणेन स्वयमेव तं प्राप्नोतीत्यर्थः। मन आदय इव जीवा अपि जरा इति च केचिद्व्याचक्षते। यद्वा तद्द्रष्टैव तं एति जानाति न तु जीवो ब्रह्म जानातीत्यर्थः यदुक्तं हंसगुह्यस्तवे "देह्योऽसवोऽक्षाः" इत्यादि ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रयतः एकाग्रतां नीत आत्मा मनो येन तस्मै ॥ १७ ॥

ओं नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सकलसात्वतपरिवृढनिकरकरकमलकुड्मलोपलालितचरणारविन्दयुगल परम परमेष्ठिन्नमस्ते ॥ २५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवते तुभ्यं नमो धीमहि मनसा नमस्कुर्मः वासुदेवादिमूर्तिभेदाय च ते तुभ्यं नमः ॥ १८ ॥

"विज्ञानं यज्ञं तनुते" इत्यादिश्रुतिप्रसिद्धो विज्ञानपदवाच्यो जीवो मात्रांशो यस्य तस्मै यद्वा विज्ञानमात्राय विशिष्टं ज्ञानमेव विज्ञानमात्रं ब्रह्म तस्मै मयूरव्यंसकादित्वात्समासः विज्ञानैकस्वरूपाय परमानन्दमूर्तये परमानन्दविग्रहाय निवृत्ता द्वैतदृष्टिः अतदात्मकपदार्थदृष्टिर्यस्मात्तस्मै सर्वात्मने नमः ॥ १९ ॥

आत्मानन्दस्य परमात्मानन्दस्यानुभूत्या न्यस्ताः नितरामस्ताः शक्त्यूर्मयः शक्तिभूतस्योपासकस्य जन्ममृत्युशोकमोहक्षुत्तृष्णारूपा ऊर्मयो यस्मात्तस्मै ॥ २० ॥

इयत्तानवच्छिन्नत्वं प्राकृतनामरूपशून्यत्वञ्च भगवतो वदन् भगवान् अस्मान् अव्यादिति प्रार्थयते—यचसीति । मनसा सह वचासि अप्राप्य यस्य स्वरूपगुणादीयत्तामलब्ध्वा उपरते यः एक एव निःसमातिशयः ध्यातृहृदि प्रकाशते इति शेषः स नः अव्यात् कथंभूतः अनामरूपः । 'नामरूपे व्याकरवाणि' इति स्वविरचिते प्राकृते नामरूपे न विद्येते यस्य सः चिच्चेतनो जीवः मात्रा अंशो यस्य सच्चिन्मात्रश्चेतनस्वरूपगात्रो वा न तु तार्किकाद्यभिमतजडस्वरूप इत्यर्थः सदसत्परः स्थूलसूक्ष्माभ्यां देहदेहिस्वरूपाभ्यां परः "विलक्षणः" "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति श्रीमुखगानात् ॥ २१ ॥

विश्वाधारत्वादिभगवद्गुणवर्णनपूर्वकं प्रणमति—यस्मिन्निति । यस्मिन्सर्वाधारे इदं विश्वं तिष्ठति यतोऽनन्तशक्तिमतः सर्वोपादानरूपात् इदं जायते । यस्मिन्व्येति लीयते एवं सर्वत्र सुगमयेषु घटादिषु आधारतयाऽपादानतया प्रवेशस्थानतया मृज्जातिर्भूमिरिव यदस्ति तस्मै ते ब्रह्मणे नमः ॥ २२ ॥

सर्वाधारत्वादिमत्त्वेपि सर्वदोषास्पृष्टं ब्रह्मेति वदन् प्रणमति—यन्न स्पृशन्तीति ॥ २३ ॥

ननु, सत्यां प्राप्तौ निषेधो भवत्यतोऽचेतनान् मनआदीन् प्रति न विदुरिति निषेधः कथं संगच्छते इत्यत्र जीवज्ञानसंसर्गोन्मनआद्यचेतनगणः द्रष्टृपदेशमेतीत्याह—देहेन्द्रियेति । अमी देहादयः यस्य प्राणाः अंशेन एव परस्यांशः "ममैवांशो जीवलोके जीवभूतः सनातनः" इतिश्रुतिस्मृतिप्रसिद्धेन जीवेन विद्धाः आविष्टास्ततः कर्मसु स्वविषयेषु प्रचरन्ति चेष्टां कुर्वन्ति अन्यदा जीवसंसर्गाभावे तु न प्रचरंति तं नतोस्मीति पूर्वेणान्वयः तत्र दृष्टान्तः यथा लोहमप्रतप्तमग्निसंसर्गरहितं न दहति तद्वत् एवं हि तदचेतनं मनआदिकं वस्तुस्थानेषु विषयेषु, द्रष्टृपदेशमेति प्राप्नोति एवं प्राप्तौ सत्यां न विदुरिति निषेधः सङ्गच्छते मनआदयस्स्वं स्वं विषयं जानन्ति भगवंतं तु तत्कृपां विना न जानन्तीति भावः ॥ २४ ॥

---

भाषाटीका।

अनन्तर जितांवः करण शरणागत उस भक्तचित्रकेतु को भगवान् नारद ने प्रसन्न होकर इस आगे कही हुई विद्या का उपदेश किया ॥ १७ ॥

भगवान्, वासुदेव संकर्षण प्रद्युम्न और अनिरुद्ध रूप जो आप, तिनको मैं नमस्कार करताहूँ और मन से ध्यान करता हूँ ॥ १८ ॥

निवृत्त द्वैत दृष्टि वाले शांत आत्माराम परमानन्द मूर्ति विज्ञान मात्र आपको नमस्कारहो ॥ १९ ॥

अपने ज्ञान और आनन्द से निरस्त किये हैं मायाकृत रागद्वेषादिक जिसने ऐसे हृषीकेश महान् विश्वमूर्ति भगवान् को नमस्कार हो ॥ २० ॥

मनके सहित न प्राप्त होकर वाणी के उपराम होने से जो एक प्रकाशित होता हैं, प्राकृत नाम रूपसे रहित चेतनसरूप कार्य कारण से परे वह ईश्वर हमारीरक्षा करें ॥ २१ ॥

मृत्तिकाके घटादि कार्य जैसे मृत्तिका से उत्पन्न, और मृत्तिका में स्थित, और लीन, होते हैं ऐसे ही यह जगत् जिससे उत्पन्न, और जिसमें स्थित, और जिस में लीन होता है, तिस ब्रह्म को नमस्कार है ॥ २२ ॥

आकाश की तरह अन्तर बाहर व्याप्त, जिस ब्रह्म को मन बुद्धि इन्द्रिय प्राण न स्पर्श कर सकें और न जान सकें हैं तिस ब्रह्म को मैं नमस्कार करता हूं ॥ २३ ॥

देह इन्द्रिय प्राण मन बुद्धि ये सब जिसके चैतन्यांश से व्याप्त होकर अपने२ विषयों को जाग्रत् स्वप्नावस्था में ग्रहण करते हैं और सुषुप्ति मूर्छा समय में नहीं, जैसे लोहा जब अग्निमे तप्त होता है तब ही दहन करता है अतप्त नहीं, ऐसे ही परमात्मा जीव को जानता है जीव परमात्मा को नहीं जान सक्ता है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सकला ये सात्वतपरिवृढाः तेषां निकरः समूहस्तस्य करकमलानां कुड्मलैर्मुकुलैरुपलालितं चरणारविन्दयुगलं यस्य तस्यसम्बोधनम् परम उत्कृष्ट परमेष्ठिन् सर्वेश्वर, ॥ २५ ॥

श्रीशुक उवाच ।

भक्तायैतां प्रपन्नाय विद्यामादिश्य नारदः ।
ययावङ्गिरसा साकं धाम स्वायम्भुवं प्रभो ! ॥ २६ ॥
चित्रकेतुस्तु विद्यां तां यथा नारदभाषिताम् ।
धारयामास सप्ताहमब्भक्षः सुसमाहितः ॥ २७ ॥
ततश्च सप्तरात्रान्ते विद्यया धार्यमाणया ।
विद्याधराधिपत्यं स लेभेऽप्रतिहतं नृप ! ॥ २८ ॥
ततः कतिपयाहोभिर्विद्ययेद्धमनोगतिः ।
जगाम देवदेवस्य शेषस्य चरणान्तिकम् ॥ २९ ॥
मृणालगौरं शितिवाससं स्फुरत्किरीटकेयूरकटित्रकङ्कणम् ।
प्रसन्नवक्त्रारुणलोचनं वृतं ददर्श सिद्धेश्वरमण्डलैः प्रभुम् ॥ ३० ॥
तद्दर्शनध्वस्तसमस्तकिल्बिषः स्वच्छामलान्तःकरणोऽभ्ययान्मुनिः ।
प्रवृद्धभक्त्या प्रणयाश्रुलोचनः प्रहृष्टरोमाऽऽनमदादिपूरुषम् ॥ ३१ ॥
स उत्तमश्लोकपदाब्जविष्टरं प्रेमाश्रुलेशैरुपमेहयन्मुहुः ।
प्रेमोपरुद्धाखिलवर्णनिर्गमो नैवाशकत्तं प्रसमीडितुं चिरम् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पूर्वं स नारदोऽङ्गिरा आजगामेत्यङ्गिराः प्राधान्येनोक्तः चित्रकेतोः पुत्रप्रदत्वेन तस्य पूर्वमुक्तत्वात् इह तु नारदोऽङ्गिरसा साकं ययाविति नारदस्य प्राधान्यनिर्देशः तदुपदेशेन तस्य वैराग्योत्पत्तेः प्रभो हे समर्थ, ॥ २६ ॥

यथा यथावद्धारयामास ॥ २७ ॥

विद्याधराधिपत्यं चावान्तरफलं लेभे अप्रतिहतमस्खलितम् ॥ २८ ॥

कतिपयैरहोभिः विद्यया इद्धेन दीप्तेन मनसा गतिर्यस्य ॥२९॥

मृणालवत् गौरं शितिवाससं नीलाम्बरं स्फुरन्ति किरीटादीनि यस्य कटित्रं कटिसूत्रं प्रसन्नानि वक्त्राणि यस्य अरुणानि लोचनानि यस्य तञ्च तञ्च ॥ ३० ॥

दृष्ट्वा च तमादिपूरुषमभ्ययाच्छरणङ्गतः अनमच्चनाम कथम्भूतः तस्य दर्शनेन ध्वस्तं समस्तं किल्बिषं यस्य स्वच्छममलञ्चान्तःकरणं यस्य प्रणयेनाश्रुयुक्ते लोचने यस्य प्रहृष्टानि रोमाणि यस्य सः ॥ ३१ ॥

तं प्रसमीडितुं स्तोतुं चिरं नैवाशकत् न शशाक तत्र हेतुः उत्तमश्लोकस्य पादाब्जयोर्विष्टरमासनम् उपमेहयन् अभिषिञ्चन् प्रेम्णा उपरुद्धः अखिलानां वर्णानां निर्गम उच्चारणं यस्य सः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवते पूर्णषाड्गुण्याय पुरुषाय पुरुषसूक्तप्रतिपाद्यमहापुरुषाय अत एव महानुभावाय महाविभूत्योर्नित्यलीलाविभूत्योरधिपतये तुभ्यं नमः सकलाः ये सात्वतपरिवृढा भागवतश्रेष्ठास्तेषां समूहस्तेषां करकमलानां कुड्मलैर्मुकुलैरुपलालितं चरणारविन्दयुगलं यस्य तस्य सम्बोधनं परम निःसमाभ्यधिक, परमेष्ठिन् परमे स्थाने स्थित, ते तुभ्यं नमः ॥ २५ ॥

हे प्रभो राजन्, भक्ताय प्रपन्नाय चित्रकेतवे एवमेतां विद्यामुपदिश्याङ्गिरसा सह नारदः स्वायम्भुवं धाम सत्यलोकं ययौ पूर्वं नारदेन सहाङ्गिरा आजगामेति प्राधान्येनोक्तोऽङ्गिराः चित्रकेतोः पुत्रदत्वेन तस्य प्रथमं वैराग्यजननद्वारोपकारकत्वादिह नारदोऽङ्गिरसा साकं ययौ इति नारदः प्राधान्येन निर्दिष्टः विद्योपदेशेन तस्य महोपकारकत्वात् ॥ २६ ॥

एवमुपदिष्टश्चित्रकेतुस्तां नारदेन भाषितां उपदिष्टां विद्यां यथाविधि सुसमाहितचित्तोऽप एव भक्षयन् सप्त दिवसान् धारयामास जजाप ॥ २७ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः सप्तरात्रान्ते धार्यमाणया विद्यया तत्प्रभावेनेत्यर्थः नृपश्चित्रकेतुः अविभक्तिकपाठे हे नृप ! विद्याधराणामाधिपत्यञ्च लेभे चशब्दोऽन्वाचयपरः आनुषङ्गिकं विद्याधराधिपत्यं फलं लब्धवानित्यर्थः ॥ २८ ॥

प्रधानं फलमाह—तत इति ततः कतिपयैरहोभिर्विद्यया इद्धेन दीप्तेन मनसा गतिर्यस्य विद्याप्रभावेन यथेष्टगतिरित्यर्थः देवदेवस्य शेषस्य सङ्कर्षणस्य चरणसमीपं जगाम पाताललोकादधः स्थितसङ्कर्षणसमीपं गतवानित्यर्थः ॥ २९ ॥

सङ्कर्षणं वर्णयन् तं ददर्शेत्याह-मृणालेति ।मृणालधवलमनन्तुवद्गौरं शुभ्रं शितिवाससं नीलाम्बरं स्फुरन्ति किरीटादीनि यस्य कटित्रं कटिसूत्रं प्रसन्नानि वक्त्राणि यस्य अरुणानि लोचनानि यस्य तं सिद्धेश्वराणां समूहैर्वृतं परिवेष्टितं विभुं सङ्कर्षणं ददर्श ॥३०॥

ततस्तस्य सङ्कर्षणस्य दर्शनेन ध्वस्तं किल्विषं यस्य अत एव स्वच्छमन्तःकरणं यस्यात एव प्रवृद्धया भक्त्या प्रणयाश्रु आनन्दबाष्पं लोचनयोर्यस्य प्रहृष्टान्युदञ्चितानि रोमाणि च यस्य तादृशः आदिपूरुषं पुराणपुरुषं सङ्कर्षणमभ्ययादभिमुखं जगाम ननामत्प्रणतवान् ॥ ३१ ॥

ततः स चित्रकेतुरुत्तमश्लोकस्य सङ्कर्षणस्य पदाब्जविष्टरं पादपीठं प्रेमाश्रुलेशैरानन्दबाष्पकणैः मुहुर्मुहुरुपसेचयन्प्रेमोद्गन्प्रेम्णा उपरुद्धः अखिलानां वर्णानामक्षराणां निर्गमम् उच्चारणं यस्या त एव भगवन्तं तं प्रसमीडितुं चिरं नैवाशकत्सायक्तोद ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, विष्णूपासनया शेषसमीपगमनं कथं सङ्गच्छते ? इति चेदुच्यते तत्तद्देवान्तर्यामिविष्णुविषयोपासनया तत्तद्देवसमीपप्राप्त्युपपत्तेः—

"अन्यान्तर्यामिणं विष्णुमुपास्यान्यसमीपगः ।
भवेद्योग्यतया तस्य पदं वा प्राप्नुयान्नरः" ॥

इत्युक्तेः अनेन तत्तत्पदप्राप्तियोग्यश्रेयस्तुतरां तत्तद्देवसमीपं गत इत्युक्तं भवति तस्मादत्र चित्रकेतोरनेन प्रयत्नविधानेन मुहुर्मुहुः शेषस्य सकाशमभ्ययादिति युज्यते चित्रकेतुना शेषान्तर्यामिविष्णुरुपासित इति कुत इति चेत्-

"शेषान्तर्यामिणं विष्णुं चित्रकेतुरुपास्य तु ।
शेषाविष्टद्रहेष्वापि वरान् प्राप्यापतद्गतिम्" ॥

इति वचनबलात् ॥ २९ ॥

शितिवाससं नीलवस्त्रं कटित्रं काञ्चीगुणं "कटिसूत्रं सारसनं कटित्रं कटिभूषणम्" इत्यभिधानम् ॥ ३० ॥

अनघस्य वायोरादिः कारणं पुरुषं पौरुषं यस्मिन्स तथा तम् ॥३१॥

उत्तमश्लोकस्य शेषान्तर्यामिणो हरेः पादपद्मयोर्विष्टरं पीठं उपरुद्धोऽखिलानां वर्णानां शब्दोपलक्षणानां निर्गमो द्वारं यस्य सः ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः ।

साक्षाद्भगवत्त्वेन स्तौति ॐ नम इति । तदेवं सङ्कर्षणोपासनापि द्वारमेव । तस्य सात्वत शास्त्रविग्रहत्वेन वक्ष्यमाणत्वात् परमं फलन्तु श्रीभगवानित्यभिप्रेतम् ॥ २५—३४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

महामन्त्रस्य ज्ञानप्रकाशकत्वमुक्त्वा भक्तिरसपरिपूर्णत्वमाह-ओमिति । सकलसात्वतपरिवृढाः सर्वभक्तश्रेष्ठास्तेषां निकरस्य करकमलानां कुड्मलेन उपलालितं लघुसंवाहनवैदग्ध्या प्रीणितं चरणारविन्दयुगलं यस्य हे तथा भूतेति मामपि स्वपादसंवाहनसेवायां स्थापयेत्यभिलाषो ध्वनितः ननु, त्वामतिनिकृष्टं तस्यामत्युत्कृष्टसेवायां कथं नियुञ्जे इत्यत आह हे परमपरमेष्ठिन् परमपरमेश्वरः कर्तुमकर्तुमन्यथा कर्तुञ्च समर्थः ॥ २५ ॥

एतामित्यनेकवाक्यगर्भामेकामेव विद्यां महतीं अत्र चित्रकेतवे पुत्रप्रदत्वेनाङ्गिरसः प्राधान्यं मन्त्रप्रदत्वेन न तु नारदस्य अत एव पूर्वमङ्गिराः सनारद आजगामेत्युक्तं सम्प्रति यथाङ्गिरसा नारद इत्युच्यते हे प्रभो ! एतदाद्यभिप्रायज्ञाने परम समर्थः ॥ २६ ॥ २७ ॥

प्रथममवान्तरफलमाह—विद्याधराधिपत्यमिति ॥ २८ ॥

मुख्यं फलमाह--जगामेति ॥ २९ ॥

शितिवाससं नीलाम्बरं कटित्रं कटिसूत्रम् ॥ ३० ॥

तद्दर्शनेति । किल्विषमत्र भगवत्प्राप्त्यसम्भावनामयं दुःखं ज्ञेयं दृष्ट्वा च अभ्ययात् अभिमुखोगच्छत् । अभ्येत्यचाऽऽनमत् ॥३१॥

नत्वा च तुष्टावेत्याह—स इति । विष्टरमासनम् उपमेहयद् अभिषिञ्चन् ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सकलसात्वतानां ये परिवृढाः श्रेष्ठास्तेषां निकरस्य समूहस्य कमलानां कुड्मलैर्मुकुलैरुपलालितं प्रीणितं चरणारविन्दयुगलं यस्य हे तथाभूतपरा मा यस्य हे परम, हे परमेष्ठिन् परमधामासिन् महाविभूत्योः नित्यविभूतिलीलाविभूत्योः पतये ते नमो नमः ॥ २५ ॥

प्रभो हे उपदिष्टार्थधारणसमर्थ, ॥ २६ ॥

यथा यथावद्धारयामास ॥ २७ ॥

विद्याधराधिपत्यमवान्तरफलम् ॥ २८ ॥

ततः समाधाय मनो मनीषया बभाष एतत्प्रतिलब्धवागसौ ।
नियम्य सर्वेन्द्रियवाह्यवर्त्तनं जगद्गुरुं सात्वतशास्त्रविग्रहम् ॥ ३३ ॥

चित्रकेतुरुवाच ।

अजित ! जितः सममतिभिः साधुभिर्भवान् जितात्मभिर्भवता ।
विजितास्तेऽपि च भजतामकामात्मनां य आत्मदोऽतिकरुणः ॥ ३४ ॥
तव विभवः खलु भगवन् ! जगदुदयस्थितिलयादीनि ।
विश्वसृजस्तेंऽशांशास्तत्र मृषा स्पर्द्धन्ते पृथगभिमत्या ॥ ३५ ॥
परमाणुपरममहतोस्त्वमाद्यन्तान्तरवर्ती त्रयविधुरः ।
आद्यावन्तेऽपि च सत्वानां यद्ध्रुवं तदेवान्तरालेऽपि ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुख्यं फलञ्च लब्धवानित्याह—ततः कतिपयाहोभिरिति । विद्यया हेतुना दीप्ता मनोभिलषिता गतिर्यस्य सः शेषस्य चरणान्तिकं जगाम ॥ २६ ॥

मृणालवत्पद्मतन्तुवद्गौरं शितिवाससं नीलवसनं स्फुरन्ति किरीटादीनि यस्य कटित्रं कटिसूत्रं सिद्धेश्वराणां मण्डलैर्वृतं ददर्श ॥ ३० ॥

तस्य दर्शनेन ध्वस्तं समस्तं किल्विषं यस्य स्वच्छमुज्वलममलं निर्मलं चान्तःकरणं यस्य मुनिर्मननशीलः प्रवृद्धया भक्त्या प्रणयाश्रूणि लोचनयोर्यस्य प्रहृष्टरोमा आदिपुरुषमनमद् ननाम अभ्यगच्छत् शरणङ्गतः ॥ ३१ ॥

स चित्रकेतुः उत्तमश्लोकस्य पवित्रकीर्तेः पदाब्जयोर्विष्टरमासनं प्रेमाश्रूणां लेशैर्बिन्दुभिरुपमेहयन् सिञ्चन् प्रेम्णोपरुद्धः अखिलवर्णानिर्गममार्गः कण्ठो यस्य सः चिरं समीडितुं नैवाशकत् ॥ ३२ ॥

———

भाषा टीका ।

सकल पञ्चरात्रनिष्ठभक्तजनों के करकमलके कलियों से उपलालन कियेगये चरणारविन्द दोनों जिनके ऐसे, हे परमेश्वर ! हे परमेष्ठिन् ! आपको नमस्कार हो, आप षडैश्वर्य सम्पन्न महापुरुष हो और महा प्रभाव वाले, महाविभूति के पति हो आप को नमस्कार है ॥ २५ ॥

श्रीशुक उवाच ॥

हे प्रभो ! श्रीनारदजी शरणागत भक्त चित्र केतु को इस विद्या का उपदेश करके अङ्गिरा महर्षि के साथ ब्रह्मा के धाम को चले गये ॥ २६ ॥

चित्र केतु भी नारद की कही हुई उस विद्या को सावधान होकर सप्त दिवस तक केवल जल भक्षण करके धारण करता हुआ ॥ २७ ॥

हे राजन् ! तदनन्तर सप्तदिवस के पश्चात् धारणा की हुई उस विद्या से बीच में अवान्तर फल अस्खलित विद्याधरोंके आधिपत्य को चित्र केतु प्राप्त हुआ ॥ २८ ॥

तदनन्तर कितने एक दिनों में विद्या से दीप्त मन की गति होने से, देवों के देव श्री शेषजी के चरणों के समीप में पहुच गया ॥ २९ ॥

वहांपर कमल नाल सदृश गौर, नील वस्त्र को धारण किये, स्फुरायमाण किरीट केयूर (बाजूबन्द) कांचीगुण (कोंधनी) कंकणों को धारण किये, प्रसन्न मुखारविन्द और अरुण नेत्र वाले सिद्धेश्वर मण्डलों से उपासित प्रभु को देखा ॥ ३० ॥

उन शेषजीके दर्शन से नष्ट हुए समग्रपाप जिसके अतएव निर्मल अन्तः करणवाला और मनन शील होकर समीपगया। बढी हुई भक्ति से प्रेमाश्रु और रोमाञ्च वाला आदि पुरुष को नमस्कार करता हुआ ॥ ३१ ॥

वह चित्रकेतु प्रभु के चरणार विन्द के पीठ को बारम्बार प्रेमाश्रुवोंसे अभिषेक करता हुआ, प्रेम से बहुत काल तक रुद्ध कंठ होकर भगवान् की स्तुति करने को समर्थ न हुआ ॥ ३२ ॥

———

श्रीधरस्वामिकृत भावार्थदीपिका ।

मनीषया बुद्धया मनःसमाधायैतद्वक्ष्यमाणं बभाषे प्रतिलब्धा वाग्येन सात्वतशास्त्रोक्तो विग्रहो यस्य तम् ॥ ३३ ॥

अन्योऽन्यप्रेमजानन्दनिभृतान्स्वामिसेवकान् ।
अभिनन्दन्मुदा स्तौति दशभिः पञ्चभिर्विभुम् ॥

हे अजित ! अन्यैरजितोऽपि भवान्साधुभिर्भक्तैर्जितः स्वाधीन एव कृतः यतो भवानतिकरुणः तेऽपि च निष्कामाः अपि भवता विजिताः यो भवान् कामात्मनामात्मानमेव ददाति ॥ ३४ ॥

क्षित्यादिभिरेष किलावृतः सप्तभिर्दशगुणोत्तरैराण्डकोशः ।
यत्र पतत्यणुकल्पः सहाण्डकोटिकोटिभिस्तदनन्तः ॥ ३७ ॥
विषयतृषो नरपशवो य उपासते विभूतीर्न परं त्वाम् ।
तेषामाशिष ईश ! तदनुविनश्यन्ति यथा राजकुलम् ॥ ३८ ॥
कामधियस्त्वयि रचिता न परम ! रोहन्ति यथा करम्भबीजानि ।
ज्ञानात्मन्यगुणमये गुणगणतोऽस्य द्वन्द्वजालानि ॥ ३९ ॥
जितमजित ! तदा भवता यदाह भागवतं धर्ममनवद्यम् ।
निष्किञ्चना ये मुनय आत्मारामा यमुपासतेऽपवर्गाय ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु भक्तैरेव जित इति कथं ? स्पर्धमानैरपि सृष्ट्यादिकर्तृभिरन्यैरीश्वरैर्जयसम्भवात्तत्राह—तवेति । जगत उदयादीनि तवैव विभवो विभवनं महिमा लीलेति यावत् आदिशब्देन प्रवेशनियमादीनि विश्वसृजस्तु ब्रह्मादयो नेश्वराः किं तु ते तवांशो यः पुरुषस्तस्यांशाः तत्र एवं स्थितेऽपि पृथक्पृथगीश्वरा वयमित्यभिमानेन वृथैव स्पर्धन्ते ॥ ३५ ॥

त्वमेव सृष्ट्यादिकर्तेत्येतदुपपादयति-परमाणुः सूक्ष्मभूतकारणं परममहदन्तिमं कार्यं तयोस्त्वमेवाद्यन्तान्तरवर्ती आद्यन्ते चान्तरे मध्ये च वर्तितुं शीलं यस्य सः अत एव त्रयविधुर आद्यन्तमध्यशून्यो ध्रुवः ते च त्वया सृज्यन्ते न तु ध्रुवाः कुत इत्यत आह—सत्त्वानां सत्त्वेन प्रतीतानां कार्याणामाद्यावन्तेऽपि अन्तरालेऽपि च तदेव ध्रुवं सुवर्णादिवत् ॥ ३६ ॥

एवं ध्रुवत्वेन कालतः परिच्छेदो नास्तीत्युक्तं देशतोऽप्यपरिच्छेदमाह—क्षित्यादिभिरिति । पूर्वस्मात्पूर्वस्माद्दशगुणमुत्तरोत्तरैरधिकैरावृतः यत्र त्वय्यणुकल्पोऽणुतुल्यः पतति परिभ्रमति तत्तस्मादनन्तस्त्वम् ॥ ३७ ॥

यस्मादेवं परमेश्वरस्त्वमेवान्ये देवास्तव विभूतयोऽतस्त्वां विहाय विषयकामनयाऽन्योपासका अतिमन्दा इत्याह—विषयेषु तृट् तृष्णा येषां ते नराकाराः पशवः कुतः ये विभूतीरिन्द्राद्या उपासते न तु परं त्वां ततः किं तत्राह—तेषामिति तदनु उपास्यनाशानन्तरं यथा राजकुलमनु राजकुलनाशानन्तरं तत्सेवकानामाशिषो नश्यन्ति तद्वत् यद्वा परमोऽवधिर्मध्येऽपि नश्यन्त्येव ॥ ३८ ॥

विषयकामेनापि कृता त्वत्सेवा मोक्षफलैवेत्याह—कामधियो विषयकामना अपि हे परम ! त्वयि रचिताः कृताश्चेत् नरोहन्ति देहान्तरोत्पत्तये न भवन्ति करम्भबीजानि भर्जितबीजानि यथा यतोऽस्य जीवस्य गुणगणादेव द्वन्द्वसमूहा भवन्ति अतः कामेनापि निर्गुणस्य तव भजनाच्छनैर्नैर्गुण्यं भवतीत्यर्थः ॥ ३९ ॥

फलकामनयापि त्वदाराधनं यदा मोक्षहेतुस्तदा किं वक्तव्यं भगवद्धर्ममाहात्म्यमिति वक्तुं तत्सम्प्रदायप्रवर्तकत्वेन च भगवन्तं स्तौति—जितमिति । यदा भवान्भागवतं धर्ममाह तदा हे भगवन्, त्वया जितं सर्वोत्कर्षेण स्थितं तत्र हेतुः ये निष्किञ्चनाः सनत्कुमारादयो मुनयस्ते यं भगवन्तमपवर्गाय सेवन्ते तेन भवता जितम् यं धर्ममिति वा ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो मनीषया बुद्ध्या मनः समाधाय स्ववशीकृत्य प्रतिलब्धा वाग्येनासौ चित्रकेतुः प्रतिलब्धवाग्रस इति पाठान्तरं तत्र प्रतिलब्धवागमृतः सर्वेन्द्रियाणां वाह्यवर्त्तनं वाह्यव्यापारं नियम्य अपोह्येत्यर्थः सात्वतशास्त्रं पञ्चरात्रशास्त्रं (१) तत्प्रतिपाद्यो विग्रहो यस्य तं जगद्गुरुं सात्वततन्त्रोपदेष्टारं सङ्कर्षणं प्रत्येतल्लक्ष्यमाणं वक्ष्यमाणां स्तुतिमकरोदित्यर्थः ॥ ३३ ॥

तामेवाह—अजितेत्यादिना, सहस्रमूर्ध्न इत्यन्तेन, तावदाश्रयणसौकर्यापादकसौलभ्यवात्सल्यमहौदार्यगुणविशिष्टं स्तौति—अजितेति । हे अजित ! इतरैः स्वाधीनं कर्तुमशक्य हे दुर्लभेत्यर्थः ! तथापि साधुभिर्जितः भवान् सुलभ इत्यर्थः कथम्भूतैः साधुभिर्विजितः आत्मा मनो यैस्तैः समतिभिः कृत्स्नं जगद्ब्रह्मात्मकत्वेन पश्यद्भिः कथमेतत्साधुभिर्विजितोऽहमिति तत्राह—यो भवान् भजतामकामात्मनाम् अनन्यप्रयोजनेन भजतामात्मानं स्वं स्वरूपं ददातीत्यात्मदः स्वपर्यन्तदातेत्यर्थः एवं सौलभ्यमुक्तम् आत्मद इत्यनेन महौदार्यञ्च; अथ वात्सल्यमाह—भवता त्वया ते साधवो विजिताः कुतः ? यतस्त्वमतिकरुण आश्रितवात्सल्यविवशः अत्यन्तवात्सल्येन त्वया साधवोऽपि वशीकृता इत्यर्थः ॥ ३४ ॥

ननु, परत्वे सत्युक्तं गुणत्रयमाश्रयणसौकर्यापादकमन्यथा तृणस्येव सौलभ्यं दरिद्रस्येवौदार्यं पित्रादेरिव कारुण्यमकिञ्चित्करं स्यादित्यत्र परत्वविशिष्टं स्तौति—तवेति । हे भगवन् ! जगतः उत्पत्तिस्थितिलयादीनि आदिशब्देन महानन्दरूपमोक्षान्तर्नियमनादिर्विवक्षितः तव विभवः ऐश्वर्यम् अतस्तव परो-

(१) तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्म्मणां यत इति प्रथमस्कन्धोक्तेः।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नास्तीत्यर्थः एवं परत्वं तव एव निरुपाधिकस्वामित्वञ्चोक्तं ननु, जगदुत्पत्त्यादीनि ब्रह्मरुद्रादीनां विभवो न ममेत्यत्राह-विश्वसृज इति । विश्वसृजो ब्रह्मादयः ते तवांशांशाः अग्नेर्विस्फुलिङ्गा इव त्वदंशांशभूतत्वान्न तेषां विभवो जगदुत्पत्त्यादिरित्यर्थः त्वन्नियोगेन ते जगदुत्पत्त्यादिकर्त्तार इति भावः ननु, तेपि वयं विश्वस्य सृष्ट्यादिकर्त्तार इति स्पर्द्धन्ते तत्राह—तत्रेति । तत्र तेषां त्वदंशांशत्वे सति तावन्मात्रेणैव वयमपि पृथगीश्वरा इत्यभिमानेन मद्भतमीशितृत्वं परमपुरुषायत्तम् इत्यज्ञात्वा मुधा व्यर्थमेव स्पर्द्धन्ते तेषां स्पर्द्धामात्रमवशिष्यते नत्वीशत्वं सिद्ध्यतीति भावः ॥ ३५ ॥

जगदुत्पत्त्यादेस्तदेकाविभवत्वं दृष्टान्तमुखेन विशदयन् स्तौति–परमाणिवति । परमाणुपरममहतोरल्पीयसो विपुलस्य च वस्तुनो वाऽन्याद्यन्तान्तराणि सृष्टिसंहारस्थित्यवस्था इत्यर्थः तेषु वर्त्तत इतिवर्त्ती अन्तरात्मतया व्याप्य स्थितः त्रयविधुरः आद्यन्तमध्यरहितः त्वमेव कार्यस्य वस्तुनः कारणात्मतया यदादाववतिष्ठतेऽन्ते च यदवशिष्यते तद्विभवत्वमेव हि कार्यस्य वस्तुनो दृष्टं यथा मृत्सुवर्णात्मकघटकटकादाविति दृष्टान्तोऽभिप्रेतः एवं समष्टिव्यष्ट्यात्मकस्य कृत्स्नस्य कार्यजातस्यादौ कारणत्वेनावस्थानादन्ते चावशेषात्त्वद्विभव एव जगदुत्पत्त्यादिः न तु मध्यस्थचतुर्मुखादेरिति भावः कार्यं वस्तु मध्यस्थस्य विभवो नेति किं वक्तव्यमित्याह—आदाविति । सत्त्वानां कार्यत्वेनावस्थितानां पदार्थानामादावन्ते च यत् ध्रुवं स्थिरम् आदौ कार्यत्वेनावस्थितम् अन्ते चावशिष्टमित्यर्थः अन्तरालेपि तदेव अन्तरालावस्था तद्विभव एव आद्यन्तयोर्यदस्ति तस्य मध्यस्थविभवकत्वं किं पुनर्न्यायसिद्धमिति भावः एवं कालत्रयवर्ती त्वमेवेति भावः अनेन कालतोऽपरिच्छिन्नत्वमप्युक्तम् अथ सर्वदा सर्वत्रान्तरात्मतया व्याप्य स्थितिकथनेन सर्ववस्तुसामानाधिकरण्यरूपवस्त्वपरिच्छेदोप्युक्तः सर्ववस्तुसामानाधिकरण्यमेव हि वस्त्वपरिच्छेदः यद्वा स्वापेक्षयोत्कृष्टगुणवस्त्वन्तरराहित्यं वस्त्वपरिच्छेदः स हि जगत्कारणत्वतदुपयुक्तसार्वज्ञ्यसत्यसङ्कल्पत्वाद्याश्रितगुणजातस्य कथनेनाभिहितप्राय एव ॥ ३६ ॥

एवं द्विविधपरिच्छेदराहित्यमुक्तमथ देशपरिच्छेदरहितत्वं वदन्नेतत्त्रिविधपरिच्छेदराहित्यमेव त्वय्यनन्तशब्दस्य प्रवृत्तौ निमित्तमित्याह—क्षित्यादिभिरिति । पूर्वस्मात्पूर्वस्माद्दशगुणमुत्तरैरधिकैः क्षित्यादिभिः पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहद्भिः सप्तभिरावृतः एषः परिदृश्यमानोऽण्डकोशः ईदृशीभिरण्डकोटिभिः सह सहितो यतस्त्वं ततोऽनन्त! विभूत्यानन्त्यादनन्तत्वात्त्वमनन्तशब्दवाच्य इत्यर्थः एतमण्डकोशं विशिनष्टि यत्र एतस्मिन्नण्डकोशेऽणुकल्पः जीवः पतति संसरति यद्वा यस्मादीदृशीभिरण्डकोटिभिः सह एषोऽण्डकोशः यत्र यस्मिन् त्वयि अणुकल्पः पतति परिभ्रमति ततस्त्वमनन्तः सर्वस्य चेतनाचेतनात्मकाण्डकोशरूपदेशस्य त्वद्व्याप्यत्वादिदमत्रनास्तीत्येवंरूपदेशपरिच्छेदरहितत्वमिति देशाऽपरिच्छेद उक्तः एतत्त्रिविधपरिच्छेदराहित्यमपि परत्वापादकं भवतीत्यर्थः ॥ ३७ ॥

एवं तस्य समाश्रयणीयोपयुक्तगुणवत्त्वादेवतान्तरस्य तदभावं वदन् तमेव स्तौति—विषयतृषइति, ये विषयेषु शब्दादिषु तृट् तृष्णाऽभिलाषो येषां ते फलकामा नरा एव पशवः ते विभूतीः त्वद्विभूतिभूतान् रुद्रादीनुपासते न तु परं सर्वोत्कृष्टं विभूतिपतिमुपासते हे ईश ! तेषां विषयतृषां विभूतीरुपासीनानामाशिषस्त्वद्विभूतिभिर्दत्ता अर्वाचीनाः स्वर्गादिफलरूपाः पुरुषार्थाः तदनु विभूतिविनाशमनु नश्यन्ति यथा राजकुलं यथा राजकुलविनाशमनु तत्सेवकानामाशिषो नश्यन्ति तद्वत् उक्तं च त्वयैव । "यो यो यां यां तनुं भक्तः' इत्यारभ्य 'लभते च ततः कामान्मयैव विहितान् हि तान् । अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्" इत्यन्तेनेति भावः त्वद्विभूतीनां परत्वादिगुणपूर्त्त्यभावादिति तात्पर्यम् ॥ ३८ ॥

त्वदेकप्रयोजनत्वेनकृतास्त्वत्सेवास्तु निरतिशयनित्यफलजनकत्वान्न नश्यन्तीत्याह—कामधिय इति । त्वयि विषयभूते रचिताः कृताः याः कामधियः त्वदेकप्रयोजनास्त्वद्विषया उपासनाः हे परम, पुनर्न रोहन्ति न बन्धाय भवन्ति नित्यनिरतिशयत्वदनुभवरूपानन्दापादका एव भवन्ति न पुनर्जन्ममरणादिरूपबन्धाय भवन्तीत्यर्थः पुनररोहे दृष्टान्तः यथा करम्भबीजानीति यथा भर्जितबीजानि पुनर्न रोहन्ति नाङ्कुरीभवन्ति तद्वत् पुनररोहे हेतुं वदंस्तं विशिनष्टि—ज्ञानात्मनीति, गुणमयः सत्त्वादिप्रकृतिगुणविकारः स न विद्यते यस्य सोऽगुणमयस्तथाभूते नित्यासंकुचितापरिच्छिन्नज्ञानस्वरूपे त्वयि गुणमूलकर्मावश्यत्वात्तन्मूलकसङ्कुचितज्ञानत्वाकर्मसाध्यमोक्षाधिपत्वप्रगतजनानिष्टपरिहारकत्वतादृष्टप्रापणसमर्थत्वादिगुणयुक्तत्वात्त्वयि रचिताः . कामधियो न पुनरनर्थरूपबन्धाय भवन्ति देवतान्तराणान्तूक्तविपरीतगुणत्वात्तेषु रचिताः स्वर्गादिकामधियो नश्यन्तीति भावः तदेवाह—गुणगणात इति, अस्य विरञ्चिप्रभृत्याकिञ्चनपर्यन्तस्य जीववर्गस्य गुणानां सत्त्वादिप्रकृतिगुणानां ये गणा विकाररूपाः सङ्गाः तेभ्यः गुणगणतः द्वन्द्वजालानि सुखदुःखादीनि द्वन्द्वजालानि भवन्ति उपास्यदेवतान्तरस्यापि उपासकवत्कर्मवश्यत्वादियुक्तत्वात्तत्सेवाऽऽश्रितस्य पुंसस्तादृशसेवावद्निष्टपरिहारेष्टप्रापणक्षमा न भवन्तीति भावः एवं ज्ञानशक्त्याद्याश्रितकार्योपादकगुणपूर्त्तिरप्युक्ता. एवं समाश्रयणीयत्वोपयुक्तपरत्वादिगुणपूर्त्त्येन देवतान्तरेभ्यो वैलक्षण्यं तस्यैव समाश्रयणीयत्वं चोक्तं भवति ॥ ३९ ॥

अथ यत एव भवानितरेभ्यः परः अत एव त्वदाराधनात्मकस्त्वदभिहितो धर्मः तदनुष्ठातारश्चेतरदेवताराधनरूपधर्मतदनुष्ठातृभ्यो विलक्षणा इत्याह–जितमिति त्रिभिः, हे अजित, अजितशब्दप्रवृत्तिनिमित्ताश्रय, भवता यथा जितं सर्वं स्ववशीकृत्य तदात्मपरत्वेनावस्थितम् एतदेवाजितशब्दप्रवृत्तिनिमित्तमित्यपि सूचितं तथा धर्मेणेति शेषः त्वदाराधनभूतधर्मेणापि जितमित्यर्थः सोऽपि सर्वोत्कृष्टइत्यर्थः कोसौ धर्मः ? तत्राह–यं भागवतं भगवतस्तवाराधनरूपमनवद्यं निर्दुष्टं धर्मं भवानाह पञ्चरात्रगीतादिमुखेनोक्तवान् यत्र धर्मे निष्किञ्चनाः अनन्यप्रयोजनाः आत्मारामाः ब्रह्मगुणा-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नुभवपरा ये मुनयः अपवर्गाय मुक्तय उपासतेऽनुतिष्ठन्ति ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मनीषया श्रुतिरूपया प्रज्ञया प्रतिलब्धः सम्यक्प्राप्तो वाग्रसो वचनवीर्यं येन स तथा सात्वतानां शास्ता विग्रहस्तत्त्वोपदेशविशेषो यस्य स तथा तं सर्वेन्द्रियाणां बाह्येषु विषयेषु वर्तमानं व्यापारम् ॥ ३३ ॥

हे अजित ! अतिकरुणो यस्त्वमकामानां भजतां साधूनामात्मदो यस्मादतस्ते साधवोपि भवता विजिताः किञ्च जितमनस्कैः समबुद्धिभिः साधुभिर्भवानपि जितो वशीकृतः चशब्दो नियतत्वं सूचयति ॥ ३४ ॥

तत्सत्त्वे प्रमाणमाह–तवेति । जगदुत्पत्त्यादीनि तव विभवः स्वरूपलक्षणानि खलु यस्मात्ततस्तत्र तस्यामवस्थायां शास्त्रेण स्थितायां ते भिन्नांशाः विश्वसृजोऽहं जगदीश्वरो जगत्स्रष्टेति पृथक् जगदीश्वरत्वाभिमानेन मृषा निष्प्रयोजनं स्पर्धन्तीति व्यत्यासेन हरेर्माहात्म्यस्यानन्तत्वं दर्शयति ॥ ३५ ॥

तवविभव इत्यादिना गुणानन्त्यमुक्तमधुनाकालदेशानन्त्ये आह—परमाण्विति । त्वं अयाविधुरः अणुमहन्मध्यपरिमाणरहितोपि स्वतः प्राकृतपरिमाणाभावात् परमाणुपरममहतोरादावन्तेऽन्तरे च वर्तितुं शीलमस्यास्तीति आद्यन्तान्तरवर्ती परमाणुलक्षणकालावयवस्य परममहत्कालावयवस्य च मध्यकालावयवस्य च वर्तते इति सत्त्वानामित्युपलक्षणं घटादीनामप्यादावुत्पत्तेः पूर्वमन्ते प्रध्वंसादूर्ध्वं यत्ते स्वरूपं ध्रुवम् अव्यभिचारि तदेवान्तरकाले मध्यकालेपि वर्तत इति शेषः ॥ ३६ ॥

य आण्डकोशो दशगुणोत्तरैः सप्तभिः क्षित्यादिभिरावृतः स एषोण्डकोटिभिः सह यत्र भगवति अणुभ्योऽणुकल्पः सूक्ष्मात्सूक्ष्मतरो वर्तते तद्वरेः स्वरूपमनन्तमिति हेतुगर्भविशेषणम् अपरिच्छिन्नत्वादुचितमिति भावः ॥ ३७ ॥

एवं स्वरूपमुक्त्वाऽन्वयव्यतिरेकाभ्यां तज्ज्ञानफलमाह—विषयेति । विषयतृषः शब्दादिविषयतृष्णावन्तः अत एव नरपशवः विभूतीर्ब्रह्मादिशब्दवाच्याः परं तेषां पातारं ज्ञानादिपूर्तिप्रदातारं तेभ्योप्युत्तमं तदनु प्राप्तिसमनन्तरं किञ्चित्कालं फलानुभवानन्तरं वा "तद्यथेह कर्मचितो लोकः क्षीयत एव" इति श्रुतेः अराजकुलं पालकेन राज्ञा शून्यो जनसमुदायो धर्मविरुद्धानां राज्ञां कुलं वा ॥ ३८ ॥

कामधियः शब्दादिगुणविषयज्ञाना अगुणमये प्रकृतिगुणविकृतदेहादिशून्ये ज्ञानात्मनि रचिताः यदिस्युस्तर्हि पुनर्नारोहन्ति नोत्पद्यन्ते करम्भबीजानि भर्जितधानाः गुणगणातो विषयसमूहादस्य जगतो द्वन्द्वजालानि सुखदुःखादीनि भवन्तीति शेषः ॥ ३९ ॥

दुःखात्मकसंसारनिवृत्तिः केन स्यादित्याशङ्क्य भागवतधर्मानुष्ठानेन तन्निवृत्तिः स्यादित्याशयवानाह—जितमिति । हे अजित, भवान्यदापवर्गाय मुनयो यं धर्ममुपासते तं भागवतधर्ममाह । तदा भवता संसारस्वरूपं जितं भागवतधर्मकथनेन भक्तानां संसारजयोपायो दर्शित इत्यर्थः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विश्वसृजः ब्रह्मरुद्रेन्द्राद्याः अंशांशाः अत्यल्पांशा इत्यर्थः ॥ ३५ ॥ ३६ ॥

दशगुणा उत्तरोत्तरा येषां तैरित्यर्थः ॥ ३७—३९ ॥

जितमिति निजोत्कर्षं आविष्कृतः । भगवन्निति पाठः स्वामिसम्मतः भवतेति तु प्रायः सर्वत्र ॥ ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रतिलब्धवाक् तत्कृपयैवेत्यर्थः । सात्वतशास्त्रोक्तः सच्चिदानन्दमयो विग्रहो देहो यस्येत्यनेन ज्ञानशास्त्रोक्तस्य मायामयविग्रहत्वस्य प्रामाण्यं वारितम् ॥ ३३ ॥

परस्पर वशीभावलभ्यानन्दरसाम्बुधौ । मज्जेतां भगवद्भक्तौ भक्तैवेत्याह - संस्तुवन् । हे अजित ! ज्ञानियोगिप्रभृतिभिस्त्वमजित एव साधुभिर्भक्तैस्तु भवान् जितः अधीनीकृतः सममतिभिः स्वकीयपरकीयसुखदुःखसमबुद्धिभिर्जितात्मभिर्जितमनस्कत्वेन मनोधर्मस्य कामस्यापि जितत्वात् निष्कामैः तेषां तदुपासने निष्कामत्वमेव त्वज्जये कारणमिति भावः । ते साधवोपि भवता विजिताः यतो भजतामकामात्मनां भजद्भ्यो निष्कामेभ्यः यो भवानात्मदः आत्मानमेव ददाति । यदि यूयं मां परिचर्य किमप्यपवर्गादिकमपि मत्तोनैव वृणुध्वे तर्हि यथेष्टं रात्रिदिनं मामेव परिचरथ मां ऋणीकुरुथेत्यात्मानं तेभ्योददेव बलादात्मनः सौन्दर्यं सौस्वर्यं सौरभ्यादीनि तन्नयनश्रवणादीन्द्रियभोगार्थमर्पयतीत्यर्थः तेन तद्विजये भवतोप्यात्मदत्वमेव कारणमिति भावः । अत्र साधुभिरिति ज्ञानिभिरपीति न व्याख्येयम् । उत्तरार्द्धे भजतामकामात्मनामिति विशेषणद्वयस्य तद्व्यावर्त्तकत्वात् ज्ञानिनां भजनन्तु मोक्षसिद्ध्यर्थं साधनवशात्यामेव । अत्र तु भजतामिति वर्त्तमाननिर्देशः । निष्कामत्वं त्वात्यन्तिकदुःखनिवृत्तिकामत्वात्तेषां नास्त्येव ॥ ३४ ॥

एवं प्रभुभक्तयोः परस्परवशीभावमाख्याय, प्रभोः प्रभावमाह—तवेति त्रिभिः विभवो महिमा ननु ब्रह्मादयो जगदुदयादि हेतवो दृश्यन्ते तत्राह—विश्वेति । ननु, ब्रह्मरुद्रादिभक्ताः स्वस्वसेव्यानामेव जगदीश्वरत्वं प्रतिपादयन्तो मिथः स्पर्द्धन्ते इत्यत आह--तत्र मृषेति पृथगभिमत्या वयं हैरण्यगर्भाः शैवाः सौरा इत्याद्यभिमानवन्तः ॥ ३५ ॥

त्वमेव सृष्ट्यादि कर्ता वास्तव वस्तुरूप इत्युपपादयति परमाणुः सूक्ष्म मूलकारणं परममहत् अन्तिमं कार्यं तयोस्त्वमेवाद्यन्तान्तरवर्ती आदावन्ते अन्तरे मध्ये च वर्त्तितुं शीलं यस्य सः ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत एव भयविधुर आद्यन्तमध्यशून्यो नित्यः यतः सत्त्वानां कार्यवस्तूनाम् आदौ अन्ते च यत् ध्रुवं कारणत्वेन स्थिरं तदेव अन्तरालेऽपि सुवर्णादिवत्. अतस्त्वमेव सर्वकारणं वास्तवं वस्तु अन्यत् सर्वं कार्यजातमवास्तवं चास्तित्यर्थः ॥ ३६ ॥

एवं कालतः परिच्छेदाभावमुक्त्वा देशतोऽप्यपरिच्छेदमाह· क्षित्यादिभिः क्षितिजलतेजआकाशाहङ्कारमहत्तत्त्वप्रकृतिभिः सप्तभिः पूर्वस्मात् पूर्वस्मात् दशगुणाधिकैरावृतः यत्र त्वयि अणुकल्पः पतति परिभ्रमति तत्तस्मादनन्तस्त्वम् ॥ ३७ ॥

एवं प्रभोः सर्वोत्कर्षमाख्याय भक्तस्यापि तमभक्तनिन्दया प्रथमं व्यतिरेकेणाह–विषयेति । विभूतीरिन्द्राद्याः न तु त्वां तदनु उपास्य नाशानन्तरम्. यथा राजकुलनाशानन्तरं तत्सेवकानामाशिषो नश्यन्ति ॥ ३८ ॥

भक्तस्योत्कर्षं कैमुत्तिकन्यायेनान्वयेनाह–कामा राज्याद्यास्तदर्थं धियो मतयस्त्वयि रचिताः कृताश्चेत् न रोहन्ति देहान्तरोत्पत्तये न भवन्ति. यथा, करम्भबीजानि भ्रष्टयवबीजानि तथैव. यद्यपि कामधियोऽन्यत्र रोहन्त्यो दृष्टाः. भ्रष्टबीजतुल्या न भवन्ति तदपि विषयसाङ्कर्याद्भवन्तीत्याह, ज्ञानात्मनि चिन्मये अगुणमये गुणमयात् पदार्थाद्भिन्ने अतो रसकूपपतितं वस्तु यथा रस एव भवेदेवं त्वयि प्रविष्टाः कामधियोऽपि चिन्मय्यो भवन्तीति कथं तासां संसारहेतुत्वं स्यादित्यर्थः यतो गुणगणात एव द्वन्द्व जालानि संसारकारणानि भवन्ति ॥ ३९ ॥

यद्येवं स्वमहिम्ना सकामाया अपि भक्तेः श्रैष्ठ्यं तदा किमुत निष्कामायाः किञ्च भक्तेर्निष्कामत्वञ्च त्वत्प्रवर्तितमतो निष्कामभक्तैर्यत्तव जयः पूर्वं प्रतिपादितस्तत्रापि परमकृपालुः स्वभक्तवशीभावेच्छुस्त्वमेव कारणम्. इत्यतो वस्तुतस्तवैवविशेषतो जय इत्याह–जितमिति । हे अजित, भागवतं धर्मं अनवद्यं निष्कामं यदैव भवानाह तदेव जितं भवतैव भक्ता ऋणीकृताः येनैव निष्कामभक्तियोगेन भक्तैर्भवान् जीयते तस्य त्वयैवोक्तत्वात्तदृणं त्वमेव स्वभक्ताधीनत्वाभिलापसाधकं कृपाविशेषमास्वादयन्तः प्रत्युतत एव भक्ता स्वयमेव ऋणीभूय स्थिताः भवन्तीति भावः । ये निष्किञ्चना प्रथमत एव शुद्धभक्ताः तथा तत्सङ्गतस्य त्वत्कथानिष्ठा मुनयस्तापसा आत्मारामाः जीवन्मुक्ताश्च, केचन यमेव धर्ममुपासते. यद्वा, निष्किञ्चना इत्यस्यैव विशेषणत्रयं मुनयस्त्वन्मननशीला आत्मारामास्त्वय्येव रममाणा इत्यर्थः अपवर्गाय अपकृष्टा वर्गाश्चत्वारोपि यतस्तस्मै प्रेम्णे अपवर्गश्च भवति । योऽसावित्यादि पञ्चमस्कन्धीयगद्योक्तलक्षणाय भक्तियोगायेति वा ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सात्वतशास्त्रे प्रतिपाद्यतया विग्रहोऽप्राकृतो देहो यस्य तं यद्वा सात्वतशास्त्रं विग्रहवत्प्रियं यस्य तम् ॥ ३३ ॥

जितः आत्मा मनो यैस्तैः अकामः ऐहिकामुष्मिकभोगवासनाशून्यः आत्मा मनो येषां तेषाम् ॥ ३४ ॥

जगदुदयादीनि तथैव विभवः ऐश्वर्यं विश्वसृजो ब्रह्मरुद्रेन्द्रादयः तवांशांशाः पृथगभिमत्या पृथक् पृथक् ईश्वरत्वबुद्ध्या तत्र जगदुदयादिषु मृषा स्पर्द्धति त्वां सर्वात्मानं सर्वकर्त्तारं विस्मृत्येति शेषः ॥ ३५ ॥

परमाणुः अतिसूक्ष्मः परममहान्समष्टिकार्यरूपः पदार्थः तयोरादौ स्रष्टृतया अन्ते संहर्तृतया अन्तरे मध्ये नियन्तृतया वर्त्तमानस्त्वमसि स्वयं तु त्वं भयविधुरः स्रष्टृसंहर्तृनियन्तृरहितः अत एव सत्त्वानां ब्रह्मादिस्तंबपर्यन्तानामादावन्तेऽपि यद्ध्रुवं तदेवान्तरालेपि यद्ध्रुवं तत्त्वमेवासि सर्वरूपोसीत्यर्थः ॥ ३६ ॥

दशगुणोत्तरैः पूर्वस्मात्पूर्वस्माद्दशगुणमुत्तरैरधिकैः क्षित्यादिभिः सप्तभिरेष किलावृतोऽण्डकोशः सहाण्डकोटिभिर्यत्राणुकल्प अणुतुल्यः पतति भ्रमत्यतः स त्वमनन्तोसि ॥ ३७ ॥

एवंभूतं परं पूर्णं त्वां मुक्तिदं ये नोपासते ते नरपशवः नराकारपशवः यतो विषयतृषो विषयेषु इन्द्रियार्थेषु तृट् येषां ते इन्द्रियार्थप्राप्तये विभूतीः भवद्विभूतिभूतान् इन्द्रादीन् उपासते तेषां नरपशूनां आशिषः इन्द्रादिदत्ताः सम्पदः तदनु इन्द्रादिनाशानन्तरं यथा राजकुलमनु राजकुलनाशानन्तरं तद्दत्ताः तत्सेवकाशिषो विनश्यन्ति तद्वद्विनश्यन्ति. अन्यदेवभक्ता अकृतार्था एवेति भावः ॥ ३८ ॥

त्वद्भक्तेषु तु ये सकामत्वेन निकृष्टाः तेऽपि कृतार्था भवन्तीत्याह—कामधिय इति । गुणाः विषयास्तेषां गणात: बुद्धिस्थविषयवासनासमूहतः अस्य जीवस्य द्वन्द्वानां जन्ममरणादीनां जालानि भवन्ति एवंभूता ये जन्ममरणजाललक्षणसंसारप्रापकाः काम्यन्त इति कामाः, विषयगणास्तदर्थधियः बुद्धयः हे परम सर्वोत्तम, ज्ञानानां जीवानामात्मनि आश्रये प्रिये च गुणमयः संसारस्तद्भिन्ने मुक्तिप्रदे मुक्तौ प्राप्ये च त्वयि रचिताः कृताः न रोहन्ति जन्ममरणफलगा न भवन्ति किन्तु ध्रुवादीनामिव कामान् दत्वा मुक्तिप्रापका भवन्तीत्यर्थः ॥ ३९ ॥

सकामा अपि भगवद्भक्ता मुक्ता भवन्तीति भगवद्भजनमाहात्म्यमुक्त्वाऽथ निष्कामानां भगवद्भक्तानां श्रैष्ठ्यं निष्कामभजनस्य च भगवत्प्रोक्तत्वेन सर्वभूतहितत्वादिना च परमं श्रैष्ठ्यं मध्ये काम्यकर्मणोः दुष्टत्वञ्च वर्णयन् भगवन्तं स्तौति–जितमित्यतुर्भिः । हे अजित हे भगवन्, त्वया तदैव जितं सर्वोत्कर्षेण स्थित यदा ये निष्किञ्चना मुनयः त्वन्मननशीलाः आत्मनि त्वय्येवारामो येषां ते मुमुक्षवः अपवर्गाय यमुपासते तमनवद्यं निष्कामं भागवतं धर्ममाह ॥ ४० ॥

---

भाषा टीका ।

तदनन्तर बुद्धि से मन का समाधान कर वाणी को प्राप्त होकर सर्व इन्द्रियों की बाह्य वृत्तियां रोककर पञ्चरात्र शास्त्रोक्त विग्रह वाले, जगद्गुरु श्री शेषजी की इस प्रकार स्तुति करने लगा ॥ ३३ ॥

विषममतिर्न यत्र नृणां त्वमहमिति मम तवेति च यदन्यत्र ।
विषमधिया रचितो यः सह्यविशुद्धः क्षयिष्णुरधर्मबहुलः ॥ ४१ ॥
कः क्षेमो निजपरयोः कियानर्थः स्वपरद्रुहा धर्मेण ।
स्वद्रोहात्तव कोपः परसम्पीडया च तथाऽधर्मः ॥ ४२ ॥
न व्यभिचरति तवेक्षा यया ह्यभिहितो भागवतो धर्मः ।
स्थिरचरसत्त्वकदम्बेष्वपृथग्धियो यमुपासते त्वार्याः ॥ ४३ ॥
न हि भगवन्नघटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षयः ।
यन्नामसकृच्छ्रवणात्पुल्कसकोऽपि विमुच्यते संसारात् ॥ ४४ ॥
अथ भगवन्वयमधुना त्वदवलोकपरिमृष्टाशयमलाः ।
सुरऋषिणा यदुदितं तावकेन कथमन्यथा भवति ॥ ४५ ॥
विदितमनन्त समस्तं तव जगदात्मनो जनैरिहाचरितम् ।
विज्ञाप्यं परमगुरोः कियदिव सवितुरिव खद्योतैः ॥ ४६ ॥
नमस्तुभ्यं भगवते सकलजगत्स्थितिलयोदयेशाय ।
दुरवसितात्मगतये कुयोगिनां भिदा परमहंसाय ॥ ४७ ॥
यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति यं चेकितानमनु चित्तय उच्चकन्ति ।
भूमण्डलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥ ४८ ॥

भाषा टीका ।

चित्रकेतु रुवाच ।

चित्र केतु बोला कि हे अजित ! सममति और रजितमन वालि साधुओं ने आप को जीतलिये और उनको भी आपने जीता हैं क्योंकि निष्काम भजन करने वालों को आप अपने को भी दे देते हो ऐसे अति करुणा वाले आप हैं ॥ ३४ ॥

हे भगवन् ! की उत्पत्ति पालन और संहारादिक ये आपका वैभव है। और विश्व सृष्टि करने वाले ब्रह्मादिक आप के अंश-के अंश हैं। तो हम ईश्वर हैं, इस प्रकार पृथक् अभिमान से मिथ्या ही स्पर्धा करते हैं ॥ ३५ ॥

परमाणु और परम महान् ( बड़े से बड़ा ) इन के आप आदि मध्य और अन्त में वर्तने वाले हैं अत एव आदि मध्य अन्त शून्य हैं। प्राणियों के आदि और अन्त में जो है नित्य है मध्य में भी वही है ॥ ३६ ॥

पूर्व २ से दश २ गुने अधिक ऐसे पृथिवी आदिक सप्त आवरणों से आवृत ( ढका हुआ ) ऐसा यह ब्रह्मांड और कोटि २ ब्रह्मांडों सहित जिन आप में अणु के सदृश भ्रमता है तिसी से आप अनंत हो ॥ ३७ ॥

विषय तृष्णा वाले जो नर पशु आपकी विभूति इन्द्र रुद्रादिकों की उपासना करते हैं और उनसे पर जो आप हैं तिनको नहीं उपासते हैं। उनके बड़े २ वैभव भी देवताओं के नाश होनेपर नाश होजाते हैं जैसे राज्य नाश होनेपर राजानुचर यह तो परम अवधि है बीच में भी नष्ट होता हैं ॥ ३८ ॥

हे परम ! ज्ञानात्मा, अगुणमय आपके विषय में कामना करके भी बुद्धि लगावें तौ भी फिर जन्म मरण रूप संसार का अंकुर नहीं जामते, ये द्वंद्वजालतो जीव के गुणों से है ॥ ३९ ॥

हे अजित ! जो आपने अनवद्य भागवत धर्म कथन किये हैं इसलिये आप सर्वोपरिस्थित हो जिन धर्मों को आत्मा [illegible] मुनिजन अपवर्ग के लिये उपासना करते हैं ॥ ४० ॥

---

श्रीधरस्वामिकृत भावार्थदीपिका ।

अनवद्यतामेवाह—विषममतिर्यत्र यस्मिन्भागवते धर्मे नास्ति यदन्यत्र यथान्यस्मिन्काम्ये धर्मे; ननु, सोऽपि वेदोक्तत्वादनवद्य एव तत्राह, विषमधिया शत्रुमरणादिकामनया रचितो विहितो

### श्रीधरस्वामिकृतभावार्थदीपिका।

यः स ह्यविशुद्धः रागद्वेषादिमत्त्वात् क्षयिष्णुश्च नश्वरफलत्वात् अधर्मबहुलश्च हिंसादिप्राचुर्यात् तदुक्तं शबरस्वामिभिः 'उभयमिह चोदनायां लक्ष्यतेऽर्थोऽनर्थश्च' इत्यादि ॥ ४१ ॥

एतत्प्रपञ्चयति—कः क्षेमः किं कुशलं न किञ्चित् निजपरयोः स्वस्य परस्य च स्वपरद्रुहा स्वस्मै परस्मै च द्रुह्यतीति स्वपरध्रुक् तेन यतः स्वद्रोहादत्यन्तकायक्लेशात्तव कोपः पीडासम्भवात् तदुक्तं गीतासु "कर्षयन्तः शरीरस्थं भूतग्राममचेतसः। मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान्" इति तथा परसम्पीडयाऽधर्मः च शब्दात्तव कोपश्च, अतस्त्वया रागान्धमपि कथञ्चिद्वेदमार्गे प्रवर्तयितुं काम्यधर्मोऽभिहितो न तत्त्वदृष्ट्या ॥ ४२ ॥

भागवतधर्मेण तु न द्रोह इत्याह—नेति। न व्यभिचरति न परमार्थं जहाति तव ईक्षा दृष्टिः, अव्यभिचारे हेतुः—स्थिरेति, स्थावरजङ्गमप्राणिसमूहेषु समबुद्धयो भागवता यं धर्मं सेवन्ते ॥ ४३ ॥

एवम्भूतस्य भागवतधर्मप्रवर्तकस्य तव दर्शनात्सर्वपापक्षयो भवतीति किं चित्रमित्याह—न हीति ॥ ४४ ॥

अतोऽहं कृतार्थोऽस्मीत्याह—अथेति। अथ अतो हेतोः तवावलोकनेन परिमृष्टाः निरस्ताः आशये चित्ते मला येषां ते त्वद्दर्शनञ्च मम नारदोपदेशेन जातमित्याह—सुरर्षिणेति ॥ ४५॥

यथा चाहं पूर्वमतिमूढ आसं यथा च नारदेनानुगृहीतोऽस्मि तत्सर्वान्तर्यामिणस्तव मया किं प्रकाशनीयमित्याह, विदितमिति. विशेषेण ज्ञाप्यं प्रकाशनीयं कियदिव न किमपीत्यर्थः सवितुर्यथा खद्योतैः प्रकाशनीयं नास्ति तद्वत् ॥ ४६ ॥

उक्तलक्षणं भगवन्तं प्रणमति-नम इति द्वाभ्याम्। सकलस्य जगतः स्थित्यादीनामीशाय समर्थाय दुरवसिता अविज्ञाता आत्मगतिर्निजतत्त्वं यस्य तस्मै केषां कुयोगिनां केन भिदाभेददृष्ट्या ॥ ४७ ॥

श्वसन्ति चेष्टन्ते चेकितानं पश्यन्तमनु चित्तयो ज्ञानेन्द्रियाण्युच्चकन्ति स्वारूढं पश्यन्ति ॥ ४८ ॥ ४९ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यत्र च धर्मे त्वमहं तव ममेति च या नृणामन्यत्रान्यस्मिन् धर्मे विषमा मतिः अहङ्कारममकाररूपा सा नास्ति स इत्यर्थः सर्वज्ञेन भ्रमविप्रलिप्सादिदोषरहितेन परमकारुणिकेन भगवताऽभिहितत्वादहङ्कारममकारप्रयुक्तहिंसादिगर्भत्वाभावात्सर्वस्य ब्रह्मात्मकत्वानुसन्धानगर्भत्वान्निरतिशयानन्दहेतुत्वाच्च त्वदाराधनरूपो धर्मः सर्वोत्कृष्टः तथा तदनुष्ठातारोऽपि शब्दादिविषयसुखार्थमात्सर्यहिंसादिस्वभावत्वाभावात्सर्वभूतसुहृदादि गुणयुक्ताश्च उत्कृष्टाः इतरधर्मतदनुष्ठातारस्तूक्तविपरीता इति भावः तदेवाह—विषमधियेति, अहं ममेत्याद्यहंममाभिमानेन रचितो यो देवतान्तराराधनरूपः स ह्यविशुद्धः रागद्वेषादिगर्भत्वाद्धर्मप्रचुरः शत्रुमरणादिकामनागर्भत्वात् क्षयिष्णुरस्थिरफलश्च ॥ ४१ ॥

विषमधिया रचितं धर्ममेव निन्दति—क इति। स्वपरद्रुहो स्वं कर्तारं परञ्च द्रुह्यतीति स्वपरध्रुक् अत्यन्तशरीरायासकारित्वादन्ततः संसृतिरूपानर्थहेतुत्वाच्च स्वध्रुक् शत्रुहिंसादिकामनागर्भत्वात्परध्रुक्तेन धर्मेण देवतान्तराराधनरूपेण निजपरयोः कः क्षेमः किं सुखं न किञ्चिदपीत्यर्थः परग्रहणं दृष्टान्तार्थं यथाऽभिचारादिकर्मणा मुमूर्षोर्न क्षेमस्तथा तत्कर्तुरपीत्यर्थः अस्तु वा कर्तुस्तादात्विकः कश्चित्क्षेमस्तथापि स कियानर्थः पुरुषार्थः अतितुच्छ इत्यर्थः क्षयिष्णुत्वादिति भावः एवं पुरुषार्थहेतुर्भवतीत्युक्तं प्रत्युतानर्थहेतुश्चेत्याह—त्वद्द्रोहादिति, त्वद्द्रोहात्स्वस्यैवाहितकरणाद्धेतोस्तवेश्वरस्य कोपः निग्रहः स्यादयं स्वस्यैवाहितमाचरति किमुत परस्येत्यतोऽयमतीव निग्राह्य इत्येवं तव कोपः स्यात्—

"आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥
अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥
तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" ॥

इत्यादिना प्रतिज्ञातो निग्रहः स्यादिति भावः तवकोपः स्यान्न वा अवश्यं परसम्पीडया परस्य द्रोहाद्धेतोरधर्मस्तथा स्यादेव स्वकृतेन धर्मेण परस्य यादृशी पीडा भवेत्तादृशी पीडा हेतुरधर्मोऽपि स्वानुष्ठितधर्ममनु स्यादित्यर्थः ॥ ४२ ॥

एवं धर्मान्तरस्य न केवलमपुरुषार्थहेतुत्वं प्रत्युतानर्थहेतुत्वञ्चोक्तं त्वदाराधनरूपधर्मस्य त्वनिष्टपरिहारेष्टप्राप्तिहेतुत्वमव्यभिचरितमित्याह—नेति। तव "सत्यकामः सत्यसङ्कल्पः" इति श्रुत्युक्तसत्यसङ्कल्पस्य तवेक्षा—

"ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्" ॥

इति कृतः सङ्कल्प इत्यर्थः न व्यभिचरत्ययथार्था न भवति यया हेतुभूतयेक्षया भागवतस्तव सम्बन्धी त्वदाराधनरूपो धर्मोऽभिहितः प्रोक्तः पञ्चरात्रादिमुखेनेति शेषः भागवतधर्माभिधाने उक्तविधे ईक्षैव हेतुरन्यथा स्वधर्मानभिज्ञतया केवलविषयासक्ते सति सर्वस्मिन् लोके मुमुक्षुत्वाभावाद्दीक्षा निर्विषया स्यादिति भावः एवमीक्षायाः सत्यत्वात्तत्प्रवर्त्यापादकभागवतधर्मोऽप्यनिष्टपरिहारेष्टप्राप्तिहेतुत्वं न व्यभिचरतीति तात्पर्यं यत एवमत एव आर्याः त्वदीक्षाभिज्ञास्तत्प्रवर्त्यापादिकया चराचरात्मकभूतसमुदेष्वपृथग्धिया त्वदात्मकबुद्ध्याऽमृतत्वाय मुक्तये उपासते धर्ममिति विभक्तिपरिणामेनानुषङ्गः अनुतिष्ठन्तीत्यर्थः त्वामिति वा शेषः ॥ ४३ ॥

एवं समाश्रयणोपयुक्तसमाश्रितकार्यापादकगुणपूर्तिकथनमुखेन तदाराधनरूपधर्मस्यैव निरतिशयश्रेयःसाधनत्वमुक्तम् इदानीं

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वस्य कृतार्थतामाविष्कर्तुं तद्दर्शनस्य कृतार्थतापादकत्वं कैमुत्यन्यायेनाह—नहीति । हे भगवन्, नृणां भवद्दर्शनादखिलपापक्षयो भवतीति इदमघटितं न हि किन्तु युक्तमेव, कुतः? यद्यस्माच्छ्रुतस्त्वनाम्नः सकृदेव श्रवणादेव पुल्कसोऽपि हीनजातिरपि संसारबन्धाद्विमुच्यते नामश्रवणस्यैवेदृशंमहात्म्यं किं पुनः साक्षात्त्वद्दर्शनस्येति भावः ॥ ४४ ॥

अथाचार्यकृतं महोपकारं स्मरन्स्वस्य कृतार्थतामाह—अथेति । हे भगवन्, अधुना तवावलोकनेन परिमृष्टा निरस्ता आशये चित्ते मलाः येषां तादृशा वयं कृतार्थाजाता इति भावः यस्मात्तावकेन "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति त्वदुक्तरीत्या तव निरतिशयप्रियेण सुरर्षिणा श्रीनारदेनोदितं त्वद्दर्शनेन मम कृतार्थत्वे निमित्तं मन्त्ररूपं वचो गदितं तत एवमधुना जातं अन्यथा महोपकर्तृसदाचार्यानुग्रहेण कथं भवति एवंविधः परमोऽभ्युदयस्तदनर्हस्य मम कथं भवेदित्यर्थः ॥ ४५ ॥

कथं भवेदित्यनेनेदृशाभ्युदयानर्हत्वं स्वस्य सूचितं तच्च भवता सर्वज्ञेन सर्वं विदितमेव किं मया विज्ञाप्यमधुना विज्ञाप्यत इत्याह—विदितमिति । हे अनन्त ! इह लोके जनैर्यद्यदाचरितं तत्समस्तं जगदात्मनः कृत्स्नजगदन्तर्यामितया सर्वेषां बुद्धिवृत्तीर्युगपत्साक्षात्कुर्वतस्तव विदितमेव ततो मादृशैर्विज्ञाप्यं परमगुरोस्तव कियत्, यथा सवितुः खद्योतैः, यद्वा अनन्तकल्याणगुणाकरस्य तव गुणैकदेशमपि स्तोतुमहमसमर्थः इति त्वया विदितमेवेत्याह—विदितमिति । हे अनन्त त्रिविधपरिच्छेदरहित ! इह लोके जनैर्जननमरणभाग्भिस्त्वदाहितज्ञानशक्तिभिर्मादृशैर्यद्यदाचरितमन्तर्यामित्वेनेन्द्रियैर्व्यापृतं तत्सर्वं जगदन्तरात्मनः सर्वज्ञस्य तव विदितमेव परिच्छिन्नमतेर्मम वाङ्मनश्चानन्तस्वरूपस्य सर्वज्ञस्य तव गुणवर्णने यावद्गच्छति तत्तथा विदितमेवेत्यर्थः अतः परमगुरोर्ज्ञानप्रदानां नारदादीनामपि ज्ञानदस्य तवेह मया विज्ञाप्यं विज्ञापनीयं कियत् मया कर्त्तव्यं गुणस्तवनं तव कियदत्यल्पमित्यर्थः यथा सवितुर्लोकत्रयप्रकाशकस्य खद्योतैः कीटविशेषैः कृतं द्योतनं कियदत्यल्पं तद्वदित्यर्थः ॥ ४६ ॥

एवं स्वस्य तत्स्तुतावनधिकारमाविष्कृत्य कांश्चित्तद्गुणाननुस्मरन् केवलं नमस्करोति—नम इति द्वाभ्यां । भगवते षाड्गुण्यपरिपूर्णाय निरस्तनिखिलदोषाय सकलस्य जगतः स्थितिलययोः इदमुत्पत्तेरप्युपलक्षणम् उत्पत्तिस्थितिलयानामीशाय कर्त्रे कुयोगिनां कर्त्तरिषष्ठी कुयोगिभिर्भिदा अब्रह्मात्मकस्वतन्त्रवस्तुदृष्ट्या दुरवसिता ज्ञातुमशक्या आत्मनो गतिः स्वरूपं स्वभावश्च यस्य ज्ञातुमशक्यस्वरूपस्वभावायेत्यर्थः परमहंसायात्यन्तपरिशुद्धाय तुभ्यं नमः ॥ ४७ ॥

अनन्तगुणमाहात्म्यं कथयन्नमस्करोति-यमिति । श्वसन्तं "बहु स्याम्" इति सङ्कल्पतो व्याक्रियमाणं यं त्वामनु विश्वसृजः ब्रह्मादयः श्वसन्ति प्राणन्ति त्वदायत्तस्वसत्तालाभेन व्याक्रियन्त इत्यर्थः चेकितानं सर्वं पश्यन्तं यं चित्तयः चिद्वृत्तयः अनूच्चकन्ति प्रसरन्ति ज्ञानमपि त्वदधीनमित्यर्थः यस्य तव मूर्ध्नि कृत्स्नं भूमण्डलं सर्षपायति सर्षपवदाचरति यं कृत्स्नभूमण्डलभारमपि सर्षपवन्मन्यत इत्यर्थः तस्मै सहस्रशिरसे भगवते तुभ्यं नमोऽस्तु मे नमनं भवानङ्गीकरोत्वित्यर्थः ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तद्धर्मज्ञानेन किं फलमिति तत्राह—विषमेति । यस्मिन् धर्मे ज्ञाते नृणां त्वमहमित्यादिलक्षणा विषममतिः शास्त्रनिषिद्धबुद्धिर्नस्यात्, चकारादीश्वराधीनं सर्वं तत्प्रेरितोऽहं कार्येषु प्रवृत्तोऽस्मीति बुद्धिरित्यर्थः येन धर्मेण यस्मिन् त्वयि ज्ञातेवा हरेरन्यत्र विषमधिया यथास्थितवस्तुविपरीतज्ञानेन रचितः अतः अहंममतादिप्रचुर इत्यर्थः ॥ ४१ ॥

तज्ज्ञानफलं तम एवेत्याह - क इति । ननु, तर्हि यागादिकर्मलक्षणधर्मेण पुरुषार्थः स्यादिति तत्राह - निजेति, स्वस्य शरीरक्लेशस्य हेतुना परस्य संज्ञपनलक्षणहिंसाहेतुना, कुतो नास्तीति तत्राह–स्वद्रोहादिति, स्वविहितशरीरक्लेशं विनाऽऽत्महत्यादिद्रोहास्वधर्माशास्त्रलङ्घनलक्षणात् ॥ ४२ ॥

ननु, शिवादिविहितवत् त्वद्विहितस्यान्यथात्वेन त्वद्विहितलक्षणशास्त्रोल्लङ्घनदोषनिमित्तकोपाभावोपपत्तेरतस्त्वत्प्रेक्षापि व्यभिचारिण्येवेति तत्राह, नेति । तत्र को हेतुरिति पूर्वोक्तं स्मारयति–यमिति, पूर्वस्माद्विशिनष्टि अपृथगिति, कुत्रेत्यत उक्तं स्थिरेति, स्थावरजङ्गमप्राणिसमूहेषु यथास्थितदर्शिनः तदुक्तमित्याह, आर्या इति, तुना तारतम्यमन्ययोगव्यवच्छेदं चाह ॥ ४३ ॥

प्रारब्धवशादार्या अपि उपाधिं कुर्वन्ति न फलोपलब्ध्या तस्मादिदमघटीयमान ( १ ) मचयन्तीति तत्राह—नहीति ॥ ४४ ॥

नेह संसारतरणे सकृन्नामश्रवणमेवालं किंपुनर्भवद्दर्शनमिति यस्मादथ तस्मात्त्वद्दर्शनेनाधुना वयं परिमृष्टाशयमला अभूमेति शेषः नारदवाक्यञ्च भगवद्दीक्षाया अव्यभिचरितत्वे लिङ्गमित्याह, सुरर्षिणेति ॥ ४५ ॥

हे अनन्त, तावकेन नारदेन समस्तं विदितं ज्ञातं, भगवद्दर्शनं अव्यभिचारीति यदुदितं च, तत्कथमन्यथा भवति? निगमयति, तवेति, जगदात्मनो जगदन्तर्यामिणः परमगुरोस्तव जनैश्चेष्टितं कियद्विज्ञाप्यं न किमपीति भावः विज्ञापनं हास्यहेतुरित्यत्र दृष्टान्तमाह, इहेति, इह ज्योतिःषु प्रकृष्टप्रकाशस्य सवितुः खे वितस्तिप्रदेशे एव द्योतः प्रकाशो येषां ते तथा तैः ॥ ४६ ॥

अस्माभिरिदमेव विज्ञाप्यमित्याह—नम इति ॥ ४७ ॥

इदमपि त्वदनुग्रहं विना न शक्यमित्याह–यं वा इति । "श्वस प्राणे" इतिधातोः "प्राणान्तमनुप्रयान्ति" इतिश्रुतिः यं शब्देन सूचिता चेकितानं जानन्तमनुवृत्तयः तत्तद्रूपस्त्वनुगतज्ञानवन्तः उच्चलन्ति

---

( १ ) स्तुवन्ति न तु परमार्थः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सम्यक् जानन्ति सर्वप्रवृत्तेते श्रीहरिविवक्षायां "सहस्रशीर्षा पुरुषः" इत्युपपत्तेः ॥ ४८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निजसंसारहेतुत्वात् स्वध्रुहा पुमान् भयाब्धिं न तरेत् स आत्महेतिवत्-पश्चाद्युपालम्भात् परध्रुहा चेत्यर्थः कोपः औदास्यमयः क्रोधः अधर्मोऽशुद्धो धर्मः ॥ ४२—४६ ॥

नम इति भिदा नानोपास्यभेददृष्ट्या कुयोगिनां दुरवसितेति. यद्वा भिदा भेदमय्या भक्त्या परमहंसायेति परेणान्वयः तथा शुद्धस्वरूपत्वेन हृत्कमलविहारिण इत्यर्थः ॥ ४७ ॥

उपकन्ति स्वरूपं पश्यन्ति यस्य एव ज्ञानशक्त्यंशेनैव ब्रह्मज्ञानं लभन्त इत्यर्थः 'कनीदिप्तिकान्तिगतिषु' इत्यस्य यङ्लुगन्तस्य रूपमिदम् ॥ ४८—५० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यत्र भागवते धर्मे त्वमहमिति मम तवेत्यहन्तास्पदममतास्पदयोर्विषममतिरुत्तरश्लोकार्थदृष्ट्या द्वेषनिबन्धनवैषम्यवती ममवत्त्वमहं शत्रुरिति मतिर्नास्ति यत् या अन्यत्र काम्यधर्मे इत्यर्थः काम्यधर्ममेव निन्दति, विषमधिया शत्रुमरणादिकामनया रचितो यः स ह्यविशुद्धः रागद्वेषादिमयत्वात् क्षयिष्णुश्च नश्वरफलत्वात् । अधर्मबहुलश्च हिंसादिबाहुल्यात् । तदुक्तं शबरस्वामिना 'उभयमिह चोदनायां लक्ष्यते अर्थोऽनर्थश्च' इत्यादिना ॥ ४१ ॥

उक्तमर्थं स्पष्टयति—कः क्षेमः किं कुशलं निजपरयोर्निजस्याहन्तास्पदस्यात्मनः परस्य ममतास्पदस्य पुत्रकलत्रादेर्न किञ्चिदित्यर्थः स्वस्मै परस्मै च द्रुह्यतीति स्वपरध्रुक् तेन यतः स्वद्रोहात् परहिंसार्थकात्यन्तस्वकायक्लेशकरतपोव्रतादेः अधर्मः पापं त्वत्कोपश्च ॥ ४२ ॥

ननु, क्षयिष्णुत्वादिबाहुल्येऽपि काम्यधर्मे फलदर्शनात् प्रवर्तन्ते निर्दोषेऽपि निष्कामधर्मे फलादर्शनात् प्रवृत्तौ संशेरते जनास्तत्राह—नेति । तवेक्षा मद्वत्तया जीवः कृतार्थो भवत्विति परामर्शो न व्यभिचरतीति काम्यधर्मे कदाचिद् फलस्यापि व्यभिचारः स्यात्र तु त्वदीयेक्षायाः अत एव आर्या इत्यनार्यास्तु संशेरतां नामेति भावः अपृथग्धियः स्वस्य परस्य च सुखदुःखेषु पृथग्बुद्धिरहिता आर्या इति, आर्यत्वं द्वन्द्वक्षेममिति दर्शितम् ॥ ४३ ॥

निष्कामधर्मस्य मयैव साक्षात् फलं लब्धमित्याह—नहीति । नृणामिति ममैवेति भावः पापक्षयस्य का वार्त्ता मोक्षोऽपि भवतीत्याह—यन्नाम्न एकस्यैव किमुत बहूनां सकृदेव किं पुनरसकृत्. श्रवणादेव किमुत कीर्त्तनादेः पुल्कसकोऽपि किमुतान्यः । संसारादेव किमुत पापादिति साधनाद्गम एव दर्शनमिति भावः ॥ ४४ ॥

अतोऽहं कृतार्थोऽस्मीत्याह—अथेति ॥ ४५ ॥

विषयान्धोऽप्यहं स्वभक्तं प्रेष्य संसारकूपादुद्धृत्य स्वचरणान्तिकमानीत इत्यादि किं विज्ञापयामीत्याह—विदितमिति । सवितुः सवितरीव त्वयि खद्योतैरिवास्माभिः किं प्रकाशनीयम्॥४६॥

भिदा भेददृष्ट्या हेतुना ये कुयोगिनस्तेषां परमहंसाय कृपया परमहंसस्वरूपेणोद्धारकायेत्यर्थः ॥ ४७ ॥

श्वसन्तं चेष्टमानं विश्वसृजः कर्मेन्द्रियाणि श्वसन्ति चेष्टन्ते यं चेकितानं पश्यन्तं चित्तयः ज्ञानेन्द्रियाणि उपकान्ति स्वस्वविषयं पश्यन्ति ॥ ४८ ॥ ४९ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत्र भागवते धर्मे त्वमहमिति मम तवेति च विषममतिर्न भवति यत् या अन्यस्मिन् काम्यकर्मरूपे धर्मे भवति इत्यर्थः अन्यं धर्ममेवाह—विषमधिया विषमा धीर्यस्य तेन मन्दबुद्धिना अविशुद्धः जैनद्रोपस्थादिदुष्फलकः क्षयिष्णुः अल्पकालस्थायिफलदः अधर्मबहुलः प्राणिपीडासंपाद्यः रचितोऽनुष्ठितः आद्रित इत्यर्थः ॥ ४१ ॥

स्वस्मै संसारतापकत्वेन परस्मै पीडाकरत्वेन द्रुह्यतीति स्वपरध्रुट् तेन तयोर्मतयज्ञादिरूपेण काम्यकर्मणेत्यर्थः । निजस्य स्वस्य कर्तुः परस्य तेन कर्मणाराध्यस्य यद्वा परस्य कर्मोपयुक्तप्राणिनः प्रारम्भे कः क्षेमो मङ्गलम् समाप्तौ कियानर्थः । फलम् न कोपीत्यर्थः स्वस्य यो द्रोहस्तादृशेन कर्मणा संसारे पातनं तस्मात्तव कोपः तथा परसंपीडया कर्मनिष्पत्त्यर्थप्राणिपीडया अधर्मश्च भवतीत्यर्थः ॥ ४२ ॥

सत्यसंकल्पेन त्वया प्रकाशितं धर्मं नरवरा उपासते इत्याह—नहीति । ईक्षा संकल्परूपा दृष्टिः । नहि व्यभिचरति अनुक्तमर्थं नहि स्पृशति यथा भागवतो धर्मः अभिहितः वर्णितः यं धर्मं स्थिरचरसत्त्वकदंबेषु स्थावरजंगमप्राणिसमूहेषु अपृथग्धियः उपासते अनुतिष्ठन्ति ॥ ४३ ॥

भगवद्दर्शनेन त्वदवलोकनेन चात्मनः कृतकृत्यतां द्योतयति-नेति द्वाभ्याम् । त्वद्दर्शनात्साक्षात्कारात् ॥ ४४ ॥

त्वदवलोकेन त्वत्कृतेन कृपावलोकेन परिमृष्टा परिमार्जिताः आशयमला येषां ते तथा जाता वयम् "एतां मन्त्रोपनिषदं प्रतीच्छ प्रयतो मम । यां धारयन् सप्तरात्राद्द्रष्टा संकर्षणं प्रभुमि"ति यत्सुरर्षिणोदितं तत्कथमन्यथाभवति ॥ ४५ ॥

हे अनन्त ! जगदात्मनो विश्वात्मनस्तव अविदितं संसारे आचरितं समस्तं विदितम् अतः खद्योतैः सवितुरिव अस्माभिः हे जगद्गुरो ! तव किमपि विज्ञाप्यं प्रकाशनीयं न किमपीत्यर्थः ॥ ४६ ॥

अथ विश्वहेतुत्वादिभगवदसाधारणान् गुणाननुस्मरन् भगवन्तं प्रणमति—नम इति द्वाभ्याम् । सकलस्य जगतः कार्यजातस्य स्थित्यादीनामीशाय कर्त्रे कुत्सिते "सर्वं खल्विदं ब्रह्म" "एतदात्म्यमिदं सर्वम्" इत्यादिश्रुतिविरुद्धे स्वोत्प्रेक्षिते प्रधानपरमाणवादि-

श्रीशुक उवाच ।

संस्तुतो भगवानेवमनन्तस्तमभाषत ।
विद्याधरपतिं प्रीतश्चित्रकेतुं कुरूद्वह ! ॥ ४९ ॥

श्रीभगवानुवाच ।

यन्नारदाङ्गिरोभ्यां ते व्याहृतं मेऽनुशासनम् ।
संसिद्धोऽसि तया राजन् ! विद्यया दर्शनाच्च मे ॥ ५० ॥
अहं वै सर्वभूतानि भूतात्मा भूतभावनः ।
शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू ॥ ५१ ॥
लोके विततमात्मानं लोकं चात्मनि सन्ततम् ।
उभयं च मया व्याप्तं मयि चैवोभयं कृतम् ॥ ५२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जगत्कारणत्वादेर्योगाभिनिवेशोऽस्ति येषां तेषां सांख्यतार्किकादीनां भिदा केवलेन जगदीश्वरभेदेन दुरपसिता दुर्गमा आत्मगतिः स्वरूपज्ञानमार्गो यस्य तस्मै परमहंसाय अत्यन्तशुद्धाय ॥ ४७ ॥

यं स्वां श्वसन्तं चेष्टन्तं विश्वसृजः ब्रह्मादयः श्वसन्ति चेष्टां कुर्वन्ति "सृजामि तन्नियुक्तोऽयं हरो हरति तद्वशः" इति ब्रह्मोक्तेः यं चेकितानं पश्यन्तम् भान्तम् चितयः चितिज्ञानं तदुपलक्षिताः सर्वाः चेतनाचेतनात्मिकाः प्रजाः अनु उपक्रान्ति अनुपश्यन्ति अनुभान्ति "तमेव भान्तमनुभाति सर्वम्" इति श्रुतेः ॥ ४८ ॥ ४९ ॥

---

भाषा टीका ।

जिस भागवत धर्म में हम तुम हमारा तुमारा ऐसी विषम मति नहीं है अन्य धर्म में है। क्योंकि वह विषम बुद्धि से रचागया है अत एव वह अविशुद्ध चयिष्णु (नाश वान) और अधर्म बहुत है ॥ ४१ ॥

अपने पराये द्रोह करने वाले धर्म से, अपना पराया क्या क्षेम, और कितना प्रयोजन है स्वद्रोह अर्थात् अधिक काय क्लेश से आप अन्तर्यामी को कोप दूसरे को पीडा देने से अधर्म ॥ ४२ ॥

जिस दृष्टि से भागवत धर्म कथन किया वह आपकी दृष्टि कभी अन्यथा नहीं होती ॥ स्थावर जंगम प्राणियों के समूह में अपृथक् धर्म वाले जो आर्य लोग हैं वोही उस धर्म की उपासना करते हैं ॥ ४३ ॥

हे भगवन् ! आपके दर्शन से जीवों का पाप नाश होना यह असंभव नहीं है क्योंकि जिन तुम्हारा एकवार श्रवण से चंडाल भी संसार से मुक्त होता है ॥ ४४ ॥

हे भगवन् ! आपके दर्शन से हमारा अन्तःकरण निर्मल हुआ क्योंकि नारद का कहा हुआ झूठ कैसे होय ॥ ४५ ॥

हे अनन्त ! जगत् के अन्तर्यामी आपको लोकों का सब चरित्र ज्ञात ही है अतः परमगुरू आपको क्या जनाना है जैसे कि खद्योत सूर्य को क्या प्रकाश करसका है ॥ ४६ ॥

जगत् की उत्पत्ति स्थिति नाश के करने वाले आपको नमः होय क्योंकि आप परम हंस हैं और पाषंडी भेद दृष्टि से आपके तत्व को नहीं जानते हैं ॥ ४७ ॥

जिसकी सत्ता से ब्रह्मादि देवता श्वास लेते हैं कर्मेन्द्रिय ज्ञानेन्द्रिय अपने २ विषय को ग्रहण करते हैं और जिसके शिरपर पृथिवी मंडल सर्षव वत् प्रतीत होता है उस भगवान शेष जी के प्रणाम होय ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मेऽनुशासनं मद्विषय उपदेशः तेन तया च विद्यया ऽस्माच्च दर्शनात्संसिद्धोऽसि ॥ ५० ॥

तद्बोधदार्ढ्याय स्वयमप्युपदिशति—अहमित्यादिना । सर्वं भूतान्यहमेव भूतानामात्मा भोक्ताप्यहमेव भोक्तृभोग्यात्मकं विश्वं मद्व्यतिरिक्तं नास्तीत्यर्थः यतोऽहं भूतभावनः भूतानां प्रकाशकः कारणं च. ननु, शब्दब्रह्मप्रकाशकं परं ब्रह्म कारणं च प्रकाशकं च सत्यम् ते उभे ममैव रूपे इत्याह शब्दब्रह्मेति शाश्वती शाश्वत्यौ ॥ ५१ ॥

अतस्त्वमेवं पश्येत्याह—लोके भोग्यप्रपंचे भोक्तृत्वेन विततमनुगतमात्मानं लोकं चात्मनि भोग्यत्वेन सन्ततं व्याप्तं तदुभयं च मया कारणात्मना व्याप्तम् मयि चैवोभयं कृतं प्रकल्पितं स्मरेदिति तृतीयेनान्वयः पश्येदित्यध्याहारो वा ॥ ५२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चित्रकेतुनेत्थं स्तुतो भगवाननन्तस्तमभाषतेत्याह—मुनिः, संस्तुतइति । इत्थमनन्तगुणमहात्म्येन स्तुतो भगवाननन्तः प्रीतस्सन् हे कुरूद्वह, तं विद्याधराणां पतिं चित्रकेतुमभाषत ॥ ४९ ॥

तदेवाह—यदित्यादिना सिद्धोसीत्यन्तेन । नारदाङ्गिरोभ्यां ते तुभ्यं यद्व्याहृतमुक्तं तदनुशासनं मत्कीर्तिपुरुषेश्वरस्वरूपविषयकं विविच्य ज्ञापनरूपं वचः मे ममैव मत्सम्बन्धेवान्तरात्मभूतमत्सङ्कल्पादेव ताभ्यां ते व्याहृतम्—

"ईश्वरस्य च सौहार्दं यदृच्छा सुकृतं तथा ।
विष्णोः कटाक्षमद्वेष आनुकूल्यं च सात्त्विकैः ॥
सम्भाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः"

इत्युक्तरीत्या मदनुग्रहमन्तरेण सदाचार्यप्राप्तेर्दुर्लभत्वादिति भावः यतो हे राजन्, तया नारदोपदिष्टया मन्त्रविद्यया मम दर्शनाच्च संसिद्धोसि ॥ ॥ ५० ॥

ननु, मह्यमुपदिशतमिति न तौ प्रतिस्वमुक्तवानतः कथं तद्व्याहृतं त्वदनुशासनमेवेति जानीयां किञ्च तयोरेव वचोऽहमश्रृणवं न तु तवेत्यत्राह—अहं हीति । तावत्सर्वाणि भूतान्यहमेव सर्वाण्यपि भूतानि मदभिन्नान्येव, किमुत "आचार्यं मां विजानीयात् "ज्ञानीत्वात्मैव मे मतम्" इत्युक्तादमाभिन्नाभिमानविषयावंगिरोनारदौ मदभिन्नाविति भावः अतस्तद्व्याहृतं मदनुशासनमेवेति तात्पर्य. ननु, सर्वभूतान्यहमेवेत्युक्तोऽभेदः किं मृदात्मको घट इति वत्स्वरूपाभेदरूपस्तथात्वे सर्वविकाराश्रयत्वापत्तिस्तत्राह--भूतात्मा सर्वभूतानामन्तरात्मा आत्मा देवो आत इत्यादिवच्छरीरात्मभावप्रयुक्तः सर्वभूतैः सह ममाभेदः विकाराणां शरीरगतानां जीवे बाल्यादीनामिव न मयि प्रसक्तिरिति तात्पर्यं । शरीरात्मभावनिबन्धनोऽभेदव्यपदेशो बहुशो दृष्टः ब्राह्मणोहं कृशोहं स्थूलोहमित्यादिः न चेदं रजतमिति तद्बाधितोयं व्यपदेशः नीलो घट इत्याद्यभेदव्यपदेशस्यापि बाध्यत्वापत्तेः अथ जातिगुणादीनां व्यक्तिगुण्यप्रथक्सिद्धप्रकारतया तद्बुद्धितच्छब्दयोर्व्यक्तिगुणिपर्यन्तत्वान्न बाधस्तर्हि शरीरस्याप्यात्मा. पृथक्सिद्धप्रकारत्वेन तद्बुद्धितच्छब्दयोरपि तात्पर्यैतत्वादत्राप्यबाधित एव, ननु, जात्यादेर्व्यक्त्यादीन् प्रति अप्रथक्सिद्धप्रकारत्वं प्रत्यक्षगम्यं जातिव्यक्त्योरुभयोरपि प्रत्यक्षविषयत्वात् आत्मनस्तु तदविषयत्वात्कथं शरीरस्यात्मा पृथक्सिद्धविशेषणत्वमिति चेत् मास्तु जातिव्यक्त्योरिव शरीरात्मनोरेकप्रमाणविषयत्वम् अथाप्यात्मा पृथक्सिद्धप्रकरत्वं शरीरस्यास्त्येव न हि भिन्नसामग्रीवेद्यत्वमात्रेण तद्व्याहन्तुं शक्यम् अन्यथा चक्षुर्घ्राणेन्द्रियविषययोः पृथवीगन्धयोरपि नियतप्रकारप्रकारिभावानुपपत्तेरित्यन्यत्र विस्तरः न केवलं शरीरात्मभावनिबन्धन एव भूतैर्ममाभेदः, अपि तु कार्यकारणभावनिबन्धन इत्याह—भूतभाव इति, भूतानि चिदचिदात्मकानि देवमनुष्यादीनि भावयत्युत्पादयति अस्मादेवोपादानभूतादिति भूतभावनः कार्यकारणयोरभेदस्त्वारम्भणाधिकरणादिभाष्ये बहूपपत्तिभिर्निरूपितः यद्वा शङ्कितं तयोरेवऽवचो श्रृणवं ननु तवेति तत्राह—शब्देति । शब्दात्मकं यद्ब्रह्म परं शब्देन वाच्यमर्थात्मकत्वं च यद्ब्रह्म इमे ब्रह्मणी मम शाश्वती तनू यावत्तत्त्वमपृथक्सिद्धे मम शरीरभूते इत्यर्थः स्वस्मिन्मुख्यवृत्तो ब्रह्मशब्दः शब्दार्थात्मकयोः प्रपञ्चदलयोः स्वशरीरत्वादुपचरितः परब्रह्मणः स्वतनुत्वकथनं दृष्टान्तार्थं यथा परब्रह्मान्तर्गतनारदांगिरसोर्मच्छरीरत्वम् एवं शब्दब्रह्मान्तर्गततद्वचसोऽपि मत्तनुत्वमित्यर्थः यद्यपि स्वस्य सर्वभूतात्मकत्वकथनेनैव सर्वभूतवचसां स्ववचस्त्वमपि कथितप्रायं तथापि नामरूपयोरुभयोरपि स्वशरीरकत्वज्ञापनाय पृथगुक्तमित्यवगन्तव्यम् ॥ ५१ ॥

ननु, सर्वेषां भूतशब्दवाच्यानां देवादिशरीराणामात्मा जीवः स एव किं मदात्मेत्याह—लोक इति । लोके परिदृश्यमानाचित्प्रपञ्चे देवादिशरीररूपे विततं व्याप्तं अन्तःप्रविश्य धारकतया व्याप्तं प्रत्यगात्मानं द्वितीयान्तानां पदैरेव व्याहृतेनान्वयः तथा आत्मनि प्रत्यगात्मनि सन्ततं प्रोतं धार्यत्वेनावस्थितं लोकं चेत्येतदुभयं मया परमात्मनाऽन्तःप्रविश्य ततं व्याप्तम् उक्तमुभयं मयि कृतं च मदाधेयं कृतमित्यर्थः लोके विततमात्मानमित्यनेन चेतने जीवस्य व्याप्तिरुक्ता. लोकं चात्मनीत्यनेनाचेतनस्य जीवधार्यत्वमुक्तम्. उभयमित्यनेन चेतनाचेतनयोरीश्वरधार्यत्वं व्याप्यत्वमीश्वरस्य स्वस्य धारकत्वं व्यापकत्वञ्चोक्तम् अतो नाहं जीवः भूतात्मेत्यत्र भूतशब्दोऽचेतनविशिष्टचेतनपरः इति भावः आत्मानमित्येकवचनं जात्यभिप्रायकं यद्वा एकामेव जीवव्यक्तिमुपादाय क्रमप्राप्तेषु देवादिशरीरेषु व्याप्तिरुच्यते, अतोऽत्र जीवैक्यवादभ्रमो न कर्त्तव्यः ॥ ५२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनन्तनामप्रवृत्तिनिमित्तक्रिणावत्त्वादनन्तः श्रीहरिः । हरिगुणान्तकथनदर्शनासमर्थत्वादनन्त इत्यर्थः ॥ ४९ ॥

नारदाङ्गिरोभ्यां यन्मम शासनं तव व्याहृतं तत्करणेन या च मम विद्याभ्यस्ता तया यच्च मम दर्शनं तस्माच्च संसिद्धोऽसि प्राप्तापेक्षिताशेषपुरुषार्थोसीत्यर्थः ॥ ५० ॥

अधुनाऽहं पूर्वोक्तस्थिरीकरणाय किञ्चिद्विशेषज्ञानाय वा किञ्चिदुपदिशामीत्याह—अहमिति । सर्वभूतान्यहमित्यन्वयः वा इत्यनेन "सर्वं खल्विदम्ब्रह्म" इति श्रुतिं सूचयति अभेदोपदेशस्य कोभिप्राय इति तत्राह—भूतात्मेति । भूतानामन्तःस्थित्वा दानादिकर्तृत्वात्तद्व्यपदेशः "हरिस्तु सर्वभूतानि तदन्तर्याम्यपेक्षया" इति स्मृतेः सत्ताप्रदत्वाच्च तद्व्यपदेश इतिभावेनाह—भूतभावन इति. भूतानि भावयति सत्तागतानि करोतीति अनेन "अहमस्मि" इत्यादिश्रुतिगतानि पदान्यन्तर्यामिणि मुख्यवृत्त्या प्रवर्तन्त इत्युक्तं तथाचोक्तं "निरुपदानि च सर्वाणि सुप्पदानि तथैव च । तस्मिन्नेव प्रवर्तन्ते मुख्यवृत्त्या विशेषतः" इति इदञ्च स्वयावदर्थं ज्ञातव्यमित्याह—शब्देति । वेदादिशब्दराशिलक्षणं शब्दब्रह्म सच्चिदानन्दलक्षणं परं ब्रह्मेत्युभे "द्वे अपि ब्रह्मणी मम शाश्वती तनू प्रतिमास्वरूपभेदेन यावद्ब्रह्म विष्ठितं तावती वाक्" इति श्रुतेः "एष नित्योऽव्ययः सूक्ष्मः" इति पूर्वोक्तम् ॥ ५१ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मानं जीवं लोके भुवने अविततमव्याप्तं जानीहि लोकं चात्मनि जीवे वासनारूपेण मनसि सन्ततं निर्व्यूढं विद्धि विपुलस्य लोकस्यात्मप्रदेशमन्तरेण बाहुल्यायोगात् लोक आत्मेत्युभयं मया ब्रह्मरूपेण व्याप्तं. तर्हि, जीवलोकयोराधारः कः ? इति तत्राह–मयीति । उभयञ्च मयि समाश्रितमेव. कुतः ? 'अहमेवोभयाधारः' इति समाधत्स्व ॥ ५२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अहमिति अत्र शब्दब्रह्मणः साहचर्यात् परब्रह्मणोप्यंशत्वमायाति ॥ ५१ ॥

तथैवानुभावयति लोक इति । आत्मानं परंब्रह्म स्वरूपं-विततमाश्रयत्वेन वर्त्तमानम् आत्मनि तस्मिन् सन्ततमाश्रितं एष मया भगवद्रूपेण परब्रह्मणोपि मदीयनिर्विशेषाविर्भावरूपत्वात्. अत एवोभयञ्च मयिकृतं मज्ज्ञाननिमित्तमेव निरूपितमित्यर्थः ॥ ५२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मेऽनुशासनं श्रवणकीर्त्तनादिभजनं तेन तया विद्यया नारदोपदिष्टमहामन्त्रेण च तत्साध्यानमम दर्शनाच्च ॥ ५० ॥

किञ्च भक्तितत्त्वं तया ज्ञातमेव तत्राजितजितेत्यादिस्तुतिरेव प्रमाणं जिज्ञासानैरपेक्ष्यार्थं ज्ञानतत्त्वमहमेवोपदिशामि श्रुतियत्याह–अहं वै इति । अत्रेदं विवेचनीयं वस्तु तावत् द्विविधं, वास्तवमवास्तवञ्च. ब्रह्म परमात्मा भगवान् सपरिकर इत्येतत् त्रितयमेव वास्तवं वस्तु. मायिकप्रपञ्चजातमिदमवास्तवं वस्तु. अवस्तु च द्विविधं, कार्यमकार्यञ्च. कार्यं स्वप्ने न्द्रजालादिगतं । अकार्यं खपुष्पशशशृङ्गादि. एषां मध्ये विधं वास्तवमत्र वस्त्विति प्रथमोक्तेर्वास्तवं वस्तु न एवोपादेयत्वं वक्तुं प्रथममवास्तववस्त्वाह–सर्वभूतानि भोक्तृभोग्यात्मकानि जगन्ति अहमेव मदीयजीवशक्तिमयत्वादिति भावः अत्र जीवानामवास्तववस्तुत्वमविद्यावृतत्वादेवोक्तं । वास्तवं वस्त्वाह भूतानां समष्टिव्यष्टीनामात्मा अन्तर्यामीति द्वितीयः । तृतीयश्च पुरुषोऽहं तथाभूतानि तानि भावयत्युत्पादयतीति प्रथमः पुरुषश्चाहं तथाभूतानि वास्यसख्यादिभाववन्ति करोतीति भूतभावनः कृष्णो रामश्च सम्प्रति त्वयाद्दृश्यश्चाहं किञ्च मत्त्विग्धासरूपं यत् शब्दब्रह्म वेदः तथामन्निर्विशेषाकारत्वेन ज्ञानिषु प्रतिपाद्यमानं यत् परं ब्रह्म ते उभे ममैवतनुरूपे, वेदस्य शब्दरूपत्वादाकाशगुणत्वेनानित्यत्वशङ्कायास्तथा परब्रह्मणश्चानिर्देश्यत्वेनावस्तुत्वशङ्कायाः वारणायाह शाश्वती शाश्वत्यौ नित्यंसत्ये एव ॥ ५१ ॥

ननु त्वं मम चेत् सर्वं भवसि तर्हि ।किं सर्वभूताऽप्येयोपास्यत्वेन ध्येयानि भक्तानामुतान्तर्यामित्यादिरूपाणीति तत्राह—लोके भोग्यप्रपञ्चे भोक्तृत्वेन विततमनुगतमात्मानं जीवं तथा लोकञ्चात्मनि भोग्यत्वेन सन्ततं सविस्तरमुपच्छिन्नं तदुभयं मया कारणात्मना व्याप्तं मयि चाधिष्ठानकारणे उभयं कृतं कार्यरूपं स्मरेदिति तृतीयेनान्वयः तेन सर्वभूतानि सच्छक्तिकार्याश्रयनित्यान्यस्वरूपभूतानि नोपास्यत्वेन ध्येयानीति भावः ॥ ५२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ते तुभ्यं मेऽनुशासनं मद्विषयकं शास्त्रं मन्त्रोपनिषदित्यर्थः तया मन्त्रोपनिषद्रूपया विद्यया मे दर्शनाच्च संसिद्धोसि मदीयत्वं प्राप्तोसि यः भगवदीयत्वं न प्राप्तः स रागाद्यभिभूतत्वादसिद्ध एवेत्यस्मिन्पुराण एवास्ति, 'तावद्रागादयस्तेन तावत्कारागृहं तथा तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण न ते जनाः' इति ॥ ५० ॥

एवं सिद्धपदवीं प्राप्तो भवद्विधो जीवः सर्वात्मानं सर्वकारणमस्पृष्टदोषरादिदोषराहित्येन ध्यायेदित्याह अहमितिचतुर्भिः । सर्वभूतानि चेतनाचेतनानि अहं यतः भूतानामात्मा "एष त आत्मान्तर्याम्य"इतिश्रुतेः ॥ "अन्तरात्मा नियंताहं नियम्यनियंत्रोः । स्वाभाविको भेदाभेदः, इन्द्रियगणप्राणयोः न वै वाचो न चक्षूंषि न मन इत्याचक्षते प्राणा इत्येवाचक्षते" इति छांदोग्ये प्रसिद्धः । यतः भूतभावनः भूतानि भावयत्युत्पादयतीति स "तथा कार्यकारणयोः" स्वाभाविकोभेदाभेदः सर्वं खल्विदं ब्रह्म, तज्जलानितीत्यनेन वाक्येन दर्शितः आत्मनि प्रमायाम आत्मनः स्वरूपं चाह, शब्दब्रह्म परं ब्रह्मचेत्युभे मम शाश्वती शाश्वत्यौ नित्ये तनू वेदप्रमाणकपरब्रह्माभिन्नोऽस्मीत्यर्थः एवं भूतेन मयोक्तं तदमित्यवेहीत्यध्याहृतेन द्वयोरन्वयः ॥ ५१ ॥

लोके भोग्ये पदार्थे आत्मानं भोक्तृत्वेनान्वितम् आत्मनि भोक्तरि लोकं च भोग्यतया संस्तत्म उभयं च मया नियंत्रा व्याप्तं यस्मिन्मयि सर्वशक्तौ तदुभयं कृतं गुणिनि गुणवत् निहितम् "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इति सनातनीश्रुत्या प्रतिपादितमित्यर्थः ॥ ५२ ॥

---

### भाषाटीका ।

**श्री शुक उवाच ॥**

हे राजन् ! अनन्त भगवान् ऐसे स्तुति से प्रसन्न होकर विद्याधरोंके स्वामि चित्रकेतु से बोले ॥ ४९ ॥

**श्री भगवान् उवाच ॥**

हे राजन् ! नारद और अङ्गिरा मुनिने जो मेरा स्तोत्र कहा उसविद्या से और मेरे दर्शन से तुम सिद्ध हुवे ॥५०॥ सब लोकों का पालन करनेवाला सर्व भूतस्वरूप सब का अन्तर्यामी मैं हूं वेद और परब्रह्म यह दोनों मेरे नित्यशरीर हैं॥५१॥

यथा सुषुप्तः पुरुषो विश्वं पश्यति चात्मनि ।
आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः ॥ ५३ ॥
एवं जागरणादीनि जीवस्थानानि चात्मनः ।
मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत् ॥ ५४ ॥
येन प्रसुप्तः पुरुषः स्वापं वेदात्मनस्तदा ।
सुखं च निर्गुणं ब्रह्म तमात्मानमवेहि माम् ॥ ५५ ॥
उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः ।
अन्वेति व्यतिरिच्येत तज्ज्ञानं ब्रह्म तत्परम् ॥ ५६ ॥

भाषा टीका ।

संसार मे भोक्तृत्व रूप से आत्मा व्याप्त है भोग्यत्वरूप से आत्मा मे जगत् व्याप्त है आत्मा और जगत् यह दोनो मुझ से व्याप्त हैं और मुझ में स्थित है ॥ ५२ ॥

———

श्रीधरस्वामिकृत भावार्थदीपिका ।

ननु, जाग्रदाद्यवस्थाभेदेन भोक्तृभोग्यात्मकं विश्वं स्फुटं प्रतीयमानं कथं कल्पितं स्यादित्याशङ्क्य स्वप्नगतजाग्रदादिदृष्टांतेन संभावयन्नाह—यथेति द्वाभ्यां । यथा स्वप्ने सुप्तो विश्वं गिरिवनादिरूपं देशान्तरस्थमात्मन्येव पश्यति स्वप्नमध्ये सुषुप्तिं स्वप्नं च पश्यतीत्यर्थः तथा स्वप्न एवोत्थितः सन्नात्मानमेकदेशस्थं शयनदेशे स्थितं मन्यते जाग्रदवस्थामनुभवति ॥ ५३ ॥

एवं प्रसिद्धान्यपि जागरादीनि जीवस्थानानि जीवोपाधेर्बुद्धेरवस्थाभूतान्यात्मनो मायामात्राणीत्येवं विज्ञाय तेषां द्रष्टारमत एव परं तदवस्थारहितमात्मानं स्मरेत् ॥ ५४ ॥

ननु, तेषां द्रष्टारमिति कथमुच्यते? स्वापे दृश्याभावेन द्रष्टृत्वाभावात्तत्राह—येनेति । प्रसुप्तः पुरुषो जीवो येन रूपेण तदा स्वापकाले आत्मनः स्वापं निर्गुणमतीन्द्रियं सुखं च वेद तमात्मानं ब्रह्म मामवेहि तदा स्वापसुखयोरसंवेदने सुखमहमस्वाप्समिति स्मृतेरसम्भवात् ॥ ५५ ॥

ननु, स्वापसाक्षिणा दृष्टं कथं जाग्रदवस्थः स्मरेत्? नह्यन्येन दृष्टमन्यः स्मरति तत्राह उभयं प्रस्वापं प्रतिबोधं च स्मरतोऽनुसन्दधतः तयोः प्रस्वापप्रतिबोधयोः प्रकाशकत्वेन यदन्वेति ताभ्यां व्यतिरिच्येत यत् एकैकापायेऽप्यनपायात् तज्ज्ञानं परं ब्रह्म तदेव न तु भिन्नमित्यर्थः अतो बाल्ये दृष्टस्य यौवने स्मृतिवदवस्थान्तरत्वेऽपि स्वापानन्दयोः स्मरणं घटत इति भावः तदेवं भूतं ब्रह्मात्मानमवेहीत्यनुषङ्गः ॥ ५६ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, कथमेतद्विमर्शनीयं सर्वाण्यचेतनानि प्रत्यगात्मभिर्व्याप्तानि उभयं तु त्वया व्याप्तमित्यपेक्षायां बुद्धिनैपुण्ययेनेति सदृष्टान्तमाह—यथेत्यादिचतुर्भिः । तावज्जीवस्वरूपविमर्शनाय दृष्टान्तं शिक्षयति यथेति, यथा सुषुप्तः स्वप्नद्रष्टा पुरुषः सुषुप्त इति न सुषुप्त्यवस्थो जीव उच्यते स्वप्न उत्थितः इत्यनन्तरोक्तत्वात् सुषुप्तौ विश्वदर्शनानुपपत्तेश्च स्वप्ने स्वप्नावस्थायामेकस्मिन्नेव स्वप्नदृष्टर्यात्मनि विश्वं पश्यति गजस्कन्धारोहणदेशान्तरगमनराज्याभिषेकशिरश्छेदाद्यर्हं शरीरजातं पश्यति प्रकृत्युपाधिकं पश्यतीत्यर्थः दृष्टान्ते मायामात्राणीति वक्ष्यमाणत्वात् उत्थितो जाग्रदवस्थां प्राप्तस्त्वात्मानमेकदेशस्थं कचिदपवरकादिशयानशरीरमात्रवर्तिनं मन्यते स्वप्नावस्था न स्वप्नद्रष्टृस्वरूपप्रयुक्ता अपि तु स्वप्नजाग्रदवस्थाद्वयान्वितप्रकृत्युपाधिकस्वप्नद्रष्टृकजीवकर्मानुगुणमीश्वरसृष्टगजादिपदार्थानुप्रवेशपूर्वकतत्तद्दर्शनरूपेति दृष्टान्ते विवक्षितोऽर्थः ॥ ५३ ॥

इममर्थं दार्ष्टान्तिके दर्शयति—एवमिति । एवं स्वप्नावस्थावज्जागरणादीनि च जीवस्थानानि एकस्य जीवस्य स्थानान्यवस्थानानि अवस्था इत्यर्थः स्वप्नावस्थावज्जागराद्यन्ययोऽपि नात्मस्वरूपप्रयुक्ताः अपि तु प्रकृत्युपाधिकाः स्वरूपप्रयुक्तत्वे तस्य सर्वावस्थानुगतत्वेन तत्प्रयुक्ताः पूर्वपूर्वावस्था उत्तरोत्तरावस्थासूपलभ्येरन् न च प्रकृत्यवस्थतद्भेदं उपपादयितुं शक्यः कर्मानुस्मृतिशब्दविध्यनुपपत्तेः । कर्म तावत्सुषुप्तेन पूर्वकृतं पुण्यपापरूपं तत्त्वज्ञानात्प्राक्नैवं भोक्तव्यं अनुस्मृतिरपि य एवाहं सुप्तः स एव प्रतिबुद्धोऽस्मीति शब्दः श्रुतिरपि सुप्तं प्रबुद्धं स एवेति दर्शयति "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्ति"इति. विधयश्च मोक्षार्थाः सुप्तस्य पुनरनुत्थितौ अनर्थकाः स्युःअस्त्वेवं स्वप्नावस्थावज्जागरादयो न जीवस्वरूपप्रयुक्ताः अपि तु प्रकृत्युपाधिका इति. तथापि जीवस्वरूपविमर्शने किमायातं? तत्राह—आत्मन इति । जागरादीन्यवस्थानान्यात्मनो मायामात्राणि परमात्मसम्बन्धिप्रकृत्युपाधिकानि न स्वरूपप्रयुक्तानीति ज्ञात्वा आत्मनो मायामात्राणीत्यनेन जीवस्य स्वप्नावस्था पर-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मात्मायच्चेति दर्शितं तद्द्रष्टारं तत्तदवस्थासाक्षिणं परं प्रकृतिविलक्षणं जीवात्मानं स्मरेत् अचेतनस्य तत्तदवस्थाद्रष्टृत्वानुपपत्तेः कर्मानुस्मृत्याद्यनुपपत्तेश्च एकैकं शरीरमेकैकेन जीवेन व्याप्यं तत्स्वरूपञ्च तत्तदवस्थाद्रष्टृत्वपूर्वपूर्वावस्थानुस्मर्तृत्वाहं प्रत्ययगोचरत्वादिभिर्द्धर्मैर्निपुणतरविवेकेनावगन्तव्यमिति भावः ॥ ५४ ॥

एवं परमात्मस्वरूपविमर्शनप्रकारमाह—येनेति । येन हेतुभूतेन परमात्मना प्रसुप्तः सुषुप्त्यवस्थां प्राप्तः पुरुषो जीवः जीवस्य प्रसुप्तौ परमात्मनो हेतुत्वाद्येनेति हेत्वर्थकतृतीयान्तेन निर्देशः तथा हि 'स्वप्नान्तं मे सोम्य विजानीहि' इत्युपक्रम्य 'यत्रैतत्पुरुषः स्वपिति नाम सतासोम्य तदा सम्पन्नो भवति स्वमपीतोभवति तस्मादेनं स्वपीति इत्याचक्षते स्वमपीतो भवति' इति छान्दोग्ये श्रुतं स्वप्नान्तं सुषुप्तिः सता ब्रह्मणा सम्पन्नो भवति जीवः सता साकं सम्पत्तिर्नामशरीरेन्द्रियाधिष्ठातृत्वादिव्यापारान्तरराहित्येन ब्रह्मणि स्थितिमात्रं सैव सुषुप्तिः स्वं स्वशरीरकं परमात्मानं प्रत्यपीतो भवति लीनोभवति उक्तविधा सम्पत्तिरेव च लयः कारण एव हि कार्यस्य लयः एवं सुषुप्त्याधारत्वात्तत्कारणत्वाच्च येनेति तद्धेतुत्वेन निर्दिष्टः एवं येन सुषुप्तः पुरुष आत्मनः स्वस्य स्वापं वेदानुभवतीत्यर्थः तथाच सुखं वेद सुखमहमस्वाप्समिति परामर्शानुगुणं सुखञ्च यत्सम्पत्तिकृतं वेद तं निर्गुणं हेयगुणरहितं ब्रह्मशब्दवाच्यं परमात्मानं मामवेहि जानीहीत्यर्थः सुषुप्त्याधारत्वतत्कारणत्वसौषुप्तिकसुखहेतुत्वादिभिर्द्धर्मैः परमात्मस्वरूपं विमर्शनीयमिति भावः निर्गुणमिति सुखविशेषणं वा निर्गुणं प्रबोधसमयेऽनुसन्धीयमानस्यात्मनो या वर्णाश्रमादिविशिष्टता तादृशगुणरहितम्प्रबोधाद्दहमित्येकाकारेण प्रतीयमानं सुखरूपमात्मानं तमोगुणाभिभवात्मागर्थानुभवाभावाच्चाविविक्तस्फुटप्रभासं वेदेत्यर्थः सुप्तोत्थितस्य परामर्शानुगुणमेव हि सौषुप्तिकं सुखं वर्णनीयं तत्परामर्शश्चैवंविधः सुखमहमस्वाप्सं नाहं किञ्चिदवेदिषमिति तत्राहमस्वाप्समित्यनेनाहमर्थस्यात्मनोऽनुवृत्तिर्दर्शिता. सुखमित्यनेन तस्य सुखरूपता. नाहं किंचिदवेदिषमित्यनेन तस्य बाह्यग्राह्यग्राहकाकारवैधुर्यं च दर्शितम् एवंविधस्तस्मुप्तमिति विशदस्य परामर्शाभावाच्चास्फुटत्वं च ॥ ५५ ॥

एवं सुषुप्तौ परमात्मस्वरूपविमर्शनप्रकारकथनमुखेन जीवस्वरूपमुभयमित्यादिना विमृशन्ननूद्य ब्रह्म तत्परमित्यनेन ब्रह्मात्मस्वरूपं विवृणोति—उभयमिति । उभयं प्रस्वापं प्रतिबोधं चेत्युभयं स्मरतः पुंसो देहिनो यज्ज्ञानं प्रस्वापप्रतिबोधयोरन्वेति व्यतिरिच्येत तत्तदवस्थाश्रयेणानुवर्तते तदुपाधिविगमे तत्तदवस्थाभिर्व्यतिरिक्तश्चस्यात्तत्तदवस्था[illegible]यं स्यात् यद्वा उत्तरोत्तरावस्थासु पूर्वपूर्वावस्थाव्यतिरिक्तं स्यात्तस्मात्परिशुद्धज्ञानस्वरूपाज्जीवात्परं विलक्षणं तदात्मभूतं ब्रह्मेत्यर्थः यद्वा उभयं इत्यादिदृष्टान्तार्थं यथा यज्जीवस्वरूपात्मकं ज्ञानं सर्वावस्थानुवर्ति तद्द्रष्टृ उत्तरोत्तरावस्थासु पूर्वपूर्वावस्थाव्यतिरिक्तञ्च तथा तस्मात्परं विलक्षणं सर्वावस्थासु जीवस्वरूपनियन्तृतयानुवृत्तं द्रष्टृ तत्तदवस्थासम्बन्धिसुखदुःखाद्यनन्वयितया व्यतिरिक्तञ्च ब्रह्मेत्यर्थः यथा सर्वावस्थानुवर्त्तित्वतद्द्रष्टृत्वज्ञानानन्दादिस्वरूपस्वस्वभावतस्तत्तदवस्थानन्वयित्वाहं प्रत्ययगोचरत्वादिभिर्द्धर्मैः जीवस्वरूपं विशोध्यं तथा ब्रह्मशरीरत्वेनापि तद्विशोध्यमित्यभिप्रायः एवं ब्रह्मशरीरत्वेन तदायत्तसत्तास्थितिप्रवृत्तिकत्वरूपपारतन्त्र्यमप्यनुसन्धेयमित्युक्तम् ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, "व्याप्ताह्यात्मानश्चेतना निर्गुणाश्च" इति श्रुतेः लोके विततमात्मानमित्यस्य प्रतीतार्थ एव किं न स्यादित्याशङ्क्य दृष्टांतानुगुण्यात्कथ्यत इत्यभिप्रेत्याह—यथेति । यथा सुषुप्तः सन् स्वप्नमनुभवन् पुरुषः विश्वं वासनारूपेणात्मनि स्फुरितं च शब्दादिकं पश्यति स्वप्ने आत्मानमेकदेशस्थं मन्यते न तु व्याप्तं स्वप्नादुत्थितः प्रबुद्धोपि खट्वादिशयने स्वं मन्यते श्रुतिगतिस्तु परमात्मविषयत्वेन जीवचिद्गुणविषयत्वेन वा कल्प्यते ॥ ५३ ॥

यथा स्वप्नावस्थायां भगवत्कर्तृकत्वप्रमाणिकं "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इतिसूत्रात्तथा जाग्रत्प्रभृत्यवस्थाश्च अतः प्रबोधोऽस्मादित्यभिप्रेत्याह—एवमिति, यथा स्वप्नावस्था प्रकृतिशब्दवाच्येश्वरेच्छा निर्मिता तथा जीवस्य सुखोपभोगस्थानानि जागरणादीनि मायामात्राणि भगवदिच्छालक्षणप्रकृतिनिर्मितानि विज्ञाय तासामवस्थानां मध्ये निपण्णस्य जीवस्य सुखोपभोगस्य द्रष्टारं साक्षिणं परं ततो भिन्नं स्मरेदित्यन्वयः "अनश्नन्नन्यो अभिचाकशीति" इति श्रुतेः ॥ ५४ ॥

तद्द्रष्टारमित्यत्र जीवात्मनः परमात्मा सम्यग्विविच्य न प्रतीत इति तद्विवक्षार्थमाह—येनेति । येन प्रसुप्तः प्रस्वापं प्रापितः सन् पुरुषो जीवात्मा तदा सुप्त्यवस्थायामात्मनः स्वापम् इयन्तं कालं किञ्चन नावेदिषमिति स्वापशब्दोक्तमेव ज्ञानं सुखमहस्वाप्समित्यनुभूतं सुखं च सुखिनं स्वात्मानं च वेद नान्यत्किञ्चिद्वेद तमात्मा निर्गुणं ब्रह्म ज्ञानादिगुणपूर्णं मामवेहीत्यन्वयः ॥ ५५ ॥

इतोपि जाग्रदाद्यवस्थानुभविनो जीवाद्भिन्नं ब्रह्मेत्याह—उभयमिति । जाग्रत् सुषुप्तिश्चेत्युभयं स्मरतोनुभवतः पुंसः जीवस्य प्रस्वापप्रतिबोधयोरन्तद्वस्तुपरिज्ञानलक्षणे जाग्रति यदन्वेति अनुवर्तते अयमपि प्रतिबुद्धः सुप्तावस्वपनात्तत्तद्वस्तुपरिज्ञानलक्षणसुप्तौ यद्व्यतिरिक्तं स्यात् सर्वज्ञानसम्भवात् "प्रस्वापः स्वपनं स्वप्नम्" इत्याभिधानात्. अथाज्ञानलक्षणप्रस्वापपदोक्तेस्वप्नेपि व्यतिरिक्तं वर्तेत तत्परं" ब्रह्मविदाप्नोति परं" इति श्रुतेः 'तत्तस्यज्ज्ञानं' "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः अनेन सुप्त्यवस्थानुभवी जीवोऽननुभूय तथा न तिष्ठन् परमात्मा ततो भिन्न इति ज्ञातव्यं यद्वा जीवस्याज्ञानसम्भवादस्य तदभावाज्जीवस्याल्पगुणत्वादस्यानन्तगुणत्वाज्जीवस्य परिच्छिन्नत्वादस्यापरिच्छिन्नत्वात् "तदेव ज्ञानं तदेव ब्रह्म तदेवपरं तदेवतन्तद्गुसत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्" इति श्रुतेः ॥ ५६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ननु, यावद्विश्वस्मादनासक्तो न स्यात्तावत् कथं तज्ज्ञानं स्यादित्येवमाशङ्क्य शुद्धजीवस्वरूपज्ञानपूर्वकं तज्ज्ञानमुपदिशति। यथेति युग्मकेन। अयमर्थः। यथा स्वप्न मध्य एव सुपुप्तः कश्चित् पुरुषः पुनः स्वप्नं पश्यन् भ्रमविशेषेण विश्वं गिरिवनादिकमात्मनि पश्यति स्वस्मिन्नेवारोपयति पुनस्तस्मिन्नेव स्वप्ने उत्थितो लब्धजागर इव सन् आत्मानमेकदेशस्थं तत्र शयनैकदेशं पश्यन् तद्गिरिवनादिकं भिन्नमेव पश्यति तानि जागरादीनि यथा आत्मनः परमात्मनो मम मायामात्राणि सन्ति जीवस्थानानि जीवोपाधेर्बुद्धेरेवावस्था भवन्ति। एवं मुख्यान्यपि जागरादीनि विहाय विज्ञातस्य पुरुषस्य शुद्धजीवस्यापि द्रष्टारं मामेव परं स्मरेदिति ॥ ५३ ॥ ५४ ॥

तमेव स्पष्टयति—येनेति। मायिकाहङ्कारालये जीवादिगतमहाचिच्छक्त्यंशेन तत्त्वविशेषेण हेतुना स्वापः तत्र निर्गुणसुखञ्च वेद तद्ब्रह्मावेहि आत्मानं परमात्मानं मां भगवद्रूपञ्चावेहि। यदन्ति तत्तत्त्वविद इत्यादेः ॥ ५५ ॥

अतएव जीवज्ञानस्यापि ब्रह्मणि तात्पर्यमित्याह—उभयमिति। तज्ज्ञानं शुद्धजीव स्वरूपं तच्च ब्रह्मणि तत्परमिति ॥ ५६ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

प्रस्तुत तान्यवास्तववस्तूनि स्वल्पवस्तूनीव त्यक्त्वा ममान्तर्याम्यादि रूपमेवोपासीतेत्याह—यथेति द्वाभ्यां। स्वप्ने स्वप्नमध्ये एव सुषुप्तः सुष्ठु सुप्तः पुरुषः स्वप्नं पश्यन् भ्रमविशेषेण विश्वं गिरिवनादिकमात्मनि पश्यति स्वस्मिन्नेवारोपयति पुनस्तस्मिन्नेव स्वप्ने उत्थितो लब्धजागरस्सन्नात्मानमेकदेशस्थं तत्र शयनप्रदेशस्थं मन्यते जाग्रदवस्थामनुभवन् तद्गिरिवनादिकं भिन्नमेव मन्यते इत्यर्थः तद्वदवस्तुभूतः स्वाप्निको जागरो यथा तथैव प्रसिद्धो वस्तुभूतोपि जागरो ज्ञेयो नश्वरत्वादित्याह—एवमिति। जीवस्थानानि जीवोपाधेर्बुद्धेरेवाऽवस्थाश्च आत्मनः परमेश्वरस्य मायाशक्तिकार्य्यत्वान्मायामात्राणि. ज्ञात्वा तेषां द्रष्टारं परं श्रेष्ठमन्तर्यामिणमिति जीवात्मा व्यावृत्तः अत्र स्वाप्निक्यो जागरस्वप्नसुषुप्त्यवस्था अविद्यया जीवेन स्वजात्वादविद्यामात्रोत्थावस्तुभूता एव प्रसिद्धा जागराद्यवस्थास्तु मायाशक्त्या भगवता स्रष्टा मायामात्रः स्वल्पवस्तुभूता एव तथापि स्वाप्निकं गिरिवनसर्पव्याघ्रहस्त्यश्वादिकल्पनाविद्यया जीवेन सज्यमस्त्वेवेति विवेचनीयम् ॥ ५३ ॥ ५४ ॥

ननु, तं द्रष्टारमन्तर्यामिणं कथमहं जानामीत्यत आह - येनेति। प्रसुप्तः पुरुषो जीवो यदा स्वापं वेद तदेव सुषुप्तावात्मनः स्वस्य निर्गुणं निर्विषयं सुखञ्च येनैव हेतुना वेद तं आत्मानं अन्तर्यामिणम् अवेहि यएव गुणैर्दृढबद्धमावृतज्ञानानन्दमपि जीवं कृपया सुषुप्तौ नित्यमेव गुणान् प्रतिबाध्य निर्गुणं तदीयं सुखं तमनुभावयति स एवान्तर्यामी स्पष्टमेवावगन्तव्यं न हि तं विना ह्यस्वतन्त्रो जीवः स्वयमेव स्वबन्धनं विमोच्य स्वीयसुखं द्रष्टुं शक्नुयादिति भावः। तमन्तर्यामिणमेव निर्विशेषत्वेन प्रतीतं ब्रह्म अवेहि ब्रह्मैव सविशेषं मां भगवन्तमेवहि। एक एवाहं ब्रह्म परमात्मा भगवानिति त्रिरूपोभवामि न तु मत्स्वरूपस्य द्वित्वं त्रित्वं वा यदुक्तं देवैः स्वरूपद्वयाभावादिति ॥ ५५ ॥

ननु, स्वापसाक्षिणा दृष्टं जाग्रदवस्थः कथं सुखमहमस्वाप्समिति स्मरेत्? नह्यन्येन दृष्टमन्यः स्मरति तत्राह—उभयं प्रस्वापं प्रतिबोधं च स्मरतः अनुसन्दधतः पुंसस्तयोः प्रस्वापप्रतिबोधयोर्यदन्वेति ताभ्यां व्यतिरिच्यते। एकैकापायेप्यनपायात् तदेव ज्ञानं जीव इत्यर्थः अतो बाल्ये दृष्टस्य यौवने स्मृतिवदवस्थान्तरस्थेपि स्वापानन्दयोः स्मरणं घटत इति भावः तत् परं ततो जीवात् परं ब्रह्म न तु स एव ब्रह्मेत्यर्थः जीवस्य तटस्थशक्तित्वेपि तद्रूपत्वेपि तस्य स्वरूपशक्तित्वाभावात् अतो भिन्नमेव ब्रह्मेत्यर्थः ॥ ५६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यस्य संकल्पमात्रेण स्वप्नसृष्टिः जाग्रत्सृष्टिश्चास्ति तं मां ध्यायेदित्याह - यथेतिद्वाभ्याम्। यथा सुषुप्तेऽत्र सुप्तः पुरुषः विश्वं जीवेन स्रष्टुमशक्यं रथाश्वादिकं मम संकल्पनिष्पन्नमेव आत्मनि मनसि पश्यति ततउत्थितः आत्मानं स्वप्नपदार्थद्रष्टारं केवलं न तु स्वाप्नं रथादिकं दृश्यं मन्यते जानाति एकदेशस्थं स्वप्नदृष्टरथादेर्यत्र गन्धोपि नास्ति तत्र जाग्रत्सृष्टेश्चैकदेशस्थं न तु निखिललोकस्थमित्यर्थः तन्निर्माणस्य तु का कथा परनिर्मितं तथा भूतं पदार्थं द्रष्टुमपि न क्षमो भवतीत्यर्थः। अनेन स्वप्नसृष्टिर्जीवकृता इति मायावादिनां पक्षो दूरतस्त्याज्यः ॥ ५३ ॥

एवं जागरणादीनि जीवस्थानानि जीवस्य भोक्तुः जागरणाद्या अवस्थास्तत्र भोग्याः पदार्थाश्च यस्यात्मनः मम मायामात्राणि वयुनात्मकसंकल्पकृतानि तत्तयोः परं कारणं द्रष्टारं साक्षिणं च तं मां भवद्विधः स्मरेत् ध्यायेत् कारणं तु ध्येयमिति श्रुतेः ॥ ५४ ॥

एवं प्रतिबोधकाले स्मरणीयं जगत्कारणमात्मानं चित्रकेतुं प्रत्युपदिश्य सर्वं यद्रूपं सुषुप्तौ प्राप्यते तद्रूपमुपदिशति "सतासौम्य तदा संपन्नो भवति" इत्येवं सुषुप्तौ प्रसिद्धेन यथा सुषुप्तः पुरुषः आत्मनः स्वापं सुखं सुषुप्तिगतमानंदं वेद तं निर्गुणं ब्रह्म बृहत्स्वरूपगुणमात्मानं"एष ते आत्मान्तर्यामी"इति श्रुतिप्रसिद्धमन्तर्यामिणं मामवेहि ॥ ५५ ॥

ध्यानफलमाह प्रस्वापप्रतिबोधयोः शयनकाले प्रबोधकाले च तत् परं ब्रह्म स्मरतो ध्यायतः पुंसः उभयं जन्ममरणयुग्मं व्यतिरिच्येत तदेव ज्ञानं परं ब्रह्म अन्वेति च पुरुषमिति शेषः परमपुरुषभावापत्तिलक्षणमोक्षं प्राप्नोतीत्यर्थः ॥ ५६ ॥

———

भाषा टीका।

स्वप्ने में सोया हुआ पुरुष अपने मे संसार को देखता है और जागकर अपने आत्मा को एक देश में स्थित देखता है ॥५३॥

यद्येतद्विस्मृतं पुंसो मद्भावं भिन्नमात्मनः ।
ततः संसार एतस्य देहाद्देहो मृतेर्मृतिः ॥ ५७ ॥
लब्ध्वेह मानुषीं योनिं ज्ञानविज्ञानसम्भवाम् ।
आत्मानं यो न बुद्ध्येत न क्वचित्क्षममाप्नुयात् ॥ ५८ ॥
स्मृत्वेहायां परिक्लेशं ततः फलविपर्ययम् ।
अभयं चाप्यनीहायां सङ्कल्पाद्विरमेत्कविः ॥ ५९ ॥
सुखाय दुःखमोक्षाय कुर्वाते दम्पती क्रियाः ।
ततोऽनिवृत्तिरप्राप्तिर्दुःखस्य च सुखस्य च ॥ ६० ॥

भाषा टीका ।

ऐसे जीवात्माके जाग्रत आदि अवस्थाओं को माया रूप जानकर इन अवस्थायों के द्रष्टा परमात्मा का स्मरण करो ॥ ५४ ॥

सोया हुआ पुरुष जिससे अपनी सुषुप्ति अवस्था के अतीन्द्रिय सुख को जानता है वही ब्रह्म रूप परमात्मा मुझ को जान ॥ ५५ ॥

सुषुप्ति और जाग्रत् को स्मरण करते हुए पुरुष को जो ज्ञान प्राप्त होता है उन दोनो अवस्थायों से भिन्न भी होता है वह ब्रह्म रूप मुझे जानो ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विपक्षे दोषमाह यद्यपि एतन्मद्भावं मत्स्वरूपं ब्रह्म विस्मृते तदात्मनः सकाशाद्भिन्नं भवति तत एतस्य पुंसः संसारो भवति संसारस्वरूपमाह देहाद्देहो जन्मानन्तरं पुनर्जन्म मृतेर्मृतेरनंतरं मृतिश्चेति ॥ ५७ ॥

योन्यन्तरेऽपि भोगादिसम्पादनं शक्यं ज्ञानार्थं त्वत्रैव यतितव्यमित्याह—लब्ध्वेति । ज्ञानं शास्त्रोक्तम् विज्ञानमपरोक्षं तयोः सम्भवो यस्यां ताम् ॥ ५८ ॥

वैराग्यार्थमाह—ईहायां प्रवृत्तिमार्गे तत ईहतः अनीहायां निवृत्तिमार्गे त्वभयं मोक्षो भवतीति च स्मृत्वा फलसंकल्पाद्विरमेत् पाठान्तरे नोभयं परिक्लेशः फलविपर्ययश्च नास्तीत्येवं स्मृत्वा ॥ ५९ ॥

एतद्विवृणोति सुखायेतित्रिभिः । दुःखस्यानिवृत्तिः सुखस्याप्राप्तिः ॥ ६० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमननुसन्धानेऽनर्थमाह—यदीति । यद्येतत्पुंसो देहिन आत्मनः स्वस्य मद्भावं भावः प्रकारः जीवत्वमपि मत्प्रकारत्वं विस्मृतं सत् भिन्नं भावप्रधानो भिन्नशब्दः भिन्नत्वं पृथक्सिद्धत्वरूपस्वतन्त्रं स्यादित्यर्थः भिन्नत्वेनानुसंहितं स्यादिति भावः ततो हेतोरस्य जीवस्य संसारो भवति. संसारस्वरूपमाह—देहाद्देहः जन्मान्तरं मृतेरनन्तरं पुनर्मृतिश्चेति ॥ ५७ ॥

एवं ब्रह्मात्मकत्वाननुसन्धानेऽनर्थस्संसृतिरूप उक्तः अयञ्च मनुष्यजन्मनैव परिहार्यो न तिर्यगादि जन्मनेत्याह—लब्ध्वेति । एष जीवः ज्ञानं शास्त्रजन्यं विज्ञानं विमोकादिसाधनसप्तकजमुपासनात्मकं तयोः सम्भवो यस्यास्तां मानुषीं योनिं लब्ध्वा मानुष्यं जन्म प्राप्यापीत्यर्थः आत्मानमुक्तविधमात्मस्वरूपं यो न बुध्येत स पुमान्कश्चिदपि क्षेमं नाप्नुयात् तिर्यगादियोनिषु ज्ञानविज्ञानयोग्यतैव नास्ति "तद्योग्यां दुर्लभां मानुषीं योनिं प्राप्यापि ब्रह्मात्मकमात्मानं स्वशरीरकं ब्रह्म वायो नोपासीत" स पुनः पुनः संसरेदेवेति भावः ॥ ५८ ॥

मानुषीं योनिं लब्धवतोऽपि विषयासक्तस्य कथं ज्ञानादिकं प्रतिष्ठितं भवेत् ? तत्राह—स्मृत्वेति । ईहायां विषयसुखार्थायां चेष्टायां प्रवृत्तिधर्मे परिक्लेशमत्यन्तशरीरायासादिरूपं तत ईहातः फलविपर्ययं फलविपर्यासं सुखार्थचेष्टातो दुःखप्राप्तिश्च स्मृत्वा सद्यस्तमालोच्यानीहायां निवृत्तिधर्मेऽभयमदपत्वास्थिरत्वदुःखोदर्कत्वादिनिमित्तभयराहित्यममृतत्वं च पश्यन् मुनिः स्वात्मपरमात्मयाथात्म्यमननशीलः तत ईहातः शनैर्निरमेत् उक्तविधालोचनेन शनैर्वैराग्यमुत्पादयेदित्यर्थः ततो ज्ञानविज्ञाने प्रतिष्ठिते भवत इति भावः ॥ ५९ ॥

ईहायां परिक्लेशफलविपर्ययावेव स्पष्टयति—सुखायेति । सुखाय तत्प्राप्तये दुःखनिवृत्तये च क्रियाः तदुपयुक्तान्व्यापारान् दम्पती यद्यपि कुर्वाते तथापि ततस्तत्क्रियाभ्यः दुःखस्यानिवृत्तिः सुखस्याप्राप्तिश्च दुःखस्य निवृत्तिः सुखस्य प्राप्तिश्च न भवति प्रत्युत विपरीतमेव भवतीति भावः ॥ ६० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विपक्षे बाधकमुपपादयति–यदीति। यदि पुंस आत्मनो जीवात् भिन्न एव मद्भाव उक्तो मम स्थितिप्रकारो विस्मृतस्तर्हि ततस्तयोः सयुजोः सख्योः जीवात्मपरमात्मनोः एकस्य सर्वभिन्नपरमात्मानं विस्मरतो जीवस्य संसारः स्यात् किं लक्षणक इति तत्राह—देहादिति। देहयोगवियोगलक्षणो देहाद्देहः स्मृतुक्तम्। "सर्वभिन्नं परात्मानं विस्मरन्संसरेदिह" इति सर्वभिन्न इति विशेषणं विस्मृतस्तर्हि तस्य जीवस्य मृतेर्मृतिः नित्यदुःखात्मकं तम एव प्राप्यते एतदप्युक्तं "अभिन्नसंस्मरण्याति तमो नास्त्यत्र संशयः" इति ॥ ५७ ॥

मद्भावः मदैक्यलक्षणः स्वस्मादभिन्न इत्यर्थाङ्गीकार उत्तरश्लोकेन विरुध्यत इत्यभिप्रेत्याह—लब्ध्वेति । ज्ञानविज्ञानयोः संभवो यस्याः सा तथा ताम् इह जंबूद्वीपे तत्रापि भारतखण्डे त्रिवर्णलक्षणाम् मानुषीम् आत्मानं जीवात्मानं परमात्मानं च निर्विशेषवादिना ज्ञाने सामान्यविशेषानङ्गीकारात् व्यावहारिकत्वाप्रामाणिकत्वाच्चेति ज्ञानं शास्त्रार्थविषयं विज्ञानम् अनुभवजमित्ययं भेदोपि गतार्थं इति ॥ ५८ ॥

ननु, ज्ञानेन मोक्षो माभूद्यज्ञादिकर्मणा स्यादिति तत्राह—स्मृत्वेति । ईहायां यज्ञादिकर्मकरणे परितः क्लेशं स्मृत्वा ततः कर्मणः फलविपर्ययं निरतिशयसुखाप्राप्तिं दुःखापरिहारं च पश्य-अनीहायां सर्वकर्माणि हरौ संन्यस्य ज्ञानमार्गप्रवृत्तौ पश्य-निरतिशयसुखप्राप्तिं दुःखपरिहारं तयोरमिश्रत्वं वा ज्ञात्वा तन्निर्विघ्नं तत्ताद्दर्शं कर्म विरमेच्च कुर्यादित्यर्थः ॥ ५९ ॥

अग्निहोत्रादिक्रियाकरणयोग्यौ दंपती ततः क्रियातः दुःखस्य अनिवृत्तिः सुखस्य चाप्राप्तिः ॥ ६० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदज्ञाने दोषमाह–यद्यस्माद्ब्रह्मविस्मृतं। अनाद्यज्ञानेनानुसंहितं। ततस्तस्मादेव एतस्य जीवस्य संसारः तत्राभिप्रायविशेषेण जीवाद्भिन्नत्वेन स्वस्माद्भिन्नत्वेन दर्शयति, आत्मनोभिन्नं, मम भावः सत्ता यत्र तदिति"भयं द्वितीयाऽभिनिवेशतः स्यात्"इत्यादेर्युक्तमेव तदज्ञाने संसार इति॥ ५७—६०॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अतो ब्रह्मजीवयोः स्वरूपैक्यभावनमेवापराधोऽनर्थहेतुरित्याह—यदेतदिति । आत्मनो जीवात् सकाशात् मद्भावं मत्स्वरूपं भिन्नमेव क्लीवत्वमार्षं यद्यदि विस्मृतं स्यादभिन्नमेव स्यात् ततो हेतोरेतस्याभिन्नदर्शिनः पुंसः संसारः स्यात् संसारमेवाह—देहादिति। अत एव "तत्त्वमसि" इत्यादौ जीवस्य तदीयतटस्थशक्तित्वेन ताद्रूप्यादेव सूर्यतत्किरणयोरिवैक्यं भावनीयमिति भावः तदेवमवास्तववस्तुनो विश्वस्य तच्छक्तिकार्यत्वेनाभिन्नत्वात्ताद्रूप्यं । ताद्रूप्येति तात्स्वरूप्याभावाद्भिन्नमेव नश्वरत्वप्रयोजकं शुद्धजीवस्य त्वनश्वरत्वाद्वास्तववस्त्वन्तःपातित्वेपि तटस्थशक्तित्वात्ताद्रूप्यमेव. न तु तात्स्वरूप्यं ब्रह्मपरमात्मभगवतां तु वास्तववस्तुत्वं स्वरूपैक्यापैक्यञ्च । भगवन्नित्यप्रेयसी पार्षदभाजां चिच्छक्तिविलासत्वात् कृपाश्रितनित्यसिद्धत्वादपि वास्तववस्तुत्वं तात्स्वरूप्यञ्च । कृपाश्रितनित्यमुक्तभक्तत्वेन, कृपाश्रितलब्धभक्तिकैवल्यत्वेन, सिद्धानां दास्यादिवासनावतां जीवानां तु नित्यदासान्तःपातित्वेन स्वरूपशक्त्याविष्टत्वादेव तात्स्वरूप्यं, लब्धभक्तिप्रधान्येन सिद्धानां जीवानां शान्तभक्तत्वात् दासादिगणान्तःपातित्वाभावेन स्वरूपशक्त्यानाविष्टत्वात्ताद्रूप्यं वास्तववस्तुत्वञ्चेति भगवतोऽनकशक्तिमत्त्वेनाद्वैतं फलितमिति प्रसङ्गात् वैष्णवसिद्धान्तो दर्शितः ॥ ५७ ॥

उक्तलक्षणज्ञानार्थमवश्यमेव यतितव्यमित्याह — लब्ध्वेति । ज्ञानं शास्त्रोत्थं विज्ञानमपरोक्षं तयोः सम्भवो यस्यां तां । आत्मानं जीवं परमेश्वरञ्च ॥ ५८ ॥

एतज्ज्ञानेच्छुर्वातदृष्टादृष्टकर्मफलकः कर्मनिष्ठां त्यजेदित्याह—ईहायां सकामत्वे तत ईहात अनीहायां निष्कामत्वे अभयं सर्वत एव भावाभावः । नोभयमिति पाठे क्लेशविपर्ययौ न स्यातामिति स्मृत्वा ॥ ५९ ॥

एतद्विवृणोति–सुखायेति त्रिभिः। दुःखस्यानिवृत्तिः सुखस्याप्राप्तिः ॥ ६० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भजनाभावे मुक्त्यभाव इत्याह—यदिति यदेतत्। स्मरणादिमद्भावं मद्भजनं पुंसो भिन्नं सत्संगाद्यभावेन दूरीभूतं सत् विस्मृतं भवति ततो हेतोः एतस्यात्मनो जीवस्य देहाद्देहो मृतेर्मृतिः एवंभूतःजन्ममरणप्रवाहलक्षणः संसार एव स्यात् ॥५७॥

ज्ञानविज्ञानयोः सम्भवो यस्यां ताम् आत्मानं यद्विज्ञानेन सर्वं विज्ञातं स्यात्तं भगवन्तम् ॥ ५८ ॥

ईहायां प्रवृत्तौ परिक्लेशम् । तयेहितार्थलाभः अनीहितार्थलाभश्चेति. फलविपर्ययश्च स्मृत्वा अनीहायां निवृत्तौ च अभयं स्मृत्वा ततो हेतोः संकल्पात्प्रवृत्तिमार्गसंकल्पात् ॥ ५९ ॥

फलविपर्ययं स्पष्टयति——सुखायेति ॥ ६० ॥

---

भाषाटीका।

जब यह ब्रह्म विस्मरण हुआ जीवात्मा से भिन्न हो जाता है तब इस अज्ञानि जीव को बारम्बार जन्म मरण होते हैं ॥ ५७ ॥

इस संसार में ज्ञान विज्ञान की देने वाली मनुष्य योनि को पाकर जिसने आत्माके स्वरूप को नहीं जाना उसको फिर और किसी योनि में शान्ति नहीं प्राप्त होती है ॥ ५८ ॥

एवं विपर्ययं बुद्ध्वा नृणां विज्ञाभिमानिनाम् ।
आत्मनश्च गतिं सूक्ष्मां स्थानत्रयविलक्षणाम् ॥ ६१ ॥
दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तः स्वेन तेजसा ।
ज्ञानविज्ञानसन्तुष्टो मद्भक्तः पुरुषो भवेत् ॥ ६२ ॥
एतावानेव मनुजैर्योगनैपुणबुद्धिभिः ।
स्वार्थः सर्वात्मना ज्ञेयो यत्परात्मैकदर्शनम् ॥ ६३ ॥
त्वमेतच्छ्रद्धया राजन्नप्रमत्तो वचो मम ।
ज्ञानविज्ञानसम्पन्नो धारयन्नाशु सिध्यसि ॥ ६४ ॥

श्रीशुक उवाच ।

आश्वास्य भगवानित्थं चित्रकेतुं जगद्गुरुः ।
पश्यतस्तस्य विश्वात्मा ततश्चान्तर्दधे हरिः ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे पारमहंस्याम्
संहितायां वैयासिक्यां चित्रकेतूपाख्याने
षोडशोऽध्यायः ॥ १६ ॥

---

भाषा टीका ।

प्रवृत्ति मार्ग में बहुत क्लेश और विपरीत फल देखकर तथा निवृत्ति मार्ग में मोक्ष जानकर बुद्धिमान् सङ्कल्पों से विराम को प्राप्त होजाय ॥ ५९॥

स्त्री पुरुष, सुखप्राप्ति और दुःख दूर होने के लिये कर्म करते है, परन्तु उस कर्म से दुःखकी निवृत्ति और सुख की प्राप्ति नहीं होती ॥ ६० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विज्ञाः उद्यमे प्रवीणा वयमित्यभिमानवतां स्थानत्रयविलक्षणां तुरीयां बुद्ध्वा ॥ ६१ ॥

दृष्टश्रुताभिर्मात्राभिरैहिकामुष्मिकैर्विषयैः स्वेन तेजसा विवेकबलेन ॥ ६२ ॥

नचातः परः पुरुषार्थोऽस्तीत्याह—एतावानिति । योगे नैपुणं यस्यां सा बुद्धिर्येषां परस्यात्मन एकं दर्शनमिति यदेतावानेव ॥ ६३ ॥ ६४ ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनीहायामुभयं स्पष्टयति—एवमिति । विज्ञाभिमानिनां वयमीहायां कुशला इत्यभिमानवतां नृणां ईहायामेवमुक्तप्रकारेण विपर्ययं बुद्ध्वा आलोच्य स्थानत्रयविलक्षणां जाग्रत्स्वप्नसुषुप्त्यतीतां केवलविषयासक्तैर्दुर्ज्ञेयामात्मनः प्रत्यगात्मनो गतिं ब्रह्मात्मकत्वाद्याकारं बुद्ध्वा ॥ ६१ ॥

दृष्टश्रुताभिरैहिक्यामुष्मिकीभिः मात्राभिः विषयसुखलेशैः स्वेन तेजसा स्वाविवेकबलेन निर्मुक्तः मात्रासु जातविराग इत्यर्थः ज्ञानविज्ञानाभ्यां पूर्वोक्ताभ्यां सन्तुष्टः ज्ञानसहकृतभगवदनुभवरूपविज्ञानमात्रसन्तुष्टः मद्भक्तः मम निरतिशयप्रियः पुरुषो भवेत् एवञ्चोभयं तस्य ब्रह्मात्मकत्वमनुसन्दधतः करस्थमिति भावः ॥ ६२ ॥

तदेवाह—एतावानिति । योगे नैपुण्यं यस्याः सा बुद्धिर्येषां तैर्मनुजैः सर्वात्मना सर्वप्रकारेण ज्ञेयः स्वार्थोऽनिष्टपरिहारेष्टप्रापणसमर्थं पुरुषेण प्रार्थनीयं वस्तु एतावानेव, एव एवेत्यर्थः स्वार्थवतिः यद्वा एतावानेवैतत्परिमित एव. कोसौ ? तत्राह—यत्परात्मैक्यदर्शनमिति, परस्य परमात्मनः आत्मनः स्वस्य च ऐक्यदर्शनमपृथक्सिद्धसम्बन्धदर्शनमिति यदेतावानेवेत्यर्थः यद्वा परात्मनः परमात्मन ऐक्यदर्शनमेकत्वेन प्रकारित्वेनैकेनैवाकारेण च दर्शनं यद्वा परस्य परमात्मनः आत्मनः स्वस्य च ऐक्यदर्शनं परमात्मनः प्रकारित्वेनैकेनाकारेण स्वस्य च तत्प्रकार-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वरूपेणैकेनाकारेण दर्शनं परमात्मैकादर्शनमितियदेतावानित्यर्थः ॥ ६३ ॥

एवं परात्मैक्यद्रष्टा चेत्त्वमप्याशु मुक्तो भविष्यसीत्याह—त्वामिति । हे राजन् चित्रकेतो, त्वमप्रमत्तः समाहितचित्तः श्रद्धया ज्ञानविज्ञानसम्पन्नं सम्पत्तिः सम्पन्नं 'भावेक्तः' ज्ञानविज्ञानयोः सम्पत्तिर्यस्मात्सन्मम वचः धारयन् स्वानिष्ठं कुर्वन् ज्ञानविज्ञानसम्पादकं मदुक्तार्थमनुतिष्ठन्नित्यर्थः ब्रह्मात्मकत्वानुसन्धानेन ज्ञानविज्ञाने प्रतिष्ठितो भवन इति भावः ज्ञानविज्ञानसम्पन्न इति प्रथमान्तपाठे स्पष्टार्थः आशु सिध्यसि मुक्तो भविष्यसि ॥ ६४ ॥

एवमुपदिश्य भगवानन्तर्दधौ इत्याह—मुनिः, आश्वास्येति । विश्वात्मा जगद्गुरुर्भगवान्हरिः सङ्कर्षणश्चित्रकेतुमित्थमाश्वास्य नारदाङ्गिरउक्तिसस्वादितस्ववचसा विश्वास्य तस्य चित्रकेतोः पश्यतः सतस्तत्रैव पातालादधस्तात्कस्याश्चिद्दिशि अन्तर्हितवान् ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कर्मविषयविद्याभासे इयमविद्येत्यभिमानिनां आत्मनो जीवस्य परमात्मनश्च वैकुंठादिस्थानतया व्याप्तिभूताप्रतिमभूतिमत्तया विलक्षणां जाग्रदादिस्थानत्रयातीतां च ॥ ६१ ॥

मात्राभिः शब्दादिभिः स्वेन तेजसा विशुद्धबुद्धिसामर्थ्यातिशयेनैव ज्ञात्वा पुरुषो भवेन्मुक्त इति शेषः ॥ ६२ ॥

उक्तज्ञानमन्ययोगाद्यवच्छिनत्ति—एतावानेवेति । किं तदित्यत उक्तं यदिति । परात्मन एकत्वस्य साम्याधिक्यराहित्यस्य दर्शनम् ॥ ६३ ॥

तत्र योग्यश्चैतदेव नान्यदित्याह—त्वमेतदिति ॥ ६४ ॥

चिरस्थितत्वेन पुनरपि प्रश्नः स्यादित्येतस्य हरेरन्तर्धानमाह । आश्वास्येति ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षोडशोऽध्यायः ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वानुरूपमेवोपसंहरति—एवमिति युग्मकेन । "आत्मारामाश्च मुनयः" इत्यादेः ॥ ६१ ॥ ६२ ॥

तदेव प्रशंसति—एतावानिति । परमात्मनो भगवत एवैकं केवलं दर्शनं अनुभव इति यत् ॥ ६३ ॥

ससिद्धोऽसीति । यत् पूर्वमुक्तम् अधुना च सिध्यसीति तद्द्वयमपि वर्तमानसामीप्येनैव ज्ञेयं तत्राप्यप्रमत्तः सन् मम वचो धारयन्निति भाविविघ्नो हेतुरप्युद्दिष्टः ॥ ६४ ॥ ६५ ॥

इतिश्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
षोडशोऽध्यायः समाप्तः ॥ १६ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्थानत्रयविलक्षणां तुरीयां मात्राभिर्विपर्ययैः स्वतेजसा स्वीयसाधनप्रभावेन ॥ ६१ ॥ ६२ ॥

परस्य श्रेष्ठात्मनः परमात्मन एव एकं दर्शनं न तु द्विपक्षस्य ॥ ६३-६५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठेय षोडशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विद्याभिमानिना इंहितार्थनिष्पादनबुद्धिविगतानां कर्मिणां स्थानत्रयविलक्षणां स्वर्गनरकभूसंबन्धवर्जितां वैकुण्ठसंबन्धिनीमर्चिरादिरूपां च बुध्वा ॥ ६१ ॥

तेजसा हेयोपादेयविवेकेन मात्राभिर्विपर्ययैर्निर्मुक्तः ज्ञानं चिदचिद्ब्रह्मस्वरूपगुणादियाथात्म्यबोधः विज्ञानं सर्वं ब्रह्मात्मकमिति बोधः ताभ्यां संतृप्तः मद्भक्तो भवेत् ॥ ६२ ॥

यांगे ज्ञानभक्त्यादिसाधनयोगे नैपुण्यं यस्याः सा बुद्धिर्येषां तैः परात्मनोर्ब्रह्मजीवयोः अंशांशयोर्यदेकदर्शनं गुणगुणिनोर्जातिव्यक्त्योः प्रभाप्रभावतोः कार्यकारणयोश्च यथा अनेकयोरप्येकदर्शनं तद्वत् एतावानेव सर्वात्मना साकल्येन स्वार्थो ज्ञेयः "तत्त्वमसि" इति श्रुतिरप्येवमनुसन्धेया ॥ ६३ ॥ ६४ ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षोडशाऽध्यायार्थप्रकाशः ॥ १६ ॥

———

भाषा टीका ।

पण्डितंमन्य पुरुषो का इस प्रकार का विपर्यय जानकर, आत्माकी सूक्ष्म चतुर्थगति समुझकर पुरुष ज्ञान विज्ञान में सन्तुष्ट होकर हमारा भक्त हो जावे ॥ ६१ ॥ ६२ ॥

भाषाटीका ।

योग में निपुण बुद्धि वाले मनुष्योंको सर्व प्रकार इतना ही स्वार्थ मानना चाहिये कि जो परमात्मा का एक दर्शन हो जावै ॥ ६३ ॥

हे राजन् ! तुम श्रद्धा से अप्रमत्त होकर इस हमारे वाक्य को धारण करते हुए, विज्ञान सम्पन्न होकर शीघ्र ही सिद्ध-हो जावेंगे ॥ ६४ ॥

श्री शुक उवाच ॥

जगद्गुरु भगवान् श्री शेषजी इस प्रकार चित्रकेतु को आश्वासन करके चित्रकेतु के देखते २ विश्वात्मा हरि श्री-सङ्कर्षणजी अन्तर्ध्यान होगये ॥ ६५ ॥

इति श्रीमद्भागवतमहापुराण षष्ठस्कन्ध षोडशाध्यायकी भाषा टीका समाप्त ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे षोडशोऽध्यायः समाप्तः ॥ १६ ॥



## ॥ सप्तदशोऽध्यायः ॥

——○:❋:○——

श्रीशुक उवाच ।

यतश्चान्तर्हितोऽनन्तस्तस्यै कृत्वा दिशे नमः ।
विद्याधरश्चित्रकेतुश्चचार गगनेचरः ॥ १ ॥
स लक्षं वर्षलक्षाणामव्याहतबलेन्द्रियः ।
स्तूयमानो महायोगी मुनिभिः सिद्धचारणैः ॥ २ ॥
कुलाचलेन्द्रद्रोणीषु नानासङ्कल्पसिद्धिषु ।
रेमे विद्याधरस्त्रीभिर्गापयन्हरिमीश्वरम् ॥ ३ ॥
एकदा स विमानेन विष्णुदत्तेन भास्वता ।
गिरिशं ददृशे गच्छन्परीतं सिद्धचारणैः ॥ ४ ॥
आलिङ्ग्याङ्कीकृतां देवीं बाहुना मुनिसंसदि ।
उवाच देव्याः शृण्वत्या जहासोच्चैस्तदन्तिके ॥ ५ ॥

चित्रकेतुरुवाच ।

एष लोकगुरुः साक्षाद्धर्मं वक्ता शरीरिणाम् ।
आस्ते मुख्यः सभायां वै मिथुनीभूय भार्यया ॥ ६ ॥
जटाधरस्तीव्रतपा ब्रह्मवादी सभापतिः ।
अङ्कीकृत्य स्त्रियं चास्ते गतह्रीः प्राकृतो यथा ॥ ७ ॥
प्रायशः प्राकृताश्चापि स्त्रियं रहसि बिभ्रति ।
अयं महाव्रतधरो बिभर्ति सदसि स्त्रियम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः सप्तदशेऽमोघमहर्द्धिं प्राप्य खे चरन् ।
विहस्य गिरिशं शापादुमाया वृत्रतां गतः ॥ १ ॥

यतो यस्यां तस्यै दिशे नमः नमनं कृत्वा ॥ १ ॥

स चित्रकेतुर्विद्याधरस्त्रीभिर्हरिं गापयन् रेमे इति द्वयोरन्वयः अव्याहतं बलमिन्द्रियपाटवं च यस्य ॥ २ ॥

नानाविधाः सङ्कल्पेनैव सिद्धयो यासु तासु ॥ ३ ॥

अकस्मादद्भुतैश्वर्यगर्वात्प्राचीनकर्मतः ॥
आसुरीं योनिमापन्नो भवानीशापतः स तु ॥

तदाह—एकदेत्यादिना ॥ ४ ॥

अङ्कीकृतामुत्सङ्गेनैकीकृत्य देवीं बाहुनाऽऽलिङ्ग्य स्थितम् उवाच जहास च तस्यान्तिके स्थितः सन् ॥ ५ ॥

धर्मं वक्ता वदति शरीरिणां मध्ये मुख्यश्च भार्यया मिथुनीभूय चाऽऽस्ते ॥ ६ ॥ ७ ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत उपरितनं चित्रकेतोर्वृत्तान्तमाह—मुनिः, यत इति । यतः यस्यां दिशि सङ्कर्षणोऽन्तर्हितवान् तस्यै दिशे नमस्कृत्वा स विद्या-

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

धारः विद्याधरत्वं प्राप्तः विद्याधरैरिति पाठे तैः सह चित्रकेतुर्गगनचारीभूत्वा तत्रतत्र चचार ॥ १ ॥

तदेवाह-स इति । महायोगी भगवान्स चित्रकेतुरव्याहतं बलं येषां तानीन्द्रियाणि यस्य तादृशो लक्षवर्षाणां लक्षं बहुकालमित्यर्थः मुनिभिः सिद्धैश्चारणैश्च स्तूयमानः ॥ २ ॥

नानाविधाः स्वसङ्कल्पानुसारिण्यः सिद्धयः भोग्यभोगोपकरणादिसिद्धयो यासु कुलाचलेन्द्रस्य मेर्वादेर्द्रोणीषु विद्याधरस्त्रीभिरीश्वरं हरिं गापयन् गानं कारयन् रेमे ॥ ३ ॥

स चित्रकेतुरेकदा कदाचिद्विष्णुदत्तेन यथासङ्कल्पं भगवता दत्तेन भास्वता प्रकाशमानेन विमानेन तत्रतत्र गच्छन् सञ्चरमाणः सिद्धैर्योगिभिश्च परीतं परिवृतं गिरिशं रुद्रं ददर्श ॥ ४ ॥

कथंभूतं रुद्रम् अङ्के उत्सङ्गे कृतां निधापितां देवीमम्बिकां बाहुना आलिङ्ग्य मुनीनां मननशीलानां संसदि सभायां स्थितमिति शेषः ततो देव्याः शृण्वन्त्याः सत्याः उवाच जहास च हसितवांश्च ॥ ५ ॥

तदेवाह-एपइति त्रिभिः । एप रुद्रः साक्षाल्लोकानां गुरुर्हितोपदेष्टा किञ्च शरीरिणां धर्मं वक्ता मुख्यः प्रधानः स्वयमीदृशः सन् सभायां भार्यया सह मिथुनीभूयाऽऽस्ते ॥ ६ ॥

किञ्च जटाः बिभर्तीति तथा तीव्रमुग्रं नितान्तं वा तपो यस्य स ब्रह्मवादी ब्रह्मज्ञानोपदेष्टाऽस्थ च सभायाः पतिः प्रधानः एवंभूतोऽपि लज्जाहीनः अङ्के स्त्रियं कृत्वा निधाप्याऽऽस्ते उपविष्टवान् यथा प्राकृतः अत्यन्तमूढस्तद्वत् ॥ ७ ॥

किञ्च प्राकृता अपि बहुशो रहस्येव स्त्रीयमङ्के बिभ्रति निधापयन्ति अयं तु महाव्रतधरोपि सदसि सभयामेव स्त्रियमङ्के बिभर्ति अयं महान् व्यत्यास इति भावः ॥ ८ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथाशास्त्रार्थतत्त्वेन ज्ञातः श्रीनारायणो मुक्तिं ददाति, नान्यथा. यथाशास्त्रार्थतत्त्वं योग्यानामेव ज्ञातुं सुशकं, नायोग्यानां "परोक्षप्रिया इव हि देवाः" इति श्रुतेः दुरवगाहं शास्त्रार्थतत्त्वं हरेः प्रीतिजनकं तथा प्रतिपादनमित्ययं प्रकारः कथ्यते अस्मिन्नध्याये, तत्र चित्रकेतोः रुद्राणीशापप्राप्तिप्रकारं वक्तुं तावदाह—यत्रेति ॥ १ ॥ २ ॥

कुलाचलेन्द्रस्य द्रोणीषु निम्नतटीष्वत एव स्त्रीणां पुरुषाणां च नानासङ्कल्पसिद्धिषु ॥ ३ ॥

ततश्च किं प्रकृते तत्राह-एकदेति ॥ ४ ॥

दृष्ट्वापि किमभूदत्राह—उवाचेति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सलक्षमिति युग्मकम् ॥ १—३ ॥

तत्रापि प्राचीनमहदपराधान्तरस्य दुष्फलमाह-एकदेति॥ ४-८॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चित्रकेतुः सप्तदशे विद्याधरपतिर्भवत् ।
विहस्य शङ्करं देव्याः शापतो वृत्रतामगात् ॥ ० ॥

यतः यस्यां दिशि ॥ १—२ ॥

नानासङ्कल्पसिद्धिष्वपि सङ्कल्पान् विहाय हरिं गापयन्नेव रेमे हरेर्गुणश्रवणकीर्त्तनयोरेव रतोऽभूदित्यर्थः ॥ ३—६ ॥

"भक्तिं भूतिं हरिर्दत्त्वा स्वविच्छेदानुभुतये ।
देव्याः शापेन वृत्रत्वं नीत्वा तं स्वान्तिकेऽनयत्"

अङ्कीकृतां स्वदेहार्द्धीकृतां प्राकृतो यथेति न तु प्राकृतः साक्षादीश्वरत्वादिति । दक्षवत्नायं शिवनिन्दकोऽपराधी ज्ञेय इति भावः॥७॥

महाव्रतधरो नैष्ठिकब्रह्मचारी स्त्रियं बिभर्त्तीत्यचिन्त्यमैश्वर्यमिति भावः ॥ ८ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा चित्रकेतुर्वृत्रोऽभूत्तत्सप्तदशे उच्यते—यत इति । यतो यस्यां दिशि अन्तर्हितस्तस्यै नमो नमनं कृत्वा गगनचारीभूत्वा तत्र चचार ॥ १ ॥ ०

वर्षलक्षाणां लक्षं बहुकालं अव्याहतं न विनष्टं बलमिन्द्रियपाटवं यस्य सः ॥ २ ॥

नाना अनेकप्रकाराः संकल्पेनैव सिद्धयो यासु तास्वपि विद्याधरस्त्रीभिर्हरिं गापयन् एव रेमे न तु काम्यशक्तोऽभूदिति भावः ॥ ३ ॥

"मुक्त्यन्तराय भूतप्रारब्धकर्मशास्तस्य तावदेव चिरं यावन्न विमोर्क्ष्ये" इतिश्रुतिप्रसिद्धस्य फलभोगाय भवानीशापद्वारा वृत्ररूपेण प्रवृत्तोभूदित्याह-एकदेत्यादिना। मुनिसभायाम् अङ्कीकृत्वा उत्संगे आरोपितो बाहुना आलिङ्ग्य स्थितं प्रति तदन्तिके उच्चैर्जहास देव्याः शृण्वंत्या उवाच च ॥ ४ ॥ ५ ॥

शरीरिणां मध्ये मुख्योऽत एव लोकानां गुरुरत एव साक्षात् धर्मं भगवद्भक्तिलक्षणं वक्ता वदति सभायां भार्यया मिथुनीभूय चास्ते ॥ ६ ॥ ७ ॥ ८ ॥

---

## भाषा टीका ।

श्री शुक उवाच ॥

जिस दिशा में अनन्त भगवान् अन्तर्धान हुए विद्याधर

श्रीशुक उवाच ।

भगवानपि तच्छ्रुत्वा प्रहस्यागाधधीर्नृप ! ।
तूष्णीं बभूव सदसि सभ्याश्च तदनुव्रताः ॥ ९ ॥
इत्यतद्वीर्यविदुषि ब्रुवाणे बह्वशोभनम् ।
रुषाऽऽह देवी धृष्टाय निर्जितात्माभिमानिने ॥ १० ॥

पार्वत्युवाच ।

अयं किमधुना लोके शास्ता दण्डधरः प्रभुः ।
अस्मद्विधानां दुष्टानां निर्लज्जानां च विप्रकृत् ॥ ११ ॥
न वेद धर्मं किलपद्मयोनिर्न ब्रह्मपुत्रा भृगुनारदाद्याः ।
न वै कुमारः कपिलो मनुश्च ये नो निषेधन्त्यतिवर्तिनं हरम् ॥ १२ ॥
एषामनुध्येयपदाब्जयुग्मं जगद्गुरुं मङ्गलमङ्गलं स्वयम् ।
यः क्षत्रबन्धुः परिभूय सूरीन्प्रशास्ति धृष्टस्तदयं हि दण्ड्यः ॥ १३ ॥
नायमर्हति वैकुण्ठपादमूलोपसर्पणम् ।
सम्भावितमतिः स्तब्धः साधुभिः पर्युपासितम् ॥ १४ ॥
अतः पापीयसीं योनिमासुरीं याहि दुर्मते ! ।
यथेह भूयो महतां न कर्ता पुत्र ! किल्बिषम् ॥ १५ ॥

श्रीशुक उवाच ।

एवं शप्तश्चित्रकेतुर्विमानादवरुह्य सः ।
प्रसादयामास सतीं मूर्ध्ना नम्रेण भारत ! ॥ १६ ॥

---

भाषा टीका ।

चित्र केतु भी उसी दिशा को प्रणाम कर आकाश मार्ग से विचर ने लगा ॥ १ ॥

मुनि सिद्ध चारणों से स्तूयमान अव्याहत इन्द्रियवाला महायोगी वह चित्रकेतु नाना प्रकार सङ्कल्प से सिद्धियों को प्राप्त करने वाली कुलाचल पर्वत की गुहाओं में विद्याधरों की स्त्रियों से भगवान् का यश गान कराता हुआ रमता भया ॥ २ ॥ ३ ॥

एक समय विष्णु के दिये हुए भास्वर विमान में बैठा हुआ जाता था उसी समय सिद्ध चारणों से व्याप्त महादेव को चित्रकेतु ने देखा कि मुनि लोगों की सभा में श्री पार्वतीजी को बाहू से आलिङ्गन करके अङ्क में बैठाये हैं। तब तो पार्वतीजी के सुनते २ हसकर उनके समीप में आकर बोला ॥ ४ ॥ ५ ॥

चित्रकेतु उवाच ॥

यह साक्षात् लोक गुरु है और जीवों के मध्य में साक्षात् धर्म का वक्ता है तो भी सभा में भार्या के साथ जोड़ा जोड़ कर बैठा है ॥ ६ ॥

जटा को धारण किये, ब्रह्मचारी, तीव्र तप वाला, सभापति होकर, जैसे प्राकृत मनुष्य, इस प्रकार निर्लज्ज होकर स्त्री को गोद मे लेकर बैठा है ॥ ७ ॥

प्राय करके प्राकृत मनुष्य भी एकान्त में स्त्री को गोद में धारण करते हैं यह महाव्रत के धारण करने वाला सभा में स्त्री को धारण किया है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अगाधा गम्भीरा धीर्यस्य सः ॥ ९ ॥

न तस्य वीर्यं प्रभावं विद्वानतद्वीर्यविद्वांस्तस्मिन् निर्जि-

श्रीधरस्वामिकृतभावार्थदीपिका ।

तात्माभिमानिने जितेन्द्रियोऽहमित्यभिमानवते इति रुषा क्रोधेनाह ॥ १० ॥

विरुद्धं प्रकर्षेण करोतीति विप्रकृत् ॥ ११ ॥

अतिवर्तिनं शास्त्रमतिक्रम्य वर्तनशीलं ये नो निषेधन्ति न निवारयन्ति ॥ १२ ॥

एषां ब्रह्मादीनामनुध्येयं पदाब्जयुग्मं यस्य तम् मङ्गलमङ्गलं परमधर्ममूर्तिम् सूरीन् परिभूयाऽज्ञानूकृत्वा जगद्गुरुं यः प्रशास्ति तत्तस्मात् ॥ १३ ॥

ननु, हरिभक्तोऽयं न दण्डार्ह इति चेत्तत्राह—नायं साधुभिः परिसेवितं वैकुंठस्य पादमूलोपसर्पणमर्हति यतः संभावितो अहमधिक इति कृता मतिर्येन अत एव स्तब्धोऽनम्रः ॥ १४ ॥

तदेवं स्वयं दंड्यत्वं निश्चित्य तं प्राह—अत इति । हे पुत्र ! यथा भूयो महतां किल्बिषमपराधं न कर्ता न करिष्यसि तथा याहीत्यर्थः ॥ १५ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्तच्चित्रकेतोर्वचः श्रुत्वाऽपि भगवान् रुद्रः अगाधा गम्भीरा धीर्यस्य तादृशोऽत एव प्रहस्य तूष्णीं बभूव, हे नृप, तथा तं रुद्रमनुव्रतास्तदनुव्रताः सभ्याश्च तूष्णीं बभूवुः ॥ ९ ॥

अतद्वीर्यविदुषि न तस्य रुद्रस्य वीर्यं प्रभावं 'तेजीयसां न दोषाय' इति न्यायेन तेजोविशेषं विद्वांस्तस्मिन् अतद्वीर्यविदुषि चित्रकेतौ इति इत्थं ब्रह्म ब्रह्मात्मकं शोभनं शिवंप्रति ब्रुवाणे सति देव्यंबिका निर्जितात्माभिमानिने जितेन्द्रियत्वाभिमानवतेऽत एव दुष्टाय चित्रकेतवे रुषा क्रोधेनोवाच ननु, तदनुव्रताः सभ्यास्तूष्णीं बभूवुः कथं सा तमनुव्रता भवेतिश्रुत्वा तदनुव्रता देवी चित्रकेतुं शप्तवतीत्याशंक्य रुषेत्युक्तम् ॥ १० ॥

तदेवाह—अयमित्यादिना, किल्बिषमित्यन्तेन । तावत्तमुपालभते अयमिति द्वाभ्यां । अयमधुना किमर्थमागत इति शेषः अहोऽस्मान्दण्डयितुमधुनायमागत इत्युपालंभः तदेवाह, अहो निर्लज्जानामस्मद्विधानां दुष्टानामयं शास्ता हिताहितयोर्विविच्य ज्ञापकः शासनातिवर्तित्वे दण्डधरः दण्डयिता प्रभुर्दण्डने समर्थश्चात एव विप्रकृत् दमनकारी ॥ ११ ॥

अहो पद्मयोन्यादयो धर्मं न विदन्ति यतस्तेऽतिवर्तिनं मर्यादातिवर्तिनं हरं रुद्रं नो निषेधन्ति न निषेधन्ति अयं त्वधुना निषेधति इत्युपालम्भः तत्र पद्मयोनिर्ब्रह्मा कुमारः सनत्कुमारः मनुः स्वायंभुवः ॥ १२ ॥

तमेवमुपालभ्यापवदयमयं निग्राह्य इत्याह—एषामिति द्वाभ्यां । तावत्पतिपारम्यदृष्ट्या रुद्रं विशिनष्टि, एषां पद्मयोन्यादीनामनुध्येयं ध्यातुं योग्यं पदाब्जयुग्मं यस्य जगद्गुरुं जगद्धितोपदेष्टारं स्वयं साक्षान्मङ्गलानामपि मङ्गलं ईदृशं हरं सूरीनृषींश्चायं क्षत्रियाधमः परिभूय यद्यस्मात्प्रशास्ति तत्तस्मादयं दुष्टो दुरात्मा दण्ड्य एव सूरीन्परिभूय जगद्गुरुं गिरिशं प्रशास्तीति वान्वयः ॥ १३ ॥

ननु, भगवद्भक्तोऽयं न दण्ड्य इत्यत्राह—नायमिति । साधुभिः परिसेवितं सत्कृतं यद्वैकुण्ठस्य भगवतः पादमूलस्य उपसर्पणमनुसरणं सेवेति यावत् तत्प्रति अयं क्षत्रबन्धुर्नार्हति, कुतः ? यतोऽयं सम्भावितात्माऽहमधिक इत्यभिमानवती मतिर्यस्य सः अत एव स्तब्धः निश्चल इव स्थितः ॥ १४ ॥

एवं दण्ड्यतामभिधायाथ शपति—अत इति । अतः भगवत्सेवानर्हत्वात् हे दुर्मते ! त्वमासुरीं पापीयसीं योनिं याहि हे पुत्र, यथा भूयो महतां किल्बिषमपराधं न कर्ता न करिष्यसि तथा याहीति ॥ १५ ॥

हे भारत ! एवम् इत्थं शप्तः स चित्रकेतुर्विमानादवरुह्य सतीमम्बिकां नम्रेण मूर्ध्ना प्रसादयामास प्रसन्नामकरोत् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदं हीश्वरस्येश्वरत्वं यदन्यैरसत्कारैः निर्विकारत्वमित्याशयेन गिरिशस्य क्षमाप्रकारं वक्ति—भगवानपीति । अगाधधीरन्यैरज्ञातेयत्ता बुद्धिः ॥ ९ ॥

स्त्रीनिमित्ताऽसत्कारपरिहारः स्त्रियैव कार्य इति परमेश्वराभिसन्धिं जानती प्रार्थती प्रतिवक्ति—इतीति । धृष्टाय प्रगल्भाय निर्जित आत्माभिमानः आत्मदर्पो येन स तथा आत्मविज्ञानं वा येन स तथा तस्मै "अभिमानस्तु विज्ञाने प्रणये दर्पहिंसयोः" इति यादवः ॥ १० ॥ ११ ॥

अयं शापयोग्यापराध इति ज्ञापयितुमित्यभिप्रेत्याह—न वेदेति । अतिवर्तिनमसम्प्रज्ञातसमाधित्वेन वर्तमानम् ॥ १२ ॥

अनिषेधे कारणमाह—एषामिति । एषां ब्रह्मादीनां पदे स्वावराणामिन्द्रादीनामनुध्येयं पदाब्जयुग्मं कृद्योगे षष्ठीयं नित्यसम्बन्धद्योतनाय वा तदवराणामित्याचार्यैर्व्याख्यातं अत्र किमवक्तव्योच्यत इति चेन्न—

"विष्णुब्रह्मप्राणवीन्द्रास्तद्वारानच्युते हरः ।
ध्येयो हरेः पार्षदाद्यैर्ध्यायन्हरिचतुर्मुखौ ॥
प्राणमेषां तथा द्वारान्न स्वतंत्रतया क्वचित्" इति

बहुवचनबलाश्रयणात्, न तु ब्रह्मादीनामनुध्येयपदाब्जयुग्ममिति बहुप्रमाणविरोधात् अत एवास्माभिः शास्त्रार्थोऽसौ परोक्षत्वेन देवप्रियत्वाद्दुरवगाह इत्यभिहितं यस्मादयमपराधी तत्तस्माद्दण्ड्यः ॥ १३ ॥

किं दण्डमर्हतीति तत्राह—नायमिति । अनर्हत्वे कारणमाह—सम्भावितात्मेति ॥ १४ ॥

तदर्थं क उपाय इति तत्राह—अत इति । इह अमुत्र स्थितानां ॥ १५ ॥

शप्तस्य सज्जकस्य तदुपसत्तिप्रकारमाह—एवमिति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदनुव्रता इति। अतस्तदभिप्रायानुसारेणैव ते च तूष्णीं बभूवुरित्यर्थः॥ ९॥

देवी तु न चन्तुं शक्तवतीत्याह—इतीति। वीर्य्यमस्तत्तादृश लौकिकचारित्रेणाच्छादितं मन्महाभागवतत्वं तदेव तथैवोक्तमगाधधीरिति॥ १०—१२॥

एषामित्यस्य टीकायां अवज्ञां कृत्वेति पाठे तेषामिति शेषः अज्ञान् कृत्वेति अज्ञान् मत्वेत्यर्थः॥ १३—१४॥

ततश्च तं भीतं मत्वा सकृपमाह—यथेति। एतदपराधयीजेन पुनस्तु पूर्ववन्महदपराधो न जनयिष्यत इत्यर्थः॥ १५॥ १६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

प्रहस्येति मामपि सदाचारे स्थापयितुमिच्छतीति भावः, सदसैव चित्रकेतोरभिप्रायज्ञानादगाधा सर्वदुष्प्रवेशा धीर्यस्य सः चित्रकेतोरभिप्रायश्चायं खल्वीश्वर एव नास्य दुराचारत्वेपि क्षतिः। यः खल्वनभिज्ञः इमं निन्दिष्यति तस्यापराधात् सर्वनाशो भविष्यति यथा दक्षस्येत्यत इममद्यारभ्यापि यदि सदाचारे स्थापयितुमहं शक्नुयां तदा लोकानां भद्रं स्यात्। तथा विष्णुः परमेश्वरो भद्र एव सुचरितत्वात्, रुद्रस्त्वभद्रो दुराचारत्वादित्यप्रतिष्ठाप्यस्य न भवेदिति। तदभ्रमे धितैषिणः कठोरमापिणोऽपि हरिभक्ताय नाहं कुप्यामीति भगवतः शम्भोरभिप्रायानुसारिण्यः सभ्याश्च तूष्णीं बभूवुरेव न तु चुक्रुधुः। श्रीशिवनिन्दनस्य तदभिप्रेतत्वे ते सभ्याः सद्य एव कर्णौ पिधाय ततो निरवास्यन्निति ज्ञेयं। यदुक्तं "भगवन्निन्दनं श्रुत्वा तत्परस्य जनस्य वा" इत्यादि॥ ९॥

न तस्य वीर्य्यं प्रभावं वेत्तीति तस्मिन् न हि स्वतन्त्र ईश्वरः कस्यचिदपि शिक्षया किमपि करोतीति भावः। अशोभनं ब्रुवाणो इति जगदीश्वरे नीतिमिच्छयाऽनौचित्यात् धृष्टाय निःशङ्कमापित्वादतिप्रगल्भाय निःशेषेण जितो मया प्रेमवशीकृतः आत्मा परमात्मा रुद्रुवणोपीत्यभिमानवते। रुपेति चित्रकेतुमहादेवयोरभिप्रायस्याऽज्ञानादेव रुडियमिति न व्याखेया किन्तु बहुब्रुवाणा इति हितमप्येतदस्मदनुपादित्सितमयं नैकंद्वान् वारान् वापि त्रिचतुरान् किन्तु बहूनेव वारान् ब्रूते इति क्रोधे कारणं ज्ञेयम्॥ १०॥

विशेषेण प्रकर्षं करोतीति विप्रकृत्य शासनेन हितकृदित्यर्थः॥ ११॥ १२॥

परिभूय मुहुरपि कठोरोक्त्या तिरस्कृत्य सूरीन् एतत्समासदोऽप्यनभिज्ञान् ज्ञात्वा परिभूय जगद्गुरुं प्रशास्ति॥१३॥

सम्भाविता अहं महाभक्त इत्यभिमानवती मतिर्यस्य सः॥१४॥

अभिशापानन्तरमेव अहो किं कृतं निरपराधो हरिभक्तः शप्त इति पश्चात्तापवती आह—हे पुत्रेति। माता यथा दुर्नयं पुत्रं स्वहस्तेन प्रहरति प्रहृत्यैव पुनः लिहति तथैव त्वामहं दण्डयामीति भावः। अत एव मातृसमुचितमेवाह—भूय इति। बाल्यक्रीडाचापल्येन स्वगृहविप्रियकारिणं शिशुं प्रहृत्य माता यथा ब्रूते हे अदान्त! पुनरेवं न करिष्यमीति तद्वदेवेत्यर्थः अत एव भवान्याः सोऽभिशापश्चित्रकेतुं नापचकार प्रत्युत वृत्रजन्मनि प्रेमवृद्धिमेव प्राप. सत्यां प्रेमसम्पत्तौ भक्तानां पार्षदत्वतुल्यदैत्यत्वतुल्ययोरविशेषमननात्॥१५॥ ॥१६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तदनुव्रताः सभ्याश्च तूष्णीं बभूवुः॥ ९॥

अतद्वीर्यविदुषि अन्ये जलादौ मदनभयात्प्रविश्य तपोजपादिकं कुर्वाणाः मदनवश्या भवन्ति, शिवस्तु स्त्रियमुत्संगे विधायापि मदनवश्यो न भवतीत्यादि शिवप्रभावानभिज्ञे॥ १०॥

विरुद्धं प्रकर्षेण करोति तथा॥ ११॥

पद्मयोन्यादयो धर्मं न जानंति अतिवर्तिनं धर्मामुल्लंघ्य वर्त्तमानं गोनिषेधन्ति न वारयन्ति अयं तेभ्योऽपि वृद्धः यतो दण्डं दुराचाराद्धारयतीति भावः॥ १२॥

एषामित्यनेनास्मिन्नेव पुराणे शिवस्य पितृत्वेन वर्णितत्वाद्ब्रह्मणो व्यतिरिक्तानां ब्रह्मणः एषां भृग्वादीनाम् अनुध्येयपदाब्जयुगं सूरीनभिभूय प्रशास्ति अतो धृष्टः अतो दंड्यः॥ १३॥

सम्भावितमतिः गर्वितबुद्धिः वैकुण्ठस्य हरेः पादमूलोपसर्पणं नार्हति॥ १४॥

किल्बिषमपराधम्॥ १५॥ १६॥

---

भाषा टीका।

श्री शुक उवाच॥

अगाध बुद्धि भगवान श्री शङ्कर और उस सभा जो सभ्य थे वे सब ही इस बात को सुनकर हसकर चुप होगये॥ ९॥

श्री शङ्कर के प्रभाव को नहीं जानने वाले को सभा में ऐसे अयुक्त बोलने पर जितेन्द्रियाभिमानी उस ढीठ से पार्वतीजी क्रोधकर ऐसे बोलीं॥ १०॥

पार्वत्युवाच॥

पार्वतीजी बोलीं कि आज काल लोक में क्या यह, हमारे सदश दुष्ट निर्लज्जों का दण्ड देने वाला नियामक स्वामी है॥ ११॥

पद्म योनि (ब्रह्माजी) धर्म नहीं जानते और ब्रह्मा के पुत्र भृगु नारदादिक तथा सनत्कुमार कपिल मनु ये सब भी धर्म नहीं जानते हैं क्योंकि शास्त्र का अति-क्रमण करके वर्त्तने वाले श्रीमहादेव जी को ये लोग निषेध नहीं करते हैं॥ १२॥

चित्रकेतुरुवाच ।

प्रतिगृह्णामि ते शापमात्मनोऽञ्जलिनाऽम्बिके ! ।
देवैर्मर्त्याय यत्प्रोक्तं पूर्वदिष्टं हि तस्य तत् ॥ १७ ॥
संसारचक्र एतस्मिन् जन्तुरज्ञानमोहितः ।
भ्राम्यन्सुखं च दुःखं च भुंक्ते सर्वत्र सर्वदा ॥ १८ ॥
नैवात्मा न परश्चापि कर्ता स्यात्सुखदुःखयोः ।
कर्तारं मन्यते प्राज्ञ आत्मानं परमेव च ॥ १९ ॥
गुणप्रवाह एतस्मिन्कः शापः कोन्वनुग्रहः ।
कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वा ॥ २० ॥
एकः सृजति भूतानि भगवानात्ममायया ।
(१) एषां वन्धं च मोक्षं च सुखं दुःखं च निष्कलः ॥ २१ ॥
न (२) तस्य कश्चिद्दयितः प्रतीपो न ज्ञातिवन्धुर्न परो न च स्वः ।
समस्य सर्वत्र निरञ्जनस्य सुखे न रागः कुत एव रोषः ॥ २२ ॥
तथापि तच्छक्तिविसर्ग एषां सुखाय दुःखाय हिताहिताय ।
वन्धाय मोक्षाय च मृत्युजन्मनोः शरीरिणां संसृतयेऽवकल्पते ॥ २३ ॥
अथ प्रसादये न त्वां शापमोक्षाय भामिनि ! ।
यन्मन्यसे असाधूक्तं मम तत्क्षम्यतां सति ॥ २४ ॥

भाषाटीका ।

इन सवों के ध्यान करने योग्य युगल चरण कमल जिनका ऐसे जगद्गुरु स्वयं मंगल मूर्त्ति श्रीशंकर को ज्ञानियों का तिरस्कार करके, यह ढीठ प्रशासन ( शिक्षा ) करता है तस्मात् यह दण्ड योग्य है ॥ १३ ॥

यह साधुओं से उपासित श्री गोविन्द के चरण की शरण गति के योग्य नहीं है क्योंकि यह अपने को वड़ा मानने वाला और अनम्र ॥ १४ ॥

इसीसे हे दुर्मते ! अति पाप प्रचुर आसुरी योनी को तू प्राप्त हो हे पुत्र ! जिससे फिर तू फिर ऐसे महत्पुरुषों का अपराध न करे ॥ १५ ॥

श्रीशुक उवाच ॥

श्रीशुकदेव जी वोले कि ऐसे जव चित्र केतु शाप को प्राप्त हुआ तव हे भारत ! विमान से उतर कर नत मस्तक से श्री सतीजी को प्रसन्न करता हुआ ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पूर्वदिष्टं प्राचीनकर्म प्राप्तमेव ॥ १७ ॥

अयं च संसारचक्रस्वभाव एव न चित्रमित्याह—संसारचक्र इति ॥ १८ ॥

अत एवात्र मम च तव च न कोपि दोष इत्याह—नैवेति ॥ १९ ॥

एवं तावत्सुखदुःखादिकमङ्गीकृत्योक्तमिदानीं तदपि वस्तुतो नास्तीत्याह—गुणानां मायामयानां प्रवाहे संसारे ॥ २० ॥

ननु, मायागुणानाञ्चेदयं प्रवाहस्तर्हि तेषां जडत्वाद्वन्धमोक्षाद्यनुभवो न स्यात्तत्राह—एकः परमेश्वरो मायया निमित्तभूतया भूतानि प्राणिनः सृजति एषां वन्धादिकं च सृजति निष्कलः स्वयं वन्धादिशून्यः ॥ २१ ॥

ननु, एवंभूतविषमसृष्टौ तस्य किं कारणं ? प्रियादिवैषम्याभावादित्याशंक्य, यद्यपि प्रियादयो न सन्ति तथापि तत्तत्कर्मवशात्सर्वं घटत इत्याह—न तस्येति द्वाभ्याम् । प्रतीपोऽप्रियः न ज्ञातिर्वंधुश्चेत्यर्थः तत्र हेतुः सर्वत्र समस्य तत्कुतः निरञ्जनस्य निःसङ्गस्य अत एव तन्निमित्ते सुखे रागो नास्ति रागानुवन्धी रोषः कुतः स्यात् ॥ २२ ॥

(१) येषां वन्धश्च मोक्षश्च, इति पाठान्तरम्--वीर० (२) ने कस्यति पाठान्तरम्--वीर०

श्रीधरस्वामिकृतभावार्थदीपिका।

यद्यप्येवं तथाऽपि तस्य शक्त्या मायया यो विसर्गः पुण्यपापादिलक्षणं कर्म एतां शरीरिणां सुखाद्यर्थमवकल्पते समर्थो भवति यथोक्तं गीतासु "भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः" इति ॥ २३ ॥

अथ तस्माद्भामिनि हे कोपने! त्वां केवलं प्रसादयामि न तु शापमोक्षाय. तर्हि किं प्रसादनेनात आह ममोक्तमुक्तिं साध्व्यसाधुवन्मन्यसे तत्त्वया क्षम्यताम् ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

तदेवाह—प्रतिगृह्णामीत्यादिना, क्षम्यतां सतीत्यन्तेन। तावत्त्वेव मम रोषो नास्तीति सूचयन् शापं स्वीकरोमीत्याह—प्रतिगृह्णामीति। हे अम्बिके! ते त्वया दत्तं शापमात्मनोऽञ्जलिना प्रतिगृह्णाम्यञ्जलिबन्धपूर्वकं स्वीकरोमि मयि महाननुग्रहस्त्वया कृतो न तु निग्रह इति भावः। तदेव स्पष्टयति—देवैरिति. देवैर्यद्यत्प्रोक्तं निग्रहरूपमनुग्रहरूपं वा तत्सर्वं मेऽर्थ्यैवप्रोक्तं, कुतः? हि यस्माद्देवैः प्रोक्तं तस्य निग्राह्यस्यानुग्राह्यस्य वा जन्तोः पूर्वदिष्टं प्राचीनकर्मप्रयुक्तं मोक्षविरोधिप्राचीनकर्मणा एवं भ्राम्यतो नितरां मुमुक्षोर्ममाशु तद्विरोधिप्राचीनकर्मफलरूपत्वाच्छापानुभवेन निःशेषनिरस्तकर्मबन्धस्य भगवत्प्राप्त्या नित्यनिरतिशयानन्दरूपमहाभ्युदयलाभात्त्वयानुग्रह एव कृत इति भावः ॥ १७ ॥

एतदेव स्फुटयितुं तावज्जन्तूनां कर्मभिर्भ्रमणमाह—संसारचक्र इति। एतस्मिन्नक्रचक्रवत्परिवृत्तिशीले गर्भजन्मजरामरणादिरूपे संसारे अज्ञानेन ज्ञानेतरेणानादिपुण्यपापात्मकेन कर्मणा मोहितः स्वात्मपरमात्मयाथात्म्यज्ञानरहितः केवलदेहात्माभिमानी जन्तुर्भ्राम्यन्पुनःपुनः पूर्वपूर्ववासनानुरूपाण्युत्तरोत्तरसुखदुःखादिहेतुभूतानि कर्माणि कुर्वन् तत्फलं सुखं दुःखञ्च भुङ्क्ते एतच्च केवलमन्येषामेव जन्तूनां, किन्तु तवापीत्याशयेनाह—सर्वस्य सर्वदेति। सर्वस्यान्यस्य तव मम च सर्वदा यावन्मुक्ति एतत्समानमिति भावः, अन्यथा मत्कृतहेलनाद्यनादिकर्मप्रयुक्तदेहात्माभिमानमूलकः क्रोध एव न स्यादिति तात्पर्यम् ॥ १८ ॥

यत एव सत्कारन्यक्कारसुखदुःखादिकं सर्वमनादिकर्मनिमित्तमत एव त्वत्तिरस्कर्त्तुर्मम मां शपन्त्यास्तव च न दोष इत्याह—नैवेति। सुखदुःखयोः कर्ता कारकः सुखदुःखापदक इत्यर्थः आत्मा स्वयं परोऽन्यश्च न स्याद्भवति. किन्तु तयोः कर्मैव निमित्तमिति भावः, कर्मणः क्षणिकत्वाज्जडत्वाच्च कथं तत्कालान्तरभावि सुखदुःखनिमित्तं? तत्राह—कर्तारमिति। प्राज्ञः पुण्यपापयाथात्म्यवित् परमात्मानं परमपुरुषमेव सुखदुःखयोः कर्तारं मन्यते. अयं भावः, पुण्यपापे हि परमात्मनो निग्रहानुग्रहरूपे, तत्र श्रुतिस्मृत्याद्यात्मकशास्त्रार्थानुवर्त्तिन्यनुग्रहः परमपुरुषस्य, स एव हि पुण्यं नाम. अननुवर्त्तिनि तु निग्रहः, स एव हि पापं. एवञ्च परमपुरुष एव स्वशास्त्रानुवृत्त्यननुवृत्तिनिमित्तानुग्रहनिग्रहरूपपुण्यपापफलभूतयोः सुखदुःखयोः कर्तेति ॥ १९ ॥

एवं वैषयिकसुखदुःखयोः पुरुषार्थत्वापुरुषार्थत्वाभ्युपगमेन कर्मानुसारेणेश्वरस्तत्कर्त्तेत्युक्तम्. इदानीं वैषयिकसुखं विषमिश्रक्षीरवदन्ततो दुःखहेतुत्वादपुरुषार्थरूपमेवेत्याह—गुणप्रवाह इति। गुणानां प्रकृतेर्गुणानां सत्त्वरजस्तमसां प्रवाहरूपे परिणामरूपे एतस्मिन् प्रकृतिमण्डले जन्तूनां, कः शापः? को वानुग्रहः? उभयोर्वैलक्षण्यमेव दुर्वचमेवेति भावः; ननु, न दुर्वचन्तयोः स्वरूपं स्वर्गहेतुरनुग्रहः नरकहेतुर्निग्रह इति सुवचमेवेत्यत्राह—कः स्वर्गो नरकः को वेति स्वर्गनरकयोरपि स्वरूपं दुर्वचमेवेति भावः। ननु, स्वर्गः सुखं, दुःखं नरकमिति सुवचमित्यत्राह—किं सुखं दुःखमेव वेति. तदप्यव्यवस्थितमित्यर्थः स्वर्गस्य सुखरूपत्वे तस्य दुःखगर्भत्वं न स्यात् नरकस्य दुःखरूपत्वे वा तस्य सुखगर्भता न स्यात् स्वर्गोऽप्यन्ततो दुःखहेतुः नरकोऽप्यन्ततः किञ्चित्सुखहेतुर्दृष्टः अत उभयोरुभयगर्भत्वात् न परस्परस्य व्यवस्थितिरिति भावः। शापनरकदुःखानि दृष्टान्तार्थतया उपात्तानि यथा, तेषु पुरुषार्थत्वं तद्धेतुत्वञ्च नास्ति तथानुग्रहस्वर्गसुखेष्वित्यर्थः॥२०॥

नन्वेवंविधसुखदुःखभाञ्जि भूतानि किमकस्मात्स्वयमेवोत्पद्यन्ते? नेत्याह—एक इति। भगवान्निरस्तनिखिलदोषः षाड्गुण्यपूर्णः परमपुरुषः आत्मनः स्वस्य मायया स्वयमेकः निरस्तसमाभ्यधिकः स्वसमाभ्यधिककर्त्रन्तरोपकरणान्तरनिरपेक्ष एव भूतानि देवमनुष्यादीनि चिदचिदात्मकानि आब्रह्मस्तम्बपर्यन्तानि सृजति. न तु तान्यकस्मादुत्पद्यन्त इति भावः, तर्हि किं सुखादिवत्कर्मायत्तजन्मा भगवान्? नेत्याह—निष्कलः कर्मायत्तप्राणपादाद्यवयवात्मकदेहरहितः, तस्य वैषम्यनैर्घृण्यादिदोषपरिहाराय भूतानि विशिनष्टि—येषामिति, येषां भूतानां स्वस्वकर्मानुगुणबन्धमोक्षादिकं भवति तानि सृजतीत्यन्वयः, बन्धमोक्षमिति द्वितीयान्तपाठे येषां भूतानां तत्तत्कर्मानुसारेण बन्धादिकञ्च सृजति, स एव तानि भूतान्यपि सृजति. न ततोऽस्य वैषम्यादिदोष इत्यर्थः एषामितीदंशब्दपाठे बन्धमित्यादीनाञ्च द्वितीयान्तपाठे तु सृष्टानामेतेषां भूतानां तत्तत्कर्मानुसारेण बन्धादिकमपि सृजतीत्यर्थः एवं बन्धादिकं देवमनुष्यादिवैचित्र्यञ्च तत्तज्जीवकर्मानुसारेण तेषां तेषामीश्वरकृतमौपाधिकं न स्वरूपप्रयुक्तमित्युक्तं भवतीत्यर्थः ॥ २१ ॥

कीदृशं तर्हि जीवस्य स्वरूपं? कुतस्तस्य कर्म? यतो देवादिवैचित्र्यं बन्धादिकं चेत्यपेक्षायामाह—न तस्येति। वस्तुतः कस्यापि जीवस्य कश्चिदपि दयितादिर्नास्ति, कुतः? सर्वत्र देवादिशरीरेषु समस्य समत्वेनावस्थितस्य ज्ञानैकाकारतया ज्ञानानन्दस्वरूपत्वेन चावस्थितस्येत्यर्थः परस्परतारतम्ये हि प्रियाप्रियादिविभागः सर्वदात्मनामेकरूपत्वाच स्वरूपकृतः प्रियाप्रियादिविभाग इति भावः। ननु, देवादिरूपेण वैचित्र्यात्कथं समत्वं? तत्राह—निरञ्जनस्येति। अञ्जनं रूपान्तरापत्तिः तद्रहितस्य देवादिवैचित्र्यस्य प्रकृतिगतत्वाज्जीवस्वरूपगतत्वाभावात्स सर्वत्र सम इति भावः, यत एव समो निरञ्जनश्च, अत एव तस्य वैषयिकसुखे न रागः नात्मीकः सुखैकतानस्वरूपत्वेन वैषयिकसुखलेशे न तस्य राग इति भावः यत एव सुखे न तस्य रागः कुतस्तरां? तस्य वैषयिकसुख-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वामप्रतिबन्धकविषयो रोषः स्यादित्यर्थः तत्र दयितः प्रीतिविषयः अनुकूल इति यावत् प्रतीपः प्रतिकूलः ज्ञातिः सपिण्डः बन्धुर्वैवाहिकादिसम्बन्धवान् परोऽन्यदीयः स्वः स्वकीयः ॥ २२ ॥

एवं प्रकृतिविलक्षणं स्वाभाविकं जीवस्वरूपमुक्तमथैवंभूतस्य दैवादिवैचित्र्यं बन्धादिकं चोपपादयति–तथापीति । यद्यप्येवंभूता जीवाः तथाप्येषां शरीरिणां जीवानां तच्छक्तिविसर्ग एव तस्य तज्जीवसम्बन्धिकर्मणो या शक्तिर्वासनारूपा शक्तिः तस्या विसर्गः सृष्टिरुत्तरोत्तरकर्मैव सुखादिरूपसंसृतये मोक्षाय चावकल्पते समर्थं भवति तन्निमित्तमित्यर्थः, अयं भावः, स्वभावतः पूर्वोक्तविधानामपि बीजाङ्कुरन्यायेनानादिकर्मवासनामात्रावशेषितानां कल्पान्ते परमात्मन्युपसंहृतानां पुनः कल्पादौ परमकारुणिकेनेश्वरेण स्वाराधनेनैते निस्तरेयुरित्यनुजिघृक्षुणा प्रदत्तकरणकलेवरधर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधिवेदाख्यशास्त्राणामध्ययनादिवासनया "अन्नं भोज्यं मनुष्याणां, श्वपशूविट्तृणाहारा" इत्याद्युक्तरीत्या ईहमानानां पुण्यपापरूपकर्मोपनिपाततत्फलानुभवपुनस्तदर्थकर्मोपनिपाततत्फलानुभवादि-परंपरया सर्वमुपपन्नमिति, तत्र हिताहिताय सुखदुःखहेतुभूतधर्माधर्माय मृत्युजन्मनोः जन्ममरणाभ्यामित्यर्थः तादर्थ्यस्य बन्धसामान्यत्वेन विवक्षया षष्ठी प्रयुक्ता मोक्षाय च तच्छक्तिविसर्ग एवावकल्पत इत्यनेन भगवत्प्रसादहेतुः कश्चिद्याद्दच्छिकानुषङ्गिकप्रासंगिकाद्यन्यतमः पुण्यपापकर्मविशेष एव मोक्षोपायोपसंहारहेतुरिति सूचितम् ॥ २३ ॥

एवं वस्तुस्थितिमभिधाय त्वच्छापोऽनुग्रह एवेति वदन् स्वापराधं प्रतिक्षमापयति–मत इति । अतः वस्तुस्थितेरेवंविधत्वात्, हे भामिनि, शापनिर्हरणाय त्वां न प्रसादये न प्रार्थये, किन्तु हे सति, मम मया यदुक्तमसाधु यथातथा मन्यसे तत् क्षम्यतामिति त्वां प्रसादये ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पूर्वदिष्टं पूर्वजन्मनि यत्पुण्यपापलक्षणं कर्म देवैर्मनुष्याय परतोक्तं विहितं तस्य मर्त्यस्य तत्कर्म ह्येव सुखदुःखयोः कारणमिति शेषः ॥ १७ ॥

तदेव विशिनष्टि—संसार इति । सर्वत्र जन्मसु ॥ १८ ॥

ननु, सुखदुःखोत्पत्तौ किं भोक्ता कारणमुतेतर इत्याशंक्य यद्भगवता क्लृप्तं तदेव नियतं कर्म कारणं ज्ञानी मन्यते तत्राज्ञानी स्वमन्यं वा मन्यत इत्याह–नैवेति । आत्मा स्वयं परः स्वस्मादितरः अं हरिं जानातीत्यज्ञः श्रीहरितत्त्वज्ञः परमात्मानमेव मन्यत इति च योजनाऽवगन्तव्या "यच्चद्भगवता क्लृप्तं तदेव नियतं भवेत्" इति वचनात् ॥ १९ ॥

यत एवं श्रीहरिणा क्लृप्तमायातीत्यतः शापादिप्राप्तौ दुःखादिकं न कार्यमित्याह—गुणेति । गुणप्रवाहे संसारे शापादेः श्रीहरीच्छाधीनप्राचीनसुकृतदुष्कृतयोः कारणत्वात्स्वर्गस्य चानित्याल्पसुखत्वान्नरकस्य किंचिद्दुःखस्य चपणसंभवात् सुखादेश्चाल्पत्वादनित्यत्वाच्च. तदुक्तम्—

> "अतोन्येषां वरः शापो गुणदोषः प्रकल्पिता ।
> स्वतः प्राप्ता भेदकृतिर्वासनारूपिणो यथा ॥
> विद्यमानस्य मनसि पुनः स्वप्नेपि दर्शनम् ।
> भगवद्वशता यस्मात्सर्वेषां ज्ञेयमेव तत्" इति ॥

स्वतः स्वतंत्राद्धरेः प्राप्ताकरणो भेदकृतिर्दृश्यत इति शेषः अनेनैतदुक्तं भवति, मनसि विद्यमानस्य वासनारूपिणो वस्तुनः स्वप्ने यथा दर्शनं तथा परादनित्यसुखादिदर्शनं स्यात् न चैतत्सर्वं स्वाधीनं किं तु हरीच्छाधीनमिति ॥ २० ॥

ननु, हरीच्छादिनियतत्वं शापादेः कस्मात्कल्प्यत इति तत्राह–एक इति । कर्मादिसत्तापीशेच्छाधीनेति सूचनार्थैक इति आत्ममायेत्यनेनानन्यनियत इति सूचितम् ॥ २१ ॥

हरेः समत्वं च स्वभक्तसेवानतिरेकेण फलदातृत्वं शत्रोरल्पापराधानतिरेकेण दण्डकरणत्वं सेवा योग्यातिरेकेण स्वानामपि न दास्यति "अपराधातिरेकेण नान्यस्यातः समो हरिः" इति वचनात् ॥ २२ ॥

यद्यपि विशेषतोऽनुरागादिकं नास्ति तथापि तस्य हरेः शक्तेर्विसर्गो विशिष्टस्य भाव एषां जीवानां सुखाद्यर्थं कल्पत इत्यन्वयः यद्यपि भगवानेव मुख्य कर्ता तथापि तेषां पूर्वकर्मणा शक्तीनां विविधसर्गः समूहो येषां शरीरिणामिति वा ॥ २३ ॥

अथ तस्मादीश्वराधीनत्वात् तर्हि किमाकांक्षसीति तत्राह–यदिति ॥ २४—२६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वदिष्टं हीति पूर्वादिष्टेनैव हि ममैषा बुद्धिर्जातेति । ननु, केवलगुणहेतुत्वे चेतनं कर्त्तारं विना बन्धमोक्षादिकं जीवानां न स्यात्, तत्राह—एक इति ॥ १७—२३ ॥

यद्यदि मन्यसे अनुगृह्णासि तत्तदा मम असाधूक्तं क्षम्यताम् ॥ २४—२६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रतिगृह्णामीति ममानेन शापेन कापि क्षतिर्न भविष्यति महादेवे स्वच्छन्दकृतापराधत्वादिति भावः, निरागस्काय महाशप्तवत्यास्तवापि नात्र कोपि दोष इत्याह दैवैरिति पूर्वदिष्टं प्राचीनकर्म प्राप्तमिति भक्तस्य तस्य स्वार्जितस्तथा भावना दैन्येन समुचितैव वस्तुतस्तु जातप्रेम्णस्तस्य कुतः कर्मगन्धोऽपि प्रेम पूर्वदशायामेव "क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि" इत्यादिना सर्व कर्मक्षयोक्तेः । हरेर्भक्तवश्यत्वप्रसिद्धिर्भक्तानां कर्माधीनत्वे सति न सिद्ध्येत् नहि स्वयं

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

कर्माधीनो भगवन्तमधीनमायं वशीकुर्य्यादिति, ततश्च तस्य शापानुग्रहस्वर्गापवर्गनरकादिसमदर्शित्वमहाबलख्यापनार्थं विद्याधराधिपत्यकुपथ्यदूरीकरणार्थं स्वविरहोष्मणा प्रेमक्षुद्विवर्द्धनार्थं स्वीयवैकुण्ठगतस्वचरणसाक्षात्सेवामहामाधुर्य्यभोगप्रदानार्थं च स्वेनैवान्तःप्रेरितया देव्याऽभिशापः श्रीसङ्कर्षणद्वेषेणैव भगवता स्नेहवता पित्रेव कारित इति तत्त्वं तत्तत्फलदर्शनादवगतम् ॥१७॥

अयञ्च संसारचक्रस्वभाव एव न चित्रम् इत्याह—संसारेति ॥ १८ ॥

अप्राज्ञोऽविवेकी ॥ १९ ॥

एवं तावत् सुखदुःखादिकमङ्गीकृत्योक्तम् । इदानीन्तु लवणाकरे पतितः सर्वो लवणरस इव संसारे सर्व एव पदार्थः संसार इति सुखदुःखादिभेदावगमो नोपपद्यत इत्याह—गुणप्रवाह इति । न ह्यनलस्पर्शप्रवाहमध्ये पतितस्य यावत्तटानवाप्तिः तावत् किमपि वस्तुनः सुखायेत्यतः शापानुग्रहादिकं सर्वमपि दुःखमेवेति भावः ॥ २० ॥

ननु, तस्मिन्न गुणप्रवाहे को वा पातयिता ? को वास्मादुद्धर्ता? इति चेद्भगवानेवेत्याह—एक इति । आत्ममायया रजसा सृजति, सत्त्वेन पालयति, तमसा संहरति. एवं बन्धञ्चाविद्यया सृजति, विद्यया मोक्षञ्च, सत्त्वेन सुखं, तमसा दुःखञ्च. निष्कलः कला माया तद्रहितः ॥ २१ ॥

ननु, तस्य कश्चित् प्रियोऽप्रियश्च जीवोऽवश्यं वर्त्तत एव यतः कमपि बध्नाति कमपि मोचयति कमपि दुःखयति कमपि सुखयतीत्यत आह—नेति । न ज्ञातिर्नबन्धुः ।तत्र हेतुः सर्वत्र समस्य समत्वे हेतुः निरञ्जनस्य अञ्जनं माया तद्रहितस्य अतएव सुखे विषयसुखे राग आसक्तिर्नास्ति विषयसुखप्रातिकूल्ये रोषो द्वेषः कुतः स्यात् यदुक्तम् "इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ" इति अतएव रागद्वेषमूलकौ दयितप्रतीपौ तस्य न स्त इति भावः ॥ २२ ॥

एवं तस्य साम्यञ्चेत्तर्हि कथं कमपि स सुखयति कमपि दुःखयति ? इत्यत्राह—अथापीति । यद्यपि स सर्वत्र समस्तदपि तस्य शक्त्या मायया यो विसर्गः अनादिपुण्यपापादिलक्षणकर्मपरम्परा स एव सुखाद्यर्थमवकल्पते । अयमर्थः यद्यपि मायायास्तच्छक्तित्वात् स एव सुखदुःखादिकं सृजतीति तस्य वैषम्यमेव, तदपि मायायाः स्वरूपशक्तित्वाभावात् स न सुखदुःखादि सृजतीति, वस्तुतस्तस्य साम्यमेव. यथा मायिकविश्वस्य भगवद्रूपत्वेऽपि न भगवत्स्वरूपभूतत्वमिति यथा सूर्य्यसम्बन्धिन आतपस्य घूककुमुदादीनां दुःखदत्वेन चक्रवाककमलादीनां सुखदत्वेन वैषम्येऽपि सूर्य्यस्य तेषु वैषम्यं कोऽपि न वर्णयति तद्वदिति भावः ॥ २३ ॥

अथ अहं त्वां केवलं प्रसादयामि न तु शापमोक्षाय. हे भामिनि, अविचारेण कोपने ! ननु, तर्हि किं प्रसादनेन तत्राह—मयोक्तं साध्वपि यदसाधु मन्यसे तदसाध्वेवास्तु त्वया क्षम्यतां



मम तु शापे शापान्ते वा दुःखसुखयोरभावस्ततः प्रसन्नापि शापान्तं माकार्षीरिति भावः ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वेदिष्टं पूर्वेण भगवतैव प्रारब्धकर्मानुसारिणा दिष्टम् आदिष्टम् ॥ १७ ॥

सर्वत्र सर्वेषु लोकेषु सर्वदा सर्वेषु भूतेषु पूर्वदिष्टमित्यनुषङ्गः ॥ १८ ॥

तमेवं भगवन्तं सुखदुःखयोर्हेतुं मन्यमानः आत्मनः परस्य च तद्धेतुतां निराकरोति—नैवेति । सुखदुःखयोरात्मा स्वयं कर्ता न स्यात् परोऽन्यश्चापि नैव स्यात् अप्राज्ञस्तु आत्मानं परञ्च कर्तारं सुखदुःखहेतुं मन्यते प्राज्ञस्तु परमात्मानमेव कर्तारं हेतुं मन्यत इति भावः——

"सुखं दुःखं भवो भावो भयं चाभयमेव च ।
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ॥
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः" ॥

इतिश्रीमुखोक्तेः ॥ १९ ॥

अग्रे प्रविष्टस्यैव संसारे पतितस्य पुनः कः शापादिरिति वैराग्यार्थमाह—गुणप्रवाह इति । गुणप्रवाहे भगवन्मायागुणप्रवाहे संसारे ॥ २० ॥

एवम्भूते संसारे प्रविष्टस्य जीवस्य जन्मबन्धमोक्षादिषु भगवानेव हेतुरित्याह—एक इति । मायया सत्त्वादित्रिगुणया भूतानि देवतिर्यगादीनि सुखदुःखादिभाजनानि सृजति ॥ २१ ॥

सर्वत्र समस्यापि भगवतो विषमसुखदुःखादिदातृत्वे तत्तत्कर्मैव कारणमित्याह—न तस्येति द्वाभ्याम् । प्रतीपः प्रतिकूलः निरञ्जनस्य अज्यते इत्यञ्जनं प्राकृतदेहेन्द्रियसम्बन्धस्तद्रहितस्य अत एव तन्निमित्ते सुखे रागो न भवति रागनिमित्तो रोषः कुतो भवति ॥ २२ ॥

तथापि तस्य भगवतः मायया सत्त्वादित्रिगुणया यो विसर्गः सात्त्विकादिलक्षणं कर्म, एवं देवादीनां सुखाद्यर्थं कल्पते समर्थो भवति तत्तत्कर्मनिमित्तीकृत्य भगवान् सुखादिकं देवादिभ्यो ददातीति फलितोऽर्थः ॥ २३ ॥

अथ अतो हेतोः हे भामिनि ! त्वां शापमोक्षाय न प्रसादये किन्तु ममोक्तं साध्वपि यदसाधु मन्यसे तद् हे सति, क्षम्यताम् इति त्वां प्रसादयामि ॥ २४ ॥

---

### भाषाटीका ।

चित्रकेतुरुवाच ॥

हे अंबिके ! आपकी शाप को अपनी अंजलि से नहिं ग्रहण करता हूं । क्योंकि देवताओं ने मनुष्य को जो कुछ कहा वह उसकी पूर्वकी प्रारब्ध है ॥ १७ ॥

श्रीशुक उवाच ।

इति प्रसाद्य गिरिशौ चित्रकेतुररिन्दम ! ।
जगाम स्वविमानेन पश्यतोः स्मयतोस्तयोः ॥ २५ ॥
ततस्तु भगवान् रुद्रो रुद्राणीमिदमब्रवीत् ।
देवर्षिदैत्यसिद्धानां पार्षदानां च शृण्वताम् ॥ २६ ॥

श्रीरुद्र उवाच ।

द्रष्टवत्यसि सुश्रोणि ! हरेरद्भुतकर्मणः ।
माहात्म्यं भृत्यभृत्यानां निःस्पृहाणां महात्मनाम् ॥ २७ ॥
नारायणपराः सर्वे न कुतश्चन बिभ्यति ।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ २८ ॥
देहिनां देहसंयोगाद् द्वन्द्वानीश्वरलीलया ।
सुखं दुःखं मृतिर्जन्म शापो ऽनुग्रह एव च ॥ २९ ॥
अविवेककृतः पुंसो ह्यर्थभेद इवात्मनि ।
गुणदोषविकल्पश्च भिदेव स्रजिवत्कृतः ॥ ३० ॥
वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् ।
ज्ञानवैराग्यवीर्याणां नेह कश्चिद्व्यपाश्रयः ॥ ३१ ॥
नाहं विरिञ्चो न कुमारनारदौ न ब्रह्मपुत्रा मुनयः सुरेशाः ।
विदाम यस्येहितमंशकांशका न तत्स्वरूपं पृथगीशमानिनः ॥ ३२ ॥

भाषा टीका ।

इस संसार चक्र में अज्ञान मोहित जंतु भटकता हुआ सदा सब जगे सुख और दुःख भोगता है ॥ १८ ॥

सुख दुःख का कर्त्ता न आप है न पर है । प्राज्ञ पुरुष परमात्मा ही को कर्त्ता मानता है ॥ १९ ॥

गुणों के प्रवाह वाले इस संसार में शाप और अनुग्रह क्या ? एवं स्वर्ग और नरक तथा सुख और दुःख क्या है ॥ २० ॥

एक भगवान अपनी माया से प्राणियों को सृजता है। और इनके बंध मोक्ष और सुख दुःख को भी सृजता है, और आप स्वयं निर्लेप है ॥ २१ ॥

न उस परमात्मा का कोई प्रिय न कोई विरुद्ध, न ज्ञाति न बंधु न अपना न पराया क्योंकि वह सर्वत्र सम है और निःसंग है उसका सुख में भी राग नहीं तो फिर द्वेष कहां से होगा ॥ २२ ॥

तथापि उसको मायाशक्ति की रचना जो है वही इन-जन्तुओं के सुखदुःख, हित अहित, बन्धमोक्ष, इत्यादि रूप-संसार के लिये समर्थ होती है ॥ २३ ॥

हे भागिनि ! ( कोपस्वभाववाली ) अब मैं आप को शाप छुड़ाने के लिये नहीं प्रसन्न करता हूं । हे सति मेरे कथन को जो आपने अयुक्त समझा है, उसकी मात्र क्षमा कीजिये ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गिरिशौ भवानीशङ्करौ प्रसाद्य स्मयतोर्विस्मयङ्कुर्वतोः सतोः ॥ २५ ॥ २६ ॥ २७ ॥

स्वर्गादावपि तुल्योऽर्थः प्रयोजनमिति द्रष्टुं शीलं येषां ते तथा ॥ २८ ॥

तत्र तदुक्तमेव हेतुमाह—द्वाभ्याम् । देहिनां सुखं दुःखमित्यादि द्वन्द्वानीश्वरस्य लीलया मायया भवन्ति तेषु च गुणदोषविकल्पश्चेत्यन्वयः ॥ २९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इष्टानिष्टभेद इत्ययः स्फुरति स आत्मन्यर्थभेदः सुखादिभेदः पुंसः स्वप्ने यथा अविवेककृतो भवति स्रजिवत्सर्पमालादिभि-र्यथा तथैव कृत इत्यर्थः । स्वप्नादिति चकारं स्रजिवादिलार्थं पाठान्तरे तु सुगमम् ॥ ३० ॥

अतो भागवतानां निःस्पृहत्वमुचितमेवेत्याह—वासुदेवइति । ज्ञानवैराग्ययोर्वीर्यं बलं येषां तेषां व्यपाश्रयो विशिष्टबुद्ध्या आश्रयणीय अर्थो नास्ति ॥ ३१ ॥

अहं च हरिदासत्वेन तत्स्वभावस्याश्रैतच्चित्रमिति वक्तुं हरेर्माहात्म्यमाह—नाहमिति द्वाभ्याम् । ईहितमभिप्रायं लीलां वा यदा वयं न विद्मस्तदा तस्य स्वरूपमंशकांशका अपि सन्तः पृथगीशमानिनो न विदुरेव ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थं गिरिजां पार्वतीं प्रसाद्य प्रसन्नां कृत्वा चित्रकेतुः हे अरिन्दम, स्मयतोः आश्चर्यं प्राप्तयोः तयोर्भवभवान्योः पश्यतो-स्तयोः विमानेन गमनसाधनेन जगाम ॥ ३५ ॥

ततश्चित्रकेतोर्गमनानन्तरं रुद्रः रुद्राणीमम्बिकांप्रति इदं-वक्ष्यमाणं देवर्षिप्रभृतीनां स्वपार्षदानाञ्च शृण्वतां सताम-ब्रवीत् ॥ ३६ ॥

तदेवाह—दृष्टवतीत्यादिना, समदर्शिन्वित्यन्तेन । हे सुभ्रोणि ! अद्भुतकर्मणः विनिर्वाचविचित्रस्वाभाविकक्रियाशक्तेर्हरेर्भगवतो भृत्यवर्गाणां माहात्म्यं दृष्टवत्यसि कथंभूतानां निःस्पृहाणां वैषयिकं सुखमनिच्छूनां महात्मनाम् अपकर्तृष्वप्युपकर्तृत्वबुद्धीनां सुखदुःखयोः समबुद्धीनाञ्चेत्यर्थः ॥ ३७ ॥

एतद्दृष्टान्तेन सन्यानपि भगवद्भक्तानीदृशानेवाऽऽह इत्याह—नारायणपरा इति । सर्वे नारायण एव परः परतत्त्वं येषां ते कुतश्च-न अर्वाचीनस्य निग्रहादेर्न बिभ्यति भयं न कुर्वन्ति, कुतः ? यतस्ते स्वर्गादिष्वपि तुल्यार्थदर्शिनः तुल्यप्रयोजनदर्शिनः विषमा-र्थदर्शनमेव भयहेतुरिति भावः । अपवर्गोऽत्र कैवल्यं मोक्षस्य भग-वदनुभवरूपत्वेन तेषां तस्य स्वर्गादितुल्यत्वकथनानुपपत्तेः यद्वा अपवर्गो मुक्तिरेव भगवद्दास्यमन्तरेण तेषां न प्रयोजनं किं पुनस्स्वर्गादिस्तेषां न प्रयोजनमिति सूचनार्थं वाऽपवर्गशब्दः प्रयुक्तः स्वर्गस्यापि नरकतुल्यताख्यापनाय नरकशब्दः, यथा नरकास्तथा स्वर्गोऽपीत्यर्थः, तथा चोक्तम्—

"एते वै निरयास्तात स्थानस्य परमात्मनः" इति ।

"वासुदेवे मनो यस्य जपहोमार्चनादिषु ।

तस्यान्तरायो मैत्रेय ! देवेन्द्रत्वादिकं फलम् ॥ "

इति च स्वर्गादिषु तुल्यार्थदर्शिन इत्यनेन विषमदर्शनं भयहेतुरिति सूचितम् ॥ ३८ ॥

तत्र समदर्शननिमित्तं वक्तुं तावद्विषमदर्शननिमित्तमाह—देहिना-मिति द्वाभ्यां । तावद्देहिनां जीवानाम् ईश्वरलीलया हेतुभूतया ईश्वरस्य लीलात्मिकया जगत्सृष्ट्या यो देहसम्बन्धः तस्मादेव सुखदुःखादीनि द्वन्द्वानि भवन्ति, न तु स्वरूपत इति निर्धितार्थं, देहसंयोगमात्र एवेश्वरलीलाहेतुभूता, न तु द्वन्द्वेषु वा देहयोगवै-चित्र्ये वा हेतुरिति तात्पर्यम् ॥ ३९ ॥

तर्हि तत्र को हेतुः ? तत्राह—अविवेककृत इति । आत्मनि ज्ञानै-काकारे जीवे अर्थभेद इव देवमनुष्यत्वादिभेद इव गुणदोष-विकल्पः गुणाः सुखजन्मानुग्रहाः दोषाः दुःखमृत्युशापाः एवां विकल्पः भेदः अविवेककृतः अनादिकर्मनिमित्तो यो देहात्म-भ्रान्तिस्वतन्त्रात्मभ्रान्तिरूपोऽविवेकः तेन कृतः तन्निमित्त-इत्यर्थः । अर्थभेदस्याविवेककृतत्वासिद्धत्वात्तारेण सदृष्टान्तितः उभ-यमप्यविवेककृतमिति तात्पर्यम्. अत एवार्थभेदस्याविवेककृतत्वं देहात्मभ्रान्तिमतां पुरुषाणामप्रसिद्धमिति, तस्य दृष्टान्तत्वमस्व-रसमित्यभिप्रेत्य तत्प्रसिद्धं दृष्टान्तान्तरमाह—भिदेवस्वप्नकादिवेति । यथा स्वप्नकादिषता भिदा भेदः अविवेककृतः तथा गुणदोष-विकल्पोऽप्यविवेककृत इत्यर्थः यथाऽपवरकादिषु शयानस्य एकस्य पुरुषस्य स्वप्नद्रष्टुः स्वाभिन्नवस्तुनोऽविद्यमान एव गजस्कन्धारोहणदेशान्तरगमनराज्याभिषेकशिरश्छेदादयहेदभे-दस्तन्मात्रानुभाव्यः तत्कालमात्रावसायी च तत्तत्कर्मनिमि-त्तदेहात्मभ्रान्त्याद्यनुगुणमीश्वरकल्पितोऽविवेककृतः तथा आप्र-लयस्यानुभाव्यसुखदुःखादिद्वन्द्वजातानि देवादिवैचित्र्याणि च तत्तत्कर्मतन्मूलकदेहात्माभिमानाद्यनुगुणमीश्वरकृतान्यप्यविवेक-मूलकान्येवेतिभावः ॥ ३० ॥

एवं भयनिमित्ते विषमदर्शनेऽविवेक एव हेतुरित्युक्तम् अथ नारायणपरायणानामीदृशाविवेकाभावात्कचित्कदाचिदनुपजात--स्याप्यविवेकस्य पुनः स्वात्मपरमात्मयाथात्म्यावमर्शने तदपोहात्त-न्मूलकं विषमदर्शनं तन्मूलकं भयञ्च नास्तीत्याह—वासुदेव इति । ज्ञानं शास्त्रजन्यं प्रकृतिपुरुषेश्वरयाथात्म्यावमर्शनरूपं तत्प्रयुक्तं वैराग्यं शब्दादिविषयेष्वनासक्तिरूपम् एतदुभयमेव. वीर्यं बलं येषां तेषां वासुदेवे भगवति निरतिशयानन्दरूपे भक्तिमुद्वहतां कुर्वतां नृणां कुतश्चिदपि हेतोर्व्यपाश्रयः व्यपगत आश्रयः यस्मात्तद्व्यपा-श्रयं यस्मात् विषमदर्शनाश्रयः आश्रयणीयः परमात्मा व्यपगतो भवति विस्मृतो भवति तादृशं विषमदर्शनं नास्तीत्यर्थः निरन्तरं प्रकृतिपुरुषेश्वरयाथात्म्यावलोकनतत्प्रयुक्तवैराग्यबलाविस्मृतदेहात्म-दनुवर्तिस्वात्मगतानां निरतिशयानन्दरूपभगवद्भक्तिनिष्ठानामविवे-काभावात्कचित्कदाचित् आपतितस्याप्युक्तनिषेधाननिवैराग्यबलेन तन्निरसनशीलत्वाच्च तेषां विषमदर्शनमेव नास्ति, कुतः, तन्नि-मित्तं भयमिति भावः ॥ ३१ ॥

एवं स्वभार्यायै नारायणपरायणानां माहात्म्यमाज्ञानस्यै तत्प्र-दर्शितं रुद्रेण, अथ स्त्रीस्वभावस्यात्सर्वेश्वरे सर्वकारणे त्वयि त्वद्भक्तेषु वा त्वत्तुल्यत्वमिवात्यन्तनारायणस्य तद्भक्तानां वा समुद्रे विप्रुडिव कियदेतन्माहात्म्यमित्याशङ्कमानां प्रत्याह—नाह-मिति । अहं रुद्रः अस्मदादयो यस्य नारायणस्य ईहितं 'भावेक्षः'

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ईहां चेष्टां तत्स्वरूपञ्च न विदामः न जानीमः ईहा च जगद्व्यापाररूपा चेष्टा. अज्ञाने हेतुः, अंशांशकाः तदाहिततज्ज्ञानदाक्लिलेशयुक्ताः तस्मात्तेऽपि वयमपि पृथगीश्वरा इत्यभिमानयुक्ताः, अनेन स्वस्मिन् स्वैश्वरत्वशङ्का निवारिता. ईहितं न विदामेत्यनेन कारणत्वशङ्कापि, सृष्ट्यादिव्यापारस्य तत्कर्तृकत्वकथनात्. स्वरूपं न विदामेत्यनेन तत्स्वरूपस्यानन्तमहिमत्वादिस्वमपरिच्छिन्नत्वश्चोक्तं. तत्र विरिञ्चो ब्रह्मा कुमारः सनत्कुमारः ब्रह्मपुत्राः मरीच्यादयः मुनयः तद्व्यतिरिक्ता अन्ये मुनयः सुरेशाः इन्द्रादयः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेर्भृत्यभृत्यानां माहात्म्यं देहवियोगावस्थावस्थाप्राप्तावस्थ-त्रासलक्षणम् । २७ ॥

भद्रदैव नैतादृशमाहात्म्यं किमन्येषामप्यस्तीत्यभिप्रेत्याह— नारायणेति । कुतो न बिभ्यतीति तत्राह—स्वर्गेति ॥ २८ ॥

द्वन्द्वानीत्युक्तविषयं सुखमित्यादि ईश्वरलीलया देहसंयोगात् द्वन्द्वानि भवन्तीतिशेषः ॥ २६ ॥

ननु, देहसम्बन्धाद्द्वन्द्वादीनि मस्त्वस्य भ्रस्रगालाद्याकारेण भेदः किं कृतः ? इति तत्राह—अविवेककृत इति । इदात्मनि जीवे भ्रयं स्रगालोऽयमित्याद्याकारनिमित्तव्यवहारभेदः पुंसोऽविवेकेन हरेः स्वस्य च स्वरूपविषयज्ञानाभावेन कृतो यस्मात्तस्मादियमनर्थपरम्परा किञ्चात्मन्ययं गुणयोस्त्वयं दोषोऽस्तीति विकल्पश्चाविवेकेन कृतः कथमिव स्वप्ने कल्पिता वासनोपादानकृता गजादिलक्षणा भिदेव अनित्यत्वादेवैतत्साम्यं न तु मिथ्यात्वात् अन्यथार्थक्रियायोग इति ॥ ३० ॥

तर्हि अस्यानर्थस्य निवृत्तौ किं साधनमिति तत्राह— वासुदेव इति । अन्यः कश्चिद्विधिप्राप्यो नास्ति भक्तिज्ञाने एवेति शेषः ॥ ३१ ॥

देवदत्ताज्ञानवदस्य ज्ञानं न सुसाधनमित्याह—नाहमिति ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दृष्टवत्यसि भवच्छापेऽपि भयाभावेन तर्कितवत्यसि किम् ॥२७॥

श्रीनारायणं विनान्यत्र ह्यनोपादानदग्विराहित्यादपवर्ग इव स्वर्ग इव नरकेऽपि तुल्यमेकमेवार्थं नारायणरूपपुरुषार्थं द्रष्टुमनुभवितुं शीलं येषां ते तुल्यशब्दस्यैकवाचकम् "रूपाङ्गयां तोयाः समानपदे" इतिवत् ॥ २८—२६ ॥

अविवेकेत्यस्य टीकायां तेतु चेत्यध्याहृतं । इहानिष्टेति गुण दोष विकल्पस्य व्याख्येयं भिदा यथेत्यत्र भिदाचेति ज्ञेयं क्वचा रावणाचनकृत इति पाठान्तरम् ॥ ३० ॥ ३१ ॥

पृथगीशमानिनश्चेत्तर्हि वयमंशकांशका अपि यस्येहितं स्वरूपञ्च न विदाम ।किन्तु भक्ताश्चेत्तर्हि सर्वेपि विदुरित्यर्थः ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्मयतोः विस्मयवतोः सतोः ॥ २५ ॥ २६ ॥

हे सुश्रोणि ! इति त्वं सौन्दर्य्यगुणैरेवाधिकमाहात्म्यासि न तु भक्तिज्ञानवैराग्यादिभिरिति परिहासो ध्वनितः । अद्भुतकर्मेण इति, हरेरिदमद्भुतं कर्म मया दृष्टं यत्त्वया शापं दापयित्वा तदापकर्ष एव तेन कृतः स्वभक्तस्य प्रेमसम्पाङ्कितादपि न्यूनताप्राप्तस्यागणितदेवीशापत्वरूपप्रभावख्यापनया परमोत्कर्ष एव कृतः । महात्मनामिति त्वया कोपभरितयापि दत्तोऽभिशापस्तस्मै यदि स्वल्पीयदपि दुःखं दातुमपारयिष्यत्तदापि ते शापः सफलोऽभविष्यत् हन्त हन्त व्यर्थ एवायमभूदित्यतो महात्मसु प्रेमिभक्तेषु त्वयाद्यारभ्य नैवं व्यवहर्त्तव्यमिति शिक्षा ध्वनिता ॥ २७ ॥

नन्वेवं माहात्म्यधरत्वे भक्तानां को हेतुस्तत्र नारायणैकनिष्ठत्वमेव नान्य इत्याह—नारायणेति । न केवलमेते चित्रकेतुप्रभृतयः एवमपि तु सर्वे एव स्वर्गेति अयाद्यामेव भक्तिसुखराहित्येनारोचकत्वाविशेषाविति भावः ॥ २८ ॥

नारायणनिष्ठत्वाभावे त्वेवं भवेदित्याह—देहिनामिति । ईश्वरलीलयेति तदीक्षणलीलालब्धबलया माययेत्यर्थः ॥ २६ ॥

तस्मान्मायिकमवास्तवं वस्तु सुखदुःखादिकमखिलत्वादयस्त्विव जानीयादित्याह—अविवेकेति । पुंसः स्वप्ने आत्मनि अर्थभेदः चौरगोजनपुत्रमरणादिरिव जागरेऽपि गुणदोषविकल्पसुखदुःखादिभेदः इकृतो ज्ञेयः । तत्र दृष्टान्तः । स्रजि मालायां भित् रज्जुरियमिति सर्पोऽयमिति भेद एव वत् यथेत्यर्थः "इव यद्वेति सादृश्ये" इत्यभिधानात्. स्रजि तदिति पाठे स्रजि मालायां तत्वतो ईतोर्भिदा भेद इव प्रथमे पाठे भित् क्विबन्तः द्वितीये भिदा टाबन्तः ॥ ३० ॥

तदेवं ज्ञानिनां द्वन्द्वेषु ज्ञानाभ्यासेनाप्यवस्तुबुद्धिर्दुष्करा भक्तानान्तु ज्ञानवैराग्ययोर्भक्त्यनुभावरूपत्वात् विनापि ज्ञानाभ्यासेन तेष्वननुसन्धानमपि न भवतीत्याह—वासुदेव इति । इह संसारे कश्चिद्द्वयोः विद्येपस्यापकर्षस्य चाश्रयो नास्ति भक्त्यनुसन्धानादेव मायिकवस्तूनामुत्कर्षापकर्षाननुसन्धानं नैव जायत इति भक्तानां तत्त्वमवधारयेति भावः ॥ ३१ ॥

अस्मदादीनामपि नास्य स्त्रीयवत्याह—नाहमिति । ईहितमभिप्रायं लीलां वा न विदाम यतः पृथगीशमानिनः ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गिरिशौ सतीभवौ स्मयतोः आश्चर्यं प्राप्तयोः सतोः ॥ २५ ॥ २६ ॥ २७ ॥

न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा।
आत्मत्वात्सर्वभूतानां सर्वभूतप्रियो हरिः ॥ ३३ ॥
तस्य चायं महाभागश्चित्रकेतुः प्रियोऽनुगः।
सर्वत्र समदृक्शान्तो ह्यहं चैवाऽच्युतप्रियः ॥ ३४ ॥
तस्मान्न विस्मयः कार्यः पुरुषेषु महात्मसु।
महापुरुषभक्तेषु शान्तेषु समदर्शिषु ॥ ३५ ॥
श्रीशुक उवाच।
इति श्रुत्वा भगवतः शिवस्योमाऽभिभाषितम्।
बभूव शान्तधी राजन्देवी विगतविस्मया ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वर्गादिषु आधारत्वेन अन्तःप्रविष्टत्वेन वस्तुतुल्यः सततं भगवान् तद्दर्शिनः ॥ २८ ॥

ईश्वरस्य सर्वेश्वरस्य लीलया तत्तत्कर्मानुरूपफलदानुरूपया ॥ २९ ॥

ननु, किं मूलस्तर्हीश्वरनैरपेक्ष्येणाहं समर्थत्वात्सुखी असौ असमर्थत्वात् दुःखीति गुणदोषविकल्प इत्यत्राज्ञानमूल इत्याह-आत्मनि अर्थभेद इव आत्मस्थाने स्थूलोऽहं कृशोऽहमिति अर्थभेदोऽर्थान्तरभूतोऽनात्मा देहो यथाऽविवेककृतः अज्ञाननिरूपितः अथवा अनात्मनो देहस्यार्थत्वेन भेदो मतभेदः बाल्यपचरूपो विभागोद्भवः पुंसः गुणदोषविकल्पः अविवेककृत एव अहं समर्थत्वेन गुणवान्सुखित्वात् असौ असमर्थत्वेन दोषवान् दुःखित्वात् इति गुणदोषभेदः सर्वमूलभूतभगवदनवबोधकृतः—

"ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया" इति ॥

मायेति शास्त्रोक्त इत्यर्थः दृष्टान्तान्तरम्। स्रजि सिद्धवस्य मालायां सर्पोऽयमिति भेद इव च गुणदोषविकल्पोऽविवेककृत एव "इव वद्वेति सादृश्ये" इत्यभिधानात् वदऽव्ययं सादृश्यवाचकं पृथगेव अतः स्रजि वदित्यापेमित्युक्तिरयुक्ता ॥ ३० ॥

उक्तप्रकारेण भगवानेव सुखादिप्रदः अतो भगवति भक्तिमुद्वहतां कश्चिद्भगवदितरः व्यपाश्रयः सुखादिप्राप्तये सुखादिनिराकृतौ विशिष्टबुद्ध्या आश्रयो नास्ति ॥ ३१ ॥

एवंविधस्य श्रीहरेः यथाहमनुगस्तथा चित्रकेतुरपीत्याह-नाहमिति त्रिभिः। अंशकः पुरुषावतारस्तदंशकाः ईदितं स्वरूपं चेयतावच्छिन्नतया न विदामः ॥ ३२ ॥ ३३ ॥

भाषा टीका।

श्रीशुक उवाच ॥

हे अरिन्दम! ( शत्रुवों के दमन करने वाले ) चित्रकेतु इस प्रकार भवानी और शङ्कर दोनों को प्रसन्न कर, मुसक्याते हुए उन दोनों के देखते २ विमान पर बैठ कर चलदिया ॥ २५ ॥

तदनन्तर भगवान् श्रीशङ्कर, देव ऋषि दैत्य सिद्ध और पार्षदों के सुनते २ श्रीपार्वतीजी से ऐसे बोले ॥ २६ ॥

श्री रुद्र उवाच ॥

हे सुभ्रोणि ! ( सुन्दरनितम्ब वाली ) अद्भुत कर्मा हरि के निस्पृह दासानुदास ऐसे महात्माओं का माहात्म्य तुमने देखा ? ॥ २७ ॥

सबही नारायण परायण किसी से भय नहीं करते क्योंकि वे लोग स्वर्ग नरक और अपवर्ग में भी एकार्थ दर्शी होते हैं ॥ २८ ॥

जीवों के देह के संयोग होने से ईश्वर की माया से सुखदुःख जन्म मरण शाप अनुग्रह रूप द्वंद्व होते हैं ॥ २९ ॥

घटपटाद्यर्थ भेद के तरह आत्मा में देव मनुष्यादि भेद अविवेक कृत हैं गुण दोष विकल्प भी इसी प्रकार माला में सर्पादि भेद के तरह किया गया है ॥ ३० ॥

वासुदेव भगवान् में भक्ति करनेवाले और ज्ञान वैराग्य रूप वीर्यवाले भक्तों को इस संसार में विशेष आश्रयणीय कुछ भी नहीं है ॥ ३१ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अत एव हरिरपि सर्वेषां भूतानां प्रियः ॥ ३३ ॥
अहञ्चैवाच्युतस्य प्रियः तस्मान्ममास्मिन् क्रोधो नाभूदिति भावः ॥ ३४ ॥ ३५ ॥ ३६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्ययं सर्वेश्वरः सर्वकारणभूतः तर्ह्यस्य प्राकृतस्येवाश्रिते-ष्वेव विशिष्योक्तविषममाहात्म्यापादकः किमयं पक्षपातः तत्राह—न ह्यीति । अस्य नारायणस्यातीव प्रियादिः कश्चिन्नास्ति, तत्र हेतुः, आत्मत्वात्सर्वभूतानां ब्रह्मादिस्तम्बपर्यन्तानां चिदचिदात्मकानां भूतानामात्मत्वादन्तरात्मत्वात् न ह्यात्मनः एकं शरीरं प्रियमेकमप्रियं भवतीति भावः, यत एवात्मा सर्वभूतानामतस्तेपामाश्रयः धारकः अन्तःप्रविश्य सर्वेत्यर्थः । सर्वभूताश्रय इत्यनेन शरीराणां सर्वभूतानाम् आत्मभूतपरमात्मानुवर्तनं युक्तमेवेति सूचितम्. न हि शरीरमात्मानमननुवृत्यावातिष्ठते शरीरस्यात्मानुवर्तनस्वभावत्वात्. हरिरित्यनेन स्वानुवर्त्यनिहरत्वं सूचितम्. एवञ्च ये स्वाभाविकं जीवपरमात्मनोः शरीरात्मभावं जानन्तस्तमनुवर्त्तन्ते तेषु तस्यानुग्रहः इतरेषु तदभाव इति तात्पर्यम् अत एव तस्य वैषम्यामित्यपि सूचितं. न ह्यननुवर्तिष्वननुग्रहमात्रेण तस्य वैषम्यं. न ह्याश्रिताभीष्टप्रदस्य सुरद्रुमस्यानाश्रिताभीष्टाप्रदानमात्रेण तस्य वैषम्यमापादयितुं शक्यम् ॥ ३३ ॥

यत एवायमात्मा भूतानामाश्रितानामभीष्टार्थदो ऽपिपमश्चात एव चित्रकेतुवदहमपि तमेवोपासे इत्याह—तस्येति । यथा महाभागः विवेकी सर्वत्र समदृक् शान्तश्च चित्रकेतुस्तस्य नारायणस्यानुगः भृत्यः भक्तः अत एव प्रियः निरतिशयप्रीतिविषयः तथा अहमप्यच्युतस्य प्रियः तन्निमित्तभक्तिमांश्च ॥ ३४ ॥

तस्मान्नारायणप्रियमाहात्म्ये न विस्मयः कार्यं इति यदनुपसंहरति—तस्मादिति । यस्मान्नारायणस्तद्भक्ताश्च अस्मदादिभ्यो विलक्षणप्रभावाः तस्मान्महापुरुषस्य भगवतः भक्तेषु महात्मसु प्रकृतिपुरुषेश्वरयाथात्म्यावमर्शनप्रवणचित्तेष्वत एव समदर्शिषु शान्तेषु विरक्तेषु पुरुषेषु न विस्मयः कार्यः ॥ ३५ ॥

भगवतः शिवस्येत्थम् एवमभिभाषितं वचः श्रुत्वा गौरी देवी धिगतविस्मया विस्मयरहिता शान्तधीः क्रोधरहिता च बभूव ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मत्वात्स्वामित्वात् न हि सर्वभूतस्वामिनः स्वपरभेदकल्पना युक्ता देवन्तरमाह—सर्वभूतेति ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भक्तमाहात्म्यमेव चित्रकेतुदृष्टान्तेन स्पष्टयति—न ह्यस्येति द्वाभ्याम् । प्रियाप्रिययोः स्वपरयोश्च भेदो नास्तीत्यर्थः । तत्र हेतुः, आत्मत्वादिति, आत्मत्वेन साम्यादनपेक्षणीयत्वाच्चेत्यर्थः । आत्मत्वादेव हेतोः सर्वभूतानान्तु प्रियः निरुपाधिकप्रीतिविषयः ॥ ३३।३४ ॥

विरुद्धं । अत एवाग्रे वक्ष्यते । 'इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः' इति ॥ ३५-३८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हरेश्च तत्त्वं शृणु—नहीति । स तु हरिः सर्वभूतानां प्रिय एव तदपि यद् स केषाञ्चिद् प्रियो भवति केषाञ्चिद्द्वेष्यश्च भवति तत्र तारतम्येन मायैव कारणमिति तन्मायायाश्च तत्त्वं भाषितम् ॥ ३३ ॥

तस्य च तथाभूतस्यापीत्यर्थः प्रियत्वे हेतुः सर्वत्र समदृक् स्वर्गापवर्गादौ तुल्यार्थदर्शी अत एव शान्तः । उच्चनीचबुद्धिरहितः एतादृशगुणाकत्वेन तत्प्रियत्वे दृष्टान्तं दर्शयति—अहं चैवेति, अहञ्च समदृक् शान्तश्च सन्नच्युतस्य प्रियः अतो ममानासक्तत्वाल्लौकिकफलञ्चायनादरत्वाच्च सभादौ भवदालिङ्गनमपि न सङ्कोचहेतुरिति भावः । तस्मादच्युतस्याश्रयत्वात् ॥ ३४ ॥

पूर्वं धृष्टायेत्यादिना निन्दितं सम्प्रति त्वेतावत् साधुलक्षणमिति स्तुतं तत्त्वञ्च तस्य व्यवहृतासाधुत्वमवलम्ब्योक्तत्वात् किन्त्वस्य चित्रकेतोर्मर्म च तत्त्वं शृणुष्वित्याह—तस्य सर्वत्र सतस्यापि ।

"समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति च मां भक्त्या मयि ते तेषु चाप्यहम्"

इति तद्वाक्यादेवायमनुगश्चित्रकेतुः प्रियः । ममापि भक्तत्वादहञ्च प्रियः तस्मादावयोस्सङ्घर्षणभक्तयोः परस्परसख्येनान्तःस्नेहवत्वात् कठोरोक्त्यादिकमपि सख्यसुखपोषकमेव, त्वन्तु वृथैव कोपिन्यभूः । किञ्च सत्यमद्भीदृशी एव त्वन्त्वात्मानं निष्किञ्चनमैकान्तिकभक्तत्वेन सर्वत्र दर्शयसि अथ च रहसि विद्याधरीसहस्रेण सह रमसे तस्मात्त्वं कपटी अहन्त्वात्मानं क्रीडास्पदत्वमयं दोषं दर्शयन्निष्कपट एवास्मि. किञ्च त्वं भक्तिं दर्शयसि विषयभोगं गोपयसि अहन्तु तद्विपरीत एव वर्त्ते इत्यावयोः अन्तरमेतेसख्या एव साक्षित्वेनाचक्ष्व त्वामित्यादि नर्मगोष्ठीरसास्वादोऽप्यधाभविष्यदेव यदि त्वमन्तरा अन्तरायं नाकरिष्य इति त्वत्कोपवैरस्यादेव स नाभूदित्युपालम्भो ध्वनितः । हन्त हन्त चत्रवन्धुरुपर्यानीलेष्वधुनैव भक्तिमार्गमारूढेषु तवेश्वरस्यानादिमहाभक्तस्याप्येतादृशेष्वप्येतावान् भावो नमस्तुभ्यं तदिति विस्मयवत्यां तस्यां सत्यमेतावानेव भाव इत्याह—तस्मादिति ॥३५॥

शान्तधीरिति । स्वीयपूर्वेक्षमावद्भूत्याञ्जया पटाञ्चलेन मुखमाच्छादयामासेति भावः ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अच्युतप्रियोऽहं तस्यानुग एक अयं चित्रकेतुश्च तस्य प्रियोऽनुगः ममास्मिन्द्र् क्रोधो नास्ति त्वया तु दाक्ष्याच्छापेनियोजित इति भावः ॥ ३४ ॥

विशेषतो स्मयो वयमुत्तमा इति गर्वः ॥ ३५ ॥

विगतविस्मया विनष्टगर्वा ॥ ३६ ॥

---

इति भागवतो देव्याः प्रतिशप्तुमलन्तमः ।
मूर्द्ध्ना सञ्जगृहे शापमेतावत्साधुलक्षणम् ॥ ३७ ॥
जज्ञे त्वष्टुर्दक्षिणाग्नौ दानवीं योनिमाश्रितः ।
वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः ॥ ३८ ॥
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
वृत्रस्यासुरजातेश्च कारणं (१) भगवन्मतेः ॥ ३९ ॥
इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः ।
माहात्म्यं विष्णुभक्तानां श्रुत्वा बन्धाद्विमुच्यते ॥ ४० ॥
य इमंप्रातरुत्थाय श्रद्धावान् वाग्यतः पठेत् ।
इतिहासं हरिं स्मृत्वा स याति परमां गतिम् ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां चित्रकेतूपाख्यानं नाम
सप्तदशोऽध्यायः ॥ १७ ॥

भाषा टीका ।

पृथक् ईश्वराभिमानी मैं ब्रह्मा सनत्कुमार नारद, ब्रह्मा के पुत्र मुनिलोग जिसके अंश के अंश हैं और जिसकी चेष्टा को और स्वरूप को नहीं जानते हैं ॥ ३२ ॥

न इस परमात्मा का कोई प्रिय न कोई अप्रिय, न कोई अपना न पराया, क्योंकि वह हरि सर्व प्राणियों का आत्मा है इसीसे सर्वभूतप्रिय हैं ॥ ३३ ॥

तिन हरि का यह महाभाग चित्रकेतु प्रिय अनुचर है। जैसा यह सर्वत्र सम दृष्टि वाला और शान्त हरि प्रिय है ऐसे मैं भी अच्युत भगवान का प्रिय हूं ॥ ३४ ॥

तस्मात् महापुरुष के भक्त शांत समदर्शी महात्माओं के विषे कुछ विस्मय करने के योग्य नहीं है ॥ ३५ ॥

हे राजन् ! इस प्रकार भगवान् श्रीशिवजी का भाषण सुनकर श्रीपार्वतीजीने भी शांतबुद्धि होकर विस्मय का त्याग किया ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रतिशापं दातुमलन्तमः समर्थतमोऽपि ॥ ३७ ॥ ३८ ॥

असुरजातेरसुरभावेनोत्पत्तेः भगवति मतेश्च ॥ ३९ ॥ ४० ॥

एतदेतम् ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो भागवतश्चित्रकेतुर्गौर्याः प्रतिशप्तुं प्रतिशापकर्तुं अलन्तमः समर्थोऽपि तस्याः शापं मूर्द्ध्ना सञ्जगृहे शिरसोवाह साधूनां लक्षणमेतावदेवहि, अपकर्तृष्वप्युपकर्तृत्वबुद्धिमत्त्वमेव हि साधूनां लक्षणमित्यर्थः ॥ ३७ ॥

यत्पृष्टं राज्ञा वृत्रस्यासुरस्वभावस्य "नारायणे भगवति कथमासीद्दृढामतिः" इति तस्योत्तरं सङ्गमयति--जज्ञ इति । योऽसमुक्तविधश्चित्रकेतुः स एव त्वष्टुः संकल्पाद्दक्षिणाग्नौ जज्ञे जातः स एवासुरीं योनिमासुरं भावमाश्रितः वृत्र इत्यभितः विख्यातः प्रसिद्धः स पूर्वजन्मसिद्धभगवद्भक्तत्वादस्मिन्नपि जन्मनि ज्ञानविज्ञानाभ्यां युक्तः ॥ ३८ ॥

एवं त्वत्प्रश्नोत्तरमुक्तमित्याह--एतदिति । यस्त्वमसुरजातेर्वृत्रस्य भगवति स्मृतेर्भक्तेः कारणं परिपृच्छसि पर्यपृच्छः तस्योत्तरमेतत्सर्वं सप्रपञ्चं ते तुभ्यं मया आख्यातं कथितम् ॥ ३९ ॥

(१) भगवतस्मृतः इति पाठान्तरम्. वीर०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अस्य चित्रकेत्वितिहासस्य श्रवणादिफलमाह--इतिहासमिति । महात्मनश्चित्रकेतोः सम्बन्धिनं पुण्यमिममितिहासं विष्णुभक्तानां माहात्म्यसूचकं श्रुत्वा बन्धात्संसारबन्धाद्विमुच्यते मुक्तो भवेत् ॥ ४० ॥

यः पुमान् प्रातरुत्थाय श्रद्धावान् वाग्यतः नियमितवाक् हरिं स्मृत्वा एतमितिहासं पठेत् । स परमां गतिं सर्वोत्कृष्टं भगवत्सायुज्यं प्राप्नुयात् श्रवणपठनाभ्यां शनैः परिनिष्पन्नभक्तियोगो मुक्तो भवेदिति भावः ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ प्रसादये न त्वां शापमोक्षायेत्यस्यार्थश्चतुर्धा सम्भाव्यते शापोऽभिमत इति कृत्वा, तन्मोक्षायाऽप्रसादनम् अनिष्टोऽप्यतर्कित्वेन प्राप्तोभिमत इति कृत्वा वा, तदभिभवशक्त इति कृत्वेति, आहोस्वित् प्रतिशापदानसमर्थ इति कृत्वेति, कोऽयमर्थोऽनेनाङ्गीकृत इति तत्राह—प्रतिग्रहीतुमिति, मूर्ध्ना सङ्गृह्य इत्यनेन द्वितीयोभिमत इति ज्ञायते प्रथमस्य साधुलक्षणत्वात् अस्य च साधुप्वेकत्वाच्चतुर्थपञ्चस्योर्वैरितत्वेनाङ्गीकारो न भवति "देवा एव तदन्येऽपि शक्ता नात्यत्र संशयः" इति वचनात् अत्र यः कश्चिद्विशेषोस्तीति मतम्—

"अशक्ता अपि शक्तानां शक्ताः शापादिषु स्फुटम् ।
तथाप्यशक्तैर्विहिताः शापाद्याः शक्तिमत्सु च ॥
अल्पत्वा अल्पकालाश्च न सम्यक् प्रभवन्ति च ।
यत्नेनापोहितुं शक्या उत्तमैस्तु न संशयः ॥
उत्तमेषु कृताः शापाः कर्तॄणां ज्ञानपुण्ययोः
निःशेषेण निहन्तारः" इत्यादि ॥ ३७ ॥

कुत्रास्य जन्माभूदत्राह-जज्ञ इति ॥ ३८ ॥

परमप्रमेयमुपसंहरति—एतदिति । वृत्रस्य यच्चरितं मां परिपृच्छसि किञ्च सर्वमेतत्सर्वं किञ्च तस्यासुरजातेरासुरवंशे जननस्य यत्कारणं चैतच्च कथितमिति शेषः ॥ ३९ ॥

फलमाह—इतिहासमिति ॥ ४० ॥

शृङ्खलादिबन्धमोक्षोपि बन्धमोक्षः स्यात् न तु संसारबन्धमोक्षेण वैकुण्ठलोकप्राप्तिरस्मादवगतेति शङ्कित्वाकालविशेष इतिकर्तव्येन सा स्यादित्याह—य एतदिति ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

असुरजातेः कारणं महदपराधः भगवन्मतेः कारणं महदनुग्रहः ॥ ३९—४१ ॥

इतिश्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
सप्तदशोऽध्यायः समाप्तः ॥ १७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चित्रकेतुरर्वाचीनत्वादल्पप्रभाव इति माऽवमंस्था इत्याह—इतीति । देव्याः देव्यै नतः तमः अतिसमर्थोऽपि ॥ ३७ ॥ योनिं जातिम् ॥ ३८—४१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठे सप्तदशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्थं स भागवतः प्रतिशप्तुं प्रतिशापं दातुमलमल्मोऽतिसमर्थोऽपि देव्याः शापं मूर्ध्ना जगृहे एतावदेव साधूनां लक्षणम् ॥ ३७ ॥

स एव वृत्र इति विख्यातः जज्ञे जातः ॥ ३८ ॥

वृत्रस्यासुरजातेः असुरभावेनोत्पत्तेः भगवन्मतेः भगवद्भक्तेश्च कारणमित्येतत्सर्वं ते तुभ्यमाख्यातम् ॥ ३९ ॥

उक्तेतिहासश्रवणादिफलमाह--इतिहासमितिद्वाभ्याम् ॥ ४० ॥

एतदिममितिहासं यः प्रातरुत्थाय पठेत्स हरिं स्मृत्वा परमां गतिं याति ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तदशाऽध्यायार्थप्रकाशः ॥ १७ ॥

---

भाषाटीका।

हे राजन्! वह परम भागवत चित्रकेतु पार्वती के प्रति शाप देने को भली तरह समर्थ रहा तौभी पार्वतीजी के शाप को शिर से ग्रहण किया इतनाही तौ साधु का लक्षण है ॥ ३७ ॥

फिर वही दानवी योनि का आश्रय लेकर त्वष्टा की दक्षिणाग्नि में वृत्रासुर इस नाम से विख्यात होकर उत्पन्न हुआ तब भी ज्ञान विज्ञान से संयुक्त ही हुआ ॥ ३८ ॥

जो तुमने हमसे पूछा यह आख्यान हमने सर्व कथन किया जो कि भगवद्भक्त वृत्रासुर का असुर जाति का कारण रहा ॥ ३९ ॥

यह महात्मा चित्रकेतु का पुण्य रूप इतिहास है और विष्णु भक्तों का माहात्म्य है इसको सुनकर मनुष्य संसार के बन्ध से छूट जाता है ॥ ४० ॥

जो इस इतिहास को प्रातःकाल उठकर श्रद्धापूर्वक वाक् संयम करके पठन करे और स्मरण करे वह परमगति को जाता है ॥ ४१ ॥

इति श्रीमद्भागवतमहापुराण षष्ठस्कन्ध सप्तदशाध्यायकी भाषा टीका समाप्त ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे सप्तदशोऽध्यायः समाप्तः ॥ १७ ॥



## ॥ अष्टादशोऽध्यायः ॥

——०:*:०——

### श्रीशुक उवाच ।

पृश्निस्तु पत्नी सवितुः सावित्रीं व्याहृतीं त्रयीम् ।
अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान् ॥ १ ॥
सिद्धिर्भगस्य भार्याङ्ग महिमानं विभुं प्रभुम् ।
आशिषं च वरारोहां कन्यां प्रासूत सुव्रताम् ॥ २ ॥
धातुः कुहूः सिनीवाली राका चानुमतिस्तथा ।
सायं दर्शमथ प्रातः पूर्णमासमनुक्रमात् ॥ ३ ॥
अग्नीन्पुरीष्यानाधत्त क्रियायां समनन्तरः ।
चर्षणी वरुणस्यासीद्यस्यां जातो भृगुः पुनः ॥ ४ ॥
वाल्मीकिश्च महायोगी वल्मीकादभवत्किल ।
अगस्त्यश्च वसिष्ठश्च मित्रावरुणयो ऋषी ॥ ५ ॥
रेतः सिषिचतुः कुम्भे उर्वश्या सन्निधौ द्रुतम् ।
रेवत्यां मित्र उत्सर्गमरिष्टं पिप्पलं व्यधात् ॥ ६ ।
पौलोम्यामिन्द्र आधत्त त्रीन्पुत्रानिति नः श्रुतम् ।
जयन्तमृषभं तात ! तृतीयं मीढुषं प्रभुः ॥ ७ ॥
उरुक्रमस्य देवस्य मायावामनरूपिणः ।
कीर्त्तौ पत्न्यां बृहच्छ्लोकस्तस्यासन्सौभगादयः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आदित्यानां चतुर्थस्य त्वष्टुर्वंशप्रसङ्गतः ।
प्रोक्तमिन्द्रकृतं विश्वरूपवृत्रवधादिकम् ॥ १ ॥
अदितेः पञ्चमादीनां पुत्राणामन्वयोक्तिभिः ।
अष्टादशे दितेर्गर्भे शक्रेण मरुतां भिदा ॥ २ ॥
त्वष्टुर्वंशमनुक्रम्य सप्रसङ्गं यथाक्रमम् ।
आदित्यानामथान्येषां वंशानाह मुनीश्वरः ॥ ३ ॥
दक्षकन्यान्वयानुकथने अदित्याः द्वादश पुत्राः प्रोक्ताः ।
"विवस्वानर्यमा पूषा त्वष्टाथ सविता भगः ।
धाता विधाता वरुणो मित्रः शक्र उरुक्रमः" ।
इति तत्र षष्ठाध्यायान्तमारभ्य विश्वरूपवृत्रचित्रकेतूपाख्यानैस्त्वष्टुर्वं-शमनुवर्ण्येदानीं सवितुर्वंशमाह—पृश्निस्त्विति । सावित्र्या-दीन्याद्विषु प्रासूतेत्युत्तरस्यानुषङ्गः पशुं पशुयागम् महामखान् पञ्च यज्ञान् ॥ १ ॥ २ ॥

धातुर्भार्या कुहूः सायं पुत्रं प्रासूत एवं सिनीवाली दर्शमि-त्यनुक्रमात् ॥ ३ ॥

समनन्तरो विधाता क्रियायां भार्यायां पुरीष्यानग्नीन् पञ्च चितान् "पुरीष्यासो अग्नय इति पञ्च वा एतेऽग्नयो यच्चितयः" इति श्रुतेः । चर्षणी वरुणस्य भार्यासीत् पूर्वं ब्रह्मणः पुत्रो भृगुर्यस्यां पुनर्जातः ॥ ४ ॥

वाल्मीकिर्वरुणस्यैव पुत्रोऽभवत् एतौ वरुणस्यासाधारणौ पुत्रौ तयोरुत्सर्गादयोऽपि मित्रस्यासाधारणाः तयोरेव साधारणौ द्वौ पुत्रावाह अगस्त्यश्च वसिष्ठश्च ऋषी मित्रावरुणयोरभवताम् ॥ ५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यत उभावपि कुम्भे रेतः सिषिचतुः "सत्रेह जाता विषिता नमोभिः कुम्भे रेतः सिषिचतुः समानम्" इति श्रुतेः द्रुतं स्कन्नम् ॥ ६ ॥ ७ ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं दाक्षायण्याः कश्यपस्य भार्यायाः अदितेर्वंशमुपक्रम्य विवस्वदर्यमपूष्णां तत्पुत्राणां वंशमभिधाय ततस्त्वष्टुर्वंशस्तदनु प्र-युक्तश्चाभिहितम् अथ सवित्रादीनां वंशमुपक्रमते मुनिः—पृश्नि-रित्यादिना । सवितुः पत्नी पृश्निः सावित्र्याद्यभिमानिदेवताः प्रासूतेत्युत्तरस्यानुषङ्गः पशु पशुयागं तदभिमानिदेवताविशेषमिति एवमुत्तरत्रापि महामखान् पञ्च महायज्ञान् ॥ १ ॥

एवं भगस्य भार्या सिद्धिरिति प्रसिद्धा अङ्गादींश्चतुरः पुत्रान् सुव्रतां सुशीलां वरारोहामत्यन्तसुन्दरीमाशीर्नाम्नीं कन्यां च प्रासूत ॥ २ ॥

धातुः पत्न्यः कुहूप्रभृतयश्चतस्रः अनुक्रमात् सायादीन् चतुरः पुत्रान् ॥ ३ ॥

तथा धातुः समनन्तरो विधाता क्रियायां पत्न्यामग्नीन्पुरीष्यसंज्ञकानिष्टकाचिताग्नीनाधत्त जनयामास ॥ ४ ॥

वरुणस्य चर्षणीति प्रसिद्धा भार्या आसीत् भृगुः पूर्वं ब्रह्मणः पुत्रो यस्यां चर्षण्यां पुनर्जातः तथा वरुणस्यैव पुत्रो वाल्मीकिर्महायोगी वल्मीकादभवत् एतौ वरुणस्यासाधारणौ पुत्रौ ॥ ५ ॥

तथा रेवत्यां भार्यायां मित्रस्योत्सर्गादयोऽसाधारणाः सुताः उभयोस्साधारणौ सुतौ अगस्त्यवसिष्ठौ ऋषी, कथमेकैकस्योभयसुतत्वम्? तत्राह—रेत इति । कदाचिन्मित्रावरुणौ ऊर्वश्या अप्सरसः सन्निधौ द्रुतं स्खलितं रेतः कुम्भे घटे सिषिचतुः सिक्तवन्तौ तत्र कुम्भे वसिष्ठागस्त्यौ जातौ इति भावः रेवत्यामित्यर्द्धं व्याख्यातप्रायं व्यधात् जनयामासेत्यर्थः ॥ ६ ॥

हे तात, प्रभुरिन्द्रश्शक्रः पौलोम्यां शच्यां पत्न्यां जयन्तमृषभं तृतीयं मीढुषम् इति त्रीन्पुत्रानजनयदिति नोऽस्माभिः श्रुतम् ॥ ७ ॥

तथोरुक्रमस्य त्रिभिः पादक्रमैः लोकत्रयमाक्रान्तवतो मायया आत्मीयसङ्कल्पेन वामनरूपेणावतीर्णस्य कीर्त्याख्यायां भार्यायां बृहच्छ्लोकः पुत्र आसीत् तस्य बृहच्छ्लोकस्य सौभगादयः पुत्रा आसन् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्मिन्नध्याये पूर्वोक्तं सृष्टिशेषं निरूपयति—पृश्निरिति । तुशब्दात्पूर्वस्मात्फलविशेषमाह—सावित्री गायत्र्यभिमानिनीत्युत्तरत्राप्येवमनुसन्धेयम् ॥ १ ॥ २ ॥

"चन्द्रे दृष्टे सिनीवाली चन्द्रे नष्टकले कुहूः" धातुः(१) क्रिया नाम भार्याः याः कुहूसिनीवाल्याद्याः ताः अभवन् ॥ ३ ॥

समनन्तरो विधाता च क्रियायां भार्यायां पुरीष्याख्यानग्नीनाधत्त वरुणनाम्नः सूर्यस्य वारुणी नाम भार्या पूर्वं ब्रह्मणो जातत्वात्पुनरित्युक्तम् ॥ ४ ॥

वाल्मीकिश्च वरुणवीर्याद्वल्मीकादभूत् ब्रह्मजो वसिष्ठश्च पुलस्त्यजोऽगस्त्यश्च द्वौ ऋषी पुनर्मित्रावरुणयोर्जातौ ॥ ५ ॥

तयोर्जननप्रकारमाह—रेत इति । उर्वश्या दर्शनात्तत्सन्निधौ द्रुतं स्कन्नं रेतस्तदनन्तरं मित्रावरुणौ कुम्भे सिषिचतुः तस्मादुभावपि कुम्भसम्भवाविति प्रसिद्धिः ॥ ६ ॥ ७ ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पृश्निस्त्विति त्रिकम् ॥ १ ॥ २ ॥ ३ ॥

अग्नीनित्यर्द्धकम् ॥ ४—१९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टादशे हतसुता दितिः कृत्वा व्रतं दधौ ।
यं तस्माच्छक्रसंछिन्नाद्गर्भाज्जज्ञे मरुद्गणः ॥
तुर्यस्यादिति पुत्राणां स्वपुरन्वयकीर्तने ।
प्रसङ्गतः समायातां विश्वरूपवधादिकाम् ॥
चित्रकेत्वभिशापान्तां समाप्यैव कथासुधाम् ।
अदितेः पञ्चमादीनां सुतानां वंश उच्यते ॥

पशुं पशुयागं महामखान् पञ्चयज्ञान् प्रासूतेत्युत्तरस्यानुषङ्गः ॥ १—३ ॥

समनन्तरो विधाता क्रियायां भार्यायां पुरीष्यान् पुरीष्यसंज्ञान् अग्नीन् पञ्चाचख्यौ "पुरीष्यासोऽग्नयः" इति श्रुतेः । चर्षणी वरुणस्य भार्या आसीत् पुनरिति प्राग्ब्रह्मपुत्रोऽपि पुनर्वरुणपुत्रोऽभूत् । भृगुवाल्मीकी वरुणस्यासाधारणौ पुत्रौ ॥ ४ ॥

तथोत्सर्गादयो मित्रस्यासाधारणाः पुत्राः वक्ष्यन्ते । तयोर्मित्रावरुणयोः साधारणौ द्वौ पुत्रौ चाह—अगस्त्यश्च वसिष्ठश्चैतौ ऋषी मित्रावरुणयोरभवताम् ॥ ५ ॥

यतो रेत इत्यादि "कुम्भे रेतः सिषिचतुः समानम्" इति श्रुतेः द्रुतं स्कन्नम् ॥ ६ ॥ ७ ॥

मायया स्वरूपशक्त्या वामनरूपवतः—

"स्वरूपभूतया नित्यशक्त्या मायाख्यया युतः ।
अतो मायामयं विष्णुं प्रवदन्ति मनीषिणः" ॥

इति माध्वभाष्यप्रमाणितश्रुतेः ॥ ८ ॥

---

(१) कर्मनामविशिष्टभार्याः ।

तत्कर्मगुणवीर्याणि कश्यपस्य महात्मनः ।
पश्चाद्वक्ष्यामहेऽदित्यां यथैवावततार ह ॥ ९ ॥
अथ कश्यपदायादान्दैतेयान्कीर्त्तयामि ते ।
यत्र भागवतः श्रीमान् प्रह्लादो बलिरेव च ॥ १० ॥
दितेर्द्वावेव दायादौ दैत्यदानववन्दितौ ।
हिरण्यकशिपुर्नाम हिरण्याक्षश्च कीर्तितौ ॥ ११ ॥
हिरण्यकशिपोर्भार्या कयाधुर्नाम दानवी ।
जम्भस्य तनया दत्ता सुषुवे चतुरः सुतान् ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दक्षकन्यायाः अदित्याः—

"विवस्वानर्यमा पूषा त्वष्टाथ सविता भगः ।
धाता विधाता वरुणो मित्रः शक्र उरुक्रमः" इति ।

द्वादशात्मजाः प्रोक्तास्तेषां मध्ये पूषानपत्य इत्युक्तं त्रयाणां विवस्वदर्यमत्वष्टॄणां सन्ततयश्चोक्ताः त्वष्टुः पुत्रो विश्वरूपो देवैः पौरोहित्ये वृत इति चोक्तं षष्ठाध्यायान्ते तदनन्तरमेकादशभिरध्यायैस्त्वष्टृपुत्रविश्वरूपस्य देवपौरोहित्यप्रसङ्गतो नानाकथाः कथिताः अथ सवित्रादीनामदितिपुत्राणां वंशं दितिसन्ततिञ्च वर्णयन् दितिकोपादिन्द्ररक्षणमिन्द्रकोपाद्दितिपुत्ररक्षणं सर्वरक्षणकर्तुर्भगवतः सर्वजनरक्षणार्थमाराधनञ्च वर्णयति—पृश्निस्त्वित्याद्यध्यायद्वयेन । सवितुः पत्नी पृश्निस्तु सावित्र्यादिकन्याः अग्निहोत्रादीन् सुतांश्च प्रासूतेत्युत्तरस्यानुषङ्गः तत्र पशुं पशुयागं सोमं सोमयागं महामखान् पञ्च यज्ञान् ॥ १ ॥

हे अङ्ग ! भगस्य भार्या सिद्धिः महिमादिपुत्रत्रयम् आशिषं कन्यां च प्रासूत ॥ २ ॥

धातुः पत्नी कुहूः सायम् सिनीवाली दर्शम् राका प्रातः अनुमतिः पूर्णमासञ्चेति अनुक्रमात् प्रासूत ॥ ३ ॥

समनन्तरो विधाता क्रियायां पत्न्यां पुरीष्यान् अग्नीन् पञ्च चितीन् आभव जनयामास "पुरीष्यासो अग्नय इति पञ्च वा एते अग्नयो यच्चितयः" इति श्रुतेः ॥ ४ ॥

वरुणस्य भार्या चर्षणी आसीत् यस्यां भृगुर्ब्रह्मजोऽपि पुनर्जातः वाल्मीकिश्च वरुणस्यैव पुत्रो वल्मीकादभवत् एतौ वरुणस्यासाधारणौ पुत्रौ ॥ ५ ॥

मित्रावरुणयोरसाधारणौ पुत्रावाह—अगस्त्यश्च वसिष्ठश्चेति द्वौ ऋषी अग्रपुत्रौ पुनर्मित्रावरुणयोरभवताम्, यतस्तौ मित्रावरुणौ उर्वश्याः सन्निधौ कुम्भे रेतो वीर्यं द्रुतं स्कन्नं सिषिचतुः ॥ ६ ॥

मित्रस्यासाधारणान्पुत्रानाह—रेवत्यामिति । व्यधात् जनयामास पौलोम्यां पुलोम्नः कन्यायाम् ॥ ७ ॥

मायावामनरूपिणः स्वसङ्कल्पेन वामनरूपिणः कीर्तौ बृहच्छ्लोक आसीत् तस्य सौभगादयः आसन् ॥ ८ ॥

भाषाटीका ।

श्रीरुक्मिणीरमणो जयति ।

श्रीशुक उवाच ।

सविता की पृश्नी नामक भार्या, सावित्री व्याहृति त्रयी अग्नि होत्र पशुयाग सोमयाग चातुर्मास्य और पंच महायज्ञों को पैदा करती हुई ॥ १ ॥

भग नामक सूर्य की भार्या ने महिमा विभु प्रभु को पैदा किया, तथा एक सुव्रता वरारोहा आशिष नामवाली कन्या को पैदा किया ॥ २ ॥

धाता नामक सूर्य की, कुहू सिनीवाली राका और अनुमति इन चारों पत्नियों ने क्रमसे, सायं दर्श प्रातः और पूर्णमास इन चारों को उत्पन्न किया ॥ ३ ॥

विधाता ने क्रिया नामक भार्या में पुरीष्य अग्नियों को पैदा किया । वरुण की चर्षणी भार्या हुई जिस में फिर से भृगुने जन्म लिया ॥ ४ ॥

और दूसरे वरुण के पुत्र वल्मीक से महायोगी वाल्मीकि हुए तथा मित्र और वरुण इन दोनों के साधारण पुत्र अगस्त्य और वशिष्ठ हुए ॥ क्योंकि उर्वशी के सन्निधि में मित्र और वरुण दोनों ने कुंभ में वीर्य का सेचन किया इसी से दोनों के पुत्र हुए ॥ मित्रने रेवती के विषे उत्सर्ग अरिष्ट पिप्पल इन को उत्पन्न किया ॥ ५ ॥ ६ ॥

इन्द्रने पौलोमी में जयन्त ऋषभ और मीढुष इन तीन पुत्रों को उत्पन्न किया ऐसा हमने सुना है ॥ ७ ॥

माया से वामन रूप लेनेवाले उरुक्रमदेवने कीर्ति नामक भार्या में बृहच्छ्लोक पुत्र उत्पन्न किया जिस बृहच्छ्लोक के सौभागादिक पुत्र हुये ॥ ८ ॥

श्रीभरस्वामिकृतभावार्थदीपिका ।

पश्चादष्टमस्कन्धे ॥ ९ ॥

अथेति कश्यपस्यादितेः पुत्राणां द्वादशादित्यानां सन्ततिमुक्त्वा दितेः पुत्रान्कथयामीत्यर्थः ॥ १० ॥

संह्लादं प्रागनुह्लादं ह्लादं प्रह्लादमेव च । (१)
तत्स्वसा सिंहिका नाम राहुं विप्रचितोऽग्रहीत् ॥ १३ ॥
शिरोऽहरद्यस्य हरिश्चक्रेण पिबतोऽमृतम् ।
संह्लादस्य कृतिर्भार्याऽसूत पञ्चजनं ततः ॥ १४ ॥
ह्लादस्य धमनिर्भार्याऽसूत वातापिमिल्वलम् ।
योऽगस्त्याय त्वतिथये पेचे वातापिमिल्वलम् (२) ॥ १५ ॥
अनुह्लादस्य सूर्म्यायां बाष्कलो महिषस्तथा ।
विरोचनस्तु प्राह्लादिर्देव्यास्तस्याभवद्बलिः ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हिरण्यकशिपुर्हिरण्याक्षश्चेति प्रथमं द्वावेव तौ च कीर्तितौ तृतीयस्कन्धे ॥ ११ ॥ १२ ॥

विप्रचित्तो दानवाद्भर्तुः सकाशाद्राहुं पुत्रमग्रहीत् ॥ १३ ॥

ततः संह्लादादसूत ॥ १४ ॥

यो मेषरूपं वातापिं पेचे तमिल्वलम् यं पेचे तं च वातापिं चासूतेत्यन्वयः ॥ १५ ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

काश्यपस्य कश्यपपुत्रस्य महात्मनः उरुक्रमस्य तानि प्रसिद्धानि कर्माणि पदत्रयेण लोकत्रयाक्रमणादीनि गुणाः स्वभक्तविषयकानुग्रहादयः सर्वज्ञत्वादयश्च वीर्याणि उत्कृष्टगुणैरन्येभ्यः उत्कर्षो हि वीर्यं तद्रूपाणि वीर्याणि च पश्चादष्टमस्कन्धे वक्ष्यामहे तथा अदित्यां यथा येन प्रकारेण अवततार अवतीर्णवान् तञ्च प्रकारं तत्रैव वक्ष्यामह इत्यर्थः ॥ ९ ॥

एवं साकल्येनादितेर्वंशमनुक्रम्याथ दितेर्वंशस्यानुक्रमं प्रतिजानीते—अथेति । काश्यपादीनां विपश्चिदादीनामादितेयानां दायादान् सपिण्डान् शत्रून्वा दैतेयान् दितेः पुत्रान् ते तुभ्यं कीर्तयामि कथयामि तद्वंशे भागवतानामभावात् तच्छ्रवणं ममापेक्षितमिति राज्ञोऽभिप्रायमालोच्याह—यत्रेति । यत्र दितेर्वंशे श्रीमान् भगवता तुल्यं कल्याणगुणसंयुक्तः महाभागवतः प्रह्लादः बलिश्च बभूवतुः ॥ १० ॥

तर्हि कथयेत्यत्राह—दितेरिति । दितेर्द्वावेव दायादौ काश्यपानां देवानां शत्रू मरुतामदायादत्वस्य वक्ष्यमाणत्वाद्द्वावेवेत्युक्तं पुत्रौ दैत्यैस्तत्पुत्रपौत्रादिभिर्दानवैश्च वन्दितौ बभूवतुः तौ च हिरण्यकशिपुर्हिरण्याक्षश्चेति कीर्तितौ प्रख्यातौ ॥ ११ ॥

तत्र हिरण्यकशिपोर्भार्या जम्भस्य दुहिता दानवी दनुवंशोद्भवा कयाधुरिति प्रसिद्धा सा कयाधुः प्रह्लादादीन् चतुरः सुतान् सुषुवे ॥ १२ ॥

प्राक् प्रथमं प्रह्लादं ततः क्रमेणानुह्लादसंह्लादह्लादान् सुषुवे इत्यर्थः तत्स्वसा तेषां प्रह्लादादीनां चतुर्णां स्वसा भगिनी सिंहिकेति प्रसिद्धा बभूव सा विप्रचितः विप्रचित्तेर्भर्तुर्दानवात्सकाशाद्राहुं पुत्रमग्रहीत् सुषुव इत्यर्थः ॥ १३ ॥

राहुं विशिनष्टि—शिर इति । यस्य राहोरमृतं पिबतः शिरश्चक्रेण चिच्छेद संह्लादस्य हिरण्यकशिपोस्सुतस्य कृतिर्नाम भार्या पञ्चजनाख्यं सुतमसूत सुषुवे ॥ १४ ॥

तथा ह्लादस्य भार्या धमनीति प्रसिद्धा वातापिमिल्वलञ्चासूत, इल्वलं विशिनष्टि—य इति, अतिथये आतिथ्यार्थं निमन्त्रितायातिथये अगस्त्याय इल्वलो मेषरूपं वातापिं पेचे पपाच तमिल्वलमित्यन्वयः । वातापिमिल्वल इति प्रथमान्तपाठस्तु सुगमः ॥ १५ ॥

तथा अनुह्लादस्य सूर्म्यायां भार्यायां बाष्कलो महिष इति द्वौ पुत्रौ बभूवतुः तथा धृत्यां प्रह्लादस्य भार्यायां विरोचनः प्राह्लादिः प्रह्लादस्यापत्यं पुमान् बभूव, तस्य विरोचनस्य पुत्रो बलिरभवत् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महात्मनः कश्यपस्य पत्न्यामदित्यां यथाऽयमुरुक्रमोऽवततार तत्कर्मादीनि पश्चादष्टमस्कन्धे वक्ष्याम इत्यन्वयः ॥ ९ ॥

अथ मङ्गलमस्तु ननु, दैत्यवंशवर्णनं किमर्थं क्रियते ? तत्कथनस्य श्रेयःसाधनत्वानुपयोगित्वादिति तत्राह—यत्रेति । यत्र दितिसन्ताने प्रह्लादबलिचरितकीर्तनश्रवणाभ्यां श्रेयःसाधनत्वसम्भवादित्यर्थः ॥ १० ॥ ११ ॥

विप्रचितः विप्रचितेः सकाशाद्राहुं सुतम् ॥ १२ । १३ । १४ । १५ ॥

तस्य विरोचनस्य ॥ १६ ॥

( १ ) प्रह्लादं प्रागनुह्लादं ह्लादं संह्लादमेव च । इति पाठान्तरम् वार० । ( २ ) इल्वलः इति पाठान्तरम्–वीर०

बाणज्येष्ठं पुत्रशतमशनायां ततोऽभवत् ।
तस्यानुभावः सुश्लोक्यः पश्चादेवाभिधास्यते ॥ १७ ॥
बाण आराध्य गिरिशं लेभे तद्गणमुख्यताम् ।
यत्पार्श्वे भगवानास्ते ह्यद्यापि पुरपालकः ॥ १८ ॥
मरुतश्च दितेः पुत्राश्चत्वारिंशन्नवाधिकाः ।
त आसन्नप्रजाः सर्वे नीता इन्द्रेण सात्मताम् ॥ १९ ॥

राजोवाच ।

कथं त आसुरं भावमपोह्यौत्पत्तिकं गुरो ! ।
इन्द्रेण प्रापिताः सात्म्यं किं तत्साधु कृतं हि तैः ॥ २० ॥
इमे श्रद्दधते ब्रह्मन्नृषयो हि मया सह ।
परिज्ञानाय भगवंस्तन्नो व्याख्यातुमर्हसि ॥ २१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

पश्चादष्टमस्कन्धे ॥ ९ ॥

अथेति । कथान्तरारम्भे, दायादान् पुत्रान् दैतेयान् दित्यां जातान् ॥ १० ॥ ११ ॥ १२ ॥

विप्रचित्तो दानवात् पत्युः सकाशात् राहुं पुत्रमग्रहीत् प्राप ॥ १३ ॥ १४ ॥

य इल्वलः अगस्त्याय अगस्त्यं भोजयितुं वातापिं मेषरूपं पेचे ॥ १५ ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा अवततार तत्प्रकारः तस्यावतीर्णस्य कर्मादीनि च पश्चादष्टमस्कन्धे वक्ष्याम हे राजन् ॥ ९ ॥

यत्र येषु भागवतः प्रह्लादो बलिश्च ॥ १० ॥

कीर्तितौ वर्णितौ तृतीयस्कन्धे ॥ ११ ॥

जंभस्य तनया तेन दत्ता ॥ १२ ॥

तेषां स्वसा भगिनी सिंहिकानाम प्रसिद्धा सापि विप्रचित्तो दानवाद्भर्तुः सकाशात् राहुं पुत्रमग्रहीत् ॥ १३ ॥

यस्य राहोः शिरो हरिश्चिच्छेद संह्लादस्य भार्या कृतिस्ततः संह्लादात्पञ्चजनमसूत ॥ १४ ॥

ह्लादस्य भार्या धमनिर्वातापिमिल्वलञ्चासूत य इल्वलः वातापिमगस्त्यायातिथये पेचे पपाच ॥ १५ ॥

प्राह्लादिः प्रह्लादपुत्रः तस्य विरोचनस्य देव्यां भार्यायां बलिरभवत् ॥ १६ ॥

---

भाषा टीका ।

कश्यपके पुत्र श्रीवामनजी के गुण कर्म वीर्य आगे [अष्टमस्कन्धमें] कहेंगे । जैसे अदितिमें प्रकट हुये ॥ ९ ॥

अब कश्यपके पुत्र दैत्योंको कहता हूं जिनमें महा भागवत श्रीप्रह्लाद और बलि हुये ॥ १० ॥

दैत्य दानवोंसें वन्दित बडे प्रसिद्ध हिरण्यकशिपु और हिरण्याक्ष ये दो पुत्र दितिके हुए ॥ ११ ॥

जम्भकी पुत्री दानवी हिरण्यकशिपुकी भार्याने चार पुत्र उत्पन्न किये ॥ १२ ॥

वे चार ये हैं संह्लाद, अनुह्लाद, ह्लाद, प्रह्लाद । और इनकी बहिन सिंहिका ने विप्रचित्तिसे राहु को पैदा किया । अमृत को पान करते हुए जिसके शिरको हरिने चक्रसे काटा । संह्लादकी कृति नामक भार्याने पतिसे पञ्चजन नामक पुत्रको उत्पन्न किया ॥ १३ ॥ १४ ॥

जिस इल्वलने अगस्त्यरूप अतिथिके लिये वातापी को पकाया उसइल्वल, और जिसको पकाया उस वातापी को अर्थात् इल्वल और वातापी इन दोनों को ह्राद की धमनी नामकभार्याने उत्पन्नकिया ॥ १५ ॥

अनुह्लाद की सूर्म्या भार्याने बाष्कल और महिष इनको उत्पन्न किया । प्रल्हादके विरोचन पुत्र हुआ जिस विरोचनकी भार्या से बलि उत्पन्न हुआ ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततो बलेः सकाशादभवत् तस्य बलेरनुभावः सुश्लोक्यः पुण्यकीर्त्यर्हः यद्वा अनुभाव्यते सद्भिः स्तूयत इत्यनुभावम् सुश्लोक्यं यस्य इति शेषः ॥ १७ ॥

सूत उवाच ।

तद्विष्णुरातस्य स बादरायणिर्वचो निशम्यादृतमल्पमर्थवत् ।
सभाजयन् (१) सन्निभृतेन चेतसा जगाद सत्रायण ! सर्वदर्शनः ॥ २२ ॥

श्रीशुक उवाच ।

हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना ।
मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत् ॥ २३ ॥
कदा नु भ्रातृहन्तारमिन्द्रियाराममुल्बणम् ।
अक्लिन्नहृदयं पापं घातयित्वा शये सुखम् ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य गणेषु मुख्यतां प्राधान्यम् ॥ १८ ॥

सात्मतां समानरूपताम् ॥ १९ ॥

सात्म्यं देवत्वं प्रापिताः ॥ २० ॥ २१ ॥

आदृतं सादरं अल्पं मिताक्षरं अर्थवत् बह्वर्थयुक्तं सत्रमयनमाश्रयो यस्य हे सत्रायण शौनक ॥ २२ ॥

शक्रस्य पार्ष्णिग्राहेण पृष्ठतः सहायेन ॥ २३ ॥

भ्रातृहन्तारमिन्द्रं मारयित्वा सुखिनी कदा स्यामिति चिन्तयामास दितिः उल्बणां क्रूरं अक्लिन्नहृदयं कठिनचित्तम् ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ततो बलेः अशनायां भार्यायां बाणः ज्येष्ठो यस्य तत्पुत्राणां शतमभवत् तस्य महादेवस्य तेषां अनुभावः प्रभावः सुश्लोक्यः अतीव वर्णनीयः स पश्चादेव सप्तमे ऽष्टमे वा अभिधास्यते कथयिष्यते॥१७॥

बाणस्तु गिरिशं रुद्रमाराध्य तद्भृत्यवर्गेषु मुख्यतां लेभे तदेव व्यञ्जयन् बाणं विशिनष्टि, यस्य बाणस्य पार्श्वे अद्यापि पुरपालकः स भगवान् गिरिश आस्ते ॥ १८ ॥

अन्यानपि दितेः पुत्रानाह— मरुतश्चेति । चकारो हिरण्यकशिपुहिरण्याक्षयोस्समुच्चयार्थः मरुतो मरुद्गणाः चत्वारिंशदधिकाः एकोनपञ्चाशत्संख्याकाः दितेः पुत्रा एव ते 'सर्वे मरुतः अप्रजाः अपुत्राः आसन् ते चेन्द्रेण सात्मतां समानरूपतां देवत्वमिति यावत् नीताः प्रापिताः अतो न देवानां दायादा इति भावः ॥ १९ ॥

एतदेव शुश्रूषुः पृच्छति राजा—कथमिति द्वाभ्यां. हे गुरो ! मुने, ते मरुतः कथमौत्पत्तिकं जन्मसिद्धमासुरस्वभावमपोह्य त्यक्त्वा इन्द्रेण सात्म्यं देवत्वं प्रापिताः देवत्वप्राप्तौ तैर्मरुद्भिः किं तस्येन्द्रस्य साधु हितं कृतम् ॥ २० ॥

न केवलमिदमहमेव शुश्रूषुरपि तु हे ब्रह्मन्, इमे ऋषयोऽपि परिज्ञानाय वेदितुं श्रद्धते श्रद्धां कुर्वन्ति. अतो हे भगवन्, नोऽस्मभ्यं व्याख्यातुं कथयितुमर्हसि ॥ २१ ॥

एवमापृष्टो मुनिः प्रश्नमभिनन्दयन् यथावदाचख्यौ इत्याह सूतः—तदिति । बादरायणस्यापत्यं पुमान् । विष्णुरातः श्रीशुकः अल्पं मिताक्षरमर्थवदाशयगर्भं तस्य राज्ञस्तद्वचः आदृतं सादरं यथा भवति तथा निशम्य निभृतेन चेतसा पूर्णेनान्तः करणेन तं राजानं संभावयन् सम्मानयन् सर्वज्ञो मुनिः हे सत्रायण, सत्रं ब्रह्मसत्रम् अयनमाश्रयो यस्य स ब्रह्मसत्रेण दीक्षित इत्यर्थः तस्य सम्बोधनं हे शौनक, जगाद ॥ २२ ॥

तदेवाह—हतपुत्रेति । शक्रपार्ष्णिग्राहेण शक्रमिन्द्रं पार्ष्णिः पक्षं स्वीयत्वेन ग्राहिणा गृहीतवता विष्णुना हतौ पुत्रौ हिरण्याक्षहिरण्यकशिपू यस्याः सा दितिः अत एव शोकेन दीप्तो यो मन्युः क्रोधस्तेन ज्वलन्ती परितपन्ती पर्यचिन्तयत् परितश्चिन्तामकरोत् ॥ २३ ॥

चिन्तामेव वर्णयति—कदेति । भ्रात्रोर्हिरण्यकशिपुहिरण्याक्षयोः हन्तारं विष्णुद्वारा हन्तारं, तत्र हेतुः इन्द्रियारामं केवलवैषयिकसुखासक्तम् उल्बणं क्रूरम् अक्लिन्नहृदयम् अनार्द्रचित्तम् अत एव पापं पापात्मानं इन्द्रं घातयित्वा कथमहं सुखं यथातथा स्वपे सञ्जातनिद्राभवेयम् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततो बलेस्तस्यानुभावः पश्चादष्टमस्कन्धे अनुभावमिति पाठेऽभिधास्यते वदिष्यति व्यास इति शेषः । अथं जन इति वा ॥ १७ ॥

यस्य बाणस्य पार्श्वे ॥ १८ ॥

सात्मतां समानजातितां सोदरत्वम् ॥ १९ ॥

(१) सन्निभृतेनेति पाठान्तरम्-विजय० ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

साधु पुपषम् ॥ २० ॥ २१ ॥

तद्वचः सन्निभृतेन तस्मिन् स्निग्धेन सत्रायणः सत्रे प्रधानः सर्वदर्शनः सर्वज्ञः ॥ २२ ॥

पक्षपाततया कर्मकरः पार्ष्णिग्राहस्तेन शोकसन्दीप्तेन ॥ २३ ॥

अक्लिन्नहृदयं अनार्द्रहृदयं स्वपे निद्रां कुर्याम् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अपोह्य त्याजयित्वा ॥ २० ॥

ननु कथं भवानिमां बहिरङ्गां कथां शुश्रूषते तत्राह—इमे श्रद्दधत इति । मया सहेति स्वस्य गौणत्वं बोधयंस्तथैव व्यञ्जितवान् ॥ २१ ॥

अत एव श्लाघते-तदिति । आहतम् ऋषीणामादरेण सहितम् अर्थवत् एतच्च भगवदाराधनविशेषसम्बन्धेनैव भवेदिति स्वाशीर्युक्तं सन्निभृतेन श्रीभगवत्सुखपूर्वेण अतस्तदपि भगवत्सम्बन्धं योजयिष्यतीति भावः । टीकायां बह्वर्थमिति ऋष्यभिप्रेतश्रीशुकाभिप्रेतसिद्धियुक्तम् ॥ २२—२५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्य बलेः अनुभावमित्यार्षे बाह्यकर्म सम्बन्धेन वा ॥ १७ ॥ १८ ॥

सात्मतां समानस्वभावतां देवत्वं प्रापिता इत्यर्थः ॥ १९ ॥ २० ॥

इमे मुनयः श्रद्दधते इति स्वस्यैव श्रद्धां मुनिष्वारोपयति रहस्यमर्थं तान् ज्ञापयितुम् ॥ २१ ॥

अर्थवत् अनेकार्थयुक्तं तत्रैको जिज्ञासितोऽर्थोऽस्मादुपाख्यानादवगम्यते. यथा, परहिंसामभिसन्धायापि तामसीं भगवद्भक्तिं कुर्वन्नशुद्धचित्तोपि निश्चलामतामसीं भक्तिमानुषङ्गिकीं संसारान्मुक्तिं चित्तशुद्धिप्राप्त्या परजिघांसानिवृत्तिश्च लभत इत्यत्र दितिरेव प्रमाणम्. तथा, कुटिलचित्ताः विवेकिनोऽपि यान् दोषान् परेषां पश्यन्ति तानेव दोषान् स्वस्मिन् स्थितानपि न पश्यन्ति इत्यत्र क्रमिविड्भस्मादिकवचनात् दितिरेव प्रमाणमिति द्वितीयः । स्त्रीमायया महाविज्ञोपि स्त्रार्थीभवतीत्यत्र कश्यप एव प्रमाणमिति तृतीयः । अर्थवं मिताक्षरं सन्निभृतेन सत्पूर्वेण एकाग्रीकृतेनेत्यर्थः । हे सत्रायण शौनक ! ॥ २२ ॥

शक्रस्य पार्ष्णिग्राहेण पृष्ठतः सहायेन परोक्षसाहाय्य कर्त्रेत्यर्थः ॥ २३ ॥

उल्बणं क्रूरम् । सुखं शये सुखेन निद्रामीत्यर्थः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततो बलेः सकाशादशनायां भार्यायां बाणो ज्येष्ठो यस्मिन् तत् पुत्रशतमभवत्, तस्य बलेरनुभावः सुश्लोक्यः कविभिः शोभनैः श्लोकैर्वर्णनार्हः पश्चादष्टमे स्कन्धेऽभिधास्यते ॥ १७ ॥

तस्य गणेषु मुख्यतां प्राधान्यम् । भगवान् भवः पुरपालकः सन् अद्यापि यस्य पार्श्वे आस्ते ॥ १८ ॥

इन्द्रेण सात्मतां देवत्वं नीताः ॥ १९ ॥

हे गुरो ! इन्द्रेण औत्पत्तिकं सहजं तदीयमासुरं भावमपोह्य ते सात्म्यं देवत्वं कथं प्रापिताः ? तैस्तस्य किं साधुकृतम् ? ॥ २० ॥ २१ ॥

सत्रमयनमाश्रयो यस्य सम्बोधने हे सत्रायण ! शौनक स प्रसिद्धः सर्वदर्शनो बादरायणिः शुकः विष्णुरातस्य तत्प्रश्नरूपं आहतं आदरान्वितं अल्पं मितवर्णं अर्थवत् बह्वर्थयुक्तम् वचो निशम्य निभृतेनानन्दपूर्णेन चेतसा सभाजयन् प्रशंसयन् जगाद ॥ २२ ॥

शक्रस्य पार्ष्णिग्राहेण सहायेन ॥ २३ ॥

उल्बणं क्रूरम् अक्लिन्नहृदयमनार्द्रचित्तम् पापं पापात्मानम् घातयित्वा कथमहं सुखं यथा तथा शये ॥ २४ ॥

---

भाषाटीका ।

उस बली की अशना नामक भार्या में सौ पुत्र उत्पन्न हुये जिनमें बाणासुर जेठ्ठा । उस बलीके पवित्र प्रभाव को आगे 'अष्टमस्कन्धमें' कहेंगे ॥ १७ ॥

बाणासुर महादेव का आराधन करके उनके गणों में मुख्य होगया । जिसके समीप में अबतक भी पुरपालक होकर भगवान् शंकर रहते हैं ॥ १८ ॥

और भी दिति के ऊनपञ्चाशत् ४९ मरुत नामक पुत्र हुए वे सबही अप्रज नाम बिना सन्तान के हुए और इन्द्रने उनको अपने भाई बना लिये ॥ १९ ॥

राजो वाच ॥

हे गुरो उन सबोंको, उनके स्वाभाविक असुरपने को दूर कर किस प्रकार ? इन्द्रने अपने बरावर के किये, ऐसा उन्होंने क्या पुण्य किया था । हे ब्रह्मन् हे भगवन् ! मेरे सहित ये सब ऋषि लोग इस वृत्तान्त के सुनने की श्रद्धा करते हैं तस्मात् आप कहने योग्य हैं ॥ २० ॥ २१ ॥

सूत उवाच ॥

हे शौनक ! सर्वज्ञ श्री शुकदेवजी राजा परीक्षित के सार्थक और थोड़े से मधुर वचन को सुनकर आनन्दित चित्त से श्लाघाकर बोले ॥ २२ ॥

श्री शुक उवाच ॥

इन्द्र के सहायक विष्णुने जब दिति के दोनों पुत्रों को

कृमिविड्भस्मसंज्ञाऽऽसीद्यस्येशाभिहितस्य च ।
भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ २५ ॥
आशासानस्य तस्येदं ध्रुवमुन्नद्धचेतसः ।
मदशोषक इन्द्रस्य भूयाद्येन सुतो हि मे ॥ २६ ॥
इति भावेन सा भर्तुराचचाराऽसकृत्प्रियम् ।
शुश्रूषयाऽनुरागेण प्रश्रयेण दमेन च ॥ २७ ॥
भक्त्या परमया राजन् ! मनोज्ञैर्वल्गुभाषितैः ।
मनो जग्राह भावज्ञा सुस्मिताऽपाङ्गवीक्षणैः ॥ २८ ॥
एवं स्त्रिया जडीभूतो विद्वानपि विदग्धया ।
बाढमित्याह विवशो न तच्चित्रं हि योषिति ॥ २९ ॥
विलोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः ।
स्त्रियं चक्रे स्वदेहार्द्धं यया पुंसां मतिर्हृता ॥ ३० ॥
एवं शुश्रूषितस्तात ! भगवान्कश्यपः स्त्रिया ।
प्रहस्य परमप्रीतो दितिमाहाभिनन्द्य च ॥ ३१ ॥

कश्यप उवाच ।

वरं वरय वामोरु ! प्रीतस्तेऽहमनिन्दिते ! ।
स्त्रिया भर्त्तरि सुप्रीते कः काम इह चागमः ॥ ३२ ॥

---

भाषा टीका ।

मारदिये तब शोक से दीप्त हुआ जो क्रोध तिससे जलती हुई दिति चिन्ता करने लगी ॥ २३ ॥

कि भाइयों के मारने वाला विषयी, स्वभाव से क्रूर कठिन हृदय, पापी इन्द्रको मरवाकर, कब सुख से सोऊंगी ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, राजा स्वदेहरक्षार्थमन्येषां घातं करोत्येव किमत्र चित्रं ? तत्राह-कृमीति । ईशः प्रभुरित्यभिहितस्यापि यस्य पूर्वेषां राज्ञां देहस्य मरणानन्तरं द्वित्रिदिनावस्थितस्य कृमय इति, श्वादिभिर्भक्षितस्य तु विष्ठेति, दग्धस्य भस्मेति संज्ञा आसीत्तत्कृते तस्य देहस्यार्थे यो भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद ? न वेदैव. तत्र हेतुः, यतो भूतद्रोहान्निरयो भवति ॥ २५ ॥

इदं देहादिकं ध्रुवं नित्यमाशासानस्य मन्यमानस्यात उन्नद्धमुच्छृंखलं चेतो यस्य तस्येन्द्रस्य यो मदस्तस्य शोषकः पुत्रो मे येन हेतुना भूयाद्भवेत् ॥ २६ ॥

भर्तुः प्रियाचरणमेवेति भावेन सा भर्तुः प्रियमसकृदाचचार ॥ २७ ॥ २८ ॥

विवशः स्त्रीपरतन्त्रस्सन् बाढं तव मनोरथं पूरयिष्यामीति यदाह तन्न चित्रम् ॥ २९ ॥

तत्र हेतुमाह-विलोक्येति । एकान्तभूतानि निःसङ्गानि मैथुनेन सृष्टिवृद्ध्यर्थं स्वदेहार्धमेव स्त्रियं चक्रे ॥ ३० ॥

एवं स्त्रिया शुश्रूषितः सन् ॥ ३१ ॥

इह चकारात्परत्र च अगमोऽप्राप्यः ॥ ३२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, सर्वोऽपि लोकः स्वसुखाय परस्याहितमाचरति. किमनेनाक्रोशेन ? तत्राह-कृमीति । ईशाभिहितस्य "ईश्वरोऽहमहं भोगी" इत्युक्तरीत्या स्वेनैवेशत्वेनाभिहितस्य ईशं मन्यमानस्यापि यस्य पुंसः मरणानन्तरं देहस्य दाहाभावे कृमिरिति, तत्समये श्वादिभिर्भक्षितस्य विष्ठेति, दग्धस्य तु भस्मेति, संज्ञा आसीत् तत्कृते तादृशदेहसुखार्थं भूतध्रुक् भूतहिंसाकारी स किं स्वार्थं पुरुषार्थं

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वेद न वेदेत्येत्यर्थः । कुतः ? यतो भूतद्रोहाद्धेतोस्तस्यां ततो निरयो नरक एव अतो भूतधुक् स्वार्थमपि न जानात्येवेति भावः ॥ २५ ॥

इदं शरीरमेवाशासानस्यआत्मानं मन्यमानस्य उन्नद्धमुच्छ्रृङ्खलं चेतो यस्य तस्येन्द्रस्य यो मदस्तस्य शोषकृत्पुत्रो मम येन कारणेन ध्रुवं नूनं भूयात् ॥ २६ ॥

हे राजन्, इत्थं भावेनाभिप्रायेण सा दितिर्भर्त्तुः कश्यपस्य शुश्रूषादिभिरसकृत्प्रियं हितम् आचचार आचरितवतीत्यर्थः तत्र शुश्रूषा सेवा परिचर्येति यावत् अनुरागः स्नेहः प्रश्रयो विनयः दमः इन्द्रियनिग्रहः ॥ २७ ॥

भावज्ञा दितिर्वल्गुभाषितैः मधुरालापैः सस्मितैः मन्दहाससहितैः अपाङ्गवीक्षणैः कश्यपस्य मनो जग्राह स्ववशीकृतवती बभूव ॥ २८ ॥

कथं जितेन्द्रियस्य तस्य विदुषः स्त्रीवश्यता ? तत्राह—एवमिति । विद्वानपि विदग्धया पुरुषवञ्चननैपुण्ययुक्तया स्त्रिया दित्या जडीभूतः मोहं प्रापितः अत एव विवशः परवशः बाढमित्याह सम्भोगार्थमङ्गीकृतवानित्यर्थः । योषिति स्वयङ्कामयमानायां स्त्रियां पुरुषस्य तद्बाढमितिवचो न चित्रं हीति लोकचरित्रप्रदर्शनम् ॥ २९ ॥

प्रजापतिः कश्यपः आदौ प्रथमं भूतानि स्त्रीपुंस्वरूपाणि भूतानि एकान्तभूतानि एकान्तरूपाणि । एकान्तान्येकदेश इवाविभागेन लक्ष्यमाणानि एकान्तभूतानि विलोक्य परस्परमेकशरीरवन्मिलितानि भवन्तीत्यालोच्येत्यर्थः स्वयमपि स्त्रियं स्वदेहस्यार्द्धम् अर्द्धांशञ्चक्रे मिथुनीभूतो बभूवेत्यर्थः एवं करणे हेतुं वदन् सामान्यतः स्त्रियं विशिनष्टि—यया स्त्रिया पुंसां मतिर्हृता भवतीति लोकरीत्युक्तिः ॥ ३० ॥

भगवान् कश्यपः स्त्रिया दित्या एवं सम्भोगेन शुश्रूषितः परिचरितः अत एव नितरां प्रीतः अभिनन्द्य तस्याः सम्भोगकौशलमभिनन्द्य प्रहस्य दितिंप्रति इदं वक्ष्यमाणमाह ॥ ३१ ॥

तदेवाह—वरमिति । हेवामोरु ! हे अनिन्दिते ! वरमभीष्टं वरय कामयस्व भर्त्तरि स्त्रियाः नितरां प्रीते सति इह लोके चकारात्परत्र च लोके अगमो ऽप्राप्यः कामः को वा ? न कोऽप्यस्तीत्यर्थः स्त्रिया ऽप्राप्य इति वान्वयः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नाशक्तोऽपि शब्दार्थः ईशाभिहितस्य ईशोऽहं राजाहमित्यादिशब्दवाच्यस्यापियस्य देहस्यान्ते मरणोत्तरकाले कृमिविड्भस्मसंज्ञा भवेच्चिरकालावस्थाने कृमिरिति संज्ञा, श्वादिभिर्भक्षिते विट्संज्ञा, वह्निदाहे भस्मसंज्ञाः तत्कृते तस्य देहस्यार्थे भूतध्रुक् सर्वप्राणिहिंसकः स्वार्थं स्वप्रयोजनं किं वेद ? न किमपि वेदेत्यन्वयः । यः स्वार्थं कुरुते स वेद किं ? ज्ञानवान् किं न भवतीत्यर्थं इति वा । कुत इति तत्राह—निरय इति । निर्गतम् अयमिष्टप्रदं दैवं यस्मात् स तथा तादृशो भवतीति यतस्तस्माद्यतः स्वरूपाज्ञानाद्वा भूतद्रोहाद्वा ॥ २५ ॥

इदं जगत् ध्रुवमित्याशासानस्य वाञ्छतः उद्धतबुद्धेरिन्द्रस्य मदशोषणं येन सुतेन स्यात् स सुतो मे स्यात् ॥ २६ ॥

इतिभावेनाभिप्रायेण ॥ २७ ॥ २८ ॥ २९ ॥

जगदादौ प्रजापतिर्ब्रह्मा भूतान्येकान्तभूतानि परस्परस्नेहरहितानि केवलं मृत्युभूतानि विलोक्य मिथःस्नेहबन्धार्थं स्वशरीरार्धां स्त्रियं चक्रे ससर्जेत्यन्वयः ॥ ३० ॥ ३१ ॥

भर्तरि स्त्रीणामर्थे सुप्रीते सति किं कामः पुरुषार्थोऽगमः प्राप्तुमशक्य इत्यन्वयः ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आशासानस्येति येन भवेत् तत्तु भर्त्तृप्रियाचरणमेवेति भावेनेत्यर्थः ॥ २६—४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ईशाभिहितस्य ईशो राजेत्यभिहितस्यापि देहस्य मरणानन्तरं द्वित्रिदिनावस्थितत्वे कृमय इति, श्वादिभिर्भक्षितत्वे विष्ठेति, पुत्रादिभिर्दग्धत्वे भस्मेति, संज्ञा आसीत् । पूर्वपूर्वनृपाणामपि तथा दृष्टत्वादिति भूतनिर्देशः तस्य देहस्य कृते यो भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद ? नैव वेद. यतः स्वस्यैव निरयो भवति तस्मादिन्द्र एव विवेकशून्य इति व्यञ्जयति. अथ च स्वयमेव विवेक शून्या. यत इन्द्रजिघांसुः स्वयमपीन्द्रमेव भूतद्रुहं स्वयमक्लिष्टहृदयापीन्द्रमेवाक्लिष्टहृदयं स्वयं स्वार्थानभिज्ञापि इन्द्रमेव स्वार्थानभिज्ञं मन्यत इत्यतो विवेकोऽप्यविवेकिनामविवेकमेव दृढयतीति दर्शितम् ॥ २५ ॥

येनैव तेन दुष्प्रेणापि एतेन हेतुनैव तस्य मदशोषकः सुतो मे भूयादिति प्रार्थनेत्यर्थः । तस्य कथम्भूतस्य इदं देहादिकं ध्रुवं नित्यं आशासानस्य मन्यमानस्य उच्छृङ्खलचेतसः भर्त्तरि तुष्यति स्त्रीणां मनोरथः सिद्ध्यति । तस्मादहं परिचर्यया पतिं तोषयामीति भावेन ॥ २६ ॥ २८ ॥

बाढं तव मनोरथं पूरयिष्यामीति यदाह तन्न चित्रम् ॥ २९ ॥

एकान्तभूतानि निस्सङ्गानि मतिर्हृता अत एव संसारप्रवाहोऽविच्छिन्नोऽभूदिति भावः ॥ ३० ॥

अगमः अप्राप्यः ॥ ३१ ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, स्वदेहरक्षार्थं राजान्यघातं करोत्येवेत्यत आह—कृमीति । पूर्वेषां राज्ञामीशाभिहितस्य देहः समर्थः इत्येवं प्रोकस्यापि

पतिरेव हि नारीणां दैवतं परमं स्मृतम् ।
मानसः सर्वभूतानां वासुदेवः श्रियः पतिः ॥ ३३ ॥
स एव देवतालिङ्गैर्नामरूपविकल्पितैः ।
इज्यते भगवान्पुम्भिः स्त्रीभिश्च पतिरूपधृक् ॥ ३४ ॥
तस्मात्पतिव्रता नार्यः श्रेयस्कामाः सुमध्यमे !
यजन्तेऽनन्यभावेन पतिमात्मानमीश्वरम् ॥ ३५ ॥
सोऽहं त्वयाऽर्चितो भद्रे ! ईदृग्भावेन भक्तितः ।
तत्ते सम्पादये काममसतीनां सुदुर्लभम् ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देहस्य मरणानन्तरं द्वित्रिदिनावस्थितस्य कृमय इति, श्वादिभिर्भक्षितस्य विडिति, दग्धस्य भस्मेति च, संज्ञा आसीत्. तत्कृते तदर्थे यो भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद ? नैव वेदेत्यर्थः । अपि तु यतो भूतद्रोहान्निरयो भवति ॥ २५ ॥

इदं देहादिकं ध्रुवं नित्यमाश्वासानस्य मन्यमानस्य उन्नद्धमुच्छृङ्खलं चेतो यस्य तस्येन्द्रस्य मदशोषको गर्वघ्नो येनोपायेन मे मम सुतो भूयात्तद्भर्तृभजनं करिष्यामीति शेषः ॥ २६ ॥

इति भावेन इत्यभिप्रायेण सा भर्तुः शुश्रूषादिनाऽप्यकृत प्रियमाचचार ॥ २७ ॥

भावज्ञा अभिप्रायज्ञां ॥ २८ ॥

विदग्धया भर्तुर्मनोग्रहणे निपुणया एवं भजनेन विद्वानपि जडीकृतो मोहितः अत एव विवशः स्त्रीपरतन्त्रः बाढमित्याह, त्वत्कामं सम्पादये इति स्वीकृतवानित्यर्थः । तत्स्त्राचरितैः पुरुषविमोहनं योषिति चित्रमद्भुतं न भवति ॥ २९ ॥

एवंविधा स्त्री प्रजापतिनैव सृष्टेत्याह—विलोक्येति । प्रजापतिर्ब्रह्मा आदौ एकान्तभूतानि निःसङ्गानि विलोक्य स्वदेहार्द्धं स्त्रियं चक्रे यया पुंसां मतिर्हृता दारापत्यगृहाद्यभिनिविष्टा कृता ॥ ३० ॥

बाढमित्याहविवश इति यदुक्तं तत्प्रपञ्चयति—एवमित्यादिना । भगवान् वह्वज्ञोऽपि स्त्रिया एवं कपटेन शुश्रूषितः सन् प्रहस्य परमप्रीतः दितिमभिनन्द्याह ॥ ३१ ॥

हे वामोरु ! मनोहरोरु, हे अनिन्दिते ! वरं वरय भर्तरि प्रीते इह चात्परत्र च कः कामः मनोरथः अगम्योऽप्राप्यः ॥ ३२ ॥

---

भाषाटीका ।

जिस शरीर की राजा संज्ञा है अन्त में वही कृमि विष्ठा और भस्म संज्ञा. वाला होता है उस शरीर के लिये प्राणियों से द्रोह करने वाला पुरुष क्या अपने यथार्थ स्वार्थ को जानता है ? नहि, क्योंकि उससे नरक होता है ॥ २५ ॥

देहादि को नित्य मानने वाले, और स्वतंत्र चित्त वाले, उस इन्द्रके मद का नाशक पुत्र जिस प्रकार हो इस अभिप्राय से वह अदिति सेवा अनुराग नम्रता आदि से अपने पति श्री कश्यपजी का सदा प्रिय करने लगी ॥ २६ ॥ २७ ॥

हेराजन् ! कश्यप के अभिप्राय को जानने वाली दिति ने परम भक्ति और मनोहर प्रिय वचन, तथा सहास कटाक्ष पूर्वक देखना, इन से पति के मनको वश करलिया ॥ २८ ॥

इस प्रकार विद्वान भी श्रीकश्यपजी चतुर स्त्री के जडकी तरह वश होकर उसकी प्रार्थना को स्वीकार करते हुये । यह स्वीकार करना स्त्री के वश होकर कुछ आश्चर्य नहीं ॥ २९ ॥

क्योंकि सृष्टि के पूर्व में ब्रह्माने लोगों को संसार से विमुख देखकर अपने देह के अर्द्ध भाग को स्त्री करदिया जिससे पुरुषों की मति हरगा हुई ॥ ३० ॥

हे तात ( प्रिय ) श्री भगवान् कश्यपजी ऐसे दिति की शुश्रूषा से परम प्रसन्न हुए । और हँसकर दिति की स्तुति करके बोले ॥ ३१ ॥

कश्यप उवाच ॥

हे अनिन्दिते ! ( निन्दा के अयोग्य ) हे वामोरु ! ( सुन्दर ऊरु वाली ) हम तुम पर प्रसन्न हुये तुम वर मांगो क्योंकि स्वामी के प्रसन्न होने पर ऐसा कौन मनोरथ है कि जो सिद्ध न हो ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, परमेश्वरे तुष्टे सर्वकामप्राप्तिरिति प्रसिद्धं तत्राह—पतिरेवेति । ननु, मनसि स्थितः श्रीवासुदेव एव लक्ष्मीपतिः परं दैवतमिति प्रसिद्धं सत्यं स एव स्वाधिकारेण रूपभेदैः पूज्यत इत्याह—मानस इति सार्द्धेन ॥ ३३ ॥

दितिरुवाच ।

वरदो यदि मे ब्रह्मन् ! पुत्रमिन्द्रहणं वृणे ।
अमृत्युं मृतपुत्राहं येन मे घातितौ सुतौ ॥ ३७ ॥
निशम्य तद्वचो विप्रो विमनाः पर्यतप्यत ।
अहो अधर्मः सुमहानद्य मे समुपस्थितः ॥ ३८ ॥
अहो अर्थेन्द्रियारामो योषिन्मय्येह मायया ।
गृहीतचेताः कृपणः पतिष्ये नरके ध्रुवम् ॥ ३९ ॥
कोऽतिक्रमोनुवर्त्तन्त्याः स्वभावमिहयोषितः ।
धिङ्मां वताबुधं स्वार्थे यदहन्त्वजितेन्द्रियः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

देवतालिङ्गैर्मूर्तिभिरुपलक्षितः तान्येवाह—नाम इन्द्रादि, रूपं वज्रहस्तत्वादि, ताभ्यां विविधकल्पितैः ॥ ३४—३६ ॥

इन्द्रहणं इन्द्रहन्तारम् अमृत्युं मृत्युशून्यं येनेन्द्रेण विष्णुना सहायेन घातितौ ॥ ३७—३९ ॥

स्वभावमनुवर्त्तमानाया योषितः कोऽतिक्रमोऽपराधः ॥४०॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, कर्मवश्ये ऽनीश्वरे भर्त्तरि प्रीते सति कथं सर्वत्र सर्वकामसौलभ्यम् ? तत्राह—पतिरिति । नारीणां पतिरेव हि सर्वोत्कृष्टं दैवतम् अतः परमदेवप्रीणनेन सर्वकामसौलभ्यमितिभावः। ननु, "तं देवतानां परमञ्च दैवतम्" इति श्रुत्युक्तरीत्या श्रियःपतिर्हि परमं दैवतं. न भर्ता, तत्राह—मानस इति, यः सर्वभूतानां मानसः मनसःसाक्षी वासुदेवः सर्वान्तरात्मा श्रियः पतिः ॥ ३३ ॥

स एव भगवान्नामरूपाभ्यां विकल्पितैः विभिन्नैर्देवतालिङ्गैः अग्नीन्द्रादिदेवतारूपैः शरीरैरिज्यते इदं दृष्टान्तार्थं "तदेवाग्निस्तद्वायुस्तत्सूर्यः" इत्यादिश्रुत्युक्तरीत्या पुंभिर्यथाभिरग्न्यादिशरीरै र्द्वारभूतैर्यथा तदन्तरात्मा भगवानिज्यते यागादिभिराराध्यते तथा स्त्रीभिरपि पतिरूपधृत् पतिशरीरकः परमात्मैव नानोपचारैस्तोष्यत इत्यर्थः भगवति तुष्टे सति सर्वे कामाः सुलभाः इति भावः ॥ ३४ ॥

यत एवं तस्मात् हे सुमध्यमे ! श्रेयस्कामाः पतिव्रता नार्यः अनन्यभावेन अनन्याहंशेषत्वेन ईश्वरात्मकं पतिमेवाराधयन्ति॥३५॥

हे भद्रे ! यतोऽहमीदृशभावेन अनन्यभावेन भक्तितश्च त्वया अर्चितः तत्तस्मात्ते तव काममिष्टं सम्पादये सिद्धवत्करोमि कथंभूतमसतीनामपतिव्रतानां सुतरां दुर्लभं लब्धुमशक्यम् ॥ ३६ ॥

एवं वराय चोदिता दितिराह—वरद इति । हे ब्रह्मन् ! मम यदि त्वं वरदः वरं दद्यास्तर्ह्यमर्त्यैर्देवैः हतौ पुत्रौ यस्याः सा अहम् इन्द्रस्य हन्तारं पुत्रं वृणे येनेन्द्रेण प्रयोजकेन भगवता प्रयोज्यकर्त्रा मे सुतौ हिरण्याक्षहिरण्यकशिपू घातितौ मारितौ ॥ ३७ ॥

एवं तस्याः दितेः वचो निशम्य विप्रः कश्यपः विमनाः खिन्नः पर्यतप्यत परितापञ्चकार, तमेव परितापप्रकारमाह—अहो इति। अद्य महानधर्मो मम प्राप्तः अहो इति खेदे ॥ ३८ ॥

अहो अस्मादधर्मादहं नरके ध्रुवं नूनं पतिष्ये कथम्भूतः इन्द्रियारामः अत एव योषिद्रूपया भगवन्मायया गृहीतं चेतो यस्य स अत एव कृपणः दीनः ॥ ३९ ॥

स्वभावं स्त्रीस्वभावमनुवर्तमानायाः योषितः कोऽतिक्रमः न कश्चिद्दोषः, अपि तु मामेव स्वार्थमप्यजानन्तं धिक् अहमेव स्वार्थमप्यजानन्निन्द्य इत्यर्थः। कुतः ? यद्यस्मादहं लालितानीन्द्रियाणि येन तादृशः ॥ ४० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु "तद्वेतत्प्रेत्य" इति श्रुतेरविगानेन सर्वजनस्य परमेष्टदेवता श्रीधर इति, यतः कथं पतिरेव नारीणामिष्टदेवतेति विशेष्योच्यते ? इति तत्राह—मानस इति। वासुदेवः मानसः सर्वभूतानां मानसो मनसि स्थितस्सन् मनसा पूज्यः, को वासुदेवः ? इति तत्राह—श्रिय इति ॥ ३३ ॥

एतदेव विशदयति—स इति। वासुदेव एव नामरूपाभ्यां विविधत्वेन कल्पितैर्देवतालिङ्गैः देवताविग्रहैः विशेषतः सन्निहितत्वेन स्त्रीभिः पुम्भिश्चेज्यते तत्र स्त्रीभिः पतिसहितत्वेन पूज्यते तदर्थं पतिरूपधृगिति, पुरुषैस्तु देवतालिङ्गनामरूपत्वेनेति, लिङ्गं लक्षणं विग्रहश्चोच्यते ॥ ३४ ॥

यस्मात्पतावाहित ईशस्तस्मात्पतिपूजनेन भगवानेव पूजितः स्यादित्युपसंहरति—तस्मादिति। पतिं पतिरूपम् ॥ ३५ ॥

**शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम् ।**
**हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥ ४१ ॥**

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ईदृग्भावेन पतिस्थितः परमात्मा मह्यं प्रसीदत्विति बुद्ध्या ॥ ३६ ॥

अमृत्युमनश्वरम् ॥ ३७ ॥ ३८ ॥ ३९ ॥

स्वभावं गुप्तचौर्यभावमनुवर्तमानाया अतिक्रमोऽन्यायः स्वभावं सौशील्यमनुवर्तन्त्या इति वा ॥ ४० ॥ ४१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पतिः खल्वत्र जीव एव स कथं परं दैवतमीश्वरः स्यात्तत्राह—मानसः मनसश्चित्तस्याधिष्ठाता यो वासुदेवः स एव भगवान् देवतानां लिङ्गैश्चिह्नैरिज्यते कीदृशैर्नाम इन्द्रादि, रूपं वज्रहस्तत्वादि, ताभ्यां विविधं कल्पितैः इन्द्राय स्वाहा अग्नये स्वाहा इत्यादिभिर्नामरूपभेदेन पुम्भिः कर्मिभिर्लोकैर्भगवानेव इज्यते यथा, तथा स्त्रीभिः पतिरूपेणेत्यर्थः ॥ ३४–३६ ॥

इन्द्रहणं इन्द्रहन्तारं हन्तेर्गत्यर्थत्वात् पक्षे इन्द्रानुगम् अमृत्युं सर्वैरवध्यं पक्षे देवत्वादमरम्. ऊनपञ्चाशद्भिरेक एव देवो मारुत इत्येकवचनम्. विमना इति दितेरीप्सितोऽर्थस्तु इन्द्रमरणं विना न सम्भवेदिति भावः ॥ ३७—३९ ॥

अतिक्रमोऽपराधः क्रौर्यं हि स्त्रीजातेः स्वभाव एव तमनुवर्त्तन्त्याः अनुवर्त्तमानायाः ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, जीवे पत्यादिरूपे प्रीते कुतो मनोरथसिद्धिरित्यत्राह—वासुदेवः श्रियःपतिः स्त्रीणां पतिरेव वासुदेवदृष्ट्या सेवितः पतिर्मनोरथप्रदो भवतीत्यर्थः । किञ्च सर्वभूतानां मानसं हृदन्तःस्थं परमं दैवतं स्मृतम् "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति" इति स्मृत्या वर्णितं तद्दृष्ट्या पूजितानि सर्वाणि भूतान्यपि मनोरथप्रदानि भवन्ति न पतिरेवैक इत्यर्थः ॥ ३३ ॥

अत एव पुम्भिर्याज्ञिकैः स एव वासुदेवः सर्वहृत्प्रविष्टः देवतालिङ्गैः इन्द्रादिदेवमूर्तिभिरधिष्ठानभूतैर्निमित्तैः नाम्नेन्द्रादिना रूपेण वज्रहस्तत्वादिना विकल्पितैर्विशेषतया समर्थितैः इज्यते तथा स्त्रीभिश्च पतिरूपधृक् पतिरूपेण धृष्णोति अन्तर्यामिरूपेण प्रगल्भते इति पतिरूपधृक् ॥ ३४ ॥

यस्मादेवं तस्मात् पतिव्रताः ईश्वरं सर्वनियन्तारम् आत्मानं सर्वान्तर्यामिणं वासुदेवं पतिं पत्यभिन्नं यजन्ते ॥ ३५ ॥

कामं वाञ्छितार्थम् ॥ ३६ ॥

यदि वरदस्तर्हि इन्द्रहन्तारं पुत्रं वृणे ॥ ३७ ॥ ३८ ॥

अथेदानीमिन्द्रियारामोऽहं ध्रुवं निश्चितं नरके पतिष्ये यतः योषिन्मय्या मायया गृहीतं चेतो यस्य सः स्वपुत्रनाशे तया प्रवर्तितः इति यावत् ॥ ३९ ॥

स्वभावमनुवर्तिन्याः योषितः अतिक्रमः अपराधः कः ? न कोऽपि, यतोऽहमविजितेन्द्रियः अतः स्वार्थेऽबुधं मां धिक् ॥ ४० ॥

---

### भाषा टीका ।

पति ही स्त्रियों का परम दैवत प्रसिद्ध है सम्पूर्ण प्राणियों के हृदय में रहने वाले श्री पति वासुदेव ही परम दैवत प्रसिद्ध है ॥ वही वासुदेव भगवान् नाना प्रकार के नाम रूपादि से विकल्पित अनेक देवादि मूर्तियों से उपलक्षित होकर पुरुषों से पूजित होते हैं. और स्त्रियों से पति स्वरूप पूजित होते हैं ॥ ३३ ॥ ३४ ॥

हे सुमध्य मे ! इसीसे कल्याण की इच्छा वाली पतिव्रता स्त्रियें अनन्य भावसे पति रूप परमात्मा का सेवन करती हैं ॥ ३५ ॥

हे भद्रे ! ऐसी भक्ति से जो तुमने हमारा पूजन किया इसी से असति स्त्रियों को दुर्लभ भी तुमारे मनोरथ को हम पूरा करेंगे ॥ ३६ ॥

#### दितिरुवाच ॥

हे ब्रह्मन् ! आप यदि मुझे वर देने को प्रसन्न हो और जिस इन्द्र ने विष्णु के द्वारा मेरे पुत्रों को मरवाया है उस इन्द्र के मारने वाले और मृत्यु रहित पुत्र को आप से नष्ट पुत्र वाली मैं मांगती हूं ॥ ३७ ॥

कश्यपजी भी दिति का वचन सुनकर बड़े उदास होकर ताप को प्राप्त हुये । और बोले कि अहो आज मुझे बड़ा आश्चर्य प्राप्त हुआ ॥ ३८ ॥

अहो इन्द्रियारामी दीन मैं स्त्रीमयी माया के वश होकर अब निश्चय नरक में पड़ूंगा ॥ ३९ ॥

अपने स्वभाव में चलने वाली स्त्री का यह क्या दोष है क्योंकि मैंही अजितेन्द्रिय हूं अपने स्वार्थ न जानने वाला ऐसे मुझको धिक्कार है ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वभावमेवाह—द्वाभ्याम् । शरत्पद्मस्येवोत्सवो विकासो यस्मिन् श्रवणे श्रुती तयोरमृतं क्षुरधारोपमं चित्तम् ॥ ४१ ॥

न हि कश्चित्प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम् ।
पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च ॥ ४२ ॥
प्रतिश्रुतं ददामीति वचस्तन्न मृषा भवेत् ।
वधं नार्हति चेन्द्रोऽपि तत्रेदमुपकल्पते ॥ ४३ ॥
इति सञ्चिन्त्य भगवान्मारीचः कुरुनन्दन ! ।
उवाच किञ्चित्कुपित आत्मानं च विगर्हयन् ॥ ४४ ॥

कश्यप उवाच ।

पुत्रस्ते भविता भद्रे ! इन्द्रहा देवबान्धवः ।
संवत्सरं व्रतमिदं यद्यञ्जो धारयिष्यसि ॥ ४५ ॥

दितिरुवाच ।

धारयिष्ये व्रतं ब्रह्मन् ! ब्रूहि कार्याणि यानि मे ।
यानि चेह निषिद्धानि न व्रतं घ्नन्ति यानि तु ॥ ४६ ॥

कश्यप उवाच ।

न हिंस्याद्भूतजातानि न शपेन्नानृतं वदेत् ।
न च्छिन्द्यान्नखरोमाणि न स्पृशेद्यदमङ्गलम् ॥ ४७ ॥
नाप्सु स्नायान्न कुप्येत न संभाषेत दुर्जनैः ।
न वसीताधौतवासः स्रजं च विधृतां क्वचित् ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वाशिषात्मनां स्वार्थकामनयात्मवत्प्रेष्ठत्वेन प्रतीयमानानाम् ॥४२॥

तत्रेदमुपकल्पते योग्यं भवति. अयं भावः । वैष्णवं व्रतं तावदुपदेक्ष्यामि तेनैवास्याः शुद्धचित्तायाः इन्द्रं प्रति क्रोधो निवर्तिष्यते पुत्रस्त्वमर्त्यो भविष्यति दीर्घकालत्वे च व्रतस्य कथंचिद्वैगुण्ये सतीन्द्रस्य वधोऽपि न भविष्यतीति ॥ ४३ ॥ ४४ ॥

हे भद्रे ! अञ्जः यथावद्यदि धारयिष्यसि तर्हीन्द्रहा भविष्यति वैगुण्ये तु देवबान्धवो भविष्यति वैष्णवत्वाद्व्रतस्य कथंचिद्वैगुण्येऽपि सति सर्वथा वैफल्याभावात् ॥ ४५ ॥

कार्याण्यावश्यकानि व्रतं यानि न घ्नन्ति अवश्यकानि न च निषिद्धानि किन्त्वभ्यनुज्ञातानि तानि सर्वाण्यपि ब्रूहि ॥ ४६ ॥

तत्रैकादशविधिनिषेधानाह—न हिंस्यादिति पञ्चभिः । न शपेन्नाक्रोशेत् यदमङ्गलं कपालास्थ्यादिकं तन्न स्पृशेत् ॥ ४७ ॥

नाप्सु प्रविश्य स्नायात् पूर्वं विधृतां स्रजं पुनर्न धारयेत् ॥४८॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्त्रीणां स्वभावं प्रकाशयन्परितप्यते—शरदिति । अहो स्त्रीणां वक्त्रं मुखं शरच्चन्द्रतुल्यं तथा वचश्च श्रवणयोः कर्णयोरमृततुल्यं हृदयं तु क्षुरस्य धारासदृशम्. अतस्तासां चेष्टितं को वेद ? न कोपीत्यर्थः ॥ ४१ ॥

न हि स्त्रीणां अञ्जसा सम्यक्कश्चिदपि पुमान् प्रियोऽस्ति. तत्र हेतुः, स्वाशिषात्मनां स्वाशिषि स्वापेक्षित एवार्थे आत्मा चित्तं यासां तासां स्वाशिषात्मत्वादिति भावः, अत एवार्थे स्वापेक्षितार्थनिमित्तं पतिं पुत्रं भ्रातरं वा घ्नन्ति मारयन्ति ॥ ४२ ॥

इदं महत्सङ्कटमित्याह—ददामीति । यत्प्रतिश्रुतं प्रतिज्ञारूपं मम वचः न मृषा भवेत् मिथ्या भवितुं नार्हति वचसोऽनृतत्वभयेन दास्यामि चेदिन्द्रो हन्येत इन्द्रोऽपि वधंप्रति नार्हति अत इदं महत्सङ्कटमिति भावः । तत्रैतस्मिन् सङ्कटे इदं मया वक्ष्यमाणम् एतत्सङ्कटनिवृत्तये उपकल्पते योग्यं भवति ॥ ४३ ॥

हे कुरुनन्दन ! भगवान्मारीचः कश्यपः इतीत्थं सञ्चिन्त्यालोच्य किञ्चित्कुपितः मनसैवात्मानं गर्हयन्नुवाच ॥ ४४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेवाह—पुत्रइति। हे भद्रे! इदं मयोच्यमानं व्रतमङ्ग!सम्यक् संवत्सरपर्यन्तं यदि त्वं धारयिष्यसि करिष्यसि तर्हीन्द्रस्य हन्ता पुत्रस्तव भविष्यति नोचेद्देवानां बान्धवो भविष्यतीति ॥ ४५ ॥

तद्वचः श्रुत्वाह दितिः—धारयिष्य इति। हे ब्रह्मन्! व्रतमहं धारयिष्ये मे कार्याणि मया कर्त्तव्यानि यानि प्रवृत्तिनिवृत्तिरूपाणि यानि च कर्माणि व्रतं न घ्नन्ति न मारयन्ति व्रतघ्नानि न भवन्ति व्रतघ्नानि निवृत्ति रूपाणि च कार्याणि मे ब्रूहि ॥ ४६ ॥

एवमुक्तस्तावद्व्रताङ्गतान्निवृत्तिरूपान् नियमानाह कश्यपः—नेति। भूतजातानि प्राणिसमूहान्नहिंस्यात् न हन्यात् कञ्चन न शपेत् नाक्रोशेत् तथा अनृतमसत्यं न वदेत् अमङ्गलं केश-कपालास्थितुषभस्मादि, तन्न स्पृशेत् ॥ ४७ ॥

अप्सु जलेषु प्रविश्य न स्नायात् कस्मैचिदपि न कुप्येत् दुर्जनैर्न सम्भाषेत. अधौतमक्षालितं वासः वस्त्रं न वसीत नाच्छादयेत् न विभूयाच्च पूर्वं विधृतां त्यक्तां स्रजं च न पुनर्धारयेत् ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

स्वार्थे आशीष्षु आत्मा यासां तास्तथा तासां स्वाशिषमिच्छन्तीनामित्यर्थः ॥ ४२ ॥ ४३ ॥ ४४ ॥

देवानां बन्धुभूतः ॥ ४५ ॥ ४६ ॥ ४७ ॥

अधौतवासः अनिर्णिक्तवस्त्रं न वसीत नाच्छादयेत् विधृतामन्योपभुक्ताम् ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

पुत्रस्त इति। यदि व्रतं धारयिष्यसि तदा इन्द्रहा तथैव देवानामसुराणाञ्च बान्धवो भविता। अन्यथातु इन्द्रहा न भविता देवानामेव बान्धवश्च भवितेत्यर्थः ॥ ४५—५० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

स्वभावमेवाह—शरदिति ॥ ४१ ॥

स्वस्य आशिषा कामनयैव आत्मा यत्नो यासां न तु पत्यादिसुखापेक्षयेति भावः। अलुक्समास आशिषा शब्दश्चावन्तो वा ॥ ४२ ॥

तत्रेदमुपकल्पते योग्यं भवति. अयं भावः, वैष्णवं व्रतं तावदुपदेक्ष्यामि तेनैवास्याश्चित्तशुद्धौ सत्यामिन्द्रे क्रोधो निवर्त्स्यते ततश्चेन्द्रवधमनाकाङ्क्षन्त्यानया विहितस्य वैष्णवव्रतस्य कामितदुष्फलदानानर्हत्वात्नेन्द्रघाती भविष्यति किन्तु वरप्रार्थनप्रदानवाक्ययोर्हन्तिधातुप्रयोगाद्धन्तेश्च गत्यर्थत्वादिन्द्रानुगोऽमरः पुत्रो भविष्यति व्रतस्य दीर्घकालत्वे सत्यवश्यं वैगुण्यं च किञ्चिद्भविष्यतीति तेनैवास्या अविज्ञायाः मनःसमाधानञ्च भविष्यति. वस्तुतस्तु वैष्णवव्रतस्य वैगुण्येऽपि फलसिद्धिरवश्यं भाविनीत्यस्याः श्रमश्च सफल एव भविष्यतीति ॥४३-४४॥

इन्द्रहा इन्द्रघाती अदेवानामसुराणां बान्धव इति दितिबोधयितुमिष्टोऽर्थः। इन्द्रहा इन्द्रानुगो देवानां बान्धव इति स्वाभीष्टोऽर्थः ४५—४६ ॥

न हिंस्यादिति प्रथमत एवेन्द्रवधाशङ्का निषिद्धा ॥ ४७ ॥

अप्सु प्रविश्य न स्नायात्, अधौतं वासः न वसीत न परिदध्यात्. विधृतां पूर्वधृतां स्रजं पुनर्न धारयेत् ॥ ४८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

योषित्स्वभावं वर्णयति—शरदिति द्वाभ्याम्। यासां वक्त्रं शारत्पद्मादिवोत्सवो दर्शनोल्लासो यस्मात्तत् वचः श्रवणयोः कर्णयोरमृतममृततुल्यम् क्षुरधाराया आभा उपमा यस्य तद्धृदयञ्च, तासां स्त्रीणां चेष्टितं को वेद? न कोपि. यद्वा को ब्रह्मैव तासां कर्त्ता वेद नान्य इत्यर्थः ॥ ४१ ॥

स्वकीये आशिषि सुखे आत्मा मनो यासां तासाम् अञ्जसा शुद्धभावेन कश्चिदप्रियो न अर्थे स्वार्थसिद्ध्यर्थं पत्यादीन् घ्नन्ति घातयन्ति च ॥ ४२ ॥

वदामीति यत्प्रतिश्रुतं प्रतिज्ञावाक्यरूपं वचस्तत् मृषा भवेत् इन्द्रोपि न वधमर्हति तत्र कार्यद्वयसिद्धौ इदमुपदिश्यमानं वैष्णवव्रतमुपकल्पते योग्यं भवति. अयंभावः, उपदिश्यमानवैष्णवव्रतप्रभावादस्याः एकस्य तु का कथा बहवः पुत्रा भविष्यन्ति बन्धुश्च परकीयो भवति इन्द्रस्तु परकीयभावं हित्वा अस्या दासस्तथा गर्भे प्रविश्य पुत्रश्च भविष्यति अयमेव परकीयभावत्यागलक्षणम् इन्द्रस्य वधो भविष्यति न तु दैहिकवध इति ॥ ४३ ॥ ४४ ॥

हे भद्रे कल्याणि! यदीदं व्रतं सांवत्सरमङ्ग! यथोपदिष्टं धारयिष्यसि तदा इन्द्रहा भविता भविष्यति वैगुण्ये तु देवबान्धव इन्द्राविरोधी भविष्यति व्रतस्य वैष्णवत्वात् सर्वेषां सुखं भविष्यतीति भावः ॥ ४५ ॥

हे ब्रह्मन्, व्रतं धारयिष्ये यानि आलस्येन दैवत्वेन न घ्नन्ति. तान्येव विभजयाह, यानि कार्याणि यानि च इह व्रते निषिद्धानि तानि मे मह्यं ब्रूहि कथय ॥ ४६ ॥

तत्र पञ्चभिर्निषिद्धानि वर्णयति—नेति। यदमङ्गलमपवित्रं तन्न स्पृशेत् ॥ ४७ ॥

अप्सु प्रविश्य न स्नायात् स्रजं पुष्पमालां विधृतां पुनर्न धारयेत् ॥ ४८ ॥

---

### भाषाटीका।

शरत्काल के कमल सदृश जिनका मुख और कानों में अमृत

नोच्छिष्टं चण्डिकान्नं च सामिषं वृषलाहृतम् ।
भुञ्जीतोदक्यया दृष्टं पिबेदञ्जलिना त्वपः ॥ ४९ ॥
नोच्छिष्टाऽस्पृष्टसलिला सन्ध्यायां मुक्तमूर्धजा ।
अनर्चिता ऽसंयतवाङ्नासंवीता बहिश्चरेत् ॥ ५० ॥
नाधौतपादा प्रयता नार्द्रपान्नो उदक्शिराः ।
शयीत नापराङ्नान्यैर्न नग्ना न च सन्ध्ययोः ॥ ५१ ॥
धौतवासा शुचिर्नित्यं सर्वमङ्गलसंयुता ।
पूजयेत्प्रातराशात्प्राग्गोविप्रांच्छ्रियमच्युतम् ॥ ५२ ॥
स्त्रियो (१) वीरवतीश्चार्चेत्स्रग्गन्धबलिमण्डनैः ।
पतिं चार्च्योपतिष्ठेत ध्यायेत्कोष्ठगतं च तम् ॥ ५३ ॥
सांवत्सरं पुंसवनं व्रतमेतदविप्लुतम् ।
धारयिष्यसि चेत्तुभ्यं शक्रहा भविता सुतः ॥ ५४ ॥
बाढमित्यभिप्रेत्याथ दिती राजन्महामनाः ।
काश्यपं गर्भमाधत्त व्रतं चाञ्जो दधार सा ॥ ५५ ॥
मातृष्वसुरभिप्रायमिन्द्र आज्ञाय मानद ! ।
शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत्कविः ॥ ५६ ॥

भाषा टीका ।

सदृश जिनके वचन है और हृदय जिनका छुरा की धार सदृश है ऐसी स्त्रियों के चेष्टित को जान सक्ता है ॥ ४१ ॥

अपने स्वार्थ के लिये आत्मा के सदृश प्रिय मालूम होने वाली स्त्रियों का कोई प्रिय नहीं। क्योंकि वे अपने प्रयोजन के लिये पति पुत्र वा भ्राता को आप मारडालें और अन्य से मरवाडालें ॥ ४२ ॥

जो हम कहचुके कि वर देंगे यह वाक्य भी मिथ्या नहो। और इन्द्र भी न माराजाय वहां यही योग्य है ॥ ४३ ॥

हे कुरुनन्दन ! मरीचिपुत्र भगवान् कश्यपजी ने ऐसे विचार कर अपने को भी निन्दित समुझते हुये किञ्चित् कुपित होकर बोले ॥ ४४ ॥

कश्यप उवाच ।

हे अभद्रे ! तेरे इन्द्र के मारने वाला और देवताओं का बन्धु ऐसा पुत्रहोगा। यदि व्रत को एक वर्ष तक ठीक धारण करेगी तो ॥ ४५ ॥

दितिरुवाच ।

हे ब्रह्मन् ! मैं व्रत धारण करूंगी आप कहिये जो २ व्रत में कार्य है और जो इस व्रत में निषिद्ध है और जिनसे व्रत खण्डित होता हो सो भी कहिये ॥ ४६ ॥

कश्यप उवाच ।

प्राणिमात्र की हिंसा न करे न आक्रोश करे न झूठ बोलै नख और रोम का छेदन न करे और अमङ्गल वस्तु का स्पर्श न करे ॥ ४७ ॥

जल में घुसकर स्नान न करे न कोप करे तथा दुर्जनों के साथ भाषण न करे और विना धोये वस्त्र को न धारण करे तथा धारण की हुई माला को फिर न धारण करे ॥ ४८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

भोजने पञ्च निषेधानाह—नोच्छिष्टमिति । चण्डिकान्नं भद्रकाल्यै निवेदितं पिपीलिकादिदूषितं वा अञ्जलिना त्वपो न पिबेत् ॥ ४९ ॥

गृहाद्बहिर्निर्गमे सप्त निषेधानाह—नोच्छिष्टेति । अनर्चिता मण्डनहीना असंवीताऽप्रावृता ॥ ५० ॥

शयने अष्टौ निषेधानाह—नाधौतपादेति । नापराक्पश्चिमशिराः ॥ ५१ ॥

(१) परवतीरिति पाठान्तरम् । विज०

श्रीधरस्वामिकृतभावार्थदीपिका ।

कार्याण्याह—धौतवासा इति द्वाभ्याम् । प्रातराशात्प्रथमभोजनात् ॥ ५२ ॥

वीरवतीर्जीवद्भर्तृकाः आचर्य सम्पूज्य कोष्ठगतं कुक्ष्यन्तरगतम् ॥ ५३ ॥

पुंसवनं पुत्रोत्पत्तिकरं तुभ्यं तव ॥ ५४—५७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भोजने पञ्च निषिद्धान्याह—उच्छिष्टं चण्डिकान्नं भद्रकाल्यै निवेदितं सामिषं पिपीलिकादिदूषितं वृषलाहृतं शूद्रानीतं उदक्यया रजस्वलया दृष्टञ्चान्नं न भुञ्जीत अञ्जलिना अपः जलं न पिबेत् ॥ ४९ ॥

उच्छिष्टा चेत् अस्पृष्टसलिला न भवेत् किन्तु जलं स्पृशेदित्यर्थः सन्ध्ययोः सायंप्रातः मुक्ताः मूर्द्धजाः केशाः यया तादृशी तथा अनर्चिता अनलङ्कृता च न भवेत् न संयता वाक् यया सा न भवेत् असंवीता अप्रावृता बहिर्न चरेत् ॥ ५० ॥

अधौता पादौ यया सा अप्रयता असमाहितचित्ता न शयीत तथा आर्द्रौ पादौ यस्याः उदक् उत्तरदिशि शिरो यस्याः अपरा पश्चिमशिराश्च न शयीत तथाऽन्यैस्सह नग्ना विवसना च तथा सन्ध्ययोरपि न शयीत ॥ ५१ ॥

धौतं वासो यस्याः सा नित्यं सदा शुचिः सर्वमङ्गलैर्हरिद्राचन्दनादिभिर्मङ्गलद्रव्यैः संयुता, प्रातराशात् प्रातर्भोजनात्प्रागेव गाः विप्रान् श्रियं महालक्ष्मीमच्युतञ्च पूजयेत् ॥ ५२ ॥

तथा वीरवतीः पुत्रवतीः जीवद्भर्तृकाः नारीश्च स्रगादिभिरर्चयेत्, बलिरुपायनं गण्डनमलङ्कारः तथा पतिञ्चार्च्य संपूज्य उपसमीपे तिष्ठेत तं पतिं कोष्ठगतं ध्यायेत् स्वपतिमेव स्वोदरगतं ध्यायेत् ॥ ५३ ॥

एतदङ्गकलापेन युक्तं पुंसवनाख्यम् इदं सांवत्सरं संवत्सरपर्यन्तं कार्यं व्रतम् अविप्लुतमविकलं यथा तथा धारयिष्यसि चेदिन्द्रस्य हन्ता पुत्रस्तव भविष्यति ॥ ५४ ॥

इत्येवमुक्ता दितिः, हे राजन् ! वाढमित्यङ्गीकृत्य अथ महामनाः उरुव्रतासक्तमनाः सती कश्यपाद्गर्भमाधत्त दधार तथा अञ्जः सम्यग्व्रतञ्च दधार ॥ ५५ ॥

तत इन्द्रः कविः विद्वान् अत एव मातृभगिन्याः दितेः अभिप्रायं ज्ञात्वा, हे मानद ! आश्रमस्थां व्रतस्थां कश्यपस्याश्रमस्थां वा दितिं शुश्रूषयेन पर्यचरत् ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चण्डिकान्नं सप्तमातृभ्योऽर्पितमन्नं पिपीलिकामूषिकाभोज्यं उदक्यया रजस्वलया ॥ ४९ ॥



अनर्चिता अलङ्काररहिता असंवीता प्रावरणादिरहिता ॥ ५० ॥

अपराक् पश्चिमशिरा न शयीत ॥ ५१ ॥

प्रातराशात् प्रातःकालभोजनात्पूर्वम् ॥ ५२ ॥

वीरवतीः भर्तृसहिताः पतिमभ्यर्च्योपतिष्ठेत स्तुतिं कुर्यात्पतिस्थितं परमात्मानं कोष्ठगतं हृदिगतं ध्यायेत् स्वबाह्यान्तरगतं वा नाम्ना पुंसवनं ॥ ५३ ॥ ५४ ॥ ५५ ॥

मातृष्वसुः मातुरदित्याः स्वसुर्दित्याः ॥ ५६ ॥ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अपरां पश्चिमदिशामञ्चति शिरसा प्राप्नोति अपराक् तादृशं यथास्यात्तथेति क्रियाविशेषणत्वेपि तद्विशेषणत्व एव तात्पर्यात् पश्चिमशिरा इत्येवार्थः यद्वा अपराची प्रतीची । ततो 'दय च्लोपे पञ्चम्यन्ताद्दिक्शब्देभ्यः' इत्यादिना स्वार्थे एनाकतातिं प्रत्ययः तस्य चाञ्चतेर्लुगिति लुक् तद्धितलुगिति स्त्रीप्रत्ययस्य लुक् ततो अपरामिति स्थिते प्रतीचीमारभ्य तां पूर्वाङ्गसादकृत्येति तथैवार्थः ५१—६२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भोजने पञ्च निषेधानाह—नोच्छिष्टमिति । चण्डिकान्नं दुर्गानिवेदितं पिपीलिकास्पृष्टञ्च "चण्डिका स्यात् पिपीलिका" इत्यभिधानात् । उदक्यया रजस्वलया ॥ ४९ ॥

गृहाद्बहिर्निर्गमे सप्त निषेधानाह—नोच्छिष्टेति । अस्पृष्टसलिला अनाचान्ता अनर्चिता निर्भूषणा असम्वीता अप्रावृतसर्वाङ्गा॥५०॥

शयने अष्टौ निषेधानाह—नाधौतपादेति । अप्रयता अपवित्रा "पवित्रः प्रयतः पूतः" इत्यमरः । न अपराक् पश्चिमशिराः ॥ ५१ ॥

कर्त्तव्यानाह—प्रातराशाद्भोजनात् प्राक् प्रातः पूजयेत् ॥ ५२ ॥

वीरवतीः जीवद्भर्तृकाः कोष्ठगतं कुक्ष्यन्तरगतम् ॥ ५३ ॥

पुंसवनं पुत्रोत्पत्तिकरम् ॥ ५४ ॥ ५५ ॥

मातृष्वसुर्दितेः ॥ ५६—५८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भोजने पञ्च निषेधानाह—नोच्छिष्टमिति । चण्डिकान्नं भद्रकाल्यै निवेदितम् "चण्डिका स्यात्पिपीलिका" इत्यभिधानात्. पिपीलिका दूषितञ्च सामिषं सूक्ष्मकृमिनिराकरणाभावेनाशोधितमित्यर्थः वृषलाहृतं शूद्रानीतम् उदक्यया रजस्वलया दृष्टं च न भुञ्जीत अञ्जलिना अपो न पिबेत् ॥ ४९ ॥

गृहान्निर्गमे सप्त निषेधानाह—नोच्छिष्टेति । उच्छिष्टा अकृता-

नित्यं वनात्सुमनसः फलमूलसमित्कुशान् ।
(१) पत्राङ्कुरमृदोऽपश्च कालेकाल उपाहरत् ॥ ५७ ॥
एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप ! ।
प्रेप्सुः पर्यचरज्जिह्मो मृगहेव मृगाकृतिः ॥ ५८ ॥
नाध्यगच्छद्व्रतच्छिद्रं तत्परोऽथ महीपते ! ।
चिन्तां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह ॥ ५९ ॥
एकदा सा तु सन्ध्यायामुच्छिष्टा व्रतकर्शिता ।
अस्पृष्टवार्यधौताङ्घ्रिः सुष्वाप विधिमोहिता ॥ ६० ॥
लब्ध्वा तदन्तरं शक्रो निद्राऽपहृतचेतसः ।
दितेः प्रविष्ट उदरं योगेशो योगमायया ॥ ६१ ॥
चकर्त्त सप्तधा गर्भं वज्रेण कनकप्रभम् ।
रुदन्तं सप्तधैकैकं मा रोदीरिति तान्पुनः ॥ ६२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चमना अस्पृष्टसलिला असलिला अस्नाता अनर्चिता अभूषिता असन्धीता अनावृतसर्वाङ्गा ॥ ५० ॥

शयनेऽष्टौ निषेधानाह—नाधौतपादेति । अप्रयता अपवित्रा पवित्रः पूतद्रवात् क्लिन्नाङ्घ्रिः अपराक् पश्चिमशिरा ॥ ५१ ॥

कार्याण्याह—धौतवासा इति द्वाभ्याम् । प्रातराशात् प्रथमभोजनात् प्राक् गवादीन् पूजयेत् ॥ ५२ ॥

वीरवतीः जीवद्भर्तृकाः स्रग्भिर्गन्धैः बलिभिरुपायनैः मण्डनैः अलङ्कारैश्चार्चेत् पतिञ्चार्च्य संपूज्योपतिष्ठेत तत्स्तुतिपरा समीपे स्थिता भवेत् कोष्ठगतमुदरगतं ध्यायेत् ॥ ५३ ॥

सांवत्सरं संवत्सरानुष्ठेयं पुंसवनं पुत्रदम् तुभ्यं तव ॥ ५४ ॥

बाढमित्यभ्युपेत्य अङ्गीकृत्य ॥ ५५ ॥

कविः स्वार्थवित् ॥ ५६ ॥ ५७ ॥

---

भाषाटीका ।

जूंठा, कालीका भोग लगा हुआ, सामिष । शूद्रका लाया हुआ, और पिपीलिकादि दूषित रजस्वला से दृष्ट ऐसे अन्न को भक्षण न करे और अञ्जलि से जलपान न करे ॥ ४९ ॥

जूंठे मुख, विनाआचमन किये, संध्यासमय केश खोलकर, असंयिडत होकर वाणी को न रोककर तथा शरीर उघाड कर, वाहर न निकले ॥ ५० ॥

विना पगधोंये, विना प्रयत्न से आर्द्रपग से, उत्तर को शिर कर, पश्चिम को शिर कर, और किसी के साथ,नग्न होकर तथा दोनों संध्याओं में शयन न करे ॥ ५१ ॥

नित्य ही वस्त्र धोकर शुचि होकर सर्व मङ्गल संयुक्त होकर प्रातःकालभोजन से पहिले, गौ ब्राह्मण लक्ष्मी और अच्युत ( श्रीकृष्ण ) की पूजा करे ॥ ५२ ॥

और जीवते पति वाली स्त्रियों की, माला चन्दन भेट अलङ्कार आदि से पूजा करे। और पति का पूजन करके उपस्थान करे अर्थात् हाथ जोडकर खडी होवे । और अपनी कुक्षि में पति के प्राप्त होने का ध्यान करे ॥ ५३ ॥

एक वर्षतक इस पुंसवन व्रतको यदि तुम अखण्डित धारण करोंगी तो तुमारे इन्द्र के मारने वाला पुत्र होगा ॥ ५४ ॥

हे राजन् ! बडे उत्साह वाली दिती भी बहुत भला है ऐसे अभिप्राय कर कश्यपके गर्भ को और इस व्रत को विगतश्रम से धारण करती हुई ॥ ५५ ॥

हे मानद ! इन्द्र भी मासी के अभिप्राय को जानकर कोई एक बटुके रूपके रूपको धारणकर, आश्रमस्था दिति की शुश्रूषा करके आप ही परिचर्या करने लगा क्योंकि वह तो बडा ही चतुर है ॥ ५६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपका ।

हरिरिन्द्रो व्रतस्य छिद्रं प्रेप्सुः प्राप्तुमिच्छुः जिह्मः कुटिलः साधुवेषः मृगहा लुब्धको यथा मृगवञ्चनाय मृगवेषो भवति तद्वत् ॥ ५८ ॥

पत्राङ्कुरमृदापश्चेति पाठान्तरम्—वीर० ।

ते तमूचुः पाट्यमानाः सर्वे प्राञ्जलयो नृप !।
नो जिघांससि किं इन्द्र ! भ्रातरो मरुतस्तव ॥ ६३ ॥
माभैष्ट भ्रातरो ! मह्यं यूयमित्याह कौशिकः ।
अनन्यभावान्पार्षदानात्मनो मरुतां गणान् ॥ ६४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

केन मे शिवं स्यादिति चिन्तां प्राप्तः ॥ ५९ ॥

अस्पृष्टवारिश्चासावधौताङ्घ्रिश्च ॥ ६० ॥

निद्रयाऽपहृतं चेतो यस्याः ॥ ६१ ॥

मा रोदीरित्युपलालयन्निव तान्पुनः सप्तधा चकर्त चिच्छेद ॥ ६२ ॥ ६३ ॥

कौशिकः इन्द्रः गणान् सप्त "सप्त गणा वै मरुतः" इति श्रुतेः ॥ ६४--६६ ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह-नित्यमहरहः सुमनसः पुष्पाणि फलानि च मूलानि च समिधश्च कुशाश्च तान् पत्राणि किसलयानि च दूर्वाङ्कुराश्च मृदः मृत्स्नाश्च आपश्च ताः कालेकाले उचितकाले उपाहरत् आनीय समर्पितवान् ॥ ५७ ॥

एवं तस्यां दितौ व्रतस्थायां सत्यां हे नृप ! हरिरिन्द्रः व्रतस्य छिद्रं वैकल्यं प्रेप्सुः कामयमानः अत एव जिह्मः कुटिलचित्तः पर्यचरत्, यथा, मृगरूपेणाकृतिर्यस्य सः मृगाणां हन्ता मृगाननुवर्त्तते तथा ॥ ५८ ॥

हे महीपते ! तत्परः व्रतच्छिद्रपर्यालोचनपरोऽपि व्रतच्छिद्रं नाध्यगच्छत् नापश्यत् अथ नितरां चिन्तां प्राप्तः केन हेतुना मम शिवं भद्रं स्यादिति तीव्रां चिन्तां प्राप्तः ॥ ५९ ॥

एकदा सा दितिः व्रतकर्शिता अत एवाऽस्पृष्टा न स्पृष्टं वारि जलं यया सा अधौतावप्रक्षालितावङ्घ्री यया सा तादृशी अत एव उच्छिष्टा सन्ध्यायां सायंकाले विधिना दैवेन मोहिता सती सुष्वाप ॥ ६० ॥

तदा तदन्तरं व्रतच्छिद्रं लब्ध्वा शक्रो निद्रया अपहृतं चेतो यस्यास्तस्याः दितेरुदरं प्रविष्टः, कथं परकायप्रवेशसामर्थ्यमेतस्य ? इत्यत्राह-योगेशः परकायप्रवेशसामर्थ्यापादकयोगयुक्तः अत एव योगमायया विचित्रयोगसामर्थ्येनोदरं प्रविष्ट इत्यर्थः ॥ ६१ ॥

उदरे प्रविष्टः शक्रो वज्रमुखेन तं कनकप्रभं गर्भं सप्तधा चिच्छेद, रुदन्तमेकैकं गर्भस्य भागं मारोदीरिति वदन् तान् सप्तखण्डान् पुनः सप्तधा एकैकं चिच्छेद, येतो मारोदीरिति तान् चिच्छेद, अत एव निमित्तान्मरुच्छब्दस्य तेषु प्रवृत्तिः आर्षत्वान्माशब्दस्य ह्रस्वः। "रुदेर्मोचेकिप्" मा न विद्यते इन्द्रवाक्यात् रुत् रोदनं येषां ते मरुतः ॥ ६२ ॥

हे नृप ! ते छिद्यमानाः सर्वे गर्भस्य भागाः तथैव प्रविभक्तपाणिपादाद्यवयवाः प्राञ्जलयस्सन्तः तमिन्द्रमूचुः, तदेवाह— किमिति, हे इन्द्र ! तव भ्रातरो मरुतः मरुत्संज्ञान् नोऽस्मान् किं किमर्थं जिघांससि हन्तुमिच्छसि ॥ ६३ ॥

इति तैरुक्तः कौशिकः शक्रो यदि यूयं मह्यं मम भ्रातरः तर्हि मा भैष्ट भयं माकुरुतेत्याह, तत आत्मनः स्वस्य पार्षदान् पार्षदत्वं प्राप्तानानन्यभावान् अनन्यस्वामित्वाभिप्रायकान् मरुतां गणानाहेति पूर्वेणान्वयः ॥ ६४ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

योगमायया योगसामर्थ्येन ॥ ६१ ॥ ६२ ॥

जिघांससि हन्तुमिच्छसि ॥ ६३ ॥

माभैष्ट भयं मा कुरुध्वं कौशिक इन्द्रः मरुतां गणानाह ॥ ६४ ॥ ६५ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ते तमूचुरिति । अत एकस्यैव जीवस्य नानाकायाध्यासः । यद्वा, पूर्वमेकस्मिन् देहे बहूनां जीवानामध्यस्तवतां देहविभागप्राप्तेरिति ज्ञेयम् ॥ ६३--६६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हरिरिन्द्रो व्रतस्य छिद्रं प्राप्तुमिच्छुरितीन्द्रस्याप्यविज्ञत्वमेव, यतो विष्णोः स्मरणेन कीर्त्तनेन वा सच्छिद्रमपि निश्छिद्रं स्यात्, तस्य विष्णोरिदं व्रतं छिद्रेऽप्यच्छिद्रमेव भवेत् । यदुक्तम् "यस्य स्मृत्या च नामोक्त्या" इति "मन्त्रतस्तन्त्रतश्छिद्रम्" इत्यादि च, किञ्चोपरिष्टादिन्द्रेणापि व्रतस्य निश्छिद्रतामनुभविष्यता वक्ष्यते "महापुरुषसेवायाः सिद्धिः काप्यानुषङ्गिकी" इति जिह्मः कुटिलः। मृगहा लुब्धको मृगवध्नाय यथा मृगाकृतिर्भवति तद्वत् तत्परिचारकलोकाकृतिः ॥ ५९ ॥

अस्पृष्टवारिश्चासावधौताङ्घ्रिश्च ॥ ६० ॥

योगस्य परकायप्रवेशावयवस्य सिद्धयो या माया तया ॥ ६१ ॥

मारोदीरित्युपलालयन्निव तान् पुनः सप्तधा चकर्त

न ममार दितेर्गर्भः श्रीनिवासानुकम्पया ।
बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान् ॥ ६५ ॥
सकृदिष्ट्वाऽऽदिपुरुषं पुरुषो याति साम्यताम् ।
संवत्सरं किञ्चिदूनं दित्या यद्धरिरर्चितः ॥ ६६ ॥
सजूरिन्द्रेण पञ्चाशद्देवास्ते मरुतोऽभवन् ।
व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः ॥ ६७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विच्छेद । अत्राल्पकाल एव बहुपुण्यपापभोजिनो जीवस्य योगिनो वा कायव्यूह इवैकस्यैव जीवस्यैकोनपञ्चाशत्का-यव्यापकत्वमिति केचित् भाविहष्ट्या प्रथममेकैकस्मिन् देहे प्रविष्टानामेकोनपञ्चाशज्जीवानामिन्द्रकृतविभागेनैकैकदेहप्राप्ति-रित्यपरे. इन्द्रकृतखण्डेष्वन्येषामप्यष्टचत्वारिंशज्जीवानां तत्त्व-णा एव प्रवेशो यथा, लतागुल्मानां केषाञ्चित् खण्डं खण्डीकृ-त्यैव भूमावारोपितानां पृथक् पृथक् प्ररोहोद्गमात् पृथक् पृथक् जीवस्य प्रवेशोऽनुमीयते इत्यन्ये च प्राहुः ॥ ६२ ॥ ६३ ॥

मह्यं मम कौशिकः इन्द्रः गणान् "सप्त गणा वै मरुतः" इति श्रुतेः ॥ ६४ ॥ ६५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मृगहा यथा मृगवञ्चनाय मृगाकृतिर्भवति तथा हरिरिन्द्रः तस्याः व्रतच्छिद्रं प्रेप्सुः प्राप्तुमिच्छुः जिह्मः कुटिलः भूत्वाकृति-स्सन् पर्यचरत् ॥ ५८ ॥

मे केनोपायेन शिवं स्यादिति तीव्रां चिन्तां गतः प्राप्तः ॥ ५९ ॥

सन्ध्यायां शयनायोग्यकाले अस्पृष्टवारिश्चासावधौताङ्घ्रिश्च सुष्वाप विधिना इन्द्रकर्मफलदेनेश्वरेण मोहिता ॥ ६० ॥

तदन्तरं तच्छिद्रं निद्रयाऽपहृतं चेतो यस्याः योगस्य तपो-व्रतादिरूपस्य माया परकायप्रवेशरूपा शक्तिस्तया ॥ ६१ ॥

कनकप्रभं तस्याः गर्भं वज्रेण सप्तधा चकर्त विच्छेद पुनश्च तानेकैकं रुदन्तं मारोदीरिति वदन् सप्तधा चकर्त । ननु, "अणुरेष आत्मा चेतसा वेदितव्यः" इत्यादिश्रुतिप्रसिद्धस्य जी-वस्यैकस्य बहुषु देहेषु युगपत् प्रवेशायसम्भवात् कथं घटेत तानेकैकं रुदन्तमिति ? अत्रोच्यते, दैवात् प्रथमत एवैकस्मिन् देहे प्रविष्टानामेकोनपञ्चाशज्जीवानामिन्द्रकृतविभागेनैकैकदेहप्राप्ति -रिति. अत एव एकस्मिन् गर्भे दैवात्प्रविष्टाः एकाधिकशतसङ्ख्या-का जीवाः श्रीव्यासाद्द्वया गान्धार्या तद्गर्भखण्डाः पृथक् पृथक् कुम्भेषु निहिताः दुर्योधनादयः शतसङ्ख्याकाः पुत्राः जाताः कन्या चैकोत्पन्नेति. सौभर्यादयस्तु स्वकर्मजन्यदेहमाश्रित्य योगब-लेन पृथक् पृथक् जीवयुक्तान् बहून् देहान् सृजन्ति चेति दिक् ॥ ६२ ॥ ६३ ॥

कश्चित्कुशिकान्वये जातत्वात्कौशिकः इन्द्रः गणान् "सप्त गणा वै मरुतः" इति श्रुतेः ॥ ६४ ॥ ६५ ॥

---

भाषा टीका ।

प्रति दिन यथोचित समय मे वन से पुष्प फल मूल समिध कुश पत्र अंकुर ( दूर्वादि ) मृद जल इन सबका उप हार करताथा ॥ ५७ ॥

हे नृप ! जैसे वधिक मृग वञ्चनार्थ स्वयं मृग रूप धा-रणाता है वैसे कुटिल वेषधारी इन्द्र पूर्वोक्त व्रत में स्थित दिति के व्रत छिद्र को देख छुमा सेवा मे रहताथा ॥ ५८ ॥

हे महीपते ! सदा छिद्रान्वेषण में तत्पर रहा परन्तु जब छिद्र नहीं मिला तब इन्द्र को बडी चिन्ता हुई अब मेरा-कल्याण किस प्रकार से होगा ॥ ५९ ॥

एक समय व्रत से कृशित वह दिति सन्ध्या के समय जूंठे मुख विना आचमन किये विना पग धोये दैव से मोहित होकर सोगई ॥ ६० ॥

इन्द्रने भी उस अन्तर को पाकर अपनी योग माया से निद्रा मे सोई हुई दिति के उदर मे प्रवेश किया ॥ ६१ ॥

इन्द्रने गर्भ के वज्र से सात टुकडे करदिये । जब वह गर्भ रोने लगा तब रोते हुए को, 'मतरो' एसा कह फिर एक २ के सात २ टुकडे करडाले ॥ ६२ ॥

हे नृप वे सब ही फाटते हुए हाथजोडकर इन्द्रसे ऐसे बोले कि, हे इन्द्र हम तेरे मरुतनामक भ्राता हैं हम को मारने की इच्छा क्यों करता है ॥ ६३ ॥

इन्द्र भी अनन्य भाववाले, अपने पार्षद मरुद्गणों से ऐसे बोला कि जब तुम मेरे भ्राता हो तो मतडरो ॥ ६४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सजूः सह ॥ ६७—७१ ॥

दितिरुत्थाय ददृशे कुमाराननलप्रभान् ।
इन्द्रेण सहितान्देवी पर्यतुष्यदनिन्दिता ॥ ६८ ॥
अथेन्द्रमाह ताताहमादित्यानां भयावहम् ।
अपत्यमिच्छन्त्यचरं व्रतमेतत्सुदुष्करम् ॥ ६९ ॥
एकः सङ्कल्पितः पुत्रः सप्तसप्ताभवन्कथम् ।
यदि ते विदितं पुत्र ! सत्यं कथय मा मृषा ॥ ७० ॥

इन्द्र उवाच ।

अम्ब ! तेऽहं व्यवसितमुपधार्यागतोऽन्तिकम् ।
लब्धान्तरोऽच्छिदं गर्भमर्थबुद्धिर्न धर्मवित् ॥ ७१ ॥
कृत्तो मे सप्तधा गर्भ आसन्सप्त कुमारकाः ।
ते पिचैकैकशो वृक्णाः सप्तधा नापि मम्रिरे ॥ ७२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दित्या निष्कपटमुक्ते सतीन्द्रोऽपि निष्कपटमेवाह—अम्बेति । लब्धमन्तरं येन अर्थे एव बुद्धिर्यस्य ॥ ७१—७३ ॥

—————

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो दितेर्गर्भः कुलिशेन वज्रेण बहुधा छिन्नोऽपि श्रीनिवासस्य भगवतोऽनुकंपया अनुकंपापूर्वकानुग्रहविशेषेण न ममार न मृतः यथा भवान्परीक्षित् अश्वत्थाम्नोऽस्त्रेण दग्धदेहोऽपि भगवता रक्षितस्तद्वत् ॥ ६५ ॥

अस्मिन्नर्थे उपपत्तिमाह—सकृदिति । पुमान्सकृद्यप्याद्यपुरुषं भगवन्तमिष्ट्वा आराध्य तन्माहात्म्येन शनैः सात्मतां समानरूपतां याति किं पुनरसकृदिष्ट्वेति भावः । यतः किञ्चिदूनं संवत्सरमेवं दित्या आराधितः इन्द्रेण सह जुषते सेवत इति सजूः इन्द्रेण सह वर्तमान इत्यर्थः । हरिर्भगवानुपेन्द्रः गर्भाशयात् आगत्य गर्भस्य खण्डानजीवयदित्यर्थः । ततः ते पञ्चाशत् एकोनपञ्चाशत् अन्यथा "मरुतश्च दितेः पुत्राश्चत्वारिंशन्नवाधिकाः । चकर्त सप्तधा गर्भम्" पुनरेकैकं सप्तधा चकर्तेति पूर्वोक्तसंख्याविरोधापत्तेः मरुतो मरुत्संज्ञकाः मातुर्दोषमासुरत्वापेदशं त्यक्त्वा देवा अभवन् ते च हरिणा इन्द्रेण भगवता वा सोमपाः सोमं पिबन्तीति तथा यज्ञीयभागार्हाः कृता इत्यर्थः ॥ ६६ ॥ ६७ ॥

ततो दितिरुत्थाय कुमारानग्नितुल्यप्रकाशानिन्द्रेण सहितान् ददृशे दृष्ट्वा च देवी द्विविरनिन्दिता वस्तुतः शुद्धभावा पर्यतुष्यत् ॥ ६८ ॥

अथानन्तरं इन्द्रमुवाच. तदेवाह—हे तात इन्द्र ! आदित्यानामदितेरपत्यानां युष्माकं भयापादकमेकमपत्यमहम् इच्छन्ती सुदुष्करमेतत्पुंसवनं व्रतमचरमाचरितवत्यस्मि ॥ ६९ ॥

मया त्वेकः पुत्रः सङ्कल्पितः कथं सप्तसप्त एकोनपञ्चाशदभवन् हे पुत्र, एतद्यदि तव विदितं तर्हि सत्यं कथय मृषा मिथ्या मा कथय ॥ ७० ॥

एवमुक्तः शक्रस्तामाह—हे अम्ब, ते तव व्यवसितमभिप्रेतम् उपधार्य ज्ञात्वाऽहं तवान्तिकं समीपं गतः प्राप्तः लब्धमन्तरं यतच्छिद्रं येन तादृशोऽहं गर्भमच्छिनं छिन्नवानस्मि यतोऽहमर्थे वैषयिकपुरुषार्थ एव बुद्धिर्यस्य न धर्मवित् ॥ ७१ ॥

यतोऽहमीदृशस्ततो मे मया तावत्सप्तधा गर्भः कृत्तश्छिन्नः कृत इति पाठे वज्रेणेति शेषः एवं सप्तधा कृतोऽपि गर्भः तावत्सप्तकुमारा आसन् ते पि पुनरेकैकशो वृक्णाः छिन्नाः सप्तधा बभूवुः नापि मम्रिरे न मृताश्च ॥ ७२ ॥

—————

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

साम्यतां समानरूपतां हरिः श्रीनारायणो दित्या किञ्चिदूनं सम्वत्सरमर्चितो यदतः साम्यतां यातीति किमु कुतः पुनः सकृत्सम्पूज्य साम्यतां याति तस्मात् ॥ ६६ ॥

इन्द्रेण सजूः सह अश्विभ्यामुपमा सजूरित्यादौ दृष्ट्यात् हरिणेन्द्रेण सोमपाः सोमं पिबन्तः ॥ ६७ ॥

पर्यतुष्यत्सचेतनत्वात् ॥ ६८ ॥

आदित्यानां अदितिपुत्राणाम् ॥ ६९—७२ ॥

—————

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

हरिणा इन्द्रेण श्रीविष्णुनेति वा ॥ ६७—७१ ॥

ततस्तत्परमाश्चर्यं वीक्ष्याध्यवसितं मया ।
महापुरुषपूजायाः सिद्धिः काप्यनुषङ्गिणी ॥ ७३ ॥
आराधनं भगवत ईहमाना निराशिषः ।
ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृताः ॥ ७४ ॥
आराध्याऽऽत्मप्रदं देवं स्वात्मानं जगदीश्वरम् ।
को वृणीते गुणस्पर्शं बुधः स्यान्नरकेऽपि यत् ॥ ७५ ॥
तदिदं मम दौर्जन्यं बालिशस्य महीयसि ! ।
क्षन्तुमर्हसि मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः ॥ ७६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मे मया ॥ ७२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सात्मतां पुरुषसमानाकारत्वम् ॥ ६६ ॥

सजूः सह ॥ ६७-७० ॥

दित्या निष्कपटमुक्ते सति इन्द्रोऽपि निष्कपटमेवाह--अम्बेति । लब्धान्तरः प्राप्तच्छिद्रः व्यवसितं, निश्चितं तदेवाह-महेति । सार्द्धद्वयेन कापि सिद्धिर्मुक्तिरपि आनुषङ्गिकी ॥७१-७३॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वासुदेवानुकम्पायां हेतुं संस्मारयति । आदिपुरुषं हरिं पुरुषः सकृदिष्ट्वा, सात्मतां आत्मना हरिणा सह वर्त्तमानः सात्मा हरिसहचरो मुक्तस्तस्य भावः सात्मता तां याति दित्या तु सम्वत्सरं सह हरिरर्चितः ॥ ६६ ॥

अत एव इन्द्रेण सजूः सह पञ्चाशद्भवन् सङ्कल्पितस्त्वेकः देवाः अभवन् सङ्कल्पितस्तु देवद्विट् अत्यद्भुतं हर्य्यर्चनमाहात्म्यमिति भावः ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

लब्धान्तरः प्राप्तच्छिद्रः अर्थे बुद्धिर्यस्य सः ॥ ७१ ॥

कृत्तशः खण्डिताः ॥ ७२ ॥ ७३ ॥

---

भाषाटीका ।

जैसे अश्वत्थामाके गर्भ से तुम ऐसे ही वज्र से बहुत-ही काटापरअदिति का वह गर्भ श्रीनिवास की कृपा से नहीं मरा ॥ ६५ ॥

आदि पुरुष को एकबार भी पूजकर पुरुष उनकी समताको प्राप्त होता है । फिर दितिने तो कुछ कम एक वर्ष हरि का पूजन कियाथा ॥ ६६ ॥

वे इन्द्र के साथी पञ्चाशत मरुत देव हुए। इन्द्रने भी के दोष को मानकर सोमपान करने वाले कर लिये ॥ ६७ ॥

दिति उठकर अग्नि सदृशप्रभावाले कुमारों को इन्द्र सहित देखकर संतुष्ट हुई ॥ ६८ ॥

अनन्तर इन्द्रसे बोली हे तात ! मैने अदिति के पुत्रोंको भय प्राप्त करने वाले पुत्र की इच्छा करके यह अति दुष्कर व्रत का आचरण किया ॥ ६९ ॥

एक पुत्र का सङ्कल्प किया था परन्तु यह ( सप्त सप्त ) सात सात गुने अर्थात् उनचास कैसे हुए पुत्र ! यदि तुम को मालुम होयतो सत्य कहना, झूठ न कहना ॥ ७० ॥

इन्द्र उवाच ॥

हे अम्ब मैने तुमारा व्यवसाय सुन तुमारे समीप आया और अन्तर पाकर गर्भ का छेदन करदिया क्योंकि मैंने प्रयोजन में बुद्धि रखकर धर्म को नहीं जाना ॥ ७१ ॥

मै सात प्रकार गर्भ को काटा तब सात पुत्र होगये उनसबको भी एक२ को सात२ तरह से छेदन किया तब उनचास होगये पर मरे नहीं ॥ ७२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि परं मोक्षमपि ॥ ७४ ॥

गुणस्पर्शं विषयभोगं बुधः को वृणीते यद्यस्मान्नरकेऽपि विषयभोगः स्यात् ॥ ७५ ॥

महीयसि हे महत्तमे ! मृतः सन्नुत्थितः ॥ ७६--७८ ॥

श्रीशुक उवाच ।

इन्द्रस्तयाऽभ्यनुज्ञातः शुद्धभावेन तुष्टया ।
मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः ॥ ७७ ॥
एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
मङ्गलं मरुतां जन्म किम्भूयः कथयामि ते ॥ ७८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां षष्ठस्कन्धे मरुज्जन्मकथनं नाम
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततोऽनन्तरमिदं महदाश्चर्यं विलोक्य मया निश्चितं अध्यवसितं. तन्निश्चितमाह–महापुरुषस्य भगवतः पूजायाः कार्यं पूजकाभिलषितं प्रयोजनं तदानुषङ्गिकमप्रधानं फलं यस्यास्सा ठक उपसर्जनत्वेपि ङीबार्षः सिद्धिर्मुक्तिर्भवतीति असमाप्ताया अपि महापुरुषपूजायाः पूजकाभिलषितप्रयोजनावहत्वमधुनावलोक्यामुत्त्वर्गरवेनापि कृतायास्तत्पूजयाः परिपूर्णायाः मुक्तिरेव प्रधानं फलं, पूजकाभिलषितं तु आनुषङ्गिकमिति मया निश्चितमित्यर्थः । यद्वा, महापुरुषस्य पूजायाः सकामपूजायाः सिद्धिः परिसमाप्तिरेव कार्यानुषङ्गिकीकार्येण प्रयोजनेनानुषज्यते अनुबध्यते पूजकाभिलषितप्रयोजनावहा भवति न त्वपरिपूर्णा, सा तु विपरीतफलदैवेति मया निश्चितमित्यर्थः ॥ ७३ ॥

अत एव ये पुरुषाः निराशिषो निष्कामाः भगवत आराधनं कुर्वाणाः परं मोक्षमपि नेच्छन्ति त एव स्वार्थे स्वस्य निरतिशयपुरुषार्थे कुशलाः स्वस्य निरतिशयपुरुषार्थप्रसाधनकुशलाः स्मृताः ॥ ७४ ॥

एवमनभिसंहितफलं भगवदाराधनं प्रस्तुत्याभिसंहितफलं निन्दति–आराध्येति । आत्मप्रदं निरतिशयपुरुषार्थरूपमात्मानं निरतिशयप्रियमीश्वरं देवं भगवन्तं तमाराध्य बुधो विवेकी चेत् कः पुमान् गुणस्पर्शं शब्दादिविषयानुभवं कः पुमान् वृणीत कामयेत. गुणस्पर्शोपि किन्नष्टि–स्यादिति, यत् गुणस्पर्शनं नरकेपि स्यात्सम्भवेत् ॥ ७५

स्वापराधक्षमार्थं तां प्रार्थयते–तदिति । हे महीयसि पूज्ये ! बालिशस्य मूर्खस्य मम तदिदं गर्भच्छेदनादिरूपं दौर्जन्यं दुर्जनस्य कर्म हे मातः ! त्वं क्षन्तुमर्हसि मातुरसह्योऽपराधो नास्तीत्यभिप्रायेण मातरिति सम्बोधनं दिष्ट्या दैवात् मृतोपि तव गर्भः पुनरुत्थितो जीवितः ॥ ७६ ॥

एवमुक्तया विशुद्धभावेन निष्कपटभावेन तुष्टया तया दित्या अभ्यनुज्ञातः तां नत्वा मरुद्भिस्सह प्रभुरिन्द्रः त्रिदिवं स्वर्गं जगाम ॥ ७७ ॥

एवं यत्पृष्टं "कथं त आसुरं भावम्" इत्यादिना तस्योत्तरमुक्तमित्याह—एवमिति । यन्मरुतां जन्म त्वं मां परिपृच्छसि पर्यपृच्छः तच्छृण्वतां मङ्गलावहं सर्वं सप्रपञ्चं यथातथा ते तुभ्यं मया आख्यातं कथितम्भूयः किङ्कथयामि यदि किञ्चिच्छुश्रूषितमस्ति तर्हि तत्कथयामीति प्रश्नप्रोत्साहः ॥ ७८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कार्यानुषङ्गिणी कार्यानुकूल्यं सङ्गमयन्तीति ॥ ७३ ॥

फलकामक्रियायोगमात्रेण्यैवंविधा सिद्धिरभूत् किमु निराशीस्त्वेनेति भावनाह—आराधनमिति ॥ ७५ ॥

गुणस्पर्शं विषयसुखम् ॥ ७५--७८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

ततस्तत्परमाश्चर्यं वीक्ष्याध्यवसितं मया ।
महापुरुषपूजायाः सिद्धिः काप्यनुषङ्गिणी ॥ ७३ ॥
आराधनं भगवत ईहमाना निराशिषः ।
ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृताः ॥ ७४ ॥
आराध्याऽऽत्मप्रदं देवं स्वात्मानं जगदीश्वरम् ।
को वृणीते गुणस्पर्शं बुधः स्यान्नरकेऽपि यत् ॥ ७५ ॥
तदिदं मम दौर्जन्यं बालिशस्य महीयसि ! ।
क्षन्तुमर्हसि मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः ॥ ७६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मे मया ॥ ७२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सात्मतां पुरुषसमानाकारत्वम् ॥ ६६ ॥

सजूः सह ॥ ६७-७० ॥

दिष्ट्या-निष्कपटमुक्ते सति इन्द्रोऽपि निष्कपटमेवाह—अम्बेति । लब्धान्तरः प्राप्तच्छिद्रः व्यवसितं, निश्चितं तदेवाह—महेति । सार्द्धद्वयेन कापि सिद्धिर्मुक्तिरपि आनुषङ्गिकी ॥७१-७३॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वासुदेवानुकम्पायां हेतुं संस्मारयति । आदिपुरुषं हरिं पुरुषः सकृदिष्ट्वा सात्मतां आत्मना हरिणा सह वर्तमानः सात्मा हरिसचरो मुक्तस्तस्य भावः सात्मता तां याति दिष्ट्या तु सम्वत्सरं सह हरिरर्चितः ॥ ६६ ॥

अत एव इन्द्रेण सजूः सह पञ्चाशदभवन् सङ्कल्पितस्त्वेकः देवाः अभवन् सङ्कल्पितस्तु देवच्छिद् अत्यद्भुतं हर्यर्चनमाहात्म्यमिति भावः ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

लब्धान्तरः प्राप्तच्छिद्रः अर्थे बुद्धिर्यस्य सः ॥ ७१ ॥
कृत्ताः खण्डिताः ॥ ७२ ॥ ७३ ॥

---

भाषाटीका ।

जैसे अश्वत्थामाके गर्भ से तुम ऐसे ही वज्र से बहुत-ही काटापरन्तु दिति का वह गर्भ श्रीनिवास की कृपा से नहीं मरा ॥ ६५ ॥

आदि पुरुष को एकवार भी पूजकर पुरुष उनकी समताको प्राप्त होता है । फिर दितिने तो कुछ कम एक वर्ष हरि का पूजन कियाथा ॥ ६६ ॥

वे इन्द्र के साथी पञ्चाशत मरुत देव हुए । इन्द्रने भी के दोष को मानकर सोमपान करने वाले कर लिये ॥ ६७ ॥

दिति उठकर अग्नि सदृशप्रभावाले कुमारों को इन्द्र सहित देखकर संतुष्ट हुई ॥ ६८ ॥

अनन्तर इन्द्रसे बोली हे तात ! मैने अदिति के पुत्रोंको भय प्राप्त करने वाले पुत्र की इच्छा करके यह अति दुष्कर व्रत का आचरण किया ॥ ६९ ॥

एक पुत्र का सङ्कल्प किया था परन्तु यह ( सप्त सप्त ) सात सात गुने अर्थात् उनचास पचास कैसे हुए पुत्र ! यदि तुम को मालुम होयतो सत्य कहना, झूठ न कहना ॥ ७० ॥

इन्द्र उवाच ॥

हे अम्ब मैने तुमारा व्यवसाय सुन तुमारे समीप आया और अन्तर पाकर गर्भ का छेदन करदिया क्योंकि मैंने प्रयोजन में बुद्धि रखकर धर्म को नहीं जाना ॥ ७१ ॥

मे सात प्रकार गर्भ को काटा तब सात पुत्र होगये उनसबको भी एक२ को सात२ तरह से छेदन किया तब उनचास होगये पर मरे नहीं ॥ ७२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि परं मोक्षमपि ॥ ७४ ॥

गुणस्पर्शं विषयभोगं बुधः को वृणीते यद्यस्मान्नरकेऽपि विषयभोगः स्यात् ॥ ७५ ॥

महीयसि हे महत्तमे ! मृतः सन्नुत्थितः ॥ ७६—७८ ॥

श्रीशुक उवाच ।

इन्द्रस्तयाभ्यनुज्ञातः शुद्धभावेन तुष्टया ।
मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः ॥ ७७ ॥
एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
मङ्गलं मरुतां जन्म किम्भूयः कथयामि ते ॥ ७८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां षष्ठस्कन्धे मरुज्जन्मकथनं नाम
अष्टादशोऽध्यायः ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततोऽनन्तरमिदं महदाश्चर्यं विलोक्य मया निश्चितं अध्यवसितं. तन्निश्चितमाह-महापुरुषस्य भगवतः पूजायाः कार्यं पूजकाभिलषितं प्रयोजनं तदानुषङ्गिकमप्रधानं फलं यस्यास्सा ठक उपसर्जनत्वेपि जीवानां सिद्धिर्मुक्तिर्भवतीति असमाप्तायाः अपि महापुरुषपूजायाः पूजकाभिलषितप्रयोजनावहत्वमधुनावलोक्यासुत्त्यर्थत्वेनापि कृतायास्तत्पूजयाः परिपूर्णायाः मुक्तिरेव प्रधानं फलं, पूजकाभिलषितं तु आनुषङ्गिकमिति मया निश्चितमित्यर्थः । यद्वा, महापुरुषस्य पूजायाः सकामपूजायाः सिद्धिः परिसमाप्तिरेव कार्यानुषङ्गिकीयार्थेण प्रयोजनेनानुपद्यते अनुपद्यते पूजकाभिलषितप्रयोजनावहा भवति न त्वपरिपूर्णा, सा तु विपरीतफलदैवेति मया निश्चितमित्यर्थः ॥ ७३ ॥

अत एव ये पुरुषाः निराशिषो निष्कामाः भगवत आराधनं कुर्वाणाः परं मोक्षमपि नेच्छन्ति त एव स्वार्थे स्वस्य निरतिशयपुरुषार्थे कुशलाः स्वस्य निरतिशयपुरुषार्थप्रसाधनकुशलाः स्मृताः ॥ ७४ ॥

एवमनभिसंहितफलं भगवदाराधनं प्रस्तुत्याभिसंहितफलं निन्दति-आराध्येति । आत्मप्रदं निरतिशयपुरुषार्थरूपमात्मानं निरतिशयप्रियमीश्वरं देवं भगवन्तं तमाराध्य बुधो विवेकी चेत् कः पुमान् गुणस्पर्शं शब्दादिविषयानुभवं कः पुमान् वृणीत कामयेत. गुणस्पर्शं विशिनष्टि-स्यादिति, यत् गुणस्पर्शनं नरकेपि स्यात्सम्भवेत् ॥ ७५

स्वापराधक्षमार्थं तां प्रार्थयते—तदिति । हे महीयसि पूज्ये ! बालिशस्य मूर्खस्य मम तदिदं गर्भच्छेदनादिरूपं दौर्जन्यं दुर्जनस्य कर्म हे मातः ! त्वं क्षन्तुमर्हसि मातुरसह्योऽपराधो नास्तीत्यभिप्रायेण मातरिति सम्बोधनं दिष्ट्या दैवात् मृतोपि तव गर्भः पुनरुत्थितो जीवितः ॥ ७६ ॥

एवमुक्तया विशुद्धभावेन निष्कपटभावेन तुष्टया तया दित्या अभ्यनुज्ञातः तां नत्वा मरुद्भिस्सह प्रभुरिन्द्रः त्रिदिवं स्वर्गं जगाम ॥ ७७ ॥

एवं यत्पृष्टं "कथं त आसुरं भावम्" इत्यादिना तस्योत्तरमुक्तमित्याह—एवमिति । यन्मरुतां जन्म त्वं मां परिपृच्छसि पर्यपृच्छः तच्छुभवतां मङ्गलावहं सर्वं सप्रपञ्चं यथातथा ते तुभ्यं मया आख्यातं कथितम्भूयः किंकथयामि यदि किञ्चिच्छुश्रूषितमस्ति तर्हि तत्कथयामीति प्रश्नप्रोत्साहः ॥ ७८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कार्यानुषङ्गिणी कार्यानुकूल्यं सङ्गमयन्तीति ॥ ७३ ॥

फलकामक्रियायोगमाविन्यैवम्विधा सिद्धिरभूत् किमु निराशास्त्वेनेति भावेनाह—आराधनमिति ॥ ७५ ॥

गुणस्पर्शं विषयसुखम् ॥ ७५--७८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ततस्तदिति। व्यवसितं विचारितम्। तदेवाह—महेति ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

परं मोक्षमपि स्वार्थकुशला इति तेन येत्वाराधनेन मोक्षमिच्छन्ति ते वर्त्तमानमहानिधिर्विनिमयेन तृणार्थिनः स्वार्थानभिज्ञाः किन्तु निपयपाङ्गुण्यात्तेऽपि कृतार्थों एवेत्यर्थः। यदुक्तम् "सत्यं दिशत्यर्थितमर्थितो नृणाम्" इति ॥ ७४ ॥

देवं क्रीडापरं स्वात्मानं सुन्दरविग्रहम् ॥ ७५—७८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षष्ठे ऽष्टादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

परं मोक्षम् ॥ ७४ ॥

स्वस्य अंशभूतस्य आत्मानमंशिनं गुणस्पर्शं विषयभोगं बुधः को वृणीत? यद्यस्मात् विषयभोगो नरकेऽपि स्यात् ॥ ७५ ॥

हे महीयसि महत्तमे! बालिशस्य मूढस्य मम यद्दौर्जन्यं तत् क्षन्तुमर्हसि दिष्ट्या भद्रं गर्भो मृतस्समुत्थितः ॥ ७६ ॥

मरुद्भिः सह दिवं जगाम ॥ ७७ ॥ ७८ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टादशाऽध्यायार्थप्रकाशः ॥ १८ ॥

---

भाषा टीका।

तिससे उस परमाश्चर्य को देखकर मैंने यह निश्चय किया कि यह कोई महा पुरुष की पूजा सम्बन्धिनी सिद्ध है ॥ ७३ ॥

जो निष्काम होकर भगवान के आराधन की चेष्टा करते हैं और मोक्ष पर्यन्त की भी चाहना नहीं करते वे लोग ही स्वार्थ में कुशल समुझे गये हैं ॥ ७४ ॥

आत्मा को देने वाले अपने अन्तर्यामी जगदीश्वर का आराधन करके कौन बुद्धिमान विषय भोगों को मांगेगा, जो नरक में भी हैं ॥ ७५ ॥

हे महीयसि! ( अति बडप्पन वाली ) हे मातः ! मेरी इस दुर्जनता को क्षम करने योग्य है और यह भला हुआ जो मृत गर्भ भी फिर उठ खडा हुआ ॥ ७६ ॥

श्री शुक उवाच ॥

इन्द्र के शुद्धभाव सन्तुष्ट होकर दिति ने इन्द्र को आज्ञा दी तब इन्द्र भी मरुद्गणों के सहित दिति को नमस्कार करके स्वर्गको गया ॥ ७७ ॥

हे राजन्! जो तुमने हमसे पूछा सो हमने सब तुम से मङ्गल रूप मरुद्गणों का जन्म तुम से कथन किया अब और तुम से क्या कथन करें ॥ ७८ ॥

इति श्रीमत्भागवत महापुराण षष्ठस्कन्ध
की भाषाटीका में अष्टादश अध्याय
समाप्त ॥ १८ ॥

---

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे अष्टादशोऽध्यायः समाप्तः ॥ १८ ॥



## ॥ एकोनविंशोऽध्यायः ॥

:o:

राजोवाच ।

व्रतं पुंसवनं ब्रह्मन् भवता यदुदीरितम् ।
तस्य वेदितुमिच्छामि येन विष्णुः प्रसीदति ॥ १ ॥

श्रीशुक उवाच ।

शुक्ले मार्गशिरे पक्षे योषिद्भर्तुरनुज्ञया ।
आरभेत व्रतमिदं सार्वकामिकमादितः ॥ २ ॥
निशम्य मरुतां जन्म ब्राह्मणाननुमन्त्र्य च ।
स्नात्वा शुक्लदती शुक्ले वसीतालङ्कृताम्बरे ।
पूजयेत्प्रातराशात्प्राग्भगवन्तं श्रिया सह ॥ ३ ॥
अलं ते निरपेक्षाय पूर्णकाम ! नमोऽस्तु ते ।
महाविभूतिपतये नमः सकलसिद्धये ॥ ४ ॥
यथा त्वं कृपया भूत्या तेजसा महिमौजसा ।
जुष्ट ईश गुणैः सर्वैस्ततोऽसि भगवान्प्रभुः ॥ ५ ॥
विष्णुपत्नि महामाये ! महापुरुषलक्षणे ! ।
(१) प्रीयेथा मे महाभागे ! लोकमातर्नमोऽस्तु ! ते ॥ ६ ॥

ॐ नमो भगवते महापुषाय महानुभावाय महाविभूतिपतये सह महाविभूतिभिर्बलिमुपहरामीति ।

अनेनाहरहर्मन्त्रेण विष्णोरावाहनार्घ्यपाद्योपस्पर्शनस्नानवासउपवीतविभूषणगन्धपुष्पधूपदीपोपहाराद्युपचारांश्च समाहित उपाहरेत् ॥ ७ ॥

हविःशेषन्तु जुहुयादनले द्वादशाहुतीः ।
ॐ नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनविंशे तु यत्प्रोक्तं कश्यपेन दितेर्व्रतम् ।
तदेव विवृतं लोकहिताय हरितोषणम् ॥ १ ॥

तस्य प्रकारमिति शेषः ॥ १ ॥

मार्गशिरे मासे शुक्लपक्षे आदितः प्रतिपदि ॥ २ ॥

अनुमन्त्र्य पृष्ट्वा शुक्लाः दन्ताः यस्याः सा शुक्लदती धौतदन्ता अलंकृता सती पूजयेत् ॥ ३ ॥

आदौ तावन्नमस्कारमन्त्रानाह त्रिभिः—ते तुभ्यमलं पर्याप्तमेव सर्वं न किञ्चिदन्यैः कृत्यमस्त्यतः केवलं ते तुभ्यं नमोऽस्तु पर्याप्तौ हेतवः, निरपेक्षाय हे पूर्णकाम ! महाविभूतिपतये लक्ष्मीपतये सकलाः सिद्धयोऽणिमाद्या यस्मिन् तस्मै ॥ ४ ॥

---

(१) प्रिये धामे इति पाठान्तरम् । वीर०

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भो ईश ! यथा यथावत् त्वं कृपादिभिर्जुष्टः अन्यैश्च सत्यसङ्कल्पत्वादिभिः सर्वैर्गुणैः ततस्तस्मात् ॥ ५ ॥

महापुरुषस्य परमेश्वरस्यैव लक्षणानि निरपेक्षत्वादीनि यस्यास्तस्याः संबोधनम् ॥ ६ ॥

पूजामन्त्रमाह—ओं नम इति ॥ ७ ॥

हविःशेषमुपहारावशिष्टं होममन्त्रं दर्शयति–ओमिति ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किं भूयः कथयामीति प्रश्नार्थं चोदितः पृच्छति राजा—व्रतमिति । हे ब्रह्मन् ! भवता यदुदीरितं पुंसवनाख्यं व्रतं तस्य पुंसवनस्य प्रपञ्चमितिशेषः ज्ञातुमिच्छामि येन पुंसवनेन तच्छ्रवणेन वा भगवान् प्रसीदति ॥ १ ॥

एवमापृष्टः सप्रपञ्चं व्रतमाह मुनिः—शुक्ल इत्यादिना । मार्गशिरे मासि शुक्ले पक्षे कस्यांचिच्छुभतिथौ भर्तुरनुज्ञया योषिदिदं वक्ष्यमाणं सार्वकामिकम् अभिलषितसर्वपुरुषार्थसाधनं पुंसवनाख्यं व्रतमारभेत ॥ २ ॥

तत्रादितः प्रथमं मरुतां जन्म उत्पत्तिं श्रुत्वा ब्राह्मणाननुमन्त्र्यानुज्ञाप्य तैरनुज्ञातेत्यर्थः । स्नात्वा शुक्लाः धौताः दन्ताः यस्याः सा धौतदन्तेत्यर्थः अहते नूतने शुक्ले च अंबरे वसित्वा प्रातराशात्प्रागेव भगवन्तं श्रिया लक्ष्म्या सह सलक्ष्मीं पूजयेत् ॥ ३ ॥

तावन्नमस्कारमन्त्रानाह त्रिभिः—ते तुभ्यं अलं पर्याप्तमेव न किञ्चिदन्यैः कृत्यमस्ति. तत्र हेतुः, हे पूर्णकाम अवाप्तसमस्तकाम ! अत एव निरपेक्षाय ते तुभ्यं नमः । पूर्णकामत्वमेव विशदयंस्तं विशिनष्टि—महाविभूत्योर्नित्यलीलाविभूत्योरधिपतये अत एव सकलाः सिद्धयः अभिलषितानि यस्मात्तस्मै ॥ ४ ॥

हे ईश ! यथा यतः त्वं कृपादिभिः सर्वैर्गुणगणैर्जुष्टः युक्तः ततस्त्वं भगवान् प्रभुरसि तत्र कृपा स्वार्थानपेक्षपरदुःखनिराचिकीर्षा भूतिरैश्वर्यं तेजः पराभिभवनसामर्थ्यं महिमा लोकोत्तरप्रभावः ओजो बलं सर्वैरित्यनेनान्ये सर्वज्ञत्वसर्वशक्तित्वादयो गुणाः अभिप्रेताः ॥ ५ ॥

हे विष्णुपत्नि ! हे महामाये महाश्चर्यशक्तियुक्ते ! लक्ष्यतेऽनयेति लक्षणा महापुरुषचिन्हभूतेत्यर्थः तथा महापुरुषस्य श्रियै,हे धामे, सर्वलोकसम्पदाश्रयभूते, हे लोकानां मातः, ते तुभ्यं नमः ॥ ६ ॥

पूजामन्त्रमाह—ओं नम इति । भगवते पूर्णषाड्गुण्याय निरस्तनिखिलदोषाय महापुरुषाय पुरुषसूक्तप्रतिपाद्यमाहात्म्ययुक्ताय महानुभावाय लोकविलक्षणप्रभावाय महाविभूतेः महालक्ष्म्याःपतये विभूतिभिःसह सपार्षदायेत्यर्थः, तुभ्यं बलिमुपाहरामि समर्पयामीत्यनेन मन्त्रेण अहरहः विष्णोरावाहनाद्युपचारानुपाहरेत्. तत्रोपस्पर्शनमाचमनं उपहारो नैवेद्यं हविः आदिशब्देन तांबूलनीराजनादिकं विवक्षितं शेषं भगवते निवेदितं हविरनले द्वादशाहुतीः जुहुयात् ॥ ७ ॥

तत्र मन्त्रमाह— ओंनम इति ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र निष्कामत्वेन क्रियमाणं पुंसवनं नाम व्रतं श्रीनारायणानुग्रहजनकं ज्ञानजनकत्वेन पुरुषार्थसाधनं भवतीत्यभिप्रायेण प्रश्नोत्तरपूर्वकमेतद्व्रतं निरूप्यते पुंसवनस्य विधानम् ॥ १ ॥

मार्गशिरे धनुर्मासि शुक्लपक्षे सार्वकामिकं मोक्षादिसर्वपुरुषार्थसाधनम् आदितः शुक्लपक्षमारभ्य आदितो मरुतां जन्मेति वा ॥२॥

शुक्ले अम्बरे च ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ते तुभ्यमलं त्वदर्थं नान्येन प्रयोजनमस्तीत्यर्थः ॥ १ ॥ २ ॥ ॥ ३ ॥ ४ ॥ ५ ॥

विष्णुपत्नीति । महामाये पराख्यशक्तिरूपे ! अत एव महापुरुषलक्षणे तदेकस्वरूपे ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विष्णुप्रसादनं चेतः क्रौर्यविध्वंसनं व्रतम् ।
नृपेण पृष्टोऽपवृणोदूनविंशे मुनिः पुनः ॥ ० ॥

तस्य विधिमिति शेषः ॥ १ ॥

मार्गशिरे मार्गशीरे मासि आदितः प्रतिपदि ॥ २ ॥ ३ ॥

अलमतिशयेन तुभ्यं नम एवास्तु । देवान्तरो यथा निजैश्वर्यसिद्ध्यर्थं सेवकान् अपेक्षते तथा न त्वमित्याह–निरपेक्षाय स्वाभाविकमहदैश्वर्यवत्त्वादित्यर्थः । एवं पूर्णकामाय ते केन नैवेद्यादिना प्रीणयामि । महाविभूतिपतये तुभ्यं कैर्गृहोद्यानरथगजदासीभृत्यगीतदुन्दुभिघोषाद्यैः एवं सकलसिद्धये स्वर्गापवर्गप्रेमादिसिद्धिदात्रे तुभ्यं कर्मज्ञानयोगभक्त्यादिसाधनार्पणैः कथं प्रीणयामीति भावः ॥ ४ ॥

तदपि त्वत्कृपया सर्वं घटत इत्याह—यथा त्वं कृपया जुष्टस्तथैव भूत्यादिभिश्च ततो हेतोस्त्वमेव भगवानसीत्यन्वयः । अयमर्थः, कृपया शक्त्या जुष्टः सेवितस्सन् भक्तदत्ततुलसीपत्रनाग्रमप्यपेक्षमाणः अहमद्य क्षुधार्त्तोऽस्मि किञ्चिद्देहीति भक्ताय याचमानोऽपूर्णकामोऽपि भवसि मम गृहोद्यानादिकं सम्प्रति जीर्ण क्व विलासभीत्यादि स्वप्नान्तरे ब्रुवन् विभूतिशून्योऽपि भवसि अणिमादिसिद्धियुक्तोऽपि भक्तप्रेमरशनया बद्धः क्वापि गन्तुमपि न शक्नोऽपि तथैव भूत्या महालक्ष्म्या शक्त्या तेजसा सर्वानधीनतया शक्त्या महिम्ना विभूत्या शक्त्या च ओजसा बलेन सर्वैरन्यैश्च सत्यसङ्कल्पत्वादिभिश्च सर्वत्र जगति निरपेक्षत्वपूर्णकामत्वादिमांश्च भवसीति त्वमेव भगवान् त्वमेव प्रभुर्भजनीय इति भावः ॥ ५ ॥

इत्थं भगवन्तं प्रणम्य लक्ष्मीं प्रणमेदित्याह–विष्णुपत्नीति । महामाये, मायाशब्दस्य शक्तिवाचित्वात् पराख्यशक्तिरूपे अत

श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ ।
भक्त्या सम्पूजयेन्नित्यं यदीच्छेत्सर्वसम्पदः ॥ ९ ॥
प्रणमेद्दण्डवद्भूमौ भक्तिप्रह्वेण चेतसा ।
दशवारं जपेन्मन्त्रं ततस्तोत्रमुदीरयेत् ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एव महापुरुषस्य विष्णोरिव लक्षणानि निरपेक्षत्वादीनि यस्याः ॥ ६ ॥

पूजामन्त्रमाह—ओं नम इति ॥ ७ ॥

हविः शेषमुपहारावशिष्टम् ॥ ८ ॥ ९ ॥ १० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुत्रदस्य व्रतस्य विष्णुप्रसादकरं विधिं पृच्छति—व्रतमित्येकोनविंशे । पुंसवनं पुत्रदं यदूव्रतं भवतोदीरितं तस्य येन विष्णुः प्रसीदति प्रसन्नो भवति तं विधिमिति शेषः वेदितुमिच्छामि ॥ १ ॥

मार्गशिरे तत्रापि शुक्ले पक्षे तत्रापि आदितः प्रतिपदि ॥२॥

ब्राह्मणान् अनुमन्त्र्य पृष्ट्वा मरुतां जन्म निशम्य एकः पुत्रः सङ्कल्पितः व्रतप्रभावादेकोनपञ्चाशत्पुत्रा जाता इति व्रतमहात्म्यसूचकं मरुतां जन्म ब्राह्मणेभ्यः श्रुत्वेत्यर्थः तदनन्तरं ब्राह्मणाननुमन्त्र्य इदं करिष्ये इति पृष्ट्वा च स्नात्वा शुक्ले अलङ्कृताम्बरे मङ्गलद्रव्यैः संस्कृते वस्त्रे वसीतेत्यन्वयः ॥ ३ ॥

प्रथमं नमस्कारमन्त्रानाह—अलमितित्रिभिः । ते तुभ्यमलं पर्याप्तमेव सर्वं न किंचिदन्यैः कृत्यमस्ति अतो निरपेक्षायापि केवलं ते तुभ्यं नमोस्तु पर्याप्तौ हेतुदर्शनार्थं सम्बोधनं हे पूर्णकाम ! अतःपूर्णकाम, सकामैरस्मदादिभिः सिद्धिकामैश्च सेव्योसीति विशेषणाभ्यां सूचयति महत्यो विभूतयो यस्याः सकाशादुपासकानां सा महाविभूतिः श्रीः तस्याः पतये सकलाः सिद्धयो यस्मात्तस्मै ॥ ४ ॥

हे देव ! त्वं रूपादिभिः सर्वैर्गुणैरैश्वर्यादिभिश्च यथा यथावज्जुष्टोसि अतो भगवानसि ॥ ५ ॥

महती माया कृपा यस्याः सा महामाया महती चासौ मायाशक्तिर्महामायेति वा तस्याः सम्बोधनम् महापुरुषस्य विष्णोरिव लक्षणानि सौंदर्यादीनि यस्यास्तस्याः सम्बोधनम् हे लोकमातः ! ते तुभ्यं नमः प्रीयेथा प्रसन्ना भव ॥ ६ ॥

पूजामन्त्रमाह—ॐ नम इति ॥ ७ ॥

हविःशेषमुपहारावशिष्टं होममन्त्रमाह ॐ नम इति ॥ ८ ॥

———

भाषा टीका ।

राजो उवाच ।

हे ब्रह्मन् पुंसवन नामक व्रत आपने जो कथन किया है उसको मै जानने की इच्छा करता हूं । जिस व्रत से विष्णु-भगवान् प्रसन्न होते हैं ॥ १ ॥

श्री शुक उवाच ।

मार्गशीर्ष मास के शुक्ल पक्ष में स्त्री अपने पति की आज्ञा लेकर आदि से इस सर्व काम देने वाले व्रत का आरम्भ करे ॥ २ ॥

मरुद्गणों का जन्म सुनकर ब्राह्मणों का निमन्त्रण कर । दातोंको मञ्जन करके शुक्लदन्त वाली होकर स्नान कर अलंकृत शुक्लवस्त्रों को धारण करे प्रातःकाल भोजन के पहले लक्ष्मी सहित भगवान् का पूजन करे ॥ ३ ॥

हे पूर्णकाम निरपेक्ष आप को अन्य किसी से कोई कृत्य नहीं आप को नमस्कार हो । महाविभूति के पति आप को नमस्कार हो सकलसिद्धिप्रद आपको नमस्कार हो ॥ ४ ॥

जिस कारण आप कृपा भूति ( संपद् ) तेज महिमा पराक्रम इत्यादि संपूर्ण ईश गुणों से इसी से आप भगवान है ॥ ५ ॥

हे विष्णु पत्नि ! हे महामाये ! हे महापुरुष के लक्षण वाली हे महा भागे मेरे ऊपर प्रसन्न हूजिये हे लोक मात आपको नमस्कार हो ॥ ६ ॥

प्रणव रूप भगवान महापुरुष महानुभाव महाविभूति पति ऐसे आपको नमस्कार हो । महा विभूतियों सहित मैं बलि उपहार करता हूं इस मंत्र से श्री विष्णु भगवान को आवाहन अर्घ्य पाद्य आचमन स्नान वस्त्र यज्ञोपवीत भूषण चन्दन पुष्प धूप दीप उपहार ( भेंट ) आदिक उपचार सम हित होकर समर्पण करे ॥ ७ ॥

उपहार से अवशिष्ट हवि को अग्नि में "ॐ नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहा" इस मंत्र से द्वादश १२ आहुति हवन करे ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रकर्षेण भवन्त्याभ्यामिति प्रभवौ ॥ ९ ॥ १० ॥ ११ ॥

युवान्तु विश्वस्य विभू जगतःकारणं परम् ।
इयं हि प्रकृतिः सूक्ष्मा मायाशक्तिर्दुरत्यया ॥ ११ ॥
तस्या अधीश्वरः साक्षात्त्वमेव पुरुषः परः ।
त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग्भवान् ॥ १२ ॥
गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग्भवान् ।
त्वं हि सर्वशरीर्यात्मा श्रीःशरीरेन्द्रियाशया ।
नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः ॥ १३ ॥
यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ।
तथा म उत्तमश्लोक सन्तु सत्या महाशिषः ।
इत्यभिष्टूय वरदं श्रीनिवासं श्रिया सह ॥ १४ ॥
तन्निःसार्योपहरणं दत्वाऽऽचमनमर्चयेत् ॥ १५ ॥
ततः स्तुवीत स्तोत्रेण भक्तिप्रह्वेण चेतसा ।
यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिम् ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

इज्या यज्ञाभिनिवर्तकः पुरुषव्यापारो भावनाख्यः क्रिया लौकिकी ॥ १२ ॥

प्रत्ययो नामरूपयोः प्रकाशकः अपाश्रयस्तयोराधारः ॥१३-१६॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदि सर्वसम्पदः इच्छेत्कामयेचेदेवं श्रियं लक्ष्मीं विष्णुं च आशिषां प्रभवौ प्रभवन्त्याभ्यामिति प्रभवौ उभौ भक्त्या सम्यक् पूजयेत् ॥ ९ ॥

भक्त्या प्रह्वेण नम्रेण शिरसेति शेषः चेतसा च दण्डवद्भूमौ प्रणमेत्. ततो मन्त्रम्. ओंनमो भगवते महानुभावाय महाविभूतिपतये इति मन्त्रं दशवारं जपेत् ततो वक्ष्यमाणं स्तोत्रमुदीरयेत् पठेत् ॥ १० ॥

तमेवाह--युवामिति। युवां विश्वस्य विभू विभुश्च विभ्वीचविभू पुमान् स्त्रियेत्येकशेषः जगतः परं कारणं स्वयं कारणान्तररहितकारणभूतौ इत्यर्थः इयं लक्ष्मीः प्रकृतिः "स्त्रीनाम्नी लक्ष्मीर्मैत्रेय" इत्युक्तप्रकारेण प्रकृत्यादिस्त्रीनामकपदार्थविभूतिमत्वात् प्रकृतिरित्युच्यते प्रकृतिपुरुषादिपदार्थानां स्त्रीपुंसात्मकानां तयोर्विभूतित्ववर्णनात्मकमिदं स्तोत्रं विभूतिभूतां प्रकृतिं विशिनष्टि, सूक्ष्मा कारणावस्थायां निरतिशयसूक्ष्मा दुरवबोधस्वरूपा वा माया आश्चर्यरूपा शक्तिः कार्योपयुक्ता भगवदपृथक् सिद्धविशेषणभूता दुरत्यया भगवदप्रपन्नैरनितिलङ्घ्या, कथं भगवद्विभूतिभूतायाः प्रकृतेर्लक्ष्मीविभूतित्वमिति नशङ्कनीयं कृत्स्नस्य कार्यकारणात्मकस्य जगत उभयोरपि विशेषणत्वात्॥११॥

तस्याः प्रकृतेरधीश्वरस्त्वमेव, हे पुरुषोत्तम ! त्वमेव सर्वयज्ञः इज्यात्वियं लक्ष्मीः तत्र यज्ञः प्रधानयागः इज्यात्वङ्गभूता दीक्षणीयेष्ट्यादिका तथा स्मार्त्तक्रिया च इयं लक्ष्मीरेव तादात्म्यमत्र तत्फलप्रदातृत्वेन तदाराध्यत्वेन च तद्विभूतित्वप्रयुक्तं. तदेवाह—फलभुगिति, त्वम् इयं लक्ष्मीश्च यज्ञियं यत्फलं चरुपुरोडाशादिकं तद्भुंक्ते इति तथा. यद्वा, क्रियेयं लक्ष्मीः फलभुक् क्रियाफलभोक्तातु त्वमितीवान्वयःक्रिया लक्ष्म्याः विभूतिः कर्त्ता तु त्वद्विभूतिरित्यर्थः ॥ १२ ॥

तथा गुणव्यक्तिरियं देवी लक्ष्मीः या सर्ववस्तुगता गुणाभिव्यक्तिः सा लक्ष्मीः तद्विभूतिरित्यर्थः भोग्यत्वभोगोपकरणत्वादिगुणानां सर्ववस्तुगतानामभिव्यञ्जकस्तु भवान् त्वद्विभूतिरित्यर्थः तथा गुणभुग्भावात् भुक्तिस्त्वियं देवीत्यपि बोध्यं त्वं सर्वशरीरिणाम् आत्मा शरीरं यस्य तादृशः सर्वशरीरिणो जीवास्त्वद्विभूतिभूताः श्रीर्लक्ष्मीः सर्वेन्द्रियबुद्धिरूपा तद्विभूतिमतीत्यर्थः तथा नामरूपे भगवती लक्ष्मीः प्रत्ययः नामरूपविषयकः प्रकाशः अपाश्रयः आधारः नामरूपयोर्निर्वोढा च त्वमित्यर्थः॥१३ ॥

एवं तौ स्तुत्वा तयोरुक्तधर्मवैशिष्ट्यवत्प्रार्थनाया अपि सत्यत्वं प्रतिजानीते-यथेति। युवां यथात्रिलोकस्य वरदौ परमेष्ठिनौ च यथेदमसत्यं न भवतीतिभावः हे उत्तम श्लोक ! तथा ममाशिषः त्वद्विषयप्रार्थनाः सर्वाः सत्यास्सन्तु श्रिया लक्ष्म्या सह सहितं श्रीनिवासं वरप्रदं इत्थमभिष्टूय तत आवाहितभगवत्सकाशादुपहरणमवशिष्टं पूजाद्रव्यं निस्सार्य

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अपनीय भगवते आचमनं समर्प्य सम्यक् पुनरर्चयेत्॥ १४ ॥१५॥

ततः पुनः स्तोत्रेण स्तुवानाः स्तोत्रं कुर्वाणाः भक्तिकृतप्रह्वीभावेन चेतसा यज्ञोच्छिष्टमाघ्राय पुनरपि हरिमर्चयेत् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्रभवौ जनकौ ॥ ९ ॥

दशवारं दशसङ्ख्या तदूर्ध्वं यथाशक्ति तावती सर्वथाऽपेक्षिता ॥ १० ॥

सर्वयज्ञः सर्वान्तर्यामी इयं लक्ष्मीः इज्यान्तर्यामिणी क्रियान्तर्यामिणी—"अन्तर्यामी तु यज्ञादेर्विष्णुरिज्यादिनां रमा।
तत्तच्छब्दैस्ततोवाच्यैर्न तु सर्वस्वरूपतः॥
अन्तर्यामी श्रियश्चापि विष्णुरेव न संशयः।
नान्तर्यामी कश्चिदस्ति विष्णोः क्वापि कुतश्चन" ॥
इतिवचनात् फलभुक् यज्ञफलभोक्तरि यजमाने स्थित्वा तत्फलस्य भोजकः ॥ ११ ॥ १२ ॥

सत्वादिगुणानां व्यक्तेः कारणं फलव्यञ्जकः गुणभोक्तरि जीवे स्थित्वा तद्भोजकः शरीरेन्द्रियाणामभिमानिदेवता नामरूपयोर्गुणहेतुत्वात् श्रियश्च गुणाभिमानित्वान्नामरूपे श्रीरित्युच्यते प्रत्ययो निश्चयज्ञानं त्वत्प्रसादजनकत्वम् ॥ १३ ॥ १४ ॥

उपहरणं नैवेद्यं निःसार्य मोचयित्वा ॥ १५ ॥

स्तुवाना स्तुतिं कुर्वाणा यज्ञोच्छिष्टं पूजाशेषं महापुरुषो विष्णुरस्मिन्सन्निहित इति बुद्ध्या ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

युवामिति सार्द्धकं परात्परयोरपि तयोर्जगत्कारणत्वे हेतुमाह----इयं हीति । प्रकृतिर्निजांशाभासेनेति भावः ॥ ११ ॥ तस्या इति। "विष्णोस्तु त्रीणि रूपाणि" इत्यादेः ॥ १२ ॥

तथैवाह----त्वमित्यादि ॥ १३—२३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

इज्या यज्ञाभिनिवर्तकः पुरुषव्यापारो भावनाख्यः । क्रिया लौकिकी ॥ १२ ॥

प्रत्ययो नामरूपयोः प्रकाशकः अपाश्रयस्तयोराधारः परमेष्ठिनौ परमेश्वरौ।तन्निस्सार्य निर्मदयापसारणं कृत्वा ॥ १३--१७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रकर्षेण भवत्स्याभ्यामिति प्रभवौ ॥ ९ ॥

भक्तिप्रह्वेन भक्त्या नम्रेण ॥ १० ॥

युवां विश्वस्य परं कारणं ननु विश्वस्य परं कारणमेकमस्ति कथमावयोः परं कारणत्वमत्राह—इयं या सा आश्चर्यरूपा शक्तिः एषः प्रपन्नवरदो रमयात्मदत्तेति तृतीयस्कन्धोक्तेः प्रकृतिरनादिसिद्धा सूक्ष्मा सर्वैः प्राकृतैर्दोषैरस्पृष्टा दुरत्यया प्रकृतिकालकर्मादिभिदुर्लङ्घ्या तस्यास्त्वमधीश्वरः स्वामी अतस्त्वच्छक्तितया त्वत्पत्नीत्वेन त्वदन्तर्गतत्वादियं सुतरां विश्वस्य कारणमित्यर्थः ॥ ११ ॥

श्रियः भगवदनपायनीत्वं प्रतिपादयति--त्वं सर्वयज्ञ इत्यादिना। इज्या व्यापाररूपा क्रिया फलभोगानुकूलो भोक्तृव्यापारः इयं गुणव्यक्तिः भवान् गुणव्यंजको गुणभुक् च प्रत्ययो नामरूपयोः प्रकाशकः अपाश्रयोऽन्यनिरपेक्ष आधारश्च त्वम् ॥ १२ ॥ १३ ॥

परमेष्ठिनौ परमस्थानवासिनौ ॥ १४ ॥

तदुपहरणं तन्नैवेद्यं निःसार्य आचमनं दत्वा ताम्बूलपुष्पाञ्जल्यादिनाऽर्चयेत् ॥ १५ ॥ १६ ॥

---

भाषाटीका।

कामनाओं को पूर्ण करने वाले श्री लक्ष्मी और विष्णु दोनों का भक्ति से नित्य पूजन करे । जो सर्व संपत्ति की इच्छा करे ॥ ९ ॥

भक्तिनम्र चित्त से भूमि में दंडवत् प्रणाम करे, दशवार मंत्र जपे पश्चात् इस प्रकार स्तुति करे ॥ १० ॥

आप दोनों समर्थ हो जगत् के परम कारण हो यह जो श्री हैं सोई सूक्ष्म प्रकृति है और आपकी दुरत्यय माया शक्ति हैं ॥ ११ ॥

जिस कारण आप इन [ श्री लक्ष्मी ] जी के अधीश्वर (पति) हैं इसी से आप साक्षात् परमपुरुष हैं आप सर्वयज्ञ स्वरूप हैं, ये इज्या हैं, ये क्रियारूप हैं, आप फल भोक्ता हो ॥ १२ ॥

गुणों की व्यक्ति ये श्रीदेवी हैं, व्यंजक गुणों के भोक्ता आप हो । आप सब जीवों के आत्मा हो, श्रीजी शरीर इन्द्रिय अन्तःकरण रूप हैं, नाम और रूप भगवती हैं, नाम रूप के प्रकाशक और आधार आप हैं ॥ १३ ॥

जैसे आप दोनों लोक के वर देने वाले परमेष्ठी (पति) हैं। हे उत्तमश्लोक! तैसे ही हमारी सर्व कामना सफल हो ॥ १४ ॥

इस प्रकार श्रीदेवी सहित श्रीनिवास भगवान की स्तुति करके जो उपहार समर्पण किया है उसको उतारकर आचमन देकर फिर पूजा करे ॥ १५ ॥

भक्ति नम्रचित्त से फिर स्तुति करे यज्ञके उच्छिष्ट का आघ्राण कर फिर हरिका अर्चन करे ॥ १६ ॥

---

पतिं च परया भक्त्या महापुरुषचेतसा ।
प्रियैस्तैस्तैरुपनमेत्प्रेमशीलः स्वयं पतिः ।
बिभृयात्सर्वकर्माणि पत्न्या उच्चावचानि च ॥ १७ ॥
कृतमेकतरेणापि दम्पत्योरुभयोरपि ।
विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात्कथञ्चन ॥ १८ ॥
विप्रान्स्त्रियो वीरवतीः स्रग्गन्धबलिमण्डनैः ।
अर्चेदहरहर्भक्त्या देवं नियममास्थितः ॥ १९ ॥
उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः ।
अद्यादात्मविशुद्ध्यर्थं सर्वकामर्द्धये तथा ॥ २० ॥
एतेन पूजाविधिना मासान्द्वादश हायनम् ।
नीत्वाऽथोपचरेत्साध्वी कार्तिके चरमेऽहनि ॥ २१ ॥
श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत् ।
पयःशृतेन जुहुयाच्चरुणा सह सर्पिषा ।
पाकयज्ञविधानेन द्वादशैवाहुतीः पतिः ॥ २२ ॥
( (१) ब्राह्मणान् भोजयेद्भक्त्या साध्वन्नैर्द्वादशात्मवित् ।
तेभ्यो दद्यात्तिलान् राजन् सोदपात्रान् ❋ गुडान्वितान् ॥ ० ॥ )
आशिषःशिरसाऽऽदाय द्विजैः प्रीतैः समीरिताः ।
प्रणम्य शिरसा भक्त्या भुञ्जीत तदनुज्ञया ॥ २३ ॥
आचार्यमग्रतःकृत्वा वाग्यतः सह बन्धुभिः ।
दद्यात्पत्न्यै चरोः शेषं सुप्रजस्त्वं सुसौभगम् ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

महापुरुषचेतसा ईश्वरबुद्ध्योपनमेद्भजेत् पतिश्च स्वयं प्रेमशीलः सन् पत्न्याः कर्माणि बिभृयात् तदनुकूलो भवेदित्यर्थः ॥१७॥

यतो दम्पत्योर्मध्ये एकतरेण कृतमुभयोरपि भवति ॥ १८ ॥

न विहन्यान्न विच्छिन्द्यात् ॥ १९ ॥ २० ॥

द्वादश मासानित्युक्ते कदाचित्तन्मध्ये मलमासे सति तेन सह द्वादशसंख्यायां सत्यां शुद्धस्यैकस्य त्यागः स्यात् हायनमित्युक्ते तन्मध्यपतितस्य तस्यापि प्रसङ्गः स्यात् तदुभयं वारयितुमुभयमुक्तम् उपचरेदुपवसेत् ॥ २१ ॥

श्वोभूते प्रभाते सति पयसि शृतेन पक्वेन पाकयज्ञविधानेन पार्वणस्थालीपाकविधानेन ॥ २२ ॥ २३ ॥

सुप्रजस्त्वं सत्पुत्रत्वमित्यर्थः वाग्यतस्सन् शेषम् ॥ २४ ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

महापुरुषचेतसा ईश्वरबुद्ध्या परया भक्त्या तैस्तैः प्रियैर्वस्तुभिश्च पतिमुपनमेत् भजेत् पतिरपि भार्यायां स्वयं प्रेमशीलस्सन्

---

(१) श्लोकोऽयमधिकः पठ्यते ॥ वीर०

❋ गुडान्वितान् इति पाठान्तरम्. विजय०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पत्न्याः कर्माणि सर्वाणि बिभृयात् पोषयेत् उक्तधर्मानुकूलो भवेदित्यर्थः ॥ १७ ॥

एवमन्योन्यानुकूल्ये कारणमाह—कृतमिति । दम्पत्योरन्यतरेणापि कृतं कर्म उभयोरपि फलदं भवति यतस्ततोऽन्योन्यानुकूल्येन भाव्यमिति भावः ॥ १८ ॥

अत एव पत्न्यामनर्हायाम् अशक्तायां सत्यां पतिरेव एतद्व्रतं समाहितः समाहितचित्तस्सन् कुर्यात् पत्न्यशक्ताचेत् कर्तुं भर्ता कुर्यादित्यर्थः । विष्णोरिदं व्रतं बिभ्रत् केनापि हेतुना न विहन्यात् अन्तरितं न कुर्यात् विप्रान् वीरवतीः पुत्रवतीः जीवद्भर्तृकाश्च स्त्रियः स्रगादिभिः महरहः एवं व्रतमास्थितः पुमानभ्यर्चयेत् ॥ १९ ॥

ततो देवं भगवन्तं स्वे धाम्नि स्वस्थाने इदावादित्यर्थः । उद्वास्य अग्रतः तस्मै भगवते निवेदितं हविः आत्मनो विशुद्ध्यर्थं सर्वकामप्राप्त्यर्थं च भद्यात् अश्नीयात् ॥ २० ॥

अनेन उक्तेन पूजाविधानेन द्वादशमासान् हायनं वत्सरं नीत्वा कार्तिके मासि चरमे अहनि उपचरेत् व्रतोद्यापनाङ्गमुपचारं कुर्यात् द्वादशमासानित्युक्ते कदाचित्तन्मध्ये मलमासे सति तेन सह द्वादशसङ्ख्यायां सत्यां शुद्धस्यैकस्य त्यागस्स्यात् हायनमित्युक्ते तन्मध्यपातिनस्तस्यापि प्रसङ्गःस्यात् तदुभयं वारयितुं द्वादशमासान् सम्वत्सरमित्युभयोर्ग्रहणम् ॥ २१ ॥

उपचारमेवाह—श्वोभूत इति । श्वोभूते प्रातः अप उपस्पृश्य स्नात्वा पूर्ववद्भगवन्तमभ्यर्च्य पयःशृतेन पयसि क्षीरे पकेन चरुणा "शृतं पाकः" इतिनिपातितः शृतशब्दः सहसर्पिषा सर्पिस्सहितेन पाकयज्ञविधिना द्वादशैवाहुतीः पतिर्जुहुयात् ॥ २२ ॥

ततो द्वादश ब्राह्मणान् साधवैः समीचीनान्नैः भक्त्या भोजयेत् आत्मवित् ब्राह्मणान् परमात्मरूपत्वेन पश्यन्नित्यर्थः तेभ्यो ब्राह्मणेभ्यः पूर्णोदकपात्रैस्सहितान् गुडान्वितान् तिलान् लाजांश्च दद्यात् ॥ ० ॥

द्विजैस्समीरिताः प्रयुक्ताः आशिषः शिरसा धारयन् तेभ्यः प्रणम्य ततस्तदनुज्ञया स्वयं भुञ्जीत ॥ २३ ॥

ततो बन्धुभिस्सह आचार्यमग्रतः पुरः कृत्वा उपवेश्य सुप्रजस्त्वसौभगत्वफलकं चरोर्हविःशेषं पत्न्यै दद्यात् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

[illegible]ः स्वयं यदि पत्न्यां प्रेमशीलस्तर्हि पत्न्यै पत्न्यर्थं, उ[illegible] [illegible] सर्वकर्माणि पतिर्बिभृयात् तर्हि तत्पत्नीकृतं न स्यादिति [illegible] मासूत् उभयोर्दम्पत्योरेकतरेण कृतमिदं पत्न्या कृतं भवति ॥ १७ ॥

रजोदर्शनादिनाऽनर्हायां पत्न्यां कथमेतदनुष्ठानमन्तरितं घटत इति तत्राह— पत्न्यामिति ॥ १८ ॥ १९ ॥ २० ॥

द्वादश मासान् तदात्मकं हायनं "सम्वत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यभिधानात् वर्षं नीत्वा कार्तिके मासि चरमेऽहनि अवसानदिवसे पूर्ववत् पूर्वोक्तार्चनविधिना ॥ २१ ॥

पयःशृतेन क्षीरपक्वेन पाकयज्ञविधानेन स्मार्तसूत्रोक्तविधिना होममन्त्रस्तूक्त एव ॥ २२ ॥ २३ ॥

द्वादशात्मनिरिकेशवादिद्वादशमूर्तिलक्षणावेत्ता, ब्राह्मणान् द्वादश तत्प्रीतये भोजयेदित्यर्थः । सोदपात्रानुदपात्रसहितान् इलान्वितान् भूमिसहितान् तिलान् भूमितिलसहितगुडशब्दवाच्यैः पायसाद्यधिकान्नयुक्तानिति वा शोभनं प्रजात्वं येन स तथा ॥ ० ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अग्रत इति तदग्रिमदेशं त्यक्त्वा तदग्रे भोजननिषेधात् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दम्पत्योर्मध्ये एकतरेणा कृतमुभयोरपि भवति ॥ १८ ॥

न विहन्यात् न विच्छिन्द्यात् ॥ १९ ॥

अग्रत इति ल्यब्लोपे पञ्चमी अग्रभागं यथोचितं विभज्येत्यर्थः ॥ २० ॥

चरमेऽहनि पौर्णमास्याम् ॥ २१ ॥

श्वोभूते प्रभाते सति पयसि शृतेन पक्वेन पाकयज्ञविधानेन पार्वणस्थालीपाकविधानेन ॥ २२ ॥ २३ ॥

शेषं सुप्रजास्त्वं सुप्रजस्त्वकरं सुसौभगं सुसौभगकरञ्च । यद्वा, ततस्तस्य सुप्रजास्त्वं स्यादिति वाक्यान्तरम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

महापुरुषचेतसा विष्णुबुद्ध्या पतिश्चोपनमेद्भजेत् पतिश्च पत्न्याः सर्वकर्माणि बिभृयादित्युत्तरेणान्वयः ॥ १७ ॥

यत एकतरेण कृतमुभयोर्दम्पत्योर्भवति अनर्हायां सत्यां पतिरेव कुर्यात् न विहन्यात् न छिन्द्यात् अग्रतः इत्यत्र सार्वविभक्तिकस्तसिः अष्टैर्गुणैस्तैश्चादिभिः सह भद्यात् ॥ १८—२० ॥

श्रीनिंबार्काय नमः । एतेन पूजाविधिना द्वादशमासान् हायनं द्वादशमासयुक्तं हायनं मलमासयुक्तहायनव्यतिरिक्तमित्यर्थः नीत्वा उपचरेदेवं पूजयेत् कार्तिके चरमेऽहनि अमावास्यायामित्यर्थः अमावास्यतः कार्तिकोऽत्र ज्ञेयः "शुक्ले मार्गशिरे पक्षे योषिद्भर्तुरनुज्ञया आरभेत व्रतमिदं सार्वकामिकमादितः" इत्युपक्रमानुसारात् ॥ २१ ॥

तत्र विधिमाह-श्वोभूतेइत्यादिना । श्वोभूते प्रभाते सति अप उपस्पृश्य स्नानादिकं विधाय पूर्ववत् कृष्णमभ्यर्च्य पयःशृतेन पयसि पक्वेन पाकयज्ञविधानेन पार्वणस्थालीपाकविधानेन ॥ २२ ॥

तदनुज्ञया ब्राह्मणानुज्ञया ॥ २३ ॥

सुप्रजस्त्वं सुप्रजस्त्वकरं सुसौभगं सुसौभगकरम् ॥ २४ ॥ २५ ॥

एतच्चरित्वा विधिवद्व्रतं विभोरभीप्सितार्थं लभते पुमानिह ।
स्त्रीत्वे तदास्थाय लभेत सौभगं श्रियं प्रजां जीवपतिं यशो गृहम् ॥ २५ ॥
कन्या च विन्देत समग्रलक्षणं वरं त्ववीरा हतकिल्विषा गतिम् ।
मृतप्रजा जीवसुता धनेश्वरी सुदुर्भगा सुभगा रूपमग्र्यम् ॥ २६ ॥
विन्देद्विरूपा विरुजा विमुच्यते य आमयावीन्द्रियकल्पदेहम् ।
एतत्पठन्नभ्युदये च कर्मण्यनन्ततृप्तिः पितृदेवतानाम् ॥ २७ ॥
तुष्टाः प्रयच्छन्ति समस्तकामान्होमावसाने हुतभुक् श्रीहरिश्च ।
राजन्महन्मरुतां जन्म पुण्यं दितेर्व्रतं चाभिहितं महत्ते ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे अष्टादशसहस्रिकायां पारमहंस्यां संहितायां
वैयासिक्यां षष्ठस्कन्धे पुंसवनव्रतकथनं नाम
एकोनविंशोऽध्यायः ॥ १९ ॥

समाप्तश्चायं षष्ठस्कन्धः ॥ ६ ॥

हरिः ॐ तत्सत्

भाषाटीका ।

पति को परम भक्ति से और परमात्मा की बुद्धि से तिन २ प्रिय पदार्थों को समर्पण करे और पति भी स्वयं प्रेम शील होकर पत्नी के ऊंचे नीचे सब कामों का भार आप लेले॥१७॥

स्त्री पुरुष दोनों में एक कोई करे तो फल दोनों को होगा यदि किसी कारण पत्नी व्रत के अयोग्य होजाय तो समाहित होकर पति ही व्रत करे ॥ १८ ॥

इस विष्णु के व्रतको धारण कर किसी प्रकार व्रत भंग न करे । नियम में स्थित होकर भक्ति से प्रति दिन परमात्मा की पूजा करे, तथा ब्राह्मण और पतिमती स्त्रियों का माला चंदन बलि अलंकार से पूजन करे ॥ १९ ॥

पश्चात् परमात्मा को वैकुंठ धाम में उद्वासन ( विसर्जन ) करके उनके आगे जो समर्पण किया है उसको आत्मा की शुद्धि के लिये तथा सर्व समृद्धि के लिये भक्षण करे ॥ २० ॥

ऐसे पूजा विधि से द्वादश मास अर्थात् एक वर्ष व्यतीत कर कार्तिक मास के अंतिम दिवस में सम्यक् उपचार करे ॥ २१ ॥

बड़े प्रातःकाल स्नान करके पूर्ववत् श्रीकृष्ण की पूजा करके घृत सहित, पाक यज्ञ विधान से दुग्ध पक्व चरु सिद्ध कर उस चरु से पति द्वादश १२ आहुती हवन करे ॥ २२ ॥

प्रसन्न हुए ब्राह्मणों से कथित आशीर्वाद को शिरसे ग्रहण कर, शिर से भक्ति पूर्वक उनको प्रणाम कर, उनकी आज्ञा ले भोजन करे ॥ २३ ॥

आचार्य को आगे करके, यतवाक् होकर, सुन्दर प्रजा, ऐश्वर्य, देनेवाले, उस चरुशेष को पत्नी को देवे ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अवीरा विधवा धनेश्वरी सत्यपि या सुदुर्भगा सा सुभगा भवति ॥ २६ ॥

य आमयावी रोगी स विरुजा विशिष्टया रुजा विमुच्यते इन्द्रियैः सहितं कल्पं देहं च विन्देदिति शेषः पठन्यो वर्तेत तस्य पितॄणां देवतानां चानन्ता तृप्तिर्भवतीत्यर्थः ॥ २७

उपसंहरति-राजन्निति । महत्पुण्यं जन्म महद् व्रतश्च ॥

षष्ठस्कन्धनिगूढार्थपदभावार्थदीपिका ।
सद्भिरासेव्यतामेषा यतिश्रीधरनिर्मिता ॥ १ ॥

इतिश्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीधरस्वामिविरचितायाम्भावार्थदीपिकायामेकोनविंशोऽध्यायः ॥ १९ ॥

समाप्तोऽयं षष्ठस्कन्धः ॥ ६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सविस्तरं व्रतमुपवर्ण्य तदनुष्ठानफलमाह--एतदिति । एताद्विभोः परमात्मनः व्रतं यथाविधि कृत्वा पुमानिह लोके अभीप्सितार्थं लभते स्त्री तु तद्व्रतमनुष्ठाय सौभाग्यसम्पत्पुत्रपतिदीर्घजीवनकीर्तिगृहान् लभते ॥ २५ ॥

अवीरा अलब्धभर्तृका कन्या तु एतद्व्रतमास्थाय समग्राणि लक्षणानि यस्य तं पतिं विन्देत लभेत यद्वा अवीरा विधवा तु हतं किल्बिषं यस्याः तां गतिं सद्गतिं लभते मृता प्रजा पुत्रो यस्यास्सा जीवः सुतो यस्याः सा भवेत्तथा दुर्भगा सौभाग्यरहिता सुभगा भवेत् ॥ २६ ॥

विरूपाऽन्यं श्रेष्ठं रूपं विन्देत यः पुमानामयावी रोगी सएतद्व्रतं कृत्वा विरुजः नानाविधरोगाद्विमुच्यते इन्द्रियकल्यदेहं पटुतरेन्द्रियदेहं विन्देत एवमेतद्व्रतकल्पमभ्युदये कर्मणि पठन्यो वर्तते तस्य पितॄणां देवानाञ्चानन्ततृप्तिर्भवति ॥ २७ ॥

ते च पितरो देवाश्च तस्मै पठते सर्वान्कामान्प्रयच्छन्ति पितृदैवतयोर्होमयोरवसाने साक्षाद्धरिः श्रीश्च हुतभुग्भवेत् तावपि प्रसन्नौ भवेतामित्यर्थः उक्तमुपसंहरति--राजन्निति. हे राजन्, मरुतां महत्पुण्यं जन्म तथा महत्पुण्यं विशेषं व्रतं पुंसवनं च ते तुभ्यं मया अभिहितम् ॥ २८ ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्याप्रसन्नतत्सूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवात्स्य श्रीवीरराघवविदुषा विरचितायां श्रीमद्भागवतचन्द्र चन्द्रिकायां श्रीमद्भागवतव्याख्यायां षष्ठेस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

समाप्तोऽयं षष्ठस्कन्धः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जीवपतिमायुष्मन्तं पतिं गृहान् गृहाणि शोभनं सौभाग्यं येन स तथा तम् एतच्चरुशेषविशेषणम् ॥ २५ ॥

कन्या समग्रलक्षणं पतिं विन्देत अवीरा पतिरहिता मृतप्रजा जीवत्सुतान्विन्देत ॥ २६ ॥

विरूपा हरिविरुद्धस्वरूपा अग्र्यं रूपं विन्देत इन्द्रियदेहरहिता या सा विरुजो विविधरोगान्मुच्यते अभ्युदये कर्मणि मङ्गलकर्मणि पितृदेवतानां अनन्ततृप्तिमुपैतीति शेषः ॥२७॥२८॥

भक्तिप्रह्वश्रीवासवकगतिसमुक्षितः सुरराशिमिमंचितश्रीब्रह्मप्रायोग्रप्रमुखविबुधमुकुटतटीघट्टितपदपीठकं वन्दे ॥ लक्ष्मीकान्तं वनरससंविरसारुचसरोरुहलोचनं सत्यज्ञानानन्दाकारं मुदितसुजनं समुद्राय मर्दितासुरसम्पदम् ॥ १ ॥

शब्दशक्त्यनुसारेण विजयध्वजभिक्षुणा ।
पदरत्नावली भाति षष्ठस्कन्धगता कृता ॥ २ ॥

इतिश्रीमन्महेन्द्रपूज्यस्य पादशिष्यस्य विजयध्वजतीर्थस्यकृतौ पदरत्नावल्याम् श्रीभागवतेविजयध्वजटीकायांषष्ठस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

अनुकूलं यदादिष्टमभूद्नारायणस्य ह ।
प्रसादतो लब्धमिदं तदा पुण्यदमस्तु मे ॥ १ ॥

समाप्तोऽयं षष्ठस्कन्धः ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतिश्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकोनविंशोऽध्यायः ॥ १९ ॥

समाप्तोऽयं षष्ठस्कन्धः ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जीवतीतिजीवः सचासौपतिश्च तम् ॥ २५ ॥

अवीरा पतिपुत्रशून्या या मृतप्रजा सा जीवसुता धनेश्वरी च भवति । य आमयावी स विशिष्टया रुजा विमुच्यते । इन्द्रियैः सह कल्यं समर्थं देहञ्च विन्देत ॥ २६ ॥

अभ्युदये अभ्युदयिकश्राद्धादौ तुष्टा हुतभुक् श्रीहरिश्च ॥ २७ ॥ २८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठ एकोनविंशोऽयं सङ्गतः सङ्गतः सताम् ॥ १९ ॥

समाप्तोऽयंषष्ठस्कन्धः ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

फलमाह—एतदित्यादिना अवीरा पतिपुत्रहीना गतिं हरिपदरूपाम् ॥ २६ ॥

विरूपा विन्देत आमयावी विरुजा विविधया रुजा विमुच्यते इन्द्रियैः कल्यं देहं च विन्देत अभ्युदये कर्माणि य एतत्पठन् वर्तेत तस्य पितॄणां देवतानां च अनन्ततृप्तिर्भवति उपसंहरति—राजन्निति, हे राजन् मरुतां महत्पुण्यं जन्म विशेषमहत्पुण्यं व्रतं च मया तेऽभिहितम् ॥ २७ ॥ २८ ॥

इतिश्रीमद्भगवन्निंबार्कचरणचिन्तकश्रीशुकसुधीप्रणीते श्रीमद्भागवतसिद्धान्तप्रदीपे एकोनविंशाध्यायार्थप्रकाशः ॥ १९ ॥

संख्या ॥ २६७५ ॥

समाप्तोऽयं षष्ठस्कन्धः ॥ ६ ॥

---

भाषा टीका ।

समर्थ हरि के इस व्रत को करके पुरुष इस संसार में इच्छित अर्थ को प्राप्त होता है। स्त्री होकर इस व्रत को करे तो सुभगतो श्री सन्तान पति यश और गृह को प्राप्त हो ॥ २५ ॥

कन्या समग्र लक्षण वाले वर को प्राप्त हो विधवा निष्पाप होकर गति को प्राप्त हो। मृत पुत्रवाली पुत्रको और धनी होकर जो दुर्भागिनी है वह सुभागिनी हो। कुरूपा सुन्दररूप को प्राप्त हो और जो रोगी है वह विशेष रोग से छूटे और इन्द्रियों सहित समर्थ देह को भी प्राप्त होय ॥ और अभ्युदय वाले कर्म में इसे पढे, तौ पितृदेवताओं को अनन्त तृप्ति हो ॥ २६ ॥ २७ ॥

हवन किये हुये के भोक्ता लक्ष्मीनारायण सन्तुष्ट हो कर समग्र कामनाओं को देते हैं। हे राजन्! मरुत देवोंका जन्म और बड़ा पुण्य दिति का व्रत मैंने तुम्हारे आगे वर्णन किया ॥ २८ ॥

श्रीमद्भागवते षष्ठस्कन्धभावार्थबोधिनी ।
भाषा भागवताचार्यकृता पूर्त्तिं समन्वगात् ॥

इतिश्रीमद्भागवत महापुराण षष्ठस्कन्ध एकोनविंश

अध्यायकी भाषाटीका समाप्त ॥ १९ ॥

श्रीरुक्मिणीरमणायनमः ॥

षष्ठस्कन्धकी भाषाटीका समाप्त हुई ॥ ६ ॥

हरि ओम् तत्सत् ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे एकोनविंशोऽध्यायः समाप्तः ॥ १९ ॥



समाप्तश्चायं षष्ठस्कन्धः ॥ ६ ॥



॥ हरिः ओम् तत्सत् ॥

श्रीकृष्णार्पणमस्तु ।

॥ श्रीः ॥

# विज्ञापन ।

## परपक्षगिरिवज्रः ।

अयि विचक्षणाः ! अद्यातिप्रहर्षसमयो वरीवर्त्ति अहं तत्रभवद्भ्यो भवद्भ्यो ऽद्भुतग्रन्थं निवेदयामि यद्ग्रन्थान्वेषणं सहस्राणि विद्वांसो ऽकार्षुः चातकास्स्वातिबिन्दूनिव, तथा ऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु दूरापास्तमेवासीत् तमेव ग्रन्थमत्यानन्देन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं 'शारीरकहार्दसंचयनामकं' कथयन्ति, केचित्तु परपक्षगिरिवज्राख्यम् अध्यासगिरिवज्राख्यमपि ब्रुवन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्य्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरोरसमयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्था मुद्रितास्सन्ति, तथापीदृशः को ऽपि ग्रन्थोऽद्यावधि न मुद्रितो ऽस्ति, यद्ग्रन्थावलोकनेनैव सर्वं सिद्धान्तज्ञानं भवति, एतस्मिन् ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकनेनैव सर्वशास्त्रसिद्धान्तज्ञानपूर्वकसत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकता ऽपि न भवति, सर्वेषां विपश्चितामेतद्ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठनपाठनादिषु प्रचारणीयो ऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितॄणां ब्रह्मानन्दास्वादसमुद्रस्तरङ्गितइव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदा ऽपि न भवति, एष च ग्रन्थो निम्नलिखितप्रकरणैर्विभूषितो ऽस्ति, एतस्मिन् ग्रन्थे चत्वारो ऽध्यायास्सन्ति, तत्र प्रथमे ऽध्याये विषयसम्बन्धगिरिनिपातप्रयोजनाधिकारिगिरिनिपात अध्यासगिर्यधिष्ठानगिरिनिपातादीनि महाविस्तीर्णानि त्रयोविंशतिः प्रकरणानि सन्ति. द्वितीये चाध्याये जिज्ञास्योपपत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्ख्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मुक्त गिरिनिपातो ऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितो ऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयं मनीषिभिरितिशम् मूल्यम् रौप्यकत्रयम् ।

पूज्यपादश्रीविश्वनाथचक्रवर्तिविरचितम्

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचंद्राष्टकालिकसेवानिरूपणपरम् क्रीडानिकुंजस्थ किंकरीशुकशारिकादीनां परस्परसेवानिरूपणपरंसुस्पष्टपद्यात्मकं महाकाव्यम् तदनुगुणमिताक्षरसंस्कृतटीकयालंकृतम्, मूल्यम् रौप्यकत्रयम् ।

### श्रीमद्भागवत संबन्धीय नियमावली ।

इतने बड़े परिश्रम और अध्यवसाय पर भी सर्व साधारण के सुलभ संग्रह के अर्थ पूर्ण ग्रंथ का मूल्य केवल ५०) रुपय अग्रिम रखा गया है राजा महाराजा और संमान्य मनष्यों के सन्मान रक्षाके लिये उनसे फेवल १००) रु० मात्र लिया जायगा डाक महसूल २४) रु० अलग पड़ेगा ।

असमर्थ ग्राहकों से चार किस्तों में रुपया लिया जायगा—प्रथम किस्त १२) रु० पञ्चमस्कन्ध तक, द्वितिय किस्त १२) षष्ठस्कन्ध तक, तृतिय किस्त १२) सप्तमस्कन्ध तक, चतुर्थ किस्त १४) दशमस्कन्ध तक और डाक महसूल २४) द्वादशस्कन्ध तक लियाजायगा ।

## श्रीजगन्नाथवल्लभनाटकम् ।

इह खलु जगति विद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपि शास्त्रांतराणां सहिष्णुवेद्यत्वेन सूक्ष्ममतिवेद्यत्वेन च तेष्वल्पजनादरणीयेषु जातेषु इदानीं स्थूलमतिवेद्यत्वेनसुकुमारवेद्यत्वेनचकाव्यनाटकादीन्येव मनुष्याणांसमययापनयोग्यानि तानिच भगवद्विषयकाणिचेद्भुक्तिमुक्तिप्रदानीति विचार्येदानींजगन्नाथवल्लभनाटकं सर्वजनसौकर्यायप्रकाशितम् इदंचनाटकं श्रीराधाकृष्णरहस्यक्रीडा विषये प्रतापरुद्रनृपतिराधरामानंदराय कविनानिर्मितम्. अत्रचपंचांकाः संति तत्रप्रथमेंके नटनटीसूत्रधाराणांसंवादपूर्वकप्रस्तावनानंतरं श्रीराधाकृष्णमदका विदूषकाणां वृत्तांतैःपूर्वरागनिरूपणम् १ द्वितीयेचभावपरीक्षादिनिरूपणम् २ तृतीयेभावप्रकाशादिनिरूपणम् ३ चतुर्थे श्रीराधिका अभिसरण क्रियानिरूपणम् ४ पंचमे श्रीराधाकृष्णयोः संगमनिरूपणम् अस्मिन् ग्रन्थे मध्ये मध्ये गीतगोविंदवद्रागपद्यांन्यपिवि मूल्यम् द्वादश आणकाः ॥।)

## वेदान्तसारम् ।

भो भो वेदवेदान्तसकलशास्त्रपारावारपारङ्गताः !

विदितमेव भवतां श्रीमद्वैयासिकसूत्रार्थयाथात्म्यप्रतिपादकं बालानामपि वेदान्तार्थसंशयनिवारणाकरं वेदान्तसारनाम ग्रन्थरत्नम्. तदिदमिदानीं सुललितैर्नागराक्षरैरपूर्वतया मुद्रितं सत् जाज्वलीति. अतस्सर्वैर्व्येतद्ग्रन्थरत्नं केवलेन रूप्यत्रयमूल्येन गृहीत्वा मनोनयनानन्दं प्राप्नुवन्तु भवन्तः ॥ अस्य मूल्यं रूप्यत्रयम्.

श्रीमद्भागवत कार्यालय—श्रीदेवकीनन्द प्रेस
भ्रमरघाट श्रीवृन्दावन—जिला मथुरा । } विद्वज्जनकृपाकांक्षी—श्रीनित्यस्वरूप ब्रह्मचारी ॥

